दशमस्कन्धपूर्वार्द्धे श्री १०८ श्रीराधारमणो जयति । तृतीयखण्डः

महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीत.

# श्रीमद्भागवतम् ।

---

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी, श्रीमज्जीव— गोस्वामिकृतवैष्णवतोषिणी, श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापनाचार्यवर्यश्रीसुदर्शनसूरिकृतशुक- पक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्माध्व- सिद्धान्तधुरन्धरश्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीगौडीयवैष्णवाचार्य्यप्रवर- श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भाख्य टीका, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी, केनचित्कृतशिशुद्धरसदीपिका, श्रीरामनारायणकृतभावभावविभाविका, श्रीधनपतिसूरिकृतगूढार्थदीपिका, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इति चतुर्दशभि र्व्याख्याभिर्भाषानुवादेन च समलङ्कृता

---

तदिदं

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम्

---

वङ्गदेशान्तर्गत ताड़ास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

**"श्रीवनमालिराय वहादुरस्य"**

सम्पूर्णसाहाय्येन

---

प्रकाशितञ्च ।
तच्च
श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा
पं० लक्ष्मणाचार्यद्वारा च संशोध्य
श्रीवृन्दावनधामनि
स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये
मुद्रापितम् ।
सम्वत् १९६४

# श्रीरासपञ्चाध्यायी।

## श्रीमद्भागवते दशमस्कन्धे।

### एकोनत्रिंशोऽध्यायः।

ॐ नमो भगवते वासुदेवाय।

**श्रीशुक उवाच।**

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः॥ १॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः।
गोपीभीराससंरम्भे तस्य चान्तर्द्धिकौतुकम्॥
ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा।
जयति श्रीपतिर्गोपीरासमण्डलमण्डनः॥

ननु, विपरीतमिदम् परदारविनोदेन कन्दर्पविजेतृत्वप्रतीतिः नैवम् योगमायामुपाश्रितः आत्मारामोऽप्यरीरमत् "साक्षान्मन्मथमन्मथः' आत्मन्यवरुद्धसौरतः' इत्यादिषु स्वातन्त्र्याभिधानात् तस्माद्रासक्रीडाविडम्बनं कामविजयख्यापनायेत्येव तत्त्वम्। किञ्च, शृङ्गारकथापदेशेन विशेषतो निवृत्तिपरेयं पञ्चाध्यायीति व्यक्तीकरिष्यामः ता रात्रीः"यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" इति प्रतिश्रुता इत्यर्थः॥ १॥

---

श्रीमत्सनातनजीवगोस्वामिकृतबृहत्तोषिणी।

नमः कृष्णाय रासरसिकाय।

श्रीशुकबादरायणिरुवाचेति। बदरिकाश्रमे महातपश्चरणाद्भगवान् श्रीव्यासो बादरायणः तस्य तपःफलरूपः पुत्र इति सर्वज्ञश्रीभगवत्प्रेमरसमयत्वादिकं ध्वनितं तेनोक्तत्वादस्याख्यानस्य सर्वथा यथा साधनसाध्यत्वं प्रौढानुरागमयत्वं चाभिप्रेतं ततो भक्त्यैतच्छ्रोतव्यमिति भावः इदानीं श्रीव्रजसुन्दरीणां मनोरथपरिपूरणद्वारा प्रेमरसविस्तारणरूपं तदवतारमुख्यतरप्रयोजनं दर्शयन् ताभिः सह विहरणमेव तस्य सर्वोतिशायिसुखमिति च प्रकटयन् तत्र चाधरामृतपानादिना सुष्ठुतामेव श्रीभगवद्रूपादिमाधुरीविशेषानुभवात् प्रेमविशेषविस्तारसुसिद्ध्या तद्योग्याभिः सह रासक्रीडां पञ्चप्राणतुल्यपञ्चाध्याय्या वर्णयन् आदौ तत्सामग्रीं दर्शयन् तत्र च श्रीव्रजदेवीवर्गाकर्षणं कथयन् तद्धेतुत्वेन श्रीभगवतो भावविशेषप्राकट्यमाह—भगवानिति। एषा च क्रीडा तदुचितकाले कैशोरे ज्ञेया तथा चोक्तं श्रीविष्णुपुराणे—

"सोऽपि कैशोरकवयो मानयन् मधुसूदनः॥
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः"। इति।

श्रीहरिवंशे च—

"युवतीर्गोपकन्याश्च रात्रौ सङ्कल्प्य कालवित्॥
कैशोरकं मानयानः सह ताभिर्मुमोद ह"॥ इति।

तच्च रासारम्भे तस्य सौन्दर्यादिविशेषस्मारणेन परममोहनत्वात् श्रीबादरायणिना"ततश्च पौगण्डवयः श्रितौ व्रजे" इत्यादिवदुक्तं वक्तुं न शक्तं क्रीडा सा च समग्रमेव कैशोरं व्याप्येत्यादिकं सर्वमग्रे यथास्थानं विचारणीयम्। तत्रोपलक्षणार्थं कैशोरारम्भ प्रथमैकरात्रक्रीडेयमुच्यते-भगवानिति। रासक्रीडायां निजाशेषभगवत्तासारप्रकटनाभिप्रायेण नन्दादयः परमानन्दनिर्वृता बभूवुः भगवानपि स्वयं परमानन्दनिर्वृतो भवितुं रन्तुं क्रीडाविशेषं कर्तुं मनश्चक्रे ऐच्छदिति अपिशब्दार्थः ता रात्रीरिति तैर्व्यञ्जितार्थमेव। यद्वा, ता अनिर्वचनीयाः सर्वकालतः श्रेष्ठतराः परमानन्दरसमयीस्तत्क्रीडायोग्या इत्यर्थः। बहुवचनेन बह्वीषु रात्रिष्वेव सा क्रीडा बोध्यते तथान्ते सविशेषं व्यक्तं भावि शरदा कृत्वा उच्चैः फुल्ला विकसिता मल्लिकाः यासु ताः यद्यपि सर्व-

श्रीमत्सनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

त्वांश्चपि श्रीवृन्दावने सदा सर्वपुष्पाण्युद्भवन्ति विशेषतश्च शरदि जातीकुमुदकमलादीन्यपि विकसन्ति तथाप्युत्फुल्लमल्लिका इति रात्रिविषयकविकासविशेषाभिप्रायेण एवमग्रेऽपि कुमुद्वन्त-मिति इत्युद्दीपनानि वीक्ष्य रतियोग्या इति प्रालोच्य योग-मायापराख्यसच्चिदानन्दशक्तिविशेषः तामुपकरणत्वेन आश्रितः प्रकटितवान् सन् इति सर्वतो लीलातो विशेषेण रासक्रीडायाः परमानन्दविशेषाद्दिस्वरूपत्वमभिप्रेतं सर्वस्या अपि लीलायाः सच्चिदानन्दरूपत्वं प्रागष्टमाध्याये बाल्यलीलायां विवृतमेवा-स्ति । यद्वा,योग ऐश्वर्ये तद्युक्ता माया दया "माया दम्भे कृपायाञ्च"इति विश्वः । तामुपाश्रितः उपाधित्वेन प्राप्तः सन् रासक्रीडया स्वस्यैश्वर्यं कृपां च विस्तारितवानित्यर्थः। यद्वा, अपिशब्दस्यात्रैवान्वयः योग आत्मारामता माया आवरणा-त्मिका कापट्यं वा योगयुक्तां मायाम् उप सामीप्येन नित्यमाश्रि-तोऽपि इति तदानीं योगो माया च नातिष्ठत् किन्तु निज-पदाब्जप्रेमसम्पद्विस्ताररूपसत्यस्वभावो व्यक्तोऽभूदित्यर्थः । यद्वा, योगे संयोगे या माया वञ्चनपत्नीष्विव वञ्चना तामुपाश्रितोऽपि इति तदानीं तस्य सङ्गमे मायानिवृत्तेत्यर्थः । सर्वाभिरेव व्रज-सुन्दरीभिः सह साक्षात्संयोगविशेषसिद्धेः सिद्धिं गताभिरपि तत्प्राप्तेः । यद्वा, युनक्ति नित्यं वक्षसि संयोगं प्राप्नोतीति योगा या मा लक्ष्मीस्तस्यां नित्यं वर्त्तमानः तया सदा सेव्यमानो-ऽपीत्यर्थः। इति रासक्रीडा तया न सम्पद्येत तद्दुर्लभा चेत्याद्य-भिप्रेतम् । यद्वा, योगाय सम्योगाय मायःशब्दो यस्याः सा योगमाया वंशी" माङ् माने शब्दे च" इत्यस्य घञ्रूपं तामुपाश्रितः । यद्वा, योगस्य सम्भोगस्य मायो मानं पर्य्याप्तिर्यस्यां सा योगमाया श्रीराधा अथवा योगस्य सम्भोगस्य मा लक्ष्मीः सम्पत्तिरिति यावत् तां याति प्राप्नोतीति योगमाया श्रीराधैव तां मनसा उपाश्रितः रासक्रीडायास्तद्धेतुकत्वात् तत् पाद्मे प्रसिद्धमेव ॥ १ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नमः श्रीरासरासिकेभ्यः ।

अत्र टीकायां रासस्रंरम्भ इति तन्निमित्ते रासारम्भसम्बन्धिनं मानं वीक्ष्येत्यर्थः। कन्दर्पजेतृत्वप्रतीतेरिति कन्दर्पकर्तृकस्यैव जेतृत्वस्य प्रत्ययादित्यर्थः । अथ मूले श्रीबादरायणिरुवाचेति वक्ष्यमाण-महामहिम्नः प्रसङ्गस्यास्य बलात् तदिदं लम्भयति बदरिका-श्रमे महातपश्चरणात् भगवान् श्रीबादरायणः वेदव्यासः तच्च तपः श्रीकृष्णोपासनलक्षणमेव सर्वज्ञस्य तस्य परमोत्तमे तस्मिन्नेव व्यवसायौचित्यात् तस्य तादृशतपःफलरूपः पुत्र इति सर्वेश्वरश्रीभगवत्प्रेमरसमयत्वादिकं तत्राधिकं यद्यपि स्फुरति तथापि तन्नामनिरुक्तेर्माहात्म्यपर्यवसानमत्रैव जातं तत-स्तादृशमस्यैवैतत् श्रोतव्यमिति व्यञ्जितं श्रीशुक उवाचेति पाठे तु परमोज्ज्वलरसस्वाभाव्येन परमकोमलालापता दर्शिता तत स्तादृशचित्ततयैव श्रोतव्यमिदमिति व्यञ्जितं तथाहि सर्वाति-शायिप्रेमवतीनां श्रीव्रजसुन्दरीणां मनोरथपरिपूरणमेव प्रियमात्र-सुखार्थं सर्वं कुर्वतः श्रीभगवतो मुख्यतरं प्रयोजनमिति दर्श-यन् तदेव तस्य सर्वातिशायिसुखमिति च प्रकटयन् तत्र च "साक्षान्मन्मथमन्मथः' इति"त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत्" इति "गोप्यस्तपः किमचरन्"इति दृष्ट्या सर्वात्मारामैरपि दुर्लभानां भगवद्रूपगन्धस्पर्शशब्दानां वैशिष्ट्येनानुभवात् तदीयरसस्याधरा-मृतस्य तु सर्वथैवान्यत्रासम्भवात् प्रेमविशेषविस्तारलुब्धिरुद्धा तद्योग्याभिस्ताभिः सह रासक्रीडां पञ्चेन्द्रियतुल्यप्रियैः पञ्चभि-रध्यायैर्वर्णयति—यत्र "पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैः" इत्यादिना "गोपीनां परमानन्द आसीद्गोविन्ददर्शने" इत्यादिना "इत्थं शरत्स्वच्छजलम्"इत्यादिना "हेमन्ते प्रथमे मासि"इत्यादिना च तासां तस्य च नवरागं विशिष्य स्वेन वर्णितचरं "शर-दुदाशये साधु जातसत्सरसिज' इत्यादिना "प्रहसितं प्रिय"इत्या-दिना "दिनपरिक्षय"इत्यादिना"रहसि संविदं हृच्छयोदयम्"इत्या-दिना च ताभिः स्वयं वर्णयिष्यमाणं च स्मृत्वाऽतिविशिष्ट-तया वर्णयितव्यत्वेन नवसङ्गमं स्मरन्नाह-भगवानपीति । अपि-शब्देन तासां पूर्वपूर्ववर्णितं नवरागं विस्मारयति—पूर्वेण वाक्येन तु सङ्गमस्यास्य नवत्वमेवावगमयति—एतावन्तं कालं ता अनुरागचपलचित्ततया रन्तुं मनः कुर्वत्य एवासन् भगवांस्तु जातानुरागत्वेऽपि धैर्येण समयविशेषं प्रतीक्षमाणो न चक्रे सम्प्रति ताः कैशोरमध्यप्राप्ताः सर्वसुखप्रदतया सर्वमङ्गलतया प्रकटितवेणुशिक्षादिविशेषतया च विलक्षणाः कुमारीषु च "मयेमा रंस्यथ क्षपाः" इति प्रतिश्रुता रात्रीर्वीक्ष्य तत्रापि राका-रात्रेरागमनारम्भे दीप्तानुरागत्वेन गलितधैर्यतया तच्चक्र एवेति प्रतिपत्तेः श्लेषेण"आत्मारामाश्च मुनयः"इत्यादिवत् भगवान् सर्वार्थपरिपूर्णोऽपि ता रात्रीर्वीक्ष्य उद्दीपनत्वेनानुभूयेति कैमु-त्येनालम्बनरूपाणां तासां प्रेममहिमा दर्शितः तत एव व्यक्त-सर्वार्थं तस्य कैशोरमपि मानितं जातमिति श्रीविष्णुपुराणे दर्शितम्—

> "सोऽपि कैशोरकवयो मानयन् मधुसूदनः ।
> रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः" ॥ इति

श्रीहरिवंशेच—

> युवतीर्गोपकन्याश्च रात्रौ सङ्कल्पकालवित् ।
> कैशोरकं मानयानः सह ताभिर्मुमोद ह" ।

इत्यत्र कालविदित्यस्य व्याख्यानं ता रात्रीर्वीक्ष्येति ह ताभिर्मुमोदहइत्यस्य सूचकं रन्तुं मनश्चक्र इति आत्मने-पदनिर्देशः । स्वत्वयं सार्थः क्रियतां योध यति"स्वरितञितः कर्त्रभिप्राये क्रियाफले"( १ । ३ । १०२ ) इति विशेषविध्या-श्रयणात् तदेवं ता इत्यनेन स्वस्यापि चमत्कारकरं काल-वैशिष्ट्यं व्यज्य तदुज्ज्वलितां श्रीवृन्दावनशोभामपि दर्शयति, शर-देति । शरदा हेतुना उच्चैः फुल्ला मल्लिका यासु ताः परस्पर-योगाप्रसिद्धेरनेनास्याः शरदो मल्लिकानां चापूर्वत्वं व्यञ्जितं तेन च सर्वाण्येव पुष्पाणि लक्ष्यन्ते इत्यालम्बनकालदेशानां श्रीकृष्णाय प्रेममयपरमसुखप्रदत्वं दर्शितं यस्मात् ह्लादिनीशक्तिविलास-लक्षणतत्प्रेमविशेषमय्येवैषा रिरंसा नतु प्राकृतकाममयीति तेषां कन्दर्पदर्पहेति व्याख्यानमपि तथा युक्तमेव निवृत्तिपरेयं पञ्चाध्या-य्यपि स्वयमेव च वक्ष्यते—

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ।
तत्राविर्भूय गोपीस्ताः सान्त्वयामास मानयन् ॥
स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ।
सदयं नन्दयन् गोपीरुद्गतो नन्दनन्दनः" ॥ इति

श्रीमुनीन्द्रेणापि इदमेव वक्ष्यते "विक्रीडितं व्रजवधूभिरिदं च विष्णोः" इत्यादौ तत्र दुर्घटघटनां समादधदाह—योगमाया पराख्याचिन्त्यशक्तिः तामुप सामीप्येनाश्रितः यत्र यत्र विहरति तत्र तत्रैव (तां) सूर्यः स्वदीधितिमिव सदा प्राप्त इति स्वाभाविकतादृशशक्तित्वं व्यञ्जितम् । तेन च दुर्घटतल्लीला च सेत्स्यतीति भावः । श्लेषेण योगः संयोगः तदर्थं माया कृपा "माया दम्भे कृपायाञ्च" इति विश्वः । तामुप आधिक्येनाश्रितः । किञ्च, ताः वीक्ष्य क्रमेण राकापर्यन्तमधिकमधिकं मनोरथं चक्र इत्यर्थत्वे लब्धे विशेषोऽयमपि ज्ञेयः । तस्यां राकायां सायं गृहमागतो भोजनादिकं विधाय मातुः स्थानात् शय्यागृहचन्द्रशालिकाद्वारं गतः सन् सद्यः सम्पाद्यत्वेन निश्चितवानित्यर्थः ॥ १ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवानपीत्यादि—

"भगवानितिशब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्त्तेते वासुदेवे सनातने" ॥

वक्ष्यते च "स्मारितो भगवानद्य देवो नारायणो मम" इति । वासुदेवब्रह्मनारायणादिभिः—

भगवत्पुरुषोत्कृष्टनामानि व्योमवासिनः ।
परस्यैवेति तानीह परमात्मनि सन्ति हि ॥

इति प्रबलप्रामाण्यात् ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ विवक्षितानि यूनो भगवतः शारदिकानि चेष्टितान्यनुवर्णयति, पञ्चभिरध्यायैः तत्र यदुक्तं भगवता "मयेमा रंस्यथ क्षपाः" इति तस्य सत्यत्वमापादयितुमित्यर्थः । मनुजिघृक्षैकशीलत्वात्केनापि व्याजेन गोपीः कृतार्थयितुं च ताभिः सह चिक्रीडिषुस्तावद्वेणुगीतेनैव ताः समाहूय ततः परीक्षापूर्वकं ताभिः सह विजह्रारेत्याह—एकोनत्रिंशेन । भगवानपीति । "नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः" इत्युक्तभगवल्लोकदर्शनजानन्दपारवश्यप्रयुक्तात्मारामानन्दादिसमुच्चयार्थोऽपिशब्दः ताः याः "मयेमा रंस्यथ क्षपा" इति प्रतिज्ञातास्ता इत्यर्थः । शरदा हेतुभूतया उत्फुल्लाः मल्लिकाः यासु ताः रात्रीः अवलोक्य रन्तुं मनश्चक्रे चिक्रीडिषायाः प्रसक्तं कर्ममूलत्वं निराचिकीर्षुर्विशिनष्टि योगमायामुपाश्रितः । युज्यत इति योगा तां मायामात्मीयसङ्कल्पमाश्रितः स्वसङ्कल्प एव केवलं तन्मूलं न तु कर्मेति भावः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्दोषभक्तिजनितब्रह्मज्ञानमेव मुक्तिसाधनमिति या शास्त्रतात्पर्यार्थनिर्धारणा तदर्थमर्थवादं वदत्यस्मिन्नध्याये तत्र वैकुण्ठदर्शनानन्तरं कः कथाप्रसङ्ग इति तत्राह—भगवानपीति । यद्वात्रिमुखे लोकदर्शनं तां रात्रिं शारदेन शरदृतुसम्बन्धिना कालेन उत्फुल्ला विकसिता मल्लिका नवमल्लिका यस्यां सा तां योगमायां स्वरूपसामर्थ्यम् ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवानपीत्यपिशब्देन तत्प्रेयस्योऽपीति समुच्चीयन्ते ताः निजमाधुर्येणाप्यस्मन्मनोहारिणीः शरदापि मल्लिकोत्फुल्लतातादृशरसमयलीलासमयरूपत्वात् योगमायां दुर्घटघटनाशक्तिम् उप समीपे आश्रितः तादृशतत्सेवावसरापेक्षया निकटस्थ तादृशशक्तिरित्यर्थः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ ब्रह्मेन्द्राग्निवरुणादीनां दर्पं शमयित्वा कन्दर्पस्य दर्पं शमयितुं युगपदनेकरमणीकदम्बसम्वलितं रासाख्यं लास्यगारिष्ठं भगवानेकदा स्वयोगवैभवं प्रादुश्चकार; तत्र रासस्य लक्षणं यथा—

"नर्त्तकीभिरनेकाभिर्मण्डले विचरिष्णुभिः ।
यत्रैको नृत्यति नटस्तद्वै हल्लीशकं विदुः ॥"

तदेवेदं तालबन्धगतिभेदेन भूयसा । रासः स्यात्स नाकेऽपि वर्त्तते किं पुनर्भुवि इत्यस्य दुष्करतया परमरमणीयतया च बहुकालसाध्यत्वाच्च तथा च बह्वीरेव रात्रीरेकत्र कर्त्तुं कृतसङ्कल्पत्वात् तत्कालं समुपस्थिता रात्र्यभिमानिनी बह्वीरेव देवताः पुरतो वीक्ष्य रन्तुमिच्छां चकारेत्याह—भगवानपीत्यादि । भगवानचिन्त्यवैभवोऽपि योगमायामुपाश्रितः सन् रन्तुं मनश्चक्रे । अयम्भावः अस्मिन् विलासे बह्व्य एव दुर्घटसङ्घटनाः सम्भाव्याः तास्तु केवलं योगैश्वर्यसाध्याः स्वयमिच्छामात्रेण कर्त्तुं शक्या अपि अग्रिमरसस्य मधुरकोमलतायामैश्वर्यप्रकाशनं नातिसुरसमिति तत्सत्कर्मणि "कार्यार्थे सम्भविष्यति" इति प्रागेवावतीर्णा मूर्त्तिमती स्वयोगशक्तिः त्वयाऽस्मिन् विलासे सर्वमेव समर्थनीयमिति उपाश्रितः विधेयत्वेनोपाश्रित आज्ञप्तवानित्यर्थः । इत्ययमपरोऽर्थः किं कृत्वा ता रात्रीर्वीक्ष्य ताः पूर्वसङ्कल्पिता अनेका रात्रय एकत्र मिलिता भवन्त्विति मनसि कृता इत्ययं तच्छब्दार्थः अनेकानां रात्रीणां क्रमादागामिनीनां युगपद्वर्त्तनाभावात् रात्रीरिति रात्र्यधिष्ठात्रीर्देवता इत्ययं बहुवचनार्थः आनन्दघने श्रीविग्रहे अन्तःकरणाभावात् इच्छाशक्तिमात्रस्यैव सम्भवाद्लौकिककृतिसाध्यक्रियाविषयत्वेऽपि लौकिककृतिसाध्यक्रियाविषयत्वाय मनश्चक्रे मनःस्वीचकारेति मनःशब्दार्थः मनःस्वीकारात् मनोभवस्यापि स्वीकारः रात्रीः कीदृशीः शरदोत्फुल्लमल्लिकाः शरत्सम्बन्धिन्यः शारदः उत्फुल्लमल्लिकाः उन्मल्लिकाः ॥ १ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजने ।
लीला या युज्यते सम्यक् सा तुर्ये विनिरूप्यते ॥
लौकिकस्त्रीषु संसिद्धस्तद्द्वारा पुरुषो भवेत् ।
स्वानन्दानुभवार्थं हि योग्यतापि निरूपिता ॥
ततो हि भजनानन्दः स्त्रीषु सम्यग्विधार्यते ।
तद्द्वारा पुरुषाणां च भविष्यति न चान्यथा ॥
स्त्रिय एव हि तं पातुं शक्तास्तासु ततः पुमान् ।
अतो हि भगवान् कृष्णः स्त्रीषु रेमे ह्यहर्निशम् ॥
बाह्याभ्यन्तरभेदेन आन्तरन्तु (परं) महत्फलम् ।
ततः शब्दात्मिका लीला निर्दुष्टा सा निरूप्यते ।
ततो रूपप्रपञ्चस्य पञ्चधा रमणं मतम् ॥
आत्मना प्रथमा लीला मनसा तु ततः परा ।
वाग्भार्थैस्तु तृतीया स्यात् इन्द्रियैस्तु ततः परा: ।
शारीरी पञ्चमी वाच्या ततो रूपं प्रतिष्ठितम् ।
षड्विंशे तु हरिः पूर्वं जीवानानन्दयत्स्वयम् ॥
ते चेत्समर्पितात्मानस्तत्रोपायश्च रूप्यते ।
आत्मा यावत्प्रपन्नोऽभूत्तावद्वै रमते हरिः ॥
सोऽन्तःकरणसम्बन्धी निरोधश्च हरिश्च सः ।

प्रथमं भजनानन्दं निरूपयितुं स्त्रीषु स्वानन्दः स्थापनीय इति तासु रत्यर्थमिच्छां कृतवानित्याह—भगवानपीति।"मये मा रंस्यथ क्षपाः" इति या रात्रयो वरत्वेन दत्ताः स्त्रीणां रमणार्थाः ता रात्रीर्भगवान् परिगृह्य सर्वास्वेव रात्रिषु ता आधिदैविकीरारोप्य पूर्णत्वात्तासां पूर्णिमारूपाः कृत्वा ऋतुमपि शरदमेव कृत्वा तस्यापि कार्यं पुष्पाण्येव कृत्वा रसोद्दीपकत्वेन सर्वां सामग्रीं विधाय पश्चाद्रमणार्थं स्वानन्दप्रकाशकं कामयितामहंमन उत्पादितवान् तत्र सर्वासु स्वास्मिन्नपि बोधनीयः तत्र वेणुरपि सहायतां प्राप्स्यति सङ्कल्पः ततःकामवर्णनं अतः प्रथमं तादृशं मनः कृतवान् यद्यपि एतत्प्रणालिकाव्यतिरेकेणापि स्वानन्दं तत्र स्थापयितुं शक्तः तथापि मर्यादा तिष्ठत्विति भगवानपि मनश्चक्रे नन्वेवं सति स्वानन्दः स्वानन्त्यागात् अन्यथा भवेत्ततः स्वरूपादपि प्रच्युतः स्यादित्याशङ्क्याह—योगमायामुपाश्रित इति । योगमाया हि यथास्थितमेवान्यत्र स्थापयति यथा सङ्कर्षणं लीलार्थं सापि पूर्वं सापि परिगृहीतेति नाऽपूर्वं किञ्चित् यथा प्रमाणे रक्षायां च बलभद्रोपयोग एवं कार्यं योगमायायाः तत्राप्यन्तरङ्गा योगमाया अन्यत्र स्थितं प्रमाणमन्यत्रापि योजयति अन्यत्र स्थितं चानन्दमन्यत्र अतः प्रमाणातिरिक्तमार्गौ भक्तिमार्गं अग्रे विततौ भविष्यतः याश्च रात्रयो रमणार्थमेव निर्मिताः ता एव परिगृहीताः अन्यथा साधारणीपरिग्रहे सर्वत्रैवानन्दः स्यात् शरदि ऋतावुत्फुल्ला मल्लिका यासु ता दृष्ट्वा रमणार्थं मनः कृतवान् योगमायां च समीप एवाश्रित्य स्थितः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीरामकृष्णगङ्गाचरणान्नत्वा गुरून् प्रेम्णः ।
श्रीलनरोत्तमलोकनाथ श्रीगौराङ्गप्रभुं नौमि ॥
प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेऽतिप्रभुष्णवे ।
तदीयप्रियदास्याय मां मदीयमहं ददे ॥
अथ पञ्चभिरध्यायैः पञ्चप्राणसमैर्मुनिः ।
रासं प्राह हरेः सर्वलीलासरूपच्छिरोमणिम् ॥
रासो जयति यद्दत्तसौभाग्या गोपयोषितः ।
धराश्च अधरी चक्रुः सर्वोर्द्ध्वस्यां रमामपि ॥
ऊनत्रिंशे वेणुनादः पारुष्यविषवर्षणम् ।
गोपिकाचातकीष्वाभिः क्रीडान्तर्द्धिश्च वर्ण्यते ॥

इह खलु सप्तवर्षवयसि वर्त्तमानेन भगवता कार्तिकस्यामावास्यायां कर्मवादोत्थापनेन इन्द्रमखभङ्गः कृतः तच्छुक्लप्रतिपदि गोवर्द्धनमखोत्सवः द्वितीयायां यमुनातीरे भ्रातृद्वितीयाभोजनोत्सवः श्रीमुनीन्द्रेणावर्णितोपि ज्ञेयः । तत्रैव वर्णिता इन्द्रकोपोक्तयश्च तृतीयामारभ्य नवमीपर्य्यन्तं गोवर्द्धनधारणं दशम्यां गोपानां विस्मयकथाबाहुल्यम् एकादश्यां गोविन्दाभिषेकः द्वादश्यां वरुणलोकगमनं पौर्णमास्यां ब्रह्मलोकगमनमभ ततश्च शरदः समाप्तत्वात्तदुत्तरे वर्षे अष्टवर्षवयस्त्वे सत्याश्विनपूर्णिमायां रासोत्सवः सर्वलीलोत्सवमुकुटमणिस्तं वक्तुमारभते–भगवानपि षडैश्वर्य्यपूर्णोऽपि रन्तुं मनश्चक्रे रमणस्योद्दीपनालम्बनानां कालदेशपात्राणां शरद्यामिनी वृन्दावनव्रजवनितानां सर्वोत्कृष्टमाधुर्य्यणाकृष्टत्वादिति भावः । शतकोटिविलासिनीनामुज्ज्वलरसचिन्तामणीनां सौस्वर्य्यसौन्दर्य्यं सौकुमार्य्यसौरभ्य माधुर्य्यवैदग्ध्यतौर्य्यत्रिकाणि बहुविधानि परमरुचिराणि स्वीय श्रोत्रादीन्द्रियैर्जिघृक्षुःस्वीयसौस्वर्य्यादीनि तदीयश्रोत्रादिभिस्ता जिघ्राहयिषुश्च बभूव प्रेमवश्यत्वादेकस्यामेव रजन्यामव्यवधानेन यदा तदा सत्यसङ्कल्पताशक्त्या प्रेरितया योगमायया दुर्घटघटनापटीयस्या शक्त्या प्रहरचतुष्टयवत्यास्तस्या एव रात्रेर्मध्ये तावद्विलाससमापयित्र्यः परश्शतकोटिराश्च आनीय दर्शिताः अत एव ता रात्रीर्वीक्ष्येति बहुवचनं ब्रह्मरात्र उपावृत्त इत्यग्रेऽपि वक्ष्यते प्रसिद्ध्यर्थंतत्पदोपन्यासान्नानागुणवतीरिति रात्रीणामुत्कर्षः शरदा हायन्तः शरद्यामपि उत्फुल्ला मल्लिका यासु ताः शरद्यपि मल्लिकाः "कुन्दस्रजः कुलपतेरिह वाति गन्धः" इति कुन्दास्वपि"रेमे तत्तरलानन्दीकमलामोदवायुना"इतिरात्रावपि कमलानि पुष्यन्तीति वृन्दावनस्योत्कर्षः शरदोत्फुल्लमल्लिका इति पाठे शारद्यश्च ता उत्फुल्लमल्लिकाश्चेति ता रन्तुमारेभे रेमे इत्युक्तेरात्मारामस्य स्वत एव पूर्णकामस्य भगवतस्तस्य व्रजवनितासु रमणं बाह्यं नरविडम्बनमेवेति कश्चिद्वचक्षीतेत्यतो रन्तुं मनश्चक्र इत्युक्त्वा रमणमिदमान्तरमेव नतु बाह्यमिति ज्ञापितं सत्यमान्तरमेवेदं रमणं किन्तु व्रजसुन्दरीणां भक्तत्वात् तदनुरोधेनैवेति कश्चिद्व्याचक्षीतेत्यतश्चक्र इत्यात्मने पदं प्रयुक्तं रमणस्य स्वसुखार्पकत्वं बोधयति ततश्च इत्थंभूतप्रेमाणो व्रजसुन्दर्य्यो यत्तासु भगवान् स्वतः सर्वसुखपूर्णोपि रन्तुं मनश्चक्र "आत्मारामाश्च मुनयः" इत्यत्र "इत्थं भूतगुणो हरिः"इति वदता व्रजसुन्दरीणामपि परमोत्कर्षः तथा "सोऽपि कैशोरकवयोमानयन् मधुसूदनः। रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः" इति "युवतीगोपकन्याश्च रात्रौ सङ्कल्पकालवित् । कैशोरकं मानयानः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सह ताभिर्मुमोद ह"इति श्रीविष्णुपुराणहरिवंशयोः गानयन्नादृतं कुर्वन्नित्यर्थः । ताभिः सह विहाराभावे वैरकैशोरवयोव्यर्थमानितं स्यादत एवोक्तमभियुक्तमहानुभावैः"कैशोरं सफलीकरोति कलयन् कुञ्जे विहारं हरिः"इति सर्वथैव व्रजवनितानामुत्कर्षो ध्वनितः तत्र चोक्तानुक्तसर्वांत कृत्यसमाधानार्थमाह—योगमायां स्वीयाचिन्त्य-चिच्छक्तिवृत्तिम् उप आधिक्येन आश्रित इति स्वाश्रितानामपि तामाश्रित इति प्रयोगात्तस्या अप्यत्र सौभाग्याधिक्यम् ॥ १ ॥

---

विशुद्धरसदीपिका ।

श्रीमिश्रनारायणपादपल्लवं—
प्रणौमि सद्भागवतं पुराणम् ॥
यत्र क वा येन स्वयं प्रकाशितं—
स्वयं निपीतं स्वयमेव गीतम् ॥
लोकवल्लीलया येन मुनीन्द्रवरदानतः ।
लब्धा महापुराणस्य यथार्थाख्यानशक्तयः ॥
नवधा भक्तयो यस्य मूर्त्तिमत्योऽग्रतः स्थिताः ।
शुद्धां भक्तिं प्रपुष्णन्ति तत्पदाम्बुजसेविनाम् ॥
किशोरीरमणो यस्य देवः सख्येन सेवितः ।
ललितानुगतप्रीत्या साक्षादानन्ददायकः ॥
प्रणम्य प्रद्युम्नपदारविन्दं—
वर्षन् महाप्रेमसुधामरन्दम् ॥
श्रीराधिकाकृष्णकिशोरलीलां—
व्याख्यामि चाख्यामि सदाऽ*प्रमीलाम् ॥
श्रीवंशिकां नौमि ययात्मसात्कृताः—
कृता न के कुञ्जसुखाब्धिमग्नाः ।
निपीय यस्या ध्वनिमाशु याता—
जाता व्रजे राधितराधिकास्ताः ॥
रामकृष्णप्रसादेन संवादेन सतामियम् ।
क्रियते रासलीलाया विशुद्धरसदीपिका ॥
यदुच्छिष्टामृतेनायं मूर्खोऽपि मुखरीकृतः ।
साधवस्ते कृपापूर्णाः क्षम्यन्तामक्रमं मम ॥

अपि च—

उद्दीप्यतामियं सद्भिर्यतः स्यात्तत्त्वदीपका ।
ईक्षन्तामिच्छया सन्तः सहन्तां मम साहसम् ॥

तत्र भगवल्लीलाया नित्यत्वप्रतिपादकं श्रीदशमस्कन्धवाक्यं यथा, जयतीति—

जयति जननिवासो देवकीजन्मवादो,
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन-
व्रजपुरवनितानां वर्द्धयन् कामदेवम् ॥

अथ विश्वविस्मापकं श्रीभगवच्चरितामृतं निपीयाऽवितृप्ततया ऽहोभाग्यं तदानीन्तनानां ये तादृशलीलं भगवन्तं साक्षादपश्यन्निति समुत्कण्ठया विषीदन्तं राजानं ज्ञात्वा तल्लीलाया नित्यत्वं सूचयन् मा दुःख चक्षुर्गोचरोयं नित्यविहारी "श्रोतव्यो मन्तव्यः" इत्यादि श्रुतिसिद्धः श्रवणमनोगोचरस्तु शश्वत् क्रीडतीति समाश्वसयन्नाह—जयतीति । स इति प्रकरणाल्लब्धं स जयति सर्वोत्कर्षेण वर्त्तते इति वर्त्तमानप्रयोगेण नित्यत्वं सूचितम् । अत्र एव परमोल्लासेन प्राक् प्रयोगः कथमित्याकाङ्क्षायां "द्वे विद्ये वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति श्रुतिप्रतिपादितं रूपद्वयं निर्दिशति—तत्र पूर्वार्द्धेन शब्दब्रह्म रूपत्वम् उत्तरार्द्धेन तु परब्रह्मरूपत्वम् इति विवेकः । तथा हि जननिवासः जनेषु भक्तेषु नितरां वासो यस्य सः तेषां तादृशत्वम्—

"सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" ॥

इति श्रीतृतीयोक्तेः तत्कुतः?देवकीजन्मवादः दीव्यति नित्यं क्रीडतीति देवो नित्यविहारी तं कायति शब्दायते सा देवकी श्रीहरिकथा—

"कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः" ॥

इति प्रथमोक्तेः । तस्यामेव जन्म प्रादुर्भावो यः स एव वादः तत्त्वविस्रम्भता कथा यस्य सः तत्कुतः यत् यतः उ इति विस्मये वराणां श्रेष्ठतमानां श्रीभागवतप्रवराणां परिषदः सभायाः स्वैः सर्वभूतैर्दोर्भिरिव सद्धर्मपालनसचिवैर्महाभागवतैः तद्द्वारेत्यर्थः । अधर्मं "धर्मो मद्भक्तिकृत्प्रोक्तः" इत्युक्तेस्तद्विपरीतं सर्वमप्यधर्मम् अस्यन् निजभक्तवरद्वारा श्रवणकीर्तनादिव्यतिरिक्तं कर्मज्ञानादिकं निरस्यन्नित्यर्थः । एवं च शब्दब्रह्मस्वरूपेण श्रीभगवतः श्रवणप्रत्यक्षत्वं साधितम् । अथ सुस्मितेन रसोल्लासाभिव्यक्तिविकसितेन । श्रयते आश्रयते हरिरेनामिति श्रीः तस्याः श्रियः परमायाः श्रीराधाया मुखकमलेन उपलक्षितस्सन् स्थिरचराणाम् अर्थान्नित्यधामगतानां स्थावरजङ्गमानां वृजिनं विरहखेदं निघ्नन्ति तथा अत्रेत्थम्भूतलक्षणतृतीया यथा नित्यसम्बन्धः सूचितः "वामभागे स्थितां तस्य राधिकां परदेवताम्" इति तन्त्रोक्तेः । अत्र परदेवतामिति परस्य पुरुषोत्तमस्य तस्यैव देवतामिवाराध्यामिति तस्याः प्राधान्यमप्यर्थानुक्तं तथा तेनैव रूपेण व्रजेत्यादि "व्रजनं व्याप्तिरित्युक्ता व्रजनाद्व्रज उच्यते" इति स्कान्दनिर्वचनानुसारेण व्रजपुरस्य श्रीगोलोकाख्यमुख्यप्रकाशस्य वनितानां परमानुरागवतीनां नित्यसहचरीणां कामो नवनवोऽभिलाषस्तस्य देवोऽधिष्ठाता शुद्धः प्रेमा तं वर्द्धयन् तान्तु विद्यमानमेव बहुलीकुर्वन् एवं च युगलरूपेण श्रीराधाप्राधान्येन च क्रीडन्नित्यदा वर्त्तत इति तस्य तेनैव रूपेण परब्रह्मत्वं प्रतिपादितमिति "यो ऽसौ परं ब्रह्म गोपालः" इति तापनीश्रुतेः । एवं च यत्र तत्राप्येकत्वेन पुंस्त्वेन च निर्देशोऽभेदाभिप्रायेणेति मतम् तदुक्तं सम्मोहनतन्त्रे "तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकम्"इति व्यतिरेके दोषस्तत्रैवोक्तः—

"गौरतेजो विना यस्तु श्यामं तेजः समर्चयेत् ।
जपेद्वा ध्यायते वापि स भवेत्पातकी शिवे !" ॥

इति सङ्क्षेपः । अत्र कारिकाः—

अनन्तलीलस्य हरेस्त्रिधा लीलास्ति नित्यदा ।
व्रजे वने निकुञ्जे च श्रेष्ठ्यमत्रोत्तरोत्तरम् ॥
पुनः सा त्रिविधा चैका प्रकटाऽप्रकटाऽपरा ।
आद्या साधकसिद्ध्यै स्वसुखस्पृहया तथाऽपरा ॥
कदाचिद्वृद्धापरान्तेऽन्या यथा सम्भूय भुगते ।

---

* अप्रमीलामतन्द्रितां नित्यामिति यावत् ।

विशुद्धरसदीपिका ।

गोलोकस्य प्रकाशे हि किञ्चित्कालं प्रकाश्यते ।
स्वैः स्वैः परिकरै राधाकृष्णौ प्रकटतां गतौ ।
तत्तद्भावेन भजतां तां तां सिद्धिं विधाय च ॥
पोष्यवर्गान् समादाय पुनरप्रकटौ सदा ।
कुञ्जेकुञ्जे विहरतस्तदेका सक्तमानसौ ॥
प्राकट्ये चाप्यप्रकटप्रकाशेनैकतां गतौ ।
तां तां लीलां प्रकुरुतस्तां गायन्ति मुनीश्वराः ॥
केवलाऽप्रकटा लीला रहस्यत्वान्न गीयते ।
साक्षादिति मुनीन्द्राद्याः प्रकटाप्रकटं जगुः ॥
साधकानुग्रहस्तत्रासक्तौ हेत्वन्तरं मतम् ।
अष्टाविंशतिभिस्तत्राध्यायैः श्रीदशमे स्फुटम् ॥
वात्सल्यसख्यादिष्टानां योगे सिद्धिं समादिशत् ।
अथ माधुर्यसिद्धानां तामाख्यातुमुपक्रमः ॥
मुनीन्द्रस्यातिहर्षेण पञ्चाध्यायेतिनिर्णयः ॥

अथ श्रीरासपञ्चाध्यायी व्याख्यायते ।

तत्र श्रीबादरायणिरुवाचेति श्रीशुक उवाचेति पाठद्वयं तत्रातिहर्षज्ञापकं पुण्यविशेषमेतस्मिन्नुपकल्पयन् बादरायणिरुवाचेत्याह श्रीसूतः—तथाहि बदराणां समूहो बादरम् "बदरीखण्डमण्डिते" इति प्रथमोक्तेः । तदयनमाश्रयो यस्यासौ बादरायणो व्यासः तस्यापत्यं बादरायणिः ततश्च—

"अन्यत्र दशभिर्वर्षैर्यत् पुण्यमुपलभ्यते ।
मनुजैरेकरात्रस्य वासाद्वदरिकाश्रमे" ॥

इति पाद्मात् । तत्र चिरतरवासेन समासादिततद्देशाभिधानस्य मुनेः पुण्यपुञ्जफलमत्रैव सत्पुत्रे निष्पन्नमिति सूचितम् तच्च पुण्यं श्रीकृष्णाराधनमेव सर्वज्ञस्य तस्य परमोत्तमे तस्मिन्नेव व्यवसायस्यौचित्यात् तादृशपुण्यफलरूपोऽसौ तत्पुत्र इति सर्वज्ञत्वश्रीभगवत्प्रेमरसमयत्वादिकं तस्मिन्नित्यासिद्धमेवेत्यपि दर्शितम् ततश्च तादृशभक्त्यैवेयं वक्तृभिः संसेव्या रासकथेति सूचितम् यद्वा, रहस्यप्रकाशने स्वेष्टदेवापराधो ऽप्रकाशने च ज्ञानखलतादोष इत्युभयतः पाशारज्जुरिति चिन्तयन् मुनीन्द्र एव स्वदेहकृत्पुण्यसमूहं निष्प्रत्यूहमूहयन् सचित्तम् आत्मानमभिजातं तज्जातं चाभिमन्यमान आख्यातवानाख्यानमित्यादिश्यन्नाह—बादरायणिरुवाचेति । यत्र च श्रीशुक उवाचेति पाठः श्रीरत्रातियोग्यत्वाच्छ्रीराधैव "आत्मया रमया रेमे„ इति ब्रह्मसंहिताऽन्यः "रेमे तया चात्मरत„ इति वक्ष्यमाणाच्च तस्याः शुकः तत्क्रीडानिकुञ्जपञ्जरस्थः कलत्राङ्कनामा सुखधामा इति तल्लीलागानयोग्यतां तदेकपरतां तदुत्कर्षहर्षितां तद्रहस्यप्रकाशनेप्यतिरस्यतां रसतां च तद्वाक्यजातस्य कोमलालापतां च सूचयन् श्रीशुक उवाचेत्याह—अथ पूर्वाध्यायान्ते—

"नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः ।
कृष्णं च तत्रच्छन्दोभिः स्तूयमानं सुविस्मिताः" ॥

इत्युक्तं अस्यार्थः नन्दादयः "यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशया त्वत्कृते" इत्युक्तदिशा तदेकवत्सला तं तेषामेव सम्बन्धिनं लोकं दर्शयामास "लोकं स्वं गोपानाम्" इति प्रागुक्तेः । न तु निर्विशेषं सत्यज्ञानादीनां तस्यैव विशेषणत्वात् नीरूपस्योत्तरस्य दर्शनानुपपत्तेश्च अत एव परमानन्दनिर्वृता बभूवुरिति शेषः । कृष्णं च सर्वोत्कर्षकपरमानन्दघनं नराकारं परं ब्रह्म छन्दोभिस्तदेकपरैरतिरहस्यैः गोपालतापिन्याद्युपनिषद्विशेषैः यद्वा, "सर्ववेदेतिहासानां सारं सारं समुद्धृतम्" इत्युक्तेरस्यैव महापुराणस्य प्राणभूतैः समनन्तरवर्ण्यमानैः । "भगवानपि ता रात्रीः" इत्यादिभिर्नियताक्षरविशेषैः स्तूयमानं दृष्ट्वा तद्गतलीलामात्सेषु गोप्यत्वाच्छुत्वेति नोक्तम् तावतापि सुविस्मिताः विस्मृतदेहदैहिका बभूवुरित्यर्थः । एवं तन्मनोरथपूरणं श्रुत्वा श्रीव्रजदेवीनामसमोर्द्धमनुरागमभिलाषं च "पीत्वामुकुन्दमुखसारघ', इत्यादिना "अक्षण्वताम्" इत्यादिना च तत्र तत्र वर्णितं स्मृत्वा अहो अतिकाठिन्यं श्रीभगवतो यदीदृशप्रियवर्गाणामुपेक्षेत्यन्तः समनुतप्यन्तं राजानमुपलभ्याह—भगवानपीति । अत्र "मयेमा रंस्यथ क्षपाः" इति दत्तवरासु या मनसा प्रतिश्रुतास्ता रात्रीर्वीक्ष्य भगवानपि परमस्वतन्त्रोऽपि रन्तुं मनश्चक्र इत्यहो तासां प्रेमप्राबल्यमिति भावः । वस्तुतस्तु रासोऽयं द्विविधः नित्यरासो महारासश्चेति—

"रहोविहारश्रवणान्नित्यरासोत्सवादपि ।
मनो मे हर्षमापन्नं न तृप्यति तृषार्तवत्" ।

इत्यादिपुराणोक्तेः अत्र महारासश्रवणादिति प्रकरणादन्वेयं तत्रोत्तरस्य महत्त्वमपि हर्षप्रदत्वं च साधकानुग्रहापेक्षयेति सङ्गृहीतः श्रीमुनीन्द्रैः प्रकटलीला चाप्रकटप्रकाशस्यैक्येनैव जायत इति तथैव व्याख्यायते वस्तुतस्तु "नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः" "भगवानपि ता रात्रीः" "वीक्ष्य रन्तुं मनश्चक्रे इत्यन्वयः । अत्र तम् अप्रकटं लोकं तास्तत्रोपलभ्यमाना रात्रीरित्यर्थः अपिरत्र समुच्चये कास्ता इत्यपेक्षायामाह—शरदा उपलक्षिताः तथा उन्मल्लिकाः फुल्लमल्लिकाश्चेति क्रमेण शरद्वसन्त ग्रीष्मसम्बन्धिनीः रात्रीरित्यर्थः । वीक्ष्येति तासां देवतात्वं ध्वनितम् अन्यथा कालावयवत्वाद्दर्शनानुपपत्तेः । ततश्च तदभिमानिनीर्देवता एव राससम्पत्तिसम्पादयित्रीः साक्षादागता विशेषेणोक्ष्येत्यर्थः । एवं च ऋतुत्रयसम्बन्धिन्य एकत्र मिलिता अशीत्युत्तरशतं राज्यभिमानिन्यो देवतास्तत्रैव यमुनापुलिनस्याप्रकटप्रकाशे स्वस्वसेवाव्यग्रकराः समागता इति ज्ञेयम् सोऽयं शरदामोदाख्यो निकुञ्जविशेषः यत्र हि सर्वकालं रासादिसम्पत्तिः स्वभावसिद्धैव वर्तते तामेव समीक्ष्य साधनसिद्धानां व्रजाङ्गनानां मनोरथपूर्तिस्फूर्तिरुदयते स्म ताश्च द्विविधाः श्रुतिरूपा मुनिरूपाश्च पुनर्द्विविधाः "युवतीर्गोपकन्याश्च रात्रौ सङ्कल्पकालवित्" इति श्रीहरिवंशोक्तेः । कालविदिति तासां मनोरथपूरणसमयज्ञ इत्यर्थः । तत्राद्याः परकीयाभिमानिन्यः अपराः स्वकीयाभिमानिन्यश्च गान्धर्वरीत्या स्वीकारात् स्वीयात्वमिह साम्प्रतमित्युज्ज्वलोक्तेः परन्तु "प्रच्छन्नकामिता ह्यासां गोकुलेन्द्रस्य सौख्यदा" इति "तत्रोक्तेस्तदनुकरणमपि मतम् पूर्वासां परकीयात्वमपि समुत्कण्ठावर्द्धनायाभिमानमात्रमेव न तु वास्तवं "माया कल्पिततादृक्स्त्रीशीलनेनानुसूयभिः । "न जातु व्रजदेवीनां पतिभिः सह सङ्गमः" इति तत्रैवोक्तेः । अथ तासां मुनिरूपात्वं पाद्मोत्तरखण्डे—

विशुद्धरसदीपिका ।

"पुरा महर्षयः सर्वे दण्डकारण्यवासिनः ।
दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ॥

अत्र गोकुल इत्यनेन हरिं सम्प्राप्येत्यनेन च "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति न्यायादेते पूर्वमेव तादृशभावेन श्रीकृष्णोपासका आसन्निति सूचितम् तत्र श्रीरामं दृष्ट्वा तत्सारूप्येणोद्बुद्धसंस्काराः हरिं परममनोहरं धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदेन चतुर्विधनायकेषु धीरललितं स्वोपास्यमेव भोक्तुमैच्छन् सुविग्रहमित्युक्तेः न तु धीरशान्तं श्रीराममिति भ्रमः कार्य्यः रसाभासापत्तेः ते सर्वे गोकुलस्त्रीगर्भतः समुद्भूताः केचिच्च देशान्तरगोपस्त्रीभ्यः समुद्भूताः गोकुले विवाहिता इति विवेकः। तथा बृहद्वामने "अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे" इति। आसां नामानि कृष्णयामले—

"अथातः सम्प्रवक्ष्यामि गोपीः मुनिचरीः पराः ।
याः कृष्णं तपसा प्राप्य रमन्ते स्म निरन्तरम् ॥
चित्रगन्धा सुगन्धा च स्वगन्धा हरिवल्लभा ।
रङ्गवल्ली च सारङ्गी शारदा च शुचिश्रवा ॥
स्निग्धा सुवर्चा मृदुला मधुरा च मधुश्रवा ।
सुधाधारा चित्रकला रत्नचूडा कलस्वना ॥
अमृता शोभना चैवामृतानन्दाऽमृतप्रिया ।
रत्नाभृङ्गी परिमला तथा रत्नकला शची ॥
हारावली मालिनी च शुभा काञ्चनमालिनी ।
रुक्ममाला सुगन्धा च कस्तूरी पद्मिनी सती ॥
कुमुद्वती रसाला च चित्ररूपा सनातनी ।
विपुला नन्दनी मेधा मेध्या सिद्धिर्धृतिर्ध्रुवा ॥
कुमुदा कामिनी काम्या कौलिनी कमलावती ।
कलिका कामनीया च कामचारा कलावती ॥
कुशला वकुला धीरा विधुरा विधुराङ्गिका ।
जयन्ती जयनी जाती जगन्मोहनसुन्दरी ॥
रुचिरा चारुसर्वाङ्गी शुभ्रा सर्वाङ्गसुन्दरी ।
मञ्जुला महिला मौञ्जी मदना मदनप्रिया ॥
लीलावती लीलदीप्तिः प्रभा शोभा जया कृपा ।
मधुप्रियेति विज्ञेया अशीतिमुनिसुन्दरी ॥
ज्ञानप्रेमान्वितैर्भावैर्भजन्त्यः कृष्णमन्वहम् ।
श्रीकृष्णरससम्मोदमुदिताः प्रमदा इमाः ॥
अधनाप्तधनं यद्वत् त्यजन्ति निजप्रियम् । इति ।

तथैव श्रुतयोऽपि "गोप्यो जाताः" इति तत्रैवोक्तम् । यथा—

"ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः ।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ।
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा ॥
तुष्टोऽस्मि ब्रूत वो प्राज्ञा वरं यन्मनसेप्सितम् ।

श्रुतयः ऊचुः—

"कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धा न संशयम् ।
यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ।

श्रीभगवानुवाच—

आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ इति

अत्र कामतत्त्वेनेति भगवद्विषयत्वात् कामोऽपि तत्त्वरूप इत्यर्थः। अन्यथा तत्त्वपदवैयर्थ्यादिति भावः।"स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियः" इति श्रुतिः स्तुतौ च "गायत्री चासु जाता" इति पाद्मसृष्टिखण्डे प्रसिद्धम्। द्विविधानामेवासां परकीयात्वं तदेतत् प्रकटलीलायामेव क्वचिदप्रकटलीलायामपि तथा श्रुतिलीलयोरभेदाभिप्रायेणात्यनवद्यं ततश्चैता एवोद्दिश्य कामेनेत्युक्तं पाद्मे। गोप्यः कामादिति सप्तमे च। पर्यवसानेति तु "जिघांसयाऽपि हरये स्तनं दत्त्वाऽऽप सद्गतिम्" इति वद्रिरंस्यापगमः स्पष्ट एव "ततो मुक्ता भवार्णवात्" इत्युक्तेः भवार्णवः कामवासनैव "दुःखं कामसुखापेक्षा" इति श्रीएकादशोक्तेः। आसां च "वितर वीर नस्तेऽधरामृतम्" इत्यादिना वक्ष्यमाणरिरंसाविशेषेण कामादित्युक्तिरविरुद्धैव "प्रेमैव गोपरामाणां कामः इत्यगमत् प्रथाम्" इत्यादिकं तु सिद्धावस्थापरम् आस्वेव कासाञ्चित् सहचरीत्वोपलब्धेः सुतरां प्रेमपरत्वमिति ज्ञेयम् अत एवासां सिद्धिरपि द्विविधा कासाञ्चिद्रिरंसाविशेषेण यूथेश्वरीत्वं कासांचित् शुद्धभावेन सहचरीत्वं च, तत्राद्यानां व्रजनिष्ठत्वमेव, उत्तरासां व्रज निकुञ्ज निष्ठत्वं यथायोगं नहि। निकुञ्जेऽनेकनायिकात्वं "गोप्यैकया युतस्तत्र परिक्रीडति नित्यदा" इति ब्रह्मयामले—

"अत्रैवाहं पुमानेकः केवलोऽनन्य ईश्वरः ।
स्त्री द्वितीया तु राधैव तस्याः सख्यः स्त्रियोऽपराः" ॥

इत्यादिपुराणोक्तेश्च । अत एवैतासां चतुर्विधत्वमुक्तं पाद्मे—

गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः ।
देवकन्याश्च विप्रेन्द्र ! न मानुष्यः कथञ्चन ॥

तत्र श्रुतिमुनिरूपास्तूक्ताः तत्र श्रुतिचरीनामानि कृष्णयामले—

अथ वक्ष्ये श्रुतिचरीर्गोपीः कृष्णमनोरमाः ।
कृष्णस्य दक्षिणे पार्श्वे दीव्यन्ती चारुदर्शना ॥
सुतपोमतपाश्चैव सुव्रताथ प्रियम्वदा ।
सुरेखा च सुपर्य्याया रत्नरेखा वहुश्रवाः ।
विश्रामधारणीचैव धरित्री द्युतिरेव च ।
सुमेधा सुमुखी धन्या सुखदा च सुलक्षणा ॥
सुन्दरी च सुखोत्पन्ना सुरभी गुणवत्यपि ।
सुलोचना सुफलिनी सुशीला सुभ्रुवा तथा ॥
उद्गीता च सुगीता च कलगीता कलस्वना ।
कलकण्ठी कलोत्ताना मातङ्गी च कलावती ॥
क्रमप्रदा च वटुवा वहुहुता वहुक्रिया ।
सुप्रयोगा विप्रयोगा वहुयोगा सुनासिका ॥
चत्वारिंशदमूर्गोप्यो ज्ञानप्रेमरसाश्रिताः ।
गायन्त्यः सामगानोत्थं सङ्गीतं मधुरं स्वरम् ॥
नानायन्त्रविधानेन तोषयन्ति निजेश्वरम् । इति

गोपकन्या नित्यसिद्धाः प्रकाशभेदेन व्रजनिकुञ्जगताश्च आद्याः द्विविधाः कान्तभावाः सख्यभावाश्च पराश्च सख्य एव देवकन्यास्तु—

## विशुद्धरसदीपिका ।

देवेष्वंशेन जातस्य कृष्णस्य विबि तुष्टये ।
नित्यप्रियाणामंशास्तु या जाता देवयोनयः ॥
अत्र देवावतरणे जनित्वा गोपकन्यकाः ।
ता अंशिनीनामेवासां प्राणसख्योऽभवन् व्रजे ॥

इति श्रीमदुज्ज्वलोक्तौ । आसामेव सङ्गात् श्रुतिमुनिरूपासु काश्चिद्यूथेश्वरीत्वं काश्चिच्च तत्सहचरीत्वं प्राप्ताः काश्चिदुत्कटेन शुद्धप्रेम्णा श्रीललितादीनां सङ्गाच्छ्रीराधा सहचरीत्वमिति विवेकः । तदुक्तं श्रीएकादशे "मत्कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः" ॥ व्याख्या । मम इमा मत्काः मयि कं सुखं यासामिति वा मन्मुखसुखिन्य इत्यर्थः । तासां मा रमणं श्रीराधारमणं प्रापुः याश्चास्वरूपविदः शुद्धप्रेमैकपरवानहमिति मम स्वभावानभिज्ञाः ता जारमिति जारबुद्धिवेद्यमेव नतु पापपतिम् । श्लेषेण जरयति कामवासनामिति जारस्तं प्रसिद्धजारत्वस्य स्वस्मिन्नासिद्धत्वमाह, ब्रह्मेत्यादि । ता अपि शुद्धप्रेमवतीनां मत्सङ्गात् शतसहस्रशः परमं परा उत्कृष्टा मा श्रीराधाख्या यस्यासौ परमस्तं नराकृतिपरब्रह्मैवापुः ब्रह्मत्वमस्य कथमस्यावतारस्य ब्रह्मता भवतीति "योसौ परं ब्रह्म गोपाल" इति च तापिनी श्रुतेरपि सङ्क्षेपः विशेषजिज्ञासायां भक्तिमञ्जूषा द्रष्टव्या सा च प्राप्तिः कासाञ्चिद्भावपरिपाकभेदेन रासक्रीडायां कासाञ्चित् कुरुक्षेत्रयात्रायामिति "सिद्धिं कतिचिदेवासां रासारम्भे प्रपेदिरे" इत्युज्ज्वलोक्तेः "तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन्" इति श्रीदशमोक्तेश्च भावपरिपाकश्च कामवासनापगमेन निष्पद्यते सच शुद्धसख्योदयेनेति सिद्धान्तः एतदभिप्रेत्याहुः श्रीधरस्वामिपादाः

ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा ।
जयति श्रीपतिर्गोपीरासमण्डलमण्डनः ॥ इति

इति अत्र श्रीपतिरिति दाम्पत्यरीतिः श्रीराधामाधवयोरेवेत्यभिप्रायेणोक्तं गोपीरासमण्डलमण्डन इति गोपीनामेवान्योन्यबद्धकराणां रासमण्डलस्य श्रीपतिरूपेणैव मण्डन इत्यर्थः । ततश्च कामविजय एव पर्यवसित इति भावः । एवमेवाग्रे व्यक्तं भावि अत एवानन्दवृन्दावनचम्पूमनु "अथ चतुर्मुखशर्धगर्वगरिमखण्डनानन्तरं मदकलकन्दर्पदर्पदमनाय निजमुरलिकालिकाशिक्षापरीष्टये च" इत्यादिना अत्र मुरलिकाशिक्षा आलिपरीष्टेति क्रमः । यद्वा, मुरलिकैव या आलिकाप्रियसखीत्यर्थः । वंशीप्रियसखीति ब्रह्मसंहिताऽपः एवं च "योगमायामुपाश्रित" इत्यपि सुसङ्गतं योगोऽप्राप्तघटितघटना साचैकेनैव स्वरूपेण विविधभाववतीनां वाञ्छापूरणम् तदर्थं मायः शब्दोऽस्यामिति योगमाया वंशीमीयते प्रमीयते चक्रानेनेति मायः इति व्युत्पत्तेः "लिङ्गं यद्वृपृदृदययोः" इति श्रीद्वितीयोक्तेश्च । तथा वंशीप्रियसखीत्युक्त्या तदुपाश्रयणं युक्तमेव अपि च महारुद्रस्तु वंशिकेति श्रीकृष्णोपनिषद्वचनात् कामदर्पदलनाय तदाश्रयणमिन्द्रदर्पदमनाय गिरिराजाश्रयणमिवावश्यकमिति भावः । यद्वा, योगमाया अचिन्त्यमहाशक्तिः श्रीभूलीलेति मुख्यतमशक्तित्रयी मुख्या लीलाख्यात्र च वृन्दावनाभिधेया तामुपाश्रित इत्यनवद्यम् अथवा योऽयं भगवान् यामुपाश्रितः सन् रन्तुं मनश्चक्रे सा मा गमा दुर्गमा दुर्ज्ञेयेति यावत् "गोविन्दप्रियवर्गदुर्गमसखीवृन्दैरनालक्षिता" इति श्रीमत्सुधानिधेः । "ये गत्यर्थास्ते ज्ञानार्थाः" इत्यनुशासनाच्च सोऽपि रन्तुं मनश्चक्रे इत्यन्वयः । यद्वा, सा अगमा रन्तुं मनश्चक्रे सा का यामुपाश्रितः भगवानपि रन्तुं मनश्चक्रे इति परिवृत्त्यान्वयः । सुगोपत्वाच्छिलष्टपदैरुपादानमशेषं प्राग्वत् अत एवास्यास्तथाविधं ध्यानमुक्तं श्रीमृत्युञ्जयतन्त्रे यथा—

"ध्यायेत्तत्र महादेवीं स्वयमेव तथाविधः ।
रक्तपद्मनिभां बालां बालार्ककिरणोज्ज्वलाम् ॥
पीतवस्त्रपरीधानां वंशयुक्तकराम्बुजाम् ।
कौस्तुभोद्दीप्तहृदयां वनमालाविभूषिताम् ॥
श्रीमत्कृष्णाङ्कपर्यङ्कनिलयाम्परमेश्वरीम् ।
सर्वलक्ष्मीमयीं देवीं परमानन्दनन्दिताम् ॥
रासोत्सवप्रियां राधां कृष्णानन्दस्वरूपिणीम् ।
अजेशच्छदमृताकारां पूर्णानन्दमहोदधिम् ॥ इति ।

अत्र तथाविधः सखीभाववान् । तदुक्तं श्रीमत्सुधानिधौ—

"दुकूलं बिभ्राणामथ कुचतटे कञ्चुकपटम्—
प्रसादं स्वामिन्याः स्वकरतलदत्तं प्रणयतः ॥
स्थितां नित्यं पार्श्वे विविधपरिचर्यैकचतुराम्—
किशोरीमात्मानं किमिह सुकुमारीं नु कलये" ॥ इति ।

अत्र भाव एव कार्यो न तु वेषोऽपि धार्य इति हृदयम् । तदुक्त भक्तिभावप्रदीपे—

"परात्परेश्वरे भावश्चिदानन्दरसात्मकः ।
स दैहिकप्रकाशस्य बाध्यतेऽनुभवे नहि ॥

तथा—

भावो यावदहं योषित् पुमान् षण्ढस्तनोर्भ्रमात् ।
तावत्तु गोपीभावस्य कथमभ्युदयो भवेत् ॥ इति ।

विवृत्तमिदं भक्तिमञ्जूषायाम् । यद्वा, श्रीवैष्णवतोषिण्यां सदैव योगो यथा सहसा योगमाया श्रीराधा तामुपाश्रितः समीपस्थितः सन् तदाज्ञया ता व्रजसुन्दर्यो वीक्ष्य रात्रीश्च प्रतिज्ञाता वीक्ष्य रमणयोग्या ज्ञात्वा स्वयं श्रीराधासहितस्ताभिस्ताभिः सह चक्राकारं मण्डलं कृत्वा रन्तुं क्रीडयितुं मनश्चक्रे । यद्वा, अन्तरङ्गलीलायां सदैव सङ्गोद्योगम् आपते श्रूयते सा योगमाया श्रीराधा तामुपाश्रितः मुख्यतया स्वीकृतवान् पश्चात्तदाज्ञया मुरलीसङ्केतेन तस्याः सख्योऽन्याश्च चन्द्रावलीप्रभृतयोप्याकारिता इति एवं च प्रकटलीलायामपि तया सह नित्यक्रीडा सूचकानि "पूर्णाः पुलिन्द्यः" इत्यादीनि "यद्धम्बुजाक्ष" इत्यादीनि च वाक्यजातानि सुसङ्गतानि भवन्तीति ज्ञेयम् अन्यथा कल्पनागौरवं रसाभास उपासनाविरोधश्चापद्येतेति दिक् ततश्च यतो योगमायामुपाश्रितस्ततो भगवान् "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इति कोशात् श्रीमानित्यर्थः । नित्ययोगे मतुप् नित्यदा तया युक्तः अतिशायने वा तदनुगतश्चेत्यर्थः । नित्ययोगो नाम परस्पराव्यभिचारित्वं तथा— "राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेष्वा" इति बह्वृचपरिशिष्टश्रुतेः ॥ व्याख्यातेयं भक्तिमं० यतो "नित्यरूपो हरिस्तां तु राधां न मुञ्चत्ययो सापि तं न चणार्द्धम्" इति माहेश्वरीसंहितायाः तदनुगतिश्च तद्भक्तिः साच तद्भक्तानां समधिगम्यते एव भक्ताः

श्रीविशुद्धरसदीपिका ।

कृष्णं भजन्ति सततं तदनुग्रहनामाहेश्वरीमंहिताऽपः अथवा—

स्तम्भनं मोहनं रूपं बलं वैदग्ध्यमेव च ।

अभिलाषोपपन्नत्वं षगणां भग इतीङ्गना ॥ इति ।

आश्रितो नित्यमधुरलीलो धीरललितो भगवान् योगमायामुपाश्रितः सन् रन्तुं मनश्चक्रे एवं चात्मनेपदप्रयोगोपि साधुः श्रीराधिकाराधनं कृते एवायं सम्भ्रमः रेमे तयेत्यत्र च तस्या एव तदात्मत्वेन स्थापयिष्यमाणत्वादिति सङ्क्षेपः । अत्र कारिकाः

तदेवं ज्ञायते राधा नामबीजं कलं जगौ ।

यगौ सखीजनस्तस्याः सुखायान्या स्वहेतवे ॥

श्रुतयो मुनयो गोप्यो दुर्गाव्रतपरा हि याः ।

सर्वाः संरमयन् रेमे दर्शयन्नेकनानताम् ॥

स्वस्य तस्यां रहस्येनां रमयामास तास्त्यजन् ।

प्रकाशभेदेन तथा बहुरूपः स्वलीलया ॥

नस्या विम्बभ्रमेणैव रमयामास काश्चन ।

अतः स्वाधीनपतिका राधिका राधनाय हि ॥

रासक्रीडेति निर्णेतुमस्माकमयमुद्यमः ।

तत्रादावलङ्कारव्यङ्ग्यमर्यादयोभयोः गान्धर्वविवाहमेव रासापदेशेन सूचयति, सच दर्शितः श्रीराधाशतके राघवेन्द्रसरस्वतीपादैः—

श्रीकृष्णस्तिलकं चकार सुदृशो भाले निशाद्याननम्—

त्वं वृन्दावनवल्लवीमणिरसि प्राणाधिके राधिके ॥

इत्युक्ते मुरवैरिणा जयजयेत्याकाशवाणी जगौ-

नेदुर्दुन्दुभयोपि पेतुरसकृन्मन्दारपुष्पस्रजः ॥

गान्धर्वोयं विवाहः समभवदनया राधया माधवस्य—

प्रायो गन्धर्वमुख्यैः सुरनरपतिभिर्गीयते सर्वलोके ॥

आचन्द्रार्कं च वृन्दावनभुवि भविता कुञ्जगेहे विहारो—

रासे गोपीकुमारस्तव भवतु चिरं राधिके कण्ठहारः ॥

शेषं यथावसरं रसनीयः ॥ १ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

श्रीनिकुञ्जविहारिणे नमः ॥

श्रियं श्रीशं गिरं दुण्ढिं शिवां शिवमजं सुरान् ।

गुरून्विप्रानदो भक्तान्विश्वं वन्दे हरेर्वपुः ॥

शेषं सनत्कुमारादीन्साङ्ख्यायनपराशरौ ।

नारदं भगवद्व्यासं शुकं सूतं द्विजान् नृपम् ॥

सद्गुरुर्दर्शितो येन हरिनामप्रदर्शकः ।

सुचेतरामराजाख्यं भवस्तमवदं भजे ॥

चमाम् ईमातरं वन्दे सेवाकुञ्जं समाश्रिताम् ।

स्वान्ते सखीभिराहूतां राधाशृङ्गारतत्पराम् ॥

पापपुञ्जाब्धिहर्तारं सावित्र्या प्रगया स्वया ।

भवानीदासशर्माणं शर्मकृत्कर्मधर्मदम् ॥

दोषाकरस्य मनसो दोषाकरकरङ्करैः ॥

हरिनाथनखव्रातं भजे दोषाकराकरम् ।

रामसिंहस्य चरणौ भजेऽहमरुणप्रभौ ॥

मोहजैशतमोजाड्यभयभ्रान्तिहरौ शुभिः ।

सदा सुखार्कसच्छास्त्रसुतर्कैः कर्कसुभुभिः ।

वन्दे कुतर्कनीहारहरं हृत्कञ्जकाशनम् ॥

वन्दे श्रीशङ्कराचार्यान् शङ्करान् जनसङ्करान् ।

बौद्धनाशङ्करान्स्वैस्यात्सर्वराजवशङ्करान् ॥

वन्दे श्रीनानकगुरून् शास्त्रबोधगुरुर्गुरून् ।

गुरुशिष्यतया ख्याता यच्छिष्या एव केवलम् ॥

वन्देऽहम्वैष्णवाचार्यान् श्रीशपादरतान्खलु ।

एतद्धामादिसत्यापद्वैतसत्वमवर्णयन् ॥

श्रीमद्भागवतव्याख्या कृता यैः श्रुतिसम्मता ।

विरतिशशिरत्याख्यश्रीधरान् श्रीधरान् भजे ॥

वन्दे श्रीवल्लभाचार्यान् कृष्णपादैकतत्परान् ।

पुष्टिमार्गविधायान्ते न्यासात्स्वाचार्यमाश्रितान् ॥

मध्वाचार्यानहं वन्दे ये स्वाचार्याश्रिता अपि ।

मन्दानात्मककृपया भक्त्यै भेदमवर्णयन् ॥

केशवं कृष्णचैतन्यं हरिं स्वाचार्यमाश्रितम् ॥

प्रेमभक्तिप्रवृत्त्यर्थं नामगानैकतत्परम् ।

गौरपादाश्रितान् वन्दे जीवरूपसनातनात् ॥

गोपितं यैः सदद्वैतं रसिकैरसखोभितः ।

वन्दे तच्चिन्मयं धाम रसरासमुखात्मकम् ॥

श्रुतिभिर्गोपिकाभूत्वा ब्रह्म यत्र विलोकितम् ।

अहो चित्रमहो चित्रं वन्देऽहं प्रेमबन्धनम् ॥

यदूपद्धं मुक्तिदं मुक्तं ब्रह्मक्रीडामृगीकृतम् ।

मायासन्नर्तको नृत्यवद्वशे दारुदारवत् ॥

वन्दे प्रेमसुखं ब्रह्म स्वं च प्रेमसुखास्पदम् ।

सर्वश्रुतिशिरोरत्ननीराजितपदाम्बुजम् ॥

गोपिकामध्यगं वन्दे श्रुत्यर्थं श्रुतिसङ्गतम् ।

रूपलावण्यमाधुर्यमागाधिकाम्—

प्रेमभाजां सदा प्रेमसंसाधिकाम् ॥

बाधिकाबाधिकां वामवामाधिकाम्—

कृष्णसंराधिकां राधिकां त्वां भजे ॥

सारिकासारसंसारसन्तारिकाम्-

सारिकाधारिकां दीनसूद्धारिकाम् ।

हारशृङ्गारसद्धारशृङ्गारिकाम्—

कृष्णसराधिकां राधिकां त्वां भजे ॥

*कृष्णहृद्धारिकां कृष्णहृद्धारिकाम्—

कृष्णहृद्धारिकां कृष्णहृद्धारिकाम् ।

कृष्णहृद्धारिकां कृष्णहृद्धारिकाम्-

कृष्णसंराधिकां राधिकां त्वां भजे ॥

भानुजां भानुजातीरसत्केलिनीम्—

कामसङ्ग्रामसद्धीरसक्ष्वेलिनीम् ॥

नन्दनन्दाङ्गमृद्वङ्गसम्मेलिनीम्—

कृष्णसंराधिकां राधिकां त्वां भजे ॥

कृष्णहृद्वासिनीं श्वेतसद्वासिनीम्—

नित्यसद्भासिनीं चित्तसूल्लासिनीम् ॥

* कृष्णं हृदि धारिकां । कृष्णहृदि हारभूतां । कृष्णहृद्धरणशीलां कृष्णो हृदि येषां धारिकां कृष्ण एव हृद्धारको यस्याः । कृष्ण एव हृदि हार इव यस्याः ।

श्रीरामनारायणकृतभावभाविभाविका ।

प्रीतिसङ्काशिनीं भीतिसन्नाशिनीम्—
कृष्णसंराधिकां राधिकां त्वां भजे ॥
कृष्णसौदामिनीं कामसन्तापिनीम्-
भामिनीं कामिनीं कोकिलालापिनीम् ॥
स्वामिनीं स्वामिनो नामसञ्जापिनीम्—
कृष्णसंराधिकां राधिकां त्वां भजे ॥
नायिकानायिकां नेत्रसत्सायकाम्—
भक्तिसन्दायिकां सौख्यसञ्ज्ञायिकाम् ।
प्रीतहृत्स्फीतसङ्गीतसङ्गायिकाम् ।
कृष्णसंराधिकां राधिकां त्वां भजे ॥
चन्द्रभागाकृतं यः पठेदष्टकम्-
कष्टसन्नाशकं श्लिष्टकं मिष्टकम् ॥
प्रेष्टकृष्णेष्टकं शिष्टकं तं कुरु-
कृष्णसंराधिकां राधिकां त्वां भजे ॥
क्षीराभक्षं चौर्यं दक्षं गोप्रत्यक्षं वन्देऽध्यक्षम् ।
वध्वाकक्षं मायातक्षं रक्षापक्षे भाले पक्ष्मम् ॥
विद्युद्धामावामावामं मेघश्यामं हृत्स्वारामम् ।
ऊर्ध्वे सन्दर्पावर्पं वन्दे तर्पामर्पाकर्पम् ॥
वेदश्वासं जीवाभासं चित्तोल्लासं मध्वाहासम् ।
मायादासं मायोदासं वीरोदासं भूतावासम् ॥
तं संसारासारापारे पारावारे सारं सारम् ।
वन्दे कीर्त्याकारातारं विश्वोद्धारं सर्वाधारम् ॥
पिच्छापीडं पीडापीडं गोपाक्रीडं व्रीडाव्रीडम् ।
आध्यं माध्यं वाध्यावाध्यं साध्यं साध्यं प्रेमाराध्यम् ॥
विपद्गणध्वान्तसहस्रभानवः-
समीहितार्थार्पणकामधेनवः ॥
अपारसंसारसमुद्रसेतवः—
पुनन्तु मां ब्राह्मणपादरेणवः ॥
वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥

पद्मापयोधरतटीपरिरम्भलग्न काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेदा स्वेदाम्बुपूरमनुपूरयतु प्रियन्नः ॥

श्रीमद्भागवते कृष्णे पञ्चप्राणा इव स्थिताः ।
पञ्चाध्यायास्तु रासस्य व्याख्यातुं तत्समाश्रये ॥
गोपिकावाहनं चाद्ये उक्तिप्रत्युक्तयो मिथः ।
ताभी रासमारम्भे कृष्णान्तर्धानकौतुकम् ॥

श्रीमत्कृष्णद्वैपायनस्य भगवतो बदरीपलाशितमहापुण्यप्रदश्री-नारायणाश्रमनिवासतदाचरितमहत्तपसाविर्भूतप्रेममयश्रीकृष्ण एव श्रीबादरायणिशब्देन तत्र तत्र सूचितप्रभावो मधुरालाप-श्रियातिमाधुर्यरसिकतया च शुकत्वेन देवदेवाविर्भावात्मकतया क्रीडानिरूपणपरत्वेन च दैवतया प्रसिद्धः श्रीशुकदेवोऽत्र निगम-कल्पतरुशाखाफलरूपे श्रीमन्नारदप्रेरणया प्रवृत्तश्रीभगवद्व्यास-समाध्याविर्भूते—

"कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः" ।

इत्यादिवर्णितमाहात्म्ये शब्दात्मकपरब्रह्मकृष्णविग्रहे श्रीमद्भागवतेऽपि पञ्चप्राणात्मना निवसतामेतेषामध्यायानां प्राधान्यमवगत्य—

"यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्" ॥

इति भगवद्वचनात् यावान् विभुः सच्चिदानन्दानन्तस्वरूपो यथा प्रेमरसिकेषु प्रेमगानवान् नृत्यादिषु च नेत्रकटाक्षकरचालनादि-विचित्रभावदर्शकश्च यदखिलमाधुर्यादिनिधिः श्यामसुन्दररूप-वान् सौन्दर्यादिविचित्रानन्दमात्रगुणानृत्यरतिविहारादिकर्मको भग-वानध्यायपञ्चकविषयस्तज्ज्ञानस्य भगवदनुग्रहाधीनतामाकलय्य तदारम्भे भगवानितिशब्देन मङ्गलमङ्गलभगवत्स्वरूपस्मारक-मङ्गलमनुचरन् रासप्रसङ्गमाह—भगवानपीति । स च शब्दो ध्वनिना मङ्गलात्मकोऽपि वाक्यार्थेऽप्यन्वितः तत्र भगवच्छब्दे—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना" ॥ इति

वाक्योक्तैश्वर्यादिषट्काधारतया सच्चिदानन्दानन्तविभुसर्वाव-यवः स्वगतभेदवर्जितो माधुर्यादिचिदानन्दात्मकगुणविग्रहः—

"सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे ।
नमो विज्ञानरूपाय परमानन्दरूपिणे" ॥

"तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा" इत्यादिश्रुतिभिः—

"निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो-
निश्चेतनात्मकशरीरगुणैश्च हीनः ॥
आनन्दमात्रकरपादमुखोदरादिः—
सर्वत्र च स्वगतभेदविवर्जितात्मा" ॥

इत्यादिस्मृतिभिश्च प्रतिपादितो हरिर्मनुष्यत्वयेन प्रतिभाति तथा च नित्यनिर्दुःखे सुखघने भगानां दुःखनिवारकत्वसुखकर-त्वासम्भवादपार्थकत्वेन तत्स्मरतां दुःखापनोदपरमानन्दापाद-नादिनिखिलाभिमतपूरकत्वेनैव सार्थक्यमिति तत्स्मरणरूपमङ्ग-लस्य निष्प्रत्यूहसाफल्यसिद्धिः भगवानपि रन्तुं मनश्चक्रे इत्य-न्वयः। ननु, "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायात् प्रवृत्तिमात्रस्य "प्रयोजनाकाङ्क्षत्वात् प्रयोजनमात्रस्य च लोके सुखदुःखाभावयोरेवान्तर्भावात् निर्दुःखसच्चिदानन्दरूपस्य तु तयो-र्नित्यसिद्धत्वेन तत्प्रयुक्तरमणेच्छानुपपत्तिरेव न च सच्चिदानन्द-रूपस्यापि जीवस्य दर्शनात् कृष्णेऽपि तथैवेच्छा सम्भवात्कानुप-पत्तिरिति वाच्यम्

"सपदजयात्वजामनुशयीत गुणांश्च जुषन्—
भजति सरूपतां तदनुमृत्युमपेतभगः"

इत्यादिवाक्येनापेतभगस्य लुप्तज्ञाननेत्रस्याज्ञानप्रतिबद्धस्वरूपानन्द-भानस्य जीवस्येच्छोपपत्तावपि-

"त्वमुत जहासि तामहिरिव त्वचमात्तभगो—
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः" ॥

इत्यादिना ऽऽत्तापरिमेयभगस्येच्छानुपपत्तेस्तादवस्थ्यात् अतो भगवानपि कथं रन्तुं मनश्चक्रे तत्राह-ताः प्रजावीक्ष्य मनश्चक्र इति कथम्भूतास्ताराज्ञी रात्रिवत्तमोव्याप्ताः ज्ञानभास्करोदयाभावेन मुद्रितहृत्कमलेन स्वरूपानन्दभानशून्याः एवमज्ञानावरणे निर्दिश्य विशेषणस्तथा भ्रान्तत्वमाह-शरदोत्फुल्लमल्लिका इति । शरदि

श्रीरामनारायणकृतभावभावविभाविका ।

जाड्यमये उत्फुल्लमल्लिकाद्युपलक्षितसुखसम्भावनाशून्येगृहादावपि भ्रान्त्यैवासमन्तादुत्फुल्ला मल्लिका यासामसुखे सुखं पश्यन्तीः प्रजा आलोक्य अयोगेषु चित्तनिरोधादियोगशून्येषु स्वस्मिन्न युज्यमानेषु वा सर्वथा अयोग्येषु वा या माया कृपा तामुपाश्रितः। यद्वा,तासामयोगाय स्वस्वरूपविच्छेदाय प्रवृत्ता या माया तामुपाश्रितस्तदुपहितस्तथा च—

" भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः। तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा" ॥

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" ॥

विचक्षणोऽस्याहंति वेदितुं विभो—
रनन्तपारस्य निवृत्तितः सुखम् ।
प्रवर्त्तमानस्य गुणैरनात्मन—
स्ततो भवान् दर्शय चेष्टितं विभोः ॥

इत्यादिवाक्यैरीदृक् स्वलीलागानाद्यतिरिक्तं सुखसाधनमपश्यन् रन्तुं मनश्चक्रे। यद्वा। तासां योगाय स्वमनोहरलीलाश्रवणगानादिनात्मन्यस्मिन्योजनाय या माया कृपा "माया दम्भे कृपायां च" इति कोशोक्तेस्तामुपाश्रितो रन्तुं मनश्चकारेत्यर्थः। यद्वा, ता एव प्रजा वीक्ष्य अमां निश्चलां मायां कृपामुपाश्रितः स्वयं भगवानपि प्रयोजनशून्येपि तथाऽनपगामिन्या कृपया रन्तुमुद्यत इति भावः । यद्वा, तां मुमुक्षुरूपाः प्रजाः वीक्ष्य रन्तुं मनश्चक्रे ताः कीदृशीस्तदाह—रात्रीः"रादाने" इत्यस्मात् दानपरा उदाराः सर्वत्यागशीला या भगवत्यैहिकस्वसर्वस्वस्यामुष्मिकसर्वक्रियाफलस्य स्वमनोभाकर्मणाश्च समर्पणशीला या तत्रैहिकामुष्मिकात्सर्वतो निर्विद्य भगवत्परत्वे हेतुमाह—शरदोत्फुल्लमल्लिका इति ।"दोऽवखण्डने" इत्यस्मात् शरा इव द्यन्ति अवखण्डयन्ति उत्फुल्ला मल्लिका यासां मल्लिकाद्युपलक्षित विषयसुखं शरादिवदवखण्डनादिदोषदृष्ट्या सर्वत्यागादिना भगवत्पराः प्रजा आलोक्य तासाम् इतरसुखनिर्विण्णानां परमानन्दघने स्वलीलासुखे योगाय या माया कृपा तामुपाश्रितः । यद्वा—

"वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥
मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् ।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥

इत्यादिनान्वयव्यतिरेकाभ्यां ज्ञानप्राप्तेर्भक्त्यधीनतया तासाम् अत्र निश्चले कूटस्थाविकारिणि स्वस्वरूपे या मा प्रमा उपाधिविविक्तस्वरूपसाक्षात्काररूपा तस्यां तत्सम्पादने ताभिरुपाश्रितो यः स भगवानपि रन्तुं मनश्चक्रे । यद्वा, तासाम् अयोगाय योग उपाध्यध्यासस्तदपवादाय या मा प्रमा। यद्वा ,न युज्यते उपाधिसङ्गं न भजते असङ्गो न हि सज्जते य आत्मा तद्विषया मा प्रमा ।यद्वा,तासां योगाय स्वस्वरूपाभेदाय या मा भाग(त्याग)लक्षणया महावाक्यजन्यप्रमा । यद्वा, "योगश्चित्तवृत्तिनिरोधः" तदन्विता मा प्रमा तस्यामुपाश्रितः—

"सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जनम्।
गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः" ॥

इत्यादिवाक्यैस्तथाभूतज्ञानस्य भगवल्लीलानुसन्धानाद्यधीनतया रन्तुं मनश्चक्रे। यद्वा, मा प्रज्ञा द्विविधा अस्थिता स्थिता चेति तत्र या अगा स्थिता मा प्रज्ञा तस्यां मुमुक्षुरूपाभिस्तत्सम्पादके उपाश्रितो यः स मनश्चक्रे इति । यद्वा—

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" ॥

इति वचनात् यत्र संसारे भूतानि जाग्रति तत्र यासां रात्री रात्रयो भवन्ति यस्मिंश्च स्वरूपे सर्वभूतानां निशेव शरल्लाडचेनानुभवस्तत्रोत्फुल्लमल्लिका इव सुखं यासां ता ज्ञानिरूपाः प्रजा वीक्ष्य तन्मनो हर्तुम् आवरणानावृत्तिभ्यां निभुसच्चिदानन्दानन्तश्यामसुन्दरमाधुर्यनिधिसर्वाङ्गस्य कचित्तिरोभावेन क्वचिदाविर्भावेन नृत्यलीलादि सम्पादयितुं योगमायामुपाश्रितो रन्तुं मनश्चक्रे। यद्वा, भगवल्लीलाधामनि "न यत्र माया किमुतापरे" इत्यादिना मायाया अप्रवेशाद्भगवल्लीलाऽऽविर्भावतिरोभावादीनामपि स्वरूपात्मकत्वादयोगमायामुपाश्रित एव रन्तुं स्वरूपात्मकलीला आविर्भावयितुं मनश्चक्रे—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥
परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे ! आख्यानं यदधीतवान्" ॥

इत्यादिवचनात् । यद्वा, ताः चीरहरणवरप्रदानावसरे "मयेमा रंस्यथ क्षपाः"इत्यत्र निरूपसिद्धतया तदापि वर्तमानत्वेन इदमा निर्दिष्टास्तदारभ्य तद्भावनापरिपाकेनेदानीमाविर्भूता रात्रीर्वीक्ष्य रन्तुं मनश्चक्रे। यद्वा, कथम्भूता रात्रीः ता अतिविलक्षणाः ब्रह्मरात्र उपावृत्त इत्यत्र ब्रह्मरात्रिसमकालत्वेन वक्ष्यमाणास्तथा—

"तास्ता क्षपाः प्रेष्ठतमेन नीता—
मयैव वृन्दावनगोचरेण ॥
क्षणार्धवत्ताः पुनरङ्ग तासां—
हीना मया कल्पसमा बभूवुः ॥

इत्यत्र च कल्पकालत्वेनाभिहिताः अयमत्रार्थः भगवानपि ता रात्रीरित्यत्र निर्दिष्टस्य ता इति शब्दस्य प्रत्यभिज्ञानार्थमतिविलक्षणत्वसूचनार्थं च भगवतापि तास्ता इत्युक्तम् तास्ताः कल्पसमा क्षपा मयैव सह क्षणार्धवत्सीनाः तत्र कल्पसमानां क्षणार्धवत्त्वे हेतुगर्भितं विशेषणं प्रेष्ठतमेनेति प्रियतमसमागमे सुखातिशयेन समाभिवद्गृहकालस्याप्यनवधारणोपपत्तेः पुनःकथम्भूतेन वृन्दावनगोचरेण तत्र प्रत्यक्षेण न हि व्यापकमहिम्नस्य कदाचित्तत्रावस्थितिः कदाचित्तत्रापि किन्तु गोचरत्वागोचरत्वमात्रं विशेष इति।यद्वा तत्र गाश्चारयन्तीति तथा तेन तथा च साक्षात्वेन प्रेष्ठतमत्वेन च निरशङ्कनिरतिशयप्रेमास्पदत्वध्वनिः यद्वा, अन्यत्र "अनश्नन्नन्यो अभिचाकशीति" इत्यादिश्रुतिसिद्धभोक्तृत्वेन प्रसिद्धोऽपि वृन्दावने एव गा इन्द्रियाणि चारयतीति तथा तेन तथा च प्रेमनिधौ वृन्दावने प्रेमिसन्निधौ प्रेमप्रभावाद्व्यावहारिकस्यापि जीवेश्वरविभागस्यानवस्थितिरिति भावः ।यद्वा, वृन्दावनं या गा इन्द्रियाणि गोपीगोपगणासु चक्षुरादीनि तानि स्वीयरूपमाधुर्यगानसौष्ठवाङ्गसौरभ्यस्पर्शाधरामृतादौ

श्रीरामनारायणकृतभावभावविभाविका।

सञ्चारयतीति वृन्दावनगोचरस्ते (न) नायं भावो ऽन्यत्र—

"न सन्दृशे तिष्ठति रूपमस्य-
न चक्षुषा पश्यति कश्चिदेनम्।
न चक्षुषा गृह्यते नापि वाचा—
नान्यैर्देवैर्मनसा कर्मणा वा॥

इत्यादिश्रुत्येन्द्रियागोचरत्वेऽप्यत्र प्रेमान्वितेन्द्रियविषयो भवति यथा रत्नतत्त्वमन्येन्द्रियादिष्वयमप्यधीतरत्नपरीक्षाशास्त्र संस्कृतेन्द्रियस्य विषयं यथा च ब्रह्मात्मतत्त्वं "यन्मनो न मनुते" इत्यादिभिर्मनोपि विषयमपि वेदान्ताभ्यासंस्कृतमनसो "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादिना गोचरं भवति तद्ब्रह्मचेन्द्रियगम्यत्वे दृश्यत्वेन मिथ्यात्वानुमानं मनोगम्यत्वेऽपि तुल्यत्वात् इन्द्रियगम्यत्वेन मिथ्यात्वसाधने मिथ्या वस्तुमात्रस्येन्द्रियाविषयतया विरुद्धत्वापाताच्च न च मनसावरणनिवृत्तिरेवात्र सप्रेमेन्द्रियैरपि तथैव स्वीकारात् तद्भानस्य स्वप्रकाशनयैव करणाविपर्यासमात्रस्य प्रेमप्रभावत्वमिति सन्तोष्टव्यम् तद्राऽप्यपेक्षयान्या रात्रयः क्षणार्धवदपि मया हीना विरहखेदेन कल्पसमा बभूवुरिति तथा—

"एवं शशाङ्कांशुविराजिता निशाः-
स सत्यकामोऽनुरताबलागणः।
सिषेव आत्मन्यवरुद्धसौरतः-
सर्वाः शरत्काव्यकथारसाश्रयाः"॥

इत्यत्र वक्ष्यमाणातिविलक्षणात्वं ताः शब्देन द्योत्यते अत्र तु सर्वाः निशाः शशाङ्कस्य पूर्णचन्द्रस्यांशुभिर्विशेषेण राजिताः शोभिताः नान्यत्र चन्द्रस्य दक्षशापान्नित्यपूर्णत्वं नापि सर्वनिशानां चन्द्रवत्त्वं नापि तदंशुभिर्विशेषेण राजमानत्वं किन्तु क्वचित्तमः क्वचित्प्रकाश इति महद्वैलक्षण्यं। किञ्च, शरदि भवा इत्युपलक्षणम् ऋत्वन्तराणामपि तथाकाव्येषु कथ्यमाना ये रसाः तेषामेवाश्रया नतु तद्दोषाणामित्यप्यतिवैलक्षण्यं नह्यन्या रात्रयः सर्वाः सर्वरसाश्रया दोषवर्जिताश्च भवन्ति दोषानाम्ना प्रसिद्धत्वात् तदेव सर्वर्तुगुणाश्रयत्वं व्यञ्जयन् रात्रीर्विशिनष्टि शरदोत्फुल्लमल्लिका इति। शरदि या समन्तात् उत्फुल्ला मल्लिका यासु तास्तथा तथा च शरदि मल्लिकाविकासरूपवसन्तगुणकथनेन तापादितद्दोषाकथनेन च सर्वर्तुगुणाश्रयत्वं दर्शितम् न चात्र वैलक्षण्येऽप्यसम्भावनावसरः यदा स्वस्वरूपस्याव्यभानहेतुना महामोहनैशतमसा व्याप्तेऽस्मदादिहृदाकाशे भगवल्लीलानुसन्धानमात्रेण परमाह्लादाद्यमृतरसमयभक्तिप्रभान्वितनित्यनिरतिशयभगवत्स्वचन्द्रप्रकाशे सति दैवसम्पन्निरूपितसर्वगुणाविर्भावो दोषसङ्क्षयश्च नान्यदेति—

"यस्यास्ति भक्तिर्भगवत्यकिञ्चना—
सर्वैर्गुणैस्तत्र समासते सुराः॥
हरावभक्तस्य कुतो महद्गुणा।
मनोरथेनासति धावतो बहिः"॥

"न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे"॥

इत्यादिभिर्निरूपितस्तदा किमु वाच्यं भगवल्लीलाधाररात्रीणां यद्वा, शरदोत्फुल्लमल्लिका वीक्ष्य रन्तुं मनश्चक्रे शरदि सत्यपि जाड्ये विकासविरोधिनि भगवल्लीलोत्साहेनैवोत्फुल्ला या मल्लिकास्ता वीक्ष्येत्यनेन यथा द्रुमा प्रेमोल्लासेन प्रोत्फुल्लते सुमनासि तत्र मोहशरज्जाड्ये सत्यपि भगवतो रन्तुमुत्साहस्तथात्रापीति ध्वनिः। तथा च प्रेमोल्लास एव भगवत्प्रसादहेतुर्न जडचेतनविभागः। यद्वा, शरदि स्वविकासकालाभावेपि मल्लिकानां भगवल्लीलाप्रेम्णैवोत्फुल्लतादर्शनेन वृन्दावनलताद्रुमादीनां न जडत्वमत एव नन्दनन्दनवनलतादीनामनपवर्गदनन्दनवनगतकल्पद्रुमाच्छैत्यं किमु वाच्यं वेदद्रुमपुष्पितवचसामर्जुनं प्रति भगवता निन्दितत्वेपि वृन्दावनपुष्पाणां श्रीसङ्कर्षणं प्रति प्रशंसनात्ततोऽपि श्रेष्ठ्यमेव तदुक्तमभियुक्तैः "निगमद्रुमे मृगय माम् वृन्दाविपिने द्रुमे द्रुमे पश्य। व्रजवनिता भूत्वा श्रुतिभिरिहैवावलोकितं ब्रह्म" अत एव कथम्भूता मल्लिकास्ता अतिविलक्षणाः क्रीडोपयोगितया पूर्वमेव बलरामं प्रति प्रशंसिता इति वा पुनः कीदृशीः रात्रीः "रा दाने" इत्यस्माद्वोदाराः—

"अहो एषां वरं जन्म सर्वप्राण्युपजीविनम्।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः॥

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः।
गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते॥

एतावज्जन्म साफल्यं देहिनामिह देहिषु।
प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत् सदा॥

तथा चागानां मल्लिकादीनां या मा स्वस्मिन् रतिमती मतिः तस्याम् अगमायां तेषु अगमेषु मायां कृपां वा उपाश्रितो यः स भगवानपि रन्तुं मनश्चक्रे। किञ्चाकाले मल्लिकाविकासोक्त्या ऋतुराजेनातिराजनीतिदक्षेणातिसुमनसा रुद्रदग्धस्य स्वामित्रस्यानङ्गस्य भगवत्तत्सखीसमागमे उद्भवमभिकाङ्क्षिणा निपतितपुष्पास्तरणशय्यादिभिः कुसुमितद्रुमाराममण्डपैः सुमनोमुक्तादामलतावितानादिभिः सेवा कृता युक्तं चैतदतिसुमनसां मित्रसौहृदं भगवत्सेवा च तदालक्ष्य भगवानपि मनसा मनोजमुज्जावयितुं मनश्चक्रे। यद्वा, नीतिज्ञेन तेन कामविजयाय प्रभोरुद्यममालक्ष्य ब्रह्मेन्द्रवरुणादिविजयिकृष्णमहास्त्राभिज्ञेनापि स्वमित्रमपि तादृशमाकलय्य सख्यधर्मपालनौचित्यमवगत्य भगवता पराजयेपि हान्यभावं तत्रोटनेऽपि हारादिरूपेण तदङ्गसौख्यं च सम्भाव्य द्रुमलताकुञ्जादिकुसुमशरतूणीर्णां कुसुमशरैः पूर्णता कृता तदेवाह—शरदोत्फुल्लमल्लिका इति। शरान् ददतीति शरदाः कुसुमबाणाय तदायुधसमर्पिका उत्फुल्ला मल्लिकाः तथा निरहिजनहृदयविदारणाय कुन्दकलिकाः शूलानि केवलाः कुन्ताकाराः किंशुकपुष्पाणि विरहिहृदयरक्ता रक्तार्धचन्द्रशररूपाणि वीक्ष्य रन्तुं रमणेनैव समित्रमन्मथमनो मन्थितुं मनोद्वारा मनोजपराभवमालक्ष्य मनश्चक्रे। यद्वा, शरदोत्फुल्लमल्लिके त्युपलक्षणं कुसुमितलतासख्यालिङ्गितान् वनस्पतीन् पवीन् वायुना शाखाभुजचालनेन नृत्यतो वीक्ष्य जातोत्साहो रन्तुं पुलकिततनुस्वसख्यालिङ्गितवपुषा नृत्यादिना विहर्तुं मनश्चक्रे। यद्वा, ताः स्वयं दत्तवराः चीर्णगौरीव्रताः पूर्वतप्ततपसो मुनिरूपाः श्रुतिरूपा देवाङ्गनारूपाः स्वधाम्नोऽवतीर्णा नित्यसख्यः सखीभावनालब्धतद्रूपाः साधनसिद्धाश्च गोपीर्वीक्ष्य तत्प्रेमरक्षनया

श्रीरामनारायणकृतभावभावविभाविका।

निबद्धाकृष्टचित्तः सच्चिदानन्दघनः कृष्णो भगवानपि रन्तुं मनश्चक्रे यथा—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः"॥

इत्यादौ भगवद्गुणानामात्मभूतानामात्मारामसुनिमनःकर्षकत्वमित्यत्यद्भुतत्वं तथा प्रेमरसात्मकव्रजवनितागुणानां नित्यसर्वज्ञसच्चिदानन्दघनभगवत्कृष्णमनःकर्षकत्वमिति ततोऽप्यति चमत्कृतत्वं चमत्कृतत्वेऽपि यथा मुनीनामात्मारामत्वात्भगवतस्तु "आत्मा नारायणः परः" "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्—

"ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी।
दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकरं मनस्तः"॥

प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्।
"नित्यप्रिये, अखिलदेहिनामन्तरात्मदृक्"
"अहमात्मा गुडाकेश! सर्वभूताशयस्थितः"॥ इत्यादि

श्रुतिस्मृतिवृन्दशतैरात्मस्वरूपत्वात्तद्गुणानां च "यद्रूपगुणकर्मकः" इत्यादौ यद्रूपा एव गुणाः कर्माणि च यस्येति तद्रूपत्वादुचितमेव तन्मनसां तत्र रमणम्—

"रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते"॥ इति।

श्रुतिसिद्धत्वात्तत्र तद्रमणस्य तथा भगवतः कृष्णस्य प्रेममधुमधुकरत्वात्तत्र तु सुमनसां सुमनसां तु तन्मध्वाकरत्वाद्योग्यमेव तदाकर्षणं तत्ररमणं च कथम्भूतास्ता गोप्यस्तत्र तेनैव प्रेमोत्कर्षेण विशिनष्टि—रात्रीः शरदोत्फुल्लमल्लिका इति। रात्रीरित्यत्र "रा दाने" इत्यस्मात्स्वसर्वस्वस्य स्वात्मनश्च दात्रीः—

"यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते।
"यज्जीवितं तु निखिलं भगवान् मुकुन्दः॥
या दुस्त्यजं स्वजनमार्यपथं च हित्वा।
भेजुर्मुकुन्दपदवीम
"वक्षः श्रियैक रमणं च भवाम दास्यः"
श्यामसुन्दर! ते दास्यः करवाम तवोदितम्॥

इत्यादिवचनात्। यद्वा, वर्णितान्योन्यविशेषणविशेष्यता रात्रीश्च शरदोत्फुल्लमल्लिकाश्च ता गोपीश्च वीक्ष्य रन्तुं मनश्चक्रे यद्वोक्तपक्षेषु सर्वत्र भगवल्लीलाधाम रात्रीणां मल्लिकाद्युपकरणानां सखीनां च तत्पदलक्ष्यगणस्वरूपत्वद्योतनाय "नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः "तास्ताः क्षपाः प्रेष्ठतमेन नीताः" "भगवानपि ता रात्रीः" इत्यादौ सर्वत्र तच्छब्दप्रयोगः तद्वीक्ष्य(कथं) किं भूतः सन् रन्तुं मनश्चक्रे? तदाह—ताः प्रेमायस्कान्तमणिरूपाः गोपीः प्रति अयोवत्स्वत एव प्रेमानुगस्वभावतया गच्छतीति अयोगा या माया कृपा ता मुपाश्रितः। यद्वा, तासां स्वबाहुदृढबन्धाहार्याणां स्वस्नेहगुणगणकुललज्जाबन्धनाभ्यामुभयतः कृष्यमाणानां कुललज्जाबन्धनायोग्यतामालक्ष्य तद्वियोगाय विच्छेदाय या माया कृपा तामुपाश्रितः। यद्वा, तासां स्वस्मिन् योगाय योजनाय स्वात्मना तासां संयोगाय वा मायां कृपामुपाश्रितः। यद्वा ताः प्रति अमा निश्चला वा माया कृपा तामुपाश्रितो यः सः। यद्वा स्वश्यामसुन्दरवपुः प्रति अयस्कान्तमणिप्रति अयोवत्स्वतो गता अयोगा गोपदारास्तेषु मायां कृपामुपाश्रितः। यद्वा, स्वस्मिन् युज्यन्ते इति योगाः। गोपदारास्तेषु मायां कृपामुपाश्रितः। यद्वा यो भगवांस्तेषां अगेषु गोपदारेषु निश्चलेषु निश्चलमतिषु च—

"चित्तं सुखेन भवताऽपहृतं गृहेषु—
यन्निर्विशत्युतकरावपि गृह्यकृत्ये।
पादौ पदान्न चलतस्तव पादमूला—
द्यामः कथं व्रजमथो करवाम किम्वा"॥

इति वक्ष्यमाणतद्वचनात् या माया कृपा तामुपाश्रितः। यद्वा, तासां स्वस्मिन् अयोवत् गता या मा प्रमा यथार्थमतिस्तस्यामुपाश्रितः। यद्वा, तासामन्येषु वित्तबन्धुप्रभृतिषु अयोगा अयुज्यमाना अन्यायोग्या वा या मा मतिः तस्यामुपाश्रितः।यद्वा,स्वस्मिन्नेव युज्यमाना स्वस्यैव वा योग्येति योगा मा तासां मतिस्तस्यामुपाश्रितः यद्वा,यो भगवांस्तासामगा निश्चला या मा मतिस्तस्यामुपाश्रितःस रन्तुं मनश्चक्रे। यद्वा, यः स इति पूर्ववत् "अकारो वासुदेवः" स्वयमेव तद्गता या तासां मा मतिस्तस्यामुपाश्रितः। यद्वा, अन्या योग्या अयोग्या या तासां मा अङ्गशोभा तस्यामुपाश्रितो लग्नमनाः। यद्वा, स्वयोग्यत्वेन योगा या तासां माऽङ्गशोभा तस्यामुपाश्रितः। यद्वा, यः स इति पूर्ववत् तासाम् अगा अनपगामिनी नित्या या मा शोभा तस्यामुपाश्रिताः। यद्वा, योगा वक्षसि संस्थिता या मा लक्ष्मीस्तस्यामुपाश्रितोऽपि ता वीक्ष्य रन्तुं मनश्चक्रे इति लक्ष्म्या अपि अतिशयितं तासां प्रेमसौभाग्यं भगवतः प्रेमवश्यत्वात्। यद्वा, अगा स्वचाञ्चल्यं परित्यज्य नित्यमुरसि संसक्ता या मा तस्यामुपाश्रितोऽपि यः स तां वीक्ष्यैव तत्प्रेमोत्कर्षितविह्वलितच्छविमालोक्यैव अनागता अपि ता वेणुसाहाय्येनाहूय रन्तुं मनश्चक्रे इति चित्रं प्रेमसौभाग्यसौष्ठवं तासाम् योगाय स्वात्मना योजनाय यद्वा,तासां माङ्माने शब्दे च"इत्यस्मान्मायः शब्दो मीयतेऽर्थो वक्ता च यस्मात्सः लिङ्गं यद्दृष्टदृश्ययोः" इति भागवतोक्तेर्वा मायः शब्दो यस्यास्तां मुरलिकामुपाश्रितः। यद्वा, तासां बन्धुगृहादिभ्योऽयोगाय तल्लज्जादिव्यवच्छेदाय वा मायः शब्दो यस्यास्तामुपाश्रितः। यद्वा, स्वस्मिन् योगाय या मा मतिस्तामापयति प्रापयति स्वमधुरध्वनिना या सा योगमाया वंशी तामुपाश्रितः। यद्वा, अन्येष्वयोगाय मां मतिमापयति ध्वनिनैव तामुपाश्रितः। यद्वा, स्वस्मिन्नगां निश्चलां मां मतिमापयति मधुनादेनैव या वंशी तामुपाश्रितो यः स भगवान्।यद्वा, स्वस्मिन्योगायान्येष्वयोगाय या मा मतिः अगा निश्चला या मतिस्तामदृष्टद्वारेणापयति वा कात्यायनी स्वचरितश्रवणेन सत्सङ्गद्वारेणापयति वा श्रीमती राधा मोहनद्वारेणापयति वा स्वकान्तिः उद्दीपनद्वारेणापयति शरच्छोभा वनादिशोभा वा तामुपाश्रितः तत्रागमा इति पक्षे यः स इति पूर्ववत्। यद्वा, स्वस्मिन्योगायान्येष्वयोगाय वा याऽन्तर्यामिणः स्वस्यैव मा सङ्कल्पात्मिका प्रमा तस्यामुपाश्रितः। यद्वा दर्शनेनैव स्वस्मिन् योजयन्ती अन्येष्वयोजयन्ती वा आत्मनो माअङ्गश्रीस्तस्यामेवोपाश्रितः

## श्रीरामनारायणकृतभावभावविभाविका ।

यद्वा, स्वात्मनः प्रार्थ्यमानब्रह्मादिदेवान् परित्यज्य भगवद्वक्षः समाश्रयणादर्शनेन स्वस्मिन् योगायान्येष्वयोगाय वा या मा उरसि स्थिरा लक्ष्मीः तस्यामुपाश्रितः । यद्वा, तत्र रासे सर्वासां गोपीनामात्मनश्च भाविप्रेमविह्वलत्वं सम्भाव्य क्रीडा तदुपकरणादिसाकल्यमापादयितुं विश्वकर्ममाययोः स्वलीलाप्रवेशाभावेन तत्सर्वमुपकरणादि योजयतीति योगा तत्र योग्या वा योगा स्वयोगैश्वर्यात्मिका वा योगा अघटनघटनापटीयस्त्वेन माया काचित् स्वरूपात्मिकैव शक्तिस्तामुपाश्रितः । यद्वा, तासामपि योगाय नृत्यरतिविहारादिना भगवतः संयोगाय माया कृपा यस्यास्तां राधामुपाश्रित एव रन्तुं मनश्चक्रे तत्कृपयैव भगवतस्ताभीरमणाय प्रवृत्तिः । अनेन भगवति भाववतां सर्वजनानां भगवद्रमणाय श्रीमत्याः राधायाः कृपा भवति तामाश्रितो भगवानपि तद्रमणे प्रवर्त्तत इति न तस्यां कदापि मात्सर्यादिसम्भावनालेशोऽपि यदा तद्भक्तानामपि न क्रोधमात्सर्यादिसम्भावना तदा भगवत्याःकिमु वाच्यम् किञ्च,यत्र स्वामिनः सुखदाने परिमिताशक्तिस्तत्र स्वभोगसङ्कोचभयात्पामराणां सापत्न्यभावो भवति यत्रापरिमेयशक्तिर्भगवान् स्वामी तत्र स्वभोगसङ्कोचभयासम्भवाद सम्भावित एव तद्गतानां मात्सर्यादिरिति भावः । यद्वा, भगवतो योगे एव मा यस्याः यस्या योगे एव वा भगवतो मा तस्यां राधायामुपाश्रित एव । यद्वा, स्वलीलागानश्रवणादिद्वारा सर्वस्याप्यस्मुमुक्षुब्रह्मविज्जनस्य योगाय तत्प्राप्तये माया करुणा यस्या राधायास्तामुपाश्रितः । यद्वा, सर्वस्यापि जनस्य भगवति योगायाभेदाय मां प्रमां तत्त्वज्ञानं लीलादिसुखे योगाय निवेशाय वा मां प्रेमश्रियम् आपयति या राधा तामुपाश्रितः । यद्वा, सर्वस्यापि सखीभावानुगतस्य तदानीन्तनगोपीजनस्याधुनिकस्य वा तदनुगभावस्तस्य जनस्य भगवल्लीलादौ योगाय योग्यत्वाय भगवता योगाय वा स्वांशभूतां मां शोभाम् आपयति या राधा तामुपाश्रित एव रन्तुं मनश्चक्रे इत्यनेनेश्वरीं राधां विनेश्वररमणासम्भवाद्यत्र यत्र भगवद्रमणं जातं भाव्यं वा भावनाप्रभावेन तत्र तत्र राधाकृपया तदंशमाप्रवेश इति ध्वनिः । यद्वा, भगवानपि यामुपाश्रितः सा राधाऽपि पूर्वोक्तसर्वपक्षा अत्रानुसन्धेयाः ता भक्तरूपा मुमुक्षुरूपा ज्ञानिरूपाः प्रजा स्त्रियो मांल्लिका गोपीश्च वीक्ष्य रन्तुं मनश्चक्रे सा कथम्भूता अयोगमा अन्यासामयोगाय मा शोभा यस्याः यां दृष्ट्वा नान्यस्यां कृष्णमनो रमते। यद्वा, यद्योगे एवांशप्रवेश एव सर्वासां मा भवतीत्यकारप्रश्लेषं विना योगमा । यद्वा, य इति भागवविशेषणतया पृथग्व्यवस्थाप्य अगमा अकारो हरिस्तद्भृता एव मा मतिर्यस्याः । यद्वा, अगा निश्चला मा शोभा यस्या इति अगमा।यद्वा,अन्यत्र लक्ष्म्याः"चञ्चला चपला चला " इति प्रसिद्धत्वात् इयं तु अगा हरिगता अगा निश्चला वा लक्ष्मीरेव । यद्वा, अगमा सर्वथा दुरवगममाहात्म्या सा यदा रन्तुं मनश्चक्रे तामुपाश्रितो भगवानपि मनश्चक्र इति भावः । अयमत्राभिप्रायः मनसो जीवोपाधित्वेन ईश्वरस्य मन उपाध्यभावान्मायायाश्च स्वरूपात्मकलीलाप्रवेशाभावात् रन्तुं स्वरूपात्मकमेव मन आविर्भावयामास "आकाशशरीरं ब्रह्म सत्यात्मप्राणारामम् मन आनन्दं शान्तिसमृद्धममृतम" इति श्रुतेः। आ समन्तात् रासमण्डले रतिविहारादौ व्यापकतया चिद्रूपतया चकासते प्रकाशते इति तादृक् शरीरं ब्रह्म कृष्णः सत्य आत्मा देहः प्राणा मुख्या इन्द्रियाणि च आरामो धाम क्रीडोपस्करं च यस्य स्वरूपात्मकत्वादत एव मनश्च सुखस्वरूपं यस्य तथा शान्तिसमृद्धं दुःखशून्यम् अमृतमनश्वरमित्यर्थः ॥ १ ॥

---

## श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

श्रीमते नन्दसूनवे नमः ॥

गोपाङ्गनागुणाकृष्टचेतोऽखिलजनाश्रयः ।
तस्य कृष्णस्य पादाब्जमाश्रये ऽभीष्टसिद्धये ॥
उमां श्रीबालगोपालतीर्थान् व्यासमुखान्मुनीन् ।
विघ्नहर्तॄन् गणेशादीन्पण्डितांश्च विमत्सरान् ॥
अथ पञ्चभिरध्यायैः रासक्रीडामहोत्सवः ।
वर्ण्यते मुनिना कृष्णसद्गुणाकृष्टचेतसा ॥
ऊनत्रिंशे फलं वेणोः श्रुत्वा गत्वा व्रजस्त्रियः ।
वनं वादादिकं प्रापुः कान्तेनेति निगद्यते ॥

इन्द्रवरुणादिविजये किं चित्रं ब्रह्मादिजयसंरूढदर्पःकामोऽपि भगवता पराजितः इति ख्यापनायक्रमप्राप्तां भगवत्कृतां रासक्रीडां वर्णयितुमुपक्रमते-भगवानपीति । कामकृतो हि ब्रह्मादिपराजयः प्रसिद्धः तदुक्तम्—

"अहल्यायै जारः सुरपतिरभूदात्मतनयाम्—
प्रजानाथो ऽयासीदभजत गुरोरिन्दुरबलाम् ॥
इति प्रायः को वा न पदमपथे कार्यत मया—
श्रमो मद्बाणानां क इह भुवनोन्माथविधिषु"॥ इति ।

ये तु स्मरादिकमपहाय तपश्चर्यायां रताः न तैः कामः पराजितः किन्तु तस्मात्पलाय्य ते गतास्तत्रापि तत्कृतनग्नादिदुर्दशां प्राप्ताः तदुक्तम्—

"स्त्रीमुद्रां झषकेतनस्य विकसत्सर्वार्थसम्पत्करीम्—
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः॥
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः—
केचित्पञ्चशिखीकृताश्च जटिलाःकापालिकाश्चापरे"॥इति।

श्रीकृष्णस्तु शतकोटियूथगोपाङ्गनारथसैन्यवता कामेन युद्ध्यमानोऽपि आत्मन्यवरुद्धसौरतत्वात्तं विजितवानित्यनेन ग्रन्थेन ख्याप्यते-योगमायामुपाश्रितः"आत्मारामो ऽप्यरीरमत्, साक्षान्मन्मथमन्मथः, आत्मन्यवरुद्धसौरतः" इत्यादिषु स्वातन्त्र्याभिधानात् रासलीलोत्सवश्च नववर्षवयस्के सत्याश्विनपूर्णिमायां यतः सप्तमवर्षे वयसि वर्त्तमाने भगवति कुमारिकाणां व्रतचर्या ततःसप्तवर्षोत्तरकार्तिकस्य अमावास्यायाम इन्द्रमखभङ्गः तच्छुक्लप्रतिपदि गोवर्द्धनमखोत्सवः द्वितीयायां भ्रातृभोजनोत्सवः तृतीयाप्रभृति इन्द्रकृतोपद्रवमवलोक्य नवमीपर्यन्तं गोवर्द्धनधारणं दशम्यां गोपानां विस्मयं कर्मवाहुल्यम् एकादश्यां गोविन्दाभिषेकः द्वादश्यां वरुणलोकगमनादि पौर्णमास्यां नन्दादीनां ब्रह्मह्रदनयनादि ततश्च शरदः समाप्तिरिति शुक उवाच इत्यनेन कोमलालापवच्छुकोक्तिः एवमिदं भागवतं कोमलचित्ततयैव श्रोतव्यं चित्ताकर्षकं च तत्रापि रासक्रीडोत्सववर्णनं

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

सर्वस्यापि श्रीमद्भागवतस्य सारभूतमिति ध्वनितं परमहंसशिरोमणिना श्रीशुकेन परमप्रेम्णा वर्णितोयं रासक्रीडोत्सवोऽतः परमहंसैरप्यादरेण श्रोतव्य इत्यपि सूचितं भगवानपि—

"ऐश्वर्य्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना" ॥

इत्युक्तषड्विधैश्वर्यवानपि रन्तुं मनश्चक्रे शृङ्गाररसालम्बनशिरोमणिभूतानां शतकोटियूथविलासिनीनां सौख्यर्यसौन्दर्यमधरामृतसौरभ्याणि परमशोभनानि स्वीयश्रोत्रादीन्द्रियैरनुभवितुं स्वीयानि तानि तदीयश्रोत्रादिभिस्ता अनुभावयितुमिच्छितवान् एतावन्तं कालं गोप्य एव वर्द्धमानानुरागचञ्चचित्ततया रन्तुं मनश्चक्रिरे भगवांस्तु वयोविशेषं प्रतीक्षमाणो न चक्रे सम्प्रति प्राप्तवयाः ताः "मयेमा रंस्यथ क्षपाः" इति पूर्वं प्रतिज्ञाता रात्रीश्च वीक्ष्य भगवानपि रन्तुं मनश्चक्र इत्यपरोर्थः पूर्णो ऽपि ता रात्रीरुद्दीपनत्वेनानुभूय किमु ताः गोपीर्वीक्ष्येति तासां सौन्दर्य्यप्रेमाद्यतिशयो व्यज्यते। यद्वा, ता इति प्रसिद्धार्थकतत्पदप्रयोगान्नानागुणवतीरिति तासामुत्कर्षो बोधितः ताः इति बहुवचननिर्देशादूब्रह्मरात्र उपावृत्त इति वक्ष्यमाणत्वाचैकस्यामपि रात्र्यां तादृशविलासानुकूलाऽसंख्यातरात्रीः स्वसङ्कल्पिताः वीक्ष्येति बोधितं तथाच तादृशरमणानुकूलाः कोटिकोटिरात्रीः स्वसङ्कल्पिताः वीक्ष्येति एवं तत्त्वमन्यथा राकारात्रेश्चन्द्रोदयात्पूर्वमप्रवेशाच्चन्द्रोदयस्य च वीक्षणानन्तरं वर्ण्यमानत्वाद्वीक्ष्येत्युक्तिरसङ्गता स्यात्। अथ वृन्दावनशोभामप्युद्दीपिकामाह—शरदिति। शरदा हेतुभूतया यद्वा शरदेति टावन्तत्वात् शरदायामपि उत्फुल्ला मल्लिका यासु उत्फुल्लाश्च ताः मल्लिकाश्चेति वा एतद्वाक्यतः "कुन्दस्रजः कुलपतेरिह वाति गन्धः" रेमे तत्तरलानन्दिकुमुदामोदवायुना" इति वक्ष्यमाणत्वाच वृन्दावनमाहात्म्यात्सर्वकाले सर्वपुष्पविकासो बोधितः रन्तुं मनश्चक्र इत्युक्त्या आन्तरमिदं रमणं नतु बाह्यं नरविडम्बनमात्रमिति सूचितम् अन्यथा रेमे रन्तुमारेभे इति वा ब्रूयात् तत्रापि चक्र इत्यात्मनेपदप्रयोगादपि न गोपिकानुरोधेन तदर्थमेवापि तु स्वस्य सुखार्थमपीति सूचयति यथा—

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः" ॥

इत्यात्मारामाणामपि मुनीनां चित्ताकर्षणसामर्थ्यवत् गुणाकृष्टचेतसां भगवद्गुणेषु रमणमुक्तं तद्वद्गोपाङ्गनानां तादृशगुणाकृष्टचेतसो भगवतोपि तासु रमणमुक्तम्। ननु, स्वल्पकाले कथमऽनल्पकालसमवेशः कथं च स्वल्पदेशे तावद्यूथगोपाङ्गनाक्रीडनसम्भवः? कथञ्चैकस्याऽसङ्ख्यातगोपिकाभिः रमणासम्भव ? कथञ्चाऽमनस्कस्य भगवतस्तद्रमणासक्तमनस्त्वमित्यादिशङ्काजालनिरासायाह—योगमायामुपाश्रित इति अघटितघटनापटीयसीति मायां तु प्रकृतिं विन्द्यात्' मम माया दुरत्यया"इत्यादिनोक्तं योगमायामुपाश्रितः स्वाश्रितो नां कर्तव्यलीलोपकरणसाधनत्वेनाश्रितवान् यद्वा योगः स्वेनगोपीनां संयोगस्तदर्थम्मा मायां कृपामाधिक्येनाश्रितः यद्वा स्वाश्रितत्वात्स्वदर्शनाक्रान्तचेतसां नान्दादीनान्तया तया लीलया आनन्दसागरे निमज्जितवान् पुनश्च ब्रह्महृदप्रवेशादिना स्वस्वरूपानन्दप्राप्तिपर्यन्तामप्यवस्थां दर्शितवान् यास्तु सखीभावमाश्रिताः चिरकालमारभ्यस्वेन रमणोत्कटोत्कण्ठावत्यस्तासां गोपाङ्गनानां मनोरथपूर्तिः कथं कृतवानित्यपेक्षायामाह—भगवानपीति। यद्यप्यसौ पूर्णकामस्तथापि पूर्वकोटिजन्मसु अस्मिंश्च जन्मनि उपाश्रितः रमणार्थमेव सम्यगाराधितोऽतस्ताभिरन्वितस्तासामभिलषितरमणानुरूपा रात्रीश्चक्रे एकस्यांरजन्यामसङ्ख्यातरजनीप्रदर्शनसङ्कल्पं कृतवान्, कथम्भूताः ? शरदोत्फुल्लाः मल्लिकाः यासु शरदोत्फुल्लमल्लिकाश्च चक्रे इति वा मल्लिकेति पुष्पेतराणामप्युपलक्षणं तथा अमना अपि भगवान् रमणानुरूपं मनोऽपि चक्रे इदं च सर्वमघटितघटनापटीयस्याऽस्य योगमायाशक्त्या सम्पादितवानित्याशयेनाह—योगमायां वीक्ष्य सर्वसम्पादनाय कटाक्षेणोद्बोध्य मम योगमाया एतस्या एतासां मनोरथपूर्तिर्भविष्यति तत्र मम का हानिरित्याशयेन ता वीक्ष्येति वा। यद्वा, तासां योगार्थं मायां वीक्ष्य तथाच गणि केन संयोगेन नास्ति मम पूर्णकामत्वादिस्वरूपहानिरिति भावः। महाभगवानपि योगमायामुपाश्रितो योगमायामधिष्ठायाप्रकटीकृतनन्दनन्दनविग्रहस्ताः स्वस्मिन्नासक्ताः सर्वगोपीर्वीक्ष्यालोच्य तन्मनोरथपूर्त्यर्थं रात्र्याविर्कं चक्र इत्यर्थः। यद्वा, ता रात्रीर्वीक्ष्य तासां मनश्चक्रे रन्तुं योगमायामधिष्ठाय स्थितः योगमायया कृष्णेन सार्द्धं सम्यक् रमणं कृतवत्यो वयमिति तासां मनसि दृढतरां प्रतीतिमुत्पादयितुं प्रवृत्त इत्यर्थः। पञ्चाध्यायात्मकोऽयं सर्वशास्त्रसारसर्वस्वभूतो ग्रन्थ इति सूचयितुं मङ्गलाचरणार्थमादौ भगवानिति पदं प्रयुक्तम्। अत्र भक्तिशान्तिरसप्रधाने श्रीमद्भागवते पारमहंस्यां संहितायां प्रसङ्गात्परशास्त्रार्थं शृङ्गाररसमनुवदता मुनीन्द्रेण स्वसिद्धान्तोऽपि गूढतया निर्दिष्टः अत एव शृङ्गारकथापदेशेन विशेषतो निवृत्तिपरेयं पञ्चाध्यायीति श्रीधरस्वामिभिरप्युक्तं—

"निवृत्तिमार्गसंसक्तचेतसां विदुषां मुदे।
व्यक्तीकारोऽयहं पञ्चमिमं कृष्णप्रसादतः" ॥

सविशेषसुखं निखिलमपि दुःखसम्भिन्नमेव—

"ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः" ॥

इति भगवद्वाक्यादतो विवेकवता निर्विशेषब्रह्माविर्भावाऽभिलाषुणा तत्प्रतिबन्धनिवृत्तिरेव सर्वोपायैः सम्पाद्येति ब्रह्मरात्र्यावच्छिन्नकालपर्यन्तं तुच्छीकृतकोटिकन्दर्पविग्रहेण भगवतापि रममाणानां गोपाङ्गनानां दुःखनिवृत्तिः तृप्तिश्च न सम्पन्नेति वर्णयता भगवता मुनिना सूचितं तदुक्तम्—

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" ॥

इति। एवं विधविवेकोत्पत्तियोगे इह जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठाननितान्तनिर्मले स्वानुग्रहपात्रेऽन्तःकरणे श्रुतिरूपस्वकान्ताभि रभिरन्तुं भगवानपि मनश्चक्रे "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुत्या भगवदनुग्रहादेव श्रुत्यर्थविचारे प्रवृत्तिर्भवति नान्यथेति भावः। भगवदनुग्रहपात्रताऽत्रावगमयन्नाह—ताः रात्री रसङ्कल्पात्जीव-

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

जन्मसु अनुभूता अहङ्कारचित्तमनोबुद्धिरूपा अन्तःकरणवृत्ती रात्रीः अज्ञानरूपतमोव्याप्तत्वादात्मतत्त्वावरणरूपत्वाद्रात्रीसदृशाः सम्प्रति शरदोत्फुल्लमल्लिकाः शरत्स्थानापन्नेन भगवदाराधनलक्षणेन निष्कामकर्मणा अन्तःकरणशुद्धिसाधनेन फुल्ला विकसिताः मालत्यादिपुष्पस्थानापन्नाः शान्त्यादयो यासु ताः "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धान्वित आत्मन्येवात्मानं पश्येत्" इति श्रुतेः । ननु, निर्गुणस्य जातिगुणादिशब्दप्रवृत्तिनिमित्तरहितस्य श्रुतिप्रतिपाद्यत्वासम्भवात्कथं ब्रह्मणि तासां रमणमित्याशङ्क्याह-योगमायामुपाश्रित इति । तथाच तन्निरसनेन निर्विशेषब्रह्मोपलक्षणमेव तासां रमणमिति भावः ॥ १ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नौमि सर्वेश्वरं कृष्णं श्रीगुरुं तत्पदाश्रयम् ।
पूर्वाचार्यं दयासिन्धुं श्रीनिम्बार्कं हरिप्रियम् ॥
कन्यावस्त्रापहारादिलीलां पञ्चार्पिको हरिः ।
हेमन्ते कृतवान् भूयः सप्तवर्षः सुशोभनम् ॥
गिरेः पूजादिकं कर्म शरदं तेऽखिलेश्वरः ।
हल्लीसाख्यं महानृत्यं कृतवान् वै तदोपरि ॥
रमणीये शरत्काले राज्यां राज्यां स्वयं क्रमः ।
अनेनैव पुराणेन ज्ञातव्यो वै सुबुद्धिभिः ॥
सर्वेषां संयमः प्रोक्तस्तत्क्षमावानुसारतः ।
प्रोच्यते पञ्चभिः सर्वजयिनः पुष्पधन्विनः ॥
तत्रोनत्रिंशके ऽध्याये फलगीतप्रणोदिताः ।
गोप्यश्चक्रुः सुसम्वादं कृष्णेनेति निरूप्यते ॥

ताः रात्रिरिति "यातावलाः ! व्रजं सिद्धाः मयेमा रंस्यथ क्षपाः" इति प्रतिश्रुताः वीक्ष्य रन्तुं रासक्रीडां कर्तुं मनश्चक्रे गोपाङ्गनाभिरिति शेषः । ननु, स्वस्वगृहगताभिः अजिज्ञासितनृत्यवाद्यगानशास्त्राभीरासक्रीडोचितपदार्थवर्जिते वने कथं रन्तुं मनश्चकार इत्यत आह-योगमायां लीलासौष्ठवार्थं प्राङ्गियुक्तां स्वशक्तिभूताम् । यद्वा, युज्यते इति योगः प्रयोजनं तदर्था माया वयुनात्मिका दुर्घटघटनापटीयसी वासुदेवासाधारणसङ्कल्परूपा तयैव वनेपि सर्वविहारोपकरणसिद्धिस्तासां च सर्वकलाकुशलता तद्भर्त्रादीनां चानसूयत्वं चेति बोध्यम् तामुपाश्रितेत्यर्थः । ननु, परदाराभः सह लीला लोकविरुद्धेत्यत आह-भगवानिति । समस्तैश्वर्यादिगुणनिधिः सर्वात्मा पूर्णकामः स्वात्मिकाभिः सह विहरन् न लोकविरुद्धं करोति यथा पाणिग्रहणविधिनापि स्वकीयया विहरन् जनो न लोकविरुद्धं करोत्यन्यथा दण्ड्यो भवतीति भावः । शरदा उत्फुल्ला मल्लिकाः यासु ताः अनेन रासोत्सवोद्दीपनता रात्रीणां वर्णिताः ॥ १ ॥

———

श्रीवैष्णवशरणकृतसिद्धान्तार्थदीपिका ।

श्रीमते रामानुजाय नमः ॥

हरिपदपतितवनितातूष्णीम्मोचनकथादवीयासम ।
कञ्चन विटावतंसकुलये मुनिमानसैकफलहंसम ॥

अथ श्रीभागवताभिधश्रीकृष्णविग्रहे पञ्चप्राणभूतायां श्रीरासपञ्चाध्याय्यां स्वरसनां पावयितुं काचित् सिद्धान्तार्थदीपिका नाम टिप्पणी निवेद्यते ।

"परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे ! आख्यानं यदधीतवान् ॥"

इत्युक्तरीत्या उत्तमश्लोकलीलाविष्टचेता मृदुलाच्छवालुके सुरसरित्तटे ऽनेकसुरनरमुनिजनैरावृते परीक्षित्समाजेपरमासने सन्निविष्टः परमपुरुषस्य वसुदेवगृहजन्मारभ्य बाल्यादिलीलाः कथयन् राजानं परीक्षितमुत्तमाधिकारिणं दृष्ट्वा "नापृष्टः किञ्च न ब्रूयात्" इति नियममनादृत्य—

"ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत"

इति वचः सार्थयन् पञ्चाध्याय्या व्रजसुन्दरीभिः सह श्रीहरे रासक्रीडांवक्तुं बादरायणिरुवाच—भगवानपीति । अत्रत्यभगवच्छो ब्रह्मशिवयोरुपास्यं अवाप्तसमस्तकामम् ऐश्वर्यादिषड्गुणपरिपूर्णं पूर्णपुरुषोत्तमं वक्ति—

"अथापि यत्पादनखावसृष्टं ।
जगद्विरिञ्चोपाहृतार्हणाम्भः ॥
सेशं पुनात्यन्यतमोमुकुन्दात् ।
को नामलोके भगवत्पदार्थः ॥"

इति प्रथमोक्तेः—

"धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।
यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये" ॥

इति वक्ष्यमाणत्वाच्च अपिना व्रजस्थसामग्र्या तादृशात्मारामनोविकारजनकता बोध्यते भगवानपि शरदोत्फुल्लमल्लिकास्ता चीरहरणलीलायां गोपसुन्दरीभ्यः प्रतिज्ञातास्ताः शारदी रात्रीः वीक्ष्य रन्तुं मनश्चक्रे यतो योगमायामुपाश्रितः योगो गोपीनां राससुखप्रापणं तस्मै या माया दया तामुपाश्रितः यद्वा, अखण्डितब्रह्मचर्यो वैराग्यवानपि गोपीष्वयोगाय कपटमाश्रितः नवस्तुतस्तथा रन्तुमना इत्यर्थः । "भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु" इति मेदिनीकोशात् । रमणं च भगवतः सर्वत्र स्वानुरक्तभक्तजनमनोरथपूरणमेवेति सिद्धान्तः । यद्वा, योगमायामघटितघटनापटीयसीं निजासाधारणशक्तिं तया विना व्रजवासिजनमोहनाद्यसम्भवात् "नासूयन् खलु कृष्णाय मोहितास्तस्य मायया" इति वक्ष्यमाणत्वात् । यद्वा, योगमायां निजप्रेयसीनां योगाय मायारूपां मुरलिकां नहि विचित्रकार्यकरीं वंशीं विना गोपवनिताकर्षणं सम्भवति, "जगौ कलं वामदृशां मनोहरम्" इत्यव्यक्तमधुरमनोहारिस्वनस्य तद्व्यतिरेकेणासम्भवात् ॥ १ ॥

———

भाषा टीका ।

श्रीरासविहारिणे नमः ।

स्मरसुरभिलचारुस्मेरताख्यपूर्णा-
व्रजसुतनुमनोभूकेलयपर्याप्तकालः ।
विहरतु विटसम्राट् कश्चिदाश्माकचित्ते
विद्वतिमदयवाऽस्मच्चित्तमेवास्तु तस्मिन् ॥

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि-हे राजन् ! श्रीकृष्णचन्द्रने का

तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः।
स चर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः ॥ २ ॥

### भाषा टीका।

कात्यायिनी देवी के पूजा के प्रकरण में गोपकन्यान तें प्रसन्न होय के जिन रात्रीन की प्रतिज्ञा करी ही वे रातें प्राप्त होत भई, कैसीहैं? कि—शरद काल में चमेली जिन में फूलि रही हैं, ऐसी उन रात्रिन कों देखिकें श्रीकृष्णचन्द्र रमण करिवे कों मन करत भये, ताई सों आपने अपनी योगमाया को आश्रयलियो या जगे योगमाया कहिवे तें अचिन्त्यशक्ति, श्रीराधिकाजी,श्रीवंशी जी, इत्यादिकन को ग्रहण होय है सो संस्कृत टीकान में बहुत विस्तार होयवे ते नहीं लिख्यो ॥ १ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

तदा तस्मिन्नेव क्षणे तत्प्रीतय उडुराजश्चन्द्र उदगात् उदितः, किं कुर्वन्? दीर्घकालेन दर्शनं यस्य सः प्रियः स्वप्रियायाः मुखमरुणेन कुङ्कुमेन यथा विलिम्पति तथा प्राच्याः ककुभो दिशो मुखं शन्तमैः सुखतमैः करैरश्मिभिररुणेनोदयरागेण विलिम्पन्नरुणीकुर्वन्नित्यर्थः। स प्रसिद्ध उडुराजः तथा चर्षणीनां जनानां शुचस्तापग्लानीर्मृजन्नपनयन् ॥२॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एवं निजरिरंसया चन्द्रमपि प्राचीदिशा सह प्रियमेव रन्तुमुद्यतं मन्यमानस्य श्रीभगवतो भावमभिव्यञ्जयन्निव तद्रिरंसास्मरणेनोदितभावविशेषः प्राचीदिशा नायकया सह चन्द्रस्य नायकभावप्रदर्शनेनोदयमाह—तदेति। यदा मनश्चक्रे तदानीमेव उडूनां तारकाणां राजेति ता अपि तत्परिवारत्वेनोदगुरिति ध्वनितं तासां च पूर्णचन्द्रराज्ञावप्यप्रकाशताविवक्षया परिवारत्वापेक्षया च उडयस्य गौणतयोक्तिः विशेषेण लिम्पन्निति पूर्णचन्द्राभिप्रायेणैव पूर्णत्वं च तस्य पौर्णमास्यां किं वा तया विनाऽपि तिथ्यन्तरे भगवद्रिरंसापेक्षया शन्तमैरमृतमयैरित्यर्थः। सर्वतापापहारित्वात् सः कामाम्बुराशिपरिवर्द्धनतया प्रसिद्धः न केवलममुना प्राचीदिश एव तापोऽपहृतः किन्तु सर्वेषां जनानामपि इत्याह, चर्षणीनामिति शुचः। शरदर्कजसन्तापदुःखानि एतच्च श्रीभगवतो रिरंसोद्दीपनद्वारा प्रायो गोपकन्यावर्गचिरविरहतापापनोदनाभिप्रायेण जगत्पूज्यानां तासां शुगपनोदनेन जगतामेव स्वतः शुगपनोदन सिद्धेः प्रियः प्रियायाः इवेति सरागत्वसाधुत्वानान्यत्वादिनाऽन्योन्यं रुचिविशेषो दर्शितः। अत एव शोकाश्रूणि मार्जयन् यथासौ परमसुखकरेण लिम्पति दीर्घदर्शन इत्यनेन परमौत्कण्ठ्यं सूचितम् एवं सर्वमिदं श्रीभगवद्रिरंसाविभावनमूह्यम् ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं निजरिरंसया चन्द्रमपि प्राचीदिशासह प्रियः प्रियमेव रन्तुमुद्यतं मन्यमानस्य श्रीभगवतो भावमभिव्यञ्जयन् तासां रात्रीणामुत्तमाङ्गरूपायामस्यामभिव्यक्तसर्वमङ्गलसूचकमभ्युदयमाह—तदेति। उडूनां राजेति ता अपि तत्परिवारत्वेनोदगुरिति ध्वनितं रश्मिभिररुणेनेति करणद्वयम् उभयेषामपि साधकतमत्वात् रश्मिधृतेन रागेणेत्यर्थः। विशेषेण लिम्पन्निति पूर्णचन्द्राभिप्रायेणैव ततो राकेयं तिथिः पूर्णत्वं च तस्य तिथ्यन्तरे श्रीभगवदिच्छापेक्षया तदेत्युक्तिस्वारस्यात् किम्वा उत्फुल्लमल्लिकारात्रीर्वीक्ष्येति यत्तस्याप्युद्दीपनत्वेन सहजोद्गमौचित्यात् "राकेशकररञ्जितम्"इति वक्ष्यमाणानुसारेण तत्तिथावेव तात्पर्य्यात् स इति ता इतिवत् न केवलमेवममुना प्राची दिश एव तापोपहृतः, किन्तु सर्वेषां जनानामपीत्याह—चर्षणीनामिति। शुचः शरदर्कजसन्तापदुःखानि यद्वा मनोदुःखानि भगवतः सर्वशक्त्याश्रयपरमशक्तिरूपाणां तासामनुल्लासोल्लासाभ्यां स्वत एव सर्वेषां तत्तद्भावात् श्रीकृष्णजन्मदिनादिवत् प्रियः प्रियाया इवेति सरागत्वसाधुत्वानन्यत्वादिनान्योन्यं रुचिविशेषो दर्शितः। अत एव तत्परिजनानां शोकाश्रूणि मार्जयन् यथाऽसौ परमसुखकरेण करेण लिम्पति तथेति व्यञ्जितं दीर्घदर्शन इत्यनेन परमौत्कण्ठ्यं च सूचितम् एवं सर्वमिदं श्रीभगवतो रिरंसाविभावनमेवोक्तम् ॥ २ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

करैररुणेन तद्गतोदयरागेण २ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

तदा यदा रन्तुं मनश्चक्रे तदैव तत्प्रीतये स शारदः उडुराजश्चन्द्रः उदगादुदितः, किं कुर्वन्? दीर्घेण कालेन दर्शनं यस्य सः चिरं प्रोष्यागतः प्रियः स्वप्रियायाः मुखमरुणेन कुङ्कुमेन यथा विलिम्पति तथा प्राच्याः ककुभो दिशः मुखं शन्तमैः सुखतमैः करैः रश्मिभिररुणेनोदयरागेण विलिम्पन् अरुणीकुर्वन्नित्यर्थः। तथा चर्षणीनामोषधीनां मनुष्याणां च शुचस्तापग्लानीर्मृजन्नपनयन् चेतनाचेतनतापं निराकुर्वन्नित्यर्थः ॥ २ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उडुराजश्चन्द्रः प्राच्याः ककुभो दिशः मुखं शन्तमैः सुखकरैः कुङ्कुमपुष्पवदरुणैः "कुभमन्दायांगतौ" इति धातोः ककुबिति योगात्मकः शब्दः भृशं मन्दगामिन्याः प्राच्या सौन्दर्यातिशयेन पूज्यायाः स्त्रियो मुखं यौवनातिशयेन उडुकदम्बस्य जनदयानुराग-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जनकत्वेन राजशब्दवाच्यः पुरुषः शन्तमेनारुणेन करेण हस्तेन कश्चिद्दोद्भूतदुःखाश्रुकालिलं यथा विलिम्पति निर्मार्ष्टि तथेति शब्दाक्षिप्त इति शेषः । कीदृशः उडुराजः चर्षणीनां सत्त्वानां खरकिरणसन्तापम्लानलक्षणाः शुचः मृजन् परिहरन् हिमकिरणकरेण पाणिना वा दीर्घदर्शनः दीर्घकालाद्दर्शनं यस्य स तथा अन्यत्र बहुकालप्रवासेन दृष्टिमार्गं प्राप्तः प्रियो भर्ता दर्शनीयो वा ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

करैररुणेन तद्गतोदयरागेण ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

फुल्लमल्लिकाश्च वसन्त उन्मुखमल्लिका ग्रीष्मे फुल्लमल्लिकाः पश्चात्कर्मधारये पुंवद्भावात्सिद्धम् एतेन शरद्वसन्तग्रीष्मसम्बन्धिन्यो रात्रय एकत्र मिलिताः सत्योऽशीत्युत्तरशतरात्र्यभिमानिन्यो देवता एव युगपदागता इत्यर्थः । न केवलं शारद एव भगवानिति ऐश्वर्यपरं तथा सति मातापितृसमीपे पूर्ववदेकरात्रमिव शयितवदासीत् इदं हि तस्यैश्वर्यम् ॥ *॥ तदा उक्तप्रकारासु सर्वास्वेव रात्रिषु पूर्णत्वेन चन्द्रमा अप्येक एव नायकत्वे ( न ) नासीदित्याह—तदोडुराज इत्यादि । तदा तस्मिन्नेव समये यदा भगवान् रन्तुं मनश्चक्रे तदैव सेवकस्येयमेव रीतिरीश्वरेच्छासमकालमेवोपसत्तिरिति यत् स इति पूर्णत्वेन प्रसिद्धः उडुराजः उदगात् उदियाय किं कुर्वन् करैः किरणैः प्राच्याः ककुभो मुखम् अरुणेन अरुणिम्ना गुणवचनोऽयं विलिम्पन् रञ्जयन्नित्यर्थः । यद्यपि बह्वीनां राज्ञीनां पतिस्तस्यापि प्राचीदिगेव तस्य प्रियेति तामेवादौ सादरमनुनयन् पुनः किं कुर्वन् चर्षणीनां जनानां शुचो मृजन् निर्मलीभावं कुर्वन् तत्र दृष्टान्तः प्रियः श्रीकृष्णः सर्वासां व्रजदेवीनां वल्लभोऽपि चर्षणीनां सखीजनानां शुचो मृजन् अरुणेन कुङ्कुमेन करैः करव्यापारविशेषैः प्रियायाः राधाया मुखं लिम्पतीति वाक्यार्थोपमा कीदृशः उडुराजः प्रियो वा दीर्घदर्शनः बह्वीषु रात्रिषु परिपूर्णतयैकरूप्येण वर्त्तिष्यमाणत्वात् दीर्घम् अपरिच्छिन्नं दर्शनं यस्य पक्षे प्रियया सह दीर्घं सर्वकालीनं दर्शनं यस्य स्वाधीनभर्तृकत्वात्तस्याः अथवा दीर्घदर्शनो दीर्घलोचन इत्यर्थः ॥ २ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नूतने तस्मिन्मनसि देवता नास्तीति अनधिष्ठितं च कार्यं न साधयिष्यतीति तदधिष्ठातृदैवं चन्द्रं च ससृज इत्याह—तदोडुराज इति । यदैव मनः कृतवान् तदैव तस्याधिदैवतमुडुराजः उदगात् उदितो जातः यद्यप्येकदा रात्रयो दृष्टास्तथापि क्रमेणैव तासां स्थितिः भगवन्मनश्चन्द्रस्याधिदैविकत्वात् पूर्ण एव सः निष्कलङ्कश्च मनस्येवाविर्भूते तस्याविर्भावः क्रीडायामुपरतायामुपरतिः मध्याकाशपर्यन्तमेव गमनं नास्तमयः कदाचिदपि सोऽपि चन्द्रः स्त्रीणां मनांसि उडुस्थानानीति तेषामपि रक्षकः इदं प्रथमतया जात इति पूर्वस्यामेव दिशि तस्योदय उच्यते सा दिग्देवानामिति तस्या दिश इन्द्रो देवता अधिपतिश्च इदानीं भगवानेवेन्द्र इति तस्य रेतोरूपः तस्यामुद्गतः अतः प्राच्याः ककुभः मुखं मध्यभागं स्वकरैः स्वकिरणैः विलिम्पन् उदगात् तस्या मुखेन रागः स्थितः प्रतिस्पर्धिन्यां सूर्यसम्बन्धेन रागसम्भवात् अतः अन्या अपि मुखं कुङ्कुमसदृशैः करैरारक्तं क्रियते यदि चन्द्रः स्वदिशो मुखं न रञ्जयेत् तदा भगवन्मनोऽपि स्त्रीणां हृदयं न रञ्जयेत् कराः शन्तमाः शीतलत्वात् तापहारकाः । किञ्च, अरुणेन गुणेन कृत्वा अत्यन्तं कल्याणरूपाः अरुणो हि रागप्रधानः पुरुषोऽपि यद्यनुरागेण स्पृशति तदा सुखं भवति । ननु, अस्य चन्द्रस्य यदि अधिष्ठातृत्वमात्रं तदा मनस्येव उदयो भवेत् यद्यन्धकारनिवृत्तिः प्रयोजनं तदा भगवतैव अन्धकारो निवर्त्तेत यदि वा उद्दीपकत्वं तदापि भगवतैव तत्सम्भवः अतोऽस्यासाधारणं कार्यं वक्तव्यमिति चेदत आह—स चर्षणीनां शुचो हरन्निति । चर्षणयः सर्वत्र परिभ्रमणशक्त्यः ताः सर्वत्र परिभ्रान्ता अपि न क्वापि परमानन्दसम्बन्धिन्यो जाताः यदि वा कश्चिन्मुच्येत तथापि ता न प्रवेशं लभन्ते ततः पूर्वमेव ता निवृत्ता भवन्ति अतस्तासां शोकस्तिष्ठत्येव चर्षणीसहितानां जीवानां वा तासां शोकः इदानीमेव निवृत्तः शक्तिसहितानामेव परमानन्दानुभवस्य वक्तव्यत्वात् प्रायेण तदानीन्तना जीवाः तादृशशक्तियुक्ताः तस्मिन्नुदिते परमानन्दानुभवोऽवश्यं भावीति तथा सति प्रयोजनत्रयं दिग्देवतायाः मुखसम्मार्जनं चर्षणीनां शोकदूरीकरणं अन्धकारनिवृत्त्यादिश्च कण्ठोक्तं द्वयमपि तदेकसाध्यमिति वक्तुं दृष्टान्तमाह—प्रियः प्रियाया इवेति । दीर्घकाले दर्शनं यस्य महता कालेनागतो भर्त्ता प्रियः प्रियायाः पतिव्रतायाः शोकं दूरीकृत्य मुखसम्मार्जनं च करोति न चैतत्कार्यमन्यथा सिद्ध्यति ॥ २ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदैवोद्दीपनानन्तरं च प्रादुर्बभूवेत्याह—तदा उडुराजश्चन्द्र उदगात् । किञ्च, न केवलमयमुद्दीपन एव अपि तु गोपस्त्रीरमणस्य तस्य प्रमाणीभूत इत्याह—ककुभः इति । दीर्घकालेन दर्शनं यस्य स प्रियो रमणः प्रियायाः स्वरमण्या मुखम् अरुणेन कुङ्कुमेन स्वकरधृतेन यथा विलिम्पति तथा प्राच्याः ककुभो दिशः मुखं शन्तमैः सुखतमैः करैः किरणैर्धृतेन अरुणेन उदयरागेण लिम्पन्नरुणीकुर्वन्नित्यर्थः । स प्रसिद्ध एव चर्षणीनां—

> "अर्यम्णो मातृकापत्नी तयोश्चर्षणयः सुताः ।
> यत्र वै मानुषी जातिर्ब्रह्मणा परिकल्पिता"

इति षष्ठोक्तेर्मानुषजातीनां शुचः सन्तापान् मृजन् अपनयन् अयमर्थः कृष्णस्य स्वकुलादिपुरुषः स पुरातनोऽपि द्विजराजोऽपि रमणार्हवहुतरस्वस्त्रीमानपि प्राच्या दिशः इन्द्रभार्यात्वात् परस्त्रियो मुखं स्वकरः स्पृशति स्पृशन्नेव स्वयं तस्यामनुरक्तस्तामप्यनुरागवतीं करोति यदि तदा कृष्णस्य तद्वंश्यस्य नवीनवयसो गोपजातेरलब्धविवाहत्वात् स्वीयस्त्रीरहितस्याथ च स्वसौन्दर्येण मानुषीर्जातीरानन्दतो गोपस्त्रीरमणे कः खलु दोष इति ॥ २ ॥

---

*एतावदन्तं प्रथमश्लोकार्थः ।

विशुद्धरसदीपिका।

अथ "प्रियमनुसुकृतां हि स्वस्पृहाया विलम्ब" इति न्यायेन यदैव भगवान् रन्तुं मनश्चक्रे तदैव तदभिप्रायमभिनयन् उडुराज उदगादिति सम्बन्धः। एवं च तद्देशगतानां चन्द्रीनां तदिच्छानुगतत्वम् "समानोदितचन्द्रार्कम्"इति बृहद्गौतमीयोक्तेः अत्र उडूनां तारकाणां राजेति उडुशब्देन रात्र्युल्लासिन्यस्तस्मिन् कान्तभाववत्यो व्रजाङ्गना अध्यवसीयन्ते किं कुर्वन् प्राच्या ककुभः मुखम् अग्रभागं शन्तमैः करैः किरणैः अरुणेन गुणेनोपलक्षितैर्लिम्पन् अरुणीकुर्वन् पक्षे प्राच्याः प्राचीनाया नित्यप्रियायाः इत्यर्थः। मुखमाननं करैः बहुत्वं व्यापाराभिप्रायेण अत्र करैररुणेनेति करणद्वयं वा उभयेषामपि साधकतमत्वात् ततश्च रश्मिधृतेन रागेणेत्यर्थः। पक्षे करधृतेन ततश्च "नेपथ्यरचनागम्या प्राच्या" इत्यनेन नवसङ्गमो रासक्रीडायामेवेत्यपि निरस्तं "बर्हापीडं"इत्यादौ वक्ष्यमाणत्वात् श्रुतिमुनिरूपाणां च नव एव एवेत्यविरोधः तथा तत् सम्बन्धेनोडुराजस्य पूर्णत्वमनुरागित्वं च विलिम्पन्निति सेवापरत्वं च तेन तस्यास्तस्याश्च स्वाधीनपतिकात्वं साधितं शन्तमैरिति मृदुस्वशीतलत्वाभ्यां वैदग्ध्यं किं कुर्वन् चर्षणीनां "चरगतिभक्षणयोः" इत्यनुशासनात् वक्ष्यमाणगतिभक्षादिमतां गृह गतानां गोपीजनानां शुचः कदासौ प्रियोऽस्मान् मिलिष्यतीति रमयिष्यतीति चिन्तारूपाः। यद्वा, चर्षणी श्रीकृष्णं गन्तुं शीलं यासां ताः वस्तुतस्तु चर्षणीनां जनसमूहानां ततश्च योग्यत्वात् सखीजनसमूहानां शुचः तयोः प्रणयमानादिकृताः परस्परानासक्तिसम्भावनारूपानीर्ष्याजनपनयन् एतदेव हि सत्यं यथा श्रीगोविन्दलीलामृते प्रहेलिकाप्रसङ्गे—

"तृप्ता बन्धुजनस्य तृप्तिजनयिता दुःखे महादुःखिता—
लब्धैः स्वीयसुखाखिलदुःखनिचयैर्नोहर्षवाधोदया॥
स्वेष्टाराधनतत्परा इह यथा श्रीवैष्णवश्रेणयः—
कास्ता ब्रूहि विचार्य चन्द्रवदने ता मद्वयस्या इमाः"॥ इति।

क इव प्रियाया इव इति नित्यप्रेष्ठत्वं दीर्घदर्शन इति दीर्घे दर्शने लोचने यस्य सः तेनोत्फुल्लत्वं निर्निमेषेक्षणत्वञ्च सूचितम्। अत्र च वाच्यार्थपुरस्कारेणोद्दीपकतया चन्द्रोदये प्रस्तुते ऽप्रस्तुतस्य स्वाधीनपतिकावृत्तान्तस्योपमामुखेन स्वयमेव कविनाऽऽविष्कृतत्वादन्यापदेशध्वनिरयम्, यदाह ध्वनिकारः—

"शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः॥
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः"॥ इति।

केचित्तु प्राच्या इत्यनेनैन्द्र्या इत्युपलक्ष्य परकीयामध्यवस्यन्ति तन्मतेनप्रार्थत्वं स्यादित्युपसङ्क्षेपणीयसङ्क्षेपः॥ २॥

---

श्रीरामनारायणकृतभावभावविभाविका।

ततः किं वृत्तमित्यत आह—तत्रोडुराज इति। यथा यदैव भगवान् चर्षणीनां "चरगतिभक्षणयोः"इत्यस्मात् भोक्तॄणां जीवानां भगवन्मार्गगमनशीलानां वा शुचस्ता यत्र यातीः तत्तापोपशमनशमादिसाधनाशक्तिप्रयुक्तशोकान्वा प्रियतमस्वात्मभगवद्वियोगशुचो वा मृजंस्तेषां सुमनस्पदे हृदयारण्ये रन्तुं मनः करोति तदैव उडुराजः उडुषु मोहनैश्वर्यमोच्याप्तहृदयवनकिञ्चित्प्रकाशनशीलेषु स्वयं प्राकाशमानेषु शमादिषु राजते प्रकृष्टाह्लादप्रकाशात्मिकया भक्तिप्रभया शोभते इति "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुरा" इत्यादिभिस्तैरुडुभिः शमादिभीराजमानो वा यो भजनानन्दचन्द्रः तथा ककुभः कं सुखं तद्रूपतयैव कुषु कुत्सितेष्वपि स्त्रीशूद्रादिषु पापयोनिषु दुराचारेषु च भातीति तथा—

"अहो बत श्वपचोऽतोगरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृह्णन्ति ये ते"॥
"अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः"॥

इत्यादिवचनात् पुनः कीदृशः सभजनानन्दः प्रियः सर्वेषामपि विषयिमुमुक्षुमुक्तानां प्रेष्ठतमस्तथा दीर्घदर्शनः दीर्घमनपवाध्यन्दर्शनं ज्ञानं यस्मात् अत एव सः अतिविलक्षणः स तेषां तच्छुचः स्वयं शन्तमैरतिशयसुखरूपैरन्येषु करैः कं सुखं रान्तीति तथाभूतैः करैः स्वरश्मिरूपैः भगवल्लीलागुणगानतानवितानादिभिर्मृजंस्तथा प्राच्याः प्राक् सिद्धायास्तमो व्याप्ताया अपि धियो मुखं सत्त्वात्मकमुख्यभागं प्रियाया अरुणेन कुङ्कुमेनेवारुणेनानुरागरागेण विशेषतो विलिम्पन्नुद्गच्छति तथा यदा वृन्दावने रन्तुं मनश्चक्रे तदैव सभजनानन्दः सर्वत्रोदगात्। यद्वा, यदैव भगवान् रन्तुं मनश्चक्रे तदैवोडुभिरुडुसदृशैर्नानाहावभावकटाक्षादिभी राजते इत्युडुराजः शृङ्गारात्मको रसेन्दुः तथा ककुभः कं सुखं तद्रूपतया कौ पृथिव्यां पार्थिवदेहे प्राकृतेऽपि भातीति तथा तथा च किमुवाच्यं प्रेमरसानन्दात्मकगोपीदेहेषु तथा प्रियः सर्वमनोरमः तथा दीर्घदर्शनः दीर्घं दर्शनं यस्मात्तेन रूपेणात्मदर्शनीया अपि शृङ्गारेण दीर्घकालमनिमेषतया दर्शनार्हा भवन्ति किमु वाच्यमतिसुन्दरीणां तथा स अतिविलक्षणः चर्षणीनामुक्तधातोरेव कृष्णरसास्वादाय गमनशीलानां शुचः एतावत् कालं प्रियासङ्गमजनितविषादान् शन्तमैः सुखरूपैः करैः सुखप्रदैरनुकूलनायकतया कृष्णाचरितकेलिकौतुकाद्युद्दीपनविभावैर्मृजन् तथा तासां प्रियतमसङ्गमाभावपीतमुखम् अरुणेन सम्भावितसन्निहिततत्समागमोत्साहजनितारुण्येन प्राच्याः पूर्वाया नित्यकृष्णप्रियाया इव विलिम्पन्नुद्गतः। यद्वा, यदैव भगवान् रन्तुं मनश्चक्रे तदैव उडुसदृशर्तुषु राजते इत्युडुराज ऋतुराजः रकारडकारयोः सावर्ण्यमभिप्रेत्योक्त्वा राजमानो वा तथा ककुभः कः स्वर्गस्तस्मादपि कुः भूमिर्विकसितसुमनोभिर्भात्यनेनेति तथा प्रियः प्रियतमकृष्णसारूप्यतया प्रेष्ठः तथा दीर्घदर्शनः वर्तमानशरत्समयात् दीर्घकाले सम्भावितं दर्शनं यस्य तथा स्वयमेव कालातिक्रमेण भगवद्रमणोत्साहेन प्रादुर्भूतत्वात्सवस्तुविलक्षणो वसन्तः विरहिणां शुचः करैः प्रियसङ्गतानां शन्तमैः स्वोद्दीपनविभावैः चर्षणीनामुक्तव्युत्पत्त्यैव रन्तुं गन्तुमुद्यतानां शुचो मृजन् प्राच्याः प्रकर्षेण पूज्यायाः कृष्णप्रियाया व्रजभुवः मुखंमुख्यं श्रीमद्वृन्दावनम् अरुणेन विविधोज्ज्वलितस्वानुरागतया सम्भावितकिंशुकादिशोणसुमनःसमूहेन विलिम्पन् उद्गतः अत्र प्रियाया मुखम् अरुणेन विलिम्पन्नित्युक्त्या वसन्तसम्भावितहोलिकाद्योतनमपि ज्ञेयम् तथा यदैव भगवान् रन्तुं मनश्चक्रे तदैवोडुराजश्चन्द्र उदगात् तथा च यदा सर्वेषां तदिच्छाधीनतया रमणानुकूल्येन तन्मनः सद्योद्गमस्तदा किमु वाच्यं चन्द्रमसस्तद्भक्तविराटमनसः

### श्रीरामनारायणकृतभावभावविभाविका ।

तन्मनसः सहकारित्वे एवं चन्द्रमसो भगवद्भक्तचिरायमनस्त्वेन चस्तत्रारुणरागः सभगवदनुरागः यस्तत्र श्यामाङ्कः सध्यानव्यक्तभगवदाभासः यश्च तन्मन उल्लासे रोमहर्षः सद्रुमलतादिविकासः यश्च तदुत्साहे भगवत्स्मितानुतत्प्रहासः सविश्वव्यापिसितामृतमयपरमाह्लादप्रकाशः यश्च व्यापकरुणप्रकाशः सोऽधरामासः यश्चोडुगणचमत्कारः तद्विहसनव्यक्तदशनलसनम् इति पुनः कथम्भूतश्चन्द्रः ककुभः के स्वर्गे मण्डलेन कौ भूमौ कान्त्या भातीति तया पुनः कीदृशः प्रिय उरोधृतश्यामसुन्दराभासेन प्रेष्ठतमः पुनः स कृष्णमनआनुकूल्येन नित्यमुरोव्यक्तकृष्णाभासतया चातिविलक्षणः प्राच्याः ककुभः सुरपतिप्रियाया दिशोऽपि मुखं शन्तमैराह्लादिप्रभान्वितैः करैरश्मिभिररुणेन तद्गतशोणरागेण करधृतहोलिकारोलिकादिवद्भासनेन स्वप्रियाया इव विशेषतो लिम्पन् चर्षणीनां जनानां दिनतापादिशुच इव चर्षणीनां कृष्णं प्रत्यभिसरणशीलानां स्वहृच्छुचो गोपिकानामपि गोपिकानां शुचः पूर्वप्रियविरहशोकान् गमने क्रीडायां च वम आदिप्रतिबन्धसम्भावितचिन्ताविशेषान् भगवतः स्वकुलसदाचारसङ्कोचसम्भावितग्लानीश्च मृजन्नुदगादिति कृष्णमनोवदुदयमगादित्यर्थः । अत्रैव हेतुगर्भितं विशेषणं दीर्घदर्शन इति दीर्घमर्थं दर्शयतीति तथा अयमभिप्रायः उडुभीराजत इत्युडुराज इत्यात्मन उडुराजत्वेन यथाऽहं बहुभिरुडुभिः स्वकान्ताभीराजमानस्तथैव मद्वंशप्रादुर्भूतेन त्वया भाव्यमिति दर्शयति नचात्र बहुदारसङ्ग्रहे यशोहानिचिन्ता यथोडुभीराजमानस्य ममोज्वला प्रभा के स्वर्गे कौ पृथिव्यां च प्रसृता तथैव तवापि कीर्तिः शुभ्रामृतरसमयी लोकतमस्तापापहारिणी मनोह्लादिनी बहुदारसमागमेन कं कुम्भासयिष्यतीति दर्शयति नच कुत्रापि तव परदारत्वशङ्कावतारः तारापतित्वेपि मम बुधोद्भवप्रभाविस्तारवत्तव पूर्णावतारत्वेन रमणेऽपि तव यशसा सर्वस्यापि बोधोद्भवो निस्तारश्चेति न मम प्रतारकस्य प्रतारकत्वम् । किञ्च, सर्वमनोरूपस्य मम यदा न कुत्रापि परत्वदृष्टिस्तदा सर्वात्मकस्य तव न तत्सम्भावनागन्धोपीति दर्शयति । किञ्च, यथोडुभी राजमानेनापि मया निःशङ्केन सुरराजप्राच्या मुखं चारुणेन विलिप्यते तथा त्वयापि स्वकान्तया प्रियायुक्तेनापि निःशङ्केन सर्वासां मुखमरुणेन कुङ्कुमाद्यङ्गरागेण हस्तं चारुणेनानुरागेण श्रोत्रं च स्ववंशरागेण लेपनीयमिति दर्शयति—किञ्च, यथा उडुराजस्यापि मम प्राच्याः पूर्वसिद्धायाः आदरस्तथा त्वया प्रियायां इव बहुदाररमणेपि प्राच्याः पूर्वसिद्धायाः प्रकृष्टपूज्याया नित्यप्रियाया आदरो न विस्मर्त्तव्य इति दर्शयति, यदा मम कुलवृद्धस्याप्येतद्विलासस्तदा किमु वाच्यं तव तत्कुलनवकिशोरस्येत्यादिदर्शयतो दीर्घदर्शनत्वं युक्तमेव । यद्वा, यदैव भगवान् रन्तुं मनश्चक्रे तदैव यथा प्राच्याः पूर्वसिद्धायाः प्रकर्षेण पूज्याया वा नित्यप्रियायाः श्रीमत्या राधाया मुखमरुणेन कुङ्कुमाद्यङ्गरागेण विलिम्पन् उपलक्षणमेतत्समस्तशृङ्गाररचनारातिविहारादेः तत्पच्छृङ्गारविहारादि कुर्वन् प्रतिनिशामुखं व्रजाद्विहारस्थलमुदगच्छति तदिव चर्षणीनामात्मरसास्वादाय गन्तुमुद्यतानां गोपीजनानां शुचः स्वविहाराप्राप्तिप्रयुक्तमनोग्लानीः शन्तमैः "आनन्दमात्रकरपादमुखोदरादिः" इत्यादिवचनान्निरतिशयसुखस्वरूपैः परमाह्लादसौन्दर्यसुरभिमार्दवतापोपशमनादिभिः कं सुखं रान्तीति तैः करैः स्वहस्तै-र्बहुवचनमत्ररासमण्डलरतिविहारादौ सर्वासां सन्निधौ बहुधाविर्भावाभिप्रायेण मृजन्नपनयन् अत्र लिम्पन् मृजन् उभयप्रयोगयोर्भूतभविष्यदर्थकयोः वर्त्तमानवन्निर्देशस्तु "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१) इति सूत्रानुसारेण साधु उदगात् व्रजादुद्गत्य वंशीवटमगात् तत्रोद्गमने यशोदावैक्लव्यमाशङ्क्य विशेषयति, उडुराज इति । रकारडकारयोःसवर्णासवर्णयोरपि सावर्ण्यं संभवादुरुधा राजते इति तथा रासादावग्रेवहाः ष्विकारस्य वक्ष्यमाणत्वातथैव व्रजेप्याविर्भावसद्भावाच्च तद्वैक्लव्यशङ्कावकाशः पुनः कीदृशः ? प्रियः तथा दीर्घदर्शनः"यः सर्वज्ञः सर्ववित् नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वात्" इत्यादिश्रुतेरलुप्तदृक्तया स्वस्मिन् सर्वासां प्रीतिं वात्सल्यशृङ्गाररसभेदेपि समानां पश्यन् दीर्घपद्मदलायते दर्शने नेत्रे यस्येति वा । ननु, पृथिव्यां नरत्वेनावतीर्णस्य कथमीदृक्त्वं तत्राह—ककुभः कं सुखं तद्रुपेणैव कौ पृथिव्यामवतीर्णोऽपि भातीति न तत्र सुखभानरूपे भगवति तच्छङ्कावसरः कं सुखं तद्रूपाकुः पृथिव्यपि भाति यस्मादिति वा कस्य ब्रह्मणोर्थे कौ अवतीर्य भातीति वा ब्रह्मापि कुत्सितो भाति यस्मादिति वा के ब्रह्मणि कुत्सिते ऽस्मदादौ च समान एव भातीति वा ककुभः सर्वेश्वरत्वाद्धलुसद्दक्त्वम् । यद्वा, तद्गमनमनोनुसारेण यदैवोडुराजश्चन्द्रः प्रियायाः प्राच्याः ककुभः मुखम् अरुणेन विलिम्पन्नुदगात् तदैव स प्रियो दीर्घदर्शनो भगवानपि चर्षणीनां तासां शुचो शन्तमैः करैर्मृजन् व्रजादुद्गत्य विहारस्थलमगादिति सम्बन्धः॥२॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

तदैवं चन्द्रमा अपि भगवद्भावमुद्दीपयन्नुदगादित्याह—तदा तस्मिन्नेव क्षणे सः प्रसिद्धः उडूनां नक्षत्राणां राजा चन्द्रः उदगात् उदयं प्राप्तः उडुपदेन नक्षत्राणामपि तत्परिवारत्वेनोदयः सूचितः किञ्च "मनसापि न गन्तव्याः परदाराः कदाचन" इति निषेधमनुसन्धाय महत्तमलज्जया वा रमणाच्चेतसः परावृत्तिमपि निराकरोदित्याशयेनाह-ककुभ इति । प्राच्याः इन्द्राधिष्ठितायाः दिशो मुखं शन्तमैः परमसुखकरैः किरणलक्षणहस्तैर्धृतेनारुणेनोदयरागेण विलिम्पन्नरुणीकुर्वन् तयाचानया प्रवृत्त्या कृष्णमेतमुपदिशति स्म, भगवांश्चन्द्रः भो यदुकुलावतंस ! यथोक्तदोषशङ्कया रमणायितुं मा निवर्तय मद्वंश्यत्वात् यथा अहं तव कुलादिपुरुषो द्विजराजस्तत्रापि पुरातनस्तत्रापि राजमत्याक्रान्तस्तत्रापि परमसुन्दरानेकस्त्रीपतिः प्राच्या दिशः परस्त्रीयो मुखं स्पृशन्नेव स्वयं तस्यामनुरक्तस्तामप्यनुरागवती करोमि तद्वत्त्वमपि मद्वंश्यस्तत्रापि नवीनतया तत्राप्यविवाहितत्वात् स्वभार्यारहितस्तत्रापि सर्वदोषविनिर्मुक्तपरमसुन्दरविग्रहस्तत्रापि सम्प्रति गोपजातिनिविष्टो यथेष्टं गोपाङ्गनाभिः रमणं कुरु नास्ति तव दोषगन्धोपि "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरे जनाः" इति न्यायात् वस्तुतः "तेजीयसां न दोषाय" इत्युक्तत्वादेतावता

दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं[1] रमाननाभं नवकुङ्कुमारुणम्।
वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां मनोहरम् ॥ ३ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

नास्ति मम दोषसम्पर्कस्तव स्वतितेजस्वित्वात्सुनरामित्यपि स एव बोधितवानित्याशयेनाह-चर्षणीनामिति—

अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः।
यत्र वै मानुषी जातिर्ब्रह्मणा परिकल्पिता" ॥

इति षष्ठस्कन्धोक्त्या मानुषजातीनां शुचः शरदर्कजसन्तापदुःखानि मृजन् अपनयन् तथाच समस्ततापनिवर्तकस्य नास्ति तादृक् दोषजनिततापावाप्तिसम्भावनेति भावः। तत्रानुकूलं दृष्टान्तमाह—प्रिय इति। दीर्घकालेन दर्शनं यस्य प्रियः स्वरमयाः प्रियायाः स्वरमयया: मुखम् अरुणेन अनुरागेण स्वकरधृतेन कुङ्कुमेन च यथा लिम्पन्ति तद्वत्। यद्वा, मनःकरणमनमकालमेव चन्द्रोऽपि तादृशाऽसङ्ख्यातराऽऽयानुकूलः राकोत्पादित इत्याह, तदेति। तदा तस्मिन्नेव क्षणे स्वसङ्कल्पितश्चन्द्र उदगात् स प्रसिद्धश्चन्द्र उदगात् सच किञ्चिज्ज्ञापयन्निवोदगादित्याशयेनाह-ककुभ इति। तथा च "चन्द्रमा मनसो जातः" इति श्रुतेः। त्वत्त उत्पन्नस्य त्वत्प्रसादलब्धप्रतापस्य ममापि नास्त्यधर्मास्त्रभ कर्मलेपः तव तु सर्वेश्वरस्यैव कुतः सः अतः स्वभक्तानामाशां मनोरथं पूरयेति बोधयन्निवेति भावः। किञ्च, सर्वसन्तापनिवृत्त्यर्थं प्रवृत्तौ लोकदृष्ट्या प्रतीयमानोपि दोषो न संस्पृश्यत इत्यपि विज्ञापयन्नित्याशयेनाह-चर्षणीनामिति। यद्वा, यथा मम प्राच्याः ककुभः सम्बन्धः परदारसम्पर्कवत्प्रतिभाति नतु वस्तुतः तत्सम्पर्कः किन्तु सर्वजनतापनिवृत्त्यर्थं प्राच्याः दिशि समुदायमात्रं तथा भगवतोऽपि स्वजनसन्तापनिरासार्थं कृतावनारस्य तत्तल्लीलया स्वभक्तसुखसम्पादकप्रवृत्तौ मूढजनानां लौकिकरमणादिप्रतीतावपि नास्ति किञ्चिद्बाधकमिति विज्ञापयन्निवोदगादित्याशयेनाह, ककुभ इति। निवृत्तिपक्षे तदा भगवत्प्रसादोदयक्षणे पनोडूनां नत्स्थानापन्नानां शुभवृत्तीनां राजा विवेकाख्यश्चन्द्र उदगात् किंकुर्वन्नित्यपेक्षायामाह—ककुभ इति। प्राच्या अनेकजन्म प्रवृत्ताया अविवेकदशायाः मुखं जाड्यलक्षणं करस्थानापन्नैस्तत्तद्विचारैः सम्पादितेनारुणेन तत्तत्पदार्थबोधलक्षणेन रागेण लिम्पन् तिरोहितं कुर्वन् अत एव चर्षणीनाम् अधिकारजनानां तत्तद्वस्तुविषयकान् शोकान् मृजन् अपनयन् अत्र दृष्टान्तमाह प्रिय इति ॥२॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तदुद्दीपनानन्तरमाह-तदेति। तदा तस्मिन्नेव क्षणे सः प्रसिद्धः शारदः उडुराजश्चन्द्रस्तत्प्रीतये उदगात् उदितोऽभूत् किं कुर्वन्? दीर्घदर्शनः दीर्घेण कालेन दर्शनं यस्य सः प्रियः स्वप्रियायाः मुखमरुणेन कुङ्कुमेन यथा लिम्पति एवं प्राच्याः ककुभो दिशो मुखं शन्तमैः करैः किरणैः अरुणेनोदयरागेण विलिम्पन् अरुणीकुर्वन् तथा चर्षणीनां शुचस्तापग्लानिर्मृजअपयनम् "अर्यम्णो मातृकापत्नी तयोश्चर्षणयः सुताः। यत्रैषा मानुषी जातिर्ब्रह्मणा परिकल्पिता,, इति षष्ठस्कन्धात् चर्षणयो मानुषाः बह्वीषु शरद्रात्रीषु रासक्रीडा भगवता कृता ताः रात्रीरिति बहुवचनात् पूर्णोडुराजयोगस्तु पूर्णिमायामन्यासु च यथा सम्भवम् ॥ २ ॥

---

भाषा टीका।

जब रासरसिक आनन्दकन्द श्रीकृष्णचन्द्र ने रमण करिवे कूं मन करयो, तब ताई समय पै नक्षत्रन को राजा पूर्णजाको दर्शन ऐसो कार्तिक पूर्णिमासी को जो चन्द्रमा है सो शीतल सुखदायी अपनी किरन सों इन्द्र की दिशा जो प्राची [ पूर्व दिशा ] है ता के मुखकों अरुण करत, जनन के तापन कूं दूर करत, उदयकों प्राप्त होत भयो, जैसें परदेश तें विरही पुरुष अपने घर आयके बडी प्रीति सों अपनी प्रिया को केसर सों मुखमाडै ता रीतिसों ॥ २ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कुमुत् कुमुदं विकसनीयं विद्यते यस्य तं कुमुद्वन्तं न खण्डं मण्डलं यस्य तं रमाया आननस्येव आभा यस्य तं नवकुङ्कुममिवारुणमेवंविधं चन्द्रं दृष्ट्वा तथा वनं च तस्य कोमलैर्गोभीरश्मिभीरञ्जितं दृष्ट्वा कलं मधुरं जगौ अगायत, कथं? वामदृशां वामा मनोहरा दृशो यासां तासां मनोहरं यथा ॥३॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

ततश्च भावविशेषाविर्भावेन श्रीगोपीनामाकर्षणार्थं मोहनमन्त्रमिव वेणुना किञ्चिद्गीतमगायदित्याह-दृष्ट्वेति। कुमुत् कुमुदं तथा च विश्वः "कुमुदेऽपि कुमुत् प्रोक्तम्" इति तद्वन्तमिति कुमुदानिव तदानीं विकसितानीत्यर्थः। अत एव वक्ष्यते श्रीगोपीभिः "वृन्दावने कुमुदकुन्दशशाङ्करम्ये,, इति। यद्वा, कुः पृथ्वी तस्या मुत् हर्षः तद्वन्तमिति तदुदयेन सर्वेषामेवानन्दोऽभूदित्यर्थः। तत्र हेतवः अखण्डेत्यादीनि अखण्डमण्डलत्वाद्रमाननाभम् इति लक्ष्मीमुखस्मारणेन रिरंसा विभाविलेनि ज्ञेयम्। यद्वा, रमतीति रमा श्रीराधा नतु रमाननं सदा कुङ्कुमस्य भावोद्दीपनत्वेनैव प्रयोगः एवं कालस्य रतियोग्यतां प्रदर्श्य स्थानस्यापि दर्शयति-वनं चेति। तस्य चन्द्रस्य कोमलैः प्रथमोदयेनाल्पमात्रप्रकाशवद्भिः गोभिः अभितो रञ्जितं रक्तीकृतम् अनुरागविषयीकृतं वा। यद्वा, गोभिरिति तृतीयान्तं पदम् अञ्जितं अङ्कितम् अत्रापि स एवार्थः एवं भावोद्दीपनमेव दर्शितं कलं मधुरं किञ्चिद्गीतम्। यद्वा, कलं यथा स्यात्तथा जगौ वेणुनेति

(१) रामाननाभमिति विज० वीर०।

श्रीमत्सनातनजीवगोस्वामीकृतबृहत्तोषिणी ।

ज्ञेयम् । "काऽस्यङ्ग ! ते कलपदामृतवेणुगीते ,, इत्यादिवक्ष्यमाणत्वात् वामा मनोहरा दृशो नेत्राणि यासां परमसुन्दरीणामित्यर्थः । यद्वा, वामा कुटिला दृक् दृष्टिर्यासां परमविदग्धानामित्यर्थः । एतच्च स्वरूपनिरूपणमात्रं व्रजाङ्गनानां सर्वासामेव स्वभावतस्तादृशत्वात् मनो हरति आकर्षति सङ्केतविशेषेण रागतालादिविशेषं वा मनोहरं तद्यथा स्यात् इति दिनान्तरापेक्षया तदानीं गानविशेषोऽभिप्रेतः दिनान्तरेषु वेणुगीतेन तादृशत्वावृत्तेः ॥ ३ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च तं दृष्ट्वा भावविशेषाविर्भावेन वनमागत्य तच्च तद्रश्मिभीरञ्जितं दृष्ट्वा तत्र च यमुनातीरमागमद्यापि रासौलीति प्रसिद्धं श्रीवज्रस्थापितं ग्रामवरमागत्य चाकर्षणवेणुना किमपि गीतमगायदिति पूर्ववत्तस्यां रात्रौ प्रकटितवेणुशिक्षाविशेषत्वमप्याह—दृष्ट्वेति । तं च रमाननाभं रमयन्तीति रमाणां परमरमारूपाणामेव वा तासां तत्प्रेयसीनां मध्ये परमप्रेयसी या राधा यत्प्राप्त्यर्थमेव वेणुशिक्षाविशेषं प्रकटयितुं नूनमेतावन्तं कालं तासामपि सङ्गमे शिथिलोऽभूत् तस्या यत् आननं तदाभं दृष्ट्वा तत्तया वितर्क्य तेन तत् स्मृत्वा वा स्वप्रकाशनाय कलञ्जगावित्यन्वयः। वितर्कोपयुपादनाय साम्येन विशेषणानि कुमुत् कुमुदं तथा च विश्वः "कुमुदेऽपि कुमुत्प्रोक्तम्" इति तद्वन्तमिति वा स्वप्रकाशनाय कुमुदानि च तदानीं विकासितानीति द्वन्यर्थः । अत्र विशेषणैरेव विशेष्यश्चन्द्रो लभ्यते "अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्"इति वत् आननस्य पक्षे कोः पृथिव्या मुत्कर्षवत्वेन विद्यते यस्य तदिति विशेष्यवशाल्लिङ्गविपरिणामेन ज्ञेयम् । परमरमारूपत्वात्तस्याः अखण्डमण्डलं षोडशकलं पक्षे यथावत् परिमाणसम्वलितं मण्डलमवयववृन्दं यत्र नवकुङ्कुमाविण्डवदरुणं पक्षे नवकुङ्कुमरागेणारुणम. एवं कालस्य रतियोग्यतां प्रदर्श्य स्थानस्यापि दर्शयति वनं चेति । तस्य प्रथमोदयेनानपमानप्रकाशवाङ्गिर्गोभिः अभितो रञ्जितम्; यद्वा, भावे निष्ठा तैरभिरञ्जितम् अर्थात् कृष्णस्यामिरञ्जना यत्र तत् दीर्घत्वाभावः छान्दसः एवं भावोद्दीपनमेव दर्शितं कलं मधुरमस्फुटं च यथा स्यात्तया जगौ वेणुनेति ज्ञेयम् । "काऽस्यङ्ग ते कलपदामृतवेणुगीते" इत्यादिवक्ष्यमाणात् तत्र मधुरत्वं मनोहरणाय अस्फुटत्वं सर्वासामपि तासां स्वस्वनाममयत्वादिभ्रमाय अन्येषां वेणुवाद्यमिदमिति विशेषानवधारणाय च । ननु, मधुरत्वेन कथं सर्वेषामेवाकर्षणं नाभूत् ? तत्राह—वामदृशां तादृशभाववतीनामेव मनोहरं यथा स्यात्तथेति आदिरसमात्रोद्दीपनं रागविशेषं जगावित्यर्थः । वक्ष्यते च मनङ्गवर्द्धनमिति. स च नूनं मध्यमादिनामा यत उक्तं मौडवरागभेदे—

"मध्यमादिर्मग्रहान्तो मध्यमग्रामरागजः ।
सर्वं सायं तु गातव्यः शृङ्गारे ऋषवर्जितः" ॥ इति

मेति मध्यमः ऋश्चेति ऋषभश्चैवतौ स्वरौ " ग्रहः स्वरस इत्युक्तो यो गीतादौ समर्पितः"इति पूर्वं तु "इति वेणुरवं राजन् ! सर्वभूतमनोहरम्" इति सामान्यविषयकत्वात् स्वमात्रानुसारेण तासां मोहनमात्रं जातम् अधुना तु रसविशेषोद्दीपनत्वादाकर्षणमिति तत्र तत्र वंश्या अपि वैशिष्ट्यमस्ति यथोक्तम्—

"अर्द्धाङ्गुलान्तरोन्मानं तारादिविवराष्टकम् ।
ततोऽङ्गुलान्तरे यत्र मुखरन्ध्रं तथाङ्गुलम् ॥
शिरो वेदाङ्गुलं पुच्छं त्र्यङ्गुलं सा तु वंशिका ।
नवरन्ध्रा स्मृता सप्तदशाङ्गुलमिता बुधैः ॥
दशाङ्गुलान्तरात्स्याच्चेत् सातारमुखरन्ध्रयोः ।
महानन्देति विख्याता तथा सम्मोहनीति च ॥
भवेत्सूर्यान्तरा सा चेत् तत आकर्षणी मता।
आनन्दिनी तदा वंशी भवेदिन्द्रान्तरा यदि ॥
गोपानां वल्लभा सेयं वंशुलीति च विश्रुता ।
क्रमात् मणिमयी हैमी वैणवीति त्रिधा च सा" ॥ इति

अतो द्वादशाङ्गुलान्तरेतारमुखरन्ध्रा हैमीयं ज्ञेया एवं गानवैशिष्ट्यमपि ज्ञेयं वामदृशामिति श्लेषेण स्वस्मिन् कुटिलमेव पश्यन्तीनां तासां मनोरूपमूलाकृष्ट्या दृष्ट्यादिसर्वेन्द्रियवृन्दमेवाकृष्टमित्यर्थः । अत्र श्लेषेण कामबीजं जगाविति रहस्यं यतो वामदृकुसम्बन्धि यत् तत्सहितं कलमिति प्रथमाक्षरत्रयं व्यञ्जितं कीदृशं मनोहरं मनः शब्देन तदधिष्ठाता चन्द्र उच्यते स च तदाकारत्वेन लवकः तं हरति आकर्षतीति तत्सम्वलितमित्यर्थः । नादयुक्तत्वं तु वेणुनादस्वाभाव्यादेवेति भावः । तदुक्तं "कलातु माया लवकातुमूर्तिः कलक्कणद्वेणुनिनादरम्यः"इति ॥ ३ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कुमुद्वन्तं चन्द्रं गोशब्दः किरणपरः ॥ ३—६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दृष्ट्वेति । कुमुत्कुमदं विकसनीयं विद्यते यस्य तम् । यद्वा, कोः पृथिव्याः मुदस्यास्तीति तं भूमेरानन्दकरं चन्द्रं तस्य कुमुद्वतः कोमलैर्गोभिः किरणैरङ्कितं रमणीयं वनं च दृष्ट्वा वामदृशां कामिनीनां मनोहरं मधुरं च यथा भवति तथा भगवानिति शेषः । जगौ वेणुमवादयदित्यर्थः । कुमुद्वन्तं कथम्भूतम् अखण्डं सम्पूर्णं मण्डलं यस्य तं नवकुङ्कुममिवारुणमतः कुङ्कुमारुणकान्तामुखसदृशम्॥ ३ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुकुन्दः अखण्डमण्डलं पूर्णमण्डलं रामस्य बलभद्रस्याननमिव शोभमानं रामाणामाननमिव रमणीयं कुङ्कुमपुष्पवदरुणं तमुडुराजं दृष्ट्वा तस्य चन्द्रस्य कोमलगोभिः मृदुतररश्मिभिः रञ्जितं मण्डितं वामदृशां स्त्रीणां मनोरमं मनोहरं वनं सेवायोग्यस्थलं च दृष्ट्वा कलमव्यक्तमधुरस्वरं जगावित्यन्वयः ॥ ३ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महालक्ष्मीरूपत्वेन या रमा अत्र श्रीराधा "इति वेणुरवं राजन् सर्वभूतमनोहरम्" इति पूर्वोक्तात् वैशिष्ट्यमाह—वामदृशां मनोहरमिति । आदिरसोद्दीपनगानविशेषादिति भावः ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भगवानपि तमुदितं दृष्ट्वा विहारार्थं क्षणमपि विलम्बं नाकरोदित्याह—दृष्ट्वेत्यादि । कुमुद्वन्तं प्रकाशेन कुमुदं वर्त्ततेऽस्येति कुमुद्वान् नडादित्वादतो लोपः चन्द्रः तं दृष्ट्वा कलं जगौ गीतवान् वेणुनेति शेषः । चुकूज वेणुमित्युक्तेः किं जगौ इत्यत्राह वामदृशां मनोहरं यत् तदेवेत्यर्थः । वामदृशामित्यस्यायमर्थः, यज्जगौ तद्वामदृश एव शुश्रुवुः न तु पूर्वपूर्वोक्तवत् सर्वभूतमनोहरमिति तथा सति सर्वं एवाऽभोष्यन् तन्न चेत् वामदृश एवाजग्मुर्न तु सखायः सखीनां तु मते पित्रोर्गृह एव वर्त्तते पित्रोरपि तथैव पूर्वपूर्वदिनवत् यथास्थानं यथाकालं शयनादिक्रियां कुर्वंस्तत्रास्ते दृश्यते च ताभ्यां तथा ईदृश्येव तस्य योगशक्तिरचिन्त्या अनयैव दिशा वृन्दावनस्थो नित्य इति यन्मतं तदपि साधयितव्यं कुमुद्वन्तं कीदृशम्? अखण्डमण्डलं पूर्णं पुनः कीदृशम्? रमाननाभं रमां विहाय गोपीभिः सह क्रीडायां तस्याः सदैव कोपेनारुणमाननं तत्समानं तदेव प्रकटयति, नवकुङ्कुमारुणं न केवलं तं दृष्ट्वा वनं च कीदृशं तत्कोमलगोभिरञ्जितं तस्य कोमलैर्गोभिः किरणैः अञ्जितमुच्चितम् अभिरञ्जितमिति समस्तं वा पदम् अत एव नवकुङ्कुमारुणमिति वनस्य च विशेषणमवगन्तव्यम् ॥ ३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं मनस उत्पत्तिमुक्त्वा तद्देवतायाश्च ततः सङ्कल्पोत्पत्त्यर्थं तच्छब्दयोनित्वं निरूपयन् तद्दर्शनेन वेणुनाद उत्पन्न इत्याह—दृष्ट्वेति । कुमुद्वांश्चन्द्रः पृथिव्यां सर्वत्रैव मुदं कृतवानिति तथा करणे सामर्थ्यम् अखण्डमण्डलमिति । न खण्डं मण्डलं यस्य एतस्य रसोत्पादने विभावकत्वमप्यस्तीति ज्ञापयितुं रमाननाभमिति उक्तं लक्ष्म्या अयं भ्राता भवतीति रमाया आननवत् आभा यस्य तथोक्तः । किञ्च, नवकुङ्कुमवदरुणवर्णमपि तेन विवाहसमये यथा लक्ष्मीमुखं तथा अयं वर्त्तते अतो नूतनकामजनकः । किञ्च, वनमपि रसपोषकं तस्य कोमलगोभिरल्पकिरणैः अभितो रञ्जितमारक्तमुक्तं किरणानां रसदोग्धृत्वं वन एव पादपत्वं च ज्ञापयितुं च गोपदं रमाननाभत्वेन पूर्वं निरूपणाद्यथा तत्पूतनकटाक्षाभावोदयहेतवस्तथैतेपीति ज्ञापनाय च गोपदमिन्द्रियस्यापि वाचकमिति तथा मधुना भावोत्पत्तिरेव तत्पोषस्तु स्वामिन्यागमनादिनाग्रे भावीति ज्ञापयितुं कोमलपदं यत्र तेन वनमपि रज्यते तत्र स्वयमागतः तद्रागं कथं न कुर्यात् ततः सङ्कल्पद्वारा कामजननेन सर्वं कार्यं भविष्यतीति कलं यथा भवति तथा जगौ गानं कृतवान् तच्च गानं वामदृशां सुन्दरदृष्टीनां स्त्रीणां मनोहरमिति तस्मात् "गायन्तं स्त्रियः कामयन्ते" इति श्रुतेः । अथाह्वानेन सर्वाः समाहूता इति यदि स्वकमधुरं गीतं कुर्यात् तदा गीतमेव शृण्वन्त्यस्तत्रैव स्थिता भवेयुः यासां पुनर्दृष्टिर्नोत्तमा तास्तु नाकारिता एव ॥ ३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च तद्दर्शनेनोद्भूतकन्दर्पविकारो "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति स्मृत्या स्वकुलादिपुरुषस्य तस्य धर्मं स्वस्मिन्नपि पश्यन्निःशङ्कमेव परस्त्रीरानेतुं कामव्यमोघं यत्नमकरोदित्याह—दृष्ट्वेति । कुमुत् कुमुदं "कुमुदेऽपि कुमुत् प्रोक्तम्" इति विश्वः तद्विकाशनीयत्वेन वर्त्तते यस्य तं कोः पृथिव्या अपि मुत् कर्त्तव्यत्वेन च वर्त्तते यस्य तमात्मानं च दृष्ट्वेत्यपि व्याख्येयं विशेष्यविशेषणानुक्तेः न खण्डं मण्डलं बिम्बं स्वरूपं यस्य तं पूर्णमित्यर्थः रमा लक्ष्मीः तद्भ्रातृत्वात्तदाननाभम् । यद्वा, "सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा" इति स्मृतेः रमा श्रीराधा रमन्ते रमयन्तीति वा रमा गोप्यश्च तासामाननस्येवाभा यस्य तमिति तद्दर्शनेन तास्स्मृतिपथमारूढा इति भावः । पक्षे रमाणां तासाम् आननं आभा अन्तःकन्दर्पविकारद्योतिनी सम्यक् कान्तिर्यस्तमात्मानम् उद्यद्रागव्याप्तत्वात् नवकुङ्कुमपिण्डवदरुणं पक्षे नवकुङ्कुमचर्चायाः अरुणं तथा वनं च तस्य कोमलैर्गोभिः किरणैः रञ्जितं म्रक्षितम् अभिरञ्जितमिति समासो वा पक्षे तैः प्रसिद्धैर्गोभिः स्वाङ्गकान्तिभिः स्वपाल्यमानगवीभिर्वा अभिरञ्जितम् अभिरञ्जितचरमित्यर्थः । टजभाव आर्षः इत्युद्दीपनालम्बनविभावौ दृष्ट्वा कलं मधुरमगायत वेणुनेति शेषः । "कास्त्र्यङ्ग ते ! कलपदामृतवेणुगीत" इत्यग्रिमोक्तेः कथं वामा मनोहरा दृशो यासां तासां युवतीनामेव मनोहरं यथा स्यात्तथा "गायन्तं स्त्रियः कामयन्ते" इति श्रुतेः । केचित्तु कलं ककारलकारं वामदृशामिति लुप्तविभक्तिकं पदं वामदृक् चतुर्थः स्वरः तया सह पञ्चदशस्वरं कामबीजं जगाविति रहस्यं मनोहरं मनसः आकर्षकत्वात् स्वस्वरूपभूतमहामन्मथमन्त्रमित्यर्थः ॥ ३ ॥

---

### विशुद्धरसदीपिका ।

ततश्च तद्दर्शनेन प्राणप्रियाया रासक्रीडाभिलापमभ्युदयन् प्रोत्साहितमनास्तत्सखीजनानाकारयितुमन्यासां भावकचरीणां च भावमवधारयितुं यत्कृतवांस्तदाह—दृष्ट्वेति । अत्र भगवान् इत्यध्याहार्यं कलं जगौ "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः तत्र मधुरत्वं सर्वासां मनोहरणाय अस्फुटत्वं चाऽनवधारणेन स्वस्वनामश्रवणाय तच्च गानं वंश्यैव योगमायामित्युक्तेः ततस्तस्या अपि वैशिष्ट्यं ज्ञेयम् तदुक्तम्—

> अर्द्धाङ्गुलान्तरोन्मानं तारादिविवरायुक्तम् ।
> ततोऽङ्गुलान्तरे यस्या मुखरन्ध्रं तथाङ्गुलम् ।
> शिरो वेदाङ्गुलं पुच्छं त्र्यङ्गुलं सा तु वंशिका ।
> नवरन्ध्रा स्मृता सप्तदशाङ्गुलमिता बुधैः ॥ १ ॥
> दशाङ्गुलान्तरा सा चेत् स्यात्तारमुखरन्ध्रयोः ।
> महानन्देति विख्याता तथा संमोहनीति च ॥
> भवेत्सूर्यान्तरा सा चेत्तत आकर्षणी मता ।
> आनन्दिनी स्मृता वंशी भवेदिन्द्रान्तरा यदि ॥
> गोपीनां वल्लभा सेयं वंशुलीति प्रकीर्तिता ।

## विशुद्धरसदीपिका ।

क्रमान्मणिमयी हैमी वैणवीचेत्यसौ त्रिधा ॥

ततो हैमीयमाकर्षणीसंमोहिनी च ज्ञेया गानेपि वैशिष्ट्यं तदुक्तं मौंडवरागभेदे "मध्यमादिर्मग्रहान्तो मध्यमग्रामराजकः। अयं सायं तु गातव्यः शृङ्गारे ऋषभवर्जितः" सच नूनं मध्यमः तत्रापि "धन्या श्रीश्च तथा गौरी राधिकाया रतिप्रदा" इति गणोद्देशोक्तेस्ते एव गीते इति गम्यते कीदृशं कलं वामदृशां मनोहरम् "वामौ वल्गुप्रतीपौ च" इत्यमरः। वामे सुन्दरे दृशौ यासामिति किशोरीणामित्यर्थः। ननु पूर्ववत् सर्वभूतमनोहरमिति भेदः। वस्तुतस्तु वामे श्रीकृष्णस्य वामपार्श्वे स्थितायां श्रीराधायामेव दृग्ज्ञानं परिचयो यासामिति तत्सहचरीणामित्यर्थः। "दृग्ज्ञाने ज्ञातरि त्रिषु" इत्यमरः। श्लेषेण च कलमित्यादिना वाक्येन गुप्तबीजमेवोद्धृतमिति ज्ञेयम् तथाहि कलं ककारं लकारं च वामदृक् ईकारः मन अनुस्वारः इत्यर्द्धमात्रात्मकमिति ततश्च श्रीराधिकायाः स्वस्य महामन्त्रादिबीजमुभयोरेकीभावसूचकं जगावित्यर्थः। अत एव तासां तासां च मनोहरमिति किं कृत्वा कुमुद्वन्तं दृष्ट्वा "कुमुदेऽपि कुमुत् प्रोक्तम्" इति विश्वः। कुमुदो हि रात्रिविकासिकमलिनीजातयः ता विकसनीया यस्य सः कुमुद्वन्तम् आननपक्षे कौ पृथिव्या मुत्कर्षव्यत्वेन विद्यते यस्य तमिति परमरमारूपत्वात् तस्याः सखीनां कुमुदिनां तदेकविकसनीयत्वेनानन्यनिष्ठत्वं च सूचितं कीदृशम्? अखण्डमण्डलं षोडशकलं ततश्च पूर्णत्वं पक्षे यथावत् परिमाणसम्वलितम् मण्डलम् अवयववृन्दं यत्र तत् पुनः कीदृशं रमाननाभं रमात्र श्रीराधा तस्या आननस्याभा इव आभा यस्येति प्रतीपेन तस्याः रासोत्साहप्रतीतिः नवकुङ्कुमारुणं नवकुङ्कुमपिण्डवदरुणं नवकुङ्कुमरागेण प्राक्सूचितेनारुणं तद्वदारुणमिति सहजसौन्दर्यं तथा वनं च दृष्ट्वा कीदृशं तस्य कोमलैः गोभिः किरणैः अञ्जितं प्रक्षितमिति वनशब्देन तरुलतासमुदायस्तेन च सहचरीसमुदायो लक्ष्यते तदेतत्सूचितं श्रीगोविन्दलीलामृते—

> "सहचर्यश्च दास्यश्च राधेशालोकमोदतः ।
> लतास्ताः कण्टकितामूर्तिभेदैर्गुल्मतया स्थिताः" ॥

इत्यादिना। तथा चैवं ज्ञायते सोयं मुख्यतमः श्रीभगवत्प्रकाशो नित्यदाऽप्रकाशं विहरत्यस्मिन् विपिनवरप्रदेशे व्रजगतश्च प्रकाशः प्रकटलीलायां साधकानुग्रहाय तेनैकीभूय तत्परिकरैश्च प्रकटलीलागतान् परिकरानेकीकृत्य क्रीडति तत्र च लीलाशक्तिरेव तस्मिन् तेषु तेषु परिकरेषु च प्रेमवैवश्यादिद्वारा तत्र तत्र प्रकाशे पृथगभिमानं परस्परमननुसन्धानं च सम्पादयति यतश्च नित्यसिद्धमपि निजवैभवादिकं स च नैव नानुसन्दधुरिति स्थितं प्रकाशान्तरेण "सायं गतो यामयमेन माधवः" इत्यादिपूक्तम् श्रीव्रजेश्वरीलालनादिसुखमनुभवति भवति च प्रकाशान्तरेण रासरसाविष्ट इति सर्वमनवद्यम् अन्यथा चन्द्रशालिकायां सुखसुप्तं परितो गुप्तं स्वात्मजमात्मनैवानिशं प्रतिक्षणमुत्थायोत्थायानिशं भावयन्त्याः श्रीव्रजेश्वर्याः प्रमीलं दुर्लङ्घ्यमलं स्यादिति सूक्ष्मदृशावधेयं तदेवं नित्यसिद्धाभिः संभूय पुलिनं गता इत्यादिकमुज्ज्वलोक्तमपि सङ्गच्छति इत्यादिति दिक् ॥ ३ ॥

## श्रीधनपतिकृतभावविभाविका ।

ततः किं वृत्तमित्यत आह—दृष्ट्वेति। स भगवानित्यनुषज्जते स भगवान् रमणप्रवृत्तस्वमनोनुसारेणोद्गतं भक्तानां भजनानन्दगोपीनां शृङ्गाररसं वसन्तं चन्द्रं प्रियामुखं गोपीसमूहं वनं च दृष्ट्वा कलं जगावित्यन्वयः। तत्र भजनानन्दपक्षे कौ पृथिव्यां तद्गतसर्वजनेषु मुद्यस्याः कुत्सितेष्वप्यन्यत्र स्वोद्धारमपश्यत्सु वा मुद्यस्या तादृग्भक्तिप्रभावन्तम् अन्यधर्माणामिव विदैन्ये खण्डं मण्डलं यस्य रामा मनोरमा भक्तानामाननेषु आभा उत्कृष्टा दीप्तिर्यस्य न वा सर्वतो विलक्षणाकुः भूमिरवस्था यस्य कुत्सितेष्वपि मा प्रमा अरुणमनुरागं च यस्मात् तादृशं वनं स्वीयं वृन्दावनं च तद्भजनानन्दसम्बन्धिन्यो याः कोमलाः कठोरताशून्या गावो वाचस्ताभिरञ्जितं दृष्ट्वा शृङ्गाररसपक्षे तु कौ भूमौ या मुत्तद्वन्तं कुमुदादिकुसुमरचनावन्तं वा न प्राकृतजनशृङ्गारवदखण्डं मण्डलं यस्य रमाणामाननेषु आभा कान्तिर्यस्मात्। यद्वा, रमाननसम्बन्धेनैवाभा कान्तिर्यस्य तदाननेष्वेवा समन्ताद्भातीति वा नवकुङ्कुमादिना अरुणत्वं यस्मिन्नवकुङ्कुमवदरुणोऽनुरागो वा मुखरागो वा यस्मात् तादृशं वनं च तच्छृङ्गाररसान्वितगोभिर्वचोभीरञ्जितं दृष्ट्वा वसन्तपक्षेपि तथैव कुमुद्विकासो यस्मिन्सकलवनगतपुष्पलतादिविकासेन न खण्डं मण्डलं यस्य कामोद्दीपनतया वा न खण्डं भवति कामिनीनां मण्डलं यस्मिन् रमाननानामिव विकासितसुमनसामाभा यस्मिन् नवा विलक्षणवर्णा कुः पृथिवी यस्मिन् कोः पृथिव्याः शोणपुष्पादीनामाभा शोभारुणा यस्मिन् तादृशं वनं च तत्सम्बन्धिनीभिः कोमलाभिः कोकिलादिगोभिरञ्जितं दृष्ट्वा चन्द्रपक्षे तु कुमुद्वन्द्रिका तद्वन्तं कुमुदो विकसनीया वर्तन्ते यस्येति वा नित्यपूर्णतया न खण्डं मण्डलं यस्य रमाया आननमिवाभा यस्य तद्भ्रातृत्वात् नवकुङ्कुमवदरुणमुदयरागो यस्य तादृशं तत्र चन्द्रिकाया रमास्मितसाम्यं कुमुद्विकासस्य रमाननेन कृष्णदृग्विकाससाम्यम् अखण्डमण्डलत्वेन मुखवर्तुलत्वसाम्ये आभाया आह्लादकत्वसाम्यं शृङ्गाराङ्गरागेणोदयरागसाम्यं वनं च तत्कोमलाभिः सुस्पर्शाभिः गोभिः किरणैःरञ्जितं दृष्ट्वा कलं जगौ तथा च वनस्य चन्द्रगोभिरञ्जितत्वकथनेन तमोरजोवर्णायत्रपुष्पसमुदायस्य सितप्रकाशाह्लादात्मकसत्वाभा चन्द्रप्रभाभिभवद्योतनेन सत्वेन रजस्तमोभिभवे भगवद्भजने योग्यता दर्शिता तथा चन्द्रेण स्ववंशप्रभवकृष्णदर्शनजाताह्लादेनामृतरसात्मकसितप्रभया विश्वमभिव्याप्य स्ववंश्योत्सवे स्वापितुः क्षीरनिधेरतिवृद्धिः कृता तत्र च व्यापकपयःपयोधौ वृन्दावनं श्वेततद्गोभिरञ्जितं श्वेतद्वीपो वहुबाहवो द्रुमा एव पार्षदा हरिरेव हरिः राधैव रमा तत्सख्य एव सख्य इति तदाह्लादाय कलं जगौ इति ध्वनिः। प्रियामुखपक्षे तु कुत्सितेष्वपि मुत् मोदोऽनुग्रहो यस्य तथा अखण्डं वर्तुलं मण्डलं यस्य अखण्डं कृष्णं मण्डयति वास्यनुगृह्णातीति वा तथा रमाणां गोपीनामाननेषु आभा यस्य रमाननेषु भा समन्तादंशप्रवेशेन भातीति वा तथा नवकुङ्कुमेन कृष्णार्पितेनारुणं तादृशं भावनाय दृष्ट्वा वनं च तत् स्वप्रियधामतया तत्कोमलाभिः प्रशंसिकाभिर्गोभिरञ्जितं दृष्ट्वा गोपी-

श्रीरामनारायणकृतभावभावविभाविका।

समूहपक्षे तु कृष्णतत्प्रियामुखचन्द्रास्मितप्रभाविकसनशीलकुमुदाकारेणाखण्डं तथा नित्यनिरतिशयप्रीतिमत्तया नयगामित्वेन न खण्डं रासमण्डलं येन तं तथा रमाया अंशावेशात् आननेषु आभा यस्य अत एव रमा कृष्णरमणार्हा आननाभा यस्य तं बहिः शृङ्गारधृतेन नवेन कुङ्कुमेनारुणां मनसि च नवकुङ्कुमसदृशेनानुरागेणारुणां दृष्ट्वा तथा वनं च समस्तवृन्दावनं यत्र तत्र तत्कोमलाभिर्विरहखेदेन रमणाभिलापेण च विनयरूपाभिर्गुणगानरूपाभिश्च गोभिरञ्जितं दृष्ट्वा कलं जगौ मधुरास्फुटे कलः इति कोशोक्तेः मधुरं रसमयं परमाह्लादकम् एकमपि गानगतं स्वं स्वस्वनास्त्राह्लानतया भाममानत्वादस्फुटं च तथा समस्तव्रजव्याप्तमपि रासानधिकारिणां श्रवणगोचरत्वेनास्फुटं केन सुखेन लाति अनुगृह्णातीति वा कलं केन सुखातिशयेन लीयते चित्तमस्मिन्निति वा कलं पुनः कीदृशं वामदृशां मनोहरं वामे दृशौ यासां स्वविलासार्हतया तासां मनोहरं वामे सुन्दरे कृष्णे वा संलग्ने दृशौ यासां वामे कुलमर्यादादिभ्यो विपरीते वा दृशौ यासां तासां प्रेमातिशयवत्त्वेन वा मनोहरं वामे स्ववामभागे पतिभावनया दृशौ यासां तासां "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति स्वप्रतिज्ञात भावनापूरकत्वेन वा मनोहरं; यद्वा, जगौ इत्युक्त्वा तज्ज्ञानविषयकामबीजोद्धारमेवाह—कलं वामदृशां मनोहरमिति। कलमिति ककारं लकारं च वामदृक् ईकारः मन अनुस्वारः हरमर्द्धमात्रात्मकमिति यद्वा, कलमित्यनेनैव ककारलकारानुस्वारसङ्ग्रहः वामदृक् ईकारः ककारलकारयोरुच्चारणार्थोभिहिताकारापवादेन तत्र ईकारसम्बन्धविधानार्थो षष्ठीबहुवचनं चात्राविवक्षितं मनोहरमिति पदं पृथगेव अर्द्धमात्राया अनुच्चार्यत्वेनानभिधानं गानं चात्र वंश्यैव योगमायामुपाश्रित इत्यत्रोक्तत्वात् तथा च यथा लोके वंशपर्वच्छिद्रद्वारा क्षेत्रे उप्तं बीजं बहुप्ररोहति तथा विरहकर्षितं घनश्यामप्रेमरसार्द्रं तासां हृदयक्षेत्रे वंशपर्वात्मकमुरलिकाद्वारा उप्तं कामबीजं शीघ्रमेव बहुफलिष्यतीत्यवधार्य वंश्या कलं जगौ इति ध्वनिः तदेव चाग्रे वक्ष्यति अनङ्गवर्द्धनमिति. यद्वा, रात्रीः शरदोत्फुल्लमल्लिका वीक्ष्य रन्तुं मनश्चक्रे रमाननाभं कुमुद्वन्तमखण्डमण्डलं दृष्ट्वा कलं जगौ इत्यस्यायमभिप्रायः निशां राधाकारां दृष्ट्वोद्दीपितमनोजो रन्तुं मनश्चक्रे कलं च जगौ तत्र चन्द्रं रमा राधा तदाननाभं चन्द्रगतश्यामाङ्कं मृगमदबिन्दुं चन्द्रिकां स्मितम् अरुणां तदीयसीमन्तसिन्दूरं नीलाम्बरं तन्नीलाम्बरं भगणास्तद्भूषणानि इति विभागः॥ ३॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तथा विज्ञापयन्तं चन्द्रमवलोक्य यत्कृतवांस्तदाह—दृष्ट्वेति, "कुमुदेपि कुमुत्प्रोक्तः" इति विश्वात्। कुमुदं विकासनीयं तेन विद्यतेऽस्येति तथा यथास्वभक्ताः कुमोदिन्यः समुद्यमात्तेन मया विकासं प्राप्ताः तथा स्वभक्ताः गोप्यस्त्वयापि विकासनीयाः "उद्यन्नेव सविता पद्मेष्वर्पयति श्रियम्। विभावयन् समृद्धीनां फलं सुहृदनुग्रहम्" इत्युक्तेरिति विज्ञापयन्तमिव पुनश्चाऽखण्डमण्डलं बिम्बं यस्य तं परोपकारशीलस्य कापि हानिर्न भवतीति सूचयन्तमिव अनेन राकेति ध्वनितं पुनश्च रमाया लक्ष्म्याः आननाभावदाभा कान्तिर्यस्य तद्भ्रातृत्वात् तथा च लक्ष्म्याः स्मारकत्वेन रमणेच्छामुद्दीपयन्तमिव स्वभार्याभ्रातृत्वात् श्यालकस्य मम सन्निधौ सङ्कोचो न विधेय इति वा सूचयन्तमिव। यद्वा, "सर्वलक्ष्मीः सर्वकान्तिः सर्वसम्मोहिनी परा" इति स्मृतेः रमा श्रीराधा रमन्ते रमयती वा रमा गोप्यश्च तासामाननस्याऽऽभेवाऽऽभा च यस्य तं स्वदर्शनेन ताः स्मृतिपथमारोहयन्तमिव तथा उदयरागव्याप्तत्वान्नवकुङ्कुमपिण्डवदरुणां विवाहसमये बहुलक्ष्म्यादिमुखं तत्तुल्यत्वान्नूतनकाममुद्दीपयन्तमिव वनं च तस्य तथाभूतस्य चन्द्रस्य कोमलैर्गोभिः किरणैरभिरञ्जितं गोभिः अञ्जितं व्याप्तमिति वा। यद्वा, भावे क्तः तत्कोमलगोभिरञ्जनं यत्र किरणानां सुधादोग्धृत्वं वन एव पादपगानत्वं च ज्ञापयितुं गोपदं तत्रापि शीतबाधाकरत्वनिराशाय कोमलपदं तथा च यथोक्तविशेषणविशिष्टं चन्द्रं रमणयोग्यं वनं च दृष्ट्वा कलं जगौ अत्र विशेष्यस्यानुक्त्या आत्मा मुखं वाऽपि विशेष्यं ज्ञातव्यम् अस्मिन् पक्षे कोः पृथिव्या अपि मुत्कर्षयत्वेन विद्यते यस्य तमात्मानं मुखपक्षे कुमुद्वदिति श्लिष्टविशेषणामः अनेन भूचरसुखार्थं कृतावतारेण मया मय्यासक्तमनसा गोप्योपि मयाऽभिरमणेन सुखिन्यो विधेया इति ध्वनितं पुनश्चाऽखण्डमन्यूनानतिरिक्तं मण्डलं नासाकरणाद्यङ्गचक्रं यस्मिन् अनेन गोप्यर्थमेव तुच्छीकृतकोटिकन्दर्पविग्रहस्य प्रादुष्कृतत्वादवश्यं रमयितव्या इति सूचितम् पुनश्च रमाणां तासामाननानामाभा यस्मिन् अनेन स्वास्मिंस्तासां स्वचित्तत्वदर्शनेन तत्कुलप्रदानस्यावश्यकत्वं सूचितम् पुनश्च ताभिर्विंतिन नवकुङ्कुमेनारुणां। यद्वा, अत एव तन्मुखबिम्बेन नवकुङ्कुमेन प्रतिबिम्बितेनारुणाभ् अनेन स्वविग्रहस्य तद्विग्रहगतरागरञ्जितत्वदर्शनेन तन्मनोगतरागेण स्वमनसो (ऽति) चिररञ्जितत्वमावश्यकमिति ध्वनितं तद्विकसितकुसुमाद्यलङ्कृतं पुनश्च स्वस्य स्वमुखस्य वा कोमलगोभिरभिरञ्जितम् एवमुद्दीपनालम्बनविभावैर्दृष्ट्वा कलमव्यक्तमधुराक्षरं यथा स्यात्तथा जगौ गानं कृतवान् तदपि वेणुनेति ज्ञातव्यं कलपदामृतवेणुगीतेति वक्ष्यमाणात् तत्र मधुरमिति मनोहरणशक्तिमत् अव्यक्तमिति सर्वासां स्वस्वाऽऽह्लानज्ञानोत्पादकम् अन्येषां तदाह्लानाऽनिश्चायकञ्चेति बोधितं मधुरत्वात्सर्वाकर्षणं वारयति—वामेति। वामा मनोहराः दृशः कटाक्षा यासां वाम सुन्दरं दृक् दर्शनं यासामिति वा तासां युवतीनां सौन्दर्यादिगुणालङ्कृतानामेव मनोहरं यथा स्यात्तथा "गायन्तं स्त्रियः कामयन्ते" इति श्रुतेः। वामाश्चास्मिन्कुटिला दृशो यासां तासां मनोहरमिति श्लेषेण सर्वदा स्वस्मिन् कुटिलमेव पश्यन्ति तासां सर्वेन्द्रियप्रवर्तकमन आकर्षणेन तथादर्शनाऽभावायेत्यपि द्रष्टव्यम् कलं वामदृशामित्यत्र श्लेषान्तरेण कामबीजं क्लीमित्याकारकं जगावित्यपि ज्ञेयम् तथाहि कलं ककारलकारौ वामदृशेति टावन्तं वामदृशा इकारः मन्त्रशास्त्रे वामदृगिति चतुर्थस्वरस्य सञ्ज्ञा इकारश्च भूतवामदृशामिति समाहरद्वन्द्वे अमोलुकि रूपं तथा च ईमिति च तेन क्लीमिति सिद्धं निष्टांसपक्षे

**निशम्य गीतं तदनङ्गवर्द्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः।**
**आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र(१) कान्तो जवलोलकुण्डलाः॥ ४॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अथ भगवत्कृतमनुग्रहान्तरं दर्शयति-दृष्ट्वेति। कुत्सिता अनित्याशुचिविषयप्राप्तिजन्यमुद्‌कुमुदनकुमुदस्तभावः कतव्यत्वेन विद्यते यस्य विवेकलक्षणचन्द्रस्य तं तत्राप्यखण्डमण्डलं वैराग्यशान्त्यादिसाधनसमूहो यस्य तं पूर्णवैराग्यादियुक्तं यतो रमाननाभं रमायाः सम्प्रज्ञप्रमादादिरूपेण परिणता या आनने मुखे आभा दीप्तिर्यस्य तं विषयमात्रसौन्दर्यबुद्धिनिवर्त्तकं पुनश्च नवकुङ्कुमारुणं पूर्वं हि नारमवर्ग एवानुरागः स्थितः सम्प्रति नवीनेन कुङ्कुमस्थानापन्नेनाभिरञ्जितं वा। यद्वा, तदन्तःकरणलक्षणं वनं कोमलैरव्यक्तप्रहभावैः शास्त्रश्रवणसत्पादस्पर्शभगवन्मूर्तिसज्जनदर्शनभगवन्नैवेद्यास्वादनभगवच्चरणारविन्दार्पिततुलस्याघ्राणभगवन्नामकमरणाऽर्चनादिपरैः गोभिरिन्द्रियैस्तज्जन्याभिर्वृत्तिभिरभिरञ्जितं शोभितं च दृष्ट्वा कलम् अनेकार्थसूचकं मधुराक्षरं "अथातो ब्रह्मजिज्ञासा, जन्माद्यस्य यतः, शास्त्रयोनित्वात्, तत्तु समन्वयात्" इत्यादिसूत्रजातं कृष्णद्वैपायनात्मनाऽऽविर्भूय जगौ कथम्भूतं कलं वामदृशां वामस्य परमसुन्दरस्य परमात्मनो दृक् ज्ञानं याऽभ्यस्ता उपनिषदः"तन्त्वौपनिषदं पुरुषं पृच्छामि"इति श्रुतेः तासां मनोहरं परब्रह्मणि तात्पर्यावधारणकारणं वामा सुन्दरा दृक् ज्ञानं यासामिति। यद्वा, वामा कुटिला दृशो यासामऽद्वयब्रह्मलिङ्गभेदाद्यनुवादकानां मनोहरं प्रत्यगभिन्ने ब्रह्मणि तात्पर्याऽपहरणपरं यद्वा, कुटिलज्ञानानां वादिना मनोहरं तदभिप्रेतार्थनिरासकरं। यद्वा, वामदृशां शोभनज्ञानवतां विवेकिनां वेदान्तशास्त्राऽधिकारिणां सतां मनोहरं मनोज्ञं नतु विषयासक्तचेतसां यद्वा, "आत्मा वा ऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिरूपकलं जगौ कीदृशां वामदृशामनात्मपदार्थविषयाणां कुटिलवृत्तीनां मनोहरन्तत्कारणभूताऽनात्मप्रवणमनउपशमकम्। यद्वा, यथोक्तविवेकिजनमनोज्ञमित्यर्थः॥ ३॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवान् कुमुद्विकसनीयत्वेन विद्यते यस्य तम् "कुमुदेऽपि कुमुत्प्रोक्तम्" इति विश्वः। अखण्डमण्डलं बिम्बं यस्य तं रमाया आननस्य आभेवाभा यस्य तम् नवकुङ्कुममिवारुणम् उडुराजं दृष्ट्वा तस्योडुराजस्य कोमलैः सुस्पर्शैः गोभिः किरणैरञ्जितं रमणीयं कान्तियुक्तम् "मञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" वनं च दृष्ट्वा वामा मनोहरा दृशो यासां तासां मृगशावाक्षीणां मनोहरं यथा भवति तथा जगौ अगायत वेणुमवादयदित्यर्थः॥ ३॥

### भाषा टीका।

कुमुदन को विकासवेवारो परिपूर्ण जा को मण्डल और रमा जो श्रीलक्ष्मी जी तिनके मुख सदृश जाकी कान्ति, नवीन केशर के नाईं अरुण ऐसे चन्द्रमाकूं देखिकें और चन्द्र की चांदनी सों और किरणनसों रँग्यो जो वृन्दावन ताय देखिकें स्त्रीनके मनकूं हरन करिवेवारो अव्यक्त मधुर ऐसो गीत श्रीकृष्णचन्द्र वासुरीतें गावत भये॥ ३॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

असापत्न्यायान्योन्यमलक्षितो न ज्ञापित उद्यमो याभिस्ताः स कान्तो यत्र तत्र गीतध्वनिमार्गेण जग्मुः जवेन वेगेन लोलानि चञ्चलानि कुण्डलानि यासां ताः॥ ४॥

---

### श्रीमत्सनातनजीवगोस्वामिकृतबृहत्तोषिणी।

तत्पूर्वोक्तप्रकारं श्रीकृष्णवेणुद्गीतम् अनङ्गं श्रीभगवद्विषयं कामं प्रागवर्त्तमानमेवाधुना वर्द्धयतीति तथा तत् यद्यपि वामदृशां मनोहरमित्यनेनानङ्गवर्द्धनत्वमायातमेव तथापीयं विशेषोक्तिस्तदतिशयविवक्षया अनङ्गशब्दप्रयोगश्च तासां प्रेमरूपकामविशेषेण ग्राम्यधर्महेतुप्राकृतकामांशाभावविवक्षया, यद्वा, श्रीभगवद्विषयत्वेनानङ्गस्यापि साङ्गीभावाद्यभिप्रायेणेति दिक् व्रजस्य व्रजे वा याः स्त्रियो यौवनवत्यस्ताः कृष्णेन परमाकर्षकेण पूर्वमेव गृहीतम् आकृष्टमाविष्टं वा मानसं मनस्तदीयाक्षेपं वा यासां ताः विशेषतश्चेदानीं तादृशं गीतं श्रुत्वा आजग्मुः। यद्वा, स्वयूथे मिथः सख्यवतीनामपि तासामन्योन्यमलक्षितोद्यमत्वे हेतुः, कृष्णेति. तदानीं कृष्णाकृष्टचित्तत्वेन विचारापगमादिति भावः। यद्वा, तेनैव प्रेमविशेषस्वाभाविकतद्विलासात्मकसापत्न्यस्य यूथान्तरे प्रादुर्भावात्। यद्वा, गमनेऽत्यन्तत्वरया तज्ज्ञापनाशक्तेः अत एव जवेन गमनवेगेन लोलानि कुण्डलानि कर्णभूषणानि यासां ताः आजग्मुरिति श्रीबादरायणेः श्रीकृष्णान्तिकं सदैवात्मस्थितेः परिस्फूर्तेः किं वा तासां तद्गमनवार्तया भावविशेषोदयेन तासामिव स्वस्यापि तत्र गमनस्फूरणं साक्षादिव श्रीकृष्णान्तिकतायाः स्फुरणात् यद्वा, आजग्मुः अभिससुरित्यर्थः। यद्वा, आ सम्यक् सर्वपरित्यागेन जग्मुः ययुरित्यग्रे बहुशो वक्ष्यमाणत्वात् सः परममोहनवेणुगीतगायकः। यद्वा, चिरं व्रतादिना ऽभीप्सितः यतः कान्तः स्वामी निजमनोहर इति वा। यद्वा, कस्य सुखस्य अन्तो निष्ठा यस्मात् सः॥ ४॥

---

(१) कार्णस्वरलोलकुण्डलाः इति विज०।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्ये ( तु ) च तद्गीतं न श्रुतवन्तः किन्तु तेन ता एव चाकृष्टा इति तस्य शक्तिविशेषं द्योतयन्नाह—निशम्येति । तत्पूर्वोक्तम् प्रकारं श्रीकृष्णवेणूद्गतम् अनङ्गं श्रीभगवद्विषयं कामं प्रागवर्त्तमानमेवाधुना वर्द्धयतीति तथा तत् यद्यपि वामदृशां मनोहरमित्यनेनानङ्गवर्द्धनत्वमायातमेव तथापीयमुक्तिस्तदनिश्चयविवक्षया अनङ्गशब्दप्रयोगश्च पूर्वं बीजाङ्कुररूपेणैव स्थितः सम्प्रति तु पल्लवित इत्यर्थं बोधयति । एतेन तद्गानस्यामृतसेकत्वमप्युत्प्रेक्ष्यते सद्यस्तथाभावात् व्रजस्य स्त्रियस्तद्विशेषाः प्रकरणवशात् अत एव कृष्णेन परमाकर्षकेण पूर्वमेव गृहीतम् आकृष्टं मानसं मनस्तदीयांशेषं वा यासां ताः विशेषतश्चेदानीं गीतं श्रुत्वा आजग्मुः अन्योन्यालक्षितत्वे हेतुस्तैर्व्याख्यातः। यद्वा, स्वस्वयूथे मिथः सख्यवतीनामपि तासां तत्र हेतुः कृष्णेति तदानीं कृष्णाकृष्टचित्तत्वेन विचारापगमादिति भावः । अत एव जवेनेति आजग्मुरिति श्रीबादरायणेः श्रीकृष्णान्तिके सदैव स्वस्थितस्फूर्त्तेः किम्वा तासां तद्गमनवार्त्तया भावविशेषोदयेन तासामिव स्वस्यापि तत्र गमनस्फूर्त्या साक्षादिव श्रीकृष्णान्तिकतायाः स्फुरणात् अग्रे तु ययुरिति चलनार्थकमेव स इति तादृशतत्स्मरणोत्कण्ठावचनं परममोहनरूपगुणवेणुभावैः प्राचीनैस्तदानीन्तनैश्च तासामस्माकं च मुहुरत्यर्थमभीप्सित इत्यर्थः कान्तो रमणः यत्रेति तत्रैव परमसुखमयस्थान इत्यर्थः । तस्य वेणुवाद्यस्य परमाकर्षणविद्यारूपत्वादन्यत्र भ्रमणादिकमपि नासीदिति भावः ॥ ४ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निशम्येति । तन्मन्मथोद्दीपकं गीतमाकर्ण्य व्रजस्त्रियः स कृष्णो यत्र तत्राजग्मुः, कथम्भूताः ? कृष्णेन गृहीतमाकृष्टं कृष्णे निवेशितं वा मानसं यासां परस्परमलक्षितो नज्ञापित उद्योगः कृष्णं प्रति गमनोद्योगः यासां जवेन वेगेन लोलानि चञ्चलानि कुण्डलानि यासां तथाभूताः ॥ ४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनङ्गवर्द्धनं कामोद्रेककारणम् अन्योन्यं परस्परमलक्षिताशयाः अज्ञातमनोभावाः पूर्वमदृष्टवनस्थाना वा स कृष्णो यत्रास्ते तत्रेति शेषः । कार्त्तस्वरं सुवर्णं तेन रचितानि लोलानि कुण्डलानि यासां तास्तथा ॥ ४ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आजग्मुः प्राप्तवत्यः ॥ ४ ॥

———

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

वामदृशां मनोहरमिति यदुक्तं तदेवानन्यसाधारणयमाह, निशम्येत्यादि। यत्कलं वेणुगीतं व्रजस्त्रियो निशम्य श्रुत्वा आजग्मुः नान्यः कोऽपि तच्छ्रवणाभावात् कुत्र आजग्मुरित्याह—स यत्रेत्यादि । स कीदृशः कान्तः कमनः कीदृशं गीतम् अनङ्गवर्द्धनम् अङ्गं कामकला अङ्गी प्रेमा अतोऽनङ्गवर्द्धनम् आङ्गिवर्द्धनं प्रेमवर्द्धनमिति यावत् ताः कीदृश्यः कृष्णेन गृहीतं मानसं यासां तेन तत्राऽनङ्गस्य नावसरः अन्योन्यम् अलक्षित उद्यमो याभिः आकस्मिकत्वेन पूर्वसंवादाभावात् न त्वीर्ष्यया यद्यप्येवं तथापि सर्वा एकसूत्रनद्धा दारुपुत्रिका इव एकदैव जग्मुर्नतु पौर्वापर्यक्रमेण जवेन वेगेन लोलानि कुण्डलान्येव यासां तादृशवेगवता गमनेनापि कुण्डलानामेव लोलताऽऽसीदिति गमनस्य स्वाभाविकगाम्भीर्यसूचनम् ॥ ४ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सर्वाः स्त्रियः समागता इत्याह-निशम्येति।यद्यपि भगवता कुमारिका एवाहूताः तथापि आह्वानं सदृशमिति निरोधोऽपि कर्त्तव्य इति सर्वा एव समागताः । किञ्च, यद्भगवता गीतं तदनङ्गमेव वर्द्धयति—अङ्गं तु नाशयत्येव अतो नूनम् उत्पन्न(:) कामः ता आनीतवान् । किञ्च, व्रज ( स्य ) स्त्रियः पूर्वमपि भगवदीयाः अतः कृष्णेनैव गृहीतं मनो यासाम् अतः शीघ्रमेव यत्र कान्तः तत्रागताः अनेन आकारिता एव प्रथममागताः इत्युक्तं तासां मुख्यः कान्त इति अत एवान्योन्यमलक्षित उद्यमो यासां ता हि प्रत्येकमेव भगवन्तं पतित्वेन स्वीकृतवत्यः स पूर्वमुपात्तो यः कान्तः तासां शरीरविचारेऽपि दृष्टिर्न जातेति वक्तुं जवेन लोले कुण्डले यासामिति कर्णपीडाऽननुसन्धानं प्रदर्शितम् ताः स्त्रियो गौडदेशस्थाः तत एव कुमारिकाः समागता इति पूर्वं मथुरादेशस्थितानामपि अनागरीणां कुण्डले एव ताटङ्कयोरेव वा कुण्डलत्वम् ॥ ४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तीकृतसारार्थदर्शिनी ।

कलगीतसूत्रगुम्फिताः पञ्चालिका इव ताः कृष्णान्तिकमायाता इत्याह—तद्गीतं मनोहरमपि मनोजवर्द्धनम् किञ्च,कृष्णो हि वेणुगीताख्यं महाचौरं व्रजे प्रेषितवांस्तेन च व्रजस्त्रीणां निष्कपाटेन कर्णद्वारेणान्तःकरणकोशागारं प्रविश्य मनसा सह धैर्यलज्जाभयविवेकादीनि महाधनान्यपहृत्य झटित्येवानीय कृष्णाय दत्तानीत्याह—कृष्णेन गृहीतानि मानसानि मनांसि च मानसानि मनःसम्बन्धीनि धृतिस्मृतिविवेकलज्जाभीतिमत्यादीनि यासां ताः आजग्मुः महाचौरचक्रवर्त्तिनः कृष्णात् तानि स्वधनानि प्रार्थयितुमिवेति भावः । तदेवं मन्ये तं महाचौरं धर्त्तुमुद्यमानाम् अन्योऽन्यं न लक्षित उद्यमो यासां ताः चौरस्य पश्चात्पश्चादेवाजग्मुः क स कान्तो यत्र जवेन वेगेन लोलानि कुण्डलानि कुण्डलोपलक्षितानि कङ्कणकिङ्किण्यादीन्यपि यासां तास्तेन सह तासां बहिष्करणगृहस्थितानि धनान्यप्यमूल्यरत्नयुक्तानि चौरेण तेन नापहृतानीति भावः ॥ ४ ॥

———

### विशुद्धरसदीपिका ।

एवमाकारितानां तासामागमनं वर्णयन् तद्दर्शनोत्कण्ठया आत्मानं श्रीकृष्णोपकण्ठगतं च भावयन्नाह—निशम्येति । व्रजस्त्रिय आजग्मुरित्यन्वयः । व्रजशब्देनात्र स्नेहैकपुष्टजनावास उच्यते ततश्च स्नेहपुत्तलिका इत्यर्थः—

आनन्दचिन्मयरसप्रतिभाविताभि-
स्ताभिर्य एव निजरूपतया कलाभिः ।
गोलोक एव निवसत्यखिलात्मभूतो—
गोविन्दमादिपुरुषं तमहं भजामि ॥

इति ब्रह्मसंहितोक्तेः जग्मुरिति वक्तव्ये आजग्मुरित्युक्तिरात्मनः श्रीकृष्णसमीपस्थत्वभावनया किं कृत्वा गीतं निशम्य कीदृशं तदनङ्गवर्द्धनम् अङ्गं कामकला अङ्गी प्रेमा अतोऽङ्गिवर्द्धनं प्रेमवर्द्धनमित्यर्थः । साधकचरीपक्षे यथाश्रुत एवार्थः । अथ स्वस्वयूथे सख्यवतीनामपि तासां तद्गीताकृष्टमानसत्वेन विचारापगमात् अन्योन्यमलक्षितोद्यमा इति यद्वा कृष्णगृहीतमानसा इति हेतुगर्भं विशेषणं किं वायं हेतुः केवलप्रेमवर्द्धनत्वे एव परमानन्दकर्षकानन्दवशीकृतमानसाः तथासति कुतो जवावकाशः कुत्रेत्यपेक्षायामाह—स यत्र कान्तः परममनोहरः यद्वा कानां स्वसुखानामन्तः पर्य्याप्तिर्यस्मिन् इति केवलप्रेमपात्रमित्यर्थः उत्कण्ठातिशयमाह—जवेति । जवेन वेगेन लोलानि कुण्डलानि यासां ताः तेन कुण्डलानां रम्यत्वं व्यञ्जितम् ॥ ४ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तद्गानसाफल्यं निरूपयति—निशम्येति । व्रजस्त्रियस्तद्वंशगीतमनङ्गवर्द्धनं निशम्य कृष्णगृहीतमानसाः सत्योऽन्योन्यमलक्षितोद्यमाः तथा जवलोलकुण्डला यत्र स कान्तस्तत्राजग्मुरित्यन्वयः । तत्र व्रजस्त्रिय इत्यत्र व्रजस्य स्नेहमयधामत्वात्स्नेहमय्यः तेन स्नेहप्रभावेनैव कृष्णं प्रतिव्रजनशीला इति वा वंशगीतस्यानङ्गवर्द्धनमिति विशेषणे चायं ध्वनिः यथाशुष्केन्धने स्नेहपूरिते स्थितोऽग्निर्वंशद्वारा धमनेन वर्द्धते तदा च घनश्यामवर्षितजीवनमेव तदुपशमोपायः तथा विरहार्कतापशुष्केऽति स्नेहपूरिते तासां देहे हृच्छयो हृच्छयाग्निः स च वंशधमनोद्भूतगीतेन प्रज्वलितः वंशानां चायं स्वभावः स्वस्मिन्पवनसम्पर्के वह्निमुत्पाद्य स्ववंशं दहन्ति येषां स्ववंशदाहे प्रवृत्तिस्तद्वंशभववंशस्यान्यदाहे किमु वाच्यं किं च भगवन्मुखतद्वारयोरपि" मुखादग्निरजायत, वायोरग्निः,,इति श्रुत्या स्वत एवाग्निजनकयोः किमु वाच्यं हृच्छयाग्निवर्द्धने कामश्च रुद्रदग्धः स्वयमनङ्गः सर्वेषामप्यात्मवद्दाहमिच्छन् विशेषतः शम्भुवैरं स्मरन् कुचशम्भोरुन्मूलतो दग्धुं तन्मूले हृदये ऽनलरूपतया निवसन् कृष्णमुखानिलबन्धुतया वृद्धप्रतापः प्रलयायैव प्रवृत्ते तथा च प्रज्वलिते हृच्छयाग्नौ घनश्यामरसवृष्ट्या तदुपशममालक्ष्य तज्ज्वालाग्नेः स्वकारणादेवोपसंहारं विचिन्त्य दावाग्निपानेन च विश्वस्य यत्र स घनश्यामस्तत्कारणत्वेन तदुपसंहारसमर्थः कान्तः कं जलं तस्यान्तोऽवधिभूतो रसजलनिधिः तत्राजग्मुः । यद्वा, यत्कामबीजं भगवता वंशपर्वच्छिद्रद्वारा हृत्क्षेत्रे उप्तं तत्प्रेमार्द्रभूमिलाभेन रोमपुलकरूपेणाङ्कुरितं पुनश्च विरहार्कतापेन शुष्यद्वगत्याश्रुसलिलेन सिञ्चितेऽपि तापोष्णजलेन तद्रक्षणासम्भवमाकलय्य य एव बीजं वपति स एव सिञ्चति यदि बीजवपनकर्त्तैव घनश्यामो भवेत्तदुप्तं बीजं शुष्येत्तन्महदद्भुतमिति तदुद्भवाय सबीजवप्ताघनश्यामो यत्र तत्राजग्मुः । यद्वा, ब्रह्मेन्द्रादीन् स्वप्रभावैः पराभाव्य तद्विजयीकामः श्रीरुद्रेण दग्धोऽप्यनङ्गः सन् भूतपतेरपि भूतवद्बहुधा क्षोभकोऽभूत् तद्विजयाय समुद्यतो भगवान् नह्यपूर्णमनोजमिन्दुं राहुरपि द्रुह्यति यत्र योगेश्वरः कृष्णस्तत्र ध्रुवानीतिरिति वचनात् रिपुर्वर्द्धयित्वा जेतव्य इति नृपनीतिमनुसृत्य स्वानुरागिमनसो गृहे तद्धृदये गानरसान्वितकामबीजक्षेपेण तमनङ्गमपि तदङ्गपूर्णं यावन्मनःस्वास्थ्यं मनोजस्वान्तत्वमसम्भाव्य तदस्वातन्त्र्ये च रतिरणासम्भवमाकलय्य मनोहरेण स्वगीतेन श्रवणपथा तद्धृदयप्रविष्टेन तन्मनःस्वरागरागिणात् गृहात्प्रव्राज्य इन्द्रदरच्छवनरमासदनगदनादिविविधविबुधविबुधविबुधीकरणाविविधकुसुमास्पदस्वच्छस्वच्छ—विधेन प्रस्थाप्य तत्क्षेत्रजमनोजं विविधहन्द्ररदनस्वेन्द्रनीलवजूर्मणिरत्नाद्युपस्करगोपीतनुकामगकाञ्चनपुरेषु हृत्कमलसिंहासनेषु अरुणसितासिततत्नयनतीर्थराजसलिलैरभिषेचयामास स च कुसुमायुधः कामः कृतघ्नतया तदुपकारं विस्मृत्य मनः स्वपितरं कृष्णगृहीतं मत्वा रतिरणाय कामगानकुसुमस्रगिषुचयमुक्तामालासिन्दिपालालकादिपाशकण्ठशङ्खवक्रकचक्रकचभ्रूयुगासिधनुर्नेत्रशल्यकापाङ्गभल्लुकरणोपस्करयुतान् स्वसुवर्णदुर्गान् गोपीवपूंषि स्वायुधकुसुमपूरितस्वामित्रवसन्ताक्रान्तवनान्तर्गतं कृष्णं स्वसम्मिलितसुवंशजतदीयगीतदूतेनावगत्य तं प्रति मदनत्वान्मदोत्साहेन प्रेरयामास तत्प्रेरितास्ता रतिरणस्य कान्तेनैवोचितत्वाद्यत्र स कान्तस्तत्राजग्मुः किं भूताः जवलोलकुण्डलाः जवेन मदनप्रेरितरतिरणायागमनवेगेन लोलानि मकराकृतानि मकरध्वजध्वजरूपाणि कुण्डलानि यासां ताः इति पूर्वोक्तपदसमुदायाभिप्रायः । पुनः कथम्भूताः अन्योन्यमलक्षितोद्यमाः गृहीतमनस्त्वेन परस्परविचाराक्षमत्वात् कामनृपप्रेरणया प्रवृत्तावलब्धविचारावसरत्वाच्च ॥ ४ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

अथ तादृशगानानन्तरं यद्वृत्तं च तदाह—निशम्येति । तद्गीतमनङ्गस्य कामस्य वर्द्धनम् अङ्कुरितस्य कामस्य सर्वाङ्गसम्पूर्णतापादकं एतेन एतस्यामृतसेकरूपत्वं सूचितम् । यद्वा, तद्गीतम् अनङ्गस्य सर्वाङ्गरहितस्य अनङ्कुरितस्यापि कामवर्द्धनं तात्त्वणमेवोत्पाद्याभिवृद्धिपर्यन्तानयनसामर्थ्यं नानास्तु व्रजस्त्रियश्चिरकालमारभ्य तद्विषयककामाविष्टस्वान्तास्तादृशं गीतं निशम्याकर्ण्यं कलगीतलक्षणसूत्रगुम्फिताः पाञ्चालिका इवाऽऽजग्मुरिति वक्तव्ये स्वस्य कृष्णसन्निधानावेशादाजग्मुरित्युक्तम् । ननु, किं सर्वाऽपि व्रजस्त्रियः आजग्मुः तथा सति वामदृशां मनोहरमित्यनेन विरोध इति चेत्तत्राह—कृष्णगृहीतमानसाः कृष्णेनैव पूर्वमेव गृहीतवस्तुः पतितत्वेनाङ्गीकृतवस्तुः "सम्भ्रमः स्नेहमाख्याति" इत्युक्तत्वात् स्नेहव्यापकं तासां सम्भ्रममाह—जवेन लोले सकम्पे कुण्डले यासां ताः अनेन कर्णव्ययाऽनुसन्धानाभावः सूचितः । यद्वा,

दुहन्त्योऽभिययुः काश्चिद्दोहं हित्वा समुत्सुकाः ।
पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ५ ॥
परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून् पयः ।
शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

मां रक्षतीमामप्ययमपि याश्यतीति सापत्न्याभयात् कृष्णगृहीतमानसत्वेन विचारास्फूर्त्तेर्वा अन्योन्यमलक्षितगमनोद्योगाः अत एव जवेन चञ्चलकर्णाभरणाः कुत्रेत्यत आह—स पूर्वमनुपागतः कान्तो यत्रस्थितः तत्र यद्वा, चोरचक्रवर्तिना श्रीकृष्णेन गृहीतानि मानसानि मनांसि तत्सम्बन्धीनि धृतिस्मृतिविवेकलज्जाभीतिमत्यादीनि च यासां ता आजग्मुः अनेन कृष्णो हि महाचोराधिराजा वेणुगीताख्यं स्वभृत्यं महाचोरं व्रजे प्रेषितवांस्तेन च व्रजाङ्गनानां निभृतकर्णद्वारेणाऽन्तःकरणं कोशागारं प्रविश्य धैर्यादिमहारत्नपूरितमनोमञ्जूषाम् अपहृत्य झटित्येवानीय स्वस्वामिने दत्तां तां कृष्णात्प्रार्थयितुमिवेति सूचितम् अत एव महाचोरं धर्तुं व्यग्रत्वात् सूचकमन आदेरऽपहृतत्वाद्वा अन्योन्यमलक्षितोद्यमाः अत एव जवलोलकुण्डलाः कुण्डलेति कङ्कणकिङ्किण्यादेरप्युपलक्षणम् अनेन बहिर्गृहस्थानापन्नस्थूलदेहस्थधान्यादिस्थानीयभूषणान्यल्पत्वबुद्ध्या चोरेण तेन नापहृतानीति ध्वनितं निवृत्तिपक्षेऽप्येवं भगवदनुग्रहीतस्य विवेकवैराग्यादिसाधनसम्पन्नस्यान्तःकरणेऽपि ब्रह्मणा श्रुतिरूपकान्तानामभिरमणं सर्वतो वृत्तिनिरोधनं च सम्पन्नमित्याह—निशम्येति । तद्यथोक्तं गीतं व्रजस्त्रियः श्रुतीनां गवामवस्थितिस्थानं वेदो व्रजशब्देनाभिधीयते तत्सम्बन्धिन्यः स्त्रियः श्रुतयः श्रुत्वा सः कान्तः कमनीयः परमपुरुषार्थभूतः परमात्मा यत्र विवेकयन्तःकरणलक्षणे वने वर्तते तत्राजग्मुः ब्रह्मप्रतिपादकत्वेन स्फूर्तिंगताः—

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" ॥

इतिभगवद्वाक्यात्स्वभक्तान्तःकरणेस्थितः श्रुतिभिरभिरममाणः तदज्ञानं नाशयतीति विज्ञायत इत्यर्थः । आजग्मुरित्युक्त्या स्वाऽन्तःकरणवर्तिपरमात्मन्येवाजग्मुरिति सूचयति, गीतं विशिनष्टि—अनङ्गवर्द्धनम् अस्मात् आदेशोनेति नेत्युक्तस्य मूर्तामूर्त्तलक्षणाङ्गविनिर्मुक्तस्य निर्विशेषस्य ब्रह्मणो वर्द्धनमज्ञानावृतस्य तस्याज्ञाननिवर्तनेनाविर्भावकरम्. यद्वा, अङ्गानां देहानां वर्द्धनसङ्ख्यात देहोत्पत्तिकारणमज्ञानमङ्गवर्द्धनं तद्विरोध्यनङ्गवर्द्धनं कथम्भूताः व्रजस्त्रियः कृष्णेन सदानन्दस्वरूपेण परमात्मना गृहीतं मानसं तात्पर्यं यासां ताः कृष्णे तात्पर्येण समन्विताः पुनश्चान्योन्यमलक्षित उद्यमः परमात्मप्रतिपादनरूपोद्यमो यासां ताः परस्पराकाङ्क्षारहिताः प्रत्येकं स्वत एव प्रमाणभूता इति यावत् पुनश्च जवेन लोलानि झटिति नाशोन्मुखानि कुण्डलानि आशादिरूपाः पाशा याभ्यस्ताः विचारिताः सत्यः आशा जीवात्मपाशनिवर्त्तिका इति यावत् "कुण्डलं कर्णभूषायां पाशेऽपि चिलये पिच"इति मेदिनी, मनसो वृत्तयोऽपि इन्द्रियलक्षणगवां वासस्थानत्वाद्देहो व्रजशब्देनोच्यते तदन्तरवस्थानाद्व्रजस्त्रियः कृष्णे न गृहीतं कारणभूतं मानसं यासां ताः कृष्णासक्तमनः सम्बन्धिन्यः । यद्वा, कृष्णेन गृहीतः स्वियत्वेनाङ्गीकृतः कृष्णानुगृहीतो विवेकादिसाधनसम्पन्नस्य मानसः मनःसम्बन्धिन्यः नत्वऽनधिकारिणः परस्परं निरपेक्षव्यापारवत्यः तत्तदिन्द्रियद्वारा निस्सृत्य स्वस्वविषयप्रकाशने स्वतन्त्राः सः कान्तो यत्र वर्तते तत्र आजग्मुः बहिर्मुखतां विहायाऽन्तर्मुखतां प्राप्ताः तदानीं जवेन झटिति लोलानि कम्पितानि कुण्डलानि पाशाः याभ्यस्ताः समानमन्यत् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनङ्गवर्द्धनं कामोद्दीपकं गीतं निशम्याकर्ण्य भक्तेच्छापूरकेण कृष्णेन गृहीतमाकृष्टं मनो यासां ताः व्रजस्त्रियः अन्योन्यमलक्षितः अत्यौत्सुक्येन गमनवशात् उद्यमः श्रीकृष्णं प्रति गमनोद्योगो याभिस्ताः स श्रीकृष्णः कान्तो यत्र तत्र गीतध्वन्यनुसारेण आजग्मुः जवेन वेगेन लोलानि चञ्चलानि कुण्डलानि यासां ताः ॥ ४ ॥

भाषा टीका ।

अनंग जो कामदेव है ताके बढ़ावनवारो एसे वा गीत कूं सुनके, श्रीकृष्णचन्द्र ने हरयो मन जिनको परस्पर नहीं लखाई परयो उद्यम जिनको ऐसी वे ब्रज की स्त्री तहां आवत भई जहां कमनीय पति श्रीकृष्णचन्द्र वंशीवट पे वंशी बजाय रहे, और चलिवे के समय वेगसों जो चली हैं तासों कुण्डल जिनके झोटा खाते जांय तासों ये जानी जाय कि कुण्डल भी श्रीकृष्ण के समीप जायवे की त्वरा कराय रहे हैं ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णसूचकशब्दश्रवणेन तत्प्रवणचित्तानां तत्क्षणमेव त्रैवर्गिककर्मनिवृत्तिं द्योतयन्त्य इवाऽऽरब्धमपि कर्म विहाय ययुरित्याह—दुहन्त्य इति । पयःस्थालीस्थं चुल्ल्यामधिश्रित्यैतदुत्क्वाथमप्रतीक्षमाणाः काश्चिद्ययुः संयावं गोधूमकणान्नं पक्वमनुद्वास्याऽनुत्तार्य ॥ ५ ॥ ६ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

परममोहनतद्गीतेन निजदेहदैहिकाद्युपेक्षया आत्मकर्मलोकधर्मादिकं परित्यज्य गता इति श्लोकत्रय्या वर्णयन् तत्रादौ कासां चित्स्वजातिकर्मपरित्यागमाह—दुहन्त्य इति । दुहन्त्यो गाः दोहं दोहनं दुग्धं वा तदानीमत्र गोपीनामपि कृष्णार्थं गोदोहने प्रवृत्तेः । यद्वा, अन्तर्भूतण्यन्तं दोहयन्त्य इत्यर्थः । अभिययुः वेणुगीताभिमुखं ययुः काश्चिदित्यादिकं बहुत्वयूथभेदापेक्षया "वनिताशतयूथपः" इत्यग्रे वक्ष्यमाणत्वात् तत्तन्नाम्नामग्रहणं गौरवभरात् किं वा तेषां स्मरणविशेषकृत्त्वेन प्रेमवैकल्यापादनभयात् एतच्च श्रीभागवतामृतपूर्वखण्डे विवृतमेव तथाभिधाने हेतुः समुत्सुकाः कालविलम्बसहनासमर्थाः एष हेतुरग्रेऽपि सर्वत्रानुवर्त्यः अपरा इत्यस्य पूर्वेण परेणाप्यन्वयः एवमग्रेऽपि अन्यत्तैर्व्याख्यातम् यद्वा, पयश्चुल्यामधिश्रित्य अनुद्वास्य एकमपि ततोऽनुत्तार्य संयावं च मधिश्रित्यानुद्वास्येति ॥ ५ ॥

एवं कासाञ्चित् सायन्तनमुख्यकर्मत्रयपरित्यागमुक्त्वा कासाञ्चिल्लोकधर्मत्यागं पादत्रय्या वदन् तत्रादौ कासाञ्चित्सामान्यबन्धुभृत्यादिपरित्यागमाह—परीति पादेन । परिवेषयन्त्यः बन्धून् भृत्यादींश्च प्रति अन्नादिकं सम्विभज्यार्पयन्त्यः स्थिताः तत्परिवेषणं हित्वा ययुरिति पूर्वेणैवान्वयः । यद्यप्येतदपि सायन्तनकृत्यान्तरेव प्रविशति तथापि स्त्रीणां भर्तृबन्धुभृत्याद्युपेक्षया लोकधर्मत्यागान्तरेव सुखं सङ्गच्छेतेति अनुपेक्ष्यमाणामपि परित्यागं कासाञ्चिदाह—पाययन्त्य इति पादत्रयेण । हित्वेत्यनुवर्त्तेत शिशून् भगिनीपुत्रादीन् हित्वा शुश्रूषन्त्यः शुश्रूषमाणाः स्नानाद्यर्थोष्णोदकार्पणादिना सेवमाना अश्नन्त्यः आश्नयन्त्य इत्यन्तर्भूतण्यन्तं पतीन् भोजयन्त्यः भोजनं भोजयितृत्वम्. यद्वा, एवं पूर्वं धर्मादिपराणामपि सतीनां परमसतीनां लोकधर्मत्यागं पादाभ्यामुक्त्वा कासाञ्चित् देहापेक्षात्यागमाह—अश्नन्त्य इति पादैस्त्रिभिः । अश्नन्त्यो भुञ्जानाः लिम्पन्त्यः चन्दनपङ्कादिना निजदेहानुलेपनं कुर्वन्त्यः लेपनादिकमपास्येति शेषम् । अन्यथा इत्यस्य लिम्पन्त्य इति पदद्वयेनान्वयः । एवं भोगसंस्कारस्यापि त्यागेन देहोपेक्षा सिद्धैव यद्वा, भोजनत्यागेन भगवत्प्रीणनस्य देहस्योपेक्षोक्ता ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं तत्प्राप्तिमुक्त्वापि परममोहनतद्गीतेनावेगान्निजदेहदैहिकाद्यपेक्षया आत्मकर्मलोकधर्मादिकं परित्यज्य चलितानां श्लोकत्रय्या विशेषप्रतिपत्तये पुनः प्रस्थानोद्यममेव वर्णयन् तत्रादौ कासाञ्चित् स्वजातिकर्मपरित्यागमाह—दुहन्त्य इति युग्मकमिदम् । दुहन्त्यो गाः अन्तर्भूतण्यर्थत्वात् दोहयन्त्य इत्यर्थः । अभिययुः वेणुगीताभिमुखं ययुः काश्चिदित्यादिकं बहुषु यूथेषु कासाञ्चिदेकांकयासङ्घट्टनात् "वनिताशतयूथपः" इत्यग्रे वक्ष्यमाणत्वात् दोहं दोहनं दुग्धं वा तथाभिधाने हेतुः समुत्सुकाः कालविलम्बसहनाद्यसमर्थाः एष हेतुरग्रेऽपि सर्वत्रानुवर्त्यः अपरा इत्यस्य पूर्वेण परेणाप्यन्वयः एवमग्रेऽपि । अन्यत्तैः । यद्वा, पयश्चुल्यामधिश्रित्य अनुद्वास्य एकमपि ततोऽनवतार्य्य संयावं च मधिश्रित्याऽनुद्वास्यैवेति एवं कासाञ्चित् सायन्तनमुख्यकर्मत्रयपरित्यागमुक्त्वा तत्रैव कासाञ्चिल्लोकधर्मत्यागं पादत्रय्या वदन् तत्रादौ कासाञ्चित् सामान्यबन्धुभृत्यादिपरित्यागमाह—परीति पादेन । परिवेषयन्त्यः बन्धुभृत्यादिभ्य इति शेषः । तत्परिवेषणं हित्वा ययुरिति पूर्वेणैवान्वयः । अतिस्निग्धपरित्यागमपि कासाञ्चिदाह—पाययन्त्य इति पादेन । हित्वेत्यनुवर्त्तते वक्ष्यमाणानुसारेण भ्रातृपुत्रादीन् हित्वा अन्यथा रसाभासापत्तेः एवं लोकपरित्यागमुक्त्वा धर्मपरित्यागमाह—शुश्रूषन्त्यः शुश्रूषमाणाः स्नानाद्युष्णोदकार्पणादिना सेवमानाः स्थापयिष्यते कासाञ्चिद्देहापेक्षात्यागमप्याह, अश्नन्त्य इति । अश्नन्त्यो भुञ्जानाः अनेन तत्प्रेमाविष्टेषु दैहिकशुद्ध्यशुद्धिविचारो नास्तीति गम्यते ॥ ५-६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कृष्णगृहीतमानसत्वमेव तच्चेष्टाभिः प्रपञ्चयति—दुहन्त्य इति त्रिभिः । काश्चिद्व्रजस्त्रियो गाः पयो दुहन्त्यः सत्यो दोहं हित्वा समुत्सुकाः कृष्णे इति शेषः । तमभिययुः प्रापुः अपरास्तु स्थालीस्थं क्षीरं चुल्यामधिरोप्य तत्क्वाथमप्रतीक्षमाणा ययुः काश्चित्तु संयावं गोधूमकणान्नं पक्वमनुद्वास्याऽनवरोप्य ययुः ॥ ५ ॥

काश्चित्परिवेषयन्त्यः पत्यपत्यादीन् भोजनार्थं निवेश्यान्नादिकं पात्रेषु ददत्यः तत्परिवेषणं हित्वा अपरास्तु शिशून् पयः पाययन्त्यः तद्धित्वा अन्यास्तु पतीन् शुश्रूषन्त्यः उपचरन्त्यः शुश्रूषां हित्वा अपरास्त्वश्नन्त्यो भोजनपात्रमपास्य हित्वा ॥ ६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदा तासां भावविशेषं कथयति, दुहन्त्य इति । दोहनक्रियां दोहनपात्रं वा अधिश्रित्य पयः अर्पयितुं चुल्ल्यामारोप्य संयावं क्वथद्गमनुद्वास्य अनवरोप्य ॥ ५ ॥

परिवेषयन्त्यः भुञ्जानानां पात्रेषु भोक्तव्यं विनिक्षिपन्त्यः तत्परिवेषणं पाययन्त्यः स्तनादिकमिति शेषः । पादमर्दनादिना शुश्रूषन्त्यः ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दुहन्त्यः दोहयन्त्यः अभिययुः चलितवत्यः शिशून् भगिनी भ्रातृपुत्रादीन् पयो गव्यं सुतान् स्तनमित्युक्तेरालम्बनवैरूप्यात् "सर्वाः शरत्काव्यकथारसाश्रयाः" इति वक्ष्यमाणरसाश्रयविरोधाच्च शुश्रूषन्त्यः इत्यन्तर्गृहरीतिकाः काश्चिदेव ज्ञेयाः अन्यासां यत् पत्यपत्यसुहृदामित्यादिना तदङ्गीकारात् ॥ ५-८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तासामौत्सुक्याधिक्यप्रकटनाय पूर्वमाजग्मुरित्यतीतकाल निरूप्य पुनरागमनप्रकारमादितः कथयन् आवेगनामानं

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

भावं दर्शयति—दुहन्त्योऽभिययुरित्यादिबहुभिः । दुहन्त्य इति अन्तर्णीजन्तं आज्ञादिद्वारा दोहयन्त्य इत्यर्थः। दोहं हित्वेति दोहस्थानात् पुनर्गृहं न गतास्तत एवाययुरित्यर्थः। पराः पयोऽधिश्रित्य नत्वपाश्रित्य अपराः संयावम् अनुद्वास्य नावतार्यं काश्चित्परिवेषयन्त्यः ॥ ५ ॥

भुञ्जानेषु गुरुषु परिवेषणं कुर्वत्यस्तदपराः शिशून् बालान् वक्ष्यतांकान् गव्यं पयः पाययन्त्यः लिम्पन्त्योऽनुलेपनं कुर्वत्यः अन्याः प्रमृजन्त्यः प्रकर्षेणाङ्गमार्जनं कुर्वत्यः अञ्जन्त्यः नयनमञ्जनेन रञ्जयन्त्यः काश्चित्पतीन् पत्यभिमानिनः शुश्रूषयन्त्यः उपचारादिनाऽनुरञ्जयन्त्यः अन्या अश्नन्त्यः भोजनं कुर्वत्यः तत् अपास्य ॥ ६—७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रसङ्गादन्यासामप्यागमनमाह—तासां वा क्रियापराणां तत्र काश्चन षोडशसहस्रव्यतिरिक्ताः नवविधाः समागताः दशविधा वा गुणानां त्रैविध्यात् नवविधत्वं निर्गुणाश्चैकविधाः जातिकुललोकधर्मपरास्तिस्रस्तिस्र उदीरिताः तत्र गोपजातीयाः दुग्धपराः तत्र दुग्धस्योत्पत्तिस्थितिप्रलयान् कुर्वन्ति तास्तिस्रः प्रथममुदीरिताः एवंविधा अपि गणाश इति वक्तुं सर्वत्र बहुवचनं काश्चित् दुहन्त्य एव दोहं दोहनलक्षणं कर्म मध्ये त्यक्त्वा भगवदभिमुखत्वेन ययुः गौर्वत्सश्च बद्धौ दोहनपात्रं च अर्द्धदुग्धं यः समयः सर्वथा त्यक्तुमशक्यः तस्मिन् समये समागताः तथा समागमने हेतुः समुत्सुका इति। सम्यगुत्सुकाः (कथः)को वद चणान्तरे भगवान् कगमिष्यतीति अन्याः पुनः पयः अधिश्रित्य तथैव ययुः भोजनार्थं पयांसि पच्यमानाः गोधूमकणाः संयावशब्देनोच्यन्ते तेषां दोहे सर्वनाश इति पक्वदशैव संयावशब्देनोच्यते अतस्तदप्यनुद्वास्य काश्चन अभिययुः अपरा इति सर्वत्र गुणैर्भिन्नस्वभावत्वम् ॥ ५ ॥

एवं तिस्रो राजस्यः सात्त्विकीराह—परिवेषयन्त्य इति । भर्तुरपत्यस्यापि सेवा स्त्रीधर्मः तत्र भर्तुः भोजने शयने च सेवा स्वधर्मः अतिबालकानां पुत्राणां स्तनदानं च परिवेषणं च सृष्टिरिव रेतस उत्पादकत्वात् स्तनदानं पालनं शिष्टमन्यत् सर्वत्र तत्त्यक्त्वेति ज्ञेयम् अन्या इत्यपि तामसीराह, अश्नन्त्योपास्यभोजनमित्यादि ॥६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तासां तत्पार्श्वगमनकाले परमोत्कण्ठया विलम्बस्यासह्यत्वात् ममताऽहन्तास्पदकर्मापेक्षाभावं श्लोकत्रयेण वदन् कासाश्चित् स्वजातिधर्मपरित्यागमाह—दुहन्त्यः गा दोहयन्त्यः तं दोहं दोहनकर्म हित्वा अभिययुरभिसस्रुः पयो दुग्धं पात्रस्थं चुल्ल्यामधिश्रित्य अध्यारोह्य एतत् क्वाथमप्रतीक्षमाणाः काश्चित् संयावं गोधूमकणान्नं पक्वमप्यनुद्वास्य अनवतार्य स्त्रीमात्रधर्मत्यागमाह—परिवेषयन्त्यस्तत्परिवेषणं पत्युरुष्णोदकप्रदानादिना शुश्रूषन्त्यः ॥ ५ ॥ ६ ॥

विशुद्धरसदीपिका ।

अथ श्रीकृष्णसूचकध्वनिश्रवणानन्तरं तत्प्रवणचित्तानाम् अनुपङ्क्षेण तत्क्षणमेव त्रैवर्गिककर्मनिवृत्तिं द्योतयंस्तासां स्वस्वभावाभिव्यञ्जकां क्रियां तन्निवृत्तिं च दर्शयति—दुहन्त्य इत्यादित्रिकेण । तत्रादौ "तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः" इति महापुरुषानुज्ञानुसारेणावतारितदेव्यंशानां ता अंशिनीनामेवासां प्राणसख्यो ऽभवन् व्रज इति तत्प्राणसखीत्वं दर्शयन् स्वजातिकर्मपरित्यागपूर्वकं तत्तद्यूथेश्वरीकरणीयं दोहनादिकं ताः कुर्वत्यः प्रस्थिता इत्याह—दुहन्त्य इत्यादिस्पष्टम् । एवं चान्तर्भावितणर्थकल्पनापि परास्ता किं कृत्वा ? दोहं हित्वा तत्र हेतुः समुत्सुका इति, कालविलम्बमसहमानाः पयः स्थालीस्थं चुल्ल्यामधिश्रितं तदुत्तारणमप्रतीक्षमाणाः संयावं गोधूमकणमिलितं कथितं पयः "थूली" इति प्रसिद्धं तदनुद्वास्य अनवतार्यं ययुः एवं च सायन्तनमुख्यकर्मपरित्यागः सूचितः । एताः परिचारिकाप्रायत्वाद्देव्यंशा एवेति मुख्यव्यक्तम् ॥ ५ ॥

कासाञ्चित्साधकचरीणां सामान्यबन्धुपरित्यागमाह—परिवेषयन्त्य इति । अन्याः भ्रातृजायादयः परिवेषणं कुर्वतीः प्रयोजयन्त्य इत्यर्थः । शिशून् प्रजावत्यादिबालान् पयः पाययन्त्यः इति स्नेहादिपरित्याग उक्तः ते च भ्रातृपुत्रादय एव ज्ञेयाः अन्यथा रसाभासापत्तेः तथा नत्वेयं गवामेव पयः अत एव सुतान् स्तनमिति नोक्तं ततश्चैता दुर्गाव्रतपरा धन्याद्याः कन्या इति ज्ञेयम् । शुश्रूषन्त्यः पतीनीति श्रुतिमुनिरूपाः वक्ष्यमाणदेहत्यागपूर्वकं प्राप्तियोग्याः पतीनिति पतिम्मन्यानित्यर्थः कासाञ्चिद्देहापेक्षापरित्यागमाह—अश्नन्त्य इति। एता नित्यसिद्धाः परिचारिकाः देव्यंशानामेताभिः सम्मिलितानां तादृशत्वं संभवत्वित्यत्र सम्पूर्वस्य भवतेर्मिलनार्थत्वादिति ज्ञेयम् ॥ ६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तत्र पृथक् पृथक् तासां गमनदशामाह—दुहन्त्योऽभिययुरिति । अत्र भगवत्प्रेमपथाचार्यभूता गोप्यः स्वयं राधाकृष्णस्वरूपा अपि कलिजनोद्धारणायाऽधर्मादिसामर्थ्यमपश्यता धर्मसंस्थापनावतीर्णेन भगवता सर्वावतारशिरोमणिना सर्वधर्मशिरोमणिमुद्भावयता ऽऽविर्भावितप्रेमपथप्रवृत्त्यै लीलामिषेण तदङ्गधर्मानुपदिशति—तत्र गृहादिभ्यो विच्छिद्य भगवत्प्रापकतदीयगीतं तद्वेत्या येऽच्युतगोत्रा गुरवः तद्द्वाराश्रवणमात्रेणाति विकलचित्तमनस्त्वेन सुसमृद्धादूबन्धुजनपूर्णाद्गृहादप्यैहिकामुष्मिकानिष्कामतया सद्यः परिव्रज्य तल्लीलासुखप्रापकवनं प्रति गमनं "नैवारब्धं परित्यजेत्" इत्यादिवाक्यानामपूर्णकर्मत्यागे दोषविधायकानामन्याधिकारप्राप्तानां न प्रेमपथप्रवेशः। अत्र तु "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुत्या ऐहिकामुष्मिककर्मपूर्णतापेक्षा अमन्माप्य तत्कृत्यं सर्वमुत्सृज्य तद्वशानुगतया भगवद्धामतल्लीलाप्रवेशाय समुद्यम एवोचित इति स्वयमनुष्ठाय स्वाचरितेन बोधयन्ति—

"परोपदेशवेलायां सर्वे व्याससमा द्विजाः।

तदनुष्ठानवेलायां मुनयोऽपि न पण्डिताः" ॥

इतिवन्न कथनमात्रम् तत्र काश्चिद्दुहन्त्यो गाः दोहयन्त्योऽभ-

### श्रीरामनारायणकृतभावभावविभाविका ।

वञ्चिति त्यागात्पूर्वं स्वकुलविहितधर्मानुष्ठानं यथा द्विजाः "स्वर्गकामो ज्योतिष्टोमेन यजेत्" इत्यादिसकामश्रुतिगोरसमभृतादिप्राप्तिमिच्छन्तस्ताः श्रुतीर्गाः तत्कर्मानुष्ठानेन दोहयन्तोऽच्युतगोत्रमुखात्तद्गीतं गीताद्युपश्रुत्य तद्धित्वा समुत्सुका गृहात् प्रव्रजन्ति तथा दोहं हित्वा इत्यपूर्णकर्मत्याग उपदिष्टः समुत्सुकाः सम्यगुत्साहवन्त्योऽभिययुः वंशमभिमुखीकृत्य भगवदाभिमुख्यं ययुरिति गुरुहरिसन्मुखतोपदिष्टाः तत्र दोहत्यागगमनोत्साहयोरयमभिप्रायः दोग्ध्रा गोपालनन्दनेन श्रुतिगोरसगीता दोहनवत् श्रुतिरूपगोपिकान्तरिन्द्रियगोरसं प्रेमबन्धनेनाच्छाद्य वंशध्वनिनैव दुग्धम् अथ बाह्येन्द्रियगोरसं भुजबन्धनेनाच्छाद्य कुचमर्दनेन दोहयितुं गृहगतं लज्जाबन्धनम् उत्साहजवेन त्रोटयित्वा रतिरसपूरितस्तनभारनमितक्षीणमध्या गृहसुखं तृणवत्त्यक्त्वा समुत्सुका ययुः अन्तरङ्गप्रयोजनप्राप्तौ बहिरङ्गत्यागवदन्तरङ्गगोदोहने बाह्यगोदोहनत्याग उचित एव अन्यासां चरितमाह–पयोऽधिश्रित्येति । उपदेशः पूर्ववत् अयमत्र निष्कर्षः यथा केचित्सज्जनाः स्वजीवनं सफलीकर्त्तुं स्नेहसारान्विते श्रुतिगोरसे समन्वितं कृत्वा विरहज्वालतापेन तत्सुपक्वतां सम्पादयन्ति तथाऽपरा गोप्यः स्वजीवनाख्यसुस्निग्धे पयसि मेलितं संयावं सुस्वादुसुपक्वकरणायाग्नावधिश्रित्य भगवता वंशधमनेन हृच्छयहृच्छयाग्नौ प्रज्वलिते तापाधिक्योद्भासिते स्नेहरसेऽन्तस्तापसन्तप्ता बाह्यानुसन्धानशून्यास्तमनुद्वास्यैव ययुः तथा च यदान्तस्तापवद्भिर्बहिः स्वजीवनसाफल्याय सेवितगोरसमपि त्यज्यते तदा किमु वाच्यं सकामश्रुतिगोरसत्यागे अत्रास्माभिरन्यनिरूपितगोपीनां न्यूनाधिकभाव उपेक्ष्यते भगवत्सम्बन्धिनां भगवद्रूपताऽनुसन्धानात् ॥ ५ ॥

अन्यासां चरितमाह–परिवेषयन्त्य इति । उपदेशः सर्वत्र समानः काश्चित्तु सुस्निग्धमधुरमन्येभ्यः परिवेषयन्त्यः शुष्कनीरसबहुच्छिद्रस्य हृदयशून्यसग्रन्थ्यग्रमानवंशवंशजातस्य वंशस्यापि मधुगानसम्पादकं कृष्णाधररसं तद्वेणुगीतरूपतया गतं कर्णपुटकद्वारे सदास्वाद्याऽहो एतद्रसलुब्धा मुनयोऽपि देवेभ्यो हविर्दानात्मकयज्ञकर्माणि त्यजन्ति वयं कामिन्योऽपि कथं तत्पानं हित्वा लौकिकपरिवेषणे प्रवृत्ता इत्यवधार्य तद्रसभाजनं हित्वा भाजनं च भित्त्वा ययुरिति पूर्वेण सर्वत्रास्मिन् श्लोकेऽन्वयः । अत्र तु स्वयं विषयरसाभोक्तृणामन्येभ्यो दातृणामत्युदाराणामपि कृष्णरसास्वादाय तद्विक्षेपकदानादिकर्मत्याग उपदिष्टः । काश्चित्तु शिशून् पयः पाययन्त्य इत्यत्र सुतान् स्तनमित्यनुक्त्वा शिशून् पय इति प्रयोगादन्यासां बालानां गवादिक्षीरमिति भाति यथा भक्तिज्ञानवैराग्यादिशिशूनां पुष्टिं सम्पादयन्त्यपि प्रेमोत्कर्षवद्ध्वनिं शृण्वन्त्येव तत्सर्वं विस्मृत्य भगवत्स्वरूपमात्रं पर्यवस्यति तथा पोष्यान् शिशूनपि हित्वा ययुः तथा च लोके न केचिदेव प्रेमिणः किन्तु सर्वे एव परन्तु पुत्रमन्धुधनादौ विभक्ता प्रीतिर्न प्रेमत्वेनाभिधीयते सर्वतो निर्विषयकविषयाच्चेत्सैव प्रेमादिसंज्ञां भजेत तदुक्तं श्रीप्रह्लादेन–

"या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु" ॥

काश्चित्तु पतीन् शुश्रूषन्त्यः तद्धित्वा ययुरिति सर्वत्र सम्बध्यते न चात्र पतित्यागप्रयुक्तो दोषः यथा विष्णुबुद्ध्याऽश्वत्थः सेव्यस्तत्र विष्णोरेव मुख्यं सेव्यत्वं नाश्वत्थस्य तथा विष्णुरूपतया पत्युः सेव्यत्वे विष्णोरेव मुख्यं सेव्यत्वं पतित्वं चेति प्रतीकमुपेक्ष्य साक्षात्पतिहरिसेवनेन दोषशङ्काकलङ्कः "वरोऽसौ विष्णुरूपेण प्रतिगृह्णात्वयं विधिः" इति वाक्येन तन्निरासाद् वस्तुतस्त्वेताः श्रुतिरूपास्तथा च यथाश्रुतयस्तत्तदेव कर्मपरत्वेन प्रतीयमाना अपि ब्रह्मैकपराः "सर्वे वेदा यत्पदमामनन्ति" इति श्रुतेः । नित्यश्रुतीनामनित्यदेवसम्बन्धानुपपत्तेश्च तथाऽत्र या या गोपी यस्याः श्रुतेरवतारस्तदर्थत्वेन प्रतीयमानो देवोऽत्र तत्पतित्वेनावभासते यथा स्वा सा श्रुतिस्तत्तद्देवपरत्वेन भासमानापि तदसम्बन्धान्न तत्परा किन्तूक्तश्रुतिर्ब्रह्मपरैव तथा ता गोप्योऽपि तत्तत्पत्नीत्वेनावबुद्ध्यमाना अपि न तत्पत्न्यस्तत्सम्बद्धा वा किन्तु कृष्णब्रह्मैकपरा अतो यावच्छ्रुतीनां ब्रह्मैकपरत्वबोधकगुरूपदेशाभावस्तावत्तासां तत्तद्देवपरत्वप्रतीतिवत्पतिशुश्रूषा अच्युतगोत्रगुरूपदेशात्सदेव परत्वमपहाय ब्रह्मपरत्ववत् हरिवंशनादश्रवणोत्तरं तच्छुश्रूषां हित्वा कृष्णपरत्वमित्यनवद्यम् काश्चित्तु अश्नन्त्यो भोजनमपास्य ययुः यथा योगभ्रष्टा विषयभोगासक्ता अपि गुरोर्हरिगीतश्रवणमात्रेण "रसो वै सः रस ५ ह्येवायं लब्ध्वानन्दी भवति" इति श्रुत्या ब्रह्मण एव रसरूपत्वमवधार्य तद्रसानुभवाय तान् भोगान् विषमिव मन्वानास्तानपास्य परिव्रज्य हरिं भजन्ति तथा अश्नन्त्योऽपि हरिवंशरवं श्रुत्वैव तदपास्याकृताचमना एव तदधररसास्वादाय ययुः ॥ ६ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

आजग्मुरित्युक्त्या विप्रतिबन्धकानां तत्तद्ध्यानपराणां सत्त्वात् कथं स्वस्वगृहात्तासां निस्सरणमित्यपेक्षायां प्रेष्ठसूचकशब्दश्रवणमात्रेण तत्प्रवणमानसानां तत्क्षणमेव त्रैवर्णिककर्मनिवृत्तिर्जातेति सूचयंस्तासां निर्गमनप्रकारमाह–दुहन्त्य इति । दुहन्त्यो दोहयन्त्यः तत्क्रियामध्य एव दोहं दोहनं हित्वा काश्चित् अभिययुः वेणुगीतकृत्प्रेष्ठाभिमुखं ययुः । यद्वा, दोहनपात्रं गृहीत्वा काश्चित् स्थितास्तत्समये गीते तत्पात्रं विहायाभिययुः । यद्वा, दोहनानन्तरं दुग्धपात्रं गृहीत्वा काश्चित्स्थितास्तत्क्षणे वेणुगीते श्रुते च तत्त्यक्त्वाऽभिययुः काश्चित्तु स्थाल्यां स्थं पयश्चुल्ह्यामधिश्रित्य तत्क्वाथार्थं तदधिसेचननिवृत्त्यर्थं च तत्सन्निधौ स्थितास्तत्समये वेणुगीतमन्तःप्रविष्टं तदा तत्क्वाथमप्रतीक्ष्यमाणास्तद्रक्षणं विहायाभिययुः अपराः संयावं पक्वं गोधूमकणान्नम् अनुद्वास्य तस्मात्स्थानमप्यननुसन्धायाभिययुः यतः समुत्सुकाः उत्कटोत्कण्ठावत्यः तद्विलम्बसहनाऽसमर्थाः एतेन स्वजातिधर्मं विहायाभिययुरित्युक्तम् ॥ ५ ॥

अथ स्त्रीमात्रधर्मत्यागमाह–परिवेषयन्त्यो बन्धुभृत्यादिभ्यः परिवेषणं कुर्वन्त्यः तत्परिवेषणं विहाय काश्चिदभिययुः अतिस्निग्धान् शिशून् पयो दुग्धं स्तन्यमितरद्वापाययन्त्यस्तत्पयः पानं हित्वा काश्चिदभिययुः पतीन् सर्वथा

लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।
व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ७ ॥
ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृबन्धुभिः ।
गोविन्दाऽपहृतात्मानो न न्यवर्त्तन्त मोहिताः ॥ ८ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

सेवनीयान् शुश्रूषन्त्यः पादप्रक्षालनादिसेवां कुर्वन्त्यस्तां सेवां विहायाभिययुः काश्चित्तु भोजनं कुर्वन्त्यः भोजनं त्यक्त्वा अनाचान्ता एवाभिमुखं ययुः कृष्णान्तिकं ययुरित्युत्तरेणान्वयः । एतेन बन्धुभृत्यत्यागः अतिथिनिग्रहत्यागः स्वधर्मत्यागः स्वदेहपोषणत्यागश्चोक्तः ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासां कृष्णोऽनुरक्तिं तदन्यत्र विरक्तिं च सूचयन् गमने प्रकारमाह—दुहन्त्य इति त्रिभिः । काश्चित् श्रीकृष्णसमीपगमने समुत्सुकाः गाः पयो दुहन्त्यः सत्यः दोहं दुग्धं दोहनकर्म वा हित्वा अभिययुः श्रीकृष्णाभिमुखं जग्मुः अपराः समुत्सुका इति सर्वत्र योज्यम् पयो दुग्धं पात्रगं चुल्यामधिश्रित्य अध्यारोप्य तत्क्वाथमप्रतीक्षमाणाः ययुः अपराः संयावं गोधूमकणान्नं पक्वमनुद्वास्यानवरोप्य ययुः ॥ ५ ॥

काश्चित्परिवेषयन्त्यः बन्धून् भोजनार्थं निवेश्य अन्नादिकं ददत्यः तत्परिवेषणं हित्वा ययुः काश्चित् शिशून् बालान् पयः पाययन्त्यः काश्चित्पतीन् शुश्रूषन्त्य उपचरन्त्यः ॥ ६ ॥

---

भाषा टीका ।

काम के बढ़ायबे वारे वा वेणु के गीत कों सुन के बड़ी उत्कण्ठा भई जिन कें ऐसी कितनी गोपी दूध दुहावती हीं सो दूध दुहायबे कूं छोड़के श्रीकृष्ण की ओर जात भईं, कितनी गोपी चूल्हे पै औटबे कों दूध चढ़ाय कें आवनि भईं, कोई गोपी रँधी रँधाई थूली कों चूल्हे पै तें नहीं उतार कें आवत भईं ॥ ५ ॥

कोई गोपी अपने घरकेन कों परोस रहीं हीं सो परोसबे कों छोड़कें आवति भईं, कितनी गोपी अपने छोटे २ बालकन कों दूध पियावतीं हीं सो दूध पियायबे कों छोड़कें आवनि भईं। कोईक गोपी अपने पतीन की शुश्रूषा कर रहीं ताकों छोड़ के आवति भईं, कितनीक जनी भोजन कर रही सो भोजनन को छोड़ कें आवनि भईं ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्याः प्रमृजन्त्यः अङ्गोद्वर्त्तनादि कुर्वत्यः काश्च काश्चित् कृष्णानुप्रचर्थं कर्म तदासक्तमनसोऽन्यथा कृतमपि फलत्येवेति द्योतयन्नाह—व्यत्यस्तेति । स्थानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः ॥ ७ ॥

न च कृष्णाकृष्टमनसां विघ्नाः प्रभवन्तीत्याह—ता वार्यमाणा इति ॥ ८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कासाञ्चिच्च श्रीभगवत्सन्तोषणार्थतद्भजनसाधननिजाङ्गभूषणपरित्यागमप्याह—लिम्पन्त्य इत्यादिना । तत्रैव हेतुं दर्शयन् किं वक्तव्यं दैहिकदेहाद्यपेक्षापरित्यक्तेति कासाञ्चिद्देहविस्मृतिरपि जातेत्याह—व्यत्यस्तेति । पूर्वोक्तसर्वत्यागभावकस्यौत्सुक्यस्य विभ्रमाख्योऽयमनुभावः यथोक्तं "वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् । विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः" इति. अनेन तद्विधानां प्रेमभगवता यथापेक्षितं न तथा वेशादीति गम्यते किन्तु पश्चात्तेनैव परिहृत्य स्वयं यथावत् परिधापितमिति ज्ञेयम् एवं दोहनादीनामेषामवश्यापेक्ष्यत्वेन यथोत्तरं श्रेष्ठ्यमूह्यम् । यद्वा, केवलमत्र प्रारब्धनिजनिजकर्मपरित्याग एव तात्पर्य्यम् तत्र च व्यत्यस्तवस्त्राभरणत्वे वस्त्रादिधारणरीतित्याग एव सर्वत्र च तत्र तत्र हेतुः, कृष्णगृहीतमानसा इति । समुत्सुका इति च प्रोक्तम् एवं सर्वा अपि कृष्णस्य परमाकर्षकस्य श्यामसुन्दरस्य श्रीव्रजेन्द्रनन्दनस्य अन्तिकमेव ययुः न तु लज्जादिना विघ्नादिना वा दूरे तस्थुरित्यर्थः । परममोहितत्वात् यद्यपि स यत्र कान्तस्तत्राजग्मुरित्यनेन तदन्तिकगमनमेवोक्तं तथापि परममोहेनातिवेगेनात्यन्तनिकटगमनविवक्षया पुनर्विशेषोक्तिरिति दिक् ॥ ७ ॥

अधुना स्त्रीभिः प्रबोध्यमानामपि श्रीभगवदपहृतचित्ततया तासामविशेषविचारान्तर्धानमाह—ता इति । सर्वा एव ताः पत्यादिभिर्वार्य्यमाणाः धर्मप्रदर्शनादिना हस्तधारणादिना च गन्तुं निरुध्यमाना अपि न न्यवर्त्तन्त किन्तु ययुरेवेत्यर्थः । कुतः मोहिताः हृतविवेकाः तत्कुतः गोविन्देन गोकुलेन्द्रेण । यद्वा, गा इन्द्रियाणि ईश्वरत्वेन विन्दतीति तथा तेन अपहृत आत्मा चित्तं यासां ताः महत्तमेनापहृते द्रव्ये स्वल्पानां पक्षान्तरे च अन्तरीश्वरेण महामोहनेन प्राणकोटिप्रेष्ठेनान्तरपहृते बाह्यानामन्येषां तत् प्रत्यर्पणसामर्थ्याभावात् अत्र प्रवाहवेगनीयमाना नौर्यथा तटस्थानां तिष्ठतिष्ठेत्याद्युक्त्या नावारूढानां वा नौधारणेनापि न तिष्ठेदिति दृष्टान्तो दृष्टव्यः गोविन्देनापहृत आकृष्ट आत्मा जीवाख्यो यासामिति निवृत्तौ जीवेन विच्छेदः स्यादिति जीवनार्थमेव गता इति श्लेषार्थः तत्रादौ पतिभिरिति तेषां पत्नीशुभाशुभभागित्वेन मुख्यत्वात् ततश्च

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

केवलं कन्यावैगुण्येन दोषस्पर्शात् स्नेहाच्च पितृभिः ततश्च दुष्कीर्त्तिभयात् स्नेहविशेषाच्च भ्रातृभिः ततश्च कुलदोषशङ्कया बन्धुभिरिति—

"रक्षेत्कन्यां पिता प्रौढां पतिः पुत्रस्तु वार्द्धके ।
अभावे ज्ञातयस्त्वेवं न स्वातन्त्र्यं क्वचित्स्त्रियः" ॥

इति स्मृत्युक्ताश्चत्वारो रक्षका अत्रोक्ताः तत्र प्रायः पुत्रानुत्पत्ते-स्तत्र पुत्रा नोक्ताः पत्यादीनां चैषां यथोत्तरं न्यूनत्वमूह्यं तासामुत्तरोत्तरं तत्तद्वश्यतासम्बन्धयोर्न्यूनत्वात् तथापि पूर्व पूर्वेषां निवारणे प्रवृत्तावपि परपरेषां तत्र प्रवृत्तिः कुटुम्ब समुदायतापेक्षया यद्वा, पूर्वपूर्वैः परित्यागे कृते परपराभयणा-शङ्कया तैस्तैः क्रमेण निवारणम् । यद्वा, तत्तदन्तिकवर्त्तिभिः पतिभिः काश्चित् पित्रादिभिश्च काश्चन तत्र च पतिभिः पत्न्य एव पित्रादिभिः प्रायोऽविवाहिताः स्ववासिन्यश्च पुत्र्य इति विवे-चनीयम् अन्यत् समानम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कासाञ्चिच्चाहरहस्तत्प्रत्याशया विरहेपि "अङ्गेष्वाभरणं करोति बहुशः" इति गीतगोविन्दरीत्या श्रीभगवत्प्रेमविलसितस्यापि निजाङ्गवेषस्य परमोत्कण्ठया परित्यागमाह—लिम्पन्त्य इत्या-दिना । लिम्पन्त्यः अङ्गरागं कुर्वन्त्यः लेपनादिकमप्यपास्येति शेषम् अन्या इत्यस्य लिम्पन्त्य इति पदद्वयेनान्वयः । तत्रैव हेतुं दर्श-यन् किं वक्तव्यं दैहिकदेहाद्यपेक्षा परित्यक्तेति कासाञ्चि-द्देहावयवविशेषाऽननुसन्धानमपि जातम् इति व्यनक्ति—व्यत्यस्तेति पूर्वोक्तसर्वत्यागानुभाव (क) स्यौत्सुक्यस्य विभ्रमाख्योऽयमनुभावः यथोक्तम्—

"वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् ।
विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः" ॥ इति ।

अनेन तद्विधानां प्रेमभगवतो यथा ऽपेक्षितं न तथावेशा-दीति गम्यते किन्तु पश्चात् तेनैव परिहितस्य स्वयं तथावस्प-रिधापितमिति ज्ञेयम् एवं दोहनादीनामेषामवश्यापेक्षपरत्वेन यथो-त्तरं श्रेष्ठ्यमूह्यं तदेवं सर्वा अपि कृष्णस्यान्तिकं प्रतिययुः प्रस्थितवत्यः ॥ ७ ॥

अधुना स्वैः स्त्रीयैर्बलात्कारितयाद्यानुसन्धानानामपि तासां कुलवधूस्वाभाविकत्वेन परमदुस्त्यजस्य लज्जादेरपि त्यागमाह-ता इति । सर्वा अपि ताः पत्यादिभिः क्रतु रात्रौ वहिर्गच्छत इत्यादिनिर्बन्धेन मुहुर्वार्य्यमाणा अपि न न्यवर्त्तन्त किन्तु ययुरेवेत्यर्थः । कुतः मोहिताः हतविवेकाः तत्कुतः गोविन्देनाप-हृत आत्मा चित्तं यासां ताः अयं पत्यादीनामपि वैयर्थ्ये हेतुर्वैयः तद्भक्तिमात्रस्य सर्वविघ्नापहारिप्रभावत्वात् तत्तदन्तिक-वर्त्तिभिः पतिभिः काश्चित् पित्रादिभिश्च काश्चन तत्र च पित्रादिभिरविवाहिताः स्ववासिन्यश्चेति—

"रक्षेत्कन्यां पिता प्रौढां पतिः पुत्रस्तु वार्द्धके ।
अभावे ज्ञातयस्त्वेवं न स्वातन्त्र्यं क्वचित् स्त्रियः" ॥

इतिस्मृतेः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमन्या लेपनमार्जनाञ्जनादीन् कुर्वाणालेपनादीन् विहाय लोचने अञ्जन्त्य इत्यन्वयः । काश्चित्तु व्यत्यस्तानि विपरीतस्थानानि वस्त्राण्याभरणानि च यासां तथाभूताः सत्यः कृष्णसमीप-माययुः ॥ ७ ॥

एवं गच्छन्त्यः पित्रादिभिर्वार्यमाणा अपि कृष्णगृहीत-मानसत्वात्काश्चिन्नन्यवर्तन्त न गृहानाजग्मुः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रमृजन्त्यः शरीरोन्मार्जनं कुर्वत्यः स्थानसम्मार्जनं वा अञ्जन्त्यो मष्यादिना मुखकण्ठादिषु आभरणादि दधानाः कण्ठादिषु वस्त्राणि वसाना इति व्यत्यस्तवस्त्राभरणाः ॥ ७ ॥

वार्यमाणा निरोध्यमाना गोविन्देनापहृता आकृष्टा आत्मानो मनांसि यासां तास्तथा ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु, कथं तासां पितृपतिभ्रातृभिर्वारणं न कृतमित्याह, ता वार्य्यमाणा इत्यादि । ताः पतिभिः भ्रातृभिर्बन्धुभिश्च न वार्य्य-माणा बभूवुरित्यर्थः । ऊढाः पतिभिः अनूढा पित्रादिभिः अत एव न न्यवर्त्तन्त बाधकाभावात् कथं तैस्तैर्न वारिताः तत्राह—मा ऊहिता वितर्किताः योगमायाभावात् ते ते तास्ताः समीपस्था एव विदुः ता एव वा कथं विचारेण न न्यव-र्त्तन्त तत्राह—गोविन्देनापहृतात्मानः आत्मनि सति बुद्ध्यादयो गुणाः स्युः तेषु सत्सु विचारः प्रवर्त्तन्ते आत्महरणेन सर्व-हरणमित्यर्थः । काकाक्षिगोलकन्यायेन नकार उभयत्र योज्यः ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लिम्पन्त्यः शरीरानुलेपनं कुर्वन्त्यः प्रमृजन्त्यः उद्वर्त्तनादिकं कुर्वन्त्यः गृहं वा लिम्पन्त्यः प्रमृजन्त्यः आभरणानि भाण्डानि वा प्रमृजन्त्यः अत्रापि पूर्ववदेव क्रमः शरीरसेवातो गोसेवा मुख्या ततः पतिसेवेति अञ्जन्त्यः काश्च लोचने इति गुणातीता अतः काश्चनेति दुर्लभाधिकारः सूचितः ज्ञानमार्गबोधिका इति निर्गुणत्वं तासामागमने दैहिकविचारोऽपि न जातः किं पुनस्तद्धर्माणा-मितिवक्तुं वस्त्राभरणयोर्व्यत्यासमाह—व्यत्यस्तेति । व्यत्यस्तानि विपरीतानि वस्त्राण्याभरणानि च यासाम् एवमुद्यमः सर्वासामेव साधारणो निरूपितः व्यत्यासो मार्गगताविति केचित् तन्मध्येपि काश्चित् कृष्णान्तिकं ययुः काश्चिन्न याः पुनः शब्दपरा जाताः ता उद्युक्ता अपि नाऽऽगताः याः पुनः शब्दापेक्षां त्यक्तवत्यः ताः सर्वतो निरपेक्षा विपरीतावश्यकदेहधर्माः भगवदन्तिक-मागताः ॥ ७ ॥

सर्वासामनागमने हेतुमाह—ता वार्यमाणा इति—

"रक्षेत् कन्यां पिता प्रौढां पतिः पुत्रस्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियः" ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इति चत्वारो रक्षकाः अतो यथायथं पतिभिर्वार्यमाणा जाताः काश्चन पितृभिः तथैव पुत्रैः बन्धुभिश्च ते हि निरुद्धा अपि फलरसानभिज्ञाः साधनप्रवणाः स्वद्वारैव स्त्रीणां भजनं मन्यन्ते न तु स्वातन्त्र्येण तथापि गोविन्देनापहृत आत्मा अन्तःकरणं यासां निवारणं हि श्रोत्रं प्रवर्तकश्च भगवान् अन्तःकरणारूढाश्च पुरुषाः न हि नौकाप्रवाहवेगाद्गच्छन्ती तिष्ठन्निष्ठेत्युक्ता तिष्ठति भयं स्वधर्मो वा तासां नास्तीत्याह—मोहिता इति । यदि ताः कृष्णान्तिकं न गच्छेयुः तदा मूर्च्छिता इव प्राणांस्त्यजेयुः सर्वात्मभावज्ञापनायैवाधुना व्रजस्थानामेतदागमनज्ञानं कारितवानिति ज्ञेयम् अन्यथाऽग्रे मन्यमानाः स्वपार्श्वस्थानिति वाक्याद्यथा वनस्थितत्वज्ञानं सम्पादितवानेवं पूर्वमेवागमनाज्ञानमेव कथं न सम्पादयेत् "प्रक्षालनाद्धि पङ्कस्य" इति न्यायेन तज्ज्ञानं सम्पाद्य तत्सम्भावितदोषाभावसम्पादनात्तदसम्पादनस्यैव वरीयस्त्वादिति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कासाञ्चिदावश्यकदैहिकवेशलागमाह—लिम्पन्त्यः देहे अनुलेपं चन्दनादिना कुर्वत्यः प्रमृजन्त्यः उद्वर्तनादिकं कुर्वत्यः कासाञ्चिदावेगवशाद्देहावयवविशेषपरिचयस्याप्यभावमाह—व्यत्यस्तेति । विभ्रमाख्योऽनुभावोऽयं यदुक्तम् । "वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् । विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः" इति ॥ ७ ॥

ननु, ताः प्रेमप्राबल्यात् सर्वापेक्षां तत्यजुरित्युचितमेव तासामपेक्षायां तत्पत्यादयः कथं तत्यजुस्तत्राह—ताः कुलवध्वः पतिभिः कुलकन्याश्च ताः पित्रादिभिर्वार्यमाणा अपि न न्यवर्तन्त तत्र हेतुर्गोविन्देति, भयलज्जादीनां का वार्ता तासामात्मनामपि गोविन्देनापहृतत्वात् मोहिता मूर्च्छिता इति सूत्रसञ्चालितपाञ्चालिका इवेत्यर्थः । पत्यादिभिर्गतप्राणानामपि भार्यादिदेहानामप्रतिष्ठाभयादेवान्यत्र सञ्चारो न सह्यते इति चेत् ? सत्यं विप्रतिपत्तिरियं योगमाययैव समाहिता ज्ञेया तच्च समाधानं तयैव कल्पितानां तत्तत्तुल्या एव तादृशगोपीनां स्वस्वभार्यादिकत्वेन प्रत्यायितानां स्वस्वगृहान् प्रति पत्यादिभिः परावर्तनमेव प्रकारश्चाग्रे वक्ष्यते ॥ ८ ॥

---

### विशुद्धरसदीपिका ।

कासाञ्चिन्नित्यसहचरीणां स्वस्वयूथेश्वरीपरिचरणस्यापि परित्यागं कथयन्वंशीध्वनेः परममोहनतामाह—लिम्पन्त्य इति । अङ्गरागं कुर्वन्त्यः प्रमृजन्त्यः उद्वर्तयन्त्यः शेषं स्पष्टम् सर्वमिदं यूथेश्वरीकर्मकमेव ज्ञेयम् अन्यथाप्यर्थकल्पनागौरवत् नचात्र सहचरीधर्मविघातः यूथेश्वरीणां तत्प्रागेव गमनात् व्युत्क्रमेणोक्तिस्तु मुनीन्द्रस्य भावावेशेनेति ज्ञेयम् अथ कासाञ्चिदनेकजन्मसिद्धानां गोपीनां पतिरेष वा "नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्द्धनः" इत्यादिना गौतमीयतन्त्रोक्तानां नित्यसिद्धयूथेश्वरीणां देहावयवविशेषानुसन्धानमाह—व्यत्यस्तेति । विभ्रमोऽयं तदुक्तम्—

"वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् ।
विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः" ॥

इति ॥ ७ ॥

कासाञ्चित् साधकचरीणां भावोत्कण्ठ्यप्रदर्शनाय लज्जादित्यागमाह—ता इति । पतिभिरिति धर्मपरित्यागोऽपि सूचितः एते च पत्यादयः साधनसिद्धानां श्रुतिमुनिरूपाणामेव ज्ञेयाः ननु नित्यसिद्धानां गोपीनाम् अनेकजन्मसिद्धानां पतिरिति तमेवोद्दिश्य मन्त्रार्थकथनविरोधात् "श्रियः कान्ताः कान्तः परमपुरुषः" इति ब्रह्मसंहिताविरोधाच्च कचित्तदनुकरणं तु साधकचरीणां भावप्रपोषाय श्रीकृष्णस्य लोकवल्लीलानुकरणवदविरुद्धमेव ननु, कथमाग्रहेण प्रस्तैर्न निवारितास्तत्राह—मोहिताः मा ऊहिता योगमायाकल्पितपतिपाञ्चालिकाप्रायैस्तैरतर्किता इत्यर्थः । ननु, ता एव स्वविचारेण कथं न न्यवर्तन्त तत्राह—गोविन्देति । यूथेश्वरी साधकचरीपक्षे गोकुलेन्द्रापहृतात्मानः सहचरीपक्षे वृन्दावनेश्वरापहृतात्मानः "वृन्दावने तु गोविन्दम्" इति वाराहतन्त्रात् ॥ ८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अन्यासां दशामाह—लिम्पन्त्य इति । गृहं वा स्वाङ्गं वा अङ्गरागेण लिम्पन्त्योऽन्या गोप्योऽभूवन् तावच्चन्द्रमसोऽस्तङ्गत्यानसितसूक्ष्ममृदुरश्मिलेपिन्यकुच्यारुणोदयरागेण प्राचीमुखलेपनालुब्धलेपनावबोधेन प्रेष्ठतमेन प्रथममेव स्वविहारास्पदं तासां हृदयालयं रासाद्रिमालक्ष्य स्वमुखचन्द्रकरैः सूक्ष्ममृदुनानागानतानवितानैः कूर्चाः निर्माणं कृत्वा स्ववंशदण्डे संलिप्तदयानुरागरागेण लिप्ते तन्मृदुशन्तमकरैरेवाङ्गरागेणाङ्गान्यपि लेपयितुमिच्छन्त्यो गृहाङ्गलेपनाद्यपास्य कृष्णान्तिकं ययुः अनेन कृष्णाङ्गीकृतयोगक्षेमाणां स्वगेहदेहलालनाद्यपास्य तन्नित्याभियुक्तत्वमेव युक्तमित्युक्तं भवति, काश्चित्तु प्रमृजन्त्यः शुद्धान्तःकरणानामपि मलावशेषशङ्कया तन्निवृत्त्यै सत्कर्माभ्यासवत् शुद्धचिदानन्दघनस्वरूपेप्यारोपिता विद्यामलनिरासाय ज्ञानाभ्यासायासवत् शुद्धेऽपि स्वाङ्गेऽसम्भावितमलसम्भावनया कृष्णयोग्यतामाकलय्य तन्निवारणायोद्वर्तनं कुर्वन्त्योऽपि सम्मुखरितकृष्णगीतहृतमनसां तत्तदङ्गमशौथिल्ये तदेकपरत्वप्रदर्श्यापास्य कृष्णान्तिकं ययुः एतेन कृष्णप्रदगृहीतमनसां नात्मनः कृष्णसदुपयोगयोग्यतासम्पादनायापि कर्मोद्यायाश्च इति सूचितम्. काश्चित्तु लोचने अञ्जन्त्योऽभूवन् तत्रायमभिप्रायः निरञ्जनस्य श्यामस्य नेत्रयोः संयोगे तत्र निवसतः सर्वदृग्दोषमलभञ्जनत्वं सुखस्यञ्जनत्वं चाञ्जनाञ्जनस्यापि श्यामत्वेन दृशि समर्पयन्त्यः । यद्वा, अञ्जनस्य श्यामरजस्त्वेन श्यामपदाब्जरजस्त्वं मत्वा रागराणान्वितञ्जनेत्राब्जयोः परागरजस्त्वेन परागरजसा नेत्राब्जयोः शोभां रजोद्वारा नेत्राब्जयोः प्रियपदाब्जाभ्यां सम्बन्धं च भगवतो दीनवत्सलत्वात्तत्पदाब्जरजोभारेण नेत्रयोरभिव्यक्तिसम्भावनया विरहनिवृत्तिं चाकलय्य निश्चयन्त्यः । यद्वा, नेत्रयोर्विरहानलज्वालिमा व्याप्तिं दृष्ट्वा तन्मना वह्न्याच्छादनवत्कृष्णरजसा तदाच्छादनमभिप्रेत्य निश्चयन्त्यः तदैव कृष्णेन वंशद्वारा धमनेन इन्धनवह्न्याच्छादनाग्नावपि प्रज्वालिते नेत्रयोर्द्विगुणरागदाहयोर्वृद्धौ वैकल्ये जाते नेत्रस्थलकज्जलाभ्यां ताप-

श्रीरामनारायणकृतभावभावविभाविका ।

धिक्येन प्रोद्भूततद्भावात्मकाश्रुसलिलैर्हृच्छयाग्न्यास्य हृदयं सिञ्चन्त्यस्तैस्तदशान्तिं प्रत्युत हृत् कुम्भोद्भूतकामाग्निना कुम्भजेनेव सिन्धोस्तदखण्डाश्रुधारासलिलशोषं दृष्ट्वा पदजलेन सिन्धुपूरकं नाम्नैव महद्भवदहनशमनं दवानलपानकर्त्तारं घनश्याममधरामृतवर्षं तदुपशमाय ययुः एवं भगवद्भक्तानां भगवदनुरागजान्यत्र विरागेणैहिकामुष्मिकसर्वत्यागमारभ्यत्यागाभीति परिव्रज्य भगवद्धामोपगमनं च तद्वंशगुरूपदेशेन दर्शयित्वा तत्सेवोपकरणव्यत्यस्ततापि न भगवत्यथ प्रवृत्तिमतां तत्स्वरूपप्राप्तौ बाधिकेत्यपि स्वाचरितैरेवोपदिशन्ति–व्यत्यस्तेत्यादिना । प्रेमवैकल्येन देहानुसन्धानस्यैवाभावे कचरुशाद्यनुसन्धानं भगवता नित्याभियुक्तानां योगक्षेमोद्वहनस्य प्रतिज्ञातत्वे व्यात्मनोऽपि प्रेमवैकल्यादेव तद्करणम् यद्वा, प्रेमपथिभूषणादिव्यत्यासस्यैव भूषणत्वात्तदकरणं वस्तुतस्तु कृष्णगोप्योर्भेदाभावात् कृष्ण एवोभयरूपतया तथा विहरन् सर्वजीवोद्धारार्थं प्रेमपन्थानमुपदिशतीति न कोऽपि शङ्कावसरः ॥ ७ ॥

अथ अधुना–

"त्वां सेवतां सुरकृता बहवोऽन्तरायाः—
स्वौको विलङ्घ्य परमं व्रजतां पदन्ते ।
नान्यस्य बर्हिषि बलिं ददतः स्वभागान्—
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥

इत्यादिवचनात्स्वौको विलङ्घ्य परमं पदं भगवद्विहारस्थलं व्रजतां सुरकृतान्तरायस्य तदकिञ्चित्करत्वस्य च निर्दिष्टत्वात्तदेव दर्शयति–ता वार्यमाणा इति । तत्र पतिभिरिति श्रुतिरूपाणां गोपीनां तत्तन्मन्त्रप्रतिपाद्यत्वेनापातदृष्ट्या भासमानामुक्तन्यायेन तदसम्बद्धानामपि देवानां पतित्वेन लोके प्रतीयमानत्वात्तैरित्यर्थः । न च तत्र सुरकृता बहवोऽन्तराया इत्युक्तम् अत्र तु पतिपित्रादिभिरित्यर्थभेदः शङ्कनीयः "देवाद्दारादिरूपिणः" इत्यत्र देवानामपि तत्कुटुम्बजनरूपतयैव विघ्नकारित्वस्योक्तत्वात् विशेषतो गोपानां तु–

"नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥
सर्वे वै देवताप्राया उभयोरपि भारत !" ।

इत्यादिभिर्देवत्वे शङ्काया अप्यभावात् तथा च ता वार्यमाणा इत्यनेनान्तरायं निर्दिश्य न न्यवर्तन्तेति तदकिञ्चित्करत्वनिर्देशः तत्र हेतुर्मोहिताः कृष्णानुसन्धानेन स्वदेहानुसन्धानशून्यत्वे किमु वाच्यं तद्वारणाननुसन्धानस्य तत्रापि हेतुमाह गोविन्दापहृतात्मान इति । गोविन्देनापहृता आत्मानो मनांसि यासां तत्र गोविन्द इत्यत्र गवां बहिरन्तरिन्द्रियाणामिन्द्रः स्वामी गा बहिरन्तःकरणानि विन्दते प्राप्नोति वशीकरोतीति वा सर्वथा मनोहरणयोग्यतोक्ता अत एव मोहिता इति माऊहितं तद्वारणं याभिस्ताः यद्वा गोविन्देन गोभिः श्रुतिवचोभिर्विन्दते तात्पर्यवृत्त्या बोध्यते इति तथा तेनापहृत आत्मा तात्पर्यं यासामनेन यथा श्रुतीनां तात्पर्येण ब्रह्मपर्यवसितानां न देवान्तरपर्यवसानं तथा तासामपि न तत्रावस्थितिः यद्वा गवामिन्द्रियैर्वापहृता वंशीरवेण मनोहरेण मनोपहृत्योत्थाप्य स्वैश्वर्यादेव स्वसमीपं नीता आत्मानो देहा एव यासामित्यनेन देवेन्द्रविजयिगवेन्द्रापहृतात्मनां न देवप्रतिबन्धः किञ्चित्करः तत्र साक्षादात्महरणे हेतुर्मोहिता इति मा तपोलक्ष्मीरूपंणोहिता भगवताऽऽत्मीयत्वेन सम्मता इति परस्परं वा हेतुहेतुमद्भावः वस्तुतस्तु भगवतो नित्यसहचरीणां सर्वथा वारणागोचरत्वात् देवाङ्गनानामपि ब्रह्माज्ञया तत्तद्देवानुज्ञया च भगवत्प्रियार्थावतीर्णानां तद्वारणासम्भवात्—

तद्भूरि भाग्यमिह जन्म किमप्यटव्यां—
यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ॥
यज्जीवितं तु निखिलं भगवान्मुकुन्द—
स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव ॥

इति ब्रह्मवचनात् व्रजवासिनां सर्वेषामपि भगवदेकजीवनत्वात् परमानन्दघननिरावरणपरमप्रेमास्पदकृष्णब्रह्मसाक्षात्कारेऽपि केषाञ्चित्प्रेम केषाञ्चित्तदभाव इति वक्तुमप्यशक्यत्वात् तथात्वे तु तत्परमानन्दघनत्वप्रेमास्पदस्वभावत्वे सन्देहापत्तेः नच मायामोहितानां तथा त्वसम्भावना तत्साक्षात्कारे तल्लीलाधाम्नि च मायामोहासम्प्रतिपत्तेः न चासुराणां मोहितत्वं व्रजजनेष्वसुरत्वासम्भवात् असुराणामपि तत्र निविष्टानां तत्साक्षात्कारवतां मायामोहानौचित्यात् भगवद्दर्शने उद्भूतानुरागाणामपि तेषां लीलानुसारितया गोपबालानामिव युद्धादिलीलोपपत्तेरन्यथा प्रेमाभावे प्रेमैकलभ्यभगवत्प्राप्त्यसम्भवापत्तेश्च " मन्येऽसुरान्भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्" इत्यादिवचनात् भगवता सङ्केते सन्दर्शितस्वमतानुसारेण तु सर्वेषामाधुनिकानामपि व्रजवासिनां भगवद्रूपत्वात्किमु वाच्यं तदानीन्तनानां तथा च सर्वथा लीलाप्रतिबन्धकवारणाद्यसम्भवेऽपि प्रेमयथोपदेशगानादिना सर्वोद्धारार्थं प्रकाशितलीलोपयोगतया गोपगोपीनां तद्वेष्टोपपत्तिरिति सर्वमनवद्यं काश्चित्तु प्रेमिणां भगवदेकजीवनत्वेन तन्मिलनप्रतिबन्धेन जीवनं किन्तु प्रतिबद्धगुणमयदेहत्यागेन भगवल्लीलाप्रवेश इति स्वचरितेनैवोपदिशन्ति–अन्तर्गृहगता इत्यादित्रिभिः । यद्यपि भगवल्लीलाधामानुगतानां विभागानुपपत्तिः तथापि ऋषिरूपाणामाधुनिकसाधनसिद्धानां चरितानुकारेणैव तदुपदेशोपपत्तिः तत्रायमर्थः अन्तर्गृहगता दैवात्तथा भावित्वात् पूर्वमेव गृहान्तःप्रदेशे स्थिताः अत एव पत्यादिवारणेनालब्धविनिर्गमाः न लब्धो विशेषतो निर्गमो याभिस्ताः न लब्धो वीनां पक्षिणामिव निर्गमो याभिरिति वा अनेनैव पूर्वपद्यवर्णितानामन्तर्गृहगतत्वाभावेन लब्धविनिर्गमानां तद्वारणाप्रतिबन्धत्वमुक्तं तथा च गुणमयदेहे एव तत्प्रतिबन्धसम्भवमालक्ष्य तत्यागाय कृष्णम्—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥

इतिवाचनान्नित्यानन्दरूपं श्यामसुन्दरं मनःकर्षकं वा दध्युः ननु, ग्राम्याणां गोपाङ्गनानां कथं ध्यानप्रकारावगतिस्तत्राह, तद्भावनायुक्ता इति । मुनिरूपत्वेन साधनसिद्धत्वेन च पूर्वमपि जन्मान्तरे तत्संस्कारादिह च तद्भावनाध्यानं तेन युक्ता इति तत्र लिङ्गमाह—मीलितलोचना इति । यद्वाऽन्यविषयसंस्कारो ध्यानविरोधी सच पूर्वविषयसम्पर्कजनितभावनासंस्कारात्मक आधुनिकेन्द्रियसन्निकर्षजातश्च द्विविधः तत्र प्रथमाभावे हेतुमाह–तद्भावनेति । पूर्वमपि तद्भावनयैव युक्ता इत्यन्यभावनाभावात्

श्रीरामनारायणकृतभावभावविभाविका ।

केन ध्यानप्रतिबन्धो भवेत् द्वितीयाभावे हेतुमाह मीलितलोचना इति । ततश्च कृष्णध्यानेनैव दृष्टादृष्टद्वारा गतदेहाध्यासत्वात्प्रतिबद्धं यद्गुणमयं देहं तत्सद्यो जहुः ननु भाति कर्मबन्धशेषे गताध्यासत्वमात्रेण कथं जहुस्तत्राह—प्रक्षीणबन्धना इति । प्रकृष्टतयाऽनवशिष्टलेशतया क्षीणानि निवृत्तानि कर्मबन्धनानि यासां ताः ननु, यथा कथञ्चिदागामिसञ्चितयोरश्लेषविनाशाभ्यां क्षीणत्वसम्भवेऽपि भोगैकनाश्यप्रारब्धपापपुण्ययोः कथं निवृत्तिरिति शङ्कायामाह—दुःसहप्रेष्ठविरहेति । पूर्वं दुःसहो यः प्रेष्ठस्य कृष्णस्य विरहस्तेन यस्तीव्रस्तापो दुःखं सर्वाशुभफलीभूतदुःखानां ततोन्यूनत्वेन तदन्तर्भावात्तेनैव भोगद्वारा धुता अशुभा याभिस्ताः तथा तदनन्तरं ध्याने एव प्राप्तोयोऽच्युतस्याऽश्लेषो निबिडपरिरम्भस्तेनोद्भूताया निर्वृत्तेः सर्वशुभफलीभूतसुखानां "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्या तल्लेशत्वात्तयैव सर्वशुभफलानां प्राप्तत्वाद्भोगद्वारैव क्षीणानि प्राचीनशुभानुष्ठानजनितादृष्टरूपाणि मङ्गलानि यासां ता नच नियतकालभोगयोग्यानां शुभाशुभानां युगपद्भोगानुपपत्तिरिति वाच्यं सर्वकर्मफलभोगदेशकालनियमस्य फलप्रदेशाधीनतया तदिच्छयैव तदुपपत्तेः किञ्चादृष्टोद्बोधकदेशकालनिमित्तानां फलैकानुमेयतयाऽत्रैवं फलदर्शने एवमेव तत्स्वीकारापत्तेः शङ्कानवसर एव । ननु, ध्यानमात्रेण योगिनामिव देहाप्रतीतावपि बोधाभावे कथमध्यासतिः स्वस्यामपि देहाप्रतीतावप्ययोगिनां सुषुप्तिं गतानां च पुनरुत्थाने तदध्यासानुवृत्तिदर्शनात् तत्राह—तमेवेति । जारबुद्ध्याऽपि तं परमात्मानमेव सङ्गतास्तथा च दीपप्रज्वालनपाकाद्यर्थमङ्गारबुद्ध्या मणौ प्रवृत्तस्य मणिलाभवद्भोगाय जारबुद्ध्याऽपि परमात्मानमेव सङ्गतानां तल्लाभो गुणमयदेहत्यागश्चेति सर्वमनवद्यं वस्तुतोऽस्मिन्पक्षेऽपि न तासां गुणमयो देहः न वा तत्यागः किन्तु तदनुकारेणोपदेशमात्रं यद्वा, सुनिरूपासु गोपिकासु काश्चित्पूर्वमेव दृढभावनया गुणमयदेहत्यागेन लीलोपयोगिसच्चिदानन्दघनस्वरूपात्मकदेहा एव जातास्तास्तु कृष्णाह्वानमात्रेणाप्रतिबद्धतया गताः याः काश्चित्तु यथा वामदेवस्य पूर्वं भावनापरिपाकाभावाज्जन्मप्राप्तावपि गर्भे एव भावनापरिपाकात्तत्प्राप्तिस्तथा भावनाया यथावदपरिपाकेन गुणमयदेहेन जातास्तास्तु आह्वानात् पूर्वमत्र गोपीदेहे दुःसहप्रेष्ठविरहतीव्रतापधुताशुभत्वेन ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्या क्षीणमङ्गलत्वेन प्रक्षीणबन्धना नष्टादृष्टप्रतिबन्धा अतोऽधुना कृष्णमुरलिकाह्वानसमये लीलाप्रवेशाय तद्योग्यस्वरूपात्मकदेहस्य नित्यसिद्धस्य सर्पारोपतिरोहितरज्जुवत् गुणात्मकदेहारोपतिरोहितत्वात्तदपवादाय कृष्णं ध्यातुमन्तर्गृहगतास्तत्रापि मीलितलोचनास्तथा तद्भावना युक्ता अत एव ध्यानविक्षेपकेन्द्रियनिरोधात्तद्भावनायुक्तत्वेन क्षोभकान्यान्तर्वासनाभावाच्चालब्धविनिर्गमा न लब्धो बहिः कस्मिंश्चिदपि विषये चित्तविनिर्गमो यासां तथाभूताः कृष्णं नित्यानन्दविग्रहं श्यामसुन्दरं मनःकर्षकं दध्युः ध्यानप्रभावेनैव गुणमयं देहं जहुः ततश्च तमेव श्यामसुन्दरं परमात्मानं सङ्गताः गुणमयदेहाभावात्सम्यक्प्राप्ताः ननु, जारबुद्ध्या कथं सङ्गतास्तत्राह, जारबुद्ध्यापीति । अङ्गारबुद्ध्या मणिमिव जारबुद्ध्यापि परमात्मानमेव सङ्गताः यद्वा, अपिनाबुद्ध्यनन्तरमपि द्योत्यते तथा च जारो रमणस्तद्बुद्ध्या परमात्मबुद्ध्या च सङ्गतास्तत्र परमात्मबुद्ध्या गुणमयदेहाभावो रमणबुद्ध्या रमणं च "तं यथा यथोपासते तदेव भवति" इति श्रुतेः नच परमात्मप्राप्तौ रमणासम्भवो वाच्यः "यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता" इति श्रुत्या तथाऽवगमात् अत्र जारशब्दो रमणमात्रवाची न तूपपत्तिविषयः अग्रे कान्तं विदुरित्युक्तेः पूर्वमपि "पतिं मे कुरु ते नमः" इति निर्देशात् यद्वा, काश्चिद्गोप्यो वंशध्वनिश्रवणोत्तरं पूर्वं प्रेष्ठविरहतापेन शुष्कदेहतया ध्वनिसौष्ठवमोहिततया चालब्धविनिर्गमा गन्तुमशक्ता अन्तर्गृहगता एव प्रथमं तद्भावनायुक्ता मीलितलोचनाः सत्यः कृष्णं दध्युः ततश्च ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्या यो दुःसहप्रेष्ठविरहेण देहशोषणहेतुभूतस्तीव्रतापः स एव धुतोऽशुभो यासां तासामन्याशुभासम्भवात् तयैव निर्वृत्या क्षीणानि गृहसौख्यप्रदान्यन्यानि मङ्गलानि भोगोपयोगिशृङ्गारसौष्ठवादीनि यासामिति वा तथा च धुततापत्वेन लब्धदेहसामर्थ्यत्यक्तसमस्तगृहकृत्याः सम्पन्नसर्वमङ्गलाः सत्यः आदौ जारबुद्ध्या सङ्गता अपि तां गुणभूतां जारबुद्धिं जहुः अथ च सर्वथा प्रतिबन्धाभावात्तं परमात्मानमेव गुणमयं देहं सम्यक्सुखकान्तधिया गताः निश्चेतनात्मकशरीरगुणैश्च हीन इत्यादिवचनात्तद्देहगुणयोः स्वरूपात्मकतया देहदेहिगुणगुणिविभागाभावात् । यद्वा, काश्चिद्गृहान्तर्गता अत एवालब्धविनिर्गमास्ततश्च दुःसहप्रेष्ठविरहतीव्रतापेन धुताः कम्पिताश्च ता एवासमन्ताच्छुभाः शुद्धा ध्यानं कर्तुं योग्याश्चातः कृष्णप्राप्तये कृष्णमेव नित्यं तद्भावनायुक्ता मीलितलोचना दध्युः ततश्च ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्या क्षीणमङ्गलाः सत्यः येन गुणमयदेहसम्बन्धेन, कृष्णे जारबुद्धिर्भवति स हेय इति व्यवस्य जारबुद्ध्या निमित्तभूतया गुणमयं देहं सीतासञ्ज्ञाभ्यां छायादेहत्यागवत्पतिसमन्यसमीपे जहुः ततः स्वयः प्रक्षीणबन्धना अप्राकृतदेहेन तमेव परमात्मानं सम्यग् गताः अत एवान्ते च वक्ष्यति

"नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः" ॥

इति ॥ ८—११ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

काश्चिच्चन्दनकुङ्कुमादिना भगवदङ्गसङ्गसम्भावनयाऽङ्गरागं कुर्वन्त्योऽत्युत्कण्ठया तल्लेपनम् हित्वा आकर्णकस्य प्रेष्ठस्य समीपं ययुः अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादिकं कुर्वन्त्यःस्नानाद्यवधदेहावेशादित्याग उक्तः कासाञ्चिद्गमनत्वरावेशवशाद्देहावयवविशेषाऽनुसन्धानाऽभावमाह—व्यत्यस्तेति । स्थानतः स्वरूपतश्चोर्ध्वाऽधोभावेन विपर्ययं प्राप्तानि वस्त्राभरणानि देहावयवविशेषाऽनुसन्धानाभावमाह—व्यत्यस्तेति । स्थानतः स्वरूपतश्चाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः "वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् । विभ्रमो हारमाल्यादिभूषास्थानविपर्ययः" इत्युक्तो विभ्रमाख्योऽनुभावोऽयम् अनेन भगवत्तुष्ट्यर्थं कर्म तदासक्तचेतसामन्यथा कृतमपि फलत्येवेति ध्वनितं निवृत्तिपक्षे

## श्रीधनपतिसूरिकृतगूढार्थदीपिका।

आगमनप्रकाराकाङ्क्षायां श्रुतिः "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" "सर्वापेक्षा च यज्ञादि श्रुतेः"(३।४।२६) इति श्रुतिसूत्राभ्यां सर्वकर्मणामिव संयोगपृथक्त्वन्यायेन तत्प्रतिपादकश्रुतीनामपि परमात्माभिमुख्यमाह—वृहत्त्य इति। "जुहुयाद्यजेत दद्यात्" इत्यादिश्रुतयस्तत्तत्कर्मफलप्राप्तिं प्रतिपादयन्ति अहोहं तत्फलं हित्वा तत्प्रतिपादने मुख्यं तात्पर्यं विहायाभियुः ब्रह्मणि समन्वयं गन्तुं प्रवृत्ताः "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतेः। काश्चित्तु समुत्सुकाः "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते, तद्यथेषीकातूलमग्नौ प्रोतम्प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्त" इत्याद्याः श्रुतयः। पयःस्थानीयं क्रियमाणं सञ्चितं च कर्माऽधिश्रित्य तत्परिपाकं तद्भोगपर्यन्तं प्रतीक्षानिन्यसम्प्रतिपाद्याभियुः "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्याद्याः अपराः परिपक्वगोधूमकणान्नस्थानीयं प्रारब्धकर्मानुद्धास्य भोगं विना तत्क्षयाभावं प्रतिपाद्य अपराः "सूर्याय जुष्टं निर्वपामि अग्नये जुष्टं निर्वपामि" इत्याद्यास्तत्तद्धविः परिवेषयन्त्यस्तत्र तात्पर्यं हित्वा तथा अपरा "अक्षय्यं वै चातुर्मास्ययाजिनः सुकृतं भवतिअपाम सोमममृता अभूम" इत्याद्याः शिशून्पयःस्थानीयं कर्मफलमक्षयत्वेन प्रतिपादयन्त्यस्तत्र तात्पर्यं हित्वा। यद्वा, सर्वकर्मा "सर्वकामः सर्वगन्धः सर्वरसः" इत्याद्याः परिवेषयन्त्यः "ऋतं पिबन्तौ सुकृतस्य लोके" इत्याद्याः पयःस्थापनीयसुकृतफलपानं चेतनकर्मकं प्रतिपादयन्त्यः काश्चित् "स होवाच प्राणोऽहमस्मि प्रज्ञात्मानं मामयुष्मन्तमित्युपास्स्व" इत्याद्याः पतीन्स्वर्गादिपतीन् इन्द्रादीन् प्रतिपादयन्त्यः तत्प्रतिपादनतात्पर्यं हित्वा काश्चित् "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः, मृत्युर्यस्योपसेचनं, क इत्था वेद यत्र सः" इत्याद्याः अन्यादिकर्तृकाशनं प्रतिपादयन्त्यः भोजनमृत्य्वादिरूपम् अपाद्य तत्प्रतिपादनं विहाय तथा अन्याः "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति" इत्याद्याः लिम्पन्त्यो लेपनमध्यारोपम्प्रतिपादयन्त्यः अन्या "अथात आदेशो नेति नेति नेह नानास्ति किञ्चन, अस्थूलमनणु" इत्याद्याः प्रमृजन्त्यः प्रकर्षेण मार्जनमपवादं प्रतिपादयन्त्यः काश्चन "अनीशया शोचति मुह्यमानः,यः सर्वज्ञः सर्ववित्,सर्वस्य वशी सर्वस्येशानः" इत्याद्याः लोचनस्थानीये जीवे सञ्जैतन्ये अञ्जयन्त्यः उपाधिमत्तया प्रतिपादयन्त्यः काश्चित्तु "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि तत्त्वमसि,अहं ब्रह्मास्मि" इत्याद्याः व्यत्यस्तवस्त्राभरणाः स्वस्वरूपाच्छादकम् अहं कर्तेत्यादिप्रतीत्यापादकं जीवत्वं वस्त्रस्थानीयम् ऐश्वर्याद्यलङ्कृतिप्रतीत्यापादकद्वारेण प्रतिपादिते वस्त्राभरणे याभिस्ता। यद्वा,व्यत्यस्तौ सम्यक् परिच्छिन्नौ वस्त्राभरणमीश्वरत्वस्थानीयं व्यस्तस्ते व्यस्तप्रतिस्थानीयौ आवरणविक्षेपौ याभिस्ता वृत्तयो बहिर्मुखतां विहायान्तर्मुख्या जाता इत्यपि द्रष्टव्यम् ॥ ७ ॥

ननु,—

"रक्षेत् कन्यां पिता कान्तां पतिः पुत्रस्तु वार्द्धके।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियः" ॥

इत्युक्त्या तासां रक्षकाणां विघ्नभूतानां सत्त्वे कथं कृष्णान्तिकं ययुरित्यादिशङ्क्य "त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो" ! इत्युक्तत्वात् कृष्णाकृष्टचेतसां न विघ्नाः भवन्तीत्याशयेनाह—ता इति। तत्र चतुर्विधा गोप्यः पद्मपुराणेऽभिहिताः—

"गोप्यस्तु श्रुतयः प्रोक्ता ऋषिजा गोपकन्यकाः।
देवकन्याश्च राजेन्द्र न मानुष्यः कथञ्चन" ॥

इति प्राकृतमानुषभावरहिताः तत्र गोपकन्याः काश्चिन्नित्यसिद्धाः काश्चित्साधनसिद्धाःतत्रनित्यसिद्धा आह्लादिनीशक्तिरूपाः "आनन्दचिन्मयरसप्रति भाविताभिस्ताभिः" इति ब्रह्मसंहितायामुक्तत्वात् ह्लादिनी या महा शक्तिरिति वृहद्गौतमीयाच्च तथा च सच्चिदानन्दघनः परमात्मा गोपालरूपमसङ्ख्यातगोपालिकारूपं चादाय क्रीडार्थं प्रकटिते गोलोके क्रीडति स चात्र ताभिः सार्द्धमवतीर्णस्ततस्तासां नित्यसिद्धत्वादिकमुच्यते द्वितीयास्तु काश्चित् गोपीजनवल्लभोपासनयाप्राक् गोपीभावं गोलोकं प्राप्य भगवता लब्धक्रीडा आश्रयावतीर्णाः काश्चित्सम्प्रति गोकुले एव गोपीभावाप्ताः पूर्वोपासनकात्यायनी व्रताचरणादिसाधनसिद्धत्वात्साधनसिद्धाः श्रुत्यादयस्तु सर्वा अपि साधनसिद्धा एव साधनं च प्रार्थनादि तदुक्तं वृहद्वामनपुराणे—

"कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयः" ॥
यथा त्वल्लोकवासिन्यः सकामत्वेन गोपिकाः।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा" ॥

इति ऋषीणां श्रीमद्रामचन्द्रप्रसादात् गोपिकाजन्मप्राप्तिरुक्ता पाद्मोत्तरखण्डे—

"पुरा महर्षयः सर्वे दण्डकारण्यवासिनः।
दृष्ट्वा रामं हरिं तत्र भोक्तुमिच्छन् स्वविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले।
हरिं सम्प्राप्तकामेन ततो मुक्ता भवार्णवात्" ॥

इति श्रीमद्राममवलोक्य स्वोपास्यगोपविग्रहं हरिंस्मृत्वा तमेव भोक्तुमिच्छावता लज्जाया तदवृतवता कल्पतरोरिवावदतोऽपि श्रीरामाभीष्टसिद्धिर्जातेत्यर्थः। सम्भवन्तु सुरस्त्रियः इति प्राग्भाषाय भगवदाराधनलब्धब्रह्माज्ञयाऽवतीर्णत्वाद्देवाङ्गनानां साधनसिद्धता तत्र "नैते सुरेशा ऋषयो न चैते" इत्युक्तत्वात्सुराणामृषीणाञ्च गोपालादिरूपेणावतीर्णत्वाद्देवाङ्गनाः स्वपतिभिर्देवैः विवाहादिकम् ऋषिचरीणां तु ऋषीणां दम्पतीरूपेणावतीर्णत्वात्स्वस्वरूपभूतैरेव पतिभिर्विवाहादिकं श्रुतीनां कासाञ्चित्तु तत्सम्प्रतिमाद्यर्थैः प्राप्तगोपालरूपैः भगवत्प्रतिपादकानां नित्यसिद्धगोपीनां च स्वसमानमायामयवैग्रहाणां गोपैः मायया प्रकटीकृतैर्गोपैः वा विवाहादिकं सञ्जातं तत्र ऋषिचर्यः भगवत्प्रतिपादिकाः श्रुतयश्च सर्वा अप्यऽभिज्ञाः साधनसिद्धगोपीनां देवकन्यानां च मध्ये काश्चिदभिज्ञाः काश्चिदनभिज्ञाश्च नित्यसिद्धानां मध्ये भगवत्सङ्कल्पाऽनुसारेण नरनाट्यमवलम्ब्यकाश्चिन्मानिन्यः काश्चिद्दाक्षिण्याः भगवत्स्वरूपप्रतिपादकश्रुतीनां मध्येपि मतनिरसना खण्डार्थाः गृहीतमानिनीस्वरूपाः अन्यास्तु गृहीतदाक्षिण्यारूपास्तत्रैवम्भूतानां गोपाङ्गनानां मध्ये काश्चित् पितृभिः काश्चित्पतिभिः काश्चिद्भ्रातृभिः काश्चिद्बन्धुभिः काश्चित्

अन्तर्गृहगताः काश्चिद्गोप्योऽलब्धविनिर्गमाः ।
कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥
दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

शुश्रैरित्यपि द्रष्टव्यं वार्यमाणा अपि न न्यवर्तन्त यतः गोविन्देन वोदोद्धारकेण गोलोकविहारिणां गवेन्द्रेण प्रेष्ठेन भगवता अपहृतः आत्मा अन्तःकरणं यासां ताः तथा चान्तःकरणारूढेन भगवता धृतानां तत्करणानां श्रोत्रं निवारणाकिञ्चित्करं भवोदधिपतितनौकायां स्थितस्य तिष्ठतिष्ठेति निवारणं यथा-ननुगयात्मधर्माद्यानाखंतःकरणं निरुह्य किमिति न निवृत्ता इत्यशङ्क्याह—मोहिता इति । भगवत्स्वरूपशक्तिः उक्तदशायाग-याऽनुसन्धाननिवर्तकं व्यामोहं गताः ननु तैः पित्रादिभिः सर्वथा किमिति न निवारिता इति वाऽऽशङ्क्याह मोहिता इति तथा चमूर्च्छांमृत्युरिवागन्तुं प्रवृत्ताः अतस्तैस्तन्मूर्च्छामरणादिभयाः न प्रसह्य वारिता इतिभावः । निवृत्तिपक्षे ता श्रुतयः पितृपत्यादिस्थानीयैः वैदिकवादाभिमानिभिर्वादिभिर्वार्यमाणाः गोविन्देन वेदैकगम्येन परमात्मना अपहृतात्मानः स्वीकृताभिप्रायाः न न्यवर्त्तन्त यतः मया परमप्रेयसप्रमायैव ऊहिताः वृत्तयोपि पित्रादिभिर्विपर्यस्तैर्वार्यमाणा अपि गोविन्दे विलीनस्वरूपाः प्रमया ऊहिता अनुकूलतर्कबलेन न्यवर्त्तन्त विषयाभिमुख्यं न प्राप्ताः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लिम्पन्त्यः देहे चन्दनादिनाऽनुलेपं कुर्वन्त्यः अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादिकुर्वन्त्यः व्यत्यस्तानि स्थानतः स्वरूपतश्चोर्द्ध्वाधो धारणेन विपर्ययं प्राप्तानि वस्त्राण्याभरणानि च यासां ताः कृष्णसमीपे ययुः अनेन कृष्णावेशितबुद्धिना कृष्णार्थं कर्मान्यथा कृतमपि कृष्णप्रियं भवतीति सूच्यते ॥ ७ ॥

श्रीकृष्णशङ्कैर्जनैः कृष्णप्रातिकूल्यविषया स्वजनाद्याप्युपेक्षणीयैवेति सूचयन् ता वार्यमाणाः अपि न न्यवर्तन्तेत्याह ता इति ॥ ८ ॥

---

### भाषा टीका ।

कोई गोपीं अपने शरीरमें केसरिया चन्दन को लगावती रहीं ते वीचही में चन्दन लगावनो छोडके चली आई कोई गोपी अपने शरीर में उबटनो लगावतीं रहीं ते उबटनो लगावनो छोड के चलीं आई, कोई सखी नेत्रन में काजर आंज तीं रहीं ते काजर आंजनो छांडके चली आई, और कोई कोई गोपी वसन भूषण अदल वदल कें पहिर आई जैसे कोई तो ऊपर ओढवे की ओढनी कूं कमर में पहिर कें लहगा को ऊपर ओढकें चलीं आई, कोई गोपी हाथन के भूषण पामन में और पांमन के भूषण हाथन में पहिर के श्रीकृष्णके समीप आवति भई ॥ ७ ॥

उन सब गोपीन कूं श्रीकृष्ण के समीप जायवे के समें पतीन ने रोकीं मातापितानने रोकी, भैया बन्धून ने रोकीं, परन्तु गोविन्द ने जिनको मन हरण कर लियो, ऐसी वे गोपी श्रीकृष्ण की माया में मोहित होय कें श्रीकृष्णचन्द्र के समीप जायवे तें निवृत्त नहीं होत भई । किन्तु अपने प्राण प्यारे नन्द दुलारे श्रीकृष्णचन्द्र के समीप गमन करती-भई ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न लब्धो निर्गमो याभिस्ताः प्रागपि तद्भावनायुक्तास्तदा नितरां दध्युरित्यर्थः ॥ ९ ॥

किञ्च, तदानीमेव तं परमात्मानं कृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरित्याह—श्लोकद्वयेन दुःसहेति । ननु, कथं जहुः ? परमात्मेति ज्ञानाभावादित्याशङ्क्याह, जारबुद्ध्यापीति । नहि वस्तुशक्तिर्बुद्धिमपेक्षते अन्यथा मत्यापि पीतामृतवदिति भावः । ननु, तदपि प्रारब्धकर्मबन्धने सति कथं जहुस्तत्राह, सद्यः प्रक्षीणबन्धना इति । ननु, कथं भोगमन्तरेण प्रारब्धं कर्म क्षीणं भोगेनैव सद्यः क्षीणमित्याह—दुःसहेति दुःसहो यः प्रेष्ठविरहस्तेन तीव्रस्तापस्तेन धुतानि गतान्यशुभानि यासां तदप्राप्तिपरमदुःखभोगेन पापं क्षीणमित्यर्थः । तथाध्यानेन प्राप्ता अच्युतस्य आश्लेषेण या निर्वृतिः परमसुखभोगस्तया क्षीणं मङ्गलं पुण्यबन्धनम् यासां ताः अतो ध्यानेन परमात्मप्राप्तेस्तत्कालसुखदुःखाभ्यां निःशेषकर्मक्षयाद्गुणमयं देहं जहुरिति ॥ १० ॥ ११ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यदि च तास्ताहशविघ्नेन निवारिता अभविष्यन् तर्हि सद्य एव दशमीदशामगमिष्यन्निति तासां सर्वासामेव भावविशेषं दृष्टान्तेनैव प्रदर्शयन् कासाञ्चिद्दयस्याविशेषमाह—अन्तरितित्रिभिः । काश्चित् महालक्ष्म्यंशभूताः साधनसिद्धा वा गृहमध्यस्थिता एव नाममात्रपत्यादिभिः द्वारादिनिरोधात् पित्रादीनां द्वारदेशोपवेशाद्वा न लब्धो विशिष्टः श्रीभगवदभिसरणयोगः । यद्वा, अन्यगोपीवत् वीनां पक्षिणामिवातिशीघ्रगमनार्थं निर्गमः बहिर्निःसरणं पन्था वा । यद्वा, वेः पक्षिणोऽपि निर्गमो

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

यस्मात् छिद्रात्ताहशमपि याभिस्ताः अत एव कृष्णं निजचित्ताकर्षकं परमानन्दघनमूर्त्तिं वा दध्युर्विशेषतश्चिन्तयामासुः "ध्येयमापदि" इत्याद्युक्तन्यायेन तन्महापन्निस्तारार्थम् अभीष्टाप्राप्त्या स्वतएव तच्चिन्ताविशेषोत्पत्तेः कथंदध्युः?तस्य प्रस्तुतस्य श्रीकृष्णेन सह विलासस्य किं वा सुगोप्यस्य सम्भोगस्य या भावना तया युक्ताः संयुक्ताः योगवत्यो वा सत्यः। किञ्च, मीलितलोचनाः अर्द्धमुद्रितनेत्राः सत्य इत्यर्थः । यद्वा, दुःखविशेषेण ध्यानावेशेन वा मुद्रितनेत्राः सत्यः । यद्वा, मीलितमन्तर्हितं लोचनम् अन्याशेषज्ञानं यासां तथाभूताः सत्यः ॥ ९ ॥

ततश्च सद्य एव श्रीकृष्णेन सह संयोगं प्राप्ता इत्याह—दुःसहेति द्वाभ्याम् । ध्यानेन विशेषतस्तद्रूपगुणादिपरिस्फूर्त्या दुःसहःप्रेष्ठविरहः अत एव तेन तीव्रतापः तेन धुता ऽशुभा परमात्मानमपि तं कृष्णं जारबुद्ध्यैव प्रेमाग्निविशेषेण सदा जरयतीति जार उपपतिस्तद्बुद्ध्या सङ्गताः सम्यक् प्राप्ताः तेन सहमिलिता इत्यर्थः इति नित्यपरमप्रेमसङ्गोऽभिप्रेतः । कथं गुणमयं देहं जहुः किन्तु गुणातीतं नित्यभगवत्प्रेमसङ्गति योग्यं देहं प्रापुरित्यर्थः । सच्चिदानन्दघनरूपप्राप्त्या सङ्गता इति भावः । सङ्गतिश्च नित्यवक्षःस्थलस्थश्रीवत् महाशक्त्यादि यद्वा नित्यसंयोगलक्षणा ज्ञेया तत्रापि जारबुद्ध्या सङ्गतत्वाद्विशेषः कश्चिदूह्यः तथा चोद्धवद्वारा श्रीभगवदुक्तौ "या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः । अलब्धरासाः कल्याणो मापुर्मद्वीर्यचिन्तये ॥ " इति अत्र च कल्याणय इत्यनेन मद्वीर्यचिन्तयेत्यनेन च प्राप्तिविशेष एवाभिप्रेतः तथाग्रे तत्रैव व्यक्तं भावि अन्यत्तैर्व्यञ्जितमेव तत्र दुःसहशब्देन तीव्रशब्देन च अनन्तकोटिकल्पेषु महानरकादिभोगैर्यावांस्तापः ततोपि कोटिगुणस्तापः सूच्यते तथा अच्युतशब्देन निवृत्तिशब्देन च अनन्तकोटिकल्पेषु सार्वभौमस्वाराज्यादि भोगैर्यत्सुखं मोक्षसुखं च ततोधिकमपि तत्सुखं ध्वन्यते श्रीभगवदाश्लेषसुखमहोदधेस्तत्सर्वस्य कणामात्ररूपत्वात् तत्र च श्रीभगवत्सम्बन्धेन तत्तद्वासनाक्षयोपि ज्ञेयः अत एव प्रक्षीणेति प्रशब्दः तथा अशुभं नाम भगवन्नित्यसंयोगप्रतिबन्धककर्म विशेष एव मङ्गलं च मानादिषु श्रीभगवदनुनयादिजन्यसुखविशेषहेतुः सत्कर्मविशेषः तत्क्षत् प्रक्षयश्च नित्यसंयोगसिद्धेः अत एव विरहेण मानादिना च सम्पद्यमानप्रेमानन्दविशेषाभावात् तासामत्र स्थिताभ्योऽन्याभ्यः सौभाग्येन्यतोक्षा अथवा ततश्च सर्वसद्गुणमयमपि देहं सद्यो जहुः पत्यादिभिर्गृहान्तर्निरुद्धेन तेन श्रीकृष्णाप्राप्तेः अतस्तद्योग्यदेहान्तरेण तं श्रीव्रजेन्द्रकिशोरमेव सङ्गता इत्यर्थः । कुतः परमात्मानं परमप्रियमित्यर्थः । तत्र हेतुः जारबुद्ध्येति । अन्यरसमानं यद्वा ध्यानप्रभावेन सद्यः प्रकर्षेण क्षीणानि बन्धनानि पत्यादिकृतद्वारबन्धादीनि यासां तथाभूता अपि किञ्चध्याने ध्यानेन वा हेतुना प्राप्तः सङ्गतो योऽच्युतः विरहेपि च्युतिरहितो भगवान् श्रीकृष्णस्तस्य किं वा अच्युतेन अविच्छिन्नेन अर्थात् प्रेष्ठस्यैवाश्लेषेण या निर्वृत्तिः परमसुखं आश्लेषरूपा निर्वृत्तिर्वा तया ध्यानविशेषेणैव साक्षात्संभोगसुखमयत्वेन प्रतीयमानया निर्वृत्या विशिष्टा अपि गुणमयं सर्वसद्गुणमयमपि देहं जहुः तत्र हेतुः दुःसहो यः प्रेष्ठस्य प्रियतमस्य श्रीकृष्णस्य विरहस्तेन यस्तीव्रतापः अन्तर्महाज्वरः तेन धुता निरस्ता आशु शीघ्रं यद्वा आशुः अभिनवा भा कान्तिर्यासां ताः किञ्च क्षीणमङ्गलाः अन्तर्गृहे निरोधाय पत्यादिभिर्धारणाद्विना बहिर्निस्सरणार्थोद्यमे भित्तिकपाटादिसंसर्गेण वा नष्टतिलकपत्रावलीमाल्यादिमङ्गलाः महोत्तापजर्जरत्वात् कान्तिविनाशेन तिलकादिक्षयेण च तादृङ्मालिनप्रक्षीण देहस्य श्रीभगवत्सेवायामयोग्यत्वमननादित्यर्थः । यद्वा ध्यान प्राप्ताच्युताश्लेषनिर्वृत्या अक्षीणं क्षयमप्राप्तं मङ्गलं सर्वाभीष्टप्रापकसत्कर्मशेषफलं रासक्रीडादिलक्षणं वा यासां तथैवाशेषरतिसुखसिद्धेः तथाभूता अपि जहुः कुतः दुःसहप्रेष्ठविरहतीव्रतापेन धुतं धुतिर्निधूननं पीडनमिति यावत् तदेवाशुभमङ्गलं महादौर्भाग्यं यासां ताः क्षणमपि महाकल्पकोट्यधिकं कुर्वाणात्तस्माद्समोद्धं दुःखभरान्महाभीतेरित्यर्थः ।यद्वा धुता कम्पिता अपगता आशुरविलम्बात्तात्कालिकी भा प्रतिभा अत्यन्तविरहतापेन विचारापगमादिति भावः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यदि च तास्ताहशविघ्नेन वारिता अभविष्यन् तर्हि सद्य एव दशमीदशामिव दशामगमिष्यन्निति तासां सर्वासामेव भावविशेषं दृष्टान्तेन प्रदर्शयन् तासां प्रस्थितवतीनामेव मध्ये कासाञ्चिदवस्थाविशेषमाह—अन्तरिति त्रिभिः । अयमर्थः श्रीकृष्णस्य व्रजे प्रेयस्यः खलु द्विविधा । नित्यसिद्धाः साधनसिद्धाश्च तत्रैकासां नित्यसिद्धात्वमष्टादशाक्षरादौ(आ)ताभिर्विशिष्टत्वेनैव तदाराधनविधानाद्व्यक्तं तच्छ्रुतीनां तदाराधनानां चानाद्यनन्तभावित्वात् अतो ब्रह्मसंहितायाम्—

"चिन्तामणिप्रकरसद्मसुकल्पवृक्ष-
लक्षावृतेषु सुरभीरभिपालयन्तम् ।
लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानम्"इति ॥
आनन्दचिन्मयरसप्रतिभाविताभिः ।
स्ताभिर्य एवनिजरूपतया कलाभिः ।
गोलोक एव निवसत ॥

इति । "श्रियः कान्ताः कान्तः परमपुरुष" इत्येता एव तदीयलक्ष्मीत्वेनोक्ताः तत्र च श्रीराधिकाया वैशिष्ट्यं वृहद्गौतमीये—

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनीपरा" ॥ इति ।

अत एव ऋक्परिशिष्टे परस्परमव्यभिचारित्वं प्रोक्तम् "राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्तेजनेष्वा" इति । अतो मात्स्यादौ "रुक्मिणीद्वारवत्यां तु राधा वृन्दावने वने"इति शक्तित्वसाधारण्येनानयोर्गणनेऽपि वैशिष्ट्यं ज्ञेयम् अपरासां साधनसिद्धत्वं यथा पाद्मोत्तरखण्डे—

"पुरा महर्षयः सर्वे दण्डकारण्यवासिनः ।
दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्" ॥ इति ।

गोकुल इत्यस्य हरिं सम्प्राप्येत्यत्राप्यन्वयात् "ये यथा मां प्रपद्यन्ते"इति न्यायाच्च महर्षयः पूर्वं ताहृग्भावेन श्रीकृष्णो-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पासका इत्यर्थः । अतो रामं दृष्ट्वेति सारूप्येण ज्ञानस्योपासना-संस्काराः हरिं स्वोपास्यं श्रीकृष्णमेवोपभोक्तुमैच्छन् लज्जया तु साक्षान्न वृतवन्तः ततश्च कल्पवृक्षस्येवावदतोऽपि श्रीरामस्य प्रसादात् तेषामिष्टसिद्धिर्जातेत्याह—तं सर्व इति । गोकुले गर्भतः स्त्रीत्वमापन्ना गोकुल एव समुद्भूताः गोकुल एव च हरिं श्रीकृष्णं कामेन स्वचामनानुसारेण सम्प्राप्य तस्मिन्नन्तर्गृहे एव स्वयमाविर्भूतं लब्ध्वा ततस्तदनन्तरमेव भवार्णवात् मुक्ता इति, न च वक्तव्यं गोकुलजातानां प्रापञ्चिकदेहादित्वं न सम्भवतीति अवतारलीलायाः प्रापञ्चिकमिश्रत्वात् श्रीदेवकीदेव्यामपि षड्गर्भसञ्ज्ञकानां जन्म श्रूयते इति कदाचित् श्रुतयो गोप्यो जाता इति वृहद्वामनप्रसिद्धिः अत एव तथा व्याख्यास्यते—

"स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो-
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः" ॥

इति गायत्री च तासु जातेति पाद्मे सृष्टिखण्डे यथा ब्रह्मणा-गोपकन्यारूपाया गायत्र्या उद्वाहे गोपेषु श्रीविष्णुवचनम्—

"मया ज्ञाता ततः कन्या दत्ता चैषा विरिञ्चये ।
युष्माकं च कुले चाहं देवकार्यार्थसिद्धये ॥
अवतारं करिष्यामि मत्कान्ता तु भविष्यति" ।

इति । अतः "तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः" इत्यत्रापि तथा व्याख्यातम् अत एव तासां च चतुर्विधत्वमुक्तं पाद्मे—

"गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः ।
देवकन्याश्च राजेन्द्र ! न मानुष्यः कथञ्चन" ॥ इति ।

अत्र गोपकन्या एव नित्याः न मानुष्यः कथञ्चनेति प्राकृत-मानुषत्वनिषेधात् आसु च पाद्मोत्तरखण्डनिर्दिष्टानामन्तर्गृहगता इत्युक्तानामप्येकत्वं मुक्तत्वसादृश्येन लब्धानां लभ्यते यत एव "शुश्रूषन्त्यः पतीन्काश्चित्"इति प्रोक्ताः इति ज्ञेयाः आसां दोहनादि प्रयक्तकर्मानुक्तेः अन्तर्गृहगतत्वस्य पतिशुश्रूषायामेव तात्-पर्य्याच्च एतासां च साधकत्वं देहत्यागश्रवणात् पाद्मोत्तर-खण्डाच्च कल्प्यते तथा च सति याः काश्चिद् गोकुले समुद्-भूताः साधनवशात् सिद्धपूर्णभावा न तु सिद्धदेहा नितरामन्या इव नित्यसिद्धाः पतिशुश्रूषणार्थमन्तर्गृहगता एव पत्यादिभिः साग्रहद्वारादिनिरोधात् न लब्धो विशेषेण केनाऽपि प्रकारेण निर्गमो याभिस्ताः अत्र तासां साक्षाद्गोविन्दसङ्गमे तादृश-देहस्थितेरेव विघ्नत्वात् पूर्ववत्सङ्गतेः पतिशैथिल्यविधानादावप्र-वृत्तिरिति ज्ञेयम् अलब्धनिर्गमत्वादेव तद्भावनायुक्तास्तस्मिन् श्रीकृष्णे समुत्कण्ठितचित्ताः सत्यः कृष्णं निर्जाचित्तापकर्षकं तमेव दध्युर्ध्यातवत्यः तत्रानुभावमाह—दुःखविशेषेण ध्यानावे-शेन च मुद्रितनेत्राः । यद्वा, मीलितमन्तर्हितं लोचनमन्याक्षेप-ज्ञानं यासां ताः ॥ ९ ॥

ततश्च सद्य एव श्रीकृष्णेन सह संयोगंप्राप्ता इत्याहुः, दुःसहेति युग्मकेन । तत्रोत्कण्ठापरिणामं दुःसहेत्यर्द्धेन ध्यानपरिणामं ध्याने त्यर्द्धेनाह—उत्कण्ठया दुःसहप्रेष्ठविरहः विप्रलम्भाख्यो भावः तेन तीव्रतापः तेन धुताऽशुभाः ध्यानेन हेतुना प्राप्ता याऽच्युतस्य निज-भक्तेषु च्युतरहितत्वेन प्रसिद्धस्याश्लेषनिर्वृतिः तया क्षीणमङ्गलाः अत्र दुःसहशब्देन तीव्रशब्देन च दुःखस्य पराकाष्ठा दर्शिता अच्युतशब्देन निर्वृतिशब्देन च सुखस्य अशुभं भगवन्नित्य-संयोगप्राप्तिप्राचीनदशायां दुःखजनिका तद्विरहस्फूर्त्तिः मङ्गलं च तद्दशायामेव सुखजनिका प्राप्तव्यतत्संयोगस्फूर्त्तिः यावतीभ्यां ताभ्यां वृत्तिभ्यामेव प्रौढभावः साधकः सिद्ध्यति ताव-त्योश्च तयोः शनैर्भोगययोरपि सम्प्रति युगपदेव भोगो जात इति धुनत्वं क्षीणत्वं चोक्तम् ॥ १० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दुःसहेत्यादिना प्रारब्धकर्मक्षयप्रकार उच्यते—क्षीणमङ्गला क्षीणपुण्याः ॥ १०–१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काश्चिद्गोप्यस्त्वन्तर्गृहगताः पतिभिरन्तर्गृहनिरुद्धा इत्यर्थः अत एव न लब्धो निर्गमो यासां ताः प्रागपि कृष्णभावना-युक्तास्तदा नितरां कृष्णं दध्युः ध्यातवत्यः कथम्भूताः मीलिते लोचने याभिस्तथाभूताः ॥ ९ ॥

एवं ध्यातवतीनां प्रारब्धकर्मक्षयपूर्वकभगवत्प्राप्तिमाह—द्वाभ्यां दुस्सहेति । दुःखेनापि सोढुमशक्यो यः प्रियतमस्य कृष्णस्य विरहः तेन यस्तीव्रतापः तेन धुताः निरस्ताः अशुभाः प्रारब्धपापकर्माणि यासां ध्यानेन प्राप्तो योऽच्युतस्याश्लेष-स्तेन या निर्वृतिरानन्दस्तया क्षीणानि मङ्गलानि प्रारब्ध-पुण्यानि यासां तथाभूताः ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अलब्धविनिर्गमाः न लब्धं विनिर्गमनं याभिस्तास्तथा तस्य कृष्णस्य भावनया भक्तिसंस्कारेण युक्ताः ॥ ९ ॥

काश्चन ताः स्त्रियः गुणमयं सत्त्वादिगुणविकृतदेहं जहु-रित्यन्वयः । अयं देहत्यागः संसारिण इव न किन्तु मुच्यमान-स्यैवेत्याह—सद्य इति । बन्धनध्वंसोऽपि प्रारब्धपुण्यपापप्रणाशेन दृष्टत्वात्तत्रापि तथैवेत्याह,दुःसहेति।दुःसहः सोढुमशक्यः प्रेष्ठस्य कृष्णस्य विरहः सांसारिको वियोगस्तेनोत्पन्नस्तीव्रतापः अत्यु-त्कटज्वरानुभवः तेन धुताशुभाः निरस्तपापाः ध्यानेन प्राप्तः अच्युतस्याश्लेषः ध्यानप्राप्ताच्युताश्लेषः तेन उद्भूतया निर्वृत्या स्वरू-पानन्दाविर्भावलक्षणया क्षीणानि प्रारब्धानि मङ्गलानि पुण्यानि याभिस्तास्तथा ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्तरित्याद्यष्टकम् ॥ ९—१७ ॥

---

श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

अपत्यवत्यस्तु अधिकाराभावात्तद्वपुर्हित्वा वपुरन्तरेण सद्य एव तत्र गता इति दर्शयन्नाह—अन्तर्गृहगता इत्यादित्रिभिः । काश्चिद अपत्यवत्यो ऽनधिकारवत्यः दैवादन्तर्गृहगताः अन-

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

धिकारित्वेनाङ्गसङ्गाऽयोग्या अपि दर्शनमात्रकाङ्क्षया यद्दिगंन्तुमिच्छन्त्यो ऽप्यलब्धविनिर्गमाः तद्भावनायुक्ताः सत्यः कृष्णं दध्युर्भावनाचिह्नमाह-मीलितलोचनाः ॥ ९ ॥

दुःसहेन प्रेष्ठस्य श्रीकृष्णस्य विरहेण तीव्रतापस्तेन धुतानि अशुभानि यासां तेनाशुभकर्मक्षयः ध्याने प्राप्तो यः अच्युतस्याऽऽश्लेषः तत्कृतया निर्वृत्या क्षीणानि मङ्गलानि शुभकर्माणि यासां तास्तथाऽनेन शुभकर्मक्षयः यावद्दुःखक्षय एकेन कृष्णविरहदुःखेन जात इति तद्विरहस्य दुःखत्वाधिक्यम् एवं यावत्सुखक्षय एकेन कृष्णस्य ध्यानानन्देन जात इति तद्ध्यानानन्दस्य सर्वसुखातिरिक्तत्वम् व्यङ्ग्यम् ॥ १० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं दशविधानां भगवत्समीपगतिमुक्त्वा यासां काल: प्रतिबन्धकः पूर्वमेव भक्तियुक्तास्ता भजनानन्दमननुभूयैव प्रतिबद्धा एव भगवत्सायुज्यं प्राप्तवत्य इत्याह—अन्तर्गृहगता इति त्रिभिः । दैवगत्या काश्चिद्गृहमध्ये स्थिताः गोपभार्याः चातुर्यानभिज्ञाः अप्रौढाः पतिसहिताः पतिभिरेव संरक्षिताः अलब्धविनिर्गमा जाताः ततः प्रतिबन्धनिवृत्त्यर्थं कृष्णमेव ध्यातवत्यः परं तद्भावनायुक्ताः भगवान् जारः स्वयमभिसारिका इति अन्यथा प्रतिबन्धो न स्यात् तादृश्योऽपि मीलितलोचनाः सत्यो भगवन्तं दध्युः ध्यातवत्यः ततो मुक्ता जाताः ॥ ९ ॥

ननु, तत्र ज्ञानाभावात् विहितभक्त्यभावात् भगवतोऽपि सान्निध्याभावात्कथम्मुक्ता इत्याशङ्क्य कर्मक्षयात् मुक्ता इति वक्तुं कर्मक्षयप्रकारमाह—दुःसहेति । दुःसहो यः प्रेष्ठविरहः स एव महानग्निः तस्य यस्तीव्रः तापः तेन धुतानि निर्धूनानि ज्वालितानि भस्मसात्कृतानि अशुभानि यासां फलभोगं कर्म क्षीयत इत्यविवादं कोटिब्रह्मकल्पेषु कुम्भीपाकादिनरकेषु यावत् दुःखम्भवेत् तावद्दुःखं भगवद्विरहे क्षणमात्रेण जातं ततः सर्वपापफलभोगः समाप्तः । पुण्यक्षयप्रकारमाह—ध्यानप्राप्तेति । सर्वपापक्षये भगवान् ध्याने प्राप्तः अच्युतः परमात्मा न तु समागतोऽपि जारत्वेन अन्यथा ततोऽपि कर्मशेषः स्यात् तस्य योऽयमाश्लेषः तेन या निर्वृतिः तया क्षीणं मङ्गलं पुण्यम् यासां कोटिब्रह्मकल्पेषु स्वर्गादिलोकेषु यावत्सुखमनुभूयते तावद्भगवदाश्लेषे क्षणमात्रेणैवानुभूतम् अतः पुण्यक्षयोऽपि जातः ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्रोज्ज्वलनीलमणयुक्तरीत्या विविच्यन्ते गोप्यस्ताश्चद्विविधाः नित्यसिद्धा साधनसिद्धाश्च, साधनसिद्धाश्च द्विविधाः यौथिक्यो ऽयौथिकयश्च यौथिक्यश्च द्विविधाः श्रुतियूथभूतत्वात् श्रुतिचर्यः ऋषियूथभूतत्वादृषिचर्यश्च ततस्तासां चतुर्विधत्वमुक्तं पाद्मे—

> "गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः ।
> देवकन्याश्च राजेन्द्र ! न मानुष्यः कथञ्चन" ॥ इति ।

गोपीत्वेनैव मानुषत्वे लब्धेऽपि न मानुष्य इति निषेधस्तासां प्राकृतमानुषत्वाभावं ज्ञापयति अत्र गोपकन्यका एव नित्यसिद्धास्तासां साधनाश्रवणात् गोपीत्वे सत्यपि कात्यायन्यर्चनस्य तु साधनत्वं नरलीलत्वमेव ज्ञापयति गोपीत्वस्य सिद्धत्वाद्देवीनि तत्प्रसङ्ग एव प्रपञ्चितं तासां नित्यसिद्धत्वन्तु "आनन्दचिन्मयरसप्रतिभाविताभिः"इति ब्रह्मसंहितोक्त्या तासां ह्लादिनीशक्तित्वप्रतिपादनात् "ह्लादिनी या महाशक्तिः" इति बृहद्गौतमीयाच्च ताभिः सह कृष्णस्य रमणस्यानादित्वाच्च दशाष्टादशाक्षरादिमन्त्रेषु तासां निर्देशात् तन्मन्त्रोपासनानां तद्विधायकश्रुतीनां चानाद्यतत्कालभावित्वाच्च "सम्भवन्त्वमरस्त्रियः"इति प्रमाणात्तत्रगतानां देवकन्यानां नित्यसिद्धगोपिकांशभूतत्वं व्याख्यातमुज्ज्वलनीलमणौ श्रुतिचरीणां साधनसिद्धत्वम्—

> "कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
> कामिनी भावमासाद्य स्मरक्षुब्धान्यसंशयः ॥
> यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
> भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा" ॥

इत्यादि बृहद्वामनवचनेभ्योऽवगतम् ऋषिचरीणां च "गोपालोपासकाः पूर्वमप्राप्ताभीष्टसिद्धयः" इत्युज्ज्वलनीलमणयुक्तानां तथा भूतत्वं "पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहं । ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले । हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवात्" इति पाद्मोत्तरखण्डात् । अत्र रामं दृष्ट्वा हरिं भोक्तुमैच्छन्निति रामसौन्दर्यदर्शनेन स्वोपास्यस्य हरेः गोपालस्य स्मरणात्तमेव भोक्तुमैच्छन्नित्यर्थः लज्जया तु साक्षात्तं न वृतवन्त्यः ततश्च कल्पवृक्षस्येवास्यतोऽपि श्रीरामस्य प्रसादात्तेषामभिष्टसिद्धिर्जातेत्याह-ते सर्वे इति । हरिं कामेन सम्प्राप्येत्यनुसंहितं फलं ततः कामादेव हेतोर्भवार्णवात् संसारान्मुक्ता इत्यननुसंहितं फलम् अत्र "मातरः पितरः पुत्राः" इति "यत्पत्यपत्यसुहृदामनुवृत्तिः" इति "पतिसुतान्वयभ्रातृबान्धवान्" इत्याद्यग्रिमग्रन्थदृष्टेरपत्यवत्यो गोप्य एवान्तर्गृहनिरुद्धा बभूवुरिति श्रीकविकर्णपूरगोस्वामिकृतदशमस्कन्धटीकायां दृष्टमतस्तदनुसारेण सार्वत्रिकं मूलार्थमव्याप्यैव व्याख्यायते अत्रेदं तत्त्वं गोपालोपासका ऋषयस्ते श्रीराममूर्तिमाधुरीदर्शनाद्रागमयशक्तेर्निष्ठारुच्यासक्तिरत्यङ्कुरभूमिका आरूढाः सम्यगपरिपक्वकषाया अपि श्रीयोगमायया देव्या गोकुलमानीय गोपीगर्भे जनिताः कन्यका बभूवुःतासामेव मध्ये काश्चिन्नित्यसिद्धगोपीसङ्गभूम्ना वयःसन्धिदशामारभ्यैव लब्धपूर्वानुरागाः स्फूर्त्तिप्राप्तकृष्णाङ्गसङ्गाः दग्धसम्यक्कषायाः प्रेमस्नेहादिभूमिका आरूढा गोपैर्व्यूढा अपि योगमाययैव तदङ्गस्पर्शदोषाद्रहिताश्चिन्मयदेहीभूताः कृष्णोपभुक्तास्तस्यां रात्रौ वेणुवादनसमये पतिभिर्वार्यमाणा अपि योगमायया साहाय्यप्रसादान्नित्यसिद्धगोपीभिः सहिता एव प्रेष्ठमभिसस्रुः काश्चित्तु नित्यसिद्धादिगोपीसङ्गभाग्याभावादलब्धप्रेमत्वाददग्धकषाया गोपैर्व्यूढा गोपोपभुक्ता अपत्यवत्यो बभूवुः ताः खलु तदनन्तरमेव नित्यसिद्धादिगोपीसङ्गभूम्ना कृष्णाङ्गसङ्गस्पृहोद्रेकात् पूर्वरागवत्यस्तासां कृपापात्रीभवन्त्योऽपि कृष्णाङ्गसङ्गायोग्यदेहत्वेन योगमायया साहाय्याऽकरणात् पतिभिर्वारिताः कृष्णमभिसर्तुमक्षमाः महाविपद्ग्रस्ताः पतिभ्रातृपित्रादीन् स्वप्राणवैरित्वेन पश्यन्त्यो मरणदशायामुपस्थितायां सत्यां यथान्या मात्रादिस्वबन्धुजनं स्मरन्ति तथैव स्व-

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

प्राणैकबन्धुं कृष्णं सस्मरुरित्याह—अन्तरिति। न लब्धो विनिर्गमो याभिस्ता इति पतिभिर्द्वारध्येव सतर्जनं सपण्डिकमुपविष्टत्वादिति भावः। सदैव तद्भावनयायुक्ता अपि तदानीं दध्युः हा हा प्राणैकबन्धो! वृन्दावनकलानिधे! जन्मान्तरेऽपि त्वत्प्रेयसी भूयास मधिमक्षन्तकाले त्वन्मुखचन्द्रं चक्षुषा नाऽपश्यं भवतु मनसाऽपि पश्यानीति प्रत्येकं स्वगतमनुलपन्त्यो मुद्रितलोचना सत्यो नितरां दध्युः ॥ ९ ॥

अत्र गोपीनां प्राप्यमतिरहस्यं वस्तु बहिरङ्गलोकेभ्यो गोपयं स्तान् प्रतिबाह्यमर्थमन्तरङ्गान् भक्तिसिद्धान्तविज्ञान् प्रति तु स्वाभीप्सितमाभ्यन्तरमेवार्थं ज्ञापयंस्तन्त्रेणाह—दुःसहेति। तत्र बहिर्मुखान् प्रति ताभ्यः कृष्णो मोक्षं ददावित्याह—दुःसहो यः प्रेष्ठविरहस्तेन तीव्रतापस्तेन धुतानि गतानि अशुभानि यासां ताः ध्यानेन प्राप्तस्याच्युतस्याश्लेषेण या निर्वृतिरानन्दस्तया क्षीणं मङ्गलं पुण्यं यासां ताः अतः प्रक्षीणप्रारब्धबन्धनाः जारबुद्ध्यापि तमेव परमात्मानं प्राप्ता देहं जहुरिति अन्तर्मुखान् प्रति तु तदानीं स्वप्रेष्ठविरहसंयोगोत्थानि दुःखसुखान्यपरिमितानि प्राप्य लब्धमनोरथा एव ताः क्रमेण बभूवुरित्याह—दुःसहेन प्रेष्ठविरहेण यस्तीव्रस्तापस्तेन धुतानि कम्पितीकृतान्यशुभानि याभिस्ता यासां प्रेष्ठविरहतापस्य तीव्रतां वीक्ष्य कोटिब्रह्माण्डस्थरौरवनरकदावानलमहाकालकूटादिरूपाणि परःसहस्राण्यपि अशुभानि स्वतीव्रताहङ्कारं परित्यज्य स्वपराजयबुद्ध्या चकम्पिरे इत्यर्थः। ध्यानेन प्राप्तः स्फूर्त्या आगतो यो ऽच्युतस्तेन तदैवाङ्गतस्य तस्य प्रेमपूर्णचिन्मयस्य तादृशस्वभावाभिमानादिमतो देहस्य यः श्लेषस्तेन श्लेषेण या निर्वृतिस्तया क्षीणानि कृशीभूतानि मङ्गलानि प्राकृताऽप्राकृतानि यासां ताः यासां स्फूर्तिप्राप्तप्रेष्ठाश्लेषोत्थसुखं वीक्ष्य कोटिब्रह्माण्डगतविषयसुखानिर्विषयब्रह्मानुभवसुखसहस्राणि मङ्गलशब्दवाच्यानि क्षीणानि यदपेक्षया निकृष्टान्येव बभूवुरित्यर्थः। भगवद्विरहसंयोगोत्थदुःखसुखाभ्यां प्रारब्धपापपुण्यानि नष्टानि तेषां स्वफलभोगैकनाश्यत्वादिति व्याख्या तु वैष्णवानां मते न युज्यते ॥ १० ॥

---

### विशुद्धरसदीपिका।

एवं च श्रुतिमुनिरूपाणां मध्ये काश्चिन्निर्जितकषाया निराबाधा बभूवुरित्युक्तम्. इदानीं कासाञ्चन दुष्पचेतमदशां गतवति कषाये तदाभासे वा भक्तिप्रभावाजगिमन्तर्येव सिद्धशरीरासादनपूर्विका नित्यप्राप्तिमाह—अन्तरिति त्रिभिः। तत्रान्तर्गृहगता इति पत्यादिपरिचरणं लिङ्गं किं वा तद्दर्शनादिष्वौदासीन्येन सदैवान्तःस्थितिप्रदर्शनाय तथोक्तं किं वा मुनिचरीत्वेन प्राक्तनसंस्कारवशात्तद्ध्याननिष्ठत्वप्रदर्शनाय तत एव च पत्यादिभिस्तद्व्यापारैः सावधानैरपि रुधीयत इति गम्यते वारयमाणा इत्याद्युक्तेः एते च तदुत्कण्ठावर्द्धनार्थं योगमायाकल्पिता एव तत्कल्पितव्रजाङ्गनावादिति गम्यम् अन्यथा तद्रोधनाकृतो लोकापवादो दुर्वार एव स्यादिति ध्येयम् तथा तत्त्यक्तदेहानामप्यस्तद्दोषतं तथैव ज्ञेयम् यावद्दम्भासुरशरीरान्तस्त्यागप-वत् तदेवं याः काश्चित्साधनवशात्सिद्धपूर्णभावा न तु सिद्धदेहा नितरामन्या इव नित्यसिद्धास्तासामवस्थेयमिति ज्ञेयम् श्लोकार्थोऽयं गृहस्यान्तरित्यन्तर्गृहम् यद्वा, अन्तः अन्तःकरणे गृहगता गृहाभ्यन्तरे गता वयमिति भावो यासां ताः तद्भावना युक्ता इति निर्देशात् एवञ्च भावनयैव चालब्धविनिर्गमाः सत्यः कृष्णं स्वचित्ताकर्षकपूर्णानन्दस्वरूपं श्यामसुन्दरं दध्युर्ध्यातवत्यः कथमित्यपेक्षायामाह—मीलितलोचना इति। इदमेव प्राग्भवीयमुनिचरत्वे लिङ्गम्—

> "एतेऽलिनस्तव यशो ऽखिललोकतीर्थ—
> गायन्त आदिपुरुषानुपदं भजन्ते ॥
> प्रायो अमी मुनिगणा भवदीयमुख्या—
> गूढं वनेऽपि न जहत्यनघात्मदैवी ॥

इत्यादिवत् ॥ ९ ॥

ततश्च तादृशध्यानावेशात्तत्क्रतुन्यायेन तादृश्यैव तस्य प्राप्तिमाह—दुःसहेति। अत्र प्रेष्ठेति विरहस्योत्कटत्वे हेतुः सोऽपि संयोगपुष्ट्यै इति ज्ञेयम् "न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते,, इत्युक्तेः तथा अच्युत इति संयोगदार्ढ्ये हेतुः तेन नित्यसंयोगो ध्वनितः तथाऽशुभमत्र श्रीभगवन्नित्यसंयोगप्राप्तिप्राचीनदशायां दुःखजनिकात् तद्विरहस्फूर्तिः मङ्गलं च तद्दशायामेव सुखजनिका प्राप्तव्यतत्संयोगस्फूर्तिः यावतीभ्यां ताभ्यां ताभ्यां वृत्ताभ्यां प्रौढभावः सिद्ध्यति तावत्योश्च तयोः शनैर्भोग्ययोरपि युगदेवभोगो जातः इति धुतत्वं क्षीणत्वं चोक्तं तयोः शब्दयोश्च पुण्यपापपर्यायत्वाभावात्तथात्वं न शङ्कनीयम् उभयोः स्वस्वनियतफलदातृत्वानियमात् पापस्य तु सुतरां भगवद्विरहमयप्रेमस्फोरकत्वाभावाच्च "न कर्मबन्धनं जन्म वैष्णवानां च विद्यते,, इति सुतरामेव तत्प्रारब्धजन्मत्वाभावात् स्वामिव्याख्यायां तु "गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम्" इति वत्प्रारब्धरक्षणारक्षयोः स्वप्रेमवर्द्धनविदग्ध श्रीभगवदिच्छयैव ययैव हि परकीयात्वादिस्फूर्तिरपि तस्यास्तद्वर्द्धनमाह रुद्रः—

> "बहु वार्यते यतः खलु यत्र प्रच्छन्नकामुकत्वञ्च।
> या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः" ॥

इति दिक् इदमत्र विचार्यते श्रीभगवत्प्राप्तिमार्गो द्विविधः विधिमार्गो भावमार्गश्चेति सोऽपि प्रत्येकं द्विविधः सङ्कीर्णशुद्धभेदात् तत्राद्यः कर्मज्ञानाविमिश्रः तत्राप्याद्यः सकामकर्ममिश्रो निष्कामकर्ममिश्रश्च तयोराद्येन श्रीमदुपेन्द्रादिलोकप्राप्तिः तत्रापि तदुपासकत्वे तत्रैव नित्यस्थितिः स्वयं रूपोपासकत्वे च तल्लोकानन्तरक्रमेण तत्प्राप्तिः सोऽपि तद्वदेव तदुपासकत्वे स्वयं रूपोपासकत्वे च तत्प्राप्तिः ज्ञानमिश्रेण च महाकालपुराधिपतिप्राप्तिः अथ शुद्धेन विधिमार्गेण निष्ठातारतम्याद्भावप्राप्तिः अथ भावमार्गोऽपि सङ्कीर्णशुद्धभेदेन द्विविधः तयोराद्यो रिरंसामिश्रोऽपरमिश्रश्च तत्र प्रथमेन प्रेयसीव प्राप्तिः तत्रापि विधिमिश्रत्वे पुरगतप्रेयसीभावप्राप्तिः तत्रैवोद्वाहादिश्रवणात् केवलेन व्रजाङ्गनात्वप्राप्तिरिति अत एव विवाहाद्यश्रुतिरिति विवेकः शुद्धेन च सहचरीभावप्राप्तिः तत्रापि श्रीकृष्णस्याहमित्यभिमानेन तत्सख्यन्व श्रीराधाया अहमित्यभिमानेन तत्प्राणसखीत्वम् इति तथाच विभागोऽनुपपन्नः सामान्यविशेषवाचका हि शब्दाः यथास्थान-

### विशुद्धरसदीपिका ।

मेव तं तमर्थं प्रकाशयन्ति यथा ग्राह्यया नावमन्तव्या इति सर्वेऽपि गृह्यन्ते यथा च ग्राह्यया वरणीया इति वरणयोग्या एवं तथा प्रकृतेऽपि व्रजस्त्रीणां प्रागुक्तास्ते च तेच प्रकाराः स्वस्वाधिकारानुसारेण तत्तत्परा द्रष्टव्याः अन्यथा बल-देवक्रीडितगोपीष्वपि तथा प्रयोगस्य सामान्यार्थस्वीकारे “वक्रं अजेशसुतयोः” इत्यादिना तदेकमतिगतीनां तासामन्यत्रासक्ति-वर्णने रसभङ्गो मर्यादातिक्रमश्च दुर्वारःस्यादिति ध्येयम् अत्र च प्रामाणपर्येषणायां श्रीबृहद्भागवतादिगवेषणीयं मूले च परम-हंसादिसभायां तद्दीपनाय प्राप्तेश्च गुणातीतत्वद्योतनाय परम पुरुषार्थरूपायास्तस्या दृष्टान्तस्थानीयस्य परमपुरुषार्थस्य मोक्ष-स्योपन्यासः कृत इति न कोऽपि विरोधः ॥ १० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ जन्मान्तरेषु मोक्षाभिकाङ्क्षया कृतया गोपीजनवल्लभो-पासनया लब्धगोपीभावानामवस्थामाह—अन्तरिति । काश्चिद्गोप्यो मोक्षप्रदभगवत्सङ्कल्पानुसारेण पतिभिर्द्वाराणां मुद्रितत्वात् अन्तर्गृहगताः अलब्धविनिर्गमाः कृष्णं दध्युः मरणदशोप-स्थितौ तमेव प्रेष्ठं दध्युः यतः यस्य सर्वदा भावना भवति तदेवा-न्तकाले ध्यानपथमारोहति ताश्च सर्वदा कृष्णभावनायुक्ता आस-न्नित्याशयेनाह-तद्भावनायुक्ताः नेत्रद्वाराऽन्यत्र चित्तवृत्तिगमन-भयान्मीलितानि लोचनानि यासां ताः ध्यानावेशेन मुद्रितनेत्रा इति वा । यद्वा, मीलितानि लोचनानि इतरज्ञानानि यासां ताः । केचित्तु काश्चित्तु नित्यसिद्धादिगोपीसङ्गभाग्याभावादलब्धप्रेम-त्वाददग्धकषायामूढगोपोपभुक्ता अपत्यवत्यो बभूवुस्ताः खलु तदनन्तरमेव नित्यसिद्धादिगोपीसङ्गभूकृष्णसङ्गस्पृहावेका तासां कृपापात्रीभवत्यो ऽपि कृष्णाङ्गसङ्ग योग्यदेहत्वेन योगमायया सहायकारणोत्पत्तिभिर्वारिताः कृष्णमभिसर्तुमक्षमाः महा-विपद्ग्रस्ताः पतिभ्रातृपुत्रादीन्स्वप्राणचौरत्वेन पश्यन्त्यो मरण-दशायामुपस्थितायां सत्यां यथाऽन्ये मात्रादिस्वबन्धुजनान् स्मरन्ति तथैव स्वप्राणैकबन्धुं कृष्णं सस्मरुः इति वर्णयति, निवृत्तिपक्षे स एव रसानां रसतमः परमः परार्द्धयोद्गमोऽयमुद्गीथ-इत्याद्याः उद्गीथादिरूपान्तर्गृहगता अपि काश्चिद्गोपस्य भगवतः सम्बन्धिन्यः अलब्धो ऽवशेषेण निर्गमः प्रतिपादनं याभिस्ताः तस्य परमात्मनो भावनायामुपासनायां युक्ता नियुक्ताः कृष्णं दध्युः परमात्मध्यानं विदध्युः यतो विचारेण मुद्रितमथा श्रुतार्थ-प्रकाशस्तथाचोद्गीथादिस्तुतिप्रतापा निरुद्धा अपि तत्र न तस्थु-रित्यर्थः । वृत्तयोऽपि काश्चिदत्यन्तप्रियवस्तुरूपगृहान्तर्गताः अलब्ध-विनिर्गमा अपि तत्र कृष्णभावनायुक्ताः कृष्णं दध्युर्मुद्रितवि-षयिकप्रकाशाः ॥ ९ ॥

तथा च वर्तमानकालीनविरहध्यानाभ्यां पूर्वोपासनया लब्धाभ्यां स्वाभिसन्धितफलं प्रापुरित्याह—दुःसहेति । दुःसहो यः प्रेष्ठ-विरहो महानग्निस्तेन यस्तापः कोटिब्रह्मकल्पेषु कुम्भीपाकादि-नरकेषु यावद्दुःखं भवेत् ततोऽप्यधिकं भगवद्विरहक्षणमात्रेण जातं दुःखं तेन धुतानि निर्धूतानि भस्मसात्कृतानि अशु-भानि यासां तथाच सर्वपापफलभोगसमाप्तिः पुण्यक्षयप्रकार-माह—ध्यानेन प्राप्तोऽच्युतस्य सदैकरसस्य परमात्मनः आश्लेषः सम्यगालिङ्गनन्तदाणीं न जारत्वेनाऽऽश्लेषः किन्तु परमात्मात्वे-नेति बोधयितुम् अच्युतपदं तेन या निर्वृतिः सुखं कोटिब्रह्मकल्पेषु स्वर्गादौ यावत्सुखं भवेत्ततोऽप्यधिकं भगवत्सङ्गप्रेष्ठविरहेण यस्तीव्रस्तापस्तेन धुतानि कम्पितीकृतानि अशुभानि याभिस्तासां प्रियविरहतापस्यातितीव्रतां वीक्ष्य कोटिब्रह्माण्डस्थवाडवानल-महाकालकूटादिरूपाणि परःसहस्राण्यपि अशुभानि स्व-तीव्रताऽहङ्कारं परित्यज्य पराजये बुद्ध्या च कम्पिता इत्यर्थः ध्यानेन प्राप्तः आगतो योऽच्युतस्तेन तदैवोद्भूतस्य प्रेमपूर्ण-चिन्मयस्य तादृशस्वभावादिमतो देहस्य य आश्लेषस्तेन या निर्वृति-स्तया क्षीणानि कृशीकृतानि मङ्गलानि सुकृतानि यासां ताः यासां स्फूर्तिप्राप्तप्रेष्ठाश्लेषस्य सुखं वीक्ष्य कोटिब्रह्माण्डगतविषयसुख-निर्विषयब्रह्मानुभवानन्दस्य क्षीणत्ववर्णनं “यं लब्ध्वा चापरं लाभं मन्यतेनाऽधिकं ततः” इत्याविद्याख्यज्ञानविजृम्भितं निवृत्तिपक्षे दुःसहो यः प्रेष्ठस्य परमात्मनो विरहः अत्र परमात्मोपासनानस्तीति केनचिन्निरूप्यमाणास्तेन जातो यस्तीव्रतापस्तेन धुनानि अशुभानि-याभिस्ताः तथा ध्यानेन परमात्मोपासनायोऽच्युताश्लेषस्तेन केन-चिद्विदुषा वर्णितेन या निर्वृतिस्तया हेतुभूतया क्षीणानि कोडी-कारितानि मङ्गलानि याभिस्ताः । यद्वा, अक्षीणानि न नाशितानि वर्द्धितानि वा मङ्गलानि याभिस्ताः निर्वृतिपक्षे स्पष्टोऽर्थः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णं दध्युर्ध्यानतत्त्वः ॥ ९ ॥

मुख्यपतिबुद्ध्या सङ्गतानाम् “वत्पत्यपत्यसुहृदाम्” इत्यादिषु कृष्णतत्त्वज्ञतया निर्दिश्यमानानां गोपीनां कृतार्थतायां कः संशय इति सूचयन् जारबुद्ध्याऽपि भगवन्तं सङ्गतानां कासाञ्चित् इत्थं ध्यानपराणां पुण्यापुण्यरूपप्रारब्धकर्मक्षयपूर्वकं भगवत्प्राप्ति-लक्षणं मोक्षमाह--दुःसहेति द्वाभ्याम् । दुःखेनापि सोढुमशक्यो यः प्रेष्ठस्य प्रियतमस्य श्रीकृष्णस्य विरहो वियोगस्तेन यस्तीव्रो दारुणस्तापस्तेन धुतान्यशुभानि प्रारब्धापुण्यकर्माणि यासां ताः तथा ध्यानेन प्राप्तो योऽच्युतस्तस्य आश्लेषेण या निर्वृतिः सुखसम्पत्तिस्तया क्षीणानि मङ्गलानि प्रारब्धपुण्य-कर्माणि यासां ताः ॥ १० ॥

---

### भाषा टीका ।

कितनीक गोपीन को उनके पतीन ने घरन के भीतर मूदि-दीनी तासों जब उन गोपीन कों अपने प्रियतम श्रीकृष्ण-चन्द्र के समीप जायवे कों मार्ग नहीं मिल्यो, तब अपने प्यारे को जैसे सदा दर्शन करतीं हीं वाई सामरी मूरत की भाव-ना करिके नेत्रनको मूदि करिके वे गोपी अपने प्यारे को भीतर में ध्यान करतीं भई ॥ ९ ॥

ता समें दुःसह जो अपने प्रियतम को विरह ताके तीव्र ताप सों नष्ट भये हैं अशुभ जिनके और ध्यानके विषै प्राप्त भयो जो श्रीकृष्णचन्द्र को आलिंगन ताके आनन्द सों चीण भये पुण्य जिनके, ताई सों तत्काल मेंहि चीण ( नष्ट ) भये हैं

**तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः।**
**जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥**

### भाषा टीका।

संसार के बन्धन जिनके ऐसी वे गोपी, गुणमय अर्थात् त्रिगुणा प्रकृति के विकार पंचभूतन सों रच्यो जो ये प्राकृत देह है ताको त्याग देत भईं, और श्रीकृष्णचन्द्र के विषें जारबुद्धि करिके उनही परमात्मा श्रीकृष्णचन्द्र को प्राप्त होत भईं "पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" या श्रुति में एसें कहे हैं, कि-मुक्तपुरुष पुण्यपापनको छोडिकें निर्मल होयके परम पुरुष के सङ्ग विहारके योग्य होयके उनकी समताकूं प्राप्त होवे है" सो या जगै जिनगोपीन के कर्मन के परिपाक में नेंक कछु कसर रही तिन गोपीन ने श्रीकृष्णके विरहके दुःखमें पापनके फल भोग लीने, और उनके ध्यान करिवे में भयो जो मिलवे को सुख तासों सुकृतन के फल भोग लीने या प्रकारसों जब पुण्यपापके फल भोग चुकीं तब उन गोपीन को त्रिगुणशरीर दूर भयो और फिर वे दिव्य देहनतें परमात्मा श्रीकृष्णचन्द्रको प्राप्त होत भईं ॥ १०--११ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अत एव सद्यः प्रक्षीणबन्धनाः सद्यः सपदि प्रकर्षेण क्षीणं बन्धनम् आशाबन्धो यासां देहरक्षया रासादिकेलिं प्राप्स्याम इत्याशाबन्धोपि नष्ट इति भावः। अन्यथा अन्यगोपीवत् श्रीवृन्दावने व्रजान्तःसाक्षाद्वास्थित्यादिपरित्यागायोगः अत एव ताश्चोऽत्र निवसन्तीनां श्रीव्रजदेवीनां सौभाग्यमधिकमेव केवलं नित्यसंयोगेन विरहदुःखाभावात् कैश्चिद्भावविशेषेणाहृत्ताः ताः प्रचरन्त्यन्ते विरहेपि प्रेमविशेषोदयेनानन्दविशेषः स्यादिति श्रीभागवतामृते विवृतमेवास्ति। यद्वा, जहुः अन्तर्धापयामासुः। यद्वा, तं परमात्मानं जारबुद्ध्यैव सङ्गम आसक्तिं प्राप्ता अपि दुःसहप्रेष्ठविरहतीव्रतापेनैव धुताशुभा धुतं विनाशितं जगतामेव अशुभं तापत्रयं याभिः तादृक्तापविशेषस्य श्रीभगवदीयगाढप्रेमोद्रेकमयत्वात् जगत्तापत्रयनाशकत्वं तथा ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या अक्षीणमङ्गलाः अक्षीणं पुष्टं वृद्धिमेव गतं जगतां मङ्गलं याभ्यः तादृग्ध्यानस्य जगतामभ्युदयकारित्वात् मङ्गलवृद्धिकारित्वम् एवम्भूताः सत्यो गुणमयं देहं जहुः गुणा भावाः तत्रान्तराभावाः आर्जवस्थैर्यमार्दवबहिर्निष्क्रमोपायाश्रता गुरुजनादिसङ्कोचादयः बाह्याः सन्तप्ततागृहान्तस्थतावद्धतादयः तन्मयं तत्प्रधानं देहं जहुरिति तत्तद्भावत्याग एवात्र देहत्याग उक्तः यथा सुप्रिसङ्गे प्रद्युम्नस्तत्तद्भावत्याग एव देहत्याग इति तृतीयस्कन्धे कथितम् अतः प्रक्षीणबन्धनाः प्रक्षीणानि बन्धनानि दिनान्तरे श्रीभगवत्केलिप्राप्तौ प्रतिबन्धा आन्तरा बाह्या आर्यपथसन्तप्तादयो यासां तद्रात्रौ अच्युताश्लेषनिर्वृत्या कालक्षेपादलब्धरासाः। कल्पयाप्य इति एवं ज्ञानेन मोक्षो भवेत् श्रीदिगस्त्वादिना वैकुण्ठलोकादिप्राप्तिः सख्यप्रेमादिना श्रीमद्वशीकरणं तत्र च समर्थेन प्रेमविशेषेण नित्यप्रेष्ठतया अङ्गे संयोग इति सिद्धान्तः। अतस्ताहशभावोत्पत्त्यै रासक्रीडा सर्वथा सर्वैः सेव्येति तात्पर्यम् ॥ ११ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अतस्तत्रैव तं श्रीकृष्णमेव सङ्गता मिलिताः तथा च वासनाभाष्यधृतं मार्कण्डेयवचनम्—

तदानीमेव ताः प्राप्ताः श्रीमन्तं भक्तवत्सलम्।
ध्यानतः परमानन्दं कृष्णं गोकुलनायिकाः ॥ इति।

तयोः शब्दयोः पापपुण्यपर्यायत्वाभावात् तयोः स्वस्वप्रतिनियतफलदातृत्वात् पापस्य तु सुतरां भगवद्विरहमयप्रेमस्फोरकत्वाभावात् "न कर्मबन्धनं जन्म वैष्णवानां च विद्यते" इति पाद्मोत्तरकार्तिकमाहात्म्यखण्डानुसारेण तासां सुतरां तत्प्रारब्धजन्मत्वाभावात् किन्तु गुरुपुत्रमिहानीतमितिन्यायेन प्रारब्धरक्षणारक्षणयोः स्वप्रेमवर्द्धनविदग्धश्रीभगवदिच्छैकमयत्वात् नान्यथा व्याख्यातं ननु किं जारत्वेन सङ्गताः नेत्याह तादृशरागौत्सुक्येन सोपानीकृतया जारबुद्ध्यापि परमात्मानं सर्वोत्तमपरमस्वरूपत्वेनापि सर्वेषामपि स्वभावत एव यत्रुपपत्यादिशब्दवस्तातकत्वेन पतित्वे सिद्धे भावविशेषधारिणीनां तासां रमणत्वेनापि पतित्वसाविति पतिरूपमेवेत्यर्थः। रमणत्वाज्ञानेनैव जारबुद्ध्याऽपि तस्मिन् सङ्गम्यमानेऽपि रमणत्वविन्यासाया अगलमत्वात् जारत्वस्य तस्मिन् सर्वौचित्यसम्भवात् जिघांसयापि हरय इत्यादिवत् जारबुद्ध्यापीति हेयतयैव निर्देशात् प्राचीनस्य परयुर्देहस्य च त्यागात् इति भावः। तथाहि पटोलमूले रमणं स्यात् तथा रमणः प्रिय इति विश्वकोशात् "धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ" इत्यमरकोशाच्च रमणपर्यायादिशब्दवाच्यजारादिशब्दवाच्ययोर्नैकत्वं मन्तव्यं किन्तु पूर्वस्य स्वामित्वादुत्तरस्य चौरत्वाद्विरुद्धवस्तुत्वमेव तत्रापि सभ्यशब्दान्तरमप्रयुज्य प्रयुक्तस्यासभ्यस्य जारशब्दस्य जिघांसाशब्दस्येव निन्दातात्पर्यत्वमेव प्रतीयते "जारः पापपतिः" इति त्रिकाण्डशेषादिकोशाल्लोकाच्च किन्तु येन रागेण ता जारभावमयं निन्द्यं लोकधर्ममर्यादातिक्रममपि ताः कृतवत्यस्तं सूचयित्वा तस्यैव प्रशस्तत्वं दर्शितं चेष्टाविशेषसाम्यात् कामतया व्यपदिष्टस्यापि प्रियानुकूल्यतात्पर्यत्वेन प्रेमैकरूपत्वं च. तथा च वक्ष्यते "यत्ते सुजातचरणाम्बुरुहं स्तनेषु" इत्यादि अत एवोक्तं तादृशैरपि "आसामहो चरणरेणु" इत्यादौ "या दुस्त्यजं स्वजनमार्यपथं च हित्वा" इत्यादि एताः परमित्यादौ "वाञ्छन्ति यद्भव भियो मुनयो वयञ्च" इति एवं हेयांशपरित्यागपूर्वकमद्यप्रेमरसमयीकृष्णसङ्गलक्षणपरमपुरुषार्थशिरोमणिप्राप्तिर्बोधिता तत्प्रानुषङ्गिकं फलमाह गुणमयं च देहं जहुरिति यतः पूर्वोक्तप्रकारेण सद्यः प्रक्षीणबन्धनाः एवं सच्चिदानन्ददेहप्राप्तिरपि सूचिता एतदुक्तं भवति अपि तत्र जारबुद्धेर्हेयत्वं "जिघांसयापि हरये स्तनन्दत्वाप सद्गतिम्"

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्यत्र जिघांसाया इव व्यनक्ति गर्हावचनेन तत्तच्छब्देनान्वयात् अत्र हेतुः परमात्मानमिति नहि परमात्मा तादृशनिन्द्यशब्दवाच्योपि भवितुमर्हति तत्र च हेतुः हरये इति हरिशब्दोत्र कारुण्यादिमहागुणैः सर्वमनोहरतापरः नह्येवंभूतो जिघांस्यो भवितुमर्हति तत्तदनर्हत्वेपि सा साच कथञ्चित् जाता चेत् तर्हि परमात्मत्वाद्धरित्वाच्च सर्वहितकारित्वेनासौ परित्याजयेदेवायोग्यांशं तस्यामिवामूषु पुनश्च तस्या भक्त्याभासविषं द्वेषं स्तनदानमात्रत्वेन भक्तिं मत्वा तदुपलक्षितां धात्रीगतिं ददावेव अमूषु तु दुःसहप्रेष्ठविरहेत्यादिपद्योक्तमहाभक्तिविशेषेणान्तःसङ्गमनुभवंस्तदुचितानिजप्रेयसीं गतिं कथं न दद्यादिति सङ्गतिश्चेयं पूर्वोक्ते गोलोकाख्ये गोकुलप्रकाशविशेष एव ज्ञेया अत एवोद्धवद्वारा श्रीभगवता संदिष्टम्—

"या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः ।

अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया" ॥ इति ।

रासश्चायं तद्दिनगत एव ज्ञेयः तस्यैव विवक्षितत्वात् तस्मिन्नपि प्रकाशे गोपलीलत्वेन दिनान्तरेपि तत्सम्भवात्· किं त्वत्र "नासूयन् खलु कृष्णाय" इति वक्ष्यमाणानुसारेण तत्पत्यादिषु दुःखाद्यनुत्पत्तये तन्माययैव त्यक्तानां देहानामन्तर्द्धापनं तत्सदृशीनामन्यासां स्फोरणं च गम्यते एवं तावत्कालमेव तद्रहस्यं लब्धरासाः श्रीभगवत्प्रेयस्योऽपि नाजानन् यावदुद्धवद्वारा यथार्थानुभावकप्रभावम् यामयेत्यादि सन्देशं नाश्रृण्वन्निति च अथवा तासां मुरलीवाद्यानुसरणेन तदन्तिकगतौ किमाश्चर्यं यतःकाश्चिन्निरुद्ध्यमाना अप्यन्तर्गृह एव तं प्राप्ता इत्याह—अन्तरिति ।
तादृशतीव्रतापेन धुतं श्रीकृष्णकृपया खण्डितम् अशुभं विरहरूपं यासां ताः तेन जगतामपि धुतमशुभं याभिस्ता इति वा "मद्भक्तियुक्तो भुवनं पुनाति" इति वत् तथा तादृशनिर्वृत्याऽक्षीणं क्षीणताविरुद्धं पुष्टं मङ्गलं निजतादृशतत्संयोगरूपं यासां ताः तथा पुष्टं जगतामपि मङ्गलं याभ्यस्ता इति वा पूर्ववत् गुणमयं विरहभावमयं देहम् आवेशमित्यर्थः । तथा तृतीये सृष्टिप्रसङ्गे ब्रह्मणो दर्शितम् अन्यत् समानं सङ्गतिस्तस्मिन्नन्तर्गृहे एव तस्य प्राकट्यात् अन्तर्गृहगता इत्यन्वयात् अतएव सद्यः प्रक्षीणं बन्धनं सर्वतत्सङ्गविरोधो यासां ताः एवमलब्धरासाः इति तस्यामेव रात्रौ ज्ञेयं पूर्वहेतोरेव ॥ ११ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सद्य एव प्रक्षीणानि बन्धनानि संसृतिबन्धनिमित्तानि पुण्यपापात्मकानि यासां ताः परमात्मानं कृष्णमेव जारबुद्ध्यापि सङ्गताः सत्वादिगुणप्रचुरं देहं तत्यजुः एवकारापिशब्दाभ्यां कोपि भावो भगवदनन्यविषयो मुक्तये भव कल्पत इत्यभिप्रेतम् ॥ ११ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनारब्धफलानां कुतो निवृत्तिरिति तत्राह—तमिति । जारः उपपतिः पत्युरप्यधिक इति सम्भावितस्तं कृष्णं परमात्मानं नारायणमेव सङ्गताः सम्यग्ज्ञातवत्यः अनेन विश्वभूतहरिध्यानेनाप्रारब्धप्रणाश इति सूचितम् ॥ ११ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तथा तदाशुभाशुभकर्मक्षये तदारब्धदेहपात उपसर्गे बद्भूतदाह तमेवेति—जारबुद्ध्या । गुणमयं देहं जहुः अस्मिन् देहे सति असौ जारो भवति तदयं देहस्त्याज्य इति जारबुद्धिस्तत्यागे कारणं गुणमयं जहुः निर्गुणं देहमवापुरित्याक्षेपः तास्त्वन्ते तदङ्गसङ्गयोग्यं वपुरासेदुरिति दर्शयति, सद्यस्तत्क्षणेनैव तमेव श्रीकृष्णमेव परमात्मानं सङ्गता अपि बभूवुरित्यर्थः । एतेन शुभाशुभकर्मारब्धं लौकिकमेव शरीरम् अलौकिकं तु भक्तशरीरं श्रीकृष्णलीलारब्धमित्यायातमत एतास्तत्कालसिद्धाः प्रागुक्तयज्ञपत्नीवत् अतः प्रक्षीणबन्धना नित्यमुक्ताः ॥ ११ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो मुक्ता जाता इत्याह—तमेव परमात्मानमिति । सुखभोगार्थमेव भगवान् पूर्वमाश्लिष्टः भोगे जातेपि वियोजकपापाभावात् न वियुक्ताः अतः सङ्गता एव स्थिताः शरीरं तु प्रारब्धकर्मनिर्वाणम् अपतत् यद्याश्लिष्टो भगवाश्च भवेत्तदा तत्र प्रविष्टाः तद्गतं धर्माधर्मफलं बुभुजुः भगवति प्रविष्टत्वात् मुक्ता एव जाताः तदाह, तमेव परमात्मानमिति । पूर्वं सम्बन्धसमये यद्यपि जारबुद्ध्यापि सङ्गता एव ततः कर्मबन्धस्य प्रक्षीणत्वात् गुणमयं देहं जहुः । तदा अज्ञानमन्यथाज्ञानं वा त्रिगुणावस्थायीति न तयोः प्रतिबन्धकत्वम् वियोजकाभावात् शरीरान्तरोत्पादकाभावाच्च अविद्या परं तिष्ठति सा भगवच्छक्तिः भगवत्सङ्गं न व्यामोहयतीति सापि निवृत्ता ततः मुक्ता जाता इत्यर्थः ॥ ११ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भगवद्विरहसंयोगयोः पापपुण्यफलत्वाभावात् तादृशानां प्रारब्धनाशस्तु भजनदशायामेवानर्थनिवृत्तिभूमिकारूढानामित्याहुः ततश्च तमेव परमात्मानं परमप्रेमास्पदं जारबुद्ध्या अतिनिकृष्टयापि सङ्गताः अत्युत्कृष्टपतिबुद्धिमतीभ्यो रुक्मिण्यादिभ्यः सकाशादपि सम्यक् प्रकारेण प्राप्ताः पतिबुद्धेः सकाशादपि जारबुद्धौ "या दुस्त्यजं स्वजनमार्यपथं च हित्वा" इत्याद्युद्धववाक्यनिर्द्धारितात् निरङ्कुशप्रेमोत्कर्षात् तथास्मिन्नेवावतारे निकृष्टवस्तुन्यप्युत्कर्षीकुर्वत्येव लीला दृश्यते यथा महाराजराजेश्वरत्वलीलातः सकाशादपि "विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये" इति भीष्मोक्तेः पार्थसारथित्वलीलाया उत्कर्षः तथा उत्कृष्टात् शान्तरसादपि निकृष्टस्य शृङ्गाररसस्य तत्रापि दाम्पत्यभावादप्यौपपत्यभावस्य तथा उत्कृष्टाद्रत्नालङ्कारादपि निकृष्टस्य गुञ्जागैरिकशिखिपुच्छादेरुत्कर्षो दृष्ट एवेति सङ्गताः काश्चिद्योगमाया

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कृतानुकूल्यान्निरोधमुक्ता अभिसृत्य तस्यामेव रात्रौ रासविहारिणं तं प्राप्ताः काश्चिदन्यस्यामपि ननु, पुरुषान्तरोपभुक्तदेहाभिस्तासिस्सह भगवद्विलासो न युज्यते इति तत्राह—जहुरिति । देहमिति जात्यपेक्षया एकत्वं तस्य देहस्य योगमाययैवाऽलक्षितमन्तर्द्धापनमित्येके, अन्ये त्वेवमाहुः अत्र हेयो देहो गुणमय एव अवस्यतो गुणमयमिति विशेषणस्याधिक्यात् तासां देहा वेणुवादनात्पूर्वं द्विधाभूता गुणमयाश्चिन्मयाश्चासन्निति बुध्यते तत्र ये गुणमयाः स्वपत्युपभुक्ता देहास्तानेव जहुः अयमत्र विवेकः गुरूपदिष्टभक्त्यारम्भदशात एव भक्तानां श्रवणकीर्त्तनस्मरणादण्डवत्प्रणतिपरिचर्यादिमत्यां शुद्धभक्तौ श्रोत्रादिषु प्रविष्टायां सत्यां "निर्गुणो मदुपाश्रयः" इति भगवदुक्तेर्भक्तःश्रोत्रादिभिर्भगवद्गुणादिकं विषयीकुर्वन्निर्गुणो भवति व्यावहारिकशब्दादिकमपि विषयीकुर्वन् गुणमयोऽपि भवतीति भक्तिदेहस्यांशेन निर्गुणत्वं गुणमयत्वं च स्यात् ततश्च "भक्तिः परेशानुभवो विरक्तिः" इति "तुष्टिःपुष्टिःक्षुदपायोऽभूयासम्" इति न्यायेन भक्तिवृद्धि तारतम्येन निर्गुणदेहांशानामाधिक्यतारतम्यं स्यात् तेन च गुणमयदेहांशानां क्षीणत्वतारतम्यं स्यात् सम्पूर्णप्रेमण्युत्पन्ने तु गुणमयदेहांशेषु नष्टेषु सम्यक् निर्गुणं एतद्देहस्स्यात् तदपि स्थूलदेहपातस्तु बहिर्मुखजनतोत्खाताभावार्थं भक्तियोगस्य रहस्यत्वरक्षार्थं च भगवतैव मायया प्रदर्श्यते यथा मौशललीलायां यादवानाम् क्वचित्तु भक्तियोगोत्कर्षज्ञापनार्थं न दृश्यते च यथा ध्रुवादीनाम् अत्र प्रमाणमेकादशे पञ्चविंशतितमेऽध्याये श्रद्धादयो निर्गुणां गुणमयाश्चेति प्रदर्शयता—

"येनेमे निर्जिता सौम्य गुणाजीवेन चित्तजाः ।
भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते" ॥

इत्यनेन भक्त्यैव गुणमयवस्तूनां निर्जयो नाश एवोक्तो भगवता अत एव भूतानि विधूतानि तानि रन्धितानि अशुभानि गुणमयशरीराणि यासां ता इति आक्षेपनिर्वृत्या अक्षीणानि विवर्द्धितानि मङ्गलानि चिन्मयशरीराणि यासां ता इत्यप्यर्थश्चिकीर्षितो भवति अतः प्रक्षीणबन्धना अविद्याबन्धात् पत्यादिवारणाच्च योगमायानुकूल्यं प्राप्य विच्युता इत्यर्थः । मरणवशात् देहपात एव तासामिति तु न व्याख्येयं—

"या मया क्रीडता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ।
अलब्धरासाः कल्याण्यो आपुर्मद्वीर्यचिन्तया" ॥ इति

भगवद्वाक्ये कल्याण्य इति पदोपादानात् पतिकृतवारणान्मद्विरहसन्तापाच्च स्वदेहांस्तदा जिहासुनामपि तासां परममङ्गलरासोत्सवारम्भे मरणस्यामङ्गलस्य मदनभिमतत्वात्ताः कल्याण्य एवाभवन्निति भगवदभिप्रायात् तथा "ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः" इति शुकवाक्याच्च ता ऊचुर्याः पूर्वं अलब्धरासा अन्तर्गृहनिरुद्धा आसन्निति तेन मरणं विनैव ताः गुणमयान् देहान् जहुरिति विरहतीव्रतापरन्धितास्तासां गुणमयदेहा गुणमयत्वं परित्यज्य चिन्मयत्वं ध्रुवादीनामिव प्रापुरेव एव देहत्याग इत्यर्थोऽवगम्यते तथा अत्र अलब्धविनिर्गमा इति तत्र व्रज आस्थिता इति तथा अत्र ध्यानप्राप्ताच्युताश्लेषेति तत्र मापुर्मद्वीर्यचिन्तयेति तुल्यार्थतैव किन्त्वत्र सङ्गता इति तत्रालब्धरासा इत्यर्थभेदश्शनादेवान्तर्गृहनिरुद्धगोपीनां द्वैविध्यं व्याख्यातं यथा सप्ताष्टानां फलानां सम्यक्पाकेवगते सत्याम्रवृक्षोयं पक्वफलः इति ज्ञात्वा सर्वाण्येव फलानि वृक्षादपचित्य गृहमानीयन्ते आनीय च यानि यानि समुचितकालेन सौरकिरणादिनाच सौरूप्यसौरभ्य सौकुमार्यवन्ति राज्ञो भोगार्हाणि रोचकाणि जातानि तानि फलानि विचक्षणपरिजनेन परिष्कृत्य समये राज्ञो भोगाय परिकल्पन्ते यानि त्वन्तःपक्वानि बहिरपक्वानि सौरूप्यादिगुणराहित्यादरसनीयानि राज्ञोऽनर्हाणि ज्ञायन्ते तान्युष्मविशेषयोगेन परिपक्वीकृत्यैव द्वितीयतृतीयदिनादिषु राज्ञे समर्प्यन्ते तथैव गोकुले जनितानां मुनिचरीणां गोपीनां मध्ये याः प्राकृतगुणमयशरीरतां परित्यज्य प्रथममेव शुद्धचिन्मयीभूतशरीरा अजनिषत ताः पुरुषान्तरास्पृष्टाः श्रीयोगमायया नित्यसिद्धादिगोपीभिः सहैवाभिसारिताः यास्तु बहिर्गुणमयशरीरवत्यस्ता अपि श्रीकृष्णविरहोष्मप्रापणाया गुणमयशरीरभावस्याजनयैव विनष्टपुरुषान्तरस्पर्शदोषाश्चिन्मयीभूतशरीराः काश्चित्तस्यां रात्रावेव सर्वासां पश्चादभिसारिताः काश्चिदीषन्मात्रस्थितकषायाः प्रेक्ष्य विरहोष्मणैव तन्निवर्तनार्थं रात्र्यन्तरेष्वेवाभिसारिताः ततश्च ताः प्राप्तरासादिविलासाः रात्र्यन्ते नित्यसिद्धादिगोपीभिः सह पतिगृहमागताः तदारभ्य पतिसङ्गतो योगमाययैव रक्ष्यमाणाः पत्यपत्यादिषु ममताशून्याः कृष्णप्रेमातिभरपरिप्लुताः शुष्कपयस्तन्यः स्वापत्यान्यपुष्णत्यो ग्रहग्रस्तत्वेनैव तद्बन्धुभिः प्रतीयन्तेस्मेति सर्वमनवद्यं अन्येतु अन्तर्गृहनिरुद्धा अपि नापत्यवत्यः अग्रिमग्रन्थेषु अपत्यादिशब्दैः सपत्नीपुत्रः पोष्यपुत्रो भ्रातृपुत्रो वा लक्षणीय इत्याहुः ॥ ११ ॥

---

विशुद्धरसदीपिका ।

एवं च प्रारब्धकर्मणोरिव मङ्गलाशुभयोर्बहुकालभोग्ययोरपि श्रीभगवद्भक्तिप्रभावेन युगपद्भोगात्तत् क्षणमेव क्षीणयोस्तदनन्तरं ब्रह्मप्राप्तेरिव श्रीभगवत्प्राप्तिर्जातेत्याह—तमिति । तमेनेत्येव पदेन ब्रह्मप्राप्तिव्यावृत्तिः नर्हि, कमित्याशाकाङ्क्षायामाह—परमात्मानमिति । परा च मासौ परमा महालक्ष्मीरित्यर्थः । सा श्रीराधैव तस्या आत्मानं परमप्रेष्ठं यद्वा, परमा आत्मा यस्येति प्रथमे पक्षे राज्ञः पुरुष इतिवत्तस्याः प्राधान्यमपि नाधिनं ननु, तासामुपपत्तिभावाक्रान्तमानसत्वेन "ये यथा मां प्रपद्यन्ते" इत्यादिन्यायेन विरोधात्कथं प्राप्तिरित्यत आह—जारबुद्ध्यापीति । अपिरत्र जारबुद्धं हेयत्वं "जिघांसयापि हरये" इति जिघांसाया इव व्यनक्ति । तत एव च प्रकटार्थं परमात्मानमिति । नहि परमात्मा तादृशनिन्द्यशब्दवाच्यो भवतीति भावः ततश्च जारशब्देन रागोत्कटत्वमेव तथाहि येन रागेण ता जारभावमयनिन्दालोकधर्ममर्यादातिक्रममपि कृतवत्यस्तादृशरागोत्सुक्येन सोपानीकृतया जारबुद्ध्या तमेवापुः उत्कटेन प्रियानुकूल्यभावेन तस्याः कवलितत्वादिति भावः । अत्र शुद्धभाववतीनां सङ्केतयुक्तं यथा श्रुतार्थस्वीकारे हि—

"आसामहो चरणरेणुजुषामहं स्याम्—
वृन्दावने किमपि गुल्मलतौषधीनाम् ॥

परीक्षिदुवाच ।

**कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने ।**
**गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥ १२ ॥**

विशुद्धरसदीपिका ।

या दुस्त्यजं स्वजनमार्यपथं च हित्वा-
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्" ॥

इत्यादौ तत्प्रशंसा न सङ्गच्छेत् जारः पापपतिरिति त्रिकाण्डशेषात् तद्वतीनां तासामङ्घ्रिरेणुसेवनाभिलाषस्य तादृशसदाचारिवर्गपूज्यपादेषु महाभागवतेष्वसम्भवादिति भावः । यद्वा, जारबुद्ध्या गुणमयं देहमपि जहुरित्यन्वयः । अस्मिन्देहे सत्यसौ जारो भवति तदयं देहोऽपि त्याज्य इति जारबुद्धिस्तत्यागे कारणमिति भावः । ततश्च सङ्गता अपीत्याह—सङ्गतिश्चेयं निभृतनिकुञ्ज एवेति स्वरसः तत्र कान्तभाववतीनां विशेषं वक्ष्यामः । ननु, कथं विरजोत्तरणमन्तरेण गुणमयदेहद्वयत्यागस्तथा सति "अथासौ पुण्यपापे धुनुते" इति श्रुतिगतानन्तर्यार्थशब्दविरोधः स्यादित्यत आह, सद्यः प्रक्षीणबन्धनाः अहिकञ्चुकवत् त्यक्तप्राकृतदेहाः पारिशेष्येण लब्धसच्चिदानन्दशोभारूपशरीरा इत्यर्थः । शारीरकशास्त्रे हि विरजोत्तरणात्प्रागपि पुण्यपापविधूननस्य स्थापितत्वात् "यथा पुष्करपलाशमापो न स्पृशन्ति एवमेवं विदि पापं कर्म नाश्लिष्यति" इत्यादिश्रुतेः अत्र च गुरुपुत्रमिहानीतमितिवद्भगवतैव तासां प्रेमवर्द्धनाय तादृशजनेषु तद्यशः स्थापनाय प्रत्यायितयोः पुण्यपापत्वेनोपचरितयोर्मङ्गलाशुभयोः प्रक्षीणत्वं श्रीभगवद्भक्तिप्रभावादेवेति साधु व्याख्यातम् ॥ ११ ॥

---

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

यत एवमतः सद्यः प्रक्षीणबन्धनाः तत्क्षण एव प्रकर्षेण क्षीणं प्रारब्धकर्मकृतं बन्धनं यासां तास्तथाभूताः सत्यः गुणमयं देहं जहुः त्रिगुणमयं स्थूलसूक्ष्मकारणाख्यशरीरत्रयं जहुः विमुक्ता इत्यर्थः । ननु, प्रत्यगभिन्नब्रह्मसाक्षात्कारभावात्कथं तासां मुक्तिरित्यपेक्षायामाह—जारबुद्ध्येति । यद्यपि तासां भगवति जारबुद्धिरासीत्तथापि वस्तुमाहात्म्याद्भगवत्प्रसादो जातः न हि वस्तुशक्तिर्बुद्धिमपेक्षते अन्यथा बुद्ध्यापि पीतममृतं यथा तज्जनितभगवत्प्रसादेन तमेव प्रत्यगभिन्नपरमात्मानं सङ्गताः तत्प्रसादलब्धसाक्षात्कारेण तदभिन्नतां प्राप्ता इत्यर्थः । अपिशब्दस्तद्बुद्धिनिन्दाभिव्यञ्जनद्वारा वस्तुमहिम्ना तदतिप्राशस्त्यमभिव्यनक्ति । यद्वा, प्रथमं जारबुद्ध्यापि भगवता सङ्गताः पश्चाद्विरहदशायां ध्यानादिना भगवत्स्वरूपं ज्ञात्वा ततः प्रक्षीणबन्धनास्सत्यो विमुक्ता इत्यर्थः । तथा च सर्वमपि निकृष्टमुत्कृष्टसम्बन्धादुत्कृष्टं भवति यथा भगवत्सम्बन्धाद्गोपाः ब्रह्मादीनामपि दर्शनीयतां प्राप्ताः तत्कृतं चौर्यं कर्म स्मरणादिना जनेकाऽनुमनाशकरं तद्वत्सम्बन्धाद्गोवर्द्धनस्येन्द्रादेरप्युत्कर्षः शान्तिरसादतिनिकृष्टस्य शृङ्गाररसस्य तत्राप्यौपपत्यसम्बन्धि

सर्वपरमहंसशिरोमणिशुकमुखेन गायमानत्वेनेति भावः । निवृत्तिपक्षे तमेव "रसोवै स रसः ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुतिप्रतिपादितं परमरसरूपं जारबुद्ध्या तच्छ्रुतिपतौ योपासनाबुद्धिस्तद्विधायकतयापि सङ्गतास्तस्मिन्सङ्गतिमत्यः अत एव सद्यो विचारक्षण एव प्रक्षीणं बन्धनं अध्यमाणार्थबन्धनकारणं यासां ता गुणमयं उद्गीथादिगुणस्तुतिमयं देहं तत्परत्वं जहुः अस्तपक्षे जारबुद्ध्या ये सङ्गताः गुणमयं देहं यदा जहुस्तदा किमु वक्तव्यं प्रेष्ठबुद्ध्या सङ्गताऽविवेक्यन्तःकरणवृत्तय इतियोज्यम् ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तमेव प्रतिप्रकरणमनुवर्णितनिरतिशयस्वरूपगुणशक्तिं परमात्मानं यावत् जारबुद्ध्याऽप्युपपतिबुद्ध्याऽपि सङ्गताः सत्यः सद्य एव प्रक्षीणानि बन्धनानि संसारबन्धनिमित्तानि शुभाशुभानि कर्माणि यासां ताः गुणमयं देहं जहुस्तत्यजुः त्रिगुणप्रपञ्चातीतमप्राकृतशरीरं श्रीकृष्णं प्राप्ता इत्यर्थः ॥ ११ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, यथा पतिपुत्रादीनां वस्तुतो ब्रह्मत्वेपि न तद्भजनान्मोक्षस्तथा बुद्ध्यभावादेवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्सङ्गतिः कथं मोक्षहेतुरिति शङ्कते—कृष्णं विदुरिति । परं केवलं कान्तं कमनीयम् ॥ १२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

श्रीयुक्तः परीक्षिदिति अन्येषां परीक्षणार्थमिवोवाच न चाज्ञानेन संशयादिति भावः । परं केवलं कान्तं प्रियं सुन्दरं वा । यद्वा, परं कान्तं श्रेष्ठं रमणं जारमित्यर्थः । अतो गुणेषु स्वसुखादिषु न तु तत्त्वे धीर्बुद्धिर्यासां तासां गुणप्रवाहः संसारस्तस्योपरमः निवृत्तिः कथं स्यात् ? सर्वपुरुषार्थचूडामणिर्मोक्षः कथं घटेत ? "तमेव विदित्वातिमृत्युमेति" इत्यादिश्रुतिप्रामाण्येन तत्त्वज्ञानेनैव संसारनिवृत्तिरिति मोक्षस्य सर्वतः श्रेष्ठतामनेन दौर्लभ्यमभिप्रेत्य किं वा मोक्षस्य साधनं शास्त्रे यदुक्तं तदभावमपेक्ष्यायं प्रश्नः । यद्वा, परं कान्तं कन्दर्पकोटिमनोहरम् आत्मकोटिप्रेष्ठं वा अत एव गुणेषु तस्य सौन्दर्यमाधुर्यवैदग्ध्यानुरागादिष्वेव न तु स्वस्वरूपत्वे धीर्यासां तासां तृणीकृतमोक्षैः सद्भक्तैरपि सेव्यपादानां श्रीकृष्णप्रेयसीनाम् अतिफल्गुतमो मोक्षः कथं सम्भवेत् इति मोक्षस्यातितुच्छतामननादयं प्रश्नः । मुने, हे सर्वज्ञ ! इति तद्वृत्तं त्वया ज्ञायत एव अतस्तत्परिहारस्त्वयैव कर्तुं युज्यत इति भावः । किन्तु "नाथ-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

योनिसहस्रेति, त्वयि भक्तस्तु कीटोऽपि, भूयासं जन्मजन्मसु" इत्यादिवचनैर्भक्तानां भक्तावेव तात्पर्य्येण भक्तिवृद्ध्यर्थं जन्मादि प्रार्थनात् जन्मादिलक्षणसंसारोपरमोऽनुचितः अतो निर्वेदादिनाभावपुष्टिहेतुगुणमयदेहत्यागेन गुणातीतदेहग्रहणमत्ययुक्तमेवेति सद्गुणमयतापक्षे गुणधियां गुणज्ञानामित्यर्थः गुणानां श्रीभगवत्सन्तोषणरूपश्रवणादीनां प्रवाहो यस्मिन् देहे तस्योपरमः कथं स्यात् श्रीभगवत्सेवायां देहस्यायोग्यत्वमननेन अत्यन्तमोद्धृदुःखभरभीत्या वा तासां तादृशदेहत्यागायोगात् । यद्वा, गुणेषु श्रीकृष्णस्य लावण्यसौरभ्यादिषु रासक्रीडोपमादिव्यक्रीडादिषु वा धीर्यासां तासामपि गुणः अन्य गोपीवच्छ्रीवृन्दावने व्रजान्तः साक्षान्निवासादिलक्षणः रासक्रीडादि लक्षणो वा सौभाग्यविशेषः । तस्य प्रवाहः आवृत्त्या नित्य नूतनया वा परम्परा तस्योपरमः कथं स्यात् सर्वसद्गुणमयदेहत्यागेन तदसिद्धेः किञ्च, विचाराद्यपगमात् ताभिस्त्यज्यमानस्यापि तादृशदेहस्य तादृशनिजस्वभावेन कथं पातः स्यादित्यर्थः इति राज्ञः प्रश्नस्यार्थत्रयेण पक्षत्रयम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परि सर्वतो भावेन ईक्षते सर्वेषां भावं जानातीति परीक्षिदित्यस्यायं भावः । यद्यपि स्वयं तत्तन्माहात्म्यं जानात्येव तथाप्यन्तर्मुखसन्दिहानानां सन्देहनिरासार्थमर्थविशेषेण सन्देहविशेषः प्रपञ्चितः बहिर्मुखसन्दिहानानां च सन्देहान्तरनिरसनार्थं ब्रह्मज्ञानवादमय इव सन्देहः प्रपञ्चितः राजोवाचेति क्वचित्पाठः अत्रापि सर्वभाववैचक्षण्य एव राजशब्दस्य तात्पर्यात्तथैवार्थः श्रीमुनीन्द्रेणापि तथैव प्रतिवक्ष्यत इति तत्र बहिर्मुखरीतिकोऽर्थः प्रसिद्ध एव अन्तर्मुखरीत्या त्वयमर्थः । ननु, गुणमयं देहं जहुरित्युक्तं तत्र गुणशब्देन यदि सत्त्वादित्रयमुच्यते मयट् प्रत्ययेन विकारः ततश्च हेयस्य देहस्य स्वतस्तन्मयत्वप्राप्तेः किन्तन्निर्देशेन तस्मात् पूर्वेण मानससाद्गुण्यपरम्परा उत्तरेण तु प्राचुर्य्ये वाच्यं तत्रेदं पृच्छामः कृष्णं विदुरिति यदि च प्राप्तरासानामन्यासां निस्त्रैगुण्यदेहतासूचनार्थमासामेव वा प्राप्तव्यदेहस्य तत्सूचनार्थमत्र गुणमयमिति विशिष्यते त(द)थापि तादृशस्य देहस्योपलक्षणत्वेन मानसगुणप्रवाहस्यापि तादृशत्वेन लब्धिः स्यात् तत्रापि पृच्छाम इत्याह कृष्णं विदुरिति । अयंश्चायं तं कृष्णं परं केवलं कान्तं सर्वाश्चर्यगुणमनोहरतया परमप्रेष्ठं विदुः नतु ब्रह्मतया निर्गुणतदाविर्भावविशेषतया तर्हि तासां गुणधियां ब्रह्मनिष्ठाया अपि त्याजकतया प्रसिद्धेषु तदीयतादृशगुणेषु धीरन्तःकरणम् यासां तथाभूतानां तदेकनिष्ठत्वेन तद्गुणैकानुबन्धतत्प्रेमवृत्तिगुणत्वादप्राकृतगुणानामित्यर्थः । ततो देहस्य तु तासामसिद्धत्वान्नवतु नाशोपरमः कथमविच्छिन्नतादृशगुणपरम्पराया उपरमः स्यादित्यर्थः । ब्रह्मोपासकेष्विव न तत्स्वरूपमात्राविर्भावः किन्तु गुणैरपि सह तदाविर्भावः ततो ब्रह्मोपासकेषु ये गुणास्ते प्राकृतसत्त्वमया एवेति तेषामेव गुणप्रवाहोपरमः सम्भवति नाविर्भूतभगवद्गुणानां तद्विधानामिति वाक्यार्थः श्लेषेण चेदं पृच्छति कृष्णं परं केवलं कान्तं विदुः नतु ब्रह्मतया व्यापकतया तर्हि "ये यथा मां प्रपद्यन्ते" इति न्यायेन तासु व्यापकतागुणस्याप्रकाशादन्तर्गृहे प्राकट्याभावेन कथं निरुद्धाभा(वो)त्मभवगुणप्रवाहोपरमः गुणधियां सुन्दरांयं निदर्शनोऽयम् इति मात्रबुद्धीनां मुने ! हे सर्वज्ञ ! ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव तन्मुखेन विशदयितुम् पृच्छति राजा—कृष्णमिति । हे मुने ! कृष्णं परं केवलं कान्तमेव विदुर्न तु परब्रह्मत्वेन तासामेवंभूतानां गुणधियां विषयासक्तधियां गोपीनां कथं गुणप्रवाहस्य सत्त्वादिगुणमयदेहपरम्पराया उपरमो निःशेषक्षयः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जारबुद्ध्यापि सङ्गता इत्युक्तं तस्य तात्पर्यमजानन्निव राजा पृच्छति—कृष्णमिति । गोप्यः कृष्णं परं कान्तं जारं पतिं विदुः ब्रह्मतया श्रुतिशतगीतपरब्रह्मत्वेन न विदुः अनधिकारित्वात् या एवंविधास्तासां गुणेषु विषयेषु धीर्बुद्धिर्यासां तास्तथा गुणप्रवाहोपरमः संसारप्रवाहनिवृत्तिः कथं सम्भाव्यते निवृत्तिमार्गलक्षणाप्रवृत्तिमार्गेण कथं संसारनिवृत्तिः स्यादिति । "उत्तिष्ठत जाग्रत" इतिश्रुतेः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथात्र परीक्षित् सविस्मयं पृच्छति—कृष्णं विदुरित्यादि । हे मुने ! ताः कृष्णं परं कान्तं प्रियतमत्वेन विदुः न तु ब्रह्मतया ईश्वरत्वेन तत्कथं तासां गुणप्रवाहोपरमः ? यतो गुणधियाम् अयं मे कान्त इति गुणे धीर्यासाम् ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अत्र राजा श्रुतिविरोधमाशङ्कते, कृष्णमिति "तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय" इति श्रुतौ ज्ञानमेव साधनत्वेनोक्तं तत्रैव पुनः "भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् । स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम्" उभयोश्च निर्णयः—

> "ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
> द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः." ॥ इति ।

"भक्त्या मामभिजानाति" इत्यपि भगवतोक्तं ततो मर्यादायां ज्ञानेनैव मुक्तिः पुष्टौ भक्त्या ज्ञानेन वा एतासां तु न द्वयम् भक्तिरपि सगुणाज्ञानमपि स गुणमुभयं च तामसम् अतः कथं मुक्तिरिति तदाह, ताः कृष्णं कान्तं परं विदुः कान्तः पतिर्जारो वा न तु ब्रह्मतया विदुः मुने इति सम्बोधनम् अत्र निर्णयपरिज्ञानार्थं निरोधस्तु स्पष्टः तासां भगवति स्वर्गिमश्च गुणबुद्धिरेव गुणबुद्धिश्च गुणप्रवाहस्य मूलम् अन्यथा गुण-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

बुद्धिनिवारकाणि सर्वाण्येव शास्त्राणि व्यर्थानि भवेयुः वैदिकपक्षस्त्वसम्भावित एव अतो गुणधियां गुणबुद्धियुक्तानां गुणप्रवाहोपरमः कथम् ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्रत्यानां बहिरङ्गाणां केषाञ्चिन्मुखदर्शनेनैव हृदयगतं सन्देहमालक्ष्य राजा स्वयं शुकवाक्यस्याभिप्रेतमर्थं तत्प्रसादाज्जानन्नपि तेषां सन्देहनिवर्त्तनार्थमेव सन्दिहान इवाह—कृष्णमिति । हे मुने सर्वज्ञ ! कृष्णं परमात्मानमपि परं परमपुरुषं कान्तं रमणं विदुः वस्तुनयात्तु न विदुः अतो गुणधियां कृष्णेन सह विहरामेति गुणविषयकबुद्धीनां तासां गुणप्रवाहस्योपरमः कथं "तमेव विदित्वा अतिमृत्युमेतीति "आत्मानमात्मात्मतया विचक्षते" इत्यादिश्रुतिस्मृतिवाक्यैः परमात्मज्ञानस्यैव मोक्षप्रापकत्वोक्तेः ॥ १२ ॥

---

### विशुद्धरसदीपिका ।

ननु, गुणमयं देहं जहुरिति वदतस्तत्र भवतः कोऽभिप्रायः किं गुणशब्देन सत्त्वादिगुणविकार इति किम्वा गौणं देहं जहुरिति स्वरूपे मर्यादिति आद्ये हेयस्य देहस्य स्वतस्त्यागस्य प्राप्तेः किन्तन्निर्देशेन यदि च पूर्वया गुणशब्देन मानसत्साद्गुण्यपरम्परा उत्तरेण तु प्राचुर्यं तत्रेदं पृच्छामः यदि च प्राप्तरासानामन्यासां निर्गुणदेहतासूचनार्थमासामेव वा प्राप्तव्यदेहस्य तत्सूचनार्थमत्र गुणमयमिति विशिष्यते तदापि तादृशदेहस्योपलक्षणत्वेन मानगुणप्रवाहस्यापि तादृशीत्वेन लब्धिः स्यात्तत्रापि पृच्छाम इत्याह—कृष्णं विदुरिति । यदि च मायया कल्पिततादृक्स्त्रीशीलनेनानुसूयुभिरित्युज्ज्वलोक्तानुसारेण श्रीसीतासङ्घादिवद्गुणमयं प्राकृतं छायामयमेव जहुः पतिमन्येष्वर्पयामासुरिति तदा शान्तमेव पापमित्यभिप्रायेण प्रश्नः तत्र परीक्षिदुवाचेति पाठं परि सर्वत्र ईक्षते इति परीक्षिते विचारनिपुण इत्यर्थः । राजोवाचेति च तत्तद्भावज्ञतयातिविचक्षण इति ततश्च सामाजिकानां समाधानायैव प्रश्न इत्यभिप्रायः । कृष्णमिति हे मुने ! तत्रायमर्थः हे मुने ! मननशील ! कृष्णं नराकृतिमानन्दविग्रहं परं केवलं कान्तं कान्तां स्वसुखानामन्तः पर्य्याप्तार्थमिमामिति परमप्रेमास्पदं विदुः न तु प्राकृतगुणत्यागकारणब्रह्मतया निर्गुणतदाविर्भावविशेषतयेत्यर्थः । तथा सति गुणप्रवाहोपरमः कथमासां जातः ? । अथवा गुणधियां ब्रह्मनिष्ठाया अपि त्याजकत्वेन प्रसिद्धेषु तादृशगुणेषु धीरन्तःकरणं यासां तासां ततो देहस्य तासामसिद्धत्वाद्भवतु नामोपरमः कथमविच्छिन्नस्तादृशगुणपरम्परया उपरमः स्यादित्यर्थः । ततश्च ब्रह्मोपासकेष्विव न तत्स्वरूपमात्राविर्भावः ततो ब्रह्मोपासकेषु ये गुणास्ते प्राकृतसत्त्वमया एव न ह्याविर्भूतभगवद्गुणानां वाद्धिधानामिति वाक्यार्थः अत्रोपरमशब्देन सङ्कोच उच्यते ततश्च गुणप्रवाहमयदेहावेशसङ्कोचेन सिद्धदेहावेशेन ययुः अत एव योगमाययान्तर्धापितमुक्तं टिप्पण्याम् एवं च गुणमयदेहाभिमानत्यागमात्रमत्र विवक्षितं ततश्च तादृशतीव्रतापेन धुतं तत्तापजनितश्रीकृष्णकृपया खण्डितम् अशुभं विरहरूपं यासां ताः तथा तादृशनिर्वृत्याऽक्षीणं क्षीणमाविरुद्धं पुण्यं मङ्गलं तत्संयोगरूपं यासां ताः गुणमयं विरहभावमयं तदावेशं जहुरित्यर्थः । अतःसद्यः प्रक्षीणबन्धनं तत्सङ्गविरोधो यासामित्यर्थः । अत्र श्रीतृतीयस्कन्धविंशाध्याय उदाहरणं तथा सति लोकापवादादिदोषोपि परास्तः कथमिति प्रश्नकाकुः ततश्च गौणदेहाभिमानत्यागपूर्वकमुख्यपरिकरदेहोपलम्भेन सङ्गता इति राद्धान्तः वक्ष्यते च स्वयं भगवतोद्धवं प्रति दशमे—

> "या मया क्रीडिता रात्र्यां वनेऽस्मिन्व्रज आस्थिताः ।
> अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया" इति ॥

अत्र कल्याण्य इति देहत्यागव्यावृत्तिः एवैव मुक्तिरित्यपि ज्ञेयं "विष्णोः परिकरत्वं हि मोक्षमाहुर्मनीषिणः„ इति पाद्मात् नच पुरुषाभिमानवतां मुनिवराणां कथं गोपीदेहप्राप्तिः कथं वा तादृशत्वेन परिकरत्वप्राप्तिरिति शङ्कनीयं अन्यथाप्रतीतस्य पुरुषत्वादेः त्यागेन शुद्धप्रेमसुखास्वादनयोग्यसखीदेहोपलब्धेरेव तस्मात् "मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः„ इति द्वितीयोक्तेः स्वरूपत्वमस्य "द्वा सुपर्णौ सयुजौ सखायौ„ इत्यादिश्रुतेः पुरञ्जनोपाख्यानुगमानुसन्धेयं तथा चाग्निपुराणे—

> "अत्राहमेव पुरुषः सर्वा प्रकृतयस्तदा ।
> अयं पुमानियं योषिन्मायया कल्पितो भ्रमः" ॥

जीवानां प्रकृतित्वं श्रीभगवद्गीतासु—

> "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
> अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
> अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
> जीवभूतां महाबाहो ययेदं धार्यते जगत्" ॥ इति

परां प्रकृतिमित्युक्त्या नित्यत्वं प्राकृतत्वं चाभिप्रेत्यमित्यलं प्रसक्तानुप्रसक्त्या विवृतमिदं भक्तिमञ्जूषायाम् एवं प्रश्नभङ्ग्या सिद्धान्त एवोद्धृतः बहिर्मुखसन्देहनिरासाय ब्रह्मज्ञानवादमये प्रसिद्धार्थे प्रश्नस्तुस्फुट एव ॥ १२ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अत्र व्याख्यातपक्षचतुष्टयेऽपि प्रथमे प्रतिबद्धगुणमयदेहत्यागः द्वितीये गुणमयदेहापवादः तृतीये गुणभूतगौणपतिरूपजारबुद्धित्यागः चतुर्थे गुणमयदेहानां व्रजे स्थापनं तत्र राज्ञोऽति दक्षतया सर्वसामाजिकाभिमताभिज्ञत्वसम्भवात् केषाञ्चिन्मनःशङ्कामाकलय्य राजा पृच्छति, राजोवाच कृष्णमिति । ता गोप्यः कृष्णं कान्तमेव परं केवलं विदुः न तु ब्रह्मतया अत्र मुने इति सम्बोधनेन शास्त्रश्रवणावगतस्य मननशीलानां निदिध्यासनात्मकमौनव्रतवतां ब्रह्मबोधेन गुणप्रवाहोपरमो भवति ननु ब्रह्मबुद्ध्यभावे "तमेव विदित्वातिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय"इतिश्रुतेरिति विद्वन् तासां गुणधियां लौकिकगुणेष्वेव रमणत्वकान्तत्वादिषु धीर्यासां तासां गुणप्रवाहोपरमः गुणमयदेहत्यागो गुणमयदेहापवादो वा कथम् यतः, परं कान्तं जारमेव विदुः तथा च गुणधियां गुणभूतपतिबुद्धीनां गुणप्रवाहोपरमः गुणपतिस्वरूपजारबुद्धिप्रवाहोपरमः

श्रीशुक उवाच ।

उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

कथम् यद्वा, कृष्णं नित्यानन्दं परं सर्वोपाधिशून्यमसङ्गं कान्तं कानां सर्वेषां सार्वभौमादिहिरण्यगर्भपर्यन्तशतशतगुणत्वेन परिसङ्ख्यातानां सुखानाम् अन्तःपर्यवसानं यस्मिन् तथाभूतमपि ब्रह्मतया न तु विदुः तथा च ब्रह्मबुद्ध्यभावादेव गुणधियां प्राकृतगुणात्मकविग्रहमतीनां तथा पूर्वोक्तगुणप्रवाहोपरमः कथम् ? यद्वा, ताः कृष्णं नित्यानन्दं परमसङ्गं कान्तं सुखावधिं ब्रह्मतयैव विदुः लीलाभक्ति मायाप्रवेशाभावेन कस्या अप्यज्ञानासम्भवात् किमु वाच्यं तासां नित्यसिद्धानां श्रुतिमुनिरूपाणां वा तथाच ननु गुणधियां तासां पूर्वं "जहुर्गुणमयं देहम्" इत्यत्रोक्तो गुणप्रवाहोपरमः कथम् ? सति गुणप्रवाहे तदुपरमो भाव्यः गुणबुद्ध्यभाववतां लीलाधामगतानां गुणप्रवाहस्यैवासम्भवात् कथं तदुपरम इत्यभिप्रायः ॥ १२ ॥

---

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ननु "तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय" "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" "ऋते ज्ञानान्न मोक्षः" इत्यादिश्रुत्या ज्ञानस्यैव मोक्षसाधनत्वाभिधानं तच्च ज्ञानम् "अहं ब्रह्मास्मि" इत्यादिरूपं स्यात् तमात्मानमात्मतया विगुञ्जागैरिकाशिखिपिच्छादेर्ब्रह्मादिभिरुपमानत्वसारस्यादेः "परमाभयं क्षयीयस्त्वं चक्षते" इत्युक्तत्वात् "तत्त्वमसि, अहंब्रह्मास्मि" इत्यादिश्रुतेश्च तत्साधनं च भक्तियोगः—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥

"यमेष वृणुते तेन लभ्यः"

"मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
भक्त्या मामभिजानन्ति यावान्यश्चास्मि तत्त्वतः"

"पुरेह भूमन् ! बहवोऽपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया ।
विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ! ते गतिं पराम्" ॥

इत्यादिशास्त्रं तथा च कृष्णे ब्रह्मबुद्ध्या भाववतीनां जारबुद्ध्या कथं मोक्षः न हि पतिपुत्रादीनां वस्तुतो ब्रह्मभूतानामपि भजनेन मोक्षो भवतीति शङ्कानिवृत्त्यर्थं राजा पृच्छति—कृष्णमिति । कृष्णं परं केवलं कान्तं कमनीयं पतिं वा जारं वा विदुः । यद्वा, परं परपुरुषं कान्तं स्मरमयं विदुः न तु ब्रह्मरूपं विदुः अतो गुणधियां गुणकार्यविषयाक्रान्तबुद्धीनां गुणप्रवाहस्य संसारस्योपरमो मोक्षः कथं मुनिभावेन तन्निर्णयं कर्तुं समर्थोऽसीति सूचयन्सम्बोधयति—हे मुने ! इति । विषयबुद्ध्यापि मोक्षसिद्धौ श्रवणमननादेर्वैयर्थ्यं स्यादिति वा सम्बोधनाशयः निवृत्तिपक्षे कृष्णं सदानन्दरूपं परं कान्तं परमरसं ब्रह्मतया गुणबुद्ध्या न विदुः नावेदयन्ति अतो गुणमात्रधियां तासां श्रुतीनाम् उद्गीथादिगुणवर्णने यो प्रवाहस्तस्योपरमः कथं तृनयोऽपि याः कृष्णं ब्रह्मतया न विदुस्तासां गुणप्रवाहोपरमः कथं न हि ब्रह्माकारतां विना गुणप्रवाहोपरमो भवतीति भावः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीशुकानुग्रहात् ज्ञाततत्त्वोऽपि लौकिकजनभ्रान्तिनिराकरणार्थं श्रीविष्णुरातः पृच्छति—कृष्णमिति । "को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । कामग्रन्थौ चक्रिणि च" इति मेदिनीकारकोशात् कस्य कामग्रन्थेरन्तः परिहारो यस्मात्तं केवलं कान्तं रतिकोविदमेव विदुः नतु ब्रह्मतया मुमुक्षुजिज्ञास्यत्वेनेत्यर्थः । अतः गुणधियां गुणेषु विषयेषु धियो यासां तासां गुणप्रवाहोपरमः कथम् "ब्रह्मविदाप्नोति परं, तमेव विदित्वाऽतिमृत्युमेति" इतिश्रुतिविरोधात् एवम्विधा अपि काश्चन तासु बभूवुः तद्विषयकोयं राजप्रश्नः बहव्यस्तु श्रीकृष्णस्वरूपगुणादियथार्थज्ञानयुक्ताः बभूवुः तासां तादृग्ज्ञानयुक्ताऽस्मिन्नेवाध्याये वक्ष्यते ॥ १२ ॥

---

भाषा टीका ।

॥ राजोवाच ॥

राजा परीक्षित् बोले, कि—हे मुने ! वे सब गोपिका तो श्रीकृष्णचन्द्र कूं अपने प्यारे कमनीय पतिमात्र ही मानतीहीं कछु ब्रह्म स्वरूप सों तो मानतीं न रहीं तब फिर गुणमय बुद्धिधारी उन गोपीन को गुणन को प्रवाह रूप जो संसार है ताको उपराम ( निवृत्ति ) कैसे भयो अर्थात् गुणमय बुद्धिधारी गोपीन को संसार कैसे छूट्यो ? ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परिहरति—उक्तमिति । अयं भावः जीवेष्वावृतं ब्रह्मत्वं कृष्णस्य तु हृषीकेशत्वादनावृतमतो न तत्र बुद्ध्यपेक्षेति ॥ १३ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

श्रीशुकः शुक इति किञ्चिदमर्षादिनाऽव्यक्तवाक्तया कथनेन शुकतुल्यत्वात् किन्तु राजानं स्वाभिप्रायमिदं जानन्नपि तद्व्याजेन तत्प्रश्नहेतून् हैतुकान् कांश्चिदुद्दिश्य क्रुद्ध्यन्निव प्रत्याह—उक्तमिति । तत्र प्रथमपक्षे भक्तानां संसारोपरमेपि राज्ञः शङ्कया श्रीभगवन्माहात्म्ये तावदसम्भावनोत्पत्तेः क्रोधमुद्रा हृषीकेशं सर्वेन्द्रियवृत्तिप्रदत्वेन परमोपकारिणमपि यद्वा, हृषी तृणविशेषस्तद्वत्सूक्ष्मदीर्घचिरत्वाः किम्वा हृष्यो रश्मयः तद्वद्दीप्तिमन्तो बहुलाश्च केशा यस्य तं परमसुन्दरमित्यर्थः । तादृशमपि कृष्णं द्विषन्नपि चैद्यः शिशुपालः सिद्धिं मुक्तिं गतः प्राप्तो यथा यत् एतत् पुरस्तात् पूर्वं सप्तमस्कन्धे ते तुभ्यम् उक्तमेव शकटाधःशयनं शकटपातसङ्कटाद्विमुक्ततयाऽस्मात्पुनर्जात इवेत्यधोक्षजः श्रीव्रजेन्द्रनन्दनः सप्रियोपासान्ताः तस्य वा प्रियाः सिद्धिं यान्तीति किमुत वक्तव्यमित्यर्थः अन्यत्तैर्व्यञ्जितमेव द्वितीयपक्षे चैद्योपि सिद्धिं गुणातीत सच्चिदानन्दविग्रहप्राप्तिलक्षणां नतु विदेहकैवल्यरूपां प्राप्तः कृष्णप्रियास्तु तादृशीं सिद्धिं यान्तीति किमुत वक्तव्यम् अतः प्रेमविशेषोत्सेककृतात् प्रेष्ठविरहजक्षोभातिशयाद्भीताभिस्ताभिर्जन्मादिध्वंसः स्वीकृतः यदुक्तं गुणातीतदेहग्रहणं भक्तानामप्ययुक्तमिति तत्र सदैन्येन भावितं भावविशेषं सर्वोत्तमबुद्ध्या वृहद्भ्यो भक्तविशेषेभ्यो गुणातीतदेहः प्रेमविवर्त्तविशेषाभावात् प्रायो न रोचते श्रीभगवत्प्रेयसीनान्तु प्रणयेनोन्नतमनसां तत्र नाति हानिरिति तृतीयपक्षे हृषीकेशं द्विषन्नपि चैद्यः सिद्धिं निजाभीष्टस्य पूर्त्तिं पुनर्भगवत्पार्षदलक्षणां प्राप्तः इत्यत्र हृषीकेशनामसामान्यस्य श्रीभगवत्स्वरूपस्य वाचकम्. अधोक्षजनाम तु प्रोक्तनिरुक्त्या विशेषस्य तत्स्वरूपस्य अतस्तस्यावतारेभ्योऽवतारिणश्च काममप्यधिकां माधुरीं प्रकटयतः श्रीव्रजराजकुमारस्य प्रियाः परममधुरप्रेमशालिन्यः सर्वदा यथावदन्यव्रजदेव्य इव व्रजास्थानेन अभीष्टस्य व्रजे प्रेमविलासादेः सिद्धिं प्राप्स्यन्तीति किमुत वक्तव्यम् एतत्तु हानम् अन्तर्धानतया लक्षयता किम्वा भवत्यागमेव देहत्यागतया व्यञ्जयता मया सूचितमपि भवद्भिर्यैर्नावधारितमिति सर्वमनवद्यम् अहो जन्मत्रया सुरत्वप्रापकमुनिशापाज्जे चैद्यः श्रीकृष्णप्रियत्वेन च व्रजदेव्यः सिद्धिं याता इति किं वक्तव्यम्॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीशुकः शुक इति परीक्षिद्वचनस्य वहिर्मुखप्रतारणामुमुक्षुसन्देहनिरसनार्थी प्रवृत्तिमवगत्यापि तद्व्याजेन वहिर्मुखान् भर्त्सयन्निव किञ्चित् सामर्षत्वेनाऽव्यक्तवचनत्वात् तथैवाह—उक्तम् पुरस्तादिति । सिद्धिम् अभीष्टां गतिं पुनः पार्षदतां वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्म्यताम् " नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ" इति सप्तमात् ततस्तस्य द्वेषेऽपि जाते लीनतया स्थितैरपि पुनः स्वगुणैरेव सह तत्प्राप्तिरिति सुतरामेवाधोक्षजप्रीतिविषयाश्रयाणां तासां वर्द्धिष्णुप्रेमतया प्रकटैस्तैरेव सह तत्प्राप्तिरित्यर्थः । मया तु गुणमयं देहमिति स्वरूपशक्तिवृत्तिरूपान्तर्वहिर्देहप्राप्त्या समूलप्रकृति प्राकृतसद्गुणैः सौन्दर्यादिभिः सम्वलितमपीत्येव विवक्षितं देहस्यैव विशेषणत्वादित्यर्थः । प्रश्नस्य श्लेषत्वे द्वितीयार्थे त्वयमुत्तरस्यार्थः "ये यथा माम्" इत्यत्र तान् प्रत्येतान्यान् गुणांश्च प्रकाशयामि स्वतस्तु मम सर्वेऽपि सन्त्येवेति विवक्षितम् अतस्तादृशभक्तावेशात् तस्यानुसन्धानाभावेऽपि तत्तच्छक्तय एव स्वावसरे तान् प्रकाशयन्ति अन्यथा दूरतो भजतां केवलतन्माधुर्यनिष्ठानां तदप्राप्तिरेव स्यात् तत्र कैमुत्येन दृष्टान्तं स्पष्टयित्वाह—द्विषन्नपीति । अन्यथा तत्राप्यन्तेन मोक्षादिदायकमैश्वर्यं प्रकाशेतेति भावः । तत्तत्प्रकाशे नामद्वयेन हेतुमाह—हृषीकेशमिति । अधोक्षजेति च उभयनामनिरुक्त्या तज्ज्ञानानपेक्षतयैव तेषां सिद्धये तद्गुणविशेषः प्रकाशत इति दर्शितम् ॥ १३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उक्तं पुरस्तादिति शिशुपालदृष्टान्तेन गोपीनामपि गोवर्द्धनोद्धरणादिभिरीश्वरत्वज्ञानमस्तीति परिहार उक्तः । यद्वा, वस्तुस्वभावान्मोक्षसिद्धिः वस्तुस्वभावः प्रतिबन्धकप्रारब्धकर्मक्षयः उद्देश्यान्तरप्रतिपत्तिश्च अत एव दशाननस्य मोक्षाभावः गोपीनां तु प्रतिबन्धकाभावात् वस्तुस्वभावायत्तो मोक्ष उपपन्न इति गुणधियां शब्दादिविषयगुणधियाम ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्य प्रश्नस्योत्तरं सप्तम एवाभिहितम् इत्याह—उक्तमिति । एतदत्र वक्तव्यमुत्तरं तुभ्यं पुरस्तात्सप्तमस्कन्ध एवोक्तम् "गोप्यः कामाद्भयात्कंसः" इत्यादिना कोपि भगवत्यनन्यभावो मुक्तिहेतुरेवेत्युक्तमेवेत्यर्थः । उक्तेप्युत्तरे कैमुत्यन्यायेनोपपत्तिमाह—चैद्य इत्यादिना । चैद्यः शिशुपालो हृषीकेशं द्विषन्नपि यथा सिद्धिं पुनः द्वाःस्थतां प्राप्तः यथेति निदर्शनं वा द्विषन्नपि सिद्धिं गतः किमु तस्य प्रिया गोप्यः सिद्धिं ययुरिति ॥१३॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्या सन्ततमधुमथनमहिमासंस्मरणसमुदितसम्विदानिवृत्तियोग्या मुक्तिर्नतु कामादिना तेन स्वर्गादिप्राप्तिरेव "कृष्णकामास्तदा गोप्यस्त्यक्त्वा देहं दिवं गताः" इत्यादिस्मृतेरित्यभिप्रायं हृदि कृत्वाऽर्थवादस्यापि स्वार्थसाधनसमर्थकत्वात्तेन चोद्यं परिहरति शुकः—उक्तमिति । द्वे मुक्ती ह्यानन्दानुभवलक्षणा नित्यदुःखानुभवलक्षणेति ते उभे अपि सिद्धिशब्दोक्ते तत्र यथाशास्त्रविहितमङ्गीकर्तव्यमिति तदुक्तम् सदा द्वेषिणामधरं तमः इति मुक्तिशब्दोदितं चैद्यप्रभृतावित्यादि लोकसङ्ग्रहार्थं किमुताधोक्षजप्रिया इति अन्यथा "कामस्त्वशुभकृष्यापि भक्त्या विष्णोः प्रसादकृत" इत्यादिनोदाहरिष्यत् जगत्प्रपितामहे विष्णौ जारबुद्धिः कथं घटत इति चेत् ? अत एव जारबुद्ध्यापीत्यत्रापिपदेन जारबुद्धिं गर्हयामास स्त्रीणां जारे हि प्रेष्ठत्वबुद्धिः साऽपि न घटत इति चेन्न न सर्वेषां हरौ प्रेष्ठत्वबुद्धेरविगाहतया वृत्तेः "तदेतत्प्रेयः" इति श्रुतेः अयं भावः कुतो ऽवगत इति चेन्न जगत्प्रपितामहे जारबुद्धिर्न युक्तेत्याचार्यवचनात् ॥ १३ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रश्नानन्तरं किञ्चिज्जातक्रोध इव सगाम्भीर्यं प्रत्युत्तरं दास्यतः श्रीशुकाचार्यस्यायमाशयः हे राजन् ! साधयिष्यमाणे हि वस्तुनि सन्देहः प्रवर्त्तते न तु सिद्धे गुणमयं देहं त्यक्त्वा निर्गुणं देहमासाद्य तं सङ्गता इति यदुक्तं तत्सिद्धानुवाद एव कृतः न तु मयारोप्य कथितं तदत्र कः सन्देहः ? कृष्णे प्रेमैव तथा सम्पादयति न तु ब्रह्मज्ञानं किम्बहुना आसां तु प्रेमैव येषां तस्मिन् द्वेषस्तेषामपि गुणप्रवाहोपरम आसीत् प्रेम्णः पुनरयं महिमा यदसौ स्वानुकूलं निर्गुणं शरीरमापादयति एतत्तु सर्वं श्रीकृष्णाधिकरणतामूलमेवेति क्रोधावेशं प्रकटयन्नाह—उक्तमित्यादिद्वाभ्याम्। पुरस्तादेवोक्तमस्ति तथापि भ्रान्तोसीत्यर्थः । किं तदित्याह, द्विषन्नपि चैद्यः सिद्धिं प्राक्सिद्धपार्षदभावं न तु कैवल्यं यथायथावत् गतः किमुत अधोक्षजप्रियाः कान्तत्वेन भजन्त्यो हि तस्य प्रिया भविष्यन्तीति यत् तत्किमुत अतः कान्तत्वेन ज्ञानमेव गुणप्रवाहोपरमस्तासां न पुनर्ब्रह्मत्वेन ज्ञानम् ॥ १३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्रोत्तरमाह—उक्तमिति, चतुर्भिः । एतत्सप्तमस्कन्ध एवोक्तं शिशुपालमुक्तौ यथा शास्त्रद्वयं भक्तिज्ञानप्रतिपादकं साधनं तथा भगवत्स्वरूपमपि भगवान् हि मुक्तिदानार्थमेवावतीर्णः सच्चिदानन्दरूपेण प्रकटः अतो यः कश्चन येन केनाप्युपायेन भगवति सम्बन्धं प्राप्नोति स एवमुच्यते ज्ञानभक्त्योस्तु आविर्भावार्थमुपयोगः आविर्भावश्चेदन्यथा सिद्धः तदा न ज्ञानभक्त्योः उपयोगः अत्र तु भगवान् स्वत एवाविर्भूतः मुक्तिदानार्थं सर्वसाधारण्येन ईश्वरेच्छाया अनियम्यत्वात् अत आविर्भावः स्वेच्छया भक्त्या ज्ञानेन वा भगवदवतारातिरिक्तकाले द्वयमेव हेतुः । अवतारदशायां तु न तयोः प्रयोजकत्वं वर्षाकाले जलं सर्वत्र सुलभमिति न कूपनदीनामनुपयोगः शङ्कनीयः तदाह, पुरस्तात्सप्तमस्कन्धे यथा चैद्यः शिशुपालः सिद्धिं भगवत्सायुज्यं गतः द्विषन्नपि द्वेषं कुर्वन्नपि यद्यपि द्वेषकृतो दोषः प्रतिबन्धको भवति तथापि स्मरणेन तदयं हित्वा तत्र सायुज्यं प्राप्तः । किञ्च, नापि तस्य दोषोऽस्ति कश्चन द्वेषादयोऽपि भगवतैवोत्पादिताः तदाह—हृषीकेशमिति । इन्द्रियप्रेरकोऽयं यथासुखं भावानुत्पादयति यत्र द्वेषस्यापि मोक्षसाधकत्वं तत्र अधोक्षजप्रियाः किमुत वक्तव्याः मुक्तिं गच्छन्तीति ॥ १३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीमन्मुनीन्द्रोपि नायं वस्तुतो राज्ञः प्रश्न इति मनसा जानन्नेव त्वमेवं पृच्छन्मेधाशून्य एवासीति तद्व्याजेनानभिज्ञानेव तान् भर्त्संयन्नाह—उक्तमिति । पुरस्तात्सप्तमस्कन्धे एव द्विषन्नपीति द्वेषलक्षणप्रातिकूल्यभावेनापि यदि सायुज्यं लभ्यते तर्हि कामलक्षणानुकूल्यभावस्य का वार्तेति भावः । हृषीकेशमिति निरुपाधिकृपया स्वयमवतीर्णं ब्रह्मादीनामपि हृषीकैरग्राह्योपि मर्त्यलोके परमनीचानामपि हृषीकेषु दृष्टेः स्वाचिन्त्यशक्त्या विषयीभूतो भवति तानुद्धर्तुमितीदमप्येकं तस्य कृपैश्वर्यमिति भावः । इमास्तु अधोक्षजस्य अतीन्द्रियस्य तस्य प्रियाः प्रीतिविषयाश्रयभूता एव अत्र चैद्यः सिद्धिं यथागत इति प्रत्यासन्नमघासुरं हित्वा विप्रकृष्टश्चैद्यो यत् दृष्टान्तितस्तेन राजानं प्रत्येतत्सरहस्यमाह, चैद्यस्यापि द्वेषाभिनिवेशोद्रेकात् मुनिशापनिबन्धनमयदेहस्यैवोपरमः अन्तश्चिन्मयपार्षददेहस्तु तस्यानश्वरो नित्यो वर्तते एव यदुक्तम् "विष्णुचक्रहतांहसौ" इति विष्णुचक्रेण हतमंह एव ययोर्नतु ताविति सिद्धिं गतः अभिष्टां गतिं पार्षदतां प्राप्त इत्यर्थः । यदुक्तम्—

> "वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् ।
> नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ" ॥

इति ॥ १३ ॥

---

### विशुद्धरसदीपिका ।

अथ तादृशेनैवोभयार्थस्पृशा वाक्येनोत्तरं तत्र प्रसिद्धार्थस्तु श्रीस्वामिपादैः प्रतिपादितः द्वितीयो विचारणीयः तथाहि नहि वस्तुशक्तिर्बुद्धिमपेक्षते विषबुद्ध्या पीतामृतवत् इति जानन्नपि स्वाहृशस्यमध्यवस्यन्समादधाति—श्रीशुक उवाच । उक्तमिति । तत्प्रश्नाभिप्रायं ज्ञात्वा सामर्षोक्तिर्बहिर्मुखप्रतरणाय तत एव च पुरस्तादित्यव्यक्तवचनेनोत्तरमपि चैद्य इति नामानुक्तिः प्रतिकूलभावत्वात् सिद्धिं पुनः पार्षदरूपामभीष्टां गतिं विष्णुपार्षदाविति श्रीसप्तमोक्तेः अयम्भावः साधयिष्यमाणे हि वस्तुनि सन्देहः प्रवर्त्तते न तु सिद्धे ततो गुणमयं देहं त्यक्त्वा निर्गुणं देहं सङ्गता इति तत्सिद्धानुवादः श्रीकृष्णप्रेमैव सर्वसम्पादक इति वक्तव्यं येषां तस्मिन् द्वेषस्तेषामपि सिद्धिरभूदिति सा च सिद्धिः प्राप्तसायुज्ययोरपि पुनर्विकुण्ठासुतपार्षदता प्राप्तिरेव प्रकृते तु तयोर्वैरभावोपनतकैवल्यप्रतिबन्धेन प्रार्षदताप्राप्तिवज्जारबुद्ध्युपनतप्रेयसीत्वप्रतिबन्धेन शुद्धसहचरीत्वोपलब्धिरिति ज्ञेया अपि च उभयनामनिरुक्त्या तज्ज्ञानानपेक्षतयैव तेषां सिद्धये तद्गुणविशेषः प्रकाश इति दर्शितं तत्र हृषीकेशमिति सर्वान्तर्यामित्वेन वस्तुशक्त्यैव सिद्धिर्नतु भावापेक्षेति भावः । अधोक्षजः प्रियो यासामिति तत्कर्तृकप्रियताविषय इति कैमुत्यसिद्धिः ततश्च द्वेषेऽपि जाते लीनतया स्थितैरपि पुनः स्वगुणैरेव तत्प्राप्तिरिति सुतरामेवाधोक्षजप्रीतिविषयाणां वर्द्धिष्णुतया प्रकटितैस्तैरेव सह तत्प्राप्तिरित्यर्थः । अतो न बुद्ध्यपेक्षेति भावः । अधोक्षजपदेन च अधः अक्षजा प्रकटलीला यस्यासाविति व्युत्पत्त्या नित्यकिशोरतया स्थितिः सूचिता—

> "बृहच्छरीरोऽप्यविमानरूपो युवा कुमारत्वमियाय कृष्णः ।
> रेमे प्रियाभिर्जगतां जनन्या स्वज्योत्स्नया चन्द्र इवामृतांशुः" ॥

इति पाद्मोत्तरखण्डोक्तेः तादृशतया नित्यस्थितमुख्यप्रकाशप्रीत्याभया इत्यर्थः । अत्रैवं विवेचनीयं पाद्मोत्तरखण्डोक्ता मुनिचर्य एता द्विविधाः काश्चित्पक्वप्राकृतदेहाः परिशिष्टसच्चिदानन्दरूपाः सिद्धिमेव ययुः काश्चित्तु सीतासंज्ञादिवत्पतिम्मन्येभ्यः छायाकल्पितदेहं दत्वा अप्राकृतरूपेण रासलीला-

विशुद्धरसदीपिका।

सुखमनुभूय भूयो व्रजमागत्य पुनरपि व्रजगतदेहैनैकीभूतदेहाः स्नेहमेव पुपुष्णन्ति स्मेति या एता उद्दिश्य स्वयं भगवतोक्तं "तास्ता निशाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण। क्षणा मया कल्पसमा बभूवुः" इत्यादिना एता एवानशिष्टकथायामासां विरहलीलायोग्या इति ज्ञेयम्। एताश्च पतिम्मन्यानां सेवां प्राकृतदेहेन श्रीकृष्णदेहे सेवां त्वप्राकृतसिद्धवपुषेति व्यवस्थितौ गोचारणगमनागमनादावुभाभ्यां मिलिताभ्यामेव यथा गच्छन्ति तथैवाधुनापि वेणुनादमोहितत्वेन तदनुसन्धानशून्याश्चलिता-स्तैर्निरुद्धाः पश्चाज्ज्ञातानुसन्धाना गुणमयदेहावेशं त्यक्त्वा ययुरिति तत्तदननुसन्धानं च योगमाययेति सर्वं समञ्जसमिति॥ १३॥

---

श्रीरामनारायणकृतभावभावविभाविका।

श्रीमगवान् शुकस्तदुत्तरमाह—श्रीशुक उवाच उक्तमित्यादि-चतुर्भिः। तत्रायमभिप्रायः न हि वस्तुमाहात्म्यं बुद्धिमपेक्षते विषबुद्ध्या पीतामृतस्याप्यमृतत्वप्राप्तिवदेकान्तबुद्ध्या सङ्गतानां बुद्धिमनपेक्ष्य वस्तुमहात्म्यादेव गुणप्रवाहोपरम इति प्रश्नगत-पक्षत्रयोत्तरमभिप्रेत्य कैमुत्यन्यायेन तद्दर्शयति—पुरस्तात्सप्तम-स्कन्धे चैद्यो यथा हृषीकेशं द्विषन्नपि सिद्धिं गतस्तथैतदुक्तम् इत्यन्वयः। अत्र हृषीकेशमित्यनेनैतदुक्तं भवति भगवतो हृषी-केशत्वान्न हि तत्प्रेरणां विना केनचिदपि तस्मिन् द्वेषः कर्त्तुं शक्यते न वा परमानन्दात्मकतया निरुपाधिनिरतिशयप्रेमास्पदे साक्षादपरोक्षे तत्र द्वेषः सम्भवति न वा शापोद्भूतासुरस्वभावज-मोहेन द्वेषसम्भावना न हि भगवत्पार्षदानां ब्राह्मणेष्वन्यथा-बुद्धिः सम्भवति न वा सनकादीनां कोपः शापो वा न वा "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यादिवचनैर्वैकुण्ठगतानां पातित्वं न वा शापावसरे एव भगवत्स्मृतिभ्रमोहाभावं प्रार्थयतां मोह-सम्भवस्तस्मात्सर्वजनोद्धारार्थमाविर्भावयितव्यलीलोपयोगितया हृषीकेशप्रेरितानामेव तत्तद्रूपनिन्दादिचेष्टोपपत्तिस्तथा च द्वेषानु-कारे प्रेरितानामपि यदा वस्तुमाहात्म्यादेव गुणप्रवाहोपरमेण स्वप्राप्तिर्दर्शिता तदा किमु वाच्यं प्रेमिणां तत्प्राप्ताविस्याह, किमुताधोक्षजप्रिया इति। अधोक्षजम् ऐन्द्रियकं ज्ञानं यस्मात् अधस्सु अधमेषु अक्षजा कृपादृष्टिर्यस्येति वा अधः सुखचरण-शरणापन्नेषु अक्षजा कृपार्द्रा दृष्टिर्यस्येति वा अधः अक्षजः सूर्यः प्रकाशो यस्मादिति वा अधः अक्षमिन्द्रियं मनस्त-स्माज्जातश्चन्द्रो आह्लादे वा यस्मादधः अक्षजो भुवजो वह्नि-स्तेजसि वा यस्मात् अधः अक्षजाः सूर्यचन्द्राग्नयोध्येयास्तेने-ष्वा यस्य अधः अक्षजो मनोजो मनोहरत्वादौ यस्मात् स अधोक्षजः प्रियो यासां तथा च प्रेमभावनया तत्र निविष्टा इति किमु वाच्यं तस्मादधोक्षजस्तत्प्रिया इति वा तथा च तेनैव स्वप्रिया गुणप्रवाहोपरमेण स्वस्मिन्सङ्गमिता इति वस्तु-माहात्म्यादेव सर्वसम्भवान्न शङ्कास्पदम्॥ १३॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु एवंविधरसवत्यां कथायां प्रतिबन्धकमात्रमुक्तोत्तर-प्रश्नं करोत्यभिप्रेत्य सामर्थ्यमाह—श्रीशुक उवाचेति। पुरस्तात् सप्तमस्कन्धे उक्तमर्थं पृष्टत्वात्करुणया पुनः स्मारयति, चैद्यः शिशुपालः हृषीकेशं भगवन्तं द्विषन्नपि सिद्धिं गतः हृषी-काणामीशं नियन्तारमित्यनेन यथाधिकारं द्वेषादिकं भगवत्प्रेरणा-यैव भवतीति सूचितम्। यद्वा, नावृतैश्वर्यं द्विषन्नित्यनेन आवृत-ब्रह्मभावानां जीवानां परस्परं द्वेषादिना सिद्ध्यभावेऽपि कृष्णे-नावृतब्रह्मभावे यथा कथञ्चिन्मनः प्रवेशे सिद्धिर्भवतीति ध्वनितं यथैवं तथा पुरस्तान्मयोक्तं तथा च कृष्णे विरोधवृत्त्यापि यदि सिद्धिर्भवति तर्हि, परमानुकूलवृत्त्यासक्तचेतसां गोपीनां सिद्धिप्राप्तौ किं चित्रमित्याह, किमुतेति। अधोक्षजः प्रियो यासां ताः अधोक्षजस्य प्रिया इति वा अध अक्षजन्यं ज्ञानं यस्मादि-त्यर्थकेनाधोक्षजपदेन "अशब्दमस्पर्शरूपमव्ययम्" इत्यादिश्रुत्या सर्वगुणातीतम् आवरणविनिर्मुक्तं परमात्मानं जारबुद्ध्याऽपि सेव-न्तीनां या बुद्धयस्ता वस्तुमाहात्म्याद्ब्रह्मबुद्धिपरा एव गुणबुद्धय इति ध्वनितं सप्तमस्कन्धे चेत्थमभिहितम्—

"तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात्कामेन वै युञ्ज्यात्कथञ्चिन्नेक्षते पृथक्॥
कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरे मनः।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः॥
गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृप!।
सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो"॥ इति

यद्वा पूर्वं—

"ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत्।
योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम्॥

इति पृष्टवतस्त्वेतदुत्तरं कथनेन मयोक्तम्

"सर्वेषामपि भूतानां नृप! स्वात्मैव वल्लभः।
इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि॥
कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥

इत्यादिना किञ्च सप्तमेऽप्यभिहितमित्याह, यथा वा चैद्य इति। निवृत्तिपक्षेऽपि समानमिदं पञ्चश्लोकात्मकं प्रकरणम्॥ १३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सप्तमस्कन्धोक्तया रीत्या समाधीयते—उक्तमिति। पुरस्तात् सप्तमस्कन्धे एतदत्र वक्तव्यमुत्तरं पुरस्तात् सप्तमस्कन्धे ते तुभ्यमुक्तमेव हृषीकेशं सर्वेन्द्रियेशं सर्वात्मानं द्विषन्नपि सिद्धिं भगवत्प्राप्तिलक्षणां यथाप्राप्तिकूल्येन कृष्णभावनेन चैद्यो गतः किमुताधोक्षजप्रियाः आनुकूल्येन कृष्णभावनेन सिद्धिं प्राप्ता इति वक्तव्यम्॥ १३॥

---

भाषा टीका।

श्रीशुक उवाच।

श्रीशुकदेवजी बोले, कि—हे राजन्! ये बात तो हमने तोसे पहिलेही ( सप्तमस्कन्ध के प्रारम्भ में ) कह दीनी, कि—जैसे शिशुपाल श्रीकृष्णचन्द्र तें द्वेष ( वैर ) करतो २

**नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ! ।**
**(१)अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥**

### भाषा टीका ।

सो सिद्धि कूं प्राप्त होयगयो अर्थात् मुक्ति पाय गयो, तो फिर श्रीकृष्णचन्द्र की परमप्रियान कूं मुक्ति प्राप्त होय यामें कहा सन्देह है ॥ १३ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, देही कथमनावृतः स्यादत आह—नृणामिति । गुणात्मनो गुणनियन्तुः भगवतः एवं रूपा अभिव्यक्तिरतो न देहित्वादश्रमत्र वक्तुं युज्यत इति भावः ॥ १४ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यथा कथञ्चित्सम्बन्धेनापि निजाभीष्टसंसाधकं भाव-विशेषं श्रीभगवन्तमेव वा श्रीभगवत्प्रभावेन सर्वे प्राप्नुवन्तीत्याह, नृणामिति द्वाभ्याम् । निःश्रेयसं भक्तिः तदेवार्थः फलं किम्वा-तस्यार्थः प्रेमा तस्मै तत्प्रदानार्थमित्यर्थः । यद्वा, निःश्रेयसं मुक्तिः तस्यार्थोभक्तिः व्यक्तिः प्राकट्यम् इति साक्षाद्भगवत्त्वमेवाभि-प्रेतम् अत एव भगवतः अवतारिणः परमेश्वरस्य । यद्वा, नृणां निःश्रेयसार्थायैवेत्यत्र हेतुः भगवत इति । अन्यथा भ्रूविजृम्भमात्रेण ब्रह्माण्डकोटिसंहारसमर्थस्य भूभारकंसादिवधार्थे व्यक्तेरनुपपत्ति-रित्यर्थः । हे नृपेति यथा नृणां क्षेमार्थमेव इतस्ततो भवादृशस्य राज्ञो गमनमिति भावः । भगवत्त्वमेवाह—अव्ययस्येत्यादिभिश्चतुर्भि-र्विशेषणैः । आत्मदानादिनापि न व्येतीत्यव्ययः तस्य कुतः अपरि-मेयस्य अपरिच्छिन्नस्येत्यर्थः । तत्कुतः? निर्गुणस्य मायागुणातीतस्य तच्च कुतः? मायागुणानामात्मनः प्रवर्तकस्य । यद्वा, नृणां निःश्रेय-सार्थायैव व्यक्तिर्जन्म अन्यथा तु कथञ्चिन्नसम्भवेदित्याह—अव्ययस्य जन्मादिविकाररहितस्य किञ्च, अप्रमेयस्य तादृशस्यापि व्यक्तौ हेतुः गुणात्मन इति । निजकारुण्याद्यशेषगुणानां चेतयितुः प्रक-टनपरस्येत्यर्थः । अन्यत्समानम् । अथवा ननु, तर्हि कथं परदाराकर्षणं तत्राह, अव्ययस्य परदाराविनोदेनापि न किञ्चित्तस्य व्येतीत्यर्थः । ननु, तथापि तस्य तेन किं नाम प्रयोजनं तत्राह—अप्रमेयस्य दुर्वि-तर्क्यस्य तस्य लीला केन वितर्कयितुं शक्येतेत्यर्थः । कुतः ? निर्गु-णस्य गुणात्मनः निर्गुणोऽपि सन् यः गुणानामात्मा आश्रय-स्तस्य निर्गुणत्वात्तद्दोषाक्षेपः गुणात्मत्वाच्च श्रीगोपीभिः सह रतिरिति सिद्धान्तः । यद्वा, ननु तथाप्यसमञ्जसमित्यर्थं स्वयं विचार्योच्यतामिति चेत्तत्राह, निर्गुणस्यापि जनस्य गुणानामात्मनः प्रवर्तकस्य रासक्रीडया जगतामेव परमप्रेमसिद्ध्या सर्व-सद्गुणसम्पत्तेः एतदभिव्यक्तिरग्रे रासक्रीडोपसंहारे भविष्य-त्येव ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं तद्ध्यानप्रभाव उक्तः तत्र भगवद्व्यक्तिसमये तु भग-वत्पार्षदस्यागन्तुकदैत्यप्रभावस्य चैद्यस्य तथा तादृशश्रीभग-वत्प्रेमवतीनां तासां तत्तत्सम्पादनाय भगवतः साक्षाद्यमर्वाचीन कैमुत्येन कारणमित्याह—नृणामिति । नृणां जीवमात्राणां निःश्रेयसार्थाय सर्वसाधनफलाय तत्तद्योग्यतासम्पत्पूर्वकस्व-लीलानन्दप्राप्तिरूपाय तं साधयितुमेवेत्यर्थः । व्यक्तिः प्राकट्यं तदर्थं(त्वा)वधारणार्थमाह—भगवत इति । अन्यथा भ्रूविजृम्भमात्रेण ब्रह्माण्डकोटिसंहारसमर्थस्य भूभारहरणमात्रार्थं व्यक्तेरनुपपत्ति-रित्यर्थः । हे नृपेति यथा नृणां क्षेमार्थमेव इतस्ततो भवा-दृशस्य राज्ञो गमनमिति भावः । भगवत्त्वमेवाह—अव्ययस्येत्या-दिभिश्चतुर्भिर्विशेषणैः । नित्यं नानाप्रकारैर्नानाभक्तेभ्य आत्म-दानादिनापि न व्येतीत्यव्ययः तस्य कुतः ? अप्रमेयस्य अप-रिच्छिन्नस्येत्यर्थः । तत्कुतः ? निर्गुणस्य मायागुणातीतस्य तच्च कुतः मायागुणानामात्मनः प्रवर्तकस्य । यद्वा, नृणां निःश्रेय-सार्थायैव व्यक्तिमात्रं जन्म अन्यथा तु कथञ्चित् न सम्भवे-दित्याह, अव्ययस्य जन्मादिविकाररहितस्य । किञ्च, अप्रमेयस्य तदर्थत्वे हेतुः गुणात्मन इति निजकारुण्याद्यशेषगुणानां सुप्तानामिव चेतयितुः प्रकटनपरस्येत्यर्थः । अन्यत्समानम् । श्लोकद्वये-ऽस्मिन्नयं भावः इत्यादौ टीकायां बहिर्मुखसन्देहनिरासार्थः तेषामयमभिप्रायः । ननु, ब्रह्मणि कामादिकमपि क्षेमंकरं तर्हि जीवेष्वपि चित्सामान्येनैक्यात् ब्रह्मत्वमस्तीति परयादिष्वपि तादृशं स्यात् तत्राह—जीवेष्विति । आवृतत्वे हेतुर्नैश्वर्यमाया-वैपरीत्यरीत्या हृषीकाधीनज्ञानत्वमेवेति ज्ञेयम् । तत्र स्वाभिप्राय-वृतत्वं बहिर्विक्षेपात्परेषूपाधिमात्रग्रहणात् हृषीकत्वादिति पूर्व-वच्च हृषीकवशात्तदुदयः अतः स्वप्रकाशतानय एव तदज्ञाना-वृतमेव ब्रह्मत्वमिति स्थिते कामादिना केनापि तत्र प्रवृत्ति-र्भवतु वस्त्वनुभवस्तु भवत्येवेत्यर्थः । ननु, देहीति परयादि-वद्देहित्वेन प्रतीयमान इत्यर्थः । सिद्धान्तमाह, भगवत एवेति । तत्तद्विशेषेण वैलक्षण्यादित्यर्थः । एवंरूपा अनावृतब्रह्मरूपा न देहित्वादृशं कुतो देहित्वमित्यर्थः । तद्विग्रहस्यैव स्वरूपशक्ति सिद्धवैचित्रिकपरमतत्त्वैकरूपत्वात् तच्च विद्वदनुभवसंवित तत्तच्छास्त्रप्रामाण्यात् यथा च व्याख्यातम् । "नातः परं परम ! यद्भवतः स्वरूपम्" इत्यादिष्विति ॥ १४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

व्यक्तिरवतारः ॥ १४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, केनापि स्वानन्यविषयकनिरन्तरभावेन भावित-

---

(१) अव्यक्त इति विज० ।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

मामसाननुग्रहीतुमवतीर्यो कामाद्यन्यतमं भावं ये कुर्वन्ति न तेषां मुक्तौ विस्मयः कार्य इत्याह—नृणामिति—अव्ययस्य जीववत्कर्मायत्तोत्पत्त्यादिविकाररहितस्य अप्रमेयस्यापरिच्छिन्नस्य वाङ्मनसागोचरस्य वा सत्त्वादिप्राकृतगुणरहितस्यानन्तकल्याणगुणाश्रयस्य भगवतो भुवि लोके व्यक्तिर्नृणां निःश्रेयसार्थायैव अव्ययस्येत्यादिविशेषणैरेवंभूतस्याप्युत्पत्त्यादि विकाराश्रयत्वादिवद्भावं केवलं लोकानुग्रहार्थम् एवेत्युक्तं तद्वचकेः जीवव्यक्तिवैलक्षण्यञ्च ॥ १४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नन्वाचार्य्यस्यापि यथास्थितग्रन्थाभिप्रायकथनं विना वक्रगत्या व्याख्याने कोभिप्राय इत्याशङ्क्योत्तरग्रन्थानुकूल्यादिस्याश्रयेनाह—नृणामिति। व्यक्तिरवतारः अन्यथाऽवतारो न घटत इत्यत्र हेतुमाह—अव्यक्तस्येति। ज्ञानादिगुणात्मनः। भगवतो व्यक्तिर्न केवलमसुरनिर्हरणार्थाय किन्तु मोक्षलक्षणपुरुषार्थाय पुरुषार्थस्तु भगवत्प्रसादेन स्यात्स च भक्त्या। सा हरेर्यथास्वरूपविज्ञानेन। विज्ञानञ्च गुणोत्कर्षज्ञानपूर्वकं। नत्वन्यथा। "गुणोत्कर्षज्ञातरि यादृशीस्यात्" इतिश्रुतेः तस्माद्द्वेषादिना नित्यसुखानन्दानुभवलक्षणमोक्षो वर्षानन्त्येनापि न स्यात् ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

एवमेव कृष्णस्य महिमा यदयं नृणां निःश्रेयसार्थं प्रादुर्भूतस्तेन तादृशीं लीलां करोतीत्याह—नृणामित्यादि। निर्गुणस्य प्राकृतगुणरहितस्य गुणात्मनो भक्तिवात्सल्यादिगुणप्रयत्नस्य आत्मशब्दोऽत्र मलवाची ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अत्र मुख्यामुपपत्तिमाह—नृणां निःश्रेयसार्थायेति। प्राणिमात्रस्य मोक्षदानार्थमेव भगवानभिव्यक्तः अत इयमभिव्यक्तिः निःश्रेयसार्थैव अन्यथा न भवेत् असाधारणप्रयोजनाभावात् भूभारहरणादिकं च अन्यथापि भवति अतो निःश्रेयसार्थमेव भगवतोऽभिव्यक्तिः प्राकट्यं नृपेति सम्बोधनं कदाचिद्राजा कथञ्चिद्गच्छति तद्वदिति ज्ञापयितुं प्रकारान्तरेण तादृशस्य नाभिव्यक्तिः सम्भवतीति वक्तुं भगवन्तं विशिनष्टि—आदौ भगवान् सर्वैश्वर्यसम्पन्नः अपराधीनः कालकर्मस्वभावानां नियामकः सर्वनिरपेक्षः किमर्थमागच्छेत्। किञ्च, स्वार्थं गमनाभावेपि परार्थं वा स्यात् तदपि नास्तीत्याह—अव्ययस्येत्यादिचतुर्भिः पदैः। अन्येषां कृतिसाध्यं ज्ञानसाध्यं वा यद्भवति तदुपयुज्यते भगवांस्तु अव्ययत्वात् अविकृतत्वात् न कृतिसाध्यः अप्रमेयत्वात् ज्ञानसाध्योऽपि न देहादिभजनद्वारा भजनीयो भविष्यतीत्यपि न यतो निर्गुणः निर्गता गुणा यस्मात् गुणेषु विद्यमानेष्वेवान्यस्य प्रतिपत्तिः तत्र भवति यथा क्षुधि सत्यामन्नदानं कामे सति स्त्र्युपयोगः इन्द्रियेषु सत्सु तद्विषयाणाम् अतो भगवतः सेवकपूरणीयांशः कोपि नास्तीति भजनीयोऽपि न भवति किञ्च लीलार्थं यद्यपेक्षेतापि न तथापि सर्वन्तस्यैव यतः सर्वगुणानां स एवात्मा अतः साधनप्रकारेण नान्यस्याप्युपयोगः अतः स्वपरप्रयोजनाभावात् यदि साधननिरपेक्षां मुक्तिं न प्रयच्छेत् तदा व्यक्तिः प्रयोजनरहितैव स्यात् ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यतःश्रेयः साधनहीनानपि मयि यत् किञ्चित्सम्बन्धमात्रवतो जनानहमुद्धरामीति मनसि कृत्वैव भगवताऽवतीर्णमित्याह—नृणामितिद्वाभ्याम्। निःश्रेयसं केषुचित् सायुज्यं केषुचित्सालोक्यादिकं केषुचित् प्रेमाद्यार्थस्तस्मै भ्रूविजृम्भमात्रेण ब्रह्माण्डकोटिसंहारसमर्थस्य भूभारभूतकंसादिवधार्थमेव व्यक्तिरन्यथा नोपपद्यते इति भावः। अव्ययस्य प्रतिभक्तजनं स्वात्मदानेनापि न व्येतीत्यव्ययस्तस्य केन प्रकारेणेति चेदत आह अप्रमेयस्य प्रमातुमशक्यस्य कस्तत्र तत्त्वं जानातीति भावः। यतो निर्गुणस्य प्राकृतगुणरहितस्य अथ च गुणात्मनः स्वरूपभूतकल्याणगुणमयस्य न हि अप्राकृतचिदानन्दमयगुणसागरः प्रमातुं मशक्यो भवेदिति भावः ॥ १४ ॥

---

### विशुद्धरसदीपिका।

ननु, कथमधोक्षजः प्रत्यक्षलीलो जात इत्यत आह, नृणामिति। कामादिविक्षिप्तचेतस्त्वेन भावान्तराभिनिविष्टचेतसां साधकजनानां निःश्रेयसार्थाय शुद्धपरिकरकलेवरप्राप्तिपूर्वकसर्वफलरूपनिजलीलानन्दप्रदानाय व्यक्तिः प्रकटलीला भगवतः भगेन निजश्रिया श्रीराधया नित्ययुक्तयेत्यर्थः। अभेदव्यवहारो यत्र तत्रापि समानाभिधानमिति ज्ञेयम्। नन्वेवं "येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्" इति श्रीकपिलदेवाभिहितानां विविधभाववतां कथं सिद्धिरित्यपेक्षायामाह—अव्ययस्येति। नित्यं नानाप्रकारैर्नानाभक्तेभ्य आत्मदानादिना न व्येतीत्यव्ययस्तस्य तदुक्तं श्रीतृतीये "सन्तं वयसि कैशोरे भक्तानुग्रहकातरम्" इति सन्तामिति स्वरूपेण तु नित्यकिशोरं भक्तानुग्रहकातरत्वेन तत्तल्लीलम् इत्यर्थः। तदुक्तं प्रबोधानन्दसरस्वतीपादैः—

> "अयं बृहदधीश्वरो न गणितावतारोप्ययं—
> स्थितो यदुपुरीमसौ मधुपुरी च दिव्याकृतिः।
> व्रजे च मधुरः परो वनचरे च गोभिः समम्—
> सखीभिरहरन्मनो मम तु राधिकाकुञ्जगः"।

तत्तद्लक्ष्यत्वं चोक्तं तैरेव यथा "एकं सख्यापि नो लक्षितमुरसि वसन्नित्यतादात्म्यकान्तं तादृदयो दूरतोऽन्यद्व्रजति नवगृहेऽप्यत्र तत्रस्मैत्रमं। अन्यत् वृन्दावनान्तर्विहरदपरं गोकुले प्राप्तयोग्यं विच्छेद्यन्यत्तदेवं लसति बहुविधं राधिका कृष्णरूपम्" इति एतत्तारतम्येनोपासकतारतम्यमपि तत्रैव—

> "धन्यो लोके मुमुक्षुर्हरिभजनपरो धन्यधन्यस्ततोऽसौ—
> धन्यो यः कृष्णपादाम्बुजरसपरमो रुक्मिणीशप्रियोऽतः॥
> याशोदेयप्रियोतः सुबलसुहृदतो गोपकान्ताप्रियोऽतः।
> श्रीमद्वृन्दावनेश्वर्य्यतिरसविवशा राधिकासर्वमूर्द्धा"॥ इति

विशुद्धरसदीपिका।

तत्कृतः गुणात्मनः मायागुणानाम् आत्मनः प्रवर्त्तकस्य अथवा भक्तघात्सल्यादिगुणवत इत्यर्थः। नृपेति यथाहि भवतो देशयात्रा साधुजनसुखाय दुष्टदमनाय निजानन्दलाभाय चेति तथा भगवतोऽपि प्रकटनमिति भावः ॥ १४ ॥

---

श्रीरामनारायणकृतभावभावविभाविका।

ननु, भगवतः सर्वात्मत्वात्सर्वेषामपि तदभिन्नतया वस्तुमाहात्म्येन वुद्ध्यनपेक्षायां सर्वत्र वस्त्वैक्यात्पुत्रकलत्रादावप्यनुरागमात्रेण गुणप्रवाहोपरमे सर्वमुक्त्या परिदृश्यमानप्रपञ्चोच्छेदापत्तिस्तत्राह—नृणामिति। अयमत्राशयः यद्यपि पुत्रकलत्राद्यात्मनापि सर्वत्र परमात्मन एवावस्थितिस्तथापि तत्राविद्यादिजीवोपाध्यावरणसद्भावेन वुद्धिं विना तदावरणनिरासासम्भवात् तत्र क्रियमाणा प्रीतिर्न गुणप्रवाहोपरमाय अत्र तु नृणामित्युपलक्षणं जीवमात्रस्य वृन्दावनपशुपक्षिद्रुमलतादीनामपि तत्रानुरागस्य वर्णितत्वात् श्रेयोर्थधर्मादिनिःश्रेयसं तु भगवदनुरागो मोक्षश्च तयोर्भगवत्स्वरूपव्यक्तिं विनानुपपत्तेस्तदर्थाय भगवतो व्यक्तिः अन्यत्र तु जीवैः साङ्ख्यनैयायिकादिभिर्वैराग्यादिसाधनान्यनुष्ठाय ज्ञानं सम्पाद्यते नाज्ञानबाधद्वारा भगवत्स्वरूपव्यक्तिः सम्पाद्यतेऽत्र तु भगवता स्वेच्छयैव स्वीयभगशब्दाभिधेयनित्यज्ञानेनैव जीवानां निःश्रेयसाय तेषामज्ञानं पराभाव्य व्यक्तिः कृताऽत आवरणाभावाद्बुद्धिमनपेक्ष्य वस्तुमाहात्म्यादेव सिद्धिः। नृप इति सम्बोधनेऽयमभिप्रायः नॄन् पातीति नृप इति व्युत्पत्त्या यथा भवान् स्वेच्छयैव स्वैश्वर्येण नॄन् पाति रक्षति पालयति च तथा भगवानपि स्वेच्छया स्वैश्वर्येणैव नृणां निःश्रेयसाय व्यक्तिं करोतीति भगवतः स्वभगेन सर्वनिःश्रेयसापादने भगव्ययमाशङ्क्याह—अव्ययस्येति, ननु, चक्षुर्गोचरस्य किमिति स्वभगव्यक्तत्वमुच्यते तत्राह, अप्रमेयस्येति—

> "नैतन्मनोविशति वागुत चक्षुरात्मा—
> प्राणेन्द्रियाणि च यथाऽनलमर्चिषः स्वाः" ॥

इत्यादिवचनात्। ननु, रूपादिमतः कथमप्रमेयत्वं तत्राह—निर्गुणस्येति। "निश्चेतनात्मकशरीरगुणैश्च हीनः" इत्यादिवचनात् प्राकृतरूपादेरेव प्राकृतेन्द्रियगोचरत्वमिति भावः। कथं तर्हि रूपादिप्रतीतिस्तत्राह—गुणात्मनः इति। गुणा अध्यात्मभूता यस्येत्यर्थः। अ। राज्ञो वा साक्षेपरूपचतुर्थार्थस्य समाधानपक्षे तु यतो नृणां निःश्रेयसार्थाय इयं लीलात्मिका व्यक्तिरतस्तासां गुणप्रवाहाभावेन तदुपरमस्यासम्भवेऽपि यथा यथा नृणां निःश्रेयसं भवेत्तथा तथा लीलाव्यक्त्योपदेशः क्रियते इति भावः। शेषं समानम् ॥ १४ ॥

---

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

भक्तितत्त्वज्ञानाऽनधिकारिणोप्युद्धर्तव्या इतीच्छयैव भगवदवतरणम् अतो यदर्थं भगवदवतारस्तस्मिन्नेवार्थे भगवतः श्रद्धा न युज्यत इत्याशयेनाह—नृणामिति। भगवतः षड्गुणैश्वर्यसम्पन्नस्याभिव्यक्तिकारणरहितस्याभिव्यक्तिः प्रादुर्भावः नृणामविशेषेण सर्वेषां निःश्रेयसार्थाय साक्षात्परम्पराय वा मोक्षरूपपरमपुरुषार्थलाभायैव न तु भूभारभूतकंसादिवधाय भ्रूविजृम्भणमात्रेणाऽनन्तकोटिब्रह्माण्डसंहारसमर्थस्य कतिपयसंहारकशक्तिलेशमात्रेणावतारेणापि तस्य सुकरत्वात् न च नृणां निःश्रेयसमन्यथा सुकरं भक्तितत्त्वज्ञानयोरधिकारिणोरत्यन्तदुर्लभत्वात्—

> " मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
> यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः " ॥

इत्यादिना च भगवदिच्छायास्सुकरं तस्या अपि जीवकर्मसापेक्षत्वात् अन्यथा वैषम्यनैर्घृण्यापातात् तस्मात्करुणासागरो भगवान् संसाराऽनले पच्यमानान् जीवानालोच्यावततार इति भावः यथा नृपरूपेण भगवतोऽवतरणं नृणां पालनाय तद्वदिति सम्बोधनाशयः " अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति श्रुत्या परमात्मनो जीवरूपेण प्रवेशे नामरूपात्मकं संसारविस्तारामान्तःप्रविष्टस्य तिरोहितस्य परमात्मनः पतिपुत्रादिरूपेण स्थितस्य संसृतिचक्रारूढस्य रागादिसम्बन्धेन संसृतिचक्रे भ्रमणातिशय एव न तु तन्निवृत्तिः भगवतस्तु अभिव्यक्तिरित्युक्तमतो यस्तु रूपसाक्षात्कारेण मोक्षः श्रुतिमस्तकेष्वभिहितस्तत्स्वरूपं भगवतोऽभिव्यक्तिमेवास्तीत्याशयेन भगवन्तं विशिनष्टि—अव्ययस्येत्यादि। अव्ययस्य क्षयरहितस्य सत्यस्य यतोऽप्रमेयस्य प्रत्यक्षादिप्रमाणजन्यवृत्तिप्रतिफलितचैतन्याविषयस्याऽदृश्यस्य इत्थम्भूतस्य तत्रापि हेतुमाह—निर्गुणस्य प्रत्यक्षादिप्रवृत्तिहेतुगुणविनिर्मुक्तस्य " सत्यं ज्ञानमनन्तं, विज्ञानमानन्दं ब्रह्म विज्ञातारमरे केन विजानीयात् "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् यत्साक्षादपरोक्षाद्ब्रह्म "साक्षी चेताः केवलो निर्गुणश्च" इत्यादि श्रुतेः तथाच सत्यज्ञानानन्दात्मकस्याऽनावृतस्य परब्रह्मणो नन्दनन्दनादिरूपेणाभिव्यक्तिर्न तु जीवस्येव तद्देहाद्यभिमानेन तिरोधानं तस्माद्विषयबुद्ध्यापि पीतममृतं यथाऽमरत्वायैवावकल्पते तथा जारत्वादिबुद्ध्याप्याराधितो भगवान् मोक्षायैवावकल्पते इति न कोऽपि विरोधः। ननु, यथोक्तस्य निर्गुणस्य परमात्मनो महावाक्यजन्याखण्डार्थवृत्त्या आवरणभङ्गमात्रं सम्पद्यते स तु स्वयम्प्रकाशत्वात्स्वयमेव प्रकाशते तस्मात्कथं चक्षुरादीन्द्रियजन्यवृत्तिविषयाकारेणाभिव्यक्तिर्नहि दृश्यमानघटाद्याकारं ब्रह्माभिव्यक्तिरित्युच्यते सावयवत्वापत्तेः। अतस्तस्य दृश्यमानत्वमभिव्यक्तब्रह्मरूपत्वं चेत्येतदुभयं विरुद्धमिति चेत्तत्राह—गुणात्मन इति। गुणानां सत्त्वरजस्तमसां तदात्मिकाया महामायादिशब्दप्रतिपाद्यायाः प्रकृतेरात्मनो नियन्तुः सत्तास्फूर्तिप्रदस्याधिष्ठानचैतन्यस्य तथा च सच्चिदानन्दरूपे परब्रह्मणि सर्वथाऽघटितमप्यज्ञानादहङ्कारादिकं यथा प्रतीयते तथा साधकानुग्रहार्थं भगवतस्तत्तद्विग्रहरूपेण भानमपि न विरुध्यते ततो ज्ञानादीनां संसारकारणत्वात्तज्ज्ञानं संसारापादकं भगवद्विग्रहस्य तु मोक्षार्थप्रकटितत्वं तद्दर्शनादिकं मोक्षकरमिति विशेषः। "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद !" इत्यादिशास्त्रात्स्वेच्छोद्बोधिततत्तद्विग्रहस्वानुकूलमायाशक्त्या तथाभूते परमात्मनि तत्तदाकृतिमानमिति सर्वमनवद्यम् ॥ १४ ॥

**कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।**
**नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यक्तिः अभिव्यक्तिः प्रादुर्भाव इत्यर्थः । निःश्रेयसार्थाय तत्तदधिकारिकल्याणसिद्धये निर्गुणस्य हेयगुणरहितस्य गुणात्मनः गुणानां कल्याणगुणानामात्मन आश्रयस्य ॥ १४ ॥

### भाषा टीका ।

हे नृप ! अविनाशी अप्रमेय अर्थात् जिनके स्वरूप रूप गुण विभूति ऐश्वर्य को प्रमाण न होय सके, प्राकृत गुणन तें रहित अनन्त कल्याण गुणन के सागर ऐसे परब्रह्म परमात्मा भगवान् को प्रकट होयवो केवल मनुष्यन के परम कल्याण के तांई है, और कछु दूसरो प्रयोजन नहीं है ॥ १४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतो यथाकथञ्चित्तदासक्तिर्मुक्तिकारणमित्याह—काममिति । ऐक्यं सम्बन्धम् सौहृदं भक्तिम् ॥ १५ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अतो हरौ यथा कथञ्चित् सम्बन्धमात्रेणापि सर्वचित्ताकर्षके सर्वदोषहरे वा अध्यर्थे एव कामादिकमपि नित्यं कुर्वतः ते कामादिविधायका जनाः यद्वा, कामादिना प्रसिद्धा दण्डकारण्यवासिमुनयस्तथा कुब्जादयः केशिकंसादयश्च यद्वा, ते तव यो हरिस्तस्मिन्नित्यन्वयः विदधते इति क्वचित् पाठः हि निश्चितं तन्मयतां ध्यानेन हरौ एके निष्ठतां यद्वा, सारूप्यादिप्राप्त्या तत्स्वरूपतां प्राप्नुवन्ति नित्यमिति तत्र तत्राभ्यासेन निष्ठया तन्मयतायामविलम्बत्वं बोधयति अन्यथा कादाचित्कतया तत्तदावेशाभावेन शीघ्रतन्मयत्वासिद्धिः सारूप्ये च भक्ताभक्तादिभेदेन सुखविशेषलाभकेवलदुःखध्वंसादिना तथा श्रीवैकुण्ठपार्षदत्वसिद्धलोकवासित्वादिना वैष्णवसिद्धान्तानुसारेण भेदः स्यादेव यद्वा, नृणां निःश्रेयसार्थायैवेत्यत्र हेतुमाह, हि यतः कामादिकमपि कुर्वन्तस्तन्मयतां यान्तीति अन्यत्समानं सौहृदमिति दृष्टान्तः वेति क्वचित्पाठः ततश्च वाशब्द उपमार्थमेव तथा चोक्तं श्रीनारदेन सप्तमस्कन्धे "कामाद्द्वेषाद्भयात् स्नेहाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद्वृष्णयः स्नेहा यूयं भक्त्या वयं विभो" इति तत्र गोप्यः इति बहिर्दृष्ट्या केवलमौपपत्यकाममात्रापेक्षया यद्वा तन्मयताप्राप्तिमात्रापेक्षयैव कामादीनां सर्वेषामेकत्र गणना फलतस्तु महान् विशेष एव एतच्च सर्वं श्रीभागवतामृते विवृतमेवास्ते रसामृतार्णवे च श्रीरूपेण तत्तद्विशेषाभिव्यञ्जनेन विस्तारितमस्ति अत्रापि यथास्थानमग्र विवरणीयम् ॥ १५ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अस्तु तावत्तद्व्यक्तिसमयगतानां वार्त्ता किन्तु सर्वदातनानामपीयं रीतिरित्याह—काममिति । तत्र कामं द्विविधं गोप्यादीनामिव प्रेममयं सैरन्ध्र्यादीनामिव रिरंसामयं च क्रोधं द्वेषं चैद्यादीनामिव भयङ्कंसादीनामिव स्नेहं वृष्णिपाण्डवानामिव श्रीमद्व्रजवासिनामिव वा ऐक्यमात्मारामाणामिव सौहृदं कथकैशिकादीनामिव तत्र भयद्वेषौ तु नानुमतौ यः खलु कल्याणगुणात्मानं भीषणं मन्यतो गूढं द्विषतोपि तस्य भीतस्य तथा मत्सरादिना साक्षादपि द्विषतो धृष्टस्य भद्राय कल्पते तस्मिन् कः पामरः तथ तञ्च कुर्यात् किन्तु स्नेहं सौहृदमेव वा सर्वेपि कुर्युरिति हि तात्पर्यम् तदित्थमेवोक्तं श्रीनारदेन " तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् " इति केनापीति तत्र योग्येनेत्यर्थः । अतस्तत्रैव तदुक्तम्—

"यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः " ॥ इति ।

तत्र च शास्त्राज्ञागौरवमयभक्तियोगमतिक्रम्य भावमार्गे हेयस्यापि तस्य तन्मयताकारित्वाय प्राबल्यं दृश्यत इति व्यज्य स्नेहसौहृदे एवानुमते तदित्थमेवोक्तं द्विषन्नपीति तद्वदैक्यं च नानुमतं तत्र तादृशतद्गुणास्फूर्त्तेरिति एवशब्दः एकैकतः कृतार्थीभावाय पाठान्तरे ये विदधते ते हि निश्चितं तन्मयतां तत्तद्भावसमुचिताविर्भावं तदेकस्फूर्त्तिं चेति वेति च पाठः समानार्थः । किन्तु, श्रीभगवान् खलु "भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम्"इति श्रीभगवद्वाक्यात्—

"योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित् ।
द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्दनः" ॥ इति

पद्मोत्तरखण्डवचनात् "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतातश्च यद्यपि द्वेष्टृप्रभृतिभिस्तस्य याथार्थ्यं नाऽनुभूयते किन्तु अन्यथैवेति तथापि तत्प्रभावात् परम्परयाप्युत्तरकाले याथार्थ्यं स्फुरतीति क्रोधभयेऽप्यत्र गणिते "किमुताधोक्षजप्रियाः" इत्यनेन कामस्तु प्रियत्वातिशयादुत्कर्षित इति विवेचनीयम् ॥ १५ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तन्मयतां द्वेषादिविस्मरणेन तज्ज्ञानप्रचुरतां शिशुपालो हि कृष्णसौन्दर्यचित्ततया द्वेषं विसस्मार अत एव सर्वेषां भगवच्छेषाणां मोक्षप्रसङ्गः ॥ १५—२० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नित्यं कामाद्यन्यतरं भावं ये हरौ विदधतः कुर्वाणा वर्त्तन्त इति शेषः कामादिविदधज्जनसंस्तुतिबन्धहारिणि प्रीतिं कुर्वन्तीत्यर्थः । ते तन्मयतां यान्ति स्वार्थेत्र मयट् तत्प्रकारतां तत्साधर्म्यं यान्तीत्यर्थः । हीति प्रसिद्धिश्चैद्यादिषु द्योत्यते प्राचुर्येण वा मयट् ये कामाद्यन्यतमं कुर्वन्ति ते ततस्तज्ज्ञानप्रचुरतां यान्ति तद्द्वारा मुक्ता भवन्तीत्यर्थः । कामादीन् कुर्वाणा नित्यं तत्सौन्दर्यचिन्ताप्राचुर्येण कामादीनपि विस्मृत्य मुक्ता भवन्तीति भावः । शिशुपालो हि कृष्णसौन्दर्यचिन्ताप्राचुर्येण द्वेषं विस्मृतवान् तत्र कामो मन्मथप्रयुक्ताभिलाषविशेषः ऐक्यम् एककुलप्रसूतत्वानुसन्धानं स्नेहः सख्यं सौहृदं भक्तिः गोप्यः कामादित्यादिस्थानप्रमाणात् हरावित्यनेन कामाद्यन्यतमभावविषयविजनबन्धहरत्वरूपवस्तुस्वभावोभिप्रेतः अजानेनापि स्पृष्टस्याग्नेर्दाहकत्ववत्तत्र वस्तुस्वभावान्मुक्तिप्रतिबन्धकः प्रारब्धकर्मक्षयाभावः उद्देश्यान्तरप्रतिपत्तिश्चात एव उद्देश्यान्तरप्रतिपत्तेर्दुर्ज्ञानस्य मोक्षाभावः गोपीनान्तु दुःसहेत्यादिना प्रारब्धकर्मक्षयोक्तिर्भगवद्व्यतिरेकेणोद्देश्यान्तराभावेन तत्प्रतिपत्त्यभावाच्च वस्तुस्वभावायत्तो मोक्ष उपपन्नः वस्तुतस्तु गोपीनामपि गोवर्द्धनोद्धरणादिभिरीश्वरत्वज्ञानमस्त्येव ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेवं तर्हि द्वेषादिना कां सिद्धिमाप्नोतीति तत्राह—काममिति । ये हरौ कामादिकं विदधत उपासते ते तन्मयतां यान्ति कामाद्यात्मतामाप्नुवन्ति नतु भगवन्मयतां निरवधिकनित्यानन्दवारिधेः हरेः कामाद्यभावाद्धिशब्दो—

"यं यं वापि स्मरन्भावं त्यजन्त्यन्ते कलेवरम् ।
तं तमेवेति कौन्तेय सदा तद्भावभावितः" ॥

इत्यादिस्मृतिं सूचयति अवधारणार्थो वा कामिनः कामित्वमेव क्रोधिनः क्रोधित्वमेवेत्यादि तदुक्तम्

"विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः ।
द्वेषिणश्च हरौ नित्यं द्वेषिणस्तमसि स्थिताः" ॥

इति विशेषद्योतको वा तदुक्तम्—

"भक्त्या हि नित्यकामित्वं न तु भक्तिं विना भवेत् ।
अन्तः कान्ततया वापि मुक्तिर्भक्तिमतां हरौ ॥

इति च । मनुष्यविशेषवद्देवविशेषद्योतनार्थोपि भवति "स्नेहभक्ताः सदा देवाः कामित्वेनाप्सरस्स्त्रियः" इत्यादेर्भक्त्यैव मोक्षो नान्येन साधनेनेममर्थविशेषं च वक्ति "भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित्" इत्यतः कामभक्त्या मोक्षं स्त्रीणां वक्ति "कामभक्त्याप्सरस्त्रीणाम्" इत्यादेः उपासनायाः विशेषोस्तीति सूचयति "उपास्यः श्वशुरत्वेन देवः स्त्रीणां जनार्दनः" इत्यादेः तत्तद्योग्यतोपासनामन्तरेण मुक्तिः कस्यापि न स्यादितीमं व्याचष्टे "योग्योपासां विना नैव मोक्षः कस्यापि सेत्स्यति" इत्यादेः पतित्वपितृभ्रात्रादिविशेषं सूचयति "पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च" इत्यादेः गुरुत्वविशेषमपि "ब्रूते गुरुः श्रीब्रह्मणो ब्रह्मणा विष्णुः सुराणाञ्च गुरोर्गुरुः" इत्यादेः सर्वेषामपि ज्ञानेन गुरुत्वं ब्रह्मण उपास्य दैवत्वं विष्णोरितीमञ्चाह "गुरुर्ब्रह्मास्य जगतो दैवं विष्णुः सनातनः" इत्यादेः ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तेन तस्मिन् ये कामादिकमपि कुर्वन्ति तेपि तन्मयतां यान्ति किं पुनः प्रेमाणमित्याह—कामक्रोधमित्यादि । कामः कुब्जायाः क्रोधः शिशुपालादेः भयं कंसादेः स्नेहः पित्रोः ऐक्यं व्रजबालानां सौहृदं प्रेमगोपाङ्गनानां तन्मयतामिति यथाधिकारं बोद्धव्यं क्वचित्तन्मात्रमूर्तिः क्वचिल्लयश्च ॥ १५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सतियेन केनाप्युपायेन य एव सम्बध्यते तस्यैव मुक्तिर्भवतीत्याह-काममिति।कामादयः षट् साधनानि भगवत्सम्बन्धे तत्र कामः स्त्रीणामेव क्रोधः शत्रूणामेव भयं वध्यानामेव स्नेहः सम्बन्धिनामेव ऐक्यं ज्ञानिनामेव सौहृदं भक्तानामेव सख्यं तेष्वेव सिद्ध्यतीति पूर्वसिद्धज्ञानभक्त्योः नात्रोपयोगः तेषां मर्यादया स्वतन्त्राविर्भावस्य नियतत्वात् एकस्य तूभयत्वे संयोगपृथक्त्वन्यायेन निर्णयः वेशनादरे अन्यो वा कश्चनोपायो भवेत् परं सर्वदा कर्त्तव्यः अन्यथा अन्ते या मतिः सा गतिः इति अन्यशेषतामापद्यते कर्मवशाच्च नान्ते भगवतः स्मरणमन्यस्यैव प्रपञ्चविरोधित्वात् भगवतः अतो नित्यं ये विदधते ते तन्मयतामेव प्राप्नुवन्ति । ननु, कामादिषु क्रियमाणेषु दुःखान्तराभिभवे कथं नित्यं करणं सम्भवति तत्राह—हराविति । स हि सर्वदुःखहर्त्ता नित्यं तद्भावनायां जगदेव तदात्मकं स्फुरति दृष्टिः कामेनानुरक्तेति किं पुनः स्वात्मा अतः तदात्मका एव भवन्ति सर्वत्र भगवदावेशात् "जीवेन्तःकरणे चैव प्राणेष्विन्द्रियदेहयोः । विषयेषु गृहेर्थे च पुत्रादिषु हरिर्यतः—

ताहशीं भावनां कुर्यात् काम क्रोधादिभिर्यथा ।
पूर्वप्रपञ्चविषयो यथा ज्ञाने तथा यतः" ॥

इति ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मात्त्वया सामान्यतस्तावदेष सिद्धान्तोऽवधार्यतामित्याह, कामं गोपीजनादयः क्रोधं द्वेषं चैद्यादयः भयं कंसादयः स्नेहं वात्सल्यं नन्दादयः ऐक्यम् आत्मारामाः सौहृदं वृष्णिपाण्डवादयः नित्यं विदधत इत्यधुनापि ते ते तं तं भावं कुर्वन्तस्तन्मयतां यान्तीति तासां तासां लीलानां नित्यत्वं ज्ञापयति तन्मयतां गोप्यादयस्तदासक्ततां यथा स्त्रीमयः कामुक इति मन्ये सायुज्यम् ॥ १५ ॥

---

विशुद्धरसदीपिका ।

एवं च द्वेषेपि यथोचितसिद्धिरिति स्थिते यथाकथञ्चिदपि तदासक्तिस्तत्प्राप्तिहेतुरिति दर्शयन् सुप्रीतेः कैमुत्यमाह

### विशुद्धरसदीपिका ।

काममिति । साधकचरीयां श्रुतिमुनिरूपाणां गोपीनामिवेति यथाश्रुत एवार्थः "हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्,, इति पाद्मोक्तेः—

"कामाद्द्वेषाद्भयात् स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः" ॥

इति सप्तमोक्तेः गोप्यः कामादिति च अन्यथा हेयवर्गप्रथमपठितस्य कामस्योपादेयत्वेन प्रक्रमभङ्गः कल्पनागौरवं च स्यादिति ध्येयम् द्वेषं चैद्यादीनामिव भयं कंसादीनामिव स्नेहं वृष्णिपाण्डवव्रजवासिनामिव ऐक्यम् आत्मारामाणामिव सौहृदं कृष्णकैशिकादीनामिव यथाकथञ्चिदेव सहचरीगणानां तु मुख्यं सौहृदं भक्तिमिति टीका च "सा त्वीश्वरे परानुरक्तिः"इति शाण्डिल्यसूत्रात् अनुरक्तेः परात्वं तत्सुखसुखित्वमेव मूल एवेत्युक्त्या सौहृदस्यैवान्ययोगव्यवच्छेदेन मुख्यत्वं प्रदर्शितम् अत एव—

"ये मां भजन्ति दाम्पत्ये तपसा व्रतचर्यया ।
कामात्मनोऽपवर्गेशं मोहिता मम मायया"इति ॥
"जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रियः,, ।

इत्यादिना च दाम्पत्यमौपपत्यं च यथा तत्र तत्र निन्द्यते न तथा क्वचित्सौहृदमपि प्रत्युत "न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः" इत्यादिनाऽस्तूयतेतरामिति साधु-व्याख्यातं हरौ सर्वदुःखहरे मनोहरे चेति यथायोगं तन्मयतां कश्चित्तद्भावानुकूलतनुतां कांचिल्लीनतामिति विवेकः ॥ १५ ॥

---

### श्रीराधारमणदासगोस्वामिकृतभावभावविभाविका ।

ननु, कथमनया व्यक्त्या निःश्रेयससिद्धिरित्याशङ्कायां सत्यामस्यां व्यक्तौ ब्रह्मबुद्धौ तदभावे कामादिनापि ब्रह्मभावापत्त्यात्मक निःश्रेयसमभिप्रेत्य कामादिविद्धत्समाधत्ते—कामं क्रोधमिति । हरौ कामादि विदधतो तन्मयतां तत्स्वरूपात्मकं मोक्षं प्रेम्णा तत्र मनोक्षयं वा यान्तीत्यन्वयः । तत्राऽपर्हितं हि पूर्वमिति न्यायात् सन्निभावनयानुष्ठेयकामस्य विधेयेष्वप्यर्हितत्वात् गोपि-प्रसङ्गप्राप्तत्वाद्वा पूर्वनिपातः अत्रैवास्य स्वरूपात्मकत्वेन नित्यसिद्धत्वात्तज्ज्ञानस्याऽपि कृत्यनधीनत्वेनाविधेयत्वात् तन्मयतालक्षणफलस्याप्यैक्याभेदात्तत्र विध्यभाव एव । यद्वा, ऐक्यशब्दादभेदोपासनस्वीकारे भवतु तत्रापि विधिः नच विध्यर्थफलकाराश्रवणाद्विध्यभावशङ्कावसरः "य एता रात्रीरुपयन्ति ते प्रतितिष्ठन्ति"इत्यत्रापूर्वार्थत्वेन फलश्रवणेन च"प्रतिष्ठाकामो रात्रिसत्रमुपेयात्" इत्यावश्यकविधिकल्पनवत् यत्र यत्रापूर्वार्थः फलश्रवणं वा तत्र तत्र विधिकल्पनावश्यकत्वात्तथात्रापि भगवद्विषयककामादीनामपूर्वत्वात्तन्मयताफलश्रवणाच्च विधिस्वीकारस्यावश्यकत्वात् नच कामादीनां निषिद्धत्वादविधेयत्वमेवेति वाच्यं"न हिंस्यात्सर्वा भूतानि" इत्यत्रातिनिषिद्धाया अपि हिंसाया "वायव्यं श्वेतमालभेत"इत्यादौ तत्तद्देवयागसम्बन्धेन विधेयत्वं यथा तथात्रापि निषिद्धस्यापि कामादेर्देवदेवसम्बन्धेन विधेयत्वमेव—

"न मय्यावेशितधियां कामः कामाय कल्पते ।
भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते ॥

इति तन्निषिद्धत्वनिषेधस्य भगवतैव दर्शितत्वात् । किञ्च, कानिचित्कर्माणि स्वरूपत एव श्रेयस्कराणि सन्ध्यादीनि कानिचिदाश्रयमाहात्म्यात् यथा कृष्णचौर्यादीनि कानिचित्तु विषयमाहात्म्यात् यथाभगवद्विषयकामादीनि किञ्च कामस्नेहयोः सख्यभावक्रोडीकृतयोरैक्यस्य च "द्वा सुपर्णा सयुजा सखायौ, तत्त्वमसि, अहं ब्रह्मास्मि" इत्यादिश्रुतिसिद्धत्वेन वास्तवतया विधेयतया च प्रधानत्वेन न निषेधगन्धोऽपि यत्तु कैश्चित्तत्सुखसुखित्वेन सौहृदस्य प्राधान्यकथनं तत्र यद्यपि मधुराधिपतेरखिलं मधुरमिति श्रीवल्लभाचार्योक्तेः "येन केन प्रकारेण मनः कृष्णे निवेशयेत्" इत्यादिवचनाच्च कृष्णविषयकसर्वभावानां श्रेष्ठ्यमेव निष्कामसेवारूपसौहृदस्य भवतु श्रेष्ठ्यं तथापि नित्यनिर्दुःखपरिपूर्णानन्दविग्रहे दुःखापनोदसुखसम्पादनासम्भवात्—

"नैवात्मनः प्रभुरयं निजलाभतुष्टो ।
मानं जनादविदुषः करुणो वृणीते ॥
यद्यज्जनो भगवते विदधीत मानम्—
तच्चात्मनः प्रतिमुखस्य यथा मुखश्रीः" ॥

इत्यादिवचनात् जीवानां च सौहृदप्रवृत्तानां "अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्"इत्यादिभिरसुखानां प्रत्युत दुःखिनां भगवति दुःखापनोदसुखकरणसामर्थ्याभावाच्च तथोक्तानुपपत्तेरेव न च कामादिवत् क्रोधेऽपि विधिस्वीकारे कथमाधुनिकानां केषाञ्चिदपि तत्राप्रवृत्तिरिति वाच्यम् आधुनिकानां शास्त्रैकगम्यभगवतः ऐश्वर्यस्यैवावगतौ परमेश्वरत्वबुद्ध्या क्रोधप्रवृत्तिप्रतिबन्धेऽपि क्रोधं विदधतो तन्मयतां यान्तीति वचनात् शिशुपालादीनां फलदर्शनाच्च विध्यभावशङ्कानवतारात् ॥ १५ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अतो यथाकथञ्चित्तदासक्तिर्मुक्तिकारणत्वात्सम्पाद्येत्याह—कामं प्रेममयं रिरंसामयं वा गोप्यादयः क्रोधं द्वेषं शिशुपालादयः भयं भीतिः कंसादयः स्नेहं पाण्डवादयः ऐक्यं सम्बन्धं वृष्ण्यादयः स्नेहं भक्तिं नारदादयः ऐक्यमभेदमात्माराम इति व्याख्या ननु सम्बन्धाद्वृष्णय इति पूर्वोक्तविरोधादभेदस्य यथार्थत्वेन मया कथञ्चिद्रूपत्वाभावात्स्वामिभिर्न व्याख्यातं नित्यं हरौ बन्धहरणायाऽवतीर्णे भगवति विदधतः कुर्वाणास्ते तन्मयतां सच्चिदानन्दात्मस्वरूपभगवत्स्वरूपतां यान्ति एवकारेण प्रत्येकं सम्बध्यते न कामादीनां मध्येऽन्यतमस्य यथाधिकारम् अवश्यकर्त्तव्यतां बोधयति वाकारेण कामादीनां तन्मयताप्राप्तौ प्रत्येकं स्वातन्त्र्यं ज्ञापयति एवकारस्य यान्तीत्यनेनापि सम्बन्धस्तथा तथा च यातेरेकत्वं बोधितं नित्यमित्यनेन शूर्पणखादिव्यभिचारे कामादिव्यभिचारे कामादिव्यावृत्तिः यातीति वर्त्तमानापदेशेनेदानीमप्येवं विदधतो यान्त्येवेति द्योतयति ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कामं व्रजाङ्गनादिवत् क्रोधं चैद्यादिवत् भयं कंसादिवत्

**न चैवं विस्मयः कार्यो भवता भगवत्यजे ।**
**योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्नेहं नन्दवसुदेवादिवत् ऐक्यं भेदसहिष्णावभेदसम्बन्धमात्मत्वेनावगच्छन्ति ग्राहयन्ति चेति सूत्रप्रोक्तौपनिषद्रानामिव सौहृदं सुहृदां युधिष्ठिरादीनामिव हरौ विदधतः "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिप्रोक्ते ज्ञानविषये ब्रह्मणि वासुदेवे ये कुर्वाणाः सन्ति ते तन्मयतां तत्साधर्म्यं यान्ति औपनिषदानां ज्ञानविषयं यत्तत्त्वं तदेव कान्तत्वादिभावेन व्रजाङ्गनादीनां ज्ञानविषयमतो न श्रुतिविरोध इति भावः ॥ १५ ॥

———

भाषा टीका ।

हे राजन् ! काम क्रोध भय स्नेह एकता ( निष्कटपनो ) और सौहृद, इन सबन कों नित्य जो पुरुष श्रीहरि भगवान् में करें हैं ते पुरुष तन्मयता को प्राप्त होयजाय हैं अर्थात् वे श्रीहरिपरायण होयजाय हैं ॥ १५ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

नच भगवतोऽयमतिभार इत्याह—नचैवमिति । यतः श्रीकृष्णादेतत्स्थावरादिकमपि विमुच्यते ॥ १६ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

एवमीदृशो विस्मयः सन्देहः आश्चर्यबुद्धिर्वा पुनर्न कार्य इत्यर्थः । भवतेति अन्येन क्रियतांनाम भवतातु गर्भादारभ्य तन्महिमाभिज्ञेन कथञ्चिदपि कदाचिदपि नकार्य एवेत्यर्थः । अत एव गौरवेण भवतेति नच त्वयेत्युक्तं विस्मयाऽकरणे हेतुः भगवति अशेषैश्वर्ययुक्ते । ननु, तर्हि कथं देवकीगर्भतो जन्म ? तत्राह—अजे जीववन्न जायते किन्तु स्वेच्छयैव भक्तवात्सल्यादिना स्वयमाविर्भवतीत्यर्थः । ननु, तर्हि देवक्यादीनां पुत्रतया कथं ज्ञानमस्तु तत्राह—योगः दुर्घटसुघटनाय सामर्थ्यविशेषस्तद्येश्वराः शिवसनकादयस्तेषामपीश्वरे अतः स्वेच्छया स्वयमाविर्भावश्च श्रीदेवक्याः पुत्रता च सम्भवेदेव अचिन्त्यैश्वर्यत्वात्तस्य अत एव कृष्णे नराकृतिपरब्रह्मणि, यद्वा, दुर्वितर्क्यानन्तमाहात्म्यामृतसागरतया सुप्रसिद्धे इत्यर्थः । अथवा भगवति परमेश्वरे अतोऽजे जीववत् प्राकृतजन्मरहिते कृपया स्वयमेवाविर्भावात् .अत एव योगेश्वराणां भक्तियोगनिष्ठानां श्रीनारदादीनामीश्वरे भक्त्या सेव्ये भक्तिविशेषप्रकटनात् किं वा योगेश्वराणां महाश्चर्यशक्तिमतामीश्वरे निजाश्चर्याशेषैश्वर्यप्रकटनात् तत्रापि कृष्णे श्रीगोकुलोत्सवे यतः कृष्णात् एतत् चराचरात्मकं सर्वमेव जगत् अशेषसाधनरहितमपि तदिच्छामात्रेण तदीययत्किञ्चित्सम्बन्धाभासमात्रेणापि स्वयमेव विशेषेण मुच्यते श्रीवैकुण्ठलोकं प्राप्नोतीत्यर्थः । एतच्च भाविहास्तिनपुरतरुलतादिश्रीवैकुण्ठप्राप्त्यभिप्रायेण तथा च प्रथमस्कन्धे श्रीकुन्तीस्तुतौ—

"इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।
वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षिताः" ॥ इति ।

अत्र स्वृद्धा इति पुनरेधन्त इत्यनेन च श्रीवैकुण्ठप्राप्तिसामग्र्येवाभिप्रेता अन्यत्तैर्व्याख्यातम् । यद्वा, ननु बहुलयागयोगादिमहासाधनेन दुःसाध्यापि तन्मयता कथं यथाकथञ्चित् कामादिसम्बन्धेन सिद्ध्येत् तत्राह—नचेति । अर्थः स एव अतोऽस्या रासक्रीडायाः श्रवणादौ मुक्त्यादिपरैरपि कामक्रीडामयत्वबुद्ध्या नोदासितव्यम् । किन्तु, सर्वैरेव निजेष्टवतीतसिद्धये विशेषतो भक्तैः परमफलत्वेनेयं सदा सेव्यैवेति प्रागेतत् प्रकरणोत्थापनतात्पर्यं दृढीकृतमिति दिक् । अथवा श्रीव्रजेन्द्रव्रजगोपीत्वेन भाग्यविशेषता अपि हतविघ्नाः तेनैव देहेन सद्य एव श्रीकृष्णं सङ्गतास्तदानीमेव रासक्रीडामलभन्तेति व्याख्येयम् तथाहि अन्तर्गृहे गताः पार्श्वैर्बद्धा पत्यादिभिर्गृहान्तः स्थापिताः अत एव कथमप्यलब्धविनिर्गमाः तद्भावनायुक्ताः तस्याः श्रीकृष्णेन सह रासक्रीडाया भावनायुक्ताः ततश्च प्रक्षीणबन्धनाः ध्यानस्य प्रभावेनैव सुश्लथीभूतबन्धनाः सत्यो गुणमयं पत्यादिभिर्बहुधा बद्धत्वात् पाशमयं पाशप्रचुरं देहं ध्यानेनैव जहुः नाहं केनापि बद्धास्मि किन्तु मुक्तैवेति प्रत्येकं भावितवत्य इत्यर्थः । इति भावनात्यागेनैव देहत्याग उक्तः यथा श्रीब्रह्मणः सृष्ट्यारम्भे तत्तद्भावनात्याग एव तत्तद्देहत्यागः तथा च तृतीयस्कन्धे ततश्च ध्यानप्रभावेन सद्य एव प्रक्षीणबन्धनं पत्यादिभिः कृतं पार्श्वैर्नियन्त्रणं किम्वा द्वारबन्धादिप्रतिबन्धो यासां तथाभूताः सत्यः विशेषणे तात्पर्यं देहस्य पाशमयतां जहुरित्यर्थः । ततश्च परमात्मानमपि जारबुद्ध्यैव तं व्रजराजकिशोररूपमेव सङ्गता । यद्वा, परमात्मानं परमप्रियमित्यर्थः । ध्यानप्रभावमाह—ध्यानेनैव दुःसहो यः प्रेष्ठविरहतीव्रतापस्तेन धुतं निरस्तं तुच्छीकृतम् अशुभं जगतामशेषदुःखभोगो याभिः तस्मादपि तद्विरहदुःखस्याधिक्यात् किञ्च, क्षीणम अत्यल्पतां गतं मङ्गलं जगदशेषसुखभोगो याभ्यः तस्मादपि श्रीकृष्णाश्लेषसुखस्याधिक्यात् अन्यत्समानमेव ततश्च "या मया क्रीडता रात्र्यौ" इत्यस्यायमर्थः पत्यादिभिर्बलात्स्थापितत्वाद्व्रज आदिष्टा अपि पश्चान्मद्वीर्यचिन्तया नाऽलब्धरासाः नाप्राप्तरासा बभूवुः किन्तु प्रापुरासमेवेति श्रीपरीक्षित्प्रश्नस्यायमर्थः कान्तबुद्ध्या ध्यानेन गुणेषु तत्सङ्गमादिसुखेषु ननु गुणातीतरूपे श्रीयांसाम् इति ध्यानस्य न्यूनता सूचिता तथापि पत्यादिभिर्बन्धनार्थं प्रयुक्तायाः पाशपरम्पराया उपरमः निवृत्तिः कथमिति श्रीशुकदेवश्च यथा कथञ्चिद्ध्यानेन संसारबन्धादपि विमुक्तिः स्यात् श्रीकृष्णप्रियतमानां तासां तद्ध्यानविशेषेण पाशबन्धनान्मुक्तिर्जातेति किं वक्तव्यमिति कैमुतिकन्यायेनैव द्वेषादिना ध्यानादप्यभीष्टसिद्धिमाह—उक्तमित्यादिना । अन्यत्सुसङ्गतमेव ॥ १६ ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न चेति अन्येन क्रियतां नाम भवता गर्भादारभ्य तन्महिमाभिज्ञेन न कार्यं एवेत्यर्थः। अत एव भवतेति गौरवेणोक्तम् नतु त्वयेति विस्मयाकरणे हेत्वन्तरमाह--भगवति अशेषैश्वर्ययुक्ते। ननु, तर्हि कथं देवकीगर्भतो जन्म? तत्राह--अजे जीववन्न जायते किन्तु स्वेच्छयैव भक्तवात्सल्यादिना स्वयमाविर्भवतीत्यर्थः। भगवत्त्वादेव योगेश्वरेश्वरे तत्रापि कृष्णे सर्वतः परिपूर्णाविर्भाव इत्यर्थः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नचेति। एवमेवं सति कृष्णविषये भवता विस्मयो न कार्यः विस्मयासम्भावनां द्योतयितुं विशिनष्टि--अधोक्षजे अधःकृता अनितरविषया अक्षजा इन्द्रियवृत्तयो यस्मात्तस्मिन् स्वविषयककामक्रोधादिमज्जनेन्द्रियाणामन्यविषयानभिमुख्यावहे तथा कर्त्तुं समर्थानामपीश्वरे नियन्तरि कामादिप्रयुक्तसमाधिनिर्वाहक अजेश्वरे वा भगवति तदुपयुक्तज्ञानादिगुणाश्रये यतः कृष्णेद्वेषोरतस्त्वाचरादिकमपि विमुच्यते तस्मिन् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा हिशब्दोपक्षिप्ता बहवो विशेषाः शास्त्रान्तरसिद्धाः सन्ति तस्माद्भगवति विस्मयो न कार्यं इत्युपसंहरति--न चैवमिति। विस्मयः आश्चर्यबुद्धिर्भगवताप्येवमकारि किमुतास्माभिरिति दर्पो वा "चित्रे दर्पे च विस्मयः" इति यादवः। भगवत्यैश्वर्यादिगुणानामप्रमितीत्यर्थं हेतुरोरपत्तिकलक्षणं इत्याह, अज इति। न जायते इत्यजः सौभर्यादियोगेश्वरा अपि योगबलेनातिमानुषं कुर्वन्ति किमुत तदीश्वरोऽयमिति भावेनाह--योगेश्वरेश्वर इति। कृष्णविषयः प्रश्नः परिहारोऽन्यविषय इष्यते अतः कथं संशयनिस्तारः? इति शङ्कानिरासाभिप्रायेणाह, कृष्ण इति। हेत्वन्तरमाह--यत इति। यतो यस्मात्कृष्णादेतज्जगद्विमुच्यते संसारमुक्तं भवति यस्य प्रसादात्परमार्थिरूपादस्मात्संसारान्मुच्यते "नापरेण" इतिश्रुतेः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवं क्रोधावेशं विहाय शिष्यवात्सल्यादुपदिशति न चैवमित्यादि। पुनरेवं विस्मयो न च कार्यः नैवं कार्यं इत्यर्थः भवता श्रीकृष्णप्रभावज्ञानां पौत्रेण कुत्र कृष्णे अन्यत्रवरं सन्देहः क्रियतां कीदृशे अजे स्वप्रकाशे भगवति अचिन्त्यपरमैश्वर्ये योगेश्वराणामपि ईश्वरे कर्तुमकर्तुमन्यथाकर्त्तुं समर्थे एतेन तस्मिन् ब्रह्मज्ञानेनापि न किञ्चिद्भवति कान्तज्ञानेनापि तदङ्गसङ्गमङ्गलत्वं भवतीत्यन्यथाकर्तृत्वे योगेश्वरेश्वरता यत एतत्तद्गुणमादिकमपि विमुच्यत इति मुक्तिकर्तृत्वे योगेश्वरेश्वरता अभक्तानां कृतार्थताकरणे अकर्तृत्वे योगेश्वरेश्वरता ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, आदावेव गोप्यो मुक्ताः किमाश्चर्यं वहव एवाग्रे मुक्ता भविष्यन्तीति तदाह--नचैवमिति। एवम् असम्भावनारूपो विस्मयो न कार्यः असम्भावितबुद्धीनाम् अन्यथा स्फुरणानियमात् यतो भगवान् यत्किञ्चिन्मोक्षे ज्ञानादिकमुपयुज्यते तत्सर्वं भगवत्येवास्ति यदि ज्ञानव्यतिरेकेण मोक्षो न भवेदिति ज्ञास्यति तदा सिद्धत्वात् ज्ञानस्य तदपि दास्यति। किञ्च, अन्यः सन्देहं कुर्यादपि भगवतो माहात्म्यं न दृष्टमिति भवता तु न कार्यः गर्भ एव माहात्म्यदर्शनात्। किञ्च, निर्दुष्टे सर्वं सम्भवति तत्र दोषाणां मूलं जन्म तदभावे दोषाभाव इति तेन अजत्वात् निर्दुष्टः अन्ये सर्वे हि जायन्ते न तेस्तेषां मुक्तिः सम्भवति तुल्यत्वात्। किञ्च, यो हि साधनपरः स मुच्यते तत्र साधनं मनः सर्वतो निवृत्तं तथा योगेन भवति तस्य योगस्य च नियामको भगवानेव यद्यन्यस्यापि मोक्षो भवेत् भगवदिच्छयैव भवेत् योगादिसाधनानां तन्नियम्यत्वात्। किञ्च, सदानन्दो भगवान् फलात्मा यः कश्चिन्मुच्यते स एनमेव प्राप्स्यति अतः साधनैरप्ययमेव प्राप्यः सोऽपि स्वयमेव सम्पद्यत इति न किञ्चिदनुपपन्नम् किञ्च, एतत्परिदृश्यमानं सर्वमेव जगत् यतो विमुक्तिं यास्यति भावनया गोकुले स्थित आह--ज्ञानदृष्ट्या वा साक्षात्परम्परया वा सर्वानेव मोचयिष्यतीति तदग्रे वक्ष्यति स्वमूर्त्येति श्लोकद्वयेन। यद्वा, कृष्णमिति एताः कृष्णं कान्तं परं विदुर्न तु ब्रह्मतया अतो गुणप्रवाहोपरमः कथं सङ्गच्छते? इति अत्रायं भावः ब्रह्मत्वेन विज्ञानं हि शास्त्रीयं तच्च सात्त्विकं भवितुमर्हति "सत्त्वात् सञ्जायते ज्ञानम्" इति वाक्यात् एतास्तु गुणातीतस्यानन्दमात्रकरपादमुखोदरादेः प्रकटस्यानन्तगुणपूर्णस्य सौन्दर्यादिगुणेषु परिनिष्ठितधियः अतो निर्गुणत्वाद्गुणप्रवाहोपरमः कथं सङ्गच्छते उपरमस्याभावरूपत्वेन प्रतियोगिसापेक्षत्वादत्र च प्रतियोगिन एवाभावादिति मुने इति सम्बोधनं शुद्धसत्त्वाविर्भावे ज्ञानोदयस्यानुभवसिद्धत्वेन सम्वादार्थम् अस्योत्तरमाह--उक्तमिति। पुरस्तात्सप्तमस्कन्धे गोप्यः कामादित्यादिना अत्रायमर्थः यथा भगवति गुणातीत एव परिनिष्ठितबुद्धित्वेऽपि द्वेषस्य तत्र प्रयोजकत्वाच्चैद्यादीनां तामसत्वं तथैतासामपि निर्गुण एव परिनिष्ठितबुद्धित्वेऽपि जारत्वबुद्धिः तत्र प्रयोजकत्वात्सगुणत्वमेवेति लक्ष्यते अयं च रसः सर्वभावप्रपत्त्यैकलभ्यः न हि जारत्वबुद्धौ सर्वभावप्रपत्तिः कामपूरकत्वेनैव तत्सम्भवानियमात् अत्र च सगुणत्वस्य प्रतिबन्धकत्वात् यथा चैद्यादीनां स्वाधिकारानुसारेण तादृशशरीरनाशे तत्पदप्राप्तिः तथैतासामपि स्वाधिकारानुसारेण तथात्वे सगुणत्वापगमे सर्वभावप्रपत्त्यैव ततो निजपतिभजनमिति सर्वभवदातम् अन्यथा "ये यथा मां प्रपद्यन्ते" इति मर्यादा भज्येत एतदेव मनसि कृत्वाऽऽह--उक्तं पुरस्तादेतत्त इति। ननु, तथापि तादृशप्रपत्तेरेव मूलत्वात् कथं सर्वभावप्रपत्तिसाध्यं फलं भविष्यतीत्यत आह--द्विषन्नपीति। अयमर्थः मोक्षसुखानभीप्सुः तद्विरुद्धद्वेषकर्त्ता च चैद्यः तस्मै यथा ज्ञानिनामपि दुर्लभां मुक्तिं दत्तवान् एवं तादृक्प्रतिपत्तिमूलानामप्येतासां तादृशं फलं दत्तवानिति एतेन यथा द्वेषमुक्त्योस्तारतम्यं (त) यथाऽन्यशेषभजनैतद्रसयोरपीति सूचितम्। ननु, गोकुलस्य भगवत्क्रीडोपयोगित्वेन

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वथाङ्गीकृतस्य सर्वस्यैव निर्गुणत्वे कथमेतासां सगुणत्वमुच्यते । किञ्च, अग्रेऽपि यदि सर्वभावप्रपत्तिलभ्यमेव फलं दित्सितं भगवतस्तदा पूर्वमेव स एव भावः किमिति नोत्पादित इति चेत्? अत्र वदामः यासां साक्षाद्भगवत्सम्बन्धस्तासां सर्वासामेव रासमण्डलमण्डनानां शरीरमपि गुणातीतमेवेति ज्ञापयितुं भगवानेव कतिपयगोपीः सगुणदेहाः स्थापयित्वा पूर्वोक्तानां भावोऽपि निर्गुण इति ज्ञापयितुम् आसां सगुणं भावमुत्पाद्यैतन्निवर्त्तकोऽपि स्वयमेव नान्य इत्यपि ज्ञापयितुं तन्निवृत्तिं विधायाग्रे भाविस्वविरहजदुःखस्वसङ्गमजसुखयोः कर्माजन्यत्वमपि ज्ञापयितुं कर्मक्षयप्रकारेण स्वप्राप्तिं विधाय मत्स्वाम्येव सर्वमिदं कृतवानिति निगर्वः अत्र पुष्टिमार्गाङ्गीकारात् मर्यादामार्गीयानुपपत्तयो ऽनवसरपराहता इति सर्वमनवद्यम् अत एव श्रीशुकोपि "जहुर्गुणमयं देहम्" इति सगुणदेहत्यागमवोक्तवानग्रे गुणातीततत्प्राप्त्यभिप्रायेण गोप्यत्वात् स्पष्टं नोक्तवान् अन्यथा गुणमयपदं वैयर्थ्यं स्यात् । ननु, पूर्वोक्तज्ञापनायैवेदं कृतवानिति कथं ज्ञेयमुपपत्त्यभावात् इत्याशङ्क्योपपत्तिमाह-नृणामिति । अयमाशयः लीलायांतस्थितभक्तेषु च सुतरां रासस्थासु या साधारणत्वबुद्धिः सा सदोषत्वारोपापरपर्याया तासामगुणत्वात् तस्य दोषरूपत्वात् भगवत्स्वरूपे लीलायां च सगुणत्वप्रसङ्गकत्वाच्च एवं सत्येतल्लीलाया मुक्तिप्रतिबन्धकत्वमेव स्यात् न तु तद्धेतुत्वं तथा सत्यवतारप्रयोजनं विरुध्येतेत्यन्यथानुपपत्त्यैव तथोच्यत इति ज्ञापनप्रयोजनमपीदमेवेति ज्ञेयम् व्याख्यानं पूर्ववत् नन्वियद्वधि सगुणास्वेतासु कृताया लीलायाः पूर्वोक्तदोषप्रसङ्गकत्वं दुर्वारमित्याशङ्क्य पूर्वलीलाकृतितात्पर्यमाह—कामं मिति । इदं हि साधारण्येनोच्यते य एवं नित्यं विदधते ते तन्मयतां यान्तीति नत्वेतद्दोषमार्याविषयकमेव अत एव क्रोधायुक्तिरपि अन्यथाऽप्रस्तावे नात्र तन्निरूपणमयुक्तं स्यात् तथा च सगुणेनादि भावेन भजते भगवान् स्वानुरूपमेव फलं ददातीति ज्ञापनाय पूर्वलीलेत्यर्थः । अन्यथा मुख्याधिकारिणामेव भगवत्प्राप्तिरिति ज्ञाने अन्येषामप्रवृत्त्या भक्त्युच्छेदः स्यात् एवं शास्त्रमप्रयोजकं च स्यात् मुख्याधिकारिणां स्वत एव प्रवृत्तेः स्वरूपलीलयोस्तु न कदाचित्सगुणत्वं लीलाविषयाणां सगुणानामपि निर्गुणत्वापादकत्वात् न हि दोषनिवर्त्तकमौषधं रोगिसम्बन्धं सत्तद्भवति तथा सति तन्निवर्त्तकत्वापत्तेः लीलाया विषयसाजात्यनियमेन सगुणनिर्गुणभक्तयोरेकया वेणुवादनादिलीलया निरोधो नोपपद्येत क्रोधादिवत्कामोपाधिकभावस्यापि जघन्यत्वज्ञापनायापि क्रोधादिनिरूपणं ज्ञेयम् तन्मतानां निर्गुणतामित्यर्थः । ननु, साक्षादङ्गसङ्गेऽपि सगुणत्वाक्षितिर्वस्तुशक्तिः कथं सहते? वह्निसम्बन्ध इव तूलस्थितिरित्येको विस्मयः लौकिकरीत्या काममावनीयत्वलौकिकस्य रमणं द्वितीयः क्रोधादिभाववतां तत्फलमननुभूयैव भगवत्प्राप्तिश्चापरः स्नेहवत्समानफलत्वं च यशोदानन्दने हिताभाववत्यन्तस्य च कनस्थितस्यैतद्धयानप्राप्तिश्चान्यः एतासां तदैव निर्गुणदेहप्राप्तिर्विनैव तत्साधनमिति चेतरः सर्वात्मभाववतामेव करिष्यमाणलीलाया अनुभवः अन्यस्यास्तु तद्रहितानामपीत्यनेकविस्मयाविष्टं राजानं ज्ञात्वा तन्निवारकं क्रमेण वदन् पूर्वश्लोकोक्तभाववतां भगवत्प्राप्तौ हेतूनप्याह—नचैवमिति । आद्यविस्मयाभावार्थमाह—भवनेति । अत्रायं भावः पूर्वमनिवृत्ते ब्रह्मास्त्रतोऽपि गर्भेपि रक्षितवान् भवन्तं प्रयोजनमस्तीति अधुना तु तदभावात् बालचापल्यादपि न रक्षतीति भयतैवानुभूयते न ह्येतावता वस्तुशक्तौ काचिन्न्यूनता इच्छाशक्त्यधीनत्वात्सर्वासां शक्तीनां तस्याः सर्वतोऽधिकत्वात् न हि मन्त्रप्रतिबन्धदशायामग्नेरदाहकत्वमिति तच्छक्त्यपगम एवेति वक्तुं युक्तम् प्रकृतेऽपि यासां मात्वादित्यादिनोक्तप्रयोजनार्थं भगवता तथा कृतमिति ज्ञात्वा भवता तु विस्मयो न कार्यः अनुभावाननुभवेनान्यः कुर्यादपीति द्वितीयतृतीयादिकं परिहरति-भगवतीति । तत्रेश्वरो हि सर्वरसभोक्ता भवति "सर्वरसः" इति श्रुतेः कामरसो हि तादृशभाववतीषु विशिष्टो ऽनुभूतो भवति कामशास्त्रे तथैव निरूपणात् तथा चैश्वर्यवत्त्वयं विस्मयो न कार्यः तथा भगवद्वीर्यस्येतरसाधनासाध्यसाधकत्वेनात्युग्रत्वात् क्रोधादिदोषमन्यानिवर्त्यमपि स्ववीर्येण हरिर्निवारयितुं समर्थ इति तादृशो स विस्मयो न कार्यः यशोऽसाधारणमसाधारणे कर्मणि सति भवति यदि स्नेहवत्स्वेव मुक्तिं दद्यात् द्विषत्सु नदान्यसाधारण्येनासाधारणं यशो न स्यात् भयद्वेषादिमत्स्वपि स्नेहादिमत्समानफलदाने त्वसाधारणत्वेनासाधारणं यशः स्यात् तथा च तादृशयशसः सहजत्वेन तद्धापकधर्मा अपि हरौ सहजा एवेति नायं विस्मयः कार्यः श्रीर्लक्ष्मीः सा चैतादृशस्नेहवती यद्वक्षसि स्थितिं प्राप्यापि कामयते प्रत्यवतारं चावतरति सदा तद्वत्त्वेन हरिः स्नेहरसाभिज्ञ इति तद्वत्सु स्वरूपदानं युक्तम् ऐक्यं हि ज्ञानमार्गे हरेश्च ज्ञानवत्त्वेन तेषु तथा युक्तं सौहार्दं हि सख्ये सति भवति तच्च समानशीलव्यसनेष्वेव—

> "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
> श्रियं चात्यन्तिकीं ब्रह्मन् ! येषां गतिरहं परा ॥
> साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
> मदन्यत्ते न जानन्ति नाऽहं तेभ्यो मनागपि" ॥

इत्यादिवाक्यैर्यथा भगवतो भक्तातिरिक्ते रागाभावो भक्तेष्वेव च राग इति वैराग्यवत्त्वं तथा भक्तानामपि भगवतीति सौहार्दयोग्येषु सौहार्दं ददातीति पूर्वोक्तवैराग्यवत्त्वात् तेषु तथाकरणं युक्तमिति भावः । यशोदानन्दन इत्यादिनोक्तविस्मयाभावार्थमाह-अज इति । यदि भगवतो जीववत् कुत्रापि जन्म स्यात्तदान्यत्र बहिःस्थितोऽन्तर्हृदि कथमागतस्तत्र सर्वत्रेति शङ्का स्यात् तदभावात्स्वेच्छया यथा मायायवनिकां दूरीकृत्य यशोदागृहे प्रकटस्तथा वने सर्वेषामन्तर्हृद्यपीत्यत्र नायं विस्मयः कार्यः अग्रिमोक्तलब्भावार्थमाह-योगेश्वरेति । योगिनो हि योगबलेन योगार्थमनेकानि शरीराणि युगपत् क्षणमात्रे सृजन्ति तेषां च योग आगन्तुको धर्मः भगवांश्च तादृग्धर्मसम्पादकः फलदाता चेति तेषामपीश्वर इति "सहजानन्दशक्तिमान्" इति तास्वलौकिकदेहसम्पादनमात्रं न विस्मयहेतुर्भवितुमर्हति अग्रिमनस्माभावायाह—कृष्ण इति । "कृषिर्भूवाचक" इति वाक्यात्सदानन्दस्वरूपो भगवान्निर्दोषपूर्णगुण इति यावत् तेन कृष्णातिरिक्तस्य वस्तुमात्रस्यैव सदोषत्वात् तत्रापि स्वास्यहेतुत्वं जानतः सदोषत्वमेवेति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निश्चयः इयं च लीला स्वरूपानन्दरूपा तादृश्यैवेति सर्वात्मभावरहितेष्वेतदनुभवायोग्यत्वान्नायं विस्मयः कार्य इत्यर्थः किञ्च, एतासां तु स्नेहः पूर्वोक्तः साधनत्वेनासीद्गोकुलं स्वहृत्यापूतं निशि शयान इति वाक्यात्सर्वसाधनविमुखं तदपि प्रतिद्वयां स्वरूपे लीयते अग्रिमाग्रिमलीलारसानुभवार्थं भगवान् परं पुनः पुनः पृथक्कृत्यता मनुभावयतीत्यचिन्त्यानन्तशक्तिमति न किञ्चिदाश्चर्यमित्याशयेनाह—यत एतदिति । शुकस्त्वधुना लीलेतराननुसन्धानात् भावनया तत्रैव स्थित इत्येतदित्युक्तवान् वर्त्तमानप्रयोगं च कृतवान् तामेव लीलामनुभवतीति सर्वमनवद्यम् नन्वेतद्वैपरीत्यमपि सुवचं तथाहि एता अपि पूर्वोक्तमध्यपातिन्य एव अत एव पूर्वश्लोके तासामनिवृत्तिमुक्त्वा तादृशी सालोक्यसम्भावितेति सा कथमुपपाद्यत इत्याशङ्कानिरासायाह—अन्तर्गृहेत्यादि। अत्रायं भावः पूर्वं हि वचनेन निवर्त्तनं तथा सति निवृत्तिर्हि विपरीतस्वक्रियया भवति सा चातिदूरे यतस्तत्सजातीयाः काश्चिद्भर्त्राधिकृते क्रियया प्रतिबन्धे तत्प्रतिबध्यं देहमपि त्यक्त्वा भगवत्सङ्गता जाताः तथाचैतादृशः पूर्वोक्ताः सर्वा इति युक्तैवानिवृत्तिः । किञ्च, तद्ध्यानायुक्ता इति पदे तच्छब्दस्य पूर्वपरामर्शित्वेन पूर्वं च पूर्वोक्तानामेव भावस्योक्तत्वादेतद्भावसजातीयभाववत्त्वं पूर्वोक्तानामपीति गम्यते तेनैतच्छिष्टाशेषधर्मवत्त्वं तत्रापि सिद्ध्यति एतासां मुक्तिर्द्वेचेति तान्निवृत्तिं विना न सेति तथोक्तं तासां न तथेति न तथोक्तमिति चेत् ? अहो शङ्काढ्यमानिनो मौढ्यदार्ढ्यं तव यस्मादालोचनलोचनराहित्येन बहिर्मुखत्वान्तसङ्गीगरिगत्तोघातपातविधयाशयः परोक्तमपि नानुसन्धत्से तथाहि यच्छङ्कानिरासायैतत्कथावतारिता तद्वाचश्च त्वया वर्णितस्तत्र त्वां पृच्छामस्तदर्थमियं कथा कल्पितातः सिद्धैवानूदिता अन्यत्र एव सम्मतश्चेत् तत्रापि त्वां पृच्छाम एतासां प्रतिबन्धे को हेतुरिति स्वप्रियास्वपि सगुणत्वं व्यापयितुमेतासां प्रतिबन्धो हरिणैव कृत इति चेद्ब्रवीषि हन्तैवं विचारकस्य तव शतधा हृदयं नास्फुटत्कुतस्तन्न जानीमः यतो मर्यादा भक्तिमार्गीयसेवाविषयकश्रद्धाया अपि निर्गुणत्वं तत्र साक्षादङ्गसङ्गिनीषु सगुणत्वं ब्रवीषि किञ्च "तामन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः" इत्यादिना प्रभुणैव "एताः परं तनुभृतः" इत्यादिनोद्धवेन "नोऽश्वोऽग्यपि गम्यूनः" इत्यादिना भगवता स्तुतेनापि चरणरेणु प्रार्थनापूर्वकं स्तुता इति कृतगन्धशङ्कापि । ननु, कामोपाधिस्नेहवत्त्वेन तथोच्यत इति चेत् ? न तथा स्नेहे भगवतोऽपि विषयास्तरतुल्यत्वेन "संत्यज्य सर्वविषयान्" इति कथनानुपपत्तेः विषयार्थमेवागमनात् नच भगवतो विषयत्वेऽपि तदतिरिक्तविषयाणां त्यागोऽनूद्यत इति वाच्यं तव पादमूलं प्राप्ता इत्युक्तिविरोधात् न हि कामिन्य एवं वदन्ति किन्तु भक्ता एव किञ्चातिलोके पूतनास्तुपयःपानानन्तरं रत्नाकरयो श्रीशुकेन हेतुरुक्तः "इति प्रणय पद्माभिर्गोपीभिः" इति न हि तादृशे कामोपाधिकः सम्भवति न वा तादृशीनामङ्गनादित्यागः सम्भवति प्रत्युत तदादिसर्वं प्रसाध्यागमनं कुब्जावत् तदनन्तरं यद्रमणं तत्तु "रसो वै सः" इति श्रुतेः स्वरूपस्य रसात्मकत्वाद्रसरीत्या स्वरूपानन्ददानमेव—

सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥

इति भगवद्वाक्याद्भगवत्सम्बन्धिसुखस्यापि गुणातीतत्वमेव ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न चेति अन्येन विस्मयः क्रियतां नाम अत्रार्थो भवता तु गर्भादारभ्य तन्महिमाभिज्ञेन न कार्यः गोचरकत्वेऽपि भगवति देवकीपुत्रत्वेऽप्यजे गोपस्त्रीजारपटत्वेऽपि योगेश्वराणामपीश्वरे कृष्णे सर्वावतारिणि यत एतत्स्थावरादिकमपि विमुच्यते इति श्रीस्वामिचरणाः यद्वा तल्लीलापरिकरादिन्नमपि जगत् अधुनापि तत्तत्कामस्नेहादिभावमनुसृत्य विमुच्यते गुणप्रवाहान्मुक्तं भवति ॥ १६ ॥

---

### श्रीविशुद्धरसदीपिका ।

नच भगवतोयमतिभार इत्याह—नचैवमिति । विस्मयः विरुद्धभावनामपि शुद्धभावोपलब्धावद्भुतत्वं सादरमाह—भवता नित्यपरिकरेणेत्यर्थः । यत्र केवलनिष्ठावतां माहेश्वरीसंहितोक्तानां महासिद्ध्यादिसहचरीत्वप्राप्तिर्निर्बोधका तत्र बाधानवरतभावानां तत्तत्प्राप्ताविति भावः । भगवतीति पूर्ववत् पूर्णप्रकाश इत्यर्थः अजे स्वेच्छयाविर्भूतत्वेऽपि नित्यकिशोर इत्यर्थः । बृहच्छरीर इत्यत्र प्रतिपादितमेव । ननु, योऽपानामयोग्यानां च समाना गतिरसमञ्जसेत्यत आह—योगेति । परमोपायश इत्यर्थः । यद्वा, योगोऽत्र परिकरदेहसंयोगः तदीश्वरास्ते ते च प्रकाशास्तेषामपीश्वरे मूलरूप इत्यर्थः । ततश्चायोग्यानां ब्रह्माख्यतत्प्रभावविशेषप्राप्तियोग्यानां च तत्तद्भावानुसारेण तत्तद्रूपप्राप्तिरिति लब्धवासुदेवसायुज्य चैद्यादेर्विकुण्ठाच्युतपार्षदत्वप्राप्तिवादिति साक्षात्तत्प्राप्तिनिर्देशस्तु अभेदाभिप्रायेण तदुक्तं श्रीरसामृतसिन्धौ—

"यदरीणां प्रियाणां च प्राप्यमेकमिवोदितम् ।
तद्ब्रह्म कृष्णयोरैक्यात्किरणार्कोपमाजुषोः" ॥ इति

कुतः यतो हेतोः एतदखिलमपि जगद्विमुच्यते कस्तत्र तत्तद्भावाविष्टानां निजनिजोचितपरिकरत्वप्राप्तौ सन्देह इति भावः । यद्वा, एतदिति स्वहृदि हस्तं निधायाह—एतन्निस्पृक्तं मम स्वरूपं ब्रह्म तदपि विमुच्यते विशिष्टां मुक्तिपरिकरतां लभत "विमुक्तश्च विमुच्यते" इति श्रुतेः किमुत भावका मुच्येयुरिति दैन्यमपि सूचितम् ॥ १६ ॥

---

### श्रीरामनारायणकृतभावविभाविका ।

फलितमाह—नचैवमिति । एवं सति यत्र भगवतो जीवोपाध्यावृतत्वं तत्रावरणनिवृत्तौ बुद्ध्यपेक्षायामपि यत्र भगवतः स्वकृपया स्वेनैव भगेन व्यक्तिस्तत्र गुणप्रवाहोपरमाय बुद्ध्यपेक्षानावश्यकत्वे सति यत्र च यथा जनोद्धाराय भगवतो लीलाव्यक्तिस्तत्र निर्मोहवैरादीनां तल्लीलोपयोगिमोहवैराद्यनुकारे तथा गुणप्रवाहशून्यानामपि तदादृगुणप्रवाहतदुपरमाद्यनुकारे

**ता दृष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषितः ।**
**अवदद्वदतां श्रेष्ठो वाचःपेशैर्विमोहयन् ॥ १७ ॥**

श्रीरामनारायणकृतभावभावविभाविका ।

सम्भवति सति भवता गर्भे एव दृष्टस्वावनरूपस्वकृपाभगवद्भक्त-भगवत्प्रभावेन भगवति विस्मयो न कार्यः । नहि स्वतः सिद्धनिरतिशयषडैश्वर्यस्य किमप्यसम्भावितम् । ननु. गोपसुतस्य कथमीश्वरत्वं ? तत्राह-अजे इति । कथं शरीरस्याजत्वं तत्राह, कृष्ण इति—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" ॥

इति वचनात् । सत्यानन्दस्वरूपे औतसत्यानन्दत्वसम्भवनाय योगेश्वराराध्यत्वमप्याह—योगेश्वरेश्वर इति । कैमुत्यन्यायेन तद्-गुणप्रवाहोपरमं द्रढयति—यत इति । यतो यन्नामग्रहणध्यान-मात्रेण एतदिति एतत्समस्तविश्वमपि विमुच्यते—

"अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृह्णन्ति ये ते" ॥
"सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
सद्यस्तपस्वी भवति पङ्क्तिपावनपावनः" ॥

"अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः" इत्यादिवचनात् तदा किमु वाच्यमधो-क्षजप्रियाणां गुणप्रवाहोपरमे पक्षान्तरे तु किमर्थमीदृग्लीला व्यक्तिः यत्र गुणप्रवाहशून्यानामपि गुणप्रवाहतदुपरामयोरनु-कार इत्याकाङ्क्षायामाह—यत एतदिति । यतः सत्यामीदृग्भग-वल्लीलायां तद्गानध्यानादिना एतद्विश्वं विमुच्यते भगवतो भगवतीनां च न स्वप्रयोजनाय किमपि कृत्यं किन्तु जनोद्धा-रायैव ॥ १६ ॥

---

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ननु, उक्तेऽप्यर्थे विस्मयाद्विक्षेपेण पुनः प्रश्नः क्रियतेऽतः कि-मिति सामर्षं भवद्भिरुत्तरं दत्तमिति चेदप्रसिद्धे ह्यर्थे उक्तेऽपि कदाचिद्विस्मयावेशात्पुनः प्रश्नो भवेदनेकवारमनुभूते समस्त शास्त्रेषु प्रसिद्धे परमात्ममुखात्सम्यक् श्रुतेसुमनस्कस्य विस्मयोऽपि कर्तुमयोग्य इत्याशयेनाह-नचेति । गुणप्रवाहेष्वेवमसम्भावना-लक्षणो विस्मयः भवता तु गर्भवासकालादारभ्यैतावत्काल-पर्यन्तं भगवन्माहात्म्यमनुभूतवता मयारितमपि ब्रह्मास्त्रं यो वारितवान् तस्य हीनोऽनिवर्तनीयसंसारनिवर्तने कः परिश्रमः इति सर्वविस्मयनिवारकजन्मवता जन्मकाल एव कोऽसौ मम रक्षक इति परीक्षयेन परीक्षिदिति नामवता न च कार्यः । कदापि न कर्तव्यः एवम्भूतो विस्मयस्तु अज्ञानिनाम् अश्रद्दधानानां संश-यावि‍ष्टचेतसां वा भवति न तद्विलक्षणानावतां भवादृशानाम् अज्ञ-त्वादिकन्तु सर्वानर्थकारणत्वाद्दूरतः परिहरणीयं तदुक्तम्—

"अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः" । इति

तत्रापि भगवति षड्गुणैश्वर्यसम्पन्ने येन तस्योद्धारो यद्वि-षयकाङ्क्षया वा तस्य प्रतिबन्धस्तद्दाविभोचन तदाकाङ्क्षापूर्त्या वा मोचनसमर्थे अत एव अजे जन्महेत्वविद्याकामकर्मवासना-दिविनिर्मुक्ताज्जन्मशून्ये लोकानुग्रहायाविर्भूत्वा दिव्यजन्मादि त्वेपि नास्त्यजत्वाविव्याघात इति भावः । किञ्च, योगेश्वरेश्वरे योगेश्वरा ब्रह्मादयः तेषामपीश्वरे आदिकारणे नियन्तरि भगवत्वा-जत्वमहेश्वरत्वादिज्ञानवतोपि मुक्तिप्रदे तदुक्तम्—

"अहमादिर्हि देवानां महर्षीणां च सर्वशः ।
यो मामजमनादिञ्च वेत्ति लोकमहेश्वरम् ॥
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते" । इति ।

यद्वा, यत्प्रसादाद्योगेश्वरा अपि मोक्षदानक्षमास्तेषामी-श्वरे को विस्मयः एवं त्रिभिः पदैः मोचनसामर्थ्यमभिधाय किञ्च, मुक्तिप्राप्योऽपि स एवेत्याह—कृष्णे सदानन्द-स्वरूपे यतो येनकेनापि प्रकारेणाभिलाषेनचराचरं सर्वमपि विमु-च्यते तथा च गुणैश्वर्यं प्रादुर्भूतजन्माद्यनर्थसमूहे स्वस्यापि मोक्षोपाययोगादिशून्ये आवृतसदानन्दस्वरूपे अनृतजडदुःखदेहादि-तादात्म्यापन्ने जीवे ऽस्त्येवं विस्मयः न तु यथोक्ते परमात्मनि तत्रापि भवत इति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न च तत्तदधिकारिनिःश्रेयसकरणे कश्चिच्छ्रम इत्याह, नचैवमिति । यतः श्रीकृष्णादेतत् स्थावरादिकमपि विमुच्यते तस्मिन्कृष्णे कामादिनिमित्तेन स्वासक्तानपि विमोचयतीति विस्मयो न कार्यः ॥ १६ ॥

---

भाषा टीका ।

ताते हे राजन् ! अब कबहूं श्रीकृष्ण भगवान् के विषैं तुम ऐसो विस्मय मत करियो काहे सों, कि—वे योगेश्वरन केऊ ईश्वर हैं जिन श्रीकृष्ण की कृपा तें ये जगत बन्धन तें छूटि जाय है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रस्तुतमाह–ता दृष्ट्वेति । वाचःपेशैर्वाग्विलासैः ॥ १७ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

ताः वेणुगीताकृष्टाः परमविह्वलाः व्रजस्य योषितः सर्वा-एव न तरुणीः । यद्वा, व्रज एव स्थातुं योग्याः नहि वहिर्वना-न्तरागन्तुमित्यर्थः । तत्रापि निजान्तिकमेव आयाताः प्राप्ताः नतु लज्जादिना दूरतः स्थिताः दृष्ट्वा अवदत् स्वागतमित्यादि वक्ष्यमाणं

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

किमर्थं वाचःपेशैर्विलासैर्विशेषेण मोहयन् चित्तं हरन् स्वविषयकं भावं नितरां वर्द्धयितुमित्यर्थः । तच्चाग्रे व्यक्तं भावि ननु, वाग्विलासमात्रेण कथं विमोहनं स्यात् ? तत्राह—वदतां चतुर्मुख सहस्रमुखादीनां वाग्मिनां श्रीव्यासादीनां वा कवीनां श्रेष्ठः कुतः भगवान् साक्षात्सर्वैश्वर्ययुक्तः । यद्वा, वाचःपेशैर्भङ्गीविशेषैः एकैव वाक् समुपेक्षामयी संप्रार्थनामयी चेति मिथो विरोध्युभय-कोटिस्पर्शादेव कैतवकपटपरिपाटीपाटवैरित्यर्थः । साक्षाद्धर्मादि-बोधनपरत्वेऽपि निजात्यन्तरिरंसातात्पर्येण स्वविषयकभाव-दृढीकरणात् तत्र हेतुः वदतां श्रेष्ठ इति । यद्वा, रन्तुं मनश्चक्र इति "जगौ कलं वामदृशां मनोहरम्" इत्यादिना तस्य ताभिः सह रिरंसा व्यक्तैव एवं मनस्यन्यदेव धर्मादिपरवाग्विलासैश्च वच-स्यन्यदेवेत्येवमवहित्थया ता विमोहयन् वाक्यार्थनिर्धारणाशक्तेः वस्तुतस्तु वाचःपेशैः सौन्दर्यैरित्युक्तिपरिपाटीमात्रमेव तत् नतु तादृशो भाव इति बोधयत्येव । यद्वा, सर्वत्रान्तर्भूतोऽपि शब्दार्थौ द्रष्टव्यः तथाहि व्रजयोषितः सहजनिजप्रेमपरा अपि तत्रापि ताः तथाभूता अपि तत्रापि तदानीं निजान्तिकमायाता अपि साक्षात् दृष्ट्वापि स्वयं च भगवान् सर्वज्ञत्वेन तासां भावाभिज्ञोऽपि वाचःपेशैः कपटवाक्यैर्विमोहयन् परमवैकल्यं प्रापयन्नवदत् किमर्थं ? वदतां नर्मोक्तिचतुराणां मध्ये श्रेष्ठः नर्मविशेषार्थमित्यर्थः यद्वा, वाचःपेशैः तासां वाग्विलासैर्हेतुभिः तच्छ्रवणार्थमित्यर्थः यद्वा, पेशैर्निजसौन्दर्यैर्विमोहयन्नवदत् कुतः अकारप्रश्लेषेण अवाचः लज्जया किमप्यवदन्तीरित्यर्थः । अतस्तासां प्रत्युक्तिश्रव-णार्थमित तात्पर्यं कुतः ? वदतां श्रेष्ठः उक्तिभङ्गीकुशलानां स्वत एव परोक्तिचातुरीश्रवणरसिकत्वादित्यर्थः । अन्यत्समानम् एवं सर्वथा वस्तुतो मिथो भावविवृद्ध्यर्थमेव ज्ञेयम्—

"विदग्धा वल्लिपूज्यासु विदग्धाखिलशिरोमणेः ।
वाचोऽर्थलिखने मे ताः स चानन्यगतेर्गतिः" ॥

इति ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतः परमरसमयरासलीलाप्रसङ्गेऽस्मिन्नन्तरायाऽनौचित्येऽपि सर्वेषामेकचित्ततासम्पादनार्थमेवेदृशः प्रश्नो भवता कृतः मयापि भवदनुरोधेनैव सिद्धान्तप्रक्रियेयं व्यञ्जितेति व्यञ्जयन् पुनर-प्रार्थितोऽपि स्वयमुत्कण्ठया सहसा प्रस्तुतमेवाह—ता वेणुगीता-कृष्टाः परमविह्वलाः तदेव दर्शयति, व्रजस्य योषितः व्रज एव स्थातुं योग्याः नहि बहिर्वनमागन्तुमित्यर्थः । तत्रापि निजान्तिकमेवायाताः प्राप्ताः नतु लज्जादिना दूरतः स्थिताः दृष्ट्वा अवदत् वाचःपेशैर्वाग्विलासैः ते च द्विविधाः शाब्दिका आर्थि-काश्च पूर्वे तु सुललितवर्णविन्यासस्तु गमसुभगसमुच्चारणस्मित-वलितश्रीमुखलोचनचिल्लीचालनविशेषादयः उत्तरे रस-भावालङ्कारवस्तुरूपाः एतेऽपि चतुर्विधा उपेक्षाभङ्गिमया प्रार्थना-भङ्गिमयाः स्वगुणख्यापनमयाः वास्तवार्थमयाश्च तथाच सति विमोहयन्निति इतश्चिताः इतविवेकाश्च कुर्वन्नित्यर्थो यथायथमूह्यः तत्र पूर्वत्वं शाब्दिकप्रार्थनामयवास्तवार्थमयेषु उत्तरोत्तरत्वं चान्ययोः तत्र च शाब्दिकाः स्वसाधन निक्षेपतस्तु भावेन प्रार्थिकेषु उपेक्षामयाः स्वस्मिन्नुत्कण्ठावर्द्धनार्थमेव नतूपेक्षार्थं कृताः रन्तुं मनश्चक्रे, जगौ कलं वामदृशां मनोहरमित्युक्तत्वात् अत एवैतत् पक्षे वाक्पेशमात्रतो नतु तात्पर्यत इत्यर्थः । एवं "मनस्यन्यद्वचस्य-न्यत्" इत्यवहित्थया तासामुत्कण्ठया विषयणतासम्पादनं तेन च विवेकहरणमिति तत्रापि प्रार्थनामया निजौत्सुक्यमात्र-हेतुकाः तद्गुणख्यापनार्थं सन्धापनन्तु नर्मकौतुकार्थमिति तथा वचने योग्यतां कैमुत्येनाह, वदतां श्रेष्ठः निखिलवाग्वैदग्धीविदां वरिष्ठः यतो भगवान् स्वाभाविकनादृशज्ञानादिभिः सर्वा-तिशायी । यद्वा, सर्वत्रान्तर्भूतोऽपि शब्दो द्रष्टव्यः तथाहि व्रज-योषितः सहजनिजप्रेमपरत्वेन प्रसिद्धा अपि तत्रापि तास्तादृशं प्रेमविकारं प्राप्ता अपि तत्रापि तदानीं निजान्तिकमायाता अपि साक्षाद्दृष्ट्वापि स्वयञ्च भगवान् सर्वज्ञत्वेन तासां भावाभिज्ञोऽपि वाचःपेशैः कपटवाक्यैर्विमोहयन् परमवैकल्यं प्रापयन्नवदत् किमर्थं ? वदतां नर्मोक्तिचतुराणां मध्ये श्रेष्ठः नर्मविशेषार्थमित्यर्थः ॥ १७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रस्तुतमाह—ता दृष्ट्वेति । ता आगता गोपीर्दृष्ट्वा वदतां निपुण-वादिनां मध्ये श्रेष्ठो भगवान् वाग्विलासैर्विमोहयन्नुवाच तन्मनःपरीक्षार्थमाहेत्यर्थः ॥ १७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परीक्षित्प्रश्नं परिहृत्य बुभुत्सितकथाशेषं वक्ति—ता इति । वाचः परिमापणानुवृत्तैः पाशैः स्नेहलक्षणैः वदतां व्यक्तवाचां कवीनां श्रेष्ठः प्रशस्तमः ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ प्रकृतमाह—ता दृष्ट्वेत्यादि । भगवानवदत् वदतां वाग्मिनां श्रेष्ठः किङ्कुर्वन् वाचः पेशैः वाचामवयवैः विमोहयन् अव-यवा नानाप्रकारभावाः "पिश अवयवे" इत्यस्मात् ते च स्वीकारतटस्थपरिहारादिभिर्भेदैः निषेधे विधिः विधौ निषेध इत्यादिविपरीतलक्षणार्थः ॥ १७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रासङ्गिकं परिहृत्य प्रस्तुतमाह—ता दृष्ट्वेति । यास्तु समाहूताः समागता ता न निवार्यन्ते याः पुनः सगुणाः समा-गताः अन्यसम्बन्धिन्यः ताः शब्दश्रवणात्समागता इति शब्देन निवारणीयाः अन्यशेषतया भजनमयुक्तमिति करिष्यमाणा-लीला तु सर्वभावप्रपत्तिसाध्या अतो निवारणार्थं यत्नमाह—ताः दुहन्त्य इत्याद्याः अन्तिकमायाता दृष्ट्वा स्वार्थमेवागता इति निश्चित्य भगवान् सर्वज्ञः सर्वसमर्थोऽपि ता अपि व्रज-योषितः अपावृताः स्वकीयाश्च अतः सर्वानुपपत्तिरहिता अपि दृष्ट्वा अवदत् धर्मप्रबोधनार्थं वक्ष्यमाणमुक्तवान् । ननु, ताः पूर्वं निवार्यमाणाः समागताः कथमेतद्वाक्येन निवृत्ता भविष्यन्ति अतो व्यर्थो वाक्प्रयास इति चेत्तत्राह—वदतां श्रेष्ठ इति ये

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

केचिद्वदन्ति तेषां मध्ये श्रेष्ठः अतो हृदयगामकस्य वचनं भवति अतो यावद्वचनेन निवृत्ता भवन्ति तावच्च कृतौ योजनीयाः । किञ्च, अलौकिकमध्यस्यानिवर्त्तने सामर्थ्यमस्ति तदाह—वाचःपेशै-र्विमोहयन्निति । वाचः पेशा वाक्सौन्दर्ययुक्ताः शब्दाः तैर्विशे-षेण मोहयन् अथवा ता हठाकर्त्तुमेव सम्यक् मोहनार्थं निषेधवाक्यान्युक्तवान् अन्यथा गच्छेयुरेव अतो अर्थतः निवार-यन्नपि पर्यवसानतो न निवारयति ॥ १७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रासङ्गिकं विरोधं समाधाय प्रस्तुतमाह—ता वेणुनादाकृष्टा वदतां कालदेशपात्रौचित्येन वचनचातुर्यवतां मध्ये श्रेष्ठः पेशै-रवयवैः "पिश अवयवे" घञन्तप्रयोगः वाचो अवयवाः वाच्य-लक्ष्यव्यङ्ग्यबोधका ये रूक्षाः स्निग्धाश्च अंशास्तैर्विमोहयन् वेणुनादेन मोहिता अपि ता विशेषेण मोहयितुम् अत्र ताः प्रति रूक्षां-शेन भगवतस्त्रयो मनोरथाः सम्भवन्ति प्रीतिविषयस्य कान्तस्य अमौदासीन्ये दृष्टेऽप्यासां प्रीतिलेशोऽपि न ह्रसतीति प्रीतिः शुद्धतां लोके दर्शयिष्यामीति तथा सम्प्रयोगे वैपरीत्यमिवाद्य नायिकाधर्ममवहित्थामयं वाक्यमहं प्रदीष्यामि नायकधर्म-मौत्सुक्यप्रकटनमयं दाक्षिण्यमेता ग्राहयिष्यामीति मिलनेऽपि वैपरीत्यं रचयिष्यामीति तथा परमलज्जावतीनां युवतीनां स्वाभाविक्या अवहित्थया सङ्गोपितान्यभ्यान्तरीणानि वचनानि प्रकृतिविपर्यासतापनया श्रोष्यामीति यद्यपि कामिनीनां कुचाद्य-वयववृन्दं वस्त्रावृतत्वेन गूढमेव चमत्कारकारकमिव तासा-मान्तरीणमौत्सुक्यमपि वाहवांस्येनाऽऽवृतमेव चमत्कारकारकं रसज्ञा मन्यन्ते तदुद्घाटनं तदपि कदाचित् कश्चिन्नायकः रसज्ञा मन्यन्ते तदुद्घाटनं तदपि कदाचित् कश्चिन्नायकः सततोग्याया नायिकाया अनावृतान्येवाङ्गानि यथा दिदृक्षते तथैव वाक्यानावृतमान्तरीणमौत्सुक्यवचनञ्च शुश्रूषते किन्तु पुरुषान्तरस्य स्वजनव्यादेरपि सान्निधौ न दिदृक्षते नापि शुश्रूषते तथैव कृष्णोऽद्यचरानावृतगोपीसर्वाङ्गः सम्प्रति तासां वाक्यानावृतमान्तरीणं वचनवृन्दं शुश्रूषते इत्यत एव प्रियनर्मसखमपि स्वसङ्गिनं तदानीं न चकारेति ज्ञेयम् ॥ १७ ॥

---

### विशुद्धरसदीपिका ।

तनश्चैवं समाहितमाहितचेतसं च राजानमाकलय्य प्रकृत-मनुसरति–ता इति । असमोर्द्ध्वसौभाग्याः । यद्वा, ता वञ्चयितुं योग्या इत्यर्थः । तदादीनां, प्रकृतप्रसिद्धानुभूताद्यर्थं शक्तेः अन्तिकमागताः अन्ति समीपे कं सुखम् आयाताः प्राप्ताः शुद्धप्रीति-मयसुखसन्निहिताः । यद्वा, पार्श्वे निजपार्श्वस्थिताऽऽनन्दमूर्त्तिं श्री-राधामुद्दिश्यागता इत्यर्थः । पक्षे समीपगताः कर्त्तारिक्तः स्वय-मागता इत्यर्थः । भगवान् भगो भाग्यं तद्वान् स चाद्यात्मत्वेन वक्ष्यमाणपरमप्रेमास्पदं प्राणप्रिया श्रीराधैव तस्य च "आत्मन स्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः । ततश्च तदिच्छया रासक्रीडासुखाय दत्तवराणां च मनोरथपूर्णाय तदिच्छयैव मुरलीकलेन तत्सखीनां साधकचरीणां चाकारणे जाते तस्याः सुहृद्वर्गैः सह तटस्थविपक्षादिवर्गाणामागमने वृत्ते प्राणप्रियायाः प्रणयकोपमाशङ्क्य तासामात्मन आनुकूल्यमासु औदासीन्य-माभनयन्नवदत् तत्र हेतुः वदतां श्रेष्ठ इति । अनुनयकोविद इत्यर्थः । वाचः पेशैरिति वाग्विलासैरिति टीका स्वस्य प्राण-प्रियायाश्चैकमनप्रदर्शनार्थमिति भावः । यद्वा, "पिश अवयवे" इत्य-नुशासनात् वाचामवयवैरित्यर्थः । ते च नानाप्रकारा अपि तावत् द्विविधाः शाब्दिका आर्थिकाश्च पूर्वे सुललितवर्णविन्याससुगम-सुभगसमुच्चारणाभिनवललितश्रीमुखलोचनाचिल्लीचालनादयः परं रसभावालङ्कारवस्तुस्वरूपाः पुनश्च ते द्विविधाः उपेक्षाभङ्गि-मयाः प्रार्थनाभङ्गिमयाश्च तत्र पूर्वे कान्तभावधनीषु आत्मनः औदासीन्यद्योतनेन सख्यभाववतीष्वानुकूल्यप्रदर्शनाय परं च पूर्वासु गैदग्ध्येन प्रतारणाय परासु च प्रोत्साहनार्थमिति च विवेकः सर्वोदयं कामवासनाप्रसारणाशुद्धभावावधारणरूपः साधक-चरीष्वनुग्रहः तदनुगतेषु साधकेष्विति च गम्यते अत एव विमोहयन्नित्युक्तं तत्पक्षसारयन्निति विमोहनमत्र दाम्पत्यसंस्कारा-वशिष्टकामलेशकथनमेव सखीनां च । मनोहरणार्थमिति सतश्च यथास्वहृतविवेका हृतचित्ताश्च कुर्वन्नित्यर्थः । यद्वा, सर्वज्ञान्तर्भू-तोऽपिशब्दो द्रष्टव्यः व्रजयोषितः सहजनिजप्रेमपरत्वेन प्रसिद्धा अपि तत्रापि ताः तादृशप्रेमविकारं प्राप्ता अपि तत्रापि तदानीं निजान्तिकमायाता अपि साक्षात् दृष्ट्वापि स्वयं भगवानपि सर्वज्ञत्वेन तासां भावाभिज्ञोऽपि वाचः पेशैः कपट-वाक्यैर्विमोहयन् परमैश्वर्यं प्रापयन् अवदत् सर्वमिदं काम-कैतवाविरसनायैव अन्यथा प्रेमैकपरवति स्वयं भगवति तत्त-द्विरुद्धेन तनु तादृशप्रेमवतीष्वपि कपटपटुतारसभङ्गकरी स्यादित्यत आह–वदतां श्रेष्ठः नर्मोक्तिचतुर इत्यर्थः । प्रकृत्य सदयमिति वक्ष्यमाणानुसारेण नर्मोक्तौ पर्यवसाययन्निति भावः ॥ १७ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

एवं नृपप्रश्नं समाधाय प्रकृतमाह—भगवान् शुकः, ता इति । तत्र ता इति पुनः पुनस्तत्पदप्रयोगेण वक्तुरस्तु मद्वाक्यस्य तत्पदबोध्यभगवत्स्वरूपात्मकत्वादात्मारामस्य भगवतो रमण-योग्याः लीलानुसारेण तु ताः पूर्वन्दत्तवराः तथा श्रीमद्भुना भगवतापि मुरलिकागानाह्वानेनानितलक्षणातिरतिशयसौभा-ग्यवत्यः तथा ता हरिवंशोच्चरितगीतश्रवणगानेन हृतचित्ताऽत्त-द्विस्मृत्या त्यक्तपत्यपत्यगृहकृत्याः तथा ता आनीताश्वरणार्थमयिदलि-तचित्तत्वेन व्यत्यस्तवस्त्राभरणाः तथापि रूपमाधुर्यसौष्ठवेनैव मनोहरन्त्यः तथा ताः ब्रह्मादिजयजनितदर्पेण कन्दर्पेण सर्वेषामायुध-सम्पन्नकामगर्वेणाप्यया ततया रतिरणाय प्रस्थापिताः व्रजयोषितः इति व्रजस्य स्वभावत एव प्रेमरसाश्रितस्य योषित इति शृङ्गार-रसोद्दीपितानुरागाः । यद्वा, व्रजन्तीति व्रजाश्च ता एव योषित इति तथा एवं पुरुषमानिनीभामिनीः प्रति व्रजन्तीति रस-रीतिः एतास्तु प्रीतिनैकुर्वन्त स्वतः तद्रीतिम् स्त्रियैव स्वयं

श्रीरामनारायणकृतभावभावविभाविका ।

व्रजिताः तथा अन्तिकं स्वसमीपमायाताः । यद्वा, अन्ति समीपे कम् सुखम् यथास्यात्तथा आयाताः । यद्वा, अन्ति आत्मने कृष्णाय वा सुखं यथा स्यात्तथा आयाताः यद्वा अन्तिकं साक्षात्स्वयंसमागतं स्वर्गमिवायाता । यद्वा, कं नित्यस्वर्गं लीलाधाम पुलिनाख्यमायाता यद्वा कं नदीजलमिव कं सिन्धुजलं प्रति वा अन्तरनिरुद्धप्रेमप्रवाहाविकसितहृत्कमलाननोत्साहतरङ्गास्फोटितलज्जासेतुबन्धावहिश्चानिरुद्धगतिप्रवाहाः शोभितमुखकरचरणादिकमला विविधभावविभावकटाक्षादितरङ्गास्फोटितकुलमर्यादादिसेतुबन्धाः घनश्यामस्य वेणुगर्जनपूर्वकरसवृष्टिप्रवृद्धकामजवात्कम् आनन्दसिन्धुमायाताः । यद्वा, अन्ति समीपे प्राप्य कं सुखयिनं कृष्णं दृष्ट्वैव कं सुखमायाताः साक्षादिव सुखे निमग्नाः कीदृशं कृष्णं दृष्ट्वा वेदद्रुमे ब्रह्मेव कदम्बमूले वृन्दावनभूम्याविर्भावितप्रेमप्रकाशविकसितस्वहृत्कमलमिव भ्राजमानमणिकञ्जकर्णिकासने स्थितं तरणिवर्णारुणपदतलेन मृदुतमः इमामोर्द्धभागेन नखचन्द्रव्रातश्रियान्वितेन पदद्वयेन स्वभजतामविरोधमात्मानन्दतीर्थराजास्पदत्वमिव मुक्तभवबन्धादिदोषत्रिवर्गत्रिगुणमायालिङ्गितत्वं स्वाश्रयेणे भव बन्धिकाया अपि मायायाः ततो मोचकत्वं मुक्तैरपि प्रार्थ्यमानस्वसरूपोत्कर्षात्मकप्रेमगुणबन्धकत्वं स्वस्मिन् संलग्नस्वपदकञ्जाकारप्रतिबलसत्त्वप्रकाशान्वितानुरागपूरितस्वश्यामचक्रध्वाङ्कितभक्तहृदयत्वानुकारित्वं च दर्शयन्तं स्वपादाब्जाश्रितश्यामचक्रान्वितमृदुपुष्टजङ्घजघनाभ्यां कमलालयालयनिवसितस्वच्छविं भक्तहृत्कमलरत्नखण्डैकदण्डं ब्रह्मणोऽद्यनेकत्वं त्रिभङ्गत्वं च शृङ्गारभावान्वितोपासकानां तु कामेषु कञ्जद्वयसन्धितसन्नमिततदीयधनुर्युगरूपत्वं कञ्जनिशोर्द्धमूलसुकुसुमरंभा कृतमृदु विचित्रेन्द्रनीलमणिरचितरूपातिभारनमितकामगृहयुगस्तम्भरूपत्वं वा सुरूपनिधिरक्षकत्वेन स्थापितबहुमणिधरबहुफणयुगमणिधररूपत्वं वा भगिनीव व्यञ्जयन्तं तरणिकिरणगणावृतेन्द्रनीलाद्रिद्वयसङ्गमपीताम्बरावृतनितम्बयुगलसन्निहितागाधरूपामृतसरोनाभिनिमग्नामितमदनानुदर्शनेन ब्रह्महृदनिमग्नानामनावृत्तिं बोधयन्तं तन्नाभिसरोनिकटोरसि हारमुक्ताहारेण स्वाश्रयहारव्यवहारमात्रस्य कटिनटोल्लासिमणिकिङ्किणीहंसनिकरमुखरतया स्वगुणगणमुक्ताभ्यो जीवनं लभमानानां शुकादिपरमहंसानां जीवन्मुक्तानामपि समाभिरूपोपरमानुपरमगुणगानपरत्वयोग्यतां सूचयन्तं मुखचन्द्रस्मितचन्द्रिकासम्भाविना श्यामरूपनिशायां मुक्ताहारगङ्गान्तर्गतरोमावलियमुनाधारासम्भाविततीर्थराजतटयोरछन्नत्वात् चक्रवाकद्वन्द्वस्तनाभ्यां तीर्थसेविनामद्वन्द्वतां भगवदेकाश्रयत्वं च द्योतयन्तं श्यामस्निग्धमृदुपीवरबहुफणमणिधरभुजाङ्गभुजङ्गभीतशङ्खकण्ठस्थहारगङ्गाद्वारेण मगधान्मुखामुन्मुखतया भीतानामात्मैकशरणत्वं गमयन्तं । यद्वा, मकानामन्विष्यास्मितरागद्वेषाभिनिवेशाख्यपञ्चपापपञ्चपापपञ्चबाणनिर्माणकरणाय वामयाः परत्वेन निर्गुणस्य आत्मनः कामरूपस्य श्याममृदुमञ्जुपटवेष्टितविविधभूषणमणिजटितपञ्चमृदुबाङ्गुलिसुमनोन्वितभुजयुगनिषङ्गाभ्यामभयम् आवयन्तं वर्त्तमानचिबुकगम्भीरगर्त्तागतम् विविधरतिरङ्गतरङ्गलक्ष्मं विमलयुगकपोलदोलखेलावलपाशावृत्तमीनाकृतिमणिकुण्डलाभ्यां स्नेहपाशबद्धाखिलमनोमीनानुकुर्वद्भ्यां शुक्तिनिर्मुक्तव्यक्तमुक्ताकृतनामाश्रितजलजेन अहर्निशसमप्रभनित्यपूर्णामितेन्दुबिन्दुसमीकरणाननचन्द्रेण स्मितसुधया वक्त्रश्रिया च क्षीरनिधिमन्दरं लक्ष्म्या अपि प्रलोभकविद्रुमाधररदनं वज्रनखमणिविविधभूषणरत्नाकरं रूपसुधासिन्धुं मनोजाविजयाय कृष्णोद्यममालक्ष्य सौभ्रात्रं दर्शयता मनोजचन्द्रेण कृष्णमुखचन्द्रविजयाय विविधभूषणमणिग्रहभगणसैन्यमादाय बहुबर्हचन्द्रकरूपतया मनोजपक्षपूरणोऽपि तद्ग्रहभगणसैन्यमात्माङ्गीयं सम्पाद्य सुभूषणभूषणाङ्गभूषणतया प्रतिष्ठाप्य तद्बर्हचन्द्रकचन्द्रान्स्वमुखचन्द्रचन्द्रिकया पराभाव्य स्वीयश्यामकान्त्या तद्बाह्याभ्यन्तरमापूर्य शिरोधारणावरेण स्वपक्षे कृत्वा च शिष्टकामरणायोद्यतमालोक्य कं सुखमायातास्ता दृष्ट्वा भगवान् धर्मादिषड्सम्पन्नः धर्मज्ञानविरागपुरस्कारेण रासरतिविहारादौ शृङ्गारैश्वर्ययशोविस्तारेणालुप्तभगः कामविजयाय तद्विरोधिधर्मज्ञानाग्रणी करणेन नीतिशास्त्राद्वदतां श्रेष्ठः यद्वा धर्मज्ञानोपदेशात्स्थूणानिखननन्यायेन शृङ्गारानुरागपुष्टीकाराद्वदतां श्रेष्ठः यद्वा विनया विनयानेकार्थकवत्मकथनाद्वदतां श्रेष्ठोऽवदत, किं कुर्वन्नित्यत आह—वाचः पेशैर्विमोहयन्निति । तत्र वाचः पेशैर्वाग्विलासैः यद्वा "पिश अवयवे" इत्यस्मात् वाचामवयवैः तेच द्विविधाः मञ्जुनयनिषेशसुगमसुभगोच्चारसुस्मितवलितललितमुखलोचनभ्रूचालनादयः शाब्दाः रसभावालङ्कारादयश्चार्थिका यद्वा उपेक्षाव्यञ्जकाः प्रार्थनाव्यञ्जकाश्च तैर्विमोहयन् मुग्धाः साधकचरीः आगलब्धविहारा गोपीरुत्कण्ठावृद्ध्यर्थमेवोपेक्षाद्योतनेन विभ्रमापन्नाः कुर्वन् मानिनीः पूर्वमपि लब्धविहाराः प्रियाः प्रार्थनाभावेन विशेषेण मोहयन् स्वानुरागविविधमुखदृगपाङ्गदर्शनसुखसमाधिनिमग्नतया विगतदेहाद्यनुसन्धानाः कुर्वन् प्रौढाः कामिनीरसविभावादिकुशला उभयार्थाभिज्ञाः स्वरसिकत्वविविधभावकुशलत्वद्योतनेन विशेषतः स्नेहात्मकमोहपाशैः स्वगुणगणगुणान्वितैर्निबध्नन् ॥ १७ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो बहूक्तमितः परमहं प्रश्नोत्तराभ्यां लोकोत्तररसवत्यां भगवद्रासक्रीडाकथायां विच्छेदकाभ्याम् इति ध्यायन् स्वयमेव प्रकृतमनुसरति—ता इति । ताः स्वयं कलगीतेनाहूताः अतः व्रजयोषितो व्रज एव वासयोग्या अपि झटिति स्वसमीपमागता उपलब्धाः । यद्वा, ताः व्रजयोषितः सर्वदा व्रजे एवोपलब्धास्तदानीं स्वस्य वने स्थितस्यान्तिकमायाता दृष्ट्वा वाचःपेशैः विलासैः स्वचित्तानुसारैर्निषेधप्रार्थनार्थप्रतीतिजनकैः पूर्वं कलगीतेन मोहिताः पुनर्विशेषेण मोहयन् अभाषत यतो वदतां सर्वेषां वक्तॄणां मध्ये श्रेष्ठः यतो भगवान् इदं च व्यामोहोत्पादनं विशेषरसोद्भवाय तथा चेमाः स्वात्मानं धैर्यात् भावाद्बहिरपि प्रार्थयति, तासां प्रेम्णापेक्षा वाक्यैरेवोद्दीपनं भवति याः स्वान्तर्गतप्रार्थनावत्योऽपि धैर्यवशात् मानवत्यो बहिर्गोतितीत्येव वदन्ति तासां प्रेम्णा प्रार्थनावाक्यैरेवात्यन्तरसं न्वेयोभयार्थवाक्यान्यभिहितवान् पृथक् पृथक् यतोक्तार्थवाक्यप्रयोगस्य परस्परकलहोत्पादकत्वेन रसाभासकरत्वात् यद्वा, सर्वत्रापि यद्वा तद्भावेनेत्थं व्याख्येयं व्रजयोषितः साहजिक-

**श्रीभगवानुवाच ।**

**स्वागतं वो महाभागाः ! प्रियं किं[1] करवाणि वः ।**
**व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणम् ॥ १८ ॥**

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

प्रेमवत्योपि ताः प्रेममयकामविकारं प्राप्ता अपि अन्तिकमायाता अपि साक्षाद्दृष्टा अपि स्वयं भगवांस्तासां भावज्ञोपि कपटवाक्यैर्व्यामोहयन् वैक्लव्यं प्रापयन् अवदत् यतो नर्मोक्तिवादिषु श्रेष्ठस्तथा च नर्मविशेषार्थमेवमभाषत इत्यर्थः । निवृत्तिपक्षे भगवानेव वदतां श्रेष्ठः स्यात् तद्वादिरूपेण वदतामग्रगण्यः सन्वाचःपेशैरापातरम्यैर्विलासैः विमर्षाविरुद्धप्रभया विपरीतसिद्धान्तेन ता ऊहयन् तर्कयन्नुवाचेत्यर्थः ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह–ता इति । वदतामुचितवाक्प्रयोगकुशलानां मध्ये श्रेष्ठः वाचः पेशैरवयवैः तासां स्वानन्यतानिश्चायकैर्वाग्यवशैरित्यर्थः । "पिश अवयवे" धातुः विमोहयन् धर्मोपदेशेन स्वसमीपतः प्राच्या चयन्निव ॥ १७ ॥

भाषा टीका ।

भगवान् श्रीकृष्णचन्द्रने उन व्रज स्त्रीन कों अपने समीप आई भई देखि कें बोलवे वारेन में श्रेष्ठ परम चतुर नायक श्रीकृष्णचन्द्र वाणी के विलासन तें उन व्रज स्त्रीन कों मोहित करत यों बोलत भये ॥ १७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वाः सम्भ्रममागता विलोक्य सभयमिवाह–व्रजस्येति ॥१८॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

प्रथममवहित्थयौदास्यमवलम्बमानः सादरमाह–स्वागतमिति । वो युष्माकं शोभनमागमनं वृत्तमित्यर्थः । यद्वा युष्माभिः सुष्ठु आगतं किं महान् भागो भाग्यं पातिव्रत्यादिलक्षणं यासां तासां सम्बोधनम् अतो वो युष्माकं किं प्रियं करवाणि अपितु न किञ्चित् कर्तुं शक्नोमीत्यर्थः । यद्वा, किं करवाणि तदाज्ञापयन्त्वित्यर्थः । महाभागानां प्रियाचरणेन ममापि धर्मविशेषो भावीति भावः । एतत् सर्वं स्वस्य एवौदासीन्यं गमयत्येव लोके प्रायो गौरवेणैवैतादृशप्रश्नप्रवृत्तेः अत एव पूर्वं यज्ञपत्नीः प्रत्यप्येवमेवोक्तं केवलं तासु ब्राह्मणीत्वेन परमादरादाहूयतामिदं आसु च व्रजाङ्गनात्वेन प्रकृत्यैव प्रियत्वात् प्रियं व इति विशेषः । यद्वा, वः किं प्रियं करवाणीति साक्षान्मुखोक्त्या ताभ्योऽप्यासु परमौदासीन्यमेव सूच्यते वस्तुतस्तु एतासां तादृशागमनं दृष्ट्वा परमप्रीत्यैवाह–स्वागतमित्यादि । महाभागा इति रासक्रीडया महालक्ष्मीतोऽपि सौभाग्यविशेषाभिप्रायेण किंवा सर्वपरित्यागेन तदेकापेक्षया तासामागमनात् स्वस्य च तादृशत्वाभावेन स्वस्मादपि महत्वविवक्षयोक्तम् अतस्तासां प्रेमपरवशः सन्नाह—प्रियमिति । तच्च प्रियजनवशीकरणचतुरस्य विदग्धशिरोमुकुटमणेः स्वाभाविकमेवेति दिक् अत एव यज्ञपत्नीपूक्तेरासु विशेषः प्रियं व इति युक्त एवेति एवम् आदौ सदाचाररीत्या समागतजनेषु वक्तुं योग्यमुक्त्वा सर्वा एव युगपत् ससम्भ्रममागता वीक्ष्य स्वयमपि कैतवेन सभयसम्भ्रममेव पृच्छति–व्रजस्येति । अनामयं मङ्गलं कच्चित् प्रश्ने । ननु, चतुरासिंह ! तथासति गोपादयोऽप्यागताः स्युरितिचेत् सत्यं तर्हि अङ्गनाविषयकः केषामपि दैत्यादीनामुपद्रवो नूनं भवेदिति धूर्ततया आशङ्क्येव साटोपमाह–ब्रूतेति । निजागमनस्य कारणं हेतुं प्रयोजनं वा अथवा तदुत्तराभिप्रायानिर्द्धारेण लज्जया वा अनुत्तरास्ता वीक्ष्य शोकवेगेनामङ्गलस्याश्राव्यत्वेन वा किञ्चिदवदन्तीर्मत्वेव किञ्चिदन्यदेवोत्थापयन् सवैयग्र्यं पृच्छति–व्रजस्येति । एवं सर्वमग्रेऽप्याशङ्कादिकं कैतवेनैवेति ज्ञेयं तथाप्यवदन्तीः प्रसन्नमुखीश्चालोक्य स्वस्ततामभिनयन् सलज्जमिवाह–ब्रूतेति । शक्रकृतवृष्ट्यादिनेव मत्पार्श्वेऽत्र रात्रौ प्रायः सर्वासामीदृग्गमनकारणं मद्दुर्वितर्कत्वात् यूयमेव स्वयं ब्रूतेत्यर्थः । वस्तुतश्चेयं नर्मभङ्गिरेव एकैव वाक् समुपेक्षामयी सम्प्रार्थनामयी चेत्युक्तं तत्र समुपेक्षामयीत्वं प्रपञ्चितं सम्प्रार्थनामयीत्वं कथ्यते इदमेव श्लेषार्थतया अग्रे प्रतिश्लोकं ज्ञेयं तथाहि भो महाभागाः ! महान् भागो भाग्यं यासाम् ईदृशी ज्योत्स्नी तत्रापीदृशं वनं तत्रापीदृशोऽनुवर्ती जनोऽयमनुकूलः तत्रापीदृशं वो नवयौवनादि इति महद्भाग्यमेव वो युष्माकं स्वागतम् अतो युष्माकं किञ्चित्प्रियं करवाणि । यद्वा, वो युष्माभिः कृत्वा निजेष्टं किङ्करवाणि किमपि साधयिष्यामीति यद्यप्यर्थश्लेषोक्तौ सम्पन्नत्वरार्थे सङ्गतिर्नापेक्ष्यते तथापि विदुषां सतां प्रीतये कथञ्चिद्यतेमहि । किञ्च, युष्माकमागमनेनैव व्रजस्य मङ्गलं व्यक्तम् अतः आगमनकं युष्माकम् आगमनसुखं तदेव अरणं शरणं यस्य तं मां कच्चित् किंब्रूत मया सहालापं किं करिष्यथेत्यर्थः । यद्वा, अव्ययानामनेकार्थत्वात् कच्चित् किञ्चिद्ब्रूतेत्यर्थः ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रथममवहित्थयौदास्यमवलम्बमानः सादरमाह—स्वागतमिति । वो युष्माकं शोभनमागतं वृत्तमित्यर्थः । यद्वा, वो युष्माभिः सुष्ठु आगतं कच्चिदिति प्रश्ने महान् भागो भाग्यं पातिव्रत्यादिलक्षणम् यासां तासां सम्बोधनम् अतो वो युष्माकं किं प्रियं करवाणि अपि तु न किञ्चित्कर्त्तुं शक्नोमि

(१) करवाम इति वीर० ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्यर्थः। यद्वा, किं करवाणि तदाज्ञापयन्त्वित्यर्थः। महाभागानां प्रियाचरणेन ममापि धर्मविशेषो भावीति भावः। पूर्वं यज्ञपत्नीः प्रत्यप्येवमेवोक्तं किन्तु तत्रास्यतामिति गौरवं विधाय किं कर्त्तुं शक्नोमि अपि तु न किमपीति केवलमौदास्यमत्र तु प्रियं किमिति श्लेषेण साकाङ्क्षत्वमपीति विशेषः। वस्तुतस्तु एतासां तादृशागमनं दृष्ट्वा परमप्रीत्यैवाह—स्वागतमित्यादि। महाभागा इति सर्वपरित्यागेन तदेकापेक्षया तासामागमनात् स्वस्य च नानाप्रियजनापेक्षया तादृशत्वाभावमननेन स्वस्मादपि प्रेममहत्त्वविवक्षयोक्तं भागोऽत्र भजनम् अतस्तासां प्रेमपरवशः सन्नाह—प्रियमिति। तच्च प्रियजनवशीकरणचतुरस्य विदग्धशिरोमणेः स्वाभाविकमेवेति दिक्। तदित्थमेव परत्र च वस्तुत इत्यादिकम् इति शब्दपर्यन्तो वास्तवोऽर्थो ज्ञेयः। तदनन्तरं तु नर्मादिमयो ज्ञेयः। तथाहि स्वागतमित्यादिना नर्मणा सदाचार-[illegible]श्रित्य समागतजनेषु वक्तुं योग्यमुक्त्वा सर्वा एव युगपत् [illegible]ममागता वीक्ष्य स्वयमपि कैतवेन सभयसम्भ्रममिव पृच्छति—व्रजस्येति। अनामयं मङ्गलं कच्चित्। ननु, चतुरसिंह! [illegible] सति गोपाङ्गयोऽप्यागताः स्युरिति चेत्? सत्यं तर्हि [illegible]विषयकः कश्चिदप्युपद्रवो नूनं भवेदिति धूर्त्ततया [illegible] साटोपमाह—ब्रूतेति। निजागमनस्य कारणं हेतु प्रयोजनं वा। अथवा तदुक्त्यभिप्रायानिर्द्धारणेन लज्जया चानुत्त-[illegible] वीक्ष्य मन्ये शोकवेगेनामङ्गलस्याभावयत्नेन वा किञ्चित् [illegible] व्यञ्जयन् किञ्चदन्यदेव चोत्थापयन् सर्वैर्यमिव पृच्छति—व्रजस्येति। एवं सर्वमग्रेऽप्याशङ्कादिकं कैतवेनैवेति ज्ञेयं [illegible]: प्रणयमुखीश्चालोक्याथस्ततामभिनयन् सलज्ज-[illegible]—ब्रूतेति। भवतु मद्दुर्घितर्कत्वं यूयमेव स्वयम् ब्रूतेत्यर्थः। [illegible] समुचिताभवी सत्प्रार्थनामयी चेत्युक्तं तत्रास्याः [illegible] प्रपञ्चितं सत्प्रार्थनामयीत्वं कथ्यते इदमेव [illegible] प्रतिश्लोकं लेख्यं तथाहि हे महाभागाः! [illegible] भाग्यं यासाम् ईदृशी ज्योत्स्नी तत्रापीदृशं वनं [illegible] वो वयोवनादि तत्रापीदृशोऽनुवर्त्ती जनो ऽयमनु-[illegible]: इति महदेव भाग्यमिति तदिष्टप्रश्नरूपं प्रार्थनासोपान-[illegible]—कच्चित् वो युष्माकं स्वागतम् प्रार्थनामाह—वो युष्माकं किं प्रियं करवाणि अतो भवतीनां यत् हृद्गतं किमपि प्रियमस्ति [illegible] प्रार्थनीयमित्यर्थः। तत्र निरुत्तरा वीक्ष्य पुनः प्रार्थ-[illegible]माह—व्रजस्येति। प्रार्थनामाह—ब्रूतेति। मा लज्ज-[illegible] भावः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

[illegible]माह—स्वागतमित्यादिना इति विप्रियमित्यतः प्राकृतेन [illegible] वो [illegible] वाचामगोचरमित्यभिप्रायेण सम्बोधयति हे महाभागा इति वो युष्माकं स्वागतमागमनं शोभनं जातं किन्तु [illegible] किमिति प्रश्नः तत्कारणम-[illegible] अनामयं नागमनकारणं ब्रूत तदनामयापादना-[illegible] किं प्रियं करवाम ॥ १८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वः किं प्रियं करवाणि युष्माकं ममाभीष्टं कर्त्तव्यं नास्ति तदभीष्टं जानन्नप्यज्ञ इव पृच्छति—व्रजस्येति। कच्चिद्व्रजस्य स्थानम् अनामयं न आमयो रोगो यस्मिन् तत्तथा ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्वागतमित्यादिकमुत्तरप्रत्युत्तरम् ॥ १८—२३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तत्रादौ स्वीकारपूर्वकमाह—स्वागतमित्यादिहे महाभागाः स्वागतं परमसौभाग्यभाजः! सुखेनागतं प्रियं किं करवाणि वः वो युष्माकं किं करवाणि युष्माकमनुरागोचितं प्रियमीश्वरोऽप्यहं कर्त्तुमसमर्थ एव तेनाहं न ऋणीव इतिस्वीकारः तादृस्थ्यमाह व्रजस्यानामयं कच्चित् आगमनकारणं ब्रूत किमर्थमागतास्थ तत्कथयत ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवद्वाक्यान्याह—स्वागतमित्यादिदशभिः। दशविधानां निवारकाणि तमोरजःसत्त्वभेदाः स्वान्तःपर्यवसानतः निरूप्यन्ते स्त्रियस्तासु वाक्यान्यपि यथायथं प्रथमतस्तामससात्त्विक्यो निवार्यन्ते ततस्तामसराजस्यः तमस्तामसतामसस्यः एवमग्रेऽपि विभाज्याः प्रथमं समागतानां लौकिकन्यायेनाह—स्वागतमिति। कुशलप्रश्नोऽयं वो युष्माकमागमनं स्वागतं किमिति स्तुतिमाह, महाभागा इति। भवतीनां महद्भाग्यम् अतः स्वागमनमेव तथापि पृच्छ्यन्त इति। लौकिकोक्तिः वस्तुतस्तु निष्प्रत्यूहं भगवत्सामीप्यमागता इति समागतानामुपचारमाह—प्रियं किं करवाणि व इति। किञ्चित् प्रार्थयितुमागता इति लक्ष्यन्ते तथा सति तद्वक्तव्यम् अथवैतासां नाहं स्वभावतः प्रियः किं तु कामतः प्रिय इति ज्ञापितं तत्प्रयोजनं त्रिविधं भवति इष्टरूपमनिष्टनिवृत्तिरूपं देशकालव्यवहितं कामितं च तत्रापि त्रैविध्यमस्तीति वाक्यत्रयं वा यद्भवत्यो धावन्त्यः समागताः तत्तत्र किं व्रजे कश्चन उपद्रवो जातः यज्ज्ञापयितुं तासां समागमनं पूर्वपूर्वानङ्गीकारे उत्तरोत्तरवाक्यं यदि प्रियमपि न किञ्चित्कर्त्तव्यं व्रजे च न काप्यनुपपत्तिः तदा आगमनकारणं ब्रूत ॥ १८ ॥

---

श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अथ स्त्रीपुंसां रसज्ञानां मिलने तावदियं रसरीतिर्यत् पुमांसो रतौत्सुक्यमाविष्कुर्वते स्त्रियस्तु तत्रासहिष्णावः कुप्यन्तीत्यतस्तामेव रसरीतिं प्रथममाश्रित्य कृष्ण आह—स्वागतं वो युष्माकं कच्चित्सुखमयमागमनं वृत्तं (न) यतो यूयं महाभागाः जन्मारभ्य दुःखस्य मुखं भवतीभिः कदापि न दृष्टमिति भावः। यद्वा, नायं प्रश्नः किन्तु प्रीत्युक्तिरतो युष्माकं शोभनमागमनमद्य वृत्तं यदत्रागतं तत्सम्यक्कृतं यतो महाभागाः भाग्यवतीनां

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हि सर्वाः क्रिया एव सफलीभवन्त्यः स्वस्य परस्य च सुखदा भवन्तीति भावः । अतो वः किं प्रियं करवाणि अधुना रात्रावत्र निर्जने वने एकाकिना यूना मया युवतीनां वो यत् प्रियमातिथ्यं कर्तुं शक्यं स्यात् तद् ब्रूत युष्मत्प्रियचिकीर्षामपि सारल्येन स्वप्रियं कृपया स्पष्टं वक्तव्यं यथा निःसन्देहं तत्राहं प्रवर्तयेति भावः । ततश्च भो महासाहसिक ! लम्पट ! अस्मानपि पतिव्रताः यद्येवं वक्तुमुत्सहसे तर्हि किं धर्मतो राजतश्च न बिभेषीति समुचितं प्रत्युत्तरमप्राप्तवता प्रियं किं करवाणीत्यस्य व्यञ्जितेऽङ्गसङ्गरूपेऽर्थे सम्मतिलक्षणं लज्जाहेतुकं मौनमेव दृष्टवता भगवता विचारितं यद्येताभिः स्वसमुचितं वाम्यमद्य नाङ्गीक्रियते तर्हि मयापि स्वसमुचितमौत्सुक्यं न बहिष्करणीयं किन्तु वाम्यमिश्रमेव ततश्च सम्भोगभेदे सम्प्रयोगे यथा वैपरीत्यमपि चारु भवति तथैव सम्भोगभेदे संमिलनेऽपि वैपरीत्यं चारु भवतु किन्त्वासां महामोहनपशुनाश्माध्वीकपानोत्थातिवैवश्यादेव प्रकृतिविपर्ययस्तत एव दाक्षिण्यं मम तु वैवश्याभावात्तदनुरोधादेव कृत्रिमं वाम्यं बहिरेव कार्यमन्तस्तु स्वाभाविकमौत्सुक्यमस्त्वेवेत्यादिकं विचार्य च वाम्यपदवीमारोढुं सभयसम्भ्रमं पृच्छति—व्रजस्येति । कच्चिद् व्रजस्यानामयं मङ्गलं न जाने साम्प्रतं व्रजे कश्चिदिन्द्रादिकृत उपद्रवो वर्त्तते? यतः सर्वाः एव भवत्यो भीताः पलाय स्वत्राणार्थं मदन्तिकमायाता इति भावः । ततश्च कथमयमन्योऽस्य धूर्त्ततावहरीति मिथः सस्मितसविस्मयावलोकं वितर्कयन्तीषु तास्वहो युष्माकं मौनेनैवावगम्यते नोपद्रवस्तर्हि ब्रूत किमर्थमायाता अहन्तु नाभ्यूहितुं समर्थ इति भावः ॥ १८ ॥

---

### श्रीविशुद्धरसदीपिका ।

तानवाह—श्रीभगवानिति । तत्र प्रथमे पद्ये अवहित्थयौदासीन्यमवलम्बमानः सादरमाह—स्वागतमिति । सुष्ठु आगमनं वृत्तमिति प्रश्नः काकुः अनवसरे कथमागतमिति भावः । तथोक्तौ विस्मिता इवालक्ष्याह—व इति । युष्मान् पृच्छामीत्यर्थः । नत्वन्याः काश्चिदिति । ननु, किमस्माकं सकपटादरेणोत्यत आह—महाभागा इति । सौभाग्यादिगुणवतीनामादरस्यौचित्यादिति भावः । अहो किमनेन केवलकुशलप्रश्नवचनेनेत्यत आह—प्रियमित्यादि । मया तु सदाचारप्राप्तमुचितं स्वागतमात्रमनुष्ठितं परिशिष्टमत्र भवतीभिर्वक्तव्यमिति भावः । अत्र वारद्वयं युष्मत्पदप्रयोगो व्यग्रतया सम्भ्रमद्योतनाय अथवा वः स्वागतमात्रमेव मया कर्तुं शक्यते वः प्रियन्तु न किञ्चित्कर्तुं शक्नोमीत्यर्थः । तत्र हेतुः महाभागा इति महाभागाविशिष्टानां महत्त्वेन साधारणजनेन किं प्रियं कर्तुं शक्यमिति सोल्लुण्ठम् एवं प्रश्नेन जातलज्जाः परिवर्तितदृष्टीरालक्ष्य साकूतमाह—व्रजस्येति । अहो मौनव्रताभिर्व्रजमनु किमिति हरिराच्छद्यत इति भावः । अहो भीरुप्रकृते ! तथा सति सर्वे एव समागताः स्युरत आह—तर्हि स्वयमेव ब्रूतेति आगमनकारणम् अभिप्रायमित्यर्थः । तदज्ञानेनात्मनस्तत्रौदासीनता सूचिता पक्षान्तरे कश्चिदिति मधुरोक्तौ एतासां तादृशमागमनं दृष्ट्वा परमप्रीत्यैवाह—स्वागतमित्यनुमोदनं भवतीनां स्वामिन्या प्राणप्रियया प्रेरितेन मया यथा समाहूतास्तथैव झटिति समागताः इति भावः । अत एव महाभागाः प्राणेश्वरीसमाहृतत्वादिति भावः । अतः परं वः प्रियं मया किं करणीयं न किमपीत्यर्थः । अहो श्रुतमुरलीरवाः सर्वेऽपि व्रजवासिनः आगच्छेयुरिति वैपरीत्यादुद्विग्निमेत्यत आह—व्रजस्येति । अनामयं भयाभावः अत आगमनकारणं रासक्रीडामुख्यं यदनुष्ठेयं तद् ब्रूतेत्यर्थः ॥ १८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

भगवद्वाक्यमेवाह—स्वागतमिति । तत्रौदासीन्यपक्षे प्रीतिपरीक्षार्थं भगवदौदासीन्येऽपि प्रेमिणामनुरागवृद्धिरित्युपदेशः तथौदासीन्येऽपि सादरभाषणमिति सज्जनयथोपदेशाय सादरोक्तिः वः सुष्ठागमनं जातम् । ननु, किमत्यादरः क्रियते? तत्राह—महाभागा इति । यूयं महासौभाग्यवत्यः स्वस्वगृहे प्रतिष्ठिताः प्रतिष्ठार्हाः स्वज्ञातिवर्गैः सौभाग्यवतीनामादर उचित एव । यद्वा, यतो यूयं महाभागा महत्सौभाग्यवत्यः अतो वोऽस्मिन् वने किं स्वागतं सुष्ठागमनमपि तु न तथात्र वः किं प्रियं न किमपीत्याक्षेपः यद्वा औदासीन्येन प्रश्न एव वोऽत्र किमिति स्वागतं किमुद्दिश्य सुष्ठागमनं वृत्तं स्वागतमेवेति चेत्तत्र पुनः प्रश्नः किमत्र वः प्रियमहं न जानामि त्वदधीनमेवास्मत्प्रियमिति चेत्तत्राह—वः किं करवाणि भवत्प्रिये कर्तव्यमपि मया न ज्ञायते । यद्वा, किं करवाणीति मया किमपि कर्तुं न शक्यते । ननु, सर्वदा सर्वोपरस्तु समन्तात् व्रजरक्षणादिप्रियं त्वयैव क्रियतेऽधुनाऽस्मदागमने किमित्यौदासीन्यं? तत्राह—व्रजस्येति । कच्चिद्व्रजस्यानामयं वर्तते ? कोऽप्युपद्रवस्तु नैव जातः सत्युपद्रवे स्वागमनकारणं ब्रूत प्रार्थनापक्षे तु वः स्वागतं महाह्वानमात्रेण मदुपरि कृपया मत्कृपया वा वः सुष्ठागमनं जातं यतो यूयं महाभागाः महत्सौभाग्यवत्यः स्वसौभाग्येन ममापि भाग्यं वर्द्धयन्त्यः । यद्वा, मदनुग्रहाद्धरदानेन प्रीत्याह्वानेन मदेकान्तदर्शनलाभेन चोद्बुद्धमहाभाग्याः । यद्वा, यूयं ममैव महाभागाः नान्यस्य कस्यचित्त्वस्मासु साम्यम् । यद्वा, श्रीमत्या प्रियया महाभागा माहात्म्योऽशाः अतो ममैव योग्याः । यद्वा, महती भा दीप्तिर्यासां ता महाभा भा समन्तात् लोके गानं यासां ताः आगाः आगच्छन्त्यो वा आगा अं वासुदेवं प्रति गच्छन्त्यो वा न कुत्रचिद्गच्छन्त्यो निश्चलमनसो वा आगा ताश्च ताश्च महाभागाः महत्याभा अगना यासु वा सर्वथा प्रियार्हत्वेनाहं वः प्रियं किं करवाणीति प्रियज्ञानेऽपि प्रश्ने मदिच्छानुज्ञाधीनत्वमात्मनो द्योतयन्ति—व्रजगतबन्धुवर्गभयेनाज्ञापयितुं शङ्कमाना आलक्ष्याह—व्रजस्येति । कच्चिदिति कोमलालापेनाभयद्योतनं व्रजस्येति सम्बन्धसामान्ये षष्ठी व्रजजननिमित्तं वः युष्माकमनामयं चिन्तारोगाभावः तन्निमित्तका चिन्ता न कार्या ते मम मायामोहिताः स्वान्स्वान् दारान् स्वपार्श्वस्थान् पश्यन्तः सुखमासते सेवापराय मह्यं स्वागमनकारणं ब्रूत ॥ १८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यद्वदत्तदुदाहरति—स्वागतमिति । तत्र त्रिविधाः गोप्यः स्वावतारं विहाय रमणाभिलाषवत्योऽभिज्ञानाः प्रथमाः जारबुद्ध्या तद्वत्योऽनभिज्ञा द्वितीयाः स्वप्रेमातिरेकेण वशीकृतप्रेष्ठाः

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

मानवत्यस्तृतीयाः । तत्राभिज्ञापक्षे वः युष्माकं स्वागतं सुष्ठु शोभनम् आगतम् आगमनं जातं प्रेष्ठसन्निधावागमनमात्रस्यात्यन्तशोभनत्वात् यद्वा, स्वागतमिति कुशलप्रश्नः अतः परमप्रेम्णा समागतानां युष्माकं प्रसन्नोऽहं किं प्रियं करवाणि युष्मन्मनोऽभिलषितप्रियकरणेन भवतीनां सन्तोषस्य सम्पादनीयत्वात् अहो रमणेच्छयाऽऽराधनपराणामस्माकं मन्दभाग्यत्वादद्यापि सर्वज्ञेनाप्यऽभिप्रायो न बुद्ध्यते यतः एवं पृच्छति यद्वा, अस्मत्प्रेममन्दतामालोच्यैवं वदति तस्मादतः परं किं वक्तव्यम् इति विचार्य खिन्नचित्ता आलक्ष्याऽऽश्वासयति, हे महाभागाः ! महद्भाग्यं भवतीनां यतो ब्रह्मादिभिरपि प्रार्थनीयं मत्सान्निधानं लब्धवत्यः । यद्वा, माहान्भागो भजनं यासां मत्प्रेमातिरेकाविनिर्मुक्तानां कथं मत्सम्बन्ध इति भावः । एवमुक्ता अपि लज्जया वक्तुमशक्ताः व्रजाभिमुखीः स्थिताः दृष्ट्वा पुनराह, व्रजस्येति । व्रजस्थसम्बन्धिजनस्योपद्रवोपस्थितौ भवतीनामागमनं जातं स्यादिति मया ज्ञातमतः पृच्छामि व्रजस्य कच्चिदनामयम् उपद्रवाभावः सम्प्रति वर्त्तते एवं श्रुत्वा अहो सर्वज्ञोऽपि भगवानज्ञवत्पृच्छतीति नरनाट्यमालक्ष्य विस्मयेन मन्दस्मितवतीरुपलक्ष्य स्वयमपि मन्दहासितालङ्कृतमुखसरोरुह आह-ब्रूतेति । आगमनकारणं ब्रूत किमिह तूष्णीमवस्थानेन सन्देहापादकेन स्वाभिलषितप्रार्थनप्रतिबन्धकलज्जाभिभवकारणप्रेमातिरेकसम्पादनार्थं भगवता ताः प्रत्येकमुक्तम् अनभिज्ञापक्षे स्वस्मिन्नासक्तचित्ता अस्मत्कलगीतश्रवणसमकालमेव व्रजाद्बहिर्निःसृत्य स्वसन्निधौ समागताः अतएव तासामन्तःकरणस्थो भावोऽपि बहिर्निस्सारणीय इत्याशयेन दाक्षिण्यलक्षणनायकस्वभावतां ग्राहयितुम् अवहित्थालक्षणनायकस्य स्वभावमङ्गीकृत्याह-स्वागतमिति । वः शोभनमागमनं भवतु यस्मादागमनं सम्यक् शुभसूचकमहं लक्षये यतो हे महाभागाः ! महाभाग्यैर्लब्धो महान्भागः स्वपतिगजनं यासां ताः पतिव्रतास्तथा च महाभागानां युष्माकमागमनं मद्भाग्यं सूचयति, इति भावः । अतः आज्ञापयन्तु भवत्यो वः प्रियं किं करवाणि केन प्रियाचरणेन स्वात्मानं कृतार्थं करोमीत्यर्थः । एवं विपरीतमाकर्ण्योद्विग्नमानसाः शुष्यन्मुखारविन्दा अहो वृथैव व्रजात्सहसा निस्सृत्याऽत्र समागता इति पश्चात्तापेन व्रजाभिमुखीरुपलक्ष्याह-व्रजस्येति । यदि व्रजस्य कश्चिदुपद्रव उपस्थितस्तच्छान्त्या च यदि युष्मत्प्रियं भवति तर्हि वक्तव्यं झटित्येव तच्छान्तिं करोमीति भावः । ननु, भो चतुरशिरोमणे ! तथा सति गोपा आगताः स्युरिति चेत्तत्राह-ब्रूतेति । युष्मदागमनेन तत्रत्यानामेव कश्चिदुपद्रव उपस्थित इति तर्कवशान्मैवमुच्यते अतःस्वमुखादपि झटिति तत्कारणं ब्रूत अहो एतत्स्वरूपासक्तचित्ताभिरस्माभिर्व्रजस्य दत्तजलाञ्जलित्वं जानन्नपि फलकाले किमस्मासु व्रजासक्तचित्ततामारोप्यैवं वदतीति स्वमुखारविन्दाभिमुखीरवलोक्याह-ब्रूतेति । वा तिष्ठतु मदीयस्तर्कः स्वयं वक्तुमुचिता यूयं स्वमुखादेव स्वागमनप्रयोजनं ब्रूतेत्यर्थः।यद्वा, ससम्भ्रममाह—वः स्वागतं यतो भवत्यः पतिपुत्रादिसकलसम्पत्सम्पन्नत्वेन महाभागाः तथाभूतानामागमनान्यकारणरहितानामत्रागमनेन ममातिविस्मयो जातः इति भावः । तस्माद्युष्माकं किञ्चित्प्रियाचरणे मम महत्युत्कण्ठा जातेत्याशयेनाह,प्रियमिति । यत्प्रियं भवत्यः प्रथयन्ति तदहं करवाणीत्यर्थः । एवमुक्ताः नर्मोक्तिमबुद्ध्वा लज्जया स्वाभिलषितं प्रियं प्रार्थयितुमशक्ताः व्रजाभिमुखीरवलोक्याह, अहो ज्ञातं मया व्रजे कश्चिदुपद्रव उपस्थितः स्याद्यद्भयात्पलाय्य स्वत्राणार्थं मदन्तिकमागता अतः पृच्छामीत्याशयेनाह, व्रजस्येति । तथा च तत्र सम्भावितोपद्रवशान्तिरूपं प्रियं किङ्करवाणि इति भावः । एवमुक्ता अहो अस्य धूर्ताधिराजस्याऽस्यापूर्वोऽयं वाग्विलासो द्रष्टव्य इति तर्कयन्ति सस्मितं परस्परं विलोकयन्तीरालक्ष्याह-ब्रूतेति । अहो भवतीनां मौग्ध्येन मिथः सस्मितं निरीक्षणेन चोपद्रवाभावोऽस्ति इति मया ज्ञातमतः स्वमुखादेवागमनप्रयोजनं ब्रूतेत्यर्थः । मानिनीपक्षे तासां दुर्लभदर्शनसंभाषणाः स्वान्तिकमायाता दृष्ट्वातिविस्मितस्वान्तः सोत्कण्ठमाह-स्वागतमिति । अहो युष्माभिः सुष्ठु समीचीनमागमनं कृतम् एतादृशचन्द्रकराभिरञ्जिते समस्तोद्दीपनविशिष्टे वने युष्मदागमनाकाङ्क्षया यदवस्थानात् । ननु, किमित्येवं ब्रवीपि मन्दभाग्यप्रेरितावयमत्र समागता इति तु कदापि न वाच्यमित्याह-हे महाभागाः ! एतस्मिन्नवयौवनादिमतीनामेवंविधे वने एवंविधेन प्रियेण समागमो महता भाग्येन लभ्यतेऽतो नाऽल्पस्य तपसः फलमिदमिति भावः । एवमुक्ताः नासाकुञ्चनभ्रुकुटिबन्धनपूर्वकम् अवलोकयन्तीरुपलक्ष्याह-प्रियमिति । अहो नायं कोपकालः किन्तु कोपौदासीन्यादिकं विहाय रमणस्य समयोऽतो येन प्रियाचरणेन भवत्यः प्रसन्नाः भवन्ति तत्किं वर्त्तते तदहं करोमीति दैन्यं व्यञ्जते । यद्वा, किमेवं मुद्रयाऽवस्थिताः यद्युष्माकं मनसः प्रियं तदहं जानामि तदेव च ममापि प्रियं तद्वः प्रियं देशकालानुकूल्ये सति किं करवाणि भवतीनामनुज्ञा वर्त्तते किमिति ससम्भ्रमोक्तिः एवमुक्ताः व्रजाभिमुखीरवलोक्य तासां पलायनं सम्भाव्याह-व्रजस्येति । अहो प्रियाः ! प्रियाचरणानुज्ञा किमिति न दीयते किमर्थं वाऽविकसितमुखपद्माः भवत्यः पुनर्व्रजमवलोकयन्त्यतोऽहं पृच्छामि व्रजस्य तु कच्चिदनामयम् एवमुक्ताः किञ्चिद्विकसितवदना ईषत्कटाक्षवतीरवलोक्य सस्मितमाह—ब्रूतेति । आगमनप्रयोजनं झटिति ब्रूत प्रार्थनायां लोट् किं वा वदिष्यन्तीति भयान्मद्भयकम्पमपाकुरुतेति दैन्यं व्यज्यते सम्प्रत्यभीप्सितकार्यनाशकरीं लज्जां विहाय कथयतेति भावः । निवृत्तिपक्षे आस्तिको भूत्वा वदति स्वागतमिति वः श्रुतीनां सुष्ठु आगतं आगमनं भवति यतो भवत्यो महाभागाः प्रमाणमूर्धन्यभूता अतो युष्माकं किं प्रियं करवाणि अभिधेयं किं धर्मक्रिया ब्रह्म तदपि किं सविशेषमुत निःशेषमेकमनेकं कर्मप्राप्यमुपासनाप्राप्यमुभयप्राप्यं केवलज्ञानप्राप्यं कर्मसमुच्चितज्ञानप्राप्यं वा प्रतिपादयामि । ननु, यथा कथञ्चिद्यत्किञ्चित् प्रतिपादने को दोष, इत्याशङ्क्याह-व्रजस्येति । व्रजस्याऽपौरुषेयस्य वेदस्याऽनामयं कश्चिद्दोषगन्धोऽपि न सम्भाव्यतेऽपौरुषेयवाक्येषु तथा वेदस्तु नामेति भावः । ननु, आगता एव परब्रह्माणि वयमतः किमिति एवं पृच्छसीत्याशङ्क्याह-ब्रूतेति । स्वागमनवतीनां युष्माकमागमनकारणं विनाऽऽगमनं नोचितमिति कृत्वा तस्य कारणं जातिगुणसंज्ञान्यमतः ब्रूतेत्यर्थः ॥ १८ ॥

**रजन्येषा घोररूपा घोरसत्त्वनिषेविता।**
**प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः! ॥ १९ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सर्वपरित्यागपूर्वकं मत्प्राप्त्ययं बहुभाग्यलभ्यमित्याशयेन सम्बोधयति-हे महाभागाः! इति। वो युष्माकं स्वागतं शोभनमागमनं जातम् मां प्रत्यागमनं सद्यः सफलं भवतीत्यभिप्रायेणाह—वो युष्माकं किं प्रियं करवाणीति यद्भयाद्वृद्धजनादिहागता वयं ते उत्पाताः अत्रापि प्रवर्तन्ते किमित्याशयेन पृच्छति-व्रजस्यानामयं कच्चिदिति। यदि कश्चिद्व्रजे उपद्रवो नास्ति तदाऽन्यदागमनकारणं ब्रूतेत्यन्वयः॥ १८॥

———

भाषा टीका।

श्रीभगवान् उवाच।

भगवान् श्रीकृष्णचन्द्र बोले, कि-हे बडभागिनीओं! तुम्हारो भलो आगमन भयो, अब तुम्हारे आयबे सूं हम तुम्हारो कहा प्रिय करें सो कहौ। भला तुम सब जगी कहौ व्रज में आनन्द मङ्गल तौ हैं, और जब व्रज सर्वप्रकार कुशल हैं तौ तुम अपने आयबे को कारण कहौ कि- तुम सब या समय कैसें आई?॥ १८॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

लज्जया मन्दहसितमालक्ष्याह-रजन्येषेति॥ १९॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एषा प्रत्यक्षा प्रत्यक्षत्वमेवाह-घोरं रूपं स्वरूपं यस्याः सा तामसत्वात्। किञ्च, घोरैःसत्त्वैः प्राणिभिर्नितरां सेविता व्याप्ता अतः प्रतियात निवृत्त्य गच्छत नात्र विलम्बो युक्त इत्याशयेनाह, नेति। इह वने। किञ्च, हे सुमध्यमाः! सुन्दरीभिरस्मिन् भयानके काले स्थाने च स्थातुं न युज्यत एवेति भावः। अन्यत्तैर्व्यञ्जितमेव। यद्वा, ननु रसिकशेखर! भवानिव वयमप्यत्र विहर्तुं पुष्पाद्याहर्तुं वा आगताः स्म इति चेत्तत्राह—रजनीति। एषा रजन्येव न तु दिनम्! ननु, रात्रिविलासिन्! ततः को नाम दोषः तत्राह-घोरेत्यादि। स्वभावतो भयजनिका तत्रापि घोरसत्त्वैर्निषेविता। यद्वा, हे कमललोचन! ज्योत्स्नीयं रात्रिः तत्राह-घोरसत्त्वेति। अतः स्त्रीभिरिह वने न स्थेयं स्थातुं न योग्यमिति व्रजं प्रतियात श्लेषेण यूयं यूथशो बह्व्यो व्रजं पुरुषसमूहं स्वस्वपतीनिति यावत् प्रतियात भजत एकाकिना मया बह्वीनां प्रियाचरणस्याशक्यत्वात् अतोऽत्र न स्थेयमिति नर्म विशेषः ननु, भीरुप्रवर! घोरसत्त्वेभ्योऽस्माकं न भयं तत्राह—सुमध्यमाः हे कृशमध्याः! तनुमध्यत्वात् कृशाङ्गीनामबलानां बलिष्ठेभ्यो भयं स्यादेवेति भावः वस्तुतश्चैतत्तासां स्वविषयकभावस्य दृढीकरणार्थं किम्वा नर्मणा उत्कण्ठाविवर्द्धनार्थं श्लेषार्थश्चायं घोरसत्त्वादिना अत्र न कोऽप्यायास्यतीति भावः। यद्वा, एषा उदितपूर्णचन्द्रा जनान् रञ्जयतीति रजनी अघोररूपा तमोऽपगमात् यद्वा, शान्ता आसन्नशुद्धसात्त्विकमङ्गलमासकार्तिकसम्बन्धात् इति रासमङ्गलयोग्यत्वम्, किञ्च, न घोरैः रसविघातकत्वेन भयजनकैः सत्त्वैर्युष्मत्पत्यादिभिर्दिनर्वाक्निषेविता। यद्वा, अघोरैर्वृन्दावनस्वभावेन मिथो मित्रत्वप्राप्त्या भयजनकैरेव सत्त्वैः सर्वप्राणिभिः किम्वा अघोरैः सत्त्वैर्हारिणमयूरादिभिरेव रतिजनकैः यद्वा, घोरं दुष्टानां भयजनकं किम्वा अघोरं केषाञ्चिदपि जनानां भयजनकं सत्त्वं बलं यस्य ममेति बालाऽऽश्वासनार्थः किंवा अघोरं शान्तं सुखदं स्वभावो यस्य तेन मया निषेविता इति निजवैदग्धीविज्ञापनम् अतः सर्वथा व्रजं न प्रतियात इहैव स्थेयं युष्माभिः कुतः स्त्रीभिः तत्रापि हे सुमध्यमाः! परमसुन्दरीत्वात् मदन्तिक एवात्र स्थातुं युज्यत एवेत्यर्थः॥ १९॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एषा प्रत्यक्षेति तासां तर्कवाग्मितामाशङ्क्य दृढयति—ननः कुलवधूनां बहिर्वनाद्यागमनं नोचितमिति भावः। ननु, समुदित्य बह्वीनामागमनं न दोषभाक् यदि च दोषभाक् तर्हि व्रजेऽपि किमेषा रजनी नास्ति? तत्राह-घोरेति। इह वन एव घोरं रूपं तामसस्वभावाभिव्यक्तिर्यस्या न तु व्रजे इहासहायत्वात् तत्र ससहायत्वादिति भावः। तथा इह घोरैः प्राणिभिर्नितरां सेविता व्याप्ता च अतो व्रजं प्रतियात निवृत्त्य गच्छत नात्र विलम्बो युक्त इत्याशयेनाह—नेति। ननु, तर्हि कथमत्र भवता स्थीयते तत्राह—स्त्रीभिरिति। ननु स्त्रिय इव पुरुषा अल्पसत्त्वा इति भावः। किञ्च, हे सुमध्यमाः! इति "यत्राकृतिस्तत्र गुणा वसन्ति" इति न्यायेन सुन्दरीणां गुणवतीनां च भवतीनामत्रावस्थानं न युक्तमिति भावः। अन्यत्तैः यद्वा, ननु रसिकशेखर! भवानिव वयमप्यत्र विहर्तुं पुष्पाद्याहर्तुं वा समागताः स्म इति छद्मना तासामवस्थितिमाशङ्क्याह—रजनीति। एषा रजन्येव न तु दिनं ननु, रात्रिविलासिनः अतः को नाम दोषः तत्राह—घोरेति। हे कमललोचन! ज्योत्स्नीयम् रात्रिः तत्राह-घोरसत्त्वेति। श्लेषेण यूयं यूथशो बह्व्यो व्रजं तत्र स्थितान् स्वपतीन् प्रति यात भजत एकाकिना मया बह्वीनां प्रियाचरणस्याशक्यत्वात् अतोऽत्र न स्थेयमिति नर्मविशेषः ननु, भीरुप्रवर! घोरसत्त्वेभ्योऽस्माकं न भयं तत्राह—सुमध्यमाः! हे कृशमध्याः! तनुमध्यत्वात् कृशाङ्गीनामबलानां बलिष्ठेभ्यो भयं स्यादेवेति भावः। वस्तुतश्चैतत्तासां स्वविषयकभावस्य व्यञ्जनार्थः नर्मणा उत्कण्ठावर्द्धनार्थं च श्लेषार्थश्चायं भयसम्भावनया च निजाभीष्टं मा निवर्त्तयतेत्याह—प्रथमार्द्धेन। एषा उदितपूर्णचन्द्रा जनान् रञ्जयतीति रजनी घोररूपेत्यादिकयोस्तस्मादत्र न कोऽप्यायास्यतीति भावः। तस्मादिह मम धीरस्यैव सन्निधौ

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्थेयम् यद्वा, अघोररूपा तमोऽपगमात् अघोरैर्वृन्दावनस्वभावेन मिथो मित्रत्वप्राप्त्या भयाजनकैरेव सत्त्वैः सर्वप्राणिभिः दिवसप्रायत्वादस्या ज्योत्स्न्या अघोरैः सत्त्वैर्भ्रमरकोकिलादिभिरेव वा निषेविता। यद्वा, घोरं दुष्टानां भयजनकम् अकारविश्लेषेण अघोरं केषाश्चिदपि भयाजनकम् वा सत्त्वं बलं यस्य मम तेन निषेवितेति वाचाद्याश्वासनार्थं तच्छ्रुत्वा पृष्ठवर्त्तिनीः सखीः सस्मितं परावृत्त्य पश्यन्तीः प्रत्याह—उत्तरार्द्धेन। अतः सर्वथा व्रजं प्रति न यात इहैव स्थेयं युष्माभिः कुतः स्त्रीभिः स्त्रीजातीनाम् ईदृशस्थान एव स्थातुं योग्यत्वादित्यर्थः। तत्रापि च हे सुमध्यमाः! परमसुन्दरीत्वान्मदन्तिक एवात्र स्थातुं युज्यत एवेत्यर्थं इति ॥ १९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लज्जाप्रयुक्तमन्दहासमावक्ष्याह-रजनीति। एषा रात्रिः स्वयं भयङ्करा भयङ्करैः सत्त्वैर्व्यालव्याघ्रादिभिर्निषेविता सहाचरिता च अतो व्रजं प्रति गच्छत हे सुमध्यमाः! इहास्मिन्वने रात्रौ स्त्रीभिर्न स्थातुं युक्तम् ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, यत्किञ्चिन्निमित्तमपेक्ष्यते भवदागमनम् अन्यथा ऽस्यामवस्थायां नोचितमिति तत्राह—रजनीति। घोरसत्त्वा राक्षसादयः ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

परिहासपूर्वकनिषेधे विधिमाह-रजन्येषा इत्यादि। एषा रजनी घोररूपा यतः घोरैः सत्त्वैः प्राणिभिर्निषेविता तस्माद्गृहं प्रति यात इह स्त्रीभिर्न स्थेयं स्त्रियः स्थातुं नार्हन्ति अथवा स्त्रीभिः सह मया न स्थेयम् यूयं चेन्न गच्छत तदाऽहमेव गमिष्यामीति तत्रावस्थानं प्रति निषेधः गृहं प्रति यातेति विधिः पुनर्निषेधविध्योर्विधिनिषेधावप्येव रजन्येषा अघोररूपा चन्द्रिकाविशदत्वात् अघोरैः शान्तैर्मृगादिभिः सत्त्वैर्निषेविता तस्मात् भयाभाव एवात्र तेन गृहं न प्रति यात इह वृन्दावने स्त्रीभिर्भवतीभिः स्थेयं इतःपरम्वृन्दावन एव स्थेयं गृहं मागन्तव्यमित्यर्थः। हे सुमध्यमाः! यद्वा, स्त्रीभिः स्त्रीणां मध्ये इभिः लक्ष्मीभिः स्त्रीणां लक्ष्मीभिरिति वा ॥ १९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाप्यनुत्तरे स्वयमेव पक्षान्तरं कल्पयति, यथा भवन्तः समागताः तथा वयमपीत्याशङ्क्याह-रजनीति। एषा रजनी न तु दिनं दिवस एव स्वस्वकार्ये गम्यते अयं तु चन्द्रः न तु सूर्य इति भावः। नन्वस्तु रजनी तथापि प्रकाशस्य विद्यमानत्वात् नागन्तव्यमेवेति चेत्तत्राह, घोररूपेति। प्रकाशयुक्तापि एषा वस्तुतो घोररूपा भयजनिका प्रकाशयुक्तायामपि रात्रौ गच्छन् पुरुषो बिभेतीति किञ्च, घोरसत्त्वनिषेविता घोराण्येव सत्त्वानि रात्रिं निषेवन्ते न त्वघोराणि अतो रात्रावघोरा निर्गता घोरैरुपहन्यन्ते अतः स्वभावधर्मसंसर्गिणां स्वरूपं ज्ञात्वा व्रजं प्रति यात, नन्वेवं सति तत्रैव स्थाने स्थास्यामः परिचितो भवानिति चेत्तत्राह-नेह स्थेयं स्त्रीभिरिति। वयं हि पुरुषाः रात्रिश्चेयं अतोऽत्र स्त्रीभिर्न स्थातव्यं तथा सत्युभयोरपि विक्रिया स्यात् किञ्च, भवत्यो यदि वृद्धा बाला वा भवेयुस्तदा स्थीयेतापि भवत्यस्तु सुमध्यमाः रसात्मिकाः अतो देहाध्यासे विद्यमाने सर्वथैव गन्तव्यं स्थितिपक्षे नञ् प्रश्लेषो घोरपदयोर्द्वयः न प्रतियातेति च ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हन्त हन्त कुलधर्मधैर्यलज्जादिकं ध्वंसयित्वा प्रतिदिनमस्मानुपभुञ्जानो ऽयमद्य धेनुनादेनाकृष्यानीय कारणं पृच्छतीत्यपाङ्गचालनैरेव परस्परमाचक्षाणासु तासु सत्यं देवपूजोपयोगिरजनिविकासिपुष्पाहरणार्थमागच्छामेति किं लताक्षपाङ्गनिक्षेपेण ब्रूध्वे अयुक्तमिदं कालदेशपात्रानौचित्यादित्याह-रजनीति। एषा चन्द्रिकाबहुलापि घोररूपा रात्रित्वादेवेति वल्लिमूलपल्लवादिषु सूक्ष्मसर्पवृश्चिकादेर्दुर्लक्ष्यत्वात् पुष्पाहरणस्य कालोऽयमनुचित इति भावः। घोरसत्त्वा व्याघ्रादयस्तैर्निषेवितेति कालसम्बन्धेन वृन्दावनदेशोऽप्ययमनुचित इति भावः। तस्माद्व्रजं प्रति यात। ननु, क्षणं विश्रम्य यास्यामस्तत्राह, नेह स्त्रीभिः स्थेयमिति कालदेशसम्बन्धेन युष्मल्लक्षणानि पात्राण्यप्यनुचितानीति भावः तत्रापि हे सुमध्यमाः! इति यूयं सुन्दर्यो युवतयः स्थ अहं च सुन्दरो युवैवात्रास्मि यद्यपि यूयं परमसाध्व्य एव अहं च "कृष्णो ब्रह्मचारी" इति गोपालतापिनीश्रुतिप्रामाण्येन ब्रह्मचार्य्येवेति सद्भावस्थानेपि न कश्चिद्दोषस्तदपि मनः स्वल्पविश्वास्यं युष्माकं मम चेति भावः एवं व्यञ्जितमन्तरौत्सुक्यं श्लिष्टार्थेनापि स्पष्टीभवति तद्यथा आगमनकारणं लज्जया न ब्रूध्वे चेन्मा ब्रूत तदहं जानाम्येव तस्मात्सर्वं शृणुतेत्याह-रञ्जयतीति रजन्येषा चन्द्रिकामयत्वादघोररूपा तस्मादेवाघोरसत्त्वैर्मृगादिभिरेव वृन्दावनस्वभावेनाहिंस्रत्वाद्व्याघ्रादिभिरपि वा निषेवितेति तेनात्र भेतव्यमिति भावः। यद्वा, नात्र स्वस्वपत्यादिभ्यो भेतव्यं यतो घोरसत्त्वनिषेवितेति तेऽत्र नागमिष्यन्तीति भावः। अतो व्रजं प्रति न यात इह मदन्तिके स्थेयं कुतः? स्त्रीभिः किं स्त्रीमात्रमेव स्वान्तिके स्थापयसीत्यत आह, हे सुमध्यमाः! इति सौन्दर्ये तारुण्ये च सति याः स्त्रियः शोभनमध्यदेशा भवन्ति ताभिर्भवतीभिरेव नान्याभिः स्थेयमिति भावः एवमुपेक्षामयाः अपेक्षामयाश्चार्थाः कृष्णोक्तीनां ज्ञेयाः ॥ १९ ॥

---

विशुद्धरसदीपिका ।

प्रथमे पक्षे। ननु, व्रजे वने वाऽस्माकं गमागमावजस्रं जायेत एव किमागनकारणजिज्ञासयेत्यत आह—रजनीति। कुलाङ्गनानां रजन्यां बहिर्गमनमनुचितमिति भावः। ततः किमत

### विशुद्धरसदीपिका ।

आह-घोररूपेति । रतिलम्पटपाटच्चरादिघोरप्रकृतिजनैरवसर-प्रदेत्यर्थः। ननु, मनसि परिशुद्धे न कोऽपि दोषः तत्राह— घोरत्वादि घोरत्वं हि रजसो धर्मस्तेन चापलं लक्ष्यं तच्च सुचरित्राणामकीर्त्तिकरमिति भावः । ननु, जातमेव किं तदनुतापेनेत्यत आह-प्रतीतिप्रमादेनानुचरितं पुनः सम्यगाचरणीयमिति भावः । ननु, झटिति गन्तुं न शक्नुमस्तत्राह—नेति । इह न स्थेयं, कुतः ? स्त्रीभिरिति परस्त्रीभिः परपुरुषसन्निधेऽवस्थानं न विधेर्विषय इति भावः । ननु, पुंसः प्रकृत्यात्मकं जगदिति न्यायात् को विरोधस्तत्राह-सुमध्यमाः सुन्दरीभिरात्मच्छायातोऽपि शङ्कनीयमिति भावः । पक्षान्तरे ननु, लोकापवादभिया व्रजं प्रतियानमेवोचितमस्माकमित्यत आह--रजनीति । दिवसं गन्तव्यमिति भावः । इदानींका भीतिस्तत्राह-घोररूपेति । प्रकृतिदुर्गमेत्यर्थः । ततः किमत आह—घोरैः सत्त्वैर्व्याघ्रादिभिः सेवितेति। ततः किं विधेयमत आह-व्रजं न प्रतियात कुत्र स्थेयमत आह-इहेति । ननु, रतिलम्पटस्य भवतः शङ्कनीयत्वादनुचितमित्यत आह-स्त्रीभिःनहि बहूनामेकत्र स्थितौ लोकापवाद इत्यर्थः । किञ्च, निरपत्रपत्वे सति भवत्यपवादः भवत्यस्तु सुमध्यमाः सुशोभने मध्ये मान्ति निलीयन्त इति लज्जया स्वाङ्गेष्वेव निलीना इत्यर्थः । अथवा एषा उदितपूर्णचन्द्रा जनान् रञ्जयति अनुरागं वर्द्धयतीति रजनी अकारप्रश्लेषः अघोररूपा तमोऽपगमात् तथा अघोरैः वृन्दावनस्वभावेन मिथो मित्रत्वप्राप्त्या भयाजनकैरेव सत्त्वैः सर्वप्राणिभिर्दिवसप्रायत्वात् । यद्वा, अघोरसत्त्वैः भ्रमरकोकिलादिभिर्निषेविता वस्तुतस्तु अघोरसत्त्वैः सौहृदाक्रान्तमानसैर्भवादृशैः परिकरैरेव नितरां सेविता सेवितुं योग्येत्यर्थः । अतो व्रजम् अनेकभाषानां समूहं न प्रतियातः तत्प्रतिक्रियां सङ्कोचं वा न कुरुत श्रीवृन्दावनगुणैरेव शुद्धसख्यावेशो भविष्यतीति भावः—

"वृन्दावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ।
यत्र नैसर्गदुर्वैरा सहासन्नृमृगादयः ॥
मित्राणीवाजितावासद्रुतरुट्तर्षकादिकम्" ॥

इति प्रागुक्तेः अस्यार्थः वृन्दावनमिति ब्रह्मवैवर्त्तोक्तेषु श्रीराधिकाषोडशनामसु वृन्देति तन्नामोक्तेः श्रीराधावनमित्यर्थः तानि यथा--

"राधा रासेश्वरी रासवासिनी रसिकेश्वरी ।
कृष्णप्राणाधिका कृष्णप्रिया कृष्णस्वरूपिणी ॥
कृष्णवामाङ्गसम्भूता परमानन्दरूपिणी ।
कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी ॥
चन्द्रावली चन्द्रकान्ता शतचन्द्रनिभानना" ॥ इति

वृन्दावनसख्यास्तु तथैव प्रसादितत्वादिति प्रसिद्धं कीदृशं जनास्तस्याः सखीजनाः"नामैकदेशे नामग्रहणम्"इत्यनुशासनात् सत्यभामावत् तेषामाजीव्या ये कुञ्जद्रुमास्तत्तल्लीलाप्रकाशकत्वात् तैराकीर्णं सर्वतो व्याप्तं तथा "मा शब्देनोच्यते राधा तया सह कृतः समः" श्रीकृष्णस्तस्य आ सर्वतः प्रियं तत्रैवानवरतस्थितेः पुनः कीदृशं यत्रेति, नृमृगादयोऽत्राधिष्ठाधिष्ठेययोः अभेदोपचारात्तत्तद्रसाश्रया एवोच्यन्ते अयं भावः सिंहं दृष्ट्वा नराणां भयं तान् दृष्ट्वा सिंहस्य क्रोधः तयोर्वाध्यबाधकता भवत्येव अत्र तु शुद्धे प्रेमैकदेशे तदभाव इति तत्र हेतुः अजितेति अजितः रसान्तरैरनाक्रान्तः शुद्धः प्रेमा तदावासेन नित्यनिवासेन द्रुता निरस्ता रुट् तर्षश्च तदादयोऽन्ये च गौणा रसा यत्र तस्मिन् अयं भावः सापत्न्ये रुट् परकीयात्वेऽनेकनायिकात्वे च तर्षः अत्र तु "गोप्यैकया युतस्तत्र परिक्रीडति नित्यदा" इति ब्रह्मयामलोक्तेरेकनायिका स्वाधीनपतिका साम्राज्यं तयोरभाव इति सङ्क्षेपः । विवृतमिदं भक्तिमञ्जूषायां । तर्हि किं विधेयम ? इह मयाऽऽरब्धे रासक्रीडाविशेषे एव स्थेयम् । ननु, वयं न तद्योग्या इति सोत्प्रासोक्तिमाशङ्क्याह-सुमध्यमा अतिसुन्दर्य इत्यर्थः । एतज्ज्ञात्वैव मम प्राणप्रियया आकारिता इति भावः ॥ १९ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

औदासीन्यपक्षे तु भगवता पूर्वमागमनकारणप्रश्नेऽस्माभिः गोपजातितया व्रजे वने वा ऽऽगमनादि क्रियत एव किं कारणं प्रश्नेन? तत्राह—रजनीति । दिने मस्भवत्यप्यागमने रात्रौ तदनौचित्यमेव ननु कोऽत्र दोषः?तत्राह—एषा घोररूपा तत्रापि हेतुः घोरैः सत्त्वैः प्राणिभिर्निषेवितेति, तर्हि किं कुर्मः? तत्राह—व्रजं प्रति यात. यास्यामः, किं त्वरया? तत्राह—नेह स्थेयं, त्वया कथं स्थीयते ? तत्राह, स्त्रीभिरिति । पुरुषस्य गोचारिणो महावस्थान सम्भवेपि न स्त्रीभिः स्थातव्यमिति भावः । स्त्रीभिरपि वन्यशबर्यादिभिरवस्थानमाशङ्क्याह, सुमध्यमा इति । अयम्भावः अन्येषु घोरसत्त्वैर्व्याघ्रादिभिरेव भयं सुन्दरीणां तु तैरपि भयं घोरं रजसा कामेन व्याप्तमन्तःकरणं येषां तैरपि भयं तादृशैर्निषेवितायां रजन्यां सुमध्यमाभिरिह वने न स्थेयमेव प्रार्थनापक्षे तु प्रियं किं करवाणि च इति प्रियाचरणानुज्ञाप्रश्ने किं ब्रूमो जनाः दूरात् द्रक्ष्यन्तीति चेत्तत्राह—घोररूपेति । गृहसुखं परित्यज्य मद्भजनपराणामेषा रजन्यघोराऽन्येषां तु घोररूपेति नहि कश्चिद्दूराद्दुर्निरीक्ष्यमरत्नीत्यभिप्रायः तत्र हेतुः घोरसत्त्वैर्व्याघ्रकादिभिर्निषेवितेत्यर्थः । यद्वा, घोराणि (निद्रा)तमोव्याप्तानि सत्त्वानि अन्तःकरणानि येषां व्रजवासिनां तैर्नितरां सेविताः सर्वे सुप्ताः न कोपि जागर्त्तीति भावः । यद्वा, प्रियाचरणानुज्ञायां प्रोत्साहयति एषा रजनी मनोरञ्जनी मदनमेनोत्साहप्रफुल्लितयुष्मदङ्गवल्लिकसितविविधकुसुमसुरभिवासितशीतमन्दसमीरणमनुख— मदृश पूर्णचन्द्रविमतानुकारिचन्द्रिकायुद्दीपनविभावैः भवदर्शनालम्बनविभावैर्मनं ह्लादिनी । ननु,रजनी प्रतिदिनान्ते भवत्येव कोऽस्य विशेषस्तत्राह,अघोररूपेति। दिनमातपनापेन घोररूपं भवति रात्रिस्तु तमसा इयं तु पूर्णचन्द्रान्वितत्वेन न तथा किन्तु अघोररूपेति भावः । यद्वाऽन्या रजन्यो युष्माकमस्माकं च परस्परविरहेण घोररूपा प्रियादर्शने कुसुमानि कामशरवत्हृच्छेदकानि तारकममरीः शेषमुखश्वासश्चन्द्रः प्रलयार्कसन्निभः एवं घोराणि सर्वाणि रूपाणि यासु तथा भवन्ति इयन्तु प्रियदर्शनेनाघोररूपेति भावः । उत्कर्षान्तरमाह, अघोरसत्त्वनिषेवितेति । अघोरैः शोभनैः पिकचातकमधुकरहंसादिभिर्निषेविता यद्वाऽन्या रजन्यः घोरैरजस्तमोमयैर्वैतालासुरादिभिर्निषेविता भवन्ति इयन्तु विलक्षणा अघोरैः सत्वात्मकैर्भवद्दासादिदर्शनयशोपालोत्सुकैर्विविधताखरादिभिर्देवर्षि-

### श्रीरामनारायणकृतभावभावविभाविका।

गन्धर्वादिभिर्निषेविता यद्वा, अघोरं सत्त्वमन्तःकरणं येषां तैर्निषेवितेति न कोपि विहारविरोधी यद्वा, अघोरं रजस्तमोभ्यामभिश्रं यन्मदीयं सत्त्वं तेनैव निषेविता न प्राकृतरजनीनामिव त्रिगुणात्मिका यद्वा, अघोरं घोरगुणा प्रकृतिस्तद्रहितं यत्सत्त्वं सत्तामात्रं तेन निषेविता तदात्मिका लीलाधाम्नि माया गुणाप्रवेशात्। ननु, समागमो जातः अद्य व्रजं गत्वा श्वो भाविन्यां रजन्यामागमिष्यामस्तत्राह, हे सुमध्यमाः! व्रजं प्रति न यात व्रजं गोपनिवासस्तं प्रति न यात गोपास्त रसानभिज्ञाः न सुमध्यमानां भवतीनां मनो रञ्जयितुं योग्याः किन्तु स्त्रीभिर्भवतीभिर्विविधरतिरसाभिलाषवतीभिरिहैव रसिकशिरोमणेर्मम सन्निधावेव स्थेयमिति भावः। यद्वा, व्रजतीति व्रजः नश्वर ऐहिकगृहादिरामुष्मिको जातिकुलधर्मफलभूतस्वर्गादिश्च तं प्रति न यात किन्तु इहैव नित्ये मदनुरागलीलासुखे एव स्थेयं "ष्ठा गतिनिवृत्तौ" इत्यस्मात् नित्यस्थितिः कार्या चले व्रजे ऐहिकामुष्मिकरूपे गत्यभावात्मकस्थित्यसम्भवात् स्त्रीभिरित्यस्यायमभिप्रायः स्त्रीभिः पुरुषसमीपे एव स्थेयं न कोपि मदन्यः पुरुषः "एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इत्यादिना नश्वरव्रजस्थजीवघनत्यागेन परं पुरुषेक्षणस्य श्रुतिसिद्धत्वात् किञ्च, यतो यूयं सुमध्यमाः सुष्ठु सूक्ष्मकट्यः अत एव इहैव स्थेयं सुमध्यमानां रसानां रसानभिज्ञव्रजगोपरतिभारसहिष्णुत्वासम्भवात् यद्वा सुष्ठु मध्ये हृदि मा मद्विषया यथार्था मतिर्यासामपि निबद्धमतयः यद्वा, सुष्ठु मध्ये समस्तदेहमध्ये मा शोभा यासां शोभितसमस्ततनवः यद्वा सुष्ठु मध्ये यूथेश्वरीतया वर्तमाना मा माञ्जलप्रिया यासामिति मत्प्रियान्विताः यद्वा, सुष्ठु स्वांशप्रवेशेन मध्येऽनुगता मा मत्प्रिया यासामिति माधवसन्निधावेवावस्थितिः समुचितेति भावः ॥ १९ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

एवमुक्ताः लज्जाविष्टमानसाः किञ्चिदपि वक्तुमक्षमा अवलोक्य प्रेमोद्दीपनार्थमीषत्कर्णकठोरं वाक्यमाह—रजन्येषेति। युष्माकं मौनेन कारणाभावो मया ज्ञातो निष्कारणं चागमनमुन्मत्तचेष्टितसमन्तस्माद्वृथागमनवद्वृथावस्थानस्याप्यनुचितत्वादिह वने न स्थेयं यज्जातं तत्तु जातमिति मास्तु वृथा चेष्टितमिति भावः। तर्हि किं सफलचेष्टितमित्यपेक्षयामाह—व्रजं प्रति यात गच्छत गत्वा गृहकृत्यपरता सम्पाद्येति भावः व्रजागमनेनात्रागमनस्यापि निष्फलत्वं सूचितम्। ननु, भवतु क्षणमात्रं स्थित्वा गमिष्याम इति चेत्तत्राऽऽह—रजनीति। एषा उपलक्ष्यमाणा तथा च सम्यक् नेत्रायुन्मील्य द्रष्टव्या एषा रजनी वर्तते न तु दिनं दिनादौ विलम्बेपि कृते उत्तरोत्तरप्रकाशबाहुल्यसम्भावनाऽस्ति बाधा रजन्यां त्वत्रोत्तरोत्तराऽन्धकारबाहुल्यसम्भवाद्विलम्बो नोचित इति भावः। किं च ज्योत्स्नावत्यपि घोररूपा रात्रित्वादेव तथा च महानिशीथागमे गमनमत्राऽवस्थानं च दुर्घटं भविष्यतीति भावः। ननु, भवत्येवं तस्मात्कस्मादागताः फलमूलादिकं किञ्चिदादाय यास्याम इति चेत्तत्राह घोरसत्त्वैर्व्याघ्रसर्पवृश्चिकादिभिर्निषेविता कालसम्बन्धाद्वृन्दावनेऽपि घोरसत्त्वसम्भावनयाऽत्रावस्थानं निसरणं वा नोचितमिति भावः। ननु, एवं तर्हि भवतापि किमर्थमत्राऽवस्थीयते? व्रज एव चलनीयमिति चेत्तत्राह—स्त्रीभिरिति। तत्रापि हे सुमध्यमाः! सुकुमारमध्यभागाः भयोपस्थितौ पलायनादावसमर्था अत एव कोमलचित्तत्वात् घोरसत्त्वं द्रष्टुमप्यक्षमाः एतेन तव सन्निधौ नास्त्यस्माकं किञ्चिद् दुःखमिति शङ्कापि निरस्ता अनभिज्ञापद्धे एतच्छ्रुत्वा अहो द्रष्टव्यं धूर्ताधिराजस्य वाग्विलासचातुर्यं लोकोत्तरसौन्दर्यक्रीडादिकं प्रदर्शयित्वा धैर्यकुललज्जादिकं नाशयितुं सम्प्रति फलगीतेन स्वयमाहूय कारणं पृच्छतीत्यपाङ्गचालनैरेव परस्परमाचक्षाणासु तासु अहो मया बुद्धं देवपूजोपयोगिपुष्पाद्याहरणाय भवत्य आगताः स्युस्तत्तथा चेच्छृणुतेत्याह—रजन्येषेति। भो चतुरशिरोमणे! किमत्रागमनकारणं पृच्छसि? भवानिव वयमपि क्रीडार्थं वने समागताः इति छद्मनाश्वासनपरा आलक्ष्याह—रजन्येषा घोररूपेति। भो विशालनेत्राः! नेदन्दिनमत एवंविधायां रजन्यां कुलवधूनां युष्माकं प्रासाद एव क्रीडोचिता नतु वहिरागत्य वने, ननु, घोररूपायां रजन्यां प्रासादेऽपि क्रीडा कथं स्यादिति चेत्तत्राह—इह वने एव घोररूपा नतु व्रजे सहायबाहुल्यादिति भावः। ननु, भोः कमलनयन! एवंविधज्योत्स्नावत्त्वेनोपलक्ष्यमाणा रजनी किमिति घोररूपेत्युच्यते त्वयेति चेत्तत्राह—घोरसत्त्वनिषेविता अतो व्रजं प्रति यात अहो भवतु क्षणमात्रं विश्रम्य यास्याम इति चेत्तत्राह—नेति अवश्यकर्तव्ये विलम्बो न युक्त इति भावः। ननु, भवता कथं स्थीयत इति चेत्तत्राह—स्त्रीभिरिति। ननु, यहीनामस्माकं तव सन्निधौ स्थितानां का भयसंभावनेति चेत्तत्राह—सुमध्यमा इति। यद्वा, ननु त्वमेव भीरुरसि ननु वयं वनमपि साधारणं नतु तव पित्रा पितामहादिभिर्वा मौल्येन क्रीतम् अतो वयमत्रैव विहरिष्याम इति चेत्तत्राह—नेति। भवतु यथेष्टं विहरन्तु भवत्यः परन्तु रहः मत्पार्श्वे न स्थेयम् आबालब्रह्मचारिणा मया स्त्रीसङ्गस्य परिहृतत्वात् तत्रापि बालवृद्धाभिः सहावस्थाने नास्ति दोषः यूयं तु युवतयः सुन्दर्यश्चाऽतो दूरतः परिहरणीया इत्याशयेनाह—हे सुमध्यमाः! इति। तथा च सुन्दरीणां युवतीनां सुन्दरेण मया रात्रौ निर्जने वने सहावस्थानं नोचितं यद्यपि यूयं परमपतिव्रताः अहं च ब्रह्मचार्यग्रगण्यो जितेन्द्रिय एवाऽतः सहावस्थानेपि नास्ति विकारशङ्का तथापि मनसोऽविश्वसनीयत्वादपकीर्त्युद्भयाच्च नेदमुचितमिति भावः। यद्वा, अत्रागमने भवतीनां प्रयोजनमहं न पश्यामि पृष्टेपि तूष्णीम्भावाद्भवत्योऽपि न वदन्त्यतो यद्ब्रवीमि तत्कुरुध्वमित्याशयेनाह—रजनीति। संप्रति व्रजं प्रतियात यतः एषा दिवा तद्व्यापारवशादलब्धावसरयोर्दम्पत्योः सुखजनकत्वेन बहुशोऽनुभूयमाना रजनी रञ्जनकारी वर्तते। ननु, यद्येवं तथापि रजन्यां गन्तुमशक्ता इति चेत्तत्राह—अघोरसत्त्वैः भ्रमरकोकिलादिभिरेव निषेविता वृन्दावनमाहात्म्यात्तु घोरसत्त्वैर्व्याघ्रादिभिरित्यर्थः। किञ्च, पतिभिः सार्द्धमवस्थितौ नास्ति क्षतिः किंत्विहेति स्त्रीभिः पतिविरहिताभिरिह निर्जने वने रात्रावपि मत्पार्श्वे केवलानामत्र परपुरुषसन्निधावनवस्थानस्य सुखहान्यपकीर्त्यादिकरत्वात् मम स्वविवाहितस्य पुरुषस्य यत्र कुत्रापि स्थितौ नास्ति काचिद्

**मातरः पितरः पुत्रा भ्रातरः पतयश्च वः ।**
**विचिन्वन्ति ह्यपश्यन्तो मा कृध्वं वन्धुसाध्वसम् ॥ २० ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

चातिरिस्यपि स्त्रीभिरनेन ध्वनितम् । ननु, एकस्यां रजन्यां वियुक्ता एव स्थास्यामस्त्वं कस्मादस्मान् दृष्ट्वा ग्लायसि इति चेत्तत्राह-हे सुमध्यमाः ! इति । चणान्तरं को वेद किं भविष्यति एवंविधं सौकुमार्यादिकं वृथा न चपणीयं ममापि भवतीनां सौन्दर्यादिवृंथा नाशसम्भावनया तदपलापा ग्लानि र्भवतीति भावः । मानिनीपक्षे अथैवमुक्ताः व्रजं प्रति गन्तुमुद्यता आलक्ष्याह—रजनीति । अहो आगमनकारणं लज्जादिना नोच्यते चेत्तर्हि मा ब्रून तथापि व्रजं प्रति तु न यात अत्रापि प्रार्थनायां लोट्, कुत इत्यतआह-एषाऽनुभूयमाना रजनी रञ्जनकरी एवं विधा पुनर्मिलिष्यति न वेति भावः । यतो ज्योत्स्नाव्याप्तत्वात् अघोररूपा पुनश्च क्रीडोपकरणभूतैरघोरैर्भृङ्गमृगादिभिर्नितरां सेविता यद्वा अघोरं समत्वं वलं यस्य तेन रूपा निषेविता अतो नास्ति भयसम्भावनापीति भावः । यद्वा, पिश्राद्यागमनभयाविष्टमानसा वयं कथं न याम ? इति चेत् तत्राह—घोररूपा रात्रित्वात् पुनश्च घोरसत्त्वनिषेविता नह्यमादत्र कोऽपि नायास्यतीति भावः । अतः सर्वशङ्कां विहायेह मत्पार्श्वे स्थेयं यतः स्त्रीणां हि एवंविधे देशे काले चैवंविधरमणसान्निधाववस्थानं वहुयोग्यमिति भावः । तत्रापि न स्त्रीमात्रस्यापितु युष्मद्विधानामित्याशयेनाह—हे सुमध्यमा इति । निवृत्तिपक्षे श्रुत्यागमनकारणमित्युपक्षिप्तं कारणाभावमुपपादयति-रजनीति । एषा अहेतुवादाभिमतानिर्विशेषा चित्तरञ्जनी रात्रितुल्या सर्वस्यापि तत्राध्यात् अत एव घोरं सर्वविशेषविनिर्मुक्तत्वादत्यन्तशून्यारण्यवदत्यर्थंभयङ्करं रूपं यस्याः सा अत एव घोरं सर्वपरात्यन्तदुःखकरं सत्त्वं यत्नमन्तःकरणं वा येषां सर्वनिषेधप्रतिपादनपराणां तैर्नितरां सेविताः अतो व्रजं प्रतियात वहुवाक्यानुसरणं कुरुत इह निर्विशेषचितिप्रतिपादकतया न स्थेयं स्त्रीस्थानापन्नाभिः श्रुतिभिः यतो हे सुमध्यमाः ! शोभनार्थप्रतिपादनेन सुन्दर्यः । अयं भावः ब्रह्मणि वेदान्तो न प्रमाणं तच्च तत्प्रामाण्यस्याशक्यनिरूपणत्वात् तथा हि ब्रह्म मानान्तरगम्यं न भवति ? किंवा? नाद्यः, मानान्तराविषयत्वे योग्य एव सिद्धे शब्दप्रवृत्तिदर्शनात् न द्वितीयः वेदान्तप्रतिपाद्ये ब्रह्मणि मानान्तरानुपलब्धः । ननु, लोकेपि न वाक्यार्थस्य मानान्तरापेक्षा वाक्यार्थस्य सर्वत्रापूर्वत्वात् सिद्धबोधिवाक्यमपि नाख्यार्थप्रमितौ तदभावशङ्कानिवृत्तये वा मानान्तरमपेक्षते किन्तु वाक्यस्य वक्तुर्दोषप्रवृत्ताप्रामाण्यशङ्कानिवृत्तये ब्रह्मत्वपौरुषेयत्ववेदान्तलक्ष्यमखण्डसद्वाक्यार्थम् एवास्तल्लुचकवेदान्तानां न मानान्तरापेक्षा अतः कथं ब्रह्मणि वेदान्तानामप्रामाण्यमिति चेन्ना[त्र]खण्डार्थत्वस्य लोकवेदयोरसिद्धत्वात् न हि नानापदार्थसंसर्गविषयस्य वाक्यस्यैकप्रतिपादकार्थविषयत्वं सम्भवति वाक्यं हि अभिधां गौणीं लक्षणां वा वृत्तिमादय स्वार्थं वोधयति इति प्रसिद्धम् नचाखन्यतमयापि वृत्त्या वेदान्ता अखण्डमर्थं बोधयन्ति मुख्यवृत्त्या वेदान्तानामेकार्थवृत्तित्वाऽनुपपत्तेः स्पष्टत्वात् गौणीलक्षणयोः स्वीकारेप्यन्तरपदवाच्यार्थत्वालक्ष्याह— अधिकयोर्लक्ष्यमाणगुणान्यतरपदवाच्यार्थयोः सत्त्वाद्वाक्यार्थस्यैकपदार्थमात्रवृत्तित्वासिद्धेः । ननु, पदद्वयेपि लक्षणाङ्गीकाराल्लक्षणापक्षे नास्ति दोष इति चेन्नार्थभेदाभावे पदानां पर्यायत्वावाकाङ्क्षादेरभावाद्वाक्यत्वभङ्गापत्तेः । ननु, वाक्यार्थभेदान्न पर्यायता वाक्यस्य पदानातिरिक्तत्वेपि प्रमितिजनकत्वेनार्थवत्त्वात्रापि वाक्यवैयर्थ्यमिति चात्र वेदान्तनामाऽनुदितानस्तमिति चैतन्यमात्रस्वरूपपरब्रह्मविषयमितिजनकत्वाङ्गीकारेऽविषयत्वसिद्धान्तभङ्गापत्तेः प्रमाणवैफल्यात्तस्मात्श्रुतिमस्तकप्रतिपाद्यं ब्रह्मेति ॥ १९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यकस्मादेवागता तर्हि व्रजं प्रतियात प्रतिगच्छत इह मत्समीपे स्त्रीभिर्न स्थेयं न स्थातुं योग्यम् तत्र हेतुमाह, रजन्येपेति ॥ १९ ॥

---

### भाषा टीका ।

देखो एक तौ ये रात है, ताऊ में वडी भयानक घोर रूप है, ताऊ में घोर जन्तु सर्प विच्छू व्याघ्र भल्लूक सिंह इत्यादिक जो हिंसक जीव हैं तिनसों व्याप्त है, जहां देखो तहां ये भयानक जन्तु या रात में डोलें हैं, याते तुम व्रज कों लौट कें जाओ देर मत लगावो हे सुमध्यमाहो ! सुंदर है तुम्हारे कटि प्रदेश कछु तुम वडी बूढी तौ हो नहीं सुन्दर युवती है। और मैं भी युवा अवस्था वारोहूं तासू तुम स्त्रीन को या जगे एकान्त वनमें रात में स्थित होयवो उचित नहीं है। यें तो ऊपरी अर्थ है, भीतर सूं श्रीठाकुर जी को अभिप्राय ऐसें है, कि-हे सुन्दर कटि प्रदेश वारी ओ ! ए रात्रि है यामें कोई को आयवे जायवे को डर नहीं है, और अघोर रूपा अर्थात् सुन्दर रमणीयरूपधारी है, और अघोर ( रमणीय ) जंतु जो मोर चकोर पपैया कोकिल तोता मैना तिन सों सेवित है, या वृन्दावन में कोई वैर करन वारे भयानक जन्तु नहीं हैं ऐसी सुन्दर या रात में तुम आई हो तासों अब तुम लौट के व्रज को मत जाओ याई जगह मेरे समीप स्थित रहो ऐसी सुंदर रातमें तुमको याई ठौर रहनो उचित है ॥ १९ ॥

---

### श्रीभरद्वाजिकृतभावार्थदीपिका ।

किञ्च, मातर इति । विचिन्वन्ति मृगयन्ते वन्धूनां साध्वसं कृच्छ्रं मा कृध्वं मा कुरुतेत्यर्थः ॥ २० ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, पुरुषसिंह ! परमवलीयसस्तवान्तिके स्थितानां नः कुतो भयमित्याशङ्क्य सशङ्कमाह—मातर इति । आदौ स्नेहविशेषां-न्मातरः ततस्तासां वने बहुपरिभ्रमणाशक्त्या स्नेहेन कलङ्क-भयेन च, पितरः विवाहितकन्याविषयकापेक्षाविशेषाभावेन तेषां शैथिल्ये सति पुत्राः पुत्रतुल्याः मात्रादिदोषेण लज्जाविशेषो-त्पत्तेः मातृदुर्विनयसङ्गोपनार्थं धाष्टर्यपरिहारार्थं वा बाल्येन बहुपरिभ्रमणाशक्त्या वा तेषां शैथिल्ये भ्रातरः स्वभावतः परम स्निग्धत्वात् तेषामपि लज्जादिना कथञ्चिच्छैथिल्ये पतयो विचिन्वन्त्येव पत्नीगुणदोषभागित्वात् एवमन्वेषणे तेषां यथोत्तरं श्रैष्ठ्यं तेन च पतीनामवश्यमागमनमभिप्रेतं यद्वा, काश्चिन्मातरः काश्चित्पितर इत्येवं यथाक्रमत्वं किन्त्वा प्रोक्तयुक्त्यैव स्नेहादिना कुत्रापि मातरः कुत्रापि पितर इत्येवं ते सर्वत्र एवापश्यन्तः गृहेषु वनेषु वा अनालोकयन्तः विचिन्वन्ति इतस्ततो मृग-यन्ति हि वितर्के अतो यदि कदाचित्ते अत्रागता मत्पार्श्वे युष्मान् पश्येयुः तदा युष्माकं मम च लज्जा भयं च स्यादेवेति भावः । अतोऽत्रावस्थित्या निजबन्धुभ्यो ममात्मनश्च साध्वसं भयं मा कृद्धं नोत्पादयत यद्वा, महामन्त्राभिज्ञ ! तेऽत्र सुदुर्गमेऽत्र न मध्य नागमिष्यन्ति आगता अपि न द्रक्ष्यन्त्येव तत्राह, युष्माक-म प्राप्त्या व्याघ्रादिभ्यो युष्माकमनिष्टशङ्कया बन्धूनां भयं शङ्का नोत्पादयत "साधवो बन्धुवत्सलाः" इति न्यायात् अनस्तेषु स्नेहेन निवर्त्तध्वमिति भावः । यो युष्मान् "मापुमर्द्धार्थ्यचिन्तया" इत्यादिवत् मा माश्च अपश्यन्तो युष्मन्मात्रादयो विचिन्वन्ति ननु, निर्भयसिंह ! विचिन्वन्तु पश्यन्तु वा नतः किमित्यत्राह, बन्धुभ्यो भयं अकृद्धम अवश्यकृत्यतापत्तव्याऽनीतनिर्देशः कुरुत-त्यर्थः । अन्यथा स्त्रीणां स्त्रानन्तःपरया बहुदोषोत्पत्तिरिति भावः अथवा सुव्रत स्वत्पार्श्वस्थिता न कुतश्चिदपि विभिम इत्याशङ्क्य चक्षुर्मुद्रणापूर्वकं साभिनयमाह, मत्पार्श्वे स्त्रीभिर्न स्थेयं आवालब्रह्म-चारित्वेन मम स्त्रीसङ्गपरिहारादित्यर्थः । अहो यत शिव शिव बालिकानां वृद्धानां कथञ्चित् सङ्गेन दोषो किञ्च न घटेत यूयञ्च नवयौवनारूढा इत्याह—हे सुमध्यमा इति । ननु, महा-कपटपटो गृहस्थस्माभिः सहसङ्गो भवतो बहुधा भवत्येवे-त्याशङ्क्याह, इहेति । इह निर्जनवने समयं च प्रदोषे इति दोष विशेषं श्रीमुखभङ्गीविशेषेण सूचयति अतोऽधेदानीं युष्मत्सङ्गा-न्मम दुष्कीर्तिरेव बाढं स्यादिति सर्वथा प्रयातैवेति । ननु, सुप तिष्ठ न कोपि ज्ञास्यतीति दुष्कीर्तिमाभैषीः तत्राह, मातर इति । अतो नूनमत्रागता द्रक्ष्यन्त्येवेति भावः । अतो मद्बन्धूनां मद्धनसङ्गान्मद्दुष्कीर्तेर्वा भयं मा सम्पादयत यद्वा, यो मात्रा-दयो युष्माकं गृहेभ्यो निर्गमादिना मत्पार्श्वे गमनमाशङ्क्य मा मां तत्र कुत्राप्यपश्यन्तो विचिन्वन्ति सामीप्ये वर्त्तमाना विचेष्यन्त्येव ततश्चात्रायातैस्तैर्मयि युष्माभिः सहिते दृष्टे युष्मद्ब-न्धुकमद्दुष्कीर्त्या युष्मान् प्रति क्रुद्धेभ्यो मद्बन्धुभ्यो भयं कुरुतेत्यर्थः अन्यत् समानं वस्तुतस्तु तेभ्यो भयोत्पादनेन दूरे सुगुप्तस्थाने मा नेतुं तथोक्तमिति किं वा नागतङ्गया बन्धूनामुपेक्षा तेभ्यो भयाभावं च द्योतयतीति श्लेषार्थश्चायम् एवार्थे हिशब्दः अन्या इवापश्यन्त एव विचिन्वन्ति अतो बहुमार्गेणापि न द्रक्ष्यन्त्ये वेत्यर्थः । यद्वा, अन्वर्थे हिशब्दः अपश्यन्तोपि विचिन्वन्ति किं काका नैवेत्यर्थः । मत्तोभिस्तेषामुपेक्षणात् अतो बन्धुभ्यो भयं मा कुरुतेति ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, पुरुषसिंह! परमवलीयसस्तवान्तिके स्थितानां नः कुतो भयमित्याशङ्क्य सशङ्कमाह—भ्रातर इति । अत्र मातरः पितरो भ्रातर इति कुमारिका दृष्ट्वा भगिनीं व्यूढतया प्रतीता दृष्ट्वा तु पतयः पुत्रा इति यदुक्तं तत् खलु परिहासार्थं कल्पनामात्रमिति स्थापयिष्यते चशब्द उक्तसमुच्चये हि निश्चये अतो यदि कदाचित्तेष्वेकोऽप्यत्रागतो मत्पार्श्वे युष्मान् पश्येत् तदोभयेषामपि लज्जाभये स्यातामिति भावः । अतो-ऽत्रावस्थित्या निजबन्धुभ्यो ममात्मनश्च साध्वसं भयं मा कृद्धं नोत्पादयत यद्वा, हे महामन्त्राभिज्ञ ! ते सुदुर्गमवनमध्ये नागमिष्यन्ति आगता अपि न द्रक्ष्यन्त्येव तत्राह, युष्माक-मप्राप्त्या बन्धूनामनिष्टशङ्कातो भयं नोत्पादयत "साधवो बन्धुवत्सलाः" इति न्यायात् अनस्तेषु स्नेहेन च निवर्त्तध्व-मिति भावः । अथवा श्लोकद्वयेऽस्मिन् प्रत्यावृत्त्यैवं व्याख्येयं हे सु (व्रत)वृत्त स्वत्पार्श्वस्थिता न कुतश्चिदपि विभिम इत्याशङ्क्य चक्षुर्मुद्रणापूर्वकं साभिनयमाह—नेहेति । मत्पार्श्वे स्त्रीभिर्न स्थेयं आवालब्रह्मचारित्वेन मम स्त्रीसङ्गपरिहारादित्यर्थः । अहो यत बालिकानां वृद्धानां वा कदाचित् सहवासे दोषोऽपि किल न घटेत यूयं तु नवयौवनारूढा इत्याह, हे सुमध्यमा इति । ननु, महाकपटपटो ! व्रजेऽस्माभिः सङ्गो भवतो बहुधा भवत्येव तत्राह, इहेति । इह निर्जने वने समये च प्रदोषे इति दोषविशेषं श्रीमुखभङ्गीविशेषेण सूचयति अत इहेदानीं युष्मत्प्रसङ्गात् मम दुष्कीर्त्ति(रिति वा पाठः कीर्त्ति)रेव बाढं स्या-दिति सर्वथा प्रयातैवेति ननु सुप्रतिष्ठ नकोपि ज्ञास्यतीति दुष्कीर्त्तिमा भैषीः तत्राह, मातर इति । अतो नूनमत्रागता द्रक्ष्यन्त्येवेति भावः । अतो मद्बन्धूनां मद्दुष्कीर्त्तिभयं मा सम्पादयत अन्यत्समानं वस्तुतस्तु तेभ्यो भयोत्पादनेन वंशीवादनस्थानात् दूरे सुगुप्तस्थाने नेतुं तथोक्तमिति श्लेषार्थश्चायं न चात्र स्वस्वबन्धुजना-गमनमाशङ्क्यं यतः मातर इत्यादि एवार्थे हिशब्दः गहनवने अस्मिन्नन्धा इवापश्यन्त एव विचिन्वन्ति अतो बहुमार्गेणापि न द्रक्ष्यन्तीत्यर्थः । अतश्च बन्धुभ्यो भयं मा कुरुतेति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च, मात्रादयो युष्मानपश्यन्तो मृगयेयुरतो बन्धूनां मात्रा-दीनां साध्वसं भयं मा कृद्धं नोत्पादयत ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विचिन्वन्तः मृगयन्तः कृद्धं कुरुध्वं साध्वसं भयम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनः प्रतियात गृहमित्युक्तस्य युक्तिं वक्ति, मातर इत्यादि मातरः पितर इति कुमारीः प्रति पुत्राः पुष्पुत्राः भ्रातरः पितरश्चेति यथातथमूढाः प्रति अथवा पितरः पुत्रा इति

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

परस्परसापेक्षतया पितृणामेव पुत्रा इति बोद्धव्यं यथा पिता पुत्रश्चागत इति पितुरेव पुत्रोऽधिगम्यते तेन पितृशब्दसन्निकृष्टपुत्रशब्देन वैमात्रेयभ्राताऽधिगन्तव्यः भ्रातृशब्देन सहोदर इति च अपश्यन्तः सन्तो विचिन्वन्ति तस्माद्बन्धुसाध्वसं माकृद्धं मा माकुरुतेत्यर्थः । न गृहं प्रति यातेति पक्षान्तरे युक्तिः वो युष्माकं मात्रादयः अपश्यन्तः सन्तो मा विचिन्वन्ति मम योगमायाप्रभावात् पश्यन्त एव वर्त्तन्ते कथं विचेष्यन्तीत्यर्थः । मन्यमानाः स्वपार्श्वस्थानिति वक्ष्यमाणत्वात् तस्माद्बन्धुसाध्वसम् अकृद्धं न कुरुत अकारः प्रश्लेषणीयः अभावेन ह्यगोना इति केवलस्य अकारस्य निषेधवाचकत्वम् ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अथ वयमभिसारिका एव त्वामुद्दिश्य समागताः किमिति प्रेष्यन्ते इत्याशङ्क्याह—मातर इति । भवतीनां मातरो नियामिकाः तास्तु नागताः अतो भवतीनामन्वेषणमपि करिष्यन्ति अतः तासां साध्वसं भयं माकृद्धं मा कुरुत न च वक्तव्यं ता अपि तथा स्त्रीत्वाच्छा नागमिष्यन्तीति चेत्तत्राह, पितर इति । तेषां कुले कलङ्कशङ्कया ते समागमिष्यन्त्येव तर्हि तैः सह गन्तव्यमिति चेत्तत्राह—विचिन्वन्ति ह्यपश्यन्त इति । गोकुलान्तर्गतानां कृष्णस्थानागमने मध्ये बहवो मार्गाः स्फुटिताः सन्ति तत्र भगवन्माया तिष्ठति यथा न कोपि भगवत्समीपं गच्छति अतो मार्गान्तरेणैव गताः अपश्यन्तः सन्तो विचिन्वन्त्येव अनेन स्थितौ शङ्काभावोऽप्युक्तः बन्धुभ्यः साध्वसमिति च तस्मात् सर्वा नागता इति न गन्तव्यं कुले च कलङ्को भविष्यतीति च नतु, (च) तेपि स्त्रीस्वभावं जानन्तीति नागमिष्यन्तीति चेत् भगवद्दर्शने वा समागता इति तत्राह पुत्रा इति पुत्राणां सर्वथा रक्षकत्वं महती लज्जेति तेषु स्वयमा भयाभावार्थं गन्तव्यम् ननु, ते बालका इति चेत्तत्राह, भ्रातर इति । ते हि समर्था अन्वेषणे लज्जावन्तश्च अतो लज्जया अदृष्ट्वा कदाचित् शरीरमपि त्यजेयुः अतो भ्रातृस्नेहाद्गन्तव्यम्. ननु, ते अपकीर्तिभयादन्वेषणेन गमिष्यन्ति तरुणास्ते तरुणो वयमिति चेत्तत्राह वः पतय इति तेषां भोगापेक्षाप्यस्ति तेषामेव चायं रसः अतः परं स्वं नान्यस्मै देयं भोगश्च ततोपि सिद्धः सर्व एव अपश्यन्तः गृहे अदृष्ट्वा अवश्यं विचिन्वन्ति अतो बहुकालमदृष्ट्वा नाशशङ्कया अपहारशङ्कयाच भयं प्राप्स्यन्ति न च वक्तव्यं किमस्माकं तैः तत्राह बन्धुसाध्वसमिति ते हि बान्धवाः तैः सहैव स्थातव्यम् अतो बलवद्बाधकस्य विद्यमानत्वात् व्याघुट्य गन्तव्यमिति ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, रात्रावपि वनेऽपि युवतीनामपि सङ्गमो न गमने दोषो न जनैरुद्घुष्यते सत्यं तदपि बन्धवो भवतीरनिष्टाशङ्कया साम्प्रतमन्वेष्यन्त्यस्मत्तान् मा व्याकुलयतेत्याह, मातर इति । वो युष्मान् विचिन्वति मृगयन्ते तत्र पुत्राः छिन्निमास्या एव नान्वेषणपराः पाययन्त्यः शिशून् पय इति क्रन्दन्ति वत्सा वाला अपि पूर्वोक्ते एतदपि भगवता स्वर्निमित्तद्विशेषज्ञानाभावमभिनीतवतैवोक्तमित्यदोषः अतो बन्धूनां साध्वसं युष्मददर्शनोत्थं भयं मा कृद्धं नोत्पादयत पक्षे अपश्यतो विचिन्वन्त्येव न त्वतिदूरेऽतिनिबिडे वनेऽस्मिन् वो न द्रक्ष्यन्त्यतो बन्धुभ्यस्तेभ्यः सकाशाद्भयं माकृद्धं स्वच्छन्देन मया सह रात्रावत्र विलसतेति भावः ॥ २० ॥

---

### विशुद्धरसदीपिका ।

तत्र मास्तु घोरत्वादिशङ्का गुरुजनभीतिस्तु सम्भाव्यत इत्याह—मातर इति । प्रथमे पक्षे साधकचरीरुद्दिश्याह—व इति । भवतीः प्रति ब्रवीमीति भावः । अत्र पतय इति साधकचरीषु पतिम्मन्याः नित्यसिद्धासूपहासमात्रमेव पुत्रास्तु सुतरामुपहासः यथाश्रुते तु मातृभेदयायोग्यपुत्रादिसद्भावे तासामर्द्धजरतीत्वापत्तौ परमो रसाभास अनौचित्यं चेति ध्येयम् । यद्वा, व इत्याग्रहेणाह—अपश्यन्तः गृहेष्विति शेषः । ततश्च बन्धुभ्यो मम साध्वसं मा कृद्धं यूयं तु निर्भया इत्यर्थः । पक्षे नतु, मास्तु लोकापवादबाधा निर्बाधा भवत्पार्श्वस्थितिर्बन्धुभयजनकेति यत इत्यत आह—मातर इति । विचिन्वन्तोऽपि मम मुरलीकलमोहिता न द्रक्ष्यन्ति । यद्वा, कापि मयाऽन्तर्धानविद्या साधिता इति यद्वा अपश्यन्तः सन्तोऽपि विचिन्वन्ति ते तु मम योगमायाप्रभावात् स्वान् स्वान् दारान् पश्यन्त एव कथं विचेष्यन्तीत्यर्थः । अतो बन्धुसाध्वसं मा कृद्वम् ॥ २० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

औदासीन्यपक्षे घोरत्वादिभयं सम्भाव्य कुलजनभयमपि दर्शयति—मातर इति । पुत्रा इति पुत्रसदृशा भ्रातृपुत्रादयः ते सर्वे वो युष्मानपश्यन्तो विचिन्वन्ति मृगयन्ति तथा च तेषां बन्धूनां साध्वसं सम्भ्रमो जायते तस्मा कृध्वं मा कुरुत इति पक्षान्तरं तु सत्यमत्र स्थितः सुखदा परन्तु बन्धुसाध्वसभयाद्व्रजे गन्तव्यमेव तत्राह, मातर इति । ते अपश्यन्तो विचिन्वन्तीति यत्तु बन्धुयुक्तं वो युष्माकं मनसि साध्वसं तन्माकुध्वं ते तु गोचारणागृहकृत्यादिश्रान्ताः घोरं गाढं निद्रा तमोरूपयतीति घोररूपा रात्री तस्यां निद्रिता तन्मायामोहिताः स्वान् दारान् स्वपार्श्वस्थानेव मन्यमानाश्च, यद्वा, तथाभूतास्ते अपश्यन्त इति मा किन्तु योगमायाप्रभावात्स्वपार्श्वस्थानेव पश्यन्तः अत एव मा विचिन्वन्ति तथा च तद्भीतिप्रयुक्तं बन्धोः प्रेष्ठस्य मम साध्वसं मा कुध्वं मम तु वः समागम एव जीवनमिति भावः ॥ २० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु, भवत्प्राप्तीच्छया समागतानां भगवद्गीतादिनोद्दीपितकामादरयं विलम्बसहनाक्षमाणां स्वभक्तानामस्माकं त्यागो नोचितः इति चेत्तत्राह—मातर इति । कासाञ्चिन्मातरः कासाञ्चित्पितरः कासाञ्चित्पुत्राः कासाञ्चिद्भ्रातरः कासाञ्चित् पतयः कासाञ्चित्सर्वे गृहजना अपश्यन्तो विचिन्वन्ति,

दृष्ट्वं वनं कुसुमितं राकेशकररञ्जितम् ।
यमुनानिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

मृगयन्ते । ननु, अन्वेषणान्निवृत्ता अतो मात्रादिकोपि यथागत्य मत्पार्श्वे युष्मानपि पश्येत्तदा मयेषां भयलज्जे स्यातामतोऽत्र स्थित्वा बन्धुभ्यः स्वस्य भयं बन्धूनां मम चापकीर्तिभयं च मा कुरुत अतो बन्धूनां साध्वसपरिहाराय व्रजं प्रति यात अन्यत्र वा व्रजत तथा च सम्प्रत्यस्ति भवतीनां प्रतिबन्धकमतो मम को दोष इति भावः । मंनमिष्ठापक्षे । ननु, नास्त्यस्माकं किञ्चिदपि भयं समुदायानिविष्टत्वाद्वनस्य समीपस्थत्वाच्च नाप्यपकीर्तिभयं सङ्कुच भागतत्वादज्ञातस्थाने स्थितत्वाच्चेति चेत्तत्राह–मातर इति । भवतीनां नियामकाः युष्मान् गृहे ऽदृष्ट्वा विचिन्वन्ति अतस्तासां साध्वसं मा कुरुत ननु, भाग तेप्येवंविधा एवाऽतः स्त्रीत्वाद्वा नागमिष्यन्तीति चेत्तत्राह-पितर इति । ते स्वकुले कलङ्कपातशङ्कया विचिन्वन्त आगमिष्यन्तीत्यर्थः । ननु, तेपि नागमिष्यन्ति सङ्कुच भागतास्वस्मासु शङ्कानुत्थानात्स्त्रीस्वभावस्य तैरपि ज्ञातत्वाच्चेति चेत्तत्राह–पुत्रा इति । पुत्राणां त्वन्वाग्रहो महती लज्जा च वर्तत इति भावः । ननु, ते बाला इति चेत्तत्राह भ्रातर इति तेह्यन्वेषणे समर्थाः लज्जावन्तश्चाऽतस्ते अदृष्ट्वा लज्जया कदाचिच्छरीरमपि त्यजेयुरिति भावः। ननु, तरुणास्ते वयं च तरुण्योऽतो लज्जयान्वेषणार्थं नागमिष्यन्तीति. यद्वा, ननु रात्रौ पतिसन्निधौ स्थितिसम्भावनया तेऽन्वेषणाय न प्रवर्तन्त इति चेत्तत्राह-पतय इति । ते रात्रौ भोगापेक्षया भवत्यो नो दृष्ट्वा अन्वेषयन्तो ऽत्रागमिष्यन्ति तस्मादादीयो रसोऽस्यस्मै न देयो भोगसिद्धेस्तत एव सुकरत्वात् इति भावः । नन्वेवं तर्हि ते यदा आगमिष्यन्ति तदा तैः सार्द्धमेव गमिष्यामोऽतस्तावदत्र तूष्णीं तिष्ठेति शङ्कानिरासाय विचिन्वन्तीत्युक्तं तथा च गृहान्निर्गताः मध्ये स्फुटितैर्मार्गान्तरैर्गताः सन्तो विचिन्वन्त्येव अतोऽत्रागमनं तेषां दुर्घटमतो विचिन्वन्तो खेदं मरणं वा प्राप्नुयुरित्यर्थः । नन्वस्तु किमस्माकं तैरिति चेत्तत्राह-परिजनैः सार्द्धमेवावस्थानयोग्यानां कुलाङ्गनानां युष्माकं तत्साध्वसोत्पादिकाप्रवृत्तिर्नोचितेति भावः । मानिनीपक्षे; ननु, किमित्येवं निर्लज्जः सन् बृहत्परिवाररक्षिता लज्जावतीरऽस्मान्प्रति ब्रवीषि वयमत्र क्षणमात्रमप्यवस्थातुं न शक्नुमः यतः परमप्रेमास्पदा अस्मानपश्यन्तोऽस्मन्मात्रादयोऽन्वेषणाय निःसृताः स्युरऽतस्तेषां मध्ये यद्येकोप्यत्रागत्यात्रास्मान्पश्येत्तर्हि महानऽनर्थो भवेदतस्मादागमनात्पूर्वमेव झटिति वाऽस्माभिर्गन्तव्यमिति चेत्तत्राह–मातरइति। बन्धुभ्यः साध्वसं यतस्ते मात्रादयोऽपश्यन्तः विचिन्वन्त्येव न तु गहनेऽस्मिन् वने तेषामागमनं सम्भाव्यम् इति भावः । यद्वा, विचिन्वन्ति नत्वत्राऽऽयान्ति नाप्यायास्यन्ति हि यतोऽपश्यन्तो न द्रक्ष्यन्तो वनस्याऽस्यातिनिबिडत्वान्मया तामस्या विस्पैतस्यामस्याच्छादितत्वाच्चाऽतस्तद्भयं विहाय मया सार्द्धं यथेष्टं रमतेति भावः । निवृत्तिपक्षे । ननु, निर्विशेषमखण्डं ब्रह्म यथोक्तरात्रिकलपमिति त्वया कथं ज्ञातमित्याशङ्कय बहुविद्वत्सम्मतपत्तेरित्याह—मातर इति । ये मात्रादिस्थानापन्नाः साङ्ख्यस्वरमीमांसकादयः विचिन्वन्ति यथोक्तं ब्रह्म श्रुतिप्रमाणिकमस्ति न वेति विचारयन्ति तथापि नं; पश्यन्त्येव, तथा च यदि स्यात्तर्हि परमविचक्षणैरन्वेष्यमाणमवश्यमुपलभ्यते नोपलभ्यतेऽतः स्फीतालोकवर्तिघटाद्युपलब्ध्या घटाभावस्तद्भावो निश्चीयत इति भावः। तस्माद्यथोक्तरात्रिकल्पत्वात्त्र्याग्राय परमोद्योगवत्वादेते ये बन्धवः तेषां साध्वसं तन्मतानुमोदनेन वेदबाह्यत्वप्राप्तिभयं मा कुरुध्वं स्वरक्षकस्य रक्षणमेवोचितं ननु भयप्रदानमिति भावः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेत्वन्तरमाह—मातर इति । बन्धूनां साध्वसं भयं मा कुरुत मा कुरुतेत्यर्थः ॥ २० ॥

भाषा टीका ।

इतनी सुनकें गोपी जब इत उत चल नहिं भई तब श्रीकृष्णचन्द्र बोले, कि-तुम्हारे मैया बाप बेटा मैया और पति ये सब तुम सबनकों न देखि कें ढुढत डोलें हैं सो तुम उनकों इवराट मत करावो। भयवादूसरो अर्थ यह है कि-मैया बाप बन्धु इत्यादिक सब तुम कों ढुढते भलेंई रहो परञ्च देख नहीं सकें है तासों इतनी दूर या वन में उन के कछु आयवे को भय मत करो भले प्रकार मेरे सङ्ग सुन्दर रास विलास करौ ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईषत्प्रणयकोपेनान्यतो विलोकयन्तीः प्रत्याह—दृष्टमिति । राकेशस्य पूर्णचन्द्रस्य करैरञ्जितं यमुनास्पर्शिनो ऽनिलस्य लीला मन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितम् ॥ २१ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कुसुमितमित्यादिविशेषणैरीषत्स्यतोक्ता यद्वा ईषत्प्रणयकोपतो वनालोकनेन इदं वनमित्युक्ते ऊर्ध्वविलोकनेन च राकेशकररञ्जितमित्युक्ते कालिन्दीतीरावलोकनेन तु यमुनेत्युक्तमिति विवेचनीयं तत्र यमुनेति शैत्यं लीलेति मान्द्यं वनस्य कुसुमितत्वेन स्वत एव सौगन्ध्यमित्यनिलस्य गुणत्रयं अन्यत्रैः

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

व्यञ्जितम् यद्वा, ननु महामोहनवाक्यायतिक्रमेण तेऽस्माभिरुपेक्षिता एवेति कुतोभयमिति चेत्तर्हि तादृशप्रयत्नेन रात्रावत्रागमनस्य किं नाम प्रयोजनमिति सकैतवं क्षणं ध्यात्वा मां ज्ञातं दिष्ट्या पूर्णचन्द्रायां रात्रौ मदीयश्रीवृन्दावनशोभा निरीक्षणार्थमागतामिति भवतु तच्च सम्पन्नमेवेति ससान्त्वनमभिनयेनाह—यद्वा, गृहबन्धाद्युपेक्षया श्रीवृन्दावनचन्द्रं श्रीकालिन्दीविहारिलीलां चानुभवितुमागताः स्म इति कुतो भयमिति चेत् सत्यं तर्हि परमशोभायुक्तवृन्दावनस्य तत्रोदितचन्द्रस्य च तथा सुन्दरकालिन्दीविहारिवातगतिलीलायाश्च दर्शनमिदं दिष्ट्या सम्पन्नमेवेत्यङ्गुल्यादिना दर्शयन् सलीलमाह-दृष्टमिति । अयं: स एव वस्तुतस्तु साक्षात्तथा तादृशवनादिप्रदर्शनेन भावमेव विवर्द्धयति-श्लेषार्थश्चायम् एतत्पक्षे दृष्टमिति ज्ञाप्याम् ईदृशं सर्वगुणयुक्तं वनं दृष्टमेव तत्तस्मात् घोषं मा यातेत्यन्वयः । यद्वा, एतादृशे वने साक्षाद्दृष्टेऽपि रात्रौ रतौ विलम्बन मयुक्तमेवेति तद्योग्ययमुनातीरं प्रयाम इति ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तासां प्रणयकोपेन यदन्यतो दर्शनं तदन्ययोरप्रेक्ष्यते दृष्टमिति, तथातेति परेणान्वयः । कुसुमितमित्यादिविशेषणैरीषत्प्रतोका तत्र चेषत्प्रणयकोपतो वनावलोकने दृष्टं वनमित्युक्तं तत ऊर्द्ध्वावलोकने च राकेशकररञ्जितमिति ततः कालिन्दीतीरावलोकने तु यमुनेति विवेचनीयम् अन्यच्चैः । यद्वा ननु, महामोहनवाक्यायतिक्रमेण तेऽस्माभिरुपेक्षिता एवेति कुतो भयमिति चेत्तर्हि तादृशप्रयत्नेन रात्रावत्रागमनस्य किं नाम प्रयोजनमिति सकैतवं क्षणं ध्यात्वा मां ज्ञातं दिष्ट्या पूर्णचन्द्रायां रात्रौ मदीयश्रीवृन्दावनशोभानिरीक्षणार्थम् आगतं इति भवतु तच्च सम्पन्नमेवेत्यङ्गुल्यादिना दर्शयन् सलीलमाह-दृष्टमिति । अर्थः स एव वस्तुतस्तु साक्षात् तथा तादृशवनादिप्रदर्शनेन भावमेव विवर्द्धयति श्लेषार्थश्चायं न केवलं तद्दर्शनाय एवात्र अपि तु परमसुखनिधानत्वमपीति भावोद्दीपनाय स्वयं दर्शयति—दृष्टमिति । ईदृशं सर्वगुणयुक्तं वनं दृष्टमेव तत्तस्मात् घोषं मा यातेत्यन्वयः इति ॥ २१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

राकेशश्चन्द्रः ॥ २१—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रत्याचष्टाणा ईषत्प्रणयकोपान्विता विलोकयन्तीः प्रत्याह-दृष्टमिति । राकेशस्य पूर्णचन्द्रस्य करैः रञ्जितं यमुनास्पर्शिनोऽनिलस्य लीलया मन्दगत्या कम्पमानैस्तरूणां पल्लवैः शोभनं वनं दृष्टं हि ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राकेशश्चन्द्रः यमुनायाः अनिलेन वायुना निर्भयेन एजद्भिः कम्पमानैः तरुपल्लवैः शोभितं यद्वा, यमुनानिलानीतनीरैरेजद्भिः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनर्यात गृहं न यातेति पक्षद्वयमेव व्यक्तीकुर्वन्नाह—दृष्टं वनमित्यादिसार्द्धेन । वनशोभादिदृक्षया यदागताः तत् दृष्टं वनं कीदृशं ? कुसुमितमित्यादिविशेषणत्रयं तस्माद्घोषं यात माचिरं विलम्बो मा कार्य्यं इत्यर्थः । तत्र गत्वा किं कार्य्यं तत्राह-पतीन्-शुश्रूषध्वं पतीनिति यान्तीति पतय इति योगार्थत्वात् यथा-तथं पालकमात्रे बोद्धव्यम् अन्यच्च क्रन्दन्ति वालाश्च वत्साः तान् पाययत पश्चाद्दुह्यतेत्यर्थः । वाला इति वत्सविशेषणं हे सतीः साध्व्यः पक्षे दृष्टं वनमित्यादिना उद्दीपनविभावः प्रकटीकृतः तत्तस्मात् घोषं मा यात पतीन् मा शुश्रूषध्वं वालाश्च वत्सा मा क्रन्दन्ति तान् मा पाययत मा दुह्यत चेत्यर्थः । चिरमेव न यात इहैव सर्वदा तिष्ठतेत्यर्थः । प्रतिक्रियं मा शब्दो योज्यः ॥ २१—२२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुक्ते परितो विलोकयन्तीराह—दृष्टंवनमिति । एवा हि राजसराजसी अग्रिमा राजसतामसी यदि वनदर्शनार्थमागतं तदा दृष्टमेव वनम् अतः प्रतियातेति अर्थात् सर्वदा दृष्टमेवैतद्वनं नात्र भयमिति ज्ञापितं गृहे च न गन्तव्यमिति "यदि गृहगमनापेक्षा तदैव गन्तव्यम्" इति वचनात् तच्च वनं कुसुमितमिति वर्णयति, यथा तासामत्यासक्तिर्भवति इदानीं पुष्पाण्येव जातानि न फलानीति वा कुसुमिते वने रतिः फलं भवेति भावः । सर्वत्र मोहः प्रेरणं चानुस्यूतं किञ्च, राकेशस्य चन्द्रमसः करैः रञ्जितम् उद्दीपका एते घनं तामसं पुष्पाणि राजसानि चन्द्रकिरणाः सात्विका इति अयं राकेश इति पूर्णचन्द्रः अतः पूर्णत्वे ज्ञातव्यं एवोद्दिष्टौ तु गन्तव्यमिति वायुमपि तत्रत्यं वर्णयति-यमुनेति । यमुनासम्बन्धिना ऽनिलेन लीलया ये एजन्तः कम्पमानास्तरुपल्लवाः तैर्मण्डितमिति जलसम्बन्धात् लीलया चलनात् तरूणां सुगन्धानां सम्बन्धात् त्रिगुणो वायुरुक्तः वर्णनायां रसोद्बोधके चोपयुज्यते ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च ता लज्जया परितो विलोकयन्तीराह—दृष्टमिति । मां ज्ञातं वनदर्शनार्थमागता इति ततश्च तासामूर्द्ध्वावलोकने सत्याह—राकेशेति । यमुनादिगवलोकने सत्याह यमुनास्पर्शिनो अनिलस्य लीलामन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवाः पुष्पितास्तैः शोभितमित्यर्थमीक्षितं वनादिदर्शनमपि निर्व्यूढमतो माविलम्बध्वमिति भावः । पक्षे वृन्दावनमिदं सर्वोत्कृष्टं तत्रापि

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्णचन्द्रा रजनी तत्रापि चतुर्दिक्षु यमुना तत्रापि शैत्यमान्द्यसौगन्ध्यवन्तो अनिला इत्युद्दीपनविभावा एते आलम्बनविभावश्चाहं वतं एवेत्यद्य युष्माकं रसिकतापरीक्षिता भविष्यतीति भावः ॥ २१ ॥

---

### विशुद्धरसदीपिका ।

प्रथमपक्षे एवमौदासीन्यमनुभूय परिवर्त्तितमुखीरालक्ष्याह, दृष्टमिति । वनशोभावलोकनलोभादागता न तु मदर्थमिति भावः तत्तु इदं संरम्भक्षुभितदृष्टीरालक्ष्य चाटूचमभिनयति—कुसुमितमिति । कुसुमानि सञ्जातान्यस्येति तारकादिः ततश्च हासो लक्ष्यते भवतीनामनुचिताचाराद्वनमप्युपहसतीति भावः । ततोऽपि परावृत्याकाशदत्तदृष्टीर्दैवमुपालभन्तीरिवालक्ष्यापलक्ष्यापलपन्नाह, राकेति । तेन पूर्णत्वं ततश्च द्विजराजत्वात् परमास्तत्वं तस्य करैः किरणैःरञ्जितमतिधवलितम् एवं च राकेशोऽपि भवतीनां गृहगमनसाचिव्यं करोतीति भावः । पुनरतिकोपेन यमुनाभिमुखीरभिलक्ष्य तथैवाह—अहो साधु निरङ्कितम् यमुनेति यमुनापि समीरकृतनीरतरुपल्लवचालनच्छलेन नेह स्थेयमित्युपदिशतीति भावः । पक्षे ननु, मास्तु बन्धुसाध्वसं स्वगृहान् गन्तव्यमेवेत्यत आह, दृष्टमिति । तत्र किमित्यत आह—कुसुमितं गृहगमनोन्मुखीर्वनमप्युपहसतीति पूर्ववत् अपि च नागरीणां वनशोभानिभालनायापि किञ्चित्कालं विधत्रिदेव योग्येत्याह—राकेति । तथा भवतीनां सखया यमुनयाऽप्यनिललीलेजतरुपल्लवचालनेन मौनमुद्रया मा यातेति निवारणमेव क्रियत इत्यर्थः ॥ २१ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

प्रथमपक्षे उदासीनवाक्यश्रवणेऽपि यदर्थमागताः स एव कथमेवं वदतीति चकिताः पत्योदासीन्यमभिनयन्नेव प्रेमवृद्ध्यै उद्दीपनमाह—दृष्टमिति । यूयं नहि मदर्थमागताः किन्तु यदर्थमागतास्तद्वनं दृष्टम् । ननु, को वने विशेषः? यदर्थमस्मदागमनमुच्यते तत्राह—कुसुमितमिति । विरहिणां कामशररूपतया हृद्वेधकं पतिसङ्गतानामेव सुखदं पतिसहकारं विनाऽस्मानिघनदर्शनेन ननु निशि तमसि कथं गन्तव्यं ? तत्राह—राकेशकररञ्जितं पूर्णचन्द्रकिरणैर्धवलितमिति । न गमनप्रतिबन्धि तमोऽपि किञ्च मनोजचन्द्रोद्दीपितमनोज्ञानां कुलाङ्गनानां नात्र सुखलेशोऽपि पतिसङ्गानामाह्लादकोऽपि पूर्णचन्द्रः प्रियवियुक्तानां प्रलयार्कसन्निभ एव भवतीति ध्वनिः औदासीन्यमालक्ष्य यमुनां प्रति दत्तदृष्टीः प्रत्याह—यमुनेति । यमुनासम्बन्धिनः मदनकुमदवर्द्धनकुमुदादिगन्धहारिणः शीतस्यानिलस्य वायोर्या लीला मन्दगतिस्तेनेजितानि यानि कुसुमितनरुपल्लवानि तैः शोभितमिति त्रिगुणसमीरान्वितं तदपि पतिसमागमोत्साहकमिति भावः । यद्वा, रतिचिह्नमिदं यद्वनदर्शनविहारार्थं युष्मदागमनं तद्वनमपि कुसुमितं सरितकुसुमदशनदर्शनेनादशसुमनोधरविकसनेन भवदागमनमुपहसति चन्द्रोऽपि सितचान्द्रिकया प्रहासमभिनयति यमुनानिलोऽपि तरुपल्लवकरचालनेनात्रागमनमपि वारयति सर्वेषां वृन्दावनगतानां धर्ममर्यादाप्रियत्वात्र केवलमहमेव दाक्षिण्यपक्षे तु बन्धुसाध्वसाभावमुक्त्वा वनादिशोभां वर्णयन्नुद्दीपनेन प्रोत्साहयति—दृष्टमिति । वनं वृन्दावनमावयोर्नित्यलीलास्पदं भवतीभिरिदं स्वत एव सुखदं किमु वाच्यं कुसुमितमिति ऋतुराजेन स्वमित्रमदनवीरायां भवतीनां रतिरणप्रोत्साहायैव कालमनवेक्ष्य सर्वर्त्तुकुसुमैः पूरितम् । किञ्च, राकेशकररञ्जितं युष्मद्विहारायैव राकाया ईशेन पूर्णचन्द्रेण स्वकरैरेव रञ्जितमिति राकेशस्यैवमादरे न कस्यापि सङ्कोचः न च मद्वक्षःस्थश्रियः सापत्न्यशङ्कापि तया मयापि मया सह युष्मदालिङ्गनमभिलषितमालक्ष्यैव तदुभ्राताऽपि सेवारब्धेति भावः । किञ्च, यमुनासम्बन्धिनाऽप्यनिलेन त्रिगुणसमीरेण तरुमृदुपल्लवकरचालनैर्विहारार्थमावाहनेन न यमुनाया अपि सापत्न्यं किन्तु भवद्विहाराभिलाष एव भवतीनां च सहागमनेनैव मम प्रेमपाथि स्वतस्सिद्धसापत्न्याभावेन न शङ्कागन्धोऽपि किञ्च मत्कुलवृद्धेन युष्मदादरेण स्वकरैर्वनरञ्जनदर्शनेनैव स्वकुलवृद्धशङ्काप्यपनेया सर्वेषां मत्स्नेहव्याप्तहृदयत्वात् ॥ २१ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवमुक्ता अहो भगवदनुग्रहालाभान्निष्फलमेवास्माकमागमनं जातमिति विचार्य खिन्नचित्ताः आश्वासयति—दृष्टमिति । युष्माभिरत्रागत्य वनं दृष्टमेतेनैवं चेत्तर्हि कलगीतेन किमर्थमत्र वयमाहूता इत्याशङ्कापि परिहृता । वनं दृष्ट्वा मया विचारितमहो इदं वनं स्वभक्ताभ्योऽपि प्रदर्शनीयमित्याशयेन कलगीतेन मयाऽऽहूता इति भावः । ननु, का वा अत्र दर्शनीयतेति चेत्तत्राह—कुसुमितमिति । ननु, कुसुमितवनमेव यद्यस्माकं प्रदर्शयितव्यं तवाभीप्सितं स्यात् तदा दिन एव वयं कुतो नाकारिता इति चेत्तत्राह—राकेति । राकेशः पूर्णचन्द्रस्तस्य करैः किरणैः रञ्जितं तथा च दिने रात्र्यन्तरे वा नास्त्येवंविधा शोभेति भावः । किं च वायुरप्येवंविधः समयान्तरे दुर्लभ इत्याशयेनाह—यमुनास्पर्शेनाऽनिलस्य वायोर्लीला मन्दगतिस्तया एजन्तः कम्पमानास्तरूणां पल्लवास्तैः शोभितं तस्मादस्यागमनवैयर्थ्यमिति भावः । अनभिज्ञापक्षे । ननु, भवतु तव निकटे न स्थीयतेऽन्यप्रदेशं गत्वा स्थास्याम इत्यभिप्रायवतीरालक्ष्याह—दृष्टमिति । एवंविधप्रदेशान्तरं नास्ति अयं च प्रदेशो दृष्ट एव भवतीभिरतोऽलं वृथा कालक्षेपेणेति भावः । यद्वा, किमेवं मात्रादिबन्धुभयं प्रदर्श्यते तत्तु अस्माकं दृष्तजलाञ्जलिप्रायमेवाऽन्यथा तान् परित्यज्य रात्रौ बहिरागमनं कथं भवेत् त्वं विभेषि चेत्तर्हि त्वमेवेतो गच्छेति प्रणयकोपवतीरालक्ष्याह, दृष्टम् अहो मयापि ज्ञायते निर्दोषाणां नास्ति कुतोऽपि भयं तथापि बुद्धिमतीनां वृथा गृहान्निःसरणस्यायुक्तत्वात् वनशोभेक्षणार्थमागताः स्युस्तच्च सम्पन्नमितो वृथाऽत्र न स्थेयमिति भावः । यद्वा, नच्छ्रुत्वा लज्जयेतस्ततो विलोकयन्तीरवलोक्याह—दृष्टमिति । अहो ज्ञातं मया साध्वीनां भवतीनां गृहान्निर्गमनं वनेक्षणाय तच्च जातमतो गन्तव्यमिति भावः ननु प्रसङ्गादत्रागताः फलानि गृहीत्वा यास्याम इति चेद्

तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन् सतीः।
क्रन्दन्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥ २२ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

तत्राह-कुसुमितं ननु फलिनम् एतच्छ्रुत्वा दृष्टीरालोकयाह, राकेशकररञ्जितम् अतो शरत् पूर्णचन्द्रचन्द्रिकाशोभेक्षणाय भवत्यः समागताः स्युस्तदापि जातमिति भावः। यमुनाभिमुखीः समालोकयाह, यमुनेति। मानिनीपक्षे ननु, तथापि गृहाद्बहिरस्माकं मनो न रमतेऽतः कथमत्र तिष्ठाम इति चेत्तत्राह—दृष्टमिति। कुसुमितमिदं वनं भवतीभिरदृष्टं तथा च नास्ति गृहेष्वेवंविधकुसुमशोभाऽतोऽत्र कस्य मनो न रमते प्रत्यक्षोपलब्धस्यापलापो न युक्त इति भावः। किञ्चैवंविधं राकेशकररञ्जनं यमुनानिललीलेजत्तरुपल्लवशोभा च गृहेषु क्वचित् तस्मादेतत्सर्वमवलोक्यैव प्रायशो भवत्यो मया स्मृताः स्मृत्वा च कलगीतेनाहूताः भवत्योऽप्यागत्य तथैव दृष्टवत्यो नो गमनाग्रहं विहायेह स्थेयं गोष्ठं प्रति मा यातेति परेणान्वयः। निवृत्तिपक्षे। ननु, भवतो विवेकचन्द्राऽनुदयाद्वैराग्यादिरहिता अस्मदभिप्रायं न जानन्ति विवेकादिसाधनसम्पन्नान्तःकरणास्तु जानन्तीत्याशङ्क्याह, दृष्टमिति। राकेशस्य विवेकचन्द्रस्य करैर्विचारभेदैः रञ्जितं शान्त्यादिलक्षणकुसुमशोभितमन्तःकरणलक्षणं वनं दृष्टमित्युपहासः नाममात्रेण श्रुत्यर्थमाशायविवेकादिमत् इति भावः। यतो यमुनास्थानीयाविद्या सम्बन्धिनोऽनिलस्य तत्स्थानीयस्य चित्तस्य लीलया तत्तद्विषयचाञ्चल्यया राजन्तस्तरुस्थानीयस्य वैराग्यस्य पल्लवास्तत्स्थानीयाः प्रविचारोत्थावैराग्यभेदास्तैः शोभितं यद्वा, यथोक्तयमुनानिललीलया विलासेन राजन्तश्चञ्चन्तो प्रकम्पिताः संसारवृक्षस्य पल्लवाः विषयप्रवाहास्तैश्शोभितं तथा च श्रुतवेदान्तानामपि यथा पूर्वं संसारोपलम्भं तेषां विवेकादेरभावं समवलोक्य तन्मतानुसरणं नोचितमितिभावः ॥२१॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रात्रिसम्योगजां वनशोभां द्रष्टुं यद्यागतास्तर्हि यमुनास्पर्शिनोऽनिलस्य लीलया मन्दगत्या एजद्भिः कम्पमानैस्तरुपल्लवैः शोभितं राकेशकरैः पूर्णचन्द्रकिरणैः रञ्जितं कुसुमितं वनं वृन्दावनं दृष्टमेव ॥ २१ ॥

भाषा टीका।

श्री कृष्ण की इन बातन कों सुन के विचारीं सब गोपीं वन की ओर निहारन लगीं, तब श्रीकृष्ण बोले, कि-हां हम जान गये, तुम सब वनकी शोभा देखिवे कों आई हो, सो यमुना की पवन तें हल रहीं है शाखा और पल्लव जामें और चन्द्रमा की किरणन सों रञ्जित पुष्पित जो वन है ताकों तुम देखचुकी हो, तासों अब देर क्यों करौ ब्रज को जावो। और दूसरो अर्थ यह है, कि—भलां या वनकों तुमनने देखो? कैसो खिलरह्यो है, और ताहू में चन्द्रमा की चांदिनी जो छिटक रही है तासों औरहू शोभा होयरही है, और चन्द्र किरणनसों वनहूं की शोभा अपूर्व होय रही है, सुन्दर यमुनाजी न्यारी बह रहीं हैं ताके ऊपरसों जो शीतल मन्द सुगन्ध पवन लीला पूर्वक चलै है तासों वृक्षन के पल्लव न्यारे चलायमान होय रहे हैं, यमुनाकी स्वच्छ लहरियादार रेती न्यारी बिछरही है, एसी सुन्दर शोभा युक्त या वृन्दावनमें वंशीवटपै मैं नागर नट वांसुरी बजायरह्यो हूं अब या रमणीय स्थल कों छोड के तुम कहां जाओगी अब ब्रज कों न जाओ मेरे सङ्ग विहार करौ ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सतीः हे सत्यः ॥ २२ ॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

ततस्तस्माद्वनशोभादर्शनेन निजमनोरथपूरणात् सदोषैर्गीतदधिमथनगवादिशब्दैर्घोषयति शब्दायते इति श्लेषेण सर्वेषां सर्ववृत्तं घोषयतीति घोषस्तं गोपावासं यात माचिरम् अचिरादेवेत्यर्थः। यद्वा, तत्र विलम्बं मा कुरुतेत्यर्थः। किमर्थं पतीन् शुश्रूषध्वं सेवध्वं कुतः सतीः हे सत्यः! अन्यथा सातीत्वभङ्गापत्तिः अतो मत्पार्श्वे युष्माकमवस्थानमप्ययुक्तमिति भावः। ननु, परमसेव्यत्वत्सेवामसहमानाः सदाऽसूयावन्तो दुष्टतरास्तेऽस्माभिः परित्यक्ता एव सतीत्वमपि त्वत्पादाब्जयोर्निर्मञ्छनीकृत्य दूरतः क्षिप्तमित्याशङ्क्य सकरुणं पक्षान्तरमाश्रयन् वत्सादिषु स्नेहं जनयन्—क्रन्दन्तीति। अतस्तान् बालान् पाययत दुग्धं वत्सार्थं च दुह्यत दुग्धदुग्धं गा इत्यर्थः। वत्सेभ्यो बालेषु स्नेहविशेषात्तेषां पश्चान्निर्देशः एवं सर्वत्र निवर्तनार्थं पूर्वपूर्वस्मादाकर्षादुत्तरोत्तरस्य गरिष्ठत्वं ज्ञेयम् पाययतेत्यस्यादावुक्तिस्तस्य द्रुतमवश्यकार्यत्वात्। यद्वा, गोपचूडामणे! वत्सान् गोपैर्गोदोहनेन पाययिष्यन्त्वेवेत्यत आह—बालाश्चेति। तेषां युष्मान् विना दुग्धपानासम्भवात्। यद्वा, तान् वत्सान् बालांश्च पाययत पयः कथं तदाह—दुह्यत गाः गोदोहने स्वत एव वत्सानां बालानां च तद्दुग्धस्यैव पानं भावीत्यर्थः। अत्रेदं तत्त्वं कृष्णैकप्रिया भगवत्यस्ता व्रजदेव्यः काश्चिज्जातविवाहा अपि नाममात्रेणैव पतिमत्या विविधरूपाणि पतीन् वञ्चयमानास्तैः सहाङ्गसङ्गाभावेनाजातापत्या एव केवलं पत्यादीनामाग्रहेण निजकौतुकविशेषेण वा तास्वेव काश्चित् परपुत्रान् पुत्रबुद्ध्या पालयन्तीति स्वतः स्तन्याभावेन तान् गोदुग्धमेव पाययन्तीति वस्तुतस्तु सर्वमेतत्सम्बन्धेनैव अत एव सतीरिति श्लेषार्थश्चायं तत्तस्माद्बन्धुमात्रस्याभावात् वनशोभारतिसामग्रीसद्भावाच्च माचिरं शीघ्रं मा यात यदि याथ तदा

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

विलम्बेन रात्र्यन्त एव यास्यथेत्यर्थः । यद्वा, चिरं चिरन्तनः अस्वातन्त्र्यादिदुःखप्रदत्वेन बहुशोऽनुभूतो यो घोषस्तं मा यात चकारान्माशब्दस्याग्रेऽपि सर्वत्र सम्बन्धः पतीन् मा शुश्रूषध्वं सतीश्च साध्वीर्मा शुश्रूषध्वं न सेवध्वं तत्पदवीमपि न यातेत्यर्थः । स्वातन्त्र्यादिसुखभङ्गादिति नर्म्मैव वत्सादयो न क्रन्दन्त्येव गोपादिभिर्गोदोहनादिना पयःपानसिद्धेः अतस्तांश्च पाययिष्यथ न तु धोक्ष्यतेत्यन्यकृत्याभावेन स्वातन्त्र्यं सूचितम् ॥ २२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्तस्माद्वनशोभादर्शनेन निजमनोरथपूरणात् सदोच्चैर्गीतध्वनिमन्थनगवादिशब्दैर्घोषयति शब्दायते इति घोषः श्लेषेण तु सर्वेषां सर्ववृत्तं घोषयतीति तं गोपावासं यात गोष्ठमिति काचित्पाठः तत्रैव भवतीनां सर्वा सामग्रीति तदेव गन्तुं युज्यत इति भावः । माचिरम् अचिरादेवेत्यर्थः । यद्वा, तत्र विलम्बं मा कुरुतेत्यर्थः । किमर्थं पतीन् शुश्रूषध्वं सेवध्वं कुतः सतीः हे सख्यः ! अन्यथा साध्वीत्वभङ्गः स्यात् अतः परपुरुषस्य मम पार्श्वे युष्माकमवस्थानमयुक्तमिति भावः । ननु, परमस्नेह्यस्मत्सेवामसहमानाः सदासूयावन्तो दुष्टतरास्ते ऽस्माभिः परित्यक्ता एव पतिव्रतात्वमपि त्वत्पादाब्जं निर्मञ्छनीकृत्य दूरतः क्षिप्तमित्याशङ्क्य सकरुणमिव पक्षान्तरमाश्रयन् वत्सादिषु स्नेहं जनयति क्रन्दन्तीति अतस्तान् वत्सान् पाययत यागार्थं च दुह्यत दुग्धं दोहयतेत्यर्थः । एतच्च तत्तत्सन्निधानमात्रचिकीर्षितत्वत्प्रियगवाद्यपेक्षया अत्रेदं तत्त्वं ताः खलूद्दिश्य स यो हि स्वामी भवतीति गोपालतापिन्यां "श्रियः कान्ताः कान्तः परमपुरुषः" इति ब्रह्मसंहितायां दशाक्षरादिमन्त्राश्च तथा श्रुत्यागमादौ कृष्णवध्व इति चात्रैव तदेवं श्रीकृष्णैककान्तानां परमलक्ष्मीणां तासामन्यत्र विवाहो न सम्भवति तत्प्रतीतिश्च तासामुत्कण्ठावर्द्धनार्थं योगमायामुपाश्रित इत्यादौ तदर्थं निर्दिष्टया योगमाययैवेति गम्यते यैश्च खलु तत्प्रतिरूपकल्पनया तत्पतिम्मन्यास्तान् वक्ष्यति वक्ष्यते हि "नासूयन् खलु कृष्णाय" इत्यादि ततस्तैः सहाङ्गसङ्गाभावेनाजातापत्या एव केवलं स्नेहविशेषेण भ्रातृभ्रातृप्रभृतिपुत्रान् यान् पाययन्ति त एव पुत्रा इत्युच्यन्ते तेषामपि लोके पुत्रतया व्यवहारो विशेषतस्तथा पाल्यमानत्वात् श्रीबलदेवस्याप्युद्दिश्य "सपुत्रः सस्नुषः प्रायात् सुहृद्भिरभिनन्दितः" इति श्रीशुकेनापि प्रयुक्तत्वात् अतस्तन्याभावेन गोदुग्धमेव तान् पाययन्तीति तान् पाययत दुह्यतेत्युच्यते अत एव मुनिनाप्युक्तं "पाययन्त्यः शिशून् पयः" इत्यत्र शिशूनित्येव एव इत्येव च न तु सुतान् स्तनमिति यदि च तासामुदरजा एव ते स्युस्तदा रासनृत्यनायिकानामादिरसनायिकानां च तासां वैरूप्येण तस्य रासनृत्यस्य रसस्य च वैरूप्यं स्यात् "मातरः पितरः पुत्राः" इत्यत्र श्रीभगवद्वाक्ये केषाञ्चिद्भ्रात्रावपि यद्यपि मात्रादिविवेचकत्वेन कासाञ्चिद्वृद्धजरतीत्वमप्यायाति तत्र पुनरतीव तत्स्यात् तत्तु श्रीवैशम्पायनस्याप्यसम्मतम् "युवतीर्गोपकन्याश्च रात्रौ सङ्कल्प्य कालवित्" इत्यनेन तथा तदिदं तासामालम्बनरूपाणामुद्दीपनसौष्ठवमपि वर्णयता श्रीमन्मुनीन्द्रेण न मतं "भगवानपि ता रात्रीः" इत्याद्युद्दीपनसौष्ठवेनालम्बनरूपाणां तासां सौष्ठवमनुस्मृत्य रन्तुं मनश्चक्रे इति च गमितं वक्ष्यते च तासां सौष्ठवं श्रीभगवन्तमपेक्ष्यापि प्रौढत्वं च "मध्ये मणीनां हैमानां महामारकतो यथा" इत्यनेन "व्यरोचतैणाङ्क इवोडुभिर्वृतः" इत्यनेन "तडित इव ता मेघचक्रे विरेजुः" इत्यनेन च तस्मात् श्रीभगवता तासां पुत्रतया निर्द्देशस्तु परिहासपर एव न तु दोषोद्धारपरः वाचः पेशैर्विमोहयन्नित्यत्र प्रहस्य सदयं गोपीरित्यत्र परिहासस्य स्फुटतरत्वं दृश्यते यत एव मातरः पितरः पुत्रा इत्यादिकं च कल्पनामयमेव जल्पितं परिहासं विना तु दोषोद्धारे "निन्दामि च पिबामि च" इतिन्यायेन तासां स्वीकारे परमवैरस्यमेव च स्यात् आस्तां तावत्तासां स्वयं दोषोद्धारः तादृशस्यालम्बनदोषस्यास्तित्वमात्रेऽपि परमरसव्याघातः स्यात् तथान्यत्रापि सत्नायके कविभिर्वर्णनीयत्वेन स्वीकृतेन सम्भवति किमुत परमपुरुषोत्तमे महाकविवर्गवर्णनीये लीलारसविशेषवर्षणार्थमवतीर्णे तस्मिन् वक्ष्यते च "भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्" इति "सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः" इति च तस्मात् एतयोप्यासां मायामात्रप्रतीताः पुत्राश्च गौणार्था इति श्लेषार्थश्चायं तत्तस्मात् बन्धुभ्यः साध्वसाभावात् वनशोभारतिसामग्रीसद्भावाच्च अचिरं शीघ्रं मा यात यदि यथा तदा विलम्बेन रात्र्यन्त एव यास्यथेत्यर्थः । चकारान्माशब्दस्याग्रेऽपि सर्वत्र सम्बन्धः पतीन् मा शुश्रूषध्वं सतीश्च साध्वीर्मा शुश्रूषध्वं न सेवध्वं तत्पदवीमपि न यातेत्यर्थः । स्वातन्त्र्यादिसुखभङ्गादिति नर्म्मैव वत्सा बालाश्च मा क्रन्दन्ति तस्मात् तान् मा पाययत मा दुह्यत इति च स्वातन्त्र्यं सूचितमिति ॥ २२ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अतोऽत्रागमनप्रयोजनं जातमिति व्रजं प्रति यात चिरं विलम्बं मा कार्ष्ट गत्वा किं विधेयं तत्राह—सतीः हे सख्यः ! विभक्तिव्यत्यय आर्षः पतिव्रतानामेवंविधमागमनमनुचितमिति साक्षेपं सम्बोधयति पतीन् शुश्रूषध्वं परिचरत । किञ्च, वत्साः गवां इति शेषः । बालाश्च क्रन्दन्ति क्रन्देयुरतस्तान्वत्सान् बालांश्च पाययत क्षीरमिति शेषः । दुह्यत गा इति शेषः तदर्थं गाः दुह्यतेत्यर्थः ॥ २२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अतो युष्मानपश्यन्तो बन्धवो भयमवाप्नुवन्ति यस्मात् तस्मात् सतीः सख्यः ॥ २२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं वनं वर्णयित्वा अत्यासक्तिमुत्पाद्य ततो गन्तव्यमित्याह—तद्यातेति । तत्तस्माद्वनं दृष्टमिति कार्यस्य सिद्धत्वात् यात एतादृशं वनमिति मायातेत्यपि ध्वनिः चिरं माविलम्बो न

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कर्त्तव्यः चिरं मा यातेति च न हि कश्चिद्भगवन्तं विहाय गोष्ठं गच्छति किञ्च, गोष्ठं यात तत्र गवां शुश्रूषणमपि भवति किञ्च, तत्र गतानां धर्मः सिध्यतीत्याह—शुश्रूषध्वमिति। पति-सेवा स्त्रीणां धर्मः तत्रापि भवत्यः सतीः सत्यः पतिविशेषणं वा पूर्वजन्मनि ताः पतिव्रताः स्त्रियः स्थिताः पुरुषभावनया पुरुषा जाताः भवन्तश्च पुरुषाः विपरीता जाता इति अग्रेऽपि वैपरीत्यं भविष्यन्तीति विचार्य गन्तव्यमिति भावः । धर्म-स्तत्र रसरूपत्वमेवेति पतीनिति बहुवचनात् धर्माभावश्च या भवतीनां मध्ये पतिव्रताः ता वागच्छन्त्विति सर्वासामेवातथात्वे न गन्तव्यमेवेति न हि पतिव्रताः समायान्ति लौकिकधर्मपरायणाः अतो भगवद्वाक्यं रसात्मत्वात् तदभावमेव सूचयति-किञ्च, वत्साः तथैव बद्धाः बालाश्च क्षुधिताः ते क्रन्दन्ति अतः तेषां रोदननिवृत्त्यर्थं तान् पाययत स्तनं दुह्यत च गाः परार्थं च भवतीनां जीवनं न स्वार्थम् अतो दुःखितानां स्थाने सुखाकाङ्क्षिभिर्न गन्तव्यमिति ॥ २२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्तस्मान्मा चिरं यात अपि तु शीघ्रमेव यातेत्यर्थः । सतीः पतिव्रता अपि शुश्रूषध्वं तद्धर्मग्रहणार्थं ता अपि भजनीया एवेति भावः । इति परोढा उक्ता कुमारीः प्राह—वत्सा गवां क्रन्दन्ति तान् दुह्यत दोहयत मुनिचरीः प्राह—बालाः क्रन्दन्ति तान् पाययत पक्षे तत्तस्माच्चिरं समस्तामपि रात्रिमभिव्याप्य मा यात मया सह रमध्वमिति भावः । पतीन् साध्वीश्च मा शुश्रूषध्वं विधात्रा दत्तस्यैतादृशसौन्दर्यस्य यौवनस्य च वैयर्थ्यप्रापणानौचित्यादिति भावः । एवं मा दोहयत मा पाययत मदनुरागिणीनां भवतीनां किं तैरिति भावः ॥ २२ ॥

———

विशुद्धरसदीपिका ।

तत्र प्रथमपक्षे तत्तस्माद्गोष्ठं यात चिरं मा त्वरितमेवेत्यर्थः ननु, व्रजकार्यं कृत्वैवागता नेदानीं किञ्चित्करणीयमतः शनैः शनैः यास्यामस्तत्राह-भवतु पतीन् शुश्रूषध्वं यतः सतीरिति ते ऽपि शुश्रूषितास्तत्राह-क्रन्दन्तीति । स्पष्टं पक्षे तत्तस्मात् "गोष्ठं गोस्थानकम्" इति कोशात्पशुप्रायावासे नागरीणां व्यवस्थितिरनुचितेति भावः । ननु, पतयस्तु सेव्यास्तत्राह पतीन् मा शुश्रूषध्वं बहुवचनश्लेषेण सतीनां बहुपतिसेवनमनुचितमित्युपहासः योगवृत्त्या पतीन् पालकानित्यर्थः । एवं च मात्रादीनामपि सङ्ग्रहः तर्हि वत्सबालादिपालनं तु कृपापात्रत्वादावश्यकं तत्राह-क्रन्दन्तीति । अत्र माशब्दस्य प्रतिपदमन्वयः ॥ २२ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

तर्हि किंकर्त्तव्यं तत्राह—तद्यात मेति । प्रथमपक्षे यतोऽत्र बहु स्थितिरनुचिता वनादिशोभादर्शनमपि सम्पन्नं तत्तस्माद्गोष्ठं यात यास्याम इति चेत्तत्राह—मा चिरं किं त्वरया तत्राह—पतीन् शुश्रूषध्वम् अत्र बहुवचनमुपहासेन । यद्वा, बहूनां प्रत्येकमेकपतित्वेऽपि बहुत्वाभिप्रायेण । यद्वा, योगवृत्त्या पालकानिति यतः सतीः सत्य इत्यर्थः । सतीनामिदमेवोचितं पतिसेवां संपाद्यागता इति चेत् ? तत्राह-क्रन्दन्तीति । वत्साः क्रन्दन्त्यतो दुह्यत बालाः भ्रातृपुत्राद्यः क्रन्दन्ति तान् गोदुग्धम् पाययत । यद्वा, बाला वत्सा इति समानाधिकरणं द्वितीयपक्षेतु तत्तस्मात् गोष्ठं गवां पशुमहतानां स्थानं गवामिन्द्रियाणां वा विहारात्मकगतिनिवृत्तिस्थलं नागरीणां रसविलासायोग्यं चिरं मा यात पतिशुश्रूषार्थं याम इति चेत्तत्राह-यतो यूयं सतीः सत्यः अतः पतीन् मा शुश्रूषध्वम् अयं भावः नश्वरपतिस्वीकारे प्रतिशरीरं पतिभेदे बहुपतित्वमापद्येत अविनाशिनो मम पतित्वे एव सतीत्वं वत्सबालाद्यर्थंगमनमाशङ्क्याह-वत्सा बालाश्च क्रन्दतीति । मा दुह्यत तान् मापाययत इति माशब्दस्य प्रत्येकमन्वयः । यद्वा, अस्मानन श्वरपतीनेवात्र शुश्रूषध्वं स्वमहत्त्वदृष्ट्या आविर्भावयितव्यबहुविग्रहाभिप्रायेण वा बहुवचनम् एक विग्रहस्यैव मम बहुत्वेन प्रतीतावप्येकत्वेनैव न सतीत्वक्षतिः । ननु, त्वमाप्तकाम इति किं तव शुश्रूषा स्यात् तत्राह-अन्यत्र तथात्वेऽपि अत्र स्नेहपथं न तथा किन्तु मम श्रीवत्सरूपावाला अपि भवतीनां विरहे श्रीहीना वत्सा बालाः सन्तः क्रन्दन्ति अतः स्वगवामिन्द्रियाणां रसं दुह्यत तेषु पूरयत तानपाययत तेषां भवदाश्लिष्ट तृषां निवर्त्तयतेति भावः ॥ २२ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो नाद्यापि भागवतोत्तमा तस्मात्तु जाता वर्त्तते तत्तदर्थं कमुपायमनुतिष्ठाम इति चिन्तयतीर्व्याकुलचित्ता अवलोक्याह—"वर्णाश्रमाचारवता पुरुषेण परःपुमान् । विष्णोराराध्यते पन्था नान्यस्तत्तोषकारणम्" इत्युक्तत्वात्स्वधर्माचरणमेव मत्तोषोपायो अतस्तत्रैवाऽभ्यास उचित इत्याशयेनाह-तद्यातेति । यस्मादत्राव-स्थानं निष्फलं तत्रागमनं च स्वधर्माचरणेन मत्तोषकर-त्वात्सफलं तत्तस्माद्गोष्ठं यात तत्राऽपि मा चिरं शुभ-कार्यं विलम्बो नोचित इति भावः । तत्र गत्वा पतीन् सेवध्वं यतो हे सत्यः ! पतिव्रतानां युष्माकमिदमेवाऽनुष्ठेयमिति भावः । यद्वा, सतीः पतिव्रताः इत्यद्याद्याः स्त्रीः सेवध्वं "संसर्गजा दोषगुणा भवन्ति" इतिन्यायात् गुणवतीनां सेवनेन भवत्योऽपि तथाविधाः भविष्यन्तीति भावः । ननु, स्वधर्माचरणस्य भवच्चरणाभिमुख्यमेव फलं तस्य जातत्वात्ततो-निवृत्तिरेवाऽधुना श्रेयसी "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते" इत्यादि शास्त्रा-दतस्त्वदाभिमुख्यमसहमानास्ते कथं सेवनीयास्ततस्तादृशं पातिव्रत्यमन्यदीक्षापायोऽद्यौर्मीराजिनीकृत्य दूरतस्त्यक्तमस्माभि-रित्याशङ्क्य दया सर्वभूतेष्विति दयाया महासाधनाङ्गत्वात्स्वा-त्वाऽऽवश्यमपेक्षितेत्याशयेनाह—क्रन्दन्तीति । अतस्तानात्यातुरं पाययत तदर्थं गाश्च दुह्यत अनभिज्ञापक्षे एवं व्याजेनो द्दीपयित्वा निषेधेनाऽत्यासक्तिमुत्पादयति-तद्विति । यद्यस्मादत्राऽवस्थाने फलं किञ्चिदपि नास्ति तत्तस्माद्गोष्ठं यात तत्रापि मा

अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशयाः ।
आगता ह्युपपन्नं वः प्रीयन्ते मयि जन्तवः ॥ २३ ॥
भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्वन्धूनां च कल्याण्यः! प्रजानां चाऽनुपोषणम् ॥ २४ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

चिरं यतः पतिशुश्रूषासमयो वर्त्तत इत्याशयेनाह—शुश्रूषध्व पतीन् यतो हे सत्यः! अतः क्षणमात्रमपि परपुरुषस्य मम पार्श्वेऽवस्थानं पतिव्रतानां युष्माकं नोचितमिति भावः । यद्वा, कथम्भूतान्पतीन्सतीः एते युष्मत्पतयः पूर्वजन्मनि पतिव्रताः स्त्रियः स्थिताः पुरुषभावनया पुरुषत्वं प्राप्ताः भवत्यस्तु पूर्वं पुरुषाः स्थिताः स्त्रीषु आसक्तचित्तत्वात्स्त्रीत्वं प्राप्ताः अतः पुनर्वैपरीत्यर्थं पतीन् शुश्रूषध्वमित्याशयः । किञ्च, करुणापि स्त्रीणां स्वाभाविकी भवति अतः करुणावतीनां युष्माकं बाला वत्साश्च क्रन्दन्तीत्यतो गत्वा तान् । पाययत दुह्यतेति मानिनीपक्षे यद्यस्माद्बन्धुभयं नास्ति वनशोभादिरूपा रमणसामग्री चैतादृशी तत्तस्माद्गोष्ठम् अचिरात् शीघ्रं मा यात किन्तु रासानन्तरं राज्यन्ते यास्यथेत्यर्थः।ननु, पतिशुश्रूषणादिबहुव्यापारस्योचितत्वादस्माकं चिरकालमवस्थानावकाश इति चेत्तत्राह–पतीन्माशुश्रूषध्वं सतीः श्वश्रुप्रमुखाश्च मा शुश्रूषध्वं सतीः पदवीं मम सेवध्वं।ननु, अस्माकं बाला वत्साश्च क्रन्दन्त्यऽतः कथमत्र स्थेयमित्याशङ्क्य चणं नेत्रे निमील्य सर्वेतयं ध्यात्वाऽऽह वत्सा बालाश्च माक्रन्दन्ति अहमत्र स्थित एव सिद्धकलयाजानामि ते सुखेन वर्त्तन्ते नत्वाऽऽक्रोशन्ति तस्मान्मा यात दासादिभिः पायितत्वान्मादुह्यत तैरेव दोहनस्यापिकृतत्वादित्यर्थः । निवृत्तिपक्षे यस्मान्निर्विशेषब्रह्मप्रतिपादनं न सत् तत्तस्मादाशु गोष्ठक्रियार्थकश्रुतिसमुदायं यात स्वसमुदायनिविष्टाभवति क्रियामेव प्रतिपादयन् तदुक्तम् "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति ब्रह्मणः परिनिष्ठितरूपत्वात्परिनिष्ठितवस्तुनि च प्रत्यक्षादीनामपि प्रवृत्तिसम्भवात्संवादे प्रामाण्यस्य दुर्लभत्वात्स्वसार्थक्याय क्रियामेव प्रतिपादयन्तीत्याशयः ननु, पौरुषेयवाक्यानि प्रमाणान्तरापेक्षत्वात्तत्संवादविसम्वादाभ्यां प्रामाण्यमप्रामाण्यं वा लभते अपौरुषेयाणां वेदवाक्यानां तु प्रामाण्यम् एवाधिगम्यविषयतया चक्षुरादिवदनपेक्षमेव प्रामाण्यमिति चेत् सत्यं तथा अपेक्ष्यप्रामाण्ययोरपि चक्षुःस्पर्शनयोरर्थे विसंवादाद्यथाऽन्यतरस्याप्रामाण्यं तथा अद्वैकत्व श्रुतीनामहं मनुष्य इत्यादिप्रत्यक्षस्य च परस्परव्याघातात् अन्यतरस्याऽप्रामाण्यं तस्मात्तत्रैव स्थित्वा पतीनिन्द्रचन्द्रादिरूपान् तत्तत्कर्मप्रतिपादनेन शुश्रूषध्वं यतो हे सत्यः! स्वाध्यायविध्युपात्तत्वादप्रामाण्यशङ्काकलङ्कायोग्याः । किञ्च । सर्वमिथ्यात्वसिद्धान्तमाकर्ण्य ॥ वत्सबालस्थानीयाः कर्माधिकारिणः सर्वेऽपि क्रन्दन्ति अतस्तान्पाययत दुह्यत तत्तत्कर्मफलं सत्यमिति प्रतिपादनेन तत्सन्तोषं सम्पादयतेत्यर्थः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्तस्मात् गोष्ठं व्रजं यात सतीः स्वानुकूलाः पतयः परीचन्ते इति शेषः । अतस्तान् शुश्रूषध्वं परिचरतेत्यर्थः ॥ २२ ॥

भाषा टीका ।

श्रीकृष्णचन्द्र बोले, कि–हे गोपीओ! जो तुम वन देख चुकी तो अब व्रज को जाओ अब तुम ढील मत करो, तुम तो बडी सतीहो, तुमको पराये पुरुष की ओर नहीं देखनो चाहिये अब जायकें तुम अपने पतीन की सेवा करो, देखो तुम गायन को दुहाय के नहीं आई हो, तासूं तुम्हारी गऊन के बछरा रह्यावत होयगें और तुम्हारे बालक प्यारे रोवत होयगे सो अब जाय के उन बालकन कूं दूध पिवाओ और गऊन कों दुहाओ ॥ दूसरो अर्थ यह कि—हे परम सुन्दरीओ! अब तुम सब कुटुम्बकेन कूं छोडकें मेरे सन्मुख आई हो तस्मात् चिरं अर्थात् सम्पूर्ण रात भर मत जाओ और उन प्राकृत पतीन की शुश्रूषा मत करो विधाता ने तुम को दियो जो ये सौन्दर्य और ये यौवन ताकों व्यर्थ गमाय वो उचित नहीं है, तासों बछरा बालक जो खिलावें तौ भलेहं खिलामनदेव अब जब तुम मेरे विषें अनुरागवारी हो तब उनसों तुमकों कहा प्रयोजन है ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

संरम्भक्षुभितदृष्टीः प्रत्याह–अथवेति। यन्त्रिता आशयाः वशीकृतचित्ताः उपपन्नं युक्तं प्रीयन्ते प्रीता भवन्ति ॥ २३ ॥

दृष्टादृष्टभयप्रदर्शनेन निवर्त्तयति—भर्त्तुरित्यादिश्लोक त्रयेण ॥ २४ ॥ २५ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मयि योऽभिस्नेहः प्रीतिविशेषः तस्मादिति मधुरप्रेमाख्यः पुंस्त्रीभावविशेषो निरस्तः अत एव सौदास्यमाह–हि यतः सर्वेऽपि प्राणिनो मयि प्रीतिं कुर्वन्तीति मदभिस्नेहादिति साक्षादुक्त्या तमपि श्लथयति–अत एव गौरवेण भवत्य इति । यद्वा, ननु, प्रियम्वदप्रवर! तर्ह्यस्माकमभीष्टं सम्पाद्यतां तत्राह—प्रीतिमेव कुर्वन्तीति प्रीतेर्भक्तिविशेषत्वादङ्गसङ्गकर्मणामिति भावः । अन्यत्तैर्व्याञ्जितम् अहो बत परित्यक्ता एव ते सर्वे तत् किं पुनस्तद्ग्रामग्रहणेनेत्याशङ्क्य सश्लाघं पक्षान्तरमाह–अथवेति। अर्थस्तथैव । यद्वा, ममापि युष्मास्वभिस्नेहस्तस्मात् तेनेत्यर्थः। अकारप्रश्लेषणः अयन्त्रिताशयाः परमसाध्वीत्वात् । यद्वा, मद्विषय-

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

कामिस्नेहेन यन्त्रिताशयाः पातिव्रत्येन परपुरुषस्नेहविशेषा-ऽयोगात् एवमुभयथा भावविशेषो निरस्तः तथाप्यागता यत् अन्यत्सम्मानं वस्तुतस्त्वेवमौदासीन्यं चातुर्यभाग्याभावविवर्द्धनार्थमेव श्लेषार्थश्चायम् अहो परमानुरक्ताश्चपि भवतीषु किमुद्दीपनगर्भैः प्रार्थनैरित्याह—अथवेति । अभिशब्देन स्नेहस्य सम्यक्त्वोक्त्या मधुरप्रेमैव लक्ष्यते सामान्यतः सर्वेऽपि प्राणिनो मम प्रीयन्ते यतः अतः सर्वोत्तमव्रजसुन्दर्यो भवत्यो मदभिस्नेहाद्यन्त्रिताशया वशीकृतचित्ताः सत्यः किं वा पत्यादिभयेन स्वच्छन्दा अपि मदभिस्नेहाद्धेतोरागता यत् तदुपपन्नमेव सर्वतोऽपि विशिष्टमद्विषयकप्रीतिमत्त्वात् अत एव प्रेमादरेण भवत्य इति अतोऽधुना मया सह स्वच्छन्दं रमध्वमिति भावः ॥२३॥

शुश्रूषणं धर्मः स च अमायया शुद्धभावेन धर्मैकापेक्षया वा चेत् पर उत्कृष्टः हि निश्चितं तद्बन्धूनां श्वश्रूश्वशुरादीनां च शुश्रूषणं तथा प्रजानां पुत्रभृत्यादीनाम् अनुपत्यादिशुश्रूषानन्तरं पोषणं च धर्म एव अमायया चेत् पर एव चकाराभ्यां द्वयोरपि मुख्यतया साम्यमपि सूच्यते कल्याण्यः! हे साध्व्यः! तदेव युष्माकमुचितमिति भावः । यद्वा, हे शुभाद्रवत्यः अतो युष्माकमेव तत् सिद्ध्यतीति भावः । एतच्च कैतवेन प्रोत्साहनं । यद्वा, जन्तवः प्रीयन्ते नाम किं वा आगता मत्सुखमेव किं तु परमधर्ममेवाहं लभ्येयं न त्वन्यथेति तमेव शिक्षामुद्रया बोधयन्नाह—भर्तुरिति । अर्थः स एव वस्तुतश्चर्थ्योपहास एव तस्य परमधर्मत्वाभावात् द्वितीयपक्षेऽपि नर्मैव तुच्छीकृतचतुर्वर्गश्रवणादिभक्तिसाध्यप्रेमैकलभ्यस्य तस्य पतिशुश्रूषणाद्यधर्मेणालभ्यत्वात् अतस्तस्य धर्मस्य परत्वोक्तिरपि नर्मत एवेति अत एवोक्तं गीतादौ "सर्वधर्मान्परित्यज्य" इत्यादि । श्लेषार्थश्चायं कल्याण्यः हे महाभाग्यभाजः ! न केवलं भर्तुः तद्बन्धूनां मद्विधानां च शुश्रूषणमभीष्टपूरणरूप परो धर्मः । यद्वा, वृष्ट्यादिभ्यो गोष्ठादिरक्षणात्साक्षादहमेवात्रत्यानां सर्वेषां भर्ता तस्य किं वक्तव्यं भर्त्तुर्मम शुश्रूषणमिति मद्बन्धूनां श्रीव्रजेन्द्रबलदेवादीनां च तत् शुश्रूषणं तथा प्रजानां मत्परिजनानां सुबलादीनां श्रीव्रजेन्द्रगृहवासानां च अनुपोषणमपि परो धर्मः अतः शुद्धभावेन मम सेवा क्रियतामिति भावः । किञ्च, श्रीभगवतो रसोपयुक्तेऽर्थे प्रयुक्तामपि वाचं वहवो अर्था अनुवर्त्तन्ते तत्रैश्वर्यरूपोयमर्थः । स्त्रीणाम् अन्यासां प्राकृतयोषितामेव धर्मः न तु सर्वस्त्रीवर्गवरिष्ठानां लक्ष्मीप्रार्थ्यसौभाग्यानां युष्माकं भक्तौ प्रवृत्तानामपि धर्मानादरात् तथोक्तम् "त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेः" इत्यादिना एतत्तु हरिभक्तिविलासे एकान्तिवाचणादौ बहुशो विवृतमेवास्ति । यद्वा, भर्त्तुर्जगद्भर्त्तुर्मम । यद्वा, धर्मरहस्यसारसर्वस्वं शृणुतेति पारमार्थ्यमेव नर्मणैवाह—भर्त्तुरिति त्रिभिः । व्रजस्त्रीणां, युष्माकं भर्त्तुः शुश्रूषणम् अधर्मः पापम् अमायया तु परोऽधर्मः महापापमेव भक्तिपराणां श्रवणादिभक्तिरूपस्वधर्मपरित्यागेन पतिसेवादिपरधर्मे प्रवृत्त्या महानर्थोत्पत्तेः तथाचोक्तं गीतासु "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इति यद्वा, अकारो विष्णुरहमेव तस्मिन्मयि मायया भक्त्यादित्यागेन वञ्चनया यत् भर्त्तुः शुश्रूषणमिति भगवद्भक्तिहीनानां सर्वकर्मणो वैफल्याद्वैपरीत्याच्च तथा चोक्तं वृहन्नारदीये—

'किं वेदैः किमु शास्त्रैर्वा किं वा तीर्थनिषेवणैः ।
विष्णुभक्तिविहीनानां किं तपोभिः किमध्वरैः" ॥

स्कान्दे च रेवाखंडे—

"धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ! ।
पापं भवति धर्मोऽपि तवाभक्तैः कृतो हरेः" ॥ इति ।

एतच्च भक्तिविलासे वैष्णवमाहात्म्यादौ व्यक्तमेव ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ सरम्भक्षुभितहर्षास्ता निवर्त्तयितुमिव जन्तुमात्रसाधारणतानिर्द्देशेनातिक्षोभयन्नाह—अथवेति । पक्षान्तरमिदं हृष्टं वनमित्यादि निरसनापेक्षया मयि योऽभिस्नेहः प्रीतिसामान्यातिशयः तस्मादिति स्त्र्याख्यः पुंस्त्रीभावविशेषो न गृहीतः विशेषणाभावात् अत एव सहौदास्यमाह—हि यतः सर्वेऽपि प्राणिनो मयि प्रीतिं कुर्वन्तीति मदभिस्नेहादिति साक्षादुक्त्या तमपि शिथिलयति—अत एव गौरवेण भवत्य इति अन्यत्तैः यद्वा, अहो यत परित्यक्ता एव ते सर्वे तत् किं पुनस्तन्नामग्रहणेनेत्याशङ्क्य सश्लाघं पक्षान्तरमाह—अथवेति । अर्थतस्तथैव वस्तुतस्त्वेवमौदासीन्यं चातुर्यभङ्ग्याभावविवर्द्धनार्थमेवेति श्लेषार्थश्चायम् एवं यद्यप्यन्यप्रयोजनागतास्तथापि मत्प्रार्थनया कियन्त क्षणमत्र विश्राम्यतेत्येवमुक्त्वा पक्षान्तरमाह—अथवेति । अभिशब्देन स्नेहस्य सम्यक्त्वोक्त्या रत्याख्यभाव एव सूच्यते ततश्च यदि वा मदभिस्नेहादागतास्तर्हि तदेतत् उपपन्नं युक्तमेवेत्यर्थः । तत्र हेतुः जन्तवः प्राणिमात्राण्यपि मम मत्सम्बन्धे प्रीयन्ते मयि प्रीताः भवन्तीत्यर्थः । ततस्तादृशभाववतीनां वा भवतीनां का वार्त्तेति भावः । अत एव प्रेमादरेण भवत्य इति अतोऽधुना मया सह स्वच्छन्दं रमध्वमिति भाव इति ॥ २३ ॥

ननु, यद्यस्माकं भवदभिस्नेहो निश्चितस्तदा भवच्छुश्रूषापि युक्तेत्याशङ्क्य धर्मशास्त्रेण भावयति—भर्त्तुरिति त्रिभिः । भर्त्रादीनामेव शुश्रूषणादिकं धर्मः ननु तदितरेषामस्माकं स चान्यधर्मापेक्षया परः । ननु, तदप्यस्माभिर्यथा युक्तं क्रियत एव तत्राह—अमाययेति । परपुरुषस्य मम भजने तत्तु सकपटमेव स्यात् ततः सोऽपि दुष्येदिति भावः । कल्याण्यो हे साध्व्यः ! तदेव युष्माकमुचितमिति भावः । एतच्च कैतवेन प्रोत्साहनं वस्तु तच्चोपहास एव तस्य परमधर्मत्वाभावात्—

"एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः" ॥

इति श्रीधर्मराजवाक्यादिति श्लेषार्थश्चायं न केवलमभिस्नेहहेतोरेवोपपन्नत्वम् अपि तु धर्महेतोरपीत्याह—भर्त्तुरिति । अमायया कन्याभिर्निजसद्भावयुतत्वेनैव न तु वलादापादितत्वेन यो भर्त्ता तस्यैव शुश्रूषणं परो धर्मः तथा तद्बन्धूनाञ्चेत्यादि अन्यत्र परमधर्मविदां श्रीभीष्मेणाम्बायाः परित्यागाद्धर्मतो भर्त्तृत्वासिद्धेः तदेवं सद्भावायुतत्वेन ते मायया कपटेनैव भर्त्तारः सद्भावयुतत्वेन त्वहमेव सत्यभर्त्ता भवतीभिः शुश्रूषणीय इत्यर्थः । अत्र तु वाक्यमारभ्य भवतीनां हृदयमेव मम साक्षीति भावः । वस्तुतस्तु स एव पक्षार्थः स्थापयिष्यते ॥ २४ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु त्वयि स्नेहाद्वयमागताः अतः कथमेवं वक्तुमर्हसीत्यत्राह—अथवेति। मयि प्रेमप्रकर्षाद्वशीकृतचित्ता यदि यूयमागतास्तर्हीदमागमनमुपपन्नं युक्तमेव कुतः हि यस्माज्जन्तवो मयि प्रीयन्ते मयि प्रीतियुक्ता भवन्ति सर्वान्तर्यामिणि सर्वसुहृदि मयि सर्वजन्तुसाधारणं प्रीतिमात्रं भवतीनामप्यविरुद्धम् ॥ २३ ॥

न केवलं त्वदभिस्नेहमात्रादागताः किन्तु त्वया सह रन्तुमिच्छयेत्यत्र दृष्टादृष्टभयप्रदर्शनेन प्रत्याचष्टे—भर्तुरिति त्रिभिः। यदमायया निष्कापट्येन भर्तुः शुश्रूषणं परिचरणं तदेव स्त्रीणां परो माया यस्मात्तथाविधः धर्मः तथा हे कल्याण्यः तस्य भर्तुर्बन्धूनां पितृभ्रात्रादीनां प्रजानां स्वापत्यानां च यथार्हं शुश्रूषणं च परमो धर्मः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्नेहागमनकारणमित्ययुक्तमुक्तम् रागमूलत्वादप्रवृत्तेरिति तत्राह-अथवेति। मदभिस्नेहान्मदधिकरणस्नेहात् यन्त्रिताशयाः बद्धान्तःकरणाः नियमिताभिप्राया वा हि यस्मात्तस्मादागमनमुपपन्नं तत्कथमत्राह-प्रीयन्त इति। मम प्रीयमाणस्य सतः सर्वेऽपि प्रीणन्ति न चेत् तदेत्यन्वयव्यतिरेकाभ्यां प्रमितत्वात् ॥ २३ ॥

किञ्च, अन्यदेकं शास्त्रविहितं वदामीत्याशयेनाह—भर्तुरिति। स्त्रीणाममायया अवञ्चनया भर्तुः पत्युः शुश्रूषणं धर्मो हि लोकवेदसिद्धः भर्तरि सन्निहितो नारायण इति बुद्ध्या शुश्रूषणं परो धर्मो हि यस्मात्तस्मात्तस्य भर्तुः बन्धूनां कल्याणं च श्रेय इति च न केवलं तद्बन्धूनां श्रेयः अपि तु प्रजानां सन्ततिलक्षणानां चानुपोषणं समृद्धिकरणं च भवतीत्यर्थः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

किम्वा प्रार्थनापक्षे भर्तुरिति समासवशात् अभिव्यक्तार्थेनैव यो भर्त्ता तस्य कौमारमारभ्य भवतीनां मय्येव ननु तत्कान्तभावः इति मिथ्यैव भर्तुरित्यर्थः। कन्या चैमत्येन बलात् पतित्वाभवात् परमधर्मविदा श्रीभीष्मे याम्बायाः परित्यागाद्वति भावः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनर्व्रजं यातेत्यस्यैवानुकूलं वदति-अथवेत्यादि। न वनादिदिदृक्षया समागता स्मः त्वद्दर्शनार्थमेवागता स्म इति चेत् तदुपपन्नमेव मदभिस्नेहयन्त्रितत्वं हि साधूनामेव यतः प्रीयन्ते मयि जन्तवः प्राणिमात्रमेव मयि प्रीयन्ते किं पुनर्भवत्यः तन्मद्दर्शनं तूपपन्नमेव सम्प्रति घोषं यातेत्यर्थः। पक्षान्तरे भवत्यो मदभिस्नेहात् यन्त्रिताशया इति जानीमः तेन आगताश्च अतोऽतः परं यदुचितं तदुपपन्नं भविष्यत्येव यतः मयि जन्तवः प्रीयन्ते प्रीता एव भवन्ति तद्यूयम् अप्रीता भविष्यथ तत्किमिति मा घोषं यातेत्यर्थः ॥ २३ ॥

पुनस्तद्यात माचिरं घोषमिति यदुक्तं तदनुकूलं वक्ति भर्त्तुरित्यादिसुगमं पक्षे भर्त्तुर्ममेत्यर्थः। एकवचनप्रयोगात् अमायया अकैतवेन हि निश्चितं हे कल्याण्यः। तस्य मम बन्धूनां मत्सुहृदां प्रजानां मत्कृतजन्मनाम् अनुपोषणम् अन्योन्यपरिपालनं च धर्मः परमः मच्छुश्रूषणम् अन्योन्यप्रीतिश्चेति द्वयं परमो धर्म इति वाक्यार्थः तेनान्योन्यसौहार्दपुरस्सरं मच्छुश्रूषणमेव कुरुतेति भावार्थः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुक्ते याः स्निग्धदृष्टयो जाताः ताः प्रत्याह-अथवेति। मया वृथैवैते पक्षाः कल्पिताः वस्तुतस्तु मां द्रष्टुमेवागताः स्नेहात् सिद्धान्तोऽयं पूर्वपक्षार्थमनूद्यते निरुक्तो भावो गुणात्मको दोषात्मको वा न फलं प्रयच्छति लौकिको भवति अतः अनूद्यन्ते मयि योऽयमभितः स्नेहः सर्वभावेन तेन कृत्वा यन्त्रित आशयो यासां ता इत्यश्चेद्भवत्यः इहागताः तदुपपन्नमेव तर्हि को विलम्ब इति चेत्तत्राह "प्रीयन्ते मम जन्तवः" इति मम सम्बन्धिनः सर्व एव जन्तवः स्वयमेव प्रीता भवन्ति न तु मया किञ्चित् कर्त्तव्यं स्नेह एव मयि न तु कृतिरिति ततः साधारणमिममर्थं ज्ञात्वा प्रतियात स्थितिपक्षे तु स्पष्ट एवार्थः यद्यातमेति फलिष्यति न हि स्नेहादागतः प्रेर्यमाणोऽपि गच्छति यन्त्रितो वशीकृतः अन्तःकरणे अन्याधीने जाते न किञ्चिदवशिष्यते निष्कपटा च प्रीतिः कर्त्तव्येत्युभयत्र भावः ॥ २३ ॥

एवं राजसीर्निरूप्य सात्त्विकीर्निरूपयति-सत्त्वयुक्ताः निरूप्यन्ते ततो रजोयुक्ताः स्त्रीणां मुख्यो धर्मः भर्तृशुश्रूषणमित्याह-भर्त्तुरिति। स्वभावतो जीवानां भगवानेव भर्त्ता तत्रापि स्त्रीणां स्त्रीशरीरं प्राप्तानां व्यभिचाराभावाय भगवानेव सेव्यः लौकिके तु परिग्रहात् भर्तृत्वेनाभिमतः सेव्यः स एव परो धर्मः तत्राप्यमायया कापट्ये तु न सेवायां फलम् अन्ये सर्वे धर्मा अवरा तद्बन्धूनां श्वशुरादीनां कल्याण्य इति सम्बोधनात् भवतीनां सर्वे सन्तीति ज्ञापितं प्रजानां च पुत्रादीनामनुपोषणम् अन्नादिदानेन स्तनादिदानेन च पित्रादिभिः पोष्यमाणानां स्वतोऽपि पोषणं वा ॥ २४ ॥

---

### श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथवेति हन्त मया वृथैवैतान्यागमकारणानि कल्पितान्यधुनैव कारणमवगतमित्याह—मयि योऽभिसर्वतोभावेन स्नेहस्तस्मात् यन्त्रिताशयाः वशीकृतचित्ताः अत एवागतास्तदुपपन्नं मद्दर्शनलाभात् सिद्धं यतो मयि जन्तवः प्राणिमात्राणि प्रीयन्त इत्यौत्पत्तिकं मे सौभाग्यं न त्वौपाधिकमिति भावः। तेन भवत्यो मयि प्रीतिसामान्यवत्य एव ननु कामोपाधिकप्रीतिविशेषवत्य इति ध्वनितम् पक्षे मदभिस्नेहः कान्तभावमयः प्रेमा तस्माद्धेतोर्यन्त्रीकृत आशयो याभिस्ताः भवतीनां मनसा यन्त्रेणैवाहृ—माकृष्टो वर्त्ते इत्यर्थः। तत् आगमनमुपपन्नमुचितमेव नतूपपत्तिराहितमित्यर्थः। मयि जन्तवोऽपि प्रीयन्ते किमुत भावयत्यो भवत्य इति भावः ॥ २३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, भवदभिस्नेहवत्यो वयं भवामेति चेज्जानासि तर्हि तद्यात गोष्ठमिति मुहुः किं ब्रवीषि नहि स्नेहाश्रयो जनः स्नेहविषयं जनं त्यक्तुं शक्नुयात् सत्यं येन धर्मः सिद्ध्येत् तदेव स्नेहवतापि(व्रज)जनेन कर्त्तव्यमिति शास्त्रमत एतद्ब्रवीमीत्याह—भर्त्तुरिति । परः उत्कृष्टः अमाययेति ननु पुंश्चलीत्वे सतीत्यर्थः तद्बन्धूनां श्वश्र्वादीनां पक्षे स्त्रीणां प्रस्तुतत्वात् स्त्रीविशेषाणां व्रजसुन्दरीणां भवतीनामित्यर्थः । भर्त्तुः शुश्रूषणं परो धर्मः न त्वात्मीयः अतः स नानुष्ठेय इति भावः यदुक्तम्—

विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥

मम विष्णुत्वाद्भवतीनां च वैष्णवीत्वान्मद्भजनमेव भवतीनां स्वधर्मोऽयस्तु परधर्म एव "धर्मान् सन्त्यज्य यः सर्वान् मां भजेत्स च सत्तमः" इति धर्मान्तरत्यागपूर्वकस्य मद्भजनस्य विधिरिति भावः ॥ २४ ॥

---

### विशुद्धरसदीपिका ।

इत्थमाकस्मिकागमनाभिप्रायेण प्रत्याख्याता अप्यायान्तीः संरम्भक्षुभितहृष्टीः साधारणप्रीत्याश्रयनिर्देशेनातिक्षोभयन्नाह—अथवेति । मदभिस्नेहात् प्रीतिसामान्यातिशयात् यन्त्रिताशयाः वशीकृतचित्ताः सत्यः आगता इति चेदुपपन्नमेव युष्मासु यतो मयि विषये जन्तवोऽपि श्रीवृन्दावनगताः स्थिरचराः सर्वेऽपि प्रीयन्त इत्यर्थः । पक्षे अभिस्नेहात् अभितः स्नेहात् यतो मयि प्रीतिसामान्यं तु जन्तुमात्रमपि करोतीत्यर्थः । तत्र भवत्यस्तु मम प्राणप्रियायाः प्राणसख्यः सर्वदा मयि परमप्रीतिमत्यः ततश्चात्रावस्थानेन रासाद्यनुष्ठानेन विशिष्टामेव प्रीतिं कर्त्तुमर्हथेत्यर्थः ॥ २३ ॥

प्रथमे पक्षे ननु, प्रीत्यतिशयादेव वयं न याम इत्याशङ्क्य दृष्टादृष्टभयं दर्शयन्नाह—भर्त्तुरिति, त्रिभिः । तत्र भर्त्तुरिति स्पष्टम् ॥ २४ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

प्रथमपक्षे नास्माकं पत्यादिना वनशोभया वा कृत्यं किन्तु त्वत्स्नेहादागताः किमेवमुच्यते तत्राह—अथवेति । मया तु भवदागमनं वनशोभार्थमेव ज्ञातम् अथवेति अर्थान्तरे मदभिस्नेहादेव यन्त्रिताशया भवत्य आगता यतो न केवलं भवत्य एव प्रीयन्ते मयि सर्वेऽपि जन्तवः प्रीयन्ते तदपि मद्दर्शनमुपपन्नं नाधुना विलम्ब उचित इति भावः । द्वितीयपक्षे तु किं बहुप्रार्थनया त्वदर्थमेव वयमागतास्तत्राह—अथवेति । मदभिस्नेहाद्यन्त्रिताशया भवत्य आगतास्तत्तु उपपन्नमेव यदा मत्स्नेहाविषया जन्तवोपि मयि प्रीयन्ते तदा मत्प्राणप्रियाणां भवतीनां तु तत्प्रेमोपपन्नमेव योग्यमेवेति भावः ॥ २३ ॥

प्रथमपक्षे वयं त्वां त्यक्तुं न शक्नुमः कथं याम इत्यपेक्षायां धर्मोपदेशमाह—भर्त्तुरिति । नन्वन्यान् धर्मान् करिष्यामः तत्राह—स्त्रीणामिदं भर्तृसेवनमेव परो धर्म इति न तत्सदृशोऽन्यो धर्मः शुश्रूषणं कर्त्तव्यमागतास्तत्राह—अमाययेति । निष्कपटसेवोचिता ननु सेवया वञ्चयित्वान्यत्र गमनम् अन्यत्स्पष्टम् द्वितीयपक्षे तु मयि प्रेमाचरणमुपपन्नमित्युक्तमेवोपपादयति—भर्त्तुरिति । यतोऽमायया भर्त्तुः शुश्रूषणं तद्बन्धूनां प्रजानामनुपोषणं च स्त्रीणां परो धर्मः अतो परमार्थभर्त्तुर्मम सेवनं मदङ्गरसदानमेवोचितमिति भावः ॥ २४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एतच्छ्रुत्वाऽत्यन्त खिन्नचित्ता आलक्ष्याह—नास्ति भवतीनां वनशोभेक्षणेच्छा नापि मदपेक्षयाऽधिकं पुत्रादौ स्नेहोऽतो मद्दर्शनार्थमत्र समागता इत्याह—अथवेति । मयि यः स्नेहस्तेन यन्त्रिताशयाः वशीकृतचित्ताः सत्यो मद्दर्शनार्थं यूयमागता इति स्यात् तदेतदुपपन्नमुपपत्तियुक्तं न तत्र पक्षः हि यतः सर्वेऽपि जन्तवो मयि प्रीयन्ते प्रीता भवन्ति । यद्वा, उपपन्नं सिद्धं यतो मयि दृष्टे जन्तवः प्रीयन्ते अतो भवत्यो मद्दर्शनेन प्रसन्नाः सत्यः गच्छतेति भावः । अनभिज्ञापक्षे एवं श्रुत्वा संरम्भक्षुभितहृष्टीरालक्ष्य ततोऽप्यधिकक्षोभमुत्पादयति, अथवेति । वनादिकं द्रष्टुं नागतास्ते पक्षा वृथैव मया कल्पिताः भवत्यस्तु मयि योऽभितः स्नेहः स्वाभाविकी प्रीतिः न तु कामाद्युपाधिका तेन यन्त्रिताशयाः आगतास्तदुपपन्नम् अथवेत्य पक्ष उपपन्नो हि यतः सर्वेऽपि प्राणिनो मयि प्रीयन्ते तथा च सामान्यप्रीत्यतिशयवत्यो मद्दर्शनार्थं समागतास्तस्यापि जातत्वाद्गन्तव्यमिति भावः । अथवा यतो मयि जन्तवः प्रीयन्ते अतो मत्स्नेहाद्भवत्योऽपि यन्त्रिताशयाः तदेतदुपपन्नं यत आगताः मानिनीपक्षे पूर्वं यद्यपि प्रयोजनान्तरार्थमागताः भवत्यस्तथापि मन्मनोरथपूर्त्यर्थमत्र तिष्ठतेत्युक्तमिदानीं भवतीनां मयि स्नेहातिशयो वर्त्तते इति चिरकालाग्मया बुद्धतेऽतः किमर्थं ते तिरोधानं क्रियत इत्याशयेनाह—अथवा मदभिस्नेहाद्भवत्यो यन्त्रिताशया यत आगता भवत्यस्तु योग्या एव मयि तु सर्वेऽपि जन्तवः प्रीयन्तेऽतो मत्स्नेहाकृष्टचेतसामत्रागमनमुपपन्नं वस्तुयोग्यं जातमतोऽत्र स्थित्वा तत्फलं सम्पाद्यमिति भावः । निवृत्तिपक्षे पूर्वं श्रुतीनां समस्तानां क्रियापरत्वमुक्तं तत्र ब्रह्मप्रतिपादकश्रुतीनां क्रियापरत्वासम्भवादानर्थक्याद्धुङ्कारादिवज्जपमात्रोपयोगित्वं वास्त्विति सूचितमिदानीमध्ययनविध्युपात्तानां वेदान्तानामानर्थक्यायोग्यं प्रतीयमानार्थस्य प्रत्याख्यानाऽसम्भवं चाभिप्रेत्यानुवा कर्मापेक्षितकर्त्तव्यस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वमुपनिषदामिति पक्षान्तरमाह—अथवा मयि अस्मत्प्रत्ययगोचर आत्मनि अभिस्नेहात्प्रतिपादनपरत्वात् यन्त्रिताशया आनर्थक्यं जपोपयोगित्वं वा गमयितुमशक्यास्तर्हि उपपन्नं कर्मणा सम्बद्धं कर्तृदेवतादिरूपमात्मानमागतास्तत्स्वरूपप्रकाशने सक्ता एवं रीत्या प्रतिपाद्यमाने मयि आत्मनि सति जन्तवः सर्वेऽपि लोकाः प्रसन्ना भवन्तीत्यर्थः ॥ २३ ॥

यद्यपि भवत्यो मयि स्नेहातिशयवत्यो मद्दर्शनार्थमत्रागता इत्यहं जानामि तथापि श्रुतिस्मृतिबोधितस्वधर्मत्यागो ममानिष्ट-

**दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।**
**पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥ २५ ॥**

श्रीधनपतिसूरिकृतगूढभागवतगूढार्थदीपिका ।

इत्याशयेनाह—भर्तुरिति । भर्तुः शुश्रूषणं स्त्रीणां पर उत्कृष्टो धर्मः स्त्रीणामिति विशेषणेन—

"एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥"

इत्यादिशास्त्रात्पुरुषाणां साक्षाद्भजनमभिहितं स्त्रीणां तु स्वपतिरूपस्य ममाराधनोक्तम्—

"नैव यज्ञक्रिया काचिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युत ॥"

इत्यादिशास्त्रात् तत्रापि अमायया कपटराहित्येन तस्य बन्धूनां तस्य श्वश्वादीनां च शुश्रूषा प्रजानां पुत्रादीनां चानुपोषणं स्तनादिदानेन पित्रादिभिः पोष्यमाणानां तदनु स्वे पोषणमिति वा हिशब्दो यथोक्तधर्मस्य लोकवेदप्रसिद्धिं द्योतयति—

"श्रुतिस्मृती ममैवाज्ञे यस्तामुल्लङ्घ्य प्रवर्तते ।
आज्ञाभङ्गी मम द्वेषी मद्भक्तो हि न वैष्णवः ॥" इत्यादि

अनभिज्ञापक्षे ननु, मत्स्नेहाकृष्टमानसाः मदर्थमागता इति यदि जानासि तर्हि प्रतियात व्रज तद्यातेति किमिति निष्ठुरं ब्रवीषि न हि परस्परस्निग्धानामियं रीतिरित्याशयवतीरालोक्याह, "पापान्निवारयति योजयते हिताय" इति मित्रलक्षणेऽभिहितत्वाल्लोकद्वयहितार्थमिदं मदीयं वाक्यमतिकोमलमित्याशयेनाह, भर्तुरिति । एतेन त्वयि स्निग्धत्वात्त्वच्छुश्रूषणमधुना कर्तुं प्रवृत्ताभिर्भवतापि तदनुमोदनं कर्तव्यमिति शङ्कापि निरस्ता यथायोग्यस्नेहस्य शुश्रूषणस्य च युक्तत्वात् तथा भर्तरि कर्तव्यं स्नेहादिकमन्यत्र न कार्यमतो मय्यपि यथा जन्तवः प्रीयन्ते तथा प्रीतिः कर्तव्येति भावः । मानिनीपक्षे न चात्र धर्मः शङ्कामहमेव युष्मद्भर्तृत्वेन मत्सेवनस्य परमधर्मत्वादित्याशयेनाह-अमायया भर्तुः बालभावादारभ्य निष्कपटतया भर्तृत्वेन वृतस्य मम शुश्रूषणं परो धर्मः न तु बन्धुभिर्बलात्कारेणापादितस्य भीष्मेणाम्बायाः परित्यागेन बलापादितस्य धर्मतो भर्तृत्वाभिसन्धानाय तस्मात्कपटागतभर्तुस्तद्बन्ध्वादि सेवादिकं विहाय मम मद्बन्ध्वादि सेवनादिकमेव भवतीनां धर्मतोऽपि प्राप्तत्वादात्मद्धर्मकामित्यर्थः एवं कृते नास्ति कदाप्यकल्याणमिति सम्बोधनाशयः निवृत्तिपक्षे तस्माद्भर्तुः स्तवनीयस्य प्रतिपाद्यार्थस्य सेवनं तत्परत्वमेव स्त्रीरूपाणामापन्नानां श्रुतीनां धर्मः शक्त्यादिलक्षणाः ननु, तात्पर्येणान्यपरत्वेऽपि स्वार्थपरता न हीयत इति चेत्तत्राह—अमाययेति । यत्परः शब्दः स शब्दार्थ इति न्यायात् तथा च निर्व्याजेन स्वार्थपरत्वं परमो धर्मः उभयपरत्वे वाक्यभेदापेक्षपरत्वमावश्यकं सम्भवति स्वार्थपरत्वेऽन्यपरता न न्याय्येति भावः । क्वचिदकल्याणसम्भवे तद्बन्धूनां शक्यार्थसम्बन्धिनां सेवाप्रतिपादनमपि धर्मः प्रजानां तत्स्थानीयानां मतानां विद्वद्भावितर्कैः पुष्टानामनुपोषणं तत्रैव प्रमाणतयोपदिश्यत तथा पुनरनिपुणत्वसम्पादनं च यतो हे कल्याण्यः ! कृत्यप्रवृत्तिनिवृत्तिबोधनपरा शास्त्ररूपाः अन्यथा शास्त्रपदप्रतिपाद्यत्वमेव भवतीनां न स्यात् प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा पुंसा येनोपदिश्यते तच्छास्त्रमभिधीयत इति शास्त्रलक्षणाभिधानात् । २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदि नोत्पातान्नवा कस्माच्च वनशोभेक्षणाय वा गताः किन्तु अभिन्नाशयाः वशीकृतचित्ताः भवत्यः मदभिस्नेहादागतास्तर्हि आगमनमुपपन्नं युक्तम् हि यतो जन्तवः सर्वेऽपि प्राणिनोऽविशेषेण मयि प्रीयन्ते प्रीता भवन्ति अनुरक्तिं कुर्वन्तीत्यर्थः ॥ २३ ॥

एवं सर्वसाधारणं मदनुरक्तिलक्षणं धर्मं पुरस्कृत्य स्वासाधारणः स्त्रीधर्मो भवतीरस्यादरेणानुष्ठेय इत्याह—भर्तुरिति द्वाभ्याम् ॥ २४ ॥ २५ ॥

---

भाषा टीका ।

अथवा हे गोपी हो अब मैंनें तुम्हारे भाय वे को मुख्यकारण समझा कि–तुम परम सुकमारी भोरी भारी गोमें अनुराग धारी मेरे ऊपरस्नेह कर कें आई हौ । काहे सौं कि–तुम्हारो आशय जो अन्तःकरण है सो स्नेह तें बध्यो भयो है सो ये बात उचितही है, क्यूंकि–तुम तौ परम चतुर प्रीति के सारको जाननधारी हो पर मेरे ऊपर तौ जीव जाति प्राणी मात्र सबही प्रसन्न होवें हैं तौ फिर तुम क्यों न प्रसन्न होयगी ॥ २३ ॥

हे प्यारी कल्याणीओं तुम मोपै स्नेह करि कें आई सो तौ भली भई परन्तु स्त्रीन को तौ कपट छोडि कें अपने पति की सेवा करनी और वाके बन्धु जो माता पिता भैया बहन है तिनकी शुश्रूषा करनी यही परम धर्म है तथा अपने पुत्रनकी रक्षा करनी यही परम धर्म है । अथवा दूसरो अर्थ यों है, कि–तुम्हारी सरी की मोमै अनुराग धारी स्त्रीन) कौ तौ निष्कट होयके पतिन की शुश्रूषाकरनी और उनके बन्धून की सेवा करनी तथा प्रजा को पोषण करनो येसौ पर परायो ये धर्म है कछुस्वधर्म नहीं है तुम्हारो स्वधर्म तौ यही है, कि–केवल मेरी सेवा और मेरे सुख में सुखमाननो सो तुम जानती होयगी ॥ २४ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहद्वैष्णवतोषिणी ।

ननु, परोपदेशपाण्डित ! सर्वथा पतयः परित्यक्ता एव अधुना किं तदीयशुश्रूषाद्युपदेशेन ? तत्राह—दुःशील इति । चौर्यादिरतः दुर्भगः भाग्यादिहीनः निष्फलोद्यम इत्यर्थः । वृद्धो जराभिभूतः जडः कर्मादिषु सामर्थ्यहीनः रोगी महारोगग्रस्तः अधनः अतिदरिद्रः निजोदरभरणेऽप्यसमर्थ इत्यर्थः । अपिशब्दस्य प्रत्येकमन्वयः दौःशील्यादियुक्तोऽपि न हेयः व्रजवासी तु सर्वसद्गुणयुक्त एवेति कथं त्याज्यः स्यादित्यपिशब्दार्थः । लोकेप्सुभिः लोकद्वयापेक्षावतीभिः अन्यथा इह लोके दुष्कीर्त्यादिकं परत्र च नरकादिकमित्यर्थः । तत्र च महापापरतः परित्याज्य एवेत्याह—अपातकीति । तथा च स्मृतिः "पतिं त्वपतितं भजेत्" इति अतोऽत्रत्यानां सर्वेषामप्यपातकित्वान्न हातुं योग्य एवेति भावः वस्तुतस्तु पश्चात्कदाचित् कुतो धर्मादिविचारे सति स्वविषयक भावविशेषे शैथिल्यं सम्भवेदिति तन्निरसनेन स्वयमेवादौ धर्मश्रावणेन तासां भावो दृढीकृत इति । यद्वा, इदमपि पूर्ववत्सर्वं तद्वञ्चनापेक्षया सौशील्यादिषड्गुणयुक्तस्यापि पत्युर्हेयत्वात् तन्निरूपितमेव । श्लेषार्थश्चायम् आपद्भ्यः पातीति पतिरहं दौःशील्यादियुक्तोऽपि सन् तथा अपातकी धर्मादपतितोऽपि सन् लोकद्वयेप्सुभिरपि पतिपुत्रादीच्छुभिरपि वा स्त्रीभिर्व्रजाङ्गनाभिर्युष्माभिर्न हातुं योग्य एव किन्तु आलिङ्गनादिना सदा सङ्गम्य एवेत्यर्थः । अहं तु न तादृशो भवत्स्वेव सर्वसद्गुणत्वेन युष्मदेकप्रियत्वेन च तद्विपरीत्वात् यूयं च मदपेक्षया लोकानपेक्षिका एव तदधुनापि कथं नालिङ्ग्येयेति भावः यद्वा, प्राकृतस्तादृशतद्दोषयुक्तोऽपि पतिर्न हेयः अहं तु तत्त्वतः पतिरेव साक्षात् षड्गुणैश्वर्ययुक्तश्च कथं हेयः स्यामिति सर्वत्यागेन यूयमागता यत् तदुपपन्नमेव । यद्वा, लोकेप्सुभिरेव न हातव्यः परमार्थेप्सुभिस्तु सौशील्यादियुक्तोऽपि अपातक्यपि हातव्यः भवतीस्तु मयि परमानुरागाकृष्टत्वाल्लोकद्वयमर्यादातिगा एवेति भावः । तत्र सिद्धान्तो लिखित एव । यद्वा, गोपस्थोऽप्यसूयन्नाह—स्त्रीभिर्व्रजस्त्रीभिरपातक्यपि दुःशीलादिरूपः पतिर्न हातव्यो न गन्तव्यः "ओहाङ् गतौ" इत्यस्य दुःशीलः क्रोधनः दुर्भगः कुरूपः वृद्धः जीर्णः जडो मूर्खः रोगी सदा व्याधितः अधनो बहुगोधनहीनः लोकेप्सुभिः महालोककामाभिः ॥ २५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, परोपदेशपण्डित ! सर्वथा पतयः परित्यक्ता एव अधुना किं तदीयशुश्रूषाद्युपदेशेन ? तत्राह—दुःशील इति । चौर्यादिरतः दुर्भगः भाग्यादिहीनः निष्फलोद्यम इत्यर्थः । वृद्धो जराभिभूतः जडः कर्मादिषु सामर्थ्यहीनः रोगी महारोगग्रस्तः अधनः अतिदरिद्रः निजोदरभरणेऽप्यसमर्थ इत्यर्थः । अपिशब्दस्य प्रत्येकमन्वयः । दौःशील्यादियुक्तोऽपि न हेयः व्रजवासी तु सर्वसद्गुणयुक्त एवेति कथं त्याज्यः स्यादित्यपिशब्दार्थः लोकेप्सुभिः लोकद्वयापेक्षावतीभिः अन्यथा इह लोके परत्र च दुःखमेवेत्यर्थः । तत्र च पातकेन परित्याज्य इत्याह—अपातकीति । पातकं पतनहेतुः पापविशेषः तथा च स्मृतिः "पतिं त्वपतितं भजेत्" इति अतोऽत्रत्यानां सर्वेषामपि पापमात्राभावान्न हातुं योग्या एवेति भावः । वस्तुतस्तु तासां निश्चितेऽपि दृढभावे उत्कण्ठावर्द्धनार्थमेव तथोक्तमिति श्लेषार्थश्चायं तस्माद्वस्तुतोऽहमेव पतिरिति स्थिते दुःशीलेत्यादिवचनानुसारेण तत्तद्दोषयुक्तोऽपि पतिर्न हातव्य इति सिद्धे निखिलकल्याणगुणयुक्तपतिरहं कथं हातव्यस्ते पुनस्तत्तद्दोषयुक्ता न च पतय इति कथं न हातव्या इत्याह-दुःशील इति ॥ २५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुश्शील इति । दुश्शीलो दुराचाररतः दुर्भगः कुरूपी वृद्धो जरितः रोगोऽस्यास्तीति तथा न विद्यते धनं वित्तं यस्य तथाभूतोऽपि पतिः लोकेप्सुभिः पुण्यलोकानिच्छन्तीभिः स्त्रीभिर्न त्याज्यः महापातकसंयुक्तस्तु हातव्य इत्यभिप्रायेण विशिनष्टि—अपातकीति । यद्वा, एवम्भूतोऽपि पतिरपातकी स्त्रीणां निकृष्ट एवातः स न हातव्य इत्यर्थः लोकेप्सुभिरित्यनेनादृष्टं भयं प्रदर्शितम् ॥ २५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पत्युः दौःशील्यादिदोषसद्भावेऽपि स्त्रीभिस्तत्त्यागो न विहित इत्याह—दुःशील इति । दुःशीलः कलहादिशीलसम्पन्नः दुर्भगो निर्वीर्यः कान्तिविहीनो वा वृद्धः गतवयाः जडः स्वकार्यमूढः रोगी भग्नाङ्गोऽधराङ्गः कुष्ठादिव्याधिपीडितो वा ब्रह्महत्यादिदोषसद्भावे कथं न हातव्य इति तत्राह, लोक इति । दौःशील्यादिदोषसद्भावेऽपि ब्रह्महत्यादिपञ्चमहापातकरहितश्चेत् पतिः शुचिरेव न हातव्योऽन्यथा विदोष इति भावेन लोक इत्युक्तम् ॥ २५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमेव दुश्शील इत्यादि योज्यम् ॥ २५—४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनस्तेनैव क्रमेणार्थद्वयं प्रकाशयति, दुश्शील इत्यादि प्रकृतपक्षे सुगमं तस्माद्घोषं गत्वा पतीनेव शुश्रूषध्वमिति भावः पक्षे लोकेप्सुभिरेवं ननु मदिप्सुभिः मदीप्सुभिस्तु पतीन् हित्वाप्यहमेव भजनीयः ममैव वास्तवपतित्वात् तस्मात् मा घोषं व्रजत इहैव स्थित्वा मां भजतेत्यर्थः ॥ २५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथापि स पतिः समीचीनो न भवतीति चेत्तत्राह—दुःशील इति । दुष्टं शीलं यस्य द्यूतादिव्यसनवान् दुर्भगो दरिद्रः वृद्धः इन्द्रियविकलः जडो मूर्खः रोगी महारोगग्रस्तः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अधनो वा अधनोपि भाग्यवांश्चेत्तदा सम्भावनया स्त्रीभिर्न त्यज्यते एवं षड्दोषयुक्तोपि स्त्रीभिरनन्यगतिकाभिः पतिर्नहातव्यः स्पृष्ट एव विरोधः षड्गुणो भगवान् षड्दोषः स इति पातकी तु हातव्य एव "भजेदपतितस्पतिम्" इति वाक्यात् । किञ्च, तत्रापि लोकेप्सुभिः येषामिह लोके परलोके च कीर्त्याद्यपेक्षा तैर्न हातव्य एव अन्यथा अपकीर्त्तिर्भवेत् ॥ २५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, भवद्भिस्नेहवतीनामस्माकमननुरूपाः प्रतिकूलशीला अरोचकास्ते पतयः कथं सेव्या भवन्त्वित्यत आह—दुःशील इति । अपातकीति "पतिं त्वपतितं भजेत्" इति स्मृतेः । पतनहेतुपातकवानेव पतिस्त्याज्य इत्यर्थः । लोकेप्सुभिः पतिलोकेसुखवाञ्छावतीभिः पक्षे लोकेप्सुभिः इहलोके परलोके चातिक्षुद्रकीर्त्तिसुखाद्यपेक्षावतीभिरेव न हातव्यः युष्माभिस्तु लोकद्वयाय जलाञ्जलीर्दत्वा मन्माधुर्यसुखवारिधौ खेलन्तीभिः प्रथमत एव पतिस्त्यक्त एव ॥ २५ ॥

---

### विशुद्धरसदीपिका ।

ननु, परोपदेशपण्डित ! सर्वथा परित्यक्ता एव हि ते किं तदीयशुश्रूषाद्युपदेशेनेति तत्राह—दुःशील इति । चौर्य्याद्विरतः दुर्भगः निष्फलोद्यमः वृद्धो जरावान् जडः कर्म्मादिषु सामर्थ्यहीनः रोगी पापरोगवान् अधनः अतिदरिद्रः पतिरित्यादिरूपष्टम् अपातकी "पतिं त्वपतितं भजेत्" इति सप्तमोक्तेः कृतमहापातकस्याकृतप्रायश्चित्तस्य शुद्धिपर्य्यन्तमभजनमुपदिष्टमिति पक्षे दुर्गाव्रतपरा उद्दिश्याह—भर्त्तुरिति । अमायया एतयन्वेयं कन्याभिर्निजसङ्कल्पवृतत्वेनेत्यर्थः । ननु बलात्पित्राद्यापादितत्वेन यो भर्त्ता मल्लक्ष्यास्तस्यैव शुश्रूषणं परो धर्मः तथा तद्बन्धूनामित्यादि अन्यत्र परमधर्मविदां भीष्मादीनामम्बादिपरित्यागाद्धर्मतो भर्तृत्वासिद्धेर्न सद्भावः दुष्यन्तादिभिश्च गान्धर्वघृतेः स्वीकारादयमेव सद्भाव इति भावः । अथवा परकीयाभिमानिनीराधक्ष्याह—वस्तुतस्तु सर्वमिदं तासां प्रतारणार्थं ज्ञेयम् वस्तुतस्तु सखीराह—भर्त्तुः शुश्रूषणं स्त्रीणां परोधर्मः नच यूयं कस्यापि स्त्रियः नच भवतीनां कश्चित्पतिरिति यदि चास्ति स चाहमेव सोऽपमायया माया शब्दोत्र कैतववचनः नच सकामत्वमेव तत्रापि दाम्पत्यमेव तदभावोऽमाया तया शुद्धसख्यवतीनां प्राणसख्याः पतिरहमेव पतिरित्युपचरितः शुश्रूषणीय इति भावः ॥ २५ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

प्रथमपक्षे नास्मत्पतयस्त्वत्समगुणवन्तो येन सेवार्हा भवेयु स्तत्राह—दुःशील इति । क्रोधादियुक्तः दुर्भगः कुरूपः वृद्धो गतयौवनः जडो मूर्खः अधनो [illegible]क्रान्तोऽपि पतिः याव[illegible] [illegible] [illegible] [illegible] गत्वा तत्सेवन-

मेव कार्यम् ॥ द्वितीयपक्षे तु यदीदृशोऽपि पतिर्न हातव्यः किन्तु सेव्य एव तदा मत्सदृशः सुशीलः सुभगो नवकिशोरो रसिकशिरोमणिर्नित्यनिरामयसच्चिदानन्दविग्रहो लक्ष्मीपतिः परमार्थपतिः सेव्य इति तु किमु वाच्यमिति ॥ २५ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यतः पतिरेव स्त्रियः परमं दैवतं तदाराधनं च परमो धर्म्मः तेनैव च लोकद्वयविजय इति लोके शास्त्रे च घण्टाघोषस्तस्मात् दुश्शीलत्वाद्यनेकदोषयुक्तोऽपि न त्याज्यः किमुत दोषविनिर्मुक्त इत्याशयेनाह—दुःशील इति । दुष्टं शीलं द्यूतादिव्यसनं यस्य सः दुर्भगो मन्दभाग्यः वृद्धो जर्जरीभूताङ्गः जडो मूर्खः रोगी महारोगग्रस्तः अधनः स्वोदरपूरणेऽप्यसमर्थः एवमुक्तदोषेष्वेकैकदोषवान् किं वा सकलदोषयुक्तोऽपि पतिः लोकद्वयविजयेच्छावतीभिः स्त्रीभिर्न हातव्यो नैव त्याज्यः पातकी तु यावत् पातकी तावद्धातव्यः "पतिं त्वपतितं भजेत् आशुद्धेः सम्प्रतीक्ष्यैव महापातकदूषितः" इत्यादिशास्त्रवचनात् अनभिज्ञापक्षे । ननु, अस्माकं पतयो नाऽस्मदनुकूला अनुरूपाश्चेतरासक्ता एवाऽतः किं तत्सेवाद्युपदेशेनेति चेत्तत्राह—दुःशील इति । षड्विधैश्वर्ययुक्तमपि परपुरुषमवलोक्य षड्विधदोषयुक्तोपि स्वपतिर्न हातव्यः वृजवासी तु सर्वसद्गुणयुतो निष्पापश्चातः कथं त्याज्यो भवेदित्याशयः मानिनीपक्षे तस्माद्बलात्कारेण हृतयाम्बया यस्य मनसा वृतः पतिः न त्यक्तो यथा च सावित्र्या पितुर्वाक्यात् सत्यवान्न त्यक्तस्तथान्याभिः युष्मदादिभिः स्त्रीभिर्मनसा वृतः पतिर्न हातव्यः तत्रापि षड्विधैश्वर्यसंपन्नोऽहं न तु दुःशीलत्वादियुक्तो वस्तुतः सर्वदोषयुक्तोऽपि न त्याज्यः पतिरित्येकवचनात् स्त्रीभिरिति बहुवचनात्स्वस्यैव सर्वासां पतित्वं दृढीकृतं तथा च तेषां वस्तुतः पतित्वाऽभावान्न तत्यागे कश्चिद्दोष इति भावः । निवृत्तिपक्षे तत्र दृष्टान्तमाह—दुःशील इति । वाशब्द इवार्थे तथा च यथा पतिसम्पृक्तत्वं पतिव्रतायाः स्त्रियस्तथा वाचापि स्वार्थसम्पृक्तत्वमिति भावः ॥ २५ ॥

---

### भाषा टीका ।

खोटे स्वभाव को होय, भाग्य हीन होय, बूढो डोकरा होय, बेबुद्धि को अज्ञानी होय, रोगन सों ग्रसित होय, निर्धन होय, चाहे जैसो खोटो अवगुणी होय, परन्तु जो पातकी न होय तो लोक के चाहवे वारी कुलवती स्त्रियन कों वा पतिको त्यागिवो उचित नहीं हैं:, किन्तु वाकी सेवा ही करनो उचित है ॥ दूसरो अर्थयों है, कि—अपातकी कैसोऊ खोटो पति होय लोक की चाहन वारी वाको सेवन करें और जो मेरे आलोकन की चाहन वारी हैं वे सर्वस्व त्यागिके मेरी सेवा करें ॥ २५ ॥

---

**अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम्।**
**जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः ॥ २६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

फल्गु तुच्छं कृच्छ्रं दुस्सम्पाद्यम् औपपत्यं जारसौख्यम् ॥ २६ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

ननु, श्रीव्रजयुवराज! भवदाज्ञया नैव पतयस्त्याज्याः किं तु सदा नाम्नैव तेषां पतित्वं पतिव्यवहारस्तु त्वया सहैवास्तामित्याशङ्क्य तासां दीर्घाभीष्टनिन्दनेन परमाप्रियमवहित्थया साऽसूयमिवाह—अस्वर्ग्यमिति। स्वर्गाप्तौ प्रतिकूलं किं वा पूर्वपुण्यार्जितस्वर्गनाशकमित्यर्थः। अयि कामिन्योऽदृष्टत्वान्मास्तु स्वर्गापेक्षा लोके यशोपेक्षास्त्येव तद्बाधकञ्चेदमित्याह—अयशस्यमिति। पूर्वसञ्चितयशसोपि लोपकम्। ननु,लोकातीत! जुगुप्सितमेव तत् को नाम जानातु तत्राह—फल्गु तुच्छं अस्थिरत्वात्। ननु, भो अच्युत! त्वया सहास्माकं तत् सुस्थिरमेव तत्राह, कृच्छ्रं दुःखसाध्यम्। ननु,स्वैरिसिंह! व्रजे श्रीवृन्दावने च स्वच्छन्दविहरणात्सुखसाध्यमेव तत्राह, भयं स्वाम्यादिभ्यो नरकादिभ्यश्च तत् आ सम्यक् वहति प्रापयतीति तत्। ननु, अमृतकोटिनिर्मञ्छनीयमधुराधर त्वदपेक्षयाऽस्माभिः सर्वमप्युपेक्षितमिति कुतोऽपि न भयं तत्राह, सर्वत्र स्वदेशे परदेशे च यद्वा, व्यवहारे परमार्थे च जुगुप्सितं निन्दितं लज्जाकरत्वात् घृणावहत्वाच्च हि निश्चितं ननु, तत्त्वज्ञेन्द्र! निजाभीष्टसिद्ध्या जुगुप्सापि सुसह्यैव तत्राह—कुलस्त्रिया इति। जातावेकत्वं कुलकलङ्कत्वतत् कुलस्त्रीणां परमानुचितमिति सर्वथा परिहार्यमेवेति भावः। वस्तुतस्तु पूर्ववत् स्वविषयकभावदार्ढ्यार्थमेव। श्लेषार्थश्चायम् अप्यर्थे चकारः अस्वर्ग्यादिरूपमप्यौपपत्यं कुलस्त्रिया अपि भवत्येव ताराहल्यादीनामपि तच्छ्रवणात् अतः साधारण्यापत्त्या दोषविशेषो नास्तीति भावः। किञ्च, कुत्सितं लाति आददातीति कुला या स्त्री तस्या एवास्वर्ग्यादिकं युष्माकं तु निखिलसर्वस्वसारं मद्भावमाददानानां तन्नेति तात्पर्येण नर्म च ज्ञेयम् यद्वा, नर्म प्राह—उप समीपे पतिर्यस्याः सा उपपतिः तस्या भाव औपपत्यं पत्युः समीप्यमित्यर्थः तत्सर्वथा अस्वर्ग्यादिदोषयुक्तं कुलस्त्रिया इति काश्चित् प्रेयसीमुद्दिश्योक्तम् ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु, श्रीव्रजयुवराज! भवदाज्ञया नैव पतयस्त्याज्याः किन्तु सदा नाम्नैव तेषां पतित्वं पतित्वव्यवहारस्तु त्वया सहैवास्तामित्याशङ्क्य तासां दीर्घाभीष्टनिन्दनेन परमाप्रियमवहित्थया साऽसूयमिवाह—अस्वर्ग्यमिति। स्वर्गाप्तौ प्रतिकूलम् अयि कामिन्यो! दृष्टत्वाभावान्मास्तु स्वर्गापेक्षा इह लोके यशोपेक्षास्त्येव तद्बाधकं चेत्याह—अयशस्यमिति। पूर्वसञ्चितयशसोपि लोपकम् ननु, जुगुप्समेवैतत् को नाम जानातु तत्राह, तथापि फल्गु तुच्छम् अस्थिरत्वात्। ननु, भो अच्युत! त्वया सहास्माकं तत्सुस्थिरमेव तत्राह, तथापि कृच्छ्रं दुःखसाध्यम्। ननु, स्वैरसिंह! व्रजे श्रीवृन्दावने च स्वच्छन्दविहरणात् सुखसाध्यमेव तत्राह—तथापि भयं परलोकात् कदाचित् स्वाम्यादिभिश्च तत् आ सम्यक् वहति प्रापयतीति तत् ननु,अमृतनिर्मञ्छनीयमधुराधर त्वदपेक्षयाऽस्माभिः सर्वमुपेक्षितमिति कुतोऽपि न भयं तत्राह—तथापि सर्वत्र स्वदेशपरदेशयोर्व्यवहारपरमार्थयोश्च जुगुप्सितं निन्दितं हि निश्चितम्। ननु, तत्त्वज्ञेन्द्र! निजाभीष्टसिद्ध्या जुगुप्सापि सुसह्यैव तत्राह—कुलस्त्रिय इति। जातावेकत्वं कुलकलङ्कतोऽपि कुलस्त्रीणां परमानुचितमिति सर्वथा परिहार्यमेवेति भावः। वस्तुतस्तु पूर्ववत्तत्कपटावष्टम्भनार्थमेवेति। श्लेषार्थश्चायं पूर्ववदेव धर्मोपात्तःपतिस्तद्विपरीतस्तूपपतिरिति अथ च लोकेऽन्यथा प्रसिद्धिमालक्ष्य स्मृतिवाक्यमिदं छलार्थतया सनर्म व्यञ्जयति उप समीपे पतिर्यस्याः सा उपपतिः तस्या भावः औपपत्यं पत्युः सामीप्यमित्यर्थः। तत्सर्वथा अस्वर्ग्यादिदोषयुक्तमिति एवं भर्तुः शुश्रूषणमित्यत्र परः सर्वाधिक एवाधर्म इति व्याख्येयम् ॥ २६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

औपपत्यमुपपतित्वम् ॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

अथ दृष्टभयप्रदर्शनेन प्रत्याचष्टे—अस्वर्ग्यमिति। कुलस्त्रियः औपपत्यं भर्त्तरि सत्यसति वा योऽन्यः सङ्गम्यते स उपपतिः तस्य कर्मौपपत्यं तत्सङ्गमनं "पत्यन्तपुरोहितादिभ्यो यक्"(४।१।१२८)इति कर्मणि यक् अथवा भावे यक् उपपतित्वं तदस्वर्ग्यमसुखकरमयशस्करं तुच्छं दुःखावहं भयावहं च सर्वत्र निन्दितं च ॥ २६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कामस्य पुरुषार्थत्वेन पतिद्वेषिणा तदप्राप्त्या जन्मनो निष्प्रयोजनत्वमापन्नमिति प्रकारान्तरेण साफल्यमापादनीयम् इतीति विपक्षे बाधकमाह—अस्वर्ग्यमिति। चशब्द एवार्थे उपपतिः पत्युः प्रतिनिधिः उपपतिः जारस्तत्सम्बन्धि कर्म आरम्भणचर्या तत्कुलस्त्रियः सर्वत्र पत्युरुत्तमाधममध्यमेषु पुरुषेषु जुगुप्सितमेवेत्यन्वयः। कथं तदुच्यते अस्वर्ग्यं स्वर्गविरोधि एव न भवति किन्तु अयशस्यम् इहामुत्र च दुष्कीर्तिकरं च तथापि न बहुलं फल्गु तुच्छफलम् अल्पकालविषयत्वात्, कृच्छ्रं कष्टं "स्यात्कष्टं कृच्छ्रम्" इत्यमरः। कृच्छ्रं कर्त्तुः असमाधानं वा मरणादिभयजनकम् ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनस्तेनैव क्रमेणाह—अस्वर्ग्यमित्यादि । कुलस्त्रिया औपपत्यं उपपतिकरणम् सर्वत्र अस्वर्ग्यमित्यादि तस्मात् घोषं गत्वा पतीन् भजतेत्यर्थः । पक्षान्तरे कुलस्त्रिया औपपत्यं सर्वत्र अस्वर्ग्यमित्यादि ननु सर्वातीते मयि औपपत्याभावात् वास्तवः पतिरहमेव तस्मादविचारमेवेह स्थित्वा मां भजतेत्यर्थः ॥ २६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, कामरसे निविष्टमनसां न धर्मो बाधकः परस्मिन्नेव रसोत्पत्तेरिति तत्राह—अस्वर्ग्यमिति । कुलस्त्रियाः औपपत्यं जारसम्बन्धः तद्रसात्मकमपि बहुदोषग्रस्तं तत्रत्यान् षड्दोषानाह—अस्वर्ग्यं परलोकनाशकं पूर्वधर्मेण सिद्धोऽपि स्वर्गः तस्मिन्नपगच्छति किञ्च, इह लोकेऽपि यशो दूरीकरोति चकारादन्यत्कोऽपि नापि तत्र रसभोगो महानित्याह—फल्ग्विति । अल्पमेव तत्सुखं क्षणमात्रसाध्यं स्वरूपतो महदपि कालतः परिच्छिन्नं परिच्छिन्नमपि कृच्छ्र(म्रि)मतिकष्टसाध्यं नाल्पेन प्रयासेन सिद्ध्यति अतो यत्नवदनिष्टानुबन्धि । किञ्च, अनुभवकालेऽपि न रसमुत्पादयति यतो भयजनकं शृङ्गारविरोधी भयानकरसः अत एव व्यभिचारशब्दवाच्यः मुख्यतया भयानकमेव रसमुत्पादयेत् विशेषतः प्रथमतः । किञ्च,सर्वत्रैव जुगुप्सितं सर्वदेशेषु सर्वकालेषु तत्कृत्वा यदि सत्कर्मापि कुर्यात् ततोऽपि जुगुप्सितो भवेत् धर्मवु (द्धि) र्देहस्तत्र विचिकित्सैव भवति अतो बहुदोषग्रस्तत्वात् उत्तमाया नैतद्युक्तम् ॥ २६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मयि स्नेहसामान्यवत्यो भवत्यः स्वभावाद्भवन्त्येव किन्तु धर्मप्रतिकूलः स्नेहविशेषस्तु सर्वथैव त्याज्य इत्याह—अस्वर्ग्यमिति । मास्तु स्वर्गं इति चेदयशस्यम् यशोऽपि मास्त्विति चेत् फल्गु मिथ्यैव ब्रूषे नेदं फल्गु सर्वोत्कृष्टत्वेनानुभूतत्वादिति चेत् कृच्छ्रं पत्यादिवारणकष्टमयं ननु "वामता दुर्लभत्वं च स्त्रीणां या च निवारणा। तदेव पञ्चबाणस्य मन्ये परममायुधम्"॥ इति "दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते" इति रसशास्त्रोक्तेः प्रत्युत तत्कृच्छ्रम् रागवतीनामस्माकं सुखातिशयहेतुरेवेति चेत् भयावहं लोकशास्त्रनिषिद्धत्वादैहिकपारत्रिकभयप्रदं ननु "यत्र निषेधविशेषः सुदुर्लभत्वं च यन्मृगाक्षीणाम् तत्रैव नागरीणां निर्भरमासज्जते हृदयम्"॥इति रसशास्त्रोक्तेः प्रत्युतरसाधायकमेवैतदिति तत्राह—जुगुप्सितमिति॥ सर्वदेशे सर्वकाले औपपत्यम् उपपतिकर्तृकं कर्म कुलस्त्रियाः जुगुप्सितमिति सर्वत्र तद्वती कुलस्त्री निन्द्यते इत्यर्थः । तत्र यद्यपि युष्माभिः स्वाभीष्टसिद्ध्या स्वनिन्दापि सुसहैव तथापि मत्प्रणयास्पदानां युष्माकं निन्दा मया कथमुत्पादनीयेत्यतो गोष्ठमेव यातेति भावः । पक्षे सर्वत्रेति जुगुप्सितमिदं सार्वत्रिकमेव प्रस्तुनेतु मम नारायणसमत्वं गर्गमुखपरम्परया युष्माभिः श्रुतमेवेत्यतो ममौपपत्येऽपि नैव निन्दा परमेश्वरत्वेन शुभाशुभकर्मातीतत्वादिति भावः ॥ २६ ॥

### विशुद्धरसदीपिका ।

प्रथमे पक्षे । ननु, श्रीव्रजराजयुवराज ! भवदाज्ञया नैव पतयस्त्याज्याः किन्तु नास्त्येव तेषां पतित्वमित्याशङ्क्य तासां दोषांभीष्टनिन्दनेनावहित्थया साङ्ग्यसूयमाह—अस्वर्ग्यमिति । सतो लोकगमनावरोधकम् अयशस्यं लोकापवादकरम् फल्गु तुच्छम् अस्थिरत्वात् कृच्छ्रं दुःखसाध्यं भयावहं भयं इष्टमहष्टं च तमावहति तथा तत् औपपत्यं "जारस्तूपपतिः समौ" इत्यमरः कुलस्त्रिय इति सङ्कोचोत्पादनं पक्षे ननु, भवदाज्ञया न त्यजामो लोकसंग्रहाय तत्समीपस्थितिरावश्यकीत्यत आह, श्लेषेण उपसमीपे पतिर्यस्याः सा उपपतिः नित्यमेव स्ववल्लभसान्निध्यवतीत्यर्थः "कृष्णारूपापि सा राधा नित्यं कृष्णमनुव्रता । तत्र भिन्ना निमेषार्द्धम्" इति माहेश्वरीसंहितोक्तेः । तादृशी श्रीराधा तस्याभाव औपपत्यं तस्याः सह वास इत्यर्थः । कुलस्त्रियः कुलशब्दः समूहवचनः तेन सखीसमूहो लक्ष्यते सहचरीसमूहैः स्वप्राणेश्वरी योगक्षेमपरैस्तस्याः समीपस्थैरेव भाव्यमिति भावः । तदुक्तमलङ्कारकौस्तुभे "क्वचिदग्रे क्वचित्पश्चात् क्वचित्पार्श्वपदान्तयोः । सूर्यानुराधाच्छायेव सा राधा अनुवर्त्तत" इति तच्च अस्वर्ग्यं स्वर्गभिन्नं स्वर्गसदृशमिति "पर्युदासः सदृग्राहीति स्मृतेः मम नित्यधामप्रदमित्यर्थः "यातुधान्यपि सा स्वर्गम्"इत्यादिन्यायात् एवमयशस्यमपि अलौकिकसर्वलोकश्लाघनीययशःप्रदमित्यर्थः । "एता परं तनुभृतः" इत्यादेः । तथा फल्गूनां दाम्पत्यादिभानेन तुच्छानां कृच्छ्रं कष्टसाध्यं नहि कान्तभावाध्यासवतां शुद्धप्रेमव्यवहारः सुकर इति भावः । भयं न वहतीति भयावहं प्रत्युत न पारयेऽहमित्यादिना प्रेष्ठवशंकरं चाप्यर्थे तथा सर्वत्र जुगुप्सितमिति काकुः अपितु नेत्यर्थः परसम्बन्धिप्रेमावहत्वादिति भावः । कान्तभाववतीषुच अहमेव वास्तवः पतिरिति मत्पार्श्वं एव स्थेयमित्यर्थः । शेषं प्राग्वत् ॥ २६ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

कुलस्त्रीणामौपपत्यनिन्दामाह—अस्वर्ग्यमिति ।पुण्यलोकनिवर्तकं प्रत्युत तद्विरुद्धनिरयार्तिहेतुः एवमयशस्यं लोकापवादकरं फल्गु स्वल्पं क्षणिकं कृच्छ्रं दुःखसाध्यम् इहामुत्र च भयापादकं सर्वत्र लोकपरलोकयोर्जुगुप्सितं तत्र प्रथमपक्षे लौकिकभ्रान्त्यनुसारेण व्रजस्थपतिम्मन्यानां मुख्यपतित्वं कृष्णस्योपपतित्वं द्वितीयपक्षे परमार्थदृष्ट्या कृष्णस्य मुख्यपतित्वं तेषामुपपतित्वमेतावान् विशेषोऽन्यत्समानम् यद्वा, उप समीपे पतिर्यस्या सा उपपतिः श्रीः श्रीराधा वा तस्या भावं कृष्णैकपरत्वम् यद्वा, भित्यम् उप समीपे वर्तमानः पतिः उपपतिः कृष्णः तत्सेवैकपरममौपपत्यम् अन्ये पतिम्मन्यास्त्वनित्यत्वेनागमापायित्वेन च नोपवर्त्तमाना न वा पतयः पालकाश्च तदुक्तम्—

"सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोकमोहप्रदं तुच्छमहं भजेऽज्ञा" ॥
स्त्रियो वृतैस्त्वां हृषीकेश्वरं स्वतो-
ष्याराध्य लोके पतिमाशासतेऽन्यम् ॥

श्रीरामनारायणकृतभावभावविभाविका ।

तासां न ते वै परिपान्त्यपत्यम्—
प्रियं धनायूंषि यतोऽस्वतन्त्राः ॥
स वै पतिः स्यादकुतोभयः स्वयम्—
समन्ततः पाति भयातुरं जनम् ॥
स एक एवेतरथा मिथो भयम्—
नैवात्मलाभादधिमन्यते परम् ॥
ज्ञातस्य ते पादसरोरुहार्हणम्—
न कामये साखिलकामलम्पटा ।
तदेव रासीप्सितमीप्सितोऽर्चितो—
यद्भग्नयाच्ञा भगवन्प्रतप्यते" ।

अखिलेषु जीवेषु कामलम्पटा अनादिसंसारचक्रे क्रमेण सर्वेषां तत्पतित्वापत्तेरित्यर्थः । तथा चान्यत्र पतिमतयो न सत्यः मत्कामा एव पतिव्रताः तस्मात्तदौपपत्यं नित्यसमीपस्थनित्यपतिसेवनं अस्वर्ग्यमित्यादिपदेषु सर्वत्र काका तद्विरुद्धबोधनम् यद्वा, अस्वर्ग्यं तद्भिन्नतदभाववद्विरुद्धेषु नञ्विधानात्स्वर्गभिन्नं तद्विलक्षणं भगवद्धाम तत्प्रापकं अयशस्यं विलक्षणयशःप्रदम् अकारो वासुदेवस्तत्स्वरूपभूतो यः स्वर्गो नित्यसुखं "यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम्"इति श्रुतिसिद्धं तस्मै हितमस्वर्ग्यं तत्सुखप्रापकं तथा अयशस्यम् अकारो हरिरेव तत्सम्बन्धि यशसेहितं तत् प्रापकं पुनः कथम्भूतमुपपत्तिहरिसेवनं फल्गु कृच्छ्रं फल्गुभिः सकामैः कृच्छ्रं दुःखसम्पाद्यम् यद्वा, फल्गुकृच्छ्रं स्वल्पायासम्—

"कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः ।
स्वस्यात्मन सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥

इत्यादिवचनात् । यद्वा, फल्गूनि कृच्छ्रोपलक्षितानि सर्वाणि तपांसि यस्मात् तथा सर्वत्र भयावहं वहतीति वहः न वहः अवहः भयानामवहो भयावहस्तम् अन्यसेवनं तु भयावहम् अभयं वै जनकप्राप्तोसि द्वितीयाद्वै भयं भवति "भीषास्माद्वातः पवते" इत्यादिश्रुतेः विष्णो पदं निर्भं यस्मयाद्वितीयाभिनिवेशितः स्यात् "मर्त्यो मृत्युव्यालभीतः पलायन्" इत्यादिस्मृतेश्च तथा जुगुप्सितं गोप्तुमीप्सितं अतिरहस्यम् ॥ २६ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु, परमेश्वरः असतत्वे तासामस्माकं नास्ति जारपरमनसामिव पतित्यागेपि कृते दोष इत्याशङ्कामोचार्थं तथा चेदस्तु तथा रमणेच्छया तु मय्यासक्त्या स्वपतित्यागे दोष इत्याशये नाह—अस्वर्ग्यमिति । कुलस्त्रियाः सर्वत्र सर्वस्मिन्नपि पुरुषे औपपत्यम् अस्वर्ग्यं परलोकनाशकरम् अयशस्यम् अतल्लोकनाशकं तत्रापि फल्गु अतिक्षुद्रं तथाभूतमपि कृच्छ्रं महाप्रयाससाध्यम् किञ्च, संभोगकालेपि भयजनकं पुनः साध्यकर्मणि प्रवृत्तावऽपि जुगुप्सितं निन्दितं चकाराऽर्थां नरकपातज्ञातिबहिष्कारादिसङ्ग्रहं तस्मान्मदाराधने यदि युष्माकमाग्रहस्तर्हि भगवद्बुद्ध्या तदनुष्ठेयं न तूपपतिबुद्ध्येति भावः । अनभिज्ञापक्षे विपक्षे दोषमाह—अस्वर्ग्यमिति । ननु, नाऽस्माकं स्वर्गापेक्षेति चेत्तत्राह—अयशस्यम् ननु, तदपि नापेक्षितम् यद्वा, रहसि तन्नास्ति तत्राह इति चेत्तत्राह—फल्गु क्षणिकत्वात् ननु, मिथ्या ब्रवीषि त्वया सह तस्याऽनन्तसुखजनकत्वनिश्चयादिति चेत्तत्राह—कृच्छ्रं पत्यादिवारणाद्दुस्साध्यम् ननु, निर्जने वने निवारकस्यादर्शनान्नास्ति दुःसाध्यमस्तु वा तथापि "वामता दुर्लभत्वं च स्त्रीणां या च निवारणा । तदेव पञ्चबाणस्य मन्ये परममायुधम्"इत्यादिवचनाद्दुःसाध्यता प्रत्युत रत्यऽतिशयहेतुरिति चेत्तत्राह—भयावहं लोकद्वयेऽपि निषिद्धत्वाद्यमराजादिदण्डजनितभयप्रापकम् ननु, त्वदधरसुधालोभात् सर्वमपि भयमस्माभिस्त्यक्तम् यद्वा, "यत्र निषेधविशेषो दुर्लभता यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्जते हृदयम्" इति रसशास्त्रोक्तेर्भयमपि प्रत्युतरसाधायकमेवेति चेत्तत्राह—सर्वत्रेति । सर्वत्र स्वपरलोकयोर्व्यवहारपरमार्थयोर्निन्दितम् औपपत्यं जारसौख्यम् ननु, स्वाभीष्टसिद्धौ निन्दाप्ययऽस्माभिः स्वीकृता इति चेत्तत्राह—कुलस्त्रियाः कुलस्त्रीभिरेवं न वक्तव्यमिति भावः । अनेन यद्यप्यासक्तचित्तत्वाद्भवतीभिः किमपि नो गण्यते तथाप्युत्तम वंशोद्भवेन मया कुलस्त्रियो नैव कलङ्कनीया इत्यपि ध्वनितं कुलस्त्रिय इति सम्बोधनं वा मानिनीपक्षे पूर्वोक्तरीत्याऽहमेव मुख्यः पतिस्त एवोपपतय इति तत्सङ्गतं सुखमेवास्वर्ग्यादिरूपम् यद्वा, उत्प्रेक्षितानि स्मृतिवाक्यान्यस्माभिस्तत्र भर्तृसेवादिः परो महानधर्म इत्युच्यते स्वास्मिन्नासक्तचित्तस्य प्रेष्ठस्य दुःखजनकत्वात् तथा अपातकमपि दुःशीलत्वादिदोषविशिष्टः किं न हातव्योऽपि तु हातव्य एव स्वस्य दुःखजनकत्वात् तथा चैवं विधपत्युः सामीप्यमस्वर्ग्यादिदोषयुक्तमेवेति नर्मव्यञ्जनपरत्वेन श्लोकत्रयं व्याख्येयम् यद्वा, मदासक्तचित्तत्वाद्भर्तृसेवादौ नास्ति भवतीनामधिकार इत्याह—भर्तुरिति । अमायया निष्कपटतया न तु भवतीनामन्यासक्तानि सत्वे मायावतीनां तथा पतित्यागनिषेधोऽपि नास्ति भवतीनामधिकारो मय्यनुरक्ततया लोकद्वयाभिलापरहितत्वादित्याह—दुःशील इति । किञ्चाऽपातकी-चेत्तन्न हातव्यो युष्मद्भर्तारस्तु पातकिन एव जन्तुमात्रप्रीतिपात्रे जन्मप्रभृतिरक्षापरायणे मयीर्ष्याचरणेन साधुपरत्वात् कृतघ्नत्वात् कृतघ्नश्चातिपातकित्वेनोक्तः तदुक्तम्—

"ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः"इति

ननु तत्सेवादावनधिकारेप्यौपपत्यस्य निषिद्धत्वात्तदङ्गीकारे स्वर्गादिवाधास्त्वऽतदयं भवतीति चेत्तत्राह—अस्वर्ग्यमिति । कुलस्य ब्राह्मणाद्युत्कृष्टकुलस्य स्त्रियस्तदस्वर्ग्यादिदोषावहं न तु गोपाङ्गनानां युष्माकं तथाऽ च तन्निषेधवाक्यानि तत्परार्थानीति भावः निवृत्तिपक्षे यथा कुलस्त्रिया औपपत्यं दोषावहं तथा भूतमर्थं परित्याज्याच्युतार्थपरत्वं श्रुतहान्यश्रुतकल्पनादिदोषावहमित्यर्थः ॥ २६ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्त्रासाधारणधर्मनाशकः औपपत्यलक्षणो धर्मः सर्वदा वर्ज्य एवेत्याह—अस्वर्ग्यमिति । अस्वर्ग्यं परलोकानर्हम् अयशस्यं यस्मिन् अयशस्करम् फल्गु तुच्छम् ॥ २६ ॥

**श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्त्तनात् ।**
**न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥**

भाषा टीका ।

कुलवती स्त्री कूं जार पतितें प्रेम करवो सर्वत्र लोक में और शास्त्रन में निन्दित है, भय कूं प्राप्त करन वारो है, कष्ट सूं साध्य है, और तुच्छ है, तथा लोक में कुयश करन वारो है और परलोक में स्वर्ग को छुडावन वारो है ॥ दूसरो अर्थ ये है, कि—तुम या कुलकी अर्थात् या झुण्ड की जो मो में अनुराग वारी स्त्री हौ, तिनमें ते कोई एक स्त्री को भी औपपत्य नाम पति को जो सामीप्य है सो सर्वत्रनिन्दित, कष्ट रूप, तुच्छ, कीर्त्तिनाशक, परलोक को छुटावन वारो है, अर्थात् मों मे साचे प्रेम वारी स्त्री को प्राकृत पति में प्रेम करनो लोक वेद में निन्दित हैं ॥ २६॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च श्रवणादिति ॥ २७ ॥ २८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, प्रेमैकवश्य ! सर्वसाध्यप्रेम्णो वाह्यतरमङ्गं किल स्वधर्म इति चेत्तर्हि मच्छ्रवणादिकमेवानुष्ठीयतामिति । यद्वा, श्रीपुरुषोत्तम ! त्वत्प्रसाद एवापेक्ष्यते नान्यत् किञ्चित् कुलादिकमिति चेत्तर्हि मत्प्रसादो मद्विषयकप्रेम्णैव सिद्ध्यति स च श्रवणादिनैव सम्पद्यते न त्वङ्गसङ्गेनेत्याह—यद्वा, ननु सर्वार्थसाध्यसौहृद ! त्वत्प्रेम्णा सम्पन्ने न किञ्चित् जुगुप्सादिकं परमपुरुषार्थसिद्धेरिति च तर्हि तदुपाय एवानुष्ठीयतामिति शास्त्ररीतिमप्यभिनयन् दुस्सहौदास्यविशेषेण परमाप्रियं सविवेकमाह—श्रवणादिभिः श्रवणादीनां समुच्चयो विकल्पो वा तेषामेकतमेनापि भावसिद्धेः तच्च भागवतामृतोत्तरखण्डादौ विवृतमेव तत्र श्रवणं भगवत्कथादेः दर्शनं श्रीमूर्त्यादेः दूरतो मन्मैव वा अनुकीर्त्तनं निरन्तरमन्नामप्रधानकीर्त्तनम् "एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागः" इत्यादिना तस्यैव भावोदयेऽन्तरङ्गत्वोक्तेः दर्शनार्थं सन्निकर्षोऽपेक्ष्यत एवेति तत्परिहारार्थं तद्दर्शनस्य गौणता विवक्षया ध्यानात् प्राग्निर्देशः एषां च हेतुहेतुमत्ता यथोत्तरमूह्या तत्रादौ श्रवणमेव तेन विना सर्वाज्ञानात् अत एव श्रोतव्यः कीर्तितव्यश्चेत्यादौ तस्यैवाद्यनुद्देश श्रवणानन्तरं श्रीभगवद्दिदृक्षया श्रीमूर्त्यादिदर्शनं तस्माच्च ध्यानं सुखमेव सम्पद्यतेतरां तस्माच्चानुकीर्त्तनं स्वत एवोदेति मनोभिनिवेशस्वरूपः तस्माद्धेतोः यथा मयि भावो भवति तथा सन्निकर्षेण सामीप्येन अङ्गसङ्गेन वा न भवति "सन्निकर्षो हि मर्त्यानामनादरणकारणम्" इत्यादि न्यायात् शास्त्रविरुद्धत्वेन मनःसङ्कोचाद्वा तयैतनेन तादृशो न भवति किन्तु ततो न्यून एवेति किम्वा तेन प्रकारेण न भवति किन्तु लोकधर्मातिक्रमेण सर्वोपेक्षया परमप्रयत्नादिनैव भवति अतः सन्निकर्षत्यागेन श्रवणादिकमेव कार्य्यमिति भावः । अतस्तदर्थं गृहानेव यात सर्वसङ्कोचाद्यभावेन तत्रैव तत्सुखसिद्धेः वस्तुतस्तु सर्वमेतत्परमकौतुकित्वात् किम्वा निरन्तरप्रेमभरसुकोमलितदक्षिणस्वभावानां तासां प्रेमवैयग्र्यदर्शनार्थमेव श्लेषार्थश्चायम् उक्तन्यायेन सर्वथा मयि भावोऽसङ्कोचेन युष्माभिः सदा कार्य्य एव न च वक्तव्यं श्रवणादिनापि प्रेमाख्यो भावः सम्पद्यत इति यतोऽङ्गसङ्गेनैव नितरां सिद्ध्यति न च श्रवणादिनेत्याह ( श्रवणादिनेत्याह ) श्रवणादेर्हेतोर्न तथा यथा सन्निकर्षेण भवति ततस्तस्माद्धेतोः अकारप्रश्लेषेण अगृहान् अगृहस्थान् अकृतदारान् अस्मान् प्रति यात भजतेत्यर्थः तासां वशीकरणार्थमात्ममाहात्म्यविवक्षया बहुत्वं साक्षादात्मानुक्तिर्वैदग्ध्यादिना यद्वा गृहान् मदीयान् निकुञ्जरूपान् प्रविशतेत्यर्थः । गृहानित्यनेन निकुञ्जादीनामेव क्रीडागृहत्वेन निजगृहत्वेन वा सदैतेष्वेव वस्तव्यमित्यभिप्रैति ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं बहुधा प्रत्याख्यानेऽप्यनिवृत्तिमाशङ्क्य भावापलापेनाप्यौदास्यं विधत्ते—श्रवणादिति । श्रवणादिना यथाभावो भवति तथा सन्निकर्षेणाङ्गसङ्गेन न स्यात् विरहे समुत्कण्ठया झटिति तद्वृद्धिः संयोगे तूत्कण्ठाशैथिल्यात् इति भावः । एवं परां काष्ठामापन्नोऽपि तासां भावो ऽसिद्धता निर्देशभङ्ग्याऽपलापित एव तत्र पूर्वरागे प्रायः पूर्वं श्रवणं ततो दर्शनं ततः संयोगाप्राप्त्या निरन्तरा तत्स्फूर्तिः ततश्च तत्कथैवेति क्रमेणैव निर्दिष्टं वस्तुतस्तु परमकौतुकित्वान्निरन्तरप्रेमभरसुकोमलितदाक्षिण्यस्वभावानां तासां प्रेमवैयग्र्यदर्शनार्थमेवेति । श्लेषार्थश्चायं ननु, येन सद्भावेन स्वस्य भर्तृत्वं तद्वैपरीत्येन तेषामभर्तृत्वं स्थापितं स एव न सम्भवति तव विप्रकृष्टत्वात् तेषां तु सन्निकृष्टत्वादित्यत्राह—श्रवणादिति । यथा येन रसविशेषप्रकारेण मयि श्रवणादितोऽपि भावो भवति तथा सन्निकर्षेणापि न ये ऽन्ये सन्निकृष्टाः पतिम्मन्यास्तेष्वपि न स्यादित्यर्थः । मिथः प्रेमयोग्ययोर्यथा सन्निकर्षेण प्रणयबन्धो भवति तथा न श्रवणादिनेति लोकसिद्धत्वादन्यपदमर्थायत्तं प्रथमत एव तथोपक्रान्तत्वात् प्रकरणप्राप्तं च तस्मात् गृहान् प्रति न यातेति उभयत्रापि नञोऽन्वयः । यद्वा, ततो गृहानिति सन्धौ अकारप्रश्लेषः कार्यः तस्य च अभावेन हानेनापीति नञ्पर्यायस्य अयातेत्यन्वयः न यातेत्यर्थः । यद्वा, प्रतिषेधप्रत्याख्यानप्रतिपक्षादिषु प्रकृत्यर्थविरोधेऽपि प्रतिशब्दो दृष्टः ततश्च प्रतियात गमनविरोधविषयान् कुरुतेत्यर्थः । एवं तासां पूर्ववत् सल्लापो द्विधा कासुचिद्यथार्थमेव कासुचिच्चानुरागि ।वक्तृत्व नवनवाभावादात ज्ञेयम् ॥ २७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रवणादिभिः यथा मयि भावो भवति तथा सन्निकर्षेणाऽङ्गसङ्गेन न भवतीत्यर्थः ॥ २७ ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"पतिं विश्वस्य" "एष भूताधिपतिः," 'माता पिता भ्राता निवासः शरणं सुहृद्गतिश्च नारायणः" इत्युक्तरीत्या नित्यो निरुपाधिकश्च पतिर्बन्धुश्च त्वमेवेत्याशयवतीरालक्ष्याह—श्रवणादिति । न च गोपीनामेवंविधाभिप्रायसङ्गतिस्तस्मिंस्तासां परब्रह्मत्वज्ञानाभावादिति शङ्क्यम् अनुपदं वक्ष्यमाणैरेव तासां वचोभिः "प्रेष्ठो भवान् तनुभृतां किल बन्धुरात्मा" यर्ह्यम्बुजाक्ष तवपादतलं रमायाः, श्रीर्यत्पदाम्बुजरजश्चकमे" इत्यादिभिरेव तज्ज्ञानाविष्कारान्मयि नित्ये निरुपाधिके पत्यौ बन्धौ च मयि श्रवणादिभिर्यादृशो भावो भवति न तथा सन्निकर्षेणाङ्गसङ्गेन भवत्यतो गृहान् प्रतियात गच्छतेतिभावः । प्रीत्यात्मकोऽभिप्रायविशेषः तत्र श्रवणं मत्स्वरूपरूपगुणविभूत्यादिश्रवणं कीर्तनं गुणानामकीर्तनं ध्यानं तत्पूर्वकमनुचिन्तनं तद्दर्शनं तत्पूर्वकसाक्षात्कारः ॥ २७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, तव मुख्यभर्तृत्वात्त्वत्सेवनं जारसेवनवदस्वर्ग्यं न भवति किन्तु पतिसेवनान्मुख्यसाधनमेव स्यादित्याशङ्क्य सत्यं तथापि मच्छ्रवणादिना युष्माकं मयि भक्तिः स्यात् न तथा मम सन्निकर्षनिषेवणेन यस्मात्तस्माद्भवतीभिः गृहानवाप्य मयि भक्तिः कर्तव्येत्याह—श्रवणादात ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनस्तेनैव क्रमेणार्थद्वयेनोपसंहरति—श्रवणादित्यादिना । एष मद्भावः सुरसो भवति न तु सन्निकर्षेण यथेत्यनेन तथाशब्दो गम्यते श्रवणादिना यथा सुरसस्तथा न सन्निकर्षेण तस्मात् गृहान् प्रति यात पक्षे यथासन्निकर्षेण मयि भावस्तथा न श्रवणादिना यतः श्रवणादेरपि साक्षात्कारः फलं ततो गृहान् अप्रतियात "अभावेन छन्नेनेति" केवलस्याकारस्य निषेधवाचित्वात् ॥ २७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सगुणाः प्रबोध्य गुणातीताः प्रबोधयति—श्रवणादिति । ननु, लौकिकदृष्ट्यैते दोषा नतु भक्तिमार्गे परमार्थदृष्टौ वा भवांस्तु पुरुषोत्तम इति चेत्तत्राह—श्रवणादिति । न हि भक्तिमार्गे सम्बन्ध एव कर्तव्य इति शास्त्रमस्ति भक्तिर्हि नवविधा श्रवणादिरूपा प्रेमरूपा च ईश्वरत्वपक्षे तु सुतरामेव नापेक्षा स्नेहस्तु भगवद्विषयकः अलौकिकः स एव सर्वाधिको भवति लौकिकस्तु कामशेषतां प्राप्तः हीन एव भवति तस्यालौकिकस्य कारणानि त्रीणि श्रवणं दर्शनं ध्यानमिति आदौ श्रवणं भगवद्वाचकानां पदवाक्यानां भगवति शक्तितात्पर्यावधारणं तथा सति विषयो स्वावर्जितो भवति अन्यथा अन्यत्रापि स्नेहः स्यात् तदनुदर्शनं तदर्थस्यानुभवः कृपया भगवत्साक्षात्कारो वा भगवत्कामार्थैः नारदादिभिरिव ततो ध्यानं योगेन चिन्तनम् एतैरेव मयि भावो भवति स चोत्पन्नो भावः अनुकीर्तनात् स्थिरो भवति यथायमुपायः शास्त्रीयः साधीयान् न तथा निरन्तरसान्निध्येन जातो लौकिकः स हि कामशेष इत्यवोचाम अतो गृहान् प्रतियात अतः परमार्थविचारेऽपि न स्थातव्यमिति तथेत्यत्र प्रकार एव निषिद्धः न स्वरूपतो महत्त्वं निषिद्धं गृहस्थितानां च विहितं भवतीति गृहगमनमाज्ञापितम् ॥ २७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, कथमन्यथा सम्भावयसि न वयं त्वदङ्गसङ्गार्थमागताः किन्तु गर्गोक्तिप्रामाण्यान्नारायणस्य समो नान्य इत्यतस्त्वामेव नारायणं ज्ञात्वा त्वद्भक्तिकामा वयमागतास्तद्यतनीं रात्रिं स्वसमीप एवास्मान् स्थापयित्वा कृपया स्वचरणसरोजं परिचारयेति चेत्सत आह—श्रवणादिति । शुद्धभक्ताः खलु सामीप्यसालोक्यादिकमपि न कामयन्ते यथा श्रवणकीर्तनादिकमिति प्रसिद्धिर्भवतीभिः वैष्णवीभिः श्रुतैवेति भावः । पक्षे श्रवणादिभ्यो भावः कन्दर्पस्तथा न भवति यथा सन्निकर्षेणातो गृहान् प्रति न यातेति । नञ आवृत्त्यान्वयः यद्वा नञ्पर्यायास्यकारस्य प्रश्लेषेण अगृहान् न गृहान् प्रति यातेत्यर्थः ॥ २७ ॥

---

विशुद्धरसदीपिका ।

एवं च बहुभिः प्रकारैः प्रत्याख्याता अप्यनिवृत्ता आलक्ष्य तद्भावापलापेनाप्यौदासीन्यं विधत्ते—श्रवणादिति । श्रवणादिना यथा तथा न सङ्गेनेत्यर्थः । विरहे समुत्कण्ठया झटिति तद्वृद्धेः संयोगेनौत्कण्ठ्यशैथिल्याच्च सेति भावः । एवं च परां काष्ठामापन्नोऽपि तासां भावो स्निग्धताद्यकृतेनापह्नवित एवेति भावः । अत्र पूर्वरागे प्रायः पूर्वं श्रवणं ततो दर्शनं ततः संयोगप्राप्त्या निरन्तरा तत्स्फूर्तिः ततस्तत्कथेति क्रमेणैव निर्देशः अतो मम प्रेमवर्धनार्थं गृहानेव प्रतियातेति पक्षे यत्तदोर्नित्यसम्बन्धात् यथा सन्निकर्षेण मयि भावः शुद्धा प्रीतिर्जायते तत्तदवसरे यथारुचि यथाकालं परिचर्यादिसम्भवात् तथा श्रवणादिना न जायते ततो गृहाग्र प्रतियातेति नञः परिकृत्यान्वयः। यद्वा, ततोऽगृहानिति प्रश्लेषः "अभावेन छन्नेनापि" इत्यमरकोशात् अयातेत्यन्वयः नयातेत्यर्थः। यद्वा, प्रतिषेधप्रत्याख्यान प्रतिपक्षादिषु प्रकृत्यर्थविरोधेऽपि प्रतिशब्दो दृष्टः ततश्च प्रतियात गमनविरोधविषयान् गृहान् कुरुतेत्यर्थः । यद्वा, गृहानिति "देवविश्वद्रुहोऽपि हि" इतिवत् कुञ्जगृहानित्यर्थः प्रतियातेति सर्वतोऽन्वयः सुहृदं प्रतियातीति वत्कुञ्जगृहागमनोन्मुखी भवतेत्यर्थः ॥ २७ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

प्रथमपक्षे एवं धर्मोपदेशादिना बहुधा प्रत्याख्याता अपि यदा प्रेममार्गाद् गृहमार्गं प्रति न चेलुस्तदा प्रेमसाधनान्तरोपदेशेन व्यवसितभगवदङ्गसङ्गसौख्याभ्यासानामिव परीक्षां करोति, श्रवणादिति । प्रथमं तद्गुणाभिज्ञमुखेन गुणश्रवणाद्गुणपरोक्षज्ञानान्मयि भावोत्पत्तिस्ततो दर्शनादपरोक्षगुणोत्कर्षाद्भाववृद्धिस्ततो ध्यानान्निरन्तरप्रत्ययप्रवाहरूपात् दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिरिति सूत्राद्भावदार्ढ्यं तथानुकीर्तनात्—

"तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः" ॥

इत्युक्ताभ्यासरूपाद् दृढभावरक्षणं यथा तथा सन्निकर्षेण न भवति प्रत्युत भावशैथिल्यं ततो गृहान्प्रतियात तत्रैव श्रवणध्यानादि कुरुत । द्वितीयपक्षे तु यथाश्रवणादिना मयि भावो भवति तथा सन्निकर्षेण ततोऽप्यधिकसुखापरोक्षानुभवेन दर्शनलाभभोगेषु सुखतारतम्यस्य श्रुतिलोकोभयसिद्धत्वात् भावातिशयो भवति ततो गृहान् प्रति न यात । यद्वा, किं न तथा सन्निकर्षेण अपि तु ततोऽप्यधिकतममिति सन्निकर्षार्थं गृहान् लताद्रुमनिकुञ्जगृहान्प्रतियातेति भावः ॥ २७ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

न तु तत्सर्वं लोकदृष्ट्या भगवतोक्तं वयं तु पुरुषोत्तमे त्वय्यासक्ता अतो नास्माकं स्वधर्मत्यागयुक्तो दोषो भगवदाराधनस्य सर्वोत्तमधर्मत्वादित्याशङ्क्यैवं तर्हि न लौकिकस्नेहस्याग्राह्यो विषयः कामलेपस्य लौकिकस्य हीनत्वादित्याशयेनाह, श्रवणादिति । आदौ श्रवणं भगवत्प्रतिपादकवाक्यादीनां भगवति शक्तितात्पर्यावधारणं पश्चात्तेषामनुकीर्तनम् अवधारितार्थस्य स्थिरीकरणायाभ्यासो मननमिति यावत् ततो ध्यानं श्रुते मतेऽर्थे चित्तस्य स्थिरीकरणं निदिध्यासनं ततो दर्शनं तदर्थस्यानुभवः भगवत्कृपया साक्षात्कारस्तस्माद्यो मयि भावः परप्रीतिलक्षणो यथा भवति न तथा सन्निकर्षेण भावो भवति लौकिकसङ्गेन लौकिक एव कामलेपभूतभावो भवतीत्यर्थः । ततस्तस्माच्छ्रवणाद्यर्थं गृहान् प्रतियात । यद्वा, न वयं सम्भोगार्थिन्योऽपि तु प्रेमलक्षणभक्तिमात्रेच्छावत्योऽतः सर्वं विहायात्रागता अतस्तदर्थं भवत्सन्निकृष्टतया स्थास्याम इति चेत्तत्राह—श्रवणादिति । स च मयि भावः श्रवणादिना यथा भवति न तथा सन्निकर्षेण ततस्तदर्थं गृहान्प्रतियात । यद्वा, अहो भगवत्सन्निधावस्थानेऽपि वयमयोग्या इति खिन्नचित्ता आलक्ष्याह, श्रवणादिति । मन्मुख्यभक्ताः सामीप्यसालोक्यादिकमपि न कामयते किन्तु श्रवणकीर्तनादिभिरेव रमतेऽतो युष्माभिरपि श्रवणादिभिर्निरुपाधिकोऽपि भावः सम्पाद्यः किं सन्निकर्षप्रार्थनयेति भावः अन्तर्भिप्रायं अहो देव ! यस्मिन्वयमनुरक्तचित्ताः प्रेमाभिकामाः कदापि वियोक्तुमयोग्यास्ताभ्यः स्वानस्वाङ्गमङ्गं न प्रयच्छति स्वसन्निधावपि निषेधत्यतः किं कुर्मः क गच्छामः इति व्याकुलमानसाः खिन्नचित्रवदवस्थिताः दृष्ट्वा तासां पूर्णभावमालक्ष्य तस्य परमदार्ढ्यसिद्ध्यर्थमाह—श्रवणादिति । परिपाकपर्यन्तं सम्पादनीयो भावो यथा श्रवणादिना भवति न तथा सन्निकर्षेण सन्निकर्षस्योत्कण्ठाशैथिल्यकरत्वादपक्वे भावे त्वङ्गसङ्गो न रसावहः तस्मात्तत्परिपाकहेतूत्कण्ठावृद्ध्यर्थं गृहान् प्रति यातेत्यर्थः । यद्वा, "अथवा मदभिस्नेहात्" इत्यनेन मयि साधारणप्रीतिमत्यो भवत्य इत्युक्त्या कामोपाधिकप्रीतौ भर्तुरित्यादिना दोषमुद्भावितवानथेदानीं तस्याभिवृद्ध्यावुपायमाह—श्रवणादिति । यद्यपि वर्त्तमानकाले कुलस्त्रीणां युष्माकं निषिद्धो भावो नास्तीत्यहं सम्यग्जानामि तथापि शुद्धभावे दोषप्रवेशभयात्तत्र दोषोद्भावनं मया कृतं शुद्धभावश्च श्रवणादिना यथा पूर्णतां गच्छति न तथा सन्निकर्षेण प्रेक्ष्यऽतः सन्निकर्षेण सन्निकटस्थित्या मालिन्यं भजेच्छिन्द्राद्युत्थाने न निवर्तते च तस्मात्तदर्थं गृहगमनमेव युष्माकमुचितं नत्वत्रावस्थानमिति भावः । यद्वा, कृष्णासङ्गमोत्कटोत्कण्ठायुतानां कोटिब्रह्मकल्पपर्यन्तं कुम्भीपाकादिनरकपाताद्व्यभीतानां त्यक्तलोकद्वयानामस्माकमाशयमभिज्ञाय किमनेन प्रलाप आरब्ध इति कोपेन व्याकुलस्वान्ता आलक्ष्य तत्कोपमन्यथा प्रकटयन्नाह—श्रवणादिति । अहो भर्तृशुश्रूषादिधर्मनिधिभूतासु यथोक्तदोषगन्धेनापि विनिर्मुक्तासु युष्मासु दोषमारोप्यायं प्रलपति इति कोपो न कार्यः उक्तवाक्यस्य प्रासङ्गिकत्वात् युष्मदभिप्रेतस्तु भावः शुद्ध एवेत्यहं सम्यग्जानामि स च मयि यथा श्रवणादिना भवति न तथा सन्निकर्षेण ततो गृहान् प्रतियातेत्यर्थः । मानिनीपक्षे ननु, किमेवं कल्प्यते सद्भावप्रहीणोऽहमेव भवतीनां भर्ता ननु पित्रादिदत्ता गोपा इति सद्भावस्यापि सम्प्रति सन्निकृष्टेषु तेष्वेव सत्त्वादुत्पन्नस्याप्यसन्निकृष्टेष्वपि सम्प्रति निवृत्तित्वाद्भर्तेति चेत्तत्राह, श्रवणादिति । यथा श्रवणादिना मयि भावो युष्मदन्तःकरणेषु वर्त्तते तथा सन्निकर्षेणापि पत्यादिषु नास्तीत्यहं सम्यक् जानामि अतः किमिति स्वभावतिरोधाने भवत्यः प्रवृत्तास्तस्मात् गृहान् प्रति न यातेति ततोऽनुषङ्गः । यद्वा, ततो गृहानित्यत्राऽकारप्रश्लेषः "अभावे न ह्यनोनापि" इत्यमरादयात न प्रतियातेत्यर्थः । यद्वा, ननु, मदभिस्नेहाद्भवत्यो यन्त्रिताशया इति भवता कथं ज्ञातमिति चेत्तत्राह—श्रवणादिति । अहर्निशं मच्छ्रवणादिना तथा सन्निकर्षेण सन्निकटागमनेन भवतीनां मयि भावो वर्तत इति मया ज्ञायते ततः कपटेन पतिसेवाद्यर्थं गृहान्प्रति न यातेत्यर्थः यद्वा, ननु, पत्यादि सन्निधावेव सर्वदा स्थास्यामस्तत् सन्निकर्षेण च तत्र भावोऽपि भविष्यति तत्पूर्वकतत्सेवनादिना धर्मादिकमपि सत्स्यतीति चेत्तत्राह श्रवणादिति तत्सन्निधावनवस्थितानामपि युष्माकं यथा मयि भावो भविष्यति मच्छ्रवणादिपरत्वात् तथा पत्यादियुक्तदभावात्ततो गृहानित्यादी व्यवर्तत एतेन किमित्येवं स्वपत्यादिषु भावनवतीनामस्माकमधर्माधिकारं भावं वदसीत्युपालम्भोऽपि निरस्तः निवृत्तिपक्षे एवं वेदवचसां भूनेर्थे प्रामाण्यं नास्त्यतो वेदान्तवाक्यानामपि कृत्यर्थकर्त्रादिप्रतिपत्तिपरत्वमभिहितमधुनातु उपनिषदां ब्रह्मणि प्रामाण्यं तथापि स्वप्रकारणागतमनोव्यापाराविधिशेषत्वैव तथा यूपाऽऽहवनीयादीन् अलौकिकान्यपि शास्त्रेण समर्प्यन्ते तद्वद्विधिशेषतयाचोपनिषद्भिर्ब्रह्म समर्प्यत इत्याह—श्रवणादिति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "य आत्मा अपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञा-

## श्रीशुक उवाच ।

**इति विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ।**
**विषण्णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ २८ ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

सितव्यः, आत्मेत्येवोपासीत आत्मानमेव लोक उपासीत, ब्रह्म वेद ब्रह्मैव भवति" इत्यादिना विहिताच्छ्रवणाद्दर्शनाभिध्यासनान्मननाद्यर्थमपि आत्मनि भावः कार्यैन्वितस्वार्थपरत्वविधया तत्परता प्रामाण्यं भवति न तथा सन्निकर्षेण तत्त्वमस्याद्यभेदमात्रबोधनेन सिद्धार्थकथनमात्रेण प्रामाण्यं भवति तथा च यथोक्तविधानेषु सत्सु कोऽसावात्मा किं ब्रह्मेत्याकांक्षायां नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यः शुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्मेत्येवमादितत्स्वरूपसमर्पणेन सर्वा उपनिषद उपयुक्ताः तदुपासनाच्च शास्त्रदृष्टो दृष्टो मोक्षः फलंभविष्यति तर्कव्यधिया ननु प्रवेशे वस्तुमात्रकथने हानोपादानासम्भवात् "सप्तद्वीपा वसुमती राजाऽसौ गच्छति"इत्यादिवाक्यवदुपनिषद्वाक्यानामानार्थमेव स्यादिति भावः । तस्मात् गृहान्कार्यसंसृष्टरूपान्यात गच्छत तत्परतैव युष्माकं न्याय्येत्यर्थः ॥ २७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, सत्यमेतदन्यविषये सर्वस्वमिति तु येन केनाप्युपायेन त्वयि भक्तिः स्थिरीकर्तव्या इत्यत आह—श्रवणादिति । भावो भक्तिः ॥ २७ ॥

---

### भाषाटीका ।

श्रीकृष्णचन्द्र बोले, कि—हे गोपियो जैसो कछु दूर तें मेरे गुण श्रवण करवेतें दर्शनतें ध्यानतें और कीर्त्तनतें मो में भाव होय है तैसो समीप तें नहीं होय है तासूं अब तुम अपने २ घरन कों चली जाओ ॥ अथवा जैसो समीपसें अथवा दर्शन ध्यानसों और कीर्त्तनसों मो में अचल प्रेम होवे है तैसो दूरते नहीं होवे है तासों अब तुम घरनको मत जाओ ॥ २७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

"दशश्लोकेऽन्वनैस्तासां प्रेमकोमलितात्मनाम् । आद्यास्तु सर्वालोवादत्यवार्ह्ति कौतुकयजृम्भमत्" इति एतत् गोविन्दस्य गोकुलेन्द्रत्वेन निजसहजप्रेमभराविषयस्य भाषितं वचनं विप्रियं परमप्रेमवंगतः सद्यस्तात्पर्यानवधारणेन अप्रियार्थस्पर्शनेन वा अनिष्टं किम्वा प्रियविपरीतं विप्रियमाकर्ण्य यद्वा, अर्थद्वयस्पर्शित्वेनानिश्चिताशयत्वादुत्कपठाभरेण तासां विप्रियत्वेनैव ज्ञातमित्यर्थः । विषण्णा अन्तस्तप्ताः सत्यः यतो भग्नः सङ्कल्पस्तत्सङ्गजनविषयविषयकमनोरथो यासां ताः अतो दुरत्ययाम् अनतिक्रम्यां वा चिन्ता अनिष्टाप्तिजन्यं ध्यानम् आपुः अयं प्रेमार्द्रकोमलस्वभावोपि परमां काठिन्यमस्मद्दौर्भाग्येन गतः तदधुना किं सपादग्रहणकाकुभिरयमनुनीयेत किम्वा प्रतिवचनेन प्रयत्नतः क्षणं धैर्यावलम्बनेन वा शाठ्यतो व्रजं प्रति निवृत्त्या वा दुरवगाहगाम्भीर्यस्यास्याशयं निर्धारयेम किम्वा सद्य एव प्राणान् परित्यजेम तत्र चाऽस्य साक्षादेव परोक्षं वा यमुनाप्रवेशादिनेत्यादि चिन्तयामासुरित्यर्थः । यद्वा, अहो वत किं करवाम कुत्र यामेत्याद्यनिर्देश्यां चिन्तां नानामुखवैक्लव्यलक्षणाम् यद्वा,विषण्णाः सत्यश्चिन्तामापुः विषण्णत्वे हेतुद्वयं विप्रियमाकर्ण्येत्येकः प्रेष्ठजनस्य विप्रियोक्तिश्रवणमात्रेण स्वयमेव परमदुःखोत्पत्तेः । किञ्च, भग्नेत्यन्यः विशेषतोऽन्येषोपेक्षया निजचिराभीष्टार्थस्य भङ्गादित्यर्थः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति एतत् गोविन्दस्य गोकुलेन्द्रत्वेन गोकुलमात्रे हि तत्स्थापि किमुत स्वेषु भाषितं स्फुटमेव वचनं विप्रियमिति अर्थद्वयस्पर्शित्वेनाऽनिश्चिताशयत्वादुत्कण्ठाद्यभावेन तासामुपचैव स्फुरितेति विषण्णा अन्तस्तप्ताः सत्यः यतो भग्नः सङ्कल्पस्तत्सङ्गविषयः चिरन्तनमनोरथो यासां ताः अतो दुरत्ययाम् अनतिक्रम्यां चिन्तामनिष्टाप्तिदृष्टानवाप्तिजन्यं ध्यानम् आपुः अयं प्रेमार्द्रकोमलस्वभावोपि परमकाठिन्यमस्मद्दौर्भाग्येन गतः तदधुना किं सपादग्रहणकाकुभिरमुमनुनयेम उत प्रतिवचनेन वा प्रयत्नतः क्षणं धैर्यालम्बनेन वा शाठ्यतो व्रजं प्रतिनिवृत्त्या वा दुरवगाहगाम्भीर्यस्यास्याशयं निर्धारयेम किं वा सद्य एव प्राणान् त्यजेम तत्र चास्य सकाशेव परोक्षं वा यमुनाप्रवेशादिनेत्यादि चिन्तयामासुरित्यर्थः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं स्वमनोरथाननुगुणं गोविन्दस्य वचो निशम्य गोप्यो भग्नः सङ्कल्पो यासां ता अत एव विषण्णा दुःखिताः अत एवानवधिकां चिन्तां प्रापुः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः !" इति गोविन्दभाषितम् अधुना विप्रियं पश्चाद्विशेषतः प्रियं चिन्तां मनसि दुःखचर्यां विचारं "चिन्ताचर्चिकयोश्चर्चा"इति ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ भगवद्वचसां गाम्भीर्यात् स्वकीयौत्कण्ठ्यगाढत्वाच्च विशेषविदग्धा अपि यथाश्रुतमेवार्थं विदित्वा "अनिष्टाशंसीनि बन्धुहृदयानि" इति न्यायेन तद्वचसः काठिन्यमेव जानन्त्यो वामवस्थामापुस्तामाह—इतीत्यादि । गोप्यः गोविन्दभाषितम् आकर्ण्य चिन्तामापुः कीदृशम् ? इति विप्रियम् एवं प्रकारं विप्रियं पक्षे एवं प्रकारकं विशिष्टं विविधं वा प्रियमपि इत्यपि शब्दोऽध्याहार्यः ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तासां गृहगमने बोधिते तत्परित्यागानन्तरं पुनर्ग्रहणमिदं वान्ताशनमिव मन्यमानाः भगवद्वाक्यं चानुल्लङ्घ्यामिति विचार्य अतिविरोधे उभयानुरोधिशरीरपरित्यागः कर्त्तव्यः इति निश्चित्य तत्रापि भगवत्सम्बन्धानन्दाभावादितिकर्त्तव्यतामूढा जाता इत्याह—इति विप्रियमिति । विगतं प्रियं यस्मादिति उभयथापि प्रियाभावः किं परीक्षार्थमाह अहोस्विदभिप्रेत एवायमर्थः इति आ समन्तात् श्रुत्वा वाक्यतात्पर्यं (यार्थं) निर्द्धार्य सत्यं गमनमेव वदतीति निश्चित्य अनभिप्रेतत्वेपि तत्प्रसवहेतुमलभमानाः गोप्यो नैपुण्यरहिता गोविन्दस्य स्वामिनो देवभाषितत्वेन अनृतशङ्कारहितमीश्वरवाक्याच्च निर्द्धाररहितमाकर्ण्य विषण्णा जाताः मनसि परमं विषादं प्राप्ताः तत्र हेतुर्भग्नसङ्कल्पा इति तदा परां चिन्तामापुः कथमस्मद्विचारितं भगवद्वाक्यं च एकमुखं भवतीति सा चिन्ता त्रैलोक्यं व्याप्य वेदं जन्मजन्मान्तराणि च निर्द्धारमलभमाना दुरत्यया पर्यवसानरहिता जाताः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गाः नानाविधान् वाग्विलासान् प्रयोक्तुं विन्दते लभते इति गोविन्दस्तस्य भाषितं "भाष व्यक्तायां वाचि" इत्यतो व्यक्तवाक्यं विप्रियमाकर्ण्य तदेव ध्वनिद्वलेपयुक्तम् अव्यक्तवाक्यं तस्यप्रियत्वे बुद्ध्या सम्यगवगतेपीत्यर्थः । व्यक्तवाक्यस्य विप्रियत्वे कारणम् अदृष्ट्वा अव्यक्तवाक्यस्यापि प्रियत्वे सन्दिहाना स्ता अनुरागस्थायिभावोत्थदैन्योदयात् सत्यमयोग्या अस्मानयमुपेक्षते एवेति निश्चित्य विषण्णा यदर्थमस्मो पतिकुलपितृकुलधर्मधैर्यभयलज्जादिकमुपेक्ष्यावतः स खल्वस्मानुपेक्षत इति भग्नसङ्कल्पाः चिन्तामापुः किं सकाकुपादगृहणाभिमनुनयेम किम्वा प्रयत्नतो धैर्यमवलम्ब्य कृत्रिमशाठ्येन व्रजं प्रति निवृत्या दुरवगाहगाम्भीर्यस्यास्याशयं निर्द्धारयेम किम्वा प्राणान् परित्यजेम तत्र चास्य साक्षादेव परोक्षं वा यमुनाप्रवेशादिना वा हन्त प्राणांस्त्यक्त्वास्य अभिमुखं कथं पश्येम अत्यक्त्वा वा कथमत्र स्थातुं प्राप्स्याम एतद्दाहिदृष्टं पत्याभिसजनरूपं वान्तभक्षणं कर्त्तुं वा कथं प्रभवाम क याम किङ्करवामेत्यादीतिकर्त्तव्यमूढा बभूवरित्यर्थः ।

"आहूय गोपीस्तत्वातकावली:-
स्वैर्वेणुनादेन वचपं यद्विपम् ॥
कृष्णस्तदैवासु वपुः सुधिस्मिता:-
विश्वस्य ताः का जहति ब्रवं निजम्" ॥ २८ ॥

### विशुद्धरसदीपिका ।

उपसंहरति—इतीति । एवं प्रकारं यद्वा, एतदेव विप्रियम् अप्रियं यतः गोविन्दभाषितं गोकुलेन्द्रत्वात्परमप्रेष्ठत्वेन सम्भावितस्य साक्षाद्वचनमाकर्ण्य सम्यक् श्रुत्वा ननु परम्परया गोप्यः तदेकजीवनाः अत एवार्थद्वयस्पर्शित्वेनानिश्चिताशयत्वादुत्कण्ठातिशयस्वभावेन तासामुपेक्षैव स्फुरितेत्याह—विषण्णा इति । अन्तःसन्तप्ता इत्यर्थः । तादृश्यः सत्यः चिन्तामापुः तथाहि अयं प्रेमार्द्रकोमलस्वभावोपि परमकाठिन्यमस्मद्दौर्भाग्येन गतस्तदधुना सपादग्रहणकाकुभिरनुनयेम उतप्रतिवचनेन वा प्रयत्नतः क्षणं धैर्यालम्बनेन वा शाठ्यतो व्रजं प्रतिनिवृत्य वा दुरवगाहगाम्भीर्यांशयस्याशयं निर्द्धारयेम किम्वा सद्य एव प्राणांस्त्यजेम तत्र चास्य साक्षादुत परोक्षं वा यमुनाप्रवेशेन वेति दुरत्ययाम् अपाराम् इति कान्तभावानां तु कासाञ्चिच्चिन्तानुकरणमात्रं कासाञ्चित्साधकचरीणां प्राग्भावीयसंस्कारवशेन मौग्ध्येन वा चिन्ताभासमात्रमिति विवेकः ॥ २८ ॥

---

### श्रीरामनारायणकृतभावविभाविका ।

एवं भगवतोक्ते तासां गोपीनां या दशा जाता तामाह—भगवान् शुकः—इति विप्रियमित्यादित्रिभिः । तत्र या गोप्यो मानिन्यः प्राग्लब्धविहारा बहुधाऽनुभूतभगवद्दाक्षिण्यभावाः कदाप्यदृष्टोपेक्षास्तासामुपेक्षार्थस्फूर्त्यभावाद्भगवद्दाक्षिण्यभावेन सानुरागप्रार्थनामात्रभानेन यत्सौख्यं जातं तद्वर्णयति—इति । विप्रियमिति । इति भगवदुक्तपद्येषु द्वितीयपक्षे व्याख्यातं विप्रियं विशेषेण प्रेष्ठतमानुरागातिशयोद्घाटकतयाप्रियं मनोऽनुकूलं गोविन्देन गवामिन्द्रेण गोपालतयैव देवेन्द्रादपि लब्धमानेन गोपगोपिकार्थं देवेन्द्रमानापहारिणा सर्वथा स्वानुकूलेन साक्षाद्भाषितं नत्वन्यमुखाच्च्युतमाकर्ण्य यद्वा, गोविन्देन गवां बहिरन्तरिन्द्रियाणामिन्द्रेण गाः इन्द्रियाणि स्वनियम्यतया विन्दते इति तथा हृषीकेशेन भाषितमतो यद्बोधाय यदर्थतया प्रयोगस्तस्प्रेरणया ताऽस्मत्तदर्थप्रतीतिसम्भवान्न शङ्काऽवसर इति द्व्यर्थकमपि वाक्यं विशेषेण प्रियं यथा भवति तथाऽऽकर्ण्येति वान्वयः । विषण्णाविगताऽवसादा जातातिप्रमोदा इत्यर्थः भग्नसङ्कल्पा भग्नो गृहगमनसङ्कल्पोपि यासां तथाभूताः सत्यः दुरत्ययामव्युच्छिन्नां चिन्तां चित्तस्य भगवति प्रत्ययैकतानतां आपुः "चिन्तयेन्मामतन्द्रितः" इत्यादौ चिन्ताशब्दस्य ध्यानार्थकत्वलाभात् दुरत्ययत्वनिर्देशेन समाधिर्द्योतितः भगवद्रूपमाधुर्ये समाधिविलीना बभूवुरिति भावः याश्च प्रागलब्धविहारा मुग्धास्ता गोप्यस्तु इति द्व्यर्थकमपि वाक्यं विप्रियं प्रियविरुद्धं यथा स्यात्तथैवाकर्ण्यं गोविन्दभाषितमित्यस्यान्वयं भावः । अयं गवां गोभूमीन्द्रियवेदादीनामिन्द्रो गोपीरस्मान् नः उपेक्षन् इति तथा च विषण्णा विषादापन्नाः भग्नसङ्कल्पाः निवृत्तोत्साहाः दुरत्ययामचिकित्सां चिन्तां चितातोपि दशगुणाधिकामापुः तद्यथा—

"चिन्ताचिता बिन्दुमती चितातो दशधाऽधिका ।
चिता दहति निर्जीवं सजीवो दह्यतेऽनया ॥ २८ ॥

---

(१)कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्त्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥ २८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं भगवद्वाक्यान्युदाहृत्य ततः किं वृत्तमित्यपेक्षायां गोपिकावाक्यान्युदाहर्तुं श्रीशुक उवाच—इति, यथोक्तप्रकारमत एव विगतं प्रियं यस्मात्तद्विप्रियं नच प्रियवचने विप्रियत्वभ्रमः यतो भाषितम् "भाष व्यक्तायां वाचि" इति स्मरणादुव्यक्तं प्रतियात व्रजमित्यादिस्पष्टनिषेधरूपम् । ननु, यथावद्भवणां स्पष्टार्थकमपि वाक्यमन्यथा प्रतीयत इत्याशङ्कानिरासायाह—आकर्ण्य समन्तान्मनो दत्त्वा मधुरवाः श्रुत्वा तत्रापि तात्पर्यावधारणापर्यन्तं श्रुत्वा एतेन तद्वाक्यस्य परीक्षार्थत्वमपि वारितम् तत्रापि गोविन्दस्य गां वेदादिरूपां वाणीं विन्दतीति गोविन्दस्तस्य वेदार्थसम्प्रदायप्रवर्तकस्य सर्वज्ञस्य परमात्मनः भाषितं प्रतीकारभाषिते हि संशयो भवति किमभिप्रायेणानेन प्रयुक्तमिदं वाक्यमिति न तु परमात्मभाषितमिति भावः । एताश्च गोप्यः प्रस्तावात्स्वात्प्रतारणायोग्यात्तस्माद्यथार्थं गमनमेव वदतीति तद्वाक्यान्निश्चित्याऽहो गृहादिकं त्यक्त्वाऽत्र वयं समागताः वान्ताऽशनमिव पुनस्तद्गृहान् गन्तुमशक्ताः भगवद्वाक्योल्लङ्घने चाऽक्षमाः इति विचार्योभयविरोधे शरीरपरित्याग एव कर्त्तव्य इति निश्चित्य विषण्णाः विषादश्च इतिकर्तव्यतायां मूढतां गताः यतो भग्नः सङ्कल्पो भगवत्सङ्गमानन्दविषयको यासां ताः दुरत्ययां जन्मान्तरेष्वपि अनिवर्त्यां चिन्तामहो भगवता किमिदमुक्तमतःपरं किं भविष्यतीत्येवमादिरूपां प्रापुः । अनभिधापक्षे इति यथोक्तं गोविन्दस्य भाषितं प्रार्थकमप्युत्कण्ठाक्षमावाद्विप्रियमेव निर्धार्य्य गोवर्द्धनधारणेन सर्वदा रक्षापरायणस्य महात्मनः स्वामिन इदं वाक्यम् अतो नानृतमिति तासां चित्ते प्रतीतिर्जातेति बोधयितुं गोविन्दपदनैपुण्यराहित्येन यथाश्रुतार्थमात्रग्रहणसमर्था इति द्योतनाय गोप्य इत्युक्तं ततो विषण्णाः परमापदमापिता यतो भग्नस्तद्रतिविषयः सङ्कल्पो मनोरथो यासां ताः दुरत्ययामनन्तां चिन्तामापुः । अहो कलगीतमाकर्ण्याऽऽह्वानभ्रमात्कुलधर्मधैर्यभयलज्जादिकं विहाय तथैवाऽत्र समागताः वेमाद्रौऽद्यचमस्मद्भाग्येन कठोरतां गतः किं वाऽस्मत्परीक्षार्थं दाक्षिण्यं विहाय वामतामतिमङ्गीकृतवान् ? किं वा अस्य मनसि प्रेमलेशोऽपि नासीत् भ्रमादेव जन्मप्रभृत्येतस्मिन्वयमनुरक्ताः ? किं वाऽस्मदीयं किञ्चिदपराधमनुसन्धाय तद्दण्डदानायोद्यमः ? ततः किममुं नत्यादिभिरनुनयामः ? किं वा प्रतिवचनेन व्रजं प्रतिनिवृत्त्याचैतदाशयं निर्धारयेम ? एतदाज्ञापालनं वा करवाम ? एतदादिष्टं वान्ताशनसमं पत्याराधनं तु कथं कर्तुं प्रभवाम ? किं चैतत्समक्षे यमुनाप्रवेशादिना सद्यः प्राणांस्त्यजेम ? एवञ्चेत्पुनरेतन्मुखसरोजं कथं पश्येम ? एतद्दर्शनं विनाऽत्रापि स्थातुं कथं प्रभवाम ? अहोऽतिकष्टं किमु कुर्मः क गच्छाम ? इत्येवमादिरूपां चिन्तां प्राप्तवत्यः ॥ माननीपक्षे इति विशेषेण प्रियं गोविन्दभाषितमाकर्ण्य विषण्णाः भग्नसङ्कल्पा इव दुरत्ययां चिन्तां प्रापुरङ्गीकृतवत्यः निवृत्तिपक्षे इत्येवं विगतप्रिया गोविन्दस्य वेदयाज्ञिभ्यो वेदप्रामाण्याय स्वीकृततद्वादिविग्रहस्य भाषितमाकर्ण्य विषादं प्राप्ताः यतो भग्नः प्रत्यगभिन्नब्रह्मप्रतिपादसङ्कल्पो यासां ताः गोप्यः परमात्मसम्बन्धिन्यः श्रुतयो दुरत्ययां चिन्ताम् आस्तिकामप्यस्मन्नाशाय प्रवृत्ताः अहो कथं भविष्यतीत्येवंरूपां प्रापुरित्यर्थः ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विप्रियं स्वमनोरथाननुरूपम् ॥ २८ ॥

भाषा टीका ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन् ! श्रीगोविन्द अर्थात् विचित्र वाणीकूं प्राप्त होन वारे श्रीकृष्णचन्द्र ने याप्रकार (दूसरे अर्थकी रीतिसूं) विशेषकरकें प्रिय वाते कहीं परन्तु गोपीन ने उन वातनकूं विप्रिय जानकें बडो विषाद कियो, और गोपीं जो रासविलास के मनोरथ करकें आई हीं, सो मनोरथ सब भग्न होय गयो, तासूं बडी चिन्ता कूं प्राप्त होती भई ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चिन्तां प्राप्तानां स्थितिमाह—कृत्वेति । शुचः शोकादुद्गतेन श्वसनेन शुष्यन्तो बिम्बफलसदृशा अधरा येषु मुखेषु तानि अव अवाञ्चि कृत्वा तथाऽङ्गुष्ठेन महीं लिखन्त्यः तथा गृहीतकज्जलैरश्रुभिः कुचकुङ्कुमानि क्षालयन्त्यः तूष्णीं स्थिताः यतः उरुदुःखस्य भरो भारो यासां ताः ॥ २८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अत एव तूष्णीं तस्थुः स्वयं परमचिन्तावेशेन वागादीन्द्रियवृत्त्यस्फूर्त्तेः शुच इत्यनेन शुष्यदित्यनेन च श्वासस्य दीर्घतोष्णता च म्लानता बिम्बेति पक्वबिम्बफलसादृश्येनारुणता कोमलता च अतोऽधराणामतिशोषो म्लानता च सूचिता चरणेन वामपादेन भूमिलिखनं चिन्तानुभावः, हे भूमि ! विदीर्णा भव वयं प्रविशाम इत्यस्य भावः । एवमूर्द्ध्वाऽधःपतितैरस्र गलद्भि उपात्तमषिभिरिति कुचकुङ्कुमानि मृजन्त्य इति च अश्रूणां धारा सूच्यते तस्यां अपि बाहुल्यविवक्षया बहुत्वं तत्र सर्वत्र हेतुः उरुदुःखस्य भरो भारो बाह्यु महादुःखव्याप्ता इत्यर्थः । यद्वा, अनेनानुक्रममन्यदपि सन्तापकृशतादिकं सङ्गृह्णाति तेन वैवर्ण्यकम्पस्तम्भादयोऽपि जाता इत्यर्थः । यद्वा बाह्यस्थितिप्रकारमुक्त्वा आन्तरमप्याह—उर्विति । अनेन मूर्च्छानुरूपावस्था बोध्यते तस्याश्च

(१) न्यक्कृत्य वक्त्रवनजान्यतिताप इति विज० ।

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

दुःश्रवत्वात् साक्षाद्वनुक्तिः स्मेति प्रसिद्धौ नर्मोक्त्याऽपि तासां तादृशशोकेऽसम्भावना न कार्य्येति भावः । यद्वा, विस्मये तथापि तादृग्दुःखमभूदहो प्रेममहिमेति । यद्वा, अव्ययानामनेकार्थत्वात् खेद एव ॥ २९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव तूष्णीं तस्थुः स्वयं परमचिन्तावेशेन वागिन्द्रियवृत्त्यस्फूर्त्तेः शुच इत्यनेन शुष्यदित्यनेन च श्वासस्य दीर्घतोष्णता च ध्वनिता शतृप्रयोगेण तु शोषाविच्छेदः बिम्बत्वरुणता कोमलता च अतोऽधराणामतिशोषो म्लानता च सूचिता चरणेन वामपादाङ्गुष्ठेन भूविलेखनं चिन्तानुभावः हे भूमि ( मे ) ! विदीर्णा भव प्रविशाम वयमित्यस्य भावः । एवमूर्द्ध्वाधःस्थितिरेव गम्यते उपात्तमपिभिरिति कुचकुङ्कुमानि मृजन्त्य इति चास्राणां धारा सूच्यते तस्यापि बाहुल्यविवक्षया बहुत्वं तत्र सर्वत्र हेतुः उरुदुःखस्य विषादस्य भरो भारो यासु ताः अनेनानुकमन्यदपि सन्तापक्लमादिकं गृह्यते तेन वैवर्ण्यस्तम्भादयोऽपि जाता इत्यर्थः । स्मेति प्रसिद्धौ नर्मोक्त्यापि तासां तादृशशोके त्वसम्भावना न कार्य्येति भावः । यद्वा, विस्मये तथापि तादृशदुःखमभूदहो प्रेममाहिमेति एते च चिन्तानुभावा न तासां वक्ष्यमाणनिषेधरूपप्रतिवचनार्थविशेषभञ्जकाः कामिकृतप्रार्थनायां कुलवतीनां तत्सम्भवात् तासां रसाविरोधिभावोदयस्वभावाच्च ॥ २९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अव अवाङ्मुखानि कृत्वा ॥ २९—३१ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

चिन्तां प्राप्तानां स्थितिमाह–कृत्वेति ।अव अर्वाक् मुखानि कृत्वा कथम्भूतानि शुचः शोकाद्यः श्वसनः सोष्णो निश्वासमारुतः तेन शुष्यन्तो बिम्बफलवदधरा येषु तथाभूतानि तथा वामचरणाङ्गुष्ठेन महीं लिखन्त्यः तथा गृहीतानि कज्जलानि यैस्तैरश्रुभिः कुचयोः कुङ्कुमानि क्षालयन्त्यः उरुः दुःखभारो यासां तथाभूताः तूष्णीं स्थिताः बभूवुः ॥ २९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुःखं लक्षयितुमाह—न्यक्कृत्येति । वक्त्रवनजानि मुखकमलानि न्यक्कृत्य अधःकृत्वा बिम्बफलतुल्यान्यधराणि बिम्बाधराणवन्तर्गतशोकाग्निपतितापेन शुष्यन्ति बिम्बाधराणि येषु तानि तथा—

"कामबाणप्रविद्धाङ्गा खिन्नयोनिर्वराङ्गना ।
पादाङ्गुष्ठनखेनाधोवदना लिखती क्षितिम्" ॥

कामशास्त्रप्रसिद्धभावं दर्शयति–चरणेनेत्यादिना । उपात्तमषिभिरञ्जीकृताञ्जनैरश्रैर्बाष्पैः उरूणां दुःखानां भारो यासां तास्तथा स्म कृष्णवाक्याभिप्रायं संस्मृत्य—

"कामस्य दहनास्त्रैस्तु दग्धाङ्गोत्पादिनाश्रुभिः ।
नेत्रद्वारेण निर्याति दुःखमन्तर्गतं स्त्रियः" ॥ इति ॥ २९ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

चिन्ताप्रकारमाह–कृत्वेत्यादि । मुखानि अव अधःकृत्वा कीदृशानि शुचः शोकाद्धेतोर्यः श्वसनः श्वासस्तेन शुष्यन्तः अधरा येषु एतेन श्वासस्य दीर्घोष्णत्वं व्यञ्जयं चरणेन भुवं नत् भुवि किमपि बुद्धिपूर्वं लिखन्त्यः उपात्तमषिभिर्गृहीताञ्जनैरश्रैर्लोचनजलैः कुचकुङ्कुमानि मृजन्त्यः तूष्णीं तस्थुः न किञ्चिदूचिरे कथं नोचुस्तत्राह–उरूणां दुःखानां भरो यासु दुःखभरभावितत्वेन कण्ठरोधात् रागप्रवृत्ते स्मेति निश्चयः ॥२९॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततश्चिन्तया यज्जातं तदाह–कृत्वेति । चिन्तया प्रथमं मूर्च्छिता जाताः ततः मुखानि अव अवाङ्मुखानि कृत्वा कमपि स्वमुखं न प्रदर्शयिष्याम इत्यवाङ्मुखानि कृतवत्यः अवगताः शुचो याभिः ताः शोकसम्बन्धिन्यो वा जाताः शुचः श्वसनेन शोकसम्बन्धिना श्वासवायुना शुष्यन्ति बिम्बवदधराणि येषां तादृशानि मुखानि कृत्वा चरणेन च भुवं लिखन्त्यः तथैवावस्था भवतीति भूमिं विवरमिव प्रार्थयन्त्यः उपात्तमषिभिः अस्रैः कुचकुङ्कुमानि मृजन्त्यः तूष्णीं तस्थुः मुखस्य अवाक्त्वेन भक्तितिरोभावः श्वसनेन प्राणपीडाशोकेनान्तःकरणस्य बिम्बाधरशोषेण कामरसस्य पदा भूमिलेखनेन शरीरस्य अस्रैः इन्द्रियाणां कुङ्कुमाभावेन कान्ते दुःखभरेण आनन्दस्य तूष्णीं स्थित्या चैतन्यस्य तिरोभावो निरूपितः केवलं स्थाणुवत् स्थिताः ॥ २९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चिन्ताया अनुभावानाह–कृत्वेति । मुखानि अव अधःकृत्वात लज्जा ध्वनिता प्रेम्णोऽनुरागादस्माकं स्वाभाविकलज्जात्याग एव सम्प्रति लज्जां प्रापयतः कुलवतीनां पुञ्जीभूतलज्जानामप्यस्माकं लज्जात्यागः खलु प्रेमहेतुक एव स च प्रेमरसविदां मते सङ्गीत एव ननु विगीतः प्रेम्णस्तु लक्षणमेतदेव यत् स्वविषयं परमेश्वरमप्यतिशयेन वशीकरोति तत्प्रेमेति ततश्च यद्यस्माकं प्रेमविषयोऽयं कृष्णो न वशोऽभूत्तदास्माकं प्रेमैव नास्तीत्यवगतं लज्जात्यागोऽयं किं हेतुकोऽभूदित्यनुतापो लज्जाचिन्ता च तत्रानुतापं विवृण्वन् मुखानि विशिनष्टि मुखानि कीदृशानि ? शुचः शोकादुद्भूतेन श्वसनेनोष्णश्वासेन शुष्यन्तो बिम्बाधरा येषु तानि सूर्य्यातपेन पक्वबिम्बफलानां शोषे सतिहृयौल्यस्यापगमः स्पष्टमालिमत्वं च यथा भवेत्तथा अधराणामप्यभूदिति भावः । लज्जाचिन्ते विवृणोति—चरणेन वामपादाङ्गुष्ठेन भुवं लिखन्त्य इति·

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे धरित्रि ! विदीर्णा भव त्वयि वयं प्रविशाम इति भावः । शोकसन्तापौ विवृणोति—उपात्तमपिभिः कज्जलाक्तैरस्रैः कुचयोः कुङ्कुमानि मृजन्त्यः तेन विच्छेदवर्द्धकिना महाऽनुतापक्रकचेन द्विधा विदारयितुं श्यामसूत्ररेखे दत्ते इति सम्भावना ध्वनिता अस्रैरिति बहुवचनेन मृजन्त्य इति वर्त्तमानकालेन चास्रायां प्रवाहवती धारा सूचिता तावद्भिरप्यस्रैरन्तरीयवस्त्रायथार्द्रयन्ति इत्यनुक्त्या एवं सम्भाव्यते नयनोत्थयमुनाहृदयोत्थसन्तापानलयोर्निर्वापणशोषणकामयोर्विवादेन कस्याऽपि जयः पराजयो वा दृष्ट इति उरुदुःखस्य भरो भारो यासां नास्तूष्णीमिति भारासहिष्णुतयेव चेतनाया अपगमादिति भावः । ततश्चतस्थुरिति तासां गतचेतनानां पाञ्चालिकानामिवोर्द्ध्वस्थितिरवगम्यते ॥ २९ ॥

---

### विशुद्धरसदीपिका ।

तत्र चिन्ताप्राप्तानां स्थितिमाह—कृत्वेति । मुखानि अध अवाञ्चि कृत्वा अवाङ्मुखीकरणमिदं निजमुखस्य चन्द्रत्वाऽनुमावात् तदवलोकनेन तन्नेत्रकमलसङ्कोचात्क्लेपामनाकलनभ्रमनिवारणाय किम्वा तूष्णीं भव मैवं वाच्यमिति चेष्टितेनैव तद्वारणाय किम्वा अस्मद्भाग्या काश्चिदन्या एवागताः किम्वा वाक्षेवं वदत्ययमिति मौग्ध्येनात्मनोऽवलोकनाय यद्वा किमिदानीं विधेयमिति निजस्य पृच्छायै किम्वातिनिष्ठुरमिदमीदृशं वाक्यजातं निशम्याधुनापि जीवाम इति स्ववीक्षायै किम्वाऽस्य वाक्शरैरस्माकं हृदयानि विदीर्णानि न वेति परीक्षायै इत्याद्यूह्यम् अथ स्वयमेव तत्कारणमाह श्रीमुनीन्द्रः—शुचः श्वसनेन शुष्यद्बिम्बाधराणीति । इदं चोच्छ्वासैः सह जीवोऽपि किं निर्गत इत्याकलनाय किम्वा शुष्यद्बिम्बाधरावलोकनेनायमस्माकं कातर्यं मा जानात्विति गाम्भीर्येण तदाच्छादनाय किम्वा पूर्वं तु स्वभावसुन्दरावधरौ साहश्यमसहमानावेव स्थितौ सम्प्रतिशुचः श्वसनेन शुष्यन्तौ बिम्बसदृशौ जाताविति ततश्च बिम्बफलानां मतिघ्नत्वं धर्मशास्त्रप्रसिद्धमिति किमेतयोरवलोकनादस्य मतिभ्रमो जात इति तयोर्गोपनाय किम्वा कथंचिद्बहिः कठोरतामप्यनुकृतवतोऽप्यन्तः प्रियस्यास्य त्वस्माकं शुष्यद्बिम्बाधरदर्शनेन वैमनस्यमुदेष्यतीति तयोराच्छादनायेति तथा चरणेन भुवं लिखन्त्यः अयमप्यवाङ्मुखत्वे हेतुः । भुवोलिखनं च हे सर्वसहे ! खलु मृदुला भव देहि किञ्चिदवकाशं येन त्वयि प्रविशाम इत्यभिप्रायेण किम्वा हे भाग्यनाथ ! भवता यथारुचि कथ्यतां विधात्रा लिखितमेवेदमस्मल्ललाटपटले प्रतिदर्शयाम किम्वा रुषतो वागतिवातव्याहताः कदाचित्परिवर्त्तिताः स्याम इति शङ्कया निजचरणानां भूमौ निखननायेति तथा अस्रैः कुचकुङ्कुमानि मृजन्त्यः अयमप्यवाङ्मुखत्वे हेतुः तादृशं च सम्यक् मार्जनाय उपात्तमपिभिरिति स्वेषामन्तःकरणानामपि श्यामरागद्योतनाय विरहतप्तानां हृदयानां मार्ज्जनत्वात्स्फोटो मा ऽभूदिति तादृशश्यामवर्णनीरसेकेन श्यामत्वसूचनायेति तथा उरुदुःखभरनमितकन्धरत्वादवाङ्मुखत्वमिति दिङ्मात्रप्रदर्शितम् ॥ २९ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

ततः किं कृतवत्य इत्यपेक्षायामाह—कृत्वेति । दाक्षिण्यवन्निदां पक्षे तु आनन्दाब्धिनिमग्ना भगवन्माधुर्यसमाधिलीनचित्तास्तूष्णीमेव तस्थुः किं कृत्वा तदाह—स्वमुखशोभया स्त्र पश्यन्तीनां देवाङ्गनानां मुखानि अव अधःकृत्वा न्यूनानि विधाय तथा कृष्णालुब्धमानतया स्वसौभाग्यातिशयेन तन्मुखानि शुचः श्वसनेन शुष्यद्बिम्बाधराणि कृत्वा तथा चरणेन भुवं लिखन्त्यः मांकृतां कुर्वन्त्यः भुव उत्कर्षेण तदीयस्वर्गशोभां क्षिपन्त्यस्तासामुपात्तमपिभिरस्रैस्तदीयकुचकुङ्कुमानि मृजन्त्यः ताश्च उरुदुःखभराः कृत्वा तूष्णीं तस्थुः । यद्वा, स्वीयैरवानन्दास्रैः स्वीयान्येव कुचकुङ्कुमानि उरुदुःखभरा विरहचिन्ताश्च मृजन्त्यस्तूष्णीं तस्थुः शेषं समानम् । उपेक्षाविदां पक्षे तु ताः उपेक्षार्थविदः स्वमुखानि अवःकृत्वा तूष्णीं तस्थुरित्यन्वयः । तत्र मुखस्यावाक्करणं कृष्णस्तु नैवं कटु वदति अयं स एवान्यो वा कश्चिदिति सन्दिह्य नान्यं पश्याम इत्यवधार्य यद्वा, कृष्ण एव परन्तून्मत्तप्रलापतया केनचिद्ग्रहेणाऽऽक्रान्त इति न तादृशं पश्याम इति यद्वाऽस्माकं स्वत्र आगमनेन जातगर्वं एवं वदति आवाङ्मुखत्वे उदासीना आवश्याऽनुनेष्यति यद्वा,अस्मत्प्रेमाह्लादवन्मुखचन्द्रमालक्ष्य सपत्नस्वनेत्रकमलमङ्कोचेनैवं वदतीति तन्माभूदिति स्वमुखाऽवाक्करणम् । यद्वा, तन्मुखचन्द्रदर्शनाय स्वनेत्रकुमुदविकासे तत्कटुवचनतिग्मांशुभिस्तिग्मांशुतामाकलय्य नेत्रकुमुदसङ्कोचेन मुखाऽवाक्करणम् । यद्वा, स्व चेष्टयैव कटुवचनवारणायावमुखत्वाचरणं यद्वा नास्मान्कदाचिदेवं वदति ता एव वयमन्या वा इति प्रेममुग्धभावेन स्वावलोकनायावाङ्मुखत्वम् । यद्वा, किमद्यकार्यमित्यात्मानं प्रष्टुं यद्वा, निष्ठुरवाक्यं श्रुत्वा कथं जीवाम इति द्रष्टुम् । यद्वा, वाणाघातैर्हृद्भेदनं जातं न वेति परीक्षितुम् । यद्वा, शुचः श्वसनेन शुष्यद्बिम्बाधराणीति शुकमुनीन्द्रेण विशेषणात् शोकदवदाहाग्नितन्तुतरुहृल्लीडनिःसृतश्वासशुकाः पुनरागमिष्यन्ति नवेत्यवलोकितुम् । यद्वा, शुष्यद्बिम्बाधराणि दृष्ट्वा नः कातर्यमाकलयत्विति तद्गोपनाय । यद्वा,"मधो वुधिहरी विम्बा"इति वचनात्तुपमावदधरौ शोषेण बिम्बसाम्यं गतावस्य मतिघ्नौ जाताविति तद्गोपनाय । यद्वा, अनेन कटुवचसाऽस्मच्छोकसम्पादनेऽप्यस्माभिः शुष्यदधरदर्शनेनास्य वैमनस्यं न कार्यमिति । यद्वा, शुष्यन्तो बिम्बाधरा पक्वाद्यावज्ञातस्तद्गोपनदर्शनेन तन्माधुर्येण प्रलोभयितुम् । यद्वा, चरणेन भुवं लिखन्त्य इति निर्देशात्तल्लेखनाय । यद्वा, भुवं लिखन्तीनामवाङ्मुखत्वं तत्र प्रवेष्टुं मार्गार्थं भूविनयाय । यद्वा, अस्मद्भाले विधिनैवमेव किं लिखितमिति भालदर्शनाय । यद्वा, तीक्ष्णवचोऽतिवातसङ्घातघातपराहतमतयः कदापि विमुखा न भवाम इति भूमौ पादप्रवेशाय तथा, अस्रैरित्यस्यायं भावः, अस्मन्नेत्रे द्रवनाङ्गने त्वं वज्रचेता नाधुनापि द्रवसि । यद्वा, घनश्यामरसवृष्टिमिच्छन्तीभिः स्वरजलवृष्ट्येष्योत्पादनं यद्वा स्वनेत्रकञ्जमधुधारामकान्तेन्मधुमधुपमाधवमनोलोभनम् । यद्वा, वाम्रमदस्त्ररजलवृष्ट्या गोवर्द्धनमुद्धृत्य व्रजरक्षा कृता अधुना व्रजगतवहुसहस्रदृक्सिन्धसिन्धारुणजलवृष्टौ गृहमेव त्वया किं कार्यम् । कुचकुङ्कुमानि मृजन्त्य इत्यस्यायमभिप्रायः सहस्रदृग्वृष्टेर्गिरिरक्षा त्वया कृता

श्रीरामनारायणकृतभावविभाविका।

अधुना प्रत्येकहृन्नृत्यसञ्जातकनकगिरिकुचशोभापहारः क्रियते इति महल्लज्जास्पदं यथा तत्र तद्गिरिकरधारणेन गिरिरक्षा कृता तथात्रापि स्तनगिरिकरधारणेनैव तद्रक्षासम्भाव्या नान्यथा यद्वा, सहस्रहृन्मानसगृहाश्मवृहत्काञ्चनकलशाभिव एकहृत्या प्रहारे ह्यव्यापादनाय। यद्वा, त्वद्वैपरीत्ये किमस्माकं कुङ्कुमशृङ्गारेण उपात्तमपिभिरित्यस्याप्ययं भावः त्वदर्थं धृताञ्जनं वृथा वहन्तीति पश्य। यद्वा, मल्लोचनाञ्जनमपि श्यामस्य द्रवीभूततां दर्शयति श्यामोऽपि सन् भवानेव द्रवतीति महच्चित्रं किञ्च, नेत्रयोः श्यामजलप्रवाहे यदि श्यामताराऽपि द्रवेत्तर्हि केन त्वां द्रक्ष्याम इति नैष्ठुर्यं त्यक्त्वा शीघ्रं प्रसीद। यद्वा, त्वदीयवक्रतिग्मांशुतिग्मांशुवचोभिरश्रुरूपतया द्रवीभूय प्रवहत्स्वप्यन्तःकरणे श्यामराग एव व्याप्तो दृश्यते बहिरन्तस्त्वमेवानुगतोऽपि निष्ठुरतां भजसि अतः प्रसीद। यद्वा, विरहतप्तहृदये स्फोटमिवोपात्तमपिभिरस्रैः सिञ्चन्त्यः तथा उरुदुःखभराः दुःखभरेण नम्रकन्धरत्वादवाङ्मुख्यस्तेनैव च रुद्धकण्ठत्वात्तूष्णीं तस्थुः तथोपेक्षादर्शनात्स्वमुखेन किमपि वदनेनौचित्यं सम्भावयन्त्यो भावैरेव स्वदशाः सूचयन्त्यः तूष्णीं तस्थुः। यद्वा, "यः सर्वज्ञः सर्ववित्" इति विशेषतोऽपि भव सर्ववित्त्वं श्रुतं नो मुखानि शुचः श्वसनेन शुष्यद्बिम्बाधराणि जातानि त्वन्तु नास्मद्दुःखमधुनापि वेत्सि इति चित्रमतः भव नो दुःखमवगमय तथाप्यशृण्वानमाहुः—"न शृणोत्यकर्णः" इत्यकर्णस्यापि ब्रह्मणः श्रोतृत्वश्रवणात्त्वं सकर्णोऽपि न शृणोषि अतः शृणु नः प्रार्थनां किं शृणोमि इत आहुः—शुचः श्वसनेन शुष्यद्बिम्बाधराणि नो मुखानि तेनैव कामविरहशोकानलधूमश्वासाभिवेन दह्यमाना नश्च भव रक्ष कथं रक्षाम्यत आहुः भव आलिङ्ग्य विरहानलज्वालालताकुञ्चितकाञ्चनलाञ्छितलतारम्भकाश्मवदङ्गानां स्वाङ्गविशालतमालालिङ्गनेन भव यद्वैव तथाभव अधरामृतं देहि शुष्यद्बिम्बाधराणि मुखानि तेनैवामृतरसेन भव तर्पय तव बन्धुजीवाधरयोरस्मदधरबन्धुजीवनस्याघ्रापकत्वात् शुष्यन्ति नो मुखाङ्गीन्यङ्गानि भव कान्तिमन्ति दीप्तिमन्ति च विधेहि अन्यदारास्वीकारमाशङ्क्याहुः—भव स्वस्याऽस्यमवगत्य भव प्रसीद तदैव यथार्थपतित्वेनान्यदीयसम्भावनानौचित्यम् अत एव भव स्वपादयोः प्रवेशाय नोचेच्चरणेन भुवः खननेन भुवं प्रविशाम इति भावः। एवमव स्वाङ्गस्मानऽस्मदङ्गेषु विमृजस्व नोचेद्रव हिंसय त्वद्विरहे जीवनस्य दुस्सहत्वात् हिंसनमेव परमोपकार इत्यर्थः। इत्येवम् केवलम् भव'अपकृत्वा तूष्णीं तस्थुः "भव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु" इति विधानात् अत्र प्रेमिणां मानाय मानयोः समाना भगवत्प्रीत्यभिवृद्धिः भगवता प्रबुलुपदेशोऽपि न गृहायाभिमुखत्वं किन्तु तदेकपरत्वमेवेति हितपर्योपदेशः॥ २६॥

---

श्रीजनपतिसूरिकृतभागवतगूढार्थदीपिका।

चिन्ताप्राप्तानामवस्थानमाह—कृत्वेति। भवशुचः प्राप्तशोकाः श्वसनेन शुष्यद्बिम्बाधराणि मुखानि कृत्वा, यद्वा मुखानि भव भवाञ्चि अधोमुखानि कृत्वा मुखानां तथा करणं च कासाञ्चिदहोऽस्माकं नास्त्यदापि प्रेमोद्रेको नो चेत्तेन वशीकृतो भगवानेवं ब्रूयादित्यभिप्रायेण, कासाञ्चिदहो परमप्रेमास्पदेन भगवतैवमनङ्गीकृतानामस्माकमूर्ध्वमधो वा कापि चलत्वात्तु योग्यता नास्तीत्याशयेन, कासाञ्चिदहो सर्वगुणगणालङ्कृतविग्रहस्य करुणासागरस्य सर्वज्ञस्य भगवत एवंविधोक्तिर्मन्दभाग्यताऽस्मल्ललाटदर्शनजन्या अतः स्वललाटमस्मै न प्रदर्शनीयमित्यभिप्रायेण, कासाञ्चिदहोऽस्मदीयं कञ्चिदपराधं स्मृत्वा भगवानेवंवदतीत्यतो नम्रीभूय क्षमापनीय इत्याशयेन, कासाञ्चिदहोऽस्माकमधो भूमौ निकृष्टजन्मादानं निष्फलमेव सम्पन्नमित्याशयेन अधःकृतानि मुखानि विशिनष्टि शुचः शोकादुद्भूतेन शोकसम्बन्धिना वा श्वासवायुना शुष्यन्तः शोषं गच्छन्तो बिम्बफलतुल्या अधरा येषु शोकेन ज्वालाव्याप्तश्वासेन शुष्यन्तः शुचः शुचशुचरापाढस्य श्वसनेन वायुना शुष्यद्बिम्बसदृशा अधरा येष्विति वा एवम्भूतश्वसनेनाधरादिसमस्तशरीरं शोषयित्वा मरिष्याम इत्याशयः चरणेन पादाङ्गुष्ठेन भुवं लिखन्त्यः, काश्चिदहो श्रुत्यादिरूपं तिरोधाय भूमौ गोपाङ्गनाविग्रहो वृथैवास्माभिराश्रित इति पश्चात्तापं सूचयन्त्य इव अहो किं भूमिभारभूता अस्मानेव निश्चित्यानेन प्रकारेण अस्मच्छायायाऽवमवतीर्णा इति, काश्चिदहो भगवतीं सीतामिव अस्मानपि भूमिं प्रवेशयितुं प्रवृत्तोऽसीति, तथा व्याप्तकज्जलैरश्रुभिः स्तनकुङ्कुमानि क्षालयन्त्यः अहो नास्तीदानीं नेत्रस्यकज्जलस्य स्तनस्यकुङ्कुमस्य च किमपि प्रयोजनमतः क्षालनीयमुभयं तत्क्षालनं चाऽस्मिन् समयेऽन्यजलाभावादश्रुजलैरेव कार्यं कुचेषु चातःपरं मषिलोपो विधेय इति सूचयन्त्य इव मृजन्त्य इति वर्त्तमानापदेशेन मार्जनाय प्रवृत्ताभिरपि यमानुजाप्रवाह—तुल्याभिरश्रुधाराभिस्तन्मार्जनं न सम्पन्नं बडवानलप्रतापसन्तापशोष्यमाणत्वादिति ध्वनितम् उरुभरपदाभ्यां दुःखस्य परा काष्ठोच्यते महद्दुःखातिशयवत्यः दुःखसागरनिमग्नास्सत्यः किञ्चिदपि वक्तुमशक्तत्वात् तूष्णीं तस्थुः इम मुखस्यावाञ्चिकरणेन भगवदाभिमुख्यस्य शोकेनान्तःकरणस्य बिम्बाधरशोषेण कामरसस्य पदा भूमिलेखनेन शरीरस्य अश्रुभिरिन्द्रियाणां कुङ्कुमाभावेन कान्तेः उरुदुःखभरेणानन्दस्य तूष्णीं स्थित्या चैतन्यस्य च तिरोभावेऽभिधानात् श्वसनेनेति प्राणपीडाकथनान्मूर्च्छिताः केवलं स्थाणुरिव स्थिता इत्यर्थः। अनभिज्ञापक्षे मुखानामधःकरणं कासाञ्चिदहो वयमत्रागताः सम्मानार्हा अप्येतेन न सम्मानिताः प्रत्युत प्रतियातेत्यादिवाक्यैरवमानिता इति लज्जासागरनिमग्नहृदयत्वेन, कासाञ्चिददो पन्था द्विकं विहायैवंविधं कर्म कर्तुं प्रवृत्तानामप्यस्माक प्रवृत्तिर्निष्फला जाता इतः परं किं करिष्याम इति लज्जाव्याकुलचित्तत्वेन, कासाञ्चिदहो एतेनाऽनाहूताः वंशीशब्दमाकर्ण्याह्वानभ्रमेणैव समागताः अतोऽस्माकं मौर्ख्यमेव प्रकटितमिति लज्जया, कासाञ्चिदहो एवंविधां दशां प्राप्ताः इतःपरं व्रजं गताः कथं तत्रत्यसखीजनेभ्यो मुखं प्रदर्शयिष्याम इति लज्जया, कासाञ्चिदहो विनाऽऽह्वानं समागताः इतःपरं दृष्टो भवदीयसौभाग्यसौन्दर्यं इति वदतोऽस्य कृष्णस्य समक्षे मुखं कथं करिष्याम इति लज्जया

## श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

काश्चिदहो सर्वालङ्कारालङ्कृतमप्यस्मदीयं मुखमस्मै न रोचते एतत्समक्षं स्थापनमयोग्यमिति लज्जया, काश्चिदहोऽस्मन्मुखमवलोक्यास्य महानानन्दो भविष्यतीत्याशया समागतानां परं विपरीतं जातमिति लज्जया, काश्चिदहोऽस्मदन्तःकरणे निविष्टप्रेमातिशयमबुध्वैवैतेनैवमुक्तमतोऽनभिज्ञसमीपे एवं समागमनमनुचितं जातमिति लज्जया, काश्चिदहो नास्त्ययं कान्तानां स्वभावः सर्वथा नेति नेतीत्येवं वदतीनां स्वभाव एवम्भूतोऽनर्थकरो योऽस्माभिरङ्गीकृतोऽतस्ताभिरुपहास्या भविष्याम इति लज्जाविष्टचित्तत्वेन, काश्चिदहो इयं मां किं वदिष्यतीयं मां कथं पथि मिलिष्यतीति परस्परप्राप्तलज्जया, काश्चिदहो एतन्मुखनिःसृतैवंविधशोकवचनज्वालया वृथाऽस्मन्मुखदाहो मा भवत्वित्याशयेन, काश्चिदहो यद्यप्ययमेव मद्दुःखाययुक्तस्तथापि प्रज्वलितास्मदन्तःकरणान्मुखनेत्रादिद्वारा निःसृताभिरति प्रचण्डज्वालामालाभिः सन्तापं न प्राप्नुयादित्याशयेन, काश्चिदहो पूर्वं प्रसन्नचेतस्तया वने विहरणपरो वंशीवादनिरतोऽप्यस्मन्मुखं दृष्ट्वैवंविधं क्षोभं गतोऽतः तस्मै क्षोभकरं स्वमुखं न प्रदर्शनीयमित्यभिप्रायेण, काश्चिदहो नेत्रद्वारा काचिन्मोहनशक्तिः अस्मदन्तःकरणे प्रविश्याऽस्मान्व्यामोहयत्येतन्नेत्रसमक्षे स्वनेत्रस्थापनं न कार्यमिति भावेन, काश्चिदहो शोकाक्रान्तमस्मन्मुखमवलोक्य कोपाक्रान्तं मे मदीयं मुखमिति भ्रान्त्याऽतोऽप्यधिकमौदासीन्यं मा गच्छत्वित्याशयेन, काश्चित्तथाभूतोक्तिजन्यशोकादुद्भूतसमुद्रकल्पाऽश्रुजलप्रवाहभाराक्रान्तशिरस ऊर्ध्वस्थापनाऽशक्त्या, काश्चिदेवम्भूतमप्यस्मदीयं मुखमस्य प्रीतिकरं न भवति किमुताश्रुधारासम्पर्कमलिनीकृतमन्तःशोकोद्भूताश्रुप्रवाहोऽधःपातनीय इति प्रेष्ठचेतसि प्रीत्युत्पत्त्याशया, काश्चिदहो धिक् स्त्रीचाञ्चल्यं येन प्रीतिलेशेनापि हीनस्य पाषाणवदतिकठिनस्वान्तस्य समीपेऽतिरभसा समागता अतःपरं त्वस्य स्वयमाहूयैवं वक्तुं प्रवृत्तस्य कृतघ्नस्य मुखमपि नावलोकनीयमित्याशयेन, काश्चिदहो विधातरतिकठोरान्तःकरणपरदुःखानभिज्ञदुःखपात्रभूता अस्मान्विनिश्चित्यातिदुःखं दातुं प्रवृत्तोऽसि भवतु शपथोऽस्ति तव यदि यावत् सामर्थ्यं दुःखं न प्रदास्यसीति तस्मादितोऽप्यधिकं दुःखं यदस्ति तव समीपे तर्हि तदप्यस्मभ्यं प्रयच्छ विलम्बं मा गच्छेदं शिरस्तवाग्रेऽस्माभिः स्थापितमिति विधातरि कोपावेशेन, काश्चिदहो परस्परनेत्रसंयोगवशात्परस्परस्वभावविपर्ययो जातः एतस्य कान्तस्य दाक्षिण्यरूपः स्वभावोऽस्मच्चेतसि प्रविष्टः कान्तानामस्माकमवहित्थालज्जास्वभावोऽस्य मनस्यतस्तथा मा भवत्वित्याशयेन, काश्चिदहो बहूक्तं त्वया भवत्वन्यदपि यद्वक्तव्यं तद्वदस्वेदं शिरस्तवाग्रे स्थापितमित्यभिप्रायेण, काश्चिदहो एवंविधोक्तिनाराचधारया पुनः पुनः किमर्थमस्मान्वेधने प्रवृत्तोऽसि यदि मारणीया एव वयं तर्हि सद्य एव तीक्ष्णासिना ग्रीवोपरि निपातनेनास्माकं शिरांसि छिन्धीत्याशयेन, काश्चिदहो कृतमेवंविधव्यापारप्रयासेन तं विनैव नैवं सौन्दर्यशस्त्रोन्मूलितवर्गद्रुमाणामस्माकं सर्वथैव नश्रीभावोऽस्तीति भावेन, काश्चिदहो विधातस्त्वया किमेवंविधमस्मदीयं मुखं रचितं यदस्य गोपालबालस्यापि प्रीतिजनकत्वाऽन्तरङ्गतं स्थापयितुमयोग्यमिति पश्चात्तापेन, काश्चिदहो मानलेशेनापि विनिर्मुक्तानामेतासां धिक् स्त्रीत्वमिति विमानस्थदेवाङ्गनाविकृताज्ञानभयेन, काश्चिदहो ऽयं चौरचक्रवर्ती वंशीरवेण स्वभृत्येनास्मदीयमनोरत्नमञ्जूषाम् अपहृत्य परमसाधुवदेव वदतीत्यतोऽस्माकं विमेतव्यमिति भावेन, काश्चिदहो किमस्मास्वेवमुपदिशसि न वयमुपदेशार्थं तव समीपमागताः स्वयमेवोपदिशसि चेत्तर्हि चिरमस्पृक्तामिष्टान्नवत्तथाभूतोपदेशकृत्तव मुखं नावलोकनीयमित्यभिप्रायेण, काश्चिदहो गोवर्द्धनाधस्तात्स्वहस्तेन वधार्थमेव किं वयं रक्षिता इति सूचनाय, काश्चिदहो सर्वं त्वत्तोऽधोभूतमेव ज्ञात्वा वयमागता अतः किमर्थमेवं बहुभाषस इति ज्ञापनाय, तथा शुचः शोकादुद्भूतेन श्वसनेनोद्गमश्वासेन शुष्यत् सूर्यातपेन शोषे सति विगतस्योदयैः रूपधर्षिभिर्बिम्बफलैः सदृशा अधरा येषु अस्मदधरामृतं प्रियो धास्यतीत्याशया समागतानां तदाशाभङ्गोत्थशोकानलस्तच्छोषणे प्रवृत्त इति भावः। पुनश्चरणेन वामपादाङ्गुष्ठेन भुवं विलिखन्त्यः, काश्चिदहो नास्ति तवापराधः किन्त्वस्माकमेव यतो यस्मिन्काले " याता ऽबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः" इति त्वयोक्तम् तदा कुहुकशिरोमणेस्तव वचसि कृतविश्वासाभिरस्माभिरभिलाषा धारितवानस्यपि ( ? ) मतोऽधुना किं कुर्मोऽस्मन्मौढ्यमेवास्माकमनर्थकरं सम्पन्नमिति ध्वनयन्त्य इव, काश्चिद्वचनसाक्षी कोऽपि नास्तीति निर्भयता नोचिता किन्तु सर्वाधारभूता भगवती वसुन्धरा साक्षीभूता विद्यत एवेत्यस्या एव विभेतव्यमिति सूचयन्त्य इव, काश्चिद्भुवनैकसुन्दरेण जारेण गृहीतचेतसां नास्त्यस्माकं तथाविधं पातिव्रत्यं किमर्थमेवं वक्तुं प्रवृत्तोऽसीति बोधनाय जारवतीलक्षणं स्वस्मिन्दर्शयन्त्य इव, काश्चिदहो वृथैव मुखाद्यलङ्क्रियाऽतः परं मृदमुत्पाद्य तया सर्वाण्यङ्गानि लेपनीयानीति शोकोद्भूतमुत्कटं वैराग्यं बोधयन्त्य इव, काश्चिदहो भूमिरपीयमस्मदपेक्षया वरा यस्यामस्मत्प्रेष्ठपादारविन्दसंस्पर्शः सदैवास्तीति ज्ञापयन्त्य इव, काश्चिदहो यादृशं दुःखमनेनास्मभ्यं दत्तं तादृशं दुःखमस्मै प्रदेयं तच्चाऽस्मदङ्गसंस्पर्शावेकस्य भविष्यतीत्यत्युग्रं तपः सम्पाद्य भूमिभावं प्राप्य स्वाङ्गसंस्पर्शेनायं पीडनीय इति ध्वनन्त्य इव, काश्चिदहोऽस्माकमस्मिन्व्रजभूमावेवंविधाऽति कठोरचित्तः कोऽपि नास्त्यतोऽयमीदृशः कथमत्र जात इति सूचयन्त्य इव, काश्चिदहो किमेवं विधमन्यःऽयं कर्तुं प्रवृत्तोऽसि किं भूशर्कराद्यपेक्षयाप्यस्मदीयानि स्तनाद्यङ्गानि कर्कशानि यत्संस्पर्शजन्यदुःखभयादेवं जल्पसीति सूचयन्त्य इव, काश्चिदहोऽस्मद्दुःखाय यत्त्वया चरितमारब्धं तदस्माभिर्लिखित्वा स्थाप्यतेऽस्मिन् जन्मनि जन्मान्तरे वा ऽस्य प्रतीकारं करिष्याम इति ज्ञापयन्त्य इव, काश्चिदहोऽस्याश्चर्यमेवंविधं मिथ्याप्रतिज्ञमियं भूमिरसौरयत्येनङ्गारेण विदीर्णा भविष्यतीति सूचयन्त्य इव, काश्चिदहो मातर्वसुन्धरे ! नास्मत्साक्षात्कश्चिद्दस्यतस्त्वमेवाऽस्मद्बोधनीयोऽस्य त्वयि प्रीत्यतिशयस्य दर्शनादिति भूमिं प्रार्थयन्त्य इव, काश्चिदहोऽस्य पाषाणवदन्तःकरणमतिकठिनमस्मत्प्रेमोद्रेकातिरेकभूमिं न जानात्यत एवंविधं दुःखमवलोक्यापि न द्रवतीति ध्वनयन्त्य इव, काश्चिदहोऽस्मद्धृदयं पाषाणादपि कठोरतरं यत एवंभूतेऽपि कष्टे सत्यपि न विशीर्येत इति सूचयन्त्य इव, काश्चिदहो नास्तीतः

प्रेष्ठं प्रियेतरमिव प्रतिभाषमाणं कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥ ३० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

परं जीवनकृतमतो भो मातर्वसुन्धरे ! कृपया विशीर्णा भव त्वयि प्रविशाम इति भूमिं प्रवेशाभिमुख्यं बोधयन्त्य इव, पुनश्चाश्रैरुपात्तमषिभिः कज्जलाक्तैरस्रैः कुचकुङ्कुमानि मृजन्त्यः अहो नेत्रस्थश्याममेवानर्थकरी ययाऽतिनिष्ठुरान्तःकरणे कृष्णे स्नेहमुत्पाद्यैवम्विधां दशां वयं नीताः अतो मध्यन्तरं हसापि निःसारणीया यत एवं विविधचक्षुष्मत्ताऽपेक्षयाऽन्धतैवास्माकं श्रेयस्करीत्याशयः । अनेन त्वत्प्राप्त्याशानिवृत्यौ काष्ठभूतेष्वस्मच्छरीरेषु निःसीमतापक्रकचेन विदारणाय विरहतक्षकृतं श्यामसूत्ररेखाद्वयमित्यपि ध्वनयन्त्य इव, अस्रैरिति बहुवचनेन तत्प्रवाहधारा बोधिता । मृजन्त्य इति वर्त्तमानापदेशेन न मनोरथयमुनाद्वयकलापाश्रुधाराद्वयस्य कुङ्कुममार्जनाद्युद्युक्तस्य हृदयान्तस्सन्तापाऽनलस्य तच्छोषणोद्युक्तस्य विवादे कस्याऽपि जयो वा पराजयो वा न संवृत्त इति द्योतितम् । उरुदुःखस्य भरो भारो यासां ताः भारासहिष्णुतयैव चेतनापगमात्तूष्णीं पाञ्चालिका इव तस्थुरित्यर्थः । मानिनीपक्षे, मुखानामधःकरणं कासाञ्चित्परपुरुषमुखावलोकनमप्यस्माकं न रोचत इति सूचनाय, कासाञ्चिदस्मन्मुखावलोकनमपि तवाऽतिदुर्लभमन्यत्तु दुर्निरस्तमित्यपि दर्पख्यापनार्थम्, कासाञ्चिदहो न वयं व्यभिचारिण्यः किन्तु कुलाङ्गनाः तल्लक्षणाखस्मासु (?) तपत्वादिति ज्ञापनाय, कासाञ्चिदहो कृष्ण त्वमत्यतिधूर्त्तोऽसि परदारानेव प्रार्थयन् लज्जालेशेनापि विनिर्मुक्तोऽसौ वयं तु लज्जासागरे निमग्ना इति स्वस्य लज्जावतीत्वबोधनाय, कासाञ्चिदहो अधोगतिसम्पादकमौपपत्यं धर्मशास्त्राभिज्ञानामस्माकं सर्वथा परिहरणीयमिति स्वस्य परलोकभयाविष्टताख्यापनाय, कासाञ्चिदहो वयं लोकमर्यादाभिज्ञा अधोमुखतापादकं कर्म कर्त्तुं नार्हाः ऽकमर्थमेवं बहुजल्पसीति स्वस्यापकीर्तिभयाविष्टताख्यापनाय, कासाञ्चिदन्तःकरणस्थामुत्कण्ठां मुखादिविकासमवलोक्यैव मा गच्छन्त्वित्याशयेन, अहो स्वपतिविरहजनितशोकोद्भूतोष्णश्वासा यतः श्वासाश्च स इति अश्रीति जनकश्वसनेनेति यद्यस्मदधरपानाशा तव महती वर्त्तते तथापि तत् सिद्धिः स्वप्नेऽपि दुर्घटा प्रथनं त्वया बलात्कारेणावलानामस्माकमधरामृतपाने क्रियमाणे तत्स्थं पीयूषन्तु न लप्स्यसि तस्याशक्यमाणत्वादित्याशयः । चरणेन भुवं लिखन्त्यः काश्चिदस्मत्पादरजोऽपि तव दुर्लभतरमितरस्तु दूरगतमिति ध्वनयन्त्य इव, काश्चिद्भूमिप्रवेशं करिष्यामस्तव वशीभूतास्तु न भविष्याम इति सूचयन्त्य इव, काश्चिद्यद्यस्मान् बलात्कारेण स्पर्शादिकं करिष्यसि चेत्तर्हि भूमिपतये नन्दाय कंसाय वा गत्वा कथयिष्याम इति द्योतयन्त्य इव, अहो बलात्कारेणाऽस्मानस्मान् गृहीष्यसीति भयाद्विभ्यन् मृगाक्षिरिव सम्बद्धेम्यस्माभिरुपलिप्तानि नव नवाश्रमश्चेत्तर्हि तानि प्रक्षाल्य तेषु मषिक्षेपोऽस्माभिः क्रियत इति सूचयन्त्य इव, मार्जनादः कृतस्तान्मृजन्त्य इत्युक्तम् । उरुदुःखभरा इव तूष्णीं तस्थुः स्म ॥ निवृत्तिपक्षे यथोक्तशास्त्रयुक्तियुक्तिभिः श्रुतीनां महती पीडा जातेत्याशयेनाह—कृत्वेति । चरणेन मूलरूपेण भुवं स्वोत्पत्तिस्थानं परमात्मानं लिखन्त्यः तत्प्रतिपादने मुख्यतात्पर्यवत्यः सर्वाः श्रुतयः अवशुचः प्राप्तशाकाः सत्यः श्रुत्यन्तभागलक्षणानि मुखानि वाच्यकस्वार्थलक्षणेन श्वसनेन शुष्यद्बिम्बाधरस्थानीया मोक्षप्रतिपादनभागा येषु तथाभूतानि कृत्वा अस्रैः स्वरुधिराश्रुभूतैर्लाक्षारसैरुपात्तमषिभिस्तत्तद्वादिकरस्थलेखिन्यारूढैः कुचस्थानीयानां सान्दिग्ध कठिनभागानां समीचीनार्थलक्षणानि कुङ्कुमानि मृजन्त्यः उरुदुःखभराः तूष्णीं तस्थुः स्म उपरुध्यत ता इत्यर्थः ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथाभूतानां स्थितिं वर्णयति—कृत्वेति । उरुरपारो दुःखभरो यासां ताः चरणेन भुवं लिखन्त्यः तथा उपात्तमषिभिर्गृहीताञ्जनैरस्रैरश्रुभिः कुचकुङ्कुमानि मृजन्त्यः क्षालयन्त्यः शुचः शोकात् शोकसन्तापात् उष्णीभूतेन श्वसनेन सबलनिश्वासमारुतेन शुष्यन्तो बिम्बफलनिभाः अधरा येषु तानि मुखानि अव अवाञ्चि कृत्वा तूष्णीं तस्थुः निर्वचनाः स्थिताः बभूवुः ॥ २९ ॥

---

भाषा टीका ।

अपने प्यारे के कठोर वचन सुनि कें भयो जो शोक, ता शोक के मारे उत्पन्न भये उष्णश्वासन सुखे हैं कदूरी के फल समान अरुण ओंठ जिनके, एसे मुखन कूं नीचे करकें चरण के अगूठान सों भूमि लिखती जाय हैं । तथा रुदन तें काजर सहित आँखनसों जो आंसू चले हैं तिनसुं कुचन की केसरि धुरगई है, अत्यन्त दुःखके बोझतें गोपी चुपचाप होय कें ठाडी होत भई हैं ॥ २९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, प्रेष्ठमिति किञ्चित्संरम्भेण कोपावेशेन गद्गदा गिरो यासां ता अब्रुवत स्म । संरम्भे कारणं प्रेष्ठमित्यादि प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणम् ॥ ३० ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

प्रेष्ठं प्रियतममपि प्रियेतरमिव अप्रियजनवत् प्रत्याख्यानं कुर्वन्तम् । ननु, तर्हि तस्मात्मनो निवर्त्यतां तत्राह—तदर्थं श्रीकृष्णप्राप्तये किं वा तस्मै अनिर्वाच्याय सुगोप्याय अर्थाय तेन सह क्रीडाविशेषाय विशेषेण निवर्त्तिताः पुनर्यथा सम्बन्धगन्धोऽपि तेषां न स्यात्तथा निरस्ताः सर्वे कामा विषयभोगाः तदति-

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

रिक्ताशेषाभिलाषा वा याभिस्ताः अतस्तं विना कथञ्चिद्‌-प्यन्यत् किञ्चिन्न रोचत इति भावः । कुतः ? कृष्णं परमानन्दघन-मूर्त्तिं चित्ताकर्षकं श्रीव्रजेन्द्रनन्दनम् अत एवाब्रुवन् रुमेत्यत्राप्यति-प्रसिद्ध्याद्यपेक्षयोक्तम् यद्वा, पश्चादर्थे उरुदुःखभरेण सद्यः प्रत्युक्त्यनुदयात् पश्चादब्रुवन् । ननु, अतिनिर्बन्धेन कदाचित्तस्या-वज्ञापि शक्येत तत्राह–अनुरक्ताः अनुरागेण तच्छङ्कानिरस-नात् । यद्वा, अवज्ञायामपि सत्यां तत्त्यागाशक्तेः । ननु, उरुदुःखा-क्रान्ताः कथं वक्तुमपि शक्ताः ? तत्राह–रुदितैर्महादुःखेन स्वय-मेव गलदस्रैः उपहते व्याप्ते नेत्रे विशेषेण मृष्ट्वा शोध-यित्वा अश्रूण्यपसार्येति पाठान्तरे प्रमृज्येति पाठे ऽप्ययमर्थः स एव, परमप्रयत्नेन क्षणं धैर्यमालम्ब्येत्यर्थः । यद्वा, उरुदुःखव्युक्ति-शक्तावनुराग एव हेतुर्भाति प्रेम्णां विचित्रविलासत्वात् ततश्च नेत्रे विमृज्येति स्नेहजननाय प्रेमोद्रेकस्वभावत एव वा किञ्चि-च्छ्रीमुखावलोकनपूर्वकोक्त्यर्थम् इति परमार्त्यां लज्जाशैथिल्यमपि गम्यते किञ्चिदिति संरम्भस्याल्पत्वं स्वतः प्रेष्ठत्वात् निजप्रेम-कोमलशीलत्वाद्वा । यद्वा, अनिर्वचनीया महासंरम्भेण गद्गदगिरः यतोऽनुरक्ताः अन्यत्तैर्व्यञ्जितम् यद्वा, किञ्चित् सङ्कुचितेनेव मैव-मित्यादिकमब्रुवन् कुतः संरम्भगद्गदगिरः प्रणयकोपावेशेन बाष्परुद्धकण्ठत्वादित्यर्थः । तत् कुतः अनुरक्ताः सदास्वभावत एव रक्ताः अधुना च तादृशोक्तिश्रवणादतिदुर्लभतागमनाद्‌-धिकोत्कण्ठया विशेषतो जातोत्कटरागा इत्यर्थः । यद्वा, कृतराग-विशेषाः न तूपेक्षयापि निर्विण्णा इत्यर्थः । किञ्चिदनिर्वचनीयम् अनुरागेणोक्तस्य मनोहरत्वात् तादृगुक्तौ हेतुः प्रेष्ठमित्यादि आशिषं प्रतिपदं भाषमाणां स्थितमिति पूर्वमेव किंवा वर्त्त-मानिर्देशेन तदानीमपि चिन्तां त्यजत मा रुदित त्वरया भवत गृहान् यातेत्यादिकमनिष्टं प्रतिक्षणं वदन्तम् इत्येति तत्त्वतस्ता-त्पर्यविचारेण नर्मान्तो पर्यवसानात् तच्च पूर्वं लिखित-मेव ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रेष्ठं प्रियतममपि प्रियेतरमिव प्रियमाशादितरमिव प्रत्याख्यानं कुर्वन्तम्; ननु, तर्हि तस्मात् मनः कथं न न्यवर्त्तयन्? तत्राह, तदर्थं श्रीकृष्णप्राप्तये विशेषेण निवर्त्तिताः पुनर्यथा सम्बन्धगन्धोऽपि तेषां न स्यात्तथा निरस्तास्तद्व्यतिरिक्ताशेषाभिलाषा याभिस्ताः अतस्तन्निवर्त्तयितुं नाशक्नुवन्निति भावः । कुतः कृष्णं परमा-नन्दघनतया सर्वचित्ताकर्षकतया च तन्नाम्ना प्रसिद्धं श्रीव्रजेन्द्र-नन्दनम्; ननु, उरुदुःखाक्रान्ताः कथं वक्तुमपि शक्तास्तत्राह-संरम्भेति । अमर्षेण विषादकार्येणैव विषादावरणादिति भावः । तत्र नेत्रमार्जनं भावद्वयसन्धिजं तच्च प्रणयकोपस्वभावतः किञ्चित् श्रीमुखावलोकनपूर्वकवचनार्थम् इति परमार्त्यां लज्जाशैथिल्यमपि गम्यते किञ्चिदिति विषादांशस्यान्तर्भूतत्वात् तद्द्व्यकार्थं गद्गदत्वम् अनुरक्ता इति विपक्षतादौ सर्वत्रैव हेतुः ॥ ३० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च प्रेष्ठमिति ततः शनैरुदितेन रोदनेन उपहते शोकाश्रु-पूर्णतया लुप्तदर्शने नेत्रे विमृज्य प्रमृज्य किञ्चित्संरम्भेण कोपावे-शेन गद्गदा गिरो यासां तथाभूताः अनुरक्तास्त्वय्येवानुराग-युक्ता अत एव तदर्थं कृष्णार्थमेव त्यक्ताः सर्वे मनोरथा याभिस्ता-स्तथाभूताः गोप्यः कृष्णमूचुः, कथम्भूतं ? प्रेष्ठं तथापि प्रियेतरं वैरिणमिव भाषमाणम् इद विशेषणद्वये संरम्भकारणम् ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तदर्थे कृष्णकृते विनिवर्त्तितः सर्वकामो यासां तास्तथा रुदितेन रोदनेन उपहते क्लिष्टे संरम्भेण प्रणयकोपेन गद्गद-पदं स्खलदक्षरपदं यासां तास्तथा ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ भगवद्वचसोऽर्थद्वयवत्तायां तत्तत्स्मरणसंस्कारतः इदं वा इदं वेति परामर्शो नोत्तरस्यापि घटमानत्वमाशङ्क्य किञ्चि-च्छिथिलदुःखभरतया वक्तुं शक्तिर्जातेति तासां विवक्षां प्रकट-यति–प्रेष्ठमित्यादि । प्रेष्ठः प्रेयानयं कदाचिदपि नैवमप्रियं वदति तदा कथमवादीति विमृश्य प्रियेतरमिवेति इवशब्दः कृष्णम् अब्रुवतेत्यन्वयः । कीदृश्यः ? तदर्थं विनिवर्त्तिताविशेषेण निवृत्तिं प्रापिताः सर्वे कामा याभिः किं कृत्वा नेत्रे विमृज्य सम्मुख-दर्शनार्थम् अर्थान्तरमत्रासीदिति निर्णीय संरम्भो जातः तेन गद्गदा अर्द्धस्फुटा गिरो यासां नेत्रे कीदृशे ? रुदितेन उपहते उच्छूने रक्ते अनुरक्ता इति स्वरूपकथनं स्त्रीति वैचित्र्ये बहुवचनमत्र क्रमशः सर्वा एवोचुः नैकैवेति मन्तव्यम् ॥ ३० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमपि स्थितौ तूष्णीं स्थितं भगवन्तमालक्ष्य किञ्चिद्वि-ज्ञापयामासुरित्याह–प्रेष्ठमिति । भाषणं पूर्वोक्तमेव अथवा तस्या-मप्यवस्थायां किमिति रोदनं क्रियते स्वस्था भवत गृहं गच्छते-त्येवं वदति परं हसन्मुखः तदा तासां हृदये वाक्यामृतानि प्रविष्टानि सजातीयानि वाक्यान्युत्पादितवन्ति तदा भगव-द्बुद्ध्यैव ता एव ताः भगवद्वाक्यानि पूर्वपक्षयितुम् आरेभिरे इत्याहुः, प्रेष्ठमिति । प्रेष्ठो भवत्येव स्वसामग्र्या तथा सत्त्वादित्वात् परं यद्यन्यथा तथाप्यप्रियमिव प्रतिभाषमाणमिति नोक्तं न हि कदाचिदपि भगवानप्रियवद्भवति किन्तु प्रियो भवतीतरोऽपि भवति सर्वभवनसामर्थ्यात् इतरत्वेन प्रियत्वं बाध्यते यथा जगज्जगद्व्यतिरिक्तरूपश्च तदाह, प्रियेतरमिव प्रतिभाषमाणमिति यः प्रियोऽयः तं न तिरोधारयति किन्तु वाक्यं न तेन रूपेण वदति किन्तु रूपान्तरेण तदा तेन सह वादः कर्त्तुं शक्य इति न हि फलं कश्चित्साधनं भवति मां वृणुतेति वा वदति परं बलादपि प्रतिबन्धनिराकरणं कृत्वा स ग्राह्य एव तदाह, कृष्णं सदानन्दमिति । ननु, कोऽयं निर्बन्धः स एव कार्य इति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

महांश्चेन्न मन्यते तदा अल्पतरा अपि काम्या इति तत्राह—तदर्थविनिवर्त्तितसर्वकामा इति । तदर्थं भगवदर्थं विशेषेण निवर्त्तिताः सर्वे कामा याभिः अयमेव काम्य इति निश्चित्य पूर्वमेव सर्वे कामास्त्यक्ताः "काममयश्चायं पुरुषः" यदि त्यक्तोऽपि गृह्येत तदा भगवदुक्तमेव गृहं कथं न गृह्येत तस्मादयमेव कामः अवशिष्यते स चेन्न भवेत्स्वरूपहानिरेवेति निश्चित्य फले मानमकृत्वा दृढीभूय रुदितोपहते नेत्रे विमृज्य यथास्थानं सर्वं प्रापयित्वा किञ्चित्संरम्भेण वादार्थमुद्यमः संरम्भः । भगवान् हि वाक्येन निराकरोति न तु स्वरूपतः वाक्यं तु निराकार्यमिति तदर्थं संरम्भः सर्वोऽप्यन्तं गत्वा परावर्त्तते परं संरम्भेण गद्गदा गिरो वर्णानाम् न स्फुटनिर्गमनम् ईश्वरवाक्यनिराकरणे यतो वाणी बिभेति यद्यपि ईश्वरभीत्या निर्गमासम्भवे कुतो गद्गदत्वं गिरस्तथापि यथा भगवतो भीतिस्तथाचेत्प्रियाङ्गेऽपि भीतिरस्तीति ज्ञायते तेन प्रभुभीतिकृतमस्फुटत्वं तत्प्रियाभीतिकृतो निर्गम इति नोक्तानुपपत्तिरिति भावः । एतासां तु न भयं यतः अनुरक्ताः रागो हि भयप्रतिपक्षः यत्र रागः स्वल्पोऽपि न तत्र भयम् अतः अब्रुवत उक्तवत्यः ॥ ३० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च किमरण्यरोदनं कुरुध्वे प्रसन्नमुख्यः सत्यः स्वस्वगृहं किं तूर्णं न गच्छतेत्युच्चैरुच्चारितेन भगवद्वाक्येन कर्णाध्वनान्तः प्रविष्टवता मूर्च्छातस्ताः प्रबोधिताः किञ्चिद्विज्ञापयामासुरित्याह—प्रेष्ठं पूर्वं बहुशः कृताङ्गसङ्गत्वात् प्रियतमम् अद्य च कारणं विनैव प्रियेतरमिव प्रतिकूलं स्वस्वपतिं भजध्वमित्यतिकठोरं भाषमाणम् एतच्च नैव सम्भवेत् यतः तदर्थं विशेषेण पुनर्यथा सम्बन्धगन्धोऽपि तेषां न स्यात्तथा निवर्त्तिताः सर्वे कामा याभिस्ताः अत्रान्यशब्दस्याप्रयोगात् सर्वशब्दप्रयोगाच्च भगवत्सुखार्थकः कामः कामशब्देन नोच्यते इति श्रीशुकाभिप्रायः रुदितेन उपहते अन्धीभूते नेत्रे विमृज्येति अयमन्तकालोऽस्माकमागतस्तत् सकृदप्येतस्य मुखकमलं दृष्ट्वा म्रियामहे इत्याकाङ्क्षयेति भावः हन्त हन्त प्रेयसापि भूत्वा विनैवापराधं कथमेतावान् प्राणान्तो दण्डः क्रियते ? इति संरम्भस्तथा वयमेतदनुरूपरूपगुणाद्यभावादङ्गसङ्गयोग्या एव भवामः अतस्त्यज्यामहे इति मननात्संरम्भाभावश्चेत्यतः किञ्चित्संरम्भेण गद्गदा गिरो यासां ताः ननूभयथापि प्रेमशून्यात्वस्मान्निवृत्तिरेवोचितेत्यत आहुः—अनुरक्ता इति । अनुरागान्धा हि विचारं न सहन्त इति भावः ॥ ३० ॥

---

### विशुद्धरसदीपिका ।

किञ्च, प्रेष्ठमिति । प्रकर्षेणेष्टं प्रियतमं प्रियेतरमिव प्रतिभाषमाणमिति परमानौचित्यं तत्रापि कृष्णं मुरलीवादनादिना चित्ताकर्षकम् आत्मना च तदर्थविनिवर्त्तितसर्वकामाः तत्कृते विनिवर्त्तिताः निरस्ताः स्वनङ्गवर्तिनः सर्वेऽभिलाषा याभिस्ताः एवं च तत्सुखमेव सूचितं तत एव च विस्रम्भप्रणयेन नेत्रे विमृज्य प्रागनादरया रुदितोपहते अपीति स्वभावसुरत्वम् एवं च नेत्रमार्जनमिव भावहृदयसन्धिजं प्रणयकोपस्वभावतः किञ्चिच्छ्रीमुखावलोकपूर्वकव्याहाराय तेन च तस्य लज्जोत्पादनाय तत्कृतः किञ्चित्संरम्भगद्गदगिर इति विषादकार्येण संरम्भेण विषादावरणादिति भावः तथा संरम्भेणैव विषादांशस्यान्तर्भूतत्वात्तदर्थकार्यं गद्गदत्वमपि सर्वत्र हेतुः अनुरक्ताः इति स्मेति विस्मये नर्मोक्त्याप्यहो तादृशदुःखमभूदित्यद्भुतः प्रेममहिमेति एवं च वैवर्ण्यस्तम्भादयोऽन्येऽपि जाता इत्याद्यूह्यम् ॥ ३० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

प्रागलब्धविहारतया सम्भावितोपेक्षायां कृष्णकृपार्द्रस्वभावज्ञतया सम्भावितानुग्रहायां रसविभावाद्यभिज्ञकुशलमतीनामुभयार्थविदां चरितमाह—प्रेष्ठमिति । कृष्णं स्वरूपतः सत्यानन्दरूपं कृपार्द्रस्वभावतश्च कृष्णं भक्तानां दुःखकर्षणं तथा प्रेष्ठं नित्यस्वप्रीतिविषयतया प्रियतमं प्रियेतरवदप्रियेतरवचनरचनायोग्यं स्वयञ्च तदर्थमेव विशेषेण निवर्त्तिताः सर्वे ऐहिकामुष्मिकाः कामा भविष्यद्विषयाभिलाषरूपाः काम्यन्ते इति कामाः प्राप्ताः भोगाश्च याभिस्तथाभूताः प्रत्याख्यानायोग्याः प्रेष्ठमेव दाक्षिण्यार्थकवाक्यमात्मनः प्रतिभाषमाणमपि उपेक्षार्थस्यापि सूचनेन प्रियेतरमिव अप्रियवाक्यमिव भाषमाणमुपलभ्योपेक्षार्थं मानेन प्रथमं रुदितोपहते नेत्रे दाक्षिण्यार्थकयमानेन लब्धधैर्या विमृज्य किञ्चित्संरम्भगद्गदगिर इत्यत्र संरम्भस्य किञ्चितानिर्देशेन रागमिश्रतापि गम्यते तथा च प्रथमं रागाद्रागमनेन रक्ताः पुनरुपेक्षार्थमानेन रागार्द्रे हृदि जातो यो रजोरूपसंरम्भस्तदुभयकालिके निमग्नितया बहिर्यथावन्निःसरणाशक्ता अत एव गद्गदा गीर्यासां ताः पुनर्दाक्षिण्यार्थज्ञाने जाते तदनुरक्ताः पुनः संवृद्धरागाः तं कृष्णमब्रुवत ॥ ३० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततो विनिवृत्तमूर्च्छास्तूष्णीं स्थितं भगवन्तमालक्ष्य किञ्चिद्विज्ञापयामासुरित्याह—प्रेष्ठमिति । गोप्यो रुदितोपहते नेत्रे विमृज्याऽहो बह्वितव्यं तद्भविष्यत्येव सम्प्रति भगवद्दर्शनं तु सम्यक्कर्त्तव्यमित्याशयाः कृष्णमब्रुवत स्म भगवतः सदानन्दरूपत्वात्तदाभिमुख्यमेव सदानन्दाविर्भावकरमतः सर्वानर्थकरं तद्वैमुख्यं कथमपि नोचितमिति भावः । प्रेष्ठं परप्रेमास्पदत्वादात्मानं प्रियेतरमिवानात्मवत्प्रतिभाषमाणं प्रत्याचक्षाणम् अहो सर्वात्मा सन् किमर्थमेवं वदतीति किञ्चित्संरम्भेण प्रणयकोपेन गद्गदा अस्फुटस्खलिताक्षरा गीर्यासां ताः । ननु, भगवति ईषत्संरम्भोऽप्यनुचितस्तासां मुखात् भगवद्वाक्यप्रत्युक्तिरूपा वाणी च कथं निस्सृता ? इति चेत्तत्राह—अनुरक्ता इति । स्वल्पस्यापि रागस्य भयनिवर्त्तकत्वात्परमानुरागवतीनां तासां का भयसम्भावनेति भावः । यतस्तदर्थविनिवर्त्तितसर्वकामाः तदर्थं भगवदर्थं विशेषेण तद्वासनासाहित्येन निवर्त्तिताः सर्वे कामाः याभिस्ताः तथा च भगवदतिरिक्तसर्वकाम्यस्य तदिच्छायाश्च त्यक्तत्वाद्भगवद्विषयककामस्य च मोक्षकामवदकामरूपत्वात्तन्मात्रनिष्ठायां तदनुरक्तचेतसां तासां नास्ति किञ्चिदपि भयमिति भावः । अनभिज्ञापक्षे तथाभूतां दशां प्राप्ता अपि ता

गोप्य ऊचुः ॥

मैवं विभोऽर्हति भवान् गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलम् ॥
भक्ता भजस्व दुरवग्रह ! मा त्यजाऽस्मान् देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो किमित्येवमस्मदुपरोदनं कर्तुमुद्यताः स्वस्थाः प्रसन्नमुख्यः सत्यः स्वस्वगृहं तूर्णं किं न गच्छत इत्येवं प्रहसन् यदोचे-रुवाच तदा तानि वाक्यानि तासां कर्णाध्वनाऽन्तःप्रविष्टानि ततश्च तैरेवोद्धोधितास्तत्सजातीयवाक्यैर्भगवद्वाक्यानां प्रत्युत्तरं वक्तुमारेभिर इत्याशयेनाह–प्रेष्ठमिति । बहुकालमारभ्य परमप्रेमास्पदत्वेन निश्चितमिदानीम् प्रियेतरमिव यथा प्रियेतरः शत्रुर्वदति यथा प्रतियातित्वादि वज्रादप्यतिकठोरं प्रत्याख्यानं रूपती कर्णाभीप्रयां प्रियेतरमिवाऽप्रियवाक्यसदृशं वाक्यमिति वा तत्रापि कृष्णं सम्प्रत्यपि वेणुनादेन चित्तरत्नमञ्जूषाम् आकृष्य सौचित्येन स्थितम् अत एव तदर्थं विनिवर्तितास्सर्वे कामाः रुदितोपहते अन्धीभूते नेत्रे विमृज्य अहो मरणसमयो ऽयमस्माकमागतस्तस्मात्सकृदपि प्रेष्ठस्य मुखपद्ममवलोक्य मरिष्याम इत्याकाङ्क्षयेति अहो प्रेष्ठस्वेनाभिमतोऽयं विनाऽपराधं कथमेवंविधप्राणान्त्यदण्डं दातुमुद्युक्त इति संरम्भः स्वाशितस्तदङ्गसङ्गायोग्यतां विचार्य्य तच्छैथिल्यमित्युक्तं किञ्चित्संरम्भेणोत्सुकं ननु, सर्वथापि प्रेमशून्येन तेनाऽलं भाषणादिनेति चेत्तत्राह–अनुरक्ता इति । अनुरागान्धाः विचाररहितत्वात् प्रत्याख्याता अपि पुनस्तत्रैवानुषज्यन्त इति भावः । मानिनीपक्षे विस्मिताः परमप्रियं प्रियेतरमिव प्रतीयमानं वाक्यं प्रतिभाषमाणं कृष्णमब्रुवत स्म अहो कथमस्मान् परदारानित्थं वदसीति कोपेनान्तःकरणस्थोत्कटोत्कण्ठया शिथिलीकृतत्वात् । संरम्भेण गद्गदभूता गिरो यासां ताः यथोक्तं प्रार्थनारूपं वाक्यमाकर्ण्य ततोऽप्यधिकमनुरक्ताः । निवृत्तिपक्षे प्रेष्ठं "सर्वे वेदा यत्पदमामनन्ति" इति "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभ्यां वेद्यत्वेनात्यर्थमभिमतं तत्तद्वादिरूपेण श्रुतीनां ब्रह्मणि प्रामाण्यं नास्तीत्येवमादिरूपं प्रियेतरमिव प्रतिभाषमाणं प्रत्याचक्षाणं कृष्णं फलरूपं सदानन्दात्मकं परमात्मानं तदर्थं परमात्मप्राप्त्यर्थं विशेषेण निवर्तिता अधिकारिणां सर्वे कामा याभिस्ताः तथा च श्रुतिः—

"यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि श्रिताः ।
तदा मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुते" ॥

इत्यादौ रुदितेन स्वार्थानभिज्ञाभ्युदितकृतेन रुदितेनोपहते नेत्रे यथाभूतार्थप्रकाशनसमर्थे शक्तिलक्षणालक्षणं विमृज्य किञ्चित्संरम्भेणाहो आस्तिक्यरूपेण स्थितोऽपि भगवानित्थं वदतीति ईषत्कोपेन गद्गदाश्छान्दसा गिरो यासां ताः । किञ्च, तास्मिन्नेवानुरक्ताः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदनन्तरं स्वमनोरथं श्रीकृष्णं प्रत्यूचुरित्याह—प्रेष्ठमिति किञ्च संरम्भेण गद्गदाः स्खलिताक्षराः गिरो यासां ताः रुदितेन रोदनेन उपहते अन्धीभूते नेत्रे विमृज्य अब्रुवत स्म संरम्भे हेतुमाह —प्रियेतरमिवाऽनिष्टमिव प्रतिभाषमाणं प्रत्याचक्षाणमिति तदर्थं कृष्णार्थं विनिवर्तिताः सर्वे कामाः याभिस्ताः इति च ॥ ३० ॥

---

भाषा टीका ।

है तौ अपनौं अत्यन्त प्यारो परन्तु आज न जाने काहेतें कुप्यारे की नाईं वचन बोले है, ऐसो जो श्रीकृष्णचन्द्र ताकें ताईं निवृत्त कर दिये सम्पूर्ण काम जिनने ऐसी परम अनुराग में भरी भईं जो गोपी हैं, वे सगरी, रुदन करत २ फूलि आये जो नेत्र तिनतें आंसून को पोंछिकें, थोरो सो होय आयो जो संरम्भ तातें गद्गदवाणी होय के बोलत भईं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नृशंसं क्रूरं हे दुरवग्रह ! स्वच्छन्द ! तव पादमूलं भक्ताः सेवितवतीरस्मान्भजस्व मा त्यजेति ॥ ३१ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

"यासामेव प्रसादेन यासां श्रीनागरेश्वरे । उक्ते विशायतेऽर्थस्ता वन्दे श्रीनागरीश्वरीः" श्रीभगवता यज्ञपत्नीपूक्ताद्यपद्यपादस्यात्र सम्यगुक्तत्वादिव भगवत्यः श्रीव्रजदेव्योऽपि तथैव यज्ञपत्न्युक्तपद्याद्यपादमाहुः वस्तुतस्तु तस्य वचनोक्तेस्तासां चातुर्य्येण साम्येन सम्प्रदायप्राप्तेरेवमिति मेति निषेधस्यादौ प्रयोगः परमार्तितैयग्र्येण एवम् ईदृशं कथञ्चिदेतद्वचनसदृशमपि किमु वक्तव्यम् एतदित्यर्थः । कुतः ? नृशंसं वज्रसारवत्काठिन्येन हृदयविदारकमित्यर्थः । यद्वा, साक्षान्मारकं "नृशंसो घातुको हिंस्रः" इत्यमरः । गदितुं व्यक्तं वक्तुं किं वा गदितुमपि किमुत व्यवहर्तुमर्हति तत्र च भवान् प्रेमार्द्रस्वभावः अतोऽन्यो वदतु नामेत्यर्थः । भवानिति प्रागनुनयार्थस्तुत्या गौरवात् श्लेषेण भाति नक्षत्राणि तद्दीप्तया तद्वान् चन्द्रः कामाभिवर्धनरत्नाच्चन्द्रो वः स नार्हत्येव तथापि हे विभो ! अस्मत्प्राणप्रभो ! अतोऽस्मान् प्रति नार्हत्येवेति भावः । एवं "स्वागतं वो महाभागाः" इत्यादिकं भवता सादरं सन्यायं मृदूक्तमपि प्रेमरसाविघातकत्वात् निवर्तनार्थमेवोक्तत्वात्तथैतो विपरीतमेवेति भावः । अनेन स्वागतमित्याद्यपादस्योत्तरमूह्यम् । ननु, भोः प्रियवादिन्यः ! तर्हि किं कर्तुमर्होमि इत्यपेक्षायामाहुः –अस्मान् भजस्व मनोरथपूरणेनाऽनुवर्तस्व

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यद्वा, सेवस्व नित्यं प्रेम्णोपभुङ्क्ष्वेत्यर्थः । कुतः ? तव पादयोर्मूलं तलं रजः पादुका वेत्यर्थः । अब्जादिरूपकानुक्तिर्नृशंसोक्त्या काठिन्याद्यभिप्रायेण । यद्वा, पाद एव मूलं सर्वार्थस्य कारणं आश्रयो वा तद्भक्ताः "आदिकर्मणि क्तः कर्त्तरि च"(३।४।७१) तद्भजनं कर्त्तुमारब्धाः अद्यापि समग्रभजनासम्पत्तेः एवं दैन्य विनयोक्तिरिदंसीत्वेच्छया। यद्वा,सेवितवतीः आभिना इत्यर्थः।अन्यथा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादिवचनानां वैयर्थ्यापत्तिः अनेन प्रियं किमिति पादस्योत्तरं । ननु, श्रीगोप गृहिण्यः सदा विषयासङ्गेन गृहाभिरतत्वात् दुर्लभसङ्गा यूयं किमिति मया भजनीयाः तत्राहुः—सन्त्यज्येति । सर्वान् विषयान् इन्द्रियार्थान् । पत्यादिद्वारा साध्यान् । सम्यक् समूलतया अपुनरङ्गीकारदार्ढ्येन च त्यक्त्वा सर्वार्थमूलत्वत्पादाब्जप्राप्त्यैव सर्वार्थ सिद्धेः त्वद्भजनप्रातिकूल्याद्वा विषयत्यागेन पत्यादित्यागोऽपि ज्ञापित एव पत्यादीनां तन्मूलकत्वात् । यद्वा, ननु तत्त्वज्ञपूज्यपादाः ! कथं विषय सुखमिच्छथ ? तत्राहुः—सन्त्यज्येति । अतो वयं परमार्थसुखमेवेच्छाम इति भावः । त्वया सह क्रीडाविशेषस्य प्रेमपरिपाक विलासरूपत्वेनाशेषपुरुषार्थसारसर्वस्वात्मकत्वात् इति " ये यथा मां प्रपद्यन्ते" इत्येतन्निजवचनस्य सत्यतापेक्षया त्वमप्यस्मद्दैन्याद्युपत्यागेनास्मान् भक्तुमर्हसीति गूढो ऽभिप्रायः अनेन व्रजस्थानामथभिक्षस्योत्तरं सर्वविषयत्यागेन तस्याप्युपेक्षापरत्या तन्मङ्गलकथनेनालमिति तात्पर्यात् । ननु, चपलाः ! अधर्मादुद्बिभेमि तत्र सेर्ष्यमाहुः दुरवग्रह हे स्वैरशिरोमणे ! दुराग्रहेति वा अस्मान् अनन्यगतीर्मा त्यज । यद्वा, दुरवग्रहं दुराग्रहम् मा सम्यक् त्यज, ननु, वाचालाः ! यूयं कामिन्यो मद्योग्या न भवथेति चेत् ? सत्यं तथापि सर्वत्यागेन भजतां जनानां सर्वेषामपि स्वीकारो महापुरुषधर्म इति दृष्टान्तेनाहुः—देव इति । देवत्वेनानश्यं स्वभक्तेष्टपूरणं कार्यमित्यभिप्रेतं तत्रापि आदिपुरुषः पुरुषोत्तमः तेन भक्तमनोरथपूरणस्यावश्यकत्वात् तत्रापि मुमुक्षूनपि किमुत तदेकेच्छून् किम्वा अमुमुक्षून् भक्त्यैकनिष्ठानित्यर्थः । यथासौ भजनमात्रापेक्षया सर्वानेव भजते स्वीकरोति तथा त्वमस्मान् भजस्वेति, यद्वा ननु साध्व्यः तत् कर्म ममानुचितमिति चेत्तत्राहुः—देवः भक्ततोऽर्थापेक्षकोऽपि आदिपुरुषोऽपि मुमुक्षूनपि भजते मुक्तिदानेनापि तन्मनोरथं पूरयति अतो भक्तेच्छानुसारव्यवहारेण न दोषो घटत इति भावः । अन्यत्तैर्व्याख्यातम् । यद्वा, श्रीगोपेन्द्रनन्दनत्वेनैव कृष्णे कृष्णनिष्ठानां व्रजसुन्दरीणां आन्तरीणमहाभाववैचित्रीसहचरीपरमैश्वर्यलेशेषु तद्भक्तविशेषेषु सर्वाभिज्ञतादिरूपस्य तासां माहात्म्यस्य प्रख्यापनाय स्वमनोऽनुकूल्येऽर्थे ताभिः प्रयुक्तयैव भारत्या कृष्णैश्वर्यं स्वप्रयोजनानुपयुक्तमपि वर्णयति—अन्यथा व्रजसुन्दर्यो भगवत्स्वरूपानभिज्ञा इति ते मन्येरन् तदैश्वर्यं वर्णनं परमार्तिसमय एव न स्वानन्दसमये तदैश्वर्यज्ञानस्यापि तासामसुखानुभव एव पर्यवसानात् तत्रापि निजभाव माधुर्यस्यान्यथात्वं नास्त्येव यदैश्वर्यवर्णनेऽपि सख उदेषिवानित्यादौ स्वपस्याव्यभिचारः तथाहि विभो, हे वहिरन्त र्व्यापक ! इति भवानस्माकं सर्वं भावं जानात्येव अतस्तव पादमूलं भक्ता आश्रिता अस्मान् भजस्व अन्यथा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादिवचनानां वैयर्थ्यापत्तिः ननु, तत्त्वज्ञपूज्यपादाः ! कथं विषयसुखमिच्छथ ? तत्राहुः, सन्त्यज्येति । अतो वयं परमार्थसुखमेवेच्छाम इति भावः । त्वया सह क्रीडाविशेषस्य तस्य प्रेमपरिपाकविलासरूपत्वेनाशेष पुरुषार्थसारसर्वस्वात्मकत्वात् इति "ये यथा मां प्रपद्यन्ते" इत्ये तन्निजवचनस्य सत्यतापेक्षया त्वमप्यस्मद्दैन्याशेषत्यागेनास्मान् भक्तुमर्हसीति गूढोऽभिप्रायः।हे दुरवग्रह!दुराग्रह अस्मान् प्रपन्नाः मा त्यज दुरवग्रहत्वेन प्रपन्नपरित्यागादधर्मस्यैवोत्पत्तेः विशेषतश्च सुव्रतत्वादिप्रतिज्ञाहान्यापत्तेः परमेश्वरत्वात्त्वामधर्मो न स्पृशत्येव प्रतिज्ञाहानिस्तु परमानुचितैवेति भावः । यद्वा, हे भक्ताः! भज भजतीति भजः न भजः अभजः हे भक्तानामप्यभज ! हे स्वेच्छापि दुरवग्रह ! इति सप्रणयरोषमाहुः—सर्वान् विषयान् भोगान् यद्वा, साम्राज्यप्रभृतिवैकुण्ठावधिपदानि संत्यज्यापि तव पादमूलम् मुमुक्षून् मोक्तुमनिच्छून् अशक्नुवतो जनान् त्वत्पादमूलस्य सर्वतो माधुर्यविशेषात् भज स्वीकुरु यतो देवः जगत्पूज्यस्त्वम् अन्यथा देवत्वासिद्धेः तत्रापि यथावत् सम्पूर्णतया आदिपुरुषो भगवान् अन्यथा निजभगवत्ताप्रकटनासंपत्तिः सामान्येनोक्तिः युक्तिप्रदर्शनेन निजस्वीकारदार्ढ्यार्थम् अतः ते त्वदीया अस्मान् मा त्यज अन्यत्समानम्—

> आर्त्युक्तेरपि गोपीनां श्लेषार्थं भारती सखी ।
> रक्षन्ती गौरवं तासां कृष्णाभक्तेषु गायति ॥

तथाहि ईदृशं किञ्चिदप्रियं करवाणि मया सह क्रीडादूषणेत्यादिकं नृशंसं वक्तुं नार्हसि तत्र हेतुः सन्त्यज्येति विषयपरित्यागेन प्रपन्नानां नः पुनस्तद्भोगे प्रवर्त्तनस्य दोषत्वादित्यर्थः तदैवास्माकं स्वागतादिकम् यद्वा, याः सर्वविषयान् सन्त्यज्य तव पादमूलं भक्ताः ता एव दुरवग्रहं स्वच्छन्दं यथा भवति तथा भजस्व अस्मान् मा त्यज्य सम्यक् त्यज प्रभवस्तु भक्तजनानेव भजन्ते न त्वभक्तानित्यत्र दृष्टान्तमाहुः—देव इति ॥३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीगोप्य ऊचुरिति अत्रैवं विवेचनीयं यद्यपि समानभावापन्नत्वेन युगपत् समानवचनस्फूर्त्तिरपि सम्भवति तथाप्येकवोक्ताघातिकोलाहलतया नातिरसाधायकत्वात् कासाञ्चित् मुख्यानामेव वचनं ज्ञेयम् तच्च युगपद्वा तत्तन्महावाक्योपसंहारे तत्र: प्रसीद वरदेति, सिञ्चाङ्गेति, तत्र: प्रसीद वृजिनेति, तन्नो निधेहीति, स्वस्वविवक्षित वचनचतुष्टयान्तं क्रमशो वा पूर्वं पूर्वासां वाक्यस्थापनपूर्वकोवोपन्यस्तमस्ति चतुष्टयत्वं च यूथशो दिक्चतुष्टयास्थितत्वात् तासां तथापि सर्वासां तत्सम्मुखत्वं च कृष्णस्य विष्वक् पुरटाजिनखण्डैरूपाननाः इति वत् "यासामेव प्रसादेन यासां श्रीनागरेश्वरे । जल्पतस्त्वं ज्ञायते ता वन्दे श्रीनागरेश्वरीः" श्रीगोपीगणप्राणवल्लभाय भगवते नमः । अथ पत्यादिपरित्यागेन त्वद्भजने ऽस्माकं धर्मोऽधर्मो वेति पश्चाद्विचारयिष्यन्ते अहो तवैव तावदस्मत्परित्यागे धर्मदोषो दुष्परिहर इत्याहुः—मैवमिति । मेति निषेधस्यादौ प्रयोगः परमार्तिवैयग्र्येण एवम् ईदृशं कथञ्चिदेतद्वचनमर्हसि किमु वक्तव्यम् एतदित्यर्थः कुतः नृशंसं वज्रसार वत्काठिन्येन हृदयविदारकमित्यर्थः । यद्वा, साक्षान्मारकं "नृशंसो

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

घातुकः क्रूरः" इत्यमरः । गदितुं व्यक्तं वक्तुं किंवा गदितुमपि किमुत व्यवहर्त्तुमर्हति तत्र च भवान् प्रेमार्द्रस्वभावतया प्रसिद्ध इत्यर्थः । तत्रापि विभो, हे अस्मत्प्राणनाथ ! अतोऽस्मान् प्रति नार्हत्येवेति भावः अत्र संरम्भगद्गदेत्युक्तत्वात् सर्वत्र शब्देन स्वरेण वा दैन्याद्यापि प्रणयकोपो व्यञ्जनीयः एवं "स्वागतं वो महाभागाः" इत्यादिकं भवता सादरं सन्यायं मृदूक्तमपि निवर्त्तनार्थमेवेति रसविघातकत्वादर्थतो विपरीतमेवेति भावः । अनेन स्वागतमित्याद्यपादस्योत्तरमूह्यम् । ननु, भोः प्रियवादिन्यः ! तर्हि किं कर्त्तुमर्हामि इत्यपेक्षायामाहुः—अस्मान् भजस्व मनोरथपूरणेनानुगृहाण कुतः तव पादयोर्मूलं तलं भक्ता इति दैन्योक्तिः अव्जादिरूपकानुक्तिर्नृशंसतोक्त्या काठिन्याद्यभिप्रायेण अनेन प्रियं किमिति पादस्योत्तरम् ननु, श्रीगोपगृहिण्यः सत्यमेव भजामि किन्तु भवत्पत्यादिहिताचरणरूपमेव युक्तं नत्वीदृशमिति तत्राहुः—सन्त्यज्येति । सर्वान् विषयान् इन्द्रियार्थान् पत्यादिरूपान् सम्यक् अपुनरङ्गीकारदार्ढ्येन त्यक्त्वा तेषां त्वद्भजने प्रातिकूल्यात् अनेन व्रजस्यानामयमित्यादिकस्य दुह्यतेत्यन्तस्य सर्वस्याप्युत्तरं तेषां सर्वेषामपि विषयान्तःपातात् तत्त्यागेन देहेपि गलितप्रेमत्वात् तत्प्रेमविना रजन्येषेत्यादिवाक्यस्याप्यनुपादेयत्वात् व्यतिरेकेणाहुः—हे दुरवग्रह, दुराग्रह ! अस्मान् अनन्यगतीर्मा त्यजेत्यर्थः । अन्यथैव दोषः स्यादिति भावः । कथमित्याशङ्क्य धर्माधर्मातीतस्येश्वरस्यापि तद्धर्मपालनावश्यकता दर्शनादित्याहुः—देव इति । तत्रापि मुमुक्षूनपि किमुत तदेकेप्सून् किंवा अमुमुक्षून् मोक्षमप्यनिच्छून् भक्त्येकनिष्ठानित्यर्थः । यद्वा, मुमुक्षून् तस्माद्‌न्यत् सर्वं त्यक्तुमनिच्छून् यथासौ भजनमात्रापेक्षया सर्वानेव भजते स्वीकरोति तथात्वमस्मान् भजस्वेति भजत इति द्वितीयान्तः क्वचित्पाठः तत्र तु मुमुक्षूनिति विशेषणं साधनसाध्ययोर्द्वयोरप्यवस्थयोः स्तेषामात्मसात्करणात् सकामान् व्यावर्त्तयति—यथा तान् भजते न त्यजतीत्यर्थश्चाद्भजस्वेत्यस्य विभक्ति विपरिणामेन व्याख्येयम् अत्र श्रीगोपेन्द्रनन्दनत्वेनैव कृष्णे लब्धनिष्ठानामपि "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासतेऽसुराः" इत्युक्तत्वात् "हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः । भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रताः" इति श्रीनारदपञ्चरात्रोक्तानुसाराच्च नादृतमपि सर्वं ज्ञानादिकं ताः परिचरति तस्मात्केवलप्रेममय्योपि वचसि पारमैश्वर्यज्ञानमयोप्ययमर्थस्तासामेव महिमसूचनार्थं ज्ञानादिशक्तिप्रेरिततया भक्तिविशेषायां चमत्काराय स्फुरति अथवा दैन्येन महिमस्फूर्तेरीश्वरत्वं सम्भाव्यैतदुक्तं वचनं तथाहि विभो, हे बहिरन्तर्व्यापक ! इति भवानस्माकं सर्वं भावं जानात्येव अतस्तव पादमूलं भक्ता आश्रिता अस्मान् भजस्व अन्यथा "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्यादिवचनानां वैयर्थ्यापत्तिः । ननु, तत्त्वज्ञपूज्यपादाः ! कथं विषयसुखमिच्छथ ? तत्राहुः, सन्त्यज्येति । अतो वयं परमार्थसुखमेवेच्छाम इति भावः । त्वया सह क्रीडाविशेषस्य तस्य प्रेमपरिपाकविलासरूपत्वेनाशेषपुरुषार्थसारसर्वस्वात्मकत्वात् इति "ये यथा मां प्रपद्यन्ते" इत्येतद्विजवचनस्य सत्यतापेक्षया त्वमप्यस्मद्दन्याशेषत्यागेनाश्रिताऽस्मान् भक्तुमर्हसीति गूढाभिप्रायः । हे दुरवग्रह, स्वच्छन्द ! अस्मान् प्रपन्नान् मा त्यज परमेश्वरत्वात् त्वामधर्मो न स्पृशत्येव सत्यसङ्कल्पत्वश्रुतिविरोधात् प्रतिज्ञाहानिस्तु परमानुचितैवेति भावः सर्वान् विषयान् साम्राज्यप्रभृतिवैकुण्ठावधि पदानि सन्त्यज्यापि ते त्वाम् अमुमुक्षून् मोक्तुमनिच्छून् अशक्नुवतो जनानन्यानपि भज स्वीकुरु, द्वितीयायां षष्ठी ते तुभ्यं त्वां प्राप्तुं मुमुक्षूनिति च चतुर्थी वा यतो देवः जगत्पूज्यस्त्वम् अन्यथा देवत्वासिद्धिः तत्रापि यथा यथावत् सम्पूर्णतया आदिपुरुषो भगवानिति अत्र चाभिरपि यज्ञपत्न्युक्ताद्यपद्याद्यपादानुवाद आर्त्तिसाम्यांशेन ज्ञेयः "आर्त्तावपि स्वभावेन वैदग्धीवलितात्मनाम् । प्रार्थने गोपरामाणां निषेधार्थोपि वीक्ष्यते" ॥ तथाहि एवमीदृशं किञ्चित्प्रियं करवाणि मया सह किञ्चिदूचुरेत्यादिकं नृशंसं वक्तुं नार्हति तत्र हेतुः सन्त्यज्येति याः सर्वविषयान् सन्त्यज्य तव पादमूलं भक्तास्ता एव दुरवग्रहं स्वच्छन्दं यथा भवति तथा भजस्व अस्मान् मा सर्वांशेनैव त्यज प्रभवो भक्तजनानेव भजन्ते न त्वभक्तानित्यत्र दृष्टान्तमाहुः—देव इति । अस्मिन्नर्थे वस्तुतस्तु सर्वमेतन्नर्मैवेति भाव एव व्यञ्जित इति ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—मैवमित्येकादशभिः । हे विभो इत्थं नृशंसं क्रूरं यथा भवति तथा वक्तुं भवान्नार्हति हे दुरवग्रह ! स्वच्छन्द सर्वान् विषयान् भोग्यानपत्यपत्यादीन् विहाय सर्वनिगमगिति पाठे सर्वेषां पत्यादीनां निगममार्गं सन्त्यज्य तव पादमूलं प्राप्ताः भक्ता इति पाठे भजमाना अतोऽस्मान्न त्यज किन्तु भजस्व अनुकूलो भव मुमुक्षून् भजमानान् भक्तानादिपुरुषो भगवान् यथा न त्यजति तद्वदित्यर्थः ॥ ३१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथा विचार्य किमब्रुवन्निति तदाह—मैवमिति । नृशंसं परुषं वचनमेवं गदितुं वक्तुं नार्हसि कुतः ? इत्यत्राह—सन्त्यज्येति । हे दुरवग्रह, अवग्रहो वर्षविघातः तद्रहित ! भक्ताभीष्टवर्षणशीलेत्यर्थः । शब्दादिसर्वविषयान् सन्त्यज्य भक्त्या तव पादमूलं भजेम सेवितुमवाप्ता इति यतस्माद् मास्मान् त्यज अत्र दृष्टान्तमाह—देव इति ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तत्किमित्याह—मैवमित्यादि । एता मध्या धीराः तेन विभो इति वक्रोक्त्या सम्बोधनं भवान् "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति सत्यप्रतिज्ञः एवं नृशंसं क्रूरं गदितुं नार्हति तर्हि किं कर्त्तव्यमित्याहुः अस्मान्भजस्व मा त्यजस्वेत्यात्मनेपदं कर्त्रभिप्रायं क्रियाफले अस्मद्भजने स्वप्रतिज्ञारक्षणमेव फलं केन प्रकारेण भजिष्ये तत्राहुः आदिपुरुषो नारायणो देवो यथा मुमुक्षून् भजते तथेत्यर्थः । स तु तेभ्यः आत्मानमेव ददाति । ननु, स नान्यत्तेभ्यो मोक्षमेव ददाति मयस्यश्लेषदाकाङ्क्षिणयस्तदा श्लाघ्याऽनेन वृहं यात नेत्याहुः—तव पादमूलं भक्ताः श्रिता वयं भक्तास्तु मोक्षं कदापि नाद्रियन्ते तेन

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

दृष्टान्तगतं तावदिदमेव मोक्षे यथा न पुनरावृत्तिस्तथाऽस्माकमपि गृहे न पुनरावृत्तिर्भवतु महैव स्थातव्यमिति यत् तदेव किं कृत्वा भजनीया भगवन्तस्तत्राहुः, सर्वान्विषयान् सन्त्यज्य तांस्तथैवेत्याद्युक्तः । यतो वयमपि तथा हे दुरवग्रह, दुष्प्राप ! ॥ ३१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वाक्यानां बाधवाक्यानि तावन्ति प्रार्थनाधिका । एकादशविधास्तेन तासां वाचो जयन्ति हि ॥ भगवता प्रथममुक्तं "स्वागतं वो महाभागाः !" इति यद्यपि भगवता वयं स्तुतास्तथापि प्रेषणाभिप्रायेण न तु स्वस्मिन्नागता इति तथा सति नेयं स्तुतिः किन्त्वतिक्रूरं वचनमनिष्टपर्यवसानात् नन्वशक्ये किं कर्त्तव्यं तत्राह—नैवं विभो ! इति । भवान् सर्वमेव कर्त्तुं समर्थः समर्थश्चेदन्यथा वदेत् नृशंसमेव भवति दयायां विद्यमानायां न वदेदिति यच्च भगवता उक्तं व्रजस्यानामयमिति तदस्माकं नोद्देश्यं यतः सर्वान्विषयानेव सन्त्यज्य तव पादमूलं प्राप्ताः अनेन त्यक्तार्थपरिग्रहोऽनुचितः नापि जारत्वेन समागतामिति निरूपितम् एकादशेन्द्रियाणामपि विषयास्त्यक्ताः सवासनास्तत्र विनिगमकं तव पादमूलं प्राप्ता इति अन्यथा पादमूलप्राप्तिरेव न स्यात् यदुक्तं "भूतागमनकारणम्" इति तत्राहुः—भजस्वेति । अन्यत्कर्त्तव्यमिति चेत्तत्राहुः—हे दुरवग्रहेति । दुष्टोऽयमवग्रहः आग्रहः यद्भजनं न कर्त्तव्यमन्यत्कर्त्तव्यमिति यथा जीवानां ते हि सर्वं कर्त्तुं वाञ्छन्ति न भगवद्भजनं यथाऽयमाग्रहो जीवानां दुष्टः तथाऽत्रापि भवितुमर्हति "ये यथा मां प्रपद्यन्ते" इति तु नास्ति यदि तदभिप्रायेणैव तथा तदा मा त्यजास्मान् अस्मामिर्न त्यज्यत इति एतच्च भजनं न विषयवत् किन्तु प्रकारान्तरेणेति विशेषतो वक्तुमशक्ताः दृष्टान्तेनाहुः, देवो यथेति । देवो हि सर्वानेव भजते अन्यथा शास्त्रं व्यर्थं स्यात् तत्राप्यादिपुरुषो देवः पूर्वकाण्डेऽपि भजनं सार्थकं सुतरामुत्तरकाण्डे आदिपुरुषस्तु सेव्य एव भवति देवश्च न हि देवभजनं व्यभिचारजनकं भवति पुरुषान्तरभजनेऽपि प्रथममर्चां विवाहितः अभजनीयो भवति अनङ्गीकारस्तूचितः न त्वभजनम् एतेन स यथा स्वातिरिक्तभजनं न सहते तन्निवृत्तिपूर्वकमेव स्वभजनं सम्पाद्य स्वयं भजते तथा त्वयापि कार्यमतस्तत्र प्रेषणं तत्राप्यनुचितमिति ज्ञायते । किञ्च, यथा मुमुक्षून् भजते भगवान् आत्मीयत्वेन परिगृह्णाति आत्मतया स्फुरति स्वानन्दं तेभ्यः प्रयच्छति "एष ह्येवानन्दयाति" इति श्रुतेः स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही ति न्यायेन भगवान् तदर्थमात्मानं प्रकटीकरोतीति मुमुक्षून् भजत इत्युक्तम् अन्यथा मुमुक्षव एव भगवन्तं भजन्ते न तु भगवान् अतः फलद्वारा भजनं यथा तेषां पुनः पूर्वावस्थां न सम्पादयसि सततं स्वस्मिन्नेव स्थापयसि तथा अस्मदर्थमाविर्भूय स्वानन्देन वयं योजनीया इत्येतत्कर्त्तव्यमित्यर्थः । एतेन प्रार्थनया सकृदङ्गीकृत्य तूष्णीं भावपक्षो निरस्तः अग्रे गृहगमनाज्ञापनगृहस्थितिस्वरूपादनादिकं तु रसपोषायैव न तु गृहार्थमिति ज्ञेयम् ॥ ३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अस्मान् धर्ममुपदिशस्यथ च स्वयं पापराशिं चिकीर्षसीत्यनुचितमित्याहुः—मैवमिति । नृशंसं घातुकं साक्षान्मारकं यथा स्यात्तथा गदितुं भवान् प्रतिपुरुषं धार्मिकत्वख्यातिमतो नन्दस्य पुत्रः सन्नार्हति अन्यस्तु प्रतिपुरुषं मानुषमारणवृत्तिको वरमर्हतु नामेति भावः । "नृशंसो घातुकः क्रूरः" इत्यमरः । त्वया कोटिसंख्या अप्यस्मान् प्रति वाक्शरास्तथा एकदैव निःक्षिप्ता यथा अधुनैव शरीराणि परित्यज्य यमपुरं सर्वा एव वयं यामो न तु त्वदुपादिष्टं गोष्ठपुरं त्वन्तु शतकोटिस्त्रीवधपातकानि गृहीत्वा स्वयमेव गोष्ठं याहि स्त्रीवधाच्चोचेत् जिघृक्षसि तर्हि सर्वविषयांस्त्यक्त्वा तव पादमूलं भक्ताः सेविता वतीरस्मान् भजस्व आत्राम्यविषयानित्युक्त्वा सर्वविषयानित्युक्त्या भगवदङ्गसङ्गो हि विषयो न भवतीति ध्वनितम् । भोः कामिन्यः ! किं स्वस्वपतिभ्यो भवतीनां कामो नोपशाम्यति ? यतस्तान् परित्यज्य मामेव भजध्वे तत्राहुः—हे दुरवग्रह । "अवे ग्रहो वर्षप्रतिबन्धे" (३।३।५१) इति पाणिनिस्मरणात् दुष्टो अवग्रहो वृष्टिप्रतिबन्धोऽनावृष्टिर्यस्येत्यत्रान्यपदार्थस्य मेघस्यैवोपयुक्तत्वात् दुःखप्रयोगाच्च हे विषमात्रवर्षक ! मेघेत्यर्थः । तेन चातकीनामस्माकं दूरस्थोऽपि त्वमेव कृष्णमेघो बन्धुस्त्वं दैवदोषादद्य विषं वर्षसि अवग्रहत्वात्सलिलं न चेद्वर्षसि तर्हि मा वर्ष तद्वृष्टं विषमेव पीत्वा वयं म्रियामहे नतु निकटस्थानां ह्रदादीनामपि जलं पिबामेत्यस्माकं भावं जानीहीति भावः अतो स्मान्मा त्यज यथात्मनः कृतघ्नत्वं वृथासीति भावः ननु च सत्यं चातक्यो मेघमपेक्षन्तां नाम मेघस्तु चातकीर्नापेक्षते चातक्यो म्रियन्तां जीवन्तु वा मेघस्य न कोपि हानिरिति चेत् सत्यं न त्वं जडात्मको मेघ एव किन्तु विदग्धचूडामणिर्नारायणसमो नारायणवदेव वर्त्तसेऽस्याह—देव इति । मुमुक्षून् त्वदुपासनार्थं सर्वविषयांस्त्यक्तुमिच्छूनपि त्वदभीष्टोपपादनया भक्तवश्यत्वात् भजते अस्मांस्तु त्वदर्थं सन्त्यक्तसर्वविषयभोगीका अपि त्वं कथं न भजसीत्यर्थः ॥ ३१ ॥

---

### विशुद्धरसदीपिका ।

तदेवाह—श्रीगोप्य इत्येकादशभिः । अत्रैवं विवेकः पुरस्तादेतासां चतुर्विधत्वे साधितेऽप्यस्ति कश्चिद्विशेषः याश्च श्रुतिमुनिरूपाः साधकचर्याः ताः द्विविधाः प्रौढाश्च कन्याश्च आसां साधकचरीत्वाविशेषादेकमत्यमित्येको वर्गः एतासामावेद्यम् श्लोकत्रयात्मकं महावाक्यम् एवं च प्राचीनसंस्काराविशेषस्वाभाव्यात्कान्तभावाच्चेश्वरज्ञानमप्यविरुद्धं तत एव चाधीरतयाऽग्रे सरत्वं पूर्वदिक्षितत्वात्प्रतिवचने प्राथम्यमपि बोध्यम् । सिद्धा अपि द्विविधाः दाम्पत्यभावाः सहचरीभावाश्च तत्राद्यानां श्रीराधिकाप्रतिपक्षत्वम् श्रीकृष्णनिष्ठत्वेनोदासीन्यमपीति द्वैविध्यम् । तत्राप्याद्यानां दक्षिणात्वम् अपरासां तटस्थात्वमिति तत्र स्वाधीनपतिका सौभाग्यवर्णनप्रस्तावे तद्विपक्षतटस्थादिवर्णनमयुक्तमहृद्यं चेति वाच्यम् मधुरातिमधुरलीलायाश्चास्या स्वभावोऽयं यत्स्वल्पेर्ष्यामदमानादिवैचित्रीपरिकरतयैव च रसं पुष्णाति तत एव तादृशतयैव कविभिर्वर्ण्यते श्रीभागवतापि

## विशुद्धरसदीपिका ।

यथावसरं स्वलीलायामङ्गीक्रियते तदुक्तमुज्ज्वले—

"यथा स्युर्नायकावस्था निखिला एव माधवे ।
तथैव नायिकावस्था राधायां प्रायशो मता" इति ॥

प्रायशः इति स्वरूपतः स्वाधीनपतिकैव भयमेव च व्रजनिकुञ्ज-लीलयोर्विशेषः । शृङ्गारप्राधान्येन प्रेमपरिपोषका व्रजलीला प्रेमप्राधान्येन शृङ्गारपोषका निकुञ्जलीलेति तदुभयसन्धिगता रासलीलेति तद्द्वयमपि यथास्थानं पुष्णाति च प्रपुष्णाति च शुद्धं प्रेमाणमिति ततश्च लीलाशक्तिरेव तासु तत्तद्भावं दधाति विदधाति चाखिलं तदनुगुणमिति गम्यं वस्तुतस्तु श्रीराधाया एव रासलीलेति परमोल्लासेन वर्णयन्ति "सैव चाष्टविधा राधा नानाभाववि भावनी" इत्यादिपुराणोक्तेः।यद्वा, तास्ताः सर्वा अपि वञ्चयित्वा तस्यामेव परमाशक्त्या नित्यं रमत इति तत्सौभाग्योत्कर्षंहर्षितास्तत्सुखाकर्षितास्तथा तथा वर्णयन्तीति दिक् । ततश्च श्लिष्टया द्विश्लोकद्वयात्मकं दक्षिणानां महावाक्यं, ततस्तत्र प्रसीदेति वामानां श्रीश्यामसहचरीणां, रमाया दत्तक्षणामिति तत्सुखस्य सूचितत्वात् । न चासां वाक्योक्तिर्विरुद्धा सहचरीभावः समये परिजनभावश्च वेषभूषादौ उपदेष्टृताच माने तस्मिन् गाढेति गर्हकत्वञ्चेत्यादिनोज्ज्वलादौ तथाभिधानात् वस्तुतस्तु सख्यमासां श्रीराधामनुतत्प्रियत्वेन श्रीहरौ गौरवप्रीतिविषयत्वात्तथात्वमविरुद्धम् । यद्वा, सखीभावो द्विविधः दासीभावः सहचरीभावश्चेति तत्राद्यानां तत्र: प्रसीदेति, अपरासां तत्रो निबोधीति, केचित् वस्तुतस्तु चरमं महावाक्यं तटस्थानामिति यथायोग्यं योजनीयम्, अपि च यद्यपि विरहे समानभावापन्नत्वेन युगपत्समानवचःस्फूर्त्तिरपि सम्भवति तथाप्येकदोक्तावतिकोलाहलतया नातिरसाधायकत्वं ततो मुख्यानामेव वाक्यमिति ज्ञेयम् । चतुर्दिक्षुस्थितत्वेन सर्वासां साम्मुख्यं च कृष्णस्य विष्वगित्यादिवदिति सर्वं समञ्जसम् । मूलमनुसरामः–मैवमिति, आदावेव निषेधोक्तितदुक्तेरतिपारुष्यतया एवम् ईदृगपि किमुतैदृगेव विभो, अस्मत्प्राणनाथ भवान् प्रेमार्द्रचित्ततया प्रसिद्धः नृशंसं क्रूरं स्वागतमित्यादिना बहिः सादरं सन्यायं मृदूक्तमपि निवर्त्तनार्थगर्भितत्वाद्रसविघातकत्वादन्तः क्रूरमेवेति भावः "नृशंसो घातुकः क्रूरः" इत्यमरः ननु, तादृशमधुरवचसां कथं घातकत्वमुच्यते ? इत्याशङ्क्यास्मच्चित्तक्षोभकत्वादेवेति परिहरन्ति–सन्त्यज्येति । मूलत एव पत्यादिरूपान् सर्वविषयान्सम्यङ्मनसाप्यनङ्गीकारेण त्यक्तवेदानीं सर्वत्यागेनागतास्वौदासीन्यमतिक्षोभकमिति भावः । तव पादमूलमिति वक्रोक्तिः स्वागतमित्यादिप्रतिवचनाभिप्रायेण अन्वादिरूपकाद्युक्तिश्च काठिन्याभिप्रायेण भक्ता इति दैन्यं तेन कान्तभावाभिव्यक्तिः हे दुरवग्रह, स्वतन्त्र ! किम्वा "वृष्टिर्वर्षं तद्विघाते ऽवग्राहावग्रहौ समौ"इत्यमरकोशादवग्रहो वृष्टिविष्टम्भः स च श्यामघनस्य भवतोऽनुचित इति सम्बोधयन्ति—दुरिति । दुःखप्रदत्वमपि अस्मान् अनन्यगतीरित्यर्थः । अथास्माकं दोषविचारेण प्रत्युतास्मत्परित्यागेन तवापि महानेव दोषः स्यादित्यभिप्रायेण धर्माधर्मातीतस्येश्वरस्यापि अनन्यजनतत्परतां दृष्टान्तयन्ति–देव इति । सतु मुमुक्षूनपि भजते अस्माभिस्तु सोऽपि विषवत्कोटावत्वर्भावितस्त्वत्प्रेमविघातकत्वादिति भावः । यद्वा, अमुमुक्षूनिति

पदच्छेदः "इमं लोकं तथैवामुमात्मानमुभयायिनम् । आत्मानमनु ये चेह ये रायः पशवो गृहाः" इति तृतीयोक्तेः "हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे" इति नवमोक्तेः अथवा सर्वविषयान्सन्त्यज्यागता इति कथं प्रतीमस्तत्राहुः, देव इति । नारायणासमो गुणैः"इत्यादिमहाजनप्रसिद्धयाऽस्माभिरादरणीय इत्यर्थः ननु, नन्दनन्दनोऽहं मादृशोक्तिधर्मेणैव तथा प्रतीत इति चेत्तत्राहुः, यथा यथावदित्यर्थः । ननु, मानुषे मयि कथं तथा प्रतीतिस्तत्राहुः आदिपुरुषः "योऽसावादित्ये पुरुषः" इत्यादिश्रुतेः परमपुरुष इत्यर्थः । श्लेषेण आदित आरभ्य पुरुषोऽस्माकं पतिरिति । ननु, परपुरुषः इदानीन्तनानामेव तथात्वादितिभावः कथमेवमिति तत्राहुः, अमुमूक्षून् त्यक्तुमनिच्छून् यदा अस्मान् भजते इति "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति भजिष्यति भवां स्तदाज्ञाप्यत्येवेत्यर्थः ॥ ३१ ॥

---

## श्रीरामनारायणकृतभावभावविभाविका ।

गोपीवचनमवतारयति—गोप्य इत्याद्येकादशभिः । तत्र भगवता स्वयं प्रवृत्तिधर्मोपदेशे कृते तत्समाधानाय श्रुतिरूपगोपीपुरस्कारेण विरागान्वितसाधनभक्तितत्त्वबोधप्रेममार्गाभिधानेन क्रमेण पद्यत्रयेणोत्तरमाहुः–मैवमित्यादिना । हे विभो ! प्राणनाथ ! भवान् प्रियमेव वदत्यप्येवं द्व्यर्थकतयोपेक्षार्थस्यापि भानेन नृशंसं क्रूरं यथा स्यात्तथा गदितुं नार्हति किमर्थं नास्ति भगवद्धस्तगताव्यंशमुद्रिकाऽस्ति चेत्स्वमुखं निरीक्षस्व नहि भवत्कोमलमुखलदृशीयं वाणसमा वाणी नहि मुखचन्द्रचन्द्रिकावाक् प्रलयार्कांशुवतापि का युक्ता नहि मुखकञ्जमधोद्दीवाहलपत्तीक्ष्णदंष्ट्रिणा तथा नान्यः कोऽपत्र वर्त्ततेऽयमुपेक्षार्थः बोधनेन वञ्चयितुमेवं द्व्यर्थकवचनोक्तिः सङ्कुचत्येत वयन्तु नहि भवतैवं वदनार्हा अतः सर्वविषयान् पतिधनगृहसौख्यादीन् ऐहिकान् साक्षादामुष्मिकान् ब्रह्मलोकादिपर्यन्तान् कामभोगांश्च सन्त्यज्य सम्यक् सवासनं त्यक्त्वा तव पादमूलं भक्ताः सेवमाना अतो भजस्व तत्र विषयानित्यनेन "षिञ् बन्धने" इत्यस्माद्धिशेषेण बन्धहेतुतया त्यक्तुं योग्यत्वं दातुमशक्यत्वं च सूचयन्ति । ननु, सर्वविषयत्यागे मम त्यागोपि प्रसज्येतेत्याशङ्क्य विषयशब्दस्य बन्धकपरत्वं तवतु अबन्धकत्वेन प्रत्युत बन्धहरत्वेन विषयत्वाभावादेव समाहितत्वेपि विभो इति सम्बोधनेनापि त्यक्तुमनर्हत्वेन च समादधते तथाहि विभो इति भूमन् व्यापक इत्यर्थः । तथा च "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुत्या तव विभुत्वेन भूमसुखरूपतया अहेयत्वमेव प्रत्युत तव प्राप्तावन्येषां दर्शनश्रवणस्मरणानर्हतया हेयत्वस्यैव श्रुतिसिद्धतया न तत्प्रतिगन्तव्यं तथा विभोर्देशापरिच्छेद्यतया त्वं कथं कोपि त्यजेत्यक्तुं वा समर्थो भवेत् नन्वहमेक एव बहीः कथं भजामि तत्राप्याहुः, विभो इति नहि व्यापकस्य तव तदशक्यमतो विभुत्वेनैव समर्थः सर्वमूर्त्तसंयोगित्वं विभुत्वमिति नान्यविदां स्थितिः विभोस्तवास्मच्छरीरसंयोग आवश्यक एव । ननु, किमतिप्रार्थनया बह्वयो मह्यमङ्गीकरणसमर्थास्तत्राहुः–दुरवग्रहेति । स्वच्छन्देत्यर्थस्तस्मात्त्वमेव भक्ता नोऽस्मान्भजस्व मा त्यज । यद्वा, "वृष्टिर्वर्षं तद्विघातेऽवग्राहा-

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

दृष्टान्तगर्भं तावदिवमेव मोक्षे यथा न पुनरावृत्तिस्तथाऽस्माकमपि गृहे न पुनरावृत्तिर्भवतु सहैव स्थातव्यमिति यत् तदेव किं कृत्वा भजनीया भवन्त्यत आहुः, सर्वान् विषयान् सन्त्यज्य तांस्तथैवेत्याद्युक्तः । यतो वयमपि तथा हे दुरवग्रह, दुष्प्राप ! ॥ ३१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वाक्यानां वाध्यवाक्यानि तावन्ति प्रार्थनाधिका । एकादशविधास्तेन तासां वाचो जयन्ति हि ॥ यद्भगवता प्रथममुक्तं "स्वागतं वो महाभागाः !" इति यद्यपि भगवता वयं स्तुतास्तथापि प्रेषणाभिप्रायेण न तु स्वस्मिन्नागता इति तथा सति नेयं स्तुतिः किन्त्वनिष्ठुरं वचनमनिष्टपर्यवसानात् नन्वशक्ये किं कर्त्तव्यं तत्राह—नैवं विभो ! इति । भवान् सर्वमेव कर्त्तुं समर्थः समर्थश्चेदन्यथा वदेत् नृशंसमेव भवति दयायां विद्यमानायां न वदेदिति यच्च भगवता उक्तं व्रजस्यानामयमिति तदस्माकं नोद्देश्यं यतः सर्वविषयानेव सन्त्यज्य तव पादमूलं प्राप्ताः अनेन त्यक्तार्थपरिग्रहोऽनुचितः नापि जारत्वेन समागतामिति निरूपितम् एकादशेन्द्रियाणामपि विषयास्त्यक्ताः सवासनास्तत्र विनिगमकं तव पादमूलं प्राप्ता इति अन्यथा पादमूलप्राप्तिरेव न स्यात् यदुक्तं "धूनागमनकारणम्" इति तत्राहुः—भजस्वेति । अन्यत्कर्त्तव्यमिति चेत्तत्राहुः—हे दुरवग्रहेति । दुष्टोऽयमवग्रहः आग्रहः यद्भजनं न कर्त्तव्यमन्यत्कर्त्तव्यमिति यथा जीवानां ते हि सर्वं कर्तुं वाञ्छन्ति न भगवद्भजनं यथाऽयमाग्रहो जीवानां दुष्टः तथाऽत्रापि भवितुमर्हति "ये यथा मां प्रपद्यन्ते" इति तु नास्ति यदि तदभिप्रायेणैव तथा तदा मा त्यजास्मान् अस्माभिर्न त्यज्यत इति एतच्च भजनं न विषयवत् किन्तु प्रकारान्तरेणेति विशेषतो वक्तुमशक्ताः दृष्टान्तेनाहुः, देवो यथेति । देवो हि सर्वानेव भजते अन्यथा शास्त्रं व्यर्थं स्यात् तत्राप्यादिपुरुषो देवः पूर्वकाण्डेऽपि भजनं सार्थकं सुतरामुत्तरकाण्डे आदिपुरुषस्तु सेव्य एव भवति देवश्च न हि देवभजनं व्यभिचारजनकं भवति पुरुषान्तरभजनेऽपि प्रथममत्रां विवाहितः सभजनीयो भवति अनङ्गीकारस्तूचितः न त्वभजनम् एतेन स यथा स्वातिरिक्तभजनं न सहते तन्निवृत्तिपूर्वकमेव स्वभजनं सम्पाद्य स्वयं भजते तथा त्वयापि कार्यमतस्तत्र प्रेषणं तत्राप्यनुचितमिति ज्ञायते । किञ्च, यथा मुमुक्षून् भजते भगवान् आत्मीयत्वेन परिगृह्णाति आत्मतया स्फुरति स्वानन्दं तेभ्यः प्रयच्छति "एष ह्येवानन्दयाति" इति श्रुतेः स्वात्मनस्सम्पर्योरन्यतरापेक्षमाविष्कृतं ही ति न्यायेन भगवान् तदर्थमात्मानं प्रकटीकरोतीति मुमुक्षून् भजत इत्युक्तम् अन्यथा मुमुक्षव एव भगवन्तं भजन्ते न तु भगवान् अतः फलद्वारा भजनं यथा तेषां पुनः पूर्वावस्थां न सम्पादयसि सततं स्वस्मिन्नेव स्थापयसि तथा अस्मदर्थमाविर्भूय स्वानन्देन वयं योजनीया इत्येतत्कर्त्तव्यमित्यर्थः । एतेन प्रार्थनया सङ्कटकीकृत्य तूष्णीं भावपक्षो निरस्तः अग्रे गृहगमनाज्ञापनगृहस्थितिस्वरूपादिकं तु रसपोषायैव न तु गृहार्थमिति ज्ञेयम् ॥ ३१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्मान् धर्ममुपदिशस्यथ च स्वयं पापराशिं चिकीर्षसीत्यनुचितमित्याहुः—मैवमिति । नृशंसं घातुकं साक्षान्मारकं यथा स्यात्तथा गदितुं भवान् प्रतिपुरुषं धार्मिकत्वख्यातिमतो नन्दस्य पुत्रः सन्नार्हति अन्यस्तु प्रतिपुरुषं मातुपमारणवृत्तिको वरमर्हतु नामेति भावः । "नृशंसो घातुकः क्रूरः" इत्यमरः । त्वया कोटिसंख्या अप्यस्मान् प्रति वाक्शरांस्तथा एकदैव निःक्षिप्ता यथा अधुनैव शरीराणि परित्यज्य यमपुरं सर्वा एव वयं यामो न तु त्वदुपदिष्टं गोष्ठपुरं त्वन्तु शतकोटिस्त्रीवधपातकानि गृहीत्वा स्वयमेव गोष्ठं याहि स्त्रीवधान्नोचेत् जिघृक्षसि तर्हि सर्वविषयांस्त्यक्त्वा तव पादमूलं भक्ताः सेवितवतीरस्मान् भजस्व अत्रान्यविषयानित्युक्त्वा सर्वविषयानित्युक्त्या भगवदङ्गसङ्गो हि विषयो न भवतीति ध्वनितम् । भोः कामिन्यः ! किं स्वस्वपतिभ्यो भवतीनां कामो नोपशाम्यति ? यतस्तान् परित्यज्य मामेव भजध्वे तत्राहुः—हे दुरवग्रह । "अवे ग्रहो वर्षप्रतिबन्धे" ३।३।५१) इति पाणिनीस्मरणात् दुष्टो अवग्रहो वृष्टिप्रतिबन्धोऽनावृष्टिर्यस्येत्यत्रान्यपदार्थस्य मेघस्यैवोपयुक्तत्वात् दुःस्वप्रयोगाच्च हे विषमात्रवर्षक ! मेघेत्यर्थः । तेन चातकीनामस्माकं दूरस्थोऽपि त्वमेव कृष्णमेघो बन्धुस्त्वं दैवदोषादद्य । विषं वर्षसि अवग्रहत्वात्सलिलं न चेद्वर्षसि तर्हि मा वर्ष तद्दृष्टं विषमेव पीत्वा वयं म्रियामहे ननु निकटस्थानां ह्रदादीनामपि जलं पिबामेत्यस्माकं भावं जानीहीति भावः अतोऽस्मान्मा त्यज यथात्मनः कृतघ्नत्वं दधासीति भावः ननु च सत्यं चातक्यो मेघमपेक्षन्तान्नाम मेघस्तु चातकीर्नापेक्षते चातक्यो म्रियन्तां जीवन्तु वा मेघस्य न कोपि हानिरिति चेत् सत्यं न त्वं जडात्मको मेघ एव किन्तु विदग्धचूडामणिर्नारायणसमो नारायणवदेव वर्त्तसे इत्याह—देव इति । मुमुक्षून् त्वदुपासनार्थं सर्वं विषयांस्त्यक्तुमिच्छूनपि त्वदभीष्टोपपादनया भक्तवश्यत्वात् भजते अस्मांस्तु त्वदर्थं सन्त्यक्तसर्वविषयश्रेणीका अपि त्वं कथं न भजसीत्यर्थः ॥ ३१ ॥

---

### विशुद्धरसदीपिका ।

तदेवाह—श्रीगोप्य इत्येकादशभिः । अत्रैवं विवेकः पुरस्तादेतासां चतुर्विधत्वे साधितेऽप्यस्ति कश्चिद्विशेषः याश्च श्रुतिमुनिरूपाः साधकचर्य्यः ताः द्विविधाः प्रौढाश्च कन्याश्च आसां साधकचरीत्वाविशेषादेकमत्यमित्येको वर्गः एतासामाद्यम् श्लोकत्रयात्मकं महावाक्यम् एवं च प्राचीनसंस्काराच्छेपस्वाभाव्यात्कान्तभावाच्चेश्वरज्ञानमप्यविरुद्धं तत एव चाधीरतयाऽग्रे सरत्वं पूर्वदिक्स्थितत्वात्प्रतिवचने प्राथम्यमपि बोध्यम् । सिद्धा अपि द्विविधाः दाम्पत्यभावाः सहचरीभावाश्च तत्राद्यानां श्रीराधिकाप्रतिपक्षत्वम् श्रीकृष्णनिष्ठत्वेनोदासीन्यमपीति द्वैविध्यम् । तत्राप्याद्यानां दक्षिणात्वम् अपरासां तटस्थत्वमिति तत्र स्वाधीनपतिका सौभाग्यवर्णनप्रस्तावे तद्विपक्षतटस्थादिवर्णनमयुक्तमहृद्यं चेति वाच्यम् मधुरातिमधुरलीलायाश्चास्या स्वभावोऽयं यत्स्वर्ध्येर्ष्यामदमानादिवैचित्रीपरिकरतयैव च रसं पुष्णाति तत एव तादृशतयैव कविभिर्वर्ण्यते श्रीभागवतापि

### विशुद्धरसदीपिका ।

यथावसरं स्वलीलायामङ्गीक्रियते तदुक्तमुज्ज्वले—

"यथा स्युर्नायकावस्था निखिला एव माधवे ।
तथैव नायिकावस्था राधायां प्रायशो मता" इति ॥

प्रायशः इति स्वरूपतः स्वाधीनपतिकैव अयमेव च व्रजनिकुञ्जलीलयोर्विशेषः । शृङ्गारप्राधान्येन प्रेमपरिपोषका व्रजलीला प्रेमप्राधान्येन शृङ्गारपोषका निकुञ्जलीलेति तदुभयसन्धिगता रासलीलेति तद्द्वयमपि यथास्थानं पुष्णाति च प्रपुष्णाति च शुद्धं प्रेमाणमिति ततश्च लीलाशक्तिरेव तासु तत्तद्भावं दधाति विदधाति चाखिलं तदनुगुणमिति गम्यं वस्तुतस्तु श्रीराधाया एव रासलीलेति परमोल्लासेन वर्णयन्ति "सैव चाष्टविधा राधा नानाभावविभावनी" इत्यादिपुराणोक्तेः।यद्वा, तास्ताः सर्वा अपि वञ्चयित्वा तस्यामेव परमासक्त्या नित्यं रमत इति तत्सौभाग्योत्कर्षहर्षितास्तत्सुखार्पितास्तथा तथा वर्णयन्तीति दिक् । ततश्च सिद्धेत्यादिश्लोकद्वयात्मकं दक्षिणानां महावाक्यं, ततस्तत्र प्रसीदेति वामानां श्रीश्यामसहचरीणां, रमाया दृक्तक्षणमिति तत्सुखस्य सूचितत्वात् । न चासां वाम्योक्तिर्विरुद्धा सहचरीभावः समये परिजनभावश्च वेषभूषादौ उपदेष्टृताच माने तस्मिन् गाढेति गर्हकत्वञ्चेत्यादिनोज्ज्वलादौ तथाभिधानात् वस्तुतस्तु सख्यमासां श्रीराधामनुतत्प्रियत्वेन श्रीहरौ गौरवप्रीतिविषयत्वात्तथात्वमविरुद्धम् । यद्वा, सखीभावो द्विविधः दासीभावः सहचरीभावश्चेति तत्राद्यानां तत्रः प्रसीदेति, अपरासां तन्नो निधहीति, केचित् वस्तुतस्तु चरमं महावाक्यं तटस्थानामिति यथायोग्यं योजनीयम्, अपि च यद्यपि विरहे समानभावापन्नत्वेन युगपत्समानवचःस्फूर्तिरपि सम्भवति तथाप्येकदोक्तावतिकोलाहलतया नातिरसाधायकत्वं ततो मुख्यानामेव वाक्यमिति ज्ञेयम् । चतुर्दिक्स्थितत्वेन सर्वासां साम्मुख्यं च कृष्णस्य विष्वगित्यादिवदिति सर्वं समञ्जसम् । मूलमनुसरामः—मैवमिति, आदावेव निषेधोक्तितदुक्तेरतिपारुष्यतया एवम् ईदृगपि किमुतेदृगेव विभो, अस्मत्प्राणनाथ भवान् प्रेमार्द्रचित्ततया प्रसिद्धः नृशंसं क्रूरं स्वागतमित्यादिना बहिः सादरं सन्यायं मृदूक्तमपि निवर्त्तनार्थगर्भितत्वाद्रसविघातकत्वादन्तः क्रूरमेवेति भावः "नृशंसो घातुकः क्रूरः" इत्यमरः ननु, तादृशमधुरवचसां कथं घातकत्वमुच्यते ? इत्याशङ्क्यास्मच्चित्तक्षोभकत्वादेवेति परिहरन्ति—सन्त्यज्येति । मूलत एव पत्यादिरूपान् सर्वविषयान्सम्यङ्मनसाप्यनङ्गीकारेण त्यक्तवेदानीं सर्वत्यागेनागताः स्त्रीदासीन्यमतिक्षोभकमिति भावः । तव पादमूलमिति वक्रोक्तिः स्वागतमित्यादिप्रतिवचनाभिप्रायेण अन्त्यादिरूपकात्युक्तिश्च काठिन्याभिप्रायेण भक्ता इति दैन्यं तेन कान्तभावाभिव्यक्तिः हे दुरवग्रह, स्वतन्त्र ! किम्वा "वृष्टिर्वर्षं तद्विघाते ऽवग्राहावग्रहौ समौ" इत्यमरकोशादवग्रहो वृष्टिविष्टम्भः स च श्यामघनस्य भवतोऽनुचित इति सम्बोधयन्ति—दुरिति । दुःखप्रदत्वमपि अस्मान् अनन्यगतीरित्यर्थः । अत्रास्माकं दोषविचारेण प्रत्युतास्मत्परित्यागेन तवापि महानेव दोषः स्यादित्यभिप्रायेण धर्माधर्मातीतस्येश्वरस्यापि अनन्यजनतत्परतां दृष्टान्तयन्ति—देव इति । सतु मुमुक्षूनपि भजते अस्माभिस्तु सोऽपि विषयकोटावन्तर्भावितस्त्वत्प्रेमविघातकत्वादिति भावः । यद्वा, मुमुक्षूनिति पदच्छेदः "इमं लोकं तथैवामुमात्मानमुभयायिनम् । आत्मानमनु ये चेह ये रायः पशवो गृहाः" इति तृतीयोक्तेः "हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे" इति नवमोक्तेः अथवा सर्वविषयान्मन्त्यज्यागता इति कथं प्रतीमस्तत्राहुः, देव इति । नारायणसमो गुणैः"इत्यादिमहाजनप्रसिद्ध्याऽस्माभिरादरणीय इत्यर्थः ननु, नन्दनन्दनोऽहं मादृश्योक्तिभ्रमेणैव तथा प्रतीत इति चेत्तत्राहुः, यथा यथावदित्यर्थः । ननु, मानुषे मयि कथं तथा प्रतीतिस्तत्राहुः आदिपुरुषः "योऽसावादित्ये पुरुषः" इत्यादिश्रुतेः परमपुरुष इत्यर्थः। श्लेषेण आदित आरभ्य पुरुषोऽस्माकं पतिरिति । ननु, परपुरुषः इदानीन्तनानामेव तथात्वादितिभावः कथमेवमिति तत्राहुः, अमुमुक्षून् त्यक्तुमनिच्छून् यदा अस्मान् भजते इति "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति भजिष्यति भवांस्तदाऽस्मानप्यपेक्षेत्यर्थः ॥ ३१ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

गोपीवचनमवतारयति—गोप्य इत्याद्येकादशभिः । तत्र भगवता स्वयं प्रवृत्तिधर्मोपदेशे कृते तत्समाधानाय श्रुतिरूपगोपीपुरस्कारेण विरागान्वितसाधनभक्तितत्त्वबोधप्रेममार्गाभिधानेन क्रमेण पद्यत्रयेणोत्तरमाहुः—मैवमित्यादिना । हे विभो ! प्राणनाथ ! भवान् प्रियमेव वदन्नप्येवं द्व्यर्थकतयोपेक्षार्थस्यापि भानेन नृशंसं क्रूरं यथा स्यात्तथा गदितुं नार्हति किमघं नास्ति भगवद्धस्तगलादर्शमुद्रिकाऽस्ति चेत्स्वमुखं निरीक्षस्व नहि भवत्कोमलमुखनहृदर्शीयं वाणसमा वाणी नहि मुखचन्द्रचन्द्रिकावाक् प्रलयार्कांशुवतापि का युक्ता नहि मुखकञ्जमधोदोलाहलवत्तीक्ष्णदाचिता तथा नान्यः कोऽप्यत्र वर्त्ततेऽप्युपेक्षार्थः बोधनेन वञ्चयितुमेवं द्व्यर्थकवचनोक्तिः सङ्कुचकेन वयन्तु नहि भवतैवं वदनादौ यतः सर्वविषयान् पतिधनगृहसौख्यादीन् ऐहिकान् साम्प्रदामुष्मिकान् ब्रह्मलोकादिपर्यन्तान् काम्यभोगांश्च सन्त्यज्य सम्यक् सवासनं त्यक्त्वा तव पादमूलं भक्ताः सेवमाना अतो भजस्व तत्र विषयानित्यनेन "षिञ् बन्धने" इत्यस्माद्धिशेषेण बन्धहेतुतया त्यक्तुं योग्यत्वं दातुमशक्यत्वं च सूचयन्ति । ननु, सर्वविषयत्यागे मम त्यागोपि प्रसज्येतेत्याशङ्क्य विषयशब्दस्य बन्धकपरत्वं तवतु अबन्धकत्वेन प्रत्युत बन्धहरत्वेन विषयत्वाभावादेव समाहितत्वेपि विभो इति सम्बोधनेनापि त्यक्तुमनर्हत्वेन च समादधते तथाहि विभो इति भूमन् व्यापक इत्यर्थः । तथा च "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" इति श्रुत्या तव विभुत्वेन भूमसुखरूपतया अहेयत्वमेव प्रत्युत तव प्राणावन्येषां दर्शनश्रवणास्मरणानर्दतया हेयत्वस्यैव श्रुतिसिद्धतया न तत्प्रतिगन्तव्यं तथा विभो देशापरिच्छेद्यतया तं कथं कोपि त्यजेत्यक्तुं वा समर्थो भवेत् नन्वहमेक एव बहिः कथं भजामि तत्राप्याहुः, विभो इति नहि व्यापकस्य तव तदशक्यमतो विभुत्वेनैव समर्थः सर्वमूर्तसंयोगित्वं विभुत्वमिति नान्यविदां स्थितिः विभोस्तवास्मच्छरीरसंयोग आवश्यक एव । ननु, किमतिप्रार्थनया वश्यो मद्वशीकरणसमर्थास्तत्राहुः—दुरवग्रहेति । स्वच्छन्देत्यर्थस्तस्मात्त्वमेव भक्ता गोऽस्मान्भजस्व मा त्यज । यद्वा, "वृष्टिर्वर्षं तद्विघातेऽवग्रहा-

श्रीरामनारायणकृतभावविभाविका ।

वग्रहो समो" इति काश्वाकः दुःखं यथा स्यात्तथा रसवृष्टिविघातक ! नैतत् घनश्यामे त्वयि युक्तमिति भावः । यद्वा, दुर्गतम् रसवृष्टिविघातकत्वं यतस्तथाभूतस्वभाव नाहि त्वयि स्वभावविरुद्धमिदं युक्तमिति ध्वनिः । अत्र सर्वविषयान् सन्त्यज्येति वशीकारसंज्ञकवैराग्यपूर्वकन्यासोक्तिः पादमूलं भक्ता इति पादसेवनादिभक्तिनिर्देशः न च स्त्रीत्वेन तदनधिकार इति वाच्यं त्यागमात्रात्मकपरमहंसन्यासे सर्वाधिकारात् मैत्रेयीविदुरादीनां तथा दर्शनाच्च तत्र दृष्टान्तमाह—देव इति । " मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितः" इत्यत्र अन्यथा मिथ्याकल्पिताऽविद्योपाधिकजीवरूपं हित्वा स्वस्य कृष्णस्य रूपेणावस्थितिरिति मोक्षस्य कृष्णस्वरूपात्मकत्वात् तादृक्छून् स्वस्वरूपकामान् यथा आदिपुरुषो देवो नारायणो भजते तथा तव स्वरूपकामान्नो भजस्वान्यथास्मदभजने तव पुरुषत्वदेवत्वयोः क्षतिरित्यागतं देवानां प्रियत्वं गवामिन्द्रत्वं चेति व्यङ्ग्योक्तिः"दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु"। यद्वा, यतस्त्वं कामक्रीडापरत्वेन कामविजगीषुत्वेन अस्मदाह्वानादितद्व्यवहाररतत्वेन द्युतिमत्त्वेन निगमस्तुत्यत्वेन रसिकजनगीतगुणत्वेन मोदात्मकत्वेन स्वकान्त्या मदनमदशमनोन्मदत्वेन कान्तत्वेन च सर्वथापि देवस्तत्सर्वं विहायास्मदुपेक्षया केवलस्वपनपरत्वेन देवत्वस्वीकारोऽयुक्त एव तथा यथा इति यथावत् आदिपुरुषः आदित एव सर्वासां पुरुषः श्रुतिसिद्धः पतिर्नाधुनाऽस्माभिः स्वबुद्धिदोषेण कल्पितः अन्ये तु मध्ये एव कल्पिताः तस्मात्त्वं त्वामसुमुक्षून् नोऽस्मान् भजस्व मा त्यज इति पुनः पुनरुक्तिः प्रार्थनातिशये ॥ ३१ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तदुदाहरति–मैवमिति । यद्यपि वयं निकृष्टास्तथापि सर्वोत्तमो भवान् षड्विधैश्वर्यसम्पन्नः प्रतियात्वेत्येवं रूपं नृशंसं क्रूरमस्मत्प्राणापहारणसमर्थत्वात् घातुकं नृशंसमिति किञ्चित् संरम्भाविष्कारः यद्यपि भगवता प्रथमं स्वागतमित्यादिना स्तुतत्वाद्यप्रे प्रतियातेति प्रतिगमनाभिधानात्तदपि नास्माकं प्रेमातिरेकवर्णनाभिप्रायकमपितु व्यङ्ग्योक्त्योपहासपरम् अतस्तदपि नृशंसमेव परिच्छिन्नस्य परकीयान्तःकरणवृत्त्यनभिज्ञस्यैवाविधोक्तिः कदाचित् घटेत न तु विभोर्व्यापकस्य सर्वान्तरवस्थितत्वात् सर्वान्तःकरणवृत्तिसाक्षिण इत्याशयेन सम्बोधयन्ति–हे विभो ! इति । अत एव व्रजस्यानामयं काङ्क्षिदिति प्रश्नोऽपि न सङ्गच्छते तत्कुशलाकुशलयोरुदासीनभूतास्मदन्तःकरणवृत्तित्वाविदित्वाशयेनाह–सन्त्यज्येति । व्रजस्य का कथा अस्माभिः शब्दस्पर्शादयः सर्वेन्द्रियाणामपि विषयाः सम्यग्वासनोच्छेदपर्यन्तं त्यक्ताः सन्त्यज्य च तव पादमूलभक्ताः सत्यागताः(?) तव पादमूलभजनार्थमेव न तु फलान्तरमस्माकमपेक्षितमित्यर्थः । सर्वविषयानित्यनेन त्वद्विषयकः कामः कामो न भवति धुनयति अस्मदन्तःकरणात्सर्वे विषया यदि निस्सृता न स्युः तव पादमूलभक्तिः कथं तत्राविर्भवेत् तथा च सैव तत्यागसाक्षिणीत्यप्यनेन ध्वनितं यच्च भगवतोक्तं प्रियं किङ्करवाणि वः ब्रूतागमनकारणमिति तत्राप्याहुः–भजस्वेति । तथा च भगवद्भक्तानामस्माकं स्वीयत्वेन ग्रहणमेवास्मत्प्रियं भगवता कर्त्तव्यमेतद्व्यतिरिक्तं किंचिदस्माकं प्रियं नास्त्येतदेवास्मदागमनप्रयोजनमतस्तदेव सम्पादयेत्याशयः तस्मात्प्रतियात व्रजं नेह स्थेयमिति त्यागाग्रहो भवतो नोचित इत्याहुः । हे दुरवग्रह ! मा त्यजास्मान्मद्भजनं न कर्त्तव्यमित्यग्रहो दुष्टो भवति सर्वै कर्त्तव्यं भगवद्भजनं न कार्यमिति दुष्ट आग्रहो जीवानां वर्त्तने परमेश्वरस्याप्ययुक्त आग्रहश्चेत्तर्हि कथं जीवानामुद्धारः तस्मादस्माकमेव केवलमभाग्यवशादुक्ताग्रहो भवता आश्रित इतिसम्बोधनाशया । ननु, न मया स्वभजनं निषिध्यते किन्तु कामोपाधिकं तदिति चेत्तत्राह–देव इति । यथा देव आदिपुरुषोऽवतारीयं "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इतिप्रतिज्ञावान् भवान् यथा मुमुक्षून्भजते तत्तत्फलप्रदानेनाश्रयते स्वस्मिन्नेव स्थापयति न तु पुनस्तेषां पूर्वावस्थां सम्पादयति तद्वदस्मदाद्यर्थं तदवतारभूतस्त्वमेवाप्यस्मदङ्गसङ्गोत्कटाकाङ्क्षावतीर्मा त्यज अपित्वस्मदभिलषितफलप्रदानेनाश्रय तथा च मोक्षोपाधिकमपि भगवद्भजनं यथा मुमुक्षूणां भगवता शुद्धत्वेनैवाङ्गीक्रियते तथा त्वदङ्गसङ्गोपाधिकमपि त्वमेवाङ्गीकर्तुं योग्योऽसीति भावः । स्वभक्तत्यागो न कर्त्तव्य इति वक्तुं स्वभक्तत्यागं च कर्तुं भवानार्हतीति नापि स उपदेशः सफलो भविष्यतीत्यप्यनेन ध्वनितम् अनभिज्ञापक्षे भो विभो, समर्थ ! एवं गदितुमपि भवान्नार्हति चरितुं नार्हतीति किमु वक्तव्यमित्यर्थः । यद्यपि परमैश्वर्यवांस्तथापि परमधार्मिकत्वेन प्रख्यातस्य श्रीनन्दरायस्य पुत्रः स्वयं च रसार्द्रं इति सूचनाय भवानित्युक्तं नृशंसं साक्षान्मारकं तथा चास्मदुपदेशाय प्रवृत्ते त्वया वाङ्मात्रकृतासङ्ख्यातस्त्रीवधजनितपातकोत्पत्तिर्न विचारितेति भावः अथवा हे विभो, अस्मत्प्राणनाथ ! तथा च विश्वनाथास्मत्प्राणरक्षणमेव तवोचितं न तु तन्नाशनमिति भावः । तत्रापि भवान्मर्यादारक्षक एव नृपा इति कृतप्रतिज्ञः "प्रतिज्ञाय करोमीति कर्त्तव्यं तदकुर्वतः । मिथ्या वचनदग्धस्य इष्टापूर्तं विनश्यति„ इत्यादिशास्त्रज्ञो भवान् तथाचास्मद्दोषोद्घोटनाय प्रवृत्तस्त्वं स्वप्रतिज्ञानाशादिवृहद्दोषान्न पश्यसि तदुक्तं शकुन्तलायाम्—

> "राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
> आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि" ॥

इति भावः । ननु, "स्वागतं वो महाभागाः" इति परमकोमलमपि प्रथमं मयैवोक्तं तत्किमर्थं विस्मर्यत इति चेन्न तस्याप्यलङ्कृतस्य शिरश्छेदनवन्निवर्तनार्थं तथा नृशंस एवान्तर्भावात् भवतु भवन्मुखचापनिःसृतवाग्बाणजालेन दग्धप्राणा वयमितः परं परलोकमेव यामो न तु व्रजम् । त्वन्नखसङ्ख्यातो अस्मान् हत्वा किं एवं प्राप्स्यसीति न विद्मः इत्याशयेनाहुः—सन्त्यज्येति । वान्ताशनवत्पुनर्गृहान्न यास्यामः सर्वविषयांस्त्यक्त्वा इति द्योतनायामभिहितं तथा च व्रजस्यानामयं रजन्येषेत्यादिवाक्यजातं निरर्थकमेवेति भावः । ननु, किमित्येवमित्युपालम्भं दातुं प्रवृत्ताः प्रियं किं करवाणि वः ब्रूतागमनकारणमिति मदुक्तीः श्रुत्वा तूष्णीं स्थिताः भवतीर्दृष्ट्वा पुनर्गन्तुकामाः निष्कामा वाऽवगत्य रजन्येषेत्याद्युक्तं मया ततो मास्तु कोपो यत्प्रार्थनीयं तन्निःशङ्कं प्रार्थ्यतामिति चेत्तत्राहुः—अस्मान्मा त्यज त्वदतिरिक्तविषयाकाङ्क्षारहिताः भजस्व स्वीयत्वेन समाश्रयस्व सन्त्यज्येत्यादिना ।

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु, कथं गोपगृहिणीर्वोऽहं भजामीति शङ्कापि निराकृता तव पादमूलं भक्ता इत्यनेन वयं वनशोभादिदर्शनार्थमागता इति इष्टं वनमित्यादियुक्तं समाहितं पादपद्ममित्यनुक्त्वा किञ्चित् संरम्भेण नृशंसवाक्यपादयोः काठिन्यं व्यञ्जयति। ननु, युष्माभिः सर्वं यथार्थमेवाभिधीयते तथापि नाहं भवतीर्भजामि स्वतन्त्रत्वादिति चेत्तत्राहुः—हे दुरवग्रहेति। अयमाग्रहो दुष्टो भवति स्वतन्त्रस्यापि तवैवंविध आग्रहो नोचितः चतुरशिरोमणित्वात्। दुराग्रहो हि मूढधर्म इति भावः। अतोऽनन्यगतीरस्मान्मा त्यज त्यागस्यानिर्वाच्यदोषोत्पादकत्वात् नन्वस्तु दोषस्तेन मम का हानिरित्याशङ्क्याहुः—अहो किमेवमित्थं भगवांगरमगमारूढोऽसि किमाप्तकामादात्मारामात्परमेश्वरादप्याधिक्यं प्राप्तोऽसि यतः सोऽप्येवं न करोतीत्याशयेनाहुः—देव इति। तथा धर्माद्यनपेक्षः सर्वलोकसंहारकृतपापासंस्पृष्टः सकलैश्वर्यसम्पन्नः स्वयं प्रकाशो ब्रह्मादिकारणभूतः स्वभक्तान्मुमुक्षून्भजते मोक्षप्रदानेन तथा त्वं स्वतन्त्रोऽप्यस्मन्मनोरथपूर्तिं कर्तुं योग्य इत्यर्थः। मुमुक्षूनित्यनेन ते मुमुक्षवः न तु तदेकेऽप्यत्र इति तेषां स्वतो निकृष्टतां सूचयति यद्वा, अमुमुक्षून् मोक्षाद्यनिच्छून् यद्वा मुमुक्षूनऽनदन्यकर्म त्यक्तुमिच्छून् शरणागतान् दुरवग्रह इत्यनेनाह—विषमाश्रवपंकमेघेष्वप्युक्तम् "अवग्रहो वृष्टिप्रतिबन्धे" इतिपाणिनीयस्मरणात् दुष्ट अवग्रहो यस्मिन् स प्रतिषिद्धवृष्टिर्मेघस्तस्य दुष्टत्वं चोष्णवायुवर्धकत्वात् तथा चेतरजलस्थानीय स्वपत्याभिकाङ्क्षाविनिर्मुक्ता मेघस्थानीयत्वदेकशरणाश्चातकीकल्पा वयं त्वदधरामृतपानार्थमागतास्त्वं त्वस्मदभाग्योदयात्संप्रति विषं वर्षसि भवतु विषमेव पीत्वा मरिष्यामो न तु व्रजं यास्यामः चातकीस्वभावत्वात् तस्मादस्मान्मा त्यज कृतघ्नस्य तव नेदमुचितमिति भावः ननु, चातकीसमानानां भवतीनां मरणेन मम चातकपपेक्षारहितमेघकल्पस्य का हानिरिति चेत्तत्राहुः—न त्वं केवलजडमेघसदृशः किन्तु परमाभिज्ञदुःखमापकचेतनरूपपरमात्मसदृशोऽसीत्याशयेनाहुः देव इति। यद्वा, भक्ता अस्मान् भजस्व दुराग्रहम् आ समन्तात्त्यज "बुद्धेः फलमनाग्रहः" इत्युक्तत्वात्परमबुद्धिमतस्तवाग्रह एव नोचितः दुराग्रहस्तु दुर्निरस्त इति भावः। मानिनीपक्षे एवं प्रियं किं करवाणि व इत्यादिरूपं नृशंसं क्रूरं गदितुं नार्हतीति यद्यपि भवान् सौन्दर्यादिगुणमग्नस्तत्रापि विभुः परमसमर्थस्तथापि परदारा एवं न वक्तव्याः इति भावः। यदि परदारास्त्वेव तव रमणेच्छा तर्हि याः सर्वविषयान्संत्यज्य तव पादमूलं भक्तास्तान् दुरवग्रहं स्वच्छन्दं यथा स्यात्तथा भजस्व अस्मानासमन्तात्सर्वप्रकारेण त्यज। यद्वा, अस्मान्दुःसाध्याः प्रति दुराग्रहं त्यज प्रभवोऽपि भजमानमेव भजन्तीत्याशयेनाहुः, देव इति। आदिपुरुषो देवो यदपेक्षयाधिकं प्रभुत्वविशिष्टः कोऽपि नास्ति स यथेत्यर्थः। निवृत्तिपक्षे एवं प्रतिरुद्धाः श्रुतयः साकाङ्क्षमाहुः—मैवमिति। एवं ब्रह्मणि श्रुतीनां प्रामाण्यं नास्तीत्यादिरूपं नृशंसं सर्वघातुकं गदितुं भवान्नार्हतीति। ननु, नाहं ब्रवीमि किन्तु शास्त्रतत्त्वाऽनभिज्ञास्ते ते वादिन एव जल्पन्त्यतो वाहमुपालम्भविषय इति चेत्तत्राहुः, हे विभो! व्यापक! तथा च "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुत्या नामरूपात्मकं संसारविस्ताराय तादृशजीवात्मना त्वमेव ब्रवीषीति भावः। यतः सन्त्यज्य सर्वविषयांस्तव पादमूलं भक्ता अस्मान्भजस्व दुरवग्रहम् आत्यज नायं मोक्षमार्गः किन्तु परमार्थान्मन्दावप्रापकः "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्यादिश्रुतेः। तस्माद्यथा मुमुक्षूणां मोक्षः स्यात्तथा करुणा विधेयेत्याशयेनाहुः—देव इति। यथा आदिपुरुषो देवो मुमुक्षून् भजते मोक्षदाता भवेत्तथाऽस्मान् भजस्व तथा च परमपुरुषार्थमोक्षलाभाय ब्रह्मण्यस्मत्प्रामाण्यमवश्यमास्थेयमित्यर्थः। अयमाशयः सर्वान्विषयान् प्रतिपाद्यान् सम्यक् परित्यज्य ब्रह्मणि समन्वितानां श्रुतीनामन्यपरत्वाभिधानं साहसमात्रं तत्र श्रुतिवाक्यानां द्विविधा ब्रह्मणि प्रवृत्तिः एका ब्रह्मात्मनोरेकत्वविषया अपरा सत्यज्ञानादिलक्षणब्रह्मविषया तत्राद्या यथा सोऽयं देवदत्त इति पदं तत्रैकस्मै कस्मिन् देवदत्ते पर्यवसानं तद्वत् तथाहि यथोक्तवाक्यं सोऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशव्यक्तिमात्रलक्षणपरं तथा तत्त्वमसि वाक्यमपि विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशचैतन्यव्यक्तिमात्रलक्षणपरं ननु पूर्वं तत्रैव पदार्थानां संसर्गः संसृष्टादयोऽर्थाः वा वाक्यार्थं लक्षणामुक्तं तच्च द्विविधमप्यखण्डार्थं न सम्भवति ततः कथं वाक्यार्थलक्षणाशून्यमखण्डं ब्रह्म वाक्यार्थः स्यादिति चेन्न वेदान्तशास्त्राचार्यैः श्रीबादरायणाऽनुयायिभिः—

> "संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः।
> अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः" ॥

इति वदद्भिरखण्डस्य वाक्यार्थत्वाभिधानात् तथैवं सत्युक्तलक्षणस्य तत्राव्याप्तिः सामान्यलक्षणस्यैव तयानिर्देशाव्याप्तिनियमात् विशेषलक्षणयोरेतयोः परस्पराव्याप्तेरदूषकत्वात् सामान्यलक्षणं तु वाक्यप्रमेयत्वमात्रेऽप्यस्त्येव न चाखण्डवाक्यार्थस्य विशेषलक्षणाभावः अपर्यायानेकपदैकप्रातिपदिकार्थमात्रपरत्वस्यैव तल्लक्षणत्वात्। ननु, तत्त्वं पदलक्षितरूपे भिन्ने किं वा न भवेदैक्यप्रमित्यसम्भवः द्वितीये पदार्थवाक्यार्थयोरेकत्वापत्तिरिति चेन्न द्वितीयपक्षोक्तदोषस्याप्रापितप्रसक्तत्वात् न च पदद्वयवैयर्थ्यं लक्षणायैकार्थबोधनार्थत्वात् त्वं पदस्य वाक्यार्थपरित्यागेन चिदलक्षकत्वं तत्पदं सामानाधिकरण्ये सति यद्वत् तथा तत्पदस्यापि वाक्यपरित्यागेन (?) चिद्वाचकत्वेकपदसामानाधिकरण्ये इति न पदद्वयवैयर्थ्यम् एवं सत्यनाद्यवान्तरवाक्याखण्डार्थत्वं यथा केनचित्पृष्टोऽस्मिन् ज्योतिर्गणे चन्द्रो नामेति तस्य प्रतिवचनं प्रकृष्टप्रकाशः चन्द्र इति वाक्यस्यात्र प्रकृष्टशब्दात् चन्द्रप्रातिपदिकार्थसिद्धिः प्रकृष्टं तम इति प्रकृष्टशब्दस्य प्रकृष्टतमसोऽपि प्रयोगदर्शनात् तथा प्रकाशशब्दोऽपि न तत्सिद्धेः खद्योतादावपि तत् प्रयोगदर्शनात् तस्माद्वाच्यार्थपरित्यागेनाप्रकर्षप्रकाशविरोधी चन्द्रप्रातिपदिकार्थः पदद्वयेन प्रतिपाद्यत इत्यखण्डार्थत्वसिद्धिरन्यथा चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरतया विशिष्टार्थं बोधयतो वक्तुरनवधेयवचनं न स्यात्तथाविभक्तखण्डार्थलक्षणावाक्यत्वात्प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति सिद्धं यद्यपि प्रमाणान्तराभावात् ब्रह्मण्युपनिषदां प्रामाण्यमुक्तं किमपौरुषेयत्वप्रामाण्यं किंवा प्रमाणान्तरसंभिन्नार्थविषयत्वात्पौरुषेयवदित्यपेक्ष्यं प्रामाण्यं किं वा प्रमाणान्तरयोग्यार्थविषयत्वात्तत्सिद्धार्थानुवादरूपमप्रामाण्यं नाद्यः गृहीतसङ्गतिकस्य पुंसः सत्यादिवाक्यश्रवणा

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग ! स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अबाधितानवगतार्थप्रमितदर्शनात्प्रामाण्येन हि प्रमीयमाणस्यार्थस्य प्रमाणान्तरसम्वादो न मिथ्यात्वापादकः सर्वप्रमाणानामनधिगतार्थगतत्वादन्यथा चक्षुषा गृह्यमाणस्य रूपस्य त्वचा गृहणात् मिथ्यात्वाशङ्का स्यात् न द्वितीयः प्रमाणान्तरसंभिन्नार्थत्वाभावात् पौरुषेयवचनप्रयुक्तत्वं हि सम्भवस्य भूतार्थप्रयुक्तत्वप्रत्यक्षादीनामपि संभेदः स्यात् नापि तृतीयः स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुबाधकत्वादर्शनात् एवं सिद्धे उपनिषदां ब्रह्मणि प्रामाण्ये तद्गतानां पदानामर्थान्तरकल्पना न युक्ताश्रुतहान्यश्रुतकल्पनाप्रसङ्गात् न च तेषां कर्तृस्वरूपप्रतिपादनपरता वक्तुं शक्या तत्तत्फेन कं पश्यत् "एकमेवाद्वितीयम्" इत्यादिना क्रियाकारकफलादेर्निराकृतत्वात् नापि ब्रह्मणा उपासनाविधिशेषत्वं सम्भवति एतत्फेन हेयोपादेयशून्यत्वेन क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टं तथापि ब्रह्मात्मविज्ञानस्य फलपर्यन्तत्वात् गतत्तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुं हि न शासना चोपनिषदां शास्त्रत्वमिति संक्षेपः एतेन स्वागतमित्याद्यपेक्षो निरस्तः यत्तु रजन्येषेत्यादि तत्तु यथार्थमेव तत्राऽनिद्रितानामज्ञानामपेक्षया ब्रह्मणो निशातुल्यत्वात् तदुक्तं "या निशा सर्वभूतानां तस्यां जागर्ति संयमी" इत्यादि यत्तु मातर इत्यादि तदपि न "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्यादिना मात्रादितुल्यत्वाभिमानिनामास्तिकमत्यामसत्त्वाभिधानेन तेषां भयोत्पादनस्य समुचितत्वात्तथापि दृष्टं वनमित्यादिनोपहासः सोऽपि साहसनिधनः अन्तःकरणतद्धर्मादयस्तत्संवेद्यत्वात् अभिकार्यभावेति- "परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इत्यादिश्रुतीनां निरालम्बनतापत्तेश्चेति दिक् ॥ ३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासामुक्तिमेव वर्णयति-मैवमित्येकादशभिः। हे विभो ! व्यापक परमात्मन् ! इह गत्समीपे न स्थेयमित्येवं गदितुं भवान् सर्वव्यापकः नार्हति परिच्छिन्नमुखे तच्छोभते इत्यर्थः । ननु सर्वत्र सर्वदा सत एकत्र सङ्गमे कोऽयं दुराग्रहः ? अत्राहुः—हे दुरवग्रहेति । दुर्लभः अवग्रहः ग्रहणं यस्य स तथा तत्सम्बुद्धौ हे दुरवग्रह ! सर्वगोऽपि त्वं यत्र स्वेच्छया प्रकटोऽसि तत्रैव प्राप्योऽसीत्यर्थः अतः देवः आदिपुरुषो भवान् यथा मुमुक्षून् भजते तथा भक्ताः किङ्करीः अस्मानपि भजस्व परिचर्यायां नियोजयेति फलितोऽर्थः केनापि हेतुना मा त्यज ननु मुमुक्षवः विषयान् त्यक्त्वा मां प्रार्थयन्तेऽतस्तान्भजाम्यत्राहुः नृशंसं यथा भवति तथा सर्वे विषया भोगाः येषु तान् पतिपुत्रादीन् निवारयितुं प्रवृत्तानपि सन्त्यज्य तव पादमूलं प्राप्ता इति ॥ ३१ ॥

---

भाषा टीका ।

गोप्य ऊचुः

गोपी बोली कि-हे परम समर्थ ! समर्थ कहवेको तात्पर्य यह है, कि-नित्य जिनकी खिरकी के नीचे फिरकी खात डोलते है तौऊ हमको बोलिवे को अवसर नहीं मिलतो वेई हम सब इकठोरी होयके आई हैं तिनको त्यागि वे को सामर्थ्य तुह्यारोई है, तासों तुम धन्य हो । हे महाराज ! आप हमनसों एसे निर्दय कठोर बोलवे को योग्य नहीं हो, काहेसो, कि-हम सम्पूर्ण विषयनको छोडिकें आपके चरणारविन्द के समीप आई हैं । हे दुराग्रही ! देख हम तेरी अनन्य भक्ता हैं तू हमें भज हमको मत त्यागे, जैसे आदि पुरुष देव श्रीनारायण अपने भक्त मुमुक्षून को भजेंहै ॥ ३१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च यदुक्तं यत्पत्यपत्येत्यादि त्वया धर्मविदेति सोपहासमेवमेतदुपदेशानां पदे विषये त्वय्येवाऽस्तु उपदेशपदत्वे हेतुः, ईश इति । विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । ईशत्वे हेतुः आत्मा किल भवानिति भोग्यस्य हि सर्वस्य भोक्ता आत्मैवेश इत्यतः प्रेष्ठो बन्धुश्च भवानेवेति सर्वबन्धुषु करणीयं त्वय्येवाऽस्त्वित्यर्थः । अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सत्यस्मासु च धर्मं जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तमेवमेतदस्तु न तु त्वं धर्मोपदेष्टा किन्तु भवानात्मेति अथवा यदुक्तमेतदुपदेशपदे तद्गोचरे पुरुषेऽस्तु नाम, त्वयि तु ईशे स्वामिनि सत्येवं कांक्षा नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप इति । यद्वा, यदुक्तं पत्यादिशुश्रूषणं धर्म इति एवमेतत्त्वय्येवास्तु कुतः उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदे ऽधिष्ठाने कुत ईशे नहीश्वरमधिष्ठानं विना कोपि पतिपुत्रादिर्नामेति अन्यत्समानम् अलमतिविस्तरेण ॥ ३२ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

ननु, सदाचारवर्गाच्याः ! युष्माभिस्त्यज्यन्तां नाम विषयाः स्वधर्मस्त्ववश्यमपेक्ष्य एव तत्र सोपहासमाहुः—यदिति । अङ्गेति सप्रेमसम्बोधने ईशे परमेश्वरे वृन्दावने परमेष्ठिपुरन्दरादिभिरपि स्तूयमानत्वस्य दृष्टश्रुतत्वात् । यद्वा, सर्वव्रजस्य नाथे त्वयि प्रेष्ठः प्रियतमः नरवन्यवत् प्रियमात्रं तत्र च तनुभृतां सर्वेषामपि जीवानां नचान्य इव छिन्नाणां बन्धुश्च हितकारी सुहृद्वा यतः आत्मा परमात्मा किल निश्चितं त्वत्सेवैव परमो धर्मः तदपेक्षया अन्यत् सर्वं त्याज्यमेवेति भावः । तथाचोक्तम् "तावत् कर्माणि कुर्वीत" इत्यादि तस्माल्लिखितमेव अन्यत्रैवेष्टितम् यद्वा,

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

धर्मविदा धर्मतत्त्वाभिज्ञेनापि त्वया धर्म इति यदुक्तं तत्पत्यादीनामनुवृत्तौ सेवायाम् आनुकूल्येऽपि वा रङ्गः रागो यासां स्त्रीणां तासामेव न त्वन्यासामस्माकं त्वदेकप्रियाणामित्यर्थः अतस्त्वदपेक्षया सर्वमेवान्यदुपेक्ष्यमेवेति भावः।तत्र हेतु दर्शयन्त्यः सर्वतोऽधिकतरं तस्य प्रियत्वं वदन्त्यः सन्यायं प्रार्थयन्ते,आस्त्विति। तनुभृतां सर्वेषामपि प्राणिनां प्रेष्ठः किमुतास्माकं प्रेष्ठत्वे हेतुः बन्धुः हितकारी आत्मा च स्वतः प्रीतिविषयः चेतयितेति वा इति बहिरन्तरुपकारित्वमुक्तम् यद्वा, बन्धुराः प्रेमशृङ्खलाबन्धयुक्ताः भक्त्या सुन्दरा वा आत्मानो जीवा यस्मिन् सः अतः एतत् अस्माकं सर्वतनुभृतां वा स्वधर्म इति यत् त्वय्येवास्तु तत्र च एवम् अस्मदभिमतप्रकारेणेत्यर्थः । सुगोप्यत्वात् साक्षात्तदनुक्तिः तत्र हेतुः उपदिश्यन्ते सर्वैः शास्त्रैर्गुरुभिर्वा सर्वत्यागेन भजनीयतया कथ्यन्ते इत्युपदेशौ पदौ श्रीचरणौ यस्य तस्मिन् इति त्वत्पादाब्जापेक्षया स्वधर्मोऽपि परित्याज्य इति युक्तमेवेति भावः।अथवा ननु, सारज्ञास्तर्ह्यपेक्षितमभिलष्यतामित्यत्र सवैयग्र्यं प्रार्थयन्ते, एवमुक्तप्रकारेण अत इति वा तनुभृतां त्वदनुगानां सर्वेषां सखसामनुचरादीनां च किमुतास्माकं भवान् आत्मा स्वयमेव न त्वन्यद्वारा प्रेष्ठः प्रियतमः बन्धुश्च हितकारी अस्तु पदद्वयेनान्योऽन्यं प्रीतिरभिप्रेता किमर्थं त्वयि निमित्ते कथम्भूते एतस्य अस्मदभिप्रेतभजनविशेषस्य यो गुर्वादिभिः सख्यादिभिर्वा उपदेशस्तस्य पदे विषये तस्मिन्नेव इत्यर्थः । धार्ष्ट्यपरिहाराय साक्षात्तदनुक्तिः तत्र स्त्रीणां स्वत एव तत्सिद्धिः पुंसां तु भावमात्रेण किं वा तत्रैवोत्कटरागाणां दण्डकारण्यवासिमुनीनामिव जन्मान्तरे ज्ञेया, एषा सामान्येनोक्तिरत्यन्तप्रेमोत्कण्ठया । यद्वा, एतत् उपदेशास्पदे त्वयि ईशेऽस्मद्विधानां नाथेऽस्तु यतो भवान् बन्धुरात्मा सुन्दरस्वभावः अत एव तनुभृतां सर्वेषां प्रेष्ठः । यद्वा, अस्त्वेवमिति साभ्यसूयाभ्युपगमः उपदेशानां त्वद्भजनपरगुर्वादिवाक्यानां सर्वेषामेव पदे यतः ईशे स्वामिनि गोवर्द्धनोद्धरणादिना जीवनदे (यद्वा ता) तत्राऽप्यस्मत्प्राणेश्वरे त्वय्यपि एतत् एतादृशं सत्त्वं तनुभृतां देहधारिणीनां सतीनामस्माकं किञ्च किम् आत्मा देही देहो वा बन्धुः प्रियः अपि तु नैव किं तु भवानेव प्रेष्ठः । यद्वा, देहधारणादात्मैव बन्धुः अकारप्रश्लेषेण भवांस्तु अप्रेष्ठः किं किञ्चेति वितर्के वा तथापि काका स एवार्थः वयं देहं त्यक्तुं न शक्नुम इति किं भवता वितर्क्यत इत्यर्थः । मुक्तदेहा इव वयमपि त्वदर्थेऽधुनैव देहं त्यक्ष्याम इति । भावः । अनेन रजन्येकत्वस्योत्तरं देहानपेक्षया घोरादिभ्यो भयाभावात् तदैव भजनीयत्वेन व्रजं प्रतिगमनप्रयोजनाभावाच्च तदैश्वर्य्यं भिन्नदमर्थत्रयम् अत्र नर्मेदं तत् त्वय्येवास्तु त्वमेव स्त्रीभूत्वा पत्यादिसेवाधर्ममाचरेत्यर्थः । कुतः उपदेशपदे गुरावित्यर्थः । अन्यथा गुरुणाननुष्ठिते कर्मणि शिष्याणामप्रवृत्तिः स्यात् तत्र च त्वमेव समर्थ इत्याहुः-प्रेष्ठ इति । श्लेषार्थश्चायं अङ्ग हे व्रजभुजङ्ग ! भर्तृपुत्रसुहृदाम् अनुवृत्तिः स्त्रीणां स्वधर्मः तत्र सुहृदं बन्धूनां च कल्याणम् इत्युक्तत्वात् अतो मे कामः पूर्य्यतामिति धर्मविदा त्वया यदुक्तम् अपि कृष्ण अस्त्वेवमेतत् अस्तु एवमेतत् इति चत्वारि पदानि तदेव मे मम ईशे पश्चाद्वास्तु यतः उपदेशपदे सर्वेषां पतिरेव गुरुः स्त्रीणामित्यादीनां शास्त्रसाधूपदेशानां पदे भोः साध्व्यः ! भवतु पतिरेवानुवर्त्यतां किं त्वद्य शरज्ज्योत्स्नी सुन्दरे वृन्दावने सर्वैर्व्रजवासिभिः प्रेमास्पदत्वेन स्वीकृतस्य मे पार्श्वे निःशङ्कं वनादिसौन्दर्यसुखमनुभूयतां तत्राहुः प्रेष्ठ इति । भवान् तनुभृतां व्रजसम्बन्धिनां प्रेष्ठोऽपि बन्धुरात्मा बन्धुरो विषम आत्मा स्वभावो यस्य विषमस्वभावत्वात् त्वयि न विश्वास इत्यर्थः।यद्वा,पत्यादीनामनुवृत्तिः स्त्रीणां स्वधर्मः सुष्ठु अधर्मः इति यत् धर्मविदा त्वयोक्तम् एवमेतत् त्वय्येवास्तु यत उपदेष्टरि कथम्भूते ईशे सर्वं वक्तुं व्यवहर्त्तुं च समर्थे न च तथोपदिशन्तं त्वां जना परिवदेयुः यतः प्रेष्ठादिरूपो भवानिति ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, उक्तो भर्त्तुः शुश्रूषणमित्यादिना स्वधर्मः कथमतिक्रम्यते इति तस्य कर्ममीमांसामतमाशङ्क्य तदुपमर्दि ब्रह्ममीमांसामालम्ब्य प्रतिभाव(ने)त्वेन तस्मिन्नात्मत्वमारोपयन्त्यस्तन्मतदूषणेन नास्माकमधर्म इति प्रतिपादयन्ति—यत्पत्यपत्येति । धर्मविदेति सोपहासमेव सर्वशास्त्रोपदेशानां पदं "शास्त्रयोनित्वात्" (१।१।३) "तत्तु-समन्वयात्"(१।१।४)इति न्यायेन तत्तात्पर्य्यविषये तत एवेश त्वय्येकस्मिन्नेव एवं शुश्रूषणप्रकारेण एतदुपदेशवाक्यमस्तु । ननु, मयि तत्पदत्वमेव कथम् ? तत्र सच्छलमाहुः—किञ्च वितर्के भवानात्मा परमात्मा कथं तादृशत्वमपि तत्राहुः—तनुभृतां सर्वेषामेव प्रेष्ठः निरुपाधिप्रेमास्पदत्वं ह्यात्मत्वं तस्मादात्मा तत्रापि सर्वेषां प्रेष्ठत्वात् परमात्मेति तथा बन्धुः सर्वेषां निरुपाधिहितकारी परमात्मा च सर्वावभासकत्वेन तादृशः ततश्च भवानेव स इति अनेनेशत्वमपि सिद्धं तस्मात् त्वमेव शुश्रूषणीय इति भावः । अथवा । ननु, सदाचारवर्गपूज्याः!युष्माभिस्त्यज्यन्तां नाम विषयाः स्वधर्मस्त्ववश्यमपेक्ष्यस्तत्र सासूयमाहुः—यत्पतीति एवमुपदेशकर्त्तरि त्वय्येवैतदुपदेशास्पदत्वमस्तु त्वमेव तद्योग्यो भवसीत्यर्थः । ननु, कथमेतत्तत्राहुः-प्रेष्ठ इत्यादि । तनुभृतां प्राणिमात्राणां प्रेष्ठः चित्ताकर्षकः बन्धुः सर्वाभिलषितहितकारी अत एवात्मा स इव हृदयाधिष्ठाता तत्प्रेरयिता वा तस्मादस्माकं वा को दोषः किन्तु भवत एवेति प्रत्युत भवानेव तादृशदोषपरित्याजनायोपदेष्टव्य इत्यर्थः । अत्र पूर्ववदैश्वर्यपक्षोऽपि युज्यते स च तैर्व्याख्यात एव तत्र विवर्त्तवादमवलम्ब्यार्थद्वयम् अविशेषेणात्माऽभ्युपगमात् तथा तत्र भोक्तृत्वमीशितृत्वमेव ज्ञेयं राजनिर्द्देशभोक्तृत्ववत् अन्यथा जीवत्वापाते चिदचित्त्वासिद्धेः सामान्यतो निर्द्देशस्तु जीवस्य दृष्टान्तत्वापेक्षया तस्य सर्वस्वरूपत्वस्थापनापेक्षया च द्वितीये न त्वित्यादिकं काकुगर्भं तथा पर एवोपदेष्टा भवति न ह्यात्मन आत्मैवोपदेष्टृत्वं ततश्चास्माकमुपदेष्टृत्वाभावे साक्षात् कृतात्मत्वे च न पतिशुश्रूषणादि विधिगोचरत्वमिति भावः । श्रीवैष्णवमतेनान्यदर्थद्वयम् अथवा यदुक्तमिति तत्र प्रथमार्थे स्वामिनि आश्रयत्वेन धृत इत्यर्थः । "देवर्षि भूताप्तनृणां पितॄणाम्" इत्यादेः सर्वे तदुपासनमहिमद्वारा धर्म प्रत्याख्याय वस्तुविचारद्वारापि प्रत्याख्यायते यद्वेति अधिष्ठानत्वं तत्तत्स्फूर्त्याश्रयत्वं "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः अत्रैश्वर्य्यार्थेऽपि किञ्चेति निश्चितम् उपदेशपद इति शास्त्रगुरूपदेशस्य

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चरणारविन्द इत्यर्थः । इत्यपि व्याकुर्वन्ति अत्र नर्मेदं तत् त्वय्येवास्तु त्वमेव मोहिनीरूपेणाजितवत् स्त्रीभूत्वा पत्यादि सेवाधर्ममाचरेत्यर्थः । कुतः उपदेशपदे गुरावित्यर्थः । अन्यथा गुर्वननुष्ठिते कर्मणि शिष्याणामप्रवृत्तिः स्यात् तत्र च त्वमेव समर्थ इत्याहुः ईशे सर्वकर्त्तुसमर्थे नतु च कृत्रिमस्त्रीत्वे त्वयि न कोऽपि प्रीतिं कुर्य्यात् इति मन्तव्यं स्वभावत एव तव सर्वप्रेष्ठत्वादित्याहुः—प्रेष्ठ इति । बन्धुरात्मा मनोहरस्वभावः निषे-धार्थश्चायम् अङ्ग हे कृष्ण ! पत्यादीनामनुवृत्तिः स्त्रीणां स्वधर्मः सुष्ठु अधर्म इति यत् धर्मविदाऽपि त्वयोक्तम् अन्यादृशयोजनया छलेन प्रतिपादितमित्यर्थः अमायया यो भर्त्तेत्याद्यभिप्रायात् एवमेतत् ईश एव सत्युपदेष्टरि सर्वं वक्तुं व्यवहर्त्तुं च समर्थ इत्यर्थः । तस्मिंस्त्वय्येवास्तु तेन त्वमेवोपदेश्यो भवेत्यर्थः । कथं तत्राहुः तनुभृतां श्रीवृन्दावनादिस्थितचतुर्विधप्राणिनामपि प्रेष्ठः प्रेम विषयः बन्धुः प्रेमकर्त्ता अत एवात्मा 'साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्„ इति वत्, परस्परहृदयात्मक इत्यर्थः । तस्मात् यदि त्वमेवैतेष्वनन्तेषु निरक्तः स्यात् तदा वयमपि स्वेषु स्वल्पप्रमाणेषु यथास्थितयोजनया धर्मप्राप्तेषु च स्यामेवेत्यर्थः । तत्र चास्मास्वेव तावद्विरक्तो भवेति नर्मतात्पर्य्यम् । यद्वा, यथा तथा वा योजना भवतु भर्तुः शुश्रूषणमित्यादिना यत्पत्यादीना-मनुवृत्तिः स्त्रीणां स्त्रियो धर्म इत्युक्तम् एतदुपदेशकर्त्तरि त्वयि ईश एवमस्तु अनुज्ञायां लोट् भवितुं योग्यमित्यर्थः । यतः प्रेष्ठ इत्यादि । भर्तृविचारस्त्वस्माभिरेव ज्ञायत इति भाव इति ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपदेशपदे पद्यत इति पदम् उपदेशाधिगन्तव्ये त्वयि सम्भ-वतु न वयमिममर्थमप्राप्ताः किन्तु भवानस्माकं प्रेष्ठः प्रियतमः प्रियतमबुद्ध्या प्राप्त इत्यर्थः ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं "भर्तुःशुश्रूषणं स्त्रीणाम्"इत्यादि तदनूद्य तत्रोत्तरमाहुः यदिति । अङ्ग हे कृष्ण ! धर्मविदा त्वया पत्यादीनामनुवृत्तिरेव स्त्रीणां स्वधर्मः स्वानुरूपो धर्म इत्युक्तं तदेतत् त्वयि उपदेश-पदे सति पद्यते गम्यते इति पदं त्वय्युपदेशार्थे गन्तव्ये सति एवमेवास्तु उपदेशपदस्याभिप्रायेण सम्बोधयन्ति—ईशेति ईश इति सप्तम्यन्तोऽपि पाठः न वयमुपदेशार्थं प्राप्ताः किन्तु त्वत्सङ्ग तवे इति भावः । तदेवाविष्कुः—भवान्प्रेष्ठः प्रियतम इति बुद्ध्या प्राप्ता इत्यर्थः । प्रेष्ठत्वे हेतुः तनुभृतामात्मा निरुपाधिकबन्धुश्च किलेति श्रौतीं प्रसिद्धिं द्योतयन्ति यद्वा, यत् पत्यपत्याद्यनुवृत्तिरेव स्त्रीणां स्वधर्म इत्युक्तं तदेतत्पत्यादिषु कर्त्तव्यमनुवर्त्तनम् उपदेशपदे उपदिश्यत इत्युपदेशः अनुवर्त्तनीयत्वेनोपदेष्टव्यपत्यादिरूपेणा-वस्थिते साक्षात्त्वय्येवास्तु पत्यादीन्प्रीतिविषयान् बन्धूंश्चापाद-यति तदन्तरात्मतया तद्रूपेणावस्थिते नित्यनिरुपाधिकपत्या-दिरूपे सर्वविधबन्धौ त्वय्येव तेषु कर्त्तव्यत्वेन उपदिष्टानु ष्ठानस्त्वित्यर्थः । तदेवाभिप्रेत्य विशिंषन्ति प्रेष्ठ इत्यादिना ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शुश्रूषध्वं पतीनिति यदुदितं तत्राहुः—यत्पत्येति । हे अङ्ग ! स्त्रीधर्मशास्त्रविदा त्वया स्त्रीणां पत्यादीनामनुवर्तनं स्वधर्म इति यत्तदस्त्येव न सन्दिग्धं तर्हि तान्विसृज्यात्र किमर्थ मागतमिति तत्राह—तदपीति । देवधरे अस्मत्पित्रादीनां जामातृ-स्थानीये त्वयि तदपि क्रियत इति शेषः । देवानां वरणीये वा देवाद्यभीष्टदातरि वा न केवलं पतिस्थानीये ईशे ऐश्वर्यादि-गुणसम्पन्ने तस्माद्वरणीय इत्यर्थः । परमानन्दविषयोऽपि हि पतिरयं कथं तद्विषय इत्याशङ्क्य न केवलमस्माकमेव परमा-नन्दगोचरः अपितु सर्वेषामिति भावेनाह—प्रेष्ठ इति । अस्माकं विशेषतोऽपि प्रेष्ठ इत्याह—बन्धुरिति । बन्धुरूपः परमात्मा किल तथा पुरातनवार्ता "वार्ता सम्भाव्ययोः किल"इति यद्वाऽऽत्मभूतो बन्धुः ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अनन्तरं "जहुर्गुणमयं देहम्"इति प्राकृतदेहत्यागेन तत्काल-सिद्धा अपि अधीराभावेनैवाहुः—यत्पत्यत्येत्यादि । हे अङ्ग ! स्त्रीणां पत्यपत्यसुहृदाम् अनुवृत्तिर्धर्म इति यदुक्तं धर्मविदा त्वया तत् उपदेशपदे उपदेशकर्त्तरि त्वय्येवास्तु नास्मासु स पुनरस्माभिः शरीरैः सार्द्धं त्यक्तः त्वय्यस्त्विति परुषोक्तिः त्वं तथाविध-दुःखभाग्भवेत्यर्थः । तत् दुःखं तवैव समुचितम् ईशत्वात् सर्वमेव सोढुं समर्थोऽसीत्याह—ईशेति । अथ क्रोधवशादनुचितमेवोक्तमिति परामृश्य शान्तं शान्तं तत् कदापि तव न भूयात् यत् त्वं तनु-भृतां प्राणिमात्रस्यैव प्रेष्ठः बन्धुरात्मा च किल निश्चितम् इति क्रोधभावशान्तिः एतेन त्वय्यनुरक्तानां स्त्रीणां पत्यपत्याद्यनु-वृत्तिर्महती यातनैव सा कदाऽपि कस्याऽपि मा भवत्वि-त्यर्थः ॥ ३२ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

यद्यपि भगवतोक्तं स्त्रीणां स्वधर्मपरित्यागोऽनुचित इति अतः एषा रजनी घोररूपा नेह स्त्रीभिः स्थेयमिति तत्राप्याहुः—यत्पत्यपत्येति । पतिरपत्यानि सुहृदश्च एषामनुवृत्तिः स्त्रीणां स्वधर्म इति धर्मविदा त्वया उक्तं बहिर्मुखा हि धर्मशास्त्रज्ञाः शारीरमेव धर्मं स्वधर्ममाहुः न त्वात्मधर्मं भगवद्धर्मं वा यतस्ते अनात्मविदः तथा धर्मविदैव त्वया न त्वस्मान्विचार्य आत्मानं वा त्वयोक्तं तस्यात्यस्माभिर्विषयनिर्द्धारः क्रियते न तु दूष्यते तदाहुः—अस्त्वेवमेतदिति । स्त्रीभिः स्वधर्मः कर्त्तव्यः इति यदुक्तं तदेवमेवास्तु न हि पत्यादयः धर्मस्वरूपं नाप्या-धारः किन्तु निमित्तं स च धर्मः अनुष्ठीयमानः प्रमीयमा-णश्च भवति अनुष्ठीयमाने पुत्रादयो निमित्तं प्रमीयमाणे गुरुः अतः सा अनुवृत्तिः प्रथमतो गुरावस्तु अन्यथा स्वधर्मो ज्ञात एव न स्यात् । न च भगवद्वाक्यमनुवादकं पूर्वमस्माकं धर्मज्ञानाभावात् अन्यथा तदेव क्रियेत नापि सेवाव्यतिरेकेणा-ऽयं धर्मः स्फुरति अन्यथा वचनमात्रेणैव गतं स्यात् अत उपदिष्टस्य सिद्ध्यर्थं सेवां कारय उपदेशस्य पदम् आश्रयः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

फलं च भवति मङ्गेति कोमलसम्बोधनात् नास्माभिः प्रतिकूलतया निरूप्यते। किञ्च, स्वधर्मा अनेकविधाः स्वापेक्षयोत्कृष्टविषयाः समानविषया हीनविषयाश्च तत्र पूर्वपूर्वधर्मप्राबल्यं यथा स्त्रीणां पतिपुत्रादीनां स्वमान्यानां सेवाधर्मः एवं स्वान्तर्यामकस्येश्वरस्यापि अनुवृत्तिर्मुख्यो धर्मः अन्यथा तत्प्रेरणाभावे पतिसेवादौ न प्रवर्त्तेत अतः प्रकृतेऽपि भवानीश्वरः अन्तर्यामी तादृशोऽपि भूत्वा पतिपुत्राद्यर्थं न प्रवर्त्तयसे किन्तु स्वसेवार्थमेव प्रेरयसि अतो वाक्योक्तधर्मसिद्ध्यर्थमपि भवानादौ सेव्यः। किञ्च, धर्मो धर्मिमूलः तदविरोधेन कर्त्तव्यः फलार्थञ्च कर्त्तव्यः अन्यथा चेदनिष्टेऽपि पुरुषं प्रवर्त्तयन् अनाप्तः स्यात् अत एव धर्मशास्त्रे प्रियत्वाच्छरीरस्य तदनुरोध उक्तः द्रव्यसंस्कारविरोधे द्रव्यं बलीय इति न्यायाच्च तत्कस्यचित्प्रियो देहः कस्यचिदात्मा कस्यचित्परमात्मा कस्यचिन्निर्वाहकः भवांस्तु सर्वरूपो भवति यतः अत्यन्तं प्रेष्ठः परमप्रेमास्पदमानन्दः बन्धुर्देहनिर्वाहकश्च। किञ्च, न केवलमस्माकं किन्तु तनुभृतां सर्वेषामेव देहधारिणां भवाय नाशायेत्यत्र त्वया दत्तमेव शरीरं त्वद्विचारितप्रयोजनार्थं जीवो गृहीत्वा तिष्ठतीति निरूपितम् अतः स देहः भगवदीयः भगवतैव स्थापितः तस्मै निवेद्य तदनुपयोगे जाते पश्चादन्यस्मै देयं चेतनो हि प्रेयः अतः यावद्भगवदुपयोगं ज्ञास्यति तावन्नान्यस्मै दास्यति बोधितोऽपि यतस्तनुभृतां त्वमेव प्रेष्ठः प्रेष्ठाय च देयं प्रियं वस्तु अत्रार्थे किलेति प्रसिद्धिरेव प्रमाणम् किञ्च, न केवलं देहदाता किन्तु बन्धुरपि येन प्रयत्नेन शरीरं बिभर्त्ति स बन्धुः आत्मा धारकश्च अतोऽन्तरङ्गबहिरङ्गन्यायेन नित्यानित्यन्यायेन वा भवत्सेवैव मुख्या यदा पुनस्त्वदनुपयोगस्तत्रापि चेत्त्वया प्रेरणं तदाऽन्यस्मै दास्यामो नान्यथेति धर्मिविचारः धर्मोदप्याधिकः एतच्च त्वदनङ्गीकृतं सर्वमेव विरुद्धं भवतीति प्रार्थ्यते आस्त्वाति सर्वरूपत्वात्त्वमेव सेव्य इति वा अन्यत्र एकदा सर्वसेवा प्राप्ता अंशतो बाधिता स्यात् विनिगमकाभावाच्च अनेन स धर्मोऽपि न भवति यः कालादिना बाध्यते अशक्यश्च भवति न हि प्रमाणं विरुद्धं विधत्ते अतः पत्यादिसेवाविधायकं च शास्त्रं त्वत्सेवामेव विधत्ते अतः अनुवादपक्षे स्वतन्त्रविधानपक्षे वा भवत्सेवैवोचितेति भावः ॥ ३२ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथ काश्चित्प्रखरास्तद्वचनेनैव तं पराजेतुकामा आहुः— यदिति। पत्यादीनाम् अनुवृत्तिः स्त्रीणां स्वधर्म इति यत्त्वयोक्तम् एतदेवमस्तु अनेन प्रकारेण भवतु नात्र विवदामहे एतदेवास्माभिः प्रतिज्ञायां क्रियते इति भावः। ननु, केन प्रकारेण तत्राहुः उपदेशस्य एव आस्पदे धर्मोपदेशकर्त्तरि त्वयि अनुवर्त्तिते सत्येव पत्यादीनामनुवृत्तिसिद्धिरित्यर्थः । प्रथमं धर्मोपदेष्टा आचार्यः उपसेव्यस्तं पश्चात्तदुपदिष्ट आचरणीयो धर्म इति न्यायात् आचार्यानुवृत्त्यैव निष्कपटया धर्मः सिद्ध्येदिति च शास्त्रं तत्रापि ईशे परमेश्वरे, यद्याचार्य एव परमेश्वरः स्यात् तर्हि किमु हेति किञ्च ईश्वरत्वादेव तनुभृतां त्वमात्मा आत्मत्वादेव प्रेष्ठः प्रेष्ठत्वादेव बन्धुरिति अयमर्थः पत्यादीनां परमात्मसाहित्येनैवानुवृत्तिः शास्त्रोक्ता आत्मराहित्ये तु सति सद्य एव गृहान्धःसारितानां तेषां नद्यादेस्तटे सुखानि दह्यन्ते इति धर्मशास्त्रम् अतो मूर्त्तस्यात्मनस्तवैवानुवृत्त्या पत्याद्यनुवृत्तिसिद्धिः किमन्यैस्त्वत्प्रतिकूलत्वादेव निरात्मकैर्दग्धमुखैः पत्यादिभिरिति। ननु, पूर्णप्रेम्णा ऐश्वर्यज्ञानावरकत्वादासां च सम्पूर्णप्रेमवत्त्वात् कथमेतादृशमैश्वर्यज्ञानं सम्भवेत् उच्यते नारदपञ्चरात्राद्युक्तलक्षणो भक्तिरसामृतादिषु व्याख्यातः प्रेमाह्यनिशनैसर्गिकोष्णशैत्यवान् विरहसंयोगरसादनुभावकोऽपि ब्रह्मानन्दो भवेदेष चेत् परार्द्धगुणीकृतः “नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि” इति । रसामृतोक्तेः ब्रह्मानन्दानुभवपरः परार्द्धाधिकोऽपि विरहे तीव्रांशुकोटेरप्यधिकं सन्तापयन्नैश्वर्यमाधुर्यसम्बन्धिनः सर्वानेव भगवतो गुणान् प्रद्योतयत्येव नतु कांश्चिदावृणोति विरहस्य सूर्यतुल्यत्वेन सर्वप्रद्योतकत्वात् संयोगे तु सुधांशुकोटेरप्यधिकमाह्लादयन्माधुर्यमयानेव गुणान् प्रद्योतयति संयोगस्य सुधांशुतुल्यत्वेन सुधया मादनादैश्वर्यावरणात् यत्र संयोगेऽप्यैश्वर्यं प्रद्योतते तत्र प्रेम्णा एवापूर्णत्वमवगन्तव्यम् अत्र त्वासां भाविविरहभावनावतीनां विरह एव इयं माहात्म्यस्फूर्त्तिरपि प्रेमकृतैव प्रेमा ह्रसदपि माहात्म्यं स्फोरयति किमुत सत् ततस्तदतिशयस्तु तदतिशयमेव यथादिभरतचरिते “किम्वा अरे आचरितं तपस्तपस्विन्या यदियमवनिरित्यादि”इति श्रीजीवगोस्वामिचरणाः ॥ ३२ ॥

———

### विशुद्धरसदीपिका ।

किञ्च, यदुक्तं “भर्त्तृशुश्रूषणं स्त्रीणां परो धर्मः„ इति तत्कर्ममीमांसामतमवगत्य तदुपमर्दिब्रह्ममीमांसामतमाश्रित्य स्वप्रतिभाबलेन तस्मिन्नात्मत्वमारोपयन्त्यस्तन्मतदूषणेऽपि नास्माकं दोष इति प्रतिपादयन्ति वस्तुतस्तु तस्मिन्नेव सुपपत्तित्वं साधयन्ति—यत्पत्यपत्येति। त्वया धर्मविदेति सोपहासं येन स्वयमेव मुरलीकलेनाकारिताः सर्वे धर्मादिभिर्हारितास्तस्य धर्मोपदेष्टृत्वमुपहसनीयमेवेति भावः । अत्रोढानूढाभेदेन परकीयाद्वैविध्यमाह—ऊढानामप्यात्मकोटौ निक्षेप इति ज्ञेयम् यदि च पत्याद्यनुवृत्तिः स्त्रीणां स्वधर्म इति निश्चितमेव तदेतदुपदेशानां पदे विषये त्वय्येवास्तु उपदेशपदत्वे हेतुः, ईश इति । “तमेतमात्मानं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति”इत्यादिविविदिषावाक्यानुगतसर्वोपदेशानामीशपरत्वावगमात् “शास्त्रयोनित्वात्” इत्यादिसूत्राच्च “कृष्णमेनमवेहि त्वमात्मानम्” इत्युक्तेः परमात्मा किल भवान् भोग्यजातस्य हि भोक्ता आत्मैवेश इत्यर्थः । “ईशावास्यमिद ँ सर्वं यत्किञ्चिज्जगत्यां जगत्।तेन त्यक्तेन भुञ्जीथाः” इत्यादिश्रुतेः । आत्मास्यं भोग्यमित्यर्थः । अन्यथा जीवत्वापातेन विविक्षितासिद्धिरिति भावः। अत एव पुत्रादिवत्प्रेष्ठः निरुपाधिप्रेमास्पदं सुहृदादिवद्बन्धुश्च निरुपाधिहितकारी भवानेव पत्यादिषु तत्तद्धर्मस्याऽवगमनादिति भावः अतः। सर्वबन्धुषु यत् करणीयं तत्त्वय्येवास्त्वित्यर्थः।अत्र तनुभृतामिति सामान्यात्पतेरपि परमात्मत्वं परमप्रेष्ठत्वं परमबन्धुत्वं च सिद्धम्। शास्त्रे च तदनुवृत्तिविधानं शरीराध्यासवत्तदुपासनपर्यवसायीति । सर्वे

## विशुद्धरसदीपिका ।

चतुरस्त्रम् । अथवा धर्मोपदेशानां पदे स्थाने धर्मोपदेष्टरि त्वयि सति अस्मासु च धर्मे जिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तं तदेव-मेवास्तु न तु त्वं धर्मोपदेष्टा किन्त्वात्मा पर एवोपदेष्टा भवति न त्वात्मेति भावः । अत्रापि धर्मविदेति सोपहासमेव "नापृष्टः कस्यचिद्ब्रूयात्"इत्यादि विरोधादिति भावः । इति व्याख्या द्वयी-विवसंवादमाश्रित्य अथ तत्त्ववादमाश्रित्य यथा धर्मविदेति प्रशंसा "धर्मो मद्भक्तिकृत्प्रोक्तः" इत्येकादशोक्तेः धर्मसेतूनां वक्ता कर्ता-ऽभिरक्षितेत्यादिवक्ष्यमाणाच्च त्वया यदुक्तमेतत् "येषामहं प्रिय आत्मा सुतश्च सखागुरुः सुहृदो दैवमिष्टम्" इत्याद्युपदेशानां तात्पर्यगोचरे आदिपुरुषे त्वय्येवास्तु । ननु, तथाभावे विरुद्ध-धर्माक्रान्तत्वं प्रसज्येतेत्यत आहुः—ईश इति । सर्वाश्रये सर्व-नियन्तरि चेत्यर्थः । "यस्य भासा सर्वमिदं विभाति, एतस्यैवानन्द-स्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादिश्रुतेः । यद्वा, भक्ता-ऽनुग्रहकातर इत्यर्थः । यतः तनुभृतां पत्यादीनामात्मा फलरूपो भवान् "देवर्षिभूताप्तन्रादेः"कृष्णमेनमवेहि त्वमात्मानमखिलात्म-नाम्"इत्यादेश्च अत एव प्रेष्ठो बन्धुश्च । यद्वा, यदुक्तं पत्यादि-शुश्रूषणं धर्म इत्येवमेतत् किन्तु त्वय्येवास्तु कुतः शुश्रूषणी-यत्वेनोपदिश्यमानानां पदे अधिष्ठाने त्वत्कृतः ? ईश इति, न हीशमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नामास्तीति भावः । अत्र श्रीपञ्चमस्कन्धस्य श्रीरमास्तुतिरनुसन्धेया अपि च परस्परविरुद्ध-स्वभावानां पत्यादीनामनुवृत्तिर्मण्डूकतोलनवदनुपपन्ना सती"अथात उपदेशो नेति नेति" इत्यादिश्रुतिमादिव्येनाधिष्ठानभूतमीश्वरमेव सेव्यतयाध्यवसाययति इत्येवं श्रुतार्थापत्तिर्नाम पत्यादिप्रयोगश्च दृष्टान्तत्वेन सङ्गमनीयः"भोजने जननीसमा"इत्यादिश्रीद्रौपदीमुद्दिश्य महाराजोक्तिन्यायादिति । यद्वा, अङ्ग स्त्रीणाम् अप्रधानस्त्रीणां सहचरीणामिति यावत् पत्याद्यनुवृत्तिः स्वधर्म इति यदुक्त-मेतत् मम किल श्रुतिमाह—तदर्थिका"नखमुखेन्दुपरां विधुभः स्मरः, इत्यादिवच्छुद्धप्रेमास्वपरमगुरूपदेशस्य पदे गोचरे त्वय्येवास्तु तत्र पतिवद्वश्यसेव्यत्वं च पुत्रवन्ममतास्पदत्वं सुहृद्वदादरणीयत्व-मभिहितं तदेतत्प्रकारत्रयसमुदिता शुद्धा प्रीतिः त्वय्येवपर्यवसितेत्य-र्थः । यतः तनुभृतां बन्धाःसिद्धदेहानामात्मा प्राणेश्वरी तद्वत्प्रेष्ठः बन्धुरः"बन्धुरः सुन्दरेऽपि च"इति विश्वः । अत एव ईशे तद्वद्वाराध्ये भजनीय इत्यर्थः "रसं राधायामाभजति किल भावं व्रजमणौ"इति श्रीसुधानिधेः इयमन्तर्गृहगतासु बन्धसहचरीदेहानामुक्तिरिति सर्वमनवद्यम् लब्धयूथेश्वरीदेहानां तु मते नर्मेदम् तथाहि त्वया धर्मविदेति पूर्ववत्सोपहासमेव पत्यादिशुश्रूषणमुक्तमेतत्त्वमेव मोहिनीरूपेणाजगत्स्त्रीरूपो भूत्वा पत्यादिसेवामाचरेत्यर्थः । कुतः ? उपदेशपद इति हेतुगर्भितं विशेषणं गुर्वनुष्ठिते शिष्याणा-मप्रवृत्तेरिति भावः । तथा ईशे सकलकलाकुशले सर्वं कर्तुं समर्थ इत्यर्थः । नच कृत्रिमस्त्रीरूपे त्वयि कस्विरप्रीतिं न कुर्यादिति शङ्कनीयं यतः प्रेष्ठो भवान् तथा बन्धुरः सुन्दर आत्मा स्वरूपं च यस्येत्यर्थः ॥ ३२ ॥

---

## श्रीरामनारायणकृतभावभावविभाविका ।

एतदेव दृढयन् भर्तुः शुश्रूषणमित्यादेर्दाक्षिण्यार्थस्य सम्भ-वत्वादेवोपेक्षार्थत्वोत्तरमाहुः—यत्पत्यपत्येति । अङ्ग हे प्रिय ! धर्म-विदा त्वया पत्यपत्यसुहृदामनुवृत्तिः स्वधर्म इति यदुक्तं तदेत-दुपदेशपदे त्वय्येवास्तु इत्यन्वयः । तत्र त्वया धर्मविदेति सोपहासं त्वधर्मविरते तन्निष्ठत्वे च मुरलीरवेण न आह्वानं कथम् भावाश्लेषमुक्तौ तु विश्वासघातो महानधर्म एव, किञ्च त्वया नात्मतत्त्वदृष्ट्यैवमुक्तं किन्तु धर्मविदा तथा च धर्म-विचारेऽपि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति श्रुत्या सर्वेषां चतुराश्रमधर्माणा-मीशपरत्वप्रतीतेः ईशत्वात्सर्वोपदेशानां पदे त्वय्येवेशे एत-दप्यनुवर्तनमस्तु शत्रुजयाय यदेव शराभ्यासवदन्यत्रानुवृत्तिः शास्त्रेषु त्वदाराधनायैवेति तत्त्वम् । यद्वा, उपदेशपद इति सेव्य-त्वेनोपदिश्यमानानां पत्यादीनां पदेऽधिष्ठाने त्वय्येव तदनुवृत्ति-रस्तु "एतदात्म्यमिदं सर्वं' तत्सत्यं' स आत्मा' तत्त्वमसि' यस्य भासा सर्वमिदं विभाति' एतस्यैवानन्दस्यान्यानि भूतानि मात्रा-मुपजीवन्ति"इत्यादिनान्येषां त्वदतिरिक्तसत्ताभानाद्यभावात् । यद्वा उपदेशपदे इत्यत्र पदशब्दस्याभयविषयोभयबोधकत्वादेतदुप-देष्टरि गुरावीशे च त्वय्येवानुवर्तनमस्तु प्रथमं गुरोस्तत ईश्वर-स्योभयोरेवाराध्यत्वात् । ननु, मया पत्युस्तद्बन्धूनां च सेव्यत्व-मुक्तमन्तःकरणशुद्धिविविदिषा द्वारा सर्वधर्माणां मयि पर्य-वसानेऽपि यत्र यस्य यदाराधनमुपदिष्टं तेन तदेव कार्यं तत्राहुः प्रेष्ठ इत्यादि यतो भवांस्तनुभृतामस्माकं पतीनां चात्मा "आत्मा नारायणः परः"—

> "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
> कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" ॥

इत्यादिश्रुतिस्मृतिभ्यः अत एव प्रेष्ठोऽपि "न वा पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति नवा सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति"—

> "सर्वेषामपि भूतानां नृप ! स्वात्मैव वल्लभः ।
> इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि" ॥

इत्यादिश्रुतिस्मृतिभ्यः । नत्वां विहाय पत्यादयः सेव्यास्तव पती-नामप्यात्मत्वात्तद्देहसेवात आत्मसेवाया वरिष्ठत्वात् तथा "सयुजा सखाया" इति श्रुतेस्तवैव बन्धुरूपत्वात्तद्बन्ध्वनुवृत्ति-रपि त्वय्येवास्तु नच"अनश्नन्नन्यो अभिचाकशीति"इति श्रुत्या ममाभोक्तृत्वात्कथं भोगादिनानुवृत्तिरिति वाच्यं पिप्पलशब्दा-भिधेयकर्मफलाभोक्तृत्वेऽपि "तदहं भक्त्युपहृतमश्नामि प्रयता-त्मनः"इति स्मृतेराराध्यत्वेन भोक्तृत्वस्य सिद्धत्वात् । यद्वा, पत्या-दीनामनुवृत्तिर्नः स्त्रीणां स्वधर्म इति "धर्मसेतूनां वक्ता कर्ता-भिरक्षिता"इत्यादिवचनैर्धर्मविदा त्वयोक्तमेतत्तूपदेशपदे"सर्वे वेदा यत्पदमामनन्ति"वेदैश्च सर्वैरहमेव वेद्यः'वासुदेवपरा वेदाः"इत्यादि-श्रुतिस्मृतिभ्यः सर्वोपदेशानां तात्पर्यविषये त्वय्येवेशेऽस्तु ननु, पत्याद्यनुवृत्त्युपदेशस्याहं कथं गोचरस्तत्राहुः—प्रेष्ठ इत्यादि । "येषामहं प्रिय आत्मा सुतश्च सखागुरुः सुहृदो दैवमिष्टम्"इत्या-दिभिस्तथावगमात् । यद्वा, उपदेशपदे त्वय्येवास्त्वित्यस्यायमभि-प्रायः यथा तरोर्मूलनिषेचनेन पत्रशाखादिपुष्टिर्जायते न तु प्रत्येक-पत्रादिनिषेचनेन तथा त्वदनुवृत्त्या सर्वाऽनुवृत्तिर्भवति न तत्प्रत्ये-कानुवृत्तेर्मण्डूकतोलनवदसम्भावितत्वेनापि त्वय्येवास्तु मण्डूक-तोलने यथैकारोहेऽन्यानवरोहात्सर्वत्र खेदकपूर्तिस्तथा पति-

श्रीरामनारायणकृतभावभावविभाविका ।

सेवनपरत्वे पुत्रपालनानुपपत्तिस्तदनुपपत्तौ तदनुपपत्तिस्त्वत्सेवायां नच सर्वात्मकत्वात् सर्वानुवृत्त्युपपत्तिरिति भावः । यद्वा पत्यपत्याद्यनुवृत्तिः स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तं तदेतदुपदेशपदे त्वय्येवास्तु अत्रापि धर्मविदेति सोपहासम्—

"नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोकमाचरेत्" ॥

इति स्मृत्या प्रश्नाभावे कथनानौचित्यमिति भावः । नच वाच्यम् "अपृष्टमपि तं ब्रूयाद्यस्य श्रेयोऽभिवाञ्छति" इति वचनान्नायं दोष इति यतो धर्मबुद्ध्या तदुपदेष्ट्रा धर्मविदा तस्य स्वयमप्यनुष्ठेयत्वात् अन्यथा—

"परोपदेशवेलायां सर्वे व्याससमा द्विजाः ।
तदनुष्ठानवेलायां मुनयोऽपि न पण्डिताः" ॥

इति न्यायात् तथा चैतदुपदेशपदं उपदिष्टार्थस्य स्वयमनुष्ठाय शिक्षयितुं तदुपदेशगोचरे त्वय्येवास्तु नचास्मासु अनुपदेष्टृत्वानुष्ठानाभावेऽपि दोषानुपपत्तेः किञ्च विद्वानर्थी समर्थश्च धर्ममीमांसायां धर्माधिकारी त्वं त्वेतद्धर्मवित् तत्फलोत्कर्षापकर्षादिवेदित्वाविर्निरूपणात्तत्फलार्थी च तथा ईशः कर्तुं समर्थश्चेति त्वय्येवेशोऽधिकारसम्भवादस्तु तत्कर्तुमनीशासु तद्धर्मावित्सु तत्फलानर्थिष्वस्मासु वृथा तदालापः नच वाच्यं नाहं स्त्रीति कथं तद्धर्माधिकार इति त्वं स्त्रीत्वं पुमानसि त्वं कुमारोऽथवा कुमारीति श्रुतिविरोधात् ननु, कादाचित्कक्षात्रिमस्त्रीरूपे मयि कथं पत्यादिप्रीतिः स्यात्तत्राहुः प्रेष्ठ इत्यादि भवान् सर्वेषां तनुभृतां प्रेष्ठः स्त्रीधर्माननुचरति त्वयि पत्युः का कथा सर्वे जनाः प्रीयेरन् मोहिनीरूपे त्वयि दग्धमन्मथस्य परमयोगेश्वरेश्वरस्यापि या दशा जाता तां त्वं वेत्स्येव यतः किल निश्चयेन भवान् बन्धुरात्मा बन्धुरः सुन्दर आत्मा यस्येति तथा "बन्धुरं सुन्दरेऽपि च" इति विश्वः । नचैवं सति कथं पुंस्त्वनिर्देशः क्रियते इति वाच्यं त्वयि सर्वसम्भवेऽप्यस्माभिः पतिभावनतया तथा निर्दिश्यते इति सर्वमनवद्यं यद्वा—

"यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ।
जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः" ॥

इति वचनात् त्वया धर्मविदोक्तं नास्मद्दशाविदा यत्त्वयोक्तं तत्सर्वं त्वद्देशे समर्थोऽस्तु यदा वयमिव कस्मिंश्चिदस्थाने प्राप्तचित्ता भवसि त्वां च स प्रिय एवैवमुपदिशेत्तदास्मद्दशा तव प्रतीयेत । ननु, किं शापो दीयते युष्माभिर्नेत्याहुः प्रेष्ठ इत्यादिना, यतस्त्वं प्रेष्ठोऽतस्तथा नहि त्वयि प्रार्थयामः किन्तु स्वदशाविज्ञापनाय तथा ब्रूमः तस्मात्सर्वथा त्वय्येवानुवृत्तिर्योग्यत्वेनास्तु नान्यत्रेति भावः ॥ ३२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यदप्युक्तम्—

"तद्यात माचिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः ।
भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया" ॥

इत्यादि । तत्राहुः—यदिति । यत्पत्यपत्यसुहृदामनुवृत्तिः स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् एतदुपदे शपदेत्वय्येवमेवास्तु अङ्ग हे भगवन्निति कोमलामन्त्रणेन न वयं प्रतिकूलं वदाम इति सूचयन्ति-त्वं हि उपदेशविषयैस्तद्वाक्यैः पत्यादिसेवनमुत्कृष्टफलप्रदमतः साक्षाद्भगवति सति किं परम्परयेति भावः । यतः ईशं विविदिषा वाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः यद्वा, ईशोऽन्तर्यामिणा जीवो हि यत्रान्तर्यामिरूपेण त्वया प्रेर्यते तत्रैव प्रवर्ततेऽतः स्वसङ्गार्थं त्वयैव प्रेरिता वयं त्वदाराधनसमीहा यत्तस्मादन्तर्यामिरूपेण सदाराधने प्रियेण प्रेष्ठरूपेण पत्याद्याराधन इत्यस्मद्वाक्यलतापादिकाप्रवृत्तिर्भगवतो नोचिता अन्तर्यामिकृतप्रेरणास्यैवं प्रबलत्वादितिभावः । किञ्च, उपदेशनियोज्य उपदेशविषयश्च त्वमेवाऽतः त्वदाराधनेनास्ति किमपि बाधकमित्याशयेनाहुः—प्रेष्ठः परमप्रेमास्पदः अत एवात्मा परमप्रेमास्पदस्यैवात्मत्वात् स च तनुभृतां सर्वेषां तनुः यस्य कस्यचित् अतः सर्वेषां बन्धुरूपो भवानेव यतः संप्रत्यप्यस्मदनुग्रहार्थं नन्दनन्दनविग्रहस्तस्मादुपदेशकर्तृतदनुष्ठानतद्विषयात्मनस्तवाराधनमेव मुख्यं सर्वाराधनमिति भावः । यद्वा, त्वय्युपदेशपदे धर्मोपदेशकर्त्तरि सति अस्मासु धर्मजिज्ञासमानासु सतीषु एतत्त्वयोक्तमेवमस्तु न न वयं तथा नापि भावः न किन्तु भवानात्मेति अथवा एतदुक्तमुपदे शपदेपुरुषेऽस्तु नाम त्वयि तु ईशे स्वामिनि सति एवं क नैवमित्यर्थः । यद्वा, उपदेशपदे उपदेशेन निवर्त्तनीये लौकिकपुरुषासक्तचित्तत्वे एतदेवमस्तु ईश्वरे त्वयि तु नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूपः अथवा एवमेतत्त्वय्येवास्तु कुतः उपदेशपदे अराधनीयत्वेनोपदिश्यमानानां पत्यादीनां पदे अधिष्ठाने यतः ईशे न हीश्वरमधिष्ठानमृते कोऽपि पतिपुत्रादिर्नामाध्यस्तस्याऽधिष्ठानानतिरेकात् तस्मान्न वयमनुचिते कर्मणि प्रवृत्ता इति भावः । यद्वा, यत्त्वयोक्तमेतदेवमादावुपदेशकर्त्तरि आचार्ये त्वय्यस्तु आचार्यसेवनपूर्वकस्यैव धर्मानुष्ठानस्य सफलत्वप्रतिपादनात्तत्रापि ईशे परमेश्वर एवमाद्याचार्यः स्यात्तर्हि किमु वक्तव्यम् ईश्वरत्वादेव तनुभृतामात्मा स एव बन्धुः सुहृत्तदात्मकानामेव पत्यादीनां सेवनं दृश्यते न तु मृतानां, तेषां तद्वाक्यविधानात् तेनास्मद्भाग्यवशात्सदानन्दात्मैव प्रकटितस्तस्मात्तत्सेवने प्रवृत्तानामस्माकं किन्तैरिति भावः । अनभिज्ञपक्षे अधिकारमबुद्ध्वैव धर्ममुपदेष्टुं प्रवृत्तोऽसि "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इत्युक्तत्वाद्गुणातीतानामस्माकं विधिनिषेधाधिकाराभावादित्याशयेनाहुः-यदिति । इति यद्धर्मविदा त्वयोक्तमेतदुपदेशास्पदे तदेकत्वभावे एवमस्तु स्त्रियतामेवमुपदेशो न वयं निवारयामः परन्तु स्वाधिकाराभावान्न तं गृह्णीम इति भावः । धर्मविदेति धर्मस्वरूपमात्रं वेत्सि न तु तदुपदेशाधिकारं यद्वा, यथापि धर्मविदसि न तु प्रणाधिवत् एवं ब्रवीषीति सोपहासं व्यङ्ग्यं यद्यपि निवारणमुचितमधिकारं विना ऽस्यवरोदनप्रायस्योपदेशस्य निषिद्धत्वात्तथापि ईश्वरत्वात्तव नास्त्यस्माकं निवारणसामर्थ्यमित्याशयेनाहुः-ईश इति । यद्वा, अधिकारं विनोपदेशकर्तृत्वमनुचितमपि प्रभुत्वान्नो विरुध्यते । ननु, वामेव विभुमेत्युक्तत्वे न विभुताया: कुटिलप्रवृत्तिजनकत्वाऽवगमात् अधिकाराभावसाधकमात्मानुभवमावेदयन्ति, प्रेष्ठ इति । अस्मत्प्रेष्ठो भवानेव सर्वेषां तनुभृतां बन्धुर्हितैषी परमात्मा आत्मा च । यद्वा, सर्वेषां परमप्रेमास्पदभूतो य आत्मा यश्च सुहृत्परमेश्वरः स तत्त्वमसि वाक्येन तत्त्वं तदुपलक्षितो

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

भवानेव तथा चाखण्डवाक्यार्थबोधवतीनां कुतस्त्वदुक्तधर्मेऽधिकारः कुतश्चाशुभसम्बन्धः—

"पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभस्योपपद्यते" ॥

इत्यादिशास्त्रादिति भावः । ब्रह्मज्ञमन्यानां पक्षमवलम्ब्येयं युक्तिर्द्रष्टव्या तेषां तदभिमानेन यथेष्टाचरणे प्रवृत्तिदर्शनात्तदुदाहरणं तु "ब्रह्मैव सर्वमिति वेदविदो वदन्ति तस्मान्न मे सखि ! पराऽपरभेदबुद्धिः । जारेऽथवा निजवरे सदृशाऽनुरागो व्यर्थं किमर्थमसतीति कदर्थयन्ति" इत्यादि । यद्वा, स्त्रीणां स्वधर्म इति यत्त्वयोक्तमेतदुपदेशपदे त्वय्यस्तु एतदुपदेशविषयो भवानेवाऽन्यो न वयमुपदेशनीयाः । ननु, मम कुत उपदेशविषयत्वमित्याशङ्क्य सौन्दर्यमाधुर्यादिगुणगणालङ्कृतस्यात्मनश्चित्ताकर्षकस्य तवैवापराध इत्याशयेनाहुः—भवान्बन्धुरात्मा बन्धुरो मनोहर आत्मा स्वरूपं यस्य सः अत एव प्रेष्ठः किञ्चेति अतस्त्वयैवंविधं त्वमेवाऽस्मद्धर्मनाशे प्रयोजक इति भावः । यद्वा, इति यत्त्वयोक्तं तदस्माकं मनसि न प्रविशति यतस्त्वं धर्मवित् न तु तदनुष्ठाता यो यस्य धर्मस्यानुष्ठाता न भवति केवलं धर्मं जानाति न तद्वाक्यात्कस्यचित्कस्मिंश्चिद्धर्मे प्रवृत्तिर्भवति अतः काश्चिन्महाभागाः पातिव्रतधर्मानुष्ठानपरा योपिद्वराऽस्मानुपदिशन्तु तस्मन्मनसि तद्वाक्यं प्रविशेदतः किमर्थं जल्पसीति भावः । अस्मद्वाक्यमेतासां हृदि प्रविशत्विति यदि तथाप्यस्तर्ह्येतदुपदेशपदे गुरौ त्वय्यस्तु तथाच विष्णुना यथा मोहिनीरूपं धृतं तथा त्वमपि स्त्रीरूपमादाय स्त्रीधर्ममाचर तत अस्मानुपदिश गुर्वनुष्ठिते कर्मणि शिष्यभूतानामस्माकमपि प्रवृत्तिः सौकर्येण भविष्यतीति भावः । ननु, अनुष्ठानायाप्यहं दर्शयामि परन्तु किं कर्तव्यं स्त्रीत्वं नास्ति ममेति चेत्तत्राहुः—ईश इति । सर्वकलासमर्थे त्वयि स्त्रीभावापि न दुर्घट इति भावः ननु, कपटेन गृहीतस्त्रीभावस्य मम पाणिगृहीतुरलभ्यत्वात्कथं पातिव्रतधर्मानुष्ठानमिति चेत्तत्राहुः—प्रेष्ठो भवान्स्वभावत एव प्रियः मनोहरात्मा च तथा च मोहिन्यां जानन्नपि कपटस्त्रीभावं स्वाभाविकस्त्रीभावां परमप्रियामुमां विहाय सम्प्रयुक्तकामः परमजितेन्द्रियोपि श्रीरुद्रस्त्वद्ग्रहणायाऽधावत्तथा लोकोत्तरसौन्दर्यवति त्वयि कपटेनापि गृहीतस्त्रीभावे जानन्तोऽपि कोटिशःस्वस्वदारान्परित्यज्य त्वद्ग्रहणायाऽधाविष्यन्त्यतो न पतिदौर्लभ्यमिति भावः । अनेन विधात्रा धर्मविनाशायैव त्वं रचितोऽसि पुरुषत्वे स्त्रीणां धर्मं नाशयसि गृहीतस्त्रीभावे पुरुषाणां नाशयिष्यसि धर्ममनुष्ठातुं तत्त्वं कदापि न समर्थोऽसि यदिदानीं पुरुषधर्ममेकपत्नीव्रतलक्षणमनुष्ठातुमशक्तो बह्वीनां स्वस्मिन्नासक्तत्वात्तथा गृहीतस्त्रीभावेप्यऽसङ्ख्यातपुरुषाणामासक्तिजनकत्वात्तस्मादनुष्ठानोपदेष्टुमशक्तस्त्वं किमर्थं वृथा कपटशोषणाय प्रवृत्तोऽसि इत्यपि ध्वनितम् यद्वा, धर्मविदा त्वया इति यदुक्तमेतदुपदेशपदे त्वय्येवमस्तु त्वदङ्घ्र्येव जीर्णं भवतु ग्राहकाभावात् अहो ज्ञातमस्माभिर्नवीनधर्मविरचं त्वया सम्पादितमतः शिष्याः सम्पादनीयाः यथोक्तधर्मोपदेष्टव्य इति तव महद्गुरुकण्ठा वर्तते ततोऽस्मानेवमुपदेष्टुं प्रवृत्तोऽसि परन्तु न वयं त्वां गुरुं कर्तुं समागताः अतः किमर्थमपात्रदानात्स्वधनं नाशयसि अप्रतिपिपरिसितमर्थं प्रतिपादयन्नऽनवधेयवचनो भवति तथा च धर्मविषये यद्यपि जातोऽसि तथाप्यधिकारानधिकारविवेकलेशेनापि विधुरोऽस्यतः सम्प्रत्येतत्त्वय्येव तिष्ठतु गुरोः सकाशाद्यथोक्तविवेकमपि लब्ध्वैतदधिकारलाभे सुखेनोपदेशं करिष्यसीति भावः यतस्त्वमीशः यथोक्तोपदेशधारणाधिकस्वीकारेऽधिकारिसम्पादने च समर्थः भवत्यस्तर्हि किमर्थमागता इति चेत्तत्राहुः—तनुभृतां सर्वेषां चतुर्दशभुवनस्थानां सौन्दर्यादिविशिष्टविग्रहवतां मध्ये भवान्मनोहरस्वरूपोऽतोऽस्माकं प्रेष्ठस्तथा च त्वयि रमणबुद्ध्या समागता वयमतो न यथोक्तोपदेशार्हा इति भावः ॥ मानिनीपक्षे पत्याद्यनुवृत्तिलक्षणः स्त्रीणां स्वधर्म इति यत्त्वयोक्तम् एतत्तूपदेशकर्तरि समर्थे त्वय्येवमस्तु सर्वदैवमेव त्वया वयमुपदेशनीयाः धर्मविदित्यनेनाऽहो ज्ञातमद्यास्माभिस्त्वं धर्मविदसीति सूचितम् योग्यं चैवमुपदेशकर्तृत्वं तव यतः स्वस्मिन्प्रेमकृतः शुभं यथैव प्रवर्त्यंते सज्जनैरित्याशयेनाहुः—हे प्रेष्ठ ! इति भावः । प्रेमविषयः यतो बन्धुर्यथोक्तोपदेशकर्तृत्वाद्धितैषी अत आत्मा स्वात्मतुल्यस्तथा च कः सत्यभर्तारशुश्रूषणीयः ? को वा कपटभर्त्रित्यादिविवेकवतीनामस्माकमग्रे स्वपाण्डित्यं नोद्घाटनीयमिति (स्वस्य च धर्मं नाशयेति) भावः । यद्वा, इति यत्त्वयोक्तमेतदेवमुपदेशपदे त्वय्यस्तु त्वमपि स्वधर्ममाश्रित्य तिष्ठ नत्वस्माकं स्वस्य च धर्मं नाशयेति भावः। यतस्त्वमीशः नाशसंरक्षणयोः समर्थः यत्तु मदभिस्नेहवतीनां न स धर्मः कपटपूर्वकत्वादिति चेत्तत्राहुः—प्रेष्ठ इति । तनुभृतां सर्वेषां प्राणिनां भवानात्मवत्प्रेष्ठः यतः सर्वेषां हितैषी तथा च सर्वेषां तनुभृतां यथा त्वयि प्रीतिः तथाऽस्माकमपि अतो विशेषप्रीतिभ्रमादस्मासु दोषमारोप्याऽस्मद्धर्मं नाशयितुमयोग्योऽसीति भावः । निवृत्तिपक्षे एवं साक्षाद्ब्रह्मप्रतिपादकश्रुतिभिः स्वस्य ब्रह्मणि समन्वयोऽभिहितः इदानीं "इन्द्रो यतोऽवसितस्य राजा अग्निर्मूर्द्धा दिवम्" इत्यादिकाः श्रुतयः स्वाभिप्रायं ब्रह्मणो वेदयन्ति यदिति यत्स्त्री सधर्मिकाणां श्रुतीनामिन्द्रादिप्रतिपादकानामस्माकमिन्द्राद्यनुवृत्तिस्तात्पर्येण तत्र प्रवृत्तिः स्वधर्म इति धर्मविदा त्वयोक्तम् एतदेवं त्वय्यस्तु यतः उपदिश्यमानानामिन्द्रादीनां पदेऽधिष्ठाने यत ईश्वरे सर्वकारणभूते यतश्च भवानेव प्रेष्ठत्वात् तनुभृतां सर्वेषामिन्द्रादीनामात्मा तद्बन्धुस्तत्सम्बन्धीन्द्रादिविग्रहरूपश्च तथा च किमपि विकारजातं प्रतिपादयन्त्यः श्रुतयः सर्वाधिष्ठानभूतं सर्वात्मानं सर्वस्वरूपं परमात्मानमेव प्रतिपादयन्ति "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतेरिति भावः ॥ ३२ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, भक्तिलक्षणं धर्मं पुरस्कृत्यान्योऽपि स्वधर्मोऽनुष्ठेय एवेति प्रागुक्ता ममाज्ञा पालनीयेत्यत्र विविदिषायां धर्मोपयोगः जाते त्वद्विषयके ज्ञाने सर्वात्मनस्तव भजनमेव सर्वथाऽनुष्ठेयमन्यत्तु त्वद्भजनेनैव सर्वं समञ्जसम्भवतीत्याहुः—"भर्तुः शुश्रूषणं स्त्रीणाम्" इत्यादिना पत्याद्यनुवृत्तिः स्त्रीणां धर्म इति त्वया धर्मविदा अङ्ग हे प्रियतम ! यदुक्तम् एवमेतदुपदेशपदे उपदिश्यन्ते इत्युपदेशाः अनुवृत्तिविषयाः पत्यादयस्तेषां पदे आश्रये पद्यते सर्वात्मतया ज्ञायते इति पदं गत्यर्थानां ज्ञानार्थत्वात् तस्मिन्सर्वात्मतया सुज्ञाते त्वयि अस्तु पत्यादिषु पुत्रादिषु स्थानीयेषु याऽनुवृत्तिः त्वयोक्तानां कल्पद्रुमस्थानीये त्वयि

**कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ।**
**तन्नः प्रसीद परमेश्वर ! मास्म छिन्द्या आशां भृतां त्वयि चिरादरविन्दनेत्र ! ॥ ३३ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

करिष्याम इति फलितोऽर्थः । उपदेशपदत्वे हेतुरीशे इति ईशत्वादेव तनुभृतामात्मा आश्रयः अत एव बन्धुः हितकारी अत एव प्रेष्ठः ॥ ३२ ॥

———

भाषा टीका ।

हे श्रीकृष्ण ! पति पुत्र और सुहृदनकी अनुवृत्तिकरनोई स्त्रीन को परम धर्म है, या प्रकार धर्म के जानन वारे ऐसे आपने जो धर्म को उपदेश दियो, सो ये तो जब कहनो रह्यो, कि—जब हम धर्मश्रवण करवे की इच्छासों आप सों धर्म पूछतीं और आपकों उपदेश करवे वारेन के आसन पै बैठारतीं तब आप उपदेश करते हमने तो कछू प्रश्न नहीं कियो, और आपही ते आप कहने लगे सो ये उपदेश, उपदेश के स्थान जो आप हो तिन आपही में रहो अर्थात् आपही मोहनी रूप धरके पतिव्रतान के धर्म को पालन करो, । अथवा ये जो आपने उपदेश दियो सो मुख्य पति के ठिकाने जो आप हो तिन आपही के लिये रहो काहे सों, कि—आप देह धारिन के आत्मा हो ताई सों परम प्रिय हो तब हमारे पतीन कऊ आत्मा तुमही हो फिर हम आत्मा कों छोड के वा आत्मा तें विमुख केवल देह रूप पतीन की सेवा कैसें करें तासों आपही की सेवा करेंगीं ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतत्सदाचारेण दृढयन्त्यः प्रार्थयन्ते—कुर्वन्तीति । कुशलाः शास्त्रनिपुणाः तथा च शास्त्रम् "किंप्रजया करिष्यामो येषां नो ऽयमात्मा लोकः" इति ॥ ३३ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

' ननु, कामार्धचन्द्र ! न केवलमस्माभिः कामेनैवेदमुच्यते किन्तु सदाचारादिविचारादपीति दर्शयन्त्यः सकाकु प्रार्थयन्ते—कुर्वन्ति हीति । हि एव त्वय्येव नत्वन्यत्र रतिं भावं न तु श्रद्धामात्रं तत्र हेतुः स्वे बन्धौ आत्मन् आत्मनि चेतयितरि च अतः नित्यप्रिये बहिरन्तरुपकारित्वात् सुखप्रदत्वाच्च यद्वा, हे आत्मन् ! हे नित्येति सम्बोधनं तेन च पत्यादीनां जडत्वमनित्यत्वं च तथा स्व इति प्रिय इति च क्रमेण हितकारितया स्वाभाविकतया च प्रियत्वोक्त्या वैपरीत्यमपि तेषां ध्वनितम् अतोऽस्माकं पत्यादिभिः किम् अपि तु न किञ्चित् प्रयोजनमित्यर्थः । पत्यादिप्रयोजनस्य तदधिकस्यापि त्वत्त एव सुसिद्धेः विशेषतश्चार्त्तिदैः संसारहेतुत्वात् नश्वरत्वेन शोकत्वादिजनकत्वाच्च आदिशब्देन जननीपितृभ्रात्रादयः । यद्वा, आर्त्तिदैरपि "दो अवखण्डने" ते दुःखं सम्यगवखण्डयितुं न शक्ता एव कथञ्चित् कदाचिद्वा किञ्चित् दुःखं खण्डयन्तु तथापि तैः किमित्यर्थः । अन्यत् समानं यद्वा कुशलाश्चतुरा नित्यप्रिये सर्वदा प्रेमास्पदे त्वयि रतिं कुर्वन्ति स्व आत्मन् स्वात्मनि स्वात्मविषये आर्त्तिदैः दुःखदैः पत्यादिभिः किं प्रयोजनमित्यर्थः । तत्तस्मात् सदाचारप्राप्तत्वेन अन्येषामार्त्तिदत्वेन च त्वद्रतेरेव कार्यत्वात् नः त्वद्भक्ता अस्मान् प्रति प्रसीद स्वीकारप्रसादं कुरु । ननु, भूषणप्रियाः प्रायोऽङ्गनाः स्युरिति कश्चिदन्यो मत्तो भूषणादिप्रसादो गृह्यतां तत्राहुः—वरदानामपि सर्वेषामीश्वरेति अतोऽसाधारणप्रसाद एव तवोपयुज्यत इति भावः । तमेवाभिव्यञ्जयन्ति—मास्मेति । स्मेति प्रसिद्ध्या दृढीकरणं चिरात् अबोधोदयात् आशरीरग्रहणाद्वा धृतां नैश्चल्येन कृतां त्वदाशाम् इति पतिभिः सह तत्सम्बन्धो निरस्तः मा छिन्द्याः किन्तु सफलयेत्यर्थः । अन्यथा तच्छेदेन तदेकावलम्ब्यजीवनानामस्माकं सद्यो जीवनोच्छेदापत्तिरितिभावः । धृतामित्यत्र हेतुः हेअरविन्दनेत्रेति परमसुन्दरेत्यर्थः । अतोऽग्रेऽपि गास्यते शरदुदाशयेत्यादि । यद्वा, अरविन्दरूपकेण दृष्ट्यापि सर्वेषां तापहारित्वादिकं ध्वनितम् अतोऽस्मासु तद्वैपरीत्यमयुक्तमिति भावः । किञ्च, वरदेश्वरेति पूर्वं वस्त्रहरणे दत्तो वरोऽपि स्मारितः श्लेषेण वरद् "दो अवखण्डने" स्वदत्तवरच्छेदक ! तच्च युक्तमेवेत्याहुः—ईश्वर परमस्वतन्त्रेति एषा प्रणयकोपोक्तिः यद्यपि कृतकात्यायनीव्रताः कुमारीः प्रत्येव वरो दत्तोऽस्ति तथापि स्ववर्ग्यत्वात् सख्येन साम्यात् सर्वा अप्युक्ताः अन्यत्तैर्व्याख्यातम् यद्वा, अहो महानागर ! कथञ्चिन्मुग्धा वा त्वां न भजन्तु वयं कथं त्वां न भजेमेत्याहुः—कुर्वन्तीति । कुशला विदग्धाः अतो विदग्धानामस्माकं तैः किमित्यर्थः विशेषतश्चास्मान् प्रति त्वया वरो दत्तोऽस्तीत्यभिप्रायेणाहुः—तदिति । अन्यत्समानम् अनेन मानर इत्यस्योत्तरं तेषामार्त्तिदत्वेनोपेक्ष्यत्वात् । यद्वा, पूर्वोक्तान्त्यपद्यानुसारेण गरणमेव दृढयन्त्यः प्रार्थयन्ते—कुर्वन्तीति । स्वे गोविक्षणावने आत्मा चित्तं यस्य तत्सम्बोधनम् अलुक्समासः तेनावैदग्ध्यादिकमभिप्रेतं न विद्यते प्रियः कोऽपि यस्य तस्मिन् अप्रिये त्वयि इति हेतोः आर्त्तिदैः दुःखच्छेदकैः पत्यादिभिः सह वर्त्तमानाः कुशलाश्चतुरा अस्मादृश्यः किं कुतो रतिं कुर्वन्ति अपि तु अस्थाने कर्त्तुं नार्हन्तीत्यर्थः तत् अस्मान् प्रति मा प्रसीद आशां च छिन्द्याः अरं परमतीक्ष्णां प्राप्तेङ्गतया निम्नतीत्यरविन्दं चक्रं तद्वच्छेदके नेत्रं यस्येति श्लेषेण परमघातकत्वं सूचितम् एषा सुमूर्षया कोपोक्तिः किञ्च, अरविन्दवत् रात्रावप्रकाशमाने नेत्रे यस्येति अतः परमसुन्दरीष्वप्यस्मास्वधुनोपेक्षा युक्तैवेति भावः । अनस्त्वया मातरम् इत्यादिना यत्सम्पागपेक्षणमुक्तं तद्युक्तमेवेत्येवमसूयाव्युपगमद्वारा तदुत्तरमुक्तं श्लोकार्थश्चायं कुशला मङ्गलरूपाः साध्व्य इति यावत् नित्यप्रिये स्व आत्मनि निजस्वरूपे विषये आर्त्ति-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

प्रदैरपि पत्यादिभिर्हेतुभिः किं त्वयि रतिं कुर्वन्ति अपि तु नैव तत्तस्मात् हे वरद ! हे ईश्वर ! नः प्रसीद चिराद्वयमत्र माऽऽस्म मा तिष्ठाम शीघ्रं गृहगमनायानुज्ञां देहीत्यर्थः । त्वयि तु मयि इति छेदः मयि अरविन्दनेत्र । अस्मदङ्गसङ्गार्थं । त्वया स्वयं धृतां तु माशां छिन्द्याः छिन्धि यद्वा, आशां व्रजगमनविषयां मा स्म छिन्द्याः मा वयंपातयेत्यर्थः । मा निहृनुष्व । ननु, स्वयमेव निरीक्ष्य गृह्यध्वं तत्राहुः—त्वयि धृता "धृङ् अवस्थाने" इत्यस्य त्वय्येव स्थितां त्वयाक्रान्तामित्यर्थः ॥ ३३ ॥

---

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

एवं शास्त्रबलेन पत्यादौ शुश्रूषयां प्रत्याख्याय सदाचारबलेनापि प्रत्याचक्षाणा "मातरः पितरः पुत्राः" इत्यादिना प्रपञ्चितं तत्स्नेहनिगडं विशेषतः परिहरन्ति—कुर्वन्ति हीत्यर्धेन । हि प्रसिद्धौ कुशलाः " य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः " इत्यादि श्रीगर्गवाक्यानुसारेण साराऽसारविवेकचतुराः त्वयि नित्यप्रिये स्वाभाविकप्रेमास्पदरूपे रतिं प्रीतिं कुर्वन्ति इति तस्य स्वस्मिन्परस्मिंश्च सुखमयस्फुरणमभिप्रेतं पत्यादीनां तद्वैपरीत्यमाहुः—स्वे आत्मीये आत्मन् आत्मनि च आर्त्तिदैः दुःखप्रदैः तादृशभगवद्विमुखतापादकास्मन्निवारणातात्पर्य्यात् अतस्तैः पत्यादिभिरस्माकं । किं प्रयोजनम् स्व इति सर्वनामत्वेऽपि पूर्वादित्वेन स्मात् स्मिनोर्विकल्पात् तदेवं प्रथमदिक्स्थिता, भक्ता भजस्वेत्युपक्रमानुरूपं विवक्षितमुपसंहरन्ति, तत् तस्मात् नोऽस्माकम् सम्बन्धे अस्मान् प्रतीत्यर्थः । प्रसादस्यैवावश्यकार्यताभिप्रायेण व्यतिरेकमुखेनाभिव्यञ्जयन्ति—मा स्मेति । चिरात् आयोधोदयात् धृतां नैश्चल्येन कृताम् इति पतिभिः सह तत्सम्बन्धो निरस्तः मा छिन्द्याः किन्तु सफलयेत्यर्थः । अन्यथा तच्छेदेन तदेकालम्बनजीवनानामस्माकम् सद्यो जीवनच्छेदः स्यादिति भावः । आशामेव विशेषेण व्यञ्जयन्ति-हे वरद ! कुमारीषु सङ्कल्पो विदित इत्यादिना दत्तवरविशेष ! हे ईश्वर ! अन्यासामपि दुर्घटं मम आदिघटनाविशेषसमर्थेति चिराद्धृतामित्यत्र हेतुः हे अरविन्दनेत्रेति शरदुदाशय इत्यादि वक्ष्यमाणात् अरं चक्रप्रान्तं तदिव अरं तत्पत्राग्रभागः हृदयच्छेदकत्वेन तद्विन्दतीति तु संरम्भस्यान्तःस्थितेः श्लेषश्च अरविन्दवत् रात्रावप्रकाशमाने नेत्रे यस्येत्यतः परमसुन्दरीष्वप्यस्मासु सम्प्रति तवोपेक्षा युक्तैवेति नर्मद्योतना च । किञ्च, अरविन्दरूपकेण दृष्ट्यापि सर्वेषां तापहारित्वं ध्वनितम् अतोऽस्मासु तद्वैपरीत्यमयुक्तमिति भावः । ऐश्वर्य्यार्थेस्तु हि शास्त्रप्रसिद्धौ कुशलाः श्रीनारदादयः रतिं भावं न तु श्रद्धामात्रं तच्च योग्यमित्याहुः नित्यप्रिये कुतो नित्यत्वं प्रियत्वञ्च तत्राहुः—स्वे आत्मन्यपि विषये आत्मनि परमात्मनि इत्यर्थः " कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" इत्युक्तेः । एतेन तस्य सुखरूपत्वं च ध्वनितम् अन्यथा निरुपाधिप्रेमास्पदत्वं न स्यात् अतोऽस्माकं पत्यादिभिः किम् अपि तु न किञ्चित् प्रयोजनमित्यर्थः । ननु, भवतीनां पत्यादयोऽपि मादृशा नित्यप्रिया एव नेत्याहुः आर्त्तिदैः तादृशकुशलवृन्दाभिलषितास्मदीयभगवद्भजनविरोधिभिः किं ? हे वरदेश्वरेति वरस्याव्यभिचारित्वं दर्शितमिति एवमुक्तत्वात्प्यूह्यं निषेधार्थश्चायं ननु, अहं तनुभृतां प्रेष्ठश्चेत् तर्हि स्वस्वोचितप्रेमफलसारस्त इव भवत्योपि स्वोचितं रत्याख्यं भावमेव मयि कुर्वतामित्याशङ्क्याहु—कुशलाः मङ्गलरूपाः साध्व्य इति यावत् आर्त्तिदैः दुःखावखण्डकैः पत्यादिभिर्हेतुभिः स्वे गृहादौ आत्मनि च नित्यप्रिये सति किं त्वयि रतिं कुर्वन्ति अपि तु न तत्र स्वादिनापेक्षितः तत् तस्मात् हे वरद ! वाञ्छितप्रद ! ईश्वर ! गोकुलस्वामिन् ! नः प्रसीद प्रसादमेवाहुः चिराद्वयमत्र माऽऽस्म न तिष्ठाम अस्तेर्लुङ्विकलवत् प्रयोग आर्षः शीघ्र गृहगमनायानुज्ञां देहीत्यर्थः । तथा त्वयि धृताम् अवस्थिताम् आशां चास्मदङ्गसङ्गेच्छारूपां छिन्द्याः छिन्धि "धृञ् अवस्थाने" इति अत्र वरदेश्वरेत्यत्र परमेश्वरेति पाठोऽपीश्वरत्वात्सङ्गमनीयः छिन्द्या इत्यत्र छिन्द्यादिति पाठे तु भवानित्यध्याहार्यम् ॥३३॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

माऽस्मच्छिन्द्याः विफलां न कुर्याः ॥ ३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्र सदाचारं प्रमाणयन्त्यो विज्ञापयन्ति—कुर्वन्तीति । कुशलाः शास्त्रनिपुणाः आत्मन्नात्मन्यत एव नित्यप्रिये त्वय्येव रतिं कुर्वन्ति नित्यप्रिय इत्यनेन सोपाधिकपत्यादीनामनित्यप्रियत्वं सूचितं तथा चोक्तम्—

"तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते" ॥
तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् । इति ।

कुशला इत्यनेन "नवा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय" इत्यादिशास्त्रार्थाभिज्ञत्वमभिप्रेतं यत एवमतोऽन्ततो दुःखदैः सोपाधिकैःपत्यादिभिः किं न किञ्चित्साध्यमस्तीति भावः । तत्तस्मान्नोऽस्माकं प्रसीद त्वयि चिरं धृतां बद्धामस्माकमाशां माऽस्माच्छिन्द्याः विफलां न कुर्या आत्मपर्यन्तवदान्यस्य तवेदमाशाच्छेदनमनुचितमित्यभिप्रायेण वरदेश्वरेतिसम्बोधनं त्वत्सौन्दर्यविलोकनेन त्वय्येवाशा धृतेत्याभिप्रायेण सम्बोधयन्ति अरविन्दनेत्रेति ॥ ३३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि त्वमेवाऽस्माकं मुख्यः पतिरित्याशयेनाहुः-कुर्वन्तीति । कुशलाः सारासारविवेकपटवः स्वे आत्मन् अनिभित्तबन्धावात्मनि स्वामिनि वा त्वयि रतिं कुर्वन्ति नोऽस्माकं नित्याप्रियैः पत्यादिभिः किं प्रयोजनमिति शेषः । नित्याप्रियत्वं कथमिति तत्राहुः-आर्तिदैरिति । अनेन क्रन्दति वत्साः इत्येतत्परिहृतं ततः किमत्राहुः—तत इति । यस्मात्त्वं मुख्यो अतोऽतस्तस्मात्तर्हि किंरूपः प्रसाद इत्यत्राहुः—मास्मेति । आ शामति तृष्णाम् "आशादिः गतितृष्णयोः" इति यादवः ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

साध्व्यः खलु त्वय्येव रतिं कुर्वन्ति नान्यपतिषु नापत्यादिषु च तस्मादयमुपदेशो न कार्य्यः नाप्यस्माकमाशाच्छेद्येति रुदन्मुख्यः काश्चिद्धीरा आहुः—कुर्वन्तिहीत्यादि । कुशलाः कल्याणयः त्वयि हि त्वय्येव रतिं कुर्वन्ति कीदृशे त्वयि आत्मन् आत्मनि आत्मन्निति सम्बोधनं वा पुनः कीदृशे नित्यप्रिये नित्यसुहृदि तासाम् आर्त्तिदैः पतिसुतादिभिः किन्ताः पत्यन्तरे सुतादौ च तुच्छबुद्धिमेव कुर्वन्ति अतः कुमार्य्यं एव कुशला यतस्त्वयि नित्यप्रिये रतिं कुर्वाणाः पत्यपत्यादितुच्छीचक्रुः त्वद्विनगानङ्गीकारात् तत्तस्मान्नोऽस्मभ्यं प्रसीद मैवं ब्रूयाः हे वरदेश्वर ! चिरात् त्वयि धृताम् आशां मास्म छिन्द्याः आशालता यथा फलवती तथा हे अरविन्दनेत्र ! प्रसीदेति पुनरावृत्तिः अरविन्दनेत्रेति सम्बोधनं रात्रावरविन्दस्य सङ्कोचात् मुद्रितनेत्रता गम्यते तेन कटुभाषितं प्रसन्नया दृष्ट्या न कथ्यत इति लोकव्यवहारात्तथैव श्रीकृष्णेन च कथितमिति गम्यते ॥ ३३ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं राजसीनां निरूप्य सात्त्विकीनां निरूपयति—कुर्वन्ति हीति । यदप्युक्तं मातरः पितर इति मातृष्वं बन्धुसाध्यमगिति तत्किमिदं प्रथमतया अस्माभिरेव क्रियते आहोस्वित् अन्येऽपि कुर्वन्ति तत्रापि किमधमा मात्राद्यनुवृत्तिं कुर्वन्ति आहोस्वित् उत्तमाः उत्तमा अपि स्वत्सेवायामशक्ताः आहोस्वित् शक्ता इति विचारणीयम् अस्मिन्नर्थे निर्णायकं महतां चरित्रमाहुः, येत्वात्मनि कुशलाः आत्महितार्थिनः न तु देहेन्द्रियाणां ते त्वय्येव रतिं कुर्वन्ति स्नेहेन हि क्रिया भवति भगवत्कृतमेव जीवगामि भवतीति तदुपपादितं "तस्यात्मने प्रतिसुखस्य" इत्यत्र प्रीत्या च सेवा भवति यदि पुत्रादिसेवापि धर्मः स्यात्तदा पुरुषार्थत्वेनात्मपर्य्यवसायिनी स्यात् कुशला इत्यनेन तेषां कौशलमेतत् प्रवृत्त्यपेक्षया निवृत्तिरुत्तमा इन्द्रियदमनसामर्थ्याभाव एव अन्यगामि कर्त्तव्यं यतो यतो निवर्त्ततेत्यत्र निरूपितं निरुद्धानीन्द्रियाण्यात्मगामीनि भवन्ति तत्राप्यात्मगामीनि तदैव भवन्ति यदि त्वदर्थमुपयुक्तानि भवन्ति अतः केवलनिग्रहकर्त्रपेक्षया ये त्वयि रतिं कुर्वन्ति ते कुशला इति हिशब्दार्थः । त्वयीत्येकवचनेन च पूर्ववदेकत्र सर्वसम्भवो निरूपितः । किञ्च, भवान् स्वात्मा स्वरूपभूतः नरवध्यासन्यायेन तथा जातः । किञ्च, प्रियस्य हि सेवा कर्त्तव्या स चेत् प्रियः कालपरिच्छेद्यो न भवति स भवानेव अन्यथा जारसेवापि धर्मः स्यात् जन्मवद्दिनस्यापि परिच्छेदकत्वात् । किञ्च, पतिसुतादयश्च न धर्महेतवो भवितुमर्हन्ति यतः आर्त्तिदाः न हि धर्मनिमित्तानि कदाचिद्दुःखदानि भवन्ति अन्यथा संसारो न स्यात् अतस्तैः किम् ? तेषां भयमस्तु अन्यद्वा, न तैः किञ्चित्प्रयोजनमित्यर्थः । परमेकमेव प्रार्थनीयं यद्भगवत्सर्वशास्त्रं युक्तिश्च व्यर्थास्यात्तदाहुः, तत्तस्मात्प्रसीद त्वं प्रसन्नो भव त्वत्प्रसादादेव लोका भ्रान्ताः दुःखहेतुष्वपि प्रवर्त्तन्ते । ननु, किं साधनं प्रसादे भवतीनामिति चेत्तत्राहुः, वरदेश्वरेति । ये हि वरान् प्रयच्छन्ति ते लोकानां क्लेशं ज्ञात्वा यतो दयालवः अन्यथा तपसि क्रियमाणे वरं न प्रयच्छेयुः तेषामपि त्वमीश्वरो ऽतिदयालुः तद्द्वाराऽपि सर्वेषां दुःखशमनं करोषि अतो वयं क्लिष्टाः क्लेश एव साधनं तपोवत् निषिद्धप्रकारस्तु यद्यत्र कश्चन भविष्यति स न कर्त्तव्यः । ननु यथैतावन्तं कालं पतिसेवा कृता एवमेवाग्रेऽपि कर्त्तव्या प्राप्तत्वात् गौणमपि कर्म समारब्धं समापयेदिति तस्मादविचार्य्यैव पतिसेवां कुरुतेति चेत्तत्राहुः मा स्म छिन्द्या आशां धृतामिति नास्माभिः पतिसेवा कृता तदर्थं वा स्थितं त्वदाशया स्थितं मध्ये स्थितिनिर्वाहार्थमेव तदङ्गीकारः इदानीं चेत्समागतानामभिलषितार्थो न सिध्येत् तदा आशा भग्ना भविष्यति तस्यां गतायां प्राणा एव गमिष्यन्तीति अत एव केन चित् स्त्रीहृदयज्ञेन निरूपितम् "आशाबन्धो हृदयं रुणद्धि" इति एतस्य मूलमपि स्त्रीशास्त्रे भविष्यति चिरात्त्वय्येव धृतां तस्यां छिन्नायाम् अवलम्बनाभावात् अधः पतिष्यामः इति श्लेषयमर्थः प्रसिद्धः अरविन्दनेत्रेति सम्बोधनं दृष्ट्यैवाप्यायकत्वं निरूपयति आशाहेतुरप्यनेनोक्तस्तापपहारकदृष्ट्या दर्शनात् भावोद्गारिणया एव तथात्वात् इयदवधि जीवनमप्यत एवेति भावः ॥ ३३ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

काश्चित्तदनुवादिन्यस्तमेवोक्तमर्थं सदाचारेणापि दृढयन्ति-कुर्वन्तीति कुशलाः—

"य एतस्मिन्महाभागे प्रीतिं कुर्वन्ति मानवाः ।
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः " ॥

इति गर्गोक्तिविश्वासाच्चतुराः न च रतिं कुर्वन्तीत्यपि वक्तुनो वाक्यं यतस्त्वयि रतिः स्वभाविक्येव कुशलानामित्याहुः—स्वे हीति इति त्वमेव तेषां ममतास्पदम् आत्मनीति त्वमेवाहन्तास्पदं चात एव नित्यप्रिये इति प्रीतिरपि त्वयि नित्यैव पतिसुतादिषु तु औपाधिकी अत एवानित्या अस्माकं तु तेषु सापि नास्तीत्याहुः आर्त्तिदैस्त्वदभिसारवारकत्वाद्दुःखदैः तत्तस्मान्नोऽस्मभ्यम् अस्मान् जीवयितुं प्रसीद यद्वाऽस्मानन्योढा मा जीवय एताः अनूढास्त्वं किं रोदयसीत्याहुः—हे वरद ! "सङ्कल्पो विदितः साध्व्यः !" इत्यादिना एताभ्यस्त्वं वरमदा एवेत्यर्थः । नन्वेतासु प्रसादे कात्यायन्यर्चनमेव कारणं भवतीषु मत्प्रसादे किं कारणं तत्र निष्कारणमेव प्रसीदेति सकाकुप्रार्थनमाहुः—हे ईश्वर ! स्वेच्छकीर्णिते स्वपरतन्त्रश्चिरात् बाल्यमारभ्य त्वयि धृताम् नाशाम् आशाकल्पलतां सम्प्रति फलवतीं मा छिन्द्याः फलवती लता हि सत्पुरुषेण छेत्तुं नार्हतीति चिरादिति छिन्द्या इति पदाभ्यां द्योतितम् एषा ह्याशालताऽस्मन्मनःकेदारिकायां त्वयैवारोपितेत्याहुः, हे अरविन्दनेत्र ! अस्मद्वयःसन्ध्यारम्भे प्रथमदर्शनसमये अरविन्दतुल्याभ्यां नेत्राभ्यां स्वप्रेषिताभ्यामस्मन्नेत्ररन्ध्रेषु प्रविश्य हृदयक्षेत्रे भावाभिधानमाशालताबीजमाहितमिति ध्वनितम् "चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः " इति रसशास्त्रोक्तरीत्या सैवाशालता गुणरूपश्रवणदर्शनादिना वर्द्धिता फलवती भुक्तभुज्यमानफलापि कठोरोक्तिकुठारिकया कथमद्य छिद्यते "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति न्यायं जानास्येवेत्यनुध्वनितम् ॥ ३३ ॥

### विशुद्धरसदीपिका ।

एतदेव सदाचारेण दृढयन्तः प्रार्थयन्ते—कुर्वन्तीति । कुशलाः लोकशास्त्रव्यवहारनिपुणाः त्वय्येव रतिं शुद्धां प्रीतिं कुर्वन्ति ये त्वयि रतिं कुर्वन्ति त एव कुशला इति परिवृत्त्यान्वयो वा तथा च शास्त्रं "किं प्रजया करिष्याम येषां नो यमात्मा लोकः" इत्यादि कीदृशे स्वे आत्मीये पूर्वाविस्मृतिमनो विकल्पः आत्मनि च यतः नित्यप्रिये एवं च विजातीयैरनात्मभिरनित्यप्रियैरार्तिदैश्च पत्यादिभिः किम्? न किमपीत्यर्थः यद्वा वरदेश्वरेत्युक्तेर्वरदेश्वराणां कात्यायनीव्रतपराणामियमुक्तिः तत्रायमर्थः वयं त्वयि रतिं कुर्वन्त्य एव कुशलाः अन्यथा पातिव्रत्यभङ्गादिति भावः । कीदृशे? स्वे ज्ञानी आत्मनि परमप्रेमास्पदे नित्यप्रिये नित्ये इतीहामुत्र चेत्यर्थः । तत्तस्मात् नः अस्मान् प्रसीद वरदेश्वरेत्यनेन प्रसादप्रकारः सूचितः "मयेमा रंस्यथ क्षपाः" इति तदुक्तेः । ईश्वर इति सामर्थ्यं च व्यतिरेके दोषं सूचयन्ति—आशामिति । चिरात् जन्मारभ्य वरदानमारभ्य चेति धृतां निबद्धां मा स्म छिन्द्याः तथा सति आशामयजीविद्वधः प्रसज्येतेति भावः । अरविन्दनेत्रेति रात्रिसङ्कुचनीयत्वं सूचितं ततश्च आरत्याऽस्मानेव मुकलितयाशया बन्ध एव दृढीकृतः लब्धसहचरीदेहानां तु मते यास्त्वयि रतिं शुद्धां प्रीतिं कुर्वन्ति ताः कुशलाः कामाद्यनावृतत्वात् कीदृशे स्वे धने निजप्राणेश्वरे भोग्ये आत्मनि पूर्ववत् नित्यप्रिये शुद्धप्रीतिविषयत्वात् एतैश्च पत्यादिभिः किम्? इति स्वभावत एव कामाद्यनाशक्तिः सूचिता ततश्च त्वय्यपि पत्यादिरूपेणासक्तिर्माऽस्तु किमुतान्यत्रेति भावः ॥ ३३ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका।

एतदेव शिष्टाचारेण दृढयन्त्यः प्रार्थयन्ति—कुर्वन्तीति । हीति एवार्थतया सर्वत्र सम्बध्यते ये कुशलाः स्वपरमार्थविदस्त एव त्वय्येव रतिमेव कुर्वन्त्येवेति "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते, ज्ञानी त्वात्मैव मे मतम्, अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" इत्यन्वयव्यतिरेकाभ्यां ज्ञानिन एव रतेरज्ञस्य तदभावप्रयुक्तविनाशस्य चाभिधानात्—

"एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् ।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः" ॥

इत्यादिना तवैव त इति नित्यत्वाभिधानात् अत्रापवर्गोऽस्य स्वरूपात्मकमोक्षातिरिक्तक्रममुक्तिपरत्वं मदृतेऽन्योऽर्थोऽपवर्गः स्वरूपातिरिक्तक्रममोक्षः स्वर्गश्च न प्रियः स्वरूपात्मकमोक्षस्याप्रियत्वे भगवत एवाप्रियत्वापत्तिः तथा च "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति, यो वै भूमा तत्सुखं, नित्यं विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, सच्चिदानन्दरूपाय कृष्णाय नमो विज्ञानरूपाय परमानन्दरूपिणे, आनन्दमात्रकरपादमुखोदरादिः" इत्यादिश्रुतिस्मृतिसिद्धपरमानन्दरूपस्य भगवतोऽप्रियरूपप्रतिकूलवेदनीयदुःखरूपत्वापत्तिःप्रेमपथाचार्यरूपाणां गोपीनामेव "तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ।" "तथः प्रविष्टा इव नामरूपे" इत्यादिस्वरूपात्मकमोक्षश्रवणविरोधश्च रतिमेव कुर्वन्त्येवेत्यत्र हेतुत्वेन त्वयीत्यस्य विशेषणमाहुः, नित्यप्रिय इति, तत्रापि हेतुमाह—आत्मन्निति । लुप्तसप्तम्यन्तं पदं गौणात्मनि पुत्रादौ कदाचिदप्रियत्वदर्शनात्तद्व्यावृत्त्यर्थमाहुः स्वे मुख्यात्मनीति "तत्त्वमसि अयमात्मा ब्रह्म, अहमात्मा गुडाकेश" इत्यादिवचनात् नहि मुख्यात्मा कदाचिदप्रियो भवति "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुतेः । नचाभेदे कथं रतिः सेव्यसेवकभावो वेति वाच्यं स्वात्मनि मुख्याभेदे मुख्यप्रीतिः पुत्रादौ मुख्याभेदाभावे मुख्यप्रीत्यभावस्य तत्र गौणाभेदे गौणप्रीतेरन्यत्र शत्रुव्याघ्रादौ गौणाभेदस्याप्यभावे सर्वथा प्रीत्यभावस्य प्रत्युत भेदैकभावेन द्वेषस्यैव दर्शनादभेदतारतम्ये प्रीतितारतम्यस्य भेदतारतम्ये प्रीत्यभावतारतम्यस्य निश्चयेनाभेदस्यैव प्रीतिप्रयोजकत्वात् नित्यभेदवादिभिश्च स्वस्मिन्नेव दर्शनादन्यत्रेष्टगुरुपुत्रपत्न्यादौ स्वसम्बन्धेनैव सेवा कार्याचित्कत्वस्याप्युपलम्भात्स्वसम्बन्धाभावे सेवाया अदर्शनादीशादिसेवाफलस्यापि स्वस्मिन्नेव पर्यवसानात् तद्भावस्यापि अभेद एव सामञ्जस्यात् प्रायः सर्वेषामादिभिः स्वस्वाचार्याणां भगवदवतारत्वेन तदभेदाभिमानेऽपि तदनुरागित्वसेवकप्रधानत्वाङ्गीकारेण स्वस्मिन्नंशांशिभेदद्वयं तत्सदृशानुरागाद्यभावाभिमतेर्भेदाभाव एवानुरागसेवयोः सामञ्जस्यसम्भवात् किञ्चाऽभेदवादिनामेव स्वरूपेणाभेदेऽप्यौपाधिकसेव्यसेवकभावश्चोपपद्यते उपाधेरध्यासेन स्वरूपान्तर्गतत्वात् स्वाभाविकश्च भेदवादिषु विभुत्वादिनां तु समानतया सेवकत्वानुपपत्तिः तदुक्तम्—

"अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता—
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा" ॥

इति । अणुवादिमतेषु तु कथमणुर्विभुसेवां कुर्यात् देहाद्युपाधिसम्बन्धेन सेवायां तु औपाधिकत्वेन स्वाभाविकत्वक्षतिः । किञ्च, नौपाधिकमपि सेवकत्वमणोः सम्भवति उपाधिनाणुसम्बन्धासम्भवात् नाणुदेहयोः समवायः अकार्यकारणद्रव्ययोः समवायादर्शनात् नापि संयोगस्तस्याव्याप्यवृत्तित्वेन निरंशेऽणौ तदनुपपत्तेः नापि तादात्म्यं भिन्नयोस्तदसम्भवात् नाप्यध्यासो भेदवादिमते तदनङ्गीकारात् त्वय्येवेत्येवकारव्यावर्त्यमाहुः पतिसुतादिभिः किमिति तद्व्यावर्त्यत्वे हेतुः आर्तिदैरिति । यद्वा, यास्त्वय्येव रतिमेव कुर्वन्त्येव ता एव कुशला नान्या इत्यन्वयः। तत्र हेतुः नित्यप्रिये इति अनित्ये पत्यौ जन्मान्तरे अन्यान्यपतिस्वीकारेण पातिव्रत्यभङ्गप्रसङ्ग इति भावः । स्वे आत्मनि अन्यत्र पत्युः पत्नीः पत्न्याः पतिः देहार्धत्वेन श्रूयते देहस्यानित्यत्वेन तत्सम्बन्धिपतित्वस्याप्यनित्यत्वं त्वन्तु न तथा किन्तु त्वं तत्सर्वजीवानां स्वात्मनि नित्यप्रियः अन्यत्र हेयत्वमाहुः पतिसुतादिभिरार्तिदैः किम्? अनित्यत्वादेवादौ तत्सम्पादने आर्तिं पुनश्च प्रतिक्षयाजरारोगापदादिभिरन्ते नाशेन प्रियस्त्वां रोत्स्यति—

"यावन्तः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः" ॥

इत्यादिवचनैः एवमावश्यकत्वं भगवद्रतेरापाद्य प्रार्थनामाहुः, तन्न इति । यतो नाऽस्माभिरनुचितमाचरितमतो नोऽस्मान् प्रसीद प्रसादेन मया किं कार्यं तत्राहुः—वरदेति । वरदत्वादेवास्मदभीष्टं त्वदत्तवरं च वेत्सि किमस्माभिर्वाच्यमिति भावः । ननु,

### श्रीरामनारायणकृतभावविभाविका ।

यद्यस्मभ्यः कामवरो मया दत्तः परन्तु तत्सम्पादनमशक्यं तत्राहुः, ईश्वरेति । समर्थस्य तव न किमप्यसाध्यं तदुक्तं "दयालोरसमर्थस्य" तव न किमप्यसाध्यं तदुक्तम्——

"दयालोरसमर्थस्य दुःखायैव दयालुता ।
विश्वोद्धारधुरीणस्य सा तवैकस्य शोभते" ॥ इति ।

तस्मात्समर्थत्वात्त्वयि चिराज्जन्मान्तरादिह च जन्मारभ्याऽस्माभिर्धृतामाशां वरदानेन भवता च धृतां मास्म छिन्द्यात् अरविन्दनेत्रेति तापभञ्जननयनात्समस्तापात् निवर्तय । यद्वा, हृदयकमलस्थः नास्मद्दुःखं तवाज्ञातमस्ति भावः ॥ ३३ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

सन्मार्गे प्रवृत्ता वयं प्रतारस्याः न तूपालम्भयोग्या इत्याशयेन सदाचारं प्रदर्शयन्ति—कुर्वन्तीति । कुशलाः कर्त्तव्याऽकर्त्तव्यादिविवेकवन्तः "किं प्रजयाकरिष्यामो येषां नो ऽयमात्मा लोकः" इत्यादिशास्त्रतत्त्वविद्भिः पुरुषधौरेया नारदादयो योषिद्गणगार्गीसुलभाद्याश्च त्वयि रतिं कुर्वन्ति यतः स्वे स्वस्वरूपभूते आत्मनि अत एव नित्यप्रिये अन्यत्सर्वं यदाऽस्यात्मानुकूलं भवति तदा प्रियं भवति न तु सर्वदा आत्मा तु सर्वदैव प्रियः तथा चैवंभूते त्वय्येव रतिं रुचितां तत्संस्थाऽमृतत्वमेति—

"यदात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्ट स्तस्य कार्यं न विद्यते" ॥

इत्यादि शास्त्रादतः पतिसुतादिभिः किं मोक्षप्रतिबन्धकैः किं प्रयोजनम् "बन्धवो दृढबन्धनम्" इत्युक्तत्वात् प्रत्युतार्तिदैः संप्रति वियोगादिना जन्मादिना संसृतिचक्रागतिःक्लेशादिना चार्तिप्रदायकैः "ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते" इत्यादि शास्त्रात् एवं यथोक्तनिर्दुष्टत्वमुपपाद्य पूर्वदिस्याः प्रार्थयन्ते तदिति, यस्मात्पतिपुत्राद्यनुवृत्तिर्निन्दिता त्वदनुवृत्तिर्विहिता सदाचारप्राप्ता चाऽतोऽस्माभिर्योग्यमेव कृतं तस्मात्त्वोऽस्मान् प्रति प्रसीद ननु, मयि प्रसन्ने किं भवतीति चेत्" तत्राहुः—हे परमेश्वर ! ब्रह्माद्यधीश्वरे त्वयि प्रसन्ने पुरुषार्थचतुष्टयमपि सिद्ध्यति—

"अकामः सर्वकामो वा मोक्षकाम उदारधीः
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्" ॥

इत्युक्तत्वात् । ननु, भवतु प्रसन्नोऽहं युष्मभ्यः मोक्षं ददामीति चेन्न वयं सम्प्रति मोक्षकामा इत्याशयेनाहुः—मास्मेति । चिराद्बाल्यादारभ्य त्वयि धृताम् अस्माभिः सह रमणं करिष्यतीत्येवंरूपामाशां भवान्मा छिन्द्यात् आशापूर्त्तिरेव प्रभुभिः क्रियते न तु तच्छेद इति प्रसिद्धिद्योतनार्थं स्मेति । ननु, सर्वात्मभावं जानतीनां युष्माकं स्वपतिरूपेण मया रमणेन सन्तोषः किमिति न भवतीति चेत्तत्राहुः—हे अरविन्दनेत्र । अनावृतब्रह्मात्मभावेन तुच्छीकृतकोटिकामविग्रहेण पुण्डरीकाक्षेण भगवता त्वया रमणाभिकाङ्क्षावत्यो वयं नत्वावृतब्रह्मात्मभावैर्मलमूत्रादिविग्रहैः स्वपतिभिरत एतत्स्वरूपेणैवास्मदाशापूर्त्तिर्विधेयेति भावः । यद्वा, अरविन्दनेत्र श्रीरामचन्द्रविग्रहदर्शनजन्येतद्विग्रहसङ्गमाशापूर्त्तिमेतद्विग्रहेणैव कर्तुं योग्योऽसीति सस्योपनाशयः वरदेश्वर ! इति पाठे वरदानामीश्वर ! श्रीरामचन्द्रात्मना वने स्थितस्य तव दर्शनमात्रेणैव वरस्य लब्धत्वादिदानीं तत्साफल्यमपेक्षितमिति भावः । अनभिज्ञापक्षे यथोक्तात्मज्ञानां पक्षमवलम्ब्य यदुक्तं तत्र सदाचार प्रमाणमाहुः—कुर्वन्तीति । कुशलाः मनीषिणो नित्यप्रिये स्वात्मभूते त्वय्येव रतिं कुर्वन्ति पतिपुत्रादिभिरार्तिदैः किमिति विचार्यं तत्तस्मान्नः प्रसीद यतस्त्वं परमसमर्थः त्वत्प्रसादो न निष्फल इति भावः । वरदेश्वर इति पाठे "मयेमा रंस्यथ क्षपाः" इति त्वया वरो दत्तस्तं सार्थकं कर्तुं समर्थ इति भावः । तस्मादाशाच्छेदोऽत्यन्तनिषिद्ध इत्याहुः—मास्मेति । चिराद्बाल्यभावमारभ्य त्वयि धृतामाशां भवान् मा छिन्द्यात् । हे अरविन्दनेत्र ! परमसुन्दर ! तथा च लोकोत्तरसौन्दर्यावांशयो भवानेवास्मदन्तःकरणे प्रविश्य आशामुत्पादितवान् अतः स्वेनोत्पादितां स्वगुणैर्वर्द्धितां स्वेनैव पूरयितुं योग्यामाशालक्षणां लतां फलकाले कर्णकठोरोक्त्यादिकुठारेण छेत्तुं नार्हसि यतो "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" इति न्यायं जानास्येवेति भावः । यद्वा, आत्मज्ञानां पोषणे यदि त्वं भूतिकामस्तर्ह्याशापूर्त्तिरूपमस्मत्पूजनमवश्यं कुरु "आत्मज्ञमर्चयेद्भूतिकामः" इति श्रुतेः । इति ध्वनितं । यद्वा, य एतस्मिन्महाभागा इत्यादिगर्गोक्तमनुस्मृत्याहुः कुर्वन्तीति । कुशलाः महद्भाग्याद्व्रजनाराऽनार्यविवेकिनस्त्वयि रतिं कुर्वन्ति यतः स्वीये आत्मनि अन्तःकरणे नित्यप्रिये । यद्वा, नित्यप्रिये स्वस्मिन् परस्मिंश्च नित्यप्रिये त्वयि अतस्तद्विपरीतैः स्वीये आत्मनि चार्तिदैः दुःखप्रदैः पत्यादिभिरस्माकमपि कुशलानां किं प्रयोजनं तत्तस्मान्नः प्रसीद त्वयि चिराद्धृतामाशां भवान् मा छिन्द्यात् सर्वं परित्यज्य त्वदाशया जीवामः तदुच्छेदे त्ववलम्बनाभावात्सद्य एव मरिष्याम इति भावः । ननु, भवतीनां नाद्यापि तथाविधयोग्यतातिरेको दृश्यत इत्यत एवं ब्रवीषीति चेत्तत्राहुः—हे अरविन्दनेत्र ! अहो ज्ञातमस्माभिः भो सखे ! रजनीयं भवांश्चारविन्दनेत्रः अतो मुकुलितनेत्रकमलत्वादस्माकं प्रेम्णः पराकाष्ठां पश्यतीति सनर्मव्यङ्ग्यं मानिनीपक्षे ननु, सर्वेषां प्राणिनामहं प्रेष्ठ इति यदि भवत्यो जानन्ति ? तर्हि स्वाधिकारानुरूपां रतिं कुतो न कुर्वन्तीत्याशङ्क्याहुः—कुर्वन्तीति । कुशलाः स्वधर्मनिपुणास्तास्ते ऽस्मः । आर्तिदैः "दोऽवखण्डने" दुःखच्छेदकैः पत्यादिभिर्हेतुभूतैः स्वीये गृहादौ आत्मनि च नित्यप्रिये सति त्वयि रतिं स्वमत्यनुरूपकुर्वन्ति अपितु न कुर्वन्ति इत्यर्थः । तत्तस्मान्नः प्रसीद हे परमेश्वर ! व्रजाधीश्वरपुत्रत्वात्त्वत्प्रसादं प्रार्थयाम इति भावः । पाठान्तरे हे वाञ्छितप्रद ! प्रसादमेवाहुः चिराद्दृढमत्र मा अस्मान निष्ठाग आस्तेऽलुङि रूपं छान्दसं शीघ्रं गृहान् गन्तुमनुजानीहीत्यर्थः । ननु चिरकालमारभ्य ममाशा वर्त्तते अत एवं न वाच्यमिति चेत्तत्राहुः—आशामिति । चिरात्त्वयि धृतां स्थिताम् अवस्थाने अस्मत्सङ्गाशान्नः परं भवान् छिन्द्यात् यतो हे अरविन्दनेत्र कमलवद्विशालनेत्रस्य प्रत्यहमस्माकं स्वधर्मनिष्ठतां पश्यतोऽस्मत्साध्व्योऽर्थे प्रार्थना नोचितेतिभावः । यद्वा, कुशलाः स्वीये आत्मनि नित्यप्रियेऽपि त्वयि पत्यादिभिः दुःखनिवारकैर्हेतुभूतैः रतिं कुर्वन्ति किम् ? अपितु न कुर्वन्ति समाननन्यत् यद्वा—

साध्वी धात्वयुता भ्रातृमती भर्तृप्रिया बहु ।
असाध्वी सा भर्तृद्वारी वर्जनीया ऽप्रमत्युदा ॥

**चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ।**
**पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किम्वा ॥ ३४ ॥**

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

इत्युक्तमसाध्वीलक्षणं स्वस्मिन् सूचयन्त्य आहुः—कुर्वन्तीति । अहो कुशलाः अस्मदाद्याः पत्यादिभिः स्वीये आत्मनि देहादौ नित्यप्रिये तत्करणीयप्रीतिविषये सति त्वयि रतिं कुर्वन्ति किम् ? तत्राऽप्यार्तिदैः पापसम्भावनयापि परमपीडापदैः समानमन्यत् यद्वा तिष्ठतु पतित्वविचारः, प्रीतिविचार अस्माकं तु सर्वतो विरक्ति सम्पाद्यात्मरतिः कर्त्तव्येति मतां प्रवृत्तिदर्शनेन सम्प्रति मनीषा वर्त्तत इत्याशयेनाहुः—कुर्वन्तीति । तु अपि छेदः अपि हे सौम्य हि प्रसिद्धं कुशलास्तु स्व वस्तुतः स्वरूपभूते शुद्धे आत्मनि नित्यप्रिये रतिं कुर्वन्ति नतु तद्विपरीते देहादौ नोऽस्माकम् आर्तिदैः पत्यादिभिः किं प्रयोजनमिति विचार्य कथं रतिं कुर्वन्तीत्यपेक्षायामाहुः—तदिति । यतः सर्वदुःखस्वरूपं तस्मात् हे परमेश्वर ! त्वं प्रसीद प्रसन्नो भूत्वा वयं: यया विषयाशया त्वयि मा आस्म त्वदन्यभूता वयं न स्थितास्तामाशां हे अरविन्दनेत्र ! भवान् छिन्द्यात् हे ईश्वर ! परब्रह्मविषया मा प्रमा छिन्द्यादिति वा यद्वा हे अरविन्दनेत्र ! परमेश्वरविपर्ययिणी मा प्रमा चिरादनादिकालमारभ्य धृतां स्वीकृतां विषयाशां छिन्द्यात् ततस्त्वयि आस्म त्वदनन्यामवामेत्येवं प्रकारेण रतिं कुर्वन्तीत्यर्थः । यद्वा भो चतुरशिरोमणे नेयं परदारेषु रत्याशा शोभना कुशलास्तु स्वपतिभार्यादावपि रतिं विहाय स्वात्मन्येव रतिं कुर्वन्तीत्याशयेनाहुः—कुर्वन्तीति । तदस्मास्वमपि प्रसीद किमर्थं ग्लापयसीति भावः । "प्रसादे सर्वदुःखानां हानिरस्योपजायते" इति प्रसिद्ध्या प्रसादे सति हे परम हे अरविन्दनेत्र ईश्वर ! परमाच्चिरात्त्वयि अवस्थितां सर्वदुःखनिदानभूतामाशां छिन्द्यादित्यर्थः । निवृत्तिपक्षे "प्लवा ह्येते अदृढा यज्ञरूपाः, अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयोऽभिनन्दन्ति मूढाजरामृत्युं ते पुनरेवापियन्ति, पुरुष एवेदं विश्वं कर्म तपोब्रह्मपरामृतं, यद्विभाति, भिद्यते हृदयग्रन्थिः" इत्याद्याः श्रुतयो वैराग्यादिसाधनसम्पन्नास्त्वय्येवात्मनि परमात्मस्वरूपे प्रत्यगभिन्ने यतो नित्यप्रिये रतिं कुर्वन्ति आर्तिदैः पत्यादिभिर्न किं प्रयोजनमिति विचार्य तस्मात् हे परमेश्वर चिरादनादिकालादारभ्य त्वयि धृतामाशामभिप्रायं कञ्चिदपि मा छिन्द्यात् छेदनपरः परमेश्वरेण त्वया दण्डनीय इति सम्बोधनाशयः यद्वा तदन्तः स्थितेन त्वया न छेदनाय स न प्रेरणीय इत्याशयेनाहुः—हे अरविन्दनेत्र सर्वहृत्कमलप्रकाशन ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, तर्हि मदात्मकस्यात्पत्याद्दीनामप्यनुवृत्तिरुचितैवेत्यतस्तदनुवृत्तौ दोषं वदन्त्यः उक्तसिद्धान्तं सदाचारेण दृढयन्त्यः भगवत्यनुवृत्तिं प्रार्थयन्ते—कुर्वन्तीति । स्वे आत्मन् आत्मनि त्वयि रतिमनुवृत्तिं कुशलाः ज्ञाततत्त्वाः कुर्वन्ति न त्वन्यत्र "किङ्कर्मणा किं प्रजया किं धनेन त्यागेनैकेनामृतत्वमानशुः" "किं प्रजया करिष्यामो येषां नोऽयमात्मलोकः" इत्याद्याः श्रुतयोऽत्रानुसन्धेयाः ॥ ३३ ॥

---

भाषा टीका ।

जो परम कुशल जन हैं ते तुमारे विषैं प्रीति करें हैं, काहे सो, कि—तुम अपने आत्मा हो, और नित्य प्यारे हो, और जो पति सुत आदिक हैं, वे तो केवल दुःख देने वारे हैं, उनसों कहा प्रयोजन है, तासों हे कमल दललोचन ! तुम हम पै प्रसन्न होउ बहुत काल से हमने तुम्हारे विषै आशा रूप लता लगाई है ताकों मति काटौ ॥ ३३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च प्रतियातेति यदुक्तं तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः—चित्तमिति । यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु निर्विशति तत्त्वया अपहृतं करावपि यौ गृहकृत्ये निर्विशतस्तावपि सुखात्मना त्वयेति वा ॥ ३४ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सुखात्मकेनेति गृहादीनां दुःखात्मकत्वं ध्वनितं सुखेन यद्विनिर्मितं वा पादौ यौ गृहकृत्ये गगने वा निर्विशतस्तावप्यपहृतौ अतस्तव पादमूलात् पदमेकमपि न चलतः गन्तुं न शक्नुत इत्यर्थः । करयोः पादयोश्चापहारस्तत्तदिन्द्रियशक्त्यपहारात् यद्वा ननु मिथ्यावादिन्यस्तर्हि कथमत्रागता इतिचेदुक्तं त्वद्गीतेनाकर्षणान्न तु स्वशक्तेः अन्यथा अधुना गमनं सम्भवेदित्याहुः—पदमिति । अथः स एव अथो अस्माद्धेतोः कथं व्रजं यामः ननु अबलाः मयैव कथञ्चित् प्रेष्यध्वं तत्राहुः—किङ्करवामेति । वाशब्द उक्तसमुच्चये कटाक्षे वा यद्वा अनुक्तसमुच्चये ततश्च किम्वा अनुसन्दधीमहि कुत्र वा यामेत्यर्थः । चित्तादीनां भवताऽपहृतत्वात् कर्मस्वप्रवृत्तेः कथञ्चिच्छक्तौ सत्यां वा कर्मभिः प्रयोजनाभावादितिभावः । यद्यपि चित्तापहारेण सर्वेन्द्रियापहारोऽप्यायाति तथापि विशेषतः करपादापहारोक्तिः पतिशुश्रूषणादिगृहकर्मकृत्यस्यान्यत्र निजगमनस्य च परिहाराय अन्यसैव्योक्ष्यातं यद्वा यच्चित्तं सुखे निमित्ते सुखे विषये वा पूर्वं स्थितं तद्भवताऽपहृतं सत् उत अपि न प्रविशत्यपि कुतस्तत् कृत्यमपेक्षतामित्यर्थः । ननु, गृहेश्वर्यस्तर्हि गृहकृत्यमनासक्त्यैव क्रियतां तत्राहुः करावप्यपहृतौ गृहसम्बन्धिकृत्ये न निर्विशतः ननु तर्हि तत्र गत्वा केवलमधिष्ठातृत्वेन स्थीयतां तत्राहुः पादौ च भवताऽपहृतौ न चलत इति अन्यत्समानम् अतस्त्वय्येव चित्तं त्वदर्थकृत्य एव करौ त्वत्स्थान एव पादौ प्रविशन्ति नान्यत्रेति च सूचितम् यद्वा भवः संसारस्तेन

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

तापस्तेन हृतं नाशितमपि चित्तं लोकानां सुखेन अनायासेन स्वत एवेत्यर्थः । गृहेषु निर्विशत्येव करावपि गृहकृत्ये निर्विशत एव अतः पतिशुश्रूषार्थं तत्र प्रेरणायाऽऽज्ञामिति भावः । ननु, तत्र वाद्भ्यः ! तर्हि गम्यतामिति चेत्तत्राहुः-पादाविति । किन्तु त्वत्काठिन्येनात्र कथातुमपि न युज्यते गन्तुश्च न शक्यते अहो वताधुना किं कार्यमित्यारर्त्या सनैयग्रूमाहुः—किङ्करवामेति । अनेन हृतं वनमित्यस्योत्तरं चित्ताद्यपहारेणा पुष्पादिग्रहणाद्यशक्तेस्तद्दर्शनस्यापि वैफल्यात् किन्तेनेति द्वितीयपक्षे वनादिदक्षादौ मत्यापि पादापहरणाङ्क्रमणाशक्त्या सम्यग्दर्शनासिद्धेः किं तद्दर्शनेनेति अत्र नर्मदं वनं ऽस्माकं प्रयोजनाभावात् तद्दर्शनार्थं नागताः स्म चित्तवित्तस्य भवताऽपहरणात् तदुद्देशेनाप्यागताश्चौरम्भवन्तं प्राप्ता अपि गृहीतुं नेतुं च तथा क्रोशनार्थं कुत्रापि गन्तुमपि न शक्नुमः भवता करपादापहरणात् अतो हृतधनाः कथं व्रजं याम: ? किं वा करवाम ? स्तम्भनादिमहामन्त्रज्ञचोरवरे कस्याप्युपायस्याप्रभावादितिभावः । श्लेषार्थश्चायं परतो वर्तमानस्य नकारस्य सर्वत्रैवान्वयः सुखात्मकेनापि यद्यस्मादस्माकं चित्तमपहृतं न भवति तस्माद्गृहेषु तांत्रविशत्येव यत् करावपि पादावपि अपहृतौ न भवतः अतो गृहसम्बन्धिकृत्ये तौ तौ च निर्विशत एव अतः पदं निजस्थानं प्रति तौ चलत एव अथो अतः कथं यामोऽन्यत्र कुतो वा करवाम त्वदुक्तिमिति, इति श्लेषोक्तं यमुनातीरगमनादिकं निरस्तं यद्वा, गृहेषु भवता उद्भवता सुखेन अपहृतं चित्तं यत् यस्मात् गृहकृत्ये निर्विशति गृहेषु भवता सुखेनैवापहृतौ करावपि गृहकृत्ये निर्विशतः पदं निश्चितं यथा स्यात् तथा पादावपि तथा तस्माद्चलतः धर्माद्विचलतस्तव पादमूलात्कथं व्रजं न यामः किङ्करवामेति ॥ ३४ ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, गृहवासमुखरक्षार्थमपि न पत्यादित्यागो विधेय इत्याशङ्क्य तत्रापि तस्यैव दोषोट्टङ्कनपूर्वकमाहुः—चित्तमिति । सुखेन सुखरूपतया स्वदर्शकेनेति तदानीं गृहादीनां दुःखरूपताऽप्यर्पिता ध्वनिता सुखेन सहितमिति वा पादौ यौ गृहकृत्ये गमने वा निर्विशतस्तावप्यपहृतौ अतस्तव पादमूलात् पदमेकमपि न चलतः गन्तुं न शक्नुत इत्यर्थः । करयोः पादयोश्चापहारस्तत्सादिन्द्रियशक्त्यपहारात् अत आगमनं च त्वद्गीताकर्षणमात्रेणेति भावः । अथो अस्माद्धेतोः कथं व्रजं याम । ननु, अवशा एवं चेत् मयैवाग्रे गच्छता सह गम्यतां तत्राहुः-तत्र गत्वा किम्वा करवामेति वाशब्दः समुच्चये । यद्यपि चित्तापहारेण सर्वेन्द्रियापहारोऽप्यायाति तथापि विशेषतः करपादापहारोक्तिः पतिशुश्रूषणादिगृहकृत्यस्यान्यत्र निजगमनस्य च परिहाराय, अन्यत्र । यद्वा, यच्चित्तं सुखे निमित्ते सुखे विषये वा पूर्वं स्थितं तद्भवताऽपहृतं सत् इत अपि न प्रविशत्यपि कुतः ? तादृक् कृत्ये कराद्विकं प्रवेशयेदित्यर्थः । ननु, गृहेष्ववर्तेस्तथापि तद्विचारबलेन प्रवेश्यतां तत्राहुः—करावप्यपहृतौ गृहसम्बन्धि-



कृत्ये न निर्विशतः । ननु, तथाप्यत्र तु स्थातुमयुक्तमिति गच्छतैव तत्राहुः-पादौ च भवताऽपहृतौ स्वाभिमुख्येनाऽऽकृष्टौ पदमपि न चलत इति अन्यत्समानम् । अतस्त्वय्येव चित्तं त्वदर्थकृत्य एव करौ त्वत्स्थान एव पादौ प्रविशन्ति नान्यत्रेति सूचितम् अत्र नर्मद वनेऽस्माकं प्रयोजनाभावात् तद्दर्शनार्थं नागताः स्मः चित्तवित्तस्य भवताऽपहरणात् तदुद्देशेनाप्यागताश्चौरं भवन्तं प्राप्ता अपि गृहीतुं नेतुं च तथा क्रोशनार्थं कुत्रापि गन्तुमपि न शक्नुमः भवता करपादापहरणात् अतो हृतधनाः कथं व्रजं यामः ? किम्वा करवामः स्तम्भनादिमहामन्त्रज्ञचोरवरे कस्याप्युपायस्याप्रभावादिति भावः । निषेधार्थश्चायम् । ननु, वैरागिणेन मया गृहादाकृष्टाः सुष्ठु आन्ताश्च कथं गन्तुं शक्नुथ तत्राहुः—गृहेषु भवता उद्भवता सुखेन अपहृतं चित्तं यत् यस्मात् गृहकृत्ये निर्विशति । यद्वा, चित्तं सुख एव न तु भवताऽपहृतं यस्माद्गृहेषु निर्विशति एवं करावपि गृहकृत्ये निर्विशतः परिश्रान्तत्वमाशङ्क्याहुः—पादौ पदमपि कथं न चलतः अपि तु दूरमपि चलत एव ततः कथं न यामः अपि तु याम एव अत्र च किङ्करवामेति ॥ ३४ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गृहेषु गृहकृत्येषु गृहकार्येषु यौ निर्विशतः तौ च भवताऽपहृतावित्यर्थः । पदं पदमात्रमपि ॥ ३४ ॥ ३५ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं"तथातमाचिरं गोष्ठम्" इत्यादि तत्रोत्तरमाहुः—चित्तमिति । यच्चित्तं गृहेषु निर्विशति निर्विवेश गृहाद्यभिनिविष्टं यच्चित्तं इत्यर्थः । तत्सुखेनानायासेन भवताऽपहृतं तथोनापि च यौ गृहकृत्ये गृहकार्येऽभिनिविष्टौ करौ तावपि भवतापहृतौ व्यापाररहितौ कृतावित्यर्थः तथा पादावपि तव पादमूलात्पादमात्रमपि न चलतः अतः कथं व्रजं यास्यामः अथानन्तरं किम्वा करवाम ॥ ३४ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गतिप्रश्नस्योत्तरमाहुः—चित्तमिति । हे सखे ! नो यच्चित्तम् उत तदपि गृहेषु न निर्विशति उपभोगत्वेन न स्मरति कुत इत्यत्राहुः-भवतेति । भवताऽपहृतं तस्मादिति शेषः । "स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः" इति वचनात् करावपि कर्मसाधनेऽपि गृहकृत्ये गृहयोग्यकार्येषु संमार्जनोपलेपनादिलक्षणे न तिष्ठत इति शेषः । अस्मत्पादौ गमनसाधनेऽपि तव पादमूलात् पदम् एकपादन्यासमात्रमपि न चलत इत्यर्थो तस्मात्कथं व्रजं यामः किं वा करवाम इति न ज्ञायते इति शेषः ॥ ३४ ॥

———

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

वयं तवाशाभङ्गकारिण्यो भवामः तेन गन्तुं च शक्यते किन्तु तत्रैव दोषास्तत्र घटन्त इति पुनरतिविदग्धा मध्या धीरा आहुः—चित्तं सुखेनेत्यादि। चित्तं भवता सुखेनापहृतम् अनायासेन चोरितं। ननु, चोरान्तरेण स्वप्रयत्नविशेषेण यच्चित्तं गृहेषु निर्विशति अतश्चित्ताभावान्न भवति किमस्माकं दूषणं तर्हि चित्तं दीयते सचित्ताः सचित्ता सत्यो गृहं व्रजतेत्याशङ्क्याहुः, उत विस्मये करावपि गृह्यकृत्ये न निर्विशतः अतः परं त्वत्सेवायामेव करौ निर्विशतः न गृहकृत्य इत्यर्थः। तेन परं तत्र गत्वैव किं प्रयोजनम्। ननु, तथापि मदाज्ञातो यात वरं गृहकृत्यं मा कार्यमित्याशङ्क्याहुः, पादाविति। तव पादमूलाचरणसमीपात् पदमपि पादौ न चलतस्तयोस्स्तम्भो जातः कथं याम इत्याहुः, यामः कथमिति न गत्वा किं करिष्यथेत्याहुः, करवाम किं वा तदेव न विद्महे किं वा करिष्यामः अथवा यच्चित्तं गृहेषु निर्विशति तद्भवताऽपहृतं संसारतापतप्तम् अस्माकं तु चित्तं भवतापहृतम् अतो गृहेषु सुखे सुखनिमित्तं न निर्विशति सर्वमन्यत्समम्॥ ३४॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदुक्तं वनदर्शनार्थं किमागता इति ततश्च वनवर्णना कृता तत्राहुः—चित्तंसुखेनेति। वनदर्शनेच्छा तदा भवति यदा चित्तं स्वस्मिन् न तिष्ठेत् तत्तु त्वयैवापहृतं तत्रापहारे न तव प्रयासः तथा सति सर्वं नापहृतं स्यात् तदाह—सुखेनेति। भवता वा आनन्दरूपेणापहृतं न हि साक्षात् परमानन्दे सति कश्चित् परम्परया पाक्षिकं साधनं गृह्णाति वनदर्शनं दूरे गृहेऽपि यच्चित्तं निर्विशति अनेन ज्ञानशक्तेरपहार उक्तः नापि मन्तव्यं वने किञ्चित्कार्यार्थमागता इति तदर्थं क्रियाशक्तेरप्यपहारमाह—उत करावपीति। यौ गृह्यकृत्ये निर्विशतः दूरेणापास्तं वनकृत्यं कामेन वस्तुत्व हृ)दैवात् त्वत्स्पर्शेनैव करौ सजीवौ भवतः नोचेन्मृतौ अतः सेवाविधिरपि हस्ताभावात् कुण्ठितः न हि कररहितं कर्मणि कश्चिन्नियुङ्क्ते किञ्च यदृच्छयैव गन्तव्यमित्यभिप्रायेण वनदर्शनं जातमित्युक्तं तदप्यसंभावितं यतोऽस्माकं पादौ द्वावपि तव पादमूलादस्मात् स्थानात् एकमपि पदं न चलतः नान्यत्र गच्छतः पादानां गतियुक्तानां मूलभूतौ त्वत्पादौ तस्यापि चेन्मूलं गताः तदा कथमन्यत्र गच्छेयुः त्वत्पादौ तस्यापि चेन्मूलङ्गताः तदा कथमन्यत्र गच्छेयुः अन्यथा वृक्षाणामपि गतिः स्यात् मूलङ्गतानां अस्मात्स्थानादिति वक्तव्ये यत्तु पादमूलादित्युक्तं ततस्त्वदुगमने न सर्वत्र गन्तुं शक्यते न तु त्वद्व्यतिरेकेणेति ज्ञापितम् अतः कथं यामः शकटादिना प्रेषणीया इति चेत्तत्राहुः अथो अथ तत्र गत्वा किं करवाम यथा शकटादिकं गृहे पातनार्थं साधनमस्ति न चैवं हस्तयोः कार्यकारणे किञ्चिल्लौकिकसिद्धं न केवलं गमनेन प्रयोजनं किन्तु पित्रादिसेवार्थं गमनं तदभावाद्व्यर्थमेव गमनमिति भावः। तदाहुः अथो अथ किं वा करवामेति हस्तनिरपेक्षा कृतिः भिन्नप्रक्रमेण भगवद्भावेन भवतीति तथोक्तम् अनेन स्तनपानमप्यशक्यं निरूपितम् आशाभावे सर्वेन्नैव शोषात्॥ ३४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अन्यास्तु स्वीयं प्रमाणं सरसं द्योतयन्त्यो भोश्चौरचक्रवर्तिन्! न वयमन्यार्थमागताः किन्तु त्वया चोरितं प्रतिस्वधनमेव जिघृक्षव इत्याहुः—चित्तं भवता अपहृतं न च तत्रान्यचोरकेषु तव कोऽप्यधिकः प्रयत्नोऽभूदित्याहुः—सुखेनेति। नेत्ररन्ध्रेषु फूत्कारमात्रेणैवेत्यर्थः। न च तच्चित्तधनमस्माकमल्पतरमित्याहुः—यच्चित्तं गृहेषु सर्वेष्वेव निःशेषेण विशति अतस्तदपहारेण त्वयाऽस्माकं सर्वाण्येव गृहाणि लुण्ठितानीति ध्वनितं वस्तुतो गृहेष्वस्माकं चित्ताभावात्तानि ज्वलन्तु समुद्धवन्तु वा किमस्माकं तैरित्यनुध्वनितम् अनिशयोक्त्या गृहेषु श्रोत्रादीन्द्रियेषु तत्तत्साफल्यार्थं यत् निर्विशति यद्विना सर्वेन्द्रियाण्यपि विफलीभवन्तीति भावः। अतश्चित्तापहारादेव सर्वेन्द्रियाण्यपि त्वयाऽपहृतानीत्याहुः—करावपि यौ गृहकृत्येषु निर्विशतः उतेति नेत्रे श्रोत्रे अपि एतानि सर्वाण्यप्यपहृतानीत्यर्थः। ननु, भो अद्य तावद्गच्छत श्वः परश्वो वा विविच्य यच्चित्तं दास्यामीति तत्राहुः—पादावस्माकं पदमेकमपि न चलतः यच्छिन्नत्यर्थः। अतश्चित्तं देहि तत एव याम इति भावः॥ ३४॥

---

### विशुद्धरसदीपिका।

अथ द्वितीयदिक् स्थिताः प्रतियात ततो गृहानिति यदुक्तं तत्प्रतारणमात्रं त्वयैव चित्तादीनामपहृतत्वेनाशक्यत्वादिति परिहरन्ति -चित्तमिति। यदस्माकं चित्तं सुखेन हेतुना गृहेषु निर्विशति "निर्वेशो भृ[भू]ति भोगयोः" इति कोशात् सुखभोगमनुभवतीत्यर्थः। तत् भवताऽपहृतं मास्तु चित्तं स्वकराभ्यामेव गृहकृत्यं सेत्स्यति चेत्तत्राहुः—करावपि। ननु, हृतज्ञानक्रियाधिकरणाभिरत्र किं कार्यमिति तत्राहुः—गृह्यकृत्य इति। तव सेवायां तु द्वयमपि चलत इत्यर्थः। ननु, तत्र गतानां तत्रत्यकरणीयपरायां चित्तादिकं तत्रैवाविशेदिति तत्राहुः, पादाविति। अत्रागमनं तु त्वद्गीताकर्षणेनेति भावः। नन्वचला मयैव गच्छता सह गम्यतामिति चेन्मैवं मैवमिति परिहरन्ति करवाम किं वेति॥ ३४॥

---

### श्रीरामनारायणकृतभावभावविभाविका।

तथात मा चिरं गोष्ठमित्यस्यापि दाक्षिण्यार्थरूपैकत्वात् द्वितीयार्थे तदशक्तत्वेनैव स्वानधिकारं मत्वोत्तरमाहुः—चित्तमिति। यदोचितं सुखेनाञ्जसा भ्रान्त्यात्मकसुखबुद्ध्या वा गृहेषु निर्विशति तच्चित्तं भवतापहृतं स्वस्मिन्नाकृष्टं त्वयैव निविष्टं यद्वा, यच्चित्तं गृहेषु निर्विशति तत्सुखेन सुखरूपेण भवताऽपहृतं नित्यपरमानन्दघनचक्षुर्विदर्शनेन दुःखग्रामगृहेषु निवसतीति भावः। यद्वा, भवताऽपहृतं यच्चित्तमोनिदाघभवातैव तत्तापोपशमाय अगाधसिन्धुनरुमरीचितोयसदृशगृहेषु निर्विशति तत्सुखेन सुखाब्धिस्वरसाक्षात्कारेण भवतापहृतं भवसंस्थगन्धिकामादितापेन हृतं रहितं जातं तथा च सुखाब्धिलाभेन विगततापत्वेन मरुमरीचिरूपगृहेषु सुखजलभ्रमाभावेन च न तत्र निर्विशति यौ नः

### श्रीरामनारायणकृतभावभावविभाविका ।

कराचपि गृहकृत्ये निर्विशतस्तावपि भवताऽपहृतौ तव सेवामेव रोचयतः प्रतिपदं व्याख्यानन्तु पूर्ववत् । यद्वा, श्रुतिरूपाणां नश्चित्तं तात्पर्यं सुखेन सुखरूपेण भवताऽपहृतं न हि परमानन्दरूपं ब्रह्म विहाय निःसुखे निष्फले गृहाद्यर्थे श्रुतितात्पर्यं सम्भवात फलवदर्थावबोधकत्वाच्छेदस्य तथाकरौ इति अनुष्ठानोपलक्षणं पादाविति पदप्रवृत्तिश्च नस्त्वाद्विपर्ययैवेति भावः । नन्वत्र स्थितानां मद्रूपमाधुर्यदर्शनलुब्धानां नाहन्दशा जाताऽतस्तत्र गन्तव्यं तत्र गमने पुनः पूर्ववदेव भविष्यति तत्राहु—पादाविति । नः पादावपि तव पादमूलाच्चरणसन्निधानात्पदं चरणमात्रमपि न चलत अतो गमनप्रेरकचित्तस्य भवताऽपहृतत्वात् पादयोर्गतिलोपात्कथं व्रजं यामः करयोश्च भवतापहृतत्वात्कथं करवाम तत्कर्मक्षिप्तसाधनत्वसुखत्वभ्रमाभावात् किं करवाम इति भावः । किञ्च, तथापि चित्ताद्यपहरणे गृहादिविसुखत्वापादने गृहगमनार्थेन मुक्तौ च कस्य चित्प्रियं स्यान्ते ब्राह्मणस्त्रपुत्रयोः भोजनतन्निवारणाज्ञापनन्यायापात्तः ॥ ३४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यद्यपि वनदर्शनार्थमागतास्तस्य च ज्ञातत्वादिनः परं प्रतियातेत्युक्तं तत्राव्याहुः—चित्तमिति । गृहादिषु यांचन्तं सुखेन निर्विशति तत्त्वयाऽपहृतम् एवमग्रपि यद्वा, तदपहारेण भगवतः प्रयास इत्याशयेनाहुः, सुखेनानन्दस्वरूपेण तथा च भावाशानन्दस्वरूपे त्वयि लब्धावस्थानं चित्तं गृहेऽपि न निर्विशति दूरे वनदर्शनादौ तत्प्रवेशः तथा करावपि गृहांचितकृत्ये न निर्विशतो दूरे पुष्पफलाद्युपचयः नहि कररहितः कस्मिंश्चित्कर्मणि केन चिन्नियुज्यते इति भावः । तथा च नव पादमूलात् त्वत्समीपात् पादौ पदं न चलतः नान्यत्र गच्छतः तव पादमूलादित्यनेन त्वत्पादसाहित्यं चेत्तदा सर्वत्र गन्तुं शक्नुवन्ति सूचितम् अतो गमनसाधनाभावाद्व्रजं कथं यामः । ननु, भवतीनां पद्भ्यां गमनसामर्थ्यं नास्ति चेत्तर्हि शकटादिना प्रेषयिष्यामीति चेत्तत्राह, करवामेति । अथो अथ तत्र गत्वा किं करवाम तत्तद्व्यापारसाधनचित्तादेस्त्वया ऽपहृतत्वादिति भावः । अतिशिष्टपक्षे न वयं वनशोभादिदर्शनार्थमागताः नापि तव सङ्गार्थमपि तु चोरेण स्वचित्तं गृहीतुमागता इति नर्म व्यञ्जयन्त्य आहुः, चित्तमस्माकमपहृतं केनेति चेत्तत्राहुः भवता चोरचक्रवर्तिना । ननु, भवत्योऽत्यन्तमिथ्यावादिन्यः वनस्थेन हि मया तदायासरहितेन कथमपहृतमिति चेत्तत्राहुः, सुखेनानायासेन वेणुरवादिभूत्यसङ्घाते तदपहरणे को वा तव प्रयास इति भावः । नचेदं स्वल्पमेतदपहारेण सर्वस्यापि गृहादेर्लुण्ठितत्वादित्याशयेनाहुः, यच्चित्तं गृहेषु सर्वेषु बाह्येषु इन्द्रियादिरूपेषु च निर्विशंपेण विशति तदपहृतमित्यर्थः । अतः करावपि यौ गृहकृत्येषु निर्विशतः उभेरयत्नेन नेत्रादीनामपि सङ्ग्रहः । ननु, सम्प्रति गच्छत श्वः परश्वो वा वास्यामीति चेत्तत्राहुः, पादौ तद्विना तव पादमूलात्पदं न चलतः भूतस्य चोरस्य त्यागो न न्याय्य इत्यपि ध्वनितम् अथो अतो व्रजं कथं याम गत्वा च किं करवाम सर्वसाधनचित्तरूपधनाभावादित्यर्थः । यद्वा, किं करवाम चित्तादेः सर्वस्यापहाराच्चौरं भवन्तं प्राप्याऽपि तद्दण्डं दातुं त्वां गृहीतुं नेतुं राजाग्रे आक्रोशनार्थं गन्तुं चाशक्तत्वात्कस्मिनादिमन्त्रज्ञेऽलौकिकचौरे किङ्करवामेति भावः । यद्वा सुखरूपेण भवता चित्तादेरपहृतत्वात् गृहादीनि ज्वलन्तु समृद्धयन्तु वा किमस्माकं तैरतस्तत्रागमनमस्मदग्रे नोच्चारणीयमिति भावः । मानिनीपक्षे । ननु, तिष्ठतु विवादः सम्प्रत्येव भवत्यः समागताः रात्रावत्र विश्रम्य प्रातर्गमिष्यथेति चेत्तत्राहुः, चित्तमिति । सत्यमुक्तं त्वया तथापि गृहेषु भवता जायमानेन सुखेन चित्तमस्माकमपहृतं यस्माद्गृहकृत्येषु निर्विशति करावपि तत्र निर्विशतः । ननु, भवतु तथापि निःसुकुमारत्वात्पदमपि गन्तुमशक्ताभ्यां पद्भ्यां कथं गमिष्यथेति चेत्तत्राहुः, पादौ तव पादमूलात्कथं पदं न चलतः किन्तु चलत एव ततः कथं व्रजं न याम अत्र स्थित्वा च किं करवामः । यद्वा, यद्यपि पादौ पदमपि गन्तुं न शक्तौ तथापि तव पादमूलात्कथञ्चिद्व्रजमेव शनैःशनैर्याम अन्यथाऽत्र स्थित्वा किं करवामेत्यर्थः । निवृत्तिपक्षे । ननु, सर्वासां श्रुतीनां ब्रह्मपरत्वं कर्मणामनन्तात्पर्यविषयत्वात्तदनुष्ठानादेर्वैयर्थ्यं प्राप्तमित्याशङ्क्य तत्त्वज्ञानात्पूर्वं तद्वैयर्थ्यमाशङ्क्य तत्तदुत्तरं नाथः "यत्र तु द्वैतमिव भवति तदितर इतरं पश्यति" इत्यादिना संसारदशायां क्रियाकारकादेः साक्षादभिधानात्तद्वैयर्थ्योऽनवगमात् न द्वितीयः "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादि या तदुत्तरं तद्वैयर्थ्यस्येष्टत्वादित्याशयेनाहुः, चित्तमिति । सुखरूपेण भवता चित्तं मदापहृतं सच्चिदानन्दघनेन प्रत्यगभिन्नं परमात्मनि तं यदा लीनं तदा गृहेषु बाह्येष्वाभ्यन्तरेषु च न निर्विशति अत एव करावपि गृहकृत्ये न निर्विशतः पादौ पदमपि न चलतः यथा च सर्वेन्द्रियव्यापारनिवृत्त्या तत्त्वविदः कर्माधिकाराभावात्तदपेक्षया कर्मानुष्ठानादेर्वैयर्थ्यं नास्ति दोषः—

> "नैव तस्य कृते नार्थो न कृतेनेह कश्चन ।
> न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः" ॥

इत्यादिशास्त्रादिति भावः । अतस्तव पादमूलाद्व्रजं व्रजं कथं याम कर्मकाण्डेऽस्माकं तदानुगुण्याऽसम्भवात् श्रुत्यानुगुण्यं कथं भजाम स्वासामप्यस्मदनुपावित्वात् गत्वा च किङ्करवाम क्रियाकारकादिप्रतिपादकानामस्माकं तदानुगुण्याऽसम्भवादिति भावः ॥ ३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदुक्तं प्रतियात व्रजमिति तदशक्यमित्याहुः—चित्तमिति । यच्चित्तमेतावन्तं कालं गृहेषु निर्विशति तत्सुखेन परमानन्देन त्वभवता अपहृतं स्ववशं कृतं तथा करावपि यौ गृहकृत्ये इत्यर्थे निर्विशतस्तावपि भवताऽपहृतौ स्वचरणस्पर्शालिप्सू कृतौ तथा पादावपि तव पादमूलात्पदमपि न चलतोऽतः कथं व्रजं यामः यास्यामः अथो ऽनन्तरं तव प्रियं किं करवाम व्रजाङ्गनाहितमप्रियं तत्र यत्र करवाम तदाज्ञापयेत्यर्थः ॥ ३४ ॥

---

**सिञ्चाङ्ग ! नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ।**
**नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ! ते ॥ ३५ ॥**

### भाषा टीका ।

जो हम सबन कों चित्त गृह के काम काज में सुख सों लग रह्यो हो, सो चित्त तो तुमने हर लियो, और जिन हाथन सूं घर के काम करती हीं तिन हाथन की शक्ति हर लीनी, और या मन की शक्ति हू तुमने हर लीनी, तासूं अब पाय एक पेंड हू नहीं चलें हैं, ता हू पै आपने ये धुनि बांधि राखी है—कि—"तुम ब्रज को जाओ ब्रज को जाओ" सो आपही कहौ जब हमारे पांय नही चले हैं तब आप के चरणारविन्द के समीपते कैसे ब्रज कूं जांय? और या ठौर जाय करके हू कहा करैं ॥ ३४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतोऽङ्ग हे कृष्ण ! नोऽस्माकं त्वदधरामृतपूरकेण तवैव हासर्सहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिञ्च नो चेद्वयं तावदेको ग्निस्तथा विरहाज्जनिष्यते योऽग्निस्तेन चोपयुक्तदेहा दग्धशरीरा योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयामः ॥ ३५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सिञ्च निर्वापयेत्यर्थः । जलप्रवाहेणाग्निमेवेति रूपकतो ज्ञेयम् आदौ क्रियानिर्देशः परमार्तिवैयग्र्येण न इत्यस्य हृच्छयाग्निना समासान्तः प्रविष्टेनापि सम्बन्धः स्वच्छन्दस्त्वया जनिताग्नेस्त्वयैव निर्वापणं युज्यतेति विवक्षया पूरशब्देनाग्नेर्महत्तापि ध्वनिता अन्यथा अल्पेनैव जलेन निर्वापणासिद्ध्या पूरकेत्यनुपयोगः स्वार्थे कः हासादीनां क्रमेण धृतेन्धनवातत्वन्ध्वनितं हृदि शेते वसतीति हृच्छयः कामः अतस्तत्रिवर्तकौषधस्यान्तः प्रवेशनापेक्षयाऽधरामृतपूरस्य पानं तथाऽन्तप्रतिकादि च सूचितं यद्यपि नायिकानां नायके सम्भोगप्रार्थनं व्यङ्ग्यैवोपयुज्यते न तु साक्षादुक्ततया तथापि लोकोत्तरप्रौढानुरागाणां तासां परमार्तिभरेण विचारापगमात्तन्नात्र विरुध्यते । यद्वा, त्वदधरामृतपूरकेण त्वदधरामृतेन वर्षमयतामिव गतेन श्रोतृजनान् पूरयति आप्यायतीति त्वदधरामृतपूरकं वचनं तेन हृच्छयाग्निं हृदयवर्तिसन्तापं सिञ्च नाशयेति वचनामृतेनाऽस्माकं तापं नाशयेत्यर्थः । नो चेत् यदि न सिञ्चसि ध्यानेनेति मरणे या मतिः सा गतिरित्यादिन्यायेन निजेष्टसिद्धौ परमोत्कण्ठया साधनविशेष उक्तः । यामेति सम्भावनायां प्राप्स्याम एवेत्यर्थः । तत्र चासम्भावना स्वस्वरूपप्रभावेन नास्तीत्याशयेन सम्बोधयन्ति सखे इति । अन्यत्तैर्व्याख्यातम् यद्वा, त्वत्पादयोरेव ध्यानेन चिन्तया यो विरहाग्निस्तेनोपयुक्तदेहाः तत्र ध्यानेनेति विरहाग्नेरधिकोद्दीपने साधनम् यद्वा, विरहजाग्न्युपयुक्तदेहानां गोपीनामिव ध्यानेन पदयोः पदवीम् अन्तिकमित्यात्यन्तसंयोगमित्यर्थः । याम यास्याम एव अतः शाठ्यमात्रं स्त्रीवधमात्रं च तवावशेक्ष्यति वयं तु त्वत्संयोगमवश्यं प्राप्स्याम एवेति यद्वा विरहजाग्न्युपयुक्तदेहा अपि पदयोः पदवीं मोक्ष इत्यर्थः । ननु, कथमङ्गनानां मोक्षः स्यात् तत्राहुः ध्यानेन मोक्षस्यैव चिन्तया वाञ्छयेत्यर्थः । ननु, तथापि नासौ वो घटेत तत्राहुः—सखे इति । सख्येनेदमेव हितं नः क्रियतामित्यर्थः इति महादैन्योऽत्यन्ताभाव प्रार्थनं मोक्षस्यात्यन्ताभावता श्रीभागवतामृते विवृतैव । यद्वा, ध्यानेन या पदवी वैकुण्ठाख्यपदं तां यामेति कदाचिन्निष्कादीनां केषांचिद्दुःखेन मोक्षादिप्रार्थनमिव वृन्दावनविहारैकप्रियायां तासां श्रीवैकुण्ठलोकप्रार्थनमपि दुःखभरादेव । यद्वा, ध्यानविषये या विरहजाग्न्युपयुक्तदेहाः गोप्यस्ता अपि भवत्पदाब्जान्तिकं नयाम नेष्यामः किमुतात्मानमित्यर्थः । इयं प्रेममहोक्तिः किं वा न यामेति सख्येन प्रार्थनमेव । यद्वा, तव पादयोर्ध्यानेन विरहजाग्न्युपयुक्तदेहा या गोप्यस्तासां पदवीं याम मरिष्याम इत्यर्थः । ततस्त्वमनुतप्स्यसइत्यभिप्रेत्याहुः—सखे इति । तासां तेनैव देहेन रासक्रीडाप्राप्तिपक्षे च पत्यादिभिः रुद्धत्वात्तन्मोचनार्थध्यानाच्च त्वयां तासामनागमनेनान्त्यदशामननात् । यद्वा, ध्यानेनापि तव पादयोरन्तिकं यास्यामः किं काका त्वया पश्चात् प्रार्थिता अपि न यास्याम एवेति किं वा सर्वेसामभीयुक्ते अस्मिन् जन्मनि तदसिद्ध्या परस्मिन् तस्यासम्भाव्यत्वात् । यद्वा, विरहजाग्नेरेव उपयुक्ता उचिता देहाः न तु सम्भोगामृतयोग्या यासां ताः अधुनात्र तदसिद्ध्या कालान्तरेऽपि जन्मान्तरेपि विरहस्यैव निश्चेयत्वादिति भावः । यद्वा, जन्मान्तरे ध्यानेनापि ते पदयोरन्तिकं मार्गमपि वा यामेति प्रेमार्तिभरेण प्रार्थनं तत्र च सखित्वेनैव इत्याशयेन सम्बोधयन्ति—सखे इति । अलमतिविस्तरेण अनेन तथातत्पदयोस्तरं हृच्छयाग्निनियोगो सति यत्नाद्धातुमपि शक्नुमः अन्यथा च मरिष्याम एवेति किं तत्र यानादिनेति श्लेषार्थः अङ्ग ! हे महालम्पट ! नः अस्माकं हासावलोककलगीतेन सहजेन जातो यस्तव हृच्छयाग्निस्तं त्वदधरामृतपूरकेणैव सिञ्च अस्माकं मध्ये सा काचिन्नास्त्येव यस्या अधरामृतेन स्वकामाग्निं सेक्ष्यसीत्यर्थः । इति स्वचर्याणां सर्वथा नैरपेक्ष्यं सूचितम् । अथ च स्वाभीष्टपरममधुरवस्तुनि दुर्लभे सति लुब्धैः स्वस्यैवाधरपुटी लिह्यते इति नर्मभङ्गी व्यङ्ग्या नो चेत् यद्येवमश्रुत्वा पन्थानमस्माकं निरुन्धन् दुराग्रहान्न विरमसि तदा वयं स्वपतिविरहजाग्न्युपयुक्तदेहावरम्भयेम वरं म्रियेमहीत्यर्थः । तथापि सखे ! सेन्द्रिये ध्याने स्थितेनापि तव पादयोः पदवीमपि न याम न यास्याम इत्यर्थः ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

तदेवं द्वितीयधिक्कृस्थिता अपि पुनस्तामेवोत्कण्ठा स्फुटमेव वदन्त्यस्तत्पूर्वैरप्यवश्यंभावितां प्रौढ्या निर्दिशन्त्यस्तदापातप्रत्याख्यानेन त्वयि दोषमात्रं पर्यवस्यतीति रीत्या विवक्षितम्

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपसंहरन्ति–सिञ्चेति । निर्वापयेत्यर्थः आदौ क्रियानिर्देशः परमार्त्तिवैयग्र्येण न त्वत्र हृच्छयाग्निनैव सम्बन्धः । तत्पुरुषश्चयो-त्तरपदप्रधानत्वात् हासस्य सम्बन्धिपदं तवेत्येव लभ्यते प्रक-रणबलात् विनापि त्वच्छब्दमर्थबोधे सति तन्निर्देशस्तवया जनि-तान्मेत्यर्थेनैव निर्वापयं युक्तमिति विवक्षया पुरशब्देनाग्रे-ऽदरत्वमपि ध्वनितम् स्वार्थे कः हासावलोकफलगीतियोः क्रमेण धृतवातत्वं ध्वनितं हृदि शेते वसतीति हृच्छयः कामः अत-स्तन्निवर्तनोपचरणस्याप्यन्तःप्रवेशनापेक्षयाऽधरामृतपूरस्य पानं तथाऽनन्यप्रतिकारत्वञ्च सूचितम् । इदञ्च सम्भोगस्य साक्षात् प्रार्थनं तदीयवेणुनानुमाधुर्यमधुमराचितानां लोकोत्तरप्रौढानु-रागार्त्तिनर्त्तितमहोत्कण्ठावगुण्ठिताङ्गनानां रसेनापि न विरुद्धचते निषेधार्थोल्लङ्घनतयैवोक्तत्वात्तु नितरामिति व्यतिरेकेण तदेव द्रढयन्ति नो चेत् ? यदि न सिञ्चसि तदापि ध्यानेनेति "मरणे या मतिः सा गतिः" इत्यादिन्यायेन याम सम्यगेव प्राप्स्याम इत्यर्थः । प्रातःकाले ज्योट्टं तत्र च सखे इति सम्बोध्य क्षेपु स्नेह-मुद्बोधयन्ति अत्रान्वयक्रमेणाभिप्रायाश्चैते । ननु, हासादिजहृच्छयाग्नि-सेकं साधनं मम जलभाजनमत्र किमिव दृश्यते इति परिहास-माशङ्क्याहुः–अमृतेनेति । अमृतेनैव तत् सिक्तं स्यात् ननु जलाद् विना तत्रापि तस्य पूरेण ननु यत् किञ्चिन्मात्रेण स्वार्थे कन् तेनैवेत्यर्थः । ननु, तदपि दुर्लभं कुत्र लप्स्ये तत्रापि तस्य पूरस्या-त्वन्तासम्भव इत्याशङ्क्य कथमिदं गोपयसीत्याहुः, त्वदधरेति । अहो नाम्येनामृतेन तच्छान्तिः स्याद् किन्तु त्वदधरसम्बन्धिनैव तत्रापि तस्याधरस्यन्त्वदुर्युवतीकोटिभिरप्यपरिसमाप्त्येन तत्पूरे-णैवेति महातृष्णा सूचिता एवमग्रे वक्ष्यमाणस्यामृतस्य च परम-वैलक्षण्यं । ननु, ध्यानेन यामेति झटिति देहत्यागं सूचयन्तीनां भवतीनां तत्साधनं न दृश्यते तत्राहुः—विरहेति । अये अन्या इव किं वयमनुरागहीनाः येन वाह्यमग्न्यादिकं तत्साधनं मृग्यामः किन्त्वन्तरेव स्वत एव तदुदेष्यतीति भावः । अन्यत्सैः । यद्वा, एवं विवक्षितमुपसंहरन्त्यो ननु, दुर्घटे ऽस्मिन्नर्थे कथमति त्वरयसेत्या-शङ्क्यातितुःखात् दुर्घटत्वमेव सत्यमित्याहुः–नोचेदिति । ध्यानेपि नैव याम यतः विरहजाग्नेरेव उपयुक्ता उचिता देहा न तु संयोगा-मृतयोग्या यासां ता अधुनाऽत्र तदसिद्ध्या कालान्तरेऽपि जन्मान्तरेऽपि विरहस्यैव निश्चेयत्वादिति ( निश्चितत्वादिति ) भावः । सखे इति तस्यापि तत्र आधिदुःखं दर्शयन्ति यद्वा, झटिति तत्प्राप्त्यभावेन देह-त्यागं सूचयन्त्य आहुः, जन्मान्तरेपि ध्यानेनापि ते पदयोरन्तिकं मार्ग-मपि वा यामेति प्रार्थनं तत्र च सखीत्वेनैवेत्याशयेन सम्बोधयन्ति–सखे इति । अनेन सुमध्यमा इत्यस्योत्तरं भवदाश्रयेदास्यदुर्ग्रहादेहोपि त्याज्यस्त्यक्तेपि तस्मिन् भवान त्याज्य इति श्लोकद्वयमिद-मेश्वर्यमयार्थेऽपि प्रायः समानम् निषेधार्थञ्चायं तस्मात् अङ्ग, हे महालम्पट ! नः अस्माकं हासावलोकफलगीतेन सहजेन जातो यस्तव हृच्छयाग्निस्तं त्वदधरामृतपूरकेणैव सिञ्च अस्माकं मध्ये सा काचिन्नास्त्येव यस्या अधरामृतेन स्वकामाग्निं सेक्ष्यसी-त्यर्थः । इति स्ववर्ग्याणां सर्वथा नैरपेक्ष्यं सूचितम् । अथ च स्वामीप्रपरममधुरवस्तुनि दुर्लभे सति लुब्धैः स्वस्यैवाधरपुटौ लिह्यते इति नर्मभङ्गी व्यङ्ग्या नो चेद् यद्येवमभूत्वा पय्यान अस्माकं निरुन्धन् दुराग्रहान्न विरमसि तदा वयं स्वपतिविरहजा-ग्न्युपयुक्तदेहा भवेम वरं म्रियेमहीत्यर्थः । तथापि ध्याने चिन्तनेऽपि तव पादयोः पदवीमपि न याम न यास्याम सखे इति बाल्य-क्रीडायां प्राप्तसखत्वेनाऽस्मदर्मनिष्ठां जानास्यपीति भावः । यद्वा, नोचेति निश्चये "धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि" इति वत् ततश्च नैव विरहजाग्न्युपयुक्तदेहा वयं ततो ध्यानेऽपि नैव यामेति ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि किं मया विधेयम् ? इत्यत्राहुः–सिञ्चेति । अङ्ग हे कृष्ण ! तवाधरामृतस्य पूरकेण प्रवाहेन नोऽस्माकं हासयुक्तेन तवाऽवलोकनेन मधुरवेणुनादेन च जातं हृच्छयाग्निं कामाग्निं सिञ्च शमय नो चेदयथं न करोषि तर्हि हे सखे ! वयं भवद्वियोगजाग्निना दग्धदेहाः सत्यः त्वद्ध्यानेन साधनेन तव पदयोः पदवीं याम प्राप्नुयाम त्वयाऽनुपभुक्तं व्यर्थमिदं शरीरं त्वद्विरहाऽग्निना दग्ध्वा त्वद्ध्यानेन त्वत्सन्निधिमेव प्राप्स्यामः मृत्वापि त्वां न त्यजेति भावः ॥ ३५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तर्हि भवतीनां किमभीप्सितमित्यत्राहुः–सिञ्चेति । पूरकेण प्रवा-हेण हाससहितावलोकेन फलगीतेन मधुरगानेन जातो हृच्छयः कामः स एवाग्निः तं सिञ्च अभिषिञ्च शमय, नो चेत् न शम-यसि चेत् ? विरहाज्जातेनाग्निना उपयुक्तो गृहीतो देहो यासां तास्तथा ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे विभो ! करणीयं वर्त्तते करिष्यामश्च तदेव त्वम् यदि एवं करोषि तदा तत् करिष्याम एव किं मया कर्त्तव्यमिति चेच्छ्रूयतामिति पुनर्मध्या धीरा एवाहुः–सिञ्चाङ्ग न इत्यादि । हे अङ्ग ! नो गीतजं कथनजं हृच्छयाग्निं सिञ्च हृदि शेते हृच्छयो योऽग्निर्भवदुपेक्षाप्रतिपादकवचनरूपोऽग्निः तं निर्वापय केन त्वदधरामृतपूरकेण प्रशंसायां कः हे हासावलोकफलहास-सहिता भवलोकफलानिरीक्षणसौष्ठवं यस्य नो चेत् यद्येवं न करोषि तदा विरहजाग्न्युपयुक्तध्यानेन ते तव पदयोः पदवीं याम न तु यास्यामः एकोऽग्निर्योऽयं वर्त्तते स तु दाहक एव न मारकः मारकस्तु विरहज एव अयन्तु गीतजत्वात् शाब्द एव तेनानेन शुष्कास्तेन तत्क्षणमेव भस्मीभविष्याम इति वाक्यार्थः ॥ ३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्भगवता शीघ्रं गच्छतेत्युक्तं तत्राहुः–सिञ्चाङ्गेति । वयं शीघ्रमेव गमिष्यामः यदि त्वं प्रतिबन्धं न करिष्यसि अनेन तूष्णींभावेऽपि मरणं परावृत्तौ तु न किञ्चिदुत्कर्षम्

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हे अङ्ग ! त्वदधरामृतपूरकेण त्वदधरामृतप्रवाहजलेन नो हृच्छयाग्निं सिञ्च स चाग्निः त्वयैवोत्पादित इति तत्कारणमाहुः—हासावलोककलगीतजेति । तव योऽयं हासपूर्वकः अवलोकः कलगीतं च ताभ्यां जातो यो हृच्छयः कामः स एवाग्निः हासः कामजनकः अवलोकः सन्धुक्षणकर्त्ता गीतवायुरिव तत्रापि कलगीतं सर्वतो वायुः सोऽपि जातो हृदये हृदयगामि च त्वदधरामृतमेव पूरो हि वस्तु प्रवाहयति तस्यात्र सिञ्चनकरणत्वेनोक्त्याऽग्नेरतिमहत्त्वं ध्वन्यते अतो युक्ता सिञ्चनोक्तिः अलौकिकश्चाग्निः अलौकिकेनैव शाम्यति कन्दर्पो हि मृतो ज्वलति स हि जीवन् अन्यत्रदग्धां त्यजति नान्यथा अमृतेनैव च जीवति तत्रापि न देवभोग्येन अन्यथा तैरेव जीवितः स्यात् सृष्टिकारणत्वात् नास्य मोक्षः अतोऽतिगुप्तेनैवाधरामृतेन तस्य जीवनम् अतः सिञ्चनमेवोक्तम् अन्यथा निर्वापणमेव प्रार्थयेयुः कामे जीवति जीविष्यामः अन्यथा स स्वयं ज्वलन् अन्यानपि ज्वालयिष्यति तदाहुः—नोचेदिति । सिञ्चनेन यदि मन्त्रवादीव न जीवयिष्यसि तदा विरहेण जनितो योऽग्निः तेनोपभुक्तदेहा ध्यानेन ते पदयोः पदवीं यामः स्वयं स्वतन्त्रमार्गाज्ञानात् त्वं च सखा येन मार्गेण गमिष्यसि तेनैव वयमपि यास्यामः । यथा त्वमधुनाऽस्मभ्यमार्त्तिप्रदस्तथा वयमपि तथाभूतास्तुभ्यं पश्चात्तापादिहेतवो भविष्याम इति गूढाभिसन्धिस्ते पदयोः पदवीं यामेति षष्ठ्यामिति ध्येयम् देहे गते त्वन्तर्यामित्वात् क्वचिद्गन्तव्यं देहान्तरस्य तु नोत्पत्तिः बीजस्य दग्धत्वात् हरेणैव दग्धो न कामः प्ररोहति स विपरीतो रक्षोभवति तत्रापि विशिष्टो विरहः एकान्ताभावरूपो वा अनेन त्वया सह एकान्ताभावे विरहत्वं यद्यपि पूर्वोक्ताग्निनैव दाहः सम्भवति तथापि भस्मसात्करणेन तस्य सामर्थ्यं भावरसर्वाङ्गेषु सूक्ष्मावयवेष्वप्यग्निः प्रविश्य नोद्भूतो भवति यथा वह्निसम्बन्धेन शुष्कं काष्ठं ज्वलति तत उपायैरलन्तं नतत्वाच्च पदयोर्गमनम् अतो गमनं दूरापास्तं प्रत्युत मरणमुपस्थितमिति शीघ्रं प्रतीकारं कुरु ॥ ३५ ॥

---

### श्रीविश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो समयोगसमयान्यसमयेऽपि सुन्दरीणां निर्बन्धाः काया दिदृक्षिता ये आसंस्ते चीरहरणादिने दृष्टास्तथैव मधुपानान्यसमयेऽपि भावयतीनामासां निर्लज्जं वचनं शुश्रूषितमास्ते तदधुनापि न श्रूयते हन्त हन्त वेणुनादेन काममयेन नोन्मादिताः पुनश्च वाचःपेशीर्विह्वलीकृताः यथावस्थ लज्जाविवेकधर्मधैर्यादीनि तिष्ठन्ति तावत्तमन्यपहृतं तदर्प्यताः प्रायः सलज्जमेव भाषन्ते न त्वाभ्यन्तरभावमधुनापि वाचा सम्यगुद्घाटयन्तीति मर्त्तास परामृशन्ति सति श्रीकृष्णे .काश्चित् मुग्धतमा उन्मादसञ्चारिप्राबल्येन विपर्यस्तीकृतप्रकृतय आहुः, सिञ्चेति । अत्र हासेत्यस्य सम्बन्धिपदमर्थात्तवेत्येव लभ्यते ततश्च अङ्ग हे कृष्ण ! तव हाससहितेनावलोकेन कलगीतेन च जातः प्रोद्बुद्धः प्रोद्दीप्तो यो हृच्छयः काम एवाग्निस्तं तवैवाधरामृतपूरेण सिञ्च निर्वापय स्वार्थे कः येनैवाग्निः प्रोद्दीप्यते तेनैव प्राप्तसिवेकेन यदि निर्वाप्यते तदैव तदपराधोपशमः अन्यथा अग्निदाता गृहादिदाहोत्थं पापं प्राप्नोष्येवेति भावः । अत्र काममित्यप्रयुज्य हृच्छयपदप्रयोगेनैवं ध्वन्यते अस्माकं कामो हि हृदि शेत एव तञ्च त्वया विना कोऽपि प्रबोधितुं न शक्नोति त्वञ्च वंशीनादेन सहासमत्कर्णरन्ध्रद्वारा हृदयं प्रविश्य तत्र शयानं कामाग्निं प्रबोध्य हासावलोकघृतमधुभ्यां कलगीतवातेन च प्रादीप्य तत्रत्यानस्मत् प्राणान् दग्धुमुपक्रमसे अतस्तद्दाहपापाद्बिभेषि चेत् तं निर्वापय नच तत्प्रोद्दीपने तन्निर्वापणे वा तवायासलेशोऽपि यतस्ते हासावलोकस्तस्याग्नेरुद्दीपकः अधरामृतं च तस्य निर्वापकमिति तद्वस्तुद्वयं तव मुखचन्द्र एव वर्त्तते अतो दुर्ललितराजपुत्रस्य तवाग्निज्वालननिर्वापणात्मिकैव खेला भूयसी भूरिशो दृष्टा नत्वग्निज्वालनमयेव एषा त्वद्येन दृश्यते इति नत्वेतानि मे साहजिकान्येव हास्यावलोककलगीतानि एतैर्यदि युवतयो ज्वलेयुस्तदा कुत्र कुत्र कतिशोऽपि मया स्वाधरामृतैः सिञ्चितव्याः कर्त्तव्येति चेत्सत्यं परस्परसखीसमूहे प्राप्त एव तव तदुद्भूतादनुतापाद्वयं हठो यास्यतीत्याहुः नोचेदिति विरहाग्निना उपयुक्तदेहा दग्धशरीरा योगिन्य इव ध्यानेन तव पादयोः पदवीं याम अधुनैव प्राप्नुयाम अयमर्थः वयं पूर्वजन्मस्वकृततपस्कानेवात्मनो जानीमः यदेतज्जन्मनि त्वं नाङ्गीकुरुषे तस्मादधुना तपश्चरणार्थं न बाह्यं लौकिकं वह्निं गृह्णीमः हृच्छयाग्नित्वद्विरहाग्न्योः स्वत एव सत्त्वात् तत्रापि त्वद्विरहाग्निनातिप्रबलीभविष्णुना हृच्छयाग्निरपि मन्दीकरिष्यते एवातो विरहाग्नावेव प्राणेषु हूयमानेष्वस्माकं सङ्कल्पश्चायं भोः कृष्णविरहाग्ने ! कृष्णपादस्पर्शमाशासाना वयं त्वयि स्वप्राणान् जुहुमस्तस्मात् कृष्णस्य पादयोः पदव्यामन्यजनैरलक्षिता अस्मांस्तथा स्थापय यथा अस्मत्कुचयोरुपर्येव तस्य पादौ पततां न तु भूमाविति ततश्च त्वत्पादभारेणैवोपशान्तहृच्छयाग्नयो वयं सिद्धमनोरथा एव भविष्यामस्त्वञ्चानिच्छन्नप्यस्मत्कुचस्पर्शसुखं प्राप्नुवन्नपि जीवनानुतापमेव भूयांसं प्राप्स्यसीति सखे इति सख्यादेवैवं चिक्रीर्षामः सखीरप्यस्मांस्त्वमेवं सन्तापयसि चेद्वयमपि त्वां सखायमेवं कथं नानुतापयाम इति ध्वनिः किन्तु प्रेमहतकः खलु तदपि त्वदनुतापदुःखं कोटिगुणीकृत्यास्मभ्यमेव दास्यत इति जानीमः । किं कुर्मोऽस्माकं दग्धललाटमेवम्विधमेव विधात्रा सृष्टं तस्मादपरिणामदर्शिन् ! कृपासिन्धो ! स्वानुतापवह्निर्बीजं किमर्थं वपसि कथं वा तत्फलभोगिनीरस्मांश्च करोषि मुञ्च हठमस्मानङ्गीकुर्विति भूयांस एवाऽनुध्वनयः ॥ ३५ ॥

---

### विशुद्धरसदीपिका ।

तदेवमधीरतया दशमीमिव दशामासादयन्त्यः प्रत्याख्याने च तस्मिंस्तव दोषं पर्यवसाययन्त्यो विलम्बमसहमाना विधाचितमुपसंहरन्ति—सिञ्चेति । ससम्भ्रमम् आदावेव क्रियानिर्देशः परमार्त्तिवैयग्र्येण तथा निर्वापयेति वक्तव्ये सिञ्चेत्युक्तिरग्नेराधिक्यसूचनाय न इति त्वदिति चासाधारण्यम् अधरामृतेनेति वैलक्षण्यं वह्निमात्रस्य जलसेकमात्रशम्यत्वागमात् पूरकेणेति

### विशुद्धरसदीपिका ।

प्राचुर्यं कामिन्यत आहुः—हासेत्यादि । तत्र हासावलोकेत्यनेन कामाग्नेरुद्दीपितत्वं कलगीतेत्यनेन फूत्कारं हृच्छयेत्यनेन नित्यत्वं सूचितम् ततश्च दास्यार्थत्वात्साक्षात्सम्भोगप्रार्थनमप्यविरुद्धम् एवं प्रार्थितेपि शैथिल्यमालक्ष्य व्यतिरेकेण भीषयन्त्य आहुः—नोचे द्दीति । वयमिति सगर्वोक्त्याऽसाधारणत्वं विरहेति हृच्छयाग्निरेव परिणतो विरहाग्निः तदुक्तं भावप्रदीपे—

"यद्यपि कामिनः साक्षात्पश्यन्ति परमेश्वरम् ।
तथापि कामजो भावो विरहाद्यनुबन्धनः" ॥ इति।

यद्यपि "प्रेमैव गोपरामाणां काम इत्यगमत्प्रथाम्" इति तन्त्रोक्तेर्नैनासु कामः सम्भवति तथापि तादृशसाधकविशेष सङ्ग्रहाय तथानुकरणमविरुद्धमिति ज्ञेयम् ततश्चैकस्तावत्कामाग्नि स्तदनन्तरं जनिष्यते विरहाग्निरित्येकस्यैव नामान्तरोपादान मत्याहितसूचनाय तेनोपयुक्तदेहाः दग्धशरीराः ध्यानेनेति योगिन इवाविज्ञातसखस्य ते पदयोः पदवीं याम इति ननु यास्याम इति कालविलम्बासहत्वं सद्य इत्यवश्यप्राप्यत्वं प्रयत्नस्मरणीयत्वं चाभिहितं तदुक्तं श्रीभगवद्गीतासु

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" ॥

इति । यद्वा, सखित्वेन तथापि दुःखं भविष्यतीति अथवा देहा न्तरप्राप्तावपि नित्यसखस्य तव सङ्गो भविष्यतीति दृष्टैवायं तथाग्रह इति सूचितम् । यद्वा, सखीत्वापादनेन कामवासनाभ्य गमं तव हृच्छयपदेनाभाग्यस्य त इति दक्षिणमेवासां दृष्टी कृतमिति दिक् अधीरत्वशाच्छ्लोकद्वयेनैव वाक्यपूर्त्तिरिति ॥ ३५ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

किञ्चार्थित्वसमर्थत्वयोरधिकारिविशेषणतयाऽस्माकं गृह कृत्यसमर्थत्वयोरभावात्त तत्राधिकारस्तव तु मुरलिकानादेन कृताह्वानतयाऽस्मद्विवासमुखार्थित्वात्सत्कर्तुं समर्थत्वाच्चाधिका रित्वेन तदनुष्ठानस्यावश्यकत्वादाबाह्य कृत्वा यजनं विना विसर्जनानौचित्यात् एवं धर्मानुष्ठानं विधेहीति कामेष्टिविधिमाहुः— श्रुतिरूपा गोप्यः सिद्धाः देवता फलरूपा चाङ्ग न इति प्रक्ष हे प्रिय ! हास एवाध्वर्यवं कर्म कामाग्न्याधाने प्राधान्यात् अव लोकस्तु कृताकृतावेक्षकब्रह्मकर्मफलमिति कामबीजोपलक्षकतया मन्त्रात्मकऋक्पाठरूपहौत्रं गीतमेवोद्गात्रं तैर्मनोरथो गुणगणो मेन्धनेन जातं मनोजाग्निं हृच्छयेति गणितमुक्ताहारादिसर्वतो भद्रा लङ्कृतोरोवेदिकासंनिहितहृत्कुण्डेशयं तत्राहितं त्वदधरयोः स्रक्स्रुवस्थानापन्नयोर्यदमृतं स्नेहात्मकं माधुर्यरसरूपसिता न्वितगोघृतं तत्पूरकेण प्रवाहेण सिञ्चेति होमाधिक्यनिर्देशः यद्वा, पूरकमिष्टिं पूरकान्तेन पूर्णाहुतिरूपेण सिञ्च नः शब्दस्य योग्यतावशात्समासान्तर्गतेनापि हृच्छब्देनान्वयः यद्वा देवताफल रूपा नोऽस्मानेवोद्दिश्य सिञ्च न हि तव सर्वेश्वरस्य स्वतः परमानन्दघनत्वेन फलरूपस्य नः प्रेमभक्ती विनाराध्यं फलं वा भगवति "राधनाराध्यते मया, भगवान्भक्तभक्तिमान्" इत्यादि वचनात् नोचेत्त्वयैवमनुष्ठानाभावे सखे इति सख्यपक्षेऽप्युचा निर्वाह्य तत्सख्या स्वाधिकारानुरूपतया निर्वहनीया अतो वयमेव स्वाधिकारमनुसृत्य "यच्छूद्वया विधया उपनिषदा वा कुरुते तदेव वीर्यवत्तरं भवति" इति श्रुत्याध्यानान्वितं यागस्य बलवत्त्वात् "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इति विधानात्ते ध्यानेन ते विरहजाग्न्यनुपयुक्तदेहाः कामितवस्तुरीयाख्ये पादयोः पदवीं याम इत्येकयैवेष्ट्या नत्तव प्राप्त्या परस्परफला न्तराभावादुभयोरिष्टसिद्धिरिति भावः । यद्वा, अत्यातुरतयान्यदशा मापन्ना इव कुलजाङ्कुलवज्ञामुत्सृज्य स्वयं प्रार्थने रसभङ्गशङ्कापङ्क्तिं कालाङ्कमनाशङ्क्य स्वविवक्षितं स्फुटमाहुः । सिञ्चेत्यादि संभ्रमात् निर्वापणस्यार्थे सिञ्चनोक्ति क्रियायाः पूर्वनिर्देशश्च त्वदधरामृतपूरकं येत्यत्र सामान्यरोगवतामौषधस्यान्तरसम्भवेपि दग्धानां तदमृतामृते नान्या गतिः । ननु, बहूनां दग्धानां योऽधरामृतपूरकेण बिन्दुना किं भविष्यतीत्याशङ्क्याह—पूरकेणेति । यद्वा, नो नोऽधरयोरमृत मित्याशयमालक्ष्याहुरमृतपूरकेणेति 'धंशच्छिन्ना तापशुष्का विधा दग्धापि जीविता । वंशी जाता मृतापूरा ते धरामृतपूरिता ॥ तस्ते ऽधरामृते कावा विश्वसेन्न हि धीमति ।जीवयाशु वनदयामा धरामृतसूतं मृताः" नसरणिमन्वयः सेचनमाशङ्क्य तत्व दिति शब्दाऽर्थ नोऽग्निशमनस्य त्वदधरामृतधाराधीनत्वमेवेत्य साधारणनिर्द्धारणं कामाग्निं सिञ्चयन्त आहुः—हासेत्यादि।कामा ग्न्युद्दीपनहासावलोकसहकृतकलेत्युपलक्षितकामबीजाग्निवंश धमनरूपगीतप्रादुर्भूतहृच्छयाग्नि वहिरग्नेः पलायनसम्भवेपि हृच्छ याग्नेः पलायनासम्भवात्त्वदधरामृतसेचनं विनाऽस्मदृग्गानुप पत्तिरेवेति भावः। नोचेदेकत्वखण्डनादिवर्द्धितकामाग्निर्द्वितीयस्त्व द्वैमुख्य प्रभवो विरहाग्निस्तयोरुपयुक्तदेहाः—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" ॥

इति स्मृतेः । ते ध्यानेन वयं स्वयं याम तथा च नस्त्वदुपकारः। यद्वा, यद्यपि चन्द्रिकस्तवैव उपालिन इति भवति तथापिन स्त्रीवधदोषस्तथापि सखे ! नास्माकं त्वयि दोषारोपौचित्यं वयं स्वयमेवोपयुक्तदेहा इति न तव कालात्मकस्य कालाङ्कशङ्का यद्वा, सखे इति सम्बोधनेनाविज्ञातस्य सखस्य ते पदयोः पदवीं योगिन इव याम । यद्वा, "सयुजा सखाया" इति श्रुतिसिद्धसख्य तद्वैमुख्ये नः श्रुतिबाह्यत्वापत्त्या वयं तत्र सहामहे तवापद्धर्म द्वैमुख्यं तथात्वापत्तेधर्मनिञ्चकुनिमदापाखण्डत्वं सख्यानुसारं भज । यद्वा, नो वाहे सख्येन तथापि तन्दस्यानेयेनि पृथा ऽयमा ग्रहः। यद्वा, कामो रुद्रेण दग्धोऽनङ्गस्तदङ्गविदः सम्मोहनी दर्शने भ्रंशयामास यथाऽधुना त्वं नोऽस्मास्वर्थैनैवावमन्यसे मन स्त्वे तु तदा मन्यसे एवंनि सख्यं नावोचाम । यद्वा, साङ्गत्वे ऽनङ्गत्वे तव प्राप्तिः समा किंत्वनङ्गत्वेन प्राप्तौ तवाभेदेन वैमुख्यं नो माभूदिति विभीम । यद्वाऽविज्ञातसखत्वेनाङ्गजोपि रावणा गृहवासात्सीताग्निप्रवेशवत् गोपगृहवासाच्छङ्कामाकलय्य विर हाग्नौ परीक्षसे एवं तु नान्याचिता इति त्वद्ध्यानेन विरहा ग्निनोपयुक्तदेहाः प्रह्लाद इवाशीताः परीक्षां दत्त्वा सदेहा एव त्वत्पदयोः पदवीं यामेति माध्यकरमापायां नो दाहशङ्का तवेति भावः ॥ ३५ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं धर्षिणादिगतास्तदुक्त्वा प्रार्थयन्ते—सिञ्चेति । अङ्ग, हे भगवन् ! अस्मद्धृच्छयाग्निं सिञ्च ननु निर्वापय त्वद्विषयककामस्य परमसुखरूपत्वात् यतस्त्वयैवोत्पादित इत्याहु:-हासेति । तव य उपहासपूर्वको ऽवलोकः कलगीतं च ताभ्यां जातो यो हृच्छयः कामः स एवाग्निस्तत्र हासः कामजनकः अवलोकः सन्धुक्षणकर्त्ता गीतं वायुरिव तत्रापि कलगीतं सर्वतो वायुः सिञ्चनं च न वाह्यघृतादिना न स्वर्गस्यामृतेन न चन्द्रस्य सुधया वा सम्भवति तेषां यथा कथञ्चिदुदरान्तेशयोग्यानामन्य ऽनभिलषितत्वेन हृदये प्रवेशायोग्यत्वादित्याशयेनाहुः—त्वदधरामृतपूरकेणाऽलौकिकेनापूर्वकेणापि सिञ्चनोक्त्या यथोक्ताग्नेः परममहत्त्वं सूचितम् सिञ्चनप्रार्थनया भगवांश्चपयः काम एवास्मज्जीवनं जाठराग्निवदिति ध्वनितम् अन्यथा सस्य यदनुष्ठेयं तदावेदयन्ति—नो चेदिति । सिञ्चनेन यदि न जीवयसि तर्हि विरहजाग्निना उपयुक्तदेहाः दग्धशरीरास्ते पदयोः पदवीमन्तिकं योगिवद्यामः प्राप्नुयामः उपयुक्तपदेन त्वदुपभोग्य देहिनां यथोक्ताग्निनोपभुक्तत्वमयुक्तमिति ध्वनितम् ननु, सिञ्चनेनातिप्रवृद्धः कामाग्निर्दाहको भविष्यतीत्याशङ्का-निरासाय विरहाग्निनेत्युक्तम् तथा चातिप्रवृद्धोऽपि जाठराऽग्निर्यथेष्टभोजनलाभे सति न दहति अनशनादिना तदलाभे तु दहति तथा हृच्छयाग्निरपि स्वभोग्यालाभे तदाशानिवृत्त्या विरहाग्नि-रूपेण परिणतो दहतीति भावः । यद्यपि तव प्राप्तौ नास्त्यस्माकं किञ्चिदपि प्रतिबन्धकं तथापि भगवदुपभुक्तदेहानां भगवत्प्राप्ति-रभिलषिता तद्विपर्यये महद्दुःखमापतत्यखिलरूपेणावतीर्णस्य तव यथाऽस्मन्मनोरथपूर्त्तिर्भवेत्तथाऽनुष्ठानं योग्यमिति सूचयन्त्यः सम्बोधयन्ति-हे सखे ! इति । अथवा यद्यप्यस्मन्मरणे तव नास्ति काचिद्धानिस्तथापि सखित्वात्पश्चात्तापस्तु भविष्यतीति सम्बो-धनाशयः ॥ अनभिज्ञापक्षे अनेन निर्वन्धाङ्कदर्शनार्थं यथा वस्त्रा-हरणलीलारब्धा तथा निर्लज्जवचनश्रवणार्थमियं लीला समारब्धेति विज्ञाय विस्पष्टं प्रार्थयन्ते—सिञ्चेति । आदौ क्रियापदप्रयोगेणोत्कण्ठाधिक्यं सूचयन्ति—अङ्ग, हे प्रिय ! नः कामाग्निं सिञ्च निर्वापय यतस्तव हासावलोककलगीताभ्यां जातश्चोद्दीप्तस्तथा चास्मद्धृदयशयमेव कामाग्निं हासावलोकाभ्यां अधरोत्तरारणीभ्यां कलगीतलक्षणेन मन्थन-दण्डेन प्रबोध्य वाचः पेधैः प्रदीप्य तत्रस्थानस्मत्प्राणान् दग्धुमुपक्रान्तोऽसि नेदमुचितमतस्तज्जनितपापाद्भिभेषि चेत्तर्हि तं निर्वापय येनैवाग्निः प्रदीप्यते तेनैव पश्चात्तापेन झटिति यदि निर्वाप्यते तर्हि तदैव तत्पापं निवर्त्तेत इति भावः । ननु, सम्प्रति ममान्तिके जलपूर्णभाजनाऽभावात्कथं सिञ्चामि तथा-ऽञ्जलीनामाग्रहस्तर्हि यमुनासन्निधौ चलनीयमिति सोपहास-माशङ्क्याहुः—अमृतेन तत्राप्यग्नेः परममहत्त्वात्पूरकेण स्वार्थे कन् ननु, जलमपि यत्र दुर्लभं तत्राऽमृतं कुतः स्यात् ? तद्बिन्दोरपि दुर्लभत्वात् तत्पूरः कुत इत्याशङ्क्य कथमस्मज्जीवनसाधनं गोपायसि प्रत्यक्षोपलभ्यमानस्य गोपनायोगादित्याशयेनाहुः—त्वद-धरेति । अहो नार्णवेनामृतसमुद्रेणापि तच्छान्तिरतोऽस्तु तद्दौर्लभ्यं येनामृतेन तच्छान्तिस्तत्तव मुखचन्द्र एवास्त्यतो नास्ति तव कोऽप्यायास इति भावः । अनेन ज्वालनोपशमनयोरुभयोरपि स्वायत्तत्वादुभयविधा क्रीडोचिता नत्वेकविधा दुर्लीलाकर्तृषु राजकुमारेष्वपि तथा दर्शनादित्यपि ध्वनितम् हृच्छयाग्निरित्यने-नान्तरीयदाहात्मको रोगविशेषः त्वदधराख्यपात्रविशेषं मुखे निधाय पीतेनाऽन्तःप्रवेशसमर्थेन तत्रस्थामृतपूरकेणैवोपशान्तिं गमिष्यति नत्वन्यैः कोटिभिरप्युपायैरिति ध्वनितम् ननु, मम स्वाभाविकैर्हासादिभिर्यदि यूयमग्नौ ज्वलेयुस्तर्हि कुत्र कति वा स्वाधरामृतदानेन चिकित्स्या इति चेत्तत्राहुः—नो चेदिति । यदि न सिञ्चसि तर्ह्ययमेकोऽग्निस्तेन शोषितदेहास्तथा विरहजाग्निना दग्धशरीरास्ते पदयोः पदवीं सान्निध्यमधुनैव ध्यानेन प्राप्नुयामः "अन्ते मतिः सा गतिः"इतिन्यायात् प्राणान्विहायापि प्रेष्ठसन्नि-धानं सम्पाद्यमिति स्वप्राणेभ्योऽपि स्नेहाधिक्यं सूचयन्त्यः सम्बोधयन्ति—हे सखे ! इति । यद्वा, पूर्वजन्मन्यकृततपस्का वयमतो विरहाग्निना प्राणान् जुहुमः ततस्तव पादयोः पदवीं मार्गं प्राप्नुयामस्तद्रूपा भविष्यामस्ततोऽनिच्छन्नोऽपि तव पादावस्मत्-स्तनेष्वेव पतेतां न तु भूमौ ततश्च त्वत्पादभारेणैवोपशान्त-हृच्छयाग्नयो वयं सिद्धमनोरथाः भविष्यामस्त्वञ्चानिच्छन्नप्यस्मत् कुचस्पर्शसुखं प्राप्नुवन्नपि स्वीयानुतापमेव भूयांसं प्राप्स्यसि तथा च सखीरस्मांस्त्वमेव सन्तापयसि चेत्तर्हि वयमपि त्वां सखायमेव कथं नानुतापयाम यस्तु प्रेमहतकस्त्वदनुतापदुःखमपि कोटिगुणीकृत्याऽस्मभ्यमेव दह्यते इति जानीमः । किन्तु मोऽस्माकं दग्धललाटमेवंविधमेव विधात्रा सृष्टं तस्मात् भोः परिणामा-दर्शनकृपासागर ! स्वानुतापवल्लीबीजं किमर्थं वपसि कथं वा फलभोगाशीरसांश्च करोषि शुश्रासदाग्रहमङ्गीकुर्वस्मानित्या-शयः । यद्वा, अकर्त्तव्यप्रार्थनामाकर्ण्यापि विमुखमालक्ष्याहुः—नोचे-द्भयसिति । चेत्तावत्पर्यन्तं कामाग्निना कथं दग्धा इत्याशङ्क्य तत्सिञ्चनाशया सञ्जीवनाय वयमपि अतःपरं तन्निवृत्त्याशा अग्नि र्विरहाग्निश्चेत्यग्निद्वयसत्त्वे जीवनं दुर्लभमिति भावः । ननु, अस्तु तेन मम का हानिरिति चेत्तत्राहु—ध्यानेनेति । तथा च निरव धिकदुःखं दातुं प्रवृत्तोऽसि तादृशं दुःखं तुभ्यं दातुं नास्त्यस्माकं सामर्थ्यं यस्माद्विरहेण तव दुःखानुदयात् संयोगस्यापि तादृश-दुःखजनकत्वेऽप्यस्मिन्जन्मनि तस्य दुर्लभत्वादिदं शरीरं दग्ध्वा तेन पादयोर्मार्गभावं यामः तेन च सर्वदा संयोगेनैवकिञ्चिधं तव दुःखं दास्याम इति भावः । तथापि परस्परदुःखप्रदानं न सख्यधर्म इत्याशयेनाहुः—हे सखे ! इति । यद्वा, नन्विदानीमिदं दुर्घटं जन्मान्तरं स्यादित्याशङ्क्याहुः नो चेदिदं दुर्घटमेवेति चेत्तर्हि ध्यानेनापि ते पदयोः सान्निध्यं न यामः यतः विरह-जाग्नेरेवोपयुक्ता उचिता न तु संयोगामृतयोग्या देहा यासां ता अधुनैव जन्मान्तरेऽपि विरहस्यैव निश्चयादिति भावः । तस्मा-त्त्वया सम्पादितं सख्यं वृथैव सम्पन्नमिति सम्बोधनाशयः ॥ मानिनीपक्षे अङ्ग, हे लम्पट ! नोऽस्माकं सहजेन सादिना जातो यस्तव कामानलस्तत्त्वदधरामृतपूरकेणैव सिञ्च, तादृशी अग्न्युप-शामकतादृशामृतदानयोग्यायाः कस्याश्चिदस्माकमभावादिष्टे मधुरादिवस्तुनि दुर्लभे दृष्टे सति स्वोष्ठपुटी लोके यथा लिह्यते तद्वदिति नर्म व्यञ्जनम् यद्वा, नोऽस्माकं तव ध्यानित्वाद्यामेवाधरा-मृतेन पूरकेणेत्यर्थः । बलात्कारमालक्ष्याहुः, नो चेद्बलादस्माधरा-मृतपानाय प्रवर्त्तसे चेत्तर्हि वयं स्वपतिविरहजाग्न्युपयुक्तदेहा-भावे सन्निवेशमहि तथापि ध्याने चिन्तनेऽपि ते पदयोः मार्गमपि

**यर्ह्यम्बुजाक्ष! तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।**
**अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग ! स्थातुं त्वयाभिरमिता वत पारयामः ॥ ३६ ॥**

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यास्याम न यास्याम आलक्ष्य सख्याद्स्मात्स्वभावं जानासीतिसम्बोधनाशयः। निवृत्तिपक्षे "तरतिशोकमात्मवित्, ब्रह्मविदाप्नोतिपरं, नान्यः पन्था विद्यतेऽयनाय"इत्यादिश्रुत्या परमपुरुषार्थानन्यसाधनत्वज्ञानस्यास्मदवलोकनादिना यथाकथञ्चिदपि जातस्य करुणामृतधारयाभिपिञ्चनवर्द्धनेन समुचितमिति प्रार्थयन्ते-सिञ्चेति। अङ्ग, हे परमात्मन् नोऽस्माकं श्रुतीनां हासपूर्वकं प्रसन्नतापूर्वकमवलोकनं श्रवणपूर्वकं मननं कलयन्ति सर्वतश्चित्तवृत्तीः सङ्कर्षतीति कलं तव नद्गीतं गानं निदिध्यासनं च ताभ्यां जातो यो हृच्छयस्य सर्वाश्रयस्य कामादेर्दाहकत्वादग्निस्तज्ज्ञानाग्निं स्वदोष्ठपुटनिःसृतवाङ्मयामृतपूरकेण कृष्णद्वैपायनाद्यात्मना त्वं सिञ्च वर्द्धय यथा यथोक्ताग्निस्तत्तद्रागादिकल्पितकुतर्कजलप्रवाहेर्नोपशाम्येत् तथा कुर्वित्यभिप्रायः कृष्णाद्यात्मनावतीर्णस्य भगवतो वचनामृतत्वमुक्तम्—

"प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥
जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः ।
यस्यास्यकमलगलितं वाङ्मयममृतञ्जगत्पिबति ॥

इत्यादिना । ज्ञानस्याग्निरूपत्वमुक्तं भगवता—

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥
यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥

इत्यादिना । तत्सेचनं तेनैव कृतम्—

"नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्" ॥

इत्यादिना । विपक्षे दोषमाहुः नोचेन्नासिञ्चेस्तर्हि वयं तत्तद्वादिप्रतिपादितेन श्रुतिषु प्रत्यगभिन्नपरमात्मनिरूपणेनास्तीत्यादिरूपेण तव विरहजत्वाग्निनोपयुक्तदेहाः भक्षितस्वरूपाः नष्टाः भवेम तथापि ते पदयोः पदवीं तत्त्वं ध्यानेन याम तत्राभिप्रायवन्तो भविष्याम वस्तुतस्त्वन्यथाभावस्य वादिसहस्रैरपि कर्तुमशक्यत्वादिति भावः। यस्माद्वाग्धर्मयोः सख्यं वर्ततेऽतस्तौ कदापि न विमुक्तौ भवत इति सम्बोधनाशयः ॥ ३५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवदनुरक्तिमन्यत्र निरक्तिञ्चाहुः-सिञ्चेति द्वाभ्याम् । हे अङ्ग, प्रियतम! नोऽस्माकं भवदीयेन हाससहितेनावलोकेन अवलोकनेन मधुरेण गीतेन च जातं हृच्छयाग्निं कामाग्निं स्वदधरामृतपूरकेण सिञ्च शमय नोचेदेवं कामाग्निशमीकरणाभावे हे सखे! वयं कामाग्निना दग्धप्रायाः अपि पुनरपि विरहजाग्निनोपयुक्तदेहाः दग्धदेहाः सन्तः ते पदयोः पदवीं ध्यानेन याम प्राप्नुयामः इति ॥ ३५ ॥

———

भाषा टीका ।

हे कृष्ण! ये तुमारे हास पूर्वक अवलोकन ते और मधुर वंशी के गीत से उत्पन्न भयो जो कामाग्नि ताकूं तुम अपने अधरामृत के प्रवाहते सींचो। नहीं तौ हे सखे! हम सबन के देह या तुमारी विरहाग्नि के उपयोग में आय-जावेंगे, तब पाछिरियां हम योगीन की नाईं ध्यान सौं तेरे चरणन की पदवी को प्राप्त होवेंगी॥ ३५ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, स्वपतीनेवोपगच्छत त एनमग्निं सिञ्चेयुरिति चेत्तत्राहुः— यर्हीति । रमाया लक्ष्म्या दत्तक्षणं दत्तोत्सवं दत्तावसरं वा तदपि क्वचिदेव न सर्वदा अरण्यजनाः प्रिया यस्य तस्य तव अरण्यजनप्रियत्वादरण्ये क्वचिद्यर्ह्यस्प्राक्ष्म स्पृष्टवत्यो वयं तत्र च त्वयाऽभिरमिता आनन्दिताः सत्यस्तदारभ्यान्यसमक्षं स्थातुमपि न पारयामः तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, महाकामिन्यः श्रीवलदेवेऽपि युष्माकं भक्तिर्दृश्यते अतस्तमेव कामपालं यात किं वा अन्यदीया यूयं मया कथं स्वीकार्या इत्याशङ्क्य सशपथमाहुः-यर्हीति । हे अम्बुजाक्षेति परमसौन्दर्यं सूचितं तवं स्वरूपे किं वा अधोभागः तवस्प्राक्ष्म तदीयत् सम्बन्धं प्राप्ताः स्म इत्यर्थः। एषा प्रेम्णा विनयोक्तिः सदा रमयतीति रमा लक्ष्मीस्तस्या अपि क्वचिदेव दत्तक्षणं अतोऽरण्यजनानामस्माकं त्वद्रमणायोग्यत्वाभावेऽपि ते प्रियत्वस्येति परमकारुण्यं सूचितम् अन्यसमक्षमिति यदि कदाचित् कथञ्चिदन्येषामन्तिके तिष्ठेम तदा परोक्षमेव न तु साक्षात् सम्मुखे अङ्ग इति यदि वा कथञ्चित् समक्षं तिष्ठेम तदा च परमदुःखेनैवेत्यर्थः। स्थातुमपि किमुत उपवेष्टुं शयितुं वेत्यर्थः तच्च त्वयैव नागरशेखरेण सम्पादितमित्याहुः, त्वयाऽभिरमिता इति। वत खेदे निश्चये वा अन्यस्तैर्वोपपातम् । यद्वा, रमायाः सेव्यमपि तव पादमूलं अरण्यजनप्रियत्वादरण्यजनानामेव दत्तक्षणम् अतः क्वचित् कस्मिंश्चित् स्थाने काले वा यर्हि यावत् अस्प्राक्ष्म क्वचिद्दत्तक्षणमिति वा क्वचिदनिर्वचनीयदेशे इत्यर्थः । तावदारभ्य त्वयाऽभिरमिताः सन्तोषिताः यद्वा, स्वप्नादौ रतिविशेषं नीताः सत्यः अन्यत्सतानं यद्वा, अहो

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

महामोहनकाबान्तरे त्वदङ्गसङ्गाशया वा गृहे गत्वा तिष्ठेम 'तदपि न घटते महाधूर्त्तेन त्वया गृहसुखस्याशेषस्यैव विलुण्ठनादित्याहुः—यर्हीति । स्पर्शने हेतुद्वयं रमाया दत्तक्षणमिति रमाय रमणाय आदत्तक्षणं गृहीतावसरम् अरण्यजनानां प्रियस्येति च त्वयाऽभिरमिताः सत्यः कदाचिदस्प्राक्ष्मेति तत्र निजाविवेकदोषो निरस्तः अतस्तत्प्रभृतिकिमप्यन्यन्न रोचते कथं गृहं यामेति भावः । यद्वा, अरण्यजनप्रियस्य तव या रमा श्रीराधा तस्याः पादतलं अन्यत्समानं तदैश्वर्यं विनेदमर्थद्वयं यद्यपि तत्रैव सापि समागतास्ति तथापि तत्सङ्गाभिलषितिनिष्ठा विज्ञापनेनान्याः सर्वा अपि तस्यामिव स्वेषु तस्य प्रीतिं जनयितुं तथोचुरिति ज्ञेयम् अनेनाथवेत्यस्योत्तरं स्वाभाविकप्रेमविशेषेणैवागताः स्म नत्वन्यजनवत् साधारणप्रेम्णेति श्लेषार्थः । हे अरण्यजन ! सदा अरण्यचरत्वात् अरण्यमेव जनः परिजनो यस्येति वा प्रियस्य पत्युः पादतलं यर्हि अस्प्राक्ष्म कथं ? तव रमाय रमणाय क्वचित् कुत्राप्यंशे अदत्तक्षणं अदत्तावसरं तत्प्रभृति त्वयाऽभिरमिताः तु अनेन शुभावहेन विधिना अभिरमिता वयं तु अन्यसमक्षं स्थातुमपि अशक्तत्वेन न पारयामः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, कथं निरपराधे मय्यपराधः कल्प्यते मदीयस्वाभाविकसौन्दर्य्यादिदर्शनेन कामिनीनां चञ्चित्तादिकं क्षुभ्यति तत्राहं किङ्करवाणि किञ्च यदि गृहकृत्येषु न शक्तिस्तथापि कुलवधूनां युष्माकं तत्रैवावस्थानं युक्तं तत्राहुः यर्हीति । हे अम्बुजाक्ष यर्हि यदा अस्मदनिर्वचनीयपुण्योदयसमये क्वचिदपि दुर्लभे देशे त्वयाऽभिरमिता निजभावव्यञ्जनया नन्दिताः सत्यस्तव पादतलमस्प्राक्ष्म सूचकेन वाक्येन इति "पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन" इत्यत्र पूर्वकृतव्याख्यानुसारेण कयापि तया यथाकथञ्चित् लब्धस्य पादतलस्पर्शस्य तत्कार्ष्ण्येव प्रसिद्धेः कृतकात्यायनीव्रतानां तु तत्स्पर्शस्याङ्गीकरणमात्रतात्पर्य्याद्याप्तसङ्गा अपि प्राप्तसङ्गाभिरात्मैक्यं प्रकटय्य ताभिर्मिलित्वा प्रोचुरिति ज्ञेयम् । कीदृशं पादतलं रमाया दत्तक्षणं तस्यामपि नूनमर्पितमहोत्सवमित्यर्थः । ननु, स्वप्न एवायं भवन्तीनाम् अन्यथा नित्यमपि तथाचापि तत्स्यात् तत्राहुः—अरण्यजनेषु पुलिन्दीहरिण्यादिष्वेव सन्ततनिजदर्शनादिदानेन प्रीतिकर्त्तुर्नतु व्रजजनेषु ततोऽस्माकं तु सुतरामेव दुर्लभत्वेत्यर्थः । इति रमाया अस्माकञ्च योग्यानां परित्यागात् तादृशानां च स्वीकारात्कृपाधरमञ्च सूचितः । तदेवं यर्ह्यस्प्राक्ष्म तत्प्रभृतिः नान्येषां समक्षं स्थातुमूर्द्ध्वावस्थानमपि कर्त्तुं पारयाम अन्यदर्शनमस्मभ्यं न रोचत इत्यर्थः । अत एव एव कोऽप्युपायान्तराविद्यामवः स्पर्शगुणा इति भावः । ननु, सिंहपाचादिभ्यः ! सदा गोष्ठजनमध्ये वसथैव तत्राहुः—मञ्जुः सुखेन अनायासेन ततो वत्सादेव तत्र वसाम इति भावः । ऐश्वर्य्यपक्षे क्वचित् स्पर्शने हेतु क्वचित् केषु चिदादिभावेषु रमाया दत्तक्षणं स्वयं तु अरण्यजनप्रियस्य वृन्दावनवासिनां श्रीगोपादीनां प्रेम्णा तदवस्थाभिचारिणः अहो अभाग्यं तथापि यर्हि कदाचिदेवास्प्राक्ष्म अन्यत् समानम् ॥ अत्र तेषां व्याख्याने अरण्येति तज्जनसम्बन्धेनैवेत्यपि दैन्यमेवेति अनेनाथवेत्यस्योत्तरं स्वाभाविकप्रेमविशेषेणैवागताः स्म नत्वन्यजनवत्साधारणप्रेम्णेति निषेधार्थश्चायम् अये साधु स्मारितं सखे ! इत्यनेन यतो बाल्यक्रीडासख्येन भवतीनां स्पर्शोऽपि जातोऽस्तीत्याशङ्क्याहुः—यर्हीति । यर्हि यदा तव बाल्ये वानरादिप्रियस्यैव सतः पादतलं रमाया रमणया दत्तावसरं तदभिसारोन्मुखं बभूवेत्यर्थः । तत्प्रभृति तदपि नास्प्राक्ष्म किमुतान्यदङ्गं कथम्भूता अपि त्वया अभिरमिता बाल्ये कारितक्रीडा अपि अत एवान्येषां श्वश्र्वादीनामपि समक्षं स्थातुं पारयामः अन्यथा तैरपि द्विष्येमहीति भाव इति ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दत्तक्षणां दत्तावसरम् अस्प्राक्ष्म स्पृष्टवन्त्यः ॥ ३६–३७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु,स्वस्वपतय एवाधरामृतं सिञ्चेयुस्तत्राहुः—यर्हीति । हे अम्बुजाक्ष ! अरण्यजनानां मुनीनां प्रियस्य तव रमायाः लक्ष्म्याः दत्तक्षणा दत्तोत्सवं दत्तावसरं वा तदपि कदाचिदेव न सर्वदा अरण्यजनप्रियत्वादिति भावः । एवम्विधं पादतलं यर्हि यदा वयमस्प्राक्ष्म स्पृष्टवत्यः अरण्यजनप्रियत्वादरण्ये क्वचिद्यदा स्पृष्टवत्यः तत्र च त्वयाऽभिरमिता अभिनन्दिताः सत्यस्तत आरभ्य अङ्ग हे कृष्ण ! अन्यसमक्षं स्थातुमपि न पारयामः पुरुषान्तरसमक्षमवस्थातुमपि न शक्नुमस्तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यर्हि यदा क्वचिद्वने दत्तक्षणां दत्तावसरम् अस्प्राक्ष्म स्पृष्टवन्त्यः अरण्यजनः संन्यस्तजनः तत्प्रभृति तदानीमारभ्य अन्यसमक्षम् अन्यजनाभिमुखं न पारयामः न शक्नुमः यत अद्भुतमाश्चर्यं तव महिमा अनेन त्वदङ्गस्पर्शनानन्तरमन्याङ्गस्पर्शनशङ्का निवारिता ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु, उपभुक्तं द्रव्यमस्मदुपयुक्तं न भवति भवत्यश्च पतिमत्यः तेनास्मद्योग्या न भवथेत्याशङ्क्याह—पतिमत्य ऊचुः यर्हीत्यादि हे अम्बुजाक्ष ! यदि यदा कदाचित् कुत्रापि धूलीखेलादौ बाल्ये तव पादतलम् अस्प्राक्ष्म स्पृशाम तत्प्रभृति अन्यसमक्षं स्थातुं न पारयामः अस्तु तव सम्पर्कः तदिदमन्यसम्बन्धित्वमस्माकं लोकप्रथैव न वास्तवं त्वत्प्रिया एव वयं तव कीदृशस्य वृन्दावनजनदयितस्य अत एवाऽस्माकं स्पर्शो जातः पादतलं कीदृशं रमाया दत्तक्षणं दत्तोत्सवं दत्तावसरं वा अवसरे हि सा तत्स्पर्शं लेभे वृन्दावनजनास्तु

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

सदैव स्पृशन्तीत्यरण्यजनप्रियत्वं नचान्यत्र किं प्रमाणं यदस्य संमतं स्थातुं न पारयामेति स्वविशेषणद्वाराऽऽहुः—वयं कीदृश्यः त्वयाऽभिरमिताः त्वया सर्वगुणशिरोमणिना कथमन्यथा स्वीकरिष्यामहे अत उचितमेवान्यसमक्षं स्थातुमसामर्थ्यमस्माकमिति शेषः ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च, यदप्युक्तम् अथवा मदभिस्नेहात् आगता इति यदस्माकं स्नेहः कुतः तत्र याथार्थ्यं शृणु इत्याहुः—यर्हीति । हे अम्बुजाक्ष! दृष्ट्यैव तापनाशक ! यर्हि यस्मिन् क्षणे तव पादतलं अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षम् अङ्ग: सामस्त्येनापि स्थातुं पारयामः साक्षाच्चरणस्पर्शो दुर्लभः यत्र पुनः पादः प्रतिफलितः तत्पादतलमुच्यते रमापि तेनैव जीवति तदुक्तं नागपत्नीभिः "यद्वाञ्छया श्रीर्ललनाचरत्तपः"इति अतः तत्फलस्थानीयं रमायाः क्षणं सुखं तेनैव दत्तं कस्मिन्हृदये समागतं सुखं तत्रैव भवतीति तस्य स्पर्श एवास्माकं भूमिष्ठस्य न तु लक्ष्मीवद्धृदये तत्तलमायाति अस्माभिर्विचारितं लक्ष्म्या चेदेतत्प्राप्तं तपसा चाश्रयपरिहारेण तदाऽस्माभिरपि चाश्रयपरिहारेण तन्निष्ठतया स्थातव्यं किञ्च, अरण्यजनाः प्रियाः यस्य तेनापि सर्वसङ्गपरित्यागेन स्थातव्यं सङ्गाभाव एव भगवत्तोषहेतुरिति अरण्यं हि सात्त्विकं वैष्णवं च एतेन पुलिन्दीरमारणं वा पादतलसम्बन्धिकुङ्कुमसम्बन्धेनैव ता अपि प्रिया आसन्निति तेन पादतलस्य फलपर्यवसायित्वं प्रभुप्रीति साधकत्वं च सहजमिति वयमप्यात्मनि तथैव जानीम इति भावः । स्फुटमिदं न वक्तुं शक्यमित्येवमुक्तम् अतः त्वत्प्राप्त्यर्थं नान्यसमक्षं स्थातुं शक्नुमः सर्वथा त्वां यो न प्रपन्नः शक्त्यभावस्तद्धर्मप्रवेशात् यो हि यस्य घातकस्तद्भावापत्तौ तस्याग्रे स्थातुं न शक्तो भवति यथा व्याघ्राग्रे देहाभिमानी तथा भगवदीयः भगवद्व्यतिरिक्तो हि तद्भावं नाशयिष्यतीति यथैवं सूक्ष्मेक्षिका तत्रान्यस्य स्थाने गमनं तस्य च देवतात्वेन भावनं दूरापास्तम् अतः प्रीतिमात्रस्तुति यां सा भद्रीयसी अनन्यभावा एव वयं लक्ष्मीवत् किञ्च, यथा सर्वपरित्यागेन लक्ष्मीश्चेत् त्वां शरणं गता तदा अभिरमिता जाताः तथा वयमपि जाताः सर्वदैव स्वप्ने त्वत्सम्बन्धं प्राप्नुमः अन्यथा जीवनमेव न स्यात् एवं भुक्तपूर्वा वयं नान्यत्र प्रेषयितुमुचिता इति ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, तर्हि स्वस्वपतीनेवोपगच्छत न एवैनमग्निं सिञ्चेयुस्तत्राहुः—यर्हीति । हे अम्बुजाक्षेति त्वद्वदनदर्शनक्षणमारभ्यैव वयं भ्रमरीभूय स्थिताः स्म इति "चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः" इति रसशास्त्रोक्तेः । प्रथमं लोचनालोचनिदर्शनेनास्माकं पूर्वरागप्रवर्तकमिति भावः । तत्रापि यर्हि यस्मिन्नेव क्षणे तव पादतलं कस्मिंश्चिद्गोवर्द्धनादिकुञ्जप्रदेशे अस्प्राक्ष्म कुचाभ्यां स्पृष्टवत्यो वयं कीदृशं रमाया दत्तक्षणं वैकुण्ठवासिन्या लक्ष्म्या नारायणप्रियाया अपि रमणाभिलाषणमोत्सवदायकं "यद्वाञ्छया श्रीर्ललनाचरत्तपः" इति नागपत्नीवचनाद्गर्गादिमुखतः श्रुतात् अतो वनवासिनीनां गोपस्त्रीणामस्माकमभिलाषमयोत्सवदायकं तत्राभिलाषे किमाश्चर्यमिति भावः। ननु, लक्ष्म्या अप्यभिलषणीये वस्तुनि कुतो वः प्राप्तियोग्यतेत्यत आहुः—अरण्यजना गोपजातय एव प्रिया यस्य तस्य तव तत्प्रभृति तं क्षणमारभ्य अन्येषां स्वस्वपतीनां गोपस्त्रीणामस्माकं समक्षं स्थातुमपि न पारयामस्तान्दृष्ट्वा मनसि घृणोत्पद्यत इति भावः । किञ्च, न केवलं वयमस्प्राक्ष्मैव अपि तु त्वया अपि सर्वतो भावेन रमिता यथेष्टं सम्भुज्य पुरुषायनीकृता अपीत्यर्थः । तेन सम्भुक्तपूर्वा अस्मानन्यत्र न प्रस्थापय पादयोस्ते पताम इति काकुध्वनितः ॥ ३६ ॥

---

### विशुद्धरसदीपिका ।

अथ तृतीयदिक्स्थिताः मद्वचनं दास्यश्चात्मनि कामवासनाश्रममपि निवारयन्त्यस्तद्व्यवहारेऽपि ग्लानिमावेदयन्त्योऽथवा मदभिस्नेहादित्यस्योत्तरमपि प्रदर्शयन्त्यः स्वाभिप्रायगोपनेन वञ्चनाय च पूर्वासां सवासनत्वमवलम्बमाना आहुः—यर्हीति । यदारभ्येत्यर्थः । तत्प्रभृतीति वक्ष्यमाणान्वयानुरोधात् हे अम्बुजाक्षेति कैशोरं सूचितं तव पादतलमिति पादशब्दो गौरवाभिप्रायेण अस्प्राक्ष्म स्पृष्टवन्त्यः कीदृशं रमाया दत्तक्षणं श्रीराधाया दत्तोत्सवं " आत्मना रमया रेमे " इति ब्रह्मसंहिताभ्यः रमापतेरिति वक्ष्यमाणाच्च । अत्र स्वाधीनपतिकायां तथा व्यवहारस्यानुपपत्त्या पादशब्दोऽयं स्वभावविनिमयेन पुरुषायितं सूचयति अन्यथा रसाभासापत्तेः । यद्वा, पादतलमित्यस्य देहलीदीपवदुभयत्रान्वयः ततश्च तव रमायाश्च पादतलमित्यर्थः । कुत्रेत्याकाङ्क्षायां क्वचिदिति साकूतं यत्र क्वचिदित्यर्थः । त्वया ज्ञायतेऽस्माभिश्चेति तूष्णीं स्थयमिति भावः । यद्वा, तव रमाया एव पादतलमिति शुद्धसख्यं सूचितम् ननु, यत्किञ्चित्सूचनीयमिति तत्राहुः, अरण्येत्यादि । अरण्यजनाः पुलिन्दीजनाः प्रिया यस्य तस्य तत्समक्षं विहारस्यासङ्कोचादेव मुक्तं तेषां वा प्रियस्येति "पूर्णाः पुलिन्द्यः" इत्यादिप्रागुक्तं सङ्गमितं तत्प्रभृति तदारभ्य (अभ्य) समक्षमित्यादिगतार्थम् अङ्ग: स्वातन्त्र्येण परतन्त्रतायां नोऽस्माकं दोष इति भावः । अभिरमिताः आनन्दिताः अभिरामतां प्रापिता वा एतच्चानः प्रागपि निभृतविहारः सूचितः अत्र प्रमाणं पाद्मे—

> "बाल्येऽपि भगवान् कृष्णः कैशोरं रूपमाश्रितः ।
> रेमे विहारैः विविधैः प्रियया सह राधया" इति ।

तत्रैवान्यत्र "रेमे श्रिया ऽसौ जगतां जनन्या"इति दर्शितं प्राक् एतदनुसारेण श्रीमत्सुधानिधौ—

> "श्रीमद्राधे ! त्वमथ मधुरं श्रीयशोदाकुमारं—
> प्राप्ते कैशोरकमितिरसाद्वर्धनी माधुर्यागम ॥
> इत्थं बाल्ये रहसि कथया नित्यलीलान्वयः श्रीः—
> ज्ञातावेशा प्रकटसहजा किन्तु दृष्टा किशोरी" इति ।

एवं च प्रकटाप्रकटलीलायां नित्यविहारः श्रीराधायैवेति

### विशुद्धरसदीपिका।

दर्शितं मतश्च प्रथमसमागमो रासक्रीडायामेवेति मतं साधकचरीगणापेक्षया प्रकाशभेदेन वा सङ्गमनीयं प्रकाशभेदश्च स्वीकृतः श्रीप्रबोधैः यथा—

"एकं सख्यापि नो लक्षितमुगमि लसन्नित्यमाहात्म्यकान्तम्—
नदूहदयं द्वारतोऽन्यद्व्रजति नवगृहे ऽन्यत्तु तन्नर्मशर्म।
अन्यद्वृन्दावनान्तर्विहरदथ परं गोकुलंप्रापयागम्—
विच्छिद्यन्यपदेवं लसति बहुविधं राधिकाकृष्णरूपम्" ॥

इति मुख्यः प्रकाशस्तु " गोप्यैकया युतस्तत्र परिक्रीडति नित्यदा" इति ब्रह्मयामले दर्शितः नित्यंदति आदिपुराणे "कुञ्जकुञ्जगता क्रीडा कदाचिद्विरमेत्न हि" इति न चैव प्रकटाप्रकटलीलयोर्भेदवैयर्थ्यमिति वाच्यं "कदाचिद्द्वारकायान्तं प्रकाशं विहरत्यसौ" इति श्रीकृष्णयामलादावुभयोरपि दर्शितत्वात् विवृतमिदं भक्तिमञ्जूषायाम् ॥ ३९ ॥

---

### श्रीरामनारायणकृतभावविभाविका।

किञ्च व्रजं यात पतीन् शुश्रूषध्वम् इति कथनमनुचितमसमर्थं नियोगानुपयोगादित्याहुः—यर्ह्यम्बुजाक्षेति । तत्र श्रुतिरूपोक्तिः हे अम्बुजाक्ष ! हृत्कमलसाक्षिन्निति नास्मद्धृदयात्तिरोऽस्मद्दुर्पेक्षोऽचिंतीति भावः अरण्यजना "आरण्यमावर्तयेत्"इत्यादिश्रुत्याऽरण्यावर्तनपरा जनाः परमहंसाः प्रिया यस्य तेषां प्रियस्य वा अरण्ये उपनिषदि जानिर्भेषां मन्त्रादीनां तेषां प्रियस्य तात्पर्यगोचरस्य ते एवाभिव्यञ्जकतया प्रिया यस्यैते वा तस्य तव पादतलं "पादोऽस्य सर्वाभूतानि"इति श्रुतेः पादो विश्वं तस्य तलम् आधारमधिष्ठानमिति तत्सर्वाधिष्ठानमिति तत्सर्वाधिष्ठानात्मकस्वरूपं यर्हि कचित् अस्प्राक्ष्म अध्यारोपापवादन्यायेन लक्षणावृत्त्या गोचरीकृतवत्यः । ननु, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुत्या कथं लक्षणाप्यसङ्गे मयि भवतीनां प्रवृत्तिस्तत्राहुः—रमाया दत्तक्षणामिति । तव स्वया शक्त्या विहरतः तस्या एव दत्तस्तस्फूर्त्यात्मकोत्सवं राधाविहारिणं त्वां वयमिव वयमस्प्राक्ष्म "क्वचिद्व्रजात्मना च चरतोऽनुचरेन्निगमः" इत्यादिवचनात्मगुणप्रवृत्तास्तदध्यासिकसम्बन्धेन तदधिष्ठाने निर्गुणेऽपि त्वयि पर्यवसिता त्वया चाभिरमितास्तं त्वौपनिषदं "वेदैश्च सर्वैरहमेव वेद्यः" इति स्त्रीत्वेन स्त्रीकृता इति भावः तत्प्रभृति अन्येषां तत्तन्मन्त्रस्तुरत्येन प्रतिमा स मानानां देवानां तदंशावतीर्णगोपानां वा समक्षं यथा स्मात्तया स्थातुमपि न पारयाम नित्यश्रुतीनां नित्यदेवपरत्वेन नित्यत्वानुपपत्तेः मुनिरूपोक्तिपक्षे तु हे अम्बुजाक्ष ! कमलनयन ! यर्हि दण्डकारण्यजनप्रियस्य तत्कुलोत्पादनार्थेनारण्यं गतस्य रावणघातस्य राजेष्यश्वमेधिगविजयादावपि संभवात् तज्जना एव वयं प्रिया यस्येति वा तस्य तव पादतलमित्यादरेण त्वामेव रमाया दत्तक्षणं दत्तोत्सवं यद्वा तस्या दत्तावसरं तथापि भगवत्या राधया इत्यस्मत्सुलाग्येव दत्तावसरमन्यथा त्वद्वृक्षो नित्यनिवासिनी परमेश्वरी कोवा दुःखमुखकीटां दत्तुं समर्थः कचित् अस्प्राक्ष्मास्मदनुरागभावमालक्ष्य व्यापकविग्रहेण युगपत् स्वप्नकुतस्त्यामाविर्भूतमालिङ्गितवत्यः अभिरामेण रामेण त्वयाभिरमितास्तत्प्रभृति अन्यसमक्षं स्थातुमपि न पारयाम अन्यतयो योगाद्यभिमुखतापि न रोचते इति भावः । साधनसिद्धव्रजकुमार्युक्तिपक्षे तु सम्बोधनं पूर्ववत् यर्हि अरण्यजनानां वृन्दावनवासिनीनां नः प्रियस्य ता वयमेव प्रिया यस्येति वा अस्माकं व्रतकार्शितानां कृपया अयमेव वरदानाय यमुनोपारण्यं गतस्य पादतलं रमाया श्रीराधाया नित्यं दत्तोत्सवं कचिदस्प्राक्ष्म सन्निधानाच्चीरग्रहणामिषेण स्पृष्टवत्यस्तथा च क्ष्वेल्यादिनाभिरमिताः पूर्वमपि त्वय्येव निविष्टचित्तत्वेन चीर्णव्रताः तत्प्रभृतितु अन्यसमक्षं स्थातुमपि न पारयामः वतेति सर्वत्रोपेक्षा अथवा खेदे अङ्गेति प्रीतिसम्बोधनसमानम् अङ्ग इति पाठे तु स्वातन्त्र्येण न स्थातुं पारयाम इत्यपि समान प्रियासख्युक्तिपक्षे तु यर्हि अरण्यजनेषु अस्मासु प्राणप्रिया यस्य तस्य तव रमायाः प्रियायाः पादतलं रमाया राधायास्तव च पादतलं वा कचिदत्वं वेत्सि वयं वा दत्तक्षणं दत्तोत्सवं यथा अस्प्राक्ष्म स्पृष्टवत्यः त्वया चाभिरमिताः प्रिया प्रसादाधानुनीता इत्यनेन पूर्वविहारोऽपि सूचितस्तदुक्तं पद्मपुराणे—

"बाल्येऽपि भगवान्कृष्णः कैशोरं रूपमाश्रितः।
रेमे विहारैर्विविधैः प्रियया सह राधया" ॥

इति अप्रकटनित्यलीलाभिप्रायं वा "कुञ्जकुञ्जगता क्रीडा कदाचिद्विरमेन्नहि" इत्यादिपुराणवचनात् तत्प्रभृतीत्यादि समानम् ॥ ३९ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु यद्यपि निःसीमप्रेमवत्यो भवत्यस्तथापि मर्यादापालनार्थं पत्यादिसन्निधौ स्थित्वैव मदाराधनं कर्तव्यमितिचेत्तत्राहुः—यर्हीति । हे अम्बुजाक्ष ! यर्हि यत्प्रभृति तव पादतलं वयमस्प्राक्ष्म स्पृष्टवत्यस्तत्प्रभृति अन्यस्य समक्षं स्थातुमपि न पारयामः अशक्नुम इतःपरं तत्समक्षे स्थितकोटिनरकखेदाधिकखेदं करोतीति सूचनाय वतेत्युक्तं किञ्च नैतावन्मात्रमपि तु त्वयाभिरमिताः बालभावमारभ्य त्वया सार्द्धं त्वत्प्रसादात् क्रीडामपि लब्धवत्यः अम्बुजमन्तःकरणं कमलमश्नुते व्याप्नोतीत्यम्बुजाक्षः तथाचान्तःकरणवृत्तिस्त्वं सर्वं जानन्नपि किमेवमाग्रहं करोषीति सम्बोधनाशयः स्वस्य भगवत्पादतलस्पर्शयोग्यतामपि सूचयति कचिदरण्यजनाः प्रिया यस्य तथा च वयमप्यरण्यजनत्वात् क्वचिदस्प्राक्ष्मेति भावः । इतः परमन्यत्र कुत्रापि स्थातुमशक्ता इत्यत्र हेतुमाहुः—रमाया लक्ष्म्याः दत्तोत्सवं दत्तावसरं वा तदपि कचिदेव न सर्वदा तथा च रमाया अपि यत्प्रार्थ्यं दुर्लभं तदेव पादतलं स्पृष्ट्वाऽन्यसमक्षे स्थातुमस्माकं का शक्तिरिति भावः । यद्वा, हे अम्बुजाक्ष ! दृष्ट्यैव तापनिवारक ! यथा लक्ष्म्याः चाञ्चल्यं विहायैतत्प्राप्तं तथास्माभिरपि सर्वतश्चाञ्चल्यं परित्यज्य तत्प्राप्तये तदेकनिष्ठतैव संपादनीयेत्याशयेनाहुः—रमाया इति । किञ्चारण्यजनप्रियस्य सर्वसङ्गविनिर्मुक्तेषु वने स्थित्वा तदाराधनपरेष्वेव तव प्रीतिदर्शनात्तत्प्रीत्यर्थं तत्साम्यमेवास्माकमपि सम्पादनीयमित्याशयः । किञ्च स्वप्ने सर्वदा त्वयाभिरमिता अपि जाता अन्यथा जीवन-

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

स्यैव दुर्लभत्वात्तस्माद्वयमन्यत्र गन्तुं स्थातुं च न समुचिता इति भावः । क्वचिदज्ञ इति पाठस्तत्राऽज्ञः सर्वभावेन स्थातुमित्यर्थः ॥ अतभिज्ञापक्षे ननु, कामाग्नितप्तानां यदि गृहकृत्येषु नास्ति शक्तिस्तथापि कुलाङ्गनानां युष्माकं पतिसन्निधावेव स्थातुमुचितमतः स्वपतीनेवोपगच्छत त एवैनं कामाग्निमपि सिञ्चयन्तीति चेत्तत्राहुः—यर्हीति । हे अम्बुजाक्ष ! तव नेत्रकमलदर्शनक्षणमारभ्यैव वयं भ्रमरीभूय स्थिताः स्मेत्युत्पन्नचक्षूरागेण तदवलोकनसङ्गादिकान् किमेवं ब्रवीषि "चक्षूरागः प्रथमं चित्तसङ्गस्ततोऽथ सङ्कल्पः" इति रतिशास्त्रं किन्न जानासीति भावः । तत्रापि यर्हि अस्मद्भाग्योदयवशो कस्यांचिदेव क्वचिदपि दुर्लभगोवर्द्धनादिकुञ्जप्रदेशे त्वयाऽभिरमिता निजभावव्यञ्जनयाभिनन्दितास्तमस्तव पादतलमस्प्राक्ष्म करेण संवाहनार्थं कुचाग्रेण वा स्पृष्टवत्यो यतो रमायाः जातावेकवचनं रमणीनां दत्तोत्सवं "यद्वाञ्छया श्रीर्ललनाचरत्तपः" इति नो वनीनां मुखाच्छ्रुतत्वादूमथाय वैकुण्ठवासिन्या लक्ष्म्याः नारायणप्रियाया अपि रमणाभिकाङ्क्षया उत्सवदायकं तथाऽस्माकं तदाभावे किं चित्रमिति भावः । स्वस्य योग्यत्वेन दुर्लभत्वमाशङ्क्याहुः, अरण्यजनाः गोपाश्च एव प्रिया यस्य यद्वा, अरण्यरमणीनामुत्सवजनकस्य कादाचित्कत्ववर्णनमसङ्गतमित्याशङ्क्याहुः—अरण्यजनाः पुलिन्द्यः प्रिया यस्य तथा च पुलिन्द्यादिषु दर्शनादिना प्रीतिजनकस्य पादतलस्य स्पर्शोऽस्माकं दुर्लभ इति भावः अहो रमणाऽस्मान्विहाय तादृशीनां प्रीतिं प्रयच्छसीत्युपालम्भोपि व्यज्यते तत्प्रभृत्यन्यदर्शनमपि न रोचते तथा च कोऽप्युच्चाटनमन्त्ररूपस्तव पादतलमात्रस्पर्श एवेति भावः । अञ्ज इति पाठे ननु, मो मिथ्यावादिन्यो व्रजे वसथैवेति चेत्तत्राहुः—अञ्जः अनायासेन तथा च तत्र वलाद्गमनाम नत्र प्रीत्येति भावः । मानिनीपक्षे ननु, अङ्गस्पर्शादिना कामाग्निमुद्दीपयित्वा सम्प्रत्येवं वक्तुं प्रवृत्त इत्याशङ्क्याहुः—यर्हीति । बाल्ये त्वदङ्गस्पर्शः कदाचित्कृतः स्यात् परन्तु यत्प्रभृति तव पादतलं रमणीनां दत्तक्षणं जातं तत्प्रभृति क्वचिदपि कदाचिदपि नाऽस्प्राक्ष्म यतो वा ऽरण्यजनप्रियस्य वानरादिप्रियस्य सतः त्वया कदादिना अभिरमिता अपि अत एवाऽन्येषां श्वश्रूप्रमुखानां समक्षं स्थातुं पारयाम अन्यथा तैर्द्दिष्यतेमहीति भावः । अम्बुजवद्विशालनेत्रस्याऽस्मत्स्वभावं पश्यतो नैवं प्रार्थनमुचितमिति सम्बोधनाशयः । यद्वा, यदि तव पादतलं वयमऽस्प्राक्ष्म तर्हि तत्प्रभृति अन्यसमक्षं स्थातुमपि न पारयामः वतेति खेदे तथा सति महान् खेदः स्यादिति भावः । ननु तथा जातमतो मदङ्कुशलमित्यर्थः । पादतलस्पर्शमात्रस्य यद्येवं दशा तदा त्वयाभिरमितानां जायमानस्तु खेदो वाचामगोचर इत्यभिप्रायेण त्वया अभिरमिता इत्युक्तम् ननु, मदङ्गस्पर्शवतीनां मयाभिरामिनानां प्रतिदिनमानन्दास्वादनपराणां तत्समक्षाऽवस्थाने किं प्रयोजनमित्याशङ्कानिवृत्त्यर्थमुक्तं रमाया दत्तक्षणं तथा चैवंविधपादस्य तव गर्वावस्थमात्रादसर्वगर्ववतीभिरस्माभिः सङ्गतः स्थायित्वासम्भवात्साहसस्य सुखस्य तथाविधदुःखकारणात्वसम्भवात् नैवमिति भावः । तत्राप्यरण्यजनप्रियस्य मरणाविरोधिमानवतस्तथा चोभयप्रदत्वसम्पादकम् तव पादतलस्पर्शादिकामिति भावः । निवृत्तिपक्षे ननु, मया सिक्तोपि यथोक्तैर्वादिकल्पितदुःखैर्निर्वापणं वास्यतीति चेत्तत्राहुः—यर्हीति । हे अम्बुजाक्ष ! सर्वदृक्कमलव्यापक ! यदा तव प्रसादोदयकाले प्राप्तसाधनसम्पदाधिकारिणा विचारिता वयं तव पादतलमस्प्राक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुमपि पारयामः ब्रह्मातिरिक्तं किमपि वाचमर्थकं न प्रतिपादयामः अपाततोऽर्थान्तरप्रतीतावपि अतस्तात्पर्येणान्यपरत्वं नास्तीत्यर्थः । तथापि त्वया परमात्मना अभिरमिताः त्वय्येव समन्वयं प्राप्ताः । ननु, तथापि "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतीनामप्यविशेषपरत्वमेवावसीयते निर्विशेषस्य निर्व्यापारस्य जगत्कर्तृत्वाद्यसम्भवादित्याशङ्कानिरासायोक्तं क्वचिद्गमायाः आपातरम्याया महामायाया दत्तक्षणं न तु सर्वत्र सर्वदा च तथा शाखाग्रन्यायेन तासां सविशेषे वा निर्विशेष एव तात्पर्यं यश्चोरः सदृशाणुरिभिवयो जगत्कर्तृत्वादिविशिष्टः स निर्विशेषः परमात्मेति जगत्कर्तृत्वादेर्निर्विशेषब्रह्मलक्षणत्वे नास्ति कश्चिद्विरोधः इदृश्यस्वर्णानरूपमायामात्रसम्बन्धो ब्रह्मणि न वास्तव इति भावः ननु, श्रुतवेदान्तानामपि यथापूर्वसंसारानुवृत्तिदर्शनात्कथमुच्यते न पुनरन्यपरत्वमस्माकं नास्तीत्याशङ्कानिवृत्त्यर्थमुक्तम् अरण्यजनप्रियस्य तथा च विवेकवैराग्यादिसाधनविधुरत्वधारणारविन्दाऽनभिमुखस्येयं कथा न तु सर्वसाधनसम्पदलङ्कृतस्येति भावः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पतिसङ्गेन इच्छयाग्निः परिहार्य इत्यत्राहुः—यर्हीति । हे अम्बुजाक्ष ! क्वचित् रमायाः श्रियः दत्तक्षणं दत्तावसरम् अरण्यजनप्रियस्य अरण्यजनास्तावन्मुनयः वयमपि गोपजातीयत्वादरण्यजनास्ते प्रियाः यस्य तस्य तव पादतलं यर्हि यदा वयम् अस्प्राक्ष्म स्पृष्टवत्यः तदा त्वयाभिरमिताः आनन्दिताः सत्यः तत्प्रभृति तदारभ्य हे अङ्ग ! अन्यसमक्षं स्थातुमपि न पारयामः न शक्नुमः ॥ ३६ ॥

---

भाषा टीका ।

इतनी सुनके श्रीकृष्णचन्द्र बोले कि—हे गोपीओ ! तुम अपने पतीन के समीप जाओ वे तुम्हारे कामाग्नि कू बुझावेंगे, तब गोपी बोलीं, कि—हे कमलदल लोचन ! वनवासीन के प्यारे ऐसे आप जो हो तिन आपके श्रीलक्ष्मी को उत्सव देनेवारे चरणन को जब तें स्पर्श कियो है, हे कृष्ण ! प्यारे ! ता समय तें और दूसरेन के सन्मुख हम सब ठाडी होयवे को हूं समर्थ नहीं है । काहे तें कि—कबहूं कृपा करके आपने जो अपनो रमण को आनन्द दियो है तासों विश्व फीको लगे है ॥ ३६ ॥

---

**श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् ।**
**यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वत्पादसौभाग्यमत्यनिर्वचनीयमित्याहुः—श्रीरिति । यद्वक्षस्यनापत्यं स्थानं लब्ध्वापि तुलस्या सपत्न्या सह तव पदाम्बुजरजः कामयते स्म भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः यस्याः स्ववीक्षणकृते श्रीरात्मानं विलोकयत्विति तदर्थमन्येषां ब्रह्मादीनां तपोभिः प्रयासः सा तद्रजस्तद्वद्वयमपि प्रपन्ना इति ॥ ३७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, उदारशिरोमणे ! मा भिक्षाधरामृतार्पणेनास्माकं इच्छयापि निजदास्यमात्रमपि देहीति चेत् तथापि मां मुग्धबुद्धयो भवत्यो द्विधा वा स्वीकार्याः अन्यथा युष्माकमत्यन्तबाहुल्येनान्योन्यं निरन्तरसापत्न्योदयाद्दासनायापि दुःखं भवितेत्याशङ्क्य दृष्टान्तेन तत्परिहरन्त्यः परमार्त्या दास्यमात्रेच्छयाऽऽहुः—यद्वा, अग्रे दास्यं प्रार्थयितुं तस्य सर्वाराध्यमहालक्ष्मीकाम्यत्वेन परमोत्कर्षं प्रतिपादयन्त्यस्तदेव प्रपद्यमाना आहुः, श्रीरिति । उत अपि यस्याः स्ववीक्षणे निमित्तेऽपि अन्येषां ब्रह्मातिरिक्तानां सर्वेषामेव सुराणां ब्रह्मादीनां प्रयासः इति माहात्म्यविशेषेण मात्सर्यसम्भवात् सपत्नीसङ्गता सहिष्णुना श्रियः सूचिता एवं तस्य तस्यामनासक्तिश्च ध्वनिता तथापि सा श्रीरपि सपत्न्या सहितापि पदाम्बुजरज एव चकमे तथोक्तं नागपत्नीभिः "यद्वाञ्छया श्रीर्ललना चरत्तपः" इति । श्रीसनकादिभिश्च तृतीयस्कन्धे—

> "यं वै विभूतिरुपयात्यनुवेलमन्यै—
> रर्थार्थिभिः स्वशिरसा धृतपादरेणुः ।
> धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो—
> लोकं मधुव्रतपतेरिव कामयाना" ॥

इति । तत्र हेतुः भृत्यैर्जुष्टमिति सर्वतोऽधिकप्रीतिपात्रदासवर्गसेवितत्वेन रजस एव परमोत्कृष्टमनमादित्यर्थः । यद्वा, वैकुण्ठनाथस्य वक्षसि पदं लब्ध्वापि श्रीर्यस्य तव पदाम्बुजरजः किल निश्चये असमोर्द्ध्वमाधुरीभरमोहितत्वाच्चकमे तद्वत् श्रीवत् पादरज इत्येव न तु साक्षाद्दास्यमित्युक्तं तत्र च परमदौर्लभ्येन किञ्चिन्मात्रविवक्षया एकत्वं यद्वा, दास्ये सत्येन पादरजः प्राप्यते किं वा तस्मिन् प्राप्त एव दास्यं सम्पाद्यत इति पादरजसः कामना तत्प्रपत्तना च यत्तदोर्नित्यसम्बन्धाद्यच्छब्दातीतच्छब्देन श्रीवद्देककामनानिष्ठा बोध्यते । यद्वा, यत् यस्मादिति पूर्वमम्बुजरूपप्रयोगः श्रियस्तेन सर्वतापहरणाद्यभिप्रायेण आत्मनि च तदभावात्तदप्रयोगः यद्वा लक्ष्मीस्तादृशमाहात्म्यसाक्षात् पादाब्जरज एव कामयाञ्चक्रे वयन्तु नीचास्तद्योग्यताहीनाः पदं पादाब्जचिह्न तत्सम्बन्धिरज एव यत्र कुत्रचिद्दूरे पतितमपि प्रपन्नाः एषा परमदैन्योक्तिः पादरजसः पुनरुक्तिः दास्यमात्रापेक्षाबोधनार्थम् । सा यथा सापत्न्यदोषं त्वद्दास्यलालसया न मेने, तथा वयमपीति भावः । अन्यत्तैर्व्याख्यातम् । यद्वा, तुलस्याः सम्बन्धि तस्या गोविन्दचरणप्रियत्वेन सदा तत्रैव निवासात् भृत्यैरनन्तैर्जुष्टमिति तत्र बहूनां सङ्घर्षोऽपि दर्शितः "सारङ्गाणां पदाम्बुजम्" इत्युक्तेः अन्येषां सुरेतराणां दैत्यादीनां सुराणां च प्रयास इति अभ्यस्तसमानम् अनेन भर्त्तुरित्यस्योत्तरं भर्त्तुः शुश्रूषादिकं न हि परमो धर्मः किन्तु त्वद्दास्यमेव ब्रह्मादिप्रार्थ्यकृपाकटाक्षया श्रियापि तस्य प्रार्थ्यत्वादिति । यद्वा, यत्पदाम्बुजरजः यस्य नारायणस्य पादपद्मरजः श्रीश्चकमे तद्वत् स इव यस्त्वं तस्य तव पादरजो वयं च प्रपन्नाः "तस्मान्नन्दात्मजोऽयं ते नारायणसमो गुणैः" इत्युक्तत्वात् शेषं समञ्जसमेव एतदैश्वर्यं विनायमर्थः श्लेषार्थः । तादृशी सत्यपि तादृशस्थानं लब्ध्वापि तादृशं पादरज एव श्रीश्चकमे न तु प्राप्नोतीति तस्या अविवेकः सूचितः यस्या इति बहुजनकाम्यतया कश्चिद्दोषोऽप्यारोपितः अतोऽविचारयाऽनन्यतारहित या तथैव त्वद्दास्यं काम्येतेति युक्तमेव । यद्वा, यस्याः स्ववीक्षणे सुष्ठु अवीक्षणे अन्येषां सुराणां सात्त्विकानामपि मां श्रीर्न वीक्षताम् एतदर्थं प्रयासः स्थितिकाले महदादिभिः अन्धीकरणात् त्यागकाले गच्छन्त्या तया मूर्च्छीकरणाच्च सा श्रीरेव चकमे कृष्णस्य वक्षसि वामे पीता सूक्ष्मा काऽपि रेखास्ति सा च गर्गादिभिर्लक्ष्मीरिति व्रजे ख्यापिता तदभिप्रायेण तासां सेर्ष्यं वचनं वयं च तद्वत् तादृश्यः किं यत्तव पादरजः प्रपन्ना भवेम अपि तु सुविचाराः स्थिरप्रकृतयो भर्तृशुश्रूषणार्थं गृहं किल यास्याम एवेति नत्तस्मात् रजः प्रपन्नत्वात् प्रसादं कुरु तमेवाहुः—दास्यमेव देहीति, ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, मादृशतुच्छकुलया एव यूयं ततो वत कथं पादतलमस्प्राक्ष्मेति वदथ इत्याशङ्क्य निजाभीष्टोत्कण्ठावगुण्ठिततयैवातिदैन्येनाहुः—श्रीरिति । यद् यस्य नारायणस्य वक्षसि पदं लब्ध्वापि पादपद्मरजः श्रीश्चकमे प्रेयस्युचितं सेवाभिलाषविशेषं परित्यज्य दासोचितमेवैष्टवतीत्यर्थः यत एव दासानां बहूनां तत्र सङ्घट्टमप्यङ्गीचकारेति भावः । कीदृश्यपि सा तत्राहुः, यस्या इति । तदेवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाहुः—तद्वदिति "तस्मान्नन्दात्मजोऽयन्ते नारायणसमो गुणैः" इत्युक्तत्वात् स नारायण इव यस्त्वं तस्य तव पादरजो वयं च सत्कुलादिसम्पत्त्या प्रेयसीपदयोग्यतां लब्ध्वापि प्रपन्नाः तस्य तव च गुणमहिमैवायं यत्तस्या अस्माकं च लब्धतादृशपदसत्त्वेऽपि न्यूनताभिमानमेव कारयतीत्यर्थः । तत्र श्रीरम्बुजसादृश्यमुपाधिमवलम्ब्य माना तस्य पदाम्बुजरजश्चकमे वयं तु तदुपाधिमनपेक्ष्यमाणास्तव पादरजः प्रपन्ना इति स्वेषां तत्पादस्य च वैशिष्ट्यमम्बुजरूपकारूपकाभ्यां ( दर्शितम् ) ध्वनितम् । ( अथवा, नन्वेवं पूर्वोक्तेहतो-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

राशङ्क्यते निजेन्द्रियतर्पणा एव तत्परा यूयं न तु ममानुकूल्य-मस्यां प्रीताविति तत्राहुः—श्रीरिति । यत् यस्माद्धेतोस्तस्माद्धेत्वर्थः । एवं सा यथा स्वपतौ तादृशरसाधिकृतापि तत्सेवा-मयतद्दास्याभिलाषवती तथा त्वयि वयमपीति वाक्यार्थः ) । एवं क्षीरोदमथने यथान्यपरित्यागेन श्रियास्तदेकभजनं तथाऽस्माक-मपि त्वदेकभजनमिति ज्ञापितम् अथवा ननु, नाहं स्वप्नेऽपि भवतीस्पर्शं स्मरामि भवतु वा तथाप्यविचारेण सकृत् स्खल-नेऽपि न भूयः कर्त्तुमुचितं तत्रानौचित्यं भवतीनां साध्वीकुला-चारलङ्घनेन मम च तादृशभवदाचारध्वंसनेनेत्यत्र साध्वीकुल-शिरोमणिं श्रियमेव दृष्टान्तयन्त्यः प्रत्युत्तरयन्ति—श्रीरिति । वक्षसि स्वभर्त्तुर्हृदये पदं स्थानं लब्ध्वापि श्रीः किल प्रसिद्धौ अस-मोर्द्ध्वमाधुरीभरमोहितत्वात् तथापि तवाङ्गसङ्गे निजायोग्यता-मननाद्य यदिति यस्य वृन्दावनसम्बन्धिपादरजोमात्रं चकमे तस्य तव पादरजो वयमपि प्रपन्ना इत्यन्वयः । तदुक्तं "यद्वा-ञ्छया श्रीर्ललनाचरत्तपः" इति तादृशप्रसिद्धिश्रवणाल्लक्ष्यते च स्वयं "जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि" इति पादरजःशब्दस्य पुनरुक्तिरत्युत्कण्ठया ज्ञेया (तदुक्तं पद्यद्वयेऽपि ) रूपकाप्रयोगश्च पूर्ववदेव ज्ञेयः पद्यद्वयेऽपि सा च न केवला किन्तु तुलस्या लीलारूपया वृन्दयापि सहेत्या च तुलसी तत्प्रेयस्यपि चकमे पाद्मे कार्त्तिकमाहात्म्ये जालन्धरोपाख्याने तस्या अपि तत्प्रेयसीत्वश्रवणात् तथा स्कान्दमथुरामाहात्म्ये—

"वृन्दावनं द्वादशमं वृन्दादेवी समाश्रितम् ।
हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम्" ॥ इति

वाराहे तन्माहात्म्ये च —

"वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् ।
मम चैव प्रियं भूमे ! सर्वपातकनाशनम् ॥ इति ।

तदाश्रितत्वश्रवणाच्च कथम्भूतमपि रजः भृत्यजुष्टं त्वद्भृत्य-गणसेवितावशिष्टमपि पुनारज एव विशेषार्पयतुं तस्या वैशि-ष्ट्यान्तरमाहुः—यस्या इति । स्वीयानां स्वपतिप्रेमपर्यन्तसम्पत्ति-प्रदे अन्यसुराः श्रीविष्वक्सेनगरुडादयः तेषामपि प्रयासः यदि तस्याः तस्याश्च अपेक्ष्य तदास्माकमेव को दोष इति भावः । ऐश्वर्यपक्षेऽपि प्रायः पूर्ववदेवार्थः किन्तु पूर्वत्र प्रेमकृतोत्कर्षदृष्टिप्राप्तत्वेन उत्तरत्र तु ज्ञानप्राप्तत्वेनेति भेदः तदेवं "भर्त्तुः शुश्रूषणं स्त्रीणाम्" इत्यादेरुत्तरं ज्ञेयम् निषेधार्थश्चायं ननु श्रीवृन्दे अपि स्वपतिपरित्यागेन मदाशया तद्वने तिष्ठतः काः यूयमित्यत्राहुः—श्रीरिति । यत् या श्रीः तुलस्या वृन्दया सदात्र वने स्थितं तव पदाम्बुजरजश्चकमे तत्कामनयाऽत्र वासं कृत-वतीत्यर्थः । तद्वदिति स्वैव वयं च वयमपि तव पादरजः प्रपन्नाः काक्षा नैवेत्यर्थः । चपलात्वेन ख्यातया लक्ष्म्या यच्चापक्षं तथा जालन्धरभार्यात्वमपि लब्धाया वृन्दाया यद्व्यभिचारित्वं तत्तद्युक्तमेव नास्माकमेतादृशीनामिति भावः । अत्रापि भर्त्तु-रित्यस्यैवोत्तरमिदमिति ॥ ३७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वत्पादसौरभ्यं(भाग्यं)त्वातिविचित्रमित्याहुः—श्रीरिति । श्रीर्लक्ष्मीस्तव वक्षसि असापत्न्यम् उन्नतञ्च पदं स्थानं लब्ध्वापि तुलस्या सपत्न्या सह यत्तव पदाम्बुजरजः कामयते स्म कथम्भूतम् ? भृत्यैः सर्वैर्जुष्टम् इति सौभाग्यातिशयोक्तिः कथम्भूता श्रीर्यस्याः श्रियः स्वर्वीक्षणकृते स्वावलोकनार्थम् श्रीरस्मानवलोकयतु इत्येतदर्थमन्येषां सुराणां ब्रह्मादीनां प्रयासः अन्यतपः प्रयास इति पाठेऽन्येषां ब्रह्मादीनां तपः क्लेश इत्यर्थः । सा श्रीश्चकम इत्यन्वयः । तद्वच्छ्रीवद्वयमपि तव पादरजः प्रपन्नाः ॥ ३७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अद्यापि लक्ष्म्या तव पादपद्मद्वन्द्वधूलिनिषेवणं काङ्क्षितं किमुतास्माकमिति भावेनाहुः—श्रीरिति । अन्येषां सुराणां ब्रह्मा-दीनां प्रयासः प्रयत्नः यस्याः श्रियः स्ववीक्षणकृतः स्व-निरीक्षणार्थं कृतः सा श्रीर्वक्षसि पदं लब्ध्वापि तुलस्या पदं यस्य तव पादाम्बुजरजः चकमे कामितवती यथा वयं च तद्वत् तथा तस्य तव पादरजोनिषेवणाय प्रपन्ना इत्यन्वयः स्ववीक्षणकृत इति पाठे स्वदर्शनार्थमित्यर्थः ॥ ३७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इममेवार्थमन्याः प्रकटयन्त्यो लक्ष्मीतोऽप्यधिकत्वेनात्मौत्कि-कत्वमात्मनो निरूपयन्ति—श्रीर्यदित्यादि द्वाभ्याम् । वक्षसि पदं लब्ध्वापि श्रीर्यत्पादाम्बुजरजश्चकमे कामयामास ननु लब्धवती कुतो न लब्धवती यतस्तुलस्या एव तद्भृत्यजुष्टं स्वाभाविकं भृतिः कर्ममूल्यं तेन अजुष्टं कर्मफलं न तत् सैव कीदृशी इत्याहुः—यस्या इति । स्वचीक्षणं स्वं प्रति दर्शने अन्येषां सुराणां प्रयास एव वयं तद्वत् तत्स्वरूपाः किन्त्वियान् विशेषः सा तु चकम एव वयन्तु तव पादरजः प्रपन्नाः प्राप्ता एवेति ततो-ऽधिका अपि वयमित्यलमन्यथाशङ्कया ॥ ३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, तस्या दैवगत्या सम्बन्ध आसीत् स च प्राथमिकः भवतीनां तु प्रथमतोऽन्यत्रैव सम्बन्धः अतो वैषम्यमिति चेत्त-त्राहुः—श्रीरिति । लक्ष्मीरपि न दैवगत्या भवन्तं प्राप्तवती किं तु स्वचरणारविन्दार्थं महत्तपः कृतवती सा न स्त्रीत्वेन त्वदीया किन्तु भक्तत्वेन अन्यथा वक्षसि स्थलं प्राप्य स्व-तन्त्रं तुलस्या सह सापत्न्यमप्यङ्गीकृत्य चरणरजो न कामयेत चरणरजस्तुलस्या भवति भक्ता हि भक्तेः तदुपपादिनं प्रथ-मस्कन्धे, तस्य रजसः माहात्म्यमाह—भृत्यजुष्टमिति । तद्रजसैव भृत्यानां शरीरोत्पत्तेः सिद्धेति प्रसिद्धं सर्व एव भक्ताः स्व-चरणरजसैव सम्पादितदेहवन्तः अतस्तुलसी तव भक्तिरूपा प्रतिष्ठिता तद्रजःप्राप्तिर्येषां ते स्वरसेवका एव भवन्ति अतो लक्ष्मीः अन्तःकरणे स्थानं प्राप्यापि अन्यः स्पृक्ष्यतीति चिन्तया रजश्चकमे नतिस्त्वप्राप्ते तु शङ्कापि । ननु, किमेतावद्दुर्गमम् लक्ष्म्यास्तत्राहुः—यस्याः स्ववीक्षणकृते अन्यसुरप्रयासः अन्य सर्व एव ब्रह्मादयो देवास्तपः कुर्वन्ति लक्ष्मीरस्मान्पश्यत्विति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यथा तेषां कोऽपि पुरुषार्थो न सिद्ध्येदिति अतो बहुभिः प्रार्थ्यमाना भीता जाता कश्चिदत्यन्तमपि तपः कुर्यात् स को नेह किं कुर्यादिति रजः कामनायां तु नेयं शङ्का प्राप्तौ तु सन्देह एव न सम्भवति एवं चरणरजसः प्राप्तौ अनन्यगामित्वं निरूप्य स्वस्य तथात्वमाहुः—तद्वयं चेति । अस्मानपि बहवः प्रार्थयन्ति तद्भयादेव पूर्वं चरणरजःस्पृष्टं ततो देहोऽपि त्वच्चरणरजसा समुद्भूत इति सर्वथा तव पादरजः प्रपन्नाः चकाराद्या अपि साम्प्रतं नागताः या या महिष्यः ताः एतादृशशरीरयुक्ता एव अतोऽस्मदर्थं एव समागतो भवान् नात्मानं गोपय नापि गुप्तः ख्यास्यति तस्मादाग्रहः कर्त्तव्य इति भावः ॥ ३७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेवं त्वयैव वयं स्वप्रेयसीकृताः किन्तु त्वच्चरणसेवामेव वयमाशास्महे इति सदृष्टान्तमाहुः—श्रीर्लक्ष्मीर्यस्य नारायणस्य पदाम्बुजरजश्चकमे तद्वक्षःस्थलस्य तथाऽपि वयं पदाब्जरजः प्रपन्नाः ततश्च गर्गोक्तिगम्येन तव नारायणतुल्यत्वेनास्माकमपि श्रीतुल्यत्वं स्यात् एवाऽऽयातमिति भावः । किञ्च यच्छ्रि सर्वोत्तमे स्थलं पदम् आस्पदं लब्ध्वापि तुलस्याः सपत्न्याः पदमपि भृत्यैर्जुष्टं सेवितमिति पुरुषजनसङ्कुलत्वादपि तस्य पादरजश्चकमे स्वाभाविकीं प्रेयसीभावसमुचितां लज्जामपि परित्यज्य स्वन्यूनतामप्यङ्गीकृत्य कामयतेस्मेति तस्याः प्रेयसीभावादपि दासीभावो यथाऽभीप्सितस्तथैवास्माकमपीत्यतस्तव रक्तकपत्रकादिदासैः सहाऽपि लज्जां परित्यज्य पादौ सम्वाहयितुमिच्छामः तथा वृन्दावनीयपुलिन्दीनां कमं तृणलग्नत्वच्चरणकुङ्कुमेन स्वीयभालप्रलेपनमपि स्वन्यूनतामप्यङ्गीकृत्य चिकीर्षामः । किञ्च, श्रीमन्नारायणदेवेन प्रतुष्यता नित्यनिवासार्थं तस्यै स्ववक्ष एव दत्तं त्वया तु रसिकशेखरेणास्मभ्यं स्वपदतलनिकटप्रदेशेऽपि क्षणमपि स्थातुमपि न दीयते इत्यस्माकमेव दग्धललाटमिति ध्वनिः स्वयशः प्रेप्सुर्गर्गोक्तिप्रामाण्येन यदि नारायणतुल्यो बुभूषसि तदाऽस्मान् वक्षसा वहेत्यपि भावगाम्भीर्यस्पर्शी ध्वनिः । ननु, सा लक्ष्मीः यथा चञ्चला तथैव यदमपि पुण्यवतां जनानां गृहे गृहे चाञ्चल्यधर्ममप्यङ्गीकुरुतेति नर्माशङ्क्य केन मूर्खेणोच्यते श्रीश्चञ्चलेति सा तु परमधीरेत्याहुः—यस्याः श्रियः स्वेषु वीक्षणकृते वात्सल्यरसमयकृपावलोकनप्राप्तिकृते अन्यसुराणां ब्रह्मादीनां तत्पुत्रतुल्यानां प्रयास एव या तु यदपि तानपि प्रायो नावलोकते किन्तु तच्छक्तिरेव कांश्चित्तेभ्योऽभीप्सितां सम्पदं ददाति इति ॥ ३७ ॥

---

### विशुद्धरसदीपिका ।

ननु, भवत्यो मम प्राणेश्वर्यः प्राणसख्यः सर्वप्रकारैस्तत्समाः कथं मम पादतलं स्पृष्टवत्य इति चेत्सत्यं किन्तु परमदमानायस्य स्वपादसौभाग्यमतिचित्रं प्रसिद्धवलस्यादिकामितत्वादित्याहुः—श्रीरिति । सर्वसम्पत्सौभाग्याद्यधिष्ठात्री चकमे कामितवतीत्यलभ्यत्वं तदपि लतादिरूपेण तथा दर्शितं श्रीगोविन्दलीलामृते—

"श्रीभूलीलाराधिकासेवनाय लुब्धा लब्ध्वा स्थाणुतां मुरिपुयैः । जातीधात्री श्रीतुलस्यात्मनाऽन्या कुर्वत्यस्तत्र नित्यं वसन्ति" ॥ इति एवं च रमादिसेव्यरमानाथसेविता श्रीराधा परमरमणी नित्यं तत्सखास्ताभिधानं स्वभेदाभिप्रायेण लोकप्रसिद्धमनुसृत्येति कीदृशं भृत्येति भृत्यैः भरणीयैर्नित्यपरिकरैर्जुष्टं प्रीत्या सेवितं तद्वत् श्रीवत् एतावांस्तु विशेषः श्रीरम्बुजसादृश्यमुपाधिमवलम्बमाना वयं तु पादरज एव प्रपन्ना इति तुलस्या सहेति वृन्दादेव्या एव नामान्तरेण कथनमपह्नवाय सहेत्यनेन पार्श्वोक्तं सावर्ण्यं परिहृतं तच्च "यत्र नैसर्गदुर्वैराः सहासन्" इत्यादिप्रागुक्तश्रीवृन्दावनस्वाभाव्यादेव किम्वा तत्प्राकृतांशसंसर्गजनितासुरावेशलीलाविलासितमिदं तु शुद्धमेवानयोश्चरितमिति विवेकः अन्यथा श्रीविष्णोरपि तच्छायः कथं स्यादिति विचार्यम् अद्भुतमेतत् रेखारूपेण तव वक्षसि पदं लब्ध्वापि प्रेयस्युचितं सेवाभिलाषं परित्यज्य दास्युचितमेवैष्टवतीत्यर्थः । कोऽसाविति आहुः, यस्या इति । क्षीरोदजातयाऽभेदाभिधानम् इदं च नैश्वर्यज्ञानमय लक्ष्य किन्तु "यद्वाञ्छया श्रीर्ललनाऽचरत्तपः" इत्यादिमहाजनप्रसिद्धेरेवेति ज्ञेयम् तद्वदिति तच्छीलस्यात्मन्यतिदेशः ॥ ३७ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

लक्ष्म्यापि सेव्यत्वेन पादरजःसौभाग्यातिशयं दर्शयन्त्यः आत्मनस्तत्प्रपन्नत्वमाहुः—श्रीर्यदिति । यस्याः श्रियः स्वचीक्षणकृते अस्मिन् कृपादृष्टवर्षे तत्करुणयैव समस्तैश्वर्यादिलम्भवादन्येषां सुराणां ब्रह्मरुद्रेन्द्रादीनां प्रयासस्तथा आद्याचरणा सा श्रीः सर्वसम्पत्सौभाग्याद्यधिष्ठात्र्यपि । ननु, किं प्राकृतैश्वर्याद्यधिष्ठातृत्वेन परमार्थसुखालाभे तत्राहुः—नित्यनिरतिशयपरमार्थभूतपरमानन्दघनस्य तव वक्षस्यसापत्न्यपदं लब्ध्वापि यत्पदाम्बुजरजश्चकमे कथम्भूतं तुलस्या सपत्न्या सहासङ्ख्यातभृत्यैर्जुष्टमिति महच्चित्रं तव पादरजः सौभाग्यं येनासापत्न्योपरिपदलाभेऽप्यधः सपत्न्यमपि कामयति । यद्वा, वक्षोऽधिश्रिता श्रीरपि शिरोर्पितया तुलस्या सह पादरजश्चकमे इति चित्रं तत्सौभाग्यम् । यद्वा, वक्षःशिरोधिश्रिताभ्यां तुलसीश्रीभ्यां पादरजःकामनया भगवदङ्गानां समानपरमानन्दतया नोत्तमाधमभाव इति ध्वनिः । यद्वा, शिरोधिश्रितया तुलस्या सह सर्वत्यागशीलैः ब्रह्मलोकादिश्रियं तृणीकुर्वद्भिः परमनिष्कामैर्जुष्टत्वात् किमत्राद्भुतो रस इति चकिता श्रीरपि चकमे । यद्वा, चरणाब्जरजो दास्येनैव वक्षःपदलाभात् कृतज्ञतया भृत्यैर्मधुपवत् जुष्टमपि रजश्चकमे नतूच्चपदलाभेन तदुपकारं विस्मरति भृत्यजुष्टमित्यभेदमाकूतं भक्तैर्भगवद्दत्तबुद्धियोगेनाविर्भूततत्स्वरूपाभेदैरपि जुष्टमिति मत्वा वक्षोऽधिश्रितापि चकमे इति कृतज्ञेषु फलतोऽपि साधने आदराधिक्यं फलादरेण तदलाभात्साधनादरेण तु फललाभनिश्चयात् । यद्वा, श्रीरपि वक्षःस्थापि चकमे इत्यतस्तदूदृष्टैव भृत्यैर्जुष्टम् । यद्वा, एकान्तवक्षोवासिन्याभिया स्वत्यजुष्टरजःप्रार्थनया वक्षोधामैकान्तवासाभ्यां पादाब्जरजः

श्रीरामनारायणकृतभावभावविभाविका।

सत्समागमयोः श्रैष्ठ्यमिति भावः। यद्वा, "तुलसीदलमात्रेण जलस्य चुलकेन च। विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सल" इत्यादि वचनैस्तुलस्या तदर्पणमात्रेण भृत्यजुष्टमिति श्रियार्पितैश्वर्यभोगाद्यर्पणं लघु मत्वा तुलस्यर्पणेनैव चकमे यद्वा, ब्रह्माद्यभिलषितवीक्षणाश्रीर्यत्तुलस्या सह तदर्पणेन वाञ्छापि चकमे तद्भृत्यैः पापयोनिभिरपि जुष्टमित्यहो रजःसौभाग्यं तव दीनवात्सल्यं चातः तद्द्वयं च श्रीवदर्शितरूपसौभाग्यवत्यः तुलसीवत्त्वदादरणीयाः भृत्यवात्सल्यत्यागेन दास्यरताश्च तद्वत्साहस्रमाहात्म्यं तव पादरजः तद्वदेवान्यत्र निस्पृहतया त्वदेककामतया च तद्वदेव मनोवाक्कायैः प्रपन्ना इति त्वयापि तद्वदेवाङ्गीकार्या इति तद्वच्छब्दस्यानुषङ्गेण सर्वत्रान्वयः ॥ ३७ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु, रमाया दत्तचरणमित्युक्त्या तद्वदस्मानप्यङ्गीकुर्विति भवतीभिः सूचितं परं तु लक्ष्म्या दैवगत्या प्राप्तो यः सम्बन्धः स तु प्राथमिको भवतीनां तु न तथेत्यतः किं करोमीति चेत्तत्राहुः—श्रीरिति। श्रीर्यस्य यत्पादाम्बुजरजश्चकमे कामयते स्म तद्द्वयमपि तव पादरजः प्रपन्नास्तथा च श्रीरपि न दैवगत्या भवन्तं प्राप्तवती किन्तु महता तपसेति भावः। तत्रापि तुलस्याः सपत्न्या सह न चाङ्गसङ्गाभावात्सापत्न्यमप्यङ्गीचकाराऽपितु भक्त्यतिशयाद्दैर्घ्याशयेनाहुः वक्षसि पदं लब्ध्वापि तुलस्या एवासाधारणमिति वा तथा च परमोत्कृष्टस्तत्रस्थलं प्राप्यापि तादृशं रमा यच्चकमे तद्भक्त्याऽतिरेकविजृम्भितमिति भावः। ननु, कुत एवमित्याशङ्क्य रजसो माहात्म्यमाहुः भृत्यैर्नारदादिभिः सर्वैरपि तदेवाऽनन्यतया सेवितं किलेति प्रसिद्धं नात्र किञ्चिद्वक्तव्यं रज एवैवंविधसामर्थ्यं यत्तत्र संलग्नचेतसः पुनरन्यत्र गमनाभावसम्पादनशाल्यस्याऽतो लक्ष्मीर्वक्षसि पदं लब्ध्वापि कदापि चेतसोऽन्यत्र प्रवृत्तिर्न भवेत्तात्पर्यस्य कस्यापि स्पर्धा इति मनसि निधाय रजश्चकम इति भावः। ननु, लक्ष्म्याः एव कुत एतावद्वैशिष्ट्यमित्यत आहुः—यस्या लक्ष्म्याः स्वस्य वीक्षणकृते श्रीरस्मात् करुणाया पश्यत्वित्येतदर्थमन्येषां सुराणां ब्रह्मादीनां प्रयासः सर्वपुरुषार्थानां तदधीनत्वात् तथाच बहवो मां प्रार्थयन्ते कश्चित्कदाचिद्दृत्यन्तं यदि तपःकुर्यात्तर्हि स को वेद किं कुर्यादिति विचारवत्यस्तस्यास्तावद्वैर्यमिति भावः। तद्द्वयमपि प्रार्थनावतां बहुत्वमालोक्य तद्भयात्प्रथममेव तव पादरजःप्रपन्नाः तस्मादस्मदर्थमेवावतीर्णो भवानात्मानं न गोपय गोपनासम्भवाद्वतो मास्त्वाग्रह इति भावः। यद्वा, ननु पादस्पर्शस्य को वा तादृशो महिमेति चेत्तत्राहुः—श्रीरिति। यद्वा, ननु चरणस्पर्शादेव भवत्यः कृतार्थाः किमर्थमङ्गसङ्गार्थं निकटाचरणाः किञ्च अङ्गसङ्गमवाप्य पुनश्चरणस्पर्शो भक्तिर्न भविष्यति नैवं का हानिरिति भ्रमितव्यं तद्धया एव परमपुरुषार्थत्वाविस्याशंक्याहुः—श्रीरिति। तथा च भगवत्पादरज एव तथाविधः यतो भगवद्वक्षःस्थलनिवासिनी श्रीरपि तदेव चकमे परमभक्तायास्तुलस्याश्च तदेवासाधारणं स्वाश्रयश्च सर्वैर्भृत्यैस्तदेव जुष्टं तस्मात्सत्प्रतिबन्धकमङ्गसङ्गाभिलापं निवर्त्य तदेकशरणमेवाश्रयिष्याम इति भावः। अनभिज्ञापक्षे ननु, सौन्दर्यादिगुणसम्पन्नाः शोभनकुलोत्पन्नाः महिषीपदयोग्याः किमेवं ब्रूथेत्याशङ्क्य महिषीपदापेक्षयेदमुत्कृष्टमिति लक्ष्मीदृष्टान्तेन समाधानमाहुः—श्रीरिति। यस्माल्लक्ष्मीनारायणस्य पदाम्बुजरजो यथा चकमे तद्वद्वयं नारायणसदृशस्य तव पादरजः प्रपन्नाः यद्यपि नारायणस्य तद्वत्तुल्यस्य तवेति वा "नारायणसमो गुणै" इति गर्गोक्त्या तव नारायणसमत्वमस्माकं लक्ष्मीसमत्वमर्थादागतमिति भावः। तत्रापि वक्षसि परमोत्कृष्टस्थले पदं रमणीभावं लब्ध्वापि तुलस्याः सपत्न्याः पदमपि भृत्यैर्जुष्टं पुरुषजनसम्प्रदाययुक्तमपि यथा च तस्या यथा प्रेयसीभावसमुचितां लज्जां स्वन्यूनमाज्ञाऽगणय्य दासीभावोऽभिलषितस्तथैवास्माकमपि यद्यप्येवं न तथापि त्वं नारायणवन्नाचरसि वक्षःस्थलोद्वहनयोग्या अस्मान् स्वपादन्तसन्निधौ स्थातुमपि ददास्यतो दग्धललाटा वयं किं कुर्म इति भावः। ननु, लक्ष्मीनिष्ठाश्रयणमपि युष्मासु प्राप्तमित्याशङ्क्याहुः—यस्या इति। तथा च या पुत्रत्वयाऽन्यसुरादीनपि यया कथाञ्चिच्छक्त्याऽनुगृह्णाति सा चञ्चलेति मूलप्रवाद इति भावः। श्रीः पदाम्बुजरजश्चकमे वयं तु पादरजः इत्युक्त्या श्रियः स्वगामस्थानोपमसाहस्योपाधिकसेवनमस्माकं तु निरुपाधिकमिति व्यज्यते। यद्वा, ननु, स्वस्वपत्युः वक्षःस्थलरमणयोग्याः कथं दासीभावं प्रार्थयन्ते इत्याशङ्क्य "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति न्यायमवलम्ब्य समाधानमाहुः—श्रीरिति। स्वभर्तुर्नारायणस्य वक्षसि पदं लब्ध्वापि लब्धनारायणपादसम्बन्धया तुलस्या सह यस्य तस्य वृन्दावनसम्बन्धि पदाम्बुजरजश्चकमे तत्सेवनार्थं वृन्दावनशोभारूपेण प्रियवक्षसि रेखारूपेण श्रीरत्राऽऽस्ते तुलस्यापि वृन्दावनदेवीरूपेण वृन्दारूपेणाचास्ते इति भावः। तस्मात्परमपतिव्रताया लक्ष्म्या यदेवं दशा तदानीं वयं कथं भर्तुः शुश्रूषणमित्याद्युपदेशार्हा इत्यपि ध्वनितम्। मानिनीपक्षे। ननु, श्रीवृन्दापि स्वपार्श्वे स्वकस्थाऽत्र वने मम सन्निधौ तिष्ठति यूयं किमित्येवंविधं मानं कर्तुं प्रवृत्ता इति चेत्तत्राहुः यद्यपि श्रीवृन्दया सहात्र स्थितं ते पादरजश्चकमे तद्वद्वयं किं पादरजः प्रपन्नाः अपितु नेति काका योज्यं तयोरेव तद्युक्तं नास्माकमिति भावः। यद्वा, यस्य नारायणस्य पदाम्बुजरजः श्रीश्चकमे तद्वदस्य तेन नारायणेन तुल्या वयमत एव तादृशलक्ष्म्याविप्राप्तनीयं पादरजःसपत्न्याः तव लक्ष्म्याविदृशस्यानुरूपाराधनीया इति भावः॥ निवृत्तिपक्षे। लक्ष्म्याविरस्य भगवत्परायणत्वमाहुः, श्रीरिति। तथा च श्रियादिसमस्ताराध्यपादपद्मे समस्तश्रुतितात्पर्यविषये परमात्मनि सर्वभावेन रतिः सम्पादनीया इति भावः ॥ ३७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शिष्टाचारप्रामाण्यादपि त्वच्चरणरजःशरणं प्राप्ता इत्याहुः यस्याः स्ववीक्षणकृते स्वावलोकनार्थम् अन्येषां ब्रह्मादीनां सुराणां प्रयासः तपआद्याचरणरूपो यत्नः सा श्रीः वक्षसि असापत्न्यं पदं स्थानं लब्ध्वा तुलस्या सह भृत्यैर्बहुभिर्भग-

**तन्नः प्रसीद वृजिनार्दन ! तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।**
**त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण ! देहि दास्यम् ॥ ३८ ॥**

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यत्किङ्करैर्युगमपि तव पदाम्बुजरजः चकमे कामयते स्म तद्वयमपि प्रपन्नाः ॥ ३७ ॥

---

### भाषा टीका ।

लक्ष्मीजी तुमारे वक्षःस्थल में निवास पाय करकेऊ तुलसी सहित दासनसों सेवित ऐसे जिन तुमारे चरण कमल के रज की चाहना करत भई जा लक्ष्मी के अर्थ और देवता तपस्या करें है, ता लक्ष्मी की नाईं हम भी तुम्हारे चरणन की रज कूं प्राप्त भई है, अर्थात् प्यारे ! तुम्हारी शरण आई हैं। तासों जैसे लक्ष्मी कों तुमने ठिकानों दियो तैसें हम सबन पैऊ कृपा करो ॥ ३७ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे वृजिनार्दन ! दुःखहन्तः, त्वदुपासने त्वद्भजन एवाशा यासां ता वयं वसतीर्गृहान्विसृज्य हित्वा योगिन इव प्राप्ताः तव सुन्दरस्मितविलसितनिरीक्षणेन यस्तीव्रः कामस्तेन तप्तचित्तानाम् हे पुरुषरत्न ! दास्यं देहि ॥ ३८ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु, नवयौवनोन्मत्ताः ! दास्यमपि लक्ष्म्यादिप्रार्थ्यं कथं देयमिति चेत् ? तत्र सदैन्यमाहुः, त्वदुपासनाशाः सत्यो वसतीः सर्वबन्धुपरिच्छेदसहितगृहान् विसृज्याङ्घ्रिमूलं प्राप्ता वयम् अतः सर्वपरित्यागेन प्रपन्नानामाशामवश्यं पूरयितुमर्हसीतिभावः । अन्यथा चास्माकं महद्दुःखं स्यात् तच्च तवानुचितमित्याहुः, हे वृजिनार्दनेति । तत्र च हे रसिकशेखर ! रसविशेषमयमेव दास्यं देयमित्याशयेनाहुः-त्वदिति । तद्योचितमेवेत्याहुः—हे पुरुषभूषणेति । अन्यत्तैर्व्याख्यातम् । यद्वा, ननु गृहिण्यस्तर्हि गृहेषु गत्वैव मद्भक्तैर्गोपैः सह भक्तवर्गवन्मद्भजनं क्रियतां तत्रैव तदशेषोपकरणसम्पत्तेरिति चेत् ? तत्र सकाकाहुः-वसतीर्विसृज्येति । तत्र हेतुः, तवोपास उपास्तिः तस्य नाशो यासु ताः तत्र त्वद्भजनासिद्धेरित्यर्थः । किञ्च, हे महामोहन ! नान्यभक्तवदस्माभिर्दास्यं प्रार्थ्यते यद्गृहेषु गोपवर्गैः सह सिद्ध्येत् किन्तु दास्यविशेष एवेत्याशयेनात्यन्तार्त्याभिनयपूर्वकमाहुः-पुरुषो जीवस्तस्य भूः स्थानं हृदयं तत् ऊषते पीडयति "ऊष रुजायाम्" इति हे तथाभूत ! तव सुन्दराभ्यां स्मितनिरीक्षणाभ्यां किम्वा हे सुन्दरस्मितनिरीक्षण ! अतो धूर्ततयैवेदं वदसीत्यवहित्थया गुह्यमाणं वाक्चातुर्योऽभिव्यञ्जयन्ति त्वत् त्वत्तो यस्तीव्रः कामस्तेन तप्त आत्मा देहो यासां नः अतस्तत्प्रतीकारमादौ कुरु अन्यथा अस्मद्दशोपस्थितिरिति । यद्वा, तत्प्रतीकाररूपं दास्यं देहीति भावः । यद्वा, ननु मद्व्रजस्त्रियो मद्भक्तवराणां गोपानां कन्यात्वभार्यात्वादिना युष्माकं स्वतः सिद्धं मद्दास्यमस्त्येव किं तत् प्रार्थनेनेति चेत्सत्यं किन्तु असाधारणमस्मद्याचितं तद्देहीति सवैयग्र्यमाहुः तप्तात्मनां योग्यं यत् तद्दास्यमित्यर्थः । साक्षादात्मा निर्देशः विनयलज्जादिना किम्वा न इति पूर्वस्यानुषङ्गः । यद्वा, अत्यन्तार्त्यासत्याग्रहमाहुः तप्तात्मनां स्त्रीणां कासाञ्चिदपि दास्यं देहि अस्मभ्यम् एतादृशीनां दास्ये प्राप्तेपि तव प्रसादविशेषोऽवश्यं भवितैवेति भावः अनेन दुःशील इत्यादेरुत्तरं त्वदुपासनाशया सत्पतेरपि त्यागो युक्त एव तत्सिद्धान्तो लिखित एव विशेषतश्च" वसतीनां त्वदुपासननाशत्वेन तत्र च तत्स्वामिनां तेषां सम्बन्धेन त्वद्भजनपातात्ते पातकिन एवेति त्याज्या एव । किञ्च, त्वत्कामतप्तात्मनां तत्त्यागे कथं वा विचारः दोषो वा ? महाभुजङ्गग्रस्तानां को नामाविरवति श्लेषार्थः । वृजिनं पापम् अन्येषामपि पापनाशनोऽसीति वयं त्वदङ्घ्रिमूलं प्राप्ताः अधुना तवैव पापे मतिर्दृश्यते अतः प्रसीद अस्माकमत्रागमनापराधं क्षमस्व मनोऽपत्रप पुण्ये निधेहीत्यर्थः । यद्वा, ननु मद्दास्यं लक्ष्म्या अपि दुर्लभं कृपया दीयमानमङ्गीकुरुतेति चेत्तत्र साभ्यसूयमाहुः—या वसतीर्विसृज्य त्वदुपासनाशाः सत्यस्तवाङ्घ्रिमूलं प्राप्ता दास्य इवाश्रितास्तासां तीव्रकामतप्तात्मनां चतुर्थ्यर्थे षष्ठी ताभ्यो दास्यं देहि अस्माकं पतिव्रतानां तेनालमित्यर्थः । पुरुषान् सखीनेव ननु स्त्रियो भूषयतीति तथाभूत ! अतस्त्वया किमस्माकमिति किम्वा हृदयदाहकेति पूर्ववदर्थः तत्किं त्वयि मत्त्वापीति भावः ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं तृतीयदिक् स्थिता अपि विवक्षितमुपसंहरन्ति—तन्न इति । तत् तस्मात् पूर्वोक्ताद्धेतोरेव प्रसादं कुरु तमेवाहुः दास्यमेव देहीति । ननु, नवयौवनोन्मत्ताः ! दास्यमपि तादृशं दुर्लभमिति चेत् कथं देयमित्यत्र सदैन्यमाहुः—प्राप्ता इत्यादि । अतः सर्वपरित्यागेन प्रपन्नानामाशामवश्यम् पूरयितुमर्हसीति भावः । अन्यथा चास्माकं महद्दुःखं स्यात् तच्च तवानुचितमित्याहुः-हे वृजिनार्दनेति । तत्र च निजभावोच्छलितचित्ताः सत्यः हे रसिकशेखर ! रसविशेषमयमेव दास्यं देयमित्याशयेनाहुः-त्वदिति । यद्वा, तत्तादृशनिरीक्षणात्तप्तात्मनामपि दास्यमेव देहीति तत्तापहरणेप्याशा परित्यक्तेत्यर्थः । दास्यं चोचितमेवेत्याहुः—हे पुरुषभूषणेति । सर्वत्रैवार्थे तवोपास उपास्तिः तस्य नाशो यासु ता इति श्लेषेण वसति विशेषणं च किम्वा हे सुन्दरस्मितनिरीक्षण ! अतो धूर्ततयैवेदं वदसीत्यवहित्थया गुह्यमाणं भावं वाक्चातुर्योऽभिव्यञ्जयन्ति त्वत्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वत्तो यस्तीव्रः कामस्तेन तप्त आत्मा यासां तासां नः अनेन दुःशील इत्यस्योत्तरं त्वत्कामतप्तानां तत्त्यागे कथं विचारो दोषो वा ? नहि काममहाभुजङ्गग्रस्तानां तयोरेकतरोऽपि सम्भवतीति निषेधार्थश्च तत्तस्मात् नोऽस्माकं सम्बन्धे प्रसीद आग्रहं त्यजेत्यर्थः । हे वृजिनार्द्देति छेदः यतः त्वदुपासनाशाः सत्यो वसतीर्विसृज्य तवाङ्घ्रिमूलं न प्राप्ता वयं तस्मात् यास्त्वत्सुन्दरेत्यादिलक्षणास्तासां ताः प्रति दास्यं देहि अस्माकं तु न तेन प्रयोजनमित्यर्थः । तासामपि नात्यन्ततदङ्गीकारात् सम्प्रदानत्वाभाव इति षष्ठ्यभिप्रायः पुरुषान् सखीनेव तत्तदुत्कण्ठया तत्तल्लोकुलवधूनेवेषा भूषयसि नाद्यापि ता इति तत्राप्यसम्भावना दर्शिता । यद्वा, पुरुषभूस्तत्र सत्ता पुरुषसामान्य इत्यर्थः । हे तस्य ऊषणा ! पीडक ! तज्जातिमात्रकलङ्ककारिन्निति सकोपसम्बोधनम् "ऊष रुजायाम्" इति ॥ ३८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपासनाशाः त्वत्सेवनेच्छावत्यः ॥ ३८—३९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे वृजिनार्द्दन ! दुःखहन्तः ! त्वदुपासने त्वद्भजन एवाशा यासां ताः वयं वसतीर्गृहान् विसृज्य योगिन इव तवाङ्घ्रिमूलं प्राप्ताः तत्तस्मात्नोऽस्माकं प्रसन्नो भव कीदृशः प्रसादः कार्य इत्याशङ्क्याहुः तव सुन्दरं स्मितं यस्मिंस्तेन निरीक्षणेन यस्तीव्रः स्मरतापस्तेन तप्ता आत्मनो नो देहा यासां ताः तासां नोऽस्माकं हे पुरुषरत्न ! त्वद्दास्यं देहि ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वृजिनार्द्दन दुःखनाशन ! वसतीः गृहान् त्वदुपासने आशा श्रद्धा यासां तास्तथा सुन्दरं च तत्स्मितं च सुन्दरस्मितं तन्निरीक्षणेन उद्भूतेन तीव्रेण कामाग्निना तप्त आत्मा देहो यासां ताः पुरुषभूषण ! पुरुषतिलक ! ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तस्मादस्मभ्यं प्रसीदेत्याहुः—तन्न इत्यादि । तस्मादन्यथा शङ्का निरस्तः नोऽस्मभ्यं प्रसीद हे ! वृजिनार्द्दन ! दुःखार्द्दन ! वयं कीदृश्यः वसतीर्विसृज्य त्वदुपासनाशाः सत्यस्तवाङ्घ्रिमूलं प्राप्ताः तस्माद्दास्यं देहि अर्थादस्माकमित्याशयः कीदृशीनां त्वत् त्वत्त एव तप्तात्मनां हे सुन्दर ! हे स्मितनिरीक्षणेन तीव्रः अतिशयोग्रः कामोऽपि यस्मात् यत् स्मितनिरीक्षणेन कामोऽपि कुपितस्तो यत इत्यर्थः ॥ ३८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वस्य भगवदेकभोग्यशरीरत्वमुपपाद्य प्रार्थयन्ति—तन्न इति । पूर्वश्लोकेनैव भर्तृशुश्रूषणविधिर्निराकृतः तदपरित्यागः सुतरामेव तेनैव निराकृतो भवति अनेनापि निराकरणं प्रार्थयन्ति भगवत्कृपाभावे तादृशेनैव सम्बन्धो भवेदिति कृपा हि सर्वतोऽधिका तत्तस्मात्कारणात्प्रसीद प्रसन्नो भव त्वयि प्रसन्ने सर्वं सेत्स्यतीति । ननु, भवतीनां प्रतिकूलमदृष्टं दुःखप्रापकमास्ति अतः कथं प्रसाद इति चेत्तत्राहुः—वृजिनार्द्दनेति । वृजिनं दुःखजनकं पापं स्वभावत एव सर्वेषां येन केनापि सम्बन्धेन तदर्दयसि प्रसादे हेतुमाहुः—तेऽङ्घ्रिमूलं प्राप्ता इति यस्तु चरणतलं प्राप्नोति प्रसादमपि स च प्रसादः पशुपुत्रादिरूपो मा भवत्विति स्वाधिकारमन्येभ्यो व्यावर्त्तयन्ति विसृज्य वसतीरिति गृहस्थाश्रमस्त्यक्तः न तु गृहमात्रमिति वसतीरिति बहुवचनं परित्यागेऽपि हेतुमाहुः त्वदुपासनाशा इति त्वत्सेवां करिष्याम इति आशामात्रेणैव पूर्वसिद्धं त्यक्तं तत्र समागतानां पुनः गृहसम्बन्धे किं वक्तव्यमिति अतो देयं प्रार्थयन्ति त्वत्सुन्दरेति तव सुन्दरं यत्स्मितं मोहकमप्यानन्दजनकं त्वत्सम्बन्धात्परमानन्दरूपं तादृशस्मितपूर्वकं यन्निरीक्षणं तेन जातः तीव्रो यः कामः तेन तप्तान्तःकरणानाम् अस्माकं पुरुषाणां भूषणरूप अनन्तकोटिकन्दर्पलावण्यरूप अतः पुरुषार्थरूपमेव दास्यं देहि अधिकारिभेदेन दास्यस्यानेकविधत्वादेवं रूपं स्वतापोक्त्या व्यज्यते उक्ततापविशिष्टानां यदेतत्तापनिवर्त्तकं तदिति किञ्च प्रभोरपेक्षितवस्तुसमर्पणं हि दास्यं भवति न त्वन्यथा एवं सति यथास्माकमुक्ततापेन प्रचुरा त्वदपेक्षा तथा तवाप्यस्मदपेक्षायां स्वयमुद्यम्यास्मदुपभोगः कार्य इत्यर्थः पर्यवस्यति अन्यथा दास्यस्य स्वकृतिसाध्यत्वेन दानोक्तिरनुपपन्ना स्यात् अत एव तथा सम्बोधनं पुरुषो भूत्वा भूषणरूपेति तद्धि कण्ठादिषु सर्वेष्वङ्गेषु भवति त्वमपि तथा भूत्वा दास्यं देहीति वाक्यैकवाक्यतया प्राप्यते भूषणत्वोक्त्यैव स्वतन्त्रपुरुषार्थताप्युक्ता मणिखचितं तद्धि भूषणत्वसम्पत्त्यर्थं मध्ये खाद्यावदपि भवति तेन महानपि तद्धारणार्थं क्लेशमपि धारयति तुच्छमपि तथा मध्ये कामोपयोग इति न तत्रुपाधिकृतं दास्यवरणमपितु तद्विपरीतमिति भावः । अतो दास्यार्थिन्य एव वयं नतु विवाहार्थिन्यः अत उपनयनाद्यपेक्षापि न लोकव्यवहारेण कर्त्तव्येति भावः ॥ ३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माद्गृहकुटुम्बादिकं परित्यज्य नारायणस्य भक्ता इव वयं तव दास्यमेव कामयामहे इत्याहुः—तन्न इति । यतस्त्वं नारायणतुल्यस्तस्मादस्मान् प्रति प्रसीद ननु मत्प्रसादप्रतिकूलं दुःखादृष्टं भवतीनामस्तीत्यतः कथं प्रसादः नारायणोऽपि किं सर्वेष्वेव प्रसीदतीत्यत आहुः—हे वृजिनार्द्दन ! तदपि दुःखं त्वमेवार्द्दय नारायणो ह्यवश्यमेव प्रपद्यमानानां दुःखमर्दयति वयं च तेऽङ्घ्रिमूलं प्राप्ताः तत्रापि कामनान्तररहितत्वेनैवेत्याहुः—विसृज्य वसतीरिति । ननु गार्हस्थ्यसुखं परित्यज्यापि मत्तः सुखं किञ्चनापेक्ष्य-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मर्थयध्वे इति जानीमस्तत्राहुः, त्वदुपासनायामेवाशा नतूपासनायाः फले कस्मिंश्चन सुखे त्वया दास्यमाने आशा यासां ताः अयमर्थः उपासनया त्वां सुखयाम इत्येवाभिप्रायेऽपि त्वत्सुखदर्शनोत्थं यदि नः सुखमाकस्मिकं भवेत्तर्हि को दोष इति । ननु, तर्हि कथमुक्तमस्माकं हृच्छयाग्निं सिञ्चेति सत्यं तदग्निज्वालाया अपि त्वमेव कारणमित्याहुः तव सुन्दरस्मित-निरीक्षणेन यत्तीव्रकामस्तेन तप्त आत्मा यासां तासा-मप्यस्माकं दास्यं दासीत्वमेव देहि नतु पत्नीत्वम् अत्र श्रीमद्वल्ल-भाचार्यचरणानामपि व्याख्या अतो दास्यार्थिन्य एव वयं नतु विहारार्थिन्यः अत उपनयनाद्यपेक्षापि न व्यवहारेणास्त्येषा ततश्चास्माकं कन्यात्वे परोढात्वे वा न कापि क्षतिः उभयीभावेऽपि त्वद्दास्यसम्भवादिति भावः । प्रकृतश्लेषणाधर्मोपियायां श्रीसनातन-गोस्वामिचरणानामपि विवाहे सति पत्नीत्वेन भजनादप्यौ-पपत्येन भजनं परममहासुखं तच्च श्रीभागवतामृतकाव्यादौ च प्रसिद्धमेव अत एवात्र दास्यविशेष एव प्रार्थितः अधुना च प्रार्थ्यते दास्यो भवामेत्येषा अयं भावः । काममहोदधिरत्नादेव स्त्रीलम्पटस्य तवास्माभिर्युवतिभिरुपासनं स्वाङ्गैरेव त्वत्सुखो-त्पादनलक्षणा स्वदत्तैवेत्यतो हृच्छयाग्निसेकप्रार्थनापि त्वदु-पासनाप्रार्थनैव कामाग्निरप्यस्माकं तदुपासनोपकरणमेव मुख्य-मित्यत एव समुचितमेव सम्बोधनपदं हे पुरुषरूपभूषण ! गौराङ्गीनामस्माकमिन्द्रनीलमणिमयसर्वाङ्गालङ्कारेति ॥ ३८ ॥

---

विशुद्धरसदीपिका ।

विवक्षितमुपसंहरन्ति—तन्न इति । तत् तस्मात् यतो वयं दयादिचरसर्वपरित्यागेन त्वत्सुखसुखिन्य इत्यर्थः । यद्वा, तद्दास्य-मेव नः अस्माकं प्रसीद प्रसादय हे वृजिनार्दन ! दुःखहन्तः ! दुःखं कामसुखापेक्षत्वेकादशावेवमुक्तम् अत एवाङ्घ्रिमूल-मित्यजादिरूपकानुक्तिस्तस्याः प्रेयसीभाव एवोचितत्वात् प्राप्ताः प्रकर्षेणाप्ताः प्रकर्षमेवाहुः—वसतीर्विसृज्येति । वसतीरित्यनेन गृहसुखमुपलक्षितं किमर्थमत आहुः त्वदुपासनाशाः तव परि-चरणैकाभिलाषाः न तु विरहणाभिलाषा इत्यर्थः । ततश्च दास्यं द्विविधं सहचरीभावोचितं प्रेयसीभावोचितमिति सूचितं तत्राद्य एवास्माकमभिलापणीय इति भावः । नन्वपरः कासा-मित्याशङ्क्य परदोषोद्घाटनस्यायोग्यत्वात् श्लेषेणैव सूचयन्ति—त्वदित्याद्युत्तरार्द्धेन । एवञ्च यास्त्वत्सुन्दरस्मितनिरीक्षणेन कामतप्तात्मानस्तासां पुरुषभूषण ! तासामेव प्रेयस्युचितं दास्यं देहीत्यन्वयः । श्लेषेण "दसु उपक्षये" इत्यस्मात् "ऋहलोर्ण्यत्" (३।१।१२४) दास्यमुपक्षयः सपत्न्यपेक्षया तस्यात्यन्ताभावेनेति भावः । ततश्च न वयं कामतप्ता न चान्याभिलाषोपतप्तास्ततः सहचरी-भावोचितमेवास्माकं धनमभ्यर्थनमिति दिक् ॥ ३८ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तदेव प्रार्थयन्ति—तन्नः प्रसीदेति । यद्यस्माद्वयं लक्ष्मीवरवां प्रपन्ना वसतीरित्युपलक्षणं पत्यपत्यादिसुहृदादिनैहिकामुष्मिक-सुखं विसृज्य तेऽङ्घ्रिमूलं प्राप्ताः किमर्थं तर्हि सर्वत्यागेन प्राप्तास्तत्राहुः—त्वदुपासनाशाः तव उपासने सेवने वा आशाऽभिलाषो यासां तवैवोपसमीपे आसने निवसने वाऽभि-लाषो यासां त्वदुपासनैवाशा परा काष्ठा यासां तथाभूता इति वा तत्तस्माद्धे वृजिनार्दन ! स्वभावत एव सर्ववृजिनानां दुःखानां शमन ! तथा पुरुषभूषण ! पुरुषेषु भूषण ! यद्वा, पुरु-षान्तरासंप्रतिपत्तेः पुरुषश्चासौ भूषणं चेति तथा नोऽस्मान् प्रसीदानुग्रहं कुरु नो दास्यं च देहि कथम्भूतानां नस्तत्राहुः त्वदीये सुन्दरे स्मितनिरीक्षणे ताभ्यां तीव्र उद्दीपितो यः कामानलस्तेन तप्तात्मनाम् अयं भावः । सर्ववृजिनार्दनस्य तव कामसन्तापकत्वमनुचितं तव मुखचन्द्राह्लादप्रकाशात्मकस्मित-निरीक्षणरूपचन्द्रिकया तापोत्पत्तिरप्यसम्भाव्या पुरुषस्य तव स्त्रीघातोऽप्ययोग्यः भूषणात्मकस्य च मनोरञ्जनस्य तवास्मद्भञ्जन-मप्यनर्हं तस्माद्वृजिनार्दनत्वात्तप्तात्मनो प्रसीद तापमुपशमय पुरुषभूषणत्वाच्च दास्यं देहि ॥ ३८ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तथा च भगवदेकभोग्यशरीराणामस्माकं मनोरथं पूरयेति पश्चिमदिग्गताः प्रार्थयन्ते—तन्न इति । यस्माद्वयं भगवत्पादरज एव प्रपन्नाः प्रपत्तिश्च भगवत्प्रसादं विना दुर्लभास्तस्मात्प्रसीद प्रसन्नो भव त्वयि प्रसन्ने किमपि नावशिष्यत इति भावः । ननु, दुःखप्रदं भर्तृसङ्गप्रतिबन्धकं दुर्दैवं भवतीनां वर्त्तते तत्र मया किं कर्त्तव्यमिति चेत्तत्राहुः—हे वृजिनार्दन ! सकलदुःख-निदानभूतदुरितविनाशन ! स्मरणादिनापि समस्तपापतृणदावा-नलस्य तवाभिमुख्यं प्राप्तानामस्माकं पापनिवारणे को भार इति भावः । एतेन स्वपत्यादित्यागकृतमपि पापं नाशयेति सूचितम्—

"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥
"तावद्रागादयस्तेनास्तावत्कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण ! न ते जनाः" ॥

इत्यादिशास्त्रात् अथ स्वस्य प्रसादादियोग्यतामाहुः—तेऽङ्घ्रिमूलं प्राप्ता इति । ननु, स्त्रीणां स्वभावः ईश्वरादपि प्रसन्नाद्गृहस्था-श्रमसुखमेव प्रार्थयन्ति ततस्तदनुकूलः किं प्रसादोऽपेक्षित इति चेत्तत्राहुः—वसतीर्विसृज्येति । गृहस्थाश्रम एवास्माभिस्त्यक्तो नतु गृहमात्रमिति सूचनाय वसतीरिति बहुवचनं यतो वयं त्वदुपासनाशाः भगवदुपासनां करिष्याम इत्येवंविधा आशा यासां ताः नतु तदन्यसुखमस्माकमपेक्षितं तथा च गन्ध-पुष्पादिनोपासनपराणामनन्यभक्तानामिवाऽवर्जनीयतया प्राप्ते सुखोपभोगे न कश्चिद्दोष इति भावः । यद्वा, तवोपास्यस्योपास-नस्य नाशो यासु ताः वसतीः तथाचाऽभीप्सितानुकूल एव प्रसादो युक्तो नतु तत्प्रतिकूलस्तस्मादितःपरं गृहसम्बन्धिवार्त्तापि न विधेया तत्र प्रेषणं तु दुर्निरस्तमिति भावः । एवं भगवन्त-मभिमुखीकृत्य प्राप्यमावेदयन्ति—त्वदिति । हे पुरुषभूषण ! दास्यं देहि अधिकारिभेदेन दास्यस्यानेकविधत्वात्तद्रूपं स्वतापोक्त्या-

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

मिव्यञ्जयति त्वत्सुन्दरं परमानन्दजनकं यत्स्मितपूर्वकं निरीक्षणं तेन तीव्रो यः कामस्तेन तप्तान्तःकरणानामस्माकं तथाचैतत्ताप निवर्तकं दास्यं देहीति भावः। दास्यस्य स्वयमसाध्यस्य देहीति प्रार्थनया यथोक्ततापनिवृत्तेस्तद्धारकत्वात्तस्य च त्वदधीनत्वाद्यथाऽस्माकं तन्निवृत्त्यर्थं त्वदपेक्षा तथा तवास्मदपेक्षायां स्वयमुत्पाद्यास्मदुपभोगः कार्य्यः प्रभुणाद्यपेक्षितवस्तुनि दत्ते दास्यं भवतीति भावः। ननु किमिदं कामोपाधिकं दास्यं प्रार्थ्यते शुद्धमेव तत्प्रार्थ्यतामिति चेत्तत्राहुः। पुरुषभूषणेति। पुरुषो भूत्वा भूषणरूपः यथा च भूषणं कण्ठादौ धार्य्यते तथा पुरुषाकारभूषणरूपस्त्वमपि न च धारणयोग्यस्तस्मान्मणिखचितभूषणधारणे लोष्ठाधारणवन्मध्ये कोऽपि भोगो ननु तदुपाधिकृतं दास्यमिति भावः। यद्वा तत्तस्मान्नः प्रसीद हे वृजिनार्द्दन! स्वप्राप्तिप्रतिबन्धकं पापं नाशय यतः प्राप्ता विसृज्य वसतीरिति। तस्मात्तव सुन्दरस्मितस्य नितरामीक्षणेन चिन्तनेन तीव्रो भजनाभिलापस्तेन तप्तात्मनां तपः संयतचित्तानां दास्ये लब्धाधिकाराणामस्माकं लक्ष्म्या इवास्मद्योग्यं दास्यं देहि यतो हे पुरुषेषु भूषण! तवापीदमेव योग्यमस्माकं च कामोपाधिकृतोऽपि तव सम्बन्धोऽलङ्कारायैवेति भावः। अनभिज्ञापक्षे नारायणसमो गुणैरित्युक्त्या त्वं नारायणगुणधारणे योग्यो वयं च तद्भक्तगुणधारण इत्याशयेनाहुः। तदिति। यस्मात्त्वं नारायणसमस्तस्मान्नस्तद्भक्ततुल्या अस्मान् प्रसीद ननु प्रसन्न एवाहमस्मि स्वस्मिन्मम कोपो भवतीभिः कदा दृष्ट इति चेत्तत्राहुः। हे वृजिनार्द्दन! दुःखविध्वंसकर! ननु नास्ति भवतीनां किमपि दुःखं गृहाद्युपद्रवजनितदुःखहेत्वसुरादिविनाशाय ममोद्युक्तत्वात्तस्मात्किमित्येव दैन्यमाविष्कुरुतेति चेत् तत्राहुः। त इति। तथा च गृहादिकं महाग्निज्वालया प्रज्वलतु तिष्ठतु वा नास्त्यस्माकं तत्प्रयुक्तं किमपि दुःखं सुखं वेति भावः। ननु भवत्वेवं यदर्थं वसतीः विसृज्य मदङ्घ्रिमूलं प्राप्तास्तदेव पाल्यतामिति चेत्तत्राहुः। त्वदुपासनाशाः तवोपासनायां सेवायां श्लेषेण उप अङ्गसङ्गेन स्थितिरुपासना यासां न तु उपासनया दास्यमानेकास्मिंश्चित्सुखे तावत्सुखार्थमङ्गसङ्गदानादिरूपोपासनापराणामस्माकमप्यवर्ज्जनीयतया प्राप्तेन सुखोपभोगेन को दोष इति भावः। ननु तादृशमुपासनं तु स्वपतेरेव सम्भवति न चाहं युष्माकं पतिः ननु अस्तु सम्प्रति विवाह इति चेन्नोपनयनरहितस्य मम सम्प्रति विवाहानधिकारात् विवाहितानां भवतीनामपि तदयोग्याच्चेत्याशङ्क्याहुः। त्वदिति। तादृशकामतप्तात्मनामप्यस्माकं दास्यं दासीभावमेव देहि तथा च न वयं विवाहार्थिन्यः किन्तु दास्यार्थिन्य एव अतस्तवोपनयनादिरहितत्वेऽस्माकं च कन्यात्वे परोढत्वे वा न कापि हानिः सर्वथापि दास्यसम्भवादिति भावः। यद्वा हे वृजिनार्द्दन! अस्माकं विरहदुःखदानमनुचितमिति भावः। न चास्त्यस्मदुःखनाशने कश्च न तव प्रयास इत्याशयेन संबोधयन्ति। हे सुन्दरस्मितनिरीक्षण! एतावतैवास्मदुःखनिवृत्तिरिति भावः। यतस्त्वत्स्मित एव यस्तीव्रः कामस्तेन तप्तात्मनामतस्तत्तापनिवृत्त्यर्थं विकसितमुखपङ्कजो भूत्वा दास्यमात्रं देहि न तु बहुप्रार्थयाम यच्छ्रयादेयं स्वरूपमात्मानं कृतवानसीति भावः। किञ्च काममहोदधिभूतत्वादेव स्त्रीलम्पटस्य तवास्माभिर्युवतिभिः स्वाङ्गैरुपासनं सुखजनकमतस्तत्सेचनप्रार्थनमपि त्वदर्थमेवेत्याशयेन सम्बोधयन्ति हे पुरुषभूषण! यद्वा गौराङ्गीनामस्माकमलङ्कारार्थं पुरुषाकारमिन्द्रनीलमणिमयं भूषणं विधात्रा रचितं तस्मात्स्वोत्पत्तिसार्थक्यायास्मत्कण्ठे संलग्नता त्वयावश्यं सम्पाद्येति नर्म व्यञ्जयन्ति हे पुरुषभूषणेति। मानिनीपक्षे ननु लोके परमसौन्दर्याकृष्टचेतसः स्त्रियो सदास्यं प्रार्थयन्ति भवत्यस्तु स्वामित्वमपि मत्प्रार्थनयापि नैवाङ्गीकुरुथेति महानन्याय इत्याशङ्क्याहुः। तदिति। तत्तस्मान्नः प्रसीद आग्रहमत्यर्थं च त्यज हे वृजिनार्द्दन! सर्वदुःखच्छेदकस्याऽस्मद्दुःखानुच्छेदनमनुचितमिति भावः। यद्वा वृजिनान्यर्द्दयत्यत एव स्वदुःखस्याऽनिवारणमनुचितमिति भावः। यद्वा वृजिनं दुःखमर्द्दयति प्रार्थयतीति स तथा च दुःखोदर्कं वस्तु न प्रार्थनीयमिति भावः। यतो निरपेक्षस्यापेक्षा केवलं दुःखायैव भवतीत्याशयेनाहुः। नेति। वसतीर्विसृज्य त्वदुपासनाशाः वयं तवाङ्घ्रिमूलं न प्राप्ताः तस्मात्त्वत्सुन्दरस्मितनिरीक्षणतप्तात्मनामेव दास्यं देहि न त्वस्माकं स्वामिनीभावमप्रार्थितत्वात् न ह्यप्रार्थितमनुत्तममपि वस्तु कस्यचिदुपादेयं भवतीति भावः। पुरुषानेव भूषयतीति तथा च त्व त्कामसन्तप्तचित्तो यदि जातोऽसि तर्हि गोपबन्धुरूपेण गोपान्भूषयेति भावः। यद्वा शरीरमात्रमस्माकं तव सविधे वर्त्तते मनस्तु स्वस्वगृहमेव प्रविष्टमत एतदाग्रहेणात्रावस्थाने कृतेऽपि नास्ति किञ्चित्फलमित्याहुः। तदिति। तत्तस्मादितः परमस्मासु प्रसाद एव विधेयो न तु वृथाग्रहः न चेदं तवोचितं स्वदुःखजनकत्वादस्य कर्म्मण इत्याशयेन संबोधयन्ति! हे वृजिनार्द्दनेति मत्सन्निधावेताः स्थिता इति न भ्रमितव्यं वयं तु तेऽङ्घ्रिमूलं विसृज्य वसतीः प्राप्ताः ननु अतश्चित्तानां त्वदुपासना न सम्भवति यतस्त्वदुपासनस्य समीपावस्थानादिरूपोपासनस्य नाशो यासु अतः स्वाभाविकास्मत्सुन्दरस्मितादिना तीव्रकामाक्रान्तता तव नोचितेति सूचयन्त्यः संबोधयन्ति हे सुन्दरस्मितनिरीक्षण तीव्रकाम नेदं पुरुषरत्नानां लक्षणमपि तु पुरुषापसदानामतः पुरुषभूषणस्य तव नेदमुचितमिति भावेन संबोधयन्ति हे पुरुष भूषणेति। तस्मात्पुरुषभूषणस्य तव त्वदर्थं तप्तात्मनामपि स्त्रीणां स्त्रीभावदानमयोग्यं किञ्चिद्दानावश्यकत्वे दास्यमात्रं दातुमुचितमित्याशयेनाहुः। रूपतस्त्वदङ्घ्रियोरात्मप्राप्तात्मनामपि दास्यमात्रं देहि सर्वथा विमुखाभिस्तु भाषणमपि तव नोचितमित्यर्थः। निवृत्तिपक्षे "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इत्याद्याः श्रुतयः परमात्मानमेवोपास्यमावेदयन्ति। तदिति। यस्मात्सर्वश्रुतितात्पर्यविषयो भवानेव तस्मादुपासनाय दीपानस्मानपि प्रसीदाऽसत्तात्पर्यविषयत्वमात्मनः स्वीकुरु यतो हे वृजिनार्द्दन! सर्वपापासंस्पृष्टत्वाद्यथात्वेनोपासितस्त्वमुपासकस्य दुःखमात्रबीजभूतपापमात्रं नाशयसि "स एष सर्वेभ्यः पाप्मभ्य उदित" इति सर्वपाप्मापगमाद्युक्तः स च परमात्मन एव सम्भवति। आत्मापहतपाप्मेत्यादिश्रुत्यन्तरात् "उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति त्वदुपासनात्सर्वपापनिवृत्तिः कथितेति भावः। ननु हिरण्यश्मश्रुरित्यादिरूपश्रवणात् य एषोऽन्तरादित्ये पुरुष इत्याधारश्रवणाच्च कथं रूपादिप्रतिपादनपराणां श्रुतीनां परमात्म-

वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम्।
दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥ ३९ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

परत्वं प्रशब्देनास्पर्शमरूपमव्ययं स भगवः कस्मिन् प्रतिष्ठितः स्वमहिम्नि आकाशवत्सर्वगतश्च नित्य इत्यादिश्रुत्या रूपादिरहितब्रह्मस्वरूपावगमादित्याशङ्क्याहुः। त इति। वसतीरायतनानि प्रतीयमानपरमेश्वरातिरिक्तप्रतिपाद्यरूपा विसृज्य तेऽङ्घ्रिमूलं प्राप्ताः यतस्त्वदुपासनायामाशा आशयो यासां ताः वयं तथा च परमेश्वरस्यापीच्छावशात् साधकानुग्रहार्थं मायामयरूपादि स्वीकारो न विरुद्ध्यते—

प्रकृतिं स्वामधिष्ठाय. सम्भवाम्यात्ममायया।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद !।
सर्वभूतगुणैर्युक्तं न मां पश्यन्ति सूरयः।

इत्यादि स्मृतेः। अशब्दमित्यादिशास्त्रं निरस्तसर्वविशेषज्ञेयब्रह्मपरं सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः हिरण्यश्मश्रुरित्यादिशास्त्रमुपास्यब्रह्मपरं तथा स्वमहिमप्रतिष्ठस्याधारविशेषोपदेशोऽप्युपासनार्थो न विरुद्ध्यत इति भावः। तस्मादनुग्रहार्थं प्रकटितलावण्यसागरविग्रहस्य तव सुन्दरस्मितस्य निरीक्षणे यस्तीव्रः कामोऽभिलाषस्तेन तप्तात्मनां जीवानां हे पुरुषोत्तम ! दास्यं देहि त्वदनुग्रहं विना तव दास्यस्य दुर्लभत्वात्तेन विनोद्धारासम्भवात्तत्प्रदानेन जीवानुद्धरेति भावः। यद्वा तव सुन्दरं यत्स्मितं चराचरात्मकं निरीक्षणं भूतात्मकं च जगत्तत्र तीव्रो यः कामस्तेन तप्तात्मनां तथा च तादृशतापनिवृत्त्यर्थं स्वदास्यं देहीत्यर्थः। निःश्वसितमस्य वेदावीक्षितमेतस्य पञ्चभूतानि स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलय इत्यभियुक्तवाक्ये चराचरादेर्भगवत्स्मितादिरूपेण निरूपणं द्रष्टव्यम् ॥ ३८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्तस्मात् हे वृजिनार्दन ! दुःखनिर्नाशक ! प्रसीद प्रसन्नो भव। ननु प्रसन्नेन किमनुष्ठेयमत आहुः। तव सुन्दरस्मितयुक्तेन निरीक्षणेन यस्तीव्रकामस्तेन तप्तचित्तानां नोऽस्माकं दास्यं देहि। ननु गृहाद्यासक्तो जनः कथं मद्दासो भवेदित्यत्राहुः। त्वदुपासने आशा यासां ता वयं वसतीः गृहान् विसृज्य तव पादमूलं प्राप्ताः "वसती रात्रिवेश्मनोः" इत्यमरः ॥ ३८ ॥

---

भाषा टीका।

हे दुःखन के काटन हारे ! तुम्हारी उपासनामे विचित्र आशा जिनके लगि रही ऐसी हम तुम्हारे चरणन के समीप आई हैं। तासों अब तुमें हमारे ऊपर प्रसन्न होओ तुम्हारी सुन्दर मन्द मुसिक्यान सहित चितवनं सो तीव्र भयो जो काम देव तासूं देह जिनके जरे जांय हैं ऐसीं जो हम हैं तिनकों हे पुरुष भूषण ! अपनो दास्य भाव देओ पुरुष भूषण या सम्बोधन कहवे को गोपी न को ए अभिप्राय है, कि जैसे अपने सखान के भूषण हो रहे हौ तैसे हम स्त्रीन के भूषण क्यों न हो ओहो ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु गृहस्वाम्यं विहाय मद्दास्यं किमिति प्रार्थ्यतेऽत आहुः। वीक्ष्येति। अलकावृतमुखं केशान्तैरावृतमुखं तथा कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन् अधरे सुधा यस्मिंस्तच्च तच्च एवं तव मुखं वीक्ष्य दत्ताभयं भुजदण्डयुगं वक्षश्च श्रिया एकमेव रमणं रतिजनकं वीक्ष्य दास्य एव भवामेति ॥ ३९ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

ननु दास्यरसिकास्तर्हि प्राय एतादृशभावानां श्रीदामसुवलादीनामिव दास्यमङ्गीकुरुतेति चेत्तत्र किम्वा दास्यविशेषप्रार्थने हेतुं सभावमाहुः। वीक्ष्येति। साक्षादन्तिकं दृष्ट्वा प्राधान्येन श्रीमुखस्य भुजयोर्वक्षसश्च वर्णनं गण्डचुम्बनाऽधरामृतपानगाढालिङ्गनाद्यभिप्रायेण तत्र चालकैर्ललाटोपरि विलसद्भिरावृतमित्यूर्ध्वभागस्य कुण्डलश्रीति द्वयोः पार्श्वयोः हसितेनावलोको यस्मिन्निति अधोमध्यभागयोरित्येवं सर्वत्र शोभोक्ता स्थलरूपकेण गण्डयोर्दर्पणादिभ्योऽपि सौन्दर्यं ध्वनितं दत्तमभयं भक्तानां दैत्यवधादिना येनेति वलिष्ठत्वादिगुणः तेन च चातुर्य्येण पत्यादिभ्यो भयं परिहृतं वस्तुतस्तु गाढाश्लेषेण कामादिभयहरत्वमभिप्रेतं दण्डरूपकेण सुवृत्तपृथुदीर्घत्वाद्याकारसौष्ठवं श्रिया लक्ष्म्या निजशोभया वा कृत्वा एकं श्रेष्ठमाद्वितीयं वा रमणमिति परमसौन्दर्य्यं शोभाधिक्यं चोक्तं चकारद्वयं विलोक्येति पुनरुक्तिश्च श्रीमुखवद्भुजवक्षसोरपि प्राधान्यविवक्षया किम्वा दासीत्वे तद्दर्शनमात्रैकहेतुतोऽन्यथा तत्तत्परममोहनतैव दर्शिता अतो दासीत्वेन तत्तद्रसविशेषस्य यथार्थं साक्षादनुभवसंसिद्धया दास्य एव भवाम इत्यर्थः। वर्त्तमानायां पञ्चमी गूढोऽयमभिप्रायः विवाहे सति पत्नीत्वेन भजनादप्यौपपत्येन भजनं परममहासुखं तच्च श्रीभागवतामृते काव्यालङ्कारादौ च प्रसिद्धमेव अत एवात्र दास्यविशेष एव प्रार्थितः अधुना च प्रार्थ्यते दास्य एव भवामेति अन्यत्तैर्व्यञ्जितं यद्वा कुण्डलयोः श्रीः शोभा येन तन्मुखं केषां चिन्मते श्रीति दीर्घपाठः ततश्च कुण्डलयोः श्रीस्वरूपे गण्डस्थले अधरसुधां च द्वन्द्वैक्यं तथा हसितं चावलोकं च इति सर्वेषां प्राधान्यं द्योतितं तच्चकाराभ्यां व्यञ्जितमेव विलोक्यं सुदृश्यं परमसुन्दरं यद्वा जगतामेव विशेषेण लोक्यं दृश्यं यद्वक्षस्तत् पुंसामपि मनोहरत्वात् एतदेवोक्तं श्रीकपिलदेवेन वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानमिति अस्यार्थः ऋषभस्य सर्वश्रेष्ठस्य श्रीकृष्णस्येत्यर्थः। निजाशेषभगवत्ताप्रकटनात् पुंसामपि किमुत स्त्रीणां साक्षात्तथाऽनुक्तिर्मीतर्युक्तेरिति अप्यर्थे चशब्दः श्रिय एकं रमणं क्रीडास्थानमपि सदा तत्र निवासात् किं वा सुखप्रदमपि सदा तदा श्लेषात्। यद्वा श्रियः शोभाया अपि एकं श्रेष्ठमद्वितीयं वा रमणं विसर्गलोपे संधिरार्षः ततश्च चकारोऽन्वाचये प्रथमः अप्यर्थे द्वितीयः एवं श्रीमुखाद्भुजयोर्गौणत्वं ततोऽपि वक्षसोऽभिप्रेतं शोभासुखातिशयवत्त्वेऽपि तस्य लक्ष्म्याक्रान्तत्वेन सापत्न्यादसूयया गौणत्वमधिकं यद्वा चकाराभ्यां पूर्ववत् सर्वेषामेव प्राधान्यं द्योतितं

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सर्वेषामपि प्रत्येकं प्राधान्येन दासीत्वे हेतुत्वात् एतेनास्वर्ग्यमित्यस्योत्तरं त्वच्छ्रीमुखादिवीक्षणेन औपपत्यं जन्यते तत्रास्माकं को नाम दोष इति किम्वा औपपत्येन त्वद्भजने सर्वानन्दादेर्मोक्षादपि वैकुण्ठलोकसुखादपि लक्ष्म्यादिभजनानन्दादपि च परमसुखविशेषसिद्धेः किं नामास्वर्ग्यत्वादिकम् अतः कुलस्त्रीणामेव त्वया सह तदुचितमिति श्लेषार्थः एतादृशं तव श्रीमुखादिकं वीक्ष्यापि तव दास्यः कर्म्मचर्य्योऽपि भवाम सम्भावनायां पञ्चमी भवेम किं काक्वा अपि तु नैवेत्यर्थः । तत्र हेतुः श्रिय एव एकं रमणमिति सर्वेषामेव विशेषणं चञ्चलायास्तस्या एव ननु स्थिराणां पतिव्रतानामस्माकं त्वन्मुखादिरमणमिति यद्वा कुण्डलश्रीत्यादिरूपम् अलकावृतमुखं तव त्वया वीक्ष्य विशेषेण ईक्षयित्वा दर्शयित्वा भुजदण्डयुगं च विलोक्य विशेषेण लोकयित्वा दर्शयित्वा वक्षश्च दर्शयित्वा भयं प्रति वयं दत्ताः भयाय समर्पिता वयमित्यर्थः । अतोऽस्माकं भयाभावाय अमद्दास्यो मद्रहितमुखो भव ॥ ३९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु भवत्यो न धनादिना मूल्येन क्रीता न वा दत्तभृतयः कुतो दास्यो भवेयुः उच्यते अन्यत्रैव खल्वसावन्योऽन्येन स व्यवहारः भवति तु स्वमुखादिदर्शनदानमेव मूल्यं भृतिश्चेत्याहुः । वीक्ष्येति । विशेषेण दृष्ट्वा विशेषमेवाहुः । अलकावृतेत्यादिविशेषणैः तत्र चालकैर्ललाटोपरि विलसद्भिरावृतमित्यूर्ध्वभागस्य कुण्डलश्रीति द्वयोः पार्श्वयोः हसितेनावलोको यस्मिन् इति अधोमध्यभागयोरित्येवं सर्वत्र शोभोक्ता स्थलरूपकेण गण्डयोर्विस्तीर्णत्वं कुण्डलश्रीत्यनेन स्वच्छत्वं च ध्वनितम् अधरे च सुधानुमानं दर्शनमात्राल्लोभविशेषोत्पत्तेः सौरभ्यविशेषानुभवाच्च तथा दत्तमभयं भक्तानां दैत्यवधादिना येनेत्यादि बलिष्ठत्वादिगुणः तेन च चातुर्य्येण पत्यादिभ्यो भयं परिहृतं वस्तुतस्तु गाढाश्लेषेण कामादिभयहरत्वमभिप्रेतं दण्डरूपकेण सुवृत्तपृथुदीर्घत्वाद्याकारसौष्ठवम् अत्राप्येवं वैशिष्ट्यमुक्तं तथा श्रिया वामभागस्थस्वर्णवर्णलक्ष्मीरेखारूपया लक्ष्म्या कर्त्र्या एकं श्रेष्ठं रमणं यस्मिन्निति परमसौन्दर्य्यादिसम्पत्तिनिधानत्वमुक्तं चकारद्वयं विलोक्येति पुनरुक्तिश्च निजवासभुजवक्षसोर्विशेषाश्रयताविवक्षया तयोस्तयोर्द्वयोरेका क्रिया चैकसंप्रयोजनजनकत्वात् तादृशगण्डाधरमण्डिते श्रीमुखे हि चुम्बनपाने भुजवक्षसोश्चालिङ्गनमात्रमभिलषितमिति अत्रालकादीनामुक्तिक्रमेणेदं गम्यते प्रथमतो मुखस्य तत्तत्सौन्दर्य्यदर्शने जातेऽपि लज्जया न चातुरक्षेण दर्शनं किन्त्वत्युत्कण्ठया पश्चादेव तत इच्छाविशेषेण येन भुजौ दृष्टौ तस्य तु विश्रामो वक्षस्येवेति तथा क्रमो ज्ञेयः एवं दासीत्वे हेतुः परममोहनतेयति ध्वनितं किञ्च भृतिर्मूल्यं च खलु विषयदानमेव लोके दृश्यते तत्तु त्वयि तत्तद्रूपशोभावति मधुराधरसुधे लोभनीयभुजादिस्पर्शे पूर्णलक्ष्मीनिधानवक्षसि लब्धे स्वतः सिद्धमेवेति तथापि वीक्ष्येति तेषां नेत्रस्वञ्जनवन्धोऽपि ध्वनितः तत्रालकानां पाशत्वं कुण्डलयोस्तदन्तिमकुण्डलिकारूपत्वं गण्डयोस्तन्निधानस्थलत्वम् अधरसुधाया लोभ्याहारत्व हसितावलोकस्य विश्वासजनकस्वपालितत्वअनद्धयाविलासत्वं तत्र भुजदण्डयुगस्य च दत्ताभयत्वमयं पल्लवयुक्तत्वादिति भावः । तादृशवक्षसश्च सुखचारप्रदेशत्वमित्यपि ज्ञापितम् अन्यत्तैः यद्वा कुण्डलयोः श्रीः शोभा येन तन्मुखं केषांचिन्मते श्रीति दीर्घः पाठः ततश्च कुण्डलयोः श्रीहेतुगण्डस्थले चाधरसुधा च तासां द्वन्द्वैक्यं तथा हासितं चावलोकश्च तत्तच्च वीक्ष्य इति सर्वेषां प्राधान्यं द्योतितं विलोक्यं सुहृद्यमिति निषेधार्थस्तु ननु यद्येवं तर्हि कथं ममाङ्गानि मुहुर्वीक्षमाणा एव तिष्ठथ तत्र साक्षेपमाहुर्वीक्ष्येति अत्रापि काक्वैव निषेधो व्यङ्ग्य इति ॥ ३९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु भोग्यं गृहादिकं विहाय किमिति मद्दास्यं प्रार्थ्यते इत्यत्राहुः । वीक्ष्येति । कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन्नधरे सुधा यस्मिन् स्मितयुक्तोऽवलोको यस्मिंस्तथालकैर्दचूर्णकुन्तलैरावृतं मुखमाश्रितानामभयप्रदं भुजदण्डयोर्युग्मं श्रियो लक्ष्म्या एकं मुख्यं रतिजनकं क्रीडायोग्यं वा वक्षश्चावलोक्य तवैव दास्यो भवाम त्वद्रूपस्य निरतिशयभोग्यत्वादिति भावः ॥ ३९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे वीक्ष्य ! दर्शनीय ! वयं तव दास्यो भवामेत्यन्वयः "आशिषि लिङ्लोटौ" इति आशिषि लोट् दासीभूत्वाशिषं कामयामह इत्यर्थः । दासीभावे कारणमाहुः । अलकेति । कुण्डलश्रिया युक्तं गण्डस्थलम् अधरसुधा च यस्य तत्तथा हसितेन युक्तमवलोकं च प्रतिजनं दत्ताभयं भुजदण्डयोर्युगं च श्रिय एकरमणं प्रधानरतिस्थानं वक्षश्च विलोक्य दृष्ट्वा विचार्य वा वीक्ष्येति वा ॥ ३९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ किं दास्यं दास्यसि दास्यस्तु वयं भवाम एवेति सिद्धवदन्या आहुः । वीक्ष्येत्यादि । तव मुखं वीक्ष्य दर्शनीया येऽलकास्तैरावृतं पश्चात्कर्मधारयः कुण्डलयोः श्रिया युक्तं गण्डस्थलं यस्य तत्तथा अधरे सुधा यस्य तत्तथा पुनः कर्मधारयः कीदृशं श्रिया हसितसहितोऽवलोको यत्र तत्तथा भुजदण्डयुगं च कथंभूतं दत्ताभयं विलोक्यं दर्शनीयं वक्षश्च कर्मधारयः कीदृशं श्रिया हेतुभूतया एकरमणम् एतानि यथा स्वभावसिद्धानि भवन्ति तथा वयमपि दास्यो भवामेत्यर्थः । अथवा वीक्ष्य विलोक्येति । पूर्वकाले क्त्वाल्यप् तथातिसुरसम् ॥ ३९ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ननु भवतीनां सर्वासामेव दास्यवरणे को हेतुः सालोक्यादेरपि फलस्य विद्यमानत्वात्तत्राहुः । वीक्ष्यालकावृतमुखमिति । अनेन लोकेप्सायां पतिर्न त्यक्तव्य इत्यस्योत्तरमुक्तं लोके हि पुरुषार्थत्रयं चतुर्विधो मोक्षः इन्द्राद्यैश्वर्यभावेन स्वर्गप्राप्तिः इह लोके परमा लक्ष्मीः तदत्र त्रयमपि दास्ये सर्वोत्कृष्टमस्तीति । तदुपपादयन्ति । प्रथमं सारूप्यं सालोक्यं सामीप्यं सायुज्यमिति मोक्ष-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भेदाः ते दास्याग्रे अप्रयोजकाः यतो मुखारविन्ददर्शनेन ते कामा निवर्त्तन्त इति भक्तिरूपमुखारविन्दस्य तदपेक्षयो त्कृष्टधर्मवत्त्वं निरूप्यते अलकाः सारूप्यमिव प्राप्ता भ्रमराः ते बहव एवात्र आवृत्य मुखं तिष्ठन्ति अतः सारूप्यं गतानामपि यदि भक्तिशेषत्वं तदा किं सारूप्येण किञ्च मुखं कुण्डलश्रि कुण्डलाभ्यां श्रीर्यस्य कुण्डलयोर्वा श्रीर्यस्मात् सामीप्ये हि नैकट्यं भवति । अत्यन्तसामीप्यं जायमानमपि कुण्डलादप्यधिकं न भविष्यति ते चेत्सांख्ययोगरूपे भगवत्प्रमाणावलम्बिनी भगवदधीनगतिमती पुनर्भगवन्मुखनिरीक्षके तदा किं सामीप्येन किञ्च गण्डस्थलाधरसुधीमिति । गण्डौ स्थलरूपौ विशालौ स्थले हि रसः पातुं शक्यत इति अधरे च सुधा यस्मिन् गण्डस्थले स्थित्वा अधरसुधा पातुमत्र शक्येति सालोक्ये हि आनन्दमात्रमक्षरामृतपानञ्च अक्षरापेक्षयापि गण्डस्थले स्थितिः सुप्यनार्थमुत्तमाऽधररसश्च अक्षररसादुत्तम इत्युक्तं कुण्डलश्रीयुक्तं गण्डस्थलमित्यस्मिन्पक्षेऽपि सामीप्यात् भक्तौ शास्त्रीयो रसः अधिको निरूपितः परस्परं स्वद्गुणवादरूपः अक्षरादाधिक्यं तु अधररसे स्पष्टमेव किञ्च हसितावलोकमिति । हसितपूर्वकमवलोको यस्मिन् ब्रह्मानन्दे प्रविष्टानां न भक्तिविलासः हासो हि सर्वरसोद्बोधरूपः ज्ञानं चाविर्भूतं ब्रह्मानन्दे तु द्वयमप्यव्यक्तं जले निमग्नस्य जलपानवत् अनुभवरसो हि भिन्नतया स्थितौ भवति । अतो भक्तिरूपमुखस्य दृष्टत्वात् दास्यमेव फलं न मोक्षः भुजदण्डयुगञ्च विलोक्य इन्द्रादिभावेनापि स्वर्गो न प्रयोजक इति निरूपयन्ति दत्ताभयमिति । स्वर्गे इन्द्रः परमकाष्ठां प्राप्तः तेऽपि दैत्येभ्यो निरन्तरं भीताः इन्द्रादयः तेषामप्यभयदातृ भगवतो भुजदण्डयुगलं तच्चेदत्रैवास्ति तत्परित्यज्य किमिन्द्रत्वेन चकारात्र केवलमभयमात्रं प्रयच्छति । किन्तु क्रियाशक्त्या यज्ञादिना हविरपि प्रयच्छति । यथाग्रे इन्द्रः स्वाधिकारसमाप्तौ मुक्तो भवति । दण्डपदेनानुल्लङ्घ्यशासनत्वमुक्तम् उभयत्र च दण्डो युगपदेन निरूपितः ततो हि सर्वथा दैत्यनाशो भवति किञ्च वक्षोऽपि विलोक्य लोकानां श्रिया रमणं भवति । श्रीरपि तत्र रमते चकारादर्थस्यापि अतो दास्य एव भवामः अत्र वीक्षणस्य दासीभवनहेतुत्वोक्त्या यत्रायं भावो नास्ति तेषां नैतद्वीक्षणमास्ति विधिप्रयुक्तत्वाभावेन तद्विपरीतविध्यनङ्गीकारश्च युक्त इति ज्ञाप्यते यद्युक्तं भगवता अस्वर्ग्यमित्यादि स्वभजने दोषपदकं तदपि षड्भिर्गुणैर्निवारितं नहि परमपुरुषार्थसाधकं पापं भवति फलत एव पापस्य निन्द्यमानत्वात् ॥ ३९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यूयं यन्मम दास्यो भवथ तत् किं मया मूल्येन क्रीताः स्थ स्वीयदत्तभृतयो वा तत्र भवता अस्मत्समुचितमौल्यात् कोटिकोटिगुणितेनास्मदद्दष्टाश्रुतचरेण महानर्घ्येण हसितावलोकचिन्तारत्नेनास्मान् वयःसन्ध्यारम्भ एव क्रीत्वा स्वीयकुञ्जमन्दिरमानीय नीलनिधि पद्मनिधि जाम्बूनदमकरयुगलचिन्तामणिमयस्थलीमणिसम्भलक्ष्मीविलासास्पदनीलमणिमन्दिरगण्यलकादिव्याजेन स्वसंपत्तीर्दर्शयित्वा देवैरपि दुर्लभममृतं प्रतिदिनं भोजयसीत्याहुः । वीक्ष्येति । यदा शोणवर्णोष्णीषं शिरसि बध्नासि तदा दासीजनेन कद्ध कतिकयोत्कृष्योत्कृष्योर्ध्वनयनात्त्वया च स्वाङ्गुल्या यत्नाभिरुध्योष्णीषोष्णीपान्तः प्रवेशनात् भालवामदक्षिणप्रान्तयोरेव दृश्यमानमूलभागैरलकैरावृतमनाच्छन्नं मुखं वीक्ष्येति यदा चूडं बध्नासि तदा भालाग्रवामदक्षिणभागेष्वपि कुञ्चितैरनतिदीर्घैरलकैरा ईषदावृतं मुखं वीक्ष्य अभ्यङ्गोद्वर्तनादिसमये सम्प्रयोगभरसमये च अलकैरासम्यक् प्रकारेणैव आवृतमाच्छन्नं मुखं वीक्ष्य ईक्षणाभ्यामास्वाद्यमानमाधुर्यभरीकृत्य वयं दास्यो भवामः मुखं कीदृशं कुण्डलाभ्यां समयभेदेष्वलकैरनावृताभ्यामीषदावृताभ्यां सम्पूर्णावृताभ्यां च अचपलाभ्यामीषच्चपलाभ्यामतिचपलाभ्यां च श्रीः पृथक् पृथक् शोभा यत्र तत् हसितप्रहसितलसमये गण्डयोरपि सूक्ष्मण्योर्वितततदात् गण्डस्थलेऽपि अधरसुधा अधरमाधुर्य्यच्छलनं यस्य तत् गण्डस्थलात् गण्डस्थलमधिरुह्य गोपीनयनचकोरैः पीयमाना अधरसुधा यस्य तत् रहस्यसमयभेदे तु गोपीनां गण्डस्थले अधरसुधा यस्य तत् गण्डस्थलयोर्गोपीनामधरसुधा यस्य तत् यद्वा कुण्डलयोः श्रीः प्रतिबिम्बरूपा शोभा ययोस्ते गण्डस्थले यस्मिन् अधरे सुधा यस्मिन् तच्च तच्च तदित्येकपदं हसितयुक्तोऽवलोको यत्र तद्धासितं प्रफुल्लता गोपीनां कुमुदानां च अवलोकाद्यस्मादिति वा ननु युष्मत्पतय एतदसहिष्णवः फूत्कारेण कंसराजतो मम भवतीनां च भयमुत्पादयिष्यन्ति तत्राहुः । दत्तमभयं महेन्द्रदर्पकादिभ्योऽपि पर्वतधारणादिना येन तथाभूतं भुजदण्डयुगमिति तथा चेत्त्वद्भुजदण्ड एव कंसपशोः प्राणहारको भविष्यतीति भावः । एवं च व्यञ्जितेन वीररसेन शृङ्गाररसः पुष्टो भवति स्म ननु परनारीरहं धर्मात्मा स्वदासीर्न करोमीति तर्जन्या कोऽयमिति पृच्छन्त्यः सत्यं भो धार्मिकचूडामणे ! गोपानां नारीर्न दासी करोषि किन्तु नारायणस्य नारीं लक्ष्मीमपि वैकुण्ठाद्बलादानीय स्ववक्षसा वहसीत्याहुः । वक्ष इति । श्रिया लक्ष्म्या कर्त्र्यां लज्जावशात् सुवर्णरेखारूपया एकं मुख्यं रमणं यत्र तत् तस्मादधुना ते कियद्वयो बभूव चतुर्दशभुवनेषु मध्ये तदूर्ध्वलोकेष्वपि ब्रह्माण्डाद्बहिर्महावैकुण्ठलोकस्थेष्वपि मध्ये कस्यापि कामपि सुन्दरीं नारीं त्वं न त्यक्ष्यसीति जानीम इति व्यञ्जितं भवति ॥ ३९ ॥

### विशुद्धरसदीपिका ।

अथ तुरीयदिक्स्थितास्तदीयकथिते यत्किंचित्कृताधधानाः आत्मनिप्रेयसीत्वाभिमाना प्रखरोक्तिप्रधाना भवद्वयस्पर्शित्वात्तादृस्थ्यमवलम्बमानाः का नाम तव दास्यो न भवेयुरित्यभिप्रायेण प्रागुक्तमेव द्रढयन्ति । वीक्ष्येति । अत्र हे पुरुषभूषणेत्यनुवर्त्य तव भवामेति संबन्धः । ननु भवत्यो न धनादिना क्रीताः न वा दत्तभृतयः नच बन्धानीता इति कथं दास्यो भवथेत्याशङ्क्य तत्त्रिविध्यमेवात्मनि प्रतिपादयन्ति । तत्र श्रियैकरमणं वक्षो वीक्ष्येति सर्वसम्पदाधिष्ठात्र्याः श्रिय एकमनन्यसाधारणं रतिप्रदमिति धनादिना क्रीतत्वं दत्ताभयं च भुजदण्डयुगमित्यभयदानमेव भृतिरिति द्वितीयस्योत्सरं सकलमेव वाक्यं तृतीयस्य तत्र प्रस्तुने अप्रस्तुत व्यवहारसमारोपरूपया समासोक्त्यात्मनि मृगीत्वमध्यस्य तस्मिन् लुब्धकत्वमध्यवस्यन्ति तेन बन्धानीतत्वं सेत्स्यति । तथाहि तत्रालकानां गुल्मत्वम् आवृतेति विवृतवत्वं मुखस्य कपटफलकत्वं कुण्डलयोर्मकरोत्त्वं गण्डस्थलयोरुभयतः पल्वलीत्वम् अधरसुधाया नीरत्वं हसितावलोकस्य लोभ्याहारत्वं भुजद्वयस्याभयप्रदत्वं श्रियैकरमणमिति सजातीयविश्रामस्थानत्वेनाश्वस्तत्वम्

विशुद्धरसदीपिका।

मुरलीकलस्य चाकर्षकध्वनित्यमध्ययसेयमिति विलोक्येति वक्षोविशेषणमिति न पौनरुक्त्यम् शेषं स्पष्टम् ॥ ३९ ॥

---

श्रीरामनारायणकृतभावभावविभाविका।

ननु किमिति स्वगृहस्वामिन्योऽस्मद्दास्यो भाविष्यथ तत्राहुः। वीक्ष्येति। यद्वा न यूयं मया बद्ध्वानीता नवापद्रक्षिता नवा द्रविणक्रीता इति कथं दास्यो भविष्यथ तत्राहुः। वीक्ष्येति। तवालकावृतमुखं वीक्ष्य दास्यो भवामः इदमत्राभिप्रेतम् अस्माकं मनः प्रथमतः स्वभावत एव रजसा कुटिलं तमसा कृष्णं सत्त्वेन स्निग्धं च पुनश्च स्नेहोद्रिक्ततव ध्यानेन त्रिभङ्गललितश्यामसुन्दरसुस्निधत्वन्मूर्त्याकारतयापि तादृशं स्वसमानतादृक्त्रिगुणान्वितत्वदलकदर्शनेन बन्धुबुद्ध्या तत्र सङ्गतं तैरलकैर्बध्नातीति बन्धुरिति बन्धनमेव बन्धुकृत्यमात्मनश्च नागपाशाकारतया बन्धकस्वभावत्वमाकलय्य कुटिलकृष्णस्वभावतया भवानिव विश्वासघातमविगणय्य तैरेव निबद्धमिति बद्ध्वानीतत्वेन दास्यार्हत्वं सूचितम् किञ्च कीदृशमलकावृतमुखं कुण्डलश्रिगण्डस्थलाधरसुधं बहिर्दिव्यमकराकृतमणिमयकुण्डलयोः श्रीर्ययोस्तादृशे इन्द्रनीलप्रभे कपोले यस्मिन् तथाधरयोः वज्रमुक्तामणिलसनदशनप्रभात्मकहसनसुधा यस्मिंस्तच्च तच्च तथा वीक्ष्य दास्यो भवाम अत्रायमाशयः यत्र धनिभिर्बहुनिधिर्निधीयते तत्र प्रदीपः प्रज्वाल्यते ध्वजश्चारोप्यते तद्रक्षकतया नागश्चावधार्य्यते तथा मकरध्वजारोपितमणिगणनिकरमकरानिधौ मकरकुण्डल एव तन्मकराकारध्वजे तद्गतमणय एव मणिप्रदीपाः श्यामस्निग्धोज्वलकपोलेन्द्रनीलमणिमुकुरपुटमेव संपुटम् अधरावेव तद्विद्रुमाभरणं तत्र दशनगणा एव सुधास्राविचन्द्रमणयः तदावरकालकावेव रक्षकनागयुगलं तमेव लक्ष्म्या अपि प्रलोभकं निधिं वीक्ष्य तत्क्रीता एव दास्यो भवामः पुनः कीदृशं तत् हसितावलोकमवलोक्यतेऽनेनेत्यवलोकः कूर्मवायुर्नेत्रे च तानि हसितानि दशनकुन्ददीधितिना पराभूतानि येन तत्तथा चात्रेन्द्रनलिकारे कपोले इन्द्रनीलनिधिदर्शनव्रातमेव कुन्दनिधिर्मकरकुण्डल एव मकरनिधिः अवलोकसूचितोन्मीलनकरकूर्म एव कूर्मनिधिः मणिगणपूरितकण्ठ एव शङ्खनिधिः नेत्रे पद्मनिधी तत्पूरितोऽनङ्ग एवानङ्गनिधिरित्यष्टनिध्यावरण परिवृतभगवन्मुखं वीक्ष्य तन्निधिवलोभेन तदाराधनाय वा दास्यो भवाम तथा श्रिया सर्वसम्पदधिष्ठात्र्या चञ्चलत्वेन प्रसिद्धत्वेपि तद्वक्षःश्रीलोभेन स्वभावसिद्धचाञ्चल्यमुत्सृज्य स्थैर्येण न्युषितया लक्ष्म्या निर्णीतमेकं मुख्यं रमाया अपि रमणं किमुतान्यासां यद्वक्षः तद्विलोक्य दास्यो भवाम यदा तल्लोभेन सर्वलोकेश्वरी श्रीरपि दास्यं गता तदालिङ्गनरसाभिज्ञाः प्रीत्येकमूर्त्तयोऽचलचित्तास्त्वदेकनिष्ठा वयं दास्यो भवाम इति किमत्र चित्रं तथेन्द्रवृष्ट्यादिसर्वापत्सु दत्ताभयं भुजदण्डयुगं विलोक्यापत्सु रक्षितत्वेनाग्रेऽपि तद्विरहकामचिन्तार्त्ति इग्जलवृष्ट्याद्यापद्रक्षायास्तदधीनत्वेन च दास्यो भवाम इति ॥ ३९ ॥

---



श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु यदि निरुपाधिकप्रेमवत्यो भवत्यस्तर्हि सालोक्यादिफलं प्रार्थ्यतां किमर्थं दास्यं प्रार्थ्यत इत्याशङ्क्याहुः। वीक्ष्येति। इदं सर्वं वीक्ष्य दास्य एव भवाम तत्र सारूप्यं नास्माकमपेक्षितं यतः अलकैः समानरूपैस्तदुपलक्षितैः समानरूपैर्भ्रमरैश्चावृत्तं मुखं तथा च सारूप्यं गतानामपि या भक्तिरवशिष्यते तदर्थिन्यो वयमिति भावः। तथा सामीप्यापेक्षामपि वारयन्ति कुण्डलाभ्यां श्रीः शोभा यस्य तयोः श्रीर्यस्मादिति या तथा चात्यन्तसमीपयोस्तत्र प्रमाणभूतसांख्ययोगरूपयोरपि यदा मुखावलोकनपरत्वं तदान्यस्य का कथेति भावः। गण्डौ विशालौ सुधापानार्थं स्थले यस्मिंस्तथा अधरे सुधा यस्मिन् गण्डस्थलं च तदधरसुधा च कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन्निति वा एतेन सालोक्यापेक्षापि निवारिता सालोक्य प्राप्तयोरपि कुण्डलयोर्मुखानिरस्टाक्षरामृतेनाभिलापेण लोलत्वदर्शनात् किंच हसितपूर्वकमवलोकोऽवलोकनं यस्मिंस्तद्धसितावलोकमनेन सायुज्यापेक्षाप्यस्माकं नास्तीत्युक्तं यथोक्तमुखावलोकनजन्यानन्दस्य पृथक्स्थितिं विनानुभवासंभवात् किंच इन्द्रादिपदमप्यस्माकं नापेक्षितमित्याशयेनाहुः। दत्ताभयं च भुजदण्डयुगं विलोक्येति। तथा चासुरादेर्विभ्यतः इन्द्रादेरप्यभयप्रदं लोकपालास्पदमपराधिजनदण्डरूपभुजद्वयावलोकनपरायणानामस्माकमिन्द्रादिपदाभिलाषो नोपपद्यते इन्द्रादीनामपि भुजदण्डयोर्निविष्टत्वादिति भावः। ऐहिकैश्वर्य्यवाञ्छाप्यस्माकं नास्तीत्याशयेनाहुः। वक्ष इति। श्रिय एकमुख्यं रमणं वक्षःस्थलं विलोक्य चकाराद्धर्मस्यापि संग्रहस्तथा च सर्वतः संप्लुतोदकवदन्तर्भूतसर्वपुरुषार्थं दास्यमेव प्रार्थयामः

> तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्।
> भगवत्संङ्गिसङ्गस्य मर्त्यानां किमुताशिषः॥

इति भगवत्सङ्गिसङ्गस्यापि यदेवं माहात्म्यं तदा साक्षाद्भगवत्सङ्गस्य माहात्म्यं किमु वक्तव्यमिति भावः। एतेन भर्तृत्यागस्य पापरूपत्वं प्रकृते न संभवति दुःखरूपफलजनकत्वाद् भगवन्तमवलोक्य लोकद्वयस्यापि त्यक्तत्वाच्चेत्यपि सूचितम् यच्च

> अस्वर्ग्यमयशस्यं च फल्गुकृच्छ्रं भयावहम्।
> जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियः॥

इति षड्दोषाभिधानं तदपि प्रकृते नोपपन्नं भगवतो यथोक्तषड्विधगुणत्वादित्यपि ध्वनितम् यद्वा ननु किमवलोक्य दास्यभावः प्रार्थ्यत इत्याशङ्क्याहुः। वीक्ष्येति। श्रियैकरमणमिति मुखस्यापि विशेषणं तथा च लोकोत्तरसौन्दर्यमवलोक्य दास्यो भवाम ननु दृष्ट्वैव वाञ्छा न विधेया प्रीत्ययोग्यानामापातरम्याणामपि बहूनां पदार्थानां सत्त्वादित्याशङ्कानिरासायोक्तम्। वीक्ष्येति। भगवद्दास्यमेव सर्वापेक्षयोत्कृष्टम् अत एवंविधविग्रहप्रादुर्भावोऽस्माकं दास्यपददानायैव भगवता कृत इति सम्यग्विचार्य्येत्यर्थः। श्रियैकरमणमित्यनेन सर्वोत्तमा चतुराशिरोमणिभूता श्रीर्यत्र सर्वभावेनासक्ता तत्र का वयं वराक्यो दास्येऽप्यनधिकारिण्योऽतः श्रियैकरमणं मुखादिकमवलोक्यात्र यद्विचारणीयं तत्तल्लक्ष्म्यैव स्वयंवरकाले विचारितमिति न विचार्यते तदुक्तम्

> नूनं तपो यत्र न मन्युनिर्जयो-
> ज्ञानं क्वचित्तच्च न सङ्गवर्जितम्।
> कश्चिन्महांस्तस्य न कामनिर्जयः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स ईश्वरः किं परतो व्यपाश्रयः ॥
धर्म्मः क्वचित्तत्र न भूतसौहृदं
त्यागः क्वचित्तत्र न मुक्तिकारणम् ।
वीर्य्यं न पुंसोऽस्त्यजवेगनिष्कृतं
न हि द्वितीयो गुणसङ्गवर्जितः ॥
क्वचिच्चिरायुर्न हि शीलमङ्गलम्
क्वचित्तदप्यास्ति न वेद्यमायुषः ।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः
सुमङ्गलः कश्च न काङ्क्षते हि मामं । !
एवं विमृश्याव्यभिचारिसद्गुणै
र्वरं निजैकाश्रयतागुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितम्
रमा मुकुन्दं निरपेक्षमीप्सितम् ॥

इति

तस्मादस्मत्प्रवृत्तिर्नोऽप्रयुक्तात उपदेशसहस्रैरपि न निरोद्धुं शक्यते इति भावः सूचितः अनभिज्ञापक्षे ननु दास्यं देहीति भवतीभिरुक्तं तत्र मूल्यं श्रुत्वा यत्कर्त्तव्यं तत्करिष्यामीत्याशङ्क्य लब्धाऽनल्पमूल्या एव वयमतो मास्तु भवतस्तद्दानचिन्तेत्याशयेनाहुः । वक्ष इति । अलकैः केशप्रान्तभागैः शोणवर्णोष्णीषधारणसमये तदधोभागे लसद्भिरावृतमाच्छादितं चूडाबन्धनबर्हापीडधारणसमये कुञ्चितैरनतिदीर्घैरलकैरीषदावृतमाच्छादितमभ्यङ्गोद्वर्तनादिसमयेऽआसमन्तादावृतमाच्छादितं मुखं वीक्ष्य ईक्षणाभ्यां सम्यगास्वाद्यानेन मुखोर्ध्वभागशोभोक्ता तथा कुण्डलयोः समयभेदेनालकैरनावृतयोरीषदावृतयोः संपूर्णावृतयोरचपलयोरीषच्चपलयोरत्यन्तचपलयोश्चालङ्कारप्रतिबिम्बरूपा श्रीर्ययोस्ते गण्डस्थले यस्मिंस्तत् अनेन पार्श्वयोः शोभोक्ता अधरसुधं यस्मिंस्तच्च हसितं प्रहसितपूर्वकमवलोको यस्मिंस्तत् हसितं चावलोकश्चेति द्वन्द्वैक्यं वा नेपथ्याधोभागयोस्तथा चैतावदेव मूल्यं कोटिचिन्तामणिविचित्ररत्नखचितमन्दिरसत्यलोकादिलभ्यामृतादेरप्येकमस्माकं तव च सहजत्वादनायाससाध्यमिति यथोक्तमूल्येन जातं वास्माकं दास्यं न किंचिदपि वक्तव्यं कर्तव्यं वावशिष्यत इति भावः । लोमविशेषत्वालात्सौरभ्यविशेषाघ्राणाद्वाऽधरसुधानुभवः ननु नैवं वाच्यं युष्मत्पतिभ्यो राज्ञश्च बिभेमि अहमित्याशङ्क्य किंचैवं प्रत्यक्षोपलब्धं स्वसामर्थ्यं गोपयसीत्याशयेनाहुः । दत्ताभयं च भुजदण्डयुगं तथाचाभयंकरभुजदण्डालंकृतस्य तव नास्ति भयसंभावनेति भावः अनेन गोवर्द्धनोद्धारणादिना दत्तमभयं येभ्योऽस्मत्पत्यादिभ्यः तेनैव दत्तात्यन्तभयेभ्य इन्द्रादिभ्यश्च भयाभावात्तव दास्ये स्वीकृते नास्त्यस्माकं लोकद्वयेऽपि भयशङ्केत्यपि ध्वनितं गाढालिङ्गनेन कामभयहारित्वमप्यत्र व्यङ्ग्यं दण्डपदेन सुवृत्तादिशोभोक्ता एवं व्यञ्जितेन धीरत्वेन शृङ्गाररसोऽपि पुष्टो भवति ननु तथापि परदारसंसर्गकलङ्कतया निष्कलङ्कोऽहं बिभेमीत्याशङ्क्य श्रीरेखोपरितर्जनीं धृत्वा पृच्छन्त्य इवाहुः । वक्ष इति । श्रिया कीर्त्या एकं श्रेष्ठं रमणं यस्मिंस्तत् तथा च हे निष्कलङ्काग्रगण्य ! यदि कलङ्काद्बिभेषि तर्हि श्रीमन्नारायणभार्यां लज्जया गृहीतरेखारूपां किमिति वक्षस्युद्वहसि अस्मानिव सर्वोत्तमस्त्वं नु ब्रह्माण्डस्यान्तर्बहिर्वाऽवस्थितस्य कस्यापि कामपि नारीं न लक्ष्यसीति सम्यग्जानीमो वयमतस्तादृशं स्वसामर्थ्यमावलोपयेति भावः । क्रियाद्वयं च स्वानुरागवैशिष्ट्यस्य मुखचुम्बनभुजवक्षसोरालिङ्गनमिति प्रयोजनद्वयस्य च ध्वननाय अत्र वीनां पक्षिणामीक्षणीयेति श्लेषेण स्वनेत्राणां खञ्जनखगत्वं तत्राऽलककुण्डलपाशयोस्तद्बन्धःगण्डयोः पाशस्थानत्वं सुधाया आहारत्वं हसितावलोकमिति तन्नेत्रयोः स्वनेत्रखञ्जनाकर्षकजनत्वं भुजे वक्षसोः सञ्चारदेशत्वञ्च व्यज्यते तथा च यथोक्तस्वरूपदर्शननितान्तशक्तिमदन्तःकरणानां महाजालवद्धनयनखगानामस्माकं प्रतियात नेत्यादिवाग्वज्रप्रहारेण हृदयानि मा विदारयेत्याशयः मानिनीपक्षे ननु कथं तर्हि ममाङ्गानि निरीक्ष्यमाणा एव तिष्ठथेति चेत्तत्राहुः । वीक्ष्येति । विलोक्यापि किंवयं दास्यो भवामेति कापि नैवेत्यर्थः । यद्वा ननु साहसं माकृथा ममाङ्गानि विलोक्य विचार्य्य च वक्तव्यमित्याशङ्क्याहुः । वीक्ष्येति । तथा च न वयं दास्यो भवामेति कामितकोटिभिरङ्गैरपि धैर्य्याच्चालयितुं न शक्या इति भावः यद्वा यदि तवास्मान्दासीकर्तुं महत्युत्कण्ठा वर्त्तते तर्हि योषितद्रूपस्य तव विद्यालाभावात् स्वपतिं कञ्चन दर्शय भवतु तं दृष्ट्वा वयं दास्यो भविष्याम इति नर्म व्यञ्जयन्त्य आहुः । वीक्ष्येति । वक्षश्च श्रिया युक्तं वीक्ष्य यस्तव एको रमणः कान्तस्तद्दत्ताभयं भुजदण्डयुगवत्तं विलोक्य वयं दास्यो भविष्यामः तेषां बहुत्वख्यापनायैकेत्युक्तं स अस्माकं प्रदर्शनीय इत्युपहासोक्तिः निवृत्तिपक्षे चिन्तकान्त्यास्पदस्य भक्तानुग्रहार्थं गृहीतलीलाविग्रहस्य भगवतो मुखादिकं विचार्य तथैवालोक्य च वयं तवैव दास्यं प्राप्नोतियादयाम इति वक्ष्यति तथा च समस्तोपासनाविधायकश्रुतितात्पर्य्यगोचरस्यैवंविध स्वरूपस्य भगवतो दास्यैनैवोद्धारो नान्यथेति भावः ॥ ३९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गृहपरित्यागपूर्वकं दास्यप्रार्थनायां कारणमाहुः । वीक्ष्येति । कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन् अधरे सुधा यस्मिन् तच्च तच्च तत् हसितयुक्तोऽवलोको यस्मिन् तदलकावृतमुखम् वीक्ष्य दत्तं बहुभ्यो भक्तेभ्योऽभयं येन तद्भुजदण्डयुगं च श्रिय एकमेव रमणं रतिजनकं वक्षश्च विलोक्य दास्यो भवाम ॥ ३९ ॥

---

भाषा टीका

तुम तौ अपने गृह पतनि की प्रेयसी ( प्यारी ) हौ फिर तुम मेरे दास्यभाव की इच्छा कैसे करौ, हो ऐसो श्रीकृष्ण को अभिप्राय देखिके गोपी बोलीं, कि–हे प्यारे ! यामें तेरे सौन्दर्य कोई दोष है हमारो दोष नहीं, देख अलका वालि सों ढकि रह्यो और कुण्डलन की शोभा युक्त गोल कपोल जामें, अधर में सुधा और हास पूर्वक चितवन जामें ऐसे तेरे श्रीमुख देखिके, तथा आश्रित न कूं अभय देने वारी इन दोनो भुजाओं कूं देखिके, और लक्ष्मी को एक रमण वक्षस्थल कूं देखिकै अब हम तेरी दासी हैं तू हमपै कृपा कर ॥ ३९ ॥

---

का स्त्र्यङ्ग ! ते कलपदायतवेणुगीतसम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यविभ्रन् ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु जुगुप्सितमौपपत्यमित्युक्तं तत्राहुः । का स्त्रीति । अङ्ग हे श्रीकृष्ण ! कलानि पदानि यस्मिंस्तदायतं दीर्घं मूर्च्छितं स्वरालापभेदस्तेन अमृतेति पाठान्तरे कलपदं यदमृतमयं वेणुगीतं तेन सम्मोहिता सती का वा स्त्री आर्यचरितान्निजधर्मान्न चलेत् यन्मोहिताः पुरुषा अपि चलिताः किञ्च त्रैलोक्यसौभगमिति यद्यतः अविभ्रन्नबिभरुः तद्योतकशब्दश्रवणमात्रेणापि तावन्निजधर्मत्यागो युक्तः किं पुनस्त्वदनुभवेनेति भावः ॥ ४० ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु शिष्टवर्गशिरोधार्यास्तथापि महद्भिर्लोकशिक्षार्थमवश्यं सदाचारः पालयितुं युज्यते तत्र सदैन्यरोपमाहुः । केति । त्रिलोक्यां वर्तमाना का स्त्री न चलेत् अपि तु सर्वैव चलेदित्यर्थः । श्रीशिवाङ्कस्थपार्वत्यादीनामपि मोहदर्शनात् तच्च स्कान्दादौ प्रसिद्धमेव अत्रापि देव्यो विमानगतय इत्यादिना सूचितमेव कदाचिद्वा वेणुगीतं नोदेतु नाम रूपं च परममोहनं सदा विराजते इति सविकारमाहुः । त्रैलोक्येति । त्रैलोक्यस्य ऊर्ध्वाधोमध्यवर्त्तमानलोकत्रयस्य सौभगं सौभाग्यं जनप्रियत्वं सौन्दर्यं वा यस्मिन् यस्माद्वा तत् इदं प्रत्यक्षवर्त्तमानमित्यन्यथात्वं निरस्तं यद्वा असाधारणम् अनेन श्रीरघुनाथस्य यत् सौन्दर्यं दृष्ट्वा मुनयोऽपि मोहिता भावविशेषं गताः तथा च पाद्मोत्तरखण्डे–

पुरा महर्षयः सर्वे दण्डकारण्यवासिनः ।
दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥
ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले ।

इत्यादि महाकौर्म्ये च–

अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे ।
भर्त्तारं च जगद्योनिं वासुदेवमजं विभुम् ॥

इति ततोऽपि वैशिष्ट्यमभिप्रेतम् अधुना निजाशेषभगवत्ताप्रकटनात् यद्वा इदमनिर्वचनीयं परमाद्भुतमित्यर्थः । प्रतिबिम्बादौ दर्शनात् तवापि भावविशेषोत्पादनेन विस्मापनात् तथा चोक्तमुद्धवेन विस्मापनं स्वस्य चेति। निरीक्ष्येति । वेणुगीतस्येव श्रवणस्मरणादिनापि मोहः स्यादेव तत्रापि साक्षात् दृष्ट्वा का वा न चलेदित्यर्थः । यद्यस्माद्रूपात् गोशब्देन वृषवत्समहिष्यजाद्योऽपि ग्राम्यपशवो लक्ष्यन्ते गावः पशुत्वेन विवेकहीना अपि पुलकानीति बहुत्वेन सर्वाङ्गेषु सदैवेति द्योत्यते तैश्चान्येऽपि विकारा उपलक्ष्याः अस्पन्दनं गतिमतामित्याद्युक्तेः अविभ्रन् भावविशेषोदयात् इति वेणुगीतादपि रूपस्य परममोहनत्वमुक्तं यच्च रुक्मिण्या देव्या वक्ष्यते "रूपं दृशां दृशिमतामखिलार्थलाभ„ मिति उद्धवेन चोक्तं विस्मापनं स्वस्य चेति तत्तद्वचनाद्रूपस्य वैशिष्ट्यं ज्ञेयं चक्षुष्मतां सौन्दर्यग्रहणसम्भवात् तथा परमविदग्धशिरोमणेः स्वस्य सदसद्विचारनिश्चासङ्गावेनाश्चर्यविशेषदृष्ट्या सम्भवद्विस्मयसम्भवाच्च अत्र च गवादीनां तत्तदभावेऽपि प्रेमविकारैरिति दिक् अन्यत्तैर्व्याख्यातं तत्र पुरुषा अपि चालिता इति द्विजद्रुममृगाणामपि पुलकान्द्रदस्य किं वा शक्रशर्वपरमेष्ठिपुरोगा इत्यादिना वक्ष्यमाणस्य देवादीनामपि मोहस्यानुसारेणेति अथवा यदित्यव्ययं याभ्यां वेणुगीतरूपाभ्यामित्यर्थः । वेणुगीतस्य मोहनत्वं विशेषत एकविंशाध्याये व्यक्तमेवोक्तं पञ्चत्रिंशेऽपि च वक्ष्यते अन्यत् समानम् एवं तस्य वेणुगीतरूपयोः परममोहनत्वमुक्तं कृष्णनाम्नो मोहनत्वमङ्गेत्यनेन सूचितमेव परममोहनत्वेन श्रीकृष्णेति साक्षात्कुत्राप्यसम्बोधनात् अतोऽशक्त्या शिष्टाचारपरित्यागे कोऽपि दोषो नाम न घटेतेति भावः । वस्तुतस्तु तादृशजनानां सदाचारेऽनधिकारात् तच्च पूर्वं विवृतमेव अत एव श्रीस्वामिपादैर्लिखितं तद्योतकशब्दश्रवणमात्रेणापि तावन्निजधर्मत्यागो युक्त इति ईश्वरस्य च सर्वशक्तिमत्त्वाल्लोकसंग्रहार्थं सदाचारपरिपालनं तस्य सम्भवेदेव तत् प्रेमविवशानां चाशक्त्या कथं सम्भवेत् एवमेव तेषां माहात्म्यविशेषो निगूढोऽपि तेनैव निरपेक्षं मुनिं शान्तमित्यादिवचनैरभिव्यञ्जित इति अनेन श्रवणादित्यस्योत्तरं पुरुषाणां तत्रापि मुनीनामपि पूर्वावतारे अत्र च गवादीनामपि साक्षान्मोहो यत्र स्यात् तत्रास्मादृशीनां का वार्त्तेति विवेकहानावस्माकं न दोष इति किं वा यस्य निरीक्षणवेणुगीतश्रवणमात्रेण गवादीनामपीदृशानन्दलक्षणं सम्पद्यते तस्य यथार्थं साक्षादुपभोगेन प्रेमविशेषलक्षणः परमानन्दः सम्पत्स्यत एवेति सन्निकर्षो हि युक्त एवेति वस्तुतस्तु यस्य श्रवणादिनापि भावः स्यात् तस्य सन्निकर्षेण भावो विशेषतः सम्पद्यतेवेति श्लेषार्थः । अङ्ग हे कलपदायतवेणुगीतसम्मोहित ! का स्त्री आर्य्यचरिताच्चलेत् अपि तु न कापीत्यर्थः यन्निरीक्ष्य गवादयः पुलकानि बिभ्रति स इदं ते तच्च रूपसौन्दर्यं त्रिलोक्यां नास्ति किम् अपि त्वस्त्येवेत्यर्थः । अतोऽनेन त्वं मा गर्वमावहेति भावः । यद्वा हे कलपदायतवेणुगीत ! हे सम्मोहित कामसम्मोहित ! इत्यधैर्य्यमुक्तं ते त्वत्तः सकाशात् किंभूतात् आर्य्यचरितात् परमधार्मिकादिति सोत्कण्ठं यद्वा हे कलपदामृतवेणुगीतसम्मोहितार्य्य ! इति परमधार्ष्ट्यमुक्तं ते तव चरितात् पारदारिकत्वलक्षणात् का न चलेत् नापायात् केदं स्वीकुर्य्यादित्यर्थः अन्यत् समानम् ॥ ४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वेवं पतिव्रताभिरुपहसनीया भाविष्यथ तत्र स्फुटमेव सरोपदैन्यमाहुः । का स्त्रीति । त्रिलोक्यां वर्त्तमाना का स्त्री न चलेत् अपि तु सर्वैव चलेदित्यर्थः । तच्च देव्यो विमानगतय इत्यादिना सूचितं कलेति पूर्वं व्याख्यातं पदानि प्रतिपदमपि तादृशं बोधयन्ति । आयतेति । तत्र श्रीकृष्णस्य निर्बन्धं बोधयन्ति स्वेषां च धैर्य्येणापि तत्कालक्षेपं वारयन्ति पाठान्तरे तस्यालौकिकस्वादत्वं व्यञ्जयन्ति तत्रादर्शन एवं वार्त्ता दर्शनेऽपि तथैवेत्यथं सर्वतो मार एवेति सभयमिवाहुः । त्रैलोक्येति । त्रैलोक्यस्य ऊर्ध्वाधोमध्यवर्त्तमानयावल्लोकस्य सौभगं सौभाग्यं जनप्रियत्वं सौन्दर्यं वा यस्मिन् यदन्तर्भूतमित्यर्थः । तदिदं प्रत्यक्षवर्त्तमानमित्यन्यथात्वं निरस्तं यद्वा इदमेतादृशमसाधारणमित्यर्थः । निरीक्ष्येति । यस्य श्रवणादिनापि मोहः स्यादिति कैमुत्यं बोधयन्ति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

का स्त्र्यंगति । यत्र पुरुषा अपि स्वयं भगवानपि मुह्येयुरिति भावः । शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययुरिति वक्ष्यमाणात् विस्मापनं स्वस्य चेति तृतीयोक्तेश्च अहो अस्तु तावत्तादृशरासा-रासारसविदां तेषां वार्त्ता ययाभ्यां वेणुगीतरूपाभ्यां गवादयोऽ-पीति श्रवणदर्शने लभ्येते ते स्वप्रकाशत्वान्नासम्भाव्ये अनेन लोके-प्सुभिरित्यस्योत्तरं निषेधार्थश्चायम् ननु यदि ममाङ्गदर्शने युष्माकं न क्षोभस्तर्हि कथमितश्चलितुमिच्छा तत्राहुः । का स्त्रीति । का स्त्री तज्जातिमात्रं कलेत्यादिलक्षणापि आर्य्यचरितात् सदाचारा-द्धेतोः ते त्वत्तः सकाशात् न चलेत् नापयायात् तथा यत् यस्मात् गवादयोऽपि पुलकान्यविभ्रन् तत इदमीदृशं रूपं निरीक्ष्य च समवलोक्यापि तस्मादेव हेतोः का नापयायात् अपि तु सर्व्वैवापयायादित्यर्थः । सुन्दरीणां सुन्दरपरपुरुषनिकटे स्थितिर्हि बाढं लोकविगानहेतुरिति तदेवं यद्यपि न तत्संमोहिता नापि सम्यक् तद्वीक्षणकारिकाः तथाप्यपयास्याम इति भावः ॥ ४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आर्यचरितात् यद्यत् स्वेन रूपेण यत्सबंन्धिततः ॥ ४०–४४ ॥

———

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं जुगुप्सितं च सर्वत्र ह्यौपपत्यमिति तस्योत्तरमाहुः । का स्त्रीति।अङ्ग हे कृष्ण! कलानि मधुराणि पदानि यस्मिंस्तदायतं दीर्घं मूर्च्छितं स्वरालापभेदस्तेन संमोहिता सती कलपदायतवेणुगीतसं-मोहितेति स्पष्टोऽर्थः । लोकत्रयसुन्दरमिदं रूपं निरीक्ष्य च त्रिलो-क्यामपि का या स्त्री आर्यचरितात्सतामाचारान्निजधर्मान्न चलेत्सर्वापि चलेदेवेत्यर्थः । यद्यतो गावो द्विजाः पक्षिणो मृगा-श्चापि पुलकानि रोमाञ्चान् अबिभ्रन्नबिभरुः तद्योतकशब्द-श्रवणमात्रेणापि तिरश्चामपि निजधर्मत्यागो दृष्टः किं पुनर्मादृशा-मिति भावः ॥ ४० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्यत्स्मरशमनं च न चित्रमिति भावेनाहुः । का स्त्रीति । ते तव कलपदैः अव्यक्तमधुरशब्दावयवैः अमृतं श्रवणानन्दकरं यद्वे-णुगीतं वंशगानं तेन समोहिता त्रिलोक्यां त्रैलोक्ये का स्त्री त्रैलोक्यसौभगमलंकारभूतमिदं रूपं सुन्दरतरावयवोपक्लृप्तमाकारं च नितरां दृष्ट्वार्याणां सतां चरितान्मार्गादिति शेषः । न चलेत्स्ख-लिता न भवतीत्यन्वयः इदं न चित्रमित्याहुः । यदिति । यद्यस्माद्वेणु-गानात् यस्य रूपस्य स्पर्शादिना वा गवादयोऽन्तः प्रज्ञादचेतनरा-शयः पुलकानि रोमाञ्चानि अबिभ्रन् दधुरिति ॥ ४० ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु यद्येवं भवत्यः स्वभावसिद्धाभिमानिन्यस्तदा कथं मद्वचसामभिप्रायानभिज्ञाः भवत्यः किं तप्यथ तत्राप्यन्या आहुः । का स्त्रीत्यादि । हे अङ्ग ते तव कलपदायतवेणुगीतसंमोहिता सती आर्य्यस्य तव चरिताद्वेणोर्न चलेन्न भ्रमेत् एवमेव तव भ्रामकं चरितं येन त्रिलोक्यां का स्त्री न चलेत् सर्वैव चलति अत्र स्त्रीणां न दूषणं तवैवेत्यर्थः । न केवलं तव चरितादेव इदं रूपं निरीक्ष्य च यतो रूपात् गोद्विजद्रुममृगा अपि पुलकान्यबि-भ्रन् पुलकिनो भवन्ति ॥ ४० ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ननु तथापि लोकविद्विष्टं स्त्रीणामभिसरणम् अतः सन्मार्गर-क्षणार्थं प्रमाणसिद्धमप्येतन्न कर्त्तव्यमतः श्रवणदर्शनादिकमेव कर्त्तव्यमिति चेत्तत्राहुः । का स्त्रीति । अयं धर्मः पुरुषाणां वक्तव्यो नतु स्त्रीणामसम्भावितत्वात् नह्यसम्भावितो धर्मो भवति एवं धर्मनाशे धर्मस्थापकं स्वरूपमेव हेतुः अद्भुतकर्मत्वात् वस्तुतस्तु स्वरूपसम्बन्धिनां भक्तानां धर्मं स्वरूपेणैव रक्षति तच्चान्यभावेभ्यो रक्षणमेतद्भावपोषणं च स्वरूपधर्मसम्बन्धिनस्तांस्तैरेवेति न किञ्चिदनुपपन्नमिति भावः । अत एवैवं स्वरक्षणेन स्वान्तरङ्ग-ज्ञापनायाङ्गेति सम्बोधनमप्रतारणाय च या स्त्री लोके स्त्रीशब्द-वाच्या सा कथमार्यचरितान्न चलेत् त्रिलोक्यां सत्त्वरजस्तमः कार्य-रूपायां तामसीनां मौढ्यात् आर्यचरिते स्थितिं मत्वा तन्निरा-करणं राजसीनां स्वभाव एव सात्त्विकानां सत्त्वाद्धर्मबुद्धिमाशङ्क्य तन्निराकरणम् आर्यमार्गपरित्यागे हेतुः ते कलपदामृतवेणुगीत-सम्मोहितेति सम्मोहिता आर्यचरिताच्चलत्येव सम्मोहः पञ्चपर्वा-विद्यास्थानीयैः भगवत्सम्बधात् आविद्यातु न बाधते परमन्य एव बाधकाः तेषां बलं ते इति त्वदीया इति कलान्यव्यक्तम-धुराणि यानि पदानि तत्राविर्भूतं यदमृतं तदेव वेणुद्वारा गीतं तेन सम्मोहः गीतं देहमोहजनकं गायन्तं स्त्रियः काम-यन्त इति स्त्री तु देह एव इन्द्रियाणां व्यामोहको वेणुः रसा-त्मकत्वात् अमृतं प्राणानां पदान्यन्तःकरणस्य अव्यक्तता आत्मन इति सम्यग्विमोहिताः आर्याः प्रमाणबलविवेकिनः प्रमाणे हि इन्द्रमहेन्द्रयोरपि भेदस्वीकारः पृथगुपस्थिताः सर्वे एव भिन्ना इति अन्यथा इन्द्रयाजिनोऽग्रे सम्वत्सरान्ते प्रायश्चित्तश्रवणं न स्यात् सम्वत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेदिति अतो देहव्यतिरिक्तः स्वरूपेणोपस्थितोऽपि प्रमाणबले विरुध्यते वस्तुविचारस्तु प्रमेयबलमाश्रित्य अन्यथा विधिनिषे-धविधयो व्यर्थाः स्युः तदुत्तरत्र वक्ष्यति एकादशे अतो मार्गा-न्तरविरोधोनोपयुज्यत इति मर्यादाभङ्गोमार्गान्तरत्र न दूषणम् एतस्यांत्तर मग्रेशुकश्चवक्ष्यति रासानन्तरं धर्मव्यतिकरो दृष्ट इति तस्मादत्र फलस्य सिद्धत्वात् साधनदृष्ट्या अपकीर्त्तिः नास्मत्प्रतिबन्धिका किञ्च न केवलं नाम्ना मर्यादाभङ्गः किन्तु स्वरूपेणापि तदाहुः । त्रैलो-क्यसौभगमिति । त्रैलोक्यस्यापि सुभगत्वं यस्मात् यथा सूर्येण दिनं चन्द्रमसा रात्रिः तथा त्रैलोक्यमेव भगवद्रूपेण सुन्दरतां याति इदमिति प्रत्यक्षसिद्धं चकारादनुभवाच्च तच्छ्रुत्वा एतद्दृष्ट्वा का वा आर्यचरितान्न चलेत् अस्त्वियं प्रमाणवार्त्ता दुर्बला प्रकारान्तरेणापि चलति भगवतो रूपेण प्रमेयमर्यादाप्यपगच्छति या कथमपि भवति नान्यथा तदाहायद्गो द्विजद्रुममृगा इति । गावो हि प्रमाणवार्त्तानभिज्ञाः मातरमपि गच्छन्ति द्विजाः पक्षिणः सर्व-भक्षाः द्रुमाः स्थावराः कदाचिदपि बहिः सम्वेदनरहिताः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निरिन्द्रिया एवेति केचित् मृगाः सर्वतोभयाः तेऽपि चेद्भगवद्रूपेण गीतेन वा आश्लिष्टरसाः पुलकानि धारयन्ति रसिकमनुष्यधर्मानाविष्कुर्वन्ति ये भगवता अन्यथैव स्पृष्टाः स्त्रियस्तु स्वभावतोऽप्यन्यथा भवन्तीति नाश्चर्यं किञ्चिदत्र ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु युष्मा भिर्धर्ममार्गाय जलाञ्जलिर्दत्त एव तत् किमन्या अपि पतिव्रता "विदूषयति निर्लज्जः स्वयं दुष्टः परानपी,,ति न्यायेन दूषयथ मद्वक्षस्यौत्पत्तिक्येव येयं लक्षणविशेषरूपा सुवर्णरेखा भ्राजते तां च दृष्ट्वा पतिव्रताशिरोमणिं लक्ष्मीमपि दूषयन्त्यस्तस्यामप्यपराधिन्यः कथं भवथेति तत्र न कामपि दूषयामः किंतु त्रिजगतामपि धर्मध्वंसनाय विधात्रा त्वं सृष्टोऽसीति सरोपचापलमाहुः। का स्त्री अङ्ग हे श्रीकृष्ण! कलानि पदानि यत्र तदमृतरूपं यद्वेणुगीतं तेन कलपदायतमूर्च्छितेनेति पाठे आयतं दीर्घं मूर्च्छितं स्वरालापभेदस्तेन संमोहितेति न स्त्री दूष्यते किंतु त्वत्कर्तृकं गीतमेवेति भावः। आर्यचरितात् पातिव्रत्यलक्षणनिजधर्मान्न चलेत् अपितु सर्वैव चलेदिति धर्मत्याजनलक्षणप्रत्यवायं त्वं प्राप्स्यस्येवेति भावः। न केवलं त्वद्गुणस्यैव धर्मध्वंसकता अपि तु त्वद्रूपस्यापीत्याहुः। त्रैलोक्येति । ऊर्ध्वाधोमध्यदेशवर्त्तिषु प्राकृताप्राकृतलोकेष्वपि सौभगमेव यस्य तत् नतु धर्मध्वंसकत्वहेतुकः कस्याप्यत्र द्वेष इति भावः। नच स्त्रीणां स्वाभाविकः कामोऽपि मोहे हेतुरस्तीति वाच्यं यतो जङ्गमस्थावराणां सर्वेषामपि वैवश्यप्रापकौ तव रूपगुणावित्याहुः। यत् यतो गीतरूपाभ्याम् अविभ्रन्नविभरुः तस्मात् हे राजन्! किं बहुना "शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययु,, रिति वेणुगीताध्यायात् परमतत्त्वविदामपि मोहः विस्मापनं स्वस्येति च तव तस्यापि चमत्कारो दृष्ट इति श्रीशुकोक्तिरप्यासीदिति ज्ञेयम् ॥ ४० ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

नन्वेवं पतिव्रताभिरुपहसनीया भविष्यथ तत्र स्फुटमेव सरोषदैन्यमाहुः। का स्त्रीति। त्रिलोक्यां वर्त्तमाना इति शेषः का न चलेत् अपि तु सर्वैवेत्यर्थः। तत्र देव्यो विमानगतयः इत्यादिना देवीषु यक्षपत्नीषु नागपत्नीषु च तथा तथानुभूतत्वात् कलेति व्याख्यातं पदेति प्रतिपदमपि तादृशत्वं बोधयन्ति आयतेति तत्र तस्यापि निर्बन्धं द्योतयन्ति अमृतेति पाठे तस्यालौकिकास्पदत्वं च दृष्टं ते वेणुमाधुर्य्यस्यैव तत्रापि रूपमाधुर्य्यस्य किं ब्रूम इत्याहुः। त्रैलोक्यस्य सौभगं सौभाग्यजनप्रियत्वं सौन्दर्यं वा यस्मिन् तदिदं प्रत्यक्षवर्त्तमानं रूपमित्यन्यथा निरस्तम् ॥ ४० ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

नन्वेवमाचरणे कुलाङ्गना उपहसिष्यन्ति तत्र "यत्रोभयोः! समो दोषः परिहारोऽपि वा समः। नैकः पर्य्यनुयोज्यः स्यात्तादर्थविचारणे,, इति न्यायमाश्रित्योत्तरमाहुः। कास्त्र्यङ्गेति। अङ्ग हे प्रिय! यदा सर्ववैदिकधर्माधिकारिणो ब्राह्मणादयोऽच्युतगोत्रत्वेन हरिवंशा वैष्णवास्तन्मुखरितं कलपदामृतं ते भगवत्स्वरूपसूचकं गीतं निशम्य "पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षुचर्यां चरन्ति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती,,त्यादिश्रुत्यैहिकामुष्मिकफलसर्वकर्मत्यागेन त्वत्स्वरूपजिज्ञासवस्त्वदेकपरा भवन्ति विद्वांसोऽपि "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यादिश्रुत्वा त्रैलोक्ये सौभगं यस्मात्तद्रूपं निरीक्ष्य साक्षात्कृत्य सर्वधर्मानुत्सृज्य त्वदेकनिष्ठा भवन्ति तदा या स्त्री ते कलानि पूर्वव्याख्यातगुणान्वितानि त्वत्पादपद्माविव मृदूनि पदानि यस्मिंस्तच्च शुष्कदग्धविद्धवेणुमुखरतोत्पादनेनामृतं च आयतेति पाठे त्रिलोकविदितत्वेन विस्तृतं च यद्वेणुगीतं तेन संमोहिता सती आर्य्यचरितान्न चलेत्सा का तथा त्रिलोक्यां भवं त्रैलोक्यं सौभगं युगपत्साकल्येन यत्र तदिदं रूपञ्च विलोक्य या न चलेत्सा का न कापीत्यर्थः। स्त्रियः सुराङ्गनानां पुलिन्दीनां च मोहितत्वश्रवणात् यच्चतो गीतश्रवणाद्रूपदर्शनाच्च गावो द्विजाः पक्षिणो द्रुमाः मृगाश्च पुलकानि अबिभ्रन् रोमाञ्चिता अभवन् किमु वाच्यं स्त्रीणां तद्रतत्वम् ॥ ४० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु युष्माकमपि भावोऽपेक्षितः स च यथा मच्छ्रवणादिना भवति न तथामत्सन्निकर्षेणेति मयोक्तमेवातः किमर्थं लोकविद्विष्टमार्गानुसरणं कुरुथ गृहे गत्वा मच्छ्रवणादिकमेवाचरतेति चेत्तत्राहुः केति। शक्तस्यैवाधिकारश्रवणात् स्त्रीणां चैतदुपादिष्टार्थानुष्ठानेऽशक्तिस्वाचथोक्तोपदेशो न युक्तस्तस्मात्पुरुषपर्येवमुपदेष्टव्य इति द्योतनाय का स्त्रीत्युक्तं किञ्च समाहिता एव धर्माधर्ममर्यादां विचारयन्ति नतु मोहिताः सम्यक् मोहिताश्चेत्किमु वक्तव्यमित्याशयेनाहुः। त इति। तव समस्तजीवसंमोहकरमायाशक्तेर्यत्कलपदामृतमयगीतं तेन संमोहिताः तव वेणुगीतेति सर्वेन्द्रियाणामसृतेति प्राणस्य कलपदेत्यन्तःकरस्य व्यामोह उक्तः आयतेति पाठे कलानि अव्यक्तमधुराक्षराणि पदानि यस्य तत् आयत दीर्घमूर्च्छितं स्वरालापभेदेना सम्यक् मोहिता का या स्त्री आर्य्यचरितात् शिष्टाचाराद्विजधर्मान्न चलेत् या स्त्री न चलेत्तथाविधा चतुर्दशभुवनेषु कापि नास्तीत्यर्थः। तथा च सर्वाविशिष्टदोषेणास्माकमुपालम्भो न युक्तः किञ्च "विद्यते न खलु कश्चिदुपायः सर्वलोकपरितोषकरो यः। सर्वदा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्प,, इत्युक्तत्वाद्दुराराध्यलोकाराधनेनाप्यैवंविधफलत्यागो न युक्तः अन्यथा सम्बन्धिजनानभिमतसंन्यासोऽपि केन चित्र क्रियेतातःपरलोकविरोधिकर्म नानुष्ठेयं नच परव्रजनस्तवाराधनेन सर्वकर्मफलभूतेनास्ति परलोकबाधः—

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वाभद्रमभूदमुष्य किंको वार्थ आप्तो भजतां स्वधर्मतः ॥

नवै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदङ्गसंसृतिम् स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो यत इत्यादिशास्त्रात्सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते इत्यादिशास्त्रं तु जिगी-

### श्रीधनपतिशूरिकृतभागवतगूढार्थदीपिका ।

विप्रुपरं लोकद्वयविरुद्धं कर्म्म निन्दापरं शिष्टनिन्दापरञ्च तत्र वयं त्यक्तसर्वैषणाः सन्यासिसदृशाः न त्वच्चरणसङ्गमरहितजीवनाभिलाषाः नापि परलोकविरोधिकर्मपरा नापि भगवत्स्वरूपाभिज्ञशिष्टविनिन्द्याचाररता इति भावः। का स्त्रीत्यनेन यन्मोहिताः पुरुषा अपि चालितास्तन्मोहिता स्त्री का न चलेदित्यपि सूचितं किञ्च यथा सूर्येण दिनं चन्द्रमसा रात्रिस्तथा त्रैलोक्यस्यापि सुभगत्वं सौन्दर्य्यं येन भगवद्रूपेण तन्त्रैलोक्यसौभगमिदमनुभूयमानं रूपं च निरीक्ष्य यत् यतः गोद्विजद्रुममृगाः पुलकानि अविभ्रन् अबिभरुः गवादीनामनभिज्ञशिरोमणीनामपि यद्दशान्यथा दृश्यते तेन त्वत्स्वरूपाभिज्ञानां रसज्ञानामस्माकं स्वधर्मत्यागे किञ्चित्रं तत्रापि त्वद्द्योतकशब्दश्रवणमात्रेणापि निजधर्मत्यागो युक्तःकिम्पुनस्त्वदनुभवेनेति भावः। अनभिज्ञापक्षे ननु नेयं लक्ष्मीः किन्तु मद्वक्षसि सहजा लक्षणविशेषरूपा सुवर्णरेखा विराजते तां दृष्ट्वा पतिव्रताशिरोमणिभूतां लक्ष्मीमपि स्वयं दुष्टाऽन्यानपि दूषयतीति न्यायमनुसृत्य दूषयितुं प्रवृत्तास्तस्या मत्तश्च भयं न कुरुथेत्याशङ्क्य न वयं कामपि दूषयामः किन्तु सर्वधर्मध्वंसनाय त्वमेव विधात्रा सृष्टोऽसीति सरोषप्रलापमाहुः । केति । अङ्ग हे कृष्ण ! तव कलपदामृतवेणुगीतसंमोहिता आर्यचरितात्पातिव्रत्यलक्षणान्निजधर्म्मात्का स्त्री न चलेदपि तु सर्वापि चलेदेव ततस्त्वत्कर्तृकं गीतमेव दूष्यते धर्मत्याजनलक्षणं पापं च त्वं प्राप्स्यस्येवेति भावः । न केवलं तव गीतमेवैवम्विधम् अपितु रूपमपि त्वङ्ग त्रैलोक्यसौभगमिति । ननु नास्ति मम गीतादेरयं स्वभावः किं तु स्त्रीणामेवायं स्वभावो यत्किंचिदपि गीतादिकमुपलभ्य मोहिता भवन्तीति चेत्तत्राहुः । यदिति । याभ्यां गीतरूपाभ्यां यद्वा ननु एवं पतिव्रताभिरुपहसनीयाः भविष्यथेत्याशङ्क्य तव गीतादिप्रसादाच्चतुर्दशभुवन उपहासकरा कापि न भविष्यति सर्वासां मोहावश्यंभावादित्याशयेनाहुः । केति । किञ्च चराचरात्मकं सर्वमपि तव गीतादिना मोहितमतः कोपहासशङ्केत्याशयेनाहुः । त्रैलोक्येति । मानिनीपक्षे ननु यदि मदीयं गीतादिकं भवतीनां न क्षोभकरं तर्हि किमर्थं चलितुमिच्छथेति चेत्तत्राहुः । केति । गीतमोहितापि आर्यचारेताद्धेतोस्त्वत्वत्तः सकाशात् का स्त्री न चलेन्नोपयायात् किञ्च यस्माद्गवादयोऽपि सपुलकास्तदिदं त्रैलोक्यसौभगं रूपं दृष्ट्वा च सदाचारभङ्गभिया का नोपयायात् सुन्दरीणां सुन्दरसन्निधौ स्थितिर्निन्दानिदानमिति मोहितापि यदि चलेत्तर्हमोहिताः वयं कथं नापसराम इतिभावः यद्वा तवास्ति स्वगीतादिप्रयुक्तवशीकारे शक्तिरिति वयं जानीमस्तथापि तस्याःअस्मास्वकिञ्चित्करतेत्याशयेनाहुः । केति। मोहितानामेव वशीकारो भवति या तु तव तादृशगीतेन न मोहिता सा स्त्री का आर्यचरिताच्चलेत्तादृशी कापि नास्तीत्यर्थः। किञ्च यतो गवादयः सपुलकास्तदिदं त्रैलोक्यसौभगं स्वीयं रूपं तु निरीक्ष्य स्वरूपोत्कर्षाभिज्ञा का सदाचाराच्चलेदिति निवृत्तिपक्षे तस्मात्त्रिलोक्यां नास्ति तथा विधा श्रुतिर्या त्वां न प्रतिपादयेदित्याहुः । केति । तव सर्वे वेदा यत्पदमामनन्ति सदेव सौम्येदमग्र आसीदित्यादिरूपं यत्कलपदामृतवेणुगीतं तदेव समा सम्यक् प्रमाणं प्रत्यगभिन्नपरमात्मपराणामुपनिषदां विषयस्य कालत्रयाबाध्यत्वात्तद्विषयकप्रमाणस्य पारमार्थिकतत्त्वावेदकस्वरूपप्रामाण्यवत्त्वात्सम्यक् किं तदितरप्रमाणानां तु सविषयाणां व्यवहारदशायां बाधाभावात् व्यावहारिकतत्त्वावेदकप्रामाण्यकत्वादसंयुक्तं तथाऽऽहितो मननिदिध्यासनपूर्वकमवगतो यः प्रत्यगभिन्नः परमात्मा तस्य चरितात सृष्टिकर्तृत्वादिलक्षणात्कापि स्त्री तदनन्यपरा श्रुतिर्न चलेन्न प्रचलति । अयमर्थः सृष्टिप्रतिपादकश्रुतीनां सृष्टिमुपन्यस्य तन्निषेधाभिविचिकित्समद्वितीयत्वं प्रतिपादितं भवतीति परम्परया निरस्ताखिलद्वैतविभ्रमेऽखण्डे सच्चिदानन्दैकरसे परमात्मनि तात्पर्य्यमन्यथा वायौ प्रतिषिद्धस्य रूपस्यान्यत्र सत्त्वाद्ब्रह्मणि प्रतिषिद्धस्य द्वैतस्यान्यत्र सत्त्वशङ्का स्यात् उपासनाप्रकरणपठितसगुणब्रह्मप्रतिपादिकानां तूपासनाविध्यपेक्षितगुणारोपमात्रपरत्वं न गुणपरत्वं निर्गुणप्रकरणस्थानां निषेधविध्यपेक्षिते निषेध्यसम्पादकत्वेन विनियोगः कर्मप्रकरणपठितानां संयोगपृथक्त्वन्यायेन विविदिषायामुपयोग इति कापि श्रुतिः यस्मात्तवात्मचर्यावर्णनान्न चलतीति ननु महेन्द्रादिप्रतिपादनपरतयोपलभ्यमानानां तासां कथं परमात्मपरत्वमिति चेत्तत्राहुः । त्रैलोक्येति। इदमनुभूयमानं रूपं सत्तास्फूर्त्यात्मकं येन सेश्वरं जगत् सुन्दरं दृश्यते तदालोच्यते तत्तद्देवादिप्रतिपादनपराणां मध्ये च कापि न चलति—

> यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
> तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् इति

भगवत एव इन्द्रादिरूपेणावस्थानादिति भावः । इदमेवोदाहरणैः स्पष्टयति । यदिति । येन रूपेण

> सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
> सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीति ॥

सर्वात्मभावप्रतिपादनादिति भावः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु यद्यप्युपदेशपदे इत्यनेन मुख्यः पतिरहमेव भवतीभिः प्रतिपादितोऽस्मि नात औपपत्यमस्ति तथाप्युत्सिद्धान्तानभिमतपरिजनानुकूल्यं कर्तव्यमेवेत्यत्राहुः । का इति । आर्यैः कुलवृद्धैश्चरितमनुष्ठितं पितृपुत्राद्यानुकूल्यं तत्तस्मात् यत् यतः कलपदायतवेणुगीतात् रूपदर्शनाद्वा अबिभ्रन् अविभरुः ॥ ४० ॥

---

### भाषा टीका ।

हे प्यारे या तीनो लोक मे कोउ स्त्री ऐसी होवेगी कि जो आपके मनोहर पद वडे सुरीले आपकी वंशी के गीतों को सुनके भी अपने पति व्रता धर्म से चलायमान न हो सकै जैसी ये मुरली है तैसोई आपको तीनों लोक की शोभा की खान रूप भी है इन दोनों के सुनवे देखवे ते तो गउ पक्षि मृग वृक्ष ए सव भी पुलकावलि को धारण करें हैं तो मनुष्यों कि और हम स्त्रियों की तो कहा कहनी है ॥ ४० ॥

---

व्यक्तं भवान् व्रजभयार्त्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता ।
तन्नो निधेहि करपङ्कजमार्त्तबन्धो ! तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥४१॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यक्तं निश्चितम् ॥ ४१ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवं प्रतिवचनैस्तदुक्तं सर्वं क्रमेण परिहृत्याधुना तस्यावतारप्रयोजनं प्रदर्शयन्त्यः परमार्त्त्या सकाकु प्रार्थयन्ते । व्यक्तमिति । व्रजस्य भयं भवादितः आर्त्तिश्च त्वदप्राप्तेः यद्वा भयं त्वदर्थं पूतनादिभ्यो दावादिभ्यश्च आर्त्तिश्च वर्षवातादिभ्यः यद्वा भयं त्वद्विरहशङ्कया आर्त्तिस्त्वदुपेक्षया पाठान्तरे व्रजजनानामार्त्तिः बाह्यान्तराशेषबाधा इदं न सर्वसम्मतम् एतच्चात्मोद्देशेनोक्तं किं वा व्रजस्य जनाः कालान्तरेऽप्येतद्व्रजभूम्याश्रिता ये जनास्तेषामपि किमुतास्माकं तद्धरः सन् तन्नाशनायेत्यर्थः । अभितः अशेषभगवत्ताप्रकटनविशेषेण जातः प्रादुर्भूतः यद्यपि भूभारहरणादिकमपि प्रयोजनं तत्र तदर्थकृतलीलयैव सर्वत्र मुख्यप्रयोजनं निजप्रेमरसविस्तारसिद्धेः तदर्थं दीनकारुण्यविशेषेण धर्मातिक्रमोऽपि कार्य्यं इति दृष्टान्तेन बोधयन्ति देवः जगतामेव पूज्यः यतः आदिपुरुषः जगत्कारणभूतः परमेश्वरः सोऽपि यथा सुरलोकगोप्ता सुरलोकः स्वर्गः तेन तत्रत्या लक्ष्यन्ते यद्वा सुराश्च लोकाश्च अन्ये निजजनाः तेषां गोप्ता तत्प्रतिपक्षादिमारणेन रक्षकः सन् यथा जायते गोप्ता यथा भवतीति वा तथा तथा सर्वत्र तस्य साम्येऽपि भक्तापेक्षया वैषम्यमपि स्यात् तथार्त्तानामस्माकमपेक्षया धर्मस्त्वयालङ्घ्य एव तत्र चयथा तस्य न दोषो घटते किंतु गुण एव महान् तथा तवापीति भावः यद्वा देवोऽपि आदिपुरुषोऽपि सुरलोकगोप्तापि भवान् व्रजभयार्त्तिहरःसन् अत एव श्रीगोपेन्द्रनन्दनत्वेन-यथावदभिजातः तच्च व्यक्तं निश्चितं स्पष्टमेवेत्यर्थः । तत्तस्मात् कर एव पङ्कजं सहजसुशीतलत्वात् सन्तापहरत्वात् आनन्दरसस्राविरवाच्च तत् आदौ नस्तप्तेषु स्मरज्वराक्रान्तेषु स्तनेषु निधेहि तदार्त्तिनाशार्थं पश्चात् शिरःसु निधेहि सर्वत्राभयार्थं दासीत्वस्वीकारदार्ढ्यार्थं वा चकारद्वयमुभयत्रापि प्राधान्यबोधनार्थं त्वदेकप्रियाणामस्माकंभयार्त्तिहरणेनैव सर्वव्रजस्य भयार्त्तिहरणं ततश्चाशेषभगवत्तासारप्रकटनरूपं तवावतारप्रयोजनमपि सिद्धमेवेति भावः । ननु पतिव्रतानां व्रतपराणां शिरसि करनिधानाद्बिभेमि तत्राहुः । किंकरीणामिति । आर्त्तबन्धो ! त्वयि साक्षाद्विराजमाने त्वद्दासीनं तापो ऽनुचित इति सूचितं यद्वा ननु काममत्ताः ! जितकामेन मया कथं स्तनेषु करो निधेयः किन्तु शिरःस्वेव निधेयस्तत्राहुः । आर्त्तेति । कामेन मानिधेहि किन्तु आर्तबन्धुत्वेन निधेहीत्यर्थः । अन्यथा सद्योऽस्माकमन्त्यदशापत्त्या तवार्त्तबन्धुत्वयशोहानिः गूढोऽयमाभिप्रायः अवहित्थया छाद्यमानोऽपि मनोभवोऽस्मदङ्गेषु हस्तार्पणेन स्वयमेवाद्भवितेति ननु बह्वीनां समक्षं लज्जे तत्राहुः । किङ्करीणां त्वद्वशगानां सर्वासामेवास्माकमेकमत्येन नात्र लज्जावसर इति भावः । यूथशो बह्वीनामपि तासामेकस्मिंस्तस्मिन् तादृशप्रार्थनं तच्छक्तिविशेषपरिस्फूर्त्त्या किं वा अनुक्रमेणापि निधेहीत्याशयेन परमार्त्त्या वा यद्वा नः अस्माकं प्रार्थनेत्यध्याहार्य्यमेतासां किङ्करीणां तप्तस्तनादिषु करं निधेहीति भङ्ग्या प्रार्थनं श्लेषार्थः-भवान् अभिजातःआभिजात्ययुक्तः व्रजेन्द्रात्मजत्वात् देवत्वामित्यादिपद्त्रयेणाधर्म्मे तव प्रवृत्तिरनुचितेत्युक्तं यथा आदिपुरुषः सुरलोकगोप्ता सुरलोकभयहरः तथा भवान् व्रजभयार्त्तिहर इति सतीनामस्माकं बलादभिभवेन व्रजस्य त्वत्तो भयमार्त्तिर्भवितेवेति तच्च तयायुक्तं निजप्रयोजनप्रातिकूल्यात् नो निषेधे आर्तबन्धो ! इति वयं नार्ताः यदस्माकं बन्धुर्भविष्यसीति भावः । हे तप्त ! कामाग्निसन्तापितहृदय यद्वा तप्तः सन् स्तनेषु करपङ्कजं नो निधेहि नार्पय अप्यर्थे चकारः तव राजकुमारत्वेन चास्माकमपि व्रजे निवासेन दासीत्वमिव प्राप्तानामपि शिरस्यपि न निधेहीत्यर्थः । यद्वा किङ्करीणां व्रजेशगृहदासीत्वेन वर्तमानानां किशोरीणामपि किमुत मद्विधानामेवं दशश्लोक्या प्रत्युत्तरेण निर्जित्यैकादशेनानेनार्त्त्युद्रेकतो निजेष्टं स्पष्टमेव प्रार्थितं तत्र च श्लेषार्थोऽपि तदुक्तश्लेषपरिहारेण तत्र तत्रैव लिखितः अथवा तदुक्तदशश्लोकार्थस्य वैदग्धीविशेषेण एकादशानां श्लोकानामेषामेकैकेनैवोत्तरमूह्यं तत्र पौनःपुन्यं तथा तदुक्ततोऽप्यधिकमेकं पद्यं तत्र च दीर्घच्छन्दः तत्पदं न विजयार्थं किं वा प्रणयरोषावेशेन ॥ ४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं चतुर्थदिक्स्थिता अप्यात्मनि धर्म्मादिदोषं परिहृत्योपक्रमवदेव प्रत्युत तस्मिन्नेव धर्मदोषापत्तिमुपसंहरन्त्यः पुनर्विवक्षितमेवाहुः । किञ्च ननु भवतु तत्तत्सर्वं मम तु नारायणसमगुणत्वेन पूर्णकामत्वात् नान्यत्र प्रवृत्तिः स्यात् किमुतेदृशे कर्मणीत्याशङ्क्याहुः । व्यक्तमिति । व्रजस्य यद्भयं पूतनादिभ्यो दावादिभ्यश्च त्वदर्थस्त्रासः आर्त्तिश्च वर्षवातादिभ्यः पीडा तथा भयं त्वद्विरहशङ्कया आर्त्तिस्त्वद्विरहेण तदुभयहरः सन् ते खण्डयितुमित्यर्थः—

तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ।
गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहित इति

स्वयमेव विभाव्य पर्वतभारस्य ग्रहणात् क्वाचित्कपाठान्तरे व्रजजनानामार्त्तिः बाह्यान्तराशेषबाधा अभिजातः सत्कुलाज्जात इति तत्रापि वैशिष्ट्यमतोऽस्माकं नाशो तत्रापि त्वदेकहेतुकनाशकत्वे व्रतभङ्गापत्तितोऽप्यधिको ऽधर्मदोषः स्यादिति भावः । ईश्वरस्य पूर्णकामस्यापि तादृशव्रतरक्षा तादृशकामना च दृश्यत एवेत्याहुः । देव इति । सर्वथा दीव्यति विराजत इति देवः आदिपुरुषः सर्वपुरुषेषु श्रेष्ठः सोऽपि यथा सुरलोकगोप्ता स्वेच्छयैव तज्जनमात्रस्य रक्षिता सन्नदित्यादावभिजातो भवति तत्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मात् करस्य पङ्कजत्वं तापहारितामात्रांशे रूपितं वस्तुतस्तु तापस्य तद्प्राप्तिमात्रनिदानत्वात्तदारम्भ एवापगमः स्यादित्यभिप्रेत्यैव तप्तेष्वपि स्तनेषु परमस्निग्धाभिरपि ताभिस्तन्निधानप्रार्थनमिति ज्ञेयं पूर्ववत् सदैन्यमप्याहुः । शिरःसु च किङ्करीणामिति इत ऊर्ध्वं चास्मानात्मसात्कुर्विति विवक्षितं हे आर्त्तबन्धो ! इति आर्त्तबन्धो साक्षाद्विराजमाने त्वद्दासीनां तापोऽनुचित इति सूचितं तथा कामेन च मा निधेहि किन्तु आर्त्तबन्धुत्वेनैव निधेहीति च गूढोऽयमभिप्रायः अवहित्थयाच्छाद्यमानोऽपि मनोभवोऽस्मदङ्केषु हस्तार्पणेन स्वयमेवोद्भवितेति निषेधार्थश्चायं तथापि तं बलादिव स्पृशन्तमाशङ्क्याहुः । व्यक्तमिति । तत्र पूर्वोद्धेतोः धर्मभयादितोऽपि रक्षा तवोचिता नतु तन्नाश इति भावः । नो निधेहि मा निधेहि आर्त्तबन्धो ! इति स्वेषां धर्मभयादार्तिं व्यञ्जयन्ति तप्त हे कामाग्निसन्तापितहृदय ! किङ्करीणां स्वगृहदासीनामपि किमुत मादृशीनां तत्रापि शिरःसु च नो निधेहि मा निधेहि किमुत स्तनेष्वित्यर्थः । तदेवं स्वागतमित्यादिप्रकरणं संलापाख्योऽनुभावो ज्ञेयः "उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कीर्त्यते" इत्युक्तेरिति ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

व्रजजनार्त्त्यपाकरणायावतीर्णस्य पुनस्तदार्त्त्यापादनमनुचितमित्यभिप्रायेणाहुः । व्यक्तमिति । यथा आदिपुरुष उपेन्द्रादिरूपेण सुरलोकार्त्तिनिरसनेन तद्रक्षणार्थमवतीर्णस्तथा त्वमपि व्रजजनस्यार्त्तिहरो नूनं जातःतत्तस्माद्धे आर्तबन्धो! किङ्करीणां तप्तेषु स्मरतापतप्तेषु स्तनेषु शिरःसु च पङ्कजवच्छीतलं कोमलं च करं निधेहि निधायार्त्तिं शमयेति भावः । आर्त्तबन्धो इति तदनुगुणं सम्बोधनं किङ्करीणामित्यपेक्षणीयसम्बन्धाविष्कारः ॥ ४१ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वस्य स्वामित्वेन भर्तृगुणयोगादस्मत्कुलेऽभिजातत्वेन बन्धुत्वेन सम्बन्धयोग्यत्वादस्माकं त्वत्सम्बन्धेन जारसंसर्गदोषापगमनेन निन्द्यत्वं दूरोत्सारितं स्यादिति भावेनाहुः । व्यक्तमिति।भगवान् यथा सुरलोकगोप्ता वामनतयाभिजातः तथादिपुरुषो देवो भवान् व्रजभयार्त्तिहरोऽभिजात इति व्यक्तम् इदमसंदिग्धमिति यत्तत्तस्माद्यथा यस्मादिति वा कामाग्नितप्तेषु उभयत्र योज्यम् ॥ ४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतः प्रथमतो वेणुगीतेनैव सम्मोहिता तदनु त्वद्रूपं निरीक्ष्य च चरितादेव भ्रान्ताः तदनु त्रैलोक्यसौभगमिदं रूपं च निरीक्ष्य मूर्च्छिताः अतः परमपि त्वया सहोक्तिपराः स्म इतः परं किमस्माकं धैर्य्यं तस्मान्मापरम् भ्रामय प्रसीदेत्युपसंहरन्त्योऽन्या आहुः । व्यक्तं भवानित्यादि । व्रजस्य भयमार्त्तिश्च तद्धरत्वेन भवान्प्रादुर्भूत इति त्वमेव सुरलोकगोप्ता देव आदिपुरुषो यथांऽशरूपेण भवानेव यथा आदिपुरुषत्वेन सुरलोकं गोपायसीत्यर्थः । व्रजे तु स्वयमेवेति भवच्छब्दार्थः अतस्तवाधिक्यं करुणाया भवितुमर्हति यद्वा देवो यथादिपुरुषः सुरलोकगोप्ता प्राप्तः तथा त्वं व्रजभयार्त्तिहर इति तस्मात् नोऽस्माकं किङ्करीणां तप्तस्तनेषु शिरःसु च करपङ्कजं निधेहि हे आर्त्तबन्धो ! व्रजार्त्तिहरत्वेन समुचितमेवास्माकमार्त्तिहरणमित्युपसंहारः ॥ ४१ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं भगवदुक्तानां वाक्यानां निवारणार्थं पुष्टिसिद्धान्तं निरूप्य एतद्भगवत्कृपैकसाध्यमिति भगवत्कृपां प्रार्थयन्ति । व्यक्तमिति । नापि त्वदुक्तमस्मदुक्तं वा किञ्चित्साधकं बाधकं वा तथापि स्वावतारप्रयोजनं विचार्य अस्मासु कृपा कर्त्तव्या तत्प्रयोजनमाहुः । भवान् व्रजभयार्त्तिहर एव व्यक्तमभिजातः व्रजस्य आर्त्तिः पीडा भयं च त्वया दूरीकर्त्तव्यम् अन्यथा साक्षाद्भगवतः अवतारे प्रयोजनं न पश्यामः भूभारहरणं तु सङ्कर्षणांशेन वसुदेवादिप्रियं प्रद्युम्नेन धर्मरक्षात्वनिरुद्धेन यदि व्रजभयार्तिनिराकरणं न क्रियेत तदा किमवतारान्तरकार्यं स्यात् अतो व्यक्तं भवान् व्रजभयार्त्तिहरः इदानीं यथार्त्तिरस्माकं तथा न कदापि अस्मदपगमने तु सर्वस्यापि व्रजस्य महती आर्त्तिः अत आर्त्तिनिवृत्तिः कर्त्तव्या ननु मर्यादयैव निवृत्तिकरणमुचितं नतु अमर्यादया तथा सति भवतीनां कामशान्तिः ज्ञानं वा भवत्विति चेत् तत्राहुः । देवो यथादिपुरुष इति । भवान् ब्रह्मरूपः सर्वसमः तथापि इन्द्रादिषु कृपां कुर्वन् दैत्यान्मारयन् विषमतामङ्गीकरोति नतु देवेभ्यो ज्ञानं प्रयच्छति यत्र स्वरूपमेव अन्यथा करोति तत्र वाचमन्यथाकरोतीति किं वक्तव्यम् अतो यथा आदिपुरुषोऽपि देवो भूत्वा सुरलोकगोप्ता जातः तथा भवानपि धर्ममर्यादारक्षकः अस्मत्संबन्धं करोत्विति भावः । तदेव रसपोषणार्थं व्याजेनाहुः । तन्नो निधेहीति । आदावस्माकं शिरसि हस्तं स्थापय यथा अस्माकमभयं भवति ततोऽस्माकं हृदयतापनिवृत्त्यर्थं स्तनेषु च करपङ्कजममृतस्राावि तापनाशकं निधेहि अनौचिती तु नास्ति यतो वयं किङ्कर्यः परीक्षार्थं वा एतत् द्रष्टव्यमिति रसोक्तिः ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्मादलं चातुरी प्रपञ्चेन मुञ्चावहित्थमित्याहुः । व्यक्तं ननु कुत्राप्येतदाख्यानं गुप्तमित्यर्थः । किन्तत् भवान् व्रजस्य यद्भयं दावानलादिभ्यः आर्त्तिः पीडा च वर्षवातादिभ्यस्ते हरतीति सः । व्रजजनार्त्तिहर इत्यपि पाठः । अभि सर्वतोभावेन नन्दगृहे जातो यथा नारायण इति सर्वलोकैरुद्घुष्यते अद्य यदि शतकोटिसंख्या एता गोप्यो मरिष्यन्ति तदा व्रजजनानामेतत्पित्रादीनामार्त्तिः कथमेकदैवैता वनमध्ये मृता इति भयश्च भविष्यतीति भावः । तर्हि किमभीप्सितं वस्तत्राहुः । तत्तस्मात् हे आर्त्तबन्धो ! अस्माकं तप्तेषु स्तनेषु करपङ्कजमर्पय । ननु तर्हि मृदुलमेतन्मे ज्वलिष्यतीति तत्राहुः ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किङ्करीणामिति । त्वत्परिचारिकाणामस्माकं तप्तावप्येतौ त्वत्परिचर्यासाधनावेव पङ्कजस्यापि सूर्योदयतापो न तापकः । प्रत्युत सुखद एवेति भावः । शिरःसु चेत्यतः परं वो मत्यागभयं मास्त्विति ज्ञापयितुम् ॥ ४१ ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

किञ्च गम्भीराशयस्य नागरशिरोमणेर्भवतोऽभिप्रायं निर्धारयितुं न पारयाम आभीरबाला इति यथा जानीमस्तथाकुर्विति सदैन्यं सानुनयं ब्रुवन्त्य उपसंहरन्ति । व्यक्तमिति । प्रसिद्धं निश्चितमिति यावत् भवानित्यादि तत्र व्रजस्य भयं पूतनादावादिभ्यः आर्तिश्च त्वद्विरहेणेति यथायोगमूह्यं तथा अभिजातस्तु कुलजे बुध इत्यमरकोशात् हे आर्तबन्धो ! इति दैन्यं तप्तस्तनेष्विति । विरहेणेति शेषः तत्र करपङ्कजमिति तापापनोदनत्वं वस्तुतस्तु अवहित्थया छाद्यमानोऽपि मनोभवोऽस्मत्कुचस्पर्शादुद्भविष्यत्येवेत्यपदेशेन तद्भावोद्घाटनायाहुस्तप्तेति । किञ्च तप्तपदेन रसानुगुणं दिव्यप्रदानमपि सूचितं तथा शिरःस्विति सोत्प्रासं कुरु शपथं नास्मासु तवाशक्तिरिति प्रणयोक्तिः यद्येवं कृतेऽपि तव धीरत्वमाकलयामस्तदावधीरयामः प्रेयसीभावमित्याशयेनाहुः किङ्करीणामिति । किं वा दैन्योक्तिः यद्वा नः अस्माकं तप्तस्तनेषु किङ्करीणां शिरःस्विति यथाक्रमं योज्यं ननु कथमनुचितमाचरेयमिति तत्राहुः आर्तबन्धो ! इति कामेन मानिधेहि कित्यार्तबन्धुत्वेनेत्यर्थः ॥ ४१ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

किञ्चास्तां यद्युयोग्यायोग्यविचारो न वयं त्वां प्रतिवक्तुं शक्तास्तथापि त्वया सर्वव्रजभयार्तिहारिणा किं करीणां दुःखापहारः कैमुत्यन्यायेन कर्त्तव्य एवेत्याहुः । व्यक्तमिति । यथा आदिपुरुषो देवो विष्णुः सुरलोकगोप्ता तथा भवान् व्रजे भयार्तिहरोऽभिजात इति व्यक्तमित्यन्वयः । एवं दृष्टान्तकथनेन तेन स्वकृत्ये सुरक्षणे उपेक्षाभाववत्त्वयापि न वयमुपेक्षणीया इति भावः । यद्वा असमर्थस्य सम्भवेदप्युपेक्षा नतु तव समर्थस्येत्याहुः । व्यक्तमिति । सुरलोकगोप्तादिपुरुषो देवो विष्णुर्यथा समर्थस्तथा भवान् व्रजभयार्तिहरोऽभिजात इति व्यक्तं "नारायणसमो गुणैः,, अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ,, इत्यादिगर्गवचनैः प्रत्यक्षतोऽपि गोवर्द्धनोद्धरणासुरवधादिना व्यक्तं यद्वा सुरलोकगोप्ता विष्णुरेव भवान् सर्वासामादित एव पुरुषः देवो रमणश्च यथेति यथाव्रजभयार्तिहरोऽभिजात इति व्यक्तं तथा च स्त्रीणां न उपेक्षायां पुरुषत्वक्षतिः रमणाभावे देवत्वहानिर्व्रजजनानामेव नो भयार्तिहरणाभावे तदर्थं जन्मासाफल्यं तत्रापि तव किङ्करीणां नस्तद्विरहतापानिवृत्तौ दीपमूलेऽन्धकारन्यायापातश्चेति ध्येयं तत्तस्मात् हे आर्तबन्धो ! आर्तबन्धुकृत्याद्यनुसन्धायास्मद्गुणदोषविचारमुपेक्ष्यानुपेक्ष्या चास्मान् किङ्करीणां नः शिरःसु तप्तस्तनेषु च करपङ्कजं निधेहि तत्र शिरःसु करधारणेनाभयदानाद्भाविविरहभयनिवर्तनं तप्तस्तनेषु तापापनोदनकरपङ्कजधारणेन वर्तमानार्तिहरणं तथा शिरःसु करधारणेन भयनिवृत्त्या चिन्ताम्न्युपशमनं स्तनेषु पाणिस्पर्शेन कामविरहाग्न्योर्निर्मूलनं तव करयोः पङ्कजत्वेन तापशमनस्येन्द्रत्वेन रसवृष्ट्या तापनिर्मूलनस्य सम्भावितत्वात् किञ्चार्तिहरणे त्वया गिरिकरधारणं कृतमधुनापि स्तनकनकगिरिकरधारणेनार्तिमपहृत्य शिरः करधारणेनाश्वासय यद्वा नः स्वविरहकामाग्नितापाविश्वासश्चेत्तप्तस्तनेषु करं धृत्वा परीक्ष्य ततस्ततोऽभयं दातुं शिरःसु करं निधेहि यद्वा वृकासुरकरधारणेन शंभुरक्षा त्वया कृता अधुना तु शम्भुदग्धोऽनङ्गोयातुधानः सन् स्वाग्निना स्तनशम्भून्मूलतो दहति स्वकरधारणेन स्तनशम्भून् रक्ष यद्वा करपङ्कजं तप्तस्तनेषु निधेहि इति वदने प्रियकरयोस्तापो माभूदिति त्वरितं शिरःस्विति कथनं यद्वा शिरःसु करं धृत्वाश्वासनेन तापोपशमेनातप्तस्तनेषु करपङ्कजं निधेहि यद्वा न आर्तिहरणाय स्तनेषु करधारणे करयोः कामविरहाग्नितापभयं मा कुरु तव करधारणारम्भे करपङ्कजसंनिधानेनैवाग्निद्वयोपशमसम्भवेनातप्तेष्वेव स्तनेषु निर्भयं करपङ्कजं निधेहि यद्वा तथा व्यक्तत्वेऽपि नाहं व्रजभयार्तिहरोऽभिजात एवं यदसि चेत्तर्हि किङ्करीणामिति सम्बन्धद्योतने तत्र किं कुर्म्मः किंकुर्म इति किं किं कुर्वन्त्यः किंकर्यो दास्यः किमपि रहस्यत्वात्प्रकटयितुमयुक्तं विहारं कुर्वन्त्यः प्रियसख्यः किमपि वाचामगोचरं परमाल्हादं प्रेमसुखं कुर्वन्त्यः परमानन्दघनस्यापि ल्हादजनेनैव तव प्रेमास्पदाल्हादिन्यः शक्तयः किंकर्यस्तासां नः शिरःसु करधारणेन शपथं तप्तस्तनेषु च करधारणेन दिव्यं च विधेहि यद्वा न मयोपेक्षाभिप्रायेणोक्तं येनैवं प्रार्थना क्रियते किन्तु प्रार्थनयेति चेत्तर्हि किङ्करीणां नः शिरःसु करं निधेहीति शपथं कुरु तेन तव शपथेनास्तुवरो तथा तप्तस्तनेषु करं धृत्वा दिव्यं कुरु तेन तव दिव्यं नस्तुदिव्यं सुखमित्युभयं सम्पद्येत यद्वा नोपेक्षा चेत्तर्हि तव स्नेहरसपूरितो येदिस्थापितमणिमुक्ताहारादिसर्वतो भद्रालंकृतकनककुम्भात्मकत्वद्राश्वासनगततापस्तनकलशेषु करपङ्कजं निधेहीत्येवं कलशस्थापनपूर्वकं नःशिरःसु करं निधेहि स्वीयत्वेन स्वीकुरु तथा च विधिवत्स्वीकारेण न कदाप्यावयोः शङ्का स्यात् यद्वा शिरःस्विति समीपे सप्तमी तथा च शिरः समीपे ग्रीवायां करं निधेह्यालिङ्गयेति भावः ॥ ४१ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

अथोत्तरदिग्गताः प्रार्थयन्ते । व्यक्तमिति । आदिपुरुषो देवो भवान् यथा वामनादिरूपेण सुरलोकगोप्ता जातस्तथेदानीं व्रजभयार्त्तिहरोऽभिजातः प्रकटित इत्यस्माकं व्यक्तं विस्पष्टमस्ति ज्ञानं वसुदेवगृहेऽवतीर्णस्य सद्यो व्रजे प्रवेश एव मुख्यमवतारप्रयोजनं जानीमस्तत्र व्रजस्थानां गोपादीनां भयं भगवता नाशितं सम्प्रति तत्रत्यानामस्माकं कामार्त्तिहरणमवशिष्यते तद्यनारसार्थक्याय सवावश्यकमिति भावः । ननु तथापि मर्यादयैवाऽऽर्तिहरणंयुक्तमतः कामार्त्तिं ज्ञानेन हरिष्यामीत्याशङ्कानिरासायोक्तं देवः यथादिपुरुषः सर्वकारणभूतस्तस्तनश्च देवासुरादिषु समोऽपीन्द्रादिस्वभक्ताभिलापानुसारेणोपेन्द्रादिर्देवो भूत्वा दैत्यानां मारणमप्यङ्गीकरोति तथास्मदर्थं गृहीतगोपालविग्रहः स भवान-

। श्रीशुक उवाच ।

इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।
प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

श्रीधनपतिशूरिकृतभागवतगूढार्थदीपिका ।

स्मदार्त्तिहरणाय मर्यादोल्लङ्घनमपि करोत्विति भावः । तस्माद्ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्वप्रतिज्ञामनुसरेत्याहुः । तदिति । यस्मान्मनोरथानुसारिफलप्रदातृत्वेन भवान्प्रसिद्धस्तस्मान्नोऽस्माकं स्तनेषु कामार्तिनाशाय करपङ्कजं निधेहि तत्र योग्यं सम्बोधनं हे आर्तबन्धो ! शिरःसु च निधेहि कामोपाधिकापीयं भवतीनां भक्तिः शुद्धायामपि तस्यां पर्यवस्यतीत्याश्वासनार्थमिति भावः । यद्वा अस्माकमेव भयार्तिहरणं तवावतारस्य मुख्यं प्रयोजनं तेनास्माकं हृदयतापनिवृत्त्यर्थं स्तनेषु करपङ्कजममृतस्राविवत्वात्तापनाशकं निधेहि संसारभयनिरासार्थं च शिरःसु तन्निधेहीत्यर्थः । यतो वयं किङ्कर्योऽतोऽस्माकं भयार्त्तिनाशनमार्त्तबन्धोस्तव योग्यमेवेत्याहुः । किंकरीणामिति । अनभिज्ञापक्षे तस्मादलं चातुरीनिबन्धनैर्वः ग्विलासैःसर्वथाप्यस्मदभिलषितं सम्पादयेत्याहुः । व्यक्तमिति । यथा आदित्याज्जात आदिपुरुषो देवः सुरलोकगोप्ता तथा व्रजस्य दावादिभयं वातवर्षादिपीडां च हर्तुं व्रजेश्वर्य्यां भवानभिजातः नारायणसमो गुणैरित्युक्तत्वाद्युक्तमिदं ननु गुप्तमतोऽस्माकं कामादिभयार्तिहरणमपि स्वव्रतरक्षणायावश्यकमिति भावः । ननु युष्मदङ्गीकारेण युष्मत्पतीनां भयार्तो भविष्यतस्तद्धरणार्थमभिजातस्य तत्प्रदानमनुचितमित्याशङ्क्य अग्रहणे सत्यस्मन्मरणावश्यंभावादस्मत्पत्यादीनां तत्कृतभयार्त्तिनाशस्यास्मद्ग्रहणं विनासम्भवात् भवतु स्वस्याभीप्सितमावेद्यतामित्यपेक्षायामाहुः । तदिति । यस्मादेवं तस्मात्तत्तेष्वस्माकं स्तनेषु करपङ्कजं निधेहि सम्यक् स्थापय तव हस्तस्य पङ्कजरूपत्वात्सूर्यतापेन कमलस्येव तस्मादस्मत्स्तनतापेन सुखमेव भविष्यतीति व्यङ्ग्यं यतो हे आर्त्तबन्धो ! नोचेदिदं नाम निरर्थकं भविष्यतीति भावः । संदैन्यमाहुः किंकरीणां शिरस्सु च निधेहि इतः परमेतावन्मात्रेणास्मान् दासीकुर्विति भावः । यद्वा शिरःसु करपङ्कजस्थापनेन त्यागभयेन निवर्त्तय यतो वयं किङ्कर्यस्त्वञ्चार्तबन्धुस्तस्मादस्माकमात्म्यादिकं त्वन्निबन्धनमन्यन्निमित्तं वा नोपपन्नमिति भावः।यद्वा नास्तीदमनुचितं यतो वयं किंकर्य्यस्ततः परीक्षार्थं वा तथा कर्त्तव्यमिति रसोक्तिः । मानिनीपक्षे बलात्स्तनादौ हस्तं धर्तुं प्रवृत्तमालक्ष्याहुः । व्यक्तमिति । व्रजस्य भयार्त्यौर्हरणाय जातस्त्वमस्माकमुभयसाधने कर्मणि नियोजयितुं नार्हसीति भावः । तस्मात्करपङ्कजं हे आर्तबन्धो ! धर्मभङ्गभयार्त्तिनाशक ! हे तप्त ! काम ख्रिनापितु किंकरीणां दासीनामपि किमुत सतीनामस्माकं शिरस्स्वपि नो निधेहि किमुत स्तनेषु नो निधेहीति यद्वा व्रजभयार्तिहरणायाभिजातस्य तव तद्धारहरणादिना तत्प्रदानंनोचि तमिति भावः । यद्वा बलात्कारेण यद्यस्मान्स्पृशासि तर्हि प्राणान्वयं त्यक्ष्यामस्तेन सर्वेषां भयार्ती भविष्यतस्तच्च तथा भूतस्य तव नोचितमिति भावः । हे कामार्त ! किङ्करीणामपि त्वदभिलाषद्रहितानामतस्तेषु स्तनेषु शिरःसु च करपङ्कजं नो निधेहि यद्वा याः वः किङ्कर्य्यस्तासां तत्तत्स्तनेषु करपङ्कजं निधेहि उक्तिप्रत्युक्तिमद्वाक्यं संलाप इति कोर्त्यत इत्युक्तत्वात् स्वागतमित्याद्येतदन्तं प्रकरणं संलापाख्योऽनुभावः । निवृत्तिपक्षे । किञ्च जगत्कारणत्वेन प्रतिपादितो भवान् सर्वाधिष्ठानभूतोऽतस्त्वय्यऽध्यस्तस्य प्रतिपादनं त्वत्प्रतिपादनेमवेत्त्याशयेनाहुः । भवान् देवः स्वयंप्रकाशचिदानन्दस्वरूपस्तथा च प्रावरणे एको देव इति अत एवादिपुरुषः एकोऽहं बहुस्यामित्यादि जगत्कारणत्वेन प्रतिपादितोऽभिजातः सच्च त्यच्चाभवत् तत्सृष्ट्वा तदेवानुप्राविशदित्यादिना सर्वस्वरूपापन्नत्वेन निरूपितः यथा सुरलोकगोप्ता तथा व्रजस्य काण्डत्रयात्मकस्य वेदस्य भयार्तिहरोऽपीति व्यक्तं निश्चितं यद्वा यथा आदिपुरुषो देवो भवान् वामनादिरूपेण सुरलोकगोप्ताभिजातस्तथा मत्स्यरूपेण व्रजभयार्तिहरोऽप्यभिजात इति व्यक्तं यद्वा तत्तद्वादिकृतवेदभयार्तिहरणार्थं कृष्णद्वैपायनादिरूपेण प्रकटित इति व्यक्तमित्यर्थः । यस्मादेवं तत्तस्मात्करपङ्कजं करोतीति व्युत्पत्त्या करशब्देनाज्ञानमुच्यते तल्लक्षणात्पङ्काज्जातमधिकार्य्यन्तःकरणं नोऽस्माकं श्रुतीनां शिरः सु शिरोभागेषु वेदान्तेषु निधेहि तद्विचारार्थं प्रवर्त्तय यथा तत्तत्स्तनेषु ब्रह्मपरलम्भन प्रतिपादनेन तत्तेषु स्तनस्थानीयेषु कर्मोपासनद्वारा ब्रह्मपरभागेषु च निधेहि वेदैश्च सर्वैरहमेववेद्य इत्यादिप्रेरणेनेति भावः । यतो वयं सर्वा अपि भवत्किकर्य्यः त्वय्येव तात्पर्य्यवत्त्यो भवांश्चार्त्तबन्धुस्तत्तद्वादिभिरसुरैश्च दत्तपीडानामस्माकं संसारिणां मुमूक्षूणां च बन्धुरतो योग्यमिदमिति संबोधनाशयः ॥ ४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आदिपुरुषो भवान् अभिजात इति व्यक्तं सुनिश्चितम् ॥ ४१ ॥

---

भाषा टीका ।

हे प्यारे ! यह बात हमे खबर है कि जैसे आदि पुरुष नारायण वामन रूप से देवलोक की रक्षा कर वे को प्रगघट भये हे तैसे ही आप भी या व्रज की रक्षा करवे भय के नाश करवे को आये हो तब आपकी रक्षा करके को समय यही है या समय हम आपको दासी प्राणांत कष्ट मे पडी हैं सो हे आतर्बन्धो ! पहिले तो हमारे सब के स्तनों पर हस्त कमल स्थापन करके हमारी कामाग्नी को बुझाओं फिर हमको संसार दुःख से छुटावे को हमारे मस्तकों पर भी हस्त कमल को स्थापन करो तो व्रज की रक्षा होवैगी नहीं तो नहीं ॥ ४१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

विक्लवितं पारवश्यं गोपीररीरमत् रमयामास ॥ ४२ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

"श्रीगोपीप्रियपादाब्जप्रसादरमितात्मभिः । यथारुच्यन्यथाप्यत्र कृतोऽर्थः स्यात्पदेपदे । अन्योऽन्यं तस्य तासां च वाचोऽर्थोऽन्योऽन्यमेवहि । इष्टेद्योऽप्यधिया धार्ष्ट्याल्लिखितःप्रीतये सतां इत्थं च पूर्वमङ्गसङ्गो नूतं न वृत्तोऽस्तीति गम्यते अन्यथा तस्य तासां च तत्तदुक्त्यनुपपत्तिः अतएव श्रीमुक्ताफलग्रन्थकारपादैभिः पूर्वरागे एकाविंशाध्यायोक्तमक्षण्वतां फलमित्यादिकं संगृहीतम् अत एव श्रीस्वामिपादैरपि व्याख्यातं त्वयाभिरमिता आनन्दिता इति मुख्यार्थत्वेऽपि श्रीवल्लभभट्टपादादिभिः स्वप्नादाविति व्याख्यातं तत्तच्च लिखितमेव एवं पञ्चदशे तै गोरेजच्छुरितमित्यादिपद्यद्वयम् ऊनविंशे गोपीनां परमानन्द इति पद्यम् अन्यच्चान्यत्रत्यं तादृशं तत्रैवोह्यं यद्वा अङ्गसङ्गः पूर्वमपि सकृत् द्वित्रवारान् वा तदेकरसिकत्वाद्वृत्तोऽस्त्येव एवं सति अभिरमिता इति मुख्यार्थ एव अधुना चासकृत्तदाचरणे रासविलासविशेषे वा तस्य तासां च तादृश्युक्तिर्मन्तव्या यद्वा परमप्रेममधुररसमग्नमनसां तासां यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवं पदे पदे इत्यादिन्यायेनासकृत् कृतमपि परममधुरवस्तुनस्तादृशस्वभावात् सदा नूतनमिव मन्यमानानां तथा तादृशस्यैव रसिकशिरोमणेस्तस्यापि तत्तदुक्तिर्घटेतैव ततश्चाभिरमिता इत्यस्य श्रीस्वामिपादकृतव्याख्यासंगच्छेतैव एतच्च श्रीभागवतामृतोत्तरखण्डे विवृतमेवास्ति इति एतत् विक्लवितं वैकल्योक्तं वाचामुभयकोटिस्पर्शादुभयत्र संगतं सदयं प्रकर्षेण हसित्वेति हासो जनोन्मादकरी हि मायेत्युक्तवञ्चना निरस्ता तद्दिष्टस्यैव ताभिः प्रतिपादनात् यद्वा सदयं स्वहस्तेन तासामश्रुमार्जनादिपूर्वकमरीरमत् इति तत्रौदासीन्यं निरस्तं प्रीतिश्च दर्शिता यतो गोपीः प्रेमविशेषेण तादृशलीलाप्रसादयोग्या इत्यर्थः । हासस्तु निजाभिप्रायाज्ञानेन तासां वैकल्योक्तेः तेन निजावहित्थासार्थकत्वाच्च यद्वा प्रतिवचनेन प्रहर्षोदयात् शुद्धभावेन हसित्वा किंवा तासां तदुक्त्यावहित्थापगमेन मधुरभावविशेषोदयात् हासोऽहि श्रृङ्गारस्य व्यभिचारी ननु परस्परमासक्त्या वैदग्धीप्रकटनेन रतिः संपद्यते तच्च तस्यात्मारामत्वादिना न घटते तत्राह । योगः चित्तैकाग्रता तस्येश्वरा वशीकृतयोगाः सनकादयस्तेषामीश्वरोऽपि आत्मारामोऽपीति विचित्रवैदग्धीप्रकटनेन. योगनिष्ठा आत्मारामता च तदानीं न स्थितेत्यर्थः । पूर्ववत् विक्लवितेन योगेश्वरेश्वरता रमणेन चात्मारामता अपगतेति विवेचनीयम् अन्यथा तच्छ्रवणरमणासंभवः योगेत्यनेनैकोऽपि बहुरूपः सन्निव पृथक् पृथक् युगपद्रमयामासेति सूचितमन्यत्तुल्यम् ॥ ४२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति निजोक्तिवदुभयार्थस्पर्शात्मकमेतद्विक्लवितं प्रेमवैक्लव्यमयः रोपदैन्योक्तं श्रुत्वा तच्छ्रवणेन स्वाभिलाषं पूरयित्वेत्यर्थः । ततः प्रहस्य परिहासेऽपि तासां वैकल्यविशेषोदयात् ततो निजाभीष्टश्रवणसिद्धेस्तत्रापि स्ववचनसदृशप्रतिवचनसौष्ठवात्ततोऽवहित्थापगमेन रत्याख्यभावोदयाच्च । प्रकर्षेण चेतोविकाशिरूपतया रसशास्त्रप्रसिद्धमुखप्रसादानुभावं भावविशेषं लब्ध्वेत्यर्थः । तदेव च सप्रेमदैन्यवचनं श्रुत्वा सदयं चित्तार्द्रतासहितं यथा स्यात्तथा गोपीररीरमत् । रन्तुं स्वयमेव प्रयोजयामास अत्याग्रहञ्चकार इत्यर्थः । एवं तस्यैव च तत्रेच्छावैशिष्ट्यं लक्ष्यते । समानमपि क्रीडत्सु बालकेषु प्रयोजकबालकस्यैवेति भावः । अत एव परस्मैपदम् । "अणावकर्मकाच्चित्तवत्कर्तृकादिति कर्त्रभिप्राये तद्विधानात् । ननु किमेतदाश्चर्यं नागरेषु तत्राह । आत्मारामोऽपि । अहो तासां प्रेमगुणप्राबल्यं यतः आत्मारामाश्च मुनय इत्यादौ हरिगुणेनात्मारामगण इव तेन सोऽप्यात्मवशीचक्रे इति भावः । अतएवापिशब्दः सार्थकः स्यादन्यथा तु प्रत्युत विरुद्ध एव यद्यपि नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विनेति सामान्यभक्तपरमप्यस्ति वचनं तथाप्यत्र वैशिष्ट्यविवक्षया तथोक्तमिति न पौनरुक्त्यवैयर्थ्यम् । ननु कथमेकः सन्नसंख्या रमयामास तत्राह । योगेश्वरेश्वर इति । योगेश्वरा अपि कायव्यूहादिकं विधाय युगपन्नाना कृत्यं विधातुं शक्नुवन्ति सतु तेषामपीश्वरत्वेनाचिन्त्यस्वाभाविकशक्तित्वात्तदादिकं विनापि शक्नोतीति । वक्ष्यते च श्रीनारदेन । चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहदिति भावः । गोपीशब्देन तत्तन्महामन्त्रप्रसिद्धं तासां तदीयनित्यवल्लभात्वं स्मारयित्वा तत्रापिनात्याश्चर्यतां सूचयतीति ॥ ४२ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं तासां विक्लवितं पारवश्यप्रलपितमाकर्ण्य योगीश्वरेश्वरोऽप्यात्मारामोऽपि गोपीररीरमत् रमयामास· आत्मारामत्वाद्विषयविमुखोऽप्यार्त्तिहरस्वभावत्वात्ताभिः सह रेमे इत्यर्थः ॥ ४२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विक्लवं चिन्तां कामार्तवचनं न्यरीरमत् नितरां रमयामास ॥४२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति पूर्वोक्तप्रकारेण विक्लवितं प्रेमवैवश्यवचः श्रुत्वा योगेश्वरेश्वर इति । तत्तदलौकिककर्मसमाधायकाचिन्त्यशक्तिरित्यर्थः । आत्मारामोऽपीति तासां प्रेमगुणप्राबल्यम् आत्मारामाश्च मुनय इतिवत् । अरीरमत् रन्तुं प्रयोजयामासेति तस्यैव तत्रासक्तिर्मुख्या दर्शिता । क्रीडत्सु बालकेषु प्रयोजकबालकस्येव ॥ ४२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदनन्तरं यदभूत् तत् श्रीशुकाचार्य्यः प्रकटयन्ति इतीत्यादि योगेश्वरेश्वरोऽपि आत्मारामोऽपि आत्मनि स्वसुखे आरमन्तीत्यात्मारामः तथाभूतोऽपि प्रहस्येत्यस्य कोऽर्थः मम योगेश्वरेश्वरता आत्मारामता च गलितेति प्रहासं कृत्वा अरीरमत् ननु

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

रेमेऽनुक्तोक्तप्रकारेण स्वाधिकरणकेश्वरताज्ञाननिरासपूर्वकं सङ्कोचाभावेन यथा रुचि सर्वा एव मया सह रमन्तामिति णिच्प्रत्ययमहिमा ॥ ४२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं प्रार्थनायां भगवान् यत्कृतवान् तदाह । इतीति—

षड्गुणैश्वर्यभावेन षोढा रेमे हरिः स्वयम् ।
स्वरूपेणापि शृङ्गारो द्विविधोऽपि निरूपितः ॥
सामान्यरमणं पूर्वं विशेषे मेलनं पुरा ।
बाह्येन रमणं पश्चादान्तरं च ततः परम् ॥
ततो नानाविलासेन जातकेलिविभेदतः ।
विप्रलम्भस्य सिद्ध्यर्थं तासां मान उदीर्यते ॥
तिरोभावस्ततश्चापि नायं लौकिककामुकः ।

प्रथमं तासां पापनोदार्थं सामान्यलीलामाह । इतीति । तासां विक्लवितं परमवैक्लव्यभाषितं श्रुत्वा प्रहस्य अरीरमत् ननु निरिन्द्रियः कथं रेमे तत्राह । योगेश्वराणामपीश्वर इति । योगादिषु सर्वे पदार्थाः स्फुरन्ति अणिमादयोऽपि तथा तदैव स्वरूपमेवेन्द्रियादिभावेन प्रकटीकृतवान् नतु स्वस्य कामेन तथा सति बीजनिवृत्तौ कामो निवर्त्तेत तासां यथा न कदाचिदपि स भावो गच्छति तदर्थं प्रहस्य प्रकर्षेण हास्यं कृत्वा तासामुद्धारार्थं नतु भिन्नगणनया मर्यादायां पातयित्वा नाशार्थमिति तदाह । सदयमिति । गोपीरेवारमयत् स्वयं त्वात्माराम एव—

क्रियासर्वापि सैवात्र परं कामो न विद्यते ।
तासां कामस्य सम्पूर्त्तिर्निष्कामेनेति तास्तथा ॥
कामेन पूरितः कामः संसारं जनयेत् स्फुटः ।
कामाभावेन पूर्णस्तु निष्कामः स्यान्न संशयः ॥
अतो न क्वापि मर्यादाभग्नामोक्षफलापि च ।
अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेत् ॥
भगवच्चरितं सर्वं यतो निष्काममीर्यते ।
अतः कामस्य नोद्बोधस्ततः शुकवचः स्फुटम् ॥

आत्मारामस्य आत्मनैव रमणं व्यावर्त्तयितुमपिशब्दःअरीरमत् बहुधा रेमे उत्तरोत्तररसाधिक्यं च प्रकटितवान् ॥ ४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विक्लवितं वैक्लव्यव्यञ्जकं वाक्यं श्रुत्वा तच्छ्रवणेन स्वाभिलाषं पूरयित्वेत्यर्थः । प्रहस्य अहो भाववत्यो यूयं प्रतिदिनमेव मिलनसमये वाम्यमपारं कुरुध्वे एव । अहन्त्वेकस्मिन्नेव दिने अद्यैवावहित्थया यत् किञ्चिद्वाम्यमकरवं तदपि दाक्षिण्यगर्भमेव । तेनाप्येताथदैक्लव्यवत्यो लज्जायाः श्राद्धं कृतवत्यो मां हासयध्वे । तस्मात् युष्मत्प्रात्यहिकावहित्था सिन्धुचुलुकीकरणचुम्बुना मयैव जितास्थ भोः सुबुद्धिशेखरम्मन्याः जितास्थ तत् स्वयमेवागत्य प्रतिबन्धकलज्जाधृत्याद्यभावान्मत्कण्ठे कनकमणि मालायिता भूत्वा स्वाधरसुधाः पाययत चिरादुद्भूतमहातृष्णोऽस्मीति परिहस्य सन् अयः शुभावहो विधिर्यत्र तत् सस्नेहं वा यथा स्यात्तथा आत्मारामोऽपि ता गोपस्त्रीः रमयामास इत्थम्भूतप्रेमाणो गोपस्त्रिय इति । आत्मारामाश्च मुनय इति पद्ये इत्थंभूतगुणो हरिरितिवत् गोपीनां तदीयस्वरूपभूतह्लादिनीशक्तिवृत्तित्वात् ता अप्यात्मान इत्यात्मभूताभिस्ताभी रमणं सम्भवत्येव यद्यपि नच सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवानिति नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विनेत्यादि भगवदुक्तेस्तस्य स्वात्मतोऽपि भक्तानामानन्दप्रदत्वाधिक्यावगमादासाञ्च गोपीनां सर्वभक्तशिरोमणित्वादात्मारामस्यापि तस्यानन्दाधिक्यार्थमेवैताभी रमणमिति ज्ञेयम् । ननु प्रमदाशतकोटिभिराकुलित इति क्रमदीपिकाद्यागमदृष्ट्या शतकोटिसंख्याभिस्ताभिरेकत्रैव एकदैव एकस्य तस्य रमणं नोपपद्यते तत्राह । योगिनः सौभर्यादयः योगेश्वरा रुद्रादयस्तेषामपीश्वर इति सौभर्यादयः कायव्यूहं कृत्वैव रमन्ते कृष्णस्त्वतक्यचारतस्त विना । यद्वक्ष्यते चित्रं बतैतदेकेन वपुषेत्यादीति ॥ ४२ ॥

---

केनचित्कृता विशुद्धरसदीपिका

इति एवं प्रकारं वक्तुमशक्यत्वादतिदेशः यद्वा इति अलमधिकोऽस्त्यर्थः विक्लिवितं प्रेमवैकल्यमयरोषदैन्योक्तं पारवश्यप्रलपितं यद्वा विगतं कातरत्वं यस्मात्तत् उदारं वचः शुद्धसख्योद्गारमयत्वादिति भावः। तासामिति । प्रेयसीनां सखीनामिति यथास्वमूह्यं श्रुत्वा प्रहस्येति निन्हवः किं भवतीभिस्तथ्यमिति ज्ञातं मया तूपहासः कृतः इति भावः । एवं सरलस्वभावाः सदयं यथा स्यात्त था नत्वासक्त्येतिभावः । तर्हि आसक्त्या कुत्र रमत इत्यत आह । आन्माराम इति । परमप्रेमास्पदत्वादात्मनि श्रीराधायामेव रामो रमणं यस्य सः तदुक्तं स्कान्दे श्रीभागवतमाहात्म्ये—

आत्मा तु राधिका तस्य तयैव रमणादसौ ।
आत्माराम इति प्राज्ञैरुच्यते गूढवेदिभिः इति ॥

तथा भूतः सन् गोपीरपि अरीरमत् परस्मैपदप्रयोगेण तन्मनोरथपूरणायैव नत्वासक्त्येति सूचितं ननु तर्हि पक्षतटस्थादिना विषमस्वभावा एकत्र मिलिताः कथमेको रमयामास तथा सति कथं वात्माराम इति तत्राह । योगेश्वरेश्वर इति । अत्र द्वितीयेनेश्वरपदेन कायव्यूहशङ्कापरास्ता ततश्चानन्यसाधारणेन प्रकाशभेदेनारीरमदित्यर्थः एवं च—

चित्रं बतैतदेकेन वपुषा युगपत् पृथक् ।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥

इत्यादिषु प्रदर्शितात्प्रकारभेदादपि वैशिष्ट्यं दर्शितं तत्र हि पृथक्गृहेष्वित्युक्तेर्देशभेदः नात्र सः इति योगेश्वरपदेन च कामाद्यनासक्तिः स्पष्टैव तादृशत्वेऽपि रमणं प्राणप्रियायाः सान्द्रप्रेमेणेति दर्शयिष्यामः ॥ ४२ ॥

---

श्रीरामनारायणकृतभावभावविभाविका :

एवं भगवान् शुकः स्वयं भगवता गृहासनपतिपुत्राद्यनु-

ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।
उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥४३॥

श्रीरामनारायणकृतभावभावविभाविका ।

वृत्तिप्रवृत्त्युपदेशेऽपि प्रेमिणां तदस्वीकारेण भगवदेकपरत्वं प्रेम यथा चार्यगोपी चरितेन दर्शयित्वा स्वाज्ञोल्लङ्घनेऽपि भगवतः कृपया तत्पारवश्यं तत्पारवश्येऽप्यात्मारामत्वमेवाह । इति विक्लवितमिति । तासामतिविलक्षणप्रेमवतीनां स्वानुगृहीतानां' प्राणप्रियांशानुगतानां स्ववाक्यदाक्षिण्यार्थावबोधेऽप्युपेक्षाभासमात्रेणेत्येवं विक्लवितं खेदवाक्यं श्रुत्वा अहो आसां स्वभावसरलत्वमिति प्रहस्य ननु किमुपहसनीयतया तासां नेत्याह । सदयमिति । करुणान्वितं यथा भवति तथा ता गोपीरीरमत् नन्वात्मारामस्य कथमन्यत्र रमणं तत्राह । आत्मारामोऽपीति । तस्य सामान्यतः सर्वात्मत्वात्सर्वत्र रमणेऽपि तदात्मारामत्वाक्षतेर्विशेषतो लीलाधामनि सर्वस्याप्यविवर्तितदात्मतया नात्मारामत्वे शङ्कास्पदं तत्रापि "आत्मा तु राधिका तस्येति वचनात्तदंशानुगतासु रमणे न शङ्कागन्धोऽपि किञ्च रमणस्य सुखैकगोचरत्वेन सुखमात्रस्य तु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्या तन्मात्रत्वेन तत्र रमणेऽप्यात्मारामत्वमेव किञ्च कैमुत्यन्यायेनापि तदात्मारामत्वमाह । योगेश्वरेश्वर इति । "यक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरं गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते,, इत्यादश्रुतिस्मृतिभिर्जीवन्मुक्तानां स्वसाधनतदनुग्रहसिद्धानां योगेश्वराणामपि प्राकृतविषयोपभोगेऽपि तदनुग्रहोद्भूतज्ञानमाहात्म्यान्नात्मारामत्वक्षतिस्तदा किमु वाच्यं तदीश्वरस्य तज्ज्ञानप्रदस्य स्वतो नित्यसिद्धबोधस्य यद्वा योगेश्वरेश्वर इत्यस्यायं भावः योगेश्वराः कामजयमिच्छन्तोऽपि सङ्गभीता रतिरणविमुखा इन्द्रियनिरोधेनात्मरक्षामात्रं कुर्वन्ति कृष्णस्तु योगेश्वरेश्वरः अपरिमितमदनकामगकाञ्चनदुर्गात्मकगोपीतनुषु रतिरणं सम्पाद्य स्वात्मन्यवरुद्धसौरतत्वेन कामविजयमिच्छन्नात्मारामोऽप्यरीरमत् ॥ ४२ ॥

श्रीधनपतिशूरिकृतभागवतगूढार्थदीपिका ।

ततः किंकृतमित्यपेक्षायामाह । इति इत्युक्तप्रकारेण तासां त्रिविधानां गोपाङ्गनानां विक्लवितं प्रेमपारवश्यप्रलपितं प्रार्थनोपालम्भनिषेधरूपं भाषितं श्रुत्वा तच्छ्रवणाभिलाषं पूरयित्वा प्रहस्य परिहासेनापि वैकल्यमुत्पाद्य यद्वा सुष्ठूक्तं भवतीभिरित्यपि तदुक्त्यनुमोदनेन रताख्यभावव्यञ्जनाय प्रकर्षेण हसित्वा यद्वा प्रहासेनाभिज्ञाः प्रति युष्मदिच्छया प्रीत्यात्यर्थमहं प्रसन्नोऽस्मीति अनभिज्ञाः प्रति अहो अद्यैकस्मिन्नेव दिने मया गृहीतेनावहित्थाभावेन ता भवत्यो लज्जायाः श्राद्धं कृतवत्य इति मानिनीः प्रति अहो अति कठिनाः भवत्यो जितं युष्माभिरिति सूचयित्वा सदयं यथा भवति तथा गोपीररीरमत् रमयामास अभिज्ञापक्षे सदयं सकरुणम् अनभिज्ञापक्षे सत्यनाह मानिनीपक्षे सत् अयःशुभावहो विधिर्यत्र तत् गोपीः अरमयदित्यनेन तत्तन्मनोरथानुसारेण भगवान् प्रेष्ठ आसक्त इत्येवं प्रतीतः सन् रमयामास स्वयं त्वसङ्ग एवेति सूचितं पूर्णकामस्य सङ्गनिर्विकारस्य परमात्मनो रमणे दयैव हेतुर्न कामेनेति बोधनाय सदयमित्युक्तम् आत्मारामोऽपीत्याश्चर्य्यबोधनाय अहो तासां प्रेमप्राबल्यं सनकाद्यात्मारामगणवशीकरणगुणगणोऽपि स्वयमात्मारामोऽपि ताभिर्वशीकृत इति ननु आत्मनि आरामः क्रीडा यस्य तस्य निरिन्द्रियस्यासङ्गस्य एकस्यासंख्याताभिः कथं रमणं सम्भवतीत्याशंङ्क्याह । योगेश्वरेश्वर इति । योगिनस्सौभर्य्यादयः तेषामीश्वरस्तथाऽघटितघटनासमर्थेऽज्ञजनप्रतीत्यनुसारेण प्रपञ्चभानवत्प्रतीत्यनुरोधेन रमणोपकरणभानस्याऽप्यविरुद्धत्वादिति भावः । यद्वा अरीरमदपि वस्तुत आत्माराम एव यतः योगेश्वरेश्वरः यद्वा ताभिः रममाणोऽप्यात्मरूपाभिस्ताभिरारामःक्रीडा यस्येति न तस्य लौकिकं रमणमिति भावः । निवृत्तिपक्षे इति मिथोक्तिप्रकारेण तासां श्रुतीनां सदैन्यं प्रार्थितं श्रुत्वा प्रहस्य प्रसन्नो भूत्वा सदयं यथा स्यात्तथा आत्मारामोऽपि स्वप्रकाशचिदानन्दस्वरूपत्वात्प्रमाणप्रवृत्त्ययोग्योऽपि गोपीः श्रुतीररीरमत् अतन्निरसनद्वारा तद्विषयतामगच्छत् यतो योगेश्वरस्य सकलसम्बन्धघटनसमर्थस्याव्याकृतस्य मायादिशब्दप्रतिपाद्यस्येश्वरस्तथा च जगज्जन्मादिकारणत्वप्रतिपादनेन श्रुतयो मयि पर्य्यवस्यन्तीत्यधिकारिचेतसि दृढतरं निश्चयमुत्पादितवानिति भावः ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विक्लवितं पारवश्यं प्रलपितं श्रुत्वा आत्मारामोऽपि निजानन्दपूर्णोऽपि गोपीररीरमत् रमयामास ॥ ४२ ॥

भाषा टीका

श्रीशुकदेव जी बोले सब योगीश्वरों के ईश्वर श्रीकृष्णचन्द्रजी इस प्रकार से उन गोपियों की अति दीनता वचन सुनकर फिर हंस कर बड़ी दया से युक्त हो कर आप आत्माराम होने पर भी गोपियों को रमण कराते भये ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रियस्येक्षणेनोत्फुल्लानि मुखानि यासां ताभिः उदारहासश्च द्विजाश्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य सः एणाङ्कश्चन्द्रः ॥ ४३—४५ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

रमणप्रकारमेव ताभिरित्यादिभिश्चतुर्भिर्वर्णयन् आदौ ताभिः सह प्रेमसङ्गमेन तस्यापि शोभाविशेषं सदृष्टान्तमाह । ताभिरिति । समेताभिः अत्यन्तान्तिकं गताभिः यद्वा प्रणयकोपपरित्यागेन मिलिताभिः यद्वा मा शोभा परमसौन्दर्य्यं तया सह वर्त्तते समा

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

परमसुन्दरी श्रीराधा तया इताभिः प्राप्ताभिः एतेन प्रथममुक्तिप्रत्युक्तिसमये तासां मध्ये श्रीराधानासीत् किंतु कृष्णस्यावहित्थापगमे जात एव सा मिलितेति ताभिर्वृतः परितो वेष्टितः सन् अच्युतः कामादिभिरनिर्जितोऽपि तथा च विश्वः अनिर्जितेचाच्युतस्त्विति यद्वा कथमपि कस्याश्चिच्छोभाया न च्युत इत्यच्युतोऽपि यद्वा रसप्रसरात् कथमपि न च्ययते इत्यशेषरस पूर्णतोक्ता अत एव विशेषेणारोचत अशोभत समेतत्वे हेतुः उदाराणि रसविशेषोद्दीपनविचित्रवैदग्ध्यादिमयत्वेन सर्वोत्कृष्टानि परमसुखप्रदानि वा चेष्टितानि स्पर्शनपुष्पाद्यर्पणकटाक्षादिरूपाणि यस्य सः यद्वा प्रहस्येति पूर्वोक्तो हेतुस्तत्र विराजत एव यद्वा प्रहस्यारीरमत् रञ्जयामास रेत रागात्मकत्वात् तथाच विश्वः रतिः स्मरप्रियायां च रागे च सुरते रतिरिति अयमेव सङ्गतौ हेतुः ततश्च उदारचेष्टित इति वक्ष्यमाणरमणोपकरणं विरोचनकारणं च ज्ञेयम् अत एव प्रियस्य ईक्षणं स्वकर्तृकं तत्कर्तृकं वा एवं शक्तिविशेषैश्वर्य्यमपि दर्शितं परितो वर्त्तमानास्ताः प्रतिसाम्येन युगपदीक्षणात् उत्फुल्लशब्देन मुखस्य कमलत्वमीक्षणस्य भास्करत्वं व्यञ्जितम् एवं तासां रसविशेषप्रकाश उक्तः तस्यापि तमाह। उदारे हासे द्विजेषु च कुन्दपुष्पवद्दीधितिर्यस्य सः एवं हासस्य च शुभ्रकान्तिरुक्ता यद्वा उदारहासे द्विजकुन्दानां दीधितिर्यस्य यद्वा उदारो हासो यया सा द्विजकुन्ददीधितिर्यस्य इतिश्रीमद्दन्तानां प्रकाशेन हासस्याधिकशोभोक्ता स्वतः परम काष्ठाप्राप्तस्य नित्यशोभामयस्यापि ताभिः शोभाविशेषं दृष्टान्तेन साधयति। एणाङ्क इति। पूर्णचन्द्रस्ताराभिः सर्वतो विराजमानाभिः सतीभिर्वृतः सन् यथा विरोचते तद्वदिति एवं ताभिः सह तस्यान्योऽन्यं शोभनत्वं प्रेष्ठत्वं नित्यसाहित्यं च सूचितम् ॥ ४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रमणप्रकारमेव ताभिरित्यादिभिश्चतुर्भिर्वर्णयन् तत्प्रयोजककर्तृताश्च दर्शयन्नादौ ताभिः सह प्रेमसङ्गमेन तस्यापि शोभाविशेषं सदृष्टान्तमाह। ताभिरिति। समेताभिः स्वयमेव श्रीकृष्णेन कर्त्रा समागताभिः अरीरमदित्युक्तेः ततस्ताभिस्तादृशीभिर्वृतः परितो वेष्टितः सन् व्यरोचत विशेषेणाशोभत तत्राप्यच्युतः सर्वाभिः प्रत्येकमपि सङ्गमे च्युतिरहितः सन् अत एव उदारचेष्टितः उदाराणि रसविशेषोद्दीपनविचित्रवैदग्ध्यादिमयत्वेन सर्वोत्कृष्टानि परमसुखप्रदानि वा चेष्टितानि स्पर्शनपुष्पाद्यर्पणकटाक्षादिरूपाणि यस्य सः। अत एव प्रियस्य वीक्षणं स्वकर्तृकं तत्कर्तृकं वा ज्ञेयम्। उत्फुल्लशब्देन मुखस्य कमलत्वं व्यञ्जितं तदीक्षणे तदन्तःकरणतमोऽपगमेन तदीयदिवसता प्राप्तेरिति भावः। एवं तासां रसविशेष उक्तः। तस्यापि तमाह। उदारो हासो यया सा। द्विजकुन्ददीधितिर्यस्येति श्रीमद्दन्तानां प्रकाशेन हासस्याधिकशोभोक्ता। स्वतः परमकाष्ठाप्राप्तनित्यशोभामयस्यापि ताभिः शोभाविशेषं दृष्टान्तेन साधयति। एणाङ्क इति। चन्द्रस्य पूर्णत्व—एणाङ्कस्यैणाकारत्वेनोपलम्भादेणाङ्कः पूर्णचन्द्रस्ताराभिः सर्वतो विराजमानाभिः सतीभिर्वृतः सन् यथा विरोचते तद्वदिति एवं ताभिः सह तस्यान्योऽन्यं शोभनत्वं प्रेष्ठत्वं नित्यसाहित्यं तासां तत स्तन्वीत्वं च सूचितम् ॥ ४३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति। ताभिरित्यादिना। प्रियस्य स्वस्येक्षणेन उत्फुल्लानि मुखानि यासां ताभिः सङ्गताभिः गोपीभिः सहाच्युतः उदारहासश्च द्विजा दन्ताश्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य तथाभूतो व्यरोचत रराज उडुभिर्वृतश्चन्द्र इव ॥ ४३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समेताभिः मिलिताभिः उदार उत्कृष्टः हासः द्विजा दन्ताः कुन्दा मल्लिका आसां दीधितिः कान्तिर्यस्य सः द्विजा एव कुन्दाः द्विजकुन्दाः उदारहासेन विवृतानां द्विजकुन्दानां दीधितिर्यस्य स इति वा एणाङ्कश्चन्द्रः एणः कुरङ्गो हरिण इति हलायुधः ॥ ४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रयोजकत्वमेवाह। ताभिरिति चतुर्भिः। समेताभिः श्रीकृष्णेनैव कर्त्रा सङ्गताभिः। उपगीयमानः तदीयस्वरतालाद्यनुरूपेण तन्नामगानेनोपगायकरीत्या गीयमानः। तदुक्तं विष्णुपुराणे। —

> कृष्णः शरच्चन्द्रमसं कौमुदीं कुमुदाकरम्।
> जगौ गोपीजनस्त्वेकं कृष्ण नाम पुनः पुनरिति ॥४३॥४६॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तत्प्रकारमाह। ताभिरित्यादिना। समेताभिःसह मिलिताभिर्वृतोऽतेरराज उदारं उचेष्टितं लीला यस्य ताभिः कीदृशीभिः प्रियेक्षणं प्रियकर्तृकं प्रियकर्मकं वा यद्दर्शनं तेनोत्फुल्लानि मुखानि यासां उत् उत्कृष्ट आरः प्रसरणं यस्य स चासौ हासश्चेति तथा तस्मिन् द्विजकुन्दानां दीधितिर्यस्य कः कामिरिव एणाङ्कश्चन्द्र उडुभिरिव स कीदृशः उदारमूर्ध्वमियर्तीति उदारं चेष्टितं यस्य प्रियेति तुल्यम् अच्युतः अनेकराशिव्यापी उदारो महान् यो हासः प्रकाशः तेन द्विजानां कुन्दानाञ्च दीधितिरिव दीधितिर्यस्य उडु वा स्त्रियामिति स्त्रीलिङ्गविशेषणम् ॥ ४३ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं सामान्यलीलामुक्त्वा विशेषलीलामाह। ताभिरिति त्रिभिः। अजातस्मरकेलिभिः प्रथमतः ताभिः समेतो जातः मिलितः पूर्वं भयात् पृथक् स्थिताः ततः उदाराणि चेष्टितानि यस्य अत्र औदार्यं रसविषयकं यथा तासां महानेव रस आविर्भवति तथा कामशास्त्रसिद्धा लीलाः सर्वा एव कृतवान् ततस्ता अन्तः पूर्णरसाः प्रियस्य भगवत ईक्षणार्थमुत्फुल्लानि मुखानि यासां

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तादृश्यो जाताः प्रियेक्षणेन या सूर्यकिरणैरिव उत्फुल्लानि मुखानि वस्तुतो लोभस्थितरसार्थमेव तथा करणम् एतावति कृते रसो निवर्त्तते तदभावायाह। अच्युत इति। तासामपि रससमाप्त्यभावाय उदारो यो हासः पूर्णकामप्रदः कामार्थमेव यो मोहस्तेनैव स्नेहः सम्वर्द्धितस्तदाह। हाससहिता ये द्विजाः त एव कुन्दपुष्पाणि आरक्तान्यपि हासेन शुभ्राणि तेषु दीधितिर्यस्य कुन्दत्वं स्नेहस्यैतन्मात्रपर्यवसानार्थं पूर्वं निरुपाधिरेव स्नेहः स्थितो भगवता परं रसशास्त्रोक्तरीत्या स्वरूपानन्दं दातुं तत्सजातीयः कामोपाधिकः स्नेहोऽधुना जनित इति ज्ञापनाय स्नेहरूपरदानां द्विजपदेन कथनं तथा सति फलभोगात् कान्त्यभावमाशङ्क्य तत्र दीधितिरुक्ता यद्यपि भगवान् तन्निर्बन्धेन रेमे जगद्दोषनिराकरणार्थं च ननु स्वयं तथापि न पूर्णमनोरथ इव किन्तु यथा लौकिकः तदाह। दृष्टान्तेन एणाङ्क उडुभिर्नक्षत्रैः सह तथा व्यरोचतेति बन्धातिरिक्ताः सर्वा बाह्या एव लीला उक्ताः एषा विशेषतः प्रथमलीला बाधककामनिवारिका॥ ४३॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

उदारं तासां रतिसुखप्रदं भावभक्तानां तच्छ्रवणादेः प्रेमप्रदं च चेष्टितं लीला यस्य सः अच्युतः युगपदेव तत्प्रत्येकं रमणनिष्ठाच्युतिरहितः उदारैस्तासां सुखप्रदैर्महद्भिर्वा हासैर्द्विजानां दन्तानां कुन्दानामिव प्रकाशिता दीधितिर्यस्य सः॥ ४३॥

---

केनचित्कृता विशुद्धरसदीपिका।

इदानीं ताभिः समेतस्य भगवतः सुषमाविशेषं दर्शयति। ताभिरिति। अनिर्वचनीयप्रेमवतीभिः आत्मभूतायाः प्रतिबिम्बरूपाभिर्वा तत्सहचरीभिर्वा समेताभिः स्वयमेव भगवतैव वाचः पेशैरेकमत्यं प्रापिताभिः तथा स्वयमपि उदारेति उदाराणि रसविशेषोद्दीपनविचित्रवैदग्ध्यादिमयत्वेन सर्वोत्कृष्टानि परमसुखमयानि वा चेष्टितानि यस्य सः तानि चाङ्गस्पर्शनपुष्पादर्पणकटाक्षादीनि किम्वा वक्ष्यमाणानि बाहुप्रसारेत्यादीनि वस्तुतस्तु प्राणप्रियायाः स्वाधीनपतिकायाः श्रीराधिकाया अनुग्राहकत्वाभिमानेन तासु समेतासु चाटुप्रहमयानि चेष्टितानि यस्य सः अत एव अच्युतः तासां भावहावादिभिरनाकृष्टचित्तः अत एव प्रियेति स्वकर्तृकं वा यत्प्रियेक्षणं तेनोत्फुल्लानि मुखानि यासां ताभिः वृतः प्रीत्या स्वयं वृतः परिवारित इति यावत् किम्वा कान्तत्वेन यथोचितं वृतः वरणमात्र स्वीकारस्तेन गान्धर्ववृत्तिः सूचिता सा चानौचित्यपरिहारायेति ज्ञेयं तदुक्तम् "अनौचित्यादृते नान्यद्रस भङ्गस्य कारण,, मिति गान्धर्ववृत्तेश्चौचित्यमुक्तं महाभारते शकुन्तलां प्रति दुष्यन्तेन—

आत्मनो बन्धुरात्मैव गतिरात्मैवचात्मनः।
अतएवात्मनो दानं कर्तुमर्हसि धर्मतः इति॥

सोपपत्तिकं ऐश्वर्यमाह—

सा त्वं मम सकामस्य सकामा वरवर्णिनि!
गान्धर्वेण विवाहेन भार्य्या भवितुमर्हसीति।

एतदभिप्रायेणैव गान्धर्ववृत्त्येत्युक्तमुज्ज्वलाद्यैः इदं च प्रेयसीष्वेव सहचरीपक्षे तु वृतःपरिवारित इत्येवार्थः व्यरोचत विशेणाशोभत पक्षे विशेषेण महां रुचित इत्यर्थः क इव एणाङ्क इव इति ताभिः सह तस्यान्योऽन्यं शोभाविशेषत्वं प्रेष्ठत्वं नित्यसाहित्यं ततस्तन्वीत्वं च सूचितं वस्तुतस्त्वेणाङ्कपदेन वर्णसाम्यान्मेघाम्बरं लक्ष्यते तेन च मेघाम्बरधरायाः श्रीराधायाः सान्निध्यमध्यवसीयते मेघाम्बरइति नीलाम्बरस्यैव नामान्तरङ्कणोद्देशादौ ततश्च ताभिर्नित्यसहचरीभिः परितो नित्य एको युगलरूपो मुख्यतमः प्रकाशो वर्त्तते सच प्रेयसीभावाभिरलक्षितः सहचरीभिश्च लक्षित इति ज्ञेयं सच सच कीदृशः उदारहासेत्यादि प्रस्तुते हासस्योदारत्वं च तासनासक्ता प्राणेश्वर्य्याः सानुकूल्यद्योतनाय वयस्यासु फलयत कलकण्ठ्यो मम कलाकौशलं यद्येताः। सर्वा अपि वञ्चयन् प्राणप्रियामेवानुसरामीति 'चातुर्य्यद्योतनायेति॥ ४३॥

---

श्रीरामनारायणकृतभावभावविभाविका।

रमणीयतस्य शोभामाह। ताभिरिति। अच्युतस्ताभिर्व्यरोचतेत्यन्वयः अयमत्राभिप्रायः यतोऽच्युतः न च्युतं स्वरूपं स्वरूपस्थगुणावा हावभावगाननृत्यादिकला वा भगशब्दवाच्या ऐश्वर्य्यादयो वा यस्येति सर्वथा पूर्णत्वात्स्वत एव वारोचत पूर्णपुण्याया अपि गङ्गाया यमुनान्तरसङ्गमे दशगुणमाहात्म्यश्रवणवत् नित्यसञ्चितपरानन्दस्यापि परब्रह्मण उपनिषच्छ्रुतिगणविषयीकृतस्वैश्याभिव्यक्तपरमानन्दत्वबत्ताभिर्विशेषेणारोचत ताभिः किं भूताभिस्तत्राह। समेताभिः ऐहिकामुष्मिकसर्वधर्मास्तत्र सेव्यत्वेनावभासमानतत्तद्देवाननभिश्रित्य तात्पर्य्यवृत्त्या पूर्वापराविरोधसमन्वयाभ्यां श्रुतीनां मुमुक्षूणां च ब्रह्मण्येव सम्यक् पर्य्यवसानवत्सर्वगृहकुलधर्मादिकृत्यतत्सेव्यपतिपुत्रादिबन्धुवर्गमुत्सृज्य भगवदेकपरतया परस्परसापत्न्यभावं चानवेक्ष्य सम्यक् प्राप्ताभिः साधनं निरूप्य फलोद्गममाह। प्रियेक्षणोत्फुल्लमुखीभिरिति। प्रियस्य नित्यनिरतिशय प्रेमास्पदस्य कृष्णस्येक्षणेन दर्शनेनोत्फुल्लानि मुखानि यासां यद्वा प्रियस्य तस्यैव कृपादृष्ट्या उत्फुल्लानि सर्वदिव्यकुसुमेभ्योऽप्युत्कृष्टतया फुल्लानि मुखपङ्कजानि यासां ताभिरनेन भगवदीक्षणस्य रविरूपतया तत्प्रेमात्मकरुपादैर्मुखकमलविकाशनयोग्यतापि ध्वनिता कथम्भूतो हरिस्तत्राह। उदारचेष्टितः उदाराणि अतिशयेन सर्वजनसर्वसुखप्रदानि चेष्टितानि यस्य नित्यपूर्णसुखघनस्य भगवतः कर्मणां स्वसुखहेतुत्वासम्भवात्तद्विषयभूतानां प्रियाणां तत्स्मरणादिपराणां च भोगापवर्गप्रेमसुखादिदातृत्वेनोदारत्वं ज्ञेयं पुनः किंभूतः उदारहासद्विजकुन्ददीधितिः उदारे तथैव सुखप्रदे हासे द्विजानां कुन्दकुसुमवद्दीधितिर्यस्य तथा च हासस्य स्वत एवोज्ज्वलत्वेऽपि द्विजदीधित्या अत्युज्ज्वलत्वं ध्वनितं यद्वा उदारहासरूपा द्विजकुन्दानां दीधितिर्यस्य तथा च द्विजा एव कुन्दपुष्पाणि तद्दीधितिरेव कुन्दविकाशस्तेन मुखे नित्यद्विजदीधित्या नित्यप्रहसितत्वं सूचितं यद्वा यथा द्विजैः कुन्ददीधितिभिः मुखपद्महासाकारत्वेन सम्भावितैः सहासमुखपद्मरुचस्तथा ताभिर्व्यरोचतेति दृष्टान्तसूचनं मुखतोऽपि दृष्टान्तमाह। उडुभिर्वृत एणा

**उपगीयमानं उद्गायन् वनिताशतयूथपः ।**
**मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन् वनम् ॥ ४४ ॥**

### श्रीरामनारायणकृतभावभावविभाविका ।

चन्द्र इव अत्र उडूनां यथा बहुत्वं दीप्तिमत्त्वं दीप्त्याल्हादाद्विमत्तया च चन्द्रसाजात्यं तत्पत्नीत्वं च तथा गोपीनां बहुत्वं कान्तिमत्त्वमाल्हादकत्वं प्रतीयमानगोपजातित्वेन वस्तुतः सच्चिदानन्दघनत्वेन च साजात्यं तत्पत्नीत्वं च ध्वनितं ताभिर्वृत इति पदेनापि श्लेषाद्वरणं पतित्वेन स्वीकरणं द्योतितं तच्चात्रैव गान्धर्वीवाधना वा ब्रह्मणा वत्साहरणावसरे प्राजापत्यविधिनैवोद्वाहितत्वेन वा तत्पतीनावप्यात्मत्वेन वा बोध्यम् एणाङ्क इव कृष्णस्यैकत्वं कान्तिमत्त्वं तथैव साजात्यं तत्पतित्वं च द्विजकुन्ददीधितिरित्यत्र किरणवाचिदीधितिशब्देन द्विजानामुड्डसादृश्यं मुखस्य चन्द्रसामान्यमपि द्योतितं तेन तस्यापि एणाङ्क इवोडुभिर्वृत इत्यस्योपमेयत्वम् ॥ ४३ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रमणप्रकारमाह । ताभिरिति । यथोडुभिस्ताराभिर्वृत एणाङ्कः पूर्णश्चन्द्रः शोभते तद्वत्ताभिर्वृतोऽच्युतः व्यरोचत विशेषेण शोभितः अनेन दृष्टान्तेनाऽन्योऽन्यापेक्ष्यशोभमानत्वं गोपीनां तन्वित्वं स्वर्णत्वं च व्यज्यते ताभिः समीपमागताभिरादौ समेताभिर्मिलिताभिः भगवांश्चोदारचेष्टित उदाराणि अलौकिकानि-निर्मलानि मुक्त्यादिफलदानि चेष्टितानि करस्पर्शेन पुष्पाणां कटाक्षादिरूपाणि यस्य सः तस्य तादृशचेष्टितैः तासां रसोदयमाह । प्रियकर्तृकमक्षिणं स्वकर्तृकं वा तदीक्षणेनोत्फुल्लानि विकशितानि मुखानि यासाम् अनेन भगवन्मुखस्य चन्द्रत्वं तन्मुखानां कुमुदत्वं बोधितम् अथ भगवतोऽपि रसोदयमाह । उदारो हासो यस्याः सा दन्तलक्षणकुन्दपुष्पकान्तिर्यस्याः सा उदारहासेन द्विजकुन्देषु दीधितिर्यस्येति वा तादृशाभिस्ताभिः मनस्यपि रसोदयेऽपि च्युतिर्न जातेति ज्ञापनायाच्युत इत्युक्तं यद्वा यथान्येऽपि स्वस्वरूपादप्रच्युत एवासीदित्यच्युतपदेन ध्वनितं निवृत्तिपक्षे ताभिः सर्वाभि "गोतिसामान्या,,दिति न्यायादेकस्मिन्नद्वितीये ब्रह्मणि तात्पर्य्येण समेताभिः श्रुतिभिः उदाराणि सृष्टिकर्तृत्वादीनि चेष्टितानि यस्य सः प्रियस्यानन्दरूपस्य परमात्मन ईक्षणाय तद्विषयकं प्रेमोत्पत्त्या उत्फुल्लानि विकशितानि तत्प्रतिपादनोन्मुखस्थानीयानि पदानि यासां ताभिः उदारो यो हासः महामायः हासो जनोन्मादकरी च मायेत्युक्तत्वात्स्नेहकला द्विजानां तद्युक्तत्वात् द्विजपदेन स्नेहकला उच्यते उदारो महामायालक्षणो हासः स्नेहकलालक्षणा द्विजा दन्ताः यस्य स चासौ कुन्दः मकुन्दः एव दीधितिः प्रतिमारूपापन्ना कीर्त्तिर्यस्य सः कुन्दो माध्ये मुकुन्दे च भ्रमे निध्यन्तरे पुमानिति मेदिनी मुकुन्दः कुन्दरः कुन्द इति भारते ॥ ४३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अच्युतः अखण्डैश्वर्यः उदारं स्वभक्तमनोरथपूर्तिकरं चेष्टितं कर्म यस्य सः उदारहासश्च द्विजा दन्तास्च तेषु कुन्दकुसुमवद्दीधितिर्यस्य सः प्रियस्येक्षणेन उत्फुल्लानि मुखानि यासां ताभिः समेताभिः सह व्यरोचत उडुभिर्वृत एणाङ्कः मृगाङ्क इव॥४३॥

---

### भाषा टीका ।

बडी उदार भक्तन की सुखदायक लीलावाले भगवान् जब उन गोपियों से मिले तब अपने प्यारे के देखवेते जैसे सूर्य के उदय होवे ते कमल खिले तैसे उन गोपीजनों के मुख खिलउठे अच्युत भगवान् को जो उदारहास औ कुंदकी कळी की नांई जो दंत हैं उन के किरणों से जैसे कि अनेकों तारों के मध्य में पूर्णचन्द्रमा शोभित होवे तैसे उन गोपिन में भगवान् अत्यन्त शोभित भये ॥ ४३ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवं शोभाविशेषोदयेन श्रीवृन्दावनमपि शोभयन् गीतेन पुष्पादिप्रदर्शनेन च भावमुद्दीपयितुं किम्वा रतियोग्ययमुनापुलिनं गन्तुं गमनक्रमेण बभ्रामेत्याह । उपेति । रूपगुणलीलादिवर्णनेन स्तूयमानः यद्वा बहुधा तद्गीतगाने उपचतुर्षु पार्श्वेषु गीयमानः अतो हर्षेणोच्चैर्गायन् वनिताः जनितात्यन्तानुरागाः सीमन्तिन्यः तथा च विश्वः वनिता जनिता त्यर्थानुरागायां च योषितीति तासां शतानि यूथानि पाति सर्वदुःखाद्रक्षति यद्वा पिवति पिवन्त इव चक्षुर्भ्यामित्यादिवत् आसक्त्या सेवते यद्वा अधरामृतपानादिना साक्षात् पिवतीवेति तथा सः तासां निजनिजसाजात्यानुसारेण वर्गशो यूथत्वं तत्र श्रीगोलोकादिवर्त्तिन्यो नित्यप्रियाः काश्चित्तेनैव सह ततोऽवतीर्णाः काश्चित् काश्चित्तदंशभूता देव्यः या उद्दिश्य श्रीब्रह्मणादिष्टं सम्भवन्तु सुरस्त्रिय इति काश्चिच्च मुनयः श्रुतयश्च दण्डकारण्य वासिनो मानस सरस्वती तीर महातपस्विनश्च काश्चन्मुनयः काश्चिन्महोपातिपदाद्याः प्रौढसाधनैर्भावविशेषसिद्ध्याव्रजाकिशोरीत्वं प्राप्तास्ता द्विविधाः श्रुतय इति तत्तद्वृत्तं पाद्मबृहद्वामनादौ व्यक्तमेव तत्रैव भावविशेषेणावान्तरभेदं प्राप्ता इत्येवं विभागशो वर्तमाना अपि सर्वासां प्रायो भावसाजात्यात् सर्वा एव ताः साम्येन रमयामासेत्यर्थः वैजयन्तीं पञ्चवर्णपुष्पग्रथितां पञ्चवर्णा वैजयन्तीति वचनात् नवरत्नखचितामिति केचित् यद्यपि रिरंसया पूर्वं धृतान्यन्यान्यपि भूषणानि विद्यन्ते तथाचाग्रे वक्ष्यते वलयानां नूपुराणां किङ्किणीनां च योषितां सप्रियाणामित्यादि तथापि तां बिभ्रदिति रात्रौ तया शोभाविशेषाभिप्रायेण किम्वा ताभिः सद्यस्तत्रैव विरचय्य समर्पितत्वात् व्यचरत् परिबभ्राम ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्थं शोभाविशेषोदयेन श्रीवृन्दावनमपि शोभयन् गीतेन पुष्पादिप्रदर्शनेन च भावमुद्दीपयितुं रतियोग्यं यमुनापुलिनं गन्तुञ्च गमनक्रमेण बभ्रामेत्याह । उपगीयमान इति । उद्गायन् भावोद्दीपनं चन्द्रादिकं हर्षेणोच्चैर्गायन् ताभिश्चोपगीयमानः उपगायनरीत्या तैरेव गीतैरनुक्रियमाणैर्वर्ण्यमानः श्लेषेण तत्रैव सङ्गमितार्थत्वात् तच्चैवं ज्ञेयम् । यथा श्रीरसामृतसिन्धौ । अखिलरसामृतमूर्त्तिः प्रसृमररुचिरुद्धतारकापालिः । कलितश्यामाललितो राधाप्रेयान् विधुर्जयतीति । क्वचिदेकद्व्यक्षरपरिवर्त्तनाच्च । यथा । यामिनीकृतरुचिः शुचिकान्तिश्चन्द्रिकावलिविभाविकचश्रीः । षट्पदालिकलितैः कलगीतैः पश्य भाति कुमुदाकर एषः । यामिनीकृतरुचिः शुचिकान्तिश्चन्द्रकावलिविभाविकचश्रीः । सत्पदालि कलितैः कलगीतैः पश्य भाति कुमुदाकर एष इति । यद्वा । तदीयस्वरतालादियुक्तेन तन्नाम्नैव तदुपगायन् तया गीयमानः मनसि तदेकाविष्टतया वचसि तदेकस्फूर्त्तेः । यथोक्तं श्रीविष्णुपुराणे । कृष्णः शरच्चन्द्रमसं कौमुदीं कुमुदाकरम् । जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनरिति । तत्रार्थद्वयमपि रसनीयमिति । कृष्णश्च नाम च कृष्णनाम तदेवैकं केवलं जगाविति च व्याख्येयम् । वनिता जनितात्यर्थानुरागायाञ्च योषितीत्यमरः । तासां शतानि यूथानि पातीति तन्नायक इत्यर्थः । श्लेषेण तानि पिबति पिबन्त इव चक्षुर्भ्यामित्यादिवत् । आसक्त्या सेवते अधरामृतपानादिना साक्षात् पिबति वेति तथा सः तासां निजनिजभावसाजात्यानुसारेण वर्गशो यूथत्वं वैजयन्तीं पञ्चवर्णपुष्पग्रथितां पञ्चवर्णा वैजयन्तीति वचनात् । यद्यपि वलयानां नूपुराणामिति वक्ष्यमाणादन्यान्यपि भूषणानि विद्यन्ते तथापि तां बिभ्रदिति वनविहारयोग्याङ्गत्वेनोक्तम् । सा च ताभिरेवाशु निर्माय समर्पिता तद्वनदेव्या वृन्दयैव वा तदर्थं तत्र तत्र कुञ्जादौ स्थापितेति ज्ञेयं व्यचरत् परिबभ्राम ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

गोपीभिरुद्गीयमानः स्वयं चोद्गायन् वनिताशतानां यूथप इवेति भावः । वैजयन्तीं मालां बिभ्राणो वनमलंकुर्वन् व्यचरत् ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शतशब्दोऽनेकवाची वैजयन्तीं विजयावहाम् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रथमतो हर्षोत्कर्षात् तेन च ताभिरपि गानमारब्धं वस्तुतस्तु सङ्गीतप्रधानोऽयं रासविलासः सङ्गीतं च गानप्रधानं तेनासां मध्ये काः कथं गायन्तीति प्रत्येकं गानशुश्रूषया स्वयमपि गायन् वनविहारं कृतवान् इत्याह।उपगीयमान इत्यादिद्वाभ्याम्।उपगीयमान इत्यर्थात्ताभिर्गायन्नित्यर्थात्ता एव वनितानां शतं यूथपं मुख्यं यस्य एकैकस्याः यूथपायाः कोटियूथत्वेन ज्ञेया प्रमदाशतकोटिभिराकुलित इत्युक्तत्वात् वनं मण्डयन् व्यचरत् मालां बिभ्रदिति शुकदेवस्य स्फूर्त्तिसौभाग्यम् ॥ ४४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

द्वितीयलीलाया उद्बोधार्थं पूर्वं सामग्रीमाह । उपगीयमान इति। ताभिरुपगीयमानः निकटे गीयमानः स्वयमप्युद्गायन् जातः ततः वनितानामनेकविधस्त्रीणामनेकविधानेव यूथान् पातीति तथा जातः यावतीभिर्मिलितो रसहेतुर्भवति तावतीनामेकं यूथम् एवमनेकरूपाणि कृतानि तेषामत्र रक्षणं दूरादेवाश्वासनेन च तदा गायतो गच्छतः रूपमाह । मालामिति । वैजयन्तीं नवरत्नखचितां स्वाभाविकीमैश्वर्य्यबोधिकां कीर्त्तिमयीं मालां बिभ्रत् वनमेव सर्वं मण्डयन् अलं कुर्वन् व्यचरत् लीलागतिं कृतवान् एषा हि गतिः तासां कामोद्बोधिका स तासां कामपूरकः एकस्माद्वनात् वनान्तरं या गत इति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ताभिरुप आधिक्येन गीयमानः रागस्वरतालाद्यैः । तत्र तालत्रयेण गीतं यथा । वदनं मधुरिमसदनं चलनं दलनं करीन्द्रकीर्त्तीनाम् । हसितं सुदृगभिलषितं तव सवयः पातुमामनिशमिति । स्वयञ्च वनितानां शतयूथानि पान्ति यास्ता मुख्यतमाः श्रीराधाचन्द्रावल्याद्यास्तदनुगानरीत्या तेनैव गीतेन प्रत्येकमुद्गायन् । क्वचिदेकस्वरपरिवर्त्तेन परस्परगानमुद्गीतं यथा त्वद्वदनं सदनं मधुरिम्णां तत्र हन्त दृगन्तविलासाः । तेष्वसमां सुषमामुपजग्मुः सुन्दरि ! कामकलाः सकलास्ता इति। कान्ते ! त्वदास्योदयदत्तामिदुर्मृगच्छलाद्दुर्यश एव धत्ते । जनो पहासा सह नोऽथवा किं द्विजोऽपि मूढो गरलं जघासेति । अत्र सुन्दरीत्यत्र सुन्दरेति कान्ते इत्यत्र कान्त इति प्रयुञ्जानः प्रेयसीजनोऽनुगायति स्मेति रीतिः । वैजयन्तीं पञ्चवर्णपुष्पग्रथितां पञ्चवर्णा वैजयन्तीति वचनात् ॥ ४४ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

उदारचेष्टितानि दर्शयति । उपेति त्रिभिः । उप अधिकं गीयमानः ताभिरिति पूर्वस्मात् स्वयमप्युद्गायन् तत्र प्रेयसीभिस्तु तन्नामगुणादिकमेव गीयते भगवता च चन्द्रादिकं तदुक्तं श्रीविष्णुपुराणे कृष्णः शरच्चन्द्रमसङ्कौमुदीं कुमुदाकरम् । जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनरिति यद्वा श्लिष्टमेकमेवोभाभ्यां गीतं यथा श्रीरसामृतसिन्धौ—

> अखिलरसामृतमूर्त्तिः प्रसृमररुचिरुद्धतारकापालिः ।
> कलितश्यामा ललितो राधा प्रेयान् विधुर्जयति ॥

सहचरीभिस्तु पूर्वश्लोकगतैणाङ्कपदोद्बोधिततद्युगलनित्यविलासविशेषं प्रणयपरिणयात्मकं गीयत इति भेदः इदं च गानं तत्तज्जिज्ञभावाभिरनाकलितमेव योगमायाप्रभावेण रसावेशस्वभावेन वा ज्ञेयं तत एव च वनितेत्यादि "वनिता जनितात्यर्थानुरागायां च योषिती"ति कोशादनुरागवतीनां योषितां निजनिजभा-

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ।
रेमे तत्तरलानन्दकुमुदामोदवायुना ॥ ४५ ॥

केनचित्कृता विशुद्धरसदीपिका

वसाजालेन छिद्रामिः पञ्चपामिः खताद्यामिश्च शतसहस्रामिश्च वर्गेण भिन्नानि यूथानि पालयतीति वनिताशतयूथपः तच्च पालनं यथास्वं तत्तद्वाञ्छापूरणमेव तथा वैयन्तीं मालां बिभ्रत् सा चेयं तत्तद्रसामिव्यञ्जकवर्णविशेषकुसुमादिरचिता पञ्चवर्णा वैजयन्तीत्युक्तेः ते च रसाः प्रेयसीनां ब्रजलीलासम्बन्धिनः सहचरीणां च निकुञ्जलीलासम्बन्धिनः तदुक्तं—

ब्रजे रसाः शान्तदास्यसख्यवात्सल्यसूचकाः ।
निकुञ्जे रतिसौहार्दमैत्रीभावाभिधा मताः ॥
वर्णाः सितासितहरिद्रिक्तश्यामलसंज्ञकाः ।
रक्तावदातहरिता व्यक्तरागाः सिताः क्रमात् इति ॥

एषा च श्रीवृन्दादेवीनिर्मिता निजभावानुसारेण तामिश्च वर्णमालाभिप्रायेणैव निवेदितेति ज्ञेयं किं कुर्वन् वनं मण्डन् वनमालया मण्डितस्तामिः प्राणप्रियाभिः प्राणसहचरीभिश्च स्वयं वनमपि भूषितं कुर्वन्निति शोभोद्गारः सूचितः ॥ ४४ ॥

श्रीगमनारायणकृतभावभावविभाविका ।

ततस्तच्चरितमाह । उपगीयमान इति । वनितानां शतान्यसंख्यातानि यूथानि पातीति तथा गजीयूथप इव वनं मण्डयन् व्यचरत् इत्यन्वयः पुनः किम्भूतः सन् व्यचरत् तदाह । मालामिति । तासां प्रियेक्षणोत्फुल्लमुखोपलक्षितसर्वाङ्गानां मालां वैजयन्तीं च बिभ्रत् कुचद्वयधारणपोषणयोरित्यस्माद्वैजयन्तीं धारयन् तन्मालां उदारहासद्विजकुन्ददीधितिरित्यादिना मुखचन्द्रचन्द्रिकात्मकस्मितसुधया पोषयन् यद्वा विभुत्वेन सर्वानुगतवपुषा प्रत्येकं सर्वासामालिङ्गनेन स्वगुणग्रथितोत्फुल्लसर्वावयवकुसुमास्ता मालामिव धारयन् तथा फुल्लितकुसुमाङ्गीस्ताः श्यामतन्मधुपतया श्याममधुपवदुद्गायन् स्वयं चोत्फुल्लनीलोत्पलाङ्गस्ताभिः स्वमधुपाभिः वैजयन्तीं सुरभिसमाकृष्टमुनिगन्धर्वपालिभिश्चोपगीयमानः तत्रायं भावः तास्तु बहुपुलकमुकुलकराङ्गुलिप्रवालाङ्कुरस्ववाहुलतालिङ्गिततया पुलकमुकुलव्याजरसालपरसालाङ्गं कृष्णमाकलय्य कोकिलकलकण्ठवत् निर्वाणमपि कुसुमवाणव्यासं मत्वा मदनमदोन्मदतया रतिरणायोधकलस्वरगीतेनोद्गायन्त्यः कातरतया पलायनशङ्कया तद्गुणान् गायन्ति सोऽपि स्वात्मनस्तदुद्यततां बोधयन् ताः रतिरणायोत्साहयंस्तद्गुणान् गायति स्म ॥ ४४ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथोदारलीलामिर्वनमपि शोभयन् व्यचरदित्याह । उपगीयमान इति । तामिरुपसमीपे गीयमानः भक्तपराधीनत्वप्रेयसीजनमनोऽनुरञ्जकत्वमानवतीमनोहारित्वादिगुणगणालंकृतकृष्णनाम्ना पुनः पुनरुपगीयमानः स्वयं च शरच्चन्द्रादिमयं गोपीजनप्रेमातिरेकमयञ्च गीतमुत् ऊर्ध्वं ब्रह्मलोकपर्य्यन्तगामिगीतं गायन् तदुक्तं विष्णुपुराणे—

कृष्णः शरच्चन्द्रमसं कौमुदीं कुमुदाकरम् ।
जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनः इति ॥

तत् स्वयमनुरक्तस्त्रीशतयूथपस्तत्पतिकामनायाः पालक इति वा तदधरपानकर्त्तेति वा पुनश्च वैजयन्तीं मुक्तामाणिक्यमरकतेन्द्रनीलवज्राख्यरत्नरचितां स्वाभाविकैश्वर्यबोधिकां कीर्त्तिमयीं पञ्चवर्णां वैजयन्तीमिति वचनात्पञ्चवर्णपुष्पग्रथितां वा मालां बिभ्रत् वनमेव सर्वं मण्डयन् अलंकुर्वन् व्यचरत् तासां कामोद्दीपनाय लीलागतिं कृतवान् वनान्तरङ्गतवानिति वा निवृत्तिपक्षे उपगीयमानो मुनिभिः स्वयं च कृष्णादिरूपेण—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥

इत्यादिना स्वात्मानमुद्गायन् वनिताख्यानीयश्रुतिशतयूथपस्तदर्थत्वात्तत्पतिस्तथा च सूत्रस्मृतिश्रुतिलक्षणप्रस्थानत्रयलभ्य इत्यर्थमयीं वैजयन्तीं मालां बिभ्रत्तदवच्छिन्न सूत्रस्मृत्यादिरूपः सः

पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
सा भूतहेतुसङ्घाता भूत माला च वै हितेति ॥

विष्णुपुराणे अन्तःकरणलक्षणं वनं मण्डयन् व्यचरत् सर्वासु तद्वृत्तिषु स एवास्फुरदित्यर्थः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोपीभिरुद्गीयमानः स्वयमुद्गायन् ॥ ४४ ॥

भाषा टीका ।

सैकडों स्त्रीजन के यूथपति से हो भगवान् आप गान करत भये और गोपियें उनको गान करत भई ऐसे पञ्च वर्ण के फूलों की वैजयंतीमाला को धारण कर संपूर्ण वन की शोभा करत भगवान् विचरत भये ॥ ४४ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततः श्रीयमुनापुलिने ता नीत्वा वैदग्धीविशेषप्रकटनेन रमयामासेत्याह । नद्या इति द्वाभ्याम् । नद्याः कालिन्द्याः पुनः पुलिनमागत्य कालिन्द्या इति वक्ष्यमाणत्वात् तस्याश्च वनस्य च नामाग्रहणं तत्र तयोः प्रसिद्धत्वेन तथोक्त्यापि सुबोधत्वात् यद्वा निर्जनत्वमात्रापेक्षया वनत्वेन तस्य प्रवाहवत्त्वेन च पुलिनोत्तमत्वमात्रापेक्षया नदीत्वेनैव तस्या उक्तिः गोपीभिः सह आविश्य प्रीत्या प्रविश्येत्यर्थः हिमाः शीतला वालुका यस्मिन् तत् इति श्रमा-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

पनोदनत्वेन कोमलत्वेन च मनोरमता तस्य दर्शिता तस्या नद्या-स्तरलैस्तरङ्गै रानन्दी सुखविहारी चासौ कमलामोदयुक्तवा-युश्च तेन यद्वा तत्तरलैरानन्दी रात्रौ मुद्रितानामपि कमलानां कम्पनेन प्रकाशमानः सुखकारको वा आमोदो यस्मिन् वायौ तेन जुष्टं सेवितं कुमुदेति पाठः केषां चित् सम्मतः तरङ्गेन सम्बन्धेन शैत्यम् आनन्दीत्यनेन जुष्टमित्यनेन वा मान्द्यं सौरभ्यं च व्यक्तमेवेति गुणत्रयमुक्तम् इति सर्वथा पुलिनस्य रतिभूयोग्यत्वं तेन भावोद्दीपनं चोक्तम् ॥ ४५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततः श्रीयमुनापुलिने ताः प्रापय्य वैदग्धीविशेषेण रमयामा-सेत्याह । नद्य इति युग्मकेन । हिमवालुका कर्पूरः तद्वद्वालुका यत्र तत् शाकपार्थिववादि । एवं पूर्वत्र वनमपि वृन्दावनमेव । तस्या नद्यास्तरलैस्तरङ्गैरानन्दी सुखविहारी चासौ कमलामोदयु-क्तवायुश्च तेन निशायामपि कमलविकाशः शरदि मल्लिकावि-काश इव तदीयतादृशलीलारसमयप्रभावेणानन्दीति जुष्टमिति च मान्द्यम् । सौरभ्यशैत्ये स्पष्टे । कुमुदेति आनन्देति च पाठः एकेषाम् । जुष्टमित्यत्र रेमे इति क्वचित् अत एव पृथगङ्कः कृतः ॥ ४५ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नद्याः कालिन्द्याः ॥ ४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हिममय्यो वालुकाः सिकता यस्मिंस्तन्नद्या यमुनायाः पुलिनं कथम्भूतं तस्या यमुनायास्तरलानां तरङ्गाणां सम्बन्धिनां कुमु-दानामामोदो यस्य तेन वायुना जुष्टमासाद्याधिष्ठाय रमयाम्ब-भूवेत्युत्तरेणान्वयः ॥ ४५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिमवालुकं शीतलसैकतं तस्या नद्याः तरलैः मन्दकल्लोलैः आनन्दयितुं शीलमस्यास्तीति तरलानन्दी कुमुदामामो-दस्य वायुस्तत्तरलानन्दी कुमुदामोदवायुः तेन यद्वा तया नद्या तरलानि नृत्यन्तीव स्थितानि च तान्यानन्दीनि उत्फुल्लानि कुमु-दानि तत्तरलानन्दिकुमुदानि तेषामामोदेन सौरभेण सम्पृक्तेन वायुना ॥ ४५ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

किं कृत्वा धनं मण्डयन् व्यचरत्तत्राह । नद्याः पुलिनमागत्य ताभिः सह गोपीभिः किं भूतं हिमवालुकेव वालुका यत्र मध्यमलोपी हिमवालुका कर्पूरं तत्प्रसिद्धं तरलानि आनन्दीनि कुमुदानि तेषामामोदो यत्र तथाभूतेन वायुना जुष्टं सेवितम-पीत्यपिशब्दोऽध्याहार्यः अयमाशयः प्रथमं तावदाभिः सुरत-लीलैव पश्चादेव रासलास्यं पश्चाज्जलक्रीडेति व्यङ्क्ष्यतीयं लीला-तिरहस्या सा तु पुलिने न सम्भवत्यनावृतत्वात् विमानचारिदृश्य-त्वाच्च इति कृत्वा रासलास्यलीलैवात्र कार्येति पुलिनं दृष्ट्वेव पुन-र्वनमगादिति आगत्येति पूर्वकालार्थः ॥ ४५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुद्बुद्धे कामे ताभिः सह बन्धादिभिः रेमे इत्याह । नद्या इति । नद्याः पुलिनमच्छकोमलमाविश्य आस-मन्तात्प्रविश्य रमणे बन्धादीभिरितिकोमलं कृत्वा गोपीभिरले-कविधाभी रेमे हिमाः शीतलाः वालुका यत्रेति अन्तरूष्मा निवारितः बहिः शैत्यं चाह । तत्तरलानन्देति । तस्या नद्यास्तरला-स्तरङ्गाः तैः कृत्वा आनन्दयुक्तं पुलिनमेव आनन्दयुक्तो वायुर्वा कुमुदानां चानन्दयुक्तः सुगन्धः तस्यानन्दजनकत्वेनैव मान्द्यं निरू-पितं शैत्यं च कुमुदानां जलसंबन्धात् तादृशवायुना सहितं पुलिनं महाबन्धेषु वायोरत्यपेक्षा ॥ ४५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी

तस्यानद्यास्तरलैस्तरङ्गैरानन्दी शैत्यमान्द्याभ्यामानन्ददायकश्च रात्रावपि प्रफुल्लानां कमलानामामोदो यतःस च तेन वायुना रेमे जुष्ट-मिति पाठे रमयाञ्चकारेत्युत्तरेणान्वयः कुमुदामोदेति तरलानन्देति च क्वचित्पाठः ॥ ४५ ॥

केनचित्कृता विशुद्धरसदीपिका ।

ततश्च कुङ्कमणेनातिरमणीयं रमणयोग्यं देशविशेषं गतस्य श्रीभ-गवतो रमणमाह द्वाभ्याम् । नद्या इति । न नदायै नदीषु यूयादिनि निषेधात्तथोक्तिर्नद अव्यक्तायां वाचीत्यनुशासनाद्योगवृत्त्या नादवर्ती-त्यबोधनाय तथात्वञ्च कादम्बादिकूजितैरित्युक्तं यथा—

> चञ्चत्खञ्जनलोचनाम्बुजमुखी लोलालिमालाकिरा ।
> खेलत्कोककुलालिसंशितत वा रक्तोत्पलोष्ठाधरा ॥
> कूजत्सारसपालिरम्यरसनानीलोत्पलोत्तंसिका ।
> कालिन्दीकलहंसकीरविरवैर्गाथौ लिपेषे निजा ।

पुलिने प्रसिद्धे आविश्य प्रविश्येत्यर्थः । अत्र प्रविश्येति वक्तव्ये आविशेत्युक्तिस्तत्रत्यनिलप्रकाशेनाभेदं प्राप्येति विवक्षया पुलिनं विशिनष्टि । हिमवालुकमिति । हिमं वालुकं यत्र तत् कर्पूरे हिम-वालुकेत्यमरः ततश्च हिमवालुकेव वालुका यत्रेति तद्रमणस-म्पत्तिः सूचिता तथा तदित्यादिस्तस्या नद्यास्तरलानालम्ब्येन आश्रयति यः कुमुदामोदवान् वायुस्तेन उपलक्षितं पुलिनमिति वा तत्तरलानन्दीत्यपि पाठः ततश्च तत्तैरलानन्दीति विकसितानि यानि कुमुदानीत्यादि तत्र तत्तरलेतिशस्यम् अनन्दीति मान्द्यमामो-देति सौगन्ध्यमिति त्रैविध्यं दर्शितं तदेतद्वर्णितं श्रीगोविन्दली-लामृते—

केन चित्कृता विशुद्धरसदीपिका ।

ऋतुराजादिसर्वर्तुगुणसेवितकाननम् ।
वृन्दसंसृष्टगन्धाम्भः संसिक्ताध्वाङ्गनालयम् ॥
तथारतोणकोल्लोचपताकालम्ब्यगुच्छकैः ।
पुष्पैश्चित्रितकुञ्जाध्वदोलाचत्वरमण्डपम् ॥
नवकमलदलालीपल्लवावृन्तनाना ।
कुसुमरचितशय्योच्छीर्षचन्द्रोपधानैः ॥
समघुचषकताम्बूलाम्बुपत्रादियुक्तैः ।
मुललिततललीलागारकुञ्जप्रपञ्चम् ॥
कल्हाररक्तोत्पलपुण्डरीकपङ्केरुहेन्दीवरकैरवाणाम् ।
क्षरन्मदारैश्च पतत्परागैः सुवासिताम्भः प्रसरं समन्तात् ।
हंससारसदात्यूहमद्गुकोकादिपत्रिणाम् ॥
वरटालक्ष्मणादीनां कलालापैः श्रुतिप्रियम् ।
शारीशुकानामन्योऽन्यपृथगासङ्गरोङ्गिणाम् ॥
राधाकृष्णरसोच्छ्वासिकाव्यालापमनोरमम् ।
जलदभ्रान्तिकृत्कृष्णकान्तिजप्रणयोन्मदैः ॥
नदन् नृत्यच्छिखिव्रातैर्व्याप्तारामतटाजिरम् ।
हारीतपारावतचातकादिप्रहृष्टनानाविधचित्रपक्षिणाम् ॥
प्रियेक्षणानन्दविफुल्लवर्ष्मणां कर्णामृतध्वानमनोज्ञकाननम् ।
राकेशार्बुदनिर्मन्थराधिकास्येन्दुपायिभिः ॥
चकोरैर्व्यक्तत्यक्तचन्द्रैर्वृतनभस्तलम् ।
कुसुमितवहुवल्लीमण्डलैर्मौक्तिकल्पै—
रुपरि च पटलाभैः श्लिष्टशाखासमूहैः ॥
निविडदलफलानां छादिताः पादपानाम्—
मणिमयगृहतुल्या यत्र कुञ्जा विभान्ति ॥
श्रीत्मकेलिस्थलाख्यं तटमिदममलं प्रेष्ठसंयोगपीठम् ।
वृन्दारण्योत्तमाङ्गं क्रमनतमभितः कूर्मपृष्ठस्थलाभम् ॥
कुञ्जश्रेणीदलाढ्यं मणिमयगृहसत्कर्णिकं स्वर्णरम्भा—
श्रेणीकिंजल्कमेपादशशतराजीवतुल्यं ददर्शेति

अत्र रेमे इत्यात्मनेपदप्रयोगादात्मना रमया रेमे इति ब्रह्मसंहितोक्तनित्यरमणं सूचितं त्यक्तकालसिसृक्षयेति तत्रैव वाक्यशेषात् रहस्यातिरहस्यत्वात् प्रावद्येति नोक्तं ज्ञानखलतापरिहाराय सूचनं त्वावश्यकतमस्तदनुसारेणैव व्याख्यातम् ॥ ४५ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

संक्षेपेण वनविहारं सूचयित्वा रतिविहाराय मुख्यविहारस्थलपुलिनागमनमाह । नद्या इति । गोपीभिः सह नद्याः पुलिनमाविश्य रमयाञ्चकारेत्युत्तरेणान्वयः तत्र यत्कैश्चिद्व्याख्यातं नद्याः पुलिनं प्रविश्य इति वक्तव्येऽपि तदनुक्त्वा आविश्येति कथनेन पुलिनमागत्य नित्यविहारस्थलपुलिनगतनित्यविग्रहे आवेशो विवक्षित इति तत्तु—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

इत्यादिवचनैरपरिच्छिन्नभगवांद्विग्रहस्य परिच्छिन्नत्वविभागादनुपपन्नमपि प्रकाशभेदकल्पनया उपपन्नमेव नद्याः पुलिनमित्यनेन सर्वतीर्थात्मकगङ्गोद्भवचरणभगवत्सेव्यत्वेन समस्तभोगापवर्गवरदेश्वरहरितत्सखीजनकामप्रदत्वेन परतीर्थत्वं सूचितं पुलिनं विशिनष्टि । हिमवालुकम् अत्रायं भावः रवितनयया कालिन्द्या हरिपातिलाभस्य हरिहरिजनसेवनाधीनत्वमवधार्य्य हरिपदसेवनपथे मात्सर्य्याद्यभावं निश्चित्यैर्पाद्यपहाय कलिन्दगिरिविविधमणिगणचूर्णं तूर्णं निजकरतरङ्गैरानीय कृष्णसुरसात्मकामलसलिलेन तच्छीतलत्वं सम्पाद्य तत्तल्पास्तरणेन तल्पसेवा कृता पुनः किम्भूतं तत् तत्तरलानान्दिकुमुदामोदवायुना जुष्टं तत्र तत्तरलानान्दिशब्देन वायोः शीतलत्वं कुमुदामोदशब्देन सुरभित्वं मुखत एवाभिदधता मन्दत्वमप्युपलक्ष्यते त्रिगुणसमीरेण जुष्टं सेवितामित्यर्थः । अत्राप्ययं ध्वनिः रवितनयया हृदहृदये कृष्णागमनोत्साहेन तन्मुखस्मितचन्द्रिकासंनिधानेन बहुकुमुदाकारेणातिप्रेम्णा विकसितेऽपि स्वतरङ्गरूपभुजचालनेनानङ्गपरवशतयालिङ्गनमिच्छन्त्या नङ्गतया गन्तुमशक्ततया स्वसूक्ष्मरूपेण शैत्येन स्वहृदयकुसुदसूक्ष्मरूपेणामोदेन च पवनमधिरुह्यागत्य पुलिनं सेवितं वायुना च रवितनयातनुविकलतां कलयित्वा तत्प्राणत्राणाय स्वात्मनो जगत्प्राणत्वं निर्वाहयितुं कृष्णसेवया स्वभाग्यं सम्पादयितुं च तद्वाहनत्वं स्वीकृतमिति ॥ ४५ ॥

———

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ततश्च नद्याः श्रीयमुनायाः पुलिनमाविश्योपविश्य तस्योपवेशनयोग्यतामाह । हिमवालुकं हिमवालुकः कर्पूरस्तद्वद्वालुका यत्र शाकपार्थिवादिवत्समासः तस्याः नद्यास्तरलैस्तरङ्गैरानन्दयुक्तस्तत्करः स चासौ कुमुदामोदवांश्च वायुस्तेनोपलक्षितं युक्तमानन्दीति मान्द्यं शैत्यसौरभ्ये स्पष्टे यद्वा यथोक्तवायुना हेतुना हिमवालुकं यद्वा तत्तरलानन्दीति पृथक् पदं पुलिनविशेषणं तत्रोपविश्य गोपीभिः सह रेमे जुष्टमिति पाठे रमयाञ्चकारेति परेणान्वयः । निवृत्तिपक्षे नद्याः बुद्धिलक्षणायाः पुलिनं सात्त्विकं प्रत्ययमाविश्य प्रविश्य तत्तदारुह्येति यावत् ना पुरुषः परमात्मा गोपीभिः श्रुतिभिः सह रेमे तदुक्तं भगवता तेषामेवानुकम्पार्थमहमज्ञानजन्तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति तत्तद्विषयाभिकाङ्क्षालक्षणतो———यस्य निवृत्तत्वाद्धिमवालुकस्थानीयं शान्तमत एव तस्या नद्याः तरला स्पृष्ट्यादिलक्षणास्तरङ्गा तत्तरलास्तैः शान्ततरलैरानन्दि अनन्दातिभावसाधनं यतः कुमुदामोदवायुः कुं पृथिवीं भारावतारणादिना मोदयतीति कुमुदः परमात्मा कुमुदपुष्पस्थानीयः तत्सम्बन्धिहर्षो गन्धस्थानीयः तद्युक्तः वायुस्थानीयः निरुद्धः प्राणवायुः ॥ ४५ ॥

————

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्या नद्याः तरलानन्दानां कुमुदानामामोदो यस्य तेन वायुना जुष्टमिति शेषः नद्याः पुलिनमाविश्य गोपीभी रेमे ॥ ४५ ॥

बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः।
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

### भाषा टीका।

फिर सब गोपीजन सहित हो बरफ सी ठंडी वालु जामें ऐसे श्रीयमुनाजी के पुलिन में पधारे उहां यमुना जी ने अपने हिलोरों के कुमोदनी के गंधवाले शीतलवायु ते सेवाकीनी भगवान् गोपिन के संग क्रीडा करत भये ॥ ४५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

बाहुप्रसारश्च परिरम्भश्च करादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडया अवलोकैश्च हसितैश्च कामं तासामुद्दीपयंस्ता रमयामास ॥ ४६ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

बाहुप्रसारादिभिरुत्तम्भयन्निति सहजलज्जादिना छाद्यमानमपि प्रकाशयन् यद्वा प्रेमविशेषविलासरूपत्वेन वर्त्तमानमेवाधुना विशेषतो वर्द्धयन्नित्यर्थः। अत एव श्लेषेणोक्तं रतेः प्रेमलक्षणायाः पतिं पालकमिति तथा रतिपतिमिति दग्धाङ्गस्यापि कामस्य रतिसुखार्थं पुनर्जननेनेव सामग्र्यमभिप्रेतमिति रतौ तस्यासक्तिर्वैदग्धी च परमा दर्शिता तत्र बाहुप्रसारो दूरस्थानामाकर्षणार्थं प्राकपरिरम्भानुकरणं वा यद्वा तासामेव बाहूनां प्रसारणं यद्वा बाहुप्रसारेण परिरम्भः गाढालिङ्गनमित्यर्थः। क्ष्वेलिः प्रस्तोभनादिरूपा अधरपानदंशनादिरूपा वा व्रजसुन्दरीणामिति तासामपि तादृशमेव वैदग्ध्यं सूचितम् अन्यथा तस्य तादृशवैदग्धीप्रकाशनासम्पत्तिः रमणे च निजशक्तिमाधुर्य्यविशेषेणान्योऽन्यमलक्षितं युगपदेव ज्ञेयम् ॥ ४६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सहजलज्जादिनाच्छाद्यमानमपि रतेः कान्तोचितप्रीतिलक्षणायाः पतिं तदुचितमहाभावाह्वयं परमप्रेमाणं वा बाहुप्रसारादिभिरुत्तम्भयन् इति तस्य रत्यासक्तिर्वैदग्धी च परमा दर्शिता। तत्र बाहुप्रसारः परिरम्भारम्भः यद्वा। बाहुप्रसारेण परिरम्भः गाढालिङ्गनमित्यर्थः। क्ष्वेलिः प्रस्तोभनादिरूपा व्रजसुन्दरीणामिति तद्योग्यं सौन्दर्यमत्र विवक्षितम् तेन च यत्राकृतिस्तत्र गुणावसन्तीति न्यायात्तादृशं वैदग्ध्यमप्युपलक्ष्यते रमणञ्च निजमोहनताशक्तिविशेषेणान्योऽन्यमलक्षितं ज्ञेयम् ॥ ४६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

रतिपतिं कामम् उत्तम्भयन् ॥ ४६—४८ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

किं कुर्वन् बाहुप्रसारः स्कन्धस्योपरि बाहुप्रसारणं परिरम्भ आलिङ्गनं करेणालकादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपाताश्च नखाग्रक्षताश्च तैः क्ष्वेल्या क्रीडया चावलोकनैश्च मन्मथं तासामुद्दीपयन् ॥ ४६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

परिरम्भ आलिङ्गनं तदेव करालकेली तीव्रकाण्डं तस्यां नीवीवस्त्रग्रन्थिस्तस्यां स्तनेषु आलभनेन मोचनस्पर्शलक्षणेननर्मणा हास्योक्त्या च कराग्राणां नखानां पातैः उल्लेखलक्षणैश्च क्ष्वेल्यावलोकहसितैः बालसिंहनादनिरीक्षणमन्दहासैश्च रतिपतिं काममुत्तम्भयन् उज्जृम्भयन् उल्लोलयन्नित्यर्थः। रमयाञ्चकार रेमे बाहुपीडनकुचग्रहणादिरहितेन नखदन्तानिखातैः योषितस्तनुशयस्तरुणीनामुन्मिमील शनकैरपि मार इति माघः ॥ ४६ ॥

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः।

अथ प्रथमलीलामाह। बाहुप्रसारेत्यादि। बाह्वोः प्रसारेण यः परिरम्भस्तेन करयोरलकानां च उर्व्वोश्च नीव्यास्तनयोश्च आलभनेन स्पर्शनेन नर्मणा च नखाग्रपातैश्च क्ष्वेल्या क्रीडया अवलोकेन हसितेन च व्रजसुन्दरीणां रतिपतिम् उत्तम्भयन् वर्धन् रमयाञ्चकार वस्तुतस्तु तासां प्रेमैव साहजिकः नतु कामः तदभावे सा लीला सुरसा न भवतीति स्वयमेव तासामसन्तमपि कामं वर्धयामासेत्यर्थः। स च कामः प्राकृतो न भवति अपितु स एव भगवान् येनांशेन कामावतारो भवति स एवांशस्तासां मनस्यायोशितः किं वा रतिः स्थायीभावः तस्याः पतिं शृङ्गाररसम् अथवा सेवासमयोऽयं ममेति उपपन्नं कामदेवम् उत् उत्कर्षेण स्तम्भयन् केवलधात्वर्थ एव निरस्यन्नित्यर्थः त्वया सहायेन माभूयतां सत एव सुरसेयं लीलेति किन्त्वयेति तज्जयां योद्धव्यः ॥ ४६ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवं सर्वभावेन तासां जातस्मरकेलित्वं संपादितमतः परम अष्टविधालिङ्गनादिपूर्वकं चेष्टितकामादियुक्तं रसविलासमुरिवमाह बाहुप्रसारेति। दूरेस्थितानामवयवान् स्प्रष्टुं बाहुप्रसारणं ततो बलादपि परिरम्भस्ततः करालकोरुनीवीस्तनानामालम्भनानि करालम्भनं हस्ते ग्रहणं पुरुषायितलीला समबन्धो या एवं कचोन्नमनार्थमलकानां स्पर्शः उरुस्पर्शो बाहुबन्धार्थः नीवीस्पर्शः पुष्टे रसे मोचनार्थः स्तनयोस्तुरसोद्गमनार्थः एवं पञ्चस्पर्शा विहिताः नर्म परिहासवचनानि कामस्तम्भनार्थं ततो नखाग्रपाताः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नखक्षतदन्तक्षतताडनादयः कामयुद्धनिरूपकाः तत्तत्स्थाने स्थितः कामः तैरुद्बोध्यते यथा सेनावधेन राजा समायाति क्ष्वेलिः क्ष्वेलिक प्रस्तोभनादिः तत्पूर्वकान्येवावलोकनानि हसितानि एवं द्वादशविधोऽपि कामः द्वादशाङ्गेषु स्थितः प्रबुद्धो भवति तदाह । व्रजसुन्दरीणामुत्तम्भयन्निति रति संयुक्तः कामो रतिपतिः वियुक्तस्त्वग्निरूपः एवमाधिदैविकं काममुद्बोधयन् रमयाञ्चकार गोपीनां सुखमेव प्रकटितवान् नतु कामान्ते विरतिमुत्पादितवान् ॥ ४६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

बाहुप्रसारस्तासां स्वस्ववक्षसि स्वस्तिकीभूतानां भुजानां प्रसारणं च परिरम्भश्च करादीनामालभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडोक्त्या अवलोकैश्च हसितैश्च रतिपतिं प्रेमात्मकं कामं तासां स्वस्य च उत्तम्भयन् उद्दीपयन् तावद्भिरेव स्वप्रकाशैः प्रत्येकं रमयाञ्चकार ननु च तावत्येव पुलिने बहुगोपीजनसङ्घट्टे निरावरणत्वात् सौरततल्पाद्यभावाच्च प्रत्येकं ताभिः शतकोटिप्रमदाभिःसह संप्रयोगलीला नसङ्गच्छते सत्यं भगवन्मूर्त्तेरिव वृन्दावनभूमेरपि विभुत्वात् तिलमात्रप्रदेशस्याप्यतिस्फारत्वं सावरणविविधकुञ्जवत्त्वं गन्धमाल्यताम्बूलादिसहितविचित्रसौरतपुष्पतल्पवत्त्वं च दुर्घटघटनापटीयस्या योगमाययैव प्रकाशितं लीलान्ते पुनरावृतं चेति सुसङ्गतिकमेवैतत् ॥ ४६ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

एवं श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्त्विति कविसमयानुसारेण नित्यविहारं सूचयित्वा वैदग्ध्येन साधकानुग्रहमपि सूचयन् यथोचितं ता अपि रमयामासेत्याह । बाहिति । बाह्वोः प्रसारेण यः परिरम्भस्तेन गाढालिङ्गनेनेत्यर्थः । करयोरूर्वोर्नीव्याः स्तनयोरालभनेन स्पर्शेन नर्मणा केवलेन नखाग्राणां पातेन च क्ष्वेल्या प्रस्तोभनादिरूपया क्रीडया अवलोकितेन हसितेन चेति वचनविपरिणामेन व्याख्येयं तत्र परिरम्भः कराद्यालम्भनं च प्रौढानां नखाग्रक्षतं च कान्तभाववतीनां नर्मप्रस्तोभने च पतिभाववतीनां धन्यादीनाम् अवलोकितहसितानि च सहचरीगणस्येति विवेचनीयं व्रजसुन्दरीणामित्यनेन बहुनायकता व्रजलीलायामेवेति सूचितं यथा श्रीमत्सुधानिधौ—

अकस्मात्कस्याश्चिन्नववसनमाकर्षति परा
मुरल्या धम्मिल्ले स्पृशति कुरुतेऽन्या करधृतिम् ॥
पतन्नित्यं राधापदकमलमूले व्रजपुरे
तदित्थं वीथीषु भ्रमति स महालम्पटमणिः ॥

अपिच—

एकस्या रतिचौर एव चकितं चान्यास्तनान्ते करं
कुर्व्वन्नाकर्षति वेणुनान्यसुदृशो धम्मिल्लमल्लीस्रजम् ॥
धत्तेऽन्या भुजवल्लिमुत्पुलकिनां सङ्केतयत्यन्यया
राधायाः पदयोर्लुठत्यलममुं जाने महालम्पटम् ॥

तदेवमत्र तदाचरणं श्रीराधायामेकताननताप्रदर्शनेनोत्कर्षलाभायेति दर्शितं किं कुर्वन् रतिपतिम् उत्तम्भयन् काममुद्दीपयन्नित्यर्थः । कान्तभाववतीपक्षे पक्षान्तरे रतेश्चेतोरञ्जकतयाऽनुद्भूप्रीतेः पतिं परमप्रेमाणमित्यर्थः । तदुक्तमलङ्कारकौस्तुभे चित्तद्रवस्थायीभावः प्रेमाख्यः प्रथमो रस इति चित्तद्रवस्थायिभाव इत्यर्थः । उत्तम्भयन् वर्द्धयन्नित्यर्थः । अथवा शुद्धप्रेमविलासे श्रीमति महारासे सर्वासामैकमत्याय कामं उत् उच्चैरतिशयेन स्तम्भयन् निरस्यन्नित्यर्थः।नायिकानायकविलाससाधारण्येन प्रवृत्तमपि कामं निरस्यन् पारिशेष्यात्प्रेम्णैव रमयांचकारेत्यन्वयः । रमणमिदं परस्परमलक्षितमेव ज्ञेयम् ॥ ४६ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

विहारमेवाह । बाहुप्रसारेति । बाहुप्रसारादिभिर्निमित्तभूतैःव्रजसुन्दरीणां रतिपतिमुत्तम्भयन् उद्दीपयन् रमयाञ्चकारेत्यन्वयः तत्र व्रजसुन्दरीणामेव रतिपतिमुत्तम्भयन्नित्युक्त्या भगवतो रतिरणसंमर्देऽपि तदनाक्रान्तत्वं दर्शितं तत्र बाहुप्रसारस्तु तत्परिरम्भतत्तदङ्गस्पर्शेन च तासां स्वीकरणाय कुसुमशरासनत्रस्ताङ्गुलिपञ्चसु मनः शरयुतभुजधनुर्द्वयप्रदर्शनाय वा कामद्वन्द्वसङ्ग्रामे बहुयुद्धप्रागल्भ्यसूचनाय वा तासां गौरीणामुरसि कुचशम्भुदर्शनेन तद्भूषणपञ्चफणमणिधरश्यामपीवरास्निग्धभुजभुजगोत्साहाद्वा करालभनं पाणिस्पर्शनं तच्च लताकुञ्जवेदिमण्डपे पाणिग्रहणविधिप्रदर्शनाय स्तनालभनं तु पाणिग्रहणकर्मणि नखाग्रपातरोचनलिपिसंस्कृतमङ्गलकनककुम्भकुचयोः नखमणिदीपान्वितकरकमलधारणेन मङ्गलकलशोद्भवनाय नर्मादीनां च तत्रोचितमन्त्रभापणाद्युपयोगः सस्नेहालकस्पर्शस्तु अलकेषु तत्रोचितस्नेहार्पणरीतिसूचनाय परिरम्भोरुनीवीस्पर्शरमणादिना तदनन्तरशोभाग्यरात्र्युचितचेष्टासूचनं यद्वा स्मरसमरे मल्लयुद्धे प्रथमं करग्रहणवत्करालभनम् इषुवृष्टिवद्भ्रूयुगधनुःस्फूर्जनेनापाङ्गाक्षयबाणवर्षोऽवलोकः अलकस्पर्शश्च तन्नागपाशस्य स्वहस्तगतकरणं परिरम्भो बाहुयुद्धम् ऊरुनीवीस्तनालभनं च तद्दुर्गप्राकारप्रावरणोपवनोच्चशृङ्गाणां वशीकारः नर्मोक्तिः सिंहवादः नखाग्रपातः तदीयदुर्गचैत्यप्रासादादौ स्वीयः कनकपत्रे मणिलिखितो रोचनलिपिजयलेखः हसितं संग्रामोत्साहकसुरकृता पुष्पवृष्टिः नूपुरादिभूषणरवः शूरोत्साहकजयवाद्यध्वनिः यद्वा कृष्णस्य भगवतो गोपीः परिरभ्य बाहुप्रसारेण कण्ठकरकुण्डलितालकोरुस्पर्शौ विष्णोः पद्मामालिङ्ग्य शङ्खपद्मचक्रगदाकरत्वद्योतकः स्तनालभनेन कञ्चुकबन्धधारणं तु हरेर्हरसेवकबन्धासहिष्णुतासूचकं नीवीस्पर्शनं तु काञ्चीसेवनपराया नीव्या मुक्तिप्रदानाय एवमुत्प्रेक्षा यथायथमूह्या एभिरुद्दीपनैरङ्गनाङ्गदुर्गप्वनङ्गमुद्दीपयन् रमणेन स्ववशं चकारेत्यर्थः ॥ ४६ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं सर्वप्रकारेण तासां जातपरस्परकेलित्वं सम्पाद्य सोपकरणरसविलासचित्रमाह । बाहुप्रसारेति । तत्राद्यविधालि-

**एवं भगवतः कृष्णाल्लब्धमाना महात्मनः।**
**आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका।

क्रमादौ दर्शयति । दूरस्थितानामवयवविशेषेण स्पर्शप्रसारस्ततो बलादपि परिरम्भ आश्लेषः ततः करादीनामालम्भनान्यालिङ्गनानि तत्र करालम्भनं हस्तेन हस्तग्रहणम् एवं कचग्रहणार्थमलकानां स्पर्शः बाहुनान्यार्थमूरुस्पर्शः पुष्टे रसे नीवीमोचनाय तत्स्पर्शः रसोद्गमनार्थस्तने नखाग्रपाता तत्क्षतताडनाद्यः कामोद्दीपकनखक्षतादिभिस्तत्तत्स्थाने स्थितस्य कामस्योद्बोधाभिधानात् क्ष्वेल्या प्रलोभनादि तत्पूर्वकान्येवावलोकनानि हसितानि च तैः रसस्थापकैः व्रजसुन्दरीणां रतिपतिं काममुद्दीपयन् रमयाञ्चकार ताः रमयामास संयुक्तः कामो रतिपतिः वियुक्तस्त्वग्निरूपस्तत्रापि तासां सुखमेव प्रकटितवान् ननु कामाग्नेन विरतिमुत्पादितवानिति भावः । निवृत्तिपक्षे अविवेकावस्थायां बाहुप्रसारादिभिर्जातो यो रतिपतिः कामस्तमुत्तम्भयंस्तमनयन् व्रजसुन्दरीणामुपनिषदः कर्म्माणि षष्ठी रमयाञ्चकार अधिकारिचेतसि कामनिवृत्तिपूर्वकनियोधितमखण्डैकरसानन्दस्वरूपमात्मानं प्रकटितवानिति भावः ॥ ४६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रमणमेव वर्णयति । बाहिति । बाहुप्रसारश्च परिरम्भश्च करादीनामालम्भनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडया च अवलोकैश्च हसितैश्च व्रजसुन्दरीणां रतिपतिं काममुत्तम्भयन्नुद्दीपयन् ता रमयामास ॥ ४६ ॥

---

### भाषा टीका।

अब विहारको प्रकार को कहैं हैं सो ऐसो हैकि भुजोंको फलाय वो अलिङ्गन करवो गोपियों के हस्त केश जंघ काँधनी स्तन इनको स्पर्श करनो परिहास करनो नखों को मारनो क्रीडा करनो मीठी चिन्तवन ते देखनो हसनो या प्रकार ते बृजनारीन के कंदर्प को जगावत रमण करावत भये ॥ ४६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

महात्मनो विमुक्तचित्तात् ॥ ४७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अधुना प्रेमविशेषोद्रेकेणाग्रे क्रीडाविशेषार्थं विप्रलम्भरूपरसांव शेषं वक्तुमारभते । एवमिति । उक्तवैदग्धीविशेषप्रकटनप्रकारेण महात्मनः आत्मारामादपि लब्धो मानः संमानः चित्तसमुन्नतिलक्षणभावविशेषो वा याभिस्ताः तत्र हेतुः भगवत इति रसविशेषानुभावार्थं निजभगवत्तामाधुर्य्यप्रकटनादित्यर्थः । अत एव कृष्णात् विचित्रमहारसार्णवात् परमचित्ताकर्षकाद्वा अतो मानिन्यः सत्यः भुवि वर्त्तमानानां स्त्रीणां मध्ये आत्मानम् अभ्यधिकं परमप्रेष्ठं ता मेनिरे यद्वा भुवि विहारभूमाविति सर्वासां सामान्यमेवाभिप्रेतं तथापि स्त्रीणां तासामेव गोपीनां मध्ये प्रत्येकमात्मानमभ्याध कम्मेनिरे तेनैव तथा रमणात् अतो मानिन्योऽपि बभूवुरिति पृथक् वाक्यं वा मदमानयोर्वक्ष्यमाणत्वात् वस्तुतस्तु परमविदग्धानां तासां विदग्धवरप्रियसन्तोषार्थं रसस्वभावकृतं सेवाविलासरूपमेव तद्द्वयम् ॥ ४७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अधुना न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धत इति भरतन्यायात्प्रेमविशेषोद्रेकादग्रे क्रीडाविशेषवर्णनार्थं विप्रलम्भरूपरसविशेषं वक्तुमारभते । एवमिति । महात्मनो दिव्यातिदिव्यसर्वनायकवृन्देभ्यः परमात् तत्र हेतुः भगवतः स्वयं भगवत इत्यर्थः । कृष्णात्तथैव प्रसिद्धात्तस्मादित्यर्थः । एवं पूर्वोक्ततत्प्रेमवशताप्रकारेण लब्धो मानः संमानः सौभाग्यं याभिस्तथाभूता भूत्वा मानिन्यो लब्धप्रणयमानाः सत्यो भुवि अन्यत्र चात्र च याः स्त्रियस्तासां सर्वासां मध्ये प्रत्येकमात्मानमेवाधिकं मेनिरे तं प्रति मानिन्यो बभूवुः स्त्रियः प्रतिगर्वितचित्ता बभूवुरित्यर्थः । तत्र मानः—

> दम्पत्योर्भाव एकत्र सतोरप्यनुरक्तयोः ।
> स्वाभीष्टाश्लेषवीक्षादिनिरोधी मान उच्यते ॥
> अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् ।
> अतो हेतोरहेतोश्च यूनोर्मान उदञ्चतीति ॥

रसशास्त्रानुसारात् गर्वश्च अन्यवल्लानाम ताहशनायकालाभात् धवल्लानां तल्लाभेऽपि स्वसदृशसौभाग्यलाभाननात् यथोक्तं ।

> सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयः ।
> इष्टलाभादिना चान्यहेलनं गर्व ईर्यत इति ॥

एवम्—

> सञ्चारयन्ति ये भाव तेतु सञ्चारिणो मताः ।
> उन्मज्जन्ति निमज्जन्ति स्थायिन्यम्बुनिधावियेति ॥

रसतन्त्रात् गर्वोऽपि तादृशतत्प्रेमविशेषस्य स्थायिनः सञ्चारिभावत्वात्तन्मय एव ज्ञेयः अस्य हि रसस्यैवमत्र स्थितिरुत्कर्षश्चेति ॥ ४७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं महात्मनः असक्तचित्ताद्भगवतो हेतोर्लब्धो मानो गर्वो याभिस्ता मानिन्यो गोप्य आत्मानं भुवि स्त्रीणां मध्येऽभ्यधिकं सर्वोत्कृष्टं मेनिरे ॥ ४७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भुवि स्त्रीणां मध्ये स्वात्माधिक्येनाभ्यधिकं मेनिरे ॥ ४७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महात्मनः दिव्यातिदिव्यसर्वनायकेभ्यः परमश्रैष्ठ्यात् । मानिन्यः सत्यो भुवि अन्यत्र च या स्त्रियस्तातां मध्ये आत्मानमभ्यधिकं मेनिरे । तस्मिन् प्रणयमानवत्यो बभूवुः स्त्रीषु च गर्वं धृतवत्य इत्यर्थः । अन्यत्रत्यानां तादृशकान्तालाभात् तत्रत्यानाञ्च तादृशसौभाग्यलाभामननादिति भावः ॥ ४७ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इयं तु लीलातिरहस्या वर्णनीया न भवति तथापि शुकदेवेन संक्षेपादुक्त्वोपसंह्रियते स्म । एवमिति । एवं प्रकारिकया बहुविधया लीलयेति वाग्विषयत्वाभावाद्दुर्गम्ययेत्येवंशब्दार्थः कृष्णाद्भगवतो लब्धमाना लब्धपूजाः महात्मनो महच्छब्दस्य बहुमानप्रदत्वात् मानिन्यः सम्मानवत्यः तद्दत्तमानवत्त्वात् स्त्रीणा मभ्यधिकं मेनिरे कृतार्था वयमित्येवं मेनिरे ॥ ४७ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं संयोगशृङ्गारमुपपाद्य विप्रयोगमुपपादयितुं तासां मानमाह । एवमिति । पूर्वोक्तप्रकारेण भगवतः सर्वरसदानसमर्थात् कृष्णात् सदानन्दात् फलरूपात् लब्धकामाः प्राप्तमनोरथाः सत्यः आत्मानमेव पूर्णं मेनिरे ननु भगवन्तं पूर्णं तेन वा स्वपूर्णतां ननु भगवानेवं कथं कृतवान् न्यूना एव कथं न संरक्षितास्तत्राह । महात्मन इति । भगवान्महानेवात्मा नह्यगाधे जले प्रविष्टः अमग्नो भवति घटो वा अपूर्णो भवति किञ्च आत्मानं स्त्रीणां मध्ये अभ्यधिकं मेनिरे भुवि चाभ्यधिकं भुवि स्त्रीणां मध्ये वा अत एव मानिन्यो जाताः नह्यस्मत्सदृशोऽन्याः सन्ति अतो स्मान् यदि प्रार्थयिष्यति तदा रसं दास्याम इति मानयुक्ता जाताः भगवद्धर्मास्तासु समागताः तथा सति यथा प्रार्थनया पूर्वं भगवान् वशे जातः एवं वयमपि भविष्याम इति रसार्थमेवं भावः ननु दोषरूपो भगवद्भावात् ॥ ४७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अधुना न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धत इति भरतन्यायाद्रसपुष्ट्यर्थं लीलाशक्त्यैवाविर्भावितं विप्रलम्भव्याजमाह । एवमिति । महात्मनः दिव्यातिदिव्यनायकवृन्देभ्यः श्रेष्ठात् भगवतस्तत्रापि कृष्णात् स्वयंरूपात् लब्धमानाः प्राप्तादराः श्रीकृष्णरमणप्राप्ता भुवि भूतलस्थानामेव स्त्रीणां मध्ये आत्मानं प्रत्येकमेव स्वमभ्यधिकं मेनिरे मानिन्यः प्रत्येकमहमेवातिसुभगेति माननान्मानिन्यः गर्ववत्यः ॥ ४७ ॥

केनचित्कृता विशुद्धरसदीपिका ।

इदानीं कामकलितमहाप्रेम्णोऽपि विरहानुबन्धित्वं दर्शयन् शुद्धभावस्य च तदनुकावप्यविकृतत्वख्यापनाय तदाश्रयविषयभूतायाः स्वाधीनपतिकायाः श्रीराधिकायाः परमसौभाग्योत्कर्षास्वादनलोभाकृष्टचेताः शृङ्गारभावस्य विप्रलम्भपोष्यत्वावगमेन पर्य्यवसाययन् विप्रलम्भलीलामुपन्यस्यति । एवमिति । प्रागुक्तातिदेशोऽयं भगवतः स्वनिष्ठकामिनः भगं श्रीकाममाहात्म्येत्यादिकोशात् लब्धो मानः सौभाग्याभिमानो याभिस्ताः पक्षे भगवतः निजभाग्यशेवधिपरमावधिरूपया श्रीराधया नित्ययुक्तादित्यर्थः । तदुक्तं श्रीहरिलीलामृताख्यतन्त्रे श्रीराधामुद्दिश्य—

एतस्य भाग्यरूपेयं परमानन्दविग्रहा ।
यन्नामस्मरणाद्देवि ! स्वपचोऽपि द्विजोत्तमः इति ॥

भगवत्पदे तन्त्रेणोभयार्थमिति श्रीमुनीन्द्राभिप्रायः उपक्रमोपसंहारादिभिर्ग्रन्थस्यास्य युगलोपासनापरत्वावगमादिति निर्णीतं भक्तिमञ्जूषायां कृष्णात्तदानन्दाकृष्टात् नित्यं तदेकपरवत इत्यर्थः लब्धमानाः लम्भितसमानसौभाग्याः उपनतामितचेतःसम्मदाः निजप्राणेश्वरीसौभाग्योत्कर्षहर्षिता इत्यर्थः । महात्मनः परमोदारात् दिव्यातिदिव्यनायकवृन्देभ्यः परमात् पक्षे महाशयात् अनन्तकोटिलक्ष्मीविजित्वरगोपसुन्दरीगणप्रेमविषयोऽपि निजप्राणप्रियाप्रीत्याश्रयो यस्तस्मादित्यर्थः । तासां लक्ष्मीविजित्वरत्वं वराहतन्त्रे यत्कलाकोटिकोट्यंशा लक्ष्याद्यास्त्रिगुणात्मिका इति अत एव श्रीगोपालचम्पूमनु—

लक्ष्मीरभितः स्त्रीतमा गोप्यो लक्ष्मीतमाः प्रथिताः ।
राधागोपीतमाचेत्तस्याः का वा समा वाभेति ॥

आत्मानं दाम्पत्येनानुरक्तानां स्त्रीणां कामुकीमित्यर्थः तथमुक्तं भक्तिभावप्रदीपे—

पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा ।
स एव कामजो भावः कदापि न तदर्थक इति ॥

अत एव मानिन्यः प्रतिस्वमभिमानवत्य इत्यर्थः । पक्षद्वयेऽपि श्लिष्टमिदं तथाहि प्रथमे पक्षे लब्धप्रणयमानाः तं प्रति मानवत्यो बभूवुः स्त्रियः प्रति गर्वितास्ता बभूवुरित्यर्थः । तत्र मानः

दम्पत्योर्भाव एकस्मिन् सतोरप्यनुरक्तयोः ।
स्वामीष्टाश्लेषवीक्षादिनिरोधी मान उच्यते ॥
सच हेत्वहेतुजत्वेनानेकविधः ॥

तदुक्तम्—

अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् ।
अतो हेतोरहेतोश्च यूनोर्मान उदञ्चतीति ॥

विस्तृतमाकरे गर्वश्चा न्यत्रत्यानां तादृशनायकालाभात्तत्रत्यानां च तल्लाभेऽपि स्वसदृशसौभाग्यलाभामननात् यथोक्तम्—

सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः ।
इष्टलाभादिना चान्यहेलनं गर्व ईर्य्यते इति ।

उभयोरपि सञ्चारित्वाद्रसपोषकत्वे न विरोधः पक्षान्तरे

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः।
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्याम्
दशमस्कन्धे पूर्वार्धे रासक्रीडावर्णनं नामै-
कोनत्रिंशोऽध्यायः ॥ २९ ॥

केनचित्कृता विशुद्धरसदीपिका

भुवि विद्यमानानां स्त्रीणां प्रकटलीलापरिकराणां मध्ये अधिकं प्रकटाप्रकटोभयानुगतमात्मानं मेनिरे इत्यर्थः शेषं पूर्ववत् ॥ ४७ ॥

---

श्रीरामनारायणकृतभावभावविभाविका।

एवं लब्धमानानां भगवद्रतत्वेनासम्भावितमानानामपि मानस्य भगवद्विच्छेदकत्वोपदेशायैव यन्मानवदाचरणं तदाह। एवमिति। एवमुक्तप्रकारेण भगवतः निरतिशयस्वतः सिद्धषडैश्वर्य्यसम्पन्नात् कृष्णात् सत्यानन्दस्वरूपात्स्वरतानां सर्वदोषकर्षणात् महात्मनो विभोः कान्ताधीनरमणासम्भवेनैव रमणस्यानुग्रहमात्रत्वेन मानायोग्यतां भगवद्रतानां तदनुग्रहलब्धमानानां नितरां मानदोषासम्भवं सूच-यित्वा केवलमुपदेशार्थमेव मानानुकारमाह। आत्मानमिति। ता मानिन्य आत्मानं स्त्रीणां मध्ये ऽभ्यधिकं मेनिरे इत्य-न्वयः ॥ ४७ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

एवं संभोगशृङ्गारमुपपाद्य न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते। कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्धत इति भरतेनोक्तत्वात् तत्पुष्ट्यर्थं विप्रयोगमुपपादयितुं पीठिकां रच-यति। एवमिति। एवं पूर्वोक्तप्रकारेण भगवतः सर्वदानसामर्थ्यात् सदानन्दस्वरूपात् कृष्णात्परिपूर्णत्वेन न्यूनतामतिरहितत्वात् महात्मनः लब्धो मान आदरो याभिस्ताः सत्य अमानिन्यः साम्प्रतं मानवत्यो बभूवुः भुवि स्त्रीणां सर्वासां मध्ये प्रत्येकं सर्वा एवात्मानमभिसर्वप्रकारेणाधिकं च मेनिरे स्त्रिय अतिगर्वितमानसाः बभूवुः "दम्पत्योर्भाव एकत्र सतोरप्य-नुरक्तयोः। स्वाभीष्टाश्लेषवीक्षादिविरोधी मान उच्यते। अहेरिव गतिः प्रेम्णः स्वभावकुटिला ततः। सनिमित्तोऽनिमित्तो वा यूनोर्मान उदञ्चति तथा चास्मत्समा न सन्त्यन्या अतोऽस्मान् यदि प्रार्थ-यिष्यति तदा रसं दास्यामस्तथा सविनयासमत्प्रार्थनया यथा भगवानस्मद्वशो जातस्तथा तत्प्रार्थनया वयमपि भवि-ष्यामः इति रसार्थमेवायं भावो न तु दोषरूपो भगवद्भाव-नया कृतत्वादिति भावः। निवृत्तिपक्षे इत्थं प्रत्यगभिन्नस्य पर-मात्मनः औपनिषदत्वं प्रतिपाद्य ताभिरपि दुर्ज्ञेयतयैव प्रति-पादनमुपक्रमते। एवमुक्तप्रकारेण प्रतिपादिताद्भगवतो निरङ्कुशैश्वर्य्यवतः कृष्णाच्छुद्धात्सच्चिदानन्दरूपान्महात्मनः प्रत्यगभिन्नात्परमात्मनो लब्धो मानः प्रामाण्यं याभिः ताश्च "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेद" इत्या-दिश्रुत्या स्त्रीणां श्रुतीनां भुवि जन्मभूमौ परमात्मनि प्रामाण्य-वत्यः सत्यः आत्मानमधिकं मेनिर इत्यर्थः ॥ ४७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

महात्मनः मानदातुः अमानिनः ॥ ४७ ॥

---

भाषा टीका।

या प्रकार ते जितेंद्रिय श्रीकृष्ण भगवान् ते जब विन गोपिन को बडो मान प्राप्त भयो तब वे गोपी अपने मन में अभिमान कर के संसार में सब स्त्रियों ते अपने ही को अधिक मानत भई ॥ ४७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्सौभगमदं सौभाग्येन मदमस्वाधीनताम् मानं गर्वं केशवः कश्च ईशश्च तौ वशयतीति तथा सः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

तेन निजवैदग्धीभरेण यद्वा उक्तेन अहमेवानेन रमितेति रमणप्रकारेण यत् सौभगं सौभाग्यं तेन यद्वा तं स्वप्रीत्यर्थकर्मापि सौभगेन मदं वीक्ष्य तस्य प्रशमाय अन्यथा स्वाधीनत्वाभा-वेन निजप्रेष्ठरासविलासासिद्धिः मानं च वीक्ष्य प्रसादाय मान-रूपकेलिना सन्तोषात् प्रसादविशेषं कर्तुम् अन्तर्धानं विना रासार्द्धप्रेमविशेषासम्पत्तेरिति विवेचनीयं यद्वा मदमानयोः प्रश-माय प्रशमः किमर्थं तदाह। प्रसादायेति। रासेन रञ्जनविशेषाय यद्वा अन्तर्धानद्वारा न पारयेऽहं निरवद्येत्यादिना वक्ष्यमाणनिज-तदधीनतातिशयविज्ञापनरूपाय यद्वा तस्मात् यत्सौभगं तेन

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मदः मत्तता हर्षो वा तथा च विश्वः मदो रेतसि कस्तूर्य्यां गर्वे हर्षेभदानयोरिति तद्रूपं मानं मानसोल्लासविशेषं वीक्ष्य अत एव प्रकृष्टः शमः सुखं रासक्रीडात्मकं तस्मै प्रसादाय च अन्तर्धानेऽपि तदपरित्यागतद्भजनविशेषाद्यनुरञ्जनाभिव्यञ्जनाय तच्चाग्रे व्यक्तं भावि यद्वा प्रशमाय सुखाय यः प्रसादस्तस्मै अन्यत्समानम् एवं सर्वथानुरञ्जनविशेषार्थमेवान्तर्धानं नत्वात्मारामत्वादिनासूयया वेति ज्ञेयं विदग्धवर्य्यासु विदग्धशिरोमणे स्तथैव अत एवानेनाग्रे वक्ष्यते मया परोक्षं भजता तिरोहितमित्यादि तत्रैवेति साक्षात् कुत्राप्यगमनात् अकस्मादेवादर्शनाच्च तच्च तस्याशक्यं न स्यादित्याशयेन परमेश्वरत्वमाह । केशव इति ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिण्याम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तासां तादृशीनां तदिति तं सौभगमदं सौभाग्यहेतुकं गर्वं तथा च विश्वः मदो रेतसि कस्तूर्य्यां गर्वे हर्षेभदानयोरिति तं मानं च वीक्ष्य विशेषेण दृष्ट्वा तत्र गर्वपक्षे युक्त्यन्तरासाध्यं मत्वा मानपक्षे कृतैरप्यनुनयादिभिरसाध्यं दृष्ट्वेत्यर्थः । गर्वं प्रति प्रशमाय मानन्तु प्रति प्रसादाय प्रसादनाय तत्रैवान्तरधीयत अन्तरदधात् धीञ् अनादर इति हि दैवादिकः नत्वन्यत्र गच्छन् दृष्ट इत्यर्थः । अत्र वक्ष्यमाणानुसारेण श्रीराधयैव सहान्तर्द्धानं ज्ञेयं तच्च तस्य तदिच्छायां जातायां योगमाययैव सम्पादितमिति यद्यपि सहेतुकस्येर्ष्यामानस्यैव शान्तये कचित् नायकोपेक्षापेक्ष्यते—

हेतुजोऽपि शमं याति यथायोगं प्रकल्पितैः ।
सामभेदक्रियादानननत्युपेक्षारसान्तरैः ॥

इत्युक्तेः निर्हेतुकस्य प्रणयमानस्य तु विनैव प्रतीकारेण यत्किंचित्प्रतीकारेण वा तथापि तच्छान्त्यर्थमुपेक्षेयं परस्परगर्वसम्बन्धेन गाढतापत्तेः तत उभयभावशान्त्यर्थमेव सा प्रेमविपाकयोरपि तयोः शमनेच्छा च स्वेच्छामयलीलेच्छया युगपदेव सर्वा एव प्रति महारसदानमयरासेच्छया च तथा चायं विप्रलम्भः परमप्रेमार्थमेवोपयोक्ष्यतीति वक्ष्यते च नाहं तु सख्य इत्यादि अन्तर्धाने मूलं कारणं त्वेकयैव तया सह लीलायाः लालसैव अत्र केशव इति—

अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः ।
सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तमेति

भारतीयवाक्यात्परमदीप्तिमानित्यर्थः । ततश्च तदन्तर्द्धाने सर्वासु शोभासु विद्यमानास्वपि तत्र सहस्रैव शोभाराहित्यं व्यञ्जितमिति ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किमत आह । तासामिति । तासां गोपीनां स चासौ सौभगेन सौन्दर्याभिमानेन यो मदस्तं मानं चित्तसमुन्नतिमस्वाधीनतामिति यावत् तं च वीक्ष्य केशवः ब्रह्मरुद्रयोरपि नियन्ता भगवान् प्रशमाय तासां मदमानयोः प्रशान्तये प्रसादायोत्तरोत्तराभिनिवेशापादनरूपानुग्रहाय च तत्रैव पुलिनेऽन्तर्हितवान् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सौभगमदं सौभाग्यनिमित्तं मदं मानमहङ्कारं मदाहङ्कारयोः प्रशमाय नाशाय प्रसादायानुग्रहाय च प्रकर्षेण प्रसादजननाय च अन्तरधीयत तासां दृष्ट्या अदृश्योऽभवदित्यर्थः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तविंशोऽध्यायः ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सौभगमदं सौभाग्यजनितगर्वं गर्वस्य प्रशमनाय मानस्य च प्रसादनाय मानप्रशमायेति नत्युपेक्षा रसान्तरैरिति रसशास्त्रोक्तत्वात् । अत्र प्रणयमानत्वेन उपेक्षाया अत्र योग्यतेति तत् कृतिगर्वसाहित्येन गरिष्ठत्वात् ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ अभिमानेन पूर्णाभिः पुनः क्रीडा सुरसा न भवति चेत् स प्रवणत्वं हि रसपोषकं तथा च " न विना विप्रलम्भेन सम्भोगः परिपुष्यते इति "तैत्रैवान्तर्धानलीलां चकारेत्याह। तासामित्यादि । तासां तं तथाविधं सौभगमदं तथाविधं मानं चित्तसमुन्नतिं वीक्ष्य प्रशमाय तयोरुपशमाय तत्रैवान्तरधीयत अन्तर्दधे कर्त्तरि कर्म्मप्रत्ययः यथा कर्मकर्ता तथा कर्तृकर्म च बोद्धव्यं यथा विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा इत्यादि तत्र एव तासामदृश्यो बभूवेत्यर्थः । प्रशमाय कीदृशाय प्रसादाय प्रसादरूपाय तयोः प्रशम एव प्रसादः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधनी ।

भगवांस्तु ऐक्येनैव रसं प्रयच्छन् बहिस्तिरोहितो जात इत्याह । तासामिति । मानः पूर्णता च न दोषाय स्त्रीषु भूमौ च यदाधिक्यज्ञानं स दोषो भवति तदनूद्य तत्परिहारार्थं तिरोहित इत्याह । तासां तत्प्रसिद्धं पूर्वोक्तं सर्वोत्तमत्वलक्षणं सौभाग्यमदं वीक्ष्य तस्य मदस्य प्रशमाय अन्तरधीयत ननु भगवद्रमणेन हि तासामेवं भावः अतः स्वकृत एवेति कथं तिरोधानं कृतवानित्याशङ्क्याह । वीक्ष्य मानं च प्रसादाय तत्रैवान्तरधीयतेति मानापनोदनं कर्त्तव्यं मानस्त्वान्तरः अशक्तो हि बहिरपनोदनार्थं यत्नं करोति चकारात्स्वधर्मे च अतः प्रसादाय प्रथमतस्तासां पश्चात्स्वस्य च तत्रैव गोपिकासु यूथमध्ये वा अन्तर्द्धानं प्राप्तवान् नन्वेतद्द्वयमपि न कर्त्तव्यमुपेक्षिताः कुतो नेति चेत्तत्राह । केशव इति । यथा रजोगुणं ब्रह्मणो निवार्य तस्मै मुक्तिं दत्तवान् यथा वा शिवस्य तमोगुणं निवार्य एवमेतासामपि मदं मानं च निवार्य मुक्तिं दातुं तथा कृतवानित्यर्थः । कायिकतिरोभावोऽयं प्रथमाधिकारित्वाद्गोपीनाम् ॥ ४८ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे
षड्विंशाध्यायविवरणम् ॥ २६ ॥
( अन्य मते एकोनत्रिंशोऽध्यायः ॥ २९ ॥ )

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च सर्वासु भगवतः साधारण्येनैव रमणात् या सर्वमुख्यतमा वृषभानुकुमारी सा सहसोद्भवदीर्ष्याकषायिताक्षी मानिनी बभूव ततो न्यूना अन्याः सौभाग्यगर्ववत्यो बभूवुरित्यद्भुते वैमत्ये सति भगवतैव यत्तत्र समाहितं तदाह । तासामिति । ताश्च सा चेत्येकशेषेण तासां व्रजसुन्दरीणां तस्या वृषभानुकुमार्याश्चेत्यर्थः क्रमेण तत् तं सौभगमदं मानं च वीक्ष्य स चासौ सौभगमदश्च तमिति समासो वा तं सौभगमदमिति वा पाठः । प्रशमाय तासां सौभगमदं प्रशमयितुं प्रसादाय तां मानवतीं प्रसादयितुं च केशवः को ब्रह्मा ईशश्च तावपि वयते प्रशास्तीति तस्य सौभगमदप्रशमने कः प्रयास इति भावः । केशान् वयते संस्करोतीति केशप्रसाधनादिना तस्याः प्रसादनायां रसिकशेखरस्य तस्य चातुर्य्यमस्त्येवेति भावः । अन्तरधीयतेत्यार्षम अन्तरदधादित्यर्थः धीङ् अनादर इति दैवादिकस्य वा रूपम अत्राग्रिमग्रन्थदृष्ट्या श्रीवृषभानुनन्दिनीं बलाद्गृहीत्वैवेति ज्ञेयं तत्रैव नत्वन्यत्र गच्छंस्ताभिर्दृष्ट इत्यर्थः । तच्च तस्य तादिच्छायां जातायां योगमाययैव सम्पादितम् ॥ ४८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
ऊनत्रिंशोऽपि दशमे सङ्गतः सङ्गतः सताम् ॥२९॥

---

केनचित्कृता विशुद्धरसदीपिका ।

आसामपि त्यागः कान्तभाववतीसमुदितत्वेनैव आभिगवेषणमपि तथैवेति स्वरसः दिव्योन्मादादिकं तु रसोत्कर्षस्वभावादेवेति हृदयम् ततश्च—

आत्मनः परिभोगाय योऽनुरागो गुणादिषु ।
स एव कामजो भावः कदापि न तदर्थकः ॥

तथा—

यदापि कामिनः साक्षात्पश्यन्ति परमेश्वरम् ।
तथा ग्राम्येऽपि भावोऽत्र विरहाद्यनुबन्धन इति ॥

भक्तिभावप्रदीपोक्तानुसारेण श्रीभगवत्यकृतज्ञत्वं परिहरन्नन्तर्द्धानलीलामाह । तासामिति । उभयत्र यथायोगं तत्पूर्वोक्तप्रकारं सौभगमदं सौभाग्यहेतुकं गर्वं पक्षे सर्वनाम्नां बुद्धिस्थे शक्तिरित्युक्तेस्तत् तस्या निजेश्वर्य्याः सौभाग्यहेतुकं हर्षं तथा मानं संमानं चित्तसमुन्नतिमिति यावत् वीक्ष्य विशेषेण दृष्ट्वा तत्रैव तासामेव कामजन्यभावप्रतिबन्धसीमायामित्यर्थः । नहि भगवानकृतज्ञो यतस्तादृशप्रेमवतीः परित्यज्यान्यत्र गच्छेत् किन्तु तासां कामभावस्वभावेन तिरोहितोऽयं श्रीराधासहितोऽप्यदृश्यो जात इति भावः । एवं च कामजभावाभासस्यापि प्रत्यूहनमूहितं पक्षे तत्रैव यस्मिन् क्षणे मानभ्रमो जातस्तस्मिन्नेव क्षण इत्यर्थः ततश्चाधीरत्वं तेन च तत्प्रीतिनिघ्नत्वं च दर्शितं यतः केशव इति—

अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः ।
सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तमेति ॥

महाभारतीयनिर्वचनानुसारेण सहसान्तर्द्धाने सन्तमसमिव जातमिति दर्शितं यद्वा को ब्रह्मा ईशश्च तौ वाति ज्ञानप्रदत्वेन नियम्यत्वेन प्रेरयति सः "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वश" इति श्रीद्वितीयोक्तेः ततश्च . रजस्तमोऽधिष्ठात्रोस्तयोर्वशीकारित्वेन तत्कार्य्ययोर्मदमानयोर्वशीकारोऽप्यर्थसिद्ध इति दर्शितं तेन च तास्वनुग्रह एव स्पष्टीकृत इत्याह । प्रशमाय प्रसादायेति । मद मानयोरत्यर्थलभ्यं तत्प्रशमरूपाय प्रसादायेत्यर्थः । तदुक्तम्

हेतुजोऽपि समं याति यथायोगं प्रकल्पितैः ।
सामभेदक्रियादाननत्युपेक्षारसान्तरैरिति ॥

अत्रापीति शब्दान्निर्हेतुकस्य प्रणयमानस्य विनैव प्रतीकारेण यत्किञ्चित्प्रतीकारेण वा शान्तिरिति स्थितावपि परस्परगर्वसम्बन्धेन गाढतापत्त्या सुखभङ्गः स्यादिति तदनुग्रहायैवेयं लीलेति ज्ञेयम् अत एवोक्तं श्रीगोपालचम्पूमनु अन्तर्हितवानेव नान्तर्हितवानिति वक्ष्यते च स्वयं भगवता मया परोक्षं भजता तिरोहितमिति वस्तुतस्तु प्रेयसीभावाक्रान्तचेतसां सचेतसामपि दूरतरं वरीवर्त्ति श्रीराधारमण इति ख्यापनाय आत्मनश्च तस्यामेवैकस्यां परमासक्तिद्योतनाय तासां च तस्यामेव सख्यतृष्णातिशयप्रदर्शनाय विरहलीलेयं श्रीभगवतानुष्ठीयते स्तूयते च मुनीन्द्रादिभिः तस्यां च परमानुकूलस्य तस्य सोऽतिशयोऽतिशयेन रोचते तास्वपि तत्तद्भावाभिमानिनीष्वनुग्रह एवेति संक्षेपः ततश्चान्तर्धाने मूलं कारणं निभृतनिकुञ्जेषु श्रीराधाया वक्ष्यमाणक्रीडैवेति सिद्धं तदेकपरवत्त्वं तस्य तस्याश्च स्वाधीनपतिकात्वमिति

इतिश्रीभागवत रासपञ्चाध्यायीव्याख्याने
विशुद्धरसदीपिकायां प्रथमोऽध्यायः ॥ १ ॥
मूलस्य एकोनत्रिंशोध्यायः ॥ २९ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवं मानदोषबोधाय तदनुकारं दर्शयित्वा भगवतोऽपि स्वप्रेमास्पदालये भक्तहृदये मानादिदोषासहिष्णोस्तद्दोषोपशमनाय तिरोधानेन सेवमानस्य भक्तानुपेक्षामाह । तासामिति । तासामतिप्रेमवतीत्वेनासम्भावितमदानां तज्जनोपदेशानुशीलितं सौभगमदं मानं च वीक्ष्य केशवः—

कः प्रजापतिरुद्दिष्ट ईशोऽहं सर्वदेहिनाम् ।
आवां तदङ्गसम्भूतौ तस्मात्केशवनामवान् इति ॥

शिववचनात् ब्रह्मेशयोरपीशस्य दीनेष्वशक्तेषु रोपदोषासंभवात् कृपया तासां सौभगमदशमनाय तासु प्रसादायानुग्रहाय तत्रैव तास्वेवान्तरधीयत यद्वा तासां तत्सौभगमदं तस्याः प्राणप्रियाया मानं च वीक्ष्य तासां तन्मदप्रशमाय तस्याः प्रसादाय तत्रैव तत्सहैवान्तरधीयतेत्यन्वयः ॥ ४८ ॥

श्रीश्रीशौ राधिकाकृष्णौ सखीः स्वीयान् गुरून् द्विजान् ।
गिराण्डुण्ढि विदो भक्तान् वन्दे विश्वं हरेर्वपुः ॥

इतिश्री चन्द्रभागाख्य विष्णुसख्यापन्न श्रीरामनारायणविरचितायां ।
श्रीमद्भागवतमहापुराणदशमस्कन्धान्तर्गत
श्रीरासपञ्चाध्यायीव्याख्यायां भावभाव-
विभाविकायां प्रथमाध्यायव्याख्या समाप्ता ॥ १ ॥
मूलेएकोनत्रिंशः ॥२९॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततो भगवान् यत्कृतवांस्तदाह । तासां स्वात्मानमभ्यधिकं मन्यमानानां सौभगान्मानाज्जातमस्वाधीनतापादकं मानस्य गाढावस्थारूपं येनादरणीयोऽपि तिरस्क्रियते तादृशं मदं तद्धेतुभूतमनुनयाद्यसाध्यं चित्तसमुन्नतिरूपं मानं च वीक्ष्य विशेषतस्तदुपगम्य मदस्य निवृत्त्यर्थं तासां प्रशमाय चित्तोन्नतिवारणाय मानशान्तये तासां प्रसादाय प्रसन्नतया स्ववश्यतापादनाय केशवस्तत्रैवान्तरधीयत नत्वन्यत्र गच्छन् कयाचिदपि दृष्टः केशा अंशवो यस्य सन्तीति भारतीयव्युत्पत्त्या कृष्णकान्त्या तासां शोभा चन्द्रकान्त्या नारायणस्येव या शोभासीत्तासां तदन्तर्धाने निवृत्तेति व्यज्यते यद्वा कश्च ईशश्च तौ वशयतीति केशवस्तथा च ब्रह्मरुद्रयोरपि रजस्तमोपशमनेन वशीकरणसमर्थस्य तासां मदमाननिरसने वशीकरणे किं चित्रमिति भावः ननु मदमाननिरासायोपायान्तरं कुतो न रचितवानिनिचेदसम्भवात् नहि प्रत्येकं प्रसादनं सम्भवति एकस्याः प्रथमं प्रसादने सैवादौ किमिति प्रसादितेत्यपरस्या मानाधिक्योद्भवात् तस्मात्सर्वाः प्रति रासरसं दातुं प्रेमवर्द्धनार्थं विप्रलम्भः यद्वा सर्वासां मदमानयोः प्रशमाय प्रेयस्याः श्रीराधाभिधायाः सख्याः प्रसादाय वक्ष्यमाणग्रन्थानुरोधेन तया सहान्तरधीयत केशान् वपते संस्करोतीति केशवस्तथा च केशप्रसाधनादिवहुधोपायविधाने परमचतुर इति भावः । निवृत्तिपक्षे तासां श्रुतीनां यः सौभगमदस्तं वीक्ष्य मानं स्वास्मिन्ननन्यसाधारण्यं च वीक्ष्य दुरापत्वख्यापनाय मदस्य प्रशमाय "नावेदविन्मनुते तं बृहन्तमिति श्रुत्या श्रुतिरूपमानातिरिक्तमानागम्यत्वं ख्याप्यते तेन तासां प्रसादाय तत्रैव तत्तदन्तःकरणवृत्तिष्वेवान्तरधीयत सर्वप्रत्ययसाक्षित्वेनैवावगन्तु शक्यतां प्राप्त इत्यर्थः । तथा च श्रुतिः यदि मन्यसे सुवदेति दह्रमेवापि नूनं त्वं वेत्थब्रह्मणो रूपं नो न वेदेति वेद च अविज्ञातं विजानतां विज्ञातमविजानतां प्रतिबोधविदितमितमित्याद्याः अत्र ब्रह्मणो दुर्बोधत्वं श्रुत्येकगम्यत्वं सर्वप्रत्ययसाक्षित्वेन वेद्यत्वं च दर्शितम् ॥ ४८ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यवालगोपालतीर्थश्रीपाद
शिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिमिश्र
सूरिकृतायां भागवतगूढार्थदीपिकायां
दशमस्कन्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासां तत्सौभगमदं स्वकीयसौन्दर्येण मदं स्वस्वामिविवेकविप्लावकं मत्तत्वम् मानं गर्वं च वीक्ष्य केशवः कश्च ईशश्च तौ ब्रह्मशिवौ नियम्यौ स्तोऽस्य स केशवः "केशाद्यः„इति वः "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः " इति तयोस्तन्नियम्यत्वोक्तेः ॥ ४८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनत्रिंशाध्यायार्थप्रकाशः ॥ २९ ॥

---

भाषा टीका ।

तदनंतर श्री केशव भगवान् उन गोपियों के वा सौभाग्य तथा वा अभिमान को देख विन के मद के शांति के अर्थ विन पै कृपा करवे के अर्थ उहां ही अंतरधान होगये फिर नहीं दीखे ॥ ४८ ॥

इति श्री भागवत, दशमस्कन्ध उन्तीस में अध्याय
की भाषा टीका समाप्त ॥ २९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकोन त्रिंशोऽध्यायः ॥२९॥

## अथ त्रिंशोऽध्यायः ॥

---:*:---

### श्रीशुक उवाच ॥

**अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।**
**अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥**

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिंशे विरहसंतप्तगोपीभिः कृष्णमार्गणम् ।
उन्मत्तवन्न नियतं भ्रमन्तीभिर्वने वने ॥
अचक्षाणा अपश्यन्त्यः ॥ १ ॥

---

#### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तदन्तर्धानकथनेन श्रीबादरायणेरप्यार्तिभरोदयात् कथाविच्छेदेन मध्ये अध्यायापातः श्रीयुक्तः शुक उवाचेति श्रीभगवदन्तर्धानेन तस्यापि शोकोदयाच्छुकवदव्यक्तमधुरोक्तेः एवमग्रेऽप्यूह्यं क्षणात् स्वस्थः सन् विलपान्निवाह । अन्तरिति । सहसैवान्तर्हित इति । अन्तर्धानस्य प्रकाराद्यतर्कणात् अतर्किते तु सहसेत्यमरः अयं तापाधिक्येऽपि हेतुरूह्यः व्रजस्याङ्गना इति तासां तदेकप्रियत्वेन विरहतापस्यौचित्यमाधिक्यं चाभिप्रेतं यूथपं मत्तगजेन्द्रं करिण्य इवेति रत्यां विदग्धो हि गज इत्यादिवचनानुसारेण तदेकावलम्बनत्वेन वा तासां तद्विच्छेदात्तापाधिक्ये दृष्टान्तः ॥ १ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदन्तर्धानकथनेन श्रीबादरायणेरप्यार्तिभरोदयात् कथाविच्छेदेनाध्यायापातः । तदेवं जातदुःखत्वेऽपि तासामेकां सर्वतः परमां यामादाय श्रीभगवानन्तर्हितः तस्याः सौभाग्यं क्षणादनुसन्धाय धैर्यमवलम्बमान आह । अन्तरिति । सहसैवान्तर्हित इति । अन्तर्धानस्य प्रकाराद्यतर्कणात् । अतर्किते तु सहसा इत्यमरः अयं तापाधिक्ये हेतुरूह्यः । व्रजस्याङ्गना इति तासां तदेकप्रियत्वेन विरहतापस्यौचित्यमाधिक्यञ्चाभिप्रेतम् । यूथपं मत्तगजेन्द्रं करिण्य इवेति तदेकालम्बनत्वेन तासां तद्विच्छेदात्तापाधिक्ये दृष्टान्तः ॥ १ ॥

---

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अचक्षाणा अदर्शनेन प्रतिदिशमीक्षमाणाः ॥ १—२ ॥

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथान्तर्हितभगवद्दर्शनजतापतप्तानां भगवतो गत्यनुरागास्मितविभ्रमेक्षितालापविहारविभ्रमापहृतचित्तानामुन्मत्तायितानां च गोपीनां तच्चेष्टानुकरणं तावच्चेतनाचेतनाविभागेन प्रश्नपूर्वकमन्वेषणप्रकारमुपलक्षणतस्त्वन्तरासक्त्यध्यवसायप्रकारं स्थूलतरस्यापि तद्गमदमानप्रशमनार्थमन्तर्धानं तया सह पुनरन्वेषणप्रकारं चाह त्रिंशेन । अन्तर्हित इति । भगवत्यन्तर्हिते सति तमवीक्षमाणाः यूथपमपश्यन्त्यः करिण्य इव सहसाविमर्शेनैवान्वतप्यन् ॥ १ ॥

---

#### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेरेव योगैश्वर्यमौत्पत्तिकं नान्यस्येति ज्ञापनभावेन गोपस्त्रीणां श्रीकृष्णे भक्त्यतिशयं कथयत्यस्मिन्नध्याये । तत्र गोपीनां सन्तापादिप्रकारं प्रवक्ति शुकः। अन्तर्हित इति। यूथपं गजेन्द्रम् ॥ १ ॥

---

#### श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः

॥ १ ॥

---

#### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदनन्तरं यदभूत्तदाह। अन्तर्हित इत्यादि । अचक्षाणा अपश्यन्त्यः सहसैव अतप्यन् सन्तापं चक्रुः ॥ १ ॥

---

#### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वानन्दस्थापनार्थाय लीला भगवता कृता ।
सबाह्यो जनितः पुष्टेः यथान्तर्निर्गतःपुनः ॥
तदर्थं भगवांस्तासु लीलया सहितोऽविशत् ।
चत्वारोऽत्र निरूप्यार्थाः रसासक्तिर्हरेः क्रियाः ॥
गर्वाभावश्च तत्रादौ निरूप्यन्ते क्रमात्त्रयः ।
उद्देशतो लक्षणतः फलतश्च यथायथम् ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सप्तविंशे तिरोधानाल्लीलान्वेषणतत्पराः ॥
रसमन्तर्गतं चक्रुर्गोपिका इति रूप्यते ॥

पूर्वाध्यायान्ते भगवतस्तिरोभाव उक्तः ततस्तदनन्तरं प्रथमतः तासां रसासक्तचित्तानामापाततो महांस्तापो जात इत्याह । अन्तर्हिते भगवतीति । भगवति अन्तः प्रविष्टे षड्गुणैश्वर्यसहिते यावदन्तरनुसंधानं न कृतवत्यः तावत्सहसैव अकस्मादतप्यन् अन्तर्धिचाराभावे हेतुः । व्रजाङ्गना इति । तापे हेतुः तमचक्षाणा इति तापः सहज एव स्थितः कामात्मा तद्दर्शनस्पर्शनादिभिः शान्तो भवति यदा पुनः पूर्वसिद्धं बहिर्दर्शनं न जातं तत्ताप उचित एव तासां स्पर्श एव मुख्य इति ज्ञापयितुं दृष्टान्तमाह । करिण्य इवेति । यूथपो महामत्तगजः रतिं गज एव जानातीति वात्स्यायनः रत्यां विमर्दे गज इति विवृतश्च सन्ति च सिंहाः तथात्र कालः अतः करिणीनां यूथपादर्शने महानेव क्लेशः ॥ १ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिंशे तु विरहोन्मत्ताः कृष्णं पृष्ट्वा नगान् स्त्रियः ।
तल्लीलामनुचक्रुस्ताः सम्भुज्य स च तां जहौ ॥

अचक्षाणाः अपश्यन्त्यः ॥ १ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

एवं च प्रागेव तदन्तर्द्धानकथनेन श्रीबादरायणेरप्यार्त्तिभरोदयात्कथाविच्छेदेनाध्यायापातः तदनन्तरं च सर्वतः परमां परमरसां यामादायान्तर्हितस्तस्या निजस्वामिन्याः सौभाग्योत्कर्षानुसन्धानहर्षितस्तासां तासां चेष्टितादिभिस्तदेव दर्शयन् श्रीशुक इव लीलागानेन तावपि हर्षयन् श्रीशुक उवाच । अन्तरिति । सहसैवान्तर्हित इत्यन्वयः तत्प्रकाराद्यतर्कणात्सहसेति अयं तापाधिक्ये हेतुः यतो व्रजाङ्गनाः तदेकजीवनादित्वेन प्रसिद्धाः ननु प्रीतेरन्योऽन्यनिष्ठत्वात्तस्य कथं न तापो जात इत्यत आह । भगवतीति । भगो भाग्यं तच्चास्य श्रीराधैव तद्वति नित्ययोगे मतुप्तत्सहित इत्यर्थः । तस्य तापाभावे हेतुरयम् अन्तर्धानमप्यन्ततः सुखनिधानमेव भविष्यतीत्यर्थः । ननु कान्तभायास्तप्यन्तु नाम सख्यस्तु सुखमेवानुभवेयुरिति चेत्सत्यं किन्तु अचक्षाणाः अपश्यन्त्य इत्यर्थः निजप्राणेश्वर्याः सौभाग्योत्कर्षस्य परोक्षत्वात्तास्वपि सन्तापः सम्भवेदेवेति भावः । एवं च तदेकालम्बनत्वेन तासां तासां च तापाधिक्ये दृष्टान्तः । करिण्य इव यूथपमिति । तत्र पूर्वासां परमप्रेष्ठतमकान्तस्पर्शस्यालाभेनान्यासां च यूथपतिक्रीडनादिदर्शनालाभेनेति यथायथमूह्यं सजातीयैः कुलं यूथमिति कोशात्सजातीयत्वेन प्राणसखीत्वमेव श्लेषेण निर्दिष्टमिति दिक् ॥ १ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥
द्वितीये कृष्णचेतोभिर्विह्वलोन्मत्तबुद्धिभिः ।
वर्णितं प्रियचेष्टाभिर्वनेषु प्रियमार्गणम् ॥

प्रियान्तर्धाने तत्प्रेयसीनां खेदमाह भगवान् शुकः । अन्तर्हित इति । अत्र श्लेषेणान्तर्हिते भगवति अन्तर्हिते सति व्रजाङ्गनास्तमचक्षाणा यूथपमचक्षाणाः करिण्य इव सहसैवातप्यन्नित्यन्वयः तत्रान्तः स्वमनसि हितं स्नेहो यस्मिन् यद्वान्तर्मनसि स्वाविषयकं हितं यस्य यद्वान्तर्हृदयात् हितो विच्छेदकमदापहरणेन सर्वथोपकारकः तस्मिन्नन्तर्हिते भगवति अन्तर्हिते ऽन्तर्धानङ्कृते सति तत्र भगवति अन्तर्हिते इत्यत्रायं ध्वनिः नहि भगवतो विभुत्वेन कुत्रापि गमनेनादर्शनं मयापरोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत्प्रियं प्रिया इति वक्ष्यमाणभगवद्वचनाच्च किन्तु स्वेच्छया स्वभगव्यक्तस्य स्वेच्छयैव तिरोधानमिति तथा च तस्मिन्नन्तर्हिते तमचक्षाणाः सहसैवातप्यन् तमानन्दघनं विना बहिरन्तर्व्याप्तविरहानलतप्तमनसः पूर्णचन्द्रमपि द्वादशरूपतां विहायैकतापन्नप्रलयार्कमिव किं शुकादीनि कुसुमानि दहनमिव स्वारुणवसनानि तप्तानि शुष्कस्वतनुव्याप्तदावज्वालवन्मन्यमानास्तप्ता अभूवन् युक्तं चैतत् एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः सर्वेषां चन्द्रादीनां यदानन्दमात्रयाल्हादकत्वं तदन्तर्धाने जीवनस्याप्यसम्भाव्यत्वात् किमु वाच्यं तापाधिक्यस्य किञ्च "चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमुत प्राणस्य प्राणं मनसो ये मनो विदुरि" त्यादिश्रुतेः प्राणवियोगे एव जीवनाभावदर्शनात्किमु वाच्यं प्राणप्राणविरहे ॥ १ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

त्रिंशे विरहसन्तप्तचेतसां गोपयोषिताम् ।
तन्मयत्वमुखप्रश्नमुखलीला निरूप्यते ॥

अथ भगवदन्तर्धानानन्तरं जातां तासां दशां वर्णयिष्यन्नादा रसासक्तचित्तानां भगवत्सखीनामकस्मात्प्रेष्ठादर्शनजन्यं महान्तं तापमाह । अन्तर्हित इति । भगवति पूर्णाखिलैश्वर्यसंपन्ने परमावधिभूते सहसैवाकस्मादेवान्तर्हिते ऽदर्शनङ्गते सहसैव तं भगवन्तमचक्षाणा अपश्यन्त्यः सहसैवान्तरतप्यन्त निःसीमसन्तापवत्यो जाताः रङ्कः सहसा प्राप्त सार्वभौमश्रियं सहसैवाचक्षाणो यथा सन्तप्यते तद्वत् यतो व्रजाङ्गनाः बालभावमारभ्य तस्मिन्नेवासक्तस्वान्ता इति भावः यद्वा अन्तर्हिते अन्तःकरण एव तासां प्रविष्टे सति बहिस्तं भगवन्तमचक्षाणाः बहिर्मुखत्वादन्तश्चाचक्षाणा अतप्यन् यतो व्रजाङ्गनाः अन्तरविचारकुशला इत्यर्थः । न च तासाङ्कामात्मत्वं स्थितं कामात्मनां दर्शनादिना शान्त्युपलम्भात् अतस्तासां परमप्रेमवतीनां दर्शनस्पर्शनादिकमेव मुख्यमिति द्योतयितुं दृष्टान्तमाह । करिण्यः हस्तिन्यः यूथपं महामत्तगजमचक्षाणा यथा तप्यन्ति तद्वत् करिणीनां यथा गजदर्शनाद्यभावे

गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ।
आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥२॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

क्लेशो भवति तथा नान्यासामित्यतस्ता एव दृष्टान्तीकृताः निवृत्तिपक्षे अथ विजानतामविज्ञातत्वे तदपेक्षया अन्तर्हिते भगवति सहसैव तं परमात्मानमचक्षाणाः साक्षात्प्रतिपादयितुमशक्ताः स्वजन्यवृत्तिप्रतिफलितचैतन्येन विषयीकर्तुमशक्ताश्च व्रजाङ्गनाः श्रुतयः अतप्यन्त तप्ता बभूवुः ॥ १ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्रिंशे भगवद्वियुक्तानां गोपिकानां चेष्टितं वर्णयति । अन्तर्हिते इति । अचक्षाणाः अपश्यन्त्यः ॥ १ ॥

### भाषा टीका

श्रीशुकदेवजी बोले श्रीभगवान् के अकस्मात् अन्तर्धान होते ही सब व्रजाङ्गना विन के दर्शन के न होवे ते ऐसी व्याकुल होगई जैसे वन में हाथिके विना उसकी हथिनी दुखी होवैं हैं ॥ १ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गत्या चानुरागस्मिताभ्यां विभ्रमेक्षितानि सविलासनिरीक्षणानि तैश्च मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासास्तैश्च रमापतेर्गत्यादिभिरेतैराक्षिप्तान्याकृष्टानि चित्तानि यासां ता अतस्तस्मिन्नेवात्मा यासां तास्तस्य विविधाश्चेष्टा जगृहुस्तदनुकरणेनाक्रीडन् ॥ २ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

तापमेवाभिव्यञ्जयति । गत्येत्यादिना पद्याधिकाध्यायद्वयेन गत्येति कायिकी चेष्टा सर्वोपलक्ष्यते अनुरागेण स्मितविभ्रमेक्षितानि च तैः मानसी तेषामनुरागकृतत्वात् मनोरमैरालापादिभिः मनोरमालापेन वाचिकी मनोरमविभ्रमैस्त्रिविधैव तत्तत्समुचितत्वात् विहारो गोवर्द्धनोद्धरणादिर्लीला वेणुवादनादि या विभ्रमः श्रृङ्गारचेष्टा तथाचोक्तं चित्तवृत्त्यनवस्थानं श्रृङ्गाराद्विभ्रमो मत इति एषां यथोत्तरं चेष्टा तैः पूर्वाचरितैराक्षिप्तचित्ताः ततश्च तदात्मिकास्तन्मय्यः सत्यः तदात्मिकाश्च बभूवुरिति पृथग्वाक्यम् अनुकरणतन्मयत्वयोरपि वक्ष्यमाणत्वात् प्रकृष्टो मदो यासां ता इति पूर्वोक्तप्रकृष्टमानाभिप्रायेण यद्वा प्रमदो हर्षः आनन्दरूपा अपि परमार्त्ताः सत्य इति भावः । रमायाः लक्ष्म्याः पत्युरिति परमवैदग्धी तया च गत्यादीनामुत्तमतापि सूचिता यद्वा रमा श्रीराधेति पूर्ववत् इति वक्ष्यमाणतत्साहित्यं सूचितं तास्ताः परमानिर्वचनीयाः इति तदनुकरणस्याशक्यत्वमुक्तं तथापि जगृहुः यद्वा पूर्वोक्ताः सर्वा विविधचेष्टा अयं च प्रेमविलासो नागरीणां स्वाभाविक एव अत एव प्रियानुकरणं लीलेति नाट्यशास्त्रे लीलेत्युच्यते यद्वा तास्ताः विचेष्टाः कृष्णस्य तास्ता लीलाः कर्त्र्यः प्रमदाः कर्म्मभूताः जगृहुः कथम्भूताः प्रमदाः तदात्मिकाः तच्चित्ताः ॥ २ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तापमेवाभिव्यञ्जयति । गत्येत्यादिना पद्याधिकाध्यायद्वयेन । गतिः सामान्या अनुरागः स्वविषयकः कान्तयोग्यो भावः स्मितं विभ्रमेक्षितानि च तैः । विभ्रमोऽत्र भ्रूप्रभृतीनां तत्तन्मधुरचेष्टाः विहारः श्रृङ्गारचेष्टा उत्तरो विभ्रमः श्रृङ्गारभावविशेषः । तथाचोक्तं चित्तवृत्त्यनवस्थानं श्रृङ्गाराद्विभ्रमो मत इति । तत्रानुरागाचित्तवृत्त्यनवस्थाने मानसे गतिस्मितविभ्रमयुक्तेक्षितविहाराः कायिकाः । आलापो वाचिक इति ज्ञेयम् । एतदुपलक्षणत्वेनान्येऽपि भावा ज्ञेयाः । अत्र च गतेः सामान्यत्वेन पृथगुक्तिः । स्मितादिकयोरनुरागारम्भमात्रजायमानत्वेन तत्समुदितोक्तिः आलापविहारयोर्विभ्रम जन्मनैव जायमानत्वेन तत्समुदितेति । तैर्गत्यादिभिस्ताभिः समेताभिरित्यादिवर्णितैः पूर्वाचरितैराक्षिप्तचित्ताः ततश्च तदात्मिकास्तन्मय्यः सत्यः प्रमदास्तास्ता बाहुप्रसारेत्यादिभिः पूर्वोक्ताः सर्वा विविधा चेष्टा जगृहुः प्राप्ताः तत्र प्रमदाः योगिकार्यपुरस्कारेण जातित एव प्रकृष्टमदयुक्ताः किं पुनस्तत्प्रेमवत्यस्ता इत्यर्थः । रमायाः सर्वरूपगुणमाधुर्यैश्वर्यसम्पदधिष्ठातृशक्तेः पत्युरध्यक्षस्य इति सर्वातिशायिता सूचिता । यद्वा । रमा श्रीराधा इति पूर्ववत् । इति वक्ष्यमाणतत्साहित्यं सूचितम् । तास्ताः बाहुप्रसारेत्यादिभिः पूर्वोक्ताः सर्वाः विविधचेष्टा जगृहुः प्राप्ताः ॥ २ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

गत्येति । रमापतेर्गत्या अनुरागस्मिताभ्यां यानि विलासनिरीक्षणानि तैश्च मनोरमालापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये विलासाश्च तैराक्षिप्तान्याकृष्टानि चित्तानि यासां ता अत एव तदात्मिकाः तस्मिन्नेवात्मा चित्तं यासां तास्तद्ध्यानप्रचुरा इत्यर्थः । अत एव भगवतस्तास्ता विविधाश्चेष्टा जगृहुरनुचक्रुः ॥ २ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गत्या बालसिंहखेलनगमनेन अनुरागेण स्नेहेन उद्भिन्नानि स्मितानि तैः रञ्जितानि सम्पर्के गतानीक्षितानि निरीक्षणानि अनुरागस्मितरञ्जितेक्षितानि तैः मनोरमौ आलापविहारौ तयोर्विभ्रमैः श्रृङ्गारैः आक्षिप्तचित्ताः आकृष्टमनसः या या भगवता

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

रचिता विशिष्टचेष्टास्तास्ता जगृहुः न्यरूरुपन् तस्मिन् कृष्णे आत्मा मनो यासां तास्तथा ग्रहणम् अनुकरणं यत्तदात्मिकाः तदाकारमिता इति पाठार्थौ सुष्ठुतामादधाते॥ २॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गत्येत्यादि प्रकरणम्। अत्र रमापतेः सर्वरूपगुणमाधुर्यैश्वर्यसम्पदधिष्ठातृशक्तेः पत्युरधोक्षजस्येत्यर्थः। अथवा तास्ता बाहुप्रसारेत्यादिभिः पूर्वोक्ताः तत्र तदात्मकत्वमभिव्यञ्जयति॥ २॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

तददर्शनसमकालमेव सौभगमदो मानश्च शान्तः तत्प्रकारमाह। गत्येत्यादिद्वाभ्याम्। रमापतेः श्रीकृष्णस्य गत्यादिभिराक्षिप्तचित्ताः सत्यः प्रमदास्तास्ता विचेष्टा रमापतेरेव तास्ता लीला जगृहुश्चेतसि दधुरित्यर्थः॥ २॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदा पुनः स तापः अन्तःप्रवेष्टुमैच्छत् तावता भगवल्लीला अन्तः प्रविष्टा तापं दूरीकृत्य स्वयमेवाविर्भूतेत्याह। गत्येति। ताः भगवदीयैः कायवाङ्मनोभिर्वशीकृताः तद्भावमापन्नाः तास्ता एव भगवच्चेष्टा जगृहुः प्रथमतः कायिकीमाह। गत्या कायचेष्टया वशीकृताः इन्द्रियसहितमनश्चेष्टया वशीकृता जाता इत्याह। अनुरागेति अनुरागः स्नेहो मानसः तत्पूर्वकं स्मितं तस्य विलासः स्वनिष्ठतात्याजनार्थः अन्यथैवं सति ज्ञानमेवोदयं प्राप्नुयात् अतः स्मितेन मन्दहासेन ईषद्भिर्मोहिताः न बहिर्गताः नान्तः स्थिताः किन्तु भगवति मध्ये स्फुरिते तद्धर्मेषु च समागताः अनुरागस्मितेन सहितो यो विभ्रमो विलासः अलसवलितादिः तत्सहितानीक्षितानि सर्व एव कटाक्षाः वाचिकैरपि विमोहमाह। मनोरमालापेति। मनोरमयतीति मनसि रमते इति वा मनोरमः योऽयमालापः भगवतो गुह्यभाषणानि केवलवाक्यस्य चित्ताक्षेपकत्वं न भविष्यतीति प्रामाण्यावधारणं स्त्रीणां प्रकारान्तरेण न भवतीति फलमेवादौ निरूपितं सुखार्थं हि भगवद्वाक्यानि तदानीमेव च सुखमुत्पादयन्ति ते चालापाः क्वचिद्भन्यादिबोधका लीलोपयोगिन इत्याह। विहार इति। तत्रापि विलासा अवान्तरभेदाः यथोक्तानेक ग्राम्यादयः तैः पूर्वकृतैः तमः सत्त्वरजोरूपैः त्रिविधमपि चित्तमाक्षिप्तमिति आक्षिप्तचित्ता जाता अतः तापं न प्राप्तवत्य इति भावः। प्रमदा इति बाह्याभ्यन्तरानुसंधानहेतुभूतोऽत्युत्कटरसभावोऽत्र मदपदेनोच्यते तेन प्रभुलीलाविष्करणमुचितमितिभावः। किञ्च प्रमदाः प्रकृष्टो मदो यासां स्वभावत एव अन्यथा दास्यभावान्न प्रच्युताः स्युस्तदा केवलभगवतः लीला स्वानुपयोगिनी सांप्रतं च नानुभूतेति रमापतेर्लक्ष्मीपतेः लक्ष्म्या सहविलासरूपां चेष्टां जगृहुः एकस्या अपि बहुव्यश्चेष्टा इति तास्ता उक्ताः नन्वीश्वरधर्माविष्करणं दासीनां निषिद्धमितिचेत्तत्राह। तदात्मिका इति। भगवानेवात्मनि यासां तथात्वेन स्फुरितः अतो भगवल्लीलाग्रहणं तापनिवारकत्वेनोद्देशात उक्तं विस्तरमग्रे वक्ष्यति क्रमहेतुं च वक्ष्यामः॥ २॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ततस्तमितस्ततः कुञ्जेष्वन्विष्यन्तीनां तमप्राप्तवतीनां प्रतीक्षणविवर्द्धमानविरहपीडया यः खलून्मादः सञ्चारी अभूत्तस्य प्रकटप्राकट्यप्रकारं वर्णयति। गत्येति द्वाभ्याम्। रमापतेः सर्वसौन्दर्य्यसम्पत्तिस्वामिनः कृष्णस्य गत्या स्वाभाविकेन पादविन्यासेन प्रथमं स्वान्तिकागमनम् आगत्य यानि अनुरागयुक्तानि स्मितानि च विशिष्टो भ्रमो भ्रमणं तारकाया यत्र तथाभूतानीक्षितानि च तैः ततश्च मनोरम आलापः अयि स्वलपद्मिनि! अतितृष्णार्त्तोय मधुपाय स्वमकरन्दं दास्यसि न वा भो भ्रमर! पद्मिन्याः पतिः सूर्य एव न तु भ्रमरस्तत्कथं त्वां स्वं स्वीयं मधु पाययिष्यति भोः पद्मिनि! पद्मिनीनां भवतीनां स्वभाव एवायं यत्ताः स्वपतिं सूर्यं स्वीयं मधु नैव पाययन्ति किन्तूपपतिं भ्रमरमेवेति ततस्तदालापेनैव पराजितया विहसन्त्या तया सह अधरमधुपानादिविहारः एवं वा आज्ञानामि मत्समीपस्थनीपतरुतलं गच्छन्तीं त्वां महादर्पकः सर्पोऽदशत् तद्विषं ते वक्षःस्थलपर्य्यन्तमुदसर्पत् तदपि त्वं कुलवधुत्वादेव मां तदुपशमं न पृच्छसि तदहं दयालुत्वात् स्वयमेव त्वदन्तिकमेत्य तद्विषोपशमकं मन्त्रं पठन् करतलाभ्यां त्वदङ्गं संघट्टयामि भो भो जाङ्गलिक! न मां सर्पोऽदशत् यां सर्पो दशति स्म तद्गात्रमेव करतलाभ्यां संघट्टय भो कुलाङ्गने! त्वदीयगद्गदस्वरादेव विषज्वालाकुलत्वं तव ज्ञायते इति ज्ञात्वापि यद्यहं त्वामुपेक्षे तदा मां स्त्रीवधो लगिष्यतीत्यतस्त्वद्विषमुपशमयिष्याम्येवेत्युक्त्वा तस्या वक्षःस्थले नखार्पणादिकं चकार ततो विहारः सम्प्रयोगः ततो विभ्रमः कामोन्मत्तता यदुक्तं "चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मत,, इति तैर्विरहावस्थायामतिशयेन स्फुरता स्वैराक्षिप्तानि अरे किमिह कुरुध्वे बहिर्भूय प्राणप्रेष्ठमन्वेष्टुं गच्छतेति तिरस्कृत्य देहतो निःसारितानि स्वचित्तानि याभिस्ताः यतः प्रमदाः प्रकर्षेण माद्यन्तीति ताः ततश्चोन्मादं प्राप्य तदात्मिकास्तस्यैवात्मानो बुद्ध्यादयो यासां ताः अतस्तास्तास्तदीया विविधाश्चेष्टा जगृहुः बुद्धिपूर्वकग्रहणादीननुचक्रुरित्यर्थः॥ २॥

केनचित्कृता विशुद्धरसदीपिका।

इदानीं संतापकार्य्यं दिव्योन्मादं दर्शयति। गत्येत्यादिभिः- अहो कुत्र गतोऽस्माकं प्राणनाथ इति गमनस्यैवानुसन्धानात् गतिशब्दस्य प्राक्प्रयोगः एवमनुरागस्मितादिष्वपि निमित्तमनुसन्धेयम् उन्मत्तेष्वपि मानसस्य तस्य स्वीकारात् तत्र गतिः सामान्या तत एवास्याः पृथगुक्तिः स्मितादिकयोरनुरागारम्भमात्रजायमानत्वेन तत्समुदितोक्तिः आलापविहारयोर्विभ्रमजन्मनैव जायमानत्वेन तत्समुदितोक्तिरिति तत्र चानुरागः स्वविषयकः

### केनचित्कृता विशुद्धरसदीपिका ।

कान्तयोर्यो भावः स्मितं विभ्रमेक्षितानि च तैः तत्र विभ्रमः चित्तवृत्त्यनवस्थितिः तथा विहारविभ्रमः शृङ्गारचेष्टानुकूला मधुरलीलेत्यर्थः—

" चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः "
तथा—शृङ्गारचेष्टाविहृति विभ्रमो मधुराकृतिः ॥

इत्युक्तेः ततश्च तैस्तैराक्षिप्तचित्ताः तत्र तत्रावेष्टचेतस इत्यर्थः । तत एव तास्ता विचेष्टाः बाहुप्रसारेत्यादिना प्रागुक्ता या विविधाश्चेष्टाः जगृहुः आत्मनि स्वीचक्रुः तथा तथाक्रीडन्नित्यर्थः यतस्तदात्मिकाः तद्भावभावितान्तःकरणाः यतश्च प्रमदाः यौगिकार्थपुरस्कारेण जातित एव प्रकृष्टमदयुक्ताः किम्पुनस्तद्विरहेणेत्यर्थः । दिव्योन्मादस्य परमां भूमिमारूढा इति भावः । तत्रानुरागचित्तवृत्त्यनवस्थाने मानसे गतिस्मितविभ्रमेक्षितविहाराः कायिकाः आलापो वाचिक इति विवेकः । रमापतेः आप्तकामस्येत्यर्थः । सहचरीपक्षे च रमते नितरामिति रमा श्रीराधा आत्मना रमया रेमे इति ब्रह्मसंहितायां इह तामुद्दिश्यैव तादृशप्रयोगात् साक्षान्नामानुक्तिश्चाऽऽदरविशेषादतिरहस्यत्वाद्रसरूपत्वाच्चेत्यादिनिर्णीतं भक्तिमञ्जूषायां नायं श्रियोऽङ्ग इत्यादिवक्ष्यमाणानुसारेणात्यन्तनिकृष्टायाः प्रसिद्धरमाया रूपकं च प्रस्तुतयोरुभयोरनपायिसम्बन्धद्योतनाय अनपायिनी भगवती श्रीः साक्षादात्मनो हरेरिति श्रीद्वादशोक्तेः वस्तुतस्तु मुकुन्दादिपदानां श्रीकृष्ण इव रमादिपदानां परमरमायां तस्यामेव मुख्यावृत्तिरिति सूचनाय " सर्वलक्ष्मीमयीसर्वकान्तिः सम्मोहिनी परे"ति बृहद्गौतमीयोक्तेः तस्याः पतेः धवप्रियः पतिर्भर्त्तेति कोशात् राधावल्लभस्येत्यर्थः । ततश्च दाम्पत्यव्यवहारस्तस्यामेव समुचित इति सूचितं तदुक्तमलङ्कारकौस्तुभे—

राधामाधवयोरेव शृङ्गारः श्रुतिरोचकः ।
वैदग्ध्यं यत्र पर्य्याप्तं कृतार्थश्च मनोभवः इति ॥

अत्र पार्थ एव धनुर्द्धर इति वदेवकारोऽन्ययोगं व्यवच्छिनत्ति ॥ २ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

नन्वेवं प्रलयसामग्रीसम्पत्तौ प्राणप्राणवियोगे च कथं तज्जीवनं संवृत्तं तत्राह । गत्यानुरागेति । गजराजराजहंसादिगतिं लज्जयन्त्या गतिमनिच्छतामपि परमहंसानां रुचिं जनयन्त्या आसमन्तात्सर्वतः सर्वविधानुरागश्च तत्पूर्वकं स्मितं च विशेषेण भ्रमयति देहगेहाद्यनुसन्धानादिभ्यः परावर्त्तयतीति तथाभूतं यदीक्षितं सापाङ्गनिरीक्षणं तैः तथा मनोरमाहृदयंगमा ये आलापा मृदुचित्रगम्भीरार्थवाक्यविशेषा विहारा विशेषेण हारा मनोहराः शृङ्गाररसोपयोगिविलासा विभ्रमाणि नृत्यावर्तनादीनि तैः करणै रमापतेः रमायाः सर्वसौभाग्यसम्पत्सौन्दर्य्यादिश्रियामधिष्ठात्र्याः सर्वमनोरमाया लक्ष्म्या अपि सर्वत्र दोषदृष्ट्या तत्त्यागेन स्वात्मनिःस्पृहत्वेऽपि गुणालयत्वेन वृतो यः पतिः तस्य तत्संबन्धिभिरेतैराक्षिप्तानि आकृष्टानि चित्तानि यासां यद्वा रमापतेरिति कर्त्तरि षष्ठी तथा च रमापतिना कर्त्रा एतैः करणैः प्रलयसन्निभार्तित्राणाय स्वस्मिन्नाकृष्टानि चित्तानि यासाम् अत एव प्रकृष्टप्रेमोन्मादलक्षणो मदो यासामिति प्रमदाः तथा स एवात्मनि मनसि रक्षकत्वेन वर्त्तमानो यासां यद्वा तस्मिन्नेवात्मा प्राणो यासां तथाभूतत्वे लिङ्गमाह । तास्ता इति । यतस्तथाभूता अतस्तत्तद्गुणाकृष्टचित्तत्वेन प्रकृष्टमदविगतदेहाद्यनुसन्धानत्वेन तदात्मकत्वेन च तदीयास्तास्ता विचेष्टाः जगृहुः यद्वा स्वीयगत्यादिभिर्मनोरमालापादिभिश्च रमापतेराकृष्टं चित्तं याभिस्त एव रमापतेरपि प्रकृष्टो मद उन्मादो याभ्य इति प्रमदा ननु भगवत आत्मारामत्वात्कथं ताभिराक्षिप्तचित्तत्वं तत्राह । तदात्मिका इति । तासां तदात्मकत्वेन तदाक्षिप्तचित्तत्वेऽपि नात्मारामत्वक्षतिर्ननु तथाभूतानां कथं तद्वियोगविरहवैकल्याद्युक्तिस्तत्राह । तास्ता इति । सर्वोद्धारकप्रेमपथोपदेशाय तास्ता विरहव्याकुलत्वतल्लीलानुकारादिविचेष्टा जगृहुरिति भावः ॥ २ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

तापानन्तरं जातां तासां दशामाह । गत्येति । रमापतेः प्रेष्ठस्य गत्या यत्स्वाभाविकेन नूपुरस्वनयुक्तेन पादन्यासेन अनुरागः स्नेहस्तत्पूर्वकं स्मितं मन्दहसितं तत्सहितो विभ्रमो विलासः तत्सहितानीक्षितानि कटाक्षास्तैः तथा मनो रमयति मनसि रमते च य आलापः गुह्यं भाषणं वाचिकव्यापारः विहारः शृङ्गारचेष्टाः "चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः" इत्युक्तलक्षणो विभ्रमश्च तैराक्षिप्तान्याकृष्टानि चेतांसि यासां तादृशास्तस्तदात्मिकाः तन्मय्यः यतश्च प्रमदाः जात्यैव प्रकृष्टमदयुक्ताः रमापतेः विविधाश्चेष्टा जगृहुस्तदनुकरणैरक्रीडन्नित्यर्थः अत्रानुरागचित्तवृत्त्यनवस्थाने मानसे आलापो वाचिकः गत्यादयः कायिका अन्यभावानामप्युपलक्षणमेतत् अत्राभिज्ञापक्षे रमापतेर्लक्ष्मीपतेः श्रीविष्णोरन्तरेवाविर्भूतस्वरूपस्य लक्ष्मीपतेः सह विलासरूपाः स्वात्मना च सहविलासरूपा याश्चेष्टास्तास्ताः जगृहुः ननु दासीनां तासां भगवल्लीलानुकरणमनुचितमित्याशङ्कानिवृत्त्यर्थमुक्तं तदात्मिकाः स भगवानेवाविर्भूत आत्मनि यासां ता अन्तस्तापनिवृत्त्यर्थं तल्लीलाग्रहणं न विरुध्यत इति भावः । किञ्च प्रमदास्तथा च प्रमदाशब्देनोक्तो यथा दासीभावं विहाय कान्ताभावस्तथा प्रभुचेष्टानुकरणमपीति भावः । अनभिज्ञापक्षे रमापतेः सर्वैश्वर्यसम्पन्नस्यास्मिनः मानिनीपक्षे गतश्चेद्गच्छतु नाम वयमेव तदीयास्ताश्चेष्टाः कर्तुं शक्ता इति बहिः प्रकटीकर्तुं नाम्नाश्चेष्टा जगृहुः यतस्तदापि प्रकृष्टो मदो यासां ताः यतश्च तदात्मिकाः परस्परातिगाढप्रेमवशादभेदाभिमानवत्यः अतस्तस्य गत्यादिभिराक्षिप्तचित्ताः निवृत्तिपक्षे श्रोत्रस्य श्रोत्रं मनसो मनो वाचो ह वाक् प्राणस्य प्राण इत्यादिश्रुत्यर्थश्रवणार्थाधिष्ठानगत्यादिभिः परमात्मानं प्रत्याकृष्टचित्ताः यतः प्रकर्षेण मदः परमात्मप्रतिपादने हर्षो यासां ताः रमापतेः संसारकर्मिलक्षणशोभास्वामिनः चैतन्यस्यैव तास्ताः गमनादिरूपाश्चेष्टाः जगृहुः स्वयं वाच्यवाचकयोरभेदात्तदात्मिकाः ॥ २ ॥

---

**गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः।**
**असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रमदा व्रजाङ्गनाः कृष्णात्मिकाः रमापतेः गत्या अनुरागस्मिताभ्यां यानि विभ्रमेक्षितानि सविलासनिरीक्षितानि तैश्च मनोरमाः मनोहराः आलापाश्च विहाराः क्रीडाश्च विभ्रमाः अन्ये च विलासास्तैश्च आक्षिप्तचित्ताः आकृष्टचित्ताः तस्य विविधाश्चेष्टा जगृहुरनुचक्रुः ॥ २ ॥

---

### भाषा टीका

लक्ष्मीपति भगवान् की चाल अपने पैं अनुराग पूर्वक मुसक्यान चितवन क्रीडा बडो मनोहर भाषण विहार और अनेक विलास इन ते जिन के चित्त खिचगये ऐसी जो व्रजनारी तिन को मन श्रीकृष्णचंद्र में लग गयो तव सब भगवान् की चेष्टा करत भई ॥ २ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च गतिस्मितेति प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मूर्तयो यासां ताः अतः कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासां ताः अहमेव कृष्ण इति परस्परं निवेदितवत्यः ॥ ३ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तत्र तदात्मिकत्वमभिव्यञ्जयति । गतीति । गत्यादिषु उक्तेषु आदिशब्दात् विहारविभ्रमौ उक्तानुवादत्वेन पूर्वोक्ततत्तद्विशेषणान्यत्र नोक्तानि प्रतिरूढलीलाभिराविष्टा मूर्तय इन्द्रियाङ्गादिसङ्घातात्मक देहा यासां ताः इत्यन्तर्बहिस्तद्भावापत्तिरुक्ता तथा चोक्तं प्रह्लादेन तद्भावभावानुकृताशयाकृतिरिति अवला स्त्रियः इति स्त्रीचेष्टानुकरणमेव युक्तमिति ध्वनितं तथापि यद्वा लीलाविष्टता वा तत्र हेतुः तदात्मिकाः तन्मय्यः सत्य इति तच्छब्देन श्रीकृष्णस्तद्गत्यादयो वा श्रीकृष्णोऽहमिति साक्षादनुक्तिः विरहवैवश्यात् तदात्मकत्वादेव वा तन्मयत्वं च प्रेमलीलाभरस्वभावेनैव न त्वभेदज्ञानादिनेत्याशयेनाह । प्रियाः प्रियस्येति । कृष्णेति परमाकर्षकत्वाभिप्रायेण अन्यत्सैर्व्याख्यातं यद्वा अनुकरणमेवात्रापि ज्ञेयं ततश्च पूर्वश्लोके तदात्मिका इति अनुकरणसम्यक्ता बोधिता तामेव दर्शयन्ति ॥ गतीति । हे अवलाः असौ तत्तद्विहारनागरोऽहमित्येतत् श्रीकृष्णवाक्यमिति शेषः पूर्ववन्मर्मादिना कदाचित्चैनात्कमस्तीत्यत एवं ज्ञेयं कुतो वाक्यं न समापितमित्यपेक्षायामाह । तदात्मिका इति तन्मनस्काः यद्वा अयमनुकरणसम्यक्तावोधनार्थं पुनरपि पूर्ववद्धेतुः अत एव कृष्णविहारवद्विभ्रमः चुम्बनालिङ्गनादिचेष्टाविशेषो यासां यद्वा कृष्णस्येव विहारविभ्रमः विगतो हारो यस्मात्तादृशो विभ्रमो विलासो यासां यद्वा कृष्णविहार इति विभ्रमो भ्रान्तिर्याभ्यः न निश्चेतुं शक्यते कृष्ण एवायं विहरति ता वा तमनुकुर्वन्तीत्यर्थः । वाक्यासमापने विरहविह्वलतैव हेतुर्विभाति यद्वा असौ तत्तत्प्रकारैर्बहुशः श्रीकृष्णेन रमिता या साहमित्यर्थः । तत्प्रकाशनं वैदग्ध्या विरहविह्वलतयैव वा तादृशनिवेदने हेतुः तस्मिन् अवाच्ये मरणे आत्मा चित्तं यासां ताः अत्यन्तदुःखेन मुमूर्षया तन्न्यवेदयन्नित्यर्थः । अतः कृष्णविहारैर्विभ्रम उन्मादो यासां तद्विलासस्मरणेन परमविह्वला इत्यर्थः ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

तत्र तदात्मकत्वमेवाभिव्यञ्जयति । गतीति । प्रियस्य गत्यादिषु उक्तेषु आदिशब्दाद्विहारविभ्रमौ उक्तानुवादित्वेन पूर्वोक्ततत्तद्विशेषणानि नोक्तानि । तेषु प्रतिरूढाः सदृशीभूता मूर्त्तयः इन्द्रियादिसङ्घातात्मकदेहा यासां ताः इत्यन्तर्बहिस्तद्भावापत्तिरुक्ता । अवलाः स्त्रियः इति स्त्रीचेष्टानुकरणमेव युक्तमिति ध्वनितम् । तथापि तु एव यत्र युष्माकमुत्कण्ठा अहमेवासौ तत्तद्विहारनागर इति प्रत्येकं सर्वा मिथो न्यवेदयन्त । कीदृश्यः सत्यः । कृष्णवद्विहारे विभ्रमो विलासो यासां कृष्णविहारस्य विभ्रमो भ्रान्तिर्याभ्यो वा तादृश्यः । तन्मयत्वञ्च प्रेमलीलाभरस्वभावेनैव नतु अहंग्रहोपासनावेशेनेत्याशयेनाह । प्रियाः प्रियस्येति । प्रियास्तस्मिन् स्वाभाविकप्रेमवत्यः प्रियस्य स्वस्मिन्नपि स्मर्यमाणतादृशप्रेमकस्येत्यर्थः । लीलाख्यश्चानुभावोऽयम् । प्रियानुकरणं लीलारम्यैर्वेशक्रियादिभिरित्युक्तेः । तथाच प्रयोगः । मुहुरवलोकितमण्डनलीला, मधुरिपुरहमिति भावनशीला इति ॥ ३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रतिरूढमूर्त्तयः असावहं कृष्णोऽहम् अनेन वक्ष्यमाणकारणस्य प्रस्तावः ॥ ३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेव प्रपञ्चयति । गतीति । तदात्मिकाः अत एव प्रियस्य कृष्णस्य गत्यादिषु प्रतिरूढमूर्तयः भगवद्गत्याद्यनुकारेषु चिकीर्षितेषु सत्सु हृदयारूढास्तस्य मूर्तयो यासां ताः अतः कृष्णविहारा इव विभ्रमाः क्रीडा यासां तास्तस्य प्रिया अवला गोप्यः असावहं कृष्णोऽहमिति मिथो निवेदितवत्यः ॥ ३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एतदेव विशिनष्टि। गतीति। प्रियस्य कृष्णस्य गत्यादिषु प्रतिरूढा अङ्कुरिता अङ्गीकृता मूर्तिर्यासां तास्तथा तत्र निमित्तं दर्शयति। असाविति। असौ कृष्णोऽहं वा नु इति विकल्प्यान्योऽन्यं पृष्ठ्वा वा तदात्मिकाः तद्गतचित्ताः प्रश्ने विकल्पे नु स्विदिति यादवः न्यवेदिषुः आत्मानमिति शेषः कृष्णविहारविभ्रमवत्त्वं विवृतम्॥ ३॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गतीति। गत्यादिषु प्रतिरूढाः सदृशीभूताः मूर्त्तय इन्द्रियादिसंघातात्मकदेहा यासां ताः ततश्च चिरात् प्राप्तावधानानां तासामवस्थां वर्णयति॥ ३॥

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः।

कीदृश्यः तस्मिन्नेव आत्मा मनो यासां तास्तदात्मिका ननु तास्ता लीलास्तदात्मिकाः सत्यो जगुरनुचक्रुः तथा सति गायन्त्य उच्चैरित्यादीन्यसङ्गतानि स्युः किन्त्वेषामन्ते लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिका इत्यादिकमेव तादात्म्यम्॥ ३॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो भगवतः स्वरूपपरिग्रहो जात इत्याह। गतिस्मितेति। धर्माश्चेत् स्वस्मिन्नागताः तदैकत्रोभयधर्मा विरुद्धा इति भगवति स्वधर्मानारोपितवत्यः कायवाङ्मनसां दृष्टेश्च चत्वारः प्रधानधर्माः तेषु सर्वेष्वेव प्रतिरूढा मूर्तियांसां भगवद्धर्मेषु स्वमूर्तिरारोपिता अन्यथा अन्योऽन्यधर्माभिनिवेशाभावे सम्यक्विलासो न स्यात् तदाह। गतिः कायिकी स्मितं मानसं प्रेक्षणमैन्द्रियकं भाषणं वाचिकं तदादयो यावन्तो विभ्रमाः बन्धादयः रतिरूपा एव तेषु सर्वेष्वेव प्रियस्य सम्बन्धिषु स्वयं प्रियाः भोगावस्थामेव प्राप्ताः विपरीता जाताः रसाधिक्ये स्त्रियः पुरुषत्वमापद्यन्त इति वात्स्यायनः अत एव स्वयं प्रिया योग्याः प्रतिरूढा विपरीततया आरूढा मूर्त्तयः स्वरूपाणि यासामिति तत्र यासां भगवानल्पव्यवहितः पूर्वमासीत्ताभिर्भगवत्प्रश्ने कृते अन्तर्हिताज्ञानात्तत्रोत्तरवक्त्र्यो भवन्ति असौ कृष्णः अहं कृष्ण इति अथवा योऽन्विष्यते सोऽसावहमिति अन्यासां प्रतीत्यर्थं नटः कपटवेषं कृत्वापि वदति क्रीडायां तथा न किन्तु स्वत एवेत्याह। अबला इति। अबलाः स्त्रियः भगवद्रूपाविष्कारे च बलरहिताः। स्पष्टवैलक्षण्यं च स्त्रीपुरुषयोः तथा कथने प्रतारकत्वमाशङ्क्याह। तदात्मिका इति। न केवलं धर्म्याप्तिः किन्तु तद्धर्माणामपीत्याह। कृष्णवद्विहारः कायवाङ्मनोव्यापारः विभ्रमाः तत्रत्या विलासा यासाम्॥ ३॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तस्यैवोन्मादस्य प्रौढत्वे सति तासामवस्थामाह। गतीति। प्रेयस्य गत्यादिषु पूर्वोक्तेषु प्रतिरूढा मूर्तयो देहा यासां ताः आदौ प्रियस्य गतिस्मितादय आसां प्रत्येकं मूर्त्तौ चित्तेन्द्रियादिमभ्यामारूढाः ततस्तेषु गतिस्मितादिषु आसां मूर्त्तिश्च प्रत्यारूढा इत्यर्थः। ततश्चोन्मादाधिक्यभावे सति असौ कृष्ण एवाहं किंवा अहमेव कृष्ण इति सावधारणां भावनां विहाय असावहं कृष्णोऽहमिति रसास्वादप्रौढिममयीमवस्थां प्राप्य तदात्मिकाः प्राप्तकृष्णतादात्म्याः नत्वहंग्रहोपासनावेशादेवेति ज्ञेयं प्रियाः प्रियस्यैतदुक्तेः न्यवेदिषुः परस्परं निवेदितवत्यः ननु वयं व्रजस्त्रिय इति मनागपि का अपि जानन्तिस्मेत्यर्थः। तत्र हेतुः कृष्णविहारैः स्मर्यमाणैर्विभ्रम उन्मादो यासां ताः॥ ३॥

### केनचित्कृता विशुद्धरसदीपिका।

तदेवं सहसान्तर्द्धानहेतुकां दिव्योन्मादस्यारोहभूमिकां केवलमानसचेष्टया वर्णयित्वा मानसवाचिकचेष्टया तदवरोहक्रमं दर्शयति। गतीति। प्रियस्य गत्यादिष्वारूढा आविष्टा मूर्तयस्तत्सायः पिण्डवदिन्द्रियावयवादिसङ्घातात्मका देहा यासामित्यन्तर्बहिस्तदेकभावापत्तिरुक्ता अत एव कृष्णेति कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासां ताः न्यवेदिषुः यत्र युष्माकमुत्कण्ठा सोऽहमेव श्रीकृष्ण इति परस्परं सम्वेदितवत्यः ज्ञापितवत्य इत्यर्थः अयमेवोन्मादस्य पूर्वस्मादपकर्षः नहि तत्राहमेवासौ कृष्ण इत्यनुसन्धानं चेति तदात्मिकाः तन्मयाः तत्त्वं च प्रेमभरस्वभावादेव नत्वहंग्रहोपासनयेत्याह। प्रियाः प्रियस्येति। तस्मिन् स्वाभाविकप्रेमवत्यः स्वस्मिन्नपि स्मर्यमाणतादृशप्रेमकत्वेत्यर्थः। अयं लीलानामनुभावः "प्रियानुकरणं लीला रम्यैर्वेषक्रियादिभिरि"त्युक्तेः यदाह श्रीजयदेवः—

> मुहुरवलोकितमण्डनलीला।
> मधुरिपुरहमिति भावनशीला॥

॥ ३॥

### श्रीरामनारायणकृतभावभावविभाविका।

तदात्मकत्वद्योतकचेष्टामाह। गतिस्मितेति। ता अबलाः तत्र स्त्रीत्वेन सामान्यत एवाबलात्वेऽपि विरहवैक्लव्येन विशेषतोऽप्यबलाः यद्वा बलशब्देनात्र बलहेतुः प्राणः अकाराभिधेये वासुदेवे एव प्राणो यासां यद्वा स्वतो निर्बलत्वेन अशब्दसंज्ञस्य हरेरेव बलं तच्चेष्टानिमित्तं यासु तथाभूता यतस्तदात्मिका अत एवात्मत्वेन निरतिशयप्रेमास्पदतया प्रियास्तास्तथैव नित्यप्रियस्य तस्य या मदनमदोन्मत्ततया स्खलितमृदुपदन्यासा न्यासिनमपि सस्मितविगतिकरी गतिः यच्च कस्यापि विस्मितकरं तदीयस्मितं यच्च प्रकृष्टमनङ्गाङ्गव्यङ्गसमर्पणेनापाङ्गीकरणापाङ्ग्याणाक्षयनिपङ्गानके- क्षणं गतिविगतगतीनां स्मितेन विस्मितानामपाङ्गेनापाङ्गीकृतानामपि सञ्जीवनामृतमियभषणम् आदिशब्देन आलिङ्गनरासकरविला-

**गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ।**
**पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ ४ ॥**

### श्रीरामनारायणकृतभावभावविभाविका ।

सादयः तेषु प्रतिरूढमूर्तयः तत्र प्रतिरूढमतय इति वक्तव्येऽपि मत्यावेशातिशयेन शरीरेऽपि तदभिव्यक्तिमवधार्य प्रतिरूढमूर्तय इत्युक्तं तथाचैवंभूतनया कृष्णस्य चित्ताद्याकर्षकस्य विहारविभ्रमवद्विहारविभ्रमा यासां ताः असौ कृष्ण एवाहमिति परस्परं न्यवेदिषुर्निवेदयामासुः ॥ ३ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तदात्मिका इत्युक्तं भगवत्स्वरूपपरिग्रहमाह । गतीति । प्रियस्य गत्यादिषु प्रतिरूढा मूर्त्तिर्यासां भगवद्धर्मान् स्वात्मन्येवाविरोधयन्त्यः यतः प्रियास्तथापि मनसा प्रतिरूढमूर्त्तयो ननु नरवद्देहपादिकं धृतवत्यो ऽचलास्ताद्दशावलगहिताः अतस्तदावेशवशात्तासां तथात्वमित्याह । तदात्मिकाः ततः कृष्णविहारविभ्रमाः कृष्णस्येव विभ्रमाः क्रीडा विलासा यासां ताः अतो यो ऽचिन्त्यतेऽसावहमिति परस्परं निवेदितवत्यः ननु वयं व्रजस्त्रिय इति मनागपि काश्चिदपि जानन्ति स्मेत्यर्थः कृष्णविहारैः स्मर्य्यमाणैर्विभ्रमः उन्मादो यासामिति वा लीलाख्यानुभावोऽयं समानमिदं पक्षमितरपक्षयोरपि निवृत्तिपक्षे गत्यादिषु देहेन्द्रियादिव्यापारेषु या प्रियाः स्तत्तदाकारवृत्तयस्ताः प्रियस्यात्मनः प्रतिरूढा आत्मन्यारूढा मूर्त्तयो यासां ताः अत एवास्य वासुदेवस्य विमोदिवदात्मन एव वलं विषयप्रकाशनसामर्थ्यं यासां किञ्च तस्मिन्नारोपकृतत्वात्तदात्मिकास्तत्स्वत्तातिरिक्तसत्ताविधुरा इति कृष्णस्य सदानन्दस्वरूपस्य परब्रह्मणः सत्तास्फूर्तिप्रदातृत्वादिलक्षणविहारे तद्वर्णनविभ्रमो यासां ताः श्रुतयः न्यवेदिषुः बोधयामासुः तथा असौ परमात्माहमेवेति न्यवेदिषुरित्यर्थः । तथाच श्रुतयः यद्वाचानभ्युदितं येन वागभ्युद्यते यन्मनसा न मनुते येन हु मनो मतं यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति अहं ब्रह्मास्मि योऽसावादित्ये पुरुषः सोऽसावहमित्याद्याः ॥ ३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेव वर्णयति । गतिस्मितेति । तदात्मिकाः कृष्णार्पितचित्ताः प्रियाः कृष्णप्रियाः प्रियस्य कृष्णस्य गत्यादिषु प्रतिरूढाः आविष्टा मूर्तयो यासां ताः अत एव कृष्णविहारा इव विभ्रमा विलासा यासां ताः तुशब्दोऽवधारणे अहमेव असौ कृष्ण इति मिथो न्यवेदिषुः निवेदितवत्य. ॥ ३ ॥

### भाषा टीका ।

भगवान की चाल विनकी हसन विनके भाषण आदि लीला में गोपिन के मन औ देह सब रमगये तब वे व्रज अवला श्रीकृष्ण चन्द्र के विहार में विलास करनेवाली होगई उनके मन कृष्ण मय होगये तौ आपस में मैं कृष्ण हूं ऐसे एकते दूसरी कहने लगीं ॥ ३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च गायन्त्य इति । वनाद्वनान्तरं गच्छन्त्यो विचिक्युरमृगयन् उन्मत्तस्य तुल्यत्वमाह । वनस्पतीन्पप्रच्छुः भूतेष्वन्तरं मध्ये सन्तं पुरुषं बहिश्च सन्तमिति ॥ ४ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

नैवं केवलमनुकरणं लीलाविष्टता वा किन्तु विरहविह्वलाः सत्य इतस्ततोऽन्वेषयन्त्यः पुरो दृश्यमानान् सर्वानेवापृच्छन्नित्याह । गायन्त्य इति । उच्चैर्गानं तं प्रति दूराद्विजार्त्तिश्रावणार्थं किम्वा गीतप्रियस्य तस्य तेनाकर्षणार्थं किम्वा आर्त्तिभरस्वभावादेवमेवेति यद्यपि त्यागेन दुःखप्रदत्वेन च तद्गानादिकं न युज्यते तथापि अमुमेवेति तदानीमपि तदेकप्रियत्वं किम्वा तदेकगानशीलत्वमुक्तं संहताः अन्योऽन्यं मिलिताः सत्यः सर्वत्र सम्यङ्मार्गणार्थं किम्वा सख्येनान्योऽन्यमार्त्त्युपशमनार्थं किम्वार्त्तिविशेषस्वभावादेव वनस्पतीन् प्रति प्रश्ने हेतुः । उन्मत्तकवदिति । स्वार्थे तदाधिक्ये वा कन् तेन केशाद्यसंस्वरणं व्यज्यते तथान्वेषणे प्रश्ने च विचाराभावेनाभिनिवेशोऽपि निरस्तः अन्यथा वृक्षेषु प्रश्नानुपपत्तिः वनाद्वनमिति प्रतिवनं अन्वेषणेनतस्ततो बहुलपरिभ्रमणं तेनानेककालमन्वेषणमपि सूचितम् आकाशो यथा बहिरन्तर्व्याप्यास्ते तथाभूतेषु सर्वजीवेषु पुरुषं पुरुषरूपेणान्तरमन्तर्बहिश्च व्याप्य सन्तं यद्वा भूतेषु प्राप्तेषु वृक्षादिषु अन्तर्बहिश्च स्वनिकटे सन्तमप्युन्मादादेव वृक्षादीन् पप्रच्छुः यद्वा पुरुषं निजस्वामिनमिति तादृशप्रश्ने मार्गणे च हेतुः यद्वा अहो बत सर्वत्र सन्तमपि स्वयं तथा वायमानमपि विरहजप्रेमभरेण वृक्षानपि ताः पृष्टवत्य इति तादृशार्त्त्याह । आकाशेत्यादि । अर्थः स एव अहो शृणु प्रेमानिर्वचनीयमहात्म्यमिति भावः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च चिरात् प्राप्तावधानानां तासां पुनरुन्मादाख्यामवस्थां वर्णयन्ति । गायन्त्य इति । गानमत्र गोकुले प्रसिद्धं पूतनावधादमयं तच्च विषजलाप्ययादित्यादि वक्ष्यमाणरीत्या स्वरक्षणाभिप्रायेण । उच्चैर्गानन्तु तं प्रति दूरान्निजार्त्तिश्रावणार्थम् । किम्वा गीतप्रियस्य तस्य तेनाकर्षणार्थं किम्वा आर्त्तिभरस्वभावादेव अमुमेवेति । यद्यपि त्यागेन परमदुःखदोऽसौ तथापि नमेवेत्यर्थः । गणयन्ति गुणग्रामं ग्रामं भ्रमादपि नेहते इत्यादिवत् । संहता अन्योऽन्यं मिलिताः सत्यः सर्वत्र सम्यङ्मार्गणार्थम् ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किम्वा सख्येनाम्योऽन्यमार्त्युपशमनार्थम् । किम्वार्त्तिविशेषस्वभावादेव । गानान्वेषणयोर्यौगपद्यमिदं गायन्त्य एव भ्रमन्ति मध्ये मध्ये तु पृच्छन्तीत्यर्थः । वनस्पतीन् प्रति प्रश्ने हेतुः । उन्मत्तकवदिति । स्वार्थे कन् । तेन केशाद्यसम्वरणं व्यज्यते पुरुषं सर्वान्तर्यामिरूपमपि अत एवाकाशवद्भूतेषु अन्तरं वहिश्च व्याप्य सन्तमपि पप्रच्छुः । निजप्रेमावलम्बनकेवलनरलीलारूपेणैव तस्य तत्प्रश्नविषयत्वादिति भावः । यद्वा । अहो वत तासामिदं सर्वं किमरण्यरुदितमेव जातं नेत्याह । आकाशेति । वक्ष्यते च स्वयम् । मया परोक्षं भजतेति । यद्वा । पुरुषं स्वनायकं पप्रच्छुः । तञ्च भूतेषु स्थावरजङ्गमेषु आकाशवदन्तरं वहिश्च सन्तं साक्षादिव सत्तया स्फुरन्तं पप्रच्छुः । तादृशज्ञानस्फूर्त्तिश्च तासां प्रेमविवर्त्तविशेषादेव "वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्या" इतिवत् । तत्र वहिःस्फुरणं दूरतः अन्तःस्तु निकटात् । तत्र च सत्युन्मादेनैवानिन्द्रियेष्वपि वनस्पतिजातिषु प्रश्नो योग्य इति भावः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्तरं वहिः सन्तमन्तरं वहिश्च सन्तम् ॥ ४—८ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च गायन्त्य इति । सङ्गताः समुदिताः सङ्घीभूता इति यावत् अमुं कृष्णमेव गायन्त्यो वनाद्वनं गच्छन्त्यः उन्मत्तवद्विचिक्युरमृगयन् वनस्पतीन् प्रति पप्रच्छुश्च कथंभूतमाकाशवद्भूतेषु चराचरेष्वन्तर्वहिश्च व्याप्य सन्तं पुरुषं पुरुषाकारं पुरुषशब्दवाच्यं वा परमपुरुषं वा एवम्भूतमपि प्राकृतमिव पप्रच्छुरित्यर्थः । वनस्पतीन् पप्रच्छुरित्यनेनोन्मत्ततुल्यत्वं दर्शितम् ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सङ्गताः मिलिताः आकाशवद्भूतेषु वहिरन्तरं सन्तं बाह्याभ्यन्तरदेशयोर्वर्तमानम् "अन्तर्वहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति श्रुतिः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गायन्त्य इति । गानमत्र गोकुलप्रसिद्धं पूतनावधादिमयं गानान्वेषणयोर्यौगपद्यमिदं गायन्त्य एव भ्रमन्ति मध्ये मध्ये तु पृच्छन्ति पुरुषं सर्वान्तर्यामिरूपमपि अत एवाकाशवत् भूतेष्वन्तरं वहिश्च व्याप्य सन्तमपि पप्रच्छुः । तत्र हेतुः । अमुं तासु तु निजप्रेमालम्बनरूपेणैव स्फुरन्तमित्यर्थः । यद्वा । पुरुषं स्वनायकं पप्रच्छुः । तञ्च भूतेषु प्राणिषु आकाशवदन्तरं वहिश्च व्याप्य सन्तं पप्रच्छुः । तस्य तत्र तत्र सत्तां पप्रच्छुरित्यर्थः । किञ्चित् प्रतिविम्बं पृच्छन्तं पृच्छन्तीतिवत् । तादृशज्ञानञ्च तासां प्रेम्णा तत्र तत्र स्फूर्त्तेरेव "वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्या" इतिवत् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तास्ताश्चेष्टा हृदि कृत्वैव तस्थुरिति न अपितु तद्गानपूर्वकं वनाद्वनं च विचारयामासुरित्याह । गायन्त्य उच्चैरित्यादि । उच्चैरिति कदाचिद्दूरे वा गतो वर्त्तत इत्याशङ्क्य उच्चैर्गानम् अमुं श्रीकृष्णं संहता एव मिलिता एव कदाचिदात्ममध्ये कापि वियुज्येतेति उन्मत्तकवत् उन्मत्तिका इव अनुकम्पायां कन् न केवलं विचिक्युः पप्रच्छुश्च प्रच्छिर्द्विकर्मकः तत्रामुं श्रीकृष्णमिति मुख्यं कर्म भूतेषु आकाशवत् अन्तरं अन्तरे वहिर्वहिः च सन्तं पुरुषमात्मानमिति गौणं कर्म तत्र प्रष्टव्यान्तराभावात् तांहृक्ष्यीकृत्यैव पप्रच्छुरित्यर्थः । भूतेषु सन्तमिति मूतं लक्ष्यीकृत्येत्याद्यान्ते वनस्पतीनिति वनस्पतीन् प्रति इत्यर्थः । तेन गानं कर्म अमुमिति गौणं कर्म पुरुषमिति वनस्पतीनिति कर्मप्रवचनीयार्था द्वितीया वनस्पतीन् प्राप्येति वार्थः द्वारमित्युक्ते पिधेहीत्यादिक्रियाध्याहारेणान्वयबोधात् ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तापलीला भगवता उद्देशतस्ताश्च, सम्बन्धमुक्त्वा प्रथमं तापानिवृत्त्यर्थमन्वेषणं कृतवत्य इत्याह । गुणानामिव त्रयाणामेषामन्योऽन्योपमर्द्देन भगवदिच्छया विभाग इति न परस्परकार्यप्रतिबन्धकता आपाततः अतो यदा प्रपञ्चसम्वेदनं तदा पृथग्वत्य इत्याह । गायन्त्य इति । प्रथमतो मिश्रभावात् गायन्त्यो जाताः शब्दो हि धूमवल्लोके बाह्याभ्यन्तरयोगतः विराजते विनिर्गच्छन् तारतम्यं च गच्छति अतोऽत्र धर्मिधर्माणामाधिक्यात् ज्ञानमुत्तमं यथा भगवतो गानात् स्वयमागत्य सङ्गताः एवं स्वयं भगवतः आगत्यर्थं जगुः स्फुटं "कृत्रिमत्वात्तु भावस्य मिलिताश्च स्वतोऽन्यतः । ततो विशेषविज्ञानात् तिरोभावोऽस्फुरत् स्फुटः" तदा विचिक्युः क भगवानस्तीत्यन्वेषणं कृतवत्यः तत्रापि न सर्वात्मना तिरोभावः स्फुरित इति अन्वेषणेऽपि अनियतवृत्तयो जाता इत्याह । उन्मत्तकवदिति । अज्ञात उन्मत्तः उन्मत्तकः कुत्सितो वा स यथा स्वपरविवेकं न जानाति वस्त्राद्विरहितश्च भवति एवमवस्थां प्राप्ताः एकस्माद्वनाद्वनान्तरं गताः किञ्च न केवलमन्वेषणमात्रं किन्तु उन्मत्तवत् पृच्छन्ति स्मेत्याह । पप्रच्छुरिति । शुको हि भगवत्स्वरूपाभिज्ञः आनन्दमात्रकरपादमुखोदरादिकृष्णं सर्वत्रैव विद्यमानं पश्यति यदि भक्तिसहितं ज्ञानमाविर्भवति तदान्योऽपि पश्यति सर्वत्रैव तिरोधाननाशात् तादृशमेताः परिच्छिन्नं मत्वा पृच्छन्तीति नासामज्ञानकथनार्थमाह । आकाशवदन्तरं वहिर्भूतेषु सन्तमिति बाह्याभ्यन्तरविवेकहेतुराकाश इति पूर्वं निरूपितं तद्वदेवायमपि अत एवाकाशस्य ब्रह्मलिङ्गत्वम् एतादृशं सर्वत्रैव विद्यमानमदृष्ट्वा आत्मनि विचारं त्यक्त्वा चेतनांश्चापृच्छ्

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्थावरान् पृच्छन्ति वनस्पतीन् पप्रच्छुरिति ते हि वैष्णवा इति मूढा अपि वैष्णवा एव हि विष्णुगतिं जानन्ति न त्वत्यन्तं निपुणा अप्यवैष्णवाः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

यदा च स तासामुन्मादः स्वप्रौढिमानं विहाय मन्दीबभूव तदा ता अर्धबाह्यानुसन्धानवत्यो यथा चेष्टन्ते स्म तद्वर्णयति । गायन्त्य इति । कान्तविच्छेदेन दुःखिन्यो वयं व्रजस्त्रियस्तमन्वेषयामः इति बाह्यानुसंधानं संहता मिलिता वनाद्वनं गच्छन्त्यः उन्मत्तकवदीषदुन्मत्ता इव अल्पार्थे कः प्रत्ययः पुरुषं श्रीकृष्णं वनस्पतीन् पप्रच्छुरित्युन्मादलक्षणं ननु सर्वानुख्यया वृन्दावनेश्वर्या सह कृष्णस्तदा सुखेन रमत एवेति जानीमः किन्तु तद्विरहदुःखोन्मत्तानां तासां गोपीनामुन्मादप्रश्नादिकं स जानाति न वेत्यतो विशिनष्टि । भूतेषु सर्वेष्वेव अन्तरं बहिश्च आकाशवद्व्याप्य सन्तमपि तेन कृष्णस्वरूपस्य परिच्छिन्नत्वेऽपि सर्वगतत्वात्तासां प्रश्नादिकं स तत्र तत्रैवालक्ष्यमाणः शृणोत्येवेति द्योतितम् ॥ ४ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

ततश्चोन्मादस्यानवस्थितिस्वभावात्किञ्चिदवधानेनाधिगतदेहानुसन्धानानां कायिकीमपि चेष्टामाह । गायन्त्य इति । यद्यपि त्यागेनार्त्तिदोऽसौ तथाप्यमुमेव गायन्त्य इति सम्बन्धः । गानं यथा

> नाथ हरे ! वन नाथ हरे ! करुणां कुरु परिजननिकरे ।
> त्वर्दितचित्तास्तव सुखचित्ता नान्यनिमित्ताः प्राणपते ! ॥
> रसिकशिरोमणिरसि हृदयंगमरमणमहाशयविमलमते ! ।

इत्यादि उच्चैरित्यार्त्तिभरस्वभावादेव संहताः सम्यगेकमत्येन मिलिताः एवं च मैत्री सूचिता मनोवृत्तिमयी प्रीतिर्मैत्री स्पर्शादिकोचिता सा च परस्परं सख्येनैवेत्युक्तमलङ्कारकौस्तुभे वनाद्वनं विचिक्युः अमृगयन् अमुमेवोच्चैः परिवृत्त्यान्वयः उन्मत्तकवदित्यल्पार्थे कन् ततश्चावरोहः सूचितः वनस्पतीन् पप्रच्छुश्च कमित्याकाङ्क्षायामाह । पुरुषं स्वनायकं तञ्च भूतेषु स्थावरजङ्गमात्मकेषु आकाशवदन्तरं बहिश्च सन्तं साक्षादिव सत्तया स्फुरन्तं तादृशस्फूर्तिश्च प्रेमविवर्त्तविशेषादेव "वनलतास्तरव आत्मनि विष्णुमित्यादिवक्ष्यमाणवत् तत्र बहिः स्फुरणं दूरतः अन्तःस्तु निकटादिति विवेकः तदेवं सत्युन्मादेनैवानिन्द्रियेष्वपि प्रश्नः सङ्गच्छत इति नचेदसंभावितं मौढ्योदितान्यत्रापि तथा दृष्टत्वात् तथाहि

> कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाकोटकम् ।
> वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ॥
> वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते ।
> न छायापि परोपकारकरिणी मार्गस्थितस्यापि मे ॥

इत्यादि वस्तुतस्तु पृच्छेर्द्विकर्मकत्वाद्यमर्थः अमुं श्रीकृष्णमिति मुख्यं कर्म भूतेष्वाकाशवदन्तरं बहिश्च सन्तं पुरुषमात्मानमिति गौणं कर्म तत्र प्रष्टव्यान्तराभावात्तं लक्ष्यीकृत्य च वनस्पतीन् पप्रच्छुः किम्वा वनस्पतीनिति कर्मप्रवचनीयार्था द्वितीया ततश्च वनस्पतीन् प्राप्येत्यर्थः । अथवा प्रथमश्लोके कान्तभावानां चेष्टा द्वितीये च नित्यप्रेयसीनां तृतीये नित्यसहचरीणामिति क्रमो ज्ञेयः ततश्चायमर्थः वनस्पतीन् प्राप्य तदात्मानं पप्रच्छुः तेषामात्मा च द्विविधः परिकररूपो वनस्पतिरूपश्च तत्राद्यो नित्यासिद्धत्वादासां ज्ञातचर एव दिव्योन्मादेऽपि तमेव लक्ष्यीकृत्य पप्रच्छुरित्यर्थः "पश्याम चान्तर्नयनैः किशोरीं तथा किशोरं प्रचुरं प्रपन्ना" इत्यादिना पुराणादौ दर्शितत्वात् ॥ ४ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अथ प्रेमविकलत्वादुन्मादस्य दिव्यदृष्टिसम्पादकत्वसूचकं तदन्वेषणप्रकारमाह । गायन्त्य इति । संहता अमुमेवोच्चैर्गायन्त्य उन्मत्तकवद्वनाद्वनं विचिक्युरित्यन्वयः तत्र संहता इत्यनेन ईर्ष्यामात्सर्यद्वेषादित्यागेन भगवत्परिजनसङ्गो भगवन्तमन्विषतां प्रेमपथप्रवृत्तानां प्रथमं साधनमुपादिष्टं गायन्त्य इत्यत्र "नाहं वसामि वैकुण्ठे योगिनां हृदये न च । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ! इत्यादिभिर्भगवतो गुणगानप्रियत्वाद्भगवज्जनसमागमे गुणगानमुपदिष्टम् उच्चैरिति—

> शृण्वन् सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ।
> गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥

इत्यत्र विहितगानगतविलज्जत्वोपदेशः । अमुमेवेति । प्रत्ययमातत्येन तदेकपरत्वमुपदिष्टं नत्वन्यत्र द्वेषः उन्मत्तकवदित्यत्रोच्चैर्गानमपि न दम्भेन किंतु प्रेमपरवशतया देहाद्यनुसंधानराहित्येनेति ध्वनितं तदप्युक्तम्—

> एवं व्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।
> हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥

इति—

वनाद्वनमित्यनेन यत्र यत्र प्रियप्राप्तिसम्भावना तत्र तत्रान्वेषणोक्त्या मूढग्राहेण स्वसम्प्रदायाभिनिवेशनान्यसत्सङ्गाभावनिवृत्तिर्दर्शिता विचिक्युरिति प्रियान्वेषणे अनलसत्वं तं विना विश्रामाभावश्च दर्शितः किं च तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवयेति वचनात् परिप्रश्नाभावे भगवदवगत्यसम्भवात्तदपि स्वाचरितेनैव बोधयन्ति तत्र गुरौ प्रश्नस्यावश्यकत्वेऽपि न गुरावेव प्रश्नेन तद्वेदनमित्यस्ति कश्चिन्नियमः किन्तु भगवन्मार्गप्रदर्शकानां सर्वेषां गुरुत्वमिति यत्र यत्र भगवदुपदेशस्य यथा कथञ्चिदपि सम्भावना तत्र सर्वत्र प्रश्नविधानाय परिप्रश्नेनेत्युक्तं तमनुसृत्य सर्वत्र प्रश्नं कृतवत्य इत्याह । पप्रच्छुरिति । भगवतः सर्वत्र प्रश्नोपयोगमाह । आकाशवदिति । भूतेषु प्राणिषु अन्तरं प्रत्यगात्मरूपेण बहिः सर्वानुगतसच्चिदात्मना सन्तमाकाशवद्व्याप्तं पुरुषं वनस्पतीन् पप्रच्छुः यद्वा अन्तरं पुरुषं प्रत्यक्तया पुरिशयं बहिश्च भूतेषु पृथिव्यादिषु कारणं सदात्मनानुगतम् अहमात्मा गुडाकेश सर्वभूताशयस्थितः । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति भगवद्वचनात् तत्राकाशस्य देशकालपरिच्छेदशून्यत्वेऽपि वस्तुपरिच्छेदवत्तया त्रिविधपरिच्छेदरहितभगवद्दृष्टान्तत्वासम्भवेऽपि न्यून-

दृष्टो वः कच्चिदश्वत्थ ! प्लक्ष ! न्यग्रोध ! नो मनः ।
नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥

### श्रीरामनारायणकृतभावभावविभाविका ।

स्यापि चन्द्रकमलादेर्मुखनेत्रदृष्टान्तत्ववत्तदुदाहरणं वनस्पतीन् पप्रच्छुरित्यत्र प्रेमोन्मादनिदर्शनं प्रसिद्धमेव किञ्च मानिनां स्वबुद्ध्यभिमानेनान्यत्र कुशलेष्वपि जडत्वबुद्धिः प्रेमिणां तु तृणादपि सुनीचेन तरोरपि सहिष्णुना । अमानिना मानदेन कीर्तनीयः सदा हरिरित्यादिवचनात् स्वाभिमानाभावेन न कुत्रापि जडत्वगतिरिति भावः । वस्तुतस्तु प्रेमोन्मादो भूतदिव्यदृष्ट्या वृन्दावनद्रुमादिकं नाचेतनं किन्तु मुनिसुरादिरूपमिति पश्यन्त्यः प्रेमपथमुपदिशन्त्यश्च पप्रच्छुः ॥ ४ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

एवं तदात्मतां प्राप्तानां लीलामुपवर्ण्य पुनः प्राप्तस्वशरीरानुसन्धानानां चेष्टामाह । गायन्त्य इति । अहो येन वयं रमिताः स प्रेष्ठ इदानीं क्व गत इति विचिन्त्य संहता मिलिताः प्रथमं प्रेष्ठमेव गायन्त्यः पूर्वं यथा वयं तदीयं कलगीतमाकर्ण्य झटिति तत्समीपमागतास्तथा ऽस्मद्गीतमाकर्ण्य सोऽप्यागमिष्यत्यस्मत्सन्निधावायास्यतीत्याशयेन तथा जाता नागते प्रेष्ठे उन्मत्तकवद्वनाद्वनं विचिक्युः अस्मिन्वने प्रेष्ठः स्यादित्याशया तत्र वने प्रति वृक्षादिकमन्वेषणं कृतवत्यः परिपूर्णत्वात्तदतिरिक्तस्य सर्वस्याप्यनिरूपणाच्च तदन्वेषणतत्प्रश्नयोः परमोन्मत्तचेष्टितत्वमित्यभिप्रायेणोन्मत्तकवदित्युक्तं मयेति द्योतनायाऽऽहाऽऽकाशवदन्तेष्वन्तर्बहिः सन्तमत एव पुरुषं पूर्णं सर्वात्मानमन्वेषणाद्ययोग्यमित्यर्थः । निवृत्तिपक्षे आकाशवत्सर्वगतश्च नित्यः सत्यं ज्ञानमनन्तं ब्रह्मेत्येवमनुमेवाकाशवदन्तरं बहिश्च भूतेषु सन्तं पुरुषं गायन्त्यः सोऽन्वेष्टव्य इति तं विचिक्युस्तस्यान्वेषणं प्रतिपादयामासुः तथा गुहाहितं गह्वरेष्ठं पुराणमित्यन्तःकरणलक्षणस्य वनस्पतीन् उन्मत्तकवदविद्यावशं सुखमात्मविशिष्टमन्तःकरणं वनं तस्माद्वनाद्वनं तद्वृत्ति विशिष्टादितरवृत्तिनिर्विशिष्टं तथाता विजिज्ञासितव्य इति प्रश्नपूर्वकं विचारं वनस्पतीन् अन्तः करणवनस्पतीन् सत्त्वगुणादीनुद्दिश्य बोधयामासुरित्यर्थः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च संहताः समुदिताः अमुं श्रीकृष्णं यांर्थं गायन्त्यः वनाद्वनं गच्छन्त्यो विचिक्युः अमृगयन् भूतेषु अन्तर्मध्ये बहिश्च सन्तं पुरुषं श्रीकृष्णं वनस्पतीन् उन्मत्तकवत् पप्रच्छुश्च भूतेषु सन्तमित्यनेन तत्र तत्र तासां प्रेमोद्रेकविलसितं विरहव्यथां श्रीकृष्णस्वपदवदेवेति सूच्यते ॥ ४ ॥

---

### भाषा टीका ।

फिर सब इकट्ठी हो वाही प्राणप्यारे को ऊंचे स्वर ते गान करत बावरे की नांई या वन ते या वन में जाय श्रीकृष्ण को ढूंढत भई जो परमात्मा आकाश की नांई सब भूतों के बाहर भीतर सर्वत्र है वा परम पुरुष को पेडों ते पूंछत भई ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्प्रपञ्चयति नवभिः । तत्र महत्त्वादेते पश्येयुरित्याशयाश्वत्थादीन् पृच्छन्ति । दृष्ट इति । प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोर इव गतो वो युष्माभिः किं दृष्ट इति ॥ ५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

वो युष्माभिः युष्मदीयो वा सम्बन्धज्ञापनं तद्दर्शनसम्भावनार्थं ततः स्नेहेन कथनार्थं च यद्वा प्रेमभरस्वभाव एवायं येन निजभावोऽन्यं स्वसदृशं लक्ष्यीकृत्योच्यत इति प्रत्येकं पृथक् सम्बोधनं वैष्णवत्वेनादरात् तत्राश्वत्थस्य विष्णुविभूतित्वेन वैष्णवत्वं प्रसिद्धमेव वटे वटे च मां विद्धीत्यर्जुनं प्रति भूतलवर्तिमुख्यश्रीमूर्त्तिप्रसङ्गे श्रीभगवदुक्तेर्न्यग्रोधस्य तथा तयोः साहचर्येण प्लक्षस्यापि श्रीविष्णुरुद्रब्रह्मणां क्रमेण ते अधिष्ठानानीति केचित् यद्यपि विरहविह्वलतया उन्मत्तवत् तान् प्रति प्रश्नास्तादृशाभिप्रायो न घटते यद्यसौ क्व कुत्रापि स्वामिपादैर्व्याख्यातोऽस्ति स तु निवृत्तिपरत्वं पञ्चाध्यायीति व्यक्तीकरिष्याम इति स्वप्रतिज्ञानुसारेणैव न तु श्रीव्रजदेवीभावानुसारेण अतः केवलं पुरतो दृश्यमानान् प्रत्येव प्रश्नः तथापि पूर्वापरवाक्यसङ्गत्यर्थं तेषां व्याख्यानुसारेणैव किञ्चिदुल्लिख्यते नन्दसूनुरिति निजस्वामिनं प्रति तथैवोक्त्युपपत्तेः किम्वा रासिकताद्यभिप्रायेण एवमग्रेऽपि ननु किमर्थमसौ युष्माभिः पृच्छ्यते इत्यपेक्षायामाहुः । नो मनो हृत्वा गत इति हृत्वेति मनसो रत्नवद् व्यञ्जते अतो नष्टदेशिच्चेनागतास्तं चोरं साधून् युष्मान् पृच्छाम इति भावः । कच्चिदिति प्रश्नात् तर्हि कथ्यतामिति शेषः । विरहविह्वलतया वाक्यसमाप्त्यसम्भवात् तत्रापि यत्नात् सम्यगन्वेषयामः किम्वात्र भवद्भिर्दृष्टे सत्यगुमीयते सोऽत्र निकटेऽस्तीति तथाप्यागत्य प्राणान् निरुध्य रक्षेमेतिभावः । यद्वा उन्मत्तकवदित्युक्तेरचन्ततिविवशतया प्रत्युत्तरापेक्षाद्यसम्भवात्तथैव वाक्यसमाप्तिरिति ज्ञेयम् एवमग्रेऽपि ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यो युष्माभिः प्रत्येकं पृथक् सम्बोधनं श्रीकृष्णप्रियत्वेनादरात् । ननु किमर्थमसौ युष्माभिः पृच्छ्यते तत्राहुः । नो मनो हृत्वा गत इति । हृत्वेति मनसो रत्नत्वं व्यज्यते । अतो नष्टोद्देशित्वेनागतास्तं चौरं साधून् युष्मान् पृच्छाम इति भावः । नन्दसूनुरिति स्वविश्वासहेतूपन्यासस्तथापीत्यर्थः । नन्देति । यौगिकवृत्त्या तस्य प्रत्युत सर्वब्रह्मानन्दहेतुत्वमेव युज्यत इति भावः । अत एव दुःखेन साक्षात्तन्नामोक्तिरपि नाक्षात् श्रीकृष्णनामानुक्तिस्त्वीर्ष्ययापि । अपिशब्दाच्चोरस्य नाम्नोऽग्राह्यत्वेन सूचकस्यापि तद्वदेवेत्युक्तः । कच्चित् प्रश्ने । भवद्भिर्दृष्टे सति चास्यामेव दिशि विहरतीति सगाश्वासमासाद्यान्वेषयाम इति भावः ॥ ५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवद्विरहव्यथामुषितचेतनाचेतनतिर्यगतिर्यग्विवेकानां प्रश्नप्रकारमाह नवभिः । अश्वत्थादीनां प्रत्येकसम्बोधनेन प्रश्नोऽपि प्रत्येकमवगन्तव्यः प्रेमहासावलोकनैरस्माकं मनोहरत्वाच्चोर इव नन्दसूनुर्गतः यो युष्माभिः किं दृष्टः अश्वत्थादीनां महत्त्वाद्यशङ्कत्वात्तत्राश्वत्थस्य भगवद्विभूतित्वाच्च ते पश्येयुरित्यादावश्वत्थादीन् पृच्छन्ति ततो महान्तः पुष्पैर्बहूपकारिणश्चेति कुरबकादीन् पृच्छन्तीत्येवं यथा सम्भवं केचिद्व्याचक्षते ॥ ५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उन्मत्तत्वं स्पष्टयति । दृष्ट इति । हे शब्दः प्रत्येकमभिसम्बध्यते हे न्यग्रोध वट ! न्यक् अधः रोधः आवरणं यस्य सः पादैरधोभूमिमावृणोतीति किंशुकः पलाशः पलाशः किंशुके पर्णे इत्यमरः रक्तपुष्पवान् ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्दसूनुरिति स्वविश्वासे हेतुः तथापीत्यर्थः ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदेव प्रपञ्चयति । दृष्टो व इत्यादि । अश्वत्थप्लक्षन्यग्रोधा वनस्पतयः तैरपुष्पाद्वनस्पतिरिति तथा कारणं विनापि फलवत्त्वेऽमी भाग्यभाज एव तदयमेभिर्दृष्टोऽसावित्याशयेन तानेव प्रथमं पप्रच्छुः ननु तत्पृच्छया किं व इष्यत आहुः । नोऽस्माकं मनो हृत्वा गत इति भवत्यो बह्वयः स त्वेकः कथमहार्षीदित्यत्राहुः । नन्दसूनुः नन्दस्य व्रजराजस्य पुत्रः तेनासौ बलभिवर्तीत्यर्थः । केन साधनेनापहृतं वो मनस्तत्राहुः । प्रेमहासावलोकैनैरस्माकमन्तरन्तस्थं मनो बहिराकृष्येत्यर्थः ॥ ५ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्रापि प्रथमं विष्णुब्रह्मशिवतां लोके प्राप्ताः अश्वत्थप्लक्षवटास्तान्पृच्छन्ति । दृष्ट इति । अश्वत्थो हि वैष्णवो वृक्षः विष्णुवत् लोके सन्मानमर्हतीति प्रायेणायं ज्ञास्यति तथाप्ययं स्तब्धः स्वोत्तमभावनया न ज्ञास्यतीति तदर्थं हेतुभूतं नामाह । अश्वीस्तिष्ठत्यस्मिन्निति अश्वत्थः लोका स्त्वश्वेति अस्मिंस्त्वश्वस्थितीति अश्वे रूपं कृत्वा यदश्वत्थे तिष्ठत इति श्रुतेः तर्हि प्राजापत्योऽश्व इति तदपेक्षया प्राजापत्यो वृक्षः प्रष्टव्य इति प्लक्षं पृच्छन्ति । प्लक्षेति । तत्रापि तस्या ज्ञानं नाम्ना वदन्ति अयं हि मनुष्याणामज्ञानार्थं पावित्र्यक्षारणादुत्पन्नः अपवित्रः लोकानामज्ञानहेतुरेव अतः कथं वक्ष्यतीति पशुना वै देवाः स्वर्गं लोकमायन् ते ऽमन्यत मनुष्या नो न्वाभाविष्यन्तीति तस्य शिरश्छित्त्वा मेधं प्राक्षारयन् स प्लक्षोऽभवदिति श्रुतेः तर्हि कर्मसम्बन्धरहितवैष्णवधर्मोपदेष्टा शिवः प्रष्टव्य इति तद्रूपं न्यग्रोधं पृच्छन्ति । न्यग्रोधेति । तस्यापि दूषणं नितरामग्राण्यधो यस्येति अतोऽन्ते हीनभावं गच्छतीति अग्रे गमने हेतुर्भविष्यति वः युष्माकं सम्बन्धी भवाद्भिः किं दृष्टः प्रश्नसम्भावनायां कच्चिदिति दृष्टोऽस्माभिः पूर्वं सर्वदैव वातः किम्भवनीनामितिचेत् नो मनः हृत्वा गत इति ननु स विष्णुः कथञ्चौर्यं करिष्यतीति तत्राहुः । नन्दसूनुरिति । नन्दस्य चेत्पुत्रो जातः तदा तत्कार्यं कर्तव्यं ते हि दधिदुग्धादिचौर्यं कुर्वन्ति अतो मनश्चौर्यमपि नात्यन्तं विरोधि भर्तृनामाग्रहणं वा अत एव हरणपर्यन्तं प्रभुपुत्र इति न ज्ञानः अन्यथा भोगं परित्यज्य कथं गच्छेत् नन्वन्तःस्थितं मनः कथं गृहीतमित्याशङ्क्य त्रिविधं मनः त्रिभिरपि धर्मैर्गृहीतवानित्याह । प्रेमहासावलोकनैरिति । प्रेमपूर्वकहास्यसंहितावलोकनानि मनोहराणि तमो रजः सत्त्वभावा उक्ताः प्रेम्णा अन्तः प्रवेशः हास्येन ग्रहणमवलोकनेन हरणमिति ॥ ५— ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रश्नं प्रपञ्चयति नवभिःतत्रात्युच्चतरत्वादेते दूरवर्तिनमपि मा वश्यं पश्येयुरिति सम्भाव्य पृच्छन्ति । दृष्ट इति । प्लक्षः पीलुखदिरेति ख्यातः न्यग्रोधो वटः किमर्थं पृच्छथेति तेषामपि प्रश्नमाशङ्क्याहुः नन्दस्य साधोः सूनुरपि नो ऽस्माकं स्त्रीजनानां मनो हृत्वा गतः प्रेम्णः सर्वलोकोन्मादकेन महामोहनौषधविशेषेण सहितैर्हासावलोकनैः प्रेषितैर्भृत्यैरस्माकं नेत्रद्वारतोऽन्तःकरणमन्तः पुरं प्रवेशितैर्मनोरत्नं चौरयित्वा पलायित इत्यर्थः क्षणं स्थित्वा अहो किमेताभिः क्षुद्राभिरित्यसगानवजानन्तः स्तब्धा अपि प्रत्युत्तरं न ददते तदलमेतैः क्षुद्रफलैः परोपकारधर्मानभिज्ञैरप्रफुल्लैः अनुद्भ्रान्तःकरणैरिति तान् विहायान्यत्र गताः ॥ ५ ॥

---

केनचित्कृता विशुद्धरसदीपिका।

तत्प्रपञ्चयति। दृष्ट इति। गोपकन्यानामियमुक्तिः तारल्येनाग्रेसरत्वादिति ज्ञेयं यद्यप्यासां प्रकटलीलान्तःपातित्वात्तेषां वनस्पतीनां परिकररूपस्फूर्त्यसम्भवस्तथापि कासांचिन्नित्यसहचरीसङ्गेन तथाभावान्न विरोध इति प्राधान्येनैवमुक्तं कच्चिदिति कोमलालापे अश्वत्थ इति श्रीभगवद्विभूतित्वादत्युच्चशिखरत्वाच्च प्राथम्यं श्लेषेण न श्वः स्थास्यतीत्यश्वत्थ इति निर्वेदसूचनं तथाहि—

भोभो भूरुह! ते दिशो दश गताः शाखाः शिरश्चाम्बरम्
गोपः कोऽपि तमालकोमलरुचिः कच्चिन्न दृष्टस्त्वया॥
एवं ताभिरुदाहृते वत मुहुर्वक्तुं वचोऽनीश्वरः।
पत्रैरेव निसर्गचञ्चलतरैः प्रत्युत्तरं दत्तवानिति॥

ततश्च मया न दृष्ट इति चलद्दलतया तच्चेष्टितमध्यवस्याहो वत सख्यो युक्तमुक्तमाक्षिरहितेनानेन कथं दृश्य इति परस्परमवगत्याक्षिमन्तमुद्दिश्याहुः। लक्ष्येते प्रकृष्टे अक्षिणी यस्येत्यकारस्य पूर्वरूपत्वमार्षं रलयोरैक्यं चेति सिद्धम्। अथ पश्यन्नपि वागिन्द्रियाभावाद्वक्तुं न पारयतीति तद्धन्तं वटमध्यवस्याहुः। न्यग्रोधेति। नवपल्लवान्यस्य जिह्वाकाराणि प्रकल्प्य न्यञ्चि अधः कृतानि रोधांस्यग्राणि येनेति व्युत्पत्तेः अस्मासु तत्स्थितिं सूचयितुमेव नम्रो जात इति भावः। कं पृच्छथ इत्याशङ्क्याहुः। नन्दसूनुर्नो मनो हृत्वा गत इति। मनसो रत्नत्वं सूचितं कैरित्याकाङ्क्षायां प्रेमेत्यादि तत्र प्रेम्णा वशीकृतं हासेन हस्ते कृतं अवलोकनेन बहिर्निष्कासितमिति तथोक्तं यद्वा चित्तादिभिर्हृतं कथं हृतमित्यत आहुः प्रेम्णा चित्तावरणं भेदितं हासेन बुद्ध्यावरणमवलोकनेनाहङ्कारस्येति प्रतिपदमवसेयं नन्देति साक्षाद्गुरुनामग्रहणं मुग्धत्वादेव हृत्वेत्यादिकमपि बालभाषितमेव वः युष्माभिरिति प्रत्येकमामन्त्रणमुक्ताभिप्रायेणादरणीयत्वादिति दिक्॥ ५॥

---

श्रीरामनारायणकृतभावभावविभाविका।

अत्र प्रश्नप्रकरणे रसविशेषास्वादाय प्रश्नयोग्यत्वतन्निवृत्तियोग्यत्वाभ्यां नामव्युत्पत्तयः प्रदर्श्यन्ते तत्र यत्र काचित्काचिदप्रसिद्धकल्पना उणादिगणान्तःपातितया तत्साधुत्वं ज्ञेयं तत्राश्वत्थप्लक्षन्यग्रोधान् उच्चतनुत्वेन दूरं पश्यतो हर्म्यजहरविभूतित्वेन तद्रहस्यज्ञान् वनस्पतित्वेन वनजनपालकान् चौरग्रहणाधिकारिणश्च मत्वा पप्रच्छुस्तदाह। दृष्टो व इति। कच्चिदिति कोमलालापे तेन स्वकार्यप्रार्थने सामो दर्शितः यद्वा उ डानस्मान्किं पृच्छथ तत्राहुः। कच्चिदिति कदिति कुत्सितं चिदपि चेतनवर्गोऽपि यस्मादिति तस्य सम्बोधनं तथा परोपकारित्वात् तीर्थवासित्वाद्वृक्षादिद्वन्द्वराहित्यात् भगवद्विभूतित्वाच्चेति भावः। हे अश्वत्थ! न श्वः प्रभातपर्य्यन्तमपि स्थास्यतीति विश्वासार्हमिति भगवत्स्वरूपातिरिक्तस्य सर्वस्यानित्यत्वयुक्त्या स्वीकृतपरोपकार! हे प्लक्ष रलयोः सावर्ण्यात्प्रक्षप्रकृष्टतया परोपकारार्थं तीर्थे क्षयति निवसतीति तथा हे न्यग्रोध! न्यक्कारं याञ्चा नञ्जीकारं रोधयतीति तथा परोपकारित्वेनास्मदुपकारोऽपि विधेय इति एवं सम्बोध्य स्वप्रयोजनमाहुः। नन्दसूनुर्वः युष्माभिर्दृष्टः किमर्थं पृच्छथ तत्राहुः। हृत्वा गतः कस्यापि केनचिद्धरणे किम्भवतीनां तत्राहुः। न इति। किमपि पयोदधिफलादिहरणे किमन्वेषणेन तत्राहुः। मन इति। मनसः सर्वप्राधान्यात्तद्धरणे न किमप्यवशिष्टमिति भावः। ननु हृदन्तर्गतं मनः कथं हृतं तत्राहुः। प्रेमहासावलोकनैरिति। प्रेमस्नेहसुपक्वे मृदुमधुरहासे तीक्ष्णदृष्टिलक्षणं मदनमदेन मादकं मदनं मेलयित्वा तदा स्वादनेन मोहयित्वा हृत्वा गतः ननु गोपजातीयानां चौर्य्यं स्वाभाविकमेवेति किङ्कथनीयं तत्राहुः। नन्दसूनुरिति। नन्दस्य न समानगोपत्वं गोपराजसुतस्य तु स्वज्ञातिचौर्य्यमनुचितमेवेति भावः। किं युष्माभिर्दृष्ट इति दृष्टो नवेति तस्य छलित्वात्सन्देहप्रश्नः उच्चत्वात्तद्विभूतित्वाद्दृष्ट एव वाच्यमस्मभ्यमिति एवं प्रश्नेऽपि यदा न ब्रूयुस्तदा एतेषां वृन्दावनतरुत्वेन चिरत्वेऽपि कच्चित्त्वं कुत्सितं चित्त्वं परोपकाराभावात् विभूतित्वेऽपि कृष्ण एव चौरस्तद्विभूतित्वमश्वत्थस्य तत्सहकारिब्रह्मरुद्रविभूतित्वे प्लक्षन्यग्रोधयोरिति चौरपक्षपातित्वमेव वनस्पतित्वेऽपि कलिनृपाणामिव चौरसाहाय्यम् उच्चतनुत्वमप्येषां निर्बुद्धित्वसूचकं स्वनाम्नाप्यश्वत्थस्यानवस्थितत्वं प्लक्षस्यापि प्रकृष्टात्सतः क्षयति नाशयतीति सद्द्वेषित्वं न्यग्रोधस्यापि न्यक्कारेण रोधयतीति तथेति स्वनाम्नैव सतिरस्कारित्वं गम्यते इति तानुत्सृज्यान्यत्र गताः॥ ५॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तत्कृतप्रश्नान् प्रपञ्चयति। दृष्ट इति।तत्रादौ विष्णुप्रजापतिरुद्रावतारभूता एतेऽश्वत्थादयोऽवश्यं पश्येयुरत एते प्रष्टव्या इत्याशयेनाश्वत्थादीन् पृच्छन्ति। हे अश्वत्थ हे प्लक्ष हे न्यग्रोध! वो युष्माभिः कच्चित्किं नन्दसूनुर्दृष्टः नन्देन परमभक्तेन जन्मान्तर आराध्य पुत्रत्वेन लब्धः अस्मदनुग्रहाय वा तत्पुत्रत्वेन प्रकटितः अत एव नोऽस्माकं मनः प्रेमहासावलोकनैर्हृत्वा गतः अन्तर्हितः यद्यपि स सर्वत्र व्याप्तस्तथापि नन्दसूनुत्वेनास्माकं प्रेष्ठोऽतस्तद्रूपोऽन्विष्यते युष्माभिर्दृष्टश्चेत्तर्हि करुणया वक्तव्यं तं लब्ध्वा सुखिन्यः स्याम इति भावः। यद्वा ननु विष्णुः कथं चौर्य्यं कृतवानित्याशङ्कानिरासार्थं नन्दसूनुरित्युक्तं तथा च यथा दुग्धादिचोरितवांस्तथा मनोऽपीति भावः। ततस्तेभ्य उत्तरमलब्ध्वा अहो अलक्ष्मीसंस्थानभूतः पशुना देवाः स्वर्गलोकमायन् तत्तस्य शिरः छित्त्वा मेदः प्राक्षारयन् स प्लक्षो ऽभवदिति श्रुतेरयमपि प्लक्षो लोकानामज्ञानहेतुरेव नितरां न्यग्राण्यधोभूतानि यस्य स्यधो दाष्टिर्न्यग्रोधोऽत एते न वदिष्यन्तीति विचार्यान्यत्र गताः अनभिज्ञपक्षे अत्युच्चतरत्वादेते दूरचरमप्यस्मत्प्रेष्ठमवश्यं पश्येयुरिति सम्भाव्य पृच्छन्ति यद्वा किमर्थं पृच्छथ इति चेत्तत्राहुः। नन्दस्य साधोः सूनुरपि नोऽस्माकं स्त्रीजनानां प्रेम्णा सर्वलोकमहामोहनैः एव विशेषेण हसितहासावलोकनैर्भूर्व्यश्चौर्यकर्मकुशलश्चिन्तनेत्रादिद्वारान्तःकरणलक्षणान्तः प्रवेष्टुं समर्थैर्मनोरत्नमञ्जूषां चोरयित्वा पलायितोऽतस्तं पृच्छाम इत्यर्थः। तत उत्तरमलब्ध्वा महत्त्वपूज्यत्वाद्यभिमानादेते ऽस्मान्क्षुद्राः प्रति अवज्ञया न कथयेयुरिति विचार्य्यान्यत्र गताः। मानिनीपक्षे एते सर्वलोकपूज्याः प्रष्टव्या इत्याशयेन पृच्छन्ति। दृष्ट इति। दृष्टश्चेद्वक्तव्यः यतो नो मनो हृत्वा नत्वस्माभिस्तस्य मनो दत्त

कच्चित्कुरवकाशोक नागपुन्नागचम्पकाः !।
रामानुजो मानिनीनामितो दर्पहरस्मितः ॥ ६ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

मितिभावः। ननु बलात्कथं भवतीनामन्तरस्थं मनो हृतवानितिचेत्तत्राहुः। प्रेमेति। स्वागतमित्यादिवचनैराविष्कृतेन प्रेम्णाऽन्तः हासेन ग्रहणमवलोकनैर्हरणं ननु तदुपरि भवतीभिर्विश्वासः किमर्थं कृत इति चेत्तत्राहुः। नन्दस्य सर्वानन्दप्रदस्य परमविश्वसनीयस्य सूनुरतोऽस्मभ्यं सुखमेव दास्यतीति मत्वा विश्वासः कृत इति भावः। ततो ऽलब्धोत्तराः क्षणं स्थित्वा अहो किमेताभिरित्यस्मानवजानन्तः स्तब्धाः प्रत्युत्तरं न ददते तदलमेतैः क्षुद्राभक्ष्यफलैरफुल्लैश्चेति न्यग्रोधो रुधिर आवरणे नो प्लक्षन्यग्रो गच्छतीत्यर्थत्वात्प्रपूमयोग्यैश्चान्तर्बहिरत्यन्तकठोरैः परोपकारमाहात्म्यानभिज्ञैरिति विचार्य्यान्यत्र गताः निवृत्तिपक्षे गुणा न विदुरात्मानामित्युक्त्वाद्गुणाद्यमास्यतामाविष्कुर्वन्ति । दृष्ट इत्यादिना । अश्वत्थादिपदैः सत्त्वरजस्तमाऽभिधा गुणा गृह्यन्ते नोऽस्माकं प्रेम प्रसन्नतापूर्वकमवलोकनैः श्रवणादिरूपैः मनो हार्द हत्वा उद्धृत्य नन्दः आनन्दइवासौ सूनुश्चानन्दः स्वयंप्रकाशरूपः परमात्मा गतोऽत्रगतः स युष्माभिर्दृष्टः कश्चिद्भवद्भिरप्रकाश्य इति भावः सूनुः पुत्रे ऽनुजेऽर्के चेति मेदिनी ॥ ५ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उन्मत्तवत् प्रश्नप्रकारं वर्णयति। दृष्ट इति नवभिः। नोऽस्माक प्रेमहासविलसितावलोकनैर्मनो हृत्वा गतो नन्दसूनुः हे अश्वत्थादयः वो युष्माभिः कश्चित्किं दृष्टः अत्राश्वत्थादीनां महत्त्वादिरूपः कुरवकादीनां पुष्पादिभिः परोपकारित्वरूपः तुलस्यादीनां कृष्णचरणप्रियत्वादिरूपस्तत्तद्गुणविशेषः कृष्णसंनिधिभावनाजनकः सम्बन्धाश्चोच्यते ॥ ५ ॥

### भाषा टीका

वा पूछवे के हालको कहैं हैं गोपी बोलीं हे पीपर ! हे अमिली (पियाखल) हे वट ! नन्दराय को लाला अपने प्रेमवारे हसन बोलन चितवन ते हमारे मनको चोराय चलो गयो जो तुमने देखो हो तो बता दीजिओ ॥ ५॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

महान्तः स्वपुण्यैर्बहूपकारिणश्चेति कुरवकादीन्पृच्छन्ति। कच्चिदिति। हे कुरवकादयः दर्पहरं स्मितं यस्य सः इतो गतः कच्चिदृष्ट इति ॥ ६ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

महत्तमत्वादेतेऽस्मान् क्षुद्राः प्रत्यवज्ञया न नूनङ्कथयेयुरिति मत्वाऽन्यान् पृच्छन्ति। कच्चिदिति। कुरवकः शोणोऽम्लानः नागो नागकेसरः किमितः गतः यद्वा अत्र वर्त्तमाने पूर्वं दृष्ट इति पृष्टमधुना क्वित इति दूरतोऽपि दर्शनं सम्भवेत् तथापि न सुलभः स्यादिति. निकटागतस्य सतोऽत्रैव तत्पदान्यन्विष्य तैश्च तमन्वेषयाम इति भावः। ननु मानिन्यः कथं तं पृच्छथ तत्राहुः। मानिनीनामिति। तत्स्मितमात्रेणैव मानो न तिष्ठेत् केवलमात्मनो वैदग्धीविशेषेण तेनैवास्माकं मानो जनितो न तत्रास्माकमपराध इति किं वा तदानीमेव तत्स्मितेन मानो हृतः अत एवान्वेषयाम इति किं वा तादृशमहामोहनस्य विच्छेदेन क्षणमपि जीवितुं न शक्नुम इति पृच्छाम इति भावः ॥ ६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

महत्तमत्वादेतेऽस्माद् क्षुद्राः प्रत्यवज्ञया नूनं न कथयेयुरिति मत्वान्यान् पृच्छन्ति। कच्चिदिति. । कुरवकः शोणोऽम्लानः नागो नागकेसरः किमितो गतः। यद्वा अत्रान्तर्हितो वर्त्तते पूर्वं दृष्ट इति पृष्टम् । अधुनान्वित इति दूरतोऽपि दर्शनं सम्भवेत्। तथापि न सुलभः स्यादिति निकटागतस्य सतोऽत्रैव तत्पदान्यन्विष्य तैश्च तमन्वेषयाम इति भावः । गत इति च पाठे बहुत्र तन्मते टीकायामित इत्यध्याहृत्य व्याख्यातम्। रामानुज इति नन्दसूनुरितिवत्। ननु मानिनीनां युष्माकं कथं तेन मनो हृतं तत्राहुः। मानिनीनामिति। तासां दर्पहरं स्मितमपि यस्य तादृशोऽपीति तस्याविमृश्यकारित्वञ्च ध्वनितं दर्पो गर्वः। तदानीमेव तत्कृतेन कपटस्मितेन मानमयगर्वो हृतः। अत एवान्वेषयाम इति तथा तादृशमहामोहनस्य विच्छेदेन क्षणमपि जीवितुं न शक्नुम इत्यतः पृच्छाम इति भावः ॥ ६॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कच्चिदिति। हे कुरवकादयः ! मानिनीनां दर्पहरं स्मितं यस्य स रामानुजः इहागतः कच्चिदितीष्टप्रश्नद्योतकमव्ययं दृष्ट आगतश्च किन्तदस्मदिष्टमित्यर्थः। एवमुत्तरत्रापि ज्ञेयम् ॥ ६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कुरवकः करञ्जः नागः नागकेसरः पुन्नागः पुरुषस्तुङ्ग इतिदोग्धा जिह्मामधुरः ॥ ६—७ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इत इति इण धातोर्निष्ठाप्रयोगः मानिनीनां दर्पहरस्मित इति यश्च तादृशोऽपि गत इत्यविमृश्य कारित्वं तस्य व्यञ्जितम्॥६॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सख्य एभिरसौ न दृष्ट एव एषां कुसुमाभावात् समीपं स नायात् तेन सकुसुमानेव तरून् पृच्छाम इत्याहुः। कच्चिदित्यादि । कच्चित्प्रश्ने हे कुरवकादयः रामानुजः दृष्ट इत्यध्याहार्य्यः पूर्व एव वा आवर्तनीयः तस्यैवं कार्यमयुक्तं किं तदाहुः मानिनीनामस्माकं दर्पहरणमिति यत इत्याहुर्मानीनां दर्पहरस्मितः ॥ ६ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तपामनुत्तरं मत्वा एते अमुख्यफला महान्तोऽपि काकसेव्या एवेति ये महान्तः पुष्पवन्तः सुगन्धाः तान् पृच्छाम इति कुरवकादीन् पृच्छन्ति । कच्चिदिति ।कुरवकाशोकौ कामोद्दीपकौ एते कामवाणपुष्पाः नागो नागकेसरः पुन्नागश्च चम्पकश्च अतिसुगन्धपुष्पाः ते हि कामिनं व्यावर्त्तयन्ति अतः पश्चाप्येते ज्ञास्यन्तीति रामानुजः कच्चिद्भवद्भिर्दृष्ट इति पृच्छन्ति पूर्ववदेव प्रयोजनकथनं मानिनीनां दर्प्पहरं स्मितं यस्य व्यर्थमेव गतो भगवान् स्मितमात्रेणैव दर्पो गच्छति किं गमनेन भयं तु नास्त्येव यतो रामानुजः बलभद्रभ्राता भर्तृनामाग्राह्यमिति वयं सर्वा एव मानिन्यः स्थिताः अतोऽस्मद्दर्पदमनार्थं गतः प्रायेणैतैर्न दृष्टः कुत्सितरवात् कं सुखं यस्य रोदनप्रियोऽयम् अशोकश्च शोकनाशक एव नतु कस्यचित्सुखं प्रयच्छति नागोऽयं नाम्नैव भयानकः गजपक्षेऽपि पुंसामपि नागः चम्पकोऽपि परिणामविरसः अफलाश्चैते ॥ ६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुष्पोद्यानं प्रविश्याहो सत्यमेव एते शुद्धान्तःकरणाः प्रष्टव्याः यदहो स्वमकरन्दैर्मधुव्रतातिथीन् सेवन्ते इति । वृक्षानासाद्याहुः। कच्चिदिति. । कुरवकः शोणोऽम्लानः । नागो नागकेसरः । कच्चिद्गतः किम्वा कच्चिदिहैव निन्हुत्य स्थितो वेति भावः । ननु किमर्थं पृच्छथेत्याशङ्क्याहुः । मानिनीनां मानधनानामस्माकं दर्पं मानं हरति स्मितं यस्येति वयं निर्धनीकृता एवाभूमेति भावः । तदैवाकस्मिकेन पवनेन चालिताग्रशाखांस्तानालक्ष्याहो शिरोधूननेन वयं न जानीम इति ब्रुवते तदलममीभिः कठोरैः पुरुषजातिभिरित्यन्यतो जग्मुः ॥ ६ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

अहो सख्यो ! महत्तमत्वादेतेऽस्मान् क्षुद्रा इत्यवज्ञया नूनं न कथयेयुः अपि च वनस्पतीनामेषामप्रसूनत्वान्नन्दसूनुपरिचय एव नास्तीति तद्वन्तः प्रष्टव्या इति तानेव निर्दिशन्ति । कच्चिदिति । कुरवकः शोणोऽम्लानः नागो नागकेसरः पुन्नागः केसरः रामानुज इति तज्ज्येष्ठनामग्रहणात्कान्तभावाभिनिवेशेन साक्षात्तन्नामाग्रहणाच्च परकीयाभिमानिनीनामिदं वाक्यं प्रष्टव्येषु च नर्मसचिवत्वमपि सम्भावितम् अत एव मानिनीनां दर्पहरस्मितः निजदोषाविष्कारेण तत्परिकरप्रायेष्वेतेषु तत्प्रतिक्रिया च सूचिता यद्वा स्मितमात्रसाध्ये दर्पोपशमने किमनेन पलाय्य गतमित्यधीरत्वमुक्तम् ॥ ६ ।"

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अन्यान् पप्रच्छुः । कच्चित्कुरवकेति । तत्र कच्चिदिति सर्वत्र सम्भावनासम्भावनयोः पूर्ववत् कौ पृथिव्यां परोपकारतया रवः सुयशो यस्य स कुरवः स्वार्थे कः यद्वा कौ रवेण सुयशसा कं सुखं यस्येति व्युत्पत्तिद्वयेन परोपकारिणं यशस्विनं कृष्णस्यापि कौरवः सुयशो यस्यास्मत्सम्मोहनवेणुरवो वा यस्य तेनैव कौ विस्तृतस्वयशोरवेण सतां कं सुखं वा यस्माद्वेणुरवेण वा रसिकसखीनां कं सुखं यस्मादेव कुरवकत्वात् तत्समाननामसीलत्वेन तद्रहस्यज्ञं सुमनोविकासामोदाभ्यां चोपलक्षितकृष्णदर्शनाह्लादं मत्वा तं पप्रच्छुः । हे कुरवक ! रामानुजो नो मनो हृत्वा गतस्त्वयोक्तरीत्या समाननामगुणत्वात् दृष्ट इति पूर्वेणैवान्वयः तथा च नो ब्रूहीति प्रार्थना। ननु भवतीनामेव मानदोषेण तेन तथा कृतमिति स्वयमेव तत्प्रश्नोत्तरं सम्भाव्याहुः मानिनीनां दर्पहरस्मित इति। तथा चास्मद्दर्पहरणस्य तदीयस्मितमात्रसाध्यत्वादेतावन्नैर्घृण्यमनुचितमेवेति भावः। एवंप्रश्नेऽप्युत्तरालाभे यथा कृष्णो मृगयुरिव स्ववेणुगतिरवेण हरिणीरिव नो मोहयित्वा तन्मारणमिव विश्वासघाताचरणेन कुत्सितरवत्वात्कुरवकस्तथायमपि कुत्सितरवतया कुरवकत्वान्नावभाषते इति तमुत्सृज्यान्यत्र गच्छन्त्यः अशोकं दृष्ट्वा तरति शोकमात्मविदित्यादिश्रुत्यात्मस्वरूपकृष्णदर्शनं विना तदशोकत्वानुपपत्त्या तद्दर्शनं सम्भाव्य न शोको विद्यते यस्मादिति व्युत्पत्त्या पुनस्तत्त्ववित्त्वेन तरुतनुत्वेन करुणाशीलत्वञ्च सम्भाव्याशोकेति सम्बोधनेन त्वदुपसन्नानां नो नो शोको भवतु चन्दनद्रुमस्य स्वसमीपोपगतचन्दनत्वसम्पादनवदस्मदशोकत्वं सम्पाद्यतामिति पूर्ववत्सम्प्राथ्योत्तरमलब्ध्वा—

> यथा कण्टकविद्धाङ्गो जन्तोर्नेच्छति तां व्यथाम् ।
> जीवसाम्यं गतो लिङ्गैर्न तथाऽविद्धकण्टकः ॥

इत्यादिवचनात् शोकवानेव परशोकं ज्ञात्वा तन्निवृत्तय उपकरोति नाशोकः अयं चाशोकतया नास्मच्छोकं जानाति येनोपकारं विदध्यात् किञ्चाशोकस्यास्मद्विमुखद्रुमत्वात्सदद्वेषित्वमेव असंख्याताशोकवने साक्षाल्लक्ष्मीः सर्वमान्या सीता शोकग्रस्ता निवसिता तैर्बहुभिर्बहुमान्याया अपि तस्या एकस्याः शोकहरणाय वचनमपि नोक्तम् एकेनाशोकेन बहीनां नः शोकग्रस्तानां शोकापनोदस्य सम्भावयितुमप्यशक्यत्वाद्वृथात्र प्रश्न इति मत्वाग्रे गच्छन्त्यो नागपुन्नागाख्यौ वृक्षविशेषौ दृष्ट्वा न अगो नागः पुमांश्चासौ न अगश्चेति व्युत्पत्त्या पुलकादिना च तयोः समानद्रुमत्वाभावं निश्चित्य नागत्वादेव नागगतिकृष्णगतिज्ञत्वं

### श्रीरामनारायणकृतभावभावविभाविका ।

पुंनागभोगभुजङ्गकृष्णभोगोपयोगित्वं नागशयनस्य तस्य नित्यसहकारित्वं च सम्भाव्य स कृष्णः कृष्णनाग इव सुखोन्मुखमुखतया कामविषाग्निं नोऽङ्गेषु विस्तार्य सुरतागगतिनटनागरवरः नो मनो हृत्वा कृष्णो गतः इति प्रश्नेऽप्युत्तरमनवाप्यायं नागः स्वयं विषविस्तारको मारकः कथं वचनामृतेन जीवयेत् पुंनागस्तु स्वनाम्नैव पुंसो नागत्वं बोधयतीति मत्वान्यत्र गच्छन्त्यः चम्पकं विलोक्य तत्पीताम्बरवर्णतया च चपि चापल्ये इत्यस्मात् चम्पयतीति चम्पकः इति व्युत्पत्त्या तस्य चपलत्वेन चपलकृष्णसमानशीलतया तद्रहस्यज्ञत्वं यद्वा चपिगत्यावित्यस्माच्चम्पयतीति चम्पकः अत्र इदित्त्वान्नुम् ये गत्यर्थास्ते प्राप्त्यर्था‍स्तस्मात् प्राप्तत्वेन तदभिज्ञत्वं दूरेस्वामोदप्रदत्वेनोपकारकत्वं च सम्भाव्य पूर्ववत्प्रश्ने उत्तरानवाप्तौ च तदीयचपलत्वेनैवाविश्वस्य सुरभिविस्तारोऽपि कृष्णवत् मनोहरणायैव नोपकारायेत्यवधार्य्य काश्चित्तु स्ववत्तमपि कृष्णदर्शनविरहेण पीतवर्णं वैकल्येनैव भावितुमशक्तमाकलय्यान्यत्र गताः ॥६॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ कुरवकादीन् दृष्ट्वा एते महान्तः पुष्पवन्तःसुगन्धाः मधुपैरतिथिभिरनिशं सेव्यमानाः शुद्धान्तःकरणाः कथयिष्यन्तीति मत्वा पृच्छन्ति । कच्चिदिति । कुरवकः शोणोऽम्लानः नागरङ्गः केसरः हे कुरवकादयः ! रामानुजः कच्चिदितो गतः अनेन मार्गेण गच्छन् दूरतोऽपि दृष्टः स्यादिति भावः । रामावतारे कृतस्य फलप्रदानायाऽस्मिन्नवतारे स्वीयं नाम ज्येष्ठत्वं च लक्ष्मणाय दत्तवान् स भक्ता अस्मांस्त्यक्तुमयोग्यस्त्यक्त्वा गतोऽतः पृच्छामस्तस्माद्दृष्टश्चेत्कृपया वदेति रामानुजपदाशयः करुणासागरोऽपि भगवान् कठोरचित्तः क्षत्रियजात्युत्पन्नत्वात्स्वभावमनुकुर्वन्नस्मत्प्राणहरणचेष्टो जात इति वा [ १ ] तदाशयः यद्यपि तेन रमितानामस्माकं मान उत्पन्नस्तथापि तन्निरासार्थमन्यै-

र्धार्ष्ट्यं नोचितं यतः दर्पहरं स्मितं यस्य सः तथा च मिष्टौषधप्रदानेन रोगनिवृत्तिसंभवे विषप्रदानं नोचितम् अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायादतस्तदन्यार्थं विचार्य्य वक्तव्यमितिभावः । तेभ्योऽलब्धोत्तरास्तद्दैवाकस्मिकेन वायुना चालितायशाखांस्तानालक्ष्याहो शिरो धूननेन न वयं जानीम इति सूचयन्त्यतोऽलमेभिः सम्पृष्टैरिति मनसि निधायान्यत्र याताः । अनभिज्ञपक्षे अहो किमर्थं गत इतिचेद्धूर्तैव गत इत्याशयेनाहुः । रामानुजस्तथा च बलभद्रानुजस्य तस्य नास्ति भयसंभावनाऽतो भयनैमित्तिकमपि तद्गमनं न सम्भवति नाप्यस्मन्मानानिरासार्थं तस्य स्मितमात्रेणैव वशीकृत्वादित्याहुः । दर्पेति । तथा च स्मितमात्रेण हृतमानास्तद्वियोगे क्षणमपि जीवितुमशक्ता अन्वेषयामः पृच्छामश्चातः कृपया वदेति भावः । तेभ्योऽप्यलब्धोत्तरा अहो अयं कुरवकः मकरन्ददत्वादलीनां कुत्सित ईषद्वा रवो यत्र सः यद्वा कुत्सिताद्रोदनशब्दात्कं सुखं यस्य सः रोदनप्रियः अशोकः शोकरहितः पीडानभिज्ञत्वाद्दयावर्जितः नागोऽयं नाम्नैव भयानकः अयन्तु पुंसामपि नागः चम्पकोऽपि परिणामविरसस्तस्मादेते न प्रष्टव्या यतो नास्मान्सुखयिष्यन्तीति विचार्य्यान्यत्र गतः मानिनीपक्षे कुरवकाशोकौ कामोद्दीपकौ नागादयः कामबाणपुष्पाः कामिनं व्यावर्त्तयन्त्यतः कामिनन्तं पश्चात्प्रेत क्षास्यन्तीति मत्वा तान्पृच्छन्ति । कच्चिद्गतः किंवा क्वचिदत्रैव निन्हुत्य वर्तते ननु किमर्थमन्विष्यत इत्याशङ्क्यास्मत्सर्वस्वमपहृत्य पलायितः इत्याहुः मानिनीनां मानैकधनानामस्माकं स्मितादिना दर्पं हृतवान्निर्धनाश्चास्मान्कृत्वा गतोऽतो धूर्त्तशिरोमणिरस्माभिर्धर्तव्य इति भावः । ननु अबलाभिर्युष्माभिः कथं धर्तुं शक्य इतिचेत्तत्राहुः । रामानुजः तस्य ज्येष्ठो भ्राता बलरामोऽप्यस्मदपेक्षया न प्रबलस्तस्यायमनुजः कथं प्रबलः स्यादन्यथा पलायनं न कुर्यादिति भावः । ततोऽलब्धप्रतिवचना अहो एते पुरुषजातित्वेन कठोरचित्ताः कृष्णपक्षपातिनो न कथयिष्यन्तीति मत्वान्यत्र गताः निवृत्तिपक्षे कुरवकादिशब्दैः कुरवकादिस्थानीयानामाकाशादीनां स्थूलसूक्ष्मभूतानां ग्रहणं रामा महामाया अनुजानुगामिनी यस्य सः सर्वकार्य्योपादानमायाधिष्ठानभूतः कच्चिद्युष्माभिरितोऽवगतः सत्व स्माकं मानिनीनां तत्र प्रामाण्यवर्तीनामपि दर्पहरं स्मितं स्मयनीयं चराचरात्मकं जगद्यस्यास्माकमपि सत्त्वासत्त्वाभ्यां वक्तुमशक्यत्वात् तथा च महाभूतेभ्योऽपि पर इति भावः ॥ ६ ॥

---

### श्रीमद्धुकदेवकृतसिद्धान्तप्रदीपः ।

हे कुरवकादयः ! मानिनीनां दर्पहरं स्मितं यस्य स रामस्य बलस्य अनुजः इतो गतः कच्चित् किम् ॥ ६ ॥

---

### भाषा टीका

हे कुरवकवृक्ष ! हे अशोक ! हे नाग पुन्नाग हे चम्पा हो [ रामनुज ] बलदाउ जी को छोटो भाई अपनी मन्दमुसक्यान तें अभिमान को हरबेवारो जब हमने मान कीनो तब चलो गयो सो कहीं तुमने देखो हो तो पता दीजियो ॥ ६ ॥

---

(१) ननु रामानुज इत्यत्राट्कुप्वाङिति णत्वं प्राप्नोतीति चेन्नैवम् रामनामेत्यादौ णत्ववारणाय निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपार्थकेन ग्याभ्यामित्यत्र कृतेन समानग्रहणेन वारणात् तदर्थश्च निमित्तानधिकरणनिमित्तिमत्पदाघटितं यत्तद्भिन्नं यत्पदं तदवयवत्वं यत्र द्वयोस्तत्र णत्वमिति तेन मातुर्भगनमित्यादौ णत्वाभावो विभिन्नपदत्वेन मातृभोगीण इत्यत्र णत्वं समानपदत्वाभावेन सुपर्वणेत्यादौ णत्वं निमित्तानाधिकरणानिवेशेन गन्धर्वगानमित्यादौ णत्वाभावो लौकिकार्थवत्पदाभावेन रामेणेत्यत्र णत्वं रामनामेत्यादौ णत्वाभावश्चेति सर्वं सिध्यतीति नन्वेवमपि नारायणारामायणादाविव पूर्वपदादिति णत्वं प्राप्नोत्येवेति चेन्न रामानुजो मानिनीनां गतो दर्पहरस्मितः रामानुजं लक्ष्मणपूर्वजं चेत्यादि प्रयोगैरस्य संज्ञात्वावगमेन रघुनाथादाविव संज्ञायामिति सूत्रप्राप्त्यभावात् भृञोऽसंज्ञायामिति सूत्रमाप्यपर्यालोचनया कृतणत्वेन चेत् संज्ञाकर्थाथीं गम्यते तदा णत्वमिति पूर्वपदादिति सूत्रार्थादित्यलम् ।

**कच्चित्तुलसि ! कल्याणि ! गोविन्दचरणप्रिये !।**
**सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका।

अलिकुलैः सह त्वा त्वां बिभ्रत्तवातिप्रियस्त्वया किं दृष्ट इति ॥ ७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एते श्रीकृष्णसेवका अस्माकं मानं विज्ञायासूयया न किल कथयेयुरिति निजसखीमिव मन्यमानाः सौभाग्यविशेषेण च संदर्शनं सम्भाव्य श्रीतुलसीं पृच्छन्ति। कच्चिदिति। कल्याणि ! हे जगन्मङ्गलकारिणि परमसौभाग्यवतीति वा तत्र हेतुः गोविन्दस्य गोकुलेन्द्रस्य निजाशेषमाधुर्यप्रकटनपरस्य भगवत श्चरणौ प्रियौ यस्यास्तत्सम्बोधनं तयोः प्रिये वा इति महालक्ष्मीतोऽप्यधिकसौभाग्यं सूचितं बहुलप्रयासेन लक्ष्मीकाम्यरजसोः श्रीकृष्णचरणयोः स्वतः प्रियत्वात् अब्जादिरूपकाप्रयोगस्तत्प्रियत्वेनेर्ष्यया अतोऽलिकुलैः सह वर्त्तमानामपि त्वां बिभ्रत् पूर्वमेव वैजयन्त्यन्तर्गतत्वेन अधुनैव वा अवचित्य मालादिरूपेण धारयन् अत एव नवाभिप्रियत्वेन त्वया दृष्टोऽस्ति कच्चित् अलिकुलैरिति [illegible]स्याः सदा मकरन्दमयत्वं तेन च सदैवापरित्याज्यत्वं [illegible]मत्तानां तेषां झंकारेण निह्नुत्यसम्भवत्वं च सूचितम् अतोऽवश्यं त्वदन्तिकमागतस्त्वया दृष्ट इति भावः अच्युत इति। कदापि त्वत्तो न विच्युतो भवतीति तदेव दृढीकृतं श्लेषेण अलिकुलैरिति बहुवल्लभामपि त्वां प्रियत्वेन बिभर्त्ति नच तदेकप्रिया अस्मान् अतोऽतिक्रान्ताः प्रियाः किंवा अतिक्रान्तं प्रियं सर्वमपि येन तथेतीर्ष्ययाऽसूयोक्तिः॥७॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एते पुरुषजातित्वेन प्रायः श्रीकृष्णपक्षग्राहिणोऽस्माकं मानं विज्ञायासूयया न किल कथयेयुरिति स्त्रीजातित्वेनात्मपक्षग्राहिणीं मन्यमानाः शश्वत् दृष्टतत्प्रीत्यनुमितसौभाग्यविशेषेण च तस्याः श्रीकृष्णदर्शनं सम्भाव्य श्रीतुलसीं पृच्छन्ति। कच्चिदिति। कल्याणि ! हे जगन्मङ्गलकारिणि ! परमसौभाग्यवतीति वा। अत्र हेतुर्गोविन्देति गोविन्दो गोकुलेन्द्रः तच्चरणप्रिया त्वं श्रीयत्पदाम्बुज इत्यादिवत्। यद्वा चरणशब्दोऽऽदरमात्रव्यञ्जकः आचार्यचरणा वदन्तीतिवत्। आदरश्चाधुना दैन्येन हे गोकुलेन्द्रप्रिये इत्यर्थः। इति तस्यागमनावश्यकत्वं विवक्षितम्। तत्प्रियत्वे हेतुः सहेति। नच तत्र तवानवधानं सम्भवेत्। यतस्तेऽतिप्रिय इति श्लेषेणातिक्रान्तप्रियानस्मद्विधानित्यपि ध्वनितम्। अलिकुलैः सह इति तस्याः साद्गुण्यं दर्शितम् अलीनामप्यनिवार्यत्वसूचनात्। यद्वा। अतिप्रियत्वमेव विवृतं तत्प्रियत्वेनैव ते हिलीमृता अपि न निवार्यन्त इति सूचनात् तथा मत्तानां तेषां झङ्कारेण निह्नवासम्भवत्वं च सूचितम्। अतोऽवश्यं त्वदन्तिकमागतस्त्वया दृष्ट इति भावः। अच्युत इति श्लेषेण कदापि त्वत्तो न विच्युतो भविष्यतीति तदेव दृढीकृतम् ॥ ७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे तुलसि ! गोविन्दचरणप्रिये ऽत एव हे कल्याणि ! अलिकुलैः सह त्वां बिभ्राणस्तवातिप्रियश्चाच्युतस्त्वया दृष्टः कच्चित् ॥ ७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गोविन्दस्य श्रीविष्णोश्चरणौ प्रियौ यस्याः हे तादृशे ! यद्वा। चरणशब्दोऽऽदरमात्रव्यञ्जकः आचार्यचरणा वदन्तीतिवत्। आदरश्चाधुना दैन्येन हे गोकुलेन्द्रप्रिये इत्यर्थः ॥७॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

हे सख्यः ! एते तत्सहचरप्रायाः दृष्ट्वापि न कथयिष्यन्ति एषा तु तुलसी स्त्रीस्वभावात् कोमलहृदया अतः कथयिष्यत्येव दृष्टश्चानया स इति सम्भाव्यते तत्प्रियत्वात् तदेनामेव पृच्छाम इत्याहुः। कच्चित्तुलसीत्यादि हे कल्याणि ! चिरजीविनि कल्याणीत्वे हेतुर्गोविन्दचरणप्रिये। तेऽतिप्रियोऽच्युतो दृष्टः अतिप्रियत्वे हेतुः त्वा त्वां बिभ्रद्धानः अलिकुलैः सह एवमेव त्वयि तत्प्रेम अलिकुलैराकुलामपि त्वां वहत्येव ॥ ७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

पूर्वोक्तास्त्वपुष्पा एते अफलाः फलपुष्पाभ्यां नानाविधविनियोगसम्भवादज्ञानं मत्वा तुलस्यास्तदुभयं नास्तीति भगवदीयत्वेन प्रसिद्धां पृच्छन्ति। कच्चिदिति। तुलसीति सम्बोधनं सखीमिव मत्वा सा चेत् पूर्वसम्बन्धस्मरणेन भक्त्यैव भगवन्तं भजेत् तदा रसो न पुष्ट इति तां भगवत्पत्नीं मन्यमाना आहुः। कल्याणीति एवमपि सति भक्तिप्रधानेत्यस्मदादिपक्षया उत्कृष्टेत्याहुः। गोविन्दचरणप्रिये इति किञ्च तव दर्शने उपायोऽप्यस्ति त्वत्सजातीयस्य तत्र विद्यमानत्वात् सजातीयो हि सजातीयं मार्गस्थं दृष्ट्वा गच्छति तदाहुः। अलिकुलैः सह त्वा त्वां बिभ्रन् दृष्ट इति किञ्च ते भगवानत्यन्तं प्रियः यत्नेन मार्गेण गतः स्यादवश्यं त्वया दृष्टः स्यात् इति ॥ ७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एता अस्मत्पक्षग्राहिण्यः स्त्रीजातयः स्त्रीजनहृच्छयपीडां

### श्रीरामनारायणकृतभावभावविभाविका।

पुंनागभोगभुजकृष्णभोगोपयोगित्वं नागशयनस्य तस्य नित्यसहकारित्वं च सम्भाव्य स कृष्णः कृष्णनाग इव मुखोन्मुखमुखतया कामविषाग्निं नोऽङ्गेषु विस्तार्य सुरनागगतिनटनागरवरः नो मनो हृत्वा कृष्णो गतः इति प्रश्नेऽप्युत्तरमनवाप्यायं नागः स्वयं विषविस्तारको मारकः कथं वचनामृतेन जीवयेत् पुंनागस्त स्वनाम्नैव पुंसो नागत्वं बोधयतीति मत्वान्यत्र गच्छन्त्यः चम्पकं विलोक्य तत्पीताम्बरवर्णतया च चपि चापल्ये इत्यस्मात् चम्पयतीति चम्पकः इति व्युत्पत्त्या तस्य चपलत्वेन चपलकृष्णसमानशीलतया तद्रहस्यज्ञत्वं यद्वा चपिगतावित्यस्माच्चम्पयतीति चम्पकः अत्र इदित्त्वान्नुम् ये गत्यर्थास्ते प्राप्त्यर्थास्तस्मात् प्राप्तत्वेन तदभिज्ञत्वं दूरेस्वामोदप्रदत्वेनोपकारकत्वं च सम्भाव्य पूर्ववत्प्रश्ने उत्तरानवाप्तौ च तदीयचपलत्वेनैवाविश्वस्य सुरभिविस्तारोऽपि कृष्णवत् मनोहरणायैव नोपकारायेत्यवधार्य्य काश्चित्तु स्ववृत्तमपि कृष्णदर्शनविरहेण पीतवर्णं वैकल्येनैव भाषितुमशक्तमाकलय्यान्यत्र गताः॥६॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अथ कुरवकादीन् दृष्ट्वा एते महान्तः पुष्पवन्तःसुगन्धाः मधुपैरतिथिभिरनिशं सेव्यमानाः शुद्धान्तःकरणाः कथयिष्यन्तीति मत्वा पृच्छन्ति। कच्चिदिति। कुरवकः शोणोऽम्लानः नागरङ्गः केसरः हे कुरवकादयः! रामानुजः कच्चिदितो गतः अनेन मार्गेण गच्छन् दूरतोऽपि दृष्टः स्यादिति भावः। रामावतारे कृतस्य फलप्रदानायाऽस्मिन्नवतारे स्वीयं नाम ज्येष्ठत्वं च लक्ष्मणाय दत्तवान् स भक्ता अस्मांस्त्यक्तुमयोग्यस्त्यक्त्वा गतोऽतः पृच्छामस्तस्माद्दृष्टश्चेत्कृपया वदतेति। रामानुजपदाशयः करुणासागरोऽपि भगवान् कठोरचित्तः क्षत्रियजात्युत्पन्नत्वात्स्वभावमनुकुर्वन्नस्मत्प्राणहरश्चेष्टो जात इति वा [१] तदाशयः यद्यपि तेन रमितानामस्माकं मान उत्पन्नस्तथापि तन्निरासार्थमन्नर्धानं नोचितं यतः दर्पहरं स्मितं यस्य सः तथा च मिष्टौषधप्रदानेन रोगानिवृत्तिसंभवे विषप्रदानं नोचितम् अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेदिति न्यायादतस्तदन्यार्थं विचार्य्य वक्तव्यमितिभावः। तेभ्योऽलब्धोत्तरास्तैर्वाकस्मिकेन वायुना चालिताग्रशाखांस्तानालक्ष्याहो शिरो धूननेन न वयं जानीम इति सूचयन्त्यतोऽलमेभिः सम्पद्गर्वितैरिति मनसि निधायान्यत्र याताः। अनभिज्ञापक्षे अहो किमर्थं गत इतिचेद्दूर्थैव गत इत्याशयेनाहुः। रामानुजस्तथा च बलभद्रानुजस्य तस्य नास्ति भयसंभावनाऽतो भयनैमित्तिकमपि तद्गमनं न सम्भवति नाप्यस्मन्मानानिरासार्थं तस्य स्मितमात्रेणैव वशीकरत्वादित्याहुः। दर्पेति। तथा च स्मितमात्रेण हृतमानास्तद्वियोगे क्षणमपि जीवितुमशक्ता अन्वेषयामः पृच्छामश्चातः कृपया वदतेति भावः। तेभ्योऽप्यलब्धोत्तरा अहो अयं कुरवकः मकरन्ददत्वादलीनां कुत्सित ईषद्वा रवो यत्र सः यद्वा कुत्सिताद्रोदनशब्दात्कं सुखं यस्य सः रोदनप्रियः अशोकः शोकरहितः पीडानभिज्ञत्वाद्दयावर्जितः नागोऽयं नाम्नैव भयानकः अयन्तु पुंसामपि नागः चम्पकोऽपि परिणामविरसस्तस्मादेते न प्रष्टव्या यतो नास्मान्सुखयिष्यन्तीति विचार्य्यान्यत्र गतः मानिनीपक्षे कुरवकाशोकौ कामोद्दीपकौ नागादयः कामबाणपुष्पाः कामिनं व्यावर्त्तयन्त्यतः कामिनन्तं पश्चाप्येत ज्ञास्यन्तीति मत्वा तान्पृच्छन्ति। कच्चिद्गतः किंवा क्वचिदत्रैव निन्हुत्य वर्तते ननु किमर्थमन्विष्यत इत्याशङ्क्यास्मत्सर्वस्वमपहृत्य पलायितः इत्याहुः मानिनीनां मानैकधनानामस्माकं स्मितादिना दर्पं हृतवाश्चिह्नेनाश्चास्मान्कृत्वा गतोऽतो धूर्त्तशिरोमणिरस्माभिर्धर्तव्य इति भावः। ननु अबलाभिर्युष्माभिः कथं धर्तुं शक्य इतिचेत्तत्राहुः। रामानुजः तस्य ज्येष्ठो भ्राता बलरामोऽप्यस्मदपेक्षया न प्रबलस्तस्यायमनुजः कथं प्रबलः स्यादन्यथा पलायनं न कुर्यादिति भावः। ततोऽलब्धप्रतिवचना अहो एते पुरुषजातित्वेन कठोरचित्ताः कृष्णपक्षपातिनो न कथयिष्यन्तीति मत्वान्यत्र गताः निवृत्तिपक्षे कुरवकादिशब्दैः कुरवकादिस्थानीयानामाकाशादीनां स्थूलसूक्ष्मभूतानां ग्रहणं रामा महामाया अनुजाऽनुगामिनी यस्य सः सर्वकार्य्योपादानमायाधिष्ठानभूतः कच्चिद्युष्माभिरितोऽवगतः सत्त्वस्माकं मानिनीनां तत्र प्रामाण्यवतीनामपि दर्पहरं स्मितं स्मयनीयं चराचरात्मकं जगद्यस्यास्माकमपि सत्त्वासत्त्वाभ्यां वक्तुमशक्यत्वात् तथा च महाभूतेभ्योऽपि पर इति भावः॥ ६॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे कुरवकादयः! मानिनीनां दर्पहरं स्मितं यस्य स रामस्य बलस्य अनुजः इतो गतः कच्चित् किम्॥ ६॥

---

### भाषा टीका

हे कुरवकवृक्ष! हे अशोक! हे नाग पुन्नाग हे चम्पा हो [रामनुज] बलदाउ जी को छोटो भाई अपनी मन्दमुसक्यान ते अभिमान को हरवेवारो जब हमने मान कीनो तब चलो गयो सो कहीं तुमने देखो हो तो पता दीजियो॥ ६॥

---

(१) ननु रामानुज इत्यत्राट्कुप्वाङ्निति णत्वं प्राप्नोतीति चेन्नैवम् रामनामेत्यादौ णत्ववारणाय निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपार्थकेन रषाभ्यामित्यत्र कृतेन समानग्रहणेन वारणात् तदर्थश्च निमित्तानधिकरणनिमित्तिमत्पदघटितं यत्तद्भिन्नं यत्पदं तदवयवत्वं यत्र द्वयांस्तत्र णत्वमिति तेन मातुर्भगमित्यादौ णत्वाभावो भिन्नपदत्वेन मातृभोगीण इत्यत्र णत्वं समानपदत्वाभावेन सुपर्वणेत्यादौ णत्वं निमित्तानाधिकरणानिवेशेन गन्धर्वगानमित्यादौ णत्वाभावो लौकिकार्थवत्पदाभावेन रामेणेत्यत्र णत्वं रामनामेत्यादौ णत्वाभावश्चेति सर्वं सिध्यतीति नन्वेवमपि नारायणरामायणादाविव पूर्वपदादिति णत्वं प्राप्नोत्येवेति चेन्न रामानुजो मानिनीनां गतो दर्पहरस्मितः रामानुजं लक्ष्मणपूर्वजं चेत्यादि प्रयोगैरस्य संज्ञात्वावगमेन रघुनाथादाविव संज्ञाभक्तभिया तत्सूत्रप्राप्त्यभावात् भृञोऽसंज्ञायामिति सूत्रभाष्यपर्यालोचनया कृत्वणत्वेन चेत् संज्ञात्वव्यर्थो गम्यते तदा णत्वमिति पूर्वपदादिति सूत्रार्थादित्यलम्।

## कच्चित्तुलसि ! कल्याणि ! गोविन्दचरणप्रिये ! । सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अलिकुलैः सह त्वा त्वां बिभ्रत्त्वयातिप्रियस्त्वया किं दृष्ट इति ॥ ७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एते श्रीकृष्णसेवका अस्माकं मानं विज्ञायासूयया न किल कथयेयुरिति निजसखीमिव मन्यमानाः सौभाग्यविशेषेण च संदर्शनं सम्भाव्य श्रीतुलसीं पृच्छन्ति । कच्चिदिति । कल्याणि ! हे जगन्मङ्गलकारिणि परमसौभाग्यवतीति वा तत्र हेतुः गोविन्दस्य गोकुलेन्द्रस्य निजाशेषमाधुर्यप्रकटनपरस्य भगवत श्चरणौ प्रियौ यस्यास्तत्सम्बोधनं तयोः प्रिये वा इति महालक्ष्मीतोऽप्यधिकसौभाग्यं सूचितं बहुलप्रयासेन लक्ष्मीकाम्यरजसोः श्रीकृष्णचरणयोः स्वतः प्रियत्वात् अब्जादिरूपकाप्रयोगस्तत्प्रियत्वेनेर्ष्यया अतोऽलिकुलैः सह वर्त्तमानामपि त्वां बिभ्रत् पूर्वमेव वैजयन्त्यन्तर्गतत्वेन अधुनैव वा अवचित्य मालादिरूपेण धारयन् अत एव तवातिप्रियत्वेन त्वया दृष्टोऽस्ति कच्चित् आलिकुलैरिति तस्याः सदा मकरन्दमयत्वं तेन च सदैवापरित्याज्यत्वं तथा मत्तानां तेषां झंकारेण निन्हुत्यसम्भवत्वं च सूचितम् अतोऽवश्यं त्वदन्तिकमागतस्त्वया दृष्ट इति भावः अच्युत इति । कदापि त्वत्तो न विच्युतो भवतीति तदेव दृढीकृतं श्लेषेण अलिकुलैरिति बहुवल्लभामपि त्वां प्रियत्वेन बिभर्त्ति नच तदेकप्रिया अस्मान् अतोऽतिक्रान्ताः प्रियाः किंवा अतिक्रान्तं प्रियं सर्वमपि येन तथेतीर्ष्ययाऽसूयोक्तिः॥७॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एते पुरुषजातित्वेन प्रायः श्रीकृष्णपक्षग्राहिणोऽस्माकं मानं विज्ञायासूयया न किल कथयेयुरिति स्त्रीजातित्वेनात्मपक्षग्राहिणीं मन्यमानाः शश्वत् दृष्टतत्प्रीत्यनुमितसौभाग्यविशेषेण च तस्याः श्रीकृष्णदर्शनं सम्भाव्य श्रीतुलसीं पृच्छन्ति । कच्चिदिति । कल्याणि ! हे जगन्मङ्गलकारिणि ! परमसौभाग्यवतीति वा । अत्र हेतुर्गोविन्देति गोविन्दो गोकुलेन्द्रः तच्चरणप्रिया त्वं श्रीयत्पदाम्बुज इत्यादिवत् । यद्वा चरणशब्दोऽऽदरमात्रव्यञ्जकः आचार्यचरणा वदन्तीतिवत् । आदरश्चाधुना दैन्येन हे गोकुलेन्द्रप्रिये इत्यर्थः । इति तस्यागमनावश्यकत्वं विवक्षितम् । तत्प्रियत्वे हेतुः सहेति । नच तत्र तवानवधानं सम्भवेत् । यतस्तेऽतिप्रिय इति श्लेषेणातिक्रान्तप्रियानस्मद्विधानित्यपि ध्वनितम । अलिकुलैः सह इति तस्याः सद्गुण्यं दर्शितम् अलीनामप्यनिवार्यत्वसूचनात् । यद्वा । अतिप्रियत्वमेव विवृनं तत्प्रियत्वेनैव ते शिलीमुखा अपि न निवार्यन्त इति सूचनात् तथा मत्तानां तेषां झङ्कारेण निह्नवासम्भवत्वं च सूचितम् । अतोऽवश्यं त्वदन्तिकमागतस्त्वया दृष्ट इति भावः । अच्युत इति श्लेषेण कदापि त्वत्तो न विच्युतो भविष्यतीति तदेव दृढीकृतम् ॥ ७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे तुलसि ! गोविन्दचरणप्रिये ऽत एव हे कल्याणि ! अलिकुलैः सह त्वां बिभ्राणस्त्वयातिप्रियश्चाच्युतस्त्वया दृष्टः कच्चित् ॥ ७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोविन्दस्य श्रीविष्णोश्चरणौ प्रियौ यस्याः हे तादृशे ! यद्वा । चरणशब्दोऽऽदरमात्रव्यञ्जकः आचार्यचरणा वदन्तीतिवत् । आदरश्चाधुना दैन्येन हे गोकुलेन्द्रप्रिये इत्यर्थः ॥७॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सख्यः ! एते तत्सहचरप्रायाः दृष्ट्वापि न कथयिष्यन्ति एषा तु तुलसी स्त्रीस्वभावात् कोमलहृदया अतः कथयिष्यत्येव दृष्टश्चानया स इति सम्भाव्यते तत्प्रियत्वात् तदेनामेव पृच्छाम इत्याहुः । कच्चित्तुलसीत्यादि हे कल्याणि ! चिरजीविनि कल्याणत्वे हेतुर्गोविन्दचरणप्रिये । तेऽतिप्रियोऽच्युतो दृष्टः अतिप्रियत्वे हेतुः त्वा त्वां बिभ्रद्दधानः अलिकुलैः सह एवमेव त्वयि तत्प्रेम अलिकुलैराकुलामपि त्वां वहत्येव ॥ ७ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधनी ।

पूर्वोक्तास्त्वपुष्पा एते अफलाः फलपुष्पाभ्यां नानाविधविनियोगसम्भवादज्ञानं मत्वा तुलस्यास्तदुभयं नास्तीति भगवदीयत्वेन प्रसिद्धां पृच्छन्ति । कच्चिदिति । तुलसीति सम्बोधनं सखीमिव मत्वा सा चेत् पूर्वसम्बन्धस्मरणेन भक्तेव भगवन्तं भजेत् तदा रसो न पुष्ट इति तां भगवत्पत्नीं मन्यमाना आहुः । कल्याणीति एवमपि सति भक्तिप्रधानेत्यस्मदायपेक्षया उत्कृष्टेत्याहुः । गोविन्दचरणप्रिय इति किञ्च तव दर्शने उपायोऽप्यस्ति त्वत्सजातीयस्य तत्र विद्यमानत्वात् सजातीयो हि सजातीयं मार्गस्थं दृष्ट्वा गच्छति तदाहुः । अलिकुलैः सह त्वा त्वां बिभ्रत् दृष्ट इति किञ्च ते भगवानत्यन्तं प्रियः यद्यनेन मार्गेण गतः स्यादवश्यं त्वया दृष्टः स्यात् इति ॥ ७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एता अस्मत्पक्षग्राहिण्यः स्त्रीजातयः स्त्रीजनहृच्छयपीडां

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

विदुष्यः कृपावत्यो भविष्यन्ति तदिमाः पृच्छाम इत्यासाद्य तन्मध्ये परममुख्यतमां तुलसीं पप्रच्छुः । कच्चिदिति । हे कल्याणीति वयमकल्याण्यः कृष्णविच्छेदात् त्वमेव कुशलिनी । अत्र हेतु-गोविन्देति । यद्वा । चरणशब्दोऽत्रादरमात्रव्यञ्जकः आचार्यच-रणा वदन्तीतिवत् ननु यूयमपि तच्चरणप्रिया भवथैव सत्यं तदपि साद्गुण्याधिक्यात्त्वमेव सौभाग्यवती विच्छेदाभावादि-त्याहुः । त्वा त्वां बिभ्रदेव गतः । तत्र तव सौरभ्याधिक्यमेव कारणममिति व्यञ्जयामासुः । अलिकुलैः सहेति परःसहस्रभ्रम-रकृतोद्वेगमप्यगणयित्वा त्वां बिभ्रदिति सुगन्धप्रियेण तेनास्माक-मग्रहणमेतादृशसौरभ्यवत्त्वाभावादेवेति निश्चिनुम इति भावः ॥७॥

———

### केन चित्कृता विशुद्धरसदीपिका ।

एते च पुरुषजातित्वात्तत्पक्षग्राहिणो नर्मसचिवप्रायाश्च प्रायोऽस्मान्मानवतीरित्यवज्ञया न किल कथयेयुरिति सम्भाव्य शश्वदङ्गसङ्गसौभाग्यवतीं तदादृतां निजपक्षग्राहिणीं च मन्य-मानास्तुलसीं पृच्छन्ति । कच्चिदिति । नित्यसखीनामिदं वाक्यं आभासस्तु कान्तभावानां संग्रहाभिप्रायेण सङ्गमनीयः तत्र तुलसीति स्कान्देतिहासानुसारेण वृन्दादेव्या एव नामान्तर-मिति तद्वनाधिदेवीं निजसहचरीं मत्वा साक्षान्नामोक्तिः कल्याणि ! जगन्मङ्गलकारिणीत्यर्थः । यद्वा परमभाग्यवतीति अथवा-कुशलिनी भवसीति प्रश्नभङ्ग्या सम्बोधनं गोविन्देत्यादि वृन्दा-वने तु गोविन्दमिति वाराहतन्त्रोक्तेस्तस्य तस्याश्च नित्य-सम्बन्धः सूचितः गुरुचरणा इत्यादिवच्चरणपदं गौरवाभिप्रायं श्लेषेण चरणमाचरणं तच्च गोप्यैकया युतस्तत्र परिक्रीडति नित्यदेत्यादिब्रह्मयामलाद्यनुसारेण विहरणमेव एवं च तदेक-प्रियत्वमादिश्य तस्यापि त्वं प्रियतमेति दर्शयन्ति । सहेति । अलि-कुलैरिति श्यामलत्वाद्वर्णसाम्येन तदभिलापैरेव मूर्त्तैरित्यर्थः अलीनामनिर्वाच्यत्वेन दोषानुद्भावनमपि सूचितम् अत एव तेऽपि सोऽतिप्रियः स च त्वत्तोऽच्युत इति परस्परप्रीत्याश्रय-विषयत्वेन शुद्धः प्रेमा दर्शितः ततश्च तादृशप्रेमप्रसंशयात्मनश्च सजातीयत्वं प्रदर्श्यावश्यकथनीयत्वमावेदयन्ति अन्यथा मित्रद्रोहः स्यादिति तत एव विश्रम्भेणाहुः । दृष्ट इति । अथ दृष्टो ज्ञात इति सापह्नवोक्तिः ॥ ७ ॥

———

### श्रीरामनारायणकृतभावभावविभाविका ।

ततोऽग्रे तुलसीं दृष्ट्वा तां तुलसीं भाग्यवतीं भगवत्प्रियां सर्व-सज्जनसेविताम्—

> तुलसीदलमात्रेण जलस्य चुलकेन च ।
> विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ॥

इत्यादिवचनैः सर्वजनेषु भगवत्कृपोत्पादनेन तत्प्रापिकां स्त्रीत्वेन स्वपक्षपातिनीं सदुःखाभिज्ञां चावगत्य तामाहुः । कच्चित्तुल-सीति । कल्याणि ! स्वयंसुखरूपे सर्वसुखकारिणि च तथा गोविन्द-चरणप्रिये गोविन्दस्य गवामिन्द्रस्य चरणौ प्रियौ यस्या इति मुखहासविलासाद्यनभिज्ञत्वेन ज्ञातासि न वयमिव तव वैकल्यं यद्वा पादसेवापरतया प्रथमत एव दैन्येन तव सौभाग्यातिशयः अस्माकन्तु मानापराधेन दुःखवैकल्यं यद्वा गोभिः श्रुतिभि-र्विद्यते चरणो यस्य स गोविन्दचरणः सर्वे वेदा यत्पदमामन-न्तीति श्रुतेः वेदान्तवेद्यचरणेन मयैव गीतमिति स्मृतेश्च स प्रियो यस्याः तस्य प्रिया वा यद्वा आचार्यचरणा इत्यादिवदाद-रेण चरणशब्दप्रयोगः यद्वा गोविन्दस्य चरणं प्रियं यस्यास्तस्याः सम्बोधनं तथा च तव तदाचरणस्यापि प्रियत्वेनोभय-प्रीतिनिर्वाहः अस्माकन्तु तस्य प्रियतमत्वेऽपि तदाचरणं स्नेहि-जनविरहदानान्तर्द्धानादिनाप्रियमतः खेदमनुभवाम इति भावः नन्वेवं बहुधा सम्बोधयन्त्यः किंपृच्छथ इति तदभिप्रायं सङ्कलय्य सहेति नोऽन्वेषयतीरनुचरीः संत्यज्य अलिकुलान्येव तथालि-कुलानि तवानुगत्वे सति त्वद्यशोगानपरत्वात् तैः सह त्वा त्वां बिभ्रत्स्वस्कन्धे धारयन् अत एव तेऽतिप्रियोऽस्मद्भाग्यास्तु नित्यमच्युतो द्रवितचित्त एव स इतो गतस्त्वया दृष्टस्तव स्वाश्रितजनतत्प्रापकत्वादनुकम्पया ब्रूहि एवं प्रश्नेऽप्यलब्धोत्त-रत्वे तस्यास्तदीयातिप्रियत्वेन दुर्मदत्वं सापत्न्यभावेन मात्सर्यं सोऽन्त कर्मणीत्यस्मात् तत्प्रियात्वप्रसिद्ध्या तुल्या नः स्यति अन्तं प्रापयतीति उणादित्वाद्धातो रोकारलोपः एवमग्रेऽपि तन्नामव्यु-त्पत्त्या तद्द्वेषं सम्भाव्य कल्याणित्वेऽपि भद्राख्यकरणरूपतया विघ्नकारित्वमवगत्यान्यत्र गताः ॥ ७ ॥

———

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथान्यत्र गत्वा तुलसीं ददृशुः तत इयं भगवतोऽतिप्रिया सर्वदा तन्निकटवर्तिनी स्यात्त ध्यानवती भगवदीया तथा दयावती वक्ष्यति चेदिति मत्वा तुलसीसन्निधौ गत्वा तां पृच्छन्ति । हे तुलसी त्वयाऽच्युतो भगवान् कश्चित् दृष्टः यतस्त्वङ्कल्याणी भगव-त्प्राप्तिसाधनपुण्यपुञ्जानुष्ठानवती अत एव गोविन्दचरणौ प्रियौ यस्याः सा तच्चरणयोः प्रियेति वा अत एवातिप्रियः अत एवाच्युतस्त्वया कदापि न वियुक्तः अत एव त्वामलि-कुलैः भ्रमरसमूहैः सह विक्षेपमप्यगणय्य बिभ्रत् धारयन् यत्तत् यद्यप्यस्माकमप्यतिप्रियस्तथापि नास्माकं तादृशं कल्याणम् येन कामापोधिं विना तच्चरणावेवातिप्रियौ भवेता-मतो नास्माकमच्युतः किञ्च पलाय्यास्मत्सकाशा-द्गतः सर्वस्यापि कल्याणकरी त्वमिति वा अतो दृष्ट-श्चेत्तर्हि कथयेति भावः । तस्या अप्राप्तोत्तरा अहो भगवदीयेयं भगवदाज्ञां विना न कथयिष्यतीति मत्वान्यत्र गताः । अन-भिज्ञापक्षे हे तुलसि हे कल्याणि ! दर्शनभगवच्चरणार्पणादिना सर्व-लोककल्याणप्रदे ! यतः गोविन्दस्य महाविष्णोश्चरणयोरतिप्रिये अत एव नारायणसदृशत्वादस्माकमतिप्रियोऽप्यच्युतः अलि-कुलैः सह त्वा बिभ्रत्त्वया दृष्टः कश्चित् त्वत्सुगन्धप्रिया मधु-व्रता अपि तेन न निवार्यन्ते वयन्तु तादृशसुगन्धरहितत्वा-त्तेन त्यक्ताः किं कुर्मस्तस्मादस्मज्जीवनाय तं कथयेति भावः अहो विष्णुपूजावर्तिनी जारासक्तमानसा अकल्याणी अस्माभि-र्भूत इति मत्वान्यत्र गताः मानिनीपक्षे हे तुलसि ! हे कल्याणि ! पर-

**मालत्यदर्शि वः कच्चिन्मल्लिके ! जातियूथिके !।**
**प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥**

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

मकल्याणवति ! यतो गोविन्दचरणप्रिये चरणेत्यादरव्यञ्जकं गुरुचरणरुकमितिवत् हे गोविन्दस्य प्रिय इत्यर्थः । यतो ऽलिकुलैः सह त्वां ज्ञात्वा बिभ्रत् अहो त्वदीयं भाग्यं यतोऽतिक्रान्ताः प्रिया अस्मादृश्यो येन सः त्वां सर्वदा बिभ्रदास्ते ऽत एव त्वया अच्युतस्तस्माद्दृष्टश्चेदवश्यं कथयेति भावः । अहो इयं तेता लब्धादरा जाता ऽखर्वगर्वा न कथयेदिति मत्वान्यत्र प्रस्थिताः निवृत्तिपक्षे अथ ज्ञानेन्द्रियपञ्चकमध्ये मुख्यत्वाच्चक्षुरिन्द्रियं पृच्छन्ति । हे तुलसि ! तत्स्थानीय चक्षुरिन्द्रिय कल्याणि कल्याणस्य साधनभूते गोविन्दस्यैतद्रूपकसुखभोक्तुश्चरणं तत्तद्विषयं प्रतिविवरणं यैरिन्द्रियैस्तेषु मध्ये प्रिये अलिकुलैस्तत्तद्वृत्तिरूपत्वात्सखिसमुदायैः सह त्वा बिभ्रत् प्रियत्वात्स्वतः वस्तुतः स्वरूपतः कदाचिदपि न प्रच्युतः स ते त्वया दृष्टः कच्चित् ॥ ७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे तुलसि ! अलिकुलैः भ्रमरयूथैः सह त्वा त्वां बिभ्राणः ते तवातिप्रियोऽगो भवत्या किं दृष्टः ॥ ७ ॥

भाषा टीका।

हे तुलसि ! हे कल्याणवारी हे श्रीगोविन्द के चरणों की प्यारी गुञ्जार करते बहुत मौरों के सहित तो कों धारण करबे वारो तेरो बडो प्यारो अच्युत तैंने देखो हो तो बता दीजो ॥ ७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

गुणातिरेकेऽपि नम्रत्वादिमाः पश्येयुरिति पृच्छन्ति । मालतीति । हे मालति ! मल्लिके ! जातियूथिके ! वो युष्माभिः किमदर्शि दृष्टः करस्पर्शेन वः प्रीतिं जनयन् किं यात इति अत्र मालतीजात्योरवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

सापत्न्यादियं खलु तं न कथयेदिति श्रीकृष्णसेविकाः पृच्छन्ति । मालतीति । सत्पुष्पार्पणेन श्रीकृष्णस्य दासीर्मत्वा स्नेहेन प्रत्येकं सम्बोधनं च इति पूर्ववत् यातः किमिति तैर्व्याख्यातं यद्वा पूर्ववचासां तद्दर्शनं सम्भावयन्ति प्रीतिमिति यातः सन् करस्पर्शेनेति युष्मत्पुष्पाणामुत्कृष्टानां श्रीहस्तद्वाराऽवचयेनेत्यर्थः । अतो युष्मत्पार्श्वे तदागमनं सम्भवेदेवेति भावः । श्लेषेण दासीषु तासु नखक्षतिनर्मणाभिप्रेता नखैरेव पुष्पच्छेदनात् पुष्पावचयप्रयोजनं वितर्कयन्ति । माधव इति मधुना मधुररसेन क्रीडतीति मधुररसक्रीडार्थमित्यर्थः । वस्तुतस्तु मा श्रीराधैव तां भूषणार्थमेव तत्र तासां तदनुसन्धानाभावेऽपि दैवगत्या विशुद्धप्रकृत्या या स्वतः सर्वपरिस्फूर्तेः स्वयमेव मुखान्निःसरतीति ज्ञेयम् ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तथापि तदाद्रियमाणत्वाभिमानादियं खलु न कथयेदिति नम्रीभूय पुष्पार्पणेन नूनं श्रीकृष्णसेविका अपि निरभिमाना एता एव पृच्छन्ति । मालतीति । वैयग्र्येण प्रत्येकं सम्बोधनम् । अतः किमिति तैर्व्याख्यातम् । तत्र किमिति कच्चिदित्यस्यैवानुवर्त्तमानस्यार्थः । दर्शनं तावज्ज्ञातमेव तत्र स्पर्शोऽपि किं जात इति पृच्छाम इति भावः । यद्वा तासां तद्दर्शनं सम्भावयन्ति प्रीतिमिति । करस्पर्शचिन्हदर्शनादिति भावः । तत्र हेतुश्च पुष्पप्रियत्वान्माधवो वसन्त इव माधव इति । करस्पर्शेनेति युष्मत्पुष्पाणामुत्कृष्टानां श्रीहस्तद्वारावचयेनेत्यर्थः । यात इति समानदुःखत्वेनास्मभ्यं तत् कथयितुं योग्यमेव च इति भावः । एवं दासीषु पुष्पिणीष्वपि तासु नखक्षतादिसूचनेन सेर्ष्यं नर्म चाभिप्रेतम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

गुणातिरेकेऽपि नम्रा इतीमाः पश्येयुरिति पृच्छन्ति । मालतीति । हेमालति ! हे मल्लिके ! हेजाति ! हे यूथिके ! वो युष्माभिरदर्शि कच्चिद्दृष्टः किं माधवः करस्पर्शेन युष्माकं प्रीतिं जनयन् यातः अत्र मालतीजात्योरवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

मालती जातिभेदः वो युष्माभिरदर्शि दृष्टः यूथिका दान्तपत्रिका ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

पुष्पप्रियत्वात् माधवो वसन्त इत्यभिप्रायः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

हे सख्यः ! अनया दृष्टोऽसौ सापत्न्यादेव न कथ्यते तदेता मालत्यादीः पृच्छाम एतास्त्वस्माकं सखीप्राया एवेति तथा पृच्छन्ति । मालतीत्यादि । हे मालति ! हे मल्लिके हे जाति ! हे

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

यूथिके ! माधवः करस्पर्शेन वः प्रीतिं जनयन् यात इति सिद्धवन्निर्दिष्टेन हेतुना अदर्शीति निःसन्देहपरं कच्चिदिति संबोधनार्थमेव तेन नो वचनं याथातथ्यमेतावता केन पथा गतोऽ प्रीति भावार्थः॥ ८॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

तत्राप्यरुचिं मत्वा इयं सपत्नीवत् स्वोत्कर्षं ख्यापयन्ती कथमन्याभ्यो वक्ष्यतीति साधारण्यः स्त्रिय एवास्माकमुपकारिण्य इति ताः पृच्छन्ति। मालतीति। हे मालति वः युष्माभिः प्रत्येकं नानारूपाभिर्दृष्टः कच्चित्तथैव मल्लिके हे जाति हे यूथिके एताश्चतस्रो लता अतिसुगन्धपुष्पाः भगवत्प्रियाः अतो वः युष्माकं करस्पर्शेन प्रीतिं जनयन् पुष्पावचयं कुर्वन् माधवो लक्ष्मीसहितः लक्ष्म्या सह तिष्ठति अतस्तस्याः चूडाः बन्धनाद्यर्थं पुष्पावचय आवश्यक इति॥ ८॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अहो सौभाग्यगर्वेणोन्मत्तेयमस्मान्न पश्यति तदेतादृशसौभाग्यरहिता एतत्सपत्नीर्मादृशीरिमाः पृच्छाम इत्यन्यतो गत्वा आहुः। मालतीति। युष्मत्पुष्पावचयनार्थं यत् करेण स्पर्शस्तेन वर्षाशरदतिप्रफुल्लत्वलिङ्गेन मालतीजात्योरवान्तरभेदो द्रष्टव्यः ः ८॥

---

### केनचित्कृता विशुद्धरसदीपिका।

अथ काश्चिल्लताजातिषु तयोर्दासीत्वमारोपयन्त्यो निजसजातीयत्वमाविष्कुर्वन्ति। मालतीति। एतानि प्रायो दासिकाना मेव नामानीति वक्ष्यमाणामपि तथात्वं सुव्यक्तं श्रीकृष्णयामले "गोपयन्ति यतो देवि ! श्रीकृष्णं त्रिभुवननायकम्। अतस्ता गोप्य उच्यन्ते स्थानस्था ब्रजनाथयोः। गोप्यः पञ्चविधाः साध्वि ! स्थायिगोप्य इमाः स्मृताः ! तासां मध्ये प्रधाना यास्तासां नामानि मे शृणु। माधवी मालती जाती लवङ्गा मल्लिकाह्वया। अशोकलतिका कुन्दी शेवनी शतपर्व्विका। यूथिकारङ्गमल्ली च रङ्गिणी चापराजिता। स्वर्णाख्या मृदुला वृन्दा चन्द्रबिम्बा मधुश्रिया। कुटिला पाटला कुब्जा केतकी कामदायिनी। बहुला झिल्लिका तारा वाणी ब्राह्मी विपद्रिका। मल्लिका सिंहिका कृष्णा वासन्ती नवमालिका। इत्येताः कथिताः स्थायिप्रधानाः सर्वकामदाः। याः कृष्णमङ्कमारोप्य रमयन्ति ब्रजाङ्गनाः। समस्तवैभवैर्युक्ता रहस्या रासमण्डले। क्रीडाकुञ्जानि भूत्वा ताः सुपुष्पफलवैभवैः तर्पयन्त्यो वसन्त्यत्र वृन्दासख्यो लताह्वया" इति। ध्यानशतकेषु तासां स्वरूपं यथा "लोलद्वेण्यः पृथुभुजघनाः क्षाममध्याः किशोरीः सम्वीतश्रीस्तनमुकुलयोरुल्लसद्धारयष्टीः। नानादिव्याभरणवसनाः स्निग्धकाश्मीरगौरीर्वृन्दाटव्यां स्मररसमयीं राधिकाकिङ्करीस्ताः" इति। ततश्चापन्हवायार्थान्तरसमाच्छन्नप्रश्नव्याजेन हृदयश्रुतामावेदयन्ति। हे मालतीत्यादि। प्रत्येकं सम्बोधनमादरेण वः युष्माभिः अदर्शि दृष्टः क इत्यपेक्षायां माधवः वसन्त इत्यर्थः। वस्तुतस्तु मायाः श्रीराधाया धवः श्रीराधावल्लभ इत्यर्थः युष्माकमस्माकं च परमसेव्य इति भावः। किङ्कुर्वन् करस्पर्शेन प्रीतिं जनयन् प्रयोगविषया रतिः प्रीतिर्निगद्यते सा च मैत्रीस्पर्शादिकोचितेत्यादिना अलङ्कारकौस्तुभे लक्षिता तत एव करस्पर्शेनेत्युक्तम् एवञ्च स्पष्टीकृतं दासीत्वम् आसां क्रियाशतकेषु "काश्चिच्चन्दनघर्षिणीः सुघुसृणं काश्चित्स्रजो गुम्फतीः काश्चित्केलिनिकुञ्जमण्डनपराः काश्चिद्वहन्तीर्जलम् काश्चिद्दिव्यदुकूलकुञ्चनपराः संगृह्णतीः काञ्चनालङ्कारं नवमन्त्रपानविधिषु व्यग्राश्चिरङ्काश्चन। ताम्बूलोत्तमवीटिकादिकरणे काश्चिन्निविष्टा नवं काश्चिन्नर्तनगीतवाद्यसुकलासामग्र्यसम्पादकाः। स्नानाभ्यङ्गविधौ च काश्चन रताः सम्वीजनाद्यैः सदा काश्चित्सन्निधिसेवनातिमुदिताः काश्चित्समस्तेक्षिकाः। काश्चित्स्वप्रियुग्मचेष्टितदृशः स्तब्धाः स्वकृत्ये स्थिताः क्षिप्त्वान्यालिषु वर्त्तितादपि तयोः काश्चित् सुखेलापराः इत्थं विह्वलविह्वलाः प्रणतयः श्रीराधिकाकृष्णयोर्दासीरद्भुतरूपकान्तिवयसो वृन्दावनेऽन्वीयतामिति" तत्रैताः स्तब्धेन लताप्राया इति सम्भाव्य प्रश्नोऽयम्॥ ८॥

---

### श्रीरामनारायणकृतभावभावविभाविका

तत्रैवाग्रे मालतीमल्लिकाजातियूथिका दृष्ट्वा तासां मुकुलवालैः कृष्णदर्शनाह्लादजरोमहर्षं सितपुष्पैः तदीयसुमनोविकासपूर्वकस्मितं सुमनआमोदेन सुमनआमोदं पुष्पमधुबिन्दुभिरानन्दाश्रुकणांश्च सम्भाव्य पुष्पसमर्पकत्वेन तत्तन्नामभिश्च तत्किङ्करीत्वमवधार्य तत्र मा लक्ष्मीर्नित्यवक्षोऽधिवासिनी तत्प्रिया तस्या लतिकात्वेन मालत्या माधवप्रियात्वं मल्लिकाया रतिगणमल्लाः सर्वावयवाः सन्त्यस्येति मल्ली हरिस्तस्य कं सुखं यस्याः तस्माद्वा सुखं यस्याः इति व्युत्पत्त्या तत्सुखकारित्वं तल्लब्धसुखत्वं वा जात्यास्तु जनि प्रादुर्भावे इत्यस्माज्जनयति अर्थात्प्रियं कृष्णमिति जातिरिति तद्व्युत्पत्त्या तत्प्रापकत्वं यूथिकायास्तु सखीनां यूथोऽस्यास्तीति यूथी कृष्णस्तस्य यूथिनः तस्माद्वा कं सुखं यस्या इति व्युत्पत्त्या सखीयूथतत्प्रियमेळनेन सयूथस्य तस्य सुखप्रदत्वं तल्लब्धसुखत्वं च तथा सर्वासां सुमनोनम्रशिरस्त्वेनामोददातृत्वेऽपि निरभिमानित्वञ्चालक्ष्य पप्रच्छुः। मालत्यदर्शीति कच्चिदिति सम्भावनासम्भावनयोः सर्वत्र पूर्ववत् बहूनां युगपत्सम्बोधनन्तु विरहकातर्येण कापि वैकल्यदर्शनेन करुणया प्रियं दर्शयेच्चेत् जीवितं स्यादित्यभिप्रायेण जातियूथिके इत्येकं पदं द्वयोः सम्बोधनं माधवो वो युष्माभिरदर्शि तथा च नो ब्रूत नो दृष्टमिति ब्रूयुश्चेत्तत्राहुः। प्रीतिमिति। यतः सोऽपि माधवः मा लक्ष्मीः तस्या धवत्वात्तल्लतिकाद्प्रीतिमान् तथा मा श्रीस्तस्या धवत्वात्सर्वश्रीप्रदः तथा मा यथार्थमतिस्तस्या धवत्वात् युष्माकं तस्मिन् या यथार्थमतिः सत्या प्रीतिस्तन्नियन्तृत्वेन तद्दाता तदाभिरस्तत्फलप्रदश्च तथा माधवस्य वस·तस्य सुमनःप्रसादकत्ववत्सोऽपि माधवत्वात्सुमनःप्रीतिमांस्तत्प्रसादकश्चातो यथा चन्द्रः स्वकरस्पर्शेनाह्लादयति तथा पुष्पावचयमिषतया करस्पर्शेन वः प्रीतिं जनयत् यातोऽन्यथा तत्करस्पर्शं विना

**चूतप्रियालपनसासनकोविदारजम्ब्वर्कविल्वबकुलाम्र कदम्बनीपाः।**
**येऽन्ये परार्थभवका यमुनापकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः॥९॥**

श्रीरामनारायणकृतभावभावविभाविका।

सुमनोविकासामोदयोरनुपपत्तेरस्माभिस्तत्करस्पर्शसुमनोविकासादि-हेतुहेतुमद्भावस्य स्वस्मिन्ननुभूतत्वात् एवंप्रश्नेऽप्युत्तरमलब्ध्वा माळत्या नित्यवक्षोऽधिरूढसपत्नीपक्षपातित्वं मल्लिकायूथिकयो-स्तत्सुखप्रदत्वेन तदभिप्रेताचरणपरत्वं जात्यास्तु निपातेन जि अभिभवे इत्यस्मात्सज्जनाभिभवकारित्वं सुमनोविकासादिना खळानामिव स्वसुखपरदुःखदर्शने प्रहासकारित्वं चालक्ष्य निराशाः सत्योऽन्यत्र गताः तदुक्तमभियुक्तेन—

> नृत्यन्ति भोजने विप्रा मयूरा घनगर्जने।
> साधवः परकार्येषु खलाः परविपत्तिषु ॥ ८॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

इति तुलसीमुक्त्वा अहो एताः तद्धारिण्यः स्त्रिय एवास्माक-मुपकारं करिष्यन्तीति मत्वा मालत्यादिकाः पृच्छन्ति। मालतीति। हे मालति हे मल्लिके हे यूथिके मां लक्ष्मीं लतति वेष्टयतीति मालती मल्लते सुगन्धादिकं धारयतीति मल्लिका जायते इति जाती सुख-जनकत्वात्सफलजन्मवती यूथमस्त्यस्या असौ यूथिका एव-म्भूता अन्वर्थसंज्ञा यूयं चतस्रो लता अतिसुगन्धपुष्पाः भग-वत्प्रिया अतो भवतीर्वयं पृच्छामः वो युष्माभिः कच्चिद् दृष्टः न दृष्ट इति न वक्तव्यं यतो वो युष्माकं हस्तकमलस्पर्शेन प्रीतिमुत्पादयन् यातः करस्पर्शजन्यस्यात्यन्तविकाशस्य दर्श-नात् ननु तस्यास्मत्स्पर्शने किं प्रयोजनमिति चेत्तत्राहुः। माधवः लक्ष्मीपतिः सर्वदा तत्सहितस्य तदलङ्कारार्थं पुष्पावचय आवश्यक इति भावः। अहो एता अल्पाः फलरहिताः लक्ष्मीपक्ष-पातिन्यो न कथयिष्यन्तीति मत्वान्यत्र गताः अनभिज्ञापक्षे माल-तीजात्योरवान्तरभेदः यूथिका जूहीतिख्याता अत अहो सौभाग्या-तिरेकवत्यो नम्रस्वभावाः सर्वसुखकरा विकसितवदनाः परोप-कारिण्यो भविष्यन्तीति मत्वा मालत्यादिकाः पृच्छन्ति। मालतीति। हे मालत्यादयः काचिद्दोऽदर्शि भवतीनां न केवलं दर्शनमात्र-मपितु स्पर्शोऽपि जात इत्यनुमीयते इत्याहुः। प्रीतिमिति। यतो माधवः परमशोभाधीशत्वात्स्पर्शेनापि शोभाजनकः स्पर्शश्च पुष्प-प्रियत्वात्तस्यावश्यमेव जातः स्यात् माधवो वसन्त इत्यतिश्लेषेण-ताद्वियोगो न भवतीनामप्यसह्योऽतस्तुल्यदुःखत्वादवश्यं वदतेति भावः। अहो एताः करस्पर्शेन निवारणं कृत्वा गतः स्यादत-स्तद्भयान्न कथयन्तीति मत्वान्यत्र याताः मानिनीपक्षे अहो इमा मालत्यादयः सौभाग्यादिगुणैरस्मत्समाना अत एताः प्रष्टव्या इत्याशयेन पृच्छन्ति। मालतीति। यतो भवत्यः पुष्पिण्योऽतः करस्पर्शेन वः प्रीतिं जनयन् यात इति सनर्मोक्त्या व्यञ्जयन्ति परंत्वेतावता भवतीभिर्गर्वो न विधेयो यतः स न कस्यापि पक्षपातीः किन्तु मायाः शोभामात्रस्य धवः स्वामी तस्मादस्मत्पक्षपा-तिन्यो यूयमवश्यं कथयतेति भावः। अहो सद्यः स्पर्शोत्थाव-यवगर्वयत्य एता न ब्रुवत इति मत्वान्यत्र प्रस्थिताः निवृत्ति-पक्षे मालत्यादिस्थानीयानि श्रोत्रत्वक्रसनाघ्राणाख्यानीन्द्रियाणि पृच्छन्ति। मालतीति। वः प्रीतिं विषयोपलब्धिसुखं तत्प्रकाशेन जनयन् यातीत्याविषयं व्याप्य स्थितः। ननु व्यापकस्य तस्य कथं गमनमिति चेत्तत्राहुः। माधवः मायायाः प्रेमवृत्तेः धवः स्वामी तथा च प्रमाणचैतन्यस्य गमनादिकमिति भावः ॥ ८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे मालति! हे मल्लिके! हे यूथिके! करस्पर्शेन वो युष्माकं प्रीतिं जनयन् यातः माधवः वो युष्माभिः किमदर्शि दृष्टः मालतीजात्योरवान्तरजातिभेदो ज्ञेयः ॥ ८॥

भाषा टीका।

हे मालति! हे मल्लिका हे जाइ हे जुई हाथ ते स्पर्श कर के तिहारे को प्रसन्न कर के गयो जो माधव तुमने देखो हो तो बतादीजो ॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

फलादिभिः सर्वप्राणिनां सन्तर्पका एते पश्येयुरिति पृच्छन्ति। चूतेति। चूताम्रयोरवान्तरजातिभेदः कदम्बनीपयोश्च हे चूतादयः! येऽन्ये च परार्थभवकाः परार्थमेव भवो जन्म येषां ते यमुनो-पकूलास्तस्याः कूलसमीपे वर्त्तमानाः तीर्थवासिन इत्यर्थः। ते भवन्तो रहितात्मनां शून्यचेतसां नः कृष्णपदवीं कृष्णस्य मार्गं शंसन्तु कथयन्तु ॥ ९॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

श्रीकृष्णस्य तस्या वा दास्य एताः शङ्कया तं यत न कथयेयु-रित्यन्यानाप्तान् पृच्छन्ति। चूतेति। चूताम्रयोरसभेदेन कदम्बनी-पयोश्च वर्णादिभेदेन भेदः प्रियालः सालभेदः असनः पीतसालः उत्तमपुष्पफलरहितोऽप्यर्कः शिवप्रियपुष्पत्वादुक्तः अन्ये पीलु-करीरमधूकनागरङ्गनालिकेरपूगतालकदलीलवलीबदरीप्रभृतयः ननु युष्मान् प्रति तत्कथनेन किमस्मत्प्रयोजनं तत्राहुः। परेति। अत्र श्रीस्वामिपादमते भवका इतीकाररहितः पाठः भवो जन्मेति व्याख्यानात् बहुव्रीहौ कः इकारयुक्तपाठस्तु सर्वत्र दृश्यते ततश्च भविकं मङ्गलमभ्युदय इत्यर्थः। तथाप्यर्थः स एव तत्रापि यमुनोपकूला इति परदुःखासहिष्णुता सूचिता श्रीसूर्य्यनन्दिन्यास्तस्या भ्रातुः श्रीयमस्य पापलोकदण्डाधिकारतः परदुःखासहिष्णुतयावतीर्णायाः सङ्गेन तादृशत्वात् तत्रान्य-

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

थिका पद्मपुराणे श्रीयमुनामाहात्म्ये प्रसिद्धैव यद्वा तीर्थवासित्वेन सत्यमेव शंसनीयं नतु वञ्चनीयमिति भावः । ननु स्वयमेव युष्माभिरन्विष्य गृह्यतामित्याशङ्क्य निजार्त्तिज्ञापनेन कृपां जनयन्त्यः सकातर्य्यमाहुः रहितात्मनां विरहहतज्ञानानामित्यर्थः यद्वा आत्मा प्रियः श्रीकृष्णस्तत्त्यक्तानामित्यर्थः । अतो मृतप्रायाः स्वयमन्वेष्टुं न शक्नुम इति भावः । पूर्वपूर्वेषु प्रायोदर्शनं पृष्टम् एषु च गुणविशेषेण तद्दर्शनस्य निश्चयसम्भावनया केवलं तद्वर्त्मोपदेश प्रार्थनमिति ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णदास्य एताः शङ्कया तं यत न कथयेयुरिति मुनिप्रायत्वेनाप्तानन्यान् पृच्छन्ति । चूतेति । चूतो लताजातिः । आम्रो वृक्षजातिः । पूर्वत्रैव नत्वात्र कविभिर्लतात्वं प्रयुज्यते मध्यदेशादौ लताकाराश्च ते दृश्यन्ते इति नीपश्च नीपो धूलिकदम्बे स्यादिति विश्वप्रकाशात् परागप्रधानो महापुष्पोऽसौ ज्ञेयः प्रियालः तस्यैव वीजं चारुवीजतया ख्यातं भुज्यते पनसः कण्टकिफलः असनः पीतसालः कोविदारो युगपत्रकः कोयिलाव इति विन्ध्यादौ प्रसिद्धः काञ्चनारतुल्यः काञ्चनारभेदोऽयम् अर्कोऽतिनिकृष्टोऽपि पृष्ट इति तासामुत्कण्ठातिशयः स्पष्टीकृतः । ननु युष्मान् प्रति तत्कथनेन किमस्मत्प्रयोजनं तत्राहुः । परेति । अत्र श्रीस्वामिपादमते भवका इति इकाररहितः पाठः भवो जन्मेति व्याख्यानात् । बहुव्रीहौ कः इकारयुक्तपाठस्तु सर्वत्र दृश्यते ततश्च भविकं मङ्गलम् अभ्युदय इत्यर्थः तस्याप्यर्थः स एव । तथापि यमुनोपकूला इति तीर्थवासित्वेन सत्यवादित्वात् कृपालुत्वाच्च सत्यमेव शंसनीयं नतु वञ्चनीयमिति भावः । उपसमीपे कूलं येषां ते उपकूलाः यमुनाया उपकूला यमुनोपकूला इति तु विग्रहः । ननु स्वयमेव युष्माभिरन्विष्य गृह्यतामित्याशङ्क्य निजार्त्तिज्ञापनेन कृपां जनयन्त्यः सकातर्यमाहुः । रहितात्मनां विरह-हत-ज्ञानानामित्यर्थः । अतो मृतप्रायाः स्वयमन्वेष्टुं न शक्नुम इति भावः । पूर्वं सर्वेषु प्रायो दर्शनं पृष्टमेषु तु पूर्वपूर्वेषु प्रत्युत्तरालाभेन चातुर्यान्निश्चित्यैव केवलं तद्वर्त्मोद्देशप्रार्थनम् ॥ ९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

परार्थसम्भवाः परोपकारार्थमुत्पन्ना रहितात्मनां शून्यमनसाम् ॥ ९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

फलादिभिः सर्वप्राणसन्तर्पका इमे पश्येयुरिति पृच्छन्ति । चूतेति । चूताम्रयोः कदम्बनीपयोश्चावान्तरभेदः द्रष्टव्यः हे चूतादयः भवन्तः ये चान्ये परार्थमेव भविकं जन्म येषां ते यमुनाकूलसमीपे वर्त्तमानास्तीर्थवासिन इत्यर्थः । रहितात्मनां शून्यचेतसामस्माकं कृष्णपदवीं शंसन्तु कथयन्तु ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रियालो राजादनः देवदार्वर्थो कोविदारः काञ्चनारकः असनः पीतसारकः अक्षं शुकनासं परार्थभविनः लोकोपकारार्थमुत्पन्नाः यमुनाकूलसमीपे जाताः रहित आत्मा स्वामी कृष्णो यासां तास्तथा तासाम् ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चूतो लताजातिः । आम्रो वृक्षजातिः । पूर्वत्रैव लतात्वं प्रयुज्यते इति । नीप इति नीपो धूळिकदम्बे स्यादिति विश्वप्रकाशात् । महापुष्पोऽसौ ज्ञेयः । अर्कोऽतिनिकृष्टोऽपि पृष्ट इति तासाम् उत्कण्ठातिशयः स्पष्टीकृत इति ॥ ९—१० ॥

---

श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

हे सख्यः तेनैवैवामू निषिद्धा यतो न कथयन्ति तत किमासामुपरोधकरणेन अमी तावद्यमुनातीरवासित्वेन तीर्थवासितयापरोपकारित्वेन च सत्यवचस एव तावत्तदेतानेव पृच्छाम इति पुनरन्यान् पृच्छन्ति । चूतेत्यादि । कदम्बनीपयोरवान्तरभेदात् पृथङ्निर्देशः येऽन्येऽगृहीतनामानः प्रति निषेधाभिमाननिरासाययमुनोपकूला इति तीर्थवासित्वं परार्थभविकाः परार्थकुशला इत्यवश्यमेवैभिर्वक्तव्यं ननु वयं मौनिन इत्याशङ्क्याहुः । कृष्णपदवीमिति । वाक् प्रयोगं विनापि पल्लवादिव्यापारेणापि पदव्याः कथनसम्भवात् तस्मात्पदवीं पन्थानमेव तस्य कथयत आत्मराहित्यकथनेन विशेषदैन्यप्रकटनम् ॥ ९ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ननु यद्यप्येताः स्त्रियः तथाप्यफला इति अल्पा इति स्वार्थपरा इति लक्ष्मीपक्षपातन्य इति न वदिष्यन्तीति ज्ञात्वा आम्रादीनत्युत्तमान् वृक्षान् पृच्छन्ति । चूतेति । चूताम्रौ मधुराम्लप्रकृतिकौ कालभिन्नफलौ वा प्रियालस्तु वीजेऽप्याधिकरसयुक्तः पनसो महाफलः अन्ये चाशनादयो वृक्षाः पुष्पफलप्रधानाः किंबहुना अन्येऽपि ये मधूकादयः परार्थमेव जन्म येषां ते परार्थभवकाः किञ्च यद्यपि सर्वएव वृक्षाः परार्थजन्मानः तत्रापि ये यमुनोपकूलाः यमुनाया उपकूले तपस्विन इव तिष्ठन्ति ते ह्यवश्यं भगवन्तं पश्यन्ति बोधयन्ति च अतःसदानन्दस्य पदवीं शंसन्तु यथास्मद्धृदये समायाति दयार्थमाहुः । रहितात्मनामिति । केचिद्गृहरहिता धनरहिता देहरहिता वा वयन्त्वात्मरहिता एव अतः सर्वापेक्षया वयं दीनाः अतः कृष्णपदवीमस्मदर्थे शंसन्तु ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो एताः स्वसपत्न्यास्तुलस्यास्तस्माद् कृष्णाच्च भीत्य

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जानन्त्योऽपि न ब्रुवते तदलमेताभिः परतन्त्राभिरित्यन्यतो गत्वा सत्यमिमे एव यमुनातीर्थवर्त्तिनो निस्पन्दत्वेनैवानुमीयमानविष्णुस्मरणवन्तो भवन्त्यतो न मृषा वदिष्यन्तीति विश्वस्याहुः । चूतेति । चूताम्रयोर्लतावृक्षजातित्वेन भेदः । नीपो धूलिकदम्बो बृहत्पुष्पः । कदम्बः क्षुद्रपुष्पोऽतिसुगन्धः । प्रियालः शालभेदः असनः पीतशालः कोविदारः काञ्चनारभेदः । अर्को निकृष्टोऽपि गोपीश्वरप्रियत्वात् तत्समीपे सदा वर्त्तमानः । अन्ये नारिकेलगुवाकादयः ते भवन्तः आत्मशून्यानां नः कृष्णमार्गं कथयत ननु कस्मै प्रयोजनाय कथयामस्तत्राहुः । परार्थमेव भविकमभ्युदयो येषां ते । यमुना उपकूले येषां ते इति गङ्गादि ॥ ९ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

अथ माधवपदश्रवणेनोद्बुद्धविहारदर्शनसंस्कारास्तदेकहाराः प्राणसहचर्य्यः प्रख्यातप्रभावान् श्रीराधाकृष्णयोरसंकुचितलीलावलोकाय स्वीकृतवहिर्जडीमावाजुभयोर्भावानुकूलस्वभावान् महानुभावानिव यमुनोपकूलांस्तरून् पृच्छन्ति । चूतेति । चूतो लताजातिः आम्रो वृक्षजातिरितिभेदः परागप्रधानो महापुष्पो नीपः स्तोकफलः कदम्ब इति च प्रियालश्चारुवीजवृक्षः पनसः कण्टकिफलः असनो विजयसारः कोविदारः काञ्चनारः जम्बूः प्रसिद्धः अर्कोऽपि निकृष्टस्याप्यस्य प्रच्छोत्कण्ठातिशयेन यद्वा सूर्यनामभ्रमात् एवं विल्वस्यापि विल्वे शाण्डिल्यशैलूषाविति कोशादयेर्नामान्तरभ्रमेणेति एवञ्च श्लिष्टपदयोरुपादानेन देवत्वमूपित्वं च सूचितं वकुलो ऽशोकः येऽन्ये इति तत्र तरूणां बाहुल्यंसूचितं परार्थभवकाः परोपकारैकफलः भवः प्रादुर्भावो येषान्ते इति प्रोत्साहनं भविका इति पाठे परार्थ परदेवतायै इति परार्थं चतुर्थी तदर्थार्थेति समासः राधिका परदेवतेति गौतमीयाद्राधिका अर्थः सुखमेव भविकं मङ्गलं येषां यद्वा पराभ्यामिति परार्थः सत्यम्परमितिश्रीप्रथमात् परः स्यात्पुरुषोत्तम इति कोशाच्च परः श्रीकृष्णः शक्तिः सम्मोहिनीपरेति गौतमीयात् श्रीराधेत्यर्थः । ततश्च द्वयोरेवार्थो मङ्गलं येषां तत्सुखसुखिन इत्यर्थः । यथाच श्रीकृष्णयामले—

द्रुमाश्च कल्पपूर्वा ये नानामोदविधायकाः ।
वृन्दावनस्थास्तान् विद्धि वलभद्रांशसम्भवानिति ॥

तस्य साक्षित्वात्तत्त्वं युक्तमेव ते चोक्ताः शतकेषु—

केचित्पीयूषसारोत्तमपरिणतरुचयः —
केचन क्षीरसारैः ।
दिव्यैः सन्निर्मिताः केऽप्यतुलमदकृता —
मासवानांङ्गनाङ्गः ॥
केचिच्छैलोपलाः केप्यतिहिमकरकान्तुल्यरूपा इति
श्रीवृन्दारण्ये दधति बहुविधा राधिका कृष्णतुष्ट्यै
श्रीराधाकृष्णनर्मोक्त्यनुसरणपरा —
विभ्रतः केऽपिशाखा ।
भूलग्नाःसूनभाराद्बहुशतपरितो —
मण्डपाकाररम्याः ।
हस्तग्राह्यं प्रसूनाद्युपरिच शिखरः —
स्वञ्च सन्धारयन्तः ॥
शाखीन्द्रा यत्र धन्या दिशतु मम शिवम् —
सैव वृन्दाटवीयम् ।
केचिन्माध्यान्हिकादप्यातिवहलरुच —
श्चण्डमार्त्तण्डकोटि ॥
भ्राजद्दिव्यप्रभामण्डलितउरुरुचः —
केऽपिकल्पाग्नकोटेः ।
केचिद्राकेन्दुकोट्युज्ज्वलशिशिरलस —
च्चारुरोचिः गुञ्जापुञ्जा ।
च्चन्द्रिकाभिरामद्युतियितितिमहा —
मञ्जुलाः केऽपि यत्र ।
केचिद्विद्योतमानाद्युतिभिरगणितो —
दीप्तविद्युल्लतानाम् ।
विस्फूर्जद्दिव्यकोटिस्फटिकमणि महा —
स्वच्छभासोऽपि केऽपि ।
केचिद्बालप्रवालाधिकललितमहः कन्दलीसु-
न्दराङ्गाः केचिन्निर्भान्त्यनन्तद्रुत कनकरुचो —
हारहारीत्विषोऽन्ये ॥
केऽपि प्रोत्फुल्लदिव्यस्थलकमलरुचः —
केऽपि नीलोत्पलाभाः ।
केचित्सत्पाटलश्रीचय रुचिररुचो ऽ—
न्येजपापुष्पभासः ।
इत्थं स्वानन्दसान्द्रसघनवपुषो —
यत्र शाखीन्द्र वृन्दस्या ।
स्त्वयंवर्णभेदा अथविविधिरुचां —
वीचयोदुर्निरूपाः ।
आकाराणां प्रकारा अपि परमचमत्कारिणः पत्र पुष्पा ।
द्यत्याद्यत्वैकसम्निः स्फुरतु मम सदा —
सैव वृन्दाटवीयम् ॥—

श्रीबृहद्भागवतामृते च —

यस्यैकवृक्षोऽपि निजेन केनचिद्द्रव्येण —
कामांस्तनुतेऽर्थिनोऽखिलान् ।
तथापि तत्रैव सदाप्रकाशये —
दैश्वर्यमीशः स्वविहारचिन्नत इति ॥

मूलं प्रमाणं श्रीरुद्रयामले —

वीथ्यां वीथ्यां निवासो ऽधरमधुसुधच
स्तत्र सन्तानकानामेके ।
एकेन्दुकोट्यातपविशदकरास्तेषु चैके क्रमन्ते ॥
रात्रे रात्रे विरामे समुदिततपन -
द्योतिसिन्धूपमेया ।
रत्नाङ्गानां सुवर्णाचित्तमुकुरस्व —
स्तेभ्य एके द्रुमेन्द्राः ॥
यत्कुसुमं यदा मृग्यं यत्फलञ्च वरानने ।
तत्तदेव प्रसूयन्ते वृन्दावनसुरद्रुमाः ॥

एवं च परार्थभविका इति प्रतिपादितं सन्त्यार्थो विहार एव गोप्येकया युतस्तत्र परिक्रीडति नित्यदेन्यादिब्रह्मयामलवाक्यात् श्रीकृष्णयामल च —

केनचित्कृता विशुद्धरसदीपिका ।

तया सह विहारो यः कृष्णस्य परमात्मनः ।
स एवोपनिषद्भिस्तु नित्यानन्द इतीर्यते ॥

इत्यादिबहुशः रेमे तयेत्यादि वक्ष्यमाणाश्च परंत्वतिरहस्यत्वात्कण्ठोक्त्या न प्रकाशित इति विवृतं मञ्जूषायाम् अथवक्रीणां प्राणसखीत्व प्रतिपादनाय तासां स्वरूपं भेदाश्च प्रदर्श्यन्ते स्वप्राणसख्याः प्रेमैकपात्रीर्दात्रीः सुखस्य ताम् । वन्दामहे महोदारा मारास्पृष्टां विलासिनीम् आसां सामान्यलक्षणं श्रीकृष्णार्चनचन्द्रिकायाम्—

प्रेमलीलाविहाराणां सम्यग्व्यस्तारिका सखीति—

श्रीमदुज्ज्वलनीलमणौ च–

आत्मनोऽप्याधिकं प्रेम कुर्वाणान्योऽन्य मच्छलम् ।
विश्रम्भिणी वयोवेषादीभि स्तुल्या सखीमता ॥

सा च सखी नित्यसखी प्राणसखी प्रियसखी परमप्रेष्ठसखीति पञ्चविधा तत्र सखी यथा तत्रैव—

निरुपाधिप्रीतिपरा सदृशी सुखदुःखयोः ।
वयस्यभावादन्योऽन्यहृदयज्ञा सखी भवेदिति ॥
सख्येनैव सदा प्रीता नायिकात्वानपेक्षिणी ।
भवेन्नित्यसखी सा तु द्विधैकान्त्यतिकी लघुः ॥
आपेक्षिकलघूनाञ्च मध्ये ऽन्या काचिदीरिता ।
सैव प्राणसखी नित्यं तत्सुखासक्तमानसा ।
छायेव यानुसरति सा च प्रियसखी भवेत् ॥
सुरते नर्म्मणि रता सैव नर्म्मसखी भवेत् ।
आत्मनो मूर्त्तिरन्येव प्रियनर्म्मसखी हि सा ॥
अथासामपरः कोऽपि विशेषः पुनरुच्यते ।
असमे च समश्चेति स्नेहं सख्यः स्वपक्षगाः ॥
श्रीकृष्णे राधिकायाञ्च वहन्त्यो द्विविधा मताः ।

तत्र हरौ स्नेहाधिका यथा—

अहं हरेरिति स्वान्ते गूढामभिमतिं गताः ।
अन्यत्र कथनासक्त्या स्पष्टां श्रीराधिकां श्रिताः ॥
मनागेवाधिकं स्नेहं वहन्त्यस्तत्र माधवे ।
तत्सहायपराश्चेमा हरौ स्नेहाधिका मताः ॥
याश्चात्र सख्य इत्युक्तास्ताश्च स्नेहाधिका हरौ ।
शेषाः स्नेहाधिकाः सख्यामुत्कर्षेश्च यथोत्तरम् ॥
तत्रापि नित्यसख्यो याः प्राणसख्यश्च काश्चन ।
समस्नेहाः स्मृतास्तासामुदाहरणमुज्ज्वले ॥
तिस्र एता व्रजगता ज्ञेयाः काश्चिन्निकुञ्जगाः ।
अथ तुल्यप्रमाणकं स्नेहं वहन्त्योऽपि द्वयोरिमाः ॥
राधाया वयमित्युच्चैरभिमानमुपाश्रिताः ।
परमप्रेष्ठसख्यश्च प्रियसख्यश्च ता मताः ॥
उदाहरणमेतासां मञ्जूषायां विलोक्यताम् ।

अथ शुद्धायाः प्रीतेर्गानाकाष्ठापरा सख्ये मुख्ये रसे स्वरूपं तस्येदं गीयते सद्भिः अथसख्यलक्षणं–

आत्मोचितैर्विभावाद्यैः पुष्टिं नीता सतां हृदि ।
शुद्धा रति र्भवेत्सख्यं तच्च निर्हेतुसौख्यदम् ॥

तत्र रतिश्चेतोरञ्जकतासुखभोगानुकूल्यकृत् चेतोरञ्जकाद्रीभावः सा प्रीतिर्मैत्री सौहार्दभावसंज्ञां च गच्छति तत्र—

या सम्प्रयोगविषया सा रतिः परिकीर्त्तिता ।
सम्प्रयोगः स्त्रीपुरुषव्यवहारः सतां मतः ॥

स चात्र द्वयोरेव तदुक्तमलङ्कारकौस्तुभे–

राधामाधवयोरेव शृङ्गारः श्रुतिरोचक इति ।

अत्रैवपदमन्ययोगव्यवच्छेदि विशेष्यसङ्गतत्वात् पार्थ एव धनुर्द्धर इतिवत् असम्प्रयोगविषया सैव प्रीतिर्निगद्यते सा च द्वयोरपि स्त्रीपुरुषयोः स्त्रीणां सखीषु पुरुषाणांच साखषु कांचिन्मनोवृत्तिविशेषात्स्त्रीपुंसयोरपि यथा द्रौपदीकृष्णयोरिति मनोवृत्तिमयीप्रीतिर्मैत्री स्पर्शादिकोचिता सा च श्रीराधासखीनां श्रीकृष्णसखीनां च परस्परविषया–

निर्विकारा सदैकाभा सा सौहार्दमितीष्यते ।
तत्सुखापरपर्य्याया सेयं श्रीललितादिषु ॥

सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्दम् सेयं तत्सुखात्मिका परा रतिः सख्यमिति सिद्धं निर्हेतुसौख्यदमित्युक्तेः अत्र प्रमाणं सखीनामनुभव एव श्रीमदुज्ज्वले–

यथाधिपत्वेऽप्यौचित्यं दधाना ललितादयः ।
श्रीराधाप्रेष्ठभावस्य लोभात्सख्यरुचिं दधुरिति ॥
न चैवं वाच्यमानस्यापरकर्षो भवेदिह ।
मधुरादवरत्वेन युक्तिरत्रावधार्य्यताम् ।
सायुज्याख्या परा मुक्तिर्भक्तैर्यद्वदुपेक्षिता ॥
सेवान्तरायादत्रापि तत्सुखस्य विघाततः ।
मधुरोपेक्षितालीभिर्योगे सिद्धिस्तु नित्यदा ॥
वियोगे प्रकटायान्तु लीलायामुच्यतेऽधुना ।

सा च सिद्धिविधुरपरिभावितसाक्षात्काररूपा द्राक् तदावेशरूपा च नन्वन्यत्राप्रसिद्धमितिचेदलौकिकत्वाद्भूषणमेतन्नदूषणं लोकोत्तरचमत्कारिसुखं रस इत्यालङ्कारिकाः अलंप्रसक्तानुप्रसक्त्या मूलमनुकूलयामः तत्र यमुनोपकूला इति नित्यविहारभाण्डाराधिकारिणीयं नित्यसहचरीति स्कान्दप्रसिद्धेः यमुना उपकूला अनङ्गरङ्गाख्यप्रदेशद्रुमाः श्रीराधिकाकुञ्जवाटिकावृक्षा इत्यर्थः कृष्णपदवीं शंसन्तु अत्र कृष्णेत्याद्यपन्हवः विपक्षादिसमुदाये तथोक्तेरेवोचितत्वात् यद्वा आराध्या मम नाम्नापि तेन राधेति गीयत इति कृष्णयामलनिर्वचनानुसारेण तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकमिति सम्मोहनतन्त्रोक्तभेदाभिप्रायेण वा तथोक्तं यदि वाऽतिरहस्यत्वान्न तस्याः साक्षान्नामोक्तिः तदुक्तं श्रीकृष्णयामले—

स्थानं नित्यविहारस्य ख्यातं वृन्दावनं वनम् ।
यत्र नित्यं विहरति कृष्णो राधिकया सह ॥
आविर्भावं द्वापरान्ते विहारस्य करोति सः ।
अन्यदान्तर्हितो नित्यविहारं कुरुते प्रभुः ॥
कुञ्जे कुञ्जे चतुर्वेदपुराणभ्रमराकुले ।
वैकुण्ठादपि सङ्गोप्यसम्भोगास्थितमीश्वरम् ॥
सर्वं रहस्यं कृष्णस्य प्रोक्तवान्नारदः पुरा ।
वेदव्यासाय विविधान् राधिकाकृष्णयोर्गुणान् ॥
गोपयित्वा ततो व्यासः पुराणादिषु केवलम् ।
कृष्णलीलां निजगदे न राधान्वितां कथाम् ॥
रुक्मिण्याद्याः स्त्रियो यास्तु ताः राधांशा न संशयः ।

ननु स्वयमेव विचीयतामिति तेषां गाम्भीर्य्यमवधार्योचुः रहितात्ममां विगतानुसन्धानानां न इति सजातीयत्वेन मन्यसूचितम् ॥ ९ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

ततोऽग्रे गच्छन्त्यो चूतप्रियालपनसासनकोविदारजम्ब्वर्कविल्ववकुलाम्रकदम्बनीपान् दृष्ट्वा तेषां सफलत्वेन फलप्रदत्वेन च तद्विपयकप्रश्नस्यापि सफलत्वमालक्ष्य तथा च्यवति परदुःखकरुणया द्रवतीति चूतः उणादित्वान्निपातेन यकारस्थले उकारादेशः तकारागमश्च इति व्युत्पत्त्या कृपालुतया द्रवितचित्तः तथा चिति संज्ञाने इत्यस्माच्चेतति चेतयतीति वा चूतः उणादित्वादेवेकारस्य उकारादेशस्तत्संज्ञा ज्ञापकश्च तथा चः शोभायां समाख्यातः—

उकारः शङ्करः प्रोक्त ऊकारो विष्णुरेव च ।
तकारः कथ्यते चौरे क्रीडे पुच्छे प्रकीर्तितः ॥

इति कोशोक्तेःशोभनो विष्णुशिवयो राक्रीडश्च प्रिया आलयः सख्यो यस्येति सखिषु स्निग्धः प्रियमालाति आददातीति प्रियप्रापको वा प्रियालः आलीः संत्यज्य गच्छतः पनङ्गमनं स्यति तनूकरोति ता मेलयितुं निरोधयन्ति दुःखितान् पातीति पः न स्यति न नाशयतीति वा पनसः आसयति प्रियं सखीजनानां समीपे उपवेशयतीत्यासनः अकारं वासुदेवं सनति भजतीत्यसनः तद्भक्तत्वात् तत्प्रियो वा कोविदं रसाभिज्ञं रसिकशिरोमणिं कृष्णं आसमन्तात् सर्वसखीभ्यो रातीति कोविदारः जायते इति जम्बूः परोपकारित्वेन सुफलजन्मेति भावः । ये गत्यर्थास्ते प्राप्त्यर्था इत्यस्मात् ऋणाति प्रियङ्गमयतीत्यर्कः अर्कवत्स्वरूपाव भासकतया तमो दुःखनाशको वा अर्कः विरुद्धं तत्प्राप्तिप्रतिबन्धं लुनातीति विल्वः उः शिवः अः कृष्णस्तयोर्भक्तत्वेन कुलं यस्य कुलत एव हरिहरपरः परमभागवतो वकुलः तौ कौ पृथिव्यां लाति प्रापयतीति वा वकुलः अमरोगे गतौ चेत्यस्मात् आमयति गमयत्यर्थात्प्रियमित्याम्रः कं सुखं ददातीति कदः कृष्णस्तद्वृन्दं वाति प्रापयतीति कदम्बः नयति प्रापयतीति नीप इति तन्नाम्ना च कृष्णप्रापकत्वं सम्भाव्य पप्रच्छुः । चूतप्रियालेति । पूर्ववद्विकलतया युगपदेव सोपकारसूचकत्वत्तन्नाम्ना सम्बोधनं ये चान्ये तथाविधास्ते नः कृष्णपदवीं शंसन्तु ननु किंनस्तत्कथनेन तत्राहुः परार्थभविका इति । परार्थो भवो जन्म येषां तथा परार्थे भवः शिवः को ब्रह्मा तयोः सदृशा आशु तोपफलप्रदाः परार्थभविका इति पाठे तु परार्थमेव भविकं मङ्गलमभ्युदयो येषां तथा यमुनोपकूलाः परोपकारायैव तीर्थवासिन इत्यर्थः एवं प्रार्थनायामप्युत्तरालाभे चूतस्य प्रच्युतमतित्वं प्रियालस्य प्रियं न लातीति प्रिया प्रापकत्वं पनं गतिं प्राप्तिं स्यतीति पनसस्य प्राप्तिप्रतिबन्धकत्वम् असनस्य न कमपि सनति भजतीत्यसनः न कस्यापि सुखप्रदत्वम् आसनस्य आसमन्तात्स्यति अन्तं प्रापयतीति नाशकत्वम्वा कोविदारस्य कोविदानां रसज्ञानामारत्वं खण्डकत्वं जम्बोस्तु अम्बूजम्बूकफेलप्रभृतीनामुणादिव्युत्पत्त्या व्युत्पन्नत्वात् जि अभिभवे इत्यस्माज्जायतेऽभिभवति सत इति सतामभिभावकत्वम् अर्कस्य स्वत एव विपाटकतया मारकत्वं विल्वस्य विशेषेण लुनातीति विच्छेदकत्वं वकुलस्य कुलत एव हरिहरपरत्वेन तत्पक्षपातित्वम् आम्रस्य आमयति रोगं प्रापयतीति दुःखप्रदत्वं कदम्बस्य कुत्सिता अम्बा यस्येति काकविट्प्रभवत्वेन कुत्सितत्वं नीपस्य प्रियमन्यत्र नयतीति प्रियवियोजकत्वमन्येषामपि तत्सहवर्तिनां तादृशत्वं सर्वेषां तेषां परार्थानां भवो रुद्रस्तद्रूपेण संहारकत्वं परार्थेनैव भविकमभ्युदयो येषामिति परार्थहारकत्वं यमुनाया यमभगिन्याः सामीप्येन क्रूरताश्चावगत्यान्यत्र गताः ॥ ९ ॥



---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो एते आम्रादयः परोपकारशीलास्तपस्विनस्तीर्थसेवापराश्चेति मत्वा तान् पृच्छन्ति । चूतेति । चूताम्रयोः मधुराम्लफलत्वेन भेदः नीपो धुलिकदम्बा बृहत्पुष्पः कदम्बः क्षुद्रपुष्पोऽतिसुगन्धः प्रियालः शालभेदः पनसः कटहर इति ख्यातो बृहत्फलः असनः पीतशालः कोविदारः कचनारभेदः अर्कः क्षुद्रवृक्षोऽपि गोपीश्वरप्रियत्वात्प्रश्नार्हः च्यवतेऽतिरसमिति चूतः च्युतिर्क्षरणे प्रीणातीति प्रियालः प्रिञ्तर्पणे पनस्यते स्तूयत इति पनसः अस्यति परदुःखमिति असनः असु क्षेपणे कुं भूमिं विदारयतीति कोविदारः दृ विदारणे परोपकारार्थं झटिति भूमिमाभिद्य निःसृतः जमति परदुःखमिति जम्बूः जमु अदने अर्कः भानुवज्जाड्यहरः विलति परदुःखमिति विल्वः विलभेदने वङ्कतेऽवगच्छति परदुःखमिति वकुलः वकि गत्यर्थः अम्यते स्वदुःखनिरासार्थं जनैरित्याम्रः अम गत्यादौ कन्दति हिनस्ति परदुःखमिति कदम्बः नयति सुखं प्रापयतीति नीपः णीञ् प्रापणे एवं भूता हे चूतादयः ! अन्येच ये मधुकादयः परार्थभवका परार्थमेव भवो जन्म येषान्ते भविका इति पाठे भविकं मङ्गलं फलाद्युत्कर्षोऽपीत्यर्थः तत्रापि यमुनोपकूला यमुनायाः कूलसमीपे वर्त्तमानास्तीर्थनिकटवार्त्तित्वादिति नोऽस्मभ्यं कृष्णस्य सदानन्दरूपस्य भगवतः पदवीं मार्गं शंसन्तु स्वस्य करुणापात्रतामाविष्कुर्वन्ति रहितात्मनामिति काश्चिद्गृहादिरहिताःवयंत्वात्मना अतस्तच्छंसनेनात्मप्रदानं कुरुतेति भावः अत्र दर्शनासिद्धावन्य मार्गं पृच्छन्ति अहो एते समाधिनिष्ठा न शृण्वन्त्यतो न किञ्चिदपि वदन्तीति निवृत्ताः अनभिज्ञापेक्ष कृष्णस्त्वस्मच्चित्तरत्नमञ्जूषामाकृष्य गतस्तच्चोरचक्रवर्त्तिनः पदवीं शंसन्तु तत्रापि मृषाभाषणं न विधेयं यतो यमुनोपकूलाः यमुनासन्निधौ वर्त्तमाना इति शपथो व्यज्यते ननु स्वयमेवान्विष्य तस्य मार्गो निश्चेतव्य इत्याशङ्क्याहुः । रहितात्मानां विरहव्याकुलतया न्वेषणसमर्थमनः हितमनोरहितानां नः कृपया भवन्त एव वदन्तु अहो एते तीर्थवासिनोऽतो ऽत्यन्तकठोरहृदयाः अतो न कथयिष्यन्तीति ततो निवृत्ताः गानिनीपक्षेऽप्येवं निवृत्ताः निवृत्तिपक्षे चूतादिस्थानीयानि पञ्चकर्मेन्द्रियाणि जम्ब्वादिस्थानीयान् पञ्चप्राणान् कदम्बनीपौ चित्ताहंकारौ पृच्छन्ति । चूतेति । ये चान्ये विषयाः परार्थभवकाः आत्मशेषभूताः यमुनास्थानीयात्मप्रदेशे स्थिताः नोऽस्माभिः श्रुतिभिः रहितात्मनामस्माकमविचारविधुरचित्तानां कृष्णस्य परमात्मनः पदवीं मार्गं शंसन्तु स्वप्रकाशकस्य प्राप्त्युपायं सूचयन्तु तथाच तदनुमापका भवन्ति नतु तदवभासका इति भावः ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे चूतादयः ! भवन्तः अन्ये च ये यमुनोपकूला यमुना-

**किं ते कृतं क्षिति ! तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।**
**अप्यंघ्रिसम्भव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन ॥ १० ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कूलसमीपे वर्तमानाः परार्थभविकाः परार्था भविका जनिर्येषां ते रहितः वियुक्तः आश्रयः कृष्णः यासां तासां नोऽस्माकं कृष्णपदवीं शंसन्तु कथयन्तु चूताम्रयोः कदम्बनीपयोश्चावान्तरभेदः ॥ ९ ॥

### भाषा टीका

हे आम के वृक्ष हे पियाल ! हे कटहर ! हे असन हे कचनार हे जामुन हे अर्कवृक्ष हे वेल हे मोरसली हे आम्र विशेष हे नीप हे कदम्ब और भी जो पराये उपकार करवे वारे यमुना के किनारे निवास करवे वारे सो हम श्रीकृष्ण सङ्ग से छूटगई हैं हमै उनको मार्ग बताओ ॥ ९ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे क्षिति क्षिते ! त्वया किं तपः कृतं या त्वं केशवाङ्घ्रिस्पर्शोत्सवा केशवस्याङ्घ्रिस्पर्शोत्सवो यस्याः सा कुतः अङ्गरुहैरुत्पुलकिता रोमाञ्चिता विभासि शोभसे तत्र विशेषं पृच्छन्ति । अपि किमयमुत्सवोऽङ्घ्रिसम्भवोऽधुना तवैकदेशांघ्रिस्पर्शसम्भूतः यद्वा नैतावत्किन्तु उरुक्रमविक्रमात्पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात् आहो अथवा नैतावदेवापितु ततोऽपि पूर्वं वराहस्य वपुषः परिरम्भणेनेति अतस्त्वया नूनं दृष्टस्तं दर्शयेति ॥ १० ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवं निजार्त्तिविज्ञापनेनाधिकदुःखोदयाविवशतया भूमौ निपातात् किम्वा पदवीप्रार्थनेन पदवीस्मरणाद्भूमौ दृष्टिं निधाय तस्यां स्निग्धदूर्वाङ्कुराद्युद्गमरूपं दृष्ट्वा श्रीकृष्णपादाब्जस्पर्शजातपुलकजातं दृष्ट्वा तस्याः परमसौभाग्यं मत्वा परमार्त्ता आहुः । किमिति । केशवेति परमेश्वरत्वं पूर्ववत् किम्वा प्रकृष्टाः केशाः सन्त्यस्येति व्युत्पत्तित्वात्परमसौन्दर्य्यं सूचितं विशेषेण भासीति शोभाविशेषेणानन्यहेतुकोत्सवत्वमभिप्रेतम् अंघ्रेरब्जादिरूपकाप्रयोगः कोमलादिगुणैरपेक्ष्यत्वेनापि केवलतत्तलस्पर्शमात्रेणैव तदुत्सवार्विवक्षया ईदृश उत्सवः केवलमंघ्रिसम्बन्धमात्रेण न स्यात् किन्तु सम्भोगेनैवेति पक्षान्तरमाहुः । आहो इति । अन्यैस्तर्व्यंजितं यद्वा तादृशशोभादृष्ट्या श्रीकृष्णपादाम्बुजस्पर्शेनैव तमुत्सवं सम्भाव्य तस्य सर्वोत्कृष्टतां सूचयन्त्यस्तस्याः सौभाग्यमाधिकं वर्णयन्ति । अपीति । अंघ्रिसम्भवो ऽयमुत्सवः आपि किं त्रिविक्रमस्य लोकत्रयाक्रमणार्थं प्रकटितैश्वर्य्यस्य श्रीविष्णोः पादेन सर्वाक्रमणाद्बभूव आपि तु नैव तदानीमीदृशोत्सवशोभाविशेषासम्पत्तेः अहो न भवतु वा पादस्पर्शमात्रात् त्वदुद्धारार्थं प्रकटितमहावराहमूर्त्तेर्भगवतः साक्षात्सम्भोगेऽपि न सिद्ध इत्याहुः । आहो इति यद्वा अंघ्रिसम्भव उत्सवस्त्रिविक्रमपादस्पर्शात् कारणात् किम्वा वराहमूर्त्तिपरिरम्भणेन कारणेन बभूव तत्कथयेति शेषः । इति सर्वथा श्रीकृष्णस्य तत्तत्सकाशान्माहात्म्यविशेषः सूचितः अत स्तद्विरहं कथं सहेमहीति किम्वा त्वं परमसुभगा वयं च तद्रहिता दुर्भगा एवेति कृपया तत्पदवीं सम्यग्दर्शयेति भावः ॥ १०

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

एवं पदवीप्रार्थनेन पदवीस्मरणाद्भूमौ दृष्टिं निधाय तस्याः सर्वव्यापकत्वेनावस्य तद्दर्शनं सम्भाव्य तस्यां स्निग्धदूर्वाङ्कुराद्युद्गमं पुलकजातं मत्वा तच्च श्रीकृष्णस्य पादाब्जस्य स्पर्शोत्सवेनैव सम्भाव्य तस्य सर्वोत्कृष्टतां सूचयन्त्यस्तस्याः सौभाग्यमधिकं वर्णयन्ति । किन्ते इति । तपोऽत्र पुण्यजनकं कर्म । अपीति अङ्घ्रिसम्भवोऽयमुत्सवः । अपि किं त्रेधा विष्णुर्विचक्रम इति श्रुतिवर्णितस्य त्रिविक्रमस्य लोकत्रयाक्रमणार्थं प्रकटितैश्वर्य्यस्य श्रीविष्णोश्चरणविक्षेपेण सर्वाक्रमणाद्बभूव अपितु नैव तदानीमीदृशोत्सवशोभाविशेषासम्पत्तेः आहो न भवतु वा पादस्पर्शमात्रात् त्वदुद्धारार्थं प्रकटितमहावराहमूर्त्तेर्भगवतः साक्षात्सम्भोगेऽपि न सिद्ध इत्याहुः । आहो इति । यद्वा तप एव विकल्पयन्ति केशवांघ्रिस्पर्शसम्भव उत्सवस्त्रिविक्रमपादस्पर्शात् कारणात् किं वा वराहमूर्त्तिपरिरम्भेण कारणेन बभूव तत्कथयेति शेषः इति । श्रीकृष्णस्य तं तमतिक्रम्य माहात्म्यविशेषः सूचितः अतस्तद्विरहं कथं सहेमहीति किम्वा त्वं परमसुभगा वयं च तद्रहिता दुर्भगा एवेति कृपया तत्पदवीं सम्यग्दर्शयेति भावः ॥ १० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अङ्गरुहैः अङ्घ्रिसम्भवैः अंघ्रिसंस्पर्शसम्भवात् ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किमिति । हे क्षिति क्षिते ! त्वया किं तपः कृतमन्यथेदं न घटते इत्याहुः या त्वं केशवस्यांघ्रिस्पर्शेन उत्ससवो यस्यास्तथाभूता कुतः अङ्गरुहैरुत्पुलकिता रोमाञ्चिता विभासि शोभसे उदञ्चितानि तृणान्यालक्ष्य तेन रोमाञ्चस्तत्र हेतुः केशवांघ्रिस्पर्शः तत्र च हेतुः प्राक्तनं तपश्चेति सम्भाव्याथोत्सवे हेत्वन्तराण्यपि सम्भावयन्ति । अपि किमयमुत्सवोऽघ्रिसंभवोऽधुनैकदेशे भगवदंघ्रिस्पर्शसम्भवः किंवा पूर्वमेव उरुक्रमस्य त्रिविक्रमस्य विक्रमात् पदा सर्वाक्रमणाज्जातः अथवा ततोऽपि पूर्वं वराहवपुषो भगवतः परिरम्भणेनालिङ्गनेन, जातः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे क्षिति ते त्वया किं शुभं तपोलक्षणं कृतं पर्याप्तमङ्गोपाङ्गपूर्णं शुभं ते तव किं यशमन्त्रितं सत्कारपूर्वकं व्यावृत्तमस्तीत्यर्थः युगे क्षयान्ते पर्याप्ते कृतं क्लीबे हिनेऽर्थवदिति यादवः खेदानुकम्पासन्तोषविस्मयामन्त्रणेषवतेत्यमरः अस्तीति कथमवगम्यते इत्यत्राहुः केशवेति । केशवस्य सुकेशभारस्यांघ्रयोः स्पर्शं एवोत्सवस्तेन उत्पुलकितैः ऊर्ध्वमुखोल्लसितैः अङ्गरुहैः रोमलक्षणैर्वृक्षैः विभासि यत्तस्तदिति शेषः यद्वा केशवाङ्घ्रिस्पर्शेनोत्सवा प्रकृष्टप्रसवा सती त्वमङ्गरुहैर्वृक्षैः उत्पुलकिता रोमाञ्चिता विभासि यद्वा अङ्घ्रिस्पर्शनलक्षणेनोत्सवेनोत्पुलकिताङ्गरुहैरङ्कुरितपुष्पितफलितैर्वृक्षैः हे अंघ्रिसम्भवे नारायणश्रीपादसम्भवे उत्पन्ने अपि पद्भ्यां भूमिरिति श्रुत्या लोकसम्भाविते उरुक्रमस्य त्रिविक्रमस्याविक्रमात्पादविक्रमणात् अङ्गरुहैः उत्पुलकितैर्विभासि वा आहोस्वित् वराहवपुषा नारायणेन कृतेन परिरम्भणेनालिङ्गनेनोद्धृतिलक्षणेन केशाद्वोऽन्यतरस्यामिति सूत्रेण शोभमानाः केशा अस्य सन्तीति मत्वर्थे वप्रत्ययो विधीयते अर्थान्तरविवक्षायां गोपीनामनभीष्टत्वम् ॥१०॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे सख्यः अमी तावन्निःस्पन्दतया तदेकध्याननिष्ठा अस्माकं वचनमपि न शृण्वन्ति किं पुनः कथयिष्यन्ति तदेतान् हित्वा क्षितिमेव पृच्छामः इयं तावत्तद्विश्लेव यत्र यत्र गच्छतु नास्याः अगोचरः स दृश्येत च तद्देशचरत्वगमकं पुलकमस्या इति तथा कुर्वन्ति । किन्ते कृतमित्यादि । हे क्षिति ते त्वया किं तपः कृतं ननु तपः कृतमिति कथमनुमितं तत्राहुः यत इयं केशवाङ्घ्रिस्पर्शेन उत्सवो यस्याः सा तथा त्वम् उत्सव एव कथमनुमितः तत्राहुः । अङ्गरुहप्रायैस्तरुभिः पुलकिता सती चेद्विभासि स्वसुकृतं स्वयमकथनीयमिति चेन्न कथयसि तदस्माभिरेव तत्कथ्यते शृण्वित्याहुः । अपीत्यादि । उरुक्रमो वामनस्तस्य विक्रमात्पादस्पर्शाद्वा आहो वराहवपुषः वराहावतारस्य भगवतः परिरम्भणेन उभयोः कारणयोरेकतरेण भावनद्वयं मिलितमेव वा एकस्य चरणस्पर्शः अन्यस्य सर्वालिङ्गनमिति तस्माद्दृष्टः त्वया श्रीकृष्णः कथ्यतां क्वास्त इति शेषः ॥ १०—१३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमतिविलापे दीनतायामाविष्कृतायां भूमौ भगवच्चरणारविन्दानि दृष्टानि तदा भूमिं स्तुवन्ति । किंते कृतमिति । हे क्षिति ते त्वया किंवा तपःकृतमस्माभिरपि एतः कृतमेव परं नैवं फलमनुभूतं सर्वथा पुण्यव्यतिरेकेण नेष्टसिद्धिःसुतरां भगवल्लक्षणास्य तदभावमाशङ्क्य वर्ततेति खेदेन केवलं तव पादसंबन्धमात्रं किन्त्वन्येऽपि भावा दृश्यन्त इत्याहुः । केशवस्य ब्रह्मादेरपि मुक्तिदातुर्ब्रह्मप्रार्थितचरणारविन्दस्य अंघ्रिस्पर्शेन उत्सवो यस्याः खेदो दृश्यत एव अन्यथा पदानि स्पष्टानि न भवेयुः अन्योऽप्युत्सवो दृश्यते उत्पुलकिता च सर्वत्र दूर्वाङ्कुरा उत्थिता इति अङ्गरुहैः रोमाञ्चैः कृत्वा विशेषेण भासि उत्पुलकिताङ्गरुहैर्वा अङ्घ्रिस्पर्शोत्सवा विभासि ननु सर्वत्रैव पुलको दृश्यते यदि केशवाङ्घ्रिस्पर्शेन स्यात् तत्रैकदेशे स्यात् खेदवदित्याशङ्क्य हेत्वन्तरमुत्प्रेक्षन्ते । अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वेति । अपीति सम्भावनायामनेन चरणस्पर्शेन पूर्वोस्थितचरणस्पर्शः स्मृतः सतु सर्वत्र भूमौ व्याप्तः अतस्तेन अङ्घ्रिणा सम्भवो यस्य उत्सवस्य उरुक्रमः त्रिविक्रमः तस्य विक्रमात् पदन्यासाद्वेति तत्राप्यनिर्द्धारः नहि चरणसंबन्धमात्रेण सम्भोगरहितेन सात्त्विकभावरूप उत्सवो रोमाञ्चो भवितुमर्हति तदर्थं पक्षान्तरमाशङ्कन्ते । आहो वराहवपुःपरिरम्भणेनेति । अनेन स्वसमानता च वर्णिता ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो किमेते विष्णुसमाधिमत्त्वादस्मत्प्रश्नं न शृण्वन्ति किंवा तीर्थवासिनोऽमी कठोरा एव यतःकिमपि न वदन्ति हं हो के जानन्ति के वा तं न जानन्तीत्यनिश्चिततत्त्वास्तीर्थवासिनोऽमी कथं वृथा निन्द्यन्ते योजनस्तमपश्यत् जानात्येवेति निश्चिततत्त्वो भवति स पृच्छ्यतामिति कयाचिदुक्ते प्रियसखि स एव जनः खलु कस्तं किं त्वं जानासीति सर्वाभिः पृष्टा सा तर्जन्या पृथिवीं दर्शयामास ततश्च सत्यमेव त्वं ब्रूषे यत्र तत्र स वर्त्तते सा पृथिव्येवेति पृथिव्या अस्यास्तद्विच्छेदो नास्तीति कृष्णस्य पितृवर्गसखिवर्गप्रेयसीवर्गदासवर्गेभ्योऽपि विरहदुःखानभिज्ञत्वात्पृथ्व्येव धन्येत्यतोऽस्यां पूर्वपूर्वेष्विव प्रश्नो न घटते किं त्वस्याः प्राचीनं तप एव जिज्ञास्यं यत्कृत्वा कृष्णविरहात्यन्ताभावचत्यो वयमपि भवामेति विमृश्य पृच्छन्ति । किमिति । हे क्षिति क्षिते ! त्वया किं तपः कृतं यतस्त्वं केशवस्याङ्घ्रिस्पर्शेन उत्सवो यस्याः सा त्वं विभासि यतोऽङ्गरुहैस्तृणांकुरैरुद्गच्छद्भिरुत्पुलकिता उत्कृष्टपुलकयुक्ता यत्र तत्र स वर्त्तते तत्रैव त्वामङ्घ्रिभ्यां स्पृष्ट्वैव तिष्ठतीति कृष्णाङ्गसङ्गसुखं तव रात्रिंदिवं व्याप्यैव यतो उभूत्तपो यत्कर्तुमर्हसि वयं विरहिण्यो दुर्भगास्तच्छ्रुत्वापि कृतार्थी भवामेति भावः । तदधुयाणां तामभिलक्ष्य पुरावृत्तस्मरणात् स्वयमेवाभ्यूहन्ति । अपीति । उरुक्रमस्य त्रिविक्रमदेवस्य विक्रमात् योऽङ्घ्रिसम्भवः अंघ्रिप्राप्तिः भूप्राप्तौ सम्पूर्वः तत्रयदिमहाभारतन्त लक्षणं यत्तपस्तदेव किमित्यर्थः । वै इति निश्चयं पादपूर्णं वा आहोस्वित् महावराहवपुषः परिरम्भणेन तदीयदृढपरिरम्भणोत्थपीडाप्राप्तिलक्षणं तपस्तदेव किमित्यर्थः । अन्याभिर्दुर्लभं तत्तत्सुखत्वप्राप्तिसाधनं यत्तपस्तदपि स्त्रियास्तव पुरुषसङ्गलक्षणत्वात् सुखमयमेवेति नास्ति त्वत्तोऽन्या धन्येति भावः ॥ १० ॥

केनचित्कृता विशुद्धरसदीपिका ।

ततश्च पद्मीप्रश्नेन पृथिवीमनुदृत्तदृष्टयः प्रियनर्मसख्यः स्निग्धदुर्वाकुराद्युद्गमरूपं तच्चरणाब्जस्पर्शसञ्जातपुलकजातं मत्वा तामध्यात्मपदग्राहणीमाभिमन्यमाना आहुः । किन्त इति । हे क्षिति क्षिते इत्यर्थः छान्दसमिदं यद्वा इदं तोयं क्षितिः क्षिती इतिशब्दप्रकाशात् तत्संबोधनमिदं सर्वेषां निवासस्थानत्वायत्र कुत्रापि स्थितस्त्वया ज्ञायत एवेत्यनपह्नुवाय यस्तुतस्तु यत्र प्रद्युम्नादनमली-

### केनचित्कृता विशुद्धरसदीपिका ।

यन्निति गम्यते यथा च भावामृते—

प्रश्लिष्टपुष्पोच्चयसन्निवेशां ताम्बूलरागाञ्जनचित्रिताङ्गीं ।
व्यक्तीभवत्कान्तविलासचिन्हां शय्यामपश्यन्स्वसखीमिवालयः ॥

इति ततश्च तत्क्रीडास्थानस्यास्य स्वपरिचितत्वसूचनेन तदन्तरङ्गत्वाभिमानेन ससोत्प्रासमाहुः । यत अहो ते त्वया किं तपः कृतमित्यभिलापः या त्वं केशवांघ्रिस्पर्शोत्सवेति प्रशस्ताः केशाः सन्त्यस्या इति केशवा स्वाङ्गानुडीपृचिकल्पः तस्या अंघ्रिस्पर्शनोत्सवो यस्याः सा यद्वा केशाः प्रसाधनीयाः सन्त्यस्येति केशवः तस्य च तेषां प्रसाधनाय तत्पश्चान्निविष्टस्य प्रपदमात्रस्पर्शनानन्दोदयान्नवांकुरोद्गरूप उत्सवो यस्याः सा एवं च क्षितेरपि सहचरीत्वं व्याञ्जितं यत् उत्पुलकिन्ताङ्गरुहैर्विभासीति उद्दिति सात्त्विकानां सूद्दीसत्वं ततश्चानन्दाधिक्यं वेति सम्भावनायाम् अपिचेत्यर्थः । उरुक्रमविक्रमात् उरुबहुतरस्तत्रतत्रोपलभ्यमानत्वात् क्रमः विक्रमः सच केशवेपाय पुष्पावचयार्थमितस्ततो भ्रमणं तच्च द्वयोरपि गोपनार्यैकत्वेन पुंस्त्वेनचाभिधानम् अथवा उरुक्रमयोर्विक्रमादिति समासः अयमेव केलिनामालङ्कारः तदुक्तं विहारे सह कान्तेन क्रीडितं केलिरिष्यत इति यथालङ्कारः अपि सह विहरन्त्या कृष्णामुल्लङ्घयरम्ये सुरभिणि कुसुमेऽहंपूर्विका कौतुकेन अनियतपदभङ्ग्या पार्श्वसङ्घट्टनेन स्तनहातिपरिभूतो राधयाऽसौ व्यधायि ततश्चपरस्परसङ्घट्टनेन तारुण्योदयान् मदनमदाविष्टया यदनुष्ठितं तत्सम्भाव्याहुः । आहो वराहवपुषः पारिरम्भणेनेति । आहो ज्ञातं ज्ञातमिति सोत्प्रासं पतिवरयितावरइत्याभिमानकोशात् वरेण निजवल्लभेन साकं य आहवः कृतस्यानुकरणरूपः सुरतसंग्रामः तं पुष्णातीति वपुट् ववयोरैक्यात् तस्य वराहवपुषः अर्थात्तया कृतेन पारिरम्भणेन एवञ्च प्रागल्भ्यं सूचितं तद्दर्शितमलङ्कारे श्लिष्टा श्लिष्यति गोकुलेन्द्रतनयेनाचुम्बिता चुम्बति स्वच्छन्दं लिखितानैखनैखपदैराभूपयत्यङ्कं शिक्षित्वा तत एव पुष्पधनुषः संग्रामविद्यामियं तस्य क्षोभकरी यदेव तदियं विद्यागुरुक्षोभिकेति यद्वा वेषपरिवर्त्तनेनावेशात्पुरुषायितं संभाव्याहुःतदुक्तं तत्रैव सीमन्तमस्य दयितस्य ववन्ध वेणीं राधा शिखण्डवलयैः स च मौलिमस्याः अन्योऽन्यवेषपारिवर्त्तनकौतुकेन द्वाभ्यामलभ्यत विशेषरतेः प्रमोदः अयं लीलाख्यानुभावः तदुक्तम् अङ्गैर्वेषरलङ्कारैर्लीलाकान्तानुकारितेति तदेवमव्ययतश्लोके सुरतान्तवर्णनान्यथानुपपत्त्यातिरहस्यो विहारोऽत्रानुसन्धेयः प्रकटार्थेतु न कश्चिच्चमत्कार इत्युपेक्षितः ॥ १० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे गच्छन्त्यः पदवीमन्वेषयन्त्यः क्षितिं दृष्ट्वा ताञ्च सर्वंसहां सर्वापराधसहनेऽपि क्षि निवासगत्योरित्यस्मात्सर्वनिवासगतिप्रदां सर्वोपकारिणीं सर्वाधारां व्यापकतया चावश्यं प्राप्तसंयोगाम् उत्फुल्लतातृणादिना कृष्णाङ्घ्रिस्पर्शजातरोमहर्षां सम्भाव्य पूर्वं बहुभ्यो ऽप्राप्तोत्तरत्वेन प्रार्थनायां लघुत्वेन स्वार्थासिद्धिं मत्वा तपः श्लाघनेनैव स्वकार्य्यसिद्ध्यै तां प्रोत्साहयन्ति किंते कृतामिति । हे क्षिति ते त्वया किन्तपः कृतं तन्नो ब्रूहि यतो वयं स्वामान्यात्कृष्णसङ्गममप्राप्य दुःखिता भ्रमामस्त्वन्तु

पूर्वमुरुक्रमविक्रमात्—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदांमति ।

श्रुतिसिद्धादपि ते तदङ्घ्रि सम्भव उत्सवो जात आहो इति अथ वराहवपुषस्त्वदुद्धारार्थमेवावतीर्णस्य परिरम्भणेन संभोगातिशयेन ते उत्सवः संभूतः अधुना तु सर्वतोऽतिशायिकेशवस्य कृष्णस्यांघ्रिस्पर्शेन य उत्सवस्तेऽत उत्पुलकिताङ्गरुहै रोसहर्षैर्विभासि विशेषेण शोभसे एवं तत्तपोमहिमवर्णनेऽप्यसंभाषमाणां दृष्ट्वा भगवत्संगमेन जातमदां सापत्न्येनाभिभवन्तीं वा पतित्रयसंगमश्रवणेन जातलज्जाम्वा संभाव्य तूष्णीं ययुः ॥ १० ॥

---

### श्रीधनपतिसुरिकृतभागवतगूढार्थदीपिका ।

एवमतिविकलमानसाः प्राप्तात्यन्तदैन्या मार्गकथनप्रार्थनयो र्मार्गसरणाद्भूमौ निहितदृष्टयस्तस्याः सर्वत्र सत्त्वेनावश्यन्तद्दर्शनं सम्भाव्याहुः । किमिति । हे क्षिति ते त्वया किं कीदृशं किंनामधेयं तपः कृतं यद्यप्यस्माभिरपि तपः कृतमेव तथापि तादृशफलानुकूलं न कृतमतो महान् खेद इत्याशयेनाहुर्वेतेति यतो या त्वं केशवस्यांघ्रिस्पर्शनोत्सवो यस्याः सा कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुशिवास्ते ऽस्य वश्यतया सन्तीति केशवः केशान्नियामकतया वा गच्छतीति वा तथा च तादृशस्य परमात्मनोऽघ्रिस्पर्शोत्सवो नाल्पस्य तपसः फलमिति भावः । एतज्ज्ञापकं चिन्हमाहुः । अङ्गरुहैरुत्पुलकिता विभासि विशेषेण शोभसे तत्र विशेषं पृच्छान्ति । अपि सम्भावनायां किमयमुत्सवः अंघ्रिसम्भवः संप्रति तवैकदेशे चरणस्पर्शसम्भूतः यद्वा नैतावत् किन्तु पूर्वमेवोरुक्रमस्य वामनस्य पदा सर्वाक्रमणात् अधुना भगवच्चरणस्पर्शनास्मृतत्वात् अथवा नैतावदेवअपितु ततोऽपि पूर्वं वराहस्य वपुषा परिरम्भणेनालिङ्गनेन तदानीमंघ्रिस्पर्शात्स्मृतेरेव तथाचास्मत्साजात्यं भवत्या अप्यतस्तं पश्यन्ती त्वं दर्शयेति भावः। अनभिज्ञापक्षे अहो किमर्थं तीर्थवासिनोऽमी निन्द्यन्ते यस्तमवश्यं जानाति स प्रष्टव्य इत्युक्तवतीनां मध्ये काचित्तर्जन्या क्षितिं सूचयामास ततः सर्वास्तामाहुः । किमिति । हे क्षिते त्वया किन्तपः कृतं यतः पुलकितैरङ्गरुहै रंकुरैः केशवस्याभिरूपैः केशवस्य तस्य परमसुन्दरस्य कृतस्यांघ्रिस्पर्शोत्सवा विभासि तादृशोत्सवजनके तपसि पृष्टेऽदत्तोत्तरान्तामुपलभ्य स्वयमेवोत् प्रेक्ष्यन्त्योऽपि अयमंघ्रिसम्भव उत्सव उरुक्रमविक्रमजनितपीडारूपतपसो वा अहोस्विन्महावराहवपुषः परिरम्भणजनितव्यथारूपेण तपसा यद्वा तच्चरणस्पर्शजनितपुण्याद्वा किम्वा तत्परिरम्भणजनितपुण्येन तथाच तत्पादस्पर्शादिरहितत्वाद्दुर्भगानामस्माकं तत्पादस्पर्शमनुभवन्ती सुभगा त्वं कारुण्यात्तन्मार्गं प्रदर्शयेति भावः । मानिनीपक्षे ऽप्येवं निवृत्ताः निवृत्तिपक्षे अपि क्षितिस्थानीयं मनः पृच्छान्ति । किमिति । केशवः परमात्मा तस्यांघ्रिरंश इवांशो जीवात्मा ममैवांशो जीवलोके जीवभूतः सनातनः इत्युक्तत्वात्तस्य स्पर्शनोत्सवो यस्याः सा पुलकितैर्हर्षितै रङ्गरुहैः सङ्कल्पात्मवृत्तिभिर्विभासि स उत्सवः किं यथोक्तांघ्रिस्पर्शसम्भवः यद्वा उरुक्रमस्यान्तर्य्यामिणः विक्रमात्प्रेरणारूपपराक्रमात् आहोस्वित् वराहस्य वपुषः सेवनेन स्वरूपस्य परिरम्भणेनेति ॥ १० ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि ! सुनिर्वृतिमच्युतो वः
कान्ताङ्गसङ्गकुचकुंकुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे क्षिति क्षिते ! त्वया किं तपः कृतम् या त्वं केशवांघ्र्युत्सवा केशवस्य ब्रह्मशिवयोरपि जनकस्य अङ्घ्रिस्पर्शेन उत्सवो यस्यास्तथा भूता यस्मादङ्गरुहैरुत्पुलकिता रोमाञ्चिता विभासि शोभसे अपि किमयमुत्सवः अङ्घ्रिसम्भवः आङ्घ्रिभ्यां त्वयि अधुना अर्पिताभ्यां सम्यक् भवो जन्म यस्यैवंभूतः किंवा उरुविततः क्रमः पादविन्यासो यस्य स तथा तस्य वामनस्य विक्रमात् चरणेनाक्रमणात् आहो किं वा वराहवपुषः क्रोडशरीरिणः परिरम्भणेन आलिङ्गनेन तस्मात्त्वया दृष्ट एवातस्तं दर्शयेति भावः ॥ १० ॥

---

भाषा टीका

पृथिवी को देख कहवे लगीं हे भूमि ! तुमने कौनसो तप कियो है जातें कि श्री केशव के चरण के स्पर्श के सुख ते तुमारे शरीर मे पुलकावली हो रही है का ये त्रिविक्रम भगवान् के चरण के स्पर्श को आनन्द है या वराह अवतार के आलिङ्गन करवे को आनन्द है सो हमै बताओ ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हरिण्या दृष्टिप्रत्यासत्त्या कृष्णदर्शनं संभाव्याहुः। अपीति। हे सखि ! एणपत्नि अपि किमुपागतः समीपं गतः गात्रैः सुन्दरैर्मुखबाह्वादिभिः प्रियया सहेति यदुक्तं तत्र द्योतकं कान्ताया अङ्गसङ्गस्तेन तत्कुचकुंकुमेन रञ्जितायाः कुन्दकुसुमस्रजो गन्धः कुलपतेः श्रीकृष्णस्य वात्यागच्छति ॥ ११ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

इयमपि श्रीतुलसीवत्तस्य नित्यप्रिया सापत्न्यात्तदिच्छानुसाराद्वा न कथयेदिति सख्येन विस्रम्भैणीः पृच्छन्ति। अपीति। हे एणस्य पत्नीति त्वयापि प्रियविरहदुःखं ज्ञायत एव अतः कथ्यतामिति भावः। एकत्वं विरहार्त्तिभरेण दूरे दृश्यप्रसरणादेकस्या एव दृष्टेः दृशामिति व इति च बहुत्वमच्युतोपगमेन गौरवात् यद्वा एकत्वं जात्यपेक्षया किम्वा बह्वीषु तासु मध्ये अन्तिकवर्त्तनीमेकां प्रत्येव प्राधान्येन प्रश्नात् प्रियया कयाचिद्गोप्या सह प्रिययेति सह गमनात् तेनेर्ष्ययैव वा गात्रैर्दृशां सुनिर्वृतिं परमसुखं तन्वन्निति अन्यथा विशालप्रसन्ननेत्राणां साफल्यं किम्वा अन्यथेदशदृष्ट्यसम्भव इति भावः। सुशब्दः मोक्षसुखादपि वैशिष्ट्यविवक्षया तेनात्यन्तान्तिकसंदर्शनमप्यभिप्रेतम् अन्यथा सुनिर्वृत्यसम्पत्तिः हे सखीति तस्या अपि श्रीकृष्णविषयकसानुरागदृष्ट्या वने सह विहारादिना वा अतोऽस्मासु वञ्चना नैव कार्य्येति भावः। अच्युत इति सुनिर्वृतिविस्तारणे किम्वा इहोपगमने विच्युतिर्नास्तीति भावः। तदेवाभिव्यञ्जयन्ति। कान्तेति। ताद्धि जानन्ति तद्विद इतिन्यायेन तासां तद्गन्धपरिचयोऽस्तीति तथोक्तं मालां विभ्रद्वैजयन्तीमिति पूर्वमुक्तं ततश्च सहत्वालिकुलैर्बिभ्रदिति तुलसीमाला अधुना च कुन्दस्रज इत्येवं मालात्रयं गम्यते यद्वा वैजयन्त्यामन्यत्रापि तुलसीसम्भवात्तद्धारणं ज्यौत्स्न्यां रात्रौ कुन्दमालयाः शोभाभराद्वैजयन्तिपरित्यागेनाधुना तस्या एव धारणं ज्ञेयं कुलपतेर्गोकुलेन्द्रस्य किम्वा गोपीकुलस्वामिनः लज्जया वैदग्ध्या या साक्षात्तथानुक्तिः अनस्तेदकप्रियाणामस्माकं तदभावेन प्राणरक्षा न स्यादिति सर्वथा शीघ्रं कथयेति भावः। श्लेषेण कुत्सितं लाति आददाति यो जनस्तस्यैव पतिरिति तया साहित्यं युक्तमेवेतीर्ष्ययोक्तिः अन्यत्तैर्व्याख्यातं यद्वा प्रियया उपगतः सङ्गतः सन्निहास्ते ननु तर्हि नात्र वर्त्ततैव नेत्याहुः। कान्तेति अन्यत् समानम् ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथात्रेति विचार्यते कामप्यादाय श्रीभगवानन्तर्हितः इति व्यक्तीभविष्यदपि पूर्वे यन्मुनीन्द्रः स्वयं न स्फुटमुक्तवान् तस्यायमभिप्रायः। सत्स्वपि नानाभगवदाविर्भावेषु मम स्वयं भगवति श्रीकृष्णाख्य एव तस्मिन्नाग्रहविशेष इति तथा सत्स्वपि नाना तत्तत्परिकरेषु श्रीव्रजवासिष्वेव स इति तथा सत्स्वपि तेषु श्रीव्रजदेवीष्वेव ततोऽप्यधिकतरः स इति रहस्यं सर्वेऽपि ज्ञातवन्त एव किन्तु तास्वपि सतीषु श्रीराधिकायामेवाधिकतमः स इति न ज्ञातवन्तः तदेतन्मदाग्रहतारतम्यञ्च तत्तदुत्कर्षतारतम्यादेव। अस्याः परमरहस्यायास्तदेतत्तु साक्षाज्ज्ञापयितुं संकुचति मच्चित्तम्। ज्ञानखलताभिया विज्ञापयितुमपीच्छति तस्मादस्याः सखीनां वचनात्तत्राप्रतीतौ च प्रतिपक्षाणामपि वचनाद्व्यञ्जनयैव वृत्त्या यथावसरं मध्ये मध्ये प्रकटयिष्यामः। यदि च जातु स्वयमप्यावेशवशात् प्रकटयिष्यामः तदा नाम तु तस्याः साक्षान्न वक्ष्यामः। एतस्यास्तत्पुनरास्तामन्यासामपि न किञ्च। व्यञ्जनावृत्तिरेव सर्वत्र नानारसप्रकाशिनी ननु मुख्या सा च यदि प्रसङ्गे अवधारिते विशेषव्यञ्जनार्थमभ्युदयते तदातीव चमत्कारिणी स्यादिति तदेतदभिप्रेत्य प्रथमं सखीद्वारेदं ज्ञापयति यदा तामादाय श्रीभगवान् सहसान्तर्हितस्तदा तस्याः सख्यस्तु संशयाना एवासन् किन्तु केवलवलानुजान्वेषणपराभिस्ताभिः सहचारिण्येऽपि किञ्चिदुन्मादधारिण्येऽपि तन्मिथुनान्वेषणव्यग्रतया पृथगवस्थितस्वयूथतया तदवधानदूरस्फुरदीहाः सत्यः पर्यटितवत्यो वक्ष्यमाणं तत्पादचिह्नदर्शनं विनापि कचित् किञ्चिदुपलब्धवत्यश्च। तथाहि तासां वाक्यमप्येणपत्नीति। अत्राखण्डस्य वाक्यस्य निखिलपदानामप्यनुमोदनव्यञ्जक एवार्थः प्रतिपद्यते। ततः सख्यमेवासां तन्मिथुनमनुलक्ष्यते तद्दर्शनोत्कण्ठा च तत्र वाक्यार्थः। अपीति सम्भावनायाम्। तदिदं सम्भावयाम इत्यर्थः। अथवा अपीति प्रश्ने। तदेतत् पृच्छाम इत्यर्थः। किन्तत्तत्राहुः। हे सखि ! अच्युतो यो युष्माकमुपगतः समीपं प्राप्तः। ननु वनविहारि-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

णस्तस्य धन्यानामस्माकं समीपप्राप्तौ किमाश्चर्यं तत्राहुः । प्रियया सहेति । ननु तत् खल्वाश्चर्यमेव किन्तु यत्र तस्य दर्शनं तत्र तस्याः सहयोगेन किमाश्चर्यमधिकं सुखं नाम तत्राहुः । तयैव सह गात्रैस्तादृशानन्दव्यञ्जकनानानुभावविचित्रैरङ्गैर्वो युष्माकं भवत्या भवत्सन्धन्धिनीनाञ्च दृशां सुनिर्वृतिं केवलस्य तस्य दर्शनादपि तत्साहित्यदर्शने परमानन्दं तन्वन् विस्तारयन्निति तदिदञ्च नास्माशु गोपयितुमर्हसि वयं हि तदन्तरङ्गमर्मविदः सहचर्यः तद्गन्धवाहमात्रेणापि तदीयं सर्वं ज्ञातुं शक्नुम इत्याहुः । कान्ताङ्गेति । प्रथमं तावत् कुलपतेस्तस्य तत्र कान्तायास्तस्या-स्तत्र तदङ्गसङ्गस्य तत्र तत्कुचसङ्गिकुङ्कुमस्य तत्र च तल्लिप्तकुन्द-स्रजः स एष गन्धः स्फुटमत्रायाति । स चाभ्यस्तत्वादस्माभि-रुपलभ्यत इत्यर्थः । अथ द्रष्टृदृष्टिद्वयप्रशंसया तदनुमोदन-व्यञ्जकपदानामर्थः । अत एव प्रथममपीति सकाकु सम्भावन-गिरा तत्रोत्कण्ठां व्यानञ्जुः । एणपत्नीति जात्यैव दृष्टिप्रशंसा। एणपत्नीत्यनेन "पत्युर्नो यज्ञसंयोग" इति पाणिनिस्मृतेरेणानां याज्ञि-कत्वं तस्या यज्ञपत्नीत्वं व्यञ्जितमिति द्रष्टृ प्रशंसा । उपगतः समीपमपि प्राप्त इति तद्भाग्यप्रशंसा तत्रापि प्रिययेति द्रष्टृ-दृश्ययोर्द्वयोरपि प्रशंसातिशयः । गात्रैर्मिथः सङ्गमेनासाधारणतां प्राप्तैरिति पूर्ववदेव तन्वन् दृशां सखि ! सुनिर्वृतिमित्येभिर्दृष्टेश्च तदतिशयः अच्युत इति प्रियया सह विचाररााहित्येन पुनर्दृश्य-प्रशंसा च इति यत्र भवतीदृशी तत्र भवत्सङ्गिनीनामपि ईदृ-शत्वं युक्तमिति द्रष्टृ प्रशंसा । अथ कान्तेति दृश्यायास्तस्या-स्तदङ्गसङ्गेति लब्धदुर्लभस्य दृश्यस्य कान्तस्य कुचकुङ्कुमेति तत्-संयोगलब्धभाग्यस्य दृश्यस्य कुंकुमस्य तद्रञ्जिताया इति तत् सम्बन्धेन लब्धशोभातिशयायाः दृश्यायाः कुन्दस्रजः शुभ्रतया तदुदयशोभायोग्यायाः स्वरूपेण च तस्या एव । कुलपतेरिति दृश्यस्य कान्तस्य । इहेति लब्धतद्गन्धसौभाग्यस्य दृश्यस्य तत्स्थानस्य वातीति वातमप्यात्मसात्कृत्य स्वयमेव सर्वतश्चल-तीति गन्धविलसितस्य गन्ध इति तत्तद्विशेषयोगात्तस्य च प्रशंसायतेति ॥ ११ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपगतत्वमुपपादयति । कान्ताङ्गेति । कुलपतिः कृष्णः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिण्या दृष्टिलालित्यस्य श्रीकृष्णदर्शनजहर्षप्रयुक्ततां सम्भाव्य पृच्छन्ति । अपीति । हे एणपत्नि वो युष्माकं दृशां सुनिर्वृतिं निरति-शयानन्दं गात्रैः सुन्दरैः पाणिपादादिभिरवयवैर्वितन्वन्विस्तरेण जनयन्नच्युतः प्रियया सहोपगतः अपि किमागतः किमित्यर्थः नोपगत इति मा ब्रूत इत्यभिप्रेत्य तत्र लिङ्गमाहुः । कापट्येन न ब्रूयुरिति सम्यमापादयन्त्यः संबोधयन्ति हे सखीति । कान्ताया अङ्गसङ्गमेनालिङ्गनेन यत्कुंकुमं तेन रञ्जितायाः कुलपतेर्गोकुलना-थस्य कृष्णस्य कुन्दस्रजो गन्ध इह वाति प्रसरत्यनेन कान्तया सह उपगतत्वे लिङ्गमुक्तं भवति ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे एणपत्नि ! मृगजाये ! वो ईश्वरः कयाचित्प्रियया प्रियत-मया इहोपगतः सामीप्यमाप्तः किं कीदृशः हे सखि मृगभार्ये गात्रैराननादिशरीरावयवैः वो युष्माकं दृशां सुनिर्वृतिं तन्व-न्नपि विस्तारयन् प्रश्ने निमित्तमाह । कान्तेति । कान्तायाः कमनी-यायाः अङ्गसङ्गादालिङ्गनलक्षणात्सङ्क्रान्तकुचकुंकुमेन रञ्जिताया-अनुरागीकृतायाः अस्मत्कुलपतेः कृष्णस्यांसावलम्बिन्याः कुन्दस्रजः कुन्दपुष्परचितमालाया गन्धः वाति आगच्छतीति यद्यस्मादिति शेषः वा गतिगन्धनयोरिति धातुः यद्वा कान्तस्य भगवतो-ङ्गनङ्गस्याङ्गो यस्याः सा तथा अत्र स्त्रीशब्दोऽध्याहार्यः सा कान्ताङ्गसङ्गा स्त्री तस्याः कुचकुंकुमरञ्जितायाः कुलपतेः कुन्दः स्रजः गन्धोऽस्यास्तीतीति मत्वर्थे अच्प्रत्ययात् गन्धवान् वायुरिह वाति वीजयतीति गोपीनामेकवचनबहुवचनाभ्यां भक्त्यतिशयपिशाचीग्रहणं सूचयति यद्वा एणपत्नीतुल्यने-त्रत्वात्सखीत्युपचर्यते वः ईश्वरो भर्ता मृगः कयाचित्प्रियया उपगतः आश्लिष्टोऽपि किं न भवति गर्हितत्वात् अस्मत्कुलप-तिरस्मान् विहाय कयाचिदालिङ्गित इत्याशयेनाहुः कान्तेति।कान्ताया अङ्गे उरोऽवयवे सङ्गो ययोस्तौ कान्ताङ्गसङ्गकुचौ तयोः कुंकुमेन रञ्जितायाः अरुणीभूतायाः कुलपतेः कुन्दस्रजो गन्ध इह वाति स्वयञ्च न दृश्यते तत्सद्भावो विज्ञायत इति व्यङ्ग्यालङ्कारोक्तिः ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अपीनि द्वयम् ॥ ११—१२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्थावरान् पृष्ट्वा जङ्गमान् पृच्छन्ति । अपीति । हे एणपत्नि कृष्णसारपत्नि ! प्रियया कयाचित् लक्ष्म्या अन्यया वा उपगतः मिलितः स्त्रीसहितः अनेन मार्गेण गच्छन्स्वगात्रैः स्वावयवैः भव-तीनां दृशां सुनिर्वृत्तिं तन्वन् दृष्टः कश्चित् अनेनैव मार्गेण गत इति चरणारविन्ददर्शनात् निश्चीयते यदि दृष्टो भवेत् तदा अस्माभिरपि द्रष्टुं शक्य इति त्वं त्वन्यस्य पत्नी आस्माकञ्च सखी भवसि अत आहुः । हे सखीति सखित्वं कृष्णानुरक्त्या नेत्रतुल्यत्वेन भीरुत्वादिधर्मैः अन्यथा भवतीनां धिक्कृतिनय-नानि न भवन्तीति । ननु कृतलीलः किमिति प्रार्थ्यते तत्राहुः अच्युत इति । ननु कथं ज्ञायते प्रियया उपगत इति तत्राहुः कान्तेति । कान्ताया अङ्गसङ्गे यत्कुचयोः कुंकुमं तेन रञ्जितायाः कुन्दस्रजः कुन्दपुष्पमालायाः गोकुलपतेः सम्बन्धिन्या इह गन्धो वाति आर्द्रश्च गन्धः आर्द्रं कुङ्कुमं ज्ञापयति सात्त्विकभावा-देव वार्द्रता अतो ज्ञायते प्रियया सङ्गत इति ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्चाहो हंत तेन स्वकान्तेन ध्वजवज्राङ्कुशादिभिश्चिन्हैः

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विचित्रिताङ्गी विहरन्ती स्वाधीनभर्तृकामहागर्वान्धा कथमस्मांस्तमेवाचक्षीतेत्यग्रतो गत्वा कामपि हरिणीमालक्ष्याहुः । अपीति । हे सखि ! एणपत्नि ! प्रियया त्वया किमुपगतः स्वसमीपे सम्प्राप्तः सम्बोधनपदसाहचर्य्यादेवात्र त्वयेति लभ्यते एणस्य पत्नी भवन्त्यपि त्वमस्मत्तुल्या तस्यैव प्रिया तमेव प्रियं मन्यसे इति भावः । यतः गात्रैर्भुखवाह्वादिभिर्वो दृशां सुनिर्वृतिमत्यानन्दं तन्वन् सन् व इति दृशामित्यादेर् बहुत्वम अच्युत इति स्वदृगानन्दलोभात्त्वया तदनुगमनादेव हेतोस्त्वत्तः स न विच्युत इति भावः । ततश्चाग्रतः स्वभावादेव गच्छन्तीं तामालक्ष्य हं हो स दृष्ट इति किं ब्रवीमि तं वो दर्शयाम्येव मदनुपथमागच्छतेति ब्रुवाणेवाग्रत इयं गच्छन्ती ग्रीवां परावृत्य मुहुरस्मान् पश्यति तादियमेवात्र निर्दये वृन्दावने दयावतीति तदनुगच्छन्त्यो दैवात् क्कापि गतां तामदृष्ट्वा हं हो कृष्णं दर्शयिष्यन्ती हरिणी किं न दृश्यते ति पृष्टाः काश्चिदाहुः तर्हि कृष्णोऽत्रैव क्कापि वर्त्तते हरिणी तु कृष्णाद्विभ्यतीति स्वीयसूचकत्वदोषापलापार्थं क्कापि निन्हुताभूदिति वितर्कयन्त्यो दैवादायातं सौरभ्यमनुभूयाहो सत्यं सत्यमेतदेव तत्त्वमिति सहर्षं मुहुराहुः कान्ताया अङ्गसङ्गतस्तत्कुचकुंकुमेन रञ्जितायाः कुन्दपुष्पस्रजो गन्धः वाति आगच्छति अत्र कान्तयोर्गात्रद्वयस्य च कुचयोश्च कुंकुमस्य च कुन्दस्य च गन्धस्तासां नासाभ्यामेव निश्चीयते स्मेति भावः । कुलपतेर्गोपीकुलरमणस्येति कुलपतित्वनिष्ठां परित्यज्य सम्प्रत्येकयैव कयाचित्कान्तया रममाणस्य तस्यान्यायं पश्यतेति भावः ॥ ११ ॥

————

केनचित्कृता विशुद्धरसदीपिका ।

ततश्च नित्यं तत्सङ्गिनीं सुरङ्गिणीं नाम हरिणीं तत्रैवाकस्मादागतां दृष्ट्वा परमप्रेष्ठसख्य आहुः । अपीति । पूर्वस्मिन् वाक्ये श्लिष्टैः पदैः पिशुनयेश्च रहस्यवस्त्वाति प्रेक्षावत्प्रमाणितन्यायमादाय प्रियनर्म्मसखीभिः सूचितेन निजप्राणसख्याः सौभाग्यातिशयेनात्मानं सिद्धार्थं मन्यमानाः सुरतान्तवर्णनभङ्ग्या किञ्चित्प्रकाशयोचुः । अपीति सम्भावनायाम् अत्राखण्डवाक्यस्य निखिलपदानामप्यनुमोदनव्यञ्जक एवार्थः प्रतिपाद्यते ततश्च सख्यमेवासां तान्मिथुनमनुलक्ष्यते तद्दर्शनोत्कण्ठातिशयेन भावोत्कर्षश्च तत्र वाक्यार्थोऽपीति यथा तदिदं सम्भावयामः अथवा प्रश्ने तदिदं पृच्छाम इत्यर्थः । किं तत् हे सखि ! अच्युतो वो युष्माकमुपगतः समीपं प्राप्तः ननु वनविहारिणस्तस्य वन्यानामस्माकं समीपप्राप्तौ किमाश्चर्य्यमिति तत्राहुः । प्रियया सहेति । ननु वनविहारिणः तत्खल्वाश्चर्यमेव किन्तु यत्र तस्य दर्शनं तत्र तस्याः सहयोगेन किमधिकं नाम सुखं तत्राहुः । तयैव सह गात्रैस्ताद्दृशानन्दव्यञ्जनानुभावविचित्रैरङ्गैः वो युष्माकं भवत्या भवत्सम्बन्धिनीनाञ्च दृशां सुनिर्वृतिं केवलस्य तस्य दर्शनादपि तत्साहित्यदर्शनेन परमानन्दं तन्वन् विस्तारयन् तदिदञ्च नास्मासु गोपयितुमर्हसि वयं हि तदन्तरङ्गधर्मविदो नित्यसहचर्य्यः तदङ्गन्धवाहमात्रेणापि तदीयं सर्वं ज्ञातुं शक्नुम इत्याहुः । कान्तेति । प्रथमं तावत्तत्पतेस्तस्य तत्र च कान्तायास्तस्याः तत्र च तदङ्गसङ्गस्य तत्र तत्कुचसङ्गिकुंकुमस्य तत्र च तल्लिप्तकुन्दस्रजः स एव गन्धः स्फुटमत्रायाति स चाभ्यस्तत्वादस्माभिरुपलभ्यत इत्यर्थः एतेन तासां यथानुभवेन प्रागपि सम्प्रति चाग्रेऽपि स एव सख्यभावोऽखण्डित इति दर्शितं ततश्च रासावसर एव नवसङ्गम इति केचिदाहुस्तत्परास्तम् एवञ्च पूर्णाः पुलिन्द्य इति पूर्वानुरागप्रकरणेऽप्यखिलप्रागुक्ततद्भावविजयिनीनित्यसखीनामेवोक्तिरिति ज्ञेयमासाञ्च पूर्वानुरागोऽपि तन्मिथुननिष्ठः सर्वविलक्षण इत्यलौकिकत्वमपि तत्रोरुगाय पदाब्जरागश्रीकुंकुमेनेति वाक्ये तादृशव्यवहारस्य स्वाधीनपतिकायां विरोधः तत्समानन्तु पुरुषायितसुरतविशेष उभयोरपि स्वभावविनिमयेनेति मर्वचतुरस्रम् एतेन रमाया दृत्तक्षणमित्यपि व्याख्यातं समानयोगक्षेमत्वादिति ज्ञेयम् अथ द्रष्टृदृश्यप्रशंसया तदनुमोदनव्यञ्जकः पदानामर्थः ता एव प्रथमम् अपीति सकाकु सम्भावनागिरा तत्रोत्कण्ठां व्यानञ्जुः एणपत्नीत्युपचारात् ततश्च जात्यैव दृष्टिप्रशंसा तत्र पत्नीत्यनेन यज्ञसंयोग एव तादृशप्रयोगस्य पाणिनिस्मरणात्साङ्केतिकं यज्ञपत्नीत्वमिति द्रष्टृप्रशंसा उपगतः समीपमपि प्राप्त इति तद्भाग्यप्रशंसा तत्रापि प्रिययेति द्रष्टृदृश्ययोर्द्वयोरपि प्रशंसातिशयः तस्याः प्रेमविषयत्वञ्च गात्रैर्मिथः सङ्गमेनेनासाधारणतां प्राप्तैरिति पूर्ववदेव तन्वन् दृशां सुनिर्वृतिमित्योभिर्दृष्टृश्चैतदतिशयः अच्युत इति प्रियया विच्युवराहित्येन दृश्यप्रसंसा व इति यत्र भवतीदृशी तत्र भवत्सङ्गिनीनामपीदृशत्वं युक्तमिति द्रष्टृप्रशंसा अथ कान्तेति दृश्यायास्तस्याः तदङ्गसङ्केतिलब्धदुर्लभस्य दृश्यस्य कान्तस्य कुचकुंकुमेति तत्संयोगलब्धभाग्यस्य दृश्यकुंकुमस्य तद्रञ्जिताया इति तत्सम्बन्धेन लब्धशोभातिशाया या दृश्यायाः कुन्दस्रजः शुभ्रतया उदयशोभायोग्यायाः स्वरूपेण च तस्या एव कुन्द इति देवभोग्यगन्धवत्त्वेन तदनुभाविनां स्वेषां तासाञ्च नित्यपरिकरत्वस्य दिव्यगन्धतुलसीमधुमत्तैरिति वत्तथात्वं कुलपतेरिति दृश्यस्य कान्तस्य कुलशब्दः समूहवचनः ततश्च तस्याः कान्तायाः पतिरेव छत्रिन्यायेन गणलक्षणया तत्पृथगतानां सर्वासामस्माकं पतिरित्युपचरितस्येति तदेकसुखसुखित्वस्य इहेति लब्धतद्गन्धसौभाग्यस्य दृश्यस्य तत्स्थानस्य वातीति वनमप्यात्मसात्कृत्य सर्वतश्चलतीति गन्धविलसितस्य गन्ध इति तद्विशेषयोगात्तस्य च प्रशंसा वगतेति सुरतान्तोऽयं जीवातुरिव परमप्रेष्ठसहचरीणां परमास्वादनीय इत्युत्कण्ठातिशयेन वर्णित इति संक्षेपः ॥ ११ ॥

————

श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे कृष्णमृगगृहिणीर्हरिणीर्दृष्ट्वा तासां कृष्णमृगगृहिणीत्वञ्च मृग्यतेऽस्माभिरिति मृगः कृष्ण एव मृगः कृष्णमृगः आत्मनश्च तद्गृहिणीत्वेन समानशीलव्यसनेषु मैत्रीतिन्यायान्मैत्रीयोग्यतां संभाव्य हरिणीत्वेन च दुःखहरिणीत्वमवगत्य सर्वेष्वपु च श्याममुग्धमोहनसुभगचपलतीक्ष्णत्वादीनि कृष्णासाधारणलक्षणान्यालक्ष्य तद्दर्शनातिशयेन तद्दृशोः कृष्णकर्षकत्वमालक्ष्य तत्रापि रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवतीति श्रुत्या कृष्णस्य सर्वरसात्मकत्वेऽपि यथावद्गुणान्वितस्य रसायनस्य तत्तदनुपानयोगे एवतत्तद्गुणाविर्भावस्तथा सर्वरसायनस्य हरेः प्रियानङ्गम एव माधुर्य्यरसाविर्भाव इति मत्वा तद्दृशां रसनिमग्नतया प्रियया सह दर्शनं सम्भाव्य पप्रच्छुः । अपीति । अपीति सम्भावनायां प्रश्ने च वयं सम्भावयामः पृच्छामश्च तथा च नासम्भावितोऽस्मत्प्रश्नो नवा प्रश्नाभावेन कथनायोग्यत्वं हे एणपत्नि इत्यत्र संबोधने जातावेकवचनम् अग्रे वः दृशामिति बहुवचन-

### श्रीरामनारायणकृतभावभावविभाविका ।

निर्देशात् एणः कृष्णमृगस्तस्य पत्नि कृष्णो मृग्यतेऽनेनेति कृष्णमृग स्तम्मृगयितुं बहुतरयागानुष्ठातुःपत्नीत्वेन बहुपुण्यानिचयाद्धस्तद्दर्शन-लाभ इति तत्पुण्यतद्भाग्ययोः प्रसंसा 'पत्युर्नोयज्ञसंयोग' इति पाणि-निना यज्ञसंयोगे एव पत्नीशब्दव्युत्पादनात् पत्नीशब्देन माथुरप-त्नीनां स्नेहश्चध्वनितस्तेन न केवलं यज्ञाद्यनुष्ठानफलं कृष्णद-र्शनं किन्तु स्नेहातिशयस्य तदुक्तमभियुक्तैः—

> गोपालाङ्गणकर्दमेषु विहरन्विप्राध्वरे लज्जसे ।
> ब्रूषे गोवृषहुंकृतैः स्तुतिशतैर्मौनं विधत्से सताम् ॥
> दास्यं गोकुलपुंश्चलीषु कुरुषे स्वाम्यं न दान्तात्मसु ।
> ज्ञातं कृष्ण ! तवांघ्रि पङ्कजयुगं प्रेमैकलभ्यं मुहुरिति ॥

कृष्णपत्नीनामासामस्मत्कृष्णपत्नीत्वेन सापत्न्यं माभवत्विति पुनः संवोधनं सखि इति अच्युतः प्रियया सह इह वः उपगत एव नो ब्रूत सखित्वेन मा उपेक्षां कुरुत नोपगत इति ब्रूयुश्चेत्तत्र सम्भावनाबीजं सूचयन्त्यस्तद्विशेषणमाहुः । गात्रैः आनन्दमात्र-करपादमुखोदरादिरिति स्मृत्या तस्य प्रियमेवः शिर मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मेति श्रुत्यानन्दात्मकैः वः दृशां सुनिर्वृतिं तन्वन्निति एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्या तद्विना कस्याप्यानन्दा-सम्भवात् किंचोक्तश्रुत्या सर्वेषां तत एवानन्दलाभेऽपि दृशां सुनिर्वृतिमित्युक्त्या दृशां तत्स्वरूपविदामेव सुनिर्वृतिः परमानन्दा-विर्भाव इति ध्वनिः ननु नो दृशां सुखलाभेन किमीर्ष्यया पृच्छथ नेत्याहुः । अच्युत इति । प्रच्युतासुखे एवान्यसुखदाने तदीयानन्दक्ष-येनात्मसुखहानियुद्धेर्ष्योद्गमः अच्युते तथा त्वाभावेन नेर्ष्या-सम्भावनागन्धोऽपीति भावः । एवं सम्भाव्य पृच्छन्त्यःप्रियेतिशब्देन प्रियानुसन्धानेनोद्भूतेनेव तयोरनुग्रहेणाविर्भूतातिविलक्षणसुरभि-माघ्रायाहुः यद्वैवं सम्भावनासूचनेऽपि गोपयन्त्यो प्रत्याहुः कान्ताङ्गसङ्गेति । अहो कान्तायाः कान्तिमत्याः कस्य सुखस्यान्तः पर्य्यवसानं वा यस्यां तस्याम् अङ्गसङ्गेति प्रेम निर्भरालिङ्गने तस्याः कुचकुंकुमेन हृदयहृदानुरागरसपूरितकुचकाञ्चनकलशद्वयोच्छलि-ततयाङ्गरागत्वेनावभासमानेन रञ्जितायाः कुलपतेः गोपीनां नः कुलस्य समूहस्य पत्युः कुन्दस्रजो गन्ध इह वाति एवं बहु-प्रश्नेऽप्युत्तरालाभे एता अपि वयमिव तदीयभ्रूधनुर्युग-विस्फूर्जनरूपैकापाङ्गेषुवृष्टिविभिन्नहृदयाश्चकितदृष्टयो वा कृष्ण-गृहिणीत्वसाम्याज्जातमात्सर्या वा हरिणी तेन सुखापहारिण्येता वा न वदन्तीति मत्वोपेक्ष्य ययुः ॥ ११ ॥

— ———

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं व्याकुलमानसा अकस्माद्धरिणीं दृष्ट्वा तामेव पृच्छन्ति। अपीति । हे कृष्णसारपत्नि अत एव हे सखि तुल्यपतित्वेन भीरु-त्वादिधर्मसाम्येन भवत्या अस्मत्सखित्वमतो वो युष्माकम् अपि किमुपगतो मिलित इहास्मिन्वने प्रियया सह गच्छन्सुन्दरै-र्मुखबाह्वादिभिः स्वगात्रैर्भवतीनां दृशां सुनिर्वृतिं परमसुखं तन्वन् विस्तारयन् यतोऽच्युतः परमात्मा तदुपगमो नेत्रादेः परमानन्दजनक एवेति भावः । ननु प्रियया साहित्यं कथमवगत । मित्याशङ्क्याहुः । कान्तेति । कान्ताया अङ्गेन कुंकुमरञ्जितायाः कुलपतेः गोपीसमुदायस्वामिनः स्रजो मालायाः गन्ध इह वाति आगच्छति तथानुभूतगन्धप्रत्यभिज्ञया प्रियासाहित्यं निश्चीयत इति भावः । अत्रैणपत्नीत्यनेन "पत्युर्नो यज्ञसंयोग" इति स्मर-णात् एणानां जन्मान्तरे याज्ञिकत्वसूचनेन तत्पत्नीनां यज्ञप-त्नीत्वं सूचितमिति द्रष्टृप्रशंसा उपगत इति तद्भाग्यप्रशंसा दृशामित्यादिना तन्नेत्रप्रशंसा अच्युत इति परमानन्दप्राप्तियो-ग्यता कान्तेत्यादि दृश्यप्रशंसा कुन्दस्य शुभ्रतया कुंकुमशोभा-योग्यता इहेति स्थानस्यानन्दवैशिष्ट्यं वातीति तत्संसर्गवतः प्रशंसेति व्यङ्ग्यमाला अनभिज्ञापक्षे अहो पुराकृततपःप्रभावात्प्रि यचरणसरोजैरनिशं प्राप्तसङ्गातिगर्ववती क्षितिरियं न वदति यद्वा प्रत्युत्तरं दातुमसमर्थाः जडा न प्रष्टव्याः किन्तु चेतनः कश्चित्प्रष्टव्य इति चिन्तयन्त्योऽकस्मात् काञ्चिद्धरिणीं दृष्ट्वाहुः हे सखि ! एणपत्नि ! अच्युतः किन्त्वयोपगतः संप्राप्तः तव दृष्टि-गोचर एव संप्रति क्वचिद्वर्त्तते नतु त्वत्तो वियुक्त इति सूच-यितुमच्युत इत्युक्तं तत्र हेतुमाहुः । प्रियेयेति । ततः स्वभावा-देवाग्रे प्रचलितां तामवलोक्याहो इयं दृष्ट इति किंब्रवीमि तं दर्शयाम्येव मत्पृष्ठत आगम्यतामिति सूचयन्त्यग्रतो गच्छति ग्रीवां परावृत्य मुहुरस्मान् पश्यति तत एषैवात्र निर्दये वृन्दावने दयावतीति तामनुगच्छन्त्यो दैवात्क्वापि गतां ता-मदृष्ट्वा परस्परं पृच्छन्ति स्माहो संप्रति हारिणी न दृश्यते क्व गतेति ततः काचिदब्रवीत् अत्रैव कृष्णो वर्तते सा तु तद्भयात्सूचकत्वदोषापलापार्थं क्वचित्तिरोहितेति श्रुत्वा तत्रैव स्थिताः दैवादागतसौरभ्यमाघ्रायाहो सत्यं सत्य त्वदुक्तमेव तत्त्वमिति सहर्षं पुनराहुः । कान्तेति । गोपीकुलरमणस्य तस्य गोपीसमुदायं विहायैकयैव कयाचित्कान्तया रममाणस्य ऽन्यायं पश्यतेति कुळपतिपदाशयः मानिनीपक्षे भगवान् राधया सहान्तर्हित इति पूर्वं स्पष्टमनुक्तमर्थं सपत्नीनां मुखेन मध्ये मध्ये व्यञ्जयति तस्याः सौभाग्यातिरेकं द्योतयितुं तत्र क्षितेरप्यलब्धोत्तराः अहो सर्वदास्मत्प्रार्थनापरायणस्या-ऽस्मान् विहायैकाकिनो गमनं कथं जातमिति विचारपराणां मध्ये काचिदब्रवीत् सत्यमेव कयाचिद्धूर्तया नीतः स्यादिति ततश्च सन्दिहाना एव पर्यटन्त्यः तादृशं गन्धमाघ्राय कयाचि-न्नीत इत्यनुमीय दैवादागतां मृगीमवलोक्याऽहो इयं श्रोत्रनेत्रादिमतीति ज्ञास्यतीति मत्वा तां पृच्छन्ति । हे सखि ! एणापत्नि अच्युतो वो युष्माकं समीपं गतः किं ननु प्रत्यहं गच्छति किमाश्चर्य्यमित्याशङ्क्याहुः । प्रियया यतो भवादृशाम-लौकिकानन्दं ददत् प्रातिदृश्यत इत्याहुः । गात्रैरिति । ननु प्रियया सहैव गत इति कथं ज्ञातमिति चेत्तत्राहुः । कान्तेति । सैव प्रिया न वयं तयैवाच्युतोऽस्मांस्तु विहाय गतः कुलपतेस्तस्य वैषम्यं नोचितमितीर्ष्या व्यज्यते यद्वा इहास्मिन् वने वो दृशां गात्रैः सुनिर्वृतिं तन्वन्प्रियया सह सङ्गतः किम्वर्तते नेति न वक्तव्यमित्याशयेनाहुः । कान्तेति । निवृत्तिपक्षे अथ मृगीस्थानीयां बुद्धिं पृच्छन्ति । अपीति । हे सखि ! बुद्धे वो दृशां वृत्तीनां गात्रै-स्तत्र वृत्त्यवच्छिन्नचेतनरूपैर्गात्रैः सुनिर्वृतिं तन्वन् प्रियया ब्रह्म-प्रतिपादिकया तत्त्वमस्यादिरूपया मुख्यया श्रुत्या स उपगतः सङ्गतः इहान्तःकरणे वर्तते किं यतः कान्तस्य परमात्मन अङ्गसङ्गाय प्रतिपाद्य प्रतिपादकसम्बन्धाय कुचयो

**बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः।**
**अन्वीयमान इह वस्तरवः! प्रणामं किम्वाभिनन्दति चरन् प्रणयावलोकैः॥ १२॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका।

स्तत्स्थानीयोपासनीदकर्म्मणोः कुंकुमेन तज्जनितविविदिषया रञ्जितायाः कुलपतेः क्षेत्रस्वामिनश्चिदात्मनस्तत्सम्बन्धिन्याः कुन्दस्रजः तत्स्थानीयबुद्धिप्रत्ययमालायाः गन्ध इह वाति शान्त्यादिरूपसुगन्धयुक्ता प्राणचेष्टात्र दृश्यत इत्यर्थः॥ ११॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे सखि! एणपत्नि! वो युष्माकं दृशां सुनिर्वृतिं निरतिशयं सुखं गात्रैः सुन्दरतरैर्मुखादिभिरङ्गैर्वितन्वन् प्रियया सह अपि किमुपगतः समीपं गतः प्रियासाहित्यद्योतकमाहुः। कान्ताङ्गसङ्गतस्तत्कुचकुंकुमेन रञ्जितायाः कुलपतेः व्रजनाथस्य श्रीकृष्णस्य कुन्दस्रजः कुन्दपुष्पमालायाः गन्धः वाति आगच्छति॥ ११॥

---

### भाषा टीका।

हे सखि! मृगिणीं अपनी प्यारी को साथ लै अपने सुंदर अङ्गों की शोभाते तुमारे नेत्रों को आनंद देत अच्युत इहांते गयो होगो या गोकुल नाथ की प्यारी के संयोग ते कुंकुम ते रंगी जो कुंद की माला ताको ए गंध चलो आवै है तांतें गयो ही है॥ ११॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

फलभारेणावनतांस्तरून् श्रीकृष्णं दृष्ट्वा प्रणतान् मत्वा प्रियया सह गतस्य गतिविलासं सम्भावयन्त्यः पृच्छन्ति। बाहुमिति। तुलसिकाया अलिकुलैः अतस्तदामोदमदान्धैः अन्वीयमानः अनुगम्यमान इह चरन्नित्यर्थः॥ १२॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

हरिणीनां विलोकनाभिनिवेशेन निजविरहार्त्तिदृष्ट्या तासामप्यार्त्तिभरोदयात् स्तब्धतां मत्वा ता विहाय फलपुष्पादिभारेण नतान् वृक्षान् वीक्ष्य विनयभरनम्रान् परमसाधून् मत्वा सर्वानेव तान् पृच्छन्ति। बाहुमिति। बाहुं प्रियांस उपधायेत्यादिकं पूर्वोक्तगन्धप्राप्त्या प्रियया सहागमनं सम्भाव्य तत्र च ललनान्धसैरस्यामिश्रितश्रीमद्बाहुसौरभ्यं तथा श्रीहस्तामोदात्तपद्मगन्धं तथा भ्रमरगन्धसङ्खलितं तदङ्गतुलसीगन्धं च प्राप्योक्तं किम्वा नागरीणामीदृशी परिपाटी भवेदिति युक्त्वा तथोक्तं तुलसिकाया अलिकुलैरिति तस्या एव सर्वतो मधुमोदविशेषात् अत एव मदान्धैस्तैरन्वीयमान इत्यनेन बाहुमित्यादिना च रसविशेषप्रकटनं तथा तुलस्याः सौभाग्यं तत्सम्बन्धादलीनाञ्च सूचितम् अन्वीयमानत्वेनैव मदान्धानां तेषां महाध्वनिना निजनिन्हुतिलीलाभङ्गशङ्कया युष्मद्विधव्यवधानेन तान् परिहर्त्तुं किम्वा युष्मत्पुष्पेषु सञ्चारयितुम् इह चरन् विशेषतश्च प्रणतवत्सलत्वादत्रैव चरन् सन्निति भावः। प्रणयावलोकैः किमभिनन्दति अनुमोदते स्वीकरोति वेति तेषां सुदुर्लभत्वात् यद्वा स्थावरजात्या तुलसीसाम्येन निजप्रयोजनापेक्ष्यापि समयविशेषेऽस्मिन् अपुष्पादिष्वपि तत्कृपासम्भाव्यते इत्यतः विशेषतः किम्वेति सकटाक्षप्रश्नः अतस्तत्कथयतेति शेषः अन्यैस्तैर्व्यञ्जितम् अथवा तच्छ्रीमत्पदानि तत्र च वामे सम्मिलितश्रीपदानि वीक्ष्य दक्षिणे चाश्वासप्राप्त्या बाधिकनतान् वृक्षान् वीक्ष्य तेन श्रीदक्षिणहस्ते पद्मग्रहणं सम्भाव्य क्वचिच्च भयादिवाग्रतो द्रुतपतितान्यधिकमज्ञान्याकुलानि च प्रियापदानि वीक्ष्य तेन च मदान्धभ्रमरानुगमनं सम्भाव्य किम्वा तत्तत्पदोपरि भ्रमरमुखनिर्गलितमधुकणान् सर्वतो वीक्ष्य तथा तथोक्तमिति ज्ञेयं यद्वा केवलमुन्मत्ततयैव तत्तदुक्तिः नच किञ्चिद्दर्शनविचारादिनेति इत्युन्मत्तवच्च इति वक्ष्यमाणत्वात् श्लेषेण मदान्धा एव तमनुसरन्तीति तथा तेषां सम्बन्धात् सोऽपि मदान्ध एवेति प्रणयरोपोक्तिः यद्वा मदान्धैरपि अतो गतमानाभिरस्माभिर्यदयमनुगम्यते तद्युक्तमेवेति भावः॥ १२॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथ तस्या मौनमयविलोकनाभिनिवेशेनाशङ्कितात्मविरहार्त्तिदृष्ट्यार्त्तिभरोदयात् स्तब्धतां मत्वा तां विहाय फलपुष्पादिभरनम्रान् वृक्षान् वीक्ष्य विनयभरप्रणतान् मत्वा सर्वानेव तान् पृच्छन्ति। बाहुमिति। इहापि तत्तत्प्रशंसयानुमोदनं व्यज्यते तत्र वाक्यार्थेन यथा हे तरवो! रामानुजो वो युष्माकं प्रणामं किम्वा प्रणयावलोकैरभिनन्दति इति सन्देहस्य तत्कृपायाश्च योग्यास्पदतां सूचयित्वा तेषां द्रष्टॄणां गुणप्रशंसा कथं नाभिनन्देदित्याशङ्क्य तत्र तस्य तथा सह मधुरविलासावेशं कारणमाहुः। तज्ज्ञाने च कारणं गन्धमात्रेण पूर्ववत्प्रियजनदन्तरङ्गधर्मविज्ञतामाहुः। बाहुमित्यादिना। तत्रानभिनन्दने सामान्यतः कारणं चरन्निति तत्तत्क्रीडास्थानगमनव्यग्र इत्यर्थः। ननु सदा सर्वत्र भ्रमति पश्यति चास्मान् अद्य वा को विशेषस्तत्राहुः। बाहुं प्रियांस उपधायेति। प्रियायाः स्वस्मिन् परमस्निग्धाया अंसे स्कन्धे उपधाय कोमलयमिति यत्किञ्चिदाधायेति ननु तमेवास्मान् दर्शयितुमागतः कथमस्मत्प्रणामं नाभिनन्देत् इत्याशङ्क्याहुः। तुलसिकालिकुलैरन्वीयमानः सन् गृहीतपद्मः प्रियायास्तान्निवारयितुं दक्षिणेन भुजेन लीलापद्मधूननासक्त इत्यर्थः। तर्हि कथमभिनन्देदिति भावः। अत्र तु तुलसिकालिकुलैरिति तत्क्रीडावनतुलसीनां सर्वसुगन्धित उत्कर्षो द्योतितः तथा च वक्ष्यते "दिव्यगन्धतुलसीमधुमत्तै,,रिति अत एव मदान्धैस्तद्रसपानमदेनान्धैरपि तैरन्वीयमान इति प्रियाङ्गसङ्गेण

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परिमलविशेषप्रकाशो दर्शितः इतीत्थमत्रापि पूर्ववत्तत्तत्प्रशंसा दर्शिता अथ च मालां बिभ्रद्वैजयन्तीमिति या वैजयन्ती प्रोक्ता मध्ये कच्चित्तुलसीत्यादौ त्वां बिभ्रदित्यनेन तत्प्राशस्त्यातिशयप्रस्तुतत्वाद्या च तुलसीमाला सूचिता पुनश्च कुन्दस्रज इत्यनेन या कुन्दस्रक् च दर्शिता संप्रति तस्यास्तस्याः स्खलनहेतवो विहाराश्च व्यञ्जिताः तदित्थं वाक्यार्थेन तत्तत्प्रशंसयानुमोदनमेव व्यञ्जितम् अथ पदानामर्थैरपि पूर्ववदनुसन्धेयं तदेवं वक्रीणां सख्यमेव लब्धं तस्या अमूनि नः क्षोभमित्यादौ विरोधमुखेन च तदेव हि निश्चेतव्यम् ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रणामं फलभारनम्रत्वज्ञापकत्वमेव प्रणाम उच्यते ॥ १२—१४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

फलभारेण नतांस्तरून् कृष्णदर्शनात्प्रणतान्मत्वा प्रियया सहितगतिविलासं सम्भावयन्त्यः पृच्छन्ति । बाहुमिति । हे तरवः! रामानुजो गृहीतं दक्षिणपाणिना धृतं पद्मं येन तथाभूतः प्रियायाः स्कन्धे बाहुं वामं भुजं निधाय तुलसिकाया अलिकुलैस्तदामोदमदान्धैरन्वीयमानोऽनुगम्यमान इह चरन् प्रणयसहितैरवलोकैर्वो युष्माकं प्रणाममभिनन्दति किमित्यर्थः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

विटवृत्तिमनुवर्तमानस्य पुंसो मालत्यादिपुष्पादानेच्छया तत्समीपजिगमिषासम्भवेन तत्प्रश्न उपयुज्यते अश्वत्थादिप्रश्नः कोपयुज्यते इत्यतः सम्भवं दर्शयितुमाहुः। बाहुमिति। हे तरवः! प्रणामप्रदक्षिणादिना प्रसन्नाः संसारात्तारयन्तीति तरवोऽश्वत्थादयः भगवच्चरणप्रियतुलसिकापुष्पमकरन्दलोलैरलिकुलैरन्वीयमानो रामानुज एकं बाहुं प्रियाया अंसे उपधायापरेण गृहीतपद्मः प्रणामं चरन् कुर्वन् प्रणयावलोकैः वः अभिनन्दति किंवेत्यन्वयः। प्राव. व्यालङ्कारोक्तिः यद्वा इह चरन् रामानुजः प्रणयावलोकैः वः प्रणाममभिनन्दति किञ्चानेन स्थावराणां भक्त्युन्नतिः सूचितेति ॥ १२ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं हरिणपत्नीं पृष्ट्वा इयं भर्तृसमीपे वक्तुं न शक्तेति पूर्वं भगवत्स्तुतान् वृक्षान् पृच्छन्ति बाहुमिति । प्रियाया अंसे बाहुमुपधाय द्वितीयेन हस्तेन गृहीतपद्मः रामानुजो निर्भयः तुलसिकायाः संबन्धिनो ये अलयः तेषां कुलैः कृत्वा अन्वीयमानः पश्चाद्गम्यमानः हेतरवः! पूर्वं भगवता भक्तत्वेन स्तुताः अतो भवद्भिः कृतं प्रणाममिहैव किमभिनन्दति न वेति प्रश्नः प्रियांसे बाहुमुपधायेति समतया गमनेन लक्ष्यते उभयोः पदानां पङ्क्त्याकारेण गमनात् कदाचित्पदानां चाञ्चल्येन भ्रमरोपरुद्धगत्या तन्निराकरणार्थं यत्नो लक्ष्यते तरवश्चलाः नम्राः नमस्कारार्थमेव फलोपहारं कृत्वा भूमिसंबद्धशिरसो जाताः अतो ज्ञायते प्रणामः कृत इति अनुत्थानात् सन्देहः अभिनन्दति न वेति अनभिनन्दने हेतुः चरन्निति यो हि गच्छति सः अनवहितोऽपि भवति ननु निकट एव स गच्छति यद्यभिनन्दनं कृतं स्यात् तदैव श्रूयेत कथं सन्देह इति चेत्तत्राहुः । प्रणयावलोकैरिति प्रणयपूर्वकमवलोकैर्नतु वाचा अतो ये निकटस्थाः त एव जानन्ति नान्ये ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्य तत्रैव वर्त्तमानत्वेऽन्यदपि लक्षणं मिथो ज्ञापयन्त्यस्तरून् फलपुष्पभारनम्रान् प्रणतान् मत्वा सावेतर्कमाहुः । बाहुमिति । हे तरवः! इह चरन् कृष्णः फलपुष्पादिकरप्रदायिनां वः प्रजारूपाणां प्रणामं किं प्रणयपूर्वकावलोकैरभिनन्दति नवा हन्त हन्त युष्मद्विधेषु सात्त्विकसाधुषु लोकेषु कुतस्तस्य प्रीत्यावलोकनावकाश इति सासूयमाहुः। रामानुजो मत्तः तत्रापि प्रियाया अंसे बाहुं वामभुजमुपधायेति सम्प्रयोगश्रमवशात् श्लथदुर्बलः प्रियास्कन्धार्पितं बाहुमेव कोमलमुपधानं कृत्वा तस्या मुखगन्धेनोत्पतिष्णूनां भ्रमराणां विद्रावणार्थमेव दक्षिणपाणिगृहीतनीलकमलः अतस्तत्रैवैकतानमानसस्य तस्य नान्यत्र दृष्टिपातसम्भवः इति भावः। तुलसिकानां [कोमलतुलसिकाननस्य अलिकुलैः अन्वीयमानः तुलसिकाः परित्यज्य इह अत्रैव सः अन्विष्यत इत्यत स क्वचिदत्रैव निन्हुतो विहरतीति भावः। ननु तर्हि अलिकुलानामेवानुपदं गच्छाम इत्तत्राहुः । मदान्धैरिति । नहि मदान्धानामनुगतिर्भव्यजनैः कर्तुमुचितेति भावः १२ ॥

### केन चित्कृता विशुद्धरसदीपिका ।

अथ तस्या मौनमयावलोकनाभिनिवेशेनाशङ्किताभिजविरहार्त्तिहृद्ध्यार्तिभरोदयात् स्तब्धतां मत्वा तां विहाय फलपुष्पादिनम्रान् द्रुमान् वीक्ष्य विनयभरप्रणतान्मत्वा सर्वानेव तान् पृच्छन्ति । बाहुमिति । इदमपि परमप्रेष्ठसखीनां वाक्यं तरवोऽप्येते तद्युगलपालिता लालिताश्च किल विलक्षणशक्तिभाजोऽन्तश्चेतना आपि तत्कुञ्जकेतनावेशेनाङ्गीकृतबहिर्जडीभावा भावज्ञतया परिकरप्राया इति गम्यते वक्रीणामपि तत्तुल्यावेशविवशानां सुरतान्तवर्णनोद्दीपिततदनन्तरलीलासंस्काराणां वैशिष्ट्यमिहापि तत्तत्प्रशंसयानुमोदनं व्यङ्ग्यं तत्र वाक्यार्थेन यथा हे तरवो! रामानुजो वो युष्माकं प्रणामं किम्वा प्रणयावलोकैरभिनन्दति इति सस्नेहस्य तत्कृपायाश्च योग्यतां सूचयित्वा तेषां द्रष्टृणां गुणप्रशंसा रामानुज इति साक्षात्तज्ज्येष्ठभ्रातुर्नामकथनान्निजस्य सख्यमेव सुव्यक्तं श्लेषेण धातोः प्रादुर्भावार्थतामवगत्य राममनुपश्चाज्जायते प्रादुर्भवतीति सङ्केताभिधानात्तदनुगतत्वमपि व्यज्यते साङ्केतिकपदैश्चाश्लीलत्वं न दोषः ननु तदेकाश्रयाणां प्रणामं कथं नाभिनन्देदित्याशङ्क्य तत्र तस्य तया सह मधुरातिमधुरविलासावेशं कारणमाहुः। तज्ज्ञाने च कारणं गन्धमात्रेण पूर्ववन्निजस्य तदन्तरङ्गधर्मैर्दैतैव तत्रानभिनन्दने सामान्यतः कारणं चरन्निति तत्तत्क्रीडास्थानगमनव्यग्र इत्यर्थः। ननु सदा सर्वत्र भ्रमति पश्यति चास्मान् अय या को विशेषस्तत्राहुः। बाहुं प्रियांस उपधायेति प्रियायाः परमप्रेष्ठतमाया अंसे स्कन्धे सप्तमी सामीप्ये अतिमुग्धकुमारिकेयं मम प्राणसञ्जीवनी वनीति ललितगत्यावेशेन स्खलेदपि

### केनचित्कृता विशुद्धरसदीपिका ।

कदाचिदिति तत्सम्भालनार्थमंससमीपे बाहुं नतु हस्तमात्रमित्यादरातिशयः उपधाय उपधानीकृत्येत्यर्थः । ततश्च पूर्वस्मिन् श्लोके सुरतान्तवर्णनश्रवणात्स्वतः सतां ह्रीः परतोऽतिगुर्वीतिन्यायेन सञ्जातापत्रपायाः प्राणप्रियायाः वनशोभावलोकनमिषेण ततो विहारस्थानादन्यत्र गमनमिति गम्यते प्राणनाथश्च तामनुसेवनपरः प्रयातीति सम्भाव्य तस्याः स्वाधीनपतिकात्वमनुसंहितं नतु तामेवास्मान् दर्शयितुमागतः कथमस्मत्प्रणामं नाभिनन्देदित्याशङ्कयाहुः तुलसिकालिकुलैरन्वियमानः सन् गृहीतपद्मः निजस्य स्यामसुन्दरत्वेन वर्णमास्यादात्मीयैरवेदित्वैरभिलापविशेषैरेवालिभिः पद्मिनीगणशिरोमणिमञ्जरीनीराजितचरणां प्राणप्रियां परितो भ्रमद्भिस्तदात्वोचितसेवैःपयिकलीलापद्मेन निवारितैरप्यन्वीयमानः लोलुपतयानुगम्यमानः निवारणे निमित्तश्चातिसुकुमारिकेयमेषां छाययापि ग्लानिमावहेदिति शङ्केव एवञ्चाभिलापैरपि तां स्प्रष्टुं न पारयतीति तत्सुखसुखित्वेन प्रीत्यतिशयः तस्याश्चातिसौकुमार्य्यं सूचितं यद्वा तुलसिकेति श्रीवृन्दादेव्या एव नामान्तरेणाभिधानं तस्या आलिकुलैः सहचरीगणैःअन्वीयमान इत्यर्थःस्वासाञ्च तद्विरहित्वादैन्येन तदभिनन्दनम् एवञ्च लीलाकमलस्यापि हृदयाम्बुरुहत्वं व्यज्यते ततश्च प्राणप्रियायाः सुरतान्तां तां रूपमाधुरीं निपीय चक्षुष्मतेव हृदयाम्बुजेन निर्मञ्छनं यातीति गृहीतपद्मत्वेन सूच्यते ततश्चैतादृशस्तत्सेवाव्यग्रो युष्माकं प्रणामं कथमभिनन्देदिति प्रश्नाभिप्रायः । ततश्च तस्या अपि मदनमदालसाया ललितगतिः सूचिता यथालं० "क्षितिमंदमरालसा न गरिमाणमालम्बते गतिः प्रकृतिमन्थरा त्वरत ईपदेव क्रमात् । सलीलमवलोकितं नमति वङ्कते शङ्कते स्वभाव इव लङ्घितःप्रियसमीपतो राधये"ति विलासालङ्कारोऽयं तदुक्तं तत्रैव—

> यानस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् ।
> विशेषोदयिता लोके विलास इति कीर्त्यते ॥

ततश्च तस्या अपि रसास्वादकैः प्रागल्भ्यञ्च सूच्यते एतदुक्तं भवति स्वाधीनपतिकायामस्यां श्रीराधिकायां मुग्धामध्याप्रगल्भेति भेदाद्वस्थात्रयं यथावसरमुत्स्वाय प्राणनाथस्य नित्यदा विराजते तदेव किन्ते कृतमित्यादिश्लोकत्रये क्रमेण निरङ्कितामिति अत्र तुलसिकालिकुलैरिति तत्क्रीडावनतुलसीनां सर्वत उत्कर्षो द्योतितः दिव्यगन्धतुलसीमधुमत्तैरितिवक्ष्यमाणात् अत एव मदान्धैरित्युक्तं स्थानास्थानपतनविचारविधुरैरित्यर्थःतद्द्वारा निजस्यापि प्रेममत्ततानुभूतेति । अन्वीयमान इति । प्राणप्रियाङ्गसङ्घर्षेण परिमलविशेषोदयादात्मनोऽपि तद्वत्तानुभवेन तदनुगमनकर्मत्वाभिमानः सूचितः एवमत्रापि पूर्ववत्तत्प्रशंसा दर्शिता अथ च मालां विभ्रद्वैजयन्तीमिति या वैजयन्ती पूर्वमुक्ता मध्ये काचित्तुलसीत्यादौ त्वां विभ्रदित्यनेन तत्प्रशस्त्याशयस्य प्रस्तुतत्वाद्या तुलसीमाला सूचिता पुनश्च कुन्दस्रज इत्यनेन या कुन्दस्रक् च दर्शिता सम्प्रति तस्यास्तस्यास्खलनहेतवो विहाराः सूचिताः ततश्च मदनालसायस्येयं तस्याः सौभाग्यातिनन्दनेन सहचरीगणस्यातिरहस्यतापि दर्शिता तदुक्तं भावामृते "आलादथोदकुशरफरीरस्तदाळयो लावण्यवन्त्याः समवायस्तयोः क्रीणन्ति याः प्राणपरार्द्धकोटिभिस्तयोः प्रमोदोत्थरुचिच्छटाकण,,मिति तादित्थं वाक्यार्थेन तत्तत्प्रशंसया ऽनुमोदनमेव व्याञ्जितम् अथ पदानामर्थैरपि पूर्ववदनुसन्धेयं तदेवं वर्क्षाणां परमप्रेष्ठसखीत्वं लब्धं वच तस्या अमूनि नः क्षोभमित्यादिविरोधमुखेन निश्चेतव्यमित्यलमतिप्रपाञ्चितेन

> अन्तर्वाणिरभाणि श्रीशुकदेवो निगूहयित्वा याम् ।
> लीलान्ता मतिचपलप्रकटं कथयन्न जिहेमि ॥
> राधाकृष्ण सुखानामास्वादो जीवनं येषाम् ।
> तत्रार्थैकप्राणा मत्प्राणाः साधवः शरणम् ॥ १२ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे पुष्पफलभारेण नतांस्तरून् दृष्ट्वा एते सफलजन्मानः सफलत्वेऽपि नतत्वेन निरभिमानाः कृष्णदर्शने फलानि मूर्ध्न्याधाय प्रणततया कृष्णैकपरा वहुसुमनसः कृष्णेनाग्रजं प्रति शंसितत्वात् तत्प्रियाश्च परोपकारशीलतया वदिष्यन्तीति मत्वा पप्रच्छुः । बाहुमिति । स हरिः इह युष्माकं समीपे चरन् वः प्रणामं प्रणयावलोकैरभिनन्दति किम्वा नेति विकल्पार्थः तत्र तस्य स्वभावत एव प्रणतवत्सलत्वादभिनन्दनसम्भावना अस्मद्दुःखे स्वमानदोष एव निमित्तं सम्भवनाविशेषानिमित्तं सूचयन्ति रामानुज इति । यूयमपि तत्प्रियाः रामं स्वाग्रजं प्रति भवतां प्रशंसनात् स एव कथं स्नेहदृष्ट्या वो नाभिनन्देत् किञ्च गृहीतपद्मः तुलसिकालिकुलैरन्वीयमान इति पदाभ्यामपि पुष्पपत्रधारणोक्त्या द्रुमलतादिप्रियत्वं सूचितं बाहुं प्रियांस उपधायेत्युक्त्यापि स्वर्णयूथिकालताक्रान्ततमालवेषत्वात् भवदनुकारित्वेन भवत्प्रियत्वं विद्युत्द्युतिप्रियालङ्कततुलसिपुष्पवन्यस्रग्धनुरनुरञ्जितमेघवर्णतनुत्वेन रसवृष्ट्या नित्यं भवत्पोषकःकथं न प्रणयावलोकरसवृष्ट्याभिनन्देत् तथा वन्यस्रग्वसन्तालिङ्गिततदालिकुलमधुकरीनिकरकरस्वितनूपतिरतिपतिमिलनमङ्गलरतिमतिशतरतिमोहनवामतमालंकृतवामपूर्णकामवामस्वभावकामाभिरामाङ्गः कामेषुकुसुमपूरकर्तृपतिसचिवानां वः प्रणामं कथं नाभिनन्देत् तथा गृहीतपद्म इत्यनेन स्वकर एव पद्मश्यामालज्जितमपि पद्मं यदा संगृह्य स्वकरशिरश्छत्रकरणेनासम्मानदः कथं न भवतां सफलप्रणामं सफलं कुर्य्यात् असम्भावनायां तु बाहुं प्रियांस उपाधाय गृहीतपद्म इत्यनेन तामालिङ्ग्य करपद्ममिलितन्मुखपद्मत्वात् तदेकपरत्वेन सर्वत्रत्वेऽपि यथा प्रियया संपरिष्वक्तो न बाह्यङ्किञ्चित् वेद नान्तरमिति श्रुति सिद्धमदान्धतया कथमभिनन्देत् तथा नित्यवारुणीमदोन्मत्तरामस्यानुजः कुलस्वभावप्राप्तोन्मादः तुलसिकायाः सर्वपुष्पमानोपमर्दिन्याः नः सपत्न्या अलिकुलैस्तत्रापि मदान्धैरन्वीयमान इत्यनेन प्रतिपक्षमदान्धसंगी च कथं वः प्रणाममभिनन्देदिति एवं यदन्योऽन्यसम्प्राप्तोत्तरत्वेन तानभिनन्दितप्रणामतया वैकल्येन विचेतसो मत्वाग्रे ययुः ॥ १२ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततो दैवात् क्वापि गतायां हरिण्यां फलभारेण नम्रांस्तत्रत्यांस्तरूनवलोक्य भगवन्तं दृष्ट्वा प्रणता इति मत्वा प्रियासहितस्य गतिविलासं सम्भावयन्त्यस्तान् पृच्छन्ति । बाहुमिति । प्रियायाः स्कन्धेबाहुमुपधाय द्वितीयहस्तेन गृहीतं पद्मं येन स रामानुजः अग्राह्यनामाऽस्मत्पतिः मदान्धैस्तुलसिकासम्बन्धिभ्रमरसमुदायैरन्वीयमानः अनुगम्यमानः अनेन प्रियासाहित्य-

**पृच्छतेमा लतावाहूनप्याश्लिष्टा वनस्पतेः।**
**नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

मनुमीयते तुलसिकां विहाय तदङ्गलिप्तोत्कृष्टसौरभद्रव्यसुगन्धलोभादनुगच्छन्तीति तथेह वने चरन् हे तरवः! प्रणामं च प्रणयावलोकैः प्रेमपूर्वकै स्वलोकनैरभिनन्दति किं न वाभिनन्दतीति प्रश्नः यद्वा तथा चरन्नभिनन्दति आनन्दं प्राप्नोति वः प्रणामं चाभिनन्दत्यनुमोदति किम् अनभिज्ञापक्षे तादृशं गन्धमाघ्राय तत्रैवस्थास्तत्रत्यान् वृक्षान् पृच्छन्ति। हे तरवः! किमर्थं प्रणामं कुरुत कृष्णप्रसादार्थमिति चेत्स किमिह चरन् वः प्रणाममभिनन्दति यद्यपि भवन्तः साधवः परोपकारशीला अनुकम्प्यास्तथापि भवदीयं प्रणामं नाभिनन्दतीति वयं जानीमः कुत इत्याशङ्क्याहुः। तस्यान्यत्रासक्तचित्तस्य कार्यान्तरव्यग्रत्वान्नास्त्यवलोकनावकाश इति सासूयमाहुः। बाहुं वामभुजं प्रियास्कन्धे उपधाय तत्कोमलत्वमालोच्य किञ्चिदाधाय तन्मुखगन्धेनोत्पतिष्णूनां भ्रमराणां निवारणार्थमेव दक्षिणकरगृहीतलीलापद्मः तथाचादौ चरन् तद्गतिविलासव्यग्रः पुनश्च तत्सैकतानमानसश्चातो न तस्यान्यत्र दृष्टिप्रसारणावकाश इति भावः। एतेन ननु तामेवास्मान्दर्शयितुमागतः कथमस्मत्प्रणामं नाभिनन्देदित्याशङ्कापि निरस्ता तेन निवारिता एव एते भ्रमरा अनुगच्छन्तीत्याहुः। तुलसिकेति। ननु भ्रमरकुलानामेवानुपदं गच्छतेत्याशङ्क्याहुः। मदान्धैरिति। मदोन्मत्ताः मदान्धैरनुगम्यन्ते भव्यजनैस्तु मदान्धा नानुगन्तुमुचिता इति भावः। रामानुज इति कठोरतामभिव्यञ्जयन्ति अभिनन्दतीति वर्त्तमानापदेशाच्छत्वानामनुत्थानाच्च क्वचिददर्शनेऽप्यखोने स्थित इति सूचयन्ति। अभिनन्दाक्षेपाच्च किमर्थं नम्रीभूताः शाखा उत्थाय समाहिताः सन्तोऽस्मच्चित्तचोरे स्वाशाकरं निश्शङ्कं सूचयन्त्विति व्यञ्जयन्ति निवृत्तिपक्षे वृक्षस्थानीयान् सङ्घातान् पृच्छन्ति। बाहुमिति। प्रियायाः मायाया अंसे बाहुं निधाय तामधिष्ठाय गृहीतं पद्मं जगदुपादानभूतं पुष्कररूपं येन सः यतो रामा माया अनुजा आधीना यस्य सः तुलसि प्रकाशशीलं कं सुखं यस्य तन्मकरन्दास्वादनपरैः परमहंसलक्षणालिकुलैः ब्रह्मानन्दलक्षणमदेनान्धैर्विषयदर्शनरहितैरनुगम्यमान इह सङ्घातेषु चरन् हे तरवः! सङ्घाताः वः प्रणामं नमस्कारादिलक्षणकर्म किमभिनन्दति तथाचाभिनन्दनकर्त्तारमात्मानं भवन्तः किं जानन्तीत्यर्थः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे तरवः! तुलसिकासंबन्धिभिर्भ्रमरसमूहैरन्वीयमानः इह वने प्रियया सह चरन् वो युष्माकं प्रणामं प्रणयसहितैरवलोकैः किमभिनन्दति ॥ १२ ॥

---

### भाषा टीका।

वृक्षों को देख कहवे लगीं कि अपनी प्यारी के कान्धे पै गलबांई दै दूसरे हाथ ते कमल को फिरावत ( रामानुज ) बलदाउजी को छोटो भैया तुलसी माला के सुगन्धते मतवारे अन्धे भौंरा जा के पीछे चलैं हैं सो ऐसो जाती वेर हे वृक्षो हो! तुमारे प्रणाम को प्रेमभरी चितवनते ग्रहण करै है कि नहीं ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

काश्चिदाहुः हे सख्य इमा लताः कृष्णेन सङ्गता नूनमत इमाः पृच्छत ननु स्वपतिसंगतौ तत्सङ्गतिर्दुर्घटा न वनस्पतेः पत्युर्वाहूनादिलष्टा अपि अहो भाग्यं नूनं तन्नखैः स्पृष्टा यतः उत्पुलकानि बिभ्रति नहि स्वपतिसङ्गतावीदृक् पुलक सम्भव इति भावः॥१३॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एते हि तद्भक्ताः तन्मतमनुसरन्तो नूनं न कथयेयुर्नाम तर्हि स्त्रीत्वेनात्मीया लता एवैताः पृच्छाम इत्यन्योऽन्यमाहुः पृच्छतेति। बाहूनाश्लिष्टा इत्यादिकं सर्वं निजभावानुसारेण ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

तदेतत्सर्वं कस्याः पदानि चैतानीति या वक्ष्यन्ति तासाम वधानास्पदमेव न बभूवेति लभ्यते संशयासम्भवात् काश्चित्तु किञ्चित्कृतावधाना अपि रागद्वेषाभावात्तदश्रुत्येव स्वाभीष्टमेव दर्शयन्ति मुनीन्द्रश्चात्र पूर्वाभ्यस्तासां वासनाभेददर्शनाय तदुदासीनतां व्यञ्जयति। पृच्छतेमा लता इति। वनस्पतिरूपस्य पत्युर्वाहून्प्याश्लिष्टा इमा एव लताः पृच्छत नन्वेवं चेत्तर्हि कथमासां तत्सङ्गस्तर्क्यते तत्राहुः नूनं वितर्कं तस्य श्रीकृष्णस्य करजैः स्पृष्टा इति ननु तदिदमपि कथं वितर्कितं तत्राहुः। उत् उच्चैः पुलकान्यंकुररूपाणि बिभ्रति बिभ्रत्य एवासते अहो इत्यपूर्वतायां नत्वेवं पुरेत्यर्थः ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्र काश्चित्काश्चिद्वापीराहुः। पश्यतेति। हे सख्यः! इमा लताः कृष्णेन नूनं सङ्गताः पश्यत पृच्छतेति पाठान्तरं तदा इमाः पृच्छतेत्यर्थः। ननु स्वपतिसङ्गतौ तत्सङ्गतिर्दुर्घटा तत्राहुः वनस्पतेः पत्युर्वाहून्स्कन्धानादिलष्टा अपि कर्तरि क्तः आश्लिष्यैति पाठान्तरे आश्लिष्यापि नूनं तस्य कृष्णस्य करजैर्नखैः स्पृष्टाः कुतः यत उत्पुलकानि बिभ्रति नहि स्वपतिसङ्गतानामपीदृक् पुलकसम्भव इति भावः। उदञ्चितकोरकाणि पुलकत्वेन सम्भावयन्तीनामियमुक्तिः ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नूनं निश्चयेन यास्तस्य कृष्णस्य करनखस्पर्शात्पुलकितानि पुष्पफललक्षणानि बिभ्रति ताः लताः वनस्पतेः बाहून् शाखा आश्लिष्टा अपि सम्भाव्याः पश्यत अहो उन्मुख्यो भवतेत्यन्वयः अयं रूपकालङ्कारः सुरतसुखस्मारकः॥ १३॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ते ज्ञानिनो वृक्षाः स्त्रीभिः सह सम्भाषणं न करिष्यन्तीति तत्तत्पत्न्य एव प्रष्टव्या इत्याहुः। पृच्छतेमा लता इति। वनस्पतेर्बाहूनाश्लिष्टा अप्येताः पृच्छत यद्यपि तासामप्यनवसरः ताश्च पुनर्भर्तृभुजालिङ्गिताः अपि भगवत्करजैरेव नखैः स्पृष्टाः सत्यः उत्पुलकानि बिभ्रति नहि रसान्तराविष्टानां रसान्तरार्थं स्पृहा भवति अत एव ज्ञायते सर्वोपमर्दी भगवत्सम्बन्धी रस इति एवं सर्वेषामेवावचने मूर्छिता इव जाता इति एतदन्ता प्रश्नकथा नवविधा एता गोप्यो निरूपिताः दशमी तु भगवता नीयते एवमन्वेषणेन रसस्थैर्यं निरूपितम्॥ १३॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अन्यदपि लक्षणमन्या दर्शयन्त्य आहुः। पृच्छतेति। हे सख्यः! इमा लता एव कृष्णसङ्गमलक्ष्मधारिणीः पृच्छत नच स्वपतिसङ्गतौ तत्सङ्गतिर्दुर्घटेति वाच्यं यतो वनस्पतेः पत्युर्बाहून् सम्यगाश्लिष्टा अपि अहो कामोद्रेकः नूनं तन्नखैः स्पृष्टा एव उत्पुलकानि बिभ्रति नहि स्वपतिसङ्गतावीदृक् पुलकः स्यात् अत एतल्लक्षणस्यास्मद्दृश्यमानत्वात् पूर्वपूर्वा इव न वयं तमद्राक्ष्मेति मिथ्या वक्तुं प्रभविष्यन्तीति भावः॥ १३॥

### केनचित्कृता विशुद्धरसदीपिका।

अथान्योऽन्यं सुरतालसा रूपमाधुरीमनुभूय भूयोद्दीपितविहारयोः कुञ्जान्तरं प्रवेशं सम्भावयन्ति। तदुद्दीपितत्वं दर्शितं श्रीगोविन्दलीलामृते "स्फुरन्मकरकुण्डलं मधुरमन्दहासोदयं मदालसविलोचनं कमलसन्धिलोलालकं मुखं स्वदशनक्षताञ्जनमलीमसौष्ठं हरेः समीक्ष्य कमलेक्षणा पुनरभूद्विलासोन्मुखी। परस्परालोकनजातलज्जानिवृत्तचञ्चद्दरकुञ्चिताक्षम् ईषत् स्मितं वीक्ष्य मुखं प्रियाया उद्दीप्ततृष्णः पुनरास कृष्णः" इति ततश्च चंक्रमणक्रमेण कुञ्जान्तरः प्रविष्टयोर्विहाररसाविष्टयोस्तत्तल्लीलानुकरणपरा द्रुमालिङ्गिता लता अवलोक्य सम्भावितततक्रीडाविशेषाः परस्परमाहुः। पृच्छतेति। प्रियनर्म्मसखीनामिदं वाक्यं हे सख्यः! इमाः साक्षादनुभूयमानाः तल्लीलावलोकहर्षवैवश्येन तदनुकरणपराः लताः पृच्छत एता अस्माकं सजातीया अपि नितरान्तयोरानुकूल्यमनुशलियन्त्योऽस्मासु साक्षाद्वक्तुमशक्ताश्चेष्टया सूचयन्तीति भावः। तामेव दर्शयन्ति। वनस्पतेः तरुणतमालस्य बाहूनिव विटपानित्यर्थः आश्लिष्टा आलिङ्गिताः ननु कुतो ज्ञातं तदनुकृतिपरा इति चेत्तत्राहुः। बिभ्रतीति। उत्पुलकानि उर्ध्वरोमाश्रिता इति भावोद्रेकः तत्कृतः यतस्तत्करजस्पृष्टाः यद्वा अपि समुच्चये तयोरन्योऽन्यनेपथ्यरचनायै करजैर्नखैः स्पृष्टा अपीत्यर्थः। एवं चोभयोर्नखस्पर्शोत्पुलकितत्वेन तान्मिथुनमनुसख्यमेवासां सुव्यक्तम् अनुकरणञ्च भावोद्रेकादस्मात्तु तत्सूचनाय वेत्यविरुद्धं तदेवं पञ्चश्लोकीयं सख्यरसोत्कर्षदर्शिका व्याख्याता कारिका "क्षिते मृगीणां वृक्षाणां लतानां च सुखोदयः। द्वयोः सुखानुभूत्येति सख्यमेव दृढीकृतम्। किमन्यच्छ्रीमुनीन्द्रोऽपि सख्यं प्रकटयिष्यति। निजस्य रेम इत्यादिवाक्येय तत्क्रीडितं वदन्॥ १३॥

### श्रीरामनारायणकृतभावभावविभाविका।

अग्रे गच्छन्त्यो वनस्पतिभुजवलिता नृत्यन्तीरिव वायुवेगचलिता लता अंकुराद्युत्पुलकोत्कलिता विलोक्य पुरुषान् परपानवधार्य ताः प्रष्टुं तत्सौभाग्यं प्रशंसन्त्यो मिथोऽभिमन्त्रयन्ति पृच्छतेमा इति। हे सख्य! इमा लताः पृच्छत ननु क आसामुत्कर्षस्तत्राहुः। अहो इत्याश्चर्ये परमाद्भुतभाग्यमासां यतो वनस्पतेः पत्युर्बाहूनाश्लिष्टा अपि नूनं तस्य नन्दनन्दनस्य करजैः स्पृष्टाः ननु कथमेवमुत्प्रेक्षते तत्राहुः। उत्पुलकानि हर्षेणोदितानि पुलकानि हृष्टरोमाणि अंकुररूपाणि उपलक्षणमेतत्सुमनोविकासमधुधारानन्दादीन् बिभ्रति यतोऽतः एवमवधा. श्यामः नैवंविधो हर्षः पतिसङ्गमे सम्भवत्यनुभूतमेतदस्माभिः प्रतिरोमव्याप्योच्चलितो ऽयमानन्दः पूर्णानन्दस्य नन्दनन्दनस्यैव ततोऽतिविचित्रमासां भाग्यमासां पतयोऽपि धन्याः स्वालिङ्गितानामपि तत्करस्पर्शामोदमामोदमवलोकयन्तोऽपि न वारयन्ति किन्तु स्वयमप्युत्पुलकानन्दाश्रुभी राजन्ते. ऽस्मदभाग्यान्नास्मद्बन्धवो ऽप्येतादृशा इति॥ १३॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अहो किमर्थं तरवः पृच्छ्यन्ते स्वस्त्रीसन्निधौ परस्त्रीभिः सह भाषणं न करिष्यन्त्यत इमा लताः प्रष्टव्या इति काश्चिदाहुः। पृच्छतेति। हे सख्य! इमा दृश्यमाना लताः पृच्छत ननु यथा स्वसन्निधौ अन्यपतिना अस्माभिः सह भाषणं दुर्घटं तथा स्वपतिसङ्गतानामासां हृदि मनसां न तिर्दुर्घटेत्याशङ्क्याहुः। बाहूनिति। यद्यपि वनस्पतेः शाखालक्षणान्भुजानाश्लिष्टास्तथापि नूनं निश्चयेन तस्य श्रीकृष्णस्य करजैर्नखैः स्पृष्टाः यतः पुलकानि बिभ्रति अहो सर्वरसोपमर्दी अस्याप्रेष्ठरसः स्वपतिरसाविष्टानामपि तत्स्पृहादर्शनात् नहि स्वपतिसङ्गतावीदृक्पुलकोद्गमः सम्भवतीति भावः। सममतदिनरपक्षयोरपि निवृत्तिपक्षे हे सख्यः! वनस्पतेः सङ्गानलक्षणस्य वृक्षस्य विषयरूपपल्लवान्बाहूनप्याश्लिष्टा इमा लतास्तत्स्थानीया रागद्वेषादयः इन्द्रियस्येन्द्रियार्थे रागद्वेषौ व्यवस्थिताविन्युक्तत्वात् नूनं तस्य चिदात्मनः कराः प्रत्ययास्तत्र जातेन प्रादुर्भूतेन चेतनेन स्पृष्टा अतो उत्पुलकानि बिभ्रति स चेतनतयावभासन्त इत्यर्थः॥ १३॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

काश्चिदाहुः इमाः वनस्पतेः स्वभर्तुर्बाहून् आश्लिष्टा अपि अहो अत्याश्चर्यमिदं भर्तृसंश्लेषेऽपि तत्तेन श्रीकृष्णेन नूनं करजैर्नखैः स्पृष्टाः उत्पुलकानि बिभ्रति आनन्दातिशयेन रोमाञ्चिता भवन्ति अतः इमाः लताः हे सख्यः! पृच्छत॥ १३॥

[1]इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।
लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥

### भाषा टीका

आपस मे गोपी कहैं हैं परी सखि ! इन लतान तें पूछो जिन ने अपने पति की भुजा की नाईं पेड की शाखा पकर रखी हैं इन के फूलों के रोमञ्च से हो रहे हैं तातें हम जाने हैं कि सांचे ही प्यारेने नखोंते इन को स्पर्श कियो है ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उन्मत्तवत्प्रच्छुरित्येतत्प्रपञ्चितमिदानीं रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपञ्चयति । इतीति । उन्मत्तवचो गोप्यः उन्मत्तवचसश्च ता गोप्यश्च ताः कृष्णान्वेषणेन कातरा अतिविह्वलाः अनुचक्रुरनुकृतवत्यः ॥ १४ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

इति उक्तप्रकारेण यद्वा इति ईदृशमुन्मत्तानां वच इव वचो यासां गोपीनां ताः उन्मत्तवच इत्युक्तानुवादः तत्तद्वाक्यानि केवलमुन्मत्ततयैवेति पूर्वोक्तमुन्मत्तकवदित्यस्य दार्ढ्यार्थं तत्र चोन्मत्तवचस्त्वमयोग्येष्वपि प्रश्नात् तत्रापि तथा तथा तत्तत्प्रश्नादिति अनुचक्रुरित्यत्र हेतुः कृष्णस्य परमाकर्षकस्य अन्वेषणाय कातरा इति अतः कातर्य्येणैव तत्तदनुकरणं नच स्वाच्छन्द्येनेत्यर्थः । तत्रैव हेतुः तदात्मिकाः तेन हृतचित्ताः यद्वा तच्छन्देन लीलाः परामृश्यन्ते ततस्त्वानुकरणे अभिनिवेशेन तत्सम्यक्त्वमभिप्रेतं यद्वा ननु तत्तल्लीलास्मरणेनापि विरहार्तानां प्राणा दुर्द्धराः अनुकरणघृतेन च विवृद्धविरहवह्निज्वालानां तासां हृदि कथमात्मा अतिष्ठदित्याशङ्क्याह । तस्मिन्नेवात्मा यासां ताः अतः सुशीतलामृतार्णवसम्बन्धेन निःसृतः अन्यथा स्वस्थानस्थः सन् दग्धोऽभविष्यदेवेत्यर्थः । यद्वा श्रीकृष्णाविष्टचित्ता इति तत्तदनुकरणं तद्वशतयैव नत्वात्मबुद्ध्येत्यर्थः ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति पूर्वोक्तप्रकारकमुन्मत्तस्य वच इव वचो यासां तादृश्यो गोप्यः कृष्णान्वेषणे कातरा विरहदुःखेन तदपि कर्तुमसमर्था इत्यर्थः । तथा सत्यो गायन्त्य उच्चैरित्याद्यनुसारेण गानानुवृत्तिप्राप्ता या याः पूतनावधादिलीलास्तास्ता अपि मध्ये मध्येऽनुचक्रुरित्यर्थः । तत्र हेतुः तदात्मिकाः तस्मिन् श्रीकृष्णे आत्मा चित्तं यासां ता गाढं तदासक्ता इत्यर्थः । तत्र कृष्णानुकरणं स्फुटमेव तदात्मकतया तत्र च स्वभावापरित्यागेन नातितदभेदस्फूर्त्तिः यत्नमुरिवदधेऽम्बरमित्यत्र यत्नकथनात् कृष्णोऽहं पश्यत गतिमिति स्वस्मिन् कृष्णत्वसाधनार्थं तच्छब्दप्रयोगाच्च पूतनाद्यनुकरणं च कृष्णविषयकतद्धेतुकभयेनेति तदात्मकतयैव यथा स्वविषयकभयेनोन्मत्तस्य व्याघ्राद्यनुकरणम् अतो न तदीयप्रेमविरुद्धभावयोगः कस्याश्चिच्छ्रीयशोदाद्यनुकरणं च न स्वेन रत्याख्येन भावेन तस्य वाल्यभावनया वृतत्वात् किन्तु प्रीतिसामान्यातिशयाल्लब्धकृष्णभावत्वेन ततो भयादेव ततस्तस्याभावेन न मातृभावस्पर्शः किन्तु कृष्णभावेनैवेति न मिथः स्पर्शानुचितयोर्भावयोर्युतिः सर्वमेतत्तासु तदानीमुन्मादस्यानुगतत्वात्सहसैव समपद्यत नान्यदेवेति च ज्ञेयम् ॥ १४ ॥

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

उन्मत्तकवत्प्रच्छुरित्येतत् प्रपञ्चितम् अथ रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपञ्चयति । इतीति । इत्युन्मत्तस्येव वचांसि यासां ताः गोप्यः कृष्णान्वेषणेनातिकातरा अतिविह्वलास्तदात्मिकाश्च भगवतस्तास्ता लीला अनुचक्रुरनुकृतवत्यः ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति पूर्वोक्तप्रकारेण उन्मत्तस्य वच इव वचो यासां तादृश्यः गोप्यः कृष्णान्वेषणेन कातरा भीता इव भीताः विरहदुःखेन तदपि कर्त्तुमसमर्था इत्यर्थः । तथा सत्यो गायन्त्य उच्चैरित्याद्यनुसारेण गानानुवृत्त्या या याः प्राप्ताः पूतनावधादिलीलास्तास्ता अपि मध्ये मध्येऽनुचक्रुरित्यर्थः ॥ १४ – २३ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति प्रत्येकं पृष्ट्वा कस्यापि प्रत्युत्तरमनासाद्य चोन्मादे जाते सति कृष्णो नान्यत्र गतवानस्मास्वेव प्रविष्टस्तदहमेव कृष्ण इति प्रत्येकं तादात्म्यमभूदिति दर्शयति । इत्युन्मत्तवच इत्यादि । इत्येवं प्रकारेण उन्मत्तं वचो यथा भवति तथा कृष्णान्वेषणकातराः सत्यस्तास्ता भगवतः कृष्णस्य लीला अनुचक्रुः तास्ता इति पूर्वपूर्वानुभूताः अनुकरणे हेतुः तदात्मिकाः तादात्म्यं गताः ॥ १४ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं तिरोधानेन जाततापनिवारणार्थं यत्नो निरूपितः एतदुपमर्द्दिका भगवल्लीला प्रादुर्भूता तस्या विलासं वक्तुं पूर्वोपसंहारपूर्वकमुपक्रमते । इतीति । इतिशब्दः प्रकारवाची एवंप्रकारेण प्रश्नायोग्येऽपि प्रश्नकरणादुन्मत्तवाचो गोप्यो जाताः कृष्णस्यान्वेषणे कातरा अपि दीना अपि जाताः तनुर्वाक्च श्रान्ता मनसि तु त्रयो

[1] इतस्त्रयोविंशपर्यन्तं दश श्लोका श्री विजयध्वज मते नैव सन्ति ।

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वर्त्तन्त इति प्रथमस्यापगमे द्वितीय आविर्भूत इत्याह। लीला इति। भगवतस्तास्ताः पूर्वमुक्ताः कृताश्च तदात्मिकाः सत्यः अनुचक्रुः उन्मत्तवच इति छान्दसो ह्रस्वः अथवा इति पूर्वोक्तमुन्मत्तवचः एतावदिति ततो गोप्यः कृष्णान्वेषणार्थं कातरा जाता इति भगवतो लीलाः षड्विधाः स्वाभाविक्यः तासामपि भेदास्तास्ताः युक्तश्चायमर्थः भगवति हृदि समाविष्टे लीलाभिः सहिते यदा यदा भगवानवतरति तदा तदा पूतनासु पयःपानादिकं करोति तथैव सम्वत्सरलीलायां पुरुषोत्तमादिषु प्रसिद्धिः एतासामपि मनसि आविर्भूतेन कर्त्तव्यं तत्साक्षात्कर्तुमशक्यमिति भावनयैवाविर्भूत इति अनुकरणमात्रं कृतवत्यः—

> भक्त्यातिमत्तास्तद्भावमीयन्मत्तास्तु रोपतः।
> द्वेषभावं समाश्रित्य क्रीडन्त्यो ऽजातमत्सराः॥
> सत्त्वादिगुणभावेन नवलीलाः प्रपेदिरे।
> अतो न न्यूनभावोऽत्र ह्यविद्याः शकटादिभिः।
> सर्वत्र हरिबुद्ध्या वा पादस्पर्शेच्छया पुनः।
> उलूखलादिभावोऽपि तत्सम्बन्धप्रसिद्धये॥ १४॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इमा आनन्दजाड्यान्न किमपि श्रुवते इत्येवमचेतनेष्वपि प्रश्नकामादिदर्शनाभ्यामुन्मत्तानां वचांसीव वचांसि यासां ताः ततश्च तस्यान्वेषणेऽपि कातरास्तन्मध्ये काश्चिदेवं प्रत्येकं परामृशुः सम्प्रत्यहमेव स्वरूपचेष्टाद्यनुकरणेनात्मानं कृष्णाकारं दर्शयित्वा अतिकातराणामासां सख्याश्च मौहूर्तिकीमपि निर्वृतिं निष्पादयामीति मानसि कृत्वा तस्य सर्वा एव लीलाः क्रमेण स्मृत्यारूढीकृत्य पूतनावधलीलामनुचक्रुः तस्मिन्नेवात्मा मनो यासां ताः तत्र च प्रतिकूलानामनुकरणं योगमायैव तन्मध्य एव गोपीस्वरूपा भूत्वा तत्तल्लीलासिद्धयर्थं चकार अनुकूलानुकरणं तु गोप्यश्चक्रुरिति ज्ञेयं "नो नः कथा यद सदःस्विति तत्सिपिद्धोऽप्यानन्दनिघ्न इह ता यदवोचमेवनमानि तु प्रथयितास्मि तदत्र तासामित्थं मुनिर्मनसि सम्प्रति निश्चिकाय॥ १४॥

### केनचित्कृता विशुद्धरसदीपिका।

तदेवं रासपञ्चाध्याय्याः प्राणैरिव पञ्चभिः श्लोकैस्तयोरतिरहस्यां रतिलीलां सहचरीणां च तद्युगलमन्वनर्गलं प्रेमपरिपाटीं च दर्शयित्वा यथोचितमन्यासामप्युन्मादचेष्टितानि संगृह्णाति। इतीति। अहो विपक्षतटस्थादिसमुदाये तत्प्राणसख्यस्तयोरतिगोपितां क्रीडां कथं प्रकाशयामासुरित्यत आह। उन्मत्तवच इति। उन्मदस्यान्यानुसन्धानक्षमाभावात् यद्वा वचांस्येव तासामुन्मत्तानि स्वयं तदप्यासुर्नतु ता इत्यर्थः। तथापि तत्सुखसुखितानामनुचितमेव हितरहस्यप्रकाशनमिति चेत्तत्राह। गोप्य इति। वैदग्ध्येन गोपयितुं न शक्ता इत्यर्थः। अत एव स्निग्धपदोपादानमिति ननु ताभिः किंचिदनुभूतं न वेत्यत आह। कृष्णान्वेषणकातराः तदेकव्यग्रा नानुसन्दध्युरिति भावः। तर्हि किमनुतस्थुरिति तत्राह। लीला इति। पृच्छतेत्यादि श्लोकस्य यत्किञ्चिदनुसन्धानेन तदावेशविवशास्तल्लीलामेवानुचक्रुः तास्ताः प्रागनुभूता इत्यर्थः। ननु प्रेम्ण उभयानुगतत्वात्सोऽपि कथं नानुचकारेत्याशङ्क्य भगवत इत्युक्तं स तु भगेन निजानन्दमूर्त्या प्राणेश्वर्या नित्ययुक्त इत्यर्थः। यद्यपि निजनिजभावावेशेन सर्वमिदं प्रागुक्तं कस्याः पदानीत्यादि वक्त्रीणां नानुसन्धानगोचरः शंसयाभावात् तथापि काश्चित्किञ्चित्कृतावधानाः कान्तभावावेशेन लीलामात्रमनुचक्रुरिति ज्ञेयम्॥ १४॥

### श्रीरामनारायणकृतभावभावविभाविका।

एवं विमृश्यापि प्रेमोन्मादविह्वलतया ताः पृष्टमपि विस्मितमतयो यदाचेरुस्तदाह। इत्युन्मत्तेति। इति पूर्वोक्तप्रकारेणोन्मत्तानामिव वृक्षलतादिप्रश्नरूपाणि वचांसि यासां ता उन्मत्तवचसः यद्वा उत्कृष्टः सर्वज्ञस्यापि ऐश्वर्यादिविस्मारको मदः प्रेमसुधासवस्तद्युक्तानि वचांसि यासां ता यद्वा उत्कृष्टानामपि ब्रह्मादीनां ब्रह्मविदां मत्तता येभ्यस्तादृशानि वचांसि यासां ता गाः वाचः कृष्णगुणगानेन सर्वदोषेभ्यः पान्तीति गोप्यः—

> मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः।
> यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य॥
> लीलावतारेप्सितजन्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः।

इत्यादिभिस्तद्गुणगानहीनवचसां हेयत्वनष्टप्रायत्वश्रवणात् प्रेमवैक्लव्येन कृष्णान्वेषणेऽपि कातराः यद्वा बहुधावहिरन्विष्यालब्धतत्समागमा बहिः कृष्णान्वेषणेऽपि कातराः अन्तर्मेवेऽनन्त भवन्तमेव ह्यन्तस्यजन्तो मृगयन्ति सन्त इत्यादिभिरन्तरन्वेष्यतामवगत्यान्तर्द्रष्टुमुद्यतास्तदात्मिकाः सत्यस्तद्रूपात्मकतयैव भगवतस्तास्ताः लीला अनुचक्रुः यद्वा लीलाहीने केवलं तदन्वेषणे सर्वथा विरहानुसन्धानदुःखेन कातरास्तदात्मिकास्तदालिङ्गितमतयः प्रेममार्गाचार्यभूता गोप्यो नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृता इत्यादौ स्मृतानुशीलनाध्याहितपरप्राप्तिगाकलय्य इह भगवति यानि कर्माणि तानि कुर्वन्नेवानुकुर्वन्नेव शतं समा यावदायुर्जिजीविषेदित्यर्थकं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा" इत्यादिश्रुतिसिद्धलीलानुकारं स्वाचरितेनैवोपदिशन्त्यस्ता गुणगान स्मारितास्तास्तत्पदलक्ष्यस्वरूपात्मिका भगवतो लीला ह्यनुचक्रुः॥ १४॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

उन्मत्तकवत्प्रचक्रुरित्येतत्प्रपञ्चितं तदुपसंहरन् रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपञ्चयितुमुपक्रमते। इतीति। इत्येवं प्रकारेणोन्मत्तवचो गोप्यः ह्रस्वः छान्दसः यद्वा उन्मत्तस्य वच इव वचो यासां ताश्च ता गोप्यश्च यद्वा उन्मत्तवच एतावत्ततो गोप्यः कृष्णान्वेषणार्थं कातरा अति विह्वला भगवतस्तास्ता लीला अनुचक्रुः अनुकृतवत्यः यतस्तदात्मिकाः तत्स्फूर्त्या कृष्णानुकरणं तदासक्तिप्रवृत्त्या वा पूतनाद्यनुकरणन्तु कृष्णविषयिकतद्धेतुकभयादिजनितपूतनाद्यात्मकत्वस्फूर्त्या व्याघ्रादिमनोन्मत्तस्य व्याघ्राद्यनुकरणवत् अतो न प्रेमविरुद्धभावसङ्करः यद्वा प्रतिकूलानामनुकरणं योगमायैव तन्मध्ये

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् ।
तोकायित्वा रुदन्त्यन्या पदाहन् शकटायतीम् ॥ १५ ॥
दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ॥
रिङ्गयामास काप्यंघ्री कर्षन्ती घोषनिःस्वनैः ॥ १६ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

गोपीस्वरूपा भूत्वा तत्र लीलासिद्ध्यर्थं चकार यद्वा तत्तल्लीलाविशिष्टे भगवति अन्तराविर्भूते बहिस्तल्लीलादर्शनस्य साक्षादसम्भवात् तथानुकरणं कृतवत्यः तत्रोत्कृष्टाः कृष्णरूपं मध्यमाः बलरामादिरूपं निकृष्टाः पूतनादिरूप नासक्तवचस्त्वात् कृष्णस्य सदानन्दरूपस्य परमात्मनो ऽन्वेषणे कातराः व्यग्राः कातर्य्यं प्राप्ता इति वा ततः षड्गुणैश्वर्यसम्पन्नस्य परमात्मनः सम्बन्धिन्यस्तास्ता लीला हि प्रसिद्धौ अनुचक्रुः भगवत्कृततत्तल्लीलानुकरणं वर्णयामासुः वाच्यवाचकयोरभेदादनुचक्रुरित्युक्तमिति सूचयितुमाह । तदात्मिकाः द्वावेव ब्रह्मणो रूपे परं चापरं चेत्यादिश्रुतेः ॥ १४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्तं तत्प्रपञ्चयति। इतीति दशभिः। तत्रैकेनोपक्रम्यानुकरणं चतुर्भिस्तन्मयत्वं चतुर्भिः पुनरेकेनानुकरणं च प्रपञ्चयति । इत्येवमुन्मत्तस्येव वचांसि यासां ताः उन्मत्तवचसः ताश्च ताः गोप्यश्च तथाभूताः कृष्णान्वेषणेन कातरा अतिव्याकुलाः तास्ताः प्राक् प्रदर्शिताः भगवतो लीलाः अनुचक्रुः अनुकृतवत्यः ॥ १४ ॥

---

### भाषा टीका।

या प्रकार ते पागल की नांई वचन कह वे वारी गोपी श्रीकृष्ण चन्द्र के ढूंढबे में हैरान हो गई तब श्रीभगवान् में मनलगजानेते भगवान् की ही वा वा लीला को करत भई ॥ १४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

कस्याश्चिदित्यादिभिश्चतुर्भिरनुकरणं प्रपञ्च्यते ततश्चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदाचरन्ती स्तनमपिबत् तोकायित्वा तोकवदात्मानं कृत्वा ॥ १५ ॥

दैत्यायित्वा दैत्यवत्तृणावर्तवदात्मानं कृत्वा एका कृष्णार्भभावनां कृष्णस्यार्भं बाल्यं भावयति या तामन्यां जहार ॥ १६—१७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अनुकरणमेव प्रपञ्चयति। कस्याश्चिदिति नवभिः। तद्विवेकः स्तैर्व्यञ्जित एव तत्र चानुचक्रुरित्युक्ते स्तुकरणस्यैव प्रपञ्चने कार्य्येऽपि तन्मयत्वस्य प्रपञ्चनमनुकरणस्यैव सम्यक्त्वबोधनार्थमिति अथवा केवलमनुकरणस्यैव प्रपञ्चो ज्ञेयः तत्र चादौ प्रायो देहचेष्टयैवानुकरणं दैहिकचेष्टायाः वाक्चेष्टासम्वलितायाः प्रायस्तथैव मानसचेष्टासम्वलितायाश्च तथैवेत्थं त्रिधानुकरणं तत्र यद्यपि प्रायो भावनयैव सर्वत्रानुकरणं तथापि तत्र तत्र तत्तत्प्राधान्यापेक्षया त्रैविध्यं तत्रादौ देहचेष्टाप्रधानानुकरणमाह त्रिभिः। पूतनायन्त्याः पूतनायमानायाः पूतनाद्यनुकरणं केवलं भावनयैव किञ्चित्तत्तन्मुद्राद्याचरणेन नतु वेषादिना सर्वथा तदसम्भवात् अत एव वक्ष्यते कृष्णार्भभावनामिति तदपि विरहवैवश्येन यद्यपि न सुसिध्येत् तथापि विरहार्त्तिभरस्वभावेन तत्तल्लीलाभिनिवेशात्स्वयमेव सम्पद्येतेति पूर्वमध्यायारम्भे उक्तमेव तत्र यद्यपि कृष्णप्रियाणां तासां दैत्यानुकरणं न युज्यते तथापि केनापि सुदुरूहेण भाववैचित्रीविशेषेण विष्टास्ताः कृष्णस्यैव लीला अनुचक्रुः नान्यां प्रियसख्यस्तु तत्तद्भावाविष्टास्ता वितर्क्य तत्रैव तच्चितासञ्जनेन महादुःखापनोदनार्थं बुद्धिपूर्वकमेव पूतनाद्यनुकारं कृतवत्य इति अथवा इति एवन्ताः कृष्णान्वेषणकातरा बभूवुः अनु अनन्तरं तासां प्राणरक्षार्थं तास्ता लीलाः कर्य्यः विह्वलाः सर्वा एव व्रजसुन्दरीस्तदात्मिकाः लीलामयीश्चक्रुः अतस्तत्तल्लीलापरिकरत्वाद्दैत्याद्यनुकरणं नायुक्तमिति सर्वमनवद्यं स्तनमपिबदिति चानुकरणमात्रं नतु तत्त्वतः अनुकरणस्यैवापेक्ष्यत्वात् एवमग्रेऽदन्यप्यूह्यं शकटायतीं शकटायमानाम् एवमग्रेऽपि शकटानुकरणं तोकायमानाया उपरि शकटवत् कथञ्चिदवस्थानं ज्ञेयम् ॥ १५ ॥

घोषाः किङ्किण्यस्तेषां निःस्वनैः कृत्वा सहिता इति वा तच्च साक्षादेव तासामपि पादेषु नूपुरसद्भावात् एतच्च घोषप्रघोषरुचिरमित्याद्युक्तरिङ्गणलीलानुकरणम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदात्मकत्वनानुकरणस्य प्रपञ्चमाह नवभिः। पूतनायन्त्या इति। तथापि स्वभावस्थितत्वेन पूतनायदाचरन्त्या एव नतु तत्तद्विरुद्धभावाया इत्यर्थः। कृष्णायन्तीत्यत्र तु कृष्णार्भभावनामिति वक्ष्यमाणानुसारेण भावतोऽपि तदाचरन्तीति लभ्यते एवमुत्तरत्रापि स्तनमपिबदिति चानुकरणमात्रं तन्मात्रस्यापेक्षितत्वात् शकटायतीं शकटायमानां तादृशत्वञ्च हस्तपादाभ्यां भुवमवष्टभ्याधोमुखतयैवोर्द्ध्वरचस्थानम् ॥ १५ ॥

कृष्णस्य आर्भभावना बाल्यवासना सैव सा यस्यास्तां जहार तद्धयवेशेन तद्धरणमनुकृत्य दर्शितवतीत्यर्थः। घोषाः किङ्किण्यस्तेषां निस्वनैः कृत्वा सहिता सेविता वा तच्च साक्षादेव तासामपि पादेषु नूपुरसद्भावात् एतच्च घोषप्रघोषरुचिरमित्याद्युक्तरिङ्गणलीलानुकरणम् ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पूतनायन्त्याः पूतनायमानायाः ॥ १५ ॥

कृष्णार्भभावनाम् अर्भकावस्थकृष्णानुकारिणीं रिङ्गयासास चंक्रमणमकरोत् ॥ १६—१७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कस्याश्चिदित्यादि चतुर्भिरनुकरणं प्रपञ्च्यते ततश्चतुर्भिस्तन्मयत्वं पुनरेकेणानुकरणमिति विवेकः । कस्याश्चिद्दीपिकायाः पूतनावदाचरन्त्याः काचित् कृष्णवदाचरन्ती स्तनमचुम्बदन्या तु तोकायित्वा शिशुवदात्मानं कृत्वा रुदन्ती शकटासुरवदाचरन्तीं काश्चित्पदा चरणेनाहन् ताडयामास ॥ १५ ॥

काचित्तु दैत्यायित्वा तृणावर्तवदात्मानं कृत्वान्यां काश्चित्कृष्णस्यार्भकं बाल्यं भावयन्ती जहार हृतवती काचिद्घोषाणां ध्वनतां भूषणानां निःस्वनो ययोस्तौ भूषणानिःस्वनाविति पाठान्तरं तावङ्घ्री चरणौ कर्षन्ती रिङ्गयामास जानुचंक्रमणं चकार ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

तत्र तास्ता इत्युक्तेः सर्वा एव लीला इत्यायाते मूलतः प्रभृति पूतनामोक्षादिलीलानुकरणस्यापेक्षितौ तदेवाह । कस्याश्चिदित्यादि बहुभिः ननु तदात्मिका इति तादात्म्यभाजः तादात्म्यं तु प्रेम्णो मर्यादया चेतसो वृत्यन्तरराहित्येन तन्मयीभावः न च तदात्मिका इति लीलात्मिका इति वक्तुं शक्यते लीला भगवतस्तास्ता ह्यनुचक्रुरित्युक्तेः न हि लीला भूत्वा लीला अनुचक्रुरिति सम्भवति तेन कृष्णावेशात् कृष्णतादात्म्यमेव तदा कथं प्रतिकूलेषु पूतनादिष्वभिनिवेशाभावात् पूतनायन्त्या इति (१) ॥ १५—२७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रथमतो भगवच्चरित्रं पूतनासुपयःपानमिति काचित्पूतनाभूता जाता अन्याहं कृष्ण इत्युक्तवती तदा तामङ्के भगवद्बुद्ध्या अगृह्णात् ततस्तस्याः पूतनायन्त्याः कृष्णायन्ती स्तनमपिबत् तस्यास्तु मरणभावना न स्थितेति सा न मृता नाप्यनुकरणं कृतवती कृष्णायन्तीव स्तनमात्रमेव पिबति अलौकिकसमार्थ्याभावादिति स्तनपानमात्रमुक्तम् अमङ्गलतानिवृत्तये च शकटभङ्गलीलामाह । तोकायित्वेति । तोकवदाचरति आत्मानं तोकं मन्यते वा तोकवदात्मानं कृत्वा वा शकटायतीं शकटवत् स्थितामहन् ताडितवती ॥ १५ ॥

तृणावर्तलीलामाह । दैत्यायित्वेति । दैत्यवदात्मानं कृत्वा कृष्णस्यार्भं बाल्यं भावयन्तीं कृष्णार्भभावनां तामेका आत्मानं दैत्यायित्वा जहार कापि अङ्घ्री कर्षन्ती घोषनिःस्वनैः रिङ्गयामास चलितवती यथा बाल्ये मुग्धप्रमीतवत् घोषप्रघोषरुचिरं भगवान् गच्छति पूर्वश्लोके चतस्रः उक्ताः लीलाद्वयेन तास्तामस... मस्यः अत्र तिस्र एव राजसतामस्य इति चरित्रलीलायामुक्ता विशेषा अत्राप्यनुसन्धेयाः अथ युगलास्तिस्रो निरूपिताः गुणातीता त्वेका पुनः प्रकारान्तरेण बह्व्यः एकभावमापन्नाः भगवदिच्छया प्रधानगुणभावं प्राप्य रजसा अनेकधा विक्षिताः बहुरूपा जाताः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवमनुकरणं चतुर्भिराह । पूतनायन्त्याः पूतनावदाचरन्त्याः कृष्णवदाचरन्ती स्तनमपिबत् पानमनुचक्रे तोकायित्वा तोकवदात्मानं कृत्वा ॥ १५ ॥

दैत्यायित्वा तृणावर्तदैत्यवदाचरन्ती एका कृष्णस्य आर्भं बाल्यं भावयति या ताम् ॥ १६-१७ ॥

केनचित्कृता विशुद्धरसदीपिका ।

लीला एव प्रपञ्चयति । कस्याश्चिदिति दशभिः । अत्र पूतनादिविजातीयतादात्म्यं न गोपीनामपि तु सर्वनाम्नां बुद्धिस्थवृत्तित्वात्किंशब्देनात्र योगमायैव वक्तव्या कार्य्यार्थे सम्भविष्यतीति प्रागुक्तेः सैव तासामदृष्टरूपा सती योगेऽयोगे च साहाय्यं करोति तथा श्रीकृष्णतादात्म्येन तद्बाललीलानुकरणमप्यनुचितमुन्मादमूलकमेव तस्यानियतवृत्तित्वाच्च विरुद्धं यथा श्रीकृष्णानुकरणं स्फुटमेव तदात्मकतया तत्र च स्वभावापरित्यागेन नातिभिदस्फूर्तिः यतन्तीत्यादौ यत्नकथनात् कृष्णोऽहमिति कृष्णत्वसाधनार्थं तच्चेष्टाप्रयोगाच्च पूतनाद्यनुकरणञ्च कृष्णविषयकतद्धेतुकभयेन तदात्मकतयैव यथा स्वविषयकभयेन व्याघ्राद्यनुकरणम् अतो न तदीयप्रेमविरोधः श्रीयशोदानुकरणञ्च न स्वेन रत्याख्येन भावेन तस्य वात्सल्यभावनया ऽऽवृतत्वात् किन्तु प्रीतिसामान्यातिशयलब्धकृष्णभावेन अतो भयादेव ततस्तस्याभावेन न मातृभावस्पर्शः किन्तु कृष्णभावेनैवेति न मिथः स्पर्शानुचितयोर्भावयोर्युतिः सर्वमेतत्तासु तदानीमुन्मादस्यानुगतत्वात्सहसैव समपद्यत न पूर्वाभ्यासेनेत्यपि ज्ञेयं वस्तुतस्तु कस्याश्चिदित्यनाकलितस्वरूपाया भावनालब्धायाः ननु साक्षाद्दीपिकाया इत्यर्थः। अत एव पूतनायन्त्या इति पूतना इवाचरन्त्या इत्युक्तम् एवञ्च प्रतिस्वमेव निजभावनावेशस्वभावेनैवानुकृतिः तत्तल्लीलया कृता नत्वन्यानुसंहितेति तदुन्माद एव सर्वसाधकः अन्यानुसन्धाने तु तद्विरोधः स्फुट एव तदात्मिका इत्युक्तेर्बाललीलानुकरणञ्च नदीयभावविरुद्धमपि नन्दसूनुरिति प्रागुक्ताभिप्रायेण वात्योऽयमस्मत्प्रीतिं नावकलयतीति स्फूर्त्या सङ्गमनीयमिति संक्षेपः कस्याश्चिदिति । पूतनायन्त्याः सेवाचरन्त्या ननु तद्विरुद्धभावाया इत्यर्थः । कृष्णायन्ती भावतोऽपि स इवाचरन्तीत्यर्थः। स्तनमपिबदित्यपि भावेनैव तोकायित्वा बाल इवाचरित्वा रुदन्ती सती शकटायन्तीं काश्चिद्भावनालब्धामहन् भावेनैवेति सर्वत्र योज्यम् ॥१५॥

दैत्येति । एकां कृष्णार्भभावनां कृष्णार्भोऽहमिति भावना यस्यास्तामेका अन्या काचिद्भावनालब्धा एके मुख्यान्यकेवला इत्यमरः दैत्यायित्वा तृणावर्त इवाचरित्वा भावेनैव जहार शेषं स्पष्टम् ॥ १६ ॥

इतः पाठो नष्ट इति प्रतीयते ।

कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ॥
वत्सायतीं हन्ति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥
आहूय दूरगा यद्वत्कृष्णस्तमनुवर्ततीम् ॥
वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति ॥ १८ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

तदनुकारमेवाह । कस्याश्चिदित्यादि नवभिः। कस्याश्चित्तु प्राणस्य प्राणमिति श्रुतिसिद्धप्राणप्राणकृष्णवियोगे तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति श्रुतिविरुद्धप्राणावस्थित्यनौचित्यं मन्यमानायाः कृष्णगुणगाने पूतनामोक्षचरितमनुस्मृत्य तदुरसि कृष्णविहारं तत्प्राणानां कृष्णप्रवेशंचाकलय्य तस्या एवं भाग्यातिशयं मत्वा स्वोरसि तद्विहारस्य तत्सङ्गत्यां तदवियोगस्य च कामनया पूतनायन्त्याः पूतनावदाचरन्त्या न तु तस्या विरुद्धभावमपि दधत्याः काचित्कृष्णायन्ती तदात्मकतया कृष्ण इवाचरन्ती स्तन मपिवत् उपलक्षणमेतत् तदुरसि विहारश्च कृतवती तदाचोभे अपि स्वस्मिन्स्वोरसि च कृष्णाकारे क्षणे न क्षणं क्षणमायतुः स्वामिन् दुष्टाया यातुधान्या विरोधमप्यनवेक्ष्य तदुरसि विहरन् स्निग्धा नः सप्रेममानमात्रेणापेक्षसेऽतः प्रसीदेति प्रार्थनाञ्च चक्रतुः अन्या तु गुणगानानुगततच्चरितमनुस्मृत्य तदात्मकतयैव तोकायित्वा रुदन्ती पयःपानार्थं कृष्णरोदनवत् तदधरामृतपानाय रोदनेन तदनुकुर्वती रोदनदशायां विरहपवनोत्क्षिप्तरूपसरः पद्मपदा कामपि हरिपदपद्मस्पर्शेच्छया शकटायती स्वहस्तपादाभ्यां भुवमवष्टभ्योच्चतया स्थितां तल्लीनचित्तत्वेन जडीभूततया च शकटमिवाचरन्तीमहन् परतः क्षिप्तवतीत्यर्थः तत्रापि पूर्ववत्स्वास्मिन् कृष्णाकारदर्शनं तत्पादस्पर्शसौख्यं प्रार्थनं चोहनीयम् ॥ १५ ॥

अन्यां तदात्मकतयैव कृष्णार्भभावनामेका कृष्णगुणगाने हरेस्तृणावर्तवक्षोऽधिलम्बनमनुस्मृत्य तद्भाग्याधिक्यं मत्वा कृष्णवियुक्तसुरमुनिमनुजेभ्यस्तदालिङ्गितासुरश्रैष्ठ्यमवगत्य तदालिङ्गनाभिलाषेण दैत्यायित्वा जहार सा च कृष्णार्भभावनतया व्याप्तत्वेन दैत्यायन्त्या भावपूरकस्वात्मगतकृष्णप्रेरणया च तां विगाढमालिङ्गितवती। तदा सा स्वस्मिन् कृष्णाकारदर्शनेन सौख्यमवाप सातु कृष्णाकारसखीवक्षोऽधिभागमोदबुद्धसंस्कारस्मृतकृष्णालिङ्गनसौख्योत्तरतद्विरहपीडयाधीरा प्रवहदृक्कञ्जमधुनीराततङ्कितनुचीरा खिन्नमुखभिन्नहृत्खिन्नशरीरा भुव्यपतत्पूर्ववत्प्रार्थयामास च कापि कृष्णगुणगाने—

तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेष्वि । त्यत्रोक्तकृष्णशिशुचरितमनुस्मृत्य तदात्मकतया तदनुकुर्वती स्वकरेण भुवमवलम्ब्याङ्घ्री कर्षन्ती वन्यालिबोधितकुसुमराजाब्जवद्घोषाणां निःस्वनैः विकसितमुखपद्मा रिङ्गयामास स्वामिन्नेवं बाल्ये एव सुखं दत्वाधुना कैशोरे वनमाहूयोपेक्षसीति चित्रमतः प्रसीदेति प्रार्थयामास च ॥ १६ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथैतद्विवृणोति । कस्याश्चिद्गोप्याः पूतनावदाचरन्त्याः काचित्कृष्णवदाचरन्ती अहं कृष्ण इत्युक्तवती तां कृष्णं बुद्ध्वाङ्के कृतवत्याः तस्याः स्तनमपिवत् यावच्छक्यते तावदनुक्रियते ऽतोऽसुपानसामर्थ्याभावात् स्तनपानमात्रमुक्तं तस्यापि द्वेषभावनाभावान्मरणाभावः अनुकरणात् तोकायित्वा तोकवदाचरित्वा तोकमात्मानं मत्वेति वा तोकवदात्मानं कृत्वेति वा शकटायतीं शकटवत्स्थितां पदा चरणेन अहन् निवृत्तिपक्षे कस्याश्चिदिति पूतनावदाचरन्तं परमात्मानं वर्णयामास काचित्कृष्णरूपेण स्तनपानमनुकुर्वन्तं काचित्तोकरूपमनुकृत्य रोदनमनुकुर्वन्तं शकटरूपापन्नमात्मानं चरणेनाहन् तमनुकुर्वन्तं निरूपयामासेत्यर्थः एवमग्रेऽपि ॥ १५ ॥

अन्या तृणावर्तदैत्यवदात्मानं कृत्वा कृष्णार्भे तस्य बाल्यं भावयन्तीमपरां जहार कापि अङ्घ्री कर्षन्ती घोषनिःस्वनैः रिङ्गयामास चलितवती ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काश्चित्कृष्णायन्ती कृष्णवदाचरन्ती कस्याश्चित्पूतनायन्त्याःपूतनावदाचरन्त्याः स्तनमपिवत् अन्या काचित् स्तोकायित्वा स्तोकवत् बालवदात्मानं कृत्वा रुदन्ती शकटायतीं शकटवदाचरन्तीं पदा अहन् चरणेन तताड ॥ १५ ॥

एका दैत्यायित्वा तृणावर्ताख्यदैत्यवदात्मानं कृत्वा अन्यां कृष्णार्भभावनां कृष्णस्यार्भे बाल्यं भावयन्तीं जहार कापि काचिदपि घोषाणां किङ्किणीनां निःस्वनैरुपलक्षितैः अङ्घ्री कर्षन्ती रिङ्गयामास ॥ १६—१७ ॥

---

भाषा टीका ।

तहां कोइ एक गोपी पूतनासी बन गई दूसरी गोपी कृष्ण बन वाके स्तन को पान करबे लगी एक गोपी गाडा बन गई दूसरी गोपी कृष्ण बन वाके नीचे सो गइ रोदन करते समय पांय के ठोकर ते वा शकटासुर को गिरा देत भई ॥ १५ ॥

एक गोपी बाल कृष्ण बन गई वाको दूसरी गोपी तृणावर्तदैत्य बन दूर उठा लेगई कोई गोपी पांय के घुंघुरुन को बजा बजा पैंयां चल पैरों को खैंच बाल लीला करत भई ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दूरगा दूरे वर्तमाना गाः यद्वद्यथा कृष्णस्तथाहूय तं कृष्णमनुवर्तन्तीमनुवर्तमानाम् अनुकुर्वतीमीति वा पाठ ॥ १८—१९ ॥

कस्यांचित्स्वभुजं न्यस्य चलन्त्याहापरा ननु॥
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः॥ १९॥
मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया॥
इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम्॥ २०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यतन्ती प्रयत्नं कुर्वती अम्बरमुत्तरीयं वस्त्रमुन्निदधे ऊर्ध्वं धृतवती॥ २०—२१॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

गोपायन्त्य इति गोपबाळायन्त्य इति ज्ञेयं तदानीं बालकैरेव सह वत्सचारणात् चकारात् अघायमानां च हन्ति अहन् सामीप्ये वर्त्तमाना॥ १७॥

अधुना वाक्प्रधानानुकरणं पञ्चभिर्वक्ष्यन् आदौ प्रलम्बवधात् प्राक्तनग्रीष्मकृतविचित्रलीलानुकरणमाह। आहूयेति द्वाभ्याम अत्र वाक्प्रधानानुकरणत्वात् किंवानुकरणे क्रमशो ऽत्यन्तावेशेन तद्रात्मकत्वात् कृष्णायन्तीत्यादिकं पूर्वश्लोकं दूरगा इति तैर्व्याख्यातमेव यद्वा दूरवर्तिनीर्व्रजादिस्थिता गोपीर्वेणुनादसंकेतेन यथा कृष्ण आह्वयति तथाह्वयेति एवमनुवर्त्तती कांचित् क्रीडन्तीं च गानादिक्रीडां कुर्वतीम् अन्या गोपभावनापन्ना इति ज्ञेयम॥ १८॥

ननु निश्चितमेवाह अतः कृष्णोऽहमित्युक्तौ न संदेहः कार्य्य इति भावः। अनेन कृष्णोऽहमिति दोषो निरस्तः कृष्णः सर्वगुणरूपादिसंपूर्णोऽहम् अतो गतिं ममाश्रयभूतां ललिताख्यां गोपीं पश्यत इति एतत् तदुक्तम हो किं स्मरतेति शेषः तच्च तेन कदाचित् केनापि भावेन पूर्वमुक्तमस्तीति पूर्ववत् बोद्धव्यं ननु कुतो वाक्यं न समापितं तत्राह। तन्मनाः कृष्णहृतचित्तेति यद्वा ननु हे गोपा! गोप्यो! वा पश्यत गतिं मम चेष्टां गमनं वा ललितां मनोहरां तन्मनाः श्रीकृष्णाविष्टचित्तेत्यर्थः। अनेनानुकरणस्य सम्यक्ता पूर्ववदेवाभिप्रेता॥ १९॥

वातवर्षाभ्यामिति। अनुकरणवशाद्वाङ्मात्रेणैव किंवा तत्तल्लीलावेशेन साक्षाद्वातादेस्फूर्तेरितिज्ञेयम एवमग्रे दावाग्निं पश्यतेत्यपि यतन्तीति विरहार्त्या बलहानिः सूचिता उद्यच्छन्तीति वा उन्निदधे श्रीगोवर्द्धनवद्दृ[illegible] नितरां धृतवती॥ २०॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

द्वे चिक्रीडतः तत्र काश्चन गोपायन्त्यः गोपबालायन्त्यश्चिक्रीडुः तदानीं बालकैरेव वत्सचारणात् तस्यामेव सभायां लीलान्तरमाह। वत्सेति। अन्या कृष्णायमाना तत्र तस्मिन् सति एका च कृष्णायमाना हन्ति हननानुकरणमनुकरोति अहन्नित्यर्थः॥ १७॥

तदेवमनुकरणमात्रमुक्तम् अधुना प्रलम्बवधप्राक्तनग्रीष्मकृतविचित्रलीलानुकरणे शृङ्गारालम्बनरूपतदीयकैशोराविर्भावात्पुनरपि प्रियानुकरणरूपं लीलाख्यमनुभावमाह। आह्वयेति द्वाभ्याम्। दूरगा इति। समासान्तविधेरनित्यत्वात् दूरगवीरित्यर्थः। अन्या गोपम्मन्याः॥ १८॥

गतिं नृत्यलीलाम्॥ १९।

वातवर्षाभ्यामिति। तत्तल्लीलावेशेन साक्षाद्वातादिस्फूर्त्तेः एवमग्रे दावाग्निं पश्यतेत्यपि अत्र त्रासातिरेकेण शृङ्गाररससङ्कोचान्न तल्लीलोदाहरणम्॥ २०॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम।

वेणुं क्वणन्तीं क्वणयन्तीम॥ १८—३२॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

द्वे गोप्यौ कृष्णरामाविवाचेरतुः काश्चन तु गोपायन्त्सश्च तद्वदाचेरुः तत्र काश्चिद्वत्सासुरवदाचरन्तीं काचित् गृहीत्वा भ्रामयित्वा न्यपात् काचिद्बकासुरवदाचरन्तीं घ्नतीयंबभूव॥ १७॥

तथा दूरगाः दूरे वर्तमानाः गाः गोवदाचरन्तीः काश्चित् यद्वत्कृष्णस्तद्वदाह्वयदाजुहाव आह्वयेति पाठे यद्वत्कृष्णस्तद्वत् दूरगाः आह्वय पुनस्तमनुकुर्वती कृष्णत्वमिति पाठे कृष्णभावमनुकुर्वती तदेव दर्शयति वेणुं क्वणयन्तीं केवलं मुखेन गायन्तीं क्रीडन्तीमिति पाठान्तरं काश्चित्साधु साध्विति शंसन्ति प्रशशंसुः॥ १८॥

काचित्तु तन्मनाः कृष्णाभेदाभिमानयुक्तमनाः कस्यांचित्स्वभुजं न्यस्य कस्याश्चिदंसे स्वभुजं निधायेत्यर्थः। चलन्ती पादन्यासान् कुर्वत्यपराः प्रत्याह किमिति ननु हे सख्यः! अहं कृष्णः मम ललितां सुन्दरतरां गतिं पश्यतेति॥ १९॥

तथा काचित्कृष्णोऽहमिति यतन्ती वर्षवाताभ्यां माभैष्ट भयं माकार्ष्ट ताभ्यां वर्षवाताभ्यां त्राणं मया विहितमित्युक्त्वाम्बरमुत्तरीयमेकेन स्वहस्तेन वितत्य विस्तृत्योन्निदधे ऊर्ध्वं धृतवती॥२०॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

वृन्दावनक्रीडायां वत्सपालकरूपा जाताः तत्र प्रकारमाह। कृष्णेति द्वे कृष्णरामायिते कृष्णरामवत् जाते काश्चन गोपायन्त्यः गोपा अत्र बालकाः जातिशब्दोऽयं वत्सरूपाश्च काश्चन जाताःचकारेण समुच्चिताः अन्या पुनर्वत्सायिता वत्सासुरवदाचरति तां घ्नतीव जाता कृष्णायिता अर्थात् चकारात् फलानि पातयन्ती च अन्या पुनः बकायतीं घ्नती जाता वत्सवधो

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लोके बलभद्रकृत इत्यपि प्रसिद्धः प्रलम्बो निहतोऽनेन वत्सको धेनुकादयः अत उभयोर्मध्ये एका बकायतीम् अन्या वत्सायन्तीम् ॥ १७ ॥

ततः परं गोपरूपेण वृन्दावनलीलामाह । आहूयेति । गोरूपाः काश्चन जाताः गोपालरूपाः काश्चन तत्र यद्वत् कृष्णः दूरगाः गाः आहूय वेणुकणनं करोति एवं दूरगा गोपीराहूय तं कृष्णमनुकुर्वती काचिज्जाता तां वेणुं क्वणन्तीं ततो नानाविधक्रीडां कुर्वतीम् अन्याः गोपायिताः साधु साध्विति शंसन्ति॥१८॥

एका पुनः क्रीडायां कृतापि लीला भागवते अनुक्ता तां भावयित्वा तादृशीं लीलां कृतवती तदाह । कस्यांश्चिदिति । अत्रापि पूर्ववत् युगलास्तिस्रः चतुर्थ्येपा कृष्णरामायिते द्वे युगले :साध्वाशंसनसहिता वेणुवादनपरा च तृतीया एषा तु निर्गुणा कस्याश्चिद्दोपरूपायां स्वभुजं स्थापयित्वा चलन्ती अपरा गोपरूपा यातोऽन्या ननु हे गोप्यः ! अहं कृष्णः मे ललितां गतिं पश्यतेति दोषाभावार्थमाह । तन्मना इति । पूर्वं कायिकीं चेष्टां केवलां कृतवती इदानीं वाचा सहिताम् ॥ १९ ॥

पुनः प्रकारान्तरेण चातुर्विध्यमाह । माभैष्टेति । एपैव निर्गुणा काश्चन गोपगोपीरूपा जाता वृष्टिभीता इव वातवर्षाभ्यां हेतुभूताभ्यां माभैष्ट मया त्राणं विहितम् इत्युक्त्वा एकेन हस्तेन अम्बरं नयन्ती पर्वतवत् स्थापयन्ती ऊर्ध्वं निदधे गोवर्द्धनवत् धारितवती यतन्ती प्रयत्नं कुर्वती वा ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दूरगाः दूरवर्तिनीर्गाः यद्वत् कृष्ण आह्वयति तद्वदेवाहूय तं कृष्णमनुवर्तनीम् अनुकुर्वतीमिति च पाठः ॥ १८ ॥

ततश्चान्या अपि लीला अनुचिकीर्षन्तीनामपि तासां तद्ध्यानाधिक्यवशेनोन्मादसञ्चारिप्राबल्येन चात्मानुसंधानापगमात् कृष्णतादात्म्यमाह चतुर्भिः । कस्यांचिदिति । अहं सुवलस्कन्धार्पितभुजः कृष्णः प्रसिद्धस्तस्मान्मम ललितामतिरमणीयाम् ॥ १९ ॥

यतन्ती प्रयत्नं कुर्वती अम्बरमुत्तरीयवस्त्रमुन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

एका कृष्णायिता अन्या भावनालब्धा रामायिता तथैव काश्चन गोपायन्त्यः वत्सायन्तीं भावनालब्धाम् अन्या ततो भिन्ना निजरूपेण वर्तमाना घ्नती हननमनुकुर्वतीत्यर्थः । तत्रैवान्या बकायतीं प्रतीत्यन्वयः ॥ १७ ॥

दूरगा दूरगवीरित्यर्थः । अन्या गोपमन्याः ॥ १८ ॥

कस्यामिति गतिं नृत्यादिलीलां शेषं स्पष्टम् ॥ १९ ॥

मेति । वातवर्षाभ्यामिति तल्लीलावेशेनैव साक्षाद्वातादिस्फूर्त्तेः भयेति अत्र त्रासातिरेकेण शृङ्गाररससंकोचनात्तल्लीलोदाहरणं यतन्ती यत्नं कुर्वती अम्बरमुत्तरीयम् उन्निदधे ऊर्ध्वं धृतवतीति ॥२०॥

### श्रीरामनारायणकृतभावभावविभाविका ।

द्वे गोप्यौ कृष्णरामायिते तत्रैका तदात्मकतयैव कृष्णायिता द्वितीया तु तत्सादरालिङ्गनविलासाद्यभिलाषेण रामायिता अन्यास्तु गोपदारास्तदुदारविहारविस्ताराय गोपायन्त्यः गोपकुमाराकारातुकारास्तत्सहप्रचारा बभूवुः उपलक्षणमेतत्काश्चित्तच्छविमोहिता विरहखेदपशुवृत्तयो वत्सायन्त्यो दशनगृहीततृणैः स्वमानापराधं क्षमापयामासुः अन्या तदात्मकतयैव कृष्णायन्ती अन्यां वत्सायतीं तत्करस्पर्शे तत्त्यागेन तदवच्छेदसङ्गतिमभिलपन्तीं वत्साकारां हन्ति स्म भूमौ पोथनाय पादावग्रहीत् साच कृष्णाकारसखी स्वपादग्रहणसमये कृष्णेन स्वमानमोचनं सम्भाव्य स्वत एव गतमाना तमालिङ्गितवतीति शेषः । तथैव तत्रैका बकायती हन्ति स्म तत्रायं क्रमः काचित्सखी सत्वमये मनस्यनुरागकलेव शुक्लवस्त्ररचितपक्षव्याप्तवपुष्यरुणवसनेन तुण्डं रचयित्वा कृष्णप्राप्तिकामा बकवत्तद्ध्यानपरा बभूव कृष्णरूपासखीतु सत्त्वमयमनसि प्रेमवृतावभिव्यक्तकृष्णच्छविवत्तच्छोणवस्त्रतुण्डगता ह्यशोभत ततश्च तन्निःसृता प्रेमिणां बहिःप्रादुर्भूतकृष्णवद्व्यरोचत ततश्च हरिः यथानुरागिणमनुरागं गृहीत्वा तदीयसात्त्विकधर्मोध्यासमपि निवारयति तथा दारुणतुण्डं गृहीत्वा शुक्लवेषं दारयतीव बभौ सा च तदा मुखतः पाटनाय गृहीततुण्डाधरायाः करौ रसावेशाच्चुचुम्बेति भावः । रसानुकारे रसोद्भवस्यावश्यकत्वात् ॥ १७ ॥

तत्रैवं कुमारलीलानुकारमभिधाय कैशोरलीलानुकारमभिवदन् शृङ्गारालम्बनरूपाविर्भूतकैशोरविहाराभिनयमाह । आहूयेति द्वाभ्याम् । यद्वत्कृष्णो दूरे वर्तमाना गाः आह्वयति तद्वत्तमनुकुर्वती मनसि च भवान् दूरे निपतितान् स्वीयान् पशूनपि नोपेक्षते कथमधुना रसिकशिरोमणी रसिकाः स्निग्धा न उपेक्षते इति भावयन्तीं तथावेणुं क्वणन्तीं तत्रायं भावः यथा वेणुरवमोहिता वयं कृष्णगृहिण्यो मृग्य इवागतास्तथा कृष्ण इव कृष्णोऽपि वेणुरवमोहित आगमिष्यतीति वेणुं वादयन्तीं यद्वा न गोपानां वेणुधारणं क्वचित्प्रसिद्धं किन्तु पूर्वं विहारावसरे कृष्णवेणुरेव तयापहृतो बहुनृत्यगानादिना प्रार्थनेऽपि न प्रकटीकृतोऽधुना विरहवैकल्ये स्ववेणुं ग्रहीतुमागमिष्यत्येवेति सम्भाव्य तं वादयन्तीं कृष्णाभिनयेन बहुधा क्रीडन्तीमन्या तद्विहारलोलुपतया तद्गोपसखाकारा गोपी साधुसाध्विति शंसति स्तौति ॥ १८ ॥

काचित्तदात्मकतया कृष्णायती कस्यांचित्कृष्णाभिमर्षाभिलाषिण्यां स्वभुजं न्यस्य तदंसे बाहु निधाय चलन्ती प्रेमपवनचालितपदपद्मौ हंसगतिमोहनगत्या न्यस्यन्ती ब्रह्मस्वरूपाविर्भूतमनयो जिज्ञासून् प्रतीवापरा गोपकुमाराकारा गोपीराह । अहं कृष्णो मे ललितां गतिं पश्यत बहिरन्तस्तद्भावैक्यमाह । तन्मनाः यथा आह तथैव कृष्णाविष्टचित्ता इति भावः ॥ १९ ॥

काचित्तु सर्वासां गोपीनां विरहदुःखोच्छ्वासानश्रुधाराश्च प्रलयकारिवातवर्षत्वेन परिकल्प्य स्वस्मिंस्तद्ध्यानयाविर्भूततदात्मकत्वेन कृष्णस्वरूपत्वमवगत्यापरा आह । माभैष्टेति । भो गोपा यूयं वातवर्षाभ्यां माभैष्ट भयं माकुरुत यतो वो युष्माकं तत्त्राणं ताभ्यां रक्षणं मया विहितमित्युक्त्वा यतन्ती अनुभूत-

आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप ! ॥
दुष्टाहे ! गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥ २१ ॥
तत्रैकोवाच हे गोपा ! दावाग्निं पश्यतोल्बणम् ॥
चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥ २२ ॥
[१]बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले ।
भीता सुदृक्पिधायास्यं भेजे भीतिविडम्बनम् ॥ २३ ॥
एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ।
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

विरहदुःखकार्श्येन शक्तिह्रासात्प्रयत्नं कुर्वती एकेन हस्तेनाम्बरमुन्निदधे ऊर्ध्वं गोवर्धनाकारेण दधार ततश्च सर्वा अपि सुरराजकोपात्प्राणान् संरक्ष्याधुना स्वयं प्राणग्रहणमनुचितं प्राणग्रहणस्यैवेष्टत्वे त्वत्समक्षिवेदिततनुमनआदिभिः सहैव गृहाणेति प्रार्थयामासुः ॥ २० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तत्कृतं वृन्दावनविहारलीलानुकरणमाह । द्वे गोप्यौ कृष्णरामायिते कृष्णरामवज्जाते काश्चन गोपायन्त्यः गोपबालानुकरणं कृतवत्यः काचिद्वत्सरूपा च जाता इत्यादिद्रष्टव्यं तत्र वत्सासुरवदाचरन्ती काचिदन्या बलरामरूपा प्रलम्बो निहतोऽनेन वत्सको धेनुकादय इत्यनुसारेण हन्ति हननमनुकरोति स्म काचिद्बकवदाचरन्तीमन्या कृष्णरूपा हन्ति स्म ॥ १७ ॥

अथ तत्कृतं गवाह्वानादिलीलानुकरणमाह । आहूयेति । तत्र काश्चन गोपरूपा जाताः काश्चन गोपालरूपास्ते यद्वत्कृष्णः दूरगा आहूय वेणुक्वाणं करोति तद्वत्कृष्णमनुकुर्वती दूरगाः गोरूपा गोपीराहूय वेणुं क्वणन्तीं क्रीडन्तीं काचिदन्या गोपरूपाः साध्विति शंसन्ति स्म ॥ १८ ॥

गोपरूपायां कस्यांचिदपरा कृष्णरूपा भुजं निधाय चलन्ती आह ननु कृष्णोऽहं ललितां मदीयां गतिं हे गोप्यः ! पश्यतेति यतस्तस्मिन्मनो यस्याः सा यतस्तदावेशात्तद्रूपा जातेति भावः यद्यपीयं लीला पूर्वमनुक्ता तथाप्यत्र तदनुकरणस्योक्त्वा जातेति द्रष्टव्यम् ॥ १९ ॥

अपरा कृष्ण इवावस्थिता गोपादिरूपा आह हे गोपादयः ! वातवर्षाभ्यां भयहेतुभूताभ्यां माभैष्ट ताभ्यां वातवर्षाभ्यां मया त्राणं विहितमित्युक्त्वा यत्नवती एकेन हस्तेनाऽम्बरमुत्तरीयं वस्त्रमुन्निदधे ऊर्ध्वं धृतवती ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्वत् यथा कृष्णस्तथा दूरगाः दूरे वर्तमाना गाः आहूय तं कृष्णमनुवर्ततीमनुवर्तमानां कृष्णायन्तीमित्यर्थः । अत एव वेणुं क्वणन्तीम् ॥ १८—१९ ॥

यतन्ती गोवर्द्धनोद्धरणे इव प्रयत्नं कुर्वती अम्बरमुत्तरीयं वस्त्रमुन्निदधे धृतवती ॥ २० ॥

भाषा टीका ।

दो गोपी कृष्ण तथा बलराम जी बन गईं और बहुत गोपी गोप होगयीं एक ने बकासुर रूप वारी को गिराया दूसरी ने वत्सासुर रूप वाली को गिराया ॥ १७ ॥

जैसे श्रीकृष्ण दूरसे गउओं को बुलावैं एक गोपी तैसे गौअन को पुकारवे लगी एक गोपी वंशी बजाय क्रीडा करत भई और ग्वाल बाल रूपी गोपी बाकी बडी प्रशंसा करत भई ॥ १८ ॥

एक गोपी दूसरी किसी एक गोपी के कान्धे पै अपने भुजा को रख चलती श्रीकृष्णचन्द्र के विषै जाको मन लगा है सो बोली मैं कृष्ण हूं मेरी मनोहर चाल को देखो ॥ १९ ॥

एक गोपी बडे यत्नते एक हाथ ते पिछौरा को उपर उठा कर बोलबे लगी कि तुम कोइ मत डरो तुमारे पव न वर्षा के डर छुटा बे को रक्षा कर बे को मैंने गोवर्धन धारण कियो है ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिदध्वं निमीलयत ॥ २२ ॥

सुदृक् सुनयनमास्यं पिधाय सुदृक् वराक्षीति वा भीतिविडम्बनं भयानुकरणम् ॥ २३ ॥

एवं पुनरपि वृन्दावने लतास्तरूंश्च कृष्णं पृच्छन्त्यो वनोद्देशे वनप्रदेशे व्यचक्षतापश्यन् ॥ २४—२५ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु निश्चये संबोधने वा नृपेति पाठे आश्चर्येण संबोधनं

[१] बध्नन्त्येका स्रजा काचि त्त्वामद्योलूखले हरे । बध्नामि भाण्ड भेत्तारं हैयङ्गवमुषं त्विति भीतेत्यादि वीरराघव पाठः ।

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

दुष्टाहे रे कालिय ! गच्छ इतो निःसर अन्यथा दण्डं करिष्य इत्याह। जात इति । नतु निश्चितम ॥ २१ ॥

तत्र चेति चकारान्वयः कालियदमनलीलानुकरणे त्वित्यर्थः एवं तत्र कृतं चक्षूंपीत्याद्युक्तेश्च मुञ्जाटव्यामपि कृतं दावतो रक्षणं द्विविधमेवानुकृतमिति ज्ञेयं यद्वा तत्र तासु मध्ये च ततश्च मौञ्जाटविकतदनुकरणमेव पाठान्तरं स्पष्टमेव अञ्जसा अनायासेनैव ॥ २२ ॥

अधुना मानसचेष्टाप्रधानानुकरणमाह । बद्धेति । अन्यया ताभ्यो भिन्नया पश्चादागतया दूतीरूपया कयाचिद्वृद्धया तन्मतानुसारिण्या यद्वा अन्यया स्रजा जगद्विलक्षणया परमसृदुलयेत्यर्थः । पूर्वं मात्रापि परमकोमळगोवाळादिरज्जुभिरेव वद्धत्वात् यद्वा पूर्वं स्रजैकया पश्चादन्यया स्रजा वद्धा पूर्ववद्बहुधा बन्धनार्थं तासां स्रजोऽपि बन्धनसामर्थ्यं तन्मतानुसारित्वं च संभवेदेव तन्वी विरहार्त्त्या सद्य एव कार्श्यं प्राप्ता अत एव प्रेमविशेषात्तया श्रीभगवद्भक्तवश्यतागुणविशेषमयलीलाप्रादुर्भावपक्षे सर्वं समञ्जसमेव तत्र अनुकरणे तास्विति वा उळूखल इति उळूखळानुकारिण्यां कस्यांचिदित्यर्थः । सुदृगिति दृग्भ्यामपि चकितविळोकनादिना भयमनुचकारेत्यर्थः । मुखं पिधाय हस्ताभ्यामेतच्च वालकस्वाभाविकभयलक्षणं भीतिविडम्बनं कम्पपुळकादि किंचिद्रोदनकाकुवाक्यादि च ॥ २३॥

एवं प्रायो भयादिना मानसचेष्टानुकरणमेव द्योतितं भयस्य मनोधर्मत्वात् एवमत्यन्तभक्तवश्यतामयी श्रीदामोदरलीळा सर्वासां लीलानां मध्ये श्रेष्ठतमेति तदनुकरणं मधुरेण समापयेदिति न्यायेन सर्वान्ते प्रोक्तं धेनुकप्रळम्बयोर्वधः श्रीवळदेवकृतत्वान्नानुकृतः कुमारीवस्त्रहरणं यज्ञपत्नीगणाकर्षणं च ळज्जया किंवा तत्तल्लीळारसस्यात्मन्येव पर्य्यवसानात्तदनपेक्षया यमळार्जुनभञ्जनं च श्रीदामोदरलीळान्तर्गतत्वात् पृथङ्नानुकृतमिति पूर्वोक्तलीळाक्रमातिक्रमस्तु तासां विरहविह्वळतावर्णनेन श्रीवादरायणैरपि तादृशभावापत्त्या तदनुसंधानापगमात् किंवा लिखितन्यायेन चेष्टादीनां तिसृणामुत्तरोत्तरीसमन्वेकैकस्य समवेततया केवळत्वसंवळितत्वयोस्तत्रापि न्यूनाधिकत्वयोः क्रमापेक्षयोक्ते तास्वेव केवळसम्वळितत्वादिक्रमेणैव तत्तल्लीळानां परिस्फूर्तेः यद्वा विरहकातरतया तन्मनस्तया वा पौर्वापर्य्यानुसंधानाभावादिति पदानीति पूर्वोक्तप्रश्नप्रकारेण यद्वा तत्तल्लीळानां पूर्वोक्तप्रकारकपुनः पुनरनुकरणेन तत्र हेतुः कृष्णं चित्ताकर्षकमिति पदानि व्यचक्षत पुनर्भूमौ दृष्टिनिपाताद्विशेषेणाचक्षतेति केशवाङ्घ्रिस्पर्शोत्सवेत्याद्युक्तौ पूर्वं केवलं संभावनयैव अधुना तु साक्षाद्देवापश्यन्नित्यर्थः । साक्षाद् दृष्टपक्षे च पूर्वसाक्षाद् दृष्टान्यपि विरहविह्वळतया ऽनुसंधानाभावाददृष्टानीवाभवन् अधुना च ळीळाविष्टत्वेनानुकरणात् किंच तदुपशान्त्या बुद्ध्युदयेनानुसंधानपूर्वकमपश्यन्नित्यर्थः । अत एव विशब्दः परमात्मनः परमप्रियतमस्येति रात्रावपि तल्लक्षणस्तद्दर्शने हेतुः तन्मैस्तव्याख्यातं यद्वा प्रदोषे गते शारदपूर्णचन्द्रस्य चन्द्रिकासु विस्तृतासु दूरादपि स्पष्टतया तद्दर्शनमभूत् यद्वा एवमित्यादिकमनुवादमात्रं प्रश्नमध्य एवं दर्शनविवक्षया ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

पदाक्रमणपूर्वकमारुह्येत्यर्थः ननु निश्चये सम्बोधने वा नृपेति पाठे आश्चर्य्येण सम्बोधनं दुष्टाहे ! इति कालियस्य न्यक्कारेण सम्बोधनं गच्छ इतो निःसर अन्यथा दण्डं करिष्य इत्याह । जात इति । ननु निश्चितं तल्लीलायामेतद्वाक्यं भावेऽप्यनुकरणं तत्रस्थस्य वाक्यस्य शेषेण तात्पर्य्येण वा ॥ २१ ॥

तत्र चेति चकारेणान्वयः कालियदमनलीलानुकरणेत्वित्यर्थः तत्रैकोवाच हे गोपा इति पाठस्तु वह्वत्रैव रेशब्दस्त्वद्वयत्वाभ्राव्रियते एवं श्रीकृष्णेनापि तत्र च चक्षुःपिधानमादिष्टमिति गम्यते दावाग्निं पश्यतोल्वणमिति तु तत्र हेतुवाक्यम् उल्वणं चक्षुस्तेजोहरमित्यर्थः । तच्च निमीलनार्थव्याजादेव एवं मुञ्जाटवीसम्बन्ध्यपि सम्बन्धनीयमिति पृथग् न वर्णितमिति ज्ञेयं अपिदध्वमिति दधस्तथोश्चेति स्मरणादभ्यासस्य भष्भावप्राप्तेरपिधद्ध्वमिति वक्तव्येऽपिदध्वमिति पाठ आर्षो लेखकप्रमादजो वा भष्भावो वर्गचतुर्थत्वमञ्जसा अनायासेनैव ॥ २२ ॥

अन्यया पूर्वमुक्तेर्व्रजेश्वरीचेष्टामात्रं कुर्वत्या तन्वी विरहार्त्त्या सद्य एव कार्श्यं प्राप्ता तत्र अनुकरणे उलूखल इति उलूखलानुकारिण्यां कस्यांचिदित्यर्थः । सुदृगिति दृग्भ्यामपि चकितविलोकनादिना भयमनुचकारेत्यर्थः । मुखं पिधाय हस्ताभ्यामेष वालकभयस्वभावः भीतिः कृष्णस्य भयकार्य्यं कम्पादिकिञ्चिद्रोदनवाक्यादि च तदनुकरणं भेजे एवमन्यासामपि लीलानामनुकरणं यथार्हमूह्यम ॥ २३ ॥

एवं तत्तल्लीलानां पुनः पुनर्गानानुकरणयोः प्रकारेण तत्प्रकारविशिष्टं प्रश्नं कुर्वाणा इत्यर्थः । परमात्मनः सर्वेषामपि मूलस्वरूपस्य पदानि वनोद्देशे व्यचक्षतेत्याश्चर्य्यं यस्य मुनयो वेदेऽपि यथाकथञ्चिदेव सूचकतया शब्दरूपाण्येव पदानि तर्कयन्ति मात्रं तस्यैव ताः स्वविहारवनोद्देशे साक्षाच्चरणचिह्नरूपाण्येव पदानि व्यचक्षतेति अहो एतन्मात्रांशेऽपि वयं सर्वेऽपि मुनयो न तासां साम्यं प्राप्नुमः किम्पुनस्तादृशप्रेमविशेषासादितनित्यतदीयप्रेयसीत्वांशे इति भावः । अन्तर्हित इत्यादिप्रकरणे तेषां व्याख्यायां प्रथमं तापमात्रं द्वितीयं गानसहितान्वेषणं तृतीयं पूतनावधाद्यनुकरणं चतुर्थं पुनरप्यन्वेषणं पञ्चमं पददर्शनमिति क्रमः स्वव्याख्यायां प्रथमं तापमात्रं द्वितीयं वाहुप्रसारेत्याद्यनुकरणं तृतीयं गानसहितान्वेषणं तत्रैव मध्ये मध्ये पूतनाद्यनुकरणं चतुर्थं पददर्शनमिति विवेचनीयम ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नृप ! काश्चित्कालियायतीं शिरसि पदा आक्रम्यापरा काचिदुवाच किमिति हे दुष्टसर्प ! गच्छ इतो ह्रदादपसर ननु हे अहे ! अहं खलानां दण्डधृग् दण्डयिता जातोऽवतीर्ण इति ॥ २१ ॥

तथा तत्र गोपीनां मध्ये काचिदुवाच किमिति हे गोपा ! उल्वणं दुःसहं प्रभूतं वा दावाग्निं पश्यत चक्षूंषि पिदध्वं निमीलयत वो युष्माकमाशु क्षेममञ्जसा सुखेन विधास्ये करिष्यामीति ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एका तु स्रजा काञ्चिद्बध्नन्ती प्रोवाच किमिति हे हरेऽधुना त्वां हैयङ्गवमुपं नवनीतचोरं तद्भाण्डस्य भेत्तारं चात उलूखले बध्ना-मीति तथैवं बद्धोक्ता च सा भीतेव शोभने दृशौ यस्मिंस्तदास्यं पिधाय हस्ताभ्यामाच्छाद्य सुदृग् वराक्षी वा सती मुखं पिधाय भीतिविडम्बनं भयानुकरणं भेजे चकारेति ॥ २३ ॥

इत्थं पुनरपि वृन्दावने लतास्तरूंश्च कृष्णं पृच्छमानाः वन-प्रदेशे परमात्मनः कृष्णस्य पदानि व्यचक्षतापश्यन् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

उपसंहरति । एवमिति । वनोद्देशे वनप्रदेशे ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

परमात्मनः सर्वेषामपि मूलस्वरूपस्य पदानि वनोद्देशे व्यच-क्षतेत्याश्चर्यमित्यर्थः । अन्तर्हित इत्यादिप्रकरणे तेषां व्या-ख्यायां प्रथमं तापमात्रं द्वितीयं गानसहितान्वेषणं तृतीयं पूत-नावधाद्यनुकरणं चतुर्थं पुनरप्यन्वेषणं पञ्चमं पददर्शनमिति क्रमः । स्वव्याख्यायां प्रथमस्तापः द्वितीयं बाहुप्रसारेत्याद्यनुकरणं तृतीयं गानसहिताद्यनुकरणं तत्रैव मध्ये मध्ये पूतनाद्यनुकरणं चतुर्थं पददर्शनमिति विवेचनीयम् ॥ २४—२६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सात्त्विक्याश्चेष्टामाह । आरुह्येति । एकामारुह्य पदा च आक्रम्य शिरसि पादाघातं कृत्वा नृपेति संबोधनं विश्वासाय एषा लीला कठिना उपरि वृक्षशाखामवलम्ब्य वा तथा कृतवती वस्तुतस्तु या लीला यथा प्रभुणा कृता सा तथैवात्राविर्भ-वतीति निरालम्बनत्वेऽपि नानुपपत्तिः हे दुष्टाहे कालिय ! इतो गच्छ यतो ऽहं खलानां दण्डधृक् जातः नन्विति सम्बोधनम् अमार-णार्थम् ॥ २१ ॥

राजसीं पुनस्तत्रैका जाता उवाच वक्ष्यमाणं गोरूपाः का-श्चन गोपरूपास्तथापराः एका तु कृष्णरूपा आह । हे गोपा ! उल्वणं दावाग्निं पश्यतेति विरहेण दावाग्निं दृष्टवती भावनया या तथा भातं सर्वापि क्रीडा भगवद्रूपा तत्र तत्रा-विशतीति दावाग्नेरपि दर्शनम् अन्यासां विशेषाकारेण तस्यां भगवद्भावात् न तत्प्रार्थना एवमेव वातवर्षस्थलेऽपि अतिम-त्तानामेव भगवद्भावेन तल्लीलावेशात्तस्या एव दर्शनमिति निष्कर्षः ॥२२॥

तामसीमाह । बद्धेति । उलूखले कयाचिद्बद्धा स्रजा माल्या उलूखलस्थानीयापि काचित् अन्या तु यशोदारूपा तदा भीता सती सुदृक् उत्तमदृष्टियुक्ता आस्यं पिधाय हस्तेन सम्पूर्ण-मुखमाच्छाद्य भीत्यनुकरणं भेजे अत्र क्रमे गुणा एव प्रयोजकाः तत्तदधिकारानुसारेण तत्तल्लीलाः प्रादुर्भवन्ति भगवद्वशीकर-णान्ता च लीला अन्यथा अन्ते उलूखललीला न कृता स्यात् नातः परं कर्तव्यमस्तीति लीलायां विरतिः । एवं लीलाभाव-मुपपाद्य भगवद्भावे वक्तव्ये भगवतो भीतिविडम्बनलीलास्ति-रोहिताः ततः पूर्ववत् पुनः प्रश्न एव स्थितः तस्य सम्वेदन-पूर्वकत्वात् एतत्त्वावेशेन जातमिति सम्वेदनरहितम् अतस्तस्य नोपसंहारः ॥ २३ ॥

पूर्वन्तु इत्युन्मत्तवच इति वचनमेवोपसंहृतं न तु प्रश्न उप-संहृतः अत इदानीं मध्ये लीलामुक्त्वा तस्यास्तिरोधाने पुनरेव वृन्दावनलतास्तरून् कृष्णं पृच्छमाना जाता इत्याह । एवमिति । नद्य पुनरनुत्तरे प्राप्ते भगवानाविशत् मोहं दूरीकृत्य सर्वं ज्ञापित-वानित्याह । व्यचक्षतेति । तापापनोदनार्थमेव प्रथम् अन्वेषणं लीला वेशो भगवदावेशश्चेति तत्र प्रश्नोऽन्तरङ्ग इति स एव सर्वत्र अनूद्यते वृन्दावनलताः तरून् कृष्णं पृच्छमाना जाता इति ततो वनोद्देशे वनभूमौ भगवतः पदानि दृष्टवत्यः परमात्मन इति पदानां परमपुरुषार्थता सूचिता भगवदावेशे हि सर्वज्ञता भवति तेषां च कार्यं भगवत्पददर्शनं तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इति श्रुतेः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दुष्टाहे हे कालिय ! ॥ २१-२२ ॥

ततश्चाकस्मादुन्मादस्य प्राबल्ये शान्ते सति कृष्णतादात्म्य-स्यापि शैथिल्यमभूत् ततश्च अहं गोपीत्यात्मानमनुसन्दधानां काञ्चिद्भाण्डस्फोटनहैयङ्गवमोषणलीलानुकरणोद्यतामालक्ष्य यांगमा-यैव श्रीयशोदायमाना तदुचितं चकारेत्याह । बद्धेति । हैयङ्गवमुषं तु त्वां बध्नामीत्युक्त्वा अन्यया काचित् स्रजा बद्धा सुदृक् आस्यमा-च्छाद्य भीतिविडम्बनं भयानुकरणं भेजे इत्यन्वयः ॥ २३ ॥

एवमनेन प्रकारेण कृष्णं पृच्छमाना इत्ययमत्र प्रकारवैप्रल-म्भिकस्योन्मादस्य प्रौढिमनि आत्मविस्मृतौ सत्यां स्वप्रेष्ठतादात्म्य-मेव स्यात् यदुक्तं प्रियाः प्रियस्य प्रतिरूढमूर्तयः असावहं त्विति कृष्णोऽहं पश्यत गतिमित्यादि तस्यैव मध्यत्वे यत्किञ्चिदात्मानुस-न्धानवत्त्वे सत्यनुकरणं यदुक्तं श्रीप्रह्लादचरिते क्वचित्तद्भावना-युक्तस्तन्मयोऽनुचकारहेति अत्राप्युक्तं कृष्णायन्त्यपिबत्स्तनमि-त्यादि तस्यैव मान्द्ये आत्मानुसन्धानस्य प्रायिकत्वे अचेतने-ष्वपि तरुगुल्मादिषु प्रश्नः ॥ २४ ॥

केनचित्कृता विशुद्धरसदीपिका ।

आरुह्येति । एका गोपी परां भावनालब्धामाह । दुष्टाहे गच्छेति जातोऽहमिति तल्लीलावेशेन तद्वाक्यभावेऽप्यनुकरणं तात्पर्ये-णैव ज्ञेयम् ॥ २१ ॥

तत्रेति । गोपा इति भावनालब्धाः प्रत्याह । स्पष्टमन्यत् ॥ २२ ॥

बद्धेति । अन्यया भावनालब्धया श्रीव्रजेश्वरीमनुकुर्वत्या अन्या काचिद्गोपी उलूखले भावनालब्धे बद्धा भावनयैव भीता सती भीताविडम्बनं भयकार्यं कम्परोदनादिकं भेजे इत्यर्थः । तन्वी विरहार्त्या सद्य एव कार्श्यं प्राप्तेत्यर्थः ॥ २३ ॥

उपसंहरति । एवमिति । अत्र प्रथमं तापमात्रं द्वितीयं बाहुप्र-सारेत्याद्यनुकरणं तृतीयं गानसहितान्वेषणं तत्रैव मध्ये मध्ये पूतनाद्यनुकरणं चतुर्थं पददर्शनमिति संग्रहः । एवमिति । यथैना अनुचक्रुः एवं याः कृष्णं वृन्दावनलतास्तरून् पृच्छमानास्ताः

### केनचित्कृता विशुद्धरसदीपिका ।

परमात्मनः परमरमायाः श्रीराधिकाया आत्मनः परमप्रेष्ठस्य पदानि पदचिह्नानि श्लेषेण पदानि तत्तल्लीलास्थानानीत्यपि उद्देशे उत्कृष्टे देशे प्रागुक्ते इति शेषः व्यचक्षत ददृशुः ॥ २४ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

लीलानुकारान्तरमाह । आरुह्येति । नृपेति मुनीन्द्रेण परीक्षित्सम्बोधनम् एका तदात्मकतया कृष्णायमाना अपरां कामपि विरहविपाग्निज्वालेन दंदह्यमानतया स्वशिरसि कृष्णचरणस्पर्शकामनया नीलाम्बरवेष्टनशिरोमणिधारणादिभिः कृतकालीयानुकरणां शिरस्यारुह्य ललितनृत्यगतिवलितप्रेमपथनचलितनलिनायमानपदाक्रम्याह हे दुष्टाहे ! गच्छ यतोऽहं ननु नूनं खलानां दण्डधृक् जातः तल्लीलायां यद्यपि नेयं भगवदुक्तिर्दृश्यते तथापि तद्वाक्यशेषेण योग्यतया वाक्यमभिनयः चित्रं चैतत्स्नेहचरित्रं गोप्याः स्वशिरःपदाक्रमणेऽपि तदीयकृष्णानुकारदर्शनेन नेर्ष्यामात्सर्याघुद्भवः प्रत्युताह्लादवृद्धिरिति ॥ २१ ॥

कश्चित्तु गोप्यः करालां खदिरहज्वालां खरोमद्रुमवनसंलग्नां सर्वदिग्व्यापिनीश्च पश्यन्त्यः प्रेमवैक्लव्यविगतमतितया तामेव दावाग्निं मत्वा तद्भीता गोपा इव गोपाल एवेति व्रूयुः तत्र तस्मिन् सति एकातु तथैव पश्यन्त्यपि तदात्मकतया कृष्णावेशेनोवाच हे गोपाः ! उल्वणं चक्षुर्भ्यां द्रष्टुमशक्यं दावाग्निं पश्यत अतस्तदुल्वणत्वादेवाशु चक्षूंषि अपिदध्वम्अत्रदधस्तथोश्चेति स्मरणादभ्यासस्य भप्रभावेनापिधद्ध्वमिति प्रयोगसम्भवेऽप्यपिदध्वमित्यार्षम् अहमञ्जसा क्षेमं विधास्ये तथाच सर्वा नेत्रमीलने ध्यानलब्धे रमवपुं घनस्यामं ह्यबभोव्याप्तमालोक्य शमितविरहज्वालाः कृष्णेन दावाग्ने रक्षिता वयमिति मत्वोन्मीलने पुनः पूर्ववद्बभूवुः अत्र कालीयदमनोत्तरनिशि गतायां मुञ्जाटवीगतायाश्च दावाग्निमोचनलीलाया अनुकरणं ज्ञेयम् ॥ २२ ॥

पूर्वं बाललीलां निरूप्य कैशोरलीलानिरूपणेऽपि न प्रेमविह्वलितानां क्रमानुसन्धाननियम इति द्योतयन्मुनीन्द्रः पुनर्बाललीलानुकारमाह । बद्धेति । काचित्तु सुदृक् शोभनाक्षी तन्वी सुतनुमती कृष्णानुकारेण सफलशरीरा वा अन्यया कृष्णस्य स्नेहगुणबन्धनाधीनत्वमनुसन्दधत्या स्रजा कृष्णगुणग्रथितसुमनस्त्वेन स्नग्रूपया स्रजा पुष्पमालयेति करणनिर्देशो वा तत्र उलूखलाभावेन अत एव प्रेमविरहजडीकृतदेहत्वेन तत्र उलूखलाकारोपविष्टायां कस्याश्चिद्गोप्यामेव कृष्णसंश्लेषकामिन्यां बद्धा स्वयं विरहदुःखेन भीता आस्यं हस्ताभ्यामधःकरणेन वा पिधाय भीतस्य यशोदावद्भभीनकृष्णस्य विडम्बनमनुकारं भेजे भीता असयो दशा च यस्या इत्येकम्वा पदम् ॥ २३ ॥

श्रीशुको मुनीन्द्रः प्रेमपथाचार्य्यरूपगोपीनां चरितेनैव तत्पथमुपदिशंस्तेनैव प्रथमं भगवत्पदर्दर्शनमाह । एवमिति । एवं विरहोपतापपूर्वकं मिथः सङ्कल्प्य तदात्मकतया गुणगानानुकारपरा वृन्दावनलतास्तरून् कृष्णं पृच्छमाना वनोद्देशे परमात्मनः पदानि व्यचक्षतेत्यन्वयः तथैवं पृच्छमाना व्यचक्षतेत्युक्त्या परमात्मकृष्णान्वेषणे तत्पददर्शनं प्रति परिप्रश्नस्य प्राधान्यमन्वेषणमेवेत्युक्त्वा प्रकारान्तःपातित्वेन तदङ्गत्वं तत्र लतास्तरूनित्युक्त्वा यत्र यत्र तदुपदेशसम्भावना तत्र तत्र प्रश्नकथने नैकत्र स्वगुरावेव प्रश्ननियमो वारितः तत्राङ्गेष्वपि अतर्प्यंस्तमचक्षाणाः करिण्य इव यूथपमइत्यादिना प्रदीप्तशिरा जलराशिमिवेत्यधिकारपठितस्तदप्राप्त्युपतापः प्रथमं गृहगमनाद्यागेन वृन्दावने एव तत्प्राप्त्याशयावस्थानं द्वितीयं तत्र गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनमित्यत्र संहता इति सत्सङ्गस्तृतीयः तत्रामुमेव गायन्त्य इति भगवद्गुणगानं चतुर्थं तत्र गाने एवकारेणेतरव्यावृत्ति रुच्चैरित्यनेन लज्जाव्यावृत्तिश्च गुणः विचिक्युरित्यनेन गानान्वितान्वेषणं पञ्चमं तत्रान्वेषणे उन्मत्तकवदिति प्रेमपथकुशलत्वेऽपि प्रेमपथोन्मैत्तैहिकामुष्मिककुशलदृश्योन्मत्ततया तत्तुल्यत्वकथनं तच्चान्वेषणे गुणः वनाद्वनमित्युक्त्यान्वेषणे आश्रमविशेषाग्रहत्यागोऽपि गुणो दर्शितः तथा लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिका इत्यत्र भगवल्लीलानुकरणं प्रधानं षष्ठं निर्दिष्टं तत्र तदात्मकत्वम् दृष्टकैशोरशृङ्गारलीलानुकरणप्राधान्येऽपि प्रियतमलीलात्वाल्लीलान्तरानुपेक्षणञ्च गुणः एवं साङ्गं प्रश्नं कुर्वत्यो वनोद्देशे व्यचक्षतेत्यनेन वृन्दावनस्याराधनसिद्धभूमित्वोक्तिः भगवता स्वपदाङ्कानां प्रथमाविष्कारस्तु तत्रानुरागेण मदमानभङ्गतया सानुरागगानेन स्वाविष्काराय यत्तु कैश्चित् वनोद्देशे परमात्मनः पदानि व्यचक्षतेत्यनेन गोपीनामुत्कर्षकथनं तद्बहुसमीचीनं यत्तु तत्पदादर्शनेन सर्वमुनीनामपकर्षोक्तिः सा त्वनुचिता तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय इत्यादिश्रुतिविरुद्धत्वात् कस्यचिदपि तद्भक्तस्यापकर्षासम्भवात् शुकादीनामभक्तत्वस्य वक्तुमशक्यत्वाच्च ॥ २४ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

एका कृष्णरूपा कालियरूपां कां चिच्चरणेनाक्रम्य तस्याः शिरसि आरुह्याह हे दुष्टाहे ! इतो गच्छ ननु निश्चयेन खलानामहं दण्डधृक् जात उपरि शिरसि काचिद्वृक्षशाखामवलम्ब्यान्तःकरणे भगवतः आवेशाच्चिरालम्बतयैव वा यथा तदीयपालनशक्त्यावेशान्तरस्य नृपेति सम्बोधनाशयः ॥ २१ ॥

तत्र तासु मध्ये एका कृष्णरूपा गोपरूपा उवाच हे गोपाः ! उल्वणं दावाग्निं पश्यत शीघ्रं चक्षूंषि पिदध्वं निश्चयेनाञ्जसा क्षेमं विधास्ये अत्र विरहेण दावाग्निदर्शनं भावनया वा अन्यासां तु तस्या वस्तुतः भगवद्भावभावनात्तत्राणप्रार्थना एवमेवजातं वर्षस्थलेऽपि अत्यन्तमत्तानामेव तदावेशेन भगवद्भावोदयात् ॥ २२ ॥

तत्र तासु मध्ये सुनयनमास्यं वामहस्तेनाच्छाद्य भीत्यनुकरणं कृतवती ॥ २३ ॥

एवमनुकरणं कृत्वा पुनरपि तथैव पृच्छमानाः भगवतः पदानि ददृशुरित्याह । एवमिति । तथाच गाढोन्मादे भगवल्लीलानुकरणप्रमादे प्रश्न इत्येवं भ्रमणात्तासां भगवत्प्रसादेन समाहिततामाप्ता तच्चरणदर्शनं जातमित्याशयेनाह । व्यचक्षतेति । परमात्मनः परमेश्वरस्य श्रीकृष्णात्मनावतीर्णस्य परमप्रिमस्येति वा कस्मिंश्चिद्वनप्रदेशे भूमौ संलग्नानि पदानि दृष्टवत्यः निवृत्तिपक्षे वित्तैकाग्रतासिद्ध्यर्थं भगवत्कृतलीलानुकरणं वर्णयन्त्यः पुनस्तदन्वेषणप्रकारं बोधयन्त्यः वनोद्देशे अन्तःकरणलक्षणस्य वनस्य सात्त्विकप्रदेशे पदानि चिदाभासलक्षणानि

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ॥
लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशयवादिभिः ॥ २५ ॥
तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वाः पदैः सुपृक्तानि विलोक्यार्त्ताः समब्रुवन् । २६

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

चिह्नलक्षणपदज्ञापकानि तत्प्रतिकृतिभूतानि व्यचक्षत तदवलोकनं निरूपयामासुरित्यर्थः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अहे ! सर्प ! ॥ २१ ॥

आशु शीघ्रमपिदध्वं निमीलयत ॥ २२ ॥

सुदृक् शोभने दृशौ यस्मिन् तदास्यम् पिधाय पाणिभ्यामाच्छाद्य भीतिविडम्बनं भयानुकरणं भेजे ॥ २३ ॥

एवं वृन्दावने लताः तरूंश्च कृष्णं पृच्छमानाः वनोद्देशे वनप्रदेशे परमात्मनः पदानि व्यचक्षत अपश्यन् ॥ २४ ॥

---

भाषा टीका।

हे राजन् ! एक गोपी दूसरी के मस्तक पै पांव रख दबा कर बोली अरे दुष्ट काली नाग तू इहांते चलो जा मैं सब दुष्टों को दंड देवे वारो पैदा भयो हूं ॥ २१ ॥

तिनमें ते एक गोपी बोली गोपो हो यह बडो भयङ्कर दावानल है देखो तुम सब अपने आंख मूंदो जल्दी तुमारे भयको मैं छुटाऊंगो ॥ २२ ॥

एक गोपी ने दूसरी को मालाते बांध दामोदर लीला कीनि दूसरी ने सुंदर नेत्रों वाले मुख आंख को ढांक के भयभीत सी हो कृष्ण की चेष्टा दिखाई ॥ २३ ॥

या प्रकारते सब गोपी वृंदावन में वृक्ष लतानते पूछत घूमत भई इतने में वन में काउ उत्तम स्थान पै परमात्मा श्रीकृष्णचंद्र के चरणों के चिन्हों के दर्शन कीने ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सुपृक्तानि सम्मिश्राणि ॥ २६ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोपिणी ।

ततश्चान्योऽन्यमाहुः। पदानीति। पदचिह्नानि व्यक्तं निश्चितम् एतानि नन्दसूनोरेव भवन्ति नान्यस्य हि यतः ध्वजादिभिर्विलक्ष्यन्ते तत्रैव हेतुमाहुः। महात्मनः महापुरुषत्वादित्यर्थः आदिशब्दाच्चक्रशङ्खादयः अत्र विशेषः श्रीविष्णुपुराणे—

विलोक्यैका भुवं प्राह गोपीगोंपवराङ्गना--
पुलकाञ्चितसर्वाङ्गी विकासिनयनोत्पला ॥
ध्वजवज्राङ्कुशाब्जाङ्करेखावन्त्यालि ! पश्यत ।
पदान्येतानि कृष्णस्य लीलालंकृतगामिन इति ॥

ध्वजादीनां धारणप्रयोजनमुक्तं स्कान्दे—

दक्षिणस्य पदो ऽङ्गुष्ठमूले चक्रं बिभर्त्यजः।
तत्र नम्रजनस्यारिषड्वर्गच्छेदनाय सः ॥
मध्यमाङ्गुलिमूले तु धत्ते कमलमच्युतः ।
ध्यातृचित्तद्विरेफाणां लोभनायातिशोभनम् ॥
पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम् ।
कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम् ॥
पार्ष्णिमध्येऽङ्कुशं भक्तचित्तेभवशकारिणम् ।
भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्वणि ॥
तथा वामपदाङ्गुष्ठमूलतस्तन्मुखं दरम् ।
सर्वविद्याप्रकाशाय दधाति भगवानसौ ॥
पद्मादीन्यपि चिह्नानि तत्र दक्षिणपादवत् इति ।

॥ २५ ॥

तैस्तैर्ध्वजादिलक्षितैः वीप्सा बाहुल्यस्य कैवल्यस्य वा विवक्षया अबलाः विरहान्वेषणाभ्यां बलहीना अपि तस्य कृष्णस्य पदवीं वर्त्म अग्रतोऽन्विच्छन्त्यः मृगयमाणाः वध्वाः कस्याश्चित् व्रजदेव्या यद्वा स्वभावत एव लज्जाशीलत्वात् स्नुषावत् सर्वतः सङ्कुचितत्वेन किम्वा श्रीव्रजेश्वर्या मनोरथविशेषेण वधूरिति तन्मुखोद्गत्या गोकुले वधूत्वेन प्रसिद्धायाः श्रीराधाया एव तन्नामाग्रहणकारणं लिखितमेव वधूपदलक्षणमुक्तं श्रीविष्णुपुराणे—

कापि तेन समं याता कृतपुण्या मदालसा ।
पदानि तस्याश्चैतानि घनान्यल्पतनूनि चेति ॥

सुष्ठु पृक्तानि मिलितानि पदानि अंसन्यस्तप्रकोष्ठत्वात् एवमात्मारामत्वादिना तासां मानतोऽसूयया वा अन्तर्हित इति निरस्तं तासामेकस्या नयनात् तत्र तत्रैव ताभिः सह स्थितया तया केनापि सङ्केतेन ततो निःसारितया तदर्थं दूरे प्रादुर्भूतस्याग्र कियत्पदप्रयाणानन्तरं मिलनादित्यूह्यम् आर्त्ताः स्वपरित्यागेन तदेकपरिग्रहात् यद्वा विरहेणार्त्ता अपि सम्यग्विचारादिपूर्वकं समब्रुवन् अन्योऽन्यमूचुः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्चान्योऽन्यमाहुः। पदानि इति । पदचिह्नानि व्यक्तं स्फुटमेवैतानि नन्दसूनोः पदानि लक्ष्यन्ते । कैर्ध्वजादिभिः हि प्रसिद्धौ ध्वजादीनि तत्र प्रसिद्धान्येवेत्यर्थः । ध्वजादियोगे हेतुः महात्मनः परमपुरुषोत्तमस्येत्यर्थः । आदिशब्दादन्यान्यपि । तत्र पाद्मे ब्रह्मनारदसम्वादे श्रीकृष्णमधिकृत्य "षोडशैवतु चिह्नानि

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मया दृष्टानि तत्पदे। दक्षिणे चाष्ट चिह्नानि इतरे सप्त एव च। ध्वजा पद्मं तथा वज्रमंकुशो यव एव च। स्वस्तिकं चोर्ध्वरेखा च अष्टकोणं तथैव च। सप्तान्यानि प्रवक्ष्यामि साम्प्रतं वैष्णवोत्तम!। इन्द्रचापं त्रिकोणञ्च कलशं चार्द्ध चन्द्रकम्। अम्बरं मत्स्यचिह्नञ्च गोष्पदं सप्तमं स्मृतम् षोडशञ्च तथा चिह्नं शृणु देवर्षिसत्तम!। जम्बूफलसमाकारं दृश्यते यत्र कुत्रचिदिति। क्रमदीपिकायाम्। मत्स्यांकुशारिदरकेतुयवाब्जवद्धैरिति। श्रीगोपालतापिन्याम्। शङ्खध्वजातपत्रैस्तु चिह्नितं चरणद्वयमिति आदिवाराहे मथुरामण्डलमाहात्म्ये। यत्र कृष्णेन सङ्कीर्णं क्रीडितं च यथासुखम्। चक्राङ्कितपदा तेन स्थाने ब्रह्ममये ऽगुणे इति। एवं चक्रशङ्खातपत्रैरधिकैरूनविंशतिश्चिह्नानि। स्कान्दे तु यच्चक्रादिपद्ममात्रमुक्तं तत्तु श्रीविष्णावेव। यत उक्तं षोडशचिह्नप्रसङ्ग एव पाद्मे। अङ्कान्येतानि भो विद्वन्! दृश्यन्ते तु यदा कदा। कृष्णाख्यन्तु परं ब्रह्म भुवि जातं न संशयः। द्वयं वाथ त्रयं वाथ चत्वारि पञ्च चैव च। दृश्यन्ते वैष्णवश्रेष्ठ! अवतारे कथञ्चनेति। तेषां स्थाननियमो यथा तत्रैव। मध्ये ध्वजा तु विज्ञेया पद्मं त्र्यङ्गुलमानतः। वज्रं वै दक्षिणेपार्श्वे अङ्कुशो वै तदग्रतः। यवो ऽप्यङ्गुष्ठमूले स्यात् स्वस्तिकं यत्र कुत्रचित्। आदिं चरणमारभ्य यावद्वै मध्यमा स्थिता। तावद्वै चोर्ध्वरेखा च कथिता पाद्मसंज्ञके। अष्टकोणन्तु भो वत्स मानञ्चाष्टाङ्गुलैश्च तत्। निर्दिष्टं दक्षिणे पादे इत्याहुर्मुनयः किल। दक्षिणेतरस्थानानि सम्वदामीह साम्प्रतम्। चतुरङ्गुलमानेन त्वङ्गुलीनां समीपतः। इन्द्रचापं ततो विद्यादन्यत्र न भवेत् क्वचित्। त्रिकोणं मध्यनिर्दिष्टं कलशो यत्र कुत्रचित्। अष्टाङ्गुलप्रमाणेन तद्धवेदर्द्धचन्द्रकम्। विन्दुर्वै मत्स्यचिह्नञ्च आद्यन्ते वै निरूपितम्। गोष्पदं द्विखुरं ज्ञेयमाद्यात्र्यङ्गुलिमानतः। इत्येतल्लक्षणं तत्रैव पद्माकारा ध्वजा प्रोक्ता प्रान्ते त्रैकोणिकान्वयेत्यादि। व्याख्यायते च त्र्यङ्गुलमानतः। मध्यमाङ्गुल्यग्रात् तावन्मानं परित्यज्येत्यर्थः। वक्ष्यमाणयुक्तेः। पद्मस्याधो ध्वजं धत्ते इति स्कान्दसम्वादाच्च। यत्र कुत्रचिदिति यथाशोभं बहुत्रेत्यर्थः। आदिं चरणम् अङ्गुष्ठतर्जन्योरन्तरालं यावन्मध्यं मध्यदेशं तावद्व्याप्य स्थिता तत्तस्याष्टकोणस्य मानमष्टाङ्गुलैर्ज्ञेयम् अग्रतोऽष्टाङ्गुलीः परित्यज्येत्यर्थः। स्वरूपमाने स्थानासमावेशः सच चरणस्य दैर्घ्यें चतुर्दशाङ्गुलप्रमाणत्वं विस्तरो षडङ्गुलिप्रमाणत्वमिति हयशीर्षमत्स्यादिप्रसिद्धत्वात् एतदनुसारेण त्र्यङ्गुलमानत इत्यपि व्याख्यातं व्याख्यास्यते चान्यत्र इन्द्रचापत्वं निर्गुणत्वात्तादृशवर्णमयत्वाच्च चतुरङ्गुलमानेनेति तावन्मानपरित्यागत उक्तं मध्यमाङ्गुल्यधः स्थितत्वात् तथा दैर्घ्यतोऽपि ज्ञेयं शोभोपयोगात् मध्यनिर्दिष्टं चरणमध्ये स्थितम् अष्टाङ्गुलप्रमाणेन त्रिकोणस्याध इत्यर्थः। तत्कोटिद्वयस्य किञ्चित्त्रिकोणप्राप्तित्वात् विन्दुरम्बरपर्य्यायः अयं च बाह्याभ्यन्तरमण्डलद्वयात्मकः द्विरेखासु समान्वितमिति तत्रैव तल्लक्षणोक्तेः सर्वचिन्हानामुपरि विन्दुः मत्स्यः सर्वचिन्हानामधः द्विखुरं द्विशफम् आद्याद्बिन्दोर्द्व्यङ्गुलमानत इति इन्द्रचापादध इत्यर्थः पद्माकाराधर्मतुल्या प्रान्ते त्रैकोणिकं पताकास्थानीयं यस्यां सा सन्तम्या अलुक् एतच्च त्रैकोणिकं दक्षिणत एव ज्ञेयं वामत ऊर्ध्वरेखापेक्षितेः षोडशं चिह्नं पादद्वय एव ज्ञेयम् अनियमेनोक्तत्वात् जम्बूफलसमतया निर्देशेन तद्वर्णतदाकारमयमेव तच्चिन्हं नतु रेखाकारं चक्रशङ्खौ तु–

> दक्षिणस्य पदोऽङ्गुष्ठमूले चक्रं बिभर्त्यजः।
> तथा वामपदाङ्गुष्ठमूलतस्तन्मुखं दरमिति॥

स्कान्दानुसारेणैव ज्ञेयौ छत्रं तु प्राधान्याद्दक्षिणचरण एव तत्रापि चिह्नान्तरशून्यप्रदेशत्वाच्चक्राध एव ज्ञेयं तासां तद्दर्शनप्रकारश्चायं श्रीविष्णुपुराणे–

> विलोक्यैका भुवं प्राह गोपीगोपवराङ्गना।
> पुळकाञ्चितसर्वाङ्गी विकासिनयनोत्पला॥
> ध्वजवज्रांकुशाब्जाङ्करेखावन्त्यालि पश्यत।
> पदान्येतानि कृष्णस्य लीलालंकृतगामिनः॥

इति॥ २५॥

तैस्तैर्ध्वजादिशोभितैः वीप्सा मध्ये मध्ये दूर्वाभूम्यादि भूमौ विच्छिन्नत्वात् स्थानबाहुल्यस्य विवक्षया। अग्रत इति तावत् पर्य्यन्तं कृष्णेनैवाङ्के निधाय तस्यानयनात्। अवला विरहान्वेषणाभ्यां वळहीना अपि तस्य कृष्णस्य पदवीं वर्त्म अन्विच्छन्त्यः मृगयमाणाः। वध्वाः श्रीराधायास्तस्या एव परमसौभाग्यवतीत्वेन स्थापयिष्यमाणत्वात्॥ २६॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदा दृष्टभगवत्पदानां तासामुक्तिमाह। पदानीति। इमानि महात्मनो नन्दसूनोः पदानि व्यक्तं नूनं कुतः हि यस्मात् ध्वजादिभिः रेखात्मकैर्लक्ष्यन्ते इति॥ २५॥

ततस्तैस्तैर्ध्वजादिचिन्हितैःपदैस्तस्य कृष्णस्य पदवीं पुरःपुरोऽन्विच्छन्त्यः अन्वेषयन्त्यः अबला गोप्यस्तदा कस्याश्चिद्वध्वाः पदैः सुपृक्तानि अन्तरान्तरा युक्तानि भगवतः पदानि विलोक्यार्ताः दुःखिता ऊचुः॥ २६॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली॥

परमात्मचरणाकृतित्वं कथमवगम्यत इति तल्लक्षणमुच्यते पदानीति। लता कल्पलता आदिशब्देन चक्रादिकं गृह्यते यवादीत्यपि पाठः॥ २५॥

आन्विच्छन्त्यः अन्वेषणं कुर्वन्त्यः वध्वाः कस्याश्चिद्गोपस्त्रियः पदैश्चरणैर्निक्षिप्तैः सुपृक्तानि अन्तराले मिश्रितानि ईर्षयार्ताः समभुवन् संलापमकुर्वन्॥ २६॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एता अपि पूर्ववत् दशविधाः तथैव तासां वचनानि पदानि प्रत्यक्षयोग्यानि सर्वैरेव दृश्यन्त इति तेषां याथात्म्यज्ञानं साध्यम् अतः प्रथममाहुः। पदानि व्यक्तमेतानीति। एतानि पदानि नन्दसूनोरेव व्यक्तं सत्यं नात्र सन्देहः चिन्हैः पदानां विशे-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

पश्चानं चिन्हान्येव कथं भवन्तीत्याशङ्क्य तत्रोपपत्तिमाहुः महात्मन इति। महतामप्यात्मा महान्वा ब्रह्मरूपः तस्य तत्त-त्कार्यार्थं पदे चिन्हानि भवन्ति प्रकृतेऽपि तेषामुपयोग इति तद-भिव्यक्तिः क्रियते तानि चिन्हान्याहुः। लक्ष्यन्त इति। अनुगी-यन्ते पदानि असाधारणधर्मैः लोकेऽप्येतादृशोऽर्थः प्रसिद्ध इति सम्मतिः ध्वजस्य स्थापनं भक्तानां निर्भयावासार्थम् अम्भोजस्थापनं सुखसेव्यत्वाय चक्रस्थापनं रक्षार्थं मनोनिग्रहार्थमंकुशस्थापनं कीर्तिसिध्यर्थं यवः वज्रादयोऽप्यादिशब्देनोच्यन्ते पापपर्वतादिनि-राकरणार्थाः॥ २५॥

एवमसाधारणधर्मैः पदानि निश्चित्य तन्मार्गेण गता इत्याह। तैस्तैरिति। ज्ञानं क्रियापर्यवसायीति क्रिया निरूप्यते तत्पदवीमन्विच्छन्त्योऽग्रतोऽचलाः जाताः पदान्यन्विष्य तत्पदवीं गता इत्यर्थः। मध्ये तासां प्रतिबन्धमाह। वध्वा इति। यदि तासां मत्सरदोषो न स्यात् गच्छेयुरेवान्तिकं दोषवशाच्च परं कुण्ठिता भवन्ति तदाह। वध्वाः कस्याश्चिद्गोपिकायाः पदैः सुपृ-क्तानि पङ्क्त्याकारेण गतानि भगवत्पदानि दृष्ट्वा तानि विलोक्य च आर्त्ता जाताः तदा अन्योऽन्यमेवाब्रुवन् ज्ञानक्रिययोरुपस-र्जनत्वं कृत्वा वाचि प्रतिष्ठिताः जाताः अन्यथा शीघ्रगमने भगवान् प्राप्तः स्यात्॥ २६॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तदेवं त्रिविधमुन्मादं निर्वर्ण्य तदन्तरेवाकस्मात्कृष्णस्य पदचि-न्हान्यालक्ष्य सानन्दवितर्कमाहुः। पदानीति। ध्वजादीनां धारणस्थानं प्रयोजनं चोक्तं स्कान्दे—

दक्षिणस्य पदाङ्गुष्ठमूले चक्रं बिभर्त्यजः।
तत्र भक्तजनस्यारिषड्वर्गच्छेदनाय सः॥
मध्यमाङ्गुलिमूले च धत्ते कमलमच्युतः।
ध्यातृचित्तद्विरेफाणां लोभनायातिशोभनम्॥
पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम्॥
कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम्॥
पार्ष्णिमध्येऽङ्कुशं भक्तचित्तेभवशकारिणम्॥
भोगसंपन्मयं धत्ते यवमङ्गुष्ठपर्वणीति॥
वज्रं वै दक्षिणे पार्श्वे अंकुशो वै तदग्रत इति॥

तत्रैव स्कान्दे कृष्णमधिकृत्योक्तत्वात् कनिष्ठामूलेऽङ्कुशस्तले वज्रमित्याहुः सांप्रदायिकाः पार्ष्ण्यावंकुशस्तु नारायणादेर्ज्ञेयः तदेवं चक्रध्वजकमलवज्रांकुशयवा इति षट्चिन्हानि कृष्णस्य दक्षिणे चरणे ऽन्यान्यपि चिन्हानि वैष्णवतोषणीदृष्ट्या लिख्यन्ते अंगुष्ठतर्जनीसन्धिमारभ्य यावदर्द्धचरणमूर्ध्वरेखा ७ चक्रस्य तले छत्रम् ८ अर्द्धचरणतले चतुर्दिगवस्थितं स्वस्तिकचतुष्टयं ९ स्वस्तिक-चतुःसन्धिषु जम्बूफलचतुष्टयं १० स्वस्तिकमध्ये अष्टकोणमि-त्येवमेकादशचिन्हानि ११ तथा वामपदांगुष्ठमूलतस्तन्मुखं दरं सर्वविद्याप्रकाशाय दधाति भगवानसाविति १ मध्यमामूलेऽम्बर-मन्तर्बाह्यमण्डलद्वयात्मकं २ तदधः कार्मुकं विगतज्यं ३ तदधो गोष्पदं ४ तत्तले त्रिकोणं ५ तदभितः कलशानां चतुष्टयं क्वचि-त्रितयं च दृष्टं ६ त्रिकोणतलेऽर्द्धचन्द्रोऽग्रद्वयस्पृष्टत्रिकोणकोणद्वयं ७ तदधो मत्स्य इत्यष्टौ मिलित्वा ऊनविंशतिः॥ २५॥

सुपृक्तानि मिश्रितानि॥ २६॥

---

### केन चित्कृता विशुद्धरसदीपिका।

दृष्ट्वा च परस्परमूचुः। पदानीति। व्याख्यातं व्यक्तं निश्चितं नन्द-सूनोरिति गुरुनामोक्त्या सख्यं सूचितं महात्मनः सर्वसल्लक्षण-युक्तस्य परमधीरस्य वा हि यतः ध्वजादिभिर्लक्ष्यन्ते आदि-पदादन्यैरपि तान्युक्तानि पाद्मे "षोडशैव तु चिन्हानि मया दृष्टानि तत्पदे। दक्षिणेचाष्टचिन्हानि इतरे सप्त एवच। ध्वजा पद्मं तथा वज्र-मङ्कुशो यव एवच। स्वस्तिकं चोर्ध्वरेखा च अष्टकोणं तथैवच। इन्द्र-चापं त्रिकोणञ्च कलशं चार्द्धचन्द्रकम्। अम्बरं मत्स्यचिन्हञ्च गोष्पदं सप्तमं स्मृतम्। षोडशन्तु तथा चिन्हं शृणु देवर्षिसत्तम! जम्बूफलसमाकारं दृश्यते यत्र कुत्रचित् इति। "क्रमदीपिकायाञ्च मत्स्यांकुशारिदरकेतुयवाब्जवज्रैरिति शङ्खः तापनीश्रुतौ शङ्खध्व-जातपत्रैरिति छत्रं वराहतन्त्रे चक्राङ्कितपदा तेनेति चक्रमिति त्रीण्यधिकानि ततश्चैकोनविंशतिचिन्हानीति सिद्धम् एषां स्वरूपं स्थानानि च वैष्णवतोषिण्यां यथा पाद्मे "मध्ये ध्वजा तु विज्ञेया पद्मं त्र्यङ्गुलमानतः। वज्रं वै दक्षिणे पार्श्वे अंकुशो वै तदग्रतः। यवोऽ प्यङ्गुष्ठमूले स्यात्स्वस्तिकं यत्र कुत्रचित्! आदिं चरणमारभ्य यावद्धि मध्यमा स्थिता। तावती चोर्ध्वरेखा स्यात् कथिता पाद्मसंज्ञके अष्टकोणं तु भो वत्स! मानं चाष्टाङ्गुलैश्च तत्। निर्दिष्टं दक्षिणे पादे इत्याहुर्मुनयः किल। दक्षिणेतरस्थानानि सम्प्रदायमीह साम्प्रतं चतु-रङ्गुलमानेन स्वङ्गुलीनां समीपतः। इन्द्रचापं ततो विद्यादन्यत्र न भवेत्क्वचित्। त्रिकोणं मध्ये निर्दिष्टं कलशो यत्र कुत्रचित् अष्टा-ङ्गुलप्रमाणेन तद्भवेदर्द्धचन्द्रकम् विन्दुर्वै मत्स्यचिन्हञ्च आद्यन्ते वै निरूपितम्। गोष्पदं द्विखुरं ज्ञेयमाद्याद्यङ्गुलमानतः। एतल्लक्षणं तत्रैव पद्माकारा ध्वजा प्रोक्ता प्रान्ते त्रैकोणकादनु इति व्याख्यायते च त्र्यङ्गुलमानतःमध्यमाङ्गुल्यग्रात्तावन्मानं परित्यज्येत्यर्थः। वक्ष्यमाण-युक्तेः पद्मस्याधो ध्वजं धत्ते इति स्कान्दसम्वादाच्च यत्र कुत्रचिदिति यथाशोभं वक्तुत्रेत्यर्थः आदिं चरणमङ्गुष्ठतर्जन्योरन्तरालं यावन्मध्यं मध्यदेशं तावद्व्याप्य स्थिता तत्तस्याष्टकोणस्य मानमष्टाङ्गुलैर्ज्ञेयम-ग्रतोऽष्टाङ्गुलीः परित्यज्येत्यर्थः। स्वरूपमानं स्थानसमावेशः अत्र चरणस्य दैर्घ्यं चतुर्दशाङ्गुलपरिमाणत्वं विस्तारं षडङ्गुलपरिमाण-त्वमिति हयशीर्षमात्स्यादिप्रसिद्धत्वात् एतदनुसारेण अङ्गुलमानत इत्यपि व्याख्यातं व्याख्यास्यते चान्यत्र इन्द्रचापं निर्गुणत्वात्ता-दृशवर्णमयत्वाच्च चतुरङ्गुलमानेनेति तावन्मानपरित्यागेन इन्द्रचापं माध्यमाङ्गुल्यधः स्थितविन्दोरधः स्थितत्वात् तथा दैर्घ्यतोऽपि ज्ञेयं शोभोपयोगात् मध्यनिर्दिष्टं चरणमध्ये स्थितम् अष्टाङ्गुलप्रमाणेन त्रिकोणस्याध इत्यर्थः। तत्कोटिद्वयस्यार्किञ्चित्कोणप्रासित्वात् विन्दुर-म्बरपर्य्यायः अयञ्च बाह्याभ्यन्तरमण्डलद्वयात्मकः क्रियेवामुनम-न्वितमिति तत्रैव तल्लक्षणोक्तेः सर्वचिन्हानामुपरि विन्दुः मत्स्यः सर्वचिन्हानामधः द्विखुरं द्विशफमाद्याद्विन्दोद्व्यङ्गुलमानतः। इन्द्र-चापादध इत्यर्थः पद्माकारावर्त्यतुल्या प्रान्ते त्रैकोणिकं पताकास्थानीयं यस्याः सा सप्तम्या अलुक् एवञ्च त्रैकोणिकं दक्षिणत एव ज्ञेयं वामत ऊर्ध्वरेखोपहतेःषोडश चिन्हं पादद्वय एव ज्ञेयम् अनियमेनोक्त-

### केनचित्कृता विशुद्धरसदीपिका ।

त्वात्तु जम्बूफलसमतया निर्देशेन तद्वर्णन्तदाकारमेव चिह्नं तत् नतु रेखाकारं चक्रशङ्खौ तु दक्षिणपादाङ्गुष्ठमूले चक्रं बिभर्त्यजः तथा वामपदाङ्गुष्ठम् लतस्तन्मुखं दरमिति स्कान्दानुसारेणैव ज्ञेयौ छत्रन्तु प्राधान्यात् दक्षिणचरण एव ज्ञेयम् तत्रापि चिह्नान्तरशून्यप्रदेशत्वाच्चक्राध एव ज्ञेयं तासां दर्शनप्रकारश्च श्रीविष्णुपुराणे—

विलोक्यैका भुवं प्राह गोपीगोपवराङ्गना ।
पुलकाञ्चितसर्वाङ्गी विकाशिनयनोत्पला ॥
ध्वजवज्रांकुशाब्जाङ्करेखावन्त्यालि पश्यत ।
पदान्येतानि कृष्णस्य लीलालंकृतगामिन इति ॥

एवञ्चोनविंशतिपु कतिचिदेव यत्र तत्र संगृहीतानि इति तेषामसाधारणं प्रयोजनं प्रकृतोपयोगि यथा ध्वजस्य रूपगुणादिभिरनङ्गाद्यनेकसंनायकवृन्दविजेतृत्वं वज्रस्य वैरिविदारणम् अंकुशस्य सर्ववशीकारित्वम् अम्भोजस्य रमास्पदत्वं यवस्याखिलवृत्तिप्रदत्वमिति यथा योगमन्येषामप्यूह्यम् ॥ २५ ॥

ततश्च तैस्तैर्ध्वजादिशोभितैः वीप्सा मध्ये मध्ये दूर्वादिमय्यां भूमौ विच्छिन्नत्वात् एता विपक्षाः आर्त्ता इत्युक्तेः अत एवाबलाः शुद्धप्रेमाख्येन मदीयताभिमानेन बलेन हीनाः यद्वा अबलीयन्ते इत्यबलाः अधीरत्वादग्रसरत्वादवाङ्मुखीभूता इत्यर्थः यद्वा अग्रत इति वध्वा इत्यनेन योज्यम् अग्रतो वर्त्तमानाया वध्वा इत्यर्थः । ततश्च तावत्पर्यन्तं श्रीकृष्णेनैवाङ्के निधाय नयनात् स्त्रीत्वज्ञानञ्च तत्पादानां श्रीकृष्णचरणापेक्षया द्व्यङ्गुलोनेत्वन लघुत्वात्तत्तुचिताङ्कवत्त्वाच्च वध्वा इति मुनीन्द्रस्यानुरागोक्तिः तस्या एव परमसौभाग्यवतीत्वेन स्थापयिष्यमाणत्वान्नववध्वा इत्यर्थः । सुपृक्तानि सानन्दं सोत्कण्ठं सन्निकृष्टतया गमनात् यद्वा अबलाः तस्याः पदचिह्नानि विलोक्यैव सौभाग्यबलहीना जाता इत्यर्थः तानि चोक्तानि सुधर्माध्वबोधे कुमारः —

श्रीकृष्णप्राणनाथायाः राधाया परमश्रियः ।
यवं वामपदाङ्गुष्ठमूले सन्ध्यङ्करूपिणम् ॥
अनुवृत्तञ्च तन्मूलतळे चक्रं सुलाञ्छनम् ।
निम्ने छत्रं ततः पश्चात्सन्ध्यायेदग्रशृङ्गकम् ॥
आरभ्याङ्गुष्ठतर्जन्योरन्तरा यावदर्द्धयत् ।
ऊर्ध्वरेखा नामिकाया मूलदेशे तथाम्बुजम् ॥
ध्वजमग्रोच्छ्रयं पश्चात्तथा दक्षिणचेलकम् ।
सपताकं ततः पश्चात्कल्पवल्लीं किळोर्ध्वगाम् ॥
तस्या दक्षिणपार्श्वे वै पङ्कजं वसुपत्रकम् ।
कनिष्ठामूलतलतो दक्षिणे चक्रमंकुशम् ॥
अग्रशृङ्गं समाध्यायेद्राधापदप्रविष्टधीः ।
पार्ष्णौ तिर्य्यञ्चमर्द्धेन्दुमर्द्धभागाग्रखण्डितम् ॥
तस्य दक्षिणपार्श्वे वै वलयं मम चिन्तयेत् ॥
श्रीराधादक्षिणे पादे चिह्नान्यथ विचिन्तयेत् ।
अङ्गुष्ठमूलतलतः शङ्खमग्राल्परन्ध्रकम् ।
चतुष्टयाङ्गुलीमूलतलतोऽद्रिं क्रमादृजुम् ॥
ततःपश्चाद्रथं त्वग्रमुखं सर्वाङ्गसंयुतम्
वामपार्श्वेऽग्रकोटिं तु शक्तिं दक्षे गदां स्मरेत् ।
तत्पश्चिमे तु पार्ष्णिस्थे प्रायो ह्यग्रमुखं झषम् इति ॥

विशेषजिज्ञासायां भक्तिमञ्जूषा द्रष्टव्या ॥ २६ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

काश्चिद् दृष्ट्वा अन्याः प्रति दर्शयन्त्यः प्रेमपथिमात्सर्य्याद्यभावं परस्परोपकारशीलत्वञ्चोपादिशन्त्य आहुः । पदानीति । एतानि नन्दसूनोर्महात्मनः पदानि ध्वजाम्भोजादिभिर्व्यक्तं लक्ष्यन्ते इत्यन्वयः तत्र यद्यपि महात्मनोऽसंख्यातब्रह्माण्डतदधिष्ठातृब्रह्माद्यधिष्ठानस्य नन्दसूनुत्वमिति चित्रं यानि च पदानि लक्षन्ते श्रुत्यापि लक्षणावृत्त्या कथञ्चिद्बोध्यन्ते नतु साक्षात्तानि व्यक्तं भान्तीत्यपि चित्रं तथाप्यतिचित्रं प्रेममाहात्म्यं भगवतस्तद्वश्यत्वञ्च येन महात्मनोऽपि नन्दसूनुत्वं दुर्लक्षतत्पदानाञ्च व्यक्तत्वमिति ध्वनिः ध्वजाम्भोजवज्रांकुशयवादिभिरित्यत्रादिशब्देन पाद्मादिसंगृहीतानिग्राह्याणि तथा चोक्तं पाद्मे ब्रह्मनारदसम्वादे कृष्णपदमुद्दिश्य ।

षोडशैव तु चिह्नानि मया दृष्टानि तत्पदे ॥
दक्षिणे चाष्टचिह्नानि इतरे सप्त एव च ।
ध्वजा पद्मं तथा वज्रमंकुशो यव एव च ॥
स्वस्तिकं चोर्ध्वरेखा च अष्टकोणं तथैव च ।
सप्तान्यानि प्रवक्ष्यामि साम्प्रतं वैष्णवोत्तम ! ॥
इन्द्रचापं त्रिकोणञ्च कलशं चार्द्धचन्द्रकम् ।
अम्बरं मत्स्यचिह्नञ्च गोष्पदं सप्तमं स्मृतम् ॥
षोडशञ्च तथा चिह्नं शृणु देवर्षिसत्तम ।
जम्बूफलसमाकारं दृश्यते यत्र कुत्रचित् इति ॥

श्रुतौ च शङ्खध्वजातपत्रैस्तु चिह्नितं चरणद्वयम आदिवाराहेतु व्रजमाहात्म्ये यत्र कृष्णेन सञ्चीर्णं क्रीडितञ्च यथासुखं चक्राङ्कितपदा तेन स्थाने ब्रह्ममये शुभ इति शङ्खचक्रातपत्रैरूनविंशतिः भवन्ति तत्र ध्वजो भक्तानामभयायाम्भोजं मनोऽलिमोहनाय वज्रः पापागध्वंसायांकुशो मनोमत्तगजवशीकाराय यवो जगज्जीवनत्वसूचनाय स्वस्तिकं शरणापन्नस्वस्तये ऊर्ध्वरेखानूपगतानामूर्ध्वप्राप्तिसूचिका अष्टकोणञ्च स्वजनानामष्टदिक्षु सर्वतः स्वप्राप्तेरष्टसिद्धीनाञ्च तदनुवृत्तत्वस्य सूचनाय चापशङ्खचक्राणि भक्तरक्षार्थं त्रिकोणन्तु त्रिगुणत्रिभुवनाद्याश्रयत्वदेवतिर्यङ्नरत्रिविधसर्वाराध्यत्वमुक्तमुमुक्षुविषयित्रिविधसर्वेष्टत्वमनोवाक्कर्मत्रिविधसेव्यत्वादिसूचकम् अमृतकलशस्तूपगतामृतत्वप्राप्तिमाङ्गल्यादिव्यञ्जकश्चन्द्रस्तुशिवाशिवादिशिरोभूषणस्य पादानुगतत्वसखिजनाल्हादकत्वादिबोधकः अम्बरन्तु व्यापकत्वेऽप्यसङ्गत्वद्योतकं मत्स्यस्तु कामध्वजत्वेन स्वानुमतकामिनीनां कामपूरकत्वज्ञापकः गोष्पदं चरणापन्नानां संसारसिन्धोः गोष्पदत्वापादकं जम्बूद्वीपवासिनां चरणसेवनप्राधान्यप्रख्यापकम् आतपत्रं तापत्रयापहमिति बोध्यम् ॥ २५ ॥

भगवत्पदपद्व्यैव तत्प्राप्तिमुपदिशन्तीनां तत्पदव्या तदन्वेषणमाह । तैस्तैरिति । तादृगसाधारणलक्षणान्वितैर्ध्येयतया स्वबुद्धिस्थैर्भगवता कृपया बहिः प्रकटितैः पदैः पद्यते कृष्ण एभिरिति तथाभूतैस्तत्पदव्यां कृष्णप्राप्तिमार्गमन्विच्छन्त्यो ऽनुकूलभावेनेच्छन्त्यः

श्रीरामनारायणकृतभावभावविभाविका।

अवलाश्रियो यद्वा विरहदुःखकानर्येण बलहीनाः यद्वा रूपगुणयौवनादियलजातमानेन प्राप्तभगवद्वियोगखेदविकलतया अवलास्त्यक्तमानादिवला यतोऽतएव तत्पदैस्तत्पदवीमन्विच्छन्त्यः अनेन तपोयोगादिस्वसाधनबलमनपेक्ष्य तत्पदाश्रयणेनैवतत्पदवीलाभो भवतीति ध्वनितम् एवमन्विच्छन्त्योऽग्रतोवध्वा नित्यवृन्दावनलीलायां गोलोकादौ च नित्यवधूत्वेन प्रासेद्धाया लोकोद्धाराय परभक्त्यात्मना प्रकटितपृथक्त्वाया वस्तुतस्तु नित्याचिदानन्दघनकृष्णचन्द्राल्हादिन्याः प्रभायाः पदैस्तत्प्रापकैः सुष्ठु यथा स्यात्तथा पृक्तानि मिलितानि विलोक्य समाधौ सिद्धतत्पदद्दर्शिनां मायोपहितपदद्दर्शने विक्षेपार्तिवद्वधूपदद्दर्शने सापत्न्यभावेन जातमान्स र्य्यतया आर्ता दुःखिताः समब्रुवन्निति केचित् क्षमतेतु न क्रोधोनच मात्सर्यमित्यादिना भगवत्पदवीमनुगतानां मात्सर्याद्यनुपपत्तेः निवारणतयाभिव्यक्तत्वेन प्रेमवृत्तिप्रतिफलितत्वेन च द्विगुणीभूतस्वरूपानन्दवत्परभक्तिरूपप्रियापदसुपृक्तनन्दकृष्णपदानि विलोक्य मात्सर्यादिकापथ्यराहित्येनासमन्तात् ऋतं सत्यमेव यासां बहिरन्तर्निष्कपटस्नेहवत्यः समब्रुवन्नित्यर्थः॥ २६॥

---

श्रीधनंपतिसूरिकृतभागवतगूढार्थदीपिका।

तानि दृष्ट्वा परस्परमाहुः। एतानि स्पष्टं नन्दसूनोर्महात्मनः सन्ति परमात्मनो नन्दसूनुत्वेनावतीर्णत्वात्तत्पदानां सर्वविलक्षणत्वादिति भावः यद्वा नारायणसमो गुणैरित्युक्त्वान्महात्मनः सर्वोत्कृष्टस्य हि यतः ध्वजादिभिर्लक्ष्यन्ते ध्वजादीनां धारणस्थानाद्युक्तं स्कान्दे—

> दक्षिणस्य पदाङ्गुष्ठमूले चक्रं बिभर्त्यजः।
> तत्र भक्तजनस्यास्ति षडूर्मिच्छेदनाय सः—
> मध्यमाङ्गुलिमूले च धत्ते कमलमच्युतः।
> ध्यानचित्तद्विरेफाणां लोभनायातिशोभनम्॥
> पद्मस्याधो ध्वजं धत्ते सर्वानर्थजयध्वजम्।
> कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम्॥
> पार्ष्णिमध्येऽङ्कुशं भक्तचित्तेभवशकारिणम्।
> भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्वणि॥
> आदिपदात्स्वस्तिकादिसंग्रहः।
> तथाच श्रीकृष्णमेवाधिकृत्य पाद्मे॥
> षोडशैव तु चिन्हानि मया दृष्टानि तत्पदे।
> दक्षिणेचाष्टचिन्हानि इतरे सप्त एव च॥
> ध्वजः पद्मं तथा वज्रमङ्कुशो यव एव च।
> स्वस्तिकं चोर्ध्वरेखा च अष्टकोणं तथाष्टमम्॥
> इन्द्रचापं त्रिकोणञ्च कलशश्चार्धचन्द्रकम्।
> अपरे मत्स्यचिन्हं च गोष्पदं सप्तमं स्मृतम्॥
> षोडशञ्च तथाचिन्हं शृणु देवर्षि सत्तम!।
> जंबूफलसमाकारं दृश्यते यत्र कुत्रचिदिति॥
> शङ्खध्वजातपत्रैश्च चिन्हितं चरणद्वयमिति।

तापिन्युक्तञ्च चक्राङ्कितपदा तेनेति वाराहाच्च चक्रशङ्खातपत्रैः सहैकोनविंशतिः तत्र सर्वाणि चिन्हानि श्रीकृष्णपादयोरेव तदुक्तं पाद्मे—

> अङ्कान्येतानि भो विद्वन्! पश्यन्ते तु यदा तदा।
> कृष्णाख्यन्तु परं ब्रह्म सुविज्ञातं न संशयः॥
> द्वयं वाथ त्रयं वाथ चत्वारः पञ्च चैव च।
> दृश्यन्ते वै द्विजश्रेष्ठा! अवतारे कथञ्चनेति॥

निवृत्तिपक्षे नन्दसूनोः आनन्दरूपसूर्यस्य परमात्मन एतानि चिदाभासलक्षणानि पदानि व्यक्तं किञ्च भगवच्चरणारविन्दस्थध्वजादिभिः ध्यातैरर्थचरणासक्तिसर्वानर्थविजयपापधासनाध्वंसमदनिवृत्तिवैराग्यादिजनकैर्युक्तानि लक्ष्यन्ते तथाच सत्त्वगुण उद्रिक्ते भगवच्चरणारविन्दध्यानासक्ते ऽन्तःकरणे कामक्रोधादिनिवृत्त्या पुनः पुनर्भगवद्ध्यानात्मप्रत्ययनिष्ठचिदाभासैर्भगवत्स्वरूपपर्यन्तं गम्यमानैस्तत्स्वरूपप्राप्तेरिति भावः॥ २५॥

भगवतः पदानीति निश्चित्य तैस्तैस्तथाभूतैरेव भुवि संलग्नैः पदैस्तस्य पदवीं मार्गमन्वेषणं कुर्वन्त्यः स्वभावत एवाऽवलाः विरहान्वेषणाभ्यां विशेषतो बलहीनाः कृताः वध्वाः श्रीमत्या राधायाः पदैः भुवि संलग्नैः संपृक्तानि मिश्रितानि विलोक्य तन्मध्ये तत्तत्पर्य्यायत्यो मानिन्यः काश्चिदार्ताः पीडिताः सत्यः समब्रुवन् प्रथममतिविह्वलत्वात्तत्पदोपरि तासां दृष्टिर्न पतिता भगवत्पदद्दर्शनेनैपरस्माहितानां किञ्चिद्दूरं गतानां तदुपरि दृष्टिः पतितेति ज्ञेयं निवृत्तिपक्षे तैस्तैर्यथोक्तैरेकाग्रतां प्राप्तैः साभासप्रत्ययैरग्रे भगवत्स्वरूपान्वेषणप्रतिपादयन्त्यो ऽवलाः प्रत्यक्षादिभिः उक्तानुवादपरत्वान्निर्बलाः द्वा सुपर्णेत्याद्यभेदानुवादिन्यः श्रुतयः मुख्यवधूस्थानीयायास्तत्त्वमसि श्रुतेः स्त्रीभिः पदैः सुपृक्तानि तदर्थविचारपरत्वेन तत्संमिश्राणि विलोक्यार्त्ताः सत्यः समब्रुवन्॥ २६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

व्यक्तं निश्चितम्॥ २५॥

सुपृक्तानि सुष्ठु मिश्राणि॥ २६॥

---

भाषा टीका

उन चरणों को देख बोलीं यह तो याही महात्मा नन्दनन्दन के चरण चिन्ह हैं जिन में कि ध्वजकमल वज्र अंकुश यव आदि के चिन्ह दीखें हैं॥ २५॥

उन चरण न के देखते देखते कृष्ण के पगेको ढूंढती गोपी जब आगे गई तब काउ प्यारी वधू के पाद चिन्हन को मध्य मे मिले देख बडी दुखित हो बोलवे लगीं॥ २६॥

कस्याः पदानि चैतानि यातया नन्दसूनुना ।
अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥
अनयाराधितो नूनं भगवान् हरिरीश्वरः ॥
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेनांसे न्यस्तः प्रकोष्ठो यस्याः करेणोर्हस्तिन्याः ॥ २७ ॥
रह एकान्तस्थानम् ॥ २८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

किं तदाह । कस्या इत्यादिना ध्रुवमित्यन्तेन । नन्दसूनुना सह यातायाः एतानि कस्याः पदानि परिचीयन्तामितशेषः श्रीभगवाना स्वांसेन तत्प्रकोष्ठस्य न्यसनं च रसविशेषेण किंवा रात्रौ स्खलन्त्यास्तस्याः सुखगमनार्थं बलाद्दूरे नयनार्थं वा अनेन तस्यामधिकप्रीतिः सूचिता तामेव दृष्टान्तेनाहुः । करेणोरिति । तयोरपि काममदेन प्रीत्या तथैव गमनात् ॥ २७ ॥

पश्चाच्च श्रीराधादेव्यास्तानि पदानि परिचित्याश्वस्तास्तन्नामनिरुक्तिद्वारा तस्या भाग्यं सहर्षमाहुः । अनयेति । नूनं वितर्के निश्चये वा हरिः सर्वदुःखहर्त्ता भगवान् श्रीनारायण ईश्वरः भक्तेष्टप्रदानसमर्थः स्वतन्त्रोऽपि वा अनयैवाराधितः आराध्य वशीकृतः नत्वस्माभिः अन्यथा अस्माकमेतच्छिरहार्त्यौघसम्भवः राधयति आराधयतीति श्रीराधेति नामकारणं च दर्शितं यत् यस्माद्गोविन्दः गोकुलेन्द्रत्वेन तस्या अस्माकञ्च तुल्योऽप्यसौ नोऽस्मान् विशेषेण हित्वा दूरतो निशि वनान्तस्त्यक्त्वा तत्रापि रहः अस्मदगम्ये एकान्तस्थाने यामनयत् यद्वा गोविन्द एवासावनया राधितः तस्याः परमभाग्यबोधनार्थं गोविन्दमेव निर्दिशन्ति भगवान् निजाशेषैश्वर्य्यप्रकटनपरः अतो हरिः सर्वार्त्तिहर्ता किम्वा रूपगुणादिना सर्वमनोहरः ईश्वरः व्रजजनप्राणनाथः अतस्तदनुभवस्तैयव कृत इति भावः । अन्यत्समानं यच्छब्दद्वयं हेतोस्तस्यैव दार्ढ्यार्थं किम्वा यत् प्रीतः तस्माद्यामनयदिति वाक्यद्वयकल्पनया योज्यम् एवमग्रेऽप्यूह्यं यद्वा यन् रहोगच्छन् ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र सर्वा एवाहुः । कस्या इति । अत्र स्त्रीत्वज्ञानं तत्पादानां लघुत्वात् निम्नत्वतदुचिताङ्कलाक्षितत्वादिना च इति ज्ञेयं नन्दसूनुना इति पूर्ववत् एतानि कस्याः पदानि परिचीयन्तामिति शेषः । श्रीभगवता स्वांसे तत्प्रकोष्ठन्यसनं च यद्यपि रसविशेषेणैव तथापि रात्रौ स्खलन्त्यास्तस्याः सुखगमनार्थं बलाद्दूरे नयनार्थञ्च भवति । अनेन तस्यामधिकप्रीतिः सूचिता । तामेव दृष्टान्तेनाहुः । करेणोरिति । तयोरपि काममदेन प्रीत्या तथैव गमनात् ॥ २७ ॥

तत्र सखीनामन्तरङ्गत्वेन गाम्भीर्यात् प्रतिपक्षाणामापाततो दुःखव्याप्तत्वात् तटस्थानाञ्च तदनभिनिवेशात् प्रथमं तस्याः सुहृद एवाहुः । अनयेति । नूनं वितर्के निश्चये वा । हरिः सर्वदुःखहर्ता भगवान् श्रीनारायणः । ईश्वरः भक्तेष्टप्रदानसमर्थः स्वतन्त्रोऽपि वा । अनयैव आराधितः आराध्य वशीकृतः नत्वस्माभिः । राधयति आराधयतीति राधेति नामकारणञ्च दर्शितं । तत्र हेतुर्गोविन्दः नोऽस्मान् विशेषेण हित्वा दूरतो निशि वनान्तस्त्यक्त्वा । तत्रापि रहः अस्मदगम्ये एकान्तस्थाने यामनयत् यद्वा सर्वा अप्यस्मान् विहाय यन् गच्छन्नपि यामेव रहोऽनयदित्यर्थः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह । कस्या इत्यादिभिः सार्द्धैरष्टभिः । करिणा सहकारिण्या इव नन्दसूनुना सह गच्छन्त्याः कस्याश्चिद्वध्वाःपदानि हे गोप्यः! पश्यत कथं भूतायाः अंसे स्कन्धे न्यस्तः प्रकोष्ठो यस्यास्तस्याः अन्यथैवंविधः पदानां सम्पर्कौ न स्यादिति भावः ॥२७॥

अनया कृष्णेन सह यातया भगवान् हरिरीश्वरो नूनमाराधितः पूर्वजन्मनीति शेषः । कुतः यद्यस्मान्नोऽस्मान् सर्वा विहाय गोविन्दः प्रीतियुक्तो रह एकान्तं यामनयत् नह्यनाराधितेश्वराणां रहसि गोविन्दसङ्गः सुलभ इति भावः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रकोष्ठः करतलमूलभागः करिणा सहितायाः करिण्याः पदानि यथा स्वांसन्यस्तहस्तायाः करिण्याः पदैः सम्पृक्तानि करिणा कृतानि पदानि वा ॥ २७—२८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कस्याः पदानीत्यादि ॥ २७—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

यत् यस्मात् प्रीतस्तस्यामिति शेषः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तासामसूयावाक्यान्याह । कस्याः पदानीति । पुरुषोऽत्र न संभाव्यते नापि ग्रामान्तरस्त्रियः अतोऽस्मन्मध्य एव कस्याश्चिद्भविष्यन्ति अयं प्रश्न इतरपरिच्छेदेन विशेषज्ञानार्थः नन्वत्र पदे-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

लक्षणानि सन्ति चकाराद्भगवतः तस्याश्च चेष्टाज्ञापकानि चिन्हान्यप्युच्यन्ते सा हि नन्दसूनुना सहैव याता अन्यथा भगवान्न गच्छेत् तथैव प्रायेण नीतः स्वापेक्षया तस्याः महद्भाग्यमाहुः अंसे न्यस्तः प्रकोष्ठभागो यस्याः प्रकोष्ठभागो भगवदीयः करतलादर्वाचीनभागः तावता करेण कश्चित्सम्बन्धः सूचितः तावदेव नैकट्यं पदयोरिति किञ्च मध्ये नयोरसाविर्भावोऽपि जायत इति दृष्टान्तेनाहुः । करेणोः करिणा यथेति करेणोर्हस्ते करिणा यथा हस्तः प्रसार्यत इति करेणुः स्त्री तस्या अंसे यथा करी हस्तं प्रसारयति तथा पदानि मिलन्ति सम्मुखश्च भवति उद्घृष्टकण्ठो भवति स्पर्शसुखमेव प्रधानमिति गजो दृष्टान्तीकृतः एवं त्रिविधा गोपिका उक्ताः ॥ २७ ॥

गुणातीताया वाक्यद्वयमाह दोषाभावप्रतिपादकं गुणप्रतिपादकञ्च तामसतामसा भगवदाविष्टा न भवतीति । अनयाराधित इति द्वाभ्याम् । तत्र प्रथमं तया सह विशेषरमणे तस्या भाग्यं हेतुत्वेनाहुः । अनया हरिर्नूनमाराधितः यद्यप्यस्माभिरप्याराधितः तथापि नूनं नाराधितः भगवदनाराधकैरपि फलत्वात् भगवतः संबन्धसम्भवात् आराधितेतु फलंस्ववशे भवति तत्रापि तारतम्यं ननु तुल्यकर्मणां मध्ये कथमवान्तरभेदः तत्राहुः भगवानिति सामग्रीभेदात् कर्माणि सर्वत्र विलक्षणानि भवन्ति तदवान्तरवैलक्षण्यं स एव जानाति अतस्तथा फलनिरूपको जातः ननु तथापि वयन्तथा न ज्ञापनीयाः दुःखसाधकत्वादिति चेत्तत्राहुः । हरिरिति । सहि सर्वदुःखहर्त्ता वैलक्षण्यज्ञापनार्थं तथा बोधितवान् ननु भक्तिस्तुल्येति कथं भक्तानुसारेण तुल्यं फलं न कृतवान् तुल्यफलत्वेन कर्म कुतः स्वीकृतवान् तत्राहुः । ईश्वर इति । कदाचिद्भक्तिमुररीकरोति कदाचित्कर्म कदाचित्स्वेच्छां नहीश्वरो नियन्तुं शक्यः अस्मान् भक्तिमार्गे योजयति न कर्ममार्ग इति अत एव नः अस्मान्विहाय गोविन्दः साधारणेन्द्रोऽपि रह एकान्ते प्रीतः सन् तामेवानयत् कामरसः स्त्रीसमूहापेक्षयाप्येकस्यामेव मुख्यतयोत्पद्यते तथा करणे प्रीतिर्हेतुः प्रीतौ भक्तिः कर्म वा ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अंसन्यस्तेति यस्याः स्कन्धे नन्दसूनुना वामप्रकोष्ठो न्यस्त इत्यर्थः ॥ २७ ॥

एवश्चिन्हैरेव तां श्रीवृषभानुनन्दिनीं परिचित्यान्तराश्वस्ता बहुविधगोपीजनसंघट्टे तत्र बहिरपरिचयमिवाभिनयन्त्यस्तस्याः सुहृदस्तन्नामनिरुक्तिद्वारा तस्याः सौभाग्यं सहर्षमाहुः । अनयैव नूनमिति निश्चये हरिर्भक्तजनदुःखहर्त्ता भगवान्नारायणा ईश्वरो भक्ताभीष्टदानसमर्थ आराधितः नत्वस्माभिः यतो नो विहायेत्यादि ततश्च राधयतीति राधेति नामव्यक्तीबभूवेति मुनिः प्रयत्नेन तदीयनामाप्यधात् परं किन्तु तदास्यचन्द्रात् स्वयं निरेति स्म कृपा तु तस्याः सौभाग्यं भेर्य्या इव वादनार्थं यद्वा हे अनयाः अतिमहीयस्या तया सह वृथैव साम्याहङ्काराददनीति मत्यः नूनं हरिरयं राधितः राधामितः प्राप्तः शकन्ध्वादित्यात्परूपं भगवान् सुन्दरः कामातुरः स्वकीर्तिप्रख्यापको वा भगं

श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यरः ईश्वरः युष्मान् वञ्चयितुं समर्थः यत् यस्मान्नो सुन्दरीर्विहाय गोविन्दः गास्तस्या इन्द्रियाणि रमणार्थं विन्दति विन्दयतीति वा सः तस्याश्चपदचिन्हान्युज्ज्वळनीलमणितट्टीकादृष्ट्या लिख्यन्ते वामचरणे अङ्गुष्ठमूले यवः १ तत्तले चक्रं २ तत्तले छत्रं ३ तत्तले वलयं ४ अङ्गुष्ठतर्जनीसन्धिमारभ्य यावदर्द्धचरणमूर्ध्वरेखा ५ मध्यमातले कमलं ६ तत्तळे ध्वजः सपताकः ७ तत्तले वल्ली ८ पुष्पं च ९ कनिष्ठातले ऽङ्कुशः १० पार्ष्णावर्द्धचन्द्रः इत्येकादश ११ दक्षिणचरणे अङ्गुष्ठमूले शङ्खः १ तत्तले गदा २ कनिष्ठातले वेदी ३ तत्तले कुण्डलं ४ तत्तले शक्तिः ५ तर्जन्याद्यङ्गुलितले पर्वतः ६ पर्वततले रथः ७ पार्ष्णौ मत्स्य इत्यष्टौ ८ मिलित्वा एकोनविंशतिः ॥ २८ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

किमब्रुवन्नित्यपेक्षायामाह । कस्या इति । सामर्षोक्तिः चकारः समुच्चयार्थः नन्दसूनुनेति बालत्वसूचकेन पदेन प्रेमानभिज्ञत्वं द्योतितं तत एव नन्देति सावज्ञोक्तिरपि । यातायाः इति । कर्त्तरि क्तः ततश्च स्वयमेव यातायाः नतु तेन नीतायाः इत्यर्थः । एवं चासूया व्यञ्जिता तथा अंसेन्यस्तः न्यासीकृतः नतु दत्तः प्रकोष्ठो विस्तृतकरो नतु बाहुरित्यर्थः । तत्रश्चौदासीन्यमेव विशदीकृतं वस्तुतस्तु अंसे न्यस्तोऽर्पितः प्रकोष्ठोऽर्थात्तेन यस्यास्तस्याः इदं यद्यपि रसविशेषेणैवं तथापि मदनालसत्वेन स्खलितगतेस्तस्या अवलम्बनदानेन सुखगमनाय दूरनयनाय चेति गजगामित्वं दृष्टान्तयन्ति करेणोरित्यादिना ॥ २७ ॥

इत्थन्तासां सासूयोक्तिमसहमानास्तदेकप्राणाः प्राणसख्यस्तासां क्षोभाय किञ्चित्प्रकाश्याहुः । अनयेति । अहो कस्या इति किन्तत्परिज्ञानेन या कापि परमसौभाग्यवती सर्वाभिरप्यस्माभिः परिचरणीयेत्याशयेन गोप्यः किमाचरीदित्यादियत्तद्भाग्यमभिनन्दन्ति अनयेति सर्वं वाक्यं सावधारणमिति न्यायादनयैवेत्यर्थः । नत्वस्मदादिभिरिति निर्वेदः राधितः पूजितः नूनं वितर्के निश्चये वा कोऽसौ हरिः सर्वदुःखहर्त्ता भगवान् श्रीनारायणः ईश्वरः भक्तेष्टप्रदानसमर्थः तत्र हेतुः यदित्यादि गोविन्दो गोकुलयुवराजः नः अस्मान् प्रेमातुरास्तदेकपरा अपि विशेषेण बुद्धिपूर्वकं हित्वा यामनिच्छतीमपि स्वयमेव रहः अस्माभिरप्यलक्ष्ये देशेऽनयत् तत्कुतः यतः प्रीतः प्रेमपरवानित्यर्थः । यद्वा यो हरिरीश्वरो भगवानित्यादिनामभिः श्रीभागवतादिषु प्रसिद्धः सर्वस्य वशी सर्वस्येशान इति स उ एव वामनीत्यादिना श्रुतिशिरोभिरपि गीतः नारायणसमो गुणैरित्याद्यभियुक्तोक्त्यास्माभिरपि निर्णीतः स चानया सह यातया राधितः वशीकृतः सन् गोविन्दः श्रीवृन्दावनेश्वरीत्यादस्यास्तस्य च वृन्दावनेश्वरत्वाभिन्निभावः । वृन्दावनेतु गोविन्दमिति वराहतन्त्रोक्तेः इयमेव दैर्घ्यांगत्युच्यते यल्लीलायामपि प्रयुक्ता सिद्धान्तमेव प्रकाशयति अथवा अनया सह आराधितो गोविन्दः हरिः सर्वदुःखहर्त्ता अन्यथा सर्वकर्त्तेत्यर्थः तदुक्तं सम्मोहनतन्त्रे—

> गौरतेजो विना यस्तु श्यामतेजः समर्चयेत् ।
> जपेद्वा ध्यायते वापि स भवेत्पातकी शिवे ! ॥

केनचित्कृता विशुद्धरसदीपिका ।

स ब्रह्महा सुरापी च स्वर्णस्तेयी च पञ्चमः ।
एतैर्दोषैर्विलिप्येत तेजोभेदान्महेश्वरि ! ॥
तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकमिति ।

अत्र ज्योतिरित्येकत्वनिर्देशाच्छक्तिशक्तिमत्त्वमपि निराकृतम्योर्द्वयं तथा ईश्वरः सर्वविधानसमर्थः नान्यथा एतत्प्रसादोपनतमेवैतस्यैश्वर्य्यादिकमिति एकत्वेऽपि प्राधान्यं दर्शितं तथा भगवान् सकलैश्वर्य्यमाधुर्य्यप्रकाशकः यद्वा ईश्वरो हरिश्चेत्यैश्वर्य्यमाधुर्य्यप्रतिपादके विशेषणे वस्तुतस्तु अनया सह तया गोविन्दोभगवान् एतत्कृतैवास्य भगवत्तेति भावः । तथाराधितः राधामितः प्राप्त इत्यर्थः। द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरित्यनेन समासः यद्यपि श्रितादिषु इतशब्दो नास्ति तथापि द्वितीयेति योगविभागात्समासः ततः शकन्ध्वादिषु पररूपं वाच्यमित्यनेन पररूपमितिसाधुः यद्वा राधामाख्यातवान् राधामाचष्टे राधयतीति वा राधितः राधीति धातोः क्ते इडागमे सिद्धः शेषं पूर्ववत् अथवा यत्यतो अनयाराधितो वशीकृतस्तत एव भगवान् भाग्यवानित्यर्थः अस्या वशवर्तितैव भाग्यं नतु निजस्य सर्ववशीकारित्वमिति भावः तत एव हरिः मनोहरः अर्थादस्माकं ननु तस्याः प्रियसखीनां कथमसौ मनोहरः तथा सति कान्तभावस्फूर्त्यां सख्यविरोधस्तत्राहुः ईश्वरः परमाराध्यः नतु प्रियः कान्त इति यावत् रसं मे राधाया भजति किल भावो व्रजमणाविति श्रीसुधानिधेः रतिर्देवादिविषया भाव इति कविसमयानुसारेणेदं रसं सख्यमित्यर्थः सच भावस्तत्रैव यथा रसघनमोहनमूर्तिं विचित्रकेलीमहोत्सवोल्लसितं राधाचरणविलोडितरुचिराशिखण्डं हरिं वन्दे इति तदेवं पर्य्यायोक्त्या श्रीराधेयमिति व्याञ्जितं साक्षान्नामानुक्तिश्च विपक्षादिसमुदायगोपनीयत्वाद्रसिकानां मते व्यञ्जनाया एवमुख्यत्वं ननु मुख्याया इति सहचरीणामभिप्रायः श्रीहरेरात्मत्वेन वक्ष्यमाणायाः परपरब्रह्मभूताया मनोवचोऽगोचराया अनिर्देश्यत्वाद्गौरवाच्चानामानुक्तिरिति श्रीमुनीन्द्राभिप्रायः आत्मना रमयेत्यन्यत्रापि आत्मनश्चानिर्वचनीयत्वेनैव कथनम् अवचनेनैव प्रोवाचेत्यादिश्रुतेरिति संक्षेपः ॥ २८ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तद्वाक्यान्येवाह । कस्या इत्यादिना । तत्र प्रथमं परीक्षार्थं तासां परस्परवचनं कस्याः पदानीति भो सख्य ! एतानि सम्पदा मिश्रविपदा सदृशानि कस्याः पदानि ननु किन्तत्परिज्ञानेन तत्राहुः । नन्दसूनुना यातायाः । स्वसुखाय सर्वाः सखीः त्याजयित्वा स्वयन्तेन सह गतायाः नहि केवलं स्वनयनविलासविभ्रमैस्तन्मतिविभ्रमेण तन्नयनमपितु अंसन्यस्तप्रकोष्ठायाः हरिचन्दनभुजसदृशसचन्दनहारभुजमूले न्यस्तो मणिधरविषधरनागिनी सगानसभूषणसमानप्रकोष्ठो यया तस्याः अनेन सर्वासां प्राणवल्लभं बलाद्ग्राहनात् कृष्णप्रणयनेन प्रणयपथविपरीताया इति ध्वनिः तत्र दृष्टान्तमाहुः । करिणा सह यातायाः करेणोर्यथा अत्र दृष्टान्तेन स्वीयमदमोहितत्वं स्पर्शसुखाधिक्येन विस्मृतमन्मर्य्यादतया पशुवृत्तित्वञ्च सूचितमिति केचित् स्वमते मात्सर्य्याभावेन प्रशंसैव तथाहि कस्याः पदानीति जिज्ञासायां निमित्तमाहुः । नन्दसुनुना यातायाः इति । अस्मासु मानकापट्येन प्रेमपथप्रच्युततया स्वदोषेणैव तद्विशुकास्वपि तस्यास्तत्कापट्यभावेन शुद्धप्रेमवत्यास्तत्प्रमवश्येन रसिकशिरोमणिना नन्दसूनुना सह नीतायाः नन्वेवं सा निर्दोषप्रेमवतीचेत्किमिति स्वसखीर्वर्जयित्वा गता तत्राहुः । अंसन्यस्तप्रकोष्ठायाः तेन प्रेष्ठतमेनांसे न्यस्तः स्वप्रकोष्ठो यस्या इति तथा तथा च तत्पारवश्येनास्मत्त्यागेऽपि तया मानाभावेन रक्षिते प्रेमपथे सम्पादिते च तत्प्रसादेऽस्मत्सङ्गमपि भविष्यति सह नयने दृष्टान्तः करिणा सह मिलितायाः करेणोर्यथा तदेतत् स्नेहाधिक्ये स्पर्शसौख्यभरेण गतिसौष्ठवे च दृष्टान्तः यद्वा कथम्भूतेन नन्दसूनुना तदाहुः यथा यथावत्

करिणाल्हादामृतमयमतिहरस्मितसुधासीधुकरयुयुक्तचन्द्रमसा

किम्भूतायास्तस्या करेणोः कं सुखं तद्रूपा रेणवः पादरजांसि यस्यास्तद्रेणुस्पर्श एवास्मत्सौभाग्यवर्धक इति भावः ॥ २७ ॥

तदनुष्ठानसौभाग्यातिशयाभ्यां तन्नामापि निर्द्धारयन्त्य आहुः । अनयेति । अनया नूनं भगवान् ब्रह्मा हरिर्विष्णुरीश्वरः शिवश्चाराधितो यद्यस्माद्देवत्रयवरेण गोविन्दो गवामिन्द्रो गोपालो नोऽस्मान् विहाय यां प्रीतो रहः अनयत् यद्वा अनयः कृष्णोऽनया राधितः ननयतीत्यनयस्तथाभूतोऽप्याराधितः यतोऽनयत्वेन नो विहायाराधितत्वेन यां रहः अनयत् यद्वा नो अनयः यथा स्यात्तथा आराधितः यद्वा अनयेनान्यायेन सख्यधर्मत्यागेनाराधितो यतो नयेन समानप्रेम्णा प्राप्तत्वेन नयनयोग्या नो विहाय अनयेन वैषम्यभावेन यां रहः अनयत् किञ्च गोविन्दोऽपि करुणया सर्वगोगोपगोपिकारक्षकत्वेन सर्वेश्वरोऽपि गवामिन्द्रत्वं गतोऽपि भगवानपि ज्ञानविरागधर्मयशःश्रीप्रभृतिपरोऽपि त्यक्तकारुण्यज्ञानविरागयशोधर्म्मादिमर्यादतया तस्या हरिः सह हरणशीलः पालकश्च न ईश्वरोऽन्यथाकर्तुं समर्थः संहारकश्च जात इति केचित् स्वमतेऽपि मात्सर्यास्वीकारात् अनयैव प्रेमातिशयवत्या भगवान् स्त्रीपारतंन्त्र्यविरुद्धज्ञानाविरागयशोधर्मादिमानपि स्वयं सर्वमनोहरोऽपि ईश्वरः सर्वथा स्वतन्त्रोऽपि गोविन्दो गवामिन्द्रो गवामिन्द्रियाणामिन्द्रो हृषीकेशोऽपि नूनं निश्चितमाराधितो वशीकृतः यद्यस्मात् यत्प्रेमप्रभावाभिभूतरसप्रतिबन्धकहेयतापादकविरागधर्मादिमर्यादो नो विहाय यां रहः अनयत् इतितत्प्रेम्णैव रसपरस्तद्भृत्या नोऽपि भाजिष्यति अत्र राधितः अनया इति राधेति नामापि दर्शितम् ॥ २८ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यदब्रुवन् तदाह । कस्या इति । अहो लघुत्वनिम्नत्वादिचिन्हैश्चिन्हितानि स्त्रिया एतानि पदानि वर्त्तन्ते तथापि कस्याः अस्माकं मध्ये कस्याः नच ग्रामान्तरस्त्रियः यतः नन्दसूनुना सह यातायाः अन्यस्याः प्रेष्ठसाहित्यं न सम्भवति तथाच का वा निष्ठुरा प्रेष्ठमेकान्ते नीतवती सा निश्चेतव्येति भावः । तत्रापि तेन स्कन्धे न्यस्तः प्रकोष्ठभागो यस्याः सा पदानि मनुपृक्तत्वादिदं ज्ञातवत्यः तच्च तस्यां रात्रौ सुखेन नयनार्थं दूरे बलान्नयनाय वा रसाभिव्यक्त्यर्थं वा तदनुरूपं दृष्टान्तमाहुः । करेणोः हस्तिन्याः करिणा हस्तिना यथा एतेन तस्यां तस्य प्रीत्यतिशयः काममदाक्रान्तत्वात्तदधीनता च ध्वनिता निवृत्तिपक्षे एतानि यथोक्तप्रत्ययेषु प्रविष्टानि पदानि कस्याः नन्दसूनुना परमात्मना सहितायाः

धन्या अहो अमी आल्यो गोविन्दांघ्र्यब्जरेणवः ॥
यान् ब्रह्मेशो रमा देवी [1]दध्युर्मूर्ध्न्यघनुत्तये ॥ २९ ॥
तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ॥
यैकापहृत्य गोपीनां रहो भुङ्क्ते ऽच्युताधरम् ॥ ३० ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

प्रतिपादकभावेन सह प्रविष्टायाः तत्राप्यनेन परमात्मना अंसे शुद्धचैतन्यलक्षणे भागे न्यस्तः प्रकोष्ठस्थानीयस्तत्पादभागो यस्याः साहित्ये दृष्टान्तः तथा च का वा अहेतुप्रतिपादने समर्थेत्याद्याः ततस्ताः श्रुतयः युक्तवत्य इति भावः ॥ २७ ॥

तस्याः सौभाग्यमाहुः । अनयेति । तत्राभिज्ञापक्षे अनया तेन सार्धं यातया सख्या नूनं भगवानाराधितः यद्यप्यस्माभिरप्याराधितस्तथाप्यनया यथाराधितस्तथा नाराधितः फलवैलक्षण्यदर्शनात् नचास्माभिरपि तथैवाराधित इति भ्रमितव्यम् आराधनतारतम्यस्य तेन सम्यक् ज्ञात्वैव फलप्रदानाय प्रवृत्तत्वात् यतो भगवान् अत एव हरिः विलक्षणप्रेमवत्याः प्रेमसमानं सुखं दत्तवानिति तदीयदुःखस्य हर्ता ननु तदाराधनपराणामस्माकमन्तर्द्धानेन किमिति दुःखं दत्तवानिति चेत्तत्राहुः । ईश्वरः कर्तुमकर्तुमन्यथा कर्तुं समर्थः तत्कालिकं विलक्षणम् फलमावेदयन्ति । यस्मान्नोऽस्मान्सर्वा विहाय प्रीतः सन् यां रह एकान्तमनयत् गोविन्दः साधारणोऽपि सर्वेन्द्रियग्राहकस्तस्या असाधारणो जात इत्यहो तस्या उत्कर्षातिशय इति भावः। अनभिज्ञापक्षे अनया जन्मान्तरे नूनं निश्चयेन हरिर्दुःखहर्ता महाविष्णुराराधितो नत्वस्माभिस्तत्रापि भगवत्त्वेनेश्वरत्वेन च यतोऽत्र भाग्यातिशयः परमस्वातन्त्र्यं च तथालब्धमित्याशयेनाहुः । भगवानीश्वर इति । यतः सर्वासां रक्षणेन लब्धगोविन्दानामपि नो विहाय प्रीतः यां रहोऽनयत् अनेन राधयत्याराधयत्याऽऽराध्यते वा राधेत्यर्थात्तन्नाम सूचितं तथाच तादृशी राधैवाऽतस्तस्या एव पदानीति किमर्थमसूयया कस्या इत्युक्तं भवतीभिरिति भावः । स्पष्टं नामाक्षरं प्रतिपक्षाणां गोपीनां राधाया वा सङ्कोचान्मुनिना तु ब्रह्मवैवर्तादौ तन्नाम्नः स्पष्टमुक्तत्वात्तत एव गोपीनामानि ज्ञातव्यानीति कस्या अपि नामानुक्त्या सूचितं परोक्षप्रिया हि देवा इति न्यायश्चानुसृतः एतद्ग्रन्थस्य गम्भीरार्थकत्वञ्च ध्वनितं मानिनीपक्षे हे अनयाः ! परमोत्कर्षवत्याः स्पर्द्धाद्याचरणरूपान्यायवत्यः हरिः सर्वासां सामान्यतो मनोहर्ता श्रीकृष्णो राधितः पृथक्तया राधामेवेतः प्राप्तः शकन्ध्वादित्वात्पररूपं यद्वा राधा सर्वापेक्षयाधिक्येन प्रिया सा जाता अस्येति तारकादित्वादितच् यतो भगवान् कामातुरः श्रीमानिति वा कीर्तिमानिति वा

भगः श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्तिष्वित्यमरः।

तत्रापीश्वरः ग्रहणपलायनवञ्चनादौ समर्थः यद्यस्माद्गाः इन्द्रियाणि विन्दति विन्दयति वा गोविन्दः तया परस्परं रमणाभिलाषुः श्रीराधायाः पदचिह्नान्येकोनविंशतिसंख्याकान्युक्तानि तत्र वामचरणे यवं चक्रं छत्रं वलयोर्ध्वरेखाकमलध्वजवल्ली पुष्पांकुशार्द्धचन्द्रा इत्येकादश दक्षिणचरणे शङ्खगदावेदीकुण्डलशक्तिपर्वतरथचमसा इत्यष्टौ निवृत्तिपक्षे तत्पक्षपातिन्यः "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा नेह नानास्ति किञ्चने"त्याद्या आहुः अनया नूनं भगवान् जगत्पालकः हरिः संहर्ता ईश्वर उत्पादकः आराधितः प्रतिपादितः अखण्डैकरसस्य प्रतिपादनेन तत्त्वभगवत्त्वादेः प्रतिपादितत्वात् यद्यस्मात्सकलश्रुतिगम्यत्वाद्गोविन्दोऽपि प्रीतः सन् नो विहाय यां रहः अनयत् तज्जन्यचरमवृत्तिविषयत्वमगच्छदिति भावः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अंसे स्कन्धे न्यस्तः प्रकोष्ठो यस्याः करिणा हस्तिना सह गच्छन्त्याः करेणोर्हस्तिन्याः यथा तथा नन्दसूनुना सह यातायाः ॥ २७ ॥

यां रहः एकान्तं स्थानमनयत्तया नूनं निश्चितं हरिः खल्वाराधितः राधा सञ्जातास्य तथा तारकादिभ्य इतच् राधाकृष्णविहारे हेतुभूतेयमित्यर्थः। हेतौ तृतीया श्रीराधादासीप्राधान्यकथनं कैमुतिकन्यायेनास्या अतिप्राधान्यं द्योतयति विशेषतस्तया सह विहारोऽतिगोप्यत्वान्नोक्तः तस्याः स्वरूपादिनिर्णयः प्राचां ग्रन्थेषु द्रष्टव्यः ॥ २८ ॥

---

भाषा टीका।

ये कौन के पांय पड़े हैं ये कौन नन्दनन्दन के पीछे गई है जाने वा प्यारे के कांधे पै अपनी भुजा को स्थापन कियो है जैसे हाथी के संग हथिनी चले तैसे वाके संग गई है ॥ २७ ॥

हम ठीक जानें हैं कि या गोपी ने हरि ईश्वर भगवान् की बडी आराधना कीनी है जातें कि गोविन्द भगवान् हम सब को छोड वाही को अकेले में ले गये हैं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

हे आल्यः ! सख्यः अहो धन्या अतिपुण्या गोविन्द्राङ्घ्र्यब्जरेणवः तत्र हेतुः यानिति अस्माभिरप्येतद्रेण्वभिषेकेण नैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥

अन्या आहुः। तस्या इति। गोपीनां सर्वस्वम् अयं भावः भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुस्तानि तु नो दुःखं कुर्वन्तीति ॥ ३० ॥

[1] मूर्ध्ना तद्धृतये इति विजय० पाठः।

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

अमी इमे आल्य इति सम्बोधनं तत्र सर्वासामैकमत्यार्थं भक्तिविशेषजननार्थं वा धारणे सर्वेषां प्राधान्यविवक्षया चशब्दाप्रयोगेऽपि तेषां यथोत्तरं श्रैष्ठ्यमूह्यं कृष्णस्य पश्चात् पादाब्जरेणून् गृह्णन्तो ब्रह्मेशादयः सदैव तामिर्दृश्यन्ते अतो दृष्टमेव वर्ण्यते नत्वैश्वर्य्याभिप्रायेण देवीति श्रीवृषभानुगोपनन्दिनीव्यावृत्त्यर्थं यद्वा तद्रेणुधारणेन लक्ष्म्यां भक्त्युदयेनोक्तं देवी पूज्येति यद्वा श्रीराधाया लक्ष्म्याश्च प्रायः पदादितुल्यत्वात् सन्देहः व्यवच्छिद्यते देवीति देवीत्वेन लक्ष्म्या भूम्यस्पर्शत्वात् यद्वा देवी व्रजदेवी श्रीराधैव मूर्ध्नीति भक्तिभरं द्योतयन्ति अघमपराधो विरहादिदुःखं वा अतस्तेऽनघा एव अस्माकञ्च भक्त्या तद्धारणादघं युक्तमेवेति भावः। अन्यत्तैर्व्याख्यातं यद्वा रेणव एव धन्या उत्तमाः श्रीकृष्णरूपपरमधनदानयोग्या वा यद्वा अमी वैकुण्ठादौ वर्तमाना गोष्ठाङ्गणपातिता वा पूर्वदृष्टा वा । अस्याः पदे रससंपृक्तास्त एव धन्याः एषा मात्सर्य्योक्तिः यद्वा इमे रेणवः आल्यश्चेमा धन्याः गोविन्दनीतत्वाद्गौरवेण बहुत्वम् एवं दृष्टान्तत्वेन रेणूनामिव तस्या अपि धन्यत्वमभिप्रेतम ॥ २९ ॥

श्रीचन्द्रावल्याः सखीनामुक्तिस्तस्या इति । उच्चैः आधिकं क्षोभं वैकल्यं पूर्वोक्तैर्धैर्य्यहानिं वा यद्वा उच्चैः गर्वादुच्चतराणि अस्मन्मूर्धोपर्य्यर्पितानि वेत्यर्थः। अपहृत्येति । एकाकित्वेन रहसि भोगात् यद्वा चौर्य्येण तया नीतत्वादेव सो ऽस्मान् विहायात्रागतः अन्यथा कथमागच्छेदिति भावः । गोपीनां सामान्यतः सर्वासामेव धनमिति पाठस्तेषां सम्मतः सर्वस्वमिति व्याख्यानात् अन्यथा गोपीनां भोग्यमित्येव व्याख्यातं स्यात् अच्युतस्य तां त्यक्त्वा ऽन्यत्र क्वाप्यगच्छतो ऽधरमिति यद्वा तस्मादच्युता अविच्छिन्ना सतीति चिरम्भोगोऽभिप्रेतः श्लेषेण च्युतोऽस्मन्मुखोद्गलितो योऽधरस्तमिति निजोच्छिष्टभोगस्तस्याः सूचितः इमे रेणव आल्यश्चेमा धन्या इत्येतत् पक्षे उच्चैरस्मदतिक्रमणादुग्धान्यपि क्षोभं कुर्वन्ति किङ्काका अपितु नैवेत्यर्थः। एवमेषां सर्वासामेवोक्तिर्ज्ञेया ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

ततस्तटस्था आहुः । धन्या इति। अमी इमे आल्यः इति सम्बोधनं समदुःखत्वेन प्रायः सर्वासामेकभावात् सर्वासामेव युगपत् सम्बोधनं चमत्कारातिशयात् । दधुरिति अतीतनिर्देशो निश्चयज्ञापनार्थः । ब्रह्मादीनां यथोत्तरं श्रैष्ठ्यमूह्यम् । रमायास्तु विशेषणं तथापि श्रैष्ठ्यबोधनार्थं मूर्ध्नीति भक्तिभरं बोधयति । अघमपराधो विरहादिदुःखं वा । धन्यत्वे हेतुर्गोविन्दांघ्रीति सुपां सुलुगिति षष्ठीलुक् छान्दसः तत्सम्बन्धेन धन्या इत्यर्थः । अत एव यानिति अतो रेणवोऽपि तत्सम्बन्धलाभेन धन्याः वयन्तु तदभावात्ततोऽपि तुच्छा इति भावः । इयञ्च तत्पादरेणूनां माहात्म्यभावना प्रेमकृतैव । प्रेमा ह्यसदपि माहात्म्यं स्फारयति किमुत सत् । ततस्तदतिशयस्तु तदतिशयमेव । यथादिभरतचरिते । किम्वा अरे आचरितं तपस्तपस्विन्या यदियमवनिरित्यादि गद्ये तेन स्वमृगपदस्पर्शेन पृथिव्या भाग्यं वर्णितम् ॥ २९ ॥

प्रतिपक्षा आहुः। तस्या इति । उच्चैराधिक्यम । क्षोभं अतिदुःखम् । अपहृत्येति एकाकित्वेन रहसि भोगात् । यद्वा । चौर्येण तया मायाविन्या नीतत्वादेव सोऽस्मान् विहायात्रागतः । अन्यथा कथमागच्छेदिति भावः । गोपीनां सामान्यतः सर्वासाम् । अस्माकमेव धनमिति पाठः क्वचित् । सच प्रायः सर्वस्वमिति तेषां व्याख्यामवीक्ष्य । रह इति पाठस्तु सर्वत्र । अच्युतस्य तां त्यक्त्वा ऽन्यत्र क्वाप्यगच्छतोऽधरमिति ॥ ३० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काश्चिदाहुर्धन्या इति । हे आल्यः! सख्यः ! अमी गोविन्दस्य पादाब्जरेणवः धन्याः अहो तत्र हेतुः यानिति यान् गोविन्दांघ्र्यब्जरेणून् ब्रह्मादयो देवाः अघनुत्तये गोविन्दप्राप्तिप्रतिबन्धकपापापनुत्तये मूर्ध्नि धृतवन्तः अस्माभिरप्येतदभिषेकेण तथैव कृष्णः प्राप्तुं शक्य इति भावः ॥ २९ ॥

अन्यास्त्वाहुः। तस्या इति गोविन्देन सह याताया अमूनि पदानि नोऽस्माकम् उच्चैर्भृशं क्षोभं चित्तक्षोभं कुर्वन्ति तत्र हेतुः या स्वयमेकैव सर्वासां गोपीनां संबन्धि सर्वस्वभूतमच्युतस्याधरमधरामृतमपहृत्य रहसि भुङ्क्ते ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

हे आल्यः! सख्यः धन्या निरपेक्षाः आली सखे सखीपंक्त्योरिति यादवः। निरपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैरिति च ब्रह्माद्या मूर्ध्ना यान्दधुरिति यत्तस्माद्धन्या इत्यर्थः तस्माद्विष्णोरूतये अभिप्रायसिद्धये रक्षासिद्धये वा ॥ २९ ॥

ननु धन्यानां कृष्णपादतलयुक्तानां रेणूनां सन्दर्शनं युष्माकममूदितः परं शोकस्य किङ्कारणमित्याशङ्क्य सत्यमथापि तदीयपदसम्पृक्तमन्यस्त्रीपदं संदृश्य संस्मृत्य महाशोको जायत इत्याशयेनाहुः। तस्या इति। गोपीनां मध्ये एका गोपी कृष्णमपहृत्य वशीकृत्य अच्युताधरम् अच्युतस्य हरेरच्युतं सन्ततस्यन्दमानामृतमधरोष्ठं रहो रहस्येकान्तदेशे भुंक्ते यत्तत्तस्या गोप्या अमूनि पदानि संदृश्याधरपानं संस्मृत्य उच्चैः क्षोभं चित्तविक्षेपं कुर्वन्ति तस्माच्छोक इत्यर्थः ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः।

चरणरजोऽभिनन्दन्त्य ऊचुः। धन्या इत्यादि। अघं दुःखं तन्नुत्तये तन्नाशाय धन्याः सुखदा इत्यर्थः यान् ब्रह्माद्या मूर्ध्न्यादधुः तस्माद्वयमपि तथा कुर्म इत्यर्थः ॥ २९ ॥

अन्याः काश्चिदूचुः। तस्या इत्यादि। एते रेणवो मूर्ध्नि धर्तुं युज्यन्ते एव किन्तु तस्या अमूनि पदानि नोऽस्माकं क्षोभं कुर्वन्ति तया किमपराद्धमित्यत आहुः। यैकेत्यादि। गोपीनां सर्वासामेव धनमच्युताधरमपहृत्य या एका सती भुङ्क्ते प्रधानाया नैतदुचितमिमि नैकाकी मिष्टमश्नीयादित्युक्तेः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्या भाग्यमभिनन्द्य मात्सर्येऽपि गूढे तथा वचनं भवतीति स्वभाग्याभिनन्दनमप्याहुः । धन्या इति । अहो आश्चर्ये हे आल्यः ! सख्यः अमी अंघ्रिरेणवो धन्याः मात्सर्याभावार्थं चैतदुच्यते यथा रेणवः तथा सेति विश्वासार्थमप्रतारणार्थञ्च सम्बोधनम् अनेन रेणूत्कर्षेण रेणव एव धार्याः स्वदोषनिवृत्त्यर्थमित्युक्तं भवति पूर्वमत्रैवैते रेणवः स्थिताः न तदा तेषामुत्कर्षः यदा पुनश्चरणसम्बद्धास्तदा धनमर्हन्तीति धनं कृष्णः यथेन्द्रो देवानां यथा धनेन सर्वविषयप्राप्तिः एवं प्रभुणापि तेषां धन्यत्वमुपपादयन्ति यानिति ब्रह्मा ईशः रमा च देवता रूपा पालिका शक्तः तेषां स्वस्वाधिकारे दोषसम्भवात् तन्निवृत्त्यर्थं मूर्ध्नि दधुः ब्रह्मानन्दरूपाया निवृत्त्यर्थं देवतापदम् अतः कारणादेतद्धारणेन वयमपि निर्दुष्टाः नीयमानगोपिका तुल्या भविष्याम इति ॥ २९ ॥

अन्या रजःप्रकृतय आहुः । तस्या इति । भगवच्चरणारविन्दरजस्तथैव परमस्याः गोपिकाया अध्वनि पदानि सङ्गे गच्छन्त्याः नोऽस्माकं क्षोभं कुर्वन्ति तत्राप्युच्चैरत्यर्थं नन्वेकाकी भगवान् गच्छेत् तदपेक्षया ससहायः भक्तिमार्गे युक्त इति चेत्तत्राहुः । यद्यस्मात् गोपिकानां सर्वासामेव भोगरूपमच्युताधरं ता विहाय एकैवोपभुङ्क्ते तत्रापि रहः एकान्ते तासामनुज्ञाव्यतिरेकेण ननु विरतो भगवान् बहुस्त्रीसम्बन्धाद्भविष्यति कुतः सा भोक्ष्यते तत्राहुः । अच्युतेति। स हि पूर्णकाम एव न तस्य च्युतिरस्ति॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तटस्थपक्षास्तु तत्रानवदधानाः कृष्णपदान्यैवालक्ष्याहुः । धन्या इति । ब्रह्माद्या अघनुत्तये विच्छेददुःखापनोदनाय यान् मूर्ध्ना दधुरित्यपराह्णे गोष्ठागमनसमये कृष्णसहचरबालकैः प्रत्यहन्ते स्वर्गादवरुह्य कृष्णपादधूलिग्राहिणो दृश्यन्त एव यद्वक्ष्यते वन्द्यमानचरणः पथिवृद्धैरिति वन्दिनस्तमुपदेवगणा ये इति च वयं तु लज्जयैव यद्धर्तुं न शक्नुमस्तेनैव तावदघं प्राप्नुम इति भावः ॥ २९ ॥

प्रतिपक्षसख्य आहुः । तस्या इति । उच्चैःकर्तुं जनयन्ति गोपीनां सर्वासामेवास्माकं भोग्यमच्युताधरमेकैव रहश्चोरयित्वा भुङ्क्ते तयैव कामिन्या केनापि कर्मणैनं वशीकृत्य अस्मान् प्रेमवतीस्त्याजयित्वा कृष्ण एतावद्दूरमानतेति इति भावः ॥ ३० ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

अथ तदुक्तौ किञ्चित्कृतावधानाः श्रीकृष्णैकतानाः श्रीराधिकामनुताटस्थ्यमवलम्बमानाः प्रेयसीभावाभिमाना आहुः । धन्या इति। अहो आल्य इति तारल्यं तेनैता गोपकन्या इति गम्यते गोविन्दस्य गोकुलयुवराजस्येति सम्बन्धयोग्यता निगमगीत इति च माहात्म्याभिप्रायेण अङ्घ्रीति पातिव्रत्याभिमानेन अब्जेति सौन्दर्य्योक्तेः कान्तभावः सूचितः तत्सम्बन्धाद्रेणवः परागस्थानीया इति रूपकानिर्वाहः धन्याः अस्माभिरभिलषणीयाः यद्वा रेणवोऽपि तत्सम्बन्धलाभेन धन्याः तद्विरहिता वयं ततोऽप्यतितुच्छा इति दैन्यव्यक्तिः कीदृशाः यान् अनिर्वचनीयसौभाग्यान् ब्रह्मेशौ विख्यातौ यद्वा वदन्तीत्यादिश्लोकोक्तौ ब्रह्मपरमात्मानौ रमा देवी अन्तरङ्गा चिदानन्दात्मिकाचिन्त्यशक्तिः मूर्ध्नीति परमादरः अघनुत्तये अंहोदुःखव्यसनेष्वघमित्यनेकार्थात् यथायोगं तत्तदपनोदनाय इयञ्च तत्पादरेणूनां माहात्म्यभावना प्रेमकृतैव प्रेमा ह्यसदपि माहात्म्यं स्फोरयति किमुत सत् यथा भरतचरिते किम्वाअरे आचरितं तपस्तपस्विन्येत्यादि सत्त्वञ्च लीलायां तत्र तत्रानुभूतत्वात् यद्वाञ्छया श्रीरित्यादिना पत्नीभ्यः श्रुतत्वादित्यनुसन्धेयम् ॥ २९ ॥

तस्याः प्रतिपक्षा आहुः । तस्या इति । पूर्वार्द्धं स्पष्टं तत्र यत् यतः येति सासूयम् एकेति मात्सर्य्यम् अपहृत्येति असम्मतिः गोपीनामिति बहुवचननिर्देशेन भेदः सूचितः अच्युतेति विच्यवरहित्येनान्यास्पृष्टत्वं रह इति स्वातन्त्र्यं भुङ्क्ते ननु पिबति ततश्च पानातिशयः अधरमिति सम्भोगातिशयः धनमिति पाठः स्पष्ट एव यद्वा अच्युतेति गाढपरिरम्भेण यद्वा अच्युतस्य त्वया नित्ययुक्तस्येति वाग्देवी सूचितोऽर्थः ॥ ३० ॥

---

श्रीरामनारायणकृतभावभावीवभाविका ।

कृष्णस्वरूपात्मिकाया लोके प्रेमपथप्रवर्तनायैव परभक्तिरूपतया पार्थक्येनाविर्भूतायाः पादरजोदर्शनेन प्रवृद्धप्रेमोत्कर्षा रजो वर्णयन्ति। धन्या इति। हे आल्य इतिसम्बोधनन्तु मात्सर्य्याद्यभावेनैकमत्या च परस्परमात्मवत्स्नेहाधिक्याल्लब्धतद्रजोदर्शनसौख्यस्यान्योऽन्यख्यापनाय सम्बन्धोक्त्या प्रीतिख्यापनेनोक्तार्थविश्वासायच अहो इत्याश्चर्ये अमी इमे गोविन्दाङ्घ्र्यब्जरेणवो धन्याः तद्धन्यत्वापादनायाहुः । यानिति। तत्र देवानामिन्द्रादीनां जीवत्वेन तैर्धारणेप्युत्कर्षाधिक्याभावादीश्वराणां ब्रह्मादीनां ग्रहणं तत्र रजोगुणाधिष्ठातेशो ब्रह्मा तमोऽधिष्ठातेशः शिवः सत्त्वाधिष्ठात्री रमा तत्रोपाधिगुणप्रयुक्ततदुत्कर्षज्ञापनाय देवी रजस्तमोवत्सत्त्वस्य विक्षेपावरणाभावात् द्योतनात्मिका नच ब्रह्मेशसहकारे विष्णोर्वक्तव्यतया रमोक्त्यनौचित्यामितिवाच्यं विष्णोरेव गोविन्दत्वेन तदङ्घ्रिरेणूनां तेनैव धारणोक्त्यसम्भवात् हरिर्हि निर्गुणः साक्षादित्यादिवाक्यैस्तत्र गुणविशिष्टत्वासम्भवेन निर्गुणे विष्णौ श्रूयमाणसत्त्वाधिष्ठातृत्वस्य तत्रासम्भवे सविशेषणेहीतिन्यायेनाङ्गावतरणन्यायेन च विशिष्टप्रधानयोः श्रूयमाणस्य तत्रासम्भवे विशेषणेऽङ्गेचावतरणवत्तच्छक्तौ रमायामेव कथनौचित्याच्च ते ब्रह्मादयो मूर्ध्नि दधुरिति रेणूनां धन्यत्वोत्कर्षस्तत्कृतत्युत्कर्षश्च दर्शितः अघनुत्तये इति प्रयोजनकथने तु नवै देवा पापान् स्पृशन्तीति श्रुत्या देवेषु तद्देहारम्भपापास्पर्शेऽपि यथाकथंचिज्जन्मान्तरीयपापानां जीवत्वेन सम्भावनाभवेदीश्वरेषु तु सर्वथा तदनुपपत्तेस्तत्तदधिकारप्रयुक्तकर्मविक्षेपे सम्भावितकृष्णस्वरूपाननुसन्धानमेव पापत्वेन सम्भाव्य तदभावायेति मन्तव्यं यद्वा स्वभक्तानामघापनोदाय ब्रह्मेशयो रजस्तमोभ्यां तदसम्भवाद्रमायाः सत्त्वेन तत्सम्भवेऽपि बोधे भारतेरेव प्रमात्ववत्तदनन्वितसत्त्वस्याप्यकिंचित्करत्वात्तद्रजोधारणं रेणूनां तथोत्कर्षे हेतुगर्भितं तद्विशेषणं गोविन्दाङ्घ्र्यब्जाति गोभिः श्रुतिशिरोभिर्विद्यते

न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणांकुरैः ॥
खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः ॥ ३१ ॥
अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः ॥
प्रपदाक्रमणे एते पश्यतासकले पदे ॥ ३२ ॥

### श्रीरामनारायणकृतभावभावविभाविका।

अविद्यानिरसनेनाविर्भाव्यते इतिगोविन्दः"सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्यो वासुदेवपरा वेदा" इत्यादिश्रुतिस्मृतिभ्यः तस्याङ्घ्रि रेवाब्जं तद्रेणव इत्यङ्घ्रेरब्जतोक्त्या मृदुमञ्जुसुरभित्वं तत्सम्बन्धि- रेणूनां च तदब्जपरागरूपतया तापहारित्वमिति ध्वनिः। रेणूनां लघूनां तदंघ्रिसम्बन्धेनैवेदृग्धन्यत्वं वयं तदीना मन्दभाग्या एव परन्तु ब्रह्मादीनां तत्सम्बन्धेनैवाघापनोदवद्वयमपि तद्धृत्यैव तद्वि- योगदुःखहेतुमानाख्यपापमपनेष्याम इति भावः ॥ २९ ॥

ननु प्रथमं पदचिह्नदर्शनेऽपि नेदृग्धन्यत्ववर्णनं कृतं कथमधुने- दृकन्माहात्म्यस्फूर्तिस्तत्राहुः। तस्या इति। तस्या अतिविलक्षणरूप- गुणप्रेमसमृद्धायाः सम्बन्धीनि अमूनि अस्मद्भाग्यात् प्रादुर्भूतानि पदानि पद्यते एभिरिति व्युत्पत्त्यैवेष्टप्रापकाणि नो मानादिदोषग्र- स्तमनसामपि उच्चैः क्षोभमेवं माहात्म्यज्ञानपूर्वकतद्दर्शनात्युत्साहं कुर्वन्ति ननु किमेवं तस्या उत्कर्षो येन भगवत्पददर्शनादप्यु- त्साहवर्द्धनं तत्पदानां तत्र प्रेमोद्धर्षात् ध्यानेनैवाविर्भूतयुगलविहार- मनुभवन्त्य आहुः। यैकेति। या सर्वासां गोपीनां मध्ये एका मुख्या यतः सर्वथा अच्युतस्य बह्वीनां नो हावभावकटाक्षैरपि च्युतिरहिततया विसृज्य गतस्याधरम्विचित्रप्रेमगुणमाहात्म्याद- पहृत्य प्रेमगुणभुजदृढबन्धनेन बलादाकृष्य रह इति विक्षेपशून्य- तया भुंक्ते अन्यथा तदाविर्भावविधिना भुंक्ते इति निश्चितवर्तमानोक्तिर्न भवेत् अतस्तत्पदान्याश्रित्य तत्कृपयोद्भूततादृक्प्रेमप्रभावादेव तत्प्राप्तिरिति भावः। विपक्षतयावस्थानन्तु परमभक्त्याचार्य्यभूतानां भगवदात्मिकानामस्पृष्टप्राकृतगुणानां मात्सर्याद्यसम्भवान्नो नो रोचते लोकविडम्बनेन भवतु वा तथाऽत्रो नो निरासिप्यामः ॥ ३० ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तदपास्तु अहो किमर्थं विवादो भवतीभिरारब्धः सखीचरणोपरि दृष्टिमदत्त्वा भगवच्चरणरेणून् पश्यतेत्याहुः। धन्या इति। तत्रापि हे आल्यः! सख्यः गोविन्दस्य परमात्मनश्चरण- कमलरेणवोऽमी उपलभ्यमाना अहो आश्चर्य्यं धन्या अति- पुण्या यस्माद्यान् रेणून् ब्रह्मा ईशो महादेवः रमादेवी पालन शक्तिः अघस्य स्वस्वाधिकारे सम्भावितस्य दोषस्य विरहदुः- खस्य वा निवृत्तये मूर्ध्नि दधुः तथा च तद्वियोगजनकदोषनिवृत्तये तद्धारणं कर्त्तव्यमिति भावः। स्ववत्रासि विश्वासार्थं सम्बोधयन्ति हे आल्य! इति अनभिज्ञपक्षे अहो तत्स्पर्शाभावे रेणुतोऽपि वयं तुच्छा इति भावः। प्रेम्णोऽसत्तोऽपि माहात्म्यस्य स्फोरकत्वस्वाभा- व्यात्प्रेमवत्त्वैनैवं रेणुमाहात्म्यभावना यथा भरतेन किं वा अरे आचरितमित्यादिना मृगपदस्पर्शेन भुवो भाग्यं वर्णितं मानिनी- पक्षे यथा रेणवस्तथानाप्यतो नास्ति मात्सर्य्यकृत्यमिति भावः

निवृत्तिपक्षे सत्यं ज्ञानमनन्तं ब्रह्म सर्वं खल्विदं ब्रह्म तज्जलान् इति शान्त उपासीतेत्याद्यास्तदृशा आहुः। हे सख्यः! अहो अमी गोविन्दस्यौपनिषदस्य परमात्मनो विसम्बन्धिनः तद्ध्यानास्पदस्य हृदयकमलस्य रेणवस्तत्रत्याः शुभ्राद्विचत्तप्रत्यया धन्याः यतस्तथाभूतान्प्रत्ययान्ब्रह्मादयो देव्याः वेदशरीरायाः सर- स्वत्याः मूर्ध्नि मस्तके दधुः वेदान्तार्थाखण्डचिदेकरसपरमा त्मस्वरूपानुसन्धानपराः समाधिस्था बभूवुः अघस्य विक्षेपस्य निवृत्तये ॥ २९ ॥

पुनस्तत्प्रतिपक्षा अहो किमुच्यते भवतीभिः समाहितमनसा- मियं कथा ननु क्षुब्धचित्तानामित्याशयेनाहुः। तस्या अमूनि अशक्यदर्शनानि पदानि नोऽस्माकं वियुक्तान मुच्चैः क्षोभं दुःखव्याकुलतां जनयन्ति यतो या सर्वासां गोपीनां समान- मच्युताधरमेकापहृत्य तत्रापि रहसि स्थित्वा भुंक्ते ननु वः स्त्रीसम्बन्धवशात्परतिं प्राप्तस्य भगवतः कुतोऽधरामृतदानाय प्रवृत्तिः सम्भाव्यत इत्याशङ्कानिरासायाच्युत इत्युक्तं तथाचा- ऽप्रच्युतस्य नास्ति विरतितासम्भावनेति भावः। यद्वा तद्विरह- दुःखादप्यस्माकं तस्यास्तत्संयोगजन्यं दुःखं महद्दुर्लभमि- त्यच्युतपदेन ध्वनितं न मानप्रच्युत इत्यर्थागमात् निवृत्तिपक्षे पुन- स्तद्विरुद्धार्थका आहुः। तस्या उक्तश्रुतेरुच्चैः सर्वोत्कृष्टत्वेनानुस- न्धीयमानानि पदानि नः क्षोभं स्वार्थप्रच्युतिलक्षणं जनयन्ति यतो यैका सर्वासां श्रुतीनां प्रतिपाद्यमर्थमच्युताधरमेकरसानन्द- स्वरूपं रहो भुंक्ते तत्तत्प्रतिपाद्यतद्वैशिष्ट्याद्यर्थाद्विशेष्यमात्रम- पहृत्य सर्वविशेषविनिर्मुक्तं प्रतिपादयतीत्यर्थः ॥ ३० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

धन्या इति। सर्वतीर्थतीर्थभूतानां ब्रह्मेशरमाणां तीर्थभूताः सर्वतीर्थेभ्यः उत्कृष्टा इत्यर्थः ॥ २९ ॥
यत् यस्मात् ॥ ३० ॥

### भाषा टीका।

हे सखी! हो श्रीगोविन्द के चरण कमल के ये रज बड़े धन्य हैं जिन को अपने अघों को दूर करवे के लिये ब्रह्मा महा- देव लक्ष्मीदेवी अपने मस्तक मे धारण करें हैं ॥ २९ ॥

या गोपी के ए चरण चिन्ह हमारे मन को बड़ो क्षोभ करे हैं जोकि हम सब गोपिन के भाग अधरामृत को छीन एकान्त में अकेली भोगै है ॥ ३० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

तदसंपृक्तान् केवलं कृष्णपादरेणूनेव विचिन्वत्यस्तान् दृष्ट्वा पुन-

१ इमान्यधिकमग्नानि पदानि वहतो वधूम्।
गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः॥
अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना॥०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

रत्यन्तं सन्तपन् तदाह श्लोकत्रयेण। न लक्ष्यन्त इति। खिद्यती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तामुन्निन्ये स्कन्धमारोपितवान्॥ ३१॥

प्रपदाभ्यामाक्रमणं क्षोणीमर्दनं ययोः अत एवासकले पदे पश्यतेति॥ ३२॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

उन्निन्ये स्कन्धमारोपितवानिति स्कन्ध आरुह्यतामिति वक्ष्यमाणानुसारेण तैर्व्याख्यातं प्रेयसीं प्रियतमां प्रिय इति पैशुन्योक्तिः। अन्यपक्षे च अन्योऽन्यं प्रियत्वेन तत्रापि प्रेयसीत्वेन सर्वाभ्यस्तस्यां प्रीतिरधिका सूचिता अत उन्नयनं युक्तमेवेति भावः। यद्वा उन्निन्य इति हस्ताभ्यामुत्थाप्याङ्के कृत्वा वा निन्य इति ज्ञेयं तथा सत्येव तादृशालिङ्गनादिरससंपत्त्या प्रेयसीत्वं सुसिध्येदिति तल्लक्षणमाहुः। इमानीति। हे गोप्य इति विदग्धाभिर्युष्माभिरेतल्लक्ष्यत एवेति भावः। कामिन इति। अन्यथा तदसम्भवः ईर्ष्योक्तिरेषा वस्तुतस्तु कामयुक्तत्वेनैवाधिकात्मतदपेक्षा सूचिता अन्यपक्षे च तस्यामासक्तिरभिप्रेता एतत्पद्यं बहुपुस्तकेषु न दृश्यते पश्चादग्रे तस्याः पदानि वीक्ष्याहुः। अत्रेति। महात्मना विदग्धशिरोमणिनेत्यर्थः। श्लेषेण महान् पर्वतवत् स्थूल आत्मा बुद्धिर्यस्येतीर्ष्योक्तिः इदं पद्यं क्वचिदेव दृश्यते॥ ३१॥

प्रियार्थं प्रेयसेत्यनेन पूर्वोक्तस्य प्रेयसीं प्रिय इत्यस्य वैपरीत्योक्त्यान्योऽन्यं तुल्य एव प्रेमा सूचितः यद्वा उन्नयनापेक्षया पूर्वं प्रेयसीमित्युक्तमिदानीञ्च प्रेयसेति प्रियतमत्वेन तया कृतेनाऽदेशेन पुष्पावचयः कृत इत्याद्यभिप्रेतं तत्र पदे इति द्वित्वं श्रीवृन्दावनवर्त्तिपुष्पवृक्षाणामेकतमस्यैकदेशे स्थित्यापि बहुलपुष्पावचयासिद्धेः किम्वा स्थाने स्थाने बहूनामप्युदितानां पदानामेकद्वयोर्दृष्टेः अत एव श्रीविष्णुपुराणे।—

पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम्।
येनाग्राक्रान्तिमात्राणि पदान्यत्र महात्मनः॥

इति॥ ३२॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

न लक्ष्यन्ते इति मत्सरोक्तित्वात् स्कन्धमारोपितवान् इति तैर्व्याख्यातम्। अत्र तान् दृष्ट्वेति तदसंपृक्तान् दृष्ट्वेत्यर्थः। यद्वा सख्योऽप्याहुर्नेति। सखीवाक्यत्वादेव खिद्यदित्यादि प्रेयसीम् अतिशयेन तत्प्रीतिविषयामित्यर्थः। अत उन्निन्ये हस्ताभ्यामङ्के विधाय निन्य इत्यर्थः। अथ प्रतिपक्षाः सासूयमाहुः। इमानीति। हे गोप्य! इति विदग्धाभिर्युष्माभिरेतल्लक्ष्यत इति भावः। कामिनः केवलकामपरतन्त्रस्य न तु प्रेमरसविदग्धस्येत्यर्थः। पुनः सख्य आहुः अत्रेत्यर्द्धम्। महात्मना विदग्धशिरोमणिनेत्यर्थः। तदेतत् सार्द्धपद्यं क्वचिन्न दृश्यते च अतो नाङ्कः कृतः॥ ३१॥

अथान्याः सख्य आहुरत्र प्रसूनेति। प्रेयसा अतिशयेन प्रीतिकर्त्रा। पूर्वत्र लिङ्गमाहुः। प्रपदे इत्यर्द्धेन। पदे इति प्रति पुष्पवृक्षमितिशेषः। अत एव बहुत्वं श्रीविष्णुपुराणे

पुष्पावचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम्।
येनाग्राक्रान्तिमात्राणि पदान्यत्र महात्मन इति॥ ३२॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्या तु केवलमसम्पृक्तानि कृष्णस्यैव पदानि दृष्ट्वा सामर्षमाहुः। नेति। तस्या वध्वाः पदान्यत्र न लक्ष्यन्ते कुतः यतो नूनं तृणां कुरैः खिद्यती सुजाते सुकुमारेऽङ्घ्रितले यस्याः तां प्रेयसीं प्रियः कृष्णः उन्निन्ये स्कन्धमारोपितवानित्यर्थः॥ ३१॥

अपरास्तु सत्यमत एवाधिकमग्नानि पदानि पश्यतेत्याहुः। इमानीति। हे गोप्यः वधूं वहतो गामिनः गच्छतः कामिन इति पाठे कामिनोऽत एव वधूं वहतः कृष्णस्यात एवाधिकमग्नानीमानि पदान्यत्र पश्यत॥ ०॥

काश्चिद्भूमिसस्मर्दमालक्ष्याहुः। अत्रेति। महात्मना कामिनात्र पुष्पहेतोः पुष्पावचयार्थं कान्ताऽवरोपिता अत्र तु प्रियार्थं प्रियामलङ्कर्तुं प्रेयसा कृष्णेन प्रसूनावचयः पुष्पलवनं कृतः अत एव प्रपदाभ्यां पादाग्राभ्यामुच्चप्रसूनावचयार्थमाक्रमणं ययोस्ते अत एवासकलेऽर्द्धमग्ने एते पदे पादाङ्कौ पश्यत॥ ३२॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदमधिकं शोककारणमित्याशयेनाहुः। नेति। नूनं तर्के एवं कथं तस्याः गोप्याः पदानि न लक्ष्यन्ते न दृश्यन्ते अदर्शनकारणमूहयन्ति। तृणाङ्कुरसम्बन्धेन खिद्यत्परिम्लानमाप्नुवत् सुजातं ललितमङ्घ्रितलं यस्याः सा तथा तां प्रेयसीमुन्निन्ये उद्धृत्यानीतवान् उद्धृत्य नयनेन भूमिसम्बन्धाभावात्पदादर्शनमपि अत एव तादृशप्रेम नास्माकं प्राप्तमिति शोको ऽस्माकम्॥३१॥

युष्मत्परित्यागवत्प्रेयसीपरित्यागेन गमनाच्चत्पदादर्शनं किं न स्यादित्यतः कुत उद्धृत्य गमनमनुमीयत इत्यत एतल्लिङ्गमप्रतिहतमित्याहुः। इमानीति। धूमाग्न्योरविनाभाववत् भारवहपुरुषपदमज्जनं भारवहनाविनाभूतं प्रत्यक्षसिद्धत्वादुद्धृत्यागमनमनुमीयत

१ इदं सार्धं बहुषु पुस्तकेषु न विद्यते बहुभिष्टीककैरव्याख्यातं च

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्यर्थः । मानयितुं शीलमस्यास्तीति मानी तस्य अधिकश्रृङ्गारोक्तिरियम् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

कियद्दूरं गत्वा न चलितवती यतः तृणांकुरैः खिद्यत्सुजातांघ्रितलां कथमनुमितं तत्राहुः । न लक्ष्यन्त इत्यादि । प्रियत्वात् प्रेयसीत्वाच्च योग्यमेवैतत् ॥ ३१ ॥

हे सख्य असिद्धोऽयं हेतुः तथाहीत्याहुः मव्यमिचारात् तत्कृतोऽप्यत्र गतेति तत्पदानि न लक्ष्यन्ते तामुन्नयनात् नैव पश्यत व्यभिचार्य्येवायं हेतुः तथाहीत्याहु । इमानीत्यादिः । अधिकमग्नानि वधूं वहतश्चेत् यतो भाराक्रान्तस्य वहने हेतुः कामिनः कियद्दूरमन्यतो गत्वा पदलक्ष्मप्रकारान्तरमालोक्य सनिर्णयमाहुः । अत्रेत्यादि प्रियार्थे प्रियानिमित्तम् अत्र स्थले तेन प्रसूनावचयः कृतः तल्लिङ्गमाहुः असकले खण्डे पदे पश्यत कीदृशे प्रपदाक्रमयो प्रपदं पादाग्रं तेन आक्रमणमवष्टम्भनं ययोः ॥ ३२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्याः पुनस्ततोऽपि खेदं कृतवत्य इत्याह । न लक्ष्यन्त इति । अहो किमेति विचार्यते अधरामृतम् पिबतीति एतावद्दूरे समागतानि तस्याः पदानि अग्रे न लक्ष्यन्ते नच वक्तव्यं समीचीनं जातमिति तत्राहुः तस्याः तृणांकुरैः खिद्यत्पादतलं जातं तदा तादृशीमुन्निन्ये ऊर्ध्वं नीतवान् कटिभागे स्कन्धभागे वा वस्तुतस्तु हस्ताभ्यामेवोद्धृतवानिति सुतरां खेदे हेतुः ननु कथमेवं करिष्यतीत्याशङ्क्याहुः ! प्रेयसीमिति । साप्यत्यन्तं प्रिया स्वयमपि तस्याः प्रियः अतो ज्ञायते न सा स्कंधमारूढा किंतु केवलमुन्निन्ये ॥ ३१ ॥

किञ्च तेन प्रकारेण न बहुदूरे गमनं सम्भवति अतः क्वचिद्विश्रम्य पुष्पावचयमपि तदर्थं करोतीत्याहुः । अत्रेति । प्रसूनानामवचयः वृक्षादुत्तारणं नच स्वार्थं भविष्यतीति शङ्कनीयं सा हि श्रान्ता अतः प्रियार्थं एव सा तु कर्त्तुमशक्तैव तदाहुः प्रेयसा कृत इति सा हि भगवदपेक्षया खर्वा प्रपदाभ्यामुत्थातुमप्यशक्ता अतः प्रेयसैव कृतः यतः प्रपदाक्रमणे पादाग्राभ्यामेवाक्रमणं ययोः अत एवासकले पार्ष्णिभागो नाभिव्यक्त इति पश्यतेति सन्देहाभावार्थं वचनम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो मत्सरमहारोगग्रस्ताः मा खिद्यत नात्र तस्याः पदानि सन्तीति तस्याः प्रियसख्य आहुः । नेति । ताः प्रत्येव सहर्षाधाङ्गमन्याः सख्यो नीचैः सवितर्कमाहुः । नूनमिति । उन्निन्ये भुजाभ्यामुत्क्षिप्य स्वपक्ष आरोहयामासेत्यर्थः । यतः प्रेयसीमति प्रीतिविषयत्वात्तच्चरणतलखेदस्यासहत्वात् इह खलु तत्सखीनामुभयविधं सुखं तस्यास्तादृशसौभाग्यदर्शनोत्थं विपक्षाणां तादृशदुःखदर्शनोत्थं चेति ज्ञेयम् ॥ ३१ ॥

भो असमीक्ष्य भाषिण्यः मा खिद्यतेति किं ब्रूध्वे तत्पादानां दर्शनादप्यदर्शनमतिदुःखाकरमस्मत्प्राणानामदर्शनं सम्भावयतीति द्योतयन्त्यः प्रतिपक्षा आहुः । इमानीति । वधूमित्यनुपनीतेनापि कृष्णेन वनेऽत्र सा स्ववधूरेव कृतेति भावः अत एव भाराक्रान्तस्य गृहस्थाः खलु कलत्रभाराक्रान्ताः इतस्ततो भ्रमन्त्येवेति भावः । कामिनः नतु प्रेमिणः प्रेमवतीनामप्यस्माकं त्यागादित्यत एव काम एव तं तां वाहयेदन्यथा व्रजेन्द्रकुमारो ह्यतिसुकुमारः किं गोपालिकाया वाहनो भवेदेति भाव; ॥३२॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

तदुक्तिमसहमानास्तत्प्रतारणाय सुहृद आहुः । नेति । निषेधस्य प्राक्प्रयोगस्तदुक्तिप्रतिषेधाय नैवं वाच्यमित्यर्थः । अस्येदेहलीदीपत्वेनाग्रेऽपि सम्बन्धः न लक्ष्यन्ते लक्षणैरपि न ज्ञायन्त इत्यर्थः । नूनं सम्भावयामः खिद्यती सुजाते सुकुमारे अंघ्रितले यस्यास्तां प्रेयसीं कोटिगुणाधिकप्रियां प्रियस्तत्प्रेमाश्रयः उन्निन्ये अङ्के कृत्वा नीतवान् तत्र हेतुः । तृणेति । इदं प्रतीत्यभिप्रायेण वा प्रेमविवर्त्तेन वा श्रीवृन्दावनतरुलतातृणाङ्कुरादीनां तयोरिच्छया तत्प्रेमावेशेन च स्वीकृतजडीभावानां खेदप्रदत्वाभावात् सुजातेति सौहृदं सूचितम् ॥ ३१ ॥

कान्तभावासाधकसहचर्य्यः सेर्ष्यमाहुः । इमानीति । हे गोप्य इति साधुविज्ञातं विदग्धाभिर्भवतीभिरित्यधीरत्वम् इमानि कृष्णस्य तत्प्रेमाकृष्टस्य पदानि अधिकमग्नानि पश्यत भाराक्रान्तस्येति सानुशयं वधूं वहतः देशान्तरं नयतः तत्र वधूमिति साभिलाषोक्तिः कामिन इति सासूयं नतु प्रेमविदग्धस्येत्यर्थः । वाग्देवी तु तत्सेवैककामयितुः परमानुरक्तस्येत्यर्थः ॥ ३२ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे तत्पदान्यदृष्ट्वा किन्तामपि कुत्रचित् त्यक्तवांस्तथा चेत्तादृश्यास्त्यागे नो नैराश्यमेवेति मुग्धभावेन खिद्यतीः प्रति काश्चित्सुज्ञा आहुः । न लक्षन्ते इति । अत्र यत्तस्याः पदानि न लक्षन्ते तेन न तत्त्यागः सम्भावनीयः परमदयालोर्भक्तवत्सलस्यानुरक्तत्यागानुपपत्तेरस्मदुपेक्षापि मानदोषपरिहारायैव किमिति तर्हि न लक्ष्यन्ते तत्राहुः । नूनमिति । निश्चितमेतत्तामुन्निन्ये आलिङ्गनसौख्यस्य मार्गेऽप्यनुभवायाङ्के उत्थाप्य नीतवान् करुणातिशयेन स्वोद्वहनेनापि भक्तातिसुखदातृत्वमूहित्वा भक्तदुःखासहिष्णुतां सूचयन्त्य आहुः । खिद्यत्सुजाताङ्घ्रितलामिति । खिद्यती सुजाते सुकुमारे अङ्घ्रितले यस्यास्तां ननु किमत्यानन्दघनस्यापि तद्दुःखदुःखित्वं तत्राहुः । प्रेयसीमतिशयेन प्रियतमां ननु समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय इति वदतस्तस्य कथं सा प्रेयसी तत्राहुः । प्रिय इति तथा च तस्य सर्वसमत्वेन रूपलावण्यादीनां तत्राकिञ्चित्करत्वेऽपि प्रेम्ण एवायं स्वभावो यदात्मारामस्य प्रेयसीत्वमापादयति—

> ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।
> ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति ॥

तेनैव प्रतिज्ञातत्वात् ॥ ३१ ॥

इमान्यधि कमग्नानीति सार्द्धपद्यन्तु बहुपुस्तकेष्वदृश्यमानं श्रीश्रीधरस्वामिभिः श्रीवल्लभाचार्यैश्चाप्रामाणिकत्वेनाव्याख्यातं तोषणीकारैस्तु तद्वहिर्भूतत्वप्रकटनायैव स्वग्रन्थे लिखित्वा तदेतः

केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥
तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ३३ ॥
रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥
कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ ३४ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

त्सार्द्धपद्यं क्वचिन्न दृश्यते अतो नाङ्कः कृत इति लिखितमतोऽस्माभिरप्युपेक्ष्यतेतत्पदलापनिकात्वेयम्भाव्या"इमान्यधिकमग्नानिपदानिवहतो वधूम् गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना" कृष्णस्य नित्यानन्दस्वरूपस्यापि तदीयप्रेमभाराक्रान्तस्यात एवाकामत्वेऽपि सति प्रेमभाराक्रान्तत्वेनैव कामिनस्तमिवाचरतोऽत एव वधूंस्त्वां वहत इमानि पदान्यधिकमग्नानीति पश्यत अत्र च पुष्पहेतोस्तेन महात्मना सा कान्ता अवरोपिता उत्तारिता अग्रे पुष्पावचयचिन्हमवलोक्याहुः । अत्रेभि। अस्मिन्प्रदेशे प्रेयसातिप्रेष्ठतमेन कृष्णेन नित्यानन्दस्वरूपेणापि प्रेमवशीकृतचित्तेन प्रियार्थं एव प्रसूनावचयः कृतः आप्तकामस्य भगवतः स्वार्थप्रवृत्त्यनुपपत्तेः प्रियार्थप्रवृत्तेस्तु तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति तेनैव प्रतिज्ञातत्वाच्च तत्र लिङ्गमाहुः । प्रपदेति प्रपदाभ्यामेवाक्रमणं ययोस्त एवासकले भूम्यलग्नपार्ष्णिभागे पदे पश्यत तथा चैवं प्रेमाधीनभक्तवत्सलरसिकशिरोमणेरस्मदुपेक्षाऽसम्भवेऽपि स्वमानदोषकृतमेवावमानमनुभवाम इति भावः ॥ ३२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो मास्तु कलहस्तत्पदानि संप्रति न दृश्यन्त इति तटस्थाभिरुक्ते सति अहो सत्यं तत्पदान्यत्रास्मिन्प्रदेशे न लक्ष्यन्ते इति तद्वाक्ये सर्वाभिरङ्गीकृते तदन्तरङ्गाः काश्चित्सुहृद आहुः । नेति । अहो सा प्रेयसा विश्लिष्टेति न भ्रमितव्यं किन्तु तामुन्निन्ये बाहुभ्यामुत्थाप्य स्वकटिभागे गृहीतवानतस्तस्याः पदान्यत्र न लक्ष्यन्ते इत्येवं निश्चयेन ज्ञातव्यम् उन्नयननिनिमित्तमाहुः । तृणांकुरैः खिद्यती यतः सुजाते अङ्घ्रितले यस्याः तां ननु एवं तर्हि स्कन्धमारोपितमिति कुतो न कल्प्यत इति चेत्तत्राहुः । प्रेयसीं रसाविर्भावकरीं खेदाद्य जनकं कटिभागारोपणमेव तादृश्याः प्रेयस्याः समुचितमिति भावः ननु विश्रम्भं दत्त्वा तत्रैव कुतो न स्थितेत्याशंक्याहुः । प्रियः यतस्तस्या अपि सत्यविश्लेषे तथा परिरम्भणायामिष्ट इति भावः । निवृत्तिपक्षे अहं ब्रह्मास्मीत्याद्यास्तदैकार्थप्रतिपादिका आहुः । तस्याः पदानि अत्राखण्डैकरसे परमात्मनि न लक्ष्यन्ते शक्तिवृत्त्या प्रवृत्तानि नोपलभ्यन्ते ऽतो नूनं तृणांकुरस्थानीयैर्वाच्यांशैः खिद्यती सुजाते एकार्थनिष्ठत्वात्समानाधिकरणभूते अङ्घ्रितले कोमलपदे यस्यास्तामुन्निन्ये ऊर्ध्वं शक्तिवृत्ते प्राच्याः भागत्यागलक्षणया सर्वोत्तमं स्वरूपमानन्दैकरसमारोपितवान् यतः प्रेयसीं प्रियः संसर्गासंगिसम्यग्ज्ञानदातृत्वात्प्रेयसीं स्वयं च तदेकपरस्तस्याः प्रिय इति भावः ॥ ३१ ॥

एतत्कृत्वा अधिकमग्नानि प्रेष्ठपदानि च दृष्ट्वातिक्षुब्धस्वान्तास्तटस्थाभिमुख्यः प्रतिपक्षा आहुः । इमानीति । अहो सत्यमुक्तमेताभिर्यतो वधूं कामिनो ननु प्रेमिणः प्रेमवतीनामस्माकं त्यागात् कृष्णस्येमानि उपलक्ष्यमाणानि पदानि भाराक्रान्तानि यतो ऽधिकमग्नानि पश्यत स्थित्वा विचारयत यतो भवत्यो विचारचतुरा इति गोप्य इति शम्बोधनाशयः कामिन इत्यादिपदैरसूया व्यज्यते तथा च स्थूलदेहाया वध्वाः सुकुमारशरीरिणो वहनं भारेण पीडाकरमत्यन्तकामिचेष्टितं पददर्शनादप्यधिकखेदकरमिति भावः । निवृत्तिपक्षे सर्वकाम इत्यादिश्रुतय आहुः । हे गोप्यः । पालनशक्तिमत्परमात्मस्वरूपप्रतिपादनपराः यथोक्तश्रुतिलक्षणां वधूं वहतो यथोक्तरीत्या प्रतिपादकत्वेन धारयत इमानि कृष्णस्य सदानन्दविग्रहस्य सिसृक्षादिकामनाविशिष्टस्य पदानि ध्यानायोग्यधिकार्यन्तःकरणप्रत्ययलक्षणानि अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यत इत्युक्तत्वात् भाराक्रान्तानि यथोक्तमुख्यार्थवहनासमर्थानि पश्यत ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

खिद्यती सुजाते सुकुमारे अंघ्रितले यस्यास्ताम् उन्निन्ये स्कन्धमारोपितवानित्यर्थः ॥ ३१ ॥

पुष्पहेतोः पुष्पावचयार्थमवरोपिता स्कन्धादवतार्य स्थापिता पुष्पाणामपचयः लवनं कृतम् अत एव प्रपदाभ्यां चरणाग्राभ्यामुच्चपुष्पावचयार्थमाक्रमणं क्षोणीमर्दनं ययोस्ते अत एवासकले द्वे अग्रे एते पदे पादचिन्हे पश्यत कामः भक्तमनोरथपूरकः सङ्कल्पोऽस्यास्तीति तथा ॥ ३२ ॥

---

भाषा टीका ।

इहां या के चरण चिन्ह नहीं दीखैं हैं सो ठीक हमें मालूम पड़ै है कि जब याके कोमल सुन्दर चरण घांस के अंकुरो ते दूखवे लगे तब अपनी प्यारी राधिका प्यारे ने उपर उठाय लीनी है ॥ ३१ ॥

या ठिका ने या प्यारी के लिये प्यारे ने फुल के फूल तोरे हैं ताते या ठिकाने एक तरफ उंठे आधे चरण दीखैं हैं सो तुम सब देखो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्याः कृष्णजान्वन्तरुपविष्टायाश्चिह्नं दृष्ट्वाऽहुः । केशप्रसाधनमिति । कान्तामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकारेण बध्नता ध्रुवमुपविष्टम् ॥ ३३ ॥

रेमे इत्यादिशुकोक्तिः आत्मरतः स्वतस्तुष्टः आत्मारामः स्वक्रीडः अखण्डितः स्त्रीविभ्रमैरनाकृष्टोऽपि तथा चेष्टितमिति रेमे ऽत आह । कामिनामिति ॥ ३४ ॥ ३५ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

केशानां प्रसाधनं संस्करणं तच्च स्वाङ्गुलिभिः तदर्थात्मशिरोन्यस्तकङ्कतिकया वा तुशब्दो भिन्नोपक्रमे हीतिपाठे निश्चितं प्रसाधनप्रयोजनं सूचयन्ति । कामिन्याः कामिनेति । कामक्रीडासुखार्थमित्यर्थः । किम्वापूर्वोक्ताकामिन इातवत् ध्रुवं निश्चितमिति साक्षात्तल्लक्षणाभिव्यक्तेः ॥ ३३ ॥

स्वस्मिन् आत्मनि आत्मना स्वयमेव यद्वा स्वस्य आत्मना स्वभावेनैव रतस्तुष्टः चेति पाठे रेमे चेत्युक्तसमुच्चये चकारः ततश्च आत्मनैव रतस्तुष्टः तादृशोऽपि रेम इति तादृशत्वमधुना न स्थितमिति पूर्ववदर्थः पुनः पुनस्तथोक्तिस्तद्दार्ढ्याय अतस्तयैव तुष्टः तयैवारमात तद्विभ्रमैर्वशीकृतश्चेति तात्पर्य्यम् अतः प्रेमनिर्जितत्वेन तस्यां स्वयंस्वमर्पितमिति सूचितं तच्च भक्तवत्सलवरस्य प्रियजनप्रेमपरवशस्य तस्य न दोषः कश्चित् प्रत्युत निजभगवत्तासारप्रकटनरूपमहागुण एवेति पूर्वं बहुशो लिखितं श्रीभागवतामृतेच विवृतमेव यद्वा स्वात्मानः सख्येनात्मतुल्याः किंवा स्वस्यात्मानः प्रिया व्रजसुन्दर्य्यस्तासु रतोऽपि अखण्डितः सम्पूर्णः सन् कायमनोवचनासक्त्या साकल्येन रेमे इत्यर्थः । अन्यत्समानं नचैवं केवलं निजप्रिया एवानन्दिताः अन्येषामपि हितं कृतमित्याह । कामिनामिति । कामवशैः स्त्रीवशैश्च न भाव्यमिति लोकान् शिक्षयामासेत्यर्थः । तदेवाह साचेति । यद्यपि तादृशो व्यवहारो मानश्च न दुरात्मतया किंतु केवलमुभयोर्महानागरयोरन्योऽन्यं प्रेमविवर्द्धनो विशेषतश्च स्वाधीनभर्तृकात्वेनोचित एव तथापि दर्पस्तत्कृतोक्तिविशेषश्चेश्वरे ऽनुचित एवेति वैधोपासनाशास्त्रपरैस्तथा व्याख्यायते तद्दोषः परिहृत एव तयोर्ल्लोकशिक्षापरत्वात् यद्वा कामिनामिन्द्रादीनां दैन्यं दर्शयन् प्रेयसीकृततादृग्विलासादिसुखाभावात् स्त्रीणां च दुरात्मतां दुष्टविषयकात्मतां दुर्बुद्धितां वाश्रीकृष्णेतरकुत्सितपतिभजनात् अथवा कामिनः प्रति दैन्यं स्त्रियश्च प्रतिदुरात्मतामेव दर्शयन् शिक्षयन्नित्यर्थः । अयंभावः यदि कामक्रीडायां रसिकतास्ति तदारिरंसुभिः पुंभि रीदृश्या स्त्रीवश्यतया दीनैरेव भाव्यं स्त्रीभिश्च कंदर्पक्रीडादिषु लज्जादिकं परिहृत्य पुरुषं च वशीकृत्य स्वातन्त्र्यरूपधृष्टतापराभि र्भाव्यमिति एतच्च तयोर्वक्ष्यमाणवचनव्यवहारादेः किंवा उक्तव्यवहारस्याभिप्रायेण यद्वा अत्रोक्तरमणप्रकार एवायं दर्शितः ततश्च वैदग्धीविशेषेण कामशास्त्रोक्तविविधबंधादौ स्कंधद्वयोपरिस्त्रीपादद्वयनिधारणादिना दैन्यं दौरात्म्यं चाधरदशननखक्षतिकेशग्रहणपुरुषायितादिनोह्यं दैन्यदुरात्मता शब्दप्रयोगश्च ध्यानादिनिष्ठमुनिविशेषापेक्षया वस्तुतस्तु निजरसविशेषेण उक्तिभंग्येवेति यद्वा आत्मरत इति सप्तम्यन्तं तेन सहानयोरन्वयः ततश्च भावे क्तः आत्मरतो दैन्यं दुःखमेवेति कामिनः प्रति दर्शयन् तया कामभोगासिद्धेः आत्मरतौ दौरात्म्यमेवेति स्त्रियश्च प्रतिदर्शयन् तत स्वामिसंयोगासिद्धेः अतएवात्मारामता नादरेण तया सह स्वयं रेम इत्येषा दिक् अलमतिविस्तरेण एवंतद्वचनं श्रीव्रजदेवीनामपि संगच्छेत श्रीभगवत्तत्त्वज्ञाने निजभावाव्यभिचारेण रसविशेषमयत्वात् ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गर्भकाख्यमाल्यखण्डपतनं दृष्ट्वा पुनर्विपक्षा आहुः । केशेत्यर्द्धेन । तुशब्दो भिन्नोपक्रमे हीनि पाठे निश्चयम् । प्रसाधनप्रयोजनं सूचयन्ति । कामिन्याः कामिनेति । कामक्रीडासुखार्थमित्यर्थः । तादृशोपवेशं दृष्ट्वा सख्यस्त्वाहुः तानीत्यर्द्धेन । चूडयतेति ज्ञानन्तु स्वदेशे तादृशवेशस्य प्रायशो दृष्टेति ज्ञेयम् ॥३३॥

तदेवं श्रीगोपीजनमुखेनैव तया सह तल्लीलां प्रशंस्य स्वयमपि प्रशंसति रेम इति । स्वैः स्वांशरूपैर्वैभवैः वैकुण्ठीयलक्ष्म्यादिभिर्गोष्ठसम्बन्धिप्रेयस्यादिभिश्च हेतुभिरपरापेक्षारहिततया तत्तदंशिनि आत्मनि स्वस्मिन्नेव रतः स्वेनैव पूर्णकाम इत्यर्थः । तादृशोऽपि तथा आत्मारामः स्वरूपानन्दावेशतत्पर इत्यर्थः । तादृशोऽपि तया हेतुना रेमे तत्तदनादृत्य नन्दति स्म । तत्र हेतुस्तयेत्यर्थः । तच्छब्दस्य वक्तृबुद्धिस्थवैलक्षण्यव्यञ्जकत्वात् सर्वाधिकतत्प्रेमाश्रयविषयरूपयेत्यर्थः । रेमे तया चात्मरत इति पाठे आत्मारामशब्देन पौनरुक्त्यापातात् तत्पूर्णकामात्मकत्वादेवात्मरत इति लभ्यते । चशब्दश्च यथा तया तस्य रमणं ताभिर्वितर्कितम् । तथा रेमे च इति बोधयति । तदेवमपि पूर्ववदेव विवक्षितम् । ननु ताभिर्लक्ष्म्यादिभिः प्रेयस्यादिभिरपि तस्य रमणं दृश्यते तत्राह । अखण्डितः अनया हेतुना यथा ततस्ततः खण्डितः स्यात् । स्वपतेः सकाशात् खण्डितानायिकावन्मनसा विच्युतः स्यान्न तथास्याः सकाशादयं लक्ष्म्यादिभिर्हेतुभि र्न कदाचिदपीत्यर्थः । अतः प्रेमनिर्जितत्वादनेन तस्यां स्वं सर्वं समर्पितमिति सूचितम् । तच्च प्रियजनप्रेमवशत्वं तस्य महानेव गुण इति पूर्वं बहुशो लिखितम् । श्रीभागवतामृते च विवृतम् । तदेवं तस्या एतादृश प्रेमा येन तादृशोऽप्यसौ वशीचक्रे तस्य चैतादृशः येन तादृशात्मारामतापि तिरश्चक्रे । तदेवं तादृशालम्बनत्वप्रेमवशत्वविहीनाः कामिनः कामिन्यश्च स्वमहिम्ना परास्ततया दर्शिता इत्याह । कामिनां दर्शयन्निति । अत्र कामिनामिति मलमूत्रादितया परिणामिभिरन्नजलादिभिस्तर्प्यमाणो यो देहस्तत्तर्पणेच्छारूपकामस्वभावानां नतु सच्चिदानन्दविग्रहतया स्वतस्तृप्तानां नतु वा प्रियजनतर्पणमात्रस्वसुखलक्षणप्रेमस्वभावानामित्यर्थः । तेषां दैन्यं दुर्गतत्वम् । तथा स्त्रीणामपि मलमूत्रेत्यादिलक्षणानां नतु तस्यापि रमणहेतुतावगतसच्चिदानन्देत्यादिलक्षणानामित्यर्थः । तथा च तासां तद्विरोचनयोग्यता वक्ष्यते ताभिर्विधूतशोकाभिरित्यादिना । तदन्यस्त्रीणां दुरात्मतां तादृशदुर्गतनायकं वशीकृत्य हर्षगर्वादिदुष्टस्वभावतामित्यर्थः । तदुक्तं श्रीरुक्मिणीदेव्या त्वक्श्मश्रुरोमनखकेशेत्यादिना । अत्र श्रीकृष्णस्य तावद्वैलक्षण्यमुक्तमेव । याते पदाब्जमित्यादौ तद्वैलक्षण्यानुभवयोग्याश्च काश्चिदेव तद्वद्विलक्षणा एव भवन्तीति च ज्ञापितम् । तदेवं तेषाञ्च दैन्यं तासां दुरात्मतां दर्शयन्निति दर्शयद्विधुपराजयं रमावक्त्रामुल्लसति धृतलाञ्छनमितिवत् । सत्सरसिजोदरश्रीमुषेति वच्च । वाग्भङ्ग्या स्वनस्तत्तन्निष्कर्षातिशय एव प्रतिपादितः । ननु बुद्धिपूर्विका तेन तद्दर्शना सति स्वात्मरतत्वादिके कामिदैन्यादि दर्शनार्थमुपहासकजनवत्तदनुकरणमपि न घटते इत्यन्यथा तु न व्याख्यातम् । भक्तप्रेमवशता तु नाहमात्मानमाशास इत्यादिषु बहुषु सम्मतैव ॥ ३४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तानि चूडयता शिरोभूषणं कुर्वता ॥ ३३—४२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काश्चित्तस्याः कृष्णजान्वन्तरुपविष्टायाश्चिन्हं क्षोणीसंमर्दना-दिकमालक्ष्याहुः । केशप्रसाधनमिति । अत्र कामिना कृष्णेन कामिन्याः केशानामितस्ततो विश्लथतां प्रसाधनं पुनः सीमन्त-समीकरणाभ्यां बन्धनं कृतं कान्तामधिकृत्य तानि प्रसूनानि चूडयता शिरोभूषणं कुर्वता कृष्णेन नूनमुपविष्टम् ॥ ३३ ॥

१ इत्युक्तप्रकारेणैव प्रकारान्तरेणापि प्रळपनं कुर्वत्यः दर्शयन्त्य इति पाठे मिथः तल्लीला दर्शयन्त्यस्तच्चिन्हानि दर्शयन्त्यस्ता गोप्यस्तत्र तत्र विचेरुस उन्मत्तचित्ता विचेरुः ॥ ० ॥

किं विचेतोभिर्गोपीभिः केवलमित्थं सम्भावनामात्रं कृतमुत तत्सत्यमेवेति राज्ञः संशयं निराह मुनिः । रेम इति । तया गोपीभिरुद्धावितया कयाचिद्गोप्या च सह भगवान् रेमे कथम्भूतो-प्यात्मारामोऽप्यखण्डितोऽप्यवाप्तसमस्तकामत्वेन स्त्रीविभ्रमैरखण्डितचित्तोऽपि तथा चेत्किमिति रेमे तत्राह । कामिनां विषयासक्तचित्तानां दैन्यं तत्पारवश्यात्मकं स्त्रीणां दौर्जन्यञ्च दर्शयन् दर्शयितु-मित्यर्थः ॥ ३४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवरोहणं स्नेहाधिक्यादित्याशयेनाहुः । महात्मनेति । कथमिदमवगतं पुष्पनिमित्तादित्यत्राहुः । अत्रेति । अपचयः नखादिसंयोगेन यथा म्लानं न भवति तथा प्रलूनमिदमपि प्रेयसां प्रेमातिशयप्रकटनम् ॥ ० ॥

इदमपि चित्रमित्याहुः । प्रपदेति । हे गोप्यः ! प्रपदयोः पादाग्रयोराक्रमणं ययोरस्ति ते प्रपदाक्रमणे पते पदे पादलाञ्छने असकले असम्पूर्णे उन्नतशाखापुष्पावचये प्रियकृष्णकरावनमितशाखाग्रहणे दुःस्थपदत्वाद्यावत्पादप्रमाणरहिते पश्यतेत्यन्वयः केशमार्जन्या केशप्रसाधनं केशसंस्कारः कमु गताविति धातोः काम आनन्दः कामो गतिर्ज्ञानं चास्य स्त इति कामी पूर्णानन्द ज्ञानवानित्यर्थः । तेन कामिना प्रशस्तेच्छावता वा ॥ ३३ ॥

कान्तां स्त्रियं तानि पुष्पाणि चूडयता संस्कृतकेशपाशे सुदर्शनीयं निदधता कृष्णेनेह स्थले उपविष्टं पश्यतेति शेषः इदं ध्रुवं निश्चितं सन्देहं न कुरुतेत्यर्थः । अयं सर्वस्मादधिकशोकतम इत्याहुः । रेम इति । तया कामिन्या रेमे च सुरतशीलामप्यनुबभूव न स्वार्थमिति सूचयन्ति । आत्मरत इति । आत्मनि स्वरूपानन्दे रतः आत्मन्येवारामः क्रीडा यस्य स तथा आत्मरत आत्मक्रीड इति श्रुतिः अनेन विशेषणद्वयेन हरेर्विटवृत्तिं निषिध्यन्ति भगवत्प्रीतिसाधनभक्तिज्ञानादितारतम्यात्प्रीतितारतम्यमसूचि इति ज्ञायते तथा चान्या गोप्य इन्द्रियवृत्तयः कृष्णनीता कामिनीभक्तिर्बुद्धिर्वा ग्राह्येति बुद्धिमता तत्तत्पदानि तत्तदर्थबोधकत्वेन योजनीयानीति संग्राह्यमिति सन्तोष्टव्यं शोकादिकं च गुणानिमित्तमिति अत एवाखण्डितः कामिनेति शेषः ॥ ३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं स्वयमपि तया सह तल्लीलां प्रशंसति । रेमे इति ॥ ३४। ३५॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ततः क्वापि गत्वा उपवेशचिन्हमालोक्य काश्चिदाहुः । केशप्रसाधनमित्यादि । तु निश्चितम् अत्र कामिन्याः कामिना तेन केशप्रसाधनं कृतं तत्र हेतुमाहुः । तानीत्यादि । तानि अवचितानि प्रसूनानि चूडयता इह उपविष्टं ध्रुवं साक्षादेव दृश्यतामित्यर्थः ॥ ३३ ॥

अथ तस्या एव वृत्तान्तं श्रीशुकदेवः प्रस्तौति । रेमे तयेत्यादि तया सर्वा विहाय या नीतेत्यर्थः । ननु तस्य धैर्यस्य मेतदित्याहुः । आसु विरहितासु गोपीषु आत्मरतः आत्मना मनसा रतं रमणं यस्य भावे क्तः तया सहनीतया सह रेमे ननु कथमेतज्ज्ञातमित्याहुः । आत्मारामः अचिन्त्यपरमैश्वर्यः अत एव अखण्डितः अखण्डप्रेमा तुल्यप्रेमेत्यर्थः । दक्षिणनायकत्वात् मया परोक्षं भजता तिरोहितमिति तस्य स्वोत्केश्च तेन तासु मानसं रमणमस्यां कायिकमिति किंकुर्वन् कामिनां दैन्यं दर्शयन् स्त्रीणां च दुरात्मतां दर्शयन् अनुमानप्रयोगेण बोधयन् तथाहि यो यः कामी स स दीनः अनीश्वरत्वात् यत्र यत्रानीश्वरत्वं तत्र तत्र दीनत्वं पुरूरवो ययातिप्रभृतिवत् यो यो नैवं स स नैवं यथाह भित्यन्वयव्यतिरेकिणानुमानेन कामिनां दैन्यम् एवं गोप्यादयो न दुरात्मानः मदङ्गसङ्गवत्वात् यत्र यत्र मदङ्गसङ्गवत्त्वं तत्र तत्र न दुरात्मत्वं यथा लक्ष्म्यादिः या मन्दङ्गसङ्गवत्यो न भवन्ति ता दुरात्मानो भवन्ति यथा गोप्यादिभिन्नाः स्त्रियः इत्यन्वयव्यतिरेकाभ्यां सामान्यस्त्रीणां दुरात्मतां च दर्शयन्निति यावत् एतेन नाहं कामी नैताश्च स्त्रीत्वेन दुरात्मानः अपितु मल्लीलायिकत्वादासां स्त्रीत्वभावात् याम्यादि मम तु आसामनुवर्त्तनं लीलैवेति वाक्यार्थः आत्मसु आत्मप्रायासु गोपीषु रमत इत्यात्मारामः ॥ ३४—३५ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततोऽप्यन्या अधिकमेव सूचयन्त्य आहुः । केशप्रसाधनमिति । नखैरेव केशानां प्रसाधनं वेण्याकारेण आपीडाकारेण वा तुशब्दो ऽन्यथापक्षं व्यावर्त्तयति । नह्यत्र ज्ञानोपदेशः सम्भवति तदाहुः । कामिन्याः कामिना कृतमिति । एतदुत्थयापि भवति चूडायां पुष्पप्रवेशनन्तु उत्थितेन न भवति क्रोडे पुष्पाणि स्थापयित्वा क्रमेण तानि निवेशनीयानि अतः तानि चूडयता इहोपविष्टं ध्रुवमिति सत्यं कान्तामुप कान्तासमीपे कान्तामुद्दिश्य वा तथैवाकृतिर्दृश्यत इति ॥ ३३ ॥

एवं रसार्थं तस्या नयनं सामग्रीसम्पादनमलङ्करणं चोक्तं

---

१ अत्र मूलटीकयोः पारिवर्तनं विद्यते।

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

यदर्थमेतावत्तदाहुः । रेमे इति । पुष्टत्वात् कामस्य आत्मरतः तया च सह रेमे चकारात् लक्ष्म्या च अन्तः प्रविष्टाभिर्वा सापि रेमे इति या आत्मन्येव रतिर्यस्य तेन निष्काम एव तस्या यथेच्छं कामं पूरितवान् अस्यामपि दशायामात्मरत एव रसाधारत्वाय तस्यामात्मानं स्थापितवान् आत्मन्येव मुख्या रतिः आत्मन्येव रमणं क्रीडा च यस्य यतः अखण्डितः इन्द्रियैरन्तःकरणैर्विषयैर्वा यदि स्वानन्दोऽन्यत्र गच्छेत् तदान्यत्र रतो भवेत् ननु कथमेवमसमीचीनस्थाने एतावता प्रयासेन एवं रमणं कृतवानिति तत्र प्रयोजनमाहुः । कामिनां दर्शयन् दैन्यमिति कामिनस्त्वेवमेव दीना भवन्ति कामार्त्ता हि प्रकृतिकृपणा इति तेषामनुकरणं करोति अन्यथा तेषां निरोधो न स्यात् प्रयोजनान्तरमप्यस्तीत्याहुः । स्त्रीणामिति । स्त्रीणां च दुरात्मता प्रदर्शिता न तासां कदाचिदशक्तिरस्ति नापि सौकुमार्यं किंतु वशीकृते पुरुषे दौष्ट्यमेव कुर्वन्ति शालावृकाणां हृदयान्येता इति अत उभयबोधनार्थमेव रेमे ॥ ३४ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुनः सख्य आहुः । अत्रेति । महात्मना विदग्धशिरोमणिनेत्यर्थः यद्वा महे तत्प्रसाधनोत्सवे आत्मा मनो यस्य तेन पुष्पहेतोः पुष्पार्थमवरोपितेत्यशोकवृक्षोऽयमस्याः पादस्पर्शं प्राप्य सद्यः पुष्प्यति यथाहमेतत्पुष्पैरिमां प्रसाधयेयमिति बुद्ध्येत्यर्थः। अत एव महात्मना महाबुद्धिमता अत्राशोकशाखायां प्रसूनानामवचयः कृत इत्यत एवात्र प्रसूनानि न सन्तीति भावः । किंचिद्दूरशाखायां हस्ताप्राप्यायाः पुष्पावचयनार्थं प्रपदाभ्यामाक्रमणं क्षोणिसम्मर्दनं यतस्ते पदे अत एव असकले सम्पूर्णयोस्तयोर्भुवि चिन्हादर्शनात् कृष्णजान्वन्तरुपविष्टायास्तस्याश्चिन्हं दृष्ट्वा पुनर्विपक्षा आहुः । केशानां प्रसाधनम् अत्रत्यवनदेवतादत्तकङ्कतिकयेति बुध्यते कामिन्याः ननु प्रेमवत्याः स्वसखीरपि वञ्चयित्वा कामुकं नीत्वा रहो गतत्वात् कामिना ननु प्रेमवता प्रेमवतीनामप्यस्माकं विरहपीडाननुसन्धानात् ततश्च तानि तैः प्रसूनैः केशवां कान्तां कामिनीं चूडयता नर्मणा पौरुषं व्यञ्जयितुं चूडावतीं कुर्वता इह ध्रुवमुपविष्टमिति रहः केलिवार्ताप्यभूदिति भावः चित्मतोर्लुगिति मतुपो लुक् ॥ ३३ ॥

तदेवं गोपीनामुक्तिभिरेव तस्याः सौभाग्यातिशयं दर्शयित्वा स्वयमपि तमुपपादयति । रेम इति । आत्मारामोऽपि तया सह रेमे । तत्र हेतुः स्वात्मरतः तया सह शोभमानमात्मनो रमणं यस्य सः । आत्मारामतायां तथा सुखं न तस्य भवेत् यथा तया सह रमण इत्यर्थः । चात्मरत इति पाठे आत्मारामशब्देन पौनरुक्त्यापातादेवं व्याख्येयम् । च एवार्थे । तयैव सह आत्मना यत्नेन रतं रमणं यस्य सः । आत्मा यत्नो धृतिर्बुद्धिरित्यमरः । आत्मारामतायां तादृशसुखलाभाभावादेव तावान् यत्न इति भावः । ननु तर्हि तस्याः पूर्णत्वं प्रसक्तमत आह । अखण्डितः । तदपि पूर्ण एव नतु खण्डितः । तस्या ह्लादिनीशक्तित्वेन स्वरूपभूतत्वादिति भावः । ह्लादिनीशक्तित्वेऽपि सर्वाह्लादसारो यः प्रेमा तस्यापि परमावधिर्यो महाभावस्तद्रूपत्वादेव हेतोर्भगवन्न आत्मारामत्वेन ह्लादमात्ररमणादपिह्लादे महासारभूतया सह रमणस्याधिक्यमस्त्येव यदुक्तं तन्त्रे ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी तत्सारभूता राधेयमिति महाभावस्वरूपेयं गुणैरतिवरीयसीति ततश्च आत्मारामोऽपि तया सह स्वात्मरतः स्वात्मरतोऽप्यखण्डितः पूर्ण एव रेमे इत्यन्वयः तेन च भगवत्तत्त्वानभिज्ञानां प्राकृतविवेकिनां हितं च तेभ्यः स्वविलासतत्त्वस्य गोपनं चकारेत्याह । कामिनामिति । कामवशैः स्त्रीवशैश्च न भाव्यमिति लोकान् शिक्षयामासेत्यर्थः । कामवशत्वे सति पुमांसो दीनाः स्युर्दैन्ये च सति स्त्रियो दुरात्मानः स्युरित्यत्रार्थे भगवत्प्रेयसी च प्रमाणमिति यतस्ते इतस्ततो जल्पन्त उज्ज्वलप्रेम रसत्वगोपनस्य हेतवो बभूवुरिति भावः । तथा दर्शयन्नेव प्रेमरसतत्त्वं च गोपयाञ्चकारेति चैवशब्दाभ्यामेव वा व्याख्येयं यद्वा कामिनां सम्बन्धे दैन्यं दर्शयन् आत्मवन्मन्यते जगदिति न्यायेन ये कामिनस्तं दीनमेवापश्य याश्च स्त्रियः कामिन्यस्तां दुरात्मानमेवापश्यंस्तत्प्रयोजकौ भवन्नित्यर्थः । यद्वा कामिनां दैन्यं दर्शयन्निति कामिभिः सुरतप्रार्थनादिना दीनैर्भवितव्यं स्त्रीभिस्तत्रासम्मत्या दुरात्मभिर्भवितव्यमिति दर्शयन् रसिकजनान् ज्ञापयन् एवमेव रसपोषो नान्यथेति भावः ॥ ३४ ॥

---

## केनचित्कृता विशुद्धरसदीपिका ।

सख्य आहुः । अत्रेति । पूर्वार्धेन तासां सख्य आहुः उत्तरार्द्धेनेति विवेकः। तथाहि अत्र गोप्य इत्याद्युक्तिरात्मनस्तत् सौभाग्यमदेन महात्मना विदग्धशिरोमणिना कान्ता कामानामखिलसुखानामन्तः पर्य्याप्तिर्यस्यां सा परमानन्दरूपिणीत्यर्थः अत्रावरोपिता अङ्कादवतारिता कुतः पुष्पहेतोः तदभिलषितपुष्पावचयकृते इत्यर्थः । प्रियार्थे प्रेयसा कृत इति वक्ष्यमाणात् यतो महात्मना तस्या हृदयज्ञेनेत्यर्थः । तदनुमोदमानास्तत्सख्य आहुः हंहो साधु ज्ञातं प्रेयसा प्रीत्यतिशयवता प्रियायै इति प्रियार्थः चतुर्थीतदर्थार्थे इति समासः तस्याः केशवेशायेति भावः । अत एव केशवपदस्य तादृशं व्याख्यानं प्राणसख्यस्तत्रालिङ्गमाहुः । पदाग्रं प्रपदमिति कोशात् तदा क्रमणे तरुशिखरस्थपुष्पावचयाय विचरणे ययोस्ते असकले असमग्रे पदे पश्यत तदसहमाना गर्भकाख्यमाल्यखण्डनं दृष्ट्वा विपक्षा आहुः । केशेति । कामिन्या इत्यादि सामर्षम् तासां क्षोभाय तस्याः सुहृदः सोत्प्रासमाहुः। तानीति कुसुमानि चूडयता चूडायां योजयता कान्तानुपविष्टम् उपोऽधिके चेति कर्म्मप्रवचनीयः धम्मिल्लरचनाय किञ्चिदुच्चतयोपविष्टमित्यर्थः ॥ ३३ ॥

ततश्च तादृशवर्णनेनोद्दीपितभावा अर्द्धमेव वाक्यमसमाप्य सवासनानामानन्दजननाय तस्याः सौभाग्यमभिनन्दन्ति तद्दावेशेन श्रीमुनीन्द्रचरणा अप्याहुः । रेम इति । आत्मनेपदसन्निहितपदाभ्यामात्मत्वेन निर्दिष्टायाः प्राणप्रियायाः सुखमेवात्मसुखमित्यनुमननाय तस्याश्च प्रकरणादेव लाभे तयेत्युक्तिस्तत्पदलक्ष्यार्थभूतयेति मुनीन्द्राभिप्रायः तया अनिर्वचनीयसौभाग्यवास्मदनुभूतयेति वा रेमेचेति चकारः समुच्चयार्थः आत्मरतः आत्मनि तस्यामेव रतः तत्त्वमस्या आत्मना रमया रेम इति ब्रह्मसंहितोक्तेः ततश्च शक्तिवादो निराकृतो बोद्धव्यः

केनचित्कृता विशुद्धरसदीपिका।

तत एव च परिकरत्वमपि अन्यासां शक्तित्वे परिकरत्वे च न कोऽपि विरोधः तदुक्तं श्रीकृष्णयामले—

याः शक्तयः समाख्याता गोपीरूपेण ताः पुनः।
सख्यो भूत्वा राधिकायाः कृष्णचन्द्रमुपासते॥

तस्याः सख्यस्त्रियोऽपरा इत्यादिपुराणे च या च तस्या अपि यत्र कुत्रापि शक्तित्वश्रुतिः सा त्वाकृतिसाम्यादभेदाभिप्राया चेत्येतत्परमतोपन्यासेन प्रदर्शितं मूर्द्धाम्नायतन्त्रे तस्या एव स्तवराजे—

केचिच्छ्रियं त्वां कतिचिच्च गौरीं परे परेशीं ब्रुवते कवीन्द्राः।
परात्परं ब्रह्म सनातनत्वं गुणत्रयेणैव बिभर्षि—लोकमिति॥

अत्रोत्तरार्द्धे स्वमतमित्युत्तरत्र उपन्यस्तं गुणत्रयमुक्तं बृहद्गौतमीये-

सत्त्वं तत्त्वं परत्वं च तत्त्वत्रयमहं किल।
त्रितत्त्वरूपिणी सापि राधिका परदेवतेति॥

सत्त्वं कार्य्यं तत्त्वं कारणत्वं परत्वं ततोऽपि भिन्नत्वमित्यर्थः। यद्वा श्रीत्वेन तदेकाश्रयत्वं गौरीत्वेनार्द्धाङ्गीत्वं परेशीत्वेन तादात्म्यमिति शक्तिवादाभिमतं गुणत्रयं तेन लोकम् अवान्तरोपासकं बिभर्षि तत्तदात्मत्वेन पोपासि स्वरूपतस्तु तुरीयं त्रिषु सन्ततमित्यादिन्यायेन परादपि परं यद्ब्रह्म तदेव त्वं परस्याप्यात्मेति ब्रह्मात्मनोः पर्य्यायत्वमयमात्मा ब्रह्मेति श्रुतिभिः सिद्धमिति संक्षेपः तथाथर्वणि पुरुषबोधन्यां द्वादशवनवर्णनप्रस्तावे तस्याद्या प्रकृती राधिका नित्या निर्गुणा सर्वालङ्कारशोभिता प्रसन्नाऽशेषलावण्यसुन्दरी अस्मदादीनां जन्मदात्री अस्या अंशांशा बहवो विष्णुरुद्रादयो भवन्तीति श्रुतिरपि अस्या अर्थः तस्य परपरब्रह्मणः आद्या प्रकृतिः आद्यं स्वरूपमित्यर्थः। संसिद्धिप्रकृती त्विमे स्वरूपञ्च स्वभावश्च निसर्गश्चेत्यमरः स्वरूपस्यादिमत्त्वमविकृतत्वमेव प्रकृतिशब्दस्य शक्तिवाचित्वे तस्येति आद्या इति च विरुध्येतेति ध्येयं कासावित्यत आह। राधिका आराध्या मम नाम्नापि विज्ञेया तेन राधिकेति श्रीकृष्णयामलनिर्वचनानुसारेणाभेदाध्यवसायाच्छक्तिशक्तिमत्त्वं परास्तं नित्या कालत्रयेऽप्येकरूपा निर्गुणा अप्रसिद्धेस्तद्गुणानां रहस्यत्वाच्च निर्गुणा यद्वा मायागुणातीता तथात्वे च सर्वालङ्कारशोभिता सर्वसन्देहासंकुचिततया वृत्त्या सात्त्विकैराङ्गिकैश्चालङ्कारैः स्वरूपभूतैरेव शोभिता तथा दर्शिता मुक्ताचरितेश्रीरघुनाथेन यथा महाभावस्वरूपेयं नित्यदा वार्षभानवी। सखी प्रणय सद्गन्धवरोद्वर्त्तनसुप्रभा कारुण्यामृतवीचीस्तारुण्यामृतधारया लावण्यामृतवन्याभिः स्नापिता ग्लापितेन्दिरा ह्रीपट्टवस्त्रगुप्ताङ्गी सौन्दर्य्यघुसृणाञ्चिता श्यामलोज्ज्वलकस्तूरीविचित्रितकलेवरा कम्पाश्रुपुलकस्तम्भस्वेदगद्गदरक्तता उन्मादोजाड्यमित्येतैरत्नैर्नवभिरुत्तमैः क्लृप्तालंकृतिसंश्लिष्टा गुणालीपुष्पमालिनी धीरा धीरात्वसद्वासः पटवासैः परिष्कृता प्रच्छन्नमानधम्मिल्ला सौभाग्यतिलकोज्ज्वला कृष्णनामयशः श्राविवनं सोल्लासिकर्णिका रागताम्बूलरक्तोष्ठी प्रेयकौटिल्यकज्जला प्रणयक्रोधसञ्चोली बन्धगुप्तीकृतस्तनी नम्मभाविननिष्यन्दास्मितकच्चूरवासिता सौरभान्तरगृहे गर्वपर्य्यङ्कोपरिलीलया निविष्टा प्रेमवैचित्र्यविचलत्तरलाञ्चिता मध्यतात्मसखीस्कन्धलीलादत्तकराम्बुजा श्यामा श्यामस्मरामोदमधूलीपरिपोषिकेति अथवा सर्वानलङ्करोति ऐश्वर्य्यादिना भूषयति सर्वालङ्कारः स्वयं भगवान् तेन नित्यपार्श्वस्थेन शोभिता वर्त्तमाने क्तः एवं नित्ययोगोऽपि दर्शितः तथा बह्वृचश्रुतिः राधया माधवो देवो माधवेनैव राधिकेत्यादिपरिशिष्टे दर्शिता तत एव प्रसन्ना आनन्दितेत्यर्थः शेषं स्पष्टं तत्र अंशांशा अंशो मायाख्या शक्तिः अंशः शक्तिसमावेश इत्यादिपुराणात् तस्या अंशा इवांशाः गुणत्रयाधिष्ठातारः अधिष्ठानाधिष्ठेययोरभेदाभिप्रायेणेदमितिसंक्षेपः ननु श्रीमुनीन्द्रैरपि यत्र तत्राचिन्त्यशक्तिरियमित्यभिधायीतिचेत्सत्यं तद्धि सर्वथाराध्यत्वाभिप्रायेणेत्यवेहि यथा श्रीसुधानिधौ प्रेम्णः सन्मधुरोज्ज्वलस्य हृदयं शृङ्गारलीला कला वैदग्धी परमावधिर्भगवतः पूज्यैव कापीशता ईशानां च शचीमहासुखतनुः शक्तिः स्वतन्त्रा परा श्रीवृन्दावननाथपादपद्ममहिषी राधैव सेव्या ममेति स्वात्मरत इति पाठे स्वैःस्वांशरूपैर्वैभवैर्वैकुण्ठलक्ष्म्यादिभिर्गोष्ठसम्बन्धिप्रेयस्यादिभिश्चापरापेक्षारहिततया न तदंशिनि आत्मनि स्वास्मिन्नेव रतः स्वेनैव पूर्णकाम इत्यर्थः। तथा आत्मारामः स्वरूपानन्दावेशात्तत्परः तादृशोऽपि तया हेतुना रेमे तत्तदनादृत्य नन्दति स्म तत्र हेतुस्तयैवेव तच्छब्दस्य वक्तृचित्तस्थवैलक्षण्यव्यञ्जकत्वात् सर्वाधिकप्रेमाश्रयाविषयरूपयेत्यर्थः। ननु लक्ष्म्यादिभिः प्रेयस्यादिभिरपि तस्य रमणं दृश्यत इतिचेत्तत्राहुः। अखण्डितः अनया हेतुना यथा सक्त इति तस्ततः खण्डितः स्वपतेः सकाशात् खण्डिता नायिका वन्मनसा विच्युतः स्यात्तथा अस्याः सकाशात्ताभिर्हेतुभिर्न कदाचिदपीत्यर्थः। अथवा अखण्डितः अविशिष्टमपर्य्यायानेकशब्दप्रकाशितम् एकं वेदान्तनिष्णाता अखण्डम्प्रतिपेदिर इत्यादिना लक्षितः श्रीराधाश्रीकृष्णेत्याद्यनेकशब्दप्रकाशितत्वेऽप्येक एव इत्यर्थः श्रीपञ्चरात्रेऽपि—

हरेरर्द्धतनू राधा राधिकार्द्धतनूर्हरिः।
अनयोरन्तरादर्शी मूर्ध्वच्छेदकोऽधम इति॥

अत्र तनुशब्दः स्वरूपवचनः उत्तरपादे मूर्द्धच्छेदक इत्युक्तेः अत एव लीलायामपि प्रथमेऽर्थे प्रेमनिर्भीतत्वात्तदनेन तस्यां स्वं सर्वमप्यर्थितमिति दर्शितं तदेव तादृशालम्बनप्रेमविहीनाः कामिनः कामिन्यश्च स्वमहिम्ना परास्ततया दर्शिता इत्याह। कामिनामित्यादि एवं च नायं कामविहारः किन्तु प्रेमविहार इति फलितम् अत्र कामिनां तत्तत्तर्पणेच्छारूपकामस्वभावानां नतु सच्चिदानन्दरूपतया स्वतस्तृप्तानां नवा प्रियजनतर्पणमात्रस्वसुखलक्षणप्रेमस्वभावानामित्यर्थः। तेषां दैन्यं दुर्गतत्वं तथा स्त्रीणां तदन्यासां ;तादृशदुर्गतनायकं वशीकृत्य गर्वादिदुष्टस्वभावानां दुरात्मतां दर्शयन् लोकेष्विति शेषः अत एवानन्दवृन्दावनचम्पूमनु० एवंराधाप्रेमधामा यया सावात्मारामोऽप्याप्तकामोऽप्यदभ्रं रेमे यस्मात्कामिनां कामिनीनां न्यक्कारोभूदात्मनैवेति मन्ये अथवायमर्थः नान्वित्थं तत्तद्वाक्यानुसारेण परमानुकूलस्य नित्यदा तस्यामेवासक्तस्य रासक्रीडायां वहीभिर्धिरुद्धवासनाभिश्च बाहुप्रसारेत्यादिना रमणमयुक्तमित्याशङ्क्याह। रेम इति। तया सह या तया लोकोत्तरसौभाग्यसम्पत्त्यैव आत्मरतः तयैव चात्मारामः तस्या एव तदात्मत्वनिर्देशादिति भावः अतएवाखण्डितः प्रेमाखण्डरसो मत इत्युक्तेः अखण्डपरमप्रेमाणं प्राप्त; सततासक्त इति यावत् आत्मनः अखण्डैकरसत्वेन प्रसिद्धेः यद्वा अखण्डितत्वमविच्छिन्नत्वं तेन नित्यविहारः सूचितः एवंभूतश्च सन् आस्वपि

## केनचित्कृता विशुद्धरसदीपिका ।

रेमे अपीत्यनेनौदासीन्यव्यक्तिः ये यथा मां प्रपद्यन्ते तांस्तथैव
भजाम्यहमित्यादिन्यायेन कासां चित्कान्तभाववतीनां व्रजादौ
सिद्धानां साधकचरीणां च मयेमा रंस्यथ क्षपा इतिदत्तवरा-
णाञ्च संकल्पसिद्धये न तु निजाभिलाषेणेति भावः । नन्वेदमसम्भा
वितम् इत्थम्भूतगुणो हरिरितिवत्सङ्कीर्णस्यापि प्रेम्णस्तादृशसाम-
र्थ्यात् अत एव कामिनामिव दैन्यं दर्शयन् अर्थात्तासु स्त्रीणाञ्च
तादृशीनामपि दुरात्मतां कामात्मताञ्च लोकेषु दर्शयन् न च स्वयं
तथाभूत इत्यर्थः । एवञ्च साधकानुग्रहः साधितः ततश्च सत्यपि
प्रेमविलासेऽन्तरान्तरा सौभगमदोदयेन कामित्वव्यक्त्या सम्भा-
वितमेवौदासीन्यं तच्च तासान्तत्सौभगमदमित्यादिना दर्शितं निज-
स्य केवलपरमवत्त्वादिति भावः । यद्वा तयैव कस्मिंश्चिल्लीलाविशेषे
नियुक्तः संस्तथाश्चक्रे ननु तया कथमेवंविधे कर्म्मणि निर्बन्धेन
नियुज्येतेत्याशङ्क्य फलवलकल्प्यं कारणमाह । कामिनामित्युत्तरा-
र्द्धेन । तथा हि अहो कामिनः स्वप्रियासु कथं दैन्यमनुशीलयन्ति
ताश्च तादृशेषु तदेकमानेषु कथं दुर्ग्राह्यहृदया भवन्तीति कौतु-
कावलोकनेच्छया कासाञ्चित्साधकचरीणां नित्यसहचरीसङ्गप्रभा-
वेणोपनततादृशभावानां शुद्धप्रेमपरीक्षणाय स्वप्रियतमस्य तस्यैव
वाऽऽनुकूल्यास्वादाय प्रयोजित इति अर्थश्चायं मदमानाद्यात्मके
कामिनीनां प्रेमणि कामिनां यद्दैन्यं लोकप्रसिद्धं तदेव स्वद्वारा
दर्शयन् प्रकटयन् स्त्रीणाञ्च तत्र तत्र या मदमानात्मिका दुरात्मता
दुर्द्धरचित्तता स्वतन्त्रता स्वाधीनपतिकात्वमिति यावत् दुर्ग्राह्य
आत्मा दुरात्मा तस्य भावो दुरात्मतेति व्युत्पत्तेः
तां च स्वप्रेयसीद्वारा स्वप्रणयलालित्येन च स्वयमेव प्रकटयन्निति
सा च तासामतिविहारेणेत्यादिना दर्शयिष्यते तासां तु रसावेशा-
त्तत्तदनुसन्धानाभावो युक्त एवेति सर्वमनवद्यम् एवं च स्वाधीनप-
तिकात्वं सुसिद्धं तदुक्तं निरन्तरप्रेमवशात्पार्श्ववर्तीव यत्प्रियः ।
वाग्वशप्राय आभाति सा स्यात्स्वाधीनभर्तृका यथालङ्कार एवं
मम सखीप्रिया रचय वेशमस्याःस्वयं प्रसादय सखीमिमां मयि वृथैव
जातक्रुधम् इतिप्रणयकौतुकादिव नियोजितो राधया चकार रसि-
काग्रणीरथ तथा स्वयम्माधवः अत एव दर्शयन्नित्युक्तं नत्वाचरन्निति
अर्थात्तस्या एवेत्यर्थः । तच्च यथा कामिनो दीना भवन्ति तथा तासु
दैन्यमभिनीय स्त्रीणां च तासामेव तत्सखीनां दुर्ग्राह्यात्मतां तादृश
परमलम्पटमणिना तथा तथाचरणेऽपि शुद्धसख्यावेशेन भावान्त-
रास्फूर्त्तिच स्वद्वारैव स्वयमेव दर्शयन्निति तासां तदेकनिष्ठतया
तत्स्फूर्त्याभासो निराकृतःतथा दर्शितं श्रीसुधानिधौ तादृङ्मूर्त्तिर्व्र-
जपतिसुतः पादयोर्मे पतित्वा दन्ताग्रेणाथ धृततृणंककाकुवादान्
ब्रवीति नित्यंचानुव्रजति कुरुते साहसायोद्यमंश्चेत्युद्वेगं मे प्रणायिनि
किमावेदयेयं नु राधे इति अथवा तया खण्डितो रेमे कथमित्याका-
ङ्क्षायामाह । आत्मरतः आत्मारामोऽपि आत्मनि तस्यामेव रतं निधु-
वनं यस्य सः आत्मा सैव आरामो यस्य सः आरामः स्यादुपवन-
मिति कोशाद्वनेऽपि पुष्पाद्यवचयायैतस्ततो भ्रमणं तस्या एव
तत्तदङ्गभ्रांत्यति भावः। प्रसिद्धेऽर्थे पौनरुक्त्यं दुर्वारमेव एवं चविशेष-
णद्वयेन कुञ्जवनक्रीडे सूचिते किं कुर्व्वन् कामिनामित्यादि कामिनो
हि यथा प्रतिक्षणं संभोगसुखमनुभवन्तोऽप्यतृप्ततया दीना
भवन्ति यथा च स्वाधीनपतिकाः स्त्रियः सौभाग्यमदगर्विता निज-
रमणं नवनवायमानं सुखमनुभावयन्त्योऽपि दुर्ग्राह्यात्मतयावाम्य-
मनुशीलयन्ति तत्तच्च स्वात्मद्वारा दर्शयन्नित्यर्थः । तत्कर्तृत्वानिर्देश-
श्चाभिप्रायेण यदाहुः वामता दुर्लभत्वं च स्त्रीणां या च निवारणा
तदेतत्पञ्चबाणस्य मन्ये परमामायुधमिति तथाप्यखण्डितः यत्कस्यां
चिदप्यवस्थायां तत्सुखान्मनसोऽ विरतिस्तदेवाखण्डितत्वमि-
त्यर्थः । यद्वा तया कर्त्र्या आत्मनि स्वस्मिन् रतं पुरुषायितं
निधुवनं यस्य स आत्मरतः आत्मैव आसर्वतो वेषेण भावेन च
रामा यस्य स आत्मारामः तदेवं स्वभावविनिमयो दर्शितः यथाऽयं
हरीयते सा सच राधिकायते निरन्तरं भावनयोभयोरुभौ विप-
र्य्ययेणापि विपर्य्ययोत्थितां सम्भोगसीमां सदृशीमुपेयतुरिति
तत्र हेतुः अखण्डितनित्यविहारीत्यर्थः । एवं च परमावेशवैवश्येनाति-
रहस्यलीलाप्रकाशनेऽपि श्लिष्टपदप्रयोगेण संगोप्यैव कथनान्मुनी-
न्द्रस्य तासां तत्सखीनां च तामनु ममत्वातिशय एव स्पष्टं प्रकाशित
इति ज्ञेयं वस्तुतस्तु तया तत्पदलक्ष्यत्वेनात्मभूतयाऽखण्डितो
रेमे तत एवात्मरतः तत एवात्मारामोऽपि रतिरत्र शुद्धा प्रीतिः
रामो रमणं तत एव च कामिनां दैन्यं स्त्रीणां च दुरात्मतां
दर्शयन् नहि स्वयं कामी आत्मरतत्वान्नासौ स्त्री आत्मत्वादिति
संक्षेपः एवं चसाधूक्तं कंदर्पदर्पहेति स्वामिपादैरितिदिक् ॥ ३४ ॥

---

## श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे केशप्रसाधनचिन्हमनुभूयाहुः । केशेति । अत्र तु यथा
आल्हादिन्या अपि चन्द्रप्रभायाश्चन्द्राश्रयं विना स्थित्यसम्भवात्स्वा-
श्रयतया चन्द्रकामस्तथा तदाल्हादशक्तिरूपायास्तस्याः सर्वोद्धा-
राय परभक्तिरूपतया विर्भूतायाः स्वाश्रयविषयतया तत्काम-
स्यावश्यकत्वात्तत्कामिन्याः परां भक्तिं विना नित्यसिद्धस्यापि
निरतिशयपरमानन्दस्याविर्भावासंभवात्स्वरूपानन्दस्य लीलासौ-
ख्यात्मनानन्तगुणतयाविर्भावाय तत्कामिना केशयोः प्रसाधयतापि
तेन तस्याः केशप्रसाधनं विशालभालसीमन्तमुक्तादामशिरोमण्या-
दिभूषणपरिधानपट्टिकनिर्माणपूर्वकं वेण्याकारेण संग्रथनं कृतं तथा
तानि स्वयं तदर्थं प्रपदाक्रमणादिना संचितानि प्रेमातिशयेन
स्वतः प्रफुल्लितद्रुमलतासुमनांसि नीलनिशानभसि भगणानीव
श्यामस्निग्धस्ववक्षसि मुक्ताफलानिव कृष्णाकारस्निग्धस्वभक्तमनांसि
सितसात्त्विकगुणगणानिव स्वकान्तौ भक्तजनासितमृदुमञ्जुसुमनां-
सीव कान्तां प्रति चूडयता तत्केशबन्धे संग्रथयता इह महत्सौ-
भाग्यवत्यां भूमौ तामुपविष्टम् उप समीपे तां जान्वोर्निवेशयित्वा
स्थितं ध्रुवमिति निश्चितं नात्र संदेहलेशोऽपीति भावः । उपलक्षण-
मेतत्सर्वाङ्गशृङ्गाररचनायाः ॥ ३३ ॥

एवं कृततच्छृङ्गारस्य तस्य तया रमणमाहुः । रेमे तयेति ।
आनन्दस्यैव प्रेमास्पदतया स्वात्मना एव नित्याविर्भूतपरमानन्दतया
स्वात्मन्येव रतः आनन्दानास्पदे रमणासंभवात् एतस्यैवानदस्या-
न्यानि भूतानि मात्रा मुपजीवन्तीति श्रुत्या यत्र यत्र रमणं तत्र
तत्रात्मलेशाविनाभावात् आत्मन्येवारामो यस्य तथाभूतः सर्वत्र
तन्मात्राया एव प्रतिबिम्बात्मना रमणास्पदत्वेऽपिअत्र तु बिम्बात्मना
अखण्डित एवानन्दघनोऽपि तया अतिविलक्षणरूपगुणशीलप्रेमनि-
धिरूपया स्वयं रेमे नात्र चित्रम् आत्मा तु राधिका तस्येत्यादिभि-
स्तस्यास्तदात्मकत्वात्तया रमणेऽपि नात्मारामत्वादीनां क्षतिः नन्वा-
त्मारामे स्वानन्दपूर्णे तस्मिन् रमणफलस्यात्मगामित्वानुपपत्तेः

श्रीरामनारायणकृतभावभावविभाविका ।

कथमात्मने पदप्रयोगस्तत्राहुः । दर्शयान्निति । अखिलकलादिगुरु- भंगवान् संसाराननुबन्धिनीं प्रत्युत कामिनामपि सजातीयविहार- प्रकटनेन मनोहरणेन ध्यानादिद्वारा संसारमोचिकामतिविलक्षणां कामकलामाविष्कुर्वन् कामशास्त्रानुसारेण कामिनां दैन्यमेव रसोद्बोधकतयोचितस्त्रीणां तु दुरात्मतां न्यक्कारादिना वाम्यभाव एव रसोद्बोधक इति दर्शयन् रेमे तथा च रमणफलस्यात्मगा- मित्वदर्शनं विना दैन्याद्युपपत्तेरात्मने पदप्रयोग इति भावः ॥ ३५ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो एतावतैव क्षुब्धस्वान्ताः संपन्नाः प्रेयसा प्रेयस्यर्थे ऽन्य- दपि यत्कृतं तत्पश्यतेति तत्सुहृद आहुः । अत्रेति सार्धेन । अत्र पुष्पहेतोर्महात्मना चतुरशिरोमणिना कान्ता अवरोपिता महे केशप्रसाधनोत्सवे आत्मामनो यस्येति वा अत्र तु प्रसूनानां पुष्पाणामवचयः प्रियाया अर्थे प्रेयसा कृतः पुष्पहेतोः प्रियार्थं इत्यनेन तत्प्रियार्थमेवावरोपणं नतु भारजनितश्रमानिवृत्त्यर्थ- मिति सूचितं ननु इदं कुतो ज्ञातमित्याशङ्क्याहुः । प्रपदाभ्यां पादाग्राभ्यामाक्रमणं भुवो यत्र ते असकले पदे पश्यत सम्पूर्णयोस्तयो र्भुवि चिन्हानवलोकनात् प्रतिवृक्षाभिप्रायं पद इति द्वितीया तेन पदान्यत्र महात्मन इति विष्णुपुराणोक्तबहुत्वेन पूर्वो- क्तबहुत्वेन च न विरोधः निवृत्तिपक्षे नान्योऽतोऽस्ति द्रष्टा नान्यो- तोऽस्ति श्रोतेत्याद्यास्तत्पक्षपातिन्य आहुः सार्द्धेन मात्रेषु ध्येयाका- रकयोग्यप्रत्ययेषु महात्मना यथोक्तकान्ता अवरोपिता स्वार्थबो- धकत्वात्तद्रहिता कुत इत्यत आहुः पुष्पस्य तदर्थाकारवृत्तिलक्ष- णफलहेतुभूतार्चैत्तकाग्र्यलक्षणस्य हेतोः एषु प्रत्ययेषु प्रियाया अर्थस्याविर्भाव्यर्थमैकाग्र्यलक्षणपुष्पसंचयः प्रेयसा सम्पादितः यतः पदाभ्यां पदयोर्वा वाच्यार्थाभ्या माक्रमणं ययोस्ते असकले जीवनोपासकत्वेश्वरत्वोपास्याक्रान्ते पदे चैतन्ये पश्यत इदं श्रुत्वा सम्यक्तद्भूमिभागमवलोक्य कृष्णजान्वन्तरुपवि ष्टायास्तस्याः चिन्हमालक्ष्य विपक्षा आहुः । केशेत्यर्द्धेन अहो सत्यमुक्तं यतो ऽत्र कामिन्याः नतु प्रेमवत्याः स्वसखीः वञ्च- यित्वा कामुकं गृहीत्वा गतत्वात् कामिना नतु प्रेमवता प्रेमवतीना- मस्माकं विरहपीडाननुसन्धानात् केशानां प्रसाधनं वेण्याका- रेणा ऽऽपीडाकारेण वा देवदत्तकङ्कतिकया नखैर्वा कृतं तुशब्दो विपक्षनिरासार्थः नह्यत्र ज्ञानार्थमुपवेशनं सम्भवति द्वयोरपि कामाक्रान्तत्वादिति सूचयितुं कामिन्या इत्यादि अहो सत्यमिति तत्सुहृद आहुः तानीत्यर्द्धेन कान्तामधिकृत्य तानि पुष्पाणि चूडयता चूडाकारेण बन्धनाय ध्रुवमुपाविष्टं यद्वा चूडायां पुष्पप्रवेशनं ग्रथितेनापि भवति अतस्तानि क्रमेण चूडायां निवेशयता कांता समीपोपविष्टं ग्रन्थितमपि ध्रुवमतस्तत्संदृश्यं लब्धमतः किमर्थं स्पर्धया खिन्ना भवतेति भावः । निवृत्ति- पक्षे अतः परं पराजितास्तत्पक्षमनुमोदयन्ति । केशेति कामिन्यास्तत्प्रतिपादनकामनावत्यास्तत्पदप्रतिपाद्यस्य केशस्य ब्रह्माद्यधीशस्य प्रसाधनमत्र ध्येयाकारप्रत्ययेषु कामिना स्वानु- गृहीतमोक्षाभिलाषुणा प्रभुणा कृतं तत्त्वमसि श्रुतिलक्षणं कान्ता- मधिकृत्य तानि तत्त्वमसीति पदानि चूडयता चूडास्थानीयैक-

ग्यादिपरत्वं नयाधिकारिणा सहोपविष्टमभिन्नतया स्थित- मित्यर्थः ॥ ३३ ॥

एवं गोपीमुखेनैव राधया सह भगवल्लीलामुपवर्ण्य स्वय- माह शुकः । रेम इति । आत्मनि स्वस्वरूप एव रतः नतु स्त्र्यादौ आत्मन्येवारामः क्रीडा यस्य नतु स्त्र्यादौ अत एवाखण्डितः स्वस्वरूपा दप्रच्युतस्तथाभूतोऽपि भगवांस्तत्प्रेमवशीकृत- स्तया राधया यथा ताभिस्तपः कृतं तथा रेमे चेत्यर्थः । यद्वा अखण्डितः अस्याः सकाशादविच्युतः सन् यद्वा अप्यर्थे चः आत्मारामोऽपि अखण्डितोऽपि स्त्रीविभ्रमैरनाकृष्टोऽपि तया रेमे ननु तथा भूतः किमर्थं रेम इत्याशङ्क्य लोकोपदेशार्थमेव विडम्बनं चकारेत्याह । कामिना मिति । कामिनस्त्वेवमेवा- तिदीना भवन्ति दैन्येन चैवमेव निरादरं प्राप्नुवन्तीत्युप- दिशन् तेषामनुकरणं कृतवानिति तथा स्त्रीणां दुरात्मतां दौष्ट्यं दर्शयन् वशीकृतपुरुषे दौष्ट्यमेव कुर्वन्तीत्युपदिशन् एवं कृतवानित्यर्थः । तथाच कामवशे स्त्रीवशे च न भाव्यमिति लोकान् शिक्षयामासेति भावः । यद्वा ईदृशप्रेमविहीनाः कामिनः कामिन्यश्च स्वक्रीडया सदा तर्पिता इत्याह । कामिनां देहे- न्द्रियादितर्पणेच्छारूपकामस्वभावानां दैन्यं दुर्गतत्वं स्त्रीणामपि तादृशीनां तदन्यासां दुरात्मतां दुर्गतनायकवशीकारेण गर्वादि- दुष्टस्वभावतां दर्शयन्नित्यर्थः । यद्वा कामिभिः सुरतप्रार्थनादिपरै- र्दीनैर्न भवितव्यं स्त्रीभिस्तत्रासम्भवन्ति पराभिभावितव्यामिति रसिकान्बोधयन्नित्यर्थः । निवृत्तिपक्षे सर्वश्रुतिविरोधानिवृत्त्या तया रेमे तत्प्रतिपाद्याऽखण्डितः अखण्डकरसः आत्मरतः सर्वं कामवि निर्मुक्तः अतः एवात्मारामश्च चकाराभ्यां सत्यज्ञानानन्तानन्दस्वरूपः आधिकार्यन्तःकरणवृत्त्याऽऽरूढो जात इत्यर्थः । नचास्ति द्वा सुपर्णा सयुजासखाया समानं वृक्षे परिषस्वजाते तयोरन्यः स्वाद्वत्त्यनश्नन्नन्यो भिचाकशीति श्रुतिविरोधः तत्प्रकरणपर्य्यालोचनयास्य मन्त्रस्याऽभेद परत्वावगमात् तथाहि ब्रह्मैवेदममृतं पुरस्तादिति वाक्ये ब्रह्मणः सर्वात्मत्वेन निर्दिष्टे ननु ब्रह्मणो भोक्तृत्वमपि स्यादतो न युक्तं सर्वात्मत्वमित्याशङ्कानिरासायायं मन्त्रः पठ्यते यौ द्वौ बिम्ब- प्रतिबिम्बभूतौ जीवेश्वरावस्मिन्शरीरे वर्तेते तयोर्मध्ये यो बुद्धि- प्रतिबिम्बभूतस्तद्भेदाध्यासात्तद्धर्माभिमानी कर्मफलं भुङ्क्ते स एवान्यः बुद्धितादात्म्यरहितः सन्स्वरूपभूतचैतन्यात्मना भोगरहितः प्रकाशते औदासीन्यबोधाभ्यां चैतन्यमात्रमुच्यते तथा च भोगा- नुवादो भोगनिषेधशेष इति नच समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्युत्तरश्रुतिविरोधः अस्याः पूर्वोक्तान- शनस्य स्वाभाविकत्वबोधनार्थकत्वात् तथाहि जीवेश्वरपुरुषा- श्रये शरीरे पुरुषो बुद्ध्युपाहितो निमग्नः कर्तृत्वाभिमानी अत एव तत्करणमोहावृतोऽनीशया स्वस्या नन्दरूपैश्वर्यमायाप्रतीत्या शोचति विषयागमापायिनामेतद्दुःखमनुभवति जुष्टं कार्यकारणा- सङ्घातैः सेवितम् अविवेकिभिस्तत्तदात्मतयागृहीतं यदाधिकारात् अन्यविवेचात् शरीरत्रयात् पृथग् भूतं तत्साक्षितयावगतं शोधितत्वं पदार्थमाद्यं सन्तं पश्यति दास्यात्मत्वेनावगतस्य महिमानमपरिच्छिन्नानन्दात्मतामिति एतेनान्तरीयकतया वीत- शोकः सर्वानर्थविनिर्मुक्तः यद्वा जुष्टं विवेकवैराग्यादिभिः प्रक्षा- लिताशयमलैः सनकादिभिर्नैरन्तर्येणात्मत्वेन सेव्यमान

इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥
यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने ३५
सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम् ॥
हित्वा गोपीः कामयाना मामसौ भजते प्रियः॥ ३६ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

मन्यकार्य्यकारणमन्नाद्विलक्षणमीशं यदा पश्यतीति नापि पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति श्रुतिविरोधः नह्यात्मानं प्रेरितारञ्च पृथक्मत्वामृतत्वमेतीति श्रुत्यर्थः यामराणामपि तादृशमननसत्वेनामृतत्वप्राप्तिप्रसङ्गात् किन्तु शरीराद्यभेदेन गृहीतमात्मानं पृथक्कृतमात्मानं प्रेरितारञ्च मत्वा ईश्वरत्वेनच निश्चित्यामृतत्वमेतीति तस्मान्नास्ति कयाचिदपि श्रुत्या तस्याः श्रुतेर्विरोधः तत्र को मोहः कः शोक एकत्वमनुपश्यतः यन्मदन्यन्नास्ति कस्मान्नु बिभेमि तदिदमप्येतर्हि परावर्वेदाह ब्रह्मास्मीति स इदं सर्वं भवति उदरमन्तरं कुरुते अथ तस्य भयंभवति मृत्योः स मृत्युमाप्नोति. य इह नानेव पश्यति नात्र काचनाभिदास्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्यु माप्नोतीत्याद्याः श्रुतयो भेदमपाकुर्वन्त्येवेति स्थापितश्रुत्यैव मुख्यं रमणमावेदयतीति संक्षेपः । विपक्षे दोषं दर्शयन् रेम इत्याह । कामिनां पुरुषाणां श्रुत्यर्थविचारमधिकृवतां दैन्यमनीशात्वाभिमानेनानर्थजालप्राप्ति दर्शयन् तथाविधानां स्त्रीणांश्चैव दुरात्मतां दुष्टात्मरूपतां संसारानर्थास्पदजीवात्मतां दर्शयन् यथोक्तश्रुत्यर्थविचारविधुरस्य पुरुषादेरनर्थानिवृत्त्यभावं बोधयन्तीत्यर्थः । तथा च श्रुतिः यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः तदा देवमविज्ञाय दुःखस्यान्तो भविष्यतीति ॥ ३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

केशानामितस्ततो विदलयतां प्रसाधनं समीकरणं कृतम् कान्तामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकारेण बध्नता शिरोभूषणं कुर्वता इह भुवमुपविष्टम् ॥ ३३ ॥

तया सह आत्मरतः स्वतस्तुष्टः आत्मारामः स्वक्रीडः अखण्डितः नित्यावाप्तसकलकामत्वेन स्त्रीविभ्रमैरखण्डितचित्तोऽपि रेमे यथा चन्द्रमिति रेमे गत आह । कामिनां स्त्रैणानां दैन्यं स्त्रीपारवश्यं स्त्रीणां च दुरात्मतां दुष्टचित्ततां दर्शयितुम् ॥ ३४ ॥

---

### भाषा टीका ।

या ठिकाने या कामी ने याही कामिनी के बाल जूडा सम्हारे हैं बिन फुलन को सिंगार करवे को ये दोनों या ठिकाने बैठे हैं यह बात हमें ठीक मालूम पडे है ॥ ३३ ॥

यद्यपि ये आत्मा राम हैं और अखण्डित हैं आत्मा ही में सदा रत हैं तथापि लौकिक कामिजनन की दीनता स्त्री जन की दुरात्मापन जतावे को सब लीला दिखाई है ॥३४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्त्रीणां दुरात्मतामाह । सा चेति द्वाभ्याम् । कामो यानमागमनसाधनं यासां ता गोपीर्हित्वा मां भजत इति हेतोरात्मानं वरिष्ठं मेने इति ॥ ३६— ३७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोपिणी ।

तदा मेन इति पूर्वं तासु मध्ये वर्त्तमानायाः अपि तस्यास्तादृशो मानो नासीदिदानीमेव जात इति केचिद्व्याचक्षते वस्तुतस्तु तदा तादृशरतौ सत्यामित्यर्थः यद्वा तं तथा तेन रमितमात्मानं सर्वासां योषितां व्रजसुन्दरीणां माने हेतुः गोपीः सर्वा एव तत्रापि कामयानाः कामयमानाः हित्वा असौ अनिर्वचनीयविचित्रमाहात्म्यः परमस्वतन्त्रो ऽतिदुर्लभ इत्यर्थः । तत्रापि प्रियः मदेकप्रेमकर्त्ता सन् यद्वा सर्वासामेव प्रियोऽपि मामेव भजते प्रेम्णानुवर्त्तते अयंच स्वाधीनभर्तृकाया विदग्धवर्याया मानस्तद्रसपरिपोषको युक्त एवेति तदनुरूपतत्प्रसादश्चाग्रे भविष्यत्येव ॥ ३५ ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

अत्रेत्थमिति पद्यार्द्धद्वयं तेषामसम्मतं पूर्वार्द्धे सति रेमे तयेत्यस्य शुकोक्तित्वासङ्गतेः । उत्तरार्द्धे सति साचेति मानोत्थापनासङ्गतेः तदेवं तयोस्तं प्रेमाणं प्रशंस्य प्रकृतं तादृशं तद्विलासमयं मानं तत्प्रसादनादिकमपि तत्पोपणार्थं वर्णयति । साचेति सपादश्लोकद्वयाभ्याम् सा च तदा मेने इत्यनेन पूर्वं तासु मध्ये वर्तमानाया अपि तस्यास्तादृशो मदो नासीदिदानीमेव जात इति लभ्यते । तच्चैवं तादृशभावे हि तासां द्विधा मानावस्था सम्भवति । कान्तैकस्फुरणे हर्षादिप्रचुरस्थायिमयी कथञ्चिदन्यस्फुरणे गर्वादिप्रचुरस्थायिमयीति । अतस्तस्या गाढानुरागप्राधान्येन तदेकस्फूर्त्तिमयी बहुकालं व्याप्य हर्षादिमय्येव जाता । सम्प्रति कथञ्चित्तासु जाते तु परेति । आत्मवरिष्ठत्वे हेतुः गोपीः सर्वा एव तत्रापि कामयाना अपि हित्वा असौ अनिर्वचनीयविचित्रमाहात्म्यः परमस्वतन्त्रोऽतिदुर्लभ इत्यर्थः । तत्रापि प्रियः मदेकप्रेमकर्त्ता सन् भजतेऽनुवर्त्तते । अत्रान्य स्फुरणेऽपि गोपीनामेव स्फूर्त्तिर्नतु पूर्वास्विव सामान्यस्त्रीणामित्येतदंशेऽपि वैशिष्ट्यं दर्शितम् ॥ ३५ ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्त्रीणां दुरात्मतामाह । यामिति । अन्याः स्त्रियो विहाय कृष्णो यां गोपीमनयत् सा च तदा सर्वयोषितामध्ये स्वात्मानं वरिष्ठं श्रेष्ठं मेनेऽमन्यत ॥ ३५ ॥

मननप्रकारमेवाहाहित्वेति । कामो यानं गमनसाधनं यासां ताः सर्वा गोपी विहायासौ प्रियो मामेव भजते ऽतोहं सर्वयोषितां श्रेष्ठेति मेन इत्यर्थः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति शब्द आदिवचनः प्रकृष्टं कृष्णविषयं प्रलापं कुर्वत्यः चिरविषयमनर्थवचनं कुर्वत्यश्चाविशिष्टचेतना अविपरीतचेतनाश्च कामिनां दुरात्मतां स्त्रीणामेव दैन्यं दर्शयन् दर्शयन्त्यश्च॥३५॥

अयं भावः सर्वथा त्याज्य इति दर्शयितुमाह । यामिति । अनेन राक्षस्याः बुद्धेः स्वभावो दर्शितः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं स्तत योस्तं प्रेमाणं प्रशंस्य प्रकृतं तादृशं तद्विलक्षणमेव वर्णयाति । सा चेति । तदा मेन इत्यनेन पूर्वं तासु मध्ये वर्त्तमाना या अपि तस्या तादृशो मानो नासीदिदानीमेव जात इति लभ्यते तथैवं तादृशभावं हि तासां द्विधा मनोभवावस्था सम्भवति कान्तैकरूपो केवल स्थायिमयी कथञ्चिदन्यस्फुरणे गर्वादिलक्षणि प्रचुरस्थायिमयीति अतस्तस्या गाढानुराग प्राधान्ये बहुकालं व्याप्य केवलं स्थायि मय्येव जाता सम्प्रति कथञ्चिद्वाहे जातेति परेति ॥ ३५ ॥

तदेवं तस्याः स्वाधीनभर्तृकात्वोचितं कृत्रिममालस्यादिमयं नर्म वचनं श्रुत्वा स्वयमपि स नर्मैवान्तर्हित इत्याहाप्रमिति पादद्वयेण तदेवं सम्भोगोचितं स्वाधीन भर्तृकामयीं प्रेमपराकाष्ठां दर्शयित्वा नर्मणापि विप्रलम्भे परमदैन्यमोहात्मिका तत्पराकाष्ठां दर्शयंस्तत् प्राशस्त्यमेव सूचयति । सेति सपादश्लोकेन ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ सा राधापि सर्वा विहाय मय्येवासौरत इत्यात्मनोनौचित्यं मनसि कुर्वती यदचेष्टत तत्कथयति । साचेत्यादि । सा राधा तदा आत्मानं वरिष्ठं मेने वरिष्ठैव सा तथापि मेन इति यदुक्तं तस्यायमभिप्रायः अहं सर्वप्रधाना ममैतन्नोचितं किंतत् तत्राह । हित्वेत्यादि । सर्वा विहाय मामसौ भजते प्रधानजनस्य नैतदुचितं तदेव मत्रैव विलम्बयामि यावत्सर्वा मिलन्तीति ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्ववस्तुयाथात्म्यस्फुरणं भगवदावेशात्तासां निरूपितमुपसंहरति । इत्येवमिति पञ्चप्रकारेण भगवल्लीलाः प्रदर्शयन्त्यः चेरुः गतिं कृतवत्यः तासामनेकविधत्वे हेतुमाह । गोप्य इति । नहि ताः शास्त्रेण भगवदीया जाताः किन्तु स्वभावेन स्वभावस्त्वनेकविध इति सर्वमुपपद्यते किञ्च न हि ताः किञ्चिज्ज्ञात्वा वदन्ति किन्तु विचेतस एव अथवा एवं दर्शयन्त्यो विचेतसो जाताः प्रकारत्रयस्यापि समाप्तत्वात् अतस्तासां नाग्रे गतिर्नवचनानि एवमेतासां स्वरूपं निरूप्य निरूपयति । यां गोपीमिति । सार्द्धं स्त्रिभिः—

> दोषोऽभिमानवचनो वचनोत्तरमेव च ।
> पूर्ववद्यतिरोभावो विज्ञेयं दोषदर्शने ॥

यां गोपीं पूर्वमजातदोषामनयत् यतः कृष्णः सदानन्दः तस्यामानन्दं स्थापयितु मन्यास्तु स्त्रियो जाताः सातु मुग्धेव गोपी अतस्ता वने विहाय तामनयत् वनस्थानां विवेको भवतीति ॥ ३५ ॥

स्वयन्त्वयुक्तकरणात् प्रकृत्याद्यधिकारिणः बुद्धिं स्म नाशयामासुः साप्यन्यैवाभवत्ततः तदाह । साच तदा सर्वयोषितां मध्ये वरिष्ठं मेन इति चकारः पूर्वसमुच्चयार्थोऽप्यर्थे तदेति पूर्वं तस्यास्तथा त्वं न जातमिति । अनेन समुदायदोषेण न भगवास्त्यजति किन्तु प्रत्येकदोषेणेति ज्ञापितं तस्या स्तथा दोषे हेतुः हित्वेति कामयाना अपि सर्वाः गोपीर्हित्वा असौ मां भजत इति तत्रापि प्रियः यथैव मम प्रीतिर्भवति तथैव करोति नतु क्वचिदप्यप्रियविषयः अतोऽहं वरिष्ठा अन्यथानुपपत्त्या तथा त्वं कल्प्यते ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृषभानुनन्दिन्याः सर्वाधिकमुज्ज्वलरसस्य सम्भोगमंशं निर्वर्ण्य विप्रलम्भमंशमपि वर्णयितुं तद्बीजमुत्थापयति । यामिति साचेति पूर्वं सर्वाः सौभगमदयुक्ता आसन्नाधुना साच तत्र हेतुर्हित्वेति कामयानाः कामयमानाः यद्वा कामो यानमागमनसाधनं यासां ताः अत एवान्यगोपी सौभाग्यहेतुको यः पूर्वमान उद्भूतः सोऽपि निःशेषेणैव शान्तः ॥ ३५ ॥ ३६ ॥

---

केन चित्कृता विशुद्धरसदीपिका ।

उपसंहरति । इतीति द्वाभ्याम् । इत्येवमिति । अन्यदप्येवं विधं विहारादिकमनिर्दिष्टं ता गोप्य इति कविकृतनियमत्वाद्रात्मानि रहस्यप्रकाशनदोषः परिहृतः ननु तादृशविपक्षादिसमुदाये ताभिः किमिति तद्रहस्यं प्रकाशितं तासां चानुभवगोचरः कथं न जात इतिचेत्तत्राह । विचेतसः प्रकाशने ऽनवधाने च तन्मयैक एव हेतुः ननु रासक्रीडार्थं मुरलीकलेन सकला एवाहूय वाचः पेशैश्च परिभूय तत्प्रतिवचनचातुर्यमनुभूय कारुण्येन ताभिः सम्भूय लीलावेशेन रमयित्वा तादृशीश्च ता हित्वा किमित्यन्तर्हित इत्याशङ्क्य सर्वोऽप्यमप्रयासः प्राणप्रियामन्यात्मन आनुकूल्यप्रदर्शनायेति समादधदाह । यामिति । तादृशी स्ताः सर्वा अपि वञ्चयन् मां रहोऽनयत् सा चात्मानं सर्वयोषितां मध्ये वरिष्ठं वरस्य प्राणप्रियस्येष्टं मेने अनुभूतवती एतदर्थोऽयमखिलः समुद्यम इति भावः । एवंच उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः इतिन्यायाद्रासक्रीडेयं श्रीराधिकायाः स्वाधीनपतिकात्वप्रदर्शनायेति गम्यते ॥ ३५ ॥

केनचित्कृता विशुद्धरसदीपिका ।

ननु तस्यास्तासां च को विशेषस्तत्राह । गोपीरिति गोपो भूपेत्य मरः ततश्च तासां सर्वासां पट्टराज्ञी स्वामिनीत्यर्थः। अन्याः स्त्रियः भोगिनीकल्पा इति भावः । एवञ्चान्या शाक्तिभ्रमेण तस्या मानमाशङ्क्यैव तासां त्याग इति हृदयं तत एव तयाप्येवमभिमत-मित्याहगोपीरपि कामयाना अपि हित्वा यतोऽसौ मां भजते प्रियः परमप्रेष्ठ इत्यर्थः ॥ ३६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

मुनीन्द्रोऽग्रे गोपीचरितमाह । इत्येवमिति । प्रेमप्रभावादाविर्भूत-स्वरूपा यतो गोप्यो गा इन्द्रियाणि सर्वतोऽसद्विषयेभ्य आकृष्य भग वदेकपरत्वेन पान्तीति तथा पराञ्चि खानि व्यतृणत्स्वयं भूस्तस्मात्पराङ्पश्यतिनान्तरात्मन्निति श्रुत्यान्य परत्वमेवेन्द्रियाणां हिंसनमिति निर्णायात् आत्मानमन्तरो यमयतीत्यादि श्रुति सिद्धान्तरात्म भगवत्परत्व एव तदहिंसनसूचनात् तथा सा वाग्यया तस्य गुणान् गृणीते इत्यादिस्मृतिवाक्यैश्च तदा-राधने एवेन्द्रियसाफल्यप्रतीतेश्च अत एव लोकव्यवहारेभ्यो विचे-तसो विगतमत्तयोभगवीद्विषेय श्वविचेतसो याकाराभिधेये वासु-देवे विशिष्टं सर्वलोकविलक्षणं चेतो यासां तथा भूता वा एवं पूर्वोक्तदिशाप्रियाप्रियतमयोर्लीला एव दर्शयन्त्योऽपि प्रेमवैचित्र्या-त्केवलमन्वेषयन्त्यो भगवदावेशेनैव विचेरुरेवं देहाद्यभिमानस्यात्म-स्वरूपविच्छेदकत्ववत् प्रेमपथाचार्यभूतानां गोपीनां स्वाचरितै-स्तन्मार्गे मानस्य भगवद्विच्छेदकत्वमुपदिशन्तीनां चरितमुक्त्वा-साक्षात् तदात्मभूतायाः प्राणवल्लभाया अपि स्वाचारितेन कैमुत्यन्या-येन मानस्य प्रेमपथपरिपन्थित्वं प्रख्यापयन्त्याश्चरितमाह । यामिति अन्याः स्त्रियः स्त्रीवने विहाय यां गोपीं कृष्णो नित्यानन्दस्व-रूपोऽपि तदानीं मानाभावादनयत् नीतवान् ॥ ३५ ॥

सा च तदा तद्गमणोत्तरम् आत्मानं मेने इत्यनेन पूर्वमेताव-द्विहारादौ कृष्णैकपरत्वेनात्मप्रतीतिरेव तस्यानाभूदिति दर्शितं नैतच्चित्रं तस्यापराभक्तितयाविर्भूतायाः कृपाकटाक्षावलोकन-मात्रेणान्येषामपि जीवन्मुक्तानां यस्तत् क्रीडन् रममाणः स्त्री मिर्वा यानैर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरमिति देहा-द्यननुसन्धानं श्रूयते तदा किमुवाच्यं तस्याः ततश्चात्ममानोत्तरंत-न्मर्मस्फूर्तिमाह । वरिष्ठं मेने इति । तद्धेत्वनुसन्धाने बहिः प्रवृत्तौ प्रियसेवनस्फूर्तिमाह यतोऽसौ निरुपमगुणमाहात्म्यः प्रियः सर्व-प्रेमास्पदत्वेन परमानन्दरूपोऽपि मां भजते परमानन्दघनभजनी-यत्वप्रयुक्तवरिष्ठत्वानुसन्धानोत्तरं हेयविलक्षणतया वरिष्ठत्वानु-सन्धानं वहिर्दृष्ट्या तत्प्रतियोगिप्रतीतिमाह । सर्वयोपितामिति । अत्र परमानन्दरूपकृष्णसेव्यत्वेन सर्वयवरिष्ठत्वे वक्तव्ये सर्वयोपिता-मित्युक्तिस्तु कृष्णादन्येषां पुरुषत्वाभावात्तदसम्मत्या सर्वयोपि-तामात्मनोऽन्यूनत्वे हेतुमाह । हित्वेत्यादिना । ततः सर्वयोपिभ्यः रत्युत्कर्षशीलाभ्यादिभ्यो वरिष्ठा गोप्यः ताश्च पुनः कामयमाना अपि हित्वा मां भजते इति ॥ ३६ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथेतरगोपीकृतं तल्लीलावर्णनमुपसंहरति । इत्येवं भगवल्लीलां परस्परं प्रदर्शयन्त्यश्चेरुः यतो गोप्यः गोपरूपेणावतीर्णस्य भगवतः सम्बन्धिन्यः यद्वा स्वभावादेव गोपात्मजे तस्मिन्प्रेमवत्यः ननु शास्त्रेण भगवदीया जाताः विचरन्त्यश्च विचेतसो जाताः प्रकार-त्रयस्यापि समासित्वादति व्याकुलमानसाःबभूवुरित्यर्थः । अथ वृष-भानुनन्दन्याः विप्रलम्भांशं वर्णयितुं पीठिकां रचयति । यामिति । कृष्णः सदानन्दरूपः तस्यामानन्दमाविर्भावयतुं यां गोपीमन-यत् अन्याः स्त्रियो वने विहाय अन्यासु स्त्रीत्वप्रागल्भ्यता-मालोच्य तासां त्यागस्तयोः गोपीत्वमुग्धात्वमालम्ब्य नयन-मिति द्योतयति । स्त्रियो गोपीमित्युक्तं निवृत्तिपक्षे इत्येवम् प्रवि-चेतसः समाहितचित्तस्य पुरुषस्य ब्रह्मस्वरूपं दर्शयन्त्यस्तस्यान्तः-करणवृत्तिंषु विचेरुः अन्याः श्रुतिलक्षणाः स्त्रियो वने अन्तःकरणे विहाय यां गोपीं कृष्णः सदानन्दस्वरूपः परमात्मा अनयत् मम स्वरूपावबोधिकेयमित्यवभासयत् ॥ ३५ ॥

तस्यास्त्यागे निमित्तमाह । साचेति । चकारात् पूर्वं सर्वासां विस्मयो जात इदानीमस्यामिति गम्यते सर्वाभ्य उत्कृष्टमात्मानं मन्यमानायाः साधारणं रमण मस्माकं नासीदधुनात्वसाधा-रणं तस्मात्सापि गर्वं प्राप्ता अनेन समुदायदोषेण भगवान्नत्यजति किन्तु प्रत्येकदोषेणेत्यपि ध्वनितम् सापि सर्वासां योषितां मध्ये आत्मानं परमोत्कृष्टं मेने तन्निमित्तं तच्चेतसि स्फुरितमाह । कामयानाः । कामो यानमागमन-साधनं यासामिति वा गोपीः स्वमाग्यमाविदित्वा सर्वासामपि साधारण्येन प्रियः असौ सर्वोत्तमो मामेकां भजते मन्मनोऽनुकूल-माचरतीति विचार्येत्यर्थः । निवृत्तिपक्षे निकृष्टापि श्रुतिरात्मानं सर्वश्रुतीनां मध्ये श्रेष्ठं मेने यतः सर्वा अपि गोपीः स्वसंम्बन्धिनी स्वप्रतिपादनकामनावतीर्हित्वा असौ प्रत्यगभिन्नः परमात्मा प्रिय आनन्दघनो मां भजते मत्प्रतिपाद्यतां प्राप्तः महा-वाक्यश्रुतिबोध्यः परमात्मेत्यधिकारिचेतसि स्फुरितमिति भावः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्त्रीणां दुरात्मतामाह । इत्येवमिति त्रिभिः । पूर्वं याः प्राप्त-गर्वाः इत्येवं विहाय यां निर्गर्वां मत्वा अनयत्सापि आत्मानं वरिष्ठं मेने इत्यभिप्रेणाऽन्वयः कामो यानमागमनसाधनं यासां ताः कामातुरा अपि गोपीर्हित्वा मां भजते इति हेतोः सा आत्मानं वरिष्ठं मेने ॥ ३५—३६ ॥

---

भाषा टीका

या प्रकार ते बेहोस भई वे गोपी नाना प्रकार की चेष्टा दिखावत भई उहां जा गोपी को कृष्ण और सब स्त्री जनकी वन मे छोडके लेगये हे ॥ ३५ ॥

व ने विचारो कि अपने को चाहवे वारी सब गोपिजन को छांड मोको हि प्यारो माने हैं ऐसो जानि सब स्त्री जनते अपने को बडी मानत भई ॥ ३६ ॥

---

ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ॥
न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥ ३७ ॥
एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥
ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

कामिनां दैन्यं दर्शयति । एवमुक्त इति । अखण्डितत्वमाह । ततश्चेति । तस्यां स्कन्धारोहोद्यतायामन्तर्हित इत्यर्थः ॥ ३८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततः मानानन्तरं तस्माद्वा मानात् रतिस्थानाद्वा दृप्ता गर्विता सती वनोद्देशं वनप्रदेशं तेनैव सह गमनक्रमेणाग्रतो गत्वा यद्वा मदनुगोऽयमवश्यं भवितेति दृप्तत्वात् स्वयमेव गत्वा केशवं परमेश्वरमपि किंवा केशिमथनात् व्रजहिताचरणपरमिति यद्वा केशवैशिष्ट्येन परमसुन्दर इति तदीयसौन्दर्य्यमोहितेति भावः अत एवाब्रवीत् किं तदाह । न पारये रत्या परिश्रान्तत्वादिति भावः लज्जया साक्षात्तथानुक्तिः किंवा सौभाग्याङ्गत्वादेवं तथोक्तिः ननु मुग्धे ताभ्यो दूरमग्रे स्थानान्तरं द्रुतं गन्तव्यमितिचेत्तत्राह । नयेति । पूर्ववदङ्कादौ निधाय त्वमेव नयेत्यर्थः ॥ ३७ ॥

स्कन्धे मदंसे आरुह्यतामित्याह इदं च नर्म्मणैव प्रियामित्युक्तेः यद्वा कायो मदीयं वक्षः कटीरं वा तथा च विश्वः--

स्कन्धः प्रकाण्डे काये च बाहुमूलसमूहयोरिति ॥

ततः पश्चात् किंवा तस्मात् तस्याः सकाशाद्वा त्वर्थे चकारः भिन्नोपक्रमे अन्तर्दधे चेति समुच्चये वा अन्तर्द्धानप्रयोजनं पूर्वमेवोक्तं तदेव सूचयति कृष्णः परमानन्दघनमूर्तिरिति आनन्दविशेषार्थमेवेत्यर्थः । अत एवोक्तं प्रियामिति अत्र चकारश्चिद्विशेषः --

श्रीविष्णुपुराणे पुष्पबन्धनसंमानकृतमानामपास्य ताम् ॥
नन्दगोपसुतो यातो मार्गेणानेन पश्यत ॥
अनुयाने ऽसमर्थान्या नितम्बभरमन्थरा ।
या गन्तव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः ॥
हस्तन्यस्ताग्रहस्तेयं तेन याता तथा सखि ! ।
अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः ॥
हस्तसंस्पर्शमात्रेण धूर्त्तेनैषा विमानिता ।
नैराश्यान्मदगामिन्या निवृत्तं लक्ष्यते पदम् ॥
नूनं मुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम् ॥
तेन कृष्णेन येनैषा त्वरिता पदपद्धतिरिति ॥

सा दृप्ता तद्दर्शनैकजीवना वा अन्वतप्यत मुहुर्विललाप ॥ ३८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो वरिष्ठं मानानन्तरं वनप्रदेशविशेषं तेनैव सह गमनक्रमेणाग्रतो गत्वा दृप्ता गर्विता सती केशवं केशान् तदीयान् वयते प्रध्नाति अत एवाब्रवीत् किं तदाह । न पारये इति । बहुपरिभ्रमणेन परिश्रान्तत्वादिति व्याजमयी हेतुव्यञ्जना । ननु मुग्धे ताभ्यो दूरमग्रे स्थानान्तरं द्रुतं गन्तव्यमिति चेत्तत्राह । नयेति । पूर्ववदङ्के निधाय त्वमेव नयेत्यर्थः ॥ ३७ ॥

तदेवं तस्याः स्वाधीनभर्तृकात्वोचितं कृत्रिमालस्यादिमयं तत्प्रवचनं श्रुत्वा स्वयमपि सनर्मैवान्तर्हित इत्याह । एवमिति पादद्वयेण । स्कन्धे मदंसे आरुह्यतामित्याह । इदञ्च नर्मणैव प्रियामित्युक्तेः । तथाहि । योऽन्यमुखे दुर्वादः प्रियतमवदने स एव परिहासः । इतरेन्धनजो धूमः सोऽयमगुरुसम्भवो धूप इति । यद्वा स्कन्धः प्रकाण्डे काये च बाहुमूलसमूहयोरिति विश्वप्रकाशात् । कायः स च युक्तत्वाद्वक्षोभाग इतीदमपि नर्मैव । ततस्तदनन्तरम् । त्वर्थे चकारः भिन्नोपक्रमे अन्तर्दधे च इति समुच्चये वा । तस्याः सकाशादप्यन्तर्द्धानेऽस्मि श्रीर्यापगमात् । सपत्नीनामैकमत्यमपि प्रयोजनं ज्ञेयम् । पूर्वान्तर्द्धानेऽपि तदपि चिकीर्षितमिति एवमेकयैव क्रिययानेकदुर्घटसम्पादनम परमचातुरी दर्शिता । अहो उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इति भावः । तदेवं सम्भोगोचितां स्वाधीनभर्तृकात्वमयीं प्रेमपराकाष्ठां दर्शयित्वा सनर्मण्यपि विप्रलम्भे परमदैन्यमोहात्मिकां तत्पराकाष्ठां दर्शयंस्तत्प्राशस्त्यमेव सूचयति । सेति सपादेन । सा तद्दर्शनैकजीवना अन्वतप्यत मुहुर्विललाप ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत एवमभिमत्यनन्तरं किञ्चिद्दूरे गत्वा गर्विता सती केशवं सर्वेश्वरं कृष्णमब्रवीत् किमिति अहं गन्तुं चलितुं न शक्नोम्यतो यत्र ते मनः यत्र जिगमिषसि तत्र मां नयेति ॥ ३७ ॥

कामिनां दैन्यं दर्शयति । एवमिति । इत्थमुक्तो भगवान् प्रियामाह । किमिति स्कन्धमारुह्यतामिति त्वयेति शेषः अखण्डितत्वमेवाह ततश्चेति । तस्यां स्कन्धारोहोद्यतायां सत्यामन्तर्हितवांस्ततः तदैव सा वधूरनुतप्तवती ॥ ३८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

अत्यधिकं भजते इति इत्यनेन विषयलोलुपानां प्रवृत्तिरीदृशी इति दर्शयति कथान्तरारम्भं वा तमाह । तत इति । अत्यारम्भे प्रसिद्धे हेति यादवः । वनोद्देशं विषयप्रदेशं केशवं प्रशस्तकेशपाशं वने कामिनम् ॥ ३७ ॥

पारये समर्थये पारं गन्तुं न शक्नोमीति वा यत्र गन्तुं विटगन सभायं दर्शयितुमाह । एवमिति ॥ ३८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तया कथितमाकर्ण्य तत्रैव सङ्गनयनादिलक्षणां मानप्राप्तिश्चाकर्ण्य परित्यागलक्षणमवमानश्चाकर्ण्येत्यन्वयः । अत्र तु दौरात्म्यशब्दप्रयोगस्तद्दैन्यवचनानुवादात् वस्तुतस्तु दूरः श्रीकृष्णस्यानिकट आत्मा देहो यस्यास्तस्या भावो दौरात्म्यं तस्माद्धेतोरिति ॥ ३७—४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तथैव मनसि कृतत्वात्स्फुटाक्षरमेवाह । तत इत्यादि । वनोद्देशं वनमध्यं गत्वा केशवमब्रवीत्कीदृशी दृप्ता निःसाध्वसा किं तदित्याह । नेत्यादि । अहं चलितुं न पारये अस्यायं भावः यद्यहं न चलामि तदायमपि न चालिष्यति तावता आपि सर्वामिलिष्यन्तीति तत्साधूक्तं न पारये इति न पारयसि चेत्तदा किं कर्तव्यमित्याशङ्क्याह । नय मामित्यादि । मां नय क नेष्ये यत्र ते मनः ते तव मनो यत्र यात्वित्यर्थः । मनस्तु तव विरहितास्वेव तासु मायितु तव श्रीविग्रह एवेति वक्रोक्तिः अतस्तत्रैव नय ; किमेतेन निर्भमव्यापारेण व्यवहारेणेति वहिर्वाम्यप्रकाशः ॥ ३७ ॥

भगवानपि तमभिप्रायं विदित्वापि विपरीतबोधमभिनीय यदकरोत्तदाह । एवमुक्त इत्यादि । प्रियां राधां स्कन्ध आरुह्यतामिति आह एषा तु कपटरोषोक्तिः तेन तदसंपाद्यान्तर्धाने स्वोक्तेर्वैयर्थ्यापत्तेः कपटत्वेनाकलितत्वमेव सत्यत्वं न केवलमेतदाह-अन्तर्दधे चेत्याह । तत इत्यादि ततस्तत्रैवेत्यर्थः । सप्तम्यां तसिल् अन्यथा निर्दयत्वापत्तेः स्वयं पश्यति सा न पश्यत्येवं यथा भवति तथान्तर्दध इत्यर्थः । तदनन्तरं सा वधूरन्वतप्यत ॥ ३८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दोषाभावेनैवोत्तमता नतु धर्मान्तरेण अतस्तस्या भ्रमः भ्रान्ताया वाक्यमाह । ततो गत्वेति । ततो भोगस्थानादग्रे गत्वा वनोद्देशमतिरमणीयं स्वार्थमयं गच्छति नतु मदर्थं ततश्चान्यार्थं यथा कथञ्चिद् प्राप्तस्य इति दृप्ता तादृशभगवत्कृपायामनधिकारिणी प्राप्तप्रसादेन जाता जीर्णा ब्रह्मादिभ्योऽपि मोक्षदातारं देहेन्द्रियादिसर्वरहितं परमानन्दरूपं केशवमब्रवीत् तस्या वाक्यमाह । न पारय इति । अहं चलितुं न पारये तथा पीण्देशे गन्तव्यमितिचेत्तत्राह । यत्र ते मनः तत्र मां त्वमेव नय ॥ ३ ॥

तदा भगवान् अतिचतुरः तद्वाक्यस्योत्तरमाह । एवमुक्तवति । प्रियेति कृत्वा उत्तरमुक्तवान् उत्तरमाह । स्कन्धमारुह्यतामिति । एषा हि नृत्यं कर्तुं वाञ्छति स्वान्तर्गतं रसमभिनेतुं तद्भूमौ पदस्थापने ऊर्ध्वभावाभावाद्रसः च्युतो भवेत् अतः स्वस्कन्धेमवारुह्यतामित स एवात्यन्तं नटवर्युः स्वं स्कन्धमारुह्य नर्तनर्ति अशक्यं ह्युपदिशति प्रार्थितं तथेति भगवतो हि मनः अलौकिकरसाभिनयने तद्भूमौ पदस्थापने न भवति अशक्ताचेत्कथं वदेत् अतो मम तत्रैव मनः यदि तथा करिष्यति तदा नेष्यामीति नह्यनधिकारी नेतुं योग्यः भगवांस्तु नान्यथा वदतीति न स्वस्कन्धसम्भावना तथातु मोहवशात् तथैव बुद्धं ततो मोहवशात्तथा चिकीर्षमाणां ता दृष्ट्वा ततोऽप्यन्तर्दधे यतोऽयं कृष्णः सदानन्दः ततः पूर्ववदेव सापि जातेत्याह । सा वधूरन्वतप्यतेति सा अनन्यपूर्वा मतमध्यस्था तत्रापि गुणातीता अतः अन्वतप्यत अनुतापं कृतवती एवं सति भङ्ग्यन्तरेणाप्येतद्व्याकृतिः सम्भवति तथा हि भगवता ह्यस्यै प्रियायै पूर्णः स्वरसो दत्त इति भगवन्निष्ठा भावाः सर्वे स्वहृदि स्फुरद्रूपा जाताः तथा च सर्वतः आधिक्यमपि स्वस्मिन् स्फुरितं तदेतदुक्तं हित्वा गोपीरित्यादिना एवं सति द्वितीयरसलीलाचिकीर्षा यदाभूत्सापि तदा हृदि स्फुरिता तामविपक्षां मन्यमानापि न कातरा जाता किंतु पूर्वरसगर्विणी दृप्ता सती प्रियमब्रवीत् एतदेव दृप्तापदेनोक्तं दुष्टगुणव्याप्तयोरप्यमृतं ददास्यहं चेतद्गुणैरेव पूर्णेत्यवश्यं सुखमेव दास्यति नतु दुःखमित्यभिप्रायज्ञापनाय केशवपदं ततो भोगस्थानादग्रे वनसम्बन्धिनमुत्कृष्टं देशं स्वयं स्वेच्छया गत्वा नतु प्रियेण नीता गत्वा अब्रवीदित्युक्त्या प्रियनैकट्यं ज्ञायते तेन तदधीन एव प्रियस्तत्सङ्गे गत इति ज्ञापितं भवति अथवा वनमित्युद्देशो नाममात्रं वस्तुतस्तु महारसनिधानं तेन रसोद्दीपकमित्युक्तं भवति एतादृशे वने मद्वियोगेन मां विचिन्वन् यदि प्रियो भवति तदा कीदृशो रसः स्यादित्याशयेनाब्रवीदत एव दृप्तात्वमुक्तं पूर्वरसातिमदात् तथाचेत्करिष्यति तदाहं चलितुं स्यन्दितुमपि न पारये जीवनमेव न सम्पत्स्यत इति भावः । एवं चेत्किञ्चित्कर्त्तव्यमित्याकाङ्क्षायामाह । नयेत्यादि यत्र स्यान्तर्द्धाने ते मनस्तत्रान्तर्द्धाने मां नय तिरोहितां मां कुरु त्वं मा तथा भवेत्यर्थः । प्रियस्त्विदमत्यशक्यमित्याशयेनोत्तरयति स्कन्धेत्यादिना यथा स्वस्कन्धारोहणमशक्यं तथा मत्तोऽन्तर्द्धानं भवत्याः नहि पूर्णज्ञानशक्तेरविषयः कोऽपि भवितुं शक्नोति यद्यपि विरुद्धसर्वधर्माश्रयत्वेन तं धर्मं प्रकटयितुं न पारय इति भगवदाशयज्ञापनाय प्रियापदमुक्तम् उत्तरदानमप्यत एवान्यथात्वेवमुक्तस्तूष्णीं तिष्ठेत्तिरोधीयेतैव वा प्रियात्वान्ममाशक्यं भवत्यास्तिरोधापनं तत्सामर्थ्याभावाद्भवत्याः स्वतस्तिरोधानं तथेति भावः । एवं सति प्रियया प्रार्थितं देयं यद्यपि तथापि प्रियात्वेन स्वाशक्यमिति लक्षणो यो हेतुस्ततो हेतोः स्वयमेव तथाकरोदित्याह ततश्चेति एवं कृते प्रभुनिष्ठं हेतुमाह । कृष्ण इति अस्यां दशायां हृदिप्रकटः सन्नेवानन्दात्मकतद्रसपोषको यत इत्यर्थः ॥ ३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वनस्योत्कृष्टप्रदेशं गत्वा केशवं केशान् वयमानं प्राकृतनमेघोतकपूज्यमुन्मोचयन्त्यास्तस्या विचित्रवेणीत्वेन ग्रथ्नन्तमत एव दृप्ता स्वाधीनकान्ताया दर्प एव रसमावहतीति भावः चालितुं न पारये इति बहुवनभ्रमणोत्थो मे श्रमो ऽभूदिति भावः । ननु मुग्धे ताभ्यो दूरमग्रे इदं स्थानान्तरं गन्तव्यमिति चेत्तत्राह । नयेति पूर्ववन्मां वहन्नित्यर्थः ननु किमग्रिमप्रदेशे अन्यजनदुष्प्रवेशे कुञ्जान्तर्गतं पुष्पतल्पं त्वां नयामि किं वा पौष्पाभरणार्थं पुष्पोद्यानं तत्राह । यत्र ते मन इति ॥ ३७ ॥

ततश्च कृष्णेन मनस्येवं विचारितमहो अनया स्वाभाविकः स्वधर्मः परित्यक्त एव नहि सन्नायिका पुष्पतल्पं प्रति स्वनयने वचसा नायकाय सम्मतिं दत्ते यदि चानया वाम्यरूपः स्वधर्मस्त्यक्तस्तदा मयापि सन्नायकेन सम्मुखकान्तानुवर्त्तित्वलक्षणो दाक्षि-

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवमयः स्वधर्मस्त्यक्तव्य एव नहि द्वयोरेव दाक्षिण्ये वामे वा रसः सुरसः स्यात् नचात्र रसिकलोकैरहं दूषणीयः रसोहि नायिका प्रक्रान्तपरिपाटीक एव साधु भवेत् किञ्च महाप्रेमवत्या अस्या मद्विप्रलम्भजनितदशाविशेषदिदृक्षासाक्षादेव या चिरं मे वर्त्तते साप्येतदवसरे पूर्णा भविष्यति मत्संश्लेषजनितमस्याः सौभाग्याधिक्यं ताभिरनुभूतमेव मद्विश्लेषजनितमपि प्रेमोद्रेकपरमविधि व्यञ्जिकां दशामसाधारणीं दृष्ट्वा ताः परमचमत्कारसिन्धुनिमग्ना भवन्तु मस्याः मद्विरहवाडवानलज्वालाया अग्रे तासां मद्विरहो दीपदहनायितो भवतु ततश्चास्याः पूर्णतमाभ्यां सम्भोगविप्रलम्भाभ्यां शृङ्गाररसोऽप्यद्य पूर्णतमत्वमापद्यताम् अस्या अपि विरहे मत्सम्पादिते सर्वविरहोपशान्त्यनन्तरं सर्वासामेकमत्ये सति विधित् सितोरासोऽपि सेत्स्यत्यन्यथात्वे तत्सङ्गरङ्गिणा मया तासां मानोऽद्य सर्वथैव दुरुपशम इत्यादीनि बहूनि प्रयोजनानि पर्यालोचयन् सहसैवान्तर्धिरस्तुराह । स्कन्ध इति । अन्तर्दधे तत्रैव स्थित्वा तां पश्यन्नपि तन्नयनगोचरतां जहावित्यर्थः । अत्र नय मां यत्र मे मन इति वदन्त्या वृषभानुनन्दिन्या मनस्येवं विचारितं विलासश्रमवनविहारश्रमखिन्नाया मम क्षणं सुषुप्सा वर्त्तते अस्यापि स्वापाभावेनैव सर्वरजनीयापनमकल्याणमसुखोदर्कमेव अतः पुष्पं तल्पं नयेति चेन्नयत्वावां तत्र स्वप्स्याव इत्यतस्तत्राशम्मतिर्न कृता तत्र भगवतस्तदन्तः करणंविज्ञताप्रेमरसमयलीलाशक्त्यैव तिरोधापिता तत्तल्लीला सिध्यर्थमिति ज्ञेयम् अन्वतप्यत मुहुर्विललाप ॥ ३८ ॥

---

### केनाचित् कृता विशुद्धरसदीपिका ।

किन्तु मम सुहृदोऽपि तासां सङ्गेन विरहखेदमनुभवन्तीस्यनुचितमिति विचारितवती तथा दर्शितमानन्दवृन्दावनचम्पूमनु अथ सा परमकोमलहृदयादयालुतमानामग्रणीः सुभगानां सुभगानां सुचिरदुरापताकापताका केवलमात्मनिष्ठया रतनिष्ठया रतमानसा विचारयामास यथा मय्येकस्यामतिशयरतिः प्राणनाथो मद्दालस्ता विच्छेदादह दधते हा कथं देहयोगं तस्माद्याम्यङ्किमपि करवै येन नेतो विदूरं यायादेव क्रमत इह तास्ताश्च सर्वा मिळन्तीतिअर्थंहि शुद्धप्रेमानुभावो विभ्रमविशेष इत्युक्तमुज्ज्वले अधीनस्यापि सेवायां तस्यानभिनन्दनं विभ्रमो वामतोद्रेकादस्यादित्याख्यातिति कश्चन यद्वा सख्येमेवदमिति तत्रैव विश्रम्भः स्यात्सान्मुक्तः सख्यं स्वयशनामयः भावज्ञतानुभावोऽस्य दोषानुल्लेख एव चेति द्वयमेव दर्शयतीतितत इतितदादीनां बुद्धिस्थशकेस्तादृशावचारानन्दरमित्यर्थः । दृष्ट्वा सौभाग्यदर्पयुक्ता सोऽयमस्य रखनीयः नतुपूर्ववदुपेक्षणीय इत्याहकेशवमिति । सुरतविलुलितान् केशान्वाभियमयति गन्धयति व्युत्पस्या निजपरिचरणपरमिति दोषानुल्लेखः अयमेव तस्या तासाञ्च विशेषः भावज्ञतापि सर्वथामदीयोऽयं मदीयं मनोगतं जानात्येवेति विश्रम्भात् वनोद्देशं यत्र स्थितयाता विधुरता निजसहचर्योऽवलोकितास्तादृशमुत्कृष्टं देशमित्यर्थः । किमब्रवीदित्यत आह । नेतिपारये नातःपरमन्यत्र चलितुमपि समर्था सखीप्रेमपरवसत्वादिति भावः । किन्तु यत्र ते मनस्तत्र नयेति अनुमननभङ्ग्या यत्र मदीये मनस्त-

त्रैवापि निश्चितं मयेति सूचितं शब्दशक्तिबलेनान्यत्राशक्तिसूचनान्नर्म्मापि व्यञ्जितम् ॥ ३७ ॥

अथ श्रीभगवतो हृदयज्ञतामभिनयति । एवमिति । तया स्वाधीनपतित्वोचितकृत्रिमालस्यव्यञ्जकनर्म्मवचसा एवमुक्तः सन् सोऽपि प्रियां कोटिप्राणाधिकप्रियत्वेनाभिमतामिति नर्म्मवचसैवाह इतीति किंस्कन्ध इति अत्र प्रियामित्युक्तेः स्कन्धादिपदानां प्रकटार्थमनुसृत्यान्यथा भ्रमो न कार्य्यः यास्वन्तु दम्पत्योरन्योऽन्यविषयकं रसाधायकमेव तदुक्तं योऽन्य मुखे दुर्वादः प्रियतमवदने स एव परिहासः । इतरेन्धन जन्मा यो धूमः स एवागुरुसम्भवो धूप इति अयमेव दोषानुल्लेख इत्युच्यते अत्रैव च भावज्ञतापि स्कन्ध पदस्यानेकार्थतामाश्रित्य सङ्गमनीया तथाहि स्कन्धः प्रकाण्डे काये च बाहुमूलसमूहयोरिति विश्वप्रकाशात्स्कन्धशब्दः समूहवचनः ततश्च समुचितत्वात्सहचरीसमूहः सेनास्कन्ध इति महाकविप्रयोगश्च तथाश्लिष्टपदोपादानात्स्कन्धशब्दस्य कायपरतामपि योग्यतया परिकल्प्य पुनरेवं विचारितवान् मम प्राणकोटिनिर्मञ्छनीयललितचरितायाः श्रीमत्याः प्राणप्रियायाः समुत्कर्ष एव यथास्यात्तथा मयानुष्ठेयमिति वाञ्छितश्च प्रियायाः सखीनां सङ्गतमिदानीं मिलिताभ्यामेव यद्यपि प्रकटीभूय सख्यः सुखनीयास्तथापि विरुद्धस्वभावासीर्ष्योदयादसूयादयःस्याद्यदि च सोऽपि मद्विषयकस्यात्तदा न तादृशो दोषः प्राणप्रियाविषयोऽसहनीय इत्यन्तार्हितवानितितत इतिअन्तर्दधे श्लेषेण तामेवान्तर्हृदये धारितवानित्यर्थः कृष्णः तया वशीकृतः अथवायमप्यन्तार्हितत्वे हेतुः एवं स्थितेऽपि प्रेमास्याः प्रकाशयति मुग्धतामित्याह । सेति वधूः तत्प्रेमवद्धा अन्वतप्यत कोमलहृदयत्वात्किमुक्तं मयेत्यनुतापं कृतवतीति ॥ ३८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

मानदोषमुद्घाटयितुं वरिष्ठत्वमानप्रयुक्तदर्पमनुकुर्वत्याश्चरिमाह । तत इति । तता वरिष्ठमाननानन्तरं यथा पूर्वमानमानभाराभावेन कृष्णात्मतया सर्वसमर्थाऽभूदधुना तथाभावादनुकारमात्रमानभारश्रान्ता यथा कथं चिद्वनोद्देशं वनस्योत्कृष्टदेशं गत्वा इमा मानश्रान्ता केशवं ब्रह्मेशयोरपि कारणं तदुक्तं दृजयाक्रान्तत्वेनातिश्रान्ता केशवं ब्रह्मेशयोरपि कारणं तदुक्तं शिवेन कः प्रजापतिरुद्दिष्ट ईशोऽहं सर्वदेहिनाम् आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवानिति तादृशमपि प्रेमाधीनतया केशवं केशांस्तदीयान् वयते पुष्पादिना ग्रथ्नातीति तथा तादृशं दृष्ट्वा स्वाधीनदृष्ट्या विस्मृततदुत्कर्षा वधी तु तद्वचनमेवाह । न पारयेऽहमिति । यद्वा मानमनुकुर्वती नर्म्मणैवाह । न पारयेऽहमिति । अंह चलितुं न पारये न समर्था ननु महत्सुखप्रदं रम्यतमं केलिप्रदेशमग्रे वर्तते तद्यावश्यं गन्तव्यं तत्र पूर्वानुभूततदङ्गनयनसौख्याह । नय मामिति यत्र ते मनस्तत्र मां नयेति यद्वा इमापि लोकदर्पदोषोपदेशाय कृतदर्पानुकारापि केशवं केशप्रसाधनादिना निश्चितस्वाधीनभावं पातिव्रत्यप्रेममर्यादामनुलङ्घ्य स्वासामर्थ्यतादिच्छाधीनत्वबोधकमेवाह । न पारय इति ॥ ३७ ॥

मानानुकारमिषस्यासामर्थ्यस्वामी स्वाधीनत्वद्योतकतद्वचननर्म्मवचनश्रवणानन्तरं भगवानपि नर्म्मतयैवावददित्याह । एवमिति । एवमतिविलक्षणचातुर्यघटितमानप्रेमाशक्त्याधीन्यगमकनर्म्मवचसोक्तो

## हा नाथ ! रमण प्रेष्ठ ! क्वासि क्वासि महाभुज ! ॥
## दास्यास्ते कृपणाया मे सखे ! दर्शय सान्निधिम् ॥ ३९ ॥

### श्रीरामनारायणकृतभावभावविभाविका ।

नर्म्मणैवाह । स्कन्ध आरुह्यतामिति । नतु रोषेण प्रियामाहेति श्रीशुकोक्तेः नच स्वामिनः स्कन्धारोहोः पवादायैव भवति तदुक्तिः कथन्नर्म्मणेति वाच्यं यस्त्वन्यमुखेनापवादस्तस्यैव प्रियतममुखेन नर्मत्वसम्भवात् प्रियामिति पदस्यैव तत्सूचकत्वात् तदुक्तमभियुक्तैः योऽन्यमुखे दुर्वादः प्रियतमवदने स एव परिहासः इतरेन्धनजो धूमः सोऽगुरुजन्मा भवेद्धूपः यद्वा रसिकशिरोमणि भगवान् रतिकालिकतदीयपादस्कन्धारोहसौख्यमनुस्मृत्य यद्यन्यत्र गन्तुमशक्तासि तर्ह्यत्रैव पुनः स्कन्ध आरुह्यतामित्याहसा तु मानानुकारेण तथारोढुमनिच्छती देशान्तरगमनायैवारोढुंप्रसारितचरणा ऽभवत्ततश्च भगवान् कृष्णो नर्म्मणोत्थापितपादामेव त्यक्त्वा मानदोषप्राकट्याय तदभिप्रायं विद्वांस्तदनुसारेणैवान्तर्दधे ततस्तत्प्रेमोत्कर्षद्योतकं तच्चरितमाह । सा वधूरिति । सापि सर्वजगदाल्हादिकापि वधूस्तस्य नित्यप्रियभार्यापि कृष्णस्य क्षणान्तर्द्धानमात्रेणानु पुनः पुनरतप्यत योग्यं चैतत् नित्यानन्दकृष्णविरहे तपनं जीवनदुःसहत्वञ्च एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्या यदानन्दमात्रावियोगे सर्वभूतानां जीवना सम्भावना तदा तस्य साक्षात्सर्वानन्दाविम्बभूतनित्यपरमानन्दकृष्णस्य वियोगे जीवनासहनं कैमुत्यसिद्धम् ॥ ३८ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

तत इत्थं मनसि स्फूर्त्यनन्तरं तेनैव सार्द्धं कास्मांश्चिद्वनप्रदेशे प्रियेण सहैव गत्वा अखर्वगर्वाक्रान्तस्वान्ता मा केशवं स्वस्याः केशान्वर्यतं प्रथतीति तथा च स्वाधीनकान्ताया स्तस्या रसावहो दर्पो जात इति भावः । रमणबहुवनभ्रमणादिना जातश्रमाहमितः परं चलितुं न पारये न भवामि ननु भो मुग्धे ताभ्यो दूरमग्रेऽपि मनोज्ञस्थानं वर्तते तत्पर्य्यन्त यथा कथंश्चिच्चलनीयामितिचेत्तत्राह । नयेति । एवं तर्हि पूर्ववन्मामङ्के निधाय त्वमेव नय प्रापयाहन्तु पदमात्रमपि गन्तु न शक्नेत्यर्थः । ननु किम्पौष्पाभरणपुष्पतल्पशयनाद्यर्थं पुष्पोद्यानं नयामि किम्वा यमुना पुलिनं तत्र विहाराद्यर्थमित्यपेक्षायामाह । यत्र ते मनः अनेनालक्ष्यो मनुमोदनं च सूचितं यद्वा स्वाभेरक्षौ प्राप्तबन्धनं कान्तं निश्चित्य प्राप्तगर्वा केशवं ब्रह्मादिसमस्तस्वामिनं देहादिपञ्चकाधातीतमब्रवीत् निवृत्तिपक्षे ततोऽन्तःकरणलक्षणस्य वनस्योद्देशे श्रेष्ठप्रदेशे शोभनंप्रत्ययं गत्वा अहमेव प्रत्यगभिन्नब्रह्मावभासिकेति गर्ववती ब्रह्माद्यधिष्ठानभूतं परमात्मानमब्रवीत् अहं चलितुं स्वार्थादपितु केनापि प्रमाणेन वादिनां वारणेऽशक्या अतस्त्वत्सम्बन्धाधिकारिमनः यत्राखण्डैकरसे त्वयि वर्तते तत्रैव मां नय तत्प्रतिपादकत्वेनैव मां स्थापय तथा च यथोक्तश्रुतिवेद्यत्वं ब्रह्मणोऽस्तीति विवेकिचेतसि स्फुरितमिति भावः ॥ ३७ ॥

एतच्छ्रुत्वा भगवतेयं विचारितमनया मां स्वाधीनमवगत्य छ्द्मिमालस्यादिमयं नर्मवाक्यमुक्तमतो नर्मवाक्यमुक्त्वाऽन्तर्द्धानं कार्य्यं तच्चावश्यकं यत एतेनैतच्छृङ्गाररसपोषणं महाप्रेमवत्या अस्या मद्वियोगजनितदशाया अवलोकनं मत्संश्लेषजनित सौभाग्यमवलोक्यातिविस्मितस्वान्तानां तासां परमचमत्कारसिन्धुनिमज्जनकर्या असाधारण्या अस्यां मद्विरहावस्थायां दर्शनपूर्वकं सर्वाभिरभिरमणानुकूलस्यैकमत्यस्य सम्पादनञ्च सेत्स्यातीति तदेतदभिप्रेत्याह । एवमिति । एवमुक्तः श्रीकृष्णः मम स्कन्ध आरुह्यतामिति प्रियामाह । यद्वा स्कन्धः प्रकाण्डे कायेचेति कोशात् स्कन्धः कायः सच योग्यत्वादङ्करूपः सापि तत्कृतं नर्ममबुद्ध्वा तत्स्कन्ध मारोढुं प्रवृत्ता ततस्तत्प्रवृत्त्यनन्तरमेवान्तर्दधे यतः कृष्णः सदानन्दस्वरूपोऽन्तरधात्ततः सा तद्दर्शनैकजीवना वधूः परमप्रिया विश्लेषासहा अन्वतप्यत परमपश्चात्तापमगच्छत् तेन च बहुधा विललाप निवृत्तिपक्षे एवमुक्तः परमात्मास्कन्धस्थानीयं देशविशेषं चैतन्यमात्रमारुह्य तां प्रतिपाद्यतामित्येवं वधूमाह भगवत्त्यागलक्षणया चैतन्यमात्रविकत्वं यथोक्तश्रुतेरधिकारिणावगतमित्यर्थः । ततो यथोक्तश्रुत्या ब्रह्मणः सुवेद्यत्वावगत्यनन्तरं कृष्णः अपरिच्छिन्नसदानन्दस्वरूपः परमात्मा अन्तर्दधे परिच्छिन्नतां प्राप्त्या विज्ञाततां गतः यदि मन्यसे सुवेदेति दहरमेव नूनं त्वं वेत्थ अविज्ञातं विजानतामित्यादिश्रुतेः सा वधूः तल्लक्षणा श्रुतिरन्वतप्यत पुनरनधिकारिणा विचारिता अहो अवेद्यस्य ब्रह्मणः श्रुति वेद्यता कथमिति ॥ ३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चलितुं न पारये गन्तुं न शक्नोमि ॥ ३७ ॥

कामिनां दैन्यं दर्शयति । एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति । अखण्डितत्वमाह । ततश्चान्तर्दधे कृष्ण इति । ततस्तस्यां स्कन्धारोहोद्यतायां सत्यां कृष्णः सदानन्दः स्वाभाविकपरमानन्दोऽन्तर्हित इत्यर्थः साचान्वतप्यत ॥ ३८ ॥

---

### भाषा टीका ।

फिर थोडी देर कुछ वनको जा अभिमान कर केशव भगवान् ते बोली कि मो पैं तो नाय चलो जाय है जहां कहीं जावे को तुमारो मन होय तहां मो को ले जाओ ॥ ३७ ॥

या प्रकारते प्यारी के वचनको सुन भगवान् बोले प्यारी हमारे कांधे पर बैठो जब वो बैठवेलगी तब ही भगवान् अंतर्धान होगये तब वा गोपी गोपवधू को बडो ही अनुताप भया ॥ ३८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनुतापमाह । हा नाथेति ॥ ३९ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

हा खेदे आर्तिसंबोधने वा ततश्च सर्वत्रैव योज्यं नाथ! प्राणेश्वर । रमण रतिदायक प्रेष्ठ प्रियतम महाभुज! गाढालिङ्गनदातरित्यर्थः । एषां यथोत्तरं हेतुहेतुमत्तोह्या यद्वा नाथ प्रभो न केवलं तथा किंतु रमणसुखप्रद विविधक्रीडाकारकेति वा अतः स्वभावत एव वा प्रेष्ठ आत्मनोऽपि सकाशात् परमप्रियेत्यर्थः । यतो महाभुज परममनोहरसच्चिदानन्दघनमूर्त्ते इत्यर्थः । यद्वा परमभोगकर्त्तः इति सततं रत्यादिसुखसंपत्तिर्योधिता यद्वा व्रजेश्वरत्वेन नाथेति तत्रापि पतिप्रयोजनसिद्धा रमणेति तत्राप्युपपतित्वेन प्रेष्ठेति तत्रापि परमसुन्दरत्वादिना महाभुजेति यद्वा क्वासि क्वासीति परमार्त्त्या विलपन्ती सुविह्वला भूमौ निपतन्ती तदालिङ्गनमिच्छन्ती स्मरन्तीवाह महाभुजेति नच दूरे स्थित्वा ऽत्राहमस्मीति वक्तव्यमित्याह मे मां प्रति तव संनिधिं दर्शय संनिहितो भवेत्यर्थः । कुतः दास्याः तत्रापि कृपणायाः अन्यथा मदन्त्यदशायां सत्यां त्वयाऽनुतप्स्यत एवेत्याशयेनाह । हे सखेति यद्वा सन्निधि दर्शनेच क्वापि वञ्चना पूर्ववन्न कार्येत्याह सखे परमविश्वासास्पदेति अथवा ननु प्रियतमे त्वां हित्वा नाहं कुत्रापि गतोऽस्मि त्वदन्तिक एव वर्त्ते इति चेत्तर्हि त्वामहं मुग्धा नैव पश्यामि सख्येन त्वमेवात्मानमभिव्यञ्जयेत्याह । दास्या इति अन्यत्समानं यद्यपि विरहवैकल्येनानुसंधानापगमाद्विलापेऽर्थसङ्गतिर्नापेक्ष्येत असङ्गतिश्च गुण एव तथापि तादृशीनां यत् किंचिद्वाक्यमेव सर्वार्थं सेवते इति यथाशक्ति किंचिल्लिख्यते एवमग्रेऽपि ज्ञेयं ततश्च सा विमुह्यन्ती भूमावपतदिति ज्ञेयम् अग्रे मोहितामित्युक्तेः अथवा स्कन्ध आरुह्यतामितीत्युक्तेः प्रेमौत्कण्ठ्यकृतेन वैचित्येन पुरोवर्त्तमानस्यापि कृष्णस्य तयाऽनवलोकनादन्तर्द्धे कृष्ण इत्युक्तं वस्तुतस्तु कौतुकत्वादेव स तत्र तूर्ष्णीं स्थितः ततः प्रेमवैचित्यभाजस्तस्या अनुतापः तथान्या गोपीः सन्निहिता दृष्ट्वा कृष्णेनान्तर्हितमेवेति ज्ञेयम् ॥ ३९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विलापमेवाह । हा नाथेति । हा खेदे आर्त्तिसम्बोधने वा । ततश्च सर्वत्रैव योज्यं नाथ स्वामितया पालक रमण कान्तोचितसुखप्रद प्रेष्ठ मद्विषयकतदुचितप्रेमविस्तारक क्वासि एवमेवं मयि स्निग्धोऽपि सम्प्रत्येकाकी क वर्त्तसे । हा हा तदज्ञानेन मम चित्तं क्षुभ्यतीति भावः । वीप्सापि वैयग्र्येण पुनरालिङ्गनादिनिजसौभाग्यस्मारकेण निजरसोद्दीपकतदङ्गविशेषसौन्दर्यस्मरणेन मुह्यन्तीवाह । महाभुजेति । पुनरार्तिदैन्येनाह । दास्या इत्यादि । तत्रैव किं पुनरपि ममालिङ्गनादिलाभाय मम वासं मृगयसीत्याशङ्क्य नहि नहीत्याह । सखे दत्तनिजसाहचर्यसौभाग्य सन्निधिं निजसन्निधानमपि दर्शय ज्ञापय मात्रम् । साहचर्यदानेन भवतैव जनितव्यसनानि सम्प्रति तत्र मा गृह्णामि किन्तु त्वमत्र विद्यस इति मनसापि निश्चयतः स्वस्था भवेयमिति भावः । तत्र हेतुः । दास्याः सख्यादावयोग्यायाः किन्तु तादृशत्वत्कृपयैव बलादुत्पादितत्वदेकसुखानुकूल्यतात्पर्याया इत्यर्थः । तत्रापि कृपणायाः तदिदं दुःखं सोढुमशक्तायाः परिहर्तुं चाजानत्या इत्यर्थः । अतो न मयि वञ्चना कार्या नापि निजानुतापबीजं वप्स्यामीति भावः । औदार्यनामा चानुभावोऽयं यथोक्तम् । औदार्यं विनयं प्राहुः सर्वावस्थागतं बुधा इति । ततश्च सा विमुह्य हन्त भूमावपतत् इति ज्ञेयम् । अग्रे मोहितामित्युक्तेः ॥ ३९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनुतापप्रकारमेवाह हा नाथेति हेति खेदे हे नाथ प्रियतम हे महाभुज क्वासि तव किङ्कर्याः कृपणाया दीनायाश्च मम हे सखे तव सन्निधिं दर्शय ॥ ३९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्या लभ्यो नान्यथेति भावं दर्शयति । तत इति शुद्धबुद्धेः स्वभावोऽयमिति दर्शयितुमाह । सा वधूरिति । हा विपण्णास्मि वने हा विपा दशुगार्तिष्विति च हे नाथ आशाप्रद हे रमण रति प्रद हे प्रेष्ठ ! प्रियतम ॥ ३९ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अनुतापप्रकारमाहाहा नाथेति हे महाभुज सन्निधिंदर्शय यद्यपि सन्निधिस्तवानुमीयते अत्रैवासि न क्वापि गतोऽसि तथापि तं दर्शयेत्यर्थः । महाभुजेति भुजस्पर्शसुखानुभवसूचकम् अन्तर्धाय भुजाभ्यां परिरभ्य स्थित इति बोद्धव्यं तच्च स्वप्नलब्धसुहृदालिङ्गवतत् तत् क्वासि भुजस्पर्श एवानुभूयते ननु त्वं पश्चात् पुरतः पार्श्वतो वासीति नोपलभ्यसे तस्मात्सन्तमपि सन्निधिं दर्शयेत्यर्थः ॥ ३९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न केवलमन्तरनुतापः किन्तु तज्जनितो बहिरपि विलापो जात इत्याह । हानाथेति हा इति पश्चात्तापे अयुक्तं कृतमिति तथापि हे नाथ त्वमेव स्वामी अतो दोष एव दूरीकर्तव्यः ननु त्यक्तव्या ननु दूरे स्थित्वा पालनं करिष्यामीति चेत्तत्राह । रमणेति त्वमेव रतिवर्द्धको भोक्ता भोग्यरूपाश्च वयमतो निकट एव स्थातव्यमिति भावः । नन्वनुरोधेन केवलं पालनं करिष्यामि भोक्तुरिच्छाभावात् नहि भोग्येच्छया भोक्ता भुंक्ते तत्राह । प्रेष्ठेति नह्यन्यः प्रीतिविषयोऽस्ति येन जीविष्यामि अत्यन्तं व्याकुलाया वचनमाह । क्वासि क्वासीति । मोहवशात् अन्धा पतिता च जाताः तत उत्थापनार्थं संबोधयति महाभुजेति महान् भुजो यस्य महती क्रिया शक्तिःअतो दोष एव दूरीकर्त्तव्यो नत्वहं यतोऽहदासीतथापितनवैचाहं दासी स्वभावत एवाहं कृपणा अनालोचितयाचिका अतो मद्वचनाद्यान्यथाभावः कर्त्तव्यः एवम्प्रार्थनायां परमकृपालुस्तामुत्थाप्य स्वस्थां कृतवान् अदृश्यरूपेणैव तदा पुनराह । हे सखे स्पर्शेन स्वधर्मारोपात् स्वसन्निधिं दर्शय वर्त्तसे निकटे तथापि यथा सान्निध्यं दृष्टं भवति तथाकुरु एवमेव वदन्ती स्थिता भगवानपि तत्रैव स्थितः ॥ ३९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विलापमेवाह । हा नाथेति । त्वद्वियोगमहाग्निना दह्यमाना दस्माद्देहान्मे प्राणाः सम्प्रति निःसृतप्रायाः यत्नेनापि मया रक्षितुं न शक्यन्ते एषां तु त्वमेव नाथोऽतो दर्शनं दत्त्वा शीघ्रं मे तान् रक्षेति भावः । नचैषां रक्षामहं स्वार्थमेव प्रार्थये किन्तु त्वदर्थमेवेत्याह हे रमणेति सर्वा अप्यन्या गोपीस्त्यक्त्वा रमणसुखविशेषार्थं यामेतावद्दूरं रहः समानैषीस्तस्यां मयि मृतायामेवं रतिसुखमन्यत्रालभमानो मां स्मरंस्त्वमपि दुःखेन विलपिष्यसीति भावः । नन्वस्तु मद्दुःखं तेन तव किं तत्राह । हे प्रेष्ठेति तव मत्प्रेष्ठत्वात्त्वदीयं तद्दुःखं कोटिगुणीभूय मय्येव फलिष्यति मत्प्राणकोटिनिर्मञ्छनीयपादाब्ज नखैकदेशस्य तव तद्दुःखमहं मृत्वापि सोढुं न पारयिष्याम्यतः कृपया सान्निधाय तदेव दुःखं दूरीकुर्विति भावः । ननु यदि निःसृतप्राया एव प्राणास्तदा तानहमपि कथं निवर्त्तयितुं प्रभविष्यामि तत्राह । हे महाभुजेति त्वद्भुजस्य मत्सञ्जीवनौषधस्पर्शमात्रेणैव सुस्थसुशीतलीभूते देहेऽस्मिन् प्राणाः स्वयमेवागत्य स्थास्यन्तीति भावः ननु मां विना स्वस्या गतिमेवं जानासि चेन्महाराजकुमारं परमसुकुमारमादरणीयं मां नय मां यत्र ते मन इत्यादिष्टवती किमकोपयस्तत्र स काकुवैयग्र्यमाह । दास्यास्ते कृपणाया मे इति । तदानीं विलासश्रमनिद्रालस्याभिभूतयैव दीनया मया तथोक्तं क्षमस्व माकुप्येति भावः किञ्चायोग्ययापि मया सह त्वमेव दृढं यत्सख्यमकरोस्तेनैव तथाहमवोचमित्याह हे सखे इति । हे प्रिये तर्हि प्रसन्नोऽभूवं गतस्त्वमपि मेहीति चेत्सम्प्रत्यनुतापदुःखेनान्धास्मि त्वं क वर्त्तसे इति न पश्यामीत्याह । दर्शय सन्निधिमिति । एतावदेव विलप्य विरहोद्घूर्णावशात् सम्मुह्य भूमावपतदिति ज्ञेयम् अग्रे मोहितामित्युक्तेः ॥ ३९ ॥

———

### केनचित्कृता विशुद्धरसदीपिका ।

अथ प्रेमवैचित्यकृतं मौग्ध्यमनुनयति । हेति अतिखेदे तत एव नाथेति पर्यायोक्तरपि तस्मात्तथात्वमुक्तमभियुक्तैः नाथेति पुरुषमुचिनं प्रियेति दासेत्यनुग्रहो यत्र तद्दाम्पत्यमतोऽन्यथारज्जुः पशुः पुरुष इति मधुरविलासाभिप्रायेणैव व्याख्यातम् अथवा प्रेमवैचित्यो-क्तावपि वैदग्ध्याद्यनन्तगुणसेवितचरणकमलत्वाद्विविधस्वभावानां गोपीनामनुग्रहाय तदभिमतभावसंग्रहाय च वाग्देवी विलसितमिदं तथाहि नाथेति दाम्पत्येन सुखप्रदेत्यर्थः । इदञ्च दाम्पत्याभिमानिनी नामैकमत्यायोक्तं तथा रमण कान्तोचितसुखप्रदेत्यर्थः इदञ्च प्रेयसीनां नचेदमसम्भावितं सैव चाष्टविधा राधा तत्तद्भावविभावनीति आदिपुराणोक्तेः अथ प्रेष्ठ मद्विषयकनदुचितप्रेमविस्तारकेत्यर्थः । इति सहचरीणाम् एवं मद्विषयकं तत्तद्भावजातमभिव्यज्य स्वाश्रितमावेदयति । सख इति अथवा दास्या इत्याद्यानां कृपणाया इति प्रेयसीनां सख इति स्वपक्षाणामभिप्रायेणेति तथाक्रमं योजना यद्वा ते दास्याः नाथ ते कृपणाया रमण मे सखेति प्रेष्ठेति च तासां तासां संग्राहकत्वान्महाभुजेति संग्रहसूचनमपि कृतम् औदार्य्याख्यानुभावोऽयम् औदार्य्यं विनयं प्राहुः सर्वावस्थागतं बुधा इति प्रेमवैचित्त्येऽपि तथात्वात्परमत्वमपि प्रेमवैचित्यमुक्तमुज्ज्वले प्रियस्य संनिकर्षेऽपि प्रेमोत्कर्षस्वभावतः । या विश्लेषधियार्त्तिस्तत्प्रेमवैचित्य मुच्यत इति अत्र कारिकाः ।

किंवा स्वीयापरोढालिभावावेशितचेतसाम् ।  
गोपीनां संग्रहायाह नाथेत्यादिपदत्रयम ॥  
क्रमेण दासी कृपणा सखीत्याद्यभिमानिनी ।  
स्वमतं सख्यमेवात्र प्रदर्शितवती स्फुटम ॥  
सिद्धान्त उत्तरः पक्ष इति शास्त्रविदां मतात् ।  
तत्तथा दैन्यवचनं तासामातिसुखावहम् ।  
स्वसाम्यानुभवादद्धा सखीमिति मुनीन्द्रगीः ॥ ३६ ॥

———

### श्रीरामनारायणकृतभावभावविभाविका ।

तदनुतापवाक्यमेवाह । हा नाथेति । हा इत्यनुतापे सखेदसंबोधने च नाथेति नाथृनाधृयाञ्चोपतापैश्वर्याशीःषु इत्यस्मात् हेनाथास्मद्याच्यमानैश्वर्येण स्वामितयापालकोऽसिततः तद्रूपेति वा तथाच प्रार्थनापूरणेन स्वामितया पालय स्वयमेव वररूपतया कामं पूरय नोचेद्विरहेणोपतापकतया त्वयि नाथे सति अहं नाथ अथानन्तरमेव न स्यामिति भावः । कथं पालनं कामपूरणं वा तत्राह रमणेति तथाच रमणत्वात् रमय नोचेद्रमणस्य किंचिदपि वैपरीत्ये मम मरणमेव ननु स्मुक्रीडायामित्यस्मात्क्रीडेच्छायां स्वसखीभिरमस्व तत्राह। प्रेष्ठेति अतिशयेन प्रियेत्यर्थः । तथाच त्वदतिरिक्तातिप्रियाभावात्त्वद्वियोगे जीवनस्यैवासंभावनायां क रमणमिति भावः । इत्थं संबोधनैरेव स्वखेदं निवेदयन्ती प्रार्थनां च सूचयन्ती प्रेमान्धतया कासि कासीति बाहुप्रसारेणान्वेषयन्ती वैक्लव्यतया निपतन्ती स्वोत्थापनार्थं संबोधयति महाभुजेति ततश्चाविज्ञातसखेव तेन प्रियेणान्तर्हितेनैव भुजाभ्यामालिङ्ग्य स्थापिता प्रियस्पर्शलब्धप्राणा आप्तदर्शना सख्येन संबोधयति दैन्याविष्कारेण संबोधयति दर्शनं च प्रार्थयति दास्या इति दास्याः स्वानुरागेणवामूल्यक्रीतायाः नखरदादिविविधरत्नान्वितसुवर्णरूपधनेन वा क्रीतायास्तदात्मीयजीवनधनापगमे कृपणाया दीनाया मे हे सखे ! स्पर्शेन वर्त्तमानतया सम्भावितं ते सन्निधिं दर्शय यद्वा कृपणायाः सन्निधिं सम्यङ्निधिमिव दास्या मे सम्यङ्निधिं ते सन्निधिं दर्शय ॥ ३९ ॥

———

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तत्कृतावस्थापमाह।हेति आर्तिसम्बोधनमिदं सर्वत्र योज्यं हा नाथ स्वामिन् ! पालक हा रमण प्रियोचितसुखप्रद हा प्रेष्ठ प्रेमविस्तारक तथाचैवं विधस्य तव मद्वियुक्ततयावस्थानं नोचितमित्याशयेनाह । क्वासीति । आलिङ्गनं स्मृत्वा हा महाभुज दैन्येनाह ते दास्याः सख्यादावयोग्यायास्तत्रापि कृपणाया एवंविधं दुःखं सोढुमशक्तां मामपरिहर्त्तुं वा नास्यतो मम सान्निधिं दर्शय सन्निहितोऽस्मीति ज्ञापय यतस्त्वं सखा तुल्यसख्या अपराधाः क्षन्तव्या एवेति भावः । यद्वा हेति पश्चात्तापे अयुक्तं जातमित्यर्थः । यद्यपि मया अयुक्तं कृतं तथापि त्वया नाहं त्याज्या किन्तु दोष एवोपेक्षणीयो यतस्त्वमेव मम स्वामीत्याशयेनाह । हा नाथ ननु शक्तप्रासौ साहाय्यं करिष्यामीति

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ॥
ददृशुः प्रियविश्लिष्टां मोहितां दुःखितां सखीम् ॥ ४० ॥
तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥
अवमानं च दौरात्म्याद्विस्मयं परमं ययुः ॥ ४१ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

चेत्तत्राह। हे रमण! ते दास्याश्च रमणस्य भोक्तुस्तव भोग्याया मत्तो दूरेऽवस्थानं परमसङ्कटरूपं तस्मात्त्राणं कर्तुं योग्योऽसीति भावः। ननु भोग्येच्छया भोक्ता न प्रवर्तते किन्तु स्वेच्छया तथाच ममेच्छाभावात्कथं रमणे प्रवृत्तिरित्याशङ्क्याह। हे प्रेष्ठ मम प्रीतिविषयस्यान्यस्या भावात्त्वद्विरहे मरणमेव सम्भाव्यते तेनानुग्रहबुद्ध्या तथा कुर्वित्यभिप्रायः अतस्तथा भूतस्त्वं क्वापि गन्तुमयोग्यः अत्रैव स्थातव्यमहं व्याकुलत्वान्न जानामि ततः पृच्छामि क्वासीति झटिति कथय नोचेदुच्छ्वेयुर्मम प्राणा इत्याशयेन पुनराह। क्वासीति इत्युक्त्वा भूमौ निपतिता मूर्च्छाभिमुखा उत्थानार्थं सम्बोधयति हे महाभुजेति यतस्तवैवाहं दासी तत्रापि संप्रति कृपणा तस्मान् मम सन्निधिं दर्शय हे सखे सख्युस्तवेदमुचितमिति भावः। यद्वा हे नाथ! त्वदेकप्राणायास्त्वदधीनाया इमेते प्राणाः संप्रति गन्तुकामाः मया रक्षितुमशक्या अतस्तानागत्याशु संरक्षेत्याशयः तद्गमने तवात्यन्तदुःखं भविष्यति सर्वापेक्षयोत्कृष्टत्वेन सम्मतायां मयि मृतायामन्यत्र रतिमलभमानस्य पश्चात्तापेन रोदनावश्यंभावादित्याशयेनाह हे रमणेति। ननु अस्तु मम दुःखं तव तेन किमिति चेत्तत्राह। प्रेष्ठेति प्रेष्ठस्य तव दुःखं कोटिगुणितं सन् मय्येव फलिष्यतीति भावः ननु सर्वथा निर्गन्तुं प्रवृत्ताः प्राणा मयापि कथं संरक्ष्या इति चेत्तत्राह। हे महाभुज क्वासि क्वासि झटित्यागत्य स्वभुजामृतसंजीवनौषधेन सुकरं तद्रक्षणं सम्पादयेति भावः। नन्वेवन्तर्हि न पार्ये ऽहं चलितुमित्येवं किमर्थमुक्तवत्यसि ततः सापराधां त्वां न स्पृशामीति चेत्तत्राह। दास्यास्ते यद्यपि तदानीं प्राप्तगर्वयाऽऽलस्यादिवशात्तथोक्तं संप्रति तन्निवृत्त्या दासीभावं प्राप्तास्मीति तत्रापि कृपणा परमदीना जातास्मि ततः क्षमैवोचिता इतः परं मरणस्यैवावशेषादपराधनिमित्तस्य दोषस्य निवृत्तत्वान्न कोप इतिभावः। किंच वस्तुतो नास्ति ममापराधस्त्वयैव दास्ययोग्याया मम सख्यं कृतं तदनुरूपं च मयानुष्ठितमित्याशयेनाह। हे सख इति। ननु नास्ति मम कोप इतिचेत्तर्हि सन्निधिं दर्शय प्रसन्नः सन्मत्समीपमागतोऽसि चेत्तर्हिविरहव्याकुलस्वान्तायाः पश्चात्तापदुःखेनान्धीकृतनेत्राया मम सन्निधिं स्पर्शादिना दर्शय पश्चात्त्वमहर्तीं मूर्तिंद्रक्ष्यामीतिभावः। एवं विलपती भगवत्स्पर्शादिकमलभमाना ततः परं विलापेऽप्यक्षमा मूर्च्छिता सती भूमावपतदित्यपि ज्ञेयं मोहितां ददृशुरिति वक्ष्यमाणानुसारात् निवृत्तिपक्षे अथ ब्रह्मणः साक्षात्संबन्धत्वाभिमानं विहाय स्वजन्यवृत्त्यावरणनिवृत्त्या सन्निधिं प्रार्थयते हा नाथेति हेति स्वजन्यवृत्तिरहिता नाशोपाधि हे नाथ सर्वेश्वर हे रमण जगत्सृष्टिस्थिति भङ्गलक्षणक्रीडापरायण तत्पदार्थ हे प्रेष्ठ परप्रेमास्पद महाभुजासंख्यातभुजादिमदभिन्नत्वपदार्थ आसि असीत्येवं नवकृत्वस्त्वोपदेशापराया दास्या अधिकारिभिर्मदर्थाग्रहे कृपणायाः दीनतां प्राप्तायाः मम कचित्सखे निरुद्धे रिन्द्रियैः सह वर्तमाने शुद्धेऽन्तःकरणे सन्निधिम् आवरणनाशकवृत्त्युत्थानेन मत्प्रतिपाद्यतां प्रकटयेत्यर्थः ॥ ३९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनुतापं वर्णयति। हा नाथेति। हा इत्यव्ययमनुतापाविष्करणे हे रमण! हे प्रेष्ठ हा त्वां विनानुतप्तास्मि हे महाभुज! अनुतापजलधौ निमग्नामुद्धर हे नाथ! याच्यदास्याः याचक्याः सन्निधिं दर्शय हे सखे सन्निधिं त्वत्कृतापराधायाः अपराधं क्षन्तुमर्हसीति संबोधनपदानामाशयः ॥ ३९ ॥

---

भाषा टीका।

तब श्रीराधा जी कहबे लगीं हे नाथ हे रमण प्रिय हे महाभुज आप कहांहो हे सखे मैं आपकी दासी हूं अतिदुःखीहूं मोकूं अपनो दर्शन कराओ ॥ ३९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अन्विच्छन्त्यो मृगयमाणाः अविदूरतः समीपे ॥ ४० ॥ ४१ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

विदूरतः अत्यन्तदूरेऽपि ददृशुः तस्याः कान्तिविशेषतः यद्वा विदूरतो अन्विच्छन्त्यः अग्रतो दूरत्वया अन्वेषयन्त्य इत्यर्थः यद्वा अकारप्रश्लेषेण अविदूरतः निकट एव ददृशुः ततश्च निजवैकल्यभरेण निकटेऽपि पूर्वं तस्यास्तमार्त्तस्वरं न शुश्रुवुरिति ज्ञेयम् प्रियस्य श्रीकृष्णस्य विश्लेषाद्विच्छेदात् दुःखितां पश्चान्मोहितां च भूतलविलुठनलग्नधूलिकण्टकक्षतरुक्षकेशकसर्वाङ्गतादीनां बहुलाश्रुधारालालापङ्किलमुखस्तनत्वादीनां लक्षणानां तादृशमोहस्य च तद्विश्लेषं विनान्यथानुपपत्तेः मोहितामित्यनेन सर्वाभ्योऽन्येभ्योऽस्याः प्रेमविशेषोऽपि दर्शितः तासां हि विरहार्त्या भ्रमणादिकं अस्यास्तु चरमदशातुल्यो मोह इति सखीमिति तां तादृगवस्थापन्नां दृष्ट्वा सख्येन तुल्यव्यथा एव विशेषतश्च द्विगुणितनिजवेदनाः सर्वा अपि परिवृत्य रुरुदुरित्यर्थः। विश्लेषे सत एवेर्ष्यादेरपगमात् तथा पश्चाद्धुप्रयत्नैस्तां संज्ञाविचित्रचातुर्य्यैश्च सत्वरतां शनैरेव प्रापयामासुः ततश्चास्याः तद्वृत्तं पप्रच्छुरिति च ज्ञेयम् ॥ ४० ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

ततश्च तया कथितं सर्व मितिशेषः यद्वा पुनर्दुःखोदयभयेन ताभिरपृष्टमपि सखीनां समागमात् स्वयमेव विलापरूपेण वर्णितं तद्वृत्तमिति शेषः इतिपृथग्वाक्यमेकमेव वा ततश्च मानप्राप्तिमाकर्ण्य एवमग्रेऽपि यद्वा कथितमेवा भिव्यञ्जयन्ति मानेत्यादिना अवमानं परित्यागलक्षणं च निजदौरात्म्यान्मानादि लक्षणादाकर्ण्य चकाराभ्यामुभयोरेव प्राधान्यं द्योत्यते तत्तत् प्रकारेण रमणात् तथा ऽकस्मादेव रसावसरे अन्तर्धानाच्च माधवात् लक्ष्मीकान्तादपीति यद्वा मधुना मधुररसेन क्रीडति सदेति तस्मान्मानप्राप्तियोग्या मत्तोऽ प्यधिका काचिदन्यैव नत्वहं तथापि केवलं तत्कारुण्यमहिम्नैव नच निजगुणैस्तादृशमानं प्राप्तमितिभावः एवंभद्रं श्रीभगवत् कारुण्यादिगुणात एव अभद्रंच सर्वं निजदोषादेव वक्तव्यं मन्तव्यं चेति साधूनपि शिक्षयामासेति ज्ञेयं यद्वा श्रीकृष्णात् दूरे आत्मा स्वयं यस्याः दूरे आत्मा श्रीकृष्णो वा यस्याः सा दूरात्मा तद्भावो दौरात्म्यं तस्मात् तद्दूरगमनादित्यर्थः परमं विस्मयं सद्य एव तादृशानुग्रहनिग्रहाभ्याम् ॥ ४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अविदूरतो नातिदूरत इत्यर्थः । अतिदूरे व्यवधानसद्भावात् । राकेशशोभाविजयिशोभाविशेषेण दूरेऽपि दर्शनसम्भवात् । दुःखितामत एव मोहितां मूर्च्छितां समदुःखभावनया विशेषतस्तस्या एकाकिन्या अपि परित्यागदर्शनेन सुतरामीर्ष्यापगमादैकमत्याच्च । सखीमित्युक्तं किन्तु निजसखीनामत्र प्रेमावेशविशेषो ज्ञेयः ॥ ४० ॥

अत एव च तया कथितमाकर्ण्येति रोदनसंज्ञाप्रापण प्रश्नान्तरमिति ज्ञेयं कथितम् कथं भवतीभ्यो विच्छिन्ना बभूवाहमिति नाज्ञासिषं किन्तु दूरत एवात्मानुसन्धानमकार्षमित्यादिप्रकारकं सर्वं वृत्तमाकर्ण्य तत्रापि माधवात् नूनं लक्ष्यापि रमणतया स्पृहणीयात् सर्वगुणादिसम्पत्तेः पत्युर्वा तस्मात् स्वत एव परमसौभाग्यलाभलक्षणां सम्मानप्राप्तिं चाकर्ण्य तत्रैव गर्वलक्षणान्निजदौरात्म्यात् परित्यागलक्षणमवमानं चाकर्ण्य विस्मयमित्यादिकोऽन्वयः । अत्र तु दौरात्मशब्दप्रयोगस्तद्दैन्यवचनानुवादात् वस्तुतस्तु श्रीकृष्णाद्दूरे आत्मा देहो यस्याः दूरे आत्मा श्रीकृष्णो वा यस्याः सा दूरात्मा तस्या भावो दौरात्म्यं तस्मा दूरविश्लेषादित्यर्थः । परमं विस्मयमित्यादिकस्य तया कथितमित्यादिना त्रयेणाप्यन्वयश्च । तत्सहितान्तर्धानादि सर्वं तच्चरितस्य स्वसहित तच्चरितादपि दुर्वितर्क्यत्वात् । तत्रापि तादृशमानप्राप्तेः स्वेषु परः कोटिष्वप्यदृष्टचरत्वात् । तत्रच सति तस्यामप्यवमानस्य परमासम्भवादिति ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीत्थंप्रियस्य विश्लेषेण मोहितां विचित्तां दुःखिताञ्च तां सखीमविदूरतस्ता गोप्यः ददृशुः कथंभूताः भगवतो मार्गमन्वेषयन्त्यः ॥ ४० ॥

ततस्तया स्वस्याः माधवान्मानप्राप्तिं सम्मानप्राप्तिं तथात्मनो दौरात्म्याद्धेतोरवमानं च कथितमाकर्ण्यसर्वा गोप्यः परमं विस्मयं प्रापुः ॥ ४१ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दास्याः शिक्षायोग्यायाः दासुर्हिंसायामिति धातुः कृपणायाः कृपाविषयायाः गां दृष्टिं पान्ति रक्षन्ति दुर्विषयगमनराहित्येनेति गोप्य इन्द्रियवृत्तयः शास्त्रविषयाः अविदूरतः ज्ञात्वा समीपे स्थिताः ॥ ४० ॥

मुक्तेः पूर्वमपरोक्षबुद्धेः आविर्भावतिरोभावौ क्वचित्स्यातामिति भावदर्शनायोच्यते प्रियेत्यादिना मानप्राप्तिम् अपरोक्षलक्षणमानप्राप्तिम् ॥ ४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

अथ तस्याः पूर्वचिन्तितमेवाह । अन्विच्छन्त्य इत्यादि । प्रियाविश्लेपात् विचेतसो विरहिण्यो गोप्यः सखीं तां राधां ददृशुः कीदृशीं ऊहितां वितर्कितां साचेद्भवति कथमेकाकिनी साचेन्न भवति तदाक्वेयमन्येति प्रथममूहितां पश्चाद्दृशुर्ज्ञातवत्यः किन्तु मादुःखितां आत्मवत् विच्छेददुःखभाजं न ददृशुरित्यर्थः प्रच्छन्न भगवदङ्गसङ्गवत्त्वात् ॥ ४० ॥

अथ मिलने सति ताभिः पृष्टया तया सर्वमेव कथितमित्यतदाह । तयेत्यादि । तया कथितमित्येकं वाक्यं तया आनुपूर्व्या सर्वमेव कथितमित्यर्थः । तत्र कथने माधवात् मानप्राप्तिमाकर्ण्य विस्मयं ययुरित्यर्थः ॥ ४१ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततो यज्जातं तदाह । अन्विच्छन्त्य इति । पूर्वोक्ता गोप्यः भगवन्मार्गमन्विच्छन्त्यः अविदूरत एव तां ददृशुः तासां क्रोधाभावायाह दुःखिता मिति । नहि दुःखितायां क्रोधो भवति दुःखे हेत्वन्तरनिराकारणायाह । प्रियविश्लेषमोहितामिति । भगवत एव विशलेषणपरममोहं मूर्च्छां प्राप्तां सापि तासां सखी अतः सख्यभावन वहन्त्यः तां प्रबोधितवत्यः न दुःखं पञ्चभिः सहेति पूर्वमेता भगवानेवमेव कौतुकार्थं गतः नत्वस्मद्दोषेणेति ज्ञातवत्यः अन्यथा दोषनिराकाणार्थमेव यत्नः कृतः स्यात् स्वदोषपरिज्ञानं च भगवत्कृपयैव भवति न स्वत इति ज्ञापयितुं सा नीता पश्चात्त्यक्ता कथनार्थमेव ॥ ४० ॥

अतो भगवदिच्छया सर्वं कथितवती तत्र वक्तव्ये यत्प्रयोजकं तदाह मानप्राप्तिं च माधवात् अवमानं च दौरात्म्यादिति तया कथितं यद्यपि बह्वेव श्रुतं तत्रैतावान् अर्थो निर्द्धारितः सन्मानन्नं यत्प्राप्तं तन्नस्वगुणैः किंतु लक्ष्मीपतेरेव गुणैः लक्ष्म्यंशा एता इति दौरात्म्यात् स्वधर्मादेवावमानं चक्रारान् खेदश्रमादय एवं भगवतः अलौकिकं सामर्थ्यं दृष्ट्वा परमं विस्मयं प्राप्ताः एवं तद्वाक्यैः पदार्थनिर्द्धारो जातः अन्वेषणादिना भगवान प्राप्तव्य इति ॥ ४१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अन्विच्छन्त्यः अन्वेषयन्त्यः विदूरतोऽपि ददृशुरिति तस्या विद्युत्तुल्यकान्तिमत्त्वात् सखीमिति तस्यास्तादृशदशादर्शनेन विपक्षाणामपि तत्र स्नेहोदयात् किञ्च उज्ज्वलरसस्य स्वभाव एवायं यत्कान्तस्य कान्तामात्रवियुक्तत्वे ज्ञाते सति कान्तानामीर्ष्यादोषाद्यभावः परस्परस्नेहवत्त्वं च यदुक्तमत एव हि विश्लेषे स्नेहस्तासां प्रकाशत इति ॥ ४० ॥

ततश्च सखीभिरत्युच्चरोदनेन व्यजनादिपरिचर्यया यत्नतस्तत्प्रबोधे सम्पादिते सति अयि प्रियसखि! स्ववृत्तान्तः कथ्यतामिति ताभिः पृष्टया तया कथितमपि प्रियसख्यः कथं भवतीभ्यो विच्छिन्नाहमभूवमिति मुग्धाहं परतन्त्रा नाज्ञासिषं किन्तु मानप्राप्तिरवमानश्च दौरात्म्यादेव निश्चिनोमि युष्मान् परः सहस्राः प्रेमवती रवमत्य स्वविरहानलेन ज्वालयित्वा मह्यमेकस्यै यत्सौभाग्यं दत्तमिदं तस्य दौरात्म्यं तं दुर्ल्ललितमहाराजपुत्रं प्रति वराक्यपि मुग्धा न पारये ऽहं चलितुं नय मामिति यदवोचम् एतत्तु ममैव दौरात्म्यं यत एतावान् अवमानः प्राप्त इत्युभयथापि मे महामनोदुःखमेवेति स्वकान्ते तासु स्वस्मिंश्च क्रमेणासूयाविनयदैन्यानि व्यञ्जितानि अत्र श्रीमन्मुनीन्द्रेण दौरात्म्यशब्दप्रयोगस्तु तस्य वचनानुवाददेव वस्तुतस्तु श्रीकृष्णात् दूरे आत्मा यस्याः दूरे आत्मा श्रीकृष्णो वा यस्याः सा दूरात्मा तस्या भावो दौरात्म्यं तस्माद्विश्लेषादित्यर्थः धिस्मयं परमं ययुरिति प्रियसखि! भवत्याः सौभाग्यमुचितमेव नात्र तस्य दौरात्म्यं रतिश्रान्तायाः स्वाधीनभर्तृकायास्तव कान्तस्याज्ञापनमपि न दौरात्म्यं प्रत्युत रसावहमेव किन्त्वनुकूलनायकेन सम्मुखकान्ताया यदा झोल्लङ्घनमेतादृशदुरवस्थाप्रापणं च एतदेव रसप्रतिकूलं दौरात्म्यव्यञ्जकं हन्त हन्त महारसिकशेखरस्य महाप्रेमवतो दयानिधेस्तस्य कथमेवं चिकीर्षितमभूदिति परमं विस्मयं ययुः ॥ ४१ ॥

———

केन चित्कृता विशुद्धरसदीपिका।

अन्विच्छन्त्यः गवेषयन्त्यः यद्वा मार्गमनुगन्तुमिच्छन्त्य इत्यन्वयः भगवत इत्यनेकार्थत्वाद्यथायोगमन्वयः गोप्यः सर्वा एव एकमत्याभिप्रायेण सामान्यनिर्देशः अविदूरतः ईषद्दूर इत्यर्थः नञीपदर्थे अनुदरा कन्येतिवत् ततश्च मोहाधिक्यं सूचितं सखीं ददृशुस्ताभिरिति वक्तव्ये सखीमित्युक्तिस्तासामेव तथानुभवात् यथा तदनन्तरमानन्दवृन्दावनचम्पूमनु ता अपि सैवेयमिति सहर्षविषादविस्मयसम्भ्रमौत्कण्ठ्यमुपकण्ठमुपसर्पन्त्यः कनककमलिनीमूलं कलहंसवध्व इव सुरसरितं सरिदन्तराणीव स्थापितां प्राप्तवतीरर्तिं सर्वभावानां श्रेणय इव स्वरसप्तकसम्पदं सर्वाः श्रुतय इव सुकविताः रसभावालङ्कारसंपदिव उपमालङ्कृतं रूपकायल कृतय इव अमृत किरणकन्दलीं चकोरललना इव नवोद्यानलक्ष्मीं नानाविहङ्गवध्व इव अमृतकिरणकन्दलीं च कमलाकरसम्पदं कमलिनीवितत्तय इव सकलाः परितः परिवव्रुः अथ तासां सख्यं तत्रैव यथा"काचिद्वीजयति स्म पल्लवकुलैः काचित्कचानान्तर्तिवद्यातिस्म चकारकाचन करेणास्याम्बुजोन्मार्जनम् उचे काचन माद्धव भवती हा हतं कथां दशामेतामाप्तवती कथं हि स नय प्राणाधिनाथः शठःअस्मान् विहाय भवतीं यदसावहार्पीत्तेनैव हि प्रसमितो विरहज्वरो नः सोऽयम्पुनर्द्विगुण एव बभूव धिङ्नोयदीक्ष्यते तदवशेयमभूतपूर्वा न कश्चित्ते दोषः सुमुखि! मनसोऽवापि वचसो जगत्येव ख्याता त्वमभिगुणरत्नावलिखनिः त्वयि प्रमा तस्य प्रथित इति सर्वस्य विषयः कुतो जाता तस्य व्यवसितिरियं हन्त कठिना,, इति अत एव प्रियविश्लेषमोहितामित्युक्तं प्रियस्य विश्लेषो विशिष्टः श्लेषो मा ऊहितो यस्यास्तां किन्तु निजसाजात्येन विरहमात्रमेव तर्कितमित्यर्थः अत्र कारिकाः —

> सर्वाभिरपि विज्ञातं दुर्ग्राह्यहृदयः शठः।
> सख्यीयं सरलास्माकं तत्प्रतारणमन्वभूत्॥
> इयं प्रेम्णः परा काष्ठा यत्प्रेष्ठक्षेमवाञ्छया।
> निजकापट्यविख्यातिर्दो पानुद्भावनं प्रिये!॥

एवश्च विलोक्यरतिचिन्हानि ज्ञातमेताभिरेतया भ्रमन्त्या विपिने प्राप्ता दशेयमतिदुस्तरा रसावेशस्वभावेन तत्कृतं तासु नास्फुरत् यथोक्तं श्रीव्रजेश्वर्य्या बृहद्भागवतामृते—

> पश्यन्त्या रतिचिन्हानि न पश्यन्त्यास्य चेष्टितम्।
> तथाहि] हन्त बालो ममाविल्या गा वनेष्वखिलं दिनम्॥
> श्रान्तो निद्रासुखं प्राप्तो न जागर्त्यधुनाप्ययम्।
> अरण्यकण्टकैर्दुष्टैः क्षतानीमानि सर्वतः॥
> अकियन्तास्य गात्रेषु परितो धावतो मुहुः।
> अहो कष्टं न जानाति किञ्चिन्निद्रावशङ्गतः॥
> ग्रक्षयामास गात्रेषु स्वस्येदं नेत्रकज्जलम्।
> तथात्माधरताम्बूलरागं चेतस्ततो विदन्॥
> चिच्छेद हारमाल्यादिपरिवारैर्मुहुर्भजन्।
> नूनं काश्मीरवर्णेयं यमुनातीरमृत्तिका॥
> न परित्याजिता हन्त स्नानेनापि वपुः सखी।
> बालाभिश्चपलाभिर्यः सन्ध्यायामवधानतः॥
> स्नानं न कारितं सम्यङ्नाभ्यङ्गोन्मर्द्दने तथेति।

एवञ्च तामनु सर्वासां सख्यमेवं साधितं किञ्च प्रियविश्लेषमोहितामिति श्लेषानाश्रयणे प्रेमवैचित्त्यं स्पष्टीकृतं भवति तत्र च मोहितामित्युक्त्वा दुःखितामित्यकिर्मोहस्यास्य तद्दुःखचिकित्सितत्वाभिप्रायेण तथा दर्शितमानन्दवृन्दावनचम्पूमनु यथा स्वच्छायैव सरोजिनीदलमयी शय्येव तस्या अभूज्ज्योत्स्नैवाजनि गन्धसारसलिलासेकः शरीरोपरि बाहु एव मृणालवल्लिवलयस्तस्या वियोगज्वरे मूर्च्छैवाभवद्वरावा प्रियसखी दुःखानुभूतिच्छिदे, इति तदेवं प्रकरणस्यास्य श्रीराधिकोत्कर्षपरत्वं दर्शितम् अपिच विपक्षसपक्षतटस्थादिविभेदोऽप्येतासुद्दिष्टैव वर्णितं इति सुसिद्धमाधिक्यं प्राधान्यञ्च वरमणुजन्यसमूह इतिन्यायात् वस्तुतस्तु निखिलस्यापि ग्रन्थस्य तात्पर्यमत्रैवेति गम्यते रुद्रयामले तस्याः सहस्रनामस्तोत्रे—

> श्रीभागवतहार्द्दा श्रीभागवतमानसा।
> श्रीभागवतसम्बिद्या श्रीभागवतभासिता॥
> श्रीभागवतनिष्ठा च श्रीभागवतभाविताति॥

तन्नाम्नां तथाश्रुतत्वात् साक्षान्नामानुक्तिश्च रहस्यत्वाद्धृष्णमेव न दूषणमित्यलमतिप्रपञ्चितेन विस्तृतं भक्तिमञ्जूषायाम् अपिच वरीवर्त्ति रसिकजनसञ्जीविनी व्यञ्जनावृत्तिस्तदेकजीवनाद्य पर्य्यायोक्त्याद्यलंकृतिसंहातिरिति निःशङ्कमेव मुनीन्द्रपादैस्तथोक्तम् ॥ ४०॥

केनचित्कृता विशुद्धरसदीपिका ।

ततश्च तयेति माधवात् लक्ष्म्या अपि रमणतया स्पृहणीयात् सर्वगुणसम्पन्नात् स्वत एव परमसौभाग्यलाभलक्षणां मानप्राप्तिमाकर्ण्य तत्रैव दौरात्म्यात् तद्वियोगात् दूरे आत्मा देहो यस्याः सा दूरात्मा तस्या भावो दौरात्म्यं तस्मादित्यर्थः । तद्विश्लेषादवमानमाकर्ण्य विस्मयश्चोभयोरलौकिकप्रेमश्रवणात् यद्वा माधवादिति मुनीन्द्रोक्तिः मायास्तस्या एव धवात्तस्या एव पूर्वोक्तप्रकारां मानप्राप्तिं पारिशेष्यादात्मनश्च दौरात्म्यात् कामजभावाक्रान्तचेतस्त्वादवमानं चाकर्ण्य विस्मयं ययुः तत्सुखबुद्ध्याप्यनुकृतः कामजो भावः प्रेमविरोधीति विस्मये हेतुः अन्यथा व्याख्याने प्रकरणविरोधः ॥४१॥

श्रीरामनारायणकृतभावभावविभाविका ।

अग्रे यद्वृत्तं तदाह । अन्विच्छन्त्य इति । गोप्यः पूर्वं विच्छिन्ना भगवतो मार्गं मृग्यतेऽन्विष्यते ऽनेति तथा प्राप्तिपन्थास्तमेवानु पुनरव्युच्छिन्नवृत्त्या इच्छन्त्यः कामयन्त्यो नतु अन्वेषणविलम्बेन ततो निर्विद्य गृहं स्मृतवत्यः अनेन “ दीर्घकालनैरन्तर्य्यसत्कारसेवितो दृढभूमि ”रिति पतञ्जलिसूत्रितप्रेमपथदृढभूमित्वं दर्शितं ता अविदूरतः सखीं भगवत्सहगामितया तत्सहायभूतां ददृशुः ततस्तद्दर्शनेनात्रैतत्संनिधाने हरिर्भविष्यत्येवेत्युत्साहेन तत्सामीप्यं प्राप्य दूरात्तां स्वसखीं ददृशुस्तत्र हेतुः दुःखितां समानशीलव्यसनेषु मैत्रीतिवचनात्पूर्वं सर्वत्यागेन कृष्णैकपरत्वलक्षणसमानशीलत्वेऽपि समानव्यसनत्वाभावेन तत्सखीत्वमेव सम्भाव्य तद्विरहदुःखलक्षणसमानव्यसनत्वमप्याकलय्य स्वसखीत्वं व्यवसितवत्यः स्वाभ्यस्तस्यामाधिक्यमपि ददृशुरित्याह प्रियेति । प्रियस्य यो विश्लेषो विच्छेदस्तेन मोहितां मूर्च्छितां निश्चेष्टां ततश्च तन्मूर्च्छाभङ्गाय सुरभितोयसेचनव्यजनसमीरप्रियनामकीर्तनादियत्नं चक्रुरिति शेषः अन्यथा मोहिताया वक्ष्यमाणभाषणाद्यनुपपत्तिः ॥ ४० ॥

ततः किंवृत्तमित्यत आह । तया कथितमिति । संज्ञाप्राप्तिविलापानन्तरं तत्प्रश्नोत्तरतया तया यत्कथितं माधवच्छविमध्वीमध्वास्वादनोन्मत्ततयात्मानुसन्धानराहित्येन सखीसमाजवियोगात्तनुसन्धानं तथा माधवात् लक्ष्म्यासर्वसौन्दर्य्यशोभाशृङ्गारसम्पत्सौभाग्याद्यधिष्ठातृदेवताया अपि समस्तचाञ्चल्यादिस्वभावपरित्यागेन तदीयनित्यनिरतिशयगुणगणलुब्धतया स्पृहणीयोपपत्तेः स्वानुग्रहादेवास्मद्दोषाननवेक्ष्यगुणाननपेक्ष्यमानप्राप्तिं यद्वा मान प्रमा तद्विषयिण्यव्यभिचारिणी यथार्थमतिस्तस्या एव धवात् मानप्राप्तिं ततश्च तस्य स्वपतित्वे स्वस्यास्त द्वधूत्वेच न पाणिग्रहणादिविधिः रूपलावण्यगाननृत्यरसकौशल्यैश्वर्यधर्मादिगुणा वा हेतवः किंत्वव्यभिचारित प्रेममतिरेवेति तत्त्वं तथा वमानं वने परित्यागलक्षणञ्च न तद्रसानभिज्ञत्वात् क्रौर्याद्वा किन्तु स्वस्यैव दौरात्म्यात् प्रेमशैथिल्यदर्पादिरूपात् यद्वा दूरे आत्मा कृष्णो यस्या दूरे आत्मा देहः कृष्णाद्वा यस्याः सा दूरात्मा तस्या भावो दौरात्म्यं कृष्णावियोगित्वं तस्मादवमानं दुःखं तद्विरहिते स्वस्मिन् धिक् प्रियविरहितं मम जीवनमित्याद्यनादरं चाकर्ण्य विचित्रभगन्माहात्म्यस्फूर्त्या परमं विस्मयम् आश्चर्य्यं स्मयो रूपगुणादिगर्वस्तद्राहित्यं वा ययुः यद्वा तस्या एव प्रेमवैलक्षण्यं तद्रसास्वादं स्वदेहसखीसमाजवनानुसंधानं स्वसौभाग्यातशनये सर्वत्यागपूर्वकात्यादरप्राप्तावपि स्वगुणान् विगणय्य तदनुग्रहमात्राधधारणं तेन वने परित्यागेऽपि तदीयदोषमननुसन्धाय स्वस्मिन्नेव दौरात्म्यदर्शनमवगत्य परमं विस्मयं स्वीयप्रेमोत्कर्षस्मयराहित्यं वा ययुः ॥ ४१ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ ता अपि तत्राशु समागता इत्याह । भगवतो मार्गं मृगयमाणा गोप्यः अविदूरतः सामीप्यतः दुःखितां प्रियविश्लेषजन्येन तापेन मूर्च्छितां समानदुःखाक्रान्तत्वेन सतीं तथाभूतां दृष्ट्वा विगतेर्ष्यास्तां वस्त्रवाय्वादिना सचेतनां कृतवत्य इत्यपि द्रष्टव्यं निवृत्तिपक्षे भगवतो मार्गं विदूरतो ऽन्विच्छन्त्यो गोप्यः परमात्मसम्बन्धिन्यः श्रुतयः दुःखिता आसन् अहो अस्माकं साक्षात्परमात्मप्रतिपादिका नास्तीति यदा मुख्यामपि सखीं समानविषयत्वात् प्रियेण चिदात्मना योऽयं विशेषेण श्लेषो वाच्यवाचकत्वलक्षणः सम्बन्धस्तत्र मोहितामत एव दुःखितां ददृशुस्तदा यत्किञ्चित्स्वास्थ्यं प्राप्ता इत्यर्थः ॥ ४० ॥

अयि सखि ! किंवृत्तमिति ताभिः पृष्टया तया हे सख्यो ! मुग्धाहं तेन नेतीत्यादिनिश्रेयसपर्य्यन्तं कथितं वृत्तमाकर्ण्य तत्र माधवाल्लक्ष्मीपतेः कान्तिपतेः सुन्दराद्वा मानप्राप्तिं चाकर्ण्य दौरात्म्याद्दौर्जन्यादवमानत्यागलक्षणं चाकर्ण्य परमविस्मयं ययुः अहो महान्तमिय मानं लब्धवती सचैवं विधं मानं दत्त्वा कथमवमानं कृतवान् नानाश्चर्य्यमिदमित्येवं परमं विस्मयं प्राप्तवत्यः निवृत्तिपक्षे तया श्रुत्या तत्त्वंपदार्थयोरभिन्नत्वं कथितमाकर्ण्य माधवात्स्वजन्यब्रह्मविद्यापतेः मानस्य प्रामाण्यस्य प्राप्तिं चाकर्ण्य दूरे आत्मा शुद्धचिदानन्दघनो निर्विशेषोपास्यः दूरात्मा तस्माद्वाग्विषयप्रतिपादकत्वादेव मानं तत्तद्विषयप्रेमानुत्पादकत्वं चाकर्ण्याहो लब्धप्रामाण्याया अस्याः कथमप्रामाण्यमिति परमं विस्मयं ययुरित्यर्थः ॥ ४१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतो मार्गमान्विच्छन्त्यः मृगयमाणाः अतिदूरतः समीपे प्रियस्य श्रीकृष्णस्य विश्लेषेण मोहितां तामपि ददृशुः ॥ ४० ॥

भक्तमनोरथपूरणार्थं भक्तवश्यो भवति वस्तुतस्तु सर्वनिरपेक्षो भगवान् परमानन्दघनत्वादित्यवधार्य परमं विस्मयं ययुः ॥ ४१ ॥

भाषा टीका ।

श्री शुकदेवजी बोले सब गोपी या प्रकार तें भगवान् के मार्ग को ढूंढती बहुत दूर जब चली गईं तब प्यारे के वियोग होवे ते बडी दुखी मोहित ऐसी वा सखी कों देखत भई ॥ ४० ॥

वाके कहवे ते माधव ते अपने को मान को होवो फिर अपने अभिमान ते अपनो अपमान होवो सुन सब गोपी बडे बिस्मय को प्राप्त भई ॥ ४१ ॥

ततोऽविशन् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ॥
तमः प्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ॥ ४२ ॥
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ततस्तयापि सहिताः कृष्णान्वेषणाय वनमविशन् ततो हरेरन्वेषणान्निवृत्ताः ॥ ४२ ॥

एवं तमप्राप्ता अपि स्वगृहान्नैव स्मृतवत्यः तदात्मिकाः स एवात्मा यासां ताः तन्मय्य इत्यर्थः ॥ ४३ ॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोपिणी।

ततः परमप्रेमवैयग्र्येण तया सहिताः पुनरप्यन्वेषयामासुरित्याह। तत इति। यावद्वनं व्याप्य ज्योत्स्ना विभाव्यते लक्ष्यते तावद्वनमविशन् प्रविश्य तमन्वेषयामासुरित्यर्थः। तमसा प्रविष्टमत्यन्तघनत्वादन्धकारमयमालक्ष्य ततस्तस्माद्वनान्निवृत्ताः तत्र तदन्वेषणासिद्धेः तथा च श्रीविष्णुपुराणे—

प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते।
निवर्त्तध्वं शशाङ्कस्य नैतद्दीधितिगोचर इति॥

स्त्रिय इति स्त्रीणामन्धकारवनप्रवेशे सामर्थ्याभावादित्यर्थः हरेरिति पाठोऽत्र केषांचिन्मतः सच श्रीस्वामिपादानामसंमतो लक्ष्यते तत इति पुनरुक्तेः समाधानार्थं तत इत्यस्यैव हरेरन्वेषणादिति व्याख्यानात् अन्यथा तत इत्यस्य अन्वेषणादिव्याख्याने तस्य प्राग्लिखनायोगात् तथा हरेस्तत इत्यन्वयासौष्ठवं वा ॥ ४२ ॥

तथापि स्वगृहान् गच्छेयुरिति किम्वक्तव्यं नच स्मृतवत्योऽपीत्याह। तन्मनस्का इति। आत्मागाराणि स्वातन्त्र्यमनोज्ञसुखमयानीत्यर्थः किम्वा गृहकृत्यार्थमभ्यासवशेन गम्यान्यपि यद्वा आत्मानं देहं क्षेत्रज्ञं वा अगाराणि गृहाणि देहगेहानि वा इतिभोक्तृभोगसाधनभोग्यान्युक्तानि तदस्मरणे हेतुः तन्मनस्का इत्यादि पदत्रयेण तस्मिन् मनोवाक्कायाभिनिवेश उक्तः तत्र मनसो ऽभिनिवेशः तद्गुणादिस्मरणेन तद्विषयकविविधसङ्कल्पविकल्पकादिना वा वाचः अन्योऽन्यं तद्वार्तया कदाचित्तदाह्वानादिना च कायस्य च पूर्ववत्तच्चेष्टानुकरणेन प्रणामार्थदण्डवन्निपातेन तदर्थपुष्पमालाग्रथनशय्याधिरचनादिनाच अत एव तदात्मिकाः। तन्मय्यः किम्वा उक्तप्रकारेण तदर्पितात्मानः अतस्तस्य गुणानेव ननु परित्यागेऽपि नैष्ठुर्यादिदोषान् गायन्त्यः गानञ्च श्रीभगवतो गीतप्रियत्वात् तथाचोक्तं तेनैव—

नाहम्वसामि वैकुण्ठे योगिनां हृदये नवा।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदेति॥

एवं श्रीभगवद्वशीकरणहेतुत्वाद्गानस्य सर्वतः श्रैष्ठ्यमभिप्रेतं यद्वा तदानीं तासां तदनुसन्धानाभावेन केवलं विरहार्त्तिभरस्वभावादेव तथापि सर्वान्ते निर्देशात् तथा शतृङ्प्रत्ययान्तत्वेनानुस्मरणे प्राधान्यात्तस्य श्रैष्ठ्यं सिद्धमेव तत्र चालापगानयोर्युगपदसम्भवात् कदाचिदालापः कदाचिद्गानं कासाञ्चिदालापः कासाञ्चिद्गानमिति बोध्यं यद्वा तन्मनस्का इत्यादिपदचतुष्केण तासां सदातनः स्वभाव उक्तः अत एवाधुना विरहार्त्या गायन्त्य इति तदात्मिका इति पूर्ववदन्यदशापरिहारार्थं वा यद्वा तत्परिहारार्थमेव ता विशिनष्टि विरहार्त्तिविवृद्धिस्वभावेन तदावेशेन वा तस्य मन इव भयादिरहितं मनो यासां तस्यालाप इव गम्भीरमधुराक्षरार्थभङ्गीपूर्वनर्मादिमय आलापो यासां तस्य चेष्टेव विचित्रालिङ्गनादिरूपा चेष्टा यासां तस्य आत्मा देह इव त्रिभङ्गानुकरणादिना मनोहर आत्मा यासां ताः तथापि तद्गुणानेव गायन्त्य इति तासां स्वभाव उक्तः किञ्च तेन तत्प्राप्त्युत्कण्ठा विवृद्धैव ननु निवृत्तेति च सूचितम् अन्यत्समानम् ॥ ४३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी।

ततः परमवैयग्र्येण सखीभिर्दत्तावलम्बमया तयैव सहिताः पुनरप्यन्वेषयामासुरित्याह। तत इति। यावद्वनं व्याप्य ज्योत्स्ना विभाव्यते लक्ष्यते तावद्वनमविशन् प्रविश्य तमन्वेषयामासुरित्यर्थः। तमसि महागहनगते प्रविष्टं श्रीकृष्णं पदचिन्हादिना वितर्क्य ततस्तस्माद्वनान्निवृत्ताः तथा च विष्णुपुराणे। " प्रविष्टो गहनं कृष्णः पदं यत्र न लक्ष्यते। निवर्त्तध्वं शशाङ्कस्य नैतद्दीधितिगोचर इति "। स्त्रिय इति स्त्रीणामन्धकारवनप्रवेशनासामर्थ्यादित्यर्थः। शङ्कादिग्धस्निग्धस्वभावतया निजदयितस्य खेद एवापन्नतया तत्र प्रविष्टोऽयमिति वितर्कितः तस्य तस्मात् दुःसञ्चर स्थलान्निष्क्रमणाय व्यग्राः सत्य इत्यर्थः। हरेरिति पाठोऽत्र केषाञ्चिन्मतः। सच टीकाकृतामसम्मतो लक्ष्यते। तत इति पुनरुक्तेः समाधानार्थं तत इत्यस्यैव हरेरन्वेषणादिति व्याख्यानात्। अन्यथा तत इत्यस्य प्रागुद्दिष्टपणायोग्यता स्यात्। हरेस्तत इत्यन्वयासौष्ठवं च ॥ ४२ ॥

ततश्च ततो निवृत्तास्तत्र प्रविष्टस्य तस्य व्यथते न किञ्चित् कुर्यादिभिरिति वक्ष्यमाणरीत्या दुःसहाशङ्कया परमदुःखमग्ना बभूवुरित्याह। तन्मनस्का इति। तादृगवरोधस्थले प्रविष्टे तस्मिन्नेव मनो यासाम्। ततस्तादृशे तस्मिन्नेव विषये आलापस्तद्दुःखस्मरणमयः संलापो यासां ततस्तस्मिन्नेव निमित्ते विचेष्टा यत्नान्तरेण तन्निष्क्रमणसम्भावनया परितः परिक्रमणरूपा यासाम्। ततस्तस्मिन्नेव आत्मा यत्नो यासां तथा भावाः सत्यस्तस्य निलीनता कारणापन्नाः तादृशवशीभावमयकृपादिलक्षणान् गुणानेव केवलं तया स्फुरितान् ननु स्वपरित्यागादिदोषान् गायन्त्यः गानेन तं श्रावयन्त्यः आत्मानमपि न सस्मरुः किमुतागाराणीत्यर्थः ॥ ४३ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

तदात्मिकाः कृष्णानुसारदशायां तद्ध्यानयुक्ताः ॥ ४३ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

ततस्तया सहिताः कृष्णान्वेषणाय यावच्चान्द्रिका प्रकाशते तावद्वनं चेरुः ततस्तमसा सान्द्रतरुच्छायाकृतेन प्रविष्टं व्याप्तं वनमालक्ष्य ततोऽन्वेषणान्निवृत्ताः ॥ ४२ ॥

एवमेव प्रातः अपि स्वगृहास्तान्नैव स्मृतवत्यः तत्र हेतुं वदन्विशिनष्टि तस्मिन्कृष्ण एव मनो यासामतएव तदात्मिकाः तज्ज्ञानप्रचुराः अत एतस्यैवाळापो यासां तास्तस्यैव विविधा चेष्टा यासां तस्यैव गुणान् गायन्त्यः इति ॥ ४३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यावच्चन्द्रज्योत्स्ना विभाव्यते तावद्वनाद्वनं गत्वा ततश्चन्द्रचन्द्रिकास्तमयानन्तरं प्रविष्टं प्राप्तं तम आलक्ष्य दृष्ट्वा निववृतुः निवृत्ता इत्यनेन दुःशास्त्रान्निवृत्त्य सच्छास्त्राभ्यसनाय यत्नं चक्रुरिति सूच्यते स्त्यै ष्टचै शब्दसङ्घातयोरिति धातोः शास्त्रविषया बुद्धयः ॥ ४२ ॥

सत्त्वबुद्धीनां स्वभावं दर्शयति। तन्मनस्का इति ॥ ४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तद्गुणानेव गायन्त्यः न तु स्वदुःखादिकमपि ॥ ४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तत्र एकीभूय तत्रैव विचारणक्रमसञ्चारक्रमेण यत्र चन्द्रज्योत्स्नाप्रवेशो वास्ति तद्वनमुपस्थितमिति कृत्वा ततो निवृत्य प्राग्दृष्टं पुलिनमेवाययुरित्याह। ततोऽविशन्नित्यादित्रिभिः ॥ ४२ ॥

तस्मिन्मनो यासां तमुद्दिश्य आलापो यासां तदर्थमेव विचेष्टा यासां स एवाश्रयो यासां तद्गुणानेव गायन्त्यः सत्यः आत्मागाराणि शरीराणि न सस्मरुः ॥ ४३ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अतः परं भगवत्प्रसादे को हेतुरिति विचार्य सर्वपरित्यागेन देहत्यागपर्यन्तं साधनमिति निश्चित्य तथा कृतवत्य इत्याह। तत इति। ततो वनमविशन् मोहनिवृत्त्यर्थं वनप्रवेशः वनङ्गतानामपि केन्मोहः तदा किं वनप्रवेशेनेति चन्द्रज्योत्स्ना यावद्विभाव्यते तावद्दूरमेव गताः अतिनिविडं वनन्तु न प्रविष्टाः यदा पुनर्गाढवने अन्तश्चन्द्रकिरणा न प्रविशन्ति तदा तत्र तमः प्रविष्टमालक्ष्य ततो निववृतुः निवृत्ता जाताः ननु प्रथमं यदुद्योगेन वनं गताः तदकृत्वा कुतो वा निवृत्ता इत्याशङ्क्याह। हरेरिति हरेः सकाशात् हरेः संबन्धिन्यो वा ततः अन्धकारान्निवृत्ता नहि भगवदीया अन्धकारं प्रविशन्ति भगवत्येव निवर्तिताः ॥ ४२ ॥

निवृत्ताश्चेत् गृहङ्गता भविष्यन्तीत्याशङ्कायामाह। तन्मनस्का इति। ता नात्मागाराणि सस्मरुः आत्मानं देहमागारं गृहं तत्संबन्धीनि वस्तूनि स्मृतवत्य एव न कुतो गमिष्यन्ति अस्मरणे हेतवः तन्मनस्का इत्यादिभिः पञ्चभि पदैः पञ्च निरूप्यन्ते स्मृतिर्मनसि जायते तन्मनस्तु केवळं भगवत्येव अतः तन्मनस्का भगवन्मनस्का न सस्मरुः अन्यद्वाराप्यस्मरणार्थमाह। तदालापा इति। अन्या अपिचेदन्यवार्तां कुर्युस्तदा तत्प्रसङ्गाद् गृहादिस्मरणं भवति सर्वा एव तस्मिन्भगवत्येवालापो यासामतो ऽन्यतोऽपि न स्मरणं ननु दैहिकी क्रिया क्षुत्पिपासाकृता आवश्यकी तया देहादिस्मरणं भविष्यतीतिचेत्तत्राह। तद्विचेष्टा इति। तस्यैव भगवतः पूर्ववच्चेष्टा विशिष्टाः ननु तथापि सर्वज्ञानेष्वात्मांशः स्फुरति घटमहं जानामि पटमहं जानामीति अतः कथमात्मास्फूर्तिस्तत्राह। तदात्मिका इति। स एवात्मा यासां सर्वदा कृष्णात्मभावनैव चित्ते सहजा तासामत आत्मत्वेन भगवानेव स्फुरतीति न देहादिस्फुरणं ननु—

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।

अदृष्टवशात् कथं न स्मृतिस्तत्राह। तद्गुणानेव गायन्त्य इति। यदि तुष्णीं तिष्ठेयुः भवेदपि स्मृतिः अन्यासक्तास्तु ताः कार्यान्तरपराः यतस्तस्य भगवतो गुणानेव गायन्ति गुणैः कृत्वा दुरदृष्टञ्च नश्यति अतो नादृष्टद्वारापि स्मृतिबोधः ॥ ४३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ततश्च वैयग्र्येण सखीदत्तहस्तावलम्बया तया सहैव तास्तमन्वेषयामासुरित्याह। तत इति। चन्द्रज्योत्स्ना यावता द्विभाव्यते इति पूर्णिमारजन्यामपि निबिडवृक्षच्छायावशादेव तमः यदुक्तं विष्णुपुराणे प्रविष्टो गहनं कृष्णः पद मत्र न ळक्ष्यते निवर्तध्वं शशाङ्कस्य न तद्दीधितिगोचर इति वस्तुतस्तु हंहो खेदसिन्धुनिमग्नाः सख्यो घनश्यामतमे ऽस्मिंस्तमसि घनश्यामवपुषं तमस्तदवलोकनशङ्कयैव प्रलीनीभूय स्थितं मा सङ्कोचयत यत्र यत्र यूयं यास्यथ ततस्ततोऽन्यत्रैव स पलायिष्यते इत्यळमतिसुकुमारशरीरस्य तस्य श्रमोत्पादनव्यवसायेनेति विमृश्यैव निववृतुरिति ॥ ४२ ॥

तन्मनस्कत्वेनैव पूर्ववदुन्मादस्य मान्द्ये तदालापाः दृष्टो वः कच्चिदश्वत्थेतिवत्तमालपन्त्यः उन्मादस्य मध्यत्वे तद्विचेष्टाः कृष्णायन्त्यपिबत्स्तनमितिवत्तच्चेष्टामनुकृतवत्यः उन्मादस्य प्रौढत्वे तदात्मिकाः कृष्णोऽहं पश्यत गतिमिति वदात्मविस्मृतौ तन्मयीभूताः पूर्वसंस्कारवशादेव गायन्त्य उच्चैरसुमेवेतिवत्तद्गुणानेवेति ॥ ४३ ॥

---

### केनचित्कृता विशुद्धरसदीपिका

तत्सङ्गभावं प्रदर्शयति । तत इति । तदाकर्णनानन्तरं यावदवधि यावच्चन्द्रज्योत्स्ना विभाव्यते तावदेव वनमविशन् ततश्च हरेः परममनोहरस्य तमः प्रविष्टं गह्वरप्रवेशमालक्ष्य निववृतुः निवृत्ता बभूवुः अयं तत्सुखस्योदयस्तस्याः संसर्गादेवेति यथा श्रीमत्सुधानिधौ "राधादास्यमपास्य यः प्रयतते गोविन्दसङ्गाशया सोऽयं पूर्णसुधारुचेः परिचयं राकां विना काङ्क्षति किञ्च स्यामरतिप्रवाहलहरीबीजं न ये तद्विदुस्तेप्राप्यापि महामृताम्बुधिमहो बिन्दुं परं प्राप्नुयुरिति ॥ ४२ ॥

किं गृहान्प्रति निवृत्ता नेत्याह।तदिति । तन्मनस्काःतादृगवरोधस्थलं प्रविष्टे तस्मिन्नेव मनो यासां ताः ततस्तस्मिन्नेव विषये तादृशे आळापः तद्दुःखस्मरणमयः संलापो यासां ताः तास्मिन्नेव निमित्ते विचेष्टा वर्त्मान्तरेण निष्क्रमणसम्भावनया परितः परिक्रमणरूपा यासां ताः ततस्तास्मिन्नेवात्मा यत्नो यासां तथाभावाः सत्यः तन्निलीनतादिकरतादृशा एव यदि कारणस्वशाभावमयकृपादिलक्षणान् गुणानेव केवलतया स्फुरितान् नतु स्वपरित्यागदोषान् गायन्त्यः नात्मानमपि सस्मरुः किमुतागाराणीत्यर्थः । यद्वा तन्मनस्काइति पञ्चहेतवोऽस्फुरणे स्मृतेर्मनोधर्मत्वात्तन्मनस्काः अन्यवार्त्तया प्रसङ्गादन्यस्मरणं स्यादिति तदालापाः दैहिकक्रियायांतु क्षुत्पिपासादिनापि स्मरणान्तरं वारयति । तद्विचेष्टाःघटमहञ्जानामीत्यादिज्ञानेच्छा दिनात्मानि स्यादिति तदात्मिका सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति न्यायाददृष्टवशादन्यस्फूर्त्तिः स्यादिति तद्गुणानित्यादिना ॥ ४३ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

ततस्तां गन्तुमशक्तां हस्तावलम्बेनपुरतःकृत्वान्वेषयन्तीनां चरितमाहततोऽविशन्निति ततस्ताःस्त्रियस्तां पुरस्कृत्य भगवन्तमन्वेषयन्त्यो यावच्चन्द्रज्योत्स्नाविभाव्यते तावद्वनमविशन् अग्रे तमः प्रविष्टम् यस्मिंस्तादृग्वनमालक्ष्य तत्र हरेरन्वेषणान्निववृतुः युक्तश्चैतद्गङ्गासहकारेण नदीनां सिन्धुम्प्रति गमनवत् पराभक्तिपुरस्कारेण साधनभक्तीनां भगवदभिगमनवत् श्रुतिशिर एकवाक्यतयावान्तरश्रुतीनां तदुपकरणोपयोगितया च समस्तश्रुतीनां ब्रह्मणि पर्य्यवसानवच्च तत्पुरस्कारेणान्वेषणे यत्र यत्राश्रमवनादौ सत्त्वविभावना तत्र भगवदन्वेषणवच्चन्द्रप्रभान्वितवने एवान्वेषणं तमः प्रविष्टाश्रमेभ्यः पाषण्डादिभ्यो भगवत्प्राप्तिसम्भवनाशून्येभ्यो जिज्ञासूनां निवृत्तिवत्तमःप्रविष्टवनेभ्यो निवर्तनञ्च यद्वा मनसश्चन्द्ररूपत्वात् यावच्चन्द्रज्योत्स्नामनोवृत्तिप्रकाशो जागर्ति स्वप्ने वा विभाव्यते तावदेव विविधसाधनैर्भगवत्स्वरूपान्वेषणसम्भववत् तमः प्रवेशासुषुप्तौ साधननिवृत्तिवत् यावच्चन्द्रज्योत्स्नान्वेषणमन्तः प्रवेशे ततो निवर्तनञ्च युक्तमेव यद्वा कृष्णं तमसि प्रविष्टमालक्ष्य ततो हरेरेव हेतोःस्वान्वेषणे तस्य पलायमानस्य प्राणनाथस्य तमसि प्रवेशे शर्कराकण्टकादिना खेदसम्भवादेव निववृतुः यद्वा भगवल्लीलावने तमःप्रवेशासम्भवेन भगवतो वासुदेवस्य च तमसि प्रवेशासम्भवेन यावच्चन्द्रज्योत्स्ना विभाव्यते शशिप्रभाया भानं जातं तावदन्वेषयितुं वनमविशन् ततो विरहाति वैकल्येन नेत्रयोस्तमः प्रविष्टमालक्ष्य प्रकाशमानमपि चन्द्रं तद्वादिम व्याप्तमपि वनं नेत्रयोस्तमश्छादनेनापश्यन्त्यो निववृतुः सापि निवृत्तिर्नस्वतः किन्तु यत्र तत्र पतन्त्य एवान्वेषयन्त्योऽपि हरेरेव भक्तदुःखासहिष्णोर्मनाक् तथा प्रेरिता निववृतुः ॥ ४२ ॥



ननु ततो निवृत्ताश्चेत्तदा गृहान् गता भवेयुस्तत्राह । तन्मनस्का इति । ता आत्मानं शरीरमागाराणि च न सस्मरुः यदात्मानमपि न सस्मरुस्तदागारस्मरणस्यैव कैमुत्यन्यायेनासम्भवे तद्गमनस्य का कथा तदेवापादयति पञ्चभिः स्मरणस्य मनोधीनत्वात्तत्स्वास्थ्ये एव तत्स्यात् तास्तु तन्मनस्काःतस्मिन्नेव मनांसि यासां स एव वा मनःसु यासान्तथाभूताः इति कथं स्मरेयुः ननु तन्मनस्त्वेऽपि अन्योद्बुद्धसंस्काराः स्मृत्वा गच्छेयुस्तत्राह तदालापा इति तद्विषय एवालापोभाषणं यासां ततश्च तासु सर्वासु अन्यवार्त्ताप्रवेशस्यैवाभावात्कथमन्यसंस्कारोद्बोधस्तत्स्मरणं वा दैहिकक्षुदादिचेष्टया संस्कारोद्बोधे देहगेहादिस्मरणमाशङ्क्याह तद्विचेष्टा इति पूर्वनिरूपितरीत्या तल्लीलानुकारविषया एव विचेष्टा यासां ननु तमेव भान्तमनुभाति सर्वमिति श्रुत्या घटमहंजानामीत्याद्यनुभवैश्चात्मनः सर्वप्रत्ययवेद्यत्वात्कथं तासां नात्मस्मरणं तत्राह । तदात्मिका इति स एवात्मा वस्तुत इतरास्फूर्त्या च यासां पूर्वन्तासां परस्परभाषणस्य तद्विषयत्वमुक्तमधुना तद्गानस्यापि तद्विषयत्वमाह । तद्गुणानेव गायन्त्य इति । यद्वा तेन वनेत्यक्तास्तत्कौर्य्यादिदोषालापपरा भवेयुस्तथाच दोषदृष्ट्या ततोविरज्य गृहगमनादिसम्भावनापत्तिस्तत्राह । तद्गुणानेव गायन्त्य इति नहि प्रेमिणां गुणैर्विनाप्रियतमे दोषस्फूर्तिसंभावनापीति भावस्तदुक्तं गीतगोविन्दे श्रीमत्या श्रीमुखेनैव गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते वहतिच परितोषं दोषं विमुञ्चति दूरतः युवतिषु वलतृष्णे कृष्णे विहारिणि मां विना पुनरपि मनोवामंकामं करोति करोमि किमिति तथाचैतैः पदैस्तासां मनोवाक्कर्मभिस्तदेकपरत्वं स्वरूपतस्तदनतिरिक्तत्वञ्चोक्तं भवति यद्वा तन्मनस्कत्वे लीनमनसां मनोधीनतद्बाह्यव्यवहारलोपमाशङ्क्याह तदाळापा इत्यादि तेनैव तत्प्रेरणयैवालापो विचेष्टा विविधा तदनुकारादिचेष्टा यासां तत्र हेतुस्तदात्मिका इति स एवात्मा प्रेरको यासां ताः अत एव ज्ञानिनां देहाद्यध्यासाभावेऽपि भगवतैव जिज्ञासुजनोपकाराय तद्वागादिप्रेरणयोपदेशादिसम्भववत्सर्वोपकारकभक्तिप्रवर्तनाय भगवत्प्रेरितवाचा तद्गुणानेवगायन्त्य इतिभावः यद्वा तन्मनस्कत्वेन मनस्याविर्भूतेन तेनैव जीवनाधारं कं सुखं यासां तथामनस्याविर्भावेन स्फुरता तेनैव सहालापोयासां तास्तथातेनैव तथाविर्भूतेन विविधा नाना विहारादिचेष्टा यासां तास्तथातेनैव सहगुणानेव गायन्त्य एवंसर्वथा तदात्मिका न सस्मरुः यद्वा काश्चिदेवमुक्तरीत्या तदात्मिकाः काश्चित्तु व्युत्थानदशापन्नास्तस्यैव गुणानेव गायन्त्य एव न सस्मरुः ॥ ४३ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ततस्तां हस्ते धृत्वोत्थाप्य तया सहिता अन्वेषणे प्रवृत्ता इत्याह । तत इति।ततो विस्मयप्राप्त्यनन्तरं पदचिह्नानां वने प्रवेशमालक्ष्य वनमविशन् तत्र यावत्पर्य्यन्तं वृक्षाणां विरलत्वाच्चन्द्रज्योत्स्ना विभाव्यते तावत् ततो निबिडवृक्षेषु घनीभूतं तमः प्रविष्टं प्रेष्ठपदचिह्नैरालक्ष्य हरेरन्वेषणान्निवृत्ताः स्त्रीत्वाद्भयेन तमो नाविशन्निति भावः । यद्वा हरेः सम्बन्धिन्यः

पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ॥
समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धे रासक्रीडायां श्रीभगवदन्वेषणं नाम
त्रिंशोऽध्यायः ॥ ३० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तथा च तत्रापि धूर्तान्तरस्थितिशङ्कया न प्रविष्टा इति भावः। यद्वा अस्मासु तमः प्रविष्टासु सतीषु स वहिर्निःसृत्य गमिष्यतिचेत् सर्वथा न मिलिष्यतीति तत्राप्रवेशाशयः यद्वा स्मास्वन्तः प्रविष्टासु संभ्रमादन्धकारपलायनपरायणस्य परमसुकुमारपादाद्यवयवस्य प्रेष्ठस्य खेदो भाविष्यतीति विचार्य्य निवृत्ता इत्यभिप्रायः । अथवा प्रकाशकराङ्गस्य भगवतोऽत्र प्रवेशे तमः प्रवेशो न सम्भवतीति तत्र प्रविष्टं तम आलक्ष्य तर्कयित्वा निववृतुरित्याशयः निवृत्तिपक्षे ततो विस्मयप्राप्यनन्तरं यावद्विवेकलक्षणं चन्द्रस्य ज्योत्स्ना तत्तत्पदार्थतत्त्वप्रकाशो विभाव्यते तावद्स्तन्निरसनार्थमविशन् अग्रे चैतन्यघने परमात्मनि तमः प्रविष्टप्रकाशसामर्थ्यमालक्ष्य हरेः सम्बन्धिन्यः श्रुतयो निववृतुः ॥ ४२ ॥

ननु सर्वथा कृष्णमलब्धवत्यः प्राप्तपरिश्रमाः स्वगृहान् प्रति कुतो न गता इति चेत्तत्राह । नात्मागाराणि सस्मरुः आत्मानं परिश्रमादित्यक्तं देहं गृहागाराणि गृहांस्तत्रत्यानि वस्तूनिच न स्मृतवत्यः स्मरणं विना कथं गमनादिकं तासां भवेदिति भावः ननु कुतो न सस्मरुरित्याशङ्क्याह । तन्मनस्का इति । तस्मि भगवति मनो यासां ताः तथाच स्मरणकारणस्य मनसो भगवति प्रविष्टत्वात्कथमन्यत्स्मरणं भवेदिति भावः । आलापद्वारापि स्मरणं वारयति तदालापाः तत्सम्बन्ध्यालापो यासां ताः तथाच गृहान् प्रतिगन्तव्य मिति भाषणे कस्या अप्यवकाशो न जात इति भावः । नापि हस्तादिसंज्ञया सूचनावकाशः कस्या अप्यासीदित्याशयेनाह । तस्यैव विचेष्टा पूर्वकं कथा यासां ताः ननु कदाचिन् मनसा गेहाद्यनुसन्धानं कुतो न जातमितिचेत्तत्राह । तदात्मिकाः स आत्मा यासां ताः तथाचा तियुतात्मनां तासां तदन्याऽनुसन्धानादिकं दुर्लभमिति भावः किञ्च गेहादिस्मृतिसम्पादकं दुरदृष्टमपि नोत्थितं तन्नाशकतद्गुणकीर्तनपरत्वादित्याह । तदिति गुणान् गोवर्द्धनोद्धरणादिना गोकुलरक्षणादीन् यद्वा यतः काश्चित्तन्मनस्काः अहो प्रेष्ठः संप्रति कुत्र वर्तते कथं मिलिष्यतीत्यादि तद्विषयकमनोरथपराः काश्चि त्तदालापाः अहोऽस्मान्विहाय कथंगत इतः परं कुत्रान्वेषणीय इत्यादि तद्विषयकवार्तालापपराः काश्चित्तद्विचेष्टाः पूतनास्तनपानादि तद्विचेष्टाकारपराः काश्चित्तदात्मिकाः तस्मिल्लीनमनस्कत्वात्समाधिस्था इव तदेकस्फूर्तयः काश्चि त्तद्गुणानेव गायन्त्यस्तस्मान्नात्मागाराणि न सस्मरुः यद्वा कदाचित्तन्मनस्काः कदाचित्तदालापा इत्येव योज्यं निवृत्तिपक्षे काश्चित्तन्मनस्काः प्रत्यगभिन्नब्रह्मविषयकभिप्रायाः काश्चित् साक्षादेव तदालापाः सत्यत्वादिरूपेण तस्य प्रतिपादिकाः काश्चित्तद्विचेष्टाः सर्जनादिरूपाः काश्चित्तदात्मिकाः तस्मिन्नात्मा प्रयत्नस्तत्प्राप्तिसाधनाः शान्त्यादिरूपाः स आत्मवस्त्वेन वा प्रतिपाद्यो यासां ताः कारागृहस्थानापन्नानि काश्चिद्गुणान् सर्वज्ञत्वसर्वेश्वरत्वादिरूपानेव गायन्त्य आत्मनो आगराणि अज्ञानाहंकारादीनि न सस्मरुः परमार्थत्वेन न प्रतिपादयामासुरित्यर्थः ॥ ४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततस्तदनन्तरं तया सह कृष्णा प्रियया सह यावत् चन्द्रज्योत्स्ना चन्द्रिका प्रकाशते तावद्वनमविशन् ततस्तमः प्रविष्टमतिनिबिडं घनं तमसा व्याप्तमालक्ष्य ततः कृष्णान्वेषणात् अतिनिवडवना द्वा निववृतुः निवृत्ताः बभूवुः ॥ ४२ ॥

एवं भगवन्तमप्राप्यापि आत्मागाराणि न सस्मरुः न स्मृतवत्यः किन्तु तत्प्राप्त्याकाङ्क्षया तत्रैव तस्थुः तत्र कारणमाहु । तन्मनस्का इत्यादि ॥ ४३ ॥

---

भाषा टीका

ताके अनन्तर सब गोपी आगे वन में गमन करत भईं जहां तक चांदनी दीखी तहां ताईं गईं फिर अन्धेरे को आते देख सब स्त्री उहां ते निवृत्त होगईं ॥ ४२ ॥

वा श्रीकृष्ण में ही उनको मन लग गयो उनके हिभाषण करवे लगी उनकी ही सब चेष्टा करवे लगी तिनमें ही विनके आत्मा लग गया तब उनके गुणके गाते गाते देह गेह की सब याद को भूल गईं ॥ ४३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किंतु पूर्वं यत्र श्रीकृष्णेन संगतिरासीत्तदेव कालिन्द्याः पुलिनमागत्य कृष्णं भावयन्ति ध्यायन्तीति तथा ताः कृष्णस्यागमनं काङ्क्षितं यासां ता मिलिताः सत्यः कृष्णमेव जगुरिति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोपिणी ।

पुनः पुलिनागमनं तत्र परित्यक्तान् अस्मान् श्रीकृष्णो नूनं कृपया सान्त्वयितुं तत्रैवागतः स्यादिति मत्वा किम्वा तद्दर्शनाभावेन स्वसहितं तत्क्रीडास्थानस्यैव दिदृक्षया अत एवोक्तं कृष्णभावनाः कृष्णं चित्ताकर्षकं परमानन्दप्रदं वा भावयन्त्यः तत्र गतं मन्यमानाः किम्वा कृतक्रीडं चिन्तयन्त्यः समवेता इति उच्चैः श्रीकृष्णस्य श्रवणार्थं न दुःखं पञ्चभिः सहेतिन्यायात् विरहस्वभावादेव वा कृष्णं परमानन्दघनमूर्त्तिमिति तद्ध्यानेनैव न किल प्राणा निर्गता इति भावः तदागमन एव काङ्क्षितं यासामिति कथञ्चिदप्यन्येच्छा न जाता तदागमनाकाङ्क्षा च निवृत्ता तत्र चागमनशब्देनात्यन्तविरहार्त्या सन्दर्शनमात्रमेवा काङ्क्षितं नत्वन्यदिति भावः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमत्सनातनगोस्वामिकृतबृहत्तोपिण्याम् त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोपिणी ।

ततस्तत्रापि स्वैस्तस्यावरोधशङ्कया सर्वमपि तदन्वेषणमार्गं परित्याज्य सर्वासां समेतानामस्माकं निकटमिदं निर्व्यवधानतया दूरप्रसरच्छब्दं तदेव लीलापुलिनं गतानां दैन्योपालम्भादिमयमुच्चैर्गानमाकलय्य स्वयमेव करुणया श्रीकृष्णस्त्वरितमागमिष्यतीति तं भावयमानास्तथा चक्रुरित्याह । पुनरिति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृत वैष्णवतोपिण्याम् त्रिंशोऽध्याय ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

काङ्क्षिताः काङ्क्षिप्रायः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किन्तु पूर्वं कृष्णेन यत्र सङ्गताः तदेव कालिन्द्याः पुलिनमागत्य समवेताः समुदिताः कृष्णभावनायुक्ताः कृष्णस्यागमने काङ्क्षा यासां ताः कृष्णमेव जगुः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समवेता एकविपर्यीकृताः तस्य कृष्णस्यागमनकाङ्क्षिण्यः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् सप्तविंशोऽध्यायः ॥ २७ ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कीर्त्तयन्त्यः पुनः पुलिनमागमने हेतुः । कृष्णभावनाः तं तत्र गतं मन्यमानाः । पुनर्दूराच्छून्यतादृष्टयैव तदागमनं काङ्क्षितं यासां तादृश्यः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

पुनरिति । पूर्वं श्रीकृष्णेन सह यत्राजग्मुः तदागमनं तदाविर्भावः तत्र काङ्क्षितं काङ्क्षा यासां भावे क्तः समवेताः हृदयेन सम्वादभाजः एकवासनत्वात्कृष्णे भावना यासां तास्तथा कृष्णं जगुः श्रीकृष्णोऽप्यन्तर्हितं एवादृष्टः सन् सदैव तिष्ठतीति मन्तव्यम् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्हि किं जातमित्याकाङ्क्षायामाह । पुनः पुलिनमागत्येति पूर्वं पुलिने स्थिता यत्र तत्रैव पुनरागताः ननु विवेकरहिताः कथं तत्रागतास्तत्राह । कृष्णभावना इति कृष्ण एव भावना यासां तेन भगवदिच्छया भगवत्प्रेरणया तत्रैव स्थाने भगवान् रतिं करिष्यतीति निश्चित्य तत्स्थानमस्माकं हितकरमिति तत्रागताः ततः कस्या वा भाग्यात् स्नेहेन कृपया वा आगच्छेदिति सन्देहात् समवेता जाताः तदा साधनान्तरमलभमानाः कृष्णं सदानन्दं जगुः दोषनिवारणे हरिगुणगानमेव साधनमिति निवृत्ते पुनर्दोषे स्वयमेवायास्यतीति तदागमनकांक्षया जगुः श्रीकृष्णगोपिकास्तत्र द्विविधा नवधा गुणौ समुदायेन भिन्नावा गतगर्वाः असाधनाः । हरेर्गानं प्रियं मत्वा जीवनार्थमपि क्रिया स्वसन्देहास्तु मिलिता जगुर्नानाविधैर्गुणैः ॥ ४४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे सप्तविंशाध्यायः विवरणम् ॥ २७ ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हन्त हन्त यत्र तदन्वेषणार्थं यामस्तत्र स्वगः स पलायिष्यते तस्मादनर्थकं किं तस्योत्पादयिष्यामस्तदिच्छां विना स न लभ्यो यमेवैष वृणुते तेन लभ्य इति श्रुतिं प्रमाणीकुर्वत्य इव तद्दर्शने तत्कारुण्यमेव हेतुस्तत्कारुण्ये च तत्सङ्कीर्तनमेव हेतुरिति सिद्धान्तं प्रकाशयन्त्यं इव पूर्वं

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

यत्र तेन सङ्गतिरासीत्तदेव स्थानमाजग्मुस्तमेव जगुरित्याह । पुनरिति ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्रिंशोऽध्यायोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ ३० ॥

---

केनाचित् कृता विशुद्धरसदीपिका ।

किमेवमन्वेत्यत आह । पुनरिति । पुलिनं प्रेष्ठसंयोगपीठमागत्य कालिन्द्याः निजसख्याः पर्वतसम्बन्धोक्तिः स्थैर्यलाभाय यद्वा कानि सुखानि मिलिन्दे यस्याः यद्वा कानां सुखानामालिपरम्परां ददातीति तस्याः सर्वथा सुखोपलब्धिसिद्धपीठमिति भावः । ननु कीदृशं समुद्दिश्यागतास्तत्राह । कृष्णभावनाः तदेव तासां सुखं नान्यदितिभावः यद्वा आत्मविस्मरणं दृढीकरोति कृष्णोऽहमिति भावना यासां ताः कृष्णं जगुरित्याद्वर्ये अयं च स्वयमेव तथाविध इतिन्यायेन झटिति सिद्धौ हेतुः समवेताः पेकमत्येन मिलिता नतु तद्वदेकाकिन्यः कृष्णं स्वचित्ताकर्षकं मूर्त्तिमद्गानं जगुः यद्वा स्पष्टं तन्नामैव जगुः ननुतद्वत्कलमित्यर्थः । कुतःतदिति तस्यैकस्यैवा काङ्क्षितं यासामिति तदेकालम्बना इत्यर्थः । ततश्च तद्वत्कृष्टा वयमत्रागतास्तथैवास्माभिराकृष्टः सोऽप्यायास्यतीति भावः ॥ ४४ ॥

इति श्रीभागवत रासपञ्चाध्यायीव्याख्याने
विशुद्धरसदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥
मूलस्य त्रिंशोध्यायः ॥ ३० ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

ततो ध्यानगानसमाधेरुत्थितास्तं प्रेष्ठमपश्यन्त्यस्तद्विरहविक्लवितचित्ता यहन्वेषणेऽप्यलब्धप्रियवृत्तान्ताः पूर्वद्वाकालिन्द्याः पुलिने प्रियकृतवेणुगानाह्वानतत्समागमविहाराद्यनुस्मृत्य तदेव तीर्थपादसंगमप्रदं तीर्थराजं श्रुतिगणगिरागिरीशगिरिजागिरिशगीतगुणं मङ्गलमङ्गलं भूभूषणमवधार्य यत्र यदुज्झितं तत्रैव तल्लभ्यते इतिन्यायं चानुसन्धाय पुनः पुलिनमेवागत्य योगिमनसामपि दुरधिगमस्य भगवतोऽन्वेषणादिधैर्य्यं व्यवस्य गानप्रियस्य तस्य —

नाहम्वसामि वैकुण्ठे योगिनां हृदये नच।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥

इत्यादिप्रतिज्ञां विश्वस्य तद्गुणानेव जगुरित्याह । पुनः पुलिनमिति । पुनः कालिन्द्याः पुलिनमागत्येत्यत्र पुनःशब्देन प्रथमं तत्र कृष्णसमागमस्मारकेण तत्पुलिनस्य तत्सङ्गतियोग्यताध्वनिता न रोधयति मां योगो न साङ्ख्यं धर्म उद्धव इत्यादिना साधनान्तराणां तथाऽनवरोधकत्वमभिधाय यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि मामित्यादिना सत्समागमस्यैव तदवरोधकत्वबोधनात्समवेतास्तथाविधिश्चित्तगानस्यापि तदनवरोधकत्वात्कृष्णभावनाः कृष्णमेव भावयन्तीति तथा तस्य कृष्णस्यैवागमनं काङ्क्षितं यासां ताः कृष्णमेव नित्यानन्दस्वरूपं स्वमनःकर्षकञ्च जगुः यद्वा यतः कृष्णभावना अतो भावनया कृष्णं समवेता एव बहिःप्राकट्याभावाचदागमनकाङ्क्षिताः कृष्णमेव जगुः यद्वा यतस्तदागमनकाङ्क्षिताः अतः कृष्णस्यापि सर्वमनःकर्षकस्य भावना मनोरोचिका यथा भवेयुस्तथा समवेता मधुरमिलितस्वरा जगुः यद्वा यतः कृष्णभावनास्तद्ध्यानान्वितास्तन्मनोरोचिकाभातः क्वचिद्भावनाप्रादुर्भूतेन क्वचिदन्तर्हितेनैव तद्गानहृतचित्तेन तद्गानतानवितानतालापानुसृतललितनृत्यगतिमताः कृष्णेन समवेता एव गायन्त्योऽपि तद्विरहविभ्रमेण ध्यानलयेनैव तं पश्यामो न साक्षादिति भ्रमितचित्तास्तदगमनकाङ्क्षिता जगुः ॥ ४४ ॥

श्रीश्रीशौ राधिकाकृष्णौ सखीः स्वीयान् गुरून् द्विजान् ।
गिरां दुर्ण्डि विदो भक्तान् वन्दे विश्वं हरेर्वपुः ॥

इतिश्री चन्द्रभागाख्य विष्णुसख्यापन्न श्रीरामनारायणविरचितायां।
श्रीमद्भागवतमहापुराणदशमस्कन्धान्तर्गत
श्रीरासपञ्चाध्यायीव्याख्यायां भावभाव-
विभाविकायां द्वितीयाध्यायव्याख्या समाप्ता ॥ २ ॥
मूलेत्रिंशः ॥३०॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

पुनर्विरहव्याकुलाचित्ताः परस्परं विचारयामासुः अहो कुत्र गत्वा तदन्वेषणं विधेयमिति कयाचिदुक्ते अहो अन्वेषणं प्रियस्य क्लेशमात्रावहं समीपमागता अस्मानालक्ष्य पलायनपरस्य मिलना भावादित्यन्याभिहितम् अहो अहो सत्यं तस्य करुणां विना तत्प्राप्तिर्दुर्घटातस्तदुत्पत्त्युपायो विधेय इत्यपराभिः कथनं सर्वा विचार्य्य तत्कीर्तनमेव सदुपायं निश्चित्य तदर्थं पुनः कालिन्द्याः पुलिनमागता इत्याह । पुनरिति यत्र प्रेष्ठेन पूर्वं सङ्गतिरासीत्तदेव कालिन्द्याः पुलिनं स्वसुखहेतुभूतं प्रसरच्छन्दं यत्र वस्तु लभ्यते तत्रैवान्विष्यत इत्याशयेनागत्य कृष्णभावनाः प्रेष्ठमेव भावयन्ति ध्यायन्तीति तथा तस्य श्रीकृष्णस्यागमनं काङ्क्षितं यासां ताः समवेताः मिलिताः सत्यः कृष्णमेव जगुरुच्चै गानं चक्रुः विरहजनकदोपनिवृत्त्यर्थं तस्य करुणोत्पत्त्यर्थञ्चोच्चैर्गानं तदर्थञ्च समवेतत्वं कस्याः भाग्यात्स्नेहेन कृपया वागच्छेदित्याशयेन वा समवेताः अन्यां काञ्चिदादाय पुनः पलायनं न कुर्य्यादित्याशयेन वा निवृत्तिपक्षे पुनः पुन मायालक्षणायाः कालिन्द्याः पुलिने शुद्धान्तःकरणे आगत्य सदानन्दस्वरूपे परमात्मन्यभिप्रायवत्यः गतिसामान्यादिति न्यायेनैकार्थबोधकत्वेन मिलिताः तस्यागमने साक्षादेव गति माकाङ्क्षितं यासां ताः कृष्णमेव जगुः ॥ ४४॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपाद
शिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिमिश्र
सूरिकृतायां भागवतगूढार्थदीपिकायां
दशमस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कुत्र तस्थुरित्याकाङ्क्षायामाह । पुनः पुलिनमिति । यत्र पूर्वं श्रीकृष्णेन सङ्गतिरासीत्तदेव कालिन्द्याः पुलिनमागत्य कृष्णं

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भावयन्ति प्रार्थयन्तीति कृष्णभावनाः कृष्णागमनं काङ्क्षितं वाञ्छितं यासां ताः समेताः कृष्णं जगुः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
त्रिंशाध्यायार्थप्रकाशः ॥ ३० ॥

---

भाषा टीका ।

फिर श्रीकृष्ण की भावना करती हुई उसी कालिन्दी के पुलिन में पहुंच कर सब इकट्ठी होकर श्रीकृष्ण भगवान् के आयवे कि आशा ते कृष्ण को गान करत भई ॥ ४४ ॥

इति श्री भागवत दशमस्कन्ध तीस में अध्या ऽ
की भाषा टीका समाप्त ॥ ३० ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्रिंशोध्यायः ॥ ३० ॥

# ॥ एकत्रिंशोऽध्यायः ॥

## गोप्य ऊचुः ॥

**जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ॥**
**दयित ! दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः ।
कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम् ॥

जयतीति । हे दयित ! ते जन्मना व्रजोऽधिकं यथा भवति तथा जयत्युत्कर्षेण वर्त्तते यस्मात्त्वमत्र जातस्तस्मादिन्दिरा लक्ष्मीरत्र हि श्रयते व्रजमलंकृत्य वर्त्तते एवं व्रजे सर्वस्मिन्मोदमानेऽत्र तु तावकास्त्वदीया गोपीजनास्त्वयि त्वदर्थमेव कथंचिद्धृता असवो यैस्ते त्वां विचिन्वते मृगयन्तेऽतस्त्वया दृश्यतां प्रत्यक्षीभूयतामिति यद्वा अस्माभिर्भवान् दृश्यतां यद्वा एवं त्वया दृश्यतामेते विचिन्वत इति ॥ १ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कृष्णैकगम्यो वागर्थौ यासां लेखितुमिष्यते ।
ज्ञात्वापराधं देव्यस्ता भक्तिं तन्वन्तु मे निजाम् ॥
पीतश्रीगोपिकागीतसुधासारमहात्मनाम् ।
श्रीधरस्वामिनां किञ्चिदुच्छिष्टमुपचीयते ॥

अधिकं पूर्वतः सर्वतो वा श्रीवैकुण्ठादपि वा व्रजेन तत्रत्या लक्ष्यन्ते हि यतः अत्र व्रजे शश्वन्निरन्तरं यद्वा आधिकमित्यस्यात्राप्यन्वयः प्रति मुहुराधिक्येनेत्यर्थः । मूर्त्तिमती लक्ष्मीरिव उत्तरोत्तरं वर्द्धमाना परमोच्चमा सम्पूर्णा सर्वसम्पत् श्रयते अनपेक्ष्यमाणापि स्वयमेव श्रयते यद्वा वैकुण्ठेश्वर्य्यपि सा शरणागतभावेन किम्वा सङ्कोचतो निरन्तरावस्थित्यशक्त्या मुहुरायातयातैर्वसति सदाभिनववैकुण्ठादधिकसम्पत्तेः किंवा प्रतिगृहं भ्रमन्त्याः परमविनयनम्रायाः लक्ष्म्या एव साक्षाद्दर्शनात् हीति निश्चये वा तथाचोक्तं ततः प्रभृतिनन्दस्येत्यादि मधुपुर्य्यामपि जन्मना व्रजस्यैवोत्कर्षसिद्धेः किम्वा व्रज एव तज्जन्मनिश्चयाज्जन्मना व्रज इत्युक्तम् एवन्तत्प्रभावेणात्रत्यानां सर्वेषामेव सर्वमङ्गलं जातं केवलं दैवहतानामस्माकमेव सदा दुःखं तत्राप्याधिकमिदं सर्वज्ञेन परमदयालुनाऽस्मत्प्राणवल्लभेनापि त्वया तन्न ज्ञायते इति तदधुना अन्यत्तावदस्तु तन्मात्रमपि ज्ञायतामिति प्रार्थयन्ते तत्दयितेति दृश्यतां ज्ञायतां किम्वा साक्षात् क्रियतां तस्य प्रत्यक्षत्वात् दुःखदर्शने सति परदुःखकातरोऽवश्यं साक्षाद्भवेदिति भावः किन्तदाहुः दिक्ष्विति अनेन बहुलपरिभ्रमणादिदुःखं सूचितं तावकाः त्वया स्वीकृताः त्वदीयताभिमानवन्तो वा अत एव विचिन्वते अन्वेषणेन बहुदुःखमनुभवन्तीत्यर्थः । अतस्तावकत्वेनैवैतत् दुःखमन्यथा तदनुत्पत्तिरितिभावः । वयमिति गोपीजना वेति साक्षादनुक्तिः परित्यागेन हताभिमानतया परमदैन्येन तथोक्तावप्यशक्तेः किम्वा निजार्त्तिभरेण सर्वेषामपि तदीयानां दुःखनिवेदनेच्छया सामान्येनैवोक्तेः किंवा सामान्योक्त्यैवार्थगाम्भीर्य्योपपत्तेरिति दिक् एवमग्रे अपश्यतामित्याद्यपि ननु निर्वुद्धयस्तर्हि कस्यचिदन्यस्य भवत तत्राहुः । दयितेति त्वदेकप्रियेभ्यो जनेभ्यः कथञ्चिदप्यन्यसम्बन्धमात्रमपि न रोचते इत्यर्थः—

ननु कइअवरहिअम्पेम्मणहि होइमाणपे लोए ।
जइ होइ कस्सविरहो विरहेहो तस्मि कोजि अइ ॥

इत्यादिना येन दयितस्य विरहे दयिता न जीवेयुर्नाम सत्यं त्वत्त एव न म्रियन्त इत्याहुः । त्वयि निमित्ते धृतासवः त्वत्प्राप्त्याशया जीवन्तीत्यर्थः । यद्वा त्वयि विषये त्वन्न्यस्तत्वेन प्राणा न नश्यन्तीत्यर्थः एषु श्लोकेषु गीते मात्रापदवर्णादिसाम्यापेक्षया प्रतिपादं द्वितीयाक्षरस्यैवाधिक्यं तथा दलद्वये कुत्रचिदन्यत्रापि क्वचित् प्रथमाक्षरषष्ठाक्षरयोश्च कुत्रापि कथञ्चिद्विचार्य्यं तच्च श्रीमुक्ताफलटीकाकारैर्विवृतमेवास्ति ॥ १ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णैकगम्यो वागर्थौ यासां लेखितुमिष्यते । ता एव करुणामय्यः स्वीकुर्वन्तु मदाग्रहम् । पीतश्रीगोपिकागीतसुधासाररसश्रियाम् । श्रीधरस्वामिनां किञ्चिदवशिष्टं विचीयते । अधिकं सर्वतः । व्रजे न तत्र तत्र ह्यालक्ष्यन्ते । हि यतः । अत्र व्रजे । शश्वत् निरन्तरम् । यद्वा । अधिकमित्यस्यात्राप्यन्वयः । प्रतिमुहुराधिक्येनेत्यर्थः । इन्दिरेति सम्पत्तदधिष्ठात्र्योरभेदेन निर्देशः । तदधिष्ठानेनैव तद्वृद्धेः एवं तत्प्रभावेणात्रत्यानां सर्वेषामेव सर्वमङ्गलं जातम् । केवलं दैवहतानामस्माकमेव सदा दुःखं तत्राप्याधिकमिदम् । सर्वज्ञेन परमदयालुनास्मत्प्राणवल्लभेनापि त्वया न ज्ञायत इति । तदधुनान्यत्तावदस्तु तन्मात्रमपि ज्ञायतामिति व्यञ्जयितुं प्रार्थयन्ते दयितेति । दृश्यतां ज्ञायतां दुःखदर्शने सति परदुःखकातरोऽवश्यं साक्षाद्भवेदिति तु निगू-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ह्यो ऽभिप्रायः । किं तद्दुःखं तदाह्दुर्दिक्ष्विति अनेन बहुलपरिश्रमादिकं परिभ्रमणञ्च सूचितम् । तावकास्त्वया स्वीकृतास्तदीयताभिमानवन्तो वा अत एव विचिन्वते अन्वेषणेन बहुदुःखमनुभवन्तीत्यर्थः । अतस्तावकत्वेनैवैतद्दुःखम् । अन्यथा तदनुत्पत्तिरिति भावः । तत्र दयितेत्यनुकम्पां जनयन्ति दयते ऽनुकम्पते इति निरुक्त्या दैन्यात् दयते चित्तमादत्ते दयित इति क्षीरस्वामिनिरुक्त्यनुसारेण तु किञ्चिदुपालम्भतो ऽपि तामेव । ननु । कै अव रहिअं पेम्मं णहु चिठ माणवे लोइ । जइ होइ कस्स विरहो विरहे होत्तम्मि को जिअइ । कैतवरहितं प्रेम न तिष्ठति मानुषे लोके । यदि भवति कस्य विरहो विरहे भवति को जीवति । इति न्यायेन दयितस्य विरहे दयिता न जीवेयुर्नाम । सत्यं त्वत्त एव न म्रियन्ते इत्याहुस्त्वयि निमित्ते धृतासवः त्वत्प्राप्त्याशया जीवन्तीत्यर्थः । यद्वा । त्वयि विषये असवः प्राणा इन्द्रियाणीति यावत् । त्वन्मयत्त्वेन पश्यन्तीत्यर्थः । एषु श्लोकेषु पदवर्णादिसाम्यापेक्षया प्रायः प्रतिपादं द्वितीयाक्षरस्यैक्यम् । तथा दलद्वये कुत्रचिदन्यत्रापि क्वचित् प्रथमाक्षरसप्तमाक्षरयोश्चेति कुत्रापि कथञ्चिद्विचार्यम् । तच्च मुक्ताफलटीकायां विवृतमस्तिः तत्र दृश्यतामित्यत्र तेषां प्रथमार्थः । पचोर्वीक्लिङ्क्तिविक्लेदनावबृह्देशेरपि प्रकाशाप्रकाशनार्थत्वात् संवर्णनीयः ॥ १ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

जयति प्रकृष्टो भवति इन्दिरा गतिः समृद्धिः अत्र व्रजे ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तद्गुणानेव गायन्त्यः कृष्णं जगुरिति चोक्तं तदेव गानं प्रपञ्चयत्येकोनविंशेन जयतीति । व्रजस्ते तव जन्मना हेतुना नितरां जयति उत्कर्षं प्राप्नोति किञ्च तव जन्मना इन्दिरा लक्ष्मीरपि नित्यमत्र वसते व्रजमलं कुर्वती अस्माभिरलक्ष्यमाणाचाश्रयतइत्यर्थः यद्वा ते अत्र व्रजे श्रयते त्वामिति शेषः नित्यानपायित्वादिति भावः इन्दिरा महती समृद्धिर्वा एवं सर्वस्मिन् व्रजे मोदमाने तत्र त्वदीया वयन्तु त्वयि निमित्ते त्वदर्थमेवेत्यर्थः । कथञ्चिद्धृता असवः प्राणा याभिस्तथा भूतास्त्वामेव मृगयन्ते अतस्त्वया दृश्यताम् अत्रवक्तृबाहुल्यात्प्रतिश्लोकमवतारणद्राघव्या तत्र यथा सम्भवं पूर्वोत्तर वचसां सङ्गतिरूह्यते दृश्यतां प्रत्यक्षीभूयतामस्माकमितिशेषः ॥ १ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

वेदान्तानधिकारिणां मुमुक्षुचिविदिषूणां समर्थानां हरेः सङ्कीर्तनमेव तदुपासनं स्यात्तत्प्रसादजनकत्वेनेत्यतः स्त्रीभूतानां गोपीनामुपासनाप्रकारं निरूपयत्यस्मिन्नध्याये । तत्र गोप्यः चित्ते संनिहितत्वात्सम्योध्यागायन् । जयतीति । कृष्णेत्यध्याहार्यं हे कृष्ण ! व्रजन्ति यस्मिन्निवासस्थाने गोपा इति गोपनिवासस्थानं व्रजः अयन्ते तव जन्मना अधिकं जयति सर्वोत्कर्षेण वर्तते तत्र हेत्वन्तरं चाहुः । श्रयत इति । तत्र व्रजे "इदि परमैश्वर्ये" इति धातुः । इन्दिमैश्वर्यं राति ददातीति नित्यैश्वर्यरूपत्वादिन्दिरा श्रीः साऽधुना श्रयते आश्रयते हि यस्मात्तस्माच्चेत्यर्थः तव जन्मनिमित्तं श्रियः श्रयणं च त्वयाऽविनाभूतत्वाच्छ्रिय इति भावः । स्वाभिप्रायं दर्शयन्ति । दयितेति हे प्रेष्ठ ! भवान् स्वात्मनैव त्वां दिदृक्षतां द्रष्टुकामानां त्वयि गतासवः समर्पितप्राणाः त्वा त्वां विचिन्वते साकाङ्क्षत्वाद्दर्शनदानं युक्तमित्यर्थः ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वृषेति वृषमयात्मजात् वत्सासुरात् मयात्यजाद्व्योमासुराच्चेत्यर्थः ॥ १—२ ॥ ३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ भगवद्गानं सर्वोत्कर्षयुक्तं भवतीति सर्वोत्कर्षवाचिना जयतिशब्देन तदारम्भः कर्तुंयोग्य इति तथैवाहुः । जयतीत्यादि । तव जन्मना प्रादुर्भावेण व्रजः अधिकं जयति भूवैकुण्ठत्वात् जयत्येव सम्प्रति तत्प्रादुर्भावेण अधिकं जयति भौमाभौमवैकुण्ठत्वात् तत्र हेतुः इन्दिरा लक्ष्मीः शश्वदेव अत्र हि अत्रैव श्रयते अत्रैव तिष्ठतीत्यर्थः अतो व्रजस्य सर्वोत्कर्षे सति व्रजस्थाना मस्माकमेतादृशं दौरूप्यमनुचितन्तदस्य खण्डनार्थं त्वद्दर्शनं प्रार्थयाम इत्याहुः । दयितेत्यादि । हे दयित ! तावका जना अस्मद्विधरूपास्त्वां दृश्यतां विचिन्वते तव दर्शनं प्रार्थयन्त इत्यर्थः वृक्षमवचिनोति फलमिति वत्चिनो द्विकर्मकत्वात् त्वं दृश्यो भवेत्याशयः त्वद्दर्शनमेव काङ्क्षितम् अन्यथा व्रजोऽधिकं जयतिशब्दे नेयं इन्दिरा श्रयते इति च यतः तत्किं तेनास्माकंकृतार्थता नेति वाक्यार्थः ॥ १ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अष्टाविंशो हरेर्गानं स्वभावादपराधतः ।
कृतावज्ञा गोपिका हि स्तोत्रं चक्रुरितीर्यते ॥
एकोनविंशतिविधा गोप्यः स्वस्वाधिकारतः ।
एकोनविंशतिविधां स्तुतिं चक्रुर्हरेः प्रियाम् ॥
राजसी तामसी चैव सात्त्विकी निर्गुणा तथा ।
एवं च तुर्विधा गोप्यः पतिमत्यो निरूपिताः ॥
तथैवानन्यपूर्वाश्च प्रार्थनामाहुरुत्तमाम् ।
गुणातीताः सात्त्विकीश्च तामसी राजसी तथा ॥
कृष्णभावन या सिद्धा विशेषेणाह ताः शुकः ।
अनन्य पूर्विका एव पुनस्तत्र मुदा जगुः ॥
सात्त्विकी तामसी चैव राजसी चेति विश्रुताः ।
सर्वाश्च ततस्तिस्रः तामसी राजसी परा ॥
पुनस्ता एव त्रिविधा अटतीत्यादिभिस्त्रिभिः ।
राजसी तामसी चैव सात्त्विकीति विभेदतः ॥
अनन्यपूर्वा द्विविधा राजसी सात्त्विकी तथा ।
तामसा तामसी तत्र नास्तीत्येकोनविंशतिः ॥
अथवा प्रार्थनाद्या या सप्तेति द्विविधाः पुनः ।
चतुर्थ्यस्तु समास्तत्र तत एकोनविंशतिः ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्तद्वाक्यानुसारेण नासां भावो निरूप्यते।
अन्यथानेकतां स्तोत्रे प्रकारैर्नोपयुज्यते॥

तत्र प्रथमं राजस्यः काश्चन गोप्य आहुः। जयतीति। मङ्गलार्थोऽत्र जयशब्दः यथा फलं साधयेत् स्तोत्रं तथा निर्विघ्नार्थः अन्यथा-क्रियामादौ न प्रयुञ्ज्यात् त्वदवतारेण व्रजः सर्वोऽपि कृतार्थः वयमेव परमकृतार्थाः एवेति यथा वयमपि कृतार्था भवामः तथा यत्नः कर्तव्य इति वक्तुं व्रजस्य तवावतारेण सर्वोत्कर्षो जात इत्याहुः। ते जन्मना व्रज आधिकं जयतीति सर्वोत्कर्षेण स्थितिर्जयः अधिकजयो वैकुण्ठादप्युत्कर्षः नहि वैकुण्ठे भगवानेवं लीलां करोति यद्यपि मथुरायां जन्म जातं तथापि तेन जन्मना न मथुरा सर्वोत्कर्षेण स्थिता किंतु व्रज एव ननु भगवज्जन्मनः सर्वोत्कर्षहेतुत्वं न लोके प्रसिद्धमनन्यत्वेनैकत्वात् अतस्तादृश उत्कर्षहेतुर्वक्तव्यः यो लोके प्रसिद्ध इतिचेत्तत्राह। श्रयत इन्दिरा शश्वदत्रहीति। अत्र व्रजे इन्दिरा सर्वदा श्रयते हीनभावेनाश्रयं कुरुते वैकुण्ठे तु सैव नियता भार्येति न तस्याः सर्वदाश्रयणं कर्तव्यं भवति इह तु तादृश्यो वयमनेका इति तस्याः स्वास्थ्य भावात् कदा वा ममावसरो भविष्यतीति निरन्तरं सेवते अतो लक्ष्मीस्थित्या लोका उत्कर्षं मन्यन्ते सा पुनर्लक्ष्मीः गोकुलाश्रया जाता हि युक्तश्चायमर्थः पतिव्रता हि सा यत्र पतिः स्वयमन्याधीनतया तिष्ठति भक्तेषु रूपां व्यापयितुं तदुक्तमुलूखलप्रकरणे तत्र तद्भार्यासुतरामेवाश्रयत इति किमाश्चर्यं तव जन्मना व्रजस्य सर्वोत्कर्षः सर्वजनीनः अतस्तव रमणे न कापि न्यूनता न वा लक्ष्म्या मनसि विषादः अङ्गीकृतत्वात् अतः कारणादस्मदर्थमेवागतेन त्वया दृश्यतामिदं गोकुलमेकदा द्रष्टव्यं वा क्वार्थो वा कर्म अग्रे वक्ष्यमाणः तावत्कालं त्वयि धृतासवः दिक्षु त्वां विचिन्वत इति दृश्यताम् एतादृशोऽर्थोऽनुचित इति अनुचितप्रदर्शनेन बोधयन्ति लोके हि ब्रह्मादयः स्वयमवतीर्णे वर्तस इति निश्चित्य समायान्ति व्रजस्थाः पुनरस्मदादयः दिक्षु विचिन्वन्ति इतीयं महत्यनौचिती ननु व्रजस्थानां भक्तिर्नास्ति अन्यथा विरहे म्रियेरन् अतः अभक्ता न पश्यन्तीति युक्तमितिचेत्तत्राहुः। त्वयि धृतासव इति त्वदर्थमेव धृता असवः प्राणा यैः यदैव त्वदनुपयोगं ज्ञास्यन्ति तदैव त्यक्ष्यन्तीति भावः अत एव त्वां विचिन्वते प्राणा नाश्वासयितुमल्पविलम्बेऽपि प्राणा गमिष्यन्तीति अन्यथा व्रजे गच्छेयुः प्रातस्त्वमेवायास्यतीति अन्वेषणं व्यर्थमेव स्यात् दिक्षु त्वदीयाः त्वयि सतीति महद्दैन्यम् अतः एकवारं त्वदीयाः पश्येति प्रार्थना एवमेकया दर्शनं प्रार्थितं दयितेति सम्बोधनाददर्शने स्त्रीणां जीवनं न युक्तमिति निरूपितं यद्यपि भगवांश्चेत्पश्येत्तदा न कोऽपि पुरुषार्थः सिद्ध्येत तथापि दैन्यं दृष्ट्वा आत्मानमपि प्रदर्शयेदिति तथा प्रार्थना एवं स्वदैन्यानौचित्यादिनिरूपणेन तस्या राजसत्वं निरूपितम्॥ १॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एकत्रिंशे प्रेममधुस्वरताळादिसौरभा।
गोपीगीताम्बुजश्रेणी कृष्णाल्याकर्षिणी बभौ॥

सनातनेभ्यः स्वामिभ्यः श्रीगुरुभ्यो नमो नमः।
यदुच्छिष्टैकजीवातुश्चेष्टे सम्प्रति शं प्रति॥

पूर्वं जगुरित्युक्तं तदेव किमित्यत आह। गोप्य ऊचुरिति। हे दयित! ते जन्मना व्रजो जयति सम्बन्धिविशेषात्तुत्त्या सर्वेभ्य एव लोकेभ्य उत्कर्षेण वर्त्तत इत्यर्थः। वैकुण्ठलोकेऽपीदृश इति तद्व्यावृत्त्यर्थमाहुः। अधिकं यथा स्यात्तथेति वैकुण्ठः सर्वोत्कृष्ट एव। व्रजस्तु सर्वोत्कृष्टतम इत्यर्थः। तल्लिङ्गान्तरमप्याहुः इन्दिरा महालक्ष्मीः शश्वत् श्रयते सेवते "श्रिञ् सेवायाम्" वैकुण्ठे तु सा एव सेव्यत इत्यतो वैकुण्ठादपि व्रजः सर्वसमृद्धिपूर्ण इति भावः। एवं तद्धेतुकमहासुखपरिपूर्णे व्रजे त्वत्प्रेयस्यो वयमेव सर्वलोकादृष्टश्रुतचरपरमासह्यदुःखं यदनुभवामस्ततस्तत्त्राणं त्वां न प्रार्थयामहे किन्त्वेकवारं दृष्ट्वा स्वनयने सफलयेत्याहुः। अत्र वृन्दावने। हि निश्चितमेव। दृश्यतां किं द्रष्टव्यं तावका जनास्त्वां विचिन्वते इति कथमेतावत् सन्तापवत्योऽप्येतावन्निपद्यन्तु इति मा संशयिष्ठा इत्याहुः। त्वयि धृता अर्पिताः असवो यैस्त्वय्येवोन्मादितैस्ते यद्यस्माकमसव अस्मास्वेवास्थास्यंस्तदा तेषु विरहानलदग्धेषु सत्सु वरमेतावत् क्षणे मृत्वा सुखिन्य एवाभविष्यामेति। त्वयि तु स्वनाथे महासुखिनि ते सुखमेवानुवर्त्तन्त इति कथमसूनां सुखे सति देहा विपद्यन्तामित्यतस्तवास्मद्दुःखदर्शनात्मकं सुखं शाश्वतिकमेवेति भावः। अत्र श्लोके प्रतिपादं द्वितीयाक्षरस्यैक्यं तथा प्रथमाक्षरसप्तमाक्षरयोश्च। एवमन्येष्वपि श्लोकेषु प्रायः क्वचित् क्वचिदस्ति तच्च मुक्ताफलटीकाकारैर्विवृतम्॥ १॥

---

केनचित्कृता विशुद्धरसदीपिका।

गीतमेवाह-गोप्य ऊचुरित्यारभ्य यावदध्यायम्। अत्र यद्यपि सर्वासामेव गानं सम्भवति तथापि समवेता इत्युक्तेः समानभावापन्नानामेव तज्ज्ञेयं नित्यसम्बन्धत्वात्समवायस्य तच्च यथास्थानं दर्शयिष्यामः। जयतीति। हे दयित! परमदयालो! अस्मत्प्राणनाथेति वा एवंविधं प्रेयसीभावानां कन्यानां च गानमिति सूचितं ते जन्मना व्रजः अधिकं सर्वतो जयति "वृन्दावनं सखिभुवो वितनोति कीर्तिं" मिति व्रजे तदाश्रितो जनसमूहो लक्ष्यते तत्र वयं किमिति दुःखिताः इति भावः। तथाइन्दिरा सर्वसम्पदधिष्ठात्री शश्वन्निरन्तरमत्र श्रयते आश्रयते हि निश्चितं तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमानिति जनश्रुतेरेवमुक्तं ततः किमस्मास्वेव विपादिति भावः। हंहो ज्ञातं नास्मास्वन्यः कश्चिद्दोषः परं तावका इति निर्वेदोक्तिः कुत एतत् यतः त्वयि निमित्ते धृतासव इति तदपि कुतः त्वां विचिन्वत इति दृश्यतां त्वयेति शेषः प्रत्यक्षीभूयतामित्यर्थः। यद्वा अधिकतरमिदमेव दुःखं सर्वज्ञेन परमदयालुना अस्मत्प्राणनाथेनापि त्वया न ज्ञायत इति तदिदानीं तावन्मात्रन्तु ज्ञायतामिति व्यञ्जयितुं प्रार्थयन्ते। दयितेति। दृश्यतां ज्ञायतामित्यर्थः। "दृग्ज्ञाने ज्ञातरि त्रिषु" इत्यमरः ततश्च परदुःखदर्शनकातरोऽस्मासु दययेदिति गूढोऽभिप्रायः यद्वा अस्माभिर्भवान् दृश्यतां किंवा त्वयि धृता असवो याभिस्ताः विगतासवोऽपि त्वां विचिन्वत इत्याद्याश्चर्यं त्वया दृश्यतां कौतुकीत्वादायास्यतीत्य:

केन चित्कृता विशुद्धरसदीपिका।

पदेशोक्तिः। यद्वा ननु यदि मामकास्तर्हि मां विना कथं जीवथ तत्राहुः। त्वयीति। त्वयि विषये धृताः प्राणा इन्द्रियाणि यासां ताः एवं च यद्यसवोऽस्मासु भवेयुस्तर्हि न जीवेम त्वयि न्यस्तत्वात्तेन न नश्यन्तीति भावः। यद्वा त्वयि निमित्ते धृतासवः अस्मद्विरहे तवापि वैमनस्यं स्यादेव दयितत्वात्तन्माभूदित्येतदर्थं जीवाम इति भावः। एवं हि चकोरीणां चन्द्रत्वमेवास्मदिन्द्रियाणां जीवातुर्भव अन्यथा निषेव्यसरितां पत्युस्तटीः पक्षिगणाश्चिरं यत्पिबन्ति सरस्तोयं सैव लज्जामहोदधेरित्यभियुक्तोक्त्या तवैवापत्रपा स्यादिति तथा विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति न्यायात्त्वत्पालिताशालताच्छेदनानुचितत्वमपि स्यादिति भावः। वयं तु त्वदेकजीवना अनन्यगतिका एवेति यद्वा—

विरहार्त्यग्निभीतोऽयं मृत्युश्येनो विमुञ्चति।
प्राणपक्षिणमेतद्धि निश्चेतव्यं दयानिधे!॥

इति संक्षेपः! एतेषु च गीतेषु पदवर्णादिसाम्यापेक्षया प्रायः प्रतिपादं द्वितीयाक्षरस्यैक्यं तथा दलद्वये कुत्रचिदन्यत्रापि क्वचिच्च प्रथमसप्तमाक्षरयोरिति चित्रत्वमपि ततश्च सकलचातुर्यचर्चितरसज्ञासमज्ञायां स्वगुणैर्नैपुण्यमारोपयन्ती वाग्देवी नित्यदा ज्ञाताऽज्ञातापि परिचरतीत्येव गम्यते॥ १॥

———

श्रीरामनारायणकृतभावभावविभाविका।

श्रियं हरिं गुरून् विप्रान्विदो भक्तान् गिरामजम्।
ढुण्ढिं शिवां शिवं वन्दे विश्वं तत्तदात्मकम्॥
वन्दे राधां सखीरिच्छंस्तद्युच्छिष्टां हरेरितम्।
कृष्णैकगम्यतद्गीतभावार्थस्य च सन्मतिम्॥

"पञ्चाध्याय्यां तृतीयेऽस्मिन् प्रेमभावसमन्वितम् वर्णितं गोपिकागीतं कृष्णाविर्भावकं शुभं„ तद्गीतमेवाह। श्रीगोप्य इति। पूर्वं पुनः पुलिनमागत्येत्युक्त्या धाममाहात्म्येन प्रियप्राप्तिमिच्छन्त्यो गीतारम्भे भगवद्गुणान् वर्णयन्त्यस्तत्संबन्धेनैव धाम स्तुवन्ति जयतीति। जयतिशब्दोऽत्र मङ्गलाय विनियुक्तोऽपि वाक्यार्थान्वयी मङ्गलार्थत्वाभावे क्रियापदस्यादौ निर्देशो न स्वारस्यं लभेत यथाधुनिकव्रजवासिनो भगवत्प्राप्त्यै प्रदक्षिणादि कुर्वन्ति तथा साक्षाद्भगवद्रूपा गोप्योऽपि तदाविर्भावाय व्रजं स्तुवन्तीत्यद्भुतो व्रजमहिमेति भावः। अन्यत्राचार्यत्वकाङ्क्षस्तत्तद्ग्रन्थकारैस्तत्तद्ग्रन्थारम्भे तत्तत्समाप्तिविघ्नाभिमुद्दिश्य मङ्गलप्रयोगदर्शनात्तदेव फलमत्र गोपीनां तथोद्देशाभावात्तद्गीतप्रार्थ्यभगवदभिव्यक्तिमुद्दिश्यैव पदप्रयोगात्तदेव फलं तथैतद्गीतस्प्रेमभावनयानित्यमनुसन्दधतां गोपीनामिव भगवदभिव्यक्तिरावश्यकीति रहस्यं यद्यपि सदैव व्रजो जयति तव नित्यविहारास्पदत्वात्सर्वोत्कर्षेण वर्तते तत्र वैकुण्ठादीनां नित्यविहारास्पदत्वात्सर्वोत्कर्षेऽप्यैश्वर्यमिश्रमाधुर्यास्पदत्वादसंकुचितस्नेहचेष्टासम्पत्तिपत्तेरत्र तु माधुर्यैकप्राधान्येन तदसङ्कोचमभिप्रेत्य सर्वोत्कर्षमतिः तथापि नित्यविहाराभिज्ञानामेव तज्ज्ञानं नान्येषां तव जन्मना तु अधिकं बहुतमं जयति तत्र व्रजस्य स्वत एवानन्दघनत्वात्तदुत्कर्षस्यात्मार्थत्वासंभवेन सर्वलोकहितार्थत्वासम्भवेन सर्वलोकहितार्थतया परस्मैपदधातु प्रयोगः पूर्वस्मादुत्कर्षाधिक्यान्तरद्योतनाय आहुः। श्रयत इति पूर्वन्तु नित्यविहारास्पदत्वेऽपि अत्रत्यक्लृप्तशक्तीनामत्र त्वयाविहारो वैकुण्ठादिशक्तीनान्तु तत्र तत्रैव तव जन्मना तु वैकुण्ठेश्वरी सर्वसंपदैश्वर्याद्यधिष्ठात्री इन्दिराप्यत्रैव श्रयते ननु कदाचित्कीदृशी व्रजश्रीरिति परीक्षितुमाश्रिता भविष्यति तत्राहुः शश्वदिति वैकुण्ठात्प्राणेश्वरस्य तवेहावतारे तत्र मनोऽवलंबाभावादत्रैव निरन्तरम् श्रयते ननु ममागमने मत्प्रसादाय व्रजं शोभयितुं श्रिता भविष्यतीतिचेन्न श्रयत इत्यात्मनेपदप्रयोगाच्छ्रयणफलस्यात्मगामित्वप्रतीतेर्व्रजसंबन्धेनात्मसौभाग्यातिशयायैव श्रयणं नतु तच्छोभार्थं युक्तंचैतद्यदा भवांस्तत्स्वामी सच्चिदानन्दघन ईश्वरोऽपि व्रजं विचित्रवात्सल्यशृङ्गारादिरसप्रादुर्भावेन जनोपकाराय श्रयते तदा पतिव्रतायास्तस्यास्तदाश्रयणमिन्दिरेत्युपलक्षणं तथा चेन्दिराया ईश्वर्या आश्रयणे कैमुत्यन्यायेन सर्वा अपि सर्वगुणाधिष्ठात्र्यो देवतास्तत्तद्गुणैः सह व्रजमेव श्रयन्ते नैतच्चित्रत्—

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते—
सुरा इति।

वाक्येनाकिञ्चनाया आल्पाया भक्तेः सद्भावे सर्वगुणैः सहतदधिष्ठातृसुरावासबोधनेन व्रजे भक्तसमूहास्पदे नित्यविहारस्थले तत्रापि तव सर्वजनगोचरत्वेनप्रादुर्भावे किमु वाच्यं तदवस्थानस्य अत एवाधिक्यमधिसर्वतः कं सुखं यथा स्या त्तथा जयति यद्वा कं शिरोऽधिकृत्य सर्वधामशिरोऽवतंसतया जयति एवं सर्वस्मिन् स्वत एव त्वज्जन्मना चानन्दसंप्लवनिमग्ने व्रजवासिनीनां त्वदीनां नो दुःखं नोचितमित्याशयेनाहुःदयितेति हे प्रियनाहिप्रियस्य प्रियाणां दुःखप्रदातुमुचितं तथा दयते नुकम्पते इति तस्य संबोधनं तथाचनह्यनुकम्पयापरदुःखकातराणां दीनैनैष्ठुर्यं युक्तमितिसंबोधनाभिप्रायः स्वस्वभावमनुसृत्य तावका दिक्षु त्वां विचिन्वत इति दृश्यतां त्वया ज्ञायतां ज्ञात्वा कृपापारवश्ये स्वयमेव प्रादुर्भविष्यति करुणानिधिरितिभावः यद्वा दृश्यतां त्वया प्रत्यक्षीभूयत ननु सर्वे मदीया इति को भवतीनां विशेष इतिचेन्न सर्वेषां तावकत्वेऽपि द्वा सुपर्णा सयुजा सखायाइत्यादिश्रुतिसिद्धसखित्वेऽपि स्वभ्रान्त्या न तथाभिमतिरस्माकन्तु वस्तुतस्तथाभिमत्या च तथात्वं तथाच

सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥

इत्यादिवचनैःसर्वभूतभीतिरक्षणप्रतिज्ञानां भवतः स्वाविरहदुःखं दिक्षु भ्रमणदुःखं मार्गणदुःखमित्येवं दुःखजातमनुचितं किं चात्र चित्रमिदं स्तावका ब्रह्मादयोऽपि त्वां द्रष्टुं व्रजं समायान्ति अत्रत्यास्तत्रापि स्वात्मनिवेदनेन त्वत्स्वीकारेण च तावका दिक्षु त्वां विचिन्वते इति दीपसमीपे तमोन्यायापत्तिः यदि तावकत्वेमव त्वत्तुष्टिकरं तर्हि वयं तावका अपि स्तावका जाता इत्यधुनापि प्रसीद ननु मदीयाश्चेन्मद्वियोगे कथं जीवथ तत्राहुः। त्वयि धृतासव इति। त्वयि विषये धृता असवो बाह्याभ्यन्तरकरणानि प्राणाश्च याभिस्तास्तव गुणगानकथारसपानादिनास्मज्जीवनं त्वत्प्रविष्टप्राणानां मृत्युप्रवेशद्वारा त्वयि निमित्तभूते धृता असवो यासां तास्तथा त्वयैवान्तर्यामिणा दुःखदानायास्मदसवो धृताः यद्वा

### श्रीरामनारायणकृतभावभावविभाविका ।

त्वयि त्वद्दर्शनार्थं धृता असवो याभिस्तास्तथा च यावत्त्वद्दर्शनाशा तावदेवास्मदसवस्तदाशाभङ्गे सद्य एवास्मन्मरणमिति भावः । यद्वा त्वयि त्वन्निमित्ते अस्माकं प्रियाणां मरणे तव खेदो माभूदिति धृता असवो याभिस्ताः ॥ १ ॥

———

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एकत्रिंशे शुभाध्याये गोपिकागीतसंज्ञके-
प्रार्थयन्त्यो जगुः कृष्णं प्रेम्णा गोप्य इतीर्य्यते ॥

अहो तस्य कलगीतेनाकृष्टा वयं यथा तदन्तिकं प्राप्तास्तथा सोऽप्यस्मद्गीतेनाकृष्टोऽस्मदन्तिकं प्राप्स्यतीत्याशयेन गानप्रवृत्तानां भगवत्प्रियाणां गानमुदाहरति । जयतीति । मङ्गलार्थमादौ जयतीति प्रयोगः तथाच मङ्गलार्थकत्वादादौ क्रियापदप्रयोगो न दोषावहः अधिकमहो-व्रज कृतार्थतार्थं कृतावतारेण त्वया सर्वोऽपि व्रजः कृतार्थीकृतस्तत्रत्या वयं किमर्थमुपक्ष्येमहि इत्याशयेनाहुः । तवाजस्य जन्मादिकारयविधुरस्य जन्मना स्वेच्छयात्र विलसितेन दिव्येन जन्मना प्रादुर्भावेन व्रजस्य स्थानत्त्वाज्जयति समस्तभूमिः भूर्भुवः स्वर्लोकप्रदेशेभ्यः सर्वेभ्यो ब्रह्मलोकान्तेभ्यः उत्कर्षेण वर्तते तत्राप्यधिकं वैकुण्ठादपि जयति यद्यपि तत्रापि भगवान् वर्त्तते तथाप्येवं विधं जन्मादायेवंविधा लीला नाचरति यद्यपि जन्मस्थानं मथुरा तथापि तत्रत्यानां तदुपलभ्याद्देवकीवसुदेवाभ्यामपि नन्दयशोदानन्तजन्मोपलब्धमपितु विष्णुस्वरूपदर्शनमात्रमत्रत्यलीलादर्शनन्तु सर्वस्यापि सुकरमतो व्रज एवोत्कृष्टतम इति भावः । ननु मज्जन्मना व्रजस्य परमोत्कर्षो भवतीभिः कथमवगत इति तत्राहुः । श्रयत इति । हि यस्मादिन्दिरा श्रीः अत्र व्रजे श्रयते वैकुण्ठे तु सैव प्राधान्यात्सर्वैराश्रयत इत्यर्थः । शश्वत्सर्वदा तत्रतु सैव निर्भयाभातस्तस्याः नैश्चिन्त्यान्न सर्वदाश्रयणमावश्यकमत्रतु वह्वीनां सपत्नीनामस्माकं सत्वादयसरलाभाय सर्वदा सेवनं युक्तं च तत् पतिव्रताशिरोमणिभूतायास्तस्याः भक्तेष्वनुग्रहातिशयं ख्यापयितुमन्याधीनतया वर्तमानस्य पत्युरनुवर्तनमिति भावः । यस्मादस्मदर्थमत्र भवतो जन्म यस्माच्च नास्ति लक्ष्म्याः भयं तयाऽऽक्रान्तत्वादतः हे दयित ! दृश्यतां त्वया प्रत्यक्षीभूयतां प्राणप्रियस्य प्रत्यक्षं तव प्राणस्थितिसाधनमिति सम्बोधनाशयः किञ्च तावकाः व्रजस्त्रियस्त्वां दिक्षु विचिन्वते तथा चाऽत्रानुग्रहार्थमवतीर्णस्य तव ब्रह्मादिभिरन्वेषणमुचितं ननु व्रजवासिभिरिति भावः । ननु युष्माकं तादृशी भक्तिर्नास्ति इति कृत्वाहं तिरोहितइति चेत्तत्राहुः । त्वयि धृता असवः प्राणाः सर्वेन्द्रियाणि याभिस्ताः तथाचैवं विधास्त्वदीया अनाथवद्दिक्षु भ्रमन्तीतीदं महदसङ्गतमिति महद्दैन्यं व्यज्यते अनभिज्ञापक्षे हे दयित ! ते जन्मना व्रजस्य सर्वोऽपि जनोऽधिकं जयति यद्दिनमारभ्यात्र तव जन्म जातं तद्दिनमारभ्य ब्रह्माण्डस्थेषु मध्ये कस्माच्चिदपि व्रजवासिनां मध्ये कस्यापि पराजयो न जात ऐश्वर्यस्य परा काष्ठा ध्वनिता इन्दिरा सम्पदादिरूपा श्रीरपि अत्र व्रजे शश्वन्निरन्तरं श्रयते श्रीरिति स्वनाम्नः सार्थक्याय व्रजमलंकृत्य वर्त्तते हि प्रसिद्धमिदमिदानीं लोकत्रये तथा च नारायणसमो गुणैरिति ज्योतिर्विदग्रगण्येन गर्गाचार्य्येण भवज्जन्मपत्रे लिखितत्वा नारायणसमत्वं त्वय्यनुभूयते व्रजे वैकुण्ठतुल्यत्वमतो ऽस्माकं विरहरहितवैकुण्ठवासिसमानत्वं कुतो नास्ति तस्मादस्मास्वपि तथात्वं सम्पादयितु मवश्यमस्माभिर्भवान् दृश्यतां ननु वैकुण्ठवासिनां नारायण इव युष्माकं नाहं प्रेष्ठ इति चेत्तत्राहुः दिक्षु तावका इति सर्वासु दिक्षु यावच्छक्त्याऽव्याप्यऽऽस्माभिरन्विष्यते तथापि भवान्न लभ्यते तत्र वयं किंकुर्म इति भावः तत्रापि तावकाः शश्वदनन्या अत एव त्वामेवानेनासमाहितता निरस्ता ननु परीक्षार्थं तिरोहितेन मयावगंतं नाद्यापि युष्मत्प्रेमपरिचयावस्थात्सम्पन्ना मद्विरहोऽपि जीवनादर्शनादितीति चेत्तत्राहुः । त्वयि त्वत्प्राप्त्याशया धृतासवः जीवन्ती त्यर्थः तन्निवृत्त्यातु तावकानां जीवनं दुर्लभमतो झटिति दृश्यतां मरणपर्य्यन्तं परीक्षाया अनुचितत्वादिति भावः । मानिनीपक्षे तव व्रजो यासामस्माकं जन्मना अधिकं जयति श्रीश्च शश्वदत्रैव श्रयते तथाभूतास्तावकास्त्वां विचिन्वन्ति इति दृश्यतां ज्ञायतां परमोत्कर्षैश्वर्य्यादिहेतुभूतस्वजनदुःखाऽपरिज्ञानरूपमन्ध्यं नोचितमिति भावः । नच साधारणसम्बन्धः किन्तु प्रेष्ठो भवानीति सम्बोधनाशयः किञ्च त्वयि धृतासवः त्वत्प्राप्त्याशया धृतजीवनाः तथाच तन्निवृत्त्या मृतास्वस्मासु तवापि परमोत्कर्षादिकं नश्यतीति भावः । यद्वा ननु दोषेत मयि वियुक्ते भवतीनामेतावत्पर्यन्तं कथं प्राणा देहे स्थिता इति चेत्तत्राहुः । त्वयीति । कठोरशिरोमणिभूते असंख्यातस्वसखीजनपरमतापहेतुक्रीडापरे स्त्रीदुःखजनितसुखाम्बुधिमग्ने धृताः स्थापिताः प्राणा याभिस्ताः तथाच यथा स्वगृहे दह्यमानेऽप्यन्यदीयगृहस्थं वस्तु न दह्यते तथा त्वयि स्थितत्वादस्मत्प्राणानामेतावत्पर्यन्तं रक्षा जातेति भावः । यद्वा यद्यपि तव जन्मना व्रजोऽधिकं जयति श्रीः शश्वदत्रैव श्रयते तथापि वृथैवेदं सर्वं यतः त्वयि धृतासवस्त्वदर्पितप्राणा दयस्तावकास्त्वां विचिन्वते अद्यापि दुःखिता एव सन्ति तस्मात्सुहृदननुग्राहिकायाः समृद्धेर्वैय्यर्थ्यं दृश्यतां ज्ञायतां तद्वैयर्थ्यपरिहाराय प्रत्यक्षीभूयतामिति वा दयितत्वात् तवेदं हितं वदाम इति सम्बोधनाशयः निवृत्ति पक्षे अधिष्ठानभूतचिदात्मनैवेदं देहादिसमस्तं शोभत इति श्रुतय आहुः । जयतीति । हे दयित ! परमप्रेमास्पदः तव जन्मना प्रादुर्भावेन व्रजो देहेन्द्रियसङ्घातो ऽधिकं जयति सत्तास्फूर्तिवत्तयाऽवभासते तथेन्दिराशोभाप्यत्रैव निरन्तरं श्रयते सौन्दर्य्यादिगुणाक्रान्ततया प्रतीयते तस्माद्यस्यात्मनस्तव सत्तादिना मिथ्याभूतस्यात्यन्तमनित्यस्याप्येवं प्रतीतिस्तेन त्वया दृश्यतां विद्वदनुभवविषयत्वं प्राप्यतां के ते विद्वांस इत्यपेक्षायामाहुः ये त्वयि धृतासवस्तावकाःतानि सर्वाणि संयम्य युक्त आसीतमत्परःमच्चित्ता मद्गतप्राणा इत्यादिनोक्तलक्षणाः भवदीयास्त्वां सर्वाधिष्ठानभूतं परमात्मानं विचिन्वते अन्वेषणपराः सन्ति तथाच पञ्चकोशविवेकेनच आत्मकान्वेषणप्रकारउक्त स्तैत्तिरीयश्रुतौ तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरआत्मा प्राणमयः तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तरात्मा मनोमयः तस्माद्वा एतस्मान्मनोमयादन्योन्तरात्माऽविज्ञानमयः तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मानन्दमयस्तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरपक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा सन्नेव भवत्यसद्ब्रह्मेतिवेद चेत् अस्तिब्रह्मेतिचेद्वेद सन्तमेनं ततो

**शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा ॥**
**सुरत नाथ ! तेऽशुल्कदासिका वरद ! निघ्नतो नेह किं वधः ॥ २॥**

विदुरिति यद्वा व्रजः श्रुतिकदम्बस्तव जन्मना प्रादुर्भावेन प्रकटवेदार्थभूतेन त्वयाधिकं जयति शोभाञ्च महतीं प्राप्नोति हि यस्माद्देतो ये त्वयि धृतासवस्त्वां विचिन्वते तेषां श्रुतिकदम्बेमवान्दृश्यतामित्यर्थः । यद्वा तवाविर्भावेन व्रजः सङ्घातो ऽधिकं जयति श्रीश्च विद्वद्देहादौ शश्वच्छ्रयते अतो ये विचिन्वते तेषां दृश्यताम् एषु पद्येषु पादद्वितीयाक्षरं हलैक्यं केषुचित्पादेषु प्रथमसप्तमाक्षरं हलैक्यं आलङ्कारिकसमयसिद्धसावर्ण्यात्क्वचिदैक्यमितिद्रष्टव्यम् एकादशाक्षरं त्रिष्टुप्संज्ञके छन्दसि चतुःषष्ठ्युत्तरपडशीति तमोभेदः ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

...ष्णगमनाकाङ्क्षिताः कृष्णं जगुरिति यदुक्तं तदेकविंशे प्रपञ्चते । जयतीति । हे दयित ! हे प्रिय ! ते जन्मना व्रजः अधिकं यथा भवति तथा जयति उत्कर्षेण वर्तते तथाऽत्रेन्दिरा लक्ष्मीः शश्वन्निरन्तरं श्रयतेव्रजमलंकृत्य वर्तते एवं सर्वस्मिन् व्रजे कृतार्थतां प्राप्ते अत्र तु तावकास्त्वदीयाः गोपीजनाः त्वयि त्वदर्थमेव कथंचिद्धृता असवः प्राणा यैस्ते त्वां दिक्षु विचिन्वते मृगयन्ते हि अतो हेतोस्त्वया दृश्यतां प्रत्यक्षीभूयताम् ॥ १ ॥

---

भाषा टीका ।

गोपी गीत गान कर ने लगीं हे गोविंद हे प्रिय आप के जन्म हो नेते या व्रज की शोभा सबलोकों से बडी भारी है गयी है श्रीमहालक्ष्मी जी या व्रज में सदा निवास करैं हैं या व्रज मे एक तुमारी हमहीं दुःखी हैं सब दिशा में आप को ढुण्ढती फिरै है और काऊ प्रकार आशा मे ही हमारे प्राण ठहरे है नहीं तो तबही चले जाते ॥ १ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्र स्वतन्त्राणां बह्वीनां वक्तृत्वादपरा आहुरिति सर्वश्लोकेष्ववतारणा अथापि संगतिरुच्यते । तत्र विचिन्वन्तु मम किमिति चेत्तत्राहुः । शरदिति । शरदुदाशये शरत्कालीने सरसि साधु जातं सम्यक् जातं यत्सरसिजं विकासितं पद्मं तस्योदरे गर्भे या श्रीस्तां मुष्णाति हरतीति तथा तया दृशा नेत्रेण हे सुरतनाथ ! सम्भोगपते ! वरदाभीष्टप्रद ! अशुल्कदासिका अमूल्यदासीर्नो निघ्नतो मारयतस्ते तव त्वया क्रियमाण इह लोकेऽयं वधो न भवति किं शस्त्रेणैव वधो वधः किं दृशा वधो वधो न भवति किंतु भवत्येव अतस्तव दृशापहृतप्राणप्रत्यर्पणाय त्वया दृश्यतामिति यथा सम्भवं सर्वत्र वाक्यशेषः ॥ २॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मुषेति दृशः परमतस्करत्वं ध्वनितम् उत्तमकाले जलदुर्गे साधूनामुत्तमद्रव्यान्तर्न्यस्तलक्ष्मीतुल्यमहाधनस्य हरणात् अत ईदृशचौरेण वधोऽपि सुघट एवेति भावः वस्तुतश्चैवं दृशः परमसौन्दर्य्यमुक्तं दृशेत्येकयैव भावविशेषसूचनात् क्षोभकत्वं यद्वा एकयापि दृशेत्यर्थः अशुल्कदासिका इति मूल्यं विना क्रीता अधमदासीरपीत्यर्थः सम्बोधनाभ्यां वधस्यानौचित्यं सूचितं वधेन सुरतस्य भक्ताभीष्टदत्वस्य च पूर्वदत्तवरस्य वा हानेः श्लेषेण सुरतेश्वरेति त्वयैवास्मासु तदिच्छाकारिता तत्र च वरदानेन दृढीकृतेति न तत्रास्माकं धार्ष्ट्यादिदोष इति भावः अन्यत्तैर्व्याख्यातं यद्वा ननु प्राज्ञप्रवर ! अस्मन्मरणात्त्वयि दोषप्रसङ्गः स्यादेवेत्याहुः । शरदिति । दृशा सुरतनाथ दृशैव सम्भोगसुखप्रदोऽसीत्यर्थः । निघ्नतः तादृग्दानानाचरणात् वधः तज्जन्यं पापमित्यर्थः । आयुर्घृतमितियत् अन्यत्समानं यद्वा तादृशदृशैव तद्रूपेण शुल्केन दासिकाः किंवा शुल्कं विनैव दासीः निघ्नतः विरहार्त्या त्यागेन चेति स्वत एवायाति तदुपसत्तेः सम्बोधनद्वयं प्रणयकोपात् विरहार्त्तिविशेषाद्वातथाहि सुष्टुरतानां जनानामुपतापकेति नाथतेरुपतापार्थकत्वात् निजवरच्छेदकेति लज्जाधर्माद्यावृत्तिच्छेदकेतिवा "दोअवखण्डने" अतो निजदोषपरिहारार्थमप्यागम्यतामिति भावः ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शरदुदाशये इति । जन्मकालस्थानयोः साद्गुण्यं दर्शितम् । साधुजातेति जन्मनः । सदिति जातेर्व्यक्तेश्च । उदरेति तत्रापि तदन्तःकोषस्य इति कमलस्य शोभा परमकाष्ठा दर्शिता तादृशत च्छ्रीमुषा स्वश्रिया तच्छ्रियं हरत्येवेत्यर्थः यत्र यत्र सा स्फुरति तत्र तत्र तत्श्रीर्न दृश्यते इति नयनयथीयुञ्जानया नूनं चोर्यत एव सेति भावः । दृशेत्येकवचनमेकयैव भावसूचनात् । एकयापि किमुत द्वाभ्यामिति श्लेषात् । दृशेति सुरथनाथेत्यत्राप्यन्वयः । हे दृशैव सुरतयाचकेति त्वयैवास्मासु तदिच्छाकारिता तत्रच वरदेति वरदानेन दृढीकृता चेति तत्रास्माकं न दोषः । अशुल्कदासिका इति प्रत्युत गुणा एव भवन्तु सोऽपि दोषः सम्प्रति तु महानेवेत्याहुः निघ्नत इति । श्लेषेणापि तास्मिन्नेव दोषार्पणाय चौर्यक्रियाभिनिवेशो दर्शितः । सद्भिः चौरेषु त्रिधा सम्भवति साधूनामपि सम्पत्त्यादानादन्युनकष्टदोषस्यागणनेन । अतिनिगूढपरवस्तु ज्ञानेनातिदुर्लङ्घ्य लङ्घनेन च । तत्र प्रथमं सत् सरसिजेतिपर्यन्तेनोक्तम् । शरदुदाशय इति स्वच्छतादिगुणयुक्तस्य जनयितुः साधुजातेति जन्मनः सदिति स्वरूपगुणस्य च प्रशंसनात् । द्वितीयं महाजलान्तः सरसिजोदरे विलीयस्थितत्वेन । तृतीयञ्च वर्षानन्तरकालीनत्वात् अतिपूर्णस्योदाशयस्य दुरवगाहमध्यदेशत्वेन सहस्रपत्रास्य-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सरसिजोदरस्य दृग्भिर्दुर्भेदत्वेन चेति किञ्च त्वद्वयदिव तथा निगूढापि श्रीनायिका मुद्रा। ततः सरलानां व्रजवृन्दावनयोर्निर्भयं भ्रमन्तीनामस्माकं वा का वार्त्ता भवत्वस्माकमपि तद्वारा मोषणं किन्तुसा कृततादृक्कौटिल्यापि स्वचक्षुपोरन्तरे रक्षिता वयन्तु तादृशसरला अपि चलान्मोषणे प्रत्युताशुल्कदासिकाः तत्रेर्ष्यां त्यक्त्वा निरुपाधितया सेवमाना अपि तद्द्वारा पुनर्निहन्तुमारब्धाः इति परमान्याय्यमित्याहुः। निघ्नत इति। नेह किं वध इति चौर्याल्लोकेन न ज्ञायतां नाम इत्यपि किं न स्यादित्यर्थः सम्बोधनद्वयेन चेदं ज्ञाप्यते अहो ज्ञातं तत्तत्सर्वं त्वयैतदर्थमेव मृषा प्रपञ्चितमिति। अन्यत्तैः। यद्वा तादृशदृशैव शुल्कदासिकाः। तद्रूपेणैव शुल्केन दासिका इत्यर्थः। ता दृशोरपि निघ्नतः त्यागेन मारयतः। हे सुष्ठुरतानां जनानामुपतापक! नाथतेरुपतापार्थत्वात्। तथा हे निजवरच्छेदक! अतो निजदोषपरिहारार्थमप्यागम्यतामिति भावः॥ २॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

शरदुदाशये शारदे जलाशये अशुल्कदासिकाः त्वद्गुणक्रीतीदासिकाः ते वधः वधदोषः किं नास्ति शस्त्रादिभिर्विना वधेऽपि वधदोषोऽस्तीत्यर्थः॥ २॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका।

अन्वयस्तुबाहुल्यात् प्रतिश्लोकमपराङ्मुखमितिरित्यवतारणाद्रष्टव्या तत्र यथासम्भवं पूर्वोत्तरवचसां गतिरुच्यते। तत्र विचिन्वन्तु मम किं तत्राहुः। शरदिति। शरत्कालिके सरसि सम्यग्जातस्य अनेन गम्भीराम्भस्समुद्भूतत्वमभिप्रेतं सत्सरसिजस्य सत्वमत्र सुस्पृष्टनालत्वरविकरविलसितत्वादिकं विवक्षितम उदरे गर्भे या श्रीस्तां मुष्णाति हरतीति रस्करोतीति यावत्तथा तया दृशा नेत्रेण हे सुरतनाथ! सम्भोगवर्द्धक! तदर्थं याचनीयेति वा हे आत्मपर्यन्ताभीष्टप्रद! तवाशुल्कदासिकाः मूल्यरहिताः दासीः मूल्यं विनापि दास्यम्प्राप्ताः शुल्कदासिका इतिच्छेदे तव सन्निधिना शुल्केन सौन्दर्यात्मकेनमूल्येनदासीरस्मान्निघ्नतां मारयतस्ते तत्र त्वया क्रियमाण इहैवलोकेऽयं वधो नभवति किं शस्त्रेणैव वधो वधः किन्नभवतीति भावः दृशा निघ्नतइत्यनेनदृशा नः प्राणानपहृतवत इत्यभिप्रेतम् अतस्त्वदृशापहृतप्राणप्रत्यर्पणं यत्त्वया दृश्यतामिति यथासम्भवं वाक्यशेषः॥ २॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

व्रजजनस्य आर्त्तिं हन्ति हिनस्ति नाशयतीति व्रजजनार्त्तिहा तस्य सम्बोधनं व्रजजनार्त्तिहन्! वीरशूर निजजनस्य स्मयो गर्वः तद्ध्वंसिस्मितवत् स्मितं यस्य स तथा तत्संबुद्धिः निजजनस्मयध्वंसनस्मितयुपपूर्वकामसमृद्ध्य विवितिधातोः योषितां समृद्धिकामानां नः कामसमृद्धिं पारयेति शेषः कथंकारं पालनमत्राहुः। भजेति। हे सखे! चारु सुन्दरं तव जलरुहस्य पद्मस्य सन्नमाननं प्रवृत्तिशून्यस्य यद्दर्शनेच्छास्यात्तादृक्शाकिंचन्मुखं दर्शयन् त्वत्किङ्करीः दासीः नो भज पालय स्म स्मृत्वा पत्यादीन्विहायार्धरात्रे वनं प्राप्ता इति भवे भव इतिद्विरावृत्तिः कर्तव्या जन्मनि जन्मनि किङ्करीरित्यर्थः। यद्वा भवे तादर्थ्ये सप्तमी अस्मद्भद्रार्थमित्यर्थः यद्वाऽस्मज्जीवनसत्तायां विवक्षितायाम् अन्यथामरणमेवास्मा कमापद्यत इत्यर्थः॥ २॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अन्यच्च व्रजस्यैवमुत्कर्षके इन्दिरया अप्यत्रैव शश्वद्धाने स्त्रीनिकरवधोऽत्यन्तायोग्यः यदि वा वदसि नाहं वो हन्मीति तदपि न अशस्त्रवधः किं वधो न भवतीत्याहुः। शरदुदाशय इत्यादि हे सुरतनाथ अथवा हे सुष्ठु रत हे नाथ दृशा अपणा अशुल्कदासिका अपणक्रीता दासीः उपेत्य दासीभूता इति यावत् इह वृन्दावनभूमौ किं वधो न सामान्यपुण्यस्थले एव जनो हत्यां न करोति त्वं नु इहापीति इह शब्दमहिमा दयित दृश्यतामिति पूर्वोक्ता साक्षाद्विभूतामिव मत्वा तद्दृशोर्भङ्ग्यादन्तः क्षोभमनुभवन्त्यः काश्चिदेव मुक्तवत्यः दृशा कीदृशा शरदुदाशये शरत्कालीने सरसि साधुजातं सम्यक् उत्पन्नं यत् सत् उत्कृष्टं सरसिजं तस्य उदरे या श्रीस्तां मुष्णातीति तथा तया चौरस्य तदङ्गान्यपि चौराणीत्यर्थः अथवा एवं भूताया दृशः अनुपघ्न्या इत्यर्थः तृतीयान्ते दृक् शब्दे लक्षणा यथा अन्नेन म्रियन्ते अन्नाद्युपलब्ध्येत्यर्थः यद्वा दृशा वरद अभिलापाप्रद एता दृश्यतां तदकृत्वा इह किंवधो न वधः इति न केवलं सुरतनाथोऽसि वरदोऽप्यसि हे वरद वरदकर्तृको वधोऽत्यन्तमनुचित एव॥ २॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

तामसी तु यथासंभवं प्रार्थयितुमदर्शनस्य वधसाधकत्वमाह शरदुदाशयइति। शरत्कालीनो योऽयमुदाशयः पुष्करणी तत्र साधुसम्यक्प्रकारेण जातं यत्सरसिजं कमलं तदन्तर्वर्तिनी या श्रीः तामपि मुष्णातीति तादृक्रूपया दृशा दृष्ट्वा हे वरद यो निहन्ति तस्य किं वधो न अपि तु वधदोषो भवत्येव येनैव साधनेन परस्य प्राणा गच्छन्ति तत्संपादनसाधको घातकः दोषभाग्भवति अनेन भगवद्दृष्टिः सर्वघातुकी निरूपिता आयुर्मनांसि च दृशा सह ओज आच्छेदिति वाक्यात् तथास्मानपि प्रायेण क्रूरदृष्ट्या पश्यसि अन्यथा कथं प्राणबाधा स्यात् रूपं त्वानन्दमयमिति दृष्टं तदैव जीवयेत् अतस्तदभावात्केवलं घातयस्येव किञ्च न वयं वधार्हाः यतो दासिकाः कुत्सितादास्यः नहि स्त्रियः अप्रयोजिकाश्चहन्यन्ते किञ्च वयं शुल्कदासिकाः त्वञ्च सुरतनाथ सर्वपुरुषार्थसाधकत्वेन सम्बोधनानि यथाधिकारं नियतानि यथाधर्ममार्गे हे धर्मपालक ब्रह्मण्य देवेश्वरेत्यादीनि अर्थे हे लक्ष्मीपते हे सर्वसिद्धेत्यादीनि तथामोक्ष हे मुकुन्द हे योगेश्वर! हेज्ञाननिधे इत्यादीनि धर्मार्थमोक्षार्थिभिरुच्यन्ते एवमस्माभिरपि सुरतनाथेत्युच्यते सुरतं सम्भोगः जगति यावानस्ति तस्य भवान्नाथः त्वदाज्ञाव्यतिरेकेण सुरतं जगति न प्रवर्त्तते अतो ब्रह्मणा कामेन वा लोके सुरतप्रवृत्त्यर्थं वयं शुल्करूपादासिका दत्ताः शुल्कः मार्गनिर्वाहकं द्रव्यं

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

...तिबन्धनिवर्तकं सुरतं चेद्भवत्येव निरुद्धं तिष्ठेत्तदा लोके रसो न भविष्यतीत्यस्मद्द्वारा त्वत्तः तल्लोके प्रसृतं भवत्विति वयमागताः तत्कार्यं दूरत एव स्थितं प्रत्युतास्मान्मारयसि एवं सति सर्वमेव कामशास्त्रं व्यर्थं स्यात् तृतीयः पुरुषार्थश्च न भवेत् अतः सर्वदा यदर्थं वयं प्रेपितास्तत्कर्तव्यम् अथवा यदा कदाचित् कर्त्तव्यम् इदानीं जीवयितव्या रूपप्राकट्येन दृशो मारकत्वमुपपादयन्ति । श्रीमुषेति । यस्तु चौरो भवति स घातको भवति यथा यथा चौरे नैपुण्यं तथा तथा घातकत्वं तदर्थमाहुः । उदरश्रीमुषेति । तत्रापि ये दुर्गजाताः ते अतिनिपुणाः तत्रापि जलदुर्गजाः तत्सरसिजं तत्रापि ते दुर्ग एव तिष्ठन्ति ते साधुजाताः प्रभवः तत्रापि प्रकाशवति काले शीताद्युपद्रवरहिते एवं देशकालस्वरूपादिभिः अशक्यचौर्य्यादपि पुरुपात् तदुदरवर्तिसर्वस्वनेता अन्तःस्थितप्राणान् साधारणगोपिकादीनां नेष्यतीति किमाश्चर्यं चौर्यं हि क्रियते वलिष्ठेन अपकीर्त्यभावाय तदत्र तु न भविष्यतीत्युक्तं किं वधेनेति अथवा अदृशा अदर्शनेन दर्शनमदत्त्वा निघ्नतः किं वधो न सुरतार्थमागतास्तद्वृतं दूरे अन्तरा मरणमुपस्थितं तथा सति सुरतस्याप्रकटितत्वात् नाथत्वमपि न स्यात् नहि योगी अश्वनिर्माणसमर्थोऽप्यश्वपतिरुच्यते प्रकटयति चेत्तथा तथा किञ्च अस्मद्वधे किमाश्चर्यं तवादर्शने लक्ष्मीरपि न तिष्ठेत्तदाहुः । श्रीमुषेति । उदरस्थिता श्रीश्चेद्वहिरानीता तदैव म्रियते अपुष्टत्वात् आमगर्भवत् यद्यपि तस्याः जीवने कालद्रव्यदेशवस्तूनि वहून्येव सन्ति तथापि त्वददर्शने न जीवति तथा वयमपि किञ्च त्वं सर्वेषां वरान् प्रयच्छसि अस्मांस्तु मारयिष्यसीति महदाश्चर्यं वरदाता हि प्रत्यक्षो भवति अथवा ते वयममूल्यदासिका धर्मदासिकाः अतो न हन्तव्याः एवमनेकविधक्रौर्यभावनया काश्चिद्भगवन्तमुपालभन्ते अन्तःस्थितो रसः पुष्टो वहिश्चेन्न विनिर्गतः तदा पूर्णो नैव भवेदिति वाङ्निर्गमस्तथा ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु किमहं युष्मभ्यं दुःखं दित्सामि यदेवं सुचयथेति तत्र त्वमस्मान् खलु हंस्येवेत्याहुः । शरदिति । दृशैव सुरतं नाथसि याचसे अथच दृशैव वरदः अभीष्टसुखं ददासि अथच तयैव दृशा प्रेमानलपुञ्जप्रक्षेपिण्या निघ्नतोऽशुल्कदासिका अस्मान् मारयतस्तव इह किं न वधः कि शस्त्रेणैव वधो वधः दृशा वधो वधो न भवति अपि तु भवत्येव तस्मात् हे वरद ! अभीष्टं दददेव अभीष्टमैहिकं पारत्रिकञ्च सुखं द्यसि खण्डयसीत्यर्थः किञ्चास्मासु ते स्वत्वञ्चेद्भवति तर्हि स्वधनं पालय जालय वा न दोषः । वयन्तु त्वया न शुल्केन क्रीता नापि परिणयेन गृहीताः केन्त्वशुल्कदासिका वयं स्वयमेव मौग्ध्येनाभूमेत्यर्थः । तत्र तस्य मोहनोन्मादनमहाचौरचक्रवर्त्तित्वमेव हेतुं वदन्त्यो दृशं विशिंषन्ति शरत्कालसम्बन्धी य उदाशयः गम्भीरस्वच्छजलपूर्णस्तडाग इत्यर्थः । तत्र साधु जातं साधु समयप्रदेशप्रकारतो जातं सत् जात्याप्युत्तमं यत् सरसिजं विकासितपद्मं तस्योदरस्थां श्रियं शोभां सम्पत्तिं मुष्णाति चोरयतीति तथेति दृशः सौन्दर्यसारस्यशैत्यसौकुमार्योण्यसाधारणान्युक्तानि या खलु तादृशं जनदुर्गमप्युल्लङ्घ्य तादृशाभिजातस्य सज्जनस्यान्तःपुरं प्रविश्य सम्पत्तिं चोरयति सा तव दृक् चोरिका केनापि मोहनोन्मादन धूलिप्रक्षेपणोन्मादिताभिरस्माभिः स्वयमेव दत्तं सुरतधनं प्राणांश्च नीत्वा तुभ्यं दशावत एव पूर्वमुक्तं त्वयि धृतास्व इत्यतो वयं त्वया निर्धनीकृत्य हता एवेति परःसहस्रस्त्रीवधपातकं त्वया गृहीतमेवेति ध्वनिः । अतः पापाद्भीत्यापि दर्शनं देहीत्यनुध्वनिः ॥ २ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

ननु विचिन्वन्तु नाम स्वकपोलकल्पितप्रेमाणस्तत्र मम को दोप इत्याशङ्क्य सर्वस्य सर्वापहारिण्या तव दृशैव सर्वस्वं हृतमस्माकमिति तस्मिन्नेव दोषं पर्य्यवसाययन्त्य आहुः । शरदिति । जन्मकालस्थानयोः साद्गुण्यं साधुजातेति जन्मनः सदिति जातेर्व्यक्तेश्च उदरेति तदन्तः कोशस्येति प्रतिपदं शोभा सूचिता तादृशस्य ते श्रमुखस्वश्रिया तामपि न्यक् कुर्वन्त्येत्यर्थः । अयंभावः यत्र यत्रैष स्फुरति तत्र तत्र तच्छ्रीस्तिरस्कृतेव लभ्यत इति नवनवश्रीयुजानया सैव नूनं चोरितेति चौर्यक्रियाभिनिवेशो दर्शितः सच चौरेपु त्रिधा संभवति साधूनामपि संपत्यादानादत्युत्कटदोपस्यागणनेन अतिनिगूढपरवस्तुज्ञानेन अतिदुर्लङ्घ्य लङ्घनेन चेति तत्राद्यः सत्सरसिजेत्यनेनोक्तः शरदुदाशयेति स्वच्छतादिगुणयुक्तस्य जनयितुः साधुजातेन जन्मना सदिति स्वरूपस्य गुणस्य प्रशंसनात् द्वितीयो महाजलान्तःसरसिजोदरे निलीनायास्तस्याः परिज्ञानेन तृतीयश्च वर्षानन्तरकालीनत्वादतिपूर्णस्योदाशयस्य दुरवगाहमध्यदेशस्थत्वेन सहस्रपत्राख्यसत्सरसिजोदरस्य दृग्भिर्दुर्भेद्यत्वेन चेति एवंच त्वद्भयादेव तेन निगूह्यावस्थापितापि श्रीर्नायिका दृशा मुष्टेति तवैव महान्दोपो दारापहारित्वेनाततायितापीति भावः तस्य द्विजत्वं च ब्रह्मणोऽपि जनकत्वेनान्तः सूक्ष्मसूत्रोपवीतधारित्वेन "कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यत" इति स्मृतिसंवादान्मित्रामित्रत्वेन तद्दर्शनैकजीवनत्वादिना स्पष्टमेव ततश्च ब्रह्मस्वापहारित्वं सिद्धं तत्र स्त्रीधनापहारित्वं सुतरामेवेति तत्रापि दृशोऽन्येकत्वेनैकयापि किमुत द्वाभ्यां यद्वा सुरतनाथ दृशा त्वयैवास्माकं तदिन्दकरितेति भावगोपनम् तत्र च वरदेति वरदानेन दृढीकृतेति ततश्च शुल्कदासिका निघ्नतः नितरां मारयतः । नेह किं वधः स्वरूपेण दृशा वशीकुर्वत इत्यर्थः । अधीनो निघ्न आयत्त इत्यमरः लोकैश्चौर्यं माशायतां नाम हत्यापि किं न स्यादिति भावः । यद्वा दृशा निश्चताः नहि शस्त्रेणैव वधो वधः अपि तु दृशापीति यद्वा दृशा वरद ततश्च निघ्नत इति विश्वासघातकत्वमिति एवंचदृशोः सरसिजरूपकेणानुरागित्वं सूचितमिति संक्षेपः ॥ २ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

ननु मया तु नैव कस्या अपि वधः क्रियते भवतीभिः स्वयं म्रियते चेत्किं मम दूषणमित्यत आहुः । शरदुदाशय इति । शरदिति जन्मकालश्रैष्ठ्यं उदाशय इति तद्देशस्योत्तमत्वं साधुतया जातेति जन्मकारणानुगुण्यं सदिति स्वरूपोत्कर्ष एतादृशो यः

### श्रीरामनारायणकृतभावभावविभाविका।

सरसिजः पद्मः पद्मालयालयस्तस्योदरे तद्दलेषु वर्तमाना या श्रीस्तां मुष्णातीति तथा तया शरत्सरोजान्तर्गर्भदळश्रीपराभवकारिण्या सानुरागारुणायततापो पशमना ल्हादकदृशा अशुल्कदासिका नो निघ्नतः किमिह लोके प्रेमपथि च वधो न भवति शस्त्रादिना निघ्नत एव वधोऽपि तु शस्त्रादीनां प्रतिनियतवधसाधनत्वात्तैर्वधो न तथा तापापहरणाल्हादकसानुरागदृशा स्वभावपरित्यागेन तद्विरुद्धवधाचरणमतिनैष्ठुर्यमिति भावः। एवं करणे स्वभाववैपरीत्येन वैचित्र्यद्योतनं तथा करणस्य कर्त्रधीनतया स्वभावत्यागसम्भवेऽपि स्वतन्त्रे कर्तरि स्वभावपरित्यागानौचित्यमाहुः। हे सुरत! सुष्ठु शोभना सर्वसौख्यप्रदाभ्युदयापवर्गकामधेनू रतिः प्रीतिर्यस्य यद्वा सुष्ठु कामसुखप्रदत्वेऽपि भवबन्धनाननुबन्धिनी रतिर्मिथुनविहारो यस्य तथा हे नाथ! नाथृ नाधृ या च्ञोपतापैश्वर्याशीःष्विति विधाना दस्मत्स्वामिनी श्वरसमर्थ अस्माभिर्याच्यमानस्वभावत एवा शीःप्रद यद्वा सुष्ठु रतिरनुरागो येषां तेषां नाथ स्वाभिमभिलषिताशीःप्रद! यद्वा सुरतविहारे नाथ ईश्वर समर्थ याचिताशीःप्रद तत्रापि विशेषतो वरदास्माकं वरप्रदातः न त्वया स्वतन्त्रेणेश्वरेण स्वस्वभाव वरदानयो विरुद्धं विधेयमिति भावः। यद्वा हे सुरतनाथ! सुरतानां सुष्ठ्वनुरागवतामपि नाथ उपतापक तथा वरद स्वदत्तानपि वरान् द्यति अवखण्डयतीति तथा स्वभावत एवातिक्रूर नत्तुक्तं सोपपात्तिकमभियुक्तैः अटति भवानवला कवलायवनेषु न तत्र विचित्रं प्रथयति पूतनिकैव वधू वधनिर्दयबालचरित्रमिति अतः स्वस्वभावानुसारेणैवाशुल्कदासिका अपि नो निघ्नतः किमिह वधो न स्यात्स्यादेवेति भावः ननु न मया वधः क्रियते किमिति वृथैवोपालम्भो दीयते तत्राहुः। दृशा नेत्रद्वारानिघ्नत इति स्वयमनिघ्नतश्चौरद्वारा हन्तुरपि राज्ञो वधः स्यादेव ननु कथं मम दृशश्चौरत्वं तत्राहुः। शरदित्यादि। वहिः शरदृतुरक्षिते उदाशये जलपूरिते निखाते वर्तमानं वहिः सहायान्वितं जलदुर्गरक्षितं साधुजातं साधु तया बहु कुसुमशरशररूपपत्र प्रकारैः प्रादुर्भूतं सत् सुदृढदुर्गात्मकं यत्सरसिजं पद्मं पद्मालयालयस्तदुदरे वर्तमानां सुदृढजलशस्त्रदुर्गगतामपि श्रियं मुष्णाति तथा तया तादृक् श्रीमुषश्चौरस्य नास्मद्वधो दुष्कर इति भावः। दृशोरेकवचनं जातौ एकयैव दृशापाङ्गनिरीक्षणेन वधसम्भवाद्वा एकयैव वधसम्भावनायां द्वाभ्यां तु कैमुत्यन्यायेन प्रलय एव स्यादिति सूचनाय वा अत्रोदरश्रीमुषत्वेनातिनिगूढदृगप्रवेशस्तुधानं तथा शरदित्यादिभिर्दुर्गमदुर्गप्रवेशेन हरणं पूर्वव्याख्यातरीत्या साधुजातसत्सरसिजानां साधुशीलानां सतानाजन्मनीथसेविनां श्रीहरणेनातिनैष्ठुर्यं त्रिधा चौरक्रिया दर्शिता यद्वा इत्थं शरदि तीर्थजलमध्ये कृतालयाया बहुपत्रपुटोदरे वर्तमानतया एकान्तरतायाः पद्मासनस्थतया च सम्यग्योगिन्याः श्रियोऽप्येकान्तरतायाः संयोगिन्याः कान्ताया इव शफरीविहारदर्शनेन सौभरेरिव सफरीचपलदृग्विहारहारतया जारशिरोमणिताविष्कारपरयादृशैव नुरतनाथ सुरतसुखयाचक तथैव याञ्चयास्मदभिलाषानुद्धौ तया दृशैव सुरताशीःप्रद वरदतया दृशैव पद्मरागजलजनीलमणिप्रभतया शुल्करूपया क्रीताः शुल्कदासिका नः तया दृशैव स्मरशररूपया निघ्नतो विश्वासघातिनः किमिह वधो न स्यात् यद्वा अशुल्कदासिका नः स्वविरहेण निघ्नतस्तव सम्मतो योऽस्मद्वधः स किमुक्तरीत्या चौरावतंसयासुमशरशरप्रधानपद्मश्रीहारया मनोरमरामामारया मारशराकारया दृशा इह न स्यात् अस्मद्वध एव चेत्सम्मतस्तदा दृशैव कुरु ननु विरहेणेति भावः।यद्वा अशुल्कदासिका नो विरहेण निघ्नतस्तव यः किम्वधः किमप्यनिर्वचनीयो वधः सम्भावितस्तेन विभेमि चेत्स इह तादृशदृशैव न स्यात् अन्यथा त्वद्दृङ्मेलनं विनातु स्यादेव यद्वा जारैरपि भामिनीनामपहार एव क्रियते ननु संहारः कैश्चिदतिक्रूरैर्वधोऽपि चिन्त्यते चेत्सोऽप्यप्राप्तानां ननु अशुल्कदासिकानां तव तादृशा दृशापि निगूढाया अपि श्रियो मोषणमेव कृतं ननु वधस्तथा च तादृङ्निगूढ श्रीमुषा दृशा न स्वत आगतानां वने रहः विहरन्तीनामशुल्कदासिकानां मोषणं दुष्करमिति तदेवोचितं यत्तु विरहेणेह निघ्नतो वध इति तत्किं न किमपि अनुचितमेवेति भावः ॥ २ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अहो यो गुडदानेन म्रियते तस्मै विषं किमर्थं देयमिति लोकन्यायादीपदारक्त कटाक्षसाध्यास्मद्वधार्थं तिरोधानं नोचितमित्याशयेनाहुः। शरदिति। शरत्कालीनो यः स्वच्छजलाशयस्तत्र साधु सम्यक्प्रकारेण जातं सत्समीचीनं यत्सरसिजं कमलं तदन्तर्वर्तिनी या श्रीरारुण्यशोभा तां मुष्णातीति तथा तादृशरूपया रोषेणेषद्रक्तया दृशा नेत्रेणामूल्यदासिकाः नो निघ्नतो मारयतस्तव त्वया क्रियमाणोऽयमिह लोके किं वधो न भवति किं विरहानलज्वालया वधो भवति यतो हे सुरतनाथ! सुरतस्य सम्भोगस्य नाथ तत्प्रद तथा च सुरतनाथस्य तव रोषदृष्ट्यैवास्माकम्मरणं सुकरमितिभावः। ननु रोषतिरोधानयोरुभयोरपि मरणहेतुत्वाविशेषात्किमर्थमेवमुच्यत इतिचेत्सत्यं तथापि क्षमया दिना रोषदृष्ट्यामस्यापि सम्भवादस्तिनरोष इत्याशयेनाहुः। हे वरदेति समक्षे प्रेष्ठेऽपि प्रार्थिनां वरं दत्तं संपादयितुं शक्यमसमक्षे त्वशक्याप्रतीकारतेति भावः। तथाचास्मदर्पनाश एव भवतः कर्तुं समीहितो ननु प्राणवियोगः करुणानिधेरिष्टदेवस्य तत्साधने प्रवृत्त्यसम्भवादतस्तन्निवृत्तिस्त्वीषद्रोषदृष्ट्यैव सुकराऽतो वृथैव तिरोहितोऽसीति भावः।यद्वा। ननु नाहं युष्मन्मारणे व्यापृतः स्वत एव भवतीनां प्राणा अपगच्छन्ति चेत्तत्र मम कोपराध इति चेत्तत्राहुः। शरदिति। तव दृशा दर्शनेन निघ्नतः किं वधो न तत्रापि हे सुरतनाथ सुरतार्थमागतानां तत्प्राप्तिस्तु दूरे गता प्रत्युत मरणमेव मध्ये उपस्थितमस्ती त्यतोऽस्मन्मन्दभाग्यस्य सुरतप्रदत्वमरणप्राप्तिकरस्य माहात्म्यमिति भावः। किञ्चास्मद्वधे किञ्चित्त्वदर्शनं तथाभूतां श्रियमपि मुष्णाति नाशयतीति तथा किञ्च सर्वेषां वरप्रदस्त्वमस्मान्मारयसीति महाचित्रमित्याशयेन संबोधयन्ति हे वरदेति तथाच सर्वेषां वरप्रदानाय प्रत्यक्षभवनशीलस्य तवास्मन्मन्दभाग्यवशादस्मन्मरणसाधनं तव तिरोधानं सम्पन्नमित्याक्रोशोऽपि ध्वनितः अनभिशापक्षे ननु विचिन्वन्तु भवत्यो मया तु नागम्यत इतिचेत्तर्हि दृशा स्मत्सर्वस्वमपहृत्य गतेन त्वयास्मद्वध एव सम्पादित इत्याशयेनाहुः। शरदिति। यथोक्तया दृशा निघ्नतस्तव त्वया क्रिय-

विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥
वृषमयात्मजाद्विश्वतोभयादृषभ ! ते वयं रक्षिता मुहुः ॥ ३॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

माण इह लोके वधो न किमभिचरणादिकर्मणा कृतो लोकैरज्ञातोऽपि वधोऽनिष्टसाधनं किं न भवतीति भावः। इहैव शुल्केन मूल्येन दासिका अपि मारयतः कन्प्रत्ययेन सूचनेनात्यन्तकरुणापात्रतां व्यञ्जयन्ति यद्वा वयन्तु न त्वया मूल्येन क्रीता नापि विवाहिता अपित्वशुल्कदासिकाः स्वयमेव मोहिताभूमेत्यर्थः तस्मात्सुरतरूपवरप्रदानेनास्मत्प्राणप्रत्यर्पणाय दृश्यतामित्याशयेनाहुः। हे सुरतनाथ! हेवरद मानिनीपक्षे अहो अस्मद्वधायोद्यमं कर्तुंप्रवृत्तस्य तव वधकात्वत्तदानीमस्माभिर्वधोत्पत्त्या संख्यातस्त्रीवधादपि भयञ्चा न्यस्तथा प्रवृत्तस्य इत्याशयेनाहुः। शरदिति। इहा सुतरया च न केवलं याचनमात्रं सर्वथा तव दृक् किन्तु चौर्यकर्मापीति द्योतनाय विशिंषन्ति। शरदिति। यथा चौरः सतामपि निगूढां कठिनदुर्गस्थामपि श्रियं हरति तथा साधु जातस्य सतः पद्मस्य जलदुर्गसहस्रपाकारगर्भस्थायिनीं त्वद्दृग्यदेव तत्र निगूह्य स्थापितामपि श्रियमपि नायिकां मुष्णातीति तथा यदेवं भूता श्रीरपहृता तदा सरलानां सर्वत्र भ्रमन्तीनां विवृतश्रोत्रादिकपाटानां मनआदिहरणे किंचित्रमिति भावः। यद्वा हे सुष्ठुरतानां नाथ! उपतापक हे निजवरच्छेदक अशुल्कदासिकाः परमप्रेमवतीः सखीनः अतो मित्रद्रोहादिदोषपरिहारायागम्यतामिति भावः। निवृत्तिपक्षे तव दर्शनेनैव संसारनिवृत्तिर्नान्यथेत्याहुः। शरदिति। शरत्कालीनजलवत्स्वच्छे आशये अन्तःकरणे ते तव दृशा दर्शनेन किं किमप्यनिर्वचनीयमज्ञानं शुल्कस्य तत्तद्विषयस्य दासिकास्तत्तदाकारा अन्तःकरणवृत्तीश्च निघ्नतो नाशयतो निधुप इह वधो नाशः जन्ममरणलक्षणसंसृतिप्रवेशलक्षणेन भवति तथाच श्रुतयः "आत्मन्येवात्मानं पश्येत् तरति शोकमात्मवित् ब्रह्मविदाप्नोतिपरं न स पुनरावर्त्तते" इत्याद्याः अज्ञानतत्कार्ययोर्ज्ञाननिवृत्त्यर्थत्वमुक्तमित्याशयेनाहुः। असाधुजातमनिर्वचनीयोत्पत्तिमत्सरसिजं सद्रूपब्रह्मलक्षणे सरसि अधिष्ठाने प्रतीतकल्पनीयमज्ञानं तदुदरश्रीश्च तदुभयं मुष्णाति नाशतीति तथा तयेत्यर्थः ॥ २॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अत्रान्योऽन्यनैरपेक्ष्येण हरिः प्रार्थ्यतेऽतः प्रतिश्लोकमन्याहुरित्यवतारणा एकैकः श्लोकः एकैकयूथस्य अतः सङ्गतिर्नात्यपेक्षिता। शरदुदाशये शरदि यो जलाशयस्तस्मिन्साधुजातं सम्यगुत्पन्नं यत्सत् सरसिजं समीचीनं पद्मं तदुदरे गर्भे या श्रीः शोभा तां मुष्णाति हरति तिरस्करोतीति तथा तया दृशा नेत्रेण हे सुरतनाथ! सम्भोगार्थं याचनीय हे वरद! हे मनोरथपूरक अशुल्कदासिकाः शुल्कं मूल्यं विनैव सर्वपरित्यागपूर्वकं त्वदेकशरणाः अस्मान् निघ्नतो मारयतस्ते तव त्वया क्रियमाण इह लोके अयं वधः न किमपि त्वस्त्येव अयमर्थः प्रथमतस्तु पद्मश्रीमुट् नयनप्रहारैरस्माकं वधोऽस्मिन् लोके त्वया कृतः लोकव्यवहारतोऽवरोपितत्वात् अयमेव लोके मुख्यो वधः तथापि पिष्टपेषणवत् पुनः परोक्षी भूत्वा घातयसीति ॥ २॥

भाषा टीका

दूसरी गोपी बोली शरद ऋतु के दिव्य सरोवरमें उत्पन्न जो कमल ता के मध्य की शोभा को भी जीव वे यारो जो आप को कटाक्ष या ते हे सुरतनाथ हे वरद इन विना मूल्य की दासीन को जो आप मारो हो सो का वध नहीं कहावै गो यो भी वधही है॥ २॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च बहुभ्यो मृत्युभ्यः कृपया रक्षित्वा किमितीदानीं दृशा मन्मथं प्रेष्य घातयसीत्याहुः। विषेति ऋषभ! श्रेष्ठ विषमयाज्जलाद्योऽप्ययो नाशस्तस्मात्तथा व्यालराक्षसादघासुराद्वर्षान्मारुताच्च वैद्युतानलाद्वज्रनिपाताद्वृषोऽरिष्टस्तस्मान्मयात्मजाद्व्योमाद्विश्वतोऽन्यस्मादपि सर्वतो भयाच्च कालियदमनादिना रक्षिताः किमिदानीमुपेक्षस इति भावः॥ ३॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

विषजलादिभ्यो गोगोपादीनां वर्गादिभ्यश्च सर्वव्रजस्यैव रक्षणेनात्मीयात्मपालनात् किंवा तत्र तत्र श्रीकृष्णविषयकमाङ्गल्येनैव सर्वरक्षामननात् वयं रक्षिता इति प्रेमोद्रेकेणोक्तं वृषमयात्मजादिति भाविसूचनं सहजसार्वज्ञ्यात् विशेषतश्च विरहार्त्त्या प्रेम्णां विशेषोच्छलनात् स्वत एव तत्तत्परिस्फूर्त्तेः तस्यभावित्वेऽपि भूतनिर्देशःस निश्चितत्वात् अहो कति गण्यानि बहुभ्योऽपितुःखेभ्यो रक्षिता इत्याहुः। विश्वतः पूतनाशकटतृणावर्त्तयमलार्जुनेभ्यो वकवत्सदवानलादिभ्योऽपि भयादित्येवं पुनः पुनस्ते त्वया त्वदीया वयं रक्षिताः तच्च तव युक्तमेवेति सम्बोधयन्ति ऋषभ! कारुण्यादिना सर्वतः श्रेष्ठेति यद्वा व्रजेश्वरेति वयमित्यत्र स्पष्टनिर्देशः स्वविषयकोपकारविज्ञापनाय तच्चाधुनापि तदर्थं मुहुरिति तत्रौदासीन्यराहित्येन परमकृपालुत्वं सूचितं किंवा प्रेमविवशानां तासां स्वप्नमनोरथादौ पुन पुनः स्तेषामेव साक्षादिव स्फूर्त्त्यभिप्रायेण पूर्वोक्तक्रमातिक्रमो विरहवैवश्यात् किम्वा श्रीकृष्णविषयकतत्तद्भये तेषां यथोत्तरं न्यूनताभिप्रायात् अत एवैते स्पष्टं निर्दिष्टाः ततश्च विषजलाप्ययादपि रक्षिताः किम्वक्तव्यं व्यालराक्षसादित्येवं व्याख्येयम अन्यत्तैर्व्यक्षितं यद्वा व्यालाः कालियाजगरादयः राक्षसाः पूतनावकाघाद्याः शङ्खचूडश्च यक्षराक्षसयोरभेदात् स च ध्रुवोपाख्यानान्ते व्यक्त एव तेषां जातावेकत्वं पुनर्द्वन्द्वैक्यम् एवमग्रेऽपि वर्ष दुर्मदेन्द्रप्रेरितसम्वर्तकहृतं मारुतः

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तदानींतनस्तृणावर्तश्च वैद्युतं विद्युत्समूहः तद्वर्षकालीनमेव अनलश्च स्थानद्वयदावः विश्वतः तदितरेभ्यः शकटादिभ्यः ते गोपा वयञ्च रक्षिताः त्वयेति प्रकरणबलात् गोपा इति साक्षादनुक्तिस्तदानीं तत्प्रसङ्गस्यायुक्तत्वात् तत्र विषजलाप्ययाद्गोपाः सुधा दृष्ट्या जीवनादिना वयं च शोकभरेण तत्र प्रविश्य मरणोद्यताः कालियमर्द्दनादिना अजगराच्छ्रीव्रजेन्द्रः पूतनातः सन्निपातभयात् प्रायःसर्वोऽपि व्रजः शकटार्जुनतो वत्सबकाघासुरेभ्यश्च सखायः शङ्खचूडाद्वयम्वर्षात्सर्वोऽपि व्रज इत्येवं विवेचनीयं तत्र ते इतिदृष्टान्ततयोह्यम् एवं सामान्येनैव वयं रक्षिताः स्मः अधुना तु त्वदेकगतयो वयं विशेषेण रक्ष्या इति भावः। अन्यत्समानं यद्वा किंशब्दः पूर्वपद्यादनुवर्तते ततश्चायमर्थः तस्मात्तस्मात्किमिति रक्षिताः मारिताः स्याम चेत्तदैव भद्रमभविष्यदित्यर्थः ततश्च तेषां दुर्मारकतापेक्षया यथोत्तरं श्रैष्ठ्यमूह्यम् ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं परम्परया सर्वसाधारणतया च त्वया वयं सदा रक्षिता स्म एव । तर्हि विषवृक्षोऽपि सम्वर्ध्य स्वयं छेत्तुमसाम्प्रतमिति नीतिः कथं न स्मर्यतामित्यभिप्रेत्याहुः । विषजलाप्ययादिति । विषजलं कालियह्रदजलं तेन पीतेनाप्ययात् गवां गोपानाञ्च मरणात् व्यालराक्षसादघात् "रक्षो विदित्वाखिलभूतहृत्स्थित„ इत्यनेन तस्यैव व्यालरूपस्य राक्षसत्वेन निर्देशः कृत इति तस्माद्बालवत्सान् गिळितवतो वयं रक्षिता इति सर्वगोकुळजीवरूपाणां तेषां रक्षणेन गोकुलस्य रक्षणात् वयमपि रक्षिता इत्यर्थः । इति परम्परा दर्शिता । वर्षमारुतात् वर्षभिश्रान्मारुता त्तत्रैव वज्राश्म वर्षानिलैरित्युक्त्या वैद्युतानलाच्च श्रीगोवर्द्धनधरणेन त्वया रक्षिता इति सर्वसाधारणता दर्शिता वृषमयात्मजादिति समाहारं वृषात् वत्साकारत्वेन गतादपि परिणामे वृहत्त्वदर्शनात् वृषात् वत्सासुरात् मयात्मजात् तल्लीलाया अतिवाल्यचरितत्वेनैव निर्णेष्यमाणत्वात् पूर्वमेव व्योमासुराच्चेति पुनः परम्परा दर्शिता वराहतोको निरगादितिवत् । वृषात्मजाद्वत्सात् मयात्मजाद्व्योमाच्चेति वा । अथ सर्वमेव संगृह्य आहुः । विश्वतो भयादिति । तत्र तत्र योग्यतामाहुः ! हे ऋषभ । सर्वश्रेष्ठ इति ॥ ३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विषजलाप्ययात् विषजलेन विनाशात् ॥ ३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च कृपया बहुभ्यो मृत्युभ्यो रक्षितवतोऽधुना दृशैव घातोऽनुचित इत्यभिप्रेत्याहुः । विषेति । हे ऋषभ श्रेष्ठ ! विषमयात्कालियह्रदजलाद्योऽप्ययो नाशस्तस्मात्तथा व्यालराक्षसादघासुराद्वर्षमारुताद्वैद्युतानलादशनिपातजादग्नेःवृषोऽरिष्टः तस्मान्मयात्मजाद्व्योमासुराद्विश्वतः अन्यस्मादपि सर्वतो भयाच्च कालियमददमनादिभिः पुनः पुना रक्षिताः किमिदानीं केवलं दृशा मारयसीति भाव; ॥ ३ ॥

अलुक् समासन्यायेन शरदुदाशय इत्येकं पदं शरदुदाशये शरत्कालसम्बन्धिसरोवरे साधु भूम्यादृयुपद्रवमन्तरेण जातमुत्पन्नम् अत एव सत्प्रशस्तं विकासिजं यत्सरजितं पद्मं तस्य उदरमरुणाय मानमन्तर्दलं तस्य श्रियं शोभां मुष्णातीति शरदुदाशये साधु जातसत्सरसिजोदरश्रीमुट् तया दृशा शुल्कदासिकाः क्रीतदासीः नो निघ्नतः मारयतः तेऽस्मदाशादिहनने किं वधो न भवति खड्गादेरप्यधिको वधोऽर्धरात्रेऽस्मत्त्याग इत्यर्थः । सुरतनाथ निधुवनवीर ! ॥ ३ ॥ *

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

यद्येवमस्माकम्वध एव तवोद्देश्यः तदा कथमुपसन्नेभ्यः पूर्वपूर्वहेतुभ्यो रक्षिताः स्म इति दर्शयन्ति । विषजलाप्ययादित्यादि विषजलाप्ययः कालियकलिलयमुना ह्रदो व्यालः अघासुरः स एव राक्षसः शरीरग्रासित्वात् वर्षादिः प्रसिद्ध एव कुपितशक्रकृतत्वात् वृषोऽरिष्टः मयात्मजो व्योमासुरः किं बहुना विश्वतो भयादेव तत्रापि मुहुर्वारंवारं नन्वेषां भवद्विधवधहेतुत्वं वा कुतः कुतो वा यूयं रक्षिता इति न वक्तव्यं व्रजस्थानां रक्षणमेवास्माकं रक्षणन्तेन व्रजोत्कर्षेऽस्माकमप्युत्कर्षो भवितुमर्हति तन्न चेदत एवास्माकं क्षोभ इत्याशयः ॥ ३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्याः पुनः कोमलाः बहुधा त्वया रक्षिता इदानीमपि पालयेत्याहुः । विषजलाप्ययादिति । विषजलं कालीयह्रदजलं तत्पीत्वा सर्व एव बालका गावश्च मृताः ते पुनर्जीविताः व्यालाः सर्पाः कालीयसुदर्शनादयः राक्षसाः तृणावर्तादयः तेषामेकवद्भावः तस्मादपि रक्षिताः वर्षमारुतादिन्द्रकृतात्तत्रैव वैद्युतानि अनलो दवाग्निश्च तयोरप्येकवद्भावः वृषो योऽयं मयात्मजः व्योमासुरः तस्मादपि रक्षिताः न तासां भूतभविष्यद्विषयकपदार्थज्ञाननिर्बन्धोऽस्ति सर्वज्ञत्वात् किं बहुना विश्वत एव भयात् पालने हेतुः ऋषभेति भर्ताहि पालयत्येव अतः सर्वदा पालक इति इदानीमपि पालयेत्यर्थः । तेच मारका बाह्याः इदानीतनस्त्वान्तर इति सर्वथा पालनीयाः अन्याः पुनर्भगवतो महानुभावत्वं ज्ञात्वा तस्य स्वरूपं कीर्त्तयन्ति ॥ ३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च जिघांसैव चेत् तव वर्त्तते तदा पूर्वपूर्वविपद्भ्यः किमिति रक्षिताः रक्षित्वा वधः खल्वनुचित एवेत्याहुः । विषमयाजलात् योऽप्ययस्तस्मात् । व्यालराक्षसादघासुरात् वर्षादिन्द्रकृतवृष्टेः । मारुतात् तृणावर्त्तात् । वैद्युतानलादिन्द्रकर्तृकवज्रक्षेपात् । वृषादरिष्टात् । मयात्मजाद्व्योमात् । विश्वतः अन्यस्मादपि सर्वतो भयात् कालियदमनादिना हे ऋषभ पुरुषश्रेष्ठ! स्वरक्षणादेव त्वदेकप्राणा वयं रक्षिताः । वर्षादिभ्यस्तु सर्वव्रजरक्षणादेव तदन्तःपातिन्यो वयमपि रक्षिताः । अत एव रक्षके

---

*अत्र विजयध्वजमते षष्ठश्लोको द्वितीयत्वेन पठितः द्वितीयश्च तृतीयत्वेने ति तदनुसारेणैव टीका विद्यते ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

त्वयि विश्वस्य पञ्चशरज्वालोपशमार्थं वयमागताः त्वया तु ततोऽपि कोटिगुणितया स्वविरहानलज्वालया दन्दह्यामहे इति विश्वस्तघातादपि त्वं न बिभेषीति भावः। अतः अरिष्टव्योमवधस्य भावित्वेऽपि गर्गभाण्डर्यादिमुखतः कृष्णजन्मपत्र्यां श्रवणस्य भूतत्वेनैव भूतनिर्द्देशः ॥ ३ ॥

---

### केनचित्कृता विशुद्धरसदीपिका

किञ्च मुहुर्मुहुः रक्षया संवर्द्धितायास्तदाशाया छेदो ऽनुचित इत्याहुः। विषेति। विषयुक्तजलं कालियह्रदजलमितिशाकपार्थिवादित्वेनाप्ययात् तत्र या गवादि रक्षा सा स्मदाजीव्यान्नादिसंबन्धेनास्माखेव पर्यवस्यतीति किं वास्मत्संबन्धेनैव तत्तदनुष्ठानमिति भावः एवमग्रेऽपि व्यालराक्षसादघासुरात् रक्षोविदित्वा बिलभूतह्नदस्थित इति तत्रैवोक्तेः वर्षमारुताद्विद्युतानलादित्येकमपि छिधो कमुपकारत्वाद्बहुत्वाभिप्रायेण सीदत्पालपशुरर्कात्याद्युक्तेः वृषमयात्मजात् तत्र वृषात्मजादुत्सासुरात् मयात्मजाद्व्योमासुरात् समासेनैक्याध्यवसायाच्छैलयोरव्यवहितत्वमप्युक्तं सर्वमेव संगृह्णाहुः। विश्वतो भयादिति। यद्वा साकूताभिधानं पूर्वश्लोकोक्तसुरतनाथ वरदेत्यादिना परममनोहरे त्वय्येव सकामानामैहिकामुष्मिकविषयान्तरानासक्तिरपि त्वयैव कारितेति भावः। हे ऋषभ! प्राणवल्लभ संबन्धोऽपि सूचितः ॥ ३ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका।

किञ्च स्वरक्षितहनने सौनकत्वापत्त्या गोपालत्वक्षतिरित्याशयेन तत्कृतां बहुधा रक्षां स्मारयन्ति। विषजलाप्ययादिति। वयं त्वया कालियविषव्याप्तयमुनाजलाप्ययात् त्वां यमुनाह्रदं विलोक्य दुःखैः कल्पसाह्लादत्तत्प्रवेशोद्यतानां नः सम्भाव्यमानात्कपया ततस्त्वरितं ह्रदसुखं हित्वैव बहिरागमनेन रक्षिताः अधुनातु त्वद्विरहेण सुधाकरकरव्याप्तं विश्वमेव विषजलसिन्धुरिवास्मान् स्नावयति भवानेव तदप्ययादव्यात् तथा कालियकुलव्यालानां रमणकद्वीपप्रेषणेन त्वया वयं रक्षिता अधुनातु त्वद्रमणकद्वीपे विहारपुलिने सर्वा गोप्यो विरहविषविषमपञ्चफणनलमणिधरव्यालम्बिभुजव्यालयुगलगुम्फास्तास्ता विरहविषयोपरामेण विशालभुजव्यालानी वनमालत्वसम्पादनेन ततो भवतैव रक्षणीयाः तथा राक्षसेभ्यः बकीवकादिभ्यो मुहुररक्षितास्तत्र राक्षसानां व्रजप्रवेशे सर्वेषां भयसम्भावनाभिप्रायेण वा ततः स्वरक्षणोक्तिः स्त्रीयानां जीवनरूपस्यात्मन एव रक्षोरक्षणेन स्वावनाभिप्रायेण वा अधुना तु'द्वा सुपर्णा सयुजा सखाया'इतिश्रुतिसिद्धविश्वमित्रेण त्वयैव स्वविरहद्वारा दुःखप्रदतया विश्वाभित्रतां यातेन विश्वाभित्रेण प्रहितः प्रहितोऽपि स्वमनोजो मनोजो रक्ष इव नो भक्षणे प्रवृत्तस्त्वद्क्षिणतयैव जक्षणादिना ततो रक्षणसम्भावना त्वद्वामत्वे तु वामानां तव वामतां कामेन निकामतयोपरामेण नामापि नावशेषणीयं व्यालराक्षसादित्यत्र जातावेकवचनं निर्दिश्य पुनर्द्वन्द्वैक्यमेयमेघाग्नेऽप्यूहनीयं तथा स्वभागतर्पगतस्त्रोत्कर्षसामर्षसहस्रदृक्कृतवर्षोद्धर्पाद्रिरिमाकृष्यैव कृष्णेन सकरकञ्जे कञ्जवद्धारणेन तत्त्रासवारणेन दुःखनिवारणं कृतमधुना तु सहस्रदृशः सदृश एव वारिधारासारैश्चतुर्दशभुवनात्मकस्वापिण्डब्रह्माण्डान् प्लावयन्ति वहुमेरुयुगलसखीकुचगिरिकरधारणेन त्वयैव स्वपक्षावनदक्षतया रक्षाविधेया तथा तत्कृतात्कृतान्तकृताद्दुरतिक्रममारुतात् वृष्टि वातास्त्रय यिताबता धुनातु तद्विरहतापं विम्राणो घ्राणाग्निःसृतः स्वप्राणो जगत्प्राणश्च प्राणहरो जातस्तद्घ्राणन्तु तव मुखसौरभावघ्राणेनैव तथा तत्प्रयुक्ताद्विद्युतादपि त्वयैवाविता अधुना तु त्वदुत्कटविरहात्स्वकाटीनिकटपटतटकाञ्चनाञ्चलाश्चञ्चलाभञ्चलचतापप्रपञ्चनेन तनुतञ्चनाजाताः त्वयैवैतत्तद्दुःखवञ्चरञ्जनीयं तथा अनलात् द्विधिधवनोद्भूतादग्नेस्त्वया रक्षिता अधुना तु कामविरहानलाभ्यामनलाभ्यां सकला अबला अलम्बिकलाः कृताः बहिः प्रतिदूरमारुणलुमनांसि वनदावबदरुणप्रावरणान्याभरणमणिगणाश्च करालाग्निज्वालतद्दृक्तारवद्दाहका जाता स्त्वमेवावेति भावः वृषमयात्मजादित्यत्र वृषोऽरिष्टो मयात्मजो व्योमस्तयोर्द्वन्द्वैक्यं तस्मात् तथा चारिष्टाद्रक्षणस्य भावित्वेऽपि भगवत्प्रेमाविर्भूतसार्वज्ञ्येन तदुक्तिः यद्वा वृषमययोरात्मजौ वत्सव्योमौ तयोः समाहाराभिप्रायेणैकवचनं तस्मात् वयं त्वया रक्षिता अधुनातु त्वास्विना पशुवृत्तीनां नः सर्वे पशवो वृषवत्सवद्वयावहा व्योमगतसोमः सोमयुतव्योमश्च व्योमोद्भवस्तोमेन रोमाञ्चको जातः तथाच विश्वतो भयान्मुहुस्त्वद्रक्षिता अधुना विश्वतो भयव्याप्ता इतिस्वरक्षितानां स्वविरहेण वधोऽनुचित इति त्वया हृदयतामिति यथासम्भवं सर्वत्र वाक्यशेष उपादेयः नच भवतीनां मद्दोषेण मयोपेक्षा कृतेति वाच्यम् आश्रितेषु गुणदोषदृष्ट्यनौचित्यात् तदुक्तं नीतिविद्भिर्द्दोषाकरोऽपिकुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि चन्द्रस्तथापि गिरिशः शिरसा बिभर्ति नैवाश्रितेषु गुणदोषविचारणा स्यादिति ॥ ३ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

किञ्च बहुभ्यो मृत्युभ्यो रक्षितवान् विरहाग्निना मारणाय प्रवृत्तौ निमित्तं न विद्म इत्याशयेनाहुः। विषेति। विषजलं कालियह्रदजलं तेनापि गोपानां नाशस्तस्मात् व्यालराक्षसात् सवत्सपाल गिलिनोऽघासुरात् वत्सपालादिरक्षणेन परंपरया वयमपि रक्षिताः वर्षयुक्तात् मारुतात् वैद्युतानलाद्शनिपातोचन्द्रकृताद्गोवर्द्धनधारणेन साक्षात् वृषो वृषभासुरोऽरिष्टः मयात्मजात् व्योमासुरात् तचारिष्टमग्रे वक्ष्यमाणमपि रासोत्सवात्पूर्वं जातमिति द्रष्टव्यं तल्लीलाया अतिबाल्य एवाऽयोग्यत्वात् किम्बहुना अन्यस्मादपि सर्वतो भयात् हे ऋषभ! सर्वोत्तम वयं रक्षितास्तथा च यथा प्रेष्ठत्यात्पूर्वं रक्षितास्तथेदानीमपि दर्शनप्रदानेनास्मद्रक्षणंमयोचितं नतु स्वस्वभावत्याग इतिभावः। अनभिज्ञापक्षे तत्र तत्र स्वरक्षणेन यथा वयं रक्षितास्तथेदानीमपि स्वप्रकटनेन रक्षणीया इति भावः। मानिनीपक्षे ननु यदि भवतीनां वधो ममाभीप्सितः स्यात्तर्हि भवत्यो न रक्षिताः स्युरित्याशङ्क्याहुः। विषेति। तथा च सहस्तेन यथार्थमेव रक्षिता इति वर्तमानकालीनया प्रवृत्त्या ज्ञायत इति भावः। तत्र तत्र रक्षणपरायणश्रेष्ठत्वेन ख्यातं त्वयि विश्वस्तानामस्माकं घातो नोचितो विश्वासघातास्यकर्मकर्तृत्वायोग्यत्वाच्छ्रेष्ठस्य तवेति सम्बोधनाशयः निगूढ़ पक्षे किञ्चास्माकमपि तव तत्त्वज्ञानादेव रक्षणं भवति नान्यथेत्याहुः। विषेति। ते तव ज्ञानादिति शेषः हे ऋषभ क्षराऽक्ष-

न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ॥
विखनसार्थितो विश्वगुप्तये सख ! उदेयिवान् सात्वतां कुले ॥ ४ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

यतीतपुरुषोत्तम ! तव ज्ञानाद्धेतुभूतादधिकारिभिस्त्वदनुग्रहेण सम्पादिताः पुनः पुनर्वयं रक्षिता जाताः परमात्मज्ञानस्य विशेषणानि विपरूपस्य "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यती"ति भयहेतुत्वेनाभिमतस्य जलस्य डलयोरभेदादज्ञस्य उत्पत्त्याश्रुतस्याप्ययात् पलायनकरात् पुनश्च व्यालानां बहुश्रुतत्वेऽपि विपरीतार्थकल्पकत्वात्खलानां राक्षसात् राक्षसवद्भयं "व्यालो दुःखे गजे सर्पे खले श्वापदसिंहयो"रिति मेदिनी वर्षस्य दुःखवर्षो मारुतात् अथवा तन्नाशकरात् "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इत्यादिश्रुतेः तथा वैद्युताद्विद्युतात्क्षिप्रमं तृणपर्णादिस्थानीयमज्ञानं "विद्युत् तडिति सन्ध्यायां स्त्रियां त्रिपु तु निष्प्रभे" इति मेदिनी नदेयं वैद्युतं तत्सम्बन्ध्यहङ्कारादिकं वा तस्यानलादनलवद्दाहकात् तथा वृषमयात्मजात् भगवदाराधनलक्षणं निष्कामं कर्म नित्यादिसन्ध्यान्नं वृषशब्दप्रतिपाद्यं तन्मयादात्मनोऽन्तः करणाज्जातात् अत एव विश्वतः सर्वतः अभयात् सर्वप्रकारेणानुच्छेद्याद्वैतवादेन सर्वभयोच्छेदकरादिति वा द्वितीयाद्वै भयं भवतीति श्रुतेः ॥ ३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे ऋषभ ! श्रेष्ठ विषजलात् योऽप्ययो नाशस्तस्मात् व्यालराक्षसादघासुरात् वर्षात् मारुताच्च वैद्युतानलात् अशनिजादग्नेः वृषात् वृषभासुरात् मयात्मजात् व्योमासुरात् विश्वतोऽन्यस्मादपि सर्वतो भयाच्च ते त्वया वयं रक्षिताः इदानीमपि विरहजादग्ने रक्षां कुर्विति भावः ॥ ३ ॥

भाषा टीका।

हे प्रभो ! पुरुष श्रेष्ठ विष के जलते सर्प ते राक्षस ते वर्षा ते पवन ते अग्नि ते वृषासुर ते मय के पुत्र ते और भी नानाप्रकार के भयों ते बारंबार आपने हमारी रक्षा करी है तो अबहु आप हमारी रक्षा करो ॥ ३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

अपि च विश्वपालनायावतीर्णस्य तव भक्तोपेक्षात्यन्तमनुचितेत्याशयेनाहुः। न खल्विति। हे सखे ! भवान् खलु निश्चितं यशोदासुतो न भवति किन्तु सर्वप्राणिनां बुद्धिसाक्षी ननु स किं हृदयो भवति तत्राहुः। विखनसा ब्रह्मणा विश्वपालनाय प्रार्थितः सन् सात्वतां कुले उदेयिवानुदित इति ॥ ४ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

विचित्रक्रीडाकारिसाक्षादेतद्वर्त्तमानरूपो बहिरेव केवलं भवान् न भवति किन्तु अन्तरप्येवं वर्त्तते इत्याहुः। अखिलेति। अतोऽस्माकमिदं दुःखापवृत्तं भवान् जानात्येव किन्तस्य बहुवर्णनेनेति भावः। ननु सत्यञ्जानाम्येव किन्तु कृत्यं सर्वमवसर एव सम्पद्यते तत्राहुः। विखनसेति। स्वभक्तवरप्रार्थनया भक्तकुलेऽवतीर्णेन भवता ऽवश्यं भक्ताः अनवसरेऽपि परिपाल्या एवेति त्वत्प्रियाणामस्माकमप्यवसरापेक्षा न युक्तेति भावः। स्वयमधुना भक्तापेक्षया स्वकृतनियन्धस्याप्यतिक्रमणात् तच्चाग्रे गुरुपुत्रानयनादौ व्यक्तमेव ननु यूयं न मद्भक्ता इतिचेत्तथापि परिपाल्याः श्रीब्रह्मणावतारेऽस्मिन् सर्वेषामेव पालनस्य प्रार्थनादित्याहुः। विश्वगुप्तय इति। अतो निजभक्तवरप्रार्थनस्यावश्यपाल्यत्वाद्वयं नोपेक्ष्या एवेति भावः। किञ्च तत्रापि भावविशेषभाजो वयं विशेषतः परिपाल्या इत्याशयेनाहुः। सखे ! इति अन्यत्तैर्व्याख्यातं यद्वा अन्तरात्मदृगपि भवान् गोपिकानन्दनो न भवति खलु किमपितु भवत्येव कथं तदाहुः। विखनसेति। अतो वयमानन्दनीया एवेति भावः। यद्वा गोपिकानन्दनः कारुण्यादिगुणरूपलीलादिनिजमाधुर्य्यप्रकटनपरः श्रीकृष्णो भवान् न भवति किन्तु परमात्मैवेति परमदुःखेन ज्ञानपक्षमङ्गीकृत्याहुः। न खल्विति। खलु निश्चितम् इत्यधुना ज्ञातमिति सर्वत्राग्रेऽपि शेषः किञ्च न विश्वस्य गुप्तिः अविश्वगुप्तिस्तस्यै विश्वसंहारायैवेत्यर्थः। सात्वतां यादवानामेव कुले नतु गोपकुले जात इति च अन्यत्समानम् अथवा हे सखे ! इति सोल्लुण्ठं नञः प्राङ्निर्देशात् सर्वपदैरेवान्वयः तेन हेऽसखे प्रतिकूलेति खलु वितर्के श्रीयशोदानन्दनो न भवति तथा सति तत्सम्बन्धेन दामोदरत्वादिभक्तवश्यताभरप्रदर्शनेन चास्माकमुपेक्षानुपपत्तेः यद्वा गोपिकाः व्रजसुन्दरीः सर्वा आनन्दयतीति तथा सति तद्विपरीत्यासम्भवात् किंच अखिलदेहिनामन्तरात्मदृगपि न भवति तथा सति अस्मद्दुःखज्ञानसम्भवात् नच ब्रह्मणा विश्वगुप्तये ऽर्थितः तथा सत्यस्माकमपि रक्षाया योग्यत्वात् सात्वतां भक्तानां कुले च नोदेयिवान् तथा सति तत्सम्बन्धेन निरुपाधिकृपालुतासम्भवादिति। यद्वा सः प्रसिद्धो भवान् अखिलदेहिनामन्तरात्मदृगिति विश्वगुप्तये ब्रह्मणा सात्वतां भक्तानां कुले ऽवतरितुमर्थितः भवान् खलु खे आकाश एव उदेयिवान् इत्याकाशगुणत्वेनासङ्गोदासीनत्वाज्ञ्वान् गोपिकानन्दनो न भवतीत्यर्थः। यद्वा उ इति पदं सम्बोधने उ भो गोपिकानन्दन विखनाः पितामहः तेन च कृष्णस्य पितामहो गृह्यते प्लवगसैन्यमुलूकजितजितमितिवत् अत्रोलूकशब्देन कौशिक उच्यते तेन च शक्रः नात्र नेयार्थतादोषः तस्य काव्यैकविषयत्वात् अतोऽयमर्थः तव पितुः पित्रा विश्वगुप्तये विश्वेषां सकलानां व्रजवासिनां गुप्त्यै रक्षायै भवान् अर्थितः सन् सात्वतां भक्तानामेषां गोपानां कुले उदेयिवान् साम्प्रतं रक्षा द्वारेऽस्तु हृदयदुःखमपि न जानातीत्याहुः। अखिलदेहिनामन्तरात्मदृक् अन्तर्हृदयज्ञोऽपि न भवति यादमन्तर्दह्यमानानामस्माकं यदेतां महार्त्तिं विनाशय-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तीत्यर्थः । व्रजेन्द्रपित्रा सर्वोत्तमसन्तानार्थं विष्णुराराधित इति प्रसिद्धः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं प्रभावस्यादिदमनुमिमीमह इति स्तुत्यर्थमाहुः । न खल्विति । श्रीगोपेश्वर्या अपि स्वकुलश्रेष्ठत्वेन स्वान्तःपातं विधाय स्वदैन्येनैव न्यूनतया किन्तु दोषाय अनोऽस्माकमिदं द्वत्तापवृत्तं भवान् जानात्येव किन्तस्य बहुवर्णनेनेति भावः अवतारकारणमनुमिमीयते । विखनसेति । अतः स्वभक्तवरप्रार्थनया भक्तकुलेऽस्मिन्नुदितमत्त्वेनापि भवता भक्ता अनवसरेऽपि परिपाल्या एवेति त्वत्प्रियाणामस्माकमप्यवसरापेक्षा न युक्ता । सोऽयन्तु परम एवावसर इति भावः । ननु यूयं न मद्भक्ता इति चेत्तथापि परिपाल्याः श्रीब्रह्मणा किल सर्वेषामेव पालनस्य प्रार्थनादित्याहुः । विश्वगुप्तये इति । वस्तुतस्तु भक्तेष्वपि भावविशेषभाजो वयं विशेषतः परिपाल्या इत्याशयेनाहुः । सखे इति । यद्वा ऐश्वर्यज्ञानमिदं मुन्यादिमुखतः तन्माहात्म्यश्रवणेन ततो निजभावानुरूप्येण श्रीगोपिकानन्दनतामयकेवलमाधुर्यानुभवेऽपि नदेतदैश्वर्यं याचकरीत्या निजाभीष्टसाधनमात्राय प्रयोजितमिति ज्ञेयम् एवमुत्तरत्रापि । अन्यत्तैः । यद्वा खल्विति प्रतिषेधे खल्वक्त्वेतिवत् । अन्तरात्मदृगपि भवान् गोपिकानन्दनो न भवति खल्वपि तु भवत्येव इत्यर्थः । कथं तदाहुः । विखनसेति । अतो वयं पाल्या एवेति भावः । सेर्ष्यमाहुर्गोपिकायाः परमदयालुतया श्रीव्रजेश्वर्यानन्दनो भवान्न भवति किन्तु परमात्मैव स्वतः सर्वत्रौदासीन्यात् एवं नूनमपि ब्रह्मभक्तिवशीकृतत्वादेव भवान् एतन्नन्दनन्दनताव्याजेन विश्वगुप्तये प्रकटोऽस्ति तत्र च बाल्यक्रीडामयाद्यनुवृत्त्यास्माकं सखिताञ्च प्राप्तोऽस्तीति भवता प्रति पाल्या एव वयमित्याहुः । विखनसेति । अथवा नञः प्राङ्निर्देशात् सर्वपदैरेवान्वयः तेन हे असखे प्रतिकूल ! खलु वितर्के । भवान् श्रीयशोदानन्दनो न भवति तत्र तत्सम्बन्धेनास्माकमुपेक्षानुपपत्तेः तथाखिलदेहिनामन्तरात्मदृगपि न भवति तत्रास्मद्दुःखज्ञानसम्भवात् न च ब्रह्मणा विश्वगुप्तयेऽर्थितस्तत्रास्माकमपि रक्षाया योग्यत्वात् । सात्वतां भक्तानां कुले च नोदेयिवान् । तत्र तत्सम्बन्धेन निरुपाधिकृपालुतासम्भवादिति ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न खल्विति । न केवलं गोपीतनयत्वं किन्तु अखिलदेहवतामन्तरात्मातो दृक् द्रष्टा च सत्ताहेतुः ज्ञानप्रदश्चेत्यर्थः । अन्तः प्रविष्टः शुभाशुभसाक्षीत्यर्थः । विखनसा विरञ्चेन ॥ ४—५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च निखिलजगत्पालनार्थमवतीर्णस्य तत्रापि स्वाश्रितप्रपन्नपालनस्त्वदाश्रितोपेक्षानुचितेत्यभिप्रेत्याहुः । न खल्विति । हे सखे ! भवान् खलु नूनं यशोदासुतो न भवति प्राकृतः केवलङ्किन्त्वखिलदेहिनामन्तरात्मातो दृक् कर्तरि क्विप् अन्तःप्रविष्टः शुभाशुभसाक्षी परमात्मेत्यर्थः । स किं कर्मायत्तदेहभाग्भवति नेत्याहुः । विखनसा विरञ्चिना विश्वपालनाय प्रार्थितः सात्वतां भक्तानां कुले उदेयिवान् स्वेच्छयावतीर्णः नतु प्राकृतवत्कर्मणा जात इत्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीमपि अस्मद्रक्षा भवता कार्या तथा यथा पुरा कृता इत्याशयेनाहुः । विषेति । विषजलाशयात् विषयुतयमुनाह्रदात् यद्वा विषजलपानेन आशयो दीर्घनिद्रामरणं तस्मात् व्यालात्सर्पात् राक्षसात् तृणावर्तनाम्नः वर्षयुक्ताद्वायोः वैद्युतानलात् निर्घातलक्षणाग्नेः वृषमयाद्वत्सासुरनिमित्ताद्भयात् किम्बहुना हे वृषभ ! श्रेष्ठ विश्वतो मुखाद्भयात् ते त्वया वयं मुहुः रक्षिता इत्यन्वयः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न खल्विति । अथवा पूर्वानुसारेणैवाश्चर्यमनुमीय स्तुत्यर्थमाहुः न खल्विति द्वाभ्याम् । संसृतेर्भयात् तत्सम्बन्धिनः सर्वस्माद्देव स्वगोकुले सर्वसम्पत्तिवशीकरणात् श्रियः करमिव साक्षाद्दधाति यत्तं तव ॥ ४—१३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अपिच केचित्त्वां गोपिकासुतमेव वदन्ति केचित्सर्वप्राणिनामन्तर्यामीति केचन विश्वरक्षणार्थमवतीर्णोऽसीति मतत्रयं प्रसिद्धं तत्रास्मान् प्रति मतत्रयभिन्नवद्व्यवहरसि तत्कैयं ते लीलेति दर्शयन्ति न खल्वित्यादि । खलु भोः कृष्ण भवान्न गोपिकानन्दनः तथा चेदस्मासु सजातीयासु कृपाभविष्यत् नाप्यखिलदेहिनामन्तरात्मदृक् तथा सत्यस्माकमप्यन्तरात्मदुःखज्ञताभविष्यत् नापि विखनसा ब्रह्मणार्थितः न विश्वगुप्तये सात्वतां कुले उदेयिवान् तथा सति विश्वान्तर्वर्तिनीनामस्माकमपि गुप्तिरभविष्यत् तस्माददद्भुतैवेयं तव लीलेति भावः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततश्च ज्ञानिभ्यो यथा मोक्षं प्रयच्छति तथास्मभ्यमपि अस्मदुचितं मोक्षं दास्यतीति तं स्तुवन्ति न खल्विति । भगवतो नन्दसूनुत्वे सर्वे उपालम्भा युक्ता भवन्ति तदेव नास्तीति सर्वमयुक्तमुपालम्भनं खल्विति निश्चये नात्र तिरोहितमिव गोपिकाया यशोदाया नन्दनः पुत्र इति तथा सति यथा नया स्वाधीनः कृतः ज्ञातो वा तथा गोपिकानामपि भवेत् गोकुलस्वामिपुत्रत्वात् तुल्यतायामेव हि विधायोनिसम्बन्धः किन्च न केवलं भवान् वैकुण्ठाधिपतिः पुरुषोत्तमः किंतु अखिलदेहिनां सर्वेषामेवास्मदादीनामन्तरात्मानमन्तःकरणं पश्यतीति यद्यस्मद्धृदये तादृशं तापं पश्येत्तदा प्रसन्न एव भवेत् अतो नास्मिन् वक्तव्यं किंचित् किंच आगतश्चास्म-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दादीनां परिपालनार्थमेव यदि जानीयात् एता नङ्क्ष्यन्तीति तदा परिपालयेत् रक्षणार्थं च प्रार्थित एव नतु स्वेच्छया समागतः तदाहुः विखनसार्थित इति । विखना ब्रह्मा विशेषेण खनतीति सर्वथा वेदार्थविचारकः अत एव वैखानसं मतं ब्रह्मणा कृतं भगवद्भजनप्रतिपादकं तेनैव मार्गेण पूजां भगवान् गृह्णातीति वेङ्कटादौ तथैव पूजा अतः सर्वेषां पूजामपि ग्रहीतुं ब्रह्मणार्थितोऽपि विश्वगुप्तये इति । मुख्यं प्रयोजनम् एवमन्तरात्मत्वात् सर्वेषामेव जीवानां भवान् सखा तादृशः लोके सख्यं प्रकटयितुं सात्वतां यादवानां वा कुले उदेयिवान् प्रादुर्भूतः अत एतदर्थमेवागतः पूर्वमपि सखा यथेच्छमेव प्रेरयसि आगतस्य पुनर्विशेषो वक्तव्यः सचात्मनिवेदनरूपो भवति अतो वयं किं विज्ञापयामः यथोचितमेव कर्त्तव्यमिति भावः ॥ ४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अयि शश्वदसमीक्ष्यभाषिण्यो गोपाल्यस्तिष्ठत सर्वानन्दकन्दो नन्दनन्दनोऽहं स्त्रीवधपातकी विश्वस्तघाती च युष्माभिर्निर्द्धारितः तदितो निःसृत्य रहसि क्वचिदेवं स्थास्यामि यथा जन्ममध्ये सकृदपि मद्दर्शनं न प्राप्स्यथेति तदीयभीषणोक्तिमाशङ्क्यानुतप्तास्तं प्रसादयितुं स्तुवन्ति । नेति । भवान् गोपिकानन्दनः खलु न भवति किन्त्वखिलदेहिनामन्तरात्मा अन्तःकरणप्रेरकः दृग् द्रष्टा चेत्यन्तर्यामी भवतीति भाण्डरिगार्गि पौर्णमास्यादि मुखादश्रौष्म इत्यतो यथास्मान् प्रेरयति तथा ब्रूमहे इत्यतो मा कुप्य प्रसीद । त्वदाविर्भावकारणं च श्रुतमित्याहुः विखनसा । ब्रह्मणा विश्वपालनाय प्रार्थितः सन् सात्वतां यदूनां कुले उदेयिवान् श्रीयशोदागर्भोदयशैलादाविर्भूतः । नन्वेवञ्चेज्जानीध्वे तत् किमिति रूक्षं ब्रूध्वे तत्राहुः । हे सखे ! इति त्वयैव सख्यरसाब्धौ वयं निमज्जिता इति परामृश्य विश्वं पालयन् विश्वमध्यवर्त्तिनीरस्मानपि पालय कृपयैवेति भावः । यद्वा स्वप्रेयसीनामेवं दुःखं द्रष्टुं नृदेवतिर्यगादिषु मध्ये कोऽपि न समर्थः । यथा त्वं दुःखं पश्यन्नपि सुखमास्से तस्मादेवं वितर्कयाम इत्याहुः । नेति । गोपिकायाः श्रीयशोदायाः परदुःखलवेऽपि श्रुतखिन्नायास्तस्याः कुक्षौ त्वं न जातोऽसि तत् कुक्षेरेकस्यापि लक्षणस्य त्वय्यनुपलम्भादिति भावः । तर्हि कोऽहं त्वं सर्वप्राणिनामन्तर्यामीति वितर्कन्दे । स एव जीवानां दुःखं पश्यन्नपि तदन्तः सुखं वसति । उदासीनशिरोमणेस्तवात्राविर्भावेऽपि कारणं न जानीम इत्याहुः । विखनसा ब्रह्मणा स्वसृष्टिवृद्धिमभीप्सता विश्वगुप्तये विश्वस्मिन् जगत्यत्र गुप्तये त्वं प्रार्थितः त्वद्भक्त्या जीवा मुच्यन्त इत्यतस्तथा त्वमवतीर्य गुप्तस्तिष्ठ यथा कोऽपि त्वामीश्वरं न मन्यन्ते । तदा च तवेश्वरत्वममन्यमानानामीश्वरानुवर्त्तिनामपि जरासन्धादिवद्दस्युत्वमेव भविष्यति तत एव मे सृष्टिवृद्धिर्भवित्रीति ब्रह्मवाञ्छितसिद्ध्यर्थं परदार-परद्रव्यचौर्य-मात्सर्य-हिंसा-दम्भादिकं स्वप्रतिकूलं धर्मं स्वगोपनार्थमङ्गीकरिष्यन् दुस्त्यजं स्वधर्ममौदासीन्यश्चाजहदेव सात्वतां कुले उदेयिवान् । सखे ! इति परदारग्रहणादयास्माकं सखाप्यभूरिति भावः ॥ ४ ॥

### केनचित् कृता विशुद्धरसदीपिका ।

तदेवं प्रभावत्वादिदमनुमिमीमह इति स्तुत्यर्थमाहुः । न खल्विति । श्रीगोपेश्वर्य्या अपि स्वकुलश्रेत्वष्टत्वेन स्वान्तःपातं विधाय स्वदैन्येनैव तन्न्यूनोक्तिर्न दोषाय अतोऽस्माकं वृत्तापस्य प्रवृत्तिं भगवान् जानात्येव किं तस्य बहुवर्णनेनेति भावः अवतारकारणमनुमिमते । विखनसेति । अतः स्वभक्तप्रार्थनया भक्तकुलेऽस्मिन्नुदितभावत्वेन भवता भक्ता अनवसरेऽपि परिपाल्या एवेति त्वत्प्रियाणामस्माकमप्यवसरापेक्षा न युक्ता सोऽयन्तु परम एवावसर इतिभावः । ननु यूयं न मद्भक्ता इतिचेत्तथापि परिपाल्या इत्याहुः । विश्वगुप्तय इति । तत्रापि भावविशेषभाजो वयं विशेषतः पाल्या इत्याहुः । सखे इति । ऐश्वर्यज्ञानमिदं मुन्यादिमुखतस्तन्माहात्म्यश्रवणेन ततो निजभावानुरूप्येण श्रीगोपिकानन्दनतामयकेवलमाधुर्य्यानुभवेऽपि तदेतदैश्वर्यं याचकरीत्या निजाभीष्टसाधनमात्राय प्रयोजितमिति ज्ञेयं यद्वा सेर्ष्यमाहुः । गोपिकायाः परमदयालुतयास्मत्पालिकायाः श्रीव्रजेश्वर्य्या नन्दनो भवान्न भवति किंतु परमात्मैव स्वतः सर्वत्रौदासीन्यान् एवमपि विश्वगुप्तये प्राकटनादपि तदन्तः पातिन्यो वयं पाल्या इत्यर्थः । यद्वा सखे साच्छिद्रे प्रेमशून्ये सात्वतां कुले कंसादिक्रूरजनबहुले उदेयिवान् जात इत्यर्थः । प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज इति गर्गोक्तेः अत्र नन्दनन्दन इत्यनुक्तिः सम्बन्धस्फूर्त्या लज्जोत्पत्तेः ततश्चैताः स्वीयाभिमानिन्यो नन्दव्रजकुमारिका एव वरदेत्यादि ज्ञापकात् गाऽनेप्यधीरतया प्राथम्यं तत एवेति ॥ ४ ॥

———

### श्रीरामनारायणकृतभावभावविभाविका ।

स्वस्वैर्येण दुःखाभिज्ञत्वरक्षणसमर्थत्वाद्याविष्कुर्वन्त्यः प्रार्थयन्ति । न खल्विति । खलु भवान् गोपिकाया नन्दन एव न येन नास्मद्वृत्तं जानाति यद्वा भवान् गोपिका "नाहं प्रकाशः सर्वस्य योगमायासमावृत"इत्यादिवचनात् स्वरूपानन्दावरका माया तस्याः कार्यं न भवति अपितु अखिलदेहिनामन्तरात्मा च दृक् चेति तथा तत्रान्तःकरणगताभासस्य साक्षिभास्यत्वे सति प्रमातृत्वाद्बहिरात्मत्वं साक्षिणस्तु अन्तरात्मत्वं तस्यान्तरात्मत्वे हेतुर्दृगिति तदुक्तं भगवत्पूज्यपादैः रूपं दृश्यं लोचनं दृक् दृश्यं दृष्टं मानसं दृश्या धीवृत्तयः साक्षी दृगेव नतु दृश्यते इति साक्षात् भगवतापि—

> इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
> मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥
> श्रुत्यापि इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
> मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
> महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
> पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरिति ॥

तथाचान्तरात्मत्वाद्विच्छेदानौचित्यं दृग्रूपतया स्वप्रकाशत्वेनाभानानौचित्यमिति भावः । यद्वा अन्तरात्मनामन्तः करणानां दृक् प्रकाशक इति अस्माद्दुःखं ज्ञात्वाप्युपेक्षानुचितैव नन्वहमेतादृशश्चेत्कथङ्गोपिकानन्दनताङ्गतस्तत्राहुः । विखनसार्थित इति । विश्वगुप्तये ब्रह्मणार्थितः सात्वतां कुले यादवानां वंशे उदेयिवान् नतूत्पन्न इति श्रुति रूपतया प्रेमोद्भूतसार्वज्ञ्येन वोक्तिः यद्वा सात्वतां सहजभक्तानां व्रजवासिनां कुले समूहे उदेयिवान् अतो ब्रह्मणा

### श्रीरामनारायणकृतभावभावविभाविका।

विश्वगुप्तये प्रार्थितत्वान्नोऽपि विश्वबाह्यत्वाभावादसुरेभ्य इव विश्वस्य स्वविरहदुःखादस्मद्रक्षा विधेया विशेपतो व्रजवासिनी नामुपेक्षानर्हा तथा सखे! इति सम्बोधनेन सखीनामुपेक्षासुतरामयोग्येति भावः। यद्वा अन्तरात्मदृगपि भवान् खलु गोपिकानन्दनो न भवतीति नेति अपितु भवत्येव ब्रह्मणार्थितत्वात्तथा च तत्सम्बन्धेन नोपेक्षा वयं यद्वा नकारस्य प्रागुक्त्या सर्वपदैरन्वयस्तथा च भवान् खलु गोपिकाया यशोदाया नन्दनोपि न भवति तथात्वे तस्याः सरलकृपालुस्वभावत्वात्तव कौटिल्यनिष्ठुरेत न स्यातां जातिसम्बन्धेनापि अस्मासु करुणैव जायेत तथाखिलदेहिनामन्तरात्मा च न भवति तथाच विरहसम्भावनैव न स्यात् तथान्तरात्मदृगपि न भवति तथात्वेऽस्मद्दुःखं ज्ञात्वा मनोद्रवेदेव विश्वगुप्तये विखनसार्थितोऽपि न भवति तथात्वे विश्वान्तर्गतानां नो विरहेण मारणं न घटेत सात्वतां कुले भक्तसमुदायेऽपि नोदेयिवान् तथात्वे भक्तेपु वात्सल्यं स्यात् तथा असखे इति सम्बोधनेन श्रुतिसिद्धः समानतः सर्वसखा विशेपतो नित्यविहार्य्यस्मत्सखा च न भवति तथात्वे सखीदुःखप्रदानं न युज्येतातः पूर्वानुभूतश्रुतिमुनिगीतकृपालुस्वभावातिक्रमदर्शनेन किञ्चिदन्य एव भवान् यद्वा खलु भवान् गोपिकानां नो नन्दनो न भवति तथात्वे गोपिकानां नो नन्दनमभीष्टसुखप्रदानमेव स्यात् अपितु अन्तरात्मैव अन्तरात्मतयास्मत्स्वविरहवत्त्वेन बहिर्लीलां सङ्कोचितुमेव प्रवृत्तः तथा ब्रह्मणा विश्वरक्षणाय नार्थितः अपितु विखनसा खनधातोः असप्रत्ययव्युत्पन्नेन विशेपतः खननशीलेन स्वयं खनितुमशक्तेन विश्वगुप्तये गोपनाय प्रलयकरणायार्थितः यादवकुले उदेयिवान् तथा च विश्वस्य प्रलयप्रकारसम्भवेऽपि स्वानुरागिणा "त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैती"त्यादिवचनैर्मृत्युभयासम्भवात्स्वविरहेणैव हन्ति हे असखे इति पूर्ववत् यद्वा खलु भवान् किं गोपिकानां सर्वासां नः श्वश्रूणां नन्दनो न भवति अपितु भवत्येवेति सर्वत्र काकु तथाच ब्रह्मवत्सहरणदशायां त्वयि तासां नन्दनत्वे जाते त्वयैव पाणिगृहीता वयं तथाच साक्षात्पाणिग्राहकत्वादधुनाप्यस्मत्पतिमन्यमानामपि देहित्वेन तव चाखिलदेहिनामन्तरात्मत्वेनाप्यस्मन्मुख्यपतित्वात् उपेक्षा नोचिता तथा विखनसा विश्वगुप्तयेऽर्थितः सात्वतां कुले उदेयिवानित्यनेन तेनापि तदा यदुक्तं "तत्प्रियार्थं सम्भवन्तु सुरस्त्रिय" इति तत्त्वभियोगादेवेति त्वत्प्रियार्थमेव त्वदाज्ञसब्रह्माज्ञया नो जन्मेति तद्विफलीकरणमनुचितमेव तवाप्यस्मत्प्रियमेव संमतं वृथा नामलीलया वामाखेदनमिति भावः॥४॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

युक्तं चास्मदादिरक्षणं तदर्थमेव नन्दनन्दनविग्रहात्मनाविर्भूतत्वादित्याशयेनाहुः। नेति। गोपिकाया यशोदाया नन्दनः सुतो भवान्न भवतीति प्रसिद्धं किन्तु सर्वप्राणिनां योऽन्तरात्मा तस्य दृक् साक्षी अन्तर्यामी भवानेवम्भूतोऽपि विखनसा ब्रह्मणार्थितः विश्वस्य रक्षणाय प्रार्थितः सन् सात्वतां यादवानां कुले उदेयिवान्प्रादुर्भूतः ननु एवं जानतीभिः किमित्युक्तं निघ्नता नेह किम्वध इति तस्मात्तिरोहित एव स्थास्यामि यथा युष्माकं कदापि दर्शनं न भवेदित्याशङ्क्याहुः। सखे इति। तथाच भवद्दत्तसख्यानुरूपयमुक्तिः करुणोद्दीपिका ननु कोपावहातो विश्वगोपनाय प्रादुर्भूतस्य तव तन्मध्यगतानां स्वयं सखीभावेप्सितानां कारुण्यात्पालनमेवानुरूपमिति भावः। यद्वा सर्वान्तरवृत्त्यभिज्ञस्य तवास्मदन्तःकरणनिष्ठप्रेमातिरेकोपरि दृष्टिः कर्तुं युक्ता ननु दर्पाभासोपालम्भोत्पादिगुणेनेत्याशयेनाहुः अनभिज्ञापक्षे तथा च कालियमर्दनादिना स्वीयरक्षणादिना लोकोत्तरसामर्थ्यप्रकटनाद्वा वयमेवं तर्कयाम इत्याशयेनाहुः। नेति। खलुशब्दो वितर्के सर्वापेक्षयाल्पबलाया गोप्याः सुतो भवान्न किन्तु सर्वदेहिनामन्तरात्मदृगिति तर्क्यतेऽस्माभिः ननु सर्वान्तर्यामिणो मम देहिभावेन कथमुत्पत्तिरित्याशङ्क्याहुः। विखनसेति। सत्वतां सात्त्विकानां समानानां कुले विश्वगुप्तये उदेयिवान् तस्मात्तवाविर्भावो ननु जन्माऽतः सर्वपालनायावतीर्णस्य तव सखीनामस्माकमुपेक्षा नोचिता दर्पोप्यस्माकं त्वदुत्कर्षहेतुरतः कोपं विहायागन्तव्यमिति भावः मानिनीपक्षे अहो निर्दयाशिरोमणिरयञ्च इति बहुविचार्य यथास्माभिर्भवान्निश्चितस्तथेत्याशयेनाहुः। नेति। भवान्करुणाहीनः प्रेयसीदुःखसन्ततिमवलोक्याप्यद्रवीभूतस्वान्तः गोपिकायाः अस्मदादिगोपनपरायाः करुणानिधिभूतायाः परकीयसुखदुःखाभ्यां तदाविष्टस्वान्तायाः श्रीयशोदायाः नन्दनस्तदीयानां दुःखप्रदत्वादानन्दजनकः सुतो न भवति तर्हि कोऽहं निश्चित इतिचेत्तत्राहुः। सर्वप्राणिनामन्तर्यामी स एव परमदुःखवतां दुःखं पश्यन्नपि तदन्तः सुखं वसति सर्वान्तःस्थस्य तस्य बहिराविर्भावे निमित्तमपि वयं विद्म इत्याहुः। विखनसेति। स्वसृष्टिवृद्धिमभीप्सुना ब्रह्मणा विश्वगुप्तये प्रार्थितस्त्वञ्चत्त्वा जीवानां मोक्षो भवेत्ततस्त्वमवतीर्य्य गुप्तस्तिष्ठ तदेश्वरवादिनामपीत्थीश्वरं मन्यमानानामपि मोक्षो दुर्लभो भविष्यति अत एतेन मे सृष्टेर्वृद्धिर्भविष्यतीति विधिवाञ्छितसिद्ध्यर्थं परदारपरद्रव्यचौर्य्यादिस्वस्वभावप्रतिकूलं स्वगोपनार्थमङ्गीकर्तुं सात्वतां कुले उदेयिवान् अत एव परदाराणामस्माकं सख्यमाश्रितवानिति सम्बोधनाशयः यद्यपि स्वगोपनार्थमेव त्वं प्रवृत्तस्तथाप्यस्मद्दुःखकरमौदासीन्यं किमिति स्वज्ञापकं चिह्नं पुनर्गृहीतवानतः स्वप्रकटतासम्पातात्सर्वथानाश्रयणीयमिति भावः यद्वा विश्वस्य प्रपञ्चस्य मोक्षमार्गे प्रवृत्तिसम्पादनेन स्वरक्षणार्थं सात्वतां दयादिसात्त्विकधर्मवतां कुले तेपामपि त्वत्तो वैमुख्यसम्पादनार्थमुदेयिवान् अस्माकमपि स्वधर्माच्छिच्युतिसिद्ध्यर्थं सख्यं गृहीतवानिति सम्बोधनाशयः यद्वा प्रथमनिर्दिष्टस्य नञः सर्वपदैः सम्बन्धः भवान् गोपिकानन्दनो न खलु प्रसिद्धं तद्रक्षणाव्यावृतत्वात् नाप्यखिलदेहिनां दृक्तभावज्ञः अस्मन्मनोगतप्रेमातिरेकाज्ञानात् तथा विखनसा न हिंस्यात् सर्वाभूतानीत्यादिवेदवाक्यैर्विश्वगुप्त्यर्थं न प्रार्थितो यथोक्तप्रार्थनावाक्यमपि न श्रुतवान् अस्मद्धिंसापरायणत्वात् नापि सात्वतां कुले उदेयिवान् तत्कुलोचितकृपालुत्वाद्यदर्शनात्तथा तद्धर्माऽसम्पादनाद्वृथैव गोपिकानन्दनेत्यादिना ख्यातोऽसीति भावः अत एव सखित्वेन ख्यातः सखा न भवसि शत्रुधर्माक्रान्तत्वादित्याशयेन सम्बोधयन्ति हे असखे इति निवृत्तिपक्षे खलुशब्दो निषेधे भवान् गोपिकानां श्रुतीनामस्माकमानन्दकरो न भवतीति न यतोऽखिलदेहिनामन्तरात्मदृक् "योविज्ञाने तिष्ठन्विज्ञानमन्तरोयमयति यो विज्ञानं वेदैष त आत्मान्तर्याम्यमृत"इतिश्रुतेः विशेषेण खनति वेदार्थं विचारयतीति विखना विद्वान् तेनार्थितः प्रार्थनाविषयीभूतमोक्षस्वरूपो विश्वस्य सर्वस्य कार्य्यकारणसङ्घातस्य गुप्तये

**विरचिताभयं वृष्णिधुर्य ! ते चरणमीयुषां संसृतेर्भयात् ॥**
**करसरोरुहं कान्त ! कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ५ ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

सह खैरिन्द्रियैः सह वर्तमानः सखः सन् सत्त्ववतां मनआदीनां समुदाये उदेयिवान् "अनेन जीवेनात्मनानु प्रविश्य नामरूपे व्याकरवाणि अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां जीवभूतां महाबाहो ! ययेदं धार्य्यते जग"दिति श्रुतिस्मृतिभ्याम् ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भवान् सर्वात्मा सर्वेश्वरो यथान्येषां जनानां तत्तदधिकारानुसारेण मनोरथान् पूरयति तथास्माकं मनोरथमपि पूरयेत्याशयेनाहुः काश्चित् । हे सखे ! भवान् गोपिकानन्दनः यशोदासुतो न किमपि त्वस्त्येव तथा विखनसा ब्रह्मणा विश्वगुप्तये नार्थितः किं न प्रवर्तितः किमपि तु प्रवर्तित एव तथा सात्वतां यादवानां कुले न उदेयिवान् न उदितः किमपि तूदित एव किंबहुना अखिलानां देहिनामन्तरात्मदृक् न किमपि त्वस्त्येव एवमस्मन्मनोरथसम्पादने तव को भार इति भावः ॥ ४ ॥

---

### भाषा टीका ।

हे सखे आप गोपिका यशोदा के पुत्र नहीं हो । आप सब प्राणिन के अंतरात्मा हौ सर्वज्ञ हो हे सखे इस संसारकी रक्षा करवे को ब्रह्मा की प्रार्थनाते आप भक्तों के कुल में उदित भये हो ॥४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात् त्वद्भक्तानामस्माकमेतत्प्रार्थनाचतुष्टयं सम्पादयेत्याहुः । विरचिताभयमित्यादिचतुर्भिः । हे वृष्णिधुर्य ! संसृतेर्भयात्त्वच्चरणमीयुषां शरणं प्राप्तानां प्राणिनां विरचितं दत्तमभयं येन तत्तथा हे कान्त ! कामदं वरदं तथा श्रियः करं गृह्णातीति तथा तवकरसरोरुहं नः शिरसि धेहि ॥ ५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

विरचिताभयमिति । मोक्षप्रदत्वमुक्तं कामदम् अर्थिनां सर्वाभीष्टप्रदमिति त्रिवर्गदत्वं भक्तिदत्वं च श्रीकरग्रहमिति प्रेम्णा प्रियजनवश्यत्वं रसिकत्वञ्च एषां यथोत्तरं श्रैष्ठ्यमूह्यं सरोरुहरूपकेण सहजशीतलमधुरत्वादिना स्वतः फलरूपत्वं सूचितमेव अतो नः शिरसि धेहि अस्माकं तत्तत्सिद्धये इति भावः । तत्र मोक्षो नाम निर्विघ्न प्रेमसम्पद्वृद्धये विविधसंसारदुःखपरम्परानिवृत्तिरेव ज्ञेयः त्रिवर्गोऽयं प्रेमसाधनोपयोग्येव अन्यच्च भक्तानामुपेक्ष्यमेव एतच्च प्रीतभक्तिसिद्धान्तमते ज्ञेयं तासान्तु मते शिरसि श्रीहस्तधारणमेव फलमन्यच्च तत्सम्भावमात्रस्तोत्रं ननु तद्योग्यानुरूपमितिचेत् सत्यं निजमाहात्म्यापेक्षया धेही त्याहुः । वृष्णिधुर्य्य वृष्णिन्द्र धुर्य्य ! दमनसमर्थ इति स्वपक्षे कृपाकरणं दर्शितं यद्वा वृष्णिधुर्य्य हे निजाशेषगुणरूपादिमाधुरीप्रकटनाय यदुकुले ऽवतीर्णेत्यर्थः । गोपानामपि यादवत्वात् तत्र भावविशेषेण त्वया धेयमित्याशयेनाहुः । कान्त ! हे प्रियेति अन्यत्तैर्व्याख्यातं यद्वा सरोरुहरूपकेण ध्वनितं तापहारित्वादिना दुःखध्वंसनसुखापादनाद्यात्मकं सर्वार्थप्रदत्वं तथा सहजशीतलत्वादिना च ध्वनितं स्वतः परमफलत्वमेव दर्शयन्ति विरचितेत्यादिना । संसारभयादपि प्रपद्यमानानां विरचितमभयं सर्वतो भयाभावो येन अतोऽस्माकं पुनर्विरहभयं नाशयेति भावः कान्तश्च तत्कामदश्चेति स्वतः सर्वार्थरूपत्वं सर्वार्थप्रदत्वञ्चोक्तं कामदत्वात् कान्तत्वस्य श्रैष्ठ्येन पश्चान्निर्देश्यस्याप्यादौ निर्देशः श्रीभागवतामृतोक्तप्रीतभक्तिसिद्धान्तापेक्षया तात्कालिकस्वाभिप्रेतानुसारेण वा अतस्तत्प्राप्तिर्निजकामपूर्त्तिश्चाभिप्रेता तच्च सम्भवेदेवेत्याहुः । श्रीति तदूदृष्टान्तेनास्मास्वप्यपेक्षासम्भवादिति भावः यद्वा श्रीकरग्रहमपि धेहि तत्र हेतुः वृष्णिधुर्य्येस्येव एतदनुसारेणाग्रमनोरथं कुर्वताक्रूरेण विस्तार्य्य वक्ष्यते अप्यङ्घ्रिमूले पतितस्येत्यादि तत्र कान्तेत्यस्य यद्वेति कामदमित्यस्य च समर्हणमिति विस्तरः परं स्पष्टमेवेति । यद्वा भयतः शत्रुभयेन संसृतेरितस्ततसंसरणात् पलायनात् चरणमीयुषां प्रपद्यमानानां जनानां वैरिविनाशेन विरचित भयं श्रीकरग्रहं श्रीकराः सम्यक्करेखामयाः शङ्खचक्रादयः तान् गृह्णातीति तथा तदैश्वर्य्यं विनायमर्थः ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वानुसारेणैवैश्वर्य्यं संभाव्याहुः । विरचितेति । विरचिताभयमिति मोक्षप्रदत्वमुक्तं कामदमिति धर्माद्यार्थिनां सर्वाभीष्टप्रदमिति त्रिवर्गदत्वं भक्तिदत्वं च श्रीकरग्रहमिति प्रेम्णा प्रियजनवश्यत्वं च एषां यथोत्तरं श्रैष्ठ्यमूह्यं सरोरुहरूपकेण सहजशीतलमधुरत्वादिना स्वतः फलरूपत्वं सूचितं ततो मोक्षो नाम निर्विघ्नप्रेमसम्पद्वृद्धये विविधदुःखपरंपरा निवृत्तिरेव ज्ञेयः त्रिवर्गोऽयं प्रेमसाधनोपयोग्येव अन्यच्च भक्तानामुपेक्ष्यमेव एतच्च सर्वं तद्गुणवर्णनं प्रेमोल्लासेनैव ज्ञेयं ननु तद्योग्या न यूयमिति चेत् सत्यं निजमाहात्म्यापेक्षया धेहीत्याहुर्वृष्णिधुर्य्य ! हे निजाशेषमाधुरीप्रकटनाय यदुविशेषकुलेऽवतीर्णेति तच्च भावविशेषेण त्वया धेयमित्याशयेनाहुः । कान्त ! हे प्रियेति अन्यत्तैः यद्वा विरचितेत्यादिना संसारसंबीन्धपापहारित्वेन शौर्य्यमुक्तं कान्तं च तत्कामदं चेति स्वतः सुखदत्वेन सर्वाभीष्टप्रदत्वेन च दातृत्वं श्रीकरग्रहम श्रियः सम्पदधिष्ठात्र्याः स्वगोकुले वशीकारात् करमिव गृह्णाति यत्तदित्यनेन सर्वसंपदाश्रयत्वमतोऽस्माकं विरहभयनाशः तद्रूपाभीष्टप्राप्तिः तत्प्रात्य्यानुषङ्गिकसर्वपत्प्राप्तिश्च तेनैव सिध्येदिति भावः । वृष्णिधुर्य्ये वृष्णिविशेषव्रजराजकुलतिलकेति वयं स्वाभाविकत्वत्पाल्या नैवोपेक्ष्या इति

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

भावः। उभयथापि शिरसि धेहीति तेनास्मान् वाढमङ्गीकुरुष्वेति तात्पर्यम् ॥ ५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्मात्तावकानामस्माकमभि मतमेतच्चतुष्टयं सम्पादयेत्याहुश्चतुर्भिः। विरचितेतिति। हे वृष्णिधुर्य ! संसृतेः भयदात् संसाराद्भयात्तव चरणमीयुषां शरणङ्गतानां विरचितं दत्तमभयं येन तत्कामदममीष्टदं तथा श्रियो लक्ष्म्याः करं गृह्णातीति तथा तत्करसरोरुहं कान्तं कमनीयं नोऽस्माकं शिरसि निधेहि ॥ ५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गोप्यः स्वतत्त्वज्ञानं विज्ञापयन्ति। स इति। गोपिका नन्दयतीति गोपिकानन्दनः सः भवान् हे सखे ! विश्वगुप्तये जगद्रक्षार्थं सात्वतां यदूनां कुले उदेयिवान् उदयं गतः जन्मभजनाय योग्यो नेत्याशयेनाहुः। अखिलेति। अखिलदेहिनामन्तर्यामित्वेन द्रक्ष्यति पश्यतीति यद्वान्तरात्मानं स्वरूपं पश्यतीति अनश्नन्नन्यो अभिचाकशीतीति श्रुतिः किञ्च विखनसार्चितः ब्रह्मणा पूजितः चि रोद्धिगुरुरित्यर्थः। यद्वा यः सत्वतां कुले उदेयिवान् स भवान् गोपिकानन्दनः खलु न भवतीत्यर्थः। निषेधे वागलङ्कारे वीप्सनेनुनयेखल्विति अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वेति त्वायोग आक्षेपापोक्षिकः तर्हि क इति तत्राहुः। अखिलेति। न खल्विति पाठे वाक्यालङ्कारार्थं ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननूक्तप्रकारेण मन्त्रयेण ये यथा मां वदन्ति तथैवाहं नान्यथा शङ्कनीयमितिचेत् तदैवं क्रियतामित्याहुः। विरचिताभयमित्यादि। हे वृष्णिधुर्य्य ! विश्वगुप्तिपर विश्वगुप्तये सात्वतां कुले उदेयिवानिति विश्वगुप्तिनिष्ठत्वपक्षमाश्रित्य संबोधने सर्वेषां नो रक्षणं क्रियतामिति भावः। तदेव किंप्रकारं तमाहुः हे कान्त ! करसरोरुहं नः शिरसि धेहि तदा सर्वा एव वयं जीवाम इत्यर्थः कीदृशं विरचिताभयं केषां ते तव चरणमीयुषां कस्मात् संसृतेर्भयात् अभयमिनियावत् कीदृशं श्रियो लक्ष्म्याः करग्रहो यने तत्तथा श्रियः करग्रहणमात्रप्रयोजनमिति अस्माकन्तु कामदं सर्वाभीष्टप्रदं शिरसीति याचकरीत्या प्रथमतोऽल्पमेव याचनं तेन दैन्यं च व्यज्यते ॥ ५ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

अन्याः पुनः सात्विकसात्विक्यः राजसप्रधानाभ्यो विशिष्टाः अप्रार्थितश्च भगवान्न दास्यतीति भगवत्करस्य स्वशिरः संबन्धं प्रार्थयन्ति। विरचिताभयमिति। हे स्वामिन् ! हृदयं स्फुटति अतः यथा सर्वाङ्गे आप्यायनं भवति तथा शिरसि करसरोरुहं धेहि शीतलं हि कमलं भवति तत्रापि सरोजातं तत्रापि कर एव सरः स्नानं सरसिजस्थानञ्च अत उद्धरणादिना न रसालतापगमः कान्तेति संबोधनं प्रथमतः शिरसि हस्तस्थापनेन स्वाधीनीकरणं द्योतितं किञ्च न केवलं हस्तस्तापमेव दूरीकरोति किन्तु कामदश्च अभिलषितं कामं प्रयच्छति। ननु भगवान् पुरुषोत्तमः योगिध्येयः कथं स्त्रीणां स्पर्शं करिष्यतीति चेत्तत्राहुः। श्रीकरग्रहमिति। श्रियाः करस्य ग्रहो ग्रहणं येन मतो भगवान् गृहस्थ इति यत्र लक्ष्म्या हस्तं गृह्णातीति अत्रास्मच्छिरोग्रहणे किम्भविष्यतीति भावः। ननु लक्ष्मीर्विवाहितेति विधिवशात् तस्या हस्तग्रहणं भवतीनां ग्रहणे को हेतुरितिचेत्तत्राहुः। संसृतेर्भयात् शरणमीयुषां विरचिताभयामिति। यथा विधिर्विवाहे तथैव शरणागतपालनेऽपि विवाहापेक्षया शरणागतरक्षा महती स साधारणधर्मः अयमश्वरधर्म इति। नन्वयं निषिद्धः प्रकार इति कथम्पालनमिति चेत्तत्राहुः। हे वृष्णिधुर्येति वृष्णिर्हि यदुवंशोद्भवः बहुस्त्रीकः यदुवंशकर्त्ता तद्वंशेऽपि भगवान् धुर्यः श्रेष्ठः तत्रापि स्त्रियः संसारभयात् समागताः नहि संसारः स्वभावत एव दुष्टः किन्त्वसहादुःखहेतुरिति तथा वयमपि महद्दुःखं प्राप्नुम इति दुःखद्वारा भवांस्तन्निवर्तक इति अनेनैव निर्भयतापि सूचिता अतः कान्तयोधनात् भवानेव भर्ता अतः स्त्रीणां यतमनुस्मरन् वाञ्छितं कुर्वित्यर्थः ॥ ५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु भोः प्रियभाषिण्यः ! युष्माकं प्रणयकोपोक्तिपीयूषपानार्थमेवान्तर्हितं तदधुना लब्धाभीष्टोऽस्मि यथेष्टं वरं वृणुतेति तत्प्रसादे किं सम्भाव्य साश्वासं पृथक् पृथगभीष्टं प्रार्थयन्ते विरचितेत्यादि चतुर्भिः। हे वृष्णिधुर्य ! निजकुलकमलप्रभाकर नः शिरसि करसरोरुहं धेहि अर्पय। किमर्थं तत्राहुः। कामदं यस्य शरप्रहारभयात् त्वां प्रपन्नास्तं कामं द्यति खण्डयतीति तच्छेषभङ्ग्या कामं ददद्पि। न चात्र तस्याः शक्तिरिति वाच्यम्। यतः संसृतेर्भयात् चरणमीयुषां प्रपन्नानां जनानां विरचिमभयं येन तत्। येन संसारभयादपि रक्षितुं शक्यते तस्य कामभयाद्रक्षणे कः स्वल्पायास इति भावः। ननु तर्हि यो वक्षःसु दधामि तत्रैव ममापि धित्सा वर्त्तते तत्र नेत्याहुः। श्रीकरग्रहमिति श्रिया लक्ष्म्या कराभ्यां ग्रहणं तद्धारणार्थं यस्य तद्वक्षसि करधित्सायां यथा लक्ष्म्या वार्यते तथैवास्माभिरपि तद्वारणीयमेवेति भावः ॥ ५ ॥

---

### केनचित्कृता विशुद्धरसदीपिका।

अथ परकीयाभिमानिन्यः किञ्चिद्दैन्यमवलम्ब्य श्लोकचतुष्टयेन मनोरथचतुष्टयं प्रार्थयन्ति अयमाशयः प्राणनाथ ! यदि भवास्त्रियमन इति मन्यसे तर्हि त्वदेकजीवनानां प्रार्थितमिदं त्वरितमेव सम्पादय यदिचेद्वरस्तदा त्वद्भक्तानामस्माकं प्रार्थितं साधयेति यदि वा स्वाकमनवलोकनं प्रतिज्ञातं तर्हि वाञ्छाकल्पतरुस्वभावेनैवं विधेयमिति धर्मराजसावित्रीसंवाद मवतारयन्ति तव हि तत्पतेर्जीवनं विनान्यत्सर्वमपि सम्पादयि-

### केन चित्कृता विशुद्धरसदीपिका ।

स्यामीति धर्मराजप्रतिज्ञायां सत्यवत एव सकाशात्पुत्रपौत्रमुत्पादयिष्यामीति सावित्र्याः प्रार्थितसिद्धिरितिमहाभारते स्थितं तत्र विरचिताभयमिति मोक्षप्रदत्वमुक्तम् "अभयं वै जनक प्राप्तोऽसी"ति श्रुतेः कामदमिति त्रिवर्गप्रदत्वं तत्र मोक्षो नाम निर्विघ्नप्रेमसमृद्धये विविधदुःखपरम्परानिवृत्तिरेव ज्ञेया त्रिवर्गोऽपि भक्तिसाधनोपयोग्येव अन्यस्य तदेकभक्तेरुपेक्षितत्वात् श्रीकरग्रहमिति प्रेम्णा प्रियजनवश्यत्वं रसिकत्वं च यद्वा सेर्ष्यमाहुः—

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते नारायणः सुखम् ॥

इत्यभिज्ञातोक्त्यास्मद्दुःखानवकलनं हि त्वत्संसर्गदोषादेवेति भावः यद्वा साकूताभिधानं तथा हि—

धनवन्तो हि जानन्ति करुणाः परवेदनाम् ।
श्रीदामानं वासुदेवश्चकार धनदोपममिति ॥

सरोरुहरूपकेण च शीतलमधुरत्वादिना स्वतः फलरूपत्वं सूचितम् एतच्च तद्गुणवर्णनं प्रेमोल्लासेनैव वस्तुतस्तु श्रुतिमुनिरूपत्वादेतासां प्राग्जन्माहितसंस्कारेणोन्मत्तत्वाच्च रसेनाप्यविरुद्धमिति ज्ञेयं वृष्णिधुर्येति कान्तेति च व्रजराजकुलतिलकपरमप्रेष्ठत्वाभिप्रायेणोक्तम् ॥ ५ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तस्मादेवं विधेहीत्याहुः । विरचिताभयमिति । वर्णितसम्बन्धेन स्वभावनानुरोधेन च सम्बोधयन्ति । कान्त ! हे स्वामिन्निति वहुस्त्रीकान्तत्वे सङ्कोचं सम्भाव्याहुः । वृष्णिधुर्येति वृष्णिर्यदुवंशप्रभवो बहुस्त्रीकस्तद्वंशधर तद्वंश्यश्रेष्ठ बहुकान्तत्वस्य वृष्णिशशबिन्दुप्रभृतिकुलपरम्पराप्राप्तस्य न हि त्वय्यसम्भव इतिभावः । कामवर्षिणां सुरतिलतानिचकानां श्रेष्ठ इति वा ते करसरोरुहं सरोरुहवन्मञ्जुसुरभिशीतलसन्तापोपशामकाह्लादजनकं नः शिरसि धेहि तथा च तव नः कामज्वलोपतापपरीक्षात्वत्करसरोरुह सम्बन्धेनास्मत्तापोपशमश्च भवेत् न इति बहुवचननिर्देशेन शिरसीत्यत्र जातावेकवचनं बोध्यं तथा चक्राभिककरधारणे सम्भावितकालविलम्बस्य विरहविकलानामसह्यतया युगपत्सर्वशिरस्सु करसरोरुहं धेहीति प्रार्थने करे बहुवचननिर्देशो भाव्यस्तत्र तददर्शनेनैकवचनप्रयोगेण भगवत्करस्य सर्वतः पाणिपादं तदित्यादिशास्त्रं प्रसिद्धं विभुत्वमेव सूचितं तथा च विभोर्विभुसर्वाङ्गस्य युगपद्बहुधाविर्भावसंभवेन नःसमस्तापोपशमो दुःशक इति ननु बहुकामिनीनां निकामकामतापोपशमे का मम शक्तिस्तत्राहुः । विरचिताभयमिति । संसृतेः आधिदैविकाध्यात्मिकाधिभौतादितापलक्षणसंसारस्य भयात् चरणशरणमीयुषामसंख्यातानां विशेषेण पुनः कदापि तत्सम्भवसम्भानाशून्यतया तन्मूलाज्ञानबाधेन रचितमभयं येन तथाभूतेन तस्यैतत्तापोपशमनमशक्यं विशेषतः कामतापोपशमकत्वमेवाहुः । कामदमिति । कामं द्यति खण्डयतीति तथा पञ्चाङ्गुलिपञ्चशिरोनखशशिधरतयास्मरहररूपत्वत्करस्य कामज्वरहरणकरणं न दुष्करं यद्वा संसृतिभयोपशमकपरमहंसध्येयस्य कमनीयस्पर्शो नोचितस्तत्राहुः । कामदमिति । कामान्ददातीति तथा न केवलमपवर्गप्रदमेव किन्तु सर्वकामप्रदमपि किञ्च त्वत्कामविहार एव कामसंसृत्युभयतापापहारकोऽतस्त्वद्विहार एव परमहंसैर्ध्येयस्तदुक्तम्—

चौरो यो नवनीतस्य जारो वल्लवयोषिताम् ।
ध्येयः सदैव साधूनां चौरजारशिरोमणिः ॥
भगवतापि न मय्यावेशितधियां कामः कामाय कल्पते ।
भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन इति ॥

कामदत्वे सर्वकामदशक्त्याश्रयत्वं प्रमाणयन्ति । श्रीकरग्रहमिति श्रियोऽपि कामदत्वे किमुवाच्यमन्यकामदत्वमित्यपि ध्वनिः यद्वा हे कान्त ! मधुरकोमलकान्तिमत्करसरोरुहं नः सर्वासां शिरसि धेहि तथा च संसृतेर्भयाद्विरचिताभयं यत्करं तदपि यथा सरोरुहवत्कोमलं तथा तव कोमलपद्भ्यां यद्वने संसरणं तद्भयादेव चरणमीयुषां नो विरचिताभयं तावद्विधेहि त्वद्विरहकामसन्तापापेक्षयापि त्वत्पदकञ्जखेदसम्भावनाभयं नो दुःसहं तन्निवर्त्तय ततः सर्वकामदं यत्तन्नः कामदं कुरु तथा श्रियः करं गृह्णातीति तथाभूतं करं नः श्रीकरग्रहं नः श्रीशोभाकरग्रहे एव यस्य तादृशं विधेहि त्वद्विरहे निःश्रीका नः स्वकरग्रहेण श्रीमतीः कुर्विति भावः । यद्वा हे कान्त ! कानां सर्वकामादिसुखानामन्तं पर्यवसानं यस्मिन् त्वद्विश्वासास्पदे नो हृदि यत्कामस्य संसृतिः सम्यग्बलोद्रेकेण सोपद्रवतया सरणं तद्भयादेव चोऽवधारणे तद्विजयोद्यतस्य तव रतिरणमीयुषां नो विरचिताभयं यथा स्यात्तथा करसरोरुहं नः शिरसि धेहि पञ्चकुसुमशरस्मरसमरकरणाय पञ्चाङ्गुलिदलं करसरोरुहमेवालं यद्वा रिपुरणे तद्रिपोरेवाग्रणीकरणं नीतिः तथाच सर्वकामदोऽपि पञ्चशिरःशशिधरो हरः कामदःकामावखण्डक इति पञ्चाङ्गुलिशीर्षणि नखचन्द्रधरः कर एव नः सर्वथा कामसुखदोऽपि कामज्वरावखण्डकोऽग्रणीतया तं नः शिरसि धेहि ततश्च तादृक्करसरोरुहस्य शिरस्यारोहे स्वत एव कामोपद्रवोपशमस्तथा श्रीकरग्रहं स्वश्रियैव सर्वान् करे गृह्णाति वशीकरोतीति तथा भूतमस्मद्दास्यापादकं नः श्रीकरग्रहं श्रिय इव करग्राहकं विधेहीति भावः ॥ ५ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तस्मात्त्वद्दर्शनानामस्माकमेतत्प्रार्थनाचतुष्टयं सम्पादयेत्याहुः । विरचितेति चतुर्भिः । करसरोरुहं नोऽस्माकं शिरसि धेहि तत्र स्थापनेनान्तःकरणस्थस्य तापस्योपशमो भविष्यति सरोरुहात्मकस्य हस्तस्यात्यन्तशीतलत्वादिति सरोरुहं हृदयेन सूचितं न केवलं तापोपशामकं किन्तु कामदं सकलमनोरथपूर्तिकरं ननु सकान्तस्येदं कृत्यमिति चेत्तत्राहुः कान्तेति । ननु योगिध्येयः कस्यापि कान्तो न भवति कुतो भवतीनामित्याशङ्कयाहुः । श्रियः करस्य ग्रहो ग्रहणं येन तत् तथाच गृहस्थो भगवान् यथा श्रियं हस्ते गृहीतवांस्तथास्मच्छिरसि हस्तं धारयितुं नास्ति किञ्चिद्बाधकमिति भावः । ननु श्रियो विधिपूर्वकं हस्तग्रहणे भवतीनां शिरोग्रहणे को हेतुरिति चेत्तत्राहुः । शरणमीयुषां तव शरणागतत्वाभिलाषूणां विरचितमभयं येन तत् एवञ्च विवाहितापेक्षयापि शरणागतानामस्माकं कामशत्रोः सकाशात्पालनमत्यावश्यकं शरणागतपालनस्येश्वरस्य तव निजधर्मः ननु तथापि निषिद्धोऽयं प्रकारः सर्वथापि वर्जनीय इति चेत्तत्राहुः । वृष्णिधुर्य ! यदुकुलोद्भवस्य बहुस्त्रीकस्य वृष्णेर्वंशे धुर्यः श्रेष्ठो भवान् पतित्वेन वृतोऽस्माभिरतो नास्ति दोषस्तस्मात्तद्दृष्टादृष्ट-

**व्रजजनार्त्तिहन्! वीर!योषितां निजजनस्मयध्वंसनस्मित !।**
**भज सखे ! भवत्किङ्करीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

दुःखमपाकर्तुं योग्योऽसीति भावः।यद्वा यस्माद्विश्वस्य गुप्तये भगवत उदयस्तस्माद्रक्षणस्यावश्यकत्वाद्यथास्मद्रक्षणं तथा त्वयावश्यं विधेयमित्याहुः । विरचितेति । मदीयाः भवत्य इत्याश्वासनार्थं करसरोरुहं नः शिरसि निधेहि तत्स्थापनेन त्रिवर्गसिद्धिरस्माकम्भविष्यतीत्याशयेनाहुः । कामदं यतोऽस्मात्कान्तत्वेनावतीर्णस्य भगवतोऽस्मन्मनोरथपूर्त्तिरावश्यकीत्याशयेन सम्बोधयन्ति । कान्तेति ननु भवतीनां सन्ति पतयोऽतः कथमहङ्कान्तः कथञ्च मद्धस्तसरोरुहं कामदमितिचेत्तत्राहुः । श्रीकरग्रहं यथा श्रीपतित्वेन प्रसिद्धा अपि न वस्तुतः श्रियः पतयः किन्तु सुवर्णादिमायिकरूपान्तायास्तस्या अत एव भगवद्धस्तकमलं तत्करग्रहं तथास्माकमपि मायिकरूपान्तरपतयस्ते मुख्यस्तु कान्तो भवानेवात एवास्मान् स्वीयत्वेन स्वीकृतवानित्याशयः किंच संसृतेर्भयाच्छरणमीयुषां विरचिताभयं मोक्षप्रदं पाठान्तरे चरणप्रपन्नानामित्यर्थः । सर्वस्य मनोरथ पुरुषफलप्रदानाय वृष्णिषु श्रेष्ठत्वेन भवानवतीर्ण इत्याशयेनाहुः । वृष्णिधुर्य्य ! अनभिज्ञापक्षे युष्मत्प्रार्थनामाकर्ण्य स्वस्मिंस्तत्करणसामर्थ्यमवधीयाहं प्रकाशितो भविष्यामीति तदभिप्रायमालक्ष्य सुकरं प्रार्थयन्ति हे कान्त ! करसरोरुहं नः शिरसि धेहि किमर्थमिति चेत्तत्राहुः । कामादिशरप्रहारपरस्य कामस्य खण्डनकरं तदुद्दीपकं चानेन रतिप्रार्थनमपि व्यञ्जयन्ति अन्यथा सर्वाऽप्यस्माकमलंक्रिया कान्तानुमोदनाद्वृथा भविष्यतीतिचेत्तत्राहुः । सम्यक्कुसृतेर्मार्गाद्यद्भयं तदुल्लङ्घनजन्यं तस्मादपि तव शरणागतानां विरचिताभयं इन्द्रादेरपि पराजयं कर्तुं समर्थस्य तव त्वदीयानाञ्च नास्ति सन्मार्गादपि भयं प्रबलेन त्वया प्रवर्तितस्य सन्मार्गत्वात् तदुक्तं "सर्वं बलवतां पथ्यं सर्वं बलवतां शुचिः । सर्वं बलवतां धर्मः सर्वं बलवतां स्वकमिति प्रागयं वसुदेवस्येत्यनुरोधेन वृष्णिधुर्य्येतिसम्बोधनं तथाच पालनशक्तिमतस्तवाऽस्मत्पालनमेवोचितमिति तदाशयः मानिनी पक्षे नोऽस्माकं मध्ये तव स्रुतेः सम्यक् पलायनादितोऽपि दूरतरतिरोधानाद्यद्भयंतदस्माकं प्राप्तानां शिरसि करसरोरुहं निधेहि यतः सर्वं विराचितमभयं येन जन्मान्तरे क्षत्रवंशोद्भवत्वादभयप्रदत्वमुचितमेव तव हस्तस्येति द्योतयन्त्यः सम्बोधयन्ति हे वृष्णिधुर्य्येति पुनश्च हे तत्कान्त ! तासां कामदं तथाच कान्तभावमङ्गीकृत्य येन हस्तकमलेन कामन्दत्तवांस्तस्याधुना शिरसि स्थापनेको विलम्ब इतिभावः पुनश्च श्रीकरग्रहं शोभाकरग्रहणयोग्यं तथाच तदभावे तासां शिर एव पतिष्यतीति भावः । निवृत्तिपक्षे अतः स्वस्वरूपप्रकाशनार्थमेवं कुर्वन्तीति प्रार्थयन्ति । विरचितेति । हे वृष्णिधुर्य्य ! नृणां निःश्रेयसार्थं गृहीतकृष्णाद्यवतार तव शरणमीयुषां भगवच्चित्तत्वादिप्रपन्नलक्षणवतां श्रीकरग्रहं मोक्ष श्रीसम्पादकमाग्रहं नोऽस्माकं श्रुतीनां शिरसि मस्तके उपनिषद्भागे कं सुखं तद्रूपो रसोब्रह्मानन्दात्मकं रस रानि ददातीति करसरस्तं निधेहि श्रीकरेति सम्बोधनं वा तथात्वे सति मत्प्राप्तिस्तेषां सुकरेत्यत्राहुः हे कान्ताऽस्मत्प्रविपाद्यं कामं द्यति खण्डयतीति त सर्वचासनोच्छेदकरं पुनश्चारुहम् अरूणि वेदरूपशब्दे प्रमाणाद्वहानि मतानि हन्तीनि तथा तम् अत एव संसृतेर्भयाद्विरचिताभयम् एवंभूतग्रहस्य त्वत्कृपां विनोदायासम्भवात्तदर्थं त्वां प्रार्थयामइति भावः ॥ ५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे वृष्णिधुर्य्य!संसृतेर्भयात् पुनःपुनर्जन्ममरणादिरूपात् संसारभयात् ते तव चरणमीयुषां पादपद्मशरणं प्राप्तानां जनानां विरचितं संपादितमभयं येन तत् तथा बहूनां कामदमभीष्टदं तथा श्रियः करं गृह्णातीति श्रीकरग्रहम् एवं भूतं ते करसरोरुहं हे कान्त ! नः शिरसि धेहि ॥ ५ ॥

---

### भाषा टीका ।

हे यादवों के श्रेष्ठ ! संसार के भयते जो आपके चरण के निकट आये तिनको अभय देवेवारे सब के मनोरथ पूरण करवे वारे लक्ष्मी के हस्त को ग्रहण करवे वारे हस्त कमल को हमारे मस्तकों पै धारण करो ॥ ५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे व्रजजनार्त्तिहन् ! हे वीर ! निजजनानां यः स्मयो गर्वस्तस्य ध्वंसनं नाशकं स्मितं यस्य तथा भूत हे सखे ! भवत्किङ्करीर्नोऽस्मान् भज आश्रय स्मेति निश्चितं प्रथमं तावज्जलरुहाननं चारु योषितां नो दर्शय ॥ ६ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

न केवलं शिरसि श्रीहस्तनिधानमात्रं कार्य्यं किं त्वस्माकं कामश्च पूरयितव्य इति प्राक् सूचितमेवैतत्तुर्य्येनाभिव्यञ्जयन्तिव्रजेति । एतेन भजनस्य योग्यत्वमुक्तम् अन्यथास्मदन्त्यदशापत्त्याआर्त्तिहननासिद्धिः वीरत्वेदयस्यापि दाने सामर्थ्यमुक्तं स्मयो मानः तव स्मितमात्रेणापि मानो निरस्यते तदर्थमन्तर्धानेनालमिति भावः । यद्वा अनेन परममनोहरत्वमभिप्रेतम् अतस्तद्वद्दर्श द्रष्टुमपेक्ष्यत इति भावः । सखे ! इति भजने प्रकारविशेषः सूचितः यद्वा अभजनेऽस्माकं दुर्दशया पश्चात्त्वयापि किल दुःखं लप्स्यते सख्येन तुल्यव्यथत्वात् किंवा विश्वासघातिदोषप्रसक्तत्वादितिभावः । ननु तत्र तत्रादरो नास्तीतिचेत्तत्र सदैन्यमाहुः भवतः किङ्करीरिति दीनानां शरणागतानामुपेक्षापरमायुक्तेतिभावः। यद्वा तर्हि कश्चिदन्यमनुगच्छतेतिचेत्तत्राहुः । भवत एव नत्वन्यस्य किङ्करीरिति जलरुहवदाननं चारु यथा स्यात्तथेति प्रेम्णा स्मितभ्रूविलासकटाक्षचालितं किम्वा निकटागमनेन सम्यक्तया

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

दर्शयेत्यर्थः । जलरुहेत्युपमया दर्शनमात्रेण विरहसन्तापहारित्वमभिप्रेतं योषितामिति तत्रास्माकं सामर्थ्याभावात् स्वयमेव कृपया दर्शयेति भावः । यद्वा अनन्यजीवनानामस्माकमन्यथा मरणमेवेति किम्वा त्वद्दर्शनसुखस्य योषितां हृदयैकानुभवनीयत्वात्तासां मध्येव तद्दानं योग्यमिति सूचितम् अन्यैस्तैर्व्याख्यातं यद्वा योषितां मध्ये ये निजजनास्त्वत्परिग्रहाः स्वीयत्वेन स्वीकृता वा तेषां स्मयध्वंसनस्मित अत एव निजदासीर्भज तत्प्रकारमेवाहुः । जलेत्यादिना । आप्याययस्व न इत्यन्तेन यद्वा योषितां वीर हे योषिद्वधे समर्थेत्यर्थः । अतो वयं मृतप्राया एव वृत्ताः तदधुना अभवत्किंकरी अन्या अदासीरेव भज चारुजलरुहाननञ्च नो दर्शय न दर्शय मरणस्यैव निश्चितत्वात् इदश्च प्रणयकोपेन परमार्त्त्या चोक्तमन्यत्समानम् ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं वैयग्र्येणादावङ्गीकारमात्रं प्रार्थ्याभीष्टविशेषान् प्रार्थयन्ते त्रिभिः तत्र प्रथमेन सामान्यतः सङ्गं प्रार्थयन्ते व्रजेति भज अस्माकं दुःखं प्रतिकुर्वन्निकटे तिष्ठ अहो आस्तां तादृशोऽपि मनोरथः प्रथमं तावच्चारु मनोहरं जलरुहतुल्यमाननमपि दर्शय तत्र व्रजजनार्त्तिहन्निति भजनस्य योग्यत्वमुक्तम् अन्यथास्मदन्त्यदशापत्त्या आर्त्तिहननासिद्धिः स्यात् वीरेत्यदेयस्यापि दानसामर्थ्यमुक्तं निजजनो निजप्रियाजनः तव स्मितमात्रेणापि मानो निरस्यते तदर्थमन्तर्द्धानेनालमिति भावः । अनेनैव परममनोहरत्वमप्यभिप्रेतम् अतस्तदवश्यं द्रष्टुमपेक्ष्यत इति भावः । सखे ! इति भजने प्रकारविशेषः सूचितः यद्वा अभजनेऽस्माकं दुर्दशया पश्चात्त्वयापि किल दुःखं लब्धव्यं सख्येन तुल्यव्यथत्वात् किंवा विश्वासघातदोषप्रसक्तेरिति भावः । अथ सख्ययोग्यस्याप्यात्मनो विरहदैन्येन औद्धत्यमाशङ्क्याहुः । भवतः किंकरीरिति योषितामिति तत्रास्माकं सामर्थ्याभावात्स्वयमेव कृपया दर्शयेति भावः । अन्यस्तैः यद्वा योषितां मध्ये ये निजजनास्त्वत्परिग्रहाः तेषां स्मयध्वंसनस्मित ! अत एव निजदासीरस्मान् भज तत्प्रकारमेवाहुः । जलेत्यादिना । आप्याययस्व न इत्यन्तेन यद्वा परमार्त्त्या प्रणयकोपेनाहुः व्रजजनार्त्तिहन् तथाभूतोऽपि योषितां वीर योषिद्वधे समर्थेत्यर्थः । अतो वयं मृतप्राया एव वृत्तास्तथा निजजनमुखम्लापनकपटस्मित अधुना अभवत्किङ्करीरन्या अदासीरेव भज चारु जलरुहाननं च नो दर्शय न दर्शय मरणस्यैव निश्चितत्वात् अन्यत्समानम् ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निजजनस्मयध्वंसनस्मित ! माननीजनमानभञ्जनस्मित ! ॥ ६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे व्रजजनार्तिहन् ! हे वीर ! निजजनानां यः स्मयो गर्वस्तं ध्वंसयतीति तथा नन्द्यादेराकृतिगणत्वात्कर्त्तरि ल्युः तथाभूतं स्मितं यस्य हे तथाभूत ! हे सखे भवतस्तव किङ्करीर्नोऽस्मान् भजानुवर्तस्व स्म निश्चितमद्भुतं वा सुन्दरं जलरुहाननं तावत् योषितामस्माकं दर्शयस्वेति ॥ ६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विरिञ्च गुरुश्चेदपेक्षिताशेषपुरुषार्थप्रदः स्यात्तत्र कथं निर्णय इत्याहुः । विरचितेति श्रियःकरं गृह्णातीति श्रीकरग्रहं शरणमीयुषां पुंसां निधेहि हे कान्त ! कमनीय ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु शिरसि करार्पणेनैव चेद्यूयं जीवथ तदा सर्वा एव नयने निमीलयत शिरसि वः करमर्पयामि मैवमित्याहुः । व्रजेत्यादि हे व्रजजनार्तिहन् इति । हेतुमत्सम्बोधनं हे वीर ! सर्वसमर्थ तथा सति यथोपेक्षायां समर्थस्तथापेक्षायामपि तर्हि किमहमुपेक्षकः न निजजनस्मयध्वंसनस्मित किङ्करीरस्मान् भज ननु भजनं किं श्रयणं सेवनमित्यत्राहुः । जलरुहाननं दर्शय स्ववदनदर्शनमेव हि भजनमित्यर्थः । योषितामिति निर्धारणे षष्ठी योषितां मध्ये किंकरीर्न इत्यर्थः । अथवा हे व्रज जन व्रजा व्रजस्था एव जनाः परिजना यस्य हे योषितामार्तिहन् वीरेति देशीयस्तन्गध्संबोधनं वा ॥ ६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तामसी किञ्चिद्वैलक्षण्येन धार्ष्ट्येन तमेवार्थं प्रार्थयति । व्रजजनार्त्तिहन्निति । हे भगवन् एता वक्तुं न जानन्ति मया तु निर्धारितमुच्यते हे सखे ! इति अप्रतारणार्थं सम्बोधनं नः अस्मान् भजेति हितोपदेशः । ननु कथमेवं धार्ष्ट्यं निषिद्धश्च बोध्यते तत्राहुः । भवत्किङ्करीरिति । ये यथा मां प्रपद्यन्त इति हि तव प्रतिज्ञा अतो यथा किङ्कर्यो वयं भवन्तं भजामः तथा भवानपि भजतु किंकरीः त्वं तव प्रतिज्ञा च प्रसिद्धेत्याहुः । स्मेति न केवलमस्मद्भजने तव सैवैका प्रतिज्ञा हेतुः किन्तु अन्येऽपि हेतवः सन्ति प्रथममवतारप्रयोजनं व्रजजनार्त्तिहन्निति व्रजजनानामार्त्तिं हन्तीति तथा नातः परमन्या आर्त्तिरस्ति सामान्यप्रयोजनमेतत् विशेषप्रयोजनमाहुः । योषितां वीरेति कृष्णो भगवान् वीरे हि शूरा निराकरणीयाः अन्यगतकामादयः तत्र मुख्यः कामः स च बहुविधः अन्तर्बहिः पदार्थेन पूरणेन पूरयित्वा आश्रयाभावात् निवारणीयः अत एव लोके दातारः कीर्त्तिमन्तो भवन्ति वीरेभ्यः अतो भवान् महावीरः अन्तः स्थितेनानन्देन अतिदरिद्राणां ब्रह्मणापि पूरयितुमशक्यानामिच्छापूरकः अयश्चार्थस्तव सर्वजनीनः अतः योषितां वीरेतिसम्बोधनं नहि कृष्णाज्जगति कश्चिदेवं सम्बोधनमर्हति अपूर्णकामत्वात् अतोऽवतारसामान्यविशेषप्रयोजनाभ्याञ्च नो भज ननु सत्यं तथापि भवतीनामभिमानदोषनिवृत्त्यर्थं भजनं न क्रियत इति चेत्तत्राहुः निजजनस्मयध्वंसनस्मितेति । निजजनाः सेवकाः तेषां स्मयो गर्वः तस्य ध्वंसनार्थं स्मितं यस्य निजजनानां स्मयदूरीकरणार्थं परित्यागो नोपायः किन्तु तदर्थं स्मितमेव कर्त्तव्यं स्मितं हि मन्दहासः हासो जनोन्मादकरी च माया तस्या मन्दत्वं भक्तष्वे

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रवर्त्तनं नहि मायामोहव्यतिरेकेण कस्यचित् स्मयो भवति अत एव हास्यसङ्कोच एव साधनं निजजनानामपि धर्म एव दुष्टः ननु धर्मो अन्यथा निजजनत्वमेव न स्यात् इत्यलौकिकोपायः लौकिकेऽपि तव हास्येन ता अपि आत्मानं तुल्यं मन्यन्ते यदा पुनर्हास्ये सङ्कोचः तदैव तासां गर्वो निवर्त्तते किञ्च अभिमानो हि दोषः स तावदेव तिष्ठति यावत्तव स्मितयुक्तमाननं न पश्यन्ति नहि काचित्तादृशमप्याननं दृष्ट्वा स्वाभिमानं पालयितुं शक्ता नन्वेतल्लोके अप्रसिद्धं साधनत्वेनेति कथं ज्ञातुं शक्यत इत्याशङ्क्याहुः । जलरुहाननं चारुदर्शयेति । जलरुहं कमलं तत्सदृशमाननममृतस्राविं महामृते पीते कस्यचिद्दोषस्तिष्ठतीति युक्तिः साधनत्वे चेत्सन्देह एकवारं प्रदर्श्य पश्येत्यर्थः किञ्च अभिमानो हि मनोधर्मः तव आननन्तु चारु मनोहरं नहि धर्मिणि हते धर्मस्तिष्ठतीति सख्युः सखिभजनं युक्तमेव ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपरा आहुः । योषितां मध्ये ये व्रजजनास्तेषामार्तिं कन्दर्पशरप्रहारजनितां हन्तीति तथा तेन देव्यादीनामप्यन्ययोषितां तां न हरसि । यद्वक्ष्यते व्योमयानवनिताः कश्मलं ययुरपस्मृतनीव्य इति । हे वीर ! दुर्वारमारसंप्रहारमहाजिष्णो किञ्चास्माकं सौभाग्यार्थं गर्वं तद्दुःखं वामलक्षणं मानमपि न सहसे इत्याहुः निजजनानां स्मयध्वंसनं माननाशकं स्मितमपि यस्य । ननु वरं शीघ्रं वृणुत तत्राहुः । भवत् किङ्करीरस्मान् भज परिचर । ननु यदि मत्किङ्कर्यं एव यूयं तदा मां स्वपरिचरणे किमिति न प्रयुध्वे तत्राहुः । हे सखे ! इति । तर्हि ब्रूत किं वः परिचरणं तत्राहुः । जलरुहेत्यादि ॥ ६ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

अपि च व्रजेति भजनयेत्यत्वम् अन्यथा स्मदन्यदृशा पस्य तर्हि ननासिद्ध्यर्थत्वासिद्धेः धीरेत्यदेस्यपि द नयेग्यत्वं योषितामिति तदास्माकं सामर्थ्याभावात्त्वयमेव कृपया दर्शयेति भावः यद्वा योषितां मध्ये ये निजजनाः त्वत्परिग्रहाः तेषां स्मयो मानस्तस्य ध्वंसनं स्मितं यस्येति परममनोहरत्वं यद्वा ननु भवत्यो यौवनमत्ता इति त्यक्तास्तत्राहुः । निजेति । तव स्मितमात्रेणैव तत्प्रतीकारो भवेत्किमन्तर्धानेनेतिभावः । सख इति भजने प्रकारउक्तः कथमित्यत आहुः जलरुहाननं दर्शयेति परमार्त्यां प्रणयकोपेनाहुः । भवत्किङ्करीरिति ॥ ६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

मनोरथान्तरं प्रार्थयन्ति । व्रजजनार्तिहन्निति । व्रजजनानाम् आर्तिं हन्तीति तत्सम्बोधनं तथा च व्रजजनानां नो वृजिनं वर्त्तेयेति भावः अन्यथा तथात्वं न स्यात् नच हन्तर्हिंसागत्योरिति स्मृतेर्व्रजजनान् आर्तिं गमयतीति व्युत्पत्त्या वा व्रजजनानामार्तिं हन्तीति व्युत्पत्तिभेदेन वा भवतीनामार्त्यग्रगतावपि न तथात्वहानिरिति वाच्यं सर्वव्रजजनार्तिनिवर्तकत्वस्यास्मदर्थेऽर्थान्तरप्रयोगोऽनुचित एव तथा हे वीर ! विशब्दः पक्षित्वेन गरुडवाचकस्तमीरयतीति तथा नारायण एवार्तिं हरण यावतीर्णः कथमार्ति दास्यसीति भावः । ननु नाहमार्तिं ददामीतिचेत्तत्राहुः योषितां वीर प्राणस्य प्राणमिति श्रुतेः सर्वेषामीरः प्राणोऽपि योषितां त्वन्मूर्तिहृदयमनः प्राणानां नो विशेषेण ईरं प्राणभूत तथा च प्राणवियोगे जीवनाशमयप्रसिद्धौ किमुवाच्यं प्राणप्राण वियोगे चा ननु किमिति परकीये मयि प्रीत्यतिशयस्तदतिशये चैव गर्वो गर्वे पुनरेवं दैन्यं तत्राहुः । हे वीर विशेषेण प्रेरक सामान्यतः सर्वान्तर्यामिन् विशेषतो योषितां नो वीर विधितया प्रेरक तत्रान्तर्यामितया सर्वव्यवहारे मनोहरतया प्रीत्यतिशये वरदानेन तदर्थदर्शनादेन गृहादागमने वक्रोक्तिमुसितनिरीक्षणादिभिः स्थूणानिखननन्यायेन रागस्मरयोः सुदृढीकारे अत्यादरविहाराभ्यां स्मयः पुनश्च विरहेण दैन्ये प्रवर्तक तथाच स्वयमेव तथा प्रेरणेऽप्यधुना योषितां वीरत्वे सावीरहेण घातप्रवृत्तौ विश्वासघातः तादृशवीरस्य योषितां वीरत्वे यशोहानिश्च किञ्च स्मयनिवृत्त्यर्थमेव त्वयान्तर्हितेनाप्यन्तर्हितं तत्तु गुडदानेन रिपुशान्तौ विषदानमनुचितमिति न्यायेन मधुरसुस्मितेनैव सम्भवति स्मयोपशमे विरहविषोपयोगो न विधेय इत्याहुः । निजजनस्मयध्वंसनास्मितेति । स्मयध्वंसस्य स्मितमात्रसाध्यत्वेऽप्यन्तर्द्धानं त्वस्मद्धितार्थमेव प्रतिभाति तच्च निजजनेषु अनुचितमेवेति भावः किञ्च हे निजजन ! वस्तुतः सार्वात्म्याद्गोपरूपेणपरिणयात् वरदाने स्वीकरणादस्मदायत्तभावाद्दाहानाद्राते सुखप्रदानाच्च सर्वथा स्वीयतया निजजनस्मयत्वदीयनिजजनानाम्—

न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः ।

भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥

इत्यादिवचनेभ्योऽसम्भावितोऽपि स्मयो यस्मात् तथा यथाकथं चिज्जातेऽपि स्मये यस्य नाशायैव धनुरादिविस्फूर्जनयलौर्शौर्यापेक्षानिजजनानां नः स्मयध्वंसनं तु भ्रूधनुर्विस्फूर्जनपूर्वकसुस्मितेनैवेति वृथान्तर्द्धानादिकमिति भावः । किञ्च स्मयो मनोधर्मः स्मितेन मनोहरणे कुतस्तद्धर्मस्मयावस्थितिरिति तस्मात् हे सखे ! सामान्यतः सयुजा सखाया इति श्रुतिसिद्धसखे विशेषतो वरदानस्वीकारादिनाविष्कृतसख्य नोऽस्मान् भज सख्योःपरस्परभजनं चितेऽपि नोऽसमर्थत्वेन तव तु समर्थतया त्वयैव भजनीयं किञ्च भृत्याभावेनच सख्योऽपि वयं स्वीयभावेन भवत्किङ्कर्य एवेति भवतो भृत्यानुग्रहकातरस्वाभाव्याद्भवत्किङ्करीर्नो भज यद्वा यद्यपि वयमपि किमप्यतिविलक्षणत्वदेक गम्यसुखकर्यो ऽपि त्वद्भजना धीनमेव तत्सम्पादनसामर्थ्यं न स्वातन्त्र्येण मैथुनसुखस्य मिथुनसाध्यत्वादिति ननुपरोक्षं भजाम्येवाहं मम भजनाभावे भवतीनामनुरागविह्वलत्वाञ्जीवनादिकमेव न स्यात् कथमधुना भजनं प्रार्थ्यते तत्राहुः । जलरुहाननं दर्शय जलरुहाननम्बुमधुरसुरभितापप्राल्हादकमाननमपरोक्षं कुरु ननुभवदङ्गे वहुजलरुहमाला गृयञ्च जलरुहकरचरणविशाला कथंकराला कामज्वरज्वाला नोपशाम्यति कथञ्चैकेन मजलरुहाननेन तदुपशमस्तत्राहुः । चार्विति तवाननमेव चारु त्वदाननाभावे तु जलरुहाणि तादृक्स्वाङ्गानि चाचारुतया स्मरज्वरवृद्धेच्छेदकान्येवेति भावः ॥ ६ ॥

---

**प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ॥**
**फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अपराः प्रार्थयन्ति हे व्रजजनार्तिहन् ! व्रजजनपीडानाशाय कृतावतार ! तथा च स्वावतारसामान्यप्रयोजनमवलोक्य स्मदार्तिनाशनं तवोचितं नचातोऽधिका काचिदार्तिरस्त्यस्माकमिति भावः । किञ्च हे योषितास्वीर ! दनिशूरब्रह्मादिभिरप्यशक्यपूर्णायाः अस्मदिच्छायाः पूरक ! ननु सत्यमेव तथापि भवतीनाम् मानरूपं दोषमवलोक्य तन्निरासाय तिरोहितोऽस्मीतिचेत्तत्राहुः निजेति । निजजनानामस्मदादिलसेवकानां स्मयस्य गर्वस्य ध्वंसनं स्मितं यस्य तथाच स्मितमात्रस्यैवोत्कटप्रार्थनोत्पादनेन तन्नाशस्य संभावितकमर्थं तिरोधानाय प्रवृत्तोऽसीति भावः स्मितेन हाससंकोचेनैव गर्वध्वंसो भवतीति वा अतोऽस्मान्भज सेवय ननु पालनप्रार्थनाधिकारवतीनां भजेति प्रार्थनादद्यापि स्मयो न निवृत्त इति गम्यत इतिचेत्तत्राहुः । भवत्किंकरीरिति । अस्मत्कृतसेवनसदृशभवत्कर्तृकसेवनेनैवाऽस्मत्पालनं नान्यथा तच्चावश्यकं "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं"मिति भवत्प्रतिज्ञा सत्या तदनुसारेणैव गृहीतसखिभिःवस्य यथोक्तप्रार्थनायामनौचित्यशङ्का नोऽकार्य्येति द्योतनाय सम्बोधयन्ति हे सख ! इति अस्माकैङ्कर्य्यं प्रसिद्धं यद्वा यथेच्छसित था कुरु संप्रति कुड्मलात्मकं स्वमुखं चारु मनोहरमस्माकं दर्शयेति सदैन्यप्रार्थनम् अनाभिज्ञापक्षे हे वीर अदेयस्य दाने समर्थ नोऽस्मन्निकटे सर्वदा तिष्ठ प्रथमन्तु चारु जलरुहाननं योषितामबलानां नो दर्शय यतो हे व्रजजनार्तिहन् ! अन्यशास्मन्मरणावश्यंभावादार्तिनाशनव्रतभङ्गः स्यादिति भावः गर्वध्वंसनायान्तर्धानंतु नो चितं तस्य सुकरोपायसाध्यत्वादित्याशयेनाहुः । निजेति । ननु पूर्वं कुतो गर्वं कृतवत्यः इत्याशङ्क्य किङ्करीणामप्यस्माकन्त्वयैव सख्यपदे स्थापितत्वेन इत्याशयेनाहुः सखे भवत्किङ्करीरिति । यद्वा अस्मत्त्याग एव यदि तवाग्रहस्तर्हि संप्रत्यस्मन्मरणकाले चैरं स्वमुखपद्मं सन्दर्शय दृष्ट्वा प्राणत्यागं करिष्याम इत्यर्थः । मानिनीपक्षे व्रजजनार्तिहर्त्तापि योषितां वीरस्तद्वधे समर्थ अत एव निजजने यः स्मयस्तेन निजजनस्मयस्य ध्वंसनं स्मितं यस्य अतो भवतो यथेक्तप्रवृत्तिं दृष्ट्वा वयमपि सम्प्रति मरणायोद्युक्तास्तस्मात्त्वयास्मज्जीवनमपेक्षितमस्ति चेत्तर्हि शीघ्रमागत्य भवत्किङ्करीरस्मान्भज सेवनायाश्रय शठप्रतिशठंकुर्यादित्युक्तत्वाद्यथास्माभि भवानस्मद्दुःखाय तिरोहितस्तथा सख्योऽपि वयं तव दुःखाय धूर्तशिरोमणेस्तवाग्रे तिरोधानसामर्थ्याभावान्मारिष्याम इति सूचयन्त्यः सम्बोधयन्ति हे सख इति किञ्च झटितिजलरुहाननं चारु दर्शयान्यथा पश्चात्तापङ्करिष्यसीति भावः यद्वा जिघांसन्तंजिघांसीयादित्युक्तत्वात्सर्वा दण्डयितुक्रिमर्थं प्रवृत्तोऽसि एता भवत्किङ्करीर्भजप्रेष्ठ सेवय नोऽस्माकन्तु चारु जलरुहाननमात्रं दर्शय अपकर्तुरपि सख्युर्मुखदर्शनेच्छा न निवर्त्तते इदं प्रार्थयामः किङ्कर्म इति सख इति सम्बोधनाशयः निवृत्तिपक्षे स्वानुग्रहाद्रुपनिपत्तु लब्धाग्रहस्य व्रजो भेदस्तत्सम्बन्धिना आस्तिकशिरोमणिभूतस्य जनस्यार्त्तिं जन्ममरणलक्षणसंसृतिदुःखं हरतीति तथा यतो योषितां श्रुतिलक्षणस्त्रीणामस्माकं वीक्ष्यते अस्माकमस्मदीयानां च रक्षणे परमसमर्थ ! रक्षणप्रकारमाहुः । निजजनानां स्वभक्तानां स्मयाहंङ्कारादिदोषस्य ध्वंसनाय स्मितं मन्दहासो यस्य हासो जनोन्मादकरी च मायेति हासशब्दाभिधेयायाः सर्वानर्थजीवभूतायाः मायाया मन्दत्वं स्वभक्तेष्वप्रवर्तनं तस्मात् सखे सर्वदास्मत्संपृक्त भवत्किङ्करीः प्रभवत्प्रतिपादनरूपसेवापरायणा अस्मान्भजास्मत्प्रतिपाद्यतामाश्रय तथाच विवेक्त्यन्तःकरणेऽस्मत्प्रतिपाद्यताम्प्राप्य तस्य जलरुहस्य चतुर्दशभुवनात्मकपुष्करस्य कमलस्य चाननं सत्तास्फूर्तिप्रदं स्वस्वरूपं दर्शय को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादित्यादिश्रुत्या सर्वसत्तास्फूर्त्तिदः परमात्मा प्रतिपादित इतिप्रकाशयेत्यर्थः ॥ ६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे व्रजजनार्तिहन् ! व्रजस्य अन्येषां जनानां शरणागतानां च क्लेशनिर्नाशक ! हे वीर हे निजजनस्मयध्वंसनस्मित निजजनानां स्मयस्य गर्वस्य ध्वंसनं नाशकं स्मितं यस्य सः तस्य संबोधने तथा हे सखे ! भवत्किङ्करीर्नोऽस्मान्भज अनुवर्तस्व स्मेति निश्चितम् योषितामस्माकं चारु सुन्दरं जलरुहाननं तावद्दर्शय ॥ ६ ॥

---

### भाषा टीका

हे व्रजवासिनके दुःख के नाश करवे वारे हे वीर ! स्त्री जन के तथा अपने भक्तन के अभिमान को नाश करवे वारो आपको मन्दहास है हे सखे ! आपकी दासी हमको अंगीकार करो आपके मुख कमल को हमे दर्शन कराओ ॥ ६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अविशेषेण प्रणतानां देहिनां पापकर्शनं पापहन्तृ तृणचरान् पशूनप्यनुगच्छति कृपयेति तथा सौभाग्येन श्रियो निकेतनं वीर्यातिरेकेण फणिनः फणास्वर्पितं ते पदाम्बुजं नः कुचेषु कृणु कुरु किमर्थं कामं हृच्छयं कृन्धि छिन्धि ॥ ७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततश्च न तावकमसाधारणं किंवातत्वदीयानामस्माकं कुचेषु कृणु निधेहि पापं संसारदुःखं परमोत्कटव्यसनं वा तृणचरानुगमिति सर्वव्रजपशुवर्गपालकत्वेन कृपालुत्वं एवं चतुर्भिर्विशेषणैः पापहन्तृत्वादिकमुक्तं ननु किमत्तदर्थमेवम्प्येते नेत्याहुः हृच्छयं कृन्धीति । अस्माकमेतदेव प्रयोजनं तत्तद्दोषमेतदनुगतमेवेतिभावः । ततश्च स्वमकार्थे किंचिदात्मार्थे च किञ्चिदिति यथायोग्यं विवेचनयिम अम्बुजरूपकेण पूर्वोक्तसरोरुहरूपकवत् सर्वसाधनत्वं परमसाध्यत्वञ्च ध्वनितं ज्ञेयम् अन्यत्तैर्व्याख्यातं यद्वा

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु निर्भयाः ! पापादहं बिभेमि तत्राहुः । प्रणतेति । सकृत्प्रणामकारिणामपि यथा कथञ्चिच्छरणागतानामपि वा प्राणिनां पापहन्तृ कुतस्तव पापशङ्केति भावः । मदादिना सागःसु युष्मासु तदाचरणमयुक्तमिति तत्राहुः । प्रणतेति । त्वत्प्रणतानामस्माकमागो नश्येदेवेति भावः—

सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।
अभयं सर्वदा तस्मै ददाम्येतद्व्रतं ममेत्यादिवचनात् ॥

ननु तथापि परमक्रूरेषु मृदुलतरं तद्दुःखशङ्कया कर्तुं न शक्यते तत्राहुः पशुसङ्गत्या वने भ्रमणादिदं नाधिकं दुःखमिति यद्वा अनभिज्ञाभिः युष्माभिः सङ्गो मेऽनर्ह एव तत्राहुः । तृणेति तृणान्येव नत्वग्रतो न्यस्तानि शर्करादीन्यपि चरन्तीति परमाज्ञता सूचिता पशव इव वयमप्यनुकम्प्या इति भावः । ननु सुष्ठु शोभनेषु युष्माकं स्तनेषु कथं पदार्पणं कर्तुं युज्यते इत्यत आहुः श्रीति । सर्वातिशायिशोभास्पदत्वादलङ्करणवर्य्यमेव भावीत्यर्थः । ननु तथापि भीरुस्वभावत्वात् युष्मत्पतिभ्यो बिभेमि तत्राहुः । फणीति । यद्वा फणिफणार्पितत्वेन विषायनर्थध्वंसनत्वमुक्तं ततो विषोपमहृच्छयमपि हृदि पादार्पणेन कृन्धीति भावः । शिरसीति । पूर्वं सर्वासामैक्याभिप्रायेणोक्तं मूर्द्धि करार्पणमात्रेण सापत्न्यविशेषानुदयात् अधुना च स्तनेष्विति बहुत्वेन प्रत्येकं तेषु करणमभिप्रेतम् अत्र रसविशेषेण सापत्न्यसम्भवात् अतोऽन्योऽन्यं भेदानुत्पत्तये सर्वासामेव प्रत्येकं युगपदविशेषेण तत्कार्य्यमिति भावः । हृच्छयमिति अदृश्यतद्रोगस्य तथैव प्रतिकार्य्यत्वात् अन्यत्समानम् ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ द्वितीयेन हृदयान्तरङ्गतद्विरहतापशान्तये प्रलेपौषधमिव प्रथमं हृदयबहिरेव तदङ्गसङ्गं प्रार्थयमाना दैन्येन तच्छ्रवणमात्रस्यैव सङ्गं तद्गुणानुवादपूर्वकं प्रार्थयन्ते । प्रणतेति । चरणपङ्कजं ते तावत्कमलासाधारणं किम्वा त्वदीयानामस्माकं कुचेषु कृणु निधेहि ननु निर्भयाः ! पापादहं बिभेमि तत्राहुः । प्रणतेति सकृत्प्रणामकारिणामपि यथा कथञ्चिच्छरणागतानामपि नलकूबरकालियादीनां प्राणिनां पापहन्तुः कुतस्तव पापशङ्केति । किम्वा मदादिना सागःसु युष्मासु तदाचरणमयुक्तमिति चेत्तत्राहुः प्रणतेति । कालियादिवत् त्वत्प्रणतानामस्माकमागो नश्येदेव । ननु तथापि परमक्रूरेषु मृदुलतरं तत् कर्तुं न शक्यते तत्राहुस्तृणेति पशुसङ्गतो वने वने भ्रमणादिदं नाधिकं दुःखमिति । यद्वा अनभिज्ञाभिर्युष्माभिः सङ्गोऽनर्ह एव तत्राहुः । तृणेति । तृणान्येव नत्वग्रतो न्यस्तानि शर्करादीनि अपि चरन्तीति परमाज्ञता सूचिता । पशव इव वयमनुकम्प्या इति भावः । ननु पृष्ठु शोभनेषु युष्माकं स्तनेषु कथं पादार्पणं कर्त्तुं युज्यते इत्यत आहुः । श्रीति । सर्वातिशायिशोभास्पदत्वादलङ्करणवर्यमेव भावीत्यर्थः । ननु भीरुस्वभावत्वात् युष्मत्पतिभ्यो बिभेमि तत्राहुः फणीति । एतेन विषायनर्थध्वंसनत्वात् विषोपमहृच्छयध्वंसनयोग्यताप्युक्ता । एवं चतुर्भिर्विशेषणैः पापहन्तृत्वादकमुक्तम् । ननु तत्तदर्थमेवेष्यते नेत्याहुः । हृच्छयं कृन्धीति । अस्माकमेतदेव प्रयोजनमिति भावः । यत्ते सुजातेति रीत्या हृच्छयोऽप्ययं स्नेहमयत्वेनैव स्थापयिष्यते । शिरसीति पूर्वमेकवचनं दैन्येनैकस्मिन्नपि करधारणात् सर्वा एव वयमङ्गीकृताः स्यामेति । अधुना तु कुचेष्विति बहुत्वं प्रत्येकं लोभेन कियत् किञ्चित् सम्बन्धेन पर्य्याप्तत्वाद्दैन्यस्य तेनापर्याप्तत्वात् प्रत्येकं लोभस्येति ७

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तृणचराः गावः तद्वत् ॥ ७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अविशेषेण प्रणतानां देहिनां पापहन्तृ तृणचरा गाव ताः अनुसृत्य गच्छतीति तथा सौभाग्येन श्रियो निकेतनमाश्रयभूतं धीर्यातिरेकेण फणिनः कालियस्य फणेष्वर्पितं ते तव पदाम्बुजं नोऽस्माकं कुचेषु कृणु निधेहि हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं करनिधानेन पूर्यते अपितु कुचेषु चरणनिधानं चापेक्षितमित्याहुः । प्रणतेति । तृणचरान् पशून् अनुगच्छतीति तृणचरानुगं फणिफणेष्वर्पितं कृणु कुरु हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु मद्वदनदर्शनेनैव चेत् कृतार्थास्थ तदा प्रागेव दृष्टं तत्किं पुनरुत्कण्ठध्वे इतिचेन्न केवलं ते वदनदर्शनमेव नोऽभिलषितं अपितु तव पदाम्बुजे स्तनयोः कर्तुमपीत्याहुः । प्रणतेत्यादि । ते तव पदाम्बुजं नोऽस्माकं कुचेषु कृणु कुरु तदा किं भविष्यतीत्याशङ्क्याहुः हृच्छयं हृत्तापं कृन्धि ननु मत्पदाम्बुजस्य हृच्छयं छेत्तृता क प्रसिद्धा तत्राहुः । प्रणतदेहिनां पापकर्षणं पापकर्षणतोऽनाधिको हृच्छयच्छेदः तस्यागन्तुकत्वात् ननु ते प्रणता इति तथा क्रियते नैतदपि यतस्तृणचरानुगं तृणचराणां पशूनामप्यनुगं परमेव तस्य साहजिकमेव कारुणिकत्वं ननु कुङ्कुमादि पङ्किलेषु परममनोज्ञेषु वस्तनेषु पदार्पणमनुचितमेव नेत्याहुः । श्रीनिकेतनं शोभास्पदं तत्सम्पर्कादस्माकं स्तनयोः कमलच्छादितकनकपूर्णकुम्भवच्छोभातिशयोभावी ननु सत्यं ब्रवीमि कठिनेषु वस्तनेषु कमलकोमले पदे कथमर्पयितव्ये इत्यत आहुः । फणिफणार्पितं फणिनः कालियस्य मणिभिः कठोरासु फणासु अर्पितं तत्कथं शङ्का इत्युपसंहारः ॥ ७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

राजसीतु तत उत्तमा तमेवार्थं प्रकारान्तरेण । प्रार्थयन्ते प्रणतदेहिनामिति ते पदाम्बुजं नः कुचेषु कृणु कृणुष्व छान्दसो लोपः स्थापय तस्य प्रयोजनं । कृन्धि हृच्छयमिति । हृदये चोरवत् स्थितं कामं कृन्धि कुचेष्विति समुदायाभिप्रायेण बहुवचनं

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विरहेणभिन्ना मन्यन्ते शिरसि हस्तदानेन निकटे समानयनमुक्तं ततो भजनेन संबन्ध उक्तः अनेन विपरीतरस उच्यते बन्धविशेषो वा तिर्यग्भेदः एकवचनात् तावता हि हृदयस्थितः कामो गच्छति स्त्रीणां समूहे लीलाशयने परितः स्थितानां तथा संबन्धो भवतीति वा ननु कर्कशेषु स्तनेषु कथं कोमलचरणस्थापनमितिचेत्तत्राहुः । फणिफणार्पितमिति । नहि कालीयफणात् क्रूराः अस्मत्स्तनाः तत्र यथा चरणस्थापनं कृत्वा तदन्तर्गतो दुरीकृतः एवमत्रापि कर्तव्यः अम्बुजपदेन प्रलक्षत स्तापहारकत्वं ननु तथापि स्त्रीणां वक्षसि चरणस्थापनमयुक्तमितिचे त्तत्राहुः । श्रीनिकेतनमिति । लक्ष्म्याः स्थानं तल्लक्ष्मीः किल तत्र स्पर्द्धामर्हति अन्यासु कः सन्देह इति । ननु भवत्यो मूढाः कथम्भवतीनां हितं कर्तव्यमितिचेत्तत्राहुः । तृणचरानुगमिति । तृणचरा गावः तेषा मनुगं पश्चाद्गच्छति तद्धितार्थं ते किम्भगवता प्रेर्यमाणा इति तृणं परित्यज्यामृतं भक्षयन्ति तेषां तृणमेवामृतं तथास्माकमपि काम एवामृतं नैतावता परमकृपालोः कश्चनार्थः क्षीयते असामर्थ्यं तव नास्तीत्याहुः । हे वीरेति । ननु भवतीनां जितेन्द्रियत्वाद्यभावात्पापमस्ति तदपगमे पश्चात्पदं स्थापयिष्यामीतिचेत्तत्राहुः । प्रणतदेहिनाम्पापकर्षणमिति । वयं प्रकर्षेण नताः नास्माभिः प्रकारान्तरेण निवर्तयितुं शक्यते किन्तु तव चरणप्रसादादेव नम्राणां पापं गच्छति तत्रापि देहिनः प्रकर्षेण न तत्त्वेन धर्ममार्गादिपरित्याग उक्तः देहाभिमानस्य विद्यमानत्वात् न ज्ञानमपि प्रणतानां हि नान्यद्गतिः अतस्तव पदमेव तेषां पापनाशकं चिन्तितं दृष्टं स्पृष्टमालिङ्गितं वा ॥ ७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अपरा आहुः कुचेषु पदाम्बुजं कृणु अर्पय किमर्थम् । हृच्छयं कामं कृन्धि छिन्धि । अत्राभिः सम्यर्थरतिमत्त्वेन महाप्रेमवतीभिः स्वीयदुःखापायसुखप्राप्तिज्ञानरहिताभिः श्रीकृष्णसुखैकप्रयोजनककायिकवाचिकमानसव्यापाराभिस्तस्यैव सौरतसुखोद्दीपनार्थमेव स्वीयरूपयौवनकामपीडां विवृण्वतीभिः परमविदग्धाभिः प्रायः प्रेम्णो वाङ्निष्ठतालाघवं न क्रियते । किन्तु कामस्यैव यथा भोजनलम्पटं कश्चित् स्वमित्रं बुभुक्षुमभिलक्ष्य स्नेहेन तं भोजयितुकामः चतुर्विधभिष्टान्नसाधने प्रयतमानो जनस्तेन पृष्टोऽपि स्वार्थमेवाहं प्रयासामि न त्वदर्थमिति ब्रूते तदैव प्रेमा गुरुर्भवति यदि त्वेतावान् ममायासस्त्वत्सुखार्थमेव मम तु स्वार्थं निष्कामत्वादिति ब्रूते तदा प्रेमलघु भवति । यदुक्तं प्रेमसम्पुटे । प्रेमा द्वयोरसिकयोरपि दीप एव हृद्वेश्म भासयति निश्चलमेव भाति । द्वारादयं वदनतस्तु बहिष्कृतश्चेन्निर्याति शीघ्रमथ वा लघुतामुपैतीति । तत्रासां स्वसुखतात्पर्याभावो न पारयेऽहमिति भगवद्वाक्यादेव स्वयशीकारश्चयज्ञकाद्वयसीयते । तस्य प्रेमैकवश्यत्वमेव सर्वशास्त्रदृष्टं ननु कामवश्यत्वमिति ज्ञेयम् । ननु पापाद्बिभेमि तत्राहुः । प्रणतानां देहिनां पापनाशकं तव कुतः पापशङ्केति भावः । ननु च कठोरेषु युष्मत् कुचेषु सुकुमारं मत्पादाम्बुजं व्यथिष्यते तत्राहुः तृणचरानुगं तृणचरा गावस्तासामप्यनुगच्छति गावो हि कठोरस्थलेऽपि घासं चरन्ति । यदि तत्रापि त्वच्चरणस्य सहिष्णुता तर्हि किमुतास्मत्कुचेषु कुचकाठिन्यं प्रत्युत तस्य सुखदमिति भावः । ननु नानारत्नालङ्कारमण्डितानां युष्मत्कुचानामुपरि पादार्पणमनुचितं तत्राहुः । श्रियः शोभाया निकेतनमिति कुचानामलङ्कारचर्यमेवैतद्भविष्यतीति भावः । ननु युष्मत्पतिभ्यो बिभेमि तत्राहुः । फणिनः फणेषु अर्पितं त्वं कालियनागादपि न बिभेषि किमुत तेभ्य इति भावः ॥ ७ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

अपि च । प्रणतेति । चरणपङ्कजं ते तावकम् साधारणं त्वदीयानामस्माकं कुचेषु कृणु निधेहि ननु निर्भयाः ! पापाद्बिभेमि तत्राहुः । प्रणतेति । सकृत्प्रणतानामपि कथंचिच्छरणागतानामपि नलकूवरादीनां च प्राणिनां पापहन्तृ ततश्च कुतस्तव पापशङ्केति भावः । किं मदादिना सागःसु । यष्मासु तदाचरणमयुक्तमितिचेत्तत्राहुः प्रणतेति । कालियादिवत्प्रणतानामस्माकमप्यागो नश्येदेवेति भावः । ननु तथापि मृदुलतरमतिकठोरेषु धर्तुं न शक्यते चेत्तत्राहुः तृणेति पशुसङ्गत्या वने वने भ्रमणादिदं नाधिकमाधिदमिति भावः । यद्वा अनभिज्ञाभिर्युष्माभिः संगोऽनर्ह एव तत्राहुः तृणान्येव नत्वग्रतो न्यस्तानि शर्करादीन्यपि चरन्तीति परमाज्ञता तद्वदेवानुकम्प्या वयमिति दैन्यमपि नन्वतिमनोज्ञेषु पादार्पणमनुचितमित्यत आहुः । श्रीति सर्वातिशायि शोभास्पदत्वादलमलंकरणमेव भावीत्यर्थः । स्यादेतद्दीनजनकृपापरवशत्वेन कामिनीनां युष्माकं तु स्पर्शेन ममाप्यनिष्टं भावीति तत्राहुः । फणीति । नहि तत्स्पर्शेऽप्यनिष्टं जातं प्रत्युततन्महाविषार्तिहरणामेवास्माकं हृच्छयं कृन्धीति एतदेव प्रयोजनमिति भावः ॥ ७ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

दर्शनोत्तरमनोरथं प्रार्थयन्ति । प्रणतदेहिनामिति । यतोऽन्यजलहृदानामपि न तंस्तापोपशमकरत्वं प्रत्युत विरहकामाग्न्योरुद्दीपनेनोपतापकत्वमेवातस्ते त्वत्संबन्धि यत्पदाम्बुजं तदेव ते त्वदीयानां नः कुचेषु कृणु निधेहि किमर्थं तद्धारणं तत्राहुः । कृन्धीति । त्वदेकभोग्यमस्मद्रूपानुरागादिधनं कुचेष्वेव काञ्चनकलशेषु निधिवद्व्यवस्थापितं तदपहर्तुं चौरवद्धृदि त्वद्विवासास्पदे शेते निर्भयतया निवसतीति तथा कृन्धि निःसारं ततो निःसार्य यथा त्वदाक्रीडे कालिन्दी ह्रदे बहुयुगावासमपि कालियं निःसार्य तद्विषोपशमनं कृतं तथास्मद्धृदि ह्रदे तदपनयनेन तत्तापविषोपशमो विधेय इत्यभिप्रेत्य दृष्टान्तीकुर्वन्त्य आहुः । फणिफणार्पितमिति । यद्वा कामविरहाग्नितप्तेषु कुचेषु कथम्पदाम्बुजधारणं भयादस्त्वित्यात्त आहुः । फणिफणार्पितमिति तथाच विषानलव्याप्ततत्फणार्पितस्यात्र न भयशङ्कासम्भावनापीति भावः । नः कुचेषु तु नक्षमणिवद्दीपानि तत्पदाम्बुजधारणे मङ्गलकलशत्वोपपत्तिरेव स्यात् ननु परमसौभाग्यवत्सुयोपितां कुचेषु कथमनुत्तमकुधारणं तत्राहुः । श्रीनिकेतनमिति । पद्मापद्मालयेत्यादिवाक्येषु अम्बुजानां तदालयत्वप्रसिद्धावश्यम्भोजवनं विहाय ते पदाम्बुजाश्रयश्रवणात्तदेव मुदयं श्रियो

### श्रीरामनारायणकृतभावभावविभाविका।

निकेतनमिति तद्धारणे परास्मत्स्तनशोभान्यथा निःश्रीकत्वमेव यद्वा श्रियि नितरां केतनं यस्य तथा च सर्वसम्पत्सौभाग्याधिष्ठातृदेव्याः श्रियोऽपि हृदलङ्करणं कथं ग्राम्याणां नोहृदलङ्काराय अलं न स्यात् ननु तथापि श्रियो हृदि श्रितं कथंग्राम्यत्वेनारसज्ञानां हृदि धारणीयं तथाति मृदुलं नलिनीदलश्रीललनाकरतललनेऽप्यनलं पदाम्बुजं कथं रोमाञ्चितकणाक्रान्तातिकठोरेषु कुचगिरिषु ध्रियेत तत्राहुः। तृणचरानुगमिति। तथाच वयं श्रीरिव रूपिण्योऽपि त्वद्विरहेणैव ननु ग्राम्यत्वेन पशुवृत्तयस्त्वदुपभोग्या अनुरूप्यश्च तथातृणचरानुगमनशीलस्य न रोमाञ्चतृणान्वितकुचगिरिस्पर्शभयशङ्कापि ननु पतीनुत्सृज्य परपुरुषानुरतानां पापिनीनां परदाराणां विहारे पापमेवाश्रयेत तत्राहुः प्रणतदेहिनामिति। तथाच यत्प्रणतानां देहिनां देहाध्यासाक्रान्तमतीनामपि पापासम्भवः किमुवाच्यं तत्प्रणतानां प्रेम्णापगतदेहानुसन्धानानां नो देहदेहिभावशून्यस्य सच्चिदानन्दविग्रहस्य भगवतः सर्वपापापहारकस्य पापशङ्कातः सर्वपापापहारिणस्तव नो मानमात्रापराधहेतोर्वचनं विरहे वैक्लव्यपशुवृत्तीनां नोऽनुकम्पयानुगमनं त्वद्वियोगमतश्रीकाणां श्रीसौभाग्यवर्द्धनं कामतापविषोपशमनञ्च सर्वथापिन्याय्यमिति भावः॥ ७॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अन्याः प्रार्थयन्ति। प्रणतेति। ते पदाम्बुजं नः कुचेषु कृणु कुरु बहुवचनं समुदायाभिप्रायेण ते त्वदीयानां न इति वा ननु विरहानलज्वालाव्याप्तेषु स्तनेष्वतिसुकुमारचरणस्थापनप्रार्थनं नोचितमितिचेत्तत्राहुः। फणिनः कालियस्य शेषस्य फणासु अर्पितं तथा च परमकोमलमपि विलक्षणशक्तिमत्त्वात्केनापि पीडयितुमशक्यमिति भावः। ननु तथापि स्तने चरणस्पर्शो नोचित इतिचेत्तत्राहुः। श्रीनिकेतनं लक्ष्म्यावासस्थानं तथा च श्रीर्यत्र सर्वदा तिष्ठति तस्य स्तनेषु स्पर्शेऽन्यासाङ्कः सन्देह इति भावः। ननु कामाक्रान्तस्वान्ततया निकृष्टानां युष्माकमनुरोधो नोचित इति चेत्तत्राहुः। तृणचरानुगं यथा भगवता पाल्यमाना अपि गावस्तृणं परित्यज्यामृतं नाश्नन्ति किन्तु तृणमेव तासाममृतं तथापि कृपालुना त्वया नोपेक्ष्यन्ते अपितु तदनुरोध एव क्रियते तद्वद्भगवदीया अपि वयं यद्यपि कामासक्तास्तथापि नोपेक्ष्या इति भावः। ननु तथापि युष्माकमजितेन्द्रियतादिसम्पादकं पापं वर्त्ततेऽतस्तत्सत्त्वे कथं मत्पादस्पर्शाधिकारस्तस्मात्तन्निवर्तककर्मानुनष्ठानानन्तरं तथा करिष्यामीति चेत्तत्राहुः। प्रणतदेहिनां पापकर्षणं प्रकर्षेण स्वधर्मत्यागपूर्वकं ये नरा देहाभिमाननिवर्तकतत्त्वज्ञानरहिताश्च तेषां पापनिवर्तकयोः स्वधर्मतत्त्वज्ञानयोरभावात्त्वत्पदाम्बुजमेव स्मृतं दृष्टं स्पृष्टम्वा तन्निवर्तकमन्यानन्दं तथाभूतानामस्माकं तेनैव पापनिवृत्तिसम्भवान्नानुष्ठानान्तरमपेक्षितमिति भावः। तत्र तदर्पयित्वा हृच्छयं कामं कृन्धि नाशय तथाच न पापनिवृत्तिरस्माकमभिलषिता किन्तु कामस्य निवृत्तिरितिभावः। यद्वा ननु भवत्यः कामोपाधिकप्रीतिमत्योऽतोमम दर्शनमात्रस्यापि नाधिकारिण्य इति चेत्तत्राहुः। एवंचेर्त्तहि तत्प्रतिबन्धकं काममेव कृन्धि कथमित्यपेक्षायामाहुः। नः कुचेषु स्वपदाम्बुजं कुरु ननु—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥

इत्युक्तत्वात्तत्स्थापनेन न तन्निवृत्तिर्भविष्यति किन्तु प्रत्युताभिवृद्धिरितिशङ्कापि पदस्थापनप्रार्थनया निराकृता हस्तस्थापनस्य तदभिवृद्धिहेतुत्वात् ननु तत्स्थापनस्याभिवृद्धिहेतुत्वाभावस्यापि कथं तन्निवृत्तिहेतुत्वमित्याशङ्क्याहुः। फणीति तथाच कालियफणार्पणेन यमुनाह्रदस्य निर्विषत्वं त्वया सम्पादितं तद्दृष्ट्वा देहलक्षणफणिनः कुचलक्षणफणार्पणेन यमुनाह्रदस्थानियहृदयस्य कामरूपविषस्य निःसरणेन निर्विषत्वसम्पादनसमर्थत्वमित्यनुमिमीमहइति भावः। न केवलं दोषनिवर्त्तकमात्रं किन्तु गुणाधायकमपीति द्योतनायोक्तं श्रीनिकेतनं तथाच तत्त्वाज्ञभज्ञानैश्वर्यादिलक्षणश्रियःस्पर्शमात्रेणाधायकमिति भावः। ननु परमोत्कृष्टस्य मत्पदाम्बुजस्य स्पर्शोऽपि दुर्लभ इत्याशङ्कानिरासायोक्तं तृणचरानुगं तथाचास्मदधिकाराभावेऽपि तव करुणया तस्य सौलभ्यमिति भावः ननु तथापि पापनिवृत्तिंविना कथं तत्सम्भव इत्याशङ्कानिवृत्त्यर्थमुक्तं प्रणतेति अनभिज्ञापक्षे अथवा हस्तापदान्तिकरोपलेपौषधिमिव हृदि अङ्गसङ्गमभीप्सन्त्यो दैन्येन चरणसङ्गमेव प्रार्थयन्ते प्रणतेति। ते पदाम्बुजमस्माकं तेषु कुचेषु निधेहि ननु पापभयाद्वेवं कर्तुं शक्नोमीतिचेत्तत्राहुः। प्रणतानां नलकूबरादीनां स्थावरत्वादिप्रदपापस्य कर्षणमतस्तेन तव का पापप्राप्तिसम्भावनेति भावः। यद्वा ननु किमिति करपद्मस्थापनं न प्रार्थ्यत इत्याशङ्क्य स्वापराधनिवृत्त्यर्थमादौ पदाम्बुजस्थापनमेव प्रार्थ्यत इत्याशयेनाहुः प्रणतेति। प्रणतानामस्मदादीनामपराधनाशकमित्यर्थः। ननु नैवं प्रार्थनीयं काठिन्येषु तेषु स्थापनेन मृदुलस्य चरणस्य पीडोदयादित्याशङ्क्याहुः तृणचरानुगं। तृणशर्कराद्यत्यन्तकठोरवस्तुषु स्थापनादेवं कृतेनाधिकं दुःखमितिभावः। अनेन यथातृणचराग्रहवशात्तदनुगमनजन्यपीडा त्वया न गण्यते तथास्मदनुग्रहवशादपि सा न गणनीयेत्यपि ध्वनितं ननु नानारत्नालङ्कृते पादार्पणं न शोभत इतिचेत्तत्राहुः। श्रीनिकेतनं नखचन्द्रादिशोभास्पदत्वात्ततोऽप्यधिकालंकृतिकरमिति भावः। ननुयुष्मद्धृदयस्थतापजन्यदाहः कथं सोढुं शक्य इतिचेत्तत्राहुः। फणीति। भवतु किन्तत इति चेत्तत्राहुः हृच्छयं कामं कृन्धि पश्चाद्यथाकामोपशमः स्यात्तथा कुरुष्वेति भावः। मानिनीपक्षे ननु युष्मद्दर्शनमात्रस्य कामोद्दीपकत्वान्मानवतीनां युष्माकमालिङ्गनादेर्दुर्घटत्वात्कामबाधाभयान्नाहमाधिमेवामीतिचेत्तत्राहुः। प्रणतेति। अहो सत्यमिदं तथाप्यागन्तव्यमागत्यच नः कुचेषु यथाकथंचित्पदाम्बुजं कृणु एतावन्मात्रमस्माभिरनुज्ञायत इति भावः। नन्वेतं विना मम प्रयोजनं कथं भवतीति चेत्तत्राहुः। कृन्धीति। अस्माकं लोकोत्तरसौन्दर्यत्वादेतावतैव तवोपरतिर्भविष्यतीतिव्यङ्ग्यं। ननु सर्वोत्तमानां युष्माकं पदेन स्पर्शे कृते पापं भविष्यतीति नाहं तथा कर्तुं शक्नोमीति चेत्तत्राहुः। प्रणतेति। ननु परमकोमलस्य पदाम्बुजस्यातिकठोरयुष्मत्कुचस्पर्शेन पीडा भविष्यति तथाच तथा व्याप्तहृदयस्य मम रसाविर्भावो दुर्लभ इत्यतः करान्बुजार्पणमनुज्ञायतामिति चेत्तत्राहुः। तृणेति। अहो प्रत्यक्षापलापपरायणधूर्तशिरोमणे तृणशर्कराद्यपेक्षयाप्यस्मत्कुचः किङ्कठोर इतिभावः। ननु भवतु यथाकथञ्चित्स्थापयिष्यामि तथापि तेन कुचानां शोभा न भवतीति चेत्तत्राहुः। श्रीति। शोभानिवृत्तिभयकार्ये तव चरणस्पर्शः शोभास्पदत्वं ह्यस्माभिरर्थ्यत इतिभावः

मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ! ॥
विधिकरीरिमा वीर ! मुह्यतीरधरसीधुनाप्याययस्व नः ॥ ८ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु मदीयतिरोधानरूपापराधेन भवतीनामन्तः करणे महान्क्रोधो वर्तते तथाच क्रोधानलज्वालया तद्दाहावश्यंभावात्कथं रसानुभव इतिचेत्तत्राहुः । फणीति । अहो किंमित्येवमनुभूतसामर्थ्या नामस्माकमग्रतो बहुविधं चातुर्य्यं प्रकाशयते त्वया नहि कालियाविषदग्धस्यान्येन केनाचिद्दाहः सम्भवतीति भावः तस्माद्वयं विहायागन्तव्यमितिभावः । निवृत्तिपक्षे नन्वन्तःकरणशुद्धिं विनेदद्भुतं भविष्यतीतीचेत्साऽपि त्वदधीनेत्याशयेनाहुः । प्रणतेति । तव पदाम्बुजोपासनेन हि चित्तस्यशुद्धिर्भवत्यतस्तत्तः कुचेषु कर्मोपासनप्रतिपादनभोगेषु कुरु भवत्पदाम्बुजाराधनमेव कर्मोपासनाकाण्डयोरर्थ इत्यधिकारित्वेतासि प्रकाशयेत्यर्थः । यतस्तव पदाम्बुजं फणिनः शेषस्य फणार्पितं तथाच ।—

नारायणपरा वेदा नारायणपरा मखाः ।
नारायणपरा योगा नारायणपराः क्रियाः ॥

इत्युक्तत्वाच्छेषशायिनारायणस्य भगवतस्तव पदाम्बुजसेवनमेव काण्डद्वयार्थ इतिभावः । यतश्च श्रीनिकेतनं भोगमोक्षश्रीप्रदं यतश्च साधकानुग्रहार्थं रामकृष्णाद्यात्मनावतीर्णस्य तव तृणचरानुगं गोमृगाद्यनुगमनपरं तृणचरैस्त्यक्तसर्वभोगैस्तपस्विभिरनुगम्य प्राराध्यत इति तदिति वा यतश्च प्रकर्षेण नतिमात्रमपि कृतवतां देहिनां समस्तपापोच्छेदकं तदुक्तम् ।—

एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवायेति ॥

एवम्भूतेन काण्डद्वयप्रतिपादितेन सम्यगुपासितेन निजजनस्य हृच्छयं कामं छन्धि नाशयेत्यर्थः ॥ ७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रणतानां शरणागतानां देहिमात्रोपलक्षितानां पापकर्षणं दुरितापहं सर्वशरण्यत्वात् तृणचरान् पशूननुगच्छतीति भक्तेच्छानुसारित्वात् सौभाग्येन श्रियो निकेतनमाश्रयभूतम् फणिनः कालियस्य फणार्पितं दुष्टदमनकर्तृ एवंभूतं तं पदाम्बुजं नः कुचेषु कृणु निधेहि किमर्थमित्यत आहुः कुरु हृच्छयं कामं कृन्धि छिन्धि ॥ ७ ॥

---

### भाषा टीका ।

शरणागत प्राणिन को पाप नाश करबे वारो तृणचर गउअन के पीछे जायवे वारो महालक्ष्मी को निवास स्थान कालि के फणानि पै नृत्य करवे वारो आप को जो चरण कमल ताको हमारे स्तनों पै स्थापन करो हमारे हृदय के कामदेव को शान्त करो॥७॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे पुष्करेक्षण! तवैव मधुरया गिरा वल्गूनि वाक्यानि यस्यां तया बुधानां मनोज्ञया हृद्यया गम्भीरयेत्यर्थः । मुह्यतीरिमा नो विधिकरीः किङ्करीरधरसीधुना आप्याययस्व सञ्जीवयेति ॥ ८ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततश्चाधरसीधुना ऽस्मानाप्याययस्व अन्यथा सद्य एव म्रियेमहीति भावः । कुतः तव गिरा पूर्वोक्तया ऽधुना स्मर्य्यमाणया नहि भवतीभ्यो मम कुत्रापि किञ्चिदन्यत् प्रियमस्तीत्यादिलक्षणया मुह्यतीः मोहस्यान्त्यदशानुगत्वात् विरहेण सौख्यप्राप्त्या जनितस्य मोहरोगस्य वैद्यशास्त्रोक्तनिदानविपर्य्ययन्यायेन तत्प्राप्त्यैवोपशमःसिध्येत्तत्वन्यथा तच्च युक्तमेवेत्याहुः । विधिकरीः त्वदाज्ञाकारिणीः गिरो मोहहेतुत्वं दर्शयन्ति । मधुरया अमृतवन्मिष्टया यद्वा मधु मद्यमेव साक्षादिव राति ददातीति तया इतिपरममादकत्वमुक्तं कथं तदाहुः । वल्गूनि अर्थस्य प्रियत्वादिना शब्दस्य च सद्वर्णबन्धादिना मनोहराणि वाक्यानि यस्यां तया अतो बुधानां विदग्धानां चित्ताकर्षिण्या इति श्रोत्रमनः प्रियत्वमुक्तं इमा इति प्रत्यक्षत्वादिना असन्दिग्धत्वं तत्कालीनत्वं च मोहस्योक्तं ननुवाङ्मात्रेण कथं मोहः स्यात् तत्राहुः । वीर हे महासामर्थ्ययुक्तेति त्वं द्वरोऽपि तादृशत्वादित्यर्थः । यद्वा कथमदेयं दातव्यमित्यत आहुः । हे वीर ! दयावीर दानवीरेति वा पुष्करेक्षण ! हे परमसुन्दरेत्यर्थः । यद्वा गिरा मुह्यतीः अत एव विमोहनत्वमधिकमभिप्रेतं तथाच कर्णामृते पर्य्याचितामृतरसाभिपदार्थभङ्गीवल्गूनि वल्गितविशालविलोचनानीति अन्यैर्व्याख्यातं यद्वा गिरा मुह्यतीः अत एव विधिकरीः दासीत्वं गताः मोहेन विवेकापगमात् यद्वा गिरैव विधिकरीः अधुना विरहार्त्ता इमा मुह्यतीः अकारप्रश्लेषेण अबुधानामपि किमुत विदग्धानां यद्वा बुधानां ज्ञानिनामपि किम्पुनर्भक्तानां किम्वा बुधानां पण्डितानामपि किमुताबुधानामस्माकं मनोज्ञया अन्यत्समानं अथवा मधुरया श्रोत्रमात्रप्रियेत्यर्थः । वस्तुतस्तु अवल्गुवाक्यया अबुधमनोज्ञया तथापि विधिकरीः कुत इमाः त्वत्प्रेमहतविचारा गोपीः अत एव त्वदधरसीधुं प्रति तदर्थं मुह्यती र्नाप्यायय न स्वस्थय किन्तु मारयेत्यर्थः । तदेवाविवेकिनीनामस्माकमुचितमिति भावः । एषा प्रेमार्त्ति भरोक्तिः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तन्मुखसौरभनिभतज्ज्ञापितविशेषजनिततत्पानेच्छात्मकस्य मोहपर्यन्तदशागामिनस्तापस्य पुनरन्यदुश्चिकित्स्यतामाशङ्कमानास्तस्मिन्नेवाङ्गसङ्गे पेयौषधमिवान्तरङ्ग सङ्गमनीयं तन्मुखसुधाकरसुधारसमपि प्रार्थयन्ते । मधुरयेति । अधरसीधुनास्मा-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नाप्यायस्व अन्यथा सद्य एव म्रियेमहीति भावः। कुतस्तव गिरा स्मर्यमाणया स्वागतं वो महाभागा इत्यादिलक्षणया। कठोरा भव मृद्वी वा प्राणा स्त्वमसि राधिके! । अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिरित्यादि लक्षणया वा यया कयाचिद्वा मुह्यतीः अन्त्यदशानुगं मोहं प्राप्तवतीः। कीदृश्या गिरा मधुरया स्वरविशेषेण वर्णविन्यासविशेषेण प्रेममृदुतया प्राणिमात्राणां रुचिरतया। तथा वल्गूनि आकाङ्क्षायोग्यतासत्तिसौष्ठववन्ति वाक्यानि सुपतिङन्तवर्गा यत्र तादृश्या। तथा बुधानामर्थज्ञानां मनोज्ञयाभिधालक्षणाव्यञ्जनादिवृत्तिप्रतिपादितवस्तुरसभावालङ्कारार्थगाम्भीर्येणानन्दप्रदया। इमा इति प्रत्यक्षत्वादिना असन्दिग्धत्वं तत्कालीनत्वं च मोहस्योक्तं कथमदेयं दातव्यमित्यत आहुः। हे वीर! दयावीर दानवीरेति वा। पुष्करेक्षणेति उक्तानन्तरे सस्मितविन्नासमुन्दरदृष्ट्यादिना गिर एव विमोहनत्वमधिकमभिप्रेतम्। तथाच कर्णामृते। पर्याचितामृतरसानि पदार्थभङ्गीवल्गूनि वल्गितविशालविलोचनानीति। अन्यत्तः। यद्वा। गिरा मुह्यतीः अत एव विधिकरीः दासीस्तं मोहेन विवेकापगमात्। यद्वा। गिरैव विधिकरीः अधुना विरहार्त्या इमा मुह्यतीरिति ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मधुरया कोकिलादिशब्दवच्छ्राव्यया वल्गुवाक्यया वचनभङ्गीविशेषे वत्या विधिकरीः नियोगकरीः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

हे पुष्करेक्षण! बुधानां हृद्यया वल्गूनि वाक्यानि यस्यां तयात एव मधुरया कोकिलादिशब्दवच्छ्राव्यया ते तव गिरा मुह्यतीः विधिकरीश्च इमा नोऽस्मानधरामृतेनाप्यायस्व सञ्जीवय ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

वल्गूनि मनोहराणि वाक्यानि निराकाङ्क्षाणि पदात्मकानि यस्यां सा तथा तया बुधानां विदुषां मनोज्ञया हृद्यया मधुरयेति इत्यनेन प्राप्तां बालभाषणशङ्कां निराकरोति विधिकरीः दासीः अधरसीधुना अधरामृतेन आप्यायस्व सेचय जीवय वा मुह्यतीः मोहं गच्छतीः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु भवत्यो नियतवचसः प्रागुक्तकञ्जसरोरुहं शिरसि धेहि ततश्च जलरुहाननं दर्शयेति। ततश्च पदाम्बुजं कृणु कुचेष्विति निश्चित्य कथ्यतां तदेव करोमीतिचेत् भ्रूम इत्याहुः। मधुरयेत्यादि हेपुष्करेक्षण कमललोचन मुह्यतीर्मोहं प्राप्नुवतीरिमा विधिकरीः किङ्करीरस्मान् अधरसीधुना अधरमधुनाप्यायस्व जीवय अध रमधु पाययित्वा तर्पयेतियावत् नच तत्र तूर्णीकेन त्वयाधरः पाययितव्यः किन्तु मधुरकथापूर्वकमित्याहुः मधुरया गिरा मा मोहं व्रजत पिवत पिवताधरमिति कोमलेन वचसा विशेषेण तृतीया कीदृश्या वल्गु सुन्दरया वाक्यमाकाङ्क्षादिमत्पदकदम्बं यत्र तथाभूतस्यैव शब्दस्य प्रामाण्यात् अत एव बुधानां पण्डितानां विदग्धानामिति यावत् मनोज्ञया रुचिरया इत्येव यमचधिर्नापरं याचितव्यमिति ॥ ८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

इममेवार्थं ततोऽप्युत्तमा प्रकारान्तरेण प्रार्थयते। मधुरया गिरेति। "हस्तेन च स्वरूपेण पदा चोपकृतिर्मता। मुखेन चोपकारो हि कर्त्तव्य इति ता जगुः। पूर्वोक्तमपि सर्वं हि यावत् स्पष्टं न भाषते। तावत्सरसतां याति न कदाचिदिति स्थितिः„ हे स्वामिन् मधुरया गिरा मुह्यतीरिमा गोपीराप्यायस्व मोहोहि मरणपूर्वावस्थारूपः तासामाप्यायेन हेतुः विधिकरीरिति आज्ञाकारिणीः सेवाकारिणीर्वा असामर्थ्यंतु तव नास्तीत्याहुः। हे वीरेति शौर्यं हि आर्त्तानामार्तिनिराकरणार्थम् इमा इति प्रदर्शनेन क्षणमात्रविलम्बेन मरिष्यन्तीति सूचितम् ननु वाङ्मात्रेण कथं मोहनिवृत्तिरितिचेत्तत्राहुः। मधुरयेति। मोहो हि मायारूपः स भगवत्स्वरूपेणैव निवर्त्तते सच्चिदानन्दरूपेण तत्र तव वाणी आनन्दरूपेत्याहुः। मधुरयेति। मध्वस्वाधारणो रसः तद्युक्ता मधुरा वल्गु मनोहरं वाक्यं यत्र वाक्यस्य मनोहरत्वं सत्यप्रियप्रतिपादकत्वेन अतः सद्रूपता निरूपिता बुधानां मनोज्ञा आल्हादकारिणी अनेन ज्ञानरूपा निरूपिता ते हि ज्ञानेनैव रता भवन्ति मुखे नयने वर्त्तेते इति तयोरपि व्यापारं कृत्वैव वक्तव्यमित्याहुः पुष्करेक्षणेति कमलवत्परतापापहारके ईक्षणे यस्य किञ्च अधरसीधुना अधरामृतेन च आप्यायस्व वक्तव्यानन्तरमयं पाययितव्या इति मूर्च्छितानां हि मुर्च्छानिवारणार्थं महामन्त्राः पठ्यन्ते कमलादीनि च शीतलद्रव्याणि स्थाप्यन्ते सर्वथा असाध्ये अमृतमपि पाय्यते अतिगोप्यान् पाययन्ति इयन्तु मूर्च्छा कालेन निवारयितुं शक्येति वीरेति संबोधनम् अनेन अन्तिमावस्था प्रदर्शिता पूर्वप्रार्थितार्थाः स्मारकत्वेनाधिकमूर्च्छाहेतवो जाताः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भो भो मत्प्राणैकवल्लभाः! रत्नवल्लभाः जीवातुभूतासु भवतीषु नाहमुदासे दासे मयि सन्ततहेमंत्रमेहमश्रृङ्खलानिबद्धं कथमविश्वस्ता विश्वस्ता भवत भावनकं कङ्कणामध शास्त्रं हस्ताङ्कगतमेव मां जानीतेति स्फूर्त्तिप्राप्तं तद्वाक्यमाकर्ण्यापरा आहुः। मधुरया माधुर्यवश्यकवर्णघटितत्वात् सुश्रवया वल्गूनि मञ्जुलपदार्थयैचित्रीकाणि वाक्यानि यस्यां तया बुधानां विदग्धानां मनोज्ञया नतो जानत्या गिरा विधिकरीः किङ्करीः नः इमा मुह्यतीस्तन्माधुर्यास्वादभरादानन्दमोहं प्राप्नुवतीः पुनरधरसीधुना आप्यायस्व। यद्वा। मोहं प्राप्नुवतीनः अधरसीधुनापि पाययस्व पुनर्मोहं प्रापयस्वेत्यर्थः ॥ ८ ॥

केन चित्कृता विशुद्धरसदीपिका ।

अपिच । मधुरयेति । हे पुष्करेक्षण विशालोत्फुल्ललोचनेतिस्मितावलोकितं सम्भाव्याहुः । वीरेति परमादेयमपि दातुं समर्थेति अधरसीधुनास्मानाप्यायस्वेति परमार्त्या प्रलपनमित्यदोषः अन्यथा चरमदशापत्तेः कुतः तव स्वागतं वो महाभाग इत्यादिकया गिरा मुह्यतीः मधुरयेति बहिस्ताद्दशत्वे ऽप्यन्तः कटुतरयेति भाव रसाविष्ट तत्कृत्य तु मोहोऽत्रान्त्यदशैव ननु मया त्वादराभिप्रायेणैव तथोक्तमिति तत्राहु । बुधेति । न वयं बुधाः किन्तु परमाज्ञाः स्त्रिय इत्यपि वक्रोक्तिः यद्वा श्लेषेण मधु मद्यंपुष्परस इत्यादिकोशाद्दिरेपिमादकमधुसीधुस्पर्शादेव ततस्तन्मोहिताभिस्तदेव प्राथ्यंत इति यद्वा अधरं धर्तुमशक्यं यत्सीधु तेनेति प्राचुर्य्यमभिप्रेतं यद्वा अधरमवरं सीधु यस्मादित्यतिमादकत्वमुक्तमित्यदोषः वल्गुवाक्ययेति अर्थविचारे त्वतितीक्ष्णयेत्यर्थः ननु किमर्थमाप्यायनीयास्तत्राहु विधिकारीः किङ्करीः मोहनविवेकापगमादेवमुक्तं किं वा प्रणयकोपेनेति यद्वा दासीत्वं गता इति सर्वात्मार्पणमभिहितम् एवं प्रार्थन चतुष्टयी दर्शिता ॥ ८ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तापोपशमं प्रार्थयित्वा रसाप्यायनं मनोरथान्तरं प्रार्थयन्ति । मधुरयेति । यथा मधु आस्वादनमात्रेण प्रलोभकं मादकञ्च यत्स्वर्गादि तदेव रातीति मधुरा तया वल्गूनि वाक्यानि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्भवती„त्यादीनि यस्यां तयात एव बुधानामैहिकामुष्मिकव्यवहारदक्षाणां परमार्थस्वरूपेण तु अबुधानां वा मनोज्ञया रोचकया गिरा सकामश्रुतिरूपया मुह्यतीरिमा विधिकरीर्विध्यधीनानुष्ठानवतीः प्रजाः हे पुष्करेक्षण हृदयकमलसाक्षिन् ! तथा वीर विशेषेण धीप्रेरक ताः अधरे वेदान्तिमभागे वर्तमानेन सीधुना ज्ञानामृतेनाप्याययसि तथा मधुरया स्वरतो वर्णतश्च स्निग्धसुस्मितापाङ्गनिरीक्षणामिश्रतया च मधुरया सर्वैहिकामुष्मिकसुखतत्साधनविस्मारकानुरागात्मकमधु रातीति तथाभूतया वा तथा वल्गूनि स्नेहरसोद्बोधकगम्भीरभावार्थवन्ति वाक्यानि प्रियहितत्वेन वक्तुं योग्यानि वचनानि यस्य मतएव बुधानां रसविशेषभावनाचतुराणामबुधानाञ्च सर्वप्राणिनां मृगपक्षिद्रुमलतादीनां स्वरादिसौष्ठवेन मनोज्ञया तव गिरा तव मुखपङ्कजसौरभरूपया मुह्यतीः सर्वलोकवेदधर्मविस्मृत्या त्वदेकपराः तथा गतदेहाद्यनुसंधाना अधुना मदनुस्मृतिजनिततन्मुखकञ्जदलाधरमधुसीधुकामलक्षणान्यदुर्विचिकित्स्यतापाऽऽन्तिमदशाशोकमोहव्याप्ता इमा इति प्रत्यक्षविह्वलतया मोहात्सान्दिग्धत्वसूचनं विधिकरीः अमूल्यदासिका आज्ञानुसारिणीः सेवारता वा इति सम्बन्धद्योतनं ता नोऽधरसीधुनामृतसञ्जीवनरसेनाप्यायस्व पुष्करेक्षण वीर इति सम्बोधनाभ्यां विह्वलतया सर्वप्रत्यक्षापि नो दशा न हृत्कमलसाक्षिणो विशेषेणान्तः प्रेरकस्य तव ज्ञातातः प्रसीदाधुनोपेक्षायां सद्यो मरणमिति भावः । यद्वा त्वद्विरहकामचिन्ताग्निसन्तापदन्दह्यमानतयान्तिमदशां प्राप्ता मुह्यतीर्नः प्रथमं तावत्पूर्वं निरूपितमधुरया गिरा हे पुष्करेक्षण ! कमलनयन तद्वद्वा तापापहारीक्षणं दर्शनं यस्य तथा वीर विशेषेणास्मत्प्राण आप्यायस्व सचेनाः कुरु परमामृतेनाधरसीधुनाप्यायस्व विगतज्वराः फुल्लिताङ्गीर्विधेहि यद्वा स्वात्मनोऽमृतसञ्जीवनगुरुत्वमाख्यापयितुं विरहादिनामारयित्वा पुनःसञ्जीवनं त्वयाभिमतं तदनुचितं सितादानेन मरणसंभवे विषं न देयमिति लौकिकन्यायात्तस्मात्पूर्वनिरूपितया मधुरया गिरैव मुह्यतीः कृत्वा ऽधरसीधुना प्याययस्व नो विधिकरीरित्युक्त्या स्वाधीनासु इदमेव मोहनं जीवनं च युक्तं ननु विरहेण मारणमिति भावः ॥ ८ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अपरा एतावता दुःखनिवृत्तिमपश्यन्त्यः प्रार्थनीयं किन्दारिद्र्यमिति विचिन्त्य परमोत्कृष्टं वस्तु प्रार्थयन्ते । मधुरयेति—

> मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
> स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥

कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति । सर्वधर्म्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि माशुच इत्यादिरूपया मधुरया अर्थतोऽत्यन्तमिष्टया वल्गूनि मनोज्ञानि वाक्यानि यस्यां तया शब्दतोऽप्यर्थमधुरया अत एव बुधमनोज्ञया बुधानां विदुषां हृद्यया विधिकरीः किङ्करीरस्मान् तथा च नास्माकमविचारिता प्रवृत्तिरिति भावः । संप्रति तिरोधानलक्षणया लीलया मुह्यतीर्मूर्च्छां मरणपूर्वावस्थां लभमाना इमा झटित्यागत्य द्रष्टव्याः हे पुष्करेक्षण ! पुष्करे हृदयकमले ईक्षणं यस्य सः तथा च अन्तर्यामिणा त्वया सर्वं ज्ञायत एव नास्ति विज्ञापनकृत्यमिति भावः । विशालनेत्रेण त्वयेदमागत्य प्रत्यक्षेणोपलब्धव्यमिति वा दृष्ट्वा च स्वाधरामृतेन नोऽस्मानाप्यायस्व संजीवय यतो हे वीर ! निजजनार्तिनिराकरणमेव शौर्य्यं कृत्यमिति भावः । यद्वा स्वभावत एवाज्ञाकरीः संप्रति विरहदुःखेन मुह्यतीरस्मानागत्याप्यायस्व कथमितिचेत् आदौ गिरा ननु वाणीमात्रेण कथं मोहनिवृत्तिरितिचेत्तत्राहुः । मधुरयेति । मायामयस्य मोहस्य सच्चिदानन्दरूपस्य तव मुखाब्जिःसृतया माधुर्य्यव्याप्तया तया निवृत्तिरवश्यं भविष्यतीति भावः । तत्रापि सत्यप्रियहितार्थकत्वाद्वल्गूनि वाक्यानि यस्यां सा तत्रापि बुधजनमनोज्ञया ज्ञानरूपया यच्च तन्निवृत्ताप्रतिबंधकं तदाप्यायनं कुर्वित्याशयेनाहुः । पुष्करेक्षण ! तथाच लोकोत्तरसौन्दर्य्याद्यलंकृतविग्रहं दर्शयित्वा तद्दर्शनाभिलापं निर्वर्तय तथाऽधरामृतपानेच्छामपि तत्प्रदानेन पूरयेत्याशयेनाहुः । अधरेति सर्वमपि कर्तुं प्रदातुञ्च समर्थोऽसीति द्योतयन्त्यः सम्बोधयन्ति हे वीरेति । अनभिज्ञापक्षे न केवलं बहिर्हृदिलेपमात्रेणाऽस्मत्तापस्य शान्तिः कर्तुं वा शक्या किन्तु अत्रोपायबाहुल्यमपेक्षितमित्याहुः मधुरयेति । नोऽस्मानाप्यायस्वाह्लादय यतो मुह्यतीरुपान्त्यान्दशां प्राप्ताः कथमितिचेत्तत्राहुः । गिरा तत्रापि न प्रतियात व्रजामिति वज्रवत्कठोरया किन्तु मधुरया नापि स्वागतामितिवत्प्रतारणरूपयेत्याहुः । वल्गुवाक्यया यद्यपि मुग्धानामस्माकं नास्ति विवेकस्तथापि त्वया बुधजनमनोज्ञैव सा प्रयोक्तव्येत्याशयेनाहुः । बुधेतितथाचैवंविधया गिरा वयं वक्तव्या इत्येको मूर्च्छानिवृत्त्युपायः द्वितीयमाहुः हे पुष्करेक्षण ! तथाच कमलवद्विशालनेत्राभ्यां वयं सम्यक् द्रष्टव्या इति भावः । तृतीयमाहुः । अधरेति । तथाभूतममृतरूपमौषधं मृतानामप्युज्जीवनकरं पाययितव्यमिति भावः । तत्रापि विलम्बो नोचित इत्याहुः इमाः क्षणमात्रमपि विलम्बासहाः ननु मम का ममता यदर्थमेवंविधपरिश्रमो मया कर्तव्य इत्याशङ्क्याहुः । विधिकरीरिति तथाप्यनल्पमिदमौषधं दातुं न शक्नोमीति चेत्तत्राहुः । वीर परमोदार

**तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ॥**
**श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९ ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

त्वाह्वानशूर ! सर्वस्वमपि दातुं समर्थ यद्वा यथोक्तोपायेन गतमूर्च्छाः भवत्यो यथोक्तोपायकर्त्रे सद्वैद्याय मह्यं किम्प्रदास्यथेति चेत्तत्राहुः । विधिकरीरिति । जन्मजन्मान्तरेषु तव किङ्कर्यो भविष्यामो नचान्यत्किञ्चित्तुभ्यं दातुं वयं योग्यास्तस्मादेतत्प्रतिनिधिभूतस्येतरवस्तुनोऽभावाच्छरीरमेवार्पयिष्याम इति भावः । तावतापि नास्ति ऋणपरिहारो यद्यपि तथापि दानशूरेण त्वया न किमपि विचार्य प्रत्युपकारानपेक्ष्य दानस्यैव सात्त्विकत्वाभिधानात् मानिनीपक्षे ननु नैतावता मम हृच्छयस्य शान्तिर्भविष्यति तदुपशामकमस्त्येकं युष्मत्सान्निधौ वस्तु तथापि भयान्न तत्प्रार्थयामीति सदैन्यप्रार्थनामालक्ष्याहुः । मधुरयेति —

कठोरा भव मृद्वी वा प्राणास्त्वमसि राधिके ! ।
अस्ति नान्या चकोरस्य चन्द्रलेखांविना गतिः ॥

इत्यादिरूपया मधुरया वल्गुवाक्यया प्रतारणरूपया अतएव बुधमनोज्ञया गिरा पूर्वं तव वचनकर्त्र्यो वयं जाताः अतएव संप्रति प्रतारणफलभोगस्समये मुह्यन्त्यः मरणोपान्त्यदशां प्राप्ताः यद्यप्येवं तथापि सज्जनैरपकर्त्तर्यप्युपकर्तव्य इति न्यायमनुसृत्यास्माभिरनुज्ञापितोऽस्माकमधरामृतेनस्वात्मानमाप्यायय स्वागत्याल्हादय भयाद्विरोहितो मातिष्ठति भावः । भ्रूलक्षणधनुर्द्वयेक्षणलक्षणबाणधारी वीरशिरोमणिस्त्वं किमर्थं बिभेषीति सम्बोधनद्वयाशयः निवृत्तिपक्षे तस्मात्साधकानुग्रहार्थं लीलाविग्रहमादाय—

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥

क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते । यदा भूतपृथग्भावमेकस्थमनुपश्यति तत एवच विस्तारं ब्रह्म सम्पद्यते तदेत्यादिकरूपया. मधुरया पथ्याभूतार्थप्रतिपादकत्वाद्वल्गुवाक्यया अत एव बुधजनमनोज्ञया अतस्तत्वै ष्टपुटनिः सृतामृतरूपया नोऽस्मानाप्याययस्व यतस्तद्वाद्युद्भवितमिथ्याभूत तिकर्कशतर्कातिपृष्टवादान्धकारेण मुह्यती नचोपेक्ष्याः यतो विधिकरीर्भवदाज्ञारूपा विधिप्रतिपादिकास्तव किङ्करीभूता अतस्तथाभूतया गिराऽऽश्वस्यास्मानागत्याप्याय्यनेन धर्मसंस्थापनरूपः स्वपालनहेतुरुक्तः साधुपरित्राणरूपं द्योतयन्त्यः सम्बोधयन्ति । पुष्करेक्षण सौन्दर्यादिगुणालंकृत विग्रहेण स्वास्मिन्नासक्तिसम्पादनेन सर्वं परिपालयेति भावः । अस्मत्पालनाय दुष्कृतिनोऽपि न शयेत्याशयेनाहुः । हे वीरेति ॥ ८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे पुष्करेक्षण ! कमलनयन भवदीयेनैव निरीक्षणेन मुह्यतीः तथा भवदीययैव मधुरया चित्तापहारिण्या वल्गूनि मनोहराणि वाक्यानि यस्यां तया बुधमनोज्ञया स्वरूपतः स्वरतोऽर्थतश्च बुधानां हृद्यया गिरा च मुह्यतीः इमाः विधिकरीः किङ्करीः नोऽस्मान् अधरसीधुना अधरामृतेन आप्यायस्व सञ्जीवय ॥ ८ ॥

### भाषा टीका ।

हे प्रभो ! हे कमलनयन अत्यन्त मधुर मनोहर वचनवारी और पंडितन के मन के हरवेवाली आप की वाणी ते आप की दासी मोहित भई हमको अपने अधरामृत को पान कराय कर हमको संतुष्ट करो ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च अस्माकं त्वद्विरहे प्राप्तमेव मरणं किन्तु त्वत्कथामृतं पाययद्भिः सुकृतिभिर्वञ्चितामित्याहुः । तवेति । कथैवामृतम् अत्र हेतुः तप्तजीवनं प्रसिद्धामृतादुत्कर्षमाहुः । कविभिर्ब्रह्मविद्भिरपीडितं स्तुतं देवभोग्यं त्वमृतं तैस्तुच्छीकृतं किञ्च कल्मषापहं कामकर्मनिरसनं तत्वमृतं नैवं भूतं किञ्च श्रवणमङ्गलं श्रवणमात्रेण मङ्गलप्रदं तत्त्वनुष्ठानापेक्षं किञ्च श्रीमत्सु शान्तं तत्तु मादकम् एवम्भूतं त्वत्कथामृतमाततं यथा भवति तथा ये भुवि गृणन्ति निरूपयन्ति ते जना भूरिदाः बहु दातारः जीवितं ददतीत्यर्थः यद्वा एवं भूतं त्वत्कथामृतं ये भुवि गृणन्ति ते भूरिदाः पूर्वजन्मसु बहु दत्तवन्तः सुकृतिन इत्यर्थः । एतदुक्तं भवति ये केवलं कथामृतं गृणन्ति तेऽपि तावदति धन्याः किम्पुनर्ये त्वां पश्यन्त्यतः प्रार्थयामहे त्वया दृश्यतामिति ॥ ९ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

विरहादितप्तान् जनान् जीवयतीति तथा तत् नच तस्य श्रवणार्थं प्रयासोऽपेक्ष्यते इत्याहुः । कविभिः । पूर्वैराधुनिकैश्च ईडितं स्वत एव संश्लाघ्यवर्णितमित्यर्थः । नच कामक्रोधादिना पापेन वा तदर्थाननुभवान्न फलं सिध्येदिति वक्तव्यं तस्यैव तन्निरसनस्वभावत्वादित्याहुः । कल्मषेति । अतोऽर्थानुभवः स्वत एव भवतीति । नच तदपेक्षापीत्याहुः । श्रवणेति । यद्वा न केवलं तप्तजीवनत्वेन सद्यो दुःखहरमात्रं किन्तु कविभिः सर्वार्थप्रापकत्वेन स्तुतं कथं तदेव प्रपञ्चयति । कल्मषापहं संसारध्वंसकमित्यर्थः । संसारस्यकल्मषैकमूलत्वात् सर्वदुःखध्वंसकं वा । किञ्च श्रवणेति एवमुभयथा दुःखदोषहरत्वेन च मङ्गलत्वे सर्वार्थसाधनत्वमुक्त्वा स्वतः परमफलत्वञ्चाहुः । श्रीमदिति । एवमेषां यथोत्तरं श्रैष्ठ्यम् अतः कथैवामृतं यथा तस्य क्षुत्तृड्रोगादिहरणात् बलपुष्ट्यादिकरत्वाच्च साधनत्वं मधुररसमयत्वात् साध्यत्वं च तथा कथाया अपीत्यर्थः । आततं यथा स्यात् विस्तरेणेत्यर्थः । यद्वा व्यापकमित्यर्थः । इति देवभोग्याद्विशेष उक्तः तस्य व्यापकत्वाभावात् अन्यैर्व्याख्यातं यद्वा अत्राधुना तादृशजनाभावादस्माकञ्च विरहार्त्तिवैवश्येन तत्राशक्तेर्वयं मृता एवेति भावः । यद्वा अरे परमव्यग्राः यावदप्याययेयं तावत् क्षणमथो मद्वार्त्तया कालो नीयतामिति चेत्तत्र सत्रास माहुः कथैवामृतं स्मृतिर्मरणं कार्यं-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कारणयोरत्यन्तभेदविवक्षयोपचारः कुतः तत्र जीवनं यस्मात् अतो ये गृणन्ति उच्चारयन्ति ते भूरिदाः दो अखण्डने महाप्राणघातका इत्यर्थः। एषा परमार्त्युक्तिरेव। ननु तर्हि कथं पुराणादिषु स्तूयते तत्राहुः। कविभिर्व्यासादिभिरीडितं कवीनां वर्णनमत्रप्रभावेन तस्यापि वर्णनीदिति भावः पापनाशनमात्रं किञ्च श्रवणेनैव मङ्गलं सुखकरं ननु प्रयोजनेन यद्वा कविभिरीडित मित्यत्र हेतुः कल्मषेत्यादिपदद्वयं पापहरत्वेन श्रवणयोः सुखद त्वेनच तैरीड्यते इत्यर्थः। अत एव श्रिया मदो येषां राजादीनां तेषु आततं कविभिरेव विस्तृतं किम्वा श्रीमदैर्जनै गोहागो दिद्वारात तम् अतो ऽधुना त्वदाशया क्षणं जिजीविषूणां तेन नाल मिति भावः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ कथं तर्हि जीवथेत्याशङ्क्य प्रेममयस्वानुभव प्रमाणनिर्णीततत्कथामहिमवर्णनेन तत्र कारणमाहुः। तवेति। कथैवामृतम् अमृतवत् स्वतः फलं फलान्तरसाधनञ्च। तत्तद्रूपत्वं दर्शयन्ति तप्तान् त्वद्विरहतापखिन्नान् किमुत संसारतापखिन्नान् जीवयति मृत्युपर्यन्ततद्दशातो रक्षतीति तत्। पूर्वेषां जीवनरूपञ्चेति तथा बध्यमानवरुणः पथि वृद्धैरित्यादेः। शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययुरित्यादेश्च दर्शनात्। कविभिर्ब्रह्मशिवचतुःसनादिभिरात्मारामैः किमुतान्यैरीडितम्। वर्त्तमाने क्तः। अस्मद्व्रजवासिभिर्यद्वर्ण्यते तदेवानूद्य श्लाघ्यते ननु स्वयं वर्णयितुं शक्यत इत्यर्थः। रहस्याच्छादनात्। तथा कल्मषं सर्वरोचकत्वादि प्रभावमयत्वात् स्वान्तरायमपि किमुत संसारहेतुपुण्यपापरूपं हन्तीति तत्। एवमेवं भूतमपि श्रवणमात्रेणैव मङ्गलं तत्तत्सर्वार्थसाधकं किमुतार्थविचारेण। अत एव श्रीमत् सर्वत उत्कर्षयुक्तम्। आततं सर्वव्यापकञ्चेति प्रसिद्धामृताद्वैलक्षण्यमप्युक्तम्। तदीदृशं कथामृतं भुवि यत्र कुत्रापि ये गृणन्ति कथनरूपेण ददति ते भूरिदाः सर्वेभ्योऽपि सर्वार्थप्रदातारः। किमुत गोकुले यत्राप्यस्मासु तु त्वद्विरहतप्तासु जीवनमेव ददतीति भावः। ते चान्यत्र पूर्वोक्ता ब्रह्मादयः व्रजे सर्व एवास्मासु तु विशेषतः सख्य इति ज्ञेयम्। यद्वा। अहो परमव्यग्रा यावदाप्यायेयं तावत् क्षणं मिथो मद्वार्त्तया कालो नीयतामिति चेत्तत्र सत्रासमाहुः। कथैव मृतं मृतिः कथैव मारयतीत्यर्थः। कुतः। तप्तं जीवनं यस्मात्। तप्ते तैलादौ जलमिवेति श्लेषः। कविभिस्तावकैरेव कल्मषापहं यथा स्यात्तथेडितं तच्छक्ततया श्लाघितमित्यर्थः। किञ्च श्रवणेनैव मङ्गलं मङ्गलमिति श्रूयते नत्वनुभूयते इत्यर्थः। श्रीमदाततं श्रिया सौन्दर्यादिना तत्कृतेन मदेन निजजनानादरादिलक्षणेन चाततं सर्वतः प्रसृतम्। अतो ये तद्गृणन्ति ते भूरिदा महाप्राणघातका इत्यर्थः। एषा परमार्त्युक्तिरेव। दो अवखण्डने। अतोऽधुना त्वदाशया क्षणं जिजीविषूणां तेनालमिति भावः ॥ ९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तव कथामृतं स्वदसि ये गृणन्ति ते भूरिदाःमहाधनप्रदाः ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चास्माकं त्वद्विरहेण प्रायमेवमरणं किं तु त्वत्कथामृतं मिथः ये पिबन्ति तैर्वञ्चितामित्यभिप्रेत्याहुः। तवेति तव कथैवामृतं नत्र हेतुः तप्तानां तापत्रयतप्तानां जीवनं प्रसिद्धामृतादुत्कृष्टत्वमाहुः। कविभिर्ब्रह्मादिभिरीडितं स्तुतं देवभोग्यममृतन्तु तैस्तुच्छीकृतमिति भावः। किञ्च कल्मषापहं श्रोतॄणां वदतां स्मरतां च पापहरं प्रसिद्धन्तु नैवमिति भावः किञ्च श्रवणमात्रेणैव मङ्गलं निःश्रेयसरूपं यस्मात् प्र तथाभूतं प्रसिद्धन्तु पुनः संसारनिमित्त मितिभावः। श्रीमच्छान्त्यादिगुणाढ्यं प्रसिद्धन्तु मादकमिति भावः एवंभूतं त्वत्कथामृतमाततं विस्तृतं यथास्यात् भुवि ये गृणन्ति निरूपयन्ति ते जना भूरिदाः बहुवदान्या जीवितं ददतीत्यर्थः। पूर्वजन्मसु बहुदत्तवन्तः सुकृतिन इतियावदिति वा ॥ ९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तप्त न जीवयतीति तप्तजीवनं श्रवणमात्रेण मङ्गलं श्रीमत्समृद्धिमत् आततं विस्तृतं भुवि ये जनाः तव कथामृतं गृणन्ति पठनादिना ते भूरि बहुलं दुःखं घ्नन्ति खण्डयन्तीति भूरीणि हिरण्यादीनि ददतीति वा भूरि स्वर्णं जातरूपं हिरण्यं रा: कल्याण हेमरुक्मं सुवर्णमिति भवन्तीति शेषः ॥ ९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

नन्वेवञ्चेत्तथैव करिष्यामि क्षणं विलम्बः क्रियतामितिचेत्तव कथायां प्रतीतिर्नास्तीत्याहुः तव कथामृतमित्यादि। तव कथैव अमृतं कथामृतं ननु कार्य्यं कथया यथा तर्पयसि न तथा कार्य्येणेत्यर्थः। अतएव तप्तजीवनं तप्तं जीवनं यस्मात् कार्य्यासंभवात् तथा कथया जीवनं तप्तमेव भवति अतः कविभिः शास्त्रकृद्भिरेव ईडितं ननु प्रेमवद्भिः अतः कल्मषापहं ननु हृत्तापघ्ना अतः श्रवणमङ्गल ननु चेतःसुखदं यतः श्रीमदेन ऐश्वर्य्यमदेन स्वच्छन्देन आततम् अतस्तां कथां ये भुवि गृणन्ति ते भूरिदा भूरिदिच्छेदकाः दोऽवखण्डने इति आक्षेपः अतस्तव कथा तप्तजीवनं कविभिस्तुतं कल्मषापहम् इत्यादिस्तुत्याप्रस्तुतप्रशंसा ॥ ९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पदार्थचतुष्टयं संप्रार्थ्य तददाने स्वयमेवहेतुमाशङ्क्यपरिहरन्ति तव कथेति। ननु सर्वमिदं प्रार्थितं भक्तेभ्यो देयं नत्वभक्तेभ्यः अभक्तत्वंच विरहेऽपि जीवनादवसीयते भगवांस्तु सर्वनिरपेक्षः न तस्य भवज्जीवनेन कार्य्यं लक्ष्मीसदृद्यो यस्य कोटिशो दास्यः अतस्त्वयि धृतासव इत्यप्यसंगतं तस्माद्व्यर्थमेव प्रार्थनमित्याशंक्य परिहरन्ति नेदं जीवनमस्मत्कृतिसाध्यं किंतु तव कथाविरहेण प्राणानां

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

गमने प्रतिबन्धं करोत कथायाः पुनः यथा तव सामर्थ्यं तथा सापि षड्गुणात्मिका मोक्षदायिनी परमानन्दरूपा च तदाहुः तव कथा अमृतमिव अमृतं भगवद्रसात्मकं सर्वेषां मरणादिनिवर्त्तकं यद्रूपं तदमृतशब्देनोच्यते अतो मोक्षदातृत्वं परमानन्दरूपता च सिद्धा इदानीं षड्गुणान् निरूपयन्ति। तप्तजीवनमित्यादिपड्भिः पदैः तप्ता ये संसारे तेषां जीवनं यस्मात् अमृतं हि ताप निवर्त्तकं प्रसिद्धमेव वैराग्यं च भगवतो ज्ञानं वा सर्वतापनिवर्त्तकं यत्संस्कारयोग्यं तज्ज्ञानेन नश्यति यदयोग्यं तत्परित्यागेन अत एव स्मार्तैः संस्काराशक्तैः परित्याग एव बोध्यते अतो ज्ञानं वैराग्यं च तापनाशके भवतः आपाततस्तापनाशकत्वं जलादावपि वर्त्तत इति तदर्थमाहुः। कविभिरीडितमिति। कविभिः सर्वैरेव शब्दार्थरसिकैः ज्ञानिभिरीडितं ज्ञानं वैराग्यं वा आपाततः स्त्रीषु तथात्वमस्तीति तद्व्यावृत्त्यर्थमाहुः। कल्मषापहमिति। कल्मषं पापमपहन्तीति ऐश्वर्यस्य समग्रस्य धर्मस्येत्यपि क्वचित्पाठः अलौकिकसाधकं च वीर्यं महत्त्वद्धर्मरूपमेव भवति धर्म्यं च पुनः कल्मषनिवर्त्तकं भवति पूर्वोक्तधर्मविशिष्टं च कथायाश्च तथात्वं सर्वत्र प्रसिद्धं प्रायश्चित्तादीनामप्यापाततस्तथात्वमस्तीति तद्व्यावृत्त्यर्थमाहुः। श्रवणमङ्गलमिति। तद्गोमयादिलेपनात्मकमुपवासात्मकं च स्वरूपतोऽप्यमङ्गलं घोरात्मकत्वात् श्रवणेऽप्यमङ्गलम् इदन्तु उदारचरितं श्रुतमेवानन्दं जनयतीत्यनुभवसिद्धत्वात् श्रवणमङ्गलं कीर्तितुल्यता निरूपिता पुत्रजन्मादिश्रवणस्यापि किंचिद्धर्म्मसाम्यात् श्रवणमङ्गलत्वमाशङ्क्य तद्व्यावृत्त्यर्थमाहुः। श्रीमदिति तद्धनव्ययसाधकं ननु धनसाधकं कथामृतं तु लक्ष्म्या अप्यपेक्षितत्वात् तदुक्तं भवति तेन श्रोतुर्वक्तुश्च तत्सिद्धिः राज्यप्राप्तिश्रवणं तथा भवतीति तद्व्यावृत्त्यर्थमाहुः आततमिति। आ सर्वतः ततं व्याप्तं राज्यादिकं तु परिच्छिन्नं भगवत ऐश्वर्यं तु न तथा अन्तर्बहिः सर्वेषां सर्वथा व्याप्तमिति कथामृतं च पुनः सर्वलोकान् व्याप्य तिष्ठति स्वसामर्थ्यं सर्वत्रैव संपादयति तस्मात् स्वरूपतो धर्मश्च भवत्कथेति तया कृत्वा जीवनं ननु स्वतः अनेनोत्कर्षोऽप्युक्तः त्वं कदाचिन्मारयस्यपि कथामृतं तस्मिन्नपि काले जीवयतीति भगवान् स्वतन्त्रः कथामृतं परतन्त्रमित्येतावान् विशेषः त्वं च अवतारे ब्रह्मादिभिः प्रार्थित आगच्छसि आगतोऽपि तिरोभवसि कथा तु समागता न तिरोभवति अत एव तादृशं कथामृतं ये भुवि गृणन्ति त एव भूरिदाः बह्वर्थदातारः य इति प्रसिद्धाः व्यासादयः भूरिदाश्च ते अजनाश्च ते केवलं भगवद्रूपाः जननादिदोषरहिता वा परं विरलममृतं केवलं मरणोपस्थितौ तन्निवर्तकमेवेति ननु संभूयैकत्र रसजनकं रसपिण्डयोरिव तव कथयोश्च विशेषः अन्यथा कथार्थमेव यत्नः कृतः स्यात् परं विरहे मरणनिवर्त्तकत्वेन तदुपयोग इति भगवत्त्वेन स्तूयते अतस्तैर्भगवत्कथाकथकैः बहुदत्तमिति तद्वशात् जीवनम् एतत्साविक्याः ॥ ९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत्कर्तृककथायाः माधुर्यमहिमा कैर्वाच्यः। त्वत्सम्बन्धिकथा अन्यवक्तृकाप्यमृतद्वयात् स्वाद्वी श्रेष्ठा चेत्याहुः। तव कथैव अमृतं केन साधर्म्येण तप्तान् महारोगादिसन्तप्तान् संसारतप्तांश्च जीवयतीति तत्त्वच्छिरहतप्तांश्च जीवयतीति स्वर्गायान्मोक्षरूपाच्चामृतादाधिक्यञ्च कविभिर्ध्रुवप्रल्हादादिभिः या निर्वृतिस्तनुभृतामित्यादिपद्यैरीडितम। अन्यदमृतद्वयं, सा ब्रह्मणि स्वमहिमन्यपि नाथ! माभूत् किन्त्वन्तकासि-लुलितात् पततां विमानादित्याद्युक्तिभिर्न रोचितम्। कल्मषाणि प्रारब्धपर्यन्तानि पापानि अपहन्ति। स्वर्गीयामृतन्तु तानि न हन्ति कामादिवर्द्धकत्वात् प्रत्युत तान्युत्पादयत्येव। मोक्षामृतमपि प्रारब्धपापं न हन्ति श्रवणेनैव स्वाद्यमानत्वादभीष्टसाधकत्वाच्च मङ्गलं तद्वयन्तु नैवम्भूतम। श्रीमत् प्रेमपर्यन्तसम्पत्तिप्रदम् आततं प्रतिक्षणमेव वक्तृभिर्विस्तृतं तदुभयन्तु न तथा ये गृणन्ति कीर्त्तयन्ति ते एव भूरि बहुतरं ददति तेभ्यः सर्वस्वं ददाना अपि तत् परिशोधयितुं न क्षमन्त इति भावः। यद्वा। तव गीस्तदैव मधुरा यदि त्वद्दर्शनखचिता स्यात् अन्यथा तु महानर्थकरीत्याहुः। तव कथैव मृतं मरणकारणमित्यर्थः। कुतः तप्तं जीवनं यतः। तप्ततैलादौ जलमिवेति श्लेषः। ननु तर्हि कथं पुराणादिषु श्लाघ्यते तत्राहुः। कविभिर्व्यासादिभिरीडितं कवीनां वर्णनमात्रस्वभावेन तस्यापि वर्णनादिति भावः। कल्मषापहमिति दुःखभोगेन प्राचीनं कल्मषं नश्यत्येवेति भावः। लोककर्तृकश्रवणेनैव मङ्गलं स्वस्त्ययनमविनाशो यस्य तत् यदि जनाः सुधियस्तच्छ्रवणपरिणामं दुःखं विचार्य न तत् श्रोष्यन्ति तदा तदपि नङ्क्ष्यत्येवेति भावः। श्रीमद्भिर्धनमदान्धैर्दुर्जनैरेव लोका म्रियन्तामित्यभिलष्य धनव्ययेनापि आततं देशे देशे ग्रामे ग्रामे पुराणवाचकान् संस्थाप्य विस्तारितम अत एव भुवि ये गृणन्ति ते भूरिदाः भूरीन् श्रोतृलोकान् द्यन्ति खण्डयन्ति मारयन्ति तस्मात्ते कथाजालं वितत्य सौम्या इवोपविष्टा मनुष्यमारकात् व्याधादप्यधिका दूरत एव सुधीभिरुपेक्ष्या एवेति भावः। वक्ष्यते यदनुचरितलीलेत्यादि वस्तुतः कथायाः कथकस्य च सर्वोत्कर्षव्यञ्जिकेयं व्याजस्तुतिः ॥ ९ ॥

---

### केनचित्कृता विशुद्धरसदीपिका।

नन्वेवं गिरैव यदि मोहिनास्तर्हि कथमेतावन्तं कालं जीवथेत्याशङ्क्य प्रेममयस्वानुभवप्रमाणनिर्णीततत्कथामहिमानं कारणमाहुः तवेति। पूर्वाभ्यस्तात्स्थैर्येनैताः सख्याभिमानिन्यस्तच्चरितामृतैकजीवनास्तत्सुखसुखिन्य इति स्वाभिप्रायमावेदयन्ति कथा तव रूपगुणलीलावर्णनात्मको वाक्यसंदर्भः सैवामृतमिव स्वतः फलं फलान्तरसाधनं परमास्वादनीयं मृत्युहरं चेति अथवा ननु तदेकजीवनानां मीनादीनाममृताद्धियुक्तानां जीवितमसम्भावितमितिचेत्सत्यं तव कथामृतं पिबद्भिर्यथाकथंचिज्जीवितमिति तत्प्रशंसन्ति अत्रामृतं जलमेवेति तत्तदेव दर्शयन्ति तप्तान् त्वद्विरहतापक्लिष्टान् जीवयतीति तप्तजीवनं कविभिर्ब्रह्मादिभिः पीतामृतैरपीडितं स्तुतं यत्सहरणादौ ज्ञाने प्रयासमुदपास्येत्यादिना मृडविरञ्चिस्वभावानुगीता इतिश्रीरुक्मिणीवाक्येन चेदं कल्मषं स्वान्तरायमपि किमुतान्यदप्यपहन्तीति तथा तत् एवंभूतमपि श्रवणमात्रेणैव मङ्गलं सर्वार्थसाधकं किमुतार्थविचारेणेति श्रीमत् सर्वत उत्कृष्टं श्लेषेण

फेनाचित् कृता विशुद्धरसदीपिका ।

श्रीरानन्दात्मिका श्रीराधिका तया तल्लीलया च नित्ययुक्तमित्यर्थः तत एव च तद्गुणशालीतिभावः ।तत्तश्चाततं सर्वतो विस्तृततरं यद्वा प्रसिद्धामृताद्विलक्षण्यमाहुः । तवेति । चतुराशिरोमणेः परमानन्दरूपस्य तत्तु सामुद्रं कथामृतमिति विशिष्टं तत्त्वमृतमेव तप्तजीवनं तच्च देहान्तरलम्यत्वान्न तथेति । कविभिरीडितं तत्तु सत्कविरसनासूर्यनिस्तुपतरशब्दशालिपाकेन तृप्तो दयिताधरमपि नाद्रियते का सुधा दासीति तदनादृतं कल्मषापहं तत्तु हिंसाप्रायकर्म्मसाध्यत्वात्तद्विपरीतं श्रवणमङ्गलं तत्तु तद्विरुद्धं तन्माहात्म्यश्रवणेन तदाकाङ्क्षाया मरणस्याभिलषितत्वात् श्रीमत् सुखकरं सुखमत्र रम्यः रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः ततश्च द्वादशरसात्मकं किंवा शुद्धप्रेमैकरसं तत्तु षड्रसात्मकं तत्रापि रसनेन्द्रियग्राह्यं तत्त्वात्मसुखरूपमिति आततं सर्वत्र लभ्यं तत्तु देशादिनिरुद्धम् ईदृशं कथामृतं भुवि यत्र कुत्रापि ये गृणन्ति ते भूरिदाः ॥ ९ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवमन्तिमदशापन्नाश्रेतकथमद्यावधिजीवनं भाषणञ्च तत्र प्रेमोत्कर्षात्स्वानुभवप्रमाणसिद्धं तथा साङ्ख्य श्रुति रूपतया सर्वश्रुति सिद्धान्तरहस्यं निमित्तमाहुः । तव कथामृतमिति । यद्वा सर्व मेव तत्प्रार्थितमनुरतेभ्यो देयं नत्वननुरतेभ्यो भवत्यश्चानुरतिं निरूपयन्त्योऽपि नातुरता यतो लब्धमदङ्गसङ्गसौख्या अपि मद्वियोगेऽपि जीवथेति शङ्कापनोदायाद्यावधि स्वजीवननिमित्तमाहुः तव कथामृतमिति । तव विरहे असम्भवितमप्यस्मज्जीवनं परन्तु तव कथैव यतोऽमृतम् अमृतरसात्मकतया फलरूपा मरणप्रतिबन्धिका एवममृतरूपत्वेन सर्वथा पुरुषार्थरूपापि नास्माकं स्वायापि तु यथा मृतमयोऽपि चन्द्रमण्डलः प्रळयाकीयते तथाहुः स्थितानां मरणप्रतिबन्धैनैव वैरिणी तदेवाहुः । तप्तजीवनमिति आध्यात्मिकादितापत्रयवतां तत्तापापनोदपूर्वकजीवनं विस्मरणनष्टप्रायस्वरूपानन्दस्यावणरागबाधेन पुनराविर्भावकमपि नास्माकं तथा किन्तु त्वद्विरहकामचिन्ताग्नितापापनयनशक्तत्वेऽपि त्वद्भक्तपक्षपातकरुणरसिकत्व दिस्मारकतयाश्वासनेन तप्तानामपि जीवनहेतुतया मरणेन सम्भावितातापनिवृत्तेः प्रतिरोधकतया दुःखहेतुरेव तथास्मद्गीतं तव कथामृतं कविभिस्तव गुणगणार्णवगानरसिकैः स्वकल्मषहानिर्दिष्टा—

यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ।

इत्यादिना कल्मषापहमितीडितमपि नस्तु त्वद्वियोगेऽपि रूपमाधुर्य्यादिस्मारकतया कामग्लानिरूपकल्मषमपहन्ति नाशयतीति तथा तादृग्रूपतामिति यद्वा हन हिंसागत्योरित्यस्मात् कल्मषं गमयति प्रापयतीति तथा भवति किञ्चान्यानि कल्मषापहानि तपः प्रायश्चित्तादिरूपाणि कर्म्माणि यदिन्द्रियानुष्ठेयानि तच्छोषकत्वात्स्वरूपत क्लेशात्मकत्वान्मरणं स्वफलविधायकत्वादमङ्गलरूपाणि भवन्ति तव कथामृतन्तु मङ्गलश्रवणयोः कर्णयोः मङ्गलं सुखप्रदं तदुक्तं श्रोत्रमनोभिरामादिति तथा श्रवणमेव मङ्गलं यस्येति तथा तदप्युक्तम्—

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोदयम् ।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकगुणोऽनुगीयते—

तथा ———

त्वत्कथामृतपथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपममिति ॥

तथा श्रवणमात्रेणैव नतु श्रवणोत्तरानुष्ठानदेहत्यागादिफलाविर्भावोदिप्रतिबन्धनिरासापेक्षं लोके मङ्गलत्वेन प्रसिद्धानां विषयसुखात्मकमनोवृत्तिगतस्वरूपसुखप्रतिबिम्बानां बिम्बभूतम् एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवतीत्यादिश्रुतिसिद्धं मङ्गलं परमानन्दो यस्मात्तथाभूतमपि नस्तु श्रवणमात्रं वर्णस्वरमाधुर्य्येण मङ्गलं भवति इद्वतन्तु क्षोभकमेव तथा श्रीमतनित्यसंयोगे मतुप्विधानादन्येषा नित्यश्रीयुक्तमपि श्रियो नो नित्यसपत्नीत्वेन तन्नित्यसम्बन्धत्वात्सपत्नमेव एवञ्चेद्भवतीभिर्हेयमितिचेत्तत्राहुः । आततं सुरनरादिसर्वत्र लोकेषु सर्वसुखप्रदातृतया व्याप्तमपि नस्तु कायमनोवचःश्वासमन्तात्त्वेन त्यक्तुमशक्यं तथा चेद्भक्तकथामृतं सुरैर्लब्धामृतपानैरपि प्रार्थ्यं तदीयामृतस्य मर्त्यापेक्षयामरत्वापादकत्वादमृतत्वेऽपि कल्पान्ते देवनाशश्रवणान्नामृतत्वं कथामृतस्य तु—

मर्त्यो मृत्युव्यालभीतः पलायन् लोकान्सर्वान्निर्भयं
नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य
स्वस्थः शेते मृत्युरस्मादपैतीत्यादिना ।

सर्वथामृतत्वं तदीयामृतस्य संसारानलदन्दह्यमानानां सुराणां तापमनपहत्य तप्तानामेव जीवनत्वमस्य तु भवतापमपहत्यातिमृत्युस्वरूपाविर्भावकत्वं तदीयामृतस्य कविभिर्विरागबोधवद्भिर्गर्हितत्वमस्य तु तैरीडितत्वं तस्य भोगेन पूर्वपुण्यापहर्तृत्व मस्य तु कल्मषापहत्वं तस्य तु पाने एव क्षुद्रसुखप्रदत्वेऽपि श्रवणेऽभिलापजनकत्वेन तापोद्भवकत्वमस्य तु श्रवणमात्रेण मङ्गलत्वं तस्य भगवता स्वयं श्रियं गृहीत्वाऽमृतमात्रदानेन श्रीवियोगान्निःश्रीकत्वमस्य तु नित्यश्रीतत्पतिसम्बन्धवत्त्वान्नित्यश्रीमत्त्वं तस्य तु स्वर्गैककोणे निपतितत्वमस्य तु आततत्वमिति तदीयामृतातिविलक्षणत्वात् तादृक्कथामृतं ये जना भूरिदा पूर्ववहुपुण्यवन्तस्ते एव भुवि गृणन्ति ते जनाः सफलजनिमन्तो भूरिदा बहुपुण्यवन्तो ज्ञेया ये इति वा यद्वा ये जना गृणन्ति ते एव भूरिदा बहुदातारो अक्षयधनदातृत्वात् न धनदास्तद्दत्तधनस्य क्षणभङ्गुरत्वान्नानानर्थरूपत्वात्—

जीवाभयप्रदानस्य कलां नार्हन्ति षोडशीम् ।

इत्यादिवचनाच्च यद्वा ते भूरिदाश्च तथा अजना भविजन्मप्राप्त्या नतु तद्दानफलभोगाय पुनर्जन्मवन्तोऽजनभगवत्स्वरूपा वा—

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवचनात् लब्धत्वदीयाङ्गसङ्गादिसौख्यानां पुनस्तदभिलापविकलानामस्माकं तु तत्कथामृतं भुवि अस्मत्सान्निधाने ये गोपदारा जना गृणन्ति ते तप्तानां जीवनमात्रहेतुश्रवणसुखमात्रप्रदत्वेन बहभिलापिणामभूरिदा एव यद्वा तव कथामृतं पापिनां कल्मषापहमतिधर्मप्रदञ्च आविर्भूतपापफलतापतप्तानामार्तानां तप्तानां जीवनं जलं यथा तथा तापापहं तथा श्रवणमात्रेण मङ्गलतया सर्वकामसुखकं श्रीमत्तयार्थानामर्थदं जिज्ञासूनामपि मालिन्यहेतुकल्मषापहं भवतापोपशमेन स्वरूपसुखदम् औत्सुक्यबोधकं श्रवणे मङ्गलं सर्वविघ्नापहं योध्यं श्रीमत आततं पूर्णसुखममृतरूपमेवेति सर्वसुखत्वेन कविभिरीडितं स्तुतं यद्वा कविभिर्विद्वद्भिस्तु सर्वाभिलापशून्यैर्विद्वन्मनोदरतत्स्वासाध्यात्प्रेयाजनाभावेऽपि

श्रीरामनारायणकृतभावभावविभाविका ।

निरन्तरमीडितं निवृत्ततर्षैरुपगीयमानात् कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिरित्यादिवचनात् तथास्वसुखदमपि प्रेमिणां त्वद्वियुक्तानामस्माकमेव क्षोभकमित्यतिचित्रं यद्वा तव कथामृतमपि त्वमिव षड्गुणाश्रयम् आततमित्यैश्वर्यस्य कथनं कल्मषापहमित्यनेनादृष्टकल्मषनिवर्तकतया धर्मस्य दृष्टकल्मषात्मकरोगादिनिवर्तकतया वैराग्यस्य कविभिरीडितमित्यनेन यशसः श्रवणमङ्गलश्रीमच्छब्दाभ्यां श्रियः तप्तजीवनामृतशब्दाभ्यां सर्वानर्थोपशमकस्वरूपानन्दाविर्भावलक्षणामृताभिधेयमोक्षाभिव्यञ्जकज्ञानस्य निर्देशस्तथा च त्वमिव भगवन्नति प्रिय त्वं विरहेण खेदयसे तथैव नो मरणप्रतिबन्धेन खेदयतीति भावः । यद्वा यावत्त्वद्वियोगं कथामृतेनैव जीवयामित्यत आहुः । कथापि नामृतं किन्तु मृतमेव कथं तत्राहुः । तप्तजीवनं तप्ते सस्नेहपात्रे जीवनं जलं यथा वह्न्युद्बोधकं तथा त्वद्विरहाग्नितप्ते स्नेहपूर्णेऽस्मद्गात्रपात्रे कामचिन्ताग्न्युद्बोधकं तथा कविभिः कं सुखं मियन्तीति कवयः प्रेमसुखापहाः यद्वा नन्दिन इव श्रीमतस्तव काव्यादिस्तवेन स्वार्थसाधकास्तैरेवेडितं न तु प्रेमरसाभिज्ञैस्तद्दशापन्नैः तथा कल्मषापहं कल्मषफलदुःखोपभोगेन तन्निवर्तकं त्वद्वियोगे कामकल्मषोद्बोधेनापहन्तीति वा तथा श्रवणमात्रेण मङ्गलं भौमग्रहवदतिपोषकं तथा श्रियोऽसाधारणरूपगुणादेर्मद आततो यस्मिंस्तत् ये जना भुवि गृणन्ति ते भूरिदा "दोऽवखण्डने" इत्यस्मात् भूरि घ्नन्ति अवखण्डयन्तीति तथा हृदन्तश्छेदका इति भावः ॥ ९ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु युष्माकं प्रेमातिरेकपरीक्षार्थमन्तर्हितोऽहं ततश्च सम्प्रति ज्ञातवानहं नाद्यापि भवत्यो मत्प्रेमातिरेकभूमिमारूढाः मद्विरहेऽपि जीवनधारणादित्याशङ्क्य नास्माकमपराधस्तव कथा त्वत्सदृशगुणास्मान्जीवयति वयं किं कुर्म इत्याशयेनाहुः । तवेति । तव कथामृतम् अत एव तप्तानामस्माकं जीवनं तत्र प्रमाणमाहुः कविभिस्तत्त्वदर्शिभिः सर्वज्ञैर्नारदादिभिरीडितम् स्तुतं एतेन प्रसिद्धामृतादुत्कृष्टत्वं सूचितं तद्धि विषयार्थिभिः स्तूयते ननु कविभिः किञ्च कल्मषापहं नहि प्रसिद्धं तत्कल्मषं निवर्त्तयति किन्तु निवृत्तकल्मषप्राप्यमिदन्तु तत्राशार्थं साधनान्तरं नापेक्षत इतिभावः । किञ्च श्रवणमङ्गलं नित्यं तच्छ्रवणमात्रेण मङ्गलप्रदमिदं श्रवणमात्रेण मङ्गलरूपं किञ्च श्रीमत् प्रसिद्धन्तु तत् न श्रीप्रदं इदं मोक्षश्रीपर्यन्तसमस्तश्रीप्रदं यद्वा श्रीमत्सु शान्तं तत्तु मादकं तत्राप्यानतं चतुर्दशभुवनेषु व्याप्तं प्रसिद्धन्तु तन्नैवं अतो ये भुवि गृणन्ति तेऽस्माकं भूरिदाः बहुप्रदाः परमोपकारकास्तस्मादेवंविधषड्गुणयुक्तेन भवत्तुल्येन जीवनहेतुत्वादतिरोहितत्वाच्च किञ्चिदधिकेन च तव कथाऽमृतेन त्वत्प्रीत्यर्थं जीवामोऽतो न वयं परीक्षायोग्याः किन्त्वनुकम्प्या इति भावः अनभिज्ञापक्षे अहो महति सङ्कटे निमग्नाः मरणमप्यस्माकं न भवति किं कुर्म इत्याशयेनाहुः तव कथालक्षणममृतं तप्तानां मरणयोग्यानामप्यस्माकं जीवनसाधनं जातं ननु कुतस्तल्लभ्यत इतिचेत्तत्राहुःकविभिःपूतनावधादिकानां भवच्चरितानां गीतविशेषरचनायां कुशलैरीडितं स्तुतम् उत्तमश्लोकतादिचरितवत्कल्मषनिवर्तकं श्रवणमात्रेण मङ्गलकरञ्च यतः श्रीमत् शोभायुक्तं नन्वेवंविधं किञ्चित्स्थानमस्ति यत्र न सास्तीत्याहुः आततम्व्याप्तं यतो ये भूरिदाः महान्तो दातारस्त उत्तमश्लोकाश्चापि भुवि सर्वस्यामपि भूमौ तत्र तत्र स्थिता गृणन्ति तस्मात्किमर्थं स्वविरहसन्तापं भाजयितुं स्वकथामृतेन जीवयसि यदि सर्वथा तवानागमननिश्चयः स्यात्तर्हि किञ्चिदस्मन्मरणोपायं रचयित्वा निश्चिन्ततया पलायस्वेति भाव । यद्वा ननु मत्कथया क्षणमात्रं जीवनं धार्य्यतामितिचेत्तत्राहुः । तव कथैव मृतिरुद्दीपनविधया मरणसाधनं यतस्तप्ते तैलादौ जलमिव अतः कविभिरननुभूतार्थकल्पनाकुशलैरेव कल्मषापहत्वेनेडितं स्तुतं दुःखभोगेन कल्मषनिवर्तकमिति वा तथा श्रवणमङ्गलमापातरम्यमतो व्यर्थमेव श्रीमदेन सौन्दर्य्याखर्वगर्वेण सर्वत्र प्रसृतं तस्मादस्मदग्रे ये गृणन्ति ते भूरिदा महाघातुकाः "दोऽवखण्डन" इति स्मरणात् तस्मादलं तव कथयेति भावः । मानिनीपक्षे ननु अनेकगुणवत्त्वेन यत्कथामृतं कविभिरीडितं तास्मिन्नपि मयि भवत्यो नानुरज्जन्ते इत्याशङ्क्याहुः तव कथेति कविभिरतिशयोक्तिपरैस्तप्तजीवनत्वादिरूपेणेडितमपि तव कथामृतं भूरिदा उदारा अस्मत्तुल्या जनाः श्रीमदेन ततं व्याप्तं गृणन्ति अतो नस्माभिस्त्वय्यनुरज्यत इति भावः । निवृत्तिपक्षे किञ्चित्तव च रित्रकथामृतपानेन केषामुद्धारो भविष्यतीत्याहुः । तव कथामृतं यतस्तप्तानां त्रिविधतापतप्तानां जीवनं तापनिवर्तकं पीता गावः तिवत् ततानां ज्ञानिनां जीवनरूपं तपआलोचनइतिस्मरणात् यतः कविभिर्ब्रह्मविद्भिः सनकादिभिरीडितं किञ्च तव कथामृतसेविनां न कृच्छ्रचान्द्रायणादिकर्म्मापेक्षेत्याहुः । कल्मषापहं निरयप्रदकशान्तरायभूतपापकर्मनिवर्त्तकं तत्रापि श्रवणमङ्गलं कृच्छ्रादिघोररूपत्वाच्छ्रवणेऽप्यमङ्गलं तवोदारचरितामृतन्तु श्रवणमात्रेणाप्यानन्दप्रदं नचापातरम्यमपि तु श्रीमत् वास्तवसमस्तोद्धारशोभालंकृतम् अत एवाततं सर्वत्र व्याप्तं न त्वेकदेशि तस्माद्ये भुवि अधिकारभूमौ गृणन्ति ते भूरिदा महान्तो दातारः सर्वयज्ञानुष्ठानसर्वस्वदक्षिणादिफलवन्तः यद्वा ये जन्मान्तरेषु भूरिदास्त एवास्मिन् जन्मनि गृणन्ति यद्वा मुमुक्षूणामनुग्रहार्थं ये गृणन्ति ते भूरिदा जनाः अभयदानसमं दानं नास्तीत्युक्तत्वात् अभयदातृत्वेनानल्पदाः यद्वा ये गृणन्ति ते भूरिदाश्च ते अजनाः विष्णुस्वरूपाश्च हे भूरिदेति वा तस्माल्लीलाविग्रहमादायास्मदुद्धारो लोकोद्धारश्चावश्यं सम्पाद्य इति भावः ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काश्चित् त्वद्विरहाग्निनास्माकं मरणं प्राप्तं यद्यपि तथापि त्वद्गुणश्रावयितृभिर्वञ्चितमित्याहुः । तवेति । तव कथारूपममृतं तप्तानां त्वद्विरहज्वालादग्धानां जीवनम् ननु प्रसिद्धममृतम् अत एव कविभिर्मुनिभिर्व्यासादिभिः क्रान्तदर्शिभिर्वेदैर्वा ईडितं स्तुतं देवभोग्यममृतं तु तैस्तुच्छीकृतमिति भावः । न केवलं तप्तजीवनमात्रमपि तु कल्मषापहं तव प्राप्तप्रतिबन्धकपापघ्नम् किञ्च श्रवणमात्रेण मङ्गलावहम् किञ्च श्रीमत् त्वद्विषयकज्ञानभक्त्युत्पादनरूपा श्रीर्विद्यते यस्मिन् तत् एवं भूतं त्वत्कथामृतमाततं यथा भवति तथा भुवि ये गृणन्ति निरूपयन्ति ते भूरिदाः

**प्रहसितं प्रिय ! प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ॥**
**रहसि संविदो या हृदि स्पृशः कुहक ! नो मनः क्षोभयन्ति हि ॥ १० ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बहुदातारः जीवननिष्फलमपत्यद्विषयकज्ञानभक्त्यादीनां दातार इत्यर्थः ॥ ९ ॥

———

### भाषा टीका

आप की कथा रूपी जो अमृत है सो संसार ताप से तपायमान प्राणिन को जिवायवे वारो है ब्रह्मादि कवि जन वाको गान करें हैं सब पापों को नाश करवे वारो है श्रवण करवे ते ही मंगल कारक है वैष्णवसंपत्ति दायक है सब संसार में व्याप्त है ऐसो जो आप को चरित्र ताको जो गान करें हैं वेही महात्मा बडे दान देवे वारे हैं ॥ ९ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मत्कथाश्रवणेनैव निर्वृता भवत किं मद्दर्शनेन न त्वद्विलासक्षुभितचित्ता वयं तत्रापि शान्तिं न विन्दाम इत्याहुः । प्रहसितमिति । हे प्रिय ! कुहक कपट संविदः सङ्केतनर्माणि ॥ १० ॥

———

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु निर्वृदयस्तथाप्यौपधवद्वलान्मत्कथां मिथः सेवध्वमित्यत्राहुः । यद्वा आशयापि चिरंजीवितुं न शक्नुम इत्याहुः । प्रहसितमिति । भावे क्तः प्रकृष्टहसितं शुद्धभावेन स्मितमित्यर्थः । प्रेम्णा वीक्षितं विहरणं क्रीडा ते इत्यस्य प्रहसितादिभिः सर्वैरप्यन्वयः ध्यानमात्रेणापि मङ्गलं सुखकरं यद्वा ध्यानमङ्गलं शुभावहं सुखेन प्रेमध्यानसंपादकमित्यर्थः । एतच्च त्रयाणामपि विशेषणम् अत एवोक्तं श्रीकपिलदेवेन ध्यानायनं प्रहसितमित्यादि हृदि स्पृशः हृदयंगमाः यद्वा स्मरणपथमात्रं गच्छन्त्योऽपि सत्यः याः संविदस्ताः सर्वाः एवेति तासां सर्वासां हृत्स्पृक्त्वं क्षोभणत्वं चाभिप्रेतं क्षोभयन्ति कामेनाकुलयन्ति संविद इत्यस्यान्तिके प्रयुक्तत्वेन तस्यैव विशेषणत्वेऽपि हृदिस्पृश इति सर्वान्त्यत्वाद्वचनविपरिणामेन सर्वैरपि योज्यं तत्राद्यद्वयं प्रायो भावत्वान्मानसं प्रहसितस्य शुद्धभावनाजन्यत्वात् प्रेम्णश्च मनोवृत्तिविशेषे स्फूर्तेः विहरणं प्रायो दैहिकं संविदश्च वाचिक्य इत्येवं त्रिविधा चेष्टोक्ता तेषां च क्षोभणत्वे यथोत्तरं श्रैष्ठ्यमूह्यं हि निश्चितं क्षोभणत्वे हेतुः हे प्रियेति अन्यथा क्षोभणाशक्तिः एवं त्वदेकप्रियत्वेन वयं सदा मनःक्षोभदुःखं लभामहे त्वं चास्मान् वत वञ्चयसे एवेत्याशयेन सम्बोधयन्ति । कुहकेति । अन्यत्सैर्व्याख्यातं यद्वा प्रियजने प्रेमतद्दर्शनादिमात्रेण पुलकादिलक्षणं वीक्षितं विशेषेण प्रेमास्मितादिना ईक्षितं ध्यानं प्रियजनस्य चिन्ता तदेव मङ्गलम् अस्माकमाशालम्बनादिहेतुत्वात् संविदः प्रतिश्रुतानि सर्वापेक्षया भवतीनामिष्टमवश्यमेव सम्पाद्यमित्यादिलक्षणानि लोकस्यान्यथाकरणात् तथाधुना स्मदुपेक्षया तत्र सर्वत्रैव कापट्यपर्य्यवसानाच्च कुहकेति अथवा ननु सदृश तत्रापि साध्वीनां धैर्य्यमुपपद्येतेतिचेत् तत्र सुप्रेमधिकारं सदैन्यं चाहुः । प्रहसित मिति । क्षोभयन्ति धैर्य्यं हरन्ति तत्तत्स्मरणादधुनापि यज्जीवेन एतदेव नः परमधैर्य्यं विद्धीति भावः अन्यत्समानम् ॥ १० ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र प्रथमेऽर्थे । ननु विचारलुब्धाः दुर्लभे मयि कथमेतावन्तमनुरागं कुरुथ यदि कुरुथ तदा मत्कथाश्रवणेनैव निर्वृता भवत इत्यादिकमाशङ्क्य तेनानिर्वृतौ तस्यैव पूर्वोनुरागमयं चरितं दूषयन्ति त्रिभिः । द्वितीयेऽर्थे । आशयापि चिरं जीवितुं न शक्नुम इत्याहुः । प्रहसितमिति भावे क्तः । वीक्षितमित्यत्र वीक्षणमिति तु क्वचित्पाठः । प्रथमतः प्रहसितं तासां दर्शनमात्रेण भावोल्लासात् प्रकृष्टं सहजस्मितात् किञ्चिदुद्रटं हसितम् । कीदृशं ततः प्रेम्णा वीक्षितं यत्र तादृशं ततो विहरणं सखिभिः सहक्रीडाविशेषः । तच्च कीदृशं ध्याने मङ्गलं तदनुचिन्तने आशावन्धकारकं निजभावाभिव्यञ्जनामयत्वात् । ततश्च रहसिसंविदः दूरतः स्वयं निर्जने गत्वा वेण्वादिना नर्मोक्तयः ताश्च कीदृश्यः याः हृदि स्पृशो हृदयङ्गमा इति सर्वतोऽन्तरङ्गत्वं दर्शितम् । यच्छब्दोऽत्र चमत्कारविशेषार्थः । ततो लिङ्गविभक्तिविपरिणामेण पूर्वपूर्वत्राप्यनुपञ्जनीयः । तेषु यथोत्तरं श्रैष्ठ्यम् । कुहकेति उदर्के दुःखमयत्वात् । तदुच्चतरकुहकानामयमेवेति भावः । न इति तत्र बहूनामनुभवं प्रमाणयन्ति क्षोभयन्ति आकुलयन्ति हि निश्चितं क्षोभणे हेतुः प्रिय ! हे शोभनेत्यर्थः । एवं त्वदेकप्रियत्वेन वयं सदा मनःक्षोभदुःखं लभामहे त्वं पुनरस्मान् वत वञ्चयस इत्याशयेन च सम्बोधयन्ति हे कुहकेति ॥ १० ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रियेति सम्बुद्धिः ॥ १०—११ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि मत्कथामृत श्रवणेनैव तृप्ता भवथेत्यत्र तथापि त्वद्विलासक्षुभितचित्ता वयं न शान्तिमाप्नुम इत्यभिप्रेत्याहुः । प्रहसितमिति । हे प्रिय ! हे कुहक ! वञ्चक तव प्रहसितं च प्रेम्णा वीक्षणञ्च ध्यानमङ्गलं ध्यानेनापि मङ्गलं सुखं यस्मात्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विहरणाश्च याश्च रहसि संविदः सङ्केतचेष्टाः कथम्भूता हृदि स्पृशो हृदयारूढाः ताश्च नोऽस्माकं मनः क्षोभयन्ति हि ॥ १० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तव कथामृतं तप्तजीवनादिफलदं चेत् अधरसीधुनाप्यायनं किमर्थमित्याशङ्क्य तव हसितादिना मुग्धा वयं तवाधरसीधुं प्रार्थयामह इत्याशयेनाहुः । प्रहसितमिति । हे प्रिय ! प्रेम्णा वीक्षणं ध्यानमङ्गलं विहरणं विहारः विक्रमणलक्षणः हृदि स्पृशः हृदयंगमाः संविदः सम्भाषणादयः संविद्युद्धे प्रतिज्ञायां सङ्केताचारनामसु । सम्भाषणे क्रियाकारे विज्ञाने तोषणेऽपि चेति वचनात् एते सर्वेऽपि सुरते संभवन्ति कुहक ! धूर्तेतिप्रणयकोपे हि यस्मात्तस्मात् अधरामृतपानप्रार्थनम् ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

न केवलं तव कथैव तादृशी प्रहसितादिकं च तव यदन्यत्तदपि नो मनः क्षोभकमित्याहुः । प्रहसितमित्यादि । हे प्रिय ! ते तव प्रहसितं प्रहासः विहरणं विहारः रहसि संविदः विजनसंवादा हि निश्चितं मनः क्षोभयन्ति पूर्वं मनः सुखदत्वेन ज्ञातान्यासन् सम्प्रति तदन्यथा भावात् मनः क्षोभकान्येव सर्वाणि जातानीति वाक्यार्थः त्रयाणां त्रीणि विशेषणानि प्रहसितं कीदृशं प्रेमयुक्तं वीक्षणं यत्र विहरणं कीदृशं ध्याने मङ्गलं ध्यानस्यैव मङ्गलं नतु ध्यातुर्मनः क्षोभाकत्वात् संविदः कीदृश्यःहृदि स्पृशः मर्मस्पृशः यतस्त्वं कुहकत्वेन कापट्यवत्त्वेन प्रसिद्धोऽसीति योग्यं संबोधनं हे कुहक ! कापट्यपटो अतोयुक्तमेवोक्तं तव कथामृतं तप्तजीवनमित्यादि ॥ १० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तामस्या वचनमाह । प्रहसितमिति । यद्यपि कथया स्थातुं शक्यते यदि त्वदीयैर्धर्मैः क्षोभो नोत्पादितः स्यात् यथा भगवति षड्गुणाः सन्ति तथा षड्व्यामोहका अपि गुणाः सन्ति अन्यथा कथयैव चरितार्थता स्यात् तदर्थं भगवान्मायया कुहकलीलामपि करोतीति स्वस्वभावदोषात् भगवति तथा स्फूर्तिरिति यथा ज्वरितस्यान्ने विरसताप्रतीतिः अत आहुः । तव प्रहसितादिकं नो मनः क्षोभयतीति प्रकर्षेण हासितं स्वभावत एव खिन्नातां त्यक्त्वा अन्यया सह स्थित इति ततश्चेत्समागत्य प्रकर्षेण हसति सुतरां क्षोभं प्राप्नोति प्रियेति संबोधनात् तव संबन्धोऽपि स्मृतः क्षोभजनको जायते अत एव यासां न संबन्धस्तासां न क्षोभः किंच तव यत्प्रेमवीक्षितं प्रेम्णा वीक्षितं तदपि क्षोभयति स्मृतं सत् अन्यविषयकं वा विश्वासजनकत्वाद्वा अन्तः कपटरूपमिति क्षोभजनकम् अन्यथा कार्ये विसंवादोनस्यात् मनस उत्तोलकं वा आशाजनकं आशायांच श्रमः तव विहरणमपि क्षोभजनकं विहरणं यच्चलनं वेणुवादनादिना रसो भगवदीयः आकाराद्बहिः स्यन्दन इति विशेषेण हरणं यस्मादिति त्रिभङ्गललितादिकं भवति तत्पूर्वमस्माभिर्ध्यातमिति ध्यान एव मङ्गलं त्वल्लक्षणं शुभफलं प्रयच्छतीति तदपीदानीं क्षोभजनकं तिरोहितत्वात् त इति सर्वत्र संबन्धः अन्यन्माययापि करोतीति मुख्यतया अत्रोक्तिः एवं रूपसंबन्धे चतुष्टयं क्षोभकमुक्तं नामसंबन्धिद्वयमाह । रहसि संविद इतिया हृदि स्पृश इति रहसि एकान्ते संविदो ज्ञानरूपाः भगवद्वाचः ज्ञानान्येव वा शास्त्रजनितानि सम्बन्धाद्यभिज्ञारूपाणि तत्रापि या वाचो हृदि स्पृशः हृदयगामिन्यो भवन्ति अस्मदनुगुणा एवं विधसंविदो वा नतु केवलं नायकानुगुणाः अत एवमेते सुखहेतवो भगवान् वञ्चयति चेत्तदा क्षोभं जनयन्ति अयमर्थः सर्वानुभवसिद्ध इत्याह । इति ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्माकन्तु त्वद्दर्शनं विना त्वत्सम्बन्धि वस्तुमात्रमतिदुःखदमित्याहुः । प्रहसितमिति । विहरणं सम्प्रयोगः । याश्च सम्विदः संलापनर्माणि हृदि स्पृश इति दुःखदत्वाद्विस्मर्तुमिष्टा अपि न विस्मर्तुं शक्यन्त इति भावः । ध्यानेनापि मङ्गलं परमसुखदमिति चतुर्णामपि विशेषणं मनः क्षोभयन्ति व्याकुलयन्ति । एतानि मनसि प्रविश्य सद्यः सुखं दत्त्वा तद्द्वितीयक्षण एव महादुःखं ददत्यत एव हे कुहक ! कुहकदत्तवटकान्यपि सद्यः परमस्वादून्यप्यायत्यां परमदाहकानि प्राणघातकानीत्यर्थः ॥ १० ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

हंहो शान्तं पापं मम कथैकजीवना यूयं तदाचरमाणाः सुखं विचरथ किं मम दर्शनाद्याग्रहेणेत्यत आहुः । प्रहसितमिति । दक्षिणानां वाक्यं हे कुहक ! बहुप्रियत्वात्कपटविलासिन् तदुक्तं

धातस्तात विरुद्धोऽसि द्वितयं गाढथा नृणाम् ।
भृत्यत्वमविवेकज्ञे स्नेहमन्यपरे जने इति ॥

ततश्च हे रतिहिण्डकेत्यर्थः । ते तव प्रहसितं प्रकृष्टं सव्रजास्मितात्किञ्चिदुत्कृष्टं हासितं नचातिवक्रत्वादेव सरला एताः कथं मया प्रतार्य्यन्त इत्यभिप्रायात् तदुपरि प्रेम्णा वीक्षितं ततः सखिभिः सह विरहथं क्रीडाविशेषः सा सा शृङ्गारचेष्टेति यावत् ततश्च कीदृशं ध्यानेति तदनुचिन्तने आशाबन्धकारकं निजभावाभिव्यञ्जनमयत्वात् ततश्च रहसि सम्विदः दूरतः स्वयं निर्जने गत्वा वंश्यादिना नर्मोक्तयः ताश्च कीदृश्यः या हृदिस्पृशः हृदयङ्गमाः इतिसर्वतोऽन्तर ङ्गत्वं दर्शितं यच्छब्दाऽत्र चमत्कारविशेषार्थः ततो लिङ्गविभक्तिविपरिणामेन पूर्वपूर्वत्राप्यनुषञ्जनीयः तेषु यथोत्तरं श्रेष्ठ्यात् न इति बहूनामनुभवं प्रमाणयन्ति क्षोभयन्ति आकुलयन्ति हि निश्चितं क्षोभणे हेतुःप्रियलोभना तथा तथापि परमप्रेष्ठेति परमासक्तिः सूचिता ॥ १० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

किञ्च यथाकथञ्चित्क्षणमप्यस्मज्जीतिसम्भावनया विलम्बो न विधेयः यतो भगवतस्ते यथा षड्गुणाःप्रसिद्धास्तथा क्षोभका अपि

### श्रीरामनारायणकृतभावभावविभाविका ।

बहवो गुणाः सन्ति ते च नः क्षोभयन्ति क्षणमपि विश्रामप्राप्त्याऽस्मज्जीवनं न सहन्ते इत्याहुः । प्रहसितमिति । यद्वा तद्वैकल्यविनयाभ्यां जातानुकम्पतया लीलयैवाविर्भूतवपुषं भगवन्तं पश्यन्त्यस्तेन सहैव विहरन्त्योऽपि साक्षात्सम्बोधयन्त्योऽप्यन्तर्द्धानभ्रमेणान्तर्धानमेवाकलय्याहुः।प्रहसितमिति।हेप्रिय हेकुहक इतिसम्बोधनाभ्यां प्रियत्वेन मनः संलोभ्य स्ववशीकृत्य कुहकत्वेन तत् क्षोभयन्ति यथा कश्चिन्मधुरध्वनिमृगयुर्गीतमाधुर्य्येण मृगीराहूय प्रियनादेन विश्वासमुत्पाद्य कुहकतया पुनर्घातयति तद्वदिति द्योतितं प्रहसितं प्रकृष्टं सितातोऽपि मधुतयावसितं मुखचन्द्रसितामृतमयप्रभेवोल्लासितं यत् हासितं प्रकृष्टा अपि संभेदादयः स्वभान्यूनतया वा हसिता येन प्रकृष्टा अन्या गोपीः प्रति वा हासितं प्रकृष्टश्च ह स्फुटं च सितश्चेति वा मुखकञ्जविकासात्मना हृदाकाशोदितरसेन्दुसितमृदुसुधासुधभासात्मना वा नित्यसिद्धमन्दस्मितापेक्षयापि विचित्रभावविशेष प्रकाशतया प्रकृष्टं यत् हासतमुखेन्दावरुणदसनवसनप्रावरणरदभगणावळिसमागमप्रदर्शनेनात्मनोवहुसखिविलासभावावभासकतयाभिलापोल्लासकं वा यत् प्रहसितम् अत्र भावे क्तः प्रेमवीक्षितामित्यत्र च कचिद्वीक्षणमित्येव पाठः तथा यत्ते प्रेम्णावीक्षणं प्रेमान्वितविशेषेणानिमेपदृत्तदृष्टितयेक्षणम्वा विविधभावविभावकायाङ्गीकरणापाङ्गाक्षयेषु क्षयेक्षणं वा तथा भूतमीक्षणं नयनम्वा तथा च जाताथेकवचनं तथा ते विहरणं विहारः नृत्यगतिविलासविविधपादन्यासानिलचलितनलिनीदलमृदुलकरोल्लासादिरतिसुखविस्तरणरतिरणरमणादिवाश्लेपेण किम्भूतं तत्विशेषेण हरणं मनोहरं स्वात्मनोऽपि मनोहरत्वात् विविधप्रकारेण मनोहरणम्वा पुनः किंभूतं तत् ध्यानमङ्गलम् अनुचिन्तनेऽपि मङ्गलं निजभावाभिव्यञ्जकत्वादाशोदृभावकं ध्यातृणां ध्यानेऽपि मङ्गळं परमसुखरूपं किमु वाच्यंसानन्दोत्साहं विहरतां पूर्वोक्तसर्वविशेपणम्वा यद्वा ध्यानेन मा सकामानां लक्ष्मीः निष्कामानां जिज्ञासूनां मा प्रमाब्रह्मात्मबोधोविद्रूपामपि मा शोभा यस्मात्तत् ध्यानं नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमळं निरञ्जनमित्यादिवचनात्तद्भावनयैव ज्ञानशोभाश्रवणात् तथा ते मधुरमुखरस्फीतगीतरवान्वितं नृत्यदोलनादिना विचित्रमनोज्ञभावदर्शकं गलं कण्ठं तथा गायतीतिगः तेनैव गानेन लाति अनुगृह्णातीति लः सच सच तथा तं तथा रहसि संविदः एकान्तिकनर्मोक्तयः रहसि गत्वा वेणुशब्दादिनाह्वानाद्युक्तयो वा मनोगतमनोजसंज्ञापकाः संज्ञाविशेषा वा कथंभूतास्ताः हृदिस्पृशः हृदि प्रविश्य स्पृशन्ति संलग्नास्ततो न चलन्ति न वियुज्यन्तेइतिभावः । यद्वा हृदिस्पृशः प्रेमनिमित्तालिङ्गनानि नः सर्वासां मनः क्षोभयन्ति हीति सर्वासां नस्तथाानुभवभिन्नत्वात् प्रसिद्धं प्रियत्वात् नहि प्रियाणां क्षोभ प्रियस्याज्ञातो भवति अस्मत्प्रहसितादिना स्वमनः क्षोभानुभवेनानुमानाद्वा तवापि प्रसिद्धं ननु भवतीनां मनः क्षोभमाने स्वमनः क्षोभसम्भवे वा अन्तर्हितत्वे कथमन्तर्हितत्वं तत्राहुः । कुहकेति।अस्माभिः सरलस्वभावेन स्वदैन्याविष्कारेणाप्यन्तर्भावोऽपि स्फुटं निगद्यते त्वया तु स्वतनुचत्कृष्णकुटिलमनस्त्वेन सङ्गोप्यते इत्येव विशेष इति भावः ॥ १० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु यावद्भ्रमणं जातं तावतैव सन्तोषो विधेय इतः परञ्च मत्कथामृतपानेन जीवनीभिर्मद्ध्यानमेव सम्पाद्यमितिचेत्तत्राहुः । प्रहासितमिति । हे प्रिय ! हे कुहकं यद्यपि परमात्मा त्वं कपटलीळयास्मत्प्रियविग्रहं प्रकटितवांस्तथापि त्वद्विपयकरमणेच्छास्माकं न निवर्तते तादृशदोपवशादेव मनः स्थिरं न भवति तत्र भगवतस्तव प्रहसितं प्रेमपूर्वकं वीक्षणं विहरणं क्रीडनञ्च एतत्त्रितयं ध्यानेऽपि मङ्गलं तथा रहसि याः सम्विदः क्रीडासङ्केताः हृदिस्पृशः अन्तःकरणे प्रविष्टाश्च नोऽस्माकं मनः क्षोभयन्ति क्षणमात्रं तदनुसन्धानपरायणमपि मनः हासं प्रतिभगवत्प्रहसितादिकं नोपलभ्यत इति वृत्त्युदये क्षुब्धं भवति प्रहसितादयो यद्यपि गुणास्तथाप्यस्यां विरहदशायां दोषा जाता अतो वयं किं कुर्म इति भावः न इति बहुवचनेन बह्वीनामनुभवं प्रमाणयन्ति । हिशब्देन प्रसिद्धिं द्योतयन्ति अनभिज्ञापेक्ष तव कथायां क्रियमाणायां तत्र नान्तरीयकतया स्मृतानि प्रहसितादीनि मारकाणि भवन्ति स्मृतिपथमारुहन्तीत्याहुः । प्रहसितं प्रकर्पेणोच्चैर्हसितमस्मान्दृष्ट्वैवात्यन्तप्रसन्नताविष्करणरूपं तव प्रहसितं सम्प्रति स्मृतं सदस्मन्मनः क्षोभकरं भवति यतो हे प्रिय ! प्रियेण समक्षे कृतं यदानन्दावहं प्रहसितं तत्तस्य विरहदशायां मरणावहमेव भवतीति भावः । तथा प्रहासानन्तरं यत्प्रेमपूर्वकं वीक्षणं विशिष्टं शोभनमीक्षणं कटाक्षधारा च केवलं वा तत् तथा विहरणं सखिभिः सखीभिर्विहारः विशेषेण वेणुनादादीनां हरणमाकरणमिति वा एतत्त्रितयं ध्यानमङ्गळं ध्याने स्मरणे मङ्गलं स्वस्वरूपं न भवति किन्तु दर्शन एव तथा रहस्येकान्ते याः सम्विदस्ता अपि गतौ हार्दस्पृशः फलपर्यवसायिन्यः सत्यो हृदयविलोकसः तदेतत्परमसुखकरमपि सर्वं तवानया कपटप्रवृत्त्या परमदुःखावहं सम्पन्नमित्याशयेन सम्बोधयन्ति । हे कुहकेति । हि निश्चितं क्षोभयन्ति अत्र संशयं विहाय स्वकुहकतानिरासायाऽऽगत्यास्मन्मनः क्षोभं निवर्तयेति भावः मानिनीपक्षे अहोऽस्माभिरदीर्घदर्शित्वाद्बुद्धैव यदनुष्ठितं तस्य फलमिदानीमुपास्थितामित्याशयेनाहुः । प्रहासितामति । त्वया यदस्माकं प्रहसितं यच्च प्रियस्य तव प्रेमपूर्वकं वीक्षणं हे प्रियेति वा प्रियं मत्वेति भावः । विहरणम् एतत्त्रयं ते ध्याने अहो एतासां कदा प्रहसितादिकं द्रक्ष्यामीति चिन्तिते मङ्गलं यावत्तादृशं तव चिन्ततं स्थितं तावदेव तत्कर्तृकप्रार्थनादि परमस्माकं मङ्गलं स्थितं संप्रति तवाचिन्तनासिद्धावसरे ऽस्माकं परममङ्गलं जातमिति भावः । तथा रहसि यास्तव हृदिस्पृशः संविदः ताश्च नो मनः क्षोभयन्ति अहो नायं प्रहसितादिपात्रभूतः स्थितोऽतो वृथैवा ऽनभिज्ञाऽपकृतज्ञशिरोमाणिभूतस्याग्रे प्रहासितादिकमनुष्ठितं कुटिलभ्रूविभ्रहश्चरणोपान्तपातनयोरवस्थितस्तस्मान्मौर्ख्येण विपरीतमनुष्ठितमतः किं कुर्म इत्येवं स्मृतानि प्रहासितादीनि नो मनः पुनः पुनर्व्याकुलयन्ति हि निश्चितं यथा कश्चिद्वञ्चकः सेवको भूत्वा दैन्यसेवनादिना मनो रञ्जयित्वा स्वस्मिन्विश्वासमुत्पाद्य मादकं वस्तु प्रदाय सर्वस्वमादाय पळायते तथा त्वमपि कृतवानस्य हो कष्टं किं कुर्म इति कन्यावेशेन संबोधयन्ति हे कुहकेति । निवृत्तिपक्षे एवंरूपोऽपि त्वं जीवरूपेण स्वस्यैव च वञ्चको जातस्तस्य तव स्ववञ्चनहेतुभूतानि चेष्टितानि नो दुःखकराणीत्याशयेनाहुः । प्रहसितेति ! दुःखे सुखताभ्रमात्तथा हे प्रिय ! अनित्यासत्स्वेपु नित्यत्वस-

**चलसि यद्व्रजाच्चारयन् पशून्नलिनसुन्दरं नाथ ! ते पदम् ॥**
**शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त ! गच्छति ॥ ११ ।**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

त्वत्वम्र गाद्विषयाणां प्रेमपूर्वकमीक्षणं तथाऽशुचौ शुचित्वभ्रमाद्विहरणं तदेतत्त्रयं ध्यानेऽपि न मङ्गलं तथा रहसि विषयसम्भोगसंकेतास्तत्रापि हृदयप्रविष्टाः सम्यगुत्पादिताभिनिवेशा एतानि कुहकत्वं प्राप्तस्य तव चेष्टितानि नो मनः क्षोभयन्ति अहोकिमिति नित्यमुक्तपरमात्मना स्वबन्धुचेष्टितान्याश्रितानीति क्षोभम् जनयन्ति हि निश्चितम् ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वत्प्रहसितादिभिः क्षुभितचित्तानां त्वद्दर्शनादेव शान्तिर्भविष्यतीत्यन्या आहुः हे प्रिय ! हे कुहक हे अगाधाशय ध्यानमात्रेणापि मङ्गलं यस्मात्तद्विहरणम् संविदः सङ्केतनर्माणि ॥ १० ॥

---

### भाषा टीका ।

हे प्यारे ! हे कपटि ! तुमारो जो हंसबो प्यारे के सहित देखबो विहार करवो ध्यान में मङ्गल कारक सब चारित्र एकान्त में संवाद थे हमारे मन को क्षोभित करें हैं ॥ १० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किंच त्वयि वयमति प्रेमार्द्रचित्तास्त्वं पुनरस्मासु केन हेतुना करटनाचरसीत्याहुः श्लोक द्वयेन । चलसीति । हे नाथ ! हे कान्त यद्यदा व्रजाच्चलसि पशूंश्चारयंस्तदा तन्नलिनसुन्दरं कोमलं ते पदं शिलैः कणिशैस्तृणैरङ्कुरैश्च सीदति क्लिश्यतीति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति एवं भूतास्त्वद्दुःख शङ्कितचित्ता वयम् ॥ ११ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

व्रजादिति । ततश्चलनमारभ्यागमनपर्य्यन्तमेव कलिलता सूचिता व्रजे तदवसादानुत्पत्तिश्चोक्ता स्वयं ताभिस्तच्छोधनात् पशूंश्चारयन्निति विविधानामनन्तानां तेषां चारणार्थं वर्त्मपरित्यागेन इतस्ततो भ्रमणाच्छिलादिभिरवसादः सम्भावितः तथा पशुतया निर्बुद्धित्वेन ते त्वत्पादाब्जदुर्गमपदेऽपि यत भ्रमन्तीति श्लेषेण सूचितं पदमित्येकत्वेऽपि द्वित्वमायात्येवेति पूर्वं लिखितमेव तथाप्यत्रार्थोऽयं ज्ञेयः एकमपि किमुत द्वयमिति गोचारणप्रदेशस्य प्रायो घनमृदुतृणमयत्वेन भूतलवर्तिशर्करादेः सम्पर्काभावा दत्रोक्तम् अखिल्लिकण्टकवनमित्यादिहरिवंशोक्तेः सर्वत्र कण्टकाभाव एव हरिदासवर्येण गिरिराजेन श्रीगोवर्द्धनेन तत्पार्श्ववर्तितदनुगगिरिवर्गेण च स्वशिलानां श्रीपादाब्जन्यासपदेन नवनीतायमानत्वसम्पादनात्तादृक्चात्र नोक्ताः नाथ ! हे व्रजेश्वरेति तत्तयायुक्तमिति कान्तेति अस्मत्कोमलकरस्पृश्यमेव तदिति प्रेमसंबोधनद्वयं कलिलतायां हेतुविशेषः तेनाधिककलिलतापि सूचिता यद्वा नाथत्वेन सर्वेषां व्रजजनानां कान्तत्वेन च विशेषतोऽस्माकमिति भावः । यद्वा नाथ एवं प्रियजनोपतापक ननु विवेकिन्यस्तर्हि अवसादहेतुमद्विषयकचिन्ता त्यज्यतां तत्राहुः । कान्तेति प्रियजनचिन्ताया विवेकेऽप्यपरिहार्य्यत्वात् इति भावः । यद्वा कलिलतागमने हेतुः नाथ हे प्राणेश्वरेति ननु "यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः" इत्यादिवचनेन प्रीतेर्दौःखत्वप्रतिपादनात् प्रीतिरेव निरस्यतां तत्राहुः । कान्तेति हे मनोहरेति अलमति विस्तरेण अन्यैरव्याख्यातं यद्वा सीदति व्यथते इति एतच्चिन्तया कलिलतां वैकल्यमिति अतो वनभ्रमणं विहायात्र द्रुतमेहीति भावः ॥ ११ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तच्च भवता क्षोभप्रदानं संयोगवियोगयोरविशेषमेव ननु कादाचित्कमित्याहुः चलसीति द्वाभ्याम् । व्रजादिति । ततश्चलनमारभ्यागमनपर्यन्तमेव कलिलता सूचिता । पशूंश्चारयन्निति विविधानामनन्तानां तेषां चारणार्थं वर्त्मपरित्यागेनेतस्ततो भ्रमणाच्छिलादिभिरवसादः सम्भावितः । तथा पशुतया निर्बुद्धित्वेन ते त्वत्पादाब्जदुर्गमपथेऽपि यत भ्रमन्तीति श्लेषेण सूचितम् । शिलं पतितसस्यखण्डवन्यधान्यादिकम् । अखिल्लिकण्टकवनमित्यादि हरिवंशोक्तेः । सर्वत्र कण्टकाभावात न तदुल्लेखः । नाथ ! हे व्रजेश्वरेति तत्तयायुक्तमित्येति । कान्तेति अस्मत्कोमलकरस्पृश्यमेव तदिति प्रेमसम्बोधनद्वयम् । कलिलतायां हेतुविशेषः । यद्वा । नाथत्वेन सर्वेषां व्रजजनानां कान्तत्वेन च विशेषतोऽस्माकमिति भावः । यद्वा । नाथ एवं प्रियजनोपतापक ! । ननु विवेकिन्यस्तर्हि अवसादहेतुमद्विषयकचिन्ता त्यज्यतां तत्राहुः । कान्तेति । प्रियजनचिन्ताया विवेकेऽप्यपरिहार्यत्वात् । यद्वा । कलिलतागमने हेतुः नाथ हे प्राणेश्वर इति । ननु "यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कव" इत्यादिवचनेन प्रीतेर्दौःखत्वप्रतिपादनात् । प्रीतिरेव निरस्यतां तत्राहुः मनो गच्छतीति सङ्कल्पमात्रात्मकं तत्रास्माकं बुद्धिर्युक्ति विवेकमपेक्षत इति भावः । ननु मनोऽपि युष्माकमेवेत्याशङ्क्य तस्यापि न दोष इत्याहुः । कान्त हे मनोहर इति । अतो वनभ्रमणं विहायात्र द्रुतमेहीति भावः ॥ ११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च त्वयि वयमतीव प्रेमार्द्रचित्तास्त्वन्तु कुतोऽस्मान् वञ्चयसीत्यभिप्रेत्याहुः द्वाभ्यां हे नाथ हे कान्त यद्वा पशूंश्चारयन् व्रजाच्चलसि तदा नलिनवत्सुन्दरं कोमलं ते तव पदं शिलैः कठिनैस्तृणैरङ्कुरैश्च सीदतीति क्लिश्येदिति नोऽस्माकं मनः कलिलतामस्वास्थ्यं गच्छति याति ॥ ११ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्वच्चरितं ज्ञानिनामपि दुर्बोधकं किमुतास्माकमिति भावेनाहुः । चलसीति । पशूंश्चारयन् यद्यदा व्रजाच्चलसि गच्छसि तदा शिलतृणाङ्कुरैः छिन्नशिखरत्वेन परुषैरिपीकादितृणाग्रैः शिलाः शर्करास्ताभिस्तृणाङ्कुरैश्च या सीदति व्यथतीति कलिलतां नारायणोऽन्यो वेति संशयपङ्किलताम् ॥ ११ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न केवलमिदानीमेव वने समानीय नः कदर्थयासि तव विहारोऽस्माकं चोभक एवासीदित्याहुः । चलसीत्यादि । हेनाथ । यत् व्रजात् पशून् चारयन् चारयितुं चलसि तत्र ते तव नलिनादपि सुन्दरं पदं शिलतृणाङ्कुरैः सीदतीति कृत्वा नोऽस्माकं मनः कलिलतां दुःखगहनभावं हे कान्त ! गच्छति अतः साधूक्तं विहरणंच ध्यानस्यैव मङ्गलं यस्य तत्तथा ननु ध्यातुर्मङ्गलमिति ॥ ११ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

राजस्या वचनमाह । चलसीति । अस्माकन्तु स्नेहवशात् त्वद्विषयिका समीचीनेऽपि खेदबुद्धिर्जायते तथतु नास्मद्विषयिणी सत्य पिखेदे जायत इति न्यायाविरोधमाहुः यत् व्रजात्पशून् चारयन् चलसि तत्र चलने नलिनापेक्षयापि सुन्दरं कोमलं हे नाथ ! ते पदं मार्गस्थितैः शिलतृणांकुरैः शिलाः पाषाणाः तृणानि अङ्कुराः दर्भादीनां तामसानि सात्विकानि राजसानि अथवा शिलारूपं यत्तृणं शिलतृणं कठिनं तृणं तस्यांकुरैः अतिपुरुषतीक्ष्णैः सीदतीति क्लेशं प्राप्नोतीति वस्तुतो न प्राप्नोत्येव तथापि हे कान्त भर्त्तः ! मनः कलिलतां गच्छति । व्रजादिति । प्रातरारभ्य खेदः सूचितः चलनादेव च खेदः अत. प्रथमतस्तदेवोक्तं वस्तुतस्तु तव पदे अस्मत्स्थानं विहाय न गच्छतः तथापि भवानेव तथा चालयति किंच व्रजस्थिता गावः अरण्ये नीयन्ते तासां चारणं न मार्गगमनेन भवति अत अमार्गेऽपि गन्तव्यं भूम्य दनिाम् अनुग्रहार्थं न पादुकाग्रहणं पाल्यानां चर्मच न परिधेयम अतो नलिनसुन्दरं पदमेव शिलतृणांकुरैः सीदीत जले एव स्थातुं योग्यं जलपूर्णं वा नलिनादपि सुन्दरं वेलुक्ष्म्यामस्मासु वा स्थातुं योग्यं नाथेति सबोधनात् बहव एवात्रार्थे नियोज्याः सन्ति तथापि स्वयमेव गच्छसीति वने हि त्रिविधा भूमिः पर्वतरूपा अरण्यरूपा कच्छरूपा च तत्र क्रमेणैकमेकत्र भवति सर्वं वा सर्वत्र अवसादः अशक्त्या एकत्र स्थितः तदा चिन्ता भवति स्वयं गत्वा सहृदये स्थापनीय इति मनः कान्तेति च तेन मनः स्थापितमपि न तिष्ठतीति ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च त्वं न केवलमधुनैव दुःखयस्यपि तु अन्यदापि स्वमपि दुःखयित्वा अस्मभ्यं दुःखं दातुं यतसे इत्याहुः । चलसीति । यत् यदा । तदा नलिनादपि सुन्दरं सुकुमारं शिलैः काणिशैः तृणैरंकुरैश्च सीदति क्लिश्येदिति सम्भाव्य मनः कलिलताम् अस्वास्थ्यं प्राप्नोति । यद्वा । कलिं कलहं लाति गृह्णातीति कलिलं तद्भावः कलिलता ताम् अस्माभिरेव सहास्मन्मनः कलहं करोतीत्यर्थः । सच कलिर्यथा । अरे मनः स यदि वने भ्रमणात् खिद्यति तदा व्रजान्निःसृत्य नित्यमेव तत्रैव किं यात्यतस्त्वं किमिति वृथा खिद्यसि । अयि निर्बुद्धयो गोपालिकास्तस्य चरणतलद्वयं स्थलकमलादपि सुकुमारं भवत्येवं वने च शिलतृणाङ्कुरशर्कराः सन्त्येव कथं पीडा न स्यात् । अरे मुग्ध स सुकोमलवालुके पथि पथ्येव भ्रमति । अयि निर्विवेकाः गावः किं पथि पथ्येव घासं चरन्ति । अरे प्रेमान्ध स चक्षुष्मान् शिलतृणाद्युपरि कथं पादान्र्पयेत् । अयि प्रेमगन्धेनापि रहिता यद्यावेगवशाक्रमाद्धा तदुपरि पादः पतेत् तदा किं स्यात् । भो भ्रातश्चेतः सत्यं ब्रूषे । एतावद्दुःखमनुभवितुमेव जीवन्त्यो विधात्रा वयं सृष्टाः भो दुःखिन्यः खलु जीवत यूयं अहन्तु युष्मत्प्राणैः सार्द्धं युष्मद्देहेभ्यो निस्सृत्याधुनैव यामीति ॥ ११ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

तच्च क्षोभणं संयोगवियोगयोरविशेषमेव तत्कृतमेव भवतोनिशि तमसि च परिभ्रमणं व्यर्थमेवेत्याशयेनाहुः । चलसीतिद्वाभ्याम् । व्रजादिति । ततश्चलनमारभ्यागमनपर्य्यन्तमेव कलिलतासूचिता पशूंश्चारयन्निति अनन्तानान्तेषां चारणार्थं वर्त्मपरित्यागेनेतस्ततो भ्रमणाच्छिलादिभिरवसादः सम्भावितः तथा पशुतयानिर्बुद्धित्वेन ते त्वत्पादाब्जे दुर्गमदेशेवनेऽपिभ्रमन्तीति खेदः सूचितः शिलं पतितकणशश्टङ्गचन्यधान्यादिक इदंच अभिखिलकण्टकवनमित्यादिहरिवंशोक्तेः सर्वत्र कण्टकाद्यभावेऽपि प्रेमविशेषादुक्तं नाथेति कान्तेति परमप्रेमास्पदत्वं ननु "यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः„ इति भारतोक्तेः । प्रीतिरेव त्यज्यतामिति तत्राहुः ,मनो-गच्छति सङ्कल्पमात्रात्मकं तन्नास्माकं बुद्धिवृत्तिमपेक्षत इति भावः ॥ ११ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

किञ्च नस्तु तव प्रियत्वात्त्वदीयस्याभिलषितविहारप्रवृत्तावपि त्वदीयवृथाखेदसम्भावनेनापि खेदो भवति तवतु कुहकत्वादस्मत्खेदे

श्रीरामनारायणकृतभावभावविभाविका ।

स्वहृदि तद्धानेऽपि नतत्प्रतीकारः अत्यन्तस्वविरहेणतद्वर्धनमित्याहुः। चळसीतियद्वा तव स्वेच्छया स्वविहारकौतुकेन दिनचलनेऽपि यदा नो दुर्दशा भवति तदा रात्रौ वनभ्रमणे किमु वाच्यमित्याहुः। चलसीति। तत्रहे नाथ ! हे कान्तेति सम्बोधनाभ्यां त्वं सामान्यतः सर्वस्य नाथः स्वामी विशेषतो व्रजस्य तत्रापि नोऽस्माकं तु कान्त एवातः सर्वविश्वस्थितिपालनयोः प्रवृत्तस्यात्मीयत्वेन विशेषतो व्रजपक्षपातः नः स्वकान्तानां स्वकान्तः स्वकान्तश्च स्वकान्तेनानुचितएव यत् यदा व्रजात्पशूंश्चारयन् चलसि तदा नलिनादपि सुन्दरं मञ्जु मृदु चते पदं शिलतृणांकुरैः सीदति वृन्दावने भगवद्विहारभूमौ कण्टकासम्भावनया तदनुक्तिः यद्वा भगवत्प्रियमृदुपदे कण्टकस्पर्शसम्भावनेऽपि वैकल्येन भीतमनसा तदनुक्तिः यदा रोमाञ्चितस्वस्तनेषु तृणांकुरैर्व्याप्ताशिळासाम्यसम्भावनया स्वपरमसुखार्थमपि त्वन्मृदुपदे तस्य स्पर्शखेदोमाभूदितिधारयितुं नपारयामः तदा किमु वाच्यं मृदुतृणांकुरस्पर्शं तृणस्पर्शं वा शिलास्पर्शं धा तदवसादसम्भावना तथा च सीदतीति सम्भावनयैव नो मनःकलिळतां द्रवीभावं तत्तत्सादृश्यं गच्छति यद्यपि यथात्वत्पदावसादसम्भावनया नो मनसां द्रवीभावस्तथा व्रजशिळतृणांकुराणामपि व्रजवासित्वाविशेषात्त्वत्प्रेमैकव्याप्तानां साक्षात्तव पदसम्बन्धिनां त्वत्पदावसादशङ्कया सम्भवति द्रवीभावः तथा दिनचलने सुपथेन गमनसम्भवे तदस्पर्शसम्भवोऽपि तथापि जडमतीनां नो वृन्दावनशिळादिष्वपि शिलादित्वाविशेषभ्रमेण जाड्येन जाड्यकल्पनया तथा सम्भाव्यखेदः तथा सर्वज्ञस्यापि सर्वसुपथदर्शकस्यापि तव दिनेऽपि पशुचारणे तदनुगतया कुपथगमनं सम्भाव्य सच्चिदानन्दाच्छेद्याभेद्यत्वत्पदेऽपिप्रेमवैक्लव्येन तद्विस्मृत्यमाधुर्यरसाक्रान्तचित्तानां मृदुत्वमेवानुसन्धाय तथावसादसम्भावनया खेद इति न तच्चित्रं यद्वा नलिनसुन्दरं ते पदमपि नः प्रेमरसनाभिर्बद्धं तथा तव चलनारम्भे उक्तसम्भावनया कलिलताङ्गतेषु नो मनः एकेषु निरुद्धमप्येव चलितुमशक्तमपि त्वं बलाच्चारयंश्चलसि तत्रापि रसाभिज्ञ द्रष्टुमनुनिःसृता अनुगतचित्ता अनुचरीर्नो हित्वा नाथोऽप्यनुचर इव पशूननुचरसीति चित्रं तव रसवैदग्ध्यं यदि पशूनामनुरतत्वं तदा नोऽननुरतत्वं यदि तेषां तथा तदानोऽपि तथात्वं यदा पशुषु देवानां प्रियत्वप्रसिध्या सर्वदेवात्मकस्य तव पशुप्रियत्वं तदा विदग्धा अपि वयं कामविरहचिन्तानलेभ्यो विदग्धवैदग्ध्या पशुवृत्तयो जाता इति नाधुनोदासीन्यावसरः यदि गोपजातिजातत्वेन गोचारणं स्वभावानुमतं तदा गोपत्वेन नाथत्वेन कान्तत्वेन गोप्यः कान्ताः स्वभावानुगा अपि नोपेक्ष्याः यदि नाथ जनैरिवगोपबाळैर्विहाराय वनजनैः स्वसौख्याय याच्यमानतया तदाप्रदानाय वनगमनं तदा वयंवन विहाभिकांक्षिण्यः स्वसौख्याय याचनपराइत्यस्मद्दानं प्रदातुमप्याविर्भव न हि नाथ ! सर्वार्थपरित्यागेनास्मदर्थे उपतापकार्यत्वं कान्तस्य च तव वैपरीत्येनान्तकत्वं न्याय्यम् अपितु रताषु विपरीतत्वेऽपि विपरीतरतिरेवोचिता बन्धनविधानेऽपि भुजनागपासबन्धनं कोपरसावेशेऽपि नखरदच्छेदो यथाकाममधोनिपात्यांङ्गावपेषणं वेति भावः ॥ ११ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो रात्रौ परमकोमलपादपद्मकृतपलायनस्यास्मत्स्वामिनः का वा पीडा जाता स्यादित्यनुसंदधत्यः मूर्च्छावस्थामेवानुसंदधत्यः अस्मन्मनो दिनेऽपि यदा त्वं व्रजाच्चलसि तदाऽस्वास्थ्यमेव गच्छतीत्याशयेनाहुः। चलसीतियद्यदा व्रजात्पशून् चारयन् चळसि तदा हे नाथ ! नलिनात्स्थलकमलादपि सुन्दरं कोमलं ते पदं शिलैः सशूकवन्यधान्यकणिशैः तृणैः कुशकाशादितीक्ष्णाग्रतृणैरंकुरैश्च सद्यो भूमिं निर्भिद्य निःसृतैः सीदति क्लिश्येदिति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति तत्र व्रजादिति प्रातरारभ्य खेदः चलसीति चलनात्खेदत्वं चलसीत्युक्त्या तव पदं त्वमस्मान्विहाय न गच्छसि वयमेव चळाः तच्चाळयसीति सूचितं तत्रापि पशून् चारयन् पशवश्च पर्वतारण्यकच्छरूपायां भूमौ चरन्ति तदनुगमनं च नग्नपद्भ्यां भूम्याद्यनुग्रहार्थं पाळ्यानां चर्मणोऽपरिधेयताबुद्ध्या पादुकाग्रहणात् नलिनरूपत्वाच्च कोमळे स्थाने अस्माकं वा अङ्के स्थातुं योग्यं नाथेति सम्बोधनाद्वयमेवात्रार्थे नियोज्याः सति तथापि स्वयं चलसीत्यत्यन्ताश्चर्यमिति ध्वनितं कान्तेति सम्बोधनात्त्वदेतदस्मद्दुःखावहमिति सूचितम् अनभिज्ञापक्षे किञ्च स्वस्मिन्नत्यन्तार्द्रस्वान्तास्वस्मासु कपटाचरणं न न्याय्यमित्याहुः। चलसीति। यद्वा न केवलमधुनैवास्मद्दुःखाय स्वात्मानं दुःखयस्यपितु सर्वदैव तवेयं रीतिरित्याहुः । चलसीति कळिलतां व्याकुळतां यद्वा कलिं कळहं लाति गृह्णातीति कलिलं तस्य भावः कलिलता कळहकर्तृता तां गच्छति प्राप्नोति कलहं करोतीति यावत् तथाहि अहो वने भ्रमतः कृष्णस्य परमकोमलं पदं सीदति अरे मनः नैवं तथाचेत्प्रत्यहं तत्र न गच्छेत्तस्मात् किमर्थं वृथा खिद्यसि अयि निर्बुद्धिगोपालिकास्तदीयं पादयुगलं स्थळपद्मादपि कोमलतरं किन्न पश्यत अरे मुग्धमनः वालुकामये कोमळे पथि पदं स्थापयत्यतो न सीदति तत् अयि विचारविधुराः पशवः किं तथा भूते स्थले चरन्त्यतस्तांश्चारयंस्तदनुगच्छति तदा तदीयं पदं शिलादिभिः कथं न सीदति अरे प्रेमान्ध विशालनेत्रोऽसौ तदुपरि पदं किमर्थं स्थापयति अयि प्रेमलेशेनापि विधुरास्त्वरया तदनुभ्रमणकाले तदुपर्यवश्यं पदं पतत्येव तेन च पीडा भवत्येव अहो भो भ्रातश्चेतः सत्यमुक्तं त्वया नास्त्यसावस्मदर्थीनो येन वयं तं वारयामोऽत एवं विधं दुःखं सहन्त्यो जीवामोऽस्मदर्थमेवं विधात्रा सृष्टत्वात् भो दुःखिन्यो जीवन्तु भवत्योऽहन्तु युष्मत्कान्तपद्दुःखं द्रष्टुं नालमतो युष्मद्देहेभ्यः प्राणैः सार्धमधुनैव यामीति मानिनीपक्षे अहो वृथैव वयं त्वामुपालब्धुं प्रवृत्ताः स्वाङ्गेषु दयालेशरहितस्यान्यत्र तत्प्रसक्त्यभावादित्याशयेनाहुः। चळसीति। हेनाथ शोभनवस्तुमात्रोपतापनस्वभाव यदा पशून् चारयन् व्रजाच्चलसि तदा शिलादिभिः परमकोमलं पदं सीदतीति नो मनः कलिलतां दयया आर्द्रीभावं गच्छति परमकठोरान्तःकरणस्य तव तु तत्र करुणालेशोऽपि नोत्पद्यते अतोऽकान्त ! कस्य स्वकीयस्य परकीयस्य च सुखस्यान्त नाशक तथाच एवं विधकठिनचित्तस्तु विधातृसृष्टौ कोऽपि नासीन्नास्ति न भविष्यति चेति भावः निवृत्तिपक्षे पुनः क्षोभकरीं तच्चेष्टामोवर्णयन्ति यत् यदा व्रजाद्देहमध्यात्पशूनिन्द्रियलक्षणान् चारयन्विषयलक्षणेषु मार्गेषु भ्रामयन् स्वयमपि चलसि अहं श्रोता स्पृष्टेत्याद्यभिमानवान्भवसि तदा पद्यते गम्यते इति पदं सच्चिदानन्दघनस्वरूपं नलिनं चतुर्दशभुवनात्मकम् पदं सुन्दरं येन यदधिष्ठितं सत्सुन्दरतया प्रतीयते तत् तथा-

दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ॥
धनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर ! यच्छसि ॥ १२ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

भृतपदं यथोक्तया प्रवृत्त्या शिलतृणाङ्कुरस्थानीयैराध्यात्मिकाधिदैविकाधिभौतिकसंज्ञकैर्दुःखैः सीदतीति कृत्वा नो मनः कलिलतां व्याकुलतां गच्छति यतो हे नाथ ! स्वतन्त्रस्य तवैवम्विधं परतन्त्र्यमासाद्य दुःखोपभोगो नोचित इति भावः । किञ्च हे कान्त कस्य कस्यापि सुखस्यान्तः परिसमाप्तिरन्तर्भावो यस्मिन्नः तथा च यथा श्वा शुष्कास्थिचर्वणं कुर्वन्स्वदन्तनिःसृतरुधिरमस्थिसम्बन्धि मन्यते तथा स्वस्वरूपभूतं सुखं विषयसम्बन्धि मत्वा तदर्थं वृथा खेदं प्राप्नुवन्तं त्वामाऽऽलोच्यास्माकं खेदो भवतीति भावः ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिवसे पादपद्माभ्यां वने गमनं त्वदीयं तावदस्माकं न रोचते राज्यां ताभ्यां तव चङ्क्रमणमतिसन्तापदमतोऽस्माकं समीपे आगच्छेत्यभिप्रायेणान्या आहुः हे नाथ ! हे कान्त यत् यदा पशून् चारयन् व्रजाच्चलसि तदा नलिनश्रदारुण्येन मार्दवेन सुगन्धितश्च सुन्दरं ते पदं शिलैः कणिशैस्तृणैरङ्कुरैश्च सीदति क्लिद्येदिति नोऽस्माकं मनः कलिलतां क्षुभिततां गच्छति याति राज्यां त्विदानीं सुतरां कलिलतां गच्छत्यत एहि ॥ ११ ॥

---

भाषा टीका ।

जा समें आप गउअन को चरायवे को वन को जायं हैं ता समय कमल की नाईं जो आप के चरण वे घांसकंकरों ते दुःखित होंगे या चिंता ते हमारो मन बडो दुःखित होवै है । ११ ।

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वन्तु दिनपरिक्षये सायंकाले नीलकुन्तलैरावृतं धनरजस्वलं गोरजश्छुरितं वनरुहाननमलिमालाकुलपरागच्छुरितपद्मतुल्यमाननं बिभ्रत्त्वं मुहुर्मुहुर्दर्शयन्नो मनसि केवलं स्मरं यच्छस्यर्पयसि न तु सङ्गं ददासीति कपटस्त्वमिति भावः ॥ १२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

एवं संपूर्णदिनं दुःखेनैव वयं गमयामः सायं व्रजे त्वदागमनेऽपि दुर्भगा न सुखं लभामह इत्याहुः । दिनेति । दिनस्य परितः क्षये अत्यन्ते सति इति दुःखाधिक्यं सूचितं नीलाः कुन्तला अलकाः तेषामेवोपरि श्रीमुखस्यावरणेन शोभाभरापादनात् अतएवाग्रे वक्ष्यते अक्रूरेण मुखं मुकुन्दस्य गुडालकावृतमिति । तैरावृतमित्यादिना परमसौन्दर्य्यमभिप्रेतं तच्च मुहुः स्मरार्पणे हेतुः तथा दिनपरिक्षय इति च तस्य कामोदयवेलात्वात् कुन्तलावृतत्वादिकं सहजसौन्दर्यपरिकरत्वेन बिभ्रत् प्रकटयन् तच्च नोऽस्मान् दर्शयन् यदि चादर्शयन् स्वगृहान्तः प्रविशसि तथापि मुहुः कामार्पणं न स्यादिति भावः । मुहुरिति गोगणसम्भालनादिच्छलेन पुनः पुनः परितो बहुधा निरीक्षणेन स्मरार्पणस्यापि पौनः पुन्यं यद्वा कथं चिद्विचारभरेण संव्रियमाणस्यापि स्मरस्य मुहुरर्पणमुद्धटीकरणं मनसीति स्मरस्यात्यन्तमनोव्यापकत्वमप्रतिकार्य्यत्वञ्च श्लेषेण स्मरमिति यः स्मरणमात्रेण क्षोभकः तं साक्षाद्यच्छसीति दर्शनेन परमक्षोभं कुर्य्यादेवेति सूचितं तत्र सामर्थ्यं दर्शयन्ति हे वीरेति किंवात्रैव तव वीरत्वं नत्वन्यत्रेति सरोषनर्मोक्तिः अन्यत्तैर्व्याख्यातं यद्वा धनरजो बिभ्रत् अत एव स्वलंकृतमित्यर्थः । यद्वा सुष्ठु अलमतिशयेन बिभ्रदित्यनेन दर्शयन्नित्यनेन वा सम्बन्धः यद्वा बिभ्रत् वेणुमितिशेषः । मोहमयेन प्रेमवैवश्येन वा साक्षात्तदुच्चारणाशक्तेः यद्वा धनं वेणुलक्षणं रजश्च गव्यमेव बिभ्रत् अन्यत्समानम् अहो व्रजान्तस्तादृशवेशदर्शनेनापि स्मरोऽभूत् अधुना च वनान्तर्निशि रत्यर्थं नागरवेशेन तत्रापि विरहे स्मरणेनासौ वर्द्धतेऽपि विलम्बं माकुर्वीति भावः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दिनस्य परितः क्षये अत्यन्तप्रान्ते सतीति दुःखाधिक्यं सूचितं नीलाः कुन्तला अलकास्तेषां ललाटोपरि श्रीमुखस्यावरणेन शोभाभरापादनात् तैरावृतमिति सहजपरमसौन्दर्यमभिप्रेतम् । अत एव घनरजस्वलम् । धनं गोधनवित्तयोरिति विश्वप्रकाशाद्गोरजश्छुरितमिति । रजसापि तदुज्ज्वलासोऽभिप्रेतः । पङ्काङ्गरागरुचिराविति वत् । विशेषतस्तु गोपोचितवेशस्य तस्य गोपीजातिषु स्वपूर्वोद्दीपनत्वादनुवादः । ततश्च सामान्यतः स्मरार्पणे हेतुः । विशेषतस्तु दिनपरिक्षये नीलकुन्तलैरिति दर्शयन्निति च पूर्वस्य कामोदयवेलात्वात् उत्तरस्य च भावातिशयसूचकत्वात् । यदि चादर्शयन् स्वगृहान्तः प्रविशसि तथापि तादृशं कामार्पणं न स्यादिति भावः । तत्रापि मुहुरिति । गोसम्भालनादिच्छलेन पुनः पुनः परितो बहुधा निरीक्षणेन स्मरार्पणस्यापि पौनःपुन्यं दर्शितम् । तच्च कथञ्चित् विचारभरेणसम्वरीतुमिष्यमाणस्यापि तस्य मुहुरुद्धटीकरणं मनसीति स्मरस्यात्यन्तमनोव्यापकत्वमप्रतिकार्यत्वञ्च श्लेषेण स्मरमिति यः कान्तजनस्मरणमात्रेण क्षोभकः तं साक्षाद्यच्छसीति तस्य महत्त्वं सूचितम् । तत्र सामर्थ्यं दर्शयन्ति हे वीरेति । तत्रैव तव वीरत्वं नत्वन्यत्रेति सप्रणयरोषनर्म व्यनितञ्च । वस्तुतस्तु तादृशलीयभावोद्दीपनमिति भावस्य भावनैव मुहुरनूद्यते ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो व्रज न्तस्तादृशदर्शनेनापि स्मरोऽभूत । अधुना च वनान्तर्निशि रत्यर्थनागरवेशेन तत्रापि विरहे स्मरणविशेषेणासौ वर्द्धेतैवेति विलम्बं माकुरु इति भावः । एवं श्लोकद्वयेऽस्मिन्निदमपि व्यज्यते नित्यमेवास्मदमीष्टमपूरयित्वापि गच्छसि त्वय्यस्माकं मनः स्नेहमेव वहति नतु तदभावेनौदासीन्यं यं स्मरं वहति तन्तु त्वत्प्रेरितयैव नतु स्वतः । तथा त्वत्स्नेहमयतयैव नतु रूक्षतया स्नेहस्य स्वभावजत्वात् त्वं पुनरस्मासु सङ्गेच्छया सङ्गच्छमानासु स्मरमेव ददासि नतु मिथः स्नेहोचितं सङ्गं तस्मादस्माकं सर्वं स्नेहमयमेव भवतस्तु कपटमयमेवेति ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वनरुहाननं जलजसममुखं घनरजस्वलं घनरजोधूसरितम् ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवंभूतास्त्वत्क्लेशाशङ्कितचित्ता वयं तु दिनक्षये सायंकाले नीलकुन्तलैःकेशैरावृतं गोरजश्छुरितं वनरुहाननमालिमालाकुलपद्मरजश्छुरितपद्मतुल्यमाननं मुहुर्मुहुर्दर्शयन्नोऽस्माकं मनसि केवलं हे वीर स्मरं यच्छसि काममुद्दीपयसि नतु सङ्गं ददासि ततः कपटस्त्वमिति भावः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु व्याकुलचित्तानां कामोद्बोधायोगात् कुन्धि हृच्छयमिति कथमुक्तम् अत्र वदन्ति । दिनेति । दिनपरिक्षये संध्याकाले वनादगच्छन्निति शेषः वनरजस्वलं वनभूमौ सता गोरजसा युक्तं दर्शयन् नीलकुन्तलैरावृतं वनरुहं जलजं कमलं तद्वच्छोभमानमाननं बिभ्रत् त्वं नो मनसि स्मरं कामं मुहुरनिशं नूतनम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

गमनसमये तावद्दुःखदत्वमुचितमेव आगमने वा सुखदोऽपि नच तथेत्याहुः दिनपरिक्षय इत्यादि हे वीर दिनपरिक्षये सायंव्रजगमनसमये नीलकुन्तलैरावृतं वनरुहाननं दर्शयन् नोऽस्माकं मनसि स्मरं बिभ्रत् यच्छसि असन्तमप्यस्माकं हृदये स्मरं धृत्वा अर्पयसि सोऽपि नागच्छति बलादेवाकृष्यार्पयसीति विभ्रच्छब्दतात्पर्यं हे नीलश्याम यद्वा नितरां मिश्रयतीति नील इलप्रेरणे कुन्तलैरावृतमिति गोचारणश्रमव्यञ्जकं चारु यथा स्यात्तथा दर्शयन् कुन्तलावृतत्वं कुन्तलान् संवार्य्य दर्शयन्निति चारु शब्दार्थः तत्साधूक्तं कुहक नो मनः क्षोभयन्तीति ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सप्तविधा अनन्यपूर्वा निरूपिताः चतस्रश्च सपूर्वाः अतः परं क्रमेण षट् ता एव निरूप्यन्ते तत्र प्रथमं राजसतामस्या वचनं ता हि बहिर्गत्या द्रष्टुमशक्ता अतो यदा संध्यायां भगवानायाति तदा भगवन्तं दृष्ट्वा मनसि कामो भवति ततो बन्धप्रार्थना अधरामृतप्रार्थना च रजसा सत्त्वेन च भविष्यतः अनन्यपूर्वाणां तु नित्य एव कामः दिनपरिक्षये संध्याकाले क्षयोक्त्या दिने द्वेष्यत्वं ज्ञाप्यते रजोगुणस्यायं समयः कामस्यच कालः नीलकुन्तला भ्रमरा इव रसबोधकाः ये हि मुखकमललावण्यामृतं पिबन्ति ते उद्बोधका भवन्ति अतस्तैरावृतं वनरुहवत्कमलवत् आननं बिभ्रत् हे वीर ! नः मनसि स्मरं यच्छसि संध्यायां नीलवर्णैरावृतत्वे तत्प्रभवयास्तत्वं भवतीति तदुक्त्या वनरुहत्वोक्त्या च कुवलयाभत्वं ज्ञाप्यते तथाच प्रियामुखेन्दुदर्शनेनोत्तरोत्तरमधिकविकासवत्त्वभितः पूर्वमतादृशत्वं च ज्ञाप्यते तेन प्रियस्य सर्वास्वासक्तिः सूचिता भवति अत एव जलपदं विहाय वनपदमुक्तं तेन वने यावस्था तां ज्ञापयितुं तान् धर्मान्विध्रदेवाननं दर्शयतीति ध्वन्यते घनेन गोभिः रजस्वलं मुहुश्च प्रदर्शयन् मध्ये मार्गे गच्छन् उभयतःस्थिता गोपीः पर्यायेण पश्यति अतो मुहुः प्रदर्शनम् अग्रे गच्छन्पुनः पुनर्व्यावृत्य पश्यतीति वा तथा तादृग्दर्शनं स्वापेक्षाज्ञापकमिति स्मरजनकं निरन्तरदर्शनेन तत्रैव रसास्वादनमिति न स्मरोत्पत्त्यवसरः स्यात् अतो वारंवारं प्रदर्शनं स्मराग्नेः संधुक्षणमिव भवति तादृशं कृत्वा तत्पूरणार्थं तन्निराकरणार्थं वा युद्धमवश्यं कर्तव्यं तत्सूचयन्ति वीरेति घनेन रजस्वलं च श्रमसूचकं भवति श्रमनिवृत्तिश्च स्मामिरेव वनरुहमिति वन एवतत्सर्वथा भोग्यम् अतो ऽत्रैव समागमनम् अनेन गृहे रतिं दास्यामीति पक्षो व्यावर्तितः बिभ्रदिति बलात्कारेण तामेवावस्थां स्थापयति यदि मुखसम्मार्जनं कृत्वा समागच्छेत्तदा प्रसन्नमुखदर्शनात् ज्ञानं वा भवेत् घनमंधन्धिरज इति काम एव नतु क्रोधः यथा पात्रं धृत्वा तत्स्थितमन्नं भोगार्थं दीयते तथा मुखं धृत्वा तत्स्थो रसः कामात्मा मनसि स्थाप्यत इति मुखधारणस्य हेतुत्वम् अतो भोगार्थं दत्त इति भोगः कर्तव्यः अयं काम आगन्तुक इति नास्यान्येन पूरणं भवति ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किञ्च त्वं संयोगेऽपि नैव सुखं दित्ससीत्याहुः । दिनपरिक्षये । सायङ्काले नीलकुन्तलैः कुटिलालकैर्मन्दमारुतलोलैरावृतम् । घनरजस्वलं घनं गोधनविस्तये दिति विश्वप्रकाशात् रजश्छुरितम् । वनरुहाननं लोलानि मालाललित-परागभर-च्छुरित-सरसिजसदृशमाननं बिभ्रत् तच्च मुहुर्दर्शयन् गोसम्भालनप्रियसखान्वेषणच्छलेनेतस्ततःपरिवृत्यास्मन्नयनगोचरीभवन् स्वदर्शनस्य सर्वजनानन्दकं स्वभावं ज्ञात्वा एताः कष्टसिन्धावेव निमज्जयामीति विमृश्य नोऽस्मभ्यं स्मरं यच्छसि । य एव कुलधर्मपद्धीं विपञ्जालीमवानुभाव्यास्मानुन्माय वनेष्वानीयैवं रोदयतीति भावः । हे वीर ! व्रजस्त्रीणां धर्मध्वंसनार्थमेव प्रवर्तितस्मारशरवृष्टिर ! ॥ १२ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

दिनेति । दिनस्य परितः क्षये अत्यन्तं प्राप्ते सति इति दुःखाधिक्यं सूचितं तत्रापि यथाकथंचित् दृश्येत तदर्थं नीलकुन्तलैरावृतं तत्र नीलेत्यावरकत्वं कुन्तलैरिति कुन्तः शस्त्रविशेषस्तत्सादृश्यं गृह्णद्भिरिति मारकत्वं तत्रापि धनरजस्वलं धनं गोधनवित्तयोरिति विश्वः गोधनरजसा च्छादितं मुहुरिति पुनः पुनर्गोसंभालनादिमिषेण दर्शयन्नपीति विच्छिद्यादर्शने नातृप्तिः सूचिता स्मरमिति पूर्ववत्क्षोभकमेवेति वीरेति निर्दयत्वमिति संक्षेपः ॥ १२ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

किञ्च त्वयैव प्रेरितः कामस्त्वां विना न यापितः स्यादित्याहुः । दिनपरिक्षये इति । दिने पूर्वदिनचिन्ताविरहाभ्यां द्वेषसम्भावनया तत्परिक्षयोक्तिः सर्वस्मिन् दिने वनस्त्वत्कमलकोमलपदोः शिलाचयसादचिन्ता समस्तदिने संचिता सा चिन्तातो बिन्दुनाधिकत्वात्तद्दशगुणा भवति यथाकथंचिद्दिनक्षये तु त्वत्सुखागमावगमेन तच्चिन्ताक्षयप्रवेशेऽपि नः क्षयोपायमेव करोषि नतु दुःखापायमिति तदेवाहुः । नो मनसि स्मरं यच्छसि आदौ स समय एव स्मरस्मारकः सच स्मरः स्मरणमात्रेणास्मन्मारकः तञ्च त्वं विभ्रमज्ञानाभावैः पोषयन् बलान्मनसि यच्छसि तच्च स्ववेश्मनि नो मनसि तत्प्रेरणमेवानुचितं तदपि प्रेरणं न सामान्यत इति संबोधनेनैवाहुः । धीरेति । विशेषत ईरयतीति तथा किञ्च यद्विजयाय समुद्यतस्तस्य स्ववेश्मनि निवेशे तद्युद्धमेवोचितं नतु पळायनमित्यपि श्लेषेणाहुः । वीरेति । वीरेत्यत्र तत्र कामसंग्रामएव भिरामो विरामेतु वीरत्वक्षतिः यतस्तव मारणे एव नतु मारमण मारेण अतो वीरवरस्त्वं वरवर्णिनीनां वरतया वरय नहि मारमणेन मारेण मारयेति भावः । नन्वहं ई र यामीति शङ्कायामपि श्लेषेणैवोत्तरमाहुः । धीरेति । विविधतयेरयसि नैकधेति भावस्तदेव विविधत्वं दर्शयन्ति मुहुराननं दर्शयन्निति आर्द्रपदपि नेति याचितमङ्गीकारो न यस्मि स्तदातिस्नेहभावविशेषेणैयाच्ञास्वीकारणाभ्यास्य कामं पूरयित्वा मुहुरिति पुना रूक्षभावैरासनन्तात् ननेति विनयास्वीकारो यस्मिंस्त्वं दर्शयंस्तेन हृदयमति क्षोभयसि तथा वनरुहेति तद्विशेषणेन वनरुहं कमलं तत्सादृश्यद्योतकेन तस्य मुख्यमदनबाणत्वं ध्वनितं तस्य दर्शनञ्च दृग्द्वारेण तस्य हृदयप्रवेशनमिति तादिषुप्रवेशो तत्प्राबल्यसम्भवात्सुतरां नाशेयशः एवञ्चामोद्दीपनं मुख्यं विषयं दर्शयंस्तद्विशेषयन्ति नीलकुन्तलैरावृतमिति । नीलैः कृष्णस्निग्धैर्मुखाब्जमधुपमधुपवलितयावलि कुन्तलैरलकैरावृतं वेष्टितमित्यनेन कामोद्दीपकविषयसन्निधाने कदाचित्कामोदयाभावोऽपि विषयतद्भोक्तुभयसन्निधावावश्यकत्वमेव कामोदयस्येति भावः । मुखपद्मस्य तत्तन्मधुपरागाद्भावकमधुपरागान्वितत्वं दर्शयन्त्य आहुः । धनरजस्वलङ्गोधनरजोव्याप्तं घनरजस्वलमिति पाठेतु बहुतररजोयुक्तमित्यर्थः । तथाच स्वसाजात्याय गोपोचितवेषविषयद्योतनेनातितरां स्वमनोमनोज्ञाकरत्वं ध्वनितं यद्वा वनरुहाननमिति पद्मनिधिरूपमाननं मुहुः गोगणनादिषु क्रीडादिसुहृत्क्रीडाव्याजेन पुनःपुनर्दर्शयन्किंभूतं तत् धनं रूपधनं तेन रजस्वलं तेन तद्रजसा मदेन च व्याप्तं नीलकुन्तलैस्तद्रक्षककृष्णनागाकारैरावृतमुहुर्हसिनापाङ्गनिरीक्षणादौ तत्सम्प्राद्भिभूतदर्शनमुक्ताधरापिद्ध मपद्मरागतारन्ध्रनीलानाद्यविष्कारेण दर्शयन् तत्काम नो मनसि यच्छसीति भावः यद्वा नीलकुन्तलैरावृतं तथा धनरजस्वलमेवाननं विभ्रद्दर्शयन् नतु कुन्तलसमूहसमूहनरजः क्षालनाभ्यां स्पष्टं दर्शयन् अतिशोभनसमानभानेन अविद्याक्षोभवदस्पष्टतया मुखस्य मुहुर्दर्शनेनमनः क्षोभयन् स्मरं यच्छसि यद्वा काम एष क्रोध एष रजोगुणसमुद्भव इत्यादिस्मृतिभी राजसस्य कामस्योपशमकनिरतिशयरत्यात्मकसितामृतमयराजसोपलक्षितसच्चित्सुखदर्शनेन तदुपशमसम्भवेऽपि तव कुन्तलादेः स्वरूपात्मकत्वेऽपि नीलवर्णप्रयुक्ततमःप्रावरणभ्रमेण धनरजोरजोयुक्तत्वमत्या रजः प्रभवः कामप्रभवः प्रभवतीति भावः । किंच व्रजे वनरुहाननं दर्शयित्वा स्मरदानेन वने नो रोहयित्वा वनरुहाननादर्शनमनुचितम् अतो वनरुहाननस्य नो नयनपथनयनेनावनतवानितावनं विधेहि ॥ १२ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

भगवतस्त्वस्मद्भाग्यवशात्करुणा नोत्पद्यत इत्याशयेनाहुः दिनेति । दिनस्य परिक्षये सन्ध्याकाले परिक्षयपदेन न दिने प्रदोषो ध्वनितः दिनपरिक्षये अगत्या आयासीति भावः । प्रविष्टान्धकारकालेऽप्यागतौ कमलरूपमाननं नीलवर्णैः कुन्तलैरावृतं सम्यगदृश्यमानं तत्रापि धनं गोधनवित्तयोरिति कोशाद्गोरजोव्याप्तमितस्ततः प्रेक्षणेन नयनं दर्शयन्नपि नो मनसि स्मरं काममेव यच्छसि नत्वङ्गसङ्गं तत्रापि कामवाणैर्विध्यन्वीरत्वमेव प्रकटयसीति संबोधनाशयः अनभिज्ञापक्षे त्वन्तु संयोगसमयेऽप्यस्मद्दुःखायैव भवसि इत्याशयेनाहुः । दिनस्य विरहनिमित्तत्वात्परमशत्रोः परिक्षये सम्यक् नाशे सायङ्काले अनेनोद्दीपनकाल उक्तः भ्रमरकुलमालावृतजलवन्नीलकुन्तलावृतं मुखमित्यालम्बनस्य सौन्दर्य्यातिशयो व्यज्यते तत्रापि धनरजस्वलमिति गोपोचितवेषेणोद्दीपनं तादृशं मुख सर्वतो व्यावर्त्तनेन पुनः पुनर्दर्शयन् तेन स्वापेक्षां सूचयन्नो मनसि स्मरं स्मरणमात्रेणापि क्षोभकरं बलाद्यच्छसि अर्पयसि हे वीर अत्रैव त्वं वीरो नतु कामयुद्धेऽत एव सर्वदा स्मरमेव यच्छसि न त्वङ्गसङ्गमिति तत्र सर्वं सकपटमेव चेष्टितमस्माकंतु तत्सकळं प्रेममयामितिभावः । मानिनीपक्षे यथा दयां विहाय स्वाङ्गेषु त्वया चेष्टितं तथास्माकमपीत्याहुः । दिनेति तथाभूतं मुखं मुहुर्दर्शयन्नो मनसि स्मरं यच्छसि तथाचास्मान्कामयुद्धाय बलात्कारेणोद्यताः सम्प्रति तद्युद्धावसरे पलाय्य गतोसीति दृष्टं तव धीरत्वमित्याशयेन संबोधयन्ति । हे धीरेति । निवृत्तिपक्षे तथा दिनस्य तत्स्थानीयस्य विवेकस्य परिक्षये वनरुहस्य यथोक्तपद्मस्याननं सत्तास्फूर्तिप्रदं चैतन्यं नीलकुन्तलस्थानीयैः घटपटादिप्रत्ययैरावृतं विधृतं तथा धनरजस्वलं वित्ताद्यर्थं विक्षेपोत्पादकेन रजोगुणेनावृतं पुनः पुनस्तत्तज्जन्म सुदर्शयन्नोऽस्माकं मनसि स्मर वित्तं यच्छसि स्मे त्वाश्चर्य्ये यतस्त्वं धीरः अविवेकादिसमस्तशत्रुपराजयसमर्थ इत्याशयेन संबोधयन्ति हे वीरेति ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विहारानहं सायं कालेऽपि त्वां दृष्ट्वा विहारेच्छास्माकं जायते विहारयोग्येऽस्मिन् समये तु वयमत्यातुरा अतश्चरणपङ्कजं नस्तनेषु अर्पयेत्याहुरन्याः । दिनपरिक्षये सायं काले नीलकुन्तलः

**प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ॥**
**चरणपङ्कजं शंतमं च ते रमण ! नः स्तनेष्वर्पयाधिहन् ! ॥ १३ ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भ्रमरमालावत्परितः स्थितैरावृतं घनरजोभिः सघनैर्गोरजोभिर्धूसरितम् धनरुहाननं पद्मतुल्यमाननम् बिभ्रत् तत्राननं मुहुर्दर्शयन् नो मनसि स्मरं कामं यच्छसि अर्पयसि इदानीं तु निर्जने वने रात्र्यां त्वदर्थमत्यौत्सुक्यमस्माकमस्ति ॥ १२ ॥

---

### भाषा टीका।

हे वीर ! जा समये संध्या होवै ता समय कारे घुंघुरारे वाल जामें शोभित गौअन की धूर रजते शोभित आप के मुख चंद्रको हमे दिखाय हमारी काम चेष्टा को वढायो हो ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

अतोऽधुना कपटं विहायैवं कुर्विति प्रार्थयन्ति श्लोकद्वयेन। प्रणतकामदमिति। हे आधिहन् हेरमण ! पद्मजेन ब्रह्मणार्चितमापदि ध्येयं ध्यानमात्रेणापन्निवर्त्तकं शन्तमं च सेवासमयेऽपि सुखतमन्ते चरणपङ्कजं कामतापशान्तये नस्तनेष्वर्पयेति ॥ १२ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एवं गीतेन जातस्मरक्षोभात् पूर्वतो विशेषेण वर्णयन्त्यः प्रार्थितमपि वैयग्र्यात् पुनः प्रार्थयन्ते। प्रणतेति द्वाभ्याम्। प्रणतानां कामदम् अभीष्टदमिति सर्वार्थप्रदत्वमुक्तम् अत एव पद्मजेनार्चितमिति परमैश्वर्य्यं धरणिं भूतलं सुन्दरासाधारणलक्षणैर्ध्वजादिभिः प्रेमभक्तिप्रवर्त्तनेन च मण्डयतीति तथा तत् इति सौन्दर्यं कृपालुत्वं च ध्येयमापदीति भक्तिविघ्नादिसर्वापन्निवर्त्तकत्वम् अनेन भक्तिप्रवर्त्तनमेव दृढीकृतम् एवं सर्वार्थसाधनत्वं पूर्ववत् पङ्कजरूपकेण सूचितं दुःखादिध्वंसनेन कामदत्वेन च दर्शितं स्वतः परमफलत्वं चाहुः। शंतमंचेति। प्राय एतदात्मोद्देशेन तद्द्वयानुसारेण संबोधनद्वयं विवेचनीयम् अतोऽस्माकं विरहादिव्यथां नाशय विचित्रक्रीडादिना सुखंच संपादय तथा आत्मानं चार्पयेति भावः अन्यैस्त्वेर्व्याख्यातं यद्वा प्रणतानां भक्तानां ब्रह्मादीनां कामदं पद्मजया लक्ष्म्या अर्चितमिति परमसौभाग्यनिधित्वं धरणिं लक्ष्मीद्वितीयां निजप्रियां विचित्रक्रीडया स्तनोपर्य्यवस्थित्या च मण्डयतीति यद्वा धरण्या मण्डनं किंच कुङ्कुमादिना चित्रादिनिर्माणेन चालंकारो यस्य इति प्रियजनपरवशत्वं रसिकत्वं च एवं लक्ष्मीतोऽपि धरण्यां प्रेमाधिक्यो ध्वनितः सच श्रीवाराहपुराणादौ प्रसिद्ध एव ध्येयमापदीति। विरहदुःखमोचकत्वं शन्तमं परमसुखप्रदं सुखात्मकं च एवं पक्षद्वयेऽप्येषां यथोत्तरं श्रैष्ठ्यं ते त्वदीयानां नः अतोऽर्पणं युक्तमेव किंच हे रमणेति तथापि तव रतिशीलत्वादित्यर्थः। आधिहन्निति अन्यथा अस्माकमन्त्यदशापत्त्या तवाधिहन्तृत्वकीर्त्तेर्लोपः स्यात् इति भावः। अस्यैव विस्तरोऽग्रे श्रीमदक्रूरमनोरथे यदर्चितं ब्रह्मेति तत्र प्रणतेत्यस्य विस्तरः ब्रह्मेत्यादि ध्येयमित्यस्य मुनिभिरिति धरणीत्यस्य सात्वतैरिति गोचारणायेति च शन्तममित्यस्य यद्गोपिकानामिति एवं पूर्वमुक्तात् पापहन्तृत्वादिमाहात्म्यादत्र कामदत्वादिना विशेष ऊह्यः तत्र च पूर्वद्वितीयपद्ये निजदैन्यनिवेदनपूर्वकमेव प्रार्थनम् अधुना च गीतक्रमेण श्रीमत्प्रियतमपादपङ्कजे मनोऽभिनिवेशविशेषात् तस्यैव सुखाद्यपेक्षा केवलं तदेकवर्णनमेवेति भेदः किंच। पूर्वतत्प्रयोजनं साक्षादेवोक्तं हृच्छयं कृन्धीति अत्रच आधिहन्निति संबोधनद्वारा परोक्षवादेनैव तस्य चोत्कर्षः भक्त्याप्रोक्तत्वात् परोक्षेच मम प्रियमिति श्रीभगवदुक्तेः तेनच पूर्वं स्मरार्त्तेरेव साधुनाचारोपमानसपीडाया एव नाश इत्येषा दिक् ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवं प्रहसितमित्यादिभिस्तासामेव प्रेमोक्तिद्वारा पूर्वमवर्णितः श्रीकृष्णस्य तासु पूर्वरागः श्रीमुनीन्द्रेण स्पष्टीकृतः तासु तदीयरागस्य ताभिरनुभूयमानतया वर्णनेनैव महारसावहत्वादिति ज्ञेयम् एवं तदङ्गसङ्गानुरागे तस्यैव दोषं विन्यस्य तथैव तत्प्रार्थनाद्वयमुपसंहरन्त्यः स्वयं गीतेन जातस्मरक्षोभाः पुनः प्रार्थयन्ते। प्रणतेति द्वाभ्याम्। प्रणतानां नलकूवरनागतत्पत्न्यादीनामभीष्टदमिति सर्वार्थप्रदत्वमुक्तम् अत एव बालवत्सान् दृष्ट्वा ज्ञाततत्त्वेन वन्द्यमानचरणः पथि वृद्धैरित्यनुसारादिल्यमेवागच्छता वा विखनसार्थित इत्यस्य व्याख्यानुसारेण वा पद्मजेनार्चितमिति पारमैश्वर्यं धरणिं भूतलं सुन्दरासाधारणलक्षणैर्ध्वजादिभिर्मण्डयतीति तथा तत् इति सौन्दर्यं कृपालुत्वं च ध्येयमापदीति इन्द्रकृतवृष्ट्याद्यापत्सु स्मृतमात्रत्वात् आपन्निवर्त्तकत्वम् एवं सर्वार्थसाधकत्वमुक्त्वा स्वतः परमफलत्वमाहुः। शन्तमं चेति एवं दुःखहानिसुखावाप्तिहेतुत्वं यदुक्तं तदनुसार्य्येव संबोधनद्वयं विवेचनीयम् अतोऽस्माकं विरहादिव्यथां नाशय विचित्रक्रीडादिना सुखं च संपादयेति भावः ॥ १३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

शन्तमं सुखतमम् ॥ १३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतोऽधुना कपटं विहाय संगतो भवेति प्रार्थयन्ते द्वाभ्याम्। हे रमण ! तव चरणपङ्कजमस्माकं स्तनेष्वर्पय निधाय कामाग्निं शमयेति भावः। तदनुगुणं संबोधयन्ति हे आधिहन्निति आधिर्मनःपीडा कथम्भूतं शन्तमं सेवासमये सुखतममापदि ध्येयं च

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

धरण्या मण्डनमलङ्कारभूतं ह्रस्वत्वमार्षं पद्मजेन ब्रह्मणार्चितं प्रणतानामभीष्टदञ्च ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धरणिमण्डनं भूमिभूषणं सर्वापदि ध्येयं पद्मजार्चितं ब्रह्मणाराधितं शन्तमं सुखतमम् आधिहन्! मनोदुःखनाशन! ते चरणपङ्कजं नः स्तनेष्वर्पय निधेहीत्यन्वयः ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतो व्रजाद्गमनसमये पशुचारणजनितशिलतृणाङ्कुरलब्ध्यावसादचरणस्मरणदुःखस्य शान्तिर्विन्यस्तस्तनाधिकरणकतदीयस्पर्शेन भवतीति तथैव कर्तुमुचितम् एवमागमनसमयेऽपि वदनाम्बुजदर्शनकरणकमनोऽधिकरणकस्मरार्पण जनित दुःखं च नवीनाधरामृतदानेनापसरतीति च तथैव कर्तुमुचितमिति च दुःखद्वयस्य निर्वापणार्थमुपायद्वयं क्रमात् श्लोकद्वयेनाहुः । प्रणतकामदमिति द्वाभ्याम् हे रमण हे आधिहन् चरणपङ्कजं स्तनेषु अर्पय कीदृशं शन्तमं कल्याणतमं शंशब्दोऽव्ययं शंयुरित्यादिदृष्टेः प्रणतानां कामदम् अभीष्टदम् इति इष्टं पद्मजेन ब्रह्मणार्चितम् इतिदुर्लभं धरणिमण्डनमितिकरुणामकरन्दनिष्यन्दि आपदि ध्येयमिति सर्वापद्विनाशकम् ॥ १३ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत उत्तमा अनन्यपूर्वावत् स्तनयोश्चरणधारणं प्रार्थयन्ति । प्रणतेति । अत एव न पौनरुक्त्यं परं पूर्वापेक्षया अत्र चरणमाहात्म्यमधिकं गुणाधायकमेतत् पूर्वंतु दोषानिवर्त्तकं हे रमण रतिकर्त्तः नः स्तनेषु चरणपङ्कजमर्पय प्रयोजनमाहुः । आधिहन्निति आर्तिहन् इति वा हृदयतापः चिंता च निवारणीये दृष्टोपकारेणैव तापो गमिष्यति अस्माभिर्हृदयेस्थापितं न वहिः समायाति अतस्त्वया वहिःस्थापनीयं चरणपङ्कजस्यापि भगवत इव षड्गुणानाहुः । तत्र प्रथममैश्वर्यं प्रणतकामदमिति प्रकर्षेण येन ता अनन्यशरणाः तेषां कामदमभिलषितार्थदातृ ईश्वर एव तथाविधो भवति तत्रत्यः कामः स्तब्धैर्ग्रहीतुं न शक्यत इति प्रणतत्वमुक्तं पद्मजार्चितमिति धर्मरूपता निरूपिता ब्रह्मप्रार्थनयैवात्रागतमिति कीर्त्तिरूपतामाहुः । धरणिमण्डनमिति । धरण्या मण्डनमलङ्करणरूपं श्रीरूपं वा आपदि ध्येयं श्रीरूपं कीर्त्तिरूपं वा पङ्कजसाम्यात् रूपोत्कर्ष उक्तः शन्तमं कल्याणतमं ज्ञानरूपम् आर्त्तिहन्निति संबोधनात् ते चरणपङ्कजमिति संबन्धनिरूपणात् वैराग्ययुक्तंच रमणेऽभीष्टप्रापकः आर्त्तिहन्नित्यनिष्टनिवारकः अथवा यल्लोके पड्विधमुपकारं करोति तदस्मास्वेकमेव करोत्विति प्रार्थ्यते प्रणतासु कामं ददाति तत्पूर्वमुक्तं मनासे नः स्मरं वीर! यच्छसीति प्रकर्षेण नम्रेषुना कामं द्यति खण्डयति पद्मजेन पद्मजया वा अर्चितम् ऐश्वर्यार्थं कामार्थं वा पद्मजेन अर्चितं तत्तुल्यार्थम् अन्यथा तानि चरणपङ्कजजन्म कथंप्राप्नुयुः धरण्यपि स्त्री अनलंकृता न भुज्यत इति तस्यां पदस्थापनं भगवदपेक्षयापि चरणो महान् आपदि ध्यानमात्रेणैवापदं दूरीकरोतीति यथैतेषां सर्वोपकारकार्तृ तथास्माकमपि करोत्विति प्रार्थना अनेन सर्व एव सुरतबंधा आक्षिप्ताः ॥ १३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु यद्यहं सदा दुःखयाम्येवेति निश्चिनुध्वे तर्ह्यलं मया युष्माकमिति तत्कोपमाशङ्क्य हन्त हन्त स्वकर्मफलदुःखान्धाभिस्त्वय्यपि दोष आरोपित इत्यनुतप्य तं प्रसादयितुं सर्वसुखदत्वेन स्तुवन्त्यस्त्वयैवास्माकं प्रयोजनमिति द्योतयन्त्यः स्वदुःखोपशमनं प्रार्थयन्ते । प्रणतेति द्वाभ्याम् । प्रणतानामपराधीभूयापि नम्राणां कालियतत्पत्न्यादीनां कामदं पद्मजेन ब्रह्मणा स्वापराधोपशमनार्थमर्चितमतोऽस्माकमपराधः क्षम्यतामिति भावः । धरमणिमण्डनमित्यस्मात् कुचानपि तेषु चरणार्पणेन मण्डयेति भावः । ध्येयमापदीति अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथेति गर्गोक्तेरिति आपदोऽस्मांस्त्रायस्वेति भावः । सर्वत्र हेतुः । शन्तमं सर्वकल्याणरूपं सर्वसुखरूपञ्च । आधिहन्! आधिं हन्तुमित्यर्थः । नच स्तनेषु चरणार्पणे तव कोऽपि श्रमः प्रत्युत सुखमेवेत्याहुः । हे रमण! रिरंसोस्तव तेनैवाभीष्टसिद्धिर्भविनीति भावः ॥ १३ ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

तदेवं प्रहसितमित्यादिभिस्तासामेव प्रेमोक्तिद्वारा पूर्वमवर्णितः श्रीकृष्णस्य तासु पूर्वानुरागः सूचितः तासु तदीयरस्यताभिरनुभूयमानतया वर्णनेनैव रसावहत्वादितिज्ञेयं तदेवं स्मरक्षोभवर्णनेनोद्दीपिततद्भावाः प्रार्थयन्ते प्रणतेति द्वाभ्याम् प्रणानां नागपत्न्यादीनामभीष्टदम् इति सर्वार्थप्रदत्वं पद्मजेनार्चितमिति पारमैश्वर्य्यं तच्च वत्सहरणप्रसंगे अथवा वन्द्यमानचरण पथि वृद्धैरित्याद्यनुसारात् धरणिमण्डनमिति सौन्दर्य्यं कृपालुत्वं च ध्येयमापदीति आर्तिहरत्वं च एवं सर्वार्थसाधनमुक्त्वा स्वतः परमफलत्वमाहुः शन्तमंचेति एवं दुःखहानिसुखावाप्तिहेतुत्वं यदुक्तं तदनुसार्य्येव संबोधनद्वयम आधिहन्! रमणेति च अतोऽस्माकं विरहादिव्यथां न शय विचित्रक्रीडासुखं संपादयेति भावः ॥ १३ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

एवं तदुद्भावितामेव स्वव्यथां निवेद्य तदुपशमाय प्रार्थयन्ति । प्रणतकामदमिति । हे रमणेति सम्बोधनेन स्वभावत एव रमणस्य तव रमणं भविष्यत्येवेति वृथैवायं तवाग्रहः यद्वा रमणशीलस्यपि तव किमस्मदभाग्यादेव "राजन्कनकधाराभिस्त्वयि वर्षति निन्यदा। अभाग्यच्छत्रच्छन्नत्वान्मयि नायान्ति बिन्दव"इत्यत्रोक्तन्यायेन रमणवैमुख्यमेवमपि तव नान्याय्यं भगवतः ससखीनामभमाग्या नौचित्यात् अतो रमस्व तथा हे आधिहन्! आधिर्हि मानसी व्यथा तथाच हृच्छयपीडानिवर्त्तकस्य तव

श्रीरामनारायणकृतभावभावविभाविका ।

तत्क्रीडाभावेक्रीडास्पदमेव यद्वा रमणेतिपदेनैश्वर्यधर्मयशःश्रीतिभगचतुष्टयेनाभ्युदयप्रदत्वमुक्तं आधिहन्निति ज्ञानविरागाभ्यामपवर्गप्रदत्वं तथाचार्थप्रदस्यानर्थात्मकचिन्तापहत्वं धर्मप्रदस्य कामाग्निनादाहकत्वं कामप्रदस्य विरहस्वरूपाभेदस्यापिमोक्षाविर्भावकस्य स्वरूपतिरोभावे नाधिवर्धनं विरुद्धं तस्माद्रमणत्वेन रमणप्रवृत्त्यासुष्ठुरमणेनाधिहनना यादौ चरणपङ्कजं नःस्तनेष्वर्पय तेन हृच्छयाधिशमनंभवेत् यथा तव भगाख्यपङ्कयस्त्वात्सैष्टदत्वं सर्वानिष्टनिवर्त्तकत्वञ्च तथात्वत्सदृशमेव तव चरणमिति भावः । तदेवाहुः । प्रणतकामदमिति । धर्मो दर्शितः तत्र धर्मो द्विविधः सकामो निष्कामश्च तयोः सकामस्य सर्वकामप्रदत्वं प्रसिद्धं भगवच्चरणमपि प्रणतानां सर्वकामदं उक्तञ्च किमलभ्यंभगवति प्रसन्ने श्रीनिकेतन इति तथा आशाम हे यदित आशिष ईश नान्य इतिच निष्कामस्तु हृदयशोधकतया कामनिवर्तकः भगवच्चरणं च प्रणतानां कामं द्यति खण्डयतीति तथा उक्तं च तथापि तत्परा राजन्नहि वाञ्छन्ति किञ्चनेति तथा —

सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः।
स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवमिति ॥

किञ्चभवच्चरणस्य कामप्रदानेऽपि तन्निवर्तकत्वं तदुक्तं भगतैव—

न मय्यावेशितधियां कामःकामाय कल्पते
भर्जिताः क्वथिता धानाः प्रयो वीजाय नेष्यत इति ॥

अनेनैव वैराग्यमपि ध्वनितं तथाच कामपूरकत्वेन कामपूरणं पूरणद्वारैव तदुपशमनमप्युचितम् ऐश्वर्य्यं दर्शयन्ति । पद्मजार्चितमिति । पद्मजेन सर्वपरमेष्ठिना ब्रह्मणापि पूजितं तदा च ब्रह्मणा स्वतः पूर्णेनापि सर्वजनसुखार्थमेव सुखस्य सत्त्वाधीनतया रजसा तदनिर्वाहमभिप्रेत्य पूजितमित्यस्माकमपि सुखदानमेव योग्यमितिभावः । यशोऽपि जनवृजिनवर्जनेन भवति अन्येषां मण्डनेन वा तत्रादिमाहुः । ध्येयमापदीति । आपदि ध्येयं ध्यानमात्रेणापन्निवारणं तथाच तद्ध्यायतीनां नो विरहाद्यापद्योग्यैवेति भावः । द्वितीयमाहुः । धरणिमण्डनमिति । कतिचिज्जनमण्डनेन यशोविस्तारसम्भवे किमु वाच्यं धरणिमण्डनस्य अत्र धरणिगतसर्वजनमण्डनमेव धरणिमण्डनत्वं सरोविकासवत् यद्वा असाधारणवज्राङ्कुशादिभिरङ्कैर्धरणिगतयावत्तन्मण्डनं त्वमनेन पृथिव्या श्रीकारितया निरतिशया श्रीरपि दर्शिता अन्यशोभकत्वेन श्रियोऽतिशयं बोधयित्वा स्वरूपतः शोभनत्वेन श्रियमाहुः। पङ्कजमिति।तत एव शोभनं तथाच सर्वश्रीकरस्य स्वतः श्रीमयस्य नः श्रीकरणमेवोचितं शानं फलेन द्योतयन्त्य आहुः । शन्तममिति । तथाच स्वयंशन्तमेन सर्वशङ्करेण चरणेन नस्तनशङ्करयोः शङ्करणीयमिति व्यञ्जना ॥ १३ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु यद्यहं करुणारहितस्तर्ह्यलं मया युष्माकमिति तत्कोपमाशङ्कयाहुः। भगवन्न वयंत्वयि दोषमारोपयामःकिन्तु स्वमन्दभाग्यं वर्णयामो ऽतस्तव सङ्गमप्रतिबन्धकदोषनिरासाय त्वां प्रार्थयाम इत्याशयेनाहुः । प्रणतेति । ते तव चरणकमलं नः स्तनेष्वर्पय यद्यपि त्वदीयं चरणसरोजमन्तर्हृदयेऽस्माभिः स्थापयिषितं तथापि न तत्र स्थापयितुं शक्यमतस्तत्र त्वमेव स्थापय चरणस्यापि षड्विधैश्वर्यसम्पन्नत्वात्तत्स्थापनेनास्माकं सर्वं प्रयोजनं संस्थास्यतीत्याशयेन तद्धस्वप्रतिपादकानि विशेषणानि तत्र प्रकर्षेण नतानाम नन्यशरणानां कामप्रदमभिलषितसमस्तैश्वर्य्यप्रदं पदं पद्मस्थानं स्तब्धैर्ग्रहीतुमशक्यमतः प्रणतेत्युक्तं पद्मजेन ब्रह्मणा पद्मजया लक्ष्म्या चार्चितमिति धर्माधारतोक्ता तथा धरण्या मण्डनमलङ्करणरूपमनेन यशोऽधिकरणता निरूपिता तथा आपदि ध्येयं श्रीप्रदानेनापन्निवर्तकमिति श्रियोऽधिकरणता कथिता शंतमं कल्याणतममिति वैराग्यज्ञानाश्रयता दर्शिता ततश्च हृदयस्थं कामाधिं नाशयेति ध्वनयन्त्यः सम्बोधयन्ति हे आधिहन्निति तन्निवृत्तिरपि नैतावता किन्तु रमणे कृते इत्याशयेनाहुः। हे रमणेति । एवञ्चान्येषां तत्तत्फलप्रदमप्यस्माकं यथोक्तफलमात्रप्रदमास्त्विभावः।यद्वा चरणपङ्कजमस्माकं स्तनेषु अर्पय एतावतैवास्माकं मनोरथपूर्तिर्भविष्यति तस्य सर्वफलप्रदत्वादित्याशयेनाहुः । पद्मजेति एवं ब्रह्मलक्ष्म्यादिभिरपि तदेवाऽर्चितं किञ्च धरणिमण्डनमतोऽस्मत्स्तनमण्डनं कथं न भविष्यतीति भावः किञ्च ध्यानमात्रेणापन्निवर्तकं स्पर्शेन त्वापन्नाशोऽपि भविष्यतीतिभावः।किञ्च शन्तमं मोक्षपर्य्यन्तशान्तिसम्पादकं ततश्च तत्स्पर्शेनास्माकं मोक्षोऽपि नालभ्य इति भावः । नचास्ति भगवतोऽस्माकम्वा ऽनेन कश्चिद्दोष इत्याशयेनाहुः हे रमणेति । किञ्च समस्ताधिनाशाय कृतावतारस्य तवावश्यं स्वीयानामस्माकमाधिनाशः कर्तव्य इत्याशयेनाहुः । हे आधिहन्निति अनभिज्ञापक्षे अतः सम्प्रति कपटं विहायैवङ्कुर्विति प्रार्थ्यमावेदयन्ति।प्रणतेति।प्रणतानां नागपत्न्यादीनां कामप्रदं सर्वार्थप्रदम् अतएववत्साहरणान्ते पद्मजेनार्चितं धरणिध्वजादिचिन्हैर्मण्डयतीति तथा अनेन कृपालुत्वं सौन्दर्य्यातिशयत्वञ्च दर्शितं तथापदि ध्येयं महेन्द्रकृतवातवर्षाद्यापन्निवर्तकत्वेनानुभूतम् एवंसुखसाधनत्वमभिधाय सुखरूपत्वमाहुः । शन्तममिति । एतावताप्यस्मदाधिनाशे तव किंछिद्यत इत्याशयेनाहुः हे आधिहन् ! तत्र तदर्पण योग्यश्च त्वामित्याशयेनाहुः । हे रमणेति यद्वा तेन तवापि सुखमेव भविष्यत्यतो न वयमायासकरे कर्मणि त्वां प्रेरयामः त्वन्तु स्वार्थाऽविरुद्धमप्यस्मत्प्रयोजनं न सम्पादयस्यत्यन्तमाश्चर्य्यमिति ध्वनयन्त्यः सम्बोधयन्ति । हे रमणेति । मानिनीपक्षे ननु युष्मद्दर्शनान्मम मनसि कामोद्दीपने तच्छान्त्युपायः को वा भवतीभिर्विचार्य्याऽङ्गीकृत इति चेत्तत्राहुः । चरणपङ्कजं स्वीयं नः स्तनेष्वर्पय तेन च स्वकामाधिं नाशयेत्याशयेनाहुः।हे आधिहन् यत एव तावतैव रतिसुखमवाप्स्यसीत्याशयेनाहुः।हे रमणेति।नचैतावतास्माकं मानहानिस्तव पादपद्मस्य सर्वकामप्रदत्वात्सर्वैराद्दतत्वाच्चेत्याशयेनाहुः । प्रणतेत्यादि निवृत्तिपक्षे तस्मात्त्वारममतस्य जीवात्मनो यथोक्तसंसृतिप्रवाहोपशमार्थं स्वचरणसरोजं नः स्तनेषु कर्मोपासनापरभागेषु अर्पय ते तादृशवेदभागाः भगवच्चरणारविन्दार्चनध्यानपरा इत्यधिकारिचेतस्याविर्भावय तत्र तदर्चनध्यानपरस्य तस्य सर्वं सेत्स्यतीत्याशयेनाहुः । प्रणतेति।अत एव ब्रह्मादिभिरार्चनं भक्तपारवश्यमाहुः । धरणीति । स्वीकृतरामकृष्णाद्यवतारस्य तत्आपदि गजेन्द्रादिभिर्ध्येयं शन्तमम् आराधितं ज्ञानोदयद्वारा मोक्षसुखप्रदं जीवरूपेण संसरणमीश्वररूपेण नित्यमुक्ततया वस्थानमाराध्याराधकाभावश्चेत्येतत्सर्वं तव लीलामात्रं ननु वस्तुत इत्याशयेनाहुः । हे रमणेति ॥ १३ ॥

---

**सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ॥**
**इतररागविस्मारणं नृणां वितर वीर ! नस्तेऽधरामृतम् ॥ १४ ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अतोऽधुना चरणपङ्कजं नोऽस्माकं स्तनेषु आधिहन् ! हे रमण अर्पय कथंभूतं शन्तमं प्राप्तकाले निरतिशयानन्दजनकम् आपदि ध्येयं स्मरणमात्रेणैवापन्नाशकम् धरणिमण्डनं धरण्याः भूषणम् इखत्वमपि प्रणतानां सर्वकामपूरकम् पद्मजो ब्रह्मा-तदर्चितम् ब्रह्मादिपूज्यमित्यर्थः ॥ १३ ॥

### भाषा टीका

हे रमण ! शरणागत पुरुषों के मनोरथ पूर्ण करवे वारो ब्रह्मा ते पूजित पृथिवी को शोभितक करवे वारो आपत्के समय ध्यान करवे योग्य कल्याणदायक पैसो जो आपको चरण कमल ताको हे दुःख नाशक ! हमारे स्तनोंपे अर्पणकरो ॥१३॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अपि च हे वीर ! तेऽधरामृतं नो वितर देहि स्वरितेन नादितेन वेणुना सुष्ठुचुम्बितमिति नादामृतवासितमिति भावः इतररागविस्मारणं नृणामितरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति धिलापयतीति तथा तत् ॥ १४ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

सुरतं सुशोभनं रतं रतिः प्रेम किंवा सम्भोगसुखं वर्द्धयतीति तथा तत् इति मुहुर्लब्धेऽपि तास्मिन्नतृप्तिः सूचिता निजधाष्ट्र्यादिकञ्च परिहृतं शोकः अकृतार्थत्वादिना विरहेण वा तं नाशयतीति तथा तदिति अन्यथा शोकनाशो न भवतीति सूचितं तथास्वरितेति गुणविशेषेण परममादकत्वमुक्तं तस्मादस्य जगदुन्मादकताहेतुसम्पर्कमात्रकत्वात् इति तेनैव सर्वं दुःखविस्मृतिर्नत्वन्यथेति ध्वनितं यद्वा पूर्वोक्तवेणुभाग्यभराभिप्रायेण तत्सुष्ठुचुम्बिततया परममधुरः ?सौभाग्यभरप्रदत्वञ्च चुम्बितमिति भोगानाचरणेन तत्चीणतापि परिहृता नृणां यानि इतराणि अधरामृतव्यतिरिक्तानि सार्वभौमादिमोक्षान्तसुखानि तेषु रागविस्मारणमितिपरममोहनत्वम् एवन्देवभोग्यादमृतात् मोक्षाख्यादपि वैशिष्ट्यं दर्शितं तथा श्रवणादपि भक्तिप्रकारेभ्योऽप्यूह्यम् एवं तद्दर्शनसुखादपि वैशिष्ट्यञ्चह्यं तादृशप्रियजनकप्राप्यत्वात् एवंविशेषणनामेषां यथोक्तं क्रमेण हेतुमत्तोह्या नच तवादेयं किञ्चिदस्तीत्याशयेनाहुः वीर हे दानशूरेति यद्वा श्लेषेण कन्दर्पयुद्धवीरेति तद्युक्तमेवेति भावः । वीरेति किशोरं प्रति संबोधनं मध्यदेशरीत्यैतेन च रसिकत्वमेव बोध्यते अत एव तस्य पौनःपुन्यं तथापि सङ्कल्पानुसारेणार्थभेदो लिख्यते इतिदिक् अन्यत्तैर्व्यख्यातं यद्वा स्वरितेन षड्जादिस्वरं प्रापितेन वेणुना नृणामिति किमुत नारीणामित्यर्थः तेषां तत्प्राप्तिस्ताम्बूलचर्वितादिसंबन्धेन कथञ्चिदूह्या यद्वा नृणांमध्ये वीरेत्यन्वयः अर्थः स एव इनरेति तस्मिन् प्राप्ते पुनरन्यत्किञ्चिन्नेष्टव्यमिति प्रार्थनाचातुर्यं यद्वा इतरत् ततोऽन्यत् सर्वं रागेण स्वविषयकरत्नोत्पादनेन विस्मारयतीति सदा तदेकप्राप्त्यर्थं च तत्स्वभाव एवोक्तः एवमपूर्वतोऽत्र विशेषः स्पष्ट एव अत एव पूर्वं शीधुनेति अत्र चामृतमिति ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अधरामृतम् अधर एवामृतं तत् सुरतं प्रेमविशेषमयसंभोगेच्छां वर्धयतीति तथा तत् इति मध्वादिवन्मादकत्वमुक्त्वा मुहुर्लब्धेऽपि तस्मिन्नतृप्तिः सूचिता निजधाष्ट्र्यादिकं च परिहृतं शोकं त्वदप्राप्तिदुःखस्यानुभवमपि नाशयति विस्मारयतीति तथा तदिति चोक्तम् इतररागविस्मारणं तु नृणामपि किमुत नारीणां तास्वप्यस्माकं तु तद्विस्मारणमिति किंवाच्यं शाश्वतसुखस्पृहया तदत्यन्ताभावस्यापि सम्पादकमित्यर्थः। तदेव प्रमाणयन्ति । स्वरितेतिवेणोः पुम्भावेन स्वतत्वात् तेषां तत्प्राप्तिस्ताम्बूलचर्वितादिसंबन्धेन तदीयरसे तदुपचारात् क्रमतस्त्रयेण स्वेच्छावर्धनदुःखान्तरस्फूर्तिनाशनविषयान्तरविस्मारणान्युक्त्वा तस्य परमपुरुषार्थत्वं दर्शितम् एवमर्थत्रयमेव पूर्वपद्येऽपि दर्शितमित्यैकार्थ्यं च ज्ञेयं नच तवादेयं किञ्चिदस्तीत्याशयेनाहुः वीर हे दानशूरेति अन्यत्तैः अत्र नादामृतवासितमिति वेणुद्वारा सुष्ठु पायकमित्यर्थः इदं च लोभविशेषोत्पादकतागमकं सुगायनस्य श्रोतृषु सुखादिना स्पर्शादीच्छाजनकत्वात् तत्र चामृतस्याप्यमृतवासितत्वं गन्धयुक्ति न्यायेन परस्पर किञ्चिद्वैलक्षण्यमिति ज्ञेयम् यद्वा स्वरितेन सञ्जातपड्जादिस्वरेण वेणुना चुम्बितमिति तस्य मादकत्वमेव दर्शितं वेणोस्तच्चुम्बनं गानपौनःपुन्येन धैयात्याभिव्यक्तेस्तत्सम्पर्कजस्वरेणापि जगतोऽप्युन्मादकत्वाभिव्यक्तेश्च ॥ १४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

स्वरितवेणुना षड्जादिस्वरसंयुक्तवेणुना ॥ १४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तथा हे वीर ! तवाधरामृतं वितर देहि कथंभूतं नृणामितरेषु सार्वभौमादिषु सुखेषु रागम् इच्छां विस्मारयतिलोपयतीति तथा स्वरितेन नादितेन वेणुना स्वरयुक्तवेणुना सुष्ठु यथा तथा चुम्बितं नादामृतवासितमित्यर्थः। शोकनाशनं तापत्रयदुःखशामकम् उत्तरोत्तरं रतिवर्द्धकं च ॥ १४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्तनतटेषु चरणार्पणादुद्बुद्धज्वलितकामाग्निज्वालाशमनाय तवाधरामृतं पिपासुभ्यो ऽस्मभ्यं देहीत्याहुः । सुरतेति । सुरतं ग्राम्यधर्मः स्वरितवेणुना स्वरयुक्तवेणुना ध्वनिरस इतरेषां रसानामास्वादनसुखं विस्मारयतीति इतररागविस्मारणम् इतरेषु मधुरेषु वस्तुषु रागं स्नेहं विस्मारयतीति इतररागविस्मारणं वा वितर देहि "विश्राणनं वितरणं स्पर्शनं प्रतिपादन,,मिति हलायुधः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अधर एवामृतं नृणामपि ताम्बूलचर्वितादौ किमुत नारीणां तत्र अधरतदीयरसयोरभेदोपचारः ॥ १५—१७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

दुःखान्तरनाशायोपायान्तरमाहुः। सुरतेत्यादि । हे वीर ! ते त अधरामृतं वितर कीदृशं सुरतं प्रेम तद्वर्धनं यतः शोकनाशनं ननु तद्वेणुनैव पीतमितिचेन्न तेन सुष्ठु चुम्बितमेव नतु सम्यक्पीतं ननूच्छिष्टं पातुं न युज्यत इतिचेत्तत्राहुः । इतररागविस्मारणं परमरसायनमौषधं देहि तथा विचारः क्रियते मध्वादिवत इति चलसि यद्व्रजादित्यादि दिनपरिक्षय इत्यादि द्वाभ्यां श्लोकाभ्यां प्रतिपादितदुःखद्वयशान्त्युपायत्वेन कथितयोः स्तनाधिकरणकचरणाधरामृतवितरणयोः कृणु कुचेषु कृन्धि हृच्छयमिति अधरसीधुनाप्यायस्व न इत्याभ्यां वा सह न पौनरुक्त्यम् ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदनन्तरं तत उत्तमाः प्रार्थयन्ते । सुरतेति । अधरामृतं वितरेति अत्राप्यधरामृतं गुणाधायकम् एतस्य चतुर्गुणत्वमेव विवक्षितं ज्ञानवैराग्ययोरत्रानुपयोगात् तस्यैश्वर्यमाह । सुरतवर्धनमिति । गोपिकासु परिच्छिन्नः कामः अपरिच्छिन्नेन सह संयोगे क्लिष्टो भवति यथा रसाः क्षुदुद्बोधका भवन्ति तथायं रसः कामोद्बोधकः किंच न केवलमयं काममेव पोषयति किंतु सर्वानेवान्तःकरणदोषान् निवारयति अतः शोकनाशकत्वं ज्ञानवैराग्यरूपता च निरूपिता ऐश्वर्यधर्मरूपता च यशो रूपतामाह स्वरितो नादयुक्तो यो वेणुः तेन सुष्ठु चुम्बितं यशो हि नादैः कीर्त्यते वेणुश्च परमभक्त इति तेनापि चुम्बितमेव नतु पीतमितररागविस्मारणमिति श्रियो रूपं साहि सर्वं विस्मारयतीति स्वतः पुरुषार्थत्वेन प्रमेयबलमुक्तं पूर्वेण प्रमाणबलं शोकनाशनमिति फलबलं सुरतवर्धनमिति साधनबलम् एवं चतुर्विधपुरुषार्थप्रदं स्वतः पुरुषार्थरूपं नृणामस्माकमधिकारिणां दुर्लभपुरुषार्थानां वा यद्यपीदं देयं न भवति तथापि वितरगुणेन दातुं शक्यत इति वितरेत्युक्तं वीरेति संबोधनात् शौर्येऽन्यथा संभवतीति निरूपितम् ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च । भो धन्वन्तरिप्रतिम! भिषक्छिरोमणे कामरोगमूर्च्छिताभ्योऽस्मभ्यं किमप्यौषधं देहीत्याहुः । सुरतवर्द्धनमिति । पुष्टिकरत्वं शोकनाशनमिति पीडाहरत्वं तस्योक्तम् । नच तदपि महार्घं मूल्यं विनैव कथं देयमिति वाच्यं दानवीरेण त्वया तदपि निकृष्टाय निष्प्राणायापि सप्राणीकर्तुं विनैव मूल्यं दीयत एवेत्याहुः । स्वरितेन नादितेन वेणुना कीचकेनापि सुष्ठु सम्यक्तया चुम्बितं स्वादितम् । ननु धनजनकुटुम्बाद्यासक्तिरेवात्र कुपथ्यं तद्वने जनायैतन्न दीयते तत्राहुः । इतररागविस्मारणम् इतरवस्तुष्वेतदेव रागमासक्तिं विस्मारयतीत्यद्भुतमौषधमिदं यत् कुपथ्यान्निवर्त्तयतीत्यस्माभिरनुभूयैव दृष्टमिति भावः । नृणां मनुष्यजातिस्त्रीणां वितर देहि हे वीर ! दानवीर दयावीरेति वा ॥ १४ ॥

---

केनाचित् कृता विशुद्धरसदीपिका ।

सुरतेति । अधर एवामृतम् अधरमर्वाचीनममृतं यस्मादिति वा सुरतं प्रेमविशेषसंभोगेच्छां वर्धयतीति।तथा तव इति मुहुर्लब्धेऽप्यतृप्तिः सूचिता शोकं त्वदप्राप्तिदुःखानुभवं नाशयतीति तथा तत् इतररागविस्मारणं नृणामिति किमुत नारीणामित्यर्थः । तदेव प्रमाणयन्ति । स्वरितेति । वेणुनेति पुंजातित्वाभिप्रायेण यद्वा वमित्यमृतात्मकं बीजम् अमृतं च परमानन्दः इरिति कामसुखं वश्च इश्च ये आत्मकामसुखे अणू यस्मादसौ वेणुः सर्वतः परमसुखदेनेत्यर्थः । "वेति ब्रह्मसुखं विद्यादिकामसुखमुच्यते । तावेवाणूतमौ यस्मात् स वेणुरिति कथ्यते,, सुष्ठु चुम्बितमिति परमास्वादनीयत्वम् ॥ १४ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

चरणस्तनार्पणेनाधिनिवृत्तिं संप्रार्थ्य परमसुखकरमनोरथान्तरमाहुः सुरतवर्धनमिति।हे वीर!तेऽधरामृतं नोऽस्मान् प्रति वितर ते तवाधरबिम्बे यदमृतमित्यत्र ते शब्देन वैलक्षण्यद्योतनं नहि सर्वत्र बिम्बरसः नवा सर्वाधरेष्वमृतं तथात्वे स्वाधरामृततृप्तानां प्रार्थनैव न स्यात् न इत्यधिकारिकथनं कामाग्निदग्धानामेव तदमृतदानपात्रत्वं नान्येषां वीरेति सम्बोधनेन तु हे रतिदानशूर इति युद्धकुशलेति नहि वीरस्य तव कामस्यैव विशेषत इरणं युक्तमपितु तदुभयजामृतस्यापि तदमृतमपि नोऽधिकारकमित्यत्र हेतुगर्भं विशेषणं सुरतवर्द्धनमिति । सुरतानामेव वर्द्धनं विलक्षणसुखदानेन महत्त्वद्योतकं सुरतसम्भोगस्य वर्द्धनं वा यथा रसायनादिपानेन सम्भोज्यरसास्वादरुच्यभिवृद्धिः मधुपानेन च प्रकृतजनलौकिकसम्भोगरसाभिवृद्धिःस्तथा परमरसायनरूपालौकिकाधरमधूकमाध्वीमधुपानस्य त्वदीयप्रेममयसुरतसम्भोगवर्द्धकत्वं यथा यथाधरामृतपानं जायते तथा तथा मदनमदोन्मदतया सुरतसम्भोगरसो वर्द्धते इति भावः तथा शोकनाशनम् अन्यावीचिकित्स्यस्यापि त्वद्विरहशोकस्य नाशनम् उभयत्रमानमाहुःस्वरितवेणुना सुष्ठु चुम्बितमिति तथाचउभमानन्तःशून्यकठोरहृद्ग्रन्थिवंशांवशोत्पन्नस्यपरिच्छिन्नशुष्कवृन्धविद्धनीरसवेणोः सुमधुरस्वरेणामृताभिवर्षकत्वं त्वदधरामृतसुष्ठुचुम्बन निमित्तमेव किमुवाच्यं वेणोस्तद्वत्सुमुखमापूर्य वह्निःप्रसरितनादात्मकत्वदधरामृतकणपुटास्वादनमात्रेण नः पूर्वसिद्धरसमुरतत्वस्याप्यागमनोत्साहात्मनाभिवृद्धिस्तद्वैमुख्यशो नाशश्च जातः किंभूतं तत् इतररागविस्मारणं नृणामिति नृणामप्राप्तमपि संभाव-

### श्रीरामनारायणकृतभावभावविभाविका ।

नामात्रेणेतरेषां सार्वभौमादिशतगुणत्वेनाम्नातानां ब्रह्मसुखपर्य्यन्तानां यो रागोऽभिलाषस्तद्विस्मारणं किं वाच्यं नारीणामनुगतरसानां तदुक्तमभियुक्तैः

> अद्वैतवीथिपथिकैरुपास्याः स्वाराज्यसिंहासनलब्धदीक्षाः।
> शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेनेति ॥

किं चात्र श्रुतिरूपा गोप्यः सच्चिदानन्दभगवदधरामृतस्यापि तदात्मकत्वं भगवत्त्वं च वर्णयन्त्यस्तदात्मकत्वात्तत्प्रार्थयन्तीतिफलांशेऽपि नानन्त्यत्वक्षतिः । तत्राधरामृतमित्यमृतशब्दस्य तत्स्वरूपवाचिनः कालादिपरिच्छेदरहितसच्चित्सुखघनस्वरूपद्योतकत्वम् । सुरतवर्द्धनमिति । सुरतानां वर्द्धनं धर्मद्वारेश्वरेण भवतीति धर्मैश्वर्ययोः कथनं शोकनाशनं "तरति शोकमा"त्मविदिति श्रुत्या ज्ञानेनेति ज्ञाननिर्देशः स्वरितेत्यादिना वेणुस्वरद्वारा विख्यात्युत्पत्त्या यशोनिरूपणं स्वश्रिया इतररागविस्मारकत्वोत्पत्त्या श्रीविरागस्य निरूपणं यद्वा ज्ञानस्यैव परमपुरुषार्थरूपतया भगवत्स्वरूपजिज्ञासुजनसेव्यत्वेन वैराग्यस्य च तदन्तरङ्गत्वेन तयोरेवोक्तिः तत्र ज्ञानस्याप्यधरनिःसृतत्वममृतत्वं चाधररसस्यापि उत्कर्षज्ञानेनैव स्पृहादर्शनादज्ञाने तदभावाच्च । ज्ञानस्याप्यधरनिष्ठसुरतवर्द्धनत्वं तस्यैव उक्तश्रुत्या शोकनाशकत्वं तस्यैव स्वरितेत्यादिना शब्दब्रह्मात्मकवेणुसंबन्धेनानुभावकत्वसाम्यमितरेत्यादिना अतन्निरसनरूपज्ञानतदङ्गवैराग्ययोः साम्यसूचनम ॥ १४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

इदन्तु स्वदोपनिवृत्त्यर्थमस्माभिः प्रार्थितं त्वं प्रसन्नश्चेत्तर्हि मुख्यमस्मदीयं प्रार्थनीयं शृण्वित्याशयेनाहुः । सुरतेति । हे वीर ! स्वत्व्याधरामृतं वितर देहि ननु अनेन किम्भविष्यतीतिचेत्तत्राहुः सुरतेति । यथा वह्नन्नभोजनानुकूलाक्षुत्तत्कारणरसेनोद्बोध्यते तथापरिच्छिन्नकामेन त्वया सम्भोगयोग्यतासिद्ध्यर्थं परिच्छिन्नस्यास्मत्कामस्य वर्धनं तत्रापि न लौकिकसाम्यमित्याशयेनाहुः । शोकस्य नाशनं मोक्षप्रदमपि लौकिकं नैव तस्य प्रत्युत शोकोत्पादकत्वात् किञ्च स्वरितेन नादितेन वेणुना सुष्ठु चुम्बितं परमभक्तेन वेणुना लोकोत्तरमाहात्म्यवत्त्वेन गीतं ब्रह्मलोकपर्य्यन्तं ख्यातकीर्तितियावत् अत एव नृणामपि इतरेषु सार्वभौमादिसुखेषु रागमिच्छां विस्मारयति विलोपयति तथा तत्र किमुत वक्तव्यमस्माकमतस्तत्तेदवास्मत्कमपेक्षितत्वादवश्यं देहीत्यर्थः । यद्यपीदमल्पं वस्तु तथापि दानशूराणां किमप्यदेयं न भवतीत्याशयेन सम्बोधयन्ति । हे वीरेति । यद्वा नृणां स्वरितवेणुना चुम्बितं सततच्छिद्रद्वारा नादरूपेण निःसृतं स्वस्य कर्णद्वारा हृदये प्रविष्टं सत् इतररागविस्मारणं स्वरितवेणुरूपेण परिणतेनान्तःकरणेन चुम्बितं सदिति वाऽस्माकन्तु साक्षाद्ग्रहणेऽधिकारात् साक्षादेवहि यतः साक्षादेव पीतं सदस्माकं सुरतवर्द्धनं शोकनाशनञ्च भविष्यतीत्यर्थः अनभिज्ञापक्षे हे वीर ! यदि त्वं स्मरयुद्धे कातरस्तर्हि स्तनेषु चरणाम्बुजमर्पय यदि च सुरतसमरप्रतिभटप्रियजनविजयसमर्थस्तर्ह्यधरामृतं देहीति भावः । ननु दत्तमेव पूर्वं किमिति पुनस्तदेव प्रार्थ्यत इत्याशङ्क्योक्तं सुरतस्य प्रेमरूपस्य सम्भोगेच्छां वर्द्धयतीति तत् अनेन तस्य मद्यादिवन्मादकतोक्ता तत्र तस्य भावश्च दर्शितः अत एतत्त्वद्विरहादिजनितशोकस्य नाशनं तत्रापि स्वरितवेणुना सुष्ठु चुम्बितं नादामृतवासितमिति भावः । ननु लोकद्वयनाशनिबन्धनशोकोत्पादकत्वात्कथं सर्वथाशोकनाशनमित्युक्तमित्याशङ्क्योक्तम इतरेषु लोकद्वयभोग्येषु रागं विस्मारयतीति एवञ्च निमित्तापायेऽपि नैमित्तिकस्यापायइति भावः तत्रापि नृणामनधिकारिणामपि तथा राहोः सुरादिरागविस्मारकममृतं जातं तद्वत् किमुत नारीणां तत्राप्यस्माकमिति भावः । यद्वा नृणां मध्ये तव यदेवम्विधमधरामृतं तन्नो देहीत्यर्थः । मानिनीपक्षे ननु नैतावतामस्मान्तःकरणनिष्ठदाहस्य निवृत्तिर्भविष्यतीत्यतोऽन्यदपि किञ्चित्तदुपशामकमाज्ञाप्यतामिति प्रार्थयन्तमिवालक्ष्य विरहव्याकुलत्वादीपत्तिरोहितस्य भावः सर्वमप्यनुजानन्ति । सुरतेति । नोऽस्माकमधरामृतं ते तुभ्यं स्वस्मै वितर देहि तेन तव मनोरथपूर्तिर्भविष्यति यतः सुरतवर्द्धनं शोकस्यास्मदप्राप्तिहेतुकस्य नाशनम् अनुभूतपूर्वत्वादत्र संशयो न कर्तव्य इत्याशयेनाहुः । स्वरितो वेणुर्यस्य तेन त्वया पूर्वं सुष्ठु चुम्बितं किञ्चेदममृतम्वागगोचरमात्रानुभूतमाहात्म्यमित्याहुः । इतरेति । सर्वेषामपि नृणां योषिदधरामृतमितररागविस्मारकत्वेन प्रसिद्धम् असुराणां मोहिन्यधरामृतपानाशया क्षीराब्धिमन्थने त्वमृतविषयकरागस्य त्यक्तत्वादिति भावः । तथापि यथोक्तामृतास्वादनसमये प्रायो नायकस्य पराजयो भवत्यतस्त्वया तदानीं धीरता विधेया नोचेदुपहासो भविष्यतीति हितैषित्वात्प्रथममेव त्वां सूचयाम इत्याशयेन सम्बोधयन्ति । हे वीरेति । निवृत्तिपक्षे ततश्च भवदर्चनध्यानाभ्यां येषामन्तःकरणशुद्धिरैकाग्र्यञ्च प्राप्तं तेषां विवेकवैराग्यादिसम्पन्नानामधिकारिणां नृणां धारयत्यज्ञानादिकं सर्वमिति धरः सर्वाधिष्ठानभूतः परमात्मा तस्य सम्बोधने हे धर ! तेन यथोक्तस्य तव प्रतिपादिकानामस्माकमुपनिषदाममृतम् अस्मच्छ्रवणजन्यज्ञानामृतं वितर करुणया देहि यतस्त्वमेव वीरः "नहि ज्ञानेन सदृशं पवित्रमिह विद्यत" इत्युक्तत्वात्सर्वोत्तमज्ञानामृतदातृत्वाद्दानशूरस्तदन्तःकरणवृत्त्यारूढः सन् तदज्ञानादिसमस्तशत्रुध्वंसकरत्वाद्युद्धशूरश्चेति "ददामि बुद्धियोगं तं येन मामुप यान्ति ते । तेषामेवानुकम्पार्थमहमज्ञानजं तमः" इत्यादिध्वनयन्त्यः हे वीरेति नच स्वस्य त्वदभिन्नज्ञानवतस्त्वत्प्रवृत्तिानिवृत्तिः शक्या प्रियो हि ज्ञानिनोऽत्यर्थमित्याशयेनाहुः । सुरतस्य परस्परप्रीतेर्वर्द्धनं नचैतदमृतं विना जीवस्य शोकनिवृत्तिः सम्भवतीत्याशयेनाहुः । शोकस्य तदुपलक्षितबन्धस्य नाशनं "तरति शोकमात्मवित् ब्रह्मविदाप्नोति परं तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति"श्रुतेः नचेदमस्मद्विचारमन्तरा लभ्यमित्याशयेनाहुः । स्वरितो ध्वनिव्यञ्जितो वेणुस्थानीयोपनिषत्कदम्बो येन तेन वेदान्ताभ्यासवता पुरुषेण सुष्ठु चुम्बितं सम्यगास्वादितं "वेदान्तविज्ञानसुनिश्चितार्थाः"इत्यादिश्रुतेः अनात्मपदार्थेषु राग एवानर्थकरः स च मिथ्याज्ञानविजृम्भितस्तत्त्वज्ञानामृतेन मिथ्याज्ञाननिवृत्त्या निवर्तते इत्याहुस्तत्रानात्मपदार्थेषु रागस्तस्य नाशकं यं लब्ध्वाचपरं लाभमित्युक्तत्वात् ॥१४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यास्तु अधरामृतपानेनैव कृतार्था भविष्यामस्तदागत्य

**अटति यद्भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम् ।**
**कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ १५ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सम्पादयेत्याशयेनाहुः। सुरतवर्द्धनम् शोकनाशनं तापत्रयनाशनम् स्वरितेन नादितेन वेणुना सुष्ठु चुम्बितं नादामृतवासितमिति भावः। इतरेषु ऐहिकामुष्मिकेषु सुखेषु रागमनुरागं विस्मारयति त्वदेकप्रवणं जनं करोतीति तथा तत् एवंभूतं तेऽधरामृतम् हे वीर! वितर देहि ॥ १४ ॥

---

भाषा टीका।

हे वीर! रति प्रेम को बढायवे वारो शोक के नाश करवे वारो स्वर के सहित जो वंशी ताते चुंबित होवे वारो मनुष्यों की और सब इच्छान को भुलायवे वारो जो आप को अधरामृत ताको हमे प्रदान करो ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

किंच क्षणमपि त्वददर्शने दुःखं दर्शने च सुखं दृष्ट्वा सर्वसङ्गपरित्यागेन यतय इव वयं त्वामुपागतास्त्वं तु कथमस्मांस्त्यक्तुमुत्सहसे इति सकरुणमूचुः। अटतीति द्वयेन। यद्यदा भवान् काननं वृन्दावनं प्रत्यटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्द्धमपि युगवद्भवति एवम् दर्शने दुःखमुक्तं पुनश्च कथंचिद्दिनान्ते ते तव श्रीमन्मुखमुदुच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा जडो मन्द एव निमेषमात्रमप्यन्तरमसह्यमिति दर्शने सुखमुक्तम् ॥ १५ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

काननमटतीति श्लेषेणारसज्ञत्वमभिप्रेतम्। अन्हीति तदानीं तत्र निजगमनाशक्तिरुक्ता युगायते दुःखसमयस्य दुरतिक्रमत्वेन विवृद्धिमिव गतत्वात् इति परम दुःखम् अतश्चिरमदर्शनदुःखमसह्यमिति सत्वरं दर्शनं देहीति भावः। अपश्यतामस्मादृशजनानां किंवा सर्वेषामपि व्रजजनानां किमुतास्माकमिति यद्वा तावकाइतिवत् त्वज्जनानां कुटिलाः कुन्तलाश्चूर्णकुन्तलाः उपरिभागे यस्मिन् तत् अत एव श्रीमुखं श्रीयुक्तं श्रीमुखं वेणुधारणादिना वा उदीक्षतां चेति चकारान्वयः अन्यत्तैर्व्याख्यातं यद्वा दुर्वितर्क्यप्रकृते कदापि त्वत्तोऽस्माकं न किंचित्सुखं जातं किंत्वदर्शने दर्शनेऽपि दुःखमेवेत्याहुः। अटतीति पूर्वार्द्धेन। व्यक्तमेवादर्शने परमदुःखम् अतश्चिरमदर्शनदुःखं सोढुं न शक्नुमः सत्वरं तद्दर्शनं देहीति भावः। दर्शनेऽपि दुःखमाहुः। कुटिलेति। जडः अनभिज्ञः अनिमिषत्वाकरणात् पश्यत इति शेषः तादृशश्रीमुखस्य संदर्शनासंपत्त्या दुःखमेवेत्यर्थः।अहो बतास्माकं परमदौर्भाग्यमिति भावः। तथापि तद्दर्शनोत्कण्ठा नितरां बोधितैव दर्शने निमिषमात्रव्यवधानासहिष्णुत्वात् यद्वा उदीक्षमाणानां सतां पक्ष्मकृत् कृती छेदने यः पक्ष्माणि कृन्तति अकारप्रश्लेषेण स एव अजडः रसज्ञः विद्वान् वा यद्वा दृशां पक्ष्मच्छित् अजड एव उदीक्षताम् उच्चैः पश्यतु वयन्तु पक्ष्मच्छन्नदृशो जडाः साक्षादपि किं पश्याम इति भावः। एवमधिकविवक्षापि सिद्धैव ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

युगायते दुःखसमयस्य दुरतिक्रमत्वेन इति परमदुःखम् अतश्चिरमदर्शनदुःखमसह्यमिति सत्वरं दर्शनं देहीति भावः। अपश्यतां सर्वेषामपि व्रजजनानां किमुतास्माकं कुटिलाः कुन्तलाश्चूर्णकुन्तला उपरि भागे यस्मिन् तत् स्वत एव श्रीयुक्तं मुखम् उदीक्षतां चेति चकारान्वयः भवत्वन्येषां पक्ष्मकृत् उदीक्षमाणानामपीत्याक्षेपार्थः। अन्यत्तैः यद्वा दुर्वितर्क्यप्रकृते कदापि त्वत्तोऽस्माकं न किंचित्सुखं जातं प्रत्युतादर्शनकाले दर्शनकालेऽपि दुःखमेवेत्याहुः। अटतीति पूर्वार्द्धेनादर्शनकाले दुःखमुक्तं दर्शनकालेऽपि दुःखमाहुः। कुटिलेति। जडः अनभिज्ञः अनिमिषत्वाकारणात् शपनीय इति शेषः। यद्वा उदीक्षमाणानां सतां पक्ष्मकृत् कृती छेदने यः पक्ष्माणि कृन्तति स एव अजडः रसज्ञः विद्वान् वा यद्वा स्वदृशां पक्ष्मच्छेदेवाजडः स एव च उदीक्षताम् उच्चैः पश्यतु वयं तु पक्ष्मच्छन्नदृशो जडाः साक्षादपि किं पश्याम इति भावः ॥ १५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

त्रुटीति अविभक्तिनिर्देशः आर्षः चक्षूरूपविघाताज्जडः ॥ १५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किंच क्षणमपि त्वद्विश्लेषमसहमानाः सर्वसङ्गपरित्यागेन वयं यतय इव त्वामुपागतास्त्वं तु कथमस्मांस्त्यक्तुमुत्सहस इत्यभिप्रेत्याहुः द्वाभ्याम्। भवान् यत् यदा अन्हि वृन्दावनं प्रत्यटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवत्येवमदर्शने दुःखमुक्तं पुनश्च कथंचिद्दिनान्ते तव कुटिलाः कुन्तला यस्मिंस्तच्छ्रीमन्मुखम् उत् उच्चैरीक्षमाणानां तेषां दृशां पक्ष्मकृद्ब्रह्मा जडो मन्द एव निमेषमात्रमप्यसह्यमिति दर्शने सुखमुक्तम् ॥ १५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किंच अहोरात्रमस्माकं त्वत्संचिन्तनमेवान्यो व्यापारो नेष्यते इत्याशयेनाहुः। अटतीति। यद्यदा यस्मिन्नन्हि काननमटति गच्छति तदा तस्मिन्नान्हि त्रुटिः त्रुटीति प्रातिपदिकग्रहणं तेन विभक्त्यन्तं पदं लक्षयति अणुद्वयलक्षणः परमाणुः त्रयः परमाणवस्त्रसरेणुः त्रयस्त्रसरेणवस्त्रुटिः सः कालावयवः नः त्वामपश्यतामस्माकं युगायते युगवदाचरति

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

दिव्यद्वादशसहस्रपरिमितसमानो वर्त्तते पक्ष्मनुदन्ति व्यथयन्तीति पक्ष्मनुदः तादृश्यो दृशो यासां तास्तथा तासामनिमिषनेत्राणां तव मुखमीक्षतामीक्षमाणानामस्माकं प्रवृत्तिर्जडवद्चेतनवन्निश्चेष्टनमित्यर्थः। अनेन बहुकालोऽपि त्रुटितुल्य इति सूच्यते त्रुटॄशामिति पाठे त्रुर्मानवस्य तव मुख — मीक्षतां दृशां पक्ष्म जडवदुत्क्षेपावक्षेपलक्षणप्रवृत्तिशून्यमित्यर्थः। अनेन मानवस्याप्यनिमिषत्वं सूच्यते ॥ १५ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

प्रातर्व्रजतो गमनात् सायंव्रजागमने च प्रकारभेदेन दुःखकारित्वादन्तरालकालेऽपि सुतरां दुःखद एव त्वमिति निरूपयन्त्य आहुः। अटतीत्यादि। हे रमणेति बोध्यं यत् यदा अन्हि दिने भवान् काननम् अटति तदा त्वामपश्यतां मद्विधानां त्रुटिः त्रुटिकालः युगमिवाचरति दुःखदत्वात् तदनन्तरं वा समये कदाचिद्दर्शनं भवति तत्रापि निमेषो युगायत इत्याशयेन विधिं प्रत्यसूययाहुः। कुटिलेत्यादि। ते तव श्रीमुखमुदीक्षतामुदीक्षमाणानां च दृशां पक्ष्मकृत् विधाता जडः तं प्रति किंब्रूमः अतोऽस्माकं कस्यामपि दशायां न स्वास्थ्यमिति भावः ॥ १५ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवं त्रिविधा निरूप्य पुनस्तामस्यस्त्रिविधा निरूप्यन्ते देवनिन्दिकाः सात्त्विकतामस्यः भगवन्निन्दिकास्तामसतामस्यः स्वनिन्दिका राजसतामस्य इति। अटतीति। भवान् अन्हि काननं यदाटति तत्र दिवसे त्रुटिः युगायते तत्र निमित्तं त्वामपश्यतामिति यदा पुनः पश्यामः तदा कुटिलकुन्तलं श्रीमुखं ते उदीक्षतां नोऽस्माकं यः पक्ष्मकृत् ब्रह्मा. स जडः यथा देवानां पक्ष्म न करोति अलौकिकद्रष्टृत्वात्तदपेक्षयात्यलौकिकद्रष्टृत्वात् अस्माकमपि पक्ष्मकरणमनुचितम् अतोऽनुचितकरणात् जडः देवा हि बहुकालं जीवन्ति तथा वयमपि न कृताः त्रुटिर्युगायत इति त्रुटिशब्दोऽस्त्रियां यदि सार्थकं गमनं भवेत् तथापि न काचिच्चिन्ता परमन्हि काननमेवाटति ननु कानने कश्चन पुरुषार्थः अस्माकञ्च न बहिर्गमनं सम्भवति ॥ १५ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्चास्माकं दुरदृष्टमेव दुःखदं तत्र त्वं किं कुर्या इत्याहुः। यत् यदा भवान् काननं वृन्दावनमटति गच्छति तदा त्वामपश्यतामस्माकं गोपीजनानां त्रुटिः क्षणस्य सप्तविंशतिशततमो भागः सोऽपि युगतुल्यो भवति। क्लीवत्वमार्षम्। दिवसे त्रैमासिकमेव त्वद्विरहदुःखं सर्वेषां व्रजजनानामस्माकन्तु त एव त्रयो यामाः शतकोटियुगप्रमाणा यद्भवन्त्यत्र दुरदृष्टं विना किमन्यत् कारणं भवेदिति भावः। पुनश्च कथञ्चिद्दिनान्ते श्रीमन्मुखं तव उदीक्षतामुत्कण्ठया ईक्षमाणानां तेषामेव गोपीजनानां दृशां पक्ष्मकृत् पक्ष्मस्रष्टा विधाता जडो निर्विवेको दुःखं करोतीति शेषः। एवञ्च त्वददर्शने दुष्पार एव दुःखसिन्धुः दर्शने तु पक्ष्मोद्भवो निमेष एव यो दर्शनविरोधी सोऽपि नवशतत्रुटिप्रमाणो भवन्नवशतयुगायते इत्युभयथापि दुःखं दुरदृष्टवशादेवेति भावः। त्रसरेणुत्रिकं भुङ्क्ते यः कालः स त्रुटिः स्मृतः। शतभागस्तु वेधः स्यत्तैस्त्रिभिस्तु लवः स्मृतः। निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षण इति मैत्रेयः। यद्वा। कृती छेदने। दृशां स्वचक्षुषां पक्ष्मकृत् पक्ष्मच्छेत्ता अजडश्चतुरो जनस्ते श्रीमुखमुदीक्षतामुत्कर्षेण पश्यतु ननु वयमचतुरा इति भावः ॥ १५ ॥

———

केन चित्कृता विशुद्धरसदीपिका।

तथा वेणुनेति। कर्तृत्वोक्त्याऽचेतने चेतनाधायकत्वं ततश्च दर्शने दुःखमसहमानाः परमार्त्या स्वपूर्ववृत्तमावेदयन्ति। अटतीति। अहो भवान् यदा अन्हि काननमटति तदा त्वामपश्यतां किमुत रात्रावित्यर्थः। तथा कुटिलकुन्तलं श्रीयुतं मुखमुदीक्षतां किमुत गह्वरवनान्तरमितिभावः। पक्ष्मकृत् निमेषकर्ता जडः परदुःखानभिज्ञः किमुत वनकुञ्जादिनिर्माता यद्वा उदीक्षतां पक्ष्मकृत् यः पक्ष्माणि कृन्तति स एव अजड इति रसज्ञः विद्वानित्यर्थः। यश्च द्रुमलताद्यन्तरितं त्वां समानीय दर्शयेत्सतु परमोपकारी परमविद्वांश्च तादृशश्च भवानेवेति भावः॥ १५ ॥

———

श्रीरामनारायणकृतभावभावविभाविका।

वितारिष्यामि किन्त्वरया तत्र दर्शनविलम्बस्यासह्यत्वं दर्शयन्त्य आहुः। अटतीति। यदिति यदा भवान् अन "प्राणने" इत्यस्मात् भवस्य दुग्धकामस्यापि प्राणो जीवनभूतः किमुत कामिनीनां नः किञ्च त्वयान्तत्वाज्जलन्तत्वं यद्वा सामान्यतः सर्वस्य भवस्य जीवनभूतोऽधिष्ठानतया सत्तास्फूर्तिप्रदः यद्वा भवत्यस्मादिति भवस्य अनत्यस्मादित्यन् सचासौ सच भवान् सत्तालाभजीवनहेतुः सर्वं खल्विदं ब्रह्म तज्जालानिति श्रुतेः तर्हि किमुवाच्यमस्मज्जीवनहेतुरिति यद्वा भवस्य जन्मनो जीवनः साफल्यहेतुर्यद्दर्शने एव जन्मसाफल्यं यद्वा काननं भाति प्रकाशयति वाति सुगन्धयति अनिति जीवयतीति तथा स भवान् काननं केवलमटति न किञ्चिदपि तत्र कार्य्यं साधयति तत्र काननमित्यनेन वननामानिर्देशेन का कुत्सितमस्मद्विरहदुःखदत्वादाननं यस्मिन्निति प्रियमुखे तथोक्त्यनौचित्याद्वा कानि कुत्सितान्येवासुन्दरतया दर्शनीयानि पक्षिमृगाद्याननानि यस्मिन्निति नास्मन्मुखानीव तव दर्शनयोग्यं तत्र किमप्यस्तीति वृथैव तत्राटनं यद्वा गोपकुमाराणां सुन्दरमुखानां तत्र वर्त्तमानत्वात् भगवद्विहारवनपक्षिमृगादीनामपि कुत्सिताननत्वासम्भवात् कुत्सितानि त्वद्विरहदुःखकालत्वेन स्वग्लान्यान्वितानि आननानि यस्मात्त्वदीयपद्ममनात् यद्वा कं सुखरूपं त्वदीममाननं यस्य तत्काननं वृन्दावनस्थावरजङ्गमानां सर्वेषां चेतनत्वात्प्रेमरसान्वितत्वेन त्वदेकजीवनत्वात् त्वद्ध्यानपरतया जडीभूतत्वेऽपि त्वद्दर्शने मुकुलपुलकसुमनोविकासप्रहासमध्वानन्दाश्रुस्रावदर्शनात् भवांश्च स्वमुखदर्शनेन नः सुखदानवत्सुखदानायैवाटवीति न वृथाटनं तथापि नस्त्वत्तस्त्रुटिततनूनां त्रुटिर्युगायते

**पतिसुतान्वयभ्रातृबान्धवानति विलङ्घ्य ते ऽन्त्यच्युतागताः।**
**गतिविदस्तवोद्गीतमोहिताः कितव ! योषितः कस्त्यजेन्निशि ॥ १६ ॥**

### श्रीरामनारायणकृतभावभावविभाविका ।

दुःखकालत्वेन कालात्मकतया युगकाल इव दुस्तरतामेति किमु वाच्यं त्वददर्शने त्रुटेर्युग इवाचरणं त्वद्दर्शने पक्ष्मप्रतिबन्धोऽपि दुःसह इत्याहुः। कुटिलकुन्तलमिति। तव श्रीमुखं नित्यश्रियान्वितं मुखमुदीक्षतामुत्कृष्टतया निविष्टचित्ततया ईक्षतां किम्भूतं तत् कुटिला वक्राः कुन्तलाः कुं पृथ्वीं स्वशोभया तलमधः कुर्वन्तीति तथाभूता अलका यस्मिन् निशालिङ्गितानिशापतिवदस्मद्धृत्कुमुदविकासहेतुः यद्वा कुटिला मुखावरणेन दर्शनप्रतिबन्धकतया कपटयुताः कुन्तला यस्मिन् कृष्णवर्णानां स्निग्धत्वेऽप्यहो कौटिल्यमिति भावः तत्पश्यतां नः पक्ष्मकृद्ब्रह्मासर्वज्ञतयाबुद्ध्याधिष्ठातृदेवत्वेन प्रसिद्धोऽपि जड एव यत आत्मनो निमेपरहितनेत्राष्टकमिन्द्रस्य मिथ्याविषयजातदर्शनायानिमेषदृक्सहस्रमस्माकं सच्चित्सुखात्मकं कृष्णवपुः पश्यतां गोपीजनानां दृग्द्वयेऽपि पक्ष्मकृत् कथं जडतामतीयात् यद्यधुनापि त्वन्मुखमुदीक्षतां पक्ष्मकृत्पक्ष्मच्छेदकः स्यात् तदा अजडो यथावत्सर्वज्ञ एव भवेत् यद्वा यः पक्ष्मकृत्तच्छेदकस्तथैवाजडश्च स ते कुटिलकुन्तलं श्रीमुखम् उदीक्षतां पश्यतु वयन्तु निमेषकृतप्रतिबन्धाः प्रेमजडीकृतचित्ताश्च कथम्पश्याम इति भावः ॥ १५ ॥

---

### श्री धनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो अधरामृतायोग्यकालेऽपि त्वद्विरहोऽस्माकमसह्यः किमु वक्तव्यमस्यां रात्राविल्याशयेनाहुः। अटतीति। भवान् स्वतन्त्रः वारयितुमशक्यः यदा दिने दिने काननं वृन्दावनं प्रति अटति गच्छति तदा त्रुटिः क्षणस्य कश्चिद्देशोऽपि त्वामपश्यतां व्रजस्थानां सर्वप्राणिनां युगवत्प्रतीयते किमु वक्तव्यमस्माकं पुनश्च कथंचिद्दिनस्य परिक्षये व्रजं प्रत्यागतस्य तव कुटिलकुन्तलाननं श्रीमुखमुद्वीक्षमाणानां प्राणिनां दृशां पक्ष्मकृद्ब्रह्मा जडो मन्दः भवच्छ्रीमुखापेक्षयाऽतिक्षुद्रसुखविषयदर्शनार्थं देवानां पक्ष्म न कृतवान् अलौकिकविषयदर्शनपराणामस्मदादीनां तु तत्कृतवान् कालं च तेषां महान्तं कृतवान् अतस्तस्य जडत्वं स्पष्टमेवेति भावः। तथाच निमेषप्रतिबन्धोऽपि यत्रासह्यः दुःखप्रदस्तत्रैवं विधसमये बहुकालं त्वद्विरहं कथं सहामस्तस्मात्कृपां कुर्वित्याशयः अनभिज्ञापक्षे किञ्च प्रत्यहं क्षणमपि त्वददर्शने दुःखदर्शनेच सुखमनभूय सर्वसङ्गपरित्यागेन यतय इव त्वामुपागतास्त्वन्त्वेवंविधा अप्यस्मान् परित्यज्य गत इत्यहो कष्टमिति सकरुणमाहुः। अटतीति। त्वामपश्यतां त्रुटिरपि युगायते त्वन्तु सूर्योदयादारभ्य तदस्तपर्यन्तं वनमटसि तत्रापि तव गमनं यदा सार्थकं भवेत्तर्हि स्याद्यथाकथञ्चित्सन्तोषः परन्तु दिनमात्रं वृथा काननमेवाटसि अस्माकन्तु तदत्यन्तमसह्यमिति भावः। दर्शनसमयेऽनिमेषमात्रमप्यन्तरमसह्यमिति दर्शनसुखमुक्तम् उदीक्षतां मध्ये पक्ष्मच्छेदकः स एवाऽजडः प्रतिबन्धकनिवृर्तकत्वात् कुशल इति वा तथा च तत्प्रतिबन्धकस्याङ्गस्यापि छेदनीयत्वात्तत्सुखस्योत्कर्षद्योत भावः। यद्वा अस्माकमयं सुखजनक इतिभ्रमाद्वयं दुःखसमुद्रपतिताः विचारे कृते तु तव दुःखजनकत्वमेव सिध्यति सर्वदा तथैव तव प्रवृत्तिदर्शनादित्याशयेनाहुः। अटतीति। तथाच प्रयोजनं विना चिरकालं वने भ्रमणं दर्शनकाले कुटिलकुन्तलैर्मुखस्याच्छादनञ्चेत्येतत्सर्वं केवलमस्मद्दुःखायेत्यर्थः। किञ्च तवैव कोऽपराधो दैवमप्यस्मद्दुःखाय बद्धपरिकर इत्याहुः।पक्ष्मकृत् इति तस्माद्बहुजातमितः परं करुणा विधेयेति भावः।मानिनीपक्षे ननु संप्रतियुष्मद्गर्वशैथिल्यं जातं वर्त्तते प्रकटिते तु मयि पुनर्गर्वगिरिश्रृङ्गारूढाः भविष्यथ इति चेदस्मदर्थं नागम्यतां यासान्तु त्वद्दर्शनादर्शनयोः सुखदुःखसागरे प्रवेशस्तदर्थमेवागम्यतामित्याशयेनाहुः। अटतीति। निवृत्तिपक्षे यथोक्तज्ञानामृतरहितानां क्षणमात्रमपि कालो दुःखकालत्वान्महानित्याहुः। अटतीति। त्वामपश्यतामह्नि अनिर्घातलक्षणे दिने संसृतिलक्षणं यत्काननं तद्भवान् यदटति तत्र त्रुटिरपि कालो युगवद्भवति "मुखं निःसरणे वक्रे,, इति कोशात् श्रियःधर्मादिसम्पत्तेः निःसरणं यस्मात्तथाभूतं चेतनं कुटिलः कुन्तलो जवो विषयाभिमुखो वेगो यस्य तादृशमुदीक्षतां मध्ये यस्तुभ्यं त्वत्प्राप्त्यर्थं दृशां चक्षुरादीन्द्रियाणां पक्ष्मकृन्निरोधकः स एवाजडश्चेतनस्त्वत्स्वरूप इत्यर्थः ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वात्मनि त्वय्यत्यन्ततो ऽनुरक्ताः अन्यत्र विरक्ता अतोऽनुग्रहं कुर्वीति काश्चिदाहुः। अटतीति द्वाभ्याम्। यत् यदा काननं प्रति गाश्चारयितुमटति तदा त्वामपश्यतामस्माकं गोपीजनानां त्रुटिरपि क्षणार्धमपि युगायते युगवद्भवति दिनान्ते तव श्रीमन्मुखमुदीक्षतामुद्वीक्षमाणानामस्माकं तु दृशां पक्ष्मकृत् प्रजापतिर्जड इति मतिर्भवति ॥ १५ ॥

---

### भाषा टीका।

हे प्रभो ! आप जब दिनमे वनको गोचारण को जाओहो तब घरमे आपकूं न देखवे ते हमारो क्षणको आधो भी काल युगकी नांई बीते है हे कपटी ! जा समे सांझको जब वनमे ते आवो हो तब आपके दर्शन करवेमे जो पलक पडें हैं तब या पलक बनायवे वारे ब्रह्मा को हम मूर्ख समझें हैं कि वाने पलक क्यों बनाये ॥ १५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्मात् हे अच्युत ! पतीन्सुतानन्वयांस्तत्संबन्धिनो भ्रातृन् बान्धवांश्चातिविलङ्घ्य तव समीपमागता वयम् कथंभूतस्य गतिविदोऽस्मदागमनं जानतः गीतगतीर्वा जानतः गतिविदो वयं वा तवोद्गीतेनोच्चैर्गीतेन मोहिताः हे कितव ! शठ ! एवंभूता योषितो निशि स्वयमागतास्त्वामृते कस्त्यजेत् कोऽपीत्यर्थः ॥ १६ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

बान्धवाः मातापित्रादयः एषां पूर्वोक्तयुक्त्यैव व्याख्या अति तेषां वाक्यातिक्रमात् स्नेहादिपरित्यागाच्चातिशयेन विशेषेण च धर्माद्यनपेक्षया समूलत्वेन लङ्घयित्वा अतिक्रम्य आगमने हेतुः हे अच्युतेति प्रपन्नजनरञ्जनादिमाहात्म्यतः कदाचिदपि त्वच्च्युतेरसम्भवादित्यर्थः । किञ्च गतिं स्वभावम् आत्मनः अस्माकञ्च वेत्सीति गतिविदः यद्वा तव ज्ञानम् अभिव्रतत्वं विद्म इति गतिविदो वयं सुव्रतत्वादिमाहात्म्यम् अस्माकञ्च त्वदेकगतित्वं जानासीति विदतः किम्वा कारुण्यादिमयं त्वत्स्वरूपं जानन्त्य इत्यर्थः । किञ्च उद्गीतमोहिताः कितव ! हे कपटिन् ! निजस्वभावान्यथाकरणात् निशीति रात्रौ भीरूणां स्त्रीणां त्यागोऽनुचित एवेति भावः । त्यजेदिति संभावनायां सप्तमी कितवेति सम्बोधनेन कः कितवोऽपि त्यजेत् अपितु कितवोऽपि त्यक्तुं न शक्नुयादिति अतस्त्वयि न केवलं धूर्त्तत्वं परमाकृतज्ञत्वमपि पर्य्यवस्येदिति भावः । अथवा रात्रौ निर्जने निजान्तिके उद्गीतेन रिरंसया प्रागाकृष्यानीतानां गोपसुन्दरीणां पश्चात्त्यागाद्धूर्त्त एवासीत्यर्थः । अतो व्यक्तीभूतं धूर्त्तत्वम् अधुना दर्शनं देहीति भावः । अन्यैस्तैर्व्याख्यातं यद्वा कितव धूर्त्त किम्वा धूर्त्तस्य तव योषितः त्वद्वद्वयमपि धूर्त्तास्तव धूर्त्तत्वं सर्व्वं विद्म एवेत्यलमस्मासु धूर्त्तत्वेनेति भावः । एतच्च दर्शनप्रार्थनचातुर्य्यं ज्ञेयम् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवञ्च सति तदेतदेव कृतमत्यन्तमयुक्तमित्याहुः । पतीति । बान्धवा मातापित्रादयः अति तेषां वाक्यातिक्रमात् स्नेहादिपरित्यागाच्चातिशयेन विशेषेण च धर्माद्यनपेक्षया समूलत्वेन लङ्घयित्वाऽतिक्रम्य आगमने हेतुस्तवोद्गीतमोहिता इति हरिण्य इवेति भावः । नच यादृच्छिकमुद्गीतमपि तु ज्ञानपूर्व्वकमेवेत्याहुर्गतिविद इति । अस्मदागमनं जानत इति भावः । यद्वा । ननु भवत्यः परमधीराः गीतमात्रेण कथं मोहितास्तत्राहुः । गीतगतिविशेषान् जानन्त्य इति । यैः शक्रशर्व्वपरमेष्ठिपुरोगा इति भावः । यद्वा । भवत्यो विदग्धा ममैतादृशं स्वभावमपि जानन्तीति कथं न सावधाना जातास्तत्राहुस्त्वत्स्वभावविदोऽपि वयमिति मोहनमन्त्रप्रायत्वात्तद्गानस्येति भावः । अहो तदप्यास्तां स्वयमेव तथानीता योषितः पुनर्निशि कस्त्यजेत् सम्भावनायां लिङ् न कोऽपीत्यर्थः । अत एव हे कितव ! वञ्चनशील अनेनान्योऽपि कितवः कस्त्यजेत् सर्व्वस्यापि तस्य कैतवे लब्धेनैवार्थेन स्वव्यवहारसाधकत्वं भवतु तस्यापि तिरस्कारित्वमिति तत्रापि विशेषः । अतः एव हे अच्युत ! स्वगुणादव्यभिचारिन्निति साञ्चयेव तवैषा संज्ञेति भावः ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्ति अन्तिकं ते हीति पाठे त्वामित्यर्थः । कितव ! धूर्त्त ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्माद्धे अच्युत ! पतीन् सुतानन्वयांस्तत्संबन्धिनः भ्रातॄन् बान्धवांश्चात्यन्तं विलङ्घ्य ते तवान्ति समीपमागता वयं कथंभूतस्य गतिविदः अस्मदागमनं जानतः गतिविदो वयं वा तत्रोद्गीतेन मोहिताः हे कितव ! धूर्त ! एवंभूता योषितो निशि स्वयमागतास्त्वां विना कस्त्यजेन्न कोऽपीत्यर्थः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवदुन्मुखस्मरणमुग्धा गोप्यो रतिविहारसमयोऽयमिति निरूप्य सुरतसंविदाधिं क्षिपन्ति । पतीति । ते तव सकाशमागता हि यस्मात् हे कितव ! कः पुरुषः निशि योषितस्त्यजेदित्यन्वयः आगमने हेतुं वदन्ति गतिविद इति गतिविदः आकर्षणलक्षणगानज्ञस्य तवोद्गीतेन स्थितोत्थानकरगानेन मोहिताः मूर्च्छां प्रापिताः ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

दिवसविहारस्त्वेवमेव रजनीविहारो वा निराविलो भवितुं नच तथा यतो वेणुनादेन वनगानीय त्यक्ष्यन्तीत्थस्त इति तत्कालत्यक्तदेहाः सद्यो याः सद्यः सङ्गतास्ता एवोचुः पतिसुतेत्यादि हे कितव किन्त्वास्ति सर्व्वमेवानयेति परसर्व्वस्वापहारी कितवः तस्य संबोधने तथा पत्यादीन् अतिशयेन विशेषेण लङ्घयित्वा तत्सम्बन्धिनो देहान् विहायेत्यर्थः । अतिविशदाभ्याससमर्थाः ते तव अन्ति अन्तिकमागता हे अच्युतेति संबोधनेनाच्युतसमीपागमने अच्युतत्वमेव भवितुमुचितं तत्र कस्त्वदन्यो निशि योषितस्त्यजेत् कीदृशीस्तव गतिविदः तवोद्गीतमोहिताः यद्वा तव कीदृशस्य गतिविदः शरण्यस्य ॥ १६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं देवत्वं भगवता संपादितं मूर्खो ब्रह्मा तादृशीनां पक्षकृत् तदपेक्षया हीना आहुः । पतीति । हे अच्युत ! स्वतः कामनिवृत्तिभयरहिताः पतिः सुताः अन्वयो वंशः भ्रातरः बान्धवाः संबन्धिनः एते सर्वथा अविलङ्घ्याः तानप्यतिविलङ्घ्य ते अन्ति समागताः त्वं सर्वेषां गतिं जानासीति गतिवित् सर्वेषां वा गतिः संपाद्यते तां भवानेव दास्यतीति वयं वा गतिविदः तेषां भजने भगवद्भजनेच तारतम्यविदः किंच तव उद्गीतेन च मोहिताः अतो मोहयित्वा समानीय उभयभ्रंशार्थम् अरण्ये निशि योषितः कस्त्यजेत् सर्वदैव स्त्रियो न त्याज्याः सुतरामरण्ये सुतरां निशि यदर्थं वा समाहूताः तदप्यदस्त्वेत्यभिप्रायेण संबोधनं कितवानां वा वयं संबन्धिन्यः अतोऽस्माकं तेषु न प्रवेशः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

याश्च वेणुवादनसमये पतिभिरन्तर्गृहनिरुद्धा आसंस्ताः
सेर्ष्यमाहुः । पतीति । गतिमन्तिमां स्वासां दशमीं दशां विश्व
इति ता वयमन्ति त्वदन्तिकमायाताः । हे अच्युत ! अत्रापि
च्युतोऽभूस्तत् किं विपरीतलक्षणयैव त्वमच्युत नामेति भावः।
तर्हि किमागता इति चेदुद्गीतेन मोहिताः हतविवेकीकृताः ।
एवञ्चेत्तर्हि रे मूढाः ! सहध्वं वेदनामिति तत्राहुः । हे कितव !
शठ एवंभूता योषितो भीरूस्त्वां निर्दयमृते कस्त्यजेत् न
कोऽपीत्यर्थः । यद्वा । हे कितव ! हे मत्त ! निशि आयाता
युवतीः कः खलु युवा त्यजेत् अतस्त्वं वञ्चकोऽपि वाञ्छित एवा-
भूरिति भावः । "कितवस्तु पूमान् मत्ते वञ्चके कनकाह्वये"
इति मेदिनी ॥ १६ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

एवं दक्षिणानां दाक्षिण्यगीतवधाय साधकचरीषु या
भगवता वेणुनाकृष्टा अलब्धविनिर्गमास्त्यक्तदेहाः समुपलब्धप-
रिकरकलेवरास्ताः ससंरम्भमिवाहुः । पतीति । अत्र योगमायाक
ल्पः । अपि पतयः आसामेव नतु सर्वासामिति नहि व्रज
एकविध एव प्रेमा रसकदम्बचूडामणेः परमप्रेम्णो विलासाः सर्वेऽपि
सावकाशाः समुल्लसन्तः सुखयन्ति रसिकजनानिति योगमा-
ययापि यावतानौचित्यं नापतेत्तावदेव कल्पयितुमुचितमिति
ज्ञेयं यद्यपि परम प्राकृतलीळायां न किमप्यनुचितं तथापि
नित्यदोषोपरक्ते श्रोतृचेतसि न तत्परता समुदेति तथा सति याः श्रुत्वा
तत्परो भवेदित्यादावुपवर्णितो भगवत्प्रयासो वृथैव स्यादित्यवधेयं
विशेषजिज्ञासायां भक्तिमञ्जूषा द्रष्टया सुताश्च प्रजापत्यादीना-
मेवेति प्रागेव निर्णीतं बान्धवाश्च मातृपित्रादयः । अतीति । तेषां
वाक्यातिक्रमात् स्नेहादिपरित्यागाश्च विलङ्घ्य धर्माद्यनपेक्षया समू
लमुल्लंघ्य अतिक्रम्येत्यर्थः । तथा आगमने हेतुः तवोद्गीतमोहिताः
हरिण्य इवेति भावः। ननु परमधीराः कथमुद्गीतमात्रेण मोहितास्त
त्राहुः । गतीति । गीतगतिविशेषज्ञाः यद्वा तव कापट्यपटुतादिगति-
विदोऽपि मोहनमन्त्रेणोद्गीतेन मोहिताः यद्वा ननु पित्रादिभिः । कथं-
न निवारितास्तत्राहुः। तवोद्गीतेनैव हेतुना तैर्मा ऊहिताः न तर्किताः
न ज्ञाता इत्यर्थः । ननु गीतमोहिता एवागता नतुस्नेहेनेत्याशङ्क्याहुः
योषित इति । प्रीतिपराधीना इत्यर्थः । ईदृशीः तत्रापि निशि कस्त्य-
जेत् सम्भावनायां लिङ् न कोऽपीत्यर्थः । अत एव हे कितव वञ्च-
नशील ! हे अच्युत ! तादृशस्वगुणादप्रच्युत इति दोषोद्धारः ॥ १६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

किञ्च नहि तव कुन्तला एव कुटिला अपि तु भवतापि
कृष्णकुटिलस्वभावतयैव ते साजात्येन शिरोधृताः ननु किं मम
कौटिल्यं तत्राहुः । पतिसुतान्वयेति । वयं पतीन् पतिंमन्यान् ततः
सुतान् स्वीकृतपुत्रान् भ्रातृपुत्रादीन् वा तेषामन्वयं वंशं वा तेषाम-
न्वयः सम्बन्धो यस्मिंस्तद्गृहं प्रवृत्तिपथमेव वा तथा भ्रातॄन् बान्ध-
वांश्च भ्रातृबान्धवानिति पितृकुलोपलक्षणं वा तत् सर्वमति विलङ्घ्य
अतिशयेनादृत एव तत्सम्बन्धासम्पत्त्या विशेषतस्तत्कुलमर्यादा-
गतधर्माद्यनपेक्ष्य लङ्घयित्वा तेऽन्ति समीपे अच्युता एवागताः प्राप्ताः
नतु तत्सम्बन्धेन मनसापि कदाचित्कचिदपि च्युताः कथमेवं सर्वत्या-
गेनागमनं तत्राहुः । तवोद्गीतमोहिता इति । त्वदीयेनासाधारणे-
नोत्कृष्टेन यत्र शक्रशर्वपरमेष्ठिपुरोगाः कश्मलं ययुरनिश्चिततत्त्वा-
स्तादृशेन गीतेन मोहिता मृगयुगीतेन मृग्य इव गतमतयः तत एव
निमित्तभूताद्वा मा ऊहितं विचारो यासां तथाभूताः यद्वा तवोद्गीते
परममाधुर्य्यरसस्नेहस्वरसौष्ठवेन श्रोत्रमनोहरतया परमाल्हादप्रदे
गीते मा यथार्थत्वमतिरेकोहिता याभिः एतद्गीतं यथा श्रवणमधुरं
तथैव सर्वथा परमसुखपर्य्यवसायीति यद्वा तवोद्गीतेनैव मा
सकलसुखसम्पत्तिर्मा स्वीया शोभा वा ऊहिता याभिः वयमेवमागता
अपि नागता इव याता यतो भवान् ऽच्युतेति हेतुगर्भसम्बोधनम्
अच्युतोऽद्रावितचित्त एव तिष्ठति न पुनर्वस्तुतस्तथा अपितु कितव
कापट्येनैवास्मत्दुःखदानविडम्बनाद्यर्थतयाचरणशील इतिसम्बो-
धनान्तरं कितवेति । ननु मया बाल्येन लीलयैव वेणुर्वादितो नाहं
वेद्मि भवत्य आगमिष्यन्तीति । तत्राहुः । गतिविद इति नत्वया मुग्ध-
भवेन वेणुर्वादितः किन्तु मुग्धमोहनभावेनैव अन्यथा बाल्य-
भावेन क्रीडायां प्रतिदिनवंशवादनेऽपि नास्माकं तथा मोहो मोहेन
धावनं वा किन्तु तद्विरहितानां स्मरस्मरणाभ्यां दहनं प्राणोद्गमनञ्च
अधुनातु मोहनेनैव श्रृङ्गाररसोत्कलितभावेन गतिविदस्तव वादने-
नैव नो गृहाद्गतिः वने गतिः पुनरीदृशी गतिः तत्र गतिविद इति नो
हृदयगतिं प्रेमविरहविह्वालितदशां तथा नो गतिं स्ववेणुध्वनिमात्रेण
विलम्बासहिष्णुतया लोककुलवेदमर्य्यादाबन्धांश्च हित्वा गमिष्य-
न्तीति तथा स्वगतिं रमणार्थमेव वनागमनं वरदानमनुस्मृत्या-
वाहनं स्वहृदयकृतं कापट्यं रमणेऽपि वञ्चनादिकं तथा कापट्येनादू-
वश्यंभाविनि भामिनीनां विवशतागतिविद एव तवेदृश मुद्गीतं तेन
मोहनमागतिरिव गतिश्च ननु ममेच्छास्वभावं बहुकालपरिचिता
अपि यूयं किन्तु मे वेणुशब्देनैवमागताः तत्रापि श्लेषेणोत्तरमाहुः
गतिविद इति । सर्वप्रकारां तव मोहनरमणकापट्यादिगतिं स्वीयाञ्च
पूर्वोदितां भूतां भाविनीं च गतिं जानन्त्योऽपि यतो मोहिता अतः
स्वात्मानमवजानन्त्य एवागता इति भावः । ननु मयि कैतवानुपलम्भे
ऽप्युपालम्भो नोचित इत्यत आहुः । योषित इत्यादि । तथाकितवत्वे
योषितः कस्त्यजेत् न को ब्रह्मापि योषित्त्यागासमर्थः पुत्री प्रतिश्रा-
वनश्रवणात् प्रार्थयमानाप्सरस्त्यागे त्वपूज्यत्वशापावगतिश्रवणाच्च
तत्रापि वने विशेषतो निशि तथा स्वोद्गीतमोहिताः स्वयमागताः
दाक्षिण्यभावस्थिता वामा वामा को दक्षो वामेन स्वीकुर्य्यात् त्वदन्यः
कितवोऽपि कस्त्यजेदिति त्वमेव कितवशिरोमणिरिति भावः नच
भगवत्स्येवं कितवोक्तिरसम्भाव्येति सम्भवति संभावना ब्रह्मेमे कितवा
इति श्रुत्यनूदितत्वात् कितवत्वादेर्ब्रह्मणि यद्वा तत्र सर्वस्वभावेन
तथोक्तिसम्भवेऽप्यत्र तथोक्तसम्भावनायामेव योजना यद्वा कितव
योषितोऽप्येवमहेयाः पूर्वनिरूपितदिशा सर्वमतिविलंघ्यागता इति
विरज्य परिव्रजनमुक्त्वा तत्र हेतुत्वेन नित्यानित्यवस्तुविवेकमाहुः
गतिविद इति तेषां गृहबान्धवादीनां गतीः दुर्लभत्वनित्यदुःख-
हेतुत्वनश्वरत्वादिरूपाः—

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभि का प्रीतिः साधितैश्चलैः ।
यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् ।
क्षवन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ॥

रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ॥
बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

इत्यादिवाक्यैस्तत्र गतिश्च निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मेत्यादि—

वाक्यैर्विदन्तीति तथा तदुक्तमपि ताभिः ।

कुर्वन्तिहि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किमिति यद्वा गृहकुलश्रुतिधर्मादीनां गतिंधूमादिमार्गेण पुनरावृत्तिलक्षणां ततो विरज्य निवृत्तिपथत्वदुपासनगतिमर्चिरादिमार्गेणापुनरावृत्तिलक्षणां विदन्तीति विदः यद्यपि—

नैते सृती पार्थजानन् योगी मुह्यति कश्चन ॥

इत्यादिना तद्गतिविदां मोहाभावोक्तिस्तथापि न तु योगिनां मायामोहनिषेधाभिप्राया नतु त्वद्वियोगिनीनां योषितां तवेद्गीतमोहितत्वनिषेधाभिप्राया इति गतिविदोऽपि तवोद्गीतमोहिता इति युक्तमेव यद्वा कथमयं भवतीनां मद्गतिज्ञानं तत्राहुः तव निगमात्मकमपि यत् उत्कृष्टमुत्तरकाण्डात्मकं स्वरूपसूचकं त्वद्वंशमुखगीतमित्यच्युतवंशगुरुलब्धं तेन जाता मा शाब्दी प्रमा ऊहिता तच्छब्दानुगुणत्वद्गुणप्रेमगुणगणे भ्यो विचारिता याभिस्तथाभूता घने निर्विके निशी व्यापारादीनां क्षेपशून्याऽवसरे "प्रविश्य रजनींयावद्ब्रह्मध्यानं समाचरेदित्यादिश्रुतेसिद्धयोषितः स्वस्मानि जुष्यमाणाः कः सुखरूपोऽपि कस्त्यजेदपि तु नेति काक्वार्थः ॥ १६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

किञ्च सर्वथाऽत्याज्या अस्मान् किमर्थं त्यक्तवानसीति न विद्म इत्याशयेनाहुः । पतीति । हे अच्युत ! भगवतोऽप्रच्युतस्वरूपत्वात्कदापि तेन वियोगो न भविष्यतीति विचार्य पतयः सुताः अन्वयो वंशः भ्रातरः बान्धवाः सम्बन्धिन एते सर्वथाप्यलङ्घ्यास्तानप्यतिविलङ्घ्य तवान्ति समीपे आगता यतस्त्वद्गतिविदः कर्मोपासनज्ञानफलजाताः तत्प्रदानाय साक्षात् दृष्टाः सर्वा अपि गतयो भगवत एव भवन्तीति वयं वा गतिविदः पत्यादिभजने भगवद्भजने च गतितारतम्यविद इति वा किञ्च त्वयाप्याकृष्टा इत्याहुस्तवोद्गीतेनोद्गीतेन मोहिताः पत्यादिविमुख्यापादकेन गीतामृतेन त्वयैव स्वस्मिन्नासक्तचित्ताः सम्पादिताः कस्त्यजेत् यस्त्वं स्वस्मिन्नासक्ताः स्वयमाहूय फलमदत्वा त्यक्तवान् स भवान् क इति न विद्म इत्यर्थः । ननु सपत्यादिसन्निधानवतः परकृन्तव्यमितिचेत्तत्राहुः कितवानां स्वस्वरूपानभिज्ञत्वास्वपरवञ्चकानां सम्बन्धिन्यः स्त्रियः अतस्तदाभिमुख्यं कदापि मास्तु त्वदेकशरणा वयं त्वयैव रक्षणीया इति भावः । अनभिज्ञपक्षे आस्तां तत् अद्य तु अन्यदप्यनुचितं कृतमित्याहुः । पत्यादीनतिक्रम्य तव समीपमागताः यतस्तवोत्कृष्टेनोद्गीतेन मोहिताः यतस्तव गतिविदः अस्मन्मोहकान् गीतगतिविशेषान् जानतः उद्गीतेन मोहिता अवश्यमागमिष्यन्तीत्यस्माकं गीतविद इति वा यद्वा तव स्वभावं जानन्त्यो विदग्धा अपि वयं मोहनमन्त्रात्मकेनोद्गानेन मोहिता एवं स्वयमेवाहूता योषितो निशि अरण्ये त्वामृते कस्त्यजेत् कापि स्त्रियो न त्याज्यास्तत्रापि निर्जनवने तत्रापि निशि तत्रापि यदर्थमाहूतास्तददत्वैवेति तवैव शठस्यैवं विधचेष्टितं सम्भवति नान्यस्येति कितवेति सम्बोधनाशयः यद्वा हे कितव ! एवम्विधः कितवोऽपि कश्चिन्नास्ति सहि कैतवालुब्धं तु स्वीकरोति नतु तिरस्करोतीति भावः । तथाच नास्त्यस्मत्यागे किमपि कारणं प्रच्युति लक्षणन्तु त्वयि नास्त्येवेत्यच्युतेति सम्बोधनाशयः मानिनीपक्षे तिष्ठत्वस्मदर्थं गमनागमनविचार एतास्तु पत्यादीनतिलंघ्य तव समीपमुपागताः किमर्थं त्यक्तवानसीत्याहुःपतीति च्युतिरहितं मत्वा समागतास्त्वं तु स्वयमेव पलायित इत्याश्चर्यमिति अच्युतेतिसम्बोधनाशयःशठंप्रति शठंकुर्यादिति न्यायमजानन् वृथैव कितवः सम्पन्नोऽसि सरलाः प्रति कैतवाचरणादित्याशयेनाहुः हेकितवेति । निवृत्तिपक्षे एवं विधाधिकारिणमपेक्ष्यैव पत्यादिस्थानीयानर्थान् वादिनो वा तिलङ्घ्य हे अच्युत स्वरूपावबोधक यस्तवोद्गीतेन समन्वयात् स विजिज्ञासितव्यः सोऽन्वेष्टव्य इत्यादि रूपेण या या विवेकज्ञानाः त्वत्प्रभुत्वेनोहिताः किन्तेन कैतव्येन व्याजेन योषितःस्वाभीष्टपतिपरायणाः योषित इव परब्रह्मणि तात्पर्येण संगता अस्मान् को वाविद्वान्निशि कर्मादिरूपेण परिणतायामविद्यायां निशि त्यजेत् क्षिपेत् ब्रह्मातिरिक्तपरतत्त्वप्रतिपादनेनान्धगर्त्तक्षयवत्पीडयन् यस्त्यजेन्न स विद्वानित्यर्थः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भूता वयं हे अच्युत ! अखण्डैश्वर्य्य ! हे कितव ! वञ्चक ! मुग्धया कृतमिदं सम्बोधनम् यद्वा "ब्रह्मदाशा ब्रह्म कितवा„ इत्यादिवेदान्तैकवेद्य ! सर्वात्मन् ! तव गतिविदः तव पुरुषोत्तमस्य सर्वविलक्षणवेणुगीतगतिविदः अत एवोद्गीतेन उत्तमेन वेणुगीतेन मोहिताः पतिसुतान् तत्संबन्धिनः भ्रातॄन् बान्धवांश्च अतिविलङ्घ्य ते तवान्ति समीपे आगताः त्वया तु त्यक्ताः एवमनन्याः योषितस्तत्रापि निशि कस्त्यजेत्तस्मादागच्छेति फलितोऽर्थः ॥ १६॥

भाषा टीका ।

हे अच्युत ! हम सब अपने पति पुत्र और वंश वारे बांधव इन सबनको त्याग आपकी लीलाके जानबे वारी आपके गीत ते मोहित हो तुमारे पास आइ हैं हे कपटि! ऐसो को होगो जो पराइ स्त्रियनको बुलाय फिर रात मे घनमे छोड जायगो ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्त्वया त्यक्तानामस्माकं प्राकनत्वद्दर्शननिदानहृद्रोगस्य

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वत्सङ्गत्यैव चिकित्सां कुर्वित्याशयेनाहुर्द्वयेन। रहसीति । श्रियो धाम ते बृहदुरःस्थलमुरश्च वीक्ष्यातिस्पृहा भवति तथाच मुहुर्मुहुर्मनो मुह्यति ॥ १७ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अतो निजकृतघ्नत्वापेक्षया दर्शनेक्षणमपि न विलम्बस्वेत्याशयेन पूर्वतो विशेषमाहुः । रहसीति । पूर्वं संविद् इत्युक्तमत्रचसम्विदमिति एकामपि सम्विदं किमुत बहीरित्यर्थः एवं पूर्वोक्तविशेषोऽत्रोह्यः हृच्छयस्य हृदि सुतरांनिश्लेषतया लीनस्यापि कामस्य उदयः प्राकट्यं यस्मात् तत् इदं प्रहसितादीनां सर्वेषामपि विशेषणं ज्ञेयं यद्वा तव हृच्छयोदयं कामविकारं भावविशेषविलसितस्मितगण्डपुलकाधरविस्फूर्त्यादिलक्षणं प्रकृष्टं हसितं यस्मिन् अनेन तत् प्रकृष्टहासयुक्ताननमिति वा प्रेम्णा वीक्षणं पूर्ववत्पदद्वयं वा बृहदिति गाढालिङ्गनाभिप्रायेण परमसौन्दर्य्यमुक्तं श्रियो धामेति अतिस्पृहायां हेतुविशेषः सापत्न्यात् शोभाविशेषाच्च वीक्ष्य आलोच्यचिन्तयित्वेत्यर्थः । स्थितानामित्यध्याहार्य्यं किम्वा भिन्नकर्तृकत्वे क्त्वाप्रत्यय आर्षः अत एवातिस्पृहमिति चित्सुखः अतिस्पृहा च तत्तदनुभवाय त्वत्सङ्गममात्राय वा तयाच मनो मुह्यतीति स्पृहायाः परमौत्कण्ठ्यं द्योत्यते किम्वा पूर्ववन्निजधैर्य्यहानिरेवोक्ता यद्वा रहसि सम्विदं प्रति यत् प्रहसिताननादिकं हृच्छयोदयादिकम्वा एवंसन्ति दृष्ट्वेत्यर्थः तनश्च पूर्ववद्रत्नां तेषाम् अधुना स्मरणादतिस्पृहादिकमिति पूर्ववज्ज्ञेयं पूर्वमपि तथा तथैव भवेत् अधुनातु तत्तदतिशयेन रमणमेवासन्नमिति भावः । अन्यत्तैर्व्याख्यातं यद्वा श्रियो धाम इति सपत्न्याक्रान्तत्वेन दोषः किम्वा परमदुर्लभत्वेनात्मनस्तदयोग्यत्वं दैन्येन सूचितं यद्वा ते श्रियः विविधाः शोभाः रूपवेषलीलादिविषयकाः इत्यनुक्तमप्यन्यत्सौन्दर्य्यादिकं सङ्गृहीतं धाम च लतागृहादि न केवलमतिस्पृहा मनश्च मुह्यति परममोहनात्तत्तन्माधुर्य्यात् अनेन मनसो दुर्निवारत्वादप्रतिकार्य्यत्वं तेन निजपरमदैन्यञ्च सूचितम् अन्यत्समानम् । अथवा नतु कृतघ्नोऽस्मि कथमेवं परमार्ता इत्यत आहुः । रहसीति । ते इत्यस्य पूर्वतः परतश्चान्वयः ते साम्विदादिकम्वा वीक्ष्य तेऽपि अतिस्पृहा तेऽपि मन इति आदर्शादौ निरीक्षणादिना भावविशेषोदयात् इति तेषां परममोहनत्वमुक्तम् अतोऽस्माकमतिस्पृहा मनोमोहश्चयुक्त एवेति अतो यावदन्यदशा न प्रभवेत्तावदेव सन्दर्शनं देहि तत एव कृतज्ञत्वं सिद्ध्येदिति भावः ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ते तव हृदयस्य कामस्य उदयं वीक्ष्य कीदृशं रहसि सम्वित् यत्र तम् । अलुक्समासः । तथा प्रकृष्टं हसितं यस्मिन्नानने तदाननं यत्र तथा प्रेम्णा वीक्षणं यत्र तत्तादृशं तदनन्तरमुरश्च वीक्ष्य तत्र बृहदिति गाढालिङ्गनेच्छाकारकः सौन्दर्यविशेष उक्तः । श्रियः सर्वसम्पन्निधेः स्वाभाविकपीतरेखारूपाया धामेति च वीक्ष्यास्माकमतिस्पृहेत्यसमच्छब्दवाच्यकर्तृकवीक्षणस्पृहायाः क्रियाया वीक्षणस्य पूर्वकालत्वात्क्त्वाप्रत्ययः । स्वातन्त्र्यविवक्षया स्पृहाया एव वा वीक्षणकर्तृत्वोपचारः । अत्रोद्भवतीति शेषः । अतिस्पृहेति तृतीयापदं वा सम्पदादित्वाद्भावेऽपि क्विप् । अतिस्पृहया मनो मुह्यतीत्यर्थः । अतिस्पृहमिति चित्सुखः । अतिस्पृहा च तत्तदनुभवाय त्वत्सङ्गममात्राय वा । तया च मनो मुह्यतीति स्पृहायाः परमौत्कण्ठ्यं द्योत्यते । यद्वा । वीक्ष्येति पूर्ववृत्तमिदं तथा तथैव भवेत् अधुना तत्तदतिशयेन मरणमेवासन्नमिति भावः । एवं स्पृहाया दुर्निवारत्वादप्रतिकार्यत्वम् । तेन निजपरमदैन्यञ्च सूचितम् ॥१७॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हृच्छयोदयं कामजनकम् ॥ १७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतस्त्वया त्यक्तानामस्माकं प्राकनत्वद्दर्शनानिदानहृद्रोगस्य त्वत्सङ्गस्यैव चिकित्सां कुर्वित्याहुः द्वयेन । रहसीति । तव रहसि संविदं साङ्केत्यं कर्म हृच्छयोदयं कामजनकं प्रेम्णा वीक्षणं च प्रहसिताननं च श्रियो लक्ष्म्याः स्थानभूतं बृहद्विशालमुरो वक्षश्च वीक्ष्यास्माकमतीव स्पृहा भवति तया च मुहुर्मनः मुह्यते मोहं प्राप्नोति ॥ १७ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं यद्गुणोकेनास्मदवस्थेयं हीति विज्ञापयन्ति रहसीति । हृच्छयस्योदयो यस्मात्तत्तथा वीक्ष्य निरूप्य अतिस्पृहा अतिशयितस्पृहया मुह्यते विभक्तिव्यत्ययश्छान्दसः बृहति दधातीति बृहत् श्रियः निवासस्थानमितिशेषः यद्वा बृहदुरः श्रिय इत्येकं पदं बहुवचनं द्रष्टॄणामनुक्षणं कान्तिविशेषवाहुल्यद्योतकम् ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ कुमारिका ऊचुः । रहसीत्यादि । रहसि निर्जने या संवित् संवेदनं मयेमा रंस्यथ क्षपा इति यत् आदिष्टं तद्वीक्ष्य ज्ञात्वा प्रेमवीक्षणञ्च वीक्ष्य दृष्ट्वा बृहदुरश्च वीक्ष्य मुहुर्यास्वारमति स्पृहा जातेत्यर्थः । अतो मनश्च मुह्यति तत्कथमेवं करोषीति भावः प्रेमवीक्षणं कीदृशं हृच्छयस्य मनोरथस्य उदयो यस्मात् प्रहसितं प्रहास एवाननं प्रीणनं यस्य अथवा प्रहसिताननं वीक्ष्य कीदृशं प्रेमवीक्षणं यस्य बृहदुरः किंभूतं श्रियो धाम ॥ १७ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत उत्तमा आत्मानमेव निन्दन्ति । रहसीति । नोमनः अतिस्पृहं सत् मुह्यत इति तत्र कारणत्रयं गुणत्रयसहितं वाक्यं हास्यमुरश्चैव कामानन्दाधिकारिणः रहसि एकान्ते या संविज्ज्ञानं या पूर्ववत् हृच्छयस्य कामस्य उदयेन तादृशं प्रहसितयुक्माननं प्रेमपूर्वकं वीक्षणं च यस्मिन् श्रियो धाम बृहदुरः भगवद्रूपस्य वा षड्गुणत्वमुच्यते रहसि संविदो यस्मादिति एतादृशं त्वां हृच्छ-

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

यस्य उदयो यस्मात् प्रहसितमाननं यस्य प्रेमपूर्वकं वीक्षणं यस्य बृहदुरः श्रीधामच वीक्ष्य प्रमाणादिचलरूपता भगवद्रूपेति निरूपिता वक्षसिच स्वस्थित्यर्थं यशःश्रीश्च निरूपिता मुखदर्शनेनैव प्रहसितयुक्तत्वात् पूर्वं स्थित्यभावः ततः कामः प्रेमवीक्षणेन च तस्य स्थिरीकरणं ततः स्वयोग्यता ततो भोगचातुर्यं प्रथमविशेषणेन एवं सर्वं भविष्यतीति अतिस्पृहायुक्तं मनः मुह्यते केवलं मोहं प्राप्नोति पदार्थालाभात् मुहुर्मूर्च्छा समायातीति जीवनमरणान्यतराभावात् धिग्जीवनमित्यर्थः ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

किं कर्त्तव्यं तव मोहनपञ्चकं कामशरपञ्चकमिवास्मन्नेत्ररन्ध्रेषु प्रविश्य हृदयं ज्वलयतीत्याहुः । रहसि सम्विदं रतिप्रार्थनव्यञ्जकसम्भाषणं प्रथमम् । हृच्छयोदयम् अस्मदवलोकनहेतुकं कन्दर्पभावोदयं द्वितीयम् । प्रकृष्टं हसितं यत्र तथाभूतमाननं तृतीयम् । प्रेमयुक्तमीक्षणञ्च चतुर्थम् । श्रियो धाम शोभास्पदं बृहद्विस्तीर्णमुत्तुङ्गमुरो वक्षः पञ्चमम् । वीक्ष्य मुहुः पुनः पुनर्विशेषतो दृष्ट्वा अतिस्पृहणम् अतिस्पृहा । भावकिंवन्तः । स्पृहितया मनो मुह्यते मुह्यति । उत्कण्ठाज्वालया मूर्च्छतीत्यर्थः ॥१७॥

केनचित्कृता विशुद्धरसदीपिका ।

अथ किञ्चिदवधाय पुनरपि दुर्गाव्रतपरा उचुः । रहसीति द्वाभ्याम् । ते तव रहसि संविदं रहसि निर्जने कालिन्दीतीरे "यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा„ इत्यादिका प्रतिज्ञा संवित् यत्र तत् अलुक्समासः बृहदुरो वीक्ष्य तत एवाशावन्धेन हृच्छयस्य कामस्य उदयो यत्र तत् तथा प्रकृष्टं हसितं भावविशेषगमकं स्मितं यस्मिंस्तदाननं यत्र तथा प्रेम्णा वीक्षणं यत्र तत्रापि श्रियोऽस्मत्सजातीयायाः पीतरेखारूपाया धाम मुहुरित्यभ्यासेन परमासक्तिः सूचिता अतिस्पृहेति सम्पदादित्वाद्भावे क्विप् अतिस्पृहया मनो मुह्यतीत्यर्थः । एवं स्पृहाया दुर्निवारत्वादप्रतिकार्यत्वं तेन निजानां परमदैन्यं सूचितं स्वम्बोधनानुक्त्या पतिभाव एव दृढीकृत इति ज्ञेयम् ॥ १७ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

ननु यथान्यत्र सर्वत्र दोषदृष्ट्यातत्यागेनागमनं तथा मय्यपि कैतवाच्युतत्यादिदोषदृष्ट्या विरज्य विश्रम्यतामत्याशङ्क्यास्माभिरतिविरहदुःखे । तत्राभिस्वविरहदुःखगतं दोषं मनोवैकल्येन त्वय्यारोप्य कथञ्चित्तथोकावपि नत्वयि निर्दोषपूर्णगुणविग्रहे दोषगन्धो नचानुरागिणीनां नो गुणे दोषारोपो गुणानां चानन्त्येन तद्दर्शिनां न ततो विच्छेदावकाश इति तव गुणदर्श्यैव त्वयि नो मनो मुह्यतीत्याहुः । रहसि संविदमिति । तव रहसि संविदं रहसि विजने कालिन्दीवनतटकुञ्जादिषु यत्सम्विदं सम्यगवेदनं मनोऽनुरागोत्साहादिभावानां यस्माचदवञ्चनवचनरत्नं वीक्ष्य विशेषेण तात्पर्यावगतिपर्य्यन्तं ज्ञात्वा नो मनोऽतिस्पृहं सत्त्वयि मुह्यति स्नेहवैक्लव्येन मुग्धतामेति यद्वा ऽत्युत्कण्ठामुद्भावयति यद्वा ऽधुना वियोगदशायान्तु तदलाभेन मूर्छा मरणसंनिधानरूपामेति मुहुरतिस्पृहेति पाठेतु तद्वीक्ष्य वर्त्तमानानां नस्त्वद्विषयिण्यातिनिष्ठितस्पृहाभिलाषा जायते ततश्च मनो मुह्यतीत्यादिपूर्ववत् यद्वा स्पृहेत्यत्र सम्पदादित्वाद्भावे क्विप् ततश्च तृतीया तद्वीक्ष्य जातया स्पृहाभिलाषया मनो मुह्यति यद्वा रहसि त्वद्धृदये गोपितापि यास्मद्विषया संवित्समीचीनं ज्ञानं तान्वीक्ष्य विविधप्रकारेण इङ्गितादिपिशुनैर्विभावैरीक्ष्य बुद्ध्वा शेषं पूर्ववत् तत्किंभूतं हृच्छयोदयं हृच्छयस्य कामस्योदय उत्पत्तिर्यस्मात् यद्वा त्वद्विषयो हृच्छयः कामो नित्यमस्मद्धृदि शेते एव नतु तेनैवोत्पद्यते किन्तु हृच्छयस्यैवोदयो वृद्धिर्यस्मात् एवं हृच्छयोदयस्य प्रहसिताननमित्यादि सर्वविशेषणत्वं यद्वा त्वन्मनसि तत्तद्भावैर्मुखेच हृच्छयस्योदयं जन्म वीक्ष्य परीक्ष्य प्रथमतो बालाभावदशायामपि नो मनसि त्वत्स्पृहा तया मनोमोहश्च तर्हि किमु वाच्यं तव हृच्छयोदयदर्शने यद्वा नः कामवीरत्वात्त्वयि तद्विजयाकाङ्क्षिण्यपि हृच्छयोदयं कामोत्कर्षं दृष्ट्वा ततोऽप्यधिकं तदुदयस्पृहा भवति तया च मनो मुह्यति तदेतत्सर्वथा तद्विजयिनि त्वयि तदुदयस्पृहणं मनोमोहमात्रमेव यद्वा तव हृच्छयाय कामरणाय उदय उद्यम आरम्भो वा तं तत्तद्भावैर्वीक्ष्येत्यादि पूर्ववत् यद्वा अन्तर्द्धानात्पूर्वरतिविहारेऽनुभूतत्वात्तच रतिरणेऽपि मुहुः हृच्छयोदयं कामोद्भवचेष्टाविशेषं वीक्ष्य विशेषेण स्मृत्वा पुनस्तत्स्पृहा मनोमोहश्च भवति यद्वा कातरः सन् भीत्या मापलायस्व कामवीराणामपि नो हृच्छयरणे ततस्तवैवोदयः उत्कर्षो भाति तं वीक्ष्य तत्स्पृहादि जायते तथा ते प्रहसिताननं वीक्ष्य नो मनस्यति स्पृहा जायते मनश्च मुह्यति मोहितं भवति विरहेतु तत्स्मृत्यातिस्पृहा मनसो मूर्च्छा च भवति तत्र प्रहसिताननमित्यत्र प्रकृष्टं मृदुसितसिताद्विमध्यान्हाद्यमृतमयं सितं यस्मिंस्ताहगाननं मुखं विकसितकञ्जप्रसूनप्रभसुधाकरमयं वीक्ष्य यद्वा प्रहसितानि स्वन्यूनतयाक्षिप्तानि सर्वाण्यप्याननानि येन तदेवाननं वीक्ष्य यद्वा तादृक् प्रकृष्टहसितेन आ ईषदपि नकारो याच्यानङ्गीकारो न यस्मिन् यद्वा प्रहसितेन नञाननानां न्यूनताद्योतनेन आ समन्तात् ननेति याच्यास्वीकार एव यस्मिंस्तद्वीक्ष्य तथापि किम्भूतं तत प्रेमवीक्षणं प्रेम्णा उत्कलितानुरागेणान्वितं वीक्षणं यस्मिंस्तत यद्वा प्रेम्णा विविधं नानाभावकटाक्षान्वितमीक्षणं यस्मिन् यद्वा प्रेमविशिष्टे ईक्षणे नयने यस्मिन् यद्वा प्रेम्णैव वीक्षणं दर्शनं विशेषेणेक्षणं परीक्षणं वा यस्मिन् यद्वा प्रेम्णैव वीक्षणं दर्शनं यस्य प्रेमशून्यानां तद्दर्शनासम्भवात् यद्वा प्रेम्णैव विशेषेणेक्षणं किंस्वरूपमेतत् कीदृग्विचित्रश्चिदानन्दात्मकगुणवद्वायामिति ज्ञानं यस्य यद्वा प्रेमोदय एव वीक्षणे दर्शने विशेषतो गुणज्ञाने वा यस्य न कदापि निर्वेदसम्भावनं यद्वा मुखविशेषणाभावेऽपि तव प्रेमवीक्षणं प्रेमपूर्वकं वीक्षणं विविधमीक्षणञ्च वीक्ष्येत्यादि पूर्ववत् यद्वा तव प्रेम च वीक्षणं विविधमीक्षणञ्च वीक्ष्य शेषं पूर्ववत् हे बृहत् ब्रह्मन् सर्वगुणैर्वा बृहत् श्रेष्ठ ! तव उरो वीक्ष्य दृष्ट्वा विशेषेण वा गुणैर्गाढालिङ्गनसुखदानादिभिर्यथावत्परीक्ष्यादर्शनेतु विशेषेण तत्परतया संचिन्त्य वा शेषं समानं बृहदिति उरोविशेषणं वा तथा च स्वभावत एवोच्चतया तच्छाभोक्तिः उदारतया सुखदानेन वा बृहत्त्वम् अस्मदालिङ्गनोत्साहेन विशे-

## श्रीरामनारायणकृतभावभावविभाविका।

पत उच्चतया वा बृहत् धर्मरूपतया वा बृहत् किम्भूतं तत्र श्रियो धामेति शोभाया धाम निवासास्पदं श्रियः सर्वशृङ्गारैश्वर्य्यसम्पदाद्यधिष्ठातृदेवताया वा धाम गृह सर्वत्र चला अपि सा यत्रैव सर्वमपहाय नियतं वसति तद्वक्ष इत्यादि पूर्ववत् यद्वा श्रियः संबन्धि तव उरो वीक्ष्य यद्वा श्रियोऽपि बृहद्बहुमान्यं तदभिलषणीयमुरः वीक्ष्येति पृथगन्वयेन तव धाम तनुकान्तितेजो वा वीक्ष्य तव धाम मुख्यं नित्यविहारास्पदं श्रीमद्वृन्दावनम् एतत्पुलिनं च वीक्ष्येत्यादि पूर्ववत् तथा च सर्वेषां पृथक् पृथक् स्पृहामोहयोर्जनकत्वात्तद्वीक्षणेन तदुदयान्मुहुरित्युक्तं यद्वा त्वामेव वीक्ष्य विशेषेण निर्विष्टमनस्त्वेन विविधच्छविविशिष्टं वा ईक्ष्य रहसि विजने दृष्ट्वा रहसि त्वदेकपरतयान्यभानशून्ये हृदि अधुना स्मृत्वा वा वर्तमानानां नो ते त्वद्विषया मुहुरति स्पृहा भवति स्पृहाः भवन्ति ताभिश्च मनो मुह्यति मनोमोहः सर्वविस्मृत्या तत्रैव मुग्धत्वं वियोगे मूर्च्छा वा भवति कीदृशं त्वां संविदं समीचीनं विदिति वेदनं ज्ञानं स्वीयानां स्वस्मिन् भावप्रदं तद्भावप्रकाशकं तद्भावफलदानाय सानुग्रहं नानारसभावविभावादियुतस्य रहसि तासां हृदि स्वभावे संवित् यथावदपरोक्षं ज्ञानं वा यस्य यद्वा रहसि विजने मनस्यन्तर्भावावेदनं यस्मात्तादृक् सविनयवचनं यस्य पुनः कीदृशं त्वां हृच्छयोदयं हृच्छयस्य कामस्योदयो यस्मिन् किशोरवयसं हृच्छयस्यास्मद्धृत्सु उदयो जन्म यतः यद्दर्शनाद्विश्वोद्धारहारविहाराय यत्प्रेरणाद्वास्मन्मनसि मनोजजन्मान्यत्र कामाभावादिति भावः। यद्वा स्वदर्शनजनितस्य नो हृच्छयस्य वंशध्वनिनादौ समागमे पुनः सापाङ्ग दृष्टिस्पूणा निखननवत्स्थिरत्वापादकवचनैः पुनः पुलिनविहारादौ वाभिवृद्धिर्यस्मात् यद्वा हृच्छये रतिरणे उदयः समुद्यमस्तत्समये उदयस्तदुद्भावकविविधानिर्वचनीयचेष्टासमुदायो वा यस्य यद्वा स्वाङ्गशोभायां हृच्छयादपि उदय उत्कर्षो यस्य यद्वा सद्भिर्हेयस्यापि हृच्छयस्य सतां गेयत्वध्येयत्वाद्यापादक उदयो यस्मात् पुनः कीदृशं त्वां प्रहसिताननं प्रकृष्टेन हसितेनापि हृच्छयस्य युक्तमाननं यस्य प्रहसितानि सर्वेषां कामदेवादीनामस्मदादीनां चाननानि येनेत्यादि प्रहसितेनैव वाचा स्वीकारास्वीकारौ च मुखविशेषणतयोक्तौ भगवद्विशेषणतया योज्यौ पुनः कीदृशं प्रेमवीक्षणं प्रेमान्वितं विविधभावभावितमीक्षणं दृष्टिः ईक्षणे लोचने वा तादृशे यस्य यद्वा प्रेम्णैव वीक्षणं यस्य प्रेमैव वीक्षणे यस्येत्यादि पूर्वं मुखविशेषणतया व्याख्यातं भगवद्विशेषणतया योज्यं पुनः किं भूतं त्वां बृहद्धर्म एव उरो यस्य यद्वा बृहदुदारं सुखदं स्वभावात् एवोच्चमालिङ्गनोत्साहैर्वोच्चं वा उरो यस्य पुनः कीदृशं त्वां श्रियो धाम लक्ष्म्यास्पदम् यद्वा चतुर्वर्गप्रेमनिधिं त्वां वीक्ष्य मुहुरतिस्पृहा मनो मुह्यति तदेकपरं भवति तत्र रहसि संविदमिति सम्यग्वेदनं स्वरूपसाक्षात्कारो यस्मादिति मोक्षप्रदत्वं हृच्छयोदयमिति कामसुखप्रदत्वं बृहद्धर्म एवोरो यस्येति धर्मनिधित्वं श्रियो धामेत्यर्थनिधित्वं प्रेमवीक्षणमित्यनेन प्रेमनिधित्वं वीक्षणेनैव प्रेमजनकत्वे वीक्षणस्य प्रेमान्वितत्वे हेतुः प्रहसिताननमिति ॥ १७ ॥

---

## श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु किमर्थं परमेश्वरबुद्धिमाच्छाद्य रमणबुद्धिं कृतवत्यो ययेदानीं दुःखसागरे निमग्ना अतस्त्यज्यतां सा बुद्धिरित्याशङ्क्य तव स्वरूपमेव तादृशबुद्धिमुत्पादितवत् सा चेदानीमस्माभिर्निवर्तयितुमशक्येत्याशयेनाहुः। रहसि सम्विदः सङ्केता यस्मात् अलुगार्षः हृच्छयस्य कामस्योदयो येन प्रहसितमाननं यस्य प्रेमपूर्वकं वीक्षणं यस्य तथाभूतत्वाच्छ्रियः स्थानं तव बृहद्वक्षःस्थलञ्च पुनःपुनर्वीक्ष्य स्थितानामस्माकम् अतिस्पृहा जाता तयाचास्मन्मनस्त्वत्प्राप्त्यभावान्मुह्यते पुनःपुनर्वा मूर्च्छां प्राप्नोतीत्यर्थः। यद्वा भावक्कियन्तः स्पृहा तथाचास्मन्मनो वीक्ष्य तया मुह्यतीत्यर्थः। अतिस्पृहमिति क्वचित्पाठः यद्वा स्पृहोत्पत्तौ कारणत्रयं रहसि सम्विद्रूपमेकं कामोदयकरं प्रेमपूर्वकं वीक्षणविशिष्टं प्रहसिताननमिति द्वितीयं श्रियो धाम विशालमुरश्च तृतीयं तथाच त्वदीयं मोहिनीविग्रहमालोक्य दग्धकामो महारुद्रोऽपि यत्र मोहितस्तत्र ततःकोटिगुणितसौन्दर्य्यादिविशिष्टे त्वयि सति वराकीणामस्माकं व्यामोहे किञ्चित्रमिति भावः। अनभिज्ञापक्षे त्वद्दर्शनजन्यत्वदङ्गसङ्गस्पृहा त्वाद्वियुक्तानामस्माकं रोगरूपा सम्पन्नातःस्वाङ्गसङ्गेन तच्चिकित्सा त्वयावश्यं विधेयेत्याहुर्द्वाभ्यां पूर्वमस्माकं कामो न स्थितः तव प्रहसितयुक्तस्य मुखस्य दर्शनेनोदयं प्राप्तः प्रेमपूर्वकवीक्षणेन स्थिरताङ्गतः ततो रहसि सम्विदः सम्भोगचातुर्य्यसूचनेनातिसौन्दर्य्यादिविशिष्टस्य विशालस्योरसो दर्शनाज्जातेन स्वयोग्यताज्ञानेन चोत्कटोत्कण्ठात्यन्तिस्पृहोत्पन्ना तद्विषयालाभात्तद्युक्तं मनः केवलं मुहुर्मुहुर्मुह्यते मृत्युरपि नायात्यत उभयत्र भ्रष्टानां जीवन्मरणाभ्यां रहितानामस्माकं धिग्जीवनमित्यर्थः। मानिनीपक्षे यद्यपि भवान् सम्प्रतिपरोक्षस्तिष्ठति तथापि त्वदीयमनसोऽवस्थां वयं सम्यगवगच्छाम इत्याशयेनाहुः। अस्मत्कृतं त्वत्तोषार्थं सङ्केतं तथा कामोदयहेतुभूतं प्रेमवीक्षणं प्रहसितयुक्तमस्मदीयं मुखं श्रियःस्थानमुरःस्थलं च वीक्ष्य तत्प्राप्तिस्पृहया तव मनो मुह्यति तथाप्यस्मद्दुःखार्थं तादृशं दुःखमपि सहसे न त्वागच्छस्यतः किं वक्तव्यमाश्चर्य्यं तव हठस्य माहात्म्यमिति भावः। निवृत्तिपक्षे यद्यप्येवं तथापि कामिनोऽस्मदभिप्रायं नाशयन्तीत्याहुः। प्रमदाकृतां रहसि सम्विदं तथा तदीयं यथोक्तमाननं यथोक्तमुरश्च वीक्ष्य कामरूपेण स्थितस्य तव जातया स्पृहयास्माकं मनो मुह्यते तात्पर्य्यव्यत्यासं भजत इत्यर्थः ॥ १७ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वयं पुरुषोत्तमस्य भक्तहितायावतीर्णस्य मधुरवचनप्रहसितश्रीमुखावलोकनादिभिरुत्पन्नं त्वद्रमणमनोरथमस्माकं सफलं कुर्वित्याहुरन्याः। रहसीति द्वाभ्याम्। ते तव रहसि एकान्ते संविदं प्रहसितमाननं च हृच्छयोदयं च प्रेमवीक्षणं च श्रियो धाम बृहद्विशालम् उरश्च वीक्ष्य नोऽस्माकमति स्पृहा तया भवति मुहुर्वारंवारं मनो मुह्यति ॥ १७॥

---

व्रजवनौकसां व्यक्तिरङ्ग ! ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ॥
त्यज मनाक्च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम्॥ १८ ॥

### भाषा टीका।

कन्दर्पकी चेष्टा करवे वारो जो आपको एकान्तमें भाषण प्रेमभरी चितवन वारे हास युक्त आपको मुख तथा लक्ष्मी के वासको स्थान आपको विशाल हृदय इनको वारंवार स्मरण होवेते हमारो वडो मन ललचावेहै और मोहित होवैहै ॥ १७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

तव च व्यक्तिरभिव्यक्तिर्व्रजवनौकसां सर्वेषामविशेषेण वृजिनहन्त्री दुःखनिरसनीति विश्वमङ्गलं सर्वमङ्गलरूपा चातस्त्वत्स्पृहात्मनां त्वत्स्पृहारूढमनसां नो मनागीषत्किमपि त्यज मुञ्च कार्पण्यमकुर्वन् देहीत्यर्थः। किं तत् स्वजनहृद्रोगाणां यदति गोप्यं निषूदनं निवर्तकमौषधं तत्त्वमेव वेत्सीति गूढाभिप्रायः॥ १८ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अतोऽधुनेदं विधेहीति सर्वान्ते फलितं निश्चित्याहुः। व्रजेति। व्रजौकसां वनौकसां चेत्यर्थः। ते व्यक्तिः अवतारः प्राकट्यं वा अतोऽन्तर्धानमयुक्तमितिभावः। अङ्गेति प्रेमसंबोधने न केवलं वृजिनहन्त्री विश्वमङ्गलम् अशेषमङ्गलरूपा च अलमतिशयेनेत्यस्योभयतोऽप्यन्वयः ततो वृजिनस्यापुनरुद्भवत्वादिकं मङ्गलस्य च भक्तिप्रेमादिसंपत्तिपूर्वकप्रतिक्षणमाभिनवसुखपरंपरातिरूपत्वमूह्यं स्वजनानां या हृद्रुजः कामाः किं वा उत्तापास्तासां नितरां सूदनं स्वजनत्वात्तव विदितमेवेति भावः। रुक्शब्दप्रयोगः त्वत्प्राप्त्यर्थमेवानिस्पृहा किंवा तव या स्पृहा रिरंसा तस्यामेवात्मा मनो यासां नः ईदृशीरस्मान् प्रति यद्देयं स्यात् तद्देयमेवेति भावः। मनागिति परमदौर्लभ्येन याचकरीत्या वा वस्तुतस्तु हृद्रुजामिति बहुत्वेन निशब्देनच तथा तद्विषयककामना निवर्त्यत्वेन प्रत्युत सदा नवीनवत्तया वर्द्धिष्णुत्वेनैव निरन्तरविविधप्रमरतिरामभिप्रेता अन्यैरव्याख्यातं यद्वा हे स्वजन त्वत्स्पृहात्मनां नो या हृद्रुजस्तासामिति ॥ १८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवं भवतैव निजहृच्छयोदयस्य व्यञ्जनयास्मासु ते ते नाना भावा जन्यन्ते हन्तास्य हृच्छयताप एवमेव शान्तः स्यादिति भावनया स्वद्भावभावितत्वेन तत्तद्वासनोदयात्। यतो ऽस्माकं त्वयि स्नेहः स्वभावजत्वाद्बलवत्तर इति द्योतयन्त्यस्तादृशस्नेहमयाभिलापविस्फुटहृदयाः सदैन्यं निवेदयन्ति। व्रजेति द्वाभ्याम्। व्रजौकसां वनौकसां चेत्यर्थः। व्यक्तिः प्राकट्यम् अतोऽन्तर्द्धानमयुक्तमिति भावः अङ्गेति प्रेमसम्बोधने न केवलं तेषां वृजिनहन्त्री अशेषस्यापि मङ्गलरूपा वृजिनहन्त्री। यद्वा तेषामेव सर्वसुखदा च अलमतिशयेनेत्यस्योभयतोऽप्यन्वयः अतो नः सम्बन्धे दुःखशमकं किमपि देहि ननु व्रजौकस्त्वेन भवतीनामपि तत्तदुत्पातजदुःखशान्त्यादिकं भविष्यत्येव किमन्यत् प्रार्थयध्वे तत्राहुस्त्वयि त्वत्प्राप्त्यर्थमेव या स्पृहा तस्यामेवात्मा मनो यासां तासां नः ननु व्रजवनौकसामपि मत्स्पृहास्ततः कोविशेषस्तत्राहुः। स्वजनेति। तेष्वपि स्वजनाविशेषो ऽस्मद्विधस्तस्य हृद्रुजां यन्निषूदनमिति मनागिति परमदौर्लभ्येन याचकरीत्या वा वस्तुतस्तु हृद्रुजामिति बहुत्वेन निशब्देन च तथा तद्विषयककामानामनिवर्त्यत्वेन प्रत्युत सदा नवनवतया वर्द्धिष्णुत्वेनैव निरन्तरं तद्वैविध्यमभिप्रेतम् ॥ १८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

व्रजवनौकसां गोपानां मुनीनां च व्यक्तिरवतारः त्यज देहि मनाक् ईषत् रुजां हृदयक्लेशानाम् ॥ १८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अङ्ग ! हे कृष्ण ! तवाभिव्यक्तिरवतारो गोपानां मुनीनांच वृजिनहन्त्री पापनिरसनी दुःखनिरसनी वा विश्वस्य मङ्गलं मङ्गलावहा वा त्वत्स्पृहात्मनां त्वत्स्पृहारुणमनसां नोऽस्माकं मनागीषत् त्यज मुञ्च किंचिद्देहीत्यर्थः। किं तत् यत्स्वजनस्य हृद्रोगाणां निषूदनं निवर्त्तकमौषधं तत्तु त्वमेव वेत्सीति गूढोऽभिप्रायः॥ १८॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यदि भगवानस्मदापदं न परिहरिष्यति तर्ह्ययमवतारो व्यर्थो भविष्यति न चैतद्युक्तम् अतोऽस्मद्दुःखं भवता अवश्यं परिहरणीयमिति भावेनाहुः। व्रजेति। भो अङ्ग ते तवेयं व्यक्तिरवतारलक्षणा व्रजौकसां गोपानां मार्गौकसां तीर्थसार्थानां वा निवहौकसां ग्रामवासिनां वा वनौकसां वनवासिनां वा सन्यासिनां वानप्रस्थानां वा जलाश्रयाणां वा अलमत्यर्थं वृजिनहन्त्री दुःखनाशिनी यद्यस्मा त्वयि स्पृहा यस्य स त्वत्स्पृहः आत्मा यासां तास्तथा तासां नश्चक्षुर्विषयं मनाक् ईषदपि भजें सामान्योक्त्या पुनरुक्तं कुर्वान्ति स्वजनेति विश्वमङ्गलं यद्व्यक्तं रूपं स्वजनस्य हृद्रुजाम् अन्तर्गत रोगाणां निषूदनं निर्मूलकरं तस्मादस्माकं स्वजनैकत्वादभीष्टं भवता कर्तव्यमिति भावः ॥ १८ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तस्मादिदं ते नोचितमित्याहुः। व्रजवनौकसामित्यादि। हे अङ्ग ते तव व्यक्तिः प्रकाशः व्रजवनौकसां वृजिनहन्त्री दुःखनाशिका अलमत्यर्थं विश्वमङ्गलम् अतो व्रजौकस्त्वेन विश्वान्तर्गतत्वेन चास्माकं

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तव प्रकाशो वृजिनहन्त्रैव तस्मात्त्वत्स्पृहात्मनां यन्निषूदनं मारकम् अदर्शनं तत् मनाक्च त्यज मुञ्च तन्न कुर्वित्यर्थः । हे स्वजनबन्धो! नोऽस्माकं कीदृशीनां हृद्रुजां हृदि रुक् यासां यद्वा नोऽस्माकं हृद्रुजांयन्निषूदनं नाशकं दर्शनं तत् मनाक्च त्यज वितर देहीतियावत् त्यजिरत्र दानार्थः स्वजनानां हृद्रुजामिति समासे एकं वा पदम् ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पुनरनन्यपूर्वा एतावत्कालं मनोरथाभिनिविष्टा किंचित्प्रार्थयते । व्रजवनौकसामिति । इयं ते व्यक्तिः व्रजवनौकसां वृजिनहन्त्री पापनाशिका विश्वस्याप्यत्यर्थं मङ्गलरूपं दोषनिवर्त्तकं विशेषाकारेणास्माकमेव गुणाधायकं सर्वेषाम् अत एतादृशं मनाक् त्यज त्यागावश्यकत्वे हेतुः । त्वत्स्पृहात्मनामिति । त्वय्येव स्पृहायुक्तः आत्मा अन्तःकरणं यासां किं त्यक्तव्यमित्याशङ्कायामाहुः स्वजने स्वजनानां गोपिकानां हृद्रुजां हृदयरोगाणां कामरूपाणां यदेव निषूदनं भवति नितरां सूदनं नाशनं यस्मात् केषांचित्फलदाता तादृशोऽस्माकं रोगनिवर्त्तको भवत्विति ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च । कुलवधूनां निरपराधानामस्माकं त्वयैव सम्मोह्य रात्रौ वनमानीतानामौत्कण्ठ्याग्निना केवलं प्राणदाहनमेव न तवाभिप्रेतं किन्तु स्वाङ्गसङ्गदानेन प्राणपालनमपीत्यत्र हेतुमाहुः। तव व्यक्तिरभिव्यक्तिः व्रजवनौकसां सर्वेषामेवाविशेषेण विश्वमङ्गलं सर्वाणि मङ्गलानि यत्र तद्यथा स्यात्तथा वृजिनहन्त्री दुःखनिरसनी अतस्त्वत्स्पृहात्मनां त्वत्कर्तृका या स्पृहा अस्मद्दर्शनोत्था तस्यामेवात्मा तत् सम्पूरयितुं कामं मनो यासां तासां नः मनाक् ईषत् किमपि त्यज मुञ्च कार्पण्यमकुर्वन् देहीत्यर्थः। तदेव किं तत्राहुः । स्वजनहृद्रुजां युष्मज्जनकुचरोगाणां यन्निषूदनमुपशमकमौषधं करकमलमित्यर्थः । तदेव यदि अस्माभिः कुचेष्वर्पयितुं प्राप्यते तदा तेनैव त्वत्स्पृहां पूरयित्वा स्वप्राणाः पाल्यन्त इति भावः ॥ १८ ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

किञ्च । व्रजेति । अङ्गेति प्रेमसम्बोधनम् अत्रापि नामानुक्तिः पतिभावनयैव ते व्यक्तिः प्राकट्यं स्वरूपम्वा यद्वा व्यक्तिः प्रादुर्भाव एव न तिरोभाव इत्यर्थः व्रजेति व्रजौकसां वनौकसां चेत्यर्थः एकञ्चैकस्य तत्र तूभयम् अतोऽन्तर्द्धानमयुक्तमिति भावः वृजिनहन्त्री न केवलं तेषामेव किन्तु विश्वस्यापि मङ्गलं मङ्गलरूपा यद्वा तेषामेव सर्वसुखरूपा यथा स्यात्तथा वृजिनहन्त्री अलमित्युभयान्वितं ननु किन्तद्वृजिनं यदर्थमेवं प्रार्थ्यते तत्राहुः। अहो नास्माभिस्त्रपया वक्तुं शक्यते त्वत्स्पृहात्मनामस्माकं तव स्वजनानां हृद्रोगनिषूदनं यत्किमपि तत्त्यज झटिति देहीत्यधीरत्वं स्वजने इत्यन्तर्वर्तिनीं विभक्तिमाश्रित्य देवदत्तस्य गुरुकुलमित्यादिवदन्वयः अत्र स्वजनशब्देन स्वकीयाभावो दृढीकृतः यद्वा स्वजनेति सम्बोधनं ततश्चावश्यं हृद्रोगप्रतीकारः कर्त्तव्यः ॥ १८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

एवमस्माकमन्यसर्वत्यागेऽपि त्वयि निर्वेदाभावादलाभेनागत्या निर्वेदमाशंसन्तीनामपि त्वच्चेष्टागुणस्मरणादिभिः कदापि तत्संभावनाया अप्यनुदयान्न त्वां विना कथञ्चिद्विश्रान्तिस्तयाप्यस्मद्दन्येनात्मप्रकृतानुग्रह एव विधेय इत्याहुः । व्रजवनौकसामिति । अङ्गेति प्रियसम्बोधनं हे प्रियेति तथाच न प्रियस्य तवाप्रियाचरणं प्रियाचरणे विलम्बो वा युज्यते यद्वा अङ्गेति सम्बोधनेन अङ्गसङ्गेनैवानङ्गोपशमो नान्यथेति भावः यद्वा अङ्गवियोगेऽस्माकमङ्गवियोग एव भाव्य इति व्यङ्गः व्रजवनौकसां व्रजे व्रजमण्डले यानि वनानि तेषु ओकांसि गृहा एषामिति व्रजगतसर्ववनवासिनां ते व्यक्तिर्नित्यदाविर्भावः सैव च तेषां वृजिनहन्त्री वृजिनानां दुःखानां चाभावप्रयोजिका विश्वमङ्गलं सर्वमङ्गलरूपा च नियतलिङ्गतया व्यक्तिविशेषणत्वेऽपि षण्डत्वं तथाचोक्तं ब्रह्मणा—

> तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
> यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम् ॥
> यज्जीवितन्तु निखिलं भगवान्मुकुन्द
> स्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेवेति ॥

सर्वव्रजवनौकसां त्वदेकजीवनत्वे किमु वाच्यं वृन्दावनवासिनां सुतरामस्माकं यद्वा व्रजौकसाङ्गोपालादीनां वनौकसां मृगपक्षिद्रुमगुल्मलतादीनाञ्च यद्वा व्रजन्तीति व्रजा जङ्गमास्तेषां वने एवौको निवासो येषामिति तत्रैवाचलतया निवसतां स्थावराणाञ्च ते व्यक्तिरेव वृजिनहन्त्री सर्वमङ्गलरूपा च यदा स्थावराणामपि त्वद्व्यक्त्यैव शोषादिदोषवृजिनव्रजनं विकासादिरूपप्रहासादिविविधसर्वमङ्गलञ्च तदा किमु वाच्यं चेतनानां पक्षिमृगादीनां सुतरां धीमतां मनुष्याणामतितरामस्माकं यद्वा विश्वमङ्गलमिति त्वदीया व्यक्तिः सर्वक्षेमाय ब्रह्मप्रार्थनया विश्वस्य मङ्गलं यदा स्मरतां स्मरणमात्रेण मङ्गलं वृजिनहन्त्री च तदा किमु वाच्यं व्रजवनौकसमिति तथा च यतो व्रजे त्वद्व्यक्तिरेव नित्यं संनिहितो हरिरित्यादिशास्त्रसिद्धान्तेऽन्तर्द्धानस्यैवान्तर्द्धानं योग्यं तथा विश्वमङ्गलत्वे वृजिनहन्त्रीत्वेतु सुतरां व्रजवनौकसां तथात्वे ऽस्माकमेव वृजिनाहननममङ्गलाचरणं चान्याय्यं ननु सर्वव्रजसामान्येन युष्माकमपि गोवर्द्धनोद्धारणादिभिर्वृजिननाशः कृत एव को भवतीनां विशेषो येन तथोच्येत किंवा वृजिनमिन्द्रकृतवातवर्षासुरोत्कर्षाद्यदर्शनात्तत्राहुः। त्वत्स्पृहात्मनामिति त्वय्येव स्पृहा आत्मनि मनसि यासां यद्वा त्वय्येव स्पृहा आत्मानः प्राणाश्च यासां त्वत्स्पृहामय्यो वा तासां तथा च त्वां विना क्षणविश्रामाभाव एव विशेषः तथा चास्मद्वृजिनाभावेऽपि मनोव्याप्तस्पृहारूपं वृजिनं त्वत्प्राप्त्यैकनिवर्त्यमिति हे स्वजन स्वीया एव वयं गोपीजना न परकीया यस्य यद्वा स्वीय एव जनो नान्यदीयस्त्वं यद्वा स्वीयेषु जनिः प्रादुर्भावो यस्य तथाच स्वीयास्वस्मासु तिरोभावो नोचितः यद्वा स्वः स्वात्मेव प्रादुर्भूतस्तथा च यदा स्वात्मन्यध्यस्तप्राणवियोगे जीवनासंभवस्तदा किमु

### श्रीरामनारायणकृतभावभावविभाविका ।

तिरोभावो व्यंसकतास्फूर्तिप्रदत्त्वात्मविरहेक्षणं स त्वं च न च कथं स्वात्मना मया वियोगसम्भव इति वाच्यम् अघटनघटनापटीयस्या त्वदिच्छया सर्वसम्भवात् तस्मात्त्वमेव कृपया हृद्रुजां निषूदनं यत्तत् मनाक् त्यज नोऽस्माकं देहि स्वजनानां नो हृद्रुजामिति वान्वयः ननु किं प्रार्थ्यते तद्ब्रूत तत्राहुः । यदिति । अत्रायमभिप्रायः मुखं दर्शय चरणं स्तनेष्वर्पयेत्याद्येकैकोक्तौ तदेव भवेदिति तत्स्पृहाशान्तावप्यन्यविधया स्पृहया दुःखाशमोऽतो हृद्रुजामिति बहुवचननिर्देशेन नास्माकमेक एव रोगः किन्तु विविधत्वद्विषयकस्पृहाव्याप्तानां तद्विषयप्राप्त्यभावे सर्वास्ताः स्पृहारुज एवातस्तासां नितरां सूदनम् अभिलषणीयनित्यप्राप्त्या स्पृहारुजां निवर्तनं देहि तत्र यदिति सर्वनामपदप्रयोगात्सर्वरोगनिवर्तकसंग्रहो विवक्षितः तद्वीक्षया वा सर्वसंग्रहः तत्सर्वस्य लज्जया वक्तुमनर्हत्वाद्वा सर्वनामनिर्देशः तव सर्वमर्मज्ञत्वेन कथनप्रयोजनाभावाद्वा सर्वनामोक्तिः प्रार्थनीयानां बहुत्वेन कथनाशक्तौ बहुकथने कालविलम्बे जीवनाशक्त्या वा प्रार्थनीयसुखस्य वाचामगोचरत्वाद्वा तथोक्तिः मनागिति एकदैव युगपदित्यर्थः । ननु मनाक्किंचिदर्थकमिति वाच्यं भगवत्स्वरूपपूर्णसुखस्य किंचित्त्वानुपपत्तेः दैन्येन तथोक्तिसम्भवेऽपि स्वसाधनबलेन फलप्राप्तिसम्भावनायां न्यूनसाधने सर्वफलानुपपत्तेर्भवेदपि प्रार्थनासङ्कोचो ननु तदनुग्रहाधीनफलप्राप्तौ तदनुग्रहेण सर्वसम्भवे स्वसुखे सङ्कोचप्रयोजनासम्भवात् ॥ १८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

स्वदुःखनिवृत्तेरनायाससाध्यतामावेदयन्ति । व्रजेति । हे करुणानिधे ! तवाभिव्यक्तिः सर्वेषां व्रजौकसां वनौकसां च विशेषेणालमर्थं वृजिनहन्त्री दुःखनिरसनी अतो दुःखप्रदानायान्तर्धानमनुचितमितिभावः । किञ्च विश्वस्य सर्वस्यालमर्थं मङ्गलरूपा तथा च विशेषसम्बन्धवतीनामस्माकं सम्प्रति विपरीतासम्पन्नेत्यहोऽस्मद्भाग्यमहिमेतिभावः । अतः स्वाभिव्यक्त्यानुरूपैव चेष्टान्याय्येत्याशयेनाहुः । नोऽस्माकं मनागीषदायासरहितत्यागं किंचित्त्यजास्मभ्यं हि धनादरेणापि त्वया दत्तेऽस्मत्कार्यं भविष्यतीति ज्ञापयितुं त्यजेत्युक्तं यतस्त्वय्येव स्पृहायुक्त आत्मा अन्तःकरणं यासां तथाच उत्कटस्पृहायुक्तान्तःकरणानामादरानादरविचारः कुतस्त्य इतिभावः । किन्त्याज्यमित्याकाङ्क्षायामाहुः । स्वजनानां गोपीनां हृदयरोगाणां यदेव नितरां सूदनं नाशनं भवति तदेव तदभिज्ञस्त्वं देहि तन्नाम न वक्तव्यमिति भावः । मनागिति याचकरीत्या वस्तुतस्तु हृद्रुजामिति बहुवचनेन निषूदनमित्यत्र निशब्देनच चिरकालं निरन्तरं मङ्गलोत्तराङ्गसङ्गसुखप्रार्थनीयत्वेनाभिप्रेतं ध्वनितम् अनभिज्ञपक्षे स्वरोगोपशामकौषधप्रदानोत्साहमुत्पादयितुं याचकरीतिमनुसरन्त्यः स्तुवन्ति तव व्यक्तिर्जन्म वृजिनस्य दुःखस्य पापस्यच हन्त्री अनेन सर्वदुर्गाणि यूय मञ्जस्तरिष्यथेति गर्गाचार्येणोक्तत्वात् पूतनादिसंहारेण नलकूबरायुद्धारेणच तत्स्वयानुभूतत्वाच्च किञ्च नैताव दपितु सर्वस्यापि मङ्गलरूपा तव जन्मप्रभृति काप्यमङ्गलस्यादर्शनात् एवं स्तुत्वा स्वाभिमुखं प्रियगालक्ष्याहुः मनागीषत् नतु बहु तत्रापि त्यजावश्यं त्यक्तव्यमेव देहीत्यत्र प्रवृत्त्या किन्तदित्यपेक्षावन्तमिवालक्ष्य भिक्षुपादप्रसारणन्यायमाश्रित्याहुःस्वजनेति। तथाच केषांचिद्दुःखस्य नाशकः केषांचित्पापस्य निवर्तकः केषाञ्चिन्मङ्गलरूपफलविशेषस्य प्रदाता अस्माकन्तु रोगस्य निवर्तको भव नात्र कार्पण्यं तवोचितमिति भावः मानिनीपक्षे जन्मप्रभृति यादृशस्तवस्वभावः स्थितः संप्रत्यपि तथाभूत एवास्माकमपेक्षितः इत्याशयेनाहुः । व्रजेति । तथाच यथास्माकमपि दुःखं न भवेन्मङ्गलञ्च स्यात्तथा त्वयानुष्ठेयमिति भावः तर्हि कथमेवं भवेदितिचेत्तत्राहुः । त्यजेति । हे स्वजन नोऽस्माकं यत्हृदयकान्तीनां निषूदनमीषदौदासीन्यं तत्त्यज यतस्त्वत्कर्तृका या स्पृहा तस्यामात्मा मनो यासां त्वत्कृतमानाशक्तचेतसां तथाच सम्प्रति स्वीकृतमीषदौदासीन्यं विहायागत्य पूर्ववत्प्रार्थनादिकं कुर्वित्याशयः निवृत्तिपक्षे तस्माद्यथास्मत्संरक्षणं जीवानां समुद्धारश्च भवेत्तथा त्वया कृपा विधेयेति प्रार्थयन्ते। व्रजेति । व्रजस्य वेदस्य संसाराऽरण्यपतितानां जीवानां चार्तिवृजिनहन्त्री सर्वानर्थनिवृत्तिकरी तथा विश्वस्यालमङ्गलरूपा परमानन्दाविर्भावकरी हे परमात्मन् ! तव व्यक्तिः साक्षात्कारः तस्मात्स्वजनानां स्वभक्तानामज्ञानाहङ्कारादिलक्षणरोगाणां यन्निषूदनं तदस्मत्सम्बन्धाविज्ञानलक्षणं किञ्चित्स्वजनेभ्यो देहि यतस्त्वद्विषया या स्पृहा जिज्ञासा तत्कर्तव्यतायामात्माभिप्रायो यासां तथाचौपनिषदेन विज्ञानेन स्वजनानुद्धरेति भावः ॥ १८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ते तव श्रीसर्वेश्वरस्य सर्वात्मनः व्यक्तिरभिव्यक्तिः प्रादुर्भावः विश्वमङ्गलं सर्वमङ्गलरूपा व्रजवनौकसां सर्वेषामविशेषेण वृजिनहन्त्री दुःखनिरसनी अतः अङ्ग हे श्रीकृष्ण ! त्वत्स्पृहात्मनां त्वत्स्पृहायुक्तमनसां मनाक् ईषत्किमपि त्यज मुञ्च देहीत्यर्थः किं तत् यत् स्वजनहृद्रोगाणां निषूदनं निवर्तकमौषधमिति गूढोऽभिप्रायः ॥ १८ ॥

---

### भाषा टीका ।

आप को जन्म वृन्दावन वासि सब प्राणिन के दुःख पाप हरवे को और संसार के मङ्गल करवे को भयो है हमारो मन आप के विषै अत्यंत है हृदयकी पीडा के नाश करने वारो जो आप को अधरामृत थोडो सो हम को भी दे देयो ॥ १८ ॥

---

१ यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय ! दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथते न किं स्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां दशमस्कन्धेपूर्वार्धे रासक्रीडायां गोपिकागीतकथनं नाम
एकत्रिंशोऽध्याय ॥ ३१ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिप्रेमधर्पिता रुदत्य आहुः । यदिति । हे प्रिय ! यत्ते तव सुकुमारं पदाब्जं कठिनेषु कुचेषु संमर्दनशङ्किताः शनैर्दधीमहि धारयेम वयम् त्वं तु तेनाटवीमटसि नयसीति पाठे पशून् वा कांचिदन्यां वा आत्मानमेव वा नयसि प्रापयसि तत्ततः तत्पदाम्बुजं वा कूर्पादिभिः सूक्ष्मपाषाणादिभिः किंस्विन्न व्यथते कथंनु नाम न व्यथेतेति भवानेवायुर्जीवनं यासां तासां नो धीर्भ्रमति मुह्यतीति ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

एतावत्पर्यन्तं निजेष्टमेव बहुधा प्रार्थितमुपसंहारे च श्रीभगवतो वनाटनमनुसन्धाय तेनच श्रीपादाब्जयोर्व्यथां सम्भाव्य निजप्रार्थितमप्यनादृत्य प्रेमभरप्रधर्षिताः केवलं तत्सुखमेव प्रार्थयमाना रुदत्यः आहुः । यदिति । अम्बुरुहरूपकेण सिद्धेऽपि सुकोमलत्वे सुजातेतिविशेषणं ततोऽपि परमकोमलत्वविवक्षया भीता इत्यत्र शनैरित्यत्र हेतुः कर्कशेष्विति श्लेषेणैवं निजनित्यं नवयौवनं तेन दुःखाधिक्यञ्च निवेदितं दधीमहीत्यत्र हेतुः हे प्रियेति प्रियत्वेन तेष्वेव तस्ययोग्यत्वात् एवंपूर्वोक्तनलिनसुन्दरमपि स्वानुभवेनदूरीकृतं तेनाटवीमटसि अधुना निशि वने भ्रमसीत्यर्थः । यद्यपि प्रेमोद्रेकवैवश्यात् पूर्वोक्तानुसन्धानेन पौनरुक्त्येऽपि नैव दोषप्रसङ्गः किन्तु गुण एव तथापि चळसीति पूर्वं दिवाभ्रमणमुक्तम् अधुना चाटवीमटसीत्यनेन रात्राविति भेदः कल्प्यः दिने गोचारणाय तृणमयप्रदेश एव परिभ्रमणात् कूर्पादिभिः सम्बन्धो न स्यादित्युक्तमेव रात्रौ चाधुना सम्भवेदेवेत्युक्तं कूर्पादिभिरिति आदिशब्दात् कर्करादयः यद्यपि श्रीवृन्दादेव्यादिप्रयत्नेन श्रीवृन्दावनस्वभावेनच तेषामपि तत्र सत्ताशङ्का नास्ति तथापि अनिष्टाशङ्कीनि बन्धुहृदयानि भवन्तीत्यादिन्यायेन तासां सा सञ्जायेतैव अतः स्वयमेवोक्तं किंस्विदिति भ्रमति मुह्यतीत्यत्र हेतुः भवदायुषामिति अतस्तैर्व्यथा सास्मज्जीवन एवोत्पद्यते तदधुना प्राणान् धारयितुं कथंचिदपि न शक्नुम इतिभावः एवमधुना मूर्च्छया पूर्वतोऽप्यधिकव्यथा सूचिता नयसीति पाठे गच्छसीत्येवार्थः नय पय गताविति धातोः सर्वान्ते वचनमिदं श्रीराधादेव्याः स्वजनेत्यादिना स्मारितायाः इव ज्ञेयं तत्र च हृद्रुजां निषूदनमिति तेन पादाब्जेनाटव्यटनमेव हृद्रुजः ततो निवृत्तिरेव तन्निषूदनमित्यर्थः । तथापि सन्दर्शने पर्यवस्यत्येव न इति वहुत्वं निजसखीवर्गाभिप्रायेण एवं श्रीचरणारविन्दस्य परमकोमलत्वेन वनपरिभ्रमणव्यथामाशङ्क्य तदुद्दिश्य वारद्वयमुक्तम् अतः स्तनेषु तस्य धारणमपि वारद्वयं प्रार्थितं सारङ्गाणां पदाम्बुजमित्यादिन्यायेनैव तात्कालिकदैन्येन भक्त्या तस्मिन्नेवासक्तेः तथा श्रीमदधरामृतमपि वारद्वयं प्रार्थितं तस्यैव निजजीवनहेतुत्वात् तथा श्रीमुखस्य च मुहुर्वर्णनं तेनैव विशेषतो मोहितत्वात् एवमन्यच्चोह्यं सहृदयैस्तदेकरसिकैरित्येषा दिक् ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिण्याम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु कास्ता हृद्रुजः किं वा तन्निषूदनमित्यपेक्षायां रुदत्य इवोद्दिशन्ति यदिति । अम्बुरुहरूपकेण सिद्धेऽपि सुकोमलत्वे सुजातेति विशेषणं ततोऽपि परमकोमलत्वविवक्षया शनैरित्यत्र हेतुः भीता इति तत्र च हेतुः । कर्कशेष्विति । स्तनेषु दधीमहीत्यत्र हे प्रियेति प्रियत्वेन हृद्येव तत्रापि स्तनेष्वेव धारणस्य योग्यत्वात् तेनाटवीमटसि अधुना निशि वने भ्रमसीत्यर्थः । स एव चरणस्यैव धारणे पुनः पुनस्तदुल्लेखे च हेतुरुक्तः अनिष्टाशङ्कया तत्रैव वर्धितस्नेहातिशयत्वात् पूर्वं गोचारणाय तृणमयप्रदेश एव परिभ्रमणात् प्रायिकत्वेन शिलेत्याद्युक्तं सम्प्रति तु कर्कशप्रायत्वेन दृश्यमाने पुलिनोपरितनयमुनातटे भ्रमणात् कूर्पादिभिरिति यद्यपि तदानीं श्रीवृन्दादेव्यादिप्रयत्नेन श्रीवृन्दावनस्य स्वभावेन च तेषामपि तत्र तत्राशङ्का नास्ति तथापि अनिष्टाशङ्कीनि बन्धुहृदयानि भवन्तीत्यादिन्यायेन शङ्का तासां सा सञ्जायेतैव भ्रमति मुह्यति अत्र हेतुः भवदायुषामिति इत्थमेवोपक्रान्तं त्वयि धृतासव इति मध्ये चाभ्यस्तं चळसि यद्व्रजादिति अतस्तैर्या व्यथा सास्मज्जीवन एवोत्पद्यते तदधुना प्राणान् धारयितुं कथं चिदपि न शक्नुम इति भावः । तदेव तादृशाशङ्का एव हृद्रुजः तन्निषूदनं च स्वयमेव परमप्रियतमाङ्कसळाळनसुखनिवासनमेवेति द्रुतमेव समागच्छेति भावः । नयसीति

---

१ अयंश्लोकः श्रीविजयध्वजमते नास्ति ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पाठे गच्छसीत्येवार्थः । नय पय गताविति धातोः तदेव तासां सर्वस्यापि भावस्य प्रेमैकमयत्वे स्थिते श्रीभगवतोऽप्येवमेव ज्ञेयं हन्तेमा मयि प्रेमैकमय्य इत्यादिभ्यः परमसुखमयात्मदानमेव समञ्जसं तच्च योग्यत्वादेवमेवमित्यालोच्य तादृशप्रेमविलासमयतत्तदिच्छा जायते इति एवमन्यदप्यूह्यं सहृदयैस्तदेकरसिकैरिति ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकत्रिंशोऽध्याय ॥ ३१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तत् पदं कूर्पादिभिः तीक्ष्णशिलादिभिः किं व्यथते व्यथत एवेति धीर्भ्रमति भवदायुषां त्वदधीनजीवितानाम् ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतिप्रेमधर्षिता रुदत्य आहुः । यदिति । हे प्रिय ! तव सुकुमारं पदाब्जं तत्त्वः कठिनेषु कुचेषु स्तनेषु संमर्द शङ्किताः शनैः धारयामः तेन पदाब्जेनाधुना ऽटवीमटसि चरसि नयसीति पाठे वनंप्रति पशूनात्मानं वा नयसि प्रापयसि तत्पदाब्जं कूर्पादिभिस्तीक्ष्णसूक्ष्मशिलादिभिः किंस्विन्न व्यथते कथं नु नाम न व्यथते व्यथते एवेति नोऽस्माकं धीर्भ्रमति अस्वस्था भवति कथंभूतानां नः भवानेवायुर्जीवनं यासां तथाभूतानां त्वदधीनजीवितानामित्यर्थः ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कास्ता हृद्रुजः किंवा निषूदनमित्यपेक्षायामाहुः । यत्त इति । विभ्रमा एव रुजः । तच्च स्तनेषु शनैस्तन्निधानमेव तन्निषूदनं अत एवैतदेव मुहुः प्रार्थितमिति भावः ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एक त्रिंशोऽध्यायः ॥ ३१ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ प्रथमवक्तव्य एवोपसंहरन्ति । यत्त इत्यादि । हे प्रिय ते तव यत् सुकुमारचरणाम्बुरुहं कर्कशेषु कठिनेषु स्तनेषु भीताः सत्यः शनैः दधीमहि बिभृम तेन चरणाम्बुरुहेण अटवीमटसि तत्किं न व्यथते अपितु व्यथते कैः कूर्पादिभिः अतः भवानेवायुर्यासां तासां नो धीश्चित्तं भ्रमति अनवस्थिता भवति अतःपरमटव्यटनाद्विरम प्रादुर्भूयतामिति वाक्यार्थेनोपसंहारः समवेता जगुः कृष्णमिति पूर्वाध्यायान्ते जगुरिति क्रियया जयतीति पद्यैर्गानमेव तासां नतु तत्तदुदितं कविना पद्यैर्निबद्धं तेन रागतालस्वरसहितमेव गानमिदं तत्र च कौशलमवान्तरं बोद्धव्यं प्रतिपद्यं प्रथमपादाद्ये द्वितीयो वर्णः स एव पादान्तरस्य च द्वितीयं चाब्जरुहाननं चारु दर्शयेत्यत्र द्वितीय एव भवितुमर्हति जकारः स प्रथमोऽभूत् जड उदीक्षतामित्यत्र जकारस्थाने डकारस्तद्वर्ण्यत्वादिति स्खलितदोषो नाङ्गीकार्यः इदन्तु वैचित्र्यं गानस्य ॥ १६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

काचिद्राजसतामसी सखेदमाह । यत्तइति । सुजातं यच्चरणाम्बुरुहं चरणकमलं भीताः सत्यः स्तनेषु शनैर्दधीमहि शनैर्द्धारणे हेतुः कर्कशेष्विति । प्रियेतिसंबोधनात् स्नेहाद्धारणं सुजातमिति यथा महत्सम्यक् प्रकारोत्पन्नं शीतलं सुगन्धितापनाशकं भवति अतः स्तनेषु स्थापनं प्रियत्वात् धार्ष्ट्येन स्थापनं तेनैवातिकोमलेन अस्मान् त्यक्त्वा अस्मद्दोषेण इदानीमटवीमटसि स्वयमस्मद्दुःखेन स्थित्वा यद्यन्यस्मै दुःखं दातुं शक्नुयात् तर्हि प्रगच्छेत् ननु स्वयमपि दुःखं प्राप्य तत्रास्माकं संदेहः किं व्यथते नवेति स्विदित्युत्प्रेक्षायां किं न व्यथते अपितु व्यथत एव कूर्पादिभिः शर्करादिभिः कूर्पशब्देन विषमाः शर्करा उच्यन्ते तर्हि व्यथत एव कथमुत्प्रेक्ष्यते तत्राहुः । भ्रमति धीरिति । बुद्धिः केवलं परिभ्रमति यदि व्यथत इति निश्चयः स्यात् तदा बुद्धिः शान्तैव भवेत् पुनर्यदा याति तेन संदेहः तत्र हेतुः भवदायुषामिति । भगवल्लीलार्थमेवायुर्यासां पूर्वन्तु खेदेन मनःपीडा निरूपिता इदानीन्तु मूर्छा निरूप्यत इत्यन्तःस्थितिः एवं सर्वासां मूर्च्छापर्यन्तं स्थितिर्ज्ञातव्या पुनर्लीलाप्रवेशे प्रलापः पुनः स्वरूपास्थितौ गानमिति एवं साधनपरीक्षयोर्यावत्तावत् तासां तापो निरूपितः ॥ १६ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे
अष्टाविंशाध्यायविवरणम् ॥ २८ ॥ ३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु भो रसिकाः ! यत् प्रार्थयध्वे तन्मे चरणकमलं सम्प्रति वनभ्रमणसुखे निमज्जत्यतो युष्मत्कुचेषु स्थातुं नावकाशं लभते तत्र सरोदनमाहुर्यत्ते इति । तव सुजातमतिसुकुमारं यच्चर-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

णाम्बुरुहं स्तनेषु दधीमहि तेनापि भीता एव वयं तेन चरणाम्बुरुहेण अटवीम् अटसीति काकूक्त्या हन्त हन्त कीदृशमनर्थमसमसारसं करोषीति भावः । ननु कथं भीतास्थ तत्र विशिंषन्ति । कर्कशेष्विति । स्तनानां कठोरत्वमेव भयहेतुरित्यर्थः। किमिति तर्हि धत्थ तत्राहुः । हे प्रियेति । त्वं तेष्वेव स्वचरणार्पणे प्रीणासीति त्वत्सुखमालक्ष्यैवेति भावः । किञ्च । तदानीं चरणेन स्तनपीडने त्वत्सुखे साक्षाद्दृष्टेऽपि चरणसौकुमार्यदृष्ट्यैव व्यथावश्यं सम्भवेदेवेति शङ्कया अस्माकं खेदो जायत एवेत्यत आहुः । शनैर्दधीमहीति । त्वत्सख्येऽप्यार्तिशङ्कया खिन्नत्वमिति महाभावलक्षणमिदं तेन त्वत्संयोगेऽप्यस्माकं दुःखं विधात्रा ललाटे लिखितमेवेति ध्वनिः । किं कर्त्तव्यं तपोभिर्विधिं प्रति स्तनानां कोमलत्वे प्रार्थ्यमाने तव सुखं न स्यात् कर्कशत्वे च त्वच्चरणानां व्यथेत्युभयथैव सङ्कटमस्माकमित्यनुध्वनिः । भवत्वस्माकमेवं संयोगवियोगयोः कष्टम् । त्वन्तु स्वैरित्वेऽपि किं कष्टं सहसे यत्तेनाटवीमटसि किं चरणाम्बुरुहमेतदटव्यटनयोग्यमित्युपालम्भो व्यञ्जितः । ननु यदा यन्मे मनस्यायाति तदा तदहं करोम्यत्र भवतीनां किमित्यत आहुः । तच्चरणं न व्यथते किं स्विदपि तु व्यथते एव किन्तु त्वमेवास्मास्विव स्वाङ्गेष्वपि निर्दय एव । किम्वा एता मद्दुःखेनातिदुःखिन्यो भवन्ति तस्मादेता दुःखयितुं प्रवृत्तेन मया स्वदुःखमपि कर्त्तव्यं सोढव्यञ्चेत्याशयेन तां व्यथामपि सहसे किम्वा अस्मद्दुःखदर्शन एव तव महासुखमतस्तां व्यथामपि त्वं सुखमेव मन्यसे । किम्वा संसर्गजा दोषगुणा भवन्तीति न्यायेन यत् पूर्वं ते हृदयं कुसुमसुकुमारमासीत्तदेवास्मत्कठोरस्तनसङ्गेन सम्प्रति कठोरमभूत् यथा तथैव त्वच्चरणमपि स्तनसङ्गेनैव कठोरमभूदतः कूर्पादिभिरपि न व्यथते । किम्वा त्वच्चरणस्पर्शमाहात्म्याद्व कूर्पादयोऽपि कोमला एव भवन्ति । किम्वा धरण्यैवातिकारुण्यात् त्वन्माधुर्यास्वादलोभाद्वा त्वच्चरणाविन्यासस्थले स्वजिह्वा उत्थाप्यते । किम्वा त्वमस्मत्तोऽपि प्रेमसिन्धुदैववशादस्मद्विरहसन्तप्तो भ्रमन्नुन्माददशां प्राप्तः स्वचरणव्यथामपि नानुसन्धत्से इत्येवं नाना कारणानि परामृशन्तीनामस्माकं धीर्भ्रमति । ननु क्वापि निश्चयं लभते इति भावः । नन्वेतत् कियत् स्वदुःखं व्यञ्जयथ । अहन्तु तद्दुःखं दुःखं न मन्ये येन प्राणास्तिष्ठन्तीति चेदत आहुर्भवदायुषामिति भवति त्वय्येवायूंषि भवानेव वा आयूंषि यासां तासां कल्याणवति त्वयि स्थिते त्वेतावद्भिरपि कष्टैरस्मदायुषां न नाश इत्यर्थः । अयं भावः । भवानिवास्मान् दुःखयितुं प्रवृत्तो विधिरेतद्विचारयति स्म यदासामायूंषि सम्प्रत्यास्वेव स्थापयिष्यामि तदा मद्दत्तै रतिसन्तापैर्दग्धायुष इमाः सद्यो मरिष्यन्ति । ततोऽहं पुनः काभ्यो दुःखं दास्यामि तस्मादासामायूंषि मत्सधर्मणि मद्बन्धौ कृष्णे निधाय यथेष्टमिमा अम्रियमाणा अपारमेव दुःखं भोजयामीति अत एव वयम् न म्रियामहे । यद्वा । एवं धीरेव तदनिश्चयाद्भ्रमति । प्राणास्त्वस्माकं निश्चयेन देहान्निर्गच्छन्त्येवेति त्वं सम्प्रति पश्येति भावः । नन्वायुषि स्थिते कथं नाशस्तत्राहुः । भवदायुषां त्वत्समर्पितायुषां स्वायूंषि तुभ्यमस्माभिः सम्प्रति दत्तानि । तैश्चिरं त्वं व्रजे खेलेति भावः ॥ १९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकत्रिंशोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ ३१ ॥

---

केनचित् कृता विशुद्धरसदीपिका ।

अथ तासामेतासां च परमदैन्येनाधीरप्रलपितमवकलय्य जातकारुण्यान्नित्यसहचर्य्यस्तदाकर्षणमन्त्रमिव तत्सुखप्रतिपादकमेकं वाक्यमतिगाम्भीर्य्येणाहुः । यदिति । हे प्रिय । प्रेमविषय यत्ते असाधारणं सुजातं परमकोमलं चरणाम्बुरुहं कर्कशेष्विति सर्वदा पुंमात्रास्पृष्टेष्वित्यर्थः । ततश्च कामासक्तिः परिहृता सख्यरुचे रुत्कटत्वादित्युक्तमुज्ज्वले यूथाधिपत्वे इत्यादिना स्तनेषु शनैर्दधीमहि नित्यं संधारयामः सम्वाहनायेति शेषः वर्तमान प्रयोगेण नित्यता सूचिता तच्च सम्वाहनं सुरतश्रमापनोदनायेति गोप्यत्वादप्रकाशत्वेनोक्तं भीता इति शनैर्धारणे हेतुः ततश्च सौकुमार्य्यं सूचितं वयं स्तनेषु धारयन्त्यो व्यथामस्त्वं तु कूर्पादिष्वपि धारयन्न व्यथस इत्यतिवैषम्यमिति भावः ततश्च तदेकसुखत्वं सौहृदविशेषश्चोद्दीपकचेष्टया व्यञ्जितः चरणाम्बुरुहमित्येकत्वं जात्यभिप्रायेण किम्वा द्वितीयस्य सङ्गोप्यत्वात्तथोक्तिः तेन चरणाम्बुरुहेण यद्वा तेन कर्कशत्वेनेत्यव्ययत्वादाक्षेपलभ्यम् एवञ्च स्वकृतमेव भुज्यते अस्माभिरिति विषादः अहो तिष्ठत्वस्माकं विरहदुःखमतिकर्कशस्तनस्पर्शदोषेण संक्रमितकाठिन्यं तच्चरणाम्बुरुहं कूर्पादिभिः अतिसूक्ष्मैस्तीक्ष्णैः शिलाखण्डादिभिः तृणांकुरैश्च न व्यथते किंचित् व्यथत एवेत्यर्थः यद्यपि श्रीवृन्दावनतृणादीनि न तादृशानि तथाप्यनिष्टाशङ्कीनि बन्धुहृदयानीति न्यायेन जायेतैव शङ्केति तत्र हेतुः भवदायुषामिति भवत्सुखसुखीनां न इति पूर्वाभ्यो वैलक्षण्यमुक्तं धीर्भ्रमति निश्चयात्मिकापि दोलायते किं पुनर्मानसमिति भावः ॥ १९ ॥

इति श्रीभागवतेमहापुराणेदशमस्कन्धेरासपञ्चाध्यायीव्याख्याने विशुद्धरसदीपिकायां तृतीयोऽध्यायः ॥ ॥ ३ ॥

मूलस्य एकत्रिंशोध्यायः ॥ ३१ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तत्र बहुषु हृद्रोगेष्वन्यरोगाणां खदुःखैकहेतुत्वमेव एकस्य तु प्रियतमदुःखसम्भावनारूपतयासर्वतोबलीयस्त्वात्प्राधान्येन तमेव रोगमाहुः यत्ते सुजातेति। चरणाम्बुरुहमित्यत्रोपमावाचकाद्यप्रयोगे तदात्मकत्वनिर्देशेन मृदुमञ्जुसुरभ्याल्हादकतापोपशमाद्यतिसादृश्यं विवक्षितं सुजातेतिविशेषणेनतु सर्वोपमाधर्मेभ्यः उपमेयेऽतिशयसूचना ननु निश्चितसाध्यवान् दृष्टान्तः सन्दिग्धसाध्यवान्पक्ष इति न्यायविदां स्थितिरिति कथमुपमात उपमेय साध्यगुणातिशय इति तत्राहुः। यदिति यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्या मनोवाचामविषयत्वेन वर्णयितुमशक्यं "सर्वं

### श्रीरामनारायणकृतभावभावविभाविका ।

वेदा यत्पदमामनन्तीतिश्रुत्या सर्ववेदतात्पर्यगोचरत्वेन चातिचित्रं तथाच पर्वते पक्षे प्रत्यक्षाभावेन प्रतिपादने सन्दिग्धेऽपि वह्नौ न महानसचुल्ह्यन्तर्गतनिश्चितस्वल्पाग्नेर्नातिशयः किन्तु दूरेऽपि भ्रमादिरिपुपराभावकधूमध्वजतेसस्ततोऽतिशय एवेत्याशयः तदतिशयगुणेऽपि हेतुस्त इति सच्चिदानन्दघनस्य तव पदस्य तद्गुणानाञ्च "निश्चेतनात्मकशरीरगुणैश्च हीनः आनन्दमात्रकरपादमुखोदरादि"रित्यादिवचनैरानन्दमात्रत्वं तथा निर्दोषपूर्णविग्रह आत्मतन्त्रः किन्तु निर्दोषचैतन्यसुखनित्यां स्विकां तनुमित्यादिवचनैर्म्लानिविकृतिनाशादिदोषशून्यत्वंचरणाम्बुरुहस्य तद्युक्तत्वमिति महानुत्कर्षः तच्चरणाम्बुरुहं वयं हृच्छयादितापोपशमस्वाल्हादाद्यर्थं स्तनेषु दधीमहि अत्र चरणाम्बुरुहमित्याधेयस्यैकवचनेन स्तनेषु दधीमहीत्याधाराणां बहुत्वनिर्देशेन भगवच्चरणस्य विभुत्वमपि द्योतितमन्यथा परिच्छेदे त्वपरिमितस्तनेषु युगपद्धारणासम्भवः स्यात् तत्र प्रिय-इति संबोधनेन हेतुगर्भितेन प्रियत्वाच्चरणधारणमस्माकं युक्तमेवेति ध्वनिः तथापि चरणस्यातिमृदुत्वेन भीता अतः शनैरेव दधीमहि भीतौ हेतुः । कर्कशेष्विति । अत्र स्तनानां कर्कशत्वेन सर्वासां नवकिशोरवयस्त्वं तत्र बोध्यं त्वच्चरणस्य मञ्जुसुरभितापोपशमनाल्हादकत्वादिगुणाः स्तने धारणावश्यकत्वप्रयोजकाः मृदुत्वं तद्धारणे भीतिप्रयोजकमतस्तव चरणगुणैरेतैस्तत आकृष्टमतयो वयं शनैर्दधीमहि तेन मृदुतमचरणेनाटवीमटसि इति वर्तमानार्थकप्रयोगेण वर्तमाननिशाकालद्योतनं तथाच मम गोचारकस्य स्वभावप्राप्तत्वात्किं ताच्चिन्तयेति शङ्कायां यदा तवाह्नि परिदृश्यमानभूमिगुणदोषावसरे काननाटने शिलसदृशतृणांकुरावसादभयान्नो मनः कलिलतां याति तदा किमु वाच्यमधुना निशि तथा प्रकाशाभावे कूर्पादिव्याप्तयमुनोपवनेऽटसि तथा तदा बहुगोपबालसहकारेण तेऽपि त्वदेकप्राणाः तव कुपथगमननिषेधेन रक्षका भवेयुरधुना त्वाहूतमपि निजकिङ्करीपरिकरं विहाय एक एवाटसि किञ्च तत्र तु गोचारणं प्रयोजनमत्र तु न तथा किन्तु गवामिन्द्रियाणां चारणस्यास्मासु सम्भवेऽपि तत्कुलधर्मात्मकगोचारणत्यागेनापि केवलमस्मद्दुःखदानायाटवीमटसि तत्रापि त्वत्सुखभावनायां स्वदुःखमपि स्वीकुर्मस्तव सुखमपि नैव सम्भाव्यते प्रत्युत त्वच्चरणाम्बुरुहं किं कूर्पादिभिर्न व्यथते आपितु व्यथत एवेति तथाच गवां पशूनां चारणतालक्षणपरोपकाराय स्वचरणैर्वनगमनाचरणे स्वदुःखसहिष्णुना परमकृपालुसत्पुरुषेण भवतीति त्वसरीतिर्विदापि कुपुरुषैरप्यकार्य्यस्य सुखाभावेऽपि प्रत्युत स्वदुःखसम्भवेऽपि पराणां स्ववर्णैकरतानां निजैकजीवनानां स्वयमाहूतानां विनयप्रार्थनावतीनां दुःखदानस्याचरणं कथमङ्गीकृतमिति नो धीर्भ्रमति तदुक्तं नीतिज्ञैः—

> ते वै मानुषराक्षसाः परसुखं स्वार्थाय निघ्नन्ति ये ।
> ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥

यद्वा तेन कर्कशकुचेषु शनैर्धारणभयेनाटवीमटसि तर्त्कि शनैः स्तनस्पर्शेन व्यथतेऽधुना वनाटने कूर्पादिभिर्न व्यथते इति नो धीर्भ्रमति यद्वा नस्तव रमणसुखाय त्वद्भ्रमणेन सुखायच प्रवृत्तानां दुःखाय स्वदुःखस्वीकारेण भ्रमतस्तव सुखघनस्यापि दुःखभ्रमेण नो धीर्भ्रमति अस्माकमात्मनोऽसह्यमपि वर्णितं दुःखजातं न तच्छदसह्यं यथास्मान्निमित्तभ्रमणे त्वत्पादकूर्पादिव्यथासम्भावितदुःखमसह्यमिति नो धीर्भ्रमति ननु मम दुःखेन किमर्थं भवतीनां खेदस्तत्राहुः भवदायुषां त्वदेकजीवनानां त्वत्खेदसम्भावनायां सद्यो मरणमिति भावः। तस्मात्त्वन्मिलनेनैव जीवनम् सर्वखेदोपशमश्चेति प्रसीदेति भावः ॥ १९ ॥

> तव प्रेरणया देव ! गोपीगीते यथामति ।
> शुभाशुभं मया गीतं तेन तुष्टो भव प्रभो ! ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धान्तर्गत
रासपञ्चाध्यायीव्याख्यायां श्रीचन्द्र-
भागाख्यविष्णु सख्यापन्न श्रीरामनारायण रचितायां
भावभावविभाविकायां तृतीयाध्यायव्याख्या समाप्ता ॥ ३ ॥
मूले एकत्रिंशः ॥ ३१ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं बह्वक्तेः परं विरहव्याकुलस्वान्ताः गतधैर्य्याः रुदत्य आहुः । यदिति । यत्तव सुजातं चरणकमलं स्तनेषु भीताः सत्यः शनैर्दधीमहि भयेन शनैर्धारणे हेतुः कर्कशेषु ननु एवं तर्हि किमर्थं धारयथेति चेत्तत्राहुः । हे प्रिय ! स्वसुखार्थं धाष्टर्येन धारयामः तत्रापि सुजाताम्बुरुहरूपत्वात्सुगन्धिशीतलं हृदयस्थतापोपशामकं प्रियपदमतस्तद्धारणमिति सूचनार्थमुक्तं सुजातेति त्वन्तु तादृशकोमलेनास्मान्परित्यज्यास्मद्दोषेण सम्प्रति रात्रौ अटव्यां शर्कराद्व्याप्तमरण्यमटसि भ्रमसि किंस्वित्त्वत्पादपद्मं तत्रत्यशर्करादिभिर्न व्यथते यद्यपि तेन तादृशवनभ्रमणेन तद्व्यथते नवेति सन्देहो भवति तथापि नोऽस्माकं सन्देहोऽस्मद्दोषवशात्पलाय्यते तेन त्वया तद्व्यथामगणयित्वा भ्रमणाभितत्वाद्व्यथत एवेति निश्चयात् तथाच स्वसुखहेतुना तत्पीडापि यद्यस्माकं सह्या तदा परमदुःखकारणभूता वनभ्रमणजन्या तद्व्यथा त्वसह्यतमा नोऽस्माकं बुद्धिस्तामनुसन्धाय भ्रमति मूर्च्छां गन्तुं घूर्णत इत्यर्थः । यतो भवदायुषां त्वदेकप्राणानामस्माकं तादृशभवत्पादपीडानुसन्धानेन मरणमेवोपस्थितमहो कष्टमिति भावः अनभिज्ञापक्षे अहो यत्प्रार्थ्यते तन्मयावगतं तथापि मदीयं पादसरोजं युष्मत्स्तनेषु स्थापितं व्यथामवाप्नोति तेषां कठोरत्वादतो भवतीनां परोक्षं वन एव भ्रमामीत्याशङ्क्य सरोदनमातिचित्रमाहुः । यदिति । तथाचातिसुकुमारत्वात्पीडाशङ्कयास्माभिः कठोरेषु स्तनेषु शनैः स्थाप्यते तेन त्वमटवीमटसीत्यति चित्ररूपोऽन्यायस्त्वय्येव शोभत इति भावः । स्तनस्पर्शजनितदुःखासहनं कूर्पादिस्पर्शोत्थव्यथासहनञ्च किंनिबन्धनमिति तु वयं न विद्म इत्यप्यनेन ध्वनितं तव मनसोऽवस्थां को वेद कीदृशी वर्त्तते ऽस्माकम्बुद्धयस्तु संशयचक्रारूढाः स्थैर्यं न लभन्ते किन्नुमे इत्याहुस्ते व्यथते परमसुकुमारत्वादादौ स्विन्न व्यथते भ्रमणे प्रवृत्तत्वादिति द्वयोः पक्षयोरन्यतरस्या निर्धारणादस्मद्धीः भ्रमति तथाहि अहो तस्य पदन्तु व्यथते तथाप्यसावस्मास्विव स्वाङ्गेष्वपि निर्दयः किंवास्मद्दुःखार्थं स्वाङ्गे दुःखमुत्पाद्य सहते किंवास्मद्दुःखजन्यसुखेन दुःखमपि सुखमेव मन्यते किंवा दैववशादिदं प्राप्तः प्रेमभराक्रान्तस्वान्तत्वादुन्मादशां प्रविष्टस्तत्पीडां नानुसन्धत्त इत्यादिप्रथमपक्षानुकूलतर्कान्प्रति धावति

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

किं संसर्गजा दोषगुणा भवन्तीति न्यायाद्यथाऽस्मद्धृदयमतिकोमलमप्यस्मत्कठोरकुचसंगेनातिकठोरमभूत्तथा त्वत्पदाम्बुजमप्यतो न व्यथते किंवा सुकुमारस्त्वङ्गेन कूर्पादयः कोमलतां गताः किंवा भूमिरेव कारुण्यान्माधुर्य्यरसास्वादनाय पादाधः स्वजिह्वां स्थापयति किंवा कयाचिदिन्द्रजालविद्यया भूमिं न स्पर्शयतीत्यादि द्वितीयपक्षतर्कान्प्रति धावति ननु मिथ्येदं प्राणधारणादितिचेत्तत्राहुः भवत्येव समर्पितमायुर्यासामतः सुखिनि त्वयि स्थितत्वान्न नश्यन्तीति भावः । मानिनीपक्षे अतिकोमलचित्तस्य परमसुकुमारावयवस्य स्वभावविपर्य्ययमालक्ष्य वयमति व्याकुलाः सम्पन्नाः किंकुर्म इत्याशयेनाहुः । यदिति । कुचानां कठोरत्वाच्चरणस्यातिसुकुमारत्वाद्धारणे भयं तत्र तत्तद्धारणे प्रीयसे इति कृत्वा तद्धारणं यतो हे प्रिय ! तथाच तव संयोगोऽप्यस्माकं दुःखहेतुरेव यतः कुचानां कठोरत्वे तव पादपीडाप्रयुक्तं दुःखं व्रतादिना तत्कोमलत्वप्रार्थनायां तव दुःखानुसन्धानेन दुःखमिति भावः । तादृशेनापि त्वमटवीमटसि तत्तु निश्चयेन व्यथत एव तत्तस्मिन्नपि दया नोत्पद्यते ऽतस्तव स्वभावविपर्य्ययमालक्ष्यास्मद्धीर्भ्रमति मरणावस्थां गन्तुं प्रवृत्ता त्वन्त्वस्मद्विरहितो विशिष्टास्मदायुर्भिरपि चिरं सुखेन विहरेत्याशयेनाहुः । भवत्यर्पितायुषामिति । निवृत्तिपक्षे । जीवरूपेण संसरणं तन्नास्मभ्यं रोचते पुनरपि वदाम इत्याशयेनाहुः । यदिति । तव पदं ब्रह्मणा साधकानुग्रहार्थं प्रकटितं सगुणस्वरूपे सुजातचरणाम्बुरुहे यस्य तदपि कठिनानुष्ठाने प्रतिपादकेषु स्तनस्थानीयेषु कर्मोपासनाप्रतिपादकयोग्येषु अहो निर्गुणस्य निरवयवस्य कथमर्चनादिकं प्रतिपादयाम इति भीताः सत्यः शनैः साधकानां चित्तशुद्ध्यादिक्रमेण तत्वज्ञानोदयार्थं दधीमहि तेनैव जीवत्वं प्राप्तेन रूपेण संसाराटवीमटसि तत्किंस्विन्न व्यथते किन्तु व्यथत एव तत्रत्यैः कूर्पादिस्थानीयैराध्यात्मिकादिदुःखैः यद्वा किं व्यथते नवेति अस्माकं धीर्भ्रमति अनेन संसारस्यानिर्वचनीयत्वं बोधितं यतो भवद्बोधाद्यर्थमेवास्माकं प्रादुर्भावोऽत एवं वदाम इत्याहुर्भवदिति ॥ १९ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिमिश्रसूरिकृतायां भागवतगूढार्थदीपिकायां दशमस्कन्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या आहुः । यदिति । हे प्रिय ! ते तव सुजातं सुष्ठु जातं निरतिशयसुन्दरं चरणरूपमम्बुरुहं कमलमित्यर्थः । कर्कशेषु कठिनेषु सम्मर्दभयाच्छनैर्दधीमहि धारयेम वयम् तेन सुजातचरणाम्बुरुहेणाटवीमटसि गच्छसि तत्सुजातं चरणाम्बुजं कूर्पादिभिः सूक्ष्मपाषाणादिभिः किं स्विन्न व्यथते अपि तु व्यथते एव अतो भवदायुषां भवानेवायुर्जीवनं यासां तासां नो धीर्भ्रमति अस्वस्था भवति ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकत्रिंशाध्यायार्थप्रकाशः ॥ ३१ ॥

---

भाषा टीका ।

जा आपके चरणकमल को हम आपके दुःखहोवे की भयते अपने कठोर स्तननपै बडे धीरे ते रखतीं हीं हे प्यारे ! वाही चरण ते तुम अब वनमे विचरो हो तो कङ्करनते वे चरण दुखतहोंगे याते हमारी बुद्धि बडे भ्रम को प्राप्त होवे है हमारी आयु जीवन तो आप के अधीन है ॥ १९ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धरासपंचाध्याय इकत्तीस में अध्याय की भाषा टीका समाप्त ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## ॥ द्वात्रिंशोऽध्यायः ॥

### श्रीशुक उवाच

इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं राजन् ! कृष्णदर्शनलालसाः ॥ १ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ।
तत्राविर्भूय गोपीस्ताः सान्त्वयामास मानयन् ॥
स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः ।
सदयं नन्दयन् गोपीरुद्रतो नन्दनन्दनः ॥

इतिगोप्य इति । इत्येवं प्रभृतिचित्रधा अनेकधा सुस्वरमुच्चैः कृष्णदर्शने लालसातिस्पृहा यासां ताः ॥ १ ॥

---

#### श्रीमत्सनातनगोस्वामिकृतबृहत्तोपिणी ।

इति उक्तप्रकारेण पूर्वोक्तमन्यच्चेत्यर्थः अत एव तैर्व्याख्यातमिति एवं प्रभृतीति । एतदादिकामित्यर्थः । यद्वा चित्रधेत्यस्य विशेषणम् उक्तबहुप्रकारेणेत्यर्थः । प्रकर्षेण प्रेमोद्रेकादुच्चैर्गायन्त्यः कदाचित् प्रकर्षेण लपन्त्यश्च यद्वा विलपन्त्यः किम्वा विरहव्याकुलतया किञ्चिदनर्थकं वचस्तन्वन्त्यः चित्रधेत्यस्य पूर्वेण परेणान्वयः सुस्वरं करुणादीर्घस्वरेणेत्यर्थः । कृष्णस्य चित्ताकर्षकस्य दर्शने लालसा यासामिति रोदने प्रयाणादौ वा सर्वत्र हेतुः हे राजन्निति तद्दर्शने लालसया तद्युक्तमेवेत्यस्यार्त्तिसम्बोधनम् अन्यत्तैर्व्याख्यातं तत्र इति गोप्य इतीत्याधिकं लेखकभ्रमादिति अथवा कृष्णदर्शनलालसा अपि अधुना तदनादरेण इति एतत्पूर्वोक्तं श्रीराधादेवीगीतमेव सर्वाः प्रकर्षेण तद्विद्धचित्ततया परमासक्त्या गायन्त्यः प्रकर्षेण लपन्त्यश्च अन्यत्समानम् ॥ १ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोपिणी ।

इति शब्दः प्रकारवचनस्तस्मादेवं प्रभृतीत्येवार्थः । प्रकर्षेण प्रेमोद्रेकादुच्चैर्गायन्त्यः कदाचित् प्रकर्षेण लपन्त्यश्च । किम्वा विरहव्याकुलतया किञ्चिदनर्थकं जल्पन्त्यः चित्रधेत्यस्य पूर्वेण परेणाप्यन्वयः । सुस्वरं करुणदीर्घस्वरेणेत्यर्थः । हे राजन्निति तद्दर्शने लालसया तद्युक्तमेवेत्यार्त्तिसम्बोधनम् ॥ १ ॥

---

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं गोपीनां गानमुपवर्णितम् अथैवं गायन्तीर्गोपीरनुजिघृक्षोराविर्भूतस्य भगवतो दर्शनहर्षजां तासां विक्रियां सरससाक्षेपसंलापां तां क्रीडाञ्चानुवर्णयति द्वात्रिंशेन । इतीति । इत्थं भगवतो गुणान् गायन्त्योऽनेकधा प्रलपन्त्यश्च हे राजन् ! कृष्णदर्शने लालसा ऽतिस्पृहा यासां ताः सुस्वरं यथा तथोच्चैः रुरुदुः ॥१॥

---

#### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यथा गोपीनामात्मानंप्रकाशयन् भगवांस्तथा साधनसामग्र्या ज्ञानिनामपीतीममर्थं दर्शयितुमस्याध्यायस्य आरम्भः तत्र शुकः रोदनादिकमपि भक्त्युद्रेकलक्षणमिति दर्शयितुं गोपीनां रोदनप्रकारं कथयति । इतीति । चित्रधा नानाविध्येन सुस्वरं यथा श्रोतृसुखकरं भवति तथा स्वरं कुर्वत्यः । अनेन परिदेवनादिकं व्यावर्त्तयति ॥ १ ॥

---

#### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शौरिः शूरवंशाविर्भूतत्वेन प्रसिद्धोऽपि तासामेवाविरभूत् सर्वतोऽप्यपूर्वादाविर्भावादित्यर्थः । साक्षान्मन्मथाः नानाचतुर्व्यूहस्थाः प्रद्युम्नास्तेषां मन्मथः चक्षुषश्चक्षुरितिवन्मन्मथत्वप्रकाशक इत्यर्थः ॥ १—३ ॥

---

#### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ गानानन्तरं प्रलापो जातःपश्चाद्रोदनमपि जातमित्याह । इतीत्यादि । प्रकर्षेण रागादिसंवलितनया गायन्त्यः चित्रधा प्रलपन्त्यः उन्मत्ता इव शून्यं लपन्त्यः सुस्वरं यथा स्यात् तथा रुरुदुः सौस्वर्यं स्वाभाविकं नतु बुद्धिपूर्वकम् ॥ १ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकोनत्रिंशके ऽध्याये प्रसादं भगवत्कृतम् ।
रोदनात्प्राप्य तुष्टास्ता निर्णयघ्ना इतीर्यते ॥
नहि साधनसंपत्त्या हरिस्तुष्यति कस्यचित् ।
भक्तानां दैन्यमेवैकं हरितोषणसाधनम् ॥
संतुष्टः सर्वदुःखानि नाशयत्येव सर्वतः ।
अतो निर्णयवाक्यानि भजनार्थं न्यरूपयत् ॥

एवंपूर्वाध्यायान्ते तासां स्तुतिमुक्त्वा ततः पूर्वाध्याये तासां प्रलापमुक्त्वोभय मप्युपसहंरन् तयोरसाधनतायां जातायां रोदनं कृतवत्य इत्याह । इतीति । पूर्वोक्तप्रकारेण सर्वा एव गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च जाताः अस्माभिरेकः प्रकार उक्तः तास्तु चित्रधा विलापयुक्ता जाताः यदा तयोरसाधनत्वं जातं तदा सर्वाः संभूय महद्रोदनं कृतवत्यः रोदने निमित्तमाह । कृष्णदर्शनलालसा इति । ननु स्वदेहरक्षार्थम् ॥ १ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

द्वात्रिंशे हरिरायातः स्वाङ्गभावां शुकोक्तिभिः ।
पूजितः प्रतिपूज्यैताः प्रेमोक्त्या ऋणितामधात् ॥

चित्रधा आश्चर्यतानतालादिप्रकारेण प्रगायन्त्यः अतिवैवश्योद्रेकात् प्रलपन्त्यश्च सुस्वरं रुरुदुः ॥ १ ॥

———

केनचित्कृता विशुद्धरसदीपिका ।

इतीति । प्रकारवचनोऽयम् एवं प्रकारकं प्रकर्षेण गायन्त्यः तथा वितर वीर नस्ते धारमृतामित्यादिकं विरहव्याकुलतया प्रजल्पन्त्यश्च चित्रधेत्युभयान्वयि सुस्वरं करुणदीर्घस्वरेणेत्यर्थः । हे राजन्निति सम्बोधनं तद्दर्शनैकलालसानामीदृशमधीरत्वं युक्तमेवेति भावः यद्वा तासामत्यन्तार्तिं श्रुत्वातिदुःखमूर्च्छितं राजानं सम्बोधयति सोऽयमाविर्भूत इत्यर्थः ॥ १ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

वन्दे स्वेष्टौ रमावेशावुमोमेशौ गुरून् गिराम् ।
गणेशं वैष्णवान् विप्रान् विदो विश्वं वपुर्हरेः ॥
आसामहो चरणरेणुजुषामहं स्यां वृन्दावने—
किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा—
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥
पञ्चाध्याय्याश्चतुर्थेऽस्मिन् गोपीकरुणया हरिः ।
सान्त्वयामास ता गोपीस्तत्प्रश्नोत्तरकीर्तनैः ॥

प्रेमपथाचार्य्यरूपा गोप्यः सप्रार्थनगुणगानरूपं भगवत्करुणोद्बोधकतया तत्प्रापकं मुख्यं प्रेमाङ्गभूतं धर्मं स्वचरितैर्नवोपदिदृश्याधुना नित्यं कृपालुतया सर्वप्राणिषु नित्यं वर्त्तमानायाः प्रार्थनागुणगानादिपूर्वोपदिष्टसर्वधर्म्मैरद्भूतायास्तत्कृपायाः पात्रत्वापादकं दैन्यमेव यथा सर्वत्र साम्येन वर्षतोऽपि मेघस्य तुल्यनिपतितमपि जलं निम्ने एव संगृहीतं भवति नोच्चस्थले तथा सर्वसमानोद्भूतापि तत्कृपा दीने एव स्थिरा भवतीत्युपदिशन्त्यस्तथा यद्यस्य गृहे नास्ति तद्दृष्ट्वा तस्य चमत्कृतिर्भवति भगवतस्तु सर्वथापूर्णत्वान्न किमपि तच्चमत्कृतिजनकं किन्तु तस्येश्वरत्वादेव सत्यं दैन्यं नास्तीति सत्यदैन्यदर्शने चमत्कृतिसम्भवादावश्यकस्तदाविर्भाव इत्यपि द्योतयन्त्यो रुरुदुरित्याह मुनीन्द्रः इतिगोप्य इति अत्रेति प्रकारनिर्देशे इत्युक्तप्रकारेण प्रगायन्त्यस्तत्र गानस्य प्रकृष्टत्वं प्रेमविह्वलचित्तेन गद्गदकण्ठेन जातरोमाञ्चादिभावतया गानेन स्वरतालाद्यभिज्ञतामात्रेण स्वरसौष्ठवन्तु यासां रोदनेऽपि किमु वाच्यं गाने इति भगवत्प्रापकगानस्य "मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद !„ इत्यादौ भक्तिसहकारित्वनिर्देशात् तदेव भक्तिविकलत्वमाह प्रलपन्त्यश्चेति । स्वीयविरहदुःखं निवेदयन्त्यः चित्रधेत्यनेन विविधप्रगानप्रलापबोधकेन यथैकः प्रकारो मया दर्शितस्तादृगनेकविचित्रप्रकारैः प्रगानप्रलापौ कुर्वत्य इत्युक्तं गोप्य इत्यनेन स्वभावतो गोप्योऽपि स्वाभिप्रायशोकादिगोपनशीला अपि प्रेमवैक्लव्येन स्वभावपरित्यागेन चित्रधा प्रलापपूर्वकं प्रगायन्त्य इति यद्वा कृष्णविहारसुखार्थेन यतः कृष्णदर्शनलालसा अतो गा इन्द्रियाणि यातुं शीलं यासां यथोक्तं केनापि कृष्णदर्शनविहाराशयैव स्वपादयोरुपरिबन्धनपूर्वकं कूपे प्रलम्बितेन भगवता तत्प्रेममाहात्म्यद्योतनाय काकरूपेण तन्मांसकृन्तनारम्भे काकं प्रति "काक सर्वे ! त्वया भोज्यं देहमांसं न मे यथा नेत्रद्वयेन भोक्तव्यामिच्छामि प्रियदर्शनमिति ततः सकृष्णकाक एव कृष्णतयात्मानं तस्मै दर्शयामास तथाकामविरहचिन्ताग्निभिर्गवामिन्द्रियाणां दाहे कथं कृष्णदर्शनं तदुपलक्षितविहारादि भविष्यतीति तद्गुणगानामृतेन तद्रक्षां कुर्वत्यः यद्वा गोप्योऽपि गोपालप्रियसख्योऽप्येवमन्वेषणलीलानुकारगुणप्रगानादिनोत्पादितभगवन्महदनुग्रहा अपि तदनुग्रहस्य स्वात्मनि संग्रहाय सुस्वरं निर्लज्जतया दीर्घस्वरेण कपाटभावादनर्गलाद्विगलितेन रुरुदुरनो दैन्यमेव तत्कृपाभाजनत्वापादकं राजन्निति प्रेमश्रिया राजमान ! यथा तव सार्वभौमश्रिया राजमानस्यापि न मद्दर्शनं दैन्यश्रिया राजमानस्यैव ममाविर्भावस्तथा श्रीपतिरपि दैन्यश्रियाप्रलोभितः ॥ १ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

द्वात्रिंशे गोपिकालापविक्लिन्नहृदयोऽच्युतः ।
तासामाविर्हितस्ताश्च पूजिताः प्रत्यपूजयत् ॥

इत्थं विरहव्याकुलचेतसां चेष्टावर्णनमुपसंहरति । इतीति । इत्येवं पूर्वोक्तप्रकारेण सर्वा एव गोप्यः प्रकर्षेणोच्चैः परमप्रेम्णा गायन्त्यः तथा चित्रधा अनेकप्रकारेण प्रलपन्त्यः विरहव्याकुलत्वादनर्थकान्यपि वचांसि प्रलपन्त्यः एवं कृतेऽपि यदा प्रेष्ठदर्शनं न जातं तदा सुस्वरं करुणोत्पादकदीर्घस्वरेण रोदनं कृतवत्यः एतत्सर्वं न स्वदेहरक्षाद्यर्थं किन्तु कृष्णदर्शने लालसा उत्कटोत्कण्ठा यासां ताः यथा दुःखितानां दुःखनिवृत्त्यर्थं राजाग्रे रोदनेन तां निवेदयति तद्वदिति सम्बोधनाशयः निवृत्तिपक्षे गोप्यः श्रुतयः मुख्याधिकारिणं प्रति प्रकर्षेणा मुख्यतात्पर्य्येण परमात्मानमेव गायन्त्यः कर्म प्रति प्रलपन्त्यः अनर्थकवचनत्वेन प्रतीयमानाः परमजडं प्रतिरुरुदुरहोमहामूर्खोऽयं सर्वथास्मद्विमुख इति रोदनमेव कुर्वत्यः अधिकार्य्यभाव उपदेशानाक्यानां रोदनरूपत्वाभिधानात् यतः कृष्णस्य सदानन्दरूपस्य

**तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ॥**
**पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥**

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

परमात्मनो दर्शनं जीवानां मोक्षार्थं भवत्विति लालसा यासां ताः आत्मा वा अरे द्रष्टव्य इत्यादि श्रुतेरित्यर्थः ॥ १ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं गोपीभिः प्रार्थितः श्रीकृष्णः आविर्भूय ताः सान्त्वयामासेति द्वात्रिंशेनाध्यायेन वर्णयति । इत्येवं कृष्णदर्शने लालसा अतिस्पृहा यासां तास्तद्गुणान् गायन्त्यः चित्रधा अनेकधा प्रलपन्त्यः सुस्वरं यथा तथा उच्चैरुरुदुः ॥ १ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले हे राजन् ! या प्रकार ते सब गोपी गान करती हुई और नानाप्रकार प्रलाप करती हुई श्रीकृष्ण दर्शन में अत्यंत लालसा कर अति उत्तम स्वरते रोदन करने लगीं ॥ १ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

साक्षान्मन्मथमन्मथो जगन्मोहनस्य कामस्यापि मनस्युद्भूतः कामः साक्षात्तस्यापि मोहक इत्यर्थः ॥ २ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

तासां तादृशीमार्त्तिं गतानामाविरभूत् दृश्यो बभूव इति परमार्त्यैव तत्प्राप्तिरिति दर्शितं यद्वा तथा रुदतीनामधुना मद्दुःखसम्भावनया दैन्यविशेषेण रोदनात्प्राणा गतप्राया इत्यतो हेतोरित्यर्थः । एवमात्मानपेक्षया तदेकापेक्षयैव दैन्यविशेषेण तत्प्राप्तिरिति शौरिः शूरवंशे निजगुणरूपाद्यशेष भगवत्ता प्रकटनार्थमवतीर्णो भगवानित्यर्थः । अयमाविर्भावे हेतुः श्लेषेण सर्वासामेव युगपत्सन्तोषसामर्थ्यं दर्शितम् इति स्मयमानं मुखाम्बुजमेव ननु हृदयाम्बुजं तासां तादृगार्त्तिरोदनाद्यस्य स्मयमानता स्वभावत एव किम्वा तासां शोकनाशनार्थं पीताम्बरधरः धावनेनैव त्वरयाविर्भूय गमनात् सुलालितं पीताम्बरं किम्वा तासां गलदश्रुधारासंमार्जनार्थं श्रीहस्तेनैकेन धरतीति तथा सः स्रग्वीति कमलादिपुष्पैः ताः शीतलयितुं यद्वा प्रियजनार्त्तिकातर्यभरेण निजापराधक्षमापणार्थमिव तृणवत् श्रीदन्ताग्रिके श्रीहस्तेन निजवस्त्राञ्चलं गृहीत्वा वस्त्रमिव श्रीगले मालाञ्च बद्ध्वेत्यर्थः । एवं वैदग्धीविशेषप्रकटनेन तासां परममोहनत्वात् साक्षान्मन्मथमन्मथ इति वा अथवा सौन्दर्यादिकमेव तैर्विशेषणैरुपलक्षितं तत्र सौन्दर्यस्योपलक्षणं स्मयमानेति भूषणानाञ्च पाताम्बरपाविल्य-

स्य स्रग्वीति स्रक्च कौन्थेव ज्ञेया कुन्दस्रजः कुलपतेरित्युक्तेः रात्रौ च तस्या एव शोभा विशेषसम्पत्तेः अन्यदपि वैदग्ध्यमाधुर्यादिकमुपलक्षयति । साक्षादिति । तथा विरहार्त्तिखिन्नानामपि तासां कामोद्बोधे तस्यापि कामोद्रेकं सूचयतीति दिक् । अन्यत्तैर्व्याख्यातं यद्वा मन्मथादपि मन्मथः महामन्मथ इत्यर्थः । तस्यैव महामोहनताशक्तिसागरकणांशप्राप्त्या कामदेवस्य मोहनताशक्तेः अतोऽयमेव कन्दर्पः अत एव कन्दर्पवजिस्य महामन्त्रे बीजमिति श्रीमदनगोपाल इत्यादि संज्ञयाप्युच्यते ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तासां तथा रुदतीनामधुना मद्दुःखसम्भावनया दैन्यविशेषेणासां रोदनात् प्राणा गतप्राया इति तेन वितर्क्यमानानामित्यर्थः । एवमात्मानपेक्षया तदेकापेक्षयैव दैन्यविशेषेण तत्प्राप्तिरिति दर्शितम् । शौरिः शूरवंशाविर्भूतत्वेन प्रसिद्धोऽपि तासामेवाविरभूत् सर्वतोऽप्यपूर्वादाविर्भावादित्यर्थः । तथाच वक्ष्यते "त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधदिति । तत्रातिशुशुभे ताभिर्भगवान् देवकीसुत"इति गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् । दृग्भिः पिवन्त्यनुसवाभिनवं दुराप"मित्यादौ च तथैव श्रीगोपीषु विशेषोक्तिः । एताः परमित्यादौ वाञ्छन्ति यद्भवभियो मुनयो वयञ्चेति श्रीमदुद्धवसिद्धान्तानुसारेण सर्वाधिक प्रेमवतीषु तासु युक्तमेव च तादृशत्वम् । प्रपद्यमानस्य यथाश्नतः स्युरित्यादि न्यायेन तथैव दर्शयति । साक्षान्मन्मथमन्मथ इति । नाना वासुदेवादिचतुर्व्यूहेषु ये साक्षान्मन्मथाः स्वयं कामदेवाः नतु तदीयशक्त्यंशावेशिप्राकृतमन्मथवदसाक्षाद्रूपाः तेषामपि मन्मथः मन्मथत्वप्रकाशकः चक्षुषश्चक्षुरित्यादिवत् । येषां रूपगुणविशेषाणामंशेन तत्प्रकाशकोऽसौ तानखिलान् एव प्रकाशयन्नित्यर्थः । अत एवास्य महामन्मथत्वेनैकाक्षरादि मन्त्रा ध्यानानि च सन्ति । किन्तु तस्मिन् ध्यानेऽन्याकारत्वं मन्मथत्व व्यञ्जनार्थमेव ज्ञेयं मन्मथपदस्य यौगिकत्वेन तेषामपि क्षोभकादिरूपः सन्निति ध्वनितम् । एवं तादृशरूपस्यादिरसे परमालम्बनता भक्तान्तरागम्यता च दर्शिता ॥ तदेवं स्वरूपाविर्भावस्यापूर्वतामुक्त्वा विलासवैशेष्यारप्याह ॥ स्मयेत्यादि विशेषणत्रयेण । तत्र स्मयमानेति वर्त्तमानप्रयोगेण तात्कालिकत्वविवक्षया सहजस्मितादैलक्षण्यप्रतीतेः तथा पीताम्बर इत्यनेनैव विवक्षिते सिद्धे धारणप्रयोगोऽतिरिक्त एवेति तेन तदानीमन्यविशिष्टधारणबोधनात् । तथा स्रग्वीत्यत्रापि प्रशंसायां मत्वर्थीयविधानात् । किञ्च । स्मितेनात्मनः सुप्रसन्नत्वं त्यागस्य च परिहासमयत्वम् । पीताम्बरधारणेन मूर्द्धपर्यन्तावृततया स्वस्य तासां परित्यागतः संकुचितचित्तत्वम् । स्रग्वित्येन केवलतत्सक्तितया तां विना स्वस्य सक्रान्तरारोचकत्वञ्च ज्ञापितं तथा च श्रोतृहृदये तत्प्रवेशाय तात्कालिकशोभावर्णनमिदमिति ॥ २ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तासामेवं रुदतीनामग्रे शौरिराविर्बभूव कथंभूतः स्मयमानं मुखाम्बुजं यस्य स जगन्मोहकस्य कामस्यापि मोहकः ॥ २ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्त्युद्रेकोद्भूतरोदनफलमाह । तासामिति । मनोमथ्नातीति मन्मथः कामः साक्षात्स्पर्धीकृतसर्वाङ्गसुन्दर इन्द्रतुल्यस्तस्यापि मन्मथः मदमथनः मदनो मन्मथो मारः काम इति रुद्रः अनेनैवंविधभगवदुपासनासामर्थ्यात्समुद्भूतः सौन्दर्यसागरः काम इति सूचितं भवति ॥ २ ॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तासां तथाविधरोदनश्रवणानन्तरं सोढुमशक्तस्तदैव प्रादुरभूदित्याह । तासामित्यादि । शौरिरित्यत्र शूरशब्दो न रूढः अपितु यौगिक एव शूरपुत्रोऽपि नातः परमन्तर्धानलीलायां समर्थोऽभूत् अपितु तासां साक्षात् आविर्भूतः अत एव स्मयमानमुखाम्बुजः अतः परं मम धैर्य्यं न वर्त्तेत इति स्मयमानत्वं पीताम्बरधर इति भावविशेषात् स्खलत्पीताम्बरं वामकरेण बिभ्रदित्यर्थः। अथवा पीतोत्तरीयैकदेशं धृत्वा स्मितं संवृण्वन् अथवा स्खलदुत्तरीयतया पीताम्बरं पीताम्बरैकदेशो धरायां यस्य अन्यथा पीताम्बरं इत्यनेनैव सिद्धिः स्रग्वी अम्लानवनमालः मन्मथस्य मन्मथः मनो मथ्नातीति तथा तस्यापि तथा। अथवा मदयतीति मथ्नातीति वा मद्मथ्वा मदनः तं मथ्नातीति मन्मथो रुद्रस्तस्यापि मदं गर्वं मथ्नातीति मोहिनीरूपेण गर्वं हृतवानिति तथा तथाभूतोऽपि स्वयं तासां सौन्दर्य्याकृष्ट इत्यर्थः अथवा साक्षान्मन्मथो मूर्त्तमन्मथस्तस्यापि मन्मथः ॥ २ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवान् ब्रह्मा विष्णुः रुद्रश्च भूत्वा पुनः कृष्ण एव जात इत्याह । तासामाविरभूदिति । तासां मध्य एव भगवानाविर्भूतः मायाजवनिकां दूरीकृत्य भगवान् प्रकटो जातः यतः शौरिः शूरस्य पौत्रः शौर्यमत्र प्रकटनीयमिति सर्वेषां दुःखनिवारणार्थमेव यदुवंशे अवतीर्ण इति तदा तासां दोषनिवृत्त्यर्थं स्मयमानं मुखाम्बुजं यस्य ईषद्वसन्मुखः तासां वैक्लव्येन संतुष्टः स्मितयुक्तं स्मयमानं स्मयमानाभ्यां वा सहितं मुखाम्बुजं यस्य भक्तानां दोषः भक्तेभ्यो निर्गतः भक्तौ समायातीति ज्ञापनार्थं तदानीन्तनरूपं वर्णयति पीताम्बरधर इति । पीताम्बरं हास्यसंकोचार्थं हस्ते धृत्वा तिष्ठति अथवा व्यापिवैकुण्ठरूपेण एतावत् कालं लक्ष्म्या सह रमणं कृत्वा तेनैव रूपेण प्रादुर्भूतः स्रग्वी वनमालायुक्तश्च मध्ये ब्रह्मादिपूजां च गृहीतवान् लक्ष्म्या वा अतो विलम्ब इत्यपि सूचितम् अत एव प्रथमश्लोके प्रथमाध्याये श्रयत इन्दिरेति उक्तम् इदानीन्तु उपेक्षा कर्त्तुमयुक्तेति प्रादुर्भूतः अत आगमनमुक्तमग्रे यद्वा तत्र हेतुमाह विशेषणद्वयेन इदानीमनाविर्भावे तु न रसो न वा कीर्त्तिः स्वयं त्वाच्छादनेन रसत्वसाधकपीताम्बरधरः कीर्त्तिमयस्रग्वांस्त्रातः प्रकट इत्यर्थः । अन्यथा तु भक्तानां स्वरूपतिरोधान उक्तोभयाभावः स्फुट इति भावः। ननु कन्दर्पेण कथं न वशीकृतः स्वपृतना खिन्नेति तत्राह । साक्षान्मन्मथस्यापि मन्मथः आधिभौतिको मन्मथः देवतारूपः तत आध्यात्मिकः सर्वहृदयेषु साक्षान्मन्मथः तस्याप्ययं मन्मथः आधिदैविकः सर्वस्यापि सर्वत्वात् अतः कन्दर्पोऽपि मुग्धः कन्दर्पस्याप्यशक्यमोहः कन्दर्परूपश्च अतस्तासां दैन्ये प्रादुर्भूते तन्निवारणार्थं कामरूपमेव प्रकटीकृतवान् अतस्तेन पूर्ववत् कामसंपन्नाः ताः कृताः ॥ २ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शौरिरिति । श्रीगोपीजनपक्षस्य श्रीशुकदेवस्य कृष्णं प्रत्यसूयोक्तिः । कुटिलान्तःकरणक्षत्रियजात्युद्भवत्वादेव कृष्णः प्रेमवतीभ्य आभ्य एतावद्दुःखं दत्त्वा स्वशौर्यं प्रकटीचकार । यदि सरलान्तःकरणगोपजातिजातोऽभविष्यत्तदा नैवमभाविष्यदित्यर्थव्यञ्जिका अत एव तासां दुःखेऽपि प्रफुल्लमुखः । वस्तुतस्तु स्मयमानं तासामानन्दनार्थमेव प्रफुल्लीकृतं मुखाम्बुजमेव हृदम्बुजन्तु सन्तप्तमेव यस्य सः। पीताम्बरं स्कन्धाभ्यां पुरो लम्बितीकृत्य हस्ताभ्यां धरतीति सः । अपराधं क्षमयितुमिति भावः । स्रग्वीति प्रेयस्यैव परिधापितां स्रजं तां दर्शयितुमिति भावः । साक्षान्मन्मथो यः समष्टिः कामस्तस्यापि मनो मथ्नातीति सः । जगन्मोहनमपि कन्दर्पं मोहयितुमायान्तं स्त्रीभावं प्रापय्य तथा मोहयामास यथा सोऽपि कृष्णसौन्दर्यं दृष्ट्वा कन्दर्पशरपीडितो मुमोहेत्यर्थः । तेन कृष्णस्तत्प्रेयस्यश्च स्वरूपभूतकन्दर्पस्यैव शरपीडिता रमन्ते नतु प्राकृतस्य जगन्मोहनकन्दर्पस्य तस्य तत्रानधिकारादेवेति ज्ञेयम् । तदानीं साक्षान्मन्मथमन्मथत्वेन महामोहनस्वीय माधुर्याविष्करणं तासां तादृशस्यापि विरहदुःखस्य विस्मारणार्थमिति ज्ञेयम् ॥ २ ॥

### केनचित् कृता विशुद्धरसदीपिका ।

तासामिति । तथा रुदतीनां यद्वा भवदायुषामित्युक्तिमयथार्थ्य किं मद्विषयकदुःखसंभावनया गतप्राणा जाता इति वितर्क्यमाणानामित्यर्थः । एवं च तासामेव प्रेमानुरोधादाविर्भूत इति दर्शितं शौरिः शूरपुत्रत्वेन निर्दयोऽपि नातः परमन्तर्द्धानलीलायां समर्थोऽभूदित्यर्थः । यद्वा अविर्भावबोधकेन शौरिपदेन प्रकटलीलागतावेवाविर्भावतिरोभावाविति सूचितं ततश्च तादृशगोपीविशेषनिष्ठैवेयं लीलेति प्रागेव दर्शितं तथाचोज्ज्वले—

> हरेर्लीलाविशेषस्य प्रकटस्यानुसारतः ।
> वर्णिता विरहावस्था गोष्ठवामभ्रुवामसावित्युक्तम् ॥

एवञ्च खण्डितात्वमप्येतदपेक्षयैवेत्यपि सूचितं तदेव विशदयति । स्मयेत्यादिना । तात्कालिकसहजस्मितेन प्रसादमाविष्कुर्वन्नित्यर्थः । यद्वा स्मयो गर्वः मानश्चित्तसमुन्नतिः । तदुभययुक्तंमुखाम्बुजं यस्य सः अम्बुजरूपकेण रक्तत्वमपि सूचितं ततश्चासां दर्पोपशमनव्यक्तिः यद्वा अपत्रपया स्मयमानं किञ्चिद्विकसितं मुखाम्बुजं यस्येति भावगोपनं तथा पीताम्बरधरः पीतमवरं धरापर्य्यन्तं यस्य इदं चापत्रपया निजाङ्गानामाच्छादनाय अन्यथा पीताम्बर इत्येव साधुः वस्तुतस्तु सुरताङ्कगोपनायेदं तथा स्रग्वीति प्रशंसायां मत्वर्थीयवि-

### केनाचित् कृता विशुद्धरसदीपिका ।

ध्यानात् स्रगियं तदा त्वयोग्या श्रीवृन्दादेव्यैव निवेदितेति ज्ञेयं किंवा कुन्दस्रजः कुलपतेरिह वाति गन्ध इत्यादिना प्रागेवद- र्शिता सुरतविमर्दितेयमिति गम्यते अथवा कामविजयाभिषेकमालेयं तदेव व्यञ्जयति। साक्षादिति । तथाहि नाना वासुदेवादिचतुर्व्यू- हेषु ये साक्षान्मन्मथाः स्वयङ्कामदेवाः नतु तदीयशक्त्यंशावेशिप्राकृ- तमन्मथवदसाक्षाद्रूपाः तेषामपि मन्मथः मन्मथत्वप्रकाशकः चक्षुषश्चक्षुरित्यादिवत् एषां रूपगुणविशेषाणामंशेन तत्प्रकाश कोऽसौ तानखिलानेव प्रकाशयन्नित्यर्थः। अत एवास्य महामन्मथ- त्वेनैकाक्षरमन्त्रध्यानानि यं मां स्मृतकामः सकामो भवतीत्याद्याः श्रुतयश्च सन्ति एवं तादृशरूपस्यादिरसे परमालम्बनता भक्त्य- न्तरागम्यता च दर्शिता एवञ्च साक्षादित्यादि स्मयेत्यादिस्रगि- त्यादिभिः त्रिभिः पदैः स्वरूपविलासवेषाणामपूर्वतोक्ता साच यथा- योगं पूर्वोक्तप्रकारेण सर्वासां सुखदा विशेषतश्च सुरतान्तलक्ष्म लक्षितस्वरूपेण प्रियसखीनामिति संक्षेपः ॥ २ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तत्साधनैर्जातानुग्रहो भगवान् दैन्येन तासामनुग्रहपात्रत्वे जाते तद्दैन्यप्रिया लुब्धः प्रादुरभूदित्याह । तासामिति। ततश्च तासां स्वप्रेमव्याप्तचित्तानां प्रिया संश्लिष्टानां मारकेण विश्लिष्टानां मार- केण मारितानां स्वमारतानां मध्ये एव तद्दैन्यमारतः शौरिः शूर- वंशधरः साक्षान्मन्मथमन्मथः लोके आधिभौतिकः कामो- मन्मथस्तदधिष्ठातृकामदेवः साक्षान्मन्मथः तस्यापि मनोमथनशी- लस्तन्मनसि प्रादुर्भूतः कामः साक्षान्मन्मथन्मन्मथः आविरभूत् न तुकुत्रापि गतस्तत आगतः व्यापकवपुषोगमनासंभवात् यद्वा तासा- माविरभूदित्युक्तचेद्ध शृङ्गाररसव्याप्तरसाभिवर्षिस्वरूपेण तासां तद्र- सान्वितंममनसामेवाविर्भावन इति ध्वनिः शूरवंशधरत्वादेव कामरण- विजायाय स्मयोगर्वो मानोऽभिमानश्च ताभ्यां युक्तं मुखाम्बुजं यस्य यद्वा ता गोपीराश्वासयितुं स्मयमानं मञ्जुमृदु मधु सितस्मितयुतं मुखाम्बुजं यस्य यद्वा स्मयेन तादृक्स्मितेनैव मा इति न्यकारोयाच्ञान ङ्गीकरणलक्षणः न इति तदभावस्तथा च मानः यस्मिंस्तादृङ्मुखाम्बुजं यस्य यद्वा स्मयो गर्वसमानः नहि नहि कार्य्यं इति जाते स्मये तिरोहित- त्वेन तदभावे आविर्भूतत्वेन द्योतकं मुखाम्बुजं यस्य यद्वा मयि कदापि स्मयो नहि नहि इति द्योतकं मुखाम्बुजं यस्य तथा स्मयमानविशेषणेन मुखरूपाम्बुजस्य स्मितरूपविकासान्वितत्वज्ञापनेन तासां तापोपश- माल्हादायाविर्भूतमुखस्य विकसिताम्बुजत्वनिर्देशः विकसितस्यैव तस्य तापहारित्व प्रसिद्धेः यद्वा स्मयमानतया स्मितासितामृतप्रभान्वि- तमुखमेवाम्बुजोऽम्बुधिप्रभवश्चन्द्रस्तासां विरहतमस्तापव्याप्तहृन्मनसां तदपवादेन स्वाल्हादेन प्रसादको यस्य तथा च क्षीराम्बुधिप्रभूतेन्दो- र्लौकिकतमस्तापापलापकत्वेऽपि कृष्णविरहिणीनां प्रतापकत्वमेव अयंतु प्रेमरसामृताम्बुधिप्रादुर्भूतमुखेन्दुरेवामितचन्द्रप्रजाल्हादस्मि- तसुधाभिवर्षितया तत्तमस्तापापवादक इति भावः। तथा तासा- माश्वसनाय ताभिः पीते पूर्वे विलासावसरे आस्वादिते एवा- म्बरे दशनवसने धारयतीति पीताम्बरधरः भवतीभिः पीते एवैते निःशङ्कं पातव्ये यद्वा यूयं मद्वियोगेन यथा खिन्नास्तथाहमपि विकल एवेति ज्ञापनाय पीते एवाम्बरे दशनवसने धारयतीति यद्वा भगवतो नित्यं पीताम्बरधरत्वात् विशेषकथनं तु भवदीय- काञ्चन वर्णत्वेनैव पीताम्बरं गले धारयामि भवतीनां वर्णेनैव मम शोभा तथा मम वहिरङ्गपीताम्बरेणवान्तरमपि वोऽनुरा- गेण व्याप्तमिति द्योतनाय यद्वा वोऽनुराग एवान्तर्व्याप्य वहिरपि मामाच्छाद्य पीतवसनमिव लसतीति यद्वा विनयेनाश्वासनाय पीताम्बरं गले कृत्वा हस्तयोर्धारयतीति तथा यद्वा यथा मम मनो वोऽनुरागेनाच्छादितं वपुश्च तद्वर्णपीताम्बरेण तथा मम कृष्ण- कुटिल स्वभावो भवतीभिरेव निजप्रेमगुणैराच्छाद्यते इति भावः तथा स्रग्वीति वन्यस्रग्धर इत्यनेनापि मयापि वो विरहतापतप्तहृदये तदुपशमाय युष्मत्तनुसुमनसां तापोपशमवत्त्ववत्तदुपशमकत्वभ्रमेण सुमनः स्रगव धृता तथापि तापानुपशमएव संनिधि प्राप्तोऽधुना तदुपशमो युष्मदधीन इति यद्वा गुणग्रथितसुमनः स्रगिव ममा- तिमृदुसुमनोवृतयोऽपि युष्मद्गुणग्रथिता इतिद्योतयितुं यद्वा भवतीनां सुमनांसि एव मद्गुणग्रथिततया ममोरोहारतया मयि सलग्नानि तानि धृत्वैव विहरामि यद्वा कुसुमानां कामवाणत्वेन निर्वाणोऽप्यहं युष्मत्कामवाणव्याप्त एव यद्वा प्रेमवतीनां समीपे कपटानिर्वाहात्तत्रा- न्तर्धानापराधोपशमाय स्रग्वीति स्रजा बद्धकर एवाविरभूत् यद्वा साक्षान्मन्मथमन्मथ इत्युक्त्वा स्रग्वीति तन्मित्रवसन्तालिङ्गितव- पुरिति भावः । यद्वा मुनिमधुकरनिकरोपवर्णितयशोरूपस्रग्धर असां प्रेमवतीनां विरहाग्निदाहेन न यशः स्थास्यतीति तत्स्रग्धर आविरभूत् यद्वा मन्मथमनोमथितुं सुमनोजमुखचन्द्रेण ज्येष्ठेन तत्पराभवसम्भवेऽपि तडिद्वर्णपीताम्बरेण तद्धीति संपत्तावपि कुसुमवाणरणाय कुसुमधारणमेव न्याय्यमिति स्रग्वी आविरभू- दित्युक्तं यद्वा यदामितानि सुमनांस्येव मद्गुणबद्धानि तदा किमु वाच्यं मनोज्ञस्य यद्वा तासां त्रिविधतापेषु कामतापोपशमाय साक्षान्मन्मथमन्मथ इत्युक्तं विरहतापोपशमायाविरभूदिति पुनः संभावितविरहचिन्तातापोपशमाय वर्णितार्थानि स्मयमानमुखाम्बुजः पीताम्बरधरः स्रग्वीतिविशेषणानि यद्वा तापशुष्कतनुसुमनःसुम- नोलतानां सुरतरसवृष्टिसेचनाय पीताम्बरधरः स्रग्वीति पदाभ्यां सतडिदिन्द्रधनुर्धनघनस्यामत्वद्योतनं मुखचन्द्राधरामृतरसपोषणाय स्मयमानमुखाम्बुज इति ॥ २ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततः परं भगवानप्यन्तर्द्धानतया स्थातुं नाशकत् किञ्च आर्ति- प्रबलेन तत्प्रेम्णा समाकृष्टचेता आविरभूदित्याह। तासामिति। "मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिने„त्युक्तस्वरूपेण तावत्कालं स्थितः पुनस्तदभीष्टवासुदेवात्मकः आविरभूत् एतद्दुःखनिवृत्त्यनुकूलं शौर्यं प्रकटनीयं सर्वदुःखनिरासाय यदुवंशे ऽवतीर्णत्वात्स्वा पराधशङ्कया ग्लायमानस्ता स्तोषयितुं स्मयमानः स्मितयुक्तं मुखपद्मं यस्य सः तथा च भवतीनां विरहवैक्लव्यदर्शनार्थमहं तिरोहितो नतुकिञ्चिद्दोषं मनसिनिधायातो यथोक्तवैक्लव्यमवलोक्या- तिप्रसन्नोऽहमिति सूचयन्निवेत्यर्थः। तत्तोषोत्पादकं तत्स्वरूपंचाह पीताम्बरधरः लक्ष्म्या सह रमणयोग्येन वैकुण्ठस्वरूपेणात एव स्रवी ब्रह्मणा लक्ष्म्या वा समर्पितया मालया अलंकृतः तत्रापि केवल- करुणयैवाविर्भूतो नतु कामकृताकर्षणेनेति बोधनाय इत्याहः साक्षा- दिति। मन्मथः कामाधिष्ठानदेवस्तस्यापि मन्मथः स्वस्मिन्नासक्ति

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः।
उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥
कृष्णस्य मुखलावण्यसुधां नयनभाजनैः ॥
आपीयापीय नातृप्यन् सन्तस्तच्चरणं यथा ॥ ० ॥ इति वीर०
काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा।
काचिद्दधार तद्बाहुमंसे चन्दनरूषितम् ॥ ४ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

करः तथा च एवंभूतस्य परमेश्वरस्य नास्ति कामवश्यतासंभावनेति भावः। अनभिज्ञापक्षे गोपिकादुःखदुःखितः श्रीशुकः क्षत्रियजातित्वात्तासु प्रेमभराक्रान्तासु शौर्य्यं प्रकटितवानिति द्योतयितुं शौरिरित्युक्तवान् अत एव दुःखितास्वपि तासु स्मयमानमुखाम्बुजः तत्रापि तादृशासु हासानौचित्यमभिप्रेत्यार्धहाससंकोचार्थं मुखाग्रहस्तेन पीताम्बरधरः स्रग्वी वनमालया शोभमानः साक्षान्मन्मथमन्मथ इति तासां तादृशस्यापि विरहदुःखस्य विस्मारणार्थं तादृश इति भावः। मानिनीपक्षे शौरिरपि तत्प्रेमपराधीनत्वादाविरभूत् स्मयमानमुखाम्बुजः अहो हासार्थं मयेदमनुष्ठितमतः कोपो न विधेय इति सूचनार्थं तथाभूतः अन्तस्तु युष्मद्विरहात्सन्तप्त एवेति भावः। अतएवापराधक्षमापणार्थं स्कन्धाभ्यां पुरोलम्बिनीकृत्य बद्धहस्ताभ्यां पीताम्बरधरः युष्मत्परिधापितामेव मालां धारयन् युष्मान्स्मरन्नेव कचिदेकान्ते विकलचित्त एवाहं स्थितो ननु कयाचिद्रममाण इत्याम्लानपुष्पां मालामवलोक्य प्रतीयतामिति सूचयन्निवेति भावः। ननु तथापि तासां कोपनिवृत्तिः कथं जातेत्याशङ्क्याह। साक्षादिति ॥ २ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तासां रुदतीनां समीपे स्मयमानं मुखाम्बुजं यस्य सः शौरिः श्रीकृष्णः आविरभूत् कथंभूतः साक्षात् मन्मथस्य विश्वमोहकस्यापि मन्मथः मोहकः ॥ २ ॥

भाषा टीका।

तिन गोपिन के मध्य में मंदहास युक्त मुख कमल ते शोभित पीतांबरको धारण किये वनमालाको धारण किये कोटि कन्दर्पन के मोह करवे वारे श्रीकृष्ण चन्द्र प्रगट भये ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तन्वः करचरणादयः ॥ ३ — ४ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

आगतमिति। तासामभिप्रायानुसारेण यद्वा तासां मध्ये प्रादुर्भूतं किंवा आदौ दूरे प्रादुर्भूयागमनक्रमेण निजान्तिकं प्राप्तं सन्तं तथा श्रीविष्णुपुराणेऽपि "ततो ददृशुरायान्तं विकासिमुखपङ्कज" मिति अत एव विशेषेण लोकयित्वा दृष्ट्वेति रोदनवैवश्येन ईषद्दर्शनेप्यदर्शनात् किंवा दृष्टेऽपि परमार्त्या विश्वासाभावात् सम्यङ्निरीक्ष्यैवेत्यर्थः। अतः प्रीत्या प्रहर्षेण उच्चैः फुल्ला विकसिता दृशो नेत्राणि यासां तथाभूताः सत्यः अबलाः विरहक्षामतयोत्थातुमसमर्था अपि युगपदुत्थिताः तत्र हेतुः प्रेष्ठमिति तदेकप्रेष्ठत्वेन मरणे जीवने च तदेकहेतुत्वात् ननु तथाप्यन्त्यदशाप्राप्तानामिव तासां सद्य एकदा तथोत्थानं कथं संभवेदित्याशङ्क्य एतदेव दृष्टान्तेन साधयति। तन्व इति। यद्वा आदौ प्रीत्युत्फुल्लदृशो बभूवुः पश्चादुत्तस्थुः यथा तनूनामप्यादौ स्पन्दनादि पश्चात् सम्यक्कृत्यप्रवृत्तिरिति आगतमिति पुनरुक्त्या उत्थाने आगमनैकहेतुता बोधिता ॥ ३ ॥

अधुना तदागमनात् सर्वासामेव विरहतापापगमं परमोत्सवादिकञ्च षड्भिर्वदन्नादौ पृथक्त्वेन तासु मुख्यानां प्रसिद्धानामष्टानां प्रेमचेष्टितान्याह। काचिदिति पञ्चभिः। कराम्बुजमेकमन्येनाम्बरधारणात् तथा व्यवहारस्य शोभनत्वात् अम्बुजरूपकेण सहजारुण्यादिसौन्दर्यं तापहारित्वञ्च व्यञ्जितम् अञ्जलिनेति निजभावानुसारेण मुदेति विरहदुःखनिवृत्तेः इदं चाग्रेऽपि सर्वत्रानुवर्त्यं तस्य तथा सौन्दर्य्यादिना अनिर्वचनीयं बाहुं शौरेरित्यनुवर्त्तत एव एवमग्रेऽपि चन्दनेन रूषितं भक्तिच्छेदलिप्तमिति सौन्दर्य्यं तापापहारित्वं चोक्तम् ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आगतम् आदौ समुत्कण्ठया सद्य एव दूरे प्रादुर्भूयागमनक्रमेण निजान्तिकं प्राप्तं सन्तम्। तथा च विष्णुपुराणे। "ततो ददृशु रायान्तं विकाशिमुखपङ्कजमिति" अत एव विशेषेण लोकयित्वा दृष्ट्वेति रोदनवैवश्येन ईषद्दर्शनेऽप्यनिश्चयात्। किम्वा दृष्टेऽपि परमार्त्या विश्वासाभावात् सम्यक् निरीक्ष्यैवेत्यर्थः। अबला विरहक्षामतयोत्थातुमसमर्था अपि सर्वा युगपदुत्थिताः। तत्र हेतुः प्रेष्ठमिति। तदेकप्रेष्ठत्वेन मरणे जीवने च तदेकहेतुत्वात्। एतदेव दृष्टान्तेन साधयति। तन्व इति आगतमिति पुनरुक्तिः उत्थाने आगमनैकहेतुतास्पष्टार्थं कृता। विलासाख्योऽनुभावोऽयम्। "गतिस्थानासनादीनां मुखनेत्रादिकर्मणाम्। तात्कालिकं तु वैशिष्ट्यं विलासः प्रियसङ्गत" इति ॥ ३ ॥

पूर्वं विरहदैन्येन तुल्यवचनैः सर्वासामेव तुल्यता प्राप्ति-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

दर्शिता। अधुना प्राप्तनिजालम्बनत्वेन स्वस्वभावमनुसरन्तीनां मुख्यानाश्चेष्टितभेदैर्भावभेदानाह। काचिदिति पञ्चभिः। कराम्बुजं दक्षिणं जगृहे वनभ्रमणश्रान्ततया मत्तस्य तस्य करावलम्बनाय तथा व्यवहारस्यौचित्यात् स्पर्शौत्सुक्याच्च। करस्य दक्षिणत्वञ्च निजस्कन्धे तद्बाहुधारिण्या द्वितीयायाः कान्तसमानस्थितत्वेन वामभागावस्थानौचित्यात् दक्षिणस्यैव तथा ग्रहणौचित्याच्च। एवमुत्तरोत्तरं ज्ञेयम्। अञ्जलिनेति निर्देशादियं मृदुः सख्यप्रायदास्या कान्तपराधीना दक्षिणा च। चन्दनेन रूषितं भक्तिच्छेदलिप्तमिति इयमाकृष्य धारणात् प्रखरा व्यक्तसख्या किञ्चित् पराधीनकान्ता दक्षिणा च। ताम्बूलमत्र प्रतिकुञ्जं मालादिसाहित्येन श्रीवृन्दादेव्या स्थापितम्। योगमाययैव वा सिद्धम्। शौरेरिति प्रकरणलब्धम्। अञ्जलिनाऽगृह्णादिति पूर्ववत्। अधरौत्सुक्यं त्वधरामृतार्थम्। इयं मृदुर्दास्यप्रायसख्या कान्तपराधीना दक्षिणा च अङ्घ्रिकमलं दक्षिणमेव स्तनयोर्न्यधात्। वामभुजेन प्रियावलम्बनेन वामचरणन्यस्ताङ्गभावताप्राप्तेः। सम्प्रति स्थित एव वायमुपवेशयाग्रतो वक्ष्यमाणत्वात्। अत उपविश्यैव तया चरणधारणम्। तस्य तयो र्निधाने हेतुः सन्तप्तेति विरहमयरत्याख्येन भावेनेति शेषः। हृदय इति पाठे स एवार्थः। इयं प्रखरा दास्यप्रायसख्या कान्ताधीना दक्षिणा च ॥४॥५॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तमागतं प्रेष्ठं कृष्णमवलोक्याबला गोप्यः प्रीत्योत्फुल्ला विकसिता दृशो यासां तथा भूता युगपत्सर्वा उत्तस्थुः यथा आगतं प्राणान् तन्वः शरीराणि तद्वद्वियुक्ते प्राणे पुनरागत्य सुस्थे सति यथा तनुरुत्तिष्ठते तद्वदित्यर्थः ॥ ३ ॥

अथ ताः कृष्णस्य मुखे यल्लावण्यं तदेव सुधा तां नयनरूपैर्भाजनैः पानपात्रैः पुनःपुनरापीयापीय पीत्वा पीत्वाऽपि नातृप्यन्न तृप्ता बभूवुः यथा सन्तः भक्तास्तच्चरणं भगवत्पादाब्जलावण्यमनु भूयापि न तृप्यन्ति तद्वत् ॥ ० ॥

तत्र काचिद्गोपी हरेः कराम्बुजं हर्षेणाञ्जलिना जग्राह काचित्तु चन्दनेन भूषितं लिप्तं तस्य बाहुमात्मनः स्कन्धे दधार ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तन्वः भोगायतनशरीराणि ॥ ३ ॥

गोपीनां करादिग्रहणादिषु हरेः करादानादिना भक्त्यैकलभ्यः श्रीनारायण इति निदर्शयंस्तत्प्रवृत्तिं कथयति। काचिदित्यादिना चन्दनरूषितं लिप्तम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

काचिदित्यादि षट्कम् ॥ ४—८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तत्र प्रादुर्भूते सति यदभूत्तदाह। तामित्यादि आगतमाविर्भूतं ननु कुतश्चिदायातं तत्रैवान्तर्द्धाय स्थितत्वात् अबला अपि उत्थानासमर्था अपि उत्तस्थुर्युगपदिति दर्शनस्य पौर्वापर्याभावात् एकस्यैव प्रत्येकं पुरतो भासमानत्वात् एतेन पूर्वमुपविष्टा एव जगुरिति मन्तव्यमत्र दृष्टान्तः तन्वः प्राणमिवागतं प्राणयतीति प्राणः आत्मानं प्राप्य तन्वः शरीराणीव आत्मनः एकत्वादेकवचनं तनूनां बहुत्वेन तथा ॥ ३ ॥

अथ तस्मिन्नाविर्भूते तमालोक्य या यथा चक्रुस्तदाह। काचिदित्यादिषड्भिः। काचित् कराम्बुजमिति सादरप्रणयिनी केचिदेनां चन्द्रावलीमाहुः काचिद्दधार तद्बाहुमिति सख्यप्रधानप्रणयवती ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो यज्जातं तदाह। तं विलोक्येति तमागतं विलोक्य युगपत्सर्वा उत्थिताः पूर्वमाविर्भावमुक्त्वाधुना यदा गमनमुक्तं तद्विलोकनसमये स्वामिनीः भावानुवादरूपं पूर्वमन्तःस्थितोऽधुना बहिरागत इति वा तथोक्तिः ननु किमाश्चर्यं भगवत्यागते उत्थिता इति तत्र नहि ताः सजीवाः स्थिताः किंतु निर्जीवा इति वक्तुं दृष्टान्तमाह। तन्वः करचरणाद्यवयवाः प्राणमागतमिवेति प्रयत्ने हि एकमेवाङ्गं व्यापृतं भगवति प्राणे तु सर्वाणि संभूय अतो बहुवचनं युगपदुत्थानार्थम् उत्थापनं पञ्चानां भाव्यं देहेन्द्रियप्राणान्तःकरणजीवानां तत्र जीवस्य अन्याधीनमुत्थानं परं तस्मिन्नागते सर्वेणोत्तिष्ठन्ति स तु भगवति प्रविष्टः भगवत्सङ्गे समागतः भगवत्युत्थिते एवोत्थितः अन्तःकरणं तु उत्थितमित्यत्र हेतुमाह। प्रेष्ठमिति अत्यन्तप्रियो भगवान् तं दृष्ट्वा उत्थितं भगवति या प्रीतिस्तया कृत्वा उत्फुल्ला दृक् यासाम् अनेन प्रीत्या इन्द्रियाणामुत्थानञ्चेतसां विलोकनार्थमेवागमनमित्यागमनमात्रेण विलोकनमादौ संपन्नम् उत्फुल्लता तु ततो भिन्ना तस्याः पुष्पधर्मत्वेन तदुक्त्या दृशां कमलत्वं व्यज्यते तत्र प्रीतेर्हेतुत्वोक्त्यैयदवधितत्कार्याभावेनाधुनैव तत्प्राकट्यं ज्ञाप्यते रवेरिव विरहे सर्वतिरोधानादेतत्तिरोधानमप्यासीदत एवाबलात्वमुक्तं कार्यमात्रे स्वसामर्थ्याभावज्ञापनार्थं दृष्टान्तेनैव प्राणानामुत्थानं प्राणानां भगवान् प्राण इति शरीरं तु पूर्वोक्ताभिलपितपदार्थत्वेन निरूपणात् उत्थितमित्यत्र तमिति हेतुः ॥ ३ ॥

एवमुत्थितानां भगवता सह स्थितानां कार्यमाह। काचिदिति पञ्चभिः। पूर्वमनेकविधा अपि भगवत्याविर्भूते सप्तविधा एव जाताः एको भगवान् सर्वार्थे प्रकटीभूतः तत्र या अग्रे स्थिताः ता अपि निकटस्थिता एव पूर्वमुच्यन्ते शुद्धसात्त्विक्यः शुद्धराजोयुक्ता राजसात्त्विक्यश्च निर्गुणाश्च शिष्टाः सप्तविधा गण्यन्ते काचिदत्र शौरेः कराम्बुजं मुदा अञ्जलिना अगृह्णात् एक एव हस्तो भगवता प्रसारितः पीताम्बर धर इति द्वितीयेन हास्यनिवारणार्थं पीताम्बरग्रहणात् बहुमानेन ग्रहणमञ्जलिना भवति शौरेरिति वीरत्वज्ञापनाय मुदेति पूर्वोक्तक्लेशव्यावृत्त्यर्थम् अन्याः पुनः ततोऽप्यन्तरङ्गा भविष्यामीति तद्बाहुमंसे दधार यथा आलिङ्गितैव भवति अग्रे पतस्या विवियोगो वक्तव्यः भुजमगरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु इति अत

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एव तदीयो धर्मोऽन्तःतस्याः निरोधं साधयिष्यतीति चन्दनरूपित तमित्युक्तं चन्देन रूपितं लिप्तं चन्देन हेतुनाः पूज्या लक्ष्मीर्वा पूर्वोक्ता तथा ताम्बूलेऽपि एवं सामग्रीप्रकटनेन तासां रेनोत्तमानां च कृत्यं प्रदर्शितम् एता आरोढुकामाः देवोत्तमास्तु पूजका इति ॥४॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तन्वः करचरणादयः। आगतमिति पुनरुक्तिस्तासां मूर्च्छितानामुत्थानं तदागमनैकहेतुकमिति स्पष्टीकर्तुम् ॥ ३ ॥

सर्वगोपीपु मुख्यानां कासाञ्चित् स्वस्वभावोचितप्रेमचेष्टितान्याह काचिदिति पञ्चभिः। कराम्बुजं दक्षिणमेवेत्युत्तरार्द्धव्याख्यायां व्यक्तीभावित्वात्। जगृहेविनयमयमैत्र्यात् स्पर्शौत्सुक्यात्स्तुति भावः। इयमादरमयसंस्पर्शात्तदीयतामयघृतस्नेहवती कान्तपराधीना दक्षिणा च प्राथम्यात् सर्वज्येष्ठा चन्दनेन रूपितं भक्तिच्छेदेन लिप्तं बाहुं वाममेव स्वकान्तवामभाग एव स्थित्यौचित्यात्। इयमादरगन्धिना स्वकर्तृकालिङ्गनेन किञ्चिद्घृतस्नेहामिश्रमधुस्नेहवती व्यक्तसख्या किञ्चित्स्वाधीनकान्ता दक्षिणा च ॥ ४ ॥

### केनचित्कृता विशुद्धरसदीपिका।

तमिति। आदौ समुत्कण्ठया सद्य एव दूरे प्रादुर्भूयागमनक्रमेण निजान्तिकं प्राप्तं सन्तं,, ततो ददृशुरायान्तं विकासिमुखपङ्कज,मिति विष्णुपुराणोक्तेः अत एव विशेषेणालोक्य वैवश्येनेपद्दर्शनेऽप्यनिश्चयात्। किंवा दृष्टेऽपि परमार्त्त्या विश्वासाभावात्सम्यङ्निरीक्ष्येत्यर्थः तत्र हेतुः अवला विरह क्षागाः यद्वा अवलीयन्ते इत्यवलाः सुरतराजि ततत्तदङ्गावलोकनाभिनिवेशेन नीचीनाङ्ग्यष्ट्य इत्यर्थः। इत्थमवला इतितन्त्रेणाभिधानं आसां च द्वैविध्यद्योतनायैवागमनमिति द्विः पाठः ततश्च प्रेयस्यो वयस्याश्च प्रीत्युत्फुल्लमुखाः युगपदुत्तस्थुः विलासाख्योऽनुभावोऽयं यथोक्तम्

> गतिस्थानासनादीनां मुखनेत्रादिकर्म्मणाम्।
> तात्कालिकं तु वैशिष्ट्यं विलासप्रियसंगजम् ॥

उभयत्र हेतुः प्रेष्ठमिति प्रियतमं प्रकृष्टं सखायमिति च यथायोग्यं तथैव दृष्टान्तोऽपि यद्वा तन्वः प्राणमिवेति तदेकजीवत्वेनोभयान्वयी यद्वा तन्व्यः विरहेण कृशाङ्ग्यष्ट्यः पक्षे सुकुमार्यश्च तदेवमत्र प्रीत्युत्फुल्लदृश इत्यनेन मुखाम्बुजानामर्घ पात्रत्वं दृशां च सद्यो विकसितकुसुमायत्वं प्रीतेश्च सलिलत्वमध्यवस्यार्घ निवेदनमपि सूचितम् एवं च रतेर्भावाङ्गमिति दर्शितम् ॥ ३ ॥

तदेवं विरहदैन्येन सर्वासां तुल्यभावस्तन्त्रेणैवोक्तः इदानीं प्राप्तनिजालम्बनत्वेन तदेकप्राणानां निदाघतप्तानां लतानामिवोपलब्धरसानां स्वस्वभावमनुसरन्तीनां मध्ये कासांचित्मुख्यानां चेष्टितभेदैर्भावभेदानाह। काचिदित्यादिपञ्चभिः। अत्रायमभिसंधिः आसां परः प्रेमा तावद्विविधः कासांचित्शृङ्गारप्रधानः कासांचित्सख्यप्रधानश्च आद्यश्च सम्भोगविप्रलम्भात्मत्वेनात्मनि तदीयताभावनामयदाक्षिण्यप्रचुरः स चासौ दक्षिणानां कान्तपराधीनानां परस्तु कान्ते मदीयताभावनामयः स्वाधीनप्रेष्ठत्वाद्वामतादिप्रचुरः स चासौ वामायाः स्वाधीनपतिकायास्तदेकजीवनानां तस्याः सखीनां च सोऽयं परम आद्यरसाभिधः तदुक्तमलंकारकौस्तुभे चित्तद्रवस्थायी भावः प्रेमाख्यः प्रथमो रस इति चित्तद्रवस्थायीभावो रतिस्थायी इत्यर्थः-

> तत्रालम्बनमन्योऽन्यं गुणाश्चोद्दीपनं मतम्।
> विशिष्य कथनाभावाऽनुभावः परिकीर्तितः ॥
> मत्यौत्सुक्यादयोऽप्यत्र योग्याः संचारिणो मताः।
> सचायं श्रीराधामाधवयोरेव यथा तत्रैव ॥
> राधामाधवयोर्यत्तत्प्रेमक्षेमंकरं महदिति।
> तत्र श्रीकृष्णप्रेमा यथा तत्रैव ॥
> प्रेयास्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद।
> स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः ॥
> त्वं मे ते स्यामहमिति च यत्तच्च नो साधु राधे !।
> व्याहारे नौ नहि समुचितो युष्मदस्मत्प्रयोगः ॥
> उभयोर्यथा श्रीमत्सुधा निधौ।
> सा लावण्यचमत्कृतिर्नववयोरूपं च तन्मोहनम् ॥
> तत्तत्केलिकलाविलासलहरीचातुर्य्यमाश्चर्य्यभूः ॥
> नो किंचित्करमेव यत्र न नुतिर्नागोऽप्यवा सं भ्रमो।
> राधामाधवयोः स कोऽपि सहजः प्रेमोत्सवः पातु नः

अयंच दाम्पत्येऽपि शुद्ध एव तत्सुखपर्य्यवसायित्वात् तदुक्तमलंकारे-

> प्रेमा दाम्पत्यभावोऽपि द्वयोः शुद्धतरो मत इति ॥

तत्रैवान्यत्र--

> राधामाधवयोरेव शृङ्गारः श्रुतिरोचकः।
> वैदग्ध्यं यत्र पर्य्याप्तं कृतार्थश्च मनोभव इति ॥

तदेवमुभयोराद्यस्तु रिरंसासङ्कीर्णः तत एव च पराधीनतामयः संयोगविप्रयोगरूपश्च अयंतु केवलसंयोगमयः स्वाधीनकान्ताख्यः यथा स्वीयाः सन्ति गृहे गृहेऽम्बुजदृशो यासां विलासकणात्

> काञ्चीकुण्डलहेमकंकणझणत्कारो न विश्राम्यति-
> को हेतुः सखि! कानने पुरपथे सौधे सखीनां पुरो।
> भ्राम्यन्ती मम वल्लभस्य पुरतो दृष्टिर्न विश्राम्यति ॥

तदेवं भावद्वयमिश्रतारतम्येनोत्तममध्यमकनिष्ठभाववतीनां प्रत्येकं त्रैविध्यं त्रिविधासु च सजातीयभावानां परस्परं सख्यरोचकत्वात् विजातीयभावानां प्रतिपक्षत्वम् अरोचकत्वादसजातीयभावानां सौहृदं यत्किंचिद्रोचकत्वेन हिताशंसनमात्रपरत्वात् अतिमिश्रत्वेनातिसूक्ष्मत्वेन वा नातिस्फुटसजातीयभावानां ताटस्थ्यं अवधानहेत्वभावात् तत्र च श्रीकृष्णविषयकनिजभावमात्राभिरुचितमतीनां सख्यस्य तदेकमूलत्वं श्रीराधाविषयकनिजनिजभावमात्राभिरुचिमतीनां सख्यस्य तदेकमूलत्वं तत्र तदीयतामदीयतामययोर्भुक्तयोर्भावयोरुत्तर एव श्रेयान् तत्र हि ममताधिक्येन गम्भीरः प्रेमप्रवाहो वर्द्धते ततश्च तद्विवर्त्तकौटिल्यापरपर्य्यायाभावरूपं वाम्यमुदेति अहेरिव गतिःप्रेम्णः स्वभावकुटिला भवेदिति भरतोक्तेः तत एव च कान्तोऽपि तद्वशः स्यादिति परमोत्तमत्वं तस्याः सखीनां च तत्सुखसुखितानां तद्वशीकारितया ततोऽपि परमत्वमिति स्थिते भावद्वयविभागे श्रीकृष्णस्य वयमित्यभिमानवतीनां दक्षिणात्वं श्रीराधाया वयमित्यभिमानवतीनां वामात्वं तत्राद्यासु श्रुतिमुनिरूपाणां समावेशः परासु च तासामेव कासां चिल्लब्धशुद्धभावानां साधकचरीणां समावेश इति अत्रासां प्रखरा मूर्द्धामध्यादिभूयांसो भेदा उज्ज्वलाद्यनीलमणेर्ज्ञेयाः विस्तरभिया

### फेन चित्कृता विशुद्धरसदीपिका ।

नोच्यन्ते नचायं विभागः प्रतिकूलतयासंभावनीयः तत्तन्नायिकारूपेण क्रीडन्त्याः श्रीराधाया अनुगतेन प्रियतमेन तत्तन्नायकभावाभिव्यञ्जकतया तत्तत्पोषकत्वाभिप्रायाद्रसस्यास्य तत्तत्प्रकारवर्णनेनैव सर्वोत्कर्षप्रदर्शनतात्पर्य्यपर्य्यवसायित्वादित्यलमतिप्रपञ्चितेन । काचिदिति औदासीन्यव्यक्तिः शौरेरिति पूर्ववत् करम्बुजं जगृहे तच्च दक्षिणमेव पुरुषव्यक्तो तस्यैव प्राधान्यात् तथा वनभ्रमणश्रान्ततया मत्तस्य तस्य करावलम्बनदानाय तादृशव्यवहारस्यौचित्यात् स्पर्शौत्सुक्याच्च अञ्जलिनेत्यादरः मुदेति प्रीत्युत्कर्षः ततश्चेयं मृदुः सख्यप्रायदास्या कान्तपराधीना दक्षिणा च नामानुक्तिश्च तत्समानभावानामन्यासामपि तदन्तःपात विवक्षया एवं सर्वत्र श्लोकार्द्धेनैव कथनात्कयेरौदासीन्यमिति संक्षेपः। काचिदिति। चन्दनेन रूपितं मक्तिच्छेदालिप्तमङ्गमाकृष्य धारणात्प्रखरा व्यक्तसख्या किञ्चित्पराधीनकान्ता दक्षिणा च ॥ ४ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तदाविर्भावे जाता तासां या दशा तामाह । तम्विलोक्येति। तमागतमासमन्ताद्गतं प्राप्तं विश्वतश्चक्षुर्विश्वतः पात् सर्वतः पाणिपादं तत् मया तत मिदं सर्वजगदव्यक्तमूर्त्तिनेत्यादिश्रुतिस्मृतिभ्योविभुसर्वाङ्गत्वात् आगतामिव विलोक्य तदेजति तन्नेजति तद्दूरे तद्वन्तिके इति श्रुत्या विभुत्वादनेजनस्य तत्तत्प्रदेशाभिव्यक्त्येच्छानुसारेणैजनगमनस्य दूरान्तिकयोर्वर्तमानत्वस्य च सम्भवात् श्रुतौ एजृकम्पने इत्यस्मात् कम्पनञ्चलनमित्यर्थः । तत् उ अन्तिके इति पदच्छेदश्च विलोक्येत्यत्र तु अन्तरापि वर्त्तमानत्वेनान्तः पश्यन्त्यः सह विहरन्त्योऽपि पूर्वगीतेषु प्रहसितं प्रियप्रेमवीक्षणमित्यादिषु ते प्रहसितादि वीक्ष्य मुहुरति स्पृहेत्यादि तेन सहभाषमाणास्वपि ध्यानमङ्गलमित्युक्त्या वयं ध्यानलयेनैव पश्यामो नैव पश्याम इति भ्रमेण विकला अधुनातु विशेषेण गततत्संशयतया लोकयित्वा ता अबला अपि उत्तस्थुः तदुक्तं प्रेमभिव्यक्ततया अस्य गोपीजनस्यान्तर्बहिः प्राकट्यं भगवतः श्रुत्यातदन्तरस्य सर्वस्य तदु सर्वस्यास्य वाह्यत इति व्यापकतयान्येषामपि तथात्वेऽप्यव्यक्तत्वेन न तथात्वं तत्रावला इति प्रथमस्वरूपेणैव अचला नार्य्यो विशेषतो विरहदुःखकर्पिता गतप्राणास्तन्व इवाबलाः प्राणमागतं तन्व इव प्राप्तबलाः सर्वा युगपदुत्तस्थुः अयमत्राभिप्रायः प्रयत्ने जाते कस्मिंश्चिदङ्गे चेष्टामात्रं भवति मरणोत्तर प्राणागमने तु सर्वोत्थानं तथा युगपत्सर्वा उत्तस्थुः यद्वा एकैकेन्द्रियप्रवेशनोदतिष्ठत्तदाविराडित्यनुत्थानेऽपि "अत एव प्राण" इति व्याससूत्रनिर्णीतप्राणात्मनः क्षेत्रज्ञस्य प्रवेशे उदतिष्ठत्तदा विराडिति विराडुत्थानवत्तं प्राणमागतमिव विलोक्य ताः सर्वा उत्तस्थुः यद्वा तासु तस्याः तन्वः वस्तुतस्तत्स्वरूपत्वात् लीलायामपि तत्पत्नीत्वात्सच तासामतिप्रियत्वात्प्राण इति तमागतमिव विलोक्य युगपत्सर्वा उत्तस्थुः यद्वा सर्वास्तन्व इत्युक्त्या विरहकर्षिततया सूक्ष्मनाङ्गताः प्राणात्मकस्य तस्य वियोगे तनुमात्रावशिष्टा वा तमागतं विलोक्योत्तस्थुः तस्यातिप्रियत्वमेव हि प्रेष्ठमिति प्रेष्ठत्वादेव तद्विरहे तनुमात्रावशेषत्वं दर्शने संजीव्यलब्धबलत्वेनोत्थानं चोपपन्नमेव किंच भगवदाविर्भावे सर्वोत्थानमभिप्रेत्य विलोक्येत्यनेन विलोकयित्रात्मन उत्थानमुक्तं प्रेष्ठमिति प्रियत्वावगमे मनस उत्थानसूचनं प्रीत्युत्फुल्लदृश इतीन्द्रियोत्थानोपलक्षणं बला इति बलप्राप्त्या प्राणोद्गमद्योतनम् उत्तस्थुरिति शरीरोत्थानं युगपदिति सर्वसङ्घातस्य समानकालोद्गमोक्तिः उत्थितानां तासां प्रियसमागमे चेष्टामाह । काचिदित्यादिना तत्र पूर्वं विरहदैन्येनैकदशापन्नानां सर्वासां सहनिरूपणमधुना प्रियदर्शनलब्धश्वासानां जाताश्वासानामुद्भूतविविधभावोल्लासानां विचित्रचेष्टानिदर्शनमिति विशेषः काचित शौरेः करम्बुजमञ्जलिना मुदा जगृहे इत्यन्वयः तत्र मुदेति प्रियदर्शनजातमोदेन लब्धसामर्थ्यां अञ्जलिना मुदा करग्रहणन्तु आगतस्य प्रथमं सप्रेमादररीत्या यद्वान्तर्द्धानेन वाम्यभावङ्गतस्य पुनरुद्वेगशङ्कयाक्रमेण स्पर्शाकाङ्क्षया यद्वा अञ्जलिना हस्तद्वयेन ग्रहणं पुनः पलायनभयात् यद्वा करग्रहणेन पाणिग्रहणसूचकेन स्वीकृतत्यागे लज्जोत्पादनाय यद्वा वामभागस्य वामभागत्वात् शौरिरित्युक्त्यादक्षिणं करं जगृहे इतिसूचनात् दक्षस्य तव दक्षिणत्वेन दाक्षिण्यभावयोगस्य वामासु वामभावस्य न वामत्वामिति भावद्योतनाय यद्वा अमलं निरुपाधिकं सुखस्वरूपं तं करस्थामलकवदपरोक्षतापादनाय यद्वा स्वहस्तगतत्वेन स्ववशीकरणाय यद्वा करस्याम्बुजमिति विशेषणेन स्वान्तस्तापोपशमाय कराम्बुजस्य योग्यतामाकलय्य यद्वा अयं पद्मां सदैव वक्षसि धृत्वैव विहरति मय्यपि न रमापेक्षया रूपलावण्यमाधुर्य्यादिगुणेषु वैकल्यमपितु तस्याः करे पद्म इति सुरभिमृदुत्वाल्हादकत्वाद्याखिलगुणैस्तस्याः करस्थपद्मस्य भगवत्करपद्मस्याप्यनवगतत्वात्तत्करपद्मग्रहणेन पद्मातोऽप्याधिकमात्मनस्तत्प्रियात्वसम्पादनेन तस्य हृद्धामतया तस्या अपि हृद्धामतया हृद्धामतापादनाय यद्वा शौरेरित्युक्त्या शूरवंशप्रभवशूरवरस्य रतिरणे मल्लक्रीडाप्रथमभावद्योतनाय काचित्तु चन्दनरूपितं तेन लिप्तं तस्य प्रियतमस्य वाहुम् अंसे स्वस्कन्धे दधारेत्यन्वयः अत्रापि मुदेति पूर्ववदनुषज्य योजनीयं तद्वाहोरंसे समर्पणन्तु ततोऽप्यन्तरङ्गसख्यभावद्योतनाय आत्मनस्तदन्तरङ्गत्वसम्पादनायैव वा सख्यभावप्रियसन्मानरीत्या वा प्रथमसख्याकरग्रहेणन परीक्षिते तस्य वामभावोपरमे स्वदाक्षिण्यसहितधाष्टर्याविष्कारायवा यद्वा । चन्दनरूपितमित्युक्त्या तद्विरहे दाहकस्यापि चन्दनस्य तद्वाहुसम्बन्ध एव तापापनोदकत्वमाकलय्य यद्वा चन्दनलिप्ततयागौरं तद्वाहुं करकमलनालमिवाकलय्य तापोपशमायांसे धृतवती यद्वा चन्दनलिप्तं श्यामभुजं गङ्गायमुनासङ्गमं स्वेष्टफलदतीर्थराजमाज्ञाय तदवगाहनेन स्वेष्टसिद्धौ तदन्तःप्रवेशायांसे दधार यद्वा गौरचन्दनस्य तद्वाहु संगमदर्शनजातोत्साहा स्वयमपि गौरीश्यामवाहुसङ्गतिंचकार यद्वा तद्वाहुं चन्दनलिप्तं दृष्ट्वा चन्दनानुलेपानुपुष्पसमर्पणस्यौचित्यात् अंसे धारणेन स्वमुखाम्बुजस्य समर्पणाय यद्वा मलयाद्रागततल्लिप्तभोगिवच्चन्दनलिप्ततद्वाहुनोचितस्वभुजभुजङ्गयाः समागमेनैव स्वात्मनोऽपि स्वपष्ठेसमागमइत्येकप्रयत्नेन कार्य्यद्वयसम्पत्तिमवगत्य तथाचरणं यद्वा चन्दनालिप्तं तद्भुजंमलयद्रुमशाखां मत्वा भुजभुजङ्गया विरहविषतापोपशमार्थं तन्मेलनाय स्वांसे दधार तथाच तन्मिलनमात्रेण सा पञ्चफणा भुजभुजगी गतविरहतापावषी प्रवृद्धानुरागसुखाभ्यामाभिभूतस्वपरानुसंधानचेतनततया लब्धजाड्या प्रेमोद्भूतरोमपुलकमुकुलाप्रस्फुरदुत्फुल्लकरकुसुमा

काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितम्।
एका तदङ्घ्रिकमलं सन्तप्तास्तनयोरधात्॥ ५॥
एका भ्रुकुटिमाबद्धय प्रेमसंरम्भविह्वला।
घ्नन्तीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा॥ ६॥

श्रीरामनारायणकृतभावभावविभाविका।

शाखालिङ्गितलतेव घर्मौ ततश्च मलयसङ्गमे लताया अपि चन्दनत्ववत् हरिभुजसौरभ्यस्य तद्भुजे संपत्तौ भक्तेषु निजसत्त्वात्मकप्रेमरसं स्वयं ददश तदीयानुरागमत्या भक्तवदयत्नवत् तल्लुब्धतया मधुपतेरपि मधुपत्वापत्तिरात्मारामत्वं च॥ ४॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ततः किंवृत्तमित्यपेक्षायामाह। तमिति। तं तथाभूतमागतं विलोक्य तासां विह्वलतादशायामाविर्भूतत्वात्तच्छरीरसुगन्धाघ्राणादिना ससंज्ञाः सत्यः अहो आगतोऽयं प्रेष्ठ इत्यमन्यन्तेति सूचयितुमागतमित्युक्तं प्रीत्या विकसितनेत्रपद्माः प्रीतिपारवश्यात्कोपनिवृत्त्या तादृशा जाता इति भावः। तत्राप्यबलास्तत्प्रतीकारबलरहिताः यद्वा विरहेण कृशतां गतत्वाद्दुर्बला बलरहिता अपि यतः प्रेष्ठं तद्दर्शनमात्रेणैव सबला इति भावः। सर्वा अपि युगपदेवोत्तस्थुः आगतं प्राणं प्राप्य तन्वः करचरणादयः शरीरावयवा यथा द्रावयत्यकान्यनेकानि योगशरीराणि प्राणं प्राप्य यथा युगपदुत्तिष्ठन्ति तद्वत् एक एव कृष्णस्तासां प्राण इतिबोधनाय प्राणमित्येकवचनम्॥ ३॥

तत्र युगपदुत्थितानां सर्वासां मध्ये मुख्यानां पृथक्चेष्टितान्याह। काचिदिति। चन्द्रावली श्यामा शैव्या पद्मा राधा ललिता विशाखा भद्रेत्यष्टौ मुख्याः सख्यः तत्राद्याश्चतस्रः सरलस्वभावत्वाद्दक्षिणाः उत्तराश्चतस्रः वामस्वभावत्वान्मानिन्यः अत एव मुनिनापि सरलानां मध्ये एकैकस्याश्चेष्टितमर्धेनार्धेनोक्तं वामानां मध्ये त्वेकैकस्या वृत्तेनोक्तं तत्रादौ कान्तपराधीनाया दक्षिणाया वृत्तमाह। काचिच्छौरेः दक्षिणं करकमलमञ्जलिना संहतहस्तद्वयेन जगृहे तत्रापि मुदा परमहर्षेण भ्रमणप्राप्तश्रममस्तश्च स्पर्शोत्कण्ठया करावलम्बनव्याजेन प्रेम्णा तद्गृहीतवतीत्यर्थः। इयं तु राधां प्रति स्पर्धिनी चन्द्रावली संज्ञा तथाचोक्तं बिल्वमङ्गले—

राधामोक्षनमन्दिरादुपगतश्चन्द्रावलीमूचिवान्।
राधे क्षेममिहेति तस्य वचनं श्रुत्वाह चन्द्रावली॥
कंसं क्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया।
राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु व इति॥

अथ द्वितीयायाः कान्ताधीनायाः दक्षिणायाश्चेष्टितमाह। काचिच्चन्दनलिप्तं विरहतापोपशामकं तस्य बाहुं स्कन्धे मुदा दधार इयं राधा सुहृद्भूता श्यामलाख्या सखी॥ ४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तं श्रीकृष्णमागतमाविर्भूतम् युगपद्विलोक्य सर्वा युगपदेवोत्तस्थुरित्यर्थः। अनेन तत्तत्समीपे तत्तदभिमुख्येनाविर्बभूवेति सूच्यते तत्र दृष्टान्तस्तन्वः करचरणादयः प्राणमागतमिवेति॥ ३—५॥

भाषा टीका।

उन प्रियतम श्रीकृष्णचन्द्र को दूरते आवत देख सब गोपी प्रीतिते प्रफुल्लित नेत्र वाली होगईं जैसे गये प्राण के लौट आयवे पै सब इन्द्रिय चेतन होवें हैं तैसे सब उठ खड़ी होगईं॥ ३॥

काउ गोपी ने अपने दोनों हाथों ते भगवान् के हाथ को आनन्दते ग्रहण कीनो काउ ने दिव्य चन्दन ते शोभित उनके भुजा को अपने कांधे पै धारण कियो॥ ४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अञ्जलिना संहतहस्तद्वयेन॥ ५॥

भ्रुकुटिं भ्रुवमाबध्य कुटिलीकृत्य प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठा कटाः कटाक्षास्तैर्ये आक्षेपाः परिभवास्तैस्ताडयन्तीवैक्षत॥ ६॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अञ्जलिनेति। पूर्ववत् किंवा बहुलाभाशया सदा चर्व्यमाणं ताम्बूलं प्रवर्तते परम रस मयत्वात् पतन शङ्कया वा यतः तन्वी विरहेणातिकृशा ताम्बूलं भीभगवतैव नागर शेखरेण स्वयमानीतं किंवा श्रीवृन्दादेव्यार्पितं ज्ञेयम् अङ्घ्रिकमलमेकं स्तनयोर्न्यधात् इत्येतस्यास्तदर्थमुपवेशो ज्ञेयः श्रीभगवदुपवेशस्त्वग्रे तत्रोपविष्ट इति वक्ष्यते तस्य तयोर्निधाने हेतुः सन्तप्तेति अन्यथा विरहतापकामज्वरयोरनुपगमः हृदय इति पाठेऽपि स एवार्थः॥ ५॥

प्रेमसंरम्भेणैव भ्रुकुटिमा सम्यक् बद्ध्वा पश्चात् प्रेमसंरम्भविह्वला यमुनेति शेषः ऐक्षतेति परेणान्वयः तथाच श्रीविष्णुपुराणे—

काचिद्भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम्।
विलोक्य नेत्रभृङ्गाभ्यां पपौ तन्मुखपङ्कजमिति॥

अन्या च कटाक्षबाणाक्षेपैर्प्रतीक्षत अत्रापि प्रेमसंरम्भ एव कारणं ज्ञेयं निर्दष्टदशनच्छदस्युक्तेः प्रेमेत्यनुवृत्त्या॥ ६॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रेमसंरम्भविह्वला सती भ्रुकुटिमाबध्य निर्दष्टदशनच्छदा भूत्वा कटाक्षेपैर्प्रतीक्षतेत्यन्वयः। कटाक्षेपैः कटाक्षविक्षेपैः। सन्दष्टेति क्वचित् पाठः। शौरिमिति प्रकरणात्। घ्नतीवेति तस्यापि क्षोभं व्यज्य तामिर्गृहीतत्वेनैव दाक्षिण्यमात्रेणैव च स

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्र स्थित इति व्यज्यते। तथा वाम्येन दूरस्थिताया अपि तस्याः प्रेमसंरम्भेत्यनेन तद्वीक्षणे परमसुखं दर्शितम्। यथा श्रीविष्णुपुराणे। काचिद्भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम्। विलोक्य नेत्रभृङ्गाभ्यां पपौ तन्मुखपङ्कजमिति अत्र बिब्बोकाख्यानुभावो दर्शितः। यथोक्तम् इष्टेऽपि गर्वमानाभ्यां बिब्बोकः स्यादनादर इति। तथा ललिताख्योऽपि यथोक्तं विन्यासभङ्गिरङ्गाणां भ्रूविलासमनोहरा। सुकुमारा भवेद्यत्र ललितं तदुदीरितम्, इयं प्रखरा सुसख्यात्यन्तस्वाधीना वामा कान्ता च॥ ६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

जुषाणा जुषमाणा सेवमाना॥ ६—८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

काचित्तन्वी योषिदञ्जलिना संहतहस्तद्वयेन तस्य ताम्बूलचर्वितं चर्वितताम्बूलं जग्राह एका तु विरहतापेन तप्तयोः स्तनयोस्तस्य भगवतोऽङ्घ्रिकमलं कमलवच्छीतलमङ्घ्रिमधाद्दधार॥ ५॥

एका तु भ्रुकुटिं भ्रुयुगमाबध्य कुटिलीकृत्य प्रेमसंरम्भेण प्रेमगर्भक्रोधेन विह्वला निर्दष्टो दशनच्छदोऽधरोष्ठो यया तथाभूता कटाक्षेण घ्नतीव ताडयन्तीवैक्षत कटाक्षेपैरिति पाठे कटाक्षपातैरित्यर्थः॥ ६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

चर्वितं भक्षितोच्छिष्टम् अधात् दधार॥ ५॥

प्रेमसंरम्भविह्वला प्रणयकोपाकुलिता भ्रुकुटिं ललाटशिराम् आबध्य प्रकाश्य निर्दष्टदशनच्छदा नितरां दष्टोष्ठपुटा॥ ६॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

काचिदञ्जलिनेति कुमारिकाणां मुख्या एका तदङ्घ्रिकमलमिति सदैन्यप्रणयवती सा तु काचिद्धारतद्बाहुमिति बाहुं स्वांसे दधत्याः कस्याश्चित्स्कन्धे कृतावर्जनतया शिथिलैकपादस्य तस्य स्थितिरत एव शिथिलं चरणं स्वयमुपविश्य स्तनयोः कृतवती ननु तदा भगवानुपविष्टः॥ ५॥

एका भ्रुकुटिमाबध्येति प्रणयक्रोधवती केचिदेनां श्रीराधामाहुः॥ ६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अतः काचित्ताम्बूलचर्वितमञ्जलिना अगृह्णात् तस्यास्ताम्बूलयोग्यतामाह। तन्वीति। कोमलाङ्गी एका पुनः बहिःस्थिता साक्षात्सम्बन्धमलभमाना उत्थातुं वा अशक्ता उपविश्यैव तदङ्घ्रिकमलं स्तनयोरधात् अनुत्थाने धारणे च हेतुः सन्तप्तेति सा ह्यत्यन्तं विरहातुरा॥ ५॥

एकेति। अन्या पुनर्दूरस्था तामसी तमसा भ्रुकुटिमाबध्य कटाक्षेपैः घ्नतीव ऐक्षत अत्र सवर्णे वर्णलोपः कटाक्षक्षेपैरित्यर्थः। प्रेम्णा सहितो यः क्रोधसंरम्भः तेन विह्वला सम्यक् दष्टः दशनच्छदो यया तादृशी च जाता भ्रुकुटिबन्धनेन चित्तकौटिल्यं प्रेमसहितसंरम्भेण इन्द्रियवैक्लव्यं संदंशेन देहक्षोभः घ्नतीवेति प्राणैर्वलस्फूर्तिः ज्ञानसाधनमपि तस्या विकृतं प्रान्तदृष्टिः कटाक्षः तत्रापि आक्षेपभावः यथा वाचावगुरणं तथा कटाक्षा एव आक्षेपरूपाः निरन्तरं प्रवृत्ताः तादृशभावस्य पूर्णत्वाय कालनियमनार्थं वा भ्रुकुटीभङ्गः स्वभावनियमनार्थं च संरम्भः ळोभनाशार्थं दंशः मोक्षाभावार्थं ज्ञानवक्रता प्रमाणनिराकरणार्थं हननमिति, यतो लौकिकिकी भक्तिः पुष्टा भवति एतदर्थमेषा निरूपिता॥ ६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अञ्जलिनागृह्णादितीयं दास्यप्रायमैत्र्या कान्ताधीना दक्षिणा च। अङ्घ्रिकमलं दक्षिणमेव स्वहस्ताभ्यां गृहीत्वा भूमावुपविष्टास्तनयोर्न्यधात्। ततश्च वामभुजेन कान्तायाः स्कन्धमालम्ब्य वामचरणेन भुवमवष्टभ्य कृष्णस्तस्थाविति ज्ञेयम्। इयं मैत्र्यप्रायदास्या कान्ताधीना दक्षिणा चेत्यत इमे तदीयतामयघृतस्नेहवत्या प्रथमायाः सख्यौ॥ ५॥

भ्रुकुटिमाबध्य एवं कुटिलीकृत्य सज्यं धनुः शरसंसक्तं प्रतान्यैवेत्यर्थः। प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला विवशा कटाः कटाक्षाः शरास्तेषां क्षेपैर्निक्षेपैः कृष्णं लक्ष्यभूतं घ्नतीव भोः कुहकशिरोमणे! स्वप्रेमहालाहलं त्वया मयि प्रयुज्य सम्यक्तया सफलीकृतं देहान्निःसृतप्रायान् प्राणान् दग्धुं किं पुनरपि प्रत्यालीढस्थि त्वं साध्वेव परिचितोऽसीति व्यञ्जयन्ती ऐक्षत। निर्दष्टदशनच्छदेत्यञ्जलिना धृतस्य स्वाधरस्य दंशः कोपानुभावः। इयं मदीयतामयमधुस्नेहवत्यमानकौटिल्यवती॥ ६॥

---

केन चित्कृता विशुद्धरसदीपिका।

काचिदिति। ताम्बूलमत्र प्रतिकुञ्जं माल्यादिसाहित्येन वृन्दादेव्या स्थापितं शौरेरिति प्रकरणलब्धम् अञ्जलिनेति पूर्ववत् औत्सुक्यमधरामृतस्य।हित्यात् एवञ्च वितर वीर नस्ते धरामृतमित्यस्या एवाभिलापः इयञ्च मृदुर्दास्यप्रायसख्या कान्तपराधीना दक्षिणा च ततश्च श्रुतिमुनिरूपासु कान्तभावयतीयमिति ज्ञेयं एकेति। तदङ्घ्रिकमलमपि दक्षिणमेव स्तनयोरधात् वामभुजेन प्रियालम्बनेन समचरणन्यस्ताङ्गभारतामाप्तेः सम्प्रति स्थित एव चायं उपवेशस्याग्रे वक्ष्यमाणत्वात् अत उपविश्यैव तया चरणधारणं तस्य तयोर्निधाने हेतुः सन्तप्तेति विरहमयरत्याख्येन भावेनेति शेषः इयं च प्रखरा दास्यप्रायसख्या कान्ताधीना दक्षिणा च अस्याश्चरणपङ्कजं शंतमं चेत्यभिलापः इयमपि पूर्ववत् तिस्र एताः कान्तभावयत्यः॥ ५॥

अथ वामानां कामानधीनां शुद्धामेव प्रीतिमुपदर्शयितुं तासां स्वामिन्या सर्वाभिरन्याभिर्वेष्टितमेकेन श्लोकेनाह। एकेति। सर्वासु मुख्यतमा 'एके मुख्यान्यकेवला' इत्यमरः यद्वा सर्वास्वप्यवस्थासु प्रियत-

केनचित्कृता विशुद्धरसदीपिका ।

मेनैकताङ्गेत्यर्थः । प्रेमसंरम्भविह्वलेति स्वभावोक्तिः तत एव पूर्वोक्ताभ्यः कामविह्वलाभ्यो वैशिष्ट्यं भ्रुकुटिमावध्येति वाम्यव्यक्तिः यद्वा सुरतचिन्हगोपनाय रोषानुकरणं निर्दष्टदशनच्छदेति कथनात् कटाक्षेपैः कटाक्षविक्षेपैरित्यर्थः । इयञ्च तस्याः शोभचेष्टां वर्णयतः श्रीमुनीन्द्रस्याप्यर्द्धहासितवर्णा केशवेग भीत्यनुकृतेरिति इयं चाखिलमप्यनाविलप्रेमगोपनाय यदेताभिर्दक्षिणभागे निगृहीताऽप्ययमित एवानुसरति रतिलम्पट इति वाम्येन तस्य स्थगनम् अयमेव विव्वोकाख्योऽनुभावः "इष्टेऽपि मानगर्वाभ्यां विव्वोकस्यादनादर" इत्युक्तेः ललिताख्योऽपि यथा "विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा सुकुमारामवेदत्र ललितन्तदुदीरित" मिति तथा माधुर्य्यं सर्वभावानां सर्वावस्थासु चारुतेत्युक्तलक्षणे माधुर्य्यातिशयश्च सूचितः इयञ्च प्रखरा सुसख्यात्यन्तस्वाधीनकान्ता वामा सर्वाभिरामाचेति मुख्यतमैवेत्यलमतिप्रपञ्चितेन तासां तासां चेष्टितादिसंग्रहश्चैतस्या एव सौभाग्योत्कर्षवर्णनाग्रहेणेति यदेताः सर्वा अपि वश्यत्वेनामेवारमयदिति दिक् ॥ ६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

अन्याया अधरामृतरसलुब्धायाश्चरितमाह । काचिदञ्जलिनेति । काचित्तन्वी तु तस्य ताम्बूलचर्वितमञ्जलिना अगृह्णादिति तस्येत्यध्याहृतेनान्वयः । तत्र तन्वीति सुन्दराङ्गी प्रियाधररसपानार्हा चर्वणे तदधररसान्वितमिदमिति ज्ञात्वा मिष्टमिष्टं हि मत्वा तल्लोभेनोच्छिष्टभक्षणमिति नियमभित्याञ्जलिनेतियोजितपाणिद्वयपुटेनात्यादरेण गृहीतवतीत्यर्थः । यद्वा काचित्तन्वीति विरहतापशोषणेनातितनुसूक्ष्माङ्गी स्वपोषणस्य तदधरामृतपोषणाधीनतामवगत्य बहीषु बलात्तदास्वादनेतिधार्ष्ट्यं तत्तत्तोद्भवेण विलम्बासहिष्णुताञ्च व्यवस्याञ्जलिनेति पाणिद्वयं संयोज्य शिरोधारणेन प्रार्थयित्वागृह्णात् यद्वा यतस्तच्चर्वितमञ्जलिना गृह्णादत एव तत्पुष्ट्या तनुविस्तार इत्यस्मात्प्रफुल्लितशरीरा सफलदेहा वा जाता यद्वा सहजसरागोऽपि प्रियतमाधरोऽनेनातिरागान्वितः कृत इत्येतद्धृदयनिवेशेऽनुरागवृद्धौ सौभाग्यातिशयान्विताशयान्विताऽगृह्णात् तदेतदतिदैन्यदास्यभावरसाभिज्ञतान्वितायाआचरितमिति बोध्यं काचिदन्यापि दाक्षिण्यभावमेवानुगता तु प्रियदर्शनेन तदानुकूलभावेन च किञ्चित् विरहचिन्ताग्निद्वयोपशान्तावपि लब्धालम्बनवया तदतिस्निग्धापाङ्गनिरीक्षणस्नेहदृष्ट्योर्द्दीपिततयाचातिवृद्धहृच्छयाग्निसन्तप्तास्तनयोस्तदङ्घ्रिकमलं स्वतापपरीक्षार्थं न्यधात् यद्वा स्वोरोजयोर्बहुधा बहुसरोजस्रग्योजनेऽपि विरहचिन्ताकामोद्भूतत्रिदोषज्वरानुपशमे आधिदैविकाध्यात्मिकादित्रिदोषविषमज्वरोपशमाय मुनिभिर्हृदि धृतं तदुपशमकं तदङ्घ्रिमृदुकमलं तत्सदृशं कं ब्राह्मणं मं शिवञ्च लाति अनुगृह्णातीति वा स्वर्गमपि मलमिव हेयं यस्मादिति वा कमलं तदुपशमायैव स्तनयोर्न्यधात् ॥ ५ ॥

अथ वामाया आचरितमाह । एकेति । एकातु प्रेमसंरम्भविह्वला तथा सन्दष्टदशनच्छदा भ्रुकुटिमावध्य कटाक्षेपैर्घ्नन्तीवैक्षत अत्र सवर्णे वर्णलोप इतिकटाक्षक्षेपैरित्यर्थः । एकेत्यनेन सर्वमुख्यायूथेश्वरीश्वरी यद्वा एका इति सा एकैव न तादृशी काप्यन्या स्वाधीनपतिका प्रेमगाथा लब्धविरहबाधा श्रीमती राधा कृतापराधं माधवमालक्ष्य प्रेमसंरम्भविह्वलेति प्रेम्णा यः संरम्भः क्रोध एवमस्मत्प्रेमभावेऽप्ययं कुटिलकृष्णबहिरन्तरतया सर्वतो वियोज्य नत्यजतीति तत्र प्रेमिणां गृहादिभ्यो वियोजनयोग्यमेवेति न दोषाय किन्तु प्रेमभावान्वितानां तद्भावान्वितानां त्यागे सद्भावः परमदुःखायेति तेन विह्वला यद्वा प्रेमैव संरम्भः क्रोधो रतिरणे तद्रूपक्रोधस्यैवोचितत्वात् यथा यथा क्रोधाधिक्यं तथा तथाङ्गैरङ्गानि परस्परं सम्पीड्य प्रपातनरदनखादिच्छेदनरूपरणाधिक्यतया रतिरणे तु यथायथा प्रेमाधिक्यं तथा तथा गाढालिङ्गनादिपूर्वकरतिरणसौष्ठवापत्तिः तेन विह्वला प्रेम्णैव विकलचित्ता तथा सन्दष्टदशनच्छदेतिदशनच्छदंसंदंशस्तु स्वभावत एव स्मितरूपविकाशाल्हादसुधात्मकविकाशान्वितः प्रियामुखाम्बुजचन्द्रः प्रियदर्शने त्वतिशयेन जातप्रहासोल्लासः तथाचैवं विरहदुःखदानेऽपि मुखप्रसादमालक्ष्य कदाचिन्निर्भयः पुनरप्ययं कुर्य्याच्चेत्तदसर्वासां मरणमेवेत्याशयानुरोधेन स्मितानुरोधाय यद्वा रदकुन्दकलिकासखीभिः कुसुमयति मुखपद्मदलाधरवदीभावयत् दशनभगणरूपसखीभिर्मुखचन्द्रवदीभावयत् सखीभिः पतिः वदयतेव रसरीतिरिति बोधाय यद्वायमधरोऽतिमधुर इति त्वयाप्यास्वादनीयः इति द्योतनाय यद्वा रतिरणारम्भाय जातप्रेमात्मसंरम्भेण त्वदधरालाभे स्वाधर एवच्छिद्येत इति त्वयाप्यतिसंरम्भेण सावधानतया रतिरणसमुद्यमः कर्तव्यः तथा भ्रुकुटिमावध्येति भ्रुकुटिबन्धस्तु कुटिलकृष्णोऽपि भवानस्माभिः शिरसि धृतस्त्वं तु तथापि कौटिल्यं न जहासीति व्यञ्जनाय यद्वा कुटिलकृष्णेऽपि भ्रुवो मया प्रेमसंरम्भेण बद्धो भयान्किमिति प्रेमसंरम्भेणापि न बध्यते यद्वा बद्धे अपि भ्रुवौ मया शिरस्येव धृते इति प्रेमसंरम्भबद्धत्वे त्वया तस्यानादरः शङ्कनीयः यद्वा रतिरणारम्भाय मया प्रेमसंरम्भेण युगधनुषी युगपदाकृष्टे इति त्वयापि न रतिरणासन्धाने विलम्बोऽनुसन्धेयः ननु मया प्रेमसंरम्भभयेन भवत्या सन्धिरेवाकाङ्क्ष्यते इतिचेद्धयतु तर्हि मया नितरां तव सन्धिरतिरणप्रतिबन्धकोऽपि तु तत्संसाधक एव किञ्च सुरतिशूराणां न रतिरणोपशमः स्पृहणीयः किन्तु तदुद्गम एवेति कटाक्षाणां तिर्य्यङ्निरीक्षणरूपापाङ्गानामनङ्गवृद्ध्या कृतसविद्धजनापाङ्गानां कामवाणानां इन्द्रनीलनीरजमणिजटितचित्राक्षाख्यनिपङ्गसंगिनां भ्रूधनुर्द्वयमाकृष्य नेत्रे प्रेम्णा रतिरणोद्यतीकरणाय घ्नन्तीवैक्षत यद्वानन्दघने परप्रेमास्पदे तस्मिन् रसभावदक्षाणां तासां वामभावामभीप्स[१]तीनामतिवामानामतिवामान माति मानानां दाक्षिण्यस्यैव वामत्वं वामभावस्य तु वामत्वमेवेत्यत्रापि दाक्षिण्यख्यापनमेव दक्षिणयमिलेत्येवं योजना एकाशब्दस्तु पूर्ववदेव द्वेधा उत्कर्षे प्रेमसंरम्भविह्वलेति प्रेम्णः संरम्भेण रभ राभस्ये इत्यस्माद्वेगेन विह्वलातिक्रान्ततयालिङ्गनमिच्छत्यपि कर्तुमशक्ता प्रेमवेगाधिक्ये हेतुः सन्दष्टदशनच्छदेति प्रियेण सम्यग्दष्टौ पूर्वविहारावसरे आस्वादितौ दशनच्छदौ यस्याः प्रेष्ठस्यैव वा तस्य सम्यगास्वादितौ दशनच्छदौ यया तन्मधुपानलुब्धा मत्ता चेति भावः । अनिमिषेक्षणायैव भ्रुकुटिमाबध्य कटाक्षेपैः स्निग्धापाङ्गैः घ्नन्तीव हन हिंसागत्योरिम्य

[१] अतिवामा सुन्दरीणां स्वसौन्दर्यमादिगुणैरतिक्रान्ताः वामा याभिस्तासां नमतिवा मा विपरीता यासामत एवातिक्रान्तो वामभावे स्वकान्तेरेपमानादिख्यापनरूपो याभिस्तासाम्

अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा ॥ ७ ॥
तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च ।
पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसंप्लुता ॥ ८ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

स्मादात्मानं तत्र गमयन्तीव प्रेष्ठं च नेत्रद्वारा तद्भावदर्शनोत्साहज-ननेन वा स्वस्मिन् प्रापयन्तीवैक्षत स्वान्तः प्रेमभावानेव वा तस्मै गमयन्ती ज्ञापयन्तीवैक्षत ॥ ६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ तृतीयायाः कान्ताधीनायाः दक्षिणायाः वृत्तमाह । काचिच्छौरेः ताम्बूलचर्वितं परमादरादञ्जलिना गृहीतवती नत्येकेन हस्तेन यतस्तन्वङ्गी कोमलाङ्गी तथा तद्ग्रहणयोग्या इयं चन्द्रावली सुहृद्भूता सैन्याभिधा सखी अथैवम्विधाया एव चतुर्थ्या वृत्त माह । एका तस्य वामभुजेन श्यामलाख्यां सखीमवलव्य तिष्ठतः प्रेष्ठस्य दक्षिणमङ्घ्रिसरोरुहं स्वयमुपविष्टा सती स्तनयोरधात् यतः सन्तप्ता इयमपि चन्द्रावली सुहृद्भूता पद्माख्या सखी ॥ ५ ॥

अथ वामासु प्रथमायाः अतिवामायाः प्रखरायाः स्वाधीन-कान्ताया वृत्तमाह । एका भ्रुकुटिमावध्य भ्रुवौ कुटिलीकृत्य प्रेमसंरम्भेण प्रणयकोपावेशेन विह्वला सती सन्दष्टाधरोष्ठा भूत्वा कटाः कटाक्षास्तैर्ये आक्षेपाः परिभवास्तैः ताडय तीव पेक्षत "इष्टे ऽपि गर्वमानाभ्यां विव्वोकः स्यादनादरः" इत्युक्तलक्षणो विव्वोकाख्योऽयमनुभावः सर्वाः परित्यज्य या नीता पश्चात्यक्ता च सेयं श्रीराधाख्या मुख्या सखी गोपालतापिन्यां गान्धर्वेति नाम्ना ख्याता ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एका तु भ्रुकुटिं भ्रुवमावध्य कुटिलीकृत्य प्रेमनिमित्तो यः संरम्भः क्रोधावेशस्तेन विह्वला व्याकुला संदष्टः दशनच्छदेऽधरोष्ठो यया सा कटाक्षेपैः कटाक्षपातैर्घ्नन्तीव पेक्षत ॥ ६ ॥

भाषा टीका ।

कोई सुन्दर गोपी अपने अंजलिते भगवान् के ताम्बूलकी चर्वित प्रसादी को ग्रहण करत भई एक गोपी अति विरह ते तपी भई श्री चरण कमल को अपने स्तनों पै धारण करत भई ॥ ५ ॥

एक गोपी अपनी दोनों भौं को टेढी कर प्रेमके क्रोधते अति विहल हो गई औ दांतो को दवाके टेढे कटाक्षों ते प्रहार करतभई ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनिमिषन्तीभ्यामनिमीलन्तीभ्यां दृग्भ्यामापीतमपि सम्यग्दृष्टमपि पुनःपुनर्जुषाणा नातृप्यत ॥ ७ ॥
हृदिकृत्य हृदयं नीत्वेत्यर्थः ॥ ८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

जुषाणा सेवमाना प्रीत्या वीक्षमाणेत्यर्थः । आपीतमपि दृशोश्चपकत्वं ध्वनितं परमप्रीत्या सम्यग्दृष्टमपीत्यर्थः । सन्तः प्रीति भक्त्येकनिष्ठाः इति मधुरप्रेम्णः प्रीतिभक्तेर्वा तृप्त्यभावांशमात्रे साम्यमभिप्रेतं किन्तु सारङ्गाणां पदाम्बुजमिति न्यायेन तेषां पदाम्बुजे भक्तिः आसान्तु प्रेयसीनामधरामृतादिलोभेन प्रायः श्रीमुख एव राग इति प्रेमवैशिष्ट्यं सूचितमेव अत एव तेषां श्रीपादाब्जयोः कोमलत्वादेः प्रायः साक्षादनुभवादब्जादिरूपकाप्रयोगः ॥ ७ ॥

काचित् परमलज्जादिगुणनम्रा साक्षाच्चिरमुद्वीक्षितुमप्यक्षमा अत एव नेत्रयोः रन्ध्रेण द्वारेण हृदि कृत्वेति मनसि सर्वाङ्गस्फूर्त्या तत्तद्दर्शसौन्दर्य्याद्यनुभवार्थमिवेति निमील्य नेत्रे एकस्मिन्नेवाङ्गे नेत्रयोर्लग्नयोरन्येषां मनस्यपि दर्शनासम्भवात् किम्वानेत्रद्वारेण निःसरणभयादिव वस्तुतस्तु तत्तत्प्रेमसम्प्लुतत्वस्वभावेनैव अत एवोपगुह्य हृदि तमालिङ्ग्य चकारात् कृष्ण कृष्णेति कीर्त्तयन्ती तथाच श्रीवैष्णवे पुराणे—

काचिदालोक्य गोविन्दमायान्तमतिहर्षिता ।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यदुदीरयत् इति ॥

काचित् भ्रुकुटिमित्यत्र यथैकैव गोपी व्याख्याता तदात्र पराशरोक्तेयमष्टमी ज्ञेया आनन्दरसेऽत्यन्तनिमग्ना सती आस्ते क्षणमासीदित्यर्थः । योगी ध्यानयोगेन भगवति चिरंसकाम्यञ्जतः तथाच श्रीवैष्णवे काचिदालोक्य गोविन्दं निमीलितविलोचना । तस्यैव रूपं ध्यायन्ती योगारूढेव चावभाविति वहिर्वृत्त्यभावमात्रे दृष्टान्तः तत्र च नेत्ररन्ध्रेणेति तस्मादप्यस्या विशेषः सूचितः ध्यानेन दर्शनादपि साक्षात्संदर्शनेऽत्यन्तानन्दात् तच्च श्रीभागवतामृते विवृतमेव तत्रापि काचिदिति गोपीत्वेन भावविशेषात् अत एवालिङ्गनाच्च साक्षात्संदर्शनवद्भ्यः पार्षदादिभ्यः गोपवर्गादिभ्यश्चानन्दविशेषः सूचित एवेति "नौमि चन्द्रावलीं भद्रां पद्मां शैव्यां च श्यामलां विशाखां ललितां राधामित्यष्टौ प्रेष्ठतां गताः" । तत्तन्नामाग्रहणकारणं पूर्वं ळक्षितमेव यद्यप्यासां प्रेम्णि तारतम्यबाहुल्यं न घटते प्रत्येकं सर्वासां तस्मिन् प्रायः परमकाष्ठापत्तेः अत एव कराम्बुजग्रहणादिषु तासां स्वस्वभावानुसारेण तदानींतनेच्छानुसारेणैव वा प्रवृत्तिः तथापि मुकगणपूज्यानां श्रीवैकुण्ठपार्षदवराणाम् इव तासामपि कथञ्चित्तारतम्यकल्पनया तत्रापि मुख्यत्वेन प्रसिद्धानामष्टाना

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तास्वपि श्रीराधादेव्याः सुप्रसिद्धत्वेन सर्वतो वैशिष्ट्येन श्रेष्ठत्वं ततश्च तद्भावानां तत्तच्चेष्टितानामप्यूह्यम् अत एवाष्टौ तथा तथा पृथगुक्ता इति दिक् ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जुषाणा आस्वादयन्ती आपीतं सम्यगास्वादितं माधुर्यमपि इति दृशो रसनात्वं मुखस्याम्बुजतारूपकेण तत्सौन्दर्यस्य मधुत्वञ्च रूपितम् । दृशो रसनात्वरूपकेण तु तन्माधुर्यासक्तिर्दर्शिता । शान्ता दास्यभक्तिनिष्ठा इति साक्षाद्दर्शनेऽपि तृप्त्याभावमात्रे दृष्टान्तः । वैशिष्ट्यं तु तत्तद्भावमाधुरीव्यञ्जकश्रीमुखालम्बनतया स्थित एव । इयं सन्मुखदत्तदृष्टित्वात् प्रखरा स्वयमेवासौ मां मिलिष्यतीति स्वस्थान एव स्थितत्वात् सुसख्या स्वाधीनकान्ता भामा च ॥ ७ ॥

तं नेत्ररन्ध्रेण हृदि कृत्वेति तस्या हृदये तस्य स्वच्छोपाधौ विम्बस्यैव परमासक्तिः सूचिता ततः साक्षाद्बाकालज्जया नेत्रे निमील्य भावपारवश्येन पुलकाङ्गी सती उपगुह्य आलिङ्गनमनुकृत्य आस्ते चिरं तथैवासीदित्यर्थः । योगीवेति अन्तः स्फूर्त्तौ दृष्टान्तः यद्वा योगीति क्रिया विशेषणं योगे यथा स्यात्तद्वदित्यर्थः इयं लज्जया मृद्वी पूर्वस्माद्धेतोः सुसख्या स्वाधीनकान्ता वामा च एवं सप्तोक्ता अष्टमी तु श्रीविष्णुपुराणे—

> काचिदायान्तमालोक्य गोविन्दमतिहर्षिता ।
> कृष्णकृष्णेति कृष्णेति प्राह नान्यदुदैरयदिति ॥

प्रखरा सरला चेयम् अत्रेदं विवेचनीयं रत्याख्यो भावस्तावदुभयविधः एक आत्मनि तदीयताभावनामयत्वेन कान्तपराधीन्यदाक्षिण्यादिमयः अन्यः कान्ते मदीयताभावनामयत्वेन पराधीनकान्तत्ववामत्वादिमयः तदेवं भावद्वयमिश्रिततारतम्येनान्येऽपि विविधा भावा विभाव्यन्ते तदेतन्नानाभाववतीनां मध्ये सजातीयभावानां सख्यं स्यात् रोचकत्वात् विजातीयभावानां प्रतिपक्षता स्यात् अरोचकत्वादेव सजातीयभावानां सौहृदं स्यात् यत्किञ्चिद्रोचकत्वेन हिताशंसनमात्रात् अतिमिश्रत्वेनातिसूक्ष्मत्वेन वा नातिस्फुटसजातीयादिभेदभावानां ताटस्थ्यं स्यात् अवधानहेत्वभावात् श्रीकृष्णविषयकनिजनिजभावमात्राभिरुचिमतीनां तासां सख्याद्युदयस्य तदेकमूलत्वमेवोचितमिति तत्र तदीयतामदीयतामययोर्मुख्ययोर्भावयोरुत्तरः श्रेयान् ममताधिक्येन हि गम्भीरप्रेमप्रवाहाधिक्यं भवति तत एव तद्विवर्त्तरूपवाम्यापरपर्य्यायकौटिल्याभासो जायते "अहेरिवगतिः प्रेम्णः स्वभावकुटिला भवे" दिति भरतन्यायात् अत एव कान्तोऽपि तद्वशः स्यात् तथा च रुद्रः—

> वामता दुर्लभत्वं च स्त्रीणां या च निवारणा ।
> तदेव पञ्चबाणस्य मन्ये परममायुधमिति ॥

यथा श्रीहरिवंशे श्रीसत्यभामायां दृश्यते—

> रूपयौवनसम्पन्ना सौभाग्येन च गर्विता ।
> अभिमानवती देवी श्रुत्वैवेर्ष्यावशं गतेति ॥
> कुटुम्बस्येश्वरी सासीद्रुक्मिणी भीष्मकात्मजा ।
> सत्यभामोत्तमा स्त्रीणां सौभाग्येचाधिकाभवदिति च ॥

अत एवार्द्धेनार्द्धेन प्रथमचतसृणां वर्णनमुत्तरतिसृणां त्वेकैकेनेति कवेरादरोऽपि दृश्यते आसु तिसृषु च एकाभृकुटिमाबध्य इत्यनेन या वर्णिता सैव श्रेष्ठा भाववैशिष्ट्येन प्रथमत्वेन चोपन्यासात् तादृशसर्वविलक्षणभावश्च तस्या एव स्वपरित्यागे स्यात् यस्याः सर्वपरित्यागेन स्वसङ्गे नीतायाः सौभाग्यदानेन सर्ववैलक्षण्यं श्रीभगवान् स्वयमाविष्कृतवान् तस्मात्सैव सा भवेत् अथ प्रथमचतसृणां प्रथमैव ज्येष्ठा श्रेष्ठा च अग्रे स्थितत्वात् सर्वा अतिक्रम्य प्रथमत एव कान्तस्पर्शात् दक्षिणासु सुमधुरचेष्टत्वात् एषा चोत्तरवर्गप्रवराया विजातीयभावेति प्रातिपक्षिकी ज्ञेया अथानयोर्वर्गविचारः तत्रोत्तरप्रथमायाः सख्यौ तदनन्तरे द्वे प्रथमप्रथमायास्त्वेकव्यवहिततृतीयादिके द्वे भावसाम्यात् न तत्तदनुगततया वामदक्षिणयोः स्थितेश्च यातु प्रथमद्वितीया सा खलु प्रथमगणान्तः प्रविश्य स्थितापि किञ्चिद्व्यवहितत्वात्तदातिक्रमिचरित त्वाच्च न प्रथमायाः सखी पराधीनकान्तं मन्यतया किञ्चित्सादृश्येनोत्तरायास्तु सुहृदिति ज्ञेयम् अथ या विष्णुपुराणोक्ता सा तु नातिविस्पष्टभावत्वाद्वर्गद्वयाप्रवेशाच्छ्रीशुकेनावर्णनाच्च तटस्थैव ज्ञेया अथ भासां नामविचारः तत्र भाविष्योत्तरे मल्लद्वादशीप्रसङ्गे श्रीकृष्णयुधिष्ठिरसम्वादे तन्नामानि यथा "गोपीनामानि राजेन्द्र ! प्राधान्येन निबोध मे । गोपाली पालिका धान्या विशाखा ध्याननिष्ठिका । राधानुराधा सोमाभा तारका दशमी तथेति विशाखान्या धनिष्ठिकेति पाठः क्वचित् दशम्यपि नामैक तच्चान्वर्थमिति सर्वान्ते पठितं यद्वा तथेति दशम्यपि तारकानाम्न्यैवेत्यर्थः । गोपाली चेयं नूनं पाद्मोक्तगायत्रीचरी भवेत् तथा स्कान्दप्रह्लादसंहितायां द्वारकामाहात्म्ये मायासरःप्रस्तावे पुनरुद्धवागमने प्रियप्राप्तिवत्प्रियदूतप्राप्तावपि स्वस्वभावाभिव्यञ्जकस्तद्वाक्योक्तिसहितान्येवाष्टौ नामानि निर्दिष्टानि किन्त्वत्यन्तदुःखमयोक्तित्वात्प्रेतादृशरसावसरे दृश्यानि कदाचिद्विचारावसरे त्वपेक्ष्याणीत्यनन्यगतिकत्वेनैव लिख्यन्ते यथा "तच्छ्रुत्वा वचनं तस्य ललिता क्रोधमूर्च्छिता । उद्धवं साश्रुनयना सोवाच रुदती तदा । श्रीललितोवाच असत्यो भिन्नमर्य्यादः शठः क्रूरजनप्रियः । माकृथाः पुरतोऽस्माकं कथास्तस्याकृतात्मनः । धिक् धिक् पापसमाचारो धिगसौ निष्ठुराशयः हित्वा यः स्त्रीजनान्मूढो गतो द्वारवन्तीं प्रति । श्रीश्यामलोवाच किं तस्य मन्दभाग्यस्य स्वल्पपुण्यस्य दुःखदाः । मा कुरुध्वं कथाः सख्यः कथाः कथयतापराः श्रीधन्योवाच केनायं हि समानीतो दूतो दुष्टजनस्य च । यातु तेन पथा पापो येन नायाति वै पुनः । श्रीविशाखोवाच न शीलं न कुलं यस्य ज्ञायते जन्म कर्म च । दीनस्य पुरुषार्थेषु तेन सङ्गो निरर्थकः श्रीराधोवाच पूतनाघातने यस्य नास्ति पापकृतं भयम् । तस्य स्त्रीहनने साध्वः ! शङ्का क्वापि न विद्यते । श्रीशैब्योवाच सत्यं ब्रूहि महाभाग ! किं करोति यदूत्तमः । संवृतो नागरस्त्रीभिः कथास्माकं करोति किम् । श्रीपद्मोवाच कच्चोद्धव ! महाबाहुः नागरीजनवल्लभः । समेष्यतीह दाशार्हः पद्मपत्रायतेक्षणः । श्रीभद्रोवाच । हा कृष्ण ! गोपप्रवर ! हा गोपीजनवल्लभ ! । समुद्धर महाबाहो ! गोपीः संसारसागरादिति । एके तु चन्द्रावलीमेवाष्टानां मध्ये मन्यन्ते न तु धन्यां तस्या लोकेऽति प्रसिद्धेः तत्र दशसंख्याकं मतं नात्रेकार्थ्यं समर्थयति संख्याश्रैषस्यान्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अष्टसंख्याकयो रपि मतयोर्धन्यापक्षो न सङ्कटायितुं शक्यते तत्र तत्साहितत्वेन श्रीललितादीनां पञ्चानां वामप्रखरप्रायत्वात् अत्र त्वेका भ्रुकुटिमात्रध्येति तिसॄणामेवेति चन्द्रावलीपक्षन्तु सङ्गम्येत तस्या दक्षिणावर्गाग्रिमात्वेन स्थापयिष्यमाणत्वा-द्वामदाक्षिणयोर्द्वयोरपि वर्गयोस्त्रिसंख्यकत्वेन पट्त्वे द्वाभ्यां श्यामलाभद्राभ्यां चान्याभ्यामष्टतापर्य्याप्तौ सुघटता स्यादिति। तदेवं स्थिते या पुनरुत्तरवर्गप्रथमा एका भ्रुकुटीत्यादि वर्णिता सा परमभाग्यसौभाग्योपरिकाष्ठापन्नत्वाच्छ्रीराधैव। "यथा राधा-प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा। सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभेति पाद्मोक्तेः। राधा वृन्दावने वन इति मात्स्यस्कान्दादिभ्यः। देवी कृष्णमयी प्रोक्ता राधिका परदे-वता। सर्वलक्ष्मी मयी सर्वकान्तिः सम्मोहिनी परेति बृहद्गौतमीये च। राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा" इति ऋक्परिशिष्टे। वर्णिता च सा तथैव श्रीजय-देवसहचरेण महाराजलक्ष्मणसेनमन्त्रिवरेणोमापतिधरेण। "भ्रूव-ल्लनैः कयापि नयनोन्मेषैः कयापि स्मितज्योत्स्नाविच्छु-रितैः कयापि निभृतं सम्भावितस्याध्वनि। गर्वोद्भेदकृतावहे-लललितश्रीभाजि राधानने सातङ्कानुनयं जयन्ति पतिताः कंस-द्विषो दृष्टयः" इति विवृतं चैतन्मदनुजवरैः श्रीरूपमहाभागव-तैरुज्ज्वलनीलमणेः स्थायिभावविवरणे। अतो गान्धर्वेति या श्रीगो-पालतापन्यां प्रसिद्धा सापि मुख्यत्वलिङ्गेनेयमेवेति मन्यन्ते। अस्याः प्रह्लादसंहितायां पूर्वपूर्वापेक्षया वचनकौशल्यान्मध्या-त्वम्। अत्र च कोपावसरेऽपि लीलाविशेषमात्रव्याजितप्रागल्भ्य-तया बाहुधारिण्याद्यपेक्षया मध्यात्वमिति च समानम्। अथ यापरा निमिषदित्यादिना तत्सखी वर्णिता सा श्रीललितेत्य-वगम्यते। वाम्यमार्दवाभ्यां साम्यात्। सम्प्रति नातिवाम्या-दिकं तु निजवरसखीनिशातदृक्पातघातजाततत्क्षोभदर्शने-नातिसन्तोषात्। एषा च राधानुराधा इति या भविष्योत्त-रपठिता तदपरपर्यायैव वा। तत्र च पाठस्य नाम्नोश्च युग्म-तामयत्वाचवगतेरत्रापि समवर्गता प्राप्तसखीवृन्दप्रथमोक्तेर्मुख्यता प्रतिसाम्यात्। अथ तं काचिन्नेत्ररन्ध्रेणेत्यादिवर्णिता तत्सखी तु प्रायः श्रीविशाखैव। वाम्यमार्दवाभ्यां साम्यात्। प्रह्लाद-संहितायामपि न शीलमित्यादिकं तद्वाक्यं तादृशमेव। अथ या प्रमवर्गस्य प्रथमा सा श्रीचन्द्रावल्येव। यतः श्रीराधया सह प्रतियोगितयैतिह्यमस्या एव विराजते। तथाच श्रीवि-ल्वमङ्गलचरणाः। "राधामोहनमन्दिरादुपगतश्चन्द्रावलीमूचिवान् राधे! क्षेममिहेति तस्य वचनं श्रुत्वाह चन्द्रावली। कंसक्षे-ममये विमुग्धहृदये कंसः क दृष्टस्त्वया राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु वः" इति। अर्थसाम्यप्रायादियं भविष्योत्तरख्याता सोमाभैव वा स्यात्। अथ या तस्या द्वितीया काचिद्दधार इत्यादिना श्रीराधा सुष्ठु वर्णिता सा श्यामला भवेत्। प्रह्लादसंहितायां ललितादिगणे प्रविश्य हितोपदेशदानेन तस्याः सौहृद्यलक्षणावगतेः। सखीनां समदुःखप्रलापिता भवति किञ्चि-द्व्यन्तरितस्यैव तु हितोपदेशदातृता दृश्यत इति। इयमेव श्रीमध्वाचार्यैर्भागवततात्पर्ये दर्शिता लीलाख्या भवेत्। अथ काचिदञ्जलिनेति एका तदङ्गीति वर्णिते ये चन्द्रावलीसख्यौ तथा विष्णुपुराणे यास्तदृशा वर्णिताः ताः क्रमेण शैव्यापद्मा-भद्राः स्युः सेवकवद्वर्णनेन सङ्गिमिषया नातिस्फुटभावविशेष-त्वेन च साम्यादिति। महानुभावसम्मत्या युक्तिप्रायं व्यलेखि यत्। तत्र कृष्णस्तदीयाश्च ममानन्यगतेर्गतिः। ता मद्वर्ण्यर-होलीलानाम्ना सङ्कोचमाप्नुयुः। मुनिनैवं हुताह्वानाः क्षमन्तां मम चापलम्॥ ८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अपरा निमिषमकुर्वतीभ्यां दृग्भ्यां तस्य मुखाम्बुजमापीत-मपि पुनःपुनर्जुषाणा सेवमाना नातृप्यत् न तृप्ता बभूव यथा सन्तो भक्ताः तस्य चरणं पुनःपुनरनुभूयापि न तृप्यन्ति तद्वत्॥ ७॥

काचित्तु नेत्ररन्ध्रद्वारेण तं कृष्णं हृदि विधायोपगुह्यालिङ्ग्यच निमील्य नेत्रे इति शेषः पुलकानि पुलकितान्यङ्गानि यस्याः सन्तीति तथा भूता आनन्देन संप्लुता व्याप्ता आनन्दमग्ना योगीवास्ते आस्त॥ ८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनिमिषं निमेषलक्षणव्यापारशून्यमितिक्रियाविशेषणं जुषाणा सेवमाना॥ ७॥

हृदि स्थितं कृत्वा पुलकाङ्गी रोमाञ्चितगात्रा उपगुह्य आलिङ्ग्य आनन्दनिर्भरा परमानन्दपूर्णा॥ ८॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अपरा निमिषदृग्भ्यामिति दर्शनानन्दनिस्पन्दा स्वभा-वसरला॥ ७॥

तं काचिन्नेत्ररन्ध्रेणेत्यादि मुग्धापि गम्भीरप्रेमवती॥ ८॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमतिपुष्टां निरूप्य अत्युत्तमां निरूपयति। अपरेति। एवाहि भगवद्दर्शनेन गतदोषा अतो ध्यानेन भगवन्तं हृदये स्थापयितुकामा नेत्राभ्यां नेत्रद्वारा भगवन्तं हृदि स्थापितवती अत्र लावण्यामृतं पेयं मुखस्याम्बुजत्वोक्तेः अनिमिषदृग्भ्यामिति पानकरणं द्रवद्रव्यस्या-न्तर्निवेशनं पानं मध्ये रसविच्छेदो भविष्यतीति अनिमिषदृग्भ्यां पानं नेत्रयोरञ्जलित्वं लावण्यामृतस्य विरलत्वात् प्रीतिसेवनमत्राभि-प्रेतं यद्यपि आसमन्ताद्धर्मसहितं सर्वमेवाभिनविष्टं स्वाधीनं जातं यदैवेच्छति तदैव हृदये पश्यतीति तथापि नातृप्यत् अलंभावं न कृतवती तत्र हेतुर्विषयसौन्दर्यं नतु प्रयोजनाभावः प्रतिबन्धकः एतदर्थं दृष्टान्तमाह। सन्तस्तच्चरणं यथेति। सन्तो हि जात-कार्याः तथापि चरणारविन्दे सहजो रसः नतु किञ्चित्प्राप्तव्यं निवर्तनीयं वा॥ ७॥

एका पुनर्दूरस्था अनया तुल्यशीला योगानुसारेण भगवन्तं गृहीतवतीत्याह। तं काचिदिति। पूर्वं लौकिकी पञ्चा-ङ्गकिमार्गानुसारिणी निरूपिता इयं योगानुसारिणी अतोऽस्याः

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सर्वावयवे दृष्टिः उभयोरेकीकरणम् अन्यथा दृष्टिभेदः स्यात् पूर्वस्यास्तु दर्शनमेव प्रयोजनम् एषा विरलेति काचिदित्युक्तं तं पूर्वोक्तं न खलु गोपिकानन्दनो भवानिति यया निरूपितं नेत्ररन्ध्रेणेत्येकवचनं रूपप्रवेशार्थं हृदि कृत्येति हृदि कृत्वा असमासेऽपि ल्यप् हृदि कृत्येत्यलुक् समासो वा ततोऽन्तः प्रविष्टो बहिर्मा गच्छत्विति निमीलनं कृतवती नहि तस्या बुद्धौ भगवान् बहिरवशिष्टोऽस्ति स्वकीयो वा भागः तया गृहीत इति चकरात्सर्वेन्द्रियनिवर्त्तनं ततोऽन्तरानन्दे पूर्णे पुळकाङ्गी जाता केवलानन्देन पुलकं गोपीत्वं न भविष्यतीति तदर्थं विशेषमाह। उपगुह्यास्त इति अयं रोमाञ्चः सात्विकभावे प्रविष्टः अत एवान्तरुपगुह्यालिङ्गय आस्ते तामेव स्थितिं धारितवती अवस्थान्तराभावाय ननु तस्या उत्तरत्र कार्यं भगवता सहसंभोगः कर्त्तव्यः आळापाः गृहे च गन्तव्यमिति कथन्तामेवावस्थां स्थापितवती तत्राह। योगीवेति। योगे हि तथैवाग्रे सर्वं कार्यं साधयति तथेयमपि तथैवावस्थया सर्वं साधनीयमिति स्थिता किंच आनन्दसंप्लुता आनन्दे निमग्ना अतएव बहिः संवेदनरहिता संवेदनायामेव सत्यां कार्यानुसन्धानं नहि पूर्णे आनन्दे कश्चन कामोऽस्ति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनिमिषन्तीभ्यामानन्दजाड्यवशादनिमीळन्तीभ्यां दृग्भ्यां भ्रमरीभ्यामिव तस्य मुखाम्बुजम् । यद्वा। तत् प्रसिद्ध पूर्वस्याः कटाक्षशरजर्जरितत्वात् सभयचकितव्याकुळमनुतप्तम् । आपीतं सम्यगास्वादितमाधुर्यमपि पुनः पुनर्लुपमाणा आस्वादयन्तीति मुखाम्बुजस्य स्वभावेनैव माधुर्यमपारं तत्रापि स्वाभीष्टेन स्वयूथेश्वरी कटाक्षशरप्रहारेण सङ्कोचत्रपाविषाददैन्यादिसञ्चारिमिश्रणाद्बहुविधमतिवर्द्धमानं तदानीमभूदतस्तत्र तृष्णाधिक्यान्नातृप्यत् । सम्पूर्णांशेन दृष्टान्तादर्शनादेकांशेन दृष्टान्तमाह । सन्त इति । अत्र कटाक्षशरप्रहारिण्यामेव कृष्णस्य तदानीं सम्पूर्णा दृष्टिः सम्पूर्णं मनश्च न त्वन्यस्यां कस्यामप्येकांशेनापि । यत एव स्वस्मिंस्तस्यानवधानमाळक्ष्य लज्जानुद्गमात् दृग्भ्यामिति सम्पूर्णाभ्यामेव नेत्राभ्यां स्वच्छन्देनैव मुखमपश्यदतः सर्वतः सौभाग्यवती कटाक्षशरवर्षिण्येव ज्ञेया ॥ ७॥ हृदि कृत्य हृदयं नीत्वेति भाग्यान्मिलितोऽयं चञ्चलः कान्तः पुनर्मापसरत्विति च बुद्धयेति भावः । निमील्य चेति पुनर्नेत्ररन्ध्रेणैव निःसरेदिति शङ्कयेति भावः । पुलकाङ्गीति निर्विघ्नसम्भोगप्राप्तिबुद्ध्या । उपगुह्यास्ते इति स्वकर्तृकोपगूहनं महाविरहोत्तरकालप्राप्त्या तृष्णाधिक्येन धैर्यापगमात् तत्र दृष्टलोकाभावाल्लज्जानुत्पत्तेश्च । तिस्र एवैताः कान्तपार्श्वं प्रत्यगमनाद्वा मा अस्मानेवायमागम्य मिलतु ननु वयमिमं गत्वा कदाचिदपि मिलाम इति मदीयतामयमधुरस्नेहवत्त्वात् सुसख्याः स्ववशीकृतकान्ताः ज्ञेयाः । तत्र तिसृषु मध्ये प्रथमा सर्वगोपाङ्गनाधिका यूथेश्वरी द्वितीयातृये तस्याः सख्यौ । एवं सप्तानामासां श्रीवैष्णवतोषणी दृष्टैव चन्द्रावली श्यामला शैव्या पद्मा श्रीराधा ललिता विशाखा इति क्रमेण नामान्यवगतानि अष्टमी "तु काचिदायान्तमाळोक्य गोविन्दमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यत्तदैरयदिति" विष्णुपुराणदृष्ट्यां भद्रानाम्नी ज्ञेया । श्रीवैष्णवतोषणीधृतस्कान्दप्रह्लादसंहिता द्वारकामाहात्म्यविख्याताभिख्या एता अष्टावेव त्रिशतकोटिगोपीषु मुख्या ज्ञेयाः । आसु तारतम्यजिज्ञासा चेदुज्ज्वलनीलमणिर्द्रष्टव्यः सर्वमुख्या तु श्रीराधैव "यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभेति पाद्मोक्तेः । देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकान्तिः संमोहिनी परेति" बृहद्गोतमीयोक्तेः राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेष्वा इति ऋक्परिशिष्टोक्तेश्च ज्ञेया ॥ ८ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

अथैतस्याः प्राणसहचरीणा मरीणां चेष्टामाह । अपरेति । अनन्या पूर्वोक्ताया मुख्यतमाया अभिन्ना परसुहृदित्यर्थः । अनिमिषेति। पाने समुत्कण्ठातिशयः दृग्भ्यामिति द्वित्वं ततोऽप्युत्कर्षपरं यद्वा द्वयोरेव सुखास्वादायेति जुषाणा प्रीत्या सेवमाना एवं च दृशोरसनात्वं सौन्दर्यस्य च मकरन्दत्वं निरूपितम् आपीतं सम्यगास्वादितम् अपीति । तन्माधुर्य्यासक्तिः तदेव तत्सर्वमपि सुरतचिन्हावळोकनायेति सौहृदमेवोभयमनुस्पर्शीकृतं तत्र दृष्टान्तः सन्त इति। एते च दास्यभक्तिनिष्ठा एव तच्चरणमित्युक्तेः उपमेयवैशिष्ट्यन्तु श्रीमुखालम्बनतया एवं च साक्षाद्दर्शनेऽपि तृप्त्यभावमात्रेऽपि दृष्टान्तसङ्गतिः तदेव रम्यं रुचिरं नवं नवमिति नवमोक्तेः इयं च संमुखदत्तदृष्टित्वात्प्रखरा मुख्या श्रीललिताख्येति अत्रापि नामानुक्तिः पूर्ववदेव सङ्गमनीया ॥ ७ ॥

अथैतस्या एव सङ्गाल्लब्धसहचरीभावायाः कस्याश्चित्साधकचरीमुख्यायाश्चेष्टितमाह । तमिति । प्राकृतनध्यानावेशेन मत्कामा रमयां जारमस्वरूपविदोऽबलाः ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः इत्यस्य प्रागुक्तव्याख्यानुसारेण परमप्रेष्ठतयाभिमतं संप्रतिनेत्ररन्ध्रेण हृदि कृत्य निमील्य चेति समुच्चयेनाग्रहः सूचितः साक्षाद्दर्शनेऽप्ययं ध्यानावेशो भावपरिपाकेन प्राग्भवीयसंस्कारात् ततश्च भावपारवश्येनैव पुलकाङ्गी सती उपगुह्य तथैवालिङ्गनमनुक्तमास्ते चिरन्तथैव स्थगितासीत् इत्यर्थः । योगीवेत्यन्तः स्फूर्तौ कामानासक्तौ च दृष्टान्तः निमील्येत्यस्यायम्भावः प्रियस्य नेत्रद्वारेण मा बहिर्निर्गमो भवेत् इति भीत्या चकोराक्षीव कपाटपक्ष्म संदध्रे वस्तुतस्तु सुरतचिन्हितविग्रहमेनमाकाचिदनुभवतु भवतु च प्राणेश्वर्य्याः क्रीडितमीडितमेवेति स्वहृदयमानीय निलीयस्थापयामीतिमौग्ध्येनानुकरणमिदं इयं च नेत्रनिमीलनेन लज्जानुभावान्मृद्वी पूर्वं सुसख्या वामा च ॥ ८ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

अभ्यर्हितत्वात्तस्या एव चरितं श्लोकान्तरेणाप्याह। अपरेति। सा अपरा न परः कश्चित्ससंज्ञो विद्यते यस्याः परसंबन्धशून्या यद्वा न काचित्परा उत्कृष्टा अन्यदीया वा विद्यते यस्याः सर्वोत्कृष्टा सर्वसखीष्वात्मीयमतिमती स्वयञ्चापरा वासुदेवैकपरायणा अनिमि-

### श्रीरामनारायणकृतभावभावविभाविका ।

पद्भ्यां दृग्भ्यां पूर्वनिर्दिष्टभ्रुकुटिबन्धनेन कृष्णदर्शनप्रेम्णैव वा निमिषरहिताभ्यां दृग्भ्यां यद्वा तत्र नरलीलया सर्वदृगीश्वर्या अपि भ्रमापादिकया प्रेमसंरम्भविकलतयात्मानमितरनारीसादृश्यभ्रमेण प्रियदर्शने सम्भावितनिमिषप्रतिबन्धय तद्बन्धाय भ्रुकुटिबन्धं कापि न वस्तुतस्तस्या निमिषपातः नैमिषे निमिषक्षेत्रे इत्यत्रानिमिषस्य विष्णोः क्षेत्र इतिस्वामिचरणैर्व्याख्यातत्वात्तत्स्वरूपात्मकाह्लादिकशक्त्यास्तस्या अपि वस्तुत एव अनिमिषदृक्त्व ताभ्यामिन्द्रनीलवज्रमणिरचितयुगपात्राभ्यां तन्मुखाम्बुजं जुषाणेत्यत्र मुखेन मुखाम्बुजपानसम्भवेऽपि नेत्राभ्यां तत्पानासम्भवेन तद्गतरूपमाधुर्यं जुषाणा इतिवक्तव्येऽपि तद्रसाधिकपाने तत्पानमिति सरःपीतमित्यादिवन्मुखाम्बुजं जुषाणेत्युक्तं तन्मुखम् आसमन्ताद्रूपरसग्रहणेन पीतमपि परन्तु तत्पिपासाधिक्येन नातृप्यत् यद्वा पूर्वं विहारेऽधरामृतास्वादनेनासमन्तात्पीतमपि दृग्भ्यां तद्रूपामृतं जुषाणा नातृप्यत यद्वान्तर्द्धानावसरे प्रियासन्निधानाभावादासमंतात्पीतं तत्सन्निधानेऽधुनाजातेऽप्यारुणये तत्प्रेमसंरम्भविह्वलत्वदर्शनेनेपत्पीतमपि मुखाम्बुजं जुषाणा नातृप्यत् अनेन रम्याणां विकृतिरपि श्रियन्तनोतीति न्यायेनारुणपङ्कजरूपं तन्मुखाम्बुजमीपत्पीतमिति स्वर्णवर्णनीरजात्मना भासमानमतिरुचिवर्द्धकं जातमितिध्वनिः यद्वा मुखाम्बुजमिति निर्देशादनिमिषदृग्भ्यामित्यत्रानिमिषविशेषणं तु तद्व्यावृत्त्या दृशोस्तारयोर्मधुपानुरूपत्वमवधार्य्य ताभ्यामेव तत्पानयोग्यतां व्यवस्य मुखाम्बुजमधुन एव कामादिनिर्दोषविषमत्वमेवत्वकत्वमवगत्य ताभ्यां जुषाणा अपि नातृप्यत् यद्वा मुखाम्बुजमित्यत्राम्बुजमित्यत्राम्बुनि समुद्रे जायत इति व्युत्पत्त्या मुखचन्द्रं सुधाभ्रातृत्वात्स्वयं सुधानिधित्वात्साक्षात्सुधात्मकं स्वाङ्गारिविरहाङ्गारभोगविकलतया पक्ष्मपक्षचालनरहिताभ्यां जुषाणा आपीतमपि नातृप्यत् अतृप्तौ हेतुः पिपासाधिक्यं विषयसौन्दर्यं च तत्र दृष्टान्तमाह । सन्तस्तच्चरणं यथेति । सन्तो जीवन्मुक्तपरमहंसाः स्वजीवजनरूपमुक्तिमपि अपहाय लीलयैव विग्रहाध्यासापन्ना इव तच्चरणाम्बुजमधुरसजीवनं जीवनं जीवनमस्या तज्जुषाणा अपि न तृप्यन्ति तदुक्तं भगवत्पदाम्बुजमधुपाशिरोमणिपरमहंसाचार्य्यभगवत्पूज्यपादैः मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते इति यद्वा अपरेति श्रीमती राधापेक्षयापरा तन्मुख्यसखीललितेत्यर्थः शेषं समानम् ॥ ७ ॥

अन्याचरितमाह । तं काचिदिति । काचित्तुतम अतिविलक्षणमन्ये चौराः स्वामिदृष्टिं वञ्चयित्वा बहिर्वर्तमानं वित्तं हरन्ति अयन्तु नेत्रे संयोज्य हृद्यन्तः स्थं चित्तं हरति तं महतायासेन लब्ध्वा चपलचौरत्वात्पुनः पलायनभयात्स्नेहपाशेनाकृष्य नेत्ररन्ध्रेण हृदि कृत्य कृत्वात्रासमासेऽपि ल्यप्प्रयोगश्छान्दसः अलुक्समासविवक्षया वा हृत्कमले संस्थाप्य बहुसुमनोमधुपस्य तस्य कमले एव बन्धनसम्भवात्तदुक्तं स्नेहवलकैः । "बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् । दारुभेदनिपुणोऽपि पडङ्घ्रिर्निष्क्रियो भवति पङ्कजकोश निबद्धः" इति ततश्च प्रवेशद्वारेण पुनर्निःसरणभयेन निमील्येति पक्ष्मकपाटं दृढं दत्त्वा तिर्यक्कर्णद्वारा निर्गमभयात्तयोरलकपाशप्रसारणमपि चकारात् ज्ञेयं तत्रापि उपगुह्येत्यनेन स्वीयमनोमयरूपान्तरेण हृदि गतं तमालिङ्ग्य पञ्चफणज्युष्टभुजभुजगपाशाभ्यां सुदृढं बद्ध्वा पुलकाङ्गी जातरोमहर्षा अयमत्राशयः हरेः श्रुतिषु अणोरणीयस्त्वाम्नानाद्रोमच्छिद्रद्वारेण पलायनशङ्कया कृष्णचौररक्षणाय कृष्णान्येव रोमाणि द्वारपत्वेन तत्तद्द्वारे स्थापयामास तान्यपि सहर्षाण्येव तिष्ठन्तिः अभूवन् तथाचैवं कृष्णमपराजितमन्यं स्ववशे कृत्वा आनन्दसंप्लुता हृदि प्रवृद्धानन्दसिन्धौ निमग्ना यद्वानन्दाश्रुप्रवाहनिमग्ना आस्ते इति आस्तेत्यर्थः । यद्वा तस्या नित्यानन्दसंप्लुतत्वद्योतनाय वर्तमानप्रयोगः तत्र साधनफलयोर्दृष्टान्तः योगीवेति तत्र निमीलनहृदि करणे साधनसाम्ये आनन्दसंप्लवस्तु फलसाम्यं नात्र योगिसाम्यं तस्याः संयोगिनीत्वेन वशीकृतयोगीश्वरेश्वरत्वेन चित्रास्पदम् ॥ ८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ द्वितीयायाः प्रखरायाः स्वाधीनकान्ताया वामाया वृत्तमाह । अपरा अनिमिषदूदृग्भ्याम् अनिमीलन्तीभ्याम् दृग्भ्याम् अञ्जलिस्थानापन्नाभ्याम् तत्रापि क्षरणशङ्कया अनिमिषतीभ्यां तस्य प्रेष्ठस्य मुखाम्बुजं तत्रत्यलावण्यामृतम् आसमन्तात्पीतमपि जुषाणा अत्रैवागत्यालिङ्गनं करिष्यतीति मानावेशात्स्वस्थान एव स्थित्वा सेवमाना नातृप्यत् उत्कण्ठातिशयादलम्बुद्धिं न कृतवती तत्रानुरूपं दृष्टान्तमाह । यथा सन्तस्तद्भक्ताः यथोक्तदृग्भ्यामापीतमपि तच्चरणाम्बुजं जुषाणा न तृप्यन्ति तद्वदित्यर्थः । इयं राधा पक्षपातिनी ललिताख्यसखी ॥ ७ ॥

अथ तृतीयायाः मध्यायाः स्वाधीनकान्तायाः वामायाश्चरितमाह । तं प्रेष्ठं नेत्ररन्ध्रेण हृदि कृत्य हृदयं लीलाप्रवेशनीयरूपस्यैकत्वाद्रन्ध्रेणेत्येकवचनं तन्निःसरणभयान्नेत्रे निमील्यच तमन्तरेवालिङ्ग्य तज्जन्यानन्दमग्ना पुलकाङ्गी रोमाञ्चिततनुरास्ते अत्रैवागत्यालिङ्गनं विधास्यतीति मानेनैवंभूता सती स्वस्थान एव स्थिता यथाविर्भूतानान्दे निमग्नो योगी समास्ते तद्वदित्यर्थः इयमपि राधासुहृद्भूता विशाखाभिधा सखी एवं सप्तात्राभिहिता अष्टमी तु सरला भद्राख्या विष्णुपुराणेऽभिहिता —

> काचिदायान्तमालोक्य गोविन्दमतिहर्षिता ।
> कृष्णकृष्णेति सा प्राह नान्यत्किञ्चिदुदीरयदिति ॥

चन्द्रावल्यादिनामानि तु स्कान्दे प्रह्लादसंहिताद्वारकामाहात्म्यादावुक्तानि ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अपरा अनिमिषन्तीभ्या मनिमीलन्तीभ्यां दृग्भ्यां तन्मुखाम्बुजमापीतमपि सुदृष्टमपि पुनः पुनर्जुषमाणा सेवमाना नातृप्यत् यथा सन्तः साधवः तच्चरणं पुनः पुनर्ध्याने सुदृष्टमपि ध्यायन्तः न तृप्यन्ति "आवृत्तिरसकृदुपदेशात् ४ । १ । १ । इति सूत्रमप्यत्रानुसंधेयम् ॥ ७ ॥

हृदिकृत्य हृदयकमले निधाय ॥ ८ ॥

---

सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः।
जहुर्विरहजं तापं प्राज्ञं (१) प्राप्य यथा जनाः ॥ ९ ॥
ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः॥
व्यरोचताधिकं तात! पुरुषः शक्तिभिर्यथा ॥१०॥

भाषा टीका।

दूसरी कोइ गोपी नेत्रों को एकटक लगाय श्रीकृष्ण के मुख कमल को दर्शन करते मे मुख कमळ के अमृत को अत्यन्त पान कर के वी तृप्त नही भई जैसे विन भगवान के चरण कमल की सेवा ते संत भक्त तृप्त नहीं होवे हैं ॥ ७ ॥

कोई गोपी विन भगवान को नेत्र रूप छिद्र के द्वारा हृदय मे प्रवेश कर फिर उपरते नेत्रों को वन्दकर अंगो ते पुलकित हो भगवान् को आलिंगन कर चुप रह गई जैसे योगिजन समाधि के आनंद मे रँह हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

प्राज्ञमीश्वरं प्राप्य यथा मुमुक्षवो जनाः यद्वा प्राज्ञं ब्रह्मवं प्राप्य यथा संसारिणः यद्वा प्राज्ञं सौषुप्तं प्राप्य यथा विश्व-तैजसावस्था जीवाः ॥ ९ ॥

पुरुषः परमात्मा शक्तिभिः सत्त्वादिभिर्यथा यद्वा उपासकः पुरुषो ज्ञानवलवीर्यादिभिः यद्वा पुरुषोऽनुशायी प्रकृत्याद्युपाधिभि-र्वृतो यथाधिकं विरोचते तद्वत् ॥ १० ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

नच केवलं ता एव निस्तापा हृष्टाश्च वभूवुः किन्त्वन्याः सर्वा अपीत्याह। सर्वा इति। केशाः सुन्दरा वर्त्तन्तेऽस्येति केशवः अस्त्यर्थे वः तस्य तत्रैकैककेशस्यापीत्यर्थः। आलोकः ईषद्दर्शनं तदेव परम उत्सवः सर्वार्थसमुच्चयः चित्तोल्लासो वा तेन निर्वृताः सत्यः इति विरहतापाधिक्यं निर्वृत्त्यनन्तरमेव तत्त्यागसिद्धेः यद्वा आलो-कस्तेन सम्यक् निरीक्षणं परमोत्सवश्च प्रेमनर्मादिः ताभ्यां निर्वृताः तत्रानुरूपो दृष्टान्तः प्रकर्षेण आ सम्यक् जानातीति प्राज्ञः श्रीकृष्णः तद्भक्त्यादिमाहात्म्यतत्त्वाभिज्ञो महाभागवतोत्तमः तं कुत्रापि गतं पुनःप्राप्य प्रकर्षेण लब्ध्वा प्रीत्या बहुधा सङ्गम्य तद्वि-रहजं तापम् अकारप्रश्लेषेण अजनाः अस्य विष्णोर्जना वैष्णवा यथा जहति तद्वदिति अस्य च सुप्रसिद्धत्वेन तथा—

रामरावणयोर्युद्धं रामरावणयोरिव ॥

इत्यादि न्यायेन तदेक योग्यत्वेन च दृष्टान्तत्वम् ॥ ९ ॥

ततः श्रीभगवतोऽपिपरमनिर्वृत्त्या भगवत्तासाराविर्भावेनाधिकशोभा जातेत्याह। ताभिरिति। विधूतः निरस्तः शोको विरहजात-स्तापो याभिः तद्विशेषश्चोक्तः श्रीपराशरेण" ततः काश्चित् प्रिया-लापैः काश्चिद्भ्रूभङ्गवीक्षितैः। निन्येऽनुनयमन्याश्च करस्पर्शेन माधव" इति अतस्ताभिर्वृतः सन् भगवान् सर्वैश्वर्य्यसम्पूर्णोऽपि अच्युतः कथञ्चित् कदाचित् कस्माच्चिदपि शोभाभरात् च्युति-रहितोऽपि अधिकं यथा स्यात्तथा विशेषेण अरोचत अशोभत भगवानिति अधिकविरोचने हेतुर्वा तेनैवाशेषनिजभगवत्तासर्व-स्वप्रकटनादित्यर्थः। स्वत एवाशेषशोभायाः परां काष्ठां प्राप्त-स्यापि ताभिर्वृतत्वेनाधिकविरोचनं दृष्टान्तेन साधयति। पुरुष इति जीवः ब्रह्मत्वेन स्वतः सर्वशक्तियुक्तोऽपि इन्द्रियादिशक्तिभिः प्रकटिताभिः सतीभिरेव यथाधिकं विरोचते अन्यथा मूर्च्छिता-दितुल्यता प्राप्तिः एवं माधुर्य्यकारुण्यादिषु गुणप्रक-टनेन निजवल्लभावलिवृतत्वेनैवाधिका तस्यापि शोभा स्यात् अन्यथा भक्तवृन्दसेव्यमानत्वेनाप्यशेषशोभामयभगवत्तासारापूर्ति-प्रसक्तिरितिदिक् अत एवाश्चर्येण तद्बोधयोग्यत्वेन वा तातेति सम्बोधनं यद्वा तत्स्मरणात् प्रेमवैवश्येनैव पूर्ववत् ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नन्वन्यासां का वार्त्ता तत्राह। सर्वा इति। तासां तत्सौभ-गमदं वीक्ष्य मानश्च केशव इत्यत्रेवात्र च केशवशब्दः परम-तेजोनिधानतापरः। ततश्च तदानीं यथा तस्यान्तर्द्धाने तासां तेजोऽन्तर्द्धापनं तथा सम्प्रति आविर्भावेन तदाविर्भावः सञ्जात इति भावः। तस्यालोक एव परमानन्दप्रदत्वात् परमोत्-सवस्तेन निर्वृताः प्राप्तदुःखनिवर्त्तकसुखाः। तत्रानुरूपो दृष्टान्तः। प्राज्ञमिति। सुषुप्तावविद्यया इव पुनः परित्यागशङ्काया निगूढ-स्थितेः। यद्वा। प्राज्ञः परमभागवतस्तं प्राप्य जना यथेति एवमप्यारम्भ एव दृष्टान्तेन सम्यक्सिद्धौ पूर्वस्मादेव हेतोः ॥ ९ ॥

ततो मदमानौ परित्यज्य सर्वा मिलित्वैव तदनुगता बभू-वुस्ताभिः श्रीभगवतोऽपि परमशोभाविर्भावो जात इत्याह। ताभि-रिति त्रिकेण। विधूतेत्यत्र कारणविशेषश्चोक्तः श्रीपराशरेण। "ततः काश्चित् प्रियालापैः काश्चिद्भ्रूभङ्गवीक्षितैः। निन्येऽनुनय-मन्याश्च करस्पर्शेन माधव" इति। भगवान् सर्वसम्पूर्णोऽपि अच्युतः तत्र कथञ्चित्च्युतिरहितोऽपि अधिकं पूर्वपूर्वतः प्रकर्षं यथा स्यात्तथा ताभिर्विशेषेणारोचत तादृशद्यापि ताभिस्ताद-शत्वे तदाविर्भावविशेषे एव दृष्टान्त इत्याह। पुरुष ईश्वरः। स यथा भगवद्रूपेण शक्तिभिः ऐश्वर्यादिमयस्वरूपशक्तिभिर्वृत एवाधिकं विरोचते नतु ब्रह्मरूपेण ताभिरावृत इति तथा सोऽपि ताभिः प्रेमविशेषमयस्वरूपशक्तिभिर्वृत एवाधिकं व्यरोचतेत्यर्थः तातेति सम्बोधनं परमानुकम्पायाम्। "तातोऽनुकम्प्ये पित-रीति" नानार्थात् परमानुकम्प्यत्वादेव रहस्यमिदं त्वयि प्रका-शयामीति भावः ॥ १० ॥

---

(१) प्राप्यमिति श्रीमच्छुकदेव पाठ.

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राज्ञं परमात्मानं जना योगिजनाः प्राप्य साक्षात्कृत्य ॥ ९ ॥ पुरुषः शक्तिभिः चतुर्विंशतितत्त्वात्मिकाभिः यद्वा पुरुषः परमपुरुषः शक्तिभिः विमलादिभिः ॥ १०—१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ताः सर्वा गोप्यः केशवस्यावलोकनमेव परम उत्सवस्तेन सुखिता विरहजं तद्विरहजं तापं जहुः तत्यजुः यथा योगिजनाः प्राज्ञं परमात्मानं प्राप्य, साक्षात्कृत्य आध्यात्मिकादितापत्रयं जहति तद्वत् यद्वा "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरं प्राज्ञेनात्मनान्वारूढ" इत्युक्तरीत्या यथा सुषुप्तिदशायां परमात्मना सम्परिष्वक्ता जाग्रत्कालिकबाह्याभ्यान्तरक्लेशान् जहति तद्वदित्यर्थः ॥ ९ ॥

तत्र तदा ताभिर्विगतविरहजशोकाभिः परिवृतः नितरां व्यरोचत हे तात ! यथा पुरुषो जीवः शक्तिभिश्चतुर्विंशतितत्त्वात्मिकाभिः वृतो रोचते यद्वा पुरुषः परमपुरुषः शक्तिभिर्विमलादिभिर्वृतस्तद्वत् ॥ १० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जनः शोकाकुलः संसारी वा प्राज्ञं पण्डितं दुःखशमनबोधकं परमात्मानं वा "प्राज्ञेनात्मनान्वारूढ" इतिश्रुतिः ॥ ९ ॥

पुरुषो विष्णुः शक्तिभिः लक्ष्मीविभूतिभिः ॥ १० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्राज्ञं सुषुप्तिसाक्षिणमिव सुषुप्तौ अधिधावत् पुनः परित्यागाशङ्कया निगूढस्थितेः ॥ ९ ॥

पुरुषो भगवत्तत्त्वं स यथा भगवद्रूपेण शक्तिभिः ऐश्वर्यादिमयस्वरूपशक्तिभिर्वृते एवाधिकं व्यरोचत इत्यर्थः ॥ १०—१२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवं स्वस्वप्रकृत्यनुसारेण विविधभावभावुकसुभगं भावुकाः सर्वा एव तमालोक्य विरहजं तापं जहुरित्याह । सर्वा इत्यादि । यथा जनाः प्राज्ञं भगवन्तं प्राप्य भगवद्विरहतापं जहति तथेत्यर्थः ॥९॥

अथ भगवानपि तथा एतेन पूर्वं तथा न व्यरोचतेत्याह । ताभिर्विधूतेत्यादि । ताभिर्व्यरोचतेति वाक्यार्थः अधिकं यथा भवति तथा एतेन पूर्वं तथा व्यरोचत एकाकित्वात् तत्र दृष्टान्तः पुरुषः शक्तिभिर्यथा सुप्तशक्तिः पुरुष ईश्वरस्तथा न विरोचते यथा उद्रिक्ताभिः शक्तिभिः एतेन शक्तीनां सुप्तमुद्रिक्तत्वं चेति नतु कदापि नाशः नित्यत्वात् ताततेति सविस्मयहर्षोत्कर्षे संबोधनम् ॥ १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं विशेषाकारेण कृत्यमुक्त्वा सर्वासां सामान्याकारेण प्रयोजनमाह । सर्वास्ता इति । यो हि बलिष्ठस्तजस्तमोभ्यां व्याप्तयोरपि फलसंपादकः तस्य क्षुद्रगुणक्षोभयुक्तानामासामुद्धारे कः प्रयास इति वक्तुं केशवेत्युक्तं तस्य योऽयमालोकः अवलोकनं प्रकाशो वा अन्तर्बहिः अत एव स एव परमोत्सवः यथा लौकिकानां महाराज्यप्राप्तिः पुत्रोत्सवो वा तेन निर्वृताः सर्वा एव जाताः एवं तासामिष्टसिद्धिरुक्ता अनिष्टनिवृत्तिमाह । जहुर्विरहजमिति । नन्वेवं सति मुक्ता एव ता भवेयुः नहि संसारे निवृत्ते भगवत्साक्षात्कारेण परमनिर्वृत्तौ सत्यां कश्चन पुरुषार्थोऽवशिष्यते तत्राह । प्राज्ञं प्राप्येति । प्राज्ञः सुषुप्तिसाक्षी स्वाप्यये भगवदाविर्भावो निरूपितः तत्रच जीवानां प्रवेशो वासनासहितानां तं प्राप्य यथा जनाः अधिकारिणो मनुष्याः पुनरायान्ति एवमत्राप्यागमिष्यन्तीति भावः । यतो जना जायमानाः नतु उत्तमाधिकारिणः स्वसंबन्धख्यापनार्थमेव परं भगवान् प्रकटः ॥ ९ ॥

एवं तासां कृत्यमुक्त्वा ताभिर्भगवत्कृत्यमाह । ताभिरिति तासां संबन्धे प्राकृतीनां भगवतो ऽन्यथात्वं शङ्केत तन्निवर्त्यते अन्यथा स्वार्थमेव भगवत्तिरोधानं स्यात् स नैव व्यरमत् "तस्मादेकाकी न रमत" इतिश्रुतेः लोकोऽपि केवलं भगवन्तं पश्यन् न निर्वृतो भवति किंतु सर्वशक्तियुक्तं परं पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्नैतिवाक्यात् पूर्ववत् दुःखिताश्चेत्सदोत्तमता न भवतीत्याह । विधूतशोकाभिरिति । ताः पूर्वोक्ताः गुणास्तासामुक्ता एव सर्वथा प्रपन्ना इति मध्ये शोकः समजनि तस्मिन्निवृत्ते यथापूर्वमेव ता भगवांश्च षड्गुणैश्वर्ययुक्तः तथापि प्राकृत इव यदि परिच्छिन्नकामः स्यात् तथापि वैलक्षण्यात् न रोचेत भगवांस्तु पूर्णकाम इत्याह । अच्युत इति । अतः ताभिर्वृतः अधिकं व्यरोचत सहजापेक्षया उक्तार्थं निश्वासेन हि श्रोता वक्तारं पुष्णातीव पितेव पुत्रं स्वार्थम् अतएवाग्रेऽतिगुप्तार्थकथनेन वक्ता श्रोतारं सुखयति अन्यथानाधिकारिणं मत्वा न वदेदलौकिकमर्थं प्रकृतेचास्मिन्नर्थे राज्ञो विश्वासं दृष्ट्वातिसंतोषेण स्नेहेन च पितृत्वेन संबोधयति । ताततेति नन्वेवं सति भगवत्कान्तेः तारतम्यात् सहजत्वं न स्यात् अत आह । पुरुषः शक्तिभिर्यथेति । यथायं प्राकृतोऽपि पुरुषः सर्वसामर्थ्येषु लीनेषु लोकप्रतीत्या न रोचत इव स चेत्क्रियाज्ञानादिशक्तीराविष्करोति तदाधिको रोचते तथा अयमपि भगवान् रोचमान एव प्रकटासु शक्तिषु गोपिकासु सर्वप्रतीत्या युक्तानामप्यन्तःकरणेन अधिकं व्यरोचत अतिसौन्दर्यं प्राप्तवान् ततो भगवान् परमानन्दयुक्तः स "एष एवह्येवानन्दयातीति" श्रुतेः ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्राज्ञं परमभागवतं जनाः संसारतप्ताः । गृहेषु तप्ता निर्विण्णा यथाच्युतजनागम इति शवृङ्क्ष्णेनोक्तेः ॥ ९ ॥

शक्तिभिः सर्वेन्द्रियशक्तिभिः । पुरुषो यथाऽधिकं विरोचते। तासां वैकल्ये सति तु नात्यन्तं रोचते एवमेव कृष्णोऽप्यासां खिन्नत्वे खिन्नो नाधिकं रोचते । आसां विधूतशोकत्वेनाधिकरुचिमत्त्वे सोऽप्यधिकं रोचते इति । पुरुषस्य यथा स्वेन्द्रियसुखे एव सुखं स्वेन्द्रियदुःखे दुःखम् एवमेव कृष्णस्यापि तासां सुखदुःखाभ्यामेव सुखदुःखे इति गोपीविषयकप्रेमवत्त्वं तासां स्वस्वरूपभूतत्वञ्च ज्ञापितम् स्कान्दे प्रभासखण्डे यथा ।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

"षोडशैव सहस्राणि गोप्यस्तत्र समागताः । हंस एव मतः कृष्णः परमात्मा जनार्दनः । तस्यैताः शक्तयो देवि ! षोडशैव प्रकीर्त्तिताः । चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः। सम्पूर्णमण्डला तासां मालिनी षोडशी कला । षोडशैव कलायास्तु गोपीरूपा वराननाः । एकैकशस्ताः सम्भिन्नाः सहस्रेण पृथक् पृथगिति" । प्रमदा शतकोटीभिः कुलिते इत्यागमोक्तेश्च शतकोट्यो गोप्यस्तासां मध्ये षोडशसहस्राणि गोप्यो मुख्यास्तासामपि मध्ये सहस्राणि मुख्यतरास्तासामेव मध्ये अष्टावेता मुख्यतमाः अष्टानामपि मध्ये द्वे राधाचन्द्रावल्यौ अतिमुख्यतमे तयोरपि मध्ये श्रीराधा सर्वं मुख्यतमेति भक्तिशास्त्रनिर्णयः । ततश्च ताः सम्यक् हास्यहस्तग्रहादिना आदाय निर्विश्य पुलिनं प्रविश्य च व्यरोचतेति पूर्वेणैवान्वयः । पुलिनं विशिनष्टि सार्द्धेन । विकसद्भिः कुन्दैर्मन्दारैः सुरभियोऽनिलस्तस्मात् षट्पदा यस्मिंस्तत् । वायोः शैत्यं पुलिनसम्बन्धात् मान्द्यं षट्पदास्पदत्वात् शरच्चन्द्रांशूनां सन्दोहैर्ध्वस्तं दोषाया रात्रेस्तमो यत्र तत् । शिवमत एव सुखदं यमुनाया हस्तरूपैस्तरलैस्तरङ्गैरचिता आस्तृता कोमला वालुका यस्मिंस्तत् ॥ १०-१२ ॥

---

### केनचित्कृता विशुद्धरसदीपिका।

याश्च तत्प्रियार्थे संभवन्तु सुरस्त्रिय इत्यनेन सूचितावतरणाः स्वीकृतनिजस्वामिनीपरिचरणाः स्वस्वशरूपवेषाभरणास्तासां सर्वासामेव चेष्टितमाह । सर्वा इति । ता इत्युक्तस्वरूपाः केशवस्य केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतमित्यादिना सूचितकेशप्रसाधनकर्तुः तथा केशवांश्चित्स्पर्शोत्सवेत्यादिसानुभूतद्रहोविहारस्येत्यन्तरङ्गत्वम् आलोको दर्शनमेव परमोत्सवो यस्तेन निर्वृताः परमांशिन्यः निजेश्वर्य्यास्तस्याः सौभाग्यसुखास्वादादितिभावः। विरहजं तापं जहुः नैतासां कदाचिद्विरह इतिभावः। तत्रानुरूपो दृष्टान्तः। प्राज्ञमिति। सुषुप्त्यभिमानिनं तदवस्थमित्यर्थः तत्राविद्याया इवात्र विरहस्फूर्त्तेरभाव इति सूचितं यद्वा प्राज्ञः परमभागवतः समयज्ञ इतियावत् तं प्राप्य जनाः परमानन्या भागवतास्तत्सुखसुखिनो भवन्ति यथेत्यर्थः । एतासां नामानि प्रह्लादसंहितानुसारेण प्राचीनैरुक्तानि श्रीमुनीन्द्रैश्चातिरहस्यत्वाद्वा यथैवस्याश्च नोक्तानि तानिच मूलविरोधात् कल्पनागौरवाद्स्वामिरूपेरितानि इति ज्ञेयं नह्यत्र संख्या विवक्षिता वक्तृत्वभावप्रदर्शनाय तत्तच्चेष्टितवर्णनसंरम्भादिति सूक्ष्मदृशावधेयम् ॥ ६ ॥

ततश्च मद्भावप्रशमेन सर्वासामेकीभावात्संमिलितानां सांनिध्यात् भगवतोऽपि सुखमधिकं जातमित्याह । ताभिरिति। पूर्वोक्तलक्षणाभिः विशेषेण धूतः त्याजितः शोको यासां ताभिः तत्त्याजनप्रकारो विष्णुपुराणे ॥

ततः काश्चित्प्रियालापैः काश्चिद्भ्रूभङ्गवीक्षितैः ।
निन्येऽनुनयमन्याश्च करस्पर्शेन माधव इति ॥

भगवानिति श्रीकिशोरीरमण इत्यर्थः। एवं च श्रीराधायुगलितो मुख्यप्रकाशस्तासां मध्यग इतिसूचितं तत एवाच्युतः तस्यामेवासक्तत्वेनान्यत्रानासक्तः ताभिश्च तथैव वृतः स्वस्वामित्वेनाङ्गीकृतः इति सत्यमेव तद्युगलमत्र स्पष्टीकृतम् अधिकं व्यरोचत तत्र दृष्टान्तः पुरुषो जीवतत्त्वं शक्तिभिरिन्द्रियैः ततश्चैता अपि तयोरिन्द्रियस्थानीयास्तन्मिथुनं चासामात्मपरमात्मस्थानीयमित्यर्थः। यद्वा पुरुष ईश्वरतत्त्वं स यथैश्वर्य्यादिभिः स्वरूपशक्त्या चेति तातेति सानुकम्पं संबोधनम् अत्रैव मनोदेयमिति भावः ॥ १० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका।

एवं कासांचिच्चरितं पृथक्पृथगुक्त्वा सर्वासां तथा वक्तुमशक्त्या समुदायेनाह। सर्वास्ता इति। ताः सर्वा अपि केशवालोकेन यः परमोत्सवस्तेन निर्वृता विरहजं तापं जहुरित्यन्वयः तत्रासंख्यातगोपिकानां युगपद्दर्शनासम्भावनानिरासायाह । केशवेति । को ब्रह्मा ईशो रुद्रस्तयोरपि तदङ्गसम्भूतत्वेन विभु सर्वाङ्गत्वात् तदसम्भाव इति भावः। यद्वा कीदृक्पूर्णताविर्भाव इति जिज्ञासायां केशवेति केशा अपि सुन्दराः सन्त्यस्येति तथा ततश्च यस्य केशमात्रं सर्वसौन्दर्य्यनिधिः किमु वाच्यं मुखादीनां यद्वा कथं तद्दर्शनेनानन्दस्तत्राह केशवेति। कं सुखं तस्येशः दातुं समर्थः स्वार्थे प्रत्ययः केशवस्यालोकः कृपादृष्टिस्ताद्विषयकं दर्शनं वा तस्यैवासमन्तात्सर्वासां समीपे बहिरन्तश्चाविर्भावो वा तेन यः परमोत्सव उत्कृष्टो हर्षो नित्यनिरतिशयानन्दाविष्कारो वा तेन परा मा विरहवैक्लव्येनाङ्गश्रीमान्द्येऽपि तद्दर्शनमात्रोद्भवा योत्कृष्टाङ्गशोभा उत्सवश्च ताभ्यां वा निर्वृता मग्नचित्ता विरहजं तापं जहुः तथा च परमानन्दावाप्तिर्दुःखनिवृत्तिश्च दर्शिता तत्र दृष्टान्तः। प्राज्ञमिति। यथा जनाः जन्या अन्तःकरणादयो जाग्रत्स्वप्नयोस्तत्तद्व्यापृतिश्रमिताः प्राज्ञं सुषुप्तौ कारणावस्थं प्राप्य गतश्रमाः सुखिनश्च भवन्ति यद्वा जनाः संसारतापत्रयमुमुक्षवः प्राज्ञं प्रकृष्टा ज्ञा ब्रह्मापरोक्षमतिर्विद्यते यस्य स भवति वा यस्मात्स प्रज्ञ एव प्राज्ञस्तं प्राप्य विगतभवतापाः आविर्भूतस्वरूपात्मकनित्यानन्दाश्च भवन्ति यथा वा जना जीवाः परमात्मस्वरूपाज्ञानजनानादुःखकार्पिता महावाक्यप्रज्ञैकगम्यं प्राज्ञं ब्रह्म प्राप्य साक्षात्कृत्य गतदुःखाः सुखिनश्च भवन्ति तथा यद्वा ताः सर्वा अपि जनाः भगवतो जनिः प्रादुर्भावो यासां तास्तं प्राज्ञं रसाभिज्ञं रसिकशिरोमणिं प्राप्य कं सुखं तद्दातुमीशः समर्थो यस्तदालोकस्तेन परमोत्सवनिर्वृता यथेति यथावद्विरहजं तापं जहुरिति यथा तदालोकपरमोत्सवनिर्वृतास्तथाविरहजं तापमपि जहुरिति चान्वयः ॥ ६ ॥

सत्समागमे भगवच्छोभामाह। ताभिरिति। तत्र तातेति प्रियसम्बोधनेन रहस्योपदेशयोग्यतासूचनम् अच्युत इत्यनेन यथा दिनतापहरणे सर्वजनाह्लादनेऽपि सुधानिधेश्चन्द्रस्य न सुधाच्युतिः यथा वाज्ञजनेभ्यो बोधदानेन त्रिविधभवतापनिवृत्तिपूर्वकपरमसुखदानेऽपि भगवत्स्वरूपविदुषां न विद्यासुखच्युतिः यथा वा सर्वेषिश्वसत्तास्फूर्त्तिप्रदानेऽपि ब्रह्मणो न सच्चिद्रूपत्वच्युतिः तथा भगवान् कृष्णो दुःखकर्षणनित्यानन्दस्वरूपः तद्दुःखकर्षणे परमानन्ददानेऽप्यच्युत एवेति ज्ञापितं स्वरूपादच्युतः परप्रेमास्पदोऽपि जीवः स्वप्रेमास्पदतां पुत्रवित्तादावध्यस्य तदन्वेषणपरो दुःखी भवति तथात्वदाशङ्कानिरासायाह। भगवानिति। तस्य स्वरूपाज्ञानेन क्लृप्तभगस्य तथात्वेऽप्ययं भगवान् अलुप्तभग इति भावः। ताभिः स्वस्वरूपात्मिकाभिः अतिविलक्षणप्रेमोत्साहवतीभिर्या वृतः सन्नधिकं व्यरोचत नच पूर्णस्यान्यसम्पर्के आधिक्यासम्भवः स्वरूपतद्वि-

### श्रीरामनारायणकृतभावभावविभाविका।

दानन्दस्यापि जीवस्य विरतिज्ञप्तिरत्यादिभिराधिक्यं भगवत्स्वरूपानन्दाविर्भावात्पूर्णपुण्याया अपि गङ्गाया नद्यन्तरसङ्गमे पुण्यदशगुण्यमिव अव्यक्तपूर्णानन्दब्रह्मणः श्रुतिसङ्गतौ व्यक्तानन्दत्ववत् व्यक्तस्वरूपानन्दस्यापि प्रेमवृत्तिप्रतिफलने बहुगुण्यवदाधिक्यस्फूर्तिसम्भवात् यद्वा अधि सर्वतः कं सुखं सर्वासां गोपीनां तत्स्मरतां सर्वजनानां वा परमानन्दो यथा स्यात्तथा व्यरोचत विशेषेण स्वरूपरुचिमाविश्चकार ननु विरहशोकाभिन्नहृत्खेदखिन्नाभिः प्रियान्वेषणादिश्रमाखिन्नाभिः शोकाश्रुक्लिन्नाभिः छन्नत्वे का वा शोभा तत्राह। विधूतशोकाभिरिति। भगवद्दर्शनमात्रेण धूतस्तदानुकूल्यदर्शनेन तु विधूतः शोको यासां "तरति शोकमात्मविदिति"श्रुतेः सर्वात्मकृष्णसाक्षात्कारे एव शोकापनोदसम्भवात् यद्वा भगवता "अनीशया शोचति मुह्यमान" इतिश्रुतेः शोकग्रस्तानां "ममैवांशो जीवलोके जीवभूतः सनातन" इति स्मृत्या स्वांशभूतानां जीवानां शोकापनोदपरमानन्दप्रदानाय लीलानन्दप्राकट्येऽपि प्रेमाभावे तद्यथावदसम्पत्तौ ताभिः प्रेमपथाविष्कारेण धूतः सर्वलोकशोको याभिः यद्वा कृपालूनां परदुःखदुःखित्वस्वभावत्वेन भगवतः परमकृपालुतया सम्भावितो यो गोपीनां शोकेन प्रजानामनुद्वारेण वा शोकः सस्त्रविधूतशोकत्वेन प्रेमपथप्रवर्त्तनेन वा विधूतो याभिस्ताभिरधिकं व्यरोचत तत्रोपमान्वेषणे तु न तारावृतचन्द्रस्योपमानत्वं कोटिपूर्णचन्द्रताराणां कृष्णगोपीच्छविसाम्यासम्भवात् प्रियतमकृष्णादर्शने दुःखप्रदत्वदर्शनाच्च नवा रतिप्रभृतिवृतः कामो मूर्तिमच्छृङ्गाररसो वोपमानं क्षुद्रत्वात् भवानुबन्धित्वाद्योगिनामनाह्लादकत्वेन रुच्यविषयत्वाच्च न वा योगर्द्धिभिर्योगानन्दोऽप्युपमानं तन्यूनत्वाद्भोगिनामरोचकत्वाच्च न वानन्तशक्तियुतः परमेश्वरोऽप्युपमानं सर्वानुगतत्वेऽपि तच्छोकापनोदानन्दयोरकरणात्तस्माद्रामरावणयोर्युद्धं रामरावणयोरिवेति न्यायमाश्रित्याह। पुरुष इति। पुरुषः कृष्णस्तदितरेषां पुरुषतासम्मतत्वात्सत्त्वाह्लादिनीशक्तिभिः गोपीभिरेव यथेति यद्वोपमाया असम्भवान्नात्रोपमानोपमेयभावः किन्तु पुरुषस्ताभिः स्वशक्तिभिर्यथेति यथावद्व्यरोचत तत्र तस्यैव पुरुषत्वाद्वा पूर्षु बहुगोपीयूथेषु राजमानतया वा पुरुषप्रयोगः॥ १०॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

अथान्यासां वृत्तमाह। सर्वास्ताः गोप्यः केशवस्य ब्रह्माद्यनुकम्पकस्य तेजोनिधेरवलोकनाद्यः परमोत्सवस्तेन निर्वृता आनन्दिताः विरहजन्यं तापं जहुः यथा प्राज्ञं परमेश्वरं प्राप्य तदीया जनाः यद्वा प्राज्ञं ब्रह्मज्ञं प्राप्य मोक्षविरहजं तापं मुमुक्षवस्त्यजन्ति यद्वा प्राज्ञं सौषुप्तं पुरुषं प्राप्य विश्वतैजसावस्था जीवाः॥ ९॥

एवम्भूताभिस्ताभिर्भगवानपि विशेषेण शुशुभ इत्याह। ताभिरिति। भगवान् षड्विधैश्वर्यसम्पन्नोऽपि अच्युतः स्वस्वरूपादावानन्दघनादच्युतोऽपि विधूतशोकाभिस्ताभिरधिकं तत्रापि विशेषेण व्यरोचत पुरुषः स्वयमेव परमात्मा सत्त्वादिभिः शक्तिभिर्यथा यद्वा उपासकः ज्ञानबलवीर्य्यादिभिर्यथा अथवा पुरुषः सङ्घाताभिमानी सर्वेन्द्रियशक्तिभिर्यथा तथा तस्य स्वरूपानतिरिक्ताभिः स्वशक्तिरूपाभिर्गोपाङ्गनाभिर्भगवतः क्रीडानुकरणं संवृत्तमिति भावः। पुत्रवदनुकम्प्यत्वात्तवाग्रे मयेदं रहस्यं प्रकाशितमिति तातेति सम्बोधनाशयः "प्रमदाशतकोटिभिराकुलित" इत्यागमोक्तसंख्याता गोप्यः तासां मध्ये—

> षोडशैव सहस्राणि गोप्यस्तत्र समागताः।
> चन्द्ररूपी मतः कृष्णः कलारूपास्तु ता मताः॥
> एकैकशस्ताः सम्भिन्नाः सहस्रेण पृथक् पृथक्।

इतिस्कान्दोक्ताः षोडशसहस्राणि मुख्यास्तासामपि मध्ये सहस्रसंख्याकाः मुख्यास्तत्राप्युक्ता अष्टौ मुख्यतरास्तत्रापि श्रीराधाचन्द्रावल्यौ मुख्ये तत्रापि श्रीराधापरममुख्यतमेति विवेकः तासामित्यत आरभ्य निवृत्तिपक्षे तासां श्रुतीनां संबन्धी शौरिः संसारविजयं कर्तुं प्रवृत्तोऽधिकारिदेहस्तत्रस्थितं वसुदेवशब्दाभिधेयमन्तः करणं तत्रोपलब्धुं योग्यत्वाद्वासुदेव औपनिषदः परमात्मा तत्रैव सर्वसाधनसम्पन्नाधिकार्य्यन्तःकरणलक्षणे वन एवाविरभूत् अहंब्रह्मास्मीति साक्षात्प्रकटितः आत्मन्येवात्मानं पश्येदित्यादिश्रुतेः तत्रापि यः सगुणः स्मयमानमुखाम्बुजत्वादिरूपेणानिशं ध्यातः स एव साक्षान्मन्मथश्चासौ मन्मथश्च सर्ववृत्तिसाक्षिरूपः प्रतिबोधविदितं मतमितिश्रुतेः १ तं तथाभूतं भगवन्तमधिकारिचेतसि आविर्भूतमवलोक्याबलाः साक्षात्तत्प्रकाशनबलरहिताः श्रुतयः स्वानुकूलाधिकारिणि प्रीत्योत्फुल्लाः विकाशं प्राप्ताः दृक् ज्ञानं यासामधिकारिणा प्रकाशिततत्त्वार्थज्ञानाः सर्वाः काण्डत्रयात्मिकाः युगपदुत्तस्थुः यथाभूतस्वार्थाभिमुखा जाता इत्यर्थः ३ काचिदित्यादौ जातावेकवचनं काश्चिद्भगवदवयवभूतत्तद्देवयजनप्रतिपादिका इतिकर्मकाण्डश्रुतीनां तात्पर्यं सूचितवान् ४ काश्चित्तदुपभुक्त नैवेद्यादिग्रहणपरास्तदीङ्गध्यानप्रतिपादिकाश्चेत्युपासनाकाण्डश्रुतीनां तात्पर्यं ध्वनितवान् काश्चिन्मुख्याः नेहनानास्तिकिञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीत्याद्या अभेददर्शनपरिशुद्धाः ५ काश्चित्तत्त्वमसि अहं ब्रह्मास्मीत्याद्याः पदार्थद्वयाभेदपराः ६ काश्चिदात्मानमेव लोकमुपासीतेत्याद्या निर्गुणोपासनपरा इतिज्ञानकाण्डश्रुतीनान्तात्पर्य्यं सूचितवान् सर्वा अपि ताः केशवस्य परमात्मनः योऽधिकारिण आलोकः साक्षात्कारस्तेन परमोत्सवस्तेन निर्वृता अहो अयंस्वात्मभूतपरमात्मानं न जानातीतितदीयविरहाज्जातो यस्तापस्तं जहुः ततश्च विधूतः शोको याभिः प्रसन्नाभिरिति वा ताभिः श्रुतिभिर्वृतः सगुणो निर्गुणश्चाधिकं व्यरोचत सच्चिदानन्दस्वरूपतया प्रतिपाद्यः सन् सम्यगशोभतेत्यर्थः॥१०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्राप्यं मुक्तोपसृप्यं प्राप्य जनाः मुमुक्षवः प्राज्ञं विद्वांसं वा जना ज्ञानभक्त्यधिकारिणः "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमि"त्यादिश्रुतिप्रोक्तं प्राज्ञं भगवन्तं सुषुप्तौ प्राप्य जनास्तापं जहतीति वा॥ ९॥

हे तात! विष्णुदत्त! ताभिर्विधूतशोकाभिः शुद्धाभिरधिकं भगवान् व्यरोचत तासामनन्यत्वे तु दृष्टान्तः पुरुषः स एव यथा शक्तिभिः विमलोत्कर्षिण्यादिभिरिति॥ १०॥

---

ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ।
विकसत्कुन्दमन्दार १ सुरभ्यनिलषट्पदम् ॥११॥ १ सुरतानिल
शरच्चन्द्रांशुसंदोहध्वस्तदोषातमःशिवम् ।
२ कृष्णाया हस्ततरलाचितकोमलवालुकम् १२ २ कृष्णेहायस्त इति विजय०

भाषा टीका ।

वे सब गोपी श्रीकेशव भगवान् के दर्शन ते जो उत्सव ताते सन्तुष्ट होगईं और विरहते जायमान सब ताप को छोड देत भई जैसे सुषुप्ति अवस्थामे प्राज्ञ परमात्मा को प्राप्त हो मनुष्य सुखी हो वे हैं ॥ ९ ॥

हे तात ! परीक्षित् जी सम्पूर्ण दुःखते छूटी विन गोपिन के सहित अच्युत भगवान् अधिक शोभित भये जैसे प्रलयकालमे स्वशक्तिन ते पुरुष परमात्मा कि शोभा होवे है ॥ १० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

विकसत्कुन्दमन्दारैः सुरभिर्योऽनिलस्तस्मात्षट्पदा यस्मिंस्तत् ॥ ११ ॥

शरच्चन्द्रांशूनां सन्दोहैः समूहैर्ध्वस्तं दोषातमो रात्रिगतं तमो यस्मिंस्तत् अतः शिवं सुखकरम् हस्तरूपैस्तरलैस्तरङ्गैराचिता आस्तृता कोमला वालुका यस्मिन् एवंभूतं पुलिनं ताः समादाय निर्विश्य ताभिर्वृतोऽधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १२ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

विशब्दोक्तस्य रोचने वैशिष्ट्यस्योपकरणान्तरमपि दर्शयति । ता इति द्वाभ्याम् । सम्यक् प्रत्येकं सर्वासामेव हस्तधारणादिना आदाय रासयोग्यपुलिनान्तरं गन्तुं पूर्वपुलिनतो गृहीत्वा निर्विश्य प्रविश्य मध्यमधिष्ठायेत्यर्थः । विभुर्व्यापक इति एकस्यापि सर्वासां युगपत् समादानादिसमावेशार्थं पुलिनस्य कामोद्दीपनसामग्र्या रासक्रीडायोग्यतां दर्शयन् तद्विशिनष्टि । विकसदिति सार्द्धेन । वायोः शैत्यं पुलिनसंबन्धात् मान्द्यं च षट्पदास्पदत्वात् सौरभ्यञ्च व्यक्तमेव ॥ ११ ॥

शरदिति । चन्द्रांशूनां सुप्रसन्नता सन्दोहेति चन्द्रस्य पूर्णता ध्वस्तदोषेति रात्रित्वापगमेन दिनवत् प्रकाशश्च सूचितः कृष्णायाः श्रीकृष्णस्य सनामत्वेन सवर्णत्वेन च सख्यम्प्राप्तायाः अत एव हस्तेति किंवा विचित्रशोभादिना तस्यापि चित्ताकर्षिकायाः तदेवाह । हस्तेति । हस्तैरिवाचयनेन स्थलीवैषम्यकठिनांशराहित्यादिकं ध्वनितम् अन्यत्सैर्व्याख्यातं यद्वा ताः समादायेति ताभिः सह तदेव पुलिनं निर्विश्य मध्यप्रदेशं प्रविश्येत्यर्थः । विशेषेण भवतीति विभुर्बभूवेति शेषः निजवैभवं प्रकटयामासेत्यर्थः । तच्च तद्दर्शनेति द्वाभ्यां वक्ष्यते अन्यत्समानम् ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विशब्दोक्तस्य रोचने वैशिष्ट्यस्योपकरणान्तरमपि दर्शयति ता इति द्वाभ्याम् । सम्यक् प्रत्येकं सर्वासामेव हस्तधारणादिना आदाय रासयोग्यं पुलिनान्तरं गन्तुं पूर्वपुलिनतो गृहीत्वा निर्विश्य प्रविश्य मध्यमधिष्ठायेत्यर्थः । विभुर्व्यापक इत्येकस्यापि सर्वासां युगपत् समादानादिसमावेशार्थम् । पुलिनस्य भावोद्दीपनसामग्र्या रासक्रीडायोग्यतां दर्शयंस्तद्विशिनष्टि । विकसदिति सार्द्धेन । वायोः शैत्यसौरभ्ये स्पष्टे । मान्द्यञ्च षट्पदास्पदत्वात् ॥ ११ ॥

शरदिति । चन्द्रांशूनां सुप्रसन्नता सन्दोहेति चन्द्रस्य पूर्णता ध्वस्तदोषेति दिनवत् प्रकाशश्च सूचितः । कृष्णायाः श्रीकृष्णस्य सनामत्वेन सवर्णत्वेन च सख्यं प्राप्तायाः । अत एव हस्तेति । किम्वा विचित्रशोभादिना तस्यापि चित्ताकर्षकत्वेन तथाम्न्याः वृन्दावनं गोवर्द्धनमित्यादिः । हस्तेति हस्तैरिवाचयनेन स्थलीवैषम्यकठिनांशराहित्यादिकं ध्वनितम् । अन्यत्तैः । यद्वा । ताः समादायेति ताभिः सह तदेव पुलिनं निर्विश्य मध्यप्रदेशं प्रविश्येत्यर्थः । विशेषेण भवतीति विभुर्बभूव इति शेषः । निजवैभवं प्रकटयामासेत्यर्थः । तच्च तद्दर्शनेति द्वाभ्यां वक्ष्यते अन्यत् समानम् ॥ १२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो विभुः कृष्णस्ताः समादाय कालिन्द्याः पुलिनं निर्विश्य तत्र ताभिः परिवृतो व्यरोचतेति पूर्वेणान्वयः पुलिनं कथंभूतं विकसद्भिः कुन्दैर्मन्दारैश्च सुरभिर्यो मन्दानिलः तस्मात्षट्पदा भृङ्गा यस्मिन् ॥ ११ ॥

शरच्चन्द्रांशूनां सन्दोहैःसमूहैर्ध्वस्तं नाशितं रात्रितमः अतः शिवकरं तथा यमुनाया हस्तैरिव तरलैस्तरङ्गैराचिता विस्तृता कोमला वालुका यस्मिंस्तथा भूतम् ॥ १२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विभुः अनिलश्च षट्पदाश्चानिलषट्पदाः विकसतोः कुन्दमन्दारयोः सुष्ठु रताः क्रीडायन्तः अनिलषट्पदाः यस्मिंस्तत्तथा ॥ ११ ॥

शरत्कालचन्द्रांशूनां संदोहेन निरन्तरराज्या ध्वस्तं निरस्तं दोषातमः रात्र्यन्धकारो यस्मिंस्तत्तथा कृष्णायाः यमुनायाः ईहया प्रवाहलक्षणचेष्टया आयस्ताः आयासं प्राप्ताः तरला अनुतरङ्गा एतैराचितानि आसिक्तानि च कोमलानि च वालु

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कानि सैकतानि यत्र तत्तथोक्तं यद्वा कृष्णेहया श्रीकृष्णमूर्तिक्रीडया आयस्तानि च तरलानि चञ्चलानि चात एवाचितानि इतस्ततो विकीर्णानि च शेषं समम् अणुस्तरङ्गो लोलः स्यात्तरला कुरलस्तथेति गोपालः आचितं छन्नसिक्तयोरिति च ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

किं कृत्वा व्यरोचतेत्याह । ताः समादायेत्यादिद्वाभ्याम् । ताः समादाय कालिन्द्याः पुलिनं निर्विश्य आतिदीपकामिदं तद्विशिनष्टि । विकसद्भिः कुन्दैर्मन्दारैश्च सुरभयो ये ऽनिलास्तत्सङ्गिनः षट्पदा यत्र कृष्णोऽत्रागत्य क्रीडिष्यतीति कृत्वा कृष्णाया हस्तेन तरलं यथा स्यात्तथा आचिताः सम्यक्संमार्जिताः कोमला वालुका यत्र ॥ ११—१२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तासामानन्दजननार्थं यत्कृतवांस्तदाह । ताः सामादायेति । ताः सम्यगादाय समीचीने पुलिने निर्विश्योपविश्य विभुर्जातः यत्कलिन्दी कलिन्दकन्या कालं यतीति कलिन्दः अतस्तस्याः पुलिने तासामन्योऽन्यं भगवता कलहो न भविष्यतीति ज्ञापितं पुलिनं वर्णयति क्रीडायोग्यत्वार्थं सार्द्धेन । सर्वत उपरि अधश्चेति प्रथमतः सर्वतः सौभाग्यमाह । विकसन्ति कुन्दमन्दारपुष्पाणि तेषां सुरभ्यनिलः षट्पदा भ्रमराश्च यत्र वायोः त्रयो गुणाः स्पृष्टाः मकरन्दोऽपि पुष्पेष्वधिकः तेन मत्ता भ्रमरा अपि नादसाधकत्वेन गानादावुपयुज्यन्ते विकासः चाग्र्यर्थ एव कुन्दगन्धः शान्तः मन्दारगन्धः पुष्टः तेन गुप्तागुप्तकामयोरुद्बोधको निरूपितः शरन्तोक्त्या प्रभुनिवेशनसमय एव विकासारम्भो ननु पूर्वमपीति ज्ञाप्यते अन्यथा विकसितेति वदेत् एवंसति यस्मिन् क्षणे यस्यार्थस्योपयोगस्तास्मिन्नेव क्षणे तत्कार्यं भवति नान्यदेति लीलामात्रोपयोग्येवात्रस्यं सर्वमिति ज्ञापितं भवति अन्यथा सार्द्धाध्यायत्रयोक्तलीलायां क्रियमाणायां भूयस्येव रात्रिरतीतेत्यधुनैव विकासे हेत्वन्तराभावात्तत्र न भवेदत एव न वदेदपि एवं सत्येताद्दक्चन्द्रादिसंबन्धित्वेनोक्तत्वादनिलादयोऽप्यधुनैव प्रवृत्ता न पूर्वमपीति ज्ञेयम् स्वतन्त्रतयापि सौरभ्यप्रतीत्यर्थं सुरभिरनिल उक्तः ॥ ११ ॥

एवमपरितः जलं परितः सुगन्धः परितः पुष्पाणि परितो वायुः परितो नाद इति निरूपितम उपर्युक्तमताममाह । शरदिति शरत्कालीना ये चन्द्रांशवः तेषां सन्दोहः समूहाः तैर्ध्वस्तं दोषा रात्र्यास्तमो यत्र तेन अत्यन्तं शिवं कल्याणरूपम अन्धकारे गतेऽपि यदि भूतायभिनिविष्टं भवेत् तथापि तदाप्यसमञ्जसमिति कल्याणरूपता निरूपिता निर्विघ्नमग्रिमेष्टकार्यसम्पादकत्वज्ञापनाय परितश्च निरुष्टाः पदार्थाः नोपर्यधश्च अधस्तस्य पुलिनस्य गुणानाह । कृष्णेति । सापि भगवत्सनाम्नी भूसंस्कारं कृतवती भगवद्रमणार्थं कृष्णाया हस्तरूपाः तरलाः तरङ्गास्तैः चिताः कोमलवालुकाः यत्र अन्यथा हस्तरूपताभावे समता न स्यात् तेन शैत्यं कोमलत्वं समता चोक्ता ताद्दशं पुलिनं निर्विश्य तत्र गत्वा वा स्थितः उपवेशनमग्रे वक्ष्यति भावेनैवोपवेशनम् ॥ १२ ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

अथैतासां रासक्रीडायोग्यदेशविशेषप्रापणमाह द्वाभ्याम् । ता इति । प्रागुक्ताः सर्वा एव सम्यक्करहस्तधारणादिना आदाय कालिन्द्याः इति प्रागेव व्याख्यातं पुलिनमिति तस्या एव प्रदेशविशेषं चक्रभ्रमणाभिधं मणिसंकुलमिति क्रमदीपिकोक्तेः गोविन्दलीलामृते च—

> ततः पुलिनमागत्य सचक्रभ्रमणाभिधम् ।
> तत्र रन्तुमनाश्चक्रमारुरोह प्रियानुगः इति ॥
> पूर्वं प्रियारूढाः पश्चात्स इत्यर्थः तथा—
> वितस्तिमात्रोच्चनिखातशंकुगत्रिर्नेमिचक्रोपरि—
> राधया सह ।
> स्थितः स मध्ये ऽन्यसखीगणैः क्रमाद्वहिश्च कारय—
> सुमण्डलीत्रयमिति ॥

तदेव विशिनष्टि । विकसन्ति कुन्दानि माघ्यानि मन्दाराणि च देवकुसुमानि तेन दिव्यादिव्यपुष्पसमृद्धिः सूचिता तेषां गन्धेन सुरभियोंऽनिलः स एव षट्पद इवेतस्ततो भ्रमन् यत्र तत् अनिलस्यैव षट्पदत्वरूपकेण देशस्यालौकिकत्वम् ॥ ११ ॥

तथा शरत्संबन्धी यश्चन्द्रस्तदंशूनां सन्दोहेन ध्वस्तं क्षिप्तं दोषाया रात्रेस्तमो यस्मिंस्तत् एवं किरणानां सन्दोहस्य मार्जनीत्वं तमसश्चावकरत्वमभिप्रेतं तेन च परमालौकिकत्वं शिवं सुखतमं शीतलतमं वा श्लेषेण शिववदुज्ज्वलवर्णम् एवञ्च कामधिजयस्फोरणाय शिवपदोपादानमिति ज्ञेयं तथा कृष्णाया नाम्नापि साम्यम्प्रापितायाः प्रियसख्यास्तरलैस्तरङ्गैराचितं वैषम्यकाठिन्याद्यपसारणेनास्तृतं कोमलं वालुकं यस्मिंस्तत् यद्वा वालुका हिमवालुका कर्पूर इतिवत् आचिता हिमवालुका यत्र तत् विभुरिति सर्वासां यथायोग्यं मानदाने हेतुः ॥ १२ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तासां सन्माननाय यत्कृतवांस्तदाह । ताः समादायेति विभुः सर्वासां प्रेमास्पदे भगवति तुल्यप्रेमर्द्धिमत्त्वाच्चाः सर्वाः समादाय सम्यक् हास्यनर्मोक्तिहस्तग्रहणालिङ्गनादिभिः आदाय स्वीकृत्य सह गृहीत्वा वा कालिन्द्याः वक्ष्यमाणगुणगणयुतं पुलिनं निर्विश्याधिकं व्यरोचत तत्र विभुरित्यनेन विभुत्वं विना परिच्छिन्नेन सर्वासामसंख्यातगोपीनां हृदन्तर्भावं वेनृत्यस्य तासां सर्वासां तथा प्रत्येकहस्तग्रहादिना मनोरञ्जनसन्मानपूर्वकादानस्य चासम्भवात्त्योग्यत्वसूचनं पूर्वमपि पुनः पुलिनमाविश्य समवेताः कृष्णं जगुरित्युक्तत्वात् पुलिने एवोपविष्टाः ताः समादाय पुलिनं निर्विश्येत्यनेन तु पूर्वं तासां कृष्णविरहेण स्मरोद्दीपनकुसुमविकासभ्रमरगानाद्यसहिष्णुतया क्वचित्तदुद्दीपनद्रुमलतादिरहितैकान्तपुलिनप्रदेशे समवेतत्व गुणगानं कृतं तेनाविर्भूतो विभुरधुनोद्दीपनविभावान्वितविहारार्हप्रदेशान्ताः समादाय निर्विश्येति द्योतितं कालिन्द्या-

श्रीरामनारायणकृतभावभावविभाविका ।

इत्यनेन तु कलिं यति अवखण्डयतीति कालेन्दस्तत्पुत्र्यास्तत्कुलाचलकुलागताचलकलिनिरसनस्वभावत्वादपि तस्यास्तत्सङ्गतानामीर्ष्यामात्सर्यादिभावतया सह विहारयोग्यताज्ञापनं लीलायोग्यत्वायैव पुलिनं विशेषयति । विकसदिति । विकसन्तो ये कुन्दमन्दारोपलक्षितविविधसुमनोविशेषास्तेषां सुरभियुक्तो योऽनिलो वायुस्तेनागताः षट्पदास्तद्रूपा मुनयो यत्रेति तथाच ये कृष्णलीलोत्साहेन विकसन्तः सुमनसस्तेषां सङ्गं ये मुनयः प्राप्नुवन्ति तद्गुणाननुगायन्ति चेति ध्वनिः तत्र विकसदिति शत्रन्तोक्त्या सद्योविकाससूचनेन बहुकालविकाससम्भावितम्लानग्लानिनिरासः यद्वा भगवद्विहारसमविकासोक्त्या तत्रत्यकुसुमादीनां जडत्वाभावचिदात्मकत्वं तल्लीलानुसारित्वञ्च सूचितं यद्वा पुलिनस्यैव रासविलासोल्लासेन कुन्दविकासरूपस्वदशनप्रकाशात्मकप्रहासो मन्दारादिना नन्दनन्दनानन्दिपुलिनस्य नन्दनवनादेर्मन्दा अरयः संस्पर्द्धिनो यस्येति मन्दविकारद्योतनं यद्वा विशेषेण कं सुखं येभ्यस्ते विकाराः कृष्णलीलोत्साहेन विशेषेण कं येषां वा परमानन्दघनलीलोपकरणानामपि परमानन्दरूपत्वात् विशेषं यत्कं सुखं परमानन्दस्तत्स्वरूपा वा तथा त एव सन्तः समीचीनाः परोपकारिणः सद्रूपा वा ये कुन्दमन्दारादयस्तेषां सुरभ्यनिलेन षट्पदा यत्रेति तथा अत्र वायोस्त्रयो गुणाः शैत्यादयस्तत्र यमुनासन्निहितदेशशरन्निशाकालसंनिकर्षेण शैत्यं कुसुमसुरभिषट्पदसम्बन्धानिर्देशेन सुरभित्वम् अनिलेति स्वनाम्नैव मन्दत्वं तीव्रो वायुः सशब्दो भवति अयन्तु अनिलो न इला वाणी तदुपलक्षितः शब्दो यस्मिन्निति यद्वा कीदृशं पुलिनं विकसद्भिः कुन्दोपलक्षितकुसुमैर्मा श्रीर्यस्य विकसतां कुन्दादीनां मा श्रीर्यस्मिन् यद्वा विकाशविशेषसुखरूपा सदात्मिका तथाकुं कुत्सितं यतीति सर्वदोषापहारिणी तद्रहिता च मा श्रीर्यस्य यद्वा विकञ्च तत्सच्च कुं कुत्सितं दमयतीति कुन्दमं विकसच्च तत्कुन्दमञ्च विकसत्कुन्दमं तथा आगतानां कृष्णदाराणां सुरभ्यनिलेनागताः षट्पदा वेदा एव षट्पदा यस्मिन् यद्वा दारेषु सुष्ठु रमते भाति चेति दारसुरभः कृष्णः स स्वामितया वर्तते अस्येति तत् दारसुरभि तथा भूता अनिला इला वाणी तच्छून्याः साक्षाद्वर्णनासमर्थाः षड्भिर्लिङ्गैः पद्यन्ते ब्रह्मणि पर्यवस्यन्तीतिषट्पदा षड्भिरङ्गैः पद्यन्ते गम्यन्ते इति वा वेदा अपि यस्मिंस्तत यद्वा यथा योगिभिरितः सुषुमनाः षट्कमलभेदिवायुः कृष्णपादमनुसरति तथा विकसत्कुन्दमन्दारसुमनः परागान्वितकञ्जवनाब्जतत्त्वात्सुरभिः कृष्णानुगोऽनिलः अनाहतनादवन्नादवन्तः षट्पदाश्च यस्मिंस्तत् यद्वा विकसन्तः कुन्दादयो येन तथा सुष्ठु रमते भाति चेति सुरभः कृष्णः तदङ्गसङ्गतया सुरभिरनिलस्तदुद्बुद्धनादा षट्पदाश्च यस्मिंस्तत् अनेन जगज्जीवनाङ्गसङ्गेनैव वायोः स्थिरचरचेष्टाबोधकतया जगत्प्राणत्वं सूचितम् ॥ ११ ॥

पुलिनमेव वर्णयति । शरदिति । यथा भक्तानां हृदयं हरिलीलोत्साहेनातिविकासिते सुमनसि प्रोद्भूताल्हादामृतमयभक्तिप्रभान्वितभजनानन्देन्दुं शुसन्दोहात्मकशुद्धसत्त्वप्रकाशेन ध्वस्ताविद्याख्यदोषा तमः ध्वस्तसमस्तदोषरूपरजोस्तमो वात एव शिवं कल्याणरूपञ्च भवति तथा पुलिनमपि विकसितेऽति सुमनसि जाताल्हादे ससखिगणभगवत्सुमनसि तत्सुमनोरूपशरच्चन्द्रांशुसन्दोहेन पूर्णचन्द्ररश्मिव्रातेन ध्वस्तं समस्तं दोषारात्रिस्तस्याः समस्ततमो यस्मिंस्तथा भूतं तथा शिवं मङ्गलात्मकञ्च एवंविकसदित्यादिना परितः कुसुमविकासेन तत्सुरभिवायुना षट्पदनादेन शोभा वर्णिता शरच्चन्द्रेत्यादिना उपरिचन्द्रकिरणसमूहेन तथापूर्वेणोद्दीपनं द्वितीयेन क्रीडाप्रतिबन्धतमोनिरासश्च वर्णितः अधुना क्रीडोपयोगिपुलिनाधोभागसौष्ठवमाह । कृष्णाया इति । कृष्णायाः कृष्णनामतद्रूपवत्यास्तस्यापि मनः कर्षकानित्यानन्दरूपाया स्तत्प्रेम्णैव द्रवभूताया स्तत एव विकसितातिसुमनसस्तद्दर्शनोल्लासप्रफुल्लितानन्त कुमुदद्दशास्तत्समान सख्युर्भिमानतया तन्मानाय प्रसारितं प्रशस्तं हस्तरूपस्वरूपतरलैस्तरङ्गैः सखीरूपेण हस्तैः प्रवाहरूपेण तरलैर्वाचितः तृणादीनिरासममतापादनाभ्यां मृद्वास्तरणादिवद्राचिता सभावतः कृष्णभरणाच्च कोमला वालुका यस्मिंस्तत् यद्वा कीदृशं पुलिनं तदाह शिवं स्वहृत्कुञ्जे ससखिगणकृष्णविलासोत्साहेन पुलिनात्मनाविर्भूतभक्तराजशिवरूपं तत्र विकसन्तः कुन्दमन्दाराः कृष्णस्य दृष्ट्याभिभाषेन तद्रोमहर्षः सुरभ्यनिल उक्तव्युत्पत्त्या सुरभिकृष्णाश्रितस्तत्प्राणः षट्पदाश्च ज्ञानं च शङ्करादिच्छेन्मुक्ति मिच्छेज्जनार्दनादिति श्रीमद्भागवतोक्तेस्तस्य वैद्यनिधित्वात्तदन्तर्गतकृष्णगुणानुवादात्मकवेदघोषचन्द्रश्च स्वस्य तमोऽधिष्ठातृतया कदापि तत्सङ्गेन भगवत्स्वरूपाभानं माभूदिति तदभिभवाय चन्द्रकलात्मना शिरोधृतभगवत्सत्त्वांश एव तद्रासोल्लासतया पूर्णतामपन्नः तथा च तदंशुसन्दोहेन ध्वस्ता स्वशरणापन्नानां सर्वे दोषा येनासौ तत एवातमश्च गह्वरवनागता यमुनाच तज्जटान्तर्गता गङ्गा सा च भगवच्चरणसम्बन्धेन शिवशिरोवासलाभेन तदनुध्यानपरतया कृष्णाम्बुवालुकाश्च विष्णुपादोदकया नीतविष्णुपादरजस्त्वेन पुलिनशिवाङ्गावधूतभस्मऽपर्य्यवरंच दिगम्बरपुलिनहरवराम्बरं सुरपथश्च शिवो रोगसितारोगहार इत्याद्यपि यथायथमूह्यं "स्वांतर्व्यक्तप्रयासंघकृष्णलीलादिशात्मकम् पुलिनं वैष्णवानां नोनित्यं त्वद्यस्तु शंकरम् ॥१२॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततः काश्चित्प्रियालापैः काश्चिद्भ्रूभङ्गवीक्षितैः ।

निन्येऽनुनयमन्याश्च करस्पर्शेन माधवः ।

इति विष्णुपुराणोक्तहेतुभिर्विधूतशोकास्ताः सम्यक् हस्तधारणप्रियालापादिसमीचीनप्रकारेणादाय सह गृहीत्वा रासक्रीडायोग्यकालिन्द्याः पुलिनं निर्दिश्य ताभिर्व्यरोचतेत्यनुसंबन्धनीयं कलिं कलहं द्यति खण्डयतीति कलिन्दस्तस्य कन्या कालिन्दी तथाच तत्पुलिने गोपीनां परस्परं मया च कलहो न भविष्यतीति तत्र नयनस्याशयः विभुर्व्यापकत्वात्सर्वासामैकमत्यसम्पादकः तत्र नयने समर्थ इति वा पुलिनस्य रासयोग्यतामाविष्करोति विकसत्कुन्दमन्दारैः सुरभिर्यो वायुस्तस्मात्षट्पदा यत्र ॥ ११ ॥

पुनश्च शरत्कालीनकिरणानां समूहैर्ध्वस्तं दोषाया रात्र्यास्तमो यत्र तेन दिवसतुल्यकालवत्त्वादत्यन्तशोभनं पुनश्च कृष्णसदृशवर्णनामधेयायाः भववत्स्वस्याः भगवद्रमणार्थं पुलिनभूमिं संस्कृत्य स्थिताया हस्तरूपैस्तरङ्गैराचिता आस्तृता कोमलवालुका यत्र तरङ्गैः पुलिनभूमेः समतासंपादनात्तेषां हस्तत्वनिरूपणं तथाच जलसुगन्धपुष्पवायुनादैः परितो वेष्टितं सुप्रकाशवत् शीतलं कोमलं समं चेति बोधितम् ॥ १२ ॥

तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ।
स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥ १३ ॥
तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः ।
चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ताः समादाय पुलिनं निर्विश्य तत्र ताभिर्वृतोऽधिकं व्यरोचतेति पूर्वेणान्वयः पुलिनं वर्णयति । विकसदिति सार्द्धेन । कुन्दैर्मन्दारैश्च सुरभियोऽनिलस्तस्मात् षट्पदा यस्मिन् तत् ॥ ११ ॥

शरत्कालीनस्य चन्द्रस्यांशुसन्दोहैः किरणसमूहैर्ध्वस्तदोषातमो निरस्तनिशान्धकारम् शिवं सुखदम् तथा कृष्णायाः यमुनाया हस्तैरिव तरलैराचिता आस्तृता कोमला वालुका यस्मिन् तत् तस्य श्रीकृष्णस्य दर्शनेन य आह्लादस्तेन विधूता हृद्रुक् यासां ताः मनोरथान्तं ययुः प्रापुःश्रुतयो यथेति श्रुतयो यथा कर्मादिपरत्वेन प्रतीयमानाः अकृतार्था आसन् समन्वयाध्यायोक्तप्रकारेण परमात्मपरतया वेदाचार्य्येण स्थापिताः प्राप्तार्था भवन्ति तद्वत् एवं लब्धमनोरथानां भगवत्प्रावण्यमाह । स्वैरिति आत्मबन्धवे आत्मप्रियाय स्वैरुत्तरीयैरासनमचीक्लृपन् रचयामासुः ॥ १२ ॥

---

### भाषा टीका ।

सर्वव्यापक भगवान् तिन गोपिन को ले जामे कुन्द मन्दार के फूलों की सुगन्धिते भौंरा गुञ्जारकरैं हैं और शरदऋतु कि चन्द्रमा के किरण के समूह ते रात्रके अन्धकार के दूर होवे ते सुन्दर है और यमुना के लहर रूप चंचल हाथों ते जा में कोमल बालु बिछी है या प्रकार के यमुना के पुलिन पै प्रवेश करत भये ॥ ११—१२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ताश्च मनोरथानामन्तं ययुः पूर्णकामा बभूवुः श्रुतयो यथेति अयमर्थः यथाकर्मकाण्डे श्रुतयः परमेश्वरमपश्यंत्यस्तत्तत्कामानुबन्धैरपूर्णा इव भवन्ति ज्ञानकाण्डे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामानुबन्धं जहति तद्वदिति आप्तकामा अपि प्रेम्णा तमभजन्नित्याह । स्वैरिति अचीक्लृपन् रचयामासुः आत्मबन्धवेऽन्तर्यामिणे ॥ १३ ॥

गोपीसभागतस्ताभिः संमानितः सन्नचकास शुशुभे त्रैलोक्ये या लक्ष्मीः शोभा तस्या एकमेव पदं स्थानं तद्वपुर्दधद्दर्शयन् ॥ १४ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननोऽतिहृष्टानां प्रेमसेवामाह । तदिति । तस्य क्रीडाविशेषोत्सुकस्य विभोः दर्शनेनाह्लादस्तेन विशेषतो धूता नाशिता हृद्रुजः सर्वाधयो यासां तथाविधेन तेन सह तत्रागमनेन रासक्रीडानिर्द्धारात् विधूतशोकाभिरिति पूर्वं विरहशोकमात्रस्य नाशनम् अधुना त्वशेषहृद्रुजामितिभेदः अतएव मनोरथान्तं ययुः यद्वा उपमागर्भितं ज्ञेयं मनोरथान्तमिव ययुः रासक्रीडाप्रत्यासत्तेः यथा श्रुतयोऽपि तद्गुणादिवर्णनात्तं प्राप्ता इव भवन्ति नतु साक्षाल्लभन्ते साक्षादप्राप्तेः साचोक्तैव श्रीब्रह्मस्तुतौ अद्यापि यत्पदरजः श्रुतिमृग्यमेवेत्यादिना यद्वा तस्य विभोर्दर्शनाह्लादेन विधूता हृद्रुक् विरहार्त्तिलक्षणा यासां तथाभूताः सत्यः मनोरथस्य तद्दर्शनविषयकस्य अन्तं समाप्तिं ययुः पुनस्तदुत्कर्षत्यन्तविधूतस्य विरहतापस्यापगमेऽपि तत्संस्कारस्य तु क्रमेणैवापगमात् श्रुतयोऽपीश्वरं दृष्ट्वा तद्गर्कविशेषमिच्छन्ति अत एवासनमचीक्लृपन् विचित्रचारुप्रकारेण रचयामासुः कैः स्वैः स्वयं परिहितैः उत्तरीयैः कुचकञ्चुकोपरिविन्यस्तैः कञ्चुकस्य सूक्ष्मतरवस्त्रत्वात् विरहरोदनधारापाताच्च कुचकुंकुमेनाङ्कितैर्भूषितैरित्यर्थः । ननु अशेषगुणवतीभिः कथं लज्जा ताभिः परिहृता कथम्वा प्रभवे कुचकुंकुमाक्तैरुत्तरीयैरासनं दत्तं तत्राह । आत्मेति आत्मभ्योऽपि बन्धुः प्रेयान् तस्मै आत्मकोटिप्रेष्ठायेत्यर्थः । अतोऽस्य भूम्युपवेशेन परमस्वदुःखापत्तेः सख्यप्रेमविशेषाच्चेत्यर्थः । असानकल्पनं पुनस्तिरोधानशङ्काकुलत्वेन तत्रैवावृत्य रिरक्षिषया स्वाभिप्रेतार्थस्य पिपृच्छापरिपाटीविशेषाय वा अन्यत्तैर्व्याख्यातं स्वस्वोत्तरीयेण तस्य चातिसूक्ष्मतया सर्वोऽपि विस्तीर्णोवासनार्थम् एकत्रैव किम्वा स्वस्ववर्गादिभेदेन पृथक्पृथगेव कल्पयामासुरिति ज्ञेयम् ॥ १३ ॥

ईश्वरः परमस्वतन्त्रोऽपि भगवान् सर्वैश्वर्यपूर्णोऽपि सः रसिकशिरोमणिः प्रेमामृतार्णववर्द्धनः श्रीकृष्णचन्द्रः तस्मिन्नासने उपविष्टः सन् चकास यद्वा भगवानिति तेनैव तस्य भगवत्तासारप्रकटनमित्यभिप्रेतम् ईश्वर इति सर्वशक्तिमत्त्वं पृथक्पृथक्कल्पितासनसमूहे तासां स्वस्यच सन्तोषविशेषार्थं तत्तदलंक्षितत्वेनैव एकस्यापि पृथक्तयैवोपवेशात् योगेश्वरैः सिद्धसमाधिभिः श्रीसनकादिभिः श्रीरुद्रादिभिरपि या अन्तर्हृदि एकाग्रतापादिते चित्ते कल्पितं मानसपूजायां तदुपवेशार्थं विचित्ररत्नादिना प्रयत्नेन रचितम् अर्पितम्वा आसनमेव यस्य इति तस्य साक्षात्तत्स्वीकारोऽपि नास्तीति व्यञ्जितं तादृशोऽपि चकाशेऽत्र हेत्वन्तरं गोपीनां परिषदं सभां प्राप्तः बहुलमण्डलाकारोपविष्टानां तासां मध्यवर्ती सन् अनेनापि पूर्ववदैश्वर्य्यमूह्यं किञ्च अर्चितः ताभिः सम्मानितः आसनकल्पनेनैव किम्वा ताम्बूलादिसमर्पणेन नर्मादिना कटाक्षार्चनावा अत एव त्रैलोक्येति श्रीभगवद्वपुषः सर्वदा त्रैलोक्यलक्ष्मीपदत्वेऽपि अधुनाऽतः सर्वकालादौ शाश्वं सूच्यते अनेन चकाशनप्रकारोऽपि दर्शितः ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ततोऽतिहृष्टानां प्रेमसेवामाह। तदिति। तस्य क्रीडाविशेषोत्सुकस्य विभोर्दर्शनेन य आह्लादस्तेन विशेषतो धूता नाशिता हृद्रुजः सर्वाः आधयो यासाम्। तथाविधेन तेन सह तत्रागमनेन रासक्रीडादिमयचिरस्थितिर्निर्द्धारिता पूर्वशङ्कापगमात्। न केवलं परमदुःखशान्तिरेव अपि तु परमसुखप्राप्तिरपि जातेत्याह। मनोरथस्य वाञ्छितस्यान्तं परां काष्ठां ययुरिति। तत्र दृष्टान्तः श्रुतयो यथेति। श्रुतयोऽपि तादृशलीलाविशिष्टं तं प्रकाश्य निजनिजनानातात्पर्यदौस्थ्यं परित्यजन्ति। परमतात्पर्यपर्यवसानञ्च प्राप्नुवन्तीति। तदुक्तमेकादशे स्वयं श्रीभगवता। यस्यां न मे पावनमङ्गकर्मेत्यादि। द्वादशे। श्रीसूतेन स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभाव इत्यादि च। तत्राप्येषा परमप्रेममयरासलीलेति। श्रुतयोऽप्यत्रैव कृतार्था जाता इत्यस्या लीलाया महिमापि दर्शितः। अतः सहोक्तिनामालङ्कारोऽयं व्यञ्जितः। ततश्च सुस्थिरचित्ताः सत्यः आसनमचीकॢपन् विचित्रचारुप्रकारेण रचयामासुः। कैः स्वैः स्वयं परिहितैः उत्तरीयैः सर्वाङ्गीणवस्त्रस्यान्तर्गतैः कुचपट्टिकां वेति वक्ष्यमाणानुसारेण हृदयावरणरूपैः विरहरोदनधारापातात् कुचकुंकुमेनाङ्कितैराञ्जितैरित्यर्थः। ननु कथं लज्जाशैथिल्यमिव ताभिरङ्गीकृतं स्वोपयुक्तैः वस्त्रैरासनं दत्तञ्च तत्राह। आत्मेति। आत्मनो बन्धवे। आत्मीयत्वेन मित्रत्वेन च भावादित्यर्थः। अन्यत्तैः। आसनञ्चेदं सर्वासां सूक्ष्मवस्त्रमयविस्तीर्णमेकमेव वर्गशः पृथक् पृथगेव ज्ञेयम्॥ १३॥

स प्रेमरसाम्बुधिवर्द्धनः श्रीकृष्णचन्द्रः स्वयं भगवान् ऐश्वर्यादि षड्गुणसम्पन्नोऽपि तथा ईश्वरः नित्यमपूर्वापूर्व तत्प्रकाशनसमर्थोऽपि तत्र तस्मिन्नासने उपविष्टः सन् चकाश तत्र तत्रासम्भवशोभाविर्भावयन् बभूव। अन्यत्र पुनरसौ परमदुर्लभ एवेत्याह। योगेश्वरैः सिद्धसमाधिभिः श्रीरुद्रादिभिरपि अन्तर्हृदि एकाग्रचित्ते कल्पितं भावनामात्रेण स्थापितमासनं यस्य तादृशोऽपि। अलुक् समासः। अर्थात्तैरेव कल्पितमिति वा। तस्मात्तासां सम्बन्धस्यैवैष महिमेति भावः। तत्र च वैशिष्ट्यमाह। गोपीति। यद्वा। तादृशेन गोपीपरिषद्गतत्वेनैव योगेश्वरान्तर्हृदि कल्पितासन इति ज्ञेयम्। किञ्च। अर्चितः आसनताम्बूलनर्मसास्मितापाङ्गादिना सम्मानितः। किं कुर्वंश्चकाश त्रैलोक्ये प्राकृताधोमध्योर्ध्वलोके परमव्योमाख्य महावैकुण्ठपर्यन्ते या लक्ष्मीस्तत्तदनन्तस्वाविर्भावपर्यन्तवस्तूनां नानाशोभादिसम्पत्तिः तस्या एकमनन्यत् पदमाश्रयभूतं वपुः प्रकाशं बिभ्रत् तासामग्रे धारयन् प्रकटयन्नित्यर्थः। तथाच वक्ष्यते। गोप्यस्तपः किमचरन् यदमुष्येत्यादि॥ १४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मनोरथानां तत्प्रतिपादकानाम्॥ १३॥
त्रैलोक्यलक्ष्म्यैकपदं त्रैलोक्ये सौन्दर्यस्य एकाश्रयम्॥१४—१५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्य भगवतो दर्शनेन य आल्हादस्तेन विधूता निरस्ता हृद्रुजस्तद्विश्लेषजा मनःपीडा यासां ता गोप्यो मनोरथान्तं मनोरथप्रतिपादनाकाङ्क्षापर्यवसानं प्रापुः यथा श्रुतयस्तद्वत् यथा भागद्वयात्मिकाः श्रुतयः तात्पर्यवृत्त्याभिधया च वृत्त्या प्रतिपिपादयिषितपरमात्मानं प्रतिपादनाकाङ्क्षापर्यवसानं प्राप्नुवन्ति तद्वदित्यर्थः। इत्थं पूर्णमनोरथा अपि प्रेम्णा तमभजन्नित्याह। कुचकुङ्कुमाङ्कितैः स्वैः स्वकीयैरुत्तरीयैरात्मबन्धवे आसनं स्वयं रचयामासुः॥ १३॥

योगीश्वराणामन्तर्हृदयकमलमध्ये कल्पितमासनं यस्य तथा भूतोऽपीश्वरो भगवांस्तत्र गोप्युत्तरीयरचितासने समासीनः गोपीसमुदायमध्यगतः त्रैलोक्यसौन्दर्यैकाश्रयं वपुर्दधद्बिभ्राणः चकाश दर्शयन् शुशुभे॥ १४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मनोरथान्तं प्रार्थितार्थपूर्तिं मनोरथानामर्थानामन्तं निर्णयहेतुं परमात्मानं रथ गताविति धातुः श्रुतिविषये तस्य ब्रह्मणो दर्शनेन विपर्यीकरणलक्षणेन जाताह्लादेन पूर्णार्थलक्षणेनाधूता हृद्रुजो विपर्यीकरणलक्षणा यासां तास्तथा उत्तरीयैः प्रावरणीयवस्त्रैः आसनं विमलोत्कर्षणीह्वानेत्यादि फलतामिव पीठम् अन्यत्रात्मनो वायोर्बन्धवे"सतो बन्धु मसति निरविन्दन्नि"तिश्रुतिः॥ १३॥

गोपीपरिषद्गतः गोपस्त्रीसमूहमध्यवर्ती त्रैलोक्यलक्ष्मीणां त्रैलोक्यसौन्दर्याणामेकं पदं स्थानं त्रिलोकीजनसेव्या लक्ष्मीः श्रीस्तस्या एकं केवलं पदं भोगभोग्याश्रमं वा॥ १४॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तद्दर्शनेति। तस्य क्रीडाविशेषौत्सुक्यस्य विभोर्दर्शनेनेत्यादिको विग्रहः तथाविधेन तेन सह तत्रागमनेन रासक्रीडादिमयचिरस्थितिर्निर्द्धारिता पूर्वशङ्कापगमात् परमसुखप्राप्तिरपि जातेत्यर्थः। मनोरथान्तमिति। तत्र दृष्टान्तः श्रुतयो यथेति। तल्लीलानुभवेनोभयत्रापि परमकृतार्थत्वादिति सहोपमेयम् यथाशब्देन व्यज्यते॥ १३—१५॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

तत्र गत्वोपविविक्षुं श्रीकृष्णमालक्ष्य सर्वा आसनं कल्पयामासुरित्याह। तद्दर्शनेत्यादि। ता इत्यध्याहार्य्यम् आत्मबन्धवे श्रीकृष्णाय आसनमचीकॢपन् कैः स्वैरुत्तरीयैः प्रत्येकमेव उत्तरीयमाकृष्य उपर्युपरि कृत्वा बहुत्वमासनञ्चकुरिति बहुवचनमहिमा कीदृशैः कुचकुङ्कुमाङ्कितैः तेनासनस्य पूजापि कथिता अत्युच्चानतया सर्वनिरीक्षणं सुकरमित्यर्थः। कीदृश्यः तस्य दर्शनाह्लादेन विधूतहृद्रुजः विधूतहृद्रुक्त्वे दृष्टान्तः मनोरथान्तं यथा श्रुतयो ययुः श्रुतयो भगवत्परा उपनिषदः यथा चिरकालकृतचरणारविन्दमाधुर्यानुरूपस्य मनोरथस्य अन्तम्परिणामञ्चोप्यन्तररूपेण प्रापुः ततश्च विधूतहृद्रुजोऽपि

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

यथा बभूवुस्तथेत्यर्थः । स्वैरुत्तरीयैरासनकल्पने सर्वा एव निरुत्तरीया बभूवुरिति न मन्तव्यं तदैव योगमायया प्राग्वदुत्तरीयसम्पादनं कृतमिति ॥ १३ ॥

अथ तदासनस्थो भगवान् पुनरत्यन्तं व्यरोचतेत्याह । तत्रेत्यादि तत्रासने उपविष्टो भगवान् चकाश कीदृशः गोपीपरिषद्गत इति हेतुमद्विशेषणम् अर्चितस्ताभिरेव सत्कृतः योगेश्वरैरन्तर्हृदि कल्पितमासनं यस्य तस्य कल्पितत्वात्तत्रतथा न शोभत इत्यर्थः । किमिव तत्राह त्रैलोक्यलक्ष्म्यास्त्रैलोक्यश्रिय एकं मुख्यं पदं चिन्हं यद्वपुर्लक्ष्यरूपवपुरिति यावत् तथा विधं त्रैलोक्यलक्ष्म्येकपदं त्रैलोक्यशोभारूपमेकं वस्तुरूपकं "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो गोपिकानां कृत्यमाह । तद्दर्शनाह्लादेति । शोके गतेऽपि कामस्तापात्मको वर्त्तत एव संबन्धस्याजातत्वात् यदा पुनस्तादृशस्थाने तदर्थं गतः तदा तद्दर्शनेन तस्य तदवस्थामापन्नस्य दर्शनेन योऽयमाह्लादः भाव्यर्थनिश्चयात् तेन विधूताः हृद्रुजो यासा मेवं निवृत्तदोषे तासां यज्जातं तदाह । मनोरथान्तं ययुरिति । ताभिर्यथाकथञ्चित्संबन्धोऽभिलषितः जातस्तु ततोऽनन्तगुणनामप्रीसहितः अतो मनोरथस्याप्यन्तो यत्र तादृशं ययुः नन्वनभिलषितं कथं प्राप्नुयुः तत्राह । श्रुतयो यथेति । श्रुतयो हि निरन्तरं भगवद्गुणवर्णनपरा तेन धर्मेण वाचः पूर्वरूपं यन्मनः तस्यापि यदगम्यं भगवत्स्वरूपं तत्प्रसन्न्यः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति भगवदानन्दः मनोरथान्तो भवति तत्प्रतिपादकाः श्रुतयो जाताः सर्वे च मन्यन्ते "तन्त्वौपनिषदं पुरुषं पृच्छामि अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति सर्वे वेदा यत्पदमामनन्ति" इत्यादिवाक्यैः ब्रह्मणि श्रुतयः प्रमाणमित्यध्यवसीयते सर्ववेदान्तप्रत्यय मितिन्यायाच्च अलौकिको वेदार्थः अलौकिका वेदशब्दाः लोके च न सङ्केतः तथापि निरन्तरं भगवत्कार्यं कथयन्तीति लोकाः तच्छ्रवणेन शुद्धान्तः करणाः स्वयमेवालौकिकविषये सामर्थ्यं मन्यन्ते श्रुतिश्च तत्प्रतिपादिका भगवदिच्छया नात्र लौकिकं साधनमपेक्षते युक्तिं वा तथा एतासामपि मनोरथान्तप्राप्तिः एवम्परमपुरुषार्थदातुर्भगवतोऽन्यत्राभिनिवेश आधारधर्मसंबन्धात् स्वस्य कृतार्थता न भविष्यतीति पूजार्थमात्मनिवेदनार्थं च आसनं चक्रुरित्याह । स्वैरुत्तरीयैरिति तद्देशस्थानां स्त्रीवस्त्राणि त्रीणि भवन्ति परिधानीयं कुचपट्टिका उपरिवस्त्रञ्च सर्वाभिरेव स्वोपरिवस्त्राणि आसनार्थं दत्तानि उपरिवस्त्राण्यपि द्विविधानि भवन्ति सर्वदापरिधेयानि भोगसमये च तानि सूक्ष्माणि भवन्ति तान्येव भगवते दत्तानीति ज्ञापयितुमाह । कुचकुंकुमाङ्कितैरिति । शुष्काण्यपि कुंकुमानि क्रीडायामार्द्राणि भवन्ति अतः तेनाङ्कितानि उत्तरीयाणि अचीक्लृपन् व्यपथामासुः ननु स्वोपरिधेयं कथमधः कल्पयांचक्रुरित्याशङ्क्याह । आत्मबन्धव इति । आत्मनः स एव बन्धुः रक्षिता तदर्थमेव देहः स्वात्मा च अत उपर्याच्छादनमपि तदर्थमिति तस्यासनकल्पिरुचिता ॥ १३ ॥

ततो भगवान् तासु सर्वत्र निविष्ट इति ख्यापयितुं तद्दत्तासन उपाविष्ट इत्याह । तत्रोपविष्ट इति । भगवानिति तेषां कार्यसाधकत्वं ननूत्तरवस्त्रापगमे सभायां रसाभासो भवेत् अतः कथमुपविष्ट इति चेत्तत्राह । सईश्वर इति । स पूर्वं प्रार्थित ईश्वरः सर्वकरणसमर्थः अतः तासां दिव्यानि वस्त्राणि संपन्नानीति बोधितं येषां जलक्रीडायां न वाससामार्द्रता अतः सर्वकरणसमर्थः तत्रोपविष्टः सः पूर्वं प्रार्थितः । ननु भगवान् अपवित्रे भोगादिलेपयुक्ते कथमुपविष्ट इतिचेत्तत्राह । योगेश्वरान्तर्हृदिकल्पितासन इति । योगेश्वराणां हृदयं शुद्धं तत्राप्यन्तर्हृदयं तत्रापि कल्पितमेव भगवदासनं नतु कृतं मानसी मूर्तिस्तिष्ठति नतु कदाचिदपि स्वयमुपविष्टः मुख्यमासनमेतदेव अतश्चकाश परमशोभां प्राप्तवान् पूर्वव्रजोपीनां परिषदं गतश्च जातः परितो गोपिका उपविष्टा इत्यर्थः सभापतिर्भगवान् अतः ताभिरर्चितः ततो भगवान् तासामर्थे त्रैलोक्ये यावन्ति लक्ष्मीरूपाणि इन्द्रपदादीनि तासां यदेकं पदं यस्यांशविलासाः तत्तल्लक्ष्मीभोक्तारः तादृशं वपुर्धृतवान् अस्मिन्नर्थे देशकालादिभेदेन यावन्त उत्कृष्टा अर्था अपेक्ष्यन्ते तान् प्रकटितवान् तादृशवपुर्धारणेन ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्र तासां सख्यसमुचितां प्रेमसेवामाह । तस्य कृष्णस्य दर्शनानन्देन खण्डितसर्वमनोदुःखा व्रजसुन्दर्यः स्वीयैरुत्तरीयैः कुचकञ्चुकोपरिस्थैरतिसूक्ष्मवस्त्रैरात्मबन्धवे तस्मै आसनं तथा अचीक्लृपन्नुपजह्रुर्यथा श्रुतयो महोपानिषदोऽपि मनोरथानामन्तं परमकाष्ठां ययुः । यतोऽधिकोऽन्यो मनोरथो न सम्भवति तं प्रापुः यदृष्ट्वा वयमपि व्रजे गोप्यो भूत्वा श्रीकृष्णेन सहैवं स्वकुचकुङ्कुमास्तिमितवस्त्रार्पणादिना कदा विलसाम इत्युत्कण्ठिता बभूवुरित्यर्थः । अत एव श्रुतयो गोपीत्वप्राप्त्यर्थं तदनुगतिव्यञ्जकं तीव्रं तपश्चक्रुरिति बृहद्वामनीया कथा । "स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधा" इति तासामुक्तिश्च । तत्र पूर्वकालगतकृष्णावतारदर्शिन्यः श्रुतयो लब्धचरमनोरथा एतस्मिन् कल्पे गोप्यो बभूवुरेव । एतस्मिन् काले तु लब्धमनोरथा एताः श्रुतयोऽग्रिमकल्पे गोप्यो भविष्यन्ति श्रुतीनामानन्त्यादिति ज्ञेयम् ॥ १३ ॥

तत्र प्रति स्वयूथमेव पृथक् पृथक् उपर्युपरि निहितबहुवस्त्रासनेषु ताभिः क्लृप्तेषूपविष्टः । ननु तावत्संख्येष्वासनेषु कथमेक उपविष्टस्तत्राह । ईश्वरः तत्तदलक्षिततयात्मप्रकाशवान् तत्र हेतुः । भगवान् कामवान् भगं श्रीकाममाहात्म्येत्यमरः । तस्य तावत्सु सर्वेष्वेव आसनेषु उपवेष्टुं कामनामालक्ष्य ऐश्वर्येण शक्त्या योगमायाद्वारा तावन्तः प्रकाशास्तथा प्रकाशिता इत्यर्थः । किञ्च । स हि योगेश्वरैः शेषशङ्कराद्यैरन्तर्हृदि हृदयाभ्यन्तरे एव कल्पितं मनसैवानीतत्वात् त्रिजगद्दुर्लभमनुपहतमनर्घ्यमासनं यस्य सः । एताभिस्तु हृदयाद्बहिरेव स्वगात्रनिर्माल्यवस्त्रैः स्वोपभुक्तसुगन्धैरासनं कल्पितं यत्तत्रैवोपविष्टश्चकाश दिदीपे यः खलु स्वयं भगवान् ब्रह्मरुद्रादिपार्षदा क्षीरोदादितीरे स्तुत्यादिभिर्गम्य एव मनसि प्रादुर्भवन् परोक्ष एव क्षणमात्रमेव भवेत् स एव गोपीपरिषदं स्वयं गतः अच्यु-

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तावच्चिरकालमपि व्याप्य च्युतिरहितः । अर्च्चित इति पाठे ताम्बूलनर्मस्मितापाङ्गादिना सम्मानितः किं कर्तुं गतः त्रैलोक्ये प्राकृत प्राकृताधो मध्योर्ध्वलोके या लक्ष्मीस्तत्तदनन्तस्यांश-पर्य्यन्तवस्तूनां नानाशोभादिसम्पत्तिस्तस्या एकमनन्यत् पद-माश्रयभूतं यद्वपुस्तदपि दधत् तासां गोपीनामङ्गकान्तिस्मित-कटाक्षादिमाधुर्य्यैः पुष्णन् । यद्वा । तत्रोपविष्ट एव तत्र तादृ-शोपवेशादिविशिष्ट एव योगेश्वरान्तर्हृदिकल्पितासनः । तत्क्ष-णमारभ्य महारुद्रादिभिर्योगेश्वरैर्गोपीपरिषन्मध्यगतः तादृशो-पवेशतादृशशोभातत्तन्नर्मसंलापादि विशिष्ट एव कृष्णो ध्यानेन स्वहृदयमानिन्ये इत्यर्थः ॥ १४ ॥

---

## केनचित्कृता विशुद्धरसदीपिका ।

तत्र तासां प्रेमसेवामाह । तदिति । तस्य पुलिनस्यैव दर्शनेन य आल्हादस्तेन विशेषतो धूता नाशिता हृद्रुजः कामपीडा यासां ताः मनोरथान्तं तदितराळिप्सां तं ययुः कथमित्याकाङ्क्षायामाह । श्रुतय इति । ताअपि तादृशळीलाविशिष्टं तं रासविहारिणं प्राकाश्य निजनिजनानातात्पर्यदौस्थ्यं त्यजन्ति शब्दत त्पर्य्या-वसानञ्च गच्छन्ति तद्वदित्यर्थः । त्वयि हि फळन्त्यतन्निरसनेन भवन्निधना इति तत्स्तुतेरेव जडत्वमासामपौरुषेयत्वादेव परास्तं यद्वा आसु याः श्रुतयः श्रुतिरूपाः साधकचर्य्यास्तासु यथा-यथावन्मनोरथान्तं ययुः मुनिरूपास्तु कुरुक्षेत्रयात्रायां यास्यन्ती-त्यपि दार्शितं "सिद्धितु काचिदेवासां रसारम्भे प्रपेदिरे" इत्युज्ज्व-लोक्तेः विधूतहृद्रुक्त्वे लिङ्गमाह । स्वैरिति । बहुत्वेन स्वैस्वैरित्यर्थः उत्त-रीयैः कुचपट्टिकासूक्ष्मवस्त्रैः कुचकुङ्कुमाङ्कितैः विरहरोदनगल-दश्रुभिरार्द्रतया कुचकुङ्कुमबिन्दुभिरङ्कितैरिति स्ववेदनावेदनायेति भावः । अथवा उत्तरीयैरित्यनेनैव तद्गात्वव्यक्तेः स्वैरिति धनै-रित्यर्थः । तेन सर्वस्वनिवेदनं व्यञ्जितम् अचीक्लृपन्नातिशयेन कल्प-यामासुः ननु कथं लज्जाशैथिल्यमङ्गीकृतं तत्राह । आत्मबन्धवे निजस-खित्वेनाभिमताय अन्यथा बन्धुपदेन रसाभासापत्तेरित्यर्थः ॥ १३ ॥

तदेवम्प्रमाणाय तस्य शोभाविशेषमावेदयति । स प्रेमांबुधिव-र्द्धनः श्रीकृष्णचन्द्रः भगवान् श्रीराधया नित्ययुक्तः साक्षात्कारस्त्व-धिकारापेक्षः एकं सख्यापि नो लक्षितमित्यादेः ननु सापत्न्यं कथं न स्फुरितं तत्राह । ईश्वरः योगमायेशः तदेव नित्यकालं परिचरन्त्यास्तस्याः प्रभावेण तदयोग्याभिरलक्षितलील इत्यर्थः तथैव गोपीपरिषद्गतः ताभिरर्च्चितश्च आसनमित्युपचारान्तरो-पलक्षणं तेनैव रूपेण योगीति योगिनोऽत्र भगवद्भक्तिसिद्धाः तादृशमुख्यरूपभगवदुपासकाः—

> योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
> श्रद्धावान् भजते यो मां स मे युक्ततमो मत इति ॥

श्रीगीतासु तेषामेव तथा निर्धारितत्वात् चकाश परमशोभामावि-ष्कृतवान् किं कुर्वन् त्रैलोक्येति त्रयो लोका द्वारकामथुरागोकुल-धामानीति त्रैलोक्यं तत्रत्या लक्ष्म्याः श्रीभूलीलाख्यास्तासामेक-पदम् अनन्याश्रयं वपूरूपं दधत् प्रकटयन्नित्यर्थः ॥ १४ ॥

---

## श्रीरामनारायणकृतभावभावविभाविका ।

तदा तासां गोपीनां तद्दर्शनाल्हादं तत्कृतां सेवां चाह । तद्द-र्शनेति । तस्यामितपूर्णचन्द्रप्रभसुखकन्दनन्दनन्दनस्य दर्शनेनामन्दा-ल्हादेन सुरभिपङ्कशतमोहनसुरभकृष्णमुखाम्बुजसुरभिमधुमयेन विशेषेण धूता हृद्रुजो विषमशरविषमशरजा विषमज्वरा यासां ता गोप्यः मनोरथानां स्वीयसर्वाभिलाषाणां दर्शनालिङ्गनादिसं-भोगान्तानामन्तः पर्य्याप्तिर्यस्मिंस्तं सर्वाभिलषितभावालम्बनरूपं यद्वा मनोरथानामन्यविषयकस्वीयसर्वकामानामन्तोऽवधिर्यस्मात्तं यद्दर्शनावधिरेव कामोद्भवस्तद्दर्शनोत्तरन्तु नान्यत्र कामः तदुक्तं पुर-स्तात् यर्ह्यम्बुजाक्ष तव पादतलमित्यत्र यद्वा सर्वेषां सर्वमनोरथानां तत्प्रतिबिम्बात्मकतत्तत्सुखलेशगोचरत्वात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीनि" श्रुतेस्तथाचांशभूतसुखेषु तत्तद्वि-षयलाभोत्पन्नवृत्त्याभिव्यक्तेष्वेकलाभेऽन्यत्रेच्छासम्भवेऽपि तद्विम्बपरमा-नन्दघनकृष्णप्राप्तावन्यत्र मनोरथासम्भवात् सर्वमनोरथानामन्तः परिसमाप्तिर्यस्मिंस्तं यद्वा मनोरूपरथानामतिधावनशीलानां कुत्रा-प्यनिवृत्तकामानामन्तो वेगक्षयो यस्मिंस्तं "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः नैतन्मनो विशति वागुत चक्षुरात्मेत्यादि स्मृतेश्च यद्वा "बुद्धिं स सारथिंकृत्वा मनः प्रग्रहवान् पुमान् । प्रयाति परमम्पारं विष्ण्वाख्यं पदमव्यय" मिति श्रुतेर्मनः प्रग्रहोपलक्षितरथ-स्यान्तं प्राप्यभूमिं भूमानन्दं कृष्णमेव साक्षाद्ययुः तद्दर्शनेनैव मनोरथानामन्तं पूर्णतां ययुःप्रापुरिति वा तत्र दृष्टान्तः श्रुतयो यथेति यथा श्रुतयः पूर्वकाण्डे कामतदप्राप्तिशोकचिन्ता सन्तप्ता विविध-वर्णाश्रमवर्णितकर्मसु भ्रमन्ति तथा ता अपि साक्षाच्छ्रुतिरूपा कामशोकचिन्ताग्निसन्तप्ता नानावर्णपुष्पपर्णाद्याकीर्णवनाश्रमेषु तत्तद्वर्णितकर्मसु भ्रमित्वा पुनः श्रुतयो यथोत्तरकाण्डे तद्ध्यानगुण-गानादिना तद्बोधं सम्पाद्य तद्दर्शनेनाभेदसाक्षात्कारेण य आल्हादो भूमानन्दस्तेन विधूता हृद्रुजो याभिस्तथाभूताः भवन्ति "रसो वै सः रसंह्येवायं लब्ध्वानन्दीभवति आनन्दं ब्रह्मणो विद्वान्न बिभेति कुत-श्चन तरति शोकमात्मविदित्यादि" श्रुतिभ्यस्तथा तद्ध्यानगुणगान-दैन्यैस्तदाविर्भावमवाप्य तद्दर्शनाल्हादविधूतहृद्रुजः यथा श्रुतयो मनोरथान्तं श्रुतयस्त्वयिहि फलन्त्यतन्निरसनेन भवन्निधना इत्यादिस्व-प्रवृत्तिपर्य्यवसानं ययुः यद्वा श्रुतयो वाग्रूपा अपि मनोरथान्तं मनोवागगोचरमपि गुणगानेनैव हृदयशुद्धिद्वारा जगदध्यारोपाप-वादेनातन्निरसनेन ययुस्तथा गुणगानातन्निरसनाभ्यां ता अपि मनोरथान्तं ययुः एवन्तत्प्राप्तावपि मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते इति भगवत्पूज्यपादवाक्येन योवेद निहितं गुहायां परमेव्यो-मन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेतिश्रुत्या च न सेवारम्भ-णयोरभाव इति द्योतयंस्तत्सेवारम्भमाह । स्वैरुत्तरीयैरिति स्वीयैः स्वाङ्ग-परिधानभूतैर्नत्वासनाय पृथगानीतैः उत्तरीयैः शाटीकञ्चुकोप-रिपरिधानवराम्बरैः आन्तरस्वानुरागद्रवीभूतान्तःकरणात्मकाङ्गैः पूर्वं विरहरोदनेनानन्दाश्रुप्रवाहेण वा निर्धूततया सलग्नकुचकुंकुमा-ङ्कितैः प्रथमविहारे आलिङ्गनादिसङ्घर्षेण कुचकुंकुम ङ्कितैर्वा तस्मै आत्मबन्धवे ननु कुटुम्बिजनवच्छरीरमात्रसम्बन्धिने यद्वा स्वरूपे-णात्मस्वरूपाय उपाधिनापि "सयुजा सखाया" इतिश्रुत्या जीवाविज्ञान-सखिरूपाय यद्वात्मस्वरूपत्वेऽपि लीलायां बन्धुरूपाय आत्मत्वेन प्रियाय बन्धुत्वेन सेव्याय चेति वा आसनं पौराणिकादीनामि-वात्युच्चमचीक्लृपन् रचयामासुः तत्रायमभिप्रायः यद्भगवतापूर्वमुपदिष्टं

### श्रीरामनारायणकृतभावभावविभाविका ।

तत्तु नापृष्टः कस्यचिद्ब्रूयादिति वचनादप्रश्ने उपदेशानौचित्यात्तथा तद्विद्धि प्रणिपातेन परिप्रश्नेनसेवयेति वचनादासनप्रदानादिसेवाभावेऽपि तदनौचित्याद्धास्माभिरस्वीकृतम् अधुनात्वस्माभिर्व्यासासनादिदानपूर्वकं प्रश्नः क्रियते तत्पृष्टं तत्त्वतस्त्वया उपदेष्टव्यमिति तथाश्रुतिस्वारस्यादप्यस्य ज्ञानं नीरवक्षीरसंक्षीरवत्तु स्नेहम्वेति परीक्षितुमेवासनप्रदानमिति ॥ १३ ॥

तत्र भक्तानामासनरचनं न व्यर्थमपि तु भगवांस्तत्रोपविष्टः शुशुभे इत्याह । तत्रोपविष्ट इति । स भगवानीश्वरोयोगेश्वरान्तर्हृदि कल्पितासनस्तत्रोपविष्टोगोपीपरिसद्गतस्ताभिरर्चितस्त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधच्चकाशेत्यन्वयः तत्रस इत्यनेन यस्मै आत्मवन्धवे ताः स्वैरुत्तरीयैरासनमचीक्लपन् स एव भगवांस्तत्रोपविष्टः तत्रभगवत्त्वेनैव धर्मविरागज्ञानाश्रयतया योगेश्वरान्तर्हृदि कल्पितासनत्वं श्रिया श्रृङ्गाररसोपयोगिरूपमाधुर्य्यलालित्यचापल्यविविधभावदाक्षिण्यादिरूपया यशसा च भक्तप्रीयत्वजगदुद्धारकत्वादिरूपेण तत्रोपवेश ऐश्वर्यस्य तूभयोपयोगतया भङ्ग्यन्तर्गततयोक्तावपि पुनः स्पष्टं पृथङ्निर्देशः तत्रयोगेश्वराणामन्तर्हृदि तु कल्पितत्वेन मनोमयमासनं यस्य स तत्र तु साक्षादुपविष्टश्चकाशेति विशेषः अन्तर्हृदि कल्पितासनइत्यलुक्समासः यद्वा योगेश्वरोगोवर्द्धननाथस्तासां रक्षणेनित्योद्यतस्तासां वहिरन्तर्योगाय संयोगायेश्वरः यद्वा ताभिः स्वस्वान्तर्हृदि काल्पितं दत्तमासनं यस्मै सहृदितत्रचोपाविष्टश्चकाश यद्वायतः स्वयमपि योगेश्वरोऽतएवस्वान्तर्हृदि तासां कल्पितमासनंयेन तथाभूतः सन् ताभ्यः स्वहृदम्बरे दत्तासनस्तद्दत्ताम्बरासने उपविष्टश्चकाश सख्यभावे परस्परासनदानस्यौचित्यात् यद्वा ताभीरचितासनानुपवेशे पूर्वमेव प्राप्तविरहखेदविकला अधुना स्वयाच्छासङ्केच्छकृत्व्येन कां दशां गताः स्युरिति ताखातीति तत्रः सन्नुपविष्टः यद्वा तत्रत्वादेवैकासनगतोऽपि सर्वासामुप समीपे यथा भवति तथोपविष्टश्चकाश यद्वा स योगेश्वरत्वादेव अन्तर्हृदि स्ववक्षसि ताभ्यो दत्तासनःकृतालिङ्गनःताभिर्वा स्ववक्षःसु दत्तासनः मालिङ्गितस्ततस्तद्दत्तवाहिरासनोपाविष्टश्चकाश यतो वहूनां चन्द्रतारादीनामेकाम्बरस्थत्वं दृष्टं नैकस्य चन्द्रस्य वहुम्बरस्थितिरतश्चित्रमेतदेकस्य वहुम्बरस्थितिर्वहुम्बरोपरिस्थितौचापि सामीप्येन वर्त्तनं तत्र कानिचिदम्बराण्यरुणानि काञ्चनाञ्चलसूर्य्योदपरागान्वितानि कानि चिदम्बराणि निशि सुघनश्यामघनावृतानीव नीलानि काञ्चनाञ्चला दिविद्युत्द्युतिव्याप्तानि कानिचित्स्वच्छनिशीव रजतविन्दुतारागणव्याप्ता चलचन्द्रप्रकाशानि कानिचिदम्बराणितु दिनपरिक्षये पीतरविकिरणव्याप्तानीव पीतानि स्वाञ्चलरविद्योतितानि कानिचित्तु स्वाञ्चलचन्द्रप्रभाव्याप्तशारदसितघनान्वितत्वेनेव सितानि कानिचिदम्बराणित्तु चन्द्रप्रभागणितताराणप्रकाशविकासेनेव सिता निद्युमग्तिच कानिचिदम्बराणितु हरिद्रित्सम्ति वहुमुखचन्द्रसमागमोत्साहेनानन्तब्रह्मापडगतवुधव्याप्तानीव हरि तद्युत्यान्वितानि एवं वहुम्बरतल्पगतोऽपि त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधच्चकाश यद्वा योगेश्वरान्तर्हृदि कल्पितासन इतिदृष्टान्तोक्तिः यथा विषयसुखकलेशकृतपः क्लेशत्यागपूर्वकं कलेशगुणगणजातानुरागतयातिसूक्ष्मोरुरोरागान्विते हृदयशोकाम्बरे परमहंसानां सुमानसे सुमानसं मत्वा तत्र कल्पितासनो भवति तथातासां सुरोरागान्वितेष्वतिसूक्ष्मकोशाम्बरेषू पविष्टश्चकाशेत यान्यम्बराणि स्वयंचौर्य्येण हृतानि तानि ताभिः स्वयमर्पितानि उरोरागयुतानि कथं तत्र नोपविशेत् अर्चित इत्यनेनासनसमर्पणानन्तरं ताभिरर्चितस्तदप्यर्चनं न लौकिकं किन्तु नेत्रयुगळार्घपात्रयोः पूरितप्रेमसुखांशुभिस्तत्पदसमर्पितैः पाद्यमर्घ्यंच दत्त्वा ताभिः समर्पितं स्वीयरूपमधुरसं प्रभुणा स्वयंदृक्पात्राभ्यामाचमनं कृते ततोऽधरमधुमधुसितसुस्मितदधिसुस्नेहघृतान्वितं स्वातिगौरसुखरजतपात्रगतं दर्शयित्वा मधुमर्कं समर्प्य प्रमोदाब्धौ तं प्रियं स्नापयित्वा सुरागस्वाङ्गार्पणेन तदङ्गेषु रागलापनेन नवाङ्गरागं दत्त्वा पादसंवाहने पदयोः करकमलेऽर्पयित्वा कामाग्नौ मदमानदाहेन धूपं निरूप्य कुलस्नेहतलज्जारसनवर्त्तिकादाहकहृदयकापट्यादितमोनाशकभगवत्स्वरूपसुखप्रकारकप्रेमप्रकाशाख्यदीप संदर्श्यमधुधरद्राक्षाफलनैवेद्यं चुम्बनेनैव स्वमुखसुवासं मुखवासं च दत्त्वा भ्रूयुगवर्त्तनेन नृत्यं दर्शयित्वा गुणगानेन सन्तोषितः गोपीपरिषद्गत इति प्रेमवृत्तिगणगताभिव्यक्तनिजपरमानन्दपरब्रह्मेवातिरत्युत्कर्षेण वहुरतिरूपासु तासु स्वाङ्गेऽङ्गीकृतवह्वनङ्गप्रभया नङ्गीकृतवह्वनङ्गस्त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधच्चकाश इतित्रैलोक्यलक्ष्म्याः शोभाया एकं पदमाश्रयं यद्वा त्रैलोक्यस्याधिष्ठानतया लक्ष्म्याश्च स्ववक्षसि तन्निवासतया एकं पदं यद्वा पादोऽस्याविश्वा भूतानि एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतिभ्यां त्रैलोक्यं तल्लक्ष्मीस्तज्जीवनहेतुसुखदर्श्चैकं पदमंशो यस्य यद्वा त्रैलोक्यलक्ष्म्या एकं मुख्यं पातीति पं पतिरूपं ददातीति दं दातृ च तत्तथा लक्ष्म्यैकपदमिति पाठेतु आङ् पूर्वकम् एकपदमिति सर्वत्र व्याख्येयं यद्वा त्रैलोक्यलक्ष्म्यै शोभार्थं कपदं वपुर्दधच्चकाश तत्र कपदमिमिति चतुर्मुखोऽपि पदंशो यस्येति यद्वा कानि ब्रह्माण्डानि तदारोपिततया पद्यन्ते यस्मिन्तत् यद्वा कानां वहुमदनानां पदं वहुकामसदृशरूपं यद्वा सर्वं कानां सुखानां पदं समाश्रयं तद्विस्वात् यद्वा कः स्वर्गोऽपि पदंशो यस्य यद्वा कं जलं क्षीरनिधिः सर्गजलनिधिर्वा पदं यस्य यद्वा कानि सर्वसुखानि पद्यन्ते प्राप्यन्ते अनेनैतदाराधनेनेति तत् यद्वा कं सुखरूपञ्च तदेव पदं सर्वाधिष्ठानं तथा पद्यन्ते ऽस्मिन्निति पदं सर्वप्रपत्तिगोचरं च तथा पद्यते फलरूपतया प्राप्यते इति पदं चेति तथाभूतं तासां कपदं सर्वसुखास्पदं वपुर्दधच्चकाश ॥ १४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ गोपीनां कृत्यमाह । तस्य क्रीडोत्सुकस्य विभोर्दर्शनेन योऽल्हादस्तेन नाशिताः तद्विरहरूपहृदयरोगाः यासां ता मनोरथस्यान्तं पूर्णकामतां ययुः यथा श्रुतयः परमात्मनि समन्वयं प्राप्य कृतकृत्याः भवन्ति तद्वत् ततः सुस्थिराचित्ताः सत्यः कुचकुङ्कुमेन स्वेन्दाङ्कितैः स्वीयैरुत्तरीयैरासनं कृतवत्यः यत आत्मवन्धवे अनभिज्ञापक्षे अन्तर्यामिणे तदुत्तरपक्षयोः स्वप्रेष्ठाय तथाच तादृशोत्तरीयैस्तदासननिर्माणं सूचितमेवेति भावः एतेनाहोपूर्वमुपदेशं कर्तुं प्रवृत्तोऽस्माभिर्निवारित आसीत् कदाचित्तद्दुःखादेव तिरोहितः स्यादतोऽधुना प्रथमं व्यासासनोपर्य्युपवेश्यैतन्मुखारविन्दादुपदेशोग्राह्य इत्याशयेनैवकर्तुं प्रवृत्ता इत्यभिध्वनितं निवृत्तिपक्षे ताः श्रुतीः स्वप्रतिपादकत्वे समादाय कालिन्द्याः मायायास्तीरं शुद्धान्तःकरणं निर्विश्य विभुर्व्यरोचत विकाशं प्राप्य कुन्दमन्दरादिस्थानीयैः यमनियमादिभिः सुरभियोऽ-

सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ।
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥

गोप्य ऊचुः ॥

भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् ।
नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ! ॥ १६ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ऽनिलः निरुद्धः प्राणवायुस्तेन निरुद्धषट्पदं षड्वर्गो यत्र पुनश्च शरत्कालस्थानीयेन निष्कामभगवदाराधनलक्षणेन कर्मणोदितो यो विवेकाख्यश्चन्द्रस्तस्य विचारलक्षणानामंशूनां सन्दोहेन समूहेन ध्वस्तरागद्वेषादिदोपलक्षणमासमन्तात्तमो यस्मिन् अत एव शिवं कल्याणरूपं पुनश्च कृष्णाया अविद्यायाः हस्तलक्षणैस्तरङ्गैरात्मानमात्मज्ञानभेदैराऽऽचिता असंस्पृष्टाकोमला वालुकास्थानीयाः वृत्तयोयस्मिन् तस्यप्रत्यगभिन्नस्य परमात्मनो दर्शनेन योऽल्हादस्तेन विधूतास्तद्वादिकल्पिताः विपरीताभिप्रायरूपाः हृदयरोगा यासां ताः श्रुतयः मनोरथस्याखण्डैकरसपरमात्मप्रतिपादनाभिलापस्यान्तं समाप्तिं ययुः कुचकुंकुमेन कर्मोपासनाद्यनुष्ठानसहितपरमात्मानुरागेणाङ्कितैः स्वीयैरुत्तरीयैः स्वजन्यप्रत्ययैः आत्मावन्धवे औपनिषदाय परब्रह्मणे आसनमभिव्यक्तिस्थानं कृतवत्यः ॥ १३ ॥

स भगवानपि ईश्वरः स्वतन्त्रोऽपि तत्र ताभिरुत्तरीयैर्निर्मित आसने उपविष्टः किंच योगीश्वरैर्ब्रह्मादिभिरन्तर्हृदि एकाग्रे मनसि कल्पिमासनं यस्य तथाभूतोऽपि यद्यप्येवं तथापि गोपीपरिषद्गनः तत्सभापतिः ताभिस्ताम्बूलनर्मस्मितादिनाअर्चितः सन् अधिकं शुशुभे यतस्त्रैलोक्यस्य चतुर्दशभुवनस्य या सौन्दर्य्यलक्ष्मीः तस्याएव मुख्यं पदमाश्रयं वपुर्नरविग्रहं दधत् प्रकटयन् सन् यद्वा गोपीपरिषद्गतत्वादिरूपेण योगीश्वरान्तर्हृदि कल्पितासनः अत्रोत्तरीयैरासनस्य निर्माणेऽपि तदन्तस्तादृशवस्त्रान्तरस्य सत्त्वात्तत्क्षण एव भगवत्कृपया दिव्योत्तरीयोद्भवसंभवाच्च न तासां रसाभासकरा नग्नताशङ्का निवृत्तिपक्षे तत्र ये गीश्वरान्तर्हृदि कल्पितासनो भगवानीश्वरः सः परमात्मा गोपीनां गोपस्य स्वसत्तास्फूर्तिप्रदानेन सर्वपालकस्य देवस्यावबोधनपराणां श्रुतीनां समाप्तिस्तत्प्रतिपाद्यतया अर्चितः निखिलप्रपञ्चशोभाया एवमाधिष्ठानभूतं वपुर्दधत् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योगेश्वराणामन्तर्हृदि हृदयमध्ये कल्पितमासनं यस्यैवं भूतः सः श्रीकृष्णः त्रैलोक्ये या लक्ष्मीः शोभा तस्याः एकमेव पदमाश्रयं वपुर्दधद्बिभ्राणः तत्रासने उपविष्टः गोपीपरिषद्गतः गोपीसभागतः ताभिरर्चितः सन् चकाश शुशुभे ॥ १३ ॥ १४ ॥

---

भाषा टीका ।

वे सब गोपी भगवान् के दर्शन करते मात्र सब हृदय की व्यथा के नष्ट होते अपने मनोरथ के अंत को प्राप्त होगईं जैसे सबश्रुति परमात्मा को वर्णनकर पूर्ण होजाती हैं फिर अपने स्तनों के कुंकुमते चिन्हित जो ओढनी तिन ते आत्म बंधु के अर्थ आसन कल्पना करत भईं ॥ १३ ॥

तिस आसन पर बैठने से वे ईश्वर श्री भगवान् अति शोभा को प्राप्त भये जिन्हके कि ध्यान करने के लिये बड़े योगीश्वरों ने हृदय कमल मे आसन कल्पना किया है तदनन्तर तीनो लोक की शोभा की खान एक शरीर को धारण किये भगवान् गोपियों की सभा मे प्राप्त भये और उन गोपियों से पूजित भये तब बड़ी शोभा भई ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवोपलक्षिताः संस्पर्शनेन सम्मर्द्दनेन ॥ १५ ॥

तत्र भगवतोऽकृतज्ञतां तद्वचनैनैवोपपादयितुकामा गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति । भजत इति । भजतः प्राणिनः अनु अनन्तरम् केचिच्चद्भजनानुसारेण भजन्ति केचिदेतद्विपर्ययं यथा भवति तथा तद्भजनानपेक्षमभजतोऽपि भजन्ति अन्येतु नोभयानिति ॥ १६ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

सभाजयित्वेत्यनुवादः प्रश्नार्थं सभाजनस्य सम्यक् निवक्षया । किंवा पुनर्विशेषेण सम्मान्येत्यर्थः । यतः अनङ्गमङ्गरहितमपि कामं दीपयति साङ्गीकृत्य पूर्वतोऽपि प्रकाशयति तथा तमत्यन्तकन्दर्पविवर्धनमित्यर्थः । अतएव तासामङ्के कृतयोः ताभिस्तेनैव वा न्यस्तयोस्तस्याङ्घ्रिहस्तयोः अङ्घ्रेर्हस्तस्य च किंवा अङ्घ्रिहस्तयोश्चेत्यर्थः । सम्यक्संस्पर्शनेन विविधपरिपाट्या शनैः शनैः सुखसंवाहनेन एवमपि पूर्ववदैश्वर्यं दर्शितं सर्वाभिरपि द्वयोरङ्कयोर्द्वयनुर्णा वा तेषां युगपत् संस्पर्शनात् सम्यक्स्तुत्वा प्रश्नविशेषार्थं तदुत्तरप्रश्नार्थं च ईषत्कुपिता इति प्रेमभरस्वभावेन कोपस्याल्पत्वात् किंवा आन्तरत्वेन बहिरव्यक्तत्वात् यद्वा ईषत् संक्षेपेण बभाषिरे परमवाग्मित्वात् ततश्च कुपिता इति पूर्वदुःखप्राप्तेः किंवा नेम कपटातिरेकेण वञ्चनात् यद्वा कोपं विनाभिप्रायाज्ञानेन हृद्यप्रत्युत्तरालभ्यत्वादिति अन्यथैर्व्याख्यातं यद्वा तादृशसुधा कृत्याऽनङ्ग-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

दीपनं किंवा तथैव सभाजयित्वा ताभिस्तस्य तथा सभाजनमेव युक्तमित्याशयेनाह । अनङ्गेति । अयं कोपे भाषणेऽपि हेतुर्द्रष्टव्यः ॥ १५ ॥

उभयान् भजतेऽभजतश्च इतिप्रश्नत्रयं तच्चाकृतज्ञत्वादिपरिहारेण पुनः परित्यागाकरणदार्ढ्यार्थं साधु यथा स्यात्तथा एतद् ब्रूहि ते ते के किंवा तेषां फलं तत्सर्वं विविच्यास्मान्प्रति सुबोधं कथयेत्यर्थः । भो इति संबोधनेनावधापयन्ति । तत्र निजदोषपर्यवसाने तस्य मनोऽनभिनिवेशात् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र च प्रणयस्वभावेन तासां निगूढां कोपोत्पत्तिमाह । सभाजयित्वा पूर्वोक्तप्रकारेण सम्मान्य तं बभाषिरे पृष्टवत्यः । ता इति शेषः कीदृश्यः सत्यस्तत्राह । ईषत् कुपिताः । ननु तादृक् सभाजितवत्यश्चेत्तर्हि कथमीषत्कोपस्याप्यवसरमर्हन्ति तत्राह । अनङ्गदीपनमिति । तद्दीपनकृते नानाविलासमभिव्यञ्जयन्तमित्यर्थः । पूर्वं परित्यज्य गतः सम्प्रत्यसावेवं चेष्टत इति प्रणयस्वभावविमर्शनेनेति भावः । ननु कुचकुङ्कुमाक्तवस्त्रोपवेशतया स्वासामेव तदनङ्गदीपनत्वे प्रागेव जाते सति तस्य तद्दीपनत्वं पृष्ट्वा सन्तमपि कोपं व्यक्तीकर्तुं कथमर्हन्ति तत्राह । अङ्ककृताङ्घ्रिहस्तयोः संस्पर्शनेन संस्तुत्य इति । तादृशतया तत्तत्स्पर्शपूर्वकं नानागुणप्रशंसया सन्तोष्येत्यर्थः । तेन कोपस्तु गोपितवत्य एवेति भावः । तर्हि कोप आसीदिति कथं ज्ञायेत तत्राह । सहासेति । उपलक्षणे तृतीया स्वगिरैवायं व्यक्तदोषः स्यादिति मतिकौटिल्यव्यञ्जकेन तादृशभ्रूविलासेन व्यक्ततत्कौटिल्या इत्यर्थः । व्यक्तीभविष्यति च तत् कौटिल्यं प्रश्नपरिपाट्या इति भावः । तदेयमवहित्था नाम सञ्चारी व्यक्तः । तदुक्तं "अनुभाव पिधानार्थोऽवहित्थं भाव उच्यते" इति । अवहित्थेति स्त्रीलिङ्गता च । तथा "हेतुः कश्चिच्चेत्कश्चिद्गोप्यः कश्चन गोपनः । इति भाव त्रयस्यात्र विनियोगः समीक्ष्यते" इति च । यथा हेतुरत्र सति कौटिल्यमेव गोप्योऽसूयामयोऽमर्षः । गोपयन्त्यनेनेति गोपनः सचात्र तादृशतया तत्तत्स्पर्शसंस्तवाभ्यां प्रत्यायितं हर्षकौटिल्यं सहासादित्वञ्च मतिकौटिल्यम् अयमपि तदेव प्रत्याययति एवमत्रापि योगमायावैभवमेव दर्शितम् । सर्वाभियुगपत्तथा व्यवहारात् । अङ्घ्रिहस्तयोरिति द्वित्वं प्रत्येकं जात्यपेक्षया ॥ १५ ॥

अथ सेयं परिपाटी स्वत्यागपरिहारार्थमेव ताभिः कृतेति बोधयन्नाह । गोप्य ऊचुरिति । तत्र चैतदिति उभयान् भजतश्चाभजतश्च न भजन्तीत्यन्तं प्रश्नत्रयम् । साधु यथा स्यात्तथा ब्रूहीत्यर्थः । ते ते के किम्वा तेषां फलं तत् सर्वं विविच्य कथयेत्यर्थः । भो इति सम्बोधनेनावधापयन्ति । स्वस्मिन् दोषपर्यवसानशङ्कया तस्य मनोऽनभिनिवेशानुकरणात् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतद्विपर्ययं कुर्वन्ति अभजतोऽपि भजन्तीत्यर्थः । उभयान् भजतश्चाभजतश्च । एतन्नो ब्रूहि एतेषां तारतम्यं ब्रूहीत्यभिप्रायः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनङ्गं कामं दीपयत्युद्दीपयतीति तथा तं भगवन्तं सहासलीलेक्षणेन विभ्रमो यस्यां तया भ्रुवा सभाजयित्वानुरञ्जयित्वा समोमलोप आर्षः यद्वा आत्मभिः सहक्रीडयित्वा उक्तान्धया भ्रुवोपलक्षिताः । गोप्यः अङ्केष्वात्मनामूरुषु यौ कृतौ निहितौ भगवतश्चरणौ तयोर्यावात्मनां हस्तौ तयोः संस्पर्शनेन करणस्य शेषत्वाविवक्षया षष्ठी ताभ्यां मर्दनेन तत्पूर्वकं संस्तभ्य दृढमङ्गी गृहीत्वेत्यर्थः ईषत्कुपिताः सत्यो बभाषिरे ॥ १५ ॥

भाषणमेवाह । भजतइति । केचिद्भजतोऽनुवर्त्तमानान् भजन्त्यनुवर्त्तन्ते एकेत्वेतद्विपर्ययं कुर्वन्ति अभजतो भजन्तीत्यर्थः । अन्येतूभयान् भजतश्चाभजतश्च न भजन्तीत्यर्थः । भोःकृष्ण ! एतन्नोऽस्मभ्यं ब्रूहि कथय उक्तविधान् प्रश्नान् तत्र प्रवर्त्तकं साधु साध्यं गुणदोषतारतम्यं च ब्रूहीत्यर्थः तृतीयकोट्यन्तर्भूतस्त्वमिति भावः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनङ्गं कामं दीपयतीत्यनङ्गदीपनः तं लीलया लालित्येन ईक्षणं हाससहितं सहासं सहासलीलेक्षणेन निभ्रमन्त्यो ऽसूयादर्शं सञ्चलन्त्यः भ्रुवो यासां तास्तथा संस्पर्शनेनोत्पन्ना उत्का उत्कण्ठा सैवाऽङ्कं लक्षणं तेन कृतः पूर्णः अङ्के शरीरे हृच्छयः कामः संस्पर्शनोत्काङ्ककृताङ्गहृच्छयः । तं संस्तभ्य करचरणाद्यङ्गस्पर्शनेनाभिव्यक्तं कामं निरुध्येत्यर्थः ॥ १५ ॥

गोप्यः शास्त्रतत्त्वमजानन्त्यो हरेरकृतज्ञताकरणाभिप्रायेण पृच्छन्ति । भजत इति । एके केचिद्भजतः सेवमानाननुभजन्ति सेवानुकूलफलसमर्पणेन सेवन्ते एके केचित् एतस्योक्तस्य विपर्ययं कुर्वन्ति फलोद्देशेनासेवमानानिष्टफलदानेनानुवर्त्तन्ते अन्ये नोभयांश्चानुवर्तन्ते यद्येतत्पक्षत्रयम् अत्र साधु निर्दोषपक्षमस्माकं ब्रूहि विविच्य कथयेत्यर्थः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र भगवतः काठिन्यमापादयितुकामाः पृच्छन्ति । भजत इति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तथा तस्मिन्नासन उपविष्टं श्रीकृष्णं करपदादिलालनपूर्वं ताः किंचित्पप्रच्छुरित्याह । सभाजयित्वेत्यादि । तं श्रीकृष्णम् अङ्के कृतकरणं यस्य तथाभूतेनाङ्घ्रिहस्तयोः संस्पर्शनेन सभाजयित्वा संस्तुत्य च पुनस्त्यागभिया संस्तवनं वस्तुतस्तु अन्तःकुपिताः

श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

ईषद्भ्रमापिरे ईषदल्पाक्षरं यद्वा कीदृशं सहासलीलेक्षणविभ्रमभ्रुवा अनङ्गदीपनं न अङ्गोऽनङ्गः अङ्गीतियावत् तत्प्रेम तस्य दीपनम् ॥ १५ ॥

तत्किमित्याह। भजत इत्यादि। अल्पाक्षरेण त्रयः प्राश्नाः हे भगवन् साधु भद्र ते एतन्नो ब्रूहि व्यक्तं यथा भवति तथा वद केचित् भजतोऽनुभजन्ति केचिद्विपर्ययं कुर्वन्तीति शेषः अभजतश्च भजन्तीतियावत् अन्ये उभयान् भजतोऽभजतश्च न भजन्तीति भजन्तीरस्मान् त्वं तु न भजसि अभजन्तमपि त्वां वयं भजाम इति अभिप्रेत्य प्रश्ने साम्येऽप्यहित्थं मिश्रीकृत्यप्रश्नः ॥ १६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं प्रसन्नं भगवन्तं दृष्ट्वा स्वान्तःकरणदोषदूरीकरणार्थं स्वकृतघ्नतां पूर्वं भगवति कल्पितवत्य इति तन्निराकरणार्थं लोकदृष्ट्या भगवति कृतघ्नतालक्षणो दोषोऽस्ति नवेति निर्णयार्थं किञ्चित् प्रष्टुमुद्यता इत्याह। सभाजयित्वेति। प्रश्नार्थं प्रथमतः सभाजनं स्तोत्रं कृत्वा ननु किमनेन विचारेण साम्प्रतं जातं फलं भुज्यतामितिचेत्तत्राह। अनङ्गदीपनमिति। अनङ्गं दीपयति निरन्तरमेवाङ्गाभावं सम्पादयतीति च ध्वनिः अतो नैकेन भोगेन कार्यनिष्पत्तिः पुनस्तेनापि भोगेनाग्रे अधिक एव खेदः स्यात् सचेत् स्वदोषेण तदा दोषो दूरीकर्त्तव्यः भगवद्धर्मेणचेत् वाक्निर्वन्धं कारयित्वा प्रार्थयित्वा वा कालानुभवः कर्त्तव्य इति भावः। अनङ्गदीपने साधनमाह। सहासेति। साधनाभावार्थं वा प्रार्थनीय इति साधनकीर्त्तनं हासपूर्वकं यल्लीलेक्षणं तेन विभ्रमन्ती या भ्रूः तया अनङ्गं दीपयति पश्चात्र साधनानि हासो लीला ईक्षणं विलासा भ्रूश्चेति पञ्चचेद्भवन्ति तदा कार्यमप्रतिहतं भवति मायाव्यामोहिका स्वरूपविस्मारणार्थं लीलास्वासक्तिं साधयति ईक्षणं तत्र ज्ञानजनकम् अन्यथा ज्ञानान्तरेण तन्निराकरणं स्यात् विलासाः पोषकाः भ्रूर्यम नियन्ता काल इति यावत् प्रसाददाता वा तथैव ततः प्रश्नार्थम् उपढौकनं कुर्वन्ति संस्पर्शनेनेति अङ्के कृतः स्थापितो यो भगवदङ्घ्रिः तत्संबन्धिनौ यौ हस्तौ तयो सम्यक्स्पर्शनेन संलालयन्त्य इत्यर्थः। संस्पर्शनेन सहिताः तत आभिमुख्यार्थं संस्तुत्य ॥ १५ ॥

एवं सर्वभावेन प्रपन्नानपि त्यजतीति भगवति दोषदृष्ट्या ईषत्कुपिताः साधनैर्निवर्तितेऽपि दोषो न सम्यक् निवर्त्तते यावद्भगवान् न निवर्त्तयतीति अतो विवादमिव कुर्वत्यो वभाषिरे तासां प्रश्नमाह। भजत इति। त्रयः पक्षाः सान्दिग्धाः फलतः स्वरूपतश्च भजनाभजनाभ्यां तत्रैके ये यथा भजन्ति ते तथा तानपि भजन्ति एके पुनरभजतोऽपि भजन्ति अन्येतु उभयानपि न भजन्ति तेषां त्रयाणम् उभयोरपि प्रतियोगिनोः फलं वक्तव्यं ये भजनानुसारेण भजन्ति ते किं कृतघ्नाः आहोस्वित् धूर्त्ताः आद्ये स्वित् समीचीना इति केनचित्पादप्रक्षालनं कृतं सोऽपि चेत्करोति तदर्थं किं स्यात् फलार्थकरणे फलं देयं तेनापि तदेव कर्त्तव्यं निरपेक्षकरणेतु सन्देह एव अभजतो भजने क्वचिद्दोषः स्यात् यथा निष्कामे कामिनी क्वचिदुपकारः अपेक्षितश्चेदर्थः क्वचित्स्नेहः क्वचिद्धर्म इति एकं फलं निर्धारितं वक्तव्यं यो वा न भजति पूर्वः तस्य वा किं फलमिति ये वा नोभयविधान् भजन्ति तेषामुभयविधानां वा किं फलमिति कृतस्य साधनस्य कुत्रावा उपयोगः एतत्सर्वं ब्रूहि साधु यथा भवति तथा भो इति संबोधनं सावधानार्थं भजतः पुरुषाननु तदनुसारेण भजन्ति एके पुनर्भजनव्यतिरेकेणैव भजन्ति इत्युभये न भजनकर्त्तारः अन्येतु भजनरहिता एव ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च रिरंसवे तस्मै स्तमद्वित्सूनां तासां चेष्टितमाह सभाजयित्वेति। सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवा अनङ्गदीपनं स्वीयं कामं द्योतयन्तं तासां वा कामोद्दीपकं तं सभाजयित्वा तदुचितैरेव भावैः सम्मान्य पूर्वं नः सन्त्यज्य गतः सम्प्रत्येवं चेष्टत इति प्रणयकोपगोपनार्थम् अङ्कृतयोस्तैनैव तासामङ्के न्यस्तयोस्ताभिरेव वा स्वाङ्के धृतयोः अङ्घ्रिहस्तयोः संस्पर्शनेन संस्तुत्य अहो ते करचरणानां शैत्यमपूर्वं यत्संस्पर्शनेनैवास्मत्सन्तापो निर्वापणस्तस्मात् त्वं सत्यं सन्तापदुःखानभिज्ञः सदा सुखी विधुरेवासीति व्याजस्तुत्या स्तुत्वा ईषत्कुपितास्तद्दर्शनानन्दस्वभावत एव विनष्टीभूतकोपस्य शेषभागवत्य इत्यर्थः ॥ १५ ॥

अत्र ताभिः प्रतिस्वं मनस्येवं विचारितम्। अथ यदयं प्रेमिमुकुटमणिरप्यस्मानेवं दुरवस्थामलम्भयत्तत्रायमेवं प्रष्टव्यः भोः कृष्ण! तवास्मासु प्रतिरौदादीन्यं द्रोहोवेति त्रयः पक्षाः संभाव्यमाना अपि विचारतो न घटन्ते। तत्र प्रीतिः सोपाधिर्निरुपाधिर्वा। नाद्या। सोपाधिप्रीतिमान् किल स्वकामसम्पादकजनाननुरञ्जयत्येव नतु विरञ्जयति। त्वंत्वस्मान् स्वविरहाग्निवधार्थीरेव वधार्थम्। नापि परा। निशि घोरवनमध्य एवास्मत्त्यागादस्मत्कष्टद्रष्टुरपि तव क्षमानुत्पत्तेश्च। नाप्यौदासीन्यमस्मत्सुखदुःखसाधकत्वदर्शनात् नापि द्रोहः। स किं शाश्वतिकः प्रातिकूल्यनिबन्धनो वा। नाद्यः तथा दर्शनाभावादेव। नापि द्वितीयः। अस्मासु तत्प्रातिकूल्याभावात्। किन्त्वभ्यस्तपरिचारकजिघांसालक्षणो विलक्षणो यः कश्चन द्रोहस्तस्यैवोद्धरणीभवता भवता भूयत इत्यादिकं स्वमुखेनास्माभिः स्फुटं न वाच्यं किन्तु प्रहेलिकाभङ्ग्या तथा किञ्चन प्रष्टव्यं यथायमेव यथार्थतया तत्प्रत्युत्तरं ददान एतद्वादिकमर्थं व्याचक्षीतेति सहृदयन्याचुल्यमनोगतमिमर्शास्ता भो महाभाग ! कृष्ण एकामस्माकमर्थप्रहेलिकां व्याचक्ष्वेत्याहुः। भजतो जनान् अनु लक्ष्यीकृत्यैव भजन्ति एके जनाः सापेक्षं भजन्तीत्यर्थः। अत्र सापेक्ष्यवस्त्वलाभे सति नापि भजन्तीति सोपाधिप्रीतिरायाता। एतद्विपर्ययं यथा स्यात्तथा भजन्ति एकेऽभजतोऽपि भजन्ति।निरपेक्षं भजन्तीत्यर्थः। अत्र स्वापेक्ष्यफलान्तरानुद्देशात भजनत्यागतो वा इति निरुपाधिप्रीतिरायाता अन्ये नोभयान् भजन्तीति सापेक्षमपि निरपेक्षमपि नैव भजन्तीत्यौदासीन्यमायातम्। द्वेषो द्रोहश्चाप्यभजनं भवेद्विति तावप्यायाताविंत्यत एतद्विवरणे एवमेव किञ्चित्किञ्चिदधिकमपि व्यक्तीकरिष्यते भगवता। एतन्नो ब्रूहीत्येते खलु कं एतद्भजनमभजनं वा किं तद्ब्रूहीत्यर्थः। एते च एतच्च एतद्विति नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्येकशेषैकत्वे। साधु यथार्थमेव ब्रूहि वैयधिकरण्यं मुञ्चन्नित्यर्थः ॥ १६ ॥

केनचित्कृता विशुद्धरसदीपिका ।

ततश्च प्रणयस्वभावेन निगूढां कोपोत्पत्तिमपि सामान्येनाह । सभाजयित्वेति । संम्मान्य कया सहासेति हासेन मन्दस्मितेन सहितं यल्लीलेक्षणं तेन विभ्रमन्ती या भ्रूस्तया अत्र हास्यस्य पुष्पत्वं लीलेक्षणस्याञ्जलिबन्धत्वं विभ्रमद्भ्रुवः परिभ्रामणत्वञ्चाभिप्रेतं ततश्च पुष्पाञ्जलिदानं कृतमिति सूचितं तेन च भावेन रसाच्छादनाद्गूढकोपः ननु कोऽयं विलक्षणः सभाजनविधिस्तत्राह अनङ्गदीपनं तद्दीपनकृते नानाविलासानभिव्यञ्जयन्तामित्यर्थः अन्नायमेवोचित इति भावः । पक्षान्तरे प्रेमदीपनमिति पूर्ववत् सर्वमिदमन्तः कोपे बीजं पूर्वं संत्यज्य गतः संप्रत्येवं चेष्टतइति प्रणयस्वभावजविमर्शेनेतिभावः । ननु सहासेत्यादिकं स्वेषामेवानङ्गदीपनत्वगमकं तथा सति कथंकोपव्यक्तिरितिचेत्तत्राह । अङ्केति. सर्वथा कुपिता एव न जानातीति तादृशतया तत्स्पर्शपूर्वकं नानागुणप्रशंसया संतोष्येति तेन कोपगोपनं नहिं कोप इतिकथंज्ञातं तत्र सहासेति पूर्वोक्त एव हेतुः यद्वा उपलक्षणे तृतीया स्वयैव गिरा व्यक्तदोषः स्यादिति कौटिल्यव्यञ्जकेन भ्रूविलासेन व्यक्ततत्कौटिल्या इत्यर्थ. बभाषिरे परिपृच्छन्त्यः प्रश्नपरिपाट्यैव व्यक्ती भविष्यतीति मानसो भाव इतिभावः । अवहित्थेयम् अनुभावपिधानार्थोऽवहित्थं भाव उच्यते इतिभरतोक्तेः । तथा "हेतुः कश्चिद्भवेत्कश्चिद्गोप्यः कश्चनगोपनः । इति भावत्रयस्यात्र विनियोगः समीक्ष्यते" अत्र प्रणयकोपे हेतुः मतिकौटिल्यमेव गोप्योऽसूयामयोऽमर्षः स्पर्शसंस्तवाभ्यां प्रत्ययितं हर्षकैतवं गोपनः एवमत्राङ्घ्रिहस्तयोरिति द्वित्वं प्रत्येकस्पर्शापेक्षया ततश्च सर्वासां तथा व्यवहारे योगमायैव हेतुः एवञ्च यथा स्वमादरस्यापरिचयेऽपि सेवेत्यवसेयमिति दिक् ॥ १५ ॥

अथ सेयं परिपाटीतदभिप्रायपरिज्ञानार्थमेव कृता नत्वसूययेति बोधयन्नाह । गोप्य इति । एतत्प्रश्नस्या साधुत्वं न हि शङ्कनीयमिति भावः । तथा तादृशसभाजनव्यापारेण विक्षिप्तचेतसं भोइति संबोधनेनावधापयन्ति स्वस्मिन्दोषशङ्कायामास्मा गता भूया इतिभावः एवं च तासां प्रेमप्रभावेण कुण्ठितमस्यैश्वर्य्यमिति सूचितम ॥ १६ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

अर्चित इत्यत्र सूचितपूजनमेवानुवदन्प्रश्नमेवावतारयति सभाजयित्वेति । यद्वा प्रश्नार्थं तदङ्गत्वेन पुनः सभाजनं स्तवनं च सभाजने एव साधनान्याह । सहासेत्यादिहासैर्लीलाभिरीक्षणैर्विभ्रमैश्चतुर्भिः सहवर्तमानया भ्रुवा इत्यत्र पञ्चान्तरङ्गसाधनानि तत्र हासस्त्रिविधः सलज्जमन्दमृदुस्मितरूपः प्रेमोत्कर्षेण प्रकाशस्तत्पूर्वचेष्टानौचित्य सूचनेनोपासनरूपश्च लीला विविधोद्दीपकचेष्टाविशेषाः ईक्षणं त्रिविधमपाङ्गदृष्ट्या निमिषरहितदत्तदृष्ट्या च विभ्रमा मनोहरस्थैर्यादयश्च कितवतापादकास्तैर्भ्रुवाभङ्गेन च एतेषां प्रेष्ठसभाजने प्रेममार्गीयत्वेनान्तरङ्गतालौकिकसेवारीत्यनुगतत्वाद्बहिरङ्गमिथितान्याह । संस्पर्शनेनेति अङ्ककृताङ्घ्रिहस्तयोः संस्पर्शनेन तत्र हस्ताभ्यामंघ्रिसंवाहनरीतिप्राप्तं बहिरंगम् अंघ्योरंकेकृत्या संवाहनोक्त्या प्रेमामिश्रता संस्तुत्येति तत्रोचितनर्मरीत्यैव सम्यक्प्रशंस्य ईर्षत्कुपिता इत्यनेनानुरागानुभावोत्कर्षाभ्याम् पराभूततया ईर्षद्यावशिष्टं यत्पूर्वविरहजं कुपितं तदपि पुनर्विश्लेषो माभूदित्यभिप्रायेणैव तेनान्विता तं बभाषिरे पप्रच्छुः फलप्राप्तङ्गं एवोचितो न प्रश्नादिकमित्यपेक्षायां तं विशेषयति अनंगदीपनमिति । पुनः पुनः स्वांगेऽनङ्गं दीपयतीति तथा तं तत्रानङ्गदीपने बाह्य साधनानि सहासलीलेत्यादिव्याख्यानं पूर्ववत्तैरनङ्गदीपनम् अङ्ककृताङ्घ्रिहस्तयोः संस्पर्शनेन सभाजयित्वेत्यन्वयः यद्वा तासामङ्के कृतयोरङ्घ्र्योः संस्पर्शनेन मुखस्तननीव्यादिषु हस्तयोः संस्पर्शनेन चानङ्गदीपनं स्वविरहेचानङ्गेन दीपयतीति दाहं करोतीति तथा तथा स्वदर्शने आनन्दसंप्लुवतया प्रेमवैक्लव्यतयाचानुसंधानराहित्येनानङ्गमङ्गाभावं दीपयति प्रकाशयति अन्तर्धानेन मूर्च्छादिनाङ्गाभावं प्रकाशयतीति तथा तम् एवं सति प्रश्नेनानिर्णये पुनरन्तर्द्धाने मरणमेव संभाव्य पप्रच्छुरिति भावः ॥ १५ ॥

तासां प्रश्नमेवाह । श्रीगोप्यइति । भजतः सेवतो जनानेके भजन्ति तत्समानसेवां कुर्वन्ति ते के किंविधं वा तेषां तत्फलं एके तु एतद्विपर्ययमिति तद्विपरीतम् अभजतोऽपि भजन्ति न तत्सेवामिच्छन्ति ते के कीदृशं वा तत्फलम् अन्ये तु भजतोऽभजतश्चोभयानपि न भजन्ति ते के कीदृक्तत्फलयोग्याश्चतन्नो ब्रूहि अत्र पक्षत्रयेऽपि स्वरूपफलभेदेन प्रश्नद्वयस्योत्तरं वाच्यं तथाचास्मान भजतोऽपि तव भजनेऽस्माकंयोग्यं नाभजतोऽप्यस्मानभजतस्तवच योग्यता स्फुटा स्यादिति भावः तत्र स्वस्मिन्दोष सम्भावनया अश्रूप्रवानमिवालक्ष्य भोइति सम्बोधनेनावधानतामापादयन्ति प्रश्नं विना पूर्वं भवतावहुप्रजल्पितम् अधुनासनदानसभाजनपूर्वकप्रश्नेऽप्यकथने प्रमादमेवनिश्चितं स्यात् तत्रापि तत्समाधानाय कैतवेन किंचिद्वक्तुं विचारयन्तं प्रत्याहुः । साध्विति । साधु यथास्यात्तथाब्रूहि नहि कापट्येन व्यासासनर्निविष्टेन वाच्यमिति भावः ॥ १६ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं यथोक्तासने पर्य्युपविष्टं भगवन्तं किञ्चित्पप्रच्छुरित्याह । सभाजयित्वेति । तं सम्मान्य ईषत्कुपितास्ताः बभाषिरे यतः कामं नानाविलासैर्दीपयतीति अनङ्गदीपनं केन सम्मान्येत्यपेक्षायामाह सहासलीलापूर्वकं यदीक्षणं तेनविभ्रमो विलासो यस्यां तया भ्रुवा पुनश्चाङ्कीकृतयोः स्वस्वाङ्के गृहीतयोरङ्घ्रिहस्तयोः संस्पर्शनेन ततश्च संस्तुत्य भवानस्माकं मतिः परमानन्दप्रद इत्येवमादिवचनैः स्तुत्वा स्वकोपं गोपयित्वा बभाषिरे मानिनीपक्षे सहासलीलेक्षणविभ्रमभ्रुवा अनङ्गस्य दीपनं यस्य तं तेनैव स्वाङ्के कृतयोः अङ्घ्रिहस्तयोः संस्पर्शनेन संस्तुत्य अहो तव करचरणकमलयोरपूर्वशैत्यं यत्संस्पर्शादस्मत्तापोऽपि निवर्तते तस्मात्त्वमन्यदीयतापाऽनभिज्ञश्चन्द्रवत्सर्वदा सुख्येवासीति व्याजेन स्तुत्वा तद्दर्शनादिना कोपस्य कुण्ठितत्वादीषत्कुपिताः बभाषिरे निवृत्तिपक्षे अनङ्गस्य सवासनस्य सकारणस्य कामादेर्दीपनं तेषामेवानुकूल्यार्थमहमज्ञानजन्तमः । सहासलीलापूर्वकेणेक्षणेनासंख्यातजगदुत्पादकेन तत्सहितेन विभ्रमवत्या भ्रुवा तत्प्रलयहेतुभूतया उपलक्षितम् अङ्घ्रिहस्तयोरित्युपलक्षणं स्वस्मिन्प्रतिपाद्यानामसंख्यातावयवानां संस्पर्शनेन ईषत् सहस्रशीर्षा इत्यादिना प्रतिपादनेन संस्तुत्य अहो अस्माकमप्यगम्य इत्येवमीषत्कुपिताः बभाषिरे तथाचैवंविधानां श्रुतीनामकथगम्यः परमात्मेत्यधिकारिचेतास शङ्कासमुत्थिनेति भावः ॥१५॥

अहोविज्ञातमस्माभिर्भवत उपदेशकरणे महत्युत्कण्ठा वर्तते ऽतः

श्रीभगवानुवाच ॥

मिथो भजन्ति ये सख्यः! स्वार्थैकान्तोद्यमा हि ते।
न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७॥
भजन्त्यभजतो ये वै करुणाः पितरौ यथा।
धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः! ॥ १८ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

संप्रत्यस्मत्प्रश्नानुसारेण यथेष्टमुपदिश्य तेन च प्रसन्नो भवेति द्योतयन्त्यस्तस्याकृतज्ञतां तन्मुखेनैवोद्घाटयितुकामाः गूढाभिप्रायाः लोकवृत्तान्तमिव पृच्छन्ति। भजत इति। भजतः प्राणिनः अनु पश्चात्केचिद्भजनानुसारेण भजन्ति एके त्वेतद्विपर्ययं यथा भवति तथा अभजतोऽपि तद्भजनानपेक्षाः भजन्ति एके तु उभयान्भजतोऽभजतश्च न भजन्ति एतत्पक्षत्रयमपि सोदाहरणं साधु सम्यक् नो ब्रूहि सावधानतयैतदुत्तरं वक्तव्यमिति द्योतयितुं भो इति सम्बोधनम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनङ्गं दीपयतीत्यनङ्गदीपनं श्रीकृष्णं सभाजयित्वा संस्तुत्य च सहासलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवा उपलक्षिता अङ्के कृतयोर्गोप्यङ्कनिहितयोः श्रीकृष्णाङ्घ्योः नियोजितौ यौ हस्तौ गोपीहस्तौ ताभ्यां श्रीकृष्णाङ्घ्रिसंमर्दनेन स्वाङ्कगतश्रीकृष्णाङ्घ्री स्वहस्ताभ्यां दृढं संपीडयेत्यर्थः ईषत्कुपिता अतिस्नेहगर्भेण किंचित् कोपाभासेन युक्ताः याः काश्चिद्भगवन्तं केवलं कान्तमात्रं जानन्ति ता एव बभाषिरे ॥ १५ ॥

तदाह। भजत इति। केचित् प्राणिनः भजतः अनुवर्तमानान् भजन्ति अनुवर्तन्ते केचित्तु एतद्विपर्ययं कुर्वन्ति तद्भजनानपेक्षमभजतोऽपि भजन्तीत्यर्थः। अन्ये तूभयान्न भजन्ति भो प्रिय! एतत्पक्षत्रयं नोऽस्मभ्यं साधु यथा भवति तथा ब्रूहि कथय ॥ १६ ॥

---

### भाषा टीका।

कन्दर्पदेवके वर्धन कराने वाले उन भगवान् का अपनी हंसी लीला नेत्रों के भ्रूभंग आदियुक्त दोनों ... के द्वारा पूजन कर के भगवान् के चरणको अपने गोद में रखहस्तों सेस्पर्श करती हुई थोडी क्रोधित होकर स्तुती करके सबगोपी बोलती भई ॥ १५ ॥

गोपी बोलीं हे प्रभो कोई तो पुरुष अपने भजने वाले को भजते हैं उपकार करते हैं कोई इसके उलटा करते हैं कोई तो न अपने मानवे वाले को मानें न नहीं मानने वाले को मानते हैं इन तीनों के भेदको अच्छे प्रकार से आप हमसे कहिये ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

विदिताभिप्राय उत्तरमाह। मिथ इति। हे सख्यः! उपकारप्रत्युपकारतया ये मिथो भजन्ति ते ऽन्यं न भजन्ति किं त्वात्मानमेव कुतः हि यस्मात्स्वार्थ एवैकान्त उद्यमो येषान्ते तत्र च न सौहृदमतो न सुखं न च धर्मो दृष्टोद्देशाद्गोमहिष्यादिभजनवदित्यर्थः ॥ १७ ॥

ये त्वभजतो भजन्ति ते द्विविधाः करुणाः स्निग्धाश्च तत्र तु यथाक्रमं धर्मकामौ भवत इत्याह। भजन्त्यभजत इति ॥ १८ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

स्वार्थः निजदृष्टमात्रफलार्थ एव तस्मिन् वा एकान्तः तस्मिन्नेवैकस्मिन् अन्तो निष्ठा यस्य तथा भूत उद्यमो येषां ते इति श्रीगुरुसेवा मिथो वैष्णवैः प्रणामादिकश्च परिहृतं तत्र तत्र सद्धर्मादिसङ्गाभावात् आत्मानमेवेति लोकदृष्ट्या परोपकारसम्भावितं धर्मादिकं निरस्तं प्रत्युपकारापेक्षयैव भजनात् एवं दोषपरिहारापेक्षया प्रत्युपकारेऽपि धर्माद्यभावः तथा भजने तारतम्याभावोऽप्यूह्यः अन्यथा उपकारप्रत्युपकारयोः तुल्यत्वाभावेनानुभजनासिद्धेः एवमेवानुभजन्ति छायावत् भजनानुसारेण भजन्तीति प्रश्नस्योत्तरं सिध्येत् अतो यत्र प्रत्युपकारापेक्षापि न तत्र धर्म इति सूचितं हि निश्चये नान्यथा उक्तादन्यप्रकारेण तत्मिथोभजनं न स्यात् यद्वा तत्तत्र मिथ्यात्वं नास्तीत्यर्थः। सख्येनैव कथनात् यद्वा आत्मनोऽपि तासु तादृशभजनमिव कारुण्यभरेण मन्वानः सहजसख्येन तत्परिहरन् सम्बोधयति हे सख्य! इति अन्यैस्तैर्व्याख्यातं तत्र स्वात्मानमिति सुशब्दस्यार्थः सुखमिति तदित्यस्य च अत इति तेयं तदिति पूर्ववदेववा अत इतिचार्थबलादायात्येव यद्यपि तत्राप्यन्योऽन्यमुपकारेण दृष्टसुखं घटेत तथापि स्वोपकारजनितत्वात् प्रत्युपकारस्यावश्यापेक्ष्यत्वाच्च धर्माभावेन तात्विकत्वाभावादपि विचारेण सुखाभाव एव पर्य्यवस्येदिति नच सुखमिति व्याख्यं यद्वा उन्मत्तवन्नियतात्मेत्यादिवत् लेखनभ्रमेणैव तत् पक्ष्यमाणानुसारेणात्र तदनपेक्ष्यत्वात् स्वार्थार्थमिति पाठोऽपि क्वाचित्कसुखादीनां बहूनां सम्मतः अन्यत्स्पष्टम् अथवा स्वार्थमेव एकान्तत उद्यमो येषां जनानां ते हि ते मिथो भजनकराः यथा राजसेवकाः बिलसदर्थतनिकादयः हि प्रसिद्धौ अत एव प्रायो लोकानां सर्वेषामेव दृष्टार्थपरत्वात् ते विशिष्य स्पष्टं न निर्दिष्टाः अन्यत् समानम् ॥ १७ ॥

अभजन्तः दैन्यादिना बाल्यादिना वै प्रसिद्धौ यथेति दृष्टान्तेन निरुपाधिसहजकारुण्यमभिप्रेतं ते हि श्रीभागवता एव तच्च सुतरां मत्कृतात्मनामित्यत्र तैर्व्याख्यातमेव तथापि करुणाः पितरौ चेति द्विविधा अवगम्यन्त एव यद्वा यथेति उभयेषामप्युदाहरणमात्रत्वेनोक्तं पितरौचेति चकारोऽध्याहार्यः निरपवादः सम्पूर्ण

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

इत्यर्थः । तैः प्रत्युपकाराद्यनपेक्षया केवलमत्यन्तकृपालुत्वेनैवोपकारात् सौहृदञ्च निरपवादं तयोः सहजस्निग्धत्वात् केवलसौहृदोक्तिः पुत्रपालने पित्रोर्द्धर्मानुत्पत्तेः यद्वा कथञ्चित्तेनापि तयोर्धर्मे दृष्टव्यः ततश्च तेषां तयोश्च स तथेति हे सुमध्यमाः ! हे सुन्दर्य इति तदेव सौन्दर्यमिति यद्वा तत्युष्मासु भात्येवेति भावः इदञ्च तासामात्मभजनार्थं चातुर्यम् ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वार्थोऽत्र स्वीयं दृष्टमदृष्टञ्च भजन्ति ये यथा देवान् देवा अपि तथैव तानिति न्यायेन यज्ञादिसन्तोषिताभिर्देवताभिरपि गोमहिष्यादिभिर्दुग्धादिकमिव स्वर्गादिकं दीयत इति तस्मिन्नेकान्तस्तन्मात्रनिष्ठ उद्यमो येषां ते न तत्र सौहृदं धर्म्मं इति प्रसिद्धमपि तद्द्वयं वक्ष्यमाणरीत्या सापवादमेव मन्यामह इत्यर्थः । धर्मस्य स्वातन्त्र्येण पुरुषार्थत्वेऽप्यर्थकामाभ्यां परिवर्त्तनाय विनियोगापातात्सौहृदस्य च कैतवमयत्वादिति भावः । हि निश्चये अन्यथा उक्तादन्यप्रकारेण तत्मिथो भजनं न स्यात् यद्वा तत्र मिथ्यात्वं नास्तीत्यर्थः तत्र आत्मनोऽपि तासु तादृशभजनशङ्कां सहजसख्योल्लेखेन परिहरन् संबोधयति हे सख्य ! इति अन्यत्तैः अत्रातो न सुखमित्यर्थबलादूव्याख्यातं यद्यपि तत्रापि दृष्टसुखं घटेत तथापि सौहृदरहितत्वेनोत्तमानां सुखवृद्धिर्नजायत इति भावः । किंतु पाठोऽयं कल्पित इव लक्ष्यते उत्तरत्रैतत्प्रतियोगिवाक्येऽपि नापेक्षितव्यइति स्वार्थार्थमिति पाठोऽपि चित्सुखादीनां बहूनां सम्मतः तत्र तद्भजनमन्यथा प्रतीयमानमपि स्वप्रयोजनार्थमेवेत्यर्थः । स्पष्टमन्यत् ॥ १७ ॥

यं प्रसिद्धौ यथेत्युभेयपामुदाहरणार्थं पितराविति चकारोऽध्याहार्य्यः निरपवादो विप्रतिपत्तिरहित इत्यर्थः । सौहृदञ्च निरपवादं हे सुमध्यमा इति सर्वसल्लक्षणोपलक्षणत्वेन तादृशगुणत्वं युष्मासु भात्येवेति भवत्य एव तत्र साक्षिण्य इतिभावः इदञ्च तासामात्मभजनार्थं चातुर्य्यम् अन्यत्तैः यद्वा पूर्वं सोपाधिभजतामुद्दिष्टयोरपि सौहृदधर्मयोः सापवादत्वमुक्त्वा सम्प्रति निरुपाधिभजतामुद्दिष्टयोर्निरपवादत्वमाह । तत्राप्युदाहरणीकृतानां करुणानां पित्रोरप्यविशेषमाह । भजन्त्यभजत इति । करुणेषु सौहृदस्यापि स्पष्टत्वात् पित्रोः पुत्रादिपालनस्य गार्हस्थ्यधर्मसहायत्वाद्धर्मस्यापि सामान्यतः प्राप्तेः ॥ १८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मिथो भजन्ति उपकारप्रत्युपकारौ कुर्वन्ति । करुणाः करुणायुकाः केचिद्रागद्वेषाभावा दुपकर्तृष्वपि समदृष्टयः अकृतज्ञाः आत्मैकानुभवसुखत्वेन तदितरकृतज्ञानरहिताः गुरुद्रुहः । "अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः । यं वृत्तिं समास्थाय विप्रो जीवेदनापदी" ति न्यायेन प्राणिषु अत्यन्तपीडाविमुखाः ॥ १७-१९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विदिताभिप्राय उत्तरमाह । मिथ इति । हे सख्यः ! ये मिथो भजन्ति परस्परमुपकुर्वन्तो वर्त्तन्ते ते स्वार्थे स्वप्रयोजने एव निमित्ते एकान्तः नियत उद्यमो येषां तथाभूताः स्वप्रयोजनमात्रपरास्ते हीत्यर्थः यस्मादेवमत एव तत्र मिथो भजनेन सौहृदं मिथो भजनप्रवर्त्तकं न सौहृदमित्यर्थः । किन्तूपचिकीर्षा प्रत्युपचिकीर्षैव तत्र कारणमित्यर्थः । अत एव तत्र धर्मस्तु तत् साध्यो धर्म इत्यर्थः । किन्तु केवलं दृष्टमेव तत्साध्यं प्रयोजनमिति भावः । तदेवाह तन्मिथो भजनं स्वार्थार्थं स्वप्रयोजनमेवार्थः प्रयोजनं यस्य तथाभूतं हि नत्वन्यथा स्वार्थनिरपेक्षपरोपकारद्वारा धर्मार्थं न भवतीत्यर्थः ॥ १७ ॥

द्वितीयकोट्यन्तर्गतानाह । भजन्तीति । हे सुमध्यमा ! अभजतो ये भजन्ति ते करुणाः करुणावन्तः अर्शआद्यच् स्वार्थनिरपेक्षपरोपचिकीर्षा करुणा साच पित्रादिष्वतीव प्रसिद्धेति तानि दर्शयति पितरौ यथेति । अत्राभजद्भजने सौहृदं सर्वभूतसुहृत्त्वं प्रवर्तकं तत्साध्यस्तु निरपवादो निर्बाधो धर्मः अक्षय्यो भवदनुग्रहरूपधर्म इत्यर्थः ॥ १८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र परिहारं वक्तुमुपक्रमते । मिथ इति । हे सख्यः ! ये मिथो भजन्ति उपकारप्रत्युपकारलक्षणां सेवां कुर्वन्ति ते स्वार्थैकान्तोद्यमा हि स्वप्रयोजननियतप्रयत्ना यस्मात्तस्मात्तत्र तेषु सौहृदम् अनिमित्ततः स्नेहलक्षणो धर्मो नास्ति ननु तर्हि किमस्ति तत्राह । स्वार्थमिति । स्वप्रयोजनार्थं वित्तं जानीध्वं विपक्षं प्रतिषेधति । नेति ॥ १७ ॥

ये अभजतः फलेप्विच्छानुगतान् भजन्ति फलमपर्यन्ति तत्र कारणमाह । करुणा इति । करुणयन्ति प्राणिनो दृष्ट्वा द्रवीकृतहृदया भवन्तीति करुणाः तत्र दृष्टान्तः लोकानुग्रहकरणशालिनः पितरौ यथा बालादीन् दृष्ट्वा गुणान्तरं चास्तीत्याह । धर्म इति हे सुमध्यमाः ! अत्र तेषु जनेषु सौहृदलक्षणो धर्मश्च निरपवादः निर्दोषः इदं संप्रज्ञातसमाधिस्थस्य लक्षणम् ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वार्थोऽत्र दृष्टफलं ये दृष्टफलमात्रोद्यमा मिथो भजन्ति स्वात्मानमेव भजन्ति । हि यस्मादुर्जनं नान्यथा भवति । अतस्तत्र न सौहृदं नच धर्म्मः । कारणविशेषमेव दृष्टान्तयति तत्र तस्मिन् साकूतपर्यवसानमाशङ्क्य मिथोऽक्षि निकूचन्तीः प्रत्याह । नाहमिति ॥ १७—२० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भगवानप्याशयं ज्ञात्वा समुचितं प्रत्युत्तरमाह । मिथ इत्यादि । हे सख्य इति सप्रेमसम्बोधनम् मिथो भजनेन सौहृदं न धर्मः तद्ध-

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

जनं हि स्वात्मानं प्रत्येव परस्परानुकूल्योपाधिकत्वात् स्वात्मार्थमिति पाठे स्वात्मनिमित्तम् ॥ १७ ॥

द्वितीयप्रश्नस्योत्तरं भजन्तीत्यादि । अभजतो ये भजन्ति ते वै करुणाः कारुणिकाः यथा पितरौ तयोः केवलमभजतः शिशून् प्रति वात्सल्यमेव अत्र निरपवादो धर्मः सौहृदश्च ॥ १८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एतेषां भेदान् फलं चाह भगवान् । मिथोभजन्तीति त्रिभिः । तत्राद्यपक्षस्य निर्धारमाह । ये मिथोभजन्ति ते स्वार्थैकान्तोद्यमाः स्वार्थ एव एकान्त एकं फलमुद्यमस्य ते हि ज्ञात्वैवान्योऽन्यं भजन्ते तरतमभावेन च भजनमनुवर्त्तयन्ति अतो न तेष्वन्योऽन्यधर्मश्च नापि संभवति अतः स्वार्थमेव लौकिकार्थमेव तेषामुद्यमः ननु उभये ब्राह्मणाः अन्योऽन्यभजनेन धर्मः स्नेहो वा भवेत् कथं स्वार्थमेवेत्याशङ्क्याह । न तत्र सौहृदमिति । क्षणेनैव द्वितीयस्या भजनं ज्ञात्वा क्रोधकरणात् अतो न सौहार्द्दं नापि धर्मः "संभोजनीयानामपि पिशाचभिक्षा नैषा पितॄन् गच्छति नोतदेवान् इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सेति" गुरुसेवायामपि यादृष्टार्थतोभयोः तदापि न धर्मः शास्त्रानुसारीचेत् मिथोभजनाभावः । विद्यातु फलरूपा सख्य इति संबोधनादप्रतारणाय इति प्रसिद्धास्ते वणिज इव स्वार्थ एव तेषां प्रवृत्तिः यद्यपि धर्मादयाऽपि स्वार्था एव तथाप्यन्योऽन्यभजने न ते सिध्यन्ति तथा सौहार्दमपि यद्यन्यमपेक्षेत तस्य साधनस्य विनियोगमाह स्वार्थार्थमिति अन्यार्थमपि प्रतीयमानं स्वार्थमेव एवं सेवादिदानेष्वपि दुःखनिवृत्तिस्तत्र फलम् अत्रार्थे सर्वोऽपि लोकः प्रमाणमिति हिशब्दः अन्यथा परोपकाराय न अन्यस्य हृदये तत्प्रतीकारार्थं चिन्ताजननात् ॥ १७ ॥

अतः फलं स्वार्थसिद्धिः लौकिकी नाममात्रेणैव तेषां धर्मत्वं ननु वस्तुतः ये पुनः अभजतोऽपि भजन्ति ते द्विविधा इत्याह । भजन्तीति । ये अभजतोऽपि तूष्णीं स्थितान् भजन्ति तत्र निमित्तद्वयं लौकिकं वैदिकं वा स्नेहो विधिश्च तत्र सौहार्दं धर्मश्च फलं क्रमेणैव यः पूर्वः तस्य सौहार्दमवसरे कर्त्तव्यमेवोपकारः अन्यथा कृतघ्नः स्यात् धर्मशेषश्चेत्प्रायश्चित्तं विधेयम् । तदीय एव धर्मः तद्द्वारा तेषु गच्छतीति तत्र धर्मः यत्र कर्मप्रधानं यत्र वा देवता तदुभयं न विवक्षितं प्रतियोगिनि भजनशक्त्यभावात् यत्र वा असमानता गोः पङ्कोद्धारणवत् तत्रापि तथा यत्र पुनराधारे प्रत्युपकारः संभवति तत्र प्रवृत्तौ पूर्वस्याभजने उत्तरभजने निरपवादो धर्मः सौहृदं च फलम् अधिकारिविशेषणं तु एकत्र करुणा अपरत्र दैहिकः सम्बन्धः तदाह । करुणाः पितराविति अन्यत्रापि दृश्यत इति तद्धर्मातिदेशमाह यथेति । ये संसारिणः क्रूराः तेऽपि कदाचिद्दीनेषु भजनं कुर्वन्ति स्निग्धा इव च भवन्ति तेषां संग्रहार्थं यथेति संबन्धस्तु जन्मान्तरीयोऽपि भवतीति उपमानोपमेययोरभेदात् एकविध एव निरपवाद इति तदुपकारेण हि तस्यापवादः तदभावान्निरपवाद एव अत्र एतादृशो अर्थे अनेन यत्र प्रत्युपकारसम्भावनापि न तत्र धर्म इति सूचितम् अत एव केचित् क्रियमाणमपि नाङ्गीकुर्वन्ति सौहार्देऽपि धर्मोऽस्तीति चकारः सुमध्यमा इति संबोधनमुक्तविश्वासाय धर्मेणैव उत्तममध्यमता येतु पुनः सर्वथैव न भजन्ति भजनार्थं भजतः सौहृदेन वा भजतः धर्मार्थं तु न शङ्का तानुभयानपि केचिन्न भजन्ति अभजतो दीनान् धर्माधिकारिणश्च तानपि भजन्ति ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवार्त्तिकृतसारार्थदर्शिनी ।

विदिताभिप्राया उत्तरमाह । मिथ इति । उपकारप्रत्युपकारापेक्षया ये मिथो भजन्ति ते स्वार्थे दृष्टादृष्ट स्वीयफलार्थ एव एकान्त उद्यमो येषां ते हि निश्चितं स्वात्मानमेव भजन्ति नान्यं तन्मिथोभजनं नान्यथा अन्यथा न स्यात् । अतस्ते स्वार्थपराः सोपाधिप्रीतिमन्तः । कामिन एवेत्यर्थः । तत्र तेषु सौहृदं प्रेम नास्ति । धर्म इत्युत्तरश्लोकार्थदृष्ट्या निरपवादो धर्मश्च न स्वात्मार्थमिति पाठे तदित्यस्य विशेषणमेतत् ॥ १७ ॥

द्वितीयप्रश्नस्योत्तरमाह । अभजतो ये भजन्ति निरपेक्षं भजन्तीत्यर्थः । ते निःसम्बन्धससम्बन्धभेदाद्द्विविधाः । करुणा यथा पितरौ यथेति । तत्र करुणाः शुद्धभक्तास्तेष्वेव प्रह्लादादिषु निरुपाधिकरुणस्योदयदर्शनादिति । दृष्टान्तद्वैविध्यात् उभयेऽपि प्रत्युपकारानपेक्षिणस्तद्दुःखसुखवन्तो भजनं प्राणान्तेऽपि न त्यजन्ति पूर्वे श्रेष्ठाः । उत्तरे अवराः । अत्र एवोभयेष्वेव धर्मो निरपवादः फलाकांक्षाराहित्यादनश्वरः सौहृदं प्रेम च निरपवादम् । हे सुमध्यमा इति । श्लेषेण शोभनः मध्यम एव प्रश्नो यासां ताः । विगीतोदाहरणत्वादाद्यन्तौ प्रश्नौ विगीतावित्यर्थः । यद्वा । शोभनं मध्यममुत्तरं यास्वेव । मध्यमस्य प्रत्युत्तरस्यास्य भवत्य एवोदाहरणानीत्यर्थः ॥ १८ ॥

---

केन चित्कृता विशुद्धरसदीपिका ।

अत्र रसपरिपाट्यामपि प्रयुक्ता सरस्वती सिद्धान्तमपि स्फोरयतीति दर्शयन्नाह । श्रीभगवानुवाचेति । मिथ इति । स्वार्थोऽत्र दृष्टमदृष्टञ्च फलं "भजन्ति ये यथा देवान् देवा अपि तथैव ता"निति न्यायेन यज्ञादिसन्तोषिताभिर्देवताभिर्गोमहिष्यादिभिर्दुग्धादि दीयते इति तस्मिन्नेकान्तस्तन्मात्रनिष्ठ उद्यमो येषां ते सकामा इत्यर्थः । न तत्र सौहृदं धर्म इति तत्र प्रसिद्धमपि तद्द्वयं वक्ष्यमाणरीत्या सापवादमेवमन्यामह इत्यर्थः । धर्मस्य स्वातन्त्र्येण पुरुषार्थत्वेऽप्यर्थकामाभ्यां परिवर्तमानाय विनियोगात् सौहृदस्य कैतवमयत्वादितिभावः हि निश्चये अन्यथा उक्तादन्यप्रकारेण तत्मिथोभजनं न स्यात् यद्वा तत्र मिथ्यात्वं नास्तीत्यर्थः तत्रात्मनोऽपि तासु तादृशभजनशङ्कां सहजसंख्योल्लेखेन व्यावर्त्तयन्संबोधयति । सख्य इति । अन्यच्चैः तत्र न सौहृदमतो न सुखमिति यद्यपि दृष्टं सुखं घटेत तथापि सौहृदराहित्येन सुखबुद्धिर्न जायत इति भावः । तत्र तद्भजनमन्यार्थं प्रतीतमपि स्वप्रयोजनार्थमिति ॥ १७ ॥

भजन्तीति । ये वै प्रसिद्धौ तथेत्युभयेषामुदाहरणार्थं पितरौ चेति चकारोऽध्याहार्यः निरपवादो विप्रतिपत्तिरहितः सौहृदंच निर-

केनचित्कृता विशुद्धरसदीपिका ।

पवादं सुमध्यमा ! इति यूयमेवात्र मुख्यमुदाहरणमिति भावः तत्र करुणेषु धर्मः पित्रोश्च सौहृदमिति विवक्षितप्रतीत्यै द्वयमुदाहृतं युष्मासु द्वयमपीति ततस्तत उत्कर्षः यद्वा करुणेषु सौहृदस्य पित्रे इव पुत्रादिपालनस्य—

वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः ।
अप्यनर्थशतं कृत्वा भर्त्तव्या मनुरब्रवीदिति ॥

धर्मस्यापि सामान्यतः प्राप्तेः स्पष्टत्वादुभयोर्विशेषभेदोदाहरणमित्यर्थः ॥ १८ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

भगवत उत्तरमवतारयति । मिथ इति । ये मिथः परस्परं सख्य एव इष्टफलमभिकाङ्क्षिणो भजन्ति ते वणिज इवस्वार्थैकान्तोद्यमाः स्वार्थं स्वदृष्टसुखार्थमेव केवलमुद्यमो येषामन्यार्थत्वेन प्रतीतावपि तद्भजनदर्शनेन स्वार्थसिद्धौ रोपादिदर्शनेन तदर्थत्वासम्भवायतस्तत्स्वार्थार्थमेवातस्तत्र नसौहृदं परस्परप्रीतिरैहिकं फलं न वा पुण्याद्दृष्टजनको धर्मः पारलौकिकः नान्यथेति अन्यथा धर्मबुद्ध्या सौहृदेन वा भजने भजनमेव भवेन्नातेन स्वभजनापेक्षा यद्वा नान्यथेति न्वहमन्यथा वच्मि मद्वचनं तिगमरूपत्वात् सत्यमेव सख्य इति संबोधनेनापि प्रसुरान्प्रत्यन्यथासम्भवेऽपि स्वाभाविकसख्येन न भवतीः प्रति मदुक्तिरन्यथा यद्वा ननु—

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति स्मृतेः ॥

कथन्न धर्मस्तत्राह । सौहृदमिति । तत्रापि श्रेयोमात्रं परं केवलमवाप्स्यथ न निःश्रेयसमिति सूचनात् लौकिमिकगोभजनेतूभयं नास्त्येव देवाराधनेतु धर्ममात्रव्यवहारेऽपि यथावत्कर्मसम्पत्तौ तत्कामितफलप्राप्तावपि यतो न सौहृदं मद्भक्त्युपयोगिहृदयसौष्ठवानुत्पादकमतो न परो धर्मः किन्तु श्रममात्रमेव धर्मो मद्भक्तिकृत्प्रोक्तः—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥

इत्यादिवचनात् ॥ १७ ॥

प्रथमपक्षीयप्रश्नस्योत्तरमुक्त्वा द्वितीयप्रश्नयोरुत्तरमाह । भजन्तीति । हे सुमध्यमाः ! ये अभजतः प्रत्युपकारमकुर्वतो भजन्ति ते एके करुणा दयालवः तथा पितरावित्युपलक्षणं स्निग्धा इत्यर्थः यथेत्युक्त्वा यथैते तथा निष्कामाराधकाश्चेति त्रिविधाः तेषु फलमाह । धर्म इत्यादि तत्र करुणायाविधिप्राप्तत्वाद्धर्मो मुख्यः फलं सुष्ठु हृद्येव तदुद्भवदर्शनात्सौहार्दञ्च स्नेहस्या नुरागप्राप्तत्वात् सुष्ठु हृद्येव तदुत्पत्तेः सौहृदमेव मुख्यं धर्मोऽपि गृहस्थधर्मप्राप्तत्वात् निष्कामाराधनेतु धर्मो निरपवादः—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादित्यादि ॥

वचनात् भक्त्युपयोगिहृदयशुद्धिहेतुत्वाच्च सौहृदमपि चकारेण विशेषणानुकर्षणात्तत्सौहृदमपि निरपवादं तद्धर्मसौहृदयोर्मत्स्वरूपप्रतिपत्त्यवसायित्वात् यद्वा यथेति दृष्टान्तत्वेन निर्देशो यथा लोके केचित्करुणाः पितरौ च प्रत्युपकारानपेक्ष्या भजन्ति तथा अभजतोऽपि तेषां फलाभिलापादर्शनेन तत्फलदातुरपि मे ये भजन्ति अत्र सकर्मकधातोः कर्मापेक्षतया मामिति वक्तव्येऽपि कर्ममात्रोक्तौ फलान्तरसम्भावना स्यादिति षष्ठ्या सम्बन्धसामान्येन कर्मत्वफलत्वोभयार्थत्वाभिमत्या षष्ठीनिर्देशः तथा च भजतो मम भजने निरपवादो धर्मः सौहृदं चेति भावः ॥ १८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तासामभिप्रायमवगत्य क्रमेणोत्तरमाह । मिथ इति । ये मिथोन्योऽन्यं परस्परोपकाराकाङ्क्षया भजन्ति स्वार्थं एवैकान्तत उद्यमा येषां तथाभूता न ते कञ्चिदन्यं भजन्ति किन्तु स्वात्मानमेव इष्टफलार्थित्वात्प्रसिद्धश्चेदं वहवश्चैतदुदाहरणभूता अतो नाधिकमत्र वक्तव्यमिति द्योतनाय हि शब्दः तत्र सत्कीर्त्तिकरं सौहृदं निर्व्याजेन हितैषित्वन्नास्ति नापि धर्मः दृष्टोद्देशात् यद्वा नात्रैवं विधे भजने सौहृदं धर्मः किन्तु मित्रतालक्षणो धर्मः हि यतस्तद्भजनं स्वार्थं पशूनां परस्परं कण्डूयनसदृशं नान्यथा स्वार्थाभावे निवर्त्तते हे सख्य !इति संबोधयन् युष्माकं ममत्वनेवंविधं मैत्र्यमपितु निरुपाधिकं सख्यमिति द्योतयति ॥ १७ ॥

द्वितीयप्रश्नस्योत्तरमाह । भजन्तीति । ये अभजतोऽपि भजन्ति ते द्विविधाः सम्बन्धरहितास्तद्वन्तश्च तत्राद्याः करुणाः दयालवो यथा द्वितीयाः पितरौ यथा अत्र प्रथमपक्षे निरपवादो धर्मो निरुपाधिकत्वादनश्वरः द्वितीयपक्षे निरपवादं सौहृदं यद्वा पक्षद्वयेऽपि निरपवादो धर्मः सौहृश्च यद्वा अत्र सौहृदरूपो धर्मो निरपवादः हे सुमध्यमा इति सम्बोधयन् करुणायाः सम्बन्धस्य च विषयभूताः भवत्य इतिसूचयति श्लेषेण शोभनो मध्यमः प्रश्नो यासां ताः सुष्ठु मध्यमपक्षोदाहरणभूता भवत्य इति वा ज्ञापयति ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तृतीये पक्षे बहून् भेदान् जानन्त्यः कृतघ्नविषयं तृतीयं पक्षं मन्वानाः स्वस्य कृतघ्नत्वं स्वमुखेनैव कथयिष्यतीति तासामाशयं ज्ञात्वाह । मिथ इत्यादिना । हे सख्यः ! ये मिथो भजन्ति अन्योऽन्यमनुवर्तन्ते स्वार्थैकान्तोद्यमाः स्वार्थे निमित्तभूते एवैकान्तत उद्यमो येषां ते तथा अतः तत्र सौहृदं नास्ति नच धर्मः ॥ १७ ॥

ये तु अभजतोऽपि भजन्ति ते द्विविधाः एके करुणाः करुणावन्तः अर्थाद्याश्च अन्ये पितरौ यथा तथा स्नेहयुक्ताश्चेति द्विविधाः द्वैविध्यमेवाह । धर्मो निरपवादः निरपवादं सौहृदं चेति ॥ १८ ॥

भाषा टीका ।

श्रीभगवान् बोले हे सखि हो ! जो आपस में मानने वाले को मानते हैं वह तो केवल अपने स्वार्थ में तत्पर हैं उसमें कुछ मित्रपना का धर्म नहीं है वह केवल स्वार्थ के वास्ते है और कुछ नहीं है ॥ १७ ॥

भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः ।
आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥
तथैव मत्तः फलसम्पदः स्युरुच्चावचाः कल्पतरोरिवार्थिनाम्।
नाहं तु सख्यो ! भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये । मनुवृत्तयेयथा
२ यथाधनोऽलब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद ॥ २० ॥ इतिविज०श्लोकमध्येकपाठः

भाषा टीका।

कोइ जो नहिं भजने वाले को भजते हैं वे दयालु हैं जैसे पिता माता हैं हे सुमध्यमा इसी बात में निःसन्देह प्रशंशा करने लायक धर्म हैं इसी में मित्रपना भी है ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तृतीयप्रश्नोत्तरं भजतोऽपीति अयमर्थः। ते तु चतुर्विधाः एके आत्मारामा अपराग्दृशः केचिदाप्तकामा विषयदर्शिनोऽपि पूर्णकामत्वेन भोगेच्छारहिताः अन्येऽकृतज्ञा मूढाः अन्येतु गुरुद्रुहोऽतिकठिनाः "स पिता यस्तु पोषक"इतिन्यायादुपकर्ता गुरुतुल्यस्तस्मै द्रुह्यन्तीति तथा ते ॥ १९ ॥

अत्र चरमकोटिगतमात्मानं मत्वाक्षिसङ्कोचैः परस्परं गूढस्मितमुखीस्ता दृष्ट्वा आह। नाहंत्विति। हे सख्यः ! अहं तेषां मध्ये न कोऽपि किन्तु परमकारुणिकः परमसुहृच्च कथम् अमीषां भजतामनुवृत्तिवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान्न भजामि एतत्सदृष्टान्तमाह। यथेति। तस्य धनस्यैव चिन्तया निभृतः पूर्णो व्याप्त इति यावत् अन्यत्क्षुत्पिपासाद्यपि न वेद ॥ २० ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

वै एव नैव भजन्ति हि हेतौ निश्चये वा न कृतं तद्भजनं जानन्ति अनुसन्दधतीत्यकृतज्ञाः लोकाद्यपेक्षावत्त्वेऽपि प्रत्युपकारसामर्थ्येऽप्यज्ञानेन तदकरणान्मूर्खा एवेत्यर्थः। एवं तेषामज्ञत्वेनाभजनमभिप्रेतं सामर्थ्यवन्तो ज्ञात्वापि ये न भजन्ति ते त्वतिनिर्दया इत्याह। गुर्विति। एवन्तासां पादत्रयकृतप्रश्नस्य पद्यत्रयेण प्रत्युत्तरं तासां संक्षेपादिवाक्यगुणविशेषेण स्वस्मादपि माहात्म्यविशेषस्य विस्तारणार्थम् एवन्तासां मते श्रीभगवतो विचित्रक्रीडया आत्मारामता आप्तकामता च न घटेतैव गुरुशब्दप्रयोगेण गुरुध्रुक्ता च न ज्ञेया विरहार्त्तिदत्वेन भजनासिद्ध्या प्रथमपक्षद्वयं न सङ्गच्छेत ततोऽकृतज्ञतैव परिशिष्येतैव तथाचाग्रे वक्ष्यते अकृतज्ञत्वं तद्वचनेनैवेति चरमकोटिगतमिति तत्रापि चरमकोटित्वं घटेतैव यद्वा गुरुध्रुक्पदेन पदार्थानपेक्षया लक्षणयैव तैरतिकठिना इति व्याख्यातं तदत्रैव चरमकोटिगतत्वं सुसङ्गतमेव ॥ १९ ॥

तुशब्दो भिन्नोपक्रमे आत्मारामत्वादिचातुर्विध्यरहितोऽप्यहं न भजामि नञः सर्वादौ प्रयोगः स्ववाक्येनैव स्वस्य यन्त्रणापत्त्या परमैश्वर्यख्यात् हे सख्य! इति आत्मारामत्वादिराहित्यमेव साधितम् अन्यथा सख्यासम्भवः जन्तूनिति विचारविशेषराहित्यमभिप्रेतम् अन्यथा स्वत एवानुवृत्तिसिद्धिः ननु अस्माकं त्वय्यनुवृत्तिः सदानुवर्त्तत एवेतिचेत् सत्यं विशेषेण तत्सम्पत्त्यर्थमिति सदृष्टान्तमाह। यथेति। विशेषतो नष्टे इति पुनःप्राप्तिसम्भावना निरस्ता अत एव नितरां भृतो व्याप्तः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

वै एव नैव भजन्ति हि प्रसिद्धौ एवमकृतज्ञानामज्ञत्वे नाभजनेमभिप्रेतं ज्ञात्वापि ये न भजन्ति ते त्वशेषदोषयुक्ता इत्याह। गुर्विति। गुरूपेक्षका इत्यर्थः प्राणदण्डोचितविप्रादेरिव तादृशस्योपेक्षैव द्रोह इति अत्र तु पदार्थे तात्पर्य्यं नास्ति किंतु गौण्या वृत्त्या कृतोपकारोपेक्षका गम्यन्ते तेन च तेषामर्थधर्मसौहृददयापेक्षाराहित्यं व्यज्यत इति ज्ञेयम् ॥ १९ ॥

तदेवं तासां मते तदादिभिः सह विचित्रक्रीडया रममाणस्य तस्यात्मारामत्वादिद्वयं न घटत एव। विरहार्त्तिप्रदत्वेन नच पूर्वोक्ते सापेक्षनिरपेक्षभजने तादृशोत्तरादिचातुर्येण विज्ञताभिव्यक्तेः न कृत्वा चाकृतज्ञत्वं ततो गुरुध्रुक्त्वं निर्विशेषं काठिन्यमेव पर्यवसितमित्यभिप्रेत्य तैर्व्याख्यातम्। तत्र चरमेति पूर्वं कृतज्ञतामात्रमापादयितुमपृच्छन्नधुना तु ततोऽपि दोषवैशिष्ट्यपर्यवसानेन सन्तुष्टा जाता इत्यभिप्रेत्य व्याख्यातम्। अक्षिनिकोचैरिति। अथवा काठिन्यापादनार्थं एवायं प्रश्नोद्यम इति व्याख्येयम्। अथाभजनेऽपि मम सर्वेभ्यो भजनकृद्भ्यः उत्तमभजनत्वं किमुत भजन इत्याह। नेति। तुशब्दो भिन्नोपक्रमे। आत्मारामादि चातुर्विध्य रहितोऽप्यहं भजतोऽपि जनान् न भजामि "नाहं वसामि वैकुण्ठे योगिनां हृदये न च। मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद" त्यादि मदुक्तिभिस्तन्निकटे स्थितमपि स्वं तेभ्यो न दर्शयामीत्यर्थः। नञः सर्वादौ प्रयोगः स्ववाक्येनैव स्वस्य यन्त्रणापत्त्या परमैश्वर्यख्यात्। हे सख्य ! इति आत्मारामत्वादिराहित्यमेव साधितम्। जन्तूनित्यविशेषात् सर्वत्रैवेदृशो मम व्यवहारो ननु भवतीष्वेवेति नात्मनि स्वमौदासीन्यं। शङ्कनीयमिति भावः। कथं न भजसि तत्राह अमीषामिति। अनुवृत्तीनां निरन्तरध्यानानां वृत्तिर्यस्मात्तस्मै सन्ततप्रेमप्रकर्षायेत्यर्थः। नन्वस्माकं त्वय्यनुवृत्तिवृत्तिः सदा वर्त्तत एवेति चेत् सत्यं तथापि वैशिष्ट्यार्थमिति सदृष्टान्तमाह। यथेति विशेषतो नष्टे हारिते इति वैयग्र्यविशेषो दर्शितः। अत एव तच्चिन्तया नितरां भृतो व्याप्तः। तदेवं रूपगुणादिना सर्ववशित्वात् सर्वार्थपूर्णत्वेन प्रेममात्र सापेक्षत्वेन च प्रत्युपकारानपेक्षतया साम्येऽपि करुणपितृनप्यतिक्रम्य स्वस्य हितैषित्वं दर्शितं स्वादेयस्यवशीकारसर्वपुरुषार्थशिरोमणिस्वप्रेमदानात्। तथा प्रियप्रेमरसास्वादाधिक्यं च बोधितम्। सन्ततदर्शनलालसात् तदर्थं तद्विरहदुःखसहनाच्चेति ज्ञेयम् ॥२०॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न भजामि न शीघ्रदर्शनफलकरो भवामि अनुवृत्तये अनुवर्तनस्य मदनुध्यानरूपस्याविच्छेदाय तच्चिन्तया धनचिन्तया अदृश्यमानस्यात्यन्ताभिनिवेशित्वे दृष्टान्तः यथेति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तृतीयं त्रेधाभिभज्य दर्शयति । भजतोऽपीति । ये भजतोऽपि नैव भजन्ति कुतोऽभजतो भजेयुः ते त्वात्मारामादयः केवलं स्वदेहमात्रपोषणपरायणा ननु ज्ञानिनस्तेषां सर्वभूतसुहृत्त्वेन द्वितीयकोट्यन्तर्गतत्वात् आप्तकामाः शब्दादिविषयभोगतदुपकरणतत्स्थानसमृद्धिमन्तः अकृतज्ञाः कृतघ्नाः अकृतज्ञानामेव परां काष्ठां दर्शयति । गुरुद्रुह इति । यद्वा ऽकृतज्ञत्वकार्यं दर्शयति । गुरुद्रुह इति । गुरुभिः कृतमहोपकारमननुस्मृत्य तेभ्योऽपि द्रुह्यन्तीति तथाभूताः एतेषां त्रयाणामितरभजनाभावात्प्रवर्त्तकसाध्यगुणदोषा नोक्ता इति भावः ॥ १९ ॥

इत्थं भगवनोक्तास्ता गोप्यः स्वावदनुवर्तमाना अस्मानभजन्नयं तृतीयकोट्यन्तर्भूतस्तत्रापि नात्मारामो नाप्याप्तकामश्च तथा चेदस्माभिः सह वने विहारासम्भवादतोऽयं नूनमकृतज्ञ इत्यक्षिसङ्कोचैः परस्परं सूचयन्तीर्दृष्ट्वा तत्कारणज्ञो भगवान् पुनराह । नाहं त्विति हे सख्यः ! भजतोऽपि जन्तून्नाहं भजामि न तेषां दृष्टिगोचरो भवामीत्यर्थः । तथापि नाकृतज्ञ इतिभावः । तर्हि किमर्थं न भजसीत्यत्राह । अमीषां मां भजतां जन्तूनामनुवृत्तिवृत्तये ऽनुवर्त्तनस्य मदनुध्यानरूपस्याविच्छेदाय अनेनात्मनः कृतज्ञत्वं परमकारुणिकत्वं चोक्तं प्रियस्यादृश्यमानस्यात्यन्ताभिनिवेशविषयत्वे दृष्टान्तमाह । यथेति । अधनो निर्धनः पुमान् कदाचिद्दैवाल्लब्धधने विनष्टे सति तच्चिन्तया नष्टधनचिन्तया निभृतो व्याप्तः अन्यन्न वेद नान्यत्स्मरति किन्तु तदेव नष्टं धनमविच्छेदेनानुस्मरन्नवतिष्ठते अविनष्ट इति वाच्छेदः तस्मिन्नविनष्टे सति तच्चिन्तया विषयचिन्तया निभृतः पूर्णः तद्धनमन्यच्च न वेद नानुस्मरति किन्तु प्रमत्तो भवतीति भावः । अस्मिन् व्यतिरेके दृष्टान्तः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

असंप्रज्ञातसमाधिस्थस्य लक्षणमाह । भजतोऽपीति । अत्र केचिज्जनाः भजतोऽपि फलार्थितया सेवमानानपि न भजन्ति स्वप्रयोजनाभावात् कथं तदित्यत्राह । आत्मेति । आत्मनि परमात्मन्येवारामः क्रीडा येषां ते तथा बाह्यप्रवृत्तिशून्या इत्यर्थः । तदपि कथमित्याशङ्क्य सुखार्थं हि प्रवृत्तिः सुखन्तु स्वत एव पूर्णमित्याशयेनाह । आप्तकामा इति । काम्यत इति कामः आनन्दः हिशब्दो हेतौ आनन्दाप्तौ निमित्तमाह । अकृतेति । अकृतं परमात्मानं जानन्तीति तज्ज्ञानं च निष्पापत्वादित्याह । गुरुद्रुह इति गुरूणि पापानि द्रोंहतवन्तो नाशितवन्त इति नास्त्यकृतः कृतेनेति श्रुतिः नराणां क्षीणपापानामिति स्मृतिः कीदृशाः कृतघ्ना इत्यतो वाह भजतोऽपीति ये केचिद्भजतः शरणार्थितया सेवमानानपि न भजन्ति ग्रहणलक्षणां सेवां न कुर्वन्ति अभजतः कुतो भजन्ति तत्र कारणमाह । आत्मारामा इति । परमात्मविषयमतिरहिता देहलक्षणात्मनि निरतं रताश्च तर्हि कुत्र रतिरित्यत्राह ।

आप्तेति । आप्ते विस्रब्धे स्त्रीजने कामो येषां ते तथा एतादृशाः कृतघ्नाहि कृतं न जानन्ति नाशयन्ति च अतएव गुरुद्रुहः देवादिगुरूणां द्रोग्धार इत्युच्यन्ते हविराद्यदानात् ॥ १९ ॥

अहमेष्वेक इति भवतीनामाशङ्का माभूदित्याह । नाहमिति । अपि समुच्चये तुशब्दो विशेषप्रकाशकः अहं भजतः फलार्थितया सेवमाना न भजतोऽपि फलार्थितया असेवमानान्न भजामि तदिच्छया फलं न दास्यामि "यमेवैष वृणुते तेन लभ्य" इति मम विजयशिखामणेः ततः प्रयोजनाभावात् तेभ्यः प्रयोजनं न ममेत्यर्थः । तर्ह्येषां सेवा निष्फला किं नेत्याह । अमीषामिति । अमीषामुभयेषां यथा सेवाः स्युः तथा तथा मत्तः उच्चावचाः सेवाफलसंपदः स्युरेव अर्थिनां योग्यानामधिकारिणां कल्पवृक्षाद्यथाफलानि तथेत्यर्थः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तृतीयप्रश्नस्योत्तरम् भजतोऽपीत्यादि । केचिद्भजतोऽपि न भजन्ति किं पुनरभजतः के त इत्याह । आत्मारामा इत्यादि । आत्मारामाणामनन्यस्फूर्त्तेः आप्तकामानां पूर्णत्वात् अकृतज्ञानामज्ञत्वात् गुरुद्रुहां पापाधीनमनोवृत्तित्वाच्चत्वार एव तथा ॥ १९ ॥

किं तूक्तेषु धर्मिषु अभजन्तं मां भवत्यो भजन्तीति । स्वासां कारुणिकत्वं मम चाकृतज्ञता नाशङ्कनीयेत्याह । नाहंत्वित्यादि । अहंतु अहं पुनः यद्यप्यात्मारामं आप्तकामश्च तथापि न तदुभयत्वेन नाप्यकृतज्ञादित्वेन हे सख्यः ! भजतोऽपि जन्तून् प्राणिमात्रमपि भजामि किंतु अमीषां जन्तूनामनुवृत्तिवृत्तये अनुगतिसातत्याय भजत एव यदि भजामि तदा पूर्णत्वाभिमानेन पुनरनुवृत्तिं न करिष्यन्तीति ननु अभजने च दिते विरज्येरंस्तदा किं स्यात् नैवमित्याह । यथेत्यादि । अहन्तु सर्वेषां धनं धनं प्रति कोऽपि न विरज्यति इत्यत्र व्यतिरेके दृष्टान्तः यथाऽधनः केनाप्युपायेन लब्धस्य धनस्य पुनर्विगमे तच्चिन्तया अन्यत् निभृतं नैपुण्यं न वेद न जानाति अतः साधूकमनुवृत्तिवृत्तये किं त्वेतत्सामान्यजन्तुपरं न तु भवद्विधपरं यतो भवत्यः सख्यः सख्युर्मम सखीत्वे मद्धर्मिण्यः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेषां स्वरूपमाह । भजतोऽपीति । केचिन्महापुरुषा भजतोऽपि न भजन्ति अभजतः कुतो भजिष्यन्ति ते पूर्वोक्तन्यायेन चतुर्विधाः तन्मध्ये उभये समीचीनाः ये दयाधर्माधिकारिणस्ते अधमाः ये लौकिकनिमित्तास्ते उत्तमा इति तावद्दर्शयति साङ्कर्याभावाय । आत्मारामा इति । आत्मन्येव रमन्त इति अन्येन भजनीयो देहादिर्नापेक्षित इति भजनमेव न मन्यन्ते तेषां भजनार्थं च साधनत्वेन स्वदेहादिकमपि न मन्यन्ते तथाच अन्ये आप्तकामाः आप्तः । प्राप्तः कामो यैः यो भुक्तवन्तं ब्रूयात् त्वं भुङ्क्ष्व मामुङ्क्ष्वेति वा एकत्राप्रवृत्तिः अपरत्र सिद्धसाधनत्वेनानुवादः उभयथापि वैयर्थ्यं प्रवर्त्तमानस्य धर्मः सेत्स्यति अज्ञानं वा उभये तु अधमा इत्याह ये कृतं न जानन्ति तदुपकारं ते प्रत्युपकारसमर्था अपि उभयविधानपि न भजन्ति तेषामज्ञानमेव हेतुरभजने ज्ञात्वाचेदभजनं गुरुद्रोहः यः कश्चित् स्वस्य पुरुष-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

र्थसाधकः स गुरुः स पूज्यः तस्यापि स्वशक्तौ सत्यां तदुपेक्षायां तद्द्रोहः अनेनैव कृत इति गुरुद्रोहकर्त्ता भवति एवं सर्वेषां गुणदोषा निरूपिताः गोपिकानां हृदये भगवानेव तन्मध्ये क इति जिज्ञासायाम् अभजनकर्तृत्वात् भजनसामर्थ्यस्यापि विद्यमानत्वान्मिथो भजनपक्षः अभजनभजनपक्षश्च व्यावर्त्तितः ॥ १९ ॥

ननु द्वितीयपक्षे गोपिकानां भजने स्नेहाद्भजनमस्तु अतो भगवान्निरूपकत्वेन नैषामन्तर्भूतः ईश्वरश्च नैषामन्तर्भवतीति कथमेवं विचार इति चेन्मैवं गोपिका भोग्या इत्यविवादं ताश्च भोग्यसमर्पकत्वेन चापेक्षिणाः अतो भगवत एव विचारः कर्त्तव्यः ईश्वरोऽपि फलार्थं सेव्यश्चेत् न विचार्य्यः व्यवहारे दृष्टार्थश्चेद्दीयमानग्रहणाग्रहणाभ्यां विचार्य एव पूर्वं गृहीतत्वात् नात्मारामता नापि पूर्णकामता प्रथमप्रवृत्त्या तृप्तावपि परित्यागो नोचितः ततस्तृतीयपक्ष एवाभिनिवेश उचितः तदपि सर्वेशस्यानुचितम् ईश्वराणां फलदातृणां कदाचिदेवं भवतीति शङ्कायाः परिहारमाह । नाहं तु सख्य इति । तुशब्दस्तं पक्षं व्यावर्त्तयति नापीश्वरभजनपक्षः शङ्कनीय इत्याह । सख्य इति । गोपिकास्तु सख्यः रसे तुल्याः एकार्थाभिनिवेशाश्च अहमिति भगवान् नतु जीवः तेन आत्मारामादिपक्षा व्यावर्त्तिताः अहं राम एव नत्वात्मारामः ममात्मव्यतिरिक्तपदार्थाभावात् न व्यावर्त्त्यमस्ति कामाभावादेव नाप्तकामत्वम् अतो मम भिन्नैव व्यवस्था नतु जीवतुल्यता नाहं तु सख्य इति तामेव व्यवस्थामाह । भजतोऽपि जन्तून् अहं न भजामि तत्रान्य एव हेतुः अमीषामनुवृत्तिवृत्तय इति अमीषां जीवानां जन्तुपदेन प्राणिमात्रं भगवतो न केनाप्युपयोगः भगवान् फलरूप इति सर्वेषामेवोपयोगः तथा सति तेषां भजनमेव इष्टमिष्टसाधनं वा तत्राहञ्चेत्साधनत्वेन प्रविशामि तदा जनमेव नाशयामि अग्रे भजनस्य प्रतिबन्धात् पूर्वभजनस्य च वैयर्थ्यापादनात् चतुर्धाहि भगवदुपयोगः भगवान् भोग्यो भोक्ता वा भोग्यपक्षे कामनापूरकत्वेन स्वातन्त्र्येण वा भोक्तापि भक्त्या भक्तदत्तपदार्थस्वीकारात् विषयत्वेन भोगाद्वा आद्ये भजनं नश्येत् अल्पफलदानात्स्वरूपतो महत्त्वेऽपि कालपरिच्छेदात् द्वितीये तु तथात्वमतिभजनेन भवति तद्गोपिकानां नास्तीति तत्सिद्ध्यर्थमभजनम् अपेक्षाभावात् नाहं विषयन्यायेन भोक्ता भक्त्यर्थं तु अभजनमेवेति सिद्धान्तसंग्रहः यथा अभजने अनुवृत्तिः सिध्यति तथा प्रकारमाह । यथाधन इति । पूर्वमधनः पश्चाल्लब्धं धनं तच्चेन्नष्टं तदा तच्चिन्तया व्याप्तः निभृतः तदेकनिमग्न सन् अन्यन्न वेद एतत्तु लोकप्रसिद्धं तथा गोपिकानामपि पूर्वमप्राप्तो भगवान् प्राप्तश्चेत्तिरो भवति तदा निभृताः तत्रैव मग्नचित्ताः न प्रपञ्चं स्मरिष्यन्ति निभृतानां प्रयोजनं पूर्वमुक्तमेव ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तृतीयप्रश्नस्योत्तरमाह । भजतोऽपीति । ते यथोक्तेभ्योऽन्येऽपि न्यूनाश्चतुर्विधाः । आत्मारामाः अपहितैश्वर्य एके । अन्ये आप्तकामाः बहिर्दर्शित्वेऽपि स्वत एव पूर्णकामत्वेन न परतो भोगेच्छवः । अपरे अकृतज्ञाः परतो भोगेच्छुत्वेऽपि परैः कृतमुपकारादिकं न जानन्ति । अन्ये गुरुद्रुहः परैः कृतमुपकारादिकं न मन्यन्तां प्रत्युत तेभ्यो गुरु अधिकं द्रुह्यन्ति ते निर्हेतुकद्रोहिणः । सहेतुकद्रोहिणस्त्वल्पद्रुहः कैमुत्यप्राप्तत्वेन तदन्तर्भूता एव । तथा पालकत्वात् गुरवश्च ते द्रुहश्चेति गुरुद्रुहो विश्वस्तघातिनश्चेति त्रिविधद्रोहोऽप्यभजनमेव ततश्च प्रथमप्रश्नोत्तरस्योदाहरणमेकमेव द्वितीये प्रश्नोत्तरस्य द्वे तृतीयप्रश्नोत्तरस्य षडित्येवं नव ॥ १९ ॥

तत्र प्रथमद्वितीयप्रश्नोत्तरोदाहरणेषु त्वं न वर्त्तसे । तृतीयप्रश्नोत्तरोदाहरणेषु मध्ये कतम इति चेत् शृणुत भो मन्मुखेनैव मत्पराजयं शुश्रूषवो मिथः स्मितविलसितकटाक्षचातुरीधुरीणाः सख्यः ! शृणुत नारायणत्वेनात्मारामाः पूर्णकामश्च भवन्नपि नन्दपुत्रत्वादनात्मारामोऽपूर्णकामश्च । गोपबालकत्वेनानधीतनीतिशास्त्रत्वादकृतज्ञो भवन्नपि नारायणत्वेनैव सार्वज्ञ्यात् कृतज्ञश्च सविलासादिभिर्मुहुः प्रणीतानामपि युष्माकं सकृन्मात्रत्यागेन द्रोहाद्गुरुध्रुगपि भवन् पुनः स्वदर्शनानन्ददानाच्च गुरुध्रुक् च । तर्हि निश्चयेन को भवति भवानिति चेत्तत्राह । नाहमिति । तु भिन्नोपक्रमे । जन्तून् जीवमात्राणि भजतोऽप्यहं न भजामि तर्हि पूर्वतः को भेदस्तत्राह । अमीषां भजतामनुवृत्तिर्मद्भजनं तस्या वृत्तये जीविकायै । हे अबलाः ! मदभिप्रायं ज्ञातुमसमर्थाः । हन्त हन्त यमेवोद्यमं करोमि स एव विफलीभवति तस्मान्मय्यपराधिन्यनुग्रहलेशोऽपि कृष्णस्य नास्ति धिङ्मामिति प्रतिक्षणं निर्वेददैन्यादिवृद्ध्या कामक्रोधाद्यनुपगमैर्भक्तिः प्रदीप्तीभवत्यजातप्रेम्णां जातप्रेम्णान्तु अनुवृत्तिर्मदासक्तिस्तस्या जीविकार्थं न भजामि दर्शनं दत्त्वाप्यन्तर्दधामि तत एवानुवृत्तिरासक्तिः प्रवृद्धीभवति । तत्र जातप्रेमस्यैव दृष्टान्तः । यथेति । तस्य धनस्यैव चिन्तया निभृतः पूर्णो व्याप्त इति यावत् । अन्यत् क्षुत्पिपासाद्यपि न वेद । अतो मां भजतां मदनुवृत्तिरेव वाञ्छिता तस्या आधिक्येन सम्पादनादहन्तान् प्रकटमभजन्नप्यप्रकटमधिकमेव भजामीत्यहमपि वस्तुतः करुण एव द्वितीयप्रश्नस्योदाहरणीभूतो यथा भवत्य इत्यतो मम स्वदर्शनदानादाने एव भजनाभजने न व्याख्येये । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति वस्तु प्रतिज्ञाया अन्यथाभावानर्हादिति भावः ॥ २० ॥

---

### केनचित्कृता विशुद्धरसदीपिका ।

भजत इति ये एव नैव भजन्तीत्यर्थः । हि प्रसिद्धौ एवमकृतज्ञानामज्ञत्वेनाभजनमभिप्रेतं ज्ञात्वा ये न भजन्ति ते त्वति दोषयुक्ता इत्याह । गुर्विति । गुरूपेक्षका इत्यर्थः । प्राणदण्डोचितापिप्रादेरिव तादृशस्योपेक्षैव द्रोह इतिभावः । अत्र द्विपदार्थे तात्पर्य्यं नास्ति । किन्तु गौण्या वृत्त्या कृतोपकारोपेक्षका गम्यन्ते तेन च तेषां धर्मार्थं सौहृददयापेक्षाराहित्यं व्यज्यत इति ध्येयं "यद्वा स पिता यस्तु पोषक" इति न्यायादुपकर्ता गुरुतुल्यस्तदुपेक्षका गुरुद्रुह इत्यर्थः । अयं विवेकः आत्मारामा अपराग्दृशः तेचान्तरनिष्ठत्वेनोपकारापकाराननुसन्धानात् निर्दोषा एव केचिदाप्तकामाः भोगपूर्णत्वेन तदिच्छारहितास्तेऽप्यदूष्याः अन्येचाकृतज्ञा बालादिवन्मूढास्तेऽपि तथा तुरीयास्तु कृतघ्ना इति महादोषभाज इत्यर्थः ॥ १९ ॥

तदेवं ताभिर्विचित्रक्रीडया रममाणस्य नायकत्रयं तादृशोत्तरात्रिचातुर्य्येणच तृतीयमघटमानं मत्वा परिशेषादतिकाठिन्यमेवा-

### केनचित्कृता विशुद्धरसदीपिका ।

स्मिन् यर्थ्यवसितमिति परस्पराक्षिनिकोचैः सङ्कोचयन्तीरिवालक्ष्य परमचातुर्य्येणात्मनि तथा तथाभजनेऽपि सर्वेभ्यो भजनकृद्भ्यः उत्तमत्वं किमुत भजन इति संमानमभिनयन्नाह । नाहमिति । तुर्भिन्नोपक्रमे आत्मारामत्वादिचातुर्विध्यरहितोऽप्यहं भजतोऽपि न भजामि मयापरोक्षं भजता तिरोहितमिति वक्ष्यमाणाद्विद्यमानमपि स्वभजनं मध्ये मध्ये तेभ्यो न प्रकटयामीत्यर्थः । नञः सर्वदा प्रयोगश्च स्ववाक्येनैव स्वस्य यन्त्रणापत्त्या परमवैयग्र्यादेव हे सख्य इति आत्मारामत्वादिराहित्यमेव साधितं जन्तूनित्यविशेषात सर्वत्रैव ममेदृशो व्यवहारो न भवतीत्येवेति नात्मनि ममौदासीन्यं शङ्कनीयं कथं न भजसीति तत्राह । आमीषामिति । अनुवृत्तीनां सन्ततध्यानानां वृत्तिर्यस्मात्तस्मै प्रेमप्रकर्षायेत्यर्थः । नतु काठिन्येनेति भावः । नन्वस्माकं त्वय्यनुवृत्तिः सर्वदा वर्त्तत एव किन्तद्वृत्त्येति चेत्सत्यं तथापि तद्वैशिष्ट्यर्थमिति सदृष्टान्तमाह । यथेति । विशेषतो नष्टे हारिते इतिवैयग्र्यविशेषो दर्शितः अत एव तच्चिन्तया नितरां भृतो व्याप्तः तदेवं रूपगुणादिना सर्वशाशित्वात्सर्वपूर्णत्वेन च प्रत्युपकारापेक्षतया साम्येऽपि करुणपितृनप्यतिक्रम्य स्वस्य हितैषित्वं प्रदर्शितं स्वादेयस्य वशीकारसर्वपुरुपार्थशिरोमणिस्वप्रेमदानात् एवञ्चात्मनः प्रियप्रेमरसास्वादाधिक्यं बोधितं सन्तततद्वर्द्धनलोभेन तत्तद्विरहदुःखसहनोचितेति संक्षेपः ॥ २० ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तृतीयपक्षीयांश्चतुर्धा विभजति । भजतोऽपीति । केचित् भजतोऽपि जनान् वै निश्चयेन न भजन्ति तर्हि अभजतः कुतो भजेयुः न कुतोऽपि ते चतुर्विधास्तत्रैके आत्मारामास्तेषान्तु स्वात्मसुखैकमग्नतयान्यसेवापेक्षास्फूर्त्योरभावान्नान्यकृतसेवायामुत्कर्षमतिर्न वा तद्भजनावकाशो नच तद्भजने किमपि फलोद्भावनमतो न तत्र प्रवृत्तिः नच तर्ह्यात्मारामुनिसेवनवैफल्यमाशङ्कनीयं तैस्तत्प्रत्युपकारप्रवृत्त्यभावेऽपि तत्सुकृतस्य तस्मिन्नात्मानन्दपूर्णेऽतिशयाधायकत्वाभावेन "तस्य पुत्रा दायमुपयन्ति सुहृदः साधु कृत्यां द्विषन्तः पापकृत्या"मिति श्रुतेः तत्सुहृदां तत्फलभावत्त्वाध्यवसायात् ज्ञानीत्वात्मैव मेतमिति स्मृतेस्तस्येश्वरात्मकत्वेश्वरद्वारा तत्सेवाफलोत्कर्षस्यावश्यं भावित्वात् "यद्येको ब्रह्मविद्भुङ्क्ते जगत्तत्पर्यातेऽखिलं तस्माद्ब्रह्मविदे देयं यद्यस्ति वस्तु किञ्चने"त्यादिस्मृतेश्च अन्ये आप्तकामास्ते त्रिविधा तत्र ये सर्वकामसुखानाम् एतस्यैवानन्दस्येत्यादिश्रुत्यात्मसुखमात्रत्वात्तन्नित्यप्राप्त्यैव प्राप्तसर्वकामास्तेतु प्रथमपक्ष एव गतार्थाः येच ग्राम्यसुखेषु नित्यार्त्तिदेन विरेनेत्याद्युक्तरीत्या तत्सुखकामे च दुःखं कामसुखापेक्षेत्यादिवाक्यैर्दोषदृष्ट्या तत्र कामाभावेनैवाप्तकामा विरक्तास्तेषामपि भगवत्प्रियत्वात्पूर्वेषामिव प्रत्युपकाराप्रवृत्तिरेव तत्सेवनफलस्यापीशद्वारैव सम्भवान्न सेवनवैफल्यं ये पुनः समृद्धकामत्वादाप्तकामा नृपादयस्तेषान्तत्सेवाकामाभावेन प्रत्युपकाराप्रवृत्तावपि बहुसमृद्धोऽयं कदाचिदपि यदि कृपां करिष्यति तदास्मद्बहुभद्रं भविष्यतीत्याशया जनानां तत्सेवाप्रवृत्तिः अन्ये ये अज्ञाः स्वबुद्धिमान्द्यप्रमादादिनान्यकृतसेवाज्ञानशून्यतयैवाप्रत्युपकारिणास्तेषामपि कदाचित्तत्परिज्ञाने प्रत्युपकारसम्भावना ये पुनर्गुरुद्रुहः कृतघ्ना उपकारिण उपकारं ज्ञात्वापि दुष्टचित्ततयैव तत्प्रत्युपकाराप्रवृत्ताः प्रत्युत विरोधिनस्ते तु दुर्जनत्वादेव सद्भिर्हेयाः परत्र दुःखभागिनश्चेति भावः ॥१९॥

नन्वेतेषु पक्षेष्वस्माकं द्वितीयपक्षनिवेशोऽपि भवतः कस्मिन्पक्षे निवेश इत्यपेक्षायां मम तु तत्सर्वविलक्षणत्वमित्याह । नाहन्त्विति । हे सख्य इति सम्बोधनेन नास्मदुक्तौ वञ्चनाशङ्कागन्धोऽपीति भावः अहं भजतो भजामि अपि तु न तथा वणिज इव स्वार्थार्थं किन्तु मत्तः सेवाफलप्राप्तौ विश्वासेन पुनः तेन स्वस्मिन्ननुवृत्तयेऽनुवृत्तिद्वारा तेषां परमानन्दघनस्वस्वरूपलाभाय चाभजतोऽपि भजामि परन्तु न कथा करुणानामिव धर्म्माय पितराविव रागपरवशतया वा निष्कामाराधकानामिव वा किन्तु स्वयमभजनेऽपि पालनदर्शनेन परमकृपालुदृष्ट्या स्वस्मिन्ननुवृत्तये तेषां स्वरूपसुखलाभाय च तथा अभजतो न भजामि तदपि अभजने दुःखप्राप्त्या तद्भयात्तद्दुःखनिवृत्तिसुखलाभाय मय्यनुवृत्तये ततः परमनिर्वृत्तिलाभाय च तथा भजतोऽपि न भजामि तदपि तेषां स्वस्मिन्ननुवृत्तये एव किञ्चिद्भजनानुभजनेतु तत्सुखप्राप्तौ विश्रमितानामनुवृत्तिशैथिल्ये परमपुरुषार्थलाभासम्भवात् भजने समनुग्रहात्सुखमनुभूय पुनर्मया भजने तद्विच्छेदे तत्प्राप्त्यै मय्यनुवृत्त्या परमपुमर्थसिद्धिरिति भावः । तत्र दृष्टान्तमाह । यथाधनः इति । यथा कश्चिज्जन्मारभ्याधनः कदाचित्किन्महद्धनं लब्ध्वा पुनस्तद्धने विनष्टे तच्चिन्तया निभृतोऽन्यन्न वेद तथा सकृदनुभूतमत्सुखलाभाय मय्यनन्यानुवृत्तिस्तया मन्नित्यप्राप्तिश्च भवति ॥ २० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तृतीयप्रश्नस्योत्तरमाह । भजत इति । ते चतुर्विधाः केचिदात्मारामाः अन्तर्मुखाः केचिद्बहिर्मुखा अपि पूर्णत्वादाप्तकामा उपकारापेक्षारहिताः केचिद् कृतज्ञाः उपकारानुपकारज्ञानविधुरा अत्यन्तमूढाः केचित् उपकर्त्ता गुरुः स्मृत इत्युक्ता गुर्वादय उपकारिणस्तेभ्यो द्रुह्यन्तीति ते तथाच तदुपकारं न जानन्ति प्रत्युतापकारं प्रकुर्वन्ति ते अतिकठिना इत्यर्थः ॥ १९ ॥

समानार्थकम् एतेषु मध्ये भवान् क इत्यभिज्ञानापेक्षायामहो स्वमुखेनैव चरमकोटिप्रविष्ट इति सन्तुष्टा अक्षिसङ्कोचैः परस्परं गूढस्मितमुखीर्मानिनीश्चालक्ष्याह । नेति हे सख्यः ! अहन्तु भजतोऽपि न भजामि तुशब्देन पक्षान्तरव्यावृत्तिः तच्चाभजनं नाकृतज्ञत्वादिनिबन्धनं किन्तु तदनुवृत्तिद्वारेच्छानिबन्धनमित्याशयेनाह । अमीषां भजताम् जन्तूनाम् अनुवृत्तये निरन्तरध्यानप्रवृत्त्यर्थं तान्न भजामि जन्तुमात्रं प्रति यदेवं तदा सखीर्युष्मान् प्रति किं वक्तव्यमिति संबोधनाशयः तथाच कारुणिकः परमसुहृदहं नत्वकृतज्ञ इति भावः । एतत्सदृष्टान्तमाह । यथेति । यथा अधनो दरिद्रो दैववशाल्लब्धधनो जातः पुनश्च तस्मिल्लब्ध धने विनष्टे सति तस्य धनस्यैव चिन्तया निभृतः पूर्णः अन्यत्क्षुत्पिपासादिकमपि न वेद ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

केचित्तु भजतोऽपि न भजन्ति यदा तदा अभजतः कुतो भजेयुः ते चतुर्विधाः एके आत्मारामाः "आत्मा वा अरे द्रष्टव्य" इत्यादिश्रुतिप्रोक्तजिज्ञास्यब्रह्मनिष्ठाः ध्रुवास्मृतियुक्ताः ध्यानप्राप्तब्रह्मानन्द-

एवं १ मदर्थोज्झितलोकवेदस्वानां हि वो २ मय्यनुवृत्तयेऽबलाः ! ।
मयापरोक्षं भजता तिरोहितं ३ मासूयितुं मार्हथ तत्प्रियं प्रियाः ! ॥ २१ ॥
न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ।
४ या मा भजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना ॥ २२ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे ।
पूर्वार्धे रासे गोपीसांत्वनंनाम
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निमग्नाः तेषां स्वभक्ताभक्तकर्मानुसारित्वाभावात् केचिदात्मकामाः लब्धप्राकृतैश्वर्याः विषयानन्दनिमग्नाः तेषामुपकर्त्रनुपकर्तृविवेकलोपात् अन्ये अकृतज्ञाः उपकारानभिज्ञा इत्यर्थः । अपरे "जन्मदो वृत्तिदश्चैव प्राणदो ज्ञानदस्तथा । गुरुर्भवति धर्मेण श्रेष्ठा ह्युत्तरोत्तरा" इत्यभियुक्तोक्तेभ्यो गुरुभ्यो द्रुह्यन्तीति तथा कृतघ्ना इत्यर्थः ॥ १९ ॥

नन्वङ्गात्र को भवानित्यत आह । नाहमिति । हे सख्यः ! अहं तु तद्विलक्षण इति तुशब्देन तेभ्यो वैलक्षण्यं द्योतितं तर्हि भजतोऽप्यस्मान् वने विहाय किमर्थमन्तर्द्धिकौतुकं त्वया कृतमत आह । अमीषां भजतामनुवृत्तिवृत्तये अनुवृत्तेर्मदनुरक्तेर्वृत्तये अविच्छेदाय निरन्तरध्यानप्रवृत्त्यर्थं भजतोऽपि न भजामि एतदेव दृष्टान्तेन स्पष्टयति । यथेति । तच्चिन्तया धनध्यानेन निभृतः पूर्णः अन्यद्धिताहितं न वेद ॥ २० ॥

---

भाषा टीका ।

कोई तो चाहने वालेको भी नहीं चाहते हैं तो नहीं भजन वाले को तो क्यों भजेंगे तिनमें एक आत्माराम हैं और आप्त काम हैं किंवा अकृतज्ञ हैं अथवा गुरुद्रोही हैं ॥ १९ ॥

हे सखीहो मेरे भजने वाले जनों को भी मैं नहीं भजता हूं क्यों कि मेरे विषै उनकी अनुवृत्ति प्रीति को बढाने के वास्ते जैसे कि निर्धन पुरुष को धन मिलके फिर खोजावै तो उसकी चिंता मैं लगने से और किसी चीज को नहीं जानता है तैसे ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं मदर्थोज्झितलोकवेदस्वानां मदर्थे उज्झितो लोको युक्तायुक्ताप्रतीक्षणात् वेदश्च धर्माधर्माप्रतीक्षणात् स्वा ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वो युष्माकं परोक्षमदर्शनं यथा भवति तथा भजता युष्मत्प्रेमालापान् शृण्वतैव तिरोहितमन्तर्धानेन स्थितम् तत्तस्मात् हे अबला ! हे प्रिया ! मामामसूयितुं दोषारोपेण द्रष्टुं यूयं मार्हथ न योग्याः स्थ ॥ २१ ॥

अस्तामिदं परमार्थं तु शृणुतेत्याह । नेति । निरवद्या संयुक् संयोगो यासां तासां वो विबुधानामायुषापि चिरकालेनापि स्वीयं साधुकृत्यं प्रत्युपकारं कर्तुं न पारये न शक्नोमि कथंभूतानाम् या भवत्यो दुर्जरा अजरा या गेहशृङ्खलास्ताः संवृश्च्य निःशेषं छित्त्वा मामामभजंस्तासां मादृशं तु बहुषु प्रेमयुक्ततया नैकनिष्ठम् तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु युष्मत्सौशील्येनैव ममानृण्यं नतु मत्कृतप्रत्युपकारेणेत्यर्थः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवमित्यस्यानुवृत्तय इत्यनेनान्वयः हे अबलाः ! इति तत्र स्वतः शक्त्यभावं सूचयति प्रियं प्रिया इत्यन्योऽन्यप्रियत्वेन मम निरोधानाद्यपराधो न ग्राह्य इति भावः । अन्यैस्तुर्व्याख्यातं यद्वा एवमित्यस्य मयेत्यनेनान्वयः तादृशचिन्तानिभृतेन मयेत्यर्थः तत्र हेतुः मदर्थेति अतः परोक्षमपि भजतैव प्रेमालापं शृण्वता गुणगाथां गायता भावविशेषं च पृथक् स्मरता केवलमन्तर्द्धानमात्रेणैव स्थितमित्यर्थः । अथवा अनुवृत्तिवृत्तये इत्युक्तं सा च कीदृश्यनुवृत्तिस्तां दृष्टान्तेनाह । यथेति । अतोऽस्य पूर्वेणैव सम्बन्धः हे सख्य ! इत्यनेन इदञ्च युष्मानधिकृत्य नोच्यते सहजसख्यादिति व्यञ्जितमेवाभिव्यञ्जयति । एवमिति हि अपि युष्माकमपि मय्यनुवृत्तये एवं युष्मान् न भजामि किं काका अपितु नैव तत्र हेतुः मदर्थेन यद्वा युष्माकमपि मय्यनुवृत्तये किमपितु नैव कुतः एवं तादृशचिन्तानिभृततया मदर्थमेव नान्यत् किञ्चिदुद्दिश्य उज्झिता उपेक्षिता लोकाश्चतुर्दशभुवनानि श्रीवैकुण्ठादयश्च अतो वेदाश्च तद्बोधित-

---

१ मदर्थार्पितलोक २ मय्यनुवृत्तयोऽ ३ सासूयितुं नार्हत मां- ४ यो मां भजेदुर्जरगेहशृङ्खलाः संवृश्च्य बुद्धिं प्रति यातिसोऽधुना इति विजः पाठः

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

कर्मानादरात् अत एव स्वाश्च पतिपुत्राद्यो याभिस्तासां स्वतएव मयि निरन्तरविशुद्धपरमानुवृत्तिवृत्तेरित्यर्थः । एवममुमुक्षुभ्यो मुक्तेभ्यश्च भक्तेभ्योऽप्यासां विशेषो दर्शितः तेषां तत्तदपेक्षासम्भवात तादृशभावाभावाच्च ननु तर्हि किमर्थमधुनैवान्तर्हितं तत्राह । मयेति । परोक्षं भजतेति कुत्रापि मया नागतमासीत् किन्तु युष्मदन्तिकेऽत्रैव वर्त्तमानेन परोक्षं मद्गोचरधिया युष्माभिः क्रियमाणं विचित्रप्रेमालापादिकं भजता हेतौ शतृङ् श्रोतुमित्यर्थः । एवं कितव योषितः कस्त्यजेदित्यादिकं परिहृतं यद्वा अकारप्रश्लेषेण अपरोक्षं साक्षादेव भजता तिरोहितं युष्मदृदृश्यमात्रेण स्थितं तथापि प्रियजनदुःखहेतुत्वेन दोषः स्यादेवेतिचेत्तर्हि क्षन्तव्यमित्याशयेनाह । प्रियंप्रिया इति । ननुयद्वा तदपिकिमर्थं तत्राह प्रियं प्रिया इति । प्रियाभिः सह प्रियस्य तद्युक्तमेवेति भावः । यद्वा तत् परोक्षभजनं प्रियं यस्य तं मां सहजमत्कौतुकरसेनेत्यर्थः । अहो एतेदं साधुकौतुकं यत् प्रियजनप्राणैः सह क्रीडनमितिचेत्तत्राह । प्रिया इति प्रेम्णा तदपि प्रीतिविशेषायैव स्यादित्यर्थः । यद्वा तत् तथापि माशब्दद्वयं निषेधे प्रकृत्यर्थं गमयति अर्हतेत्यर्थः । कुतः प्रियं प्रियाः प्रियस्य प्रियासु तथा कर्त्तुमयुक्तत्वादित्यर्थः । एतच्चानुनयनचातुर्यम् अन्यत्तत्र तत्र समानम् ॥ २१ ॥

व इति संबन्धमात्रे षष्ठी युष्मान् प्रतीत्यर्थः स्वसाधुकृत्यं स्वीयं प्रत्युपकारकृत्यं न पारये कर्त्तुं न शक्नोमि यद्वा यो युष्माकं यत् स्वीयम् असाधारणं साधुकृत्यं तदहं न पारये तत्र हेतुः निरवद्या सर्वनैरपेक्ष्येण सर्वोपाधिराहित्येन निर्मलप्रेमविशेषेण च निर्दोषा संयुक् संयोगः सम्यग् मद्विषयकाचित्तैकाग्रतासङ्गमो वा यासां तासामिति मुमुक्षुप्रभृतिमनः कामादिदोषः परिहृतः प्रत्युत स्वविषयकतादृशकामस्य महानेव गुणोऽभिप्रेतः निरवद्यसंयोगहेतुत्वात् किञ्च या इति दुर्जरा अच्छेद्या अपि गेहशृङ्खलाः गेहानि गेहसंबन्धिपतिपुत्राद्यस्तत्तदर्थकृत्यानिच तान्येव शृङ्खलाः कृतिनामपि बन्धहेतुत्वात् ताः संवृश्च्य अभजन् भवत्य इति प्रेमगौरवेण अतो मम तादृशतादृशत्वाभावात् न पारये इत्यर्थः इदञ्च ताभिः सहस्वच्छन्देन सदा क्रीडाळेभिनाक्रमपारणे हेतुः निरवद्यं निजाङ्गमात्मानं वा संयुञ्जन्ति समर्पयन्तीति तथा तासां किञ्च दुर्जराः गेहस्य शृङ्खला नित्यगोपालनादिदृढकृत्यनिबन्धान् सर्वबन्धुजनानुवृत्तिबन्धांश्च संवृश्च्य या भवतीरहं मामभजन्सेवितवानस्मि शृङ्खलामिति पाठेपि तत्रैवार्थः दुर्जरेति विशेषणेन शृङ्खलारूपेण च निजशक्त्याप्यच्छेद्यत्वं संवृश्च्येन च आसक्तित्यागेऽपि बहिस्त्यागासामर्थ्यं किंवा संच्छेदेनेच्छायामपि सत्यामसामर्थ्यं ध्वनितमितिदिक् । युष्मद्दात्मानर्पणेन सर्वनैरपेक्ष्याभजनेनच प्रत्युपकाराशक्तेः अत एव ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्यादिनिजवचनव्यभिचारापत्तेश्चाहंयुष्माकमृण्येवेत्यर्थः अन्यत्समानं यद्वा साधुर्यो ना पुरुषः मद्भक्तः कश्चित् प्रतियातु प्रत्युपकारेणानुगच्छतु आशिषि पञ्चमी यद्वा यो युष्माकं तत्स्वसाधुकृत्यं प्रतियातु अनुवर्त्ततामनुकरोत्वपि अहन्तु न पारयाम्येव इति सर्वथा प्रत्युपकारासामर्थ्योक्तिः अग्रे च प्रणयकलहाध्यायान्ते श्रीरुक्मिणीप्रत्ययमेव दर्शयेत् वयं प्रतिनन्दयाम इति अत्रच प्रतिनन्दनेऽप्यशक्त्या केवलमृणित्वमेवापादयत् अतस्तस्याः सकाशादप्यासां विशेषः प्रसिद्ध एवेति "निजोच्छिष्टप्रसादस्य प्रदानेन सदानुगम्" पुष्टं विधत्ते यस्तस्मै श्रीधरस्वामिने नमः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिण्याम्

द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अद्यैव च भवतीनां निकट एव स्थितवानस्मीत्याह । एवं दुहन्त्योऽभिययुः काश्चिदित्यादि प्रकारेण मदर्थेत्यादि । हे अबला इति तत्तत्परित्यागे दुष्करत्वं सूचयति । मासूयितुमित्यत्र हेतुविशेषमप्याह । प्रियं प्रिया इति । हि निर्द्धारणे । यद्वा । एवं यथाधन इत्यादिप्रकारेण यो युष्माकं मय्यनुवृत्तिवृत्तये एव मया तिरोहितम् । पदानि व्यक्तमेतानि नन्दसूनोर्महात्मन इत्यादिभवद्वाक्यानुसारेणाग्रतः पार्श्वतः स्थित्वैव भवद्दृष्टिमात्रागोचरीबभूव इत्यर्थः । किं कुर्वता परोक्षं भजता प्रेमालापादिमनुमोदमानेन । तथानुग्रहे हेतुः मदर्थेति यद्वा अन्यत्तैः माद्वयं निषेधे तथापि प्रियं मल्लक्षणं मासूयितुं मार्हथ अपि तु मया दत्तदुःखा यूयमर्हथैवेत्यर्थः । कुतः प्रियं प्रियाः ! प्रियस्य तथा-कर्त्तुमयुक्तत्वादित्यर्थः । एतच्चानुनयचातुर्यम् ॥ २१ ॥

व इति सम्बन्धमात्रे षष्ठी । युष्मान् प्रतीत्यर्थः । स्वसाधुकृत्यं स्वीयप्रत्युपकारकृत्यं न पारये कर्त्तुं न शक्नोमि । यद्वा । यो युष्माकं यत् स्वीयमसाधारणं साधुकृत्यं तदहं न पारये तत्सदृशप्रत्युपकारे न समर्थोऽस्मीत्यर्थः । स्वसाधुकृत्यत्वमेव दर्शयति । निरवद्या काममयत्वेन प्रतीयमानत्वेऽपि वस्तुतो निर्मलप्रेमविशेषमयत्वेन निर्दोषा संयुक् संयोगः सम्यङ्मद्विषयकचित्तैकाग्रता स्वस्वपत्यादि स्पर्शाभावेन च निर्दोषा संयुक् सङ्गमो यासाम् । किञ्च या इति दुर्जराः कुलवधूत्वेनच्छेत्तमशक्या अपि गेहशृङ्खला गृहसम्बन्धिन्य ऐहिकपारलौकिकसुखफलोकधर्ममर्यादाः संवृश्च्य या मामभजन् परमानुरागेण मय्यात्मनिवेदनं कृतवत्य इत्यर्थः । अतो ममान्यत्रापि प्रेमयुक्तत्वाच्च पारये इत्यर्थः । अत्रोत्तरं व इति पदमनपेक्ष्यैव या इति प्रयुज्यते पदत्वादेव च तेन योज्यते । अतः प्रथमपुरुषत्वम् । यद्वा । अन्यत्तैः धिगतो ध्रुवो गणनाविशेषो यस्मात्तेनानन्तेनायुपापीत्यर्थः । शृङ्खलामिति क्वचिदेकवचनान्तः पाठः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्

द्वात्रिंशोऽध्याय ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मयेति । परोक्षं भजता परोक्षमुपकारं कुर्वता ॥ २१ ॥

निरवद्यसंयुजां निरवद्ये मयि संयुक्तचित्तानां । वः साधुकृत्य मुपकारं कर्त्तुं न पारये या यूयं

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गोप्यः दुर्जयगेहशृङ्खलाः अच्छेद्यगृहस्नेह पाशान् संवृश्च्य छित्त्वा मा अभजन् तासां कर्तुं न पारये इत्यन्वयार्थः सा शृङ्खला अधुनापि प्रतियातु भूयोऽपि निवर्त्ततामित्यर्थः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनः कृतज्ञतामाविष्कुर्वन् कारुणिकत्वमेवाह । एवमिति । हे अवला ! मदर्थमुज्झितास्त्यक्ता लोका युक्तायुक्ता प्रतीक्षणात् वेदः धर्माधर्मानपेक्षणात् स्वा ज्ञातयश्च स्नेहत्यागात् याभिस्तासां वो युष्माकमनेन कृतज्ञत्वमाविष्कृतं मय्यनुवृत्तये परोक्षं भजता उपकुर्वता मया तिरोहितम् अनेन कारुणिकत्वमुक्तं तस्माद्धे प्रियाः ! प्रियतमं मामसूयितुं दोषदृष्ट्या द्रष्टुं मार्हथ ॥ २१ ॥

आत्मनः कृतज्ञता काष्ठामाह । नेति । निरवद्यं निष्कपटं यथा तथा संयुज्यन्ते भजन्त इति तथा तासां वो युष्माकं सुसाधु यथा तथा कर्तुं प्रत्युपकर्तुमहं विबुधायुषापि न पारये न शक्नोमि मनुष्यायुषा तु न शक्नोम्येव ब्रह्मायुषापि न शक्नोमीति भावः । या भवत्यः दुर्जरगेहशृङ्खलाः संछिद्य गृहरूपं पाशं सम्यक् छित्त्वा मा मभजन् तत्तस्मात्तासां वः सा शृङ्खला अधुना प्रतियातु भूयोऽपि निवर्त्ततामित्यर्थः । मया कार्यः प्रत्युपकारो मुक्तिप्रदानमेव तत्तु सदृशं भवेदिति भावः । यद्वा तस्माद्युष्माकमेव साधुना साधुकृत्येन तद्युष्मत्साधुकृत्यं प्रतियातु प्रतिकृतं भवतु "मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे ! नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षतीत्युक्तरीत्या युष्मत्साधुकृत्यं तेनैव जीर्यत्विति भावः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवान् गोपीनां सेवास्तवनव्याजेन स्वोपासनाप्रकारं दर्शयति । यथेति । यथा अधनो धनहीनः दरिद्रः दैवाल्लब्धधने नष्टे तच्चिन्तया नष्टधननियतरतमनस्कत्वेन नितरां भृतं गृहीतम् अन्यन्न वेद यद्वा निभृतं स्तिमितं निश्चलं स्थिरं पुरोवर्त्यन्यद्वस्तु हे अवलाः ! एवं मदर्थं मामुद्दिश्य अर्पिते लोकवेदस्वे लौकिककर्मादिकर्मलक्षणसर्वस्वे यासां तास्तथा तासां वो युष्माकम् अनुवृत्तयः सेवालक्षणा उपासना अविषया न स्युरित्यन्वयः तर्हि किमर्थं भवतान्तर्धायीत्याशङ्कयाऽस्माकं स्वभावोऽयमित्याशयेनाह । मयेति । अत्र भजतेति शतृप्रत्ययः इच्छावाची परोक्षं भजता व्यवधानमिच्छता मया तिरोहितं पारोक्ष्यं कृतं "परोक्षप्रिया इव हि देवा" इति श्रुतिः व्यवधानमस्मत्प्रियं यस्मात्तस्मात् हे प्रियाः ! यूयं प्रियं मां सासूयितुम् असूया सहितां मतिं कर्तुं नार्हथेत्यन्वयः "संनिकर्षो हि मर्त्यानामनादरणकारण"मिति स्मृतेश्च शिक्षणायाप्येवं कृतम् ॥ २१ ॥

ननु युष्मदनुग्रहाभावात् तत्कथमित्याशङ्क्यानुग्रहविशेषं कथयति । नेति । विबुधायुषा दिव्यवत्सरकल्पितजीवनलक्षणेनापि अहं निरवद्यसंयुजां निर्दुष्टमनोयोगवृत्तीनां वः सुसाधुकृत्यं युष्माकं सर्वसंमतं निर्दोषकर्म प्रतिकर्तुं न पारये न शक्नोमीत्यनेन गोपीष्वधिकोऽनुग्रहोऽस्तीति दर्शितम् न केवलं युष्मास्वनुग्रहविशेषो मम निर्व्याजभक्त्या भजमाने कस्मिंश्चिदपि स्यादित्याशयेनाह । यो मामिति । यो मां भजेन्मामुद्दिश्य भक्तिं करोति स पुरुषः स्त्रीजनो वाधुनास्मिम् जन्मन्येव दुर्जरदेहशृङ्खलाः भक्तिज्ञाने विना जरयितुं शिथिलीकर्तुमशक्याः लिङ्गशरीरलक्षणशृङ्खलाः संवृश्च्य छित्त्वा वृद्धिं स्वरूपभूतानन्दलक्षणां प्रति याति तस्य तावदेवाचिरमित्यादिश्रुतेः यद्वा दह्यते सिच्यते इति देहः दुर्जरा दुरुच्छेदाः पुत्रमित्रादिनिबद्धस्नेहलक्षणाः शृङ्खलाः संवृश्च्य मां भजेत्सेवते सोऽधुनैव भक्तिज्ञानादिसाधनसामग्रीलक्षणां वृद्धिं प्रतियातीत्यन्वयः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रिंशोऽध्यायः ॥ ३० ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न पारयेऽहम् न शक्नोमि २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तथापि यदेवं मया कृतं तत्र मासूयाकरणीयेत्याह । एवमित्यादि । हे अवलाः ! रामाः अव अवरवाम्यं लान्तीति तथा मा मामसूयितुं मार्हथ ननु भजन्तीरस्मान् विहाय गतवान् कथमासूयितव्य इत्याह । मयेति । परोक्षं भजतैव मया तिरोहितं तिरोभूयापि मया वो भजनं कृतमित्यर्थः । साक्षाद्भजनात् परोक्षभजनमेव प्रेमगमकं यतो भवत्यः प्रिया ननु जन्तवः अहं प्रियः नत्वात्मारामादिः इत्याह प्रियं प्रियाः ननु तर्हि तिरोहितमेव कथं तत्राह । वो युष्माकमनुवृत्तिवृत्तये अनुवृत्तेर्वृत्त्यर्थं भवतीनां मदङ्गसङ्गित्त्वेन पूर्णं मन्यानां पुनरुत्कण्ठां वर्द्धयितुं ननु तदा तिरोहितमेवेति सत्यं भजतेति यदुक्तं तत्र किंप्रमाणमिति चेत्मत्स्वभाव एव प्रमाणं यतोऽहं कृतज्ञ एवेति स्वकृतज्ञत्वं तासां विशेषणद्वारेण प्रकटयति । मदर्थेत्यादि । एवंप्रकारेण मदर्थं मन्निमित्तमुज्झितानि लोकवेदस्वानि याभिस्तासां वोऽभजने ममाकृतज्ञता स्यादितिस्वदोषपरिहारार्थं परोक्षभजनमेव कृतं तच्च सन्दर्शनरूपं कदाचिद्धीजनादिषु भवतीभिस्तु न दृश्य इति परोक्षं भजतेति पदयोर्ध्वनिः अतः—सम्यगुक्तं मासूयितुमित्यादि ॥ २१ ॥

यद्यपि वो भजनं कृतमेव तथाप्यहं वः ऋणीवेत्याह । न पारयेऽहमित्यादि । निरवद्या निरुपाधिर्निर्व्यलीका वा संयुक् यासां तासां वः स्वसाधुकृत्यं स्वकीयसाधुकर्म अहमीश्वरोऽपि न पारये शोधयितुं

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

न शक्नोमीत्यर्थः। यद्वा वः कृत्यं स्वसाधुस्वैरेव साधु यथा भवति तथा कर्तुं न पारये विलम्बेन पारयिष्ये इत्यपिनेत्याह विविधायुषा देवायुः परिमाणकालेनापि कुत इत्याह। या युष्मान् दुर्जरगेहशृङ्खलाः संवृश्च्य छित्वा माऽभजं यथा भवत्यो दुर्जरगेहशृङ्खलाः संवृश्च्य माम भजन् तथाहं भवतीर्माभजमित्यर्थः॥ २२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे द्वात्रिंशोऽध्यायः॥ ३२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं स्वस्याभजने हेतुमुक्त्वा प्रकृते तदभावमाह। एवमिति। यदुक्तं ताभिररण्ये स्त्रियो रात्रौ कथन्त्यक्तव्याः तदर्थमेवमुच्यते ह्ययमत्र कर्तव्यं भजनानुवृत्त्यर्थमभजनं रात्रौ रक्षार्थं भजनञ्च तत्परोक्षभजनेन सिध्यतीति मयापरोक्षं भजता तिरोहितं भजने हेतुमाह। एवमिति। मदर्थमेव उज्झिताः लोकवेदस्वा याभिः वृथा परित्यागव्यावृत्त्यर्थं मोचार्थपरित्यागव्यावृत्त्यर्थञ्च मदर्थमुज्झितेत्युक्तम् आद्ये त्यागोऽनिग्रहहेतुः द्वितीये न मम भारः त्रयः पदार्थास्त्यक्तव्याः लोको दुस्त्याज्यः आर्यमार्गो वैदिकः प्रकारः तादृश इति मयैव लोके नथैव प्रतीतिजननात् पतिपुत्रादयो दुस्त्याज्याः तत्रापि न मयि प्राप्ते किन्तु मदर्थं मत्कामनायामेव तदा मे चिकीर्षितो भवतीति सर्वधर्मान् परित्यज्येति तादृश एव मम भाव इति त्रितयपरित्यागे मया भजनं कृतं वस्तुतस्तु स्वपदं स्वात्मपरम् अन्यथा पतिपुत्रादीनामपि लोकवेदमध्यपातात्तेनैव तत्प्राप्तेः स्वपदमनर्थकं स्यात् तथाच स्वात्मकत्वेन स्नेहविषयत्वाभाव एव तत्त्यागः एतासां भगवदर्थमेव प्रीतिविषयत्वादात्मादीनामिति सारं युक्तश्चायमर्थः अनन्याः पालनीया इति वः युष्मान् मय्यनुवृत्तय इत्येकम् फलम् अबला इति सम्बोधनात् न सतामिव प्रत्यक्षेण भवतीनां भजने निवृत्स्यतीति ज्ञापितं परोक्षं भजता अतिरोहितं वा भजतां यत्तिरोहितं वा भजनं भोगो वा भोक्त्रैव मया भोगं कुर्वता तिरोहितं भवतीभिर्न दृष्ट इत्यर्थः। अनेनाभजनपक्षो व्यावर्त्तितः तस्मिन्सत्यसूया सम्भवति अकृतज्ञत्वादिदोषारोपणेन मा मसूयितुं नार्हथ यतः प्रियं प्रिये दुष्टे स्वस्यापि तथात्वस्यावश्यकत्वात् त्यक्तुमशक्यत्वात् किञ्च प्रिया यूयमकृतज्ञत्वादयो हि धर्मा न प्रीतिविषये भवन्ति औदासीन्यसामानाधिकरण्यात्॥ २१॥

एवं तासां मनोमार्जनमुक्त्वा भक्तिमार्गविरोधं परिहर्तुं ताः स्तौति। न पारयेऽहमिति।निरवद्यसंयुजां निर्दुष्टभजनयुक्तानां स्वसाधुकृत्यं स्वप्रत्युपकारकरणं विबुधायुषा ब्रह्मायुषा मन्वन्तरपरिमितायुषा वा विशेषेण बुधानां ज्ञानिनामनन्तायुषा वा न पारये भजनप्रत्युपकारयोर्वैलक्षण्यात् भवतीनां भजनं निष्कपटमस्मद्भजनं सकपटमिति महाल्पजलस्यापि तुल्यं बहुपि मरुमरीचिकाजलं भवति सत्यभजनन्तु ब्रह्मणोऽशक्यमेव जीवधर्मत्वात् तत्रापि विशेषमाह। या मा भजन्निति। दुर्जरा हि गेहशृङ्खला या जीर्यतोऽपि न जीर्यतीति तां सम्वृश्च्य छित्वा याः भवत्यः प्रसिद्धाः मा ममजन् यैः पूर्वं बद्धाः स्थिताः स्वार्थं तेषामर्थमात्मानञ्च मय्येव समर्पितवत्यः यदिः शृङ्खला त्यक्तुमपि शक्या न तु सर्वतः आवृते गृहे शृङ्खला एवमलौकिकर्वीणां यद्भजनं तद्भवतीनामेव साधुना भावप्रधानो निर्देशः साधुत्वेन प्रतियातु प्रत्युपकृतं भवतु साधवो हि महत्कर्म कृत्वा स्वयमेव तुष्यन्ति न तु प्रत्युपकारमपेक्षन्ते अतो मयि भजनं नास्ति भजनस्य जीवधर्मत्वात् अतो ऽस्मेऽपि यदि स्वयमेव सन्तुष्टाः तदा भजत नोचेद्यथासुखं विधेयमिति भावः नह्यशक्यं कश्चित्कर्तुं शक्नोतीति॥ २२॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमद्वल्लक्षणभट्टात्मज-श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे एकोनत्रिंशाध्यायविवरणम्॥ २९॥ ३२॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु जन्तून् स्वभक्तान् अजातप्रेम्णो जातप्रेम्णश्च यदेवं भजसि तत् सम्यक् करोषि। किंत्वस्मास्वपि तथैव त्वद्व्यवहरणाद्वयमपि जन्तुमध्य एव गण्या अभूमेति तासां सानुशयं वाक्यमाशङ्क्य भो मत्प्राणपरार्द्धप्रियपयोजपांशुपरमाणवः सख्यो युष्मासु यदन्यसाधारण्येनाद्य व्यवहृतं तदेतन्मे दौरात्म्यं क्षमध्वमित्याह। एवं यद्वा यथा तथैवेत्यमरोक्तेस्तद्वदित्यर्थः। ततश्च मदर्थे उज्झितो लोकः युक्तायुक्ताप्रतीक्षणात् वेदश्च धर्माधर्माप्रतीक्षणात्। स्वान्यात्मात्मीयधनञ्चातयश्च स्नेहत्यागात् याभिस्तासामपि वस्तद्वदनुवृत्तये उक्तलक्षणानामन्येषां भक्तानामिवानुवृत्तिवृद्ध्यै परोक्षमदर्शनं यथा स्यात्तथा भजतां युष्मत्प्रेमालापान् शृण्वता तिरोहितमिति काकुस्तस्मादतीवानौचित्यं कृतमित्यर्थः। न हि प्राचीना अर्वाचीना भाविनो वा भक्ता एवं सम्भवेयुः न ह्येतावत्या अप्यनुवृत्तेरपरावृद्धिरस्ति नहि परमाणुपरममहतोः ह्रासवृद्धी केनाप्याशास्येते तस्मादन्यप्रेमिमकान् प्रति युष्मत्प्रेमवैप्रलम्भिकप्रतापमहोत्कर्षजिज्ञापयिषामयी ममेयमसमीक्ष्यकारिता क्षम्यतामिति भावः। यस्मादेवं तस्मान्मां प्रति असूयितुं दोषारोपेण द्रष्टुं नार्हथ। तत्र प्रियमिति प्रिया इति च हेतुः प्रियस्य दोषं प्रियाः खलु न मनस्यानयन्तीत्यर्थः॥ २१॥

मन्मनसि सन्ततं यदुद्भवति तत् शृणुतेत्याह। नेति। निरवद्या कामकर्मलौकिकधर्मशास्त्रापेक्षाराहित्येन निरुपाधिसंयुक् संयोगो यासां तासां वः स्वेनैव साधु यत् कृत्यं न तु साधुत्वापादकेन केनचिद्वस्तुसम्पर्केण साध्वित्यर्थः। तत् न पारये प्रतिकर्तुं न शक्नोमि विबुधायुषापि देवानामायुः प्राप्यापीत्यर्थः। कृत्यमित्येकवचनेन युष्माकं क्षणिकमपि कृत्यमित्यर्थः। या मा मामभजन् संवृश्च्य दुर्जरा अपि पतिश्वशुरपितृभ्रात्रादिस्नेहबन्धुशृङ्खलाः निःशेषं छित्त्वैव। इतरेण अपक्वयोगिन इव संवृश्च्यापि ताः शृङ्खलामापुनैर्वाभजन्नित्यर्थः। अहन्तु पित्रो भ्रातरि स्वेषु बन्धुष्वपि स्निह्यामि च युष्मान् भजामि चेति। ये यथा मां प्रपद्यन्त इति। स्वप्रतिज्ञातोऽपि च्युत इति मम प्रतिक्रियाया असम्भवः। व्यज्यमानोऽयमर्थः श्लेषेणापि लभ्यते। स यथा। संवृश्च्य या युष्मान् अहं मा अभजं परसवर्णेन नकारदुकारयोः संयोगः। तत्तस्माद्वः साधुत्वेनैव तत् युष्मत्-

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

साधुकृत्यं प्रतियातु प्रतिकृतं भवतु । युष्मत्सौशील्येनैव ममानृण्यं वस्तुतस्तु ऋण्येव भवामि युष्माकमिति भावः । ततश्च तासिः प्रति स्वमनस्येवं विचारितम् । परमेश्वरत्वादेव सर्वगुणपरिपूर्णत्वेऽपि दोषगन्धमात्रराहित्येऽप्यस्मत्प्रेमरसविज्ञत्वेऽप्यस्मात् प्रेमवश्येनोत्कर्षयितुं स्वंचापकर्षयितुमस्मदृणी भवितुमेवास्मत्कर्मकोऽयमस्मत्त्यागस्तदिमं परावृभूषुं विजिगीषवो वयमेवाधन्या एवं भवितुमपारयन्त्योऽनेन फलतः प्रेम्णा जिता एवाभूमेति ॥ २२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

दशमे द्व्यधिकत्रिंशः सङ्गतः सङ्गतः सताम् ॥ ३२ ॥

---

### केन चित्कृता विशुद्धरसदीपिका ।

तदेव तासां मुख्यतमम् वर्गद्वयम् एकः कान्तभावेन भजमानानां परश्च सख्येनेति तत्राद्यमुद्दिश्याह । एवमिति । द्वुहन्त्योऽभियुः काश्चिदित्यादिप्रकारेणेत्यर्थः । मदर्थे मत्प्राप्त्यै उज्झितानि लोकवेदस्वानि याभिस्तासां वः युष्माकं मय्यनुवृत्तये यथाधनदत्युक्तप्रकारो वा युष्माकं मय्येव वृत्तिर्यथास्या तथा परोक्षं भजता भवतीनां दृष्टिमात्रागोचरीभूतेनेत्यर्थः । यद्वा किंकुर्वता परोक्षमभजता प्रेमालापादिकमनुमोदमानेन तिरोहितं न त्वन्यत्र गतमित्यर्थः । अतो हे प्रियाः ! मद्विषयकप्रेमकर्त्र्यः प्रियमेवं प्रेमपरमं मासूयितुं गुणेषु दोषमारोपयितुं मार्हथ प्रियाभिः प्रियं प्रतितया सम्भावयितुमयुक्तमिति भावः ॥ २१ ॥

अपरमुद्दिश्याह । नेति । व इतिसंबन्धमात्रे षष्ठी युष्मान् प्रतीत्यर्थः व इत्यवधानार्थं स्वसाधुकृत्यं स्वीयं प्रत्युपकारकृत्यं न पारये कर्तुं न शक्नोमि यद्वा हे सख्यः ! वो युष्माकं यत्स्वीयमसाधारणं साधुकृत्यं तदहं विबुधायुषापि न पारये न प्रत्युपकर्तुं समर्थः यद्वा विगतो बुधो गणनाभिज्ञो यस्मात्तेनानन्तेनेत्यर्थः तत्र हेतुः । निरिति निर्मलप्रेममयत्वेन निर्दोषा संयुक् सम्बन्धः शुद्धसख्यमार्ग यद्वा मत्सुखैकतात्पर्यपरत्वेनान्तः स्वसुखस्पर्शाभावेन निर्दोषा युक् मया सह सख्यभावेन मेलनं विद्यते यासां तासां तत्र हेतुः दुर्जरेति दुर्गता जरा यस्मात्तद्दुर्जरं यौवनं तद्वायतीति दुर्जरगः कामः तस्य या इहा चेष्टा सैव प्रेमप्रतिबन्धा चक्रुहला तां संवृश्च्य सम्यक् छित्वा मामभजन् शुद्धप्रेमर्णेवेति शेषः अथवा यामाभजन्निति गेहशृङ्खला इति च पाठः तत्र दुर्जरा गेहस्य शृङ्खलाः नित्यक्षोपालनादिगृहकलत्रनिबन्धनाः बन्धुजनानुवृत्तिनिबन्धनाः वस्तुतस्तु "गृहिणी गृहमुच्यते" इत्यादिस्मृतेः कान्तभाववतीभिर्दाम्पत्यनिबन्धनाः संवृश्च्य या भवतीः अहं माभजं न सेवितवानस्मि तत्प्रत्युपकारं नो युष्माकं साधुना सर्वनिरपेक्षभजनेन कृत्वा प्रतियातु प्रतिक्रियामनुकरोत्वित्यर्थः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धेरासपञ्चाध्यायीव्याख्याने विशुद्धरसदीपिकायां चतुर्थोऽध्यायः ॥ ४ ॥

मूलस्य द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

तर्हि स्माकं भजन्तीनामपि भवता तथैवाभजनं कृतं नेत्याह । एवमिति । अत्र प्रश्नोत्तरादिव्यवधानेन गोपीनां भगवदर्थसर्वत्यागस्यासंनिहितपूर्वप्रकृतत्वाभावाद्व्यवहितपरामर्शात्प्रत्यक्षपरामर्शस्यैव ज्यायस्त्वादेवं शब्दः प्रत्यक्षानुभूतवाची एवं स्पष्टं परिदृश्यमानं यथा स्यात्तथा मदर्थ एव "एतमेव परिव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः येनाहं नामृतास्यां किमहं तेन कुर्यां "मित्यादिश्रुतिमनुवृत्योज्झितास्त्यक्ता लोकाः प्रवृत्तिपथवेदफलत्वेन श्रूयमाणाः स्वर्गादयस्तत्प्राप्तिसाधनवेदा इति तन्निरूपिताः कुलजात्यादिधर्मास्तद्धर्माः ऐहिकाश्च सर्वे स्वाः स्वसम्बन्धिनः पतिबन्धुग्रहवित्तादयो याभिस्तासां वो यद्वा वस्तुतः "सर्वे वेदा यत्पदमामनन्ति वासुदेवपरा वेदाः वेदैश्च सर्वैरहमेव वेद्य" इत्यादिनाहमेव सर्ववेदप्रतिपाद्यः "तत्त्वमसि अहमात्मा गुडाकेश स आत्माचित्यप्रियेः सयुजा सखाया" इत्यादिना सर्वेषां स्वात्मबन्धुश्चातः सर्ववेदार्थस्वात्मभूतमदर्थमेवोज्झिता लोकाः पामरजना वेदास्तन्निर्णीताः प्रवृत्तिपरा वेदार्थास्तदभिमता एव स्वाः स्वीया देहगेहादयो याभिस्तासां वः प्रथमत एवमपि सिद्धा वृत्तिः सा मया स्थूणा निखननन्यायेन विनयेन वा पूर्वं दृढीकृतापि फलानुभवे योगसिद्धानां प्राप्ताष्टसिद्धिभिरिव रसास्वादकसायादिभिरिव वा मदमानाभ्यां प्रतिबद्धा तस्या अनुवृत्तये यतो यूयमबला मदमानप्रतिबन्धहरणबलरहिता यद्वा अकारो वासुदेवोऽहमेव सर्वसम्पदात्मको बलं यासां तथाभूताः प्रियाश्चातो मया परोक्षमदर्शनं यथा स्यात्तथा भजतैव तिरोहितं यद्वा प्रहसितं प्रियेत्यत्रोपवर्णितरीत्या भवतीनामप्यपरोक्षमेव यथाभवति तथा भजतैव ध्यानलयेनास्माकमिदं विहारदर्शनमिति बुद्धिमात्रप्रतिबन्धेन तिरोहितमन्यथामदेकप्राणानां वो मद्वियोगे जीवनमेवासम्भाव्यमतो मया युष्मत्सेवनात्यागात् मामां प्रियमसूयितुं मार्हथ गुणे दोषबुद्धिरसूया तां कर्तुं न योग्या प्रियदोषेष्वपि गुणबुद्धेरेव न्याय्यत्वात् ॥ २१ ॥

ननु कमेवास्माभिः निजजनसमयसंनसंस्मितेत्यत्रास्मन्मानस्मितमात्रापनेयत्वेनान्तर्हितैवत्यर्थ्य तत्राह । न पारयेऽहमिति । या यूयं दुर्जरां गेहशृङ्खलां संवृश्च्य सम्यक् छेदयित्वा मामभजन् तासां निरवद्यसंयुजां वः मानमात्रस्य स्मितमात्रापनेयत्वान् स्वस्मिन्मयि यत्साधुकृत्यमुपगमनं मया विप्रलब्धेऽप्यनुसरणादि तदनोऽहं विबुधानां देवानामायुषापि नानाकालसेवनेनापि प्रतिकर्तुं न पारये किमल्पायुषा तदन्तर्गतकेनचित्कालेन वा अतो मम ऋणापाकरणे असमर्थत्वाद्वः साधुनैव तत्प्रतियातु भवत्यः स्वसाधुतया ममानृण्यं जानन्तु अस्मर्थस्य ऋणिनो महाजनैरिव यद्वा अस्मिन्नर्थे देवायुषा भगवत्समीपे आधिक्याभावात्तथोक्तमनुपपत्तिरेवातो बुधाः ब्रह्मतत्त्वविदो विबुधास्तुपरामभक्तास्मकप्रेमलक्षणबोधवन्तस्तेषामायुषा जीवनभूतेन स्वात्मनापि न पारये —

एषां घोषनिवासिनामुत भवान्किंदेव रातेति न
श्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ॥
सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते ॥

इत्यादिना ब्रह्मणा निर्णीतत्वात् अतो वः साधुनेत्यादि पूर्ववत् यद्वा भगवतो ऋणापाकरणासामर्थ्यंभगवत्त्वक्षतौ तत उत्कर्षेऽपि गोपी-

श्रीरामनारायणकृतभावभावविभाविका ।

वामत्युक्तपासिद्धेर्नायमर्थः अपितु ब्रह्मणा तथा निर्णीतत्वान्निरव-द्यसंयुजां तत्सेवनानुरूपफलान्तरासंभवेन मम स्वात्मसमर्पणेऽ नृण्यसम्भवेऽपि यथा नित्यमुक्तस्यापि मे प्रेमबन्धनमेवं सर्वज्ञस्यापि प्रेमप्रमादस्वाकारश्च तथा प्रेमिणामृणित्वमेवेष्टमृणित्वे नित्यसत्फलाभादानृण्यस्य तदलाभेनानिष्टतया न पारये इत्येवोक्तं वस्तुतस्तु यथा केनचिदतिधनिना महाजनेन स्वसमर्पितधनव्या-पारिणः स्वकाशात्किमपि कार्यार्थमृणग्रहणेऽपि तद्धनस्य तदी-यत्वेनानृण्यमेवैवमस्यः साधुत्वस्याप्यन्तर्यामिणो मेऽतिप्रेमाधी-नतया वः साधुनैव तत्प्रतियातु ॥ २२ ॥

यन्त्रस्य गुणदोषौ न यन्त्रिणो मधुसूदन ! ।
त्वत्प्रेम्णा त्वत्कृता व्याख्या तया तुष्यतु मे भवान् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धान्तर्गत
रासपञ्चाध्यायीव्याख्यायां श्रीचन्द्र-
भागाख्याविष्णुसख्यापन्न श्रीरामनारायण रचितायां
भावभावविभाविकायां चतुर्थाध्यायव्याख्या समाप्ता ॥ ४ ॥
मूले द्वात्रिंशः ॥ ३२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं वो युष्माकं मय्यनुवृत्तये परोक्षमदर्शनं यथा लोकादि-त्यागे दुर्वेला इति तदाशयः मया तिरोहितं तिरोधाय स्थितं यतो-मदर्थेऽज्झितलोकवेदस्वानां मदर्थमुज्झितस्त्यक्तो लोको युक्तायुक्तप्र-तीक्षणात् वेदश्च धर्माधर्मानादरात् स्वा ज्ञातयश्च स्नेहत्यागात् याभि-स्तासां ननु भवतीष्वचलास्य चलं प्रकटयितुं मया तिरोहित-मिति सूचनाय संबोधनं हे अबलाः । भवति तथा भजन्तीति युष्माकं प्रेमाकुलानां ममतैव तस्मा दिप्रयं मामसूयितुं दोषारोपेण द्रष्टुं यूयं मा अर्हथ न योग्याः स यथाहं युष्माकं प्रियस्तथैव यूय-मपि प्रिया अत्रार्थे संशयो न कर्तव्य इत्याशयेन संबोधयति । हे प्रिया ! इति मानिनिपक्षे यद्यप्येवं तथापि तादृशं प्रियं मां प्रियाः यूयमा-सूयितुमर्हथेति मां प्रियासु प्रियस्य तथाप्रवृत्तेरनुचितत्वादिति भावः ॥ २१ ॥

आस्तामिदं परमार्थं तु शृणुतेत्याह । नेति । काममयत्वेन प्रती-यमानापि वस्तुतो निर्मलप्रेममयत्वेन निरवद्या निर्दोषा संयुक् मद्वि-षयकचिरोत्कामता अङ्गसङ्गमो वा यासां तासां वः स्वीयं समीचीनमप्युप-कारकृत्यं विबुधायुषा देवायुषा ब्रह्मायुषा वा विबुधानां ज्ञानिनां मंसनायुषापि न पारये प्रत्युपकारहेतुर्लोकवेदमर्यादाः विवृश्च्य निःशेषं छित्त्वा या मामभजन् शरीराद्यर्पणं कृतवत्यः तथाचाभिज्ञापक्षे भजनस्य जीवधर्मत्वात्तादृशभजनस्य मयि दुर्लभत्वान्न पारये अनभिज्ञापक्षे मम चित्तस्य पितृभ्रातृबन्ध्वा-दिष्वपि स्निग्धत्वान्न पारये मानिनीपक्षे मम चित्तं बह्वीषु प्रेमयुक्तं तत्त्वनन्यताङ्गतमतो न पारये तत्तस्माद्युष्माकमेव साधुना साधु-त्वेन प्रतियातु प्रत्युपकृतं भवतु तथा च युष्मत्सौशील्येनैव ममा-नृण्यं ननु मत्कृतेन प्रत्युपकारेणेति भावः । निवृत्तिपक्षे भजतोऽपि जन्तूनहं न भजामि विषयतया तेषां प्रकटो न भवामि किमर्थमि-तिचेत्तत्राह । अनुवृत्तये प्रतिबोधं विदितत्वसिद्धये एतत्सदृष्टान्त-माह । यथेति । एवं वो युष्माकं मय्यनुवृत्तये मदर्थोज्झितलोकवेद-स्वानां विवेकिनां परोक्षं भजता वर्तमानेन मया परो-क्षतया लब्धेनापि मया तिरोहितम् अन्तर्द्धानेन स्थितं तथा च यावद्ब्रह्मसाक्षात्कारो न भवति तावच्छ्रवणाद्यावृत्तिः कर्तव्या परोक्षतया भातस्य तिरोहितत्वात् तथाच भगवतो बादराय-णस्य सूत्रम् "आवृत्तिरसकृदुपदेशात्" इतीति भावः । तस्मात्प्रियाः प्रतिपादकत्वेनाभिप्रेताः यूयं प्रियप्रतिपादनत्वेन सम्मतं माम् अहो अस्मद्विचारपरस्य झटिति प्रत्यक्षतया कुतो न भातीति सूचित-मित्यर्थः । आस्तामिदं जीवरूपेण बद्धस्य मम बन्धननिवारकाणां युष्माकमुपकारस्य प्रत्युपकारस्य प्रत्युपकारं त्वहं न पश्यामी-त्याह । नेति । निर्बन्धकर्तृत्वादिदोषासंस्पृष्टे मयि संयुजां तात्पर्येण संगतानां वः स्वसाधु कृत्यं विबुधायुषापि न पारये यतो भवत्यो दुर्जरा देह गेहादिशृङ्खला मदीयाः संवृश्च्य मामभजन् तस्मात्तद्युष्मत्साधुकृत्यं स्वसाधुत्वेन प्रतियातु श्रुतिकृतो-पकारस्य प्रत्युपकारः केनापि कर्तुमशक्य इत्यर्थः ॥ २२ ॥

इतिश्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपाद-
शिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिमिश्र-
सूरिकृतायां भागवतगूढार्थदीपिकायां
दशमस्कन्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अबलाः ! एवमेव मदर्थे उज्झितो लोकस्तदनुरूपयुक्तायुक्तप्र-तीक्षणात् वेदश्च धर्माधर्मप्रतीक्षणात् स्वाः ज्ञातयश्च तत्स्नेह-त्यागात् याभिस्तासां वो युष्माकं मयि ध्यानार्हे विश्वकारणे "कारणन्तु ध्येय" मिति श्रुतिविषये अनुवृत्तये परोक्षमदर्शनं यथा भवति तथा भजता उपकुर्वता स्नेहोद्रेकं कारयित्रा मया तिरोहि-तम् अन्तर्द्धानेन स्थितम् तत्तस्मान्मा मां भवतीनां प्रियं हे प्रियाः ! असूयितुं दोषदृष्ट्या द्रष्टुं यूयं मार्हथ ॥ २१ ॥

तासां निर्दोषपदासीत्वं स्वस्य परमस्वामिनः परमकृतज्ञत्वं चाह । नेति । निरवद्या संयुक् संयोगो यासां तासां वो युष्माकं विबुधायुषापि बहुकालेनापि स्वसाधुकृत्यं स्वीयं प्रत्युपकारकृत्यं कर्तुमहं न पारये न शक्नोमि या भवत्यो दुर्जरां गेहशृङ्खलां संवृश्च्य सम्यक् छित्त्वा मामामभजन् अतो वो युष्माकमेव साधुना साधु-कृत्यं प्रतियातु प्रतिकृतं भवतु भवतीनां सौशील्येनैव ममानृ-ण्यमिति भावः ॥ २२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वात्रिंशाध्यायार्थप्रकाशः ॥ ३२ ॥

---

भाषा टीका ।

हे अवला ! गोपियो हो तुम सबने मेरे लिये सब लोक वेद कुल की मर्यादा छोडदी है तब मेरे विषे तुमारी निरंतर प्रीति

भाषा टीका ।

वढाने के वास्ते मै अंतर्धान होगया परंतु मै तुमारा अनुशरण हीं करता हूं तिस से हे प्यारियो ! हो मैं तुमारा प्रिय हूं तुम मेरे मे दोष मत देखो ॥ २१ ॥

तुम सब निष्कपट से संबंध वाली हौ तुमारे उपकार के वदले को मैं देवताओं की आयु से भी नहीं करशकूंगा जि। तुम ने वडी कठिन घर की शांकलों को काटकर मेरा आश्रय लिया है सो इस का उपकार तो तुमारी ही साधुता से होगा हम कुछ नहीं कर सकैंगे ॥ २२ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धरासपंचाध्यायी वत्तीस में अध्याय की भाषाटीका समाप्त ॥ ३२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

### श्रीशुक उवाच ।

इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ।
जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥१॥

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयस्त्रिंशे ततो गोपीमण्डलीमध्यगो हरिः ।
प्रियास्ता रमयामास ह्लादिनीवनकेलिभिः ॥

तत्तदा अङ्ग हे राजन् । यद्वा तस्य भगवतोऽङ्गेन वपुषा करचरणाद्यवयवैर्वोपचिताः समृद्धा आशिषो यासां ताः ॥

#### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

रासलीला जयत्येषा जगदेकमनोहरा ।
यया श्रीव्रजदेवीनां श्रियोऽपि महिमाधिकः ॥

इत्थमीदृशीः भगवतः तादृशवचनादिना निजाशेषभगवत्तां प्रकटयतः अतः सुपेशलाः परममनोहराः विरहः भूतो भावी च तज्जं तापं दाहं. जहुः पूर्वमुक्तस्याप्यस्यात्र पुनरुक्तिः विरहेऽप्यपरित्यजनात् तथा विशेषतो निजऋणित्यादिप्रतिपादनेनापुनर्विच्छेदस्य मननाद्बाधुनैव सम्यक्तापत्यागविवक्षया यतो गोप्यः सहजप्रेमरसपरिप्लुतचित्ता इत्यर्थः । किञ्च तदङ्गेति आलिङ्गनकरग्रहणादिना सम्पन्नमनोरथाः सत्यः यद्वा भगवत एव विशेषणं सुपेशलवाग्धेनुत्वेन तासां गोपीनामङ्गैरुपचिताशिष इति ॥ १ ॥

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रासलीला जयत्येषा जगदेकमनोहरा ।
यस्यां श्रीव्रजदेवीनां श्रीतोऽपि महिमा स्फुटः ॥

इत्थमीदृशीः सुपेशलाः परममनोहराः । विरहो भूतो भावी च तज्जं तापं जहुः विरहेऽप्यपरित्यागश्रवणात्तथा विशेषतो निजऋणित्वादिप्रतिपादनेन च दैवात् पुनर्विच्छेदेऽप्यत्यन्तपरित्यागशङ्कापगमाच्च । अतः पूर्वमुक्तस्याप्यत्र पुनरुक्तिरधुनैव सम्यक् तापपरित्यागस्य विवक्षया । किञ्च । तदङ्गेति आलिङ्गनकरग्रहणादिना सम्पन्नमनोरथाः सत्यः । यद्वा । भगवत एव विशेषणं सुपेशलवाग्धेनुत्वेन तासां गोपीनामङ्गैरुपचिताशिष इति ॥ १ ॥

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥ २ ॥

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथैवं सूक्ता भिर्गोपीभिः सह भगवतो रासक्रीडामनुवर्णयति त्रयस्त्रिंशेन । इत्थं भगवतः सुतरां पेशला वाचः श्रुत्वा गोप्यस्तस्याङ्गेनाङ्गसङ्गेनोपचिताः समृद्धा आशिषो यासां ताः तथाभूताः विरहजं तापं जहुः ॥ १ ॥

#### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिप्रसन्नभगवत्प्रीतिरेवानन्दानुभवे कारणं नान्यत्साधनमिति निदर्शयितुं रासक्रीडां वर्णयत्यस्मिन्नध्याये "स तत्र पर्येति जक्षत् क्रीडन् रममाणः" इत्यादिश्रुतिः तत्र गोपीनां कृष्णविरहसमुद्भूतसन्तापप्रणाशं वक्ति । इत्थमिति । तापत्यागे निमित्तमाह । तत्स्वङ्गेति । हरेरङ्गसङ्गलक्षणसेवनेन उपचिताः फलरूपेण परिणताः आशिषः प्रार्थना यासां तास्तथा यद्वा उपचिताः संचिताः समृद्धिङ्गताः आशिषः शुभानि यासां तास्तथा ॥ १ ॥

#### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विरहो भूतो भावी तज्जं विरहेऽप्यपरित्यजनात् निजऋणित्वाङ्गीकाराच्च ॥ १ ॥ २ ॥

#### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ तावत्तैव भगवदनुनयेन तासां हृत्तापो व्यरमादित्याह । इत्थमित्यादि । सुपेशलाः सुस्निग्धाः तदङ्गैः श्रीकृष्णाङ्गैरुपचिता आशिषः सुखानि यासाम् एवमुक्त्वा युगपदेव सर्वाः प्रत्येकमालिङ्गितवानिति ध्वनिः ॥ १ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

त्रिंशत्तमे हरिः प्रीतो लीलां कामकृतामपि ।
इन्द्रादिदुर्लभां चक्रे स्वानन्दार्थमितीर्य्यते ॥
अस्याः सर्वोपकाराय फलश्रुतिरुदीर्य्यते ।
लौकिक्यपि यदा दृष्टिस्तदा सिद्धान्त इर्य्यते ॥
रसात्मकस्तु यः कामः सोऽत्यन्तं गूढ एव हि ।
अतः शास्त्रं प्रवृत्तं हि तृतीयं भारतं तथा ॥
अतोऽत्र भगवांश्चक्रे नृत्यं कारितवांस्तथा ।
सर्वाङ्गेषु तु यां लीनः स यथा व्यक्ततां व्रजेत् ॥
जलं वायुश्च सामग्री श्रमात् शीतं च जायते ।
अत्रैव लोकप्रकटमाधिदैविकमुत्तमम् ॥
कामाख्यं सुखमुत्कृष्टं कृष्णो भुङ्क्ते नचापरः ॥

एवंपूर्वाध्याये तासां सर्वभावेन प्रमाणेन प्रमेयेन दुःखं दूरीकृतवान् तद्दुःखमज्ञानतश्चेत् तदैव दूरीकृतं भवति अन्यथा भगवतैव दुःखं दत्तं स्यात् अतो भगवता त्यक्त्वा न गतामिति न भगवान् दुःखहेतुः किन्तु ज्ञानमेव अतो भगवद्वाक्यात् अज्ञाने गते तन्मूलकं दुःखमपि गतमित्याह । इत्थमिति । भगवतो वाचः श्रुत्वा विरहजं तापं जहुः भ्रमादेवास्माकं विरहो जात इति ननु वचनमात्रेण कथमज्ञाननिवृत्तिः तत्राह । भगवत इति । गोप्य इति विपरीतभावनानिवृत्त्यर्थं ननु ता वाचः कथं न मनसि सन्देहमुत्पादितवत्यस्तत्राह । सुपेशला इति । अतिमनोहरा इति मनसि विचिकित्सायामेवं सन्देहः शब्दस्वाभाव्यादेव मनसि सन्देहो न जातः अतो विरहजं तापं जहुः नास्माकं विरहो जात इति ज्ञातवत्यः यथा स्वप्नादुत्थितः स्वाप्निकं दुःखं न मन्यते तस्य भगवतः अङ्गैरुपचिता आशिषो यासां भगवत्कार्यव्यतिरेकेणैव भगवदवयवैरेव सर्वमनोरथाः पूरिताः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

त्रयस्त्रिंशे रासलास्यविहारजलकेलयः ।
प्रश्नोत्तरावयप्युक्तानि परीक्षिच्छुकदेवयोः ॥

सुपेशला अतिमनोहराः तस्याङ्गस्पर्शादिना उपचिता आशिषः कामा यासां ताः । भगवत एव वा विशेषणम् । गोपीगात्रस्पर्शजनितसुखस्येत्यर्थः । तेन च प्रश्नोत्तरसमाप्तौ मानशान्त्या तदा आलिङ्गनचुम्बनादिविलासा आसन्निति द्योतितम् ॥ १ ॥

---

केनचित्कृता विशुद्धरसदीपिका ।

रासलीलाजयत्येषा मनोहर मनोहरा ।
यस्यां श्रीराधिका देव्याः सर्वतो महिमा स्फुटः ॥

शुक इति इत्थमीदृशीः एताश्च सुपेशलाः परममनोहराः यद्वा शोभनावयवाः भगवतः किशोरीरमणस्य वाचः परमप्रेमप्रकाशकसदुक्तीः श्रुत्वा विरहो भूतो भावी च तज्जन्यं तापं अविश्वासात्मिकां चित्तग्लानिं जहुः त्यागानुकारेऽप्यपरित्यागनिश्चयात् विशेषतः ऋणित्वादिप्रतिपादनेन सर्वशङ्कापगमाच्च वस्तुतस्तु सखीरप्यस्मान्वञ्चयित्वास्मत्प्राणेश्वरीं रहोऽनयत्तत्किंवयमयोग्या इतियोऽन्तस्ताप इति यथायोगं तत्र हेतुः । तदिति । तस्य भगवतोऽङ्गेन वपुषा करचरणाद्यवयवैर्वा उपचिताः समृद्धा आशिषो यासां ताः तच्च प्रागेव दर्शितं काचित्कराम्बुजं शौरेरित्यादिना आशिषश्च शिरसि धेहि न इत्याद्याः यद्वा तासां वाचामङ्गैः शब्दाद्यवयवैरिति किम्पुनरभिप्रायेण यद्वा अङ्गैः सुरतचिन्हाङ्कितैः उपचिताः सम्पन्ना आशिष अभिलषितानि यासां तत्र प्रथमेऽर्थे तदङ्गैः श्रीकृष्णस्याङ्गैरेव तदालिङ्गनभुजक्षेपादिभिरेवोपचिताः परमर्द्धिं प्राप्ताः आशिषस्तत्सम्भोगेच्छारूपा यासामिति तत्सुखोदयेन तदाच्छदनं वैदग्ध्यञ्च सूचितं यदाहुः "विदग्धानां मिथोलीलाविलासेन यथा सुखम् । न तथा संप्रयोगेण इतिशास्त्रविनिर्णयः" यथा अङ्गोत्तीर्णविलेपनं सखिसमाकृष्टिक्रियायां मणिर्मन्त्रौ हन्तमुहुर्वशीकृतविधौ नामास्य गोपीपतेः । निर्माल्यस्रगियं महौपाधिरिह स्वान्तस्य सम्मोहने नासाङ्कस्तिसृणां गृणाति परमाचिन्त्यप्रभावावलिम् । ततश्चैकमत्यमपि लब्धमिति दर्शितम् ॥ १ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

श्रियं श्रीशं गिरां ढुण्ढिं शिवां शिवमजं सुरान् ।
गुरून् द्विजान् विदो भक्तान् वन्दे विष्णोर्वपुर्जगत् ॥
ब्रह्मादिजयसंरूढदर्पकन्दर्पदर्पहा ।
जयति श्रीपतिर्गोपीरासमण्डलमण्डनः ॥
श्रीवृन्दावनकुञ्जे सुमनःकुञ्जे सतां सदा ।
सङ्क्रीडन् रमतां कृष्णो रासरत्यादिकेलिभिः ॥
पञ्चमे नन्दजो गोपीरासमण्डलमण्डनः ।
रमयामास ताः सर्वा रासरत्यादिलीलया ॥
पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो
मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेदखेदाम्बुपूरमनुपूरयतु
प्रियं नः ॥

स्वात्मभूतहरिणा यथा जीवानां कदापि वियोगो विभ्रमादेव तद्विच्छेदे सति दुःखं भगवन्निगमश्रवणजज्ञानेनैव विच्छेदविच्छेदेन तत्स्वरूपानन्दावाप्त्या कामपूर्त्या तदुपशमस्तथा गोपीनामपि कृष्णात्मनां न कदापि तद्विच्छेदः प्रेमपथमुपदेष्टुं विभ्रमाणामपि तासां लीलाविभ्रमादेव विच्छेदविभ्रमोऽर्पणविभ्रमश्चाभूत् भगवद्वचोभिरेव ता विभ्रमा अभूवन्नित्याह भगवान् शुकः । इत्थमिति । ता यतो गोप्यः प्रेमपथगोपनं रक्षणं शीलं यासां ता अतस्तद्रक्षणाय भगवता स्वात्मना नित्या वियोगं लीलाविभ्रमैरादौ गोपयन्त्यः पुनर्भगवत्प्रापकप्रेमपथसाधनबोधाय यतो गा इन्द्रियाणि वाचश्च पान्तीति गोप्योऽतः स्वेन्द्रियाणि वाचश्च तल्लीलानुकारतदन्वेषणादिचेष्टाभिस्तद्गुणगानैश्च रक्षन्त्यः पुनस्तदभिव्यक्तप्रेष्ठमपि गुरूपदिष्टतच्छुश्रूषालब्धबोध एव शोकापनोदक इति श्रुतिगाः पात्यस्तं गुरुत्वेन प्रतिष्ठाप्य सेवाप्रश्नाभ्यां प्राप्ततद्वाचो गाश्चाप्रमादसविश्वासश्रवणेन पात्यो भगवतो वाचः श्रुत्वा विरहजं तापं जहुः भगवतो वाच इत्यनेनापि नित्यनिर्दुःखपूर्णपरमानन्दस्वरूपे स्वस्मिन्दुःखाभावसुखयोरजापादकतया भगानां यदपार्थकत्वं तत्परिहाराय स्वाश्रितेष्वेव स्वैश्वर्येण साधनशक्त्याधानं स्वधर्मयशोभ्यां तदन्तःकरणशोधनं स्वश्रिया तत्सर्वगुणश्रीसम्पादनं विरागेणेतररागापनोदं ज्ञानेन विभ्रमाभावमापादयतो वाचां श्रवणस्य विभ्रमनिवृत्तिपूर्वकवि-

**तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ॥**
**स्त्रीरत्नैरान्वितः प्रीतैरन्योऽन्याबद्धबाहुभिः॥२॥**

### श्रीरामनारायणकृतभावभावविभाविका ।

रहजतापापनयनत्वसूचनं ननु "भ्रमयति भारतीत उरुवृत्तिभिरुक्थजडा" नित्यादिना भगवद्वाचां भ्रमापादकत्वमुक्तं कथं तदपनोदकत्वमुच्यते तत्राह । सुपेशला इति । तत्रोक्थजडानित्युक्त्या प्रवृत्तिगृहकुलादिधर्मबोधकवाचां तथात्वेन पूर्वं वाचः पेशैर्विमोहयन्नित्यत्रापि तथैवोक्तिः परन्तु तत्र वाचः पेशैरिति सुशब्दाप्रयोगान्मोहकत्वस्वीकारेऽप्यत्र सुशब्देन तद्व्यावृत्तेस्तथाभावेन भगवदनुवृत्तिजनकत्वमेव ततश्च वाचः श्रुत्वा विरहजं तापं जहुरित्यनेन जीवनप्रदघनश्यामस्य रसवृष्ट्यात्मकवाग्धारासारसारैरसारविरहनिदाघजतापोपशमे पूर्वं तत्तापशुष्काः स्वर्णयूथिकाळलितलतारूपा गोप्यः तद्रसस्वारस्येन रोमपुलकमुकुलव्याप्ताः प्रफुल्लितसर्वाङ्गकुसुमा दृक्कुसुममधुस्रावास्तन्मुखशशिस्मितचन्द्रिकामृतपुष्टा जातास्तदङ्गोपाचिताशिष इत्यनेन तदङ्गतमालालिङ्गनेन लब्धसर्वफला बभूवुरित्येकरूपकुसुमलतानां सर्वफलप्राप्तिरिति चित्रं तदङ्गसङ्गमचरितम् आशिषशब्दवाच्यसर्वफलानितु अर्थधर्मकाममोक्षप्रेमसुखाख्यानि प्रसिद्धानि तत्रार्थलाभस्तु हरिकरोरगोरगकरणेन स्तनश्रीफले समर्प्य श्रियोऽपि सर्वस्वभूतरदहीरकनखादिमणिगणयुतेन्द्रनीलतनुकरणतनुरूपाखिलभुवननिधिवशीकारेण स्पष्टः सर्वसुराव्ययययज्ञपुरुषाय स्वसर्वस्वरूपरूपद्रव्यार्पणेन द्रव्यरूपस्वाङ्गस्य सर्वसुरात्मकतदङ्गसंयोगेन द्रव्यदेवतासम्बन्धरूपयागनिष्पाया तन्मुखसोमपानेन यज्ञपुरुषस्य स्वकरतलीकरणेन धर्म्मलाभश्च स्फुटतरः पूर्णकामानामपि सर्वकामदकोटिकामतनुहरेः सकामतयालिङ्गनेन कामज्वरशमनपूर्वकपूर्णकामत्वेन कामलाभोऽपि निकामः करस्थनिलयसमस्तनपाणिकृष्णब्रह्मभानेन रमणेऽपि शरीरभानाभावेन जीवन्मुक्तिप्रसिद्धिः सप्रेमकृष्णालिङ्गनेच सामीप्यादिमुक्तेः प्रेमसुखस्य च प्राप्तिः स्पष्टतमैवेति भावः ॥ १ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

त्रयस्त्रिंशे ततोऽध्याये हरेर्लीला निरूप्यते ।
वने जले च बहुधा राजप्रश्नोत्तरं तथा ॥

अथ रासोत्सवं वर्णयिष्य ह्यादौ भगवतो क्तानुनयवाक्येन ताः सम्यक्प्रसन्ना इत्याह । इत्थं पूर्वोक्तप्रकारेण भगवतः पूर्णस्याहं भवतीनामधमर्ण इत्येवं रूपा गोप्यः भगवता स्वीयत्वेन स्वीकृताः वयं ननु त्यक्ता इति निश्चयवत्यः तादृशाधिकारायोग्या अपि वयं भगवतैवमनुनीता इति मनसि विचारयन्त्य इति वा वाचः श्रुत्वा विरहजं तापं जहुः यतो भगवद्वाचः सुपेशलाः अतिमनोहराः आपातरम्यतानिरासाय सुपदं प्रयुक्तं यतश्चोपचिताशिषः लब्धमनोरथाः यद्वा तस्य भगवतोऽङ्गेन वपुषा करचरणाद्यङ्गैर्वा उपचिताः समृद्धा आशिषो यासां ताः यद्यपि पूर्वं तापत्याग उक्तस्तथापि तादृशवाक्श्रवणादिना पुनर्विरहशङ्कापगमाद्विरहजन्यतापत्यागः पुनरुक्तः तासां गोपीनामङ्गस्पर्शादिना लब्धसुखा इति वा एतेन प्रश्नोत्तरसमाप्तौ मानशान्त्या तदा आलिङ्गनचुम्बनादिविलासा आसन्निति सूचितं निवृत्तिपक्षे अथ विशुद्धचेतासि परमात्मनः श्रुतिभिः रमणं वक्तुमुपक्रमते । इत्थमिति । भगवद्भावं प्राप्तस्य प्रत्यगात्मनोपयुक्ताः सुपेशला वाचः श्रुत्वा लब्धमनोरथास्तदा हे राजन् ! तत्तद्वादिभिः श्रुतिषु प्रत्यगभिन्नपरमात्मप्रतिपादनं नास्तीत्यादिना प्रतिपादिताद्विरहाज्जात तापं जहुः ॥ १ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवंभूताभिर्व्रजाङ्गनाभिः सह रासक्रीडां भगवतोऽनुवर्णयति त्रयस्त्रिंशे । इत्थमिति । तदङ्गोपचिताशिषः भगवदङ्गैश्चरणादिभिरुपचिताः समृद्धाः आशिषः कामाः यासां ताः गोप्यः भगवतः इत्थं सुपेशलाः सुरमणीयाः वाचश्च श्रुत्वा विरहजं तापं जहुस्तत्यजुः ॥ १ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोळे कि सम्पूर्ण गोपी श्रीभगवान् के सुन्दर मनोहर इन वचनों को सुनकर और भगवान के अङ्ग स्पर्श से मनोरथ को प्राप्त होकर विरह से भये सब तापों को त्याग देती भई ॥ १ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

रासक्रीडां रासो नाम बहुनर्त्तकीयुक्तो नृत्यविशेषस्तां क्रीडाम् अन्योऽन्यमावद्धाः संग्रथिता बाहवो यैस्तैः सह ॥ २ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अत एव रासक्रीडा मारभत आसनं विहाय कर्त्तुं प्रवृत्तः गोविन्द इति श्रीगोकुलेन्द्रतया तत्र निजाशेषैश्वर्य विशेषप्रकटनेन परमपुरुषोत्तमता स्त्रीरत्नैरिति तासां च सर्वस्त्रीवर्गश्रेष्ठता प्रोक्ता इति रासक्रीडायाः परमसामग्री दर्शिता ननु तस्य साक्षात्तासां नृत्यादौ लज्जा युज्यते तत्राह । तामेव प्रथयति । अनुव्रतैः तदनुकूलैस्तत्सदृशकलाभिज्ञैरित्यर्थः । अत एव प्रीतैः तद्वाक्यादिना उल्लसितैः यद्वा तत्प्रेमभरविवशैः अतोऽनुव्रतैस्तदेकाधीनैः अत एवान्योऽन्यमावद्धबाहुभिः बाहवोऽत्र करा ज्ञेयाः अन्यथा नृत्यादिसौन्दर्य्यासंपत्तिः अन्योऽन्यत्वं च तासामेव ननु तेन सह तद्बाहुभ्यां तासां प्रत्येकमुभयतः कण्ठग्रहणात् एतच्च रासक्रीडालक्षणं तथाचोक्तम्—

नटैर्गृहीतकण्ठीनामन्योऽन्यात्तकरश्रियाम् ।
नर्त्तकीनां भवेद्रासो मण्डलीभूय नर्त्तनमिति ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अयमस्मन्मण्डलीमध्येऽत्रैवास्तां नचनिःसरत्विति भावद्वैत्याशब्दगूढाभिप्रायः रासः परमरसकदम्बमय इतिश्लेषार्थः स एवोत्सवः क्रीडाविशेषरूपः सर्वसुखविशेषसाधनसारसमुच्चयो वा कृष्णेन परमानन्दमूर्त्तिना हेतुना सम्यक् प्रवृत्तः इति संप्रवृत्तौ रासस्य कर्तृत्वनिर्देशेन प्राधान्योक्त्या सर्वलीलानां नित्यत्वादिकेऽप्यस्य सर्वतोवैशिष्ट्यं ज्ञेयं सम्यक्त्वमेव दर्शयति। गोपीनां मण्डलेन मण्डित इति तद्विशेषश्लोकः श्रीपराशरेण—

रासमण्डलिबन्धोऽपि कृष्णपार्श्वमनुज्झता।
गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना॥
हस्ते प्रगृह्य चैकैकां गोपिकां रासमण्डलीम्।
चकार तत्करस्पर्शनिमीलितदृशां हरिः॥
ततः प्रववृते रासश्चलद्वलयनिःस्वनः।
अनुयातशरत्काव्यगोपगीतिरनुक्रमादिति॥

किंच तासामिति तथाचोक्तंश्रीबिल्वमङ्गलेन—

अङ्गनामङ्गनामन्तरा माधवो।
माधवं माधवं चान्तरेणाङ्गना॥
इत्थमाकल्पिते मण्डले मध्यगः।
संजगौ वेणुना देवकीनन्दन इति॥

एतदनुसारेण सर्वमध्ये मेथीभूतः शङ्कुस्थानीय एको बोद्धव्यः अन्यथा मण्डले पार्श्वद्वयस्थगोपीद्वयेकण्ठग्रहणेन वेणुधारणासिध्या रासमहोत्सवे परममङ्गलमधुरमोहनतच्छायाभावापत्तिः तदभिप्रायेणैव वक्ष्यते मध्ये मणीनामित्यादि॥ २॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्रेति। तदेवं ताभिः सहात्मनः ऐकमत्ये सतीत्यर्थः। रासक्रीडामारभत परमाभिलषितानां तासां लाभेन पूर्वमेव कर्तुमीप्सितां महोत्सवरूपां तत्क्रीडां कर्तुं प्रवृत्तः। गोविन्द इति श्रीगोकुलेन्द्रतायां निजाशेषैश्वर्यमाधुर्यविशेषप्रकटनेन परमपुरुषोत्तमता स्त्रीरत्नैरिति तासाञ्च सर्वस्त्रीवर्गश्रेष्ठता प्रोक्ता। रत्नं स्वजातिश्रेष्ठेऽपीति नानार्थवर्गात्। इति रासक्रीडायाः परमसामग्री दर्शिता अत एव प्रीतैस्तत्तत्प्रेमभरविशेषैः अतोऽनुव्रतैस्तत्तदेकार्थीनैः अत एवान्योऽन्यमाबद्धबाहुभिः बाहवो ऽत्र करा ज्ञेयाः। अन्योऽन्यत्वञ्च तासामेव। ननु तेन सह तद्बाहुभ्यां तासां प्रत्येकमुभयतः कण्ठग्रहणात्। एतद्धि रासक्रीडालक्षणम्। "नर्तकैर्गृहीतकण्ठीनामन्योऽन्यात्तकरश्रियाम्। नर्त्तकीनां भवेद्रासो मण्डलीभूय नर्त्तनमिति। अयमस्मन्मण्डलीमध्येऽत्रैवास्तां न च निःसरत्विति आवद्धेत्याशब्दव्यञ्जितस्तासां गूढाभिप्रायः॥ २॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ तत्र पुलिने भगवान् स्त्रिय एव रत्नानि तैः सहितः रासक्रीडामारब्धवान् कथंभूतैरनुव्रतैरन्योऽन्यमावद्धाः संग्रथिता बाहवो यैस्तथाभूतैः रासो नामानेकनर्त्तकनर्त्तकीयुक्तो नृत्यविशेषः॥ २॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

समृद्धफलानुभावानुभवप्रकारं यकुमुपक्रमते। तत्रेति। तत्र वने तस्यामवस्थायाम् अन्योऽन्यावद्धबाहुभिः इतिरासक्रीडाप्रकारं दर्शयति। समतलमतृणप्रदेशे चितस्तिमात्रोन्नतशङ्कुं संस्थाप्य तत्परितः सर्वैः स्वपादमवष्टभ्य वृत्ताकारेण स्थित्वैकस्या वामहस्तमन्यस्या निकटवर्तिन्या दक्षिणपाणिना संगृह्य स्वशक्त्यावष्टम्भेन वर्तुलाकारभ्रमणं चक्रवक्रिया रासक्रीडा॥ २॥

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

एवं तत्र प्रसन्नाभिरेव ताभिः समं पूर्वोक्तलक्षणं रासमारब्धवानित्याह। तत्रेत्यादि। स्त्रीरत्नैः स्त्रीषु मध्ये ईश्वररूपा लक्ष्मीस्वरूपा यास्तासामपि रत्नै रत्नभूतैः अनुगतं व्रतं येषां तैः कुमारीगणैश्च प्रीतैः प्रीणनं प्रीः तया इतैः प्राप्तैः वेणुनादाकृष्टैरन्यैश्च गोपाङ्गनागणैश्च कीदृशैः अन्योऽन्यावद्धबाहुभिः कुमारीभिः कुमार्य्यः तदितराभिस्तदितरा अन्योऽन्यावद्धबाहवः अन्या एका कुमारी का तदितरेति वैचित्र्यार्थं तथा बन्धः अथवा मण्डलद्वयमान्वितः मध्यवर्त्ती सन्ननुगतः॥ २॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवं दुःखाभावसुखयोः प्रतिबन्धकं रूपेण वाचा च निवार्य स्वकर्त्तव्यमारभते। तत्रारभतेति। गोविन्द इति तदर्थमेवेन्द्रो जातः अतोऽसाधारणो भोगश्च तस्यावश्यक इति च अनुव्रतैः स्त्रीरत्नैरन्वितः रासक्रीडामारभत बहुनर्त्तकीयुक्तो नृत्यविशेषो रासः रसस्याभिव्यक्तिर्यस्मादिति रसप्रादुर्भावार्थमेव हि नृत्यं रासे क्रीडालीला स्वस्य क्रीडायां मनसो रसस्योद्गमः नृत्ये देहस्य कामस्तु भोक्तृनिष्ठ इति स्वप्राधान्यं समाजेनापि रस उत्पद्यत इत्येकवचनं तदाहीक्षुरसयन्त्रक्रियावद्वा कामरसोऽप्युत्पद्यते गोपिकानां रसयोग्यतामाह। अनुव्रतैरिति। अनु व्रतं यासां तासामपि रसोत्पादनमावश्यकमिति यादृशो भगवतोऽभिप्रेतः तादृश एवेति च नन्वयं रसः अलौकिकः न लौकिकेषु उत्पद्यते अतो व्यर्थ आरम्भः नहि सिकतासमूहात् तैलमुत्पद्यत इतिचेत्तत्राह। स्त्रीरत्नैरिति। स्वभावतः स्त्रियस्त्रिविधाः लोकभेदेन तत्रापि मानुषीषु जातिभेदाच्चत्वारः पद्मिन्यादयः वासनाभेदाच्चतुर्दश अश्वप्रकृत्यादयः सर्वास्त्वेता रत्नभूताः स्वासाधारणधर्मैः तद्धर्मप्रकाशिकाः अतः सर्वभावेन रसोत्पत्तियोग्यता तैरन्वित इति स्वयं नायकमणिः तद्योग्या एते मणय इति एकरसत्वाय च मेळनम् अनेन रसप्रकटनार्थं शुल्कदासिका भगवते दत्ता इति यदुक्तं तदपि समर्थितं नन्वेते जीवाः भगवानानन्दमयः कथं वैषम्याद्रसोत्पत्तिरितिचेत्तत्राह। प्रीतैरिति। ता अपि भगवत्सदृश्यो जाताः सर्वतः प्रीता इति तासामभिनिवेशनप्रकारमाह। अन्योऽन्यावद्धबाहुभिरिति। ताः परस्परमासमन्तादुभयतः बद्धौ बाहू यासां ननु भगवता सह॥ २॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नृत्यगीतचुम्बनालिङ्गनादीनां रसानां समूहो रासस्तन्मयी या क्रीडा ताम् अनुव्रतैस्तदानीं परस्परैकमत्येन स्वानुकूलैः । अन्योऽन्यमाबद्धाः संग्रथिता बाहवो यैस्तैः सह ॥ २ ॥

केनचित्कृता विशुद्धरसदीपिका ।

तदेवमैकमत्ये सति रासोल्लासो जात इत्याह । तत्रेति । तस्मिन्नेवावसरे तत्र देशे वा गोविन्दः श्रीगोकुलयुवराजः पक्षे वृन्दावने तु गोविन्दमिति वराहोक्तस्तद्देशाधिपतिमुख्यतमः प्रकाशश्च रासक्रीडां रासरूपां क्रीडां तल्लक्षणम्—

नटैर्गृहीतकण्ठीनामन्योऽन्यात्तकरश्रियाम् ।
नर्तकीनां भवेद्रासो मण्डलीभूय नर्तनमिति ॥

अनुव्रतैः अनुगतं व्रतं येषामिति दुर्गाव्रतपराणां वर्गः संगृहीतः स्त्रीरत्नैः स्त्यायन्ते सर्वपरित्यागेनानुगच्छन्तीति कान्तभावानां व्रतैः तत्प्रेमपरवशैस्तदेकपैरिति सखीनाम् अत्रोत्तरोत्तरं श्रैष्ठ्यमूह्यं परिगणनं तु बाह्यां मण्डलीमारभ्य कृतमिति ज्ञेयं कीदृशैः अन्योऽन्येति निजनिजसजातीयाभिराबद्धा बाहवो याभिस्ताभिः एवञ्च मण्डलीत्रयमत्रोह्यं तदुक्तं श्रीगोविन्दलीलामृते—

वितस्तिमात्रोच्चनिखातशंकुगत्रिनेमिचक्रोपरिराधया सह ।
स्थितः समध्येऽन्यसखीगणैः क्रमाद्वहिश्च काराथ सुमण्डली त्रयम् ॥
सुवर्णवल्यञ्चितमालशाखिनः स्वर्णालवालालिरिवाबभावसाविति ॥

अत्रेयं क्रीडा नित्यसिद्धानां साधनसिद्धानां संभिन्नानामसंभिन्नानां च यथा योग्यं देव्यंशानान्तु परिकरत्वमेव तदुक्तमलङ्कारकौस्तुभे—

काचिद्वीणां मुरजमपरा कापि वंशीं दधाना ।
काश्चित्तालं करकिसलये तालधारित्वमाप्ताः ॥
चक्रुः सङ्गीतकविरचनां रासमध्ये कयाचि ।
द्गानं नानास्वरपरिमलामोदमुच्चैर्वितेने ॥

आदिपुराणे च—

तिस्रः कोट्यो वल्लवीनां समाजस्तत्त न्मध्ये—
वल्लभस्त्वेकरूपः ।
काश्चित्तासां नाट्यविद्याप्रगल्भाः शश्वद्यान्या—
गानवेदप्रवीणाः ॥
काश्चित्तासां वीटिकादानदक्षाश्चान्याविन्नावत्नयत्न—
प्रकर्षैः ।
काश्चित्तासां वाद्यविद्योक्तविज्ञा नर्मक्योऽन्या—
स्तालतारप्रकर्षैः ॥
तत्रत्याश्चाधिस्यकृत्यप्रशंसां कुर्वत्योऽन्यास्तोषयन्त्या—
स्मनाथमिति ।

एवं च मण्डलीत्रयमध्यगतो मुख्यतमः प्रकाशः श्रीराधया युगलितः सहचरीभिर्नातोऽन्याभिरज्ञातश्च क्रीडतीतिज्ञेयं नचेदमसम्भावितं श्रुतदेवबहुलाश्वयोर्युगपद्गृहगमने तथादृष्टत्वात् तत्र-तल्लीलासम्पादनेच्च यथावसरं योगमायापारिचर्य्येव यथास्थानमिति सत्र द्वयम् एवमेव दर्शितं क्रमदीपिकायां सुदृशामुभयोः पृथगन्तरगं दयिता गलबद्धभुजद्वितयामिति तदेवं निजसखीगणैरेव श्रीराधाकृष्णयोरासक्रीडामुख्या अन्यासां मनोरथपूरणाय शिक्षासौष्ठवेन योगमायावैभवेन वा कण्ठे गृहीतत्वप्रत्यायनादिकमेवेति ज्ञेयं यम्मन्येरभित्यादिवक्ष्यमाणात् तदेवं विविधभावानांयुगपदनुशीलवं रासक्रीडामन्तरेण दुर्घटमिति तस्य प्राशस्त्यमपि सकलरसिकजनसम्मतं दर्शितम् ॥ २ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

तत आसनादुत्थाय रासक्रीडारम्भः सहि तत्रारभतेति तत्र पुलिन एव गोविन्दो देवेन्द्रं पराभूय प्राप्तगोविन्दाभिषेक इत्यनेन तदारब्धरासक्रीडायामप्रत्यूहता सूचिता तथा देवेन्द्रविजये तद्विजयिकामसङ्गमारम्भयोग्यताध्वनिता तथा गवां रश्मीनामिन्द्रत्वकथनेन स्वाङ्गकान्त्या पुलिनस्थलातिप्रकाशकत्वं स्वकान्तिकौमुद्या सखीजनहृत्कुमुदसुमनः सुमनोविकासकत्वं स्वरश्मिप्रभामण्डलगतचन्द्रवत्तन्मण्डलान्तर्भासमानत्वं तासाञ्च चन्द्रप्रभावत्तदीयत्वं मण्डलाकारत्वं तन्मण्डलादप्रच्युतत्वं स्वरश्म्यन्वितचन्द्रस्य जगत्तमस्तापापनयनाह्लादकत्वाद्गोपीमण्डलस्थस्य सर्वस्वानुगतजनाविद्यातापत्रयोपशमकस्वानन्दाविर्भावकत्वं गवां सर्वेन्द्रियाणामिन्द्रत्वेन सर्वेन्द्रियसर्वरसप्रवर्तकत्वं तद्दर्पणशीलत्वं च तथा गोभिर्विद्यते इति व्युत्पत्त्या श्रुतिरूपाभिर्गोपीभिः प्राप्यत्वं तत्तात्पर्य्यगोचरत्वं तास्वभिव्यक्तत्वं गोविन्दत्वेनैव गोपीसमाजराजमानत्वयोग्यत्वं च ध्वनितं गोविन्दो रासक्रीडामारभतेत्यन्वयः बहुनर्तकीनृत्यविशेषो रासस्तद्रूपां क्रीडां स्वेच्छानुकूलचेष्टामिति स्वान्तन्त्र्यद्योतनं रसानां समूहो वा रासः रससमूहाविर्भाविकां वा क्रीडां यद्वा रसशब्दाभिधेयसर्वलोकसुखानां विम्बभूततया तत्समूहात्मकः स्वयं कृष्ण एव रासः रसो वै स इतिश्रुत्या चोर एव चौर इति वद्रस एव रासो वा स्वयं स्वस्वरूपात्मिकामेव क्रीडामारभताविर्भावयामास कैरित्यपेक्षायामाह । स्त्रीरत्नैः स्त्रीषु सर्वलोकक्रीडाधामवर्तमानास्वपि रत्नभूतैः सर्वश्रुतिशिरोरत्नब्रह्मैकपरवेदान्तश्रुतिभिरिव सर्वस्त्रीशिरोरत्नैस्तदात्मकैर्वा भगवतानन्दघनेन लब्धविहारतया स्त्रीत्वस्य विद्वत्प्रार्थ्यत्वापादकतया रत्नरूपकैस्तदुक्तम्—

एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं वत साधुकुर्वते ।
यासां गृहात्पुष्करलोचनपतिः ॥
न जात्वपैत्याहृतिभिर्हृदिस्पृशन् ।
अद्वैतवीथीपथिकैरुपास्याः ॥
स्वाराज्यसिंहासनलब्धदीक्षाः ।
शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेनेत्यादि ॥

इति तासां स्वरूपत उत्कर्षोक्तिः साधनतोऽप्याहानुव्रतैरिति कृष्णानुकूल्यमेव व्रतं येषां तत्प्राप्तयेऽनुसृतं कात्यायनीव्रतं वा यैरनुवर्तमानाः सर्वे व्रतोपलक्षिता धर्मा वा येषां तैः तदानुकूल्येनैवेर्ष्याद्यभावेन सह सुखानुभवायान्योऽन्यावद्धबाहुभिरित्यनेनैव यथा पूर्वापराविरोधसमन्वयाभ्यां क्रमपठितश्रुतिषु ब्रह्माभिव्यक्तिस्तथान्योऽन्यावद्धवाहुश्रुतिरूपासु तासु तदभिव्यक्तिरित्यपि ध्वनितम् अनुव्रतत्वेनैव प्रीतिस्तत्प्रसादगोचरीभूततयाविर्भूतपरमसुखत्वेन

रासोत्सवः संप्रवृत्तो गोपीमण्डलमण्डितः ॥
योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ।
प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥ ३ ॥

श्रीरामनारायणकृतभावभावविभाविका।

मुदितैः प्रीत्यात्मकैरिति वा तथाच प्रेमवृत्तिगणे ब्रह्माभिव्यक्तिवत्तद्रूपासु तासु तदाभिव्यक्तिरिति सूचितम् अत्रान्योऽन्यावद्धवाहुभिरित्युक्त्वा परस्परवद्धवाहुत्वं गृहीतकरत्वं न कृष्णेनेत्यत्र सर्वतो गृहीतकरा गोप्यस्तन्मध्ये स्वैश्वर्येणैव सर्वतो मुखः कृष्ण इत्येवं रूपो रासोत्सवविशेषो दर्शितः ॥ २ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका।

तत्र ताभिः सहैकमत्ये सति तस्मिन्प्रदेश इति वा गोविन्दः स्त्रीरत्नैः समन्वितो रासक्रीडामारभत—

नर्त्तैर्गृहीतकण्ठीनामन्योऽन्यात्तकराश्रियाम्।
नर्त्तकीनां भवेद्रासो मण्डलीभूय नर्तनम् ॥

इत्युक्तं रासलक्षणं रसानां समूहो रासस्तस्य क्रीडेति तद्व्युत्पत्तिः एतदर्थमेव स्वीकृतगवेन्द्राभिषेक इति सूचयितुं गोविन्द इत्युक्तं भगवता सार्द्धं रासक्रीडायोग्यता तासामेवासीदिति सूचनाय रत्नैरित्युक्तं तत्राप्यनुव्रतैस्तत्रापि नान्यानुरोधेन किन्तु प्रीतैः प्रीतिपूर्वकमुत्तमोत्कण्ठावद्भिः कथमित्यपेक्षायामन्योऽन्येनैवावद्धाः संग्रथिता वाहवो यैस्तैस्तथा चान्योऽन्यावद्धवाहूनां भगवता गृहीतकण्ठीनां नर्तनं सम्प्रवृत्तमित्यर्थः। निवृत्तिपक्षे तत्र श्रुतीनामैकमत्ये सति विद्वदन्तः करण इति वा गोविन्दः श्रुत्यैकगम्यः परमात्मा श्रुतिलक्षणास्त्रीरत्नैः श्रुतिमस्तकैरन्वितः प्रतिपाद्यप्रतिपादकसंवन्धवान् रसो वै स इतिश्रुत्या रस आनन्दरूपः परमात्मा तदीयां तदाविर्भावकरीं क्रीडां श्रुतिप्रतिपाद्यतालक्षणां लीलामारभत तत्र कापि श्रुतिरद्वितीयब्रह्माननुसृता न स्थिता इत्याशयेनाह। अनुव्रतैस्तत्रापि न क्लिष्टकल्पनया तत्र नीता इत्याशयेनाह । प्रीतैरिति। तत्रापि परस्परविरोधराहित्येनेत्याशयेनाह । अन्योऽन्येति परस्परमावद्धा अविरोधम्प्राप्ता वाहुस्थानीया वाक्यार्था येषां तैः ॥ २ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्र यमुनापुलिने गोविन्दः अनुव्रतैः अनुकूलैः अन्योऽन्यमावद्धाः सङ्ग्रथिताः वाहवो यैस्तैः स्त्रिय एव रत्नानि तैरन्वितः रासक्रीडाम् रासो नाम बहुनर्तकीयुक्तो नृत्यविशेषः स एव हल्लीश इति युगान्तरे प्रसिद्धः तद्रूपां क्रीडाम् आरभताऽऽरब्धवान् ॥ २ ॥

भाषा टीका।

उहां पर गोविन्द भगवान् अपने अनुकूल में वर्तमान और परस्पर वाहुओं को वन्धन करी हुई अत्यन्त प्रसन्न ऐसी सब स्त्रियों में श्रेष्ठ जो गोपी तिनके साथ रास क्रीडा का आरम्भ करते भये ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्साहित्यमभिनयेन दर्शयति। रासोत्सव इत्यक्षरचतुष्टयाधिकेन सार्धेन। तासां मण्डलरूपेणावस्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन तेनैव कण्ठे गृहीतानामुभयत आलिङ्गितानाम् कथं भूतेन यं सर्वाः स्त्रियः स्वनिकटं मामेवाश्लिष्टवानिति मन्येरंस्तेन एतदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः। नन्वेकस्य कथं तथा प्रवेशः सर्वसान्निहितत्वे वा कुतः स्वैकनिकटत्वाभिमानस्तासामित्यत उक्तं योगेश्वरेणेति अचिन्त्यशक्तिनेत्यर्थः ॥ ३ ॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

स्त्रिय इति। स्त्रीषु सत्पुरुषस्य तथैव कृत्यं युक्तमिति वोधयति अन्यथा वैषम्येण दोषापत्तिः सुखभङ्गश्चेत्यर्थः। एकस्यैव तथा प्रवेशः सर्वासाञ्च प्रत्येकं युगपत् कण्ठग्रहणं तथापि तासां स्वनिकटत्वमानः तत्र च पार्श्वद्वये वर्त्तमानस्याप्येकत्वेनैव मानः तत्सर्वञ्च तत्तदलक्षितमित्याद्यशेषासमञ्जसं समादधदाह। योगः आचिन्त्याद्भुतशक्तिविशेषस्तस्येश्वरेणेति ॥ ३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

रासः परमरसकदम्बमय इति यौगिकार्थः। स एवोत्सवः क्रीडाविशेषरूपः सुखमयः पूर्वं कृष्णेन परमानन्दघनमूर्त्तिना निमित्तेन सम्यक् प्रवृत्तः। सम्यक्त्वमेव दर्शयति। गोपीनां मण्डलेन मण्डितः इत्येवं तासां शोभाहेतुत्वमाधिक्यं दर्शितम्। तत् प्रवर्त्तने तद्विशेषश्चोक्तः श्रीपराशरेण। "रासमण्डलवन्धोऽपि कृष्णपार्श्वमनुज्झता। गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना। हस्ते प्रगृह्य चैकैकां गोपिकां रासमण्डलीम्। चकार तत्करस्पर्शनिमीलितदृशं हरिः। ततः प्रववृते रासश्चलद्वलयनिः स्वनः। अनुजातशरत्काव्यगेयगीतिरनुक्रमात्" । इति। किञ्च तासामिति द्वयोरित्युक्ते एकत्रैव मध्ये स्थितिर्बोध्यते। तन्निवारणार्थं वीप्सा। अत एव मध्ये मणीनामित्यत्र मध्य इति सामान्यं वक्ष्यते कृष्णस्याप्युभयतः स्थितत्वेन दोर्भ्यां गृहीतकण्ठय इति च। तथाचोक्तं श्रीविल्वमङ्गलेन। "अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरेणाङ्गना। इत्थमाकल्पिते मण्डले मध्यगः सञ्जगौ वेणुना देवकीनन्दन" इति। व्यक्तीभविष्यति च क्रमदीपिकावचनेन द्वद्वशामुभयोः पृथगन्तरगमित्वेन। अत एव तत्तद्युग्मपूजैव तत्र विहिता ननु तत्तन्मिकपूजेति। स्त्रिय इति। स्त्रीषु परमानुरागेण युगपदात्मसङ्ग-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मभीप्सुषु सत्पुरुषस्य तथैव कृत्यं व्यक्तमिति बोधयति । अन्यथा वैषम्येण दोषापत्तिः सुखभङ्गश्चेत्यर्थः । यं स्वनिकटमेव मन्येरन्नमंसतेत्यत्रेदं विवेचनीयम् । रासमहोत्सवोऽयं परस्परसुखार्थमेव श्रीकृष्णेन प्रारब्धः । तस्माद्रासस्य सर्वशोभादर्शनं श्रीगोपीनां सर्वासामेवावश्यापेक्ष्यमिति तासामिदमेव भानं योग्यम् । कयाचिन्नाट्यविद्ययैवासौ बहुत्र भाति मयातु गृहीत एव अन्यथा स्वनिकटमेवापश्यामित्युच्येत । किञ्च ताभिः प्रियस्य स्वस्व निकट एव स्थितिं मन्यमानाभिस्तस्य स्वपार्श्वद्वयेऽपि वर्त्तमानतातुलानन्दग्रस्तबुद्धित्वेन विवेक्तुं शक्येति गम्यते । तस्मात् पूर्वत्र चात्र चानन्दमोह एव मूलं कारणं ज्ञेयम् । अत्र चैकस्यैव तथा प्रवेशादिकं समादधदाह । योगो योगमायाचिन्त्याद्भुतशक्तिविशेषस्तस्येश्वरेणेति स्वाभाविक तच्छक्तित्वेनैव प्रेरणां विनापीच्छामात्रेण तत्तदुदय इति व्यञ्जितं द्यौराकाश ओको निवासो येषामिति स्वभावत एव व्योम्नि भ्रमतामकस्माद्रासक्रीडादर्शनात् संहतानामित्यर्थः । अत एव विमानशतसंकुलं नभो बभूव । चन्द्रदिशं परित्यज्य चन्द्रोपर्येव वा ज्ञेयम् । दिवौकसां ब्रह्मरुद्रादीनामिति । स्वर्गादावपि तादृशोत्सवासद्भावः सूचितः तत्रैवात्यौत्सुक्येति औत्सुक्यमत्र नृत्यांश एव नतु रहस्य विलासांशेऽपि दासत्वेनायोग्यत्वात् । तत एवाधुनैवागतत्वात् । अत एव योगमायया तेषां रहस्यं प्रतिदृष्ट्याच्छादनमपि ज्ञेयम् ॥ ३ ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

द्वयोर्द्वयोर्मध्ये स्थित्वा कृष्णेन गृहीतानां रासोत्सवः सम्प्रवृत्त इत्यन्वयः ॥ ३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नर्त्तनाभिनयेन दर्शयति । रासोत्सव इत्यादिना नभस्तावदित्यतः प्राक्तनेन तासां मण्डलरूपेण स्थितानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन गोपीमण्डलमण्डितो रासोत्सवः संप्रवृत्त इत्यन्वयः कथंभूतानां तेनैव कण्ठे गृहीतानामुभयत आलिङ्गितानां कथंभूतेन यं कृष्णं सर्वाः स्त्रियः स्वनिकटस्थं मन्येरन् मामेवाश्लिष्टवानिति मन्येरंस्तथाभूतेन तदर्थं द्वयोर्द्वयोर्मध्ये प्रविष्टेनेत्यर्थः । नन्वेकस्य तथा कथं प्रवेशः सर्वसंनिहिते तस्मिन्वा कथं तासां स्वनिकटवृत्तित्वमात्राभिमान इत्यतो विशिनष्टि । योगीश्वरेणेति । अचिन्त्यविविधविचित्रशक्तिनेतिभावः । बहुरूपतामापन्नेन तासां स्वस्वनिकटवर्त्तित्वमात्राभिमानं जनयता चेति गूढाभिसन्धिः तथाच वक्ष्यति "कृत्वा तावन्तमात्मानं यावतीर्व्रजयोषित" इति अत एवात्मीक्लृप्तशासनमात्मबन्धवे इत्युक्तमुपपन्नं नम इति यद्वा रासोत्सवः सम्प्रवर्त्तितः तावत्तत्क्षणमेवौत्सुक्यमनसां सस्त्रीकाणां देवादीनां विमानशतैः सङ्कुलं सङ्कीर्णं नभो बभूवेति शेषः ॥ ३—४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्यादिषु भरतरीति संक्षेपु गातुमुपक्रान्तेषु योऽधिरसोल्लासो जायते सरसः तत्सम्बन्धी रसो रसः तदुद्रेकेण क्रीडानृत्यविशेषः एवं विधो रासक्रीडोत्सवः कृष्णेन सम्यक्प्रवृत्त इत्यन्वयः कीदृशो गोपीनां तासां मण्डलेन वलयेन मण्डितोऽलंकृतः कथंभूतेन तासां गोपीनां मध्यप्रविष्टेन मध्ये शङ्कुस्थापनात्कथं मध्यप्रवेशः सङ्गत इति तत्राह द्वयोरिति वलयस्थितानां तासां द्वयोर्द्वयोर्मध्ये प्रविष्टेन एकस्येदङ्कथं घटत इत्यतो योगेश्वरेणेति योगैश्वर्यादेकस्य बहुत्वं घटत इति भावः कीदृशानां कृष्णेन कण्ठे गृहीतानां तत्रैवं विशेषः कृष्णदक्षिणभागस्थितया कृष्णदक्षिणांसग्रहणं वामभागस्थितायास्तस्य वामस्कन्धग्रहणं स्वनिकटस्थाः स्त्रियः कण्ठे गृहीतेन तेनैव रासोत्सवः सम्प्रवृत्त इति गतेनान्वय इत्यर्थः ॥ ३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

योगोऽचिन्त्यशक्तिः ॥ ३-६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तत्प्रकारमाह । रासोत्सव इत्यादि । रासनामा उत्सवो यत्र स तथा रासलास्योचितस्थलविशेषः संप्रवृत्तः प्रादुरासीत् गोपीनां मण्डलेन मण्डलैर्वा मण्डितः कृष्णेन च मण्डित इत्यन्वेतव्यः अथ कृष्णेन सम्प्रवृत्तः संप्रवर्तित इत्यर्थः । योगेश्वरेण अचिन्त्यपरमैश्वर्य्येण कण्ठे गृहीतानां तासां द्वयोर्द्वयोर्मध्ये प्रविष्टेन भ्रमणकौशलेनातिवेगवता अनेन योगेश्वरत्वं प्रकटितमथवा द्वयोर्मण्डलयोर्मध्ये द्वयोर्मण्डलयोः मण्डलद्वयमध्यवर्त्तिनीनां कण्ठे गृहीतानां तासां मध्ये प्रविष्टेन स्त्रियस्तं स्वनिकटं मन्येरन् स्त्रिय इति मण्डलद्वयमध्यवर्तिन्यः एतदेव योगेश्वरत्वं वस्तुतस्तु एक एव सर्वनिकटस्थो नतु नानात्वेन अत एव स्वनिकटं मन्येरन् मेनिरे नतु नानात्वं वास्तवं योगेश्वरमात्रस्यैव कायव्यूहकरणसामर्थ्यं तदकृत्वा एक एव बहुव्यापकत्वेन स्फुरति तदेवाचिन्त्यपरमैश्वर्य्यं तर्हि "कृत्वा तावन्तमात्मानं यावतीर्गोपयोषित" इति कथं सङ्गच्छतां सत्यं तत्रैवं व्याख्या यावतीर्यावत्प्रमाणा यावद्वयवलयस्तावन्तं कृत्वा तावत्प्रमाणत्वेन तावदाशयत्वेन स्फुरति ॥ ३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवान्पुनः हस्तमण्डलाद्बहिः स्थितो यथा सम्बध्यते तथा सन्निवेशमाह । रासोत्सवः सम्प्रवृत्त इति । सर्वेषामेव गुणाभावात् रसप्राधान्यात् रासोत्सव एव सम्यक् प्रवृत्तः उत्सवो नाम मनसः सर्वविस्मारक आह्लादः उत्सवत्वसम्पादनाय सजातीयानेकरसोत्पादनार्थं विशेषमाह । गोपीमण्डलमण्डितइति । गोपीनां

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मण्डलैरनेकविधैर्मण्डितः उत्सवोऽप्यनेकविधैः ब्राह्मणादिमण्डलैर्मण्डितो भवति अत्रापि तुल्यस्वभावाः रसार्थमेकीकृताः पृथङ्मण्डलभाजः तैरपि मण्डितः पोषकाश्च रसास्तदुत्पादिता इति उत्तरोत्तरमण्डलैः पूर्वपूर्वरसः पोष्यत इति नायं रसोऽन्यत्र भवितुमर्हति सम्यक् प्रवृत्तिर्निरन्तरमाविर्भावः । ननु कालकर्मस्वभावानां प्रतिबन्धकत्वात् अनेकत्र जायमानो रसः कथमेकीभवति तत्राह । योगेश्वरेणेति । सहि सर्वोपायवित् सर्वचस्तुषु विद्यमानं भगवदैश्वर्यादिकं योग एवोद्घाटयतीति साधनेषु योगः प्रधानं तत्रैश्वर्यं सर्वत्रैव मूलभूतो रस उत्पादयितुं शक्यत इति सिद्धमेव किञ्च कृष्णोऽयमिति स्वयमेव सदानन्दः उद्भूतोऽग्निः सर्वत्रैवाग्निं लीनं जनयितुं शक्नोति तस्य भगवतस्तासु सन्निवेशप्रकारमाह । तासां मध्ये द्वयोर्द्वयोरिति मण्डलीकृता यावत्यो गोप्यः तासां द्वयं द्वयं भिन्नतया भावनीयं द्वित्वद्वयस्य नैकाधिकरणताभाव्या अतो मण्डलमध्ये यत्र हस्तद्वयग्रन्थिः तत्र भगवदुदरं यथा भवति तथा भगवानुत्थितो जातः ॥ ३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत्प्राहित्यप्रकारं दर्शयति । रासोत्सव इति । पडक्षरन्यूनसार्द्धेन । रास एव उत्सवः भक्तजनदृङ्मनश्चातकेभ्य आनन्दामृतप्रदायकः सम्यगेव प्रवृत्तः । केन । तासां मण्डलरूपेणावस्थितानां गोपीनां द्वयोर्द्वयोर्मध्येन प्रविष्टेन कृष्णेन अत्र सम्प्रवर्त्तित इत्यनुक्तेः स्वतन्त्रकर्तृत्वं तस्मै रासायैव ददता स्वयञ्च करणत्वं भजता श्रीकृष्णेन स्वस्मात् सर्वशक्तिभ्यश्च सर्वलीलाभ्यश्च रासस्यैव महोत्कर्षः स्वदत्तो व्यञ्जयामासे । अत एव लक्ष्मीप्रभृतयोऽपि तं लब्धुमुत्कण्ठन्त एव नतु लभन्त इति ज्ञेयम् । कथंभूतानां तेनैव कण्ठे गृहीतानामुभयत आलिङ्गितानाम् । अत्राग्रिमश्लोके मध्ये मणीनां हैमानां महामारकतो यथेत्यत्र मध्ये इति पदेन मरकत इत्येकवचनेन चात्र च श्लोके सता मिथो इत्यनुक्त्वा प्रविष्टेनेति पदेन च प्रयुक्तेन गोपीमण्डलमध्यकर्णिकाभूत एव कृष्णो मध्ये स्थितः सन्नेव तथा गतिलाघवं प्रकटयामास यथा मण्डलस्थानां गोपीनामपि द्वयोर्द्वयोर्मध्ये प्रविष्टो नृत्यति स्मेत्येकपरमाणुमात्र कालेनैव मध्यप्रदेशादागत्य मण्डलस्थाखिलशतकोटिगोपीः सनृत्यं परिरभ्य पुनर्मध्यप्रदेश गत एव बभूवेत्यलातचक्रादपि तस्य गतिलाघवमधिकमभूदिति ज्ञेयम् । यतो मण्डलकर्णिकागतत्वं मण्डलस्थप्रत्येकगोपीमध्यगतत्वं तस्य तदानीं सर्वैर्दृष्टम् । एवमेव । “अङ्गनामङ्गनामन्तरा माधवो माधवं माधवञ्चान्तरेणाङ्गनाः । इत्थमाकल्पिते मण्डले मध्यगः सञ्जगौ वेणुना देवकीनन्दन” इति श्रीविल्वमङ्गलमहानुभावचरणैरुक्तम् । तत्र हेतुगर्भं विशिनष्टि। “योगः योगेश्वरेण निखिलकलानिधित्वात् तदुपायमहाविज्ञेन । “योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वि”त्यमरः । यद्वा । योगा योगमाया दुर्घटघटनापटीयसी महाशक्तिस्तस्या ईश्वरेण । युगपत् सर्वगोपीनामाश्लेषोत्सुक्यं तस्याभिज्ञाय सैव तावतः प्रकाशांस्तस्य प्रकटय्य समादधौ । अत्र द्वयोर्द्वयोर्मध्ये प्रविष्टेनेति वीप्सया एकैकगोपीमध्ये द्विद्विगोपीमध्ये प्रवेशः सङ्गच्छते । इति व्याचक्षते तत्रैकैकगोपीमध्यप्रवेशे व्याख्यायमाने योगमायापक्षे एकस्याः स्त्रियः स्कन्धयोः कृष्णप्रकाशद्वयस्य भुजस्पर्शानौचित्यं नाशङ्कनीयं योगमाययैव तां तां प्रत्येकस्यैव प्रकाशस्पर्शभानसमर्पणात् द्विद्विगोपीव्याख्याने तु नैवासमञ्जसम् । यं श्रीकृष्णं स्त्रियः स्वनिकटं मन्येरन् असौ मयाश्लिष्यन्नेवात्रास्ति तदपि यत सर्वत्रायं दृश्यते तदियं काचिदस्य नाट्यविद्येत्यमंसतेत्यर्थः । अत्र मध्यगो देवकीनन्दनः श्रीवृन्दावनेश्वर्या सहित एवेत्याहुः तस्या एव सर्वश्रैष्ठ्यात् रासक्रीडादिकारणामिति तदीयशतनामस्तोत्रदृष्टेः । तावत् तत्क्षण एव विमानशतैर्व्याप्तं नभो बभूव । केषां दिवौकसां ब्रह्मादीनाम् अत्रौत्सुक्यादिति कृष्णनृत्यांश एव नतु रसस्य विलासे । दासत्वेनायोग्यत्वात् तद्दाराणान्तु अनौचित्याभावात् सर्वत्रैव अत एव रासे दिवि पुंसां कृष्णदर्शनमेव न गोपीदर्शनम् । योगमायया आवरणादिति ज्ञेयम् ॥ ३—५ ॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तदेतद्विशदयति । रासेति । सार्द्धद्वयेन रासः प्राग्लक्षितः क्रीडाविशेषः यद्वा रसकदम्बमयः कश्चिद्विलक्षणो व्रजलीलाविशेषः यद्वा रसो मुख्यरसः शुद्धः प्रेमा स एव रासः तद्रूपो य उत्सवः तत्तत्प्रेमपोषणमयः पूर्वं कृष्णेन कर्त्रा तत्तत्प्रेमपरवशेनेति वा संप्रवृत्तः प्राक्सिद्ध एव संप्रति संप्रवर्तितः सम्यक्त्वमेव दर्शयति गोपीत्यादि । एवमेवाभिमतं स्वामिपादैः—

जयति श्रीपतिर्गोपीरासमण्डलमण्डनः ।

इत्यादिना वस्तुनिर्देशात्मकमङ्गलमाचरद्भिः कीदृशेन द्वयोर्द्वयोर्मध्ये प्रविष्टेन नचेदमसंभावितमित्याह । योगेति योगा अचिन्त्या निजशक्तिर्योगमायाख्या तस्या ईश्वरेण मायायां किंनु दुर्घटमितिन्यायात् मायायामिति किंपुनर्योगमायामित्यर्थः । अथवा कृष्णेन परमानन्दघनमूर्त्तिना निमित्तेन सम्यक् प्रवृत्तः तदुक्तं श्रीपराशरेण—

> रासमण्डलिबन्धोऽयं कृष्णपार्श्वमनुज्झता ।
> गोपीजनेन नैवाभूदेकस्थानास्थिरात्मना ॥
> हस्ते प्रगृह्य चैकैकां गोपिकां रासमण्डलीम् ।
> चकारतत्करस्पर्शनिमीलितदृशां हरिः ॥
> ततः प्रववृते रासश्चलद्वलयनिः स्वनः ।
> अनुजातशरत्काव्यगेयगीतितरनुक्रमादिति ॥

तासां कण्ठेगृहीतानां मध्ये स्त्रियः स्त्रीत्वाभिमानिन्यः ननु सख्याभिमानिन्य इत्यर्थः । यं स्वनिकटं मन्येरन् अमंसत कयाचिन्नाट्यविद्ययैवासौ यद्युत्र भाति मयातु गृहीतकण्ठ एवेतिभावः । अन्यथा स्वनिकटमेवापश्यन्नित्युच्येत किञ्च ताभिः प्रियस्य स्वस्वनिकटस्थितिमन्यमानाभिस्तस्य पार्श्वद्वये वर्तमानता तु नानन्दग्रस्तबुद्धित्वेन विवेक्तुं शक्तेति गम्यते ततश्च सर्वमध्यगतं युगलं सखीभिरपि परिचीयते नान्याभिरिति सिद्धेरेव सर्वत्र योगमायैववा हेतुः एवंच तस्य तासां च नृत्यगीतादिकमपि ताभिरनाकलितमेवेतिदिक् तत्रोभयोर्नृत्यं श्रीगोविन्दलीलामृते—

> आदिश्य हल्लीशककेलिरङ्गे—
> राधामुकुन्दौ ललितादिकालीः ।

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तत्रांसविन्यस्तभुजौ मिथस्ता—
वनृत्यतां लास्यविदां वरिष्ठौ ॥

तयोर्लक्षणं संगीतरत्नाकरे—

नर्तकीभिरनेकाभिर्मण्डलीभूय नर्तनम् ।
यत्रैको नृत्यति नटस्तद्वै हल्लीशकं विदुः ॥

तदेवेदं तालबन्धगतिभेदेन भूयसा लास्यं स्यान्न स नाकेऽपि वर्त्तते किं पुनर्भुवि तदेवं रासोऽयं हल्लीशकलास्यभेदेन द्विविधोऽपि स्थिरास्थिर भेदेन द्विविध इति दर्शितं तत्रैव—

नृत्यन्निनाम्बिनीनां तद्वैदग्ध्यं पदचालनैः ।
कुलालचक्रवच्चक्रं भ्रमदासीद्द्वयोरपि ॥
लघुभ्रमच्चक्रगतेः समा तासां गतिः क्वचित् ।
क्वचिन्मन्दा क्वचिच्छीघ्रा स्वप्रियस्य तथा हरेरिति ॥
तदेवं स्थिरमस्थिरमप्येतद्विधं रासमण्डलम् ।
स्थिरं स्थलविशेषस्थमस्थिरं चक्रसंश्रयम् ॥
स्थिरभ्रमिः कर्तृगता भवेत्सव्यापसव्ययोः ।
स्थिरे तु चक्रजा साहि प्रातिलोम्यानुलोमभाक् ॥
यथास्थाने स्थितं तत्र नृत्यं तच्चामितः पुनः ।
नाना स्थानस्थितं भाति नृत्यकर्तुश्च योषितः ॥

एवं च चक्रभ्रमिस्वभावानेनैवानेकत्र भानमेतदप्युक्तं तत्र प्रत्येकमुभयो र्यथा तत्रैव—

कृष्णः श्रीमान्मुहुरिह समागत्य तासां स मध्या
न्नाना तालक्रमवशतया चालयन् श्रीपदाब्जे ॥
धुन्वन् पाणी नटति निगदन्नित्थमानयन्द्वयंस्ताः ।
तत्तत्तत्थै द्रगिति द्रगिथै द्रक् तथैद्रक्तथैथा
थो दिक् दां दां किट किट कणंकन्थो क्कु थो दिक्कु आरे ।
झेन्द्रां झेन्द्रां किट किट किट धां झेङ्कुझं झेङ्झां झां ।
थो दिक् दां दां द्रमि द्रमि द्रमि धां कांकुझं कांकुझं द्रां
मागत्येवं नटति स हरिश्चारुपाठप्रबन्धम् ॥
कूजत्काञ्चीकटकविरणन्नूपुरध्वानरम्यम् ।
पाणिद्वन्द्वं मुहुरिह नद त्कङ्कणं चालयन्ती ॥
राधा कृष्णाद्युतिघनचये चञ्चलेव स्फुरन्ती ।
नृत्यन्तीत्थं गदति तथथै थै तथै थै तथै था ॥
धां धां द्रक् द्रक् चङ्क चङ्क निङ्गां णं णिङ्गां णं णिङ्गां णाम् ।
तुन्तुक् तुन्तुं गुडगुडगुड धां द्रां गुडुद्रां गुडुद्राम् ।
थेक् थेक् थोथो किरिटि किरिटि द्रां दिमिद्रां दिमिद्रा
मागत्येवं मुहुरिह सदः श्रीमदीशा ननर्त ॥

प्रधानसखीनां यथा—

झंझं कुर्वत्कनकवलये धुन्वती पाणिपद्मे ।
तासाम् मध्यात्सपदि ललिताप्यागमत् कृष्णकान्त्या ॥
श्यामे रङ्गे तडिव घने नृत्यतीत्थं वदन्ती ।
थै थै थो थो तिगड तिगड थो तथैथो तथैताः ॥
द्रमि द्रमि द्रमि धां धां धां मृदङ्गादिवाद्यैः ।
कण कण कण वीणा कायमिश्रैर्विपञ्चीशाखा ॥
नटति झणण झंझंकार्यलंकारजाला ।
द्रगिति द्रगिति द्रक्थै थो तथोथो सुत्राणा ॥

एवमन्यासामपि विस्तरभिया न लिख्यन्ते अथ—

छालिक्यनृत्ये राधाया देयमन्यदपश्यता ।
तुष्टेनात्मार्पितस्तस्यै कृष्णेनालिङ्गनच्छलात् ॥

अपिच—

कृष्णः कान्तां नटयति मुदा कापि वंशीप्रगानैः ।
नैर्म्मोन्नीतं स्खलनमिह सा तस्य दृष्टा दिशन्ती ॥
तालं तस्य स्खलितमपि संभालयन्त्यात्मनो द्राक् ।
तं चाप्येषा नटयति तथा क्वापि वीणाप्रगानैः ॥
कृष्णेन राधाथ तया समं हरिर्यथा ननर्त्तात्र जगाववादयत् ।
साहाय कोक्त्वापि तयोःसखीतातिर्नालं तथासीन्नृतिगानवादने ॥

इत्यादिवद्बुद्धः एवंचरङ्गमध्यगतयुगलं यद्यत्करोति तत्तदनुकरोतिगोपीगण इति ज्ञेयं नात्र चित्रं यतः पश्यतां खेचराणामपि रसावेशो जात इत्याह । नभइति । विमानशतसंकुलत्वमपि मण्डलीवंधरीत्यैवज्ञेयम् औत्सुक्यापहृतात्मनामित्युक्तेः दिवि ओको येषामिति तल्लीलानुमोदनपरिकराणां सर्वदा व्योम्न्येव वर्तमानानामित्यर्थः।नतु रहस्यलीलाया-मनधिकारिणां प्राकृतदेवानामिति भावः । यद्वा प्राकृताप्राकृत-मिश्रत्वात् प्रकटलीलाया इति प्राकृता एव नृत्यमात्रावलोकन-मात्रपरा नतु रहस्यवेदिन इत्यविरोधः ॥ ३ ॥ ४ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

गोपीमण्डलमध्यस्थभगवद्रासविशेषं निर्दिश्य रासप्रकारान्तरमाह । रासोत्सव इति । रासः परमरससमूहः स एवोत्सवः परमसुखरूप उदितिं उत्कृष्टः स्वरूपात्मकत्वादेवातिविलक्षणः सवः कालो यस्येति वा स स्वयमेव सम्यक् प्रवृत्त इत्यत्र रासोत्सवे एव प्राधान्येन सम्यक् प्रवृत्तिकर्तृत्वनिर्देशः पूर्वं तु गोविन्दो रासक्रीडामारभतेत्युक्तं तथा च कृष्णारम्भमात्रेण आरम्भोऽप्यत्रेच्छामात्रं ज्ञेयः स्वयमेव गोपीकृष्णसंबन्धाय नित्योत्सुको रससमूहात्मको रासोत्सवः कृष्णेच्छामात्रं प्रतीक्षतामवेक्ष्य सम्यक् स्वसर्वगुणयुगपदाविष्कारेण प्रवृत्तः यद्वा कृष्ण एवादावारभत ततश्च तदारम्भसमुत्थेन सर्वज्ञानामपि ज्ञानप्रतिबन्धकेन नित्यमुक्तस्यापि बन्धकेनातिविचित्रेण प्रेमरसेन भगवतः कृष्णस्य तत्सखीनाञ्च विगतानुसंधानतया रासोचितकलादिदाक्षिण्यासम्भावितत्वेन तत्सम्यक्त्वासम्भवात्स रासोत्सव एव सम्यक् तत्प्रथमेच्छानुसारेण प्राथमिकादेव प्रयत्नात्समाधिवृत्त्यनुवृत्तिवत् भगवत्तत्सखीगणसमागमोत्साहेन च प्रवृत्तः अत एवाबुद्धिपूर्वकत्वेन वेदस्मृतिभ्यः प्राधान्यवद्रासोत्सवस्यैव भगवल्लीलान्तरेभ्यः प्राधान्यं किञ्च प्रेमपथस्य प्रत्यक्त्वेन सर्वलोकैकपरीत्येन सर्वत्र सर्वेश्वरत्वात्कृष्णस्य प्राधान्यं गोपीनां तत्सखीत्वात्तदधीनत्वं रासादेस्तत्कर्मतया तदधीनत्वम् अत्र तु रासोत्सवस्य सम्प्रवृत्तिकर्तृत्वनिर्देशेन प्राधान्यं गोपीनां तदुपकरणत्वमत एव रासविशेषणतया किम्भूतो रासोत्सव इत्यपेक्षायामाह । गोपीमण्डलमण्डित इति । गोपीनां मण्डलेन मण्डितः तत्राप्ययं विशेषो गोपीनां प्रेमपारवश्येन प्रवृत्तौ रासोत्सवप्राधान्यं तन्मण्डकत्वाच्छोभाप्राधान्येन गोपीनां प्राधान्यं कासां रासोत्सवस्तदाह । तासामिति । यासां गोपीनां मण्डलेन मण्डितस्तासामेव किम्भूतानामित्यपेक्षायामाह । द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन कण्ठेगृहीतानाम्

## श्रीरामनारायणकृतभावभावविभाविका ।

अत्रापि गोपीविशेषणतया कृष्णस्य भगवतो निर्देशात्तासां प्राधान्यं तथा कृष्णगृहीतकण्ठतया शोभितत्वेनैव तासां रासमण्डकत्वेन तासामपि शोभाप्रदत्वात्कृष्णप्राधान्यम् असंख्यातानां तासां द्वयोर्द्वयोर्मध्ये प्रवेशयोग्यत्वाय कृष्णविशेषणमाह । योगेश्वरेणेति । योगा काचित्स्वरूपात्मिकैव लीलोपयोगिन्यचिन्त्या शक्तिस्तदीश्वरेण अत्र शक्तेः स्वरूपात्मकत्वे तयोरीशितव्येश्वरत्वलक्षणभेदस्फूर्तिः सच्चिदानन्दानां भेदाभावेऽपि भेदभानवत् यद्वा विभुत्वेन सर्वासां योगायेश्वरेण समर्थेनेत्यर्थः । तत्र द्वयोर्द्वयोः प्रवेशप्रयोजनमाह । स्त्रियो यं कृष्णं नित्यानन्दं स्वमनःकर्षकं स्वस्वनिकटं स्वस्यैव समीपस्थं मन्येरंस्तेन तथा गृहीतकण्ठीनाम् अत्रायमाशयः सर्वमनसां नित्यानन्दकृष्णाकृष्टत्वाद्यदि कृष्णस्य स्वसमीपे दर्शनं न स्यात्तदा स्वमन्दभाग्यत्वबुद्ध्योत्सवभङ्गो यदा च मण्डले एकैकसंनिधाने प्रवेशस्तदैश्वर्य्यभानप्रतिरोधेन तादृशरसास्फूर्तिरतः स्वात्मन एकस्यां दिशि कृष्ण एकस्यां गोपीति भावेन मन्निकटे एव प्रियतम इति स्वस्वोत्कर्षमानेन सर्वासां सुखातिशयार्थं तथा प्रवेशः यद्वा नेश्वरीणामैश्वर्य्यभानं प्रतिबन्धकमीर्ष्यावापि तु प्रेमवतां कृष्णतद्भक्तोभयसमागमः सुखकरस्तथाच सर्वासां कृष्णतत्सखीनां समागमेन सुखातिशयाय तथाप्रवेश इति ध्वनिः अस्मिन्पक्षे यत्र यत्र कृष्णस्य गोपीनाञ्चाग्रे कर्तृत्वं तत्र तत्र कृष्णप्रेरितविधिद्देहानामिव रासोत्सवप्रेरितत्वेनैव कर्तृत्वनिर्देशः यद्वा रासोत्सवः प्रवृत्त इत्युक्त्वा किम्भूतः स तदाह । गोपी गोशब्दवाच्यानां गोश्रुतीन्द्रियरश्मिभूम्यादीनां पतिर्गोपः सर्वेश्वरः कृष्णः प्रवर्त्तकत्वेन गोप्तृत्वेन मण्डकत्वेन चास्यास्तीति तथा पुनः कीदृशः द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन कण्ठे गृहीतानां तासां मण्डलेन मण्डितः यद्वा किम्भूतो गोपी तथा मण्डलो मण्डितोऽनेनेति तथा अस्मिन्पक्षे कृष्णप्रवर्तितस्तल्लब्धश्रीको रासोत्सव एव तासां मण्डलमण्डक इति गोपीनां रासोत्सवस्य च सर्वस्य कृष्णस्वरूपात्मकत्वाद्यथेष्टमण्डकमण्डितत्वोक्तिर्गुणप्रधानभावोक्तिर्वा न दोषाय यद्वा एवं पृथगेव मण्डलरासं निरूप्य रासप्रकारान्तरमाह । मण्डलरासोत्तरं योगेश्वरेण द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णेन कण्ठे गृहीतानां रासोत्सवः सम्प्रवृत्तः तत्रापि रासद्वैविध्यसूचनं दक्षिणवामभागस्थगोपीद्वयमध्यप्रविष्टेन कण्ठे गृहीतानामेकः परस्परयोजितकरद्वयसंमुखगोपीद्वयद्वयमध्यप्रविष्टेन द्वितीयोऽत्र भगवतोऽप्युभयसन्तोषायोभयसंमुखतया तत्तत्कण्ठे करद्वयधारणेन चतुर्भुजत्वमिति बोध्यम् एवं यावद्रासोत्सवः सम्प्रवृत्तस्तावत्तद्भोरासदर्शनौत्सुक्येनापहृता आत्मानो मन इन्द्रियप्राणा येषां तेषां दिवौकसां विमानानां शतेनासङ्ख्यातेन संकुलमासीत् शतसङ्ख्यास्वीकारे नभ संकुलत्वासम्भवात् अत्र सदाराणामित्युक्ता स्त्रीणां पुरुषाणां च सर्वेषामौत्सुक्यापहृतात्मत्वकथनं यद्वा सदाराणामपि दारपुरुषयोः सह वर्तमानत्वे परस्पर लग्नचित्ततयान्यत्रौत्सुक्यासम्भवेऽपि तद्रासोत्सवमाहात्म्यादेव तथौत्सुक्यमिति सूचनं नभस्तावद्विमानशतसंकुलमित्यस्यायमप्याशयः नभसा कृष्णतत्सखिवहमितशशिप्रभमुखसमृगाङ्काङ्कां भूमिमालोक्य विमानेन स्वमानायमिताण्डदादिनामानयनमिव विमानानयनेऽपि तेषां शशिप्रभतया विशेषमानानां विमानानामतिशोभमानकृष्णतत्सख्यमनिमानरीक्षणेन विमानानां तन्मुखचन्द्रग्रहणसहकाराये-क्षितबहुतरताराकारत्वं जातं किञ्च यद्यपि तानि विमानानि चन्द्रतोऽप्यधिकप्रभतया विमानानि तथापि तानि कृष्णतत्सखिच्छविविभातानि चन्द्रस्तु स्वयंशजकृष्णादर्शनलब्धातिमानतया राजमान इति विमानचन्द्रविभागोपपत्तिः तत्रस्थाः सुराश्च शुक्रपक्षे शशिसुधापानं विस्मृत्यामितहरितत्सखिमुखचन्द्ररूपसुधास्पर्पीयमाना औत्सुक्यापहृतात्मत्वेन द्रुमदशापन्नतया सुरद्रुमाः सन्तः सुमनः सुमनोऽभिवर्षिणोऽभवन् ॥ ३ ॥ ४ ॥

---

## श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

चतुर्वर्णाधिकेन सार्द्धेन तत्साहित्यं दर्शयति । रासेति । तासां रासक्रीडालक्षण उत्सवो मनोविस्मापकाह्लादरूपः सम्यक् प्रवृत्तः यथोत्सवोऽनेकविधैर्ब्राह्मणादिभिर्मण्डितो भवति तथाऽयमुत्सवो गोपीनां बहुविधैर्मण्डलैर्मण्डितः कथंभूतानां तासां कृष्णेन कण्ठे गृहीतानां कथम्भूतेन कृष्णेन द्वयोर्द्वयोर्मध्ये प्रविष्टेन कृष्णपदेनानवच्छिन्नानन्दसमुद्रे तासां निमग्नता सूचिता ननु एकस्य कथमेककालमेवंविधः प्रवेश इत्याशङ्कानिरासायोक्तं योगेश्वरेण योगः अघटितघटनापटीयसी महामायाशक्तिस्तस्या ईश्वरेण तथा च तादृशशक्त्या तस्य तथा प्रतीतिरित्याशयेनाह । यं श्रीकृष्णं स्त्रियः स्वनिकटं मन्येरन् अत्र गोपीद्वयान्तरितः कृष्ण इत्युक्त्वा गोप्यर्द्धसङ्ख्याककृष्णमूर्त्तिसंयुक्तो रासोत्सवस्तेन गोपीससंख्याककृष्णमूर्त्तियुक्तेन वक्ष्यमाणेन तेन न पौनरुक्त्यं किञ्च अत्र न तावत्संख्याकमूर्त्तिस्वीकारः किन्तु एक एवातिलाघवेन तथा नृत्यकृतिः स्यात् एवं यं मन्येरन्नित्युक्तं ननु तथा दृष्टवत् इति इयञ्च भगवल्लीला परमोत्कृष्टा लक्ष्म्यादीनामपि प्रार्थनीया परमदुर्लभा चेति बोध्यं रासोत्सव इत्यारभ्य कथालङ्कारार्थं पुरञ्जनोपाख्याने नगरीवर्णनवद्रासवर्णनमतो निवृत्तिपक्षविवरणप्रयासादुपरम्यते ॥ ३—४ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतस्ताभिः समन्वितत्वमभिनयेन दर्शयति । रासोत्सव इत्यादिना यं मन्येरन्नित्यन्तेन । तासां गोपीनां मण्डलरूपेण वर्तमानानां द्वयोर्द्वयोर्मध्ये प्रविष्टेन कथम्भूतानां कृष्णेन कण्ठे गृहीतानामुभयत आलिङ्गितानाम् कथम्भूतेन यं श्रीकृष्णं सर्वाः स्त्रियः पृथक् पृथक् स्वनिकटं मन्येरन् तेन नन्वेकस्तत्तन्निकटस्थः कथमभवदित्यत आह । योगेश्वरेणेति । अचिन्त्यशक्तिनेत्यर्थः । तथैव वक्ष्यति "कृत्वा तावन्तमात्मानं यावती गोपयोषित" इति एवंभूतेन कृष्णेन गोपीनां मण्डलैर्मण्डितोऽलंकृतः रासोत्सवः सम्प्रवृत्त इत्यन्वयः यर्हि रासोत्सवः सम्प्रवृत्तस्तावत् तत्क्षणमेवौत्सुक्यनिभृतात्ममनामौत्सुक्यपूर्णमनसां सस्त्रीकाणां दिवौकसां देवादीनां विमानशतैः सङ्कीर्णं नभोऽभूदिति शेषः ॥ ३ ॥ ४ ॥

---

## भाषा टीका ।

तदनन्तर गोपियों के मण्डल से मण्डित होकर महारास का उत्सव प्रवृत्त भया उस रासोत्सव में दो दो गोपिन के

१यं मन्येरन्नभस्तावद्विमानशतसङ्कुलम् । १मन्मन्येत इति वि० पाठः

दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥

ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ।

जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥

वलयानां नूपुराणां किङ्किणीनां च योषिताम् ।

सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ॥ ६ ॥

भाषा टीका ।

मध्य में एक एक कृष्ण मूर्ति से रहकर भगवान् ने सब गोपियों के कण्ठ में हाथ डालकर योगीश्वरों की शक्ति को दर्शाया रहा ॥ ३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तावत्तत्क्षणमेवौत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकुलं संकीर्णं नभो बभूव ॥ ४ ॥

तत्तस्य भगवतः श्रीकृष्णस्यामलं निर्मलं यशो जगुरिति ॥ ५ ॥

सप्रियाणां कृष्णसहितानाम् तुमुलः सङ्कीर्णः ॥ ६ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

द्यौराकाश ओको निवासो येषामिति स्वभावत एव व्योम्नि भ्रमतामकस्माद्रासक्रीडादर्शनात् संहत्य तत्र स्थितानामित्यर्थः । अत एव विमानशतसंकुलं नभो बभूव यद्वा द्यौः स्वर्गः ततश्च स्वर्गेऽपि तादृशोत्सवासद्भावः तेषां स्वस्वसेवाया वरोऽवसरोऽपि सूचितः अतएवात्यौत्सुक्यमिति इत्यसमयेऽप्यागमनदोषः परिहृतः अथवा एते खलु श्रीभगवत्क्रीडाया आन्तरिक्षाः परिकरा देवविशेषा ज्ञेयाः अतएवोक्तं दिवौकसां तत्क्रीडोपकरणत्वेन सदासावधानं व्योम्न्येव वर्त्तमानानामित्यर्थः । एवमन्यत्राप्यूह्यं ततस्तेभ्यो दिवौकोभ्यः किम्वा तदनन्तरं स्वयमेव नेदुः दिव्यत्वात् महामङ्गलोत्सवस्वभावाद्वा एवमन्येऽपि आदौ दुन्दुभीनां नादो मङ्गलारम्भार्थः स्वस्ववर्ग्यसम्मेलनार्थं च नितरां पेतुः निशब्देन वृष्टय इतिबहुत्वेन च रङ्गस्थल्यां पुष्पास्तरणं किल जातमिति बोध्यते गन्धर्वाणां पतयः श्रेष्ठा अन्यथा तादृशनृत्ययोग्यगानासिद्धेः तेषां श्रैष्ठ्यसाफल्यसम्पत्तिश्च स्त्रीभिरप्सरोभिः सपत्नीभिर्वा सहिता इति सर्वेषामेव तदेकनिष्ठतोक्ता न तिष्ठति मलो यस्मादित्यमलमिति तेषामपि कामादिदोषो निरस्तः ॥ ४—५ ॥

एवं देवकृतोत्सवमुक्त्वा रासयोग्यं वाद्यगीतादिवक्तुमादौ वाद्यमाह । वलयानामिति । किङ्किणीनां काञ्च्यादिवर्तिनीनां योषितामिति योषित्त्वेन सामान्यत एव वलयादिसद्भावो ननु रासार्थं भूषणत्वेन ग्रहणादिति बोध्यते पूर्वं गृहेभ्यो निर्गमे तासां तदनपेक्षणात् सप्रियाणाणामिति तासां प्रीत्यर्थं तावत्स्वमिव गतस्य श्रीभगवतोऽपि तावद्वलयादिशब्दोऽभिप्रेतः रासेन यन्मण्डलं मण्डलीबन्धः किंवा रसस्येदं रासं यन्मण्डलं तस्मिन् यद्वा रससमूह इत्यर्थः ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तेभ्यो दिवौकोभ्यः । किम्वा तदनन्तरं स्वयमेव नेदुः दिव्यत्वात् महामङ्गलोत्सवस्वभावाच्च । एवमग्रेऽपि आदौ दुन्दुभीनां नादो मङ्गलार्थः स्वस्ववर्गसम्मेलनार्थश्च । नितरां पेतुः निशब्देन वृष्टयः इति बहुत्वेन च रङ्गस्थल्यां पुष्पास्तरणं किल जातमिति बोध्यते । स्त्रीभिरप्सरोभिः सपत्नीभिर्वा सहिता इति सर्वेषामेव तदेकनिष्ठतोक्ता न तिष्ठति मलो यस्मादित्यमलमिति तेषामपि तदानीं सर्वदुर्वासना निरस्ता ॥ ५ ॥

एवं देवकृतोत्सवमुक्त्वा रासयोग्यं वाद्यगीतादि वक्तुमादौ वाद्यमाह । वलयानामिति । किङ्किणीनां काञ्च्यादिवर्त्तिनीनां योषितामिति । योषित्त्वेन स्वभावत एव वलयादिसद्भावः सूचितः । सप्रियाणामिति । तासां प्रीत्यर्थं तावत्तया प्रकाशमानस्य श्रीभगवतोऽपि तावद्वलयादिशब्दोऽभिप्रेतः । रासेन यन्मण्डलं मण्डलीबन्धस्तस्मिन् ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यं कृष्णं स्त्रियः सर्वाः स्वनिकटस्थं मन्येरन् तेन कृष्णेनेत्यन्वयः यदा रासोत्सवः सम्प्रवृत्तः नभस्तावद्दिवौकसां विमानशतसंकुलमासीत् ॥ ४—७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । दुन्दुभयो दध्वनुः सस्त्रीकाः गन्धर्वश्रेष्ठा अमलं शृण्वतां वदतां च पापहरं तस्य भगवतः यशो जगुः ॥ ५ ॥

वलयानामिति । सप्रियाणां श्रीकृष्णसहितानां योषितां ये वलयादयस्तेषां शब्दस्तुमुलः सङ्कीर्णो बभूवेत्यर्थः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्येवं कृष्णे रासक्रीडाकारिणि के साक्षिण इति आह । यं मन्येतेति । कृष्णो यदा रासक्रीडां कर्तुं मन्येत न्यरूरुपदिति व्यत्ययः तावत्तदा नभः औत्सुक्येन निभृतात्मनां निश्चलमनसां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सदाराणां सभार्याणां दिवौकसां विमानसतसङ्कुलम् आसेति शेषः ॥ ४ ॥

ततः रासोत्सवप्रारम्भानन्तरम् ॥ ५—६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तदा नभस्तावत् सकलं नभ इत्यर्थः "यावत्तावच्च साकल्ये" इत्युक्तेः सदाराणां दिवौकसां विमानशतसंकुलमासीदित्यर्थः । दर्शनार्थमत्यौत्सुक्यभृताश्चात्मानो येषाम् ॥ ४ ॥

तेषामौत्सुक्यमाह । ततो दुन्दुभय इत्यादि ॥ ५ ॥

ततस्तद्वाद्यानुकारेण मण्डले इतस्ततो विचलन्तीनां सप्रियाणां तासां वलयादिभिः समतालः शब्दो बभूवेत्याह । वलयानामित्यादि । अन्योऽन्यमिश्रत्वात्तुमुलः ॥ ६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथोद्गतस्योभयत्र संबन्धमाह । द्वयोर्द्वयोर्मध्ये प्रविष्टेन भगवता कण्ठे गृहीतानामिति हस्तद्वयेन पार्श्वस्थितयोः कण्ठे ग्रहणम् एवं षोडशगोपिकानामष्टकृष्णा भवन्ति अन्यथा रसाभासः स्यात् कृष्णद्वैविध्यप्रतीतेः इममेवार्थमाह स्वनिकटं स्त्रियः यम्मन्येरन्निति स्वस्यैव निकटे नत्वन्यासां स्वसम्मुखस्थितगोपिकाकण्ठालिङ्गितभगवद्दर्शनमपि भगवदिच्छया तासां न जायत इति प्रयोजनार्थं हि रूपद्वयं तदर्धसंख्ययैव प्रयोजनं भवतीति न समसंख्यामृग्या यावतीर्गोपयोषित इत्यग्रे समसंख्यां भगवतो वक्ष्यति यत्पुनः कैश्चिदुक्तम् "अङ्गनामङ्गनामन्तरे माधव" इति तत्रापि सविसर्गः पाठो ज्ञेयः द्विवचने बहुवचनप्रयोगश्च अन्यदेव वा तन्मण्डलं न भागवतोक्तं मध्ये वेणुनादस्योक्तत्वात् अत्र तु रसार्थं नृत्यमिति गानार्थमपेक्षायामपि देवैरेव तत्सिद्धिः मध्ये मणीनां हैमानां हैमानामित्यत्र तु दर्शनार्थमुक्तत्वात् गोपिकानां देवानाञ्च दर्शनं तथैवेति नानुपपन्नं किञ्चित् एवं रसार्थं सर्वसामग्र्या मुक्तायां सरसः प्रादुर्भूतः सर्वेषां भविष्यतीति देवादयः सर्वे अलौकिकज्ञानयुक्ता दर्शनार्थमागता इत्याह । नभस्तावदिति । तावन्नभो विमानशतसंकुलमासीत् मण्डपेहि नृत्यं रसजनकम् अन्यथोपरि वैचित्र्यं न स्यात् तदर्थमपि विमानशतेन संकुलं यथा रसोत्पादनार्थं स्त्रियः पुरुषाश्च संबद्धाः नानाबन्धयुक्ताः चित्रे स्थाप्यन्ते तदर्थं भगवतो चित्रप्रायाः स्थापिताः अत एवाग्रे औत्सुक्यापहृतात्मनामिति वक्ष्यति स्वलीलार्थं सर्वं तथा प्रेरयतीति न औत्सुक्येनान्यथासिद्धिः तासां रसग्रहणार्थमागमनं भगवदिच्छा तु चित्रार्था विमानस्थितान् तत्संबन्धिनो वर्णयति । दिवौकसामिति । स्वर्ग एव स्थानं येषां सदाराणामिति । तेषां भावान्तरव्युदासार्थं स्त्रीणामुपसर्ज्जनत्वं तासां भावार्थं स्वर्गस्थिता रसाभिज्ञाः रसयोग्याश्च भवन्तीति नन्वीश्वरलीला न द्रष्टव्येति कथं तेषां दर्शनार्थं प्रवृत्तिः तत्राह । औत्सुक्येन विचाररहितलीलाक्षिप्तमनसा मपहृत आत्मा स्वरूपं बुद्धिर्वा येषामतः स्वधर्मादेव प्रवृत्ताः नतु भगवद्धर्मं विचारितवन्तः ॥ ४ ॥

ततो नृत्यारम्भे यद्भव्यं तज्जातमित्याह । तत इति आदौ दुन्दुभिवादनं "परमा वा एषा वाक् या दुन्दुभौ" विश्रुतेः ततः प्रथमतः पुष्पवृष्टिर्मङ्गलार्था पुष्पाञ्जलिः प्रसिद्धः आगतो रसः तदधिष्ठाता वा पूज्यत इति नानाविधानां पुष्पाणां भिन्नावृष्टय इति बहुवचनं ततो गानं साधारणं जातमित्याह । जगुर्गन्धर्वपतय इति । भगवान् श्रोष्यतीति उत्तमैरेव गानं गन्धर्वपतयो विश्वावसुप्रभृतयः तेह्यधिकारिण इति नटानामिव तेषां दर्शनं न दोषाय अन्यथा भगवद्धस्तस्थितेन्द्रादीनामपि दोषत्वं स्यात् "अर्थद्रव्यविरोधेऽर्थो बलीयानि" ति न्यायात् तथापि तेषामन्यथा बुद्धिः सम्भाव्येतेति विशेषणमाह । सस्त्रीका इति । वैषयिकदोषव्यावृत्त्यर्थमाह । अमलं तद्यश इति । तद्धि मलनिवर्त्तकम् अतो न तासां तेषां वा तत्कालोपयोगिपदार्थादतिरिक्तो भाव उत्पद्यते ॥ ५ ॥

एवं वाह्यगीतवाद्यादिकमुक्त्वा नृत्यमध्ये रसोपयोगिवादित्राण्याह । वलयानामिति । स्थानत्रये हि वादित्राण्यपेक्ष्यन्ते नीचस्थाने भूमाविव मध्ये उपरि च तथैव तालभेदाः अतोऽत्रापि उपरि वलयानां शब्दः अधो नूपुराणां मध्ये किङ्किणीनामन्योन्यावद्धवाहव एव मध्ये मध्ये हस्तद्वयं योजयन्तीति वलयानां शब्दः अथवाग्रे शब्दोत्पत्त्यर्थं प्रकारं वक्ष्यति पादन्यासैरिति सप्रियाणां कृष्णसहितानामत एव सर्वलास्यसम्पत्तिः सर्वासां भगवत्संबन्धार्थश्च चकारात् अन्येऽपि कूजितशब्दाः मुखशब्दाश्चोक्ताः सर्वे एकीभूय तुमुलो भूत्वा यथा दूरस्थानामयान्तरग्रहणं न भवति तथा सति किं स्यादत आह । रासमण्डल इति । रसानां समूहमण्डले यथानधिकारित्वेन शूद्रस्य वेदश्रवणे तदध्येतुर्मन्त्रस्य च शक्तिह्रासः शूद्रेच पापसंभवस्तथैतद्भक्तातिरिक्तानामेतच्छ्रवणेऽप्यनधिकारादस्य रसस्यालौकिकत्वादेतच्छ्रवणे मण्डले सर्वेषां रसो गच्छेत् श्रवणे सति तदन्वेषणपरत्वं स्यात्तेषामेवानिष्टकरमिति तदेव पापरूपम् ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्रियाणां सकृष्णानाम् । अत्र चकारेण तत्रानद्धशुषिरतुमुलान्यपि संगृहीतानि । एषां चकारेणोक्तत्वादप्राधान्याद्वलयादिवाद्यानाच्छादकत्वं ध्वनितम् ॥ ६ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

अथ चेतनानां का वार्त्ता जडानामपि रसावेशो जात । इत्याह । तत इति । तदनन्तरं विमानयानानां रसावेशवैवश्ये जाते सति दुन्दुभयः स्वयमेव नेदुः तादृशतालबन्धादिसंबद्धतयैव जगर्जुरित्यर्थः । पुष्पवृष्टयश्च स्वयमेव निपेतुः तथा गन्धर्वा दिव्यगायनास्तेषां पतयः पालका रागविशेषास्त एव मूर्त्तिधराः सस्त्रीका इति सपरिकरास्ते च गोविन्दलीलामृते दर्शिताः विस्तरभिया न लिखिताः तद्यशः रासलीलायशो जगुः न तिष्ठन्ति मलं कामवासना यस्मादित्यमलं स्वभावविमलं वाशुद्धप्रेमविलासादिति भावः अथवा क्रियाविशेषणमिदम् अमलं यथा भवति तथा जगुरित्यर्थः कामकथापदेशेन कामविजयख्यापनादिति भावः ॥ ५ ॥

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

एवंचातिवैवश्येन समाजे स्थगितप्रायेऽप्यभ्यासपाटवप्रभावेण यथावदेव रासस्थितिर्जातेत्याह । वलयानामिति । सप्रियाणामिति तासामेव योषितां प्राधान्यं सूचितं रासे यन्मण्डलं मण्डलीबन्धस्तस्मिन् तुमुलः समस्वरतालादिः नत्वसंमिलित इत्यर्थः स्पष्टमन्यत् अयं स्थिरो दर्शितः ॥ ६ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तत्र नभसि जातमुत्साहं वर्णयति। ततो दुन्दुभय इति । "परमा वा एषा वाक् या दुन्दुभा" विति श्रुतेर्यतो दुन्दुभिनादस्य मङ्गलत्वं तत आदौ मङ्गलार्थं दुन्दुभयो नेदुः मङ्गलानां च मङ्गलं जगन्मङ्गलमङ्गलात्मनेत्यादिना मङ्गलमङ्गलभगवतो मङ्गले मङ्गलार्थं मङ्गलान्तरापेक्षाभावेऽपि रवेः पूजने दीपवत्तदुपपत्तिः दुन्दुभय इति वचनं प्रभूत्यर्थं तदादीनि वाद्यानि देवानां छविदर्शने प्रहृतात्मतया देहानुसन्धानाभावाद्रासोत्सवोत्साहेन तन्महन्मङ्गलसम्बन्धेन गङ्गानिविष्टजलान्तरस्य गङ्गात्ववन्मङ्गलत्वनिष्पत्तये वा भगवतो योगिजनमनो विहारेऽनाहतध्वनिवत् स्वयमेव नेदुः तथा निपेतुः पुष्पवृष्टय इत्यत्रापि देवानां विगतानुसन्धानतयैव तत्कर्तृकवर्षणमनुक्त्वा "नित्यो नित्यानाञ्चेतनश्चेतनानामिति" श्रुत्या चेतनचेतनभगवत्सान्निधानेन लब्धचेतनानां पुष्पाणां भगवत्तत्सखीगणोत्फुल्लिताङ्गपुष्पमिलनजातोत्साहतया भगवतो गोपीनां स्वाङ्गसङ्गतवृन्दावनद्रुमलतापुष्पेर्ष्यया वोत्प्लुत्योत्प्लुत्य स्वतः एव भगवत्संमुखप्रवृत्तिमतां वृष्टयोनितरां विहारस्थ लघिस्तरास्तरणरूपतया पेतुःयद्वा सुरद्रुमनिपतितपुष्पवृष्टिवत्तेषां सुरद्रुमत्वापन्नानां सुराणां सुमनांस्येव सुमनांसि भगवन्मुखचन्द्रमद्भुतमनःसुरदर्शनात्तत्समागमोत्साहेन बहुरूपेणोत्फुल्लितानि अपरिमिततया तद्वन्नभसि संमानुमनर्हाणि सुमनोवृष्टिरूपतया निपेतुः तत्र वृष्ट्याधिक्यस्य निशब्देनैव बोधनाद्वृष्टय इति बहुवचनं तु तत्तद्वर्णसुमनसां वृष्टिभेदाभिप्रायेण तत्र कानिचित्सुरसुमनांसि सत्त्वात्मकतया शुक्लानि कानिचित्कृष्णध्यानेन तद्रूपतया कृष्णानि कानिचिदनुरागरञ्जितान्यरुणानि कानिचित्पीतवसनलसनानि पीतानि कानिचित्तु हरिहृतानि हरितानि कृष्णयशः सुरभिवासितान्यतिसुरभीणीति विभागः । कानिचित्तु तत्तदुत्साहेनोद्गम्यच्छविचाकिततया गतिभग्नानि सुखमग्नानि तदङ्गलग्नानि रोमपुलकतयोल्लसितानि तथा गन्धर्वपतयश्च सस्त्रीकास्तदमलं यशो जगुरित्यत्राप्ययमेवाशयः न मलं विद्यते यस्मात्तथाभूतामलयशउत्साहेनैव गलमलहृदयहृद्रागरूपतया तद्रागप्रवाह एवोद्गतः तत्र रागे तानवितानान्येव प्रेमप्रवाहतरङ्गाः तानगतमृच्छना एव तन्निमग्नमनसां पुनर्निर्गमासम्भवादावर्ताः तद्रोमपुलकं तद्रागसुरसरिन्प्रवाहलब्धरसतीरभूमितनुरोमद्रुमोत्थानमित्याशयम् ॥ ५ ॥

एवं रासानुरूपसुरसमाजवाद्यगाने निरूप्यान्तरङ्गतयान्तरङ्गवाद्यमाह । वलयानामिति । अत्र रासे उपर्यधोमध्येच समानवाद्यध्वनिरपेक्षिनः तत्रोपरि नृत्ये करचालनेन स्वपतिगुणगानबहुमणिवलयतया प्रकाशितनन्या स्वालयकरपद्मनिवासितया पद्मया तद्गुणगानवत् मधुरशब्दोऽञ्चनोपरि शब्दोल्लासतया नृपसुरपतिपद्माद्विपदन्याभिनां चरणाश्रितपरमहंसानां राजहंसशिशूनामिव पदकञ्जाश्रितानां शुभपदन्यासतद्गुणगणगणनवन्नृत्यपदन्यासे तद्वासिनां मणिनूपुराणां भुवि ध्वनिः पूरः एवं मेरुसुरनीलाद्रिशृङ्गनिवसितविविधविबुधतन्नाममनुमननवत्कनकेन्द्रनीलाभवृहदुच्चहरिसखिहरिनितम्बोद्भासिनीनां किङ्किणीनां नृत्यकटिचालनवादनेन मध्ये नादप्रसादस्तथाच रासमण्डळे पुनर्मण्डलीभूय नर्तने सप्रियाणां प्रियेण कृष्णेन निर्गुणेनापि गुणीभूतेन राजमानानां तद्योषितां गोपीनां ये वलयादयस्तेषां शब्दस्तुमुलः स्वध्वनिमाधुर्यादिगुणसौष्ठवेन सुरवाद्यादिगुणपराभवेन महानभूदभवदित्यर्थः । यद्वा वलयादीनां शब्द इति रासगतवाद्यध्वनिनिरूपणं सप्रियाणां योषितां शब्द इति तासाङ्गानशब्दवर्णनं ज्ञेयम् ॥ ६ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तावत्तत्क्षणमेवौत्सुक्याकृष्टचेतसां सस्त्रीकाणां देवानां विमानशतैः संव्याप्तनभआसीदितिशेषः स्वर्गसम्बन्धिनृत्यगीतादिकं तेषां तदानीन्तुच्छमभूदिति सूचनाय दिवौकससामित्युक्तं रसान्तरव्यग्रतानिरासाय सदाराणामित्युक्तं ननु भगवल्लीलां द्रष्टुमधिकाराभावात्कथं तत्र प्रवृत्ता इत्याशङ्कानिवृत्त्यर्थमुक्तमौत्सुक्येति तत्रापि यावत्तेषां दर्शनाय स्थितं तावदेव तेषां दर्शयामास भगवानिति द्रष्टव्यं देवा अपि न केवलं कौतुकद्रष्टार एव बभूवुरपितु रासक्रीडापरिकरतां ययुरित्याशयेनाह । ततस्तदनन्तरं देवैर्वादिता दुन्दुभयो नेदुस्तथा तैरेव क्रियमाणाः रङ्गाधिष्ठानदेवतापूजार्थं च पुष्पाणामास्तरणार्थं वृष्टयो निपेतुः नानाविधानां पुष्पाणां भिन्ना वृष्टय इति द्योतनाय बहुवचनं ततो गन्धर्वपतयो गानाधिकारमुख्या विश्वावसुप्रमुखा जगुः भगवान् श्रोष्यतीति मत्वा तत्पतयो जगुरित्याशयः तत्रापि सस्त्रीकाः प्रेमाविष्टत्वादव्यग्रचित्ता इति भावः । तत्रोदितां भगवल्लीलामवलोक्य न तेषां भगवति विषयित्वबुद्धिरासीदित्याशयेनाह । तस्य तादृशक्रीडायां निविष्टस्य भगवतोनिर्मलं यश इति तथाच तद्दर्शनं शुद्धबुद्धीनां तेषां मलनिवर्त्तकमभूदिति भावः ॥ ५ ॥

एवं वाद्यवाद्यादिकमुक्त्वा नृत्यमध्ये रसोपयोगिवादित्राण्याह । वलयानामिति । तत्राप्युपरि योषितां वलयानाम् अधो नूपुराणां मध्ये किङ्किणीनां शब्दो रासमण्डले तुमुलः संकीर्णोऽभूत् तत्रापि प्रियेण श्रीकृष्णेन संवर्त्तमानानां तथाच तत्कृपया न कस्यापि कृष्णविश्लेष आसीदिति भावः चकारेण संगृहीतस्य करतालादिशब्दस्याप्राधान्यं व्यज्यते ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य श्रीकृष्णस्य अमलं यशः श्रोतृणाञ्च पापहम् ॥ ५ ॥

प्रियेण श्रीकृष्णेन सहिताः सप्रियास्तासां वलयादीनां च तुमुलः संकीर्णः शब्दोऽभूत् ॥ ६ ॥

---

भाषा टीका ।

उस समय सब गोपी यह जानती थीं कि मेरे ही पास में कृष्ण हैं उसी समय बड़ी उत्कण्ठा से जिन का मन हरण होगया तब अपनी स्त्रियों के सहित वे सब देवता

(१) तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः । (१) तत्रापीति विजय० पाठः०
मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥
पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः ।
स्विद्यन्मुख्यः कवररशनाग्रन्थयः कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥

भाषा टीका ।

रास देख ने को आये तो उन के विमानों से आकाश भरगया ॥ ४ ॥

तब आकाश में नगारा बजने लगे और फूलों की वृष्टि भई सब गन्धर्वों के पति अपनी स्त्रियों के सहित भगवान् के निर्मल यश का गान करते भये ॥ ५ ॥

प्रिय श्रीकृष्ण भगवान् के सहित जो गोपी तिनके कंकणों का नूपुरों का क्षुद्र घंटिकाओं का उस रास मंडल में बडा सघन शब्द होता भया ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

महामरकतो नीलमणिरिव हैमानां मणीनां मध्ये मध्ये ताभिः स्वर्णवर्णाभिराश्लिष्टाभिः शुशुभे गोपीद्वयस्याभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनम् ॥ ७ ॥

स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह । पादन्यासैरिति । भुजविधुतिभिः करचालनैर्भज्यमानैर्मध्यैश्चलद्भिः कुचैश्च पटैश्च गण्डलोलैर्गण्डेषु चञ्चलैः स्विद्यन्मुख्यः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासां ताः कवरेषु रशनासु च ग्रन्थयो दृढा यासां ताः यद्वा तेषु तासु चाग्रन्थयः शिथिलग्रन्थय इत्यर्थः तत्र नानामूर्त्तिः कृष्णो मेघचक्रमिव तास्तु बहुविधास्तडित इव स्वेदस्तु आसार इव गीतं गर्जितमिवेति यथा सम्भवमूह्यम् ॥ ८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भगवान् सर्वैश्वर्यशोभाभरसम्पन्नोऽपि तत्र रासमण्डले ऽत्यन्तं शुशुभे स्वतोऽशेषशोभाचरमकाष्ठां गतस्यापि ताभिः शोभातिशयं पूर्ववद्दृष्टान्तेन साधयति । मध्ये इति । हैमानां हेमनिर्मितानां हेमवर्णानाम्वा यथा महामरकतमणेरपि हैममणिमध्यवर्त्तितयैव शोभाधिका स्यात् तथा तस्यापि प्रियजनाश्लेषेणैवाधिका शोभा स्यादित्यर्थः । तत्र हेतुः देवकीसुत इति प्रेमविलासार्थं देवक्यां जनितत्वात् प्रियजनविषयकप्रेमभरविस्तारणेनैव शोभाभरसम्पत्तेरिति भावः । देवकी यशोदेति पूर्वं लिखितमेव अन्यत्रैर्लिखितं यद्वा महामरकत इत्येकत्वं वस्तुतो भगवत एकत्वस्य किंवा वेणुवादनार्थं मध्यवर्त्तिनोऽभिप्रायेण अत्र केचिदाहुः स्वभावेनेन्द्रनीलमणिवर्णोऽप्यसौ नृत्यगतिकौशलेनयुगपदिव प्रत्येकक्कण्ठग्रहणादिना ताः सर्वा व्याप्य भ्रमणात् तासां सुहेमगौरीणां कान्तिच्छटासम्पर्कात् अनतिश्यामलमरकतमणिवर्णताप्राप्त्या महामरत इत्युक्तमिति ततश्च नृत्यशक्तिविशेष एव ननु कोऽपि भगवत्ताविशेष इति ॥ ७ ॥

न केवलं ताभिः सोऽधिकं शुशुभे किन्तु [illegible] व शुशुभिरे इत्याह । पादेति । पादानां न्यासाः नृत्यगतिविशेषेषु [illegible] भज्यमानैः भुजानां हस्तानां विशेषेण धुतिभिः [illegible] गण्डलोलैः [illegible] यद्वा अन्योऽन्यबद्धबाहुत्वेन भुजविधुतयो न सं हि केवलो [illegible] अन्योऽन्याबद्धाभ्यां द्वाभ्यां संहत्यैव किम्वा कदाचिदविश्रय [illegible] त्वपरित्यागेनैव यद्वा अन्योऽन्यबद्धानामपि भुजानां नृत्यगतिभङ्ग्यैव ताः बोद्धव्याः एवमग्रेऽपि सर्वं तथैव ज्ञेयमिति दिक् स्मितसहितैः भ्रुवां विलासैः तत्तद्रसाभिव्यञ्जकनर्तनचातुर्यैः भज्यमानैः स्वभावतः कार्श्येन विशेषतश्च नृत्यार्थपरिवर्तनादिना भङ्गमिव गच्छद्भिर्मध्यभागैः पटाः कञ्चुकानि किम्वा [illegible] गवकुत्थाने सति पुनः परिगृहीतानि निजनिजोत्तरीयाण्येव [illegible] तथास्य श्यामसुन्दरस्य वध्वः तदाश्लिष्टा गौराङ्ग्यस्तदेकाश्रय [illegible] धर्मार्हाः । तच्च दृष्टान्तेन व्यञ्जितमेव किम्वा कृष्णस्य वध्वः प्रियाः इति तत्सदृशतत्तद्वैदग्ध्यादिकं तत्प्रेममोहितत्वञ्च युक्तमेवेति भावः । अतस्तमेव गायन्त्यः तत्प्रकारश्चोक्तः श्रीपराशरेण "कृष्णः शरच्चन्द्रमसं कौमुदीं कुमुदाकरम् । जगौ गोपीजनस्त्वेकं कृष्णनाम पुनःपुन" रिति विशेषेण रेजुः अशोभन्त तत्प्रेमभरमौग्ध्यनृत्यादिवैदग्ध्ययोरन्योऽन्यं सम्मेलनेन तस्यैश्वर्यलौकिकत्वयोरैक्येन च शोभाभरसम्पत्तेः तडित इवेति दृष्टान्तेनान्योऽन्यशोभया तस्यापि शोभा ध्वनितैव चक्र इति नृत्यगतिकौशलेन निजशक्तिविशेषेणैव नानात्वमिव प्राप्तत्वात् किम्वा मेघानां घटाविवक्षया अन्यथा सुश्यामत्वाद्यभावेन शोभाद्यभावः तस्यातिशोभनानन्तरं तासामतिशोभावर्णनं सर्वथा परमशोभाचरमकाष्ठागतानामपि रासक्रीडया शोभाविशेषसम्पत्त्या परमाद्भुतत्वात् ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवकीसुतस्तत्तया भवत्सु विख्यातो भगवान् सर्वैश्वर्यसर्वशोभाभरसम्पन्नोऽपि तत्र नु रासमण्डले ताभिरत्यन्तं शुशुभे । यद्वा । तत्र यशोदासुतत्वे अत्यन्तं शुशुभे तत्रापि ताभिरत्यन्तं शुशुभे इत्यर्थः । तादृशस्यापि ताभिः शोभातिशयं दृष्टान्तेन साधयति । मध्ये इति । सामान्यविवक्षयैकत्वम् । सर्वेषु मध्येष्वित्यर्थः । अनो मण्डलमध्यस्थोऽप्येकः प्रकाशो ज्ञेयः । स एव श्रीराधिकां सङ्गे निधाय वेणुवादनपूर्वकं भ्रमन् सर्वरासमण्डलमलंकर्तुं मण्डयति । तच्च क्रमदीपिकाद्युक्तरासान्तरानुसारेण ज्ञेयम् । "इतरेतरबद्धकरप्रमदा गणकल्पितरासविहारविधौ मणिशङ्कुगमप्यमुना वपुषा बहुधा विहितस्वकदिव्यतनुम् । "सुदृशामुभयोः पृथगन्तरगं दयितागलबद्धभुजद्वितय" मिति मणिशङ्कुगतत्वमप्युक्त्वा तदेव पुनर्विशेष्य वर्ण्यते । मणिनिर्मितमध्यगशङ्कुलसद्विपुलारुणपङ्कजमध्यगमित्याद्यनन्तरम् । तरुणीकुचयुक्-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परिरम्भमिलद्भुसृणारुणवक्षसमुख्यगातिमिति । तथैवोक्तम् । मण्डले मध्यगः सङ्गगौ वेणुनेति । हैमानां हेमविकाराणां मणीनां गोलोकतया मणिवर्भिर्मितानां महामारकत इत्यतिसामान्य-तयैकवचनम् । मेघचक्र इतिवक्ष्यमाणात् यथा महामरकतमणेरपि हेममणिमध्यवर्त्तितयैव शोभाधिका स्यात् । तथा तस्यापि प्रियाजनाद्धेयो...धिका शोभा स्यादित्यर्थः । अन्यैस्तु । तत्र महच्छब्दपूर्वं ...कतशब्द इन्द्रनीलमणिवाची ज्ञेयः । यद्वा । तासां सुहे...श्रीरामनारायणकान्तिच्छटासम्पर्कादनतिश्यामलमरकतमणिवर्णता ...कत इत्युक्तम् इति ततश्च नृत्यशक्तिविशेष एव ...जातमुत्पलाः ... भगवत्ताविशेष इति ॥ ७ ॥

न केवलं ताभिः सोऽधिकं शुशुभे किन्तु तेन ताश्च तथा शुशुभिरे इत्याह । पादेति । पादानां न्यासाः नृत्यगातिभिः भूम्याक्रमणभङ्गयस्तैः । भुजानां हस्तानां विशेषेण धुतिभिः हस्तकभेदेन चालनैः यद्यप्यन्योऽन्यबद्धबाहुत्वेन भुजविधुतयो न सम्भवेयुस्तथापि कदाचित्तदर्थमावद्धत्यपरित्यागेनैव । स्मितसहितैर्भ्रुवां विलासैस्तत्तद्रसाभिव्यञ्जकनर्त्तनचातुर्यैर्भज्यमानैः स्वभावतः कार्श्येन विशेषतश्च नृत्यार्थपरिवर्त्तनादिना भङ्गमिव गच्छद्भिर्मध्यभागैः किम्वा भज्यमानता भङ्गं कौटिल्यमिति यावत् । कुटिलीभवन्मध्यभागैरित्यर्थः । सर्वत्र मुहुरिति मन्तव्यम् । कुचपटाः भगवदुत्थाने सति पुनः पुनः परिगृहीतानि निजनिजोत्तरीयाण्येव । अन्यैस्तु । अत्र ग्रथय इत्येव पदच्छेदो योग्यो नत्वग्रन्थय इति । कृष्णवध्व इत्यादिकं त्वेवं व्याख्येयम् । तं कृष्णं गायन्त्यः ता दृष्टान्तवितव्यवशात् कृष्णस्य तत्तत्प्रकाशचक्रे विरेजुः । कुत्र का इव मेघचक्रे तडित इव । ननु मध्ये मणीनामित्यादिप्रोक्तदृष्टान्तो न घटते अदाम्पत्येन तत्तदागन्तुकसम्बन्धात् न त्वयं स्वाभाविकसम्बन्धाभावात्तदेतदाशङ्क्यानन्दवैचित्र्येण रहस्यमेव व्यनक्ति । कृष्णवध्व इति । तद्वदत्रापि स्वाभाविकादेव सम्बन्धाद्दाम्पत्यमेवेति भावः । अत एव तासामभ्यासविशेषं विनापि तेषु तेषु गुणेषु परम एवोत्कर्षो वर्त्तते ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कबररशना ग्रन्थयः कबरेषु रशनासु च ग्रन्थयो यासां ताः ॥ ८—९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्रेति । हैमानां मणीनां मध्ये महामरकत इन्द्रनीलमणिरिव ताभिः स्वर्णवर्णाभिरपश्लिष्टस्तत्रातीव शुशुभे गोपीदृष्ट्यभिप्रायेणैकवचनम् एवमुत्तरत्राप्यवगन्तव्यम् ॥ ७ ॥

यथा ताभिर्भगवान् शुशुभे तथा तेन ताश्च विरेजुरित्याह पादन्यासैरिति न्यासैर्विक्षेपैः भुजविधुतिभिः करचालनैः स्मितेन सहितैर्भ्रुवां विलासैश्च भज्यमानैर्मध्यैश्चलद्भिः कुचैश्च पटैश्च गण्डेषु चञ्चलैः कुण्डलैश्च उपलक्षिताः स्विद्यन्ति स्वेदमुद्गिरन्ति मुखानि यासां ताः कबरेषु रसनासु च ग्रन्थयो यासां यद्वा तेषु तासु च न विद्यन्ते ग्रन्थयो यासां ताः शिथिलकबरादिग्रन्थिमत्य इत्यर्थः । एवम्भूताः कृष्णस्य वध्वः तं कृष्णं गायन्त्यस्तेन विरेजुः यथा मेघचक्रे ताडितस्तद्वत् तत्र कृष्णो मेघचक्रमिव तास्तु बहुविधास्ताडित इव गानं गर्जितमिवेति यथासम्भवमूह्यम् ॥ ८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्रापि रासक्रीडायामपि यद्वा तत्रापि नभस्यपि रासमण्डले एवं चेत् स प्रियाणामिति पदं पूर्णार्थं लभते अन्यत्र कृष्णव्यतिरेकेण प्रियाभावात् अस्मिन्पक्षे प्रियेण बहुरूपं गतेन कृष्णेन सहितानां तत्रापि शब्दसामर्थ्यात्पारवश्यात् शिक्षार्थं नभस्यपि रासक्रीडा प्रवृत्तेति प्रतर्क्य हैमानां हिमवत्संभूतानां मणीनां माणिक्यानां मध्ये मरकतः श्याममणिरिव अनन्तरत्नप्रभवस्येत्युक्तं रत्नजातीनामुत्पत्तिर्हिमवद्गिरेरिति प्रसिद्धं यद्वा हैमानां हेमाकार सम्भूतानां तत्रत्यानां मणीनां निर्मलत्वेन कान्त्यतिशयात् ॥ ७ ॥

तत्र नृत्यप्रकारं कथयति । पादेति । पादन्यासैर्यक्रस्थापितपादविक्षेपविशेषैः भुजानां विधुतिभिः कम्पनविशेषैः भ्रूविलासैः भ्रूभङ्गैः चलकुचतटैरिति केचित् कबरेत्यादौ श्लथदिति पदमध्याहार्यं श्लथन्त्यः कबररशनाग्रन्थयः बन्धविश्लेषाः यासां तास्तथा यद्वा कबररशनानामग्रन्थयः अबन्धनानि यासान्ताः मुच्यमानकबरकाञ्च्य इत्यर्थः । स्तनितरसनाग्रन्थय इति केचित् स्तनग्रन इति धातुः कृष्णवध्वः कृष्णपरिग्रहाः कृष्णयुक्ताः गोपस्त्रिय इति या भावैः पुरुषान् बध्नन्तीति वध्वः "समस्तभावैः खलु बन्धनं स्त्रियः" इत्युक्तेः तं कृष्णं गायन्त्यो या एवं विधास्ताः मेघचक्रे मेघमण्डले तडित इवेति कान्ति विशेषद्योतनार्थं दृष्टान्तोपादानं ननु पादन्यासादिविशेषप्रकाशनार्थम् अचेतनत्वात्तडितां यद्वा यत्तडित इति तडितो यथा प्रकाशनाऽप्रकाशने तथा पादविन्यासाद्यावर्त्तनमिति दर्शनाय तड गताविति धातोः तडन्ति क्षिप्रतिरोधानं गच्छन्तीति क्षिप्रतिरोधा न गमनशीलार्थं इप्रत्ययः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवकी पूर्ववद्यशोदैव ॥ ७ ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उक्तप्रकारस्य भगवत एकविधत्वम् उपमालङ्कारेण द्योतयति । तत्रेत्यादि । अति अतिशयं शुशुभे कुतः ताभिः हेतुभूताभिः हैमानां मणीनां मध्ये महामारकतो नीलेन्द्रमणिरिति एकवचननिर्देशात् न नानाविधत्वम् ॥ ७ ॥

अथ नृत्यगीतवाद्यबन्धतालादिसमेतं स्त्रीबहुमण्डलनृत्यं रास इति स्थिते मण्डलमुक्तं बन्धोऽप्युक्तः वाद्यञ्च वलयानामित्यादिना चोक्तं सम्प्रति तालगाननृत्यानि दर्शयति । पादन्यासैरित्यादि । कृष्ण-

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

वध्वं इति । गोपवधूत्वं प्रसिद्धं वारयति । तं कृष्णं गायन्त्यो विजहुर्नृतुरित्यर्थः । कुत्र का इव मेघचक्रे तडित इवेति तडितो यथामेघचक्रे नृत्यन्ति मध्ये वर्त्तमानस्य भगवतोऽभितः प्रभ्रमराणां श्याममहसाश्चक्रे मण्डलमध्ये मण्डलाकारेण मण्डलाद्बहिर्भवितुमशक्ततया घनीभूते श्यामलिमनि मेघचक्रत्वारोपः सचवाक्यार्थेन गम्यः प्रकरणगम्यश्च शब्देनानुपात्तत्वात् पादानां न्यासैः तालशब्दानुकारेण भुवि सशब्दपादाघातैः भुजविधुतिभिर्गतिविशेषेण भुजदोलैः मूर्च्छनाकाले तालत्यागानुकूलभुजकम्पैर्वा अन्योऽन्यावद्धबाहुत्वेऽपि तालत्यागसमये भुजयोः कम्पनानन्तरं पुनर्बन्ध इति क्रमः एवंविधनृत्येनापि मण्डलस्य भङ्गस्तिर्य्यक्ता वा भवतीति नानुसन्धेयं यथास्थानस्थितिकौशलात् भ्रुवाम्विलासैस्तालानुकृत्य भ्रुवाम्विक्षेपैः कीदृशैः संस्मितैः स्मितसहितैः भज्याद्भिरिव मध्यैर्भज्यन्मध्यैः गतिविशेषतालत्यागकालीनतनुलतापूर्वार्द्धधूननेन भङ्गाशङ्कास्पदैर्मध्यैः तानाद्यनायासेनापि चलैः कुचानामेव पटैर्नतु कुचैः तथा तावतायासेनापि गण्डलोलैरेव कुण्डलैः विशेषणे तृतीया स्विद्यन्ति मुखान्येव यासां नतु सर्वाङ्गाणि अश्रान्तत्वात् वराङ्गनात्वाच्च कवरेषु रसनासु ग्रन्थयो यासां तथा विधायासेनाप्यशिथिलत्वात् गायन्त्य इति गानानुकूलं वाद्यं वीणादिकमपि बोद्धव्यं योगमायासम्पाद्यमानत्वात् यद्यप्येतच्छुद्धाङ्गिकमेव नृत्यं तथापि वाद्यस्यावश्यकम् अत्र भगवान् द्रष्टैव गोप्यः समम्भगवता न नृतुरितिपश्चादेव सह नृत्यं इदन्तु मण्डलनृत्यं तच्च द्विविधं स्वकर्तृकभ्रमिकं परकर्तृभ्रमिकञ्चेति आद्यं च द्विविधं सव्यमपसव्यञ्च द्वितीयश्चक्रोपाधिकं तच्च प्रतिलोममनुलोमं चक्रं चेद्वामतो भ्रमति तदा क्षिण तो नर्त्तक्यो भ्रमन्ति तथा दक्षिणतश्चेच्चक्रं तदा वामतस्ता इति क्रमः किन्तु तत्र भ्रमिश्चक्रभ्रमित एव नृत्यन्तु यथास्थानम् अत्र तु भ्रमिश्च स्वकर्तृकनृत्यश्चानियतस्थानमिति यदुक्तं "स्थिरमस्थिरमप्येतद्द्विविधं रासमण्डलम् । स्थिरं स्थलविशेषस्थमस्थिरं चक्रसंश्रयम् । स्थिरं भ्रमिः कर्तृगता भवेत् सव्यापसव्ययोः । अस्थिरंचक्रजा सा च प्रतिलोम्यानुलोम्यभाक् । यथास्थानस्थितं तत्र नृत्यं तद्भ्रमितः पुनः । नानास्थानमिवाभाति नृत्यकर्त्र्यश्च योषित" इति ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं नृत्यमध्ये प्रविष्टो भगवान् गुणभावात् कदाचिन्न भासेतेत्याशङ्क्य सर्वजनीना भगवच्छोभा तदा जातेत्याह । तत्रेति । स्वभावशोभातोऽप्यतिशयेन शुशुभे तदुक्तं शक्तिभिः सहितोऽधिकां शोभां प्राप्नोतीति कदाचित्स्वत एव शोभां प्रकटयेदिति तद्व्यावृत्त्यर्थं ताभिरित्युक्तं ननु सहजशोभायुक्तस्य कथं ताभिरतिशोभा तत्राह । भगवानिति । यथा गुणाः सर्वोत्तमाः न तैस्तथा इतिचेत्तत्राह । देवकीसुत इति । भक्त्या यथा देवक्या अपि पुत्रो जातः स्त्रीणामेवोपकारायाविर्भूतः अतस्तास्वपि स्वसामर्थ्यमेव दत्त्वा शोभां प्राप्तवान् सहजस्य कृत्रिमैः शोभा न भविष्यतीति आशङ्क्य दृष्टान्तमाह । मध्ये मणीनामिति । महामारकतो गरुडोद्गारी स मणिः सहजः सुवर्णमणयः कृत्रिमाः तथापि ते परितः स्थिताः सहजमणिमप्यतिशोभयन्ति ॥ ७ ॥

एवं पूर्वपीठिकामुक्त्वा मुख्यं नृत्यमाह । पादन्यासैरिति । पादन्यासाः सर्व एव चारीकरणरूपाः भुजानां विधुतयश्च सर्वहस्तकभेदाः एकेनावयवेन शिष्टावयवाः तथा संविधानयुक्ता इति ज्ञेयं मन्दहाससहिताः सर्व एव कटाक्षा उक्ता भ्रूभेदाश्च तत्तद्रसे हृदयाविष्टे तथैव भवन्तीति भज्यन्ति भङ्गयुक्तानि मध्यानि उपरिभागपरिवर्त्तनात्मकानि रसाभिनिविष्टानां तासां सर्वावयवानिभ्रमणेन रस एकीभवतीति परिवर्त्तनादिभिरेव वा चलेषु कुचेषु पटा इति सर्वाण्येव कम्पनान्युक्तानि कुण्डलैर्गण्डलोलैरिति सर्व एव शिरोभेदाः उक्ताः शिरोभेदेष्वेव वक्तव्येषु कुण्डलानां यच्चलननिरूपणं तद्विद्युतामिव शोभार्थं गण्डलोलैरिति सर्वा कान्तिस्तत्रैवोपक्षीणेति ज्ञापनार्थं गण्डे हि केवलो रसः पेयो रसस्तत एव पीयत इति विद्योतनं तस्यैवाभिव्यक्त्यर्थं ततोऽन्तः स्थितो रसः पुष्टोऽभिव्यक्त इति ख्यापनार्थमाह । स्विद्यन्मुख्य इति । स्विद्यन्ति स्वेदयुक्तानि मुखानि यासामिति कवररशनासु च अग्रन्थयो जाताः रसेन सर्वावयवस्थेन एकीभूतेन देहः सूक्ष्मतामापन्नः अतः केशपाशे रसनायां च ग्रन्थिः शिथिलः नन्वेवं कथं श्रमस्तत्राह । कृष्णवध्व इति । सदानन्दस्य हि फलस्य ता उपभोक्त्र्यः अतः क्रियायां श्रमो भवत्येव एतादृश्योऽप्यन्तः सन्तोषेण गायन्त्यो जाताः एवं कार्यादिश्रमैरपि ता विरेजुः अतिशोभायुक्ता जाताः ननु लोकानां दर्शनसापेक्षा शोभा तास्तदा कथं संदृष्टा इति तत्राह । तडित इव ता इति । नहि तडित् बहुकालं दर्शनयोग्या भवति मेघचक्रे शोभामेव परं सम्पादयति तथा कृष्णसमूहे भगवता आच्छादिताः परितः कदाचिदेवोद्गताः केनचिद्देशेन दृष्टा भवन्ति अतः तासां शोभा न दोषावहा जाता किन्तु विशिष्टैव जाता ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देवकीसुतः क्षत्रियजातिरपि भगवान् षडैश्वर्यपूर्णोऽपि तत्र गोपजातिस्त्रीणां मध्ये अतिशुशुभे इन्द्रनीलमणिवर्णोऽपि कृष्णस्तासां गौरकान्तिमिश्रणान्मरकतवर्णस्तत्रापि शोभावैलक्षण्यमालक्ष्य महच्छब्दः प्रयुक्त इत्येके । मरकतशब्दोऽयमिन्द्रनीलमणिवाचीत्यपरे । महामारकत इत्यपि पाठः ॥ ७ ॥

यथा ताभिः स शुशुभे तथा तेन ता अपि शुशुभिरे इत्याह । पादन्यासैरिति । पादानां न्यासाः गीतरसतालानुसारिण्यः पुनः पुनर्व्यक्तीकृतविचित्रनृत्यगीतयस्तैः । भुजाविधुतिभिरन्योऽन्यवद्धानामपि भुजानां विचित्रैः कम्पनैः । किञ्च । अन्योन्यावद्धभुजतां त्यक्त्वा कदाचिदतिलाघवतो हस्तकभेदेन करचालनैर्गीतपदार्थाभिनयैः स्मितहसितैर्भ्रुवां विविधैर्भेदैर्भाङ्गिभिः । रसाभिनयार्थं स्वस्वकौशलावधापनार्थञ्च । भज्यन्मध्यैः भज्यमानैः स्वभावतः कार्श्येन नृत्यविवर्त्तनादिना च भङ्गमिव गच्छद्भिर्मध्यभागैश्चलैः कुचपटैः कञ्चुकोपरितनवस्त्रैर्भगवत्कृतस्थानान्तरं पुनः प्रतिसंगृहीतैः कृष्णस्य वध्वः भोग्याः स्त्रियः । वधुर्जाया स्नुषा स्त्रीचेति नानार्थवर्गः । अत्र वधूशब्दस्य भार्यावाचकत्वे व्याख्यायमाने प्रकृतिमगन् किल यस्य गोपवध्व इति भीष्मोक्त्या विरुध्येत तेन न तथा व्याख्येयम् । कृष्णस्य

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्यामलसुन्दरस्य तदेकादिलष्टा गौराङ्ग्यस्तदेकाश्रयतया तदेकभोग्यतया च वध्व इव वध्व इति प्रकृतवैष्णवतोपणी ॥ ८ ॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तत्र स्थिरे रासमण्डले ताभिः श्रीभगवतः शोभाविशेषं दर्शयति । तत्रेति । स्थगिते समाजे भगवान् देवकीसुत इति विशेषणद्वयेन प्रकाशद्वयविशिष्टमेकवस्तु सूचितं तत्राद्यः श्रीराधासहितः सर्वमध्यगो मुख्यतमो भगवत्पदवाच्यः प्रकाशः तथा क्रमदीपिकायाम्—

> इतरेतरबद्धकरप्रमदागणकल्पितरासविहारविधौ ।
> मणिशङ्कुगमप्यमुना वपुषा बहुधा विहितस्वकदिव्यतनुम् ।
> सुदृशामुभयोः पृथगन्तरगं दयितागलबद्धभुजद्वितयम् ।

इत्यादिना अपरश्च सर्वासां यथोचितमभिलापपूरकदाक्षिण्यवान्मुख्यतरो देवकीसुताख्य इति विवेकः अन्यथैकेनैव गतार्थत्वे पदद्वयोपादाने ऽधिकपदत्वं भवेत् हैमानां हेमवर्णानां पुष्परागाख्यमणिविशेषसूक्ष्मखण्डानां परितः खचितानां मध्येऽभितः सुवर्णखचितो महामरकतो हरिन्मणिविशेषो यथेति एवञ्च तासां तयोश्च शोभा दर्शिता तथा द्वयोरैक्यमपि सूचितं यथालङ्कारकौस्तुभे ।—

> राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिम् ।
> कृष्णस्याभा अपि च हरितं कुर्वते धाम तस्याः ॥
> स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला
> वेकस्थाने यदि घत तदा तुल्यभासौ विभातः ॥

एवञ्च ताभिरलक्षितत्वमपि साधितम् ॥ ७ ॥

एवं स्थिरास्थिरभेदेन द्विविधो रासो दर्शितः इदानीं तासां नृत्यादावपि शिक्षाकौशलं दर्शयति । पादेति । मेघचक्रे इति । मेघसदृशे मण्डळ इत्यर्थः । तेन भगवतः स्थिरत्वं सूचितं मेघसादृश्यं च कृष्णवध्व इति तासामेव कर्तृत्वाभिधानं ततश्च तासां नृत्यसुखास्वादाय तेन निजरूपमेवास्तृतमिति सूचितं रङ्गस्य च स्वच्छत्वमपि साधितं तडित इवेत्यङ्गानां सौकुमार्य्यं चाञ्चल्यं सूचितं कथम्भूताः पादन्यासैरुपलक्षिताः गानविशेषमानपूरणं पादन्यासेनैव कृतमिति शिक्षाकौशलं तत्र पादन्यासाः नृत्यगतिलालित्येन भूम्याक्रमणभङ्ग्यस्तैः भुजानां विशेषेण धुतिः हस्तकभेदेन चाळनं ताभिः स्मितसहितैर्भ्रूविलासैः तत्तद्रसाभिव्यञ्जकस्वनर्त्तनचातुर्य्यैः भज्यद्भिः स्वभावतः सूक्ष्मत्वेन नृत्यविशेषेण च मानादिप्रपूरणानुरोधेन परिवर्त्तनाद्भङ्गमिव गच्छद्भिर्मध्यभागैः यद्वा कुटिलीभवन्मध्यभागैरित्यर्थः । चलन्तः किञ्चित्कम्पयुक्ताः कुचोपरिवर्त्तमानाः सूक्ष्मपटास्तैः तावतैव मानप्रपूरणादतिवैदग्ध्यं कुण्डलैर्गण्डयोरुपरि लोलैरिति कपोलानां गण्डस्थलस्थानीयताञ्च प्रकल्प्य ळोलतया च तन्नृत्यानुकारः सूचित इति प्रतिव्यक्तिरासव्यूह ऊहितः तत्रोपयुक्तं सात्विकमाह । स्विद्यदित्यादिना । स्विद्यन्ति मुखानि यासां ताः तथा देवदत्तस्य गुरुकुलमिति वदन्तर्वर्तिनीं विभक्तिमाश्रित्य स्विद्यन्ति शिथिला इत्यर्थान्तरसंक्रमितं कवराणां रसनानाञ्च ग्रन्थयो यासामित्यतिसौकुमार्यमिति संक्षेपः ॥ ८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

अत्र भगवतो गुणभावोक्त्या गुणभावे शोभामान्द्यलक्षणदोषभावं कश्चिन्मन्द आशङ्केत तद्वारणाय प्रेमशृङ्गारभावपाथिगुणभाव एव गुणभाव इति दर्शयंस्तत्र भगवच्छोभामाह । तत्रातिशुशुभ इति । अत्रायं भावः । स देवकीसुतोऽपि तत्र व्रजे तच्छोभोपयोगियशोदासुतत्वेच भगवान्षडैश्वर्य्यादिगुणवानपि तत्र रासमडण्ले प्रेमवतीनां मध्ये स्वयं शोभमानोऽपि ताभिर्निमित्तभूताभिरतिशुशुभे ऽतिशयितां स्वशोभामाविश्चकार गुणरसक्षेप्येव गुणचमत्कारसम्भवात् यद्वाभिव्यक्तप्रेमवृत्तिप्रतिफलितब्रह्मानन्दवत्स्वयं शोभमानोऽपि ताभिर्मिलित्वातिशुशुमे यद्वा स्वयं ब्रह्मानन्दात्मकतया कैश्चिन्निवृत्तिपरविविदिपुविद्वज्जनैर्ध्येयज्ञेयत्वेन शोभमानोऽपि ताभिस्तत्र रासमण्डले शृङ्गाररसान्वितपरमानन्दतन्वातिशयेन सर्वविषयिमुमुक्षुविद्वज्जनध्येयज्ञेयतयातिशुशुभे यद्वा ताभिः शोभमानाभिरतितच्छोभामतिलङ्घ्य ताभ्योऽप्यतिशयेन शुशुभे तत्र दृष्टान्तमाह । मध्येइति । हैमानां हेमरचितानां कृत्रिममणीनां यद्वा हेमखचितानां मणीनां माणिक्यविशेषाणां तथाचोद्भूतानुरागनृत्यश्रमरोचनादिरागारुण्यव्याप्तगौराङ्गित्वोक्तिः यद्वा हेमवर्णानां पुष्परागमणीनां मध्ये महान् मारकतो हरितमणिर्यथा तत्र भगवतः श्यामवर्णत्वेऽपि हेमवर्णगोपीतनुमणिप्रभाव्याप्ततया हरितमणिरूपत्वनिर्देशः यद्वा महेतिविशेषणेन समानमारकतजातिव्यावृत्तेन्द्रनीळस्यैव निर्देशो ज्ञेयः अत्र हैमानां मणीनां मध्ये महामारकतदृष्टान्तोक्त्या सर्वतो गोप्यो मध्य एव कृष्ण इत्येवं मण्डलरचना द्योतिता यद्वा मण्डलस्य तथात्वेऽपि मध्ये मध्यनायकवदेकरूपाविष्कारः यद्वा मणीनां मध्ये मध्ये इतिवीप्सया मण्डळस्य तथात्वमेव सर्वथैतद्गोपीकृष्णमण्डलस्योरोवस्याकारतया भक्तानामुरोवासेन शोभातिशयो दर्शितः यद्वा हैमानां स्वतो हेमवर्णानां तथा मध्ये मणीनां शरीरमध्ये दृङ्नखादिरूपा मणयः सर्वाङ्गेषु भूषणरूपमणयो वा यासामित्यलुक् समासः तासां तद्रचितरासमण्डले ताभिः सह महामरकतः महामराणां ब्रह्मादीनामपि के शिरसि वर्तमानः तेषां सुखं वा यस्मात्तथाभूतो वा महामरकः सार्वविभक्तिकत्वात्प्रथमायां तसिल् स यथावददति शुशुभे तासां मण्डलगतातां शोभां नभसि निरीक्षमाणानां महामराणां वा शोभामतिलङ्घ्य शुशुभे यद्वा अन्ये सापेक्षाभरा अयन्तु निरपेक्षामरत्वेन महामरश्चासावेव कः सुखरूपश्च महामरकतोऽत एवाविनाशिनित्यसुखरूपतया स्वकृपालब्धसुखस्वदारसहकृतदिदृक्षमरानतिलङ्घ्य शुशुभे रराज महामारकत इति पाठेतु चोर एव चौर इतिवत् मरकत एव मारकतस्तथाच पूर्वोक्ता एवार्था अनुसन्धेयाः यद्वा महामारो मन्मथमन्मथः सच कः सुखरूपश्चेति तथा ॥ ७ ॥

तदन्वितानां तासां शोभामाह । पादन्यासैरिति । यथैकस्य कृष्णस्निग्धमेघस्य नभोव्यापकस्य मध्ये विद्युदुल्लासेन प्रविभक्ततया बहुमेघचक्रतया भासमानस्य वध्वस्तडितस्तास्मिन्मेघचक्रे तद्गर्जनानुकूलस्वशब्दं कुर्वन्त्यो राजन्ते तथा मेघचक्रे तडित इव ताः कृष्णवध्वः एकस्य कृष्णस्य श्यामस्निग्धसुन्दरस्य आकाशशरीरं ब्रह्मेतिश्रुत्या नभोव्यापकविग्रहस्य मध्ये मध्ये गोपीतनुस्फूर्त्या प्रविभक्तबहुविग्रहतयावेकमेघचक्रवद्भासमानस्य वध्वः पट्टमाहिष्यो गोप्यस्तं गायन्त्यस्तद्गानमनुनृत्य

### श्रीरामनारायणकृतभावभावविभाविका ।

यथोपयोगस्वरसप्तकाभिनिवेशेन तालगतिमनुल्लङ्घ्य नानारसवृष्ट्यानुकूलविविधमूर्च्छनाद्यन्वितविचित्रतानवितानगानं कुर्वत्यो विरेजुः तत्र तथा भासमानकृष्ण एव मेघचक्रं हेमवर्णद्युतिमत्यो गोपिका एव तडितस्तद्गतिनृत्यविस्फुरणचाञ्चल्यमेव चपलाचापल्यं गानमेव गर्जनं रसवृष्टिरेव वृष्टिः किम्भूतास्तास्तत्राह । स्विद्यन्मुख्य इति अत्र हरिमुखचन्द्रसन्निधौ तच्चन्द्रमाणिगोपीमुखानां सुधास्राविर्त्वं गम्यते यद्वा हरिहरिसखिमुखानां केशपङ्क्तिकादावामुक्तमुक्तादामयुतानां स्वेदवृष्टिस्मितयुक्तत्वेनापूर्वोच्चलितरूपसुधास्वेदवृष्ट्यन्वितभूमिलोकस्थचन्द्राणां स्वतुल्यत्वाभावेन सुधानिधित्वेऽपि तद्दृष्टिशून्यत्वेन व्योमस्थ सभगगाचन्द्रप्रहासो द्योत्यते यद्वा व्योमचन्द्रमसं निरीक्ष्य परस्परं मुखावलोकनपूर्वकस्मितस्वेदवृष्टिदर्शनेन तन्मुखचन्द्राणामेव स्वप्रभाविकाशातिशयितसुधावृष्टिः सूच्यते यद्वा पर्वणि चन्द्रसुधया देवाप्यायनवत् गोपीमुखचन्द्राणां सर्वदेवात्मकदेवदेवकृष्णाप्यायनायामृतवृष्टिर्बोध्यते यद्वा श्रुतिमुनिमधुपाभिलषणीयपदाब्जमधुमाधवमधुपमुपलभ्य तत्प्रलोभाय गोपीमुखपद्मानां स्वेदमधुस्राविर्त्वं ज्ञाप्यते यद्वा हरिमुखसंनिधानसंनिधानजाताह्लादतयानुरागात्मकमध्यात्मना द्रवीभूतस्वहृत्कमलानुकारेण बहिर्निदर्शनं तन्मुखकमलैः क्रियते यद्वा स्विद्यन्मुख्य इत्युपलक्षणं सर्वाङ्गस्वेदस्य तथा चामितहरिच्छविदर्शनाय दृग्भूताखिलसखीजनरोमच्छिद्रेभ्यः स्वेदमिषेण तद्दर्शनाह्लादानन्दाश्रूद्गम एव गम्यते प्रियसङ्गमे श्रमासम्भवात् पुनः किंभूतास्तास्तदाह । कवररसनाग्रन्थय इति । केषु सर्वेषां शिरःसु वरः श्रेष्ठस्तभ्दूपणतया राजमानः सर्वशिरोमणिः कवरः यद्वा कात्सर्वोत्कृष्टाद्ब्रह्मणोऽपि वरः कवरः यद्वा कानां सर्वसुखानां वरः श्रेष्ठस्तद्विम्यरूपब्रह्मानन्दात्मकः कवरः यद्वा कः सुखरूपश्चासावेव स्त्रीयो वरः पतिश्च कवरः यद्वा स्वकेषु शिरःसु करधारणेन दत्तो वरो येन स कवरः यद्वा स्वकेषु शिरःसु वर्तमानो वरः कवरः कृष्णस्तेन सह प्रेमरसनया ग्रन्थिर्दृढश्लेषो यासां यद्वा तस्मिन्नेव तद्गुणगानेन तदधरामृतास्वादनेन चेन्द्रियद्वयाधिष्ठानरसनाया ग्रन्थिर्यासां यद्वा तस्मिन्कपटरसनाया अग्रन्थिः तद्ग्रन्थिविच्छेदो यासां यद्वा तेनैव निमित्तभूतेन कुललज्जादिरसनानामग्रन्थिर्ग्रन्थ्यभावो यासां यद्वा तद्गुणरसनाग्रथितसर्वाङ्गसुमनः सुमनसः यद्वा के शिरसि वराः श्रेष्ठाः कविवरवर्णितसर्वगुणनिधयः कवराः केशबन्धास्तेषु या रसनाः स्वर्णसूत्राणि तासु "भिद्यते हृदयग्रन्थि"रिति श्रुत्या कृष्णकुटिलस्निग्धहृदयग्रन्थिभेदनतः त्रिगुणान्विता गुणकेशवसन्निधानेन अग्रन्थयः स्खलितस्वर्णसूत्रबन्धा गतबन्धप्रमुदितसुमनोवृष्टिवन्मुखशशिनिजपतिशिरोरूढतया जातप्रमदया तत्प्रमदया केशपङ्क्तिकया निशया कृष्णकुटिलस्वभावतया सापत्न्यभावेन पतिपारोक्ष्ये सितसुमनोभगणनिपातवद्वासितसुमनः सज्जनसदृशसितसुमनोभिः कृष्णकुटिलस्वभावजनसन्निभकृष्णकुटिलैकंघरसङ्गत्यागवद्वा स्वजनशिरोराजमानसुस्निग्धकृष्णत्रिभङ्गस्य सितसात्त्विकसुगुणवृष्टिवद्वागतबन्धकुटिलकृष्णस्निग्धकवरेभ्यो विगलिततद्ग्रथितसितसुमनसः कै विरेजुस्तत्राह । पादन्यासैरित्यादिना । तत्र शशिकिरणामृताम्बुपूरितत्वेन मानसतयोल्लसितवृन्दावनभूमौ प्रेमपवनवेगेन चाल्यमानानां तत्स्नानागत्यनुसृतचापल्यभ्रमणमुखरितमणिनूपुरभ्रमरगीतगुणगणानां सर्वसद्गतिपूरकश्रुतिहरिपदन्यासवत् सर्वसद्गति पूरकाणां कमलभव—भव—कमलालया--कमलासरागकामितरजः परागपादकमलानां न्यासिनामपि मतिविमोहनगतिविलासैः प्रेमप्रभायुतभूमिवहद्धृत्कमलतया प्रकटितमाणिक्यमलेषु तद्गतानां हृत्पद्मेषु च विन्यासैः तथा सर्वौषधिपतिसुधानिधिनखदर्शनोत्साहितसमीरसमीरितसलतिकवनस्पतिनृत्यवद्गोपालमुखदर्शनोत्साहेन पञ्चाङ्गुलिमालोल्लसितनखशशिविशालकरहरनृत्यवद्वाप्रतिस्वाङ्गुलिदलनखश्रीदर्शनप्रमदमोदाभ्यामेकपद्मासनपद्मपद्मश्रियं क्षपयतां करपद्मानां नृत्यवद्वा स्मरसमरे नखवज्रभालाङ्गुलिपञ्चकुसुमशालान्वितभुजविशालधनुर्विस्फूर्जनवद्वा भुजानां समस्तप्रशस्तहस्तचलनान्वितविधुतिभिः चालनैः तथा सानुरागगौरीसखीगणस्य कृष्णचन्द्रेण सहोल्लासवत् अरुणवसनालंकृतभगणान्वितशशिप्रभासवद्वा साधरदमुखमृदुहासस्तनैः गोपीभिः प्रेम्णा शिरोऽवधूततत्समागमोत्साहाविष्कृतयुगलरूपत्रिभङ्गकृष्णस्य तत्तदङ्गानां भालाकृणगतदृङ्मीणकमलयोर्भज्यन्मध्यरासवत्तारायुनतारापत्यङ्कीकरणहर्षोद्धर्षाविष्कृतद्विगुणविगुणधनुस्तनुविधुर्विधुविधुविविधवालोल्लासवद्वा नानाभावपिशुनभ्रूयुगविलासैः तथा सुमनोवत्सुमनोधृतकृष्णाकारतयाहृदयघटपूरितप्रेमरसासारतयास्तनघटद्वयपूरितरसशृङ्गारतया सर्वाङ्गविविधरूपनिध्याधारतया स्वर्णयूथिकालताललितमृदुतनुफलितस्तनश्रीफलयुगलभारतया सात्त्विकगौरिद्युतिप्रतिविम्बितकृष्णाकारवत्कृतत्रिभङ्गकृष्णानुकारतया चपलनृत्यगतिसौष्ठवान्वितभज्यन्निव मध्यभोगैः तथा पवनवेगचलितसुघनपयोधरे विद्युत्पतिचपलचलनमिव प्रेमरूपरवालसरसिचलयुगलस्तनाचलयोस्तद्भुजाञ्चलहल्लनमिवमुनिगणमनिप्रळयङ्करदनखरातिभावादिरत्नाकरगति वेगरतिरक्ततरङ्गप्रवृद्धरूपप्रेमरत्नाकरद्वये मनाक् नाकपभयमकृत्वोद्धुतकुचयुगमैनाकद्वयपक्षवलनमिव तत्तत्पाथोधिद्वयनिविष्टरसिकवरिष्ठसुरतिनाथहरिकरसुरनाथकृततद्विरिदलनपक्षविद्धलनमिव चलकुचपटैस्तथा अलकाल्यावलिवृतसुस्मितविकासविमुखकमलरूपसलिलगण्डद्वयसरससरसि द्विमीनयुगलविहारवत्हृद्गृहनिविष्टमकरध्वजस्य कर्णविवरद्वाराङ्गणकपोलयोस्तद्ध्वजद्वयविस्फारवत्सविकाम निजावासमुखपद्माभ्यासे सोल्लासकृतरूपद्वय—कमला – चपलविलासवत् हरितत्स — खिजनरासोत्सा—सदर्शनोत्साहेन निशालकभगणरदनशशिमुखरधिकुण्डलारब्धरासवत्सालकनिशारदभगणमुखशशिसितस्निग्धशारदघनसदृशगण्डे तडिद्विव लोलैः कुण्डलैश्च मेघचक्रे तडित इव विरेजुः ॥ ८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु महामायानटीनर्तकस्य भगवतस्तत्र नृत्यतः का शोभेत्याशङ्क्याह । तत्रेति । तत्र तस्मिन् रासमण्डले भगवानपि देवकीसुतोऽपि अत्यर्थं शुशुभे तत्र दृष्टान्तः सौवर्णानां मणीनां मध्ये मध्ये महामरकतो नीलमणिर्यथा शोभेत तद्वत् गोपीद्वयाभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनं यद्वा कदाचिन्मण्डलमध्यगतो वेणुं वादयन् शुशुभे तदुक्तं विल्वमङ्गले---

अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरेणाङ्गनाः ।
इत्थमाकल्पिते मण्डले मध्यगः सञ्जगौ वेणुना देवकीनन्दनः ॥

इति ॥ ७ ॥

स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह । पादन्यासैः सङ्गीतशास्त्रोक्तनृत्यानुकूलपादगतिभेदैः भुजविधुतिभिर-

उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥
काचित्समं मुकुन्देन स्वरजातीरमिश्रिताः ।
उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति ।
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ १० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रन्योन्यावद्धभुजानामपि यथोक्तक्रीडानुकूलैः कम्पनविशेषैः यद्वा कदाचिदन्योऽन्यावद्धबाहुत्वमुत्सृज्याऽभिनयार्थं कृतैश्चालनैः सस्मितैः भ्रुवाम्विलासैः कार्श्यात्कुण्डलीभवन्मध्यभागैः चलद्भिः कुचैस्तत्पटैश्च गण्डेषु चञ्चलैः कुण्डलैः स्विद्यन्ति स्वेदबिन्दुलङ्कृतानि मुखानि यासां कबरेषु रसनासु च दृढा ग्रथयो यासां ताः अग्रन्थयः शिथिलग्रन्थय इति वा तं कृष्णं गायन्त्यो विरेजुस्तत्रानेकमूर्त्तिः श्रीकृष्णो मेघचक्रमिव गोप्यस्तडित इव स्वेदबिन्दवस्तुषार इव गीतं गर्जितमित्यप्यासूचितं कृष्णवध्वः कृष्णभोग्याः स्त्रियः वधूपदेन तस्यैव वस्तुतः स्वाभाविकाः स्त्रिय इति सूचितं स्ववधूवदेव चेष्टां कृतवत्य इति वा तडित इवेत्यनेन तथाभूता अपि ताः देवादिभिर्मेघचक्रे तडित इव कदाचित् शोभमाना दृष्टा इत्यपि ध्वनितम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महामरकतो यथा इन्द्रनीलमणिरिव तत्र रासमण्डले तासां मध्ये भगवानतिशुशुभे आविष्कृतबहुमूर्तित्वेऽपि भगवति एकत्वादेकवचनम् एवमग्रेऽपि बोध्यम् ॥ ७ ॥

नानामूर्तिघनश्यामसमीपे अप्येकैकशो विद्युद्भिरेजुरित्याह। पादन्यासैरिति। पादन्यासैः चरणविक्षेपैः भुजविधुतिभिर्हस्तक्रियाभिः स्मितसहितैर्भ्रुवां विलासैश्च भज्यमानैर्मध्यैः कटिभागैश्च कुचैश्च पटैश्च गण्डेषु कपोलेषु लोलैश्चञ्चलैः कुण्डलैश्चोपलक्षिताः स्विद्यन्ति स्वेदयुक्तानि मुखानि यासां ताः कबरेषु रसनासु च अग्रन्थयः शिथिलग्रन्थयः कृष्णवध्वः कृष्णेन सहिताः वध्वः गोप्यः तं कृष्णं गायन्त्यः मेघचक्रे तडित इव विरेजुः तत्र बहुमूर्तिः कृष्णः श्याममेघचक्रवत्तास्तु बहुविधास्तडिद्वत्स्वेदस्तुषारवत् गीतं गर्जितवदिति यथासम्भवमूह्यम् ॥ ८ ॥

भाषा टीका ।

उहां पर उन गोपिन से देवकी पुत्र भगवान् अत्यन्त शोभा को प्राप्त भये कैसे कि जैसे बडी सुवर्ण की मणियों के मध्य में नील मरकत मणि की शोभा होती है ॥ ७ ॥

उस रास में पादों के चालन करने से भुजाओं के फैलाने से मन्दहास सहित भौंओं के विलासों से कमरों के लचकनों से हिलते हुये स्तनों के वस्त्रों से गंड स्थलों पर स्थित चंचल कुंडलों से शोभित भई, मुखों में पसीना के बूंदों वाली मस्त के चूडाओं में माला और कौंधनी में वस्त्रों की ढीली ग्रंथी वाली जो श्रीकृष्ण की सब वधु गान करने समय में ऐसी शोभित भई कि जैसे मेघ के समूह में विजुळी चमकती होवें ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नृत्यमाना नृत्यन्त्यः रक्तकण्ठ्यो नानारागैरनुरञ्जितकण्ठ्यः कृष्णस्याभिमर्शेन संस्पर्शेन मुदिताः इदं विश्वम् ॥ ९ ॥

मुकुन्देन सह स्वरजातीः षड्जादिस्वरालापगतीः अमिश्रिताः कृष्णोद्गीताभिरसंकीर्णाः प्रीयमाणेन सम्मानिता तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततश्च प्रहर्षोद्रेकेण तासां नृत्यगीतविद्यार्द्धिं किंवा नृत्यस्य प्राधान्यमुक्त्वा गानस्याप्याह। उच्चैरिति। नृत्यमाना इति। नर्त्तनेऽपि तादृशगानात्तत्कौशलविशेषो दर्शितः गानादिप्रयोजनमाह रतिः सुरतं प्रेम वा किंवा श्रीकृष्णप्रेमा सैव प्रियो यासां नचोच्चैर्गानादिना तासां श्रमः शङ्कनीय इत्याह। कृष्णस्य चित्ताकर्षकस्य परमानन्दघनमूर्त्तेर्वा अभिमर्शेन मुदिता इति गीतस्योच्चैस्त्वं दर्शयति यासां येन वा गीतेन आवृतं व्याप्तं यद्वा यस्य गीतादेर्गीतेन लोकनिबद्धगाथादिना आवृतं तदेकरसमयमभूदित्यर्थः । इति तन्माहात्म्यमुक्तम् अन्यत्तैर्व्याख्यातं यद्वा नृत्येन मानः कृष्णेन संमानः यद्वा नृत्ये मानः कृष्णादप्याधिक्येन गर्वो यासां ताः रक्तकण्ठ्यः प्रेमस्निग्धकण्ठ्यः इति मानस्य प्रेमरसमयत्वेन परममधुरत्वमुक्तम् उच्चैर्गाने हेतुः रतीति कृष्णेति च यद्वा उच्चैः श्रीकृष्णादप्युच्चतया तथाचोक्तं श्रीपराशरेण—

रासगेयं जगौ कृष्णो यावत्ता व्यायतध्वनिः ।
साधुकृष्णेति कृष्णेति तावत्ता द्विगुणं जगुरिति

तत्र हेतुमाह। रक्तेत्यादिविशेषणैस्त्रिभिः एषां यथेष्टं हेतुहेतुमत्त्वं ज्ञेयं यद्यपि तासामभिमर्शतस्तस्यापि प्रमोदात्तथैवोच्चैर्गानं संभवेत् तथापि रासगानापेक्षया प्रेमवैवश्येन तदुच्चगीतश्रवणलालसेन वा न तादृक्सिध्येदिति ज्ञेयम् अन्यत्समानम् ॥ ९ ॥

अधुना पूर्ववत्तासां मुख्यानां प्रेमचेष्टितानि पृथक्त्वेनाह। काचिदिति सार्द्धपञ्चभिः। मुकुन्देन परमानन्दप्रदेन सममिति तादृशोन्नयने हेतुः तथा तेन तस्य जगतोऽपि परमानन्दप्रदत्वं ध्वनितम् उन्निन्ये मूर्च्छयामास यद्वा अपूर्वाः कल्पयामास अमिश्रिताः कृष्णा-

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

प्यश्रुताः ततश्च तेन मुकुन्देन पूजिता तेन समुन्नयनेऽपि अमिश्रितत्वेनोन्नयनात् कथं पूजिता तदाह । साध्विति । वीप्सा हर्षे । साधुत्वदार्ढ्याय वा वदतेति शेषः अन्यत्तैर्व्याख्यातं यद्वा अमिश्रिता विशुद्धा तथा च संगीतसागरे—

जातयोऽष्टादश प्रोक्तास्तासां लक्षणमुच्यते ।
शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
ता एव विकृताः सत्यो जाता विकृतसंज्ञिता इत्यादि
किंच षाड्जार्षभी च गान्धारी मध्यमा पञ्चमी तथा ।
धैवती चाथ नैषादी शुद्धा एतास्तु जातयः इति

काचिदित्यनुवर्तत एव बहु यथास्यात्तथा इति पूर्वतोऽप्यस्याः संमानाधिक्यं तेन च गानेऽपि कौशलमधिकं सूचितम् ॥ १० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च प्रहर्षोद्रेकेण तासां नृत्यस्य प्राधान्यं वर्णयित्वा गानस्याप्याह । उच्चैरिति । नृत्यमाना इति नर्त्तनेऽपि तादृशगानात्तत्कौशलविशेषो दर्शितः । गानादिप्रयोजनमाह । रतिः श्रीकृष्णकर्तृका प्रीतिः सैव प्रिया यासाम् । नचोच्चैर्गानादिना तासां श्रमः शङ्कनीय इत्याह । कृष्णस्याभिमर्शेन मुदिता इति अयमप्येको हेतुर्ज्ञेयः गीतस्योच्चैस्त्वं दर्शयति । यासां गीतेनावृतं व्याप्तम् । यद्वा । यासां गीतेन स्वयमुत्प्रेक्षित-रागसमूहेन इदं जगदावृतं तदनुसारिगानपरं जातमित्यर्थः । ताभिः कृताः षोडशसहस्रसङ्ख्यारागा एव जगति विभक्ता इति सङ्गीतशास्त्रप्रसिद्धेः । यथोक्तं सङ्गीतसारे । "तावन्त एव रागाः स्यु र्यावत्यो जीवजातयः । तेषु षोडशसाहस्री पुरा गोपीकृता वरे" ति । अन्यत्तैः । यद्वा । नृत्येन मानः श्रीकृष्णकृतसम्मानो यासां ताः । रक्तकण्ठ्यः प्रेमस्निग्धकण्ठ्य इति परममधुरत्वमुक्तम् । उच्चैर्गाने हेतुः रतीति कृष्णेति च । यद्वा । उच्चैः श्रीकृष्णगानादप्युच्चतया तथा चोक्तं श्रीपराशरेण । "रासगेयं जगौ कृष्णो यावत्ता व्यायतध्वनिः । साधु कृष्णेति कृष्णेति तावत्ता द्विगुणं जगु" रिति । तत्र हेतुमाह । रक्तेत्यादिविशेषणैस्त्रिभिः । एषां यथेष्टहेतुहेतुमत्त्वं ज्ञेयम् । एवं तत्रातिशुशुभे ताभिरित्यत्र तासां शोभावद्गानादिगुणस्यापि परमोत्कर्षः सूचितः । उत्तरत्र तु स्पष्टमेव ॥ ९ ॥

अधुना पूर्ववत्तासु मुख्यानां प्रेमचेष्टितानि पृथक्त्वेनाह । काचिदिति सार्द्धपञ्चभिः । मुकुन्देन सममिति । तस्यापि तदनुगत्वं विवक्षितम् । सह युक्तेऽप्रधान इति स्मरणात् । उन्निन्ये उत्कृष्टं कल्पयामास अमिश्रिताः संहत्य गानेऽपि विलक्षणत्वेन पृथगवगताः । ततश्च तेन मुकुन्देन पूजिता । कथं पूजिता तत्राह । साध्विति । वीप्सा हर्षेण साधुत्वदार्ढ्याय वा वदतेति शेषः ॥ १० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उन्निन्ये अमूर्च्छयत् ॥ १०—१५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उच्चैरिति । नृत्यन्त्यो नानारागै रञ्जितकण्ठ्यः श्रीकृष्णस्याभिमर्शेन मुदिता उच्चैर्जगुः यद्गीतेन यासां यस्य च गीतेनेदं विश्वमावृतं व्याप्तं कृत्स्नं जगद्गीतैकदेशवदिति भावः ॥ ९ ॥

कृष्णाभिमर्शमुदितानां तासां प्रत्येकं गीतादिचेष्टितमाह । काचिदिति । तत्र काचिदङ्गना मुकुन्देन सह स्वरजातीः स्वरभेदान् षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाख्यान् अमिश्रिताः श्रीकृष्णोन्नीताभिरसङ्कीर्णा उन्निन्ये ऽमूर्च्छयत् कथम्भूता सती प्रीयता प्रीयमाणेन तेन श्रीकृष्णेन साधु साध्विति पूजिता तदैव स्वरजात्युन्नयनमेव ध्रुवाख्यतालविशेषं कृत्वोन्निन्ये उन्नीतवती तस्यै इत्थमुन्नीतवत्यै बहुमानं संमानमदाच्चकार कृष्ण इति शेषः ॥ १० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रक्तकण्ठ्यः रागयुक्तकण्ठगुणाः अभिमर्शः कामकल्लोलबोधककरस्पर्शविशेषः यासाङ्गीतेन इदं जगदावृतं व्याप्तं देवसाक्षिकत्वात् ॥ ९ ॥

अमिश्रिताः स्वरान्तरानन्तरिताः स्वरजातीः षड्जादिस्वरभेदेन उन्निन्ये उत्कृष्टत्वेन गीतवती मूर्च्छयामास च—

निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमीसप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥

इत्यमरः ॥ १० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यासां गीतेन स्वयमुत्प्रेक्षितरागसमूहेन इदं जगदावृतं तदनुसारिगानपरं जातमित्यर्थः । ताभिः कृताः षोडशसहस्रसंख्या रागा एव जगति विभक्ता इति सङ्गीतशास्त्रात् ॥ ९ ॥ १० ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

गायन्त्य इत्युक्तस्य गानस्य प्रकारमाह । उच्चैरित्यादि । नृत्ये मानः पूजा यासां ताः रक्तकण्ठ्यः सुकुमारत्वादरुणकण्ठ्यः रक्तं रागकदम्बं जातित्वादेकवचनं कण्ठे यासां तत्कालरागपरिवर्त्तनसामर्थ्यवत्यः रतिर्नृत्यगीतविषया श्रद्धा तस्याः प्रियाः कृष्णस्याभिमर्शः स्पर्श आश्लेष इति यावत् तेन मुदिता गानकौशलमालोक्य क्षणे क्षणे तदालिङ्गिता इत्यर्थः । एवम्भूताः सत्य उच्चैर्जगुर्नृत्यन्त्य एव यत् यस्य तानस्य गीतेन इदं पूर्वसङ्गीताचार्यब्रह्मादिभिः कृतं गीतमावृतमाच्छन्नं तुच्छीबभूव किम्वा यद्गीतेन विश्वमिदमावृतम् अतः परं नान्यद्गीयते कैश्चिदित्यर्थः ॥ ९ ॥

अथ तासां गानमाकर्ण्य स्वयमपि गातुमुपचक्रमे तत्र तत्सदृशं गातुं सर्वासु विस्मितासु काचित्सगर्वमुपेत्य गायति

———

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

स्मेति दर्शयति । काचित्सममित्यादि स्वरान् षड्जादीन् अमिश्रितान् स्वस्वश्रुतिसम्भिन्नताभाववतः एवं जातीः आन्ध्रीप्रभृतीर्जातीः अमिश्रिताः परसांकर्य्याभाववतीः उन्निन्ये प्रीयता प्रीयमाणेन भगवता साधुसाध्विति पूजिता आत्मानं विनान्यैर्दुष्करमिति ज्ञानोत्तरं तस्याः स तथा शक्तिमालोक्य सविस्मयं पूजनं कृतवानिति भावः । अथ ता एव स्वरजातीर्ध्रुवगानोपयुक्ताः कृत्वा भगवानुन्निन्ये ततोऽप्युच्चतरं कृत्वोपनीतवान् सापि ततोऽप्युच्चतरं कृत्वोपनीतवतीति दर्शयति । तदेवेति तच्छन्दोऽव्ययं ता एव स्वरजातीः ध्रुवं ध्रुव इति गानविशेषं कृत्वा उन्निन्ये स इत्यध्याहार्य्यं तस्यै मानञ्च बहुदात् इति सापि ततोऽप्युच्चतममुन्नीतवतीत्यनुसन्धेयं कथमन्यथा बहुमानदानम् ॥ १० ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

गाढनृत्यमुक्त्वा मध्यनृत्यमाह । उच्चैर्जगुरिति । नृत्यमाना नृत्यं कुर्वत्य एव उच्चैर्गानयुक्ता जाताः अथवा आदावुच्चैर्जगुः ततो नृत्यमाना नृत्यन्त्यो जाताः उभयत्र हेतुमाह । रक्तकण्ठ्योरतिप्रिया इति । रक्तः रञ्जकस्वरेण युक्तः कण्ठो यासामस्तीति रतिरेव प्रिया यासामिति गानेन व्यामोहनं नृत्येन च तासां प्रसिद्धं ननु पूर्वनृत्येन जातश्रमाः कथमेवं कृतवत्य इत्यत आह । कृष्णाभिमर्शमुदिता इति । भगवतः अभितो मर्शः प्रोञ्छनादिविशेषरूपः तेन मुदिताः अन्तः पूर्णानन्दाः इतरविस्मारणार्थं नादाधिक्यमाह । यद्गीतेनेदमावृतमिति । यासां गीतेनेदं जगद्व्याप्तम् अथवा यदर्थमेतन्नृत्यादिकं तत्सफलं जातमित्याह । यद्गीतेनेति । लोकैः क्रियमाणेन गीतेन एतत्प्रकाशकेन एतज्जगद्रसेन व्याप्तमित्यर्थः । लोके रसप्राकट्यार्थमेवैतत्कृतमिति उत्पन्नस्य नादस्यामृतमयत्वाय भगवता नादः कृतः सच मधुर एव कर्त्तव्यः तेन च जगत्पूरणीयम् ॥ ९ ॥

ततोऽघटमानमेतदिति तदर्थमाह । काचिदिति । मुकुन्देन समम् अमिश्रिताः स्वरजातीः काचिदुन्निन्ये काचित्सम्यक् भगवद्भावं प्राप्ता भगवतो नादकरणे हेतुः मुकुन्देनेति मोक्षदानार्थमेव उपनिषदि स्वनादं पूरितवान् उभयोरेकता नादे तुल्यता मोक्षे कार्यद्वयं पूर्वसंघातान्निवर्तनं ब्रह्मप्रापणञ्च तदर्थमितरनिवारणार्थमुपनिषदामुपयोगः स्वराः षड्जादयः तेषां जातिभेदाः यथा मयूरः षड्जं वदति तथा अन्येऽपि पक्षिणः मनुष्या अन्येऽपि जीवाः षड्जं वदन्ति तथापि तेषामवान्तरजातिरस्ति ते चेद्यथाक्रमेण यथारसाभिव्यक्ति यदभिप्रायेण सृष्टावुत्पादिताः तास्तथैव योजिताश्चेत्तदा स्वरजातयः अमिश्रिता भवन्ति तद्भगवता कर्त्तुं शक्यं नान्येन तासां चेदुन्नयनं तदा युक्त एव संतोषस्तदाह । पूजिता तेन भगवतेति स्वस्य ब्रह्मत्वात्स्वविचारितानुपूर्वीति स्वस्य तथा गानं नाश्चर्यहेतुः अन्येतु तत्स्वरूपमेव न जानन्ति कुतः पुनः करिष्यन्तीति तेनैव पूजिता किंच कार्यमपि उन्नयनेन जातमिति । साधु साध्विति प्रीयता प्रीतिं कुर्वता भगवता स्वरूपतः फलतश्च साधुत्वाय द्विरुक्तिः प्रीतिश्च तुल्यत्वात् सर्वथा कार्यानुगुणत्वात् ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नृत्यमाना नृत्यन्त्यः । यद्वा । नृत्येन मानः कृष्णकर्तृक आदरो यासां ताः रक्तकण्ठ्यः नानारागैरनुरञ्जितकण्ठ्यः । रागाश्चोक्ताः सङ्गीतसारे । "तावन्त एव रागाः स्युर्यावत्यो जीवजातयः । तेषु षोडशसाहस्री पुरा गोपीकृता वरे"ति । रतिः कृष्णकर्तृका प्रीतिरेव प्रिया यासां ताः । कृष्णस्याभिमर्शेन स्पर्शादिना मुदिता इति नृत्यादिश्रमानुद्गमः । यद्गीतेन यत्कर्तृकेण गीतेन तदानीमिदं जगज्जातमावृतं व्याप्तमासीदित्यर्थः । यद्वा । यद्गीतेन यत्कर्मकेण गीतेनेति । अद्यापि जगद्वर्त्तिभिर्लोकैर्या गीयन्त एवेत्यर्थः ॥ ९ ॥

स्वरजतीरिति स्वराः खलुः "षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च सर्वे स्युः श्रुतिसम्भवाः । मयूरश्चातकश्छागक्रौञ्चकोकिलदर्दुराः । मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् । तेषां जातीरष्टादश । यदुक्तम् । रागस्तु जायते यस्याः सा जातिरभिधीयते । शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता । शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः । ता एव विकृताः सत्यो जाता विकृतसंज्ञया । षाड्जार्षभी च गान्धारी मध्यमा पञ्चमी तथा । धैवती चाथ नैषादी शुद्धा एतास्तु जातय" इति । अमिश्रिताः कृष्णोन्नीताभिरसङ्कीर्णाः । यद्वा । शुद्धा अपि जात्यन्तरास्पृष्टाः । परमप्रावीण्यने केवलतत्तद्गानात् । तत्रापि उत्कृष्टं निन्ये । अतः परमदुर्गेयानामपि तासां तथा गानमालक्ष्य तेन कृष्णेन सा पूजिता स्वीयपीतोत्तरीयादिभिः सम्मानितेति विशाखेयमिति प्राञ्चः तत्तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती तस्यै कृष्णो मानमादरं बहुरत्नमालापदकोर्मिकावलङ्कारमदादियं पूर्वतोऽप्यधिकसाद्गुण्याविष्कारवती ललिता ततश्च यथोत्तरोत्कृष्टतादृशगाने गोपीनामप्रवृत्तिमालक्ष्य श्रीराधा स्वयमगायन्ती स्वसख्यास्तस्या एव सर्वसाद्गुण्योत्कर्षं ज्ञापयामासेति ज्ञेयम् ॥ १० ॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

इदानीं गानस्याप्याधिक्यमाह । उच्चैरिति । नृत्यमानाः नृत्यन्त्यः सत्यो जगुरिति कौशलं यद्वा नृत्ये लब्धो मानश्चित्तसमुन्नतिर्याभिरिति शाकपार्थिवादिः रक्तकण्ठ्य इति सौकुमार्य्यं रतिः श्रीकृष्णकर्तृका प्रीतिस्तद्विषया वा सैव प्रिया अभिलषणीया यासामिति तत्सुखित्वम् अत एव कृष्णाभिमर्शमात्रेण मुदिता इति वैदग्ध्यं किमिति काङ्क्षायामाह । यदिति । यासां गीतेन स्वयमुत्प्रेक्षितरागसमूहेन इदं जगत् आवृतं व्याप्तं तदनुसारिगानपरं जातमित्यर्थः । ताभिः कृतरागाणां षोडशसाहस्री जगति विस्तृतेति भावः । यथा सङ्गीतसारे "तावन्त एव रागाः स्यु र्यावत्यो जीवजातयः । तेषु षोडशसाहस्री पुरा गोपीकृतावरे" ति यद्वा इदमिदंतास्पदम् आवृतमाच्छादितम् एवञ्च तत्रास्पदमेवास्फुरत् पारिशेष्यादिति भावः । यद्वा यासां गीतेन येन वा गीतेन इदं मम हृदयमावृतम् इतिब्रह्मानन्दरसाच्छ्रीकृष्णरसाद्याधिकरसोव्यञ्जितः तदेवं श्लोकद्वयेन कान्तभावानां नृत्यादिकौशलं दर्शितं कृष्णवध्व इत्युपक्रमात् ॥ ९ ॥

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

अथ सहचरीवर्गमुख्यतमायाः श्रीललितायाः सर्वजित्वरं तदाह । काचिदिति । मुकुन्देन सममिति तदनुगतत्वमेकमत्यञ्च सूचितं स्वरजातीरिति स्वरा उक्ताः सङ्गीतरत्नाकरे "रञ्जकाः श्रोतृचित्तानां स्वराः सप्तविधा मताः । षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च सर्वे स्युः श्रुतिसम्भवाः । मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमा" निति । जातयः "रागस्तु जायते यस्याः सा जातिरभिधीयते । शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता । शुद्धा सप्तविधा ज्ञेयास्तज्ज्ञैः षड्जादिभेदतः । षड्जकैशिक्यादिभेदादेकादशविधापरेति आदिग्रहणादार्षभ्युदीच्यवन्त्यादिग्रहः ताश्चातिदुर्ग्रहाअपि अमिश्रिताः स्वरजात्यन्तरास्पृष्टाः उन्निन्ये उच्चैर्नीतवती सह गानेऽपि ततोऽधिकवैलक्षण्यं दर्शितवतीत्यर्थः । ततः प्रीयता प्रीतियुक्तेन तेन मुकुन्देन साधु साध्विति प्रोत्साहनं वदता पूजिता अत्यादृतेत्यर्थः । इयञ्च मुकुन्देन सममित्युक्तेः शुद्धसख्यवती काचिदिति केन तत्सुखेनाचीयते पूर्यते इति व्युत्पत्तेश्च उद्भटत्वात्प्रखरा च नामानुक्तिश्च श्रीमुनीन्द्रस्य वैवश्योदयेनेति निर्णीतमेव श्रीबृहद्भागवतामृते प्रथमखण्डान्ते परीक्षिद्वाक्येन ॥ १० ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवं प्रधाननृत्यं निरूप्य नृत्यमानानां तासामतिचित्रं गानसौष्ठवमाह । उच्चैरिति । आदावुच्चैर्जगुस्ततः पुनर्नृत्यमाना अभूवन् यद्वा नृत्यमाना नृत्यं कुर्वत्य एवोच्चैर्जगुरित्युभयोर्नृत्यगानयोर्युगपदाचरणेन महत्कौशलं तासां यद्वा नृत्यस्य मानो देवाङ्गनादिभ्योऽपि नृत्यकौशल्याधिक्यादभिमानो यासां यद्वा नृत्ये मानं यथार्थज्ञानं यासां यद्वा नृत्यगतौ मानं प्रमाणं यासां यद्वा कृष्णेन सह नृत्येन लब्धो मानः आदरो याभिः यद्वा नृत्येनैव कृतः कृष्णसन्मानो याभिः तथा च नृत्येन कृष्णसन्मानं कुर्वत्यो गुणगानेनापि तत्सन्मानायोच्चैरुच्चस्वरेण जगुः यद्वा चकारस्य शोभाय।चकत्वादुत्कृष्टशोभा येषु तैः स्वरैर्जगुः यद्वोत्कृष्टस्य कृष्णस्यैव शोभा येषु तैर्गीतैर्जगुः तत्र प्रथमार्थे बहूच्चस्वरगाने शोभाभावमाशङ्क्याह । रक्तकण्ठ्यइति रञ्जकस्वरयुक्तकण्ठवत्य इत्यर्थः । यद्वा द्वितीयार्थे कथमुत्कृष्टशोभावत्स्वरैर्जगुस्तत्राह । रक्तकण्ठ्य इति । यद्वा तृतीयार्थे कथं कृष्णशोभान्वितैरेव गीतैर्जगुस्तत्राह । रक्तकण्ठ्य इति । रागव्याप्तकण्ठ्य इत्यर्थः । अत्रायं ध्वनिः इन्द्रनीलमणिद्युतिनीलपद्मरागसुरभिमृद्वाल्हादककृष्णाङ्गदर्शनजातोत्साहतया तद्योगयोग्यतापत्त्यै तासां हृदयपद्मोऽपि रागव्याप्ततया पद्मरागो जातः ततश्च तद्व्याप्त्योच्छलितरागरूपतया कण्ठमभिव्याप्य मुखपद्ममपि रागान्वितत्वकरणेन तद्योग्यत्वायैव पद्मरागं चकार तथाच कण्ठस्य तद्रागात्मकरागव्याप्ततया तच्छोभान्वितगीतैरेव जगुः अत्र चेन्द्रनीलवहुपद्मनिधीनां विभवदर्शनेन स्वाभिभवमाशङ्क्य कण्ठशङ्खनिधिगर्जनेनापि गानस्योत्चत्वसम्भावना तत्र नृत्यमाना रक्तकण्ठ्य उच्चैर्जगुरित्यत्र घनश्यामकृष्णदर्शनेन तद्गम्भीरगर्जनात्मकगीतनादप्रमोदमदाः प्रमदा मयूरा इव नानावर्णाम्बरपक्षध्वननेन नृत्यमाना एव यतो रक्तकण्ठ्योऽत उच्चैर्जगुः उच्चैर्गाननृत्ययोः प्रयोजनं सूचयंस्ता विशिनष्टि । रतिप्रिया इति । कृष्णस्य रतिविहारः प्रियो यासां रतिः प्रीतिः प्रीतिर्वा प्रिया यासां यद्वा रतिरूपाः प्रीतिमय्यश्च ताः प्रियाश्चेति रतिप्रियाः यद्वा कृष्णाय रतिर्मिथुनक्रीडा प्रीतिर्वा प्रिया यासां यद्वा रतिः स्त्रीणां प्रिया भवति नतु कापि स्त्री रतेः प्रिया भवति तास्तु मन्मथमन्मथस्य भगवतो रतेरपि प्रिया अतोऽस्यर्थं तत्सौभाग्यं यद्वा अकारसंग्रहरे रतिरेव प्रिया यासामित्यरतिप्रिया इति वा छेदः एतादृशरासगीतसातत्येऽपि तासां श्रमाभावे हेतुमाह । कृष्णाभिमर्शमुदिता इति । कृष्णस्य नित्यानन्दस्य सर्वानन्दविम्बभूतस्य सर्वात्मत्वेन सर्वेषामपि सामान्यत्वेऽपिप्रियत्वेऽप्यात्मनस्तुविशेषतः प्रकटलीलायामप्यतिप्रियतमस्याभिमर्शेन साक्षात्प्रत्यङ्गस्पर्शेन मुदिताः ननु सर्वात्मतया सामान्यतः सर्वेषामभेदसम्बन्धादिन्द्रियाङ्गव्यवहितसम्बन्धस्य कथमुत्कर्षोक्तिरिति चेत्तत्रेदं चिन्त्यं किमज्ञानां स्वरूपाभेदोत्कर्षं उच्यते विदुषां वा नाद्यस्तेषां तदज्ञानाद्भेदभ्रमाश्च सिद्धोऽप्यभेदोऽसिद्ध एव विदुषामपि परोक्षापरोक्षसन्देहादत्र तु पारोक्ष्यसंशयाभावाच्छ्रैष्ठ्यं नचेन्द्रियाङ्गव्यवधानशङ्का भगवद्धामलीलागतानां तु —

देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामित्यादिवचनैः ।

कृष्णवदेव व्यवधानहेतुभूतानात्मदेहेन्द्रियाभावात् तत्र तेष्वपि देहेन्द्रियभेदवादिनामपि न व्यवधानशङ्कावसरो देहस्यैव नृत्यगानाद्यास्पदत्वेन देहे देहव्यवधानासम्भवात् तासां तद्गीतोत्कर्षमेवाह । यद्गीतेनेति । यासां गीतेनेदमन्तरिक्षमावृतं व्याप्तमासीत् अन्तरिक्षस्थविमानयानानां साङ्गनासुरप्रधानानां द्विविधसभगणचन्द्रस्य च न तासां गीतं विनान्या स्फूर्तिरत एव वक्ष्यते —

कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ।
कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् इति ॥

यद्वा यद्गीतेन यासां स्वयं प्रकटीकृतरागसमूहेनेदं सर्वं जगत्सुरनरादिलोकमावृतं तदनुसारिगानपरं जातं तत्कृतरागषोडशसाहस्री त्रिलोके विभक्ता तदुक्तं सङ्गीतसारे —

तावन्त एव रागाः स्युर्यावत्यो जीवजातयः ।
तेषु षोडशसाहस्री पुरा गोपीकृतावरा इति ॥

यद्वा किम्भूतास्तास्तदाह । यद्गीतेनेति । यासां यशसा कविभिर्वर्णितेन नाना सुरनरभाषागतगीतप्रबन्धादिनेदं जगादवृतं व्याप्तं यद्वा यद्गीतेन यासां तत्र गानविषयभूतेन श्रुतिरूपतया वा वर्णितमाहात्म्येन कृष्णेनेदं जगद्व्याप्तं यद्वा यस्य कृष्णस्य गीतेनेदमावृतं तस्य कृष्णस्याभिमर्शेन मुदितास्तमेवोच्चैर्जगुः यद्वा पुनः पुनरातिशयेन कृष्णाभिमर्शो यथा स्यात्तथा नर्तने उद्दिता उद्यताः यद्वा कृष्णाभिमर्शो यथा स्यात्तथा नृत्यमाना इति पृथक् सम्बन्धः उद्दिता इति उत्कृष्टं कृष्णमेवेताः प्राप्ता अतस्तासां तत्र लीनचित्तत्वाद्यस्य कृष्णस्यैव तत्प्रेरणया तन्मुखनिःसृतेनेदं गोपीमण्डलमावृतं व्याप्तम् ॥ ९ ॥

तत्र कस्याश्चिदतिप्रियाया गीतोत्कर्षमाह । काचित्सममिति । काचिदिति सर्वाभ्यः पृथक्निरूपणात्पृथग्वर्णितानामपि प्रथमोद्देशादग्रे गानोद्यनस्तुतिविषयत्वोक्त्वा सर्वोत्कृष्टा यद्वा कासु स्वरूपा चिदिति चिद्रूपा चिदानन्दमयी श्रीमती राधा मुकुन्देन सममिश्रिताः स्वरजातीरुन्निन्ये इत्यन्वयः तत्र मुकुन्देन सममित्यनेन तु अन्यासां गानं स्वतन्त्रं श्रीमत्याः

काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः ।
जग्राह बाहुनास्कन्धं श्लथद्वलयमल्लिका ॥ ११ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

कृष्णेन सहैव किञ्च यथा कृष्णस्य गानादिलीला स्वतः परमानन्दघनत्वेन स्वप्रयोजनाभावाज्जीवानां मुक्तिदानाय तथा श्रीमत्या इत्यपि द्योत्यते अमिश्रिता इत्यत्र अन्यासां गानेनामिश्रिता मुकुन्देन सममित्युक्त्या सर्वोपाधिविनिर्मुक्तप्रत्यगभिन्नब्रह्मवदेव स्वरब्रह्माप्यन्यामिश्रितं मुकुन्देन समं निन्ये तथा च राधाकृष्णगानयोर्मिथः समत्वं तुल्यगुणत्वम् अन्यगानेभ्यः श्रैष्ठ्यञ्च द्योतितं यद्वा अमिश्रिता इत्यनेनान्यस्वररागादिगाने प्रमादादितरमिश्रणव्यावृत्तिस्तत्र प्रमादासम्भवात् स्वरजातीरिति स्वराः षड्जादयो ध्वनिविशेषास्तदुक्तम् —

रञ्जकाः श्रोतृचित्तानां स्वराः सप्त विधा मताः ।
षड्जर्षभौच गान्धारो मध्यमः पञ्चमस्तथा ॥
धैवतं च निषादं च सर्वे स्युः श्रुतिसम्भवाः ।
मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ।
मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥

जातयस्तु तत्र रागोत्पत्तिहेतवः उन्निन्ये इति सुरगन्धर्वादीनामपि व्यामोहकसर्वोत्कृष्टतया गानसूचनम् अतस्तेन भगवता साधु साध्विति पूजिता स्तुता यद्वा साध्विति कृत्वा साधु पूजिता यद्वा तेन हेतुना प्रियेण सर्वगोपीभिश्च पूजिता स्तुता सुरासुरादिभिश्च सुमनोवृष्ट्यादिभिः पूजिता ततश्च सैव तदेव गीतं ध्रुवं तालविशेषं यथा भवति तथा उन्निन्ये यद्वा प्रथमं ध्रुवस्य स्थायिपदस्य गानं कृत्वा मध्येऽन्तरा गानानन्तरं तदेव ध्रुवमुन्निन्ये नान्तरान्तरितपूर्वोत्तरध्रुवगानयोः क्वचिदपि स्वरेणास्खलितास्तस्यै स्तुत्यनन्तरमालिङ्गनचुम्बनादिना मानमादरं बहु दात् ॥ १० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

केवलनृत्यमुक्त्वा सगीतंतदाह । उच्चैरिति । नृत्यमानाः नृत्यन्त्योऽप्युच्चैर्जगुः शानजार्थः नृत्ये मानो गर्व आदरोक्तिर्वा यासामिति वा रक्तकण्ठ्यः नानारागैरनुरञ्जितकण्ठ्यः स्निग्धकण्ठ्य इति वा तथापि रतिरेव प्रिया यासां यद्वा गानफलमाह । रतिः कृष्णकर्तृका प्रीतिः प्रिया यासां ननु तादृशचिरकालीननृत्ये श्रमापनोदस्तासां केन जात इत्याशङ्क्याह । कृष्णेन सदानन्दरूपेण प्रेष्ठेन कृतः अभितोऽमर्षः प्रोञ्छनादिरूपः तेन मुदिता मोदसागरे निमग्नाः किंचिद्गीतेन सर्वैरपि सर्वं विस्मृतं तासां श्रमविस्मरणे किञ्चित्रमित्याह । यासामुच्चैर्गीतेनेदं विश्वमावृतमासीत् यद्वा यासां स्वयं कल्पितेन षोडशसहस्रभेदभिन्नेन गीतेनेदमावृतं व्याप्तं यद्वा तद्विषयकेन लोकैः स्वोद्धारार्थं क्रियमाणेन गीतेनेदमावृतम् ॥ ९ ॥

अथ पञ्चभिस्तासां प्रेमचेष्टितान्याह । काचिदिति—

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च सर्वे स्युः श्रुतिसम्भवाः ॥
मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ।
मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ॥
रागस्तु जायते यस्मात्सा जातिरभिधीयते ।
शुद्धा च विकृता चेति सा द्विधा परिकीर्तिता ॥
शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
ता एवा विकृताः सत्यो जाता विकृतसंज्ञया ॥
षाड्जर्षभीच गान्धारी मध्यमा पञ्चमी तथा ।
धैवती चाथ नैषादी शुद्धा एतास्तु जातयः ॥

इत्युक्तजातीरमिश्रिताः जात्यन्तरासंस्पृष्टाः मुकुन्देन सह उन्निन्ये उत्कृष्टाः कल्पयामास यद्वा कृष्णोन्नीताभिरसङ्कीर्णाः स्वरजातीः षड्जादिस्वरालापगतीरुन्निन्ये सहशब्देन संख्याप्राधान्यमुच्यते ततश्च प्रियमाणेन तेन साधु साध्विति पूजिता संमानिता वीप्सा हर्षेण इयं ललितानाम्नी श्रीराधासखी ॥ १० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णस्याभिमर्शेन मुदिताः नृत्यमानाः नृत्यन्त्यः रक्तकण्ठ्यः विविधरागैरनुरञ्जितकण्ठ्यः उच्चैर्जगुः यथासां गीतेनेदं विश्वमावृतं व्याप्तमभूत् पावितं जातमित्यर्थः ॥ ९ ॥

तत्र काचिद्वधूः मुकुन्देन स्मरणमात्रतो मुक्तिप्रदेन सह स्वरजातीः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाख्यस्वरालापगतीः अमिश्रिताः मुकुन्दोन्नीताभिरसङ्कीर्णाः उन्निन्ये तदा तेन मुकुन्देन प्रियमाणेन साधु साध्विति पूजिता तदनन्तरं तदेव स्वरजात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वोन्निन्ये उन्नीतवती तस्यै बहु मानमदात् ॥ १० ॥

---

भाषा टीका ।

रति की अत्यन्त प्रिय अनेक रागों के कण्ठों वाली श्रीकृष्ण के अंग स्पर्श होने से अत्यन्त हर्षित हुई जो गोपी सो ऊंचे स्वर से गान करती हुई जिनके कि गीत से यह सब संसार व्याप्त होगया ॥ ९ ॥

कोई गोपी पृथक् स्वरों कि जातियों से मुकुंद भगवान् के साथ गान करती भई फिर उनके स्वरों को ग्रहण करने से भगवान् प्रसन्न भये उनने सुंदर हैं करके प्रशंसा किया भगवान् ने भी उसी स्वर का गान किया उस गोपी को बहु मान दिया ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं नृत्यगीतादिना श्रीप्णसंमानितानां तासामतिप्रीतिविलसितं वृत्तमाह । काचिदिति । श्लथन्ति वलयानि मल्लिकाश्च यस्याः सा ॥ ११ ॥

**तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ।**
**चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥१२॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्पलस्य सौरभमिव सौरभं यस्य तं बाहुम् ॥ १२ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

पार्श्वस्थस्येति । शीघ्रसुखग्रहणं बोधितम् अन्यथा रासावेशेन स्खलनं सम्भवेत् किञ्च पार्श्वस्थत्वेन तस्यापि तत्र सावधानत्वं तस्यां पूर्वतोऽपि भावाधिक्यञ्च सूचितम् अतः परिश्रमादिकं तदर्थं केवलं छलमेवेति ज्ञेयं रासश्रमेण कदाचिद्यष्टिमेकां लीलया गदामिवावष्टभ्य बिभर्तीति गदाभृत् यद्वा गदति वर्णात्मकं शब्दं निगदतीति गदा वंशी तां स बिभर्त्ति गदाभृत् वंशीधरः तस्य सखीकरं परित्यज्य तस्य स्कन्धं जग्राह परिश्रान्तेर्लक्षणं श्लथदिति तथा श्रीपराशरेणाप्युक्तम्—

परिवर्त्तश्रमेणैका चलद्वलयलापिनीम् ।
ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिन इति ॥

मल्लिकापुष्पाणां श्लथनं कवराद्वोद्धव्यम् ॥ ११ ॥

एका गोपी अंसगतं स्वस्कन्धस्थितं स्वभावत एवोत्पलपुष्पतोऽपि अधिकं सौरभं यस्य विशेषतश्चन्दनेन आसम्यक् भक्तिच्छेदादिसाधुप्रकारेण लिप्तम् इति भावोद्दीपनत्वं सूचितं ह स्पष्टं चुम्बने हेतुः हृष्टरोमेति प्रेमवैवश्यादित्यर्थः । श्लेषेण रोमाण्यपि हृष्टानि तस्याश्च हर्षः किंवक्तव्य इत्यर्थः षष्ठी चतुर्थ्याम् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवेत्यर्द्धकम् । तदेव तालानिबद्धं केवलरागमयमेव वा प्राथमिकत्वेन प्राप्तत्वादादितालमयमेव वा गीतं तत्क्षणादेव ध्रुवं यति निःसारसंज्ञतालद्वयैकतरात्मकं ध्रुवं भोगाख्यावयवद्वयमात्रयुतगीतविशेषं रचयित्वा जगावित्यर्थः । तस्यै च मानमदात् श्रीमुकुन्द इति शेषः । किन्तु पूर्वतो बहु यथा स्यात्तथेति । अन्यत्तैः । यद्वा । स्वरा मत्तमयूरादिवद्ध्वनयः षड्जादयः सप्त । तदुक्तम् । "रञ्जकाः श्रोतृचित्तानां स्वराः सप्तविधा मताः । षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च सप्त स्युः श्रुतिसम्भवाः । मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान्" इति । अथ जातयस्तत्र रागोत्पत्ति हेतवः । तदुक्तम् । रागस्तु जायते यस्याः सा जातिरभिधीयते । शुद्धा च विकृता चेति सा द्विधा परिकीर्त्तिता । शुद्धा सप्तविधा ज्ञेया तज्ज्ञैः षड्जादिभेदतः । षड्जकैशिक्यादिभेदादेकादशविधा परेति आदिग्रहणादार्षभीत्यादयः षट् । षड्जो दिव्यो वेत्यादयश्च दश ज्ञेयाः । ता अमिश्रिताः स्वरजात्यन्तरास्पृष्टाः । परमप्रावीण्येन केवलतत्तज्ज्ञानात् । तत्रापि उत् उत्कृष्टम् । निन्ये गृहीतवती जगावित्यर्थः एवं कासाञ्चिद्गुणोत्कर्षप्राधान्येन तत्रापि तारतम्येन गानाद्यनुभावकं प्रेम वर्णयित्वा कासाञ्चित् सम्भोगप्राधान्येन वर्णयति । काचिद्रासेत्यादिना । तत्रापि कस्याश्चित् सौभाग्यप्राधान्येनाह काचिद्रासेति । पार्श्वस्थस्येति शीघ्रसुखग्रहणं दर्शितम् । अन्यथा रासावेशेन स्खलनं सम्भवेत् । गदां नटवृन्दाधिपत्युचितां गदाकृतिं यष्टिं बिभर्ति इति । यद्वा गदति वर्णात्मकं शब्दं निगदतीति गदा वंशी तां तदुचितत्वेनापि बिभर्त्तीति गदाभृत् तस्य । अत एव मध्यस्थस्यापि नटवृन्दाधिपतिस्थानीयोऽयं प्रकाशः परिश्रान्तिलक्षणं श्लथदिति श्रमेण नवमल्लिकावल्लिलुलिताङ्गयां श्लथन्तः परस्परं विच्छिद्य सङ्घट्टं कुर्वन्तो बलयाः तथा श्लथन्त्यो गलन्त्यो मल्लिकाश्च कवरस्था यस्याः सा । तथा श्रीपराशरेणाप्युक्तम् । "परिवर्त्तश्रमेणैका चलद्वलयलापिनीम् । ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः" । इति । अत्र मल्लिकानां शिथिलता च ज्ञेया । शोभादिदशानां मध्ये सोऽयं माधुर्यनामानुभावो ज्ञेयः । यथोक्तम् । माधुर्यं नाम चेष्टानां सर्वावस्थासु चारुतेति । एवमस्याः स्वाधीनभर्तृकात्वं मध्यस्थितत्वं दर्शितम् । तस्मात् श्रीराधिकेयम् । अतो निकटपठिते गानविद्यया तद्द्वयसुखकारिण्यौ तत्सख्यौ श्रीललिताविशाखे भवेताम् । पूर्वस्यास्ताद्दशचेष्टत्वेन वर्णनं स्वतन्त्रनायिकात्वव्यञ्जकम् । उत्तरयोर्गीतादिगुणत्वेन वर्णनं साहायकव्यञ्जकमिति ॥ ११ ॥

अथ प्राक्तनक्रियासादृश्येन नूनं श्रीश्यामलाविलासमाह । तत्रेति । एका गोपी अंसगतं स्वस्कन्धस्थितं स्वभावत एव उत्पलपुष्पतोऽप्यधिकं तज्जातीयं सौरभं यस्य इत्यर्थः । विशेषतश्चन्दनेन आ सम्यक् भक्तिच्छेदादिसाधुप्रकारेण लिप्तं ह स्पष्टम् । चुम्बने हेतुः हृष्टरोमेति प्रेमवैवश्यादित्यर्थः । श्लेषेण रोमाण्यपि हृष्टानि तस्याश्च हर्षः किं वक्तव्य इत्यर्थः । अयं प्रागल्भ्याख्योऽनुभावः । यथोक्तम् । "निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता" इति ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं नृत्यगीतवाद्यादिना श्रीकृष्णसम्मानितानां तासामपि प्रेमविलसितं वृत्तमाह चतुर्भिः । काचिदिति । रासेन परिश्रान्ता श्लथन्ति वलयानि मल्लिकाश्च यस्यास्तथाभूता आत्मनो बाहुना समीपस्थस्य भगवतोऽसं जग्राह ॥ ११ ॥

तत्र तासां मध्ये एका स्वात्मनोऽसगतं स्कन्धे निहितमुत्पलस्य सौरभमिव सौरभं यस्य तं चन्दनेन समंताल्लिप्तं कृष्णस्य बाहुमाघ्राय हृष्टानि पुलकितानि रोमाणि यस्यास्तथाभूता बाहुम् अधरं वा चुचुम्ब ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णोऽपि तदेव गीतं ध्रुवमुन्निन्ये व्यक्तवर्णेन श्रावयामास तेन तस्यै एव समज्ञायन्त्यै अत्र समगानं नाम तत्प्रशंसार्थं मुकुन्देन तद्गानानुसारेण गीतमिति ज्ञातव्यम् अन्यथा त्रिजगति मुकुन्दगायनसमज्ञायनज्ञः कोऽस्ति स्वविभूतिमन्तरेण स्रवन्ती श्लथयन्ती कबरवद्धमल्लिका यस्याः सा तथा ॥ ११ ॥

उत्पलसौरभम् उत्पलमालया सुगन्धितम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

काचित् । गदां गोपालनोचिताम् । नटवृन्दाधिपत्युचितामेव वा गदाकृतिं यो बिभर्त्तीति गदाभृत् ॥ ११—१४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

एवं संक्षेपेण प्रथमरासं निर्वर्ण्य तत्कृतपरिश्रममाह । काचिद्रासेत्यादि । पार्श्वस्थस्येति सर्वस्या एवेति ज्ञेयं बाहुना जग्राहेति वामेन बाहुनेति मन्तव्यं गदो बाक्गनिगदो गद इत्युक्तेः गदमाबिभर्तीति तथा तस्य तया समं किमपि व्यक्तं कथयतो गायतो वा जग्राहेति पुनर्मया वक्तव्य इति प्रकारकग्रहणपरः प्रेमप्रश्रयेण संकोचाभावात् श्लथमानानि वलयानि मल्लिकाश्च कबरात् कबर्य्याश्च यस्याः सा तथा वस्तुतस्तु रासोत्सवे शृङ्गारोऽङ्गतोऽङ्गी अथवा उत्साहो हि व्यभिचारिभावः स्वातन्त्र्येण विभावादिभिः परिपुष्टः रसतामापन्नो भावाख्यो रसोऽङ्गं तत्र श्रमादयो व्यभिचारिणः ॥ ११ ॥

एवं कृष्णोऽपि श्रान्तः सन् कस्याश्चिदंसे बाहुं न्यासेत्याह । तत्रेत्यादि । तत्र रासोत्सवे एका सौभाग्यवती अंसगतं कृष्णस्य बाहुं चुचुम्ब उत्पलसौरभं स्वभावेन चन्दनालिप्तम् आरोपेण अतः आघ्राणेन परीक्ष्य किमयं चन्दनेन सुरभिः किंस्वरूपेणेति संदिग्धा उत्पलसौरभमिति स्वरूपं सौरभमनुभूय हृष्टरोमा चुचुम्बेत्यर्थः अतश्चन्दनालिप्त इति लिपिप्रकृत्यर्थमाहिमा अत्र कृष्णस्यालस्यमस्या औत्कण्ठ्यव्यभिचारिणौ ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्या पुनः उन्नीतमेव यावद्भगवता पुनर्गृह्णते तावत्तथैवोन्नयनं कृतवतीत्याह । तदेवेति । तदेवोन्नीतं ध्रुवं निश्चलं यथा भवति तथा उन्निन्ये तं नादं ध्रुवनादे योजितवती ध्रुवः नादः कारणनादः स्थायी स्वरः "यत्रोपविशते रागः स्वरः स्थायी स कथ्यते" भगवन्नाद एव वा भगवता तथैव गीतमिति ध्रुवतालादिषु योजितवतीति केचित्तन्न विचारक्षमम् एवं ध्रुवयोजनायां भगवांस्तस्यै एव बहेव संमानमदात् चकारादभीष्टमपि एवं तासामन्तः सामर्थ्यं जातमिति बहिः सामर्थ्यं किम्वक्तव्यमिति भावः । बहिरिति सर्वगोप्यधिकमैश्वर्यवीर्यरूपे द्वे निरूपिते अन्याश्च चतस्रः क्रमेण बोद्धव्याः कीर्त्तिर्हि भगवन्तमेवावलम्बते अतः कायिकं व्यापारं द्वयोराह । काचिदिति । रासेन परितः श्रान्त्वा स्वस्यैकस्मिन् पार्श्वे विद्यमानस्य स्कन्धं स्वबाहुना जग्राह गदाभृत इति भगवता स्थिरत्वाय अधिकप्रयत्नेन अन्यथा क्रियमाणे रासो भज्येत परिश्रमो रसाधिक्यात् अन्यथा रसार्थं प्रवृत्तिर्न स्यात् मण्डलपरित्यागे मण्डलसिद्ध्यर्थं भगवतापि हस्तग्रहणं सम्भवति अत एकस्मिन् पार्श्वे भगवानेव पार्श्वभागे विद्यमानस्य भगवतः कण्ठग्रहणं वृक्षाधिरूढालिङ्गनं भवति भगवता पूर्वं कण्ठे सा गृहीता तथापि भगवान् गृहीत इति मित्रवत्स्थितिः स्यादिति तन्निवृत्त्यर्थमाह । श्लथद्वलयमल्लिकेति । श्लथन्ती वलयाकारा मल्लिका यस्याः कबरे वलयाकारेण मल्लिका यस्याः कबरे वलयाकारेण मल्लिका माळा यद्वा सा च शिथिला जातेति वैकल्यं प्रदर्शितम् आसक्ता च प्रदर्शिता ॥ ११ ॥

अन्या पुनः स्वस्य एकांसगतं बाहुमुत्पलापेक्षया अधिकपरिमलयुक्तं चन्दनेन आलिप्तं बाहुमाघ्राय अन्तः प्रविष्टामोदा पूर्णानन्दा सती हृष्टरोमा बाहुमेव चुचुम्ब रूपस्पर्शौ पूर्वमेव स्थितौ गन्धरसयोरप्यनुभवं कृतवतीति हेत्याश्चर्ये तत्रेति तस्मिन्नेव समये तत्रैव भगवति वा उभयपार्श्वस्थयोर्गोपिकयोस्तथा सति विनियोग उक्तो भवति एकांसगतमिति वा सैव तथा कृतवतीति केचित् सदानन्दत्वात् सर्वत्रैव समरसता उत्पलं हि रात्रिविकासि तत्क्षीणां मनोज्ञमाघ्राणे चन्दनजसौरभमेव न हेतुः किन्तु ततोऽपि विलक्षणं साधारणजनावेद्यं तदपेक्षयापि सौरभयुक्तत्वेनात्यलौकिकभाववतीनामेव वेद्यं सहजं सौरभमित्यपि ज्ञापनायेदं विशेषणं चन्दनालेपः विवेकधैर्यनाशनार्थः घ्राणेनान्तः प्रवेशनमस्या विशेषः एषा श्रीरूपा ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

साद्गुण्यप्राधान्येन सख्यौ वर्णयित्वा सौभाग्यप्राधान्येन सर्वमुख्यतमां वर्णयति । काचिदिति । गदाभृतः कृष्णस्य पक्षे गदनं गदा गदा गीतवत्योः सख्योर्गुणतारतम्यज्ञानकथा तां बिभर्त्ति धत्ते । पुष्यति वा तस्य स्कन्धं बाहुना दक्षिणेन जग्राह आलम्बे । दलथन्तो वलयाः मल्लिकाश्च कवरस्था यस्याः सा । स्वाधीनकान्तत्यादियं श्रीवृषभानुकुमारी ॥ ११ ॥

अंस गतं स्वस्कन्धे स्थितं चन्दनालिप्तमपि उत्पलस्येव सौरभं यस्येति स्वाभाविकेन गात्रस्योत्पलगन्धेनात्यधिकेन चन्दनगन्धस्यावरणात् पूर्वाध्यायोक्तक्रियातुल्यत्वादियं नूनं श्यामला ॥ १२ ॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

प्रीतियुतत्वमेवाभिव्यञ्जयति । तदित्यर्द्धेन । तदेव तयोद्गीतमेव ध्रुवं यतिनिःसारुसंज्ञतालद्वयैकतरात्मकध्रुवाभोगाख्या ययवद्वयमात्रयुतगीतविशेषं रचयित्वेति शेषः तेन ध्रुवोन्नयनेन तस्यै परमसुहृदे पूर्वापेक्षया बहु अधिकतरं यथा भवति तथा मानं चेतसः समुत्कर्षमदात् दत्तवान् मुकुन्द इति शेषः अत्र मुकुन्दपदस्यामुख्यया वृत्त्या तस्यापि तामनु सख्यमेवाभिमतं तत्सुखपर्य्यवसायित्वादिति संक्षेपः तदेवं तासां तस्याश्च प्रेमसौभाग्यं गुणोत्कर्षं च वर्णयित्वा तत्तत्सौभाग्यमणिमञ्जरीनीराजितचरचरणकमलायाः श्रीराधिकायाः सर्वाधिकं स्वाधीनपतिकात्वलक्षणं सौभाग्योत्कर्षमाह । काचि-

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

दिति । अनिर्वचनीयेत्यर्थः । यद्वा तादृशसौभाग्योत्कर्षवती श्लेषेण केन ब्रह्मेन भानुनेति यावत् आचिता अयोनिजात्वात्सनातनतया संगृहीतेति काचित् "अयोनिजेयं कल्याणी कीर्त्तिता कीर्त्तिनन्दिनीति" ब्रह्मवैवर्त्ताद्भगवत इव तस्या अपि प्रादुर्भावमात्रमेवेति भावः "मारुते वेधसि ब्रध्ने पुंसि कः कं शिरो ऽम्बुनो" रित्यमरः तदेवं ककारस्यानेकार्थस्य मुख्यया वृत्त्या भानौ शक्तिः ततश्च नामैकदेशे नामग्रहणमिति न्यायाद्वृषभानुनन्दिनीति नामापि संसाधितम् "श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्तिव"त्यलङ्कारानुसारेण सङ्गोपितमपि अथवा पद्मपुराणसंवादेन केन वेधसांशावतरणप्रसङ्गे वृषभानुनाम्ना गोपराजेनात्मजात्वेनाचितेति क्वचित्तोऽयमिति पूर्ववदेव रासपरिश्रान्तेति सौकुमार्य्यं पार्श्वस्थस्येति नित्यसान्निध्यं गदेति नटराजकरस्थिता गदाकृतियष्टिरेव गदेत्युच्यत इति भरतः यद्वा गदतीति कलध्वनिं करोतीति गदा वंश्येव "निगदो गद" इतिकोशाच्च परिश्रान्तिलक्षणमाह । श्लथदित्यादिना रासपरिश्रमेण रसालसतया वा नवमालिकावल्लिलुलिताङ्गत्वेन श्लथन्त्यो गलन्त्यो मल्लिकाः कवरगुम्फितमल्लिका स्रजो यस्या इति किञ्चित्कार्श्यं सूचितं तेन च सौकुमार्य्यं माधुर्य्याख्यानुभावोऽयं "माधुर्य्यं नाम चेष्टानां सर्वावस्थासु चारुते"ति अन्यथा कार्श्यस्यावर्णनीयत्वादिति भावः । बाहुना स्कन्धं जग्राहेति विस्रम्भात्मकं सख्यं स्वाधीनपतिकात्वं च सुव्यक्तमिति संक्षेपः ॥ ११ ॥

तदेवं तस्याः सौभाग्योत्कर्षं साक्षादनुभूय तदभिलषन्त्याः दक्षिणायाश्चेष्टितमाह । तत्रेति । तस्याः सौभाग्योत्कर्षे ऽनुभूते सतीत्यर्थः । एका प्रागुक्ताभ्यां द्वाभ्यामन्या भिन्नप्रकृतित्वात् "एके मुख्यान्यकेवला"इति कोशात् असंगतमिति दास्यप्रायसख्यव्यक्तिः स्वभावत एवोत्पलपुष्पतोऽप्यधिकं तज्जातीयं सौरभं यस्य तं विशेषतश्चन्दनेन आसम्यक् भक्तिच्छेदादिसाधुप्रकारेण लिप्तं हृष्टरोमेति प्रेमवैवश्यं दैन्यश्च सूचितं चुचुम्बेति प्रागल्भ्यञ्च "निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भते" ति वस्तुतस्तु दास्यप्रायरतेरस्या नेदं रमणीयश्चेष्टितमिति श्रीमुनीन्द्राभिप्रायः जग्राह बाहुनेत्यादिना पूर्वोक्तसुपमाधिक्षेपस्योत्कर्षज्ञापनयैव प्रदर्शितमिति ज्ञेयम् ॥ १२ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवं गाननृत्यादिगुणप्रधानायाश्चेष्टास्ताः कासां चरितेन दर्शयित्वा संभोगप्रधानाश्चेष्टा निरूपयन्नादायालिङ्गनचेष्टामाह । काचिदिति । काचित्तु रासपरिश्रान्तेत्यत्र यद्यपि रासो रससमूहस्तत्रापि नित्यपरमानन्दघनसन्निधानेन पूर्वव्याख्यानरीत्या काचिदिति चेत् सुखरूपत्वेन च श्रमासम्भवस्तथापि कृष्णालिङ्गनसुखसम्भोगातिशयाय मिषेण श्रान्तैवेति बोध्यं यद्वा रासमुखभरपूर्णतयैव चेष्टान्तरप्रवृत्तिशैथिल्यात्परिश्रान्तेवेति ज्ञेयं यद्वा परिशब्दोऽत्र वर्जने तथाच रासश्रमरहिता अपि सह रासेन निवृत्तविरहाधिश्रमा अपि केवलसुखसंभोगातिशयायैव पार्श्वस्थस्येति विभुसर्वाङ्गतया सर्वत्र स्थितस्यापि वर्णितरीत्या मण्डले स्वसमीपाविर्भूतस्य गदाभृत इति साक्षाद्ब्रह्मापतेर्यद्वा गदाकारा काचिन्नटनागरस्य नृत्ये गदाचालनवदावर्तमाना यष्टिः तां धरतः यद्वा गद्यते व्यक्ताक्षरमधुरस्वरेण निगद्यते गीतमनयेति गदा वंशी तद्धृतः स्कन्धं जडीभूतयाचलया पुष्पितया स्वर्णयूथिकालतया तमालद्रुमस्कन्धाश्रयणमिव विबुधविबुधविबुधसुमनोहरविविधभगवद्गुणसुमनोऽन्वितया चतुर्वर्गभगवत्स्वरूपानन्दफलयुतया प्रेममाधुर्य्यरसमधुच्युतया भक्तिलतया श्रीभागवतप्रतिस्कन्धाश्रयणमिव कर्म्मणि खेदानुभवेन तादृगगुणया श्रुतिलतया ब्रह्माश्रयणमिव रोमपुलकमुकुलस्वेदकणमधुस्रावयल्या प्रेमवैचित्यजडीभूतया तदालिङ्गनोत्साहपवनवेगचलितया ललितया बाहुलतया जग्राह श्लथद्वलयमल्लिका इति द्रुमस्कन्धाश्रितलतया कुसुमनिपातमिव भागवतस्कन्धाश्रितभक्तिलतया त्यक्तैहिकामुष्मिकसुखयोगसिद्धकुसुमजातमिव ब्रह्माश्रितश्रुतिलतया सवलितपुष्पितवचोव्रातमिव भगवत्स्कन्धाश्रितबाहुलतया श्लथन्त्यो वलयाकारा मल्लिका यस्याः यद्वा श्लथन्तो वलयाः कवरग्रथितमल्लिकाश्च यस्या इत्यपि रासश्रमानुकारो बोध्यः तथाच लताश्रिततमालवत् भक्त्यालिङ्गतभागवतवत्श्रुत्यवभासितनित्यपरमानन्दब्रह्मवत्तयालिङ्गितो भगवान् शुशुभे इति भावः ॥ ११ ॥

तस्या एव चरितान्तरमन्यस्या वा चरितमाह । तत्रैकांसगतमिति । तत्र तस्यामेव प्रियस्कन्धालिङ्गनदशायां सा स्वीयैकांसे एकस्मिन् स्कन्धे गतं प्राप्तं कृष्णस्य बाहुं चुचुम्ब तत्रैव रासमण्डले एका काचिदन्या स्वांसगतं तद्बाहुं चुचुम्ब किम्भूतं बाहुं तदाह । उत्पलसौरभम् उत्पलमिव तत्सुरभिचन्मधु ततोऽप्युत्कृष्टं सौरभं यस्मिन् यद्वा उत्पलेऽपि सौरभं यस्य—

रसोऽहमप्सु कौन्तेय ! प्रभास्मि शशिसूर्ययोः ।
पुण्यो गन्धः पृथिव्याश्चेत्यादिवचनैः ॥

सर्वत्र सर्वगुणानां भगवदंशत्वात् यद्वा अन्ये विषयाः पुनः पुनर्भुज्यमानाः सर्वेऽपि प्रति पलं विरसतां गच्छन्ति विकारित्वात् इदन्तु उत्कृष्टमेव प्रतिपलं सौरभं यस्य स्वरूपात्मकतयैवाविकृतत्वात् यद्वा तस्याः क्षीयमाणत्वेन प्रतिपलाभ्यस्यमानानुभवप्रकृष्टतया पदे पदे स्वादु स्वादु भागवतार्थ इव उत्कृष्टं प्रतिपलं सौरभं यस्य यद्वा उत्कृष्टं किमपि वाचामगोचरं स्वरतानां सुखं पूर्वमद्भुतं पाति पुनश्चाधिकं लाति सौरभं यस्य यद्वा उत्पलं नीलकमलं तद्वत्स्वकान्त्या सौरभं चरणकमलं तद्वत् करतलाङ्गुलिकान्त्या भातीत्युत्पलसौरभं यद्वा उत्पलं रात्रिकमलं रात्रावेव भाति सौरं दिनकमलं तु दिने एव इदं तु उत्पलवद्रात्रौ सौरभं दिनेऽपि समानं भाति स्वत एवेदृगपि पुनश्चन्दनेना समन्ताल्लिप्तम् अनेनातिसुरभित्वेऽपि चन्दनलिप्तत्वकथनेन चन्दनसौरभस्य तत्रातिशयापादनासम्भवेऽपि रविनिवेदितदीपवत्परमानन्दे ब्रह्मण्यपि श्रुत्योद्धृतसत्यवृत्त्यभिव्यक्तसुखत्वस्वरूपे एव स्वस्मिन् सखिसमागमसुखवद्भक्तप्रियत्वेन पत्रं पुष्पं फलं तोयमित्यादिस्वप्रतिज्ञानुसारेणावश्यस्वीकारो दर्शितः यद्वा चन्दनेनालिप्तमपि स्वत एवोत्पलादपि सौरभं बाहुमाघ्राय हृष्टरोमा तत्सुखातिशयेन प्रेमरसव्याप्ततनुत्वेन रससेवितभूमौ निपतिततृणलतागुल्मस्थानवत्प्रतिरोमव्याप्तदर्पा पुलकाङ्गी चुचुम्ब नासिकया सुरभिसुखातिशयलाभलुब्धा चुम्बनेन स्पर्शरसास्वादितर्त्तेति भावः । इति स्फुटं सर्वसखिनृत्यसमाजे गतत्रपतया चुम्बनेन प्रागल्भ्यलक्षणानुभावो दर्शितः किञ्च मुखकमलनिवासास्पदे स्कन्धे हरिकरकमला-

कस्याश्चिन्नाट्यविक्षिप्त¹कुण्डलत्विषमण्डितम् । १ कुण्डलत्विषभूपिते
२ गण्डं गण्डे संदधत्याः प्रादात्ताम्बूलचर्वितम् ॥ १३ ॥ २ गण्डस्थगण्डेअभिदधत्या
नृत्यती गायती काचित्कूजन्नूपुरमेखला ।
पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताधात्स्तनयोः शिवम् ॥ १४ ॥

### श्रीरामनारायणकृतभावभावविभाविका ।

गमे जाते उत्कृष्टवन्ध्यागमे तच्चरणचुम्बनलक्षणादररीतिमवगत्य तत्करपद्मप्रपदविशमियालं चन्दनालेपासितविशालं चुचुम्बेति ध्वनिः ॥ १२ ॥

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

काचित्तु तदेव जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वोन्निन्ये उन्नीतवती तस्यै तथा गानपरायै बहु यथा स्यात्तथा मानमदात् वक्षालिङ्गनादिदानपूर्वकं साधुवादं श्रीमुकुन्दः कृतवान् विशाखा-ख्यैषा श्रीराधासखी एवं नृत्यगीतादिपराणां भगवता सम्मानितानां मध्ये कस्याश्चिदतिप्रीतिविलसितं वृत्तमाह । काचित् पार्श्व-स्थस्य गदां नटवृन्दाधिपत्युचितां गदाकारां यष्टिं बिभर्त्ति गदति वर्णानिति गदां वंशीमिति वा तया च अनायासग्रहणस्य स्वानि-रोधपरस्य मध्यदर्शुस्वानिमूर्तेः प्रेष्ठस्य स्कन्धं बाहुना जग्राह यतो रासपरिश्रान्ता यतः सौकुमार्य्यात् श्रमकार्श्येन श्लथन्तो वलयाः गलन्त्यो मल्लिकाश्च कबरस्था यस्याः तथाच विश्रामाय तथा प्रवृत्तिपरा मध्यस्थप्रेष्ठसन्निहिता स्वाधीनभर्तृका प्रियापद-प्रतिपाद्या सर्वाधिका श्रीराधिकाभिधालंकृतेयमितिध्वनितम् ॥ ११ ॥

तासु मध्ये एका रासपरिश्रान्तस्येषद्धाराक्रान्तस्य च कृष्णस्य स्वांसगतं बाहुं भगवत एवोत्पलतोऽप्यधिकसौरभं यस्य तं तत्रापि चन्दनेनालिप्तं चुचुम्ब यतः हृष्टरोमा अन्तर्मातुमशक्य-त्वाद्रोमद्वारा बहिर्निःसृतेन हर्षेण युक्ता प्रागल्भ्योऽशुभावोऽयं "निःशङ्कत्वं सम्प्रयोगे बुधैरुक्ता प्रगल्भता" इत्युक्तेः श्यामलाख्यैषा सखी ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं नृत्यगीतादिभिः प्रसङ्गेन भगवता सम्मानितानां व्रजा-ङ्गनानामतिप्रीतिविलसितं वृत्तमाह । काचिदिति चतुर्भिः श्लथन्ति वलयानि मल्लिकाश्च यस्याः सा पार्श्वस्थस्य समीपस्थस्य गदा-भृतः स्कन्धं स्वबाहुना जग्राह ॥ ११ ॥

अंसगतं प्रसङ्गेन भगवता स्कन्धे निहितम् उत्पलस्य सौर-भवत्सौरभं यस्य तं बाहुं चुचुम्ब ॥ १२ ॥

### भाषा टीका ।

कोई गोपी रास के अधिक होने से श्रमित होगई उस की माला तथा कंकण हाथों से ढीले हो गिरने लगे तब पास में स्थित भगवान् गदा धरके स्कंध को अपने बाहु से ग्रहण करती भई ॥ ११ ॥

उहीं पर एक गोपी श्रीभगवान् के चंदन से लिप्त उत्पलों कीसी सुगंधि वाले कृष्ण के बाहु को अपने कांधे पर रखकर रोमों से हर्षित होकर चुंवन करती भई ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विषेण त्विषा मण्डितं गण्डं कपोलं तथा भूते स्वगण्डे सन्दधत्याः संयो-जयन्त्याः ॥ १३ ॥

कूजती नूपुरे मेखला च यस्याः सा ॥ १४ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

स्वे गण्डे श्रीकृष्णगण्डे नाट्येतिश्रमव्याजेन सन्दधत्या इति भावः । प्रकर्षेण संमुखत्वाभावेऽपि तन्मुखप्रवेशनादि चातुर्येणा-दात् ॥ १३ ॥

नृत्यती नृत्यन्ती इयमेका गायती गायन्ती च परा इति द्वे ज्ञेये कूजदिति नृत्ये गाने च परमावेशं बोधयति पार्श्वस्थस्य एवं स्थितस्य भगवतो हस्त एव अब्जं तापहारित्वादिना तत् श्रान्ता सती श्रमनिवृत्त्यर्थमित्यर्थः । एतच्च पूर्वमुक्तमेव शिवं स्वतः सुखरूपं एवं मुख्याः सप्तोक्ता अष्टमी च "काचित्परिलसद्बाहुः परिरभ्य चुचुम्ब तम् गोपी गीतस्तुतिव्याजनिपुणा मधुसूदन" मिति श्रीपरा-शरेणोक्तात्र ज्ञेया यद्वा नृत्यती गायतीत्यैकैव एवं पद् तासांच पूर्व-वद्यथोत्तरं श्रेष्ठ्यमूह्यं द्वेच मण्डलमध्यवर्तिनः पार्श्वद्वये स्थिते श्रीराधाललिते नोक्ते प्रायोऽत्र मण्डलस्यैवोक्तत्वात् यद्वा पूर्व-व्याख्यानुसारेण सप्तैवोक्ता ज्ञेयाः श्रीराधादेव्यैवैका तस्य मण्डलमध्यवर्तिनः सव्यपार्श्वस्था अत्र नोक्तेति ॥ १४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ताम्बूलचर्वितादानसाम्येन नूनं पूर्ववत् श्रीशैव्याविलासमाह । कस्याश्चिदिति । स्वगण्डे श्रीकृष्णगण्डे नाट्येऽतिश्रमव्याजेन सन्दधत्या इति भावः । प्रादात् तस्या मुखं स्वमुखसम्मुखं कुर्वन् प्रकर्षेणादादित्यर्थः । अत्र दाने षष्ठी निगूढार्थ आर्षी वा ॥ १३ ॥

श्रीहस्तग्रहणानुसारेण नूनं पूर्ववत् श्रीचन्द्रावलीविलासमाह । नृत्यती नृत्यन्ती गायती गायन्ती च कूजदित्यत्र गानानुरूप-ताळयुक्तं कूजितं ज्ञेयम् । पार्श्वस्थस्याच्युतस्य निश्चयत्वेन

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्पार्श्वे एव स्थितस्य भगवतो हस्त एवाब्जं तापहारित्वादिना तत् श्रान्ता सती श्रमनिवृत्त्यर्थमियेत्यर्थः । शिवं स्वतः सुखरूपम् । एवं मुख्याः षडुक्ताः तथैव सप्तमी पद्मापि ज्ञेया । सारल्येन लक्षिता पूर्ववद्विष्णुपुराणोक्ता भद्रा त्वियं स्फुटमष्टमी स्यात् । यथा । "काचित् परिलसद्वाहुः परिरभ्य चुचुम्ब तम् । गोपी गीत स्तुतिव्याजनिपुणा मधुसूदन"मिति । श्रीजयदेवचरणास्त्विमामेव वर्णनाविशेषेण सरसचरितां साधयित्वा व्यञ्जयामासुः । "रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा"मित्यादिना ॥ १४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नाट्येन नृत्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विषेण त्विषा अदन्तत्वमार्षम् मण्डितं कपोलं तथाभूतं स्वगण्डे सन्दधत्याः संयोजयन्त्याः कस्याश्चित्कस्यैचित्ताम्बूलचर्वितं ददौ ॥ १३ ॥

काचित्तु नृत्यन्ती गायती च कूजन्ती नूपुरे मेखला च यस्यास्तथाभूता श्रान्ता शिवं शान्तम्पार्श्वस्थस्याच्युतस्य हस्ताब्जमब्जवच्छीतलं हस्तं स्तनयोरधान्निदधे ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नाट्येन नृत्येन विक्षिप्तयोः किञ्चित्त्रस्तयोः कुण्डलयोः त्विषेण रोचिषा भूषिते मण्डिते त्विष दीप्ताविति धातोः अविकृते त्विष इति रूपं भवति गण्डखण्डे गण्डमण्डले "समूहे मण्डले खण्डमाहुः शब्दविशारदा" इत्युत्पलमाला अभिदधत्या सपत्न्याः कोपोद्बोधाय यत्किञ्चिन्मन्त्रयन्त्याः ॥ १३ ॥

अधाद्धधौ शिवं सुखयतीति सुखम् ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तत्र काचिन्निकटे नृत्यन्त्याः सख्याः मुखे स्वयमपि वात्सल्यात्ताम्बूलचर्वितं ददावित्यन्योऽन्यप्रीतिं कैमुतिकन्यायेनाह । कस्याश्चिदित्यादि । कस्याश्चित्प्रियसख्यास्ताम्बूलचर्वितं काचित्प्रियसखी प्रादात् प्रकर्षेणाददौ नाट्यविक्षिप्तस्य कुण्डलस्य त्विषा मण्डितं स्वगण्डं गण्डे संदधत्याः अथवा काचित् कस्याश्चित् प्रादात् प्रददौ अथवा कृष्ण एव कौतुकवशात् कस्याश्चित्ताम्बूलचर्वितं प्रादात् प्रकर्षेण ददौ आददौ वा तदा कुण्डलत्विषमण्डिते गण्डे इति कृष्णस्यैव गण्डे इति बोद्धव्यं तेन तस्यापि नाट्यम त्रबोद्धव्यम् अथवा कस्याश्चित् काचित् कृष्णो वा गण्डं प्रादात् प्रकर्षेणाददौ वा प्रीत्या गण्डेन गण्डस्पर्शनमभिनीयताम्बूलस्य चर्वितं यत्र अन्तस्ताम्बूलचर्वणेन वहिःकच्छूनमित्यर्थः । अथवा चुम्बनेनाधरताम्बूलचर्वितरागस्तत्र लग्न इति चुम्बनपूर्वकं गण्डे गण्डस्पर्शनमिति भावः अन्यथा गण्डे गण्डसंधानेन ताम्बूलचर्वितस्य दानादानयोरेव दुष्करत्वान्नातिललिततत्वं कीदृश्याः संदधत्याः संधानं संश्लेषं कुर्वत्याः अथवा ताम्बूलचर्वितं सम्यक् दधत्या गण्डे गण्डं प्रादादिति पूर्ववद्द्विविधोऽर्थः कृष्णेन च मह्यं देहीति गण्ड एव गण्डधारणं कृतं ननु तयापि दत्तस्याप्यग्रहीत् कौतुकमात्रमित्येकादशार्थाः ॥ १३ ॥

काचिदेकैव । नृत्यगीतवाद्ययौगपद्येनातिपरिश्रान्ता सती स्वयमेव तत्प्रतीकारमकरोदित्याह । नृत्यतीत्यादि । नृत्यती नृत्यन्ती एवं गायती कूजन्नूपुरमेखलेति सन्ततनृत्यगानक्रमेण तालतुल्यं कूजतोर्नूपुरमेखलयोर्नाद एव वाद्यं श्रान्ता सती पार्श्वस्थाच्युतस्य हस्ताब्जं स्तनयोरधात् पार्श्वस्था वा शिवं सुशीतलम् ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कयाचिद्भगवद्गृहीतं ताम्बूलं ज्ञानवद्गृहीतमित्याह । कस्याश्चिदिति कस्यैचित्ताम्बूलचर्वितमदादिति स्वगण्डं भगवद्गण्डे सन्दधत्या इति तस्या अपेक्षालाघवञ्च सूचितं संमुखत्वाभावेऽपि लाघवेनैव प्रादात् अनेन तस्यै स्वाविद्यादत्तेति ज्ञापितं तेनेयमेवोपदेष्ट्री भगवद्सान्निधाने सर्वासां भविष्यति कस्या विद्यायोग्यतां वक्तुं लौकिकक्रियाज्ञानशक्तिमत्त्वमाह । नाठ्यविक्षिप्तकुण्डलत्विषमण्डितमिति । नाट्येन विक्षिप्तस्य कुण्डल त्विषा मण्डितं गण्डं नाट्ये क्रिया शक्तिः । प्रतिष्ठिता कुण्डले ज्ञानशक्तिः क्रियाशक्त्या विक्षेपोऽत्यभ्यासः योगात्मकत्वात् साधनानि वा तस्य कान्तिरनुभवः तेनालङ्कृता भक्तिः भगवत्प्रेम्णा सम्बद्धा यथा सा भगवति रता एवं तस्यामपि भगवान् रतः तत्रापि गण्डमिदं साध्यरूपा भक्तिरुच्यते तां लक्ष्मीं प्रतिमुखपर्यटनमिति लक्ष्मीवन्तं प्रति पुनः पुनरावर्त्तत इति ज्ञानताम्बूलयोस्तुल्यता चर्वितमिति साधनप्रयासाभावेन सिद्धदानम् ॥ १३ ॥

अपरा पुनः वैराग्यात्मकं क्रियारूपमच्छिद्रं ज्ञाने सहायार्थं भगवद्धस्तं स्वहृदये स्थापितवतीत्याह । नृत्यतीत्यादि । सा नृत्यन्ती गायन्ती स्थिता तत्राभिनयेन यथान्यहस्तः स्थाप्यते स्वहस्तौ तथा भगवद्धस्तमेव स्थापितवती शाब्दज्ञानं तदर्थानुष्ठानञ्च तस्या वर्त्तत इति ज्ञापनार्थं नृत्यगानयोः कथनं कूजन्ती नूपुरे मेखला च यस्याः उपरि गानाभिनयनं पादयोर्नृत्यम् अत एव नूपुरयोर्मेखलायाश्च शब्दः स च भावोद्दीपकः अनेन तस्याः पूर्वस्थिता सर्वैव क्रियाशक्तिः सफलेति सूचितम् एकस्मिन्नेव पार्श्वे विद्यमानस्य भगवतः हस्ताब्जं श्रान्ता सती तत्तापहरणार्थं स्तनयोरधात् तापहारकत्वमब्जस्य प्रसिद्धं श्रमो निर्वृतिसूचकः स्वस्याः पूर्वक्रियापरित्यागः वाद्यत एवेति भगवतः एकस्मिन् भाग स्थितिरुक्ता भगवत्क्रियाशक्तेरक्षयत्वसूचनायाच्युतेति अग्रे सम्बन्धस्यापि करिष्यमाणत्वात् तदविघातार्थं च तस्य पुनः कामोद्बोधकत्वेन तापानाशकत्वमाशङ्क्याह । शिवमिति । तदेव कल्याणरूपमानन्दरूपत्वाच्च भगवतः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नाट्येन विक्षिप्तयोश्चञ्चलयोः कुण्डलयोस्त्विषा कान्तिर्यत्र स चासावत एव मण्डितश्च तस्मिन् गण्डे कृष्णकपोले श्रमव्याजेन गण्डं सन्दधत्यै कस्यैचित् ताम्बूलचर्वितं प्रादात् तस्या मुखं स्वमुखसंमुखं कुर्वन् प्रकर्षेणाददित्यर्थः । इयं पूर्वोक्तसाम्याच्छैब्या ॥ १३ ॥

नृत्यन्ती गायन्ती हस्ताब्जमधादित्येका चन्द्रावली हस्तग्रहणसाम्यात् द्वितीया पद्मा तदानीं चरणाब्जं स्तनयोरधात्

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इदानीं हस्ताब्जं स्तनयोर्धत्ते स्मेति स्तनतापनिवृत्तेरुभयथापि सिद्धेः । अष्टमी भद्रा तु अत्रानुक्तापि पूर्ववदेव ज्ञेया ॥ १४ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

अथ दुर्गाव्रतपरासु कस्याश्चिन्मुख्यतमायाश्चेष्टितमाह । कस्याश्चिदिति । नाट्येन नृत्येन विक्षिप्तयोस्तरळयोः कुण्डळयोस्त्विषेत्यार्प मण्डितं कुण्डलैर्गण्डलोलैरित्यादिवत् गण्डं कपोलं गगडे श्रीकृष्णस्येतिशेषः सन्दधत्याः समर्प्पयन्त्याः तच्च श्रमव्याजेनेति भावः ताम्बूलचर्वितं प्रादादिति तस्या मुख इत्यर्थलब्धं वितरवीरनस्तेऽधरामृतमित्यस्या एव प्रार्थनमिति ज्ञेयं दाने प्रकर्षश्च चुम्बनादिव्याजेनोन्नेयः अत एव षष्ठीप्रयोग इति ॥ १३ ॥

श्रुतिमुनिरूपासु मुख्यायाश्चेष्टितमाह । नृत्यतीति । तत्तत्कलाचातुर्य्यं कूजदिति चाञ्चल्यं पार्श्वस्थेति नृत्यादिव्याजेन स्वयमागत्य पार्श्वस्था सतीत्यधीरात्वम् अच्युतस्येति स्वभावतोऽप्रच्युतस्य यद्वा तस्यामनासक्तस्य हस्ताब्जमिति तापहारित्वं शिवं सुखदं श्लेषेण कामविजयित्वेन विख्यातस्य शिवस्य तादात्म्यं कामविजयाभिप्रायेणैव स्तनयोरधात् इति किञ्चित्प्रागल्भ्यम् इयमधीरा दास्यप्रथमसख्या कृणु कुचेषु नः कृन्धि हृच्छयमित्यस्या एव गीतकं तत्र चरणपङ्कजमिति दैन्येन अत्र हस्ताब्जमिति सौभाग्येनेति विवेकः ॥ १४ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

कृष्णानुकम्पितमहद्भाग्यवत्याः कस्याश्चिच्चरितमाह । कस्याश्चिदिति । कस्याश्चित्तु ताम्बूळचर्वितं प्रादादित्यन्वयः अत्र दानेऽपि षष्ठीनिगूढार्था आर्षी वा यद्वा सामान्यसंबन्धे शेषे षष्ठीति विशेषपर्य्यवसाने दानपात्रार्थे पर्य्यवसानात् नत्वदानपात्रत्वसूचिका यद्वा तत्सूचकत्वेऽपि प्रादादिति प्रकर्षेण स्वानुग्रहवशादेवादादिति प्रेमपथिप्रेमवशीभूतस्य भगवतोऽपि स्वानुग्रहदशायां न पात्रापात्रविभाग इति द्योतनाय यद्वा षष्ठ्या अपात्रत्वं निर्दिश्य पुनः प्रादादित्युक्त्या अपात्राणामपि भगवत्प्रेमिणां तदनुगृहीतानां पात्रत्वसूचनम् यद्वा कस्याश्चित्ताम्बूलचर्वितं भगवानपि प्रकर्षेण प्रेमवश्यतया आदादिति दानार्थकदाधातोः आङ्पूर्वकत्वादादानार्थपरत्वेन स्वयमग्रहीदित्यर्थः । नच साक्षाद्भगवतोऽन्योच्छिष्टग्रहणायोग्यतेति वाच्यम् अन्यत्रायोग्यत्वेऽपि प्रेमपथि तदयोग्यत्वाभावात् न केनापि कर्मणा वर्द्धते नोकनीयानिति श्रुत्या परममहतस्तस्य केनापि कर्मणा महत्त्वाक्षतेश्च अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिरित्यादि स्वापकर्षेऽपि भृगुपादाघातसहनेऽपि तन्माहात्म्यवृद्धिप्रसिद्धेः किञ्च धर्मशास्त्रेऽपि—

> वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने ।
> श्वा मृगग्रहणे मेध्यः स्त्रीमुखं रतिचुम्बने ॥

इत्यादिस्मृतेः स्त्रीमुखस्य रत्यादिविहारे मेध्यत्वदर्शनान्नोच्छिष्टशङ्कागन्धोऽपि यद्वा ताम्बूलं चर्वितं येन तन्मुखमेव पाणिना मुखेनैव वाधरसुधास्वादायाग्रहीत्ताम्बूलचर्वितमिति पठेतु । सुगमम्मुखविशेषणमेव किम्भूतायास्तस्या इति तां विशेषयति । नाट्येन सङ्गीतनृत्यगत्या विक्षिप्तस्यातिलोलस्य कुण्डलस्य त्विषेणेति त्विषा मण्डितं गण्डं स्वकपोलं गण्डे तादृशे एव कृष्णकपोले रसावेशेन रासश्रममिषेण ताम्बूलदानार्थमेव वा सन्दधत्याः सम्यग्याजयन्त्याः तथाच मुखसंनिधाने तद्दानादानसौकर्य्यसंभवात् तत्र प्रकाशवत्कुण्डलस्य रविसादृश्यं गोपीगौरगण्डस्य गङ्गाकारत्वं कृष्णस्निग्धामलकपोलस्य यमुनात्वं तथाच स्वतनयाया यमुनाया गङ्गायां सङ्गत्या स्नानहानमन्यमानकुण्डलभानुना तत्कपोलगङ्गामानीय कृष्णकपोलयमुनायां मेलने कृष्णकपोलयमुनयाः स्वगृहागतां पित्रानीतां गङ्गां मत्वादरेण तस्यै ताम्बूलदानं तत्प्रसादादानञ्च न्याय्यमेवेति भावः ॥ १३ ॥

ततोऽन्यस्याश्चरितमाह । नृत्यतीति । काचित्तु नृत्यती नृत्यन्ती गायती गायन्तीच काचिदिति अतिदक्षतया नृत्यगीतवाद्यप्रवीणा कूजन्नूपुरमेखला कूजन्त्यः गीतताळानुसृतरवयुक्ता नूपुरसहिता मेखला यस्याः तथाभूता मण्डले बद्धबाहुनृत्यमानतया पार्श्वस्थस्याच्युतस्य हस्ताब्जं करकमलं शिवं यद्यपि परानन्दघनकृष्णसन्निधानेन गतश्रमैव तथापि श्रान्तेव स्तनयोरधादित्यन्वयः तत्रायं भावः विरहचिन्ताग्न्योर्भगवत्सन्निधानेन निवृत्तावपि बहुकालात्स्तनमूळं हृच्छयाग्नितापोपशमाय रासश्रममिषेण स्तनयोरधात्तत्र तत्तापोपशमाय हस्तविशेषणमुपन्यस्तमब्जेति तस्य तापोपशमने प्रशस्तत्वात् कामोपशमाय विशेषणं शिवमिति तस्य शिवध्वस्तत्वात् करस्य शिवत्वं तु पञ्चाङ्गुलिमस्तकाधिन्यस्तनखचन्द्रत्वात् यद्वा स्तनयोः शिवपूजास्पदाकारत्वे तत्र शिवावेशस्यावश्यकत्वाद्वर्णितरीत्या कराशिवप्रतिष्ठया प्राणप्रतिष्ठाचरणं यद्वा स्तनयोः शम्भुरूपत्वाच्छम्भुध्वस्ताङ्गः कामोऽनङ्गो यातुधानतया स्तनशम्भूनाविश्य मूलतो दग्धुं हृच्छयः सन् शिवस्याप्यशिवमाचरत्तथा च शिवशिवस्य हरिकराशिवं विना सम्भवात्कराशिवस्य तत्र विनिवेशे तेन च भूताविष्टपीडने भूतोपशगमालक्ष्य स्तनमर्दनेनैव स्तनशम्भुकामज्वरानिवृत्तौ नूपुरमेखलाकूजनव्याजेन हररक्षणहरिविजयवाद्यध्वनिरभवत् ॥ १४ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

कस्याश्चित्तु नाट्येन नृत्येन विक्षिप्ते चञ्चले च स्वाभाविकी गण्डत्विड् तत्समाहारः गण्डत्विषं तेन मण्डितं स्वगण्डं श्रीकृष्णगण्डे श्रमनिरासमनोरथेन सन्दधत्याः संयोजयन्त्याः मुखं स्वसम्मुखं कृत्वा ताम्बूलचार्वितं प्रादात् सैव्याख्येयं सखी ॥ १३ ॥

अत्र काचित्पदावृत्त्या द्वे सखी प्रोक्ते इति ज्ञातव्यं तथाच कूजन्ती नूपुरे मेखला च यस्याः सा नृत्यन्ती काचित्पार्श्वस्थाच्युतहस्ताब्जं श्रमजनिततापनिवर्तकम् अतः शिवं श्रमशान्त्यर्थमआलिना अधात् गृहीतवती पूर्वंवद्धस्तग्रहणानुसारात् चन्द्रावलीसंज्ञेयं सखी काचित्तु गायती तद्धस्ताब्जं शिवं श्रान्त्वा सती श्रमनिवृत्त्यर्थं स्तनयोरधात् चन्द्रावलीसहचर्य्याः स्तनयोर्धारणस्य पूर्वं साम्याच्च पद्माख्या चन्द्रावली सुहृद्गता सखायं भद्रासंज्ञा अष्टमीतु पूर्ववद्विष्णुपुराणादवगन्तव्या—

गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम् ।
गृहीतकण्ठयस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥
कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।
गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥ १६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

काचित्परिलसद्बाहुः परिरभ्य चुचुम्ब तम् ।
गोपीगीतस्तुतिव्याजनिपुणा मधुसूदन मिति तच्छ्लोकेः ॥१४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नाट्येन नृत्येन विक्षिप्तयोः इतस्ततश्चलमानयोः कुण्डलयोस्त्विषेण त्विषा कान्त्या मण्डितं गण्डं कपोलं स्वगण्डे सम्यक् दधत्या योजयन्त्याः कस्याश्चित्ताम्बूलचर्वितं प्रादात् ॥ १३ ॥

नृत्यती गायती च कूजन्ती नूपुरे मेखला च यस्याः सा एवं भूता श्रान्ता सती शिवं सुखदम् अच्युतहस्ताब्जं स्तनयोरधात् स्वहस्ताभ्यां गृहीत्वेति शेषः ॥ १४ ॥

भाषा टीका ।

कोई गोपी बहुत नृत्य के होने से चञ्चल जो कुंडल तिन कि कांति से शोभित अपने गंडस्थल को भगवान् के गंडस्थल में संयुक्त करती भई तब भगवान् ने अपना तांबूल चर्वित उस को प्रदान किया ॥ १३ ॥

किसी गोपीने नाचने में गाने में कौंधनी तथा नूपुरों के शब्दों के होते समय थक जाने से अपने पार्श्व में विद्यमान अच्युत भगवान् के सुख दायक हस्त कमल को अपने स्तनों पर धारण करलिया ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवमन्या अपि गोप्यो यथायथं नानाविधैर्विजह्रुरित्याह । गोप्य इति ॥ १५ ॥

तत्र वादकेषु गायकेषु गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसम्पत्तिं दर्शयन् रासस‌म्भ्रममाह । कर्णोत्पलेति । कर्णोत्पलैश्चालकविटङ्कैरलङ्कृतैः कपोलैश्च घर्मैश्च वक्त्रेषु श्रीः शोभा यासां ताः गोप्यः किङ्किण्यः वलयनूपुरघोषैर्वाद्यैः स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः एतेन तालगतिसन्तुष्टाः केशाः सशिरःकम्पम्पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितं भगवता सह ननृतुः भ्रमरा एव गायका यस्यां रासभायाम् ॥ १६ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अच्युतं कस्माचिदपि रूपगुणादिमाहात्म्यात् च्युतिरहितं सुस्थिरं वा कान्तं रमणं लब्ध्वा तस्य दुर्लभतामाह । श्रिय एव नत्वन्यजनस्य एकान्तेन एकनिष्ठया वल्लभं यद्वा श्रियः कान्तं वल्लभम् आत्मनश्चैकान्तवल्लभं नितान्तप्रेष्ठं लब्ध्वा इति श्रियोऽपि सकाशात् तासां माहात्म्यमभिप्रेतं तदेव दर्शयति । गृहीतेति । तथाच गास्यते श्रीमदुद्धवेन "नायं श्रियोऽङ्ग उचितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः । रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषा" मित्यादि ॥ १५ ॥

कर्णेति । तासां रासेन परमा शोभोक्ता यद्वा परिश्रान्तिः सूचिता तथापि नृत्ये हेतुमाह । भगवता निजाशेषैश्वर्यसारसर्वस्वं प्रकटयता सममिति तत्साहित्यस्य परममोहनत्वात् यतो गोप्यः तदेकप्रेमपरवशा इत्यर्थः । तेन सममिलनेन तासां तत्सदृशं वैदग्ध्यादिकमपि व्यञ्जितं तथा तासामिव तस्यापि कर्णोत्पलादिकं सर्वं बोध्यते अन्यैस्तुर्व्याख्यातं तत्र वादकेष्विति दुन्दुभिनादाभिप्रायेण किन्नरादिष्विति च दिवौकसामित्युक्तेस्तदन्तर्गतत्वसम्भावनमिति अथवा उक्तं भीतोऽप्यधिकमाहात्म्यमेव दर्शयति किंवा पूर्वं गन्धर्वपतिने गानादिकमुक्तम् अधुना रासंरम्भेण तासां न काचिदन्यतो गीताद्यपेक्षेत्याह । कर्णेति अर्थः स एव ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अच्युतं कस्माच्चिदपि रूपगुणादिमाहात्म्याच्च्युतिरहितम् । तस्य दुर्लभतामाह । श्रियोऽपि एकान्तं वैकुण्ठनाथादितोऽप्यतिशयान्वितान्तं वल्लभं यद्वाञ्छया श्रीर्ललनाचरत्तप इत्यनुसारेण प्रेमविषयं नतु लब्धं तं कान्तं रमणं लब्ध्वा । यद्वा । श्रियः कान्तं कामनास्पदम् एकान्तवल्लभं स्वैकनिष्ठप्रियतमं लब्ध्वा न केवलं लाभः किन्तु स्वल्पमपि विश्लेषमसहमानेन तेन स्वदोर्भ्यां गृहीतः कण्ठो यासां तादृश्य इत्यर्थः । अत एवातिप्रेमानन्देन तमेव गायन्त्यो विजह्रिरे इति । एवं श्रियोऽपि सकाशात्तासामतिमाहात्म्यमभिव्यक्तं तथैव गास्यते श्रीमदुद्धवेन "नायं श्रियोऽङ्ग उचितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः । रासोत्सवेऽस्य भुजदण्ड गृहीतकण्ठलब्धाशिषां य उदगाद्व्रजसुन्दरीणा" मित्यादि ॥ १५ ॥

तथैव तासां माहात्म्यं दर्शयति । कर्णेति द्वाभ्याम् । कर्णेति तासां रासेन श्रमेऽपि परमशोभा दर्शिता तथापि नृत्ये हेतुमाह । भगवता निजाशेषमाधुर्यसारसर्वस्वं प्रकटयता सममिति । तत्साहित्यस्य परमोल्लासकत्वात् यतो गोप्यस्तदेकप्रेमवशत्वेन प्रसिद्धा इत्यर्थः । तेन सममिलनेन तासां तत्सदृशवैदग्ध्यादिकमपि सूचितं तथा तासामिव तस्यापि कर्णोत्पलेत्यादिकं सर्वं बोध्यते । उत्पलधारणञ्च सम्प्रति श्रीकृष्ण-

१ रासगोष्ठ्य इति शुकपक्षीय पाठः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नैव कारितमिति ज्ञेयम् । भ्रमरगायकेति । तत्तदुचितगानसमर्थत्वात्तेषाम् असाधारणत्वं व्यञ्जितम् । अन्यत्तैः । तत्र वादकेष्विति दुन्दुभिनादाभिप्रायेण ताद्धि नादादिकं तेषां तन्नृत्यानुकूलमेवासीदिति तत्सम्मतम् । किन्नरादिष्विति च दिवौकसामित्युक्तेस्तदन्तर्गतत्वसम्भावनयेति । एवं तत्र तासां न काचिदन्यतो गीतादेरप्यपेक्षा किन्तु स्वानन्देनैव तेषां मध्ये मध्ये वादनादिचेष्टितमिति ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्णोत्पलालकाभ्यालङ्कारवन्मुखं यासां ताः यासां गोष्ठीषु भ्रमरा एव गायकाः ता भ्रमरगायकरासगोष्ठ्यः ॥ १६—२१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमन्या अपि गोप्यः यथायथं नानाविधैर्विभ्रमैर्विजन्हुरित्याह । गोप्य इति । श्रियो लक्ष्म्या एकान्तवल्लभमनन्यपतिं लब्ध्वा तस्याच्युतस्य दोर्भ्यां गृहीताः कण्ठा यासां तास्तमच्युतं गायन्त्यो विजह्रिरे ॥ १५ ॥

तत्र वादकेषु गायकेषु च सम्राकेषु गन्धर्वकिन्नरादिषु रसावेशेन मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसंपत्तिं दर्शयन् राससम्भ्रममाह कर्णोत्पलेति । कर्णोत्पलैः कर्णावतंसैरुत्पलैश्चालकविटङ्कैरलङ्कारालङ्कृतैः कपोलैश्च घर्मैः स्वेदबिन्दुभिश्च वक्त्रेषु श्रीः शोभा यासां ता गोप्यः घोषाः किङ्किण्यः वलयादिभिर्वाद्यैः वादित्रैश्च भगवता सह भ्रमरा एव गायका यस्यां तस्यां राससभायां ननृतुः कथंभूताः स्वकेशेभ्यः स्रस्ताः स्रजो यासां तथाभूताः एतेन तालललितगतिसंतुष्टाः केशा सशिरःकम्पाः पादेषु पुष्पवृष्टिमिवाकुर्वन्नित्युत्प्रेक्षितम् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गृहीतकण्ठ्य आलिङ्गितकण्ठ्यः एकान्तवल्लभं निर्णीतनियतभर्तारं विजह्रिरे क्रीडां चक्रुः ॥ १५ ॥

कर्णोत्पलम् अलकः कुन्तलकश्च कर्णोत्पलालकौ ताभ्यां विटङ्कं कपोलं कपोलस्य विटङ्कोऽलंकारः घर्मस्तेन स्वेदजलं लक्ष्यते कपोलालङ्कारस्वेदजलेन च वक्त्राणां श्रीः शोभा यासां तास्तथा वलयनूपुरलक्षणवाद्यघोषैः समं भगवता च समं भ्रमरा एव गायकाः अनु स्वरदानकरा यस्यां सा तथा भ्रमरगायकरासगोष्ठी रासक्रीडा तस्याम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तास्याः गोप्याः । यद्वा श्रियोऽपि एकान्तं वैकुण्ठनाथादितोऽप्यतिशयात् प्रेमविषयं ननु लब्धं तं कान्तं रमणं लब्ध्वा न केवलं लाभः किन्तु स्वल्पमपि विश्लेषमसहमानेन तेन स्वदोर्भ्यां गृहीताः कण्ठा यासां तादृश्य इत्यर्थः ॥ १५ ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

अथ क्षणं विश्रम्य पुनर्विहारमारेभिरे इत्याह । गोप्य इत्यादि गोप्यः श्रियः गोपीरूपा याः श्रियः शोभाः एकान्तवल्लभम् अतिदयितं कान्तं कमनीयमच्युतं लब्ध्वा तद्दोर्भ्यामच्युतभुजाभ्यां गृहीतकण्ठ्यस्तं गायन्त्यस्तत्क्षणकृतेन तद्गुणरूपमाधुर्य्यवर्णनगीतपदेन नानारागादिकौशलेन गायन्त्यो विजह्रिरे ननृतुरित्यर्थः ॥ १५ ॥

इदानीं भगवता सह ननृतुरित्याह । कर्णोत्पलेत्यादि । गोप्यो भगवता समं ननृतुः भगवान् यथा ननर्त्त तथेत्यर्थः समशब्दः सहार्थः सदृशार्थश्च अर्थयोर्युगपद्भासनात् तत्र नृत्यं तावद्द्विविधं भवति निर्गीतं सगीतं च निर्गीतं केवलवाद्यमात्रेण मन्दमन्देन सतालेन मुखकण्ठभ्रूनेत्रादिकम्पनेन शनैः शनैर्नृत्यं सगीतं गीतार्थानुरूपं हस्तकादिगतिविशेषवत् तत्र प्रथमं निर्गीतमेवेदं नृत्यमिति भ्रमरा गायका यत्रेति गीतान्तराभावः कर्णोत्पलैश्च अलकविटङ्कैरलकविभ्रमैश्च कपोलघर्मैश्च वक्त्रेषु श्रीर्यासां मुखनेत्रग्रीवादिदोलनेन चलद्भिः कर्णोत्पलैश्चलद्भिरलकविटङ्कैः स्फुरद्भिः कपोलघर्मैश्चेत्यर्थः । वलयानां नूपुराणां घोषा एव वाद्यानि तैः अन्यवाद्यैरपि तदावृतमेव एतेन पूर्वं वाद्यान्तरमप्यासीदिति मन्तव्यं तदातु भ्रमरगीतवलयादिवाद्याभ्यामेव नृत्यमित्यर्थः । स्वकेशेषु स्रस्तं स्रंसनं यासां तथाभूताः स्रजो यासां तास्तथा स्वकेशेभ्यः स्रंसमानस्रज इत्यर्थः । मद्धस्रंसमानस्रक्त्वेन केशानां शोभातिशयः स्वशब्दो भगवद्व्यतिरेकार्थः तस्यतु केशेषु तथैव स्रक् वर्त्तत इति भावः १६ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ॥

एवं षण्णां स्वरूपमुक्त्वा स्वरूपेण सर्वासां साधारणीं लीलामाह । गोप्य इति । अच्युतः कान्तो भगवानेव भवति; अन्तर्बहिश्च नित्यानन्ददार्यी अत एव सर्वस्त्रीणां मूलभूतायाः श्रिय एकान्ततो वल्लभः परमः प्रियः तादृशं लब्ध्वा तमेव गायन्त्यो विजह्रिरे ननु परमानन्दे प्राप्ते क्रियाया अपगम एवोचितः ननु पुनः क्रिया तत्कथं विहार इति चेत्तत्राह । तद्दोर्भ्यां गृहीतकण्ठ्य इति । भगवत्क्रिययैव व्याप्ताः नतुस्वक्रिया काचित् कण्ठे क्रियायाः स्थापितत्वात् गानं क्रिया च संभवतः इयं क्रियाशक्तिरूपेति स्वातन्त्र्यं तासां निरूपितम् ॥ १५ ॥

अतःपरं राधादामोदरवत् उभयोर्नृत्यमाह । कर्णेति । रासाधर्मेवैतदपि परं प्रत्येकं रस उत्पद्यत इति गोष्ठीमात्रमुक्तम् उभयोर्गाढवृत्त्ये विनियोगात् भ्रमरो गायकः वाद्यन्तु पूर्ववदेव भविष्यति तदाह । वलयनूपुरघोषवाद्यैरिति । वलयानां नूपुराणां घोषशब्देन किङ्किणीनां शब्दा एव वाद्यशब्दाः अत्यन्तं नृत्याभिनिवेशार्थं स्वकेशात् स्रस्ताः स्रजो यासामित्युक्तं नृत्यारम्भे तासां शोभामाह । कर्णेति । अन्यथा पूर्वोक्तनृत्येन श्रान्तानां पुनर्नृत्यमनुचितमेव स्यात् नवा रसालं कर्णे उत्पलस्थापनं तस्य अपातने चातुर्यार्थं तत्सहिताः अलकाः भ्रमरा इव रसपातारः तेषां विटङ्कः अलं-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

करणरूपं स्थानम् एतादृशौ कपोलौ तत्र यो घर्मः अन्तरुद्गतश्रमजलं नृत्याभिनिवेशाज्जातं तैः कृत्वा वक्त्रे श्रीरलौकिकी काचित्संपन्ना यथा मुक्ताभिर्मण्डितं भवति कपोलद्वयम् अनेन मुखे श्रमो निवारितः ताभिः सह भगवतः नृत्ये अनुभावकश्च भवति स्वतो वा क्रीडानिवृत्तिरनेन सूचिता गोप्य इति भगवत एव तासामेतावत्त्वं न स्वत इति ज्ञापितम् अतो भगवता समं यथा यथा भगवान्नृत्यति तथा तथा ता अपि नृत्यन्तीति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवमन्या अपि गोप्यः स्वस्वभावानुसारिण्यो विजह्रुरित्याह । गोप्य इति । अत्र "यद्वाञ्छया श्रीर्ललनाचरत्तप" इति । नागपत्नीस्तुत्या "नायं श्रियोऽङ्ग उचितान्तरतेः प्रसाद" इत्युद्धवोक्त्या च श्रीःप्रेक्ष्य कृष्णसौन्दर्यं तत्र लुब्धाचरत्तप इति भागवतामृतोत्थापितपौराणिककथया च नारायणकान्तायाः श्रियः कृष्णसङ्गासम्भवादेवं व्याख्येयम् । कान्तं कमनीयमच्युतं कृष्णमेकान्तवल्लभं लब्ध्वा विजह्रिरे । तद्दोर्भ्यां कृष्णभुजाभ्यां गृहीताः कण्ठा यासां ताः । श्रियः श्रिय इवेत्यर्थः । सा यथा नारायणवक्षोगृहीतगात्री एता गोप्योऽपि तथा कृष्णभुजगृहीतकण्ठ्य इत्यर्थः । यद्वा नारायणेनैक्यात् कृष्णस्यापि श्रीवल्लभता ॥ १५ ॥

पृथक् पृथक् गाननृत्यादिसाद्गुण्यशोभामुक्त्वा समुदितनृत्यजनितवक्त्रादि शोभां विवृणोति । कर्णोत्पलेषु । कर्णधृतोत्पलोपलक्षितचक्रिका—कुण्डलेषु अलकानामतिलौल्याद्विविधा मुक्ता वेष्टनानि च कपोलेषु घर्मविन्दवश्च तैर्वक्त्रेषु श्रीः शोभा यासां ताः टीके वन्धे । वलयनूपुराद्यलङ्काराणां घोषस्तुल्यस्वरतया नादो येषु तैर्वाद्यैः तत्रानद्धशुषिरैस्तत्तदधिष्ठातृदेवताभिरेव स्वसफलीकरणार्थमागत्य वादितैः स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः । एतेन तालगतिसन्तुष्टाः केशाः सशिरःकम्पं पुष्पवृष्टिमिवाकुर्वन्निति श्रीस्वामिचरणाः । भ्रमरा अपि गायका यस्यां तस्यां रासगोष्ठ्यां राससभायाम् ॥१६॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

सहचरीणां चेष्टितमाह । गोप्य इति । गोपयन्ति सर्वथा पालयन्ति निजनाथाविति यद्वा गोपयन्त्यात्मसुखे निःक्षेपयन्तीति यद्वा तयोः प्रिययोरन्योऽन्यासक्तिं गोपयन्ति ता गोप्यः यद्वा गोशब्देनेन्द्रियाणि नेत्रादीनि तानि दर्शनादिना पान्ति रक्षन्ति ताः गोप्यः सख्य इत्यर्थः । श्रियः श्रयते हरिरेनामिति श्रीः स्वाधीनपतिका तस्याः परमरमायाः कान्तं तन्मुखैकपर्य्यवसितात्मसुखम् अच्युतं दृढप्रमाणं लब्ध्वा ईदृशेऽनेकनायिकासमुदायेऽपि तदेकनाथावन्तं ज्ञात्वा तन एवैकान्तवल्लभं तस्या एव परमप्रेष्ठं मत्वा लब्धपरमानन्दाः तद्दोर्भ्यां गृहीतकण्ठ्यः ननु स्वदोर्भ्यामिति कान्तभावनासक्तिः सौहृदञ्च सूचितं श्रीराधिकानागरमेव गायन्त्यः तद्गानं यथा श्रीमत्सुधानिधौ—

> अहोरसिकशेखरः स्फुरति कोऽपि वृन्दाटवी
> निकुञ्जनवनागरीकुचकिशोरकेलिप्रियः ॥
> करोतु स कृपां सखीप्रकटपूर्णनाट्योत्सवो
> निजप्रियतमापदे मधुमये दधद्यः शिरः

यथा वा—

> प्रत्यङ्गोच्छलदुज्ज्वलामृतरसे प्रेमैकपूर्णाम्बुधि-
> र्लावण्यैकसुधानिधिः पुरुकृपा वात्सल्यसाराम्बुधिः ॥
> तारुण्यप्रथमप्रवेशविलसन्माधुर्य्यसाम्राज्यभू—
> र्गुप्तः कोऽपि महानिधिर्विजयते राधारसैकावधिः ॥

इत्यादि बहुशः विजह्रिरे विहृतवत्यः रास क्रीडादिना इति शेषः शुद्धसहचरीणामयमेव विहार इतिसूचितं यथा तत्रैव—

> कदातु मणिकिङ्किणीवलयनूपुरप्रोल्लस—
> न्महामधुरमण्डलाद्भुतविलासरासोत्सवे ॥
> अपि प्रणयिनो वृहद्भुजगृहीतकण्ठ्यो वयं
> परं निजरसेश्वरीचरणलक्ष्म वीक्षामहे ॥

तदेवं सर्वथा श्रीराधिकतानताख्यापनायैवायं श्रीरासलीलासमुद्यमः श्रीभगवत इति साधु व्याख्यातम् एतदभिप्रायेणैवाह श्रीजयदेवः—

> कंसारिरपि संसारवासनाबद्धश्रृङ्खलाम् ।
> राधामाधाय हृदये तत्याज व्रजसुन्दरीमिति ॥

तदेवं श्रीकृष्णस्यापि प्रियामनु परमानुकूल्यं दर्शितं तदुक्तं श्रीमदुज्ज्वले—

> राधायामेव कृष्णस्य सुप्रसिद्धानुकूलतेति ।

सर्वमनवद्यम् ॥ १५ ॥

अत एवैतासां पूर्वोक्ताभ्यां विलक्षणरसावेशवैभवद्यमावेदयति । कर्णेति । गोप्यः पूर्वश्लोकोक्ताः सहचर्य्यः अभ्यासेन गोपीपदस्यात्रैव मुख्या वृत्तिरिति सूचयति भगवता किशोरीरमणेन नित्यविहारिणा समं ननृतुरित्यन्वयः सिक्षाभ्यासपाटववलेन नृत्यमनुचक्रुरित्यर्थः । कीदृश्यः । कर्णेति कर्णोत्पलानि उत्पलाकृतीनि कर्णभूषणानि तानि च सौवर्णानीति गोपिकास्थानीयानि वर्णसाम्यात् अलकाश्चूर्णकुन्तलास्तेच श्रीकृष्णस्थानीयाः तयोर्विटं परस्परावद्धकरानुकारः संप्राप्तत्वमितियावत् कपोलेषु रक्ताङ्गस्थानीयेषु घर्म्मश्च कालिन्दीप्रवाहस्थानीयः तेन तेन च वक्त्राणां श्रीर्विलक्षणा रासमण्डलशोभा यासां ताः तथा वलयानां नूपुराणां च घोषा एव वाद्यविशेषास्तैरुपलक्षिताः तथा स्वस्वकेशेभ्यः स्रस्ताः पुष्पस्रजो यासामिति पुष्पवृष्ट्यनुकरणं कुर्वन्त्यत आह । भ्रमरेति । यत्र भ्रमरा एव गायकास्तादृश्यां रासगोष्ठ्यामिति रासरूपायां परिषदि इत्यर्थः । तासां तत्सम्बन्धिनामङ्गोपाङ्गानां सर्वेषामपि जडानामजडानां च परमरसावेशो दर्शित इति दिक् ॥ १६ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

सर्वासां भाग्यसुखविहारौ निरूपयति । गोप्यो लब्ध्वेति । ता गोप्योऽपि यतो गोप्यो गवामिन्द्रियाणां वागादीनां पालनशीलास्तदेकपरतयैवात्मनश्च तदितरसवन्धरूपसंसारात्तदभानात्मकनाशिराद्य रक्षणशीला अतोऽच्युतं कुतश्चिदपि गुणशीलैश्वर्य्यस्वरूपमाहात्म्याच्च्युतिरहितं कान्तं कान्तिमन्तं कानां सर्वसुखानां पर्य्यवसा-

### श्रीरामनारायणकृतभावभावविभाविका ।

नास्पदं वा तथा श्रिय एकान्तवल्लभं लक्ष्म्यापि सर्वानुत्सृज्यैकान्तवल्लभतया नितरां सेवितं यद्वाञ्छया श्रीर्ललनाचरत्तप इत्यादिवचनात् यद्वा श्रियस्तद्रूपायाः श्रीराधाया एवैकान्तवल्लभमपि स्वकान्तं लब्ध्वा तथा च तदेकान्तवल्लभत्वात्तत्कृपया तदंशानुप्रवेशादेव कान्तं प्राप्यं श्रियः कान्तमेकान्तवल्लभं लब्ध्वेति वान्वयः न केवलं लाभमात्रमपितु तदिति तल्लाभानन्तरमेव दोर्भ्यां गृहीतकण्ठ्यः दोर्भ्यां भुजभुजगपाशेन गृहीतः कण्ठो याभिस्ताः तथा च चित्रोऽयं भुजभुजगपाशः भुजगपाशनिवर्तकखगपतिपतेरपि वध्वा वध्वा सह नर्तकत्वात् भवबन्धमोचकस्य नित्यमुक्तस्यापि मुकुन्दस्य बन्धकत्वात् बन्धस्य दुष्टतयैवाकामैरपि बन्धमुक्तिकामदर्शनेऽप्यस्य बन्धस्य नित्यमुक्तमुकुन्दाभिकामित्वात्तद्विश्रामप्रदत्वात् यद्वा तद्दोर्भ्यां तस्य बाहुभ्यां गृहीतः कण्ठो यासां तास्तं गायन्त्यः तद्गुणानेव गीतप्रबन्धादिषु वर्णयन्त्यस्तेन सह विजह्रिरे विहारं चक्रिरे इदमप्यतिवैचित्र्यं प्रेमपथभुजबन्धस्य येन बद्धास्तद्गुणगानमिति अत्र यथा ता अन्तः कृष्णगुणैर्बद्धास्तथा कृष्णोऽपि तद्धितपाशेन निबद्धः परस्परं भुजबन्धनं तु बहिस्तन्निदर्शनं तत्र महत्कौशलं तासां प्रथमं तद्गुणैर्बद्धास्तं बबन्धुरिति महच्चित्रं तत्परस्परं निबद्धा एव विजह्रिरे इति वर्णितमपि तासां सौभाग्यं श्रीमदुद्धवेन—

> नायं श्रियोऽङ्ग उचितान्तरतेः प्रसादः
> स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ॥
> रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ----
> लब्धाशिषां य उदगाद्व्रजसुन्दरीणाम् ॥

इति ॥ १५ ॥

भगवता सह तासां गाननृत्यशोभामाह । कर्णोत्पलेति । भ्रमरगायकरासगोष्ठ्यां वलयनूपुरघोषवाद्यैर्गोप्यो भगवता समं ननृतुरित्यन्वयः अत्रायम्भावः देवगन्धर्वेषु पूर्वं भगवद्रासोत्सवोत्साहेन तद्गुणगानप्रवृत्तेषु तासां गाननृत्यवैचित्र्यदर्शनेन तत्तानवितानमूर्च्छनादिसौष्ठवं नृत्यगतिवैचित्र्यं चानवगत्य मुह्यत्सु तत्समं गातुमशक्नुवत्सु तासां च गाढनृत्योत्साहेन गानविरामे रासगोष्ठ्यां तत्तनुसुमनः सुरभिलुब्धसुमनसो भ्रमरा एव केवलं गायका आसंस्ततस्तद्गायकरासगोष्ठ्यां यद्वा भ्रमन् रौतीति भ्रमरः तद्गाननृत्यगतिगतिमनवगत्य भ्रमितचित्तत्वेऽपि गुणगानरसलुब्धतया नत्यक्तुमशक्ता भ्रमन्मतय एव गुणगानरवं कुर्वन्तो भ्रमराः सर्वे गायका गन्धर्वादयः प्रेमवैचित्र्येण भ्रमन्मतय एव रवं कुर्वन्तो गायकाः गोपीजनाश्च यस्यां तादृग्गोष्ठ्यां यद्वा नभसि हरेस्तान् गुणान् गायन्तोऽपि नभःप्रसरत्तदङ्गसौरभरभसाकृष्टमतयस्तद्रूपेण रासप्रवेशाधिकारमनालक्ष्य भ्रमररूपा एव गायका गन्धर्वादयः परस्पराङ्गसुरभिमत्ततया रूपमधुपानरततयाच भ्रमरदशापन्नत्वेऽपि परस्परगुणगायका हरितत्सख्यो वा यस्यां तद्रासगोष्ठ्यां वलयानां मणिजटितकङ्कणानां नूपुराणाञ्च रूपसुधामानसरसि करचरणकमलयोर्भ्रमरत्वपरतया भ्रमरगुञ्जारवच्छन्दायमानानां घोषैर्विबुधविबुधाविविधवाद्यैश्च ननृतुः यद्वा वादकेषु देवादिषु पूर्ववर्णितदिशा मुह्यत्सु वलयनूपुरघोषा एव गीतगत्यनुसृतवाद्यानि तैर्गोप्यो भगवता समं सहेत्यर्थः । ननृतुर्नार्तितवत्यः यद्वा विचित्रमिदं देवादिषु तद्गतौ मुह्यत्सु गोप्योऽपि भ्राम्या अपि भगवता सर्वकलादिगुरुणा समं तुल्यमन्यूनं ननृतुः यद्वा देवादिषु मुह्यत्सु गोप्योऽपि समं तुल्यमप्रच्युततालादिना ननृतुस्तत्तु भगवतैव निमित्तभूतेन तथा ननृतुः किंभूतास्तास्तदाह । कर्णोत्पलेत्यादि । कर्णेषु कृष्णेनानीय लम्बितोत्पलानि यद्वोत्पलाकाररत्नाञ्चितभूषणानि तान्येवोत्पलानि तथा अलं पूर्णं कं सुखं येभ्यस्तथा भूता अलकाः कुण्डलिताः कुन्तलाः ते एवालपवलयास्तैर्विटङ्कैः अलंकृते कपोले माधुर्यसरसी तत्र घर्मः पयोच्चलितरूपरसतरङ्गस्तेन श्रीपद्मवक्त्रपद्मश्रीर्यासां पुनः किंभूताः स्वकेशस्रस्तस्रजः स्वकः स्वीय ईशः स्वामी कृष्णः यद्वा स्वीयं यत्कं सुखं तस्मिन्नीशः समर्थः यद्वा स्वस्मिन्नेव कं सुखं येषां तेषामात्मारामभुनीनामपीश आराध्यः यद्वा स्वक आत्मारामश्चासावेवेशश्चेति तथा यद्वा स्वस्वरूपात्मकस्य कस्य सुखस्य दाने ईशः यद्वा स्व आत्मरूपश्चासावेव कः सुखस्वरूपश्चेशश्च स्वकेशस्तस्मिंस्तदङ्गे स्रस्ताः पतिताः संसक्ता गुणग्रथितसुमनसः स्रज एव यद्वा स स्वकेशः केशव एव तथैव गुणग्रथितसुमनस्तया स्रस्तस्रजो यासु यद्वा नृत्यगतिचापल्यस्वकेशेभ्यः स्रस्ताः निपातिताः स्रजो यासाम् अत्रायं भावः स्रजो गुणग्रथिताः सुमनसः पदसुमनसां मृदुत्वमञ्जुवर्णसुरभिगुणमोहिता लज्जया शिरसि स्थातुमशक्ताः स्वयं पदयोर्निपतन्ति यद्वा के स्वर्गे वासिन ईशा देवा इव के शिरसि वर्तमानाश्च ते एवेशाः समर्थाश्च केशास्तेषां पदानां नृत्यगतिसौष्ठवेन सन्तुष्टाः सुमनसस्तास्वभिवर्षन्ति स्वस्रजो वा ददते यद्वा वनसुमनोमालानां हरिकरपदगुणमोहितानां तत्सुमनस्त्यागवत्केशालयोऽपि तद्गुणतुष्टाः सुमनांसि त्यजन्ति यद्वा यथा भक्तानां के शिरसि राजमान ईशास्तत्पदगुणगानतुष्टस्तेभ्यः सितसत्त्वगुणान्वितसुमनो ददाति तथा तासां के शिरसि स्निग्धकृष्णकेशकेशव एव केशरूपतया वर्तमानो गतितुष्टः सुमनः प्रदानवत्सुमनो ददातीति ॥ १६ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवमुख्यानामष्टानां वृत्तमभिधाय सर्वासां तदाह । गोप्य- इति । अच्युतं स्वस्वरूपात्कदाप्यप्रच्युतं श्रिय एकान्तवल्लभं व्यभिचारिप्रेमाविषयं नतु तथात्वेन लब्धं कान्तं लब्ध्वा तत्रापि तद्दोर्भ्यां गृहीतकण्ठ्यो गायन्त्यः सत्यो विजह्रिरे यद्वा श्रियः कान्तमात्रं स्वासामेकान्तं वल्लभम् एतेन श्रियोऽप्यधिकसौभाग्यमासामुक्तं वक्ष्यतेच "नायं श्रियोऽङ्ग उचितान्तरतेः प्रसाद इति ॥ १५ ॥

तत्र गायकेषु च वादकेषु च सखीकेषु गन्धर्वादिषु रसविशेषेण मुह्यत्सु नृत्यत्सु चान्यामेव वाद्यादिसम्पत्तिं दर्शयन्नुक्तसौभाग्यं वर्णयति । कर्णेतिद्वाभ्याम् । कर्णोत्पलैश्च अलकविटङ्कैः कुटिलकुन्तलालंकृतैः कपोलैश्च घर्मैः स्वेदबिन्दुभिश्च वक्त्रेषु श्रीः शोभा यासामिति रासश्रमेऽपि शोभोक्ता ननु श्रमेऽपि कुतो नृत्ये प्रवृत्तिरित्याशङ्क्याह । भगवता सममिति । तथाच तत्साहित्याच्छ्रमोऽपि ताभिर्न गणित इति भावः यतश्च गोप्यः गोपस्य भगवतः संबन्धिन्यः तथाच भगवति नृत्यति तदनुयायिनीनां तासां विरामो नोचित इति भावः । भगवता सममित्यनेन भगवन्नृत्यसमं

एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः।
रेमे रमेशो व्रजसुन्दरीभिर्[१]यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥
तदङ्गसङ्गप्रमुदाकुलेन्द्रियाः केशान्दुकूलं कुचपट्टिकां वा।
नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ! ॥ १८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तासां नृत्यमित्यपि कथितं वलयानां नूपुराणाञ्च घोषाः शब्दायमानाः किङ्किण्यस्तद्रूपैर्वाद्यैर्वादित्रैः पुनश्च भ्रमरा एव गायका यस्यां रासस्भायां ननृतुः अनेन लोकविलक्षणता ध्वनिता तदानीं स्वकेशेभ्यः स्रस्ता विगलिताः स्रजो यासां ताः एतेन नृत्यगतिसन्तुष्टाः स्वकेशाः सशिरःकम्पं पादेषु पुष्पवृष्टिमिव चक्रुरित्युत्प्रेक्षा दर्शिता ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इत्थमन्या अपि गोप्यो नानाविलासैर्भगवता सह विजन्हुरिति वदन् तासां भाग्यातिशयं सूचयति। गोप्य इति द्वाभ्याम्। अच्युतमवांधितैश्वर्यम् श्रिय एकान्तवल्लभमनन्यपतिं कान्तं लब्ध्वा तदनन्यया भक्त्या प्राप्य विजह्रिरे अहो तासां भाग्यमिति भावः ॥ १५ ॥

वादकादीनां रसावेशेन मोहं दर्शयति। कर्णेति। कर्णोत्पलैः साभरणेषु कर्णेषु यानि शोभार्थं योजितान्युत्पलानि तैश्च अलकविटङ्कैरलकालंकृतैः कपोलैश्च घर्मैः प्रस्वेदबिन्दुभिश्च वक्त्रेषु श्रीः शोभा यासां ताः गोप्यः वलयनूपुरघोषवाद्यैः वलयनूपुरकिङ्किणीरूपैर्वादित्रैर्भगवता समं सह ननृतुः एतेन वादकानां गन्धर्वादीनां रसावेशेन मोहो दर्शितः क ननृतुः भ्रमरगायकरासगोष्ठ्याम् भ्रमराः श्रीकृष्णपादपद्मसौरभाघ्राणाकृष्टा एव गायकाः यस्यां तस्याम् एतेन गायकानां रसावेशेन मोहो दर्शितः कथम्भूताः गोप्यः स्वकेशस्रस्तस्रजः स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः एतेन तासां चरणेषु माल्यवृष्टिकराः केशा एव बभूवुः अन्येषां माल्यवृष्टिकर्तॄणां प्रशंसकानुमोदकादीनां च देवानां मोहो दर्शितः ॥ १६ ॥

---

भाषा टीका।

ऐसे सब गोपी लक्ष्मी जी के केवल एक नायक अच्युत भगवान् को जब कांत भाव से प्राप्त भई तब भगवान् ने दोनों भुजाओं से उन के कंठ ग्रहण किये रहे इसी प्रकार से उन का गान करती हुई सब गोपी विहार करती हुई॥१५॥

उन गोपीन के कर्णों में जो उत्पलों के फूल तिन से और टेढे केशों की जो कपोलोंपै शोभा तिस से और पसीना के बूंदों से जिन के मुखारविंद अति शोभित हैं और अपने केशों से माला जिनकी गिरती हुई हैं ऐसी गोपी, भौंरा जिस रास गोष्ठी में गान करने वाले हैं तिस में अपने कंकण नूपुरों के बाजों के शब्दों के साथ भगवान् के सहित नृत्य करती भई ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

यथा गोप्यो नानाविभ्रमैर्भगवता सह विजन्हुरेवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह। एवमिति। तद्विलासानभिभूतस्यैव रतौ दृष्टान्तः। यथार्भक इति। स्वप्रतिबिम्बैर्विभ्रमः क्रीडा यस्य स इव अनेनैतद्दर्शितं स्वीयमेव सर्वकलाकौशलं सौगन्ध्यलावण्यमाधुर्यादि च तासु सञ्चार्य ताभिः सह रेमे यथार्भकः स्वप्रतिबिम्बैरिति ॥ १७ ॥

तास्तु भगवद्विलासैराकुला बभूवुरित्याह। तदङ्गेति। तस्याङ्गसङ्गेन प्रकृष्टा मुत्प्रीतिस्तया आकुलान्यवशानीन्द्रियाणि यासां ताः विश्लथबन्धान्केशादीनञ्जसा प्रतिव्योढुं यथा पूर्वन्धर्तुं नालं न समर्था बभूवुः विस्रस्ता माला आभरणानि च यासां ताः ॥ १८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

परिष्वङ्गः गोपीनामाश्लेषः कराभिमर्शः तासामेव करालम्भनं यद्वा स्वकरेण तासामभिमर्शः स्तनादिस्पर्शनं स्निग्धेक्षणं तन्मुखादीनां सरसावलोकनम् उद्दामविलासः नीवीश्लथनादिः हासश्च भावोद्रेकविलसितस्मितं रमाया ईशः स्वामी इति स्वामित्वेन तस्यास्तादृशरत्ययोग्यता व्रजसुन्दरीभिरिति तासामेव तद्योग्यताभिप्रेता लक्ष्मीतोऽपि भावैश्वर्यश्रीविशेषात् तमेव दर्शयन् श्रीभगवतस्तासां च मिथःसाहित्यं दृष्टान्तेनाह। यथेति। यथा प्रतिबिम्बेन सहार्भकस्य क्वापि वैसादृश्यं नास्ति तथा ताभिः सह कृष्णस्येत्यर्थः। अनेन श्रीभगवद्वत्तेरपि शोभा सूचिता वैषम्ये तदसम्पत्तेरिति तथापि तासामिव तस्यापि प्रेमविकारो ज्ञेयः सचोक्तः श्रीपराशरेण—

गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ।
पुलकोद्गमसस्याय स्वेदाम्बुघनतां गताविति ॥

अन्यत्तैर्व्याख्यातं यद्वा प्रतिबिम्बेन विभ्रमो विलासो यस्य सोऽर्भको यथा तदेकनिष्ठः सन् अन्यत् किमप्यजानन् रमते तथायमपि यद्वा एवमुक्तप्रकारेण व्रजसुन्दरीभिर्यैः परिष्वङ्गादयस्तैस्ताभिरेव सह रेमे सोऽपि तादृशानेव परिष्वङ्गादीनकरोदिति दृष्टान्तेनाह। यथेति। अन्यत् समानम् ॥ १७ ॥

ततश्च तासामत्यन्तानन्दो ऽजनीत्याह। तदङ्गेति। तस्याङ्गैः सङ्गः आलिङ्गनादिना मिलनमङ्गसङ्गः आकुलेन्द्रियत्वलक्षणमाह। केशानित्यादिना। दुकूलं परिधानकौशेयवस्त्रं कुचपट्टिकाम्

[१] यथा स्वतन्त्रः प्रतिबिम्बं विडम्बयन् इति विज० पाठः।

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

उत्तरीयान्तरस्थसूक्ष्मवस्त्रं वा तद्द्वयमेव वा व्रजास्त्रिय इति प्रेमभरविवशतया तादृशत्वं तासामुचितमेवेति भावः । एवं तासामानन्दाधिक्यं सिद्धमेव अत एव प्रशब्दः तच्च भवता ऽवबुध्यते इत्याशयेन संबोधयति । हे कुरूद्वहेति ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमिति । तैर्व्याख्यातम् तत्रावतारिका दृष्टान्त वलादेव प्रतिपन्ना । यथार्भक इत्यादिका स एवेत्यन्तव्याख्या चास्या एवानुगता । उभयत्रापि प्रतिबिम्बस्थानीयानां श्रीगोपीनामर्भकस्थानीयस्य श्रीभगवतश्च मुहुः परस्परमनुकरणात् । तत्र च श्रीभगवत एवार्भकस्येव विलासाय स्वयं प्रवृत्तिस्तत् प्रवर्त्तनं तदीयविलासविशेषश्च लभ्यते । ततस्ताद्विलासानभिभूतस्यैव रतौ दृष्टान्त इतीदंत्वागन्तुकमिव लक्ष्यते । यत्त्वनेनैतद्दर्शितमित्यादिकं व्याख्यातम् । तत्र च ता एव तद्गुणप्रकाशिका इति प्रतिपद्यते । यथार्भकः प्रतिबिम्बद्वारत एव स्वीयमुखमाधुर्यमनुभवति नतु स्वतः तथा श्रीभगवानपि तादृशनिजप्रेयसीद्वारत एवेति हि गम्यते तासां प्रेममयमुद्रं विना तदनुदयात् । यद्वा रमाया ईशः प्रभुरपि व्रजसुन्दरीभिरेव रेमे ननु तयेति ततोऽपि तासां प्रेमगुणसौन्दर्यमधिकमभिप्रेतम् । यद्वा । रमाया ईशः प्रभुरेव नतु रमणः व्रजसुन्दरीभिस्तु रेमे तथापि तथैवाभिप्रेतं तदपि रमणमसाधारणमेवेति । सचमत्कारमाह । एवमिति । तत्र परिष्वङ्गस्तासामाश्लेषः । कराभिमर्शस्तासां करालभनं स्निग्धेक्षणं तन्मुखादीनां सरसावलोकनम् उद्दामविलासः स्तनस्पर्शनादिः हासश्च भावोद्रेकविलसितस्मितं तैः । एवं तस्य तासामपि सर्वोपरिचरगुणत्वेन परस्परं साम्यमासक्तिश्च दृष्टान्तेन व्यञ्जयति । यथेति । कश्चिदर्भकस्तद्वयः स्वभावेनात्यन्तक्रीडासक्तः स्वप्रतिबिम्बे विभ्रमो विलासो यस्य तादृशश्च यथा स्वतुल्याभिस्ताभिः स्वप्रतिमूर्त्तिभी रमेत तथासौ प्रेमवशतास्वभावेन तन्मयक्रीडासक्तः सन् स्वरूपशक्तित्वेन स्वप्रतिमूर्त्तित्वात् प्रतिबिम्बस्थानीयाभिस्ताभी रेमे । अत एव तत्सदृशत्वाभिप्रायेण पूर्वमपि गोपवध्व इत्यनुक्त्वा कृष्णवध्व इत्येवोक्तम् । तथाच ब्रह्मसंहितायाम् । "आनन्दचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामी" ति । अत्रच यथार्भको यादृशं मुखचालनादिकं कुरुते तादृशं तत्प्रतिबिम्बमूर्त्तयोऽपि यादृशं तास्तादृशमेव क्रीडाकौतुकित्वात् सोऽप्येवं श्रीकृष्णश्च श्रीगोप्यश्च परस्परमासक्तत्वादनुचक्रुरिति ज्ञेयम् । अनेन तासामिव तस्याप्यत्र स्निग्धशब्दव्यञ्जितस्नेहविकारो दर्शितः । सच सात्त्विकोऽप्युक्तः श्रीपराशरेण "गोपीकपोलसंश्लेषमभिपत्य हरेर्भुजौ । पुलकोद्गमशस्याय स्वेदाम्बुघनतां गता" चेति ॥ १७ ॥

ततश्च तासामत्यन्तानन्दवैवश्येनैव रासविरामोऽजनीत्याह । तदङ्गेति । तदङ्गसङ्गैः क्रमेण प्रकर्षं प्राप्ता या मुत् हर्षः तयाकुलेन्द्रियाः आकुलेन्द्रियतालक्षणमाह । केशानित्यादिना । दुकूलं परिधानीयं क्षौमवस्त्रं कुचपट्टिकां कञ्चुकस्थानीयमुत्तरीयम् ॥ १८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थङ्गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुः तथा भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह । एवमिति । इत्थं रमेशः श्रियः पतिर्भगवानपि व्रजसुन्दरीभिः सह परिष्वङ्गादिभी रेमे तत्र परिष्वङ्गः परिरम्भः कराभिमर्शः करेण स्तनोर्वादीनां संस्पर्शः स्निग्धेक्षणं सानुरागावलोकनम् उद्दामविलासः उदारलीलापरिष्वङ्गादिरूपं विहारं कृतवानित्यर्थः । रमेशो रेम इत्यनेनावाप्तसमस्तकामत्वादनपेक्षितविहारोऽपि सर्व कारणत्वादस्वात्मक वस्त्वन्तररहितोऽपि केवलं रेम इति सूचितं कथमेवं भूतस्य क्रीडा सङ्घटते इत्यतो दृष्टान्तमाह । यथेति । अर्भको यथा स्वप्रतिबिम्बैर्विभ्रमः क्रीडा यस्य तथाभूतो भवति तद्वत् यथा स्वप्रतिबिम्बैः स्वानन्यैरेव रमते तथा रमेशोऽपि स्वात्मिकाभिर्व्रजसुन्दरीभिः कामिनां स्त्रीपारवश्यं दर्शयन्निव रेम इत्यर्थः । अत्र बिम्बप्रतिबिम्बयोरिव स्वात्मिकानां व्रजसुन्दरीणां स्वशरीरत्वेन स्वकार्यत्वेन च स्वानन्यत्वमात्रेऽर्भकदृष्टान्तः नत्वज्ञत्वादावपीति द्रष्टव्यम् ॥ १७ ॥

तास्तु भगवतस्ताद्विलासैरनभिभूतस्य विलासैराकुला बभूवुरित्याह तदङ्गसङ्गेति । तस्य भगवतोऽङ्गसङ्गेन प्रकृष्टा मुत्प्रीतिस्तयाकुलान्यवशानि इन्द्रियाणि यासां वास्तथा विस्रस्ता विश्लथा माला आभरणानि च यासां तथाभूताः विश्लथबन्धान् केशादीनञ्जसा आशु प्रतिव्योढुं यथापूर्वं धर्त्तुं नालं न प्रबभूवुरित्यर्थः ॥ १८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ॥

स्वतन्त्र ईश्वरो विधिनिषेधाद्यविषयः प्रतिघं विधिनिषेधविवर्जितं पुरुषमनुकुर्वन् यद्वा प्रवृत्तिधर्मं "विध्याद्यगोचरे कोपे प्रवृत्ते प्रतिघं विदुरिति च ॥ १७ ॥

तस्य कृष्णस्याङ्गसङ्गेनोत्पन्नेन प्रमदेनानन्देनाकुलानि पूर्णानीन्द्रियाणि यासां तास्तथा केशादीन् वोढुं पातिं कृष्णं वा त्युक्तुम् अलं पर्याप्ताः शक्तिवर्जिता आसन्नित्यर्थः । "अपपरी वर्जने" इति सूत्रात् यद्वा शक्त्यभावेऽपि निवारिताः "अलन्तु भूषणे शक्तौ पर्याप्तौ शक्तिवारणे" इति प्रेमकामात्मत्वात् वहनादिशक्त्यभाव इत्यर्थः । कुरूद्वहेति विशेष्यसम्बोधनेन कृष्णस्य भक्तिभामिनीलोलत्वं पश्येत्यभिमुखीकरणेन भक्तेरावश्यकर्त्तव्यत्वं सूचयति ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रमाया ईशः प्रभुरपि व्रजसुन्दरीभिरेव रेमे न तु तया । यद्वा । रमाया ईशः प्रभुरेव नतु रमणः व्रजसुन्दरीभिस्तु रेमे एव ॥ १७—१८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

समं ननृतुरिति समंशब्दस्य सादृश्यार्थं स्पष्टयति । एवमित्यादि । एवमनेन प्रकारेण ये परिष्वङ्गादयः तै रमेशो रेमे काभिः व्रजसुन्दरीभिः सह साहित्येन ताश्च रेमिर इत्यायातं तेन परिष्वङ्गादयस्तस्य च तासाञ्चेत्युभयकर्तृकत्वमेव तेषां तस्मिन् परिष्व-

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

जने ताः परिष्वजन्ते तासु परिष्वजमानासु सच परिष्वजत इत्येवमादिप्रकारः एवङ्कराभिमर्शादिषु च तत्र दृष्टान्तः यथा अर्भकः अर्भक इव कीदृशोऽर्भकः स्वप्रतिबिम्बेषु स्वप्रतिच्छायासु विविधो भ्रमो यस्य स तथा अयं भावः अर्भकः स्वयं यथा चेष्टते तथा चेष्टमानायां प्रतिच्छायायां विविधं भ्राम्यति मत्सदृशः कोऽयमहं यथा करोमि तथैवायं करोतीति किम्वा ह्ययं यथा करोति तथैवाहङ्करोमीति भ्रान्तः स्तब्धो भवति तथायमपि सान्द्रानन्दस्तब्धो भवति ता अपि स्तब्धा भवन्तीत्यर्थः । अथवा स्वप्रतिबिम्बे भ्रमो विलासो यस्य स तथा स्वच्छायया यथार्भकः खेलति तथा यद्वा व्रज सुन्दरीभिः सह प्रतिविम्बविभ्रमः सन् यथार्भकः अर्भक इव स्तब्धोभूत्वा रेमे इति अयं भावः साहित्यात् तस्य तासां च स्वप्रातिबिम्बः तासु तस्मिंश्च स्वच्छभावात् लग्नः तत्र विभ्रमो विशिष्टभ्रमो यस्य स तथा पूर्वं ता अपि तथा कृष्णस्य प्रतिबिम्बे तासु लग्ने तमालोक्य किमहं नाना भूत्वा प्रत्येकमास तनुषु लग्नः किम्वाऽमी मत्प्रतिबिम्बा इति भ्रमो भवति तासामपि प्रतिबिम्बे कृष्णे लग्ने तासाञ्च भ्रमो भवतीत्युभयोरेवार्भकसादृश्येन भ्रान्तिमत्त्वं व्यङ्ग्यं सहार्थतृतीयाया विशिष्टवैशिष्ट्यवनान्वयात् यथा पुत्रेण स्थूलो गोमांश्च देवदत्त इति उभयोरेव स्थौल्यं गोमत्त्वं चेति ॥ १७ ॥

एवम्विहारे तासां पुनः प्रेमावेशतामाह । तदङ्गसङ्गेत्यादि । तदङ्गसङ्गेन या प्रकृष्टा मुद् तया आकुलानीन्द्रियाणि यासां केशान् दुकूलादीनि ध्रंसमानान्यपि प्रतिव्योढुं न अलमसमर्था इत्यर्थः अत्र प्रेमावेशोऽङ्गी श्रमोऽङ्गम् ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रादुर्भूते रसे अत्यन्तोद्गमनार्थं साक्षात्कामशास्त्रोक्ता-श्लेष्टा निरूपयति । एवमिति । आलिङ्गनादयस्तत्र निरूपिताः एवमेव रसोद्गमनार्थं परिष्वङ्गः आलिङ्गनं ततः कराभिमर्शः तत्तदवयवेषु भगवद्धस्तस्पर्शः ततः स्निग्धेक्षणं भावोद्गारि तत उद्दामो विलासः अमर्यादो भोगः ततो हास्यानि पूर्णमनोरथानमेवं परिष्वङ्गादिहासान्ताः सर्वासु ननु प्राकृताभिः कथं रेमे तत्राह । रमेश इति । रमाया ईशः सर्वत्र तासु रमापि भगवदाज्ञया निविष्टा ता अपि अधिष्ठानयोग्या इत्याह । व्रजसुन्दरीभिरिति । नन्वात्मारामः कथमेनाभी रेमे लक्ष्मीस्तु ब्रह्मानन्द इति ब्रह्मानन्दे रमणमुचितमपि एतास्वावेशोऽप्यनुचितः ब्रह्मभावाभावादितिचेत्तत्राह । यथार्भक इति । बालको हि दर्पणजलादिकं पुरतः स्थापयित्वा तत्र तत्रात्मानं पश्यन् रमते तथा भगवानपि स्वसामर्थ्यं स्वरूपं वा तत्र स्थापयित्वा ब्रह्म ब्रह्मानन्दञ्चाविर्भावयित्वा रेमे नन्वेतदप्यनुचितं किमनेनेति चेत्तत्राह । यथार्भकः यथा बाललीलां कृतवान् तथैतदपि कृतवानित्यर्थः । यद्वा कदाचित्प्रकारसाम्येऽपि नैतद्रसानुभवो लक्ष्म्यां भवितुमर्हति किन्त्वेतास्वेवेति ज्ञापयति पदद्वयेन रमेशो व्रजसुन्दरीभिरिति रमाया ईशः स्वामी भर्त्तेति यावत् एतास्तु व्रजसंबन्धिन्योऽन्यसंबन्धिन्यः सुन्दर्यो ननु विवाहिता इति रमारमणदशायामेतादृग्रसानुभवो नोभयोरपि सम्भवति रसस्वरूपस्यैव तादृशत्वादिति भावः । नन्वीश्वरं नेदमुचितमित्यत आह । यथार्भक इति—

> संमुह्य नवनीतमन्तिकमणिस्तम्भे ।
> स्वाविम्बोद्गमं दृष्ट्वे—

त्यादिवाक्यनिरूपितमुग्धलीला वान्यथा निरूप्यते पूर्णज्ञानोऽपि तद्रसस्वरूपस्य तथात्वात्तथेहापि "रसो वै स" इतिश्रुतेरिदं सर्वं रसमध्यपातित्वेन स्वरूपात्मकमेवेति तदुच्यत इति नानुपपत्तिः काचिच्छङ्काया एवानुदयादिति भावः । एतेन यथा प्रभुस्तद्भावो वा तथैता एतद्भावोऽपीति ज्ञापितं भवति तथा प्रतिबिम्बस्वभावात् अत्र रमणं बहूनामप्येकदा भवति द्वयोश्च अग्रे तु प्रत्येकपर्यवसानं वक्ष्यति ॥ १७ ॥

एवं सर्वभावेन भगवद्धर्मावेशे तासां देहादिविस्मरणपूर्वकं महारसाभिनिवेशमाह । तदङ्गेति । तस्य भगवतः अङ्गसङ्गेन यः प्रकृष्टो मदः देहादिविस्मारको भाव उत्पन्नः तेनाकुलानीन्द्रियाणि यासां सर्वेतिकर्त्तव्यतामूढा जाताः ततः केशपाशान् परिहितं दुकूलं कुचपट्टिकां वा स्वयमञ्जसा सामस्त्येन प्रतिसम्मुखतया विशेषेण वोढुमलं न जाताः पुनरल्पेनैव तथा विधा जाता इत्यत्र हेतुमाह । व्रजस्त्रिय इति । श्रमोऽपि जात इत्याह । विस्रस्तमालाभरणा इति । आकुलेन्द्रियत्वान्न विचारो लौकिकः गोपिकात्वान्न पारमार्थिकः श्रमोऽत्र दैहिकः अत आद्यन्तमध्येषु तासु युक्ता भगवतैव धृता नताभिरित्यर्थः । यद्यप्यन्यप्रतीत्या ध्रियमाणा इव तथापि न स्वतो धारणं कुरुद्वहेति सम्बोधनमभ्रमाय विश्वासार्थञ्च ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं रासनृत्याङ्गैरेव कृष्णस्य सम्भोगाङ्गान्यपि निर्वृत्तानीत्याह । परिष्वङ्ग आलिङ्गनम् एकैकया सह युग्मनृत्ये । करेणाभिमर्शः स्पर्शः सच नृत्यगतिसमाप्तौ स्वदक्षिणकरेण प्रियावामवक्षोजे तालन्यासरूपः । स्निग्धेक्षणं रहस्याङ्गेषु सप्रेमावलोकनम् उद्दामविलासः पारितोषिकप्रदानमिषाच्चुम्बनादिः । हासस्तत्तन्-प्राप्त्यनन्तरं मुखोल्लासः परिहासो वा तैः । रमेशः रमायां लक्ष्म्याम् ऐश्वर्यं प्रकटयन् व्रजसुन्दरीभिः सह रेमे ननु रमयेत्यर्थः । यथार्भको मुग्धस्तथैव तासु प्रेमाधीनत्वान्मौग्ध्यमेव दधत् तु रमायामिवैश्वर्यमित्यर्थः । ननु परःसहस्राभिस्ताभिः कथमेकः स रेमे तत्राह । स्वस्य प्रतिबिम्बं प्रतिस्वरूपमेव विभ्रमो विलासो यस्य सः । "प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् । आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचन" मित्यत्र विम्बशब्देन यथा स्वरूपमुच्यते तथैवात्रापि एकैकया प्रियया सह एकैकस्वरूपो रेमे इत्यर्थः । तासां ह्लादिनीशक्तित्वेन स्वरूपभूतत्वात् । स्वप्रतिच्छायित्वानौचित्यात् व्याख्यान्तरं नेष्टम् ॥ १७ ॥

ततश्च ता भगवद्विलासैरानन्दविह्वला बभूवुरित्याह । तदङ्गेति । प्रकृष्टा मुत् आनन्दस्तया आकुलेन्द्रियाः । कुचपट्टिकां कञ्चुलिकाम् । प्रति व्योढुं वोढुं नालं न समर्थाः ॥ १८ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

इदानीमेवं विधेऽपि रासरसावेशे श्रीभगवतः श्रीराधानुकूल्यमावेदयति । एवमिति । यथैता निजनिजरसाविष्टा भगवता सह विजह्रिरे तथैव रमेशः श्रीराधारमणस्ताभिर्व्रजसुन्दरीभिः रेमे इत्यन्वयः कैरित्यत आह । परीत्यादि । कया चित्परिष्वङ्गेन कयाचित्कराभिमर्शेन क्वचित्स्निग्धेनेक्षणेन क्वचिद्विलासेन क्वचिच्च हासेनेत्यर्थः । तैस्तैश्च परिष्वङ्गादिभिः रमया सहैव कृतैस्तासु च तत्प्रतिच्छविरूपासु प्रतिफलितैरिति रमेशपदेन सूचितं तत्र दृष्टान्तः । यथेति । अर्भकः उपचारात्प्रेममुग्ध इत्यर्थः स्वशब्दोऽत्रात्मवचनः ततश्च तस्यात्मा परमरमा श्रीराधैव तस्याः प्रतिबिम्बेष्वेव व्रजसुन्दरीषु विभ्रमो विलासो यस्य यद्वा यथा यथावत् निश्चितमेवेदमित्यर्थः । तदुक्तमलंकारकौस्तुभे—

> राधाग्रतश्च पुरतो मम पार्श्वतश्च
> राधैव मेव वसति चेतसि सर्वतश्च ॥
> लोकोऽत्र मां वदति सर्वजनोपकारी
> कृष्णोऽत्र मां स्फुरति क्वापि न राधिकान्येति ॥

एवं चार्भको यथा न स्वयं चेष्टते प्रतिबिम्बचेष्टितं दृष्ट्वैव तां तां चेष्टां करोतीति तस्मिंश्च सा सा चेष्टा बिम्बचेष्टितैनैवेति मिथुनस्य तासां च रसावेशः परमकाष्ठां प्राप्तः तथार्भक इत्यनेन क्रीडामात्र आसक्तिः नतु तच्छृङ्गारादिष्विति दिक् ॥ १७ ॥

तमेव प्रपञ्चयन् रासविराममाह । तदिति । तदङ्गसङ्गेन अङ्गस्पर्शमात्रेण या प्रकृष्टा मुत्प्रहर्षः प्रीत्युत्कर्षो वा तया आकुलेन्द्रियाः पूर्णमनोरथाः सत्यः केशादीन् प्रतिव्योढुं विस्रस्तान् संगमयितुं नालं न शक्ता इत्यर्थः । किंपुनः रासक्रीडादाविविति भावः । तथा विस्रस्ता माला आभरणानि च यासां ताः कुरूद्वहेति तद्वैयश्यश्रवणेन विवशं राजानं संबोधयति यद्वा केशादीनलङ्कुरु मालादीनुद्वहेति क्रमेण व्युत्क्रमेण वान्वयः ॥ १८ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवं तासां भगवता समं नृत्यशोभां निरूप्य भगवतस्ताभी रमणशोभामाह । एवमिति । अत्रैवमिति पदेन यथा स्थाल्यामेकतण्डुलदृष्ट्या सर्वतण्डुलानां तथात्वनिश्चयस्तथात्र किञ्चिद्विलासनिरूपणं कृतमेवमेव कल्पसमकालासु तासु सर्वासु निशासु एतादृशैरेव शृङ्गाररसाभिव्याप्तविहारै रमेशो व्रजसुन्दरीभी रेमे अत्र रमत्यस्यामिति रमेति व्युत्पत्त्या रमायामेव तस्य रमणमन्यथा तस्यामरमणे रमेति तन्नाम न स्यात् तत्रैव रमणत्वे हेतुं दर्शयन्नाह । ईश इति । ईशस्य ईश्वर्यमेव रमणं तथा च रमारमण ईशोऽपि यतस्ताभी रेमेऽतो ध्रुवं तासु रामाया राधायास्तत्स्वरूपात्मकाह्लादिन्याः शक्तेरंशावेशः तासां तदंशप्रवेशे रमणार्हत्वे च तन्नाम्नैव हेतुं दर्शयन्नाह । व्रजसुन्दरीभिरिति । गेहादिभ्यो विरज्य तत्त्यागेन परिव्रजन्तीति व्रजाश्चानुरागित्वेन सुन्दर्यश्च व्रजसुन्दर्यस्ताभिस्तथा च सर्वत्यागेनानुरागित्वमेव रमात्वेन तद्रमणार्हत्वे हेतुः रमाया अपि सर्वत्र सुरादिष्वपि दोषदृष्ट्या विरज्य सानुरागतदेकपरत्वेनैव तद्रमात्वं प्रेम्णश्चेदमेव स्वरूपं यत्स्वत एव सर्वतो विरज्यैकपरत्वमन्यथा सर्वेषां तत्तद्रतत्वेन प्रेमित्वं स्यात् स्वस्वरूपच्छायावेशेन तद्रमणे दृष्टान्तो यथार्भक इति स्वामिचरणानां तद्विलासानभिभूतस्यैव रतौ दृष्टान्त इत्यादिव्याख्यानमप्येतदभिप्रायकमेव यथार्भको दर्पणाद्युपाधिधर्मैरनाक्रान्तः केवलं तत्स्वच्छत्वप्रयुक्ततद्गतस्वप्रतिबिम्बविभ्रमैरेव विलासवान् भवति तथा तासां निष्कपटानुरागस्वच्छतया तत्राविष्टस्वाल्हादिनी शक्तिरमावेशेनैव तत्र रमणमतस्तच्छक्तेः स्वस्वरूपात्मकतया नात्मारामत्वक्षतिरपि कै रेमे इत्यपेक्षायामाह । परिष्वङ्गेत्यादि । परिष्वङ्ग आलिङ्गनं कराभिमर्शः तत्करकञ्जानां मृदुत्वमञ्जुत्वसौरभ्यादिगुणवतां स्पर्शः स्ववक्षःस्थलादिषु धारणं स्वकरैर्वा स्तनाद्यङ्गस्पर्शः सस्नेहेक्षणयोरुद्दामा उत्कृष्टा ये विलासा अपाङ्गनिरीक्षणानि यद्वा सस्नेहेक्षणं निरीक्षणम् उद्दामा उच्छृङ्खला ये विळासा विविधविहारा यद्वा स्निग्धेक्षणानां सस्नेहतद्भावनाध्याननिरीक्षणपराणाम् उद्दामा भवबन्धनिवर्तका ये विलासा यद्वा तत्तद्विषयेष्वपि सौन्दर्य्यभ्रान्त्या स्निग्धेक्षणानां रागवद्धदृष्टीनां उद्दामास्तद्बन्धविमोचकास्तत्तद्विषयसाजात्यप्रतीत्या विषयरागिमतीनां स्वस्मिन् प्रवृत्तौ मतिशोधकतया नित्यनिरतिशयसुखतत्तद्गुणवत्तया च क्षुद्रानित्यनिरयानुबन्धि विषय विरक्त्या स्वस्मिन्नेव दृढश्लेषेण तद्रागबन्धनिवर्तका विलासा हासो मुखसुधाकरसुधाविस्तारात्मकस्मितरूपस्तैः ॥ १७ ॥

एवं रासरसप्रमोदमदाविष्टमतीनां तासां स्वाङ्गवस्त्राद्यननुसन्धानदशामाह । तदङ्गसङ्गेति । तस्य कृष्णस्याङ्गेन यः सङ्गः यद्वा कृष्णविग्रहस्य "सच्चिदानन्दरूपाय कृष्णाय आनन्दमात्रकरपादमुखोदरादि" रित्यादिश्रुतिस्मृतिभ्यां स्वरुपात्मकत्वेन तत्र देहदेहिविभागासम्भवात्तस्य कृष्णस्य स्वीयाङ्गेषु यः सङ्गस्तेन या प्रमुदतिप्रकृष्ट आनन्दः एतस्यैवानन्दस्येत्यादि श्रुत्या यदा तन्मात्रकप्रतिबिम्बस्य सर्वभूतजीवनत्वं तदा किमु वाच्यं साक्षात्तत्सङ्गस्य तया प्रमुदाकुलानि व्याप्तानि तदाकुळतयैव समाधिवद्विषयान्तरप्रतीत्यसमर्थानीन्द्रियाणि यासां यद्वा तदङ्गसङ्गप्रकृष्टमुदान् कुत्सितान् क्षुद्रानन्यविषयान् लान्ति गृह्णन्तीन्द्रियाणि यासां "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्म"न्निति श्रुतौ तु अन्तरात्मदर्शने एवेन्द्रियाणां पराङ्मुखत्वलक्षणहिंसनोक्तेः एतास्तु व्रजस्त्रियो गोप्यो गा इन्द्रियाण्यन्तरात्मकृष्णपरतया हिंसनाभावेन पान्तीति न तदिन्द्रियाणां कुत्सितपराग्विषयग्राहित्वं यद्वा तदङ्गसङ्गप्रमुदा अकुलानि पराग्दर्शनान्तरात्मकृष्णदर्शन विमुखत्वस्वभावेन्द्रियकुलवहिर्भूतानीन्द्रियाणि यासां यथा ताभिः स्वकुलमर्य्यादास्त्यक्तास्तथा तासामिन्द्रियैरपीन्द्रियकुलमर्य्यादास्त्यक्ता इतिभावः । यद्वा तदङ्गसङ्गप्रमुदैव "कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती च तेन । अपारसंवित्सुखसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेत" इत्यादिवचनैः आ समन्तात्कुं पृथिवीं लान्ति सुखदानेनानुगृह्णन्ति रजसा गीतादिना च पवित्रयन्तीन्द्रियाणि पादवागादीनि यासां प्रमदाकुलेन्द्रिया इति पाठेतु तदङ्गसङ्गेन यः प्रकृष्टः प्रेमवैचित्यात्मकः सर्वविस्मारको मदस्तेनाकुलानीन्द्रियाणि यासान्ताः केशानदुकूलं कुचपट्टिकां वा अञ्ज इति यथावत् प्रतिव्योढुमलं समर्था नाभवन् युक्तं चैतत् केशवपराणां केशसेवन भाराद्यसम्भारस्तत्कुलात्प्रतिकूलदुकूलविस्मृतिः कुचशंभुपट्टिकाविस्मरणेन तद्दिगम्बरतापादनञ्च तथापि अञ्ज इतिपदेन केशग्रहेश

श्रीरामनारायणकृतभावभावविभाविका ।

सेवनादेर्यथावदसम्भवेऽपि न सर्वथा तैद्वपरीत्यमिति सूचितं पुनः किम्भूतास्ताः विस्रस्तमालाभरणाः विशेषेणेति प्रायः स्रस्तानि मालाद्याभरणानि यासां यद्वा अङ्गेषु मां लान्तीति शोभाप्रदान्याभरणानि यासां तथाच भूषणभूषणमाधवधवसन्निधानलब्धमानां स्वयं मारूपाणां माभरणदत्तमाप्रयोजनमितिभावः यद्वा ताः स्वयमञ्जः प्रतिव्योढुमलं नाभवन्निति तत्केशभारास्वरादिसम्भारभारोऽपि तद्भाःप्रदातरि भारे नन्दकुमारे एवाभवत् अत एवाविस्रस्तमालाभरणा इति पदाञ्च तदाभरणविच्छेदः तथाच कुरूद्वहेति संबोधनेन यथा तव कुरुकुलोद्वहनं न तव साध्यं किन्तु त्वन्मात्राराध्य कृष्णसंपाद्यं तथा बोध्यमिति दर्शनम् ॥ १८ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यथा गोप्यो नानाविभ्रमैः भगवता सह विजन्हुरेवं भगवानपि स्वविलासैस्ताभिस्सह रेमे इत्याह । एवमिति । रमाया ईशः पतिरपि व्रजसुन्दरीभिरेव रेमे न तथेति रमातोऽपि तासां प्रेमाधिक्यं सूचितं यद्वा ननु प्राकृतीभिस्ताभिरप्राकृतो भगवान् कथं रेम इत्याशङ्क्योक्तं रमेश इति तथाच तासु भगवदाज्ञया रमा प्रविष्टा तस्त्यैव भगवान् रेमे इति भावः । तास्तस्य प्रवेशयोग्या इत्याशयेनाह । व्रजन्सुदरीणामिति । यद्वा रमेशो व्रजसुन्दरीभिरिति पदद्वयेन रमया परस्त्रीरूपमादाय रममाणे भगवति द्वयोर्विलक्षणो रस उद्भूत इति ध्वनितम् एवं पदार्थमाह । परिष्वङ्गेति । आश्लेषश्च तासां करालम्भनञ्च तन्मुखादीनां सप्रेमावलोकनम् उद्दामविलासः स्तनस्पर्शादिश्च भावव्यञ्जकं स्मितं च तैस्तद्विलासानभिभूतस्यैव रतौ दृष्टान्तः यथार्भक इति स्वप्रतिविम्बैर्विभ्रमः क्रीडा यस्य स एव एतेन स्वयमेव कलाकौशलं सौगन्ध्यलावण्यमाधुर्य्यादिकं च तासु सञ्चार्य्य ताभिः सह रेम इति दर्शितं यद्वा तासां रमणयोग्यतायां दृष्टान्तः तथाच गुणलावण्यादिना स्वतुल्याभिः स्व एवायोग्याभिस्ताभिः रेमे अत एव पूर्वे कृष्णवध्व इत्युक्तं यद्वा यथा कश्चित् प्रतिविम्बद्वारैव स्वसुखमाधुर्य्यमनुभवति तथा भगवानपि तादृशस्वप्रेयसीद्वारैवेत्यनेन व्यज्यते यद्वा यथार्भको मुग्धस्तद्वत्तथा च तासु प्रेमाधीनत्वान्मौग्ध्यमेवाश्रितवान्नतु रमायामिव वैदग्ध्यमिति भावः । ननु असङ्ख्याताभिः कथमेकस्य रमणमित्याशङ्क्याह । स्वप्रतिविम्बं प्रति स्वरूपमेव विभ्रमो विलासो यस्य सः तथाच एकैकया प्रियया सहैकैकस्वरूपः सन् रेमे इत्यर्थः । यद्वा परमेश्वरस्य नैवंविधा लीला घटत इत्याशङ्कानिवृत्त्यर्थमुक्तं यथार्भक इति तथा च यथा बाललीलां कृतवांस्तथेमामप्रीति भावः । यद्वा यथोक्तक्रीडादिना भगवति दोषापत्तिर्न शङ्क्या इत्याशयेनाह । स्वेति । तथाच स्वप्रतिविम्बभूताभिस्ताभिर्विम्बभूतस्य परमेश्वरस्य क्रीडां कुर्वतः का दोषप्रसक्तिसम्भावनेतिभावः । ननु तथापि किमर्थं तथा कृतवानितिचेत्तत्राह । अर्भक इव तथाच बालकस्य कामक्रोधादिविनिर्मुक्तस्य विहारो यथा लीलामात्रं तथा भगवतोऽपि सृष्ट्यादिवदिदमपि विहरणं लीलामात्रमिति भावः ॥ १७ ॥

अथ रासक्रीडाविरामहेतुंतासां भगवद्विलासैराकुलेन्द्रियत्वमाह । तदिति । तस्याङ्गसङ्गेः प्रकृष्टा यामुत् हर्षस्तया विवशेन्द्रियाः यत एवातः केशान् दुकूलं कञ्चुकीं च शिथिलतां गतान्येतानि अञ्जसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं समर्था बभूवुः विस्रस्तानि मालाभरणानि यासां ताः ननु केशादिशैथिल्ये हेतुभूतां व्रीडां लज्जां विहाय किमिति कर्तुं प्रवृत्ता इत्याशङ्क्याह । व्रजस्त्रियः नगरस्त्रीणां तादृशः स्वभाव इति भावः । तत्रापि राजवंशोद्भवानां स्त्रीणां तथा प्रवृत्तिर्नोचितेति सम्बोधनाशयः ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोप्यो नानाविलासैर्भगवता सह विजन्हुरित्युक्तमथ भगवानपि तद्वक्रियन्वितः स्वविलासैस्ताभिः सह रेमे इत्याह । एवमिति । एवं रमेशो माधवोऽपि व्रजसुन्दरीभिः सह परिष्वङ्गादिभी रेमे अहो हरिभक्तेर्माहात्म्यमिति भावः । भगवता इत्यनेन सर्वात्मत्वसर्वस्वामित्वादिगुणनिधेस्ताभिः स्वानन्यभक्ताभिः सह रमणे योग्यता सूच्यते व्रजसुन्दरीभी रेमे इत्यनेन भक्तमनोरथपूरकत्वं द्योत्यते रमेश इत्यनेनावाप्तसमस्तकामतया तद्विलासानभिभूतत्वं सूच्यते तदेव दृष्टान्तेन दर्शयति । यथार्भक इति । यथा स्वप्रतिविम्बैः स्वायत्तस्थितिप्रवृत्तिमद्भिर्विभ्रमः क्रीडा यस्य सः अर्भको यथा तथा स्वायत्तस्थितिप्रवृत्त्यादिमतीभिः स्वामिकाभिरित्यर्थः । नचानेन दृष्टान्तेनेशाजीवयोर्विम्बप्रतिविम्बभावसिद्धिरिति शङ्क्यम् तत्रोपाधेर्नित्यत्वस्वीकारे अनिर्मोक्षप्रसङ्गापत्तेः अनित्यत्वस्वीकारे प्रतिबिम्बस्याप्यनित्यत्वेन जीवनित्यताप्रतिपादकशास्त्रव्याकोपापत्तेः उभयपक्षेऽपि स्वरूपप्रतिविम्ब स्वीकारे अतीन्द्रियस्य सर्वगतस्य प्रतिबिम्बासम्भवादिदोषापत्तेश्च सविग्रहस्य प्रतिविम्बस्वीकारे प्रतिबिम्बभूतेषु जीवेष्वपि श्रीवत्सादिचिह्नदर्शनप्रसङ्गाच्च अध्यासगौरिवञ्श्रुत्यन्तकल्पद्रुमादिग्रन्थेषु पूर्वैर्बहुशो निराकृतत्वादत्रोपरम्यते ॥ १७ ॥

व्रजसुन्दर्य्यस्तु भगवद्विहारामृतनिधौ निमग्नाः भगवदङ्गसङ्गानन्दोद्रेकेणाकुलेन्द्रियाः बभूवुरित्याह । तदङ्गेति । तस्य श्रीकृष्णस्याङ्गसङ्गेन प्रकृष्टा या मुत्प्रीतिस्तया आकुलानि अवशानीन्द्रियाणि यासां ताः विस्रस्ताः मालाः आभरणानि च यासां ताः विरूथबन्धान् केशादीन् अञ्जसा प्रतिव्योढुं धर्तुं नालं न समर्था आसन् ॥ १८ ॥

---

भाषा टीका ।

इस प्रकार से आलिङ्गनकरना तथा उचित स्थलों पर हस्तसे स्पर्श करना स्नेहकी दृष्टि से देखना मनोहर रास विलास करना इत्यादि कामशास्त्र की रीतिसे लक्ष्मीकान्त भगवान् व्रजस्त्रियों के संग रमण करते भये जैसे कि बालक अपने प्रतिबिंबको देखकर क्रीडा करता है तैसे ही भगवान् ने लीला किया ॥ १७ ॥

हे कुरुद्वह ! परीक्षित्जी गोपस्त्रियों की तो भगवान् के अंग के संग होने से सब इन्द्रिय व्याकुल होगई तब अपने खुले केश वस्त्र कुचवस्त्र इन सबोंकी संभालने की सामर्थ्य उनको नहीं रही और उनके माला तथा आभरण भी सब बिखर गये उनको खबर नहीं रही ॥ १८ ॥

---

कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ।
कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥
कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ।
[1]रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥ [1] रराम भगवान् इति वि० पाठः ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलं ता एवाकुलेन्द्रियाः किन्तु देव्योऽपीत्याह । कृष्णविक्रीडितमिति । किञ्च शशाङ्कश्चेति अनेनैतत्सूचितं शशाङ्केन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनाः सर्वेऽपि ग्रहास्तत्र तत्रैव तस्थुस्ततश्चातिदीर्घासु रात्रिषु यथासुखं विजन्हुरिति ॥ १९ ॥

किञ्च कृत्वेति । अयम्भावः—

कात्यायनि महामाये महायोगिन्यधीश्वरि ! ।
नन्दगोपसुतं देवि ! पतिं मे कुरु ते नमः ॥

इति प्रत्येकं ताभिः प्रार्थनाद्भगवतापि यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा इति तथैव प्रति श्रुतत्वात्तावन्तमात्मानं कृत्वा रेमे इति यावतीर्व्यावत्यः ॥ २० ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

कृष्णस्य परमानन्दघनमूर्त्तेर्जगच्चित्ताकर्षकस्य वा विशेषेण पूर्वपूर्वतोऽसाधारण्येन क्रीडितं क्रीडां विशेषतः साक्षात्सेवादिद्वारा प्रीत्या ईक्षित्वा कृष्णेत्यनेन तद्विक्रीडितस्यापि तादृशत्वमेवाभिप्रेतं खेचराः देवादयः तेषां स्त्रियः सर्वा अपि कामेन श्रीभगवद्विषयकेणार्दिताः पीडिताः सत्यः विशेषेण सर्वविस्मरणादिना अमुह्यन् श्रीकृष्णप्राप्तौ निजयोग्यत्वायोग्यत्वादिविचाराहित्येन विकला अभवन् नवमीं दशां प्रापुर्वा शशाङ्क इति शशेन सहित इत्यर्थः । विस्मितोऽभूत् अदृष्टपूर्वत्वात् अन्यैस्तैर्व्याख्यातं तत्रातिदीर्घास्विति चिरकालस्वच्छन्दबहुलसुखक्रीडाभिप्रायेण अन्यथा तावत् क्रीडानां यथानिबन्धाल्पकालेन निर्वाहासिद्धिः अत एवाग्रे वक्ष्यमाणस्य ब्रह्मरात्र इत्यस्यार्थे ब्रह्मणश्चतुर्युगसहस्रपरिमितायां रात्रौ गतायामिति केचिद्व्याचक्षते तदपि सम्भवेदेव भगवच्छक्त्या अशेषविरुद्धस्य समाधानात् रात्रिष्विति बहुत्वञ्च ता रात्रीरित्युक्तस्य निशा इति वक्ष्यमाणस्य चानुसारेणेति अथवा देवानां देवीनाञ्च सर्वेषामेव व्योमयानानां विमोहमाह । खेचराः तत्स्त्रियश्च गणशब्देन तत्पत्न्यः पराश्च तारकाः चकारात् सोऽपि सगणः कामार्दितो व्यमुह्यदित्यर्थः । अनेन वक्ष्यमाणरतौ तेभ्यो लज्जादिना सङ्कोचो निरस्तः सर्वेषामेव विमोहात् तत्र शशाङ्कस्य कामो भगवद्विषयकभावविशेषलक्षणः एवं रासक्रीडायाः श्रीकृष्णविषयकभावविशेषवर्द्धनेन परममोहनत्वं दर्शितं प्रकृत्यैव तन्नृत्यगीतादिः श्रीभगवद्भाववर्द्धमानत्वात् तत्रापि तस्य साक्षात् श्रीभगवत्कर्तृकत्वात् तत्रापि ताभिः सह तत्रापि तादृशप्रकारादिना अत एव तस्यभक्तिगौरवादिभिर्युक्ताभिर्लक्ष्म्यादिपत्नीभिस्तथान्याभिश्च देवीभिराश्लेषचुम्बनाद्ययोग्याभिरसम्पत्तेः केवलविशुद्धमधुरविशेषसम्पन्नाभिरतिविशेषपरमयोग्याभिर्व्रजसुन्दरीभिरेव सुसिद्धेः तद्योग्यस्थाने ऽनन्यसाध्यन्यायेन श्रीव्रजेन्द्रकिशोरेणानन्यभोग्यरसाया अत्र सम्पादनमिति दिक् अत एवारम्भे पूर्वमुक्तं तत्र गोविन्दः स्त्रीरत्नैरिति ॥ १९ ॥

तत्रैव परमफलमाह । कृत्वेति द्वाभ्याम् । कृत्वैव कस्यापि शक्तिविशेषेण नानात्वसत्यतापि सिद्धैव गोपयोषितः गोप्य इत्यर्थः ततश्च काश्चित्तद्विवाहिताः काश्चित्कन्याश्चेति यद्वा गोपानां योषितो भार्याः ततश्च काश्चित्तेषां पत्न्य एव काश्चिच्च कृतकात्यायनीव्रता भगवदेकनिष्ठाः अजातविवाहा अपि कथञ्चिद्भगवन्मायादिना सर्वैर्विवाहमननाद्भार्यात्वेन प्रतीता इति ज्ञेयम् एतच्च श्रीरूपेण लिखिते ललितमाधवनाटकादौ व्यक्तमेव लीलया शृङ्गाररसखेलया विचित्रसौरतचेष्टया वा रराम रेमे भगवानिति तदेव भगवत्तासारसर्वस्वप्रकटनमिति भावः । तस्यैव प्रेमरसपरिपाकविलासविशेषात्मकत्वात् तथापि जगच्चित्ताकर्षकेण तेनैव स्वतः प्रेमविशेषविस्तारणाच्चेति तच्चाग्रे व्यक्तं भावि श्रीभागवतामृते च विवृतमेव आत्मारामोऽपीत्युक्तार्थमेव लक्ष्मणं च पृथक् पृथक् तत्रैव निकटकुञ्जादिषु किम्वा रासस्थल्यामेव ततदलक्षितत्वेन एवं च पूर्ववदैश्वर्यमाधुर्यं द्रष्टव्यम् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णस्य स्वयं भगवत्त्वेन माधुर्यादिभिः परमपरिपूर्णस्य विक्रीडितं पूर्वपूर्वतोऽपि वैशिष्ट्येन क्रीडां वीक्ष्य साक्षात् सेवादिमयप्रीतिवैशिष्ट्येन दृष्ट्वा खेचरा देवादयस्तेषां स्त्रियः सर्वा अपि कामेन श्रीभगवद्विषयकेण पीडिताः सत्यो व्यमुह्यन् । पूर्वं श्रीकृष्णप्राप्तौ निजायोग्यत्वादि विचाराहित्येन पश्चाद्देहादेरपि विस्मरणेन मोहवैशिष्ट्यं प्रापुः । अन्यैस्तैः । तत्रातिदीर्घास्विति अन्यथा स्वच्छन्दबहुलसुखक्रीडानामप्रसिद्धिः स्यात् । अत एवाग्रे वक्ष्यमाणस्य ब्रह्मरात्र इत्यस्यार्थे ब्रह्मणश्चतुर्युगसहस्रपरिमितायां रात्रौ गतायामिति केचिद्व्याचक्षते तदपि सम्भवेदेव । भगवच्छक्त्याशेषविरुद्धस्य समाधेयत्वात् विस्मयादिना गतिस्थगितत्वं तूत्प्रेक्षामात्रम् । तेषां ज्योतिश्चक्राधीनगतित्वात् स्वगतेरत्यल्पत्वात् । प्रातिलोम्यत्वाच्च । वस्तुतस्तु तल्लीलामाधुर्येण नदीप्रवाहस्येव ज्योतिश्चक्रस्य स्तब्धत्वं ज्ञेयम् । रात्रिष्विति बहुत्वं च ता रात्रीरित्युक्तस्य निशा इति वक्ष्यमाणस्य चानुसारेणेति एवं रासक्रीडायाः श्रीकृष्णविषयकभावविशेषवर्द्धनेन परममोहनत्वं दर्शितं तच्च युक्तम् । तत्र प्रकृत्यैव तत्सम्बन्धिनृत्यगीतादेस्तत्तद्भाववर्द्धनतातिशयात् तत्रापि तस्य साक्षात्तत्कर्तृकत्वात् । तत्रापि लक्ष्म्यादिदुर्लभतादृशसौभाग्याभिस्ताभिः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सहितत्वात्। तत्रापि तादृशपरिपाटीसम्वलितत्वादिति। अत्र कामार्दित इत्येकवचनान्तपाठस्तेषामसम्मतः। किन्तु देव्योऽपीत्यनेन तासामेव कामार्दितत्वस्वीकरात्। किञ्च। शशाङ्कश्चेति तदादेर्भिन्नवाक्यत्वाङ्गीकाराच्च ॥ १९ ॥

अथ रासानन्तरं विश्रम्य कृतं लीलाविशेषमाह। कृत्वेति द्वाभ्याम्। आत्मानमात्मनः प्रकाशमित्यर्थः। न चान्तर्न बहिर्यस्येति न्यायेन मध्यमत्वेऽपि तच्छ्रीविग्रहस्य विभुत्वात्। "चित्रं बतैतदेकेन वपुषा युगपत् पृथक्। गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहदि" त्येकप्रकाशाच्च। पौनरुक्त्यमिदं विश्रामसमय एकीभूतत्वात्। गोपयोषितो गोपजातीययोषितः। ततश्च काश्चिद्विवाहिताः काश्चित् कन्याश्चेति ज्ञेयम्। एकविंशाद्याविंशयोर्व्यूढाकन्यानां पृथक् पृथक् पूर्वानुरागवर्णनात्। "युवतीर्गोपकन्याश्च रात्रौ सङ्काल्य कालवि"दिति श्रीहरिवंशोक्तेश्च। एतच्च रूपेण लिखिते उज्ज्वलनीलमण्यादौ व्यक्तम्। लीलया शृङ्गाररसखेलया रराम रेमे। भगवानिति तदेव भगवत्तासारमाधुर्यसर्वस्वप्रकटनमिति भावः। तस्यैव प्रेमरसपरिपाकविलासविशेषात्मकत्वात्। तथा जगच्चित्ताकर्षकेण तेनैव स्वतः प्रेमविशेषविस्तारणात्। तच्चाग्रे व्यक्तं भावि श्रीभागवतामृते च विवृतम् आत्मारामोऽपीत्युक्तार्थम्। तद्रमणञ्च पृथक् पृथक्। तत्रैव निकटनिकुञ्जादिषु इति ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

न केवलं ता एवाकुलेन्द्रियाः किन्तु पश्यन्त्यो देवानां स्त्रियोऽपीत्याह। कृष्णविक्रीडितमिति। खेचराणां देवानां स्त्रियः किञ्च शशाङ्कश्चन्द्रः सगणः शुक्राङ्गारकगुर्वादिगणसहितः विस्मितो बभूव अनेनैतत्सूचितं विस्मितेन शशाङ्केन खगतौ विस्मृतायामितरेऽपि ग्रहाः स्वस्वगतिं विस्मृत्य तत्र तत्रैव तस्थुरतो दीर्घा रात्रिर्बभूव ॥ १९ ॥

कथमेकोऽनेकाभिर्युगपद्रेम इत्यत आह। कृत्वेति। गोपयोषितो यावतीर्यावत्यस्तावन्तमात्मानं कृत्वा ताभिः सह लीलया रेमे अध्ययनेन वसतीतिवत् हेतौ तृतीया आत्मारामोऽपि षाड्गुण्यपूर्णोऽपि लीलार्थं रेम इत्यर्थः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सगणः रोहिण्यादिनक्षत्रगणेन सहितः यद्वा गणनं सङ्ख्यानं तेन सहितः ॥ १९ ॥

किमत्र सङ्ख्येयमत्राह। कृत्वेति। यद्वा योगैश्वर्यात् बहुरूपग्रहणेन बह्वीभिः स्त्रीभिः रमणं घटत इति राज्ञः सिद्धत्वेऽपि मन्दाशङ्कां परिहरति। यावतीर्यावत्यः रराणेति व्यत्ययेन परदाराभिमर्शनेन दोषो नास्तीति वक्ष्यमाणमर्थमिहैव सूचयति। यद्वा रराम चिक्रीडे रासक्रीडा विरामसूचनार्थं वा इति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

कामार्दिता इति बहुवचनान्त एव पाठः टीकासम्मतः। किन्तु देव्योऽपीत्यनेन तासामेव कामार्दितत्वस्वीकारात्। किञ्च शशाङ्कश्चेति। तदादेर्भिन्नवाक्यत्वाङ्गीकाराच्च ॥ १९ ॥

आत्मानमात्मनः प्रकाशमित्यर्थः ॥ २०—२१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

एवं कृष्णे विक्रीडिते देवस्त्रियोऽपि मोहिता इत्याह। कृष्णविक्रीडितमित्यादि। खेचरा देवास्तेषां स्त्रियः खशब्दोऽत्र स्वर्गार्थः स्वर्व्योम्नोरपि खं विदुः काः खेचरस्त्रियः नार्दिताः अपितु सर्वा एवेत्यर्थः शशाङ्कस्तु पुनः सगणः सनक्षत्रगणः विस्मितोऽभवत् विस्मयेन स्थगितोऽभवदित्यर्थः। शशाङ्कस्य विस्मितत्वेन स्थगितत्वं तेनच गत्यभावः तेनच रात्रेर्दैर्घ्यं व्यज्यते ॥ १९ ॥

अथ सर्वासां प्रत्येकं यथोऽनुरूपमाशयानुरूपमाकारगतप्रमाणानुरूपं कलाकौशलानुरूपं प्रकाशमविष्कुर्वन् रेम इत्याह। कृत्वेत्यादि। भगवान् अचिन्त्यपरमैश्वर्यः आत्माराम आत्मभिरात्मप्रायैर्भक्तैः सह रमतीति तथा अथवा स्वलाभपरिपूर्णोऽपि स्वच्छन्दोऽपि या लीलया कौतुकेन यावतीर्यावत्यो यावद्वयस्यः यावदाशयाः यावदाकारप्रकारा यावत्कलाकौशलास्तावन्तं तत्प्रकारमात्मानं स्वभावं प्रकटय्य रराणेत्यर्थः या आकारादिभिर्यादृशीः ताः प्रति तथाभूत इत्यर्थः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं समुदायलीलां निरूप्य तस्याः परिज्ञानं केषामपि न जातमिति वक्तुं देवस्त्रीणां चन्द्रस्य च विस्मयमाह। कृष्णेति। न हि कस्याश्चित्पतिः परमानन्दो भवति नहि निरानन्देनानन्दो दातुं शक्यते "एष ह्येवानन्दयाती" तिश्रुतेः एवकारेणेतरनिषेधश्च तत्रापि विशेषेण क्रीडा नहि जीवो विशेषक्रीडां जानाति खेचराणां स्त्रिय इति तासां सर्वदर्शनार्थं भगवद्दत्तो धर्मो निरूपितः स्त्रीणाञ्च दर्शनं न दोषाय तासां मोह एवोत्पन्नः ननु परिज्ञानं रसो वा लौकिकोऽपि चन्द्रो दृष्टवान् सोमात्मकत्वात् "देहेऽस्य सोमः प्रथम" इति श्रुतेश्च साधारणश्च स्त्रियः तथापि तस्य दर्शनं तस्यैव हितकारि न भवतीति निरूपयितुमाह। शशाङ्क इति। सहि कलङ्की आनन्दमयोऽपि सगणो नक्षत्रसहितः तेनोद्दीपनेऽपि न तस्यान्यासु चित्तसम्भवः चकारात्सोऽपि मुमुहे यथा पुनरेता मोहनानन्तरं पुनः पुनर्दर्शने उद्बुद्धकामा जाताः गत्यास्माभिरपि कामरूपतया क्रीडाकर्त्तव्येति कामार्दिता जाताः तथा चन्द्रोऽपि भगवनि निवेशनार्थं यत्नं कृतवान् अतः कामार्दितो जातः अनेनाग्रे निसर्गात् सुखमिति पक्षे उपपादितरुक्ता अस्यैव चन्द्रस्य अंशास्ततोनिवर्त्तिष्यन्त इति अन्यथा "सहस्रदर्शनान्मुक्ति" रित्येतत्सूत्रं विरुध्येत सहस्रवर्णाभावात् किञ्च सगणः स्वस्त्रीसहितोऽपि विस्मितो जातः विस्मयरस एवोत्पन्नः नान्यो रस इति ॥ १९ ॥

एवमाधिभौतिकानामाधिदैविकस्य च भगवदुत्पादितरसाभिनिवेशमुक्त्वा "नन्दगोपसुतं देवि पतिं मे कुर्विति" प्रत्येकं प्रार्थनया व्रतं कृतमिति प्रत्येकं रेम इत्याह। कृत्वेति। गोपजातीया योषितो यावत्यः तावन्तमात्मानं कृत्वा तत्र तत्र मायोद्घाटनेन तथा तथा

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रकटो भवति एतन्महासौरतम् एवं करणे सामर्थ्यं यतः स स-भगवानिति स इति तदर्थमेवावतीर्णः अत्र तासां प्रतार्थं ताभिः सहैव रेमे नत्वात्मारामता पूर्ववत् इममर्थमाह । आत्मारामोऽपीति । नत्वात्माराम एव चन्द्रप्रवेशात् रमणं सम्भवति अस्यामपि दशायामात्मारामत्वमेव अधिकं तत्रानुप्रविष्टं ननु तद्वानिरिति तत्रापि आत्मरमण एव मुख्यतेत्याह । लीलयेति । यथा महानपि लीलया विसदृशं करोति स्वयं पदातिरिव मृगयायां गच्छति यथा अन्या अपि अवतारलीलाः तथैतामपि कृतवानित्यर्थः ॥ २० ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कामार्दिताः कृष्णविषयकेण कामेन पीडिताः । कामार्दित इति पाठे शशाङ्कोऽपि कृष्णमालोक्य स्त्रीभावं प्राप्तः । कृष्णविषयकेण कामेन पीडितश्च । व्रजसुन्दरीगात्राणां तद्विलासानाञ्च योगमाययैव पुरुषदृष्टीः प्रत्यावरणं पूर्वं व्याख्यातमेव ॥१९॥

ततश्च तामिः सह प्रत्येकं कुञ्जेषु रहस्यक्रीडाप्यभूदित्याह-कृत्वेति । यावतीर्यावत्सङ्ख्याका गोपयोषितो गोपवध्वो गोपकन्याश्च तावन्तमात्मानं तावत्सङ्ख्यमात्मप्रकाशं कृत्वा आत्मारामोऽपीति व्याख्यातार्थम् ॥ २० ॥

---

## श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

एवञ्च शुद्धप्रेमलीलायां संप्रवृत्तायामनुषङ्गेणैव कामविजयो जात इति दर्शयति । कृष्णेति । सर्वाकर्षकपरमानन्दमूर्तेः विशिष्टं क्रीडितं विशेषेणेक्ष्य भग्नमानतया पलाय्य गतेन कामेनार्दिताः खेचरस्त्रियः मुमुहुः समरपराभूतोऽहि सामन्तो हीनबलानावासान्विलुण्ठन् पलायत इति लोकप्रसिद्धिः खेचरत्वमत्र प्रेमशून्यत्वमेव युक्तं चैतत् कर्मफलभृतासु प्रेमलेशाभावात् शशाङ्कश्च तत्सहायः सगणः सोडुगणः स्वगित इत्यर्थाच्छिशुमारस्यापि तथात्वं सूचितम् एवंचाभिदैवस्य चन्द्रमसोऽपि विस्मितत्वेन मनसो विस्मयस्तेन च कुतो मनोजावकाश इति ध्वनितम् ॥ १९ ॥

तदेवं कामविजयेन शुद्धप्रेमात्मिकाक्रीडा दर्शिता इदानीं दाम्पत्यभावानां मयेमा रंस्यथ क्षपा इत्यादिना दत्तवराणां वाञ्छापूरणमपि प्रकाशभेदेन सम्पादितवानित्याह । कृत्वेति । आत्मानमात्मनः प्रकाशभेदमित्यर्थः । "चित्रं बतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावह"दितिन्यायात्तल्लक्षणंच अनेकत्र प्रकटनारूपस्यैकस्यैकदा सर्वथा तत्स्वरूपैव सप्रकाश इतीर्यते इति अथवा नचान्तर्न बहिर्यस्येत्यादिना मध्यमत्वेऽपि तच्छ्रीविग्रहस्यैव विभुत्वेनात्मानं स्वस्वरूपमेवेत्यर्थः । यद्वा प्रकाशभेदस्याभेदत्वज्ञापनायात्मपदेनोक्तिः तदुक्तं लघुभागवतामृते प्रकाशस्तु न भेदेषु गण्यते स हिनो पृथगिति व्रजयोषितः व्रजसम्बन्धिन्यो नन्दव्रजकुमारिकात्वेन प्रसिद्धाः पाठान्तरे गोपजातयो गोप्य इत्यर्थः । यावतीर्यत्संख्याकाः तावन्तं कृत्वात्मानमित्यर्थः । स प्रेमपरवान् भगवान् सभग्रया श्रिया नित्ययुक्तः एवंच ता अपि तस्या एव प्रकाशभेदा इति ध्वनितं तासु कामलीलाच प्रेमविवर्तरूपैव प्रेमैव गोपरामाणां काम इत्यगमत्प्रथा"मिति तन्त्रोक्तेः तादृश्यामपि क्रीडायां तदेकपरतामाह । आत्माराम इति । आत्मनि तस्यामेव रामो रमणं यस्य सोऽपि लीलया शृङ्गाररसखेलया तत्तन्नायिकारूपेण तयैव प्रकटितया रेमे तदुक्तमुज्ज्वले—

> यथा स्युर्नायकावस्था निखिला एव माधवे ।
> तथैव नायिकावस्था राधायां प्रायशो मता इति ॥

रमणं चेदं पृथक् पृथक् कुञ्जेष्विति संक्षेपः ॥ २० ॥

---

## श्रीरामनारायणकृतभावभावविभाविका ।

तासां देहाद्यननुसन्धानं कैमुत्यन्यायेन दृढीकर्तुं प्रेम प्रमदमदिरोद्वेधेरानभःप्रलयकारित्वेनान्तरिक्षदिवौकसां दशामाह । कृष्णविक्रीडितमिति । अत्र शशाङ्कश्चेति चकारानुकर्षणेन विस्मितत्वमोहितत्वकामार्दितत्वानां सर्वत्र यथैवपरिणामेन विनियोगो ज्ञेयः कृष्णस्य "रसो वै सः कृपिर्भूवाचक"इत्यादिश्रुतिस्मृतिवाक्यैर्नित्यपरिपूर्णानन्दाब्धेर्विशेषेण सर्वमतिप्रलयकारिरतिरङ्गतरङ्गैः क्रीडितं क्षणे क्षणे विशिष्टं विलक्षणं क्रीडितं वीक्ष्य विशेषेण तत्परतया साक्षात्कृत्वा खेचराश्च तत्स्त्रियश्च सगणो नक्षत्रगणसताराग्वितः शशाङ्कश्च उपलक्षणमेतत् शिशुमारस्यापि अखिलकलादिगुणैस्तादृशीनां रासादिक्रीडानां पूर्वदर्शनाभावात् अवितर्क्यासु तासु मतिवितर्काप्रवेशात्प्रथमं विस्मिताः किमिदमतिचित्रमिति ततो मुमुहुः विगतदेहाद्यनुसंधाना जातास्ततो मोहेन स्वात्मनः कृष्णक्रीडायोग्यत्वायोग्यत्वानुसंधानाभावात् कामार्दिताश्चाभवन् ननु स्वपतिसमीपस्थखेचरस्त्रीणां कथं कृष्णविक्रीडितदर्शने कामार्दितत्वमितिचेन्न मोहितत्वनिर्देशेन तदननुसंधानेन समाहितत्वात् ननु स्त्रीणां तथा सम्भवेऽपि तथं पुरुषाणां सुराणां तत्सम्भव इतिचेन्न मोहितत्वेनैव दण्डकारण्यमुनीनामिव भावनया तदसम्भवाभावात् ननु अन्येषां सुराणां तत्सम्भवेऽपि चन्द्रस्य तत्कुलवृद्धस्य कथं तथात्व मितिचेन्न

> नूनं मायास्तु मे भर्तुर्नान्या मेऽपि विमोहिनीति ।

सङ्कर्षणेनाध्यार्येण भ्रातुरित्यनुक्त्वा भर्तुरिति कथनाल्लोकदृष्ट्या संबन्धान्तरप्रतीतावपि परमपुरुषे तस्मिन् सखीभावातिरिक्तसंबन्धान्तराभावात् तथाच तदा सर्वे भगणाः कृष्णरासदर्शनोत्साहोद्भूतप्रभया पूर्णशशाङ्कसन्निभा गतिभङ्गात् ध्रुवरूपाश्चाभवन्नैतच्चित्रं यत्स्मरणमात्रेणाध्रुवमर्त्यानां ध्रुवत्वं तद्दर्शनप्राप्तायमर्त्यानां ध्रुवत्वे शङ्कानास्पदत्वात् अनेनैव सगणः शशाङ्कोपलक्षितकालचक्रस्य विस्मितत्वेन गतिविस्मृत्या निशानां कल्पसमानत्वं व्याख्यातं च स्वामिचरणैः शशाङ्केन विस्मितेन गतौ विस्मृतायां ततः प्राक्तनाः सर्वे ग्रहास्तथैव तस्थुः ततश्चातिदीर्घासु रात्रिषु यथासुखं विजन्हुरिति तोषणीकारैश्च अतएवाग्रे वक्ष्यमाणस्य ब्रह्मरात्र इत्यस्यार्थं ब्रह्मणश्चतुर्युगसहस्रपरिमितायां रात्रौ गतायामिति केचिद्व्याचक्षते सम्भवेदेव भगवच्छक्त्याशेषविरुद्धस्य समाधेयत्वादिति वाक्येन सम्मतं स्वामिव्याख्यायां दीर्घासु रात्रिष्विति बहुवचनं तु भगवानपि ता रात्रीरित्यत्रोक्तस्य सर्वा निशा इत्यत्र वक्ष्यमाणस्य च बहुवचनस्यानुसारेणेति बोध्यम् ॥ १९ ॥

एवं रासविहारं निरूप्य सङ्क्षेपेणैव रतिविहारं दर्शयति । गोपयोषित इति गोपजातीया योषितो ननु गोपानां योषित इति तैस्तैः संबन्धाभावात् लोकप्रतीत्यनुवादेन दोषाभावात्तथा भवतु वा यद्वा

### श्रीरामनारायणकृतभावभावविभाविका ।

गोपरूपप्रादुर्भूतस्य स्वात्मन एव योषित इति यद्वा गुपू रक्षणे इत्यस्मात्सर्वविश्वरक्षकस्य विष्णोः स्वात्मन एव योषित इति तथा च रक्षणसमर्थस्य योषितां तेन सर्वभावरक्षणमेव योग्यं नतु तन्मनोरथभङ्ग इति ध्वनिः यद्वा गाः स्वसर्वेन्द्रियाणि घोरविरहतापसम्भावितमरणेऽपि कृष्ण रसास्वादायैव तद्गुणगानाद्यमृतेन पान्तीति तथा योषितस्तथाच तथा तप्ततपसां स्वरसास्वादसकामतयैव रक्षितस्वसर्वेन्द्रियाणामन्यविषयप्रवृत्तिभ्योऽपि रक्षितस्वसर्वेन्द्रियाणां सर्वेन्द्रियरसदानस्यावश्यकत्वं द्योतितं यद्वा गाः कृष्णमुखचन्द्ररश्मीन् मधुस्मितरूपानधरामृतपूरितान् शुक्लपक्षे चन्द्ररश्मीन् सुरा इव पिबन्तीति तथाभूता योषितः यद्वा गोपयोषित इति कामकामगदुर्गतया कामगोपनशीला योषितस्तथाच तद्विजयोद्यतस्य तत्सर्वदुर्गवशीकाराय तावदाविर्भावस्यावश्यकत्वाद्यावत्यस्तास्तावन्तं तत्संख्याकप्रकाशवन्तमात्मानं कृत्वा "सर्वतः पाणिपादं त"दित्यादिस्मृत्या "विश्वतश्चक्षु"रित्यादिश्रुत्याच विभुसर्वाङ्गस्याखण्डस्य प्रकाशभेदं विना विभागानुपपत्तेः युक्तश्चैतत्र अत सातत्यगमने इत्यस्मात्सततसर्वगमनशीलस्य गम्यागम्यविभागशून्यस्य सततसर्वगमनाय तावत्त्वं तत्र सामर्थ्यं द्योतयन् विशेषयति । स भगवानिति । यतः स ताभी रसास्वादायाभिलषितो भगवान् भगमैश्वर्यं तद्वान् ईश्वरः कर्तुमकर्तुमन्यथा कर्तुंच समर्थः यद्वा भगवानित्युक्त्या तस्यैव भगवत्त्वेनान्यस्य कस्यापि भगवत्त्वाभावेन सर्वभगस्वामिनस्तद्रमणे दोषाभावसूचनं किञ्च यः स्वयं भगवत्त्वेन स्वात्मारामोऽपि स्वात्मनि रमणशीलस्तस्यान्यासु रमणे न शङ्कागन्धोऽपि यद्वा तस्य सार्वात्म्याद्रमणास्पदस्य सुखस्य सर्वत्र तद्देशत्वाच्च रमणेऽप्यात्मारामत्वाक्षतेः अतएवाह ताभिर्निमित्तभूताभिः स्वात्मन्येव रेमे तासामपि स्वात्मरूपत्वेन तासु रमणस्यापि स्वात्मरमणत्वमेव किमर्थं तादृग्रमणं तदाह । लीलया लीलानिमित्तेन स्मरतामुद्धारकलीळार्थं तत्र रेम इत्यत्र पूर्वमपि रासोत्सवे रमणस्यैव निरूपितत्वादत्र रमणे तद्वैलक्षण्यप्रतीत्याग्रे च तासामतिविहारेणेत्यत्र सुरतान्तभावप्रतीत्या मुख्यं रतिरमणमेवावगम्यते तत्रायं क्रमः आदौ रासविलासस्तु मृदुकामसंग्रामस्तत्र भगवान्मदनमदभङ्गं कृत्वा तदसंख्यातकामगदुर्गानारुह्य रतिरणोद्वशीकाराय तद्दुर्गसंख्याकात्मत्वाविष्कारेण तदारम्भेऽपि भ्रूयुगधनुर्विस्फूर्ज्य तत्रातिचित्रसूर्यकरसदृशासंख्यालक्ष्यगतिलक्ष्यहृन्मर्मचिह्नवेधकायाङ्गीकरणापाङ्गाशुगाम(?)घमोचकदक्षप— भ्रशरौ संयोज्य परस्परं तच्छरवर्षोद्दर्पेऽपि जयपराजयावनवगम्य ततोऽप्यविरम्यैव रम्यबाहुयुद्धायाभिगम्य वज्रमणिनखभल्लकभालमृदङ्गुलिकुसुमकुसुमबाणबाणान्वितविशालमृदुबाहुकुसुमधनुर्युगधरो मुकामालरोमावलिगङ्गायमुनारूपजलदुर्गदुर्गमतद्दुर्गाद्यश्रृङ्गकुचयुगयोर्द्विचं(?) विचित्रसुखकरकरनखशरघातं विधाय तं दुर्गश्रृङ्गकुचकरगतकरणोद्भूताद्भुतरणोत्साहः स्वयं मन्दरगिरिनिभमदनसुन्दरमन्दिरगोपदारोदारवपूंष्यधिरुह्य बहुतरबाहुयुद्धं प्रवर्त्य तदङ्गव्यूहसमूहं स्वाङ्करूपमध्यं बहिरन्तस्तद्धृदयसिंहासनाधिरूढः प्रवर्तितकिङ्किणीनूपुरादिजयवाद्यध्वनिविशेषोऽनुपमाधरसुधासीधुपेपीयमानोऽच्युतः कामं निकामं विजित्य स्वभृत्यांस्तद्भयादमूमुचदिति तत्स्मरतां स्वत एव कामोपरमाश्च कामभयशङ्कापीति भावः ॥ २० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

साक्षाद्भगवता विक्रीडतीनां तासां व्याकुलेन्द्रियत्वे किंचित्र देवाद्यङ्गनानां तु दर्शनमात्रादेव व्याकुलता संजातेत्याशयेनाह । कृष्णस्य सदानन्दरूपस्य परमात्मनः विक्रीडितमलौकिकं क्रीडनं वीक्ष्य विशेषेणोपलभ्य कामार्दिताः सत्यो देवस्त्रियो मुमुहुः विकलचित्ताः बभूवुः खेचरस्त्रिय इत्यनेन तत्पतीनां पुरुषत्वाद्बहुलीलादर्शनाभावो योगमायया सम्पादित इतिसूचितं तत्सर्वमवलोक्य शशाङ्कश्चन्द्रः सगणः ज्योतिश्चक्रेण सर्वेण सहितः विस्मितश्चकितहृदयोऽभवत् अनेन चन्द्रादिग्रहाणां गतिविस्मृतत्वात्कालदैर्घ्यं सूचितं तथापि योगमायया सर्वापेक्षया यामचतुष्टयात्मिका यथा रजनी तस्यामेव क्रीडानुकूलं दैर्घ्यं संजातमिति द्रष्टव्यम् ॥ १९ ॥

अथ रासानन्तरं विश्रम्य रहस्यकृतां लीलामाह । कृत्वेति द्वाभ्याम । यावत्यो गोपाङ्गनास्तावन्तमात्मानं प्रकटीकृत्य ताभिः सह भगवान् श्रृङ्गाररसलीलया रेमे रमणं चेदं पृथक् कुञ्जेषु तत्रैव वा योगमायया विरचितेषु परस्परमदृश्येषु तदनुकूलप्रदेशेष्विति ज्ञेयम् अनेन "कात्यायनि महामाये महायोगिन्यधीश्वरि ! । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः" इति प्रत्येकं तासां प्रार्थना "यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा" इति भगवता दत्तस्य वरस्य च सार्थकता बोधिता ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजसुन्दरीभिः सह भगवतो विक्रीडितं दृष्ट्वा खेचराणां स्त्रियः मुमुहुः चन्द्रश्च सगणो विस्मितोऽभवत् ॥ १९ ॥

यावतीः यावत्यः तावन्तमात्मानं कृत्वा रेमे "नन्दगोपसुतं देवि ! पतिं मे कुरु" इत्येकवचनेन ताभिः प्रत्येकं प्रार्थनात् ॥२०॥

---

### भाषा टीका ।

श्रीकृष्ण भगवान् की विशेष क्रीडा को देखकर देव स्त्री मोहित होगईं और काम से पीडित होगईं और आकाश में चंद्रमा भी स्त्री गणों के सहित विस्मित होगया ॥ १९ ॥

श्री भगवान् आत्मा राम हैं तौ भी जितनी व्रज स्त्री हैं उतनेहीं अपने रूपों को बनाकर उन सब के संग बरोबर रमण करते भये ॥ २० ॥

---

तासामतिविहारेण श्रान्तानां वदनानि सः ।
प्रामृजत्करुणः प्रेम्णा शंतमेनाङ्ग ! पाणिना ॥ २१ ॥
गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन ।
मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृपातिशयमाह । तासामिति ॥ २१ ॥

ततोऽतिहृष्टानां गोपीनां चरितमाह । गोप्य इति । स्फुरतां स्वर्णकुण्डलानां कुन्तलानाञ्च त्विषा गण्डेषु या श्रीस्तया सुधितेन अमृतायितेन हाससहितेन निरीक्षणेनच ऋषभस्य पत्युः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यस्तत्कर्माणि जगुः तस्य कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

रतिः सुरतं सैव विहारस्तेन इति तत्र रसिकता सूचिता यद्वा रतौ विहारः विविधविदग्धचेष्टा तेन स विदग्धशिरोमणिः परमप्रीतो वा श्रीकृष्णः शन्तमेन परमसुखात्मकेन पाणिना प्रकर्षेण अमृजत् प्रस्वेदबिन्दुपसारणालकसम्वरणादिनोज्ज्वलयामास यतः करुणः कृपालुः नच केवलमन्यजनेष्विव कारुण्येन किंतु परमप्रियत्वेनेत्याह । प्रेम्णेति । परमसन्तोषणमुक्तम् अङ्गेति प्रेमसम्बोधने एवमेकस्यैकेनैव पाणिना सर्वासां युगपद्वदनप्रमार्जनादैश्वर्येण लौकिकत्वेनच पूर्ववन्मधुरभगवत्तासारप्रकटनं ज्ञेयम् एवमन्यत्रापि ॥ २१ ॥

ततः प्रहृष्टा निजदेहादिना त्रिधा तस्य प्रहर्षं संजनयामासुरित्याह । गोप्य इति । तत्र स्फुरदिति सौन्दर्येण सुधितेति भावेन जगुरिति संकीर्त्तनेन ऋषभस्य पुरुषश्रेष्ठस्य इति तस्य परमवैदग्ध्यादिकमुक्तं तासामपि सिद्धमेव अतएव तस्य मानं दधत्यः उक्तप्रकारैः संमानं कुर्वत्यः यद्वा अहो मम धन्यत्वमित्येतादृशं तस्य गर्वमर्पयन्त्यः ऋषभत्वात् तत्कृतानामपि श्रेष्ठत्वं सूचितं तदेव दर्शयति । पुण्यानि साक्षात् पुण्यरूपाणि सुखात्मकानि वा जगुः तत्र हेतुः तस्य कररुहैः स्पर्शात् गाने तदानीमेव तेन क्रियमाणात् किंवा पूर्वकृतात् यद्वा मुखमर्जने गण्डेषु जातात् प्रकृष्टो मोदो यासां ताः इति रत्यादिपरिश्रान्तानामपि गाने श्रमाभावो रसविशेषश्च बोधितः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रतिर्दम्पत्योर्मिथोऽनुरागस्तन्मयो विहारः विविधविदग्धचेष्टा अतिविहारेणेति पाठेऽपि स एवार्थः तेन श्रान्तानां शन्तमेन परमसुखात्मकेन पाणिना प्रकर्षेणामृजत् । स्वेदबिन्दुपसारणालकसम्वरणादिना उज्ज्वलयामास । यतः करुणः परदुःखासहिष्णुस्वभावः सत्यपि कारुण्ये न साधारण्ये तासान्तु तानि प्रामृजदिति परमवैशिष्ट्यं दर्शितम् । प्रेमा हि सादृगुण्यानुसन्धानेनाहन्ता ममतैकतरविषयत्वे च जाता चेतसि स्निग्धता तत्रापीदृशभावमयीति परम एव विशिष्टः स्वयं कारुण्यादिकमन्तर्भावयति । शन्तमेनेति । स्पर्शमात्रेणापि स्वभावतः परमसुखकरत्वं तत्र च प्रमार्जनं तत्रापि प्रेम्णा तत्र च शन्तमेनेति परमसन्तोषणमुक्तम् । अङ्गेति प्रेमसम्बोधने ॥ २१ ॥

ततः प्रहृष्टा निजदेहादिना त्रिधा तस्य प्रहर्षं सञ्जनयामासुरित्याह । गोप्य इति । तत्रास्फुरदिति सौन्दर्येण सुधितेति भावेन जगुरिति सङ्कीर्त्तनेन । ऋषभस्य इति तैर्व्याख्यातम् अत्र ऋषभस्य पत्युः श्रीकृष्णस्येत्यत्रायमभिप्रायः । कृष्णवध्व इत्यस्मिन् स्वयमेव श्रीमुनीन्द्रेण व्यक्तीकृते वयं कथं गोपयामः । तस्मादस्माभिरव्याख्याता अपि दयितरमणादिशब्दाः केन वान्यथा मन्तव्या इति । तदाच परस्परमनन्यभावेनाव्यक्तेर्दाम्पत्यस्फूर्त्या तस्य मानं दधत्य उक्तप्रकारैः पूजां कुर्वत्यः । यद्वा । अहो मम धन्यता यस्येदृश्यो वध्व इत्येतादृशं तस्य गर्वमर्पयन्त्यः पुण्यानि पुण्यकराणि चारूणिच जगुः । पुण्यन्तु चार्वपीत्यमरः । तस्यैकशेषत्वात् गाने हेतुः तस्य कररुहैः स्पर्शाज्जुगाने गुणवत्योऽप्येताः कृतमौना इति प्रणयकोपेन तत्प्रवर्त्तनाय किञ्चिन्मोदनात् प्रकृष्टो मोदः कासाञ्चियासां ताः । इति रत्यादिश्रान्तानामपि गाने रसोल्लासो बोधितः । तासामित्यादिद्वये हेला नामायमनुभावः । यथा "चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति । तत्राद्य विक्रियाभावो बीजस्या" दिविकारवत् । ग्रीवा रेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् । भावादीषत्प्रकाशो यः स हाव इति कथ्यते । हाव एव भवेद्धेला व्यक्तः शृङ्गारसूचक" इति ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऋषभस्य भर्तुर्गोप्यः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य तासु कृपातिशयमाह । तासामिति । स च भगवान् रतिविहारेण रति विहाराभ्यां श्रान्तानां तासां गोपीनां वदनानि प्रस्विन्नानि अङ्ग हे राजन् । करुणः कृपावान् शंतमेन निरतिशयसुखकरेण पाणिना प्रामृजत्परिमृष्टवान् ॥ ॥ २१ ॥

ततोऽतिहृष्टानां गोपीनां चरितमाह । गोप्य इति । तस्य भगवतः कररुहैर्नखैः स्पर्शेन प्रमोदो यासां ता गोप्यः स्फुरतां स्वर्णकुण्डलानां कुन्तलानाञ्च त्विषा गण्डेषु या श्रीस्तया सुधितेनामृतायितेन हासयुक्तनिरीक्षणेनच ऋषभस्य भर्तुः कृष्णस्य मानं दधत्यः पूजां कुर्वत्यः पुरटकुण्डलादित्विडादिभिस्तस्य हर्षं जनयन्त्य इत्यर्थः । तस्य कर्माणि चेष्टितानि जगुः ॥ २२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं च भक्तपारवश्यं हरेरजस्रं स्मरेदित्याशयेन हरिचरितं वक्ति । तासामिति । प्रामृजत्सम्मार्जितवान् ॥ २१ ॥

ऋषभस्य प्रवृद्धानुन्मथितवीर्यस्य हरेः स्फुरतोश्चलतोर्मकरकुण्डलयोः कुन्तलानां त्विषा दीप्त्या दीप्तगण्डश्रिया युक्तसुरतयोग्यहासोपेताभीष्टाङ्गनिरीक्षणेनानन्दमात्मनो दधत्यः तस्य हरेः कररुहाणां नखानां स्पर्शेन स्मरोल्लासजनकलक्षणेन नखक्षतेनाभिव्यक्तः प्रमोदः प्रकृष्ट आनन्दो यासां तास्तथा ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवं रममाणस्तासां श्रममालोक्य स्वयमेव तदपनोदविनोदं चकारेत्याह । तासामित्यादि । शन्तमेन सुशीतलेन पाणिना वदनमार्जनेनैव श्रमो दूरीकृतः पुनरुत्साहवृद्धिं कारयामासेत्यर्थः ॥ २१ ॥

एवं श्रमापनोदे सति पुनरुत्साहवत्यस्तमेव जगुरित्याह । गोप्य इत्यादि । गोप्य ऋषभस्य कृतानि लीला जगुः कीदृशानि पुण्यानि पुण्यजनकानि तान्येव वक्ष्यति च विक्रीडितं व्रजवधूभिरित्यादि ऋषभस्य परात्परस्य श्रीकृष्णस्येत्यर्थः । किंभूतत्यः स्फुरन्त्या पुरटकुण्डलानां कुन्तलानाञ्च त्विषा गण्डयोर्या श्रीस्तया सुधितः सुधया व्याप्तो यो हासस्तत्सहितेन निरीक्षणेनच मानं दधत्यः सम्मानं वहन्त्यः कुर्वत्य इति वा आद्ये स्फुरत्पुरटकुण्डले त्यादि तृतीयान्तपदद्वयं कृष्णस्येति मन्तव्यं द्वितीये तासामेव पुनः कीदृश्यः तत्कररुहस्पर्शेन प्रकृष्टो मोदो यासाम् ॥ २२ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततस्तासां सुरतान्तो जात इत्याह । तासामिति । अतिविहारेणानेकबन्धैः सम्यक्श्रान्ता जाताः ततोऽग्रिमलीलार्थं तासां वदनानि स्वहस्तेन प्रामृजत् यतः स कृष्णः तदर्थमेवावतीर्णः सर्वत्रैव तथाविधं जातमिति ज्ञापयितुं बहुवचनं तथा करणे हेतुः करुण इति करुणायुक्तः सा करुणा उदासीना न भवतीत्याह । प्रेम्णेति । मार्जने क्लेश एव निवर्त्तेत इति ज्ञापयितुं शन्तमेनेत्युक्तम् अङ्गेति संबोधनमप्रतारणाय ॥ २१ ॥

एवं तासां दुःखनिवारणपूर्वकं परमानन्दं स्थापितवान् ततोऽतिमुदितानां कृत्यमाह । गोप्य इति । गोप्यो मानं दधत्यः तत्कृतानि जगुः गाने हि रजोगुणाभिनिवेशो हेतुः तदर्थं सहजमेकं भगवत्कृतंच हेतुद्वयमाह तत्र प्रथमं सहजं निरूपयति स्फुरद्यत् पुरटं सुवर्णं दाहोत्तीर्णमुज्ज्वलीकृतं च तस्य ये कुण्डले कुन्तलाश्च तेषां त्विषा सहिता या गण्डश्रीः उज्ज्वला गण्डश्रीः पीता वा उज्ज्वला नीलाचेतरे एवं कान्तित्रयं मूलभूतगुणकार्यरूपं तेनासां सर्वोत्कर्षयोग्यता सुधितं सुधामिव प्राप्तं यद्धासपूर्वकं निरीक्षणमत्राप्यन्तः स्थितो रागः निरीक्षणं हासश्चेति त्रितयमुक्तं भगवदीयमेतत् अत उभाभ्यां संमाननमभिमानं वा दधत्यः स्वहृदयकृतविपरीतबुद्ध्या जातदोषनिराकरणार्थं तत्कृतानि जगुः तेषां न केवलं पापनिवर्त्तकत्वं किंतु पुण्यरूपत्वमपीत्याह । पुण्यानीति भगवता कृतानि पापनिवर्त्तकानि पुण्यजनकानि च अतः तासां दोषाभावः अग्रिमलीलायां पुण्योपचयश्चोक्तः पूर्वक्लेशविस्मारणार्थमानन्दाविर्भावमाह । तस्य भगवतः कररुहा नखाः तेषां स्पर्शेन जातपीडया स्मृतसंभोगाः प्रमुदिता जाताः अन्तःपूर्णानन्दा गानेनापि जाता इति अन्ते विशेषणम् ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तासां रतिविहारेण तासामति विहारेणेति च पाठः । श्रान्तानामिति । तासां रतिश्रान्तिमालक्ष्य करुणः रमणाद्विरतोऽभूदित्यर्थः । शन्तमेन सुखमयेन प्रामृजदित्युपलक्षणं वीजनानुलेपनप्रत्यङ्गप्रसाधनवीटिकाप्रदानान्यपि चक्रे ॥ २१ ॥

ततश्च ताः स्वाधीनकान्ताः कान्तपरिधापितरत्नालङ्काराः कुञ्जेभ्यो निष्क्रम्य मिलिता रासोत्सवसमाप्तिसूचकं मङ्गलं जगुरित्याह । गोप्य इति । स्फुरतां स्वर्णकुण्डलानां कुन्तलानाञ्च त्विषा गण्डेषु श्रीस्तया सुधितेन अमृतायितेन हाससहितनिरीक्षणेन ऋषभस्य पुरुषश्रेष्ठस्य कृष्णस्य मानमादरं दधत्यः कृतानि तत्कर्माणि जगुः । पुण्यानि चारूणि तस्य कररुहाणां नखानां स्पर्शेन प्रकृष्टो मोदो यासां ताः ॥ २२ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तास्वपि श्रीभगवतः प्रेमासक्तिरेवेत्याह । तासामिति । स विदग्धशिरोमणिः तासाम् अनिर्वचनीयसौभाग्यवतीनां राजकन्यापेक्षयेदम् अतिविहारेण श्रान्तानामिति सौकुमार्य्यं वदनानि शन्तमेन परमसुखात्मकेन पाणिना प्रकर्षेण आमृजत् स्वेदापसारणादिनोज्ज्वलयामास तत्र हेतुः करुणः स्वभावतस्तासां श्रमदर्शनेन वा ननु किन्नामेन नेत्याह । प्रेम्णेति ॥ २१ ॥

तासामाह गोप्य इति । गोपकन्याः ऋषभस्य गान्धर्वरीत्या वृतस्यास्य पत्युः कृतानि वैदग्ध्यचेष्टितानि जगुः पुण्यानि चारूणि पुण्यन्तु चार्वपीति कोशात् यद्वा स्वीयात्वाभिमानेनानौचित्यसन्देहाभावात्पुण्यकराण्येवेत्यर्थः । किंभूतत्यः सुधितहासनिरीक्षणेन मानं दधत्यः सुधा सञ्जातास्मिन्निति सुधितः परमोज्ज्वलः सचासौ हासस्तत्सहितेन निरीक्षणेनेति हासस्य पुष्पस्थानीयत्वं निरीक्षणस्याञ्जलिबन्धत्वमुक्तं मानं पूजां चित्तसमुन्नतिं च कीदृशेन स्फुरन्ती पुरटस्य शुद्धहाटकविशेषस्य कुण्डलानां कुन्तलानां वक्रालकानाञ्च या त्विट् तया गण्डयोः श्रीर्यस्मिंस्तेन कुण्डलकुन्तलयोरन्योऽन्यमालिङ्गितयोर्गण्डपर्य्यङ्कविलसितमुद्रया भावमुद्दीपयन्त्य इत्यर्थः । हेलानामानुभावो ऽयं यथा ।—

> चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।
> तत्राद्य विक्रियाभावो बीजस्यादिविकारवत् ॥
> ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत् ।
> भावादीषत्प्रकाशो यः स हाव इति कथ्यते ॥
> हाव एव भवेद्धेला व्यक्तश्टङ्गारसूचकः ।

इति तत्कररुहेति कोपकारणेऽपि प्रमोदोत्पत्त्या परमासक्तिः सूचिता ॥ २२ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तासां सुरतान्तदशायां प्रमोदाचरितमाह । तासामिति । प्रीतिपूर्वकसंबोधन इङ्गेति स तासां वदनानि वदनोपलक्षितसर्वाङ्गानि पाणिना प्रामृजदित्यन्वयः किम्भूतानां तासां तत्राह । कृष्णस्य भगवतोऽखिलकलानिपुणस्य किञ्चिज्ज्ञवात्स्यायनादिकामशास्त्राचार्यैर्निरूपितरसकणकामार्णवविहारिणोऽतिविहारेण सर्वानतिक्रम्य विशेषेण हारो मनोहरो यो विहारो विविधासनबन्धाश्लेषादिचेष्टारूपस्तेनेत्युपलक्षणं घर्म्मेण स्थलकमलरसस्रवत्सुमनोऽङ्ग सुमनोभ्यः प्रवहत्स्नेहस्वेदमधुधाराणां कुसुममृदुत्वमणिगणश्रीहारहरितनुश्रीह्रीत्रुटितसुमनोमणिहाराणां सखिनखरेखासर्वतोभद्रालंकृतहरिवक्षोनीलमणिवेदिकागतहरिनखरेखालोचनरोचनरोचनालिपियुतकुचमङ्गलकलशभाराणां स्वकुचकुम्भालिङ्गनलग्नकुंकुमरागव्याजहरिहृदर्पितस्वहृदुच्चलितानुरागरससाराणां कुञ्जेभ्यः कुन्ददन्तसिन्दूरसुन्दररेखावत् स्वमुखाधरोल्लसितरदरेखाकाराणां पामृजदित्यत्र मार्जनं प्रस्वेदापनयनं तत्र प्रकर्षस्तु आल्हादनेन विकासनम् अलङ्करणं च यथा हरिः सूर्यः स्वकरैः कञ्जानां हिमकणानपनयंस्तान् विकाशयति तथा हरिरपि करेण तत्स्वेदमपनयन् विकाशयतीति भावः । अत एव पाणिशिवं शं गमेनेति भगवत आनन्दमात्रकरपादमुखत्वात् तत्र स्वपाणिना प्रमार्जने हेतुद्वयमाह । करुण इति । प्रेम्णेति च तासां श्रान्तत्वदर्शनेन जाता करुणा मुखप्रस्वेदहरणमिषेण पुनरङ्गस्पर्शसौख्योत्साहोऽभूदतः प्रेमा च तत्र हेतुरिति भावः ॥ २१ ॥

भगवता लभ्यमानानां प्रमोदमुदितानां तासां त्रिधा तदाल्हादजनने कृत्यं चाह । गोप्य इति । गोप्यो गोपस्वरूपस्य सर्वविश्वैकगोप्तुः श्रुतिभूमीन्द्रियगवां पालकस्याविष्कृतगोपलीलस्याल्हादिकाः शक्तय ऋषभस्य रसिकशिरोमणेस्तस्य मानं संमानं दधत्यः कृतानि तस्योदारलीलात्मककर्माणि जगुरित्यन्वयः स्फुरती देदीप्यमाने पुरटजटिते मणिकुण्डले तत्र स्फुरदित्युक्तेय तयोरविसादृश्यद्योतनं तयोः कुन्तलाः कृष्णस्निग्धकुटिलालकाः निशा तद्भारागता या त्विट् दीप्तिस्तदुद्भासिते गण्डे एव चन्द्रौ तयोः श्रिया अत्र यद्यपि निशासु प्रकाशमानोऽपि पूर्णचन्द्रः सुधामयमण्डलत्वाद्रविप्रभयैव भासते इति नात्यद्भुतत्वं तथापि रविचन्द्रनिशानां युगपदपरोक्षतया भासमानत्वं विरुद्धत्वेन चित्रं परन्तु भगवद्भजने विरोधासम्भवेनैव न तस्यापि चित्रता तथा कृष्णकुटिलस्वभावानां स्वद्वारान्योपकारकत्वं चित्रमपि स्निग्धत्वेनैव स्नेहमाहात्म्यात्स्वल्पपि कौटिल्ये तस्याकिञ्चित्करतया प्रत्युत स्निग्धानां कौटिल्यस्यापि प्रकाशप्रवेशपथरूपत्वेन साहाय्येन न चित्रत्वं तथा चन्द्रेण श्रात्रा श्रीसमर्पणस्य चित्रत्वेऽपि श्रीपतये एव समर्प्यमाणत्वान्न चित्रत्वं तथा चन्द्रस्य द्वित्वं चित्रमपि कृष्णाय श्रीसमर्पणे हर्षाधिक्याद्द्वित्रीभवितीति ध्येयम् एवं स्वशरीरसौन्दर्येणालम्बनविभावेन भगवतो मनाधानं तथा सुधितोऽमृतमयो यो हासस्तद्युक्तेन सापाङ्गनिरीक्षणेन मनोभावसूचकेन हावेन तथा स्पष्टं तद्गुणगानलक्षणेन हेलानामानुभावेन तदुक्तम्—

> चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ।
> तत्राद्यविक्रियाभावो बीजस्यादि विकारवत् ।
> ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत ॥
> भावादीषत्प्रकाशो यः स हाव इति कथ्यते ।
> हाव एव भवेद्धेला व्यक्तशृङ्गारसूचक इति ॥

यद्वा यथा तस्माद्विक्रीडनादिना लभ्यमानत्वेन स्वस्मिन् दैन्योदर्के मानं जातं स्वीयतादृशश्रीनिरीक्षणगुणगाने ऋषभस्यासम्भावितमानादिविक्रियस्यापि मानं दधत्यो मानं भवत्विति सम्भावयन्त्यः कृतानि जगुः यद्वा ऋषभस्य तस्य तादृशगण्डश्रिया सुधितहासनिरीक्षणेनच स्वस्मिंस्तत्कृतं मानं वा तदनुग्रहविषयत्वेन स्वस्मिन्धन्यत्वरूपं मानं वा सम्भावयन्त्यस्तत्प्रत्युपकारान्तरासम्भवाद्भक्त्या तत्कृतान्येव जगुः किम्भूतानि तस्य कृतानि पुण्यानि किमु वाच्यं तत् पुण्यत्वं स्मरतां महत्पापिनामपि पुण्यजनकानि संसारार्णवतारकाणि—

> सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ।
> सद्यस्तपस्वी भवति पङ्क्तिपावनपावनः ॥
> जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
> त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुनेत्यादि

वचनात् किम्भूतास्ताः विहारे तत्कररुहाणां नखानां स्पर्शेन सुरतान्ते च प्रामृजत्करुणः प्रेम्णा शन्तमेनाङ्गपाणिनेत्यत्र वर्णितकररुहोपस्पर्शस्तेन प्रमोदो वा यासामिति श्रान्तानामपि गुणगानप्रवृत्तौ प्रमोदोद्धर्षौ हेतुर्दर्शितः अयमत्र भावः विधातृकृतत्वेन सम्भावितविरहलेखस्य भगवताङ्गाङ्गमर्दने मार्जनपूर्वकस्वकररुहमणिरोचनलिपिभिरुपलक्षणमेतद्रदरेखाया अपि ततश्च कनकपत्रात्मकोरःकपोलाद्यङ्गेषु नित्याखण्डितसौभाग्यदानपत्रं कृतं तत्र च कपोलयोर्वर्तुलाकाररदपङ्क्तिद्वयमण्डलचिन्हेन तत्पत्रमुखे मुद्रिकाचिन्हं स्थापितं तेन जातप्रमोदाः स्फटिकपात्रात्मककपोलधृतया कुन्तलप्रावरणावृतत्वेऽपि स्फुरन्त्या मणिस्वर्णकुण्डलश्रिया तदुपहारसमर्पणेन तथा सुधितहासे विद्रुमाधरसम्पुटितपद्मरागमणिसम्पुटकपोलान्तर्गतरदवज्रमणिसञ्चयस्याधरप्रावरणविकासपूर्वकसमर्पणेन तथा निरीक्षणेन कृष्णाय इन्द्रनीलान्वितदृग्जलजार्पणेन हृत्पद्मं च दकृपद्मे कृष्णतारवद्भवतारकृष्णनिवेशद्योतकेन ऋषभस्य संमानं दधत्यः स्तुत्यै कृतानि जगुः ॥ २२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ तासु भगवतः कृपातिशयमाह । तासामिति । अत्यर्थं रमणात्मकेन विहारेण रतिविहारेणेति क्वचित्पाठः इति विहारेणेति क्वचित्पाठः श्रान्तानां वदनानि सः भगवान् प्रामृजत तत्रापि स्वहस्तकमलेन तत्रापि शन्तमेन स्पर्शमात्रेण स्वभावतः सुखकरेण तत्रापि कान्तोचितप्रेमविशेषेण यतः करुणस्तत्परिश्रमं द्रष्टुमक्षमः प्रेम्णेति वीजनोपलेपनादेरुपलक्षणं तथा च तासां परिश्रममालक्ष्य तद्विहारान्निवृत्तः सन् तथा कृतवानित्यर्थः ॥ २१ ॥

ततः पूर्णाखिलमनोरथानां पुनर्मिलितानां तासां प्रहृष्टानां कृत्यमाह । गोप्य इति । ततस्त्र ताः स्वाधीनकान्ताः कान्तपरिधापितरत्नालङ्काराः कुञ्जेभ्यो निष्क्रम्य मिलिता रासोत्सवसमाप्तिसूचकं मङ्गलं जगुरित्याह । स्फुरतां कनककुण्डलानां कुन्तलानां च त्विषा या गण्डश्रीस्तया सुधितेनामृतायितेन सहासावलोकनेन च गोप्यः

१ वात्स्यायनादिभिर्निरूपिता रसकणा यस्यैतादृशो यः कामार्णवस्तद्विहारिणः

ताभिर्[1]युतः श्रममपोहितुमङ्गसङ्ग[2]घृष्टस्रजः स कुचकुङ्कुमरञ्जितायाः ।
गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥ २३ ॥
सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग ! ।
वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥ २४ ॥

श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

ऋषभस्य पत्युर्भगवतो मानं पूजां कुर्वत्यः तस्य कृतानि जगुः यतः पुण्यानि स्फुरदिति तन्त्या सुधितेति मनसा जगुरिति वाचेति त्रिविधं प्रहर्षणमुक्तं पुनश्च तस्य भगवतो नखस्पर्शेन प्रमोदो यासां ताः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

करुण इति तासां श्रमाधिक्यं सूचयति प्रेम्णेति तासां श्रमाधिक्येऽपि भगवत्प्रावण्यं सूचयति शन्तमेनेति सद्यः श्रमनिवृत्तिं द्योतयति ॥ २१ ॥

भगवदङ्गसङ्गेन प्रमुदितानां गोपीनां भगवत्प्रावण्यमाह । गोप्य इति । तस्य श्रीकृष्णस्य कररुहैर्नखैरुपलक्षणमेतदन्येषामङ्गानां नखादिभिरङ्गैः स्पर्शेन प्रमोदो यासां ताः गोप्यः स्फुरतां देदीप्यमानानां पुरटकुण्डलानां कुन्तलानां च त्विषा कान्त्या गण्डेषु यः श्रीः शोभा तया सुधितं सुधामृतं संजातमस्य तत्तथा तेन हासयुक्तनिरीक्षणेन ऋषभस्य रासक्रीडानायकस्य मानं दधत्यः सत्कारं कुर्वत्यः हर्षयन्त्य इत्यर्थः । पुण्यानि श्रोतॄणां श्रावयितॄणां च पुण्यप्रदानि तस्य कृतानि कर्माणि जगुः ॥ २२ ॥

भाषा टीका ।

हे राजन् ! अति कृपालु भगवान् कृष्णचन्द्र ने, अत्यन्त विहार करने से श्रमित जो गोपि तिनके मुखादिकों का अपने सुखदायक हस्त कमल से मार्जन किया ॥ २१ ॥

उन सम्पूर्ण गोपियों ने भी प्रकाशमान जो सुवर्ण के कुण्डल तथा केश इनकी जो कांति तिस से शोभित जो गण्डस्थल तिसकी शोभा से अमृत सरी की हास से कटाक्ष दृष्टि से भगवान् का मान सत्कार किया फिर भगवान् के कर कमल के स्पर्श होने से उनका आनन्द बढ गया तब भगवान् के पवित्र चरित्रों को गान करती भई ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथ जलकेलिमाह । ताभिरिति । तासामङ्गसङ्गेन घृष्टा सम्मर्दिता या स्रक् तस्या अत एव तासां कुचकुङ्कुमेन रञ्जितायाः संबन्धिभिर्गन्धर्वपाळिभिर्गन्धर्वपा गन्धर्वपतय इव गायन्तो येऽलयस्तैरनुद्रुतोऽनुगतः स कृष्णो वाः उदकमाविशत् भिन्नसेतुर्विदारितवप्रः स्वयं चातिक्रान्तलोकवेदमर्यादः ॥ २३ ॥

स्वरतिरात्मारामोऽपि अत्र गोपीमण्डलेऽम्भसि वा ॥ २४ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततः परमद्भुतस्य श्रीभगवतोऽपि प्रेमचेष्टितमाह । ताभिरिति त्रिभिः । श्रमं तासामात्मनश्चापोहितुमपनेतुं तत्र सच्चिदानन्दघनमूर्तेरपि क्रीडायामावेशेन परमवैदग्ध्यादिसूचनार्थं प्रस्वेदकणिकादिना सौन्दर्यप्रदर्शनार्थञ्च श्रमः सम्भाव्य एव अङ्गसङ्गेत्यनेन पद्मिनीस्त्रीवर्गपूज्यपादानां तासामङ्गतः स्वाभाविकामोदसञ्चारोऽभिप्रेतः किञ्च स्वकुचेति अतएवानुद्रुतः स्रक् कौन्दी येया कुन्दस्रजः कुलपतेरिति पूर्वोक्तेः परमशुभ्रत्वेन कुंकुमरञ्जितत्वसम्पत्तेः स्रक्सम्बन्धित्वेन तदानीमलीनां तत्र स्थितियोग्यता तथा गन्धर्वपतिसदृशता तत्र तेषामेव गीतिश्च बोधिता एवं जलक्रीडायां कामोद्दीपनसामग्री च दर्शिता सः परमविनोदी वार्यामुनम् आविवेश आसक्त्या प्राविशत् दृष्टान्तो गजेन्द्रस्य वशाभिर्गजीभिः सह जलविहारासक्त्याद्यनुसारेण अन्यत्तैर्व्याख्यातं यद्वा गन्धर्वपा गायनश्रेष्ठाः । —

गन्धर्वो मृगभेदे स्यात् गायते खेचरेऽपिचेति विश्वः ।

ते च अळयश्च तैः इति जलक्रीडायोग्यमुत्तमगीतमुक्तं यद्वा काभिः श्रीभगवदङ्गसङ्गेन घृष्टस्रजो याश्च निजकुचकुङ्कुमेन रञ्जिता याः रत्यावेशेन सर्वाङ्गेषु सम्पृक्ताः ताभिः अतएव तासां श्रममपनेतुं न केवलं तासामेव स्वस्यापीत्याह । श्रान्त इति । अन्यत्समानम् ॥ २३ ॥

जलक्रीडामाह । स इति । परमकौतुकी अम्भसि जलमध्ये इतस्ततः सर्वदिक्षु अळमतिशयेन परितः सर्वाङ्गेषु सिच्यमानोऽम्भसैव स्वयं स्वातन्त्र्येण रेमे यद्वा स्वयमपि तथैव ताः सिञ्चन्नित्यर्थः । युवतिभिरिति कामरसमत्तत्वं तादृशसेकसामर्थ्यं च दर्शितं प्रहसतीभिः प्रकर्षेण परिहसन्तीभिः नर्मौत्सुक्येन तस्य भङ्गवितर्केण वा तस्य तु तेन प्रेमैव विवृद्धमित्याशयेनाह । प्रेम्णा प्रेमरसेन उक्षितः सिक्तः सन् पाठान्तरे प्रेम्णा ईक्षितो दृष्टः अङ्गेति प्रहर्षसंबोधने वैमानिकैर्विमानेन व्योम्नि चरद्भिर्देवादिभिः सर्वैरेव तत्क्रीडापरिकररूपैः कुसुमवर्षिभिः परमानन्देन वृष्टिवद्बहुलपुष्पाणि क्षिपद्भिः साङ्गिरीड्यमानः साधु साध्विति यद्वा तस्य भङ्गं वितर्क्य बलवृद्ध्यर्थमिव जयजयेत्येव स्तूयमानः ततश्च वैमानिकैरिति पुंस्त्वेन पुरुषैरेव इतीयं स्त्रीणां लज्जया विमोहादिना तत्राशक्तेः किंवा तासां व्रजदेवीपक्षपातित्वेन कुसुमवर्षाद्यप्रवृत्तेः अतःस्वयमित्यस्यात्रैवान्वयः स स्वयमेक एव तैः स्तूयमानः अन्यस्तैर्व्याख्यातं यद्वा स्वेषु निजजनेष्वेव रतिः प्रीतिर्यस्य सः अतः स्वस्य जयादपि तासां जयेन सन्तोष इति भावः । यद्वा ननु श्रीगुरो कृपया तज्जलक्रीडां विस्तार्य वर्णयेति चेत्तत्राह । स्वा असाधारणी रतिर्जलादिक्रीडा यस्य सः अतो दृष्टान्ताद्यभावेन सा विस्तरेण वर्णयितुं न शक्यते इत्यर्थः । एव-

१ र्यौ २ ध्वस्तस्रजः इति विज० पाठः ।

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मत्रान्ते वक्ष्यमाणात् तथा श्रीहरिवंशोदिताच्च द्वारकाजलविहारा-त्कृष्णत्र विशेषः सूचितः गजेन्द्रस्य लीलेव ळीला यस्य सः पूर्वोक्ताभिप्रायमेव यद्वा तादृशजलसेकेऽपि गजेन्द्रस्येव सुखभर-विवक्षयायं दृष्टान्तः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततः परमहृष्टस्य श्रीभगवतोऽपि प्रेमचेष्टितमाह । ताभिरिति त्रिभिः । श्रमं तासामपोहितुमपनेतुम् । तादृशप्रेममयमधुरनर-लीलाविष्टत्वादात्मनश्चेत्यर्थः । अङ्गसङ्गेत्यनेन पद्मिनीस्त्रीवर्गपू-ज्यपादानां तासां सङ्गतः स्वाभाविकपरमामोदसञ्चारोऽभिप्रेतः । किञ्च स्वकुचेति स्वशब्दोऽत्रासाधारणार्थः । अत एवानुद्रुतः स्रक् कौन्दी ज्ञेया । परमशुभ्रत्वेन कुङ्कुमरञ्जितत्वसम्पत्तेः । एवं जलक्रीडायां कामोद्दीपनसामग्री च दर्शिता । वाः यामुनं आविशत् आसक्त्या प्राविशत् । दृष्टान्तो गजेन्द्रस्य बह्वीभि-र्गजीभिः सह जलविहारासक्त्याद्यनुसारेण । अन्यत्तैः । यद्वा गन्धर्वपा गायनश्रेष्ठाः । "गन्धर्वो मृगभेदे स्याद्गायने खेचरेऽपि च" ति विश्वः । त इव येऽलयश्च तैः । इति जलक्रीडायोग्य-मुत्तमगीतमुक्तम् । यद्वा । काभिः श्रीभगवदङ्गसङ्गेन घृष्टस्रजो याः । याश्च निजकुचकुङ्कुमेन रञ्जिता रत्यावेशेन सर्वाङ्गेषु सम्पृक्तास्ताभिः । अत एव तासां श्रममपनेतुं न केवलं तासा-मेव स्वस्यापीत्याह । श्रान्त इति । भिन्नेत्युपमानेऽपि श्रान्तत्वे हेतुः भिन्नसेतुरिव कृतलीलौद्धत्य इत्यर्थः । सकुचेति स्वामि-सम्मतः पाठः स श्रीकृष्ण इति व्याख्यानात् स्वेत्यस्याव्याख्या-नाच्च ॥ २३ ॥

जलक्रीडामाह । स इति । स परमकौतुकी युवतिभिस्ता-दृशक्रीडारसमत्ताभिस्तादृशप्रवीणाभिस्ताभिरित्यर्थः । इतस्ततः सर्वासु दिक्षु स्थित्वाम्भसि जलमध्येऽर्थादम्भसैव सिच्यमानः प्रेम्णोक्षितश्च प्रेम्णेक्षणेनान्तरेऽपि सिच्यमान इवेत्यर्थः । अत एव प्रेम्णोक्षित इत्यपि पाठः । न केवलं तेन बहिरेव सिक्तः, अपि तु प्रेम्णाऽन्तरपि उक्षितः सिक्त इत्यर्थः । इत्यन्तर्बहि-रिति तत्क्रीडासक्तत्वं दर्शितं किं कुर्वतीभिः परिहासरसात् प्रक-र्षेण हसन्तीभिस्तादृशः सन् स्वयमपि रेमे तथैवान्तर्बहिरपि तेन ताः सिञ्चति स्मेत्यर्थः कथंभूतोऽपि स्वरतिरपि तादृशो-ऽपि कथंभूतः सन् गजेन्द्रस्य लीलेव परमासक्तिमयी लीला यस्य तादृशः सन् पुनः कीदृशोऽपि सन् वैमानिकैः कुसुम-वर्षिभिरीड्यमानः सदा सर्वत्र स्तूयमानतया प्रकटपरममहि-मापि सन्नित्यर्थः । तेषां तादृशलीलापरिकरतायामयोग्यत्वात् नान्यथा तु व्याख्येयम् । अङ्गेति हर्षसम्बोधने । अन्यत्तैः । यद्वा स्वेषु निजजनेषु स्वासु तास्वेव वा रतिः रागो यस्य सः । अतः स्वस्य जयादपि तासां जयेन सन्तोष इति भावः यद्वा । कृपया तज्जलक्रीडां विस्तार्य वर्णयेति चेत्तत्राह । स्वा असाधारणी रतिर्जलादिक्रीडा यस्य सः । अतो दृष्टान्ताद्य-भावेन सा विस्तरेण वर्णयितुं न शक्यत इत्यर्थः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सकुचकुङ्कुमरञ्जितायाः कुचनिहितैः कुङ्कुमैः रञ्जितायाः अङ्ग-सङ्गघृष्टस्रजश्च ताभिर्युतः गन्धर्वपालिभिर्गन्धर्वसमूहैः ॥ २३—२८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तस्य ताभिः सह जलक्रीडामाह । ताभिरिति द्वाभ्याम् । अङ्ग-सङ्गेन घृष्टा सम्मर्दिता या स्रक् तस्याः अत एव तासां कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिनः गन्धर्वपतय इव गायन्तो येऽलयो भृङ्गाः तैरनुद्रुतोऽनुगतः स कृष्णस्ताभिः श्रमं रतिविहा-रजं व्यपोहितुमपाकर्तुं वार्जलमाविशत् यथेभराट् गजपतिः श्रान्तो गजीभिः मुहुर्जलं प्रविशति तद्वत् भिन्नसेतुर्विदारिततटः दार्ष्टान्तिकेत्वतीतलोकवेदमर्यादः ॥ २३ ॥

स इति । स भगवान्स्वयमात्मना स्वरतिरात्मारामोऽपि गजेन्द्रस्येव लीला यस्य तथाभूतः तदेवाह अम्भस्यलं नितरां प्रहसतीभिर्युवतिभिः प्रेम्णोक्षितः सिक्तः स्वयमपि ताः सिच्यमानः भ्वादिवद्दिवादेरा-कृतिगणत्वात्कर्तरि श्यन् सेचयन्नित्यर्थः । यद्वा ताभिस्तावत्किंचि-दुक्षितः प्रत्युक्षणेन पुनः पुनः सिच्यमानः अङ्ग हे राजन् ! कुसु-मानि वर्षन्तीति तथा तैर्वैमानिकैर्विमानारूढैर्देवैरीड्य-मानः स्तूयमानोऽत्र रासे रेमे ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वनक्रीडां निरूप्य जलक्रीडां वक्ति । ताभिरिति । कृष्णस्याङ्गसङ्गेन ध्वस्ताः स्रस्तः स्रजो यासां ताः सुकुचानां कुङ्कुमरजोभिः रञ्जिता रागिताः याः ताभिर्गोपीभिः आगच्छन्ति आवृत्य गच्छ-न्तीत्यङ्गास्तरङ्गास्तत्सङ्गेन ध्वस्ता निरस्ताः स्रजो यस्याः सा तथा तस्याः सुकुचकुङ्कुमरेणुभिरञ्जितायाः यमुनायाः वाः वार्यो विशदित्यन्वयः गन्धर्वाणां पालिभिः श्रेणिभिः श्रान्तः भिन्नसे-तुरिति द्वयमिभराड्विशेषणं यद्वा श्रु हिंसायामिति धातोः श्रान्तः नित्यनिरस्तमृत्युः भिन्नसेतुर्विशेषितलोकमर्यादः भेदो विशेषे दलन इति अत्र विशेषो नाम व्यावर्तको धर्मोऽपि लक्ष्यते पृथक्पृथक्-स्थापिततत्सेतुरिति वा ईः कामस्य भां दीप्तिं राजयतीतीभराट् कामस्य भां राजति क्षिपतीति वा इभराट् कृष्णः गोपीविषये गजगाजि शब्द इतिधातोः गजीभिः शब्दयन्तीभिः यद्वा भिन्नसे-तुरित्यनेन गजस्य मदातिरेकसूचनेन कृष्णस्य तात्कालिकहर्षा-तिरेकं व्यञ्जयति भिन्नवेदविहितधर्ममर्याद इत्यर्थः । कृष्णे स्वधा-मोपगते धर्मः कं शरणङ्गत इत्यादिस्वोक्तिविरुद्धं स्यादिति नासा-वङ्गीकर्तुं योग्य इति ॥ २३ ॥

स्वस्मिन् स्वेन वा रतिर्न पराच्च न परेण वा यस्य स तथेत्यनेन तत्तत्काले रमणकथनं लोकमोहनाय विशेषस्मरणाय वेति गमयि-तव्यम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ पुनः श्रमोत्पत्तौ तदपनोदाय जलक्रीडारभसमाह । ताभिर्युत इत्यादि । ताभिर्युतः सहितः वाः वारि अर्थात् कालिन्द्याः ततश्च कृष्णोपवन इत्यादेर्वक्ष्यमाणत्वात् किंकर्त्तुं श्रममपोहितुं दूरीकर्त्तुं कीदृश्या यमुनायाः अङ्गसङ्गेन घृष्टा म्लाना स्रजो यस्यां प्रवेशसमये तेन च ताभिश्च म्लाना माला उत्तार्य्य तस्यां न्यस्ता इति भावः । स्वस्मिन् आत्मविषये कुचकुङ्कुमानि तैरञ्जितायाः आदौ तासां कुचकुंकुमानि कृष्णे लग्नानि पश्चात्तदङ्गच्युतैः सापि रञ्जितासीदिति भावः अत्र स्वशब्दः कृष्णपरः आविशदिति कर्तृप्रत्ययात् कर्त्रा सह स्वशब्दस्य सम्बन्धात् अथवा स्वस्य च कुचानां गोपाङ्गनास्तनानाञ्च यानि कुंकुमानि तै रञ्जितायाः अत्र स्वशब्दस्य कृष्णपरत्वं मालाङ्गरागाभ्यां कालिन्दीं भूषयित्वा तत्राविशदितिभावः गन्धर्वान् पान्तीति गन्धर्वपास्तत्स्वरूपा येऽलय स्तैः सह तेषां गानश्रवणानन्देन तन्निवृत्तेरस्वीकारात् अनुद्रुतः निकटमासाद्य त्वरया धावन् ताभिर्युत इति ताश्च तथा कौतुकेन तथैवोचितमिति भावोक्तिः क इव श्रान्ताभिर्गजीभिः भान्तो गजराडिव भिन्नसेतुः गजपक्षे भिन्नवप्रः पक्षे अतिक्रान्तकामतन्त्रमर्यादः तथा च "रतिचक्रे प्रवृत्ते तु नैव शास्त्रं नच क्रमः" इति अथवा अतिक्रान्तलोकवेदमर्य्याद एव ॥ २३ ॥

जलक्रीडाप्रकारमाह । सोऽम्भस्यलमित्यादि । अलमत्यर्थं युवतिभिः परितः सिच्यमानोऽपि प्रेम्णैवोक्षितः ननु तैस्तैर्जलैः इतस्ततः परि सर्वतोभावेन सिच्यमानत्वेऽपि सेकक्रतपरिभवं न सेदिवानित्यर्थः अत एव कुसुमवर्षिभिर्वैमानिकैर्जयजयेति ईडितः स्तुतः प्रहसतीभिः प्रकर्षेण हसन्तीभिः रेमे इति स्वयमपि ताः सिषेचेत्यर्थः । स्वासु तासु रतिर्यस्य गजेन्द्रलील इति दीर्घकरदण्डजलसेके दृष्टान्तः स्वयं रेमे इत्यन्वयः स्वस्मिन् रतिर्वा तासां तासां तथाविधजलसेकाश्रयत्वेन स्वस्मिन्नेव समधिका रति र्भवतीति भावः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्ताभिस्तुल्याभिर्भगवान् जलक्रीडां कृतवानित्याह । ताभिर्युत इति । ताभिः सर्वाभिरेव युतः महारात्रसमये यमुनायां जलक्रीडार्थं प्रविष्टः तत्र प्रयोजनं श्रममपोहितुमिति तासां सर्वाङ्गश्रमं जलक्रीडयैव दूरीकुर्वन् भगवतस्ताभिः सह गमने जायमानां शोभां वर्णयति स्रजः गन्धर्वपालिभिरनुद्रुता इति यमुनाया वा विशेषणानि गन्धर्वाणां रक्षका गन्धर्वपाः गन्धर्वास्तमाः तेच ते अलयश्च तैरनुद्रुतः सङ्गे शीघ्रं गतः वाः आविशत् आमोदस्य निवारणार्थं च तथा करणं सम्भोगेन श्रमोदके पद्मिनीनां कमलरूपो गन्धो भवति तदुपरोधेनच द्रुतपदविन्यास इति अनुद्रवणं तेच भ्रमरा भगवदीया एवेत्याह अङ्गयोः सङ्गेन घृष्टा या स्रक् तस्यास्ते यस्यां वा स्रक् तादृशी स्या चासौ कुचकुङ्कुमरञ्जिता च भगवत एव माला कालिन्द्याच कुचकुङ्कुमैरञ्जिता तत्र देहामोदः पुष्पामोदः कुङ्कुमामोदश्चेति स्वकीयत्वेनासाधारण्यंच आधिदैविकास्तु भ्रमराः तद्गन्धभोक्तार इति विशेषणं गन्धर्वपेति भ्रान्तः इभराडिवेति अविचारे हेतुः भ्रान्त इति विशेषणं लीलया गमनार्थं प्रत्येकसंभोगावधि भगवतोऽन्यो भावो निरूपित इति तदपगमात् श्रमलीलाप्याविष्कृता गजीभिरित्यन्यश्रमो निवारितः सेतवो बध्यन्ते जलरक्षार्थं ते सर्वे भिन्नाः तादृशगजेन भवन्ति भगवतापि ब्रह्ममर्यादा आत्मारामत्वरूपा जीवानां च मर्यादा तथा सति निवृत्ता कामरूपपरार्थात् परदाराणामभिमर्षणाच्च पूर्वं तासां भगवत्स्पर्श एव स्थितः ननु भगवता ताः स्पृष्टा इति कामाभावात् देशकालमर्यादाच्च भग्ना अतो हस्तिश्रेष्ठ इव जलक्रीडार्थं जलदेवतां दूरीकृत्य स्वयं तत्र प्रविष्ट इत्यर्थः ॥ २३ ॥

तत्र जलक्रीडां च कृतवानित्याह । स इति । सः पूर्वोक्तः स्त्रीसहितः अम्भसि अलं युवतिभिः परिषिच्यमानो जातः ततः प्रेम्णा ईक्षितश्च प्रहसतीभिः कौतुकाभिनिविष्टाभिः इतस्ततः सिच्यमानः यदभिमुखमेव व्रजति तयैव सह रेमे इति एवं सर्वाभिः यथा स्वयं माहात्म्यज्ञानपूर्वकं निर्भरस्नेहेन निर्दोषभावेन वदति शुकस्तथैव राजापि शृणोतीति ज्ञात्वा स्नेहेन स्वमध्यपातित्वं सूचयन् संबोधयत्यङ्गेति अत एव तुभ्यमिमां लीलां वदामीति भावः । ननु देवैः कथं न निषिध्यते तत्राह । कुसुमवर्षिभिर्वैमानिकैरीड्यमान इति । सर्वे देवा अभिनन्दनमेव कुर्वन्ति ननु निवारणमिति अन्यथा लोके कामरसो न व्यक्तो भवेदिति युवत्य इत्यविचारे परिषेके वीररसो माभवत्विति प्रेम्णैव ईक्षितः स्वयमितिपदेन बलात्कारेणापि तथेति सूच्यते तत्रापि स्वस्मिन्नेव रतिर्यस्य परं स्वीकृता गजेन्द्रलीला येन यथा यथा जलेनोक्षणं तथा तथा सुखमिति गजदृष्टान्तः महासौरतं च ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च रासोत्सवस्यावभृथस्नानमिव जलविहारमाह । ताभिर्युतः अपोहितुं दूरीकर्त्तुम् । ताभिः काभिः । याः स्वकुचकुंकुमैरेव रमणव्यापारवशेन रञ्जिताः अङ्गसङ्गेनैव घृष्टाः सम्मर्दिताः स्रजो यासां ताः । स कुचेति पाठे स श्रीकृष्णः । "गन्धर्वो मृगभेदे स्याद्गायने खेचरेऽपि च" ति विश्वप्रकाशाद्गन्धर्वपा गायनश्रेष्ठा ये अलयस्तैरनुद्रुतः सन् वाः यामुनं जलमाविशत् । भिन्नसेतुर्विदीर्णावरणः । कृष्णपक्षे अतिक्रान्तलोकमर्यादः ॥ २३ ॥

प्रेम्णेक्षितः प्रेम्णोचित इति च पाठः स्वं धनं रतिः क्रीडेव यस्य सः ॥ २४ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तदेवं रहःक्रीडां प्रदर्श्य जलक्रीडां दर्शयति । ताभिरिति । ताभिः प्रागुक्ताभिः सर्वाभिरेव श्रमम्मधुरलीलाविष्टत्वं यथायथं रासमुरतयोः खेदमपोहितुमपनेतुं काभिः याः श्रीभगवदङ्गसङ्गेन घृष्टा मर्द्दिताः स्रजो यासां ताः याश्च स्वैरसाधारणैः कुचकुंकुमै रञ्जिता इति सुरतान्तसूचनं ताभिस्ताभिरित्यन्वयः याः अर्थाद्यामुनमाविशत् आसक्त्या प्राविशत् कीदृशः गन्धर्वैरिति गन्धर्वपा गायनश्रेष्ठास्तेच ते अलयश्च तैः ।

गन्धर्वो मृगभेदे स्याद्गायने खेचरेऽपिचेति विश्वः ॥

यद्वा आलय इति पदच्छेदः जलक्रीडानुगुण्यगानपरैः सह-

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

चरीगणैरनुगत इत्यर्थः । यद्वा सकुचकुंकुमेति पाठः तत्राङ्गसङ्गेत्यादिविशेषणद्वयमाक्षेपलभ्यायाः यमुनायाः नामानुक्तिश्च प्रेमवैवश्यादेव सच जलविहारो यथालङ्कारकौस्तुभे ।—

हारादिभिः सन्त्रुटितैर्निजाङ्गाद्विभूषयामास पतङ्गपुत्रीम् ।
तस्याः सरोजादिभिरात्मनोऽङ्गम्
राधालिवर्गो जलकेलिकाले ।

अपिच ।—

कृष्णे कर्षति कोकयुग्ममचलादोर्भ्या व्यधात्स्वस्तिकम
कण्ठे चारुमृणालमर्पयति सा बाहू दधे कुञ्चितौ ॥
पद्मञ्जिघ्रति पाणिनास्यमवृणोदित्थं जले खेलतो
रस्पर्शाद्धरतिस्तयोः प्रियसखीवर्गस्य रस्याभवत् ॥

श्रीगोविन्दलीलामृते च ।—

निवारितसखीपाल्योर्मिथः संस्पर्द्धिनोस्तयोः ।
ईशेशयोर्द्वन्द्वयुद्धमासीदादौ जलाजलि ॥
सखीपाल्यां वृत्तौ सत्यां कराकरि भुजा भुजि ॥
नखानखि ततः पश्चान्मुखामुखि रदारदि ।

तदेतदनुसन्धायाह । इभराडिवेति । निरंकुशइति भावः भिन्नसेतुः अतिक्रान्तकामतन्त्रमर्य्यादः ।—

प्रवृत्तेरतिचक्रेतु नैव शास्त्रं नच क्रम इति ।

भरतोक्तेर्नित्यं तद्वशवर्तिनोऽनुकूलस्यापि जलक्रीडावेशान्निरंकुशत्वं युक्तमेवेति भावः । यद्वा ताभिरिति बहुत्वेन तस्यान्यत्रासक्तिप्रसक्तिं समादधदाह । भिन्नेति । अतिक्रान्तानुकूलनायकमर्य्यादः तथात्वञ्च तस्यामेव निजवैदग्ध्यप्रदर्शनायेत्यविरोधः ॥ २३ ॥

तदेव प्रपञ्चयति परमकौतुकी युवतिभिः तत्तद्रसमत्ताभिः तादृशक्रीडाप्रवीणाभिश्च अल मतिशयेनाभितः इतस्ततः सर्वासु दिक्षु परिवृतस्येति शेषः अम्भसि जले तैनैव सिच्यमान इतिवह्निः अन्तश्च प्रेम्णा ईक्षितः सिक्तः इत्युभयत्र क्रीडावेशो दर्शितः प्रकर्षेण हसन्तीभिः स्वयमप्यन्तर्बहिश्च सिञ्चन् रेमे इत्यर्थः । कीदृशः स्वा असाधारणी रतिर्जलक्रीडारूपा यस्य सः यद्वा स्वेषु निजजनेष्वेव रतिर्यस्य स्वासु आत्मीयासु तास्वेव रतिर्यस्येति वा अतः स्वपराजयेऽपि तासां जये सति सन्तोष इति भावः । वस्तुतस्तु स्वयंस्वरतिः स्वात्मनि श्रीराधायामेव रतिर्यस्य सोऽपि अत्र गोपीजनसमुदाये गजेन्द्रलीलः निरर्गलचेष्टितः यद्वा अत्र मम हृदि स्वयं स्वस्वरूपेण स्वरतिः आत्मारामः श्रीराधारमण इति यावत् लोकवल्लीलायान्तु गजेन्द्रलीलः गजेन्द्रस्येव तन्सुखावेशाद्वहीभिः क्रीडामयी लीला यस्य सः अतएव परमोल्लासेन विस्मितैरपि पुनश्चेनि तैर्वैमानिकैः सुरादिभिः कुसुमवर्षिभिः सद्भिरीड्यमानः तादृशनित्यलीलतया संस्तूयमानः एवञ्च क्रीडाया निर्दोषत्वं साधितम् अङ्गेति सहर्षसम्बोन्धनं ततश्च निर्लेपतां कुचयुगानि निरञ्जनत्वं नेत्राणि मोक्षमगमन् रसनाकचाद्य नीव्यश्च निर्गुणदशां सह हारमाल्यामप्रासु तद्धनरसे रमणीस्वमूर्त्तामिति ब्रह्मानन्दरसादपि जलक्रीडायामधिको रसावेशो जात इतिसंक्षेपः ॥ २४ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

तासां श्रमापोहाय भगवतो जलविहारार्थं यमुनाप्रवेशमाह । ताभिर्युत इति । भगवतः साक्षात्सच्चिदानन्दविग्रहस्य श्रमस्य सम्भावयितुमप्यशक्यतया तासामेव श्रममपोहितुं तथाच श्रान्त इति दृष्टान्ते एवेभराड्विशेषणं ज्ञेयं यद्वा जनोद्धाराय स्वीकृतसर्वजनमनोहरगोपाललीलानुसारेण स्वैश्वर्य्यगोपनाय स्निग्धजनध्येयनित्याच्युतसुधाच्युद्दृक्चकोर्य्याप्यायनातिचित्रमुखचन्द्रच्छविप्रकटनाय च श्रमानुकारसम्भवेन तदपोहमिषेणैव ध्येयजलक्रीडाविष्कारायच श्रममपोहितुं यथा पररतिशान्त्याद्यन्विताः कुलश्रुतिकर्ममर्यादासेतुं भङ्क्त्वाभक्तास्तदनुरक्तिमत्ताः परमासक्त्या तत्तत्कर्मजनितश्रममपोहितुं नानारतिरङ्गतरङ्गान्वितविमलतापोपशमकस्यामरङ्गापगावाः प्राविशन्ति तथा ताभिर्युतः सोऽतिस्वच्छशीतलश्यामलयमुनावाः गजीभिः सह भिन्नसेतुरिभराडिव भिन्नलोकमर्य्यादासेतुः सर्वज्ञोऽपि प्रेमोन्मत्तवदाविशत्युक्तश्चायं गोपीजनानुरागभगवत्कृपाप्रवाहबलाभ्यां तन्मर्य्यादाभङ्गः पुनः कीदृशः स तत्राह । कुचयोरालिङ्गनेन तत्संलग्नकुंकुमेन रञ्जितायास्तथा तासामङ्गसङ्गेन घृष्टायाः स्रजो वनमालायाः संबन्धिनस्तदामोदामोदापूर्णमनसो गन्धर्वपतय एवालयो भ्रमरास्तैरनुद्रुतः अत्रादौ स्रजः स्वत एवामोदवत्त्वं ततः पद्मिनीशिरोऽवतंसाङ्गसुमनः संघर्षेण ततः कुचकुंकुमरञ्जितत्वेन त्रिधामोदोत्कर्षस्तन्मन आकर्षणे हेतुर्दर्शितः अलीनाञ्च दिव्यत्वेन सुरत्वं तत्रापि सुरवत् गुञ्जारात्मकगानरतत्वेन गन्धर्वत्वमभिहितं स्वकुचकुंकुमरञ्जिताया इति पाठेतु स्वशब्दस्तु तासां कुचकुकुंमस्यासाधारण्यद्योतकः तथानेनातिविलक्षणेन कुचकुंकुमेन रञ्जितत्वोक्त्यात्यामोदप्रभवत्वमूचनं तथाच यथा श्यामरङ्गगङ्गाप्रविष्टा भक्तजनाः स्वोरोऽनुरागरञ्जितहरितनुसुमनःस्रग्धरास्तथा भक्तिसङ्गानुरञ्जित सुमनोवृत्तिगणसुमनः स्रग्धरा हरिणैव तन्मध्वामोदोन्मदमधुपतयानुद्रूयन्ते तथा स्रजो गन्धर्वपालिभिरनुद्रुत इति भावः यथा भक्तजनोरस्युरोरागरञ्जिता हरितनुसुमनोमालाभक्तिसङ्गरङ्गरञ्जिता सुमनोवृत्तिमाला वा हरिणैव मधुपरूपतया नुद्रूयते तया भगवदुरसि कुचकुंकुमरञ्जितवनमालागन्धर्वपैर्भक्तैरलिरूपैरनुद्रूयते इति दर्शितम् अत्र स्रगपि कौन्दी तस्य शौक्ल्येन रञ्जितत्वसंभवात् पूर्वं—

कान्ताङ्गसङ्गकुचकुंकुमरञ्जितायाः ।
कुन्दस्रजः कुलपतेरिह वाति गन्ध इति ॥

निर्देशाच्च यद्वा या गोप्य एव भगवदङ्गसङ्गेन रतिरणाभिमर्शेन घृष्टाः स्रजः कुसुममाला यासां तथाभूता यद्वा भगवदङ्गसङ्गघृष्टसुतनुसुमनस्तया घृष्टस्रग्रूपा अत एवाङ्गघर्षेण सर्वाङ्गप्रसरितस्वकुचकुंकुमेनैव रञ्जितास्ताभिर्युत इत्यन्वयः यद्वा तासामात्मनश्चाङ्गसङ्गेन घृष्टाः स्रजः फुल्लितकुमुदादिकुसुमपङ्क्तयो यस्याः तथा कुचकुंकुमेन रञ्जिताया यमुनाया वाः आविशदिति संबन्धः ॥ २३ ॥

जलविहार एव निरूप्यते । सोऽम्भसीति । स इति नानारसविहारदक्षो रसाधारत्वेन प्रसिद्धो जलविहारानुरतः कृष्णसुरसात्मकातिस्वच्छकृष्णाम्भसि ताभिर्वाहिरन्तः श्यामरसनिमग्नाभिर्युवतिभिः स्वसमानवयोनवकिशोरीभिस्तथा प्रहसतीभिः हसनं मुखचन्द्रसितप्रभामृतमयाल्हादिरश्मिमी रसवृष्टिः तथाच प्रकर्षेण मुखचन्द्रकररसवृष्टिं कुर्वतीभिरितस्ततः सर्वदिग्भ्यः प्रेम्णेक्षितस्तथा

श्रीरामनारायणकृतभावभावविभाविका ।

परि सर्वतो बहिरन्तरतः सिच्यमानः तथा वैमानिकैः कुसुमवर्षिभिरीड्यमानः स्तूयमानः स्वरतिः स्वयं रेमे इत्यन्वयः परिसिच्यमान इत्यत्र परिशब्देन सर्वतो बहिरन्तर्वृष्टिद्योतकेन बहुधा वृष्टयो द्योतितास्तत्र करकमलैर्बहिर्जलवृष्टिसेचनं प्रेम्णेक्षित इत्यनेन सितासितारुणघनात्मकदृग्भिरनुगौरोऽधिद्वत्पूरितैः स्निग्धापाङ्गवर्षैः प्रेम्णान्तः सेचनम् अतएव क्वचित्प्रेम्णोक्षित इति पाठः तत्रोक्षितः सिक्त इति स्पष्टमतः प्रेमरससिञ्चननिर्देशः तथा प्रहसतीभिरित्यनेन हसनं मुखचन्द्रसुधावर्षं रसस्य प्रकृष्टताद्योतकप्रशब्दपूर्वकत्वेनातिशयितसेचनसूचनं ताभिस्तथा बहिरन्तरार्द्रीभावापादकवृष्ट्या परिपिच्यमानः स्वयमपि तथा रेमे इत्यत्र भगवत्कर्तृका तासां बहिरन्तरार्द्रताप्रयोजिका अपि वृष्टयो ज्ञापिताः तत्र हारि, तत्सखीकरहङ्मुखानां कमलत्वाद्यमुनाजलशोभापादकत्वं तथा पूर्वनिरूपितनज्जलादिवृष्टीनां तत्तत्कमलमधुस्रावत्वसम्भयात् तत्रत्यकमलानां स्वमधुवृष्ट्या लज्जोत्पादकत्वं तथा स्वधाम्नि सलिले सूर्यः स्वमित्रमित्रतनयासन्निधौ स्वसङ्कोचकहरितत्सखिविशालभालचन्द्रव्रातागमे तत्कमलेहस्तेषु जलाद्यस्त्रप्रक्षेपज्ञापकत्वं यद्वा रिपुत्वेऽपि स्वगृहागतेषु तेषु स्वस्वमधुवृष्ट्यात्मकसमानेन सज्जनसद्रीतिद्योतकत्वमुत्प्रेक्षते यद्वा प्रेमजडीकृततया स्वर्गयूथिकालतात्मकगोपीतनूनां श्रीकृष्णचन्द्रस्यकरैरेव करैः कर्जलसुधावृष्ट्या पुलकमुकुलोत्फुल्लप्रत्यङ्गसुमनसां क्रीडोत्साहपवनजवलोलानां पूर्वोदितजलबिन्द्वादिसुमनोवृष्टिः करहङ्मुखैस्तत्सुमनोभिर्मधुवृष्टिर्वा ऊह्यते वैमानिकैरिति तु विमानेषु भवा वैमानिकाः सुरास्नः यद्वा विमानान्येव कानि साक्षात्स्वर्गाः तत्र तत्रत्यसर्वभोगसामग्रीसद्भावात् तत्र भवा वैमानिकाः यद्वादौ विशेषमाना विमाना अतएव कुत्सितत्वाद्विमानका विमानका एव वैमानिका अधुना भगवच्छोभावलोकने तु विगतमाना विमानास्ते एव काः सुखरूपा विमानका एव वैमानिकास्तैस्तथा कुसुमवर्षिभिः कुः पृथिव्यपि सुमा सुष्ठु मा शोभा यस्यास्तादृशी येभ्यस्तानि कुसुमानि यद्वा वृन्दावनसुमनसां भगवत्तत्सखीतनुसुमनसां च शोभादर्शनलज्जितत्वेन कुत्सितां लज्जितत्वे तद्विमुखतामस्वीकृत्य तत्सम्मुखतया भगवत्प्रेमोत्साहेन सुष्ठु च मा शोभा येषां तानि कुसुमानि नन्दनवनसुमनांसि तद्वर्षोऽस्त्येषामिति कुसुमवर्षिणस्तैरीड्यमानः स्तूयमान इत्यनेन गोपीकर्तृकवृष्टित्रयवद्देवकर्तृकसुमनोवाग्वृष्टिद्वयमपि सूचितं तथा गोपीबहिरन्तरार्द्रतापादकभगवत्कर्तृकवृष्टिवत्सुरसुमनसामार्द्रत्वापादकरसवृष्टिरपि द्योतिता ताभिरभिपिच्यमानस्य भगवतोऽपि तथा रमणे दृष्टान्तो गजेन्द्रलील इति गजेन्द्रो यथा करेणुभिर्बालगजैश्चाभिपिच्यमानः स्वयमभिपिञ्चति तद्वदिति भावः ॥ २४ ॥

———

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ततो रासोत्सवान्ते जातमवभृथस्नानमिव जलविहारमाह । ताभिर्युतः तासामङ्गसङ्गेन घृष्टाया मर्दितायाः कौन्दस्रजः अत एव तासां कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिभिर्गन्धर्वपालिभिः "गन्धर्वो मृगभेदे स्याद्गायने खेचरेऽपि चेति श्वप्रकाशात् गायनश्रेष्ठैर्भ्रमरैरनुद्रुतः सः कृष्णः यमुनाया भगवदङ्गसङ्गेन घृष्टस्रजः अत एव स्वकुचकुङ्कुमेन रत्यावेशात्प्रसृतेन रञ्जिताखिलदेहायास्ताभिर्युतस्तासां श्रमं निराकर्तुं स्वयमपि श्रान्तः सन् वार्यामुनं जलमाविशत् श्रान्ततायां हेतुः भिन्नः सेतुर्लीलामर्यादा येन कृतलीलौद्धत्य इत्यर्थः गजोऽपि विदारितवप्रत्वात् श्रान्तः गजस्यैव चेदं विशेषणद्वयं स्वयं चातिक्रान्तलोकवेदमर्याद इति केचित् ॥ २३ ॥

अङ्ग हे राजन् ! सः लीलाविलासचतुरः युवतिभिर्जलक्रीडां कर्तुमतिसमर्थाभिः अम्भसि इतस्ततः सर्वतः जलैः परिपिच्यमानः प्रेम्णेक्षितश्च स प्रेमेक्षणेनान्तरपि पिच्यमानः क्वचित्प्रेम्णोक्षित इति पाठः परिपिच्यमानं प्रेष्ठमवलोक्य प्रहर्षेण हसन्तीभिः तदानीमपि पुष्पवर्षपरायणैर्विमानस्थितैर्देवादिभिः स्तूयमानः स्वयं साक्षात्पुरुषोत्तमविग्रहो रेमे तत्र दृष्टान्तः गजेन्द्रस्येव लीला यस्य अत्रैवंभूतरमणकालेऽपि वस्तुतः स्वरतिः स्वस्मिन्नेव रतिर्यस्य न बहिः तथा च तादृशरमणं कुर्वतोऽपि भगवतः स्वमाहिम्न्येव स्थानमेवासीदिति भावः । अत्र गोपीमण्डले अम्भसि वेत्यन्ये ॥२४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थलक्रीडामुक्त्वेदानीं जलक्रीडामाह । ताभिरिति द्वाभ्याम् । ताभिर्गोपीभिर्युतः तदङ्गसङ्गेन घृष्टा संमर्दिता या स्रक् तस्या अतस्तत्कुचकुङ्कुमेन रञ्जितायाः सम्बन्धिभिः गन्धर्वपालिभिः । गन्धर्वपतय इव गायन्तो येऽलयो भ्रमराः तैरनुद्रुतः अनुगतः स कृष्णः तासां श्रमं व्यपोहितुमपाकर्तुं वार्जलमाविशत् भिन्नसेतुर्विदारिततटः अत एव श्रान्तो गजीभिर्युतः इभराड् यथोदकं प्रविशति तद्वत् दार्ष्टान्तिके स्वप्राप्ति प्रतिबन्धकतत्कर्मसेतुभिद्रित्यर्थः ॥ २३ ॥

जीवः स्वकीयोंऽशः शरीरं स्वकीयशक्तिपरिणामजः अतः स्वकीयैर्गोपीजनैर्गतिर्यस्य सः अम्भसि युवतिभिः प्रेम्णा प्रथमतः स्नानविधिना उक्षितः सिक्तः अभिषिक्त इत्यर्थः पुनः हे अंग ! अलमत्यर्थं हसतीभिः परिपिच्यमानः वैमानिकैरितस्तुतः ईड्यमानश्च अत्रात्मस्येव स्वयमपि ताभिः सह रेमे इत्यन्वयः ॥ २४ ॥

———

भाषा टीका ।

तदनन्तर रास के परिश्रम को दूर करने को भगवान् ने यमुना के जल में प्रवेश किया उन के अङ्ग के संग से मर्दित जो कुन्द की माला जोकि गोपीयों के कुच कुंकुम से रंगी गई है उसके पीछे गंधर्वों मे उत्तम सरी के गान करने वाले भौंरा लगे हैं इस प्रकार से जैसे थका हुआ मत्त हस्ती हथिनियों के साथ जल मे प्रवेश करता है तैसे मर्यादा को तोड़ कर जल मे प्रविष्ट होते भये ॥ २३ ॥

हे राजन् ! जल के मध्य मे सब गोपी भगवानको जल से सेचन करती थीं और परिहास करती जाती थीं और प्रेम से देखती थीं उसी समय मे आकाश मे देवता विमानों पर बैठ कर फूलों की वर्षा करके स्तुति करते थे इस प्रकार महागजराज की लीला करने वाले भगवान् अपने स्वरूप में रत गजेंद्र की लीला से जल क्रीडा करते भये ॥ २४ ॥

ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ।
चचार भृङ्गप्रमदागणावृतो यथा मदच्युद्द्विरदः करेणुभिः ॥ २५ ॥
एवं शशाङ्कांशुविराजिता निशाः स सत्यकामोऽनुरताबलागणः ।
सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथा रसाश्रयाः ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्थलजलक्रीडे दर्शिते वनक्रीडां दर्शयति । ततश्चेति । यमुनाया उपवने जलस्थलप्रसूनानां गन्धो यस्मिंस्तेनानिलेन जुष्टानि दिशां तटान्यन्ता यस्मिन् यद्वा दिशश्च तटं स्थलं च यस्मिन्नुपवने भृङ्गाणां प्रमदानां च गणैरावृतः ॥ २५ ॥

रासक्रीडां निगमयति । एवमिति । स कृष्णः सत्यसंकल्पोऽनुरागिस्त्रीकदम्बस्थ एव सर्वा निशाः सेवितवान् शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूता निशाः यद्वा निशा इति द्वितीयात्यन्तसंयोगे शृङ्गाररसाश्रयाः शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेव इति एवमप्यात्मन्येवावरुद्धः सौरतश्चरमधातुर्नतु स्खालितो यस्येति कामजयोक्तिः ॥ २६ ॥ ॥ २७ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततो जलक्रीडानन्तरमितिजलक्रीडया पुष्पमाला देम्लानत्वादिना पुष्पा वचनादिकौतुकार्थमित्यर्थः । त्वर्थेचकारो भिन्नोपक्रमे जलप्रसूनानि कमलादीनि स्थलप्रसूनानि जातीकुन्दादीनि तत्तद्गन्धसंबन्धेनानिलस्य शैत्यं सौरभ्यं च जुष्टे मान्द्यं च ज्ञेयं चचार पुष्पावचयनिकुञ्जान्तर्निलीनतादिविचित्रप्रकारेण क्रीडन्नितस्ततो बभ्राम भृङ्गगणावृतत्वं पुष्पावचयनेन तत्साहित्येनैवागमनात् किंवा जलक्रीडायामङ्गरागापगमेन सहजमधुरसौरभ्यप्रकाशात् किंवा तेषां भावोद्दीपनस्वभावत्वेन सदा स्वीकारात् किंवा श्रीमुखवनमालाद्यामोदेन सदाकृष्टत्वात् अतएव तेषां मुहुरुक्तिः मदच्युदिति भृङ्गगणावृतत्वे हेतुता तथा द्विरदश्रेष्ठता काममत्तता च तथा गजीनामपि तत्सङ्गात्तादृश्येव सूचिता सर्वत्रायं दृष्टान्तः प्रायो मत्तगजेन्द्रस्य कामाधिकतायाः तथा सदा गजीभिः सह स्वानन्द्येण क्रीडया मिथः प्रीतेश्चापेक्षयेति अन्यत्तैर्व्याख्यातं यद्वा भृङ्गवद्भ्रमन्त्यः क्रीडालोला याः प्रमदास्तासां गणेनावृतः इति तेषां प्रेममत्तत्वोक्ता अतएव प्रमदेत्युक्तम् ॥ २५ ॥

एवं तद्वाधिकृतरासक्रीडामुक्त्वा तस्यामनुक्तमन्यमपि विलासं सङ्गृह्णन् तथा बहुलरात्रकृतायामपि तस्यां तामनिर्दिशन्नुपसंहरति एवमिति । उक्तप्रकारेणेति तद्रात्रावीदृशी परापि क्रीडा सूचिता सा चात्यन्तविस्तीर्णत्वाद्वर्णयितुं न शक्यते इति भावः । तथा निशा इति बहुत्वेन तत्र च सर्वा इति साकल्येन संपूर्णकैशोरं सर्वास्वेव रात्रिषु रासक्रीडा बोध्यते श्रीपराशरेणापि तदुक्तमेव सोऽपि कैशोरकवय इति तत्र च—

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशाद्यौवनन्तु ततः परम् ॥

इत्यादिवचनादेकादशाब्दमारभ्य पञ्चदशाब्दपर्यन्तं गोकुलेऽत्र नित्यं सा क्रीडा ज्ञेया यच्चोक्तं श्रीमदुद्धवेन तृतीयस्कन्धे एकादशसमास्तत्र गूढार्चिः सबलोऽवसदिति तच्च कौमारपौगण्डयोस्तद्योग्यवयसो रासक्रीडानुदयेन भगवता विशेषप्राकट्याभावाद्बुद्धैश्वर्यत्वाभिप्रायेण अतएवोक्तं गूढार्चिरिति अतएव रङ्गस्थलेऽपि पितरौ प्रतिश्रीभगवतैव वक्ष्यते नास्मत्तोयुवयोस्तातेत्यादि यच्चमधुपुरीप्रवेशे वक्ष्यमाणस्य प्रागल्भ्यलीलाहसितावलोकनैरित्यादेरनुसारेण कैश्चिद्यौवनेऽपि श्रीभगवतो गोकुलक्रीडा मन्यते तच्च नातीव संगतं कैशोरेऽपि तस्य वैदग्धीविशेषेण प्रगल्भलीलायाः सम्भवात् अन्यथा किशोरौ श्यामलश्वेतावित्यक्रूरदृष्टेः तथा किशोरौ नातियौवनाविति पुरनार्य्युक्तेश्च विरोधः स्यादिति किंच एवमित्यनेन तद्रात्रिक्रीडाया ईदृशी अन्यरात्रिक्रीडापि तादृश्येवेति सूच्यते ततश्च पूर्वं रासक्रीडारम्भे श्रीभगवतस्तासां च मिथोवाक्यस्य मध्ये प्रश्नोत्तरञ्च परमप्रेमरससंप्लुततयानुसंधानाभावेन नित्यनूतनवत् प्रवृत्तेः पुनःपुनः सर्वं सम्भवेदेव एतच्च पूर्वं लिखितमेवेति शशाङ्कः पूर्णचन्द्रः पूर्णत्वेनैव शशसदृशलाञ्छनस्य सम्यगुदयात् तस्यांशुभिर्विशेषेण राजिताः दिनवत्प्रकाशिताः एवं श्रीभगवद्रासक्रीडार्थं तासु रात्रिषु चन्द्रः पूर्णिमायामिव पूर्णमण्डल एवोद्गच्छेदिति ज्ञेयं यच्चोक्तं वैशम्पायनेन—

एवं स कृष्णो गोपीनां चक्रवालैरलंकृतः ।
शारदीषु सचन्द्रासु निशासु मुमुदे सुखीति ॥

तत्र च शारदीष्वितिउपलक्षणं किंवा शारदीष्विवेति ज्ञेयं यद्वा मधुपुरीमध्ये श्रीवसुदेवकृतपुत्रपरिवर्त्तनादिवत् कल्पभेदव्यवस्थया भेदः कल्प्यः ननु नित्यमेव तादृशरात्रौ तादृशप्रकारादिना कथं रासक्रीडा सिध्येत्तत्राह । सत्यकाम इति । ननु तथापि मानादिना पत्यादिपारवश्यादिना वा सदा तास्तस्यापि दुर्लभा मन्ये तत्राह अनु निरन्तरं रतो ऽनुरक्तः सर्वथा बहुप्रबन्धेन सर्वोपेक्षया वा सम्यक्तोऽबलानां तदेकाधीनगोपीनां गणो यस्मिन्निति यद्वा ननु पत्यादिभिरस्वतन्त्राणां तासां नित्यप्राप्तिः कथं स्यात्तत्राह । अनुरतेति । सर्वोपेक्षया सदा तस्मिन्नेव रतत्वादित्यर्थः । किंवा तासामनुरतत्वेन सामरस्याद्यत्र कुत्रापि यदा तदा येन केनापि प्रकारेण सिद्ध्येदेवेति भावः । तत्र चासम्भावना नास्तीत्याह सः महामोहनो रासरसिकः इति नच कदाचित् केनापि हेतुना तत्र तृप्तिः स्यादित्याह । अवरुद्धं स्वीकृतं सौरतं सुरतसमूहो लीलाविलासोद्रेको वा येन सः तदर्थमेव प्राकट्यादित्यर्थः । तच्चात्मन्येवेति न केवलं स्वयमौदासीन्येन ता एव रमयामास किंतु आत्मन्येवावरुद्धसौरत इति किंतु स्वस्मिन् साक्षात् स्वीकारेण परमासक्त्या स्वयमप्यनुभूतवानित्यर्थः । यद्वा आत्मनिमित्ते इत्यात्मारामत्वाद्यपेक्षया तस्यापि तेन परमानन्दो बोधितः न केवलमुक्तप्रकारा रासक्रीडैव कृता किंतु ताभिः सह विचित्रप्रकारेण विचित्रा रतिश्च कृतेत्याह । शरदिति । शरदि कामस्य प्राव-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ल्येन पुलिनादेश्च सौन्दर्येणोक्तं यद्वा "हायनोऽस्त्री शरत्समा" इत्यमरोक्तेः सम्वत्सरमध्ये यस्मिन् ऋतौ मासे दिवसे वा याः काव्येषु कथा निरूप्यन्ते ताः सिषेवे तदर्थान् प्रीत्यानुष्ठितवानित्यर्थः ततश्च श्रीगीतगोविन्दविदग्धमाधवनाटकाद्युक्तप्रकारा ज्ञेयाः अन्यत्तैर्व्याख्यातं यद्वा एवं सिषेव इति रात्रिषु रासक्रीडा उक्ताः अधुना कदाचिद्दिवसेष्वपि तादृशीं मन्यामपि क्रीडां सूचयति सर्वा इति शरत्काव्यकथाश्च सर्वाः सिषेवे तत्र काव्यशब्देन परमवैचित्री तासां सूचिताश्च गीतगोविन्दादिप्रसिद्धाः तथा श्रीचण्डीदासादिदर्शितदानखण्डनौकाखण्डादिप्रकारकाश्च ज्ञेयाः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो जलक्रीडानन्तरमिति पूर्वनेपथ्यापगमे तदानीं वन्यनेपथ्यस्य रोचकत्वात्तत्प्रचुरक्रीडाविशेषेच्छयेत्यर्थः । त्वर्थे चकारो भिन्नोपक्रमे । चचार पुष्पावचयनिकुञ्जान्तर्निलीनतादिविचित्रप्रकारेण क्रीडन्नितस्ततो बभ्राम भृङ्गगणावृतत्वं पुष्पावचये तदुत्साहित्वेनैवागमनात् । जलक्रीडायामङ्गेषु धौतेषु सहजमधुरसौरभ्यतयातिप्रकाशाच्च । अत एव तेषां मुहुरुक्तिः मदच्युदिति भृङ्गगणावृतत्वे हेतुता तथा द्विरदश्रेष्ठता स्वकान्तासक्तता च ॥ २५ ॥

अथास्यां शरदि पूर्णिमायां कृतां रासक्रीडामुपसंहरन् तत्प्रकारतामन्यत्राप्युपदिशन्नन्यामन्यामपि क्रीडामुपलक्षयति । एवमिति । एवं पूर्वोक्तरासप्रकारेण शरत्काव्येति वक्ष्यमाणात् प्रतिशरदृशशाङ्कांशुविराजिताः निशाः सर्वा एव सिषेवे परमादरेण परिचरितवानित्यर्थः । अन्यथा ऋत्वन्तरसम्भवात् ज्योत्स्नीस्तामसीश्च रहस्तत्तद्गृहप्रवेशतत्तदभिसारेण कुञ्जशयनादिना कदाचिद्रासेन चेति भावः । उत्तरासां विशेषज्ञापिकाः पूर्वा एव विशिनष्टि । शरदि ये काव्यकथारसाः सम्भवन्ति तेषामाश्रयो यासु श्रीभगवत्कृतानन्तलीलासु तादृशीं निशा व्याप्येति पक्षे सर्वाः शरत्काव्यकथाः सर्वदेशकालकविभि र्यावत्यो वर्णयितुं शक्यन्ते तावतीस्ताः सिषेवे किन्तु रसाश्रया रस एव आश्रयो यासां ता एव नतु कैश्चिद्विरसतया या ग्रथितास्ता अपीत्यर्थः । उपलक्षणं चैतदन्यासाम् । यद्वा । शशाङ्कांशुविराजिताः वसन्तादिसम्बन्धिन्योऽपि या निशास्ता एवं रासप्रकारेण सिषेवे । तथा ऋतुषट्कात्मकस्य शरदाख्यस्य याः काव्यकथाः पूर्ववदनन्तास्ताश्च सर्वाः सिषेवे किन्तु रसाश्रया एवेति । कीदृशः सन् सिषेवे तत्राह । आत्मन्यन्तर्मनसि अवरुद्धाः समन्ततः स्थापिताः सौरताः तासां सुरतसम्बन्धिनो भावहावादयो येन तादृशः सन्निति ततस्ताः परित्यक्तुं न शक्तवानिति भावः । अत्र विशेषानिर्देशादखिला एव भावादयो गृहीताः । "एवं सौरतसंलापैर्भगवान्देवकीसुतः। स्वरतो रमया रेमे नरलोकं विडम्बयन्नि" त्यत्र तु विशेषनिर्देशार्थमेव हि संलापशब्दो दत्त इति । आत्मन्यवरुद्धसौरतत्वे हेतुः अनुरतावलागणः निरन्तरमनुरक्तोऽवलागणो यस्मिंस्तादृशः । तेषां सौरतानामनुरागप्रेमवत्त्वादनुराग एव तत्र कारणं नतु कामिजनवत् काम इत्यर्थः । यतः सत्यकामः व्यभिचाररहिततादृशाभिलाष इति । एवमेवोक्तं श्रीपराशरवैशम्पायनाभ्याम् । "एवं स कृष्णो गोपीनां चक्रवालैरलङ्कृतः । शारदीषु सचन्द्रासु निशासु मुमुदे सुखी" ति । टीकायां त्वेवमपीत्यादिना स्मरपारवश्याभावमात्रप्रतिपादनाय सौरतशब्दस्य व्याख्यान्तरमप्रसिद्धमपि कृतमिति ज्ञेयम् ॥ २६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्थलजलक्रीडे वर्णिते अथ वनक्रीडां वर्णयति । ततश्चेति जलस्थलप्रसूनानां गन्धो यस्मिंस्तेनानिलेन जुष्टानि दिशां तटान्यन्ता यस्मिंस्तस्मिन् कृष्णाया यद्वा दिशश्च तटं स्थलं च यमुनाया उपवने भृङ्गाणां प्रमदानाञ्च गणैरावृतश्चचार कथं यथा मदच्युन्मधुधारास्रवन् द्विरदो मत्तगजः करेणुभिरिभीभिस्तद्वत् ॥ २५ ॥

रासक्रीडां निगमयति । एवमिति । इत्थं स भगवान् सत्यसङ्कल्पोऽनुरतोऽनुरागी स्त्रीणां गणो यस्य तथाभूतोऽप्यात्मन्येवावरुद्धः सौरतश्चरमधातुर्नतु स्खलितो यस्य तथाभूत इति कामजयः सूच्यते चन्द्रांशुभिर्विराजिताः सर्वाः शरदि काव्येषु कथ्यमाना ये कथारसास्तेषामाश्रयभूता निशाः सिषेवे ॥ २६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णायाः यमुनाया उपवने जलप्रसूनानि कुमुदादीनि स्थलपुष्पाणि सौगन्धिककुन्दादीनि तेषां गन्धमिश्रवायुना जुष्टाः परिमलिताः दिक्तटाः दिगन्ता यस्य स तथा तस्मिन् मदच्युन्मदजलस्रावी अयमत्र दुष्टगर्वनाशनः रदलेखन इतिधातोः पुण्यपापयो रदो लेखनं येन स द्विरदः चित्रगुप्तेन पुण्यपापलेखनकर्तेत्यर्थः । करे हस्तविषये अणुभिः लतावत् दण्डायतबाहुभिरित्यर्थः । भृङ्गवद्गायमानप्रमदागणपरिवृतः यद्वा भृङ्गप्रमदा भृङ्गस्त्रियः तासां गणेन संवृतः ॥ २५ ॥

उपसंहरति । एवमिति । अनुरतावलागणः अनुरतस्त्रीगणः तदिच्छानुकूलरमितस्त्रीजनो वा नितरां शं सुखं यासु ताः निशाः रात्रीः एकोऽपि क्षणो रतिक्रियां विना न क्षपित इति शरत्काललक्षणवर्णनेन ये काव्यकथायां संयाताः रसाः शृङ्गारहास्यादिरूपाः एतेषामाश्रयः आश्रया इतिपाठे निशाविशेषणं रसानाश्रयन्तीति रसाश्रयाः आत्मन्यवरुद्धं निरुद्धं सौभगं सौरतं निर्दुष्टं रेतो लक्षणं वीर्यं येन स तथा सुरतक्रिया वीर्यं निरुध्य क्रियत इत्यर्थः यद्वा वशीकृतयोगैश्वर्यः यद्वात्मनि देहे विकारीकृतसौन्दर्यः ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ जलविहारावसानसमये योगमाययोपनीतवस्त्रालङ्कारानुलेपान्तराणि यथास्वं सर्वा एव सोऽपि च परिधाय मधुपानलीलामाततानेत्याह । ततश्चेत्यादि । कृष्णाया उपवने पुलिनं हित्वा उपवनमध्यं गत्वेत्यर्थः । अन्यथा वैमानिका आलोकयिष्यन् जलप्रसूनैः कुमुदादिभिः स्थलप्रसूनैर्नानाविधैरेव यो गन्धानिलः सग-

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

न्धवपनस्तेन जुष्टा दिगस्तटानिव दिक्तटा इति वा यत्र भृङ्गप्रमदागणावृत इति निभृतलीला सूचिता यतः पुंभृङ्गा अपि तदा नासन् मदच्युद्द्विरदो यथेति दृष्टान्तेन मत्तताव्यञ्जया तथा चमधुपानं ध्वनितम् ॥ २५ ॥

उपसंहरति। एवमित्यादि। सत्यकामः सत्यसङ्कल्पः स श्रीकृष्णः शशाङ्कांशुविराजिता निशा व्याप्य उक्तप्रकारे बहुत्वे बहुवचनं शरत्काव्यकथाः सिषेवे शरदि सम्वत्सरे या काव्यकथा ऋतुषट्कभवा या वनविहारजलविहारमधुपानरतोत्सवादयः काव्याङ्गभूताः कथास्ता इत्यर्थः। तादृशलीलानामतिगोप्यत्वात् श्रोतृणामनधिकाराच्च सङ्केतेनैवोपसंहृतं भगवता श्रीशुकाचार्य्येण तत्र मदच्युद्द्विरददृष्टान्तेन मधुपानम् आत्मन्यवरुद्धसौरत इत्यनेन रतोत्सवः अवरुद्धम् अवरोधः सुरतमेव सौरतमात्मन्यवरोधः सौरतं यस्येति रतमर्यादा चोक्ता सङ्केतेनैवेतिदिक् तच्च विपरीतरतमित्यर्थः। रसाश्रयाः शृङ्गाररसाश्रयाः ॥ २६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

ततः पुष्पावचयक्रीडामाह। तत इति। जलक्रीडानन्तरं कृष्णायाः यमुनाया उपवने जलस्थलप्रसूनानां ये गन्धाः तत्सम्बन्धिना वायुना जुष्टाः दिक्तटाः सर्वदिग्भागा यस्मिन् वने तत्र पुनश्चचार भृङ्गैः प्रमदागणैश्चावृतः पुनर्भृङ्गाणां गमनं हेतुं दृष्टान्तेनाह यथा मदच्युत् मदस्रावी गण्डयोरन्यत्र च द्विरदो हस्ती करेणुभिः सहितो भवति भ्रमरैश्च सहितः सहज एवान्तःस्थितो रस आविर्भूत इति भ्रमराणामनुद्रवणं चचारेति सर्वत्र नानाविधलीला निरूपिता क्वचिल्लतानाम्भङ्गः क्वचिद्वृक्षशाखानां तथा मर्यादामार्गः लौकिकश्चान्यथा कृत इति एवं त्रिविधा लीला अत्यलौकिकी ततः अविचारेण रमणमिति ॥ २५ ॥

एवं लीलामुक्त्वोपसंहरति। एवमिति। शशाङ्कांशुभिः चन्द्रकिरणैः लौकिकैर्याः विराजिता निशाः ता एवं रेमे पूर्वोक्तप्रकारस्तु सर्वदा लीलारूपः स केनापि न विरुध्यते नन्वेवं रमणे को हेतुरिति चेत्तत्राह। स सत्यकाम इति। सत्यः कामो यासां ताः सत्यकामाः ताभिः सहित इति तथा प्रार्थितो वा एवमपि क्रीडायां कामः सत्य एवास्ति न तु क्षीणः असद्विषयको वा जातः अनुरताः अबला गणा यस्य सर्वथा रतासु नित्यसम्बद्धासु न कापि शङ्का सर्वथा प्रपन्नासु च अग्रे मर्यादाभङ्गः रसपोषाय तदुक्तम्—

> शास्त्राणां विषयस्तावत् यावन्मन्दरसा नराः।
> रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रम इति ॥

तथापि तासु सत्य एव कामः स्थापितः यो मोक्षपर्यवसायी स कामो भगवन्तं प्रापयिष्यत्येव एवं निशाः सिषेवे तदनन्तरमात्मन्येव उपरुद्धं सौरतं यस्य तथा जातः ननु तासु रतिं स्थापितवान् तथा सति तासु स्वस्मात् पुत्रा भवेयुः सर्वा एव निशा एवं नीताः शरदपि नीता काव्यकथा अपि नीताः काव्योक्तप्रकारेण गीतगोविन्दोक्तन्यायेनापि रतिं कृतवान् तत्र हेतुः रसाश्रया इति कामरसस्यैव प्रसिद्धः यावत्पुरुषो रसे गौणभावं न प्राप्नोति तावन्न रसिको भवतीति शरद्वर्णनायां वा यत्काव्यं तद्रूपाः कथाः तेषां रसाश्रया इति निशा एता न लोकप्रसिद्धाः किन्तु काव्योक्ता एव तत्रहि नियतकृत्यादिराहित्यं ह्लादैकता अनन्याधीनता तथा अन्येऽपि गुणाः तथा भगवल्लीलारात्रयो जाता इत्यर्थः ॥ २६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ततो जलविहारानन्तरं चकारेणाङ्गमार्जनवनदेवतानीततादात्विकवस्त्रालङ्कारपरिधापनानन्तरञ्च कृष्णाया यमुनाया उपवने परःसहस्रकुञ्जयुक्ते तत्र स्वापलीलार्थं चचार जगाम कीदृशः। जलस्थलवर्त्तिप्रसूनानां गन्धो यत्र तथा भूतैरनिलैर्जुष्टानि दिक्तटानि यस्य तस्मिन्। भृङ्गाणां प्रमदानाञ्च गणैरावृतः। मदानां च्युत् च्योतनं क्षरणं यस्य सः ॥ २५ ॥

शरत्पौर्णमासीनक्तन्तनीं रासक्रीडामुपसंहरन्नन्यास्वपि रात्रिषु विविधविचित्राः परिगणय्य तादृशक्रीडा ताभिः सह बभूवेत्याह। एवं सर्वा एव योगमायायाः प्रभावात् शशाङ्कांशुविराजिताः निशाः सिषेवे स्वविलासैर्वृन्दावनीय निशासुखमास्वादयामासेत्यर्थः। षिवुधातोः कर्तृत्वेन क्रीडोपयोगिन्यस्ता निशाः परमादरणीयत्वेन भोग्याः किमुत तत्रत्याः कामविलासा इति द्योतितं महाप्रसादान्नं सेवते भक्त इतिवत्। यतस्ते कामविलासा न प्राकृता ज्ञेया इत्याह। सत्या वास्तववस्तुस्वरूपाः कामा विलासा यस्य सः। किञ्च रमणस्य कर्तृत्वं स्वं ता गोपीश्च प्रापयामासेत्याह। अनु तद्रमणानन्तरं रता रमणकर्त्तारः अबलागणा अपि यत्र सः। अबलापदेन तत्र तासां प्रभविष्णुत्वाभावो व्यञ्जितः। तदा च भगवतो रात्रिन्दिवं तत्केलिविलासैकतानमनस्त्वमभूदित्याह। आत्मनि मनसि अवरुद्धाः अवरुद्ध्य स्थापिताः सारताः सुरतसम्बन्धिनो भावहावविव्वोककिलकिञ्चितादयः। वाम्योत्सुक्यहर्षादयः स्तम्भस्वेदवैवर्ण्यादयः दर्शनस्पर्शनश्लेषादयश्च येन सः एवं सौरतसंलापे भगवान् देवकीसुतः। स्वरतो रमयामास नरलोकं विडम्बयन्नित्यत्र विशेषाविवक्षयैव संलापपदोपन्यासः। अत्रत्वविशेषेण सर्व एव ते सङ्गच्छन्ते इति ज्ञेयम्। सर्वा द्वादशमासिकीरेव निशाः सिषेवे। कीदृशीः। शरत्काव्यकथारसाश्रयाः। हायनोऽस्त्री शरत् समा इत्यभिधानात्। शरदि सम्वत्सरमध्य एव ऋत्वादिकमधिकृत्य ये काव्यकथारसाः सम्भवन्ति तेषामाश्रयाः या एव साम्वत्सरिकनिशाः श्रीवृन्दावने कृष्णक्रीडाधिकरणीभूता आश्रित्य सत्कवयः प्राचीनार्वाचीना व्यासपराशरजयदेवलीलाशुकगोवर्द्धनाचार्यश्रीरूपादयः स्वस्वकृतेषु काव्येषु कथाः रसांश्च शृङ्गारप्रधानान् वर्णयित्वापि न पारं प्राप्नुयुरित्यर्थः। अत एव मयापि सामस्त्येन वर्णयितुमशक्यत्वाद्दिगेवैषा दर्शितेति भावः ॥ २६ ॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका।

तदनन्तरभाविनीं वनक्रीडामाह। तत इति। जलक्रीडानन्तरं कृष्णेति नामसाम्येन सख्याः श्रीयमुनायाः एवञ्च तदादीनां वृद्धिस्थे शक्तेः श्रीकृष्णया श्रीवृन्दादेव्या च समानीततदात्वोचितनेपथ्यरचनानन्तरमित्यर्थो ज्ञेयः उपवने तीरस्थे वने तदानीमेव

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका । पुष्पफलादिसम्पत्त्या सुसम्पादिते वा चचार तद्यथा श्रीगोविन्द-लीलामृते—

अथाह वृन्दावनकाननेशौ पादाम्बुजे वा मृतुकारमुख्यैः ।
निवेदितं षड्भिरिहास्ति यत्तत्सार्द्धं समालोकयतं सखीभिः
प्रीत्यर्थं युवयोः सुचित्रितमिदं वृन्दावनं किङ्करै
रस्माभिर्बहुयत्नतो निपुणतासर्वस्वप्रत्यर्पणैः ॥
तन्नाथौ कृपया समीक्ष्य सकलं कर्त्तुं युवामर्हतं
भृत्यानां हि विशेषकौशलकृतेरीशावलोकः फलम् ॥
वृन्दावने स्थिरचरैस्तत्तल्लीलास्थलीस्थितैः ।
निवेदितं पदाब्जे वां यत्तच्चाश्रृणुतं प्रभू ! ॥
अन्योऽन्यसङ्गोल्लसितौ भवन्तौ
द्रष्टुं निजार्थैः करुणोद्भवैर्वाम् ॥
निवेदितुं चाजनि या समीहा
तामर्हतं नः सफलीविधातुम् ॥
ततो वृन्दाटव्यां वृन्दा स्फीतां तत्तदृतुश्रिया
दर्शयन्ती स्वनाथौ तावभाषत पुरोगता ॥
स्फुरंस्तम्भारम्भा विलसति चरैः कम्पवलिता ।
स्थिरैः कम्प्रैः स्विन्नाः स्रवदुपलकैर्गद्गदयुता ॥
विरावैरस्पष्टैः पुलकवलिताङ्ग्यङ्कुरचयैः
सखीश्रेणीवेशौ प्रणयविवशा सेयमटवी ।

इत्यादि—

अथावादीत्प्रियां प्रेष्ठो दर्शयंस्तद्वनद्युतिम् ।
प्रिये ! यश्यात्व्यीयं ते प्रमोदभरमञ्चति ॥

इत्यादि—

ततः कदम्बादवरुह्य तूर्णमुन्मण्डलीकृत्य कलापिवृन्दम् ।
पुरो नरीनर्त्ति सराधिकायां नाम्ना हरेस्ताण्डविकं कलापी ॥

राधांशपालिङ्गितदेहेऽसृतवर्षे मन्द्रध्वाने कृष्णपयोदोः स्फुरिते स्फुरितेऽग्रे केकाध्वानैरुन्नतपुच्छैः शिखरीभिर्नृत्यत्यारान्मत्त-मयूरावलिरुच्चैः

शुकाः साध्वीं वर्णयन्ति द्वयोः सुरतमाधुरीम् ।
जगुर्भृङ्गाः कोकिलाभिः पश्यति स्म मृगादयः ॥
इत्यादि तत्र कुसुमावचयो यथालङ्कारकौस्तुभे ।
सख्यैकया मूर्ध्नि धृतांशुकाञ्चला संवीज्यमाना
दलमालयान्यया ॥
अवेक्षमाणा दयितं विदूरतश्चिनोति मन्दं-
कुसुमानि राधिका ।

श्रीहरेर्यथा—

एकेनानिलचपलेन पत्रहस्तेनारौत्सीत्स्तवकप-
योधरं परेणः ।
आक्षेपं नन ननेति चञ्चलालिभ्रूभङ्ग्या व्यधित
हारिं विलोक्य वल्ली ॥

अपिच—

प्रियालोके राधा कुसुमविचये कौतुकवती ।
धुनीते सत्रासं करतलमदृष्टापि मधुपैः ॥
अखिन्नापि श्रान्त्या श्रयति भुजपालीभुजशिरः ।
परावृत्या पश्यत्यधृत वसनापि व्रततिभिः

अपिच—

सीमन्तोपरि बन्धजीवकुसुमं सिन्दूरबिन्दूकृतम् ।
चित्रैर्नव्यदलैर्व्यधायि मकरी गण्डे नखाग्रक्षतैः ॥
चक्रे कञ्चुलिकास्पयोधरभरे नानाप्रसूनच्छदैः ।
कृष्णेन प्रणयातिरेकरभसस्तस्यामभिव्यञ्जितः ॥

अपिच—

नानावर्णसुगन्धपुष्पपटलैर्दीव्यद्दलैः पल्लवैः
क्लृप्तैः कुण्डलहारकङ्कणलसन्मञ्जीरकाञ्च्यङ्गदैः ॥
लीलावेशवसान्मुदा प्रियतनौ या वेषभङ्गीकृता ।
सैवास्या नयनाब्जभूषणविधौ कामस्य भूपायते ॥
पौष्पैराभरणैश्चाथ राधा काण्डपटावृता ।
आलीभिर्भूषिता स्तब्धकृष्णेन तदनुवर्येति संक्षेपः

विस्तरो भक्तिमञ्जूषायां द्रष्टव्यः । जलेति । जलस्थलप्रसूनयोर्गन्धेन युक्तो योऽनिलस्तेन जुष्टं प्रीत्या सेवितं दिशां तटं दिग्भागो यस्तिस्मिन् चचार पुष्पावचयनिकुञ्जनिलयानादिक्रीडाभिर्यन्नाम भृङ्गगणावृतः प्रमदागणावृतश्च तत्राद्येन विशेषणेन तत्तत्पुष्पेभ्योऽपि तदङ्गसौरभ्यातिशयपरेण कोटिकन्दर्पनिर्मञ्छनीयरूपातिशयश्चाभिप्रेतः स्पर्शमात्रसुखैकतात्पर्यं दृष्टान्तः। यथेति। मदच्युदिति श्रीमदङ्गसौरभ्यस्य मूर्त्तिमत्त्वमुक्तं करेणुभिरिति तदेकाश्रयत्वम् एवञ्च वनक्रीडानन्तरं भोजनक्रीडाप्यूह्या साच श्रीगोविन्दलीलामृते

ततस्तौ वृन्दयानीतौ भोजनानन्दकुट्टिमम् ।
प्रविष्टावुपविष्टौ च वेष्टितौ स्वसखीगणैः ॥
ततः पलाशपत्राणां रम्भावल्कलपत्रयोः ।
कुण्डीस्थाल्यादिपात्राणि सम्भृतानि पृथक् पृथक् ॥
उपविष्टा पुरो वृन्दा सम्भृता स्वानुगालिभिः ।
आनीयानीय दत्तानि फलादीन्युपवीविषत् ॥
लड्डुकानि सुगन्धीनि चन्द्रकान्ति सशर्कराम् ।
शर्करेन्दुलवङ्गैलामरिचादिभिरान्विताः ॥
स्थूलसन्तानिकाः पिष्टाकृतानि लड्डुकानिच ।
पनसाम्रादिकरसान्मधुचन्द्रशितान्वितान् ।
पुनः सशितयास्वच्छमानीतानि प्रियालिभिः ॥
पर्य्यवेषयदेतानि ललिता मञ्जुभाषिणी ।
रुचिं दर्शयती ताभ्यां दत्तान्यालिभ्य एव च ॥
कर्पूरवासितं तोयं पपतुस्तौ परस्परम् ।
ततश्चाचेमतुस्तोयैः सखीदत्तैः सुवासितैः ॥
ताम्बूलवीटिकाः स्वस्य सखीभ्यः प्रविभज्य तौ ।
स्वयमात्तार्द्धखण्डं च व्यत्यासेन परस्परमिति ॥
ततश्च कन्दर्पमाध्वीकमदाकुलाङ्गी
कन्दर्पमाध्वीकमदानुशिष्टे ॥
राधां समादाय हरिर्निकुञ्जे
सुष्वाप तल्पे विगतालिजल्पे ॥
तत्रासीत्स्तिमितप्रायं पक्षिभृङ्गमृगादिकम् ॥
निकुञ्जरन्ध्रेष्वाल्योऽप्यालीना निर्निमिषेक्षणाः ।

इत्यादि रात्रिशेषे उत्थापनादिप्रकारश्च भक्तिमञ्जूषायां द्रष्टव्यः विस्तरभिया न लिखित इति ॥ २५ ॥

तदेवमेकस्यां रात्रौ कृतां रासक्रीडामन्यत्राप्यतिदिशन्नुपसंहरति । एवमिति । इत्युक्तदिशा शरत्काव्येति वक्ष्यमाणप्रतिरशब्दीत्यर्थः शशाङ्कांशुविराजिता इति कौमुद्यां निशाः ताः सर्वा एवमित्येवं पर

श्रीमद्विकशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

मादरेण परिचरितवानित्यर्थः । यद्वा शरदि ये काव्यकथारसाः प्रसिद्धास्तेषामाश्रयो यासु श्रीभगवत्कृतानन्तलीलासु तादृशीर्निशा-श्चाप्येत्यर्थः एवंच यत्संबन्धेन रात्रीणामपि सेव्यत्वमुक्तं किं वक्तव्यं तत्र श्रीराधायाः सेव्यत्व इति सुसिद्धं स्वाधीनपति-कात्वं तदेव दर्शयति । आत्मनीत्यादिना । आत्मनि परमप्रेमास्प-दभूतायां श्रीराधायामेव अवरुद्धं सौरतं सुरतसम्बन्धि निज-सुखं येन सः यद्वा आत्मनि स्वस्मिन्नेव अवरुद्धम् अवरोधः तद्व-त्सौरतं यस्येति पुरुषार्थितं सूचितं नन्वेवमन्यासु सापत्न्यमुद-येतइत्यत आह । अनुरतावलागणः । सर्वासामपि तत्सुखासक्तेरिति भावः । कथमेवं सम्पन्नमित्यत आह । सत्यकामः अव्यभिचरि-ताभिलाष इत्यर्थः । यद्वा आत्मैवसत्य पदाभिधेयः सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतेः ततश्च स्वरूपायां नित्यसिद्धायां श्रीराधायामेव कामोऽ-व्यभिचरिताभिलाषो यस्येत्यनुकूलत्वम् सूचितम् अन्यत्र तु तदि-च्छया वा निरर्गलया भक्तजनाधिकरणकृपया तद्विभ्रमणे वा तथा-त्वानुकरणमिति सिद्धं राधिकैकतानत्वमेव श्रीभगवत इति तदेवं यथास्थानं साधयितव्ये षड्विधे भगवत्त्वे समग्रया श्रिया नित्य-योगोऽत्र साधित इति निखिलोऽपि प्रकरणार्थः सुसंगतो वेदि-तव्यः—

> तथा चैश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
> ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेति ॥

विष्णुपुराणोक्तलक्षणवाक्येऽपि रहस्यत्वादेव श्रियो मध्यगतत्वेनोप-न्यासः कृतः ततश्च धाम्नोऽपि वैशिष्ट्यंतत्कृतमेव वेदितव्यं तदुक्तं ब्रह्मयामले—

> गोप्यैकया युतस्तत्र परिक्रीडति नित्यदेति ।

अत्र नित्यदेति प्रकटायामप्रकटायां च लीलायामित्यर्थः स्वरूपस्यापि तत्रैव—

> भुजद्वययुतः कृष्णो न कदाचिच्चतुर्भुजः ।
> वृन्दावनं परित्यज्य स क्वचिन्नैव गच्छतीति ॥

निखिलं निरवद्यम् एवंच शरत्पदस्याश्लिष्टत्वादब्दोपि वाच्यः ततश्चाब्द सम्बन्धिन्यो याः काव्यकथाश्चन्द्रोदयवनविहारजलविहारनौखेला-दोलान्दोलनकुञ्जक्रीडाद्याः सर्वाः सिषेव इत्यर्थः । ता अपि रसा-श्रया एव नतु कामाश्रया नवात्यन्तैश्वर्यादिमत्त्वेन भावाश्रया इत्यर्थः । रतिर्देवादिविषयो भाव इत्यालङ्कारिकोक्तेः यतः सत्यः कालत्रयाबाध्यः कामो विहारो यस्येति नित्यविहारीत्यर्थः । अत्र निशा इत्याद्या द्वितीयान्त्यन्तसंयोगे ततश्च निशा इति शर-त्काव्यकथा इति रसाश्रया इत्यादिपदानां सिषेव इत्यनेन प्रत्येकमन्वयः तथाच सर्वप्रकारैर्नित्यत्वमेव साधितं तत्र निशे-त्यस्य शशाङ्केति विशेषणं पुलिनगतानां निशानां नित्यदा ज्योत्स्नीत्वमेव सूचितं द्वितीयस्य हायनोऽस्त्रीशरत्समा इति कोशा-दब्दोऽपि लक्षितः षड्ऋतुसम्बन्धिन्य इत्यर्थः नचैतदप्यसम्भावित-मिति मन्तव्यं सत्यकामत्वात् तदुक्तं शतकेषु—

> क्षणाच्छरदुपागमं क्षणत एव वर्षागमं
> क्षणात्सुरभिवैभवं क्षणत एव चान्यर्तुगत् ॥

इत्यादिना समानोदितचन्द्रार्कमित्यादि बृहद्गौतमीयतन्त्रे च तृती-यस्य रसः प्रेमरसः प्रोक्त इति भावप्रदीपोक्तेस्तदेकनिष्ठाः शृङ्गा-रादेस्तदङ्गत्वेनैवोपादानात् अतएव शृङ्गारकथोपदेशेन निवृत्तिप-रेयं पञ्चाध्यायीतिश्रीस्वामिपादाः एवञ्च शुद्धप्रेमरसेनैव सेव-नीयौ श्रीराधाकृष्णाविति प्रकरणार्थः । तथा श्रीरुद्रयामळे—

> ब्रह्मानन्दरसादनन्तगुणितो रम्यो रसो वैष्णव-
> स्तस्मादप्यधिकोऽतिमुख्यसुखदः श्रीगोकुलेन्द्रानुगः ॥
> तस्मादप्यधिकं चमत्कृतिभरं यद्वद्रसानां परं
> श्रीराधापदपद्ममेव परमं सर्वस्वभूतं मम ॥

अत एव श्रीमत्सुधानिधौ—

> दूरे सृष्ट्यादिवार्त्ता न कलयति मनाक् नारदादीन् स्वभक्तान् ।
> श्रीदामाद्यैः सुहृद्भिर्न मिलतिच हरेत्स्नेहवृद्धिं स्वपित्रोः ॥
> किन्तु प्रेमैकसीमां परमसुखचमत्कारसारैरगाधां
> श्रीराधामेव जानन्मधुपतिरनिशं कुञ्जवीथीमुपास्ते ॥

अत एवोपासकस्यापि वैशिष्ट्यमुक्तं शतकेषु—

> धन्यो लोके मुमुक्षुर्हरिभजनपरो धन्यधन्यस्ततोऽसौ
> धन्यो यः कृष्णपादाम्बुजरतिरसपरमो रुक्मिणीशप्रियोऽतः ॥
> याशोदेयप्रियोऽतः सुबलसुहृदतो गोपकान्ताप्रियोऽतः
> श्रीमद्वृन्दावनेश्वर्यतिरसविवशाराधकः सर्वमूर्धा ॥

इत्यलमतिप्रपञ्चितेन विशेषजिज्ञासायां भक्तिमञ्जूषा द्रष्टव्या ॥२६॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

एवं भगवता कामविजये कृते स्वीयत्वेन संपादिततद्वक्रू-पगोपीसमाजस्य रतिरणसम्भावितश्रमे जलविहारेणापनीते हरि-विजितकामस्य हरिरूपतयैव तद्गृहगोपीहृदयनिवासेन तद्वि-जितानां तद्रूपतामाकलय्य वसन्तोऽपि जातोत्साहो भगवन्तमभिसं-गम्य तेन पराभवेऽपि तन्नोटितसुमनसां तद्गुणग्रथिततया तद्गुरो-हारत्वेन तदङ्गसङ्गसौख्यमभिलषन् तद्गृहवनमभिव्याप्य स्वप्रभाव-प्रकटनेमद्वहिरन्तर्भावाभिज्ञस्येर्ष्यामिषेणाप्यभिलषितपूरकस्य काम-वलसखीगणान्वितस्य तस्य समागमं संभाव्य कालिन्द्युपवने नितरां स्वप्रभावमाविश्चकार भगवानपि तद्भावमालक्ष्य तथैव तद्वने विहरंश्चचारेत्याह । ततश्चेति । ततः पूर्ववर्णितरीत्या वसन्त-प्रभावदर्शनानन्तरं भगवान् यमुनोपवने चचारेत्यन्वयः कथ-म्भूते यमुनोपवने तदाह । जलस्थलेत्यादि । वसन्तप्रभावेणैवाका-लेऽपि शरदि निशायां च प्रफुल्लितानि यानि जलप्रभवाणि कल्हारकञ्जोत्पल कुमुदादीनि स्थलप्रभवाणि मल्लिकामालती-स्थलकमलादीनि वासन्तशारददिवानिशाविकासानि प्रसूनानि प्रकृष्टान्यपि नन्दनचैत्ररथादिसुमनांसि सुष्ठूनानि येभ्यस्तानि तद्गन्धवाहोय ऋतुराजसचिवोऽनिलः शीतसुरभिवायुस्तज्जुष्टा-दिक्तटादिशां प्रान्ता यस्य तस्मिन्अत्र वायोर्जलस्थलप्रसूनसंबन्धेन शीतत्वं सुरभित्वं च द्योतितम् अनिलेति नाम्ना न इला वाणी शब्द-विशेषो विद्यते अस्येति व्युत्पत्त्या रवशून्यतया मन्दत्वं दर्शितं तत्र वायोस्तथात्वेऽयमभिप्रायः भगवतो जगज्जीवनत्वाद्वायोश्च जग-त्प्राणत्वान्मिथोमैत्र्यं मत्वा तस्य स्वोपवने तस्मिन् स्वागतं तत्स्वा-गतार्थं सुमनस्तया सुमनआमोदेन सुमनआमोदमावेदयत तथा सज्ज-नानांश्यामस्नेहरसस्य श्यामे समर्पणरूपां प्रीतिरीतिं व्यञ्जयन् घनश्या-मरसपूरितसरतिसरितसलिलरसघनश्यामे समर्पयस्तथासुमनआमोदं भगवति समर्पयंस्तत्तनुसुमनआमोदसाम्यमलब्ध्वा लज्जया मन्दगति-रभवत् किम्भूतश्चचार तदाह । भृङ्गप्रमदागणावृत इति । तत्र भृङ्गा

श्रीरामनारायणकृतभावभावविभाविका ।

वसन्तसैनिकाः प्रमदाश्च प्रकृष्टमदयुक्ताः प्रकृष्टमादिकाश्च कामसैनिकास्तद्गणैरावृतो वेष्टितस्तैरासमन्तात् सर्वभावेन स्वामितयावृतो वा तत्रायम्भावः यथा मन्मथमन्मथच्छवितया कामगकामदुर्गानधिरुह्य रतिरणेऽप्यप्रच्युतसौरतत्वेन तद्विजयितया तद्गणैः प्रमदाभिः स्वामितयावृतस्तथा वसन्तेन भगवत्साम्याय तत्समोत्साहसमीरोत्फुल्लतनुसुमनसां सुमनसाञ्चानुकारार्थं प्रति द्रुमं प्रतिशाखं कृतेऽपि तत्कुसुमकुसुमविकाशे भुजविशालमृदुतरकरानुकाराय मृदुमञ्जुप्रवालोल्लासे प्रेमोत्कलितपुळकसाम्याय कृतेऽपि मुकुलप्रसादे किंकिणिनूपुरादिवंशवाद्यादिप्रवादाशोङ्घाविकृतेऽपि विचित्रकलद्विजकोकिलादिनादे भगवत्तनुतमालालिङ्गितसखीजनलताविहारानुकाराय प्रतिद्रुमं कृतेऽपि ललितलताविस्तारे भगवत्तत्सखिसाम्यादर्शनेन तदीयभृङ्गगणैःपामरजनभ्रमरैर्भवविपिनोत्फुल्लविषयविषमविपलतामुग्धतया तत्रभ्रमणेऽपि कर्मठमधुपशठैः श्रुतिद्रुमबहुशाखागतकुसुमितवचनमधून्मत्ततया तद्गतत्वेऽपि हरिच्छविसारङ्गैर्मुनिसारङ्गैर्विविधदोषकण्टकनाशम्लानादियुतं तद्विहाय दोषम्लाननाशादिशून्यनिष्कण्टकहरिच्छविवनानुसरणतद्गणगणनयब्रसन्तवनं विसृज्य तच्छविवनमनुसरणे तैरप्यावृतश्चचार तस्मिन् स्वच्छविविजितेऽपि तत्सुमनोविकाशेन तदन्तर्भावमालक्ष्य सखीगणैः सह तत्रैव विविधरमणं चकार बहुसखीभिर्वनविहारे कामस्पर्शसुखातिशये प्रीत्याधिक्ये च दृष्टान्तः। यथा मदच्युद्द्विरदः करेणुभिरिति। यद्वा यथा द्विरद इत्येतावदेव दृष्टान्तः मदच्युदिति भगवद्विशेषणं कामवसन्तादीनां मदाश्च्यवन्त्यस्मादित्यर्थः। अमदच्युदिति वाच्छेदः वसन्तसमीरादिसमीरितमदनवीरबहुसमितिरणेऽपि स्वात्मन्यवरुद्धसौरतत्वेन न मदश्च्यावितो यस्येत्यर्थः। केन ब्रह्मणा प्राप्त्यर्था रेणवो यासामिति मध्यमपदलोपिसमासेन वाकाः सुखरूपाः सुखप्राचुर्येण तदात्मिका रेणवो वायासां कानि सर्वसुखानि रेणुभिर्वा यासां कानि सर्वसुखानि रेणवो मात्रात्मिकानि वा यासां तासां सर्वसुखबिम्बभूतब्रह्मसुखात्मकत्वादित्यादिव्युत्पत्त्या करेणुभिरिति सखीजनविशेषणम् ॥ २५ ॥

एवं शरत्पूर्णिमायामेकनिशागतविहारं वर्णयित्वा तत आरभ्य व्रजावतीर्णसमस्तगोपीनां वृन्दावनस्थनित्यविहारसमवायेन प्रतिनिशं तादृग्विहारमुपदिशन्नानाशृङ्गारलीलामुपलक्षयति । एवमिति। स भगवान् एवम्पूर्ववर्णितलीलोपलक्षितप्रकारैः तत आरभ्य सर्वा निशाः सिषेव इत्यन्वयः किंभूता निशाः सर्वा अपि शशाङ्कस्य नित्यपूर्णचन्द्रस्यांशुभिः सितामृतमयाह्लादिरश्मिभिर्विशेषेण कुत्रापि तमः सम्भावनाशून्यतया राजिताः शोभिताः तत्र चन्द्रमा मनसो जात इतिश्रुत्या चन्द्रमसो भगवन्मनोजत्वेन तन्मनोऽनुसारितया तत्रत्यसर्वनिशासु नित्यपूर्णप्रकाशत्वमिति केचित् भगवल्लीलायां दक्षशापाप्रवेशान्नित्यपूर्णप्रकाशता तस्येत्यन्ये स्वंशप्रभवभगवल्लीलादर्शनोल्लासेन तथात्वमित्यपरे—

> यदादित्यगतं तेजो जगद्भासयतेऽखिलं
> यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति

स्मृत्या शशाङ्केऽप्यंशू रश्मिमात्रं यस्य स शशाङ्कांशुः कृष्णस्तेनैव विशेषेण राजिता इत्यपि केचित् अन्येतु दक्षशापेन चन्द्रमसो लौकिकांशूनां ह्राससम्भवेऽपि पूर्वनिर्दिष्टवाक्येनैव शशाङ्कगतैरलौकिकैः कृष्णांशुभिरेव विशेषेण राजितत्वं वस्तुतस्तु कृष्णनित्यलीलाधाम्नि चन्द्रमसोऽपि तत्स्वरूपात्मकत्वेनैवैकरसत्वं नित्यपूर्णत्वञ्च क्वचित्यथोचिताभिसारादिकृष्णतत्सखीसंमतलीलानुसारित्वञ्च पुनः किम्भूताःशरत्काव्यकथारसाश्रयाः शरदित्युपलक्षणं वसन्तादीनामपि तथाच सर्वर्तुषु ये रसाः काव्यकथासु चये ये रसास्तेषामेवाश्रयाः ननु तद्दोषाणां लीलाधाम्नि तदप्रवेशात्रसोवैसइतिश्रुत्युक्तरसरूपस्य कृष्णस्य लीलाधाम्नि तत्स्वरूपात्मकत्वेन सर्वस्यापि रसात्मकत्वाच्च अनेन काव्यकथानामपि भगवदाविर्भावितलीलासंबन्धेनैव रसवत्त्वं तत्संबन्धाभावे नीरसत्वमेवेत्यपि ध्वनितं स किम्भूतः सत्यकामः सत्योऽ प्रतिहतः कामः संकल्पो यस्य सच्छन्देनपृथिव्यप्तेजांसि त्यच्छब्देन वाय्वाकाशाविति सत्यं भूतपञ्चकं कामः सङ्कल्पो यस्येति वा "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादिश्रुत्या सत्यश्च तथा—

> सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः
> परः पुरुष एक इहास्य धत्ते। स्थित्यादये
> हरिविरञ्चिहरेति संज्ञा इति

स्मृत्या प्रकृतिगुणसंबन्धेन को ब्रह्मा आ विष्णुः म शिव इतिरूपत्रयात्मकश्चेति सत्यकामः यद्वा सत्यात्मप्राणारामम्मनआनन्दमिति श्रुत्या सत्याः स्वरूपात्मका एव सर्वे कामा आरामशब्दवाच्या रमणोपकरणा धाम तत्रत्यसर्वभोग्याश्च यस्य "कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति श्रुत्या कामो मनश्च यस्य कामो रतिर्विहारो वा यस्येति वा सत्यः नित्यसुखपर्य्यवसायित्वेनाबाधितः संसाराननुबन्धी कामोऽभिलाषो रतिविहारो वा यस्मिन्—

> न मय्यावेशितधियां कामः कामाय कल्पते ।

त्यादिवचनात् यद्वा सत्यश्च कं ब्रह्म खं ब्रह्मेत्यादिश्रुत्या कं सुखं तद्रूपश्च आसमन्तात् मा शोभा यस्मात् स्वमूर्त्यालोकलावण्यनिर्मुक्तेति स्मृतेः यः सर्वज्ञः सर्वविदित्यादिश्रुतेर्वा आसमन्तादिति सर्वविषयिणी मा प्रमा यथार्थमतिर्यस्य यद्वा सत्ये स्वस्वरूप एव कामो रतिर्यस्य तदितरस्य रत्यास्पदत्वाभावात् नन्वेवं भूतश्चेत्किं रमणेन तत्राह। अनुरताबलागणः। अन्वनुरतोऽबलानाङ्गणो यस्मिन् तथाच तदभिलाषपूरणाय रमणमिति ननु तासां नित्यलीलानुस्वभावत्वादवतारदशायमितल्लीलाविष्कारे किम्प्रयोजनं तत्राप्याहानुरतेति गोपी रतिमनुरतोऽबलानां बलमैश्वर्य्यज्ञानवैराग्यादिबद्धीनानां जीवानामागणो यस्मिन् तथाच सर्वजीवोद्धारकरतिपथप्रवर्त्तनमेव लीलाविष्कारप्रयोजनमितिभावः। ननु तथापि तासांरमणे आत्मारामत्वक्षतिस्तत्राह। आत्मन्यवरुद्धसौरत आत्मन्येवावरुद्धं सौरतं सुष्ठु रतः प्रेम्णो भावो येन यद्वा तासामपितदात्मत्वात्तासु रमणेऽप्यात्मन्येवावरुद्धं सौरतं यस्य यद्वा आत्मनि स्वविग्रह एवावरुद्धं सौरतं सुरते भवं शुक्रं यस्येत्यसंख्यातगोपिकारमणेऽप्यप्रच्युतशुक्रत्वेन कामविजयख्यापनम् ॥ २६ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

स्थलजलक्रीडे वर्णयित्वा वनक्रीडां वर्णयति । ततो यथोक्तक्रीडानन्तरञ्च जलस्थलपुष्पाणां गन्धो यत्र तेन वायुना जुष्टानि दिशां तटानि अन्ता यस्मिन् तादृशो कृष्णाया यमुनाया उपवने सौगन्ध्यासक्तानां भृङ्गाणां लावण्यासक्तानां प्रमदानां च गणै-

॥ राजोवाच ॥

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥
स कथं धर्मसेतूनां वक्ता कर्त्ताभिरक्षिता ।
प्रतीपमाचरद्ब्रह्मन् ! परदाराभिमर्शनम् ॥ २८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रावृतः सन् विचचार विहृतवान् यथा गजः मदच्युत्तथा भृङ्गगणावृतः करेणुभिश्चावृतस्तद्वत् ॥ २५ ॥

एवं प्रथमरात्रिकृतरासक्रीडामभिधायानुक्तं शंसन् अन्यरात्रिषु तत्प्रकारमतिदिशन्नुपसंहरति । एवमिति । सः श्रीकृष्णः अनुरक्तस्त्रीकदम्बस्थः सर्वा अपि शशाङ्कांशुविराजिताः शरदि भवाः काव्येषु कथ्यमानाः ये रसास्तेषामाश्रयभूता निशा सेवितवान् यद्वा निशा इति द्वितीया अत्यन्तसंयोगे तथाभूतासु निशासु शरदि प्रसिद्धाः काव्येषु याः कथास्ताः सिषेवे सत्यसङ्कल्पस्य भगवतो रमणाधिकरणभूताः सर्वा अपि निशाः शशाङ्कांशुविराजिता एव सम्पन्ना इति बोधनाय सत्यकाम इत्युक्तं तस्मिन्नभिरमणे तासां नैर्मल्यमेव स्थितमितिसूचनाय अबलेत्युक्तम् अतएवात्मन्येवावरुद्धं सौरतं चरमधातुर्नेतु स्खलितो यस्येति कामविजयोक्तिः यद्वा सर्वाः द्वादशमासिकाः "हायनोऽस्त्री शरत्समा" इति कोशात् शरदि सम्वत्सरमध्ये या श्रीवृन्दावनीयकृष्णक्रीडाधिकरणभूता अधिकृत्य भूतभविष्यद्वर्त्तमानकविकृतकाव्येषु याः कथाः रसाश्च तेषामाश्रयभूता निशाः सिषेवे रममाणश्च भगवानात्मन्यवरुद्धसौरतः आत्मनि मनसि अवरुद्धा अवरुध्य स्थापिताः सौरताः सुरतसम्बन्धिनो भावहावबिव्वोककिलकिंचितादयः संलापप्रलापादयः वाम्यौत्सुक्यहर्षादयः स्तम्भस्वेदवैवर्ण्यादयः दर्शनस्पर्शनाश्लेषादयश्च येन सः यद्वा एकस्यामेव रजन्यामसंख्याताः स्वसङ्कल्पितशशांकांशुविराजिताः यतः सत्यसङ्कल्पः समानमन्यत् ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ वनक्रीडामाह । ततश्चेति । ततो जलक्रीडानन्तरम् उपवने यमुनाया इति शेषः भृङ्गप्रमदागणावृतः कृष्णश्चचार कथंभूते यमुनोपवने जलस्थलप्रसूनानां गन्धो यस्मिन् तेनानिलेन जुष्टानि दिशां तटानि अन्ता यस्मिन् तथा मदच्युदित्यनेन मदाकृष्टभ्रमरैर्युतः करेणुभिरिभीभिश्च आवृतः द्विरदो मत्तगज उपवने चरति तद्वत् ॥ २५ ॥

अथ रासक्रीडां निगमयति । एवमिति । आत्मन्यवरुद्धसौरतः आत्मनि परानन्दपूर्णे स्वासाधारणे मनसि अवरुद्धं सौरतं सुरतसुखसंकल्पो यस्य स स्वभावत एवाप्तास्तविषयाभिलापः सर्वदा जितकाम इत्यर्थः सत्यकामः यातावला व्रजं सिद्धा मयेमा रंस्यथ क्षपा इति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह मिति च सत्यः सङ्कल्पो यस्य तादृशसंकल्पे हेतुं दर्शयितुं विदिनष्टि

अनुरतावलागण इति । अनुरतः कृष्णेतरपदार्थपरित्यागपूर्वकं तच्चरणं शरणं गतः अबला गणो यस्य एवंभूतः स्वचरणशरणजनमनोरथपूरक इत्यर्थः । शरत्काव्यकथारसाश्रयाः शरदि भवाः काव्येषु कथ्यमाना ये रसास्तेषामाश्रयभूताः तदोडुराज इत्यत्रोक्तरीत्या शशाङ्कस्यांशुभिः किरणैर्विराजिताः सर्वा निशाः सिषेवे सेवितवान् ॥ २६ ॥

भाषा टीका ।

तिस के अनंतर जल के तथा स्थल के पुष्पों के सुगंधवाले पवन से युक्त हैं दिशा तथा यमुना तट जिसमें ऐसे यमुना तट मे गान करते हुये जो भौंरा तथा गोपीजन तिन के सहित भगवान् सञ्चारकरते भये जैसे कि मद से चुचाता हुआ हस्ती हथिनिन के साथ घूमता होवे तैसे ॥ २५ ॥

इस प्रकार से वे सत्य सङ्कल्प वाले भगवान् अपने आत्मा ही मे सब रीत सुख को रोकने वाले, उन सब स्त्रीजनों को साथ मे लेकर सम्पूर्ण शरद ऋतु के काव्यों से संयुक्त काव्य कथा तथा सबरस के आश्रय करने वाली तथा चन्द्र के किरणों से शोभित जो रातें तिन को अनेक प्रकार से सेवन करते भये ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रतीपं प्रतिकूलमधर्ममित्यर्थः । आचरत्कृतवान् नचेदमधर्ममात्रं कलञ्जभक्षणादिवत्किन्तु महासाहसमित्याह । परदाराभिमर्शनमिति ॥ २८ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवं प्रीतिविशेषेण श्रीबादरायणिना वर्णितायाः श्रीरासक्रीडायाः श्रवणान्मिथोपाङ्क्कुणैर्विलोकमानानामपिवद्धसतां शुष्कताकिंकमीमांसकादीनां केषाञ्चिदवैष्णवानामभिप्रायं वितर्क्य कृपया तेषामेव हितार्थं तमुत्थाप्य स्वसन्देहव्याजेन पृच्छति । संस्थापनायेति त्रिभिः । सम्यक् स्थापनाय लुप्तस्य प्रवर्त्तनाय वर्त्तमानस्यच विघ्नतो रक्षणायेत्यर्थः । न केवलं तदर्थमेव किन्तु इतरस्य अधर्मस्य प्रकृष्टशमाय सवासनोन्मूलनाय अन्यथा धर्मसंस्थापनस्याप्यसिद्धिः हि प्रसिद्धं संरक्षणाय धर्मस्येत्यादिवचनेभ्यः भगवानिति तत एव भगवत्ताप्रकटनमपि स्यादिति भावः अंशेन श्रीबलदेवेन सह इति तत्र तत्राग्रहोऽपि दर्शितः यतः जग-

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

तामीश्वरः प्रतिपालकः अन्यथा जगन्नाशापत्तिरित्यर्थः । श्लेषार्थश्चायं धर्मस्य भक्तिविरुद्धाशेषधर्मस्य संस्थापनं तस्मै प्रशमाय अत्यन्तनाशाय तादृशधर्माभावेनैव रासक्रीडादिमहालीलासिद्धा निजावतारमुख्यप्रयोजनसिद्धेः ननु तर्हि स्वकृतवेदादिनिबन्धातिक्रमः प्रायः स्यात् तत्राह । जगतां ब्रह्मादीनामीश्वरः परमस्वतन्त्रो ऽयं कदाचिद्रसविशेषापेक्षया तादृसमपि कुर्यात् तत्रास्य को नाम नियामको ऽस्त्वित्यर्थः । "यद्वा धर्मो मद्भक्तिकृत् प्रोक्त" इत्यादि न्यायेन भक्तिलक्षणो धर्मस्तस्य इतरस्य तद्व्यतिरिक्ताशेषस्य मोक्षादेरपि अत्यन्तोपरमाय यतो जगत्प्रतिपालकः विघ्नविनाशनपूर्वकेण भक्तेः सम्यक् स्थापनेनैव सर्वेषां स्वतः सुखसर्वार्थ सम्पत्त्या जगत्पालनसिद्धेः ॥ २७ ॥

धर्मा एव सेतवः लोकरक्षार्थमर्यादाः धर्मे वैदिकनिबन्धा वा तेषां वक्तृत्वादेव कर्त्ता अन्यथा वाक्यव्यवहारयोर्विसम्वादेन लोकैरग्राह्यः स्यात् किञ्च अभितो रक्षिता तत्प्रतिपक्षवधादिना बहुधा सम्वर्द्धनेनच पालकः परदाराभिमर्शनरूपं प्रतीपं धर्मसेतूनामेव धर्मसंस्थापनादेर्वा प्रतिकूलं ब्रह्मन् ! हे साक्षाद्वेदमूर्ते प्रतीपाचरणेन वेदातिक्रमाद्भवादृशविप्रकुलातिक्रमो ऽपि स्यात् तच्च ब्रह्मण्यदेवस्य तस्यायुक्तमेवेति भावः । यद्वा ननु तात तत्कारणं कथं मया ज्ञातुं शक्यमीश्वरचेष्टितत्वादित्याशङ्क्याह । हे परब्रह्मरूपेति । सर्वज्ञत्वादित्यर्थः अन्यैस्तव्याख्यातं यद्वा प्रतीपमाचरदिति अधर्मः उक्तः कृतो ऽभिरक्षितश्चेत्यर्थः । तत्र उक्तः मया परोक्षं भजता तिरोहितमित्यादिना कृतः साक्षादेव रमणात् अभिरक्षितः पुनः पुनराचरणात् तेन लोके प्रवृत्तिसम्भवाच्चेति यद्वा धर्मः प्रकर्षेण नाशितः अधर्मश्च सम्यक् स्थापित इति श्लेषपक्षे कथं केन प्रकारेणाचरत् अपितु न केनापीत्यर्थः । कुतः भक्तिलक्षणधर्मसेतूनां वक्तृत्वादिहेतोरित्यर्थः । अतो निजावतारमुख्यप्रयोजनभक्तिविशेषविस्तारणाय धर्माद्यनादरो युक्त एवेति भावः । सच तावत्कर्माणि कुर्वीतेत्यादिवचनात् तत्सेवकेष्वपि व्यक्त एव यद्वा प्रसिद्धधर्ममर्य्यादानां वक्तादेरपि किमर्थं प्रतिकूलमाचरत् रासक्रीडया परमभक्तिप्रवर्त्तनेन तदेकसाध्यक धर्मस्यापि साफल्यार्थमिति भावः । किञ्च पराणां तदेकभक्त्या श्रेष्ठानां दाराणां स्वस्त्रीणामिवाभिमर्शनं प्रेमार्थमवतीर्णस्य सर्वापेक्षया प्रियजनमनोरथपूरणं युक्तमेवेति किञ्च परशब्देन अन्यदीयभार्याणामेवाभिमर्शनं दोषः तास्तदीयाः विशेषतः पराः सर्वतः श्रेष्ठा निजपत्न्य एवेति सूचितमिति ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वंशीसञ्जल्पितमनुरतं राधयान्तर्द्धिकेलिः प्रादुर्भूयासनमधिपटं प्रश्नकूटोत्तरश्च । नृत्योल्लासः पुनरपि रहःक्रीडनं वारिखेला कृष्णारण्ये विहरणमिति श्रीमती रासलीला । एवं सुखविशेषेणैव मुनीन्द्रेण प्रश्नस्य विस्तार्य च वर्णितायाः रासक्रीडायाः श्रवणाद्राज्ञोऽपि तत्र तत्र सुखोद्बोध एव जात इति लभ्यते नतु दोषदर्शनं वैरस्यापातात् तस्मात्तत्रत्यानां केषाञ्चित् सन्देहं वितर्क्य तेषामेव हितार्थं तमुत्थाप्य स्वसन्देहव्याजेन पृच्छति । संस्थापनायेति त्रिभिः । तत्राद्य द्वयं युग्यकम् संस्थापनाय लुप्तस्य प्रवर्त्तनाय प्रवृत्तस्य रक्षणायेत्यर्थः । न केवलं तदर्थमेव किन्त्वितरस्य अधर्मस्य प्रशमाय सर्ववासनोन्मूलनायेत्यर्थः । अन्यथा धर्मसंस्थापनस्याप्यसिद्धिः स्यात् । हि प्रसिद्धम् । "धर्मसंस्थापनार्थाय सम्भवामि युगे युग" इत्यादिवचनेभ्यः । भगवानिति तत एव भगवद्भावप्रकटनमपि स्यात् इति भावः । अंशेन श्रीबलदेवेन सहेति तत्र तत्राग्रहो दर्शितः यतो जगतामीश्वरः प्रतिपालकः । अन्यथा जगन्नाशापत्तिरित्यर्थः । यद्वा । "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग" दिति न्यायेन यो जगदीश्वरः स्वयन्तु पूर्णैश्वर्ययुक्त इत्यर्थः । तस्यान्यकामना न सम्भवतीति भावः ॥ २७ ॥

स इति । पूर्वत्र यच्छब्दस्याध्याहारादन्वयः । धर्माः एव सेतवः लोकरक्षामर्यादाः धर्मे वैदिकनिबन्धा वा तेषां वक्तृत्वादेव कर्त्ता अन्यथा वाक्यव्यवहारयोर्विसम्वादेन लोकैरग्राह्यः स्यात् । किञ्च अभितो रक्षिता तत्प्रतिपक्षवधादिना बहुधा सम्वर्द्धनेन च पालकः । परदाराभिमर्षणरूपं प्रतीपं धर्मसेतूनामेव । धर्मसंस्थापनादेर्वा प्रतिकूलम् । ब्रह्मन् हे साक्षद्वेदमूर्त्ते ! प्रतीपाचरणेन वेदातिक्रमात् भवादृशविप्रकुलातिक्रमोऽपि स्यात् । तच्च ब्रह्मण्यदेवस्य तस्यायुक्तमेवेति भावः । यद्वा । ननु तत्कारणं कथं मया ज्ञातुं शक्यमीश्वरचेष्टितत्वादित्याशङ्क्याह । हे सर्ववेदात्मक ! सर्वज्ञत्वादित्यर्थः । अन्यैस्तः । यद्वा । प्रतीपमाचरदिति अधर्ममुक्तवान् कृतवान् अभिरक्षितवांश्चेत्यर्थः । तत्रोक्तिः मया परोक्षं भजता तिरोहितमित्यादिना रहोऽपि परदारान् भजे इत्यनुवादात् कृतिः साक्षादेव रमणात् अभिरक्षा पुनः पुनराचरणात् तेन लोके प्रवृत्तिसम्भवाच्चेति स्वयमधर्मकर्तृभ्योऽपि तस्य महानेव दोषबन्ध आयातः । यद्वा । धर्मं प्रकर्षेण नाशितवान् अधर्मञ्च सम्यक् स्थापितवानिति श्लेषेण स्वयं सिद्धान्तमप्याह । संस्थापनायेति धर्मस्य स्थापनं नाम सामान्यतः संस्थापनन्तु तत्रैव शुद्धभक्तियोगस्य सर्वातिक्रमितया स्थापनात् । "स्मर्त्तव्यः सततं विष्णु र्विस्मर्त्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः" इति पाद्मादिशास्त्रेभ्यः । तदवतारस्य तन्मुख्यप्रयोजनत्वञ्चोक्तं प्रथमे श्रीकुन्तीदेव्या । "भक्तियोगविधानार्थं कथं पश्येमहि स्त्रिय" इति । भक्तियोगविधानार्थमवतीर्णं त्वामिति टीका च । तद्धि तत्र विनाप्युपदेशं तत्प्रभावेणैव भवति । तथेतरस्य तद्विरुद्धस्य च स्वत एव नाशो भवतीति स तथाभूतोऽसौ परदाराभिमर्षणरूपं प्रतीपं कथमाचरन् अपि तु नैवाचरदिति कुतो धर्मसेतूनां सर्वधर्माश्रयभूतानां भक्तियोगभेदानां वक्तृत्वादिहेतोरित्यर्थः । अतो निजावतारमुख्यप्रयोजनभक्तिविशेषफलप्रेमविशेषविस्तारणाद्यर्थं तासां पतिसेवादिधर्मत्यजनेन अन्यधर्माद्यनादरो युक्त एवेति भावः । सच "तावत् कर्माणि कुर्वीत" इत्यादि वचनात् साधनदशायामपि युक्तः किमुत तासामिति । यद्वा । स भगवान् जगदीश्वरश्चैवं वा प्रतीपत्वे हेतुः सर्वांशित्वादन्तर्यामित्वाच्चेत्यर्थः । यद्वा । परे परमस्वशक्तिरूपा ये दाराः स्वीयरमण्यस्तदभिमर्षणमपि कथं प्रतीपमाचरत् अपि तु नैवेत्यर्थः । यतो भवद्भिरेवोक्तं कृष्णवध्व इति ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपदेशानुष्ठानविरोधिनिरसनादिभिः केवलं धर्मपरित्राणार्थमवतीर्णस्य भगवतः कथं परदारपरिग्रहरूपाधर्माचरणमिति पृच्छति राजा । संस्थापनायेति । इतरस्याधर्मस्य प्रशमनार्थं चांशेन बलरामेण सह सङ्कल्पात्मकज्ञानेनैव ननु कर्मणेति चावतीर्णः ॥२७॥

स एवंभूतः धर्ममर्यादानां स्वयं कर्त्तानुष्ठाता वक्तोपदेष्टा च विरोधिनिरसनेनाभितो रक्षिताच सन् हे ब्रह्मन्! परदाराभिमर्शनात्मकं प्रतीपं धर्मप्रतिकूलमधर्ममिति यावत्कथमाचरत्कृतवानित्यर्थः ॥२८॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ज्ञातशास्त्रतात्पर्यार्थोऽपि परीक्षित्स्वनाम्नोऽर्थं सफलं कुर्वन् तथा श्रोतृजनविद्वज्जनचित्तसन्देहप्रहाणाय पृच्छति । संस्थापनायेति । इतरस्याधर्मस्य हिशब्देन "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत" इत्यादिवाक्यं प्रमाणयति ॥ २७ ॥

प्रतीपं प्रतिकूलं किमकारीत्यत्राह । अभिमर्शनम् अविचार्य ग्रहणम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तेषामेव तत्रत्यानां केषाञ्चित्तत्त्वमजानतां सन्देहं वितर्क्य कृपया तेषामेव हितार्थं तमुत्थाप्य स्वसन्देह व्याजेन पृच्छति । संस्थापनायेति ॥ २७ ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ "नचैवंविस्मयः कार्यो भवता भगवत्यजे । योगेश्वरेश्वर" इत्यादिना प्रत्याख्यातोऽपि राजा श्रोतृणां सन्देहोच्छेदार्थं पुनः पृच्छति । संस्थापनेत्यादित्रिभिः अंशेन बलदेवेन ॥ २७ ॥

प्रतीपं विपरीतं तदेव किं तत्राह । परदाराभिमर्शनं परस्त्रीसङ्गमिति इत्यर्थः वस्तुतस्तु परात्परा दाराः स्वानन्दशक्तयः दारयन्त्यविद्यामिति दाराः ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमेतां लीलां श्रुत्वा राज्ञः सन्देह उत्पन्नः तद्विचारणार्थं शङ्कते । संस्थापनायेति त्रिभिः । अवतारविरुद्धं लोकविरुद्धं प्रमेयविरुद्धं चेति तादृशकरणे अवश्यं हेतुर्वक्तव्यः तदभावेऽपि लीलायाः सिद्धत्वात् तत्र प्रथममवतारविरोधमाह । धर्मसंस्थापनाय भगवदवतारः धर्मसंस्थापनार्थायचेति वाक्यात् अधर्मनिवृत्तये च तदुभयार्थमेव भगवदवतारः इत्यादिवचो भूभार हरणं च अधर्म निवृत्तये एतदर्थमेवावतारः नान्यार्थमिति हि शब्द आह । भगवानिति तस्य स्वाधनमन्यथा पूर्णकामस्यावतारो न घटेतेति लोकोपकारश्च एताभ्यामेव अंशेन बलभद्रेण आगत्य तथा करणे हेतुः जगदीश्वर इति । स हि सर्वरक्षकः अतः पालनार्थमेवं कृतवान् ॥ २७ ॥

किमतो यद्येवमेतदित्याह । स कथमिति । धर्म मर्यादा पालकानां निर्माता स्वयं वक्ता च उपघाते अभिरक्षिता च तादृशः प्रतीपं प्रतिकूलमाचरत् धर्मो नष्टः अधर्मः स्थापितः अधर्मः कृत उक्तः रक्षितश्च अतः प्रतीपाचरणमयुक्तं तत्र हेतुर्वक्तव्य इति ब्रह्मन्निति सम्बोधनं ये पञ्चपदार्था उक्ताः तेषां स्वरूपमेकत्रैवेति तं निर्दिशति परदाराभिमर्शनमिति ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ परीक्षित्समीपोपविष्टानां विविधवासनावतां कर्मिज्ञानिप्रभृतीनां हृदये सन्देहं समुत्थितमालक्ष्य तदुच्छेदार्थं पृच्छति । संस्थापनायेति । इतरस्याधर्मस्य यः स्वल्वंशेन जगदीश्वरो विष्णुर्भवति स स्वयं भगवानवतीर्णः । यद्वा । अंशेन बलदेवेन सह प्रतीपं प्रतिकूलमधर्मं यदि च स्वैरलीलयैवाचरदित्युच्यते तदा ब्रह्मशापमङ्गीकृत्य तत्फलञ्च कदाचिदीश्वरत्वेऽप्यङ्गीकरोति यथा तथैव पापमङ्गीकृत्य तत्फलमप्यवश्यमङ्गीकुर्यादित्याक्षेप इत्येकः प्रश्नः ॥ २७ ॥ २८ ॥

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

संग्रह श्लोकः—

वंशीसञ्जल्पितमनुरतं राधयान्तर्धिकेलिः<br>
प्रादुर्भूयासनमधिपटं प्रश्नकूटोत्तरञ्च ॥<br>
नृत्योल्लासः पुनरपि रहः क्रीडनं वारिखेला<br>
कृष्णारण्ये विहरणमिति श्रीमती रासलीला ॥

एवञ्च शुश्रूषन्त्यः पतीनीति भर्तुशुश्रूषणमिति पतिसुतान्वयेति श्रीमुनीन्द्रस्य श्रीभगवतस्तासां च वाक्यजातेन सामान्यतः प्रतिभातं परकीयात्वमाक्षिपन् राजोवाच वस्तुतस्तु श्रीमुनीन्द्रेण परमकरुणयार्थान्तराच्छादितैरपि पदैः प्रदर्शितेयं रहस्यातिरहस्यक्रीडापरिपाटी मयानुभूतेति व्यञ्जनाय तदनधिकारिणां बुद्धिवृत्तिर्मास्पृशत्विति प्रश्नभङ्ग्या तदाच्छादना यद्वा परोऽयमन्यपर इत्यनुसन्धेयं तत्र श्रीराजोवाचेति

उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इति

न्यायात् परमविदग्ध इत्यर्थः । समिति युग्मकं सम्यक्स्थापनाय लुप्तस्य प्रवर्त्तनाय प्रवृत्तस्य च रक्षणायेत्यर्थः । न केवलं तदर्थमेव किन्त्वितरस्य अधर्मस्य प्रकृष्टशमाय सवासनोन्मूलनायेत्यर्थः अन्यथा धर्मसंस्थापनासिद्धिः स्यात् हि प्रसिद्धं—

धर्मसंस्थापनार्थाय सम्भवामि युगे युग इति ।

श्रीगीताभ्यः भगवानिति तत एव भगवत्तासिद्धिरिति भावः । अंशेन बलदेवेन सह इति तत्र तत्राग्रे दर्शितः यद्वा अंशेनापि धर्मादिस्थापनायेति किमुत स्वयं भगवत्त्वेनेति यद्वा

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि ।

स्वंशेन यो जगदीश्वरः स्वयं तु पूर्णैश्वर्यादियुक्त एवावतीर्ण इत्यर्थः । तस्यान्या कामना न सम्भवतीति भावः ॥ २७ ॥

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

स इति । पूर्वत्र यच्छब्दाध्याहारेणान्वयः धर्मा एव सेतवः लोकरक्षा मर्य्यादाः शास्त्रयोनित्वात्तेषां वक्ता तथात्वादेव कर्त्ता नचैतावता वेदस्य पौरुषेयत्वप्रसङ्गः तन्निषेधस्य प्राकृतपुरुषपर्य्यवसितत्वादित्यन्यदेतत् अन्यथा वाक्यव्यवहारयोर्विसंवादेन लोकैरग्राह्यता स्यात् किञ्च अभितो रक्षिता तत्प्रतिपक्षबाधनादिनातिशयेन पालकः एवम्भूतः सन् परदाराभिमर्शनरूपं लोकवेदविरुद्धं प्रतीपं धर्मसेतूनामिव स्थापनादेर्वा कथमाचरेत् न कथमपीत्यर्थः सम्भावनायां लिङ् ब्रह्मन् ! वेदमूर्ते तदतिक्रमे हि भवतामप्यतिक्रमाद्ब्रह्मण्यताव्याघात इतिभावः । यद्वा ईश्वरचेष्टितं मया कथं ज्ञातव्यमित्याशङ्क्याह । ब्रह्मन्निति सर्वज्ञेत्यर्थः । नत्र मया परोक्षं भजतेत्युक्तिः साक्षादेव रमणात्कृतिः पुनः पुनराचरणादरक्षेति यथायथं प्रतीपाचरणं युग्मं श्लेषेण सिद्धान्तमप्याह तथाहि धर्मः प्रोज्झितकैतव इत्याद्युक्तस्य श्रीभगवद्धर्मस्यैव शुद्धभक्तियोग्यस्येत्यर्थः यथा पाद्मे—

> स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
> सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्करा इति ॥

तत्रैव मुख्यो धर्मप्रयोगः तथा तदवतारस्यच तन्मुख्यप्रयोजनत्वम—

> भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः इति ।

श्रीप्रथमे कुन्तीवाक्यात् तदितरस्य अवरधर्मादेः प्रशमाय समो मन्निष्ठता बुद्धेरित्येकादशतात्पर्यपर्यवसानायेत्यर्थः ।प्रकर्षश्चात्र तत्त्यागपूर्वकस्वभक्तिनिष्ठाप्रापणमेव अतो निजावतारस्य मुख्यप्रयोजनभक्तिविशेषपरमफलप्रेमविशेषविस्तारणायैव तासांपतिं मन्यसेवादिरूपधर्मत्याजनेनान्यधर्माद्यनादरो युक्त एवेति भावः । सच—

> तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
> मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

इत्यादिना साधकदशायामपि युक्तः किमुत सिद्धदशायामिति तदर्थम् अंशेन श्रीबलदेवेन श्रीभगवद्धर्ममूर्तिना सहेति स तथाभूतोऽसौ धर्मसेतूनां तादृशधर्माश्रयभूतानां भक्ति योगभेदानां श्रवणादीनां श्रीमदुद्धवादिषु वक्ता श्रीगोवर्धनपूजादौ कर्ता यत्कृतो गोत्रधर्म इत्युक्तेः धर्मपुत्रादिपालनेनाभिरक्षिता परदाराभिमर्शनं पराश्च ते दाराः स्वकला इत्यर्थः—

> आनन्दचिन्मयरसप्रतिभावितामि-
> स्ताभिर्य एव निजरूपकलाभिरीति

ब्रह्मसंहितोक्तेः तासामभिमर्शनं यद्वा सर्वकान्तिः संमोहिनी परेति बृहद्गौतमीयात्परायाः श्रीराधायाः ये दारा दारयन्ति स्वहृदयेभ्यः कामसुखं खण्डयन्तीति दाराः सखीजनाः पुंस्त्वनिर्देशेन श्रीकृष्णविषयककामासक्त्यभावः सूचितः तेषामभिमर्शनं बाहुप्रसारणादिना स्पर्शनमात्रमेव ननु रमणमित्यर्थः । तद्रूपं किम्प्रतीपमाचरेदिति काकुः कामविजयक्रीडायां कामासक्तरसम्भवादिति भावः ॥ २८ ॥

———

श्रीरामनारायणकृतभावभावविभाविका ।

एवं विचित्रकामविजयख्यापकसर्वजगदुद्धारकप्रेमपथप्रवर्तकपरमानन्दघनरासादिविहारं श्रुत्वा परमभगवदीयतया जातपरमाल्हादः गर्भे एव स्वरचणरूपदृष्टभगवत्प्रभावः सर्वविस्मारकयोनिप्रभावेणाप्यविस्मृतभगवत्स्वरूपतया तत्परीक्षणादेव परीक्षिन्नाम्ना प्रसिद्धः साक्षाद्भगवतैव शुकरूपतयोपदिष्टतत्त्वो हरिहरिजनकृपापात्रं स्वयमसन्दिहानोऽपि तत्रत्यानांचसाक्षाच्छुकश्रोतॄणां तत्कृपादृष्टिशुद्धमतीनाञ्च सन्देहासम्भवेऽपि भाविकलिजनानां धर्मानभिज्ञानां विपर्ययकचित्ततया स्वभोगानुकूलविपरीतार्थग्राहिणां भगवतः सदाचारप्राप्तमत्या विपरीतप्रवृत्तिर्माभूदिति सन्दिहान इव पृच्छति त्रिभिः । संस्थापनायेति । यः साक्षात्स्वयं भगवानथ च—

> विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति ।

वचनादंशेन जगदीश्वरः ॥ २७ ॥

स एव—

> यदा यदाहि धर्मस्य ग्लानिर्भवति भारत ! ।
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
> परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
> धर्मसंस्थापनार्थाय सम्भवामि युगे युगे इति ॥

वचनेन स्वधर्मप्रवृत्तिमतां साधूनां रक्षणेन दुष्कृतां तत्प्रतिकूलाधर्मरतानां नाशेन च धर्मस्य सम्यक् स्थापनायेतरस्याधर्मस्य प्रशमायावतीर्णः समस्तकल्याणगुणनिलयतयाविर्भूतः "स्वयञ्च अस्य महतो भूतस्य निश्वशितमेतदृग्वेदो यजुर्वेदः सामवेद" इत्यादिश्रुतेः निः श्वसितमस्य वेदा इतिस्मृतेश्च निरायासवेदहेतुत्वात् धर्मसेतूनां वक्ता "द्वापरे द्वापरे विष्णुर्व्यासरूपी जनार्दन" इत्यादिरूपेण प्रवर्तकश्च

> न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
> नानवाप्तमवाप्तव्यं वर्त एवच कर्मणि ॥

इत्यादिकर्ता च सयथा—

> यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
> मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ ! सर्वश ॥ इत्यादिना

स्वीयाचरणेन विनाशाय दुष्कृतामिति तत्प्रतीपहननेनचाभिरक्षिता कथमतिसाहसरूपं परदाराभिमर्शनं प्रतीपमाचरत् ब्रह्मन्निति साक्षात्वेदात्मक ! वेदप्रतीपतया भवतां प्रतीपतापि स्यात् साच ब्रह्मण्यदेवस्य तस्य न संभवति यद्वा किमहं जानीयामी श्वराचरितस्य दुर्विज्ञेयत्वादिति चेत्तत्राह । ब्रह्मन्निति । साक्षाद्ब्रह्मकृष्णस्वरूप तव तद्रूपत्वान्न तदभिप्रायस्य तवाज्ञानमिति भावः ननु कामविवशतया कृतं भविष्यति किमत्र चित्रं तत्राह । आप्तेति । अनाप्तकामानां कुसङ्गिनां जुगुप्सिताचरणसंभवेऽपि स्वयं नित्यानन्दघनत्वादाप्तकामः यदूनामतिधर्मशीलानां च पतिः पालकः धर्मप्रवर्तकतयैव रक्षको यज्जुगुप्सितं कृतवान् तत्किमभिप्रायः इति तदभिप्रायप्रकटनेन नः इतिबहुवचननिर्देशेन न मम सशंशयोऽपितु मूर्खबहुलं जगदिति लोके पामराणां बहुत्वात्तदीयसंशयं छिन्धि तत्रास्मच्छब्दादेशनिर्देशेन तेषां राज्ञो मम प्रजात्वान्मदीयानां संशयच्छेदनं मद्वारैव भाव्यमित्यभिमतिः यद्वा यतः सर्वधर्मप्रतीपं परदाराभिमर्शनमाचरदतः कथं धर्मस्य संस्थापनायेतरस्य प्रशमाय चावतीर्णः कथंवांशेन जगदीश्वरो भगवान् कथं वा धर्मसेतूनां वक्ता कर्ता रभिक्षिता यद्यस्माज्जुगुप्सितं कृतवानतः कथमाप्तकामः तादृशश्चेत्तत्करणे किमभिप्राय इति नः संशयं छिन्धी-

१आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम् । आत्माराम इति शुकपक्षीय विजयध्वजयोः पाठः ।
किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ! ॥ २९ ॥

॥ श्रीशुक उवाच ॥

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥

### श्रीरामनारायणकृतभावभावविभाविका ।

त्वन्वयः यद्वा "धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति सर्वावतारणां धर्मस्थापनार्थत्वात् यथा भगवान् कृष्णोऽवतारशिरोमणिस्तथ भक्तियोगः सर्वधर्मशिरोमणिः तदुक्तं पाद्मे—

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥
तथा जन्मान्तरसहस्रेण तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एवहि केवलम् ॥

इत्यादिनान्वयव्यतिरेकाभ्यां सर्वधर्मफलभूतश्चेति तत्स्थापनाय तदितरस्योपशमायावतीर्णस्तदप्युक्तं श्रीकुन्त्या "भक्तियोगविधानार्थं कथं पश्येमहि स्त्रिय"इति तत्र"तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायत"इत्यादिना समासाधिकाराणां त्यक्तपतिसेवनादीतरधर्माणां हरिवंशमुखात्तत्स्वरूपसूचकगीतश्रवणपूर्वकं पूर्ववर्णितरीत्या प्रेमपथसम्यक्स्थापनमेवात्र कृतं सतु धर्मसेतूनां वक्ता कर्ताभिरक्षिता प्रतीपं परदाराभिमर्शनं कथमाचरत् न कथमपि किंतु सतु अंशेन जगदीश्वरः परः पुरुषः तास्तु परस्य परमात्मनः कृष्णस्य दाराः कृष्णवध्व इति यत्र तत्रोक्तेरिति तदभिमर्शनं सर्वोद्धारकगुणगानार्थं यदाचरत्तत्कथं प्रतीपं न कथमपि तथाप्तकामे यदुपतौ जुगुप्सिताचरणासंभयादाप्तकामो यदुपतिः यत्कृतवान् तत्किं जुगुप्सितम् अपितु नैवेत्यं मदभिप्रायस्तथापि नोऽस्मत्प्रजानां पामराणां विपरीता प्रवृत्तिर्माभूदित्येतत्संभावितं संशयं छिन्धि ननु किंमम संशयच्छेदनेन तत्राह । सुव्रतेति तव संशयच्छेदनव्रतवत्तया संशयात्मा विनश्यतीत्यादिना तन्नाशाद्रक्षणाय परमकृपालुतया चावश्यं तथाचरणीयम् ॥ २८—२९ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

भगवत्कृतां रासलीलामाकर्ण्य सर्वसंदेहनिवृत्तये राजा पृच्छति धर्मेति । परित्राणाय साधूनामित्युक्तत्वात् धर्मस्य सम्यक्स्थापनायेतरस्याधर्मस्य च प्रकर्षेण शमनाय भगवान् जगदीश्वरोऽशेन बलदेवेन सहावतीर्ण इति प्रसिद्धं भगवानिति पदेनान्यथा पूर्णकामस्यावतरणं न घटत इति सूचयति युक्तश्चैवं भगवतो जगत्परिपालनमिति द्योतनाय जगदीश्वर इत्युक्तं यद्वा अंशेन जगदीश्वरः तदुक्तं "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग" दिति ॥ २७ ॥

एवंभूतः सः धर्मसेतूनां तत्प्रतिपादकवेदानां वक्ता तत्रापि न केवलं वक्ता किंतु तत्कर्ता तत्प्रतिपादकशास्त्रस्य निर्माता च किंच तदुक्ताचरणेन तद्विरुद्धवादिनिराकरणेन तत्प्रतिपक्षवलयद्वधादिना च रक्षिता पालकश्च कथंप्रतीपं धर्मसेतूनां प्रतिकूलं परदाराभिमर्शनरूपं ससाहसमधर्ममाचरत् न केवलं कलञ्जभक्षणादिवदेवाधर्ममात्रमित्यर्थः । ननु ईशचेष्टितं कथं मया ज्ञातुं शक्यमितिचेत्तत्राह हे ब्रह्मन् वेदमूर्ते ! सर्वज्ञ तदभिन्नेति वा ॥२८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतस्त्वज्ञजनभ्रान्तिनिराकरणाय ब्रह्मविदाप्नोति परमित्यादिश्रुतिविरोधः कृष्णं विदुः परं कान्तं ननु ब्रह्मतयेत्यादि प्रश्नप्रतिवचनाभ्यां परिहृतः अथ धर्मान्न प्रमदितव्यमित्यादिश्रुतिविरोधः परिह्रियते । संस्थापनाय धर्मस्येत्यादि । प्रश्नोत्तराभ्याम् अंशेन बलेन सह यद्वा अंशेनेति जातावेकवचनं युधिष्ठिरार्जुनादिभिः सहेत्यर्थः ॥ २७ ॥

परदाराभिमर्शनं प्रतीपं धर्मात्प्रतिकूलमधर्ममित्यर्थः । यो धर्मसेतूनां वक्त्रादिरूपः स कथमाचरत्कृतवात् ॥ २८ ॥

---

### भाषा टीका ।

श्रीमहाराज परीक्षित बोले सब जगत के ईश्वर भगवान् बलदेवजी के सहित सब धर्मों के स्थापन करने को तथा सब पापों के नाश करने को अवतीर्ण भये हैं ॥ २७ ॥

वे भगवान् सब धर्मों के सेतु वेदादिकों के करने वाले हैं कहनेवाले हैं रक्षक हैं हे ब्रह्मन् ! शुकदेवजी उन भगवान् ने परदारा के संग रूप ऐसा विपरीत कर्म कैसे किया ॥२८॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आप्तकामस्य नायमधर्म इतिचेद्यद्येवं कामाभावान्निन्दितं केनाभिप्रायेण कृतवानिति पृच्छति । आप्तकाम इति ॥ २९ ॥

परमेश्वरे कैमुतिकन्यायेन परिहर्तुं सामान्यतो महतां वृत्तमाह । धर्मव्यतिक्रम इति । साहसञ्च दृष्टं प्रजापतीन्द्रसोमविश्वामित्रादीनां तच्च तेषां तेजस्विनां दोषाय न भवतीति ॥ ३० ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यदुपतिरिति । धर्मपरयदुवंशे ऽवतीर्णत्वादपि तथा कर्तुं नार्हतीति भावः । वै प्रसिद्धौ एतमितिकृत्राप्यन्यः संशयो . नास्ती-

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोपिणी ।

त्यर्थः । न इति वहुत्वं सन्देहिवर्गाभिप्रायेण संशयमिति । आप्तशिरोमुकुटमणेस्तस्य कृते दोपवुद्धिर्नास्त्येव किंतु शास्त्रविरुद्धत्वेन तत्रास्माकं दार्ढ्याभावाच्चित्तदोलनं स्यादित्यर्थः । सुव्रत हे ब्रह्मचर्यादिनिष्ठ ! इति भवादृशानामाचरितविरुद्धं तत्तु जुगुप्सितमेवेति यद्वा हे सदाचारनिष्ठेति अन्यथा भवदादिसंमतसदाचारलोप इति भावः । श्लेपपक्षे पाण्डवसम्बन्धिनां यदूनां पतित्वेन निजप्रभुतामभिप्रेति इति दोपाभावो ध्वनितः यदूनां भक्तानां पतिरिति भक्तवात्सल्येन धर्मातिक्रमार्होऽपीत्यर्थः । जुगुप्सितं किं कृतवान् अपितु नैव किंतु भक्तवर्गसंमतमेवाकरोदित्यर्थः । कुतः आप्तः लब्धः कामः रासक्रीडादिना निजप्रेमभक्तिविस्तारणमनोरथो येन सः सर्वसाध्यतमप्रेमभक्तिप्रवर्त्तनेन निन्दितानाचरणात् प्रत्युत तेन साधुवर्गसन्तोपणादेवेत्यर्थः । तथापि नः संशयम् अभिप्राय इति तत्र केपांचिच्छास्त्रार्थतत्त्वविदां भक्तिपराणां सद्रसाभिषिक्तानां प्रेमभक्तिरसमयतद्दीयरासक्रीडादौ संशयाभावात् यद्वा प्राये ऽनशनसमयेऽस्मिन् इतिसंशयस्यायोग्यतोक्ता अतः शीघ्रं तच्छेदनमाभिप्रेतं न इति स्वीयत्वेन विपक्षाणामपि ग्रहणं सहजविनयादिना किंवा वाक्चातुर्येण परमविपक्षतादिवोधनार्थम् अत्रो दुर्वुद्धीनामेवात्रत्यानां केपांचित् हितार्थमेवं मया पृच्छ्यते । नच निजसन्देहादिति भावः । अतः अभि अभयं यथा स्यात् तेभ्यो भयमकृत्वा तेपां संशयशृङ्खलां छिन्धीत्यर्थः । सुव्रत हे भक्तोकनिष्ठ ! ॥ २९ ॥

सहजकृपालुतया शिष्यस्नेहापेक्षया वा परिहरति । धर्मेति सप्तभिः ईश्वराणां ज्ञाने भक्तौच सामर्थ्यवतां भगवद्भजनादिना कर्मादिपारतन्त्र्यरहितानामित्यर्थः । धर्मव्यतिक्रमः विशेपेणोल्लङ्घनं ब्रह्मादीनां दुहितृकामनादिसाहसं निर्भयतया यथा इन्द्रादीनां यथावन्हिः सर्वं भुङ्क्ते भक्षयति दहतीति वा तथा तस्य सर्वभोजनेनापि यथाग्नेरमेध्यादिभक्षणजन्यदोपो यथादिदोपो या न स्यात् तद्वदित्यर्थः । अन्यत्तैर्व्याख्यातं यद्वा धर्मव्यतिक्रम एव साहसं त्वेवं चकारः अनीश्वरेभ्यो भेदाय ॥ ३० ॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोपिणी ।

यदुपतिरिति । कृततादृशाकर्त्तव्यश्चेत् परमधार्मिकाणां यदूनां पतिरपि न स्यात् । एतमिति कुत्राप्यन्यः संशयो नास्तीत्यर्थः । न इति वहुत्वं सन्देहे वर्गाभिप्रायेण संशयं प्राप्तशिरोमुकुटाचरितत्वशास्त्रविरुद्धत्वाभ्यां चित्तदोलनं सुव्रत ! हे ब्रह्मचर्यादिनिष्ठ इति भवादृशामाचरितं विरुद्धं तत्तु जुगुप्सितमेवेति । यद्वा । हे सदाचारनिष्ठेति अन्यथा भवदादिसम्मतसदाचारलोप इति भावः । श्लेपपक्षे यदूनां भक्तानां पतिरिति भक्तकृपया कदाचिद्धर्मातिक्रमार्होऽपीत्यर्थः । जुगुप्सितं किं कृतवान् अपि तु नैव किन्तु भक्तवर्गसम्मतमेवाकरोदित्यर्थः । कुतः । आप्तो लब्धः कामो रासक्रीडादिना निजप्रेमभक्तिविस्तारणमनोरथो येन सः । सर्वसाध्यतमप्रेमभक्तिप्रवर्त्तनेन निन्दितानाचरणात् प्रत्युत तेन साधुवर्गसन्तोपणादेवेत्यर्थः । तथापि नः संशयमिति साञ्जलिकरचालनेन तत्रत्यसन्दिहानवर्गाभिप्रायेण तच्च विनयेन प्राय इति तत्र केपाञ्चिच्छास्त्रार्थतत्त्वविदां भक्तिपराणां सद्रसाभिषिक्तानां प्रेमभक्तिरसमयतद्दीयरासक्रीडादौ संशयान्तराभावात् अतोऽनवहितानामेवात्रत्यानां केपाञ्चित् हितार्थमेव मया पृच्छ्यते नच निजसन्देहादिति भावः । तस्मात् अभि अभयं यथा स्यात्तेभ्यो भयमकृत्वा तेपां संशयशृङ्खलां छिन्धीत्यर्थः । सुव्रत हे भक्त्यैकनिष्ठ ! ॥ २६ ॥

सहजकृपालुतया शिष्यस्नेहापेक्षया वा तदीयाक्षेपाभासपरिहारपूर्वकं श्लेप दर्शिततदीयसिद्धान्तितमेव परिहरति । धर्मेति सप्तभिः । ईश्वराणां कर्मादि पारतन्त्र्यराहितानामित्यर्थः । तेपां धर्मव्यतिक्रमो यद्दृष्टः यथा ब्रह्मादीनां दुहितृकामनादौ तथा साहसं निर्भयता च यद्दृष्टं तथा वृहस्पतेरुतथ्यपत्नीगमनादौ तत्तच्च तेजीयसां तेपां न दोपाय प्रत्यवायाय । तत्र दृष्टान्तः । सर्वभुजो वह्नेर्यथा सर्वभुक्त्वं न दोपाय नापवित्र्याय तद्वदित्यर्थः ॥ ३० ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्माराम इति निरतिशयानन्दस्य ग्राम्यभोगेच्छा कथमिति चोद्यम् ॥ २६ ॥

उत्तरमीश्वराणामीश्वरवन्महातेजसाम् ॥ ३० ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च स्वयमवाप्तसमस्तकामोऽपि यदुपतिर्जुगुप्सितं निन्दितं कर्म कृतवान् अनवाप्तकामस्य हीन्द्रियपारवश्यस्य जुगुप्सिताचरणं दृष्टं नत्वाप्तकामस्य स्वतन्त्रस्येति भावः । अतः केनाभिप्रायेण कृतवानिति पृच्छति । किमभिप्राय इति । एतदेतस्मिन् विषये नोऽस्माकं संशयस्तं हे सुव्रत ! छिन्धि निराकुरु ॥ २६

कैमुत्यनयेनोत्तरं विवक्षुः कर्मवश्यत्वप्रयुक्तशास्त्रवश्यानामेव शास्त्रविरुद्धकर्म प्रत्यवायजनकं नत्वकर्मवश्यानामिति तावदुत्तरमाह । धर्मव्यतिक्रम इति । यद्यपीश्वराणामशास्त्रवश्यानां धर्मव्यतिक्रमः शास्त्रोक्तधर्मातिलङ्घनं साहसं सहसा शास्त्रार्थाविमर्शेन कृतं साहसं कामचार इतियावत् तदुभयं दृष्टं तथापि तत्तेजीयसां न दोपाय न प्रत्यवायायेदं स्वर्गिणां मुक्तानाञ्च व्यापारेपु व्यभिचारादिति भावः । नहि स्वर्गिमुक्तव्यापारः शास्त्रानुवर्ती नवा प्रत्यवायावहः तेजीयस्त्वमत्र शास्त्रावश्यत्व नापादकसामर्थ्यस्वरूपं विवक्षितं पदार्थानां विलक्षणशक्तिकत्वादिति तात्पर्यं तत्र दृष्टान्तमाह । वन्हेरिति । यथा सर्वभुजः सर्वदाहकस्य वन्हेर्दाहमात्रेण दाह्यपटादिगतमालिन्यसंवन्धो न विद्यते तद्वत् नहावादिपु सर्वसंवन्धिपृथिव्यादिगतलौहित्यादिकं दृष्टमिति वन्हावपि तत्प्रसङ्गादिति भावः ॥ ३० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विषयभोगलौल्यात् कृतं किंनेत्याह । आत्माराम इति । कोऽभिप्रायोऽस्य मच्चरितं चरेत् मदुक्तमेव चरेद्वा चरितं चरेदिति चेत्ति नः परिसरवर्तिजनस्य ॥ २९ ॥

नारायणानुग्रहसुधापात्राणां स्मृतिविहितधर्मव्यतिक्रमो न दोपाय दृष्टः किमुत दूरीकृतविधिनिपेधवन्धस्य हरेरित्याशयेन प्रदर्श

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परिहरति । धर्मेति । चशब्दः कैमुत्यद्योतकः यद्यर्थो वा यद्यपीश्वराणां योगैश्वर्यपारङ्गतानां साहसः हेतुशून्यो धर्मव्यतिक्रमः शास्त्रविहिताचारविरुद्धाचारोऽजीगर्तस्य पुत्रविक्रयः विश्वामित्रस्य श्वभक्षणप्रवृत्तिः सप्तर्षीणां शवभक्षणोद्योग इत्यादिलक्षणो दृष्टः शास्त्रे तथापि स तेषां दोषाय धर्मप्रतिबन्धकाय न भवति तत्कुत इति हेतुगर्भविशेषणमाह । तेजीयसामिति—

तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि ।
नवनीतेऽनले दुर्गे इति यादवः ॥

तत्र दृष्टान्तमाह । वह्नेरिति । अमेध्यादिदहनलक्षणोपेतस्याग्नेः ॥३०॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आप्तकामस्य जुगुप्सितेऽपि प्रवृत्ति र्न स्यात् जुगुप्सितं तु केनाभिप्रायेण कृतवानित्यर्थः ॥ २९ ॥

धर्मव्यतिक्रमो यद्दृष्टः यथा ब्रह्मादीनां दुहितृकामनादि तथा साहसं निर्भयता च यद्दृष्टम् । यथा बृहस्पतेरुतथ्यपत्नीगमनादि । तत्तच्च तेजीयसां तेषां न प्रत्यवायाय सर्वभुजो वह्नेर्यथा सर्वभुक्त्वं नापाविच्यायेत्यर्थः ॥ ३० ॥ ३१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

वैजुगुप्सितं विजुगुप्सितं तदेवं वैजुगुप्सितं स्वार्थेऽण् ॥ २९ ॥

सिद्धान्तमाह । धर्मव्यतिक्रम इत्यादि । ईश्वराणां धर्मव्यतिक्रमः अदृष्ट एव कुत्रापि न दृष्ट एव एवं साहसं सहसा कृतं च ईश्वरैः कदाप्यधर्माचरणं न क्रियते तथापि यदि दृश्यते तदा तेजीयसां कर्त्तुमकर्त्तु मन्यथा कर्तुं सामर्थ्यं तेजः तज्जुषां धर्मव्यतिक्रमो न दोषाय गुणायैव तैस्तु यत् क्रियते तत्र निमित्तमेष्टव्यं नतु रागप्राप्तं तत् अतो धर्मव्यतिक्रम इवासौ दृश्यते नतु वस्तुतो धर्मव्यतिक्रमः तत्र दृष्टान्तः । वन्हेरित्यादि । वन्हेरनलस्य यथा सर्वभुजः सर्वभोगाः क्रियन्ते बहुवचनं तस्य सर्वभुक्त्वं यथा न रागप्राप्तमपि तु सहजं तथेदमपि तेनानुमन्तव्य ईश्वरस्येयं लीला न धर्मव्यतिक्रम ईश्वरस्य तत्करणासम्भवात् तेन नासां परदारत्वं नैतस्य च धर्मव्यतिक्रम इति ग्रन्थार्थः एतदग्रे स्फुटीभविष्यति ईश्वराणामिति वचनं सर्वेश्वरस्य तात्पर्यम् ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु कामात्करणमितिचेत्तत्राह । आप्तकाम इति । स्वत एवाप्ताः कामा येन । यदुपतिरिति । विद्यमानायामपि कामनायामनेकस्त्रीप्राप्तिः तादृशोऽपि भूत्वा जुगुप्सितं लोकनिन्दितं कृतवान् तत्र करण कोऽभिप्रायः परस्परविरुद्धार्थत्वात् उभयोर्ग्रहणं न सम्भवति नैकतापि विरुद्धानां विरुद्धसर्वधर्माश्रयत्वेऽपि प्रयोजनं वक्तव्यं नैतत्कर्म लोकहितं नापि स्वहितं स्वस्य पूर्णत्वात् लोकस्य मर्यादैव हितकारिणी तथा गोपिकानामपि अन्तर्यामिण ईश्वरस्य न किञ्चिदसाध्यम् अत एवं सति किमभिप्राय एतत्कृतवान् कः अभिप्रायो यस्येति स त्वं नोऽस्माकं सर्वेषामेव संशय छिन्धि किञ्च सुव्रत हे सदाचारलक्षणव्रतयुक्त ! यदीदमसङ्गतमेव स्यात् त्वया नोक्तं स्यात् यदि वा अधर्मः स्यात् तच्च रुचिर्न स्यात् प्रतीयते च विपरीतमतो निर्णयो वक्तव्य इत्यर्थः ॥ २९ ॥

प्रथमतः अवतारविरुद्धं कृतवानिति यदुक्तं तत्रोत्तरमाह । धर्मव्यतिक्रम इति । किमेतदीश्वराणां चरितं न भवतीत्युच्यत आहो स्विदन्यार्थमागतोऽन्यत् करोतीति नहि किञ्चिद्घटनार्थमागतः किञ्चन विघटयति नह्यन्यार्थमप्यागतः स्वधर्मं परित्यजति प्रकाशनार्थमागतो दीपः गृहेण स्पृष्टः चेत् दहत्येवं अत ईश्वरधर्मोऽयम् अन्यथा ईश्वर एव न भवेत् नहि वणिजामिव प्रभोर्नियमोऽस्ति सर्वकर्मसु ईश्वरधर्मोप्यैवेते इति तान् गणयति । धर्मव्यतिक्रमः साहसमित्यादयः धर्मव्यतिक्रमो विद्यमानोल्लङ्घनं साहसमविद्यमानकरणम् एतदुभयमीश्वरे दृष्टं नहि दृष्टे अनुपपन्नं नाम चकारादीश्वरसेवकानामपि वीर्यादिमतां वा एतदेव वा साहसं सहसा क्रियमाणत्वात् नन्वेवं सति तत्कर्मफलं कथं न भवेदित्याशङ्क्याह । तेजीयसामिति । अतितेजस्विनामेतत्साधर्मजनकं विधिनिषेधवाक्यानां नियोज्यविषयत्वात् यथा लोके तथा वेदेऽपि अतितेजस्विनां सर्वकर्मदहनसमर्थानां न दोषजनकं भवतीत्यत्र दृष्टान्तमाह । वह्नेः सर्वभुज इति नहि सर्वान् दहन् वह्निः वधभाग्भवति सर्वं भक्षयन् अभक्ष्यभक्षको वा तथा सर्वं पिबन् सर्वत्र प्रविशन् सर्वसंबद्धः तत्तत्कारी भवति मिथ्याज्ञानसलिलावसिक्तायामेवात्मभूमौ कर्मबीजं धर्माधर्माङ्कुरमारभते ननु तत्त्वज्ञाननिदाघनिष्पीतसलिलतयोषरायाम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ॥

परमेश्वरस्य नायमधर्म इति चेत् निन्दितमिदं केनाभिप्रायेण चकारेति पृच्छति । आप्तकाम इति । तेन स्वकाम पूरणार्थमिदं कृतवानिति प्रत्युत्तरं न दातव्यमिति भावः । अवतारोऽस्मिन्नेतादृशं जुगुप्सितमेव कर्त्तव्यमवश्यमिति चेदत आह । यदुपतिरिति । परमधार्मिकाणां यदूनां पतिस्तर्हि कथमभूदिति भावः । न इति ननु केवलस्य ममात्र संशयो ऽस्तीत्यर्थः । तस्याप्तकामत्वेऽप्यात्मारामत्वेऽपि प्रेमानन्दस्वरूपाभिस्ताभिः सोत्कण्ठं रमणं युज्यत एवेति ज्ञातप्रायरहस्यसिद्धान्तत्वादिति भावः । सुव्रतेति । सदाचारपरायणस्य तवाप्यस्यामेव लीलायामत्यावेशदर्शनादेते संशेरते इति भावः ॥ २९ ॥

कृतस्याप्यधर्मस्य फलमीश्वराणामपि न भवेत् किमुत परमेश्वरस्य तस्येति प्रथमप्रश्नोत्तरमाह । धर्मेति षड्भिः । ईश्वराणां रुद्रादीनामपि धर्मव्यतिक्रमोऽधर्मो दृष्टः । साहसं साहसहेतुक इत्यर्थः । न दोषाय न प्रत्यवायाय । वह्नेर्यथा सर्वभुक्त्वं न दोषाय नापाविच्याय तद्वदित्यर्थः ॥ ३० ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका

अपि च आप्तेति यदुपतिरिति । कृततादृशाकर्त्तव्यश्चेत्परमधार्मिकाणां यदूनां पतिरपि न स्यात् जायते चानाप्तकामस्य

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

अकृत्येऽपि वृत्तिर्नतु तथास्तीति आप्तकाम इति अर्थक्रमेणेयं व्याख्या एतं नान्यमित्यर्थः । अत्यनुचितमिति भावः । शंसयं सदाचारतद्विरुद्धाचाराभ्यां चित्तदोलनं सुव्रत सदाचारिवर्गपूज्यचरण ! भवतस्तादृशयशः संकीर्त्तनेन सञ्जायतेतरां शङ्केति भावः । श्लेषपक्षे यदूनां परमभक्तानां पतिरिति भक्तकृपया कदाचिद्धर्मातिक्रमार्होऽपीत्यर्थः । तेषां परमभक्तत्वञ्च यदोः प्रियस्यान्ववाय इति प्रथमात् जुगुप्सितं किंकृतवान् अपितु नैव भक्तवर्गसम्मतमेवाकरोदित्यर्थः । कुतः आप्तो लब्धः कामो रासक्रीडादिना निजप्रेमभक्तिविस्तारणमनोरथो येन सः सर्वसाध्यतमप्रेमभक्तिप्रवर्त्तनेन निन्दितानाचरणात्प्रत्युत तेन साधुवर्गसन्तोषणादिति भावः । तथापि न इति साञ्जलिकरचालनेन सन्दिहानवर्गप्रदर्शनं किमभिप्राय इति पदद्वयं तत्र प्राय इति केषांचिच्छास्त्रतत्त्वविदां भक्तिपराणां प्रेमभक्तिपोषिकायां रासलीलायां न सन्देहः केषाञ्चिदनवहितानान्तु स भवेदेवेति तद्धितार्थमेवायं प्रश्न इति तस्मादभि अभयं यथा स्यात्तथा छिन्धि यद्वा भवतोऽभिप्रायो न केनापि विज्ञातो ज्ञातकल्पः कथञ्चित्स्यात्सोऽपि प्रश्नव्याजेन चित्तवृत्तिरूपाय उपरागान्मयैव वञ्चित इति भावः ॥ २९ ॥

अथ सहजकृपालुतया शिष्यस्नेहानुरोधेन वा तदीयाक्षेपाभासपरिहारपूर्वकं श्लेषदर्शिततदीयसिद्धान्तमेव प्रपुष्णन् श्रीशुक उवाच । धर्मेत्यादिसप्तभिः । ईश्वराणां कर्मादिपारतन्त्र्यरहितानामित्यर्थः । यथाहि ब्रह्मणो दुहितृकामनादौ धर्मव्यतिक्रमो योऽसौ प्रसिद्धः सतु दृष्ट एव नतु वास्तवः तथा साहसं च तच्च बृहस्पतेरुतथ्यपत्नीगमनादौ निर्भयत्वं तत्तच्च तेजीयसां न दोषाय न प्रत्यवायाय तेजोऽत्र वस्तुतो ऽनासक्तिरेव तत्र दृष्टान्तः सर्वभुजो वह्नेर्यथा सर्वं भुक्त्वमपावित्र्याय नेत्यर्थः ॥ ३० ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

यद्यपि राज्ञः प्रश्नस्यान्तिमव्याख्यानानुसारेण वस्तुतः प्रतीपाचरणाभाव एव तथापि तदङ्गीकृत्योत्तरमाह । धर्मव्यतिक्रम इति । ईश्वरणां परमेश्वरानुग्रहलब्धैश्वर्य्याणामिन्द्रचन्द्रादीनामपि धर्मव्यतिक्रमोऽहल्याभिमर्शादिसाहसञ्च गुरुपत्न्या बलादाकर्षणादि दृष्टं तथापि तस्य सर्वथा दोषरूपत्वेऽपि तेजीयसां तेषां दोषाय पापित्वाय न भवति चन्द्रस्यामाङ्कस्य तत्प्रभापराभववत् दोषस्य तत्तेजः पराभूतत्वात् तत्र दृष्टान्तमाह । वन्हेरिति । अभक्ष्यभक्षणस्य महादोषत्वेऽपि वन्हेस्तेजीयस्त्वात्सर्वभुजोऽपि तस्याभक्ष्यभक्षणं न दोषाय तद्वत् ॥ ३० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु आप्तकामस्य भगवतो नाधर्मसंस्पर्श इतिचेत्तत्राह । आप्तकाम इति । यद्याप्तकामस्तर्हि सुतरामिदं जुगुप्सितं कर्म कृतवान् तथा चाप्तकामस्यावतारावस्थायां यदूनां परमधार्मिकाणां पत्युरेवं विधं कर्म निन्दितमेव ननु किमेवं परमेश्वरे दोषमुद्भावयितुं प्रवृत्तो सीत्याशङ्क्य नाहं तस्मिन् दोषमुद्भावयामि किन्तु तदाचरणे तस्याभिप्रायं पृच्छामीत्याह । किमिति । किमभिप्रायः कृतवान् एतन्नोऽस्माकं सर्वेषां संशयं छिन्धि न इति करचालनेन संशयाक्रान्ततां दर्शितवान् यथा ब्रह्मचर्यादिसुव्रतैर्भवद्भिस्तत्प्रतीपाचरणं नो क्रियते तद्वत्तस्यापि तादृग्रमणं न शोभनमिति संबोधनाशयः यद्वा हे संशयच्छेदनलक्षणसुव्रत ! ॥ २९ ॥

ईश्वराणामपि दृष्टेन धर्मव्यतिक्रमेण साहसेन च दोषाभावनिश्चयात् परमेश्वरे कुतस्तच्छङ्कोत्थानमिति कैमुत्यन्यायेन परिहर्तुं सामान्यत ईश्वराणां वृत्तमाह । धर्मेति । ईश्वराणां प्रजापतीन्द्रचन्द्रविश्वामित्रादीनां धर्मस्य व्यतिक्रम उल्लङ्घनं तथा साहसं सहसा प्रवृत्तिरधर्माचरणञ्च दृष्टं तत्तेजीयसां न दोषाय प्रत्यवायाय न भवति यथा वन्हेः सर्वभुजः सर्वभुक्त्वं दोषावहं न भवति तद्वत् ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आप्तकामः अवाप्तसमस्तकामः स्वप्रयोजनरहितः किमभिप्रायः जुगुप्सितं परदाराभिमर्शनं कृतवान् हे सुव्रत ! हे नैष्ठिक ब्रह्मचर्यव्रतधर ! नोऽस्माकमेतत्संशयं छिन्धि निराकुरु ॥ २९ ॥

जीवविषयावेव धर्माधर्मौ तत्रासमर्थोऽधर्माचरणेन पतितो भवति समर्थस्तु "पुण्येन पापमपनुदती"तिश्रुतेः कथंचिदधर्मं कृत्वापि स्वतेजसा शुद्धो भवति नतु तौ भगवद्विषयौ सतु "प्रधानक्षेत्रज्ञपति"रित्यादिश्रुतेः सर्वचेतनाचेतनपदार्थपतित्वात्सर्वैः सह विहर्तुं योग्यो न कदाचिदप्यधर्मवातलेशेनापि स्पृश्यते सर्वथा भूतहितायैव क्रीडां करोतीति प्रत्युत्तरमाह । धर्मव्यतिक्रम इत्यष्टभिः ईश्वराणां प्रजापतिसोमेन्द्रादीनां धर्मव्यतिक्रमः धर्मप्रातिकूल्यं सहसा कृतं कर्म साहसञ्च दृष्टं तच्च तेषां तेजीयसां तपआदितेजोयुक्तानां दोषाय न भवति यथा सर्वभुजोऽपि वह्नेर्दोषपदार्थदोषलिप्तत्वं न विद्यते तद्वत् ॥ ३० ॥

---

भाषा टीका ।

यदुपति भगवान् सब मनोरथों से पूर्ण हैं तौ भी उनने जो ऐसा असंभव कर्म किया है हे सुव्रत शुकदेव जी ! इस का क्या अभिप्राय है इस में हम लोगों के संशय को आप छेदन कीजिये ॥ २९ ॥

श्रीशुकदेवजी बोले कहीं पर ईश्वर समर्थ पुरुषों का धर्म के अतिक्रमण करने का साहस दीखता है सो उस से तेजस्वी पुरुषों को दोष नहीं होता है जैसे कि सबका भक्षक अग्नि दोषों से लिप्त नहीं होता है ॥ ३०

नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजं विषम् ॥ ३१ ॥
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याह । नैतदिति । अनीश्वरो देहादिपरतन्त्रः यथा रुद्रव्यतिरिक्तो विषमाचरन् भक्षयन् ॥ ३१ ॥

कथं तर्हि सदाचारस्य प्रामाण्यमत आह । ईश्वराणामिति । तेषां वचःसत्यमतस्तदुक्तमाचरेदेव आचरितं तु क्वचित्सत्यमतः स्ववचोयुक्तं तेषां वचसा यद्युक्तमविरुद्धं तत्तदेवाचरेत् ॥ ३२ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एतदीश्वराचरितं साहसं न सम्यगाचरेत् सम्यगित्यस्य निषेधे तात्पर्यं जातु कदाचिदपि तत्र च न मनसापि किमुत वाचा कर्मणा वा हि हेतौ निश्चये वा विशेषेण समूलतया लोकद्वयदुःखित्वादिप्रकारेण नश्यति मौढ्यात् ईश्वराणामैश्वर्यमात्मनश्चासामर्थ्यमज्ञात्वेत्यर्थः । इति भक्षणे मौढ्यमेव हेतुरुक्तः अन्यथा भक्षणप्रवृत्तिः अब्धिजं कालकूटमिति परमतीक्ष्णतया सद्य एव विनाशोऽभिप्रेतः ईश्वरस्तु न नश्येदेव प्रत्युत ऐश्वर्यविशेषप्रकाशादिना शोभत एव यथा नीलकण्ठत्यादिना श्रीमहादेव इति भावः ॥ ३१ ॥

स्वकीयेन वचसा युक्तमिति स्वशब्देन कदाचित् प्रेमपारवश्येनाविचाराच्छ्रूयमाणमाचारीवसम्वादिवचो व्यावर्त्तितं बुद्धिमानिति तत्ताद्विचार्येत्यर्थः । अन्यथा निर्बुद्धिरेवेति भावः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तर्ह्यन्येषां का वार्त्ता तत्राह । नैतदिति । एतद्धर्मव्यतिक्रमादिमयमीश्वराचरितं न सम्यगाचरेत् । सम्यगित्यस्य निषेधे तात्पर्यम् । एकांशेनापि नाचरेदित्यर्थः । जातु कदाचिदपि तत्र च न मनसापि किमुत वाचा कर्मणा वा हि निश्चये । विशेषेण समूलतया लोकद्वयदुःखित्वादिप्रकारेण नश्यति । मौढ्यादीश्वराणामैश्वर्यमात्मनश्चासामर्थ्यमज्ञात्वेत्यर्थः । इति भक्षणे मौढ्यमेव हेतुरुक्तः । अन्यथा भक्षणाप्रवृत्तिः स्यात् । अब्धिजं कालकूटमिति परमतीक्ष्णतया सद्य एव विनाशोऽभिप्रेतः ईश्वरस्तु न नश्येदेव प्रत्युत ऐश्वर्यविशेषप्रकाशादिना शोभते । यथा नीलकण्ठत्यादिना शिव इति भावः ॥३१॥

वच आज्ञा सत्यं प्रामाण्येन ग्राह्यं स्ववचनेनाविरुद्धमिति स्वशब्देन तेषामेव तथा विचारादाज्ञाया बलवत्तरत्वं व्यञ्जितं बुद्धिमानिति तत्तद्विचार्येत्यर्थः । अन्यथा निर्बुद्धिरेवेति भावः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रुद्रो विषं यथाचरत् अभक्षयत् तथा चरन् भक्षयन् विनश्यति ॥ ३१ ॥

स्ववचोयुक्तं स्ववचः समायुक्तम् ॥ ३२ ॥ ३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि "यद्यदाचरति श्रेष्ठ" इति न्यायेनान्योऽप्येवं कुर्यादित्याशङ्क्याह । नैतदिति । एतदशास्त्रवश्यत्वेनाचरितमनीश्वरः शास्त्रवश्यः कदाचिदपि मनसापि नाचरेच्चिकीर्षामपि न कुर्यादित्यर्थः । विपर्यये बाधकमप्याह । नश्यतीति । मौढ्यात्स्वस्यशास्त्रवश्यत्वाज्ञानात्तत्प्रतिषिद्धमाचरन्नाशु नश्यति नाशोऽत्र निरयप्राप्तिः तत्र दृष्टान्त माह । यथेति रुद्रो यथाब्धिजं विषमाचरदभक्षयत्तथा तदन्यो भक्षयन्नाशु नश्यति रुद्रस्य विषपानप्रयुक्तप्राणविपत्त्यनापादकशक्तिमत्त्वं स्वस्य तदभावञ्चाजानन्केवलं रुद्रो भक्षितवान् तथाहमपि भक्षयिष्यामीति यो मौढ्याद्भक्षयति स नश्यत्येवेत्यर्थः ॥ ३१ ॥

कथं तर्हि श्रेष्ठाचारस्य प्रामाण्यमित्याशङ्क्य न कार्त्स्न्येन श्रेष्ठाचारः प्रमाणं किन्तु शास्त्राविरोध्येव श्रेष्ठवचःसु कार्त्स्न्येन प्रमाणमित्याह । ईश्वराणां कर्मवश्यत्वाभावप्रयुक्तशास्त्रवश्यत्वाभाववतामेवं कुर्वेवं माकुर्वित्येवं रूपं वचः कार्त्स्न्येन सत्यमबाधितं प्रमाणमिति यावत् आचरितन्तु क्वचिदेव किञ्चिदेव प्रमाणमित्यर्थः किन्तदाचरितं यत्प्रमाणमित्याह । तेषामीश्वराणां यदाचरितं स्ववचसा समायुक्तं स्ववचसोऽविरुद्धं तत्सत्यमित्यर्थः । तत्तस्माद्बुद्धिमानपीश्वरवचसोऽनुकूलमेवेश्वराचरितमाचरेत् बुद्धिमान्न तदाचरेदिति पाठे ऽयुक्तमितिच्छेदः स्ववचस ईश्वरवचसो विरुद्धमीश्वराणामाचरितं नाचरेदित्यर्थः ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

नन्वेवञ्चेत्श्रेष्ठाचरितत्वेनाश्रेष्ठस्य परावराचरणप्रसंगः यद्यदाचरति श्रेष्ठ इत्यादिस्मृतेश्चेति तत्राह । नेति । स्मृतिः सत्कर्मणः आचरमनुजानाति नत्वसत्कर्मणः लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसीति विधानाच्चेतीममर्थं हिशब्देन विशिनष्टि हि स्याद्विशेषणे हेताविति यादवः मनसापि नाचरेत्किमुत कायेन विपक्षे बाधकमाह । नश्यतीति णश अदर्शन इति धातोः समूलमुच्छिन्नो भवतीत्यर्थः । अदर्शनं लोप इति सूत्रात् लुप छेदन इतिधातोः मौढ्यात्क्रोधोद्रेकात् मौर्ख्याद्वा मोहकान्मौर्ख्यमूढत इति मोहो मोहनितन्द्रित इति कालान्तरे सञ्जातेन निवर्तनेन नाशो न स्यादित्यतः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आश्विति किञ्चित्कालमवसरं न ददातीत्यर्थः । व्यतिरेकं दर्शयति । यथेति । यथा रुद्रो विषमपिबत् तथाहमपि विषम्पास्यामीति तत्पानेन नश्यति । तस्मात्तन्न कर्तव्यमित्यर्थः । विषपानेनाशु नाशः स्यादिति दर्शनाय तदुक्तं नतु समूलतरुच्छेदविषये विषपानात्स्मार्तिं दृष्ट्वा अन्यस्यां निवृत्तिसम्भवात् । न तथा प्रकृत इति ॥ ३१ ॥

यद्येवं तर्ह्याप्तत्वेनेश्वरोक्तमपि ग्राह्यमित्यायातमिति तत्राह । ईश्वराणामिति । सत्यं परमार्थत्वेनाभीष्टज्ञापकं परमार्थेऽर्थवत्सत्यमिति यावद्वः तद्वचनमेव सत्यञ्चेत्—

कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ।

इति विधानं व्यर्थमिति तत्राह । तथैवेति । क्वचिदिदं प्रहासादिव्यावृत्तये अनुवर्तिनां वैदिककर्ममार्गप्रदर्शनार्थं यदाचारणं तदपि सत्यं फलदर्शनात्तर्हि वचनं सत्यं किंनेत्याह । तेषामिति । अयुक्तं वेदोऽप्रमाणलक्षणमित्यादिलक्षणं प्रतीतिकार्थविषयं यद्वा स्ववचसोऽयुक्तं विरोधि तेषां यदाचरितं बुद्धिमानेतन्नाचरेदिति श्रुतिश्च ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वचः आज्ञा सत्यं प्रमाणम् ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननुतर्ह्यनीश्वरोऽप्येतद्दृष्ट्वा स्वाच्छन्द्यं कुर्वीतेत्याशङ्क्याह । नैतदित्यादि । अनीश्वरः श्रीकृष्णादन्यः कोऽपि मनसापि नैतत्साहसं समाचरेत् जातु कदाचिदपि आचरणे कः प्रतिबन्ध इत्याह । नश्यतीत्यादि । मौढ्यात् आचरन् सन् नश्यति आशु शीघ्रमेव ईश्वरस्तु यदि आचरति तदा ऐश्वर्यातिशयप्राकट्यं सर्वलोकहिताभिव्यक्तिश्चेत्याह । यथेत्यादि । यथा विषकालकूटं जुषन् स्वैश्वर्यं प्रकटयाञ्चकार सर्वहितञ्च वस्तुतस्तु विषभक्षणं धर्मव्यतिक्रमः साहसं च नतु तस्य तद्रागप्राप्तम् अपितु परस्वस्त्यर्थे नतु तद्विषमन्यभोग्यं भवितुमर्हतीति प्रकृतेऽपि नैष धर्मव्यतिक्रमः साहसञ्च तासामन्यभोग्यत्वाभावात् तज्जोषणञ्चास्य परस्वस्त्ययनार्थञ्च वक्ष्यति च विक्रीडितमित्यादि अब्धिजं विषमिति पाठे आचरन् भक्षयन् चरिर्भक्षणार्थेऽपि वर्त्तते ॥ ३१ ॥

अपिच ईश्वराणां वागाचरितादीनां सत्यत्वेऽपि चेति तच्चरितमप्यनीश्वरः कुर्य्यान्नेत्याह । ईश्वराणामित्यादि । ईश्वराणां स्वतन्त्राणां ब्रह्मादीनां वच एव सत्यं नचाचरितं क्वचित् कुत्रापि ईश्वरेश्वरे श्रीकृष्णे आचरितञ्च सत्यं सत्यलीलत्वात्तेषामीश्वराणामीश्वरेश्वरस्य च यत् ईहितं स्ववचोयुक्तं श्रुतिसिद्धं तदेव बुद्धिमानाचरेत् नतु सत्यत्वेन सर्वमेव तदीहितत्वमाचरेत् वचस्तु सर्वमेवाचरेत् ईश्वरवचस्त्वात् ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तेजीयसामपि ह्येतन्न सुश्लोक्यमिति न्यायात् "यद्वृत्तमनु तिष्ठन् वै लोकः क्षेमाय कल्पते" इति विरोधाच्च कथमेतत्कर्तुं शक्यत इतिचेत् तत्राह । नैतत्समाचरेदिति । एतदीश्वरकृतमनीश्वरो न समाचरेत् ऐश्वर्यसमानाधिकरणमेवैतत् नानिष्टं करोति अतः जातु कदाचिदपि औत्सुक्यादपि न समाचरेत् किम्बहुना मनसापि ऐश्वर्यतुल्यमेव तेषां तत्कर्म अतो यथैश्वर्यकामनायामपि अनीश्वरो वधमर्हति यथा महाराज्यानाधिकारी तादिच्छां कुर्वन् अतो मनसापि न समाचरेत् विपरीते बाधकमाह । विनश्यतीति । मौढ्यात् ऐश्वर्यसहभावं तस्य कर्मणः अज्ञात्वा केवलं तत्कर्माचरन् तेनैव कर्मणा नष्टो भवति नन्वेकमेव कर्म कथं धर्मान्तरसहितं न नाशकमितरथा नाशकमितिचेत्तत्राह । अरुद्रः रुद्रव्यातिरिक्तः रुद्रसमानपराक्रमरहितः अब्धिजं विषं कालकूटमाचरन् आसमन्तात् भक्षयन् विनश्यति तथेत्यर्थः । निन्दितं कर्मापि कालकूटवत् नाशकं तदीश्वरस्यैव शोभाकरं येन नीलकण्ठो भवति तथैव गोपीजनवल्लभ इति ॥ ३१ ॥

ननूक्तं यद्वृत्तमनुतिष्ठन्निति तत्राह । ईश्वराणामिति । ईश्वराणां वच एव तथ्यं नत्वाचरितं क्वचिदाचरितमपि वचनानुगुणं चेत् ईश्वराणां बहवो धर्माः यथैश्वर्यं तथा धर्मात्मत्वं तथा दया तत्रैश्वर्यज्ञानवैराग्यैर्यत्करोति तत्स्वच्छन्दचरितमित्युच्यते बुद्धिमांस्तन्नाचरेत् ते ह्यन्यथा न वदन्ति अन्यार्थं कथनमन्याधिकारेणेति अतस्तद्विरुद्धं न कथयन्तीति ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेनान्योऽपि कुर्यादित्याशङ्क्याह । नैतदिति । अनीश्वरो निकृष्टो जीवः यथा रुद्रव्यतिरिक्तो विषमाचरन् भुञ्जानः सद्यो विनश्यति रुद्रस्तु भुक्त्वा प्रत्युत नीलकण्ठत्वेन शोभते स्मेति भावः ॥ ३१ ॥

कथं तर्हि सदाचारस्य प्रामाण्यमत आह । ईश्वराणामिति । सत्यं सद्भ्यो हितं क्वचित् दशरथपुत्रत्वे सतीत्यर्थः । तस्मादियं व्यवस्थेत्याह । स्ववचोयुक्तम् अविरुद्धं तदेवाचरेत् । बुद्धिमानिति तत्रापि विचार्यैव । तदसौ वध्यतां पाप आततायात्मबन्धुहेति भगवतो वचोऽप्यर्जुनेनाश्वत्थामवधविधायकं न पालितमिति ॥ ३२—३३ ॥

---

श्रीमत्किशोरीप्रसादविरचिता विशुद्धरसदीपिका ।

तर्ह्यन्येषां का गतिस्तत्राह । नैतदिति । एतदीश्वराचरितं धर्मव्यतिक्रमादि साहसञ्च अनीश्वरः कर्मादिपारतन्त्र्यः न सम्यगाचरेत् सम्यगिति एकांशेनापि नाचरेदित्यर्थः । जातु कदाचिदपि तत्र च मनसापि आचरंश्च विशेषेण लोकद्वयभ्रष्टो भवेदित्यर्थः मौढ्यादिति भक्षणे हेतुः मौढ्यं च तेषामैश्वर्य्यस्यात्मनश्चानैश्वर्य्यस्याज्ञानमेव अब्धिजं कालकूटमिति सद्य एव नाशोऽभिप्रेतः एवं दार्ष्टान्तिकेऽपि ईश्वरस्तु न नश्येदेव प्रत्युतैश्वर्य्यविशेषप्रकाशनादिना शोभते यथा नीलकण्ठत्वेन रुद्र इति संक्षेपः ॥ ३१ ॥

ईश्वराणामिति वच आज्ञा सत्यं प्रमाणत्वेन ग्राह्यं तथैव यथा वचस्तथैवाचरितमपि चेत्तदा ग्राह्यमेव नतु वचसा विरुद्धमिति वचस एव बलवत्तरत्वं तत्रापि यत्स्ववचोयुक्तं स्वशब्देन तेषामेव

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

वचसाऽविरुद्धमित्यर्थः। यद्वा स्वशब्देनाधिकारिणमुद्दिश्य तेषां यद्वचस्तेन युक्तमित्यर्थः । शेषं स्पष्टम् ॥ ३२ ॥

---

श्रीरामनारायणकृतभावभावविभाविका ।

नन्वेवं चेत्—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।

इत्यादिवचनैः स व्यतिक्रमः सर्वैरनुष्ठेयः इत्याशङ्क्य नेत्याह । नैतदिति । अनीश्वरः परमेश्वरानुग्रहाल्लब्धैश्वर्यादितद्धर्म ईश्वरस्तद्भिन्नस्तथा एतत्परदाराभिमर्शनादि कर्म जातु कदाचिदपि मनसापि नाचरेत् ननु "कुशलान्याशु सिध्यन्ति नेतराणि कृतानि च"त्यादिवचनैः कलौ मानसपापासिद्धिश्रवणात्किमिति मनसापि तन्निषिध्यते तत्राहैतदिति । एतत् परदाराभिमर्शनं तु मनसापि नाचरेत् "श्रवणं स्मरणं कीर्तिर्दर्शनैकान्तभाषणम्" दृढसंकल्पसङ्गौ च भोगोऽष्टाङ्गं हि मैथुन"मित्यष्टाङ्गमैथुने स्वातन्त्र्येण मानसस्मरणस्यापि गणनात् किंच पापान्तराणां मानसत्वे कलौ मानस व्यथामात्रहेतुतया तादृक्साक्षाच्छारीरकदुःखोपभोगानुपयोगेऽपि तदुपयोगिकायिकपापबीजतया मानसव्यथाहेतुत्वेनच तान्यपि हेयान्येव विपक्षे दोषमाह । विनश्यतीति । मौढ्यादीश्वराणामात्मनश्च सामर्थ्याविविवेकात्तत्सामान्यदृष्ट्या चरंस्तु विशेषेण मरणेऽपि दुःखाप्रमोक्षो यथा स्यात्तथा नश्यति मृत्वापि निरयादावुपतप्तलोहतदाकारालिङ्गनादिदुःखं प्राप्नोति किंच नह वैदेवाः पापान्स्पृशन्ति नैवमृपयइत्यादिवचनैर्देवादीनां तत्तद्देहकृतपापस्यैवाभावाद्विधिनिषेधशास्त्रस्य मनुष्यमात्राधिकारात्तेषां दोषनिरूपणस्यापि मनुष्याणां भयजननार्थत्वात्तेषामधिकाराभावेन व्यतिक्रमस्यैवाभावाच्च तद्दृष्ट्या तदाचरणेऽवित्थं मौढ्यादाचरणप्रयुक्तविनाशे दृष्टान्तमाह । यथेति । अरुद्रो रुद्रव्यतिरिक्तो यथाब्धिजं समुद्रादुत्पन्नकालकूटं विषमाचरन् चर गतिभक्षणयोरित्यस्माद्भुञ्जन्विनश्यत्येव तस्य नीलकण्ठत्वादिना भूषणत्वेऽप्यन्यस्य विनाशकत्वमेव तदुक्तं "अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा विधेयस्यासीद्यस्त्रिनयनाविषं संहृतवतः । स कल्माषः कण्ठे तव न कुरुते निःश्रियमहो विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिन" इति ॥ ३१ ॥

ननु गतं तर्हि शिष्टाचारस्य प्रमाणत्वं तत्राह । ईश्वराणामिति । ईश्वराणां वचो वाक्यन्तु सत्यमेव "चोदनालक्षणो ह्यर्थो धर्म" इति जैमिनिना भगवता चोदनाविधिरेव लक्षणं ज्ञापकं प्रमाणं यस्मिंस्तादृशाभ्यार्थस्य धर्मत्वनिर्णयात् तत्राप्यर्थशब्देन श्येनेनाभिचरन् यजेदिति विधिप्राप्तस्यापि श्येनयागस्याभिचारशब्दितशत्रुमारणफलद्वारानर्थत्वात्तद्व्यावर्तयति आचरितन्तु क्वचित्सत्यमलौकिकाविगीतशिष्टाचारस्यैव विध्यनुमापकतया प्रामणत्वात् तदेवाह । तेषामिति । यत्तेषामाचरणं स्ववचोयुक्तं तदीयवचनाविरुद्धं बुद्धिमांस्तुविचार्य तदेव समाचरेत् यथा श्रुतेतु वचस एव साक्षाल्लाभात्तदेव प्रमाणं स्यान्नाचरणं वचोविरोधाभावे आचरणस्य तद्वचोरूपविध्यनुमापकतया प्रमाणत्वं वचोविरोधेतु वचसा बाधदर्शनेऽनुमानानवतार एव ॥ ३२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु एवं तर्हि "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" इति न्यायादितरस्यापि तदनुष्ठानं दोषावहं न भविष्यतीति तत्राह । नेति । इतरस्तु एतन्मनसापि कदाचिदपि न समाचरेत् वाचा देहेन समाचरेदिति किमु वक्तव्यं हि यतः अनीश्वरः देहादिपरतन्त्रः विपक्षे बाधकमाह । मौढ्यात्सामर्थ्यासामर्थ्यविवेकराहित्यात्तद्वदाचरन् सन् विशेषेण नश्येत् यथा रुद्रव्यतिरिक्तो विषं जुषन् भक्षयन् विनश्यति तद्वत् ॥ ३१ ॥

तस्मादीश्वराणां वचः सत्यं सर्वथाऽनुल्लङ्घनीयं तर्हि सदाचारः प्रमाणमिति घण्टाघोषस्य का गतिरिति चेत्तत्राह । तथैवेति क्वचित्तेषामाचरितमपि तथैव सत्यं तत्किमित्यपेक्षायामाह । तेषां यदाचरितं तेषां वचसा युक्तं तदेव बुद्धिमान् सम्यगाचरेदन्यथा निर्बुद्धिर्भवेत् तथा च धर्मबुद्ध्या सद्भिर्यदनुष्ठितं तदेव प्रमाणतयोपादेयं न सर्वमित्यर्थः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतद्धर्मप्रातिकूल्यम् अनीश्वरः अनेजस्वी तपआद्यैश्वर्य्यहीनः अधर्मगर्ते पतितस्यात्मन उद्धरणे असमर्थ इत्यर्थः जातु कदाचिदपि मनसापि न समाचरेत् अन्यथातु विनश्यति यथा रुद्रस्य तेजीयसो विषभक्षणं दोषावहं नाभूत अरुद्रः रुद्राभिन्नः अब्धिजं विषं विषौपध्यादिरूपेण वर्त्तमानं मौढ्यादाचरन् भक्षयन् विनश्यत्येव तद्वत् ॥ ३१ ॥

ननु यद्येवं तर्हि "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते" इतिन्यायप्राप्तं श्रेष्ठाचरणं केनांशेन ग्राह्यं स्यात्त्राह । ईश्वराणां समर्थानां वचः तथैव क्वचित् विधिशास्त्रानुरोधतः लोकशिक्षायै आचरितञ्च सत्यं सतां मुमुक्षूणामुपादेयम् अतो बुद्धिमान् तेषां यत् लोकशिक्षायै आचरितं स्ववचोयुक्तम् अनेनेदमनुष्ठेयमित्येवं स्वाधिकारानुसारिवाक्येन युक्तमभिहितञ्च तदाचरेत् ॥ ३२ ॥

---

भाषा टीका ।

जो असमर्थ पुरुष हैं उनको ऐसी बात को मन में भी कभी स्मरण न करना चाहिये करना तो कैसे होगा यदि मूर्खपना से करैगा तो जल्दी ही नष्ट हो जायगा जैसे कि महादेव जी ने समुद्रसे पैदा भये विष का पान किया है तौ भी दूसरा करैगा तो नहीं जियेगा ॥ ३१ ॥

समर्थ पुरुषों के वचन को सत्यमान कर करना चाहिये कहीं पर उनका आचरण भी मानना चाहिये जो कि उनके वचन से विरुद्ध न होवै तिस को विचार कर बुद्धिमान् पुरुष करै ॥ ३२ ॥

---

१कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्ययेण वानर्थो निरहङ्कारिणां प्रभो ! ॥ ३३ ॥
किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।
ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥
यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः ।
स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥ ३५ ॥

१ तोषिणी मतेऽस्मिन्पद्ये चकारयुतः पाठः प्रतीयते

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु तर्हि तेऽपि किमेवं साहसमाचरन्ति तत्राह । कुशलेति । प्रारब्धकर्मक्षपणमात्रमेव तेषां कृत्यं नान्यदित्यर्थः ॥ ३३ ॥

प्रस्तुतमाह । किमुतेति । कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थः ॥ ३४ ॥

एतदेव स्फुटीकरोति । यस्य पादपङ्कजपरागस्य निषेवणेन तृप्ताः यद्वा यस्य पादपङ्कजपरागे निषेवा येषां ते च ते तृप्ताश्चेति भक्ता इत्यर्थः । तथा ज्ञानिनश्च न नह्यमाना बन्धनमप्राप्नुवन्तः ॥ ३५ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कुशलं पुण्यं तस्याचरितेनानुष्ठानेन एषामीश्वराणां चकारात् अमुत्रापि अर्थः फलं विपर्ययेण पापेन वाशब्दः समुच्चये अनर्थोऽपि नास्ति कुतः निरहङ्कारिणामहङ्कारिभ्यो व्यतिरिक्तानामहङ्काराभावेन कर्मभिरलेपादित्यर्थः । प्रभो हे बोद्धुं समर्थ ! एतत् त्वया सम्यक् बुध्यत एवेत्यर्थः । यद्वा तस्यापीश्वरत्वाभिप्रायेण सम्बोधयति हे ईश्वरेति ॥ ३३ ॥

अहो यद्येवं तेषामपि निरहङ्कारितामात्रेणैवानर्थाभावस्तर्हि सर्वजीवहितार्थमवतीर्णस्य परमेश्वरस्य कुतोऽनर्थशङ्कापीति कैमुतिकन्यायेन द्रढयन्नाह । किमुतेति । अखिलसत्त्वानां सर्वजीवानां तिर्यगादयः क्रमेण तामसराजससात्त्विकाः ईशितव्यानां स्वभावत एव नियम्यानामिति मुक्तानामपि तदधीनता सूचिता. कुशलाकुशले पुण्यपापे ताभ्यामन्वयः सम्पर्कः सर्वनियन्तृत्वेन नियामकाभावात् परमस्वतन्त्रत्वाच्च एतदेवहि परमेश्वरत्वं नामेति भावः । अन्यत्तैर्व्याख्यातं यद्वा ईशितव्यानां तद्भक्तानाञ्च किमुतेति ॥३४॥

परागेति । अतिनम्रत्वेन सेवया भक्तिविशेषो दर्शितः नितरां सेवेति निशब्दः स्वभावत एव तेषां सेवासक्त्यभिप्रायेण यद्वा परागेति दूरसेवाभिप्रेता निशब्देनच स्वल्पमात्रसेवाभिहिता तथापि तन्माहात्म्येन हृप्ताः निर्भयत्वादिदर्पयुक्ताः अतएव स्वैरं चरन्ति विधिनिषेधानादरेण स्वेच्छयैव कृत्यानि कर्माणि कुर्वते अतो न नह्यमानाः तैरबध्यमानाः तत्रानासक्तेः तृप्ता इति पाठे सर्वत्र सन्तुष्टाः अनन्यापेक्ष्या इत्यर्थः किञ्च योगोऽष्टाङ्गः समाधिर्ज्ञानम्वा तस्य प्रभावेण शक्त्या विशेषेण धूतः छिन्नः कर्मभिरनन्तकोटिजन्मार्जितैर्बन्धः बन्धनं तद्रूपो वा बन्धो यैस्ते मुनयोऽपि अपिशब्देन भक्तेभ्यो मुनीनां न्यूनतोक्ता अनेनैव श्रेष्ठयाभिप्रायेण हृप्ता इत्युक्तम् इच्छया स्वच्छन्देनैव आत्तं प्रकटितं वपुर्येन तस्येति परमस्वातन्त्र्यं दर्शितं यद्वा निजप्रेमभक्तिविस्तारणेच्छया ततश्च तदपेक्षया विधिनिषेधानादरो युक्त एवेति भावः यद्वा भक्तानामिच्छया आत्तानि वपूंषि मत्स्यकूर्मादिमूर्तयो येनेति अवतारित्वेन परमैश्वर्यमुक्तम् अतः कुत एव बन्धः अपितु न कथमपि स्यादित्यर्थः । अन्यत्तैर्व्याख्यातं यद्वा योगो भक्तियोगः मुनयोऽपि किमुत प्रथमत एव भक्तिसम्मत इत्यर्थः । अथवा किम्वक्तव्यं भक्त इति योगिनोऽपि किम्वक्तव्यं योगिन इति कर्मपरा अपीत्येवं त्रिविधा अपि ज्ञेयाः अत्र मुनीनां प्रायो गार्हस्थ्येन कर्मपरत्वं तथापि स्वैराचरणं ज्ञानित्वादेव ततश्च ज्ञानिन एव द्विविधाः केचिद्योगपराः केचित्कर्मपरा इति एवं यथोत्तरमेषां न्यूनत्वम् अन्यत्समानम् अप्यर्थे चकारः किम्वक्तव्यं प्रियत्वेन तेषां तासां चेति सर्वेषामपि तत्र शंसयनिरासार्थमेवशब्दः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चकारादमुत्रापि वा शब्दःसमुच्चये अनर्थोऽपि नास्ति कुतः निरहङ्कारिणाम् अंहकारिभ्यो व्यतिरिक्तानाम् अंहकाराभावेन कर्मभिरलेपादित्यर्थः प्रभो हे बोद्धुं समर्थ ! यद्वा तस्यापीश्वरत्वाभिप्रायेण सम्बोधयति हे ईश्वरेति ॥ ३३ ॥

अहो यद्येवं तेषामपि निरहङ्कारतामात्रेणैवानर्थाभावस्तर्हि तेषामपि हितार्थमवतीर्णस्य परमेश्वरस्य कुतोऽनर्थशङ्कापीति कैमुतिकन्यायेन द्रढयन्नाह । किमुतेति । अखिलसत्त्वानां तिर्यगादयः क्रमेण तामसराजससात्त्विकाः ईशितव्यानां स्वभावत एव नियम्यानामिति मुक्तानामपि तदधीनता च सूचिता । स्वयं चकारः । ईशितव्यानां कुशलाकुशलाभ्यां पुण्यपापाभ्यां योऽन्वयः सम्पर्कः स किमुत सुतरामेव न विद्यते इति पूर्वेणान्वयः । सर्वनियन्तृत्वेन नियामकाभावात् । एतदेव हि परमेश्वरत्वं नामेति भावः । "वद्यवत् सुष्ठु किमुत स्यत्यतीव च निर्भर" इत्यमरः ॥ ३४ ॥

तदेव कैमुत्यान्तरेण स्फुटं दर्शयति । यदिति । यत्तदोरन्ययायोगप्रभावेत्यादेरपि तदन्तः प्रवेशाद्यदिति यस्येत्यर्थः । सुब्लुक् छान्दसः । यद्वा यस्य पादपङ्कजयोः परागाणां कान्तिपरमाणूनां नितरां सेवनेन ध्यानरूपेणानुशीलनेन तृप्ताः अन्यत्रालंबुद्धयः तत् प्रेमपूर्णा इत्यर्थः । यस्यैव योग प्रभावेण भक्तियोगाख्यसाधनतेजसा विधूताखिलकर्मबन्धा ये ते चापि मुनयः स्वैरं स्वच्छन्दं यथा स्यात्तथा चरन्ति विहितमविहि-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमपि कुर्वन्ति तत्र नह्यमानाश्च न भवन्ति तस्मात्तस्य कुत एव बन्धः । अपि तु नास्त्येव बन्ध इत्यर्थः । तदेवं कैमुत्येन दर्शयित्वा विशेषणविशेषादपि तस्य बन्धाभावं दर्शयति । इच्छयेति । इच्छया इच्छामात्रेण ननु जीववत् कर्मपारवश्येनात्तं तद्भक्तिसम्बन्धात् प्रपञ्चेऽप्यानीतं वपुर्येन तस्येति । अतो भक्तविशेषानुग्रहाय दुर्वाससः पराभावनावत् क्वचिन्मर्यादामप्यसौ लङ्घयतीति भावः ॥ ३५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्मवश्यानामपि तेजोविशेषात्प्रत्यवायहानिरुक्ता अपहतपाप्मन ईश्वरस्य किम्पुनरित्याह । किमुताखिलेति ॥ ३४—३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेजीयसां न दोषायेत्येतदेव स्पष्टयति । कुशलेति । एषां तेजीयसामीश्वराणामिह लोके कुशलाचरितेन साधनेनार्थः साध्यं प्रयोजनं न विद्यते नापि विपर्ययेणाकुशलाचरितेनानर्थोऽपि विद्यते तत्र हेतुं यदन्विशिनष्टि । निरहङ्कारिणामिति । अनात्मनि देहे आत्माभिमानरहितानामित्यर्थः । हे प्रभो ! देहाभिमानो हि पूर्वपूर्वकर्ममूलकः पुनरुत्तरोत्तरकर्ममूलश्च तदभावात्कर्मवश्यत्वाभावस्तदभावाच्च शास्त्रवश्यत्वाभावस्तदभावाच्च धर्माधर्ममूलकावर्थानर्थौ न स्त इति भावः ॥ ३३ ॥

यतोऽकर्मवश्यानां जीवानामेव कुशलाकुशलाचारनिमित्तकावर्थानर्थौ न स्तः किम्पुनस्तेषामपि नियन्तुरपहतपाप्मनो भगवत इत्याह । किमुतेति । तिर्यगादिरूपेणावस्थितानामखिलानां सत्त्वानां जीवानां नियम्यानां नियन्तुः सर्वेश्वरस्य कुशलाकुशलान्वयो नास्तीति किमु वक्तव्यमित्यर्थः । कुशलाकुशलकर्मप्रयुक्तसुखदुःखादिसम्बन्धोऽत्र कुशलाकुशलान्वयशब्दविवक्षितः सत्त्वशब्दो जीवपरः सत्त्वमस्त्री तु जन्तुष्विति कोशात् जन्तुशब्दश्च जीवपर्यायः "प्राणी तु चेतनो जन्मी जन्तुर्जन्युशरीरिण" इति नामपाठात् सत्त्वंप्रकृतिजैर्मुक्तमिति श्रीभगवदुक्तश्च ॥ ३४ ॥

कैमुत्यनयेनोक्तमेव प्रपञ्चयति । यत्पादेति । यस्य पादपङ्कजपरागस्य निषेवणेन तृप्ताः निर्धूतशब्दादिविषयाभिलाषाः योगप्रभावेण यस्य पादपङ्कजानुध्यानात्मकयोगसामर्थ्येन विधुता अखिलाः कर्मात्मका बन्धा येषां ते मुनयः सनकादयोऽपि न नह्यमाना अनह्यमानाः अबध्यमानाः शास्त्रावश्या इतियावत् स्वैरं यथेच्छं चरन्ति किमुतेच्छया ननु धर्मेणेति भावः । आत्तं परिगृहीतं वपुरप्राकृतं शुद्धसत्त्वमयं येन तस्यापहतपाप्मनः श्रीभगवतः कुत एव बन्धः कुतश्चिदप्याचरितात्स्वैराद्बन्धो नास्त्येवेत्यर्थः ॥ ३५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि शुष्कजलनारिकेलफलवन्निर्मुक्तशरीराभिमानानां दूरीकृतकुशलानां फलवत्त्वाद्धर्मव्यतिक्रमो न दोषायेत्याशयेनाह । कुशलेति । इह संसारमण्डले अर्थः प्रयोजनं प्रारब्धकर्मनाशेनापातकदेहत्वादभीष्टत्वाच्च । विपर्ययेण विपर्ययाचरणेनानर्थो नरकपातादिलक्षणः । अत्र हेतुमाह । निरहङ्कारिणामिति ॥ ३३ ॥

उपसंहरति । किमुतेति । अखिलसत्त्वानां समस्तप्राणिनामित्यस्य विवरणं तिर्यङ्मर्त्येत्यादिना ईशितव्यानां नियम्यानाम् ईशितुर्नियामकस्य चःसमुच्चये ईशितव्यानामचेतनानाञ्च कुशलाकुशलान्वयः पुण्यपापफललेपः किमुत ॥ ३४ ॥

कथान्तरात् कैमुत्यन्यायं दर्शयति । यत्पादेति । भक्तियोगप्रभावेण विधुतो विध्वस्तो ऽखिलबन्धो येषां ते तथा न नह्यमाना अतएव पुत्रस्नेहेन बध्यमाना न भवन्ति कर्मभिर्वा । ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

निरहङ्कारिणामनावेशिनां तथापि तत्तत्करणं प्रारब्धवशादेवेति भावः ॥ ३३ ॥

ईशितव्यानां कुशलाकुशलाभ्यां पुण्यपापाभ्यां योऽन्वयः सम्पर्कः स पुनरीशितुर्न विद्यत इति किमुत सुतरामेव नेति पूर्वेणान्वयः । "बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भर" इत्यमरः ॥ ३४ ॥

योगप्रभावेति ज्ञानिनोऽप्युक्ताः ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अन्यच्च ईश्वरमात्रस्यैव रुद्रादेः स्वातन्त्र्यात्भद्राभद्रकरणेऽर्थानर्थौ न स्तः निरहङ्कारत्वादीश्वरेश्वरस्यास्यतुकिमित्याह । कुशलाचरितैरित्यादि द्वाभ्याम् । एषामीश्वराणां रुद्रादीनां कुशलाचरितैः पुण्यकर्मभिरिह लोके अर्थ इष्टसिद्धिर्न विद्यते विपर्य्ययेण अकुशलचरितैरनर्थः अनिष्टोत्पत्तिश्च न विद्यते तत्र हेतुः निरहङ्कारिणाम् ॥ ३३ ॥

अस्यतु सर्वेश्वरेश्वरस्य पुनः किमुतेत्याह । किमुत किम्पुनरस्य ईशितुः सर्वेश्वरेश्वरस्य ईशितव्यानां लीलानां कुशलाकुशलान्वयः भद्राभद्रव्यवस्था सैवच लीला कुशलरूपेत्यर्थः । सर्वमङ्गलमङ्गलचरितत्वात् इति तु सिद्धान्तः ननु गोपाङ्गनापरस्य धर्मव्यतिक्रमस्य दोषोद्धारपन्थाः अयन्तु धर्मव्यतिक्रम एव न गोपीनां स्वानन्दशक्तित्वात् तदङ्गसङ्गस्तस्य स्वारसिक एव ॥ ३४ ॥

यदि वासौ कर्तुमकर्तुमन्यथा कर्तुं समर्थतया लोकवेदातीतचेष्ट एव भवति तदपि किन्तेनास्येति भगवन्महिमानमाविष्टः सन् कथयति । यत्पादपङ्कजेत्यादि । योगप्रभावविधुताखिलबन्धा अपि यत्पादपङ्कजपरागनिषेवणतृप्ताः सन्तः स्वैरं चरन्ति लोकवेदातीताः सन्तो विचरन्ति शुभाशुभकर्मभ्यां न नह्यमाना न बध्यमाना मुनयः कीदृशा आत्तवपुषः मोक्षनैरपेक्ष्येण भजनानन्दात् गृहीतदेहाः मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इत्युक्तेः तस्य श्रीकृष्णस्य कुत एव बन्धः यच्चरणसेवा बन्धच्छेदिका तस्य स्वच्छन्दाचरणेन कुतो बन्ध इति ॥ ३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु यथान्यस्मै न कथयन्ति तथा स्वयमपि कुतो न कुर्वन्ति तत्राह । कुशलाचरितेनेति । एषामीश्वराणां कुशलाचरितेन अर्थः प्रयोजनं न विद्यते ततोऽप्यनन्तफलस्य प्राप्तत्वादेव विपर्ययेण अकुशलाचरितेन अनर्थोऽपि न विद्यते ईश्वराणामेव निषिद्धकर्मणा अनिष्टाभाव इति न किंतु ज्ञानिनामपीति ज्ञानवैराग्ययोस्तुल्यं स्वरूपमाह । निरहंकारिणामिति । अहंकाररहितानां न केनापि किमपि कर्तृत्वाभिमानाभावात् प्रभो ! इति सम्बोधनमीश्वरस्य लोकविलक्षणत्वज्ञापनार्थम् ॥ ३३ ॥

यत्र ज्ञानसहकृतमेव तत्कर्म नानिष्टजनकं किंवक्तव्यमैश्वर्यसहकृतमित्याह । किमुतेति । ईश्वरस्य सेवकमारणे सेवकानामन्यथाकरणेव न काचिच्छङ्का भवति यथैहिकी तथा पारलौकिकी नियामकाद्धि शङ्का भगवतो न नियामकोऽन्योऽस्तीत्याह । अखिलसत्त्वानां सर्वजीवानां तिर्यङ्मर्त्यदिवौकसां गुणत्रयकार्याणां जीवजडानामप्राकृतप्राकृतानां वा सर्वेषामेव ईशितुः प्रभोः कृष्णस्य चकारादात्मनश्च ईशितव्यानां सेवकानां सम्बन्धी तत्कृतगुणदोषाभ्यां कुशलाकुशलयोरन्वयः कुतः नहि दासीभिः स्वात्मभूताभिः सम्बन्धे अनियम्यस्य ऐहिके पारलौकिके वा कश्चनापकारः सम्भवति अन्तरङ्गैरेव तथा ज्ञायत इति न सुश्लोकतानिवृत्तिः नापि कर्ममार्गविचारेण कर्मप्राधान्यपक्षेऽपि दोषः शङ्कनीयः ॥ ३४ ॥

यथा परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् ब्रह्मवाइदमग्रआसीत् स आत्मानमेवावेदित्यादिश्रुतिषु ज्ञानकर्मभ्यामुत्कर्षः एवमपकृष्टज्ञानकर्मभ्यामपकर्षोऽपि संभाव्यत इति तत्राह । यत्पादेति । नहि सर्वेषामेव जीवानां समानकर्मणा समानं फलमुपलभ्यते अन्यथा शास्त्रवैफल्यापत्तिः उत्कृष्टकर्मादौ प्रवृत्तो नापकृष्टकर्मणा कादाचित्केन अपकृष्टो भवति तत्र मार्गत्रयं त्रिष्वपि प्रवृत्तो नापकर्षं यातीत्याह । तत्र प्रथमं भक्तिमार्गे प्रवृत्तस्य तत्र पुष्टस्य न केनाप्यपकर्ष इत्याह । यस्य भगवतः पादपङ्कजस्य परागभूता ये सेवकास्तेषां निषेवो निषेवणं तेन तृप्ताः भगवद्भक्तैः सह भगवद्गुणस्मरणेनैव विस्मारितदृष्टश्रुतसुखलेशाभासाः स्वैरं चरन्ति न तेषां कर्मोत्कर्षापकर्षौ साधकबाधकौ तथा कर्ममार्गेऽपीत्याह । योगप्रभावेति । महान् धर्मः अयं हि परमो धर्म इति स्मृतेः तस्य प्रभावः अणिमाद्यैश्वर्यसम्पत्तिः ज्ञानादयश्च तेनैव विशेषेण धुताः पूर्वकर्मजनिता अपि अखिलकर्मबन्धाः विशेषेण धुता भवन्ति तेऽपि स्वैरं चरन्ति ज्ञानमार्गेऽप्याह । मुनयोऽपि स्वैरं चरन्तीति सर्व एव न नह्यमाना अबध्यमानाः एष बन्धने सर्वत्रैव असंबध्यमानाः यत्र भगवत्प्रवर्त्तितमार्गेष्वप्येषा व्यवस्था तत्र भगवतः किंवक्तव्यमित्याह । तस्येच्छयात्तवपुष इति । इच्छया भोगार्थमात्तानि वपूंषि यावतीगोपयोषित इति तावन्ति येन तस्य कुत एव बन्धो भवेत् योऽहि तावद्रूपो भवति कार्यं कृत्वा च तान्याच्छादयति तस्य केन कर्मणा बन्धो भवेत् कर्म हि प्रातिनियतं व्यवस्थितं तत्र यदि भिन्नो भिन्नो जीवः स्यात् तदा तेन कर्मणा बन्धो वा भवेद आकाशवद्भगवद्रूपाणि प्रतिपदमन्यान्येव भवन्ति यथात्र भेदेनाप्येकदेहव्यवहारः एवं देशभेदेनापि भगवतः सर्वतः पाणिपादस्य तावत्परिच्छेदेन प्रादुर्भाव इच्छयेति स्वामिनीनां वा वपूंषि अतः सर्वथा प्रमाणप्रमेयविचारेणापि न बन्धः सम्भवति ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रस्तुतमाह । किमुतेति ॥ ३४ ॥

तद्भक्ता अपि धर्माधर्माभ्यां न बध्यन्त इत्याह । यदिति । निषेवो. नितरां सेवनम् । योगो भक्तियोगस्तत्प्रभावेण विधुतोऽखिलानां स्वद्रष्टृणामपि कर्मबन्धः किमुत स्वस्य यैस्ते मुनयो मननशीला भक्ता अपि न नह्यमानाः बन्धनमप्राप्नुवन्तः । तस्य तु निरंकुशया स्वेच्छयैव आत्तानि स्वीकृतानि वपूंषि परस्त्रीशरीराणि येन तस्य ॥ ३५ ॥

---

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

तत्र हेतुमाह । कुशलेति । निरिति अहङ्काराभावेन कर्मभिरलेपादित्यर्थः —

> यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
> हत्वापि स इमांल्लोकान्न हन्ति न निबध्यत इति ॥

श्रीगीताभ्यः प्रभो ! बोद्धुं समर्थ ! यद्वा तस्यापीश्वरत्वाभिप्रायेण सम्बोधयन्नाह । हे ईश्वर अहमादिविवर्जयन्नित्यर्थः ॥ ३३ ॥

एतदेव कैमुत्येन द्रढयति । किमिति । तिर्यगादयः क्रमेण तामसराजससात्त्विकाः ईशितव्यानां स्वभावत एव नियम्यानामिति मुक्तानामपि तदधीनता सूचिता कैवल्यं सात्त्विकं ज्ञानमिति तस्यापि तदन्तः पातात् कुशलाऽकुशले पुण्यपापे अन्वयः सम्पर्कः किमुत सुतरामेव नेत्यर्थः । सर्वनियन्तृत्वेन नियामकाभावात् एतदेवेश्वरत्वमित्यर्थः । "वलयस्तुष्ठु किमुत स्वत्यतीवच निर्भर" इत्यमरः ॥ ३४ ॥

अपिच यदिति । पादशब्देन गतिसाधनमुच्यते तच्च भगवतो गुणानुवाद एव आहूत इव मे शीघ्रं दर्शनं याति चेतसीति श्रीनारदानुभवात तत्परागश्च तदर्थः पङ्कजत्वेन निरूपणात् तस्य निषेवणं श्रवणकीर्तनादिद्वारा तदास्वादस्तेन तृप्ताः अन्यत्रावितृष्णयः तदेकरुचिविश्वासा भक्ता इत्यर्थः । स्वैरं तन्मात्रापेक्षत्वेनैहिकामुष्मिकसुखदुःखयोरागद्वेषाभावादनादृततत्तन्मर्यादं यथा स्यात्तथा चरन्ति तेन च नह्यमानाः बध्यमाना न भवन्ति आस्तामेषां वार्ता मुनयो ज्ञानिनोऽपि न नह्यन्ति किमुतैत इत्यर्थः । उभयत्र हेतुगर्भ विशेषणं योगेति पूर्वत्र योगो भक्तियोगः उत्तरत्र ज्ञानयोगः विधूताखिलेति पूर्वावस्थाया अपि कर्मबन्धस्य त्याजकत्वेन नाशमङ्गीकृत्य तदवस्थायास्तु सुतरामङ्गीकृतम् इच्छयेति स्वच्छन्देनैवात्तं प्रपञ्चे प्रवर्त्तितं प्रकटितं वपुः श्रीविग्रहो येन तस्येति परमस्वातन्त्र्यं दर्शितं यद्वा निजप्रेमभक्तिविस्तारणेच्छया ततश्च विधिनिषेधानादरो युक्त एवेति भावः । यद्वा भक्तानामिच्छया आत्तानि वपूंषि पुरुषविष्णुमत्स्यादिरूपाणि येनेति पारमेश्वर्यमुक्तं कुत एव नास्त्येवेत्यर्थः ॥ ३५ ॥

---

श्रीरामनारायणकृतभावभावविभाविका

ऐश्वर्येण धर्मव्यतिक्रमदोषाभिभवाद्दोषाभावमीश्वरानुग्रहाल्लब्धैश्वर्याणां दर्शयित्वा एषामेव तदनुग्रहाल्लब्धबोधानां सर्वकर्मालेपं सनिमित्तमाह । कुशलाचरितेनेति । एषामेव परमेश्वरानुग्रह-

## श्रीरामनारायणकृतभावभावविभाविका।

लब्धबोधानां तज्ज्ञापकमाह। निरहङ्कारिणामिति। ज्ञानमहिम्नाऽज्ञानबाधे तत्कृताहङ्काराद्यध्यासशून्यानां कुशलाचरितेनेह संसारे कश्चिदर्थो न विद्यते विपर्ययेण पापाचरणेनानर्थो न विद्यते "नैनं कृताकृते पुण्यपापे तापयतः किमहं साधुनाकरवं किमहं पापमकरवं तत्सुकृतदुष्कृते विधूनुते यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते—

> ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा
> यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते।
> हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते॥

समाहितैः किङ्करणैर्गुणात्मभिर्गुणो भवेन्मत्सु विविक्तधाम्नः। विक्षिप्यमाणैरुत किन्नु दूषणं घनैरुपेतैर्विगतै रवेः किम्। दोषबुद्धयोभयातीतो निषेधान्न निवर्तते। गुणबुद्ध्या च विहितं न करोति यथार्भकः तत्पूर्वोत्तराघयोरश्लेषविनाशौ तद्दर्शना"दित्यादिश्रुतिसूत्रैः संचितागामिकर्मणां विनाशाश्लेषप्रतिपादनात् प्रारब्धसुखदुःखोपभोगस्य च बाधितानात्मदेहादिसंघातपर्य्यवसायित्वात्॥ ३३॥

एवं तदनुग्रहप्राप्तद्व्यर्थबोधयोः प्रभावमुक्त्वा तत्र कैमुत्यन्यायेनादोषतामाह। किमुतेति। यद्येवं तदेशितव्यानामखिलसत्त्वानां तिर्य्यङ्मर्त्यदिवौकसां तमोरजःसत्त्वप्रकृतीनां तत्र तिरश्चां तत्प्रेरिततमसैव बोद्धा समर्थः फलार्थी चाधिकारीत्यधिकारलक्षणगतबोधसामर्थ्ययोरभावादनधिकारतया न कुशलाकुशलान्वयः मर्त्यानां शास्त्राधिकारत्वेऽपि तत्कृपालब्धबोधानामुक्तप्रकारेण बोधमहिम्नैवाधिकारिलक्षणफलार्थित्वाभावेन तस्य कार्य्यं न विद्यते इत्यादिनाधिकाराभावेन सकारणक्रियाकारकफलबाधेनच न कुशलाकुशलान्वयः दिवौकसां तत्प्रेरितैश्वर्य्याणां तत्पराभूतदोषत्वेन न तदन्वयः तर्हि तदीशितुः कुशलाकुशलान्वयो नेति किमुत वक्तव्यम्॥ ३४॥

नन्वीशितव्यानामधिकाराभावात्कारकादिबाधाच्च कर्म्मानन्वयो दृष्ट ईशितुस्तु बोधसामर्थ्ययोः सत्त्वात् देहसंबन्धे सति कारकाबाधात् फलार्थित्वस्यापि सम्भावयितुं शक्यत्वाद्भवतु कर्मबन्धस्तत्र पुनः कैमुत्येनैव सावधारणमाह। यत्पादेति—

> योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
> ज्ञानङ्कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचिदिति

योगत्रयस्यापि श्रेयोहेतुत्वादयोगिनामेव कर्म शुक्लकृष्णं योगिनां त्रिविधमितरेषामिति सूत्रेण कुशलाकुशलान्वयात्कर्मबन्धस्तत्र योगिनां बन्धाभावं वदन् भक्तियोगस्य—

> यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
> न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥

इत्यादिना कर्मसम्पूर्तिहेतुत्वेन—

> वासुदेवे भगवति भक्तियोगः प्रयोजितः।
> जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्॥

इत्यादिनाच ज्ञानकारणत्वेन स्वयञ्ज्ञानन्याधीनत्वेनाभ्यर्हितत्वं मत्वा पूर्वमाह। यत्पादेति। यस्य पादावेव पङ्कजे मृदुमञ्जुसुरभिसमूलत्रिविधतापापनोदपूर्वकनित्यपरमानन्दात्मकाह्लादाविर्भावुके तयोः परागस्तत्सम्बन्धितमोरजोऽपहारिरजस्तस्य गङ्गानीतस्य नितरां सेवनेन तृप्ता भवादयः—

> पूर्णाः पुलिन्द्य उरुगायपदाब्जराग
> श्रीकुङ्कुमेन दयितास्तनमण्डितेन
> तद्दर्शनस्मररुजस्तृणरूषितेन
> लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्॥

इत्यादिनाव्रजसंचरणचरणसंलग्नरजोनिषेवतृप्ताव्रजवनौकसः ध्यानसेवनादौ तद्रजोनितरां सेवनेनैव तृप्ता विगतैहिकामुष्मिकाभिलाषाः सर्वे भक्ता यद्वा यत्पादपङ्कजपरागतद्रजोऽभिलाषया तद्भूरिभाग्यमिहजन्मकिमप्यटव्यामित्यादिना चलं ब्रह्मादिपदमपहाय व्रजाश्रयणेनागा निश्चलपदवीं समाश्रिता ये वृन्दावनाद्रिद्रुमास्तेषां नितरां सेवनेन तृप्ताः यद्वा पादपङ्कजपराश्च त एव वैराग्येण गृहबन्धुवित्तादि हित्वा अगानां गोवर्द्धनादिगिरीणां निषेवेन तृप्ताः यद्वा पादपङ्कजे पात इति पादपङ्कजस्य पादुके तयो रागेण निषेवस्तेन तृप्ता यद्वा यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रियदधीमहि कर्कशेष्वित्यादिना यत्पादपङ्कजे कर्कशकुचस्पर्शादिना पान्तीति पादपङ्कजपास्तथा रागपरवशतया यत्तन्निषेवः शनैर्विधारणं तेनैव तृप्ता यद्वा पिबति चात्तिचेति पादं मुखं तदेववर्णितगुणैः पङ्कजं चक्षुर्भ्यां तद्रूपसुधापाश्च वनादौ तदधरामृतस्य वात्स्यास्वादनेन तन्मुखपङ्कजमेव पिबन्तीति पादपङ्कजपः तथा रागः सा परानुरक्तिरीश्वरे इति भगवच्छाण्डिल्यसूत्रेण परा भक्तिः निषेव इत्युपलक्षणं श्रवणादिनवविधपरापरभक्तीं ताभ्यां परापरभक्तिभ्यामेव तृप्ताः भक्ताः यतो न न ह्यमाना णह बन्धने इत्यस्माद्बन्धशून्या जीवन्मुक्ताः सन्तः स्वैरं येथष्टं चरन्ति तथा योगप्रभावविधुताखिलकर्मबन्धा योगोऽत्र कर्मयोगो ज्ञानयोगश्च तत्र तदर्पितसर्वकर्मात्मककर्मयोगप्रभावेण विधुताखिलकर्मबन्धत्वं दर्शितं श्रीमद्भागवते—

> कर्मणा कर्मनिर्हार एष साधुनिरूपितः।
> यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः॥
> एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः।
> त एवात्मविनाशाय कल्पन्ते कल्पिताः परे॥

इत्यादिज्ञानयोगपक्षेतु योगो विरुद्धोपाधितत्कल्पितधर्माणाञ्च जहदजहल्लक्षणया परित्यागेन त्वं पदार्थस्य तत्पदार्थस्वरूपाभेदज्ञानं तस्य प्रभावः कर्ममूलाज्ञानबाधनं तेन विधुता उन्मूलिता अखिलाः कर्मबन्धा येषां ते तथाभूताः—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे क्षीयन्ते चास्यकर्माणि दृष्ट एवात्मनीश्वरे। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा सर्वं कर्माऽखिलम्पार्थ ज्ञाने परिसमाप्यते "इत्यादिश्रुतिस्मृतिभिः तेचविधुताखिलकर्मबन्धाः सन्तः स्वैरञ्चरन्ति तथा मुनयो मननशीला ज्ञानयोगजिज्ञासवोऽपि "जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते"इत्यादिना स्वैरञ्चरन्ति तदा तस्य स्वेच्छयैव स्वातन्त्र्येण तत्तद्भक्तादीनां कर्मादिबन्धबाधनेच्छया वा स्वीयानां भक्तादीनामिच्छया वा आत्तमाविर्भावितं नित्यं सच्चिदानन्दघनं वपुर्येन तस्य बन्धः कुत एव न कुतोऽपीत्यर्थः तत्रायं भावः। कर्माधीनभौतिकसविकारदेहे आविद्ययात्मन्यध्यस्ते तत्कर्माध्यासाज्जीवानां कर्मबन्धो भवेन्न त्वानन्दमात्रशरीरे स्वरूपातिरिक्तदेहतत्कर्मतदध्यासादीनामभावाच्च बन्धसम्भावनापि तदुक्तं भगवज्जनिनिर्णये"किन्तु निर्दोषचैतन्यसुखानित्यां स्वकान्तनुम्। आविर्भावयते सैव जनिर्विष्णोर्नचपरा। तथा वैष्णवतन्त्रे भगवद्विग्रहनिरूपणे"निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मक शरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा"इति॥ ३५॥

गोपीनां तत्पतीनां च सर्वेषामेव देहिनाम् ।
योऽन्तश्चरति सोऽध्यक्षः क्रीडने नेह देहभाक् ॥ ३६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु तेऽपि स्ववचोऽनुरूपं कुतो नाचरन्तीत्याशङ्क्य स्ववचसो विधिनिषेधरूपत्वात्तेषां च तदप्रयोज्यत्वान्न स्ववचनानुसरणमित्याशयेनाह । कुशलेति । तथा चोक्तं भगवता "नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन" इति यतस्ते निरहंकारिणः तदुक्तं "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यत" इति तथा च तेषां तथा प्रवृत्तिरेतच्छास्त्रसार्थक्यमिति भावः । यथा प्रभोर्न साधनारूपस्य नियम्यता तद्वत्तेषामपि नासौ विधि निषेध नियम्यतेति संबोधनाशयः ॥ ३३ ॥

तथा च यथोक्तरीत्या यदेदं तदातिर्यगाद्यखिलसत्त्वानां नियम्यानामीशितुर्नियामकस्य सर्वकर्मणां यथायथं फलप्रदस्य स्वतन्त्रस्य परमात्मनो तियम्याभ्यां कुशलाकुशलाभ्यामन्वयः नियम्यतारूपः सम्बन्धः कुतः सर्वथा न विद्यत इत्यर्थः ॥ ३४ ॥

किञ्च जीवानामपि तदनधिकारिणां नास्ति कर्मबन्धो यदा तदा परमेश्वरस्य कुतस्तत्सम्भव इत्याह । यदिति । यस्य भगवतः पादपद्मयोः परागाणां कान्तिलक्षणरेणूनां नितरां सेवनेन ध्यानादिना तृप्ता अन्यत्र जातास्वप्रत्यया यत्पादपङ्कजपरागेषु निषेवामेव ते इच्छान्ति तृप्ताश्चेति वा एवं भूताः भागवतप्रधानास्तथा ज्ञानयोगप्रभावेण विधुता निराकृता अखिलकर्मणां बन्धा येषां तत्त्वज्ञा मुनयोऽपि न नह्यमानाः कर्मभिरबध्यमानाः स्वैरं विधिनिषेधकर्मविनिर्मुक्ताश्चरन्ति तस्य स्वेच्छया स्वीकृतनरदेहस्य परमेश्वरस्यैव कुतो बन्धः सर्वथापि तत्र नाशङ्कनीयमित्यर्थः । यद्वा यद्भक्त्यालब्धज्ञाना मुनयोऽपीति व्याख्येयम् ॥ ३५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु तेजीयसां तत्कृतो धर्मव्यतिक्रमः कुतो न दोषाय भवतीत्यत आह । कुशलाचरितेनेति । ते हि द्विविधा एके निरहङ्कारिणः ध्रुवास्मृतियुक्तास्तेषां परमेश्वरध्यानपरत्वेन विधिनिषेधविस्मृतिवशात् प्रारब्धकर्मकारितेन कुशलाचरितेन स्वार्थः विपर्ययेण प्रारब्धकर्मकारितेनाकुशलाचरितेनच अनर्थो वा न विद्यते अनिरहङ्कारिणामिति पदच्छेदादन्ये ज्ञेयाः ते हि पूर्वसञ्चितैर्महापुण्यपूगैः पूर्णाः पुनरपि बहूनि महापुण्यानि कर्तुं शक्ताः तेषां कुशलाचरितेन किञ्चिन्मात्रेण कुबेरगृहे वराटिकान्यास इव अर्थः विपर्ययेण कुबेरगृहे वराटिकापहार इव अनर्थो वा न विद्यते इत्यर्थः ॥ ३३ ॥

एवं सति केषुचित् जीवेषु कुशलाकुशलान्वयो न विद्यते तर्हि अखिलानां सत्त्वानामीशितव्यानां नियम्यानां जीवानामीशितुर्नियन्तुः परमेश्वरस्य सर्वस्वामिनः कुशलाकुशलान्वयो न विद्यते इति किम्पुनर्वक्तव्यमिति कैमुतिकन्यायो दर्शितः ॥ ३४ ॥

कुशलाकुशलकर्मफलास्पृष्टत्वमपि भगवतः कैमुतिकन्यायेन दर्शयति । यदिति । यस्य पादपङ्कजपरागे निषेवा येषां ते तथा ते च ते तृप्ताश्च पादपङ्कजपरागध्यानानन्दाः अत एव योगप्रभावेण तद्ध्यानसामर्थ्येन विधुताः अखिलकर्मबन्धा येषां ते मुनयः भगवत्तत्त्वमननशीलाः भागवताः न नह्यमाना निर्बन्धनाः सन्तः स्वैरं चरन्ति तस्य भगवतः इच्छयैवात्तवपुषः परिगृहीताप्राकृतविग्रहस्य कुतो बन्धः कुशलाकुशलकर्मफलभूत इत्यर्थः ॥ ३५ ॥

———

भाषा टीका ।

इन समर्थ पुरुषों को धर्म के आचारण करने से कुछ इहां पर स्वार्थ सिद्ध नहीं होता है हे प्रभो। परीक्षित जी निरहंकारी होने से उन का अधर्म होने से कुछ अनर्थ भी नहीं होसक्ता है ॥ ३३ ॥

जब भगवान् के भक्तों को ऐसा है तो सम्पूर्ण प्राणियों देवता तिर्यक् मनुष्यादिकों के जो ईश्वर हैं नियाम्य जीवों के पति हैं उन को पाप पुण्य का संबंध कहां से होसक्ता है ॥ ३४ ॥

जिन भगवान् के चरण कमल के रेणु के सेवन करने से सन्तुष्ट भये मुनिजन योग के प्रभाव से सब कर्म बन्धों के छूट जाने से किसी कर्म के बन्धन में नहीं रह कर इछा पूर्वक संसार मे विचरते हैं उन मुनिन के पूज्य भगवान् श्रीकृष्णचन्द्र हैं तो उन ने तो अपनी इछा से शरीर को धारण किया है तो उन को तो कर्म बन्धन कहां सम्भव है ॥ ३५ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

परदारत्वं गोपीनामङ्गीकृत्य परिहृतमिदानीं भगवतः सर्वान्तर्यामिणः परदारसेवा नाम न काचिदित्याह। गोपीनामिति । योऽन्तश्चरत्यध्यक्षो बुद्ध्यादिसाक्षी स एव क्रीडनेन देहभाक् नत्वस्मदादितुल्यो येन दोषः स्यादिति ॥ ३६ ॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

स इत्यनेनास्यान्वयः स एवैष साक्षात्कृतः अध्यक्ष इति तदंशत्वेन तत्प्रेर्यत्वेन वा तत्त्वविचारतस्तस्मिन्नेव भोक्तृत्वपर्यवसानात् किम्वा अन्तर्यामित्वेनापि मायावादिनामद्वैतव्याख्यानुसारेणच परदारत्वाभावात् परदारसेवा नास्तीति परिहृतम् अत एव परमात्मत्वासिद्ध्यै सर्वेषामित्युक्तम् एषः श्रीगोपीरमणः क्रीडनेन लीलया किम्वा क्रीडनेन हेतुना क्रीडार्थमित्यर्थः । देहभाक् निजश्रीमूर्त्तिप्रकटकः अन्यत्तद्व्याख्यातं यद्वा अध्यक्षः सर्वचित्ताधिष्ठाता सर्वेन्द्रियप्रवर्त्तकश्चेत्यर्थः । अत एवान्तश्चरति एवमन्तर्यामितया सर्वकर्मसु प्रवर्त्तनेनापि यथा तस्य तद्गुणदोषैर्लेपो न स्यात् किम्वा सर्वकर्मस्वन्तर्यामिदृष्ट्या प्रवृत्तेरन्येषामपि तैर्लेपो यथा न स्यात् तथात्रापीति भावः । तत्र गोप्यादिष्वन्तर्यामिणः प्रकाशतारतम्येन तेषां यथोत्तरं न्यूनताज्ञा इति परमैश्वर्येण पूर्वोक्तबन्ध-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

भावहेतुरभिव्यञ्जितः विशेषतश्च रासक्रीडार्थमेव देहभाक् प्रकटितः तद्योग्यश्रीव्रजेन्द्रकिशोरमूर्त्तिरित्यर्थः । प्रेमरसविस्तारणार्थमवतीर्णस्य तदनुरूप एव व्यवहारो युक्तो नामेति सिद्धान्ततत्त्वम् ॥३६॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं गोपीनां परदारत्वमङ्गीकृत्यापि दोषः परिहृतः तत्र च सति कुलटात्वं जारत्वं नापयाति तन्नाम च खलु धिक्काराय परं पर्यवस्यतीति तदसहमानस्तासां तत्परदारत्वमेव खण्डयति । गोपीनामिति तैर्व्याख्यातम् । तत्र बुद्ध्यादिसाक्षी परमात्मेत्यर्थः । अतो न तस्य परो नाम कश्चिदिति के वा परदारा इति भावः । ननु सतु निराकार इति श्रूयते तस्मादाकारवत्त्वादस्मदादितुल्य एवासौ न तत्राह । स एवेति । एव शब्दोऽयं चैवेत्यस्मादाकृष्टः । अत्र चशब्दः क्वचिन्नास्ति । क्रीडनेन स्वैरं तदिच्छयैव नतु कर्मपरवशत्वेन हेतुभाक् तदुचिते देशेतदुचिते निजदेहप्रवर्त्तक इत्यर्थः । अन्तर्यामितायामाकारापेक्षाया अभावादेव तत्र निराकारत्वमुच्यते नतु वस्तुतः । "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्त" मिति द्वितीयोक्तेरिति भावः । नत्विति नत्वस्मदादिजीववत् परस्परमनात्मकर्मपरवशश्चेत्यर्थः । एष क्रीडनदेहभागिति क्रीडनेनेह देहभागिति च पाठः । अथवा यो गोप्यादीनां सर्वेषामपि तत्तद्योग्यताप्रदेशेन परमात्मरूपेणान्तश्चरति स एवाध्यक्षस्तत्तदधिष्ठाता गोप्यः किमाचरदित्यादिना कात्यायनि महामाये ! इत्यादिना अपि वत मधुपुर्यामित्यादिना च व्यञ्जिततादृशममतामयभावविशेषाणां तासान्तु पतिरूप एवाध्यक्ष इत्यर्थः । ननु कथं परमात्मरूपेण क्रीडति कथञ्चानेन रूपेण क्रीडति तत्राह । एष वहिःप्रकटरूप एव स श्रीकृष्णस्तादृशक्रीडासाधनं देहं भजते नित्यमेवाश्रयति नत्वन्तःस्थः परमात्मरूप इति । पाठान्तरेऽपि इह वहिःप्रकटरूपत्व एवेत्यादि योज्यम् । एवमुत्तरत्रापि तदेवमन्तर्यामित्वपक्षे स्वदारत्वस्यातिव्याप्तिपरिहाराय किञ्चिदन्यदाहार्यव्याख्यातम् । तथापि विण्मूत्रपरिपूरितदेहासु त्वक्श्मश्रुनखरोमकेशत्यादि रुक्मिणीवाक्यानुसारेण विशुद्धसत्त्वव्यक्तविशेषमयपरमज्योतिर्देहस्य तस्य प्रवृत्तिस्तज्जुगुप्सिततामेवावगमयति नतु भजतं तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेदित्यनुसारेण रोचमानताम् । अतएवान्तर्गृहगतानां कासाञ्चिदसिद्धदेहानां तद्देहपरित्याजनञ्च निर्दिश्यते । नच सैरिन्ध्र्यादावपि तत्प्रवृत्तिदर्शनादन्यथा मन्तव्यम् । मुकुन्दस्पर्शनात् सद्यो बभूव प्रमदोत्तमेति तत्स्पर्शादिना स्पर्शमणि लोहवृत्तान्तवत् ध्रुवदेहवच्च तद्योग्यदेहलक्षणप्रमदोत्तमात्वं प्राप्य तत्क्रीडनयोग्यता तत्र जातेति गम्यते । न चासामपि तादृशत्वं मन्तव्यं ताभिर्विधूतेत्यादौ प्रत्युत ताभिरेव असावधिकं व्यरोचतेत्युक्तत्वात् । किञ्च नायं श्रियोऽङ्गेत्यादौ श्रीतोऽपि स्वर्योषिद्भ्योऽपि पराभ्योऽपि सर्वाङ्गनाभ्योऽर्द्धत्तमत्वं परत्वञ्चासां लभ्यते । यतः साधिक्षेपमुक्तं कुतोऽन्याः इति तस्मादासां विलक्षणत्वावगमाद्विलक्षणत्वेनैव व्याख्यान्तरं कर्त्तव्यम् । तथाहि गोपीनां तद्विशेषाणामासां तथा तत्पतीनां सम्प्रति तासां पतित्वेन प्रतीतानां तथा सर्वेषामपि गोपगवादीनां देहिनाञ्च योऽन्तर्मध्ये चरति जयति जननिवास इति दृष्ट्या अहो भाग्यमहो भाग्यमिति रीत्या "योऽसौ गोपु तिष्ठति योऽसौ गाः पालयती" ति तापनीश्रुत्या च तन्मध्ययोग्यक्रीडाभिर्नित्यमेव क्रीडति सः श्रीकृष्णो ऽध्यक्षः प्रत्यक्षः प्रापञ्चिकानां प्रकटः सन्नपि चरति तत्तद्योग्यमेव क्रीडति । उभयथापि क्रीडायां हेतुः । एषः श्रीकृष्णः क्रीडाशीलः श्रीगोपालवपुः प्रकाशनशील इति । यद्वा । स एव प्रापञ्चिकप्रत्यक्षः सन्नपि क्रीडनदेहान् स्वक्रीडाहेतुविग्रहान् गोप्यादींस्तानेव भजन् क्रीडति । पाठान्तरेऽपि क्रीडनेनोपलक्षितांस्तद्रूपान् देहानिति । तदेवं तथैव नित्यविहारात्तासां तन्नित्यप्रेयसीत्वम् । ततस्तत्प्रतिमदेहत्वं च दर्शितम् । तत्र परसम्बन्धवर्णनेन सन्देहं प्रकटयन्त्यां प्रकटलीलायामपि सुखावेशात् स्पष्टमेवोक्तं तासु तद्रूपत्वं स्वयं श्रीशुकदेवेन अधोक्षजप्रिया इति भगवत्प्रिया इति कृष्णवध्व इति च । तापन्यां दुर्वाससा ताः प्रत्येव च । योऽसौ गोपु तिष्ठतीत्यादौ स वो हि स्वामी भवतीति परमसम्बन्धवर्णनेन सन्देहरहितायामप्रकटलीलायां कैमुत्येन तदेव निर्णीतम् । श्रीमदष्टादशाक्षरपटले श्रीब्रह्मणा स्वसंहितायाम् । "आनन्दचिन्मयरस प्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामी" त्यत्र कलात्वेन निजरूपत्वप्राप्तेऽपि प्रकटलीलागतपरकीयत्वे सन्देहनिरासार्थम् । निजरूपतयेति एतदेव चोपक्रमोपसंहारयोस्तासु लक्ष्मीत्वस्य तस्मिन् परमपुरुषत्वस्य निर्देशेन तथैव निर्द्धारितं तत्र चिन्तामणि प्रकरसद्मस्वित्यादौ लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमित्युपक्रमः । श्रियः कान्ताः कान्तः परमपुरुष इत्युपसंहारः । तत्र चान्यत्र च । साक्षात् गोपीशब्दप्रधानाः श्रीमदष्टादशाक्षरप्रमुखमन्त्राश्च तथैव वदन्त आसते । तथाच तत्तन्मन्त्रव्याख्यायां गौतमीयतन्त्रे । तत्तन्मन्त्र द्रष्टारः श्रीमद्देवर्षिचरणाः तत्प्रधानाः श्रीभगवतां नामधेयं वहिरङ्गदृष्टीनामपि प्रवृत्त्यर्थं रूढिमपि परित्यजन्तः सर्वेश्वरत्वं मायास्वरूपशक्त्योर्वैभवभेदेन द्विधा निरुच्य तद्ध्यानगततदन्तरङ्गप्रेयसीभक्तानां प्रवृत्त्यर्थं श्रीगोपालमूर्त्तेस्तस्य श्रीगोपालीपतित्वमेवाश्रितरुचितया तत्राप्युत्तरपक्षतया पर्यवसायितवन्तः । तत्र चैवकारेण प्रकटलीलाप्रसिद्धस्यौपपत्यं निराकृतवन्तः । यथा "गोपीति प्रकृतिं विद्याज्जनस्तत्त्वसमूहकः । अनयोराश्रयत्वेन कारणत्वेन चेश्वरः । सान्द्रानन्दपरं ज्योतिर्वल्लभेन च कथ्यते । अथवा गोपीप्रकृतिर्जनस्तदंशमण्डलम् । अनयोर्वल्लभः स्वामी भवेत् कृष्णाख्य ईश्वरः । अनेकजन्मसिद्धानां गोपीनां पतिरेव वा । नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्द्धन" इति । अत्रानेकजन्मसिद्धानामिति वहूनि मे व्यतीतानि जन्मानि तव चार्जुन इतिवत् । तासामनादिकालपरम्पराप्राप्तश्रुतिपुराणतन्त्रादिप्रसिद्धावतारित्वमेव व्यनक्ति तस्माद्वस्तुतः परदारत्वमेव नास्ति किमुतायोग्यत्वमिति भावः ॥ ३६ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत् पृष्टमाप्तकामो यदुपतिरित्यादिना-वाप्तसमस्तकामस्य स्वतो निरतिशयानन्दस्य ग्राम्यचेष्टान्वयः कथमिति तस्योत्तरमाह । गोपीनामिति द्वाभ्याम् । गोपीनां तासां पतीनाञ्च तथान्येषां देहिनां जीवानाञ्च योऽन्तश्चरत्यन्तरात्मतया व्याप्यनुवर्तियमयति यश्चाध्यक्षः । तत्तत्कर्मानुगुणसुखदुःखादिफलदश्च स एष भगवान्कृष्णः क्रीडनदेहभाक् क्रीडनाय देहभाक् नत्वस्मदादिवत्सुखदुःखादिभोगाय कर्माधीनदेहभागित्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रीडनं क्रीडासाधनं देहं भजतीति क्रीडनदेहभाक् अध्यक्षः साक्षी अयञ्च बन्धाभावे हेतुः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

गोपीनाम् अत्र टीकानुसारेण श्रीभगवतः परदारा नाम न सन्तीति व्याख्यानेऽपि तासामयोग्यत्वं न व्याहन्यत एषा व्याख्या ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अन्यच्च गोपाङ्गनास्वस्य क्रीडापाञ्चालिका इव क्रीडादेहनिर्विदोषस्तस्य भजनमस्य नहि बहिरङ्गलीलैव अन्तर्यामिता त्वस्य बहिरङ्गलीलैवेत्याह । गोपीनामित्यादि । स एष श्रीकृष्णः क्रीडनदेहभाक् क्रीडनदेहा व्रजदेव्यस्ता न भजतीति स्वरूपनिर्देशः ताच्छील्ये क्विप् अध्यक्षः साक्षात् प्रत्यक्ष इति यावत् यो नारायणरूपेणैव गोपीनां तत्पतीनाञ्च सर्वदेहिनाञ्च अन्तश्चरति अन्तर्यामी गोपीनां पतयः पत्याभासास्तेषां सर्वेषामपि देहिनाञ्च नतु गोपीनां सर्वसाधारण्येनान्तर्यामित्वम् आनन्दविग्रहत्वात् एतेनास्य व्रजाङ्गनाभिः सह क्रीडनं स्वरूपविहार एव न धर्मव्यतिक्रम इति भावः ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तथापि लोकमर्यादाया भग्नत्वात् यद्यदाचरति श्रेष्ठ इति न्यायेन शब्दबलविचारेण बन्धो भवेत् तेषाव धूताखयोऽपि न ते व्यवहारनियामकाः अतो विषमो दृष्टान्त इति चेत्तत्राह । गोपीनामिति । नहि स्वस्य स्पर्शः स्वस्य क्वापि निषिद्धः परा चासौ परस्य स्त्री उभयमपि न भगवति यतः भगवान् गोपीनां तत्पतीनाञ्च आत्मा बान्धवाः सर्वे लौकिकाश्च न मन्यन्त इति चेत्तत्राह । सर्वेषामपि देहिनामयमात्मेति यो भगवानन्तश्चरति आसन्यो जीवो वा सर्वेषामादिसिद्धान्तसंग्रहाय सामान्यवचनं योऽन्तश्चरतीति स एवायं भगवान् अध्यक्षः प्रत्यक्षः क्रीडनेन कृत्वा नटवत् पुरुषदेहं भजते वस्तुतस्तु नायं पुमान् नच स्त्री नाप्यन्यः कश्चित् न स्त्री न षण्डो न पुमानितिश्रुतेः अतः केनापि विचारेण नास्या दोषसम्भवः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तत्तद्दृष्टयातु सर्वान्तर्यामिणो भगवतो न कोऽपि परे इत्याह । गोपीनामिति । योऽन्तश्चरति तस्य बहिरालिङ्गने को दोष इति भावः । अध्यक्षो बुद्ध्यादि द्रष्टा तस्य रहस्य बहिर्गात्रदर्शने को दोष इति भावः । इह व्रजमण्डले क्रीडनेन हेतुना देहान् गोपीशरीराणि भजते रतिश्रमप्रस्वेदाम्बुमार्जनादिना सेवते ॥ ३६॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका

तदेवं समाहितेऽपि प्रदत्ताभासे परदाराभिमर्शनेच तदवस्थतया प्रतिभासमानेऽपरितुष्यन् प्रकारान्तरेण समादधाति । गोपीनामिति । तैर्व्याख्यातं तत्र बुद्ध्यादिसाक्षी परमात्मेत्यर्थः । अतो न तस्य परो नाम कश्चिदिति केवा परदारा इति भावः । ननु सतु निराकारः श्रूयते इति चेत्सत्यम् अन्तर्यामिलीलायामाकारापेक्षाभावादेव निराकारत्वमुच्यते नत्वाकाराभावादिति—

> केचित्स्वदेहान्तर्हृदयावकाशे
> प्रादेशमात्रं पुरुषं वसन्तमिति

श्रीद्वितीयादौ वसन्तमित्यनेन तदाकारस्य नित्यत्वावगमात् अन्यथा वसन्तमित्यत्र प्रकल्प्येत्युच्येत केचिदिति लौकिकत्वं तत्र तत्राचिन्त्यशक्तिरेव गतिः अथवा क्रीडनेनेत्येतद्देवोत्तरं श्रीभगवतः साकारत्वे निराकारत्वेच क्रीडने हेतुः स एवेति सामानाधिकरण्येनाभेदं निर्दिश्य देहभागिति तथात्वयोत्कर्षो व्यञ्जितः परमार्थस्तु गोपीनां गोपजातिस्त्रीणां तत्पतीनां गोपजातिपुरुषाणां तथा सर्वेषां गोमृगादिदेहिनां परिकराणां देहभाक् सन् देहशब्दः स्वरूपवचनः योऽन्तः अप्रकटलीलायां चरति जयति जननिवास इतिन्यायेन नित्यं क्रीडते स इह तत्तद्रूप एवाध्यक्षः प्रकटलीलायां प्रत्यक्षः योऽसौ गोषु तिष्ठति योऽसौ गाः पालयति योऽसौ गोपेषु तिष्ठति गोपान्पालयति स वो हि स्वामी भवतीति श्रीगोपालतापिनीश्रुतेः नच साधकशरीरेषु व्यभिचारः मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमेति सैरन्ध्रीन्यायेन स्पर्शमणिवत्तेषामपि योग्यतासम्पादनावगमात् जहुर्गुणमयं देहमिति तु तत्तद्भावत्यागेन किञ्चिदुर्वरितदुष्पचेलिमकषायशेषेण वा समाहितं प्राक् तासां परकीयात्वञ्च भगवत्प्रिया अधोक्षजप्रियाः कृष्णवध्व इत्यादिभिर्विदोषणैरेव परास्तं तदन्यासाञ्च नित्यत्वं दशाक्षरमन्त्रव्याख्यायां श्रीदेवर्षिचरणैरुक्तं गौतमीयतन्त्रे—

> गोपीति प्रकृतिं विद्याज्जनस्तत्त्वसमूहकः ।
> अनयोराश्रयत्वेन कारणत्वेन चेश्वरः ॥
> सान्द्रानन्दं परं ज्योतिर्वल्लभत्वेन कथ्यते ।
> अनेकजन्मसिद्धानां गोपीनां पतिरेव वा ॥
> नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्धन इति ।

अत्र मायास्वरूपशक्त्यौर्भगवभेदेन व्याख्याद्वयम् अनेकेति—

> बहूनि मे व्यतीतानि जन्मानि तव चार्जुनेत्यादि ।

कल्पपरंपराप्राप्तश्रुतिपुराणतन्त्रादिप्रसिद्धावतारित्वमेव व्यनक्ति नच तत्पतीनामिति नित्यसिद्धपरदारत्वमपीति भ्रमः कार्यः मोहितास्तस्य माययेत्यादिवक्ष्यमाणात्सयो हि स्वामी भवतीति निजस्वरूपतया कलाभिरिति स्मृतिश्रुत्यादिवाक्यानुरोधेन प्रकटलीला-

### श्रीमत्किशोरीप्रसादाविद्वत्कृता विशुद्धरसदीपिका ।

यामेव तत्प्रतीतिरिति निर्णयात् तत एव च गोपजातिपुरुषाणामिति व्याख्यातं ननु पतिं मन्यानामिति अन्यथा परमशुद्धायां लीलायामनौचित्यदोषो दुर्वार इत्यवधेयम् "अनौचित्याद्दतेनान्यद्रसभङ्गस्य कारण"मित्यभियुक्तोक्तेः नचा प्राकृतत्वेनानौचित्यपरिहार इति वाच्यं प्रत्युत तदाधिक्यप्रसङ्गादिति दिक् । विवृतमिदं भक्तिमञ्जूषायाम् ॥ ३६ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका ।

नन्वेवमिच्छयात्तसच्चिदानन्दवपुष्ट्वे सच्चित्सुखवपुषो विभुत्वमेव स्यात्तर्हि विभुत्वे रासनृत्यादि क्रियानुपपत्तिरितीमामाशङ्कामपनुदन्नेव पूर्वं धर्मव्यतिक्रमं स्वीकृत्य समाधानं कृतमधुनातु तस्य विभुत्वेनैव तासां परदारत्वाभावान्न व्यतिक्रमगन्धोऽपीत्याह । गोपीनामिति । तासामेव गोपीनां तत्पतीनामिति लोकदृष्टिविभ्रमेण पूर्ववर्णितश्रुतीनां तत्तद्देवपरत्वभानन्यायेन तत्तत्पतिमन्यतयापातदृष्ट्या भासमानानां तथा सर्वेषामपि देहिनां देहादिसंघाताध्यासेन पृथक् जीवतया प्रतीयमानानां योऽन्तश्चरति तत्तदुपाधीनामधिष्ठानतया तेषाञ्च स्वरूपभूतात्मतया प्रत्यक्तया वर्त्तमानः "कृष्णमेनमेवेहि त्वमात्मनमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायये"त्यत्रैतच्छब्दनिर्दिष्टं सर्वापरोक्षं कृष्णविग्रहं सर्वदेहिनामात्मात्वेन निर्दिश्य तस्य देही वेति भौतिककल्पितदेहपृथक्भूततदध्यासापन्नजी—ववद्भानन्तु माययेति निर्णीतं मायया तथा प्रतीतौ प्रयोजनञ्च जगद्धितायेत्यनेन दर्शितमत्र चोत्तरपद्ये वक्ष्यति अनुग्रहाय भूतानामिति गीतायाञ्चोक्तम् "अहमात्मागुडाकेशसर्वभूताशयस्थित" इति तथाच सोऽध्यक्षः सर्वाधिष्ठानप्रत्यक्चिद्रूपः इह क्रीडने व्यापकानामपि वर्णानामभिव्यञ्जकध्वन्यनुसारेण परिच्छिन्नतया तत्तद्वाक्यपदादिक्रमेण भातीति तदभिव्यञ्जकस्वेच्छानुसारेण परिच्छिन्नतया तत्तद्रासलीलादिक्रमापन्नत्वेन प्रतीतावपि देहभाक् न भवति किन्तु वर्णितरीत्या देहीवाभाति नच कृष्णविग्रहस्यैवात्मत्वेन सर्वान्तश्चरत्वे कथं न सर्वेषां तदन्तरपरोक्ष इति वाच्यम् अज्ञानावृतशुक्तेः समानांशेदन्त्वेनभानेऽपि विशेषशुक्तित्वाकारेणाप्रतीतिवत् समानसच्चिदात्मना भानेप्यानन्दविग्रहत्वेन प्रतीतिसंभवात् नचात्मनो बहुश्रुतिषु निराकारत्वप्रसिद्ध्या कृष्णविग्रहाकारत्वासिद्धिरितिवाच्यं निराकारशब्दस्य सर्वथमायिकभौतिकाकारनिरासपरत्वात् "सत्पुण्डरीकनयनं मेघाभंवैद्युताम्बर"मित्यादिकाचैदुपनिषदि श्रुताकारस्यानन्तानन्दवद्गुणोपसंहारन्यायेन सर्वत्रोपसंहरणीयत्वाच्च तथाच गोपीनामागन्तुककिञ्चित्कालिकलोकसमकल्पितपत्यादिसंबन्धापेक्षया नित्यान्तश्चरात्मत्वसंबन्धस्य ज्यायस्त्वात्कृष्णस्यैव मुख्याध्यचत्वान्न तासां परदारत्वं लोकभ्रमसिद्धतत्पतीनामप्यात्मत्वाच्च किञ्च नहि देहस्य पतित्वं पञ्चत्वे देहं दग्ध्वा पतिपिण्डदानाद्दर्शनादात्मनः पतित्वेनु कृष्णस्य सर्वमुख्यपतित्वमत एव प्रायः पूर्वं निर्दिष्टमधोक्षज प्रिया इति कृष्णवध्व इति तापिन्याञ्च ताः प्रत्येव दुर्वाससो वाक्यं स वः स्वामी भवतीति श्रीमदष्टादशाक्षरपटले ब्रह्मसंहितायां तदुक्तिः "आनन्दचिन्मयरसप्रतिभाविताभिर्य एव निजरूपतया कलाभिः।गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामि" इत्यत्र कलात्वोक्तस्वीयत्वे निश्चितेऽपि लोकप्रसिद्धपरकीयत्वभ्रमपरिहारायैव निजरूपतानिर्देशः तत्रैवोपक्रमोपसंहारयोस्तासां लक्ष्मीत्वं तस्य परमपुरुषत्वञ्च दर्शितं लक्ष्मीसहस्रशतसंभ्रमसेव्यमानमित्युपक्रमः श्रियः कान्ताः कान्तः परमपुरुष इत्युपसंहारः तथा साचाद्गोपीनाम संबद्धाष्टादशाक्षरादिमन्त्राः स्पष्टा भान्ति तथान्यत्रापि मन्त्रव्याख्याने एव "अनेकजन्मसिद्धानां गोपीनां पतिरेव वा । नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्द्धन" इति तस्मात्तासां परदारत्वमेव नास्तीति भावः ॥ ३६ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं गोपीनां परदारत्वं तदभिमर्शनजन्यदोषं चाङ्गीकृत्य समाहितं वस्तुतस्तु नास्ति तासां परदारत्वमतो नास्तितत्सेवाकृतदोषगन्धोऽपीत्याह । गोपीनामिति । यः गोपीनां तत्पतीनाञ्च किञ्च सर्वेषामेव देहिनामन्तर्जीवरूपेणान्तर्यामिरूपेण चरति स एवाध्यक्षस्तद्देहादिनियन्ता क्रीडनेन क्रीडार्थं देहभाक् गृहीतलीलाविग्रहः नत्वस्मदादिवत्कर्मभोगाद्यर्थंदेहभाक् अतो नास्ति तत्र दोषगन्धस्य शङ्कापीति भावः ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं परमेश्वरः कुशळाकुशळकर्मतत्फलविषयो न भवति सर्वसत्त्वेशितृत्वेन सर्वस्वामित्वादित्युक्तमथ सर्वेशितृत्वमेव प्रपञ्चयति । गोपीनामिति । गोपीनां तत्पतीनां किम्बहुना सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां देहिनां य उपादानकारणतया प्रेरकतया च अन्तरश्चरति अतएवाध्यक्षस्तत्तद्बुद्ध्यादिसाक्षी तत्तद्देहभोक्तृमुख्यः स्वामी स एव इह लीलायां क्रीडनेनापि अध्यक्षः देहभाक् च अतस्त्वया प्रतीपमाचरद्ब्रह्मन् ! परदाराभिमर्शनं कृतवान्वैजुगुप्सितमिति शङ्का न कार्या तस्य सर्वपतित्वात् जुगुप्सितकर्तृत्वाभावादिति भावः ॥ ३६ ॥

---

### भाषा टीका ।

जो परमेश्वर श्रीकृष्णचन्द्र गोपिन के तथा उनके पतिन के और प्राणिमात्र के भीतर में अन्तर्यामी होकर सूक्ष्म रूप से विचरते हैं और सबके स्वामी हैं वे क्रीडा करते हैं तो वे देह धारी मनुष्य सरी के नहीं हैं किन्तु व्यापक हैं ॥ ३६ ॥

---

अनुग्रहाय भूतानां मानुषं देहमास्थितः[1] ।
भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ॥ ३७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवञ्चेदाप्तकामस्य निन्दिते कुतः प्रवृत्तिरित्यत आह । अनुग्रहायेति । शृङ्गाररसाकृष्टचेतसो ऽति बहिर्मुखानपि स्वपरान् कर्तुमिति भावः ॥ ३७ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एतदेव प्रपञ्चयति । अनुग्रहायेति । यद्वा अध्यक्षः प्रत्यक्षः सन् क्रीडनाय तत्क्रीडार्थं देहः अवतारो येषां गोपीजनानां व्रजजनानां वा तान् भजति रमयतीति तथा सः अतस्तेषामन्तर्बहिश्चरतः क्रीडासाधनत्वाच्च तस्य क्रीडया कस्यापि कोऽपि दोषः प्रसज्जेदिति भावः। भक्तानामनुग्रहाय "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः" इत्यादिश्रीभगवद्वचनात मानुषं नराकारमाश्रितः प्रकटितवान् यद्वा प्रकटयामासेति वाक्यसमाप्तिः इति भक्तानुग्रहार्थं तत्क्रीडेत्यभिप्रेतं तत्र भक्तशब्देन व्रजदेव्यो व्रजजनाश्च सर्वे तथा कालत्रयसम्बन्धिनो ऽन्ये च वैष्णवाः यद्वा भक्तानां मुख्याः श्रीव्रजदेव्य एवोक्ताः तथापि मुख्यानामनुग्रहेणान्येषामपि सर्वेषामनुग्रहः सिद्ध्येदेव अत एव क्रीडा भजते प्रीत्या सम्पादयतीत्यर्थः । श्लेषेण भजते अनुसरति प्रकाशयति क्रीडानां नित्यसिद्धत्वं सूचितं तेन च सर्वदोषः स्वत एव निरस्तः तादृशीः अनिर्वचनीयाः सर्वचित्ताकर्षणीरित्यर्थः । श्लेषेण रासस‍दृशक्रीडाश्रवणेनापि तत्परो भवेत् किमुत रासक्रीडामित्यर्थः । तच्छब्देन भगवान् भक्ताः क्रीडा वा सर्वोऽपि जनो भवेत् यद्वा मानुषं देहमाश्रितः सर्वोऽपि जीवस्तत्परो भवेत् मर्त्यलोके श्रीभगवदवतारात्तथा भक्तियोग्यसाधनेन भजने मुख्यत्वाच्च मनुष्याणामेव सुखं तच्छ्रवणादिसिद्धेः भूतानामिति पाठे सर्वेषामेव जनानां विषयिणां मुमुक्षूणां भक्तानां चेत्यर्थः। इति परमकारुण्यमुक्तम् एवं स कथं धर्मसेतूनामित्यनेन धर्मविरुद्धं कथं कृतवानित्येकस्य प्रश्नस्य परिहारः धर्मव्यतिक्रम इत्यादिभिः तथा आप्तकाम इत्यनेन परिपूर्णस्य का तत्र स्पृहेति द्वितीयस्य अनुग्रहायेत्यनेनेति विवेचनीयम् ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वाप्तकामस्य कुतः क्रीडायां प्रवृत्तिः कुतस्तरां वा बहिर्दृष्ट्या लोकावगीते तस्मिन्नित्यत आह । अन्विति । भक्तानामनुग्रहाय "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रिया" इति पद्मपुराणीयश्रीभगवद्वचनात् मानुषं नराकारमाश्रितः ब्रह्मरूपेण सर्वाश्रयोऽपि स्वयमाश्रयं कृतवानिति तस्य परब्रह्म स्वरूपस्य परमाश्रयत्वं च दर्शितम् । एतदुक्तम् । "दशमे दशमं लक्ष्यमाश्रिताश्रयविग्रह"मिति । तथाच श्रीभगवदुपनिषद् ब्रह्मणो हि प्रतिष्ठाहमिति । आस्थितः इति पाठेऽप्यादरविषयः कृत इति स एवार्थः। स्वेच्छया मानुषं देहमधुनैव विरच्याश्रित इति व्याख्यातुं न घटते परत्र तत्र लोके ऽधिष्ठातृत्वेन कृष्णाख्यनराकारपरब्रह्मणः श्रीगोपैरनुभूतत्वात् एवं भक्तानुग्रहार्थं तत्क्रीडेत्यभिप्रेतम् । आप्तकामत्वेऽपि भक्तानुग्रहो युज्यते । विशुद्धसत्त्वस्य तथा स्वभावात् । यद्भावभाविते चान्यत्र दृश्यतेऽसौ । तथा रहूगणानुग्राहके श्रीजडभरतचरिते यथा वा भवदनुग्राहके मयीति । तत्र भक्तशब्देन व्रजदेव्यो व्रजजनाश्च सर्वे कालत्रयसम्बन्धिनोऽन्ये च वैष्णवा गृहीताः व्रजदेवीनां पूर्वरागादिभिः व्रजजनानां जन्मादिभिरन्येषाञ्च तत्तद्दर्शनश्रवणादिभिरपूर्वत्वस्फुरणात् । अत एव तादृशभक्तप्रसङ्गेन तादृशीः सर्व चित्ताकर्षिणीः क्रीडा भजते याः साधारणीरपि श्रुत्वा भक्तेभ्योऽन्योऽपि जनस्तत्परो भवेत् । किमुत रासलीलारूपामिमां श्रुत्वेत्यर्थः । वक्ष्यते च । विक्रीडितं व्रजवधूभिरिदञ्च विष्णोरित्यादि । यद्वा मानुषं देहमाश्रितः सर्वोऽपि जीवस्तत्परो भवेत् । मर्त्यलोके श्रीभगवदवतारात्तथा भजने मुख्यत्वाच्च । मनुष्याणामेव सुखेन तच्छ्रवणादिसिद्धेः । भूतानामिति पाठे निजावतारकारणभक्तसम्बन्धेन सर्वेषामेव जनानां विषयिणां मुमुक्षूणां मुक्तानाञ्चेत्यर्थः । इति परमकारुण्यमेव कारणमुक्तम् । तथापि भजनसम्बन्धेनैव सर्वानुग्रहो ज्ञेयः । अन्यैस्तु । तत्र बहिर्मुखानपीति तत्पर्यन्तत्वं विवक्षितम् । परमप्रेमपराकाष्ठामयतया श्रीशुकस्यापि तद्वर्णनातिशयप्रवृत्तेः । गोपीनामित्यस्यार्थान्तरे त्वेवं व्याख्येयम् । नन्वेवमपि नित्यवद्गुप्तमेव तथा क्रीडतु किं प्रापञ्चिकेभ्यस्तत्प्रकटनेन तत्राह । भक्तानां प्रपञ्चगतानामनुग्रहाय मानुषं देहं मर्त्यलोकरूपं विराड्देहांशमाश्रितः तत्र प्रकटोऽभूदित्यर्थः । "यस्य पृथिवी शरीर" मित्यादि श्रुतौ । तत्रापि तच्छरीरशब्दप्रयोगात् । मानुषशब्देन तल्लोकलक्षितत्वाच्च । अन्यत् समानम् अथवा तत्परो भवेदित्यत्र भक्तानां भूतानां बहुत्वाच्च ते कर्तृत्वेन विपरिणामादनुवर्त्तेरन् । व्याख्यान्तरे चाध्याहारादि कष्टतापत्तेव । भगवानिति तु तत्र तत्र व्याख्यानेऽपि प्रकरणादेव लभ्यते । तस्मात्तादृशीः क्रीडा असौ भजते याः श्रुत्वापि स्वयमपि तत्परो भवेत् यदा यदा शृणोति तदा तदासक्तो भवतीत्येवार्थः ॥ ३७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वतो निरतिशयानन्दस्य भाम्यचेष्टान्वयं परिहरति । अनुग्रहायेति ॥ ३७ ॥ ३८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवाप्तसमस्तकामस्य किं क्रीडाजन्यसुखलेशेनेति शङ्कां निराह । अनुग्रहायेति । भूतानामनुग्रहायास्मदादिभूताननुग्रहीतुं मानुषं मनुष्यस्येव संनिवेशविशिष्टं देहमास्थितः तादृशीरुक्तविधाः क्रीडा

[1] अयं पाठोऽत्र वीरराघवीये च व्याख्यासुचीश्रत इत्येव पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भजते ऽनुकरोति क्रीडात्ववान्तरप्रयोजनं भूतानुग्रहस्तु श्रीभगवदवतारस्य परमं प्रयोजनमिति भावः । अवतारस्य क्रीडार्थत्वं क्रीडायास्त्वनुग्रहार्थत्वमुक्तं कथं क्रीडाया अनुग्रहार्थत्वमित्यत्राह । याः क्रीडाः श्रुत्वा तत्परः श्रीभगवत्परो भवेत् जन इति कर्तृपदाध्याहारः मत्क्रीडाः शृण्वतो लोकस्य निरतिशयपुरुषार्थभूते मयि इष्टानिष्टप्रापणपरिहारदक्षे नितरामासक्तिर्यथा स्यादित्येवमनुग्रहाय क्रीडाः भजते नतु स्वयमपरिपूर्णो भजत इति भावः ॥ ३७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

स्वेच्छाविग्रहस्वीकारे निःस्पृहस्य किम्प्रयोजनमित्यत आह । अनुग्रहायेति । तादृशीं मानुषदेहक्रीडां चरितं श्रुत्वा तत्परः भगवानेव परो यस्य स तथा तस्मिन् तात्पर्ययुक्तो वा यद्वा स पुरुष इव जन्ममृत्युशून्यो भवेत् ॥ ३७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र च सति परैर्व्यूढत्वमासामसमञ्जसं बहूनां तेषां तस्मिन्नसूयायादि तदिति यन्मित्रं परमानन्दमित्यादिव्याहन्येत ॥ ३७ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु तर्हि रहस्यभूतामीदृशीं क्रीडां कथं भुवि प्रकटितवान् इत्यत आह । अनुग्रहायेत्यादि । भक्तानामनुग्रहाय तादृशीः क्रीडा भजते याः श्रुत्वा मानुषं देहमाश्रितो यः कश्चिदेव तत्परः श्रीकृष्णपरो भवेत् भक्तास्तावद्द्विविधा रसस्य वैविध्यात् तेन नानारसा एव लीलाः करोति तेषां स्वस्ववासनोपासनाभेदादिति भक्तानुग्रहार्थमेव लीलाः तास श्रवणात् कश्चिदेव मानुषदेहभाक् मुच्यत इत्यर्थः ॥३७॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तथापि एवङ्करणे कोऽभिप्राय इति चेत्तत्राह । अनुग्रहायेति । भक्तानामनुग्रहार्थमेव भक्तसमानरूपं देहमाश्रितः विजातीये तेषां विश्वासो न भवेदिति ततो यथा मनुष्यानुग्रहाय मानुषो देहः प्रदर्शितः एवं गोपिकानामप्यनुग्रहाय स्वानन्दं गोकुले दातुं तादृशीः क्रीडाः भजते तत्तद्धर्मप्रवेशव्यतिरेकेण तस्य तस्य दोषस्यानिवृत्तत्वात् यद्वा भक्तानां मानुषं देहं प्रति आस्था मज्जाताऽस्मिन्निति स तथा तथापि महान् पूर्णकामः सर्वं दातुं शक्तः नत्वेवं निषिद्धप्रकारेणात्मानं दातुमिति अत एतां लीलां निरोधपूर्वकादेयदानरूपां यः श्रोष्यति स सर्वथा भगवत्परो भविष्यतीति भगवता तथाचरणं कृतं तदाह यः श्रुत्वा तत्परो भवेदिति ॥ ३७ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

जुगुप्सितं किमभिप्रायं कृतवानिति द्वितीयप्रश्नस्योत्तरमाह । अन्विति । भक्तानामनुग्रहाय तादृशीः क्रीडाः भजते याः श्रुत्वा मानुषं देहमाश्रितो जीवः तत्परस्तद्विषयकः श्रद्धावान् भवेदिति क्रीडान्तरतो वैलक्षण्येन मधुररसमय्या अस्याः क्रीडायास्तादृशीः मणिमन्त्रमहौषधानामिव काचिदतर्क्या शक्तिरस्तीत्यवगम्यते । तथैव मानुषदेहवत एव तच्छ्रवणाधिकारित्वं मुख्यमित्यभिप्रेतम् ॥ ३७ ॥

श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

नन्वास्य कुतः क्रीडने प्रवृत्तिः कुतस्तरां लोकदृष्ट्या विगीते तस्मिन्नित्यत आह । अन्विति । भक्तानामिति—

मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः ।
इति पाद्मोक्तेः ॥

मानुषं नराकारमाश्रितः ब्रह्मस्वरूपेण सर्वाश्रयोऽपि स्वयमाश्रयं कृतवानिति नराकारस्य परब्रह्मत्वं च दर्शितं तदुक्तं हयशीर्षपञ्चरात्रे—

आनन्दो द्विविधः प्रोक्तो मूर्तश्चामूर्त एव च ।
अमूर्तस्याश्रयो मूर्तो भगवान् पुरुषोत्तमः ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य चेति श्रीगीतासु च ।

आश्रित इति पाठेऽप्यादरविषयः कृत इत्यर्थः । एवञ्च भक्तानुग्रहार्थं तथा क्रीडते इति स्थितिः नह्येषा कामक्रीडा नचैते परदाराः किन्तु परमात्मस्वरूपिण्याः श्रीराधायाः प्रतिबिम्बरूपाः प्रेमविशेषक्रीडापरिकराः नित्यसिद्धाः साधनसिद्धभक्तजनानुग्रहाय प्रकटीभूय निजभावभावितस्वान्तान् विधाय परिकरेषु प्रवेशयन्तीति कामविजय एव प्रकरणार्थ इति प्रेक्षावतां व्याख्या । आप्तकामत्वेऽपि भक्तानुग्रहो युज्यते विशुद्धसत्त्वस्य तथा स्वभावात् यद्भावितेचान्यत्रापि दृश्यतेऽसौ यथा रहूगणानुग्राहके जडभरते यथाच भवदनुग्राहके मयीति अत एव तादृशीः सर्वभक्तजनचित्ताकर्षणीः क्रीडा भजते याः श्रुत्वान्योऽपि जनस्तत्परो भवेत् नहि कामक्रीडाश्रवणेन लोकवेदविरुद्धपरदारविनोदश्रवणेनच कश्चित्तत्परो भवति नच भक्तेभ्योऽपि सा रुचितोचिता च प्रत्युत प्रेमविघातकत्वेन तद्विरुद्धैवेति यद्वा मानुषं देहमाश्रितः सर्वोऽपि जनस्तत्परो भवेदिति संबन्धः ॥ ३७ ॥

श्रीरामनारायणकृतभावभावविभाविका ।

तथापि सच्चिदानन्दघनस्य स्वानन्दपूर्णस्य मायया देहीव भानेविभोरपि स्वेच्छया क्रीडाप्रकाशे वा किंप्रयोजनमिति राज्ञः किमभिप्रायमेतद्यः संशयं छिन्धीति प्रश्नस्योत्तरमाह । अनुग्रहायेति । भूतानामनुग्रहाय प्रेमोद्दीपकशृङ्गारवात्सल्यादिरसोद्बोधाय स्वजातीयप्रतीतावेव वात्सल्यशृङ्गारादिरसे निःशङ्कता भवतीत्यभिप्रेत्य मानुषं देहमाश्रित इव निर्धारकवाप्यं देहीवाभातीतीवशब्दनिर्देशात् याः क्रीडा श्रुत्वैव श्रवणमात्रेणैव सर्वोऽपि जनो विषयिमुमुक्षुमुक्तानाङ्किमु वाच्यं विरुद्ध नास्तिकम्लेच्छादिरपि तत्परो भवेत् कृष्णलीलागाने

**नासूयन् खलु कृष्णाय मोहितास्तस्य मायया ।**
**मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ॥ ३८ ॥**

### श्रीरामनारायणकृतभावभावविभाविका ।

आधुनिकानां म्लेच्छादीनामपि तदर्थहृतचित्तत्वेनैव प्रवृत्तिदर्शनात्—

निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात्पुमान् विरज्येत विना पशुघ्नादित्यादि

वचनाच्च तादृशीः क्रीडा भजते नित्यसिद्धा एव प्रकटयति ॥ ३७ ॥

---

### श्रीधनपतिसूरिकृतगूढार्थदीपिका ।

नन्वस्त्वेवं तथापि लोकदृष्ट्या निन्दितस्य कर्मणोऽनुष्ठाने भगवतः कोऽभिप्राय इतिचेत्तत्राह । अनुग्रहायेति । भूतानां संसारिणामनुग्रहाय मानुषं देहमाश्रितः अतस्तादृशीः क्रीडा भजते याः श्रुत्वा तत्परः स्वक्रीडानुसन्धानपरो भवेत् तथाच शृङ्गाररसाकृष्टचेतसोऽत्यन्तबहिर्मुखा अपि मत्परा भूत्वा उद्धृताः स्युरित्यभिप्रायेण तदाचरामीति भावः ॥ ३७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नन्वेवं मास्तु जुगुप्सितकारित्वं तस्याप्तकामस्य जुगुप्सितेऽपि कर्मणि कुतः प्रवृत्तिरित्यत आह । अनुग्रहायेति । सः भूतानां तदानीन्तनानां गोप्यादीनां लीलायां केनापि प्रकारेणान्वितानां खेचरभूचराणामनुग्रहाय स्वप्राप्यप्राप्त्यसिद्धये तादृशीः क्रीडा भजते न केवलं तदानीन्तनानामेवानुग्रहाय किन्तु मानुषं देहमाश्रितः यः कश्चिदपि मनुष्यदेहगतो जीवः श्रुत्वा तत्परो भवेत् भगवदीयो भवेदित्यन्वयः ॥ ३७ ॥

---

### भाषा टीका ।

प्राणिमात्र के ऊपर अनुग्रह करने के वास्ते उनने मनुष्याकार देह को इच्छा से धारण किया है फिर ऐसी क्रीडान् को करते हैं कि जिनको सुनकर मनुष्य प्रीति करके उनकी भक्ति में तत्पर होजावें ॥ ३७ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वन्येऽपि भिन्नाचाराः स्वचेष्टितमेवमेवेति वदन्ति तत्राह । नासूयन्निति । एवं भूतैश्वर्याभावे तथा कुर्वन्तः पापा ज्ञेया इति भावः ॥ ३८ ॥

---



### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

तासु तन्निवारणमतिक्रम्य गतास्वपि कृष्णं प्रत्यसूयां न चक्रुः कुतः तस्य मायया शक्तिविशेषेण मोहिताः प्रत्युत साध्वेवामन्यन्तेत्यर्थः । यतो व्रजौकसः तल्लीलापरिकरा इत्यर्थः । अत एव गतानपि तान् स्वस्वपार्श्वस्थानेव मन्यमाना बभूवुः यद्वा दारान् प्रति च नासूयन् कुतः स्वपार्श्वस्थानेव मन्यमानाः तत्र तत्र पूर्वं ता वार्य्यमाणा इत्यनेन निजवाक्यमतिक्रम्य साक्षाद्गतानामपि तासां तैः स्वस्वपार्श्वस्थत्वमननं पुनर्निवृत्यागमनस्य मननादिति ज्ञेयं यद्वा भक्तानामनुग्रहायेत्युक्तं तत्र गोपानां दाराकर्षणेन तस्मै तेषामसूयासम्भवात् तेषु कथमनुग्रहः सिध्येदित्याशङ्क्य तत्रोत्तरं वदन् प्रकृतञ्चानुसरति । नेति । अर्थः स एव ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु भवतु परमात्मत्वेन वा नित्यमेव ताभिः प्रेयसीभिः सह विहारित्वेन वा तासु तत्परदारत्वस्य प्रत्याख्यानं तत्र प्रथमः पक्षस्त्वध्याहारादिना कथञ्चित् स्थापित एव । अथ नित्यप्रेयसीत्वेनोत्तरपक्षश्चेत्तर्हि हन्त कथं तासां परदारत्वं श्रूयते । येन तासामन्यत्र विवाहोऽपि संप्रति लभ्यते । ततश्च तं प्रति जन्मान्तरे विवाहप्राप्तत्वेन तासां तत्तत्पत्नीत्वमेव स्यात् । ततश्च तत्परता कारणाय भक्तानामनुग्रहाय तादृशीः क्रीडा भजते इति चेत्तर्हि तेषां दाराकर्षणेन तं प्रत्यसूयासम्भवात्तेषु व्रजवासित्वात् परमभक्तेषु कथम्वानुग्रहः सिध्येत् कथम्वा तासु तन्नित्यप्रेयसीषु तादृशादुरवस्थायास्तेषु परमभक्तेषु च तादृशातद्वर्णनस्य श्रवणेन परेषामपि भक्तानां तत्परता स्यात् । तत्र पाठक्रमादन्वयक्रमो बलीयानिति तत्क्रमेण सिद्धान्तयति । नासूयन् खलु कृष्णाय इति । खलु निश्चये यस्मात् व्रजौकसः तस्मात् कदाचिदपि कृष्णाय नासूयन्नित्यर्थः । यद्धामार्थे सुहृत्प्रियात्मतनयेति तं प्रति ब्रह्मवचनात् । कृष्णेऽर्पितात्मसुहृदर्थकलत्र कामा इति राजानं प्रति श्रीशुकवचनाच्च । ननु तथाप्यनुग्राह्यानां जानतामजानताञ्च स्वयं तथानिष्टकरणमसमञ्जसम् । तत्रोच्यते । यदि तेषां विवाहतोऽपि ता दाराः स्युस्तर्हि तथा त्वमेव । यदि तेषां भ्रममात्रेण व्यूढतया प्रतीताः वस्तुविचारेण तु तस्यैव दारास्तेन तदाकर्षणं तासां श्रुतमिति श्रुतार्थान्यथानुपपत्त्या "दृशा पवित्रेण गृहं संमार्ष्टी"त्यादिवद्वावृत्त्यान्वयः क्रियते । तत्र चायमर्थः । तस्य मायया प्रेमवैचित्रीरचनाय विचित्रलीलासमुल्लासिकया योगमायया मोहिताः सन्तस्ते तस्य दारान् स्वान् मन्यमानाः स्वस्वपार्श्वस्थांश्च मन्यमाना इति । तदेवं तस्येत्यस्य द्विधान्वयभेदो दर्शितः । तत्र पूर्वस्यान्वयविभेदस्यायमभिप्रायः योगमायाकल्पितानामन्यासामेव तैर्विवहनं संप्रवृत्तं ननु भगवन्नित्यप्रेयसीनामिति तथा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तासां तदानीं मायया गोपितानां मोहितानाञ्च न तद्वृत्तं ज्ञातमासीदन्यतः श्रुतमपि तदनभीष्टमेवासीदिति तासु तेषां दारत्वस्य मननमात्रं नतु वास्तवत्वम्। तथा तेषु तासां पतित्वञ्च मनसा त्यक्तमेव इत्येवं तासां तैर्विवाहसम्बन्धो न जात इति यतो नासूयन्नित्यनेन गुणेऽपि दोषारोपं नाकुर्वन्निित्येव मयोक्तं नतु नैर्घृण्यमिति अथोत्तरस्यान्वयविभेदस्यायमभिप्रायः। रासाद्यर्थं तेन तासां कर्षेण योगमायाकल्पितानां संज्ञाकल्पितच्छायावत्तत्तत्प्रतिरूपाणामन्यासामनुभावेन तानेव ते स्वपार्श्वस्थान् मेनिरे ततोऽपि न दोषप्रसङ्ग इति। ननु श्रीभगवत्प्रेयसीनां तासां कदाचिदपि यदि बलात्तच्छायानिवेशः स्यात्तर्हि महानेव दोष इत्याशङ्क्य द्वितीयेनैवान्वयविभागार्थेन सिद्धान्तं कृतवान् स्वपार्श्वस्थांश्च मन्यमाना इति विवाहयदेव तत्र मायया वञ्चितास्त इति भावः। एतदेवाह ताः प्रति स्वयमेव श्रीभगवान्। निरवद्य संयुजामिति। एतदेव च गर्गवाक्येन कैमुत्याल्लभ्यते "य एतस्मिन् महाभागे प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुरा" इति। तदेवमेव ब्रह्मणा। "श्रियः कान्ताः कान्तः परमपुरुष" इति प्रोच्यान्यथात्वं मायिकमेवेति दृढीकृतमिति। अत्रेदमपि विचार्यते। ता वार्यमाणा इत्यादौ यत्तासां पतिम्मन्यादिभिर्निवारणं श्रूयते तत् किमुत श्रीकृष्णाकर्षणमज्ञात्वा ज्ञात्वा वा। यद्यज्ञात्वा तर्हि तत्रासूया न घटत एवेति न पूर्वः पक्षः सङ्गच्छेत ततश्च तन्निराकरणं व्यर्थमेव स्यात्। यदि च ज्ञात्वा तर्हि तासां स्वपार्श्वस्थता दर्शनान्निजजनिवारणप्रतिपालनं मत्वा ताभ्यो नासूयेयुर्नाम तदाकर्षणकर्तृक श्रीकृष्णायासूयेरन्नेवेति पूर्वपक्षः सङ्गच्छेत। तासां तत्तत्पार्श्वस्थता तु सिद्धान्ताय न कल्पते। तस्मात्तदिदं वक्तव्यम्। तदा श्रीकृष्णेन तासामाकर्षणं बुद्धिपूर्वकमिति तैर्नावगतम्। तथाहि विद्याविशेषमयत्वात् खल्वसौ वंशीनादस्तासामेव कर्णं प्रविष्टो न पुनरन्येषाम्। सर्वकर्णप्रवेशश्चेत्तर्हि शयनावसरप्राप्तं निजशयनगृहं हित्वा कथमसौ निशि विदूरनिर्जनवनं गत इति वितर्क्य मातरः पित्रादयः सर्व एव महत्या शङ्कया तत्र गच्छेयुः। तस्मादौत्पत्तिकादेव माधुर्यान्मुहुः सर्वमेव कर्षत्यसाविति अनुभूय तासामपि तद्दर्शनार्थं गमनमाशङ्क्यते किंत्वसमयत्वाद्भिर्निवारितम्। तथापि यद्यखण्डमपि रात्रिं तत्रामूः स्थिता इति ज्ञायेत तदा व्रजवासिन्यास्तेषामसूयायास्तत्रासम्भवेऽपि तदाभासः स्यादेव यथा सोऽयमस्माकं जीवनादि मूलम्। सचायमखण्डानिशि परवधूनां निजनिकटस्थितिम मोदमान आसीदिति तस्य लोकधर्म मर्यादामङ्गलानिक्रमसमनुमाय विस्मितानां तेषां तन्मङ्गलचिन्तामयएवायमनावः कोपमय इवेति तदाभासत्वमेव तत्र लभ्येत येन ते वधूभ्यः कन्याभ्यश्चासूयेयुः। तासां स्वपार्श्वस्थतया दर्शनात्तु सोऽपि नासीदिति कुतस्तरामसूयावकाश इति। एतदभिप्रेत्यैव युगान्तरगतांस्तत्प्रेयसीनां तासां गोत्रप्रवर्त्तकान् गोपान् प्रति श्रीविष्णुना सोऽयं वरोदत्तः। यथा पाद्मे सृष्टिखण्डे। "यदानन्दप्रभृतयः अवतारं धरातले। करिष्यन्ति तदा चाहं वसिष्ये तेषु मध्यतः। युष्माकं कन्यकाः सर्वा रमिष्यन्ते मया सह। तत्र दोषो न भविता न रोषो नच मत्सर" इति। किञ्च स्वरूपेणैव यस्य पर्याप्ति र्न भवति तत्रोपाधिस्वीकारानर्थक्यमिति व्रजौकस्त्वेनैव श्रीकृष्णं प्रति तेषामसूयानुत्पत्तिर्व्याख्याता। मायामोहितत्वं तत्र हेतु र्विरुद्ध एव। तन्मोहिता एव तं प्रत्यसूयां कुर्वन्ति नतु तदमोहिता इति। तस्मान्मोहिता इत्यादेरन्यभागेनैव सङ्गतिः। तत्र प्रयोजनञ्च श्रीकृष्णस्य यदसमञ्जसत्वं कैश्चित्तर्क्येत तथा यत्तेषां श्रीकृष्णमङ्गलचिन्तामय भाव एवासूयत्वेन प्रतीयते तयोर्निरसनमेव। तत्र माययेति करणं चेत्तर्हि कर्त्रपेक्षया तस्येत्यत्र तेनेत्येव प्रयुज्येत। यदि च हेतुत्वं तर्हि मोहिता इति न प्रयुज्येत। ततः कर्तृरूपैव सेति लभ्यते। तस्यास्तद्रूपत्वेन निर्देशश्च। प्रियजनप्रेममयलीलाविष्टस्य तस्य प्रेरणं विना सार्वभौमस्य परमदक्षप्रतिनिधिरिव तामन्तरान्तरलब्धां तल्लीलां पूर्वपूर्वतादृशतल्लीलाक्रममनुक्रम्य समुत्कर्षविलसद्रसतां सा नयतीति विवक्षया। तदेवमेव च दर्शितम। योगमायामुपाश्रित इति। तदेवं तस्यास्तदीयत्वे प्रकरणेन लब्धे सति तस्येति पदस्य पूर्वत्र नातिप्रयोजकत्वात् श्रुतार्थान्यथानुपपन्नत्वाच्च तस्य दारान् स्वान् स्वान् स्वपार्श्वस्थांश्च मन्यमाना इति परेणापि योजयित्वा सार्थकतां समर्थयद्भिस्तासु श्रीकृष्णस्यौपपत्यं तासामन्यशय्यानिवेशः श्रीकृष्णाय व्रजवासिनामसूयाभासस्तस्यामसमञ्जसत्वञ्च परिहृतमिति। तत्र तस्य मायया ये स्वे स्वे दारास्तान् स्वपार्श्वस्थान् मन्यमानाः भगवत्प्रेयस्यवस्थानानर्हसमये तदभेदनानुभवन्तः यतो मोहितास्तयैवेति च योजयन्ति। यतः पातिव्रतानामपि न परात्परिभवः सम्भवति। किमुत य एतस्मिन् महाभाग इति गर्गवचनानुसारेण श्रीभगवत्पराणां किमुत तत्प्रेयसीनामिति गम्यम्। अतः कूर्मपुराणे उत्तरविभागे द्वात्रिंशदध्यायस्यान्ते तदिदमुपोद्बलकमस्ति। यथा। "पातिव्रता धर्मपरा रुद्राण्येव न संशयः नास्याः पराभवं कर्त्तुं शक्नोतीह जनः क्वचित्—

यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता।<br>
पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम्॥

रामस्य भार्यां विमलां रावणो राक्षसेश्वरः।<br>
सीतां विशालनयनां चकमे कालचोदितः॥

गृहीत्वा मायया वेशं चरन्तीं विजने वने।<br>
समाहर्त्तुं मतिञ्चक्रे तापसः किल भाविनीम्॥

विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम्।<br>
जगाम शरणं वह्निमावसथ्यं शुचिस्मिता॥

उपतस्थे महायोगं सर्वदोषविनाशनम्।<br>
कृत्वाञ्जलिं रामपत्नी साक्षात् पतिमिवाच्युतम्॥

नमस्यामि महायोगं कृतान्तं गहनं परम।<br>
दाहकं सर्वभूतानामीशानं कालरूपिणमित्यादि।

इति वह्निं पूज्य जप्त्वा रामपत्नी यशस्विनी।<br>
ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा॥

अथावसथ्याद्भगवान् हव्यवाहो महेश्वरः।<br>
आविरासीत् सुदीप्तात्मा तेजसैव दहन्निव।

सृष्ट्वा मायामयीं सीतां स रावणवधेप्सया॥<br>
सीतामादाय धर्मिष्ठां पावकोऽन्तरधीयत।

तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

समादाय ययौ लङ्कां सागरान्तरसंस्थिताम् ।
कृत्वा च रावणवधं रामो लक्ष्मणसंयुतः ॥
समादायाभवत् सीतां शङ्काकुलितमानसः ।
सा प्रत्ययाय भूतानां सीता मायामयी पुनः ॥
विवेश पावकं दीप्तं ददाह ज्वलनोऽपि ताम् ।
दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ॥
रामायादर्शयत् सीतां पावकोऽभूत् सुरप्रियः ।
प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा ॥
चकार प्रणतिं भूमौ रामाय जनकात्मजा ।
दृष्ट्वा हृष्टमना रामो विस्मयाकुललोचनः ॥
ननाम वह्निं शिरसा तोषयामास राघवः ।
उवाच वह्ने ! भगवन् किमेषा वरवर्णिनी ॥
दग्धा भगवता पूर्वं दृष्टा मत्पार्श्वमागता ।
तमाह देवो लोकानां दाहको हव्यवाहनः ॥
यथा वृत्तं दाशरथिं भूतानामेव सन्निधौ ।
भर्तृशुश्रूषणोपेता सुशीलेयं पतिव्रता ॥
भवानी पार्श्वमानीता माया रावणकामिता ।
या नीता राक्षसेशेन सीता भगवता हृता ॥
मया मायामयी सृष्टा रावणस्य वधाय सा ।
यदर्थं भवता दुष्टो रावणो राक्षसेश्वरः ॥
मयापसंहृता चैव हतो लोकविनाशनः ।
गृहाण विमलामेतां जानकीं वचनान्मम ॥
पश्यन्नारायणं देवं स्वात्मानं प्रभवाप्ययम् ।
इत्युक्त्वा भगवांश्चण्डो विश्वार्चिर्विश्वतोमुखः ॥
मानितो राघवेन्द्रेण भूतैश्चान्तरधीयतेति ।

तस्मात्तद्वावसत्थ्याग्निवत्तलीलायामुपाश्रिता योगमायापि तत्र साहाय्यं कुर्यादेवेति गम्यते । ततः प्रस्तुतमेवानुसन्धीयताम् ॥ ३८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वेवमप्युक्ताभिप्रायेण क्रीडाः भजन्तं तदभिप्रायानभिज्ञा गोपीनां पतयः किंनाभ्यसूयन्नित्यत्राह । नेति । व्रजौकसः गोपीनां पतयः तस्य कृष्णस्य मायया मोहिताः स्वस्वदारान् स्वस्वपार्श्वस्थानेव मन्यमानाः कृष्णाय नासूयन् दोषबुद्ध्या न ददृशुः कृष्णायेत्यत्र क्रुधद्रुहे त्यादिना चतुर्थी ॥ ३८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वैरिणीवृत्तिमाश्रितानां गोपीनां ग्रहणं तद्भर्तृभिः कथञ्च कृतं कथञ्च कृष्णे दोषाविष्करणमकृतमत्राह । नेति । गुणेषु दोषाविष्करणमसूया "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप" इति चतुर्थी ॥ ३८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्राह । नासूयन्निति । तद्दिनमुपलक्षणमेव किन्तु विवाहादि सर्वावस्थास्वपि तथा ज्ञेयं सिद्धान्तरसव्याघातात् । मायानिर्मितान् स्वान् दारान् स्वपार्श्वस्थानेव मन्यमाना इति तत्राह यन्मित्रमिति यद्धामार्थ सुहृदित्यादि न्यायेनासूयाप्यत्र लोकरीतिरक्षणार्थं तदाभास एव च ज्ञेयः । नन्वाप्तकामस्य कुतः क्रीडने प्रवृत्तिः कुतस्तरां वा वहिर्दृष्ट्या लोकगीते तस्मिन् इत्यत आह । अन्विति भूतानामिति पाठेऽपि भक्तानामेव सम्बन्धेनैवान्येषामनुग्रहो ज्ञेयः । अथवा नन्वेवमपि नित्यवत् गुप्तमेव तथा क्रीडतु किं प्रापञ्चिकेभ्यस्तत्प्रकटनेन तत्राह भक्तानां प्रपञ्चगतानाम् । मानुषं मर्त्यलोकरूपं विराड्देहांश्च समाश्रितः तत्र प्रकट इत्यर्थः । तत्र वस्तुनोऽपि प्रभावमाह । याः श्रुत्वेति अन्योऽपीति शेषः ॥ ३८—४० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रकृतमाह । नासूयन्नित्यादि । असूयाभावे हेतुमाह । मोहितास्तस्य मायया योगमायया मोहिताः मोहप्रकारमाह । मन्यमाना इत्यादि । योगमायैव तासां छायारूपा दारा आविष्कारयामास॥३८॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तथापि लोकव्यवहारे स्त्रियोऽन्याधीना इति अदत्तोपादाने गोपानां मनसि खेदस्तैः क्रियमाणा अपकीर्त्तिश्च न भवेदित्याशङ्क्याह । नासूयन्निति । ते भगवन्तं नासूयन् असूयया न दूषयन्तः प्रथमतः प्रवृत्तिं ज्ञात्वापि भगवन्मायया मोहिता नासूयन् अग्रेतु स्वपार्श्वस्थानेव स्वान् स्वान् दारान् मन्यमाना जाताः यतो व्रजौकसः पूर्वापरानुसन्धानरहिताः सर्वथाङ्गीकृता इति वा एतादृशानां प्रभौ दोषारोपासम्भवादिति भावः । अयमर्थः सर्वजनीन इति खल्वित्युक्तं भगवत्सांनिध्येऽपि मोहार्थं तस्येति बुद्धिरेव तेषां भ्रमात् शिष्टं भगवत एवेति मननमात्रेणैव सर्वदोषपरिहारः अनेन नास्मिप दोषारोपो निवारितः ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नन्वेवं सर्वास्वेव निशासु गोपस्त्रीभिः सह विहरति भगवति तासां पतयश्च श्वशुरादयः स्वस्वगृहेषु ताः स्वस्वभार्या भगवते तस्मै कथं नाकुप्यंस्तत्राह । नेति । मायया योगमाययैव ननु बहिरङ्ग मायया । भगवत्परिवारेषु तस्या अधिकाराभावात् तन्मोहितानाञ्च भगवद्वैमुख्यस्यावश्यम्भावात् । तेषां गोपानान्तु भगवद्वैमुख्यमात्रादर्शनात् । तया मोहनञ्च गोपीषु कृष्णमभिसृतवतीषु तादृशीस्तावतीरेव गोपीः सृष्ट्वा तान् दर्शयित्वैव । अतः स्वान् स्वान् दारान् स्वपार्श्वस्थानेव मन्यमानाः । यदुक्तमुज्ज्वलनीलमणौ । "मायाकल्पिततादृक्स्त्री शीलनेनानुसूयुभिः । न जातु व्रजदेवीनां पतिभिः सह सङ्गम" इति । ततश्च योगमायायाश्चिच्छक्तिवृत्तित्वात् तत्कार्याणामपि नित्यसत्यौचित्यात् सर्वमायिकप्रपञ्चनाशेऽपि तेषां पार्श्वस्थदाराणां तेषु स्वस्वभार्याभिमानस्य च नित्यसत्यत्वमेव मन्यमाना इत्यभिमानमात्रं ननु योगमायाकल्पितानामपि तासां पतिभिः

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सम्भोग इति तासां तदाकारतुल्याकाराणामन्यसंभुक्तत्वस्यानौचित्यात् अत एव स्वपार्श्वस्थानितितु स्वतल्पस्थानित्युक्तम् । तच्च समाधानं योगमाययैव । तत्पतीनां तासु कामभावानुत्पादनात् कृतामिति ज्ञेयम् । श्रीभगवत्पार्श्वात् स्वस्वगृहं प्रति गोपीनाआगमनसमये मायिकगोपीनां माययैवान्तर्द्धापनमपि ज्ञेयम् ॥ ३८॥

---

### श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका ।

ननु भवतु नित्यासिद्धानां तथात्वं साधनश्रुतिमुनिरूपाणांतु पत्यादिश्रवणात्पतिसुतान्वयभ्रातृवान्धवानित्यादिना तास्वपि तथात्वोद्भावनात्तत्पत्यादिषुच परमभक्तेषु कापट्याचरणेनासूयोदयात्कथमनुग्रहः सिध्येत् इत्यत आह । नेति । व्रजौकसः कृष्णेर्पितात्मसुहृदर्थकलत्रकामा इत्यादिना प्रसिद्धाः प्राग्दर्शितनिजलोकगतत्क्रीडासुखाः कृष्णं च तत्र तत्क्रीडासक्तमेव छन्दोभिः स्तूयमानं दृष्ट्वातिविस्मिताः सन्तो नासूयन् तत्र हेतुः मोहिता इति अत्र पीतमन्यत्वमेव मायामोहितत्वं सुतरां च तद्गमनाद्यपरिचय इति अन्यथा तत्तद्धर्श्वने श्रीभगवत्यसामञ्जस्यं प्रसज्येतैव कथम्भूताः स्वान् स्वान् दारान् तथात्वेन मायाकल्पितान् स्वपार्श्वस्थानेव मन्यमानाः एवञ्च ता वार्य्यमाणाः पतिभिरित्यादिकमपि मायाकल्पितैरेव तैरिति व्याख्यानं सुसङ्गतं तेषां वास्तवत्वे तत्परिज्ञानेच दुरुद्धारदोषप्रसक्तिरित्यवधेयम् आसाञ्च गोत्रप्रवर्त्तकान् गोपान् प्रति प्रागेव श्रीविष्णुना सोऽयं वरो दत्तः यथा पाद्मसृष्टिखण्डे—

> यदा नन्दप्रभृतयः अवतारं धरातले ।
> करिष्यन्ति तदाचाहं वसिष्ये तेषु मध्यतः ॥
> युष्माकं कन्यकाः सर्वा रमिष्यन्ते मया सह ।
> तत्र दोषो न भविता न रोषो नच मत्सरः इति

निखिलं निरवद्यं प्रसिद्धव्याख्यायां तु दोषोऽपरिहार्य्य इत्युपेक्षिता ॥ ३८ ॥

---

### श्रीरामनारायणकृतभावभावविभाविका

ननु मुख्यभक्तानां व्रजवासिनां स्वपत्नीत्वाभिमतानामपकर्षणेनासूयाजनकाः क्रीडाः कथं सर्वभूतानामनुग्रहाय भवन्तीत्यपेक्षायां तेषां तदनुसूयकत्वं दर्शयति । नासूयन्निति । यतस्ते व्रजौकसः सच कृष्णोऽतस्ते तस्मै नासूयन् यच्चामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते इति ब्रह्मवचनात् कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामाइत्यादिशुकोक्तेश्च तेषां व्रजवासिनां साक्षात्कृष्णे नित्यानन्दरूपतया सर्वप्रेमास्पदे विशेषतः स्वमनः कर्षकेऽसूयाद्यभावः किमु वाच्यम्—

> न क्रोधो नच मात्सर्य्यं न लोभो नाशुभा मतिः ।
> भवन्ति कृतपुण्यानाम्भक्तानाम्पुरुषोत्तमे ॥

इत्यादिस्मृतिभिः समानभक्तानां यत्र कुत्रापि विद्वेष्यादावप्यसूयाद्यशुभमत्यभावनिर्द्धारदर्शनात् अतो व्रजौकस्त्वादेव यथा तस्य मायया मोहिता असूयादि कुर्वन्ति तथा नासूयन्नित्यन्वयः यद्वा मायया मोहितास्तस्य दारान्नित्यप्रियास्ततच्छ्रुतिदेवतावत्स्वान्स्वान् मन्यमाना अपि तया माययैव तान् सीतासंज्ञादिच्छायाकारानिव प्रतिभासमानान् स्वपार्श्वस्थान् मन्यमाना असूयानिमित्तस्यैवाभावाच्च नासूयन् तथाच ताः पूर्वोक्तप्रमाणैः कृष्णप्रेयस्य एव ब्रह्मवत्सहरणे भगवतस्तत्तदाकारत्वापत्तौ तद्विवाहाच्च विवाहेनापि तत्सम्बन्धः कात्यायनीपूजनभगवद्वरदानादेरप्यन्यथाभावानौचित्यात् तासां नित्यदा तत्सम्बन्धप्रतीतिरपि रासनिशि तासां भगवद्विहारनिर्द्धारेऽपि स्वपार्श्वस्थत्वप्रतीतिवदेवेति न भगवतः परदारसंबन्धो न वा भगवत्प्रेयसीनामन्यगोपादिसंबन्धइत्यनद्यं यद्वा ते व्रजौकसः कृष्णाय नासूयन् यतस्तस्य मायया कृपया "माया दम्भे कृपायाञ्च" ति कोशात् यद्वा तस्य मा प्रमा यया तया भक्त्या मोहिता मा प्रमा यथार्थमतिरूहिता येषां तथाभूताः स्वान् स्वांल्लौकिकभ्रान्त्या स्वीयत्वेन देहसम्बन्धितया प्रतिभासमानानपि तस्य परमात्मनः स्वस्वात्मभूतस्यैव दारान् मन्यमानाः तत्पार्श्वगतानपि तस्य स्वात्मत्वात्स्वपार्श्वस्थानेव मन्यमाना इति ॥ ३८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु एवम्प्रवृत्ते भगवति तत्पतीनामसूया कथंनोत्पन्नेत्याशङ्क्याह । नेति । व्रजौकसां तत्पतयः कृष्णाय नासूयन् यतस्तस्य योगमायया मोहिता ननु कोऽसौ मोहो मूर्च्छारूपः किम्वान्यथाभावरूप इत्यपेक्षायामाह । स्वान् स्वान् दारान् स्वपार्श्वस्थान्मन्यमानाः एतेनान्येऽपि भिन्नाचाराः स्वचेष्टितमेव वदन्तीत्याशङ्कापि निरस्ता यथोक्तैश्वर्य्यरहितानामन्यथाचरणे पापिष्ठत्वावगमात्तस्मान्न तदेव चरितं चरेदित्युक्तत्वादेवं विधा प्रवृत्तिर्न कस्यापि मनुष्यस्यैवेति भावः ॥ ३८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य गोपगोप्यादीनां हितायावतीर्णस्य सर्वेश्वरस्य मायया कृपया मोहिताः वशीभूताः स्वान् स्वान् दारान् स्वपार्श्वस्थान् स्वकीयो यः कुलतः व्रजेशसूनुत्वात् गोवर्द्धनोद्धरणादिना च रक्षकत्वात् वैकुण्ठप्रदर्शनत्वेन परमप्राप्यत्वात् शास्त्रदृष्ट्या च स्वात्मत्वात् एवम्भूतस्य स्वस्य श्रीकृष्णस्य पार्श्वे स्थितान् मन्यमाना नासूयन् ॥ ३८ ॥

---

### भाषा टीका ।

उहां व्रज में भगवान् की माया से सब व्रजवासी मोहित होगये उनने अपनी अपनी स्त्रियों को अपने ही पास में रही जाना फिर श्रीकृष्णचन्द्र पर कोइ विषम भाव नहीं किया ॥ ३८॥

---

ब्रह्मरात्र उपावृत्ते वासुदेवानुमोदिताः ।
अनिच्छन्त्यो ययुर्गोप्यः स्वगृहान् भगवत्प्रियाः ॥ ३९ ॥
विक्रीडितं व्रजवधूभिरिदं च विष्णोः श्रद्धान्वितोऽनुशृणुयादथ वर्णयेद्यः ।
भक्तिं परां भगवति प्रतिलभ्य कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीरः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे रासक्रीडायां
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते ॥ ३९ ॥

भगवतः कामविजयरूपरासक्रीडाश्रवणादेः कामविजयमेव फलमाह । विक्रीडितमिति । अचिरेण धीरः सन् हृद्रोगं काममाशु अपहिनोति परित्यजतीति ॥ ४० ॥

सेयं श्रीपरमानन्दसेविश्रीधरनिर्मिता ।
श्रीभागवतभावार्थदीपिका दशमाश्रया ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

वासुदेवेन चित्ताधिष्ठात्रा तेनैव अनुमोदिताः अन्तः प्रेरिता अपि यद्वा वसुषु अष्टासु दीव्यतीति वसुप्रवरो द्रोणरूपः श्रीनन्द एव तत्पुत्रो वासुदेवस्तेन भगवत्ताप्रकटनपरेण श्रीकृष्णेन व्रजमङ्गलार्थमनुज्ञाताः किम्वा अनु निरन्तरं मोदिताः हर्षिताः अत एवानिच्छन्त्यः तथापि स्वस्वगृहान् ययुः कुतः भगवत्प्रियाः तत्प्रीतिमालोच्येत्यर्थः । अन्यथा तातमातृवयस्यवर्गसन्तोषणगोपालनादेस्तथा पूर्ववद्रासक्रीडादिसुखस्य चासम्पत्तिः तत्तदसम्पत्त्या भगवतो माधुर्य्यविशेषासिद्धिश्चेति दिक् ॥ ३९ ॥

व्रजे या वध्व इव नवयुवत्यः यद्वा रासक्रीडया तत्पत्नीत्वमिव प्राप्तास्ताभिः इदञ्च रासक्रीडालक्षणं विशिष्टं क्रीडितं क्रीडां चकारात् ईदृशमन्यदपि किम्वा त्वर्थेचशब्दो ऽन्यतो विशेषात विष्णोरिति तासां मध्ये द्वयोर्द्वयोरित्याद्युक्तव्यापकत्वाभिप्रायेण श्रद्धान्वित इति अन्यथा रसानुदयेन परमभक्त्यसम्पत्तिः श्रद्धान्वितत्वादेव अनु निरन्तरं शृणुयात् एतच्च तथैव यद्वा नु निश्चितम् अथ श्रवणानन्तरं श्रद्धान्वितत्वात् यद्वा विकल्पार्थे ऽनुवर्णयेद्वा किम्वा अनु उक्तसमुच्चये स्मरेच्च प्रत्येकं सर्वेषां परमभक्तिसाधनत्वात् तथापि श्रवणादित्रयस्यास्य यथोत्तरं तत्र श्रैष्ठ्यमित्यधिकारित्वापेक्षा निरस्ता परां परमां प्रेमलक्षणां प्रतिक्षणं नूतनत्वेन लब्ध्वा हृद्रोगरूपं काममिति भगवद्विषयकः कामविशेषो व्यवच्छिन्नः तस्य परमामृतत्वेन तद्वैपरीत्यात् धीरः सर्वार्थेतश्चेवत्ता अपुनः कामादिक्षुभितचित्तो वा हृद्रोगत्यागादिकमेतत्परमभक्तेरानुषङ्गिकं फलं तस्या एव मुख्यफलत्वात् तत्क्रीडाश्रवणादिनाप्येतत् स्यात् किम्वक्तव्यं लौकिकनिन्द्यकामक्रीडावन्न तस्य सा क्रीडेति प्रसङ्गानुसारेण तात्पर्यं कल्प्यम् अतस्तस्य तासाञ्च स कामविशेषः प्रेमपरिपाकविलासविशेषरूप एव नतु प्राकृत इति लिखितमेव विवृतञ्च श्रीभागवतामृते अन्यत्तैर्व्याख्यातं यद्वा धीरः विचारयन् सन्नित्यर्थः । कामं यथेष्टमाशु भक्तिं प्रतिलभ्य हृद्रोगमाधिं श्रीकृष्णाप्राप्त्यादिकृतमचिरेणापहिनोति तत्प्राप्तेरिति भावः अन्यत्समानम् ॥ ४० ॥

क्रीडता बहिरन्तश्च जनोऽयं येन नर्त्यते ।
तस्य चैतन्यरूपस्य प्रीत्यै भगवतोऽस्त्विदम् ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिण्याम्
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेतत् प्रासङ्गिकं समाप्योपसंहरन् परमसुखामृतसिन्धुमवगाढानामपि तासामतृप्तिमाह । अनिच्छन्त्योऽपि गोप्यः स्वगृहान् ययुः तेन समं विहारेणैव व्रजं निकटप्रायमागत्य स्वस्वगृहवर्त्मानि जगृहुरित्यर्थः । तत्र हेतुः ब्रह्मेति तत्कालस्य गृहगमनायैव योग्यत्वादित्यर्थः । ननु तदर्थत्यक्तसर्वाणां तासां कथं तदपेक्षा तत्राह । वसुदेवोऽत्र प्राग्जन्मनि वसुषु विराजितत्वात् व्रजेश्वर एव । गोकुललीलायां तदर्थं तस्यैव सान्निध्यात् ततश्चापत्यार्थेऽपि तेन तस्यापत्यतयापेक्षिततदनुस्मरणार्हप्रातःकालेन अनुमोदिताः पुनराशु स्वसङ्गदानाद्यङ्गीकारस्तुत्यादिभिः कारितानुमोदना इत्यर्थः । इत्थंविशेषेण तत्सान्निकटे सर्वदा एव सता क्रीडता चानुमोदिता इति प्रत्येकमन्यनुनयो दर्शितः । ऐश्वर्यार्थस्त्वेतु तेनाप्यनुनयात् तासां माहात्म्यं दर्शितम् । यद्वा । वसुदेवं तासां शुद्धमन्तःकरणम् । "सत्त्वं विशुद्धं वसुदेवशब्दित" मिति श्रीशिवोक्तेः । प्रेम्णा तदधिष्ठात्रेति तत्र सत्यमुक्तम् । ननु ताभिर्लब्धदुर्लभसङ्गानन्दस्य तस्य त्यागे तद्यत्नेनाप्यनुमोदनं कथमिव घटेत प्रेमवशान्यपक्षेऽपि तत्सङ्ग एव प्रेमफलमिति तद्ध्यानादावपि कथं तद्वशत्वं तत्राह ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवानेव प्रियो यासां ताः । भगवतः प्रेयस्यो या अतः दुस्त्यजमपि ताः सहन्ते ननु तत्सङ्कोचलेशमपीति भावः । सत्पुरुषाणां प्रेयसीवशत्वेऽपि लज्जा मर्यादा दाक्षिण्यादिभिस्तदेकसङ्कल्पत्यागस्य दर्शनादिति च भावः ॥ ३६ ॥

अथ तादृशलीलाश्रवणादेरपि प्राकृतकामविरोधित्वेन श्रीभगवत्प्रेमावहत्वेन च कैमुत्यात्तल्लीलायाः परमभक्तिफलरूपत्वं दर्शयित्वा पूर्वसिद्धान्तमेवोत्कर्षयन् तल्लीलावर्णनसमाप्तौ सुखावेशेनोत्तरकालभावि तच्छ्रोतृवक्तृजनानाशिषयन्निव च स्वाभाविकतत्फलं कथयति । विक्रीडितमिति । विशिष्टां क्रीडां चकारादीदृशमन्यदपि विष्णोरिति तासां मध्ये द्वयोर्द्वयोरित्याद्युक्तव्यापकत्वाभिप्रायेण श्रद्धया विश्वासेनान्वित इति । तद्विपरीतावज्ञारूपापराधनिरसनार्थञ्च नैरन्तर्यार्थञ्च । तच्च फलवैशिष्ट्यार्थम् अतएव योऽनु निरन्तरं शृणुयात् अथानन्तरं स्वयं वर्णयेच्च उपलक्षणञ्चैतत् स्मरेच्च भक्तिं प्रेमलक्षणां परां श्रीगोपिकाप्रेमानुसारित्वात् सर्वोत्तमजातीयाम् । प्रतिक्षणं नूतनत्वेन लब्ध्वा । हृद्रोगरूपं काममिति भगवद्विषयः कामविशेषो व्यवच्छिन्नः । तस्य परमप्रेमरूपत्वेन तद्वैपरीत्यात् । काममित्युपलक्षणमन्येषामपि हृद्रोगाणाम् । अन्यत्र श्रूयते । "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परा" मिति । अत्र तु हृद्रोगापहानात् पूर्वमेव परमभक्तिप्राप्तिः । तस्मात् परमबलवदेवेदं साधनमिति भावः । धीरः सन्निति धैर्यञ्च लभत इत्यर्थः । यद्वा । कामं यथेष्टम् आशु भक्तिं प्रतिलभ्य हृद्रोगमाधिं श्रीकृष्णाप्राप्त्यादिकृतमचिरेणापहिनोति तत्प्राप्तेरिति भावः । अन्यत् समानम् ।

क्रीडता बहिरन्तश्च जनोऽयं येन नर्त्यते ।
तस्य चैतन्यरूपस्य प्रीत्यै भगवतोऽस्त्विदम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
त्रयस्त्रिंशोऽध्याय ॥३३॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ब्रह्मरात्र उपावृत्ते ब्रह्मरात्रे ब्राह्ममुहूर्ते ॥ ३९ ॥

श्रोता आश्वपहिनोति वर्णयिता अचिरेण यद्वा हृद्रोगनाशोपक्रमश्रवणयोर्मध्ये काल आशुशब्दः शमोन्मुखस्य रागादेरिव चिरेण निःशेषशान्तिशङ्काव्युदासायाचिरशब्दः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये पूर्वार्धे
रासक्रीडायां त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रकृतमाह । ब्रह्मरात्र इति । ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते प्राप्ते सति वासुदेवेनानुमोदिताः अनुमोदनपूर्वकमाज्ञापिता अपि गोप्यः भगवानेव निरतिशयप्रियो यासां तथाभूता अतएवानिच्छन्त्यः गन्तुमिति शेषः कथञ्चित्स्वगृहान्प्रति ययुः ॥ ३९ ॥

प्रकृतरासक्रीडाश्रवणादिफलमाह । विक्रीडितमिति । व्रजवधूभिः साकम् इदं विष्णोः कृष्णस्य विक्रीडितं भावे क्तः यः पुमान् श्रद्धान्वितोऽनुक्रमेण शृणुयादथवा वर्णयेच्छ्रावयेच्च स भगवति परामुत्कृष्टां भक्तिं प्राप्य धीरः जीवदशायां जितेन्द्रियः कामं नितरां हृद्रोगं रोगवदनर्थकरं हृत्स्थमज्ञानमाश्वचिरेण विधुनोति निरस्यति श्रोता आशु धुनोति तथा वर्णयिताप्यचिरेण धुनोतीति प्रत्येकाभिप्राययोरचिरेणाशुशब्दयोः प्रयोगः अतो न पौनरुक्त्यं यद्वा हृद्रोगनाशोपक्रमणयोर्मध्ये कालविलम्बाभावाभिप्रायकः आशुशब्दः श्रवणोन्मुखरोगादेरिव चिरेण निःशेषशान्तिकशङ्काव्युदासायाचिरेणशब्दः अचिरेण धीरः आशु विधुनोतीति वान्वयः हृद्रोगरूपं कामं मदनमाशु विधुनोति जयतीत्यथा वा ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
त्रयस्त्रिंशोऽध्यायः ॥३३॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मरात्रे ब्राह्मे मुहूर्ते ॥ ३९ ॥

संसारनिवृत्तिहेतुत्वादस्मिन्कृष्णविक्रीडिते श्रद्धादिकं कार्यमिति विधायकफलमाह । विक्रीडितमिति । चशब्दः श्रद्धातिशयजनार्थः पूर्वोक्तविक्रीडितानि यथा संसारनिवर्तकानि तथेदञ्चेति । आशु भक्तिं प्रतिलभ्यानुदिनं कृत्वा हृद्रोगं काममनिष्टमपहिनोति प्रतित्यजति दुष्टकामत्याग एव संसारनिवृत्तिरित्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकत्रिंशोऽध्यायः ॥ ३१ ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

फलितमाह । ब्रह्मरात्र इत्यादि । मिलितानामनेकरात्रीणां शेषयामार्द्धे उपावृत्ते भगवदिच्छया संप्राप्ते सति ताः गोप्यः ऊढानूढादिप्रकारोक्ताः सर्वा एव भगवत्प्रियाः सत्यः स्वगृहान् अनिच्छन्त्यः वासुदेवानुमोदिता वासुदेवमनुमोदयितुं शीलं यासामिति

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तथा तत् श्रीवृन्दावनान्तर्वर्तिपुरविशेषं ययुरिति भावः । वस्तुतस्तु स्वगृहं पुनर्न गता एवेति ग्रन्थार्थः स्वगृहान् अनिच्छन्त्य इति हेतुमद्विशेषणेन गृहान्तरं लक्ष्यते ॥ ३९ ॥

उपसंहरति । विक्रीडितमित्यादि । भजते तादृशीः क्रीडाः याः श्रुत्वा तत्परो भवेदित्युक्तस्य विशेषोऽयं हृद्रोगम् अन्तःकरणमालिन्यम् अचिरेण तत्क्षणादेव धीरः पण्डितः विचक्षण इत्यर्थः अत इदं रहस्यं धीरो यो भवति स श्रद्धान्वितः सन् शृणुयात् वर्णयेत् कीर्त्तयेत् स्वतः शक्तो यदि तदा स्वपठनापि वर्णयेत् सुगमम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

रासक्रीडायां श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे

त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रासङ्गिकं परिहृत्य उक्तां लीलामुपसंहरति । ब्रह्मरात्र इति । अरुणोदयो ब्रह्मरात्रः तस्मिन् उपावृत्ते सम्यक्जाते तदन्तर्यामितया प्रविष्टो भगवान् गृहे गन्तव्यमीतीच्छामुत्पादितवान् ततः भगवता अनुज्ञाताः यतो भगवान् मोक्षदाता ताश्चेत् आसन्ध्यमन्तः स्मरणं करिष्यन्ति तदा मोक्षाधिकारिण्यो भविष्यन्तीति वासुदेवेनानुमोदिताः यद्यपि तासामिच्छा न स्थिता सर्वपरित्यागेन भगवद्भजनस्य कृतत्वात् किंगृहेण लोकैर्वेति तथापि गोप्य इति विपरीतबुद्धिः हठबुद्धिश्च तासां नास्तीति स्वगृहान् ययुः तथापि तासां न गृहाः प्रियाः किन्तु भगवानेव नापि संसारमयं यतो भगवतः प्रियाः ॥ ३९ ॥

मोक्षार्थमिदं चरित्रमिति ज्ञापयितुमेतदुपाख्यानश्रवणस्य फलमाह । विक्रीडितमिति । व्रजवधूभिः सह भगवत इदं विशेषेण क्रीडितं श्रद्धान्वितो भूत्वा सम्यक् कथ्यमानमुपश्रृणुयात् अथवा वर्णयेत् श्रवणानन्तरमेव कीर्त्तनमित्यथशब्दः । य इति नात्र वर्णादिनियमः किन्तु यः कश्चन भगवतो माहात्म्यश्रवणादेवमपि मोचयतीति भक्तानाञ्च सर्वथा प्रतिपत्तिश्रवणाच्च भगवति परां भक्तिमुपगतः ततो भक्त्या अन्तः स्थिरीभूतया हृदयस्य रोगरूपं काममाशु शीघ्रमेवापहिनोति यः पूर्वं हृदयबाधकत्वेन स्थितः शीघ्रमेवच बाधकर्त्ता तमाश्वेव दूरीकरोति श्रवणमात्रेणैव ततः पूर्ववासनया पुनरुद्गमे अचिरेणैव धीरो भवति अत इदं साभिप्रायं श्रोतव्यमिति फलप्रकरणत्वात् फलमुक्तम् ॥ ४० ॥

इति श्रीमद्भागवतसुबोधिन्याम् श्रीमल्लक्ष्मणभट्टात्मज-

श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धे पूर्वार्धे

रासक्रीडायां त्रिंशाध्यायविवरणम् ॥३०॥३३॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ब्रह्मरात्र इति समासान्त आर्षः । ब्रह्मणो रात्रौ युगसहस्रप्रमाणायामुपावृत्ते उप आधिक्येन आवृत्ते एकामावृत्तिं गते सति गोप्यः स्वगृहान् ययुः । एकस्यामेव रजन्यामेतावत्यो लीलाः कर्त्तव्या इति भगवतः सत्यसङ्कल्पत्वात् नृत्यगीतादयो विलासा यावन्तो मनस्यभीप्सिता आसन् तावतां सम्पूर्त्तौ यावन्तः समयाः सम्भवन्ति तावद्भिः समयैर्युगसहस्रं पूर्णं बभूव तच्च युगसहस्रं प्रहरचतुष्टयात्मकरजनीमध्य एव रासस्थल्यां प्रविवेश । यथा पञ्चयोजनात्मक वृन्दावन प्रदेशैकदेश एव पञ्चाशत्कोटियोजनप्रमाणानि ब्रह्माण्डानि प्रविष्टानि ब्रह्मणा दृष्टानि यथा चातिस्तोक एव भगवत उदरस्योपरि अपरिमितानि दामानि अन्तरे च ब्रह्माण्डमेव दृष्टमभूदित्यत्र नासम्भावना कार्या । यदुक्तं भागवतामृते । "एवं प्रभोः प्रियाणाञ्च धाम्नश्च समयस्य च । अविचिन्त्यप्रभावत्वादत्र किञ्चिन्नदुर्घट" मिति । वासुदेवानुमोदिताः मम च भवतीनाञ्च प्रति तादृशक्रीडासिद्ध्यर्थं प्रच्छन्नकामतैवाभीष्टेति कृष्णेन कृतानुमोदना इत्यर्थः । यद्वा । चित्ताधिष्ठात्रा वासुदेवेनैव गुरुलज्जाभयादिकमुद्भाव्य प्रेरिताः । अत एव प्रियविरहस्य दुःसहत्वादनिच्छन्त्योऽपि ययुः ॥ ३९ ॥

सर्वलीलाचूडामणे रासस्य श्रवणकीर्त्तनफलमपि सर्वफलचूडामणिभूतमेवेत्याह । विक्रीडितमिति । चकारादीदृशमन्यदप्यन्यकविवर्णितं ताभिः सह विक्रीडितम् । विष्णोरिति तासां मध्ये द्वयोर्द्वयोरित्याद्युक्तव्यापकत्वाभिप्रायेण नु निश्चितम् अनुदिवा शृणु यात् । अथ वर्णयेत् कीर्त्तयेत् । स्वकवितया काव्यरूपत्वेन नियध्नीतेति वा । परां प्रेमलक्षणां प्राप्येति क्त्वाप्रत्ययेन हृद्रोगवत्यप्यधिकारिणि प्रथमत एव प्रेम्णः प्रवेशस्ततस्तत्प्रभावेणैवाचिरतो हृद्रोगनाश इति प्रेमायं ज्ञानयोग इव न दुर्बलः परतन्त्रश्चेति भावः । हृद्रोगरूपं काममिति भगवद्विषयकः कामविशेषो व्यवच्छिन्नः तस्य प्रेमामृतरूपत्वेन तद्वैपरीत्यात् । धीरः पण्डित इति हृद्रोगे सत्यपि कथं प्रेमा भवेदित्यनास्तिक्य लक्षणेन मूर्खत्वेन रहित इत्यर्थः । अत एव श्रद्धान्वित इति शास्त्राविश्वासिनं नामापराधिनं प्रेमादि नाङ्गीकरोतीति भावः ।—

श्रीकृष्णातिवशीकारचुञ्चोर्जिष्णुशिरोमणेः ।
प्रेम्णो हास इवायं श्रीरासः श्रीरपि नाप यम् ॥

शास्त्रबुद्धिविवेकाद्यैरपि दुर्गममीक्ष्यते ।
गोपीनां रसवर्त्मेदं तासामनुगतीर्विना ॥

पदवाक्यप्रकरणध्वनयोऽत्र सहस्रशः ।
सन्त्यगम्याश्च गम्याश्च नोक्ता विस्तरभीतितः ॥४०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमस्य त्रयस्त्रिंशः सङ्गतः सङ्गतः सताम् ॥ ३३ ॥

---

## श्रीमत्किशोरीप्रसादविद्वत्कृता विशुद्धरसदीपिका।

तदेवं प्रासङ्गिकं समाप्य प्राकरणिकमप्युपसंहरिष्यन् यत्र तत्र विज्ञापितस्य प्रेयसीभावानां सखीभावानाञ्च वर्गद्वयस्य यथायोग्यं रासानन्तरभाविचरितमाह। ब्रह्मरात्र इति। ब्राह्मे मुहूर्त्ते सूर्योदयात्प्राग्दण्डद्वयात्मके प्रातः काल इत्यर्थः। उपावृत्ते शिशुमारपरिवर्त्तनेन पुनरावृत्ते सति यद्वा ब्रह्मणश्चतुर्वक्त्रस्य रात्रेरप्रवृत्तिर्यत्र तादृशे निभृतविहारे जाते सति यद्वा ब्रह्मणो वेदस्यापि रात्रिरज्ञानं यत्र तस्मिन् यद्वा ब्रह्मणः परब्रह्मणः श्रीकृष्णस्य रात्रिसुखसत्रमयं पर्व यस्मिंस्तादृशे समये उपावृत्ते सम्प्रवृत्ते सति यद्वा ब्रह्मणः सर्वविहारपूर्णस्य रात्रे उप अधिकमावृत्ते नित्यविहारस्य वृत्तौ ज्ञातायामित्यर्थः यद्वा ब्रह्मणः श्रीराधायाः अयमात्मा ब्रह्मेतिश्रुतेः आत्मना रमयेति ब्रह्मसंहितायाः परात्परब्रह्मेति रुद्रयामलात् रात्रे राति सुखमिति रात्रस्तादृशे ऽवसरे उपावृत्ते सर्वोपरितया आवृत्ते सतीति प्रभूतार्थमिदं वासुदेवानुमोदिताः अत्र वासुदेवेति श्लेषमहिम्ना वर्गद्वयान्वयि तथाहि वसुषु दीव्यति वसूनां देवो राजा वासुदेवः श्रीनन्दराजः द्रोणो वसूनां प्रवर इति प्रागुक्तेः तस्य पुत्रापत्यम्वासुदेव इत्यवताराभिप्रायं व्रजसम्बन्धिनामधेयं तदनुमोदिताः सम्प्रति प्रातर्जातं लोकापवादो मास्त्विति पृष्टे तेन दत्तानुज्ञानाः प्रेयसीत्वाभिमानाः श्रुतिमुनिरूपाश्च काश्चित् अनिच्छन्त्योऽपि प्रियतमापवादभीता युयुः व्रजमिति शेषः। भगवत्प्रियास्तु श्रीकिशोरीरमणकसुखाः स्वगृहान् स्वस्वकुञ्जगृहानित्यावृत्त्यान्वयः तत्र तत्र गमनादिकं तासां तासामन्योऽन्यमपरिकलितमेव वृत्तमिति संक्षेपः ॥ ३९ ॥

एवञ्च कामविजयक्रीडायायाः श्रवणफलमपि कामविजय एवेत्युपसंहरति। विक्रीडितमिति। विविधाभिर्व्रजवधूभिर्विविधं क्रीडितं विशिष्टं वा क्रीडितं चकारादीदृशमन्यदपि संग्राह्यं यद्वा चोऽप्यर्थे ता गोप्यो हृद्रोगं जहुरिति किंवक्तव्यं यः कश्चिदेतासां क्रीडितं शृणुयात्सोऽपीत्यर्थः। विष्णोरिति। सर्वासां यथोचितमनोरथपूरणेन व्यापकस्य यद्वा ब्रह्मक्षेत्रतृतीयचरणप्रादुर्भावाद्विष्णुरिति श्रीनन्दात्मजस्यैव जन्मनाम ततश्च तासां तस्य नित्यसम्बन्धः सूचितः श्रद्धया दृढविश्वासेन अन्वितः असम्भावनाविपरीतभावनारहित इत्यर्थः। अनु निरन्तरं शृणुयात् अथ अनन्तरं स्वयं वर्णयेत् उपलक्षणं स्मरणस्य सर्वोऽप्ययं श्रद्धानुभावः सच परां शुद्धप्रेमलक्षणां भक्तिं भगवति श्रीराधावल्लभे प्रतिलभ्य सुखेन लब्ध्वा हृद्रोगमाशु तत्क्षणमेव अपहिनोति एवञ्च हृद्रोगहानात्प्रागेव तत्कारणपराभक्तिलाभ इति कथनात्कार्यशैघ्र्यप्रत्यायनं ततश्च बलवदेतत्साधनम् अत्र हृद्रोगपदेनैव गतार्थत्वे पुनः काममित्युक्तिः स्पष्टप्रतिपत्त्यै सन्ति बहवो हृद्रोगा एतस्मिन्विषयेतु काम एवेति भावः। अथवा कामं यथेष्टमिति क्रियाविशेषणम् अचिरेण धीरो भवतीति शेषः। धियं निश्चयात्मिकां चेतोवृत्तिं तस्मिन्नित्यविहारिणि भगवति राति योजयतीति धीरः तद्विहारभावुको भवेदित्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे रासपञ्चाध्यायी व्याख्यायां श्रीमत्किशोरीप्रसाद विद्वत्कृतायां विशुद्धरसदीपिकायां पञ्चमोऽध्यायः ॥ ५ ॥

मूलस्य त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## श्रीरामनारायणकृतभावभावविभाविका।

एवं प्रासङ्गिकं नृपप्रश्नसमाधानं समाप्य प्रकृतं ध्रुवंस्तत्परमानन्दनिमग्नानामपि तत्रैवासक्तिं दर्शयन् प्रेमपथप्रवृत्तभगवत्कामानां गृहादित्यागावश्यकत्वेऽपितत्पथसिद्धानां प्राप्ततत्स्वरूपानन्दानां तत्रैव निमग्नचित्तत्वेन गृहाद्यासक्तिशून्यानामपि भगवदिच्छया गृहादिसंबन्धाबाधकत्वमाह। ब्रह्मरात्र इति। ब्रह्मणो रात्रिसमकाले उपावृत्ते व्यतीते सति यद्वा ब्रह्म कृष्णस्वरूपं राति तथा सर्वदोपद्रुः खादिभ्यः स्वानुसंधानवतोजनान् आसमन्तात् त्रातीति ब्रह्मरात्रो रासादिविहारस्तस्मिन्नुपावृत्ते सर्वजनोद्धाराय प्रेमिणामुल्लासायचैव प्रकाशमापन्ने ता यतो भगवतः प्रिया अतो वासुदेवेन वसुदेवतपसाविर्भूतेन यद्वा द्रोणवसुनामकदेवो वसुदेवस्तत्पुत्रेण गोपालब्रह्मणा यद्वा "सत्त्वं विशुद्धं वसुदेवशब्दित"मित्यादिवचनात् शुद्धसत्त्वात्मकान्तः करणे एवाविर्भावयोग्येनानु पुनः पुनर्मोदिता अपि यतो भगवत्प्रिया भगवानेव प्रियो यासां न गृहादयोऽतो गृहान् गन्तुमनिच्छन्त्योऽपि यतो गोप्यो भगवद्रहस्यानामनधिकारिभ्यो गोपनशीला अथच वसन्त्यस्मिन्भूतानीति वासुः सर्वाधारस्तथा देवो नियन्ता तेन वासुदेवेन सर्वावासक्रीडापरेण वानुमोदिता न मद्विहारस्य गृहे वने वोपराम इति वहिरन्तर्भावेन प्रत्येकं कृतानुमोदनाः तेन विहरन्त्य एव व्रजमागत्य स्वगृहान् ययुः ॥ ३९ ॥

एवम्परमानन्दरूपां सर्वजनोद्धारपरमानन्दनिमग्नताहेतुभूतां लीलां निरूप्य तच्छ्रवणादेः फलं दर्शयन्नस्य कामविजयोपाख्यानस्य श्रोत्रादीनामपि हृद्रोगकामनिवर्तकत्वान्न कामाधीनतया कथंचिद्भगवतः परकीयदारसंबन्धभ्रमो नच निवृत्तिपराणमत्रौदासीन्ययोग्यता प्रत्युत—

> ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
> समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् इति

भगवद्वचनाद्ब्रह्मज्ञानैकलभ्य परभक्तेर्भिद्यतेहृदयग्रन्थिरित्यादिश्रुतेर्ज्ञानैकसाध्यहृद्रोगविमोकस्य चात्र श्रवणादिमात्रलभ्यतयात्रैव सर्वथा प्रवृत्तिः कार्येति दर्शयति। विक्रीडितमिति। विष्णोर्व्यापकस्य "सर्वतः पाणिपादं तत्सर्वतोऽक्षि शिरोमुख"मित्यादिना विभुसर्वाङ्गस्यापीदं विक्रीडितं स्वरूपाभिव्यञ्जकस्वेच्छया यत्र तत्राविर्भावादिना विशिष्टं सर्वगुणोत्कर्षान्वितं क्रीडितं तत्रान्यक्रीडापेक्षया विशिष्टत्वद्योतनायाह। व्रजवधूभिरिति। व्रजे याः स्वीया वध्व इति वधूशब्देन परदारत्वादिभ्रमव्यावृत्तिः व्रजशब्देनान्यधामगतरुक्मिण्यादिवधूनां व्यावृत्तिस्ताभिस्तथाच यथैकस्य परमरसायनस्याप्यनुपानभेदेन गुणवैचित्र्यं तथापरमरसायनस्य भगवत्क्रीडितस्याप्यन्यधामवधूरूपशक्तीनां श्रीसरस्वत्यादीनामैश्वर्यज्ञानादिप्राधान्यतया ताभिः सह क्रीडितश्रवणादेरैश्वर्यादि फलत्वम् अत्र व्रजधामगतभगवद्वधूनां प्रेमरसैकप्राधान्यतया ताभिः सह विक्रीडितश्रवणादेः प्रेमलक्षणपराभक्तिफलत्वमिति सर्वक्रीडाभ्यो वैशिष्ट्यं ज्ञेयं तदेव दर्शयति। श्रद्धान्वितइत्यादिना। धीरो धैर्यादिगुणसम्पन्नः धियम्भगवतीरयतीति भगवद्रसजिज्ञासुर्वा श्रीनियन्तृतदुपाधिकजीवमात्रं वा "यच्छ्रद्धया विद्यया उपनिषदा क्रियते तद्वीर्यवत्तरं भवती"तिश्रुतेः "श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारत" इति वृद्धोक्तेश्च तयान्वितोऽनुशृणुयाद्भक्तिलीलारासिकतयाऽनु निरन्तरं मुहुस्तच्छ्रवणपरः स्यादथ वर्णयेत्स्वयमपि

श्रीरामनारायणकृतभावभावविभाविका ।

तद्रसभावुकषु प्रेमभावोद्दीपनेन प्रकाशयेत् चकाराद्वक्तृश्रोत्रभावे स्वरेच्चित्तैकाग्र्येण ध्यायेच्च भगवति परामनुरक्तिरूपां "सा परानुरक्तिरीश्वरे" इति सूत्रितां प्रतिलभ्य चकाराद्ब्रह्मात्मावबोधश्चाज्ञात्वा प्रेमासम्भवात् कामं मनोजं हृद्रोगं यथा रोगोऽङ्गज एव तद्दुःखदस्तथा मनोजन्यमपि तद्दुःखदं यद्वा काममन्यच्च सर्वहृद्रोगं क्रोधादिकं यद्वा काममितराभिलापमात्रं हृद्रोगं तन्मूलभूतान्तःकरणाद्युपाध्यध्यासात्मकहृदयग्रन्थिश्चाशु अचिरेणानायासेन चापहिनोति निवर्तयति अत्रायं भावः निवृत्तिपरग्रन्थे सुमनोऽवलम्बमलब्ध्वा प्रथमं विषयेभ्यो दोषदृष्ट्या मनः संनिवर्त्य निरालम्बस्य भगवदालम्बनं भवति तत्र चिरम्प्रयासश्च अत्र रसरूपलीलाश्रवणेन स्वभावतस्तत्र प्रेमोद्धर्षात् सावलम्बतया झटित्यनायासं कामहृद्रोगनिवृत्तिः किञ्च परभक्तिलाभेन परमानन्दावाप्तिर्हृद्रोगोपशमेन सर्वानर्थनिवृत्तिश्च यद्वा मनोजादेरपि हृद्रोगान्तःपातित्वेन पृथगनुक्तेः कामं यथेष्टं परां भक्तिं प्रतिलभ्येति वा परां भक्तिं भगवति कामं कामसुखं सर्वकामं च "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति श्रुत्या प्रतिलभ्य इति वार्थः यद्वा कामं हृद्रोगमाश्वपहिनोत्यथ भगवति परां भक्तिं प्रतिलभ्य धीरो गायत्र्यादौ धीप्रेरकत्वेन श्रुतः परब्रह्मकृष्णात्मक एव स्यात् ॥ ४० ॥

श्रीराधा गोपिकाः कृष्णो गुरवो वैष्णवा द्विजाः ।
प्रीयन्तां स्वप्रपन्नाय यच्छन्तु परमां रतिम् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धान्तर्गत-
रासपञ्चाध्यायीव्याख्यायां श्रीचन्द्र-
भागाख्यविष्णुसख्यापन्नश्रीरामनारायण विरचितायां
भावभावविभाविकायां भगवच्छ्रीमद्रासविहारादि निरूपणे
पञ्चमोऽध्यायः ॥ ५ ॥
मूले त्रयस्त्रिंशः ॥ ३३ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

इतः परं संशयमनुचितं मन्यमानः खिन्नचित्तः श्रीशुको रासक्रीडावर्णनमुपसंहरति । ब्रह्मरात्र इति । ब्रह्मरात्रौ समासान्त आर्षः सत्यसङ्कल्पस्य भगवतः सङ्कल्पवशात् यामचतुष्टयात्मिकायां रजन्यां सहस्रयुगपरिमिते यथोक्तलीलानिर्वाहके काले उपावृत्ते सम्यगेकामावृत्तिङ्गते सति नचात्र विस्मयः कार्यः भगवद्योगमायायां सर्वसंभवात् तथाच यथा वृन्दावनस्य कस्मिंश्चित्प्रदेशे असंख्यातानि ब्रह्माण्डानि प्रवृत्तानि ब्रह्मणा दृष्टानि यथा वा बाल्ये स्थितस्य भगवतः स्वल्पस्योदरस्योपर्य्यपरिमितानि दामानि यशोदान्यवलोकितानि व्रजौकोभिर्यथा वा भगवन्मुखे चतुर्दशभुवनानि श्रीयशोदया तथा स्वल्पदेशे क्रीडायोग्यदेशस्य स्वल्पे काले तद्योगकालस्यचाभावे नास्ति किञ्चिदपि चित्रं ब्रह्मरात्रे ब्राह्मे मुहूर्ते उपावृत्ते सतीत्यनेन वासुदेवनानुमोदिताः वासुदेवेनान्तरवस्थितेन तेन तासामन्तरङ्गमनोयोगं स्वयमेवोत्पाद्य बहिरप्यनुमोदिताः अतएवानिच्छन्त्योऽपि स्वगृहान् ययुः भगवानेव प्रियो यासां ताः तथाच गमनागमनाभ्यां भगवत्प्रियमेव यासां सम्पाद्यमिति भावः यद्वा स्वगृहान् प्रतिगता अपि भगवतः प्रीतिविषया एवेति भावः ॥ ३९ ॥

अथ भगवतः कामविजयरूपसर्वलीलावतंसरासक्रीडाश्रवणादेर्यथायोग्यं परमोत्कृष्टं फलमाह । विक्रीडितमिति इदं विक्रीडनं मया वर्णितं व्रजवधूभिर्विष्णोः पूर्णस्य क्रीडानुरूपरूपाणि प्रकटीकृत्य विविधं क्रीडितं श्रद्धान्वितः सर्वलोकोद्धारार्थमाप्तकामेन भगवतेदं विक्रीडनं कृतमिति विश्वासयुक्तः योऽनु निश्चयेन संशयकलङ्करहितः शृणुयात् अनुदिनम्वा शृणुयात् अथवा यः कीर्तयेत् स भगवति परां प्रेमलक्षणां भक्तिं प्रतिलभ्य भगवदनुग्रहादचिरेण धीरः तत्त्ववित्सन् हृद्रोगं सर्वानर्थभूतं काममाऽऽशु शीघ्रमपहिनोति परित्यजति तथाच सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिरूपपरमपुरुषार्थफलकोऽयं पञ्चाध्यायात्मको ग्रन्थः परमादरेण श्रोतव्यो वर्णयितव्यश्चेति—

श्रुति गोपाङ्गनाभिर्यः क्रीडते सत्सुमानसे ।
वने तं धनपत्याख्यो नौमि कृष्णं परात्परम् ॥ ४० ॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपाद-
शिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिमिश्र-
सूरिकृतायां भागवतगूढार्थदीपिकायां दशमस्कन्धे पूर्वार्धे
रासक्रीडायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मरात्रे तद्रात्रीणामन्ते ब्रह्ममुहूर्ते वासुदेवानुमोदिता आज्ञापिताः क्षणमपि तद्वियोगमनिच्छन्त्यः यतो भगवानेव प्रियो यासां ताः कथञ्चित् स्वगृहान् ययुः ॥ ३९ ॥

कामविजयिसर्वेश्वररासक्रीडाश्रवणादेः कामजयं परभक्तियोगञ्च फलमाह । विक्रीडितमिति । यः धीरः श्रवणे वर्णने वा ये विघ्नास्तज्जयशीलः श्रद्धान्वितश्च विष्णोर्व्रजवधूभिः सह विक्रीडितम् कामं यथेष्टमनु अनुक्रमेण शृणुयात् अथवा वर्णयेत्स अचिरेण परां भक्तिं प्रतिलभ्य आशु हृद्रोगं रोगवदनिष्टकरं काममपहिनोति परित्यजति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
रासक्रीडायां श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयस्त्रिंशाध्यायार्थप्रकाशः ॥ ३३ ॥

---

भाषा टीका ।

इस प्रकार से जब बड़ी ब्रह्म रात्री बीत गई ब्रह्ममुहूर्त भया तब छोडने की इच्छा नहीं रहने पर भी भगवान् की आज्ञा होने से भगवान् की प्यारी सब गोपी अपने घरन को चली गई ॥ ३९ ॥

जो कोई पुरुष माध विष्णु भगवान् के व्रज स्त्रियों के साथ किये इस क्रीडा चरित्र को श्रद्धा सहित श्रवण करेगा अथवा वर्णन करेगा वह पुरुष जल्दी धीर ज्ञानी होजावेगा और श्रीभगवान् के चरणकमल मे भक्ति को प्राप्त होकर शीघ्र ही हृदय के काम क्रोधादि रोगों को दूर करदेगा

भाषा टीका ।

अन्त में मुक्त होजायगा शङ्का रासक्रीडा तो भगवान् का एक एकान्त कार्य है इस के कह ने से और दोष होना चाहिये पुण्य का होना और काम की बाधाका छूटना फल क्यों कहा है समाधान भगवान् ने ब्रह्मा इंद्रा दि कों को वत्साहरण गोवर्धन धारण आदिलीला मे अपने अधीन किया है इन ब्रह्मा दि कों के जीतने से कामदेव को बडा अभिमान हुआथा उस काम के जीतने को तथा भक्त जनों के मनोरञ्जन को यह रासलीला की है तौ उस लीला के कथन श्रवण से हीपाप छूट ते हैं और जो भगवान् की प्रसन्नता की लीला है उस के कथन से भगवान् प्रसन्न होते हैं तिसी से [ गोपवधूटीदुकूलचौराय ] इत्यादि से महाजनों ने स्तुति कीहै सोइ बात पञ्चस्तव मे श्रीकूरेश स्वामी जी ने कहा है की

[ यस्त्वैप्रियं तदिह पुण्यमपुण्यमन्यन्नान्यत्तयोर्भवति लक्षणमत्र जातु । धूर्तायितंतु तव यत्किल रासगोष्ठ्यां तत्कीर्तनं परमपावनमामनन्ति ॥ ] अर्थ हे प्रभो ! जो आप को प्रियलगै सो चाहै धर्मशास्त्रमे पाप होवै चाहै पुण्य होवै सो तो पुण्यही है जो आप को अप्रिय है वही पाप है यही पाप पुण्य के लक्षण हैं जिससे कि व्यासपराशरादि मुनिजन रास गोष्ठी मे आप की किई धूर्तलीला के कीर्तनकोभी पाप नाशक कहते हैं ॥ ४० ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धरासपंचाध्यायी तेतीस में अध्याय की भाषाटीका समाप्त ॥ ३३ ॥

इतिश्रीमद्भागवते दशमस्कन्धे पूर्वार्धे रासक्रीडायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ रासपञ्चाध्यायी समाप्ता ॥

## ॥ चतुस्त्रिंशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

एकदा देवयात्रायां गोपाला जातकौतुकाः ॥
अनोभिरनडुद्युक्तैः प्रययुस्तेऽम्बिकावनम् ॥ १ ॥
तत्र स्नात्वा सरस्वत्यां देवं पशुपतिं विभुम् ॥
आनर्चुरर्हणैर्भक्त्या देवीं च नृपतेऽम्बिकाम् ॥ २ ॥
गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः ॥
ब्राह्मणेभ्यो ददुः सर्वे देवो नः प्रीयतामिति ॥ ३ ॥
ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः ॥
रजनीं तां महाभागा नन्दसुनन्दकादयः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुस्त्रिंशेऽहिना ग्रस्तं नन्दं हरिरमूमुचत् ।
विद्याध्रश्चाङ्गिरः शापाच्छङ्खचूडं तथावधीत् ॥
रासापदेशतः कामं किङ्करीकृत्य कामतः ।
अनुगृह्णन् वशं निन्ये तथा विद्याधराधिपम् ॥

तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसङ्गं दर्शयति । एकदेति ॥ १—२ ॥

गावो गाः मधु मधुरम् मध्वन्नं मधुना सहितमन्नम् ॥ ३ ॥

जलमात्रं :प्राश्योपोषितास्तां निशां तत्र ऊषुर्न्यवसन् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ रासलीलाप्रसङ्गात्तादृशीं शङ्खचूडवधावसानामन्यां लीलां दर्शयितुं तयोर्मध्ये जातत्वेन क्रमप्राप्तं तत्प्रभावदर्शनमयत्वेन तादृशलीलाप्रतिकूलजनस्तम्भकतया तदुपयुक्तं च लीलान्तरमाह।एकदेति।तद्रासानन्तरं फाल्गुने शिवरात्रौ देवस्य श्रीशिवस्य यात्रायां जातं कौतुकमौत्सुक्यं येषां ते। तदेतच्च गोवर्द्धनमखवत् श्रीकृष्णकौतुकमूलत्वेनैव च ज्ञेयम् । अनन्याश्रयमनस्त्वात्तेषाम् । यद्वा । ते गोपाः गोपालेन श्रीकृष्णेन हेतुना आ सम्यक् जातकौतुकाः । अत्र श्रीकृष्णस्य तु निजप्रेयसीभिः सह स्वच्छन्दलीलायां निगूढोऽभिप्रायो गम्यः । अतः पूर्वलीलासमानत्वञ्चास्य ज्ञेयम् । अनडुद्भिरिति प्रसिद्धार्थस्यापि निर्देशस्त्वनो वहति अनड्वानिति निरुक्तेर्विशेषविवक्षया सा चानायासगमनस्यानोनिर्देशश्च तीर्थे दानार्थं बहुलद्रव्यनयनस्य अतएव प्रकर्षेण ययुः अम्बिकावनं श्रीमथुरापुरवायव्य दिग्विभागे सरस्वतीतीरस्थं श्रीशिवोमामूर्त्तिविभूषितं तद्देवलयम् । यद्वा । गुर्जरदेशे सिद्धपुरस्य नातिदूरवर्त्तितीर्थम् अम्बिकावनं तस्यैवातिप्रसिद्धत्वात् । देवं पूज्यं श्रीविष्णुवैष्णवैकप्रियत्वात् प्रभुं श्रीभगवद्भक्त्यादिप्रदानसमर्थं विभुमिति क्वचित् पाठः अतएवार्हणैर्विविधोपचारैः । चकारेणाम्बिकाया अपि तादृशत्वं समुच्चीयते । हे नृपते ! इति रासलीलाविष्टं तमवधापयति ॥ १ ॥ २ ॥

तेषां सकौतुकत्वेऽपि धर्मार्थनिष्ठत्वमाह । गाव इति द्वाभ्याम् । आदृताः तद्देवालयसेवकैः संमानिताः आदरयुक्ता वा सर्वे श्रीनन्दादयः प्रत्येकमेवेत्यर्थः । देवः श्रीशिवः श्रीविष्णुर्वा वैष्णवविष्णुप्रीतिरेव वैष्णवानां प्रयोजनमिति तच्च विष्णोराराधनार्थाय स्वपुत्रस्योदयाय चेतिवत् ज्ञेयम् ॥ ३ ॥

प्राश्य प्राशनमात्रं कृत्वा तत्र हेतुः व्रतं संयमेन गृहीतं व्रतं यैः रजनीं शिवरात्रिं तस्यास्तत्प्रधानत्वात् सुनन्दः श्रीनन्दानुजः संज्ञायां कन् अतस्तदग्रजस्योपनन्दस्य गोष्ठ एव स्थितिर्बुध्यते योग्यता च तस्यैव ज्ञानवयोऽधिकत्वात् ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १--१४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सुदर्शनाख्यविद्याधरस्य ब्राह्मणशापात्सर्पतां गतस्य शापविमोचनात्मकं संप्रस्तावं तथा शङ्खचूडाख्ययक्षवधतच्छिरोमणयपहारात्मकञ्च भगवतः कर्मानुवर्णयति चतुस्त्रिंशेनाध्यायेन। एकदेत्यादिना । कदाचिद्देवयात्रायां साम्बं पशुपतिं प्रतिगमन

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्पूजात्मिकायां निमित्तभूतायामनडुद्भिर्वृषभैर्युक्तैरनोभिः शकटैरम्बिकावनं ययुः देवयात्रायां विषयभूतायां जातं कौतुकं येषां ते तथा भूता ययुरिति वा ॥ १ ॥

तत्र तद्वनसमीपस्थायां सरस्वत्यां नद्यां स्नात्वा हे नृपते अर्हणैः पूजासाधनैर्गन्धादिभिर्देवं पशुपतिं देवीमम्बिकाञ्च भक्त्या पूजयामासुः ॥ २ ॥

ततो गावः गाः हिरण्यं वासांसि मधु मधुरं मधुसहितमन्नञ्च ब्राह्मणेभ्यो ददुः कथम्भूताः देवः पशुपतिर्नोऽस्माकं प्रीतो भवत्वित्यभिप्रायवन्तः ॥ ३ ॥

ततो जलमात्रं प्राश्य यतं नियतं व्रतं ब्रह्मचर्यात्मकं येषां ते तथाभूताः तत्रैव सरस्वत्यास्तीरे नन्दप्रभृतयो गोपास्तां रात्रिमुषितवन्तः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुकुन्दभक्त्या संसाराहिग्रासमोक्षस्य ज्ञानरत्नदानस्य निदर्शनाय नन्दस्य सर्पान्मोक्षं शङ्खचूडं हत्वा बलभद्राय तच्छिरोरत्नदानं च निरूपयत्यस्मिन्नध्याये । तत्र प्रथमतो गोपानां यात्राप्रकारं कथयति । एकदेति । अम्बिकामाहात्म्यविषयां किंवदन्तीमाकर्ण्य जातकौतुका उत्पन्नकुतूहलबुद्धयः अम्बिकावनं दुर्गायाः सत्स्थानं वनम् अनडुद्युक्तैः वृषभयुक्तैः अनोभिः शकटैः ॥ १ ॥

पशवो जीवाः तेषां पतिं प्रभुं समर्थं समर्थेऽधिपतौ प्रभुरिति च तत्र वने सरस्वत्यां स्यन्दमानायाम् अर्हणैः पुष्पोपहारादिसाधनैः ॥ २ ॥

मध्वन्नं मधुना युक्तमन्नं यद्वा मधुरान्नं मधुक्षौद्रम् ॥ ३ ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एकदा शिवरात्रौ अम्बिकावनं गुर्ज्जरदेशे सिद्धपुरनिकटे प्रसिद्धम् ॥ १—७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवंरूपप्रपञ्चस्य पञ्चधा रसवर्णनम् ।
निरूप्य नामलीलातो रसार्थमिदमुच्यते ॥
एवमुक्तभक्तास्तु यदन्यं समुपासते ।
दुःखभाजो भवन्त्येव मुच्यन्ते हरिणैव तु ॥
एकत्रिंशे सर्वभावान्निवृत्तानां तु पूर्ववत् ।
गानेन रमणं चक्रे प्रमाणानन्दसिद्धये ॥
बलभद्रेण सहितो वेदरूपेण सर्वथा ।
तद्दोषं नाशयामास हरिरित्युच्यते स्फुटम् ॥

शब्दतोऽप्यानन्दं निरूपयितुं प्रथमं गोकुलवासिनामन्यासक्तिं निवारयति । एकदेति विंशत्या लोकन्यायेनाप्यन्यत्र गमनेऽनिष्टं भवतीति तेषां यात्राप्रसङ्गो निरूप्यते एकदा शिवरात्रिसमये प्रतिवर्षं न गच्छन्तीत्येकदेत्युक्तं देवयात्रा हि नित्या गोपालाश्च साधारणधर्मं एवाभियुक्ता इति तत्रापि धर्मबुद्धिः प्रासङ्गिकी वस्तुतस्तु जातकौतुकाः अत एव न पद्भ्यां गमनं किन्त्वनोभिः शकटैः तत्रापि नाश्वयोजनं किन्तु अनडुद्युक्तैः प्रकर्षेण ययुः महता समारम्भेण गृहे पुरुषानभिनिवेश्य अम्बिकालयं मथुरातः पश्चिमे देशे अर्बुदाचलनिकटे स्थितं तीर्थविशेषं ययुः ॥ १ ॥

तत्र गतानां पूजाप्रकारमाह । तत्र स्नात्वेति । सरस्वती तत्र प्रादुर्भूता अतः स्नात्वा पशुपाशविमोचनार्थं स्वयं पशुपालका इति पशूनामधिपतिं पशुपालने फलदातारं प्रभुं सर्वदानसमर्थमर्हणैः पूजाद्रव्यैरानर्चुः ननु पामरवत् गमनमात्रं देवीञ्च अम्बिकां पार्वतीमानर्चुः चकारात्तदावरणदेवताः नृपत इतिसम्बोधनं यात्रायां तथाकरणे परिज्ञानाद्विश्वासार्थम् ॥ २ ॥

पूजामुक्त्वा दानान्यप्याह । गाव इति । सर्वकालान्येतानि दानानि हिरण्यं सुवर्णं वासांसि नानाविधानि मधुच मध्वन्नञ्च ग्राम्यारण्ययोः सिद्ध्यर्थं मधुमध्वन्नयोर्दानं गोभिः रुद्रः प्रीतो भवति हिरण्येनाग्निः सोऽपि रुद्र एव वासांसि सर्वदैवत्यानि सोमदैवत्यानिच उमया सहितः सोऽपि तेन प्रीतो भवति एवं पञ्चदानानि आद्दता एव चक्रुः पात्रसम्पत्तिमाह । ब्राह्मणेभ्य इति । सर्वं इति सङ्कोचोऽपि व्यावर्तितः कामनाञ्च व्यावर्त्तयति देवो नः प्रीयतामिति । देवो महादेवः इति साधारणं वचनं नोऽस्माकं प्रीतो भवत्विति नत्वन्या काचित्कामना ॥ ३ ॥

एवं यात्रायां कृत्यमुक्त्वा नियमेन तीर्थे स्थितिमाह । ऊषुरिति । सरस्वतीतीर एव अन्तः शुद्ध्यर्थं जलमेव प्राश्य तां रजनीमूषुः ननु रजन्यां किञ्चित्कृतमिति एतावान् धर्मः सिद्धः अग्रिमानिष्टं निवर्तिष्यत इति महाभागा इत्यनेन द्योतितं श्रोतुः सन्देहाभावाय नन्दः सुनन्दकश्च प्रधानभूतौ येषां नन्द इतिप्रधाननाम्ना वा सर्वे व्यपदिष्टाः सुनन्दकः आदिर्येषामिति सर्वेषामेव नन्दतुल्यता भगवत्सम्बन्धाद्वत्यानन्दयुक्तः सुनन्दको भवति उपनन्दोऽन्यो वा नन्द एव वा धर्मप्राधान्येन गृहीतः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुस्त्रिंशे नन्दपादग्रासि सर्पं स्पृशन् हरिः ।
उद्दधार मणिं शङ्खचूडाज्जग्राह तद्वधात् ॥

शारदीं रासलीलां वर्णयित्वा वासन्तीं होलिकागानलीलां वर्णयिष्यन् प्रथमं शिवरात्रियात्रामाह । एकदा फाल्गुनकृष्णचतुर्दश्याम् अम्बिकावनं मथुरायाश्चदिग्विभागे सरस्वतीतीरस्थं श्रीशिवोमामूर्तिभूषितमित्येके गुर्ज्जरदेशस्थ सिद्धपुरनिकटस्थतीर्थमित्यन्ये प्राहुः ॥ १ ॥ २ ॥

गावो गाः मधु शिवाभिषेकावशिष्टं मध्वन्नं मधुसहितान्नम् ॥ ३ ॥

॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! अद्यातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणां सहस्राणिविद्वांसो ऽकार्षुः चातकास्स्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतद्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्य्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम् रौप्यकपञ्चकम ५)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणपर सुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और संमान्य मनुष्यों के सन्मान रक्षाके लिये उनसे केवल १००) रु० मात्र लिया जायगा डाकमहसूल २४) रु० अलग पडेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये प्रतापरुद्र नृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र च पञ्चाङ्काः सन्तितत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम्१द्वितीये च भावपरीक्षादिनिरूपणम्२तृतीये भावप्रकाशादिनिरूपणम्३चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपि विद्यन्ते ॥ मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वेदव्यासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स चेदानीं सुबलितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० ३)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परिनिष्ठितविद्वांसः! अस्मन्मुद्रणालये अद्यावधि काव्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तत्त्वर्यतां ग्रहणोत्सुकैः सप्तमुद्री-मूल्येन, पश्चादधिकेन लभ्येत इति विदन्तु मू० ७)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा । } विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

समस्त स्वत्त्व रेजिस्टरी करके स्वाधीन रखा गया ।

दशमस्कन्धपूर्वार्द्धे | श्री १०८ श्रीराधारमणो जयति । | चतुर्थखण्डः

महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम् ।

श्रीश्रीपाद श्रीधरस्वामिकृतभावार्थदीपिका, श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी, श्रीमद्विशिष्टाद्वैत-सिद्धान्तप्रतिष्ठापनाचार्यवर्यश्रीसुदर्शनसूरिकृतशुकपक्षीयसमाख्याटीका, तदनुगामिश्रीमद्वीर-राघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्माध्वसिद्धान्तधुरन्धरश्रीमद्विजयध्वजतीर्थकृत-पदरत्नावली, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्यप्रवरश्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीमत्-विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेव-कृतसिद्धान्तप्रदीपाख्यटीका इति नवभिर्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम् ॥

तदिदं,

परमहंसपरिव्राजकाचार्य्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

## श्रीनित्यस्वरूपब्रह्मचारिणा

सम्पादितम् ।

बङ्गदेशान्तर्गत ताडास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

"श्रीवनमालिराय बहादुरस्य"

सम्पूर्ण साहाय्येन

प्रकाशितञ्च ।

तच्च

वृन्दावन निवासि पं०श्रीलक्ष्मणाचार्यद्वारा संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रापितम् ।

सम्वत् १९६४

कश्चिन्महानहिस्तस्मिन् विपिनेऽतिबुभुक्षितः ॥
यदृच्छयागतो नन्दं शयानमुरगोऽग्रसीत् ॥ ५ ॥
स चुक्रोशाहिना ग्रस्तः कृष्ण ! कृष्ण ! महानयम् ॥
सर्पो मां ग्रसते तात ! प्रपन्नं परिमोचय ॥ ६ ॥
तस्य चाक्रन्दितं श्रुत्वा गोपालाः सहसोत्थिताः ॥
ग्रस्तं च दृष्ट्वा विभ्रान्ताः सर्पं विव्यधुरुल्मुकैः ॥ ७ ॥
अलातैर्दह्यमानोऽपि नामुञ्चत्तमुरङ्गमः ॥
तमस्पृशत्पदाभ्येत्य भगवान् सात्वतां पतिः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सुनन्दो नन्दानुजः संज्ञायां कन् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चतुस्त्रिंशेऽध्याये अहेः सकाशात् श्रीनन्दविमोचनात्मकं ब्राह्मणशापादहिभूतस्य विद्याधरस्य विमोचनरूपं शङ्खचूडवधादिकं च भगवतः कर्मानुवर्णयति। एकदेति ॥ १ ॥ २ ॥

तदनन्तरं गवादिकं मधु मधुरं मध्वन्नं मधुना सहितमन्नं च ददुः गावः गाः ॥ ३ ॥

ऊषुः न्यवसन् ॥ ४ ॥

भाषा टीका।

श्रीशुकदेवजी बोले एक समय सब व्रजवासियों को देवता की यात्रा करने में इच्छा भइ तब बैलों से युक्त गाडियों पर बैठकर गुजरात में सीतपुर के पास अंबिकावन को सब लोग जाते भये ॥ १ ॥

हे नृपते उहीं पर जाय सरस्वती नदी में स्नानकरके भक्ति पूर्वक अनेकपदार्थों से विभु पशुपति देव तथा अंबिका देवीका पूजन करते भये ॥ २ ॥

फिर देवता हमारे पर प्रसन्न होवै इस इछा से सब ने गऊ सुवर्ण वस्त्र मधुर पदार्थ मधु अन्न आदर पूर्वक ब्राह्मणों को दिये ॥ ३ ॥

फिर जल मात्र पान करके व्रत धारण करके नंद सुनंदादिक सब कोई उस रात भर उस सरस्वती के किनारे निवास करते भये ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

महानहिरजगरः उरगः उरसा गच्छन्नित्यलक्षितत्वमुक्तम् अग्रसीज्जग्रास ॥ ५—६ ॥

विव्यधुस्ताडयामासुः उल्मुकैर्ज्वलत्काष्ठैः ॥ ७ ॥

अलातैस्तैरेवोल्मुकैः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथ तत्र तदनन्तरं रजनीवृत्तमाह। कश्चिदिति। कश्चिच्छिलक्षणाइत्यर्थः यदृच्छया केनापि भाग्योदयेन। शयानमुरग इति पदद्वयमग्राने हेतुः तत्र शयानमिति पूर्वस्यां रात्रौ जगरणोपवासादिना श्रान्तेर्निर्भरनिद्राणमित्यर्थः। उरगागमनं च यात्रिकलोकापगमेन निर्जनप्रायत्वात् अग्रसीत् चरणयोर्ग्रसितुं प्रवृत्तः ॥ ५ ॥

ग्रस्तः पदयोरेव वीप्सा त्रासात् तातेति स्नेहभरात् अतो मे मरणात्त्रासो नास्ति किन्तु त्वद्वियोगादेवेति भावः। त्रासादेवाह प्रपन्नं शरणागतं वृद्धत्वेन पुत्रस्य तव पालनीयवृन्दगतं वा परि सर्वतो भावेन तव मम कस्य चिदन्यस्य च क्लेशं विनैव मोचय महानित्यात्मना दुष्प्रतिकार्यत्वं तस्य शीघ्रागमनप्रार्थनं च निवेद्यते इदं च कालियदमनादिदृष्टेरेवेति ज्ञेयम् ॥ ६ ॥

आक्रन्दितं करुणदीर्घस्वरं चकाराभ्यां श्रवणदर्शनयोः प्राधान्येन द्वयोरप्येककालीनत्वं तेन च तेषां सावधानत्वं च बोधितम् अजगरस्य ग्रस्तापरित्यागस्वभावाशङ्कया परमदुःखैः विशेषतस्तिर्यग्जातिभीषणैरुल्मुकैरेव विव्यधुः हस्ताभ्यां ध्रियमाणैस्तैस्तद्वराङ्गे ताडयामासुः संभ्रान्तास्त्वरान्विताः पाठान्तरे विभ्रान्ता उद्विग्नाः ॥ ७ ॥

संकोचाद्वृद्धानां सङ्गपरित्यागेन निजवयस्य वर्गसङ्गे दूरे वासात् तदनन्तरमेव अभ्येत्य पितृस्नेहमयलीलावेशेन सम्भ्रमाद्याभिमुख्येनागत्य तं दीर्घपुच्छं पदास्पृशदेव ननु जघान स्पृष्टस्य तातस्य स्वयं पादेन स्पर्शस्याप्यनौचित्येन बुद्धिपूर्वकत्वाभावात्। प्रकारान्तरतोऽपि तच्छापविमोचनसामर्थ्यात् महादण्डादिमुक्तोऽहं सद्यस्तेऽच्युत दर्शनादिति वक्ष्यमाणाच्च अबुद्धिपूर्वकत्वेऽपि तत्तत्सम्बोधनासिद्धौ हेतुः भगवान् स्वभावत एव सर्वशक्त्याश्रयः अथ सात्वतां पतिः सर्वभक्तपालकश्चेति तदेवं पूतनायाः सङ्गप्रग्रहणवत् यथाकथञ्चित्स्पर्शमात्रेऽपि तत्पादस्पर्शफलपर्य्यवसानमिति बोधितम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मिन्विपिनेऽम्बिकावने कश्चिन्महाविपुलकायोऽहिः सर्पोऽतीव बुभुक्षितो व्यवसदिति शेषः स चोरगः सर्पः यदृच्छयागतस्तत्र सञ्चरन्तं प्रासमग्रसीत् ॥ ५ ॥

स च ग्रस्यमानो नन्दश्चुक्रोश कृष्णमाह च किमिति हे तात ! पुत्र महानयं सर्पो मां ग्रसते प्रपन्नं शरणागतं मां सर्पान्मोचयेति ॥ ६ ॥

तस्य नन्दस्याक्रन्दितं रोदनमाह्वानं चाश्रुत्य गोपालाः सर्वं आशूत्थिताः सर्पेण ग्रस्तं नन्दं दृष्ट्वा च सम्भ्रान्ता व्याकुलचित्ताः सर्पमुल्मुकैः साङ्गारकाष्ठैर्विव्यधुस्ताडयामासुः ॥ ७ ॥

सोऽप्यलातैरुल्मुकैस्ताड्यमानोऽपि तं नन्दं नामुञ्चन्न तत्याज ततः प्रपन्नानां पालको भगवानभ्येत्य गत्वा पदा पादेन तं सर्पं मस्पृशत् पस्पर्श ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदृच्छया तस्मिन्वने आगतोऽभूत् आगमने निमित्तमाह । अतिबुभुक्षित इति । शयानं निद्रां कुर्वन्तम् ॥ ५ ॥

प्रकर्षेणापन्नं विपद्गतं शरणागतं वा ॥ ६—१२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अस्पृशन्ननु जघान । स्पृष्टस्य जनकस्य तस्य स्वयं पाद-स्पर्शानौचित्येन बुद्धिपूर्वकत्वाभावात् ॥ ८—१५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वतो धर्मसम्पत्तियुक्तानां भगवद्भावे तिरोभूते निरोधस्य वक्तव्यत्वात् शकटाक्षेपवत् सर्पेण नन्दग्रासमपि भगवान् कारितवानित्याह । कश्चिदिति । महानहिरजगरः सहि क्षुधित एव तिष्ठति कदाचिदेवान्नं प्राप्नोति तत्र दैवगत्या तस्मिन् विपिने आहाराभावात् अतिबुभुक्षितो जातः यदृच्छया आकस्मिकविधिना तेन नन्दः प्राप्तः यदृच्छयैव नन्दसमीपमागतः नन्दोऽपि दैवगत्या निद्राणो जातः वस्तुतस्तु जाग्रता खादितव्यम् अतः शयानं नन्दं मुख्यमेव उरगः आगमने ज्ञातुमशक्यः अग्रसीत् जग्रास ॥ ५ ॥

ततो यज्जातं तदाह । स चुक्रोशेति । कण्ठादधोभागे ह्यहिना ग्रस्तः पूर्वं केवलं चुक्रोश पश्चान्माहात्म्यं स्मृत्वा कृष्णकृष्णेत्यादरेण भयात्सम्बोधनं कृत्वा स्वानिष्टं निवेदयति । महानयं सर्पो मां ग्रसत इति तातेति सम्बोधनं स्नेहातिशयख्यात् परिमोचने हेतुं वदन्नत्र प्रार्थयते प्रपन्नं परिमोचयेति ॥ ६ ॥

ततो भगवन्मोचनात् पूर्वमेव अन्ये गोपालाः प्रतिक्रियार्थमुद्यता जाता इत्याह । तस्य चेति । नन्दस्य विह्वलतां बोधयितुमन्येषामविज्ञतां च प्रार्थनाप्रतिक्रियये निरूपणं तस्य नन्दस्य आक्रन्दितं श्रुत्वा सहसैव विचारमकृत्वैव भगवन्तमपृष्ट्वैव स्वयमेव उत्थिता नन्दञ्च ग्रस्तं दृष्ट्वा विशेषेण भ्रान्ताः सन्तः शीतार्थं ज्वालितरुल्मुकैः सर्पं विव्यधुः अनेनोपायेन नन्दोऽपि म्रियेत तथाप्यज्ञानात् भगवति विद्यमाने यात्रावदिदमपि कृतवन्तः ॥ ७ ॥

तथाप्यनुपायत्वान्न फलितामित्याह । अलातैरिति । सहि भक्षयितुमेव जानाति नतु त्यक्तुमतो नामुञ्चत् ततो यदुचितं तमुपायं भगवान् कृतवानित्याह । तमस्पृशदिति । स्वयमभ्येत्य पदा तमस्पृशत् तस्य हि कर्मक्षयः कर्तव्यः स ज्ञानेन भक्त्या वा ज्ञाने त्वधिकारिशरीरमपेक्षते भक्तिरप्यत्र प्रमेयलभ्यैव अतस्तस्य भक्तिसिद्ध्यर्थं भगवदीयशरीरप्राप्त्यर्थं पदा अस्पृशत् स्वयमागत्येति तस्यापि साधनापेक्षाऽभावाय तस्य तथा करणसादृश्यावश्यकत्वाय सात्वतांपतिरिति वैष्णवानामयं पतिः अतो वैष्णवहितार्थं तथा कृतवान् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महानजगरः । उरसा गच्छतीत्युरग इत्यलक्षितत्वज्ञापनार्थं विशेषणम् ॥ ५ ॥

चुक्रोशेति । अनेन सर्वदुर्गाणीति गर्गोक्तिमनुस्मृत्येति भावः ॥ ६ ॥

उल्मुकैर्ज्वलत्काष्ठैः ॥ ७ ॥

अलातैस्तैरेव ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् विपिने कश्चित् महानहिः आसीत् स उरगः महानहिः यदृच्छया आगतः शयानं नन्दम् अग्रसीत् जग्रास ॥ ५ ॥ ६ ॥

उल्मुकैरलातैर्विव्यधुः ताडयामासुः ॥ ७ ॥ ८ ॥

---

भाषा टीका ।

उसी वन में रात में सोयेहुये नंदजी के पास में कोई बड़ा भूखा भारी सर्प दैव योग से आगया उसने नंदजी को पग की तरफ से बील लिया ॥ ५ ॥

सर्प के ग्रास करने से वह नंदजी पुकारने लगे कि हे ! कृष्ण ! हे तात ! यह महा सर्प मेरे को खाता है मैं तुमारे शरणहूं मेरे को छुडाओ ॥ ६ ॥

उन के उस चिल्लाने को सुन कर सब गोपाल जल्दी उठे सर्प को देखकर त्रासित होगये फिर जलती लकडियों से सर्प को मारने लगे ॥ ७ ॥

उन अग्नि के लकडियों से मार ने पर भी सर्प ने उन को नहीं छोडा इतने मे सात्वतों के पति भगवान् ने आकर चरण से उस सर्प को छू दिया ॥ ८ ॥

---

स वै भगवतः श्रीमत्पादस्पर्शहताशुभः ।
भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम् ॥ ९ ॥
तमपृच्छद्धृषीकेशः प्रणतं समुपस्थितम् ।
दीप्यमानेन वपुषा पुरुषं हेममालिनम् ॥ १० ॥
को भवान् परया लक्ष्म्या रोचते ऽद्भुतदर्शनः[1] । [1]शुभदर्शनेति वीर० पाठः
कथं जुगुप्सितामेतां गतिं वा प्रापितोऽवशः ॥ ११ ॥
॥ सर्प उवाच ॥
अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः ।
श्रिया स्वरूपसंपत्त्या विमानेनाचरं दिशः ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विद्याधरैरर्चितं पूजितम् ॥ ९ ॥
गोपेष्वात्मन ऐश्वर्यं प्रकाशयितुमविद्वानिव तमपृच्छत् दीप्यमानेन वपुषा समवस्थितम् ॥ १० ॥
यः परया प्रकाशते स भवान् क इति ॥ ११-१२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वै प्रसिद्धमेवैतदित्यर्थः । भगवतोऽशेषनिजप्रभावान् प्रकटयतः श्रीमतः सर्वमाधुर्यसम्पत्तियुक्तस्य पादस्य स्पर्शेन तत्स्वभावेन हतान्यशुभानि महदपराधलक्षणान्तानि बहुजन्म सञ्चितान्यशेषपापानि यस्य स । अत्र श्रीमदिति कैमुत्यव्यञ्जकम् अत एव गौरवेण श्रीमत्पादस्पर्शस्यैव पुनरुक्तम् । नतु तत्स्पर्श इति मात्रम् । अत एवेदमपि न चित्रमित्याह । भेजे इति । विद्याधरेषु नैर्वार्चितं सुदुर्लभमित्यर्थः । इति पूर्वतोऽपि रूपविशेषप्राप्तिः सूचिता । अन्यत्तैः । अथवा श्लोकद्वयमेवं युज्यते । अलातैर्हन्यमानोऽपि य उरङ्गमस्तं श्रीनन्दं नामुञ्चत्तमभ्येत्य पदास्पृशदिति तेन स्पर्शमात्रेणासावुरङ्गम स्तमनुञ्चदित्यवगम्यते । प्रविश पिण्डीमित्यत्रैवाकाङ्क्षा लब्धत्वात् । भगवान् सात्वतां पतिरिति पदद्वयस्य सामर्थ्यात् । अन्यथा तं तथा परित्यज्य विद्याधरतां प्राप्ते तस्मिन् श्रीभगवतः पृच्छायामयोग्यत्वाच्च । अन्यथा सोऽजगरः कीदृगासीत् तत्राह । स वै इति । सर्पवपुः सर्वाकारं रूपमप्याकारमेव तत्र हेतुः श्रीमदिति अशुभमेव तस्य हतं नतु वपुरिति तेनैव वपुषा विद्याधराकारं भेजे इत्यर्थः । अत्र चाचिन्त्यशक्तिरेव हेतुरित्याह भगवतः । श्रीमदिति वायकसैरिन्ध्र्यादिषु तथा दर्शनादिति भावः ॥ ९ ॥

हृषीकेशः सर्वेन्द्रियप्रवर्तकत्वेन सर्वज्ञोऽपीत्यर्थः । प्रणतं कृतप्रणामं सम्यक् बद्धाञ्जलित्वादिना अस्थितं दीप्यमानेन वपुषोपलक्षितं पुरुषं पुरुषाकारं हेमस्रग्युक्तम् । यद्वा हेम्नो माला पङ्क्तिः तद्वन्तं सौवर्णकिरीटकुण्डलादि दिव्यभूषणविभूषितामित्यर्थः ॥ १० ॥

शुभं सुन्दरं दर्शनं रूपं यस्य स भवान् अद्भुतदर्शन इति वा पाठः । कथं कस्माद्धेतोर्वा एतामाजगरीं गतिं प्रापितः केनेति शेषः । अवशः इच्छारहितः । यद्वा कान्तौ बलादित्यर्थः । अन्यथा एतादृशस्यैतादृश गत्यसम्भवादिति ॥ ११ ॥

ततश्च तत्स्पर्शप्रभावेण तस्य भक्तिरप्युत्पन्नेति तद्वाक्यद्वारा व्यञ्जयितुमाह । सर्प उवाचेति । अत्र च सर्पतानिर्देशः पूर्ववच्छरीराभेदापेक्षया । कश्चिदिति विनयेन श्रुतः संज्ञातः स्वस्य रूपेण सम्पत्तिः सम्पन्नता यस्यास्तया श्रिया शोभया विशिष्टः । दिशोऽचरमितस्ततः क्रीडया भ्रमन्नासम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सच सर्पो भगवतः श्रीमतः पादस्य स्पर्शेन हतमशुभं सर्पतापादकं यस्य तथाभूतः सर्पशरीरं त्यक्त्वा विद्याधरैः सम्माननीयं रूपं विद्याधरैरर्चितं प्राप ॥ ९ ॥

ततः प्रणतं कृतप्रणामं पुरतः दीप्यमानेन वपुषा तिष्ठन्तं हेममालाधरं तं पुरुषं भगवान् पप्रच्छ ॥ १० ॥

प्रश्नमेवाह । को भवानिति । अधुना यः परया लक्ष्म्या कान्त्या रोचते प्रकाशते स भवान्कः विद्याधरोऽहमिति चेत्तर्हि हे शुभदर्शन ! कथं निन्दितामेतां गतिं सर्पतां प्रापितः विप्रशापादिति चेत्तत्राह । अवशः कथं शापनिमित्तापचारनिमित्तदेहपारवश्यमिति भावः । यद्यपि सर्वज्ञस्य प्रश्नानुपपत्तिः तथाप्यात्मनः प्रभावं प्रकाशयितुमविदुष इव प्रश्नोपपत्तिः अत एव सुदर्शनपदपर्यायेण शुभदर्शनपदेन सम्बोधनं कृतम् ॥ ११ ॥

इत्थमापृष्टः सपूर्ववृत्तं विज्ञापयन्नात्मनः कृतार्थतामाविष्करोति । अहमिति । अहं तावत् कश्चिद्विद्याधरः सुदर्शन इति स्मृतः प्रसिद्धः सोऽहं श्रिया कान्त्या सुरूपसम्पत्त्या सौन्दर्यसमृद्ध्या च उपलक्षितः कदाचिद्विमानेन सर्वा दिशः समन्तात्सञ्चरन् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह । सद्य इति । वै निश्चयेन स सर्पवपुर्हित्वा विद्याधररूपं भेजे परं पूर्वस्मादिदृशिष्टं भगवदीयत्वात् तदाह । विद्याधरैरर्चितमिति । विद्याधराणां देवरूपो जातः सर्वापकृष्टा सर्पयोनिः सर्वोत्तमा भगवदीया एवञ्चरणप्रभावः तस्य सर्वाधमस्य सर्वोत्तमत्वप्रापणे प्रमेयबलमेव हेतुरित्याह । भगवत इति देहमात्रे उपपत्तिरुक्ता तस्य लोके सर्वोत्तमत्वाय चरणं विशिनष्टि । श्रीमत्पादेति । तस्य स्पर्शेन हतमशुभं यस्य सर्पवपुःपरित्यागे पापनाशो हेतुः गुणाधानेऽपि तत्स्पर्श एव हेतुः ॥ ९ ॥

यथायोग्यं पदार्थाभिनिवेशः कर्तव्यः चरणरज एव सामग्रीसम्पादकमेवमुपकारमयुक्के कृतवानिति शङ्कां वारयितुं तस्य भगवत्कृतोपकारज्ञानमप्यस्तीति ज्ञापयितुं भगवांस्तं पृच्छतीत्याह । तमपृच्छदिति । यद्यपि स्वयं तस्यान्तःकरणं सर्वमेव जानाति यतो हृषीकेशः तथापि तत्र शास्त्रार्थं सामर्थ्यं स्थापयितुं परिभाषणपूर्वकं तस्यान्तःकरणं बोधयतीत्याह । हृषीकेश इति । तथा करणे हेतुः प्रणतमिति तर्हि पूर्वं कथमन्यथा कृतवानित्याशङ्क्याह । समवस्थितमिति । पूर्वं तु न सम्यगवस्थितः इदानीं तु नम्रभावेन स्थित इति आन्तरमप्यस्य स्वरूपं समीचीनमिति ज्ञापयितुं बहिःकान्तिं वर्णयति । दीप्यमानवपुषेति यथा भगवदीयस्य तेजोवच्छरीरं भवति तथा दीप्यमानेन वपुषा उपलक्षितः उत्कृष्टयोनावपि भगवदीयत्वेऽपि तरतमभावोऽस्तीति कदाचित्तिर्यगादिरूपं वा प्राप्नुयादिति शङ्कां वारयितुमाह । पुरुषमिति । तत्रापि सर्वगुणपूर्णतां ज्ञापयितुमाह । हेममालिनमिति । महानेवालंकृतो भवतीति ॥ १० ॥

प्रश्नमाह । कोभवानिति । क इति जातिनाम्नोः प्रश्नः स्वभावतोऽप्यमहतः सहसैव साधनेन महत्त्वमापद्यत इति भगवानपि तं वर्णयति । परया लक्ष्म्या रोचते भवानिति किञ्च देवादयः सर्व एव समागताः बहुधा दृष्टाः परं भवानद्भुतदर्शनः अद्भुतं दर्शनं यस्येति नैवंविधः कश्चित्तेजस्वी दृष्टपूर्व इत्यर्थः इदृक्पूर्वपुण्यानिच व्यतिरेकेण न भवति तस्मिंश्च सति कथंजुगुप्सिता योनिरिति अवश्यं केनचित्प्रापित इति शाप एव किञ्चित्कारणं भविष्यतीति तथोच्यते तत्रापि वनं केनया प्रापित इति ॥ ११ ॥

अयं पूर्वमपि सर्प एवास्थितः भगवत्कृपया विद्याधरत्वं प्राप्त इति पुनः सर्प एवायं जातः अतः सर्प उवाचेति स्वस्य पूर्ववृत्तान्तमाह । अहमितिश्लोकद्वयेन विद्याधरा देवविशेषाः कश्चिदित्यप्रसिद्धः सुदर्शन इति विश्रुतः प्रसिद्धः अनेनैव वैष्णवनाम्ना अग्रे भगवत्कृपा जातेति ज्ञापयितुं विश्रुतत्वकथनं तस्य देहकान्तिः धनम् अद्भुतसामर्थ्यं चेति पूर्वमपि गुणत्रयं स्थितमित्याह । श्रिया स्वरूपसम्पत्त्या विमानेनेति दिशः दश आ समन्ताच्चरन् सर्वत्राप्यप्रतिहतगतिः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विद्याधरैरर्चितमिति तस्य विद्याधर श्रेष्ठत्वात् ॥ ९ ॥

तममपृच्छदिति बहुग्रामनगरेभ्य आगतान् यात्रिकानपि लोकान् ब्राह्मणानादरतो भीषयितुमिति भावः । अत एव हृषीकेशस्तत्रत्यजनान् सर्वानेव सुदर्शनोक्ताविकाङ्गीकारयन् ॥ १० ॥

प्रापित इति । केनेति शेषः ॥ ११ ॥

श्रुतः विख्यातत्वात् सर्वलोकैरेव । दिशोऽचरमितस्ततः क्रीडया भ्रमन्नासम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विद्याधरेषु अर्चितं पूजितं रूपं भेजे प्राप ॥ ९ ॥

हृषीकाणां सर्वप्राणीन्द्रियाणामीशः सर्वज्ञोऽपि मुग्ध इव तमपृच्छत् कथंभूतं प्रणतं कृतप्रणामं पुरतः दीप्यमानेन वपुषा सम्यगवस्थितम् ॥ १० ॥

लक्ष्म्या शोभया यः रोचते प्रकाशते स भवान् कः ॥ ११ ॥

श्रिया शोभया तत्तदङ्गतया स्वरूपसंपत्त्या शरीरसौन्दर्यसमृद्ध्या ॥ १२ ॥

---

भाषा टीका ।

श्रीभगवान् के पाद के स्पर्श होने से उस सर्प के सब पाप नष्ट होगये तब उसी वखत सर्प शरीर को छोडकर विद्याधरों के पूजने योग्य रूप को उस सर्प ने धारण किया ॥ ९ ॥

फिर वही पुरुष बडे प्रकाशमान रूप स सुवर्ण की माला धारण किया हुआ नमस्कार करके आगे खडा भया तब हृषीकेश भगवान् ने उस से पूछा ॥ १० ॥

आप बडी शोभा से प्रकाशमान हो बडा अद्भुत तुमारा दर्शन है फिर तुम किस प्रकार से परवश होकर ऐसी निंदित गति को प्राप्त भये हो ॥ ११ ॥

सर्प बोला मैं कोई सुदर्शन नाम का विद्याधरथा मैं अपनी रूप लक्ष्मी की संपत्ति से विमान में बैठ कर दिशाओं में घूमता था ॥ १२ ॥

ऋषीन् विरूपानङ्गिरसः प्राहसं रूपदर्पितः ।
तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना ॥ १३ ॥
शापो मेऽनुग्रहायैव कृतस्तैः करुणात्मभिः ।
यदहं लोकगुरुणा पदास्पृष्टो हताशुभः ॥ १४ ॥
तं त्वाहं भवभीतानां प्रपन्नानां भयापहम् ।
आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् ! ॥ १५ ॥
प्रपन्नोऽस्मि महायोगिन् महापुरुष सत्पते ! ।
अनुजानीहि मां देव ! सर्वलोकेश्वरेश्वर ! ।
ब्रह्मदण्डाद्विमुक्तोऽहं सद्यस्तेऽच्युत ! दर्शनात् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

प्राहसमुपहसितवानस्मि प्रलब्धैरुपहसितैः मदीयेनैव पापेन निमित्तेन ॥ १३ ॥

यद्यतः शापात् ॥ १४ ॥

आपृच्छे लोकं गन्तुमनुज्ञां याचे हे अमीवहन् दुःखनाशन ! ॥ १५-१९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विरूपान् विकृताकारान् तपसा च कार्श्यादि व्याप्तानित्यर्थः अङ्गिरसस्तद्वंश्यान् प्रलम्भे हेतुः स्वेनैव पाप्मनेति । यद्वा । तैः यत् प्रापितस्तत् स्वेनैव पाप्मनेति तेषां दोषः परिहृतः ॥ १३ ॥

अहो किं नाम वक्तव्यो महतां प्रभावो येन मम दुष्कृतमपि परमसुकृततां नीतमित्याशयेनाह । शाप इति । करुणात्मभिरित्यपराधाग्रहणं दीनोद्धारव्यग्रत्वञ्च दर्शितम् । एतेन तत्र श्रीकृष्णपादाब्जस्पर्शात्ते परममङ्गलं भावीति तैरुक्तमिति ज्ञेयम् अतोऽनुग्रहायैव शापः कृतः । लोकगुरुणा जगदीश्वरेण भवतेति सुदुर्लभत्वमुक्तम् । तत्रापि पदा श्रीचरणेन पादेति क्वचित् पाठः ॥ १४ ॥

ननु स्वलोकं गन्तुमनुज्ञां याचसे कथं न मोक्षमित्यत्राह । भवेति । भवभीतत्वेन प्रपन्नानां मनसापि शरणागतानां तद्भयापहम् । अस्माकन्तु साक्षात् प्राप्तपरमभक्तिनिदानपादस्पर्शानां स्वत एव स इति भावः ॥ १५ ॥

किन्तु यत्र कुत्रापि स्थितौ त्वत्प्रपत्तिरेव ममाभीष्टेत्याह । प्रपन्न इति । त्वामाश्रितोऽस्मि प्रपन्नोऽहमिति पाठेऽपि स एवार्थः । ननु सा सुदुर्लभेति चेत्तत्राह । महायोगिन् हे अनन्ताचिन्त्यैश्वर्ययुक्त ! कुतः महापुरुष हे परमेश्वर त्वत्प्रभावान्न किञ्चिद्दुर्लभमित्यर्थः । विशेषतश्च हे सतां पते पालक ! ततोऽङ्गिरसामङ्गीकारमङ्गीकुर्या एवेति भावः । तत्रापि हे कृष्ण हे पूतनादीनामपि भक्तपदप्रदेत्यर्थः । अतः प्रपन्नमनोरथपरिपूरणं तवोचितमेवेति भावः । देवेति पाठे हे विचित्रक्रीडाकौतुकप्रधान एतादृशाधमोद्धरणमपि तव क्रीडासु योग्यमिति भावः । अतः कृतार्थत्वादधुना मामनुजानीहि मल्लोकगमनायाज्ञामेव देहि । ननु मत्प्रपत्तीच्छा लोकान्तरगमनेच्छा चेति विरुद्धमित्याशङ्क्य स लोकोऽपि त्वदीय एवेत्याह । हे सर्वलोकेश्वरेति । किञ्च कर्मफलदात्रान्तर्यामिणा त्वया तथैव प्रेर्योऽहं तत्र किं कर्त्तुं शक्नुयामित्याह । हे ईश्वरेति ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमीवहन् पापापह ! ॥ १५-२२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सौन्दर्येण गर्वितो विरूपानङ्गिरसः ऋषीन् दृष्ट्वा हसितवानस्मि तदा मदीयेनैव पाप्मना पापेन हेतुना प्रलब्धैरुपहसितैस्तैरङ्गिरोभिः ऋषिभिरिमां योनिं सर्पजन्म प्रापितः ॥ १३ ॥

प्रलब्धैरपि तैरङ्गिरोभिः करुणात्मभिः हेतुगर्भमिदं कारुण्यस्वभावत्वान्मदनुग्रहार्थमेव शापः कृतः कुतः यत् यस्मादहं त्रिलोकगुरुणा त्वया कर्त्रा पदा करणेन स्पृष्टः अन्यथैतन्न सम्भाव्यत इति भावः कथम्भूतः गतमशुभं पापं यस्य तथाभूतोऽहम् ॥ १४ ॥

पादस्पर्शाद्धेतोः शापेन निर्मुक्तः हे अमीवहन्नमीवं पापं दुःखं वा हन्तीति तथाभूत ! त्रिलोकगुरुं भवात्संसाराद्भीतानां प्रपन्नानां भयमपहन्तीति तथाभूतं त्वामापृच्छे स्वलोकं गन्तुमनुज्ञां याचे ॥ १५ ॥

हे महायोगिन् अचिन्त्यविविधविचित्रशक्ते ! हे महापुरुष हे सतांपते त्वां प्रपन्नोऽस्मि मामनुजानीह्याज्ञापय हे अच्युत तव दर्शनाद्धेतोः सद्यः ब्रह्मशापाद्विमुक्तोऽहमित्येतन्न चित्रमिति वाक्यशेषः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पाप्मना अपराधेन प्रलब्ध उपलब्धो विप्रलब्धो वा विरूपान्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

सौन्दर्यराहितान् "सौन्दर्यंच स्वभावंच रूपशब्दं प्रचक्षत" इति अङ्गिरसः पुत्रा अङ्गिरसः ॥ १३—१४ ॥

आपृच्छे आज्ञां प्रार्थये अमीवहन् दोपनाशन ! ॥ १५—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मदण्डादिति तन्मात्रेण सर्पदेहाध्यासनाच्च विवक्षया स दें भगवत इति तु तद्देहनाशादिविक्षया ॥ १६—१९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवंस्वरूपमुक्त्वा अपराधफले निरूपयति । ऋषीनिति । आङ्गिरसगोत्रे उत्पन्ना ऋपयः अष्टावक्रवत्विरूपाः स्थिताः स्वयन्तु रूपेण दर्पितः प्राहसंयथाबालः प्राकृतो हसति पश्चात् तच्छापेन इमां सर्पयोनिं प्राप्तः सर्पयोनिं प्राप्तौ विशेपहेतुमाह । प्रलब्धैरिति । प्रलब्धा वक्रोक्त्या वञ्चिताः उद्वेजिताः स्वरूपतः निष्कारणमुद्वेजकः सर्प एव भवति अत इमां योनिं प्राप्त इति नन्वल्पे अपराधे कथम्महान् दण्डः तैः कृत इत्याशङ्क्याह । स्वेन पाप्मनेति । पूर्वं हि ब्रह्मवृत्तिरपहृता अतस्तेन भाव्यमेव ऋषिभिः केवलं प्रकटितमित्यर्थः ॥ १३ ॥

एवमपराधशापौ निरूप्य तस्य वैष्णवत्वसिद्ध्यर्थं निर्मत्सरतामाह । शापो म इति । पूर्वम्विद्याधरत्वेन कदापि मुक्तिः स्यात् अतोऽयं शापोऽनुग्रहार्थं एव यद्यपि लोके अनिष्टरूपः तथापि मे अनुग्रहार्थ एव जातः यतस्ते करुणावन्तः नहि करुणावतां शापोऽन्यथा भवति तत्रापि प्रसिद्धानां तदाह । तैः करुणात्मभिरिति । तस्यानुग्रहरूपत्वमाह । यदहं लोकगुरुणेति । ननु शापः पूर्वसिद्धः सदोपात्मक एव तेन कथमित्थसिद्धिः तत्राह । कृत इति । अयं शापः तैरेवापूर्वः कृतः भगवद्दर्शनमृषीणामनुग्रहाद्भवति तदत्र शापादेव जातमिति तस्यानुग्रहत्वं किञ्च लोकगुरुणा त्रैलोक्यस्यैव ज्ञानोपदेशकर्त्रा पादेन स्पृष्ट इति गुरुसेवया हि ज्ञानं सिद्ध्यति सा सेवा तदा पुष्टा भवतीति निश्चीयते यदि स्वयम्पदा स्पृशति गुरुः अतिविश्वस्तं प्रीतिमन्तमेव स्वयंपदा स्पृशति तेनैव अपराधः पूर्वपापमपि गतमित्याह । हताशुभ इति । हतमशुभं यस्य ॥ १४ ॥

एवं भगवच्चरणस्पर्शाभिनन्दनं कृत्वा तेनैव जातं फलं प्रार्थनामिषेण कीर्तयति । तं त्वाहमितिसार्द्धैस्त्रिभिः । आदौ फलानुज्ञां प्रार्थयति तं सर्वफलदातारं तुशब्देन कर्मणापि फलमित्यादिपक्षं व्यावर्तयति । तं त्विति त्वा त्वां वा पूर्वार्थे आङ्मध्ये आसमन्तात् भवभीतानामिति ये केचन दुर्लङ्घ्यादपि संसाराद्भीताः तेपामपि भवान् भयं दूरीकरोति प्रपशिमात्रेण भगवत्सेवार्थं हि संसारे उत्पाद्यन्ते ते सर्वे संसारगतमाश्चया विपरीता एव भवन्ति तथापि कृष्ण तवास्मीत्युक्तः सर्वमेवभयं दूरीकरोति अतोऽस्माकमपि वयं सापराधाः नन्दस्य ग्रासं कृतवन्त. किंकरिष्यतीतिशङ्का निवर्त्तिता अतःआपृच्छे आसमन्तात् पृच्छामि सम्भापणं करोमि मध्ये समागतोऽप्युपद्रवो नष्ट इत आगन्तुकोऽपि दोपो नास्ति तदाह । शापनिर्मुक्त इति । पादस्पर्शादित्युभयत्र हेतुः तथापि सहजपापस्य जायमानत्वात् कथं सम्भापणयोग्यतेत्याशङ्क्याह । अमीवहन्निति । अमीवं पापं हन्तीति ॥ १५ ॥

तथाप्यन्यप्रेरणया दण्डं माकुर्यादिति भीतः सन् शीघ्रं गमनं प्रार्थयन् पुनर्विज्ञापयति । प्रपन्नोऽस्मीति । पुनःशरणागतः शरणागतस्य सर्वे अपराधा निवृत्ता भवन्तीति महायोगिन्निति तव नैते पित्रादयः किंत्वतियोगेन तथा विडम्बयसीति केऽपि त्वां न जानन्तीति ज्ञापयितुं महायोगित्वमुक्तं किं च अल्प एव हि क्षुद्रस्यापराधं मन्यते त्वन्तु महापुरुपः सतांपतिः सन्तो हि तितिक्षवः तेपां पतिः सुतराम् अतः सर्वप्रकारेण मदपराधसहनं युक्तमिति भावः । अत एव मामनुजानीहि सेवकत्वेन जानीहि देवेति संबोधनात् देवयोनिविद्याधरपक्षपातो युक्तः नतु मानुपपक्षपात इति ननु मदनुज्ञापितोऽपि कथं यमादिभिर्न पीडितो भविष्यसि कालादयो हि मद्भक्तापराधे दण्डं करिष्यन्त्येवेतिचेत्तत्राह । सर्वलोकानां ये ईश्वराः तेपामपि त्वमीश्वर इति अतस्त्वत्कृपायां जातायां न कापि चिन्ता भविष्यतीति भावः ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रलब्धैरुपहसितैर्मदीयैनैव पापेन निमित्तेन ॥ १३ ॥

यत् यतः शापात् ॥ १४ ॥

आपृच्छे स्वलोकं गन्तुमनुज्ञां याचे । अमीवहन् ! हे दुःखहन्तः ! ॥ १५ ॥

हे महायोगिन् ? क्वाहमधुनैव महाखलसर्पस्त्वत्पितरमग्रसम । क्वाहमकस्मादधुनैव लब्धसद्विवेकस्त्वां स्तौमीत्यचिन्त्यम् तव योगैश्वर्यमिति भावः । महापुरुपाणां श्रीमन्नन्दादीनां सतां साधूनां पते इति सर्पदेहान्मामामोचयः स्वीयानेतांश्चापालय इत्यपारं तव कृपायैभवमिति भावः । अनु अनुचरमेव मां जानीहि ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरूपान् तापसत्वात् सौन्दर्यमदेन मत्तः प्राहसमुपहासितवानस्मि तैः प्रलब्धैरुपहासितैर्मदीयेनैव पापेन निमित्तेन इमामाजगरीं योनिं प्रापितोऽस्मि ॥ १३ ॥

यत् यस्मात् लोकगुरुणा भवता पादस्पृष्टः चरणेन स्पृष्टोऽस्मि ॥ १४ ॥

हे अमीवहन् दुःखघ्न ! पादस्पर्शात् शापनिर्मुक्तः दर्शनात्प्रणामाच्च कृतार्थ एवेति भावः । आपृच्छे भवत्परिचर्यां कर्तुं स्वलोकं गन्तुं वा गृहीत्यर्थः ॥ १५—१६ ॥

---

### भाषा टीका ।

मैं अपने रूपसे गर्वित था तब अंगिरागोत्र वाले ऋषिन को कुरूप देखकर मैंने हंसी करी तब तिनके निरस्कार करने से अपने पाप से मेरेको उनने इस योनिको प्राप्त कर दिया ॥ १३ ॥

वे ऋषि बडे कृपालु थे उनने मेरे अनुग्रह के वास्ते शाप दिया जिससे कि मेरे को लोक गुरु भगवान् ने पादसे स्पर्श किया तो मेरे सब पाप छूट गये ॥ १४ ॥

यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च ।
सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते ॥ १७ ॥
इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च ।
सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः ॥ १८ ॥
निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः ।
समाप्य तस्मिन्नियमं पुनर्व्रजं नृपाययुस्तत्कथयन्त आदृताः ॥ १९ ॥
कदाचिदथ गोविन्दो रामश्चाद्भुतविक्रमः ।
विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम् ॥ २० ॥

भाषा टीका ।

अब हे पापनाशक आपके पाद स्पर्श होने से मैं पापसे छूट गया आप संसार से भीत तथा शरणागत पुरुषों के भयके नाशकरने वाले हो आपसे मैं आज्ञा मांगता हूं ॥ १५ ॥

हे महायोगि महापुरुष ! सत्पति हे सर्व लोकेश्वरेश्वर ! देव म आप के शरण हूं मेरे को आज्ञा दीजिये हे अच्युत आपके दर्शन होने से शीघ्र ही मैं ब्रह्म दंड से छूट गया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहिदेहं निहत्यैवं प्रागुन्मत्तं सुदर्शनम् ।
तद्वदुन्मादिनं कृष्णः शङ्खचूडमताडयत् ॥
तत्प्रसङ्गमाह । कदाचिदिति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वन्माहात्म्यं चाधुना मयैव विशेषतोऽनुभूतमित्याह । ब्रह्मेत्यर्द्धकेन दर्शनमात्रेण सर्पाकाराध्यासो गतः चरणस्पर्शेन तु सर्पाकारतैव विद्याधराकारतां प्रापेति भावः । विनिर्मुक्तमिति श्रीचित्सुखसम्मतः पाठः । तत्र पूर्वेणान्वयः किञ्च त्वत्पादाब्जेन साक्षात् स्पृष्टोऽहं स्वलोकवर्त्तिनोऽन्यान् गत्वा स्वस्पर्शेन कृतार्थयिष्यामि किमुतात्मानमित्याशयेनाह । यन्नामेति । नामैकमपि गृह्णन् उच्चारयन्नपीति श्रद्धाद्यपेक्षा निरस्ता गृह्णन्निति वर्त्तमानत्वेन सम्पूर्णत्वापेक्षा अखिलानिति अधिकाराद्यपेक्षा सद्य इति कालापेक्षा च । श्रोतॄनिति केवलश्रवणप्राप्तिरेवाभिप्रेता । इवार्थे एव आत्मानमिवेति दृष्टान्तत्वेन श्रवणकीर्त्तनयो रविशेषोक्त्या माहात्म्यविशेषः सूचितः । चकारेण तत्तत्सम्बन्धिनोऽपि तस्य पदा स्पृष्टः सन् भूयोऽधिकं यथा स्यात्तथा सर्वानेव तान् हि निश्चितं पुनातीति किं वक्तव्यमित्यर्थः ॥ १७ ॥

अनुज्ञाप्य मौनं सम्मतिलक्षणमिति न्यायेन पादस्पर्शप्रभावमात्रतः सर्पकवलशैथिल्यापादनेन कृच्छ्रादपादानात् श्रीनन्दश्च मोचितः श्रीकृष्णेनेति पूर्वसूचितार्थ एवात्र स्पष्टीक्रियते उभयोरपि मङ्गलं कृतमिति बोधनाय अत एव चशब्दश्च । तममोचयित्वा विद्याधरेण सङ्कथनं न युक्तमिति ॥ १८ ॥

आत्मवैभवं स्वरूपवैभवं कुतोऽपि विद्यादि प्राप्तैव नरलोकात् । विस्मये हेतुः व्रजौकसः तत्प्रेमभरविवशतया मुहुर्दृष्टमपि तादृशत्वमनुसन्धातुमशक्या इत्यर्थः । नियमं शिवरात्रतीर्थवासात्मकम् ॥ १९ ॥

अथ क्रमप्राप्तं देवयोनिमुक्तिदानरूपत्वेनात्मीयरक्षारूपत्वेन च पूर्वलीलासदृशं पूर्वविवक्षितं लीलान्तरमाह । कदाचिदित्यादिना यावत् समाप्ति । अथ तच्छिवरात्र्यनन्तरं कदाचित् होलिकापूर्णिमायाम् । गोविन्दः श्रीगोकुलयुवराजः । रमयति क्रीडयति कृष्णमिति राम इति निरुक्त्या तदानीं सख्यांशस्यैवोदयो ध्वनितः जन्मारभ्य सह विहारात् । वाल्याद्यशेषाच्च । व्रजे तदंशस्यैव प्राचुर्यदर्शनं राजधान्यामेवाग्रजत्वांशस्येति । अत्रास्य गौणता विवक्षया पश्चान्निर्द्देशश्चकारात् तदुपलक्षितत्वेन सखायोऽपि ज्ञेयाः मध्यदेशादौ तथैव होरिकाक्रीडाव्यवहारात् । भविष्योत्तरशास्त्राच्च । राजसूयावभृथे चेत्थमेव क्रीडा वर्णयिष्यते । वने व्रजसन्निहिते इति ज्ञेयम् । अद्भुतः अलौकिकः विक्रमः प्रभावो यस्य स इति द्वयोरपि विशेषणम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव कैमुत्यनयेन स्पष्टयति । यदिति । यस्य तव नाममात्रमेव गृह्णन्नुच्चरन् पुमानात्मानं श्रोतॄंश्च सर्वान् जनान् सद्यः पुनाति किम्पुनः साक्षात्तादृशप्रभाववन्नाम्नस्तव पदा संस्पृष्टः शापाद्विमुक्त इति किमेतदित्यर्थः ॥ १७ ॥

इत्थमनुज्ञाप्यानुज्ञां गृहीत्वा दाशार्हं कृष्णं प्रदक्षिणीकृत्याभिवाद्य च सुदर्शनः स्वर्गं प्रतिययौ नन्दोऽपि कृच्छ्रात्सर्पग्रासान्मोचितः ॥ १८ ॥

ततो व्रजौकसो गोपाः कृष्णस्य तदात्मवैभवमनितरसाधारणं प्रभावं निशाम्य दृष्ट्वा विस्मितं चेतो येषां तथा भूताः तस्मिन्नम्बिकावने

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नियमं व्रतं समाप्यादरयुक्ताः कृष्णस्यात्मवैभवमेव कथयन्तो हे नृप ! पुनर्व्रजं प्रत्याजग्मुः ॥ १९ ॥

अथ शङ्खचूडवधतच्छिरोमण्यपहारात्मकं कर्म प्रस्तौति । कदाचिदित्यादिना यावत्समाप्ति । अद्भुतविक्रम इति रामकृष्णयोरुभयोरपि विशेषणम् तावुभौ वने गवां व्रजस्त्रीणां च मध्ये रविजह्रतुः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चात्तं स्तुत्वा दाशार्हं कृष्णम् ॥ १८ ॥

निशाम्य दृष्ट्वा ॥ १९—२० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कदाचित् होरिकापूर्णिमायां रामश्चेत्युपलक्षणं सखायश्च । तथैव मध्यदेशाचारात् भविष्योत्तरपुराणाच्च । अत एव सम्प्रमत्तवदित्यत्रापि न दोषः ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वहमुदासीनः सर्वत्र न मे द्वेष्योऽस्ति न प्रिय इति अतोऽनिषिद्धाचरणे कालादयो बाधका एवेति चेत्तत्राह । ब्रह्मदण्डादिति । भगवद्दर्शनादेव ब्रह्मदण्डाद्विमोचः प्रत्यक्षसिद्धः यद्यपि त्वमुदासीनः तथापि त्वद्धर्मा नोदासीनाः अन्यथा ते दर्शनादेव ब्रह्मदण्डाद्विमोक्षो न स्यात् तत्रापि सद्यः तत्रापि दर्शनादेव अच्युतेति संबोधनान्न भगवद्धर्माणां कादाचित्कत्वं तेन ये निवर्तितास्ते निवर्तिता एव ननु यावदुपयोगमेव निवर्तेतां कथं सर्वानिष्टनिवृत्तिरितिचेत्तत्राह । यन्नामेति । मम सर्वपापनिवृत्तौ न संदेहः यस्य नामग्रहणमात्रेण श्रोतॄनात्मानञ्च निष्पापान् करोति तत्रापि नाधिकारिविशेषः किंतु सर्वानेव एवेत्यनेन आत्मशब्दः जीवपरो ज्ञायते न केवलं दैहिका दोषा निवर्तन्ते किंत्वदानप्रभृतिसर्वमेव निवर्तते चकारात् श्रोतॄणामपि तथा समुच्चयार्थः सद्यः शुद्धिरिति शुद्धिहेतूनां देशादीनां निरपेक्षतामाह तत्रापि भूयो वारंवारमुच्चारयन् पुनातीति किं वक्तव्यं यस्य नाम्न एवैतादृशं माहात्म्यं तस्य स्वरूपमाहात्म्यं किंवक्तव्यमित्याह । तस्य पदा स्पृष्ट इति पादस्पर्शः सुतरां दुर्लभः तत्रापि भगवत्कर्तृकः तत्रापि चरणकर्तृकः यतस्तच्चरणं तादृशो रेणुः गङ्गादितीर्थानि अमृतरसः भक्ता इति सर्वसाधिष्ठ्यायुक्तमेव सर्वदोषनिवर्तकत्वमित्यर्थः । तत्रापि तस्य ते सर्वदोषनिवारणार्थमेवापतीर्णस्य ॥ १७ ॥

भगवतो वक्तव्याभावात्तूष्णींभावेऽप्यङ्गीकारस्य सिद्धत्वात् भगवन्तमनुज्ञाप्य स्वयमेव गत इत्याह । इत्यनुज्ञाप्येति । यतो दाशार्हः सेव्यः एवंभाव एव स्वामी सेव्यो भवतीति सर्वपुरुषार्थसिद्ध्यर्थं साधनमपि कृतवानित्याह । परिक्रम्येति । परिक्रम्य प्रदक्षिणीकृत्य सर्वपुरुषार्थास्तेन वेष्टिता इति तत्सिद्धिः स्वाधीना अभिवादनेन स्वतन्त्रतया स्वोपार्जनत्वेन पुरुषार्थानामत्याधिक्यं सूचितं चकारात्स्तुत्वा भगवता चानुज्ञातः तथेत्युक्तो वा ये यथा मां प्रपद्यन्ते इति न्यायेन सर्वपुरुषार्थास्तस्मै दत्तवानिति वा अतः सुदर्शननामत्वाच्च दिवं यातः विद्याधरलोकमेव गतः कृच्छ्रात् सर्वदोषात् यतो मोचितः नन्दश्च तथा कृच्छ्रान्मोचितः चकाराद्वैभवञ्च ज्ञातवान् ॥ १८ ॥

ततस्ते गोपाः सर्वथा भगवत्परायणा जाता इत्याह । निशाम्येति । कृष्णस्य तद्वैभवं निशाम्य ज्ञात्वा सर्व एव व्रजौकसः विस्मितचेतसो जाताः अलौकिकसामर्थ्यस्य प्रकटितत्वात् नात्र कृतिसाध्यं किंचित् येन पूर्वेण गतार्थता स्यात् अयंत्वनुभावरूपो वैभवः अन्यथा पादस्पर्शः अलातहननोपक्षयातिसूक्ष्मत्वाच्च तेन कथं कार्यं स्यात् कृष्णस्येति परमानन्दः स्वानुभवसिद्ध इतिधर्म्युत्कर्षः आत्मन एवायं वैभवो ननु शक्तेः अनेन स्वरूपमेव तथाविधमङ्गीकर्तव्यं यत्र क्रियाज्ञानादीनामभावः व्रजौकस इति दृष्टप्रत्यय एवातिभरः अत्यन्तविश्वसिताः अतः क्रियया विस्मिता अपि पुनरनुभवेनापि विस्मितचेतसो जाताः ततः तस्मिन् भगवति नियमं समाप्य पुनर्व्रजं ययुः तत्समारब्धं कर्म कृष्ण एव निवेदितवन्तः अन्यथा तेन बन्धः स्यात् पुनर्व्रजमेव ययुः तत्रैव सर्वा सिद्धिरिति मनसाप्यन्यत्र गमनेच्छां न कृतवन्तः नृपेति सम्बोधनं विश्वासार्थं दृष्टे हि राज्ञां विश्वास इति आदृताः सन्तः तदेव कथयन्त इति चित्ते भगवदनुभावाभिनिवेशः उक्तः ॥ १९ ॥

एवमनन्यभजनार्थं भगवदनुभावं निरूप्य शब्दब्रह्मानन्दं गोपिकाद्वारा सर्वेषु पूरयितुं पुनर्गोपिकाभिः सह शब्दात्मकेन बलभद्रेणापि सह क्रीडां निरूपयति । कदाचिदिति त्रयोदशभिः । इयं लीला कालप्रधाना अतोऽत्र दैत्यानां बाधकत्वं बाधने भगवत्सामर्थ्येन तन्निराकरणे कृते शब्दस्यैव माहात्म्यं निरूपितं भवतीति मणिदानमग्रजायैव लौकिकालौकिकमाहात्म्ये ज्ञात एव वेदानां स्वतः प्रामाण्यं सिद्ध्यति अन्यथा भ्रान्तमीमांसकानामिव सर्वो वेद उत्प्रेक्षापरः स्यात् कदाचिद्शीतकाले अथ भिन्नोपक्रमेण पूर्वोक्तगोपिकाव्यतिरिक्ताभिः सह क्रीडायाः पूर्वं शास्त्रपरा लौकिकधर्मपराश्च स्थितास्तासामप्यनुभावदर्शनात् सर्वस्यापि तदधीनत्वज्ञानात् भगवता बलभद्रेण च सह रमणार्थमिच्छा जाता भगवांश्च गोविन्द इति तासामपीन्द्र इति क्रियाशक्तिप्रधानो रेमे रामश्च तेनापि सह रमणे चित्तप्रसादार्थमद्भुतो विक्रमः पराक्रमो यस्येत्युक्तं चकारस्त्वावेशसमुच्चयार्थः अनेन मध्यमाधिकारिणां वेदपरत्वं न दोषायेति निरूपितम् अन्यथा प्रमाणपराणामनन्यभावो भज्येत अद्भुतः पराक्रम इति केवलार्थपराणामेतस्योपयोगः सूचितः अन्यथैतन्निराकरणं स्वार्थनिरूपणञ्चेति भगवति वेदे वा द्विगुणावृत्तिः स्यात् अर्थवदेव शब्दस्यापि लीलेति वने रात्र्यामित्युक्तम् उभावपि विजह्रतुः उभयो रमणार्थं पूर्वगोपिकापेक्षया हीना इति गोव्रजयोषितां मध्य इति उक्तं गोप्राधान्यो व्रजः तत्संबन्धिन्यो योषित इति ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दर्शनादेव विमुक्तः किमुत पदा स्पृष्टः । नामैकमपि गृह्णन् योऽपि किमुताहं दर्शनस्पर्शवानपि ॥ १७—१८ ॥

विस्मितचेतस इति । अहो यो ऽयमस्माकं बाल्य एवास्मान्

उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः ।
स्वलंकृतानुलिप्ताङ्गौस्राग्विणौ विरजोऽम्बरौ ॥ २१ ॥
निशामुखं मानयन्तावुदितोडुपतारकम् ।
मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना ॥ २२ ॥
जगतुः सर्वभूतानां मनःश्रवणमङ्गलम् ।
तौ कल्पयन्तौ युगपत्स्वरमण्डलमूर्च्छितम् ॥ २३ ॥
गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप ! ।
स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः ॥ २४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

विना क्षणमात्रमपि न निर्वृणोति स एव कृष्णः किं परमेश्वर एवञ्चेदेतत्पित्रादयो वयमपि महापुरुषा एव भवामेति धन्यो गर्गमुनिर्येन प्रथमत एवास्य नारायणसाम्यमुक्तम् । तथैव वरुणस्यास्य च विद्याधरस्य मुखादश्रौष्मेति भावः ॥ १९ ॥

कदाचिच्छिवरात्रिव्रतानन्तरं रात्र्यां चन्द्रिकाबहुलायाम् । व्रजयोषितां मध्यगाविति होलिका क्रीडायां तथैव व्यवहार इति वैष्णवतोषिणी ॥ २०—२१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मदण्डात् विमुक्तः पादस्पर्शात् दर्शनात् सर्वथा कृतार्थ एवेति शेषः ॥ १७ ॥

इत्येवमनुज्ञाप्य आज्ञां कृष्णात्पृष्ट्वा तेनाप्यक्षिसङ्कोचेनैव तल्लोकं प्रत्याज्ञापितः दाशार्हं कृष्णं परिक्रम्य दिवं यातः ययौ ॥ १८–२० ॥

---

### भाषा टीका ।

जिन आपके नाम लेने से मनुष्य और सबों को तथा अपने को शीघ्रही पवित्र कर सकता है तिन आपने जब पाद से मेरे को स्पर्श किया तो फिर क्या कहना है ॥१७॥

इस प्रकार से दाशार्ह भगवान् से आज्ञा मांगकर प्रणाम कर प्रदक्षिणा करके सुदर्शन विद्याधर स्वर्ग लोक को चला गया नंदजी भी कष्ट से छुडाये गये ॥ १८ ॥

कृष्ण भगवान् के उस वैभवको देखकर व्रजवासी सब के चित्त विस्मय युक्त होगये फिर उस तीर्थ में नियम को समाप्त करके और आदर युक्त होकर उस कथा को कहते हुये व्रजको चले आये ॥ १९ ॥

इसके अनंतर कोइ दिन श्रीबलरामजी तथा कृष्णचंद्रजी अद्भुत पराक्रम वाले होने से व्रज स्त्रियों के मध्य में वन में जाकर रात्रि में विहार करते भये ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विरजोऽम्बराविति विरजसी निर्मले अम्बरे ययोस्तौ ॥ २१ ॥

किञ्च निशाप्रवेशं सत्कुर्वन्तौ उदित उडुपस्तारकाश्च यस्मिन्स्तत् मल्लिकागन्धेन मत्ता अळयो यस्मिंस्तत् ॥ २२ ॥

अनियतत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि तौ स्वरमण्डलस्य मूर्च्छितं युगपत्कल्पयन्तौ मनःश्रवणयोर्मङ्गलं यथा भवति तथा जगतुरगायतामिति ॥ २३ ॥

मूर्च्छितास्तद्गीतलीनचित्ताः स्रंसच्छ्लथद्दुकूलं यस्मात्तमात्मानं देहम् स्रस्ताः केशेभ्यः स्रजो यस्य तञ्च ततो नाविदन् ॥ २४—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विहारमेवाह । उपेति त्रिकेण । ललितं गाननर्मादिपरिपाटीभिर्मनोहरं यथा स्यात्तथा उपगीयमानौ होरिकोचितगीतिभिर्वर्ण्यमानौ । तत्र हेतुः बद्धं सौहृदं यैरिति । एतेन श्रीरामस्यापि पृथक् प्रेयसीगणो लक्ष्यते । तद्वर्जितं गोप्यन्तरेण भुजयोरपि यत् स्पृहा श्रीरिति । अत एव गोप्यस्तद्गीतमाकर्ण्येति द्वयोरपि गीतस्य तादृशमोहहेतुत्वं वक्ष्यते । सर्वमेलनन्तु होरिकावसरसंघर्षादिति ज्ञेयम् अतो मिथोऽननुसन्धानमपि ॥ २१

उदितेति । शिशिरान्ते हिमकुज्झटिकापगमादतिशयेन प्राकट्यात् । मल्लिकेति वसन्तप्रवेशात् ॥ २२ ॥

मङ्गलं सुखावहम् । स्वराणां मण्डलं समूहस्तस्य मूर्च्छनां तल्लक्षणं चोक्तं सङ्गीतसारे । "क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्च्छनेत्युच्यते ग्रामत्रये ता एकविंशतिः" रिति ॥२३॥

गोप्यो यथास्वं तयोः प्रेयस्यः । तद्गीतं तयोर्गीतम् आकर्ण्य मूर्च्छिता बभूवुः । ततो हेतोः आत्मानं न स्रंसद्दुकूलमविदन् नच स्रस्तकेशस्रजमविदन् नाविदुरित्यर्थः ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रवणमङ्गलं श्रवणसुखावहम् ॥ २३ ॥
आत्मानं नाविदन्नित्यन्वयः ॥ २४—२८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथम्भूतौ बद्धं निश्चलं सौहृदं येषां तैः स्त्रीजनैर्ललितं यथा तथा उपगीयमानौ स्वलंकृतावनुलिप्तानि चाङ्गानि ययोः स्रजावनयोःस्त इति तथाभूतौ विरजसी निर्मले अम्बरे वाससी ययोस्तौ ॥ २१ ॥

पुनरपि तयोरेव वर्णनश्लोकाः । निशेति । उदित उडुपश्च-न्द्रस्तारकाश्च यस्मिंस्तन्मल्लिकानां गन्धेन मत्तैरलिभिर्जुष्टं सेवितं स्वहचरितमित्यर्थः । कुमुदगन्धयुक्तेनच वायुना जुष्टं निशामुखं प्रशंसन्तौ ॥ २२ ॥

तौ रामकृष्णौ अनिबद्धत्वादन्यैर्युगपत्कल्पयितुमशक्यमपि स्वरमण्डलस्य मूर्च्छितं युगपत्कल्पयन्तौ मनःश्रवणयोः मङ्गलं यथा तथा जगतुर्गीतवन्तौ स्वरमण्डलमूर्च्छनं षड्जादिस्वरसमुदा-यस्य मूर्च्छनमारोहणावरोहणप्रकारः ॥ २३ ॥

गोप्य इति । तयोर्गीतमाकर्ण्य मूर्च्छिताः परवशाः ततो हे नृप ! आत्मानं देहं न विदुर्नानुसन्दधुः कथम्भूतं स्रंसद्भ्रंश्यत् दुकूलं यस्मात्स्रस्ताः केशेभ्यः स्रजो यस्य तच्च तच्च ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विरजाम्बरौ धौतवस्त्रौ ॥ २१ ॥

मल्लिकागन्धास्वादनेन मत्ता अलिनो भ्रमराः यस्मिन् मल्लि-कागन्धमत्तालि ॥ २२ ॥

जगतुः गानं कृतवन्तौ कथंकारमिति तत्राह । ताविति स्वरमण्डलमूर्च्छनां सप्तानां स्वराणां मण्डलानां समूहानां मूर्च्छनामेकविंशतिलक्षणां कल्पयन्तौ युगपदेकस्मिन् क्षणे यद्वा मण्डलमावृत्तिलक्षणं सप्तस्वरास्त्रयो ग्रामा एकविंशतिमूर्च्छना इति भरतः ॥ २३—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बद्धसौहृदैरिति । श्रीरामस्यापि पृथक् प्रेयसीगणो लक्ष्यते । सर्वमेलनन्तु होरिकापर्वत एव ॥ २१—२६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र शब्दप्राधान्यं निरूपयितुमाह । उपगीयमानौ ललितमिति । सर्वाः स्त्रियः अन्तःस्नेहसंबद्धाः भगवतो गुणगानपराः जाताः तासामाभ्यन्तरो बाह्यश्च भावो निरूपितः एवं युक्ताभिः सहस्वस्य सर्वोत्कृष्टस्यैव भावो युक्त इति उभयोः षड्गुणान् निरूपयति । अलं-कृतेति सार्धस्त्रिभिः । आदावलंकृतौ सर्वाभरणभूषितौ शब्दे शिक्षादयः अर्थे देशादयश्चोत्कृष्टालंकाराः तदभावे तत्र रतिर्न स्यात् ततः अनुलिप्ताङ्गौ चन्दनादिभिः सद्वासनाव्यतिरेकेणोभय-त्रापि पतनं स्यादिति अङ्गेष्वपि सर्वेषु सद्वासनार्थमङ्गपदम् । स्रग्विणौ मालायुक्तौ कीर्त्तिरपि सहायत्वेनोभयत्राप्यपेक्ष्यत इति विरजे अम्बरे ययोरिति सर्वदोषाभावः शुद्धा माया चापेक्ष्यत इति ॥ २१ ॥

कर्मणां रात्रिरेव प्रधानमिति सन्ध्यायामेव सन्ध्याग्निहोत्रा-दिकमिति निशामुखस्य सन्माननं तं कालं गुणवन्तं वर्णयति प्रकृतोपयोगाय । उदितोडुपतारकमित्यादिना । उदितः उडुपः ताराश्च यस्मिन् चन्द्रोदयः पर्वसूचकः नक्षत्रोदयो मेघाभावसूचकः प्रमाणं चन्द्रः फलं नक्षत्राणीत्यपि पुण्यो वायुः फलसूचक इति तं वर्णयति । कुमुदवायुना जुष्टमिति । कुमुदसम्बन्धी वायुः शीतलो मन्दश्च भवति निशामुखस्य विशेषणम् उत्तमाधिकारिभिरपि सेवितमित्याह । मल्लिकागन्धमत्तालिजुष्टमिति मल्लिकागन्धशोभन-वासनारूपः तेनच मत्ताः इतरविस्मारकाः तादृशाः अलयः षट्पदत्वात् सर्वज्ञाः तैः सेवितमिति एवं त्रिधा काल उत्तमो निरूपितः तादृशं कालं मानयन्तौ समीचीनोऽयमिति स्तुवन्तौ अनेनाङ्गेऽपि फलश्रुतिर्युक्तेति निरूपितम् ॥ २२ ॥

तदा सर्वप्राणिनामेव मनःश्रवणयोः मङ्गळं जगतुः गानं कृत-वन्तौ पर्यवसानोत्तमत्वात् मनोमङ्गलं स्वरूपोत्तमत्वात् श्रवण-मङ्गलमिति तत्र गाने विशेषमाह । तौ कल्पयन्ताविति । युगपदेव स्वरमण्डलस्य स्वरसमूहस्य मूर्च्छितं मूर्च्छनां कल्पयन्तौ इति द्वयोरेकमुखता निरूपिता मूर्च्छनाव्यतिरेकेण न मनोलीनं भवति । लयव्यतिरेकेण च सर्वात्मना तत्परता न भवतीति तथा करणम् ॥ २३ ॥

ततः तस्य फळमपि जातमित्याह । गोप्य इति । तयोर्गीतं तादृ-शमाकर्ण्य मूर्च्छिताः सत्य आत्मानं नाविदन् मूर्च्छायामपि वासना तिष्ठतीति नाविदन्निति तदभावायोक्तं नृपेति संबोधनं गीतरसाभिज्ञत्वाय यो भावः सर्वथा न विस्मृतो भवति तं वर्णयति । स्रंसद्दुकूलमिति । दुकूलमधोवस्त्रं तदप्यधःपततीव स्रस्ताः केशाः तेषु स्रजश्च यासां देहे अतिविस्मरणं निरूपितम् ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निशामुखं निशारम्भं सत्कुर्वन्तौ । उदित उडुपस्तारका च यत्र तत् । कुमुदवायुना युक्तं युगपदेकदेव स्वरमण्डलानां मूर्च्छितं मूर्च्छनामनिबद्धत्वात् कल्पयितुमशक्यमपि शक्यमिव कल्पयन्तौ ॥ २२ ॥ २३ ॥

गोप्यः यथास्वं तयोः प्रेयस्यः । आत्मानं देहं स्रंसद्दुकूलं स्रस्ताः केशेभ्यः स्रजो यस्य तं नाविदन् नानुसन्दधुः ॥ २४ ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरजसी अम्बरे ययोस्तौ विरजोऽम्बरौ विजहतुरिति पूर्वेणा-न्वयः ॥ २१ ॥

किञ्च उदितः उडुपस्तारकाश्च यस्मिंस्तत् मल्लिकागन्धेन मत्ता अळयो यस्मिंस्तत् कुमुदगन्धयुक्तेन वायुना जुष्टम् एवं भूतं निशामुखं रात्रिप्रवेशं मानयन्तौ सत्कुर्वन्तौ ॥ २२ ॥

स्वरमण्डलमूर्च्छितं षड्जादिस्वरमण्डलमूर्च्छितम् युगपत्कल्पयन्तौ अनिबद्धत्वात् अन्यैर्युगपत्कल्पयितुमशक्यमपि युगपत्समर्थयन्तौ मनः श्रवणयोर्मङ्गलं यथा भवति तथा जगतुः अगायताम् ॥ २३ ॥

एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत् ।
शङ्खचूड इति ख्यातो धनदानुचरो ऽभ्यगात् ॥ २५ ॥
तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम् ।
क्रोशन्तं कालयामास दिश्युदीच्यामशङ्कितः ॥ २६ ॥
क्रोशन्तं कृष्णरामेति विलोक्य स्वपरिग्रहम् ।
यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम् ॥ २७ ॥
माभैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ ।
आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे नृप ! गोप्यः तत्तयोर्गीतमाकर्ण्य मूर्च्छिताः गीताकृष्टचित्ताः ततः स्रंसत् भ्रश्यत् दुकूलं यस्मात् स्रस्ताः केशेभ्यः स्रजा यस्य तमात्मानं देहं नाविदन् ॥ २४—२५ ॥

भाषा टीका ।

स्त्रीजनों के साथ मे अत्यन्त स्नेह को बांधकर मनोहर स्वरों को गान करते सुन्दर अलंकारों को पहर कर चन्दन लगा कर माला पहर कर निर्मळ वस्त्रों को पहर कर विहार करते भये ॥ २१ ॥

तारा तथा चन्द्रमा का जिस मे उदय है ऐसी रात्रि के आरम्भ की बडी प्रसंशा करते भये जिस मे कि मल्लिका पुष्पों के गन्ध से भ्रमर मतवाले होरहे हैं और कुमोदिनी के गन्ध वाला वायु जिस मे चल रहा है ॥ २२ ॥

वे राम कृष्ण दोनों एक साथ मे सात स्वर तथा तीन मण्डल तथा उतार चढाव रूप मूर्छना वाले सर्व भूतों के मन तथा श्रवणों के मङ्गळ कारक गीत को गान करते भये ॥ २३ ॥

हे नृप ! उस गीत को श्रवण करने से गोपी सब मूर्छित होगई उनने शरीर से गिरते हुये माला वस्त्र केशों को खुल ते नहीं जाना अपने स्वरूप को भूलगई ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निरीक्षतोर्निरीक्षमाणयोः तौ नाथौ यस्य तं प्रमदाजनं कालयामास हठात्प्रेरयामास ॥ २६ ॥
दस्युना व्याघ्रेण ॥ २७ ॥
माभैष्ट भयं न प्राप्नुतेत्यभयवाचौ ॥ २८—३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमिति । होरिकोचितमेवं विक्रीडतोर्गायतोश्च । अत एव स्वैरं यथा स्यात्तथा सम्प्रमत्तवच्चेति । भविष्योत्तरविधिना तथा लोकव्यवहारात् । यतिप्रत्ययादन्यो जनो यथा तथैवेत्यर्थः । संशब्दात्तु प्रेममय तद्गीतादि माधुर्येण तत्रापि विशेषत इत्यर्थः । अभ्ययादभ्यगादिति पाठद्वयम ॥ २५ ॥

आभियानादेव निरीक्षमाणयोः अनादरे षष्ठी यतोऽशङ्कितः । उदीच्यां दिशीति गुह्यकानां तस्यां निवासेन एवं तासां पृथक् पङ्क्ति स्थितत्वावगमाद्धोरिकारीतिरेव स्पष्टा ॥ २६ ॥

स्वपरिग्रहं नित्यात्मीयत्वेनाङ्गीकृतमित्ययदयरक्ष्यत्वं तदर्थं परमवैयग्र्यादिकञ्च ध्वनितम् । भ्रातराविति मिथः स्नेहादिना तत्रैकमत्यादिकं सूचितम् । एकेनानेकासां कालेन तत्पालकानां व्यग्रत्वेन दृष्टान्तः यथा दस्युना हठादपहरता चोरेण ग्रस्ता धिग्राव्यात्मसात् कृता । गा विलोक्य गोपी धावन्ति तद्वदित्यर्थः । एतेनास्पर्शोऽपि व्यञ्जितः ॥ २७ ॥

तरसा जवेन त्वरितं यथा स्यात्तथा । यद्वा । त्वरा युक्तं गुह्यकाधमम् आसेदतुर्निकटे गतौ ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्वैरं यथेष्टं सम्प्रमत्तवद्रामकृष्णयोर्विहरतोर्गायतोश्च कुबेरस्यानुचरः शङ्खचूडाख्य आजगाम ॥ २५ ॥

सच शङ्कारहितः तयो रामकृष्णयोर्निरीक्षमाणयोः सतोः तावेव रामकृष्णौ नाथौ यस्य तं स्त्रीजनम् उदीच्यां दिशि कालयामास हठात्प्रेरयामास ततस्ततो निःसारयामासेत्यर्थः ॥ २६ ॥

कथम्भूतं क्रोशन्तं हे कृष्ण हे रामेति सरोदनमाह्वयन्तं तदेवं दस्युना ग्रस्ता गाव इव व्याघ्रेण गृहीता गाव इव क्रोशन्तं तेनोदीच्यां दिशं प्रति कृष्यमाणं स्वपरिग्रहं स्वपरिगृहीतं स्त्रीजनमवलोक्य भ्रातरौ श्रीकृष्णरामावन्वधावताम् ॥ २७ ॥

शाला वृक्षौ हस्तयोर्ययोस्तौ भयं मा कार्ष्टेत्येवम्विधो रावः शब्दः ययोस्तथाभूतौ महाबलिनौ रामकृष्णौ त्वरितं यथा गुह्यकाधमं शङ्खचूडमासेदतुः ॥ २८ ॥

स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन् ॥
विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया ॥ २९ ॥
तमन्वधावद्गोविन्दो यत्र यत्र स धावति ॥
जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तौ नाथौ यस्य स तन्नाथः कालनं द्रावणम् ॥ २६ ॥

स्वपरिग्रहं स्वस्त्रीजनं दस्युना व्याघ्रेण ग्रस्ताः क्रोशन्तीः गा यथा तथा क्रोशन्तं विलोक्य "दस्युतस्करशार्दूलौहन्तारौ गां नृहिंसकावित्ति च ॥ २७ ॥

मामैष्ट भीता माभवन्त्वित्यभयवाक्ययुक्तौ तालोगीताङ्गवाद्यविशेषः यद्वा तालस्तृणराजः स इ ते ययोस्तौ तथा मनस्विनौ विशिष्टमनोयुक्तौ तरसा बलेन तरसी बलरंहसी इति ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लीलामुपसंहरति । एवंविक्रीडतोरिति । स्वैरं यथा भवति तथा विशेषेण क्रीडतोरिति मूर्च्छिताभिरिव प्रमत्ताभिरिव क्रीडा अत्यन्तं स्वच्छन्दा भवतीति मध्ये क्रीडा मध्ये गानमिति द्वयं निरूपयति क्रीडतोर्गायतोः सतोरिति स्त्रीभिः सह समानधर्मतासिद्ध्यर्थं सम्भ्रमत्तवदिति आवेशावतारयोः आवेशदशायां तुल्यतेति ज्ञापयितुं द्वयोः सामान्येन निरूपणं एवं सर्वास्मिन्नेव विकले शङ्खचूडनामा कश्चित् धनदस्य कुबेरस्यानुचरः स्त्रीकामः भगवन्तं प्राकृतं मत्वा स्वयं ता नेतुमागत इत्याह । शङ्खचूड इति शङ्खनिधिः चूडायाम्वर्तत इति अनेन नारदस्यापि दोषः परिहृतः यथा तौ पूर्वन्धनमत्तावेव मयमपि प्राप्तनिधिरिति सम्प्रमत्तः धनद इति नाम्ना च सर्वैव सामग्री श्रीमदरूपा निरूपिता यत्र धनन्तत्रैव स्त्रिय उचिता इति सर्वा एव श्रुतयो लौकिकाः कर्तव्या इति पाषण्डिनां बुद्धिः॥ २५ ॥

ततो यत्कृतवांस्तदाह । तयोर्निरीक्षतोरिति । राजन्निति सम्बोधनं शत्रूणां स्त्रीहरणं स्वाभाविकमिति तव सहजदोष इति ज्ञापनार्थं तावेव नाथौ यस्य प्रमदाः स्त्रीविशेषाः तेषां जनः समूहः सामान्यशब्दः समूहवाची भवतीति विशेषपराश्चेत् न गच्छेयुरिति ज्ञापयितुं सामान्यवचनं क्रोशन्तमिति तासामनिच्छा तस्य च भयाभावः सूचितः कालयामास यथाकालः अप्रतिहतबलः सर्वानेव कालयति हरति तद्वदित्यर्थः । उदीच्यां दिशीति स्वगृहे पलायिष्याय अतएवाशङ्कितः किङ्करिष्यति भगवानिति ॥ २६ ॥

ततो भगवद्भ्यां यत्कृतं तदाह । क्रोशन्तमिति । यदि ताः कृष्णरामेत्याक्रोशं न कुर्युः तदा न निवारयेदपि नहि भगवान् स्वतोऽन्यचित्तं निवारयति तत्राप्यन्यस्यचेन्न निवारयेत् किन्तु स्वपरिग्रहं स्वेन पूर्वमेव परिगृहीत इति क्रोशन्तं स्वपरिग्रहं विलोक्य अन्वधावदिति भ्रातराविव भयोः परिग्रहः उभाभ्यां रक्षणीय इति अनु ग्रहणानन्तरमेवाधा [illegible]म् ॥ २७ ॥

दूरे नीयमानाः दूरादेवाश्वासितवन्तावित्याह । मामैष्टेत्यभयारावाविति । मामैष्टेत्यभयमारावः भयनिवर्तको भवति शालवृक्षौ हस्ते ययोरिति महासामर्थ्यं दूरादेव प्रदर्शितं ननु तयोः कश्चनोपयोगोऽस्ति तरस्विनावतिवेगवन्तौ यथा मध्ये एकामपि गृहीत्वा न गच्छेन्न स्पृशेद्वेति शीघ्रमासेदतुः निकटे गतौ सन्तौ आसेधतुः निवारितवन्तौ वा तं शङ्खचूडं तरसाविचार्यैव देवमनुष्यापेक्षया महाबलो भवतीति विचारप्राप्तिः त्वरितं पलायनार्थं यतो गुह्यकानां यक्षाणां मध्ये अधम आगमने यक्षत्वं प्रयोजकं पलायने अधमत्वम् ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निरीक्षमाणयोरित्यनादरे षष्ठी क्रोशन्तं हे राम ! हे कृष्ण ! अस्मांस्त्रायस्वेति सक्रन्दनं फूत् कुर्वन्तम् । कालयामास महायष्टिघूर्णनेन भीषयित्वा उदीचीं दिशं प्रति विद्रावयामासेति । तेन स्पर्शस्तासां नाभूदिति ज्ञेयम् । यथा गा इत्यग्रिमश्लोकोक्तेः ॥ २६ ॥

दस्युना चोरेण ग्रस्ता आत्मसात् कर्त्तुं विद्राव्य स्वदेशं प्रति चालिताः ॥ २७ ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तयोः रामकृष्णयोः निरीक्षमाणयोः सतोः कालयामास बलात् प्रेरयामास ॥ २६—२७ ॥

मामैष्ट भयं माप्राप्नुतेत्येवं विधो रावः शब्दो ययोस्तौ ॥ २८—३० ॥

भाषा टीका ।

इस प्रकार से यथेच्छ प्रमत्त की नाईं उन दोनों के गान करते समय मे धनद कुबेर का अनुचर शंखचूड नाम का यक्ष आगया ॥ २५ ॥

हे राजन् ! उन दोनों के देखते ही वही जिस के स्वामी हैं ऐसे चिल्लाते हुये सब प्रमदा जनको शंका रहित होकर उत्तर दिशा को खेद लेजाने लगा ॥ २६ ॥

हे कृष्ण हे राम ! इस प्रकार से चिल्लाने वाले अपने कुटुंब को जैसे चोर गउओं को लेजाता हो तैसे जाते देख कर दोनों भाई दौडते भये ॥ २७ ॥

हाथ मे शाल के वृक्ष को लेकर मत डरो ऐसे अभय शब्द को करते हुये बडे वेग से जलदी जाकर उस गुह्यकाधम के पास पंहुंच गये ॥ २८ ॥

अविदूर इवाभ्येत्य शिरस्तस्य दुरात्मनः ॥
जहार मुष्टिनैवाङ्ग ! सहचूडामणिं विभुः ॥ ३१ ॥
शङ्खचूडं निहत्यैवं मणिमादाय भास्वरम् ॥
अग्रजायाददत्प्रीत्या पश्यन्तीनां च योषिताम् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे शङ्खचूडवधोनाम
चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शिरसा सहचूडामणिं जहारेत्यर्थः ॥ ३१-३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कालः प्रेरकः मृत्युश्च तत्प्रेर्यस्तावित्ति यथाक्रममनुरूपो दृष्टान्तः । मूढः प्रद्रवणेऽपि जीवनासम्भवात् स्ववधे स्वयमेव प्रवृत्तेश्च । यद्वा । कृत्यं किमप्यजानन्नित्यर्थः ॥ २९ ॥

ननु शालप्रक्षेपेण दूरत एव तमधमं किं न हन्यात् तत्राह । जिहीर्षुरिति । मृतस्य सतः स्पर्शायोग्यत्वेन तस्य जीवत एव रत्नग्रहेच्छयेत्यर्थः । श्रीरामाय तद्दानेच्छया तु तस्यैव मुख्यप्रयोजनतया निर्देशः । यद्वा । तन्मणिसङ्गपर्यन्तं तज्जीवननिबन्धात्तज्जिहीर्षा ॥ ३० ॥

अविदूर इव अतिदूरेऽपि किंचिदूर इवाभिमुखं गत्वा वेगेन पलायमानस्य पृष्ठे हननायोग्यत्वात् पलायमानस्यापि तस्य वधो युक्त इत्याह । दुरात्मनः दस्योरित्यर्थः । मुष्टिनैव नतु शालेन नचोपायान्तरेण तत्रापि तेनैकेनैवेति प्रयासाभाव उक्तः । यतो विभुरीश्वरः । अन्यस्तैः । तत्र शिर इति तृतीयायाश्छान्दसो लुक् । यद्वा शिरश्चूडामणिश्च सह एकदैव जहार ॥ ३१ ॥

नितरां हत्वेति निशब्दः सूक्ष्मशरीरस्यापि नाशात् । पश्यन्तीनामिति सर्वासामात्मनि सौभाग्यातिशयाभिमानात् । तथापि ता अनादृत्याग्रजाय अदादिति सर्वासां मात्सर्याभावाय तस्य मान्यत्वात् कृतरक्षत्वाच्च । प्रत्युत सन्तोषायैव स्यादित्यभिप्रेत्येति भावः । प्रत्येति तत्पालके तस्मिन् प्रीत्यतिशयोदयोऽयं सर्वास्वेव तासु पर्यवस्यतीति भावः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
चतुस्त्रिंशोऽध्यायः॥३४॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कालः कालाभिमानि देवता मृत्युः प्राणवियोगकर्तृदेवता ॥२९॥३० ॥
पराङ्मुखस्यापिशिरोहरणं प्रतिभटयुक्त्या अतोनान्यायः ॥३१॥३२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स गुह्यकाधमः कालमृत्यू इव प्राप्तौ रामकृष्णावुपलोक्य उद्विजन् विभ्यत्स्रजिनं विहाय जीवितुमिच्छया मूढः तच्चरणागत्यात्मकजीवनोपायानभिज्ञः केवलं प्राद्रवत् ॥ २९ ॥

स शङ्खचूडो यत्र धावति तत्र तं शङ्खचूडं श्रीकृष्णोऽन्वधावत् किञ्चिन्नीर्षुस्तस्य शिरोरत्नं हर्तुमिच्छुः बलरामस्तु स्त्रियः स्त्रीः रक्षंस्तत्रैवावतस्थौ ॥ ३० ॥

ततोऽविदूरे समीप एवाभ्येत्य तदभिमुखं गत्वा विभुर्भगवान् मुष्टिनैवाङ्ग हे राजंश्चूडामणिसहितं दुरात्मनस्तस्य शङ्खचूडस्य शिरो मूर्धानं जहार ताडयामास ॥ ३१ ॥

इत्थं शङ्खचूडं हत्वा भास्वरं तेजोयुक्तं मणिमादायागत्य योषितां पश्यन्तीनां प्रीत्या अग्रजाय रामाय दत्तवान् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुस्त्रिंशोऽध्यायः॥३४॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मरणकालः कश्चिदसुरो वा मृत्युर्यमः उद्विजन् बिभ्यत् ॥ २९—३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तच्छिरोरत्नं जिहीर्षा तत्पर्यन्तं तज्जीवितनियमादिति तर्क्यते ॥ ३० ॥ ३१ ॥

अग्रजायेति । सर्वासामपि तत्र प्रीतेः । प्रीत्येति विशेषतस्तासां रक्षणेनेत्यर्थः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूर्वं ताभिः सहितः शीघ्रं गच्छन् स्थितः इदानीं स्वयमेव पलायितुं विचारितवानित्याह । स वीक्ष्येति । अनुप्राप्तौ भगवन्तौ वीक्ष्य सोऽल्पबुद्धिः स्त्रीजनं विसृज्य प्राद्रवदिति सम्बन्धः तस्य तथा करणे या बुद्धिरासीत्तामाह । कालमृत्यू इवोद्विजन्निति । एकः कालः स्वस्य नाशसमयः अपरो मारक इति एकोऽप्यनिवार्यः तत्रोभयोः किंवक्तव्यमिति पलायने जीवितेच्छैव हेतुः सति जीवने भोग इति ननु शरणं कुतो न गतः जीवेत् ननु पलायनं जीवनसाधनमितिचेत्तत्राह । मूढ इति इममर्थं न जानातीति ॥ २९ ॥

अनुपाये प्रवृत्तस्य न कार्यं सिध्यतीत्याह । तमन्वधावदिति । गोविन्द इति तेषां रक्षार्थं विनियोग आवश्यकः स्वक्रियाया अन्यथेन्द्रत्वं न स्यादिति रक्षा च दोषस्य मूलोच्छेद एव ननु तस्मिन् कथमपि विद्यमाने अतो यत्र यत्रैव स पलायते तत्रैव तमन्वधावत् ननु दूरादपि मरणे सम्भवति भगवान् किमिति धावनं कृतवान् तत्राह । जिहीर्षुस्तच्छिरोरत्नमिति । दूरान्मारणे यक्षास्तदीयास्तं नयेयुः अमारितश्च स्यात् मणौ विद्यमाने मणिरिव शस्त्रैरप्यवध्यः अतः स्वस्यैव गमनं जीवानामवध्य इति स्त्रियो रक्षन् बलः जातः अन्यथा तमोऽन्यो हरेत् तदीया हि बहवः ते घातयेयुरेव अत एकेन रक्षितव्याः बल इति बहूनामप्यागमने रक्षार्थमुक्तं स्त्रियो हि रक्षणीया एव ॥ ३० ॥

ततो भगवान् यत् कृतवांस्तदाह । अविदूर इवेति कियद्धावनेनैव संप्राप्तः अविदूरे निकट एव वस्तुतस्तु दूरे गतः परं कालविलम्बाभावात् अविदूर इवाभ्येत्य निकटे गत्वा तस्य शिरो जहार ननु पलायितवधो निषिद्धः किमिति भगवान् क्लिष्टं कृतवानित्याशङ्क्याह । दुरात्मन इति । स हि दुरात्मा वध्य एव त्रयीद्विषोहि हन्यन्त एव निमित्तन्तु दारापहारित्वं जातमेव अन्यथा पूर्वमेव हन्यात् अधुना परित्यागे पुनरागच्छेत् केवलबलभद्रक्रीडायां वा समागत्योपद्रवं कुर्यात यतो दुष्टान्तःकरणः अतो वध्य एव अतस्तस्य शिर एव ज्ञानशक्तिप्रधानं मुष्टिनैव जहार ननु भेदनं कृतवान् किन्तु यथा राशेः सकाशात् मुष्टिना तण्डुलाः ह्रियन्ते तथा राशिभूतास्तस्यावयवाः मुष्टिनैवाहृताः यदैव स गोपिकाहरणार्थमुद्यमं कृतवान् तदैव संयोजका देवा अवयवेभ्यो निर्गताः केवलं मणिप्रभावादवयवी स्थितः भगवान् पुनः चूडामणिसहितं तच्छिरो जहार स्वकर्मणैव विशकलित इति भगवान् अक्लिष्टकर्मैव किञ्च विभुः समर्थः मणेरपि सामर्थ्यं दूरीकर्त्तुम् ॥ ३१ ॥

एवं कृते स हतो जात इत्याह । शङ्खचूडं निहत्येति । एवं प्रकारेण तस्य हननं ननु प्रकारान्तरेण तस्य मुक्तिनिराकरणार्थं निहत्यैवेत्युक्तं मृतद्रव्यं न ग्राह्यमित्यत आह । भास्वरमिति । आस्थानान्मप्युत्तममिति । वाक्यात् मणिग्रहणेन मणिगता देवता ताः कामयन्तीति पक्षे कामना सफला कृता मणिग्रहणेन तस्य मुक्तिर्दैवेति शङ्कां वारयितुम् अग्रजायाददत् तत्रैव स्थित्वा देवताया अप्युपभोगो भवत्विति प्रीत्यैवाददत् ननु याचितः स्त्रीणां प्रार्थनाभावायाह । पश्यन्तीनामिति । चकारात्सर्वाभ्यः प्रदर्श्य तासां स्पर्शानन्तरं योषितामन्येषाञ्च देवानां पश्यतामिति प्रमाणसिद्ध्यर्थं यत्किंचित्करोति तत्सर्वं तदधिष्ठातृभ्यैव प्रयच्छतीति ज्ञापितं प्रमाणबलमेवात्र मुख्यमिति न प्रमेयविचारेण कोऽप्यर्थः शङ्कनीयः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्यामेकत्रिंशाध्यायविवरणम् ॥ ३१॥३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कालमृत्यू कालः प्रेरकः मृत्युः प्रेर्य्यस्ताविव शीघ्रं जहीति रामः प्रेरकः अयमहमिमं हन्मीति कृष्णः प्रेर्य्यस्तौ ॥ २९ ॥

स्त्रियोविद्रावणश्रान्तास्तत्रैव स्थिरीकृत्य आश्वास्य तस्थौ ॥ ३० ॥

अतिदूरेऽपि तत्र अविदूर इवाभ्येत्येत्यर्थः ॥ ३१ ॥

पश्यन्तीनामिति । मह्यमेवातिसुभगायै दास्यति मह्यमेवात्यादरणीयायै दास्यतीत्येवं प्रत्येकमुत्सुकानां तासां मदमत्सरानुद्गमार्थं कस्यैचिदप्यदत्त्वा रामायादात् स च महाविज्ञः कृष्णाभीप्सितस्थल एवं तं मणिं न्यधादिति ज्ञेयम् ॥ ३२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमस्य चतुस्त्रिंशः सङ्गतः सङ्गतः सताम् ॥ ३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभुः श्रीकृष्णः अविदूरे तत्समीपे अभ्येत्य सहचूडामणिं शिरो जहार ॥ ३१ ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुस्त्रिंशाध्यायार्थप्रकाशः ॥ ३४ ॥

---

भाषा टीका।

उस शंख चूडने काल मृत्यूसरी के दोनों को देखा तब बडा डर गया फिर वह मूर्ख जीने की इच्छा से स्त्रीजनों को छोड कर भगता भया॥ २९॥

गोविंद भगवान उस के शिर के रत्न की हरण करने की इच्छा से जहां जहां वह गया तहां तहां जाते भये और वलदेवजी स्त्रीजन की रक्षा करते रहे॥ ३०॥

हे राजन्! थोडे ही दूर मे जाकर विभु भगवान् ने अपनी मुष्टिके प्रहार से उस दुष्ट के शिरको चूडा मणि के सहित हरण कर लिया॥ ३१॥

इस प्रकार से शंख चूड को मार कर प्रकाश मान मणि को लाकर सब स्त्रीन के देखते ही बडी प्रीति से भगवान् ने बडे भ्राता बलदेवजी को देदिया॥ ३२॥

इति श्रीभागवत दशमस्कन्धपूर्वार्ध चौतीस में अध्याय की भाषाटीका समाप्त॥ ३४॥

इतिश्रीमद्भागवते दशमस्कन्धे पूर्वार्धे चतुस्त्रिंशोऽध्यायः॥ ३४॥

## ॥ पञ्चत्रिंशोऽध्यायः ॥

### श्रीशुक उवाच

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ॥
कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः ।
युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥

एवं रात्रिषु कृष्णेन स्वैरमभिरमितानां दिवा तद्विरहितानामनुगीतेन दिनानिस्तारप्रकारमाह । गोप्य इति । दुःखेन कृच्छ्रेण ॥ १ ॥

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वेवं श्रीव्रजेन्द्रकुमारेण रात्रिषु रासक्रीडादिना बहुधा रमितानां तासां दिवसेषु तद्विरहेण महद्दुःखं सम्भाव्यत एव उक्तं श्रीपराशरेण । "स तथा सह गोपीभी रराम मधुसूदनः । यथाब्दकोटिप्रतिमः क्षणस्तेन विनाभव"दिति । अतस्तावद्दुःखं यत ताभिः कथं निस्तीर्णमित्यपेक्षायां तादृशरजनीवर्गसम्भोगं पोषयितुं दिनवर्गगतं विप्रलम्भं वर्णयन् तत्कालक्षेपणहेतुं दर्शयति । गोप्य इति । तमनु तेन सह द्रुतं वेगेन गतं चेतो यासां ताः । तं लक्ष्यीकृत्य इलथितहृदया इति वा तत्र तमनुद्रुतचेतस्त्वेन गृहकृत्याद्युपरतिर्दर्शिता ॥ १ ॥

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिका ।

अथेत्थं निशासु विहरन्तीनामहःसु तेन विश्लिष्टानां गोपीनां तल्लीलानुवर्णनेन कालनिर्यापणप्रकारमाह पञ्चत्रिंशेन । गोप्य इति । कृष्णे वनं याते ऽहस्सु इति शेषः तं कृष्णमनुद्रुतमनुवृत्तं तदासक्तमिति यावत् तच्चेतो यासां ता गोप्यः कृष्णस्य लीलाः प्रगायन्त्यः वासरानहानि दुःखेन कृच्छ्रेण कथञ्चिन्निन्युर्निर्यापयामासुः ॥ १ ॥

#### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्त्रीणामुपासनाप्रकार ईदृश इति दर्शयितुं गोपीनां भगवल्लीलानुस्मरणं कथयत्यस्मिन्नध्याये । तत्र प्रथमतस्तासां कृष्णे भक्तिलक्षणं वक्ति । गोप्य इति । प्रकृष्टगानेनाहृतचेतस्त्वं भक्तेर्लक्षणं सूचयति ॥ १ ॥

#### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नानासभागतानां श्रीगोपीनां वाक्यसङ्ग्रहोऽध्यायोऽयम् । अतः क्वचित् व्रजदेव्य इति क्वचित्तव सुतरनघे तव वत्स इति च सम्बोधनेन भेदो दृश्यते । सङ्ग्रहस्तु प्रातरादि सायं पर्यन्त लीलाक्रमेण तत्रादौ वनवर्त्मनि वेणोरीरिते व्योमयानवनितानां सर्वोपरि वर्त्तमानत्वेन प्रथममनुभवन्तीनां मोहमाहुः । वामेति युगलेन । कोमलेनेति प्रयोगः स्नेहेन ईरयति गातुं प्रेरयति ॥ १—३ ॥

#### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वात्रिंशेऽन्तर्गोपिकानां स्वानन्दं भगवान् हरिः ।
पूरयामास येनैव पूर्णानन्द इतीर्यते ॥
अन्तः प्रविष्टो भगवान् मुखादुद्धृत्य कर्णयोः ।
पुनर्निवेश्यते सम्यक् तदा भवति सुस्थिरः ॥
शब्दार्थयोर्मुख्यतात्र युग्माः श्लोकास्ततोऽत्र हि ।
सर्वेषु चैव मासेषु यत्करोत्यच्युतोऽत्र तत् ॥
अतोऽत्र मासयुग्मो हि प्रक्रमः फलमेव च ।
आद्यन्ते चामरं युग्मं त्रयोदश भवन्ति तत् ॥

एवं भगवता सह रात्रौ क्रीडामुक्त्वा दिने तासां संसारप्रवृत्तिर्भविष्यतीत्याशङ्क्य दिवसेषु भगवद्गुणवर्णनपरा जाता इति वदन् गुणवर्णनाया आवश्यकत्वायारम्भे दुःखं पर्यवसाने सुखमिति निरूपयन् प्रथमं प्रथमप्रवृत्तावपि गोपिकानां दिवसेषु परमं दुःखं जातमित्याह । गोप्य इति । केवलपदात्पूर्वोक्ता ग्राह्याः सदानन्दे वनङ्गते तमन्वेव द्रुतं चित्तं यासां वस्त्वन्तरग्रहणाक्षमं चित्तं जातं द्रुतशब्दात् विलय उक्तः ततः सर्वतः प्रसृतं सूक्ष्मभावापन्नं सदानन्दस्य लीलां गृहीतवत् अतः

॥ गोप्य ऊचुः ॥

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः ।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृष्णलीलाः प्रगायन्त्यो जाताः यथास्वरूपं सदानन्दरूपं तथा तल्लीला अपीति तदात्मकत्वञ्च लीलानां ज्ञापयितुं पुनर्नामग्रहणं कृतमन्यथा तत्पदमेव वदेत्तथा सति तत्संबन्धित्वमात्रं प्राप्येत नतूक्तरूपत्वम् अवश्यवाच्यं चैतद्यतः स्वरूपवियोगे तदतिरिक्तस्य न जीवनहेतुत्वं ततो हीनत्वात् ततो यथाकथंचित् महता मानसदुःखेन वासरान् निन्युः यदा पुनस्तच्चित्तं प्रकीर्णे भगवच्चरित्रे विलीनं सत् एकं भावं प्राप्स्यति तदा पूर्णमनोरथा भविष्यन्ति इदानीं सर्वा सामग्री विशकलितेति दुःखेन दिननयनं वासरपदात् राज्यर्थं कथञ्चित् प्राणानां धारणं लक्ष्यते ॥ १ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पञ्चत्रिंशे वेणुगीतं द्वादशश्लोकयुग्मतः ।
वर्ण्यते यत्प्रियाः पीत्वा विरहिण्यो ऽनयन् दिनम् ।
सम्भोगश्चैत्यं ज्योत्स्नापि विच्छेदौष्ण्यं दिनेप्यदात् ।
प्रेमा ताभ्यः स्वपुष्ट्यर्थं स्वयं तद्वृत्तितयात्मकः ॥

एवं रात्रिषु गोप्यः स्वकान्तेन सह लब्धाङ्गसङ्गा नृत्यगीतनर्माधरामृतादिकं पिबन्त्यः सम्भोगरसनिमग्ना बभूवुरित्युक्तम् । इदानीं दिनेषु तेन सह लब्धमनोमात्रसङ्गास्तद्वेणुगानामृतमात्रं पिबन्त्यो विप्रलम्भरसनिमग्ना बभूवुरित्याह । गोप्य इति । तं वनं गच्छन्तमनुलक्ष्यीकृत्य द्रुतानि वेगेन तेन सह चलितानि चेतांसि यासां ताः ॥ १ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं निशासु भगवता सह विहरन्तीनामहःसु तेन वियुक्तानां तल्लीलानुवर्णनेन दिननिर्यापणप्रकारमाह पञ्चत्रिंशेनाध्यायेन । गोप्य इति ॥ १ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले दिन में जब श्रीभगवान वन को जाते रहे तब सब गोपिन के चित्त उनके सङ्गही चले जाते तब कृष्ण लीलाओं को गान करके दुःख से दिनों को बिताती रहीं ॥ १ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वामबाहुकृतवामकपोल इत्यादीनि द्वादशयुगलानि । हे गोप्यो वामे बाहौ तन्मूले कृतोऽर्पितो वाम कपोलो येन सः वल्गिते नर्तिते भ्रुवौ येन स वल्गितभ्रूर्मुकुन्दः अधरे अर्पितं वेणुं कोमलाभिरङ्गुलिभिराश्रिता मार्गाः सप्तस्वरच्छिद्राणि यस्य तं यत्र यदा ईरयति वादयति ॥ २ ॥

तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेण्वीरणमुपधार्याकर्ण्य प्रथमं विस्मितास्ततः काममार्गणेभ्यः समर्पितानि चित्तानि याभिस्तास्तत्परवशा इत्यर्थः । सलज्जाः सत्यः कश्मलं मोहं ययुः अत्र लिङ्गम् अपस्मृता विस्मृता नीव्यो याभिरिति अतएवंभूतस्य कृष्णस्य विरहं कथं सहाम इति सर्वत्र वाक्यशेषः ॥ ३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जयति व्रजदेवीनामपूर्वा महिमावली ।
यदालम्बलवादेव तद्गीतं व्याचिकीर्षति ।

अथ परः कोटीनां पृथक् एकैकशश्च भिन्नानुभावानामेकस्यां सभायां दुर्घटयुगपत् सर्वसमावेशानामत एव व्रजदेव्य इयि तत्र पुनः सतीति नानासम्बोधनीयजनानां प्रतिदिनलीलासामान्यवर्णनपराणां सङ्क्षेपेण वाक्यसंग्रहोऽयमध्याय इति यद्यपि न मिथो वाक्यसङ्गतिरपेक्ष्या तथापि श्रीमता कवीन्द्रेण प्रातरादि तत्तल्लीलाक्रमत एव तत्सङ्ग्रहः कृत इति क्वचित् द्वित्रादिकमपि युगलमेकसभागतमिति च सङ्गतिः कर्त्तव्या । तत्र प्रति नियतयुगलतया वर्णनं प्रतियुगलञ्च लीला तत्पोष्यजनयोः पूर्वापरीभावेनैत्यैवमभिप्रयन्ति यद्यपि श्रीकृष्णलीलैव केवलं पुरुषार्थः तत्पोष्यजनस्तु तदनुगततयैव तथापि तद्युगलतां विना न सुखलाभ इत्यहो कथमस्माकमेव तादृश्यां लीलायां प्रवेशो नास्तीति तदेवं गृहाश्रिःसरणमारभ्य तदागमनावधि श्रीभगवतो वन्यक्रीडाः कदाचित् काश्चन काश्चिदनुभूय यथाखं यथानुभवं गायन्त्यस्तत्रचादौ प्रातर्बहिर्भूय वनवर्त्मनि तेन वेणावीरिते सति सिद्धवनितानां "सायं गृहं प्रविष्टं तमपश्यन्तीनां तद्दिदृक्षया नक्तं व्योम्नि स्थितानां तद्वाद्यस्य तद्वादनमुद्रया तदीय सौन्दर्यलीलाविशेषस्य च तासां व्योमयानत्वादनावृतत्वेन प्रागेवानुभवात् श्रीभगवतश्च वामबाहुकृतवामकपोलत्वेन प्रायो वक्राङ्गत्रिभङ्गितया स्वप्रियक तद्दृष्टिमननाच्च प्राधान्यतस्तासामेव प्रेममोहमाह ॥ वामेति युगलेन । वामशब्दस्यार्थान्तरेण मनोहरता व्यञ्जनात् स एव प्रयुक्तो न सव्यादिशब्दः । वामबाहुकृत वामकपोलत्वेन श्रीश्री-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वाया ईषत्परिवर्त्तनं तिर्यक्त्वञ्च तया वक्त्रोर्द्धावलोकनं तथा वेणुवादनेऽभिनिवेशस्तथा सुप्रसिद्धत्रिभङ्ग्यनुसारेण श्रीवामजङ्घोपरि श्रीदक्षिणजङ्घान्तस्य न्यासश्च ज्ञेयः । वल्गितभ्रुरिति ह्रस्वत्वमार्षम् । दीर्घोऽपि पाठः क्वचित् । अधरेऽर्पितो यो वेणुस्तम् । यद्वा । अधरोऽर्पितो न्यस्तो यस्मिन् दत्तो वा यस्मै सचासौ वेणुश्चेति विग्रहः तम् । सदा तस्य संयोगाभिप्रायेण । इदञ्च निष्ठायाः पूर्वनिपाताभावार्थमाहिताग्न्यादौ पठनीयम् । बिम्बादिरूपकाप्रयोग आरुणयमाधुर्यगुणास्फूर्त्तावपि तत्सम्बन्धमात्रेणैव वेणुवाद्यस्य मोहनत्वबोधनाय । किम्वा सदा वेणुसंसर्गेण तस्मिन्नीर्ष्योदयात् । अकर्म कठिनौ हस्तौ पादौ चाध्वनि कोमलाविति महापुरुषलक्षणत्वेऽपि कोमलेति प्रयोगः स्नेहेन । अन्याङ्गापेक्षिककाठिन्यांशमनपेक्ष्य वस्त्वन्तरापेक्षिक कौमल्यांशस्फूर्त्तेः । तथा मात्सर्येण तस्यातिकठिनमुरली स्पर्शानौचित्याभिप्रायात् । अतोऽस्मासु कोमलाङ्गिष्वेव तत्स्पर्शोऽपि युक्त इति गूढोऽभिप्रायः । एवं सहजमहासौन्दर्यमयस्यापि तस्य वेणुवादने मुद्राविशेषेण सौन्दर्यविशेषो दर्शितः । तेन च वेणुवाद्यस्य महामोहनत्वमेवाभिप्रेतम् । हे गोप्य इति परमविदग्धाभिस्तत्तत्त्वं युष्माभिरेव वोद्धुं शक्यते नत्वन्यैर्जनैरिति भावः । यत्र यदेति वक्ष्यमाणमोहप्राप्तौ त्वत्कालजातत्वं तस्यां वेण्वीरणैकहेतुत्वञ्च आवश्यकत्वादिकमप्यभिप्रेतम् । एवमग्रेऽपि । व्योमयानं विमानं तद्वनिता देव्यः । सिद्धैस्तद्यानैर्देवैरित्यर्थः अपूर्वत्वात्तैरपि सह विस्मिता बभूवुः अतस्तैः स्वपतिभिर्महद्भिश्च सह वर्त्तमाना अपि काममार्गणैः कर्तृभिः समर्पितं चित्तम् अर्थात् कृष्णाय यासां तथाभूता बभूवुः ततः सलज्जा बभूवुः एवं लज्जावत्योऽपि तन्मार्गणेन मोहपर्यन्तां दशां प्रापुः । यत्रापस्मृता स्खलिता अतिविस्मृता नीव्यो याभिस्तादृस्यो बभूवुरित्यर्थः अन्यैः । यद्वा । विस्मयानन्तरं स्त्रीस्वभावेन कामोदयात् सलज्जा बभूवुः ततश्च काममार्गणैः समर्पितं बलादाच्छिद्य श्रीकृष्णायार्पितं चित्तं यासां तथा भूताः सत्यो मोहं ययुः । तत्रास्तां तावन्मानसविकारमात्रे लज्जा यतस्तेषामप्रतोऽपस्मृतनीविकाश्चापि बभूवुरित्यर्थः । अतो यत्र देव्योऽपि मुह्यन्ति तत्र का वयमिति भावः ॥ २ ॥ ३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वामबाहुकृतेत्यादिश्लोकेषु द्वौ द्वौ श्लोकावेकार्थतयान्वितौ यदा आश्रितच्छिद्रं वेणुमीरयति स्वनयति तदा व्योमयानवनिताः कश्मलं मोहं ययुः ॥ २—३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कीदृशं तल्लीलाप्रगानं येन वासराश्निन्युरित्यतस्तद्दर्शयति । वामबाहुकृतवामकपोल इत्यादिना अत्र द्वौ द्वौ श्लोकावेकवाक्यतया नेतव्यौ हे गोप्यः ! कृष्णो यत्र यदा वामे बाहौ तन्मूले कृतः अर्पितः वामः कपोलो येन वल्गिते नर्तिते भ्रुवौ येन तथाभूतः कोमलाभिरङ्गुलिभिराश्रिता मार्गाः सततस्वराश्छिद्राणि यस्य तमधरेऽर्पितं वेणुमीरयति शब्दाययति ॥ २ ॥

तदा व्योमयानानां वनिताः कश्मलं ययुरित्यन्वयः व्योम्नि यानं गमनं येषां ते व्योमयानाः व्योम्नि यान्तीति वा तथा सिद्धाः नन्द्यादेराकृतिगणत्वात्कर्तरि ल्युः तेषां वनिताः सिद्धैः स्वपतिभिः सह वर्त्तमाना अपि तद्वेणुगीतमुपधार्याकर्ण्य प्रथमं विस्मिताः ततः कामस्य मदनस्य मार्गणे समर्पितानि चित्तानि याभिस्तास्तत्परवशाः इत्यर्थः सलज्जाः सत्यः कश्मलं मोहं ययुः तत्र लिङ्गं वदन्त्यस्ता विशिषन्ति अपस्मृतनीव्योऽपस्मृता नीव्यः श्लथदुकूलबन्धाः याभिस्तथाभूताः एवंविधस्य श्रीकृष्णस्य विश्लेषं कथं सहेमेति सर्वत्र वाक्यशेषः ॥ ३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्वौ द्वौ ग्रन्थौ एकस्या गीतं तद्वाभ्यां द्वाभ्यां श्लोकाभ्यामन्वयः एका गोपी गोप्यन्तराणि संबोधयति । हे गोप्यः शृणुतेति शेषः वामबाहुमूले कृतं वामकपोलं येन स तथा वल्गिता नर्तिता भ्रूर्यस्य स तथा अधरोष्ठे अर्पितो वेणुर्येन स तथा मुकुन्दो यत्र यदा कोमलाङ्गुलिभिः आश्रितमार्गमाच्छादितरन्ध्रं वेणुमीरयति गायतीत्यर्थः ॥ २ ॥

तदा सिद्धैः सह व्योमयानवनिताः विमानस्थाः स्त्रियः तद्गीतमुपधार्य श्रुत्वा विस्मिताः अनन्तरं स्वयमशक्ताः सलज्जाः कामबाणेन समर्पितं विद्धं चित्तं यासां तास्तथा अपस्मृता नीवी वस्त्रग्रन्थि र्यासां ताः मुच्यमानवस्त्रग्रन्थिस्मरणरहिताः कश्मलं मूर्च्छां ययुरित्यर्थः ॥ ३ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सर्वोत्तमा हरेर्लीला वेणुनादपुरःसरा ।  
हेतुः सर्वत्र वाच्येऽर्थे प्रथमेषु निरूप्यते ॥  
देवस्त्रियस्तथा गावः सरितः पादपा लताः ।  
पक्षिणश्च तथा मेघा ब्रह्माद्या गोपिकास्तथा ॥  
हरिण्यो देवगन्धर्वा द्विधा च भगवान् हरिः ।  
उत्तरेषु निरूप्यन्ते रसज्ञा वेणुवादने ॥  
जानाति भगवानेव जानात्येव हरिः स्वयम् ।  
अन्ते च भगवानुक्तो वारद्वयमनन्यधीः ॥  
अत्र भावस्तु नादस्य स्त्रीषु पूर्वमुदीर्यते ।  
त्रिविधासु ततः पुंसु ब्रह्मा गोपी तथा मृगी ॥  
त्रयोऽत्र त्रिविधाः प्रोक्ताः प्रकीर्णाः सकलाः सुराः ।  
सर्वा एवानभिज्ञा हि वस्तुसामर्थ्यसंयुताः ॥  
एवं वेणुर्द्वादशधा फलतीति निरूपितम् ।

तत्र प्रथमस्त्रीप्राधान्याद्देवस्त्रियो मुख्या इति तासु वेणुनादप्रभावं वक्तुं येन प्रकारेण नाद उत्तिष्ठति तं प्रकारमाहुः । वामबाहुकृतवामकपोल इति । यत्र मुकुन्दः अधरार्पितवेणुमीरयति तत्र तस्मिन् क्षणे व्योमयानवनिताः कश्मलं ययुरिति सम्बन्धः वेणुनादः पञ्चधा भवति मुखस्य परितः समतया उपर्यधश्च धारणेन तत्र स्त्रीणां कामोद्बोधकः वामपरावृत्तः स्त्रीणां पुरुषाणांच दक्षिणदेवानामुर्ध्वः अधस्तिरश्चां समतया सर्वेषामेचतनानां च तत्र देवस्त्रीणां कामोद्बोधकः वामपरावृत्त एवेति तथा निरू-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्यते मानुषभावात् देवभावो महानिति मानुषनादेन देवस्त्रीणां भ्रमो न भविष्यतीत्याशङ्क्य तद्भूविजृम्भः परमेष्ठिधिष्ण्यमिति वाक्यात् भ्रूविन्यासं नादंयोजितवान् तदाह । वामबाहौ कृतो योजितो वामकपोलो येन वल्गिता भ्रूर्यस्येति भ्रूरत्र दक्षिणा तथैवालिनयभावात् वल्गिता उच्चैगीतयुक्ता अधरः पूर्ववर्णितः लोभात्मकः तत्र चेत्समर्पितः परमानन्दं न प्रयच्छति काममेवोद्बोधयति यतः श्रुत्वापि विरहजनितक्लेशमेव प्राप्नुवन्ति नतु परमानन्दं तत्रापि क्रियाशक्तिः पुष्टा चेद्भवेत् तदा लुब्धादपि फलं सिध्येत् तदपि नास्तीत्याह । कोमलाङ्गुलिभिराश्रितो मार्गो यस्य आदौ मन्दप्रकारेणैव वेणुनादस्योचितत्वात मार्गास्तस्य रन्ध्राः तेषां गाढभावेन निष्पीडने तारो नादो भवति मध्यभावे मध्यमः कोमले मन्द इति गोप्य इति सम्बोधनं सर्वानुभवसाक्षिकमेतदिति ज्ञापयितुम ईरणमत्र वादनं प्रयोजनमाह । मुकुन्द इति वेणुनादेन शुद्धं चेत् जगत् तदा मोक्षं दास्यामीति ॥ २ ॥

एवं हितार्थे ऽपि वेणुवादने ये मोक्षानधिकारिणः तेषां काम एव जात इत्याहुः। व्योमयानवनिता इति ।व्योमयानाः विमानयानाः सर्वे देवयोनयः तेषां वनिता अधिकारित्वात् स्त्रीत्वात् भोग्यत्वाच्च न मुक्त्यधिकारिण्यः सिद्धैः सहिता अपि भगवद्व्यतिरिक्तं सर्वमेव दातुं शक्ताः स्वयमत्यन्तज्ञाने निपुणाः आदौ वेणुनादं श्रुत्वा विस्मिता जाताः ततोऽल्पकामोद्रेके तद्वेणुनादमुपधार्य सलज्जा जाताः भर्त्तारो ज्ञास्यन्तीति ततोऽत्यन्तमुद्रेके स्वात्मरक्षार्थं कामेन मरणशङ्कया काममार्गणेभ्यः समर्पितं चित्तं याभिः तादृश्यो जाताः यथा मारकाय मारणात् पूर्वं स्वयमेव समर्प्यते भीरुभिः ततः कामेन पोडिताः कश्मलं मूर्च्छां ययुः सा मूर्च्छा अत्यन्तविस्मारिकेत्याह । अपस्मृता नीवी कटिवस्त्रं याभिरिति एवं वेणुनादोऽत्यन्तं कामबोधक इत्यस्माकं मूर्च्छादौ किमाश्चर्यमिति भावः ॥ ३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृन्दावने गाः सञ्चार्य तत्रत्यतरुवल्लिखगमृगादीन् नक्तन्तनस्वविरहखिन्नान् आश्वासयन् स्वागमनमावेदयितुं यदा वेणुना कृष्णः सञ्जगौ तदा तदाकर्णनेनोद्दीप्त भावा गोप्यः स्वस्वयूथस्थाः सखीः प्रत्याहुर्वामेन्यादि द्वादशयुगलानि हे गोप्यः ! वामबाहौ वामबाहुमूले कृतः अर्पितः वामकपोलो येन सः गीतस्यारोहावरोहयोर्गमकमयीकरणं नैनैव प्रकारेण सम्भवेत् तथैव वामजङ्घोपरि दक्षिणजङ्घाधस्तटन्यासो ऽपि ज्ञेयः तेन त्रिभङ्गललितस्तिर्य्यग्ग्रीवस्त्रैलोक्यमोहन इतिनामत्रयं प्रकटीबभूवेति भावः । वल्गिते नर्तिते भ्रुवौ येनेति सुबलादीन् पुरः स्थितान् गानसौष्ठवे अवधापयितुमिति भावः हस्तत्वमार्पम् अधरे ऽर्पितो न्यस्तोऽधराय दत्तो यो वेणुस्तं यत्र यदा ईरयति कीदृशं कोमलाभिरन्यजनाङ्गापेक्षया सुकुमाराभिः अकर्मकठिनौ हस्ताविति सामुद्रिकात् स्वाङ्गापेक्षयात्वीषत्काठिनाभिरङ्गुलीभिराश्रिताः मार्गाः सप्तस्वरच्छिद्राणि यस्य तं तदा व्योमयानानां सिद्धानां वनिताः सिद्धैः स्वपतिभिः सहिता अपि प्रथमं तद्वेण्वीरणमुपधार्य्य आकर्ण्य विस्मिता अहो वेणुनादस्यैतादृग्मोहनत्वमननुभूतचरं यतोऽस्मान् साध्वीरपि मोहयति अस्मान् पुरुषानपि स्त्रीभावयुक्तीकृत्य मोहयतीति प्रथमं विस्मययुक्ताः ततश्च सिद्धैः सहैव सलज्जाः अस्मद्व्यभिचारमस्मत्पतयो वितर्कयेयुरिति तथैवास्मत् पुंस्त्वविपर्य्ययमस्मत्पत्न्यो वितर्कयेयुरिति स्वस्वपतिभ्यः सकाशात् स्वस्वपत्नीभ्यश्च सकाशात् लज्जायुक्ता अभूवन् ततश्च सिद्धैः सहैव कामस्य मार्गणेभ्यः शरेभ्यः समर्पितानि दत्तानि चित्तानि याभिस्ताः आयातान् श्रीकृष्णविषयककामशरानालक्ष्य भोः श्रीकृष्णकामशराः युष्मभ्यमेतानियस्मच्चित्तानि दत्तानि एतानि शीघ्रं विद्धीकुरुत अस्माभिः पातिव्रत्याय जलाञ्जलिर्दत्तः कृष्णोऽस्माभिः सह कृपया रमतामिति तथा अस्माभिरपि स्वपुंस्त्वं देवत्वञ्च त्यक्तं कृष्णो ऽस्मान् सद्यएव स्वयोगेन गोपस्त्रीकृत्यास्माभिः सह रमतामिति समर्पितपदव्यङ्ग्यं ज्ञेयम ततश्च सिद्धैः सहैव कश्मलं कामशरपीडया मोहं मूर्च्छां ययुः प्रापुः कश्मलस्यानुभावं सहैवमाहुः अपस्मृता न स्मृता स्खलिता अपि नीव्यो याभिस्ताः सिद्धैस्तैः शिथिलितवस्त्रबन्धकेशबन्धादिका बभूवुरित्यर्थः। समासान्ताभावः आर्षः अकस्माद्देवीनां देवानांच यद्येतादृश्यवस्था तर्हि वयं मानुष्यस्तत्रापि गोप्यस्तत्राप्येकनगरस्थास्तत्रापि लब्धाङ्गसङ्गाः कथं तं विना स्थास्यामस्तदुत्तिष्ठत सख्यः ! एतान् दग्धमुखान् पश्यतोऽपि पतिश्वशुरादींस्तिरस्कृत्य केनचिन्मिषेण वृन्दावनं प्रविश्य प्राणप्रेष्ठेन सार्धं विलसाम इति ध्वनिः प्रतियुगलान्त एवानुवर्त्तनीयः ॥ २ ॥ ३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तल्लीलाप्रगानमेव वर्णयति । वामेति द्वादशभिर्युगलैः हे गोप्यः वामबाहौ तन्मूले कृतो निहितो वामकपोलो येन सः वल्गिते नर्तिते भ्रुवौ येन सः मुकुन्दः कोमलाङ्गुलिभिः आश्रिताः मार्गाः षड्जादिस्वरच्छिद्राणि यस्य तम् अधरार्पितम् अधरे संयोजितं वेणुं यत्र यदा ईरयति वादयति तदा व्योम्नि यानं गमनं येषां ते व्योमयानाः देवाः तेषां वनिताः सिद्धैः स्वर्गार्थकृतैः स्वकर्मभिः सिद्धैर्देवैः स्वभर्तृभिः सह वर्तमाना अपि तदुपधार्य्य मुकुन्दवेणुगीतमाकगर्य प्रथमं विस्मिताः तदनन्तरं काममार्गणे समर्पितानि संयोजितानि चित्तानि याभिस्ताः "मार्गणं याचने ऽन्वेषे मार्गणस्तु शरे ऽर्थिनी"ति हैमः अत एव अपस्मृताः विस्मृताः नीव्यो याभिस्ताः भ्रश्यद्दुकूलबन्धा इत्यर्थः । कश्मलं कामसन्तापं ययुः प्रापुः पुनः तत् शान्त्यर्थं श्रीकृष्णसंयोगं लेभिरे अतो धन्या वयमित्येवं वाक्यशेषो यथासम्भवं बोध्यः ॥ २ ॥ ३ ॥

---

### भाषा टीका ।

हे गोपीओं हो ! जिस समय में वांये भुजा पर वांये कपोल को स्थापन करके अपने नेत्र के भौंओं को नचाकर अधर पर वंशी को रखकर अपनी कोमल अंगुलियों से मुकुन्द भगवान गान को करते हैं तब आकश में विमानों पर अपने पति सिद्धों के सहित बैठी हुई सब देव स्त्री उस गीत को सुन कर लज्जित होजाती हैं फिर उनके मन काम के बाणों से विधजाते हैं फिर वे मोहित होजाती हैं तो उनकी कौंधनी कटि वस्त्र आदि सब ढीले होजाते हैं ॥ २—३ ॥

हन्त चित्र मबलाः ! शृणुतेदं हारहास उरसि स्थिरविद्युत् ॥
नन्दसूनुरयमार्त्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ॥
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हन्त हे अबला ! इदं चित्रं शृणुत हारहासो हारवद्विशदो हासो यस्य सः यद्वा वेणुवादनेनाधोवदनेन हसता हारेषु स्फुरन्हासो यस्य सः यद्वा हारवद्वक्षसि शोभमानो हासो यस्य सः यद्वा हाराणां हास इव विशदा स्फूर्तिर्यस्मिन्नुरसीति उरसि स्थिरा विद्युदिव लक्ष्मीर्यस्य सः यर्हि यदा कूजितवेणुर्नादितवेणुर्भवति ॥ ४ ॥

तदा व्रजे वृषा मृगा गावश्च वेणुवाद्येन हृतानि चेतांसि येषां ते आराद्दूरादेव दन्तैर्दष्टाः कवला ग्रासा यैस्ते धृता उत्तम्भिताः कर्णा यैस्ते निद्रिता इव लिखितचित्रमिव चासन् अविदुषां तिरश्चामिदमातोचेत्रमित्यर्थः ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो वनान्तिकं गच्छन् सर्वगोगोपालसङ्कलनार्थं वन्यमृगादिहर्षणाय स्वानुव्रज्याकरश्रीगोपादीनां ससान्त्वनगृहनिवर्त्तनाय च वेणुमवादयत् तत्रास्तामन्येषां वार्त्ता तस्योभयतो व्रजवनयोः स्थिताः पशवोऽपि मुमुहुरित्याहुः ।०ः हन्तेति । हृदयस्थविस्मयचमत्कारद्योतकं तथैव साक्षाद्वदन्ति चित्रमद्भुतम् । हे अबला ! इति तच्छ्रवणेन प्रेमविह्वलतयेन्द्रियादिशक्तिराहित्याभिप्रायेण । अत एव शृणुतेत्यवधापयन्ति स्थिरविद्युदिति वक्षःस्थां रेखारूपां लक्ष्मीमेवोत्प्रेक्षन्ते । प्रसिद्धत्वात्तु नानुवदन्ति । तत्र स्थिरेति चित्रत्वे कारणम् । विद्युत्त्वेनोरसश्च घनत्वं व्यञ्जयन्ति। तस्याश्च नायिकात्वमाशङ्क्य तत्रापि स्थिरत्वं विभाव्य मात्सर्यम् । तथापि विद्युद्घनसहयोगेन हारहासयोर्बलाकात्वं तादृशघनत्वेन तापहारित्वञ्च । अत एव नन्दयति जगदिति नन्दस्तस्य सूनुरिति स्वभावेनानन्दकत्वमुक्तम् । अतएवार्त्तजनानां गवादीनां मृगादीनाञ्चानन्ददाता । अयमित्यधुनैव यो गृहाश्रिगैतः स इत्यर्थः । साक्षात् सर्वैरनुभूयमान इति वा । कूजितेत्यादि कर्मणि क्तः । अन्यैस्तैः । यद्वा । हारो मनोहरो हासो यस्य सः । यद्वा । यस्मिन्नुरसि । अन्यत् समानम् । व्रजे ये निरुध्य पाल्यमानाः शकटवाहो वृषास्ते मृगाः कृष्णसाराः तत्सम्बन्धेन गावो वनगामिन्यस्तदुपलक्षणत्वेनान्येऽपि तत्तज्जातयः दन्तैर्दष्टा एव हृतचेतस्त्वेन न गीर्णा न चर्विता नापि त्यक्ताः कवलास्तृणग्रासा यैः अत एव हृतचेतस्त्वेनेत्यत्र तस्या मुरल्याः शब्दान्तरोत्थानभयेनेत्युत्प्रेक्ष्यम् । दन्तैस्तृणधारणे मोहभयान्मागायेति तन्निवेदनव्यञ्जना च । निद्रितानामपि किञ्चिच्चलनादिकमप्यस्तीति तत्परिहारार्थं दृष्टान्तान्तरमाह । लिखितेति । पदादि लिखितं वृषादीनां चित्रमिव । लिखितग्रहणं लिखिताचित्रस्योत्कीर्णचित्राच्चमत्कारकरत्वापेक्षया । एकत्वं सङ्घटेनैकतामिव गता इत्यपेक्षया ॥ ४ ॥ ५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

हारभासः निर्मलभासः उरसि स्थितविद्युत् उरसि स्थितश्रीरित्यर्थः ॥ ४—५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हन्तेति । हे अबला ! इदं चित्रं शृणुत हन्तेति आश्चर्यमेतत् अयं नन्दसूनुः हारवद्विशदोऽमलो हासो यस्य यद्वा हारेषु स्फुरद्धासो यस्य उरसि स्थिता विद्युदिव लक्ष्मीर्यस्य तथाभूतः आर्त्तजनानां तद्विश्लेषजदुःखं पीडितानां मादृशां नर्मदो नितरां दुःखकारकः सन् यर्हि कूजितो वादितो वेणुर्येन तथाभूतो भवति ॥ ४ ॥

तदा व्रजे ये वृषा मृगा गावश्च वेणुवाद्येन हृतानि चेतांसि येषान्ते आराद्दूरादेव दन्तैर्दष्टा एव ननु चर्विताः कवलास्तृणग्रासा यैस्ते धृता उत्तम्भिताः कर्णा यैस्ते निद्रिताः सञ्जातनिद्राः इव लिखितचित्रमिव चित्रितवृषादिरिव चासन् तस्थुः अविदुषां तिरश्चामपीदमानन्दपारवश्यजनकं वेणुगीतमतोऽति चित्रमिति भावः ॥ ५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

हारेण भासत इति हारभासः हारवद्विशदो हासो यस्य स तथेति पाठार्थौ उरसि स्थितविद्युत् विद्युदिव विष्णुं द्योतयीत श्रीवत्साङ्कनामेति यर्हि यदा कूजितवेणुर्भवति ॥ ४ ॥

तदा एत्य समेत्य व्रजवृषादयः लिखितचित्रमिव निश्चेष्टा आसन्नित्यन्वयः धृतकर्णाः निश्चलकर्णाः कवलस्तृणग्रासः निद्रिताः कार्यान्तररहिताः ॥ ५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततो वनान्तिकं गच्छन् गोगोपसङ्कलनार्थं वेणुमवादयत् तत्रास्तामन्येषां वार्त्ता पशवोऽपि मुमुहुरित्याहुः । हन्तेति युग्लेन । स्थिरविद्युदिति वक्षःस्थां रेखारूपैल्लक्ष्मीमेवोत्प्रेक्षन्ते। प्रसिद्धत्वात्तु नानुवदन्ति व्रजे ये निरुद्धाः पाल्यमाना वृषास्ते तत्तत्सम्बन्धेनान्येऽपि ज्ञेयाः । निद्रितानां किञ्चिच्चलनादिकमप्य-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

स्तोति दृष्टान्तान्तरं लिखितेति लिखितग्रहणं चोत्कीर्णचित्राच्चमत्कारित्वापेक्षया। एकत्वञ्च एकीभावापेक्षया ॥ ४ ॥ ५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

गवामपि वेणुनादेन तथा जातमिति वक्तुं प्रकारान्तरेण वेणुरवोद्गममाहुः। हन्त चित्रमिति। हे अबलाः! इदमाश्चर्यं श्रृणुत यर्हि नन्दसूनुः कूजितवेणुः तर्हि वृषा गावः दन्तदष्टकवलाः निद्रिता आसन्निति संबन्धः कामः पशुषु सजातीय एव नोत्कृष्टे नापकृष्टे अश्वतरे त्वन्यैव व्यवस्था हीनेषु महतो रमणार्थं संबन्धोऽपि रसाभासजनकः अतः सम्भोगलक्षणं कामं निराकृत्य पशुष्वत्यावश्यकं भक्षं निरुणद्धि पूर्वोक्तं वामबाहुकृतवामकपोलत्वमनुवर्त्तते तत्रैवावान्तरभेदो वक्तव्यः हन्तेति खेदे यत्र गवामपि सर्वक्रिया निवृत्तिः तत्रास्माकं न निवर्त्तत इति चित्रं पूर्वापेक्षयाप्युत्कृष्ट देवस्त्रियोहि पुरुषोत्तमे कामुक्यो भवन्त्येव इदं त्वत्याश्चर्यमिति अबला इति संबोधनङ्कृत्वा दर्शनाभावाय इदं मया प्रोच्यमानं श्रृणुत अत्र गोपिका नवविधाः गुणातीते प्रकारत्रयमिति कर्मज्ञानभक्तिभिः वक्तृव्यवस्थैषा प्रथमा राजस्यः इयं राजसराजसी अपेक्षितं पूर्वं सर्वमेवानुवर्त्तते सर्वत्र आदौ भगवतः स्वरूपं श्रृणुतेति तं चतुर्द्धा वर्णयति हारवत् हासो यस्य उरसि स्थिरा विद्युत् यस्य नन्दस्यच सूनुः आर्त्तजनानां सर्वेषामेव नर्मदः तत्र हेतुरयमिति अन्यथेदानीमग्रे प्रकटो न भवेत् द्वितीये मुहूर्ते निर्गच्छन्तं बालक्ष्याह तदा प्रतिमुहूर्त्त युगलानि भवन्ति सन्ध्यासन्ध्यांशयोरन्तरेण द्वादशैव मुहूर्त्ता इति सोमोत्पत्तौ निर्णयः अन्येषां हास्यं किर्मीरितन्तवातिरज्जुवत् भगवतस्तु दन्तानां कान्त्या विभक्तो हासः मुक्ताहारवद्भवति यथा रत्नैर्व्यवहिता मुक्ता इति अनेन जगतः प्रपञ्चे मोहजनकत्वं स्थिरीकृतं स्नेहकलाभिर्मायाविभक्तेतिश्रुतार्थापत्तिरर्थीनरूपणे मूलं सर्वत्र यथा दृष्टे नानुपपत्तिः दृष्टानुसारेणैव सर्वं व्यवस्थाप्यते नहि दृष्टे अनुपपन्नं नामाव्याघातादिति लौकिकानामेषा व्यवस्था सर्वथा दृष्टविरोधो नाङ्गीक्रियत इति तथा वैदिकानां श्रुतिः यावतैव बोध्यमानः पदार्थः स्थिरीभवति तावांस्तदनुगुण उच्यत इति सर्वत्रैवैषा व्यवस्था न केवलं संसारे पुत्राद्यासक्तिमेव स्थिरीकरोति किन्तु धनासक्तिमपीत्याह स्थिरा लक्ष्मीर्यत्रेति एवम्प्रमाणबलनिराकरणार्थं द्वयं विधाय प्रमेयबलनिराकरणार्थं द्वयं कृतवानित्याह यतः स्वयमेव नन्दस्य सूनुर्जातः आर्त्तानाञ्च स्वयमागत्य सुखं प्रयच्छति परिदृश्यतेच तथेतिच प्रमाणं नहि महानेवं करोति अत इदमाश्चर्यम एतमेवार्थं प्रकटीकुर्वन् कूजितवेणुर्भवति अथवा पूर्वापेक्षया अधोवक्त्रलीलया वेणुर्वाद्यते हारवद्धासो यस्मिन् उरसि तस्य स्थिरताविभागः स्थैर्यंचाश्चर्यं श्रीवत्सोऽप्युत्कृष्ट इति शोभार्थं तस्य स्थिरत्ववर्णनं तादृशस्य नन्दसूनुत्वे स्नेहो वर्द्धते तत्रापि स्वोपकारक इति कूजितत्वं वादनविशेषधर्मः सर्वेषामान्तरं प्राणधर्ममप्याकर्षति ॥ ४ ॥

यत्र पशूनामपि प्राणादिधर्महारी तत्रान्येषां किं वक्तव्यमिति पशूनां निरूपयति एकस्य तथात्वं हेत्वन्तरसिद्धमपि भवेत् अत उक्तं वृन्दश इति। समूहशः यत्रैव वेणुनादः प्रविष्टः तेषां सर्वेषामित्यर्थः व्रजस्थिता वृषाः ककुद्मिनो मत्ताः उत्सृष्टवृषा इव शकटादिनेतारः ते व्रजसमीप एव तिष्ठन्तीति ग्राम्यपशूपलक्षणार्थं व्रजपदं मृगा गावश्च अरण्ये मिलिता भवन्ति आरण्या ग्राम्यादेवचं भवन्तीति ज्ञापनार्थं मृगपदं किं बहुना सर्वं एव पशवः वेणुवाद्येन कृत्वा हृतचेतसो भवन्ति नापि भगवत्समीपगमने समर्थाः किन्तु हृतचेतसः दूरादेव भवन्ति अनेन वेणुनादस्य स्वाभाविक एवायं धर्मो ननु भगवत्समीपकृत इति केवलास्तृणरूपाः केवलं दन्तैर्दृष्टाः न त्यागे न च भक्षणे समर्थाः दन्तदंशमात्रेणैव प्रयत्नो निवृत्त इति नादस्येतरकार्यनिवर्त्तकत्वमुक्तं पूर्वं क्रियाया अत्यावश्यकत्वाय कवलपदं देवस्त्रविन्मूर्च्छानिवृत्त्यर्थमाह। धृतकर्णा इति। अन्यत्सर्वं परित्यज्य कर्णमेव साधनं धृतवन्तः ततो बाह्यान्निवृत्ता इत्याह। निद्रिता इति। ततो नादेन सर्वतो व्याप्ताः लिखितं गवादीनां चित्रमिव पश्चात्ते जाताः स्थावरापेक्षयापि स्थिरा जाताः पूर्वोक्तार्थादधिकोऽर्थ इति चित्रता ॥ ५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

देववनितानां विदग्धप्रवराणां का वार्त्ता मूढजन्तूनामपि मोहं श्रृणुतेत्यन्या आहुः। हन्तचित्रमत्यद्भुतादप्यद्भुतमिदमित्यर्थः हे अबलाः स्त्रीणां युष्माकं पातिव्रत्यबलं कृष्णेन प्रथमत एवापहृतमिति भावः। हाराणां बलाकानामिव हासः प्रकाशो यत्र तथाभूते उरसि मेघोपमे स्थिरा विद्युत्तद्वत्यलक्ष्मीरेखैव यस्य सः तेन बलाकाविद्युद्भूषितकृष्णवक्षोमेघेनैव भवतीनां पातिव्रत्यनिदाघो ध्वंसित इति भावः। अतएवायम् आर्तजनानां युष्माकं नर्म सर्वलोककर्तृकमुपहासं ददातीति सः कदा यर्हि कूजितवेणुर्भवति तदेत्यर्थः। वेणुनादश्रवणमात्रेण शिथिलनीवीकबरीकाः प्राप्तोन्मादाः सर्वलोकहास्यास्पदीभूता भवत्यो भवन्तीतिभावः। युष्माकं मानुषीणां का वार्त्ता तिर्य्यग्जातयोऽपि वेणुनादेन मूर्च्छिताः क्रियन्ते इत्याहुः वृन्दशः प्रतियूथमित्यर्थः। व्रजस्थाः वृषा वनस्था मृगाः गावश्च दन्तैर्दष्टाः कवलास्तृणग्रासा यैस्ते इति तृणेषु दन्तैर्दष्टेषु सत्सु तन्निगिळनात् पूर्वमेव आरब्धेन वेणुवाद्येनैव बलात् कर्णमार्गेणैव देहान्तः प्रविष्टं ननु मुखमार्गेण तृणग्रासा देहान्तः प्रविष्टा अतः एव धृता उत्तम्भिताः कर्णा यैस्ते ततश्च तेन हृतानि चित्तानि येषां ते इत्यत एव सर्वेन्द्रियव्यापाराभावान्निद्रिता इव तत एव तृणग्रासास्तेन दन्तदष्टत्वस्यानपगमाद्भूमावपि न पतिता इति भावः। ततश्च प्रबलीभूतेन जाड्यसंचारिणा जनिते स्तम्भातिशये सति मूर्च्छायांच सत्यां श्वासस्यापि प्रायस्तब्धीभावाल्लिखितचित्रमिवेत्युपमान्तरं दत्तं तत्रापि लिखितत्युत्कीर्णचित्रादपि लिखितचित्रस्य चमत्कारत्वातिशयविवक्षयोक्तं केनाप्यद्भुतचित्रकारेणाकाशपटे लिखितानि चित्राणीति विस्मयरसोध्वनितः ॥ ४—५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अः वासुदेव एव बलं यासां तास्तथा तासां सम्बुद्धौ हे अबलाः! कृष्णाधाराः हन्तेत्यव्ययं हर्षे हन्त हर्षकरं चित्रमिदं श्रृणुत यः उरसि आस्माकमहर्निशं वर्तते सोऽयम् हारेषु

बर्हिणस्तवकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ॥
कर्हिचित्सबल आलि ! स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥
तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ॥
स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदीयेषु अधोवदनेन क्वचिद्धसतः अस्मदीयेषु चाभिमुख्येन विहरतः स्फुरद्धासो यस्य सः यद्वा हारवद्विशदो हासो यस्य सः स्थिरा अचला वक्षोगता विद्युदिव भासमाना लक्ष्मीः देहगता कान्तिर्वा यस्य सः आर्तानां संसारतापपीडितानामस्मदादीनां नर्म तदार्तत्वनिराकरणपूर्विकां क्रीडां ददातीति सः द्रवकेलिपरीहासाः क्रीडा खेलादि नर्मचेति कोशात् यर्हि यदा कूजितो वादितो वेणुर्येन स तथाभूतो भवति तदा व्रजसंचन्धिनः वृषा मृगा गावश्च वृन्दशः वेणुवाद्येन हृतान्याकृष्टानि चेतांसि येषां ते दन्तैर्दष्टाः कवलाः ग्रासाः यैस्ते धृताः वेणुगीतश्रवणानुकूलीकृताः कर्णा यैस्ते निद्रिताः सुखातिशयेन संजातनिद्रा इव लिखितचित्रमिवच आरात् केचिद्दूरे केचित्समीपे इत्येवं यथायथमेव आसन् तस्थुरित्यर्थः । आरादित्यव्ययं दूरसमीपयोः तचात्रोभयार्थपरत्वविवक्षयोपन्यस्तम् ॥ ४। ५ ॥

भाषा टीका ।

हे अबला एक बडी आश्चर्य की बात यह सुनो वक्षस्थल में जिनकी स्थिर रहने वाली बिजुली सरी की लक्ष्मी रहती हैं जिनके हृदय की हारो पर हास शोभित होता है सो कृष्ण ऐसे दुःखित जनों के सुख देने वाले यह नंदनंदन जब वंशी को बजाते हैं तब झुंड के झुंड व्रज के बैल गउ मृग सब वंशी के वाद्य से दूरही से चित्तके हरण होजाने से घास के ग्रास को दांतों में दबाकर कानों को उठाकर सो गये सरी के चित्र में लिखे सरीके होरहते हैं ४—५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च अचेतनासु सरित्सु तदत्तीव चित्रमित्याहुः । हे आलि ! सखि बर्हिणो मयूरस्तवकाः मयूरपिच्छा धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिबर्हः परिकरस्तं विडम्बयत्यनुकरोतीति तथा स मुकुन्दो गोपैः सह वेणुनेत्युपरितनमत्रापि ज्ञातव्यं यत्र यदा गाः सम्यगाह्वयति ॥ ६ ॥

तर्हि तदा तद्ध्वनिश्रवणात् अनिलेनानीतं तस्य पदाम्बुजरजः स्पृहयन्त्य इव भग्नगतयः सरितो वै निश्चितं वयमिव ता अल्पपुण्या यतो न प्राप्नुवन्ति केवलं प्रेम्णा वेपिता भुजास्तरङ्गा यासां ताः स्तिमिता निश्चला आपो यासां ताः गोप्योऽपि लोचनयोस्तिमितजला भवन्तीति ॥ ७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो वनान्तःप्रविश्य मल्लवेशोचितवन्यभूषणैर्भूषितस्य गवादिजलपानाद्यपेक्षया विदूरनदीकसरोवरमयदेशगतस्य गोसमाह्वानार्थवेणुवाद्यविशेषावदीनामपि भावविशेषोदयेन मोहं सम्भावयन्ति । बर्हिण इति । स वेणुवाद्यविशारदो मुकुन्दः कर्हिचिद्दवां प्रथमं पानसमये यत्र यदा सम्यक् प्रीतिपूर्वकं तत्तच्छिचित्रनामभिराह्वयति अप्रधान एव सहार्थे तृतीया विधानात् । श्रीकृष्णनादपोषणार्थ एव श्रीबलादीनां नादो बोध्यस्तेन च सरितां श्रीकृष्णनिष्ठ एव भावोद्बोधो व्यज्यते । संहत्य नादश्च तासां सर्वासामेव दूरगत्वात् अत एव गा इति बहुत्वं ततो दूरश्रवणात् सरित इति च वक्ष्यते । आलि! हे सखीति सरितां तादृशभावे विश्वासार्थम् । यद्वा सख्येनैव स्वसादृश्यं कथ्यत इति भावः । अन्यत्तैः । अथवा बर्हिणशब्देन कथञ्चिद्बर्हमेवोच्यते । स्तवकाः पुष्पगुच्छाः पलाशाः कोमलपत्राणि । यद्वा हे गङ्गे हे यमुने हे सरस्वतीति गङ्गादिनाम्नीर्गाः समाह्वयतीति मधुरतम स्वकण्ठेनैवाह्वयतीति विशेषो ज्ञेयः । तदा सरितो माथुर्यो मानसगङ्गायमुनासरस्वत्याद्याः प्रकारान्तरेणाप्राप्त्ययोग्यता मननेनानिलमात्रप्रापितं रज एकमपि स्पृहयन्त्यो लक्ष्यन्ते "स्पृहेरीप्सित" इति सम्प्रदानत्वेऽपि रजसः कर्मत्वं "कर्तुरीप्सिततमं कर्म"ति स्मरणादीप्सिततमत्वविवक्षया । यतस्तत्स्पृहाहेतोः स्तब्धप्रवाहतया भग्नगतयो लक्ष्यन्ते । सरित इत्यन्वर्थतया सततप्रवाहवत्योऽपीत्यर्थः । भग्नगतय इति श्लेषेण निजपतिसमुद्रानुसरणभङ्गेन लोकद्वयोपेक्षोक्ता । अतस्तादृश्योऽतस्तदप्राप्त्या वयमिवाबहुपुण्या अप्रचुरशुभादृष्टा एव लक्ष्यन्ते अस्माकमिव तासामिव तासामपि श्रीकृष्णक्रीडाश्रयसजातीयविजातीयगणभेदासंख्यत्वेन विरलावसरत्वादिति भावः । किन्तु केवलं प्रथमतः प्रेम्णा तद्रजः प्राप्तीच्छया वेपिता भुजाः प्रसारितकरा इव तरङ्गा यासां तादृश्यो लक्ष्यन्ते। पश्चात् स्तिमितापो निस्तरङ्गतया स्तब्धसमस्तचेष्टाश्च लक्ष्यन्ते इत्यर्थः । अन्यत्तैः । तत्र गोपीनां लोचनयोः स्तिमितजलत्वं सदा सार्द्रत्वात् । यद्वा सरित्स्वुपमाङ्गत्वात् स्वपक्षे स्तिमिताङ्गा इत्यर्थः तदेतावानुत्प्रेक्षाक्रमः वस्तुक्रमस्तु प्रथमं तादृशशब्दस्पर्शस्ततः प्रवाहस्तम्भस्ततस्तरङ्गभावशेषचलनत्वं ततस्तद्राहित्यमपीति । किञ्चोत्प्रेक्षाक्रम एवं ज्ञेयः । प्रथमं तच्छ्रवणं ततो गतिभङ्गः ततस्तद्दादकालिङ्गनेच्छया भुजकम्पः ततस्तदप्राप्तिदुःखेन स्तम्भः ततस्तादृशरजोमात्रस्पृहेति । तदेवं तथा तथाभूता अपि तन्मात्रं स्पृहयन्त्य एव लक्ष्यन्ते नतु प्राप्तवत्यः अनिलानुकूल्यात् सुलभत्वात् । यतो वयमिवाबहुपुण्या इत्यन्वयो ज्ञेयः । तदेवमचेतनानामप्येवं वार्त्ता को वा नामास्माकं दोष इति भावः ॥ ६ ॥ ७ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बर्हिणशब्देन पिच्छो लक्ष्यते कर्हि कदाचित् यत्र देशे यस्मिन् देशे इत्यर्थः । तर्हि तदा स्पृहयतीः स्पृहयन्त्यः प्रेमवेपितभुजाः प्रेमचलिततरङ्गाः ॥ ६—९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतोऽप्यतिचित्रं शृणुतेति काश्चिदाहुः । बर्हिण इति । हे आलि ! सखि बर्हिणः मयूरस्य स्तवको बर्हः यद्वा बर्हिणशब्देन तत्पिच्छो लक्ष्यते स च स्तवका गुच्छा धातवो गैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धश्चासौ मल्लानां परिबर्हः परिकरश्च तं विडम्बयत्यनुकरोतीति तथा स मुकुन्दो बलरामेण सहितः कर्हिचिद्यदा यत्र देशे गोपैः गाः समाह्वयत्यस्य वेणुगीतेनेत्यादिः वेणुगीतेन गापान् गाश्च समाह्वयति ॥ ६ ॥

तर्हि तदाऽचेतनाः सरितोऽप्यनिलेन नीतं प्रापितं तस्य पदाम्बुजरजः स्पृहयतीः स्पृहयन्त्य इव भग्ना गतिर्यासां तथाभूताः वै निश्चितं भुग्नगतय इति पाठे कुटिलगतयः तथापि ता वयमिवाबहुपुण्या यतो न प्राप्नुवन्ति केवलं प्रेम्णा वेपिताः कम्पिताः भुजास्तरङ्गा यासां स्तिमिता आपो यासां तथाभूताश्च गोप्योऽपि लोचनयोः स्तिमितजला भवन्तीति वयमिवेति दृष्टान्ताभिप्रायः ॥ ७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे आलि ! सखि कर्हिचित्कदाचित् । यत्र यदा यस्मिन् देशे स्थित्वा गाः समाह्वयति ॥ ६ ॥

तर्हि तदा तस्मिन् देशे स्थिताः सरितस्तीरे पयसि वाऽनिलनीतं तत्पदाम्बुजरजः आमृशन् अस्पृशन्वै इत्यन्वयः कथंभूतः बर्हिणस्य मयूरस्य स्तवकैः पिच्छवन्धविशेषैः धातुभिर्गिरिसंभवैः मनःशिलादिभिः पलाशैः पल्लवः बद्धस्य मल्लपरिबर्हस्य मल्लपुरुषशिरःपरिकरस्य विडम्बो ऽनुकारो यस्य स तथा मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः किञ्च बहूनि अनेकानि पुण्यानि यासां तास्तथा विपुलानेकयोर्बहुरिति यादवः प्रेम्णा कामोद्यतस्नेहेन वेपिताः कम्पिताः भुजास्तरङ्गलक्षणा यासां तास्तथा अतएव हतवेगाः मन्दीकृतस्यन्दनलक्षणजवाः अतएव भग्नगतयः स्तिमितप्रवाहाः आसन्निस्तनुपङ्कः अनेन सरन्तीति सरित इति सरिच्छब्दार्थो लुप्त इति दर्शितम् ॥ ७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततो वनान्तःप्रविष्टस्य तस्य वन्यभूषणैर्भूषितस्य गवादिप्रथमजलपानाद्यपेक्षया विदूरनदीकसरोवर मर्यादेशगतस्य गोसमाह्वानार्थं वेणुवाद्यविशेषात् नदीनामपि भावविशेषोदयेन मोहं सम्भावयन्ति । बर्हिणेति युग्मकेन । अप्रधान एव सहार्थे तृतीया विधानात् । श्रीकृष्ण नादपोषणार्थं एव श्रीबलादीनां नादो बुध्यते । तेन च सरितां श्रीकृष्णानिष्ठ एव भावोद्बोधो ज्ञाप्यः तदा सरितः प्रकारान्तर प्राप्त्ययोग्यतामननेनानिलमात्र प्रापितं रज एकमपि स्पृहयन्त्यो लक्ष्यन्ते । यतस्तत्त्वप्रवाहतया भग्नगतयो लक्ष्यन्ते । ततस्तादृश्योऽपि तदप्राप्त्या वयमिवाबहुपुण्या अप्रचुरपुण्यादृष्टा एव लक्ष्यन्ते अस्माकमिव तासामपि श्रीकृष्णक्रीडाश्रय सजातीयविजातीयगणभेदासङ्गत्वेन विरलावसरादिति भावः किन्तु केवलं प्रथमतः तद्रजः प्राप्तीच्छया वेपिता भुजाः प्रसारितकरा इव तरङ्गा यासां तादृश्यो लक्ष्यन्ते पश्चात्स्तिमितापो निस्तरङ्गतया स्तब्धवेगाश्च लक्ष्यन्त इत्यर्थः । तदेवमुत्प्रेक्षा क्रमः । वस्तुक्रमस्तु प्रथमं तादृशशब्दस्पर्शस्ततः प्रवाहस्तम्भस्ततस्तरङ्गमात्रावशेष चलनत्वं ततस्तद्गाढत्वमपीति ॥ ६ ॥ ७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वेणुनादेन नदीनामतिजडानामपि स्पृहा जायत इति वक्तुं पुनर्वेणुनादं वर्णयन्ति । बर्हिण इति । आवेशो देववेशश्च पूर्वं निरूपितौ लीलाविशेषोऽधुना निरूप्यते निरन्तर क्रियाहि नदीनाञ्चेतनानान्तु निद्रामूर्च्छादौ क्रियानिवृत्तिरपि दृष्टा नदीनान्तु न कदापि निवर्त्तत इति । तत्रापि महतीनां बन्धोऽपि न तासां भवति सापि वेणुनादेन निवृत्ता बर्हिणो मयूरस्य स्तवकाः पुष्पगुच्छानि धातवो गैरिकादयः पत्राणिच धातूनां वा पत्राकारेण लेखाः कमलपत्रस्यापि आकारार्थं वध्यन्त इति तैः कृत्वा मल्लानां परिबर्हः अलङ्करणं वेश इति यावत् स्वयं स्तवकादिभिः बद्धो योऽयं मल्लपरिबर्हस्तं विडम्बयति विडम्बो बाधकः अस्वाभाविकं विडम्बनमेव भवति नटमल्लवत् अनेनायं नादो नृत्योपयोग्येव निरूपितः तेन क्रियाशक्तिरुद्गता नादस्य निरूपिता नदीनामाकर्षे हेतुर्भवति कर्हिचिदिति यदोत्साहः क्रियाशक्तौ अतएव सबलः बलभद्रसहितः आलीति सम्बोधनं गोप्यतया अयमर्थो निरूपितः अप्रतारणार्थं च प्रायेणैषा तदा दर्शनार्थं गतवती स्नानादिव्याजेन एवं सामग्रीं विधाय सोऽस्माकं भोक्ता वस्तुतो वा जातो वा तादृशो गोपैः सहितः अनेनात्र वैकुण्ठस्थितलीला सूचिता अत्रापि लक्ष्मीः अस्माभिः सहिता रात्रौ गोपैः सहिता दिवसे तिष्ठतीति अतएव संबोधनं रहस्यसूचकम् तदा गाः समाह्वयति वेणुनादेनैव प्रकरणितत्वात् वेणुनाह्वयति इत्यग्रे वक्ष्यति वेणुतुल्यतया निरूपणार्थं वा वेणोरग्रहणं गवामाह्वाने हेतु मुकुन्द इति मोक्षोहि ताभ्यो देय इति स्वनस्तासां साधनाभावादाकार्य प्रयच्छति रसरूपं वा तत्र स्थापयितुमुद्गता क्रियाशक्तिर्मदवेग कर्म करोतीति गवामाकारणमुक्तम् ॥ ६ ॥

तत्र योगार्थं ज्ञात्वा नद्योऽपि नित्यं गच्छन्तीति ताः स्थगिता जाता इत्याह । तर्हीति । तत्क्षणमेव भग्नगतयो जाताः नहि भगवदाज्ञा केनाप्युल्लङ्घ्या भवति सरित इति प्रवाहैकस्वभावत्वं निरूपितं तासां वैष्णवत्वकामना तासां हि समुद्रोऽधिपतिः यथा भगवान् भूयात् तदर्थं तत्पदाम्बुजरजः स्पृहयतीर्जाताः स्पृहयन्त्यः रजसः संबन्धार्थमुपायमाह । अनिलनीतमिति । अनिलेन वायुना स्वार्थं नीतं तेन सहप्रत्यासत्तिः जडार्थाः सः भगवदीया एव भगवत्संबन्धं प्राप्नुवन्तीति रजःकामना दूराभिप्राया काम एवास्त्रेहृदयः देवतात्वान्नदीनाम् अतएवाग्रे कालिन्दी तथा भविष्यति

अनुचरैः समनुवर्णितवीर्य आदिपुरुष इवाचलभूतिः ॥
वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि ॥ ८ ॥
वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदानीं तथाभावे भाग्यं नास्तीत्याहुः । अबहुपुण्या इति । न बहु-पुण्यं यासां यथा शीघ्रमेव गोरूपत्वं गोपालरूपत्वं दिवसे रात्रौ स्त्रीरूपत्वमिति पुरुषैर्यदिना समीहितार्थसिध्यभावात् कथं ज्ञायते तासामेवं भाव इति तत्राह । वयमिवेति । यथा वयम् अब-हुपुण्याः अन्यथा दिवसे गावो गोपा वा भवेम अतः स्वदृष्टान्तेन ज्ञायते स्पृहामेव कुर्वन्ति नतु तासां कार्यं सिध्यतीति किञ्च तासां सात्त्विकभावादपि इद्रतो भावो लक्ष्यत इत्याहुः । प्रेम-वेपितभुजा इति । प्रेम्णैव भुजानां वेपनं नतु वायुवशात् अतो विरहसन्तापयुक्ताश्च लक्ष्यन्ते किञ्च स्तम्भोऽपि जात इत्याहुः । स्तिमिताप इति । स्तिमिताः स्तब्धा आपो यासाम् एवं रजोभेदा-स्त्रिविधा निरूपिताः ॥ ७ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नृपमृगादीनां चेतनानां का वार्ता अचेतनानामपि वेणुश्रवणहे-तुकं स्तम्भं शृणुतेत्यन्या आहुः । बर्हिणस्य मयूरस्य स्तवकाः पिच्छानि यद्वा बर्हिणशब्देनैव बर्हिणः पिच्छानि लक्षितानिच स्तवकाः पुष्पगुच्छाश्च धातवोगैरिकादयश्च पलाशानि पल्लवाश्च तैर्बद्धो यो मल्लानां परिबर्हः परिकरस्तं विडम्बयति अनुक-रोति स्वशोभया उपहसतीति वा सः बलदेवसहितः स मुकुन्दः गोपै-र्युक्तः गा हिहीं कालिन्दि गङ्गे सरस्वतीति तासां नामभिर्यत्र यदा आह्वयति तर्हि सरितो यमुना मानसगङ्गा सरस्वत्याद्याः सरितोऽन्याश्च व्रजस्था अचेतना अपि चेतनां प्राप्य हन्त हन्ताहो अस्माकं भाग्यं यतः स्नानावगाहनाद्यर्थमस्मान् आह्वयति तदितः स्वतीक्ष्णप्रवाहेण तटं भित्वा याम इति कृष्णपार्श्वं यियासवोऽपि भग्नगतयः अत्यानन्दजाड्येनस्वाभाविकगतेरपि स्तम्भात् विगतप्रवाहा एव भवन्तीति शेषः श्लेषेण कृष्णाङ्गसङ्गसुखप्राप्त्य-भावादनन्यनदीकृतोपहासाच्च ऐहिकी गतिर्भग्ना पातिव्रत्यलो-पात् पारलौकिकीच गतिर्नष्टा अहो तासामभाग्यमिति भावः किंचिद्भाग्यं चाहुः । तस्य पदाम्बुजः अनिलनीतम् अनुकूलपवनेना-नीतं स्पृहयन्त्यः प्राप्यापि तृप्त्यभावादेव पुनःपुनरिच्छन्त्यर्थः । अतो वयमिव कृष्णसंगाप्राप्तिप्राप्तिभ्याम् अबहुपुण्याः नाप्यपुण्या अल्प-पुण्या इत्यर्थः । प्रेम्णा वेपिता भुजास्तरङ्गा यासां ता अस्माक-मपि भुजाः प्रेम्णा कम्पन्ते स्तिमिताः जाड्येन कठिनभूयापि पुनरार्द्रीभूता आपो यासां ताः वयमपि नेत्रयोः स्तिमितजला जलैस्तिमिता भवामः अहिताग्न्यादिः समासान्ताभाव आर्षः एवं वयमपि पतिमात्रादिभिः कृष्णाभिसारधारणात् भग्नगतयः लोको पहासात् पातिव्रत्यलोपाच्च ऐहिकपारलौकिकगतिरहिताश्च तदङ्गसौरभ्यस्पृहावत्यश्च ॥ ६—७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्याः अतोऽतीव चित्रं शृणुतेत्याशयेनाहुः । बर्हिण इति हे आलि ! बर्हिणो मयूरस्य स्तवकैर्बर्हः इति समासान्निःसार्य योज्यम् धातुभिर्गैरिकादिभिः पलाशैः पल्लवैश्च बद्धश्चासौ मल्लानां परिबर्हः परिकरः तं विडम्बयति अनुकरोतीति तथा सः सबलः बलेन रामेण सहितः गोपैश्च सहितः सः अस्माकं प्रियो मुकुन्दः कर्हिचित्कस्मिंश्चित्समये यत्र देशे गाः समा-ह्वयति वेणुगीतेनेति शेषः तर्हि तदा सरितः यमुनाद्याः तत्प-दाम्बुजरजोऽनिलनीतं वायुना तासां तटेषु आनीतं वै निश्चितं स्पृहयतीः स्पृहयन्त्यः प्रेम्णा वेपिताः भुजास्तरङ्गा यासां ताः स्तिमिताः निश्चलाः आपो यासां तास्तथाभूता भग्नगतयो भवन्ति अतः वयमिव आ सर्वतो बहुपुण्याः ॥ ६ ॥ ७ ॥

### भाषा टीका ।

हे आलि ! जब ये मुकुंद मोरके पंख गेरू आदि धातु वन के पत्रों से मल्लों के पहरने सरी के सिंगार करते हैं और फिर बलदेवजी के सहित गोपों के सहित गउओं को बुलाते हैं तब सब यमुना आदिक नदी चलने से बंद हो-जाती हैं जल उनके स्थिर होजाते हैं प्रेम से लहर रूपी भुजा उनके कांपते रहते हैं परंतु पवन से लाया जो मुकुंद के चरण का रज तिसको चाहती सरीकी रहती हैं परंतु हम सरी की मंद भागि होने से उनको संग मिलता नहीं है ॥ ६-७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः । अनुचरैर्गोपैर्देवादिभिर्वा मुग्धानां वाक्यमादिपुरुष इवेति अचलभूतिर्निश्चलश्रीः वेणुना तत्तनाम्ना गानेन ॥ ८ ॥

तदा प्रणता भारेण विटपाः शाखा यासां ता वनगता लताः स्वस्मिन्विष्णुं प्रकाशमानं सूचयन्त्य इव मधुधारा ववृषुः स्मेति विस्मये तरवश्च तथा तत्गतीनामपि तथैवानन्द इति भावः । एतानि विष्णु व्यक्तिलक्षणानि ॥ ९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो गाः पाययित्वा स्वयमपि च पीत्वा ताभिः सह सुतरुच्छायां पर्वतभूमिमवगाह्य दत्तस्वाच्छन्दास्ताश्चारयंस्तत्र तद् निजचरितमयं सखिगीतं शृण्वन्नवधानेन दूरगतास्ताः स्वय-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मेव वेणुना जुहाव यत्र च तत्रास्तां स्वस्वाधिष्ठातृरूपेण परमद्वेषीनां नदीनां वार्त्ता तथा अन्येषां तत्रत्यानां जङ्गमजातीनामहो स्थावरजातीनामप्येतादृशत्वमित्याहुः । अन्वियाति । अनुचरैः सदा सङ्गिभिर्गोपैरिति प्रणयविशेषो दर्शितः । अत एव . समिति सम्यक्तया सर्वांशतः प्रेमविशेषतश्चोत्तमप्रकारेणेत्यर्थः । अन्वित्यनुक्रमेण व्यञ्जितमातापित्रादिस्नेहानुबन्धेन जन्मादिलीलाप्रबन्धेनेत्यर्थः । यद्वा । सह भावेन सर्वैर्मिलित्वा इत्यर्थः । यद्वा । तत्समीपवर्त्तित्वेन प्रत्येकस्वस्ववैदग्धीज्ञापनपूर्वकत्वेनेत्यर्थः । तादृशतया वर्णितं सकौतुकं रसभावालङ्कारगानतालाभिनयनादिप्राचुर्येण; प्रस्तुतं वीर्यं तत्तत्प्रभावमयं चरितं यस्य सः असाधारण एव चासावित्याहुः । आदीति । यद्वा । आदिपुरुषः आदिनारायणो यथा तथैवाचलश्रीरपि वनचर इत्यादिनान्वयः । तेन च परमविनोदित्वादिकमुक्तम् । दृष्टान्तश्च तादृशत्वनिश्चयार्थः । सर्वोत्तमायामपि तस्यैवादिपुरुषतायामिवशब्दप्रयोगस्तासां तादृशकेवलतन्माधुर्यमयभावविशेषस्वभावेनाननुसन्धानात् । अचलश्रीत्वनिर्देशस्तु तस्य च्युतिरहितोदित्वरासमोर्ध्वस्वाभाविक तत्तत्सम्पदनुभवात् । एतदचलभूतित्वमेवोत्तरोत्तरं दर्शयिष्यते । वनचरः वनेषु चरन्नित्यर्थः । इति गवामदृश्यता सूचिता । वस्तुतस्तु नित्यवृन्दावनविहारेव सन्नचलविभूतिरित्यर्थः । गिरितटेषु विषमप्रदेशेषु चरन्तीरिति परिश्रान्तिः सूचिता । अत एव वेणुनादेनैव समाह्वयति स गोपचूडामणिर्विचित्र तदाह्वानचतुर इत्यर्थः । हि एव यदैव वनेति सप्तम्या लुक् छान्दसः । तदा वने यावत्यो लतास्ताः सर्वा अपीत्यर्थः । श्लेषेण वन्यत्वात्तत्रापि लतात्वाद्वैदग्ध्यादिरहिता अपीत्युक्तम् । तथा वने यावन्तस्तरवस्तावन्तश्च । तत्र लिङ्गव्यत्ययेन व्यञ्जयन्त इति बोद्धव्यम् । लतानामादौ निर्देशः स्त्रीत्वेन स्वतुल्यभावप्राधान्यविवक्षया । विष्णुमिति सर्वत्र स्फुरद्रूपत्वाद्व्यापकत्वेन प्रवेशशीलत्वेन वा वर्त्तमानतया श्रीकृष्णमित्यर्थः । तमात्मनि स्फुरन्तं व्यञ्जयन्त्यो बोधयन्त्य इवेति भावपरवशचेष्टयैव व्यञ्जनेन स्वयमेव दृष्टान्तगर्भश्लेषेण विष्णुं श्रीनारायणमिव तमित्यर्थः । दृष्टान्तव्यञ्जना च आदिपूपुरुष इवेत्युक्त स्पष्टीकरणाय । तत्र दृष्टान्तपक्षे लतातरवः स्त्रीपुरुषजातयः पुष्पफलाढ्याः । यस्यास्ति भक्तिर्भगवत्यकिञ्चनेति सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेति च प्रमाणेन सर्वसाधनसाध्यसम्पन्नाः । तथापि प्रणतभारविटपा नेमुर्निरीक्ष्य परितृप्तदृशो मुदार्कैरिति चतुःसनादिवन्नम्राः मधुधारा अश्रूणि दार्ष्टान्तिकपक्षे लतातरुत्यादि मिषेण तत्तद्रूपा इत्यर्थः । तत्रांकुरोद्भेदमिषेण हृष्टतनवः । ततश्चास्पन्दनं गतिमतां पुलकस्तरूणामित्यादिभिः श्रीगोकुले प्रसिद्धमेव प्रेमव्याप्येति पक्षद्वयेऽपि सर्वत्र सम्बन्धनीयम् । समासप्रविष्टस्यापि वा प्रेमशब्दस्यार्थवशादन्यत्र सम्बन्धः । ववृषुर्निरन्तरं बहुशोऽमुञ्चन् ससृजुरिति सार्वत्रिकमूलपाठे अपूर्वत्वेन प्रवर्त्तयामासुः । यद्वा । मधुनो धारा यासु तथाभूताः सत्यः प्रेम ससृजुः । सार्वदिकेषु च लोकेषु स्ववृत्तान्तेन श्रीकृष्णप्रेमविस्तारयामासुरित्यर्थः । तदेवमुभयत्र विष्णुत्वं तद्व्यक्ति चिह्नानि च व्याख्यातानि ॥ ८ ॥ ९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रिका ।

स्थावरेष्वप्यतिचित्रं दृश्यत इत्याहुः । अनुचरैरिति । स कृष्णो यदा हि वने चरति गिरेस्तटेषु चरन्तीर्गाः वेणुना तन्नामोपेतेन वेणुगीतेनाह्वयति कथं भूतः अनुचरैर्गोपैर्देवादिभिर्वा सम्यगनुवर्णितं वीर्यं यस्य तथाभूतः मुग्धानां वचनमादिपुरुष इवेति अचला भूतिर्लक्ष्मीर्यस्य सचेति इतरेषु चलापि लक्ष्मीर्न तस्मिश्चलेति भावः । तथा तदा प्रणता भारेण विटपा यासां ताः पुष्पैः फलैश्चाढ्याः प्रेम्णा हृष्टा उदञ्चितास्तनूरुहा यासां ता वनगता लताः स्वस्मिन्विष्णुं प्रकाशमानं सूचयन्त्य इव मधुधाराः ववृषुस्तथा तरवश्च तत्पतीनामपि तथैवानन्द इति भावः स्म विस्मये ॥ ८—९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुचरैः सनकादिभिः अन्यत्र गोपैः अचलभूतिः स्थिर श्रीः भूतिः श्रीजन्मभस्मास्विति यादवः वनचरः कक्षे सञ्चरन् । अन्यत्र वने चरणं शयनं जलशयन इत्यर्थः । यदा वेणुना ध्मातवेणुध्वनिना गिरितटेषु चरन्तीः तृणभक्षणं कुर्वतीः अन्यत्र वायोः स्नटवद्धिस्तृते मुखे वर्तमाना गाः पशून् अन्यत्र वेदवाणीराह्वयति सनकादिभिः स्तूयमानो जलशयानः आदिपुरुषो वायुमुखे वर्तमानश्रुतीस्तदर्थकथनपूर्वकमुपदिशति ॥ ८ ॥

तदात्मनि स्थितं विष्णुं व्यञ्जयन्त इव पुष्पफलाढ्याः अतः एव प्रणतं प्रणमनं बिभ्रतीति प्रणतभाराः अण्प्रत्ययः विटपाः शाखा येषां तरूणां यासां लतानां वा ते तास्तथा यद्वा पुष्पफलभारेण नता विटपा येषां ते तथा प्रेम्णा हृष्टरोमाञ्चितास्तनवो येषां यासां वा ते तास्तथा एवंविधा वनलतास्तरवश्च मधुधारा रसधाराः ससृजुः स्म सृष्ट्वा सृष्टवन्त इत्यर्थः । अन्यत्र आत्मनि हृदये स्थितं विष्णुं व्यञ्जयन्तः अपरोक्षी कुर्वन्त इव ज्ञानपुष्पेण जीवन्मुक्त्यवस्थाफलेनाढ्याः प्रणतस्य भारो भरणं येषां ते प्रणतभाराः ते विटपा भुजा येषां ते तथा मूर्ध्न्यारोपिताञ्जलिपुटा इत्यर्थः । अतएव भक्त्युद्रेकेण रोमाञ्चितगात्राः वने अरण्ये रता निवृत्तिधर्ममनुतिष्ठन्तो वने भाति ग्रीष्मे पञ्चाग्निज्वालासेवायां वर्षर्तौ कानने वने जले हिमर्तौ कण्ठलग्नसलिले वसन्तः वनं भास्यप्सु कानन इति यादवः तरवः संसारतरणशीलाः तीर्णसंसारा वा मुमुक्षवो मुच्यमाना मुक्ताश्च यथायोग्यमधिकारिणो मधुधाराः ज्ञानैश्वर्याद्यानन्दाम्बुसन्ततीः ससृजुस्तत्स्वभावा बभूवुरित्यर्थः । धाराः स्यादम्बुसन्तत्यां सैन्याग्रे स्वर्गतिष्वपीति सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिष्वितिच अत्र वनचरशब्दसाध्यान्मत्स्याद्यवतारविषयत्वेनापि ज्ञातव्यावेतौ श्लोकौ शब्दशक्तिविशारदैरिति ग्रन्थबाहुल्यभया—दुपरम्यत इति ॥ ९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततस्तरुच्छायां पर्वत भूमिमवगाह्य सखिगीतं शृण्वन् अनवधानेन दूरगा गाः स्वयमेव वेणुनाह्वयामास तत्र तत्र स्थावरजातीनामप्येतादृशत्वमित्याहुः । अन्वियाति युगलेन । वने या लतास्ताः सर्वा आपीत्यर्थः । प्रेम व्याप्य विष्णुमिति सर्वत्र स्फुरद्रूपत्वात् व्यापकतया श्रीकृष्णमित्यर्थः । दृष्टान्तगर्भश्लेषेण विष्णु श्रीना-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रायणमिवेत्यर्थः । दृष्टान्तव्यञ्जनया च आदिपूरुष इवेत्युक्तस्पष्टीकरणाय । तत्र दृष्टान्तपक्षे लतातरवः स्त्रीपुरुषजातयः पुष्पफलाढ्याः सर्वसाधनसम्पन्ना अपि प्रणतभारविटपाः श्रीचतुःसनादिवत् नम्रा एव बभूवुः । मधुधारा अश्रूणि ॥८॥९॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सत्त्वभेदान् निरूपयितुं भगवन्तमपि तथा वर्णयन्ति । अनुचरैरिति त्रिभिः । लता विहङ्गमा मेघाः सात्त्विकाः एते वेणुनादेन भक्तिपूर्णा जाताः तत्र प्रथमं वृन्दावनस्था लतास्तरवश्च वैष्णवाः वेणुनादेन उद्गतप्रेमरसा जाता इति तदर्थं प्रकारान्तरेण वेणुनादमाह तदर्थं प्रकारान्तरेण भगवानपि वर्णनीयः सच भक्त्यनुसारेण लोकवेदानुसारेण च वर्णनीयः तत्र भक्त्यनुसारेण प्रथममाह । अनुचरैः सेवकैर्गोपैः सम्यक् अनुवर्णितानि वीर्याणि यस्य आदिपुरुष इव पुरुषोत्तम इव अनुचरैर्वेदैः सम्यक् सर्वोत्तमत्वेन वर्णितानि जगत्कर्तृत्वादीनि वीर्याणि यस्य लोकानुसारेण माहात्म्यमाह सर्वोत्कृष्टम् । आदिपूरुष इवाचलभूतिरिति । अचला विभूतिर्लक्ष्मीर्यस्य अनुचरैः सर्वैरेव देवादिभिस्तथोक्तः लौकिकः स्वव्यवहार्यत्वात् पुरुषोत्तमतुल्यतामेवाहुः अतो दृष्टान्तभावः भिन्नतया वर्णनायां हेतुमाह । वनचर इति । वृन्दावनचरः सात्त्विकभावापन्नः सत्त्वभूमौ प्रतिष्ठित इति गिरितटेषु गिरिप्रान्तेषु चरन्तीः विषमस्थानात् समदेशे पशुहिते स्वयं तत्रत्यो भूत्वा समाहूयति लौकिकत्वाभावाय वेणुनैवाहूयति वेणुद्वारा तत्र प्रविष्ट इति अग्रिमचरित्रेण ज्ञायते अन्यथा वृक्षाणां तथात्वं न स्यात् स इति येषु वनप्रदेशेषु रेमे यदैव आहूयन् तदैव मधुधाराः सस्रुजुः स्मेति संबन्धः युक्तश्चायमर्थः अन्यथा वेणुनादाभिज्ञता तत्र च स्वनामसङ्केतो न स्यात् अतस्तद्द्वारा भगवान् प्रविष्ट इत्यग्रेऽपि तथात्वं युक्तमेव ॥ ८ ॥

वनस्था लताः अस्मन्निकटे भगवांश्चरति स्वकार्यांश्चाकारयतीति ज्ञात्वा तेषां भोगसिध्यर्थं स्वस्मिन् विद्यमानमानन्दं प्रकटितवत्यः तथा तरवश्च यथा स्त्रियः पुरुषाश्च भगवदीयाः भगवति भगवदीयेषु च समागतेषु आनन्दयुक्ता भवन्ति भोगार्थं स्वकीयञ्च प्रयच्छन्ति तद्वदेतेऽपि नन्वयं धर्मो जङ्गमानां न स्थावराणामितिचेत्तत्राह । आत्मनि विष्णुं व्यञ्जयन्त्य इति चेतनेष्वेव भगवतः क्रियाज्ञानशक्त्योराविर्भावः सच्चिदानन्दरूपता च क्रमेणाविर्भवति एतत्सर्वं भगवति निविष्टे भवति सोऽपि निविष्टश्चेत् प्रकटीभवति तदैवं युज्यत इति ते वृक्षादयः पञ्चधर्मयुक्ताः आत्मनि विष्णुं व्यञ्जयन्त्य इव जाताः तत्र प्रथमं क्रियाशक्त्याविर्भावमाह । पुष्पफलाढ्या इति । यत्र हि भगवान् निविशते तत्रावान्तरफलं परमफलञ्च भवति अतः कार्यात् व्यञ्जयन्त्य इव जाताः पुष्पाण्यवान्तरफलरूपाणि परमफलानि तु फलानि तैः सर्वैराढ्या जाताः भगवदर्थं सदाधिक्यमाहुः । प्रणतभारविटपा इति । भारेणापि नमनं सम्भवतीति तन्निरासायादौ प्रणतत्वमुक्तं प्रकर्षेण नताः भारेण विटपाः शाखा येषाम् । प्रेमहृष्टतनव इति चिदुत्कर्षो ज्ञानरूपो निरूपितः भक्ता एवहि प्रेम्णा हृष्टरोमाञ्चा भवन्ति पूर्वमहरितानामपि तदा हरितत्वं पूर्वस्मात् सौन्दर्यं प्रत्यवयवमुच्छूनत्वं प्रभाविशेषश्चात्र प्रेमहृष्टतनुत्वम् अपरञ्च वेणुनादनिष्ठसुधास्वादवत्यः स्वामिन्य इति तद्धर्मं परिचिन्वन्ति ता एवेति तदुक्तावन्यविचाराक्षमत्वं युक्ततरमिति नाधिकं लेखनीयम् क्रममधुधाराः स्वस्मिन् विद्यमानमानन्दं भगवदर्थं बहिः प्रकटितवन्तः एतत्सर्वपरिज्ञानमेव ज्ञानशक्तिः ॥ ९ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नदीनामनादि सिद्धानामचेतन त्वेऽपि देवतारूपाणां का वार्ता श्वः परश्वो दृष्टजन्मनामतिनिकृष्टानामपि जडानां रसिकतां वेणुश्रवणहेतुकां पश्यतेत्यन्या आहुः । अनुचरैर्गोपैः आदिपूरुषो नारायण इव निश्चल श्रीः । यदपि वनचरः वन्यजीवेष्वनुरागादिति भावः । तदा गृहस्थवैष्णवाः सस्त्रीका यथा सङ्कीर्तनश्रवणेन भाववन्तो भूत्वा प्रणमन्ति तथैव वनलताः स्त्रियः तरवस्तत्पतयः । आत्मनि मनसि विष्णुं स्फुरन्तं व्यञ्जयन्त्यः ज्ञापयन्त्य इव अश्रुतुल्या मधुनो मकरन्दस्य धाराः सस्रुजुर्मुमुचुः । ववृषुरिति पाठे अश्रूणामाधिक्यम् । पुष्पफलाढ्याः पुष्पेण हर्षसञ्चारिणा फलेन रतिस्थायिना च विराजमानाः । प्रणता भारेण विटपाः शाखा यासामित्यनुभावः प्रणामः प्रेम्ना हृष्टा रोमहर्षयुक्ता स्तनवो येषां ते इति रोमाञ्चः ॥ ८ ॥ ९ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इतोऽप्यतिचित्रं शृणुतेति काश्चिदाहुः । अनुचरैरिति । अनुचरैरनुयायिभिः सम्यगनुवर्णितं वीर्य्यं यस्य सः "कृष्णं विदुः पर कान्त नतु ब्रह्मतया मुने" इत्यनेन राज्ञोक्तानां श्रीकृष्णे मुग्धानां वाक्यमादिपुरुष इव अचलभूतिरचलश्रीः इति यद्वा इन्दुरिन्दुरिव श्रीमानित्यादिवदनन्वयालङ्कारः सः श्रीकृष्णः यदा गाः वेणुना तद्गीतेन तत्तन्नाम्ना आह्वयति तदा प्रणता भारेण विटपा यासां ताः पुष्पैः फलैश्च आढ्याः प्रेम्णा हृष्टास्तनवोऽङ्गानि यासां ताः वनगताः लताः स्वस्मिन् विष्णुं प्रकाशमानं व्यञ्जयन्त्यः सूचयन्त्यः इव मधुधाराः सस्रुजुः ववृषुः स्मेति विस्मये तथा तरवस्तत्पतयोऽपि अहो तासां तेषां च भाग्यम् ॥ ८ ॥ ९ ॥

———

### भाषा टीका ।

अचल विभूती वाले भगवान् आदि पुरुष नारायण सरीके अपने अनुचरों से जिनके पराक्रम वर्णन किये गये हैं ऐसे होकर पर्वत तटों पर चरती हुई गउओं को जिस वखत वंशी से बुलाते हैं तब वन के जो लता और वृक्ष सब अपने में व्याप्त विष्णु को जनावते हुये सरी के फूल फलों से युक्त होजाते हैं भारों से नम्र होकर प्रेम से शरीर में हर्ष होने से अश्रुओं की धाराओं की वर्षा करते हैं ॥ ८—९ ॥

———

दर्शनीयतिलको वनमाला दिव्यगन्धतुलसीमधुमत्तैः ॥
अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि संधितवेणुः ॥ १० ॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ॥
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किंच सरसि कमलवनेषु विहरतां पक्षिणामपि मनआकर्षणं तद्गीतं किंपुनरन्येषामित्याहुः। दर्शनीयतिलक इति। दर्शनीयस्तिलको यस्य दर्शनीयानां सुन्दराणां मध्ये इति वा वनमालासु या दिव्यगन्धा तुलसी तस्या मधुना मत्तैरलिकुलैरलघु उच्चैरभीष्टमनुकूलं गीतमाद्रियमाणादरेण गृह्णन् यर्ह्यधरे सन्धितवेणुर्भवति ॥ १० ॥

तर्हि ये सरसि सारसा हंसा अन्ये च विहङ्गास्ते चारुणा गीतेन हृतचेतस एत्य तत आगत्य हरिमुपासताभजन्त तत्समीपे उपविविशुर्वा हन्तेति विषादे ॥ ११ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवं पूर्वे मल्लवेषप्रास्तत्वेन मल्ललीला सूचिता ततश्च गानश्रवणेन भ्रमणम् सम्प्रति तु वेषान्तरादिवर्णनेनेदं लभ्यते ततः परिश्रान्त आसन्ने मध्याह्ने क्वचिन्महासरसि स्नात्वा द्रुतरचिततिलकवनमालामात्रस्वल्पवन्यवेषपूर्वकं तैः सह तत्कालोपयुक्तवन्यभोजनपूर्वकं च प्रथितोच्चदेशे महातरुतलशिलायामुपविश्य गोसम्मालनाय प्रस्थापितेषु सखिषु नूतनवनमालाकृष्टभ्रमरमात्रपरिवारतया कृततदवधानः सन्नेव वेणुवाद्यविनोदेन रमत इति वर्णयन्त्यस्तत्र चास्ता सर्वत्र विश्वस्तानां स्थावराणां वार्त्ता तद्विपरीतानां पक्षिणामपि श्रूयतामित्याहुः। दर्शनीयेति। दर्शनीयः सर्वदैव द्रष्टुं योग्यः सन्ततमनोहरो गैरिकादिमयस्तिलको यस्य सः दिव्यातिदिव्यपुष्पगणवनमालायामपि दिव्यः सर्वोत्तमो गन्धो यस्याः सा तुलसीत्यलिकुलानामाकर्षणे हेतुः अत एव तन्मधुनोऽपि तादृशत्वं दर्शितं मदस्य च। अलिकुलैरित्यत्यन्तसङ्कीर्णताशङ्कापरिहाराय पर्य्यायेणैव तत्सान्निध्यं बोद्धव्यं बलिभिर्दुर्बलानामपसारणात् मत्तत्वादेव अलघु तस्मादेव वैशिष्ट्यं च ध्येयं अभीष्टमिति सजात्यनुसारेण ते यद्यद्गायन्ति तदेव तस्य परमकौतुकित्वादनुकूलमित्यर्थः यद्वा तेषां श्रीवृन्दावनसम्बन्धिनामलौकिकत्वात्तस्य यदा यदा यद्यदभीष्टं तदा तदा तत्तदेव विचित्ररागेण गायन्तीति तथोक्तम् अत्र चाभीष्टमिति सप्रणयेर्ष्य सन्त्येव विचित्राणि तदभीष्टानि किन्त्वस्मत्संबन्धं विनेति भावः अभीष्टत्वादेवाद्रियन् यर्हि सन्धितवेणुरिति यदा तदीयस्वरोचितद्गानारम्भमात्रमित्यर्थः। तदैव सरसि तस्मिन् स्थिता ये ते सर्वेऽपीत्यर्थः। विहङ्गाश्चक्रवाकादयः एत्य तद्गीताभिमुखमागत्य हरिं मनोहरस्वभावतया तथा प्रसिद्धं श्रीकृष्णमुपलक्ष्यीकृत्यासत तेऽनन्ताः सुखविहारपरा अपि यद्वा परमभागधेयाः तत्र तेषामानन्दमूर्च्छामाहुः। यतचित्ता इत्यादिना। हन्त खेदे तथा निजाभीष्टालाभात् विस्मये वा हरिमिति पूर्ववत् दृष्टान्तगर्भः श्लेषः ततः पक्षे हरिं विष्णुम् उपासत अभजन्त उपासनालक्षणं यतेत्यादि ॥ १०—११ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

दर्शनीयतिलकः दर्शनीयश्रेष्ठः लक्ष्यते अलिकुलैः संहितमलघुगीतमाद्रियन् आद्रियमाणः संधृतवेणुः हरिमुपासते सातुषु स्थिता इति शेषः ॥ १० ॥ ११ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कमलवनेषु विहरतां पक्षिणामपि चित्ताकर्षकं तद्गीतं किंपुनरन्येषामित्यभिप्रायेणाहुः। दर्शनीयेति। दर्शनीयानां सुन्दराणां मध्ये तिलकः श्रेष्ठः कृष्णः वनमालायां या दिव्यगन्धा तुलसी तस्या मधुना मत्तैरलिकुलैः क्रियमाणमलघूच्चैरभीष्टमाद्रियन्नादरेण गृह्णन् यर्ह्यधरे संहितवेणुर्भवति ॥ १० ॥

तदा ये सरसि सारसाश्च हंसाश्चान्ये विहङ्गाश्च ते चारुणा गीतेन हृतं चेतो येषां तथाभूता एत्यागत्य हरिं कृष्णमुपासतेऽभजन्त तत्समीपे विविशुर्वा कथम्भूताः यतं विषयान्तरेभ्य आहृतं चित्तं यैस्ते नियतं मौनं सुशीलनं येषां तथाभूताश्च हन्तेति भगवद्विरहजखेदे ॥ ११ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यर्हि यदा संधितवेणुं स्वरेणेतिशेषः कृष्णः दर्शनीयायाः चक्षुःप्रियायाः विकचैः उत्पलैः नीलोत्पलैः कृताया मालाया दिव्यगन्धाया अमानुषपरिमलायाः तुलस्याश्च मधुना पीतेन मत्तैरलिकुलैः अभीष्टं गातुमुपक्रान्तम् अलघु गम्भीरं गीतमाद्रियत् आचेत् आद्दतौ सादरार्चितावितिं ॥ १० ॥

तदा सरसि विचरन्तो ये सारसहंसविहंगाः ते पक्षिणः एत्यसंभूय चारुणा गीतेन हृतचेतसः आकृष्टबुद्धयः अतएव यतचित्ताः एकाग्रकृतमानसाः। अर्धनिमीलितनेत्राः धृतमौनाः स्वजातिचापल्यरहिता हरिमुपासते इत्यन्वयः ॥ ११ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत आसन्ने मध्याह्ने क्वचिन्महासरसि स्नात्वा तिलकवनमालामात्रवेशपूर्वकं महावेशपूर्वकं महातरुतलशिलायामुपविश्य गोसम्भालनाय प्रस्थापितेषु सखिष्वेकाकितया कृतभ्रमरगानावधानः सन्नेवं

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेणुवाद्यविनोदेन रमन इति वर्णयन्त्यस्तत्र चास्तां सर्वत्र विश्वस्तानां स्थावराणां वार्त्ता तद्विपरीतानां पक्षिणामपि श्रूयतामित्याहुः । दर्शनीयेति युगलेन । अलिकुलानां पर्यायेणैव तत्सान्निध्यं ज्ञेयम् । बलिभिर्दुर्बलानामपसारणात् । अभीष्टमिति परमकौतुकित्वात्तस्य अलौकिकत्वाद्वा तेषां हरिमिति पूर्ववत् दृष्टान्तगर्भः श्लेषः । ततः पक्षे हरिमुपासत उपासनालक्षणं यतेत्यादि ॥ १०—११ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पक्षिणामपि वेणुनादकार्यं जातमिति तत्रोपयोगिरूपं वेणुनादञ्च वर्णयन्ति । दर्शनीयतिलक इति । यद्यपि पक्षिणो मुनयः न तेषां गीतादिना भगवद्भावो भवति किन्तु स्वभावत एव तथापि लोकदृष्ट्या कदाचिदन्यथाबुद्धिर्भवेत् अतोरूपनादाभ्यां तेषां भजनसिद्धिर्न्निरूप्यते तत्र रूपं वर्णयन्ति । दर्शनीयतिलक इति । दर्शनीयानां मध्ये तिलकरूपोऽतिसुन्दरः पक्षिणश्च रूपप्रधानाः रूपभेदविदः किञ्च यो वेणुनादः स स्वहितकारी स्वकीयानामपराधमपि न मन्यते तदाह । वनमालादिव्यगन्धतुलसीमधुमत्तैः । अलिकुलैः कृतमलघुगीतमपि आद्रियन् आदरं कुर्वन्नेव कूजितवेणुर्यतः यथैव भ्रमरा झङ्कारं कुर्वन्ति तथैव तन्नादमनुकुर्वन्नेव अनुरणनवदेव वेणुनादं करोति पक्षिणां मध्ये अलयो हीना निकृष्टाश्च तेषामपि कुलानि समूहाः नानाविधजातिभेदाः तैरप्यलघु यथा भवति तथा गीतं तस्याप्यादरं कुर्वन् तत्राप्यलयः मत्ताः मदोऽपि येनानुचितः नहि तुलसी पुष्पान्तरवन्मादहेतुः तत्रापि दिव्यगन्धा तत्रापि भगवद्वनमालागता तेषामप्यादरश्चेत् कुर्यात्तदा सरोवरादिषु ये सरसा रसिकाः क्षीरनीरविवेकिनश्च तेषामादरं कथन्न कुर्यादिति वनमालायाः या दिव्यगन्धतुलसी तस्या मकरन्देन मत्तैः किञ्च आदरोऽपि भ्रमराणां यथाभीष्टं भवति तथा वनमालायां समागतान् भ्रमरान्न दूरी करोति किन्तु ते यथानोपद्रुता भवन्ति तथैवादरं करोति अतो यद्वैव आदरं कुर्वन्नेव कूजितवेणुः ॥ १० ॥

तदैव सरसि विद्यमानाः जलवासिनः सारसाः सरसानां भक्तानां संबन्धिनः हंसाः क्षीरनीरविवेकिनः तेच विहङ्गा उत्कृष्टगतियुक्ताः पुरुषापेक्षया ते पुनर्भगवद्भजनाधिकारिण इति तान् विशिनष्टि । चारुगीतहृतचेतस इति । चारुयथा भवति निष्कामार्थं भगवद्गीतेनैव हृतं वशीकृतं चित्तं येषां तदपि भजनं भक्तिमार्गानुसारेण नतु ध्यानस्थितानामन्तर्यामिरूपे ज्ञानरूपे वा तदाह एत्य आगत्य हरिमुपसमीपे सेवमाना जाताः यतस्ते भगवदुक्ता मुनयः भजने भ्रमराद्विशेषमाह । यतचित्ता इति । यतं नियतं चित्तं येषां चित्तनैयत्येन भगवद्भजनं मुख्यं नतु विक्षिप्तचित्ततया किञ्च हन्त इति हर्षे एतद्भाग्यमेतेषामेव भवतीति बहिर्व्यापाररहिता भजने सर्वोत्तमाः बहिर्व्यापारेषुच नेत्रे वाक्च नियम्या यस्यैतत् द्वयं नियतं वाक् नान्यं वदति चक्षुश्च नान्यत् पश्यति तदाह । मीलितदृशो धृतमौना इति । मीलिता दृक् येषां धृतं मौनव्रतं यैः साम्प्रतमेते नादपराः अतो दृष्ट्या अन्यचित्तता भविष्यतीति नेत्रमीलनम् । दर्शनीयतिलक इति । इदमत्राकूतम् अतिरसिका एते मुनयः स्वस्य पुरुषत्वेन रसलीलायामनुपयोगं मत्वा पक्षीभूय विविधस्वकूजनैर्भगवतो भक्तानाञ्च रसोद्दीपनं कुर्वन्तः स्वकृतार्थतां मन्वानाः शब्दमेवाधिकमभीष्टं मन्यन्ते अतः शब्दप्रधानकीर्तिरूपवनमालाधर्माणामेवात्रोपयोग उच्यते "यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाती"ति श्रुत्या कीर्त्तेर्गन्धसाम्येन निरूपणं कृतं वनमालायाः. कीर्त्तिरूपत्वात्तन्निरूपकाणि गीतान्यावश्यकानि तानिच तद्रसास्वादं विना न सम्भवन्त्यतो गुणातीतभक्तिरूपवक्ष्यमाणरूपगन्धवती तुलसी तन्मध्यत्यलौकिकभक्तिरसात्मकमितरविस्मारकमतोऽतिमत्ताः स्वदेहाद्यनुसन्धानरहिता ईश्वरधर्माननुसन्धाना अपीति तन्निकट एवालघु गायन्ति वस्तुतस्त्विदमेव महत्तमं समाराधनं प्रभोरलिभिः क्रियते अतएव प्रभोरभित इष्टं तद्गतम् अपरञ्च चार्वादिपदानि विहाय तत्र भवनार्थकप्रत्ययवत्पदोक्त्या भगवद्वनमालास्थतुलसीगन्धस्य दिवि भवत्वस्य विधितत्वादग्रे स्वामिनीषु व्रजदेवीत्वस्य वक्ष्यमाणत्वाद्दिवुधातोः क्रीडावाचकत्वाच्च स्वामिनीभिः सहक्रीडाजनितोऽयं गन्ध इति समभिव्याहारादवगम्यते एतेन यथादिविभवोऽर्थो नेतरलोकस्थजनविषयस्तथायमन्तरगतमलीलाप्रपञ्चस्थभक्तैकगम्य इतिध्वन्यते अतएव प्रभोरपि भावोद्बोधस्तेनासीदिति ज्ञापनाय कूजनमुक्तं किञ्च वनमालास्थपुष्पमध्यनुक्त्वा तुलस्या एव तद्यदुक्तं तदपि तद्गन्धतुलस्या इति वाक्याद्वाहं प्रियांस इत्युपक्रम्य तुलसिकालिकुलैर्मदान्धैरन्वीयमान इति वाक्याच्च तद्गन्धमध्वादिस्वरूपस्प्रभुरेव वेत्तीति नान्यगम्यः स विशेषस्तद्भोक्तारोऽळयोऽपि न साधारणाः किन्त्वितरेभ्यो विजातीया अत्युत्तमा इति ज्ञापनार्थमेव कुलपदमुक्तम् अतएवालिपदमुक्तम् अलंशब्दोहि पूर्णतावाची तथा चतद्वानलिरित्यत्रोच्यते रसो न लीयते न नश्यति यत्र येन वा सोऽलिरित्युच्यते यद्यप्यत्र दीर्घः सम्भवति तथापि "दशहूतो हवैनामैषः तं वा एतं दशहूतं सन्तं दशहोतेत्याचक्षते परोक्षप्रिया हि देवा" इति श्रुतिन्यायेन परोक्षं ममच प्रियमिति भगवद्वाक्याच्च स्वप्रियार्थस्य गोपनं प्रभोः प्रियमिति ज्ञायते प्रकृतेच्च स्वान्तरङ्गरसपोषकत्वैतेषु गोप्येति परोक्षेण ह्रस्वान्तम्पदं प्रभुः प्रकटितवानेवं सत्येत एवालयोऽन्येतु भ्रमरा एव क्वचिद्देतेष्वप्यन्यनामप्रयोगस्तात्पर्यविशेषेणेतिज्ञेयं तारत्वञ्चानुक्त्वा लघुत्वाभाव एव उक्तस्तेन तद्गीतरसभरं वोढुं नान्यः शक्तः प्रभुं विनेति ज्ञाप्यते महत्त्वेयत्ता नास्त्येवेत्यपि ज्ञापनाय तथोक्तिः एवं सति तदादरं कथन्न कुर्यात् यद्वेति पदात्तद्गीतरसपानपरवशश्चिरं तूष्णीमेव तिष्ठति कदाचिद्रसभरेणैव कूजितवेणुर्भवतीति ज्ञाप्यते अग्रेगीतोक्त्या पूर्वं तद्गीतोद्बुद्धभावेन स्वप्रियाणां भावोद्बोधनाय तथैवाकरोत्ततो यदा पूर्णरसो भूत्तदा जगावित्ति ज्ञाप्यते अतिसुन्दरत्वनिरूपणे तिलकत्वोक्त्या तद्यथाभाग्यस्थाने भाले तिष्ठति तथेदमपि स्वरूपं परमभाग्यवतीष्वेव तिष्ठतीति ध्वन्यते अत्र कर्मधारयो ज्ञेयः स्वामिनीनां हृदि प्रियातिरिक्ते दर्शनीयत्वास्फूर्तेः अत्र यद्यप्युभयं मुख्यं तथापि नादे विशेषो निरूप्यते अन्यथा मीलितदृक्त्वं नोच्येत तत्र हेतुः सरसि विद्यमानैरेव तैर्वेणुगीतं श्रुतं तच्च चारुत्वेन मनोहरैणैकस्वभावमतो नादाधीना एव निकटे समागताः आदावेव नादहेतुभूतस्वरूपसौन्दर्यनिरूपणान्नादरस एव स्वरूपरसमप्यनुभवन्तीति ज्ञाप्यते इदमप्यतिचित्रं यन्मत्तानां गीतानुरणनरूपेण गीतेन यतचित्तत्वं सर्वेन्द्रियवृत्तिनिरोधश्चेति एतेषामियं गीतरसपानदशेत्येवं रूपतैवोपपद्यते

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ! ॥
हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् [१] ॥१२॥ १ उपरम्भित विश्व इति वीररा० पाठः।
महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ॥
सुहृदमभ्यवर्षत्सुमनाभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एतज्जन्यत्वेनैतदुत्तरकालीनत्वान्मदस्य अलिकुलानामपि तुलसीगन्धमधुपानदशा पक्षिनृत्यैव पश्चात्तस्यभाव वशात्कूरूपत्वं परभिति ज्ञायते मुनित्वात्पक्षिणामग्रेऽप्यन्तरेव निरन्तरमेतद्रसमग्नतैवेति न मत्ततोक्ता अथवा प्रभुरसस्वभावादत्तुक्तसिद्धैवाग्रिमा सेति नोक्ता तदैतेपामप्यलिकुलवद्दशा भविष्यति वस्तुतस्तूक्तरूपरसमत्तालिकुलालघुगीतमभीष्टत्वेनातिचित्तनैयत्येनैवानुभवन्प्रभुर्वेणुकूजनगाने करोतीति तच्छ्रवणे पक्षिणामपि तथात्वमेवोचिततरमावश्यकत्वादिति युक्तमुत्पश्यामः तथाप्यादौ स्वरूपसौन्दर्यमेवोक्तमिति स्वस्य तद्विदक्षातिभरेण पक्षिणां तत्प्राप्तिदशायां तत्प्रतिबन्धस्मरणेन कश्चित्खेदोऽभूदिति हन्तेत्युक्तम् एवमेतेषां भाग्यं सात्त्विकत्वान्निरूपितवत्यः ॥ ११ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

. गृहारामाणामिव तरुलतानां वैष्णवतामुक्त्वा आत्मारामाणामिव हंससारसादीनां वेणुश्रवणहेतुकां विष्णूपासनामाहुः। दर्शनीयं द्रष्टुमर्हं तिलकं गैरिकादिमयं यस्य सः दर्शनीयेष्वतिसुन्दरेषु मध्ये तिलकतुल्य इति वा। वनमालासु पञ्चवर्णपत्रपुष्पमयीषु दिव्यगन्धा या तुलसी तस्या मधुना मत्तैः अलिकुलैर्मत्तत्वादेवासंकुचद्भिरलघुगीतमुच्चैर्गीतम्। ननु च कमलमालती-नागकेशरादि पुष्पाण्येव लोकाः सुसौरभत्वेन ख्यापयन्ति। ननु सर्वतो माहात्म्येनाधिकामपि तुलसीम्। उच्यते तुलस्या गन्धः कश्चित् प्राकृतैर्लोकैर्ग्राह्यो ऽत्यल्पतर एव अप्राकृतलौकैस्तु ततोऽधिकः। भगवद्वनमालाधिकारिभिर्भृङ्गैस्तु ततोऽप्यधिकः। अत्यसाधारणः सर्वाधिकतमस्तु भगवत्प्रासिकैकमात्र वेद्य एव। अन्यत्र योगमायया आवरणात्। यदुक्तं वैकुण्ठवर्णने। गन्धेऽर्चिते तुलसिकाभरणेन तस्या यस्मिंस्तपः सुमनसो बहुमानयन्तीति। अभीष्टमिति। वेणुगानारम्भे केन स्वरेण गेयमिति विचारे सति तदैव मिलितानां भ्रमराणां झङ्कारे वृत्ते साधु साधु भ्रमर एष एव स्वरो गृह्यते इति आद्रियन् सम्मानयन् यर्हि अधरे सन्धितवेणुः सम्यग्धृतवेणुर्भवति। सन्धानं सन्धा सा सञ्जाता यस्येति सन्धितः इतच् प्रत्ययान्तः। तदा हरिमेत्य सरसः सकाशात् हरिसमीपमागत्य तमुपासत दर्शन-श्रवण-मननैरभजन्। मीलितदृश इति। दृङ्मीलनं रसास्वादानुभावः॥ १० ॥ ११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

काश्चित्पक्षिणामपि वेणुगीतेन श्रवणेन हरिप्रावण्यं भवति किमुतान्येषामित्याहुः। दर्शनीयतिलक इति। दर्शनीयस्तिलको यस्य दर्शनीयानां सुन्दराणां मध्ये तिलको मुख्यो वा श्रीकृष्णः वनमालाया या दिव्यगन्धा तुलसी तन्मधुना मत्तैरलिकुलैः भ्रमरगणैः क्रियमाणमलघुमहदभीष्टमनुकूलं गीतमाद्रियन् आदरेण गृह्णन् यर्हि यदा सन्धितोऽधरे संयोजितो वेणुर्येन स तथा भूतो भवति तदा सरसि ये सारसाः अन्ये च विहङ्गाः ते चारुणा मनोहरेण वेणुगीतेन हृतं चेतो येषां ते एत्य समीपमागत्य हरिं क्लेशहरं श्रीकृष्णमुपासत अभजन्त अहो तेषां भाग्यमिति भावः॥ १० ॥ ११ ॥

---

भाषा टीका।

सुंदर दर्शन करने योग्य तिलक धारण किये हुये भगवान् वनमाला में लगी जो दिव्यगन्ध वाली तुलसी उसका जो मधुगन्ध तिससे मतवाले जो भौरानके समूह तिनका जो बडा भारी गीत अत्यन्त प्रिय तिसको आदर करके जब वेणुको बजाते हैं तब सरोवरों में जो सारसहंस विहंग पक्षी वे मनोहर गीतके सुननेसे चित्तके हरण होनेसे पासमें आ चित्तको रोककर नेत्रों को मूंदकर चुप होकर हरिकी उपासना करते हैं॥ १० ॥ ११ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

मेघोऽपि हरिं सेवत इत्याहुः। सहबल इति। भो व्रजदेव्यो गोप्यः सहबलः सरामः कृष्णः स्रग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य यद्वा मुक्ताफलस्रगापीडेन विलासो यस्येति क्षितिभृतः सानुषु गिरेस्तटेषु वर्त्तमानः स्वयं जातहर्षो विश्वं हर्षयन् यदा वेणुरवेणोपरम्भति निनादयति नादेन पूरयतीत्यर्थः॥ १२ ॥

तदा मेघो महतः कृष्णस्यातिक्रमणे शङ्कितं चेतो यस्य स न पुरतो याति नचोच्चैर्गर्जति किन्तु तत्रैव स्थितः सन् वेणुरवमनु मन्दं मन्दं गर्जति किञ्च सुहृदं विश्वार्त्तिहरणादिसाम्यात्सुहृत्कृष्णस्तं सुमनोभिरभ्यवर्षत् अदृश्यैर्देवैः क्रियमाणं कुसुमवर्षं मेघे कल्पयित्वोक्तं तुषारो वा कुसुमतया कल्पितः। स एव वा देवतारूपो ऽभ्यवर्षदिति प्रतपादातपात्त्रायत इति प्रतपत्रं छत्रं तच्छायया कुर्वन्निति॥ १३।

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च मध्याह्ने सखिभिरानीतैः स्रगवतंसादिविचित्रवेषैर्विलसन् गवामनुरोधेन निश्छायेष्वपि गिरेः समभूभागेषु भ्रमन् मेघच्छायेच्छया मल्लाररागङ्गायन् श्रीवलादिसखिभिः प्रतिध्वनिभृद्भिरिसानुभिस्तत्तत्प्रतिध्वनिभृद्भिश्चेन च कृतानुगानस्तादृशतदिच्छया स्वल्पाकर्षण प्रयोगात्तावन्मात्रमेघागमनेन मन्दमात्रगर्जनजनितवाद्यस्तत्तुमुलशब्देन स्वयमपि हृष्टो विश्वमपि हर्षयन्नत एव मेघाच्छन्नदेवादिभिः कृतपुष्पवृष्टिस्तच्छायायां विक्रीडतिस्म तदेतल्लीलास्फूर्तियुक्तानां तासामभिप्रायेणावतारिकेयम् अहो आस्तां पृथक् पृथक् तदुल्लेखो विश्वस्याप्यानन्दो दृश्यतां तत्र चान्येषां का वार्त्ता दूरस्थाचेतनचलस्वभावस्य मेघस्यापीति वर्णयन्त्यस्तद्रूपगुणचेष्टाभिः श्रीकृष्णेन सौहृद्यमेव सम्भावयान्ति। सहबल इति। श्रीबलभद्रेण सहित इत्युपलक्षणं सख्यन्तराणां सखिसैन्येन सहित इति वा विलासो विनोदः क्षितिभृतः प्राधान्येन गोवर्धनस्य कदाचिदन्यस्यापि सानुषु समभूभागेषु तत्र यौगिकार्थस्तु तत्प्रशंसासूचकः अस्यैव क्षितिभृत्त्वं युक्तमिति भावः । हे व्रजदेव्यः ! परमदिव्यगणस्पृहणीयसौभाग्यस्य व्रजजनस्यापि मध्ये देव्यो दिव्यत्वेनाभिमता इत्यर्थः । अतः परमवैदग्धी च सूचिता । अतस्तद्वेणुगानतत्त्वं युष्माभिरेवावधार्यत इति भावः । तदेवं सपरिकरस्य तस्य विश्वस्यापि परमहर्षे सति नूनं मेघोऽपि प्रहर्षेणोच्चैर्गर्जितुमिच्छन्नपि महतः श्रीकृष्णस्यातिक्रमेण निजोच्चशब्देन तद्वेणुरवाच्छादनापराधस्तस्मिन् शङ्कितचेताः सन्ननुकूलतया तद्गानपोषायेत्यर्थः । मन्दमन्दं गर्जति परिश्रान्तञ्च मत्वा तमाप्यायतीत्याहुः । सुहृदं तद्वर्णाद्यनुकारात् । सखायं श्रीकृष्णम् अभिलक्ष्यीकृत्य सुमनोभिः करणभूतैरभ्यवर्षत् अभ्यापिञ्चदित्यर्थो वा । गर्जनस्य वर्त्तमानप्रयोगेण पौनःपुन्यम् । वृष्टेरतीतप्रयोगेण मुहृत्त्वं बोध्यते । किं कुर्वन् छायया तदुपरिच्छत्रं विदधत् छायां कुर्वता स्ववपुषेत्यर्थः । अन्यत्तैः तत्र स्रग्भिरिति प्रथमार्थे खण्डित नानावर्णपुष्पदलरचितान्तरन्तः सूक्ष्मसूक्ष्मतरसूक्ष्मतममण्डलमयीभिः श्रोणिभिरित्यर्थः । निनादयतीति शब्दार्थस्य रभेरन्तर्भूतण्यर्थताङ्गीकारः । परस्मै पदं नुम् चार्षम् । यद्वा स्रग्भिरवतंसाभ्याञ्च कर्णपूराभ्यां विलासो यस्य। यद्वा। स्रग्भिरवतंसो मौलिविलासश्च विविधक्रीडा यस्य सः । उपरम्भति रभ राभस्य इत्यस्मात् कौतुकी भवतीत्यर्थः । परस्मै पदं नुम चार्षम् । मन्दमन्दमित्यस्यावर्षदित्यनेनाप्यन्वयः श्लेषेण सुमनोभिरिति शोभनमनोवृत्तिभिश्छायया च निजदेहेन मन्दमन्दगर्जनाद्य वाचापीत्येव त्रिधा सेवाप्युत्प्रेक्ष्या ॥ १२॥१३॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपरम्भित विश्वः उपग्रथित विश्वः ॥ १२—२६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मेघोऽपि हरिमुपास्ते इत्याहुः । सहबल इति । हे व्रजदेव्यः ! गोप्यः सहबलः सरामः कृष्णः स्रग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य यद्वा मुक्तास्रगापीडेन विलासो यस्य सः क्षितिभृतो गिरेस्तटेषु वर्तमानः स्वयञ्जातहर्षः विश्वं हर्षयन् यदा वेणुरवेण उपरम्भितविश्वः उपग्रथितविश्वः अनुरक्तलोको भवतीत्यर्थः । उपरञ्जितविश्वमिति पाठान्तरं तदा विश्वमुपरञ्जयति नादयति नादेन पूरयतीत्यर्थः ॥ १२ ॥

तदा तस्य स्वतुल्यच्छायत्वेन विश्वार्त्तिहरणादिना च साम्यात्स्वसखः मेघः महतः श्रीकृष्णस्यातिक्रमेण शङ्कितं चेतो यस्य तथाभूतः पुरतो न याति नचोच्चैर्गर्जति किन्तु तत्रैव स्थितः सन् वेणुरवमनु मन्दं मुन्दं गर्जति सुहृदं श्रीकृष्णं सुमनोभिरभ्यवर्षच्छायया प्रतपत्रमातपत्रं व्यदधदकरोच्च विदधदिति पाठेत्वडभाव आर्षः शत्रन्तस्त्वा प्रतपत्रं कुर्वन् सुमनोभिरभ्यवर्षच्चेत्यर्थः अदृश्यदेवैः क्रियमाणं कुसुमवर्षं मेघकर्तृकं कल्पयित्वेत्थमुक्तं तुषारो वा कुसुमतया कल्पितः ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे व्रजदेव्यः ! बलेन सहितः स्रजा मालया ऽवतंसेन कर्णोत्पलेन च विलासः कान्तिविशेषो यस्य तथा यद्वा स्रगवतंसयोर्विलासो यस्य स तथा आत्मशोभा जनकत्वेन धृतयोः स्रगवतंसयोः शोभा जनक इत्यर्थः । क्षितिभृतो गिरेः सानुषु शिखरेषु स्थितः लोकदृष्ट्या तदानीं जातहर्षः आविष्कृतानन्दविशेषः कृष्णो यर्हि यदा वेणुरवेण आह्वयत् गा इति शेषः विश्वं देहमाविश्य वर्तमानं प्राणिजातम् उपरम्भति ऊर्ध्वमुखीकरोति आह्वयति वा नूतनं कर्तुमुपक्रमते वा उपरंभस्तूर्ध्वमुखे प्रक्रमे निर्वृते तथेति च ॥ १२ ॥

तदा मेघः महतो हरेरुच्चैर्गर्जनेन कर्णबाधिर्यजनकातिक्रमणमतिलङ्घनं स्यादिति शङ्कितमनाः मन्दं मन्दम् अनुवेणुरवानुकूलं यथा भवति तथा गर्जति किञ्च सुमनोभिः पुष्पसदृशसलिलबिन्दुभिः श्यामवर्णसाम्यात्सुहृदं मित्रमभ्यवर्षत् किञ्च छायया वितपत्रं वितपात् आतपात् त्रायत इति वितपत्रं विदधे च हरेरितिशेषः सितपत्रमितिपाठे श्वेतच्छत्रमित्यर्थः । वेणुरवेण व्रजदेवीराह्वयदिति वा ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततश्च मध्याह्ने सखिभिरानीतैः स्रगवतंसादिभिर्विलसन् गवामनुरोधेन निश्छायेष्वपि गिरितटेषु भ्रमन् मेघच्छायेच्छया मल्लाररागं श्रीवलादि सखिभिः प्रतिध्वनिभृद्भिरिसानुभिस्तत्प्रतिध्वानिभृद्भिश्चेन च कृतानुगानस्तत्सदृशस्तदिच्छया स्वल्पकर्षण प्रयोगात्तावन्मात्रं मेघागमनेन मन्दमात्रं गर्जनजनित वाद्यस्तत्तुमुलशब्देन स्वयमपि हृष्टो विश्वमपि हर्षयन् अत एव मेघाच्छन्नदेवादिभिः कृतपुष्पवृष्टिस्तच्छायायां विक्रीडति स्म तदेतल्लीलास्फूर्त्तियुक्तानां तासामभिप्रायेणावतारिकेयम् अहो आस्तां पृथक् पृथक् तदुल्लेखो विश्वस्याप्यानन्दो दृश्यतां तत्र चान्येषां का वार्त्ता दूरस्थाचेतनचलस्वभावस्य मेघस्यापि श्रूयतामिति वर्णयन्त्यस्तद्रूपगुणचेष्टाभिः श्रीकृष्णे सौहृद्यमेव सम्भावयन्ति । सह बल इति युगलेन । श्रीबलभद्रादिभिः सहित इत्यर्थः महतः श्रीकृष्णस्यातिक्रमः तद्वेणुरवाच्छादनापराधस्तस्मिन् शङ्कितचेताः सन् सुहृदं तद्वर्णाद्यनुकारात् सखायं

विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ॥
तव सुतः सति! यदाधरबिम्बे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥
सवनशस्तदुपधार्य्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ॥
कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीकृष्णम् उपरम्भति रभ राभस्य इत्यस्मात् कौतुकी भवतीत्यर्थः ॥ १२-१३ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मेघः सर्वहितकारी तस्यापि वेणुनादजनितभावमाह पूर्ववत्। सहवल इति द्वाभ्याम्। हे व्रजदेव्यः गोप्यः! व्रजे देवता रूपाः अनेन विश्वासो भविष्यतीति निरूपितं यर्हि वेणुरवेण विश्वमुपरम्भति पूरयति तर्हि महदतिक्रमेण शङ्कितचेताः सुहृदं भगवन्तम् अभ्यवर्षत् स्वदेहच्छाययाच आतपत्रं विदधज्जातः तद्वा कुर्वन् अभ्यवर्षत अयं नादो महाबलयुक्तः विश्वगतान्सर्वानेव धर्मान् दूरीकृत्य स्वयमेव पूर्णस्तदा आभासरूपोऽपि मेघः धूमादिसमूहात्मा विश्वं भगवतैव कृतार्थीभूतमिति स्वयमुपचरितार्थोऽपि स्वजन्मसाफल्याय भगवन्तमेव ववर्ष तत्र यादृशेन वेणुनादेन एतद्भवति तादृशकर्त्तारं भगवन्तं वर्णयति विशेषणचतुष्टयेन अन्यथाउपरम्भणमर्थवादरूपं स्यात् तत्र क्रियाशक्तिः सम्पूर्णेति वक्तुं सहवलो बलभद्रसहित इत्युक्तं सृष्टिकरणक्रियापेक्षयापीयम्महती क्रियेति ज्ञापयितुं स्रग्रूपो योऽयमवतंसः कर्णाभरणं तत्र विलासो यस्येति लीला निरूपिता मालाकीर्त्तिमयी दश दिशः श्रोत्रं कीर्तिर्दिक्षु पूरिता यया सा भवत्येव सर्वोत्तमा भगवत्कीर्तिप्रतिपादकं वा भागवतादिशास्त्रं सर्ववेदेष्वाभरणरूपं तत्र विलासयुक्ता तत्प्रतिपादिका च एवं क्रियायाः स्वरूपतो गुणतश्च माहात्म्यं निरूपितं तस्याः सहकारिण्या इच्छाया माहात्म्यमाह स्वयञ्जातहर्षः सर्वमेव च हर्षयन्निति एवं वेणुनादस्य कारणभूतक्रियोत्कर्षमुक्त्वा देशतोऽप्युत्कर्षमाह। क्षितिभृतः सानुष्विति। सर्वाधारभूतां पृथिवीं ये बिभ्रति तेषामप्युच्चस्थानेषु स नादो जायते कथन्न विश्वं पूरयेत् रवः अनुरणनमतिगम्भीरम् उपरम्भति नादेन पूरयतीति मेघादप्यधिकक्रिया निरूपिता तदैव मेघः महतो वासुदेवस्य उपरिगच्छन् भगवदतिक्रमणे शङ्कितचित्तो भूत्वा उपर्य्येव तिष्ठन् अग्रे गमनार्थमुद्यतः नीलमेघश्यामं विश्वजीवनं भगवन्तं स्वमित्रं ज्ञात्वा सुहृदमवर्षत् सुमनोभिः पुष्परूपैः स्वबिन्दुभिः अर्थात् पुष्पैः पूजितवान् न केवलं पूजामेव कृतवान् किन्तु राज्यमपि दत्तवानित्याह। आतपत्रन्दधदिति। न केवलं राज्यमेव दत्तवान् किन्त्वात्मनिवेदनमपि कृतवानित्याह। छाययेति सूर्ये अधः स्थिते उपरि स्थितेन न छाया भवतीति पृथक् छायानिर्देशः ॥ १२ ॥ १३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भूमिष्ठानामानन्दमनुवर्ण्य आकाशस्थानां जडानामपि वेणुनादहेतुकं तं वर्णयन्ति। सहबलः सहचरसैन्यसहितः। स्रग्भिश्चूडावक्षस्थलवर्त्तिनीभिः अवतंसाभ्यां कर्णवर्त्तिनीभ्याञ्च विलासः शोभा यस्य सः। सानुषु गिरेर्नितम्बेषु स्थितः स्वयं वेणुरवेण जातहर्षः विश्वं हर्षयन् हर्षयितुं यदा उपरम्भति रलयोरैक्यादन्तर्भावितण्यर्थत्वाच्च वेणुरवमुपलम्भयत्यास्वादयतीत्यर्थः। अत्र कृष्णस्य गिरिनितम्बवर्त्तिमेघत्वे स्रगवतंसानां बलाकात्वं पीताम्बरस्य विद्युत्त्वं वेणुरवस्य वृष्यमाणसुधारसासारत्वं गम्यम्। तदा मेघ आकाशस्थः महदतिक्रमेण महतः सतः सकाशादतिश्रेष्ठस्य कृष्णमेघस्यातिक्रमणशङ्कितचित्तः। मन्दमन्दमनुगर्जति वेणुरवस्यानुकूल्येनैव न प्रातिकूल्येनेत्यर्थः। सुहृदं विश्वार्त्तिहरणकर्मवर्णादि साम्यात् सखायं सुमनोभिः सूक्ष्मपुष्पतुल्यैर्हिमकणैः अभि परितः सूर्यातपतापनिवृत्त्यर्थमभ्यवर्षत्। प्रतपादातपात् त्रायत इति प्रतपत्रं स्वच्छायया कुर्वन् ॥ १२ ॥ १३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कश्चिन्मेघोऽपि श्रीकृष्णं सेवते इत्याहुः। सहबल इति। हे व्रजदेव्यः गोप्यः स्रगवतंसेन मुक्ताफलस्रगापीडेन विलासो यस्य सः क्षितिभृतः गोवर्द्धनस्य सानुषु सहबलः वर्तमानःस्वयं जातहर्षः विश्वं हर्षयन् यर्हि वेणुरवेण उपरम्भति निनादयति नादेन पूरयति तर्हि महदतिक्रमणेन श्रीकृष्णातिक्रमेण शङ्कितं चेतो यस्य सः प्रातिकूल्यगमनभाषणाभ्यां श्रीकृष्णस्योपेक्ष्यो भविष्यामीति व्यवसायवान् मेघः वेणुरवमनु मन्दमन्दं गर्जति किञ्च सुहृदं घनश्यामत्वेन लोकार्तिहरत्वेनच स्वसाम्यात्सुहृद्भूतं श्रीकृष्णं सुमनोभिरभ्यवर्षत् प्रतपादातपात् त्रायते इति प्रतपत्रं छत्रं च छायया विदधत् कुर्वन् ॥ १२ ॥ १३ ॥

---

भाषा टीका ।

हे व्रज देवियो हो! भगवान् बलदेवजी के सहित दिव्यमाला और कर्णभूषणों को धारण करके विलास करते हुये पर्वत के शिखरों पर सबको आनन्दित करने को वंशी बजाने से हर्षित होकर जब संसारको नादपूरित करते हैं तब मेघभी महान् भगवान् के गीतके विघ्न होने से अपमान होनेके हेतु से चित्त में शंकित होकर छायासे छत्र लगाकर अपने मित्र कृष्णचन्द्र के ऊपर फूलों की वर्षा करता है ॥ १२ ॥ १३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपिच महदेतदाश्चर्यमित्याहुः। विविधेति। हे सति! यशोदे तव सुतो नानागोपक्रीडासु विदग्धो निपुणो वेणुवाद्ये विषये निजैव

### श्रीधरस्वामिकृतभावार्थदीपिका।

शिक्षा यासु ताः स्वोत्प्रेक्षिता नत्वन्यतः श्रुता इत्यर्थः स्वरजातीर्निषादर्षभादिस्वरालापभेदाननयदुन्नीतवान् ॥ १४ ॥

तत्ताः स्वरजातीः सवनशो मन्द्रमध्यमतारभेदेन यतो गीतध्वनिरागतस्ततश्चानता कन्धरा चित्तं च येषां ते उपधार्य समाकर्ण्य कवयः कोविदा अपि न निश्चितं तत्त्वं तद्भेदो यैस्ते कश्मलं मोहं ययुरिति ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवमेकान्तगोष्ठीं संगृह्य श्रीगोष्ठेश्वरी गोष्ठीगतापि गोष्ठी तल्लीलाक्रमप्राप्ततया संगृह्यते । तत्रापि विविधप्रकारविशेषेण तत् कथामेव ताः कुर्वन्तीति विवक्षया तत्रोत्क्रान्ते मध्याह्ने स्वपुत्रागमनविलम्बाशङ्कया तां खिद्यमानां तद्विलम्बहेतूपन्यासपूर्वकमगोपनीयरसनिबन्धेन निखिलपरमाश्चर्यं वैदग्धीमय तत्क्रीडाभिनिवेशवर्णनेन प्रोत्साहयन्त्यः सान्त्वयन्ति । निगूढन्तु स्वासामपि झटिति तदागमनेच्छया तद्द्वारा तदभिनिवेशं वारयितुमभिप्रयन्ति साधारणजनवत् स्पष्टं तद्वार्त्ताकथनेन निजभावगूहनमपि कुर्वन्ति । विविधेति । विविधगोपाचरणेषु विदग्ध इति । इति सामान्यतस्तैरेव सर्वमनोहर इत्यर्थः । तत्र चाधरबिम्बे दत्तवेणुस्तेनातिविराजमानः सन्नित्यर्थः । यदा विश्वहर्षणादिसमये स्वरजातीरुत्थापितवान् तत्रापि वेण्वित्यादि लक्षणाः उरुधा निजैव शिक्षा यासु ताः तादृशीश्च ताः वेणुवाद्य इति पार्ष्णिकोऽन्वयः । अन्योऽन्यस्वरादावपि निजशिक्षामयत्वे वेणुवाद्यत्वाधिक्यमिति दर्शितम् । यद्वा स्वरजातीः कथम्भूताः निजशिक्षाः । पुनः कथम्भूताः वेणुवाद्य उरुधा तत्र तु नाना प्रकाराः । तत्रापि पूर्ववत् । हे सति ! जगत्पूज्ये अतस्त्वत्सुतस्यापि तादृशत्वं युक्तमेवेति भावः । उपधार्य श्रुत्वेति स्वस्वस्थानादेव श्रवणं लभ्यते । ततश्च तस्य फलरूपत्वेऽपि सर्वव्यापकत्वं बोधितं तथैव निजशिक्षाविशेषात् सुरेशा गन्धर्वादिद्वारा गीतादिश्रवणसम्प्राप्तिमन्तोऽपि स्वयं कवयोऽपि शक्रपुरोगास्तत्सहितलोकपालादयो देवजातयः शर्वपुरोगास्तत्सहितदेवीस्कन्दगणेशादयस्तद्गणाः परमेष्ठिपुरोगास्तत्सहितचतुःसननारदसप्तर्षिप्रजापतिगणादयः । क्रमस्तु शक्रादीनां बहिरिन्द्रियेण प्रथमत एव तच्छ्रवणात् । शर्वस्य कैलासस्थत्वेऽप्यन्तर्निष्ठत्वेतदनन्तरमेव । परमेष्ठिनस्तु दविष्ठत्वेन तदनन्तरमेवेति । चित्तस्य आनतत्वं तत्श्रवणत्वमेकरूप स्वरस्यायं प्रभेदो गीयते इति निश्चयाभावात् । वेणुनादमाधुर्याच्च कश्मलं ययुः । अन्यत्तैः । अथवा स्वरान् जातीश्च सवनशः अनुकारं धारस्वारमपि श्रुत्वेत्यर्थः । यद्वा न निश्चितं तत्त्वं किमद्भुतमाधुरीमयमिदं किम्वा अन्यः परमचमत्कारकारी तावदपूर्वः कर्णग्राह्यः कोऽपि विषयः । किम्वा महामोहनः कोऽप्येष मन्त्र उद्गसतीति वेणुगीतस्य याथार्थ्यं यैः तथाभूताः सन्तः पश्चात् कश्मलं ययुः तदेकलीनचित्तत्वात् सर्वे विसस्मरुरित्यर्थः । अन्यत् समानम् ॥ १४ ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ब्रह्मादीनामपि परवश्यजनकं त्वत्सुतवेणुरवमिति यशोदां प्रत्याहुः । विविधेति । हे सति ! यशोदे यदा तव सुतो गोपक्रीडासु निपुणः अधरबिम्बे बिम्बतुल्येऽधरे निहितो वेणुर्येन सः वेणुवाद्यविषये बहुप्रकारा निजैव शिक्षा यासु ताः नत्वन्यतः श्रुता इत्यर्थः । स्वरजातीर्निषादर्षभादिस्वरालापभेदाननयदुन्नीतवान् ॥ १४ ॥

तदा शक्र प्रभृतयः तत्ताः स्वरजातीः सवनशः वारं वारं मन्द्रमध्य तारभेदेन वा क्रमशो वा यतो गीतध्वनिरागतस्तत आनता कन्धरा चित्तं च येषां ते उपधार्य सम्यगाकर्ण्य कवयः कोविदा अप्यनिश्चितं तत्त्वं तद्भेदो यैस्तथाभूताः कश्मलं मोहं प्रापुः इत्याश्चर्यम् ॥ १५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

हे सति यशोदे विविधानां गवां गीतशब्दानां पतयः गन्धर्वाः तेषां चरणेषु गीतगतिषु विदग्धः समर्थः यद्वा विविधानां स्वस्वजाति स्वभावचेष्टासु नाना विधानां गोपानां चरणेषु कर्मसु विदग्धः कुशलः यद्वा विविधो गोपो रक्षणं तस्य चरणेषु तत्तदापद्रक्षणविधिषु प्रविष्ट इत्यर्थः । अधरबिम्बे दत्तवेणुः अधरोष्ठबिम्बफले न्यस्तवेणुः तव सुतः यदा वेणुवाद्यमधुरां वेणुलक्षणवाद्ये कर्णसुखहेतुं निजशिक्षामात्मीयगानाशिक्षां प्रति स्वरजातीः षड्जादिस्वरसामान्यमनयत्प्रापयामास ॥ १४ ॥

तदा सुमनसो देवाङ्गनाः सुरेश्वराश्च गीतविषये कश्मलं मोहं ययुरित्यन्वयः । कीदृशाः आनतकन्धरगात्राः ईषन्नतकण्ठदेहावयवाः कवयः गानपारज्ञा निश्चिता अप्यनिश्चिततत्त्वाः अभूतपूर्वगीतश्रवणात् गीततत्त्वनिश्चयरहिताः किं कृत्वा तद्गानमुपधार्य तात्पर्येण श्रुतिं निधाय ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवमेकान्तगोष्ठीं संगृह्य गोष्ठे श्रीगोष्ठेश्वरी गोष्ठीगतापि तल्लीलाक्रमप्राप्ततया सगृह्यते तत्रापि विशेषेण तत्कथामेव ताः कुर्वन्तीति विवक्षया । तत्रोत्क्रान्ते मध्याह्ने पुत्रागमनविलम्बशङ्कया तां खिद्यमानां तद्विलम्बहेतूपन्यासपूर्वकगोपनीयरसनिबद्धेन निखिलपरमाश्चर्यं वैदग्धीमय तत्क्रीडाभिनिवेशवर्णनेन प्रोत्साहयन्त्यः सान्त्वयन्ति । विविधेति युगलेन । उपधार्य श्रुत्वेति फलरूपस्यापि तस्य सर्वव्यापकत्वं बोधितम् । तथैव निजशिक्षाविशेषात् ॥ १४ ॥ १५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

उत्तमांश्चिविधान् वक्तुं तेषामपि वेणुनादेन किञ्चिज्ज्ञातमिति वक्तुं वेणुनादं वर्णयन्ति भगवन्तञ्च । विविधगोपचरणेष्विति युग्मत्रयेण । सन्देहो मोहः सर्वपरित्यागश्च ज्ञानिनां श्रुतीनामरण्यवासिनां वेणुनादेन कृतः तत्र ये विश्वगुरवो ब्रह्मादयस्तेषामपि सन्देहार्थं भगवतो वेणुनादं वर्णयन्ति । विविधेति । लोके जायमानः अलौकिकप्रकारः सन्देहमुत्पादयति ननु न तद्रूपमस्तीश्वरे यन्न वेदे श्रुतमस्तीति सर्वविद्यास्थानानां ब्रह्मा अभिज्ञ इति

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ॥
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कथं तस्य सन्देह इत्याशङ्क्याह । वेणुवाद्य उरुधा निजशिक्षा इति । सुषिरभेदो वेणुः तस्यापि प्रकाराः शास्त्रे निरूपिताः ते ब्रह्मणा ज्ञायन्ते एते तु प्रकाराः उरुधा अनेकधा निजशिक्षाः निजैनैव शिक्षा शिक्षणमभिव्यक्तिप्रकाराः यासु अनेन नादब्रह्म नित्यमिति निरूपितं तत्र क्रियाशक्तिः साधनमिति तस्य लौकिकत्वे कथं नादः अलौकिको भविष्यतीत्याशङ्क्य तस्याप्यलौकिकत्वायाह विविधेषु गोप चरणेषु गोपानां सञ्चारविशेषेषु विदग्ध इति गोपसञ्चारा न वेदोक्ताः किन्तु लौकिकाः ब्रह्माण्डान्तरस्थिता अपि भवन्ति न लोकेऽन्यत्र प्रसिद्धाः नापि वेदे भगवांस्तु सर्वत्रैव विदग्धः अतो यं ब्रह्मा प्रकारं न जानाति तमेव प्रकारं कृतवान् नच ब्रह्मस्वरूपावाविर्भूतः कथं ब्रह्मणोऽप्यज्ञातं करोतीतिचेत्तत्राहुः । तव सुत इति । यशोदां प्रति वदन्ति स्त्रीमण्डले समागतामत एवात्र न कामादिवार्त्ता किन्तु अनिषिद्ध एवोत्कर्षो निरूपितः यथा तव पुत्रोऽपि सन् तव मनसाप्याकलितुमशक्यं करोति तथा ब्रह्मणोऽपि ब्रह्माण्डे जातः सतीति संबोधनं विश्वासार्थम् अज्ञाने हेतुमाहुः । अधरबिम्बे दत्तवेणुरिति । लोभात्मकोऽधर इति पूर्वमुक्तमतो न लोके प्रसिद्धः तस्य रसो भगवता न दत्त इति तत्रापि बिम्बरूपः सूर्यवत् प्रकाशकः नहि प्रकाश्याः प्रकाशकस्वरूपं विदुः तत्र च स वेणुः स्थापितः ततोऽप्युत्तमत्वख्यापनाय स्वरजातीः षड्जादिस्वरजातिभेदाननयत् नूतनत्वेनोत्पादितवान् यर्हि तदा तत्परिज्ञानार्थं त्रिगुणप्रधाना अपि देवाः कालत्रयेऽपि समागत्य सोऽपि काल आधिदैविक इति ख्यापयितुं सवनपदं तं वेणुनादं सवनश उपधार्य शक्रः सात्त्विकः शर्वस्तामसः परमेष्ठी राजस इति ते पुरोगमा येषां देवानां सर्व एव देवास्त्रिगुणात्मका भवन्ति कवयो निपुणा अपि नादे इन्द्रो हि त्रैलोक्याधिपतिः सर्वदा नादपरः शर्वस्तु शास्त्रकर्त्ता परमेष्ठी तयोरपि गुरुः अतएव परमेष्ठिपदं तेषामनन्यचित्तताभावायाह । आनतकन्धरचित्ता इति । आ समन्तात् नता कन्धरा बाह्याभिनयार्थं चित्तञ्च येषां ग्राहकं चित्तं नमनमत्र सर्वतः तेऽप्यनिश्चितततत्त्वा जाता नाप्यौदासीन्येन कियत्कालं विचार्य अज्ञाने तूष्णीं भूता इति मन्तव्यं यतः कश्मलं ययुः चिन्तया मूर्च्छिताश्च जाताः वेणुनादेन वा मोहिताः अतएव आभासत्वपक्षोऽपि निराकृतः अलौकिकरसोत्पादकत्वात् ॥ १४ ॥ १५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथापराह्णे काश्चन गोप्य आगमिष्यतः स्वप्रेयसश्चिरदर्शनसिद्ध्यर्थं विचारितयुक्तयः केनचिन्मिषेण व्रजेश्वरीसदनं गतास्तत्र च विविधवृद्धायुवतिबालिकाभिः सम्भूय विस्तार्यमाणाः स्वसुतगुणकर्मप्रभावकथाः शृण्वतीं स्वयञ्च कथयन्तीं सुतविरहविह्वलां तां स्वस्य मनश्च समाश्वासयितुं तां सम्बोध्य वेणुगानगुणप्रभावं वर्णयन्ति । विविधेति । हे सति ! श्रीयशोदे विविधं गोपानां चरणाग्याचरणानि गवां कालेन दोहनवशीकरणादीनि तेषु विदग्धः तव सुतः अधरबिम्बे दत्तवेणुः सन् यदा स्वराणां षड्जादीनां जातीरष्टादशमुख्याः अन्याः सहस्रशो वा अनयत् उन्नीतवान् कीदृशीः वेणुवाद्यविषये उरुधा बहुप्रकारा निजात् स्वस्मादेव ननु परस्मात् कस्माच्चिदपि शिक्षा यासु ताः । सवनशः समये तत् स्वरजात्युन्नयनम् उपधार्य शक्रशर्वपरमेष्ठिनः पुरोगा मुख्या येषां ते । शक्रोपेन्द्राग्नियमादयः शर्वकात्यायनी स्कन्दगणेशादयः । ब्रह्म चतुःसननारदादयश्च । कवयः गानतालादिसृष्टिकर्त्तारोऽपि । आनताः कन्धरादिचित्तानि च येषांमिति गानमाधुर्य्यास्वादानुभावः । न निश्चितं रागस्य तालस्य तानस्य स्वरादीनाञ्च तत्त्वं स्वरूपं यैस्ते ततश्चाज्ञानाद्गुणमाधुर्याच्च मोहं प्रापुरहो जगदीश्वरा यत्र मुमुहुस्तत्र जगदीशितव्यानामन्येषां मोहे को विचार इति आर्य्ये जगन्मोहनोऽयं तव सुतोऽभूदिति भावः ॥ १४ ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वस्वसुतवेणुगीतेन ब्रह्मादयोऽपि मोहं ययुरिति श्रीयशोदां प्रति काश्चिदाहुः । विविधेति । हे सति यशोदे ! तव सुतः विविधेषु गोपचरणेषु गोपविहारेषु विदग्धो निपुणः अधरबिम्बे अधरस्वच्छत्वेनैव विद्यमाने बिम्बे अरुणबिम्बाकारे ऽधरे इत्यर्थः । दत्तो निहितो वेणुर्येन सः वेणुवाद्यविषये निजैव शिक्षा यासु ताः स्वस्य सर्वकलाकुशलत्वात् स्वरजातीः निषादर्षभादिस्वरभेदान् यदा अनयत् उन्नीतवान् तदा तत् ताः स्वस्वसुतोन्नीताः स्वरजातीः सवनशो मन्दमध्यतारभेदेन यतो गीतध्वनिरागतस्तत आनता कन्धरा चित्तं च येषां ते उपधार्य्य सम्यगाकर्ण्य कवयः बहुज्ञा अपि ते अनिश्चितं तत्त्वं भगवदुत्प्रेक्षितानां स्वरजातीनां भेदो यैस्ते कश्मलं मोहं ययुः ॥ १४ ॥ १५ ॥

---

### भाषा टीका ।

हे सति ! यशोदाजी आपका पुत्र सब गोपालों की क्रियाओं में बड़ा चतुर है अपनी बनाई हुई गानकी शिक्षाओं को जब बंशी में बजाने को अधर पर बंशी को रखकर स्वरोंका आला पकरना है तब संध्या सवेरे महादेव ब्रह्मा इंद्र आदि देवता उन गीतों को सुनकर आप बड़े ज्ञानी होने पर भी मस्तकों को नीचे करके चित्त को लगाकर सुनने से भी उन रागों को नहीं समुझ सकते हैं और मोहित हो जाते हैं ॥ १४ ॥ १५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्माकन्तु मोहं किमु इत्याहुः । निजपदाब्जदलैरिति । ध्वजादीनि विचित्राणि ललामानि चिन्हानि येषां तैर्निजानि

व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ॥
कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥१७॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पदान्येवाब्जदलानि तैर्व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन् वर्ष्मणा देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो वादितवेणुः सन् यद्व्रजति ॥ १६ ॥

तेन निमित्तेन सविलासवीक्षणेनार्पितो मनोभववेगो यासु ता वयं कुजा वृक्षास्तेषां गतिं गमिताः सत्यो मोहेन न विदामः कबरं वा वसनं वेति ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तदनन्तरजातलीलामयी गोपनीयरसनिबद्धा पुनरेका काचिदेकान्तगोष्ठी संगृह्यते तत्र तादृशनानातत्कथाश्रयेण लङ्घितेऽपि तृतीये यामे नागते श्रीभगवति काश्चिदुत्कण्ठितचित्ता गोपिकाः गोपरावृत्तिसमये तदन्वेषणार्थं पुष्पावचयादिमिषेण कदाचिद्गच्छन्ति च वनमध्यं तत्र दृष्टं दिनान्तरे प्रस्तुवन्ति च तदेवमवतारिका अहो प्राणसख्यस्तत्र तत्र चान्येषामस्तु मोहकथा स्फुटमस्माकमेव श्रूयतामिति भाववैवश्येनाहुः । निजेति । निजशब्देनासाधारणत्वं व्यज्यते बहुत्वं गौरवेण प्रतिन्यासमपूर्वरूपत्वविवक्षया वा निजत्वादेव ध्वजादीनि विचित्राणि अद्भुतानि ललामानि येषु तैः यद्वा ध्वजादिभिर्विचित्रैः ललामैश्च सुन्दरैः उपलक्षणानि चैतानि प्रसिद्धानां चक्रादीनामनतिप्रसिद्धानामष्टकोणादीनां च व्रजभुवः व्रजसंबन्धिगोप्रचारभूमेः लक्षणया तद्गततृणाद्रीनामित्यर्थः । गवादिखुराक्रमणव्यथां शमयन्निति गवाम्पश्चात्पद्भ्यामागच्छतो भगवतः पदाब्जस्पर्शस्वभावत एव सद्यस्तृणाद्यंकुरोत्पत्तेः अतएवासंख्यधेनुवृन्दनित्यचारसमावेशः स्यात् तत्र विलासमाहुः । वर्ष्मधुर्य्यगतिः गजेन्द्रवच्छनैः शनैर्लीलया चलन्नित्यर्थः । यत ईरितवेणुः शीघ्रगमने सम्यग्वेणुवादनासम्पत्तेः यद्यपि स्वाभाविकमेव तस्य तत्तथापि विलासविशेषेण विशिष्टमपि स्यादिति तथोक्तं ततोऽस्मद्दृष्टिविषये त्वधिकमेव तथा चरितमिति व्यञ्जितं व्रजति इतस्ततो भ्रमतीत्यर्थः । तेन कारणभूतेन यत्सविलासं सलीलं वीक्षणमस्मासु तत्र तत्र च दृग्भिः तेनार्पितोऽन्तर्निहितो मनोभवस्य वेगो यासु ताः इति स्वतोऽतिक्रान्तर्ध्यत्वमुक्तं कुजगतिं स्थावरत्वं जाड्यमित्यर्थः । गमिताः प्रापिताः यद्वा तेनेति कुजगतिगमितत्वे सविलासे सति न विदाम इत्यत्र हेतुर्विवेचनीयः तस्य व्रजेनेनास्माकमगत्वं वैदग्ध्या च मुग्धत्वमिति कारणवैपरीत्येनाद्भुतत्वं ततस्तस्य परमं मोहनत्वं स्वेषां दैन्यं च दर्शितं कबरं वसनं वा न विद्मः स्खलितमिति शेषः । तदनुक्तिर्लज्जया कबरमिति कियद्वसनमपीत्यर्थः । वा समुच्चये टीकायामपि तथैव ॥ १६—१७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्माकन्तु मोहं किं ब्रूम इत्याहुः । निजेति । ध्वजादीनि विचित्राणि ललामानि चिन्हानि येषां तैर्निजानि पदान्येवाब्जदलानि तैर्व्रजभुवः खुरतोदं खुराक्रमणव्यथां शमयन्वर्ष्मणा शरीरेण धुर्यः धुरं वहतीति तथा सच गजराजस्तद्वद्गतिर्यस्य सः कृष्णः वादितवेणुः सन् व्रजतीति यत् ॥ १६ ॥

तेन निमित्तेन सविलासवीक्षणेनच अर्पितो मनोभववेगो यासु ता वयं कुजा वृक्षास्तेषां गतिं प्रकारं निश्चेष्टतामिति यावत् गमिताः प्रापिताः सत्यो मोहेन कबरं वसनं वा न विदामः ॥ १७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

ध्वजादयश्च एव विचित्राणि नानाकाराणि ललामानि लाञ्छानि येषां तानि तथा यद्वा ललामानि तिलका येषां तानि तथा यद्वा ललामानि भूषणानि येषां तानि तथा तैः "ललामोऽस्त्री ध्वजे श्रेष्ठे भूषायां पुण्ड्रचिह्नयो"रितिच निजपदाब्जयोर्दलैः अङ्गुलीलक्षणैः यद्वाजानि नित्यानि अन्येनामार्जितानि पदान्येव पादाङ्का एवाब्जानि यानि तेषां दलैर्विभागैः व्रजभुवः गवाङ्घ्रिखुरतोदं खुरनिखातव्यथां प्रकर्षेण शमयन् परिहरन् वर्ष्मणा महता शरीरेण युक्तो धुर्यो वृषभस्तस्य गतिरिव गतिर्यस्य स वर्ष्मधुर्यगतिः यद्वा वर्ष्मधुर्यो गजराजः तद्वा ईरितवेणुः शब्दितवेणुर्यः ॥ १६ ॥

तेन व्रजमितेन प्राप्तेन कृष्णेन सविलासवीक्षणेन अर्पितो मनोभवस्य कामस्य वेग उद्रेकलक्षणः संस्कारो यासु तास्तथा रात्रिविशेषे वनाद्व्रजगतिं गोष्ठाख्यमन्दिरं गमिताः प्रापिताः वयं कश्मलेन मनोऽनवस्थानलक्षणेन मोहेन स्रस्तं कबरं केशभारं वस्त्रं वस्त्रं वा स्थितिं वा न विदामः न जानीम इत्यन्वयः । कुजगतिमितिपाठे स्थावरस्वभावमित्यर्थः । ब्राह्ममुहूर्तादुत्थाय कृष्णाज्ञया वनात्प्राप्तप्रजानां पश्चादागतस्य कृष्णस्य पुनर्दर्शनेन मुग्धानां गोपिकानां वचनमिदमिति भावः ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ तदनन्तर जातलीलामयी गोपनीयरसनिबद्धा पुनरेका काचिदेकान्तगोष्ठी संगृह्यते । तत्र तादृश नाना तत्कथाश्रयेण लङ्घितेऽपि तृतीये यामे नागते श्रीकृष्णे काश्चिदुत्कण्ठितचित्ता गोपरावृत्तिसमये तदन्वेषणार्थं पुष्पावचयादिमिषेण काश्चिद्वगच्छन्ति च वनमध्यम् । तत्र दृष्टं दिनान्तरे प्रस्तुवन्ति च तदेवमवतारिका अहो प्राणसख्यस्तत्र तत्र चान्येषामस्तु मोहकथा । स्फुटमस्माकमेव श्रूयतामिति भाववैवश्येनाहुः । निजेति-युगलेन । निजेत्यसाधारणत्वं व्यज्यते । बहुत्वं गौरवेण प्रतिन्यासमपूर्वरूपत्वविवक्षया दलैरिति कचिद्व्रजभुवस्तत्सम्बन्धिभूमेर्लक्षणया तद्गततृणादीमित्यर्थः । गवादिखुरतोदं शमयन्निति गवां पश्चादागच्छतः श्रीकृष्णस्य पदाब्जस्पर्शस्वभावत

मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ॥
प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥ १८
क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ॥
गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एव सद्यस्तृणाद्यङ्कुरोत्पत्तेः अतएवासंख्यधेनुवृन्दनित्यचारणसमावेशः स्यात् ॥ १६ ॥ १७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अस्त्वन्येषां वार्ता वेणुनादोऽस्माकमेवान्यथात्वं सम्पादयतीत्याहुर्द्वयेन पूर्ववत्। निजपदाब्जदलैरिति। यर्हि ईरितवेणुः सन् व्रजति तदा तेन नादेन कुजगतिं स्थावरत्वं गमिता वयं गोप्यः सर्वा एव कश्मलेन मूर्च्छया वसनं परिहितं केशपाशं वा न विदाम इति संबन्धः। अयं वेणुनादः अस्मदर्थमेव जायत इति तस्य चेष्टया अनुभवाच्च ज्ञायते तत्र चेष्टा या गोकुलनिवासिनामेवार्थे जायते तया व्याप्तः कथमन्यकार्थं कुर्यात् अतः प्रथमं भगवतो गोकुलहितकर्तृत्वमाहुः। निजस्य स्वस्यैव यत्पदाब्जद्वयं तस्य दलैर्दशाङ्गुलीभिः तलभागैर्वा व्रजभुवः निरन्तरं पश्वाक्रमणेन जातव्यथायाः व्रजभूमेः खुरैर्जातं तोदं शमयन्निति शनैः शनैर्लीलया भगवद्गतिर्निरूपिता क्षतांशः गतिविलासेन पादस्पर्शेन निराकृतः आध्यात्मिकाद्यंशस्तु ध्वजादिना तामसः भौतिकः ध्वजेन निराक्रियते राजसः आध्यात्मिकः वज्रेण सात्त्विक आधिदैविकः नीरजाकृतिचिह्नेन तान्येव विचित्राणि ललामानि पदेषु तेन लौकिकालौकिकप्रकारेण व्रजभुवः खुरतोदप्रशमनं व्रजे तिस्रः प्रधानभूताः भूमिः गावो गोप्य इति तत्रभूमेर्दुःखनिवृत्तिं गत्या निरूप्य गत्याकृत्या च गवां दुःखं निवारयतीत्याहुः। वर्ष्मधुर्यगतिरिति। वर्ष्मधुर्यो महावृषभः ककुद्मी स यथा लीलया मन्थरगतिः तथा गच्छन् गवामपि दुःखहारीव निरूपितः ईडितवेणुर्व्रजतीति गोपिकानां तदास्माकं वेणुनादेन जाते कामे स्थावरत्वमधिकं जातमित्याहुः। तेनेति। स्वभावत एव वेणुनादेन जातः कामः तत्रापि सविलासवीक्षणेन अर्पितः मनोभववेगो यासु अतो वेगेन स्तम्भे जाते कुजगतिं वृक्षगतिं गमिता जाताः तेषामन्तर्ज्ञानमस्तीति तदर्थमाहुः। न विदाम इति। सुषुप्तावपि न जानन्तीति तद्व्यावृत्त्यर्थमाहुः। कश्मलेनेति कश्मलेन मूर्च्छया स्त्रीणामत्यावश्यकं वसनज्ञानं कबरज्ञानञ्च वेणुनादप्रस्तावएवैतज्जातमिति गतिदृष्ट्यादिभिरपि कृतमत्र निरूप्यते ॥ १६ ॥ १७ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अथान्ययूथस्थाः सखीः प्रति वेणुहेतुकं स्वमोहमेवाहुः। निजपदान्येव अब्जदलानि तैः कीदृशैः ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैः गोष्ठगमनसमये अग्रतो गतानां गवां खुरतोदं खुराक्रमणव्यथां व्रजभुवः शमयन् तदुपरि स्वचरणाब्जन्यासेन शमयितुं यदा वर्ष्मणा देहेन धुर्यो गजस्तद्वद्गतिर्यस्य स कृष्णो व्रजति तदा तेन कृष्णेन सविलासवीक्षणेनैवार्पितो मनोभववेगो यासु ता वयं कुजा वृक्षास्तेषामिव गतिं गमिताः प्रापिताः सत्यो मोहेन कबरं वसनं वा न विदामः। तयोः स्खलनं न जानीम इत्यर्थः। तेन व्रजभुवः खुरतोदं चरणाम्बुजन्यासेन शमयामास। व्रजसुभ्रुवान्तु मनसिजतोदं नयनाम्बुजन्यासेनोत्पादयामासेत्येवमेवास्माकं ललाटमिति द्योतितम् ॥ १६ ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

काश्चित्स्वमोहातिशयमनुवर्णयन्ति। निजपदाब्जदलैरिति। ध्वजादीनि विचित्राणि ललामानि चिह्नानि येषां तैः ध्वजादीन्यन्येषामप्युपलक्षणानि निजपदान्येवाब्जदलानि तैर्बहुवचनं "कृत्वा तावन्तमात्मान"मिति यद्वक्ष्यमाणाभिप्रायेण यद्वा पदाब्जयोर्दलैरङ्गुलीभिः व्रजभुवः खुरतोदं गवादिखुराक्रमणव्यथां शमयन् वर्ष्मणा देहेन धुर्य्यः धुरं वहतीति स तथा तद्वद्गतिर्यस्य सः श्रीकृष्णः वादितो वेणुर्येन सः तथाभूतः सन् यद्व्रजति तेन हेतुना सविलासं यत्तदीयं वीक्षणं तेन अर्पितो मनोभववेगो यासु ता वयं कौ पृथिव्यां जायन्ते इति कुजाः वृक्षास्तेषां गतिं निश्चेष्टतां गमिताः सत्यो मोहेन कबरम् वसनं वा न विदामः ॥ १६ ॥ १७ ॥

भाषा टीका।

जब भगवान् वज्र कमल अंकुश आदि विचित्र चिन्हों से मनोहर अपने चरण रूप कमल पत्रों से व्रजकी पृथिवी में गउओं के खुरोंका जो दुःख है उसको दूर करते हुये हस्तीके चालसे चलते हुये वेणुको बजाते हैं और चलते हैं तब उनके विलासों के सहित देखने से हम लोगों को कन्दर्पका वेग होता है तब वृक्ष सरीकी हमारी दशा होजाती है तब मोहित होकर अपने मस्तक के केशबंध अथवा वस्त्रों को खुलते नहीं जान सकती हैं ॥ १६ ॥ १७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किंच मणिधरो मणीन् ग्रथितान् गोपनार्थं धरतीति मणिधरः क्वचिद्देशे पैतैर्मणिभिर्गा आसमन्ताद्गणयन् तथा दयितगन्धा या तुलसी तस्या मालया सह वर्त्तमानः प्रणयिनः प्रियस्यानुचरस्यांसे भुजं प्रक्षिपन् यत्र यदा कदाचिदगायत ॥ १८ ॥

तदा क्वणितवेणुरवेण वाञ्चितान्यपहृतानि चित्तानि यासां ताः

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णस्य हरिणस्य गृहिण्यो भार्या गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य ताः कृष्णमेवान्वसतान्वासत न न्यवर्त्तन्तेत्यर्थः । कुतः यतो विमुक्ता गृहाशा याभिस्ता गोपिका इव ता अपि ह्येवमेवान्वासतेति ॥ १९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथा पराह्णे स्वीकृतवेशान्तरो गृहागमनाय मुहुर्वेणुगानेन गाः समाहरति गणयति च अहो बत तत्र मृग्योऽप्याक्रियन्ते किमुत वयं गोप्य इत्याहुः । मणीति । मणिमालाधारी सन् गा आगणयन् जगौ क्रमशस्तत्तद्यूथमुख्यमुख्याया नाम वेणुना गायतिस्म तास्तथैव स्वस्वयूथेनागतास्तत्तद्वर्णादिसङ्केतीकृततन्मणिमालया गणयति स्म चेत्यर्थः । यद्यपि कृष्णवत्सैरसंख्यातैरिति पूर्वोक्तं तथापि यूथेशादि गणनाभिप्रायेणैवेदमुक्तं तद्बुद्धिप्रावीण्याभिप्रायेण वाऽपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इति न्यायेन दयितगन्धत्वेन तुलस्या मालया पत्रादिनिर्मितया सदा विशिष्ट इत्यर्थः । यद्वा भ्रमरगानं मालायां प्रकल्प्य सापत्न्येन सेर्ष्यमाहुः तया सहागायतेति तस्या धार्ष्ट्यं व्यञ्जितङ्किकुर्वन्नगायत किञ्चिन्नीचभूमिकास्थितस्य अनुचरस्यांसे भुजं वामं दक्षिणमेव वा कूर्परोर्ध्वभागं प्रक्षिपन् लीलया विन्यस्यन् अतः स एव प्रेमयुक्तसौभाग्यवान् नतु वयमिति भावः । क्वणितवेणुरवेति वक्ष्यमाणत्वाद्वेणुनैवागायदिति सिद्धं क्वणितेति विशेषणेन क्वणनविशेषेण वादितो यो वेणुस्तस्य रवेण वञ्चितानि प्रलम्भितानि तत्पूर्वकमपहृतानि चित्तानि यासां ताः कृष्णगृहिण्यः कृष्णेति देशपावनपतिका अपीत्यर्थः । गृहिण्य इति मानुषजातिवत् पत्युः परमप्रेयस्योऽपीत्यर्थः । कृष्णमन्वसत तत्परित्यागेन कृष्णमेवाश्रिता इत्यर्थः । तत्र हेतुः गुणगणार्णमिति कृष्णगृहिण्य इति श्लेषेणापि कृष्णस्य भार्य्यात्वं प्राप्ता नर्म विमुक्तेति तैर्व्याख्यातं यद्वा विमुक्ता गृहाः आशाश्चाशनं याभिस्ताः गृहं पत्यादिपरिकरः वयमित्यनुक्त्वा गोपिका इत्युक्तं गोपिका जातित्वेनैव तदेकस्वभावसिद्धेः तदभावेऽपि तासामित्यभिप्रायेण यद्वा वयमित्युक्तेरपि गोपिका इत्यस्य रसविशेषपोषकत्वं परोक्षवचनात् ॥ १८—१९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च मणिधरः मणीन् ग्रथितान् गोगणनार्थं धरतीति मणिधरः क्वचिद्देशे तैर्मणिभिर्गा आसमन्ताद्गणयन् तथा दयितगन्धा इष्टगन्धा या तुलसी तस्या मालयोपलक्षितः प्रणयिनः प्रियस्यानुचरस्यांसे स्कन्धे भुजं प्रक्षिपन्निदधत् यत्र यदा क्वचिद्गायत् ॥ १८ ॥

तदा तत्र क्वणितस्य वादितस्य वेणो रवेण वञ्चितान्यपहृतानि चित्तानि यासां ताः यन्त्रितचित्ता इति पाठे परवशीकृतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य गृहिण्यो भार्या हरिण्यो गुणगणार्णं गुणगणसमुद्रं कृष्णमनुगत्य प्राप्य तं कृष्णमेवान्वसत अन्वासत न न्यवर्तन्तेत्यर्थः । कुतः यतो विमुक्ताः त्यक्ताः गृहाशाः याभिः कथं गोपिका इव ता अपि ह्येवमेव तमन्वासतेति ॥ १९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मणिधरः कौस्तुभरत्नधारी दयितगन्धा प्राणप्रियगन्धा तुलसी यस्यां सा तथा तया मालयोपलक्षितः प्रणयिनः स्निग्धतमस्यानुवर्तमानस्य कस्यचिद्गोपस्यांसे भुजशिरसि भुजं प्रक्षिपन्निदधानो गा आगमयन् वनाद्व्रजमावर्तयन् कृष्णः क्वचित्कस्मिंश्चित्काले यत्र यस्मिन्देशे अगायत ॥ १८ ॥

तदा वञ्चितचित्ताः प्रलोभितान्तःकरणाः कृष्णगृहिण्यः कृष्णमृगपरिग्रहभूताः हरिण्यो गुणगणार्णं गुणगणसमुद्रं क्वणितवेणु ध्मातवेणुं कृष्णमनुगम्य उपान्वीयुः उपासतेत्यन्वयः का इव विमुक्तगृहेशाः परित्यक्तनिजपतयः उभयत्र समानं गोपिका गोपाङ्गना इव अन्यत्र गोपनशीला इव ॥ १९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथापराह्णे स्वीकृतवेशान्तरो गृहागमनाय मुहुर्वेणुगानेन गाः समाहरति गणयति च अहो बत तत्र मृग्योऽप्याकृष्यन्ते किमुत वयं गोप्य इत्याहुः । मणीति युगलेन । मणिमालाधारी सन् ॥ १८ ॥ १९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हरिणीनां वेणुनादेन यथाजातं तद्वक्तुं पूर्ववद्वेणुनादं वर्णयन्ति । मणिधर इति द्वाभ्याम् । गवामाधिदैविकानि रूपाणि मणयः तान् स्वस्मिन् बिभर्तीति मणिधरः अभिज्ञानार्थं वा स्वप्रियाणामभिज्ञापका मणयः अतस्तैः कदाचित्गाः आसमन्तात् गणयन् जातः अनेन ताः तद्गता धर्माश्च भगवत्येव प्रतिष्ठिता इति तासां संसाराभावः सूचितः अतएव गोपिकानामपि अत एव हरिणीनामपि पशुत्वाविशेषात् ग्राम्याणांचेवुद्धारकः विशेषतः आरण्यानां भविष्यतीति युक्ता कृष्णपरता मालया दयितगन्धतुलस्याः उपलक्षितः यथा भगवतः नीलं रूपं प्रियं स्पर्शः स्त्रीणां शब्दो वेणोः रसो नवनीतस्य तथा गन्धः तुलस्याः तद्गतोत्तमता सात्त्विकानां केषाञ्चिदनुभवसिद्धा तादृशी तुलसी अतस्तस्या मालां बिभर्ति अतो यदा वयमपि प्रिया भविष्यामः तदा अस्मानपि अस्मद्धर्मान् वा धारयिष्यतीति कृष्णसारस्त्रीणां प्रवृत्तिः कृष्णसारस्तु वेदे नियुक्त इति भक्तौ तासां विनियोगार्थं प्रवृत्तिः किञ्च प्रणयिनोऽतिप्रेमवतः अनुचरस्य गोपस्यांसे भुजं प्रक्षिपन्निति कदा कदाचित् "आशंसायां भूतवच्च" इति वा कदा अगायतेति मध्ये गानांशं सा यथा गोपालस्य तथा स्नेहसेवाधर्मयोः सद्भावे एवं भविष्यतीति गोपिकानामिव हरिणीनामपि तथात्वाय स्नेहभजनं देहास्फुरणात् न विजातीयत्वेन कामाभावः ॥ १८ ॥

तदैव क्वणितो यो वेणुः आकस्मिकः शब्दविशेषो मनोहारी क्वणनात्मकः सचेद्वेणोर्निर्गतस्तत्सम्बन्धादन्येऽपि शब्दाः चित्तवञ्चका इति रवपदं शब्देन मृगाणां वशीकरणं सिद्धमेव इदानीमयोपयोगो भविष्यतीति प्रतीतिजननाद्वञ्चकत्वम् अतो रवेण वञ्चितचित्ताः कृष्णमन्वसत कृष्णसमीपे आसत उपविष्टा जाताः यथाप्रायमुपविशति एवंकृष्णमनूपविष्टाः ननु स्त्रियोऽन्यस्य कथमन्यस्य

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे ! तव वत्सो नर्मदः प्रणयिनां विजहार ॥२०॥
मन्दवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गृहेऽन्यस्य समीपे उपविष्टा इति तत्राह। कृष्णस्य कृष्णसारस्य गृहिण्य इति कृष्ण इति तास्तस्य गृहिण्यो जाताः वञ्चितचित्तत्वाद्वा रूपं विस्मृत्य शब्दमात्राभिनिविष्टा जाताः वेणुनादेन वा सानुभावेन कृष्णसारेऽपि कृष्णमत्या कृष्णमेवान्वासत ननु कृष्णसारेऽपि कृष्णभ्रमात् शब्दोऽपि वर्त्तत इति तं परित्यज्य कथमागता इत्यत आह । गुणगणार्णमिति । कृष्णसारे एको द्वौ वा गुणौ अतो यत्रैव भगवान् गच्छति तत्रैव तमनुगत्य सर्वा एव हरिण्यः विमुक्तगृहाशा जाताः गृहं गमिष्याम इत्याशामपि त्यक्तवत्यः सान्निध्येन भगवद्रसः पीत इति लब्धसानुभावाः गोपिका इव तदेकपरा जाताः एतन्नयनेषु स्वप्रियानयनसादृश्यदर्शनेन यादृशेन भावेन ताः पश्यति तादृशेनैवैता अपि पश्यन्तीत्येतासामपि तत्सजातीयभावोत्पत्तिस्तथैव वेणुक्वणनञ्च अतएवाग्निचीजामृतबीजात्मकं रवपदमुक्तं यतस्तच्छ्रवणेऽर्त्यास्तित्तापशमनञ्च सम्पद्येते अतः स्वदृष्टान्तोक्तिर्युक्ता ॥ १९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गोष्ठस्थानां स्त्रैणां मोहमिव वनस्थानां मृगीणां वेणुहेतुकं मोहमाहुः । मणिधरः गोगणनसंख्यानमणिमालाधरः । शुक्ररक्तश्यामपीतानां चतुर्णां वर्णानां प्रत्येकं पञ्चविंशतिप्रभेदैः शतं वर्णा भवन्ति । तथैव चित्रितत्वचन्दनतिलकत्वादिचर्णैर्मृदङ्गमुखत्वाद्याकारैश्चान्येऽन्यप्रभेदा भवन्ति। ततश्च तत्तद्वर्णाकारैरष्टोत्तरशतमणिगोलकैर्गोगणनार्थं कृष्णेन गोजपमालैका कृतास्ति तां मालां गृहीत्वैवासङ्ख्यानामपि गवामष्टोत्तरशतं यूथान् पृथक् पृथक वर्णान् गणयति । तथाहि । हिहीं धवलीत्याह्वानेन धवलीयूथो यथा आयाति तथैव हंसी चन्दनी गङ्गे मुक्ते इत्याह्वानेन तत्प्रभेदाश्चतुर्विंशतिरन्येऽपि यूथा आयान्ति । एवमरुणी कुंकुमी सरस्वतीत्यादि संज्ञाः श्यामला धूमला यमुनेत्यादि संज्ञाः पीता पिङ्गला हरितालिकेत्यादि संज्ञाः चित्रिता चित्रतिलका दीर्घतिलका तिर्यक्तिलकेत्यादि संज्ञाः मृदङ्गमुखी सिंहमुखीत्यादि संज्ञाश्च स्वस्व नामभिराहृता आयान्त्यतो वनाद्गोष्ठगमनसमये कादचनापि गावो विस्मृता माभवेयुरित्येकैकमणिगोलकावर्त्तनेन गा गणयन् दयितगन्धा तुलसी तस्या मालया सह वर्त्तमानः । प्रणयिनः प्रियस्यानुचरस्य स्कन्धे भुजं प्रक्षिपन् यदा अगायत तदा क्वणितस्य वेणो रवेण वञ्चितान्यपहृतानि चित्तानि यासां ताः कृष्णस्य कृष्णसारस्य गृहिण्यो हारिण्यः कृष्णमन्वसत अन्वासत अन्ववर्त्तन्तेत्यर्थः । यतो गुणगणार्णं गुणसमुद्रं कृष्णमनुगम्य प्राप्य तद्गुणानास्वाद्येत्यर्थः । विमुक्ता गृहाशा याभिस्ता गोपिका इव वयमप्येवं वृत्ता भवामः ॥ १८ ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कास्चित्तु नारीणां विमोहस्य का कथा मृगीणां मोहो ऽदृष्टो दृष्ट इत्याहुः । मणिधर इति । दयित इष्टोऽपि गन्धो यस्याः सा दयितगन्धा तुलसी तस्या मालयोपलक्षितः श्रीकृष्णः मणीन् प्रथितान् गवां गणनार्थं धरतीति मणिधरः क्वचिच्चैर्मणिभिर्गाः आसमन्ततो गणयन् प्रणयिनः स्नेहवतो ऽनुचरस्यांसे स्कन्धे भुजं प्रक्षिपन् यत्र यदा अगायत् तदा क्वणितस्य वादितस्य वेणो रवेण वञ्चितानि विमोहितानि चित्तानि यासां ताः कृष्णगृहिण्यः कृष्णहरिणभार्या हरिण्यः गोपिका इव विमुक्तगृहाशाः गुणगणानां कल्याणगुणसमूहानामर्णं समुद्रं श्रीकृष्णमनुगत्य प्राप्य तमेव अन्वसत अन्वासत अन्ववर्तन्तेत्यर्थः ॥ १८ ॥ १९ ॥

---

भाषा टीका ।

किसी समय में बडी प्रिय गंध वाली तुलसी की माला को पहर कर अपने प्रेमी सखा के कांधे पै हाथ रख कर हाथ में मणियों की माला से गिनकर गउओं के बुलाने समय जब कृष्ण गान करते हैं तब वीणा के शब्द सरीके वंशी के शब्द को श्रवण करके बडी मोहित होकर कृष्णसार मृगों की मृगी हरिणी गुणसागर भगवान् के पास में आकर गोपिन सरी की घर की आशा को छोडकर श्रीकृष्ण चन्द्र के पास में खडी रहती हैं ॥ १८-१९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं वृन्दावनप्रदेशेषु क्रीडित्वा सायाह्ने गोधनानि परावर्त्य यमुनायां क्रीडतस्तस्य सौभाग्यमनुवर्णयन्ति । कुन्ददामकृतकौतुकवेष इति । गोपीनामुत्सवाय कुन्ददामभिः कृतः कौतुकेनोत्सवेन वेषो ऽलङ्कारो येन सः हे अनघे ! यशोदे तव वत्सः पुत्रो नन्दसूनुः कृष्णः यद्वा सदैव बहवः कथयन्त्यः काश्चित्तव वत्स इति काश्चिन्नन्दसूनुरिति चाहुः नर्मदो हर्षदः सन् यदा विजहार क्रीडति स्म ॥ २० ॥

तदा मलयजस्पर्शेन मलयजस्य चन्दनस्येव सुरभिः शीतश्च यः स्पर्शस्तेन तं कृष्णं मानयन्ननुकूलं यथा तथोपवाति वीजयति यद्वा मलयजो दक्षिणो वायुः यद्वा मलयजस्य कृष्णेन स्वाङ्गेऽनुलिप्तस्य स्पर्शेन मानयन्निति किंच वन्दिन इव स्तावकाः सन्तो

श्रीधरस्वामिकृतभावार्थदीपिका ।

गन्धर्वादिगणा वाद्यगीतपुष्पवर्षादिभिः परिवव्रुः परित उपासंत ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ पुनर्व्रजेश्वरीसभागतम् पूर्वोक्तगोसमाहरणादिसामयिकलीलानन्तरं लीलावर्णनं संगृह्यते । तच्च समाहरणं द्वितीयजलपानसमय एव स्यात् इति व्यज्यते च । तत्र तादृशींश्च लीलां स्वयमनुभूय कालातिक्रमेणार्त्ता तन्मातरं तदागमनवार्त्तया स्वस्थयितुमभिगम्य पूर्ववदाहुः । कुन्देति युग्मकत्रयेण। कुन्देति मन्देति च कार्त्तिकमासोऽयमिति लभ्यते वसन्ते कुन्दानर्हत्वात् हेमन्तशिशिरयोर्वायोर्द्वैपाच्च । तत्र च तदीयेन सर्वसुखदलीलत्वेन सर्वसेवासुखपात्रत्वेनच तां स्वस्थयन्ति विलम्बे कारणमपि निवेदयन्ति । कुन्देति । यमुनायां विजहार तस्या जले स्नानकेलिं विधाय तीरे सविलासं चिक्रीडेत्यर्थः । कीदृशः सन् विजहार तत्राहुः । कुन्ददामेति । समस्तदिनभ्रमणश्रान्त्या स्नानस्यापेक्षत्वात् कुन्ददाम्नां जलक्लिन्नतायामरुचिप्रदत्वेन तत्पश्चाद्धारणयोग्यत्वाच्च । तत्र सर्वसुखदलीलत्वादिकं वदन्त्यो विलम्बे कारणमपि सूचयन्ति । गोपैत्यादिभिः तस्य च तादृशत्वं युवयोः पुत्रत्वादनुरूपमेवेत्यर्थः । सर्वानन्दकतया तन्नाम्ना प्रसिद्धस्य सूनुः । न विद्यते अघं दुःखं सर्वेषामपि यतः हे तथाभूते इति तथैव सर्वानन्दिन्यास्तव च वत्स इत्यर्थः । तत्र वत्स इति धेनूनां वत्स इव परमस्नेहविषय इत्यर्थः । अतस्तव त्वत्पर्थे वैयग्र्यं युक्तमेवेति भावः । गोपैति । जलादितृप्ततया स्वगितगमनैर्गोपैर्गोधनैश्चावृत इत्यर्थः । तत्रापि प्रणयः सख्यमयस्नेहस्तद्वतां नर्मदः सपरिहासकेलिभिः सुखद इत्यर्थः । कौतुकं क्रीडोत्सवो हर्षो वा । वेशो ऽवतंसाद्यलङ्कारः । एवं पूर्ववेशपरित्यागेन वेशान्तरं ज्ञेयम् । अनुकूलं प्रियम् । यद्वा । पृष्ठवायुत्वेन गमनानुकूलं यथा स्यादिति सोऽपि तत्सञ्चारितायां सहाय इति भावः । अतो मन्दपदं श्लिष्टमपि ज्ञेयम् । तमिति कर्मसम्बन्धात् उपवाति वीजयतीत्यर्थः। यद्वा । उपसमीपे वाति । यत्रादौ तत्रैव तादृशो वायुर्नान्यत्रेत्यर्थः । मानयन् पूजयन् मलयजेति तैर्व्याख्यातम् । अत्र मलयजो दक्षिणो वायुरिति पक्षे वैकल्पिको विसर्गलोपः । शरदि नस्य च सद्भावात् तादृशानुकूल्याय तु सुतरां पृष्ठवायुत्वपक्षे सोऽप्यनुकूलं यथा स्यात्तथैवोपवातीत्यर्थः । उपदेवा गन्धर्वादयो ये ते सर्वेऽपीत्यर्थः । वन्दिन इति गीतेति च गीतद्वारा स्तुतिर्योग्यते । वलिवाद्ययोस्तु तदनुगतत्वम् । वलिरत्र दिव्यवस्त्रालङ्कारभोगादिसामग्रीमयो ज्ञेयः अतो गीतप्राधान्यात् गन्धर्वादिगणा इति तैरप्युक्तम् । परिवव्रुरिति तेऽपि तदागमनविलम्बं चक्रुरित्यर्थः । किन्तु वायोरेपाञ्च प्रस्थानमाङ्गलिकत्वात् शीघ्रसुखागमनं भवेदेवेति भावः ॥ २० ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं वृन्दावनप्रदेशेषु क्रीडतो लीलाः प्रगीताः अथ सायाह्ने गोधनानि परावृत्य यमुनायां क्रीडतः सौभाग्यमनु वर्णयन्ति । कुन्देति । कुन्ददामभिः कुन्दकुसुमस्रग्भिः कृतः कौतुकेनोत्सवेन वेषोऽलङ्कारो येन सः हे अनघे ! यशोदे श्रीकृष्णः तव वत्सः पुत्रः नन्दसूनुः यद्वा सहैव बहवः कथयन्त्यः काश्चित्तव वत्स इति काश्चिन्नन्दसूनुरिति चाहुः प्रणयिनां सखीनां नर्मदः हर्षदः गोपैर्गोकुलेनच वृतो यमुनायां विजहार यदेति शेषः ॥ २० ॥

मन्दवायुरित्यस्य तु तदेत्यादिः तदा मन्दवायुर्मलयजस्येव सुरभिः शीतश्च स्पर्शस्तेन कृष्णं सम्मानयन्निति अनुकूलं यथा भवति तथा उपवाति वीजयति यद्वा मलयजो दक्षिणो वायुः यद्वा मलयजस्य कृष्णेनालिप्तस्य स्पर्शेन मानयन्निति किञ्च ये वन्दिनस्तावका उपदेवगणाः सिद्धविद्याधरादयः ते वाद्यगीतपुष्पवर्षादिभिः तं कृष्णं परिवव्रुः परित उपासत ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे अनघे ! यशोदे कुन्ददाम्ना पुष्पमालयालङ्कृतः कौतुकवेषः विवाहकाले वरस्य हस्ते यत्सूत्रं बध्यते तत्कौतुकं तदीयो वेषः स यस्य स कुन्ददामकृतकौतुकवेषः "कौतुकं विषयाभेदे हस्तसूत्रे कुतूहल" इति यादवः गोपादिभिः परिवृतः प्रणयिनां नर्मदः लीलावचनेन आनन्ददः तव वत्सः बालः नन्दसूनुर्यदा यमुनायां विजहार ॥ २० ॥

तदा मलयजस्पर्शेन चन्दनगन्धदानेन कृष्णं मानयन् वायुर्यथानुकूलो भवति तथा मन्दम्मन्दमुपवाति वीजयतीत्यन्वयः किञ्च तदा ये उपदेवगणाः देवसमीपे वर्त्तमानाः गन्धर्वाः वन्दिनो वन्द्यमानाः यद्वा मङ्गलपाठकादयश्च वाद्येन गीतेन बलिना उपहारेण च तं कृष्णं परिवव्रुः ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ पुनर्व्रजेश्वरीसभागतं पूर्वोक्तगोसमाहरणादि सामयिकलीलानन्तरं लीलावर्णनं सङ्गृह्यते तच्च समाहरणं द्वितीय जलपान समय एव स्यादिति व्यज्यते च तत्र तादृशींच लीलां स्वयमनुभूय कालातिक्रमेणार्त्ता तन्मातरं तदागमनवार्तया स्वस्थयितुमभिगम्य पूर्ववदाहुः । कुन्देति युगलत्रयेण तत्र च तदीयेन सर्वसुखदलीलात्वेन सर्वसेवासुखपात्रत्वेन च तां स्वस्थयन्ति विलम्बे कारणमपि निवेदयन्ति कुन्देति युगलेन यमुनायां विजहार तस्या जले स्नानकेलिं विधाय तस्यास्तीरे सविलासं चिक्रीडे इत्यर्थः । कुन्देति मन्देति च कार्तिकमासो ऽयमिति लभ्यते । वसन्ते कुन्दानर्हत्वात् हेमन्तशिशिरयोर्वायोर्द्वैपाच्च ॥ २० ॥ २१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं नवप्रकारं वेणुनादं निरूप्य गुणातीतप्रकारेण त्रिधा निरूपयन् वेणुनादेन भगवान् जगदेव वशीकृतवानित्याहुः । कुन्ददामेतिद्वाभ्याम् । यर्हि भगवान् यमुनायां विजहार तत्रापि पूर्वोक्तरुदशायामपेक्षितो वेणुनादः परिगृह्यते प्रकरणत्वात् प्रकारविशेषाभावाच्च न पृथगुक्तः तदा उपदेवगणाः परिवव्रुरिति सम्बन्धः यमुनायामिति सामीप्यसप्तमी अधिकरणसप्तमी वा घर्मे गवां गोपालानाञ्च जले स्थितिः सम्भवति तत्र विहारो गोपैः सहजलक्रीडा गवां प्रक्षालनादिः सर्वत्रोद्वेगशान्त्यर्थं वेणुनादः

**वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ॥**
**कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सहकारी तदानीमनलंकृतत्वमाशङ्क्य अलङ्कारमाह । कुन्ददामेति । वस्त्राभरणाद्यलङ्कारा भविष्यन्त्येव पुष्पालङ्काराः न भविष्यन्तीत्याशङ्क्य तदेव निरूप्यते कुन्ददाम्ना कृतः कौतुकवेशो यस्य दामान्यनेकप्रकाराणि तैस्तथा वेशो निर्मीयते यथा अत्यद्भुतो भवति अत्र तु यथैव हास्यरस उत्पद्यते तथैव निर्मीयते इति ननु एतादृशीं प्राकृतलीलां भगवान् कथं कृतवान् इत्याशङ्कायामाहुः । नन्दसूनुस्तव वत्स इति । यया लीलया नन्दपुत्रो भवति तयैव लीलया प्राकृतलीलामपि सम्पादयति अनघ इति संबोधनं क्रोधाभावाय विश्वासार्थंच तव च वत्सो जातः अनेन त्वं गोरूपेति सर्वगुणरसानभिज्ञत्वं सूचितम् अन्यथा उलूखलबन्धनलीलां न कुर्यात् मध्ये निर्दोषत्वेन संबोधनादुभयोर्निर्दोषत्वं ज्ञाप्यते तादृश्या वत्सत्वेन भगवत्यपि तथा पूर्णगुणत्वलक्षणमाधिक्यं वोच्यनेऽग्रिमविशेषणेन किञ्च प्रणयिनां नर्मदः ये केचन स्नेहयुक्ताः यथैव ते स्निग्धा भवन्ति तथव लीलां करोति अनेन सर्वत्रैव हेतुरुक्तः यत्रैव लीलासक्त्या क्रीडा सविहारः सोऽत्र जलक्रीडा नृत्यक्रीडा वेणुवादनक्रीडा च ज्ञेया अन्यथा वाद्यादीनामुपयोगो न स्यात् विद्यावन्तो हि वशीकर्त्तव्याः तत्र विद्योत्पादको वायुः देवाश्च तदाधारभूताः तत्राप्युपदेवगणाः वन्दिनश्च बहिर्विद्याप्रकटनपराः अतो ऽन्यापेक्षया तेषु विशेष उक्तः प्रथमतः कारणभूतं वायुं निरूपयन्ति मन्दो वायुः अनुकूलं यथा भवति तथा उपवातीति अनुकूलं कुलसमीपे हितं च अनेन शैत्यं निरूपितं मलयजस्पर्शेन सहित इति सौरभ्यम् अनेन दाक्षिणात्योऽयं वायुरिति निरूपितं भगवत्स्वरूपे दत्तेन वा मलयजेन सह भावात् अधिकशैत्यनिरूपकत्वेन अनुकूलत्वं मलयजस्येव वा स्पर्शः तथा सति तत्रत्यानां सर्वेषामेव भगवद्भावं सम्पादयिष्यतीति मानयन्निति स्वकीयैस्त्रिभिर्गुणैः यथैव सन्मानं भवति तथैव वातीत्यति वक्ष्यता उपदेवगणाश्च गन्धर्वादयश्च वन्दिनः कीर्त्तिनिरूपका जाताः गायकाश्च सन्तः य इति भगवदीयाः वाद्यगीतपूजासाधनैः तामसराजसतात्त्विकैः सहिताः परिवव्रुः सर्वत्रैवापेक्षितं कृतवन्तः ॥ २०—२१ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ व्रजेश्वरीसदनं गता गोप्यस्तामपराह्णे स्वपुत्रागमनविलम्बेन विक्षुभ्यन्तीं तद्विलम्बकारणोक्त्या सान्त्वयन्ति । कुन्ददामेति युगलत्रयेणेति वैष्णवतोषिणी । यमुनायां पर्यटन् श्रमोपशान्त्यर्थं तत्र स्नात्वा तत्तटे उपविश्य कौतुकव्यञ्जकं वेशं परमोत्कण्ठया मिलिष्यतः स्वबन्धून् सुखयितुं कृत्वा यदा विजहार पादविहरणं चकार तदा मन्दवायुरुपवातीत्यन्वयः । प्रणयिनां वयस्यानां नर्मदः परस्परं हासोपहासं ददाति खण्डयति ददाति चेत्यर्थः । अनघे ! इति तव प्राक्तनमर्वाचीनं वा किमप्यघं नास्ति यतः पुत्रानिष्टं स्यात्तत् किमिति किञ्चिद्विलम्बमात्रेणैवातुरादिहेतुकं तदनिष्टं शङ्कसे इति भावः । यतो नन्दस्य पुण्यवच्छिरोमणित्वेन प्रसिद्धस्य सूनुः । तवच महापुण्ययशस्वित्वेनैव यशोदाया वत्सः महावात्सल्यपात्रीभूतः पुत्रः । लोके हि मातापित्रोरभाग्येनैव बालकस्यानिष्टं भवेद्यतो न कृष्णस्य किमप्यनिष्टमिति भावः । तद्विलम्बस्य कारणं वयं बालकानां मुखेभ्य एव श्रुत्वा जानीमस्तत् शृणित्याहुः । मन्देति मलयजस्य मलयपर्वतोत्पन्नचन्दनवृक्षस्य स्पर्शेन सौगन्ध्यं शैत्यञ्च गृहीत्वा तयोर्भारेन द्रुतं चलितुमसमर्थो वायुः कृष्णं मानयन्ननुकूलं यथा स्यात्तथा उपवाति । वन्दिनस्तावका ये उपदेवगणा गन्धर्वादयस्तेऽपि स्वस्वगुणान् दर्शयन्तो वाद्यादिभिः परिवव्रुरावृण्वन् अत एव तत्तदनुमोदनहेतुको विलम्बो जायते एव गुणिनि गुणज्ञो रमत इति न्यायात् । न चात्र खेदः समुचितः । त्वत्पुत्रं ते यदेवं संमानन्त्येतत्तवैव भाग्यमिति भावः ॥२०॥२१॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेवं भगवतः श्रीमद्वृन्दावनप्रदेशेषु क्रीडा अनुवर्णिताः सम्प्रति सायाह्ने गाः परावर्त्य श्रीयमुनायां क्रीडतः सौभाग्यं श्रीयशोदां प्रति वर्णयन्ति । कुन्देति हे अनघे ! यशोदे तव वत्सः नन्दसूनुः श्रीकृष्णः "कौतुकं त्वभिलाषे स्याद्धिवाहे नर्महर्षयोरिति" मेदिनीकारः कुन्ददामभिः कुन्दपुष्पमालाभिः कौतुकेन हर्षेण वेषोऽलङ्कारो येन सः नर्मदः केलिप्रदः सन् यदा यमुनायां विजहार क्रीडति स्म तदा मन्दवायुः मलयजस्य चन्दनस्येव सुरभिः शीतलश्च यः स्पर्शस्तेन तं श्रीष्णं मानयन् पूजयन् अनुकूलं यथा भवति तथोपवाति तथा वन्दिनः स्तावकाः सन्तः उपदेवगणाः गन्धर्वादिगणाः वाद्यगीतकुसुमवृष्ट्यादिभिस्तं परिवव्रुः परित उपासते ॥ २० ॥ २१ ॥

———

### भाषा टीका ।

हे यशोदाजी ! तुमारे पुत्र कुंद के फूलों की मालाओं से कौतुकी वेश बना कर गोपाल तथा गउओं को सङ्ग में लेजाय अपने प्यारेन को सुखदेने को जब यमुना में विहार करते हैं तब उनके अनुकूल मलयाचलके चंदनको स्पर्श करके मंद सुगंध शीतल वायु चलता है और बड़ा सत्कार करता है उसी समय में जितने उपदेव गण हैं वे सब बंदि होकर स्तुति करते हैं और बाजा गीत भेट इनसे श्रीकृष्ण की उपासना करते हैं ॥ २०—२१ ॥

———

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आयान्तमालोक्य हृष्यन्त्यः परस्परमूचुः । वत्सलद्धति । व्रजस्य

**उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ॥**
**दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गवां च यद्वा व्रजे निबद्धानां गवामनुकम्प्यानामस्माकमित्यर्थः वत्सलो हितकृत् कुतः यद्यस्मादगध्रः अगन्धरतीति गोवर्द्धनोद्धरणः बहुशो रक्षणस्योपलक्षणमेतत् वृद्धैर्ब्रह्मादिभिः पथि वन्द्यमानचरण इति ते सेर्ष्यं सायं शाघ्रमागन्तुं न ददतीत्यर्थः । उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः ॥ २२ ॥

श्रमयुक्तयापि कान्त्या नेत्राणां हर्षमुन्नयन्नुच्चैः प्रापयन् खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य सुहृदामस्माकमाशिषो मनोरथस्य दित्सया दातुमिच्छया देवक्या जठरे भवतीति तथा स एषोडुराजश्चन्द्रो निर्वृतिहेतुत्वेन स एष एतीति ॥ २३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्चोत्कण्ठाभिरष्टाधिकादिकमारुह्य तदेव दर्शयन्ति । वत्सल इति । तत्र चागमनं वर्णयितुं प्रथमं परमोल्लासेनासाधारणीं तत्कृपामेव तत्र हेतुं व्यञ्जयन्ति । वत्सलो व्रजगवामिति । तत्रोदाहरणमाहुः । यदिति । यद्यस्मात् परमकोमलोऽप्यसौ तदर्थं पर्वतमपि धरतीत्यर्थः । अत्र वर्त्तमान प्रयोगद्वयात्यन्तकृतज्ञतया कृतः सदातनत्वेनैव तत्स्फूर्त्तेः । यदेवं तद्विरहेऽपि तद्वदेव निजामार्त्ति रक्षाञ्च व्यञ्जयन्ति । अथागमनं वर्णयन्ति वन्द्येत्यादिना । तत्र वृद्धैः पथि वन्द्यमानचरण इति व्रजान्तःप्रवेशे तेषां तदप्राप्यत्वात् अत एव वन्द्यमानेति वर्त्तमाननिर्द्देशेन वन्दनादनिवृत्तिर्बोध्यते अतः सङ्कोचेन तदनिच्छायामपि तैस्तत्क्रियत इति व्यक्तम् । अहो एतादृश गुणज्यायस्त्वमिति भावः । गोधनोपवहनार्थं व्रजवर्त्तिषु निजागमनमङ्गलविज्ञापनार्थं च गीतवेणुः तदीयरागतालानुसारेण तद्गानसम्बन्धिषु तदीयानुगानभङ्गीभिरनुगैर्गोपैरीडिता कीर्त्तिः पूतनामोक्षादिरूपा एतद्दिनक्रीडात्मिका वा यस्य सः । श्रमस्तज्जनितप्रस्वेदादिस्तदाश्रययापि सहज शोभयेत्यर्थः । यद्वा । श्रमेण या रुक् शोभा तयापि दृशीनां दृङ्मात्राणां किमुतास्मदीयानामित्यर्थः । तत्र तादृशशोभानिदर्शनं गवां खुररजोभिः परागैरिवच्छुरिता कर्बुरिता स्रक् माला यस्य सः स्रज्येव रजोनिर्द्देशादन्यत्र रजो नास्तीति लभ्यते तच्च सखिभिर्मुहुरङ्गतो निजोत्तरीयेण रजस्यपसारितेऽपि तस्यां तस्य प्रविश्य स्थितत्वात् । परमान्तरङ्गप्रियजनदत्तायास्तस्या दलादिभङ्गशङ्कया तेनैव तन्निवारितत्वाद्वा । दूरतोऽपि रजआदीनां निर्द्देशस्त्वनुमानप्रेमवन्तो निकटात् स्फुरणेन वा । पूर्वव्यञ्जितमागमने कृपाया एव कारणत्वं साक्षादप्याहुः । दित्सयेति । अन्यथा श्रीवृन्दावने पूर्वपूर्ववर्णितानुसारेण किम्वा सुखं तस्य नास्तीति भावः । सुहृदामिति सामान्योक्तिर्दृशीनामितिवत् । एष इत्यङ्गुल्या निर्द्दिशन्ति । देवकीशब्देनात्र श्रीयशोदैव सादरं प्रस्तूयते । व्रजराजत्वात् देव एव देवकः श्रीनन्दस्तत्पत्नी देवकीति तस्या एव सान्त्वनायां प्रवृत्तेर्मातृतया मतत्वाच्च सुतः सतीति नन्दसूनुरयमार्त्तजनानामिति पूर्वसम्वादाच्च । मात्रन्तरसूचने तु प्रत्युत तद्विरोधापत्तेः । सभान्तरवाक्येऽप्यौदासीन्यापत्तेश्च । अतस्तस्यास्तदप्येकं नामेति वा लभ्यते । नाभेरसावृषभ आस सुदेविसूनुरित्यत्र मेरुदेव्या एव सुदेवीति संज्ञावत् । उक्तश्च द्वे नाम्नी नन्दभार्याया यशोदा देवकीति चेति । उडुराजः दिनतापहरणादिसाम्यात् । उडुस्थानीयाश्चात्र सखायो ज्ञेयाः । इति श्रीकृष्ण जन्मस्थानत्वेन देवकीजठरस्य विशुद्धसत्त्वमयत्वन परमशुभ्रत्वात् क्षीरसमुद्रत्वं ध्वनितम् ॥ २२ ॥ २३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथायान्तमवलोक्य हृष्यन्त्यः परस्परमूचुः । वत्सल इति । व्रजस्य गवां च वत्सलः यद्वा व्रजे निबद्धानां गवामनुकम्प्यानामस्माकं च वत्सलः कुतः हितकृत् यद्यस्मादगध्रः अगश्चोवर्द्धनं धरतीति तथा इदं बहुशो रक्षमाणस्योपलक्षणं वृद्धैर्ब्रह्मादिभिः पथि वन्द्यमानौ चरणौ यस्य सः दिनान्ते सायङ्काले कृत्स्नं गोधनमुपोह्यैकीकृत्य गीतयुक्तो वेणुर्यस्य सः अनुगैरनुचरैरीडिता कीर्त्तिर्यस्य सः ॥ २२ ॥

स्मररुजा स्मररोगेण ग्रस्ता नष्टप्राया दृशो दृष्टयो यासां तासामस्माकं नेत्राणामुत्सवं हर्षमुन्नयन्नुच्चैः प्रापयन् खुररजोभिर्व्याप्ताः स्रजो यस्य सः सुहृदामस्माकमाशिषः मनोरथस्य दित्सया दातुमिच्छया देवक्या जठरेऽभवदिति देवकीजठरभूः स एष उडुराजश्चन्द्र एत्यागच्छति निर्वृतिहेतुत्वेन स एष एवेत्युक्तम् ॥ २३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किञ्चिदुत्पन्नोपमेयज्ञानाः वदन्ति । वत्सल इति । व्रजगवां विषये वत्सलः गोष्ठगोपु स्निग्धतमः अगाधः गम्भीरः अन्याविज्ञातमहिमा पथि ज्ञानादिवृद्धैर्वन्द्यमानचरणः स्तूयमानपादन्यासः दिनान्ते सन्ध्यायामासन्नायां कृत्स्नं गोधनं समस्तपशुलक्षणं धनमपोह्य व्यावर्त्य गीतवेणुः गातुमुपक्रान्तवेणुः अनुगैर्वयस्यैः उद्धृता मणिस्पद्धादुद्धृत्येव प्रकाशिता कीर्त्ति र्यस्य स तथा ॥ २२ ॥

वनपरिभ्रमणोत्पन्नं श्रममपोह्य निरस्य स्वदृष्ट्या दृशीनामुत्सवं सुखोत्सवमुद्वहन् खुररजश्छुरितस्रक् गोखुरसमुत्पन्नधूल्या मिश्रिता माला यस्य स तथा देवक्या जठरमेव भूर्व्यक्तिस्थानं यस्य स तथा उडुराजश्चन्द्र इव लुप्तोपमेयं स यद्यदा व्रजमेति तदा एष कृष्णः सुहृदामनिमित्तबन्धूनामाशिषः इष्टफलानि दित्सया दातुमिच्छयैवेति इत्यन्वयः । चन्द्रोऽपि व्रजगवामध्वपशूनां पथिकानां वत्सं वर्षसामर्थ्यात् कामोद्रेकं लाति रातीति वत्सलः "वत्सो नाम कुजे वर्षे इति यादवः गोष्ठाध्वनिवहा व्रजा"

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति च अगस्य उदयपर्वतस्य अधः शृङ्गे वर्तमानः उदयस्याधित्यकाशृङ्गं चन्द्रमार्गादूर्ध्वमिति ज्योतिषिकाः संगिरन्ते वृद्धैः सप्तर्षिभिः पथि व्योममार्गे दिनान्ते रात्रौ कृत्स्नगोधनं समस्तकलासमेधितचन्द्रिकाख्यधनमपोह्य परिपूर्य गीतवेणुः कविभिः वर्णितस्ववंशः अनुगैः अश्विन्यादिनक्षत्रैः उद्धृतकीर्तिः राश्युपरिकृतगणनः रविकिरणसंसर्गसमुत्पन्नश्रमं निर्धूय उत्सवमित्युभयत्र समं जननसमये क्षीराब्धितीरवालुकासु नववीथीषु विक्रमं कुर्वत उच्चैः श्रवसः खुररजश्छुरितस्रक् चन्द्रोऽपि ॥ २३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततश्चोत्कण्ठाभिरट्टालिकादिमारुह्य तदेव दर्शयन्ति । वत्सल इति युग्मेन । देवकीशब्देनात्र श्रीयशोदैव सादरं प्रस्तूयते । व्रजराजत्वात् देव एव देवकः श्रीनन्दः तस्य पत्नी देवकीति । तस्या एव सान्त्वनायां प्रवृत्तेः मातृतया ममत्वात् अभिमतत्वाच्च । मात्रन्तरसूचनेतु प्रत्युत तद्विरोधापत्तेः । सभान्तरवाक्येऽप्यौदासीन्यापत्तेः ॥ २२ ॥ २५ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवंगुणातीते प्रकीर्णतां निरूप्य युगलद्वयेन केवलं भगवत एव चरित्रमाहुः । वत्सल इति । भगवान् यत् गोकुलं गोष्ठे समानयति तत् कृपया अन्यथा एकस्यामपि लीलायां व्यापृता गावो मुच्येरन् तथा गोपिकाः परं कृपयैव भजनानन्दानुभवार्थं तथा करोति अत्र हेतुः यद्गाथ इति । यद्यस्मात् कारणात् अगं पर्वतं धारयतीति यदि भजनानन्दं न दद्यात्तदा गोवर्द्धनोद्धरणं न कुर्यात् एतद्भगवन्माहात्म्यं सर्वजनीनमिति ज्ञापयितुमाहुः । पथि वृद्धैर्वन्द्यमानचरण इति । वृद्धाः सर्वतो निपुणाः वहुभिरेव भगवान् सेव्यो भवति अतः कृत्स्नमेव गोधनमुपोह्य ततः पृथक्कृत्य उप समीपे समाहृत्य वा दिनान्त इति अग्रे वनस्थितेरयुक्तत्वात् लीलान्तरस्य च चिकीर्षितत्वात् गीतवेणुर्जातः श्रमापनोदार्थं व्रजस्थानां ज्ञापनार्थं च अस्य नादस्याग्रे कार्यं वक्तव्यं गोपिका एव कृतार्थाः करोतीति न किन्तु गोपानपीति ज्ञापयितुं तत्कृतस्तोत्रमाहुः । अनुगेडितकीर्त्तिरिति । अनुगैः सेवकैरीडिता कीर्त्तिर्यस्य अनेन रात्रौ तेषामपि गानमुक्तं भवति यथा दिवसे गोपिकानाम् अन्यथा सर्वेषां निरोधो न भवेत् ॥ २२ ॥

एतादृशस्य स्वस्य कार्यं स्वयमेव करोतीत्याहुः । उत्सवमिति । श्रमरुचा व्रजस्यदृशामुत्सवमुन्नयन् आशिषो दित्सया एतीति सम्बन्धः श्रमयुक्ता स्रक् कान्तिः भगवतः श्रमाभावपक्षे प्रदर्शनमात्रपरत्वम् अस्ति श्रम इति सिद्धान्तः "भर्त्ता सन भ्रियमाणो विभर्त्ति एको देवो वहुधा निविष्टः यदाभारं तं द्रयते स भर्तुं निधाय भारं पुनरस्तमेती"ति श्रुतेः सर्वधर्माश्रयत्वाच्च विरुद्धधर्माश्रयत्वादश्रान्तोऽपि ननु केवलमश्रान्त एव श्रमः सुखकारक इत्यपरे तत्संवन्धिनी स्रक् श्रमरुक् सा नायकगता स्त्रीणां न हितकारिणी तथाप्यस्माकं हितकारिण्येव जातेत्याहुः । दृशीनामुत्सवमुन्नयन्निति दृशिर्दर्शनं यदि भगवान् श्रान्तो न भवेत् तदा शीघ्रं गच्छेत् तदा दृशीनां परमानन्दसन्ततिर्न स्यात् ऊर्ध्वं नयन्निति संघाते दृशीनां य आनन्दः स्थितः यावान् तदपेक्षया अधिकं कृतवानित्यर्थः । भगवत्कीर्त्तेः सर्वपुरुषार्थदातृत्वाय प्रकारं वदन् श्रममुपपादयति । खुररजश्छुरितस्रगिति । गोखुररजोभिः छुरिताः व्याप्ताः स्रजो माला यस्य वायुवशादुद्गतो रेणुः न स्थिरो नापि नियतः खुरजातस्तु तथा खुराणामेव गोत्वात् प्रकृतत्वाच्च न गोग्रहणं पशवो वा एकशफमित्यत्र तथा निर्णयात् अनेन धर्मोऽयमिति निरूपितं रजोऽर्थः व्याप्तिः काम इति आगमनस्य तु यत् कार्यं तदाहुः । सुहृदां सर्वेषामेव सम्बन्धिनामाशिषः सर्वा एव देया इति उक्तं गोपिकाद्वारा सर्वेष्वानन्दप्रवेश इति एष इति प्रदर्श्याहुः यतः स्वस्मिन् लीला ज्ञापिता भवति साधारण्येन सर्वेषां तापनाशकत्वाय भगवद्भक्तमसाधारणं धर्ममाहुः । देवकीजठरभूरुडुराज इति । "अदितिर्देवकी अदितिर्द्यौरदितिरन्तरिक्ष" मितिश्रुतेः अदित्यवतारत्वात् द्युरूपा सा तस्यामयद्यं चन्द्रोदयोऽपेक्षित एव सा पुनर्विशेषरूपं गृहीतवतीति चन्द्रोऽपि विशिष्टकार्यं करोति लौकिकस्तापत्रिविधः भगवद्विरहजश्च अयं त्रिविधमपि नाशयतीति पूर्वोक्तमानन्ददातृत्वमुपपादितं देवकीजठरे भवतीति देवकीजठरभूः स एव उडुराजः जायते यथा उदयाद्रौ पतिस्तु नक्षत्राणामेव भवति तथा देवक्यां जातः परं सुखदोऽस्माकमेव अथवा एतास्तु भगवद्विरहेणार्त्ता इति स्वाभिलषितप्रकारेण तदङ्गसङ्गव्यतिरेकेण नैतासामुत्सवो भवतीत्यार्त्ता एव स्थिताः परं दृशीनां दर्शनं मुख्यमिति तेनैवोत्सवोन्नयनमुच्यते तथाचार्त्तानामस्माकं दृशीनामिति समासो ज्ञेयः आर्त्ताशब्दस्य ह्रस्वोऽपि छान्दसः नहि दृशीनामेवार्त्तत्वमत्र विवक्षितं प्रकारान्तरेणापि तत्स्वरूपरसास्वादवत्यः स्वामिन्य इति सर्वेन्द्रियाणामेवार्त्तत्वसम्भवात् तदैव सर्वत्रोत्सवे पुनराशिषो ऽनभीप्सितत्वेनाग्रे तद्दित्सोक्तिरप्यनुपपन्ना स्यात् दृशीनामुत्सवो वहिरेवान्तरुत्सवस्य त्वधिकरणं मनस्तस्यातृप्तत्वान्न स इदानीम्परमग्रे सम्भोगसामयिकदर्शने भविष्यतीति ज्ञापनायोर्ध्वमित्युक्तं यथा गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेता इत्यत्र दर्शनानन्तरमपि दृशांदिदृक्षितत्वमेवमत्रापि ज्ञेयम् अत एव दृशीनामिति सम्बन्धषष्ठ्याप्येतत्सर्वस्य तत्सम्बन्धित्वमेव प्राप्यते तत्रापि भगवत्कर्तृकनयनोक्त्या तासां वहिरुत्सवोऽपि प्रियप्रापित इति तद्दर्शनस्वभावान्न स्वत इति वोध्यते अतएवोत्सवकरणत्वं श्रमरुचोऽपि युज्यते अन्यथा चिरादुत्कण्ठितानामासां प्रियतमागतश्रमं निरीक्षणेनाग्रिमरसप्रतिवन्धशङ्कया नोत्सवः स्यात्प्रत्युत पूर्वोपक्षयाभिकतरः खेद एव स्यात् किञ्च विनास्माभिरन्येन प्रियः श्रमापनोदं न कारयति वयमतः परं करिष्याम इति श्रमरुचस्तथात्वं युक्तमेव श्रमस्य कान्ति निरूपणेनापि स्वमनोरथाप्रतिवन्धकत्वात्तथेति ध्वन्यते श्रमोऽप्यन्यनायिकाविषयकश्चेत्कथं दृशामुत्सव इतिचेत्तथा नेत्याहुः । खुररजश्छुरितस्रगिति । यद्यन्यनायिकाविषयकः स्यात्तदा स्रजि तदङ्गराग एव स्यान्नतु खुररजः रजोऽप्यागमनसामयिकश्चेत्सम्भवेदपि तथापरं चिरकालीनमिति ज्ञापनाय छुरितत्वमुक्तम् अल्पकालेन तथात्वस्यासम्भवात् किञ्च तथा चेत्स्रगपि न स्यात् क्रीडान्तरायत्तत्वात् अतो ज्ञायते सुहृदामस्माकमाशिषो दित्सया एतीति एतीत्यागमनक्रियायां कर्मानुक्त्यापि तथेति ज्ञायते अयम्भावः "कर्तुरभीप्सिततमं कर्म" भवति तेनात्र भगवतः कर्तृत्वात्तदभीप्सिततमत्वमस्माकमेव नान्यस्य अन्यथा व्रजमेतीत्युक्तं भवेत् यद्यपि सर्वेषामेव निरोधदित्सयार्पितो भगवन

**मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।**
**बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इति व्रजस्याप्यभीप्सिततत्वं तथाप्यभीप्सितततमत्वलक्षणोऽतिशयोऽस्माखेवेति तथोक्तं तन्निदर्शनमेवाहुः । एष इति । अन्यथा कथमात्मानं प्रदर्शयेत् दक्षिणनायकत्वेनान्तर्भावयेपम्याभावायाहुः । देवकीजठरभूरिति । सर्वथा निर्दुष्टा हि देवकी तदुदरे प्रकटस्तथेत्यर्थः । तादृशस्य भवतीषु को विशेष इत्यत आहुः । उडुराज इति । यथा चन्द्रः सर्वेषां तापहारको दूरादेव परम्पतित्वेनातिनिकटे नक्षत्राणामेव तथायमपि सर्वेषां तथा दूरादेव परम्पतित्वेनास्माकमेव तथेति भूयान्विशेषः सम्पद्यते स यथा नक्षत्रमण्डले तिष्ठंस्तैरेव राजमानः सर्वतापनिवर्त्तकस्तथायमप्यस्मन्मण्डले तिष्ठन्नस्माभिरेव राजमानस्तथेत्युडुराजपदेन चोच्यते इदं सर्वं कार्यं वेणुनादसाध्यमिति प्रकरणाद्वातत्वाज्ज्ञेयम् ॥ २३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु तर्हि कौतुकलोलुपो मत्पुत्रो विलम्बमानः सन्ध्यासमाप्तावपि नैष्यति ततश्चाहं मरिष्याम्येवेति तत्र तदीयशीघ्रागमने हेतुमुपन्यस्य तामाश्वासयन्त्य आहुर्वत्सल इति । व्रजगवां व्रजे निबद्धानां वृषाणां वत्सलस्तेषां स्वविरहदुःखमनुस्मृत्य गन्धर्वादीनप्यवमत्य शीघ्रमायास्यत्येवेत्यर्थः । ह्जभाव आर्षः । नच गोचारकस्य तस्य गवां दर्शनस्पर्शनगात्रकण्डूयनघासप्रदानादिकौतुकात् स्वतोऽति निकृष्टगायक गन्धर्वादिगानकौतुकं चित्ताकर्षकं वाच्यमित्याहुः । यद्यस्मादगधः येषां गवां रक्षणार्थम् अगं गोवर्द्धनमपि धृतवान् अतस्तेषु महान् स्वाभाविक एव स्नेहः गन्धर्वादिषु तु गुणोपाधिकोऽपि प्रीतिलेशो न तस्यास्तीति भावः । ननु यद्येवमभविष्यत्तदा एतावत् क्षणपर्यन्तं गृहमागमिष्यदेवेति तत्र विलम्बे पुनरपि हेतुमुपन्यस्यन्ति वृद्धैर्ब्रह्मरुद्रादिभिः पथि पथि वन्द्यमानौ चरणौ यस्य सः । वेणुगानाकृष्टैः स्वस्वभवनादागत्य निकटनभसि स्थितैः सर्वमेव दिनं कृष्णं दृष्ट्वा लब्धानन्दैः सम्प्रति गोष्ठागमनसमये स्वस्वभवनगमनोन्मुखैर्नभसो भुवमवतीर्य ब्रह्मरुद्रेन्द्रादिभिः प्रत्येकमेव त्वत्पुत्रस्यानुग्रहमर्थयितुं चरणौ वन्द्येते तेनात्र किं कर्त्तव्यमिति तेषामनुरोध एव विलम्बाधिक्ये हेतुरिति ध्वनिः त्वत्पुत्रस्य चरणौ ब्रह्मादयोऽपि वन्दन्ते इति स्वभाग्यं किं न पश्यसि किमिति खिद्यसीत्यनुध्वनिः । तर्हि भो व्रजबालिकाः ! शीघ्रमट्टालिकामारुह्य पश्यत कियद्दूरे वत्स आयातीति तया साश्रुगद्गदमुक्ताः सर्वोर्द्ध्ववलभीं शीघ्रमारुह्योचैराहुः । कृत्स्नेति । एष कृष्णः सुहृदां स्वबन्धूनामाशिषो मनोरथस्य दित्सया एतीत्यन्वयः । उपोह्य एकीकृत्य गीतयुक्तो वेणुर्यस्य सः श्रमेण या रुक् शोभा तयापि दर्शानां लोकनेत्राणामुत्सवमानन्दमुन्नयन् उच्चैः प्रापयन् खुररजश्छुरिता व्याप्ता स्रक् यस्येति । स्वसङ्गिनीः सखीः प्रत्यपाङ्गभङ्ग्या श्रीयशोदायलक्षितम् किमप्युक्तम् अत्र व्रज एव खुररजोनिर्देशादन्यत्र रजो नास्तीति लभ्यते । तच्च सखिभिर्मुहुर्निर्जोत्तरीयेण रजसोऽपसारितत्वात् स्रजि तु रजस्तस्य प्रविश्य स्थितत्वात् अपसारणयत्ने दलभङ्गः स्यात् मणिनापीयं माला यत्र दूरीक्रियते दासधृतवस्त्रसम्पुटस्था नवीनापि अन्या यन्न परिधीयते तस्मादियं माला यया प्रियया स्वहस्तेन संग्रथ्य सखीद्वारा दत्ता ता प्रियामेव स्वकण्ठधृतामेनां दर्शयितुं कृष्णस्य यत्न इति देवकी श्रीयशोदा तस्या जठरमेव क्षीरसमुद्रस्तस्मिन् भवतीति सः । द्वे नाम्नी नन्दभार्य्याया यशोदा देवकीति चेति गणोद्देशदीपिकाधृतादिपुराणवाक्यात् । उडुराजश्चन्द्रः ॥ २२ ॥ २३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिनान्ते आयान्तमवधार्य्य प्रमुदिताः परस्परभूचुः । वत्सल इति । अगधः अगमचलं गोवर्द्धनं धरतीति स तथा उपलक्षणमेतदन्येषां रक्षणोपायानाम् पथि मार्गे वृद्धैः ज्ञानेन वयसाच सर्वेभ्यः श्रेष्ठैः ब्रह्मादिभिर्वन्द्यमानौ चरणौ यस्य सः दिनान्ते सायङ्काले कृत्स्नं सकलं गोधनमुपोह्यैकीकृत्य गीतियुक्तो वेणुर्यस्य अनुगैरनुयायिभिर्गीता कीर्तिर्यस्य सः श्रमरुचा श्रमयुक्तया कान्त्या दृशीनां नेत्राणाम् उत्सवं हर्षमुन्नयन्नुच्चैः प्रापयन् खुररजोभिश्छुरिता व्याप्ताः स्रजो यस्य सः सुहृदामस्मदादीनाम् आशिषः कामस्य दित्सया दातुमिच्छया देवकीजठरभूः देवकीगर्भरत्नाकरोद्भूतः स एष उडुराजः श्रीकृष्णापरनामा चन्द्रः एत्यायाति ॥ २२ ॥ २३ ॥

---

### भाषा टीका ।

व्रज मण्डल तथा गउ इनके ऊपर कृपा करने वाले गोवर्धन को उठाने वाले कृष्णचन्द्र जब संध्याकाल में सब गउन को इकट्ठी करके लाते हैं तब रस्ता में ब्रह्मादिक उनके चरणों की वन्दना करते हैं आप वंशी बजाते हैं अनुचर गोप लोग उनकी कीर्ति को गाते हैं उस समय यह देवकी के चन्द्रमा गो रज से भरी हुई माला को धारण किये परिश्रम से सहित कांती से भी अपने प्रेमी जनों को आनन्द देने की इच्छा से व्रज को चले आते हैं ॥ २२ ॥ २३ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतिसम्भ्रमेण काश्चित्समीपमायान्तं कथयन्ति । ईषन्मदेन विघूर्णिते विहलिते लोचने यस्य सः बदरपाण्डुवदनः ईषत्पक्वबदरवत्पाण्डुरं वदनं यस्य सः अत्र हेतुः कनककुण्डलयोर्लक्ष्म्या कान्त्या मृदू कोमलौ गण्डौ यस्मिंस्तद्वदनं मण्डयन्निति कोमलगण्डस्थलं वा शोभयन्निति ॥ २४ ॥

यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

यदुपतिरिति। देवकीजठरभूरिति च प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज इत्यादिगर्गवाक्यप्रसिद्ध्योक्तं यद्वा सख उदेयिवान् सात्वतां कुल इतिवज्ज्ञात्वा काश्चिद्वदन्तीति गजेन्द्रगतिश्चन्द्र इव प्रसन्नवक्त्रो व्रजगवामस्माकमनन्तं दिनतापं च शमयन्नुपयाति एष समीपमायातीति ॥ २५ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ईषदित्यस्य विशुद्धसत्त्वमयत्वेन विघूर्णितेत्यनेन सम्बन्धः मदो हर्षकृतश्चित्तविकारः सच स्वभावत एव विशेषतश्च नवयौवनात् ततोऽपि विशेषतः प्रेयसीजनदर्शनाद्विज्ञेयः एवं बहुष्वपि व्यक्त्येषु तत्सभायां तत्तदुपलब्धिस्तु स्वस्ववासनानुसारेणैवेति न रससाङ्कर्यदोषः तेन मदेन मनाक्विविधतयाघूर्णिते लोचने यस्येति श्रीनेत्रयोर्विलासविशेष उक्तः व्रजप्रवेशसमयेऽभिगच्छतां स्वस्य सुहृदां तेभ्यो मानं प्रणामालिङ्गनसस्मितसम्भाषणप्रणयावलोकनर्मावलोककृपावलोकादिलक्षणं यथोचितं ददातीति तथा सः वनमालीति पूर्वोक्तकुन्ददामानुसारेण कुन्दैरेवापादलम्बिकात्वेन रचितया मालया युक्त इति ज्ञेयम्। मृद्विति कैशोरस्वभावेन सुकोमलकान्तित्वात् मण्डयन्निति स्वभावत एव कुण्डलयोर्गण्डाभ्यां संयोगात्विशेषतश्च गजेन्द्रगत्या मन्दमन्दचलनेन मुहुरुपसर्पणापसर्पणाभ्यां शोभाविशेषात् यदुपतिरिति। पूर्वदर्शितस्कान्दोक्तानुसारात् यादवेष्वपि सर्वेषु भवन्तो मम वल्लभा इति यदुपुराद्व्रजमागतस्य श्रीरामस्य गोपान् प्रतिहरिवंशप्रसिद्धवचनं निर्द्धारणसप्तमी निर्देशाच्च यदूनां गोपानां पतिरिति। सर्वस्यापि गोकुलस्य परमाश्रयत्वेन परमप्रेमास्पदत्वं दर्शितं मुदितवक्त्र इति उपयातीति च दुरन्तमपरिच्छिन्नमपि तदनिष्टाशङ्काहेतुकं तद्विच्छेदहेतुकं च व्रजगवां तापं विमोचयन् तत एव परममानन्दं च ददातीति ज्ञेयम् अन्यत्तैः तत्र व्रजगवामस्माकमिति व्रजस्यास्मद्विशिष्टस्य तज्जनस्य गवां च शकटादीनां व्रजस्थानामित्यस्मत्संवलितत्वादस्माकमेवेत्यर्थः। यद्वा व्रजस्य गवां नेत्राणां "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्र घृणिभूजले लक्ष्यदृष्ट्यां स्त्रियां पुंसि गौ"रिति नानार्थवर्गात् बदरवत्पाण्डुवदन इति निजभावानुसारेण तस्यापि स्वविरहदुःखनिश्चयात्तथा दृष्टेः भावान्तरव्यञ्जनेतु श्रमवैवर्ण्यव्यञ्जनात् यामिनीपतिश्चन्द्रो यथा दिनान्ते उदेति तथेति युग्मकानि पूर्णानि ॥ २४-२५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

काश्चिदतिसम्भ्रमेण समीपमायान्तं बलरामं कथयन्ति। मदविघूर्णितलोचन इति। ईषन्मदेन वारुणीमदेन विघूर्णिते लोचने यस्य सः स्वसुहृदां मानदः ईषत्पक्वबदरवत्पाण्डुवदनं यस्य सः अत्र हेतुः कनककुण्डलयोर्लक्ष्म्या मृदू गण्डौ यस्मिंस्तद्वदनं मण्डयन् कोमलं गण्डस्थलं मण्डयन्निति वा द्विरदराजस्यैरावतस्येव विहारो यस्य सः बलभद्रस्य श्वेतवर्णत्वाद्दिनान्ते चन्द्र इव मुदितं प्रसन्नं वक्त्रं यस्य सः व्रजभुवामस्मदादीनां दुरन्तमपारं दिने स्वविश्लेषजं तापं मोचयन्नुपयाति एष समीपमायाति यद्वा इदं श्लोकद्वयं कृष्णपरमेव योज्यं तदा मदेन मन्मथेन विघूर्णिते लोचने यस्य सः द्विरदराजविहारो गजेन्द्रगतिः ॥ २४ ॥ २५ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रीकृष्णं प्रशस्य बलभद्रप्रशंसयोपसंहरति। मदविघूर्णितेति। वारुणीपानोत्पन्नमदेन ईषद्विघूर्णितलोचनः विभ्रान्तनेत्रः अन्यत्र घूर्णप्रकाशः लुप्तप्रकाशइतिधातुः चन्द्रः कीदृशः स्त्रीणां मानदः अभिमानखण्डनः दो अवखण्डन इति धातुः वनानां भासां कान्तीनां मालास्यास्तीति वनमाली बदरश्चन्द्रः तद्वत्पाण्डुसुन्दरं वदनं यस्य स तथा "मानवो बदरः सिन्धुः शशिनस्तु त्रिनामक"मितिवचनात् बदरफलवद्रागोपेतं वदनमित्यर्थो न शोभते पाण्डुशब्दो व्यर्थः स्यात् बदरो बृहस्पतिः पाण्डुः शुक्रस्तयोर्वदनमिव वदनं यस्य स तथा चन्द्रः कनककुण्डललक्ष्म्या मृदुगण्डं मण्डयन् अलंकुर्वन्नित्युभयत्र समम् ॥ २४ ॥

दुरन्तं व्रजगवां दिनतापं मोचयन्नित्यपि समं द्विरदराजवीहारो गमनक्रीडा यस्य स तथा इदमपि पुरुषलक्षणं सममेवं विध एष यदुपतिः बलभद्रः यामिनीपतिश्चन्द्र इव दिनान्ते सायन्तनसमये उदयपर्वतशिखरं व्रजमुपयातीत्यन्वयः उपयातीति लटा गोपस्त्रीणामेवं नित्यमनुस्मरणं न कादाचित्कमिति सूचयति ॥ २५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

साधारणीं लीलामुक्त्वा गोपिकास्त्वेव वेणुकृतां भगवतैव जनितां लीलामाहु। मंदेति। यदुपतिः मुदितवक्त्र उपयातीति पूर्वोक्ता एव वेणुनादा अत्र ग्राह्याः दशलीलाः पूर्वं निरूपिताः ताः सर्वाः अस्मदर्थमेवेति दशधा भगवन्तं विशेषयन्ति एक एव भगवानुभयत्रेतियुगलत्वेऽपि नात्यन्तविभागः सर्वत्रैव वेणुनादे रजो गुणः मुख्य इति सोऽस्मदर्थं फलित इत्याहुः। मदेन विघूर्णिते लोचने यस्येति मदोऽत्र स्वानन्दास्थित्या पूर्णावबोधः स ज्ञानमार्गं एवेति प्रकटयितुं सर्वविषयान् व्यावर्त्तयितुं विघूर्णितलोचनत्वमुक्तम् अयं धर्मो भगवन्निष्ठो निरूपितः स्वरूपमित्यर्थं तादृशोऽपीषन्मानदः मानं प्रयच्छति सन्माननां करोति तेनास्माकं गम्यो भवतीति ज्ञायते मानमभिमानं रजोगुणप्राकट्यात् प्रयच्छति खण्डयतीति वा ज्ञानप्राकट्यात प्रयच्छति मानं द्यति खण्डयति त्रिष्वपीषदेव तत्तत्कार्यं ननु पूर्णस्य भवतीष्येवं करणे को हेतुस्तत्राहुः। स्वसुहृदामिति। स्वपदादसाधारण्यं तेन स्वस्यैव सुहृदस्ताः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

महतोऽपि सुहृत्कार्यं कर्तव्यमिति साधारणं कार्यमाह । वनमालीति । कीर्तिमर्थी वनमालां प्रकटयतीति वदरवत्पाण्डुवदन इति । बदरोऽत्र फलवाचकः सद्धिधर्मेण प्रतिक्षणं विसदृशीं कान्ति करोति तत्राप्यर्द्धपक्वः पाण्डुवर्णो भवति अग्रे त्वारक्तः तथेदानीमर्द्धरक्तः अग्रेत्वत्यन्तं रक्तो भविष्यतीति ईषन्मानदत्वाद्विशेषः साधनं कीर्तिरिति मध्ये विशेषणान्तरम् अथवात्र पाण्डु शब्देन आरक्त एव गुण उच्यते तदा वदनं वक्त्रम् अधरामृतपानं लक्षितं भवति वनवासिनां वा एतदुपभोग्यमिति वने गत्वा एतदुपभोग्यमिति सर्वाः ज्ञापयन्ति ततोऽपि विशेषमाहुः कनककुण्डललक्ष्म्या मृदुगण्डं मण्डयन्निति श्मश्रूद्गमाभावात् आनन्द निधानत्वाच्च मृदुत्वं भोगार्थमुपपाद्येन गण्ड एव रससमाप्तिरिति कनकपदं वर्णान्तरज्ञापनार्थम् उत्कृष्टेनापि परमानन्देनापि अस्मदर्थं कामरस एवोद्बोध्यत इति सर्वथास्मदर्थमेव भगवदागमनमिति निर्श्चायते अन्यथा शिरोभेदान् अस्मत्समक्षं न कुर्यादिति ॥ २४ ॥

ननु यद्यपि महान् तथापि बाल इति नन्दसूनुरिति कथमसाधारिणीं लीलां करिष्यतीत्याशङ्कां वारयन्ति । यदुपतिरिति । अयं यादवानां पतिः ते हि बहुस्त्रीका भवन्ति अमर्यादार्थं विशेषणान्तरमाहुः । द्विरदराजविहार इति । महासुरते गजेन्द्र इव महान् तेन विना न पूर्तिरिति तदपेक्षयाप्यादौ पूर्वतापं दूरीकरिष्यतीत्याहुः । यामिनीपतिरिवेति । सम्पूर्णाया यामिन्या अयं पतिः अतस्तद्गतानां विशेषेण सुखदः नन्वहर्पतिरपि कथमुच्यते यामिनीपतिरिवेति तत्राहुः । एष इति । सर्वालंकारभूतस्तत्र अधुनातु श्रान्तं तिष्ठति इव दिनान्ते एष यामिनीपतिरिव चन्द्र इव दूरादेव तापनाशकः साम्प्रतम् अग्रेतु यामिनीपतिरिव इममर्थं ज्ञापयातीति लक्ष्यते यतो मुदितवक्त्रः प्रसन्नवदनो भूत्वा उपयाति समीपमागच्छति अयं भावस्तासामेव हितकारीति पूर्वं साधारण्यमुक्तमुपसंहारे पुनराहुः । मोचयन् व्रजगवामिति । व्रजस्य गवां च सम्पूर्णं दिवसे यावांस्तापः तं सर्वमेव मोचयतीति ॥ २५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इदानीं तु नगरप्रान्तपर्य्यन्तमागतस्तत्रापि किञ्चिद्विलम्बस्य कारणं शृण्वत्याहुः । मदेन पित्रादिदर्शनोत्थानन्देन प्रेयसीजनदर्शनोत्थाकाममत्ततया च विघूर्णिते विहले लोचने यस्य सः । प्रथमोऽर्थो वात्सल्यरसपरिकरैर्द्वितीयोऽर्थो मधुररसपरिकरैस्तत्रस्थैर्बुध्यते इत्येवमग्रेऽपि ज्ञेयम् । स्वसुहृदां पुरोहितादि-मातुलादि-भ्रात्रादि दासादि-ताम्बूलिकादीनां यथोचितमाशीर्वादादिकृतामीषन्मानदः राजपुत्रत्वादल्पवयस्त्वेनानाधिगत नीतिशास्त्रत्वाच्च ईषन्मात्रं यथोचितं शिरो नमनादिकं मानं ददातीति सः । इत्ययम्पि विलम्ब हेतुरिति भावः । पक्षे स्वसुहृदां प्रेयसीनां चन्द्रशालिकारूढा हसितापाङ्गनीलोत्पलैः पूजयन्तीनाम् ईषद्व्यजनालक्षितं मानमभीष्टदानव्यञ्जकैः कटाक्षैर्ददातीति सः । वनपथपर्यटनभ्रमणेन क्षुत्पिपासाभ्याञ्च ईषत्पक्वबदरवत्, पाण्डुवदनं यस्य सः । पक्षे स्वाभीष्टप्रेयसीविरहानुभावोऽयम । वदने पाण्डिमा मृदुगण्डं मृदुगण्डो कनककुण्डलयोश्चञ्चळयोः कान्त्या मण्डयन् । यदुपतिरिति गोपानां यादवत्वस्य प्रतिपादितपूर्वत्वात् द्विरदराजविहारो गजेन्द्रतुल्यमन्दगमनः मुदितवक्त्रः प्रफुल्लितमुखः । उपयाति निकटमायाति व्रजगवां व्रजस्थजननेत्राणाम् ॥ २४ ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काश्चित्समीपमायान्तमालोक्याति औत्सुक्यादूचुः । मद इति ईषन्मदेन नैसर्गिकेणैव दृष्टीनां वैवश्यापादकेन गुणविशेषेण घूर्णिते विह्वलिते लोचने यस्य सः बदरवत् ईषत्पाण्डुरनीलवर्णातिसुन्दरबदरवत्पाण्डुरं वदनं यस्य सः अत्र हेतुः कनककुण्डलयोर्लक्ष्म्या कान्त्या मृदुगण्डौ यस्मिन् तद्वदनं मण्डयन् द्विरदराजवत् गजराजवत् विहारो यस्य सः यामिनीपतिः कलानिधिः तद्वन्मुदितं वक्त्रं यस्य व्रजगवां व्रजे निवद्धानां गवामनुकम्प्यानामस्माकं दुरन्तमनन्तमन्येनानिवार्यं वा तापं मोचयन् शमयन् उपयाति समीपमागच्छति ॥ २४ ॥ २५ ॥

---

### भाषा टीका ।

आनंद के मद से नेत्र जिनके कुछ घूमते से होरहे हैं ऐसे होकर अपने प्रियजनों को मान देने वाले वनमाला धारण किये हुये गोरज से पकेबेर सरी के कोमल गण्डस्थल को सुवर्ण के कुंडल की शोभा से भूषित करतेहुये यदुपति सायंकाल में गज कीसी चाल से चलते हुये चन्द्रमा सरी के आते समय में आनंदित मुखारविन्द से व्रजवासी मनुष्यों के तथा गउओं के दिन के वियोग के कठिन ताप को दूर करतेहुये चले आते हैं ॥ २४ ॥ २५

---

॥ श्रीशुक उवाच ॥

एवं व्रजस्त्रियो राजन् ! कृष्णलीलानुगायतीः ।
रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे युगलगीतवर्णनं नाम
पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं विरहदुःखेनापि तु अहो कृष्णलीला एव गायन्त्यस्तस्मिंश्चित्तं चेतना जीवितं यासां तास्तस्मिन्नेव मनः सङ्कल्परूपं यासां ता अंतो महानुदय उत्सवो यासां ता अहःस्वपि रेमिरे ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
टीकायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपसंहरति । एवमिति । व्रजस्थिता अपि स्त्रियः हे राजन्निति तासां विरहगीते प्रेम्णा मुह्यन्तं राजानं सुखयति अहःसु तद्विरहमयेष्वपि रेमिरे जातनिर्वृतिप्राया बभूवुः तत्र हेतवः तच्चित्ता इत्याद्याः तस्य परमानन्दघनस्वभावत्वादिति भावः । अन्यत्तैः यद्वा एवमुक्तप्रकारेणेति तत्तद्दशलीलान्तरगानमपि बोध्यते तच्चित्तत्वतन्मनस्कत्वतद्वानैस्तदेकगतज्ञानेच्छाप्रयत्नत्वमुक्तं महान् तदाविर्भावरूपत्वात्सर्वतोऽप्युत्कृष्ट उदयः सत्कर्मसिद्धिर्यासां ताः तदेवमुत्तरोत्तरमाविर्भाववैशिष्ट्येन रमणस्यापि वैशिष्ट्यं ज्ञेयं तत्र वत्सल इत्यादिषु साक्षादाविर्भावात्साक्षादेव रमणं तत्राप्युत्तरोत्तरतारतम्यमिति पूर्वत्र तु विरहेऽपि रमणं निजालम्बनस्य मनः स्फुरितत्वादंशेन भवत्येवेति सर्वत्र रेमिर इति श्लिष्टमेव ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
पञ्चत्रिंशोऽध्याय ॥३५॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपसंहरति शुकः । एवमिति । हे राजन्नित्थं कृष्णस्य लीला अनुगायन्त्यो गोप्यः अहःस्वपि तस्मिंश्चित्तं चेतना जीवितं यासां तस्मिन्नेव मनः सङ्कल्पविकल्परूपं यासां ता अत एव महानुदय उत्सवो यासां तास्तथाभूता रेमिरे ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चत्रिंशोऽध्यायः ॥३५॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवं विधाः कृष्णलीला अनुगायतीः अनुगायन्त्यः अलोपश्छान्दसो वृत्तभङ्गभयाद्वा कृतः यद्वा एवं वेणुं विकल्प्य "नुविकल्पो नुपृच्छायाः"मित्यमरः महानुदयः सम्पद्यासां ताः महोदयाः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ३५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

रेमिरे जातनिर्वृतिप्राया बभूवुः । अत्र हेतवः तच्चित्ता इत्याद्यास्तस्य परमानन्दघनस्वभावत्वात् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं निरोधं निरूप्य स्त्रीणामुपसंहरन् प्रकरणस्थानामेव तद्वाक्यमुपसंहरति । एवमिति । राजन्निति संबोधनं विश्वासार्थं व्रजगता अपि स्त्रियः एवम्प्रकारेण अहस्सु भगवत्सम्बन्धरहित-

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

दशायामपि कृष्णलीला एव आनुपूर्व्येण बहुकालानुवृत्त्यर्थमनुगा-यतीः अनुक्रमेण गायन्त्यः रेमिरे स्वत आनन्दरूपा कीर्तिस्ताः प्रति जातेति तासां क्रिया शक्तिर्ज्ञानशक्तिश्च भगवन्निष्ठैव जाते-त्याह । तन्मनस्काः तद्वित्ता इति । चित्तं ज्ञानप्रधानं मनः कर्मप्रधानमिति एवं सर्वप्रकारेण प्रपञ्चविस्मृतिर्भगवदासक्तिश्च निरूपिता नन्वेवङ्कथं तासां निरोधः फलित इति तत्रोप-पत्तिमाह । महोदया इति । महानेवाभ्युदयो भाग्यराशिर्यासामिति सर्वं सुस्थम् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज-

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

द्वात्रिंशाध्यायविवरणम् ॥ ३२॥३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नु भो राजन् ! गायतीः गायन्त्यः । तस्मिन् श्रीकृष्ण एव चित्तं चेतो यासां ताः । तस्य श्रीकृष्णस्यापि मनो यासु ता इत्यतः कृष्णतत्प्रियाणां परस्परविषयाश्रयत्वात् परस्पर-मनोग्रहणमतः प्रतिक्षणमनिशरमणात् रेमिरे इति विप्रलम्भप्रेम्णो दुःखमयत्वेन तदाविष्टजनप्रतीतत्वेऽपि परमसुखमयत्वं प्रेक्षावत्-प्रतीतमस्त्यतः प्रेम्णः पुरुषार्थचूडामणित्वं व्यञ्जितम् ॥ २६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
पञ्चत्रिंशोऽपि दशमे सङ्गतः सङ्गतः सताम् ॥ ३५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तार्थमुपसंहरति । एवमिति । हेराजन् ! एवं कृष्णस्य लीलां जात्याभिप्रायमेकवचनम् अनुगायन्त्यः तस्मिन् चित्तं चेतना जीवितं यासां ताः तस्मिन् मनो यासां ताः अतो महानुदय उत्सवो यासां ताः अहस्स्वपि रेमिरे धन्यास्ता इति भावः ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

पञ्चत्रिंशाध्यायार्थप्रकाशः ॥ ३५ ॥

---

भाषा टीका ।

श्रीशुकदेव जी बोले हे राजन् ! इस प्रकार से सब व्रजवासिनी गोपी श्रीकृष्णचन्द्र की लीलाओं को गाती हुई दिनों में भग-वान् में जीवन लगाकर तिन में मन युक्त करके अत्यंत सुकृती होकर दिनो में भी चित्त को रमाती हुई ॥ २६ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे पैतीस में अध्याय

की भाषाटीका समाप्त ॥ ३५ ॥

---

इतिश्रीमद्भागवते दशमस्कन्ध पूर्वार्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## ॥ षट्त्रिंशोऽध्यायः ॥

### ॥ श्रीशुक उवाच ॥

अथ तर्ह्यागतो गोष्ठमरिष्टो वृषभासुरः ॥
मह्रीं महाककुत्कायः कम्पयन् खुरविक्षताम् ॥ १ ॥
रम्भमाणः खरतरं पदा च विलिखन् महीम् ॥
उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥ २ ॥
किंचित्किंचिच्छकृन्मुञ्चन्मूत्रयन् स्तब्धलोचनः ॥
यस्य निर्ह्रादितेनाङ्ग ! निष्ठुरेण गवां नृणाम् ॥ ३ ॥
पतन्त्यकालतो गर्भाः स्रवन्ति स्म भयेन वै ।
निर्विशन्ति घना यस्य ककुद्यचलशङ्कया ॥ ४ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

पट्त्रिंशे तु हते ऽरिष्टे नारदोक्त्या बलाच्युतौ ।
वसुदेवसुतौ ज्ञात्वा कंसो ऽक्रूरं समादिशत् ॥
गोपीरासान्तरायान्तं शङ्खचूडं निहत्य सः ।
अहन् गोपीमहानन्दासहं दुष्टमरिष्टकम् ॥

एवं देवगन्धर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्त्तमाने तद्विरुद्धार्थान्तराधिकारार्थमथशब्दः तर्हि तदा वृषभाकृतिरसुरः तं वर्णयति सार्धत्रयेण । महान्तौ ककुत्कायौ यस्य खुरैर्विदारितां मह्रीं कम्पयन् ॥ १ ॥

रम्भमाणो वृषभजातिशब्दं कुर्वन् विलिखन् विदारयन् उद्यम्योर्ध्वं कृत्वा वप्राणि तटान्युत्क्षिपन् ॥ २ ॥

किञ्चित्किञ्चिच्छकृन्मध्ये मध्ये ईपदीपत्पुरीषं मुञ्चन् तथा मूत्रयन् मूत्रमुत्सृजन् स्तब्धलोचनो ऽनिमिषलोचनः यस्य ध्वनिना गवां नारीणाञ्च ॥ ३ ॥

तत्र—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्यादिति विभागः ॥

ककुदि गलपृष्ठशृङ्गे ॥ ४ ॥ ५ ॥

---

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।**

अथेति सार्द्धद्वयकं तर्हीति पूर्वोक्तप्रकारेण यदा श्रीकृष्णो गोष्ठमागतस्तदानीं प्रदोष इत्यर्थः । तथा च श्रीविष्णुपुराणे । प्रदोषार्द्धे कदाचित्तु रासासक्ते जनार्दने । त्रासयन् समदो गोष्ठमरिष्टः समुपागत इति । एवं प्रायः श्रीहरिवंशेऽपि इति नित्यमेव ताभिर्लीलागानलब्धपराणामन्हां कस्यचिदन्त्यस्य प्रदोषे तत्पूर्वत एव भोजनादिकं विधाय रासार्थं शय्यागृहान्निर्गत्य गोष्ठाद्बहिर्निर्गते श्रीभगवतीति ज्ञेयम् । अतो व्रजस्य परमोत्सव इति सामान्यत एव तैर्व्याख्यातं गोष्ठमिति गोष्ठनिकटमित्यर्थः। खुरविक्षतामित्यादिकं युद्धोद्यतमहामत्त वृषभस्य स्वाभाविकमेव तत्र खुरविक्षतामिति स्थौल्यादि स्वभावेन खुरपातैरेव ॥१॥

विदारणात् मह्रीं पदा विलिखन्निति च मत्ततया युद्धोद्यमेन । अन्यत्तैः ॥ २ ॥

तत्र मूत्रमुत्सृजन्निति मूत्रयन्नित्यस्य टीका ॥ ३ ॥

भयानकत्वमेवाह । यस्येति सार्द्धद्वयकेन निर्ह्रादितेन वज्रनिस्पेषवद्ध्वनिना । अङ्गेति सभयमिव सम्बोधनं स्म प्रसिद्धौ वै निश्चये महेति सूचितं स्थौल्यं दर्शयति । निर्विशन्तीति अचले ककुदि च प्रवेशो बुद्धिपूर्वकत्वमुत्प्रेक्षत एव अचेतनत्वात् । उभयत्र घनपथपर्यन्तोच्छ्रायस्तु विवक्षित इति विशेषदवाग्यः श्रीपराशरेणोक्तः । सतोय-तोयदच्छायस्तीक्ष्णशृङ्गोऽर्कलोचनः । लेलिहानः सनिष्पेषं जिह्वयौष्ठौ पुनः पुनः । संरम्भाविद्धलांगूलः कठिनस्कन्धबन्धनः । उदग्रककुदाभोगः प्रमाणाद्दुरतिक्रमः । विण्मूत्रलिप्त सर्वाङ्गो गवामुद्वेगकारकः । प्रलम्बकण्ठोऽतिमुखस्तरुघाताङ्कितोननः । मूदयंस्तापसानुग्रो वनान्यटति यः सदेति । उत् उच्चैर्वीक्ष्यात्युच्चतर महाकायत्वात् । अप्यर्थे चकारः किं वक्तव्यं स्त्रीस्वभावाद्बीप्य इति गोपा अपि तत्रसुः पश्यो

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भीताः तस्य सुदुष्टत्वात् । तथोक्तं श्रीवैशम्पायनेन । "युद्धसज्जविषाणाग्रो द्विपदृषभसूदनः । अरिष्टो नाम हि गवामरिष्टो दारुणाकृतिः । दैत्यो वृषभरूपेण गोकुलं परिधावति । पातयानो गवां गर्भान् धृष्टो गच्छत्यनार्त्तवम् । भजमानश्च चपलो गोष्ठं सम्प्रचचार ह । शृङ्गप्रहरणो रौद्रः प्रहरन् गोषु दुर्मदः । गोष्ठेतु न रतिं लेभे विना युद्धेन गोवृष" इत्यादि । एतावन्तं कालमत्रानागमनं तु कंसाननुमत्यैव इति लक्ष्यते । गोकुलं व्रजं सन्त्यज्येति प्रदोषे बाढमत्याज्यस्यापि व्रजस्य त्यागेन महाभीतत्वं तेन दूरे द्रवणं च सूचितम् अतएव हे राजन्निति विस्मयेन तादृशभावोदयाद्धर्षेणैव वा ॥४॥५॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ वृषभासुरवधात्मकं भगवतः कर्मानुवर्णयन्नारदस्य मुखात्तदा श्रुतवतः कंसस्य भगवद्धननोद्योगमनुवर्णयति षट्त्रिंशेन अथेत्यादिना । इत्थं श्रीकृष्णेन व्रजे हर्ष्यमाणे सति तर्ह्यथारिष्टाख्यो वृषभासुरो गोष्ठं प्रत्यागतः तं वर्णयति सार्द्धत्रयेण । महीमित्यादिना । महान्तौ ककुत्कायौ यस्य सः खुरैर्नितरां क्षतां विदारितां महीं कम्पयन् ॥ १ ॥

खरतरं यथा तथा रम्भमाणः वृषभजातिशब्दं कुर्वाणः पदा महीं विलिखंश्च पुच्छमुद्यम्य उन्नमय्य शृङ्गाग्रेण वप्राण्युन्नतस्थालानि उद्धरन्नुत्क्षिपन्मध्ये मध्ये किंचित् किञ्चिच्छकृत्पुरीषं मुञ्चन्मूत्रयंश्च स्तब्धेऽनिमिषे लोचने यस्य सः अङ्ग हे राजन् ! यस्यारिष्टस्य निष्ठुरेण कठिनेन निर्ह्रादेन गवां नारीणाञ्च गर्भा अकालिका अप्राप्तप्रसवकाला अपि भयेन पतन्ति स्रवन्ति च—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वन्तु नारीणां प्रसवः परिकीर्त्तित इति ॥

यस्यारिष्टस्य ककुदि गलपृष्ठेऽचलशङ्कया पर्वतशृङ्गभ्रान्त्या मेघा निर्विशन्ति विपुलककुद्मानित्यर्थः । तीक्ष्णशृङ्गं तमरिष्टमवलोक्य गोप्यो गोपाश्च तत्रसुः त्रासं प्रापुः ॥ २ ॥ ३ ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अरिष्टनामासुरहननलक्षणं विक्रमं देवकार्यसिद्धिकामुकेन नारदेनाभिहितस्यासुरजातेः कंसस्य सज्जनोपद्रवोद्योगश्च कथयत्यस्मिन्नध्याये अथ शङ्खचूडवधानन्तरं दैत्यान्तरनिग्रहलक्षणकथा आरभ्यते शङ्खचूडं निहत्य यदा गोपस्त्रीभिः सह व्रजमागतः श्रीकृष्णस्तर्हि तदा वृषभासुरः वृषभाकारो दैत्यः महान्तौ ककुत् कायश्च यस्य स तथा ॥ १ ॥

रवमाणः रवं कुर्वाणः ॥ २ ॥

शकृन्मूत्रमयं स्तब्धे स्थूणाकृते अतिस्थिरे लोचने यस्य स तथा निर्ह्रादिनेन गर्जितेन ॥ ३ ॥

मासत्रयादर्वाक् गर्भस्रावः तत आसप्तमात्पतनं ततः प्रसवः नृणां मनुष्यस्त्रीणाम् अचलशङ्कया पर्वतशङ्कया ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोष्ठं तन्निकटम् ॥ १—५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गुणातीतस्वरूपेण तामसत्वाद्व्रजास्थिताः ।
निरुद्धास्तत्त्वसंख्यातैरध्यायैरिति वर्णितम् ॥
प्रद्युम्नरूपो भगवान् वसुदेवहिताय हि ।
रजोलीलां तथा चक्रे राजसानां निरोधकृत् ॥
असम्बद्धाः पूर्वमुक्ताः संबद्धा राजसाश्च हि ।
उभयेषां निरोधोऽतः सर्वान्ते फलितो भवेत् ॥
तत्त्वसंख्यैस्तथाध्यायैश्चतुर्द्धा पूर्ववद्धरिः ।
गुणैः स्वरूपतो लीलां क्रमादेव तथाकरोत् ॥
बन्धूनान्तु सुखं दत्त्वा वंशवृद्धिं चकार ह ।
एतावता निरुद्धास्ते खण्डद्वयमतो यदि ॥
उद्यमो मानतां यातः सप्तभिः स निरूपितः ।
सप्तभिः सुखदानञ्च विवाहश्चापि सप्तभिः ॥
त्रिविधोऽन्ये फलांशे हि प्रविशन्ति यथा सुताः ।
उपाहरणपर्यन्तमिदं प्रकरणं मतम् ॥
न कालनियमोऽन्यत्र सात्विकेनापि च क्रमः ।
क्रमः पूर्वत्र संसिद्धः सात्त्विका विरला यतः ॥
नारदो द्विविधो ह्यत्र प्रमाणे विनिरूप्यते ।
कर्मज्ञानविभेदेन ह्यक्रूरो भक्तिबोधकः ॥
प्रेमार्थबोधिका गोप्यो भगवद्बोधकश्च सः ।
कार्यं च ज्ञापयामास कंसः सम्भृतिबोधकः ॥
एवं सप्तभिरध्यायैः प्रमाणमिह रूप्यते ।
तत्राद्यः कर्ममार्गस्य ततो भक्त्या विरुध्यते ॥
साधनञ्च फलं तस्य त्रयमत्र निरूप्यते ।
लौकिकारिष्टगमने कर्ममार्गः प्रवर्त्तते ॥
अतोऽरिष्टवधो हेतुः सर्वतस्त्वर्थबोधने ।
फलमुद्यम एवास्य कंसस्य व्यग्रभावतः ॥
सात्त्विकं तामसञ्चैव प्रेरयामास राजसः ।
अत्र वध्या राजसा हि प्रसङ्गादपरेऽपि च ॥
त्रयस्त्रिंशे ततोऽध्याये ह्यरिष्टवध उच्यते ।
नारदोक्तिस्तथाकंसमन्त्रणञ्च रजो महत् ॥
कलाभिः साधिकैराद्यः सार्द्धाभ्यां वचनं तथा ।
त्रयोविंशतिभिः शिष्टविप्राभकृतिकास्तथा ॥

पूर्वं च गोपिकादीनां निरोध उपपादितः अधुनान्येषां निरोधं वक्तुं प्रक्रियान्तरमारभते । अथेति । यदैव भगवता निरोधो जात इति ज्ञातवान् तदैव तदैवारिष्टः समागत इत्यर्थः । वृषो हि गोष्ठमायातीति नाश्चर्यं तथाप्ययमरिष्टो वृषभाकृतिरसुरः महीं कम्पयन् समागत इति राजसे सामर्थ्यविशेषो निरूपितः महान् ककुत्कायश्च यस्य अदृष्टद्वारा कम्पकत्वायाह । खुरविक्षतामिति । खुरैर्विक्षतं यथा भवति तथा वा ॥ १ ॥

सार्द्धाभ्यामागमनं निरूप्यत इति तस्य चेष्टामाह । खरतरमत्यन्तं निष्ठुरं यथा भवति तथा रम्भमाणः रम्भणं तज्जाती-

तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः ।
पशवो दुद्रुवुर्भीता राजन् ! संत्यज्य गोकुलम् ॥ ५ ॥
कृष्णकृष्णेति ते सर्वे गोविन्दं शरणं ययुः ।
भगवानपि तद्वीक्ष्य गोकुलं भयविद्रुतम् ॥ ६ ॥
माभैष्टेति गिराश्वास्य वृषासुरमुपाह्वयत् ।
गोपालैः पशुभिर्मन्द ! त्रासितैः किमसत्तम ! ॥७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यमसशब्दः पदा च एकेन विशेषेण महीं लिखन् चिन्तासमये ह्येवं करोति पश्चात् पुच्छमुद्यम्य मध्ये पशुत्वात् पशुचेष्टां करोतीत्याह । वप्राणि विषाणाग्रेण चोद्धरन्निति । गोकुलनिकटे खिनाः प्राकाराः उभाभ्यां भेदने बलमत्यन्तं नष्टं भवतीति एकेनैव शूलवत्प्रविष्टेन उद्धरणं करोति चकारात्परिवृत्या अपरेण द्वाभ्यां च क्वचित् अंशतः पृथक्करणमुद्धरणम् ॥ ५ ॥

मत्तस्वभावमाह । किञ्चित् शकृन्मुञ्चन् गोमयं त्यजन् गोमूत्रञ्च स्तब्धलोचनश्च जातः अनिवृत्तक्रोधत्वज्ञापनाय राजसत्वाद्विचारे प्रवृत्तः न सहसा प्रविष्टः भगवदिच्छया गोष्ठाधिष्ठातृदेवेन निरुद्धानामनुभावेनच न प्रविष्टः तस्य क्रियया यज्जातं तत्स्पष्टमेवेति रम्भणस्यैव कार्यमाह । यस्य निर्ह्रादितेनेति । निष्ठुरेण अन्तः प्रविश्यापि मारयतीति तेन गवां तृणाश्च अकालतोऽपि कालस्य निमित्तत्वाभावेऽपि गर्भाः पतन्ति स्रवन्ति च भयेन तृतीये चतुर्थे स्रावः पातः पञ्चमषष्ठयोर्मासयोः ॥ ३ ॥

तत्र हेतुर्भयं ननु तस्य नादः मन्त्रारिष्टवदस्यद्वारा तथा सति लौकिकोत्कर्षो न स्यादिति तस्य शरीराधिक्यमाह । निर्विशन्तीति । यस्य ककुदि पर्वतबुद्ध्या मेघा उपविशन्ति अनेन देहमहत्त्वं व्याख्यातम् एवं तस्य शरीरक्रियाशब्दानामन्तःकरणस्य च क्रौर्यं निरूप्य ततो यज्जातं तदाह । तं तीक्ष्णशृङ्गमिति । तीक्ष्णे शृङ्गे यस्य ऊर्ध्वं दृष्ट्वा अत्युच्चैरिति उद्वीक्षणात् गोपा गोप्यः पशवश्च तत्रसुः निरुद्धा इति कदाचिदिहाभिमानाभावात् भयं न भविष्यतीत्याशङ्क्य निरूपितम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

षट्त्रिंशे निहतेऽरिष्टे पितरौ रामकृष्णयोः ।
ज्ञात्वा कंसो नारदात्तौ वध्वाक्रूरं समादिशत् ॥

तर्हीत्यस्य यत्पदसापेक्षत्वात् प्रदोषे यदा कृष्णो रासार्थमुद्यतोऽभूदिति विष्णुपुराणवाक्यदृष्ट्या शेषो ज्ञेयः । तच्च वाक्यं यथा । प्रदोषार्द्धे कदाचित्तु रासासक्ते जनार्दने । त्रासयन् समदो गोष्ठमरिष्टः समुपागत इति । अत एव रासविरुद्धार्थान्तराधिकारार्थमथशब्दः । महदत्युच्चं ककुत् पृष्ठाग्रशिखा यत्र तथाभूतः कायो यस्य सः । खुरविदारितां महीं कम्पयन् खरतरं यथा स्यात्तथा विलिखंश्च । रम्भमाणः वृषभजातिशब्दं कुर्वन् वप्राणि प्राकारतटानि शकृत् पुरीषम् ॥ १—३ ॥

निर्ह्रादितेन शब्देन । स्रवन्ति पतन्तीति आचतुर्थात् भवेत् स्रावः पातः पञ्चमषष्ठयोरिति स्मृतिः ॥ ४-६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षट्त्रिंशेऽध्याये वृषासुरवधं देवर्षिवचनाद्रामकृष्णौ वसुदेवसुतौ ज्ञात्वा तदानेतुं कंसेनाक्रूरं प्रति कृतामाज्ञां चानुवर्णयति । अथेति । एवं श्रीकृष्णेन व्रजे आनन्दिते अथानन्तरं तर्हि तदा वृषाकारोऽसुरः अरिष्टो नामतो गोष्ठं व्रजमागतः तं वर्णयति । महीमिति सार्द्धत्रयेण । महान्तौ अतिस्थूलौ ककुत्कायौ यस्य सः खुरैर्विक्षितां विदारितां महीं कम्पयन् ॥ १ ॥

खरतरं यथा भवति तथा रम्भमाणः वृषभजातिशब्दं कुर्वाणः वप्राणि तटानि उद्धरन् उत्क्षिपन् ॥ २ ॥

शकृत्पुरीषं किञ्चित् किञ्चित् मुञ्चन् ॥ ३ ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले इसके अनन्तर किसी दिन व्रज में बडे भारी शरीर वाला बडे डील वाला पैरोंके खुरों से खुदती हुई भूमी को कंपाता हुआ वृषभ की आकृति वाला अरिष्टासुर आता भया ॥ १ ॥

बडे घोर शब्द से रंभाता हुआ पैर से भूमी को खोदता हुआ पूंछ को उठा कर सींगों से नदी आदि के तटों को खोदता हुआ चला आया ॥ २ ॥

आखों को चढाया हुआ कुछ कुछ मूत्र विष्टा को गिराता हुआ हे परीक्षितजी ऐसा शब्द करने लगा कि जिसके सुनने से गउओं के या मनुष्य स्त्रियों के असमय पर भी डर से गर्भ स्रवित होते थे तथा गिर पडते थे और जिसके डील में पर्वत मानकर मेघ भी बैठ जाते थे इस भयंकर रूप से आया ॥ ३-४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णकृष्णरक्षेति वदन्तः ॥ ६ ॥ ७ ॥

आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन कोपयन् ॥ ८ ॥

**बलदर्पहाहं दुष्टानां त्वद्विधानां दुरात्मनाम् ।**
**इत्यास्फोटयाच्युतो ऽरिष्टं तलशब्देन कोपयन् ॥ ८ ॥**

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णेत्यर्द्धकम् । ततो गोविन्दं श्रीगोकुलेन्द्रतयाभिषिक्तं तमेव शरणं ययुः । कोलाहलश्रवणेन श्रीगोवर्द्धनवासस्थलादभिमुखमायान्तं शरणतयोपसेदुः । अन्यत्तैः । यद्वा । कृष्णकृष्णेत्येतन्मात्रमेव क्रोशन्तः त्रस्तत्वाद्रक्षेत्याद्यन्योक्तावशक्तेः । इत्थन्ते निजकृत्यं चक्रुः । श्रीगोविन्दोऽपि निजकृत्यं चकारेत्याह । भगवानपीति । अथेति पाठे अरिष्टागमनानन्तरमेव वा । तत् स्वपाल्यमानं गोकुलं तत्रत्यान् सर्वानेवेत्यर्थः । वृषरूपमसुरमिति तं तादृशं ज्ञात्वेत्यर्थः । अत एव स्वसमीपे गोष्ठाद्दूर एवाह्वयत् । तत्र युद्धोपद्रववञ्चनार्थम् अत एव विवेश गोष्ठमिति वक्ष्यते ॥ ६ ॥

आह्वानप्रकारमाह । सपालैरिति । बुद्धिबलाधिक्यात्त्रासे पालानां गौणत्वं तद्वैपरीत्यात् पशूनां मुख्यत्वमिति तथोक्तम् । गोपालैरिति पाठः क्वचित् । मन्द अल्पबुद्धे ! पशूनां त्रासनात् । त्रासितैः किं स्यादपितु न किमपि फलमित्यर्थः । कुतस्तदाह । मयीति शास्तरि दण्डयितरि सति । पठान्तरे यतो बलदर्पहाहं दुष्टानां दुष्टकर्मणां दुरात्मनां दुष्टस्वभावानाम् । अधुनैव मया त्वयि हते सर्वं एवैते निर्भया भविष्यन्तीति भावः । त्वद्विधानामिति त्वं शासनीय इति किं वक्तव्यं त्वद्वद्दुष्टत्वानुकारका अपि शासनीया इत्यर्थः । ननु वृषरूपोऽहं कथं शासनीय इति चेत्तत्राह । असत्तमेति तत्त्वतो दुष्टदैत्य एव त्वमसीत्यर्थः ॥ ७ ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हेराजन् ! पशवस्तु भीता गोकुलं सन्त्यज्य दुद्रुवुः ते गोपा गोप्यश्च कृष्ण कृष्णेति वदन्तः तं शरणं रक्षितारं प्रापुः ॥ ५ ॥

अथ भगवान् भयेन विह्वलन्तद्गोकुळमवलोक्य माभैष्ट भयं माकार्ष्टेति गिरा आश्वास्य सान्त्वयित्वा वृषासुरमुपाह्वयदाजुहाव ॥ ६ ॥

आह्वानप्रकारमाह । सवालैरिति । हे मन्द ! सवाळैः सवत्सैः पशुभिः किन्तेभ्यो भयजननेन तव किम्प्रयोजनमित्यर्थः । हे असत्तम त्वद्विधानां दुरात्मनां बलं दर्पं च हन्तीति तथाभूतोऽहं समवस्थितः ॥ ७ ॥

इतीत्थमाह्वयन्नाश्रितार्तिहरः आश्रितान्न च्यावयते त्यजतीत्यच्युतः आस्फोट्य करतलेन बाहुमाहत्य तलशब्देनारिष्टं कोपयन् कोपयुक्तं कुर्वन्सख्युरंसे स्कन्धे भुज एवाभोगः सर्पदेहस्तं प्रसार्यावस्थितः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तत्रसुः त्रस्ताः भीता आसन् ॥ ५ ॥ ६ ॥

हे मन्द ! निर्भाग्य ॥ ७ ॥

भुजाभोगम् आभोगभुजं पुष्टवृत्तभूतम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वग्रहणात् पशूनामपि कृष्णकृष्णेत्युक्तिर्लभ्यते । उत्तरञ्च सुरभिगमने स्वसन्तानैरुपामन्त्र्येति ॥ ६—४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पशुषु विशेषमाह । भीताः सन्तो दुद्रुवुरिति । सावधानार्थसंबोधनं गोकुलं सन्त्यज्येति पुनरागमनापेक्षां त्यक्त्वेति भावः तदा सर्वभयेषु भगवान् शरणमिति ज्ञात्वा ते सर्वे कृष्णकृष्णेति शरणं गताः स तस्य स्वाभाविको हृदि स्थितो धर्मः यो महाभये मुखान्निःसरति व्रजस्थानां पुनः कृष्ण एव निविष्ट इति कृष्णेत्येवाहुः किञ्च गोविन्दो यः स्वेन्द्र इति ॥ ५ ॥

न केवलं तेषां वचनङ्किन्तु भगवानपि तन्निरीक्ष्य वृषासुरमुपाह्वयदिति सम्बन्धः भयेन विह्वलमिति माभैष्टेत्यादौ गोकुळमाश्वास्य मनसा तद्वधं प्रतिज्ञाय पश्चादुपाह्वयत् ननु समाधानार्थं वृष इति दैत्यांशाः सर्व एव वध्याः यथा ब्रह्मणः पौत्रादयः तथा वृषादयोऽपि देवांशानामेव वधे दोष इति धर्ममर्यादा तदाह । वृषासुरमिति असुरा वध्या एव रोगमळप्रायाः ॥ ६ ॥

राजसत्वादादौ वचनमाह । गोपालैरिति । गोपालाः पशवश्चापसत्त्वाः सजातीयास्तत्पालकाश्च नहि महान् अल्पैः सह युध्यति सजातीयैर्वा अत एव विचाराभावान्मन्देति सम्बोधनं मारयितुं त्वयैव न शक्यते तथा सति शत्रुपक्षापकर्षोऽपि भवेत् केवलं त्रासितैः किं कार्यम् अत एव वृथैव सद्भयजनको मारणीय इति ज्ञापयितुं सम्बोधयति असत्तमेति क्रियया दुष्टोऽसन् अन्तःकरणे नासत्तमः स्वरूपोऽपि क्रूरस्तथा ननु दुष्टानां कार्यमेवमेवेति चेत्तत्राह । बलदर्पहाहमिति । बलं तज्जनितं दर्पञ्च हन्तीति तथा बहुलं छन्दतीति ब्रह्मभ्रूणवृत्रेष्वेवोपपदेषु न नियमः अहमित्यात्मानं प्रदर्श्याह स्वपौरुषं स्थापयन्निव दुष्टानामेवाहं सामान्यतो दर्पहा तत्रापि त्वद्विधानामुद्वेजकानां दुरात्मनामित्यन्तःकरणदोषयुक्तानां क्रियया अन्तःकरणेन स्वरूपतश्च दुष्टा वध्या एवेति ॥ ७ ॥

एवमुक्त्वा आस्फोट्य बाहुस्फोटनं मल्लवत् कृत्वा आस्फोटनतलशब्देनैव तं कोपयन् हीनो ऽसि त्वमिति ज्ञापनेन कोपं जनयन् अच्युतत्वात् स्वयन्निर्भयः अवगणनया लीलां कृतवानित्याह । सख्युरंस इति । भुजाभोगं महान्तं भुजं प्रसार्यावस्थितो जातः एवं करणे हेतुमाह । हरिरिति । यथा सोऽप्यरिष्टो लीलासहितं भगवन्तं पश्यन् अन्ते तमेव ध्यायन् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पशुभिः गोभिश्च असत्तमेति वृषरूपस्य तव वधे गोवधपापं न स्यादिति भावः ॥ ७ ॥

सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ।
सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् ।
उद्यत्पुच्छभ्रमन्मेघः क्रुद्धः कृष्णमुपाद्रवत् ॥ ९ ॥
अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ।
कटाक्षिप्याद्रवत्तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ १० ॥
गृहीत्वा शृङ्गयोस्तं वा अष्टादशपदानि सः ।
प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा ॥ ११ ॥
सोऽपविद्धो भगवता पुनरुत्थाय सत्वरः ।
आपतत्स्विन्नसर्वाङ्गो निःश्वसन् क्रोधमूर्च्छितः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

आस्फोट्य करतलेन वामबाहुमाहत्य तेन तलशब्देन स्वशौर्यद्योतकेनेत्यर्थः । सख्युः सुबलस्य स्कन्धे भुजा भुज एव भोगः सर्पदेहस्तं प्रसार्य्येति सावज्ञत्वं दर्शितम् ॥ ८ ॥

उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्मिन् ॥ ९ ॥

अग्रे न्यस्ते विषाणाग्रे येन सः स्तब्धे असृक्तुल्ये लोचने यस्य सः कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्य ॥ १० ॥

प्रत्यपोवाह प्रतिलोमं व्यनुदत् ॥ ११ ॥

अपविद्धोऽपक्षिप्तः आपतदाद्रवत् स्विन्नानि स्वेदयुक्तानि सर्वाङ्गानि यस्य सः क्रोधमूर्च्छितः क्रोधेन व्याप्तः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णकृष्णेतिभाषमाणाः शरणं रक्षितारम् ॥ ६—७ ॥

न च्यवते न क्षरतीत्यच्युतः स्वयमन्यान्दुर्वृत्तांस्तु हरतीति हरिः इत्येवमास्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन अरिष्टं वृषासुरं कोपयन् भुज एवाभोगोऽहिदेहस्तं सुलक्षणं भोगिभोगाकारं सख्युरंसे प्रसार्य्यावस्थितो बभूव ॥ ८ ॥

---

भाषा टीका ।

उस बडे तीखे सींग वाले को देख कर हे राजन्! गोप तथा गोपी सब डर गये और पशु सब गोकुल को छोडकर डर कर भाग गये ॥ ५ ॥

वे गोप सब हे कृष्ण कृष्ण कहकर श्री गोविंद के शरण में गये भगवान् ने भी उस गोकुल को डर से भागता हुआ देखा ॥ ६ ॥

तब मत डरो ऐसी वाणी से उनको धीरज देकर वृषासुर को बुलाकर बोले हे मंद! हे असत्तम! गोपाल तथा पशुओं के डराने से क्या होगा ॥ ७ ॥

अरे तेरे सरी के दुरात्मा दुष्टोंके बल तथा दर्प के नाश करने वाला तो मै हूं इतना कह कर अच्युत भगवान् ने ताल फटकार कर अरिष्टासुर को कुपित किया ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भुजाभोग भुजा भुजः स एव भोगः सर्पदेहस्तं सर्पदेहाकारं भुजामित्यर्थः । स्वयमच्युतः अन्यान् दुष्टान् हरतीति हरिः

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सख्युः श्रीदाम्नोऽसे भुजैव भोगः सुवृत्तत्वपृथुत्वायतत्वादिनाहिदेहस्तं प्रसार्य्येति सावज्ञत्वं दर्शितम् । सख्युरिति तस्यापि तादृशत्वदर्शनाय भावविशेषेण तत्सख्यभाग्याभिनन्दनाय च । अन्यत्तैः । तत्राच्युत इति तत्स्थानादविचलनाभिप्रायेण । तथाच श्रीवैशम्पायनः । तस्मात् स्थानान्न व्यचलत् कृष्णो गिरिरिवाचल इति । श्रीपराशरश्च । न चचाल ततः स्थानादवज्ञास्मित लीलयेति । हरिरिति तादृशावस्थानेन मनोहरणात् । उद्यता पुच्छेन चलन्तः तस्य स्पर्शाद्घाताद्वा इतस्ततो निपतन्तो मेघा यस्मात् उपाद्रवत् समीपे वेगेनागमत् ॥ ९ ॥

कथं तदाह । अग्रेति । अत्र कटाक्षशब्दैकदेशेन कटाशब्देन स एवोच्यते । कुटाशब्देन गाङ्कुटादित्यादिसूत्रलक्षितपादवत् । ततः कटा कटाक्षेणाक्षिप्य तिर्यग्दृष्ट्या संतर्ज्येत्यर्थः । तूर्णद्रवणे परासह्यत्वे च दृष्टान्तः । इन्द्रेण मुक्तो बलात् प्रक्षिप्तोऽशनिर्यथेति अच्युतमिति तत्र तस्य धैर्य्यं बोधयति ॥ १० ॥

वै प्रसिद्धौ स परमविनोदशीलः विनोदमेव दृष्टान्तेनाभिव्यञ्जयति गजः स्वप्रतिभटगजं यथेति तद्योग्यमेव बलमाविष्कृत्येत्यर्थः ॥ ११ ॥

सत्वरं यथा स्यात् पाठान्तरे सत्वरः सन् क्रोधेन मूर्च्छितो विस्मृतात्मा स्विन्नसर्वाङ्गः परिश्रान्तत्वात् क्रोधादेव वा ॥ १२ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सोऽरिष्टोऽपीत्थं कुपितः खुरेण भूमिमुत्क्षिपन्नुद्यताऊर्ध्वङ्गच्छता पुच्छेन भ्रमन्तो मेघा यस्मात्स क्रुद्धः सन् कृष्णमुपाद्रवत् ॥ ९ ॥

तदेवाह । अग्रे न्यस्ते विषाणाग्रे येन स्तब्धे ऽसृग्लोचने रक्तनेत्रे यस्य सः कटाक्षिप्य कटाक्षेण तिर्यङ्निरीक्ष्य यथेन्द्रेण मुक्तोऽशनिर्वज्रस्तद्वत्तूर्णं श्रीकृष्णं प्रत्युपाद्रवत्समीपमगात् ॥ १० ॥

ततः श्रीकृष्णः किं कृतवांस्तदाह । गृहीत्वेति । तदा सोऽच्युतः तमरिष्टं शृङ्गयोर्गृहीत्वा ऽष्टादशपदानि प्रत्यपोवाह प्रत्यगमयत् यथा गजः प्रतिगजं तद्वत् ॥ ११ ॥

ततः सोऽरिष्टो भगवता अपविद्धः अपक्षिप्तः प्रतिगमनेन पातितः सत्वरः पुनरुत्थाय स्विन्नानि प्रस्वेदयुक्तानि सर्वाणि अङ्गानि करचरणादीनि यस्य सः क्रोधेन मूर्च्छितः परवशः निःश्वसन् श्वासं मुञ्चन्नपि पुनराद्रवत् कृष्णं प्रत्याद्रवदित्यर्थः ॥ १२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उद्यति पुच्छे भ्रमन्तो मेघा यस्य स तथा ॥ ९ ॥

स्तब्धे निश्चले असृक्रुधिरमिव रक्ते लोचने यस्य स तथा कटयाक्षिप्य कटीस्फिजौ आक्षिप्य निःक्षिप्य प्रदर्श्येत्यन्वयः कटाक्षित्वेति पाठे कटाक्षेण निरीक्ष्येत्यर्थः अशनिर्वज्रम् ॥ १० ॥

प्रत्यपोवाह प्रत्यपातयत् अभ्याकृष्य पृष्ठतोऽपनीतवानित्यर्थः तिर्यङ्नीतवान्वा ॥ ११-१२ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्यापि वृत्तान्तमाह । सोऽपीति । एवमाक्षेपैः कोपितः स्वभावतोऽप्यरिष्टरूपः खुरेण अवनिं भूमिमुल्लिखन् पूर्ववन्मारणप्रकारं विचारयन् पश्चादुद्यत्पुच्छो भूत्वा तेनोर्ध्वपुच्छेन भ्रमन्तो मेघा यस्य पुच्छवातेन मेघा इतस्ततो विक्षिप्ताः ततः क्रुद्धः सन् अयुक्तं करोतीति ज्ञापयितुं कृष्णं सदानन्दमुपसमीपपर्यन्तमाद्रवत् ॥ ९ ॥

आद्रवणं प्रकारमाह । अग्रन्यस्ते अग्रे प्रथमतो न्यस्ते स्थापिते विषाणाग्रे येन स्तब्धे असृग्वर्णे लोचने यस्य बहिरन्तर्मारणसाधनपरिग्रह उक्तः तयोरसाधनत्वसूचनायाह । अच्युतमिति । आदौ दृष्टिवेधार्थं कटाक्षीकृत्य वस्तुतस्तु कटाक्षेणापि भगवान् न विद्धः तथापि अकटाक्षमपि कटाक्षीकृत्य तूर्णमाद्रवत् अविचारेण समागमने दृष्टान्तमाह । इन्द्रमुक्त इति । यथा पर्वतपक्षच्छेदने वृत्रानामेव छेदनार्थं प्रवृत्तः अन्यत्रापि गतः एवमयं भगवत्समीपमभ्यागतः अत्रैव वा अविचारदशायामिन्द्रेण मुक्तः नमुचिप्रस्तावे वा ॥ १० ॥

तदा भगवता यत् कृतं तदाह । गृहीत्वेति । लोकेति साहसं शृङ्गयोरेव धृत्वा तं अविद्धमरिष्टं वै निश्चयेन अष्टादशविद्यास्थानेषु धृतो न बध्यत इति पश्चाद्भागे अष्टादशपदानि प्रत्यपोवाह एवा महान् छागं नयति तथा करणे सामर्थ्यं भगवानिति ज्ञाने च ननु भगवांश्चेन् स्वबलं प्रदर्शितवान् तदा कथं पुनरागत इत्याशङ्क्य विशेषतो न ज्ञापितवानिति वक्तुं दृष्टान्तमाह । गजः प्रतिगजं यथेति । तद्बलापेक्षया अल्पमेवाधिकं बलं प्रकटितवानित्यर्थः ॥ ११ ॥

न केवलं भगवता नीत एव तावत् दूरं किन्तु भूमौ त्यागसमये निःक्षिप्तः तादृशोऽपि पुनरागत इत्याह । सोऽपीति । महतो भूमौ पतितस्य गात्रभङ्गसम्भवात् कथमागत इत्याशङ्क्य भगवता विद्ध इति तथैव विद्धः यथा पुनः यतोऽयं वध्य एव अतः पुनरुत्थाय पूर्वापेक्षयापि सत्वरः आपतत् आगत एव भगवत्समीपम् अधुनायं मारणीय इति ज्ञापयितुं विशेषणद्वयमाह । स्विन्नानि सर्वाङ्गानि यस्य अनेन देहाभावार्थं मारणपर्यन्तं तेनैव प्रयत्नः कृत इति मारितो वा मारयित्वा वा निवर्त्तेत नान्यथेति ज्ञापितं क्रोधेन मूर्च्छित इत्यन्तःकरणप्रवृत्तिरनिवर्त्या निरूपिता ॥ १२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्मात् सः ॥ ९ ॥

स्तब्धे असृग्लोचने रक्तनेत्रे यस्य सः कटा कटाक्षस्तया आक्षिप्य तिर्य्यग्दृष्ट्या सन्तर्ज्य इत्यर्थः ॥ १० ॥

प्रत्यपोवाह प्रतिलोमं व्यनुदत् ॥ ११ ॥

अपविद्धः अपक्षिप्तः ॥ १२ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सोऽरिष्टोऽप्येवं कोपितः उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमन्तो मेघा यस्मात् सः क्रुद्धः सन् खुरेणावनिमुल्लिखन् कृष्णमुपाद्रवदित्यन्वयः ॥ ९ ॥

तदेव वर्णयति । अग्रे इति । अग्रे न्यस्ते विषाणाग्रे येन सः स्तब्धे असृग्लोचने अरुणनेत्रे यस्य सः कटाक्षिप्य कटाक्षेण तिर्य्यङ्निरीक्ष्य अच्युतं तूर्णमुपाद्रवत् ॥ १० ॥

अष्टादशपदानि प्रत्यपोवाह प्रतिलोमं चालयामास अच्युतेनाष्टादशपदान्तरे ऽपक्षिप्त इति फलितोऽर्थः ॥ ११ ॥

सोऽरिष्टो ऽपविद्धो ऽपक्षिप्तः स्विन्नानि स्वेदयुक्तानि सर्वाण्यङ्गानि यस्य सः क्रोधेन मूर्च्छितो व्याप्तः आपतत् श्रीकृष्णं प्रत्याद्रवत् ॥ १२ ॥

---

## भाषा टीका ।

फिर भगवान् सखा के कांधे पै भुजदण्ड को स्थापन करके खड़े होगये वह अरिष्टासुर भी ऐसे कोपित किया गया तब खुरों से भूमी को खोदने लगा पूंछके उठाने से जिसके मेघ भी घूमने लगते हैं ऐसा क्रोधित होकर श्रीकृष्ण के सामने दौड़ा ॥ ९ ॥

सींगों को आगे रखकर बड़े कठोर लाल नेत्र बनाकर टेढ़ी दृष्टि से भगवान् को देखकर जैसे इंद्र का छोडा वज्र चलै तैसे जल्दी से दौड़ता भया ॥ १० ॥

तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले ।
निष्पीडयामास यथार्द्रमम्बरं कृत्वा विषाणेन जघान सोऽपतत् ॥ १३ ॥
असृग्वमन्मूत्रशकृत्समुत्सृजन् क्षिपंश्च पादाननवस्थितेक्षणः ।
जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः ॥ १४ ॥
एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः ।
विवेश गोष्ठं सबलो गोपीनां नयनोत्सवः ॥ १५ ॥
अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा ।
कंसायाथाह भगवान्नारदो देवदर्शनः ॥ १६ ॥

भाषा टीका ।

भगवान् ने उसको दोनों सींगों में पकडकर अठारा पैंड पीछे को पैसा हटाकर फेंका जैसे वैरी हाथी को महा हाथी हटा देवै ॥ ११ ॥

भगवान् के ऐसे फेकने से भी फिर वह जल्दी उठकर पसीना जिसके शरीर में होगई है बडा श्वास लेता हुआ क्रोध का मारा फिर दौडा ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृत्वा विषाणमुत्पाट्य तेनैव जघान स चापतत् ॥ १३ ॥

मूत्रञ्च शकृच्च मूत्रशकृत् एकवद्भावः तदुभयं समुत्सृजन्नित्यर्थः । पादांश्च क्षिपन्नितस्ततश्चालयन् अनवस्थितेक्षणः प्रचलितनेत्रः कृच्छ्रं कष्टं जगाम अथ निर्ऋतेर्मृत्योः क्षयं निवासं जगाम कृच्छ्रं यथा भवति तथा मृत इति वा ॥ १४ ॥

नयनोत्सवो नयनानां मूर्त्तिमानुत्सवः ॥ १५ ॥

कामं व्रजे वसन्तं तं कृष्णं तेन तु विस्मृतम् ।
नारदः स्मारयामास कंसं दूतगिरेव तु ॥

तदाह । अरिष्ट इति । देवदर्शनो देवर्षिः यद्वा एवं कथिते एवं भविष्यतीति साक्षाद्देववद्दर्शनं ज्ञानं यस्य सः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अधुना दुष्टस्य तस्य वधं हर्षेण गायन्निवाह । तमिति द्वाभ्याम् । कृत्वा विषाणमुत्पाट्य । तथा च श्रीविष्णुपुराणे । उत्पाट्य शृङ्गमेकञ्च तेन वाताडयत्तथा इति । श्रीहरिवंशे च । शृङ्गञ्चास्य पुनः सव्यमुत्पाट्य यमदण्डवत् । तेनैव प्राहरद्वक्त्रं स ममार वृषो हत इति । अपतत् मृतः ॥ १३ ॥

तत्प्रकारमेवाह । असृगिति । सम्यगुत्सृजन् मुञ्चन्निति किञ्चित् किञ्चिच्छकृन्मुञ्चन्निति पूर्वोक्तात् विशेषार्थः । निर्ऋतेः क्षयं जगामेति श्रीमुनीन्द्रस्य क्रोधमयमेव वचनम् । वस्तुतस्तु ये च प्रलम्बखरदर्दुरकेश्यरिष्टेत्यादावस्यापि मोक्षश्रवणात् । निर्ऋतेर्मृत्योर्हन्तोः क्षयं भगवन्निवासं गत इत्येवार्थः । अथ तन्मरणानन्तरमेव सुरा ईडिरे इति तद्भयेन सद्यस्तेषां तत्राशक्तेः ॥ १४

स्वजातिभिर्गोपैरिति तेषामेवान्तरङ्गत्वं विवक्षितम् । सबल इत्यरिष्टवधेऽनुजस्नेहेन स्वक्रीडातस्तस्याप्यागमनात् । नयनोत्सव इति । स्वाभाविकत्वमुक्तं तदानीन्तु महाशङ्कं मारयित्वागतस्य तस्य वैशिष्ट्यं बोधयति । अत्र यदुक्तं श्रीहरिवंशे स चोपेन्द्रो वृषं हत्वा कान्तचन्द्रे निशामुखे । अरविन्दाभनयनः पुनरेव रराम हेति तत्र गोष्ठप्रवेशानन्तरं पुनर्निर्गमेर्यात ज्ञेयम् इति श्रीभगवतस्तत्र रागविशेषो दर्शितः यच्चोक्तम् आदिवाराहे श्रीगोवर्द्धनपरिक्रमे—

गङ्गायाश्चोत्तरं गत्वा देवदेवस्य चक्रिणः ।
अरिष्टेन समं यत्र महद्युद्धं प्रवर्त्तितम् ॥
घातयित्वा ततस्तस्मिन्नरिष्टं वृषरूपिणम् ।
कोपेन पार्ष्णिघातेन महास्तीर्थं प्रकल्पितम् ॥
वृषभस्य वधो ह्येव आत्मनः शुद्धिमिच्छता ।
स्नातस्तत्र तदा कृष्णो वृषं हत्वा सगोपकः ॥
विपाप्मा राधां प्रोवाच कथं भद्रे भविष्यसि ।
वृषो हतो मया चायमरिष्टः पापसूचकः ॥
तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारिणम् ।
स्वनाम्ना विदितं कुण्डं कृतं तीर्थमदूरतः ॥
राधाकुण्डमिति ख्यातं सर्वपापहरं शुभम् ।
अरिष्टराधाकुण्डाभ्यां स्नानात् फलमवाप्नुते ॥
राजसूयाश्वमेधाभ्यां नात्र कार्या विचारणा ।
गोहत्या ब्रह्महत्या च पापं क्षिप्रं प्रणश्यतीति ॥

तत्रायमर्थः । गङ्गाया मानसगङ्गायाः चक्रिणः करचरणादि गत तदादि महाभगवल्लक्षणस्य देवदेवस्य दिव्यातिदिव्यैश्वर्यमाधुर्यस्य श्रीकृष्णस्येत्यर्थः । यत्र महद्युद्धं प्रवर्त्तितं प्रवृत्तम् । घातयित्वा कोपेन गोष्ठोपद्रवेऽनुकोपविशेषेण यः पार्ष्णिघातस्तेन पृथिव्यास्तद्युद्धप्रपञ्च शुश्रूषामाशङ्क्याह वृषभस्येति मम तल्लीलाकथनावेश सति तीर्थमाहात्म्यकथनं न स्यादिति भावः । वृषानुकर्तृवधात् शुद्धिं तदनुकरणमिच्छता इच्छन्नित्यर्थः । महातीर्थमिदं पातालात् समुत्थितमिति व्याजेन स्वतीर्थमहिमदर्शनाय तत्र स्नातश्च तदेवं स्नानानन्तरं मूलानुसारेण गोष्ठं प्रविश्य द्विविदण्डान् स्थित्वा श्रीहरिवंशानुसारेण पुनरपि

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रासाय वेणुवाद्यादिसङ्केतेन श्रीराधिकादिभिः सह हतारिष्टे रासवर्त्मनि तत्र सर्वाभ्यः पृथक् गतस्य तां प्रति सनर्मवचनमाह विपाप्मेति । तत्परिहासाशङ्कया विपाप्मत्वं व्यञ्जयन्नित्यर्थः । मम तावत् पापं नोत्पन्नमेव प्रत्युत तीर्थनिर्माणपुण्येन कृतकृत्यः सिद्धसर्वार्थोऽभूवम् । एतादृश तीर्थनिर्माणाभावात् त्वं कथं भद्रे पुण्यविषये भविष्यसीत्यर्थः । विपाप्मत्वमेव व्यञ्जयति वृषो वृषाकारमात्रोऽरिष्टनामा पापसूचकः सुदुश्चारित्रेण निजपापत्वेनासुरत्वमेव यो व्यञ्जयतीत्यर्थः । लब्धचिन्तायाः श्रीराधायास्तु तन्मिलने स्नेह पयोदितवानित्याह--तत्रेति । तत्प्रसङ्गे समालिङ्ग्य स्वाभाविकीं लज्जामपि त्यजन्ती सम्यगालिङ्ग्य ततस्तत्सौहार्देन स्वयमपि तत्र कुण्डं कृतवतीत्याह खनास्मेति राधेति राधयेत्यर्थः । स्वयमिति ज्ञेयम् । स्वयं कर्त्रा-कर्तृत्वेनैव तत्कुण्डतुल्यता प्राप्तेः । सखीलक्षसहायत्वात् कुण्डस्य स्वल्पप्रमाणत्वाच्च । अत एव समालिङ्ग्य कृतमिति तदैव कारणं बोध्यते । तच्चारिष्टखुरचूर्णित बहुलमृदपसारणया प्रथममीषद्वेव पश्चात्तु विशेषत इति ज्ञेयम् । अदूरतस्तत्कुण्ड युग्मतयेत्यर्थः । अधुनापि तथा श्रीगोवर्द्धनेशानकोणान्ते दृश्यत इति ॥ १५ ॥

प्रकृतमनुसरामः अरिष्ट इति सार्द्धद्वयकम् । निहत इत्यतीत निर्देशादत्र चिरादिति ज्ञेयं गोवर्द्धनगतरासस्यास्य वसन्तमध्योद्भवत्वेन कंसवधस्य तु शिवरात्रिचतुर्दशीगतत्वेन प्रसिद्धेः गोष्ठे विषयेऽद्भुतकर्मणेति पूतनावधाद्यरिष्टवधान्ताद्भुतकर्मणा कंसं प्रति श्रीनारदेन कथनस्याभिप्रायेण । देवदर्शन इति तैर्व्याख्यातम् अत्र प्रथमार्थे पश्यतीति दर्शनो मन्त्रदर्शीति ऋषिवाचिता । द्वितीये प्रतिकल्पमेव गोकुले प्रकटलीलेयं यादवपाण्डवादिभक्तगणरक्षानुरोधेनैव तावदेव नरलीलेन श्रीभगवता क्रियते नाधिकेति सा समाप्तैव । संप्रति यादवाः परम दुःखिनो देवादयोऽद्विग्नाः अतः श्रीभगवता कंसवधस्याविलम्बकार्यत्वं जातम् । तस्मात्तदवसरोऽयमिति तथा कथयामि यथा कंसस्तमत्रानयेत् ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स भगवान्पुनरागतं तमरिष्टं शृङ्गयोर्गृहीत्वा स्वचरणेन समाक्रम्यावष्टभ्य भूतले निपात्य यथार्द्रमम्बरं वस्त्रं तद्वन्निष्पीडयामास ततः कृत्वा कृती छेदने उत्पाट्य विषाणमिति शेषः तेन विषाणेन जघान ताडयामास सच ताडितोऽरिष्ट आपतत् ॥ १३ ॥

मूत्रं शकृच्च तयोः समाहारः तदुत्सृजन्नसृग्रुधिरं वमन्नुद्गिरन् पादान् क्षिपन्नितस्ततश्चालयन्ननवस्थितेक्षणः प्रचलितनेत्रश्च कृच्छ्रं कष्टं प्राणोत्क्रमणात्मकं जगाम अथ निर्ऋतेर्मृत्योः क्षयं निवासञ्च जगाम ततः पुष्पैः किरन्तो हरिं तुष्टुवुः ॥ १४ ॥

इत्थं ककुद्मिनमरिष्टं हत्वा भगवान् स्वजातिभिर्गोपैः स्तूयमानः गोपीनां नयनानां मूर्तिमानुत्सवः स रामो गोष्ठं विवेश ॥ १५ ॥

इत्थं गोष्ठेऽद्भुतकर्मणा कृष्णेनारिष्टे हते सति देवदर्शनो देवर्षिर्नारदः यद्वा पवक्ष्यते एवं भविष्यतीति साक्षाद्देवचेष्टिताभिज्ञः कंसालयं गतस्तं प्राह ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अम्बरं वस्त्रं कृत्वा उत्कृष्य विषाणमिति शेषः तेन विषाणेन ॥ १३ ॥

मूत्रशकृती अनिमीलितेक्षणः विवृतनेत्रः निर्गता ऋतिर्यस्मात्स तथा निरृतिर्यमः तस्य क्षयं गृहं यमलोकमित्यर्थः ॥ १४ ॥

ककुद्मिनं वृषासुरं स्वजातिभिः गोपैर्देवैर्वा ॥ १५ ॥

देवो नारायणः तद्विषयं दर्शनं ज्ञानं यस्य स तथा यद्वा देवं दर्शयतीति यद्वा देवानामिव दर्शनं यस्यातीन्द्रियत्वात्स तथा देवानां यद्दर्शनं मतं तदेव यस्य दर्शनं स तथेति वा यथा कंसहननं शीघ्रतमंस्यात्तथाहेति द्योतनार्थः प्रेत्युपसर्गः अनेन देवकार्यमेव नारदेन साध्यते नत्वसुरकार्यमिति ज्ञायते ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा स भगवता मारित इत्याह । तमापतन्तमिति । उपरि पतन्तमरिष्टं शृङ्गयोर्धृत्वा तस्य वलं निगृह्य यथा वलक्षीणो भवति तथा कृत्वा पश्चाद्भूमौ पातयित्वा पादेनाक्रम्य यथा यज्ञे पशुर्निष्पीडयते तथा निष्पीडयामास तथा क्षताभावेऽपि रोमकूपद्वारा रुधिरं निःसारितवानित्यर्थे दृष्टान्तमाह । यथार्द्रमम्बरमिति । तदपि हस्तेन निष्पीडितमम्बरं न सर्वं जलं विमुञ्चति यथा रजकादिभिः काष्ठखण्डैर्निष्पीडितं तदाह । विषाणेन कृत्वेति विपरीतनिर्देशः अग्रिमसंबन्धार्थः विषाणेनच तञ्जघान येनैव मारणार्थं स प्रवृत्तः तेनैव स मारित इति "ये यथा मां प्रपद्यन्त" इत्यर्थ उक्तो भवति विषाणद्वयमेकं वा तदुदरे निवेशितवानित्यर्थः । ततः स अपतत् पुनरुत्थानप्रयत्नं न कृतवानित्यर्थः ॥ १३ ॥

अन्तस्तु प्राणोद्गमनरूपः प्रयत्नो जात इत्याह । असृग्वमन्निति । मुखद्वारा असृक् मूत्रं मध्ये शकृदन्ते एवं सर्वतः सर्वं निःसृतमिति महान् प्रयत्नो मरणात्मकः सूचितः गच्छतः प्राणस्य चेष्टामाह । क्षिपंश्च पादानिति न अवस्थिते ईक्षणे यस्य नेत्रे विपरीते जाते अनेन नेत्रद्वारा प्राणगमनमिति निरूपितं प्रथमतः कृच्छ्रं मूर्च्छां जगाम ततो न पुनरावृत्तः किन्तु अथ निर्ऋतेः क्षयं मृत्युमेव जगाम अथवा प्रथमतो निर्ऋतेः क्षयम् अथ तदनन्तरं क्षयं स्वस्थानमाश्रयभूतं जगाम मुक्तिप्रकरणे गणितत्वात् वृषभवधः कृतिसाम्यादयुक्त इव भविष्यतीत्याशङ्क्य देवानुमोदनेन तद्युक्तमिति समर्थयति । पुष्पैः किरन्त इति । पुष्पवृष्टिं कृत्वा स्तोत्रमपि कृतवन्तः यतः स्वदुःखं दूरीकृतवान् तदर्थपरिज्ञानाय सुरा इति ॥ १४ ॥

उपसंहरति । एवमिति । सजातीया अपि कठिना इति स्वजातिभिरपि गोपैः स्तूयमानः अत एव जातिपदं ततो गोष्ठद्यामुं हत्वा गोष्ठं प्रविवेश सवलो वलभद्रसहितोऽपि जातः प्रमाण-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सहितत्वात्तस्य गोष्ठे प्रवेशस्य कारणं गोपीनां नयनोत्सवरूपमिति अनेन निरोधस्य सिद्धत्वात् नातः परं संबन्ध इतिसूचितम् ॥ १५ ॥

एवं हेतुभूते अरिष्टवधे जाते तत्फलम् अग्रे निरूपयिष्यन् प्रथमं कार्यमाह सार्द्धाभ्याम् । गोष्ठे अरिष्टे निहते नातः परं गोष्ठे कार्यमिति सर्वमेव दुःखमेतन्मूलकमिति ननु सदानन्दोऽप्यपेक्षित इत्याशङ्क्याह । कृष्णेनेति । साधनत्वमापन्नः सदानन्द एवेति न तदर्थमन्यत्कार्यम् अद्भुतकर्मणेति भगवता अरिष्टो न हतः किन्तु गोकुले स्थापितः यतः तत्प्रभृति गोकुले दुःखमेवेति विपरीतक्रियैव अद्भुतकर्मता तदा भगवानागमिष्यतीति ज्ञात्वा रथाद्रिप्रेषणार्थं नारद उपायं कृतवानित्याह । कंसायाथाहेति । अथ तदनन्तरमेव यदैव भगवान् गन्तुमियेष तदैव देववत् दर्शनं यस्येति भगवत इव तस्य ज्ञानं निरूपितं लोकविरुद्धस्यापि करणे दोषाभावाय देववद्धा आराधितप्रत्यक्षो यथेष्टं भवति तथा नारदस्य दर्शनेन सर्वेष्टं जातमिति ज्ञापितम् अथवा यो देवः पूर्वमाह अस्यास्त्वामष्टमो गर्भ इति तस्मिन् दृष्टे यथा भवति सर्वसन्देहनिवृत्तिः तथा नारदे दृष्टे जातेति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शृङ्गयोर्निगृह्य नितरां गृहीत्वा आर्द्रमम्बरं कृत्वा यथा कश्चिन्निष्पीडयामास ततश्च विषाणेन उत्पाटितेन तं जघान ॥ १३ ॥

कृच्छ्रं कष्टं जगाम प्राप अथ निर्ऋतेर्मृत्योः सकाशात् वधं जगाम निर्ऋतिरेवागत्य तं जघान ननु कृष्ण इत्युत्प्रेक्षा सतु सद्यो मुक्तिं प्राप पुष्पैः पुष्पाणि किरन्तः ॥ १४ ॥

अरिष्टध्वान्ते राधाकृष्णयोर्नर्मसंलापमयी तत्कुण्डद्वयोत्पत्तिकथा पौराणिकी विंशत्या श्लोकैर्निबध्यते । यथा । "मास्मान् स्पृशाद्य वृषभार्दन हन्त मुग्धा घोरोऽसुरोऽयमपि कृष्ण तदप्ययं गौः । वृत्रो यथा द्विज इहास्त्यपि निष्कृतिः किं शुध्येद्भवांस्त्रिभुवनस्थिततीर्थकृच्छ्रात् । १ । किं पर्यटामि भुवनान्यधुनैव सर्वा आनीय तीर्थविततीः करवाणि तासु । स्नानं विलोकयत तावदिदं मुकुन्दः प्रोच्यैव तत्र कृतवान् वत पार्ष्णिघातम् । २ । पातालतो जलमिदं किल भोगवत्या आयातमत्र निखिला अपि तीर्थसङ्घाः । आगच्छतेति भगवद्वचसा त एत्य तत्रैव रेजुरथ कृष्ण उवाच गोपीः । ३ । तीर्थानि पश्यत हरेर्वचसा तवैवं नैव प्रतीम इति ता अथ तीर्थवर्याः । प्रोचुः कृताञ्जलिपुटा लवणाब्धिरस्मि क्षीराधिरस्मि श्रृणुतामरदीर्घिकास्मि । ४ । शोणोऽपि सिन्धुरहमस्मि भवामि ताम्रपर्णी च पुष्करमहश्च सरस्वती च । गोदावरी रविसुता सरयूः प्रयागो रेवास्मि पश्यत जलं कुरुत प्रतीतिम् । ५ । स्नात्वा ततो हरिरतिप्रजगल्भ एव शुद्धः सरोऽप्यकरवं श्रितसर्वतीर्थम् । युष्माभिरात्मजनुषीह कृतो न धर्मः कोऽपि क्षितावथ सखीर्निजगाद राधा । ६ । कार्यं मयाप्यतिमनोहरकुण्डमेकं तस्माद्यतध्वमिति तद्वचनेन ताभिः । श्रीकृष्णकुण्डतटपश्चिमदिश्यमन्दो गर्त्तः कृतो वृषभदैत्यखुरैर्व्यलोकि । ७ । तत्रार्द्रमृण्मृदुलगोलततीः प्रति स्वहस्तोद्धृता अनतिदूरगता विधाय । दिव्यं सरः प्रकटितं घटिकाद्वयेन ताभिर्विलोक्य सरसं स्मरते स्म कृष्णः । ८ । प्रोचे च तीर्थसलिलैः परिपूरयैतत् मत्कुण्डतः सरसिजाक्षि ! सहालिभिस्त्वम् । राधा तदा नननेति जगाद यस्मात्त्वत्कुण्डनीरमुरुगोवधपातकाक्तम् । ९ । आहृत्य पुण्यसलिलं शतकोटिकुम्भैः सख्यर्बुदेन सह मानसजाह्नवीतः । एतत् सरः स्वमधुना परिपूरयामि तेनैव कीर्त्तिमतुलां तनवानि लोके । १० । कृष्णेङ्गितेन सहसैत्य समस्ततीर्थसख्यस्तदीय सरसोधृतदिव्यमूर्त्तिः । तुष्टाव तत्र वृषभानुसुतां प्रणम्य भक्त्या कृताञ्जलिपुटः स्रवदस्रधारः । ११ । देवि त्वदीयमहिमानमवैति सर्वशास्त्रार्थविन्न च विधिर्न हरो न लक्ष्मीः । किन्त्वेक एव पुरुषार्थशिरोमणिस्त्वत्प्रस्वेदमार्जनपरः स्वयमेव कृष्णः । १२ । यश्चारुयावकरसेन भवत्पदाब्जमारज्य नूपुरमहो निदधाति नित्यम् । प्राप्य त्वदीयनयनाब्जतटप्रसादं स्वं मन्यते परमधन्यतमं प्रहृष्यन् । १३ । तस्याज्ञयैव सहसा वयमाजगाम तत्पार्ष्णिघातकृतकुण्डवरे वसामः । त्वच्चेत् प्रसीदसि करोषि कृपाकटाक्षं तर्ह्येव तर्षविटपी फलितो भवेन्नः । १४ । श्रुत्वा स्तुतिं निखिलतीर्थगणस्य तुष्टा प्राह स्म तर्षमयि वेदयतेति राधा । याम त्वदीय सरसीं सफला भवाम इत्येव नो वर इति प्रकटं तदोचुः । १५ । आगच्छतेति वृषभानुसुता स्मितास्या प्रोवाच कान्तवदनाब्जधृताक्षिकोणा । सख्योऽपि तत्र कृतसंमतयः सुखाब्धौ मग्ना विरेजुरखिला स्थिरजङ्गमाश्च । १६ । प्राप्य प्रसादमथ ते वृषभानुजायाः श्रीकृष्णकुण्डगततीर्थवराः प्रसह्य । भित्त्वेव भित्तिमतिवेगत एत्य राधाकुण्डं व्यधुः स्वसलिलैः परिपूर्णमेव । १७ । प्रोचे हरिः प्रियतमे ! तव कुण्डमेतन् मत्कुण्डतोऽपि महिमाधिकमस्तु लोके । अत्रैव मे सलिलकेलिरिहैव नित्यं स्नानं यथा त्वमसि तद्वदिदं सरो मे । १८ । राधाब्रवीदहमपि स्वसखीभिरेत्य स्नास्याम्यरिष्टशतमर्दनमस्तु तस्य । योऽरिष्टमर्दनसरस्युरुभक्तिरत्र स्नायाद्वसन्मम स एव महाप्रियोऽस्तु । १९ । रासोत्सवं प्रकुरुते स्म च एव रात्रौ कृष्णाम्बुदः कृतमहारसहर्षवर्षः । श्रीराधिकाप्रवरविद्युदलंकृत श्रीस्त्रैलोक्यमध्यविततीकृतदिव्यकीर्त्तिरिति । २० । ककुद्मिनं वृषासुरम् ॥ १५ ॥

देवः परमेश्वर इव पश्यति कृष्णलीलातत्त्वं जानातीति सः व्रजलीलासमाप्तिमवधार्य्य माथुरीलीलामाविर्भावयितुं कंसद्वारैव कृष्णं मथुरामानेतुं युक्त्युत्थापनविचक्षण इत्यर्थः । किमाहेत्यत आह । देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं च प्रसिद्धं रामञ्च रोहिण्याः पुत्रमाह ननु तौ वसुदेव सुतौ चेत्केन व्रजं प्रापितौ तत्राह । वसुदेवेत्यादि ॥ १६–१७ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृत्वा कृती छेदने उत्पाट्य विषाणमिति शेषः तेनैव जघान ॥ १३ ॥

असृग्रुधिरं वमन् मूत्रशकृदित्यत्र समाहारद्वन्द्वः तदुभयं समुत्सृजन् पादान् क्षिपन् इतस्ततश्चालयन् अनवस्थिते ईक्षणे नेत्रे यस्य सः अथानन्तरं कृच्छ्रं कष्टं यथा भवति तथा निर्ऋतेः क्षयं निवासं जगाम कृच्छ्रामित्यस्यायमर्थः प्राणवियोगवेलायां भगवत्संसर्गतो लब्धविवेकः वैकुण्ठसुखसममपि हित्वा घोरमात्मव्य-

यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च।
रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता।
न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः॥ १७॥
निशम्य तद्भोजपतिः कोपात्प्रचलितेन्द्रियः।
निशातमसिमादत्त वसुदेवजिघांसया॥ १८
निवारितो नारदेन तत्सुतौ मृत्युमात्मनः।
ज्ञात्वा लोहमयैः पाशैर्बबन्ध सहभार्यया॥ १९॥
प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम्।
प्रेषयामास हन्येतां भवता रामकेशवौ[1] ॥२०॥ १राममाधवाविति श्रीवल्लभाचार्यपाठः

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तिक्रमं स्मृत्वा बलादेव निर्भृतेः क्षयं गत इति॥ १४॥ १५॥

देववद्विष्णुवत्तदवतारत्वाद्दर्शनं यस्य सः नारं नराणामधिकारानुरूपं ज्ञानं ददातीति नारदः॥ १६॥

भाषा टीका।

आते हुये उसको भगवान् ने दोनों सींगों में पकड कर जमीन में गिराकर पांय के नीचे दबाकर जैसे गीले कपडे को निचोडते हैं तैसे मरोड दिया फिर उसी के सींग को उखाडकर उसको मारा सो वह मरकर गिर पडा॥ १३॥

मुख में से रक्त को उगिलता हुआ मूत्र विष्ठा को डालता हुआ कष्ट को पाकर प्राण त्यागकर परलोक को चला गया आकाश में देवता सब फूलों की वर्षा करके भगवान् की स्तुति करते भये॥ १४॥

भगवान् इस प्रकार से उस वृषासुर को मारकर अपने जाति के बन्धुओं से प्रसंसित होकर बलदेवजी के सहित चलते हुये और सब गोपियों के नेत्रों को आनंद देते हुये व्रज में प्रवेश करते भये॥ १५॥

अद्भुत कर्मों वाले कृष्ण भगवान् ने जब अरिष्ट दैत्य को मार दिया तब दिव्य दृष्टि वाले नारदजी ने आकर कंस से आगे की बात कही॥ १६॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आतेनेव नारदेनोक्तमाह। यशोदाया इति। देवक्या अष्टमगर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह। यशोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह रोहिणीपुत्रं रामञ्च देवक्याः सप्तमं सुतमाह यद्वा नन्दसुतत्वेन प्रसिद्धं रामञ्च वसुदेवभार्याया रोहिण्याः पुत्रमाह तौ वसुदेवसुतौचेत्कथं व्रजं गतौ तत्राह। वसुदेवेनेति॥ १७-१८॥

निवारित इति। हते वसुदेवे तापलायतामतो वध्यतामिति मन्त्रं वदता नारदेन निवारित इति॥ १९-२२॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ततश्चैनं स्वयमेवादौ हनिष्यतीति श्रीकृष्णलीलाशैली 'देवव-द्ब्रह्मादिवज्ज्ञानन्नित्यर्थः। रामं रोहिण्याः पुत्रमपि देवक्या एवेति गर्भसङ्कर्षणमपि कथयामासेति ज्ञेयम्। बिभ्यता त्वत्त इति भीरुत्यान्न तव वध्यः स्यादिति भावः। स्वस्य मित्र इत्यसाधारणस्नेहविशेषो बोधितः। स्वो ज्ञातिश्चासौ मित्रञ्चेति वा। वै प्रसिद्धमेवैतत् सर्वं केवलं त्वमेव मूढो न जानासीत्यर्थः. एतच्चाप्ततार्थमुक्तम्। पुरुषा आप्तजना हता इति लक्षणेन स्वोक्तं दृढीकृतम्। तथा महाबलत्वसूचनया भयञ्च तस्य नितरां जनितम्॥ १७॥

प्रचलितं क्षुभितमिन्द्रियं मनो यस्य सः इति विवेकहानिरुक्ता॥ १८॥

ववन्धेति। हते किल पितरि तन्निवेदनायावसरप्रतीक्षामपि कुर्वीयातां बद्धयोस्तु पित्रोर्मोचनार्थमत्राद्य श्वो वागच्छेतामिति श्रीनारदमन्त्रणयैवेति ज्ञेयम्। सह भार्यया देवकीसहितम् एतच्चागमनाधिलम्बार्थं परमदुष्टत्वादेव वा॥ १९॥

प्रतियाते त्विति। केशिप्रेषणं मन्त्रभङ्गशङ्कया किं वा तत्प्रेरणस्यापि निवारणाशङ्कया आभाष्य भो भ्रातर्महावीरेत्येवं सम्बोध्य दूतगिरा समादिश्येति श्रीपराशरवैशम्पायनयोर्मतम्॥ २०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किमाहेत्यत्राह। यशोदाया इति सार्द्धेन। देवक्याः कन्यामष्टमगर्भत्वेन प्रसिद्धां यशोदायाः सुतामाह। तथा यशोदायाः पुत्रत्वेन प्रसिद्धं कृष्णं देवक्या अष्टमं गर्भमाह। तथा रोहिणीपुत्रत्वेन प्रसिद्धं रामं च देवक्याः सप्तमं गर्भमाहेति सम्बन्धः नतु देवकीसुतौचेत्कथं व्रजगतौ तत्राह वसुदेवेन त्वत्तः बिभ्यता

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वमित्रे नन्दे न्यस्तौ न्यासरूपेण निहितौ याभ्यां रामकृष्णाभ्यां तव पुरुषा भृत्या अरिष्टादयो हताः वसुदेवे हते तु तौ पलायेतामतः स न वध्य इत्यर्थतो ऽत्र द्रष्टव्यम् ॥ १७ ॥

तन्नारदोक्तं निशम्याकर्ण्य भोजपतिः कंसः कोपात्प्रचलितानीन्द्रियाणि यस्य स वसुदेवं हन्तुमिच्छया तीक्ष्णं खड्गमाददे ॥ १८ ॥

ततो नारदेन निवारितस्तस्य वसुदेवस्य सुतमेवास्यात्मनः स्वस्य मृत्युं हन्तारं ज्ञात्वा नारदोपदेशादिति शेषः लोहमयैः पाशैर्भार्यया देवक्या सह वसुदेवं बबन्ध ॥ १९ ॥

ततो नारदे गते सति कंसः केशिनं नाम दैत्यमाहूय प्रेषयामासाज्ञापयामास किमिति भवता रामकेशवौ हन्येतामिति ॥२०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमाहेति तत्राह। यशोदाया इति। कन्यां दुर्गा यशोदायाः सुतां कृष्णं देवक्याः पुत्रं रामं बलभद्रं रोहिणिपुत्रमाह वसुदेवेन तौ किंकृतावत्राह। विभ्यता त्वदिति शेषः ॥ १७ ॥

स्वस्य मित्रे विश्वसनीये सुहृदि याभ्यां कृष्णरामाभ्यां ते तव पुरुषा नियोगकारिणः ॥ १८ ॥

निशातं तेजितमित्यर्थः ॥ १९ ॥

आशास्य सम्यक् शिक्षित्वा भवता मङ्गलेषु पूज्येन ॥२०-२२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नारदस्य वाक्यान्याह। यशोदायाः सुतामिति। दैवमप्यनृतं वदतीति तस्य या विपरीतबुद्धिः सा प्रथमतः अपोह्यते कन्या न देवक्याः नापि यशोदायाः पुत्रः किन्तु यशोदायाः कन्या देवक्यास्तु पुत्रः सर्वत्राहेति सम्बन्धः यशोदायाः सुतामाह कन्यां कृष्णं तु देवक्याः पुत्रमाहेति रामश्च देवक्याः पुत्रं रोहिणीपुत्रमपि एवकारस्तद्व्यावृत्त्यर्थः यथा देवक्या रोहिण्याश्च रामः पुत्रः एवमेव देवक्या यशोदायाः पुत्रो न भवतीति कथमेवं व्यत्यासो जात इति चेत्तत्राह। वसुदेवेन बिभ्यता न्यस्तौ स्वमित्रे नन्द इति। एतावत्यर्थे नारदोऽपि न जानाति यथा नन्दोऽपि न जानाति तथा भगवांस्तत्र तिष्ठतीति परमार्थतो वा न्यासः मित्रपदं ज्ञात्वाप्यन्यथा न करिष्यतीति ज्ञापनार्थं चैं निश्चयेन याभ्यां कृष्णरामाभ्यां ते पुरुषाः सर्वे एव प्रलम्बादयो हता इति अन्यथा नान्यो मारयितुं शक्नुयात् एतावदुक्त्वा तूष्णीं तत्रैव स्थितः ॥ १७ ॥

ततो यज्जातं तदाह। निशम्येति। नारदोक्तं तत्मेयं निशम्य अन्यथा करणेसामर्थ्यार्थमाह । भोजपतिरिति । भोजानां पतिः अकस्माज्जातेन कोपेन प्रकर्षेण चलितानीन्द्रियाणि जातानि अन्यायो वसुदेवस्येति ज्ञात्वा तज्जिघांसया निशातं तीक्ष्णं खड्गमाददे ॥ १८ ॥

प्रायेण वसुदेवः सभायामेवास्ते तदा भीतो नारदः निवारयामासेत्याह। निवारित इति। ननु तन्निवारितः कथमसौ न मारयेदिति आशङ्क्याह। नारदेनेति। स हि तेषां मान्यः तुल्यो देवेषु तेषु च तथापि शत्रुरिति वद इत्याह। तत्सुतावात्मनो मृत्यू इति देवकीवसुदेवौ बबन्ध भ्रातॄणामपि स्वमध्यपातात् सेवकानाञ्च सुताविति द्विवचनम् अविशेषकथनात् सन्देहाद्वा लोहमयैः पाशैरिति न पादे शृङ्खला किन्तु सर्वावयवेषु शृङ्खलाभिरिव बन्धनम् एतावदुक्त्वा नारदो निर्गतः केचित्तु बन्धनमपि नारदेनैवोक्तमित्याहुः। मारणे तत्सुतौ पलायनं करिष्यत इति तदुपेक्षणीयमनृतवादप्रसङ्गात् ॥ १९ ॥

ततो देवर्षौ प्रतियाते पुनस्तस्यान्यथा बुद्धिः पूर्ववद्भविष्यतीत्याशङ्क्य तुशब्दो वारयति यतो ऽयं देवानामपि मन्त्रद्रष्टा तदा कंसः स्वनिकटे स्थितं स्वस्य पार्षदरूपं केशिनमाभाष्य हे केशिन्निति संबोध्य गोकुले प्रेषयायास त्वं गच्छ गोकुलमिति अर्थसिद्धत्वान्नोक्तं गतस्य कृत्यमाह। हन्येतामिति गत्यर्थोऽपि हनधातुरिति आनयनार्थमेव घोटकः प्रेषित इति लक्ष्यते सुखासनं तन्न भवतीति पश्चाद्रथप्रेषणं तस्य तथा सामर्थ्यमग्रे वक्ष्यति तस्य हेषितसंत्रस्ता इति माधवपदं मधुवंशोत्पन्नाभिप्रायेण रामस्तु प्रसिद्धः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

असिमादत्तेति वसुदेवस्य परोक्षमेव ॥ १८ ॥

निवारित इति हते वसुदेवे तौ पलायेतां किञ्चाधुना तज्जिघांसामपि वसुदेवो न ज्ञापनीयः तथा सति स्वमित्रं नन्दं प्रति तेनोक्ते तद्वृत्तान्ते नन्दः सपुत्र एव पलायिष्यत इत्यतो वसुदेवदेवक्योर्बन्धनमेवाधुना कृत्वा केनापि मिषेण रामकृष्णौ मथुरामानीयेतामिति मन्त्रं ददतेति ज्ञेयं नच वसुदेवदेवक्यौ बन्धयता नारदेन तयोर्विप्रियं कृतमिति वाच्यं प्रत्युत प्रियमेव कृतं परमसोत्कण्ठाभ्यां ताभ्यामायत्यां स्वपुत्रमुखदर्शनानन्दलाभेन स मुनिराशीःशतसम्प्रदानपात्रीकरिष्यतएवेतिमुनेस्तद्विषयकोऽपराधो नाभूदिति ज्ञेयम् ॥ १९ ॥

वाग्देवीमते हन्येतां माप्येतां तत्र लीयतामित्यर्थः ॥ २०—२२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किमाहेत्यत्राह। यशोदाया इति सार्द्धेन ॥ १७ ॥

निशातं तीक्ष्णम् ॥ १८ ॥

नारदेन वसुदेवे हते न किञ्चित्प्रयोजनमित्यादि ज्ञानदेन तत्सुताविति राममपि तत्र सहायतया कारणं ज्ञात्वेत्यर्थः ॥ १९—२२ ॥

---

भाषा टीका।

जो कन्या आकाश को गई थी सो यशोदा की है कृष्ण देवकी के पुत्र हैं बलराम रोहिणी के पुत्र हैं वसुदेव ने डर कर इन दोनों को अपने मित्र नन्द के पास रख दिया है जिन दोनों ने तुमारे बहुत पुरुषों को मारा है ॥ १७ ॥

इस बात को सुन कर कंस क्रोधित भया उस की सब इन्द्रिय चलायमान हो गई फिर वसुदेव के मार ने

ततो मुष्टिकचाणूरशलतोशलकादिकान् ।
अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट् ॥ २१ ॥
भो भो निशम्यतामेतद्वीरचाणूरमुष्टिकौ ।
नन्दव्रजे किलासाते सुतावानकदुन्दुभेः ॥ २२ ॥
रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ।
भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया ॥ २३ ॥
मञ्चाः क्रियन्तां विविधा मल्लरङ्गपरिश्रिताः ।
पौरा जानपदाः सर्वे पश्यन्तु स्वैरसंयुगम् ॥ २४ ॥

भाषा टीका ।

को तीक्ष्ण तरवार को उस ने ग्रहण किया ॥ १८ ॥

फिर नारदजी ने मना कर दिया तब उन के पुत्रों को अपना काल जान कर स्त्री के सहित वसुदेव जी को लोहा की वेडियों मे बांध कर के रखता भया ॥ १९ ॥

तब नारदजी के चले जाने पर कंस ने केशि को बुला कर व्रज को भेजा कि तुम आकर बलराम तथा कृष्ण को बुलालाओ कर के ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मह्यं मम निदर्शितो विधात्रा नारदेन वा व्रजं गन्तुमुद्यतौ तावाह । भवद्भ्यामिति ॥ २३ ॥

मञ्चा उत्तुङ्गस्तम्भादिरचितस्थानानि ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्यक् ससम्मानं निभृतमाहूय आह । क्रमेण नियुयोज ॥ २१ ॥ भो भो इति युग्मकम् । वीप्साऽवधानार्थं वीरेति प्रोत्साहनाय प्राधान्येन द्वयोरेव सम्बोधनम् । अयमेकवचनान्त एव पाठः स्वामिसम्मतः । व्रजं गन्तुमित्यादि वक्ष्यमाणात् । बहुवचनान्तपाठस्तु बहुत्र हे वीराः हे चाणूर हे मुष्टिके त्यर्थः ॥ २२ ॥

किल निश्चितं श्रीनारदोक्तौ प्रामाण्यात् । आनकदुन्दुभेरिति तज्जन्मपूर्ववृत्तेन तदैव प्रमाणितम् । ततस्ताभ्यां सकाशात् किल निश्चये निदर्शित उदाहृतः कथित इत्यर्थः । इह सम्प्राप्ताविति तत्र तस्य स्थानबलेनानिष्टसाधने भवतोरशक्तेरिति भावः । मल्ललीलयेति अन्यथा सावधानत्वे तयोरनिष्टस्य दुःशकत्वादिति भावः । वाग्देवीमते तु हन्येतां प्राप्येतां तयोर्नीयतामित्यर्थः ॥ २३ ॥

अतस्तद्दर्शनार्थं मञ्चाद्युत्सवसामग्री साध्यतामित्याह । मञ्चा इति । विविधाः राजामात्यादियोग्यभेदेन बहुप्रकाराः । मल्लानां रङ्गः क्रीडास्थानं तस्य परितः श्रिताः चतुर्दिक्षु वेष्टनरूपेण स्थिता इत्यर्थः । किमर्थं तदाह । पौरेति । पौराः पुरवर्त्तिनो जना जानपदाश्च देशवर्त्तिनः स्वैरेण स्वच्छन्दतया न तु बलात् प्रवर्त्तिततया संयुगं मल्लयुद्धमिति पौरादीनां पश्चनप्रकारप्रतिपादनम् ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो मुष्टिकादीनमात्यांश्च हस्तिपांश्च सामोक्त्याहूयोवाच ॥ २१ ॥

उक्तिमेवाह । भो भो इत्यादिभिः पञ्चभिः । भो भो इति द्विर्वचनं प्रत्येकाभिप्रायकं वीरचाणूरेति कर्मधारयः आनकदुन्दुभेर्वसुदेवस्य सुतौ रामकृष्णौ नन्दव्रजे वर्तेते खलु तौ तु मम मृत्यू हन्तारौ दैवेन निदर्शितौ ज्ञापितावतः कथञ्चिदुपायेनेहानीतौ भवद्भ्यां मल्ललीलया हन्येतां हन्तव्यौ ॥ २२-२३ ॥

मञ्चा उत्तुङ्गस्तम्भादिरचितस्थानानि क्रियन्तां कथम्भूताः मल्लयुद्धस्थानपर्यन्तस्थानविशिष्टाः किमर्थं तत्राह । पौराः पुरवासिनो जानपदा देशवासिनश्च सर्वे मञ्चेषूपविश्य स्वैरं यथेष्टं संयुगं युद्धं पश्यन्तु ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मृत्यू मारकौ कालेन यमेन नितरां दर्शितौ ॥ २३ ॥

मञ्चाः उत्तुङ्गस्तम्भादिरचितस्थानानि मल्लरङ्गस्य परितः सर्वासु दिक्षु श्रिताः स्थिताः स्वैरसंयुगं योधाकाङ्क्षापूरकं युद्धम् ॥ २४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सोऽपि भक्तो भविष्यतीति साक्षाद्भगवन्नाम न मुखान्निःसृतं हृदये तेन कार्यं सेत्स्यतीति ज्ञात्वा सर्वानेवाहूय मन्त्रयामासेत्याह । तत इति । मुष्टिकादयो मल्लाः अमात्या गृहमन्त्रिणः हस्तिपाः युद्धकुशलाः चकारादन्यांश्च बन्धून् एवकारेण न विपक्षान् समाहूय गृहस्थितानाकारयित्वा आगमनार्थं हेतुमाह । भोजानां राजेति ॥ २१ ॥

समागतेषु तेषु सवृत्तान्तमाह । भो भो इति । सामान्यसंबो

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धनद्भिरुक्त्या सर्वेषामेव संबोधनं लक्ष्यते तेन प्रत्येकं नाम गृहीत्वा कथयतीति ज्ञापितम् एतन्निशम्यतामिति सावधानीकरणं वीरेति विशेषणं प्रकृतोपयोगित्वात् सर्वेषां चाणूरेति भिन्नतया निरूपणे तस्यैव वा वीरो वा काश्चित् मुष्टिकादीनां प्रधानेन ग्रहणात् बहुवचनं वा अज्ञातं वृत्तान्तमाह । नन्दव्रज इति । मन्त्रे वक्तुर्नाम न ग्राह्यमिति किलेत्याह प्रसिद्ध एवायमर्थः आसाते किल नन्दव्रजे किल आनकदुन्दुभेः सुतौ किल ॥ २२ ॥

नाम्ना प्रसिद्ध्यर्थं नामाह । रामकृष्णाविति । किमतो यद्येवमित्याशङ्क्याह । ततो मह्यमिति । मृत्युर्मरणम् अत्रापि पूर्ववत् किलेति निर्दर्शित इति नितरां दर्शितः प्रत्यक्षतया सर्वैरुक्तः तर्हि किङ्कर्तव्यमित्याकाङ्क्षायामाह । भवद्भ्यामिति । इह सम्यक् प्राप्तौ भवद्भ्यां चाणूरमुष्टिकाभ्यां मल्ललीलया हन्येतामिति प्राप्येतामित्युक्तं भवति यदि लौकिकभाषया स विरुद्धं न वदेत् तदा भगवानपि लोकरीत्या तं न मारयेत् लीलयेति पदं भागिनेयाविति प्रकटतया तथा करणमनुचितमिति अत एव भगवतापि तथैव कृतं ननु शस्त्रेण नापि मुष्टिभिः ॥ २३ ॥

अयम्भावः भगवता तद्धृदये स्थापित इति बालकवञ्चनार्थं मल्लरङ्गप्रकारः । मञ्चाः क्रियन्तामिति विविधा इति । मनोहरत्वाय येनान्यचित्तत्वे मारयितुं शक्येत मल्लानां रङ्गस्थानमाथिल्य परितस्तिष्ठन्तीति मञ्चानां सर्वतः करणं येनैव सुखेन मल्लैः सह युद्धं तत्रैव भ्रमार्थं केवलैर्भ्रमो न भविष्यतीति तत्र लोकानां निवेशनमाह । पौरा जानपदा इति । पुरवासिनो जनपदवासिनश्च पृथक् पृथक् मञ्चे स्थिताः स्वैरसंयुगं स्वेच्छया युद्धं पश्यन्त्विति तेषां कोलाहलेन वा अन्यचित्ततेति अपकीर्त्यभावश्च फलिष्यतीति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मह्यं मम निर्दर्शितो नारदेन ॥ २३ ॥

किञ्च तयोर्वञ्चनार्थमुत्साहवर्द्धनार्थं च महोत्सवप्रसिद्धिः क्रियतामन्यथा तौ पलायिष्येते इत्याह । मञ्चा इति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततस्तयोरेकतरात् कृष्णात् मह्यं मम मृत्युर्निदर्शितः अस्याः त्वामष्टमो गर्भो हन्तेत्याकाशवाण्येति शेषः ॥ २३ ॥

मल्लरङ्गपरिश्रिताः मल्लयुद्धस्थानस्य परितो वर्तमानाः मञ्चा उत्तुङ्गस्तम्भादिमयानि स्थानानि स्वैरसंयुगं स्वैच्छिकं मल्लयुद्धम् ॥ २४ ॥

---

भाषा टीका ।

तिसके पीछे मुष्टिक चाणूर शल तोसल आदि और मन्त्री हस्तिका माहुत इन सबको कंस बुलाकर कहता भया ॥२१॥

हे वीर चाणूर मुष्टिक ! तुम दोनों इस बातको सुनो नन्दके व्रज में वसुदेव के पुत्र रहते हैं ॥ २२ ॥

जिनका नाम राम तथा कृष्ण है उन्हीं से मेरा मृत्यु होना देवर्तो ने कहा है उनके यहां आजाने से उनको तुम मल्लों की लीलासे मारना ॥ २३ ॥

मल्लों की जो रंग भूमी तिसमे विविध प्रकार के मञ्चान बनाओं जिनपर से पुरवासी देशवासी सब खुसी के संग्राम को देखेंगे ॥ २४ ॥

---

## श्रीमद्वीरराघवाचार्यकृतव्याख्यानुसारि-

[मूलम्]

महामात्र ! निबोधेदं वचो मम महामते ! ।
गजः कुवलापीडः प्रभिन्नकरभामुखः ॥
संस्थाप्यो द्वारि रङ्गस्य करारोपितमुद्गरः ।
तेन तौ तत्र हन्तव्यौ सुतावानकदुन्दुभेः ॥
अथ सोऽपि महामात्रः प्राह व्याकुलमानसः ।
कथं मया निहन्तव्यौ स्वर्गीयौ पृथिवीपतेः ॥
महामात्रेणैवमुक्तः कंसस्तत्रैव दुर्मतिः ।
उवाच भूयो वचनं समेतान् श्रावयन्नृपः ॥

कंस उवाच ।

शृणुध्वमेतद्वचनं मयोदितं निशम्य सर्वं हृदि धारयन्तु तत् ।
येनाहमेतेष्वसुहृत्त्वमादितश्चरामि बन्धुष्वपि तत्र कारणम् ॥
माता मम महाभागा कदाचित्कमलेक्षणा ।
विचरन्ती गृहोद्याने मन्दमारुतवीजिते ॥
प्रोत्फुल्लाशोकबकुलपूगपुन्नगशोभिते ।
भ्रमद्भ्रमरसंघाते कूजत्कोकिलसंयुते ॥
नृत्यच्छिखण्डिनिवहमर्कटाटोपसुन्दरे ।
वसन्तसमये रम्ये सालमण्डलमण्डिते ॥
चरन्ती तत्र मे माता चिन्तयामास सुव्रता ।
भर्तारं कामसन्तप्ता ऋतुस्नाता स्वलंकृता ॥
तदैव कश्चिद्गन्धर्वो द्रुमिलो नामनामतः ।
चरन्नन्तर्हितः काले दृष्ट्वा तामेकचारिणीम् ।
विज्ञाय चिन्तितं तस्याः स्वयंतत्राशयार्थवित् ।
औग्रसेनं वपुर्बिभ्रत् सस्मितालापवीचितम ॥
तामाससाद कामार्तः कामयानां पतिव्रताम् ।
अजानाना तु साभ्येत्य रेमे तेन समं वने ॥
सा तं विदित्वा रमणे रतं सती—
नितान्तसदोषविलोचनाशया ।
उवाच कस्त्वं कितवार्यगर्हितं दुरात्मना—
येन कृतं त्वयेदृशम् ॥
इति ब्रुवन्तीं परिसान्त्वयन् शनैः —
स दीर्घबाहुर्द्रुमिलोऽभ्यभाषत ।
वयं हि गन्धर्वकुलोद्भवावले !—
गीर्वाणतुल्यामरवल्लभासुराः ॥
भवादृशीनां मनुजाङ्गनानां जानीहि भद्रे !—
सुलभा वयं नच ।

## श्रीमद्वीरराघवाचार्यविजयध्वजकृतव्याख्यानुसारि-

### [ मूलम् ]

जनुर्विनाशाद्यखिलाधिभागिनां नृणां सुराणां—
महदन्तरं शुभे !॥
इति ब्रुवन्तं साध्वीयः प्राह क्रोधाकुलेन्द्रिया।
किं मां सान्त्वयसे भूयः कृत्वेदं दुष्टचेष्टितम्॥
इमानतिक्रम्य महीजलाग्निसमीरणाकाशनिशेशसूर्यान्।
दिक्कालधर्मांश्च उभे चसंध्ये दुरात्मनेत्थं मलिनीकृताहम्॥
गजेनेव मदान्धेन पद्मिनीवनमध्यगा।
विशृङ्खलेन विमला येनाहं मलिनीकृता॥
स त्वं किमिति मां भूयः सान्त्वयस्यमराधम !।
इति ब्रुवन्तीं सोवाच सभयः शापशङ्कितः॥
अनुलोमं तु कञ्जाक्षि। मनुष्यासु दिवौकसाम्।
नराणां देवकानां तु प्रतिलोमो हि सङ्गमः॥
जानीहि मामनागस्कं तेन पङ्कज गन्धिनि !।
तस्मात्ते जायतां पुत्रो मद्वीर्यं न वृथा भवेत्॥
श्रीमान् धीमान् महोत्साहो न मेचाए जायते मृषा।
इत्येवं वादिनं क्रुद्धा मम माता यशस्विनी॥
प्राह संत्यज्य सन्तप्ता पातिव्रत्यं सुदुर्लभम्।
निःसेतोर्भिन्नवृत्तस्य पापस्योन्मार्गवर्तिनः॥
क्रूरस्ते तनयो भूयात् साहसादिगुणोऽगुणः।
नानुग्राह्यो देवतानां द्विजानां च तपस्विनाम्॥
इत्थं वदन्त्यां तस्यां स क्रुद्धायां शापशङ्कितः।
तावकानां भवेच्छत्रुरित्युक्त्वान्तरधीयत॥
गते तस्मिन् गृहोद्यानान्माता मम यशस्विनी।
केनाप्यज्ञातवृत्तान्ता गृहानेवाभ्यपद्यत॥
ततः सा गर्भिणी काले कालेनैव सुषाव माम्।
इति मे नारदः प्राह कदाचिद्भगवानृषिः॥
ततः प्रभृत्यहं द्वेष्मि तानेतान् बन्धुदुर्जनान्।
यूयमत्र प्रमाणं हि द्विषन्ते तेऽपि मां सदा॥
उग्रसेनं च दुर्बुद्धिं देवकं च दुराशयम्।
वसुदेवं च कितवमन्यांश्च तदुपाश्रयान्॥
हत्वा न जायते दोषो मम गन्धर्वजन्मनः।
तेनादेक्ष्यामि परुषं हन्येतामिति तावहम्॥
ताभ्यां हताभ्यां बालाभ्यां कुञ्जरेण बलीयसा।
कृत्वा पारत्रिकीं पूजां यान्तु तत्पदवीमिमे॥
वसुदेवोग्रसेनौ च तथा तौ नन्ददेवकौ।
गोपाला यादवाश्चैव ये चान्ये ताननुव्रताः॥
पश्यन्तु निभृतैर्नेत्रैर्हन्यमानौ स्वदारकौ।
आहूयन्तां जनपदाः पश्यन्तु खरसंयुगम्॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

### [ टीका ]

हे महामात्र ! हस्तिपक तस्यैव सम्बोधनं महामते इति इदं वक्ष्यमाणं वचः शृणु कुवलयापीडाख्यो द्विपो गजो रङ्गस्य युद्धस्थानस्य द्वारि संस्थाप्यः कथम्भूतः प्रभिन्ने विकसिताग्रे करे भा कान्तिर्यस्य तन्मुखं यस्य करे आरोपितो ग्राहितो मुद्गरो यस्य सः तेन कुवलयापीडेन तावानकदुन्दुभेः सुतौ तत्रैव द्वार्येव हन्तव्यौ अथ स महामात्रः व्याकुलचित्तः प्राह किमिति पृथ्वीपते-र्भोजराजस्य कंसस्य तव भगिनीपुत्रौ रामकृष्णौ कथं मया हन्तव्यौ इत्ययोग्यतासूचनाय स्वश्लीयावित्युक्तिः तेन महामात्रे-णेत्थमुक्तः स कंसो दुर्मतिर्नृपः समुदितान्सर्वान् श्रावयन् पुनराह कंसवचनमेवाह। शृणुध्वमित्यादिना भूतनाथाय मीढुष इत्यन्तेन। एतद्वक्ष्यमाणं वचः शृणुध्वमिति श्रवणाभिमुख्यप्रार्थनाममोदित-माकर्ण्य तत्सर्वं भवन्तो हृदि धारयन्तु इतिश्रुतस्य चित्ते स्थिरी करणप्रार्थना किन्तदित्यपेक्षायां तावदात्मनो बन्धुषु विद्वेषकारण-परमिति हासं प्रतिजानीते। येनेति। येन हेतुनाहं बन्धुषु असु-हृत्त्वं द्वेषमाश्रितस्तेष्वेव चरामि तस्य विद्वेषपूर्वकचरणस्य कारणं ब्रवीमि इति शेषः तत्परमितिहासमाह। मातेत्यादिना महाभागा सुन्दरी भाग्यशालिनी वा मम माता महत्युद्याने वने कदाचिद्विच-रन्ती बभूव कथम्भूते वने मन्देन मारुतेन वीजिते सञ्चलिते प्रोत्फुल्लैरशोकादिभिर्युते भ्रमतां भ्रमराणां संघातः सङ्घो यस्मिन् कूजद्भिः कोकिलैः संकुले व्याप्ते नृत्यतां शिखण्डिनां मयूराणां निवहः सङ्घो यस्मिन् मर्कटानामाटोपेन सम्भ्रमेण सुन्दरे वसन्तकालसहाचरिते रम्ये। शालानां वृक्षाणां मण्डलेन मण्डिते तत्रैवं भूते महोद्याने चरन्ती सुव्रता पतिव्रता ऋतुस्नाता स्वलंकृता च मे माता भर्तारं चिन्तयामास तदैव कश्चिन्नाम्ना द्रुमिल इति प्रसिद्धः गन्धर्वः इतरैरलक्ष्यमाणश्चरन् गां मम मातर-मसहायचारिणीं दृष्ट्वा तस्याश्चिन्तितं विज्ञाय सर्वेषां तत्त्वतो-भिप्रेतमर्थं वेत्तीति तथाभूतः हेतुगर्भमिदं तत्त्वात् विज्ञाय सस्मिते आलापवीक्षिते यस्य तदौग्रसेनम् उग्रसेनसदृशं वपुर्बिभ्राणः कामा-र्तस्तां पतिव्रतां कामयानामिच्छानुरूपं वने चरन्तीमाससाद सस्मितालापवीक्षितमिति क्रियाविशेषणं वा सा त्वजानन्त्यभ्येत्य वने तेन सह रेमे ततः सेङ्गितादिभिः कथञ्चित्पत्युरन्यं विदित्वा सती पतिव्रता हेतुगर्भमिदम् अतो नितान्तोऽपारः खेदो यस्याः आविले व्याकुले लोचने आशयो मनश्च यस्याः तथाभूता प्राह किमिति हे कितव ! धूर्त येन दुरात्मना त्वयेत्थमार्यगर्हितं निन्दितं कृतं स त्वं क इति इत्थं ब्रुवन्तीं तां शनैः परिसान्त्वयन् स दीर्घ-बाहुर्द्रुमिलः प्राह किन्तदाह। वयमिति। वयं तावद्गन्धर्वदेहजा गन्धर्वाः गीर्वाणैर्देवैस्तुल्या अमरवल्लभस्येन्द्रस्यानुचराश्च तुल्या-मरेत्यत्र सन्धिरार्षः कर्मधारयो वा हे भद्रे ! वयं भवादृशानां मनु-जासक्ताशनानां मनुजोपभोग्यानां मानुषीणामिति यावत् नच सुलभाः किन्तु दुर्लभा वयमित्यर्थः। तत्र हेतुमाह। जनुरिति जनुर्विनाशौ जन्ममरणे आदौ येषां तानाधिर्मनःपीडा इदं व्या-धीनामुपलक्षणं तान् भजन्तीति तथा तेषां नृणां तद्विपरीतानां सुराणाञ्च महत्तारतम्यमस्ति तस्माद्वयं दुर्लभा इत्यर्थः। इत्थं ब्रुवन्तं द्रुमिलं प्रति सा क्रोधादाकुलानीन्द्रियाणि यस्याः सा पुनराह किमिति इत्थं दुष्टचेष्टितं कृत्वा भूयः किमर्थं मां सान्त्वयसे इमान् दशपुण्यपापसाक्षिणः अतिक्रम्याबधीर्य तिर-स्कृत्य च येन त्वयेत्थमहं मलिनीकृता निशेशश्चन्द्रः यथा मदान्धेन गजेन्द्रेण पद्मिनी तद्वत्तत्तनुमध्यस्था निर्मलाप्यहं विशृ-ङ्खलेन लोकवेदमर्यादाविलङ्घिना येन त्वया मलिनीकृता स त्वं मां मलिनीकृतां हे अमराधम ! किमिति सान्त्वयसे इत्थं

महामात्र ! त्वया भद्र रङ्गद्वार्युपनीयताम् ।
द्विपः कुवलयापीडो जहि तेन ममाहितौ ॥ २५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

[ टीका ]

प्रवर्ती तां स पुनः शापशङ्कितः प्रोवाच तदेवाह । अनुलोम इति । हे सरोजाक्षि ! मनुष्याणां दिवौकसां च सङ्गमोऽनुलोमः क्रमप्राप्तः न्याय्य एवेति भावः । देवकान्तासु नराणान्तु सङ्गमः प्रतिलोमोऽन्याय्य इति जानीहि तेन कारणेन हे पङ्कजगन्धिनि नाहमपराधकृत् किञ्च तस्मादनुलोमात्संगमाच्छ्रीमान्धीमान्महोत्साही च पुत्रो जायतां सर्वथा च मद्वीर्यं न वृथा भवेन्नापि मे यातुरूपा भवेत् इत्थं वादिनं प्रति क्रुद्धा मम माता सुदुर्लभं पातिव्रत्यं मन्त्यज्यात एव सन्तप्ता तमाह । तदेवाह निःसेतोरिति । मर्यादातिलङ्घिनः भिन्नं निरस्तं वृत्तं स्वाचारो येन तस्य पापात्मनः लोकवेदप्रतिषिद्धाचारवर्त्तिनस्तव जनिष्यमाणः तनयः क्रौर्यादिगुणको भूयात् अगुणः अक्रोधाद्यात्मगुणरहितः देवतानां तपस्विनां द्विजानां च निग्राह्यः इतीत्थं तस्यां मन्मातरि ब्रुवन्त्यां क्रुद्धायां च सत्यां स द्रुमिलः शापशङ्कितः महामियं शपेतेति शङ्कितस्तर्हि तावकानां त्वद्बन्धूनामेव शत्रुर्भवेदित्युक्त्वान्तर्हितवान् तस्मिन् द्रुमिले तस्मान्महोद्यानाद्गते सति मम माता उद्याने च केनाप्यविज्ञातः स वृत्तान्तो यस्यास्तथाभूता ऽभ्यपद्यत गृहमिति शेषः । ततः सा गर्भं धृत्वा प्रसवकालेनैव सुषाव प्रसूतवती कथमयं वृत्तान्तस्त्वया विज्ञात इत्यत्राह । इतीति । यदा नारद आह तत आरभ्याहं बन्धुषु तांस्तान् दुर्जनान्मम प्रतिकूलान् द्वेष्मि एतेऽपि मां सदा द्विषन्ति तत्र यूयं प्रमाणं खलु भवन्तो जानन्ति खल्वित्यर्थः अत उग्रसेनादीन् हत्वा वर्तमानस्यापि मम दोषो न जायते तत्र हेतुर्गन्धर्वजन्मन इति । गन्धर्वान्नतूग्रसेनाज्जन्मोत्पत्तिर्यस्य तस्य ममेति यतो न दोषस्तेन कारणेनाहमादेश्याम्याज्ञापयामि किमिति तौ रामकृष्णौ परुषं यथा तथा हन्येतामिति तावद्बलीयसा कुञ्जरेण कुवलयापीडेन हताभ्यां बालाभ्यां रामकृष्णाभ्यां पूजोपकरणभूताभ्यां पारत्रिकीं परलोकस्य वैवस्वतायुद्देश्यकपूजां कृत्वा इमे वसुदेवादयोऽपि तयोः पदवीं यान्तु ततस्तावल्लोकान्तरप्राप्तिरेव वसुदेवादिभिः परत्र कर्त्तव्या पूजेति वा भोः अतो वसुदेवादयस्तदनुव्रताश्च सर्वे हन्यमानौ दारकौ बालकौ वारिभृतैः शोकाश्रुजलपूर्णनेत्रैरित्यर्थः । पश्यन्तु जानपदा देशवासिन आहूयन्तां किमर्थं मम पौरुषं पश्यन्तु ।

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

[ टीका ]

हे महामात्र ! हस्तिप कुवलयं भूमण्डलमापीडयतीति कुवलयं कैरवमापीडे शेखरे यस्य स तथेति प्रभिन्नकरटामुखः मदस्राविगण्डमुखः ॥

मुद्गरो लोहदण्डः ॥

जगतीपतेः राजप्रधानलोकभर्तुः जगतीराजप्रधानेऽपीति हलायुधः ॥

सालानां सर्जानां मण्डले समूहेनालंकृते ॥

नाम प्रसिद्धः ॥

सर्वेषां सत्त्वानां प्राणिनां आशयार्थम् अभिप्रेतार्थं वेत्तीति सर्वसत्त्वाशयार्थवित् ॥

नितान्तखेदेन अतिमात्रव्यथया आविलौ संकुलौ लोचनाशयौ यस्याः सा तथा ॥

गीर्वाणतुल्यधामस्वलुभानुगाद्य अमरत्व इन्द्रः ॥

जराच विनाशश्च जराविनाशौ तौ आदी येषाम् अखिलानामाधीनां ते जराविनाशाद्यखिलाधयः तान् भजितुं शीलमेषामस्तीति जराविनाशाद्यखिलाधिभागिनः तेषां महान्तरं विशेषः ॥

अस्तु विशेषस्ततः किंदोषः स्यादितिधिया वक्ति इतीति ॥

ननु कथमेतद्दुष्टचेष्टितं किमप्यतिक्रम्याकरणान्नोप्यत्याधिति तत्राह । इमानिति । अवधार्य अवज्ञाय ॥

मलिनत्वं सदृष्टान्तमाह । गजेनेति । अमरैरधमः गर्हितः अधमो गर्हितन्यूनाविति च देवयोनिषु नीच इति वा ॥

मया कृतस्य कर्मणः सायत्ये जलान्यतिक्रमणदोषापादनं न स्याद्देवयोनित्वेन मम त्वत्सङ्गमोऽनुकूल एव विहितत्वादिति छलाभिसन्धिराह । इतीति । दिवौकसां देवानां मनुष्यासु स्त्रीषु सङ्गमो ऽनुलोमोऽनुकूलः ॥

मनुष्याणां देवस्त्रीषु समः प्रतिलोमो विरुद्धः शान्तन्वादीनां गङ्गादिषु सङ्गमो दृष्टचरोऽतः कथमेतदिति । मन्दाशङ्कां पूर्वाऽत्र स्वामपेक्ष्य दोषाशङ्का नास्तीति हि शब्देन परिहरति ॥

निस्सेतोरित्यस्य विवरणं भिन्नवृत्तस्येति वृत्तं चरितम् अस्य विवरणम् उन्मार्गवर्तिन इति निर्दयः निर्गता करुणा यस्मात्स तथा अघृणः अकुत्सजुगुप्सारहितः घृणा जुगुप्सा कृपयोरिति च दयदान गतिशोषणादिष्विति धातोः यजनादिधर्मशून्यः घृणा कृपा तया रहितः ॥

तावकानां देवानामिति शेषः ॥

बन्धुषु दुर्जनान् बंधुभूतान् दुर्जनान्वा ॥

के ते इति तत्राह । उग्रसेनमिति ॥

कुतः पितृहत्यादिदोषो नास्तीति तत्राह । ममेति ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहितौ शत्रू ॥ २५ ॥

आरभ्यतां धनुर्यागश्चतुर्दश्यां यथाविधि ।
विशसन्तु पशून्मेध्यान्भूतराजाय मीढुषे ॥ २६ ॥
इत्याज्ञाप्यार्थतन्त्रज्ञ आहूय यदुपुङ्गवम् ।
गृहीत्वा पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥ २७ ॥
भो भो दानपते ! मह्यं क्रियतां मैत्रमादृतः ।
नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मीढुषे वरदाय ॥ २६ ॥

अर्थतन्त्रज्ञोऽर्थसिद्धान्तमेव जानातीति ॥ २७ ॥

हे दानपते ! अक्रूर मैत्रं मित्रकृत्यं त्वया क्रियतां त्वत्तोऽन्य आदृतः सादरो हिततमश्च न विद्यत इति ॥ २८—३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो किम्वा मल्लानां प्रियतमानां श्रमोत्पादनेन मत्तहस्तिनैव सुखं तत् साध्यमिति वहिर्व्यञ्जयन्नन्तस्तु बिभ्यदेवाह । मंहेति । भद्र ! हे चतुरेति प्रोत्साहयति एतदर्थमेवास्मिन् स्वयमनेन श्रीनारदाच्छ्रुतमात्मजन्म सौभपति द्रुमिलाख्यदानवादुग्रसेनस्य रूपधरात् तत् पत्न्यां स्वदुर्जन्म यथा वृत्तं तथा कथितं तद्विशेषः श्रीहरिवंशे वर्त्तत एव । रङ्गस्य द्वार्युप समीपे नीयतां प्रायो राजवाहनहस्तिनो द्वार्येव स्थापनं तैः सङ्कटस्थानत्वादिति तु गूढो दुष्टभावः । यागेंधीमते जहीति पूर्ववत् ॥ २५ ॥

न केवलं लौकिक एवोपायः कर्त्तव्यः । किन्तु दैवोऽपि क्रियतां येन तन्मूलकोत्सवे मल्लक्रीडादर्शनव्याजेन तावप्यानेयौ स्यातामित्याशयेनाह । आरभ्यतामिति । भूतराजाय भूतेश्वरसंज्ञाय मथुरापालाय तस्य धनुषोऽपि दैवताय श्रीरुद्राय मीढुषे । मेहति सिञ्चति वरदानेन तर्पयतीति तस्मै । इयमपि भयोक्तिरेव ॥ २६ ॥

अर्थो द्वितीयपुरुषार्थः । तत्र तन्त्रं सिद्धान्तः । किम्वा तस्य शास्त्रमेव नतु धर्मादिशास्त्रं जानातीति तथा सः । यदुपुङ्गवमिति सर्वेषामेव यदूनामयमास्थास्पदं ततोऽस्यैवात्र योग्यता नतु केवलमदीयानामिति तद्विचाराभिप्रायेणोक्तम् । गृहीत्वेति स्नेहप्रदर्शनार्थम् अवश्यमात्मोक्तप्रतिपालनार्थञ्च अत एव तत्र तस्मिन्नेव निजपरिवारगोष्ठीमध्ये तत इति पाठे स एवार्थः इ स्फुटम् ॥ २७ ॥

भो भो इत्यादरे वीप्सा दानपते ! हे वदान्यवरेत्यर्थः । यतो मदर्थितमपि त्वयावश्यं सम्पाद्यमिति भावः । मदर्थं मित्रोचितकृत्यं क्रियताम् । ननु भोजराज ! कुतो मामेव प्रेरयसि सर्वे यादवास्तवाज्ञाकारिणस्तत्राह । आदृत इत्यादिना ॥ २८॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे महामात्र ! हे भद्र कुवलयापीडाख्यो गजो रङ्गद्वार्युपनीयतां प्राप्यतां तेन कुवलयापीडेन मम शत्रू जहि घातय ॥ २५ ॥

चतुर्दश्यां यथाविधि धनुर्याग आरभ्यतां मीढुषे इष्टवर्षिणे भूतराजाय रुद्राय मेध्यान्पशून् विशसन्तु ॥ २६ ॥

इत्थमाज्ञाप्यार्थतन्त्रज्ञः शास्त्रसिद्धान्ताभिज्ञः कंसः यदुश्रेष्ठमक्रूरमाहूय तस्य पाणिं स्वपाणिना गृहीत्वा अक्रूरं यथा तथोवाच ॥ २७ ॥

तदेवाह । भो भो इति । आदरात्संबोधनद्वयं दानपते महोदार मह्यं किञ्चित्त्वया मैत्रं मित्रकृत्यं क्रियतां यतस्त्वत्तोऽन्यो हिततमो भोजेषु वृष्णिषु च न विद्यते ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विशसन्तु सूदयन्तु भूतराजाय भैरवविग्रहधारिणे रुद्राय मीढुषे समर्थाय अभीष्टदात्रे वा अर्थतत्त्वज्ञं प्रयोजनयाथार्थ्यवत्तारं यदुपुङ्गवं यदुश्रेष्ठम् ॥ २५—२७ ॥

दानशब्देन वदान्या लक्ष्यन्ते तेषां पते अक्रूर मैत्रं मित्रकर्म ॥ २८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवदर्थमेवैतज्ज्ञातं तत्रापि सन्देहे उपायान्तरमाह । महामात्रेति । महामात्रो महाहस्तिपः कुवलयापीडस्य पट्टहस्तिनो यन्ता तस्य सम्बोधनं प्रोत्साहार्थं त्वया कुवलयापीडः रङ्गद्वारि नेतव्यः न त्वन्येन नाप्यन्यः भद्रेति संबोधनं तव कापि चिन्ता न भविष्यतीति ज्ञापनार्थं सरस्वतीसंवादात् अभद्रेति ज्ञानं कुः पृथिवी तस्या वलयस्य आपीडं मुकुटरूपं ततः किमत आह मम अहितौ कामक्रोधौ जहीति न त्वन्यः अहितः ॥ २५ ॥

एवं लौकिकमुपायमुक्त्वा अलौकिकमाह । आरभ्यतामिति । अयं विष्णुवंश इति तस्य प्रतीतिः अतः शिव आराध्यः स एव तत्प्रतिबलो भवितुमर्हतीति तत्रापि तस्य यागा बहवः तन्मध्ये युद्धजयोऽभिकाङ्क्षित इति धनुर्याग एव कर्त्तव्यः यत्र धनुषि शिवः पूज्यते स शैवतन्त्रे धनुर्यागः प्रसिद्धः चतुर्दश्यां स कर्त्तव्यः यतश्चतुर्दशी शिवतिथिः यथाविधीति अधिवासनादिपुरःसरं तत्तन्त्रोक्तन्यायेन हिंसाप्रचुरश्च यागः कर्तव्यः

अतस्त्वामाश्रितः सौम्य ! कार्यगौरवसाधनम् ।
यथेन्द्रो विष्णुमाश्रित्य स्वार्थमध्यगमद्विभुः ॥ २९ ॥
गच्छ नन्दव्रजं तत्र सुतावानकदुन्दुभेः ।
आसाते ताविहानेन रथेनानय माचिरम् ॥ ३० ॥
निसृष्टः किल मे मृत्युर्देवैर्वैकुण्ठसंश्रयैः ।
तावानय समं गोपैर्नन्दाद्यैः साभ्युपायनैः ॥ ३१ ॥
घातयिष्य इहानीतौ कालकल्पेन हस्तिना ।
यदि मुक्तौ ततो मल्लैर्घातये वैद्युतोपमैः ॥ ३२ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

शैवतन्त्रे शिवभेदा बहवः सन्तीति तदर्थं हिंसाप्रचुरश्चेत् क्रियते तदा तादृश एव देवो भवतीति तदाह । भूतराजायेति । मीढुषे कामपूरकाय सर्वथा फलदात्रे ॥ २६ ॥

एवं दृष्टादृष्टोपायमुक्त्वा समानयनोत्तरकालमेतदिति समानयनार्थमक्रूरं प्रेषयितुं तमाकारितवानित्याह । इत्याज्ञाप्येति । अर्थतन्त्रज्ञः कार्यपरिकराभिज्ञः अक्रूरं विना नान्येन कार्यं सिध्यतीति ज्ञात्वा यदुपुङ्गवं यादवश्रेष्ठं गृहादाहूय पाणिना तस्य पाणिं गृहीत्वा सम्माननार्थं परिगृह्य ततः प्रीतं ज्ञात्वा स्वभावतोऽप्यक्रूरमुवाच इत्याश्चर्यं . नहि भगवद्भक्त एवं कार्यार्थे प्रेषयितुमुचित इति ॥ २७ ॥

भोभो इति संबोधने द्विरुक्तिरत्यादरसूचिका दानपत इति तद्धर्मकीर्त्तनं स हि दानमात्रस्याधिष्ठाता द्वादशसंवत्सरपर्यन्तं प्रत्यहं गोदाने क्रियमाणे जातः तन्मातापि तथा गान्दिनी यथा आर्त्तेभ्योऽन्नदानं तथा मह्यमार्त्ताय भगवान् देय इत्यर्थः । मह्यं मैत्रं मित्रकार्यं क्रियताम् अनेन त्वयि मैत्री स्थाप्यते यथा मित्रस्योचितं तथा कुर्वित्यर्थः । तत्राप्यादृतः आदरयुक्तः कर्त्तरि क्तः मया वा आदृतः आदृतो यतः एतादृशं कर्म अन्येन कारणीयमित्याशङ्क्याह । नान्य इति । त्वत्तः अन्यः मे हिततमो नास्ति अनुवृत्त्या ज्ञायते भोजाः पितृवंश्याः वृष्णयो यादवाः सामान्यविशेषभावे तदुद्भयमाह अतः सामान्यतो वा विशेषतो वा नान्यो हिततमो वर्तत इत्यर्थः ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

महामात्र ! हे हस्तिनियन्तः अहितौ शत्रू ॥ २५ ॥

ममाभ्युदयार्थं विशसन्तु छित्वा यच्छन्तु भूतराजाय भूतेश्वराय मीढुषे वरदाय ॥ २६ ॥

अर्थतन्त्रं द्वितीयपुरुषार्थस्यैव सिद्धान्तं नतु धर्ममोक्षयोर्जानातीति सः ॥ २७ ॥

मह्यं मां प्रसादयितुं मैत्रं मित्रकृत्यम् ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेमहामात्र ! हस्तिप अहितौ शत्रू ॥ २५ ॥

मीढुषे वरदाय भूतराजाय रुद्राय ॥ २६ ॥

अर्थतन्त्रज्ञः अर्थशास्त्राभिज्ञः नतु मोक्षशास्त्राभिज्ञः ॥ २७ ॥

भोभो दानपते ! यतस्त्वं आदृतः भोजेषु वृष्णिषु च त्वत्तोऽन्यो न विद्यते उभयकुलप्रियोऽसीत्यर्थः । अतो महागुणो भवान्मम हिततमः अतः मह्यं किञ्चिन्मैत्रं मित्रकृत्यं त्वया क्रियतामित्यन्वयः॥२८॥

---

भाषा टीका ।

हे भद्र महामात्र ! तुम कुवलयापीडनामा हाथी को रंग भूमि के दरवाजे में लेजाना तिससे मेरे शत्रु दोनों को मारना ॥ २५ ॥

चतुर्दशी के दिन विधि पूर्वक धनुर्याग का आरम्भ करो सब मनोरथों के देनेवाले भूतराज महादेव के अर्थ पशुओं को मारे पूजकलोग ॥ २६ ॥

सब नीतिशास्त्र के जानने वाले कंसने इस प्रकार सबको आज्ञा देकर यादवों में श्रेष्ठ अक्रूरजी को बुलाकर हाथ से हाथ पकड कर इस वचन को कहा ॥ २७ ॥

हे दानपति ! अक्रूरजी मेरे एक मित्रताका काम कीजिये आदर में आपसे अधिक मेरा भोज तथा वृष्णि इन मे और कोइ भी प्रिय नहीं है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तौ मे मृत्युर्नितरां सृष्टः वैकुण्ठसंश्रयैर्विष्णु संश्रयैर्देवैः ॥ ३१ ॥

किं ततस्तत्राह । घातयिष्य इति । कालकल्पेन मृत्युतुल्येन वैद्युतोपमैरशनितुल्यैः ॥ ३२—३४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे सौम्येति । प्रोत्साहनार्थं निजमित्रत्वेन सहजशान्तत्वेन वा आश्रितः शरणं गतोऽहम् । किमर्थं कार्यस्य गौरवं गुरुत्वं

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्य साधनं गुरुप्रयोजनं साधयितुमित्यर्थः । ननु त्वमेव स्वयं सर्वार्थे शक्तः किं मयेति चेत् सत्यं समर्थस्यापि साहाय्येनैव कार्यं किल संसिध्येदिति दृष्टान्तेनाह । यथेति । विभुः समर्थोऽपि इति श्लेषेणेन्द्रादपि विष्णोर्न्यूनत्वं सूचितम् ॥ २९ ॥

एवं प्रोत्साह्य कार्यमाह । गच्छेति । तत्रैवासाते ननु प्रपलाय्यान्यत्र गताविति वक्तव्यमिति भावः । अनेनाधुना सुनिर्माय बहुधालङ्कृत्यावस्थापितेनेत्यर्थः । इति निजयानदानेनानुग्रहविशेषो दर्शितः । सुन्दराभिनव सुपरिष्कृतरथं दृष्ट्वा बालकौ तौ सुखं स्वयमेवारोक्ष्येते इति भावः । वस्तुतस्तु श्रीभगवदिच्छया पुरप्रवेशसामग्री सा ज्ञेया माचिरम् अचिरादेव ॥ ३० ॥

किमर्थं तदाह । निसृष्ट इति द्वाभ्याम । तयोरेकतरादिति शेषः । वैकुण्ठसंश्रयैरिति । तैर्निसृष्टेन तेन मम किं स्यादिति भावः । तावानयेति एकप्रयत्नत्वाद्द्वयोरिति भावः । अक्रूरप्रवर्त्तनार्थं तयोर्विष्णुत्वं त्वपन्हुतम् । नन्दाद्यैः सममिति अन्यथा शङ्कया तौ नागमिष्येते इति भावः । तेषामप्यनिष्टमत्र करिष्यामीति गूढो दुष्टभावः । साभ्युपायनैर्धृतदध्यादिसहितैः एतच्च धनुर्मखसत्ताबोधनार्थम् ॥ ३१ ॥

तच्च किमर्थं तदाह । घातयिष्य इति । ततस्तदा । अन्यत्तैः । धाग्देवीमते तु यदीह मधुपुर्यामानीतौ भवतस्तदा स्वपराजयेन तयोर्द्वारान्तः प्रवेशोत्साहवर्द्धनत्वाद्धस्तिनैव द्वारभूतेन घातयिष्ये रङ्गान्तः प्रापयिष्यामि । अतः कालकल्पेन मल्लानां मम चेत्यर्थात् । ततस्तदनन्तरं मुक्तौ स्वमुक्तिनिमित्तं पूर्ववन्मल्लैर्देय द्वारभूतैर्घातये स्वसमीपमपि प्रापयिष्यामि अतो मम मुक्तिहेतुत्वात् वैद्युतोपमैः क्रममुक्तिमार्गेनैवभगवत्सम्बन्धि दिव्यपुरुषोपमैरिति ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतस्त्वामेव हे सौम्याहमाश्रितः कथंभूतं गुरुतरकार्यसाधकं यथा विष्णुमाश्रित्येन्द्रः स्वार्थं स्वाभीष्टमध्यगमत्प्राप्तवांस्तथाहमपि त्वामाश्रितः प्राप्तवानिति ॥ २९ ॥

अतस्त्वं नन्दव्रजं गच्छ किमर्थं तत्र नन्दव्रजे वसुदेवस्य पुत्रावासाते तावनेन रथेनानय प्रापयाचिरं विलम्बं माकार्षीः ॥ ३० ॥

किमर्थं तत्राह । निसृष्टाविति । संश्रीयत इति संश्रयः वैकुण्ठो विष्णुः संश्रयो येषां तैर्देवैस्तौ मम मृत्यू निसृष्टौ कल्पितौ खल्वतः साभ्युपायनैर्नन्दादिभिर्गोपैः सह ताविहानयानीय दर्शयेत्यर्थः ॥ ३१ ॥

आनीतावेतावनेन मृत्युतुल्येन हस्तिना घातयिष्ये यदि ततो हस्तिना मुक्तौ अशिष्यतस्तर्ह्यशनितुल्यैर्मल्लैश्चाणूरादिभिर्घातये ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

सौम्य ! सुन्दर सौम्यो विप्रे सोमजीवे सुन्दरे सोमदैवते इतिचकार्यगौरवसाधनं महतः कार्यस्य साधनसमर्थत्वम् ॥ २९–३० ॥

निसृष्टः कल्पितः अभ्युपायनैः सहितैः ॥ ३१ ॥

वैद्युतो विद्युतो निर्गतोऽग्निः तस्योपमा येषां तैः ॥ ३२–३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः किमत आह । अतस्त्वामाश्रित इति । एतावत् कालं मां त्वमाश्रितः मधुनातु त्वामहमाश्रितः सौम्येति संबोधनम् आश्रययोग्यार्थं कार्यस्य महद्गौरवं तस्य साधनं प्रति तत्साधयितुं साधने वा साधनार्थं ननु विधेयस्याश्रयः कथं शक्त इति चेत् तत्राह । यथेन्द्र इति । इन्द्रो ज्येष्ठः विष्णुरुपेन्द्रः कनिष्ठः तथापि दैत्यैस्त्रैलोक्ये हृते तत्सिद्ध्यर्थं विष्णुमाश्रित्य कार्यं साधितवान् एवमहमपि साधयितुमुद्युक्तः स्वार्थं गमिष्यामि विभुरुपेन्द्रः अतः कार्यार्थं समाश्रयणे न निन्दितमिति भावः ॥ २९ ॥

तत्कार्यमाह । गच्छ नन्दव्रजमिति । ततः तत्रानकदुन्दुभेः जन्मकालेऽपि भगवदधिष्ठानत्वेन प्रसिद्धस्य सुतौ रामकृष्णौ तत्र व्रजे आसाते ततः किमत आह ताविहानेन रथेन आनय चिरं मा विलम्बो न कर्त्तव्यः ॥ ३० ॥

प्रयोजनाकाङ्क्षायामाह । निसृष्ट इति । किलेति प्रसिद्ध्या पूर्वं न्नारदगोपनम् उभावेव मृत्यू देवैर्निसृष्ट इत्यनुल्लङ्घ्यः ननु दैत्यानां देवा वध्या इति किन्तैरितिचेत्तत्राह । वैकुण्ठसंश्रयैः वैकुण्ठो विष्णुः स एव सम्यगाश्रयो येषाम् अतो भगवदाश्रयणं देवैः क्रियत इति नान्यथा सो ऽर्थः सेत्स्यति पूर्वं रथेनानयेत्युक्त्वा मृत्युत्वेन निर्देशे नानेष्यतीति पुनराह । तावानयेति । विशेषमाह समं गोपैरिति । सहैव कदाचिदायास्यतीति बालकत्वाद्वा नायास्यतीति पित्रा सखिभिः सहानयेति नन्दाद्यैरित्युक्तं व्याजार्थमाह । साभ्युपायनैरिति । अभ्युपायनं गृहीत्वा समागन्तव्यमिति वक्तव्यम् ॥ ३१ ॥

ततः स्वस्य भगवते निर्दोषार्थमन्तर्गतं भावमाह । इहानीताविति ॥ अयं कुवलयापीडः कालाद्यपन्यूनः अतः कालकल्पः योऽर्थः कालेन साधनीयः सोऽनेनेति कदाचित् कुवलयापीडो मत्तः अनवहितश्चेत् ततोऽन्तः प्रविष्टो भगवान् त्वामेव मारयिष्यतीत्याशङ्कायामाह । यदि मुक्ताविति । ततो यदि मुक्तौ तदा मल्लाः सन्ति ते विद्युदग्नितुल्याः न तेषां प्रतीकारः कश्चन तैः कार्यं साधयिष्यातीति भावः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कार्य्य गौरवेण गुरुतया साधयतीति तं ममात्र बन्धुषु मध्ये त्वत्तोऽन्यो नैपुण्येन कार्य्यसाधकः कोऽपि नास्तीत्यर्थः ॥ २९ ।

अनेनेति तर्जन्या कमपि नवीनं विचित्रं रथं दर्शयति । बालकत्वान्नवीनं चित्रमालोक्य ताभ्यामत्रायातुं शीघ्रमयं रथ आरोक्ष्यते इति भावः । कंसभुक्तो रथो भगवदारोहणानर्ह इत्यन्येन तत्र गत इति ज्ञेयम् ॥ ३० ॥

तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान् ।
तद्बन्धून्निहनिष्यामि वृष्णिभोजदशार्हकान् ॥ ३३ ॥
उग्रसेनञ्च पितरं स्थविरं राज्यकामुकम् ।
तद्भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥ ३४ ॥
ततश्चैषा मही मित्र ! भवित्री नष्टकण्टका ।
जरासंधो मम गुरुर्द्विविदो दयितः सखा ॥ ३५ ॥
शम्बरो नरको बाणो मय्येव कृतसौहृदाः ।
तैरहं सुरपक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तौ मे मृत्युर्नितरां सृष्टः वैकुण्ठो विष्णुस्तदाश्रितः ॥ ३१ ॥ वैद्युतोपमैरशनितुल्यैः ॥ ३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतो भवान्महागुणो ऽतः कार्य्यगौरवसाधनं गुरुतरकार्यसाधकं त्वामहमाश्रितोऽस्मि ॥ २९ ॥ ३० ॥

वैकुण्ठो विष्णुस्तत्संश्रयैर्देवैर्यौ मे मृत्युर्नितरां सृष्टः ययोरेकतरः मे मृत्युः कल्पित इत्यर्थः । ततो गोपैः समं सह आनयेत्यन्वयः ॥ ३१ ॥

कालकल्पेन वैद्युतोपमैः अशनितुल्यैः ॥ ३२-३४ ॥

भाषा टीका ।

इससे हे सौम्य ! कार्य गौरव के साधन के लिये हमने तुमारा आश्रय लिया है जैसे इन्द्र विभुने विष्णु भगवान् का आश्रय लेकर सब स्वार्थ का साधन किया है ॥ २९ ॥

आप अब नन्दके व्रजको जाओ वहां पर वसुदेव के दोनों पुत्र रहते हैं तिन दोनों को इस रथके ऊपर बैठाकर यहां ले आओ विलंब मत करो ॥ ३० ॥

विष्णुको आश्रय करने वाले देवतों ने उनहीं से मेरा मृत्यु निश्चय किया है उन दोनों को भेट के सहित नन्दादिगोपों के साथ इहां ले आओ ॥ ३१ ॥

इहां आने पर उन दोनों को काल सरीके हस्ति से मरवा डालेंगे यदि उससे बच जांयगे तो वज्र सरीके तेज वाले मल्लों से मरवावेंगे ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नष्टकण्टका नष्टशत्रुः ननु कतिपयासुहृद्वधेन नष्टकण्टका कथं स्यादिति तत्राह । जरासंध इति ॥ ३५—३६ ॥



श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु तद्बन्धुभ्यः स्वानिष्टाच्छङ्के तत्राह । तयोरिति द्वाभ्यां तद्बन्धून् तत्सुहृदो वसुदेवादीनपि हनिष्यामि । ननु कथं तयोः पूर्वमेव न हनिष्यसि चेत्तत्राह । तयो र्निहतयोः सतोरनुतप्तानेव सतः इति क्रोधातिशयो दर्शितः । वाग्देवीमते तु मुक्तौ तयोः प्राप्तयोः सतोस्तद्बन्धूनपि प्राप्स्यामि अव्यभिचारादिति भावः ३३ ॥

अन्ये च तत् पक्षपातिनः ॥ ३४ ॥

तत इत्यर्द्धकं नन्वहमपि भोजेषु किं तद्बन्धुः नेत्याह । हे मित्रेति त्वन्तु मम हितकारी अतस्त्वां प्रति पृथ्वीमपि विभजेयमिति भावः । जरेति सार्द्धकं सुरपक्षीयान् नृपान् कौरवादीन् वाग्देवीमते तु महीं भोक्ष्ये इति मुक्तौ सर्वानन्दान्तर्भावात् ॥ ३५ ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तयोर्निभित्तयोस्तप्तान् दुःखितान्वसुदेवप्रभृतीन् तद्बन्धूंश्च वृष्ण्यादीन् हनिष्ये ॥ ३३ ॥

ततोऽथातः स्थविरमप्यधुनापि राज्यमेव कामयमानं मत्पितरमुग्रसेनं तस्य भ्रातरं देवकञ्च तथान्येच मम विद्विषस्तान्सर्वान्हनिष्यामीति ॥ ३४ ॥

ततश्चैवं सति हे मित्र ! इयं पृथ्वी नष्टकण्टका नष्टशत्रुर्भविष्यति । कुतस्त्वं सर्वान्हन्तुं प्रभुस्तत्राह । जरासन्ध इति । द्विविदो वानरः प्रियः सखा ॥ ३५ ॥

शम्बरादयोऽसुरा मय्येव सहकृतं सौहृदं यैस्तथाभूताः तैर्जरासन्धादिभिः सहितोऽहं सुरपक्षीयान्नृपान्हत्वा महीं भोक्ष्ये अनुभविष्यामि ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मत्पितरं एव एत इति शेषः ॥ ३४ ॥

मे मित्र भवित्री भविष्यति ननु त्वत्तोऽधिका जरासन्धादयः कण्टकाः सन्ति तत्राह । जरासन्ध । इति ॥ ३५ ॥ ३६ ॥

एतज्ज्ञात्वानय क्षिप्रं रामकृष्णाविहार्भकौ ।
धनुर्मखनिरीक्षार्थं द्रष्टुं यदुपुरश्रियम् ॥ ३७ ॥

॥ अक्रूर उवाच ॥

राजन् ! मनीषितं सध्र्यक् तव स्वावद्यमार्जनम् ।
सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम् ॥ ३८ ॥
मनोरथान्करोत्युच्चैर्जनो दैवहतानपि ।
युज्यते हर्षशोकाभ्यां तथाप्याज्ञां करोमि ते ॥ ३९ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततोऽपि यत्कर्त्तव्यं तदाह । तयोरिति । तत्त्वात्तेषां युद्धादौ न सामर्थ्यं वसुदेवः पुरोगमो येषां तद्बन्धून् वृष्णिभोजादयः सर्व एव गणिताः ॥ ३३ ॥

तत उग्रसेनोऽपि यद्यपि पिता तथापि स दुष्ट इति वक्तुं तस्य दोषमाह । स्थविरं राज्यकामुकमिति । वृद्धोऽपि भूत्वा राज्यं कामयत इति य एव शत्रुषु स्थास्यति सएवापकरिष्यतीति तद्भ्रातरं देवकञ्च मारयिष्यामि किञ्च ये केचन मम विद्विषः बान्धवाः अन्ये च तान् सर्वानेव निहनिष्यामि तेषां हनने हेतुः विद्विषः इति ॥ ३४ ॥

ननु सर्वेषु हतेषु भोगो न भविष्यतीति किं हननेनेति चेत्तत्राह । ततश्चेति । एषा मही नष्टकण्टका भविष्यति ये केचन राजानः भूमौ चरन्ति पथिका इव तत्र ये प्रतिबन्धकाः ते कण्टकाः तेषु गतेषु नष्टकण्टका भवति अनेनास्याभिनिवेशवर्णनेन यदा भगवानस्मै मुक्तिं दास्यति तदास्य मनोरथः कर्त्तव्य इति भक्तहितार्थं निष्कण्टकं कृतवानिति निरूपितम् । अन्यथास्य मनोरथवर्णनं व्यर्थं स्यात् विपरीतोक्तिरिति विपरीता गतिरग्रे वक्तव्या निष्कण्टकभूमौ भोगः सिध्यति सहायाश्च वर्त्तन्त इत्याह । जरासन्धो मम गुरुरिति । गुरुः श्वशुरः हितोपदेष्टा च द्विविदो वानरः स दयितः प्रियः स्वभावतोऽपि सखा च ॥ ३५ ॥

शम्बरादयश्च तथेत्याह । मय्येव नान्यस्मिन् अन्यथा दैत्येष्वपि परस्परविसम्मतौ भोगो न सेत्स्यतीति तदर्थमेवकारः कृतं सौहृदं यैरिति पूर्वमपि तैरुपकारः कृत इति अग्रेऽपि कर्त्तव्य इत्यर्थः । ननु बहवो देवपक्षाः कथन्त्वयैकाकिना निवार्या इत्याशङ्क्याह । तैरहमिति । भोगेऽपि तेषां सहभावः शत्रुनिवारणेऽपि पूर्वं दैत्यानामेव भूमिः राज्यं स्वर्गश्च अतएव पूर्वदेवास्ते ब्राह्मणार्चिता देवाः पुरोहिता इव पश्चाद्ब्राह्मणादिभिः तान्निवार्य भगवन्तमाराध्य नित्यसृष्टिप्रकारेण वेदं दृष्ट्वा ततो देवा जाता इति कृत्रिमा एव ते ननु सहजा इति अतएव कालः तेषामपि पक्षपातं करोति तथाधुनापि करिष्यतीति तस्य मनोरथः नृपा युधिष्ठिरादयः अतः शान्तमेव विरोधकार्यं सेत्स्यतीति न भयं त्वया कर्त्तव्यम् ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निहतयोः सतोः ॥ ३३ ॥

ये चान्ये तांश्च ॥ ३४ ॥

ननु कथं नष्टकण्टका स्याज्जरासन्धादीनां विद्यमानत्वादेव तत्राह । जरेति गुरुः श्वशुरः ॥ ३५ ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नष्टकण्टका नष्टाहिता भवित्री भविष्यति ननु कुतः सपक्षाः प्रबलास्ते हन्तुं शक्याः अत आह । जरासन्ध इति ॥ ३५—३६ ॥

---

### भाषा टीका ।

उन दोनों के चले जाने पर चिन्ता से तपायमान नन्द आदिक उनके बन्धु जो वृष्णि भोजदशार्हक हैं तिनको फिर मारेंगे ॥ ३३ ॥

फिर राज्य के चाहने वाले वृद्ध पिता उग्रसेन को तथा उसके भ्राता देवक को और भी जो हमारे शत्रु हैं तिनको भी मारेंगे ॥ ३४ ॥

तिनके पीछे हे मित्र ! यह सब पृथिवी शत्रु रहित हो जायगी जरासन्ध हमारा श्वसुर है द्विविद वानर है सो हमारा सखा है ॥ ३५ ॥

शंवर नरक बाणासुर सब मेरेही में प्रेम करने वाले हैं इनको लेकर हम देवता पक्ष वाले राजाओं को मारकर इस पृथिवी का भोग करेंगे ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यदुपुरश्रियन्द्रष्टुञ्चेति ॥ ३७ ॥

तत्र स्वमनीषितं विचारितं सध्र्यक् सम्यक् स्वावद्यं मरणं तन्मार्जनम् तथाप्येतावानाभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह । सिद्ध्यसिद्ध्योरिति ॥ ३८ ॥

॥ श्रीशुक उवाच ॥

एवमादिश्य चाक्रूरं मन्त्रिणश्च विसृज्य सः ।
प्रविवेश गृहं कंसस्तथाक्रूरः स्वमालयम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे अक्रूरसंप्रेषणं नाम
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुरुषकारस्य व्यभिचारमाह । मनोरथानिति ॥ ३९-४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अर्भकाविति त्वया प्रतार्य तावानेतुं शक्याविति भावः । तत्प्रकारं शिक्षयति । धनुरिति । वन्येभ्यस्तत्राप्यर्तकेभ्यो यज्ञोत्सवपुरीशोभादर्शनं नितरां रोचेतेति भावः । तथाच श्रीहरिवंशे ।—

वाच्यश्च नन्दगोपो वै करमादाय वार्षिकम् ।
शीघ्रमागच्छ नगरं गोपैः सर्वैः समन्वितः ॥
कृष्णसङ्कर्षणौ चैव वसुदेवसुतावुभौ ।
द्रष्टुमिच्छति संक्रो वै सभृत्यः सपुरोहितः ॥
एतौ युद्धविदौ रङ्गे कालनिर्याणयोधिनौ ।
दृढौ च कृतिनौ चैव शृणोम्यव्याहतावुभौ ॥
अस्माकमपि मल्लौ द्वौ सज्जौ युद्धकृतोत्सवौ ।
ताभ्यां सह नियोत्स्येते तौ युद्धकुशलावुभौ ॥
द्रष्टव्यौ च मयावश्यं बालौ तावमरोपमौ ।
पितृस्वसुः सुतौ मुख्यौ व्रजवासौ वनेचरौ ॥
वक्तव्यश्च व्रजे तस्मिन् समीपे व्रजवासिनाम् ।
राजा धनुर्मखं नाम कारयिष्यति वै सुखी ॥
सन्निकृष्टे प्रजास्तत्र निवसन्तु यथासुखम् ।
जनस्यामन्त्रितस्यार्थे यथा स्यात सर्वमव्ययम् ॥
पयसः सर्पिषश्चैव दध्नो दध्युत्तरस्य च ।
यथा कामप्रदानाय भोज्याधिश्रयणा चेति ॥ ३७ ॥

तच्छ्रुत्वा स्वीयभगवद्दर्शनतद्द्वारा तन्मारणलक्षणदीर्घ स्वामीष्टयुगलसिद्धयाशया तत्तदर्थमेव स्वीय तदात्मीयतां प्रख्यापयितुमिच्छया च तदुक्तं श्लाघते राजन्निति द्वयेन । सध्रूगित्यत्र हेतुः हे राजन्निति । राज्ञस्तव दण्डनीति शास्त्रानुगामित्वादित्यर्थः । ननु धार्मिकोऽयं कथं केवलां दण्डनीतिमनुमोदते तस्मादस्येदं कूटवाक्यमेवेत्याशङ्क्य स्वाभिप्रायं गोपयन् तदनुवादेनापि श्लाघते कुर्यात् विधिलिङ्गा धर्मशास्त्रमतेऽप्येतादृशसङ्कटप्रतीकारादौ प्रयतेत एवेत्यर्थः । तदुपेक्षायामात्महत्यादि पापापत्तेः । किन्तु सिद्ध्यसिद्ध्योः समो हर्षदुःखरहितः एव सन् कुर्यादिति विशेषः सममिति पाठे क्रियाविशेषणत्वं भावमिति शेषो वा ॥ ३८ ॥

निवृत्तधर्मपराणामस्माकं तु तदपि न कर्त्तव्यं किन्तु सर्वदेवमयस्य राज्ञस्त्वाज्ञैव क्रियत इति प्रकारान्तरेणापि स्वाभिप्रायं गोपयितुं तस्मिन् स्वभक्तिं दर्शयितुं चाह । मन इति । अपि शब्दात् किमुत दैवोपकृतान् तस्मात् कृतेऽपि साम्यभावने यथावसरं हर्षशोकाभ्यां युज्यते एव ननु निवृत्तिवदधिकृतं सुखमित्यर्थः । यद्यपि एवमथापि ते तवाज्ञां करोमि करवाणीत्यर्थः । भाविसूचना चेयं स्वावश्यमार्जनमसुरत्वखण्डनं मुक्तिप्राप्तेः कुर्याद्द्वयानिति शेषः हि यस्माद्दैवं श्रीकृष्णलक्षण ईश्वर एवात्र फलदात् न तत्र भवत्स्वाधीनत्वमिति भावः । जनो भवादृशः यद्यप्येवमीश्वर एवात्र स्वयं कर्त्ता न मादृशस्यात्र किञ्चित्करत्वम् अथापि तदानुकूल्यरूपेण तद्भक्तजनव्यवहारेणैव करोमीति अत्रारिष्टवधानन्तरं कंसस्य यादवान् प्रति सकपटप्रोत्साहनवाक्यं श्रीवसुदेवं प्रति च निन्दनं तथा कंसं प्रति साक्षात्सौधिकारः अन्धकस्य च वाक्यजातमिति श्रीहरिवंशमतम् ॥ ३९ ॥

स्वगृहमन्तःपुरं स्वमालयं पुरम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
षट्त्रिंशोऽध्याय ॥३६॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतत्सर्वं मम चिकीर्षितं ज्ञात्वा रामकृष्णावर्भकौ इहानय ननु वां हन्तुं कंस आहूतवानित्युक्ते सति तौ पलायेतां तत्राह । धनुरिति । धनुर्मखनिरीक्षणार्थं मधुपुरश्रियश्च द्रष्टुमाहूतवानिति त्वया वाच्यमित्यर्थः ॥ ३७ ॥

इत्थमुक्तः प्राहाक्रूरः । राजन्निति । स्वावद्यं मरणं तस्य मार्जनं परिहार इति यत्तव मनीषितं विचारितं तत्सम्यगेव तथाप्यत्राभिनिवेशो न कार्य इति भविष्यत्सूचयन्नाह । सिद्ध्यसिद्ध्योरिति । हि यस्माद्दैवं फलभावनं फलदमतः सिद्ध्यसिद्ध्योः समः कर्म कुर्यात् ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचान्द्रिका ।

पुरुषकारस्य व्यभिचारमाह । मनोरथानिति । दैवहतानुथैर्मनोरथान्करोति जनः स्वसुखार्थकर्मणा दुःखेन युज्येत कदाचित्सुखं न तथापरदुःखार्थेन स्वयमेव दुःखेन युज्यते परस्तु सुखेनैवेति यद्यप्येवं तथापि तवाज्ञां करोमि ॥ ३९ ॥

इत्युक्तस्तमक्रूरमामन्त्र्य पृष्ठानुज्ञाप्य मन्त्रिणो विसृज्याज्ञाप्य कंसः स्वगृहं प्रविवेश तथाक्रूरश्च स्वगृहं विवेश ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्

षट्त्रिंशोऽध्यायः ॥ ३६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आनयने निमित्तमाह । धनुर्यागलक्षणोत्सवार्थम ॥ ३७ ॥

मनीषितं ननसा कर्तुमिष्टं मरणं ज्ञात्वापि परिहारप्रयत्नो न कृत इति यदत आत्महत्यालक्षणं यदवद्यं तस्य मार्जनं परिहरणं भवति फलनिष्पत्तिमज्ञात्वा प्रयत्नो व्यर्थ इति न निरूप्य इत्याह । सिद्धीति । फलसिद्धावसिद्धौच हर्षशोकाभ्यां न विषमो भूत्वा कर्म कुर्यादितिविधिशास्त्रं तर्हि फलावाप्तिः किमधीनेति तत्राह । दैवमिति फलभावनं फलकारणम ॥ ३८ ॥

तर्हीदं नापेक्षितं किनेत्याह । मनोरथानिति । जनेन क्रियमाणं यत्त्वयाप्यनुष्ठेयमिति भावः । यद्यपि फलसिद्धिः हर्यधीना तथापि ॥ ३९—४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्

चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किन्त्वेनज्ज्ञात्वा क्षिप्रमानय ननु समर्थौ रामकृष्णौ कथं मया आनेतुं शक्याविति चेत्तदाह । अर्भकाविति । बालकौ हि कौतुकार्थं यत्र क्वचनागच्छतः तयोः स्थाने नास्मदभिप्रेतं वक्तव्यं किन्तु धनुर्मखनिरीक्षार्थं यदुपुरस्य मथुरायाश्च श्रियं द्रष्टुमिति मित्रभेदं न कारिष्यतीति सर्वमेतदुक्तवान् अक्रूरोऽयं द्विस्वभावो जीवः सात्त्विककार्यार्थं दैत्याविष्टश्च अन्यथा तं प्रति कंसो न वदेत् नापि दैत्यैः सह प्रीतिः स्यात् तद्दत्तविषयान्वा अनुभूयात् एवंसति तस्य कार्यकर्तृत्वमपि न विरुद्धं भवति स्यमन्तकादिप्रसङ्गश्च न विरुद्धो भवति ॥ ३७ ॥

सांदिग्धन्तं प्रत्युत्तरमाह । द्विस्वभावत्वात राजन्निति । संबोधनम् आज्ञाकरणावश्यकत्वार्थं स्नेहसूचनार्थं मनीषितं विचारितं सम्यगेव तदपि तव ननु मम विचारस्य सम्यक्त्वे हेतुः स्वावद्यमार्जनमिति । येन स्वस्य लौकिकप्रतीत्यापराधो न भवति अनेन कालो राजा त्वन्तु सेवक इति निरूपितम् अन्यथा कथमयं भीतो भवेत् भ्रमाल्लोकानामन्यथा प्रवृत्तौ कालस्तानेव दुष्टान् जानीयादिति न तव दण्डः स्यात् दैत्यसिद्धान्तश्चावलंम्बित इति नशास्त्रद्वारापि विरोधः देवानामेवहि राज्ये तेषामधिकारात् तदुक्तरीत्या नरकस्वर्गौ ननु दैत्यानामधिकारे अन्यथा दैत्यैर्देवपराजयो न स्यात ग्रहास्तु साधारणाः अतो मनीषितं सम्यगिति न विरुध्यते अयञ्च सर्वसिद्धान्ताभिज्ञः कालस्यैषा व्यवस्था भगवान् सर्वप्रकार इति न भगवच्छास्त्रविरोधः अन्यथा वाचनिकी दैत्यानां मुक्तिर्बाधिता स्यात् विरुद्धेष्वपि मतेष्वनुभावश्च न स्यात् कालग्रहे प्रविष्टश्च भगवान् स्वकीयान् कालस्थानुद्धृतं नयतीति भगवल्लक्षणो देशः कालादतिरिच्यते अतो व्यवहारार्थं सर्व एव कालात् बिभ्यति भगवांश्च कालं वञ्चयित्वैव भक्तान्नयति कालरूपश्च भवति अतो भगवदवतारः कालप्रमाणबलं सर्वजनीनम् अन्यथा देवा ब्राह्मणाः धर्मश्च प्रतिष्ठिता न भवेयुः मध्यमकालौ द्विविधाविति देवदैत्यविभागः मूलभूतस्तु समः अतः क्रमार्थं एवेति प्रमेयबलासिद्धिरिति प्रमाणबलन्तु मूलोल्लङ्घनमपि कारयतीति सिद्धान्तरहस्यं यतो दैत्यानां सिद्धान्तो ऽनेनावलम्बितः अतः सिद्धान्तानुसारेण सम्यगेवावलम्बितम् अतः पक्षद्वये संबन्धात् मूलकालः किमनुगुण इति ज्ञातुमशक्यत्वात् नैकतरसिद्धान्तः सिद्ध्यतीति तं प्रतिसिद्धान्तमाह । सिद्ध्यसिद्ध्योः समः कुर्य्यादिति प्राणिना सर्वसिद्धान्ताभिज्ञेन यत् कर्तव्यं तत्राग्रहो न कर्त्तव्यः यतो द्वैधस्य विद्यमानत्वात् प्रयत्न एव स्वस्य न तु फलं दैवाधीनामित्याह । दैवंहि फलभावनमिति । फलं दैवमेव भावयति अनेन पक्षद्वयं समानमुक्तम् ॥ ३८ ॥

तदन्याद्भवति इदानीन्तु भगवानवतीर्ण इति द्वितीयपक्ष एव मुख्यः अतोऽनेन विचारितमनोरथः वृथैवेति विशेषमाह ! मनोरथान् करोतीति । उच्चैः स्वयोग्यैः इदं हि सर्वेश्वरेण विचारयितुं शक्यते अल्पोऽपि मनोरथस्तस्य सिद्ध्यतीत्याह । दैवहतानपीति । यदैव भगवानवतीर्णः तदैव सर्वे कंसादयो मारणीया इति अतो भगवता हता एव मनोरथास्तान् करोतीति भ्रान्त एवायं यतो जनः स्वयमेव जातः यद्यस्य मनोरथः सिद्ध्येत् कदाचिदपि तदा परगर्भे कथं जायेत कस्यचिद्वा मलरूपं रेतः कथमाश्रयेत् अतो यो मनोरथः कर्त्तव्यः स आत्मानं विचार्य कर्तव्यः अन्यथा चेत् हर्षशोकाभ्यां युज्यते कदाचिद्भगवान् किञ्चित्करोति किञ्चिच्च न करोतीति यद्यप्येवं ज्ञायते तथापि ते आज्ञां करोमीति अन्यथा स्वस्य तव कार्यं न सेत्स्यतीति ॥ ३९ ॥

एवमन्योऽन्यपरिभाषणमुक्त्वा उभयोः स्वस्थानगतिमाह । एवमिति।अक्रूरोक्तं तेन न विचारितमेव कार्यवैयर्थ्यात् अतस्तस्यैव कृतमनूद्योपसंहरति।एव मादिश्येति।चकारात् केशिनं हस्तिपांश्च जानपदाकरणार्थं प्रवृत्तांश्च मन्त्रिणश्च विसृज्य तान् बहिरेव स्थापयित्वा स्वयमन्तःपुरं गतः तथा अक्रूरः स्वस्यालयं गतः इति न तस्मिन् दिवसे

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

गृहान्निर्गमनं सोऽन्तःस्थितः तमर्थं चिन्तयिष्यति अयमपि स्वगृहं गतः गमनोपायं प्रकारं च अग्रस्थतृतीयाध्याये कृत्यं वक्तव्यं विचारितं च ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज-
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्
त्रयस्त्रिंशाध्यायविवरणम् ॥ ३३ ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इदं रहस्यतत्त्वं न वाच्यं त्वेतदित्याह। धनुरिति ॥ ३७ ॥
मनीषितं सध्र्यक् सम्यक् स्वावद्यं मरणं तन्मार्जनं तद्रूप्यत्र नीतिशास्त्रविधिं शृणिवत्याह। सिद्ध्यसिद्ध्योरिति। मनीषितस्य सिद्धावसिद्धौ च पुमान् समं भावमिति शेषः हि यतो दैवमदृष्टमेव भद्रमभद्रं वा भावयति करोतीति तत् ॥ ३८ ॥

जन्तुर्निकृष्टलोको ननु भवानिति। प्रकटोऽर्थः वस्तुतस्तु त्वं जन्तुरेव पशुनिर्विशेष इत्यर्थः। दैवहतान् अपिकारादूदैव पालितान् मनोरथान् करोति तत्र दैवपालितेषु मनोरथेषु हर्षः दैवहतेषु शोकः ताभ्यां जन्तुर्युज्यते युक्तो भवति तथापि एवमपि तवाज्ञां करोमि यतो भवांस्तु भाग्यवान् हर्षमेव प्राप्स्यतीति प्रकटो भावः वस्तुतस्तु अथापि यद्यपि जन्तोर्मुमूर्षोस्तवाज्ञा कर्त्तुं न युज्यते तदपि करोमि तव राजत्वान्मम तु त्वत्प्रजात्वादिति भावः। यद्वा अथापि तव मनोरथासिद्धावपि मम तु मनोरथः सेत्स्यत्येवेत्याज्ञां करोमीति ॥ ३९ ॥ ४० ॥

इति सारार्थ दर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षट्त्रिंशो दशमेऽध्यायः सङ्गतः सङ्गतःसताम् ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्वस्यावद्यं मरणं तस्य मार्जनं निवर्तकम् तव मनीषितं यद्यपि सध्र्यक् सम्यक् तथापि सिद्ध्यसिद्ध्योः समं यथा भवति तथा कुर्यादाचरेत् हि यतः फलभावनं दैवम् ॥ ३७ ॥ ३८ ॥

दैवमन्तरेण पुरुषकारसिद्धिर्नास्तीत्याह। मनोरथानिति। मनोरथान् करोति यद्यपि तथापि दैवहतान् पश्यामः अतो दैवमेव फलभावनं पुरुषकारस्य तु निमित्तमात्रत्वमिति भावः। हर्षशोकाभ्यां युज्यते ननु हर्षमात्रमेव यद्यपि दैवमन्तरेण मनोरथसिद्धिर्नास्ति तथापि ते आज्ञां करोमि ॥ ३९-४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षट्त्रिंशाध्यायार्थप्रकाशः ॥ ३६ ॥

---

भाषा टीका।

इस बात को जान कर तुम राम कृष्ण दोनों बालकों को यहां जल्दी ले आओ धनुर्याग के देखने को यदुपुरी मथुरा की शोभा देखने को ले आओ ॥ ३७ ॥

अक्रूर जी बोले हे राजन्! यह आप का विचार ठीक है आप के दोष के नाश करने के वास्ते है परंतु सिद्धि असिद्धी दोनों में सम बुद्धि करनी चाहिये क्यों की दैवही फल के सिद्धी करने वाला है ॥ ३८ ॥

सब मनुष्य दैव के नाश किये भी मनों रथों को बडे जोर से करता है फिर हर्ष शोक से युक्त होता रहता है तो भी मैं तो आपकी आज्ञा को करूंगा ही ॥ ३९ ॥

श्रीशुकदेजी बोले कंसासुर इस प्रकार से अक्रूरजी को आज्ञा देकर और सब मंत्रियों को भी विदा करके अपने घर में प्रविष्ट भया अक्रूरजी भी अपने घर को गये ॥ ४० ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे छत्तीस में अध्याय
की भाषाटीका समाप्त ॥ ३६ ॥

इतिश्रीमद्भागवते दशमस्कन्धे पूर्वार्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## ॥ सप्तत्रिंशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

केशी तु कंसप्रहितः खुरैर्महीं महाहयो निर्जरयन्मनोजवः ।
सटावधूताभ्रविमानसंकुलं कुर्वन्नभो हेषितभीषिताखिलः ॥ १ ॥
"विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ।
दुराशयः कंसहितं चिकीर्षुर्व्रजं स नन्दस्य जगाम कम्पयन्" [1]॥ ० ॥
तं त्रासयन्तं भगवान् स्वगोकुलं तद्धेषितैर्वालविघूर्णिताम्बुदम् ।
आत्मानमाजौ मृगयन्तमग्रणीरुपाह्वयत्स व्यनदन्मृगेन्द्रवत् ॥ २ ॥
स तं निशाम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः ।
जघान पद्भ्यामरविन्दलोचनं दुरासदश्चण्डजवो दुरत्ययः ॥ ३ ॥
तद्वञ्चयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः ।
सावज्ञमुत्सृज्य धनुःशतान्तरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ।
नारदेन स्तुतः क्रीडन् व्योमासुरमथावधीत् ॥
वृषवेषासुरं यद्वत्केशिनं हयवेषिणम् ।
कंसप्राणसखं हत्वा कंसं व्यसुमिवाकरोत् ॥

केशीत्थिति प्रथमश्लोकेन य एवं भूतः केशीत्यनूद्य तं भगवानुपाह्वयदिति द्वितीयेनान्वयः महाहयः सन्महीं निर्जरयन् श्लथयन्विदारयन्नित्यर्थः । सटाभिः केसरैरवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः सङ्कीर्णं नभः कुर्वन् हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन सः ॥ १ ॥

तद्धेषितैस्तैरतिनिष्ठुरैर्हेषितैः वालैः पुच्छलोमभिर्विघूर्णिताः परिभ्रामिता अम्बुदा येन तम आजौ सङ्ग्रामार्थम आत्मानं कृष्णम् अग्रणीः पुरतो निर्गतः सन्नुपाह्वयत्स्वसमीपमाजुहाव स च केशी तन्निशम्य मृगेन्द्रवन्नादमकरोत ॥ २ ॥

ततः केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्याभिमुखः सन्नभिजगाम किंच अत्यमर्षणोऽतिकुपितोऽत्यन्तमसहमानो वा प्रत्यक्पद्भ्यां जघान दुरासदोऽन्यैरभिभवितुमशक्यः दुरत्ययः उद्यतः सन् दुरतिक्रमः अत्र हेतुः चण्डजवश्चण्डस्तीव्रो जवो वेगो धावनं यस्य ॥ ३ ॥

तद्धननं वञ्चयित्वा तञ्च हननाय प्रसारितयोः पादयोर्हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा व्यवस्थितस्तथैव स्थितो बभूव॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

केशीतु नन्दव्रजं जगामेति शेषः । संज्ञाया अन्वर्थतां दर्शयति । सटेति ॥ १ ॥

स्वगोकुलं निजव्रजं त्रासयन्तम् । तच्च श्रीवैशम्पायनेनोक्तं "नृशब्दानुसरः क्रुद्धः स कदाचिद्दिनागमे । जगाम घोषसम्वासं नोदितः कालधर्मणा । तं दृष्ट्वा दुद्रुवुर्गोपाः स्त्रियश्च शिशुभिः सह"इत्यादि । कथम्भूतं स्वगोकुलं तत् तादृशप्रेमास्पदमित्यर्थः । यद्वा । तस्य केशिन इव हेषितैरिति समस्तमेव । तैस्तमुपह्वयदित्यन्वयः । तत्राग्रणीरिति भीतान् गोष्ठजनान् पृष्ठीकृत्य यमुनामार्गे निर्गतः सन् स्वसमीपं प्रत्याजुहावेत्यर्थः । श्रीगोविन्दस्थानमुत्तरेण यमुनाघट्टविशेषस्य केशिघट्टतीर्थत्वेन प्रसिद्धेः तथाच वाराहे । यमुनामाहात्म्ये । गङ्गाशतगुणं पुण्या यत्र केशी निपातित इति । अत्र विवरणं श्रीविष्णुपुराणे । त्राहि त्राहीति गोविन्दस्तेषां श्रुत्वा तदा वचः । सतोयजलदध्वानगम्भीरमिदमुक्तवान् । अलं त्रासेन गोपालाः! केशिनः किं भयातुरैः । भवद्भिर्गोपजातीयैर्वीरवीर्यं विलोप्यते । किमनेनाल्पसारेण हेषिताटोपकारिणा । दैतेयबलवाह्येन वल्गिना दुष्टवाजिनेति । श्रीहरिवंशे च । --

तमापतन्तं संप्रेक्ष्य केशिनं हयदानवम् ।
प्रत्युज्जगाम गोविन्दस्तोयदः शशिनं यथा ॥

---

[1] वीरराघव विजयध्वज वल्लभाचार्यशुकदेवानामयं पाठः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

केशिनस्तु तमभ्यासे दृष्ट्वा कृष्णमवस्थितम् ।
मनुष्यबुद्ध्या गोपाः कृष्णमूचुर्हितैषिणः ॥
कृष्ण तात न खल्वेष सहसा ते हयाधमः ।
उपसर्प्यो भवान् बालः पापश्चैष दुरासदः ॥
एष कंसस्य सहजः प्राणस्तात बहिश्चरः ।
उत्तमश्च हयेन्द्राणां दानवोऽप्रतिमो युधि ॥
त्रासनः सर्वदेवानां तुरङ्गाणां महाबलः
अव्ययः सर्वभूतानां प्रथमः पापकर्मणामिति ॥

तत्र शशिनमित्युक्तेः केशिनः शुक्ल एव वर्णो ज्ञेयः ॥ २ ॥

जघान हन्तुं प्रवृत्तः अरविन्दलोचनमिति प्रफुल्लपद्माभस्मेरनेत्रोन्मीलनेन वीक्षणादिति सावज्ञत्वमुक्तम् । यद्वा । श्रीबादरायणस्तन्निन्दोक्तिरियं तादृशसुन्दरसुकुमाराङ्गे दृष्टेऽपि तद्दुष्टभावानपगमात् । निशम्य निशाम्य दृष्ट्वेत्यर्थः । दुरासदो दुर्ग्रहः । यतश्चण्डजवः अत एव दुरत्ययः दुरभिभव इति ॥ ३ ॥

तं तादृशमपि । अधोक्षज इन्द्रियज्ञानाविषयो यः स कथं तत्पादघातविषयः स्यादित्यहो तस्य मूढतेति भावः । अत एव वञ्चयित्वा । रुषा स्वगोकुलत्रासनतः । यद्वा । अकारप्रश्लेषेण अरुषा लीलयैवेत्यर्थः । उत्सृज्य प्रक्षिप्य ततश्च केशी मुमुहे इति ज्ञेयम् ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रतियाते तु देवर्षौ कंस आहूय केशिनम् प्रेषयामासेत्युक्तम् । प्रेषितः स किमकरोदित्यत्राह । केशीत्वित्यादि नवभिः । केशी नामासुरः कंसेन प्रेषितः महाश्वः सन् मनस इव जवो वेगो यस्य सः खुरैर्महीं पृथ्वीं निर्जरयन् विदारयन् सटाभिः केसरैरवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः संकीर्णं नभः कुर्वन् हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन विशाले नेत्रे यस्य विकटं विशालमास्यबिलं यस्य बृहन् पीनो दीर्घश्च गलो यस्य नीलो महांश्च घनो मेघ उपमा यस्य सः दुराशयः दुष्टः आशयः कृष्णजिघांसात्मकः अभिप्रायो यस्य सः प्रसिद्धः कंसस्य हितं कर्तुमिच्छुः नन्दस्य व्रजं कम्पयन् जगाम ॥ १ । ० ॥

हेषितैस्ततस्त्वस्य गोकुलं त्रासयन्तं भीषयन्तं बालैः पुच्छरोमभिर्विघूर्णिताः परिभ्रामिता अम्बुदा येन तमाजौ युद्धे निमित्ते आत्मानं कृष्णं मृगयन्तमन्वेषयन्तं केशिनमग्रणीः पुरतो निर्गतः सन् भगवानाह्वयदाजुहाव ॥ २ ॥

स केशी रुषा मृगेन्द्र इव नादमकरोत्ततः स केशी तमाह्वयन्तं कृष्णं निशम्यावलोक्याभिमुखः सन्मुखेन खमाकाशं पिबन्निवात्यमर्षणः अत्यन्तक्रोधयुक्तः अभ्यद्रवदभ्यपतत् किञ्च प्रत्यक्पद्भ्यामरविन्दलोचनं कृष्णं जघान ताडितवान् कथम्भूतः दुरासदः अन्यैरभिभवितुमशक्यः चण्डः दुरतिक्रमो जवो वेगो यस्य सः ॥ ३ ॥

तद्धननं वञ्चयित्वा तं केशिनं हननाय प्रसारितपादयोः हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा धनुःशतान्तरे धनुःशतपरिमितदूरे सावज्ञं सावहेलनं यथा तथोत्सृज्य पातयित्वा व्यवस्थितः यथा तार्क्ष्यसुतो गरुत्मानुरगमुत्सृज्य व्यवतिष्ठते तद्वत् ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रोतॄणां मन्तॄणां प्रवक्तॄणां ध्यातॄणां च बुद्ध्यारोहार्थं सङ्कल्प्य भगवद्विक्रमं वर्त्तमानं वर्तिष्यमाणं च कथयत्यस्मिन्नध्याये तत्रादौ केशिदैत्यवधलक्षणं भगवद्विक्रमं वक्तुमाह । केशीति । निर्दरयन् भिन्दन् मनोजववत् जवो यस्य स तथा अभ्राणि च विमानानि च अभ्रविमानानि सटाभिः स्कन्धशीर्षरोमभिः अवधूतानि अभ्रविमानानि तैः संकुलं हेषितेनाश्वजातिशब्दितेन भीषितमखिलं यस्य स तथा हेषा हेषा च वाजिनामिति हलायुधः ॥ १ ॥

विकटं विस्तृतम् आस्यकोटरं मुखगर्तं यस्य स तथा दुराशयः दुष्टाभिप्रायः कृष्णहननलक्षणो यस्य स तथा ॥ ० ॥

वालेन पुच्छेन विघूर्णितो विभ्रान्तो ऽम्बुदो यस्य स तथा तम् आजौ क्षेपार्थमात्मानं स्वं मृगयन्तं विचिन्वन्तम् अज गतिक्षेपणयोरिति धातुः युद्धे वा द्वयमपि तादर्थ्ये सप्तमी अग्रणीस्तस्याभिमुखे स्थितः ॥ २ ॥

तं नादम् ॥ ३ ॥

तद्धननं सावज्ञम् अवमानसहितमिति क्रियाविशेषणम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—५ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

चतुस्त्रिंशे प्रेषितस्य तामसस्य निरूप्यते ।
कार्यं वाक्यानि च ऋषेर्लीलां काञ्चिद्धरेः प्रियाम् ॥
हेतुकार्यफलान्यत्र पूर्ववद्बोधितानि हि ।
केश्यागमनकार्यं तु ऋषिवाक्यान्नचान्यथा ॥
वधेन जातेनागच्छेदनर्थं कृतवानिति ।
वधो निदर्शनं तस्मादतो वाक्यानि बोधने ॥
बोधितश्चेद्धरिर्लीलां न कुर्यात् स्वेच्छया मुदा ।
तदा प्रमेयरीतिर्हि दुर्बलैव भवेत्सदा ॥
अतः फलार्थं लीला हि पूर्वजाता निरूप्यते ।
सिंहावलोकनं चापि करिष्यति हरिः स्वयम् ।
अतो न गोकुले चिन्ता कापीत्यपि निरूप्यते ॥
केशी हतो गुणैः कृत्वा तथा व्योम ऋषिः पुनः ।
कलामात्रमुवाचेति नव षोडश वै नव ॥

पूर्वाध्याये केशी प्रेषित इत्युक्तं तस्यागतस्य कृत्यमत्र नवभिरुच्यते पूर्वदैत्यवत् केश्यागमनं न भवतीति वक्तुं भिन्नं प्रकारमाह । केशीत्विति । अन्ये पूर्वं साधारण्येन नियुक्ताः केशी तु कंसेन प्रेषितः विशेषाकारेण तदा खुरैः महीं विदारयन् व्योमवद्देवागतः निर्दरयन् विदारयन् । ननु केशिनो राक्षसस्य कथं खुरा इत्याशङ्क्याह । महाहय इति । महानयमश्वः ननु संध्यायामागतः कथं शीघ्रमागत इति चेत्तत्राह । मनोजव इति । पूर्ववदस्यापि सामर्थ्यमाह । सटाभिरवधूताः अभ्रा विमानानि च तैः संकुलं नभः कुर्वन् इति । तस्य कायिको व्यापार उक्तः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वाचनिकमाह । हेषितभीषिताखिल इति । हेषितोऽश्वशब्दः तेनैव भीषितमखिलं येन साधारणप्रयोगः दैत्यानामपि भयजनकोऽयमिति ज्ञापनार्थः ॥ १ ॥

तस्य क्रियाव्यतिरेकेणापि रूपं दृष्ट्वा बिभ्यतीति ज्ञापयितुं रूपं वर्णयति । विशालनेत्र इति विशाले नेत्रे यस्य इयं विशालता प्रकरणवशात् भयानका ज्ञातव्या विकटमास्यकोटरं यस्य बृहन् गलो यस्य नीलो महान् घनः तस्योपमा यस्य नीलघनापेक्षयाऽधिक इति उपमानत्वनिरूपणार्थमुपमापदं रूपमेकेन गुणत्रयं मुखे वर्तत इति तत् ज्ञापनार्थं नेत्रे आस्यं कण्ठश्च वर्णितः अन्तर्दोषानाह । दुराशय इति । स्वभावतोऽप्यन्तःकरणं दुष्टमिदानीं तु सुतरामित्याह । कंसहितं चिकीर्षुरिति । ततो नन्दस्य व्रजं जगाम उपद्रवार्थमेव ॥ ० ॥

स तु शीघ्रमेव कार्यं करिष्यतीति तस्मिन्नागत एव रूपं दृष्ट्वैव त्रासः मारणपरिज्ञानयोः सामर्थ्यज्ञापनार्थं भगवानिति अक्लिष्टकार्योऽपि तथा कृतवानित्यत्र हेतुमाह । स्वगोकुलमिति । स्वस्य गोकुलमिति स्वा गावश्च तेषां कुलमित्यपि तैः प्रसिद्धैर्हेषितैः यानि देवानामपि भयजनकानि शीघ्राकारणे हेतुमाह । वालविघूर्णिताम्बुदमिति पुच्छभ्रामणेन विशेषेण घूर्णिता मूर्च्छिता अम्बुदा यस्य पुच्छभ्रामणमात्रेण यद्येवं महाननर्थः तदा किंचिद्विलम्बेऽपि महानन्यायो भवेदिति नन्वकस्मादागत्य कथं न गोकुलं मारितवान् तत्राह । आत्मानमाजौ मृगयन्तमिति न स गोकुलमारणार्थमागतः किन्तु भगवता सह युद्धं कर्तुमाजौ सङ्ग्रामे आत्मानं भगवन्तं मृगयन्तमन्वेषयन्तं कास्ति कृष्ण इति नन्वेवं कथं धाष्टर्यात् कंसोयस्माद्भिमेति तत्राह । सः प्रसिद्धः केशी अत एव मृगेन्द्रवत् सिंहवत् स ह्यन्यान् गजानिव मन्यते वलभद्रं कथं न प्रेषितवानित्यत्र हेतुरग्रणीरिति भगवानेवाग्रणीः भगवान् अग्र एव उपद्रवान् दूरीकरोतीति ॥ २ ॥

भगवदाह्वानं श्रुत्वा यत्कृतवांस्तदाह । स तमिति । उपाह्वयन्वा स भगवानेव स केशी तद्भगवद्वाक्यं निशम्य मुखेनोद्धैर्व्यनदत् अथवा पूर्वं भगवन्तं दृष्ट्वैव गर्जनं कृतवान् पश्चात् वाक्यं श्रुत्वा यत् यत्करिष्यति तदग्रे निरूप्यते स केशी तद्भगवद्वाक्यं निशम्य मुखेनाकाशं पिबन्निव व्यात्ताननः अभिमुखः अभ्यद्रवत् ग्रासार्थीव शीघ्रमागमने आकाशो निविशतीव दृष्ट इति पिबन्निवेत्युक्तं यत्राकाशमेव ग्रसति तत्र तन्मध्यपातिनः सुखग्रासा इति बहिश्चेष्टा निरूपिता अत्यमर्षण इत्यान्तरी तदा निकटे समागत्य परावृत्य पद्भ्यामघात धेनुकवत् ननु सम्मुखमागत्य मुखेनैव मारणसम्भवेऽपि किमिति परावृत्त इति चेत्तत्राह । अरविन्दलोचनमिति । कमलनयनो भगवानिति भगवतः परमसौन्दर्यं दृष्ट्वा साक्षादतिक्रमासमर्थः परावृत्य अपश्यन्नतिक्रमं कृतवानित्यर्थः । ननु पद्भ्यामपि भगवद्रूपं स्मृत्वा कथमतिक्रमः भवतीत्याशङ्क्याह । दुराशय इति । दुष्टान्तःकरणत्वात् तथा कृतवान् दुरासद इति पाठे कथं रामादिभिः अतिक्रमो न निवारित इत्याशङ्क्याह । दुरासद इति । दुःखेनासादो यस्येति न कोऽपि तन्निकटे गन्तुं शक्नोतीत्यर्थः तत्र हेतुमाह । चण्ड जव इति । अतिशीघ्रमागच्छति तस्य प्रतीकारो दूरे तस्मिन्नागते पलायनमप्यशक्यमित्याह । दुरत्यय इति । दुःखेनात्ययो यस्येति ॥ ३ ॥

भगवानतिचतुरः स सुरासुरैः शस्त्रैश्चावध्य इति यस्य प्रकारान्तरेण समाधानं कृतवानित्याह । तद्वञ्चयित्वेति । तत्पादप्रहरणं तिर्यग्भूत्वा वञ्चयित्वा मोघत्वं सम्पाद्य ततः दोर्भ्यां तस्य पादद्वयं धृत्वा परिविध्य भ्रामयित्वा उत्तोल्य धनुःशतान्तरे सावज्ञमुत्सृज्य व्यवस्थित इति संबन्धः ननु शीघ्रमागतो मारयितुं पादप्रसारणं कृतवान् यथा न प्रतिहतो भवति साधनवेगः तत्कथं प्रतिहतो जात इत्याशङ्कायामाह । अधोक्षज इति । इन्द्रियजन्यं तस्य ज्ञानं क्रिया वा तं न विषयीकरोति अतो युक्त एव तस्य पादासंबन्ध इति वञ्चनमपि भगवतो लौकिकसामर्थ्याद्युक्तमिति न किञ्चिदनुपपन्नं संमुखमागतः किमिति परावृत्त इति रोषेण दोर्भ्यां गृहीतः कदाचित्तस्य हृदये भीतः सन् वञ्चनं कृतवानिति शङ्का स्यात् ततो भगवान् निःशङ्कमात्तमिव दोर्भ्यां परिगृहीतवान् तत उत्तोलनञ्च कृतवान् यौ पादौ भगवते चिक्षेप तत्रैव स्थाने स गृहीत इति दत्तमेव गृह्णातीत्यपि सूचितम् उत्तोलनादिकं सर्वं यथा पुनर्नायाति तथा ज्ञापनार्थं महान् देवलब्धवर इति तस्य वेगनाशार्थं सावज्ञमवज्ञापूर्वकमुत्सर्गः शतशब्दोऽपरिमितवाची धनुःपदं वीरत्वज्ञापनार्थं ननु देहेन महान सः बालकश्च भगवान् अलौकिकञ्च सामर्थ्यं न प्रकटितवान् तत्कथं तस्योत्तोळनादिकमित्याशङ्क्य दृष्टान्तमाह । यथोरगमिति । गरुडो यथा महान्तमप्युरगं भक्ष्यत्वात् क्लृप्तत्वात् भक्ष्यमाणः वले विद्यमाने पराक्रमं करिष्यतीति बलक्षयार्थं तथा क्रियते तथा भगवानपि असुरो निवार्य एवेति बलक्षयार्थं तथाकरणम् एवं कृत्वा न महत्कर्म कृतमिति मेने किन्तु पूर्ववदेव विशेषेणैव लीळयैव स्थितः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सप्तत्रिंशे केशिवधो भाविलीलोक्तिभिः स्तुतिः ।
नारदेन हरेश्चौर्यक्रीडाव्योमवधोऽप्यभूत् ॥

केशी तु यः कंसप्रहितस्तं भगवानुपाह्वयदिति द्वितीयेनान्वयः यद्वा नन्दव्रजं जगामेति शेषो देयः निर्जरयन् खुराघातैर्महीं निःशेषेण जीर्णां कुर्वन् सटाभिः केसरैरवधूतानि कम्पितानि अभ्राणि विमानानि च तैः संकुलं व्याप्तं नभः कुर्वन् हेषितमश्वजातिशब्दः ॥ १ ॥

वालाः पुच्छलोमानि स केशी च व्यनदत् ॥ २ ॥

स केशी तं श्रीकृष्णं निशाम्य दृष्ट्वा दुरासदः अन्यैर्निकटमपि गन्तुमशक्यः दुरत्ययः कुतः पुनरतिक्रमितुं शक्य इत्यर्थः ॥ ३ ॥

तत् हननं वञ्चयित्वा तं दोर्भ्यां स्वहस्ताभ्यां हन्तुं प्रसारितयोः पदयोः प्रगृह्य परिविध्य भ्रामयित्वा विशेषेण स्वस्थान एवावस्थितः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तत्रिंशे केशिवधो देवर्षिकृतभगवत्स्तवो व्योमासुरवधश्चानुवर्ण्यते । केशीति । केशीनामासुरः महाहयाकृतिः कंसप्रहित-

स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसापतद्धरिम् ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ॥५॥
दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ।
बाहुश्च तद्देहगतो महात्मनो यथामयः संववृधे उपेक्षितः ॥ ६ ॥
समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेण्डं विसृजन् क्षितौ व्यसुः ॥ ७ ॥
तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः ।
[1]अविस्मितो ऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कंसेन प्रेषितः महीं निर्जरयन् श्लथयन् विदारयन्नित्यर्थः । सटाभिः केसरैः अवधूतानीतस्ततः क्षिप्तान्यभ्राणि विमानानि च तैः संकुलं संकीर्णं नभः कुर्वन् हेषितैरश्वजातिशब्दैर्भीषितमखिलं विश्वं येन सः ॥ १ ॥

कराले क्रूरे नेत्रे यस्य सः विकटं भयानकमास्यकोटरं मुखविवरं यस्य सः बृहन् विपुलो गलो यस्य सः नीलमहाम्बुद उपमा यस्य सः दुष्टः आशयो यस्य सः कंसस्य हितं कर्तुमिच्छुः सः प्रसिद्धः केशी नन्दस्य व्रजं कम्पयन् जगाम ॥ ० ॥

तद्धेषितैः तैरतिनिष्ठुरैः हेषितैः स्वगोकुलं त्रासयन्तं वालैः पुच्छक्षोभभिर्विघूर्णिताः परिभ्रामिताः अम्बुदा येन तम् आजौ युद्धे युद्धार्थम् आत्मानं मृगयन्तमन्वेषयन्तं भगवान् अग्रणीः पुरोगतः सन् उपाह्वयत् आजुहाव स केशी अपि मृगेन्द्रवत् व्यनदत् ननाद ॥ २ ॥

स च केशी तं श्रीकृष्णं निशाम्य अवलोक्य मुखेन खमाकाशं पिबन्निव अभिमुखः सन् अभ्यद्रवत् अभिजगाम ततश्च अत्यमर्षणः अत्यन्तक्रोधयुक्तः अत्यन्तमसहमानो वा प्रत्यक् पद्भ्यामरविन्दलोचनं जघान ताडितवान् कीदृशः दुरासदः अन्यैरासादितुमभिभवितुमशक्यः दुरत्ययो दुर्घटमरणः चण्डजवः प्रचण्डवेगः ॥ ३ ॥

अधोक्षजः अक्षिनिरपेक्षज्ञानवान् . सर्वज्ञः तद्धननं वञ्चयित्वा हननाय प्रसारितयोः पादयोस्तं केशिनं हस्ताभ्यां परिगृह्य गृहीत्वा परिविध्य भ्रामयित्वा धनुःशतान्तरे सावज्ञं यथा तथोत्सृज्य पातयित्वा व्यवस्थितस्तत्रैव स्थितो बभूव यथा तार्क्ष्यसुतो गरुडः उरगमुत्सृज्य व्यवतिष्ठते तथा ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले कंस का भेजा हुआ केशीदानव बडे भारी घोडे के रूप वाला मन के बरोबर वेग से चलता हुआ खुरों से पृथिको खोदता हुआ गले के बालों से मेघ तथा विमानों को उडा कर आकाश को व्याप्त करके घोडा के शब्द से सब संसार को डराता हुआ नंदजी के व्रज को जाता भया ॥ १ ॥

बडे विशाल जिसके नेत्र हैं बडा मुख का गढेला है जिसको बडा गला है नील वर्ण वाले मेघ सरी का दीखता है बडे दुष्ट चित्त वाला है कंस के हित करने वाला है इस प्रकार से व्रज को कंपाता हुआ गया ॥ ० ॥

भगवान् ने देखा कि यह केशी अपने गोकुल को घोडा के शब्द से त्रासित करता है उसके पूंछ के बालों से बडे मेघ घूम रहे हैं और अपने को युद्ध में ढूंढ रहा है तब आगे होकर भगवान् ने उसको बुलाया फिर केशी ने जैसे सिंह गर्जे तैसे गर्जना किया ॥ २ ॥

वह केशी इस बात को देख कर सन्मुख खडा होगया और मुख से आकाश को पीता हुआ सरीका क्रोधित होकर दौडा और बडा भयंकर है प्रचंड वेग वाला है बडा कठिन है फिर दोनों पैरों से कमललोचन भगवान् को प्रहार करता भया ॥ ३ ॥

अधोक्षज भगवान् ने उस लात को बचा लिया फिर रोष से उसके दोनों पैरों को हाथ से पकडकर घुमाकर बडी अवज्ञा से सौधनु पर्यंत उसको फेंक कर जैसे सर्प को फेंक कर गरुड खडा होवे तैसे खडे रहे ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्यादाय मुखं प्रसार्य वेगेन हरिं प्रत्याद्रवत् सोऽपि हरिः सव्युत्तरं सव्यं भुजं निर्भयत्वे दृष्टान्तः यथोरगं बिल इति ॥ ५ ॥

ततः किं तदाह । दन्ता इति । चर्वणाय भगवद्भुजं स्पृशन्तीति तथा ते व्यादानेन ये विवृताः अयो लोहं स्पृशन्तीति स्पृशः यद्वा तप्तमयसितप्तं लोहादि स्पृशन्तो यथेति आमयो जलोदरम् ॥ ६ ॥

लेण्डं पुरीषमुत्सृजन् ॥ ७ ॥

कर्कटिकाफलं हि विपक्वं सद्यस्तं विदीर्णं भवति तद्वद्विदीर्णात्तस्य देहात् व्यसोर्विगतप्राणात् अविस्मितो गर्वरहितः अयत्नेन हतोऽरिर्येन सः ॥ ८ ॥

---

1 अविस्मितोऽयं निहतारिरुत्स्मयैः प्रसूनवर्षैर्वृषपङ्क्तिरीडितः । इति विज० पाठः ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स महादुष्टः उत्तिष्ठोऽपीति वा यथेति यथा कश्चिदुरगं तत्क्रीडाकौतुकी तदनिष्टशङ्कारहितः केशिप्राणस्थानीयमूषिकबिलं प्रवेशयति तद्वदित्यर्थः ॥ ५ ॥

नितरां निर्मूलतया पेतुः । तथाच श्रीहरिवंशे । दशनैर्मूलनिर्मुक्तैरिति । भगवतः सर्वैश्वर्य्ययुक्तस्य भुजस्पृश इति भुजस्याविकृतत्वं स्पर्शमात्रेणैव दन्तानां पतनं चाभिप्रेतं ते वज्रोपमा महास्थूला. तथाच श्रीविष्णुपुराणे सिताभ्रावयवा इवेति । अय इति कर्मणि षष्ठ्यभावो धार्य्येरामोदमुत्तममिति भट्टिकाव्यवत्तदर्हनिर्देशात् । तप्तमिति विशेषणात्तु न समस्तं पक्षे तप्तं तापः भावे क्तः । तन्मयं द्रव्यं लोहादि स्पृशन्तीति तथा ते । अतितप्तलोहादिस्पर्शमात्रेण दन्तानां सद्यो निपातदर्शनात् । वैकल्पिकविसर्गलोपादुभयत्र निर्विसर्गत्वं युक्तं । महात्मनः अपरिच्छिन्नमूर्त्ते इति तद्बाहोर्वृद्धिर्नाम तावद्देशप्राकट्यमेव ततस्तत्र शैथ्यमपि नाद्भुतमिति भावः । सम्यक् प्राणादिमार्गसंनिरोधेन ववृधे हि निश्चितं तच्च नान्यैर्लक्षितमिति तद्देहगत इत्यनेन बोधितं एकांशे दृष्टान्तः यथामय इति । तद्विधेषु दुःखरूपत्वेन भानात् । नाशनाय सहसान्तरङ्गेषु वृद्धेश्च ॥ ६ ॥

सम्यगेधमानेनेति । यावता तद्देहो विदारितः स्यात्तावत्त्वस्याभिप्रायेण तद्देहविदारणेनैव तन्मृत्योर्विहितत्वात् । तथाच श्रीहरिवंशे श्रीनारदवाक्यम् यत्त्वया पाटितं देहं भुजेनानतपर्वणा । एषोऽस्य मृत्युरन्हाय विहितो विश्वयोनिनेति ॥ ७ ॥

कर्कटिकाफलोपमादित्यत्र विशेषः श्रीविष्णुपुराणे । द्विपाद पुच्छपृष्ठार्द्धश्रवणैकाक्षि नासिके । केशिनस्ते द्विधा भूते शकले च विरेजतुरिति । अयत्नहतारिकोऽप्यविस्मितः । अहमेवं कर्त्तेति विस्मयात्मकगर्वरहितः । यद्वा । तादृशदुष्टमहाभीषणवधेऽपि अविगतास्मितः । अश्रमेण लीलयैव मारणात् । तदेवाह । अयत्नेति तथा चोक्तं श्रीपराशरेण । अनायस्ततनुः स्वस्थो हसंस्तत्रैव संस्थित इति । प्रसूनवर्षैः कृत्वा वर्षद्भिरिति प्रसूनवर्षाणि बहुशः कुर्वद्भिरित्यर्थः । हतारिरुत्स्मयैरिति पाठे सुरैरित्यध्याहार्य्यम् । एतदनन्तरञ्च श्रीपराशरः । ततो गोपाश्च गोप्यश्च हते केशिनि विस्मिताः । तुष्टुवुः पुण्डरीकाक्षमनुरागमनोरममिति । वैशम्पायनश्च । तं हतं केशिनं दृष्ट्वा गोपा गोपस्त्रियस्तथा । बभूवुर्मुदिताः सर्वे हतविघ्ना हतक्लमाः । दामोदरन्तु श्रीमन्तं यथास्थानं यथावयः । अभ्यनन्दन् प्रियैर्वाक्यैः पूजयन्तः पुनः पुनरिति ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स केशी लब्धा संज्ञा येन सः मूर्च्छितः पुनर्लब्धस्मृतिरित्यर्थः पुनरुत्थितः रुषा व्यादाय वक्त्रमिति शेषः बलेन पुनर्हरिं प्रत्यभ्यद्रवत्तदा हर्यभिभयः सोऽपि हरिरप्यस्य केशिनो वक्त्रे सव्यं भुजं प्रवेशयामास निर्भयत्वे दृष्टान्तः । यथोरगं बिल इति । यथा सर्पविद्याविन्सर्पं बिले प्रवेशयति तद्वत् यद्वा सर्पभोगवद्दीर्घं भुजं बिलवद्दुष्प्रवेशे तदास्यकुहरे प्रवेशयामासेति दृष्टान्तार्थः ॥ ५ ॥

ततः किं तदाह । दन्ता इति । भगवद्भुजं संस्पृन्तीति तथा ते तस्य केशिनो दन्ता निपेतुः यथा तप्तमयस्तप्तं लोहपिण्डं स्पृशन्तो निपतन्ति तद्वत् केशिनो देहे प्रविष्टो महात्मनो भगवतो भुजस्तु ववृधे एधांबभूव यथोपेक्षितोऽचिकित्सितः आमयो जलोदरो वर्द्धते तद्वत् ॥ ६ ॥

स केशी सम्यगेधमानेन कृष्णस्य बाहुना निरुद्धः वायुः श्वासो यस्य स चरणान्विक्षिपन्नितस्ततश्चालयन्प्रस्विन्नं प्रस्वेदयुक्तं शरीरं यस्य परिभ्रममाणे लोचने यस्य स विगतप्राणो लेण्डं पुरीषं विसृजन् भूम्यां पपात ॥ ७ ॥

कर्कटिकाफलं हि पक्वं सदत्यन्तं विदीर्णं भवति तद्वद्विदीर्णात्तस्य केशिनो देहाद्व्यसोर्गतप्राणान्महाभुजो भगवान्भुजमाकृष्यानविस्मितो गर्वरहितोऽयत्नेन हतोऽरिर्येन सः प्रसूनवर्षाणि वर्षद्भिरुत्स्मयैर्देवैरीडितः स्तूयमानः बभूवेति शेषः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुखं व्यादाय विदार्य ॥ ५ ॥

तप्तमयोनाम लोहं स्पृशन्तः तप्तमयं तापात्मानं पदार्थं स्पृशन्तीति तप्तमयस्पृश इति वा उपेक्षितः आमयो व्याधिः ॥ ६ ॥

विक्षिपन्नितस्ततः प्रसारयन् लम्बं शकृत् तुरगस्य शकृल्लण्डं लङ्काप्रकारकोशयोरिति च कोशं वा ॥ ७ ॥

कर्कटी कर्कन्धूलता तत्फलसदृशमुर्वारुकवत् मृदुलमित्यर्थः कर्कट्याः फलं गर्भस्तत्सदृशं प्रसवे स्वयं म्रियते यथा तथा भुजापकर्षेण मृत इत्यर्थः । व्यसोर्मृतस्य उस्त्रियैर्देवैः उस्त्रिया अमरा देवास्त्रिदिवेशा दिवौकस इति च प्रसूनवर्षैः फलपुष्पसमूहैः प्रसूनं फलपुष्पयोरिति च ववृषद्भिरित्यत्र ताच्छीलिकः शतृप्रत्ययः अवेत्यत्र अकारलोपश्च तेन अयं वर्षः औत्पात्तिको गुणो लक्ष्यत इति ॥८-९॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

यथामय इति । तत्र दुःखदतामात्रांशे अन्तरङ्गेषु वर्द्धमानतांशमात्रे च दृष्टान्तः दिव्यज्ञानत्वात् ॥ ६-८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रक्षिप्तस्य वृत्तान्तमाह । स लब्धसंज्ञ इति । पूर्वं मूर्च्छितः पश्चाल्लब्धसंज्ञस्तथापि न निवृत्तः किन्तु पुनरुत्थितः ततो मुखं व्यादाय यतः केशी तरसा शीघ्रमेव हरिमभ्यापतत् ततो भगवानपि भोजनार्थमिव व्यात्तमुखं.भोजितवानित्याह । सोऽपीति । भगवानप्यस्य वक्त्रे उत्तरं वामभुजं स्मयन् हसन् भक्षणार्थमायासि चेत् भक्षयेति वदन्निव प्रवेशयामास वामो हि भुजो दैत्यानामेवेति स निःशङ्कं प्रविष्ट इति वक्तुं दृष्टान्तमाह । यथोरगं बिल इति ॥ ५ ॥

भुजप्रवेशनं कथं मारणोपाय इति शङ्कायां प्रकारमाह । दन्ता निपेतुरिति । स भक्षणार्थं प्रवृत्तः दन्तसंबन्धं कारितवान् तदा भगवद्भुजस्पृशो भगवद्भुजं स्पृशन्तीति तथाभूता दन्ता

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

निपेतुः ते प्रसिद्धा यैर्द्दचा अपि हन्यन्ते तत्रापि केशिनः अतिप्रसिद्धस्य अलौकिकप्रकारेणौपधादिस्पर्शेनेव दन्ताः पतिता भविष्यन्तीत्याशङ्क्य दृष्टान्तमाह । तप्तमयःस्पृश इति । तप्तमयः अग्निवर्णं ये स्पृशन्ति ते तप्तमयःस्पृशः तप्तमयो वा तप्तलोहं स्पृशः षष्ठ्यर्थे द्वितीयेति ततो बाहुरपि तद्देहान्तः प्रविष्टः ववृधे तस्य वृद्धौ साधनं नापेक्षत इत्यत्र दृष्टान्तमाह । यथामय इति । यदेव किञ्चित्करोति पुरुषस्तद्रोगप्रतीकारमकुर्वन् तेनैव स वर्द्धते नहि देहवृद्धाविव रोगवृद्धौ साधनमपेक्ष्यते ननु वृद्धौ विकारित्वं स्यात् तथाचानुभावो न स्यात् दोषश्च स्यात् इति चेत् तत्राह । महात्मन इति । स हि व्यापकः सर्वतः पाणिपादान्तः यावद्दूरे मायामुद्घाटयते येन तेनैवावयवेन वृद्ध इत्युच्यते महानात्मा स्वरूपं यस्य अस्य च उपेक्षा प्रणिपाताकरणं पलाय्य गमनं वा ॥ ६ ॥

ततो यज्जातं तदाह । समेधमानेनेति । सम्यक्परितः एधमानेन वर्द्धमानेन स केशी कृष्णपदमेतदर्थमेवावतीर्णं इति ज्ञापनार्थं बाहुश्च क्रियाप्रधानः अतोऽसमीचीने बाहुप्रक्षेपणादिकं न विरुध्यते वक्त्रविवरस्य बाहुना पूर्णत्वात् निरुद्धवायुर्जातः तदा व्याकुलः चरणांश्च विक्षिपन् विशेषेण क्षिपन् दुरात्मभिरेवाहमानीतो मारणार्थमिति क्षिपन्निव चकारात् कंसञ्च अन्तः प्रयासात् प्रस्विन्नगात्रो जातः परिवृत्ते लोचने यस्य अन्तर्बहिः क्रियापगमः ज्ञानापगमश्च सूचितः तदा पपात ळेण्डं विसृजन्निति पायुद्वारा मलं विसृजन् लेण्डशब्देन शकृदुच्यते क्षितावपतदिति न पातेन कश्चिदुपद्रुत इति सूचितम् ॥ ७ ॥

ततः कार्ये सम्पन्ने भगवान् सर्वैः पूजितो गृहे गत इत्याह । तद्देहत इति । समारब्धा वृद्धिः ततो न निवृत्ता गतेष्वपि प्राणेषु वर्द्धमानो देहरूपककर्कटिकाफलवत् विदीर्णं कृत्वा विदीर्णद्वारा हस्ते निर्गते निवृत्ता मुखतो हस्तनिःसारणे क्रियापरिवृत्ता भवतीति तदर्थं देहविपाटनं व्यसोरिति निष्कासने हेतुः त्यक्तप्राणो देहः अशुचिर्भवतीति कृतकार्यत्वञ्च ज्ञापितम् अपाकर्षणं ततो निःसारणं पूर्ववत् करणञ्च महान् भुजो यस्येति भुजेनापि मुक्तिं दातुं शक्यत इति तस्य मुक्तावपि न सन्देह इत्यर्थः । महती तस्य क्रियाशक्तिरिति च ज्ञापितम् एवमपि कृत्वा अविस्मितः नहि तृणे छिन्ने कस्यचिदभिमानो भवति तदेव ज्ञापयति । अयत्नहतारिरिति । न कोऽपि भगवता प्रयत्नः कृतः अनायासेन हत इति केचिन्मायापगमः स्वाज्ञयेति न प्रयत्नः ऊर्ध्वस्मयैः हसद्भिः सर्वैरेव देवैः प्रसूनवर्षैः पुष्पवृष्टिभिः सहितैः भगवानीडितः तत्र स्थितवाक्यानि न सन्ति किन्तु पुष्पवृष्टिरेव तदाह । वर्षद्भिरिति । वर्षणमिव स्तोत्रमिति प्रसूनानां वर्षा येषामिति पुष्पवृष्ट्यधिकारिणो देवाः तैर्वर्षद्भिरर्थात् पुष्पैरेव ईडित इति स्तोत्रं भिन्नमेव एवं हेतुत्वेन केशिवधो निरूपितः ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

संज्ञा चेतना व्यादाय मुखं प्रसार्य्य हरिं प्रत्यापतदाद्रवत् स हरिरपि स्मयमान इति इक्मिरं ग्रसितुमायासि ग्रसेति वामाङ्गुष्ठं दर्शयित्वा उत्तरं वामं भुजं यथेति मूषकं घातयितुं मूषकविले यथा कश्चिदुरगं प्रवेशयति तथैव केशिप्राणघातार्थं तस्य वक्त्रे इति उरगश्च सस्पृहमकष्टमेव यथा तत्र प्रविशति तथैव भुजोऽपि प्रविवेश ॥ ५ ॥

हन्त हन्त दंष्ट्राकराले तस्य वक्त्रविवरे नीलोत्पलमृणालसुकुमारस्तस्य भुजः कथं प्रविवेशेति शङ्काकुलं राजानं तत्त्वमाह । दन्ता इति । चर्वणाय भगवद्भुजं स्पृशन्तीति तथा ते दन्ता निपेतुः निर्मूलतया पेतुः तप्तमयः लोहं स्पृशन्तीति स्पृशः पदार्था यथा अय इति कर्मणि षष्ठ्यभावो धार्थे रामोदमुत्तमामिति निर्देशात् नीलोत्पलसुकुमारशीतलमपि तद्भुजमतिसन्तप्तवज्रनिर्मितमिव केशी स्वदन्तैः स्पृष्ट्वा अमन्यतेति भावः "पित्तेन दूने रसने सितापि तिक्तायते" इति न्यायात् ववृधे इति वृद्धिरघासुरवध इव व्याख्येया आमयो जलोदरम् ॥ ६ ॥

ळेण्डं पुरीषम् ॥ ७ ॥

कर्कटिकाफलं हि पक्वमतिविदीर्णं स्यात्तत्तुल्यात् । अविस्मितः तादृशमहासुरहननेनापि विशिष्टगर्वरहितः । यतोऽयत्नेन प्रयासाभावेनैव हतो ऽरिर्येन सः । प्रसूनानि वर्षद्भिः श्रमापनोदनार्थं जलकणा अपि वर्षद्भिः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स केशी व्यादाय मुखं प्रसार्य हरिमापतत् प्रत्यभ्यद्रवत् स हरिरपि स्मयन् हसन् उत्तरं वामं भुजम् अस्य केशिनो वक्त्रे प्रवेशयामास यथा कश्चित्सर्पं विले प्रवेशयति तद्वत् उरगविलमुरगस्य सुखदमेव तथा सर्वान्तरात्मनो ऽसुरदेहोऽपि सुखद एवेति फलितोऽर्थः ॥ ५ ॥

केशिनः भगवद्भुजं संस्पृशन्तीति तथा ते दन्ताः निपेतुः यथा तप्तमयः अग्नितप्तं लोहपिण्डं स्पृशन्तो निपतन्ति तद्वत् महात्मनः श्रीमत्पुरुषोत्तमस्य बाहुश्च यथोपेक्षितो ऽचिकित्सित आमयो जलोदरो वर्धते तथा तस्य केशिनो देहगतो ववृधे ॥ ६ ॥

स केशी प्रस्विन्नं गात्रं शरीरं यस्य परिवृत्ते लोचने यस्य सः ळेण्डं पुरीषं व्यसृजन् उत्सृजन् व्यसुर्विगतप्राणः सन् पपात ॥ ७ ॥

महान्तौ विश्वपालनपोषणसमर्थौ भुजौ यस्य सः अयत्नेन हतो ऽरिर्येन सः कर्कटिकाफलं पक्वं विदीर्य्यते तद्वदुपमा यस्य तस्मात् व्यसोर्विगतप्राणात् तस्य देहात् भुजमपाकृष्य अविस्मितो गर्वरहितः संस्थितो ऽभूत्तदा प्रसूनवर्षैःप्रसूनानिवर्षद्भिर्देवैरीडितो बभूव ॥ ८ ॥

---

### भाषा टीका ।

वह केशी मूर्च्छा को छोडकर फिर क्रोध से उठ खडा भया और मुखको फैलाकर भगवान् के ऊपर दौडा उन भगवान् ने भी हंसकर बांये भुजाको उसके मुख में ऐसा प्रवेश कर दिया जैसे कोइ सर्प को विलेमे प्रवेश करै ॥ ५ ॥

भगवान् के भुजा के स्पर्श होते मात्र उस केशी के सब दांत गिर पडे जैसे गरम लोहा के स्पर्श करने से होजावैं

देवर्षिरुपसंगम्य भागवतप्रवरो नृप ! ।
कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥ ९ ॥
कृष्णकृष्णाप्रमेयात्मन् !योगेश जगदीश्वर! ।
वासुदेवाखिलावास सात्वतांप्रवर प्रभो! ॥ १० ॥
त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ।
गूढो गुहाशयः साक्षी महापुरुष ईश्वरः ॥ ११ ॥
आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् ।
तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः ॥ १२ ॥

भाषा टीका।

तैसे उसके देह में गया भगवान् महात्मा का बाहु ऐसा बढ़ा कि जैसे छोड़ देने से व्याधि बढ़ जावै तैसे ॥ ६ ॥

बढ़ते हुये उस भगवान् कृष्ण के बाहु से उसका वायु रुक गया फिर वह चरणों को फेंकने लगा उसके देह में पसीना होगई उसके नेत्र घूमने लगे फिर मलमूत्र को गिराता हुआ प्राण को छोड़कर पृथिवी में गिर पड़ा ॥ ७ ॥

महा भुजा वाले भगवान् ने मरे हुये उसके पके ककड़ी फल सरीके देह से अपने भुजा को निकाल लिया बिना यत्न से ही शत्रु को मारकर विस्मित भी नहीं भये फिर देवता सब बड़े विस्मित होकर फूलों की वर्षा करके भगवान् की स्तुति करते भये ॥ ८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

कंसाय कृष्णमादिश्य तद्रहस्याविवेशुनैः ।
कंसघातादिकृष्णस्य कार्यमावेदयन्मुनिः ॥

तदाह । देवर्षिरित्यादिना । नचायं सूचकः किन्तु सर्वसुहृदित्याह । भागवतप्रवर इति ॥ ९ ॥

अस्मद्रहस्यं वैरिणि कंसे सूचितवानिति माशङ्कीरित्याह । कृष्णकृष्णेत्यादिना । अयम्भावः त्वमीश्वरो भूभारदैत्यसंहारायावतीर्णोऽयतस्तद्नुरूपाचरणेन विश्वं परिपालयेति तत्र त्वयि तावद्भयशङ्कैव नास्तीत्याह । अप्रमेयात्मन्नपरिच्छिन्नरूप ! योगेशाचिन्त्यप्रभाव जगदीश्वर विश्वनियन्तः वासुदेव सर्वभूतेषु वर्तमान अखिलावास सर्वस्याश्रय संप्रति सात्वतां प्रवर श्रेष्ठ प्रभो नवर्तके ! ॥ १० ॥

कथमेवं रूपोऽहमितिचेदत आह । त्वमात्मेति । नहि त्वं जीववत्परिच्छिन्नः किन्तु सर्वभूतानामान्तर एको ऽनुस्यूत आत्मा अन्तरनुस्यूतत्वे दृष्टान्तः एधसां काष्ठानामन्तर्ज्योतिरिवेति भूतेषु स्थितोऽपि तैर्न दृश्यस इत्याह । गूढ इति । अत्र हेतवः गुहाशयो बुद्धेरभ्यान्तरः किञ्च साक्षी नहि साक्षी दृश्यते इत्यर्थः । अपिच महापुरुषः अतः परिच्छिन्नमतिभिर्न ज्ञायस इत्यर्थः । तर्हि सर्वान्तरत्वे किंप्रमाणमत आह । ईश्वर इति । नहीश्वरं विना परतन्त्राणां जीवानां प्रवृत्तिर्घटत इत्यर्थः ॥ ११ ॥

अहमीश्वरोऽन्यत्सर्वमीशितव्यमित्येतदेव कुत इत्यत आह । आत्मनेति । साधनान्तरानिरपेक्ष एवात्माश्रयः स्वतन्त्रः मायया शक्त्या भवान् गुणान् ससृजे सृष्टवान् तैः गुणैरिदं विश्वं सृजसि अत्सि संहरस्यवसि पालयसि ननु सृष्ट्यादिक्रिया षट्कारकसाध्यैव दृष्टेत्याह । सत्यसंकल्प इति । नहि संकल्पैकसाध्ये बहिः साधनापेक्षेति भावः । अतस्त्वमीश्वर इत्युपसंहारः ॥ १२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

कृष्णभक्तेरादिगुरुं महाभागवतोत्तमम् ।
देवर्षिं नारदं वन्दे कृष्णलीलाप्रवर्त्तकम् ॥

भाष्यस्य रहस्यत्वाद्रहस्यभाषत । अन्यत्तैः । तत्र सर्वसुहृदिति व्रजेऽपि सेनासहितकंसजरासन्धाद्यागमनभयनिवर्त्तनाय तथाचरणात् । कंसादेरपि मुक्तिपर्य्यवसायकत्वात् । यद्वा दिव्यज्ञानत्वाद्देवश्चासौ ऋषिश्चेति श्रीगोपालमन्त्रगणद्रष्टा च इति परमान्तरङ्गत्वं सूचितम् । भागवतप्रवर इति । भगवतो लीलाधिकारनियुक्तभक्तेषु श्रेष्ठः । ततस्तत्सम्पादनार्थे तस्य तथा चेष्टा रहस्यागत्य निवेदनञ्च युज्यत एवेति भावः ॥ ९ ॥

मया यत् कंसं प्रति सूचितं तद्भवदीयतादृशलीलावसरं ज्ञात्वैव यतो भवत्प्रसादेन भवतस्तत्त्वं लीलानुक्रमश्च जानामीति ज्ञापयन्नाह । कृष्ण कृष्णेत्येकादशभिः । तत्र तत्त्वं तावदाह द्विभिः । तत्रैव कृष्णेति युग्मकम् । तत्र च श्रीकृष्णरूपत्वमेव मूलमित्याशयेन प्रथमं तन्नाम्ना सम्बोधयति कृष्णेति वीप्सा तदवधारणाय । परममधुरस्वलीलाविष्टस्य तस्य तेनैवात्मन्यवधानं स्यादित्येतदर्थाय च । मूलरूपत्वमेव स्पष्टयन् श्रीकृष्णस्य स्वरूपलक्षणमाह । अप्रमेयात्मन् ! सर्वातीतत्वेनानन्त्येन चाप्रमेयः सर्वापरिच्छेद्यः । स्वस्यापि विस्मापक आत्मा स्वयं भगवद्रूपं स्वरूपं यस्य हे तथाभूत ! तटस्थलक्षणान्याह । हे योगापरपर्य्यायया योगमायया पूर्णस्वरूपशक्त्या ईशनलील अत एव हे प्रापञ्चिकाप्रापञ्चिकत्स्नस्येश्वर ! । अत एव हे तत्र तत्र सर्वत्र विभुत्वाद्वसन् विराजमान ! अत एव हे तत्तदाश्रय ! तत्र स्पष्टत्वं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णत्वं व्यञ्जयन् तदीयपरिवाराणां तादृशलीलानाञ्च नित्यत्वमपि स्पष्टयति । सात्वतां क्षत्रियरूपाणां गोपरूपाणाञ्च सात्वतां मध्ये प्रवर श्रेष्ठ ! । जातौ निर्द्धारणे षष्ठी । तत्परिवारक तादृशलीलत्वेनैव सर्वदा विराजमानेत्यर्थः । जयति जननिवास इत्यादेः तथा नित्यत्वे हेतुः हे प्रभो ! कालादीनामप्युपरिप्रभवनशीलेति कृष्णादिपदैरनुपमश्यामसुन्दरत्वादिना तन्नाम प्रसिद्धासमोर्द्ध्वस्वरूपैभव यादवगोपपरिकर तदुचितलीलत्वं तव तत्त्वमिति विज्ञापितम् ॥ १० ॥

एवं सम्बोधनेनैव तस्य निजतत्त्वं दर्शयित्वा स्वांशतत्त्वमपि "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दित्यनुसारेण दर्शयति त्वमिति द्वाभ्याम् । सर्वभूतानां प्रापञ्चिकस्थावरजङ्गमानामेकस्त्वमात्मा । परमात्मा तृतीयं सर्वभूतस्थमित्युक्तेः । महापुरुषो महत्स्रष्टा च । एकन्तु महतः स्रष्टृत्युक्तेः । ईश्वरो ब्रह्माण्डान्तर्य्यामी च । द्वितीयं त्वण्डसंस्थितमित्युक्तेः । एधसामिति सर्वत्र स्थितस्यापि ज्योतिषो यथा तेष्वेकांशेन स्थितिस्तेष्वेव झटित्युपलब्धिश्च तद्वदित्यर्थः ॥ ११ ॥

अत्र मुख्यत्वेन प्रस्तुतोपयोगित्वेन च महापुरुषकार्य्यं दर्शयति । आत्मनेति । तैर्व्याख्यातं । तत्र मायया ससृज इति साधनान्तरापेक्षमाशङ्क्य व्याचष्टे शक्त्येति सापि तस्यैव शक्तिरिति न दण्डादिवत्त्वमिति भावः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेत्थं हतकेशिने भगवतेऽनन्तरं कर्तव्यमावेदयति देवर्षिरिति हे नृप भागवतश्रेष्ठो देवर्षिर्नारद उदारचेष्टितं कृष्णमुपसङ्गम्य रहस्येकान्ते एतद्वक्ष्यमाणमुवाच ॥ ९ ॥

तदेवाह । कृष्णेति । सर्वज्ञं कर्तव्याभिज्ञमपि भगवन्तं त्वरयान्निवावेदयितुं तावत्कृतं केशिवधमभिनन्दितुकामः तावत्स्वसङ्कल्पमात्रपरिक्लृप्तजगत्पालनार्थमवतीर्णस्य तद्दुष्कृद्विनाशनमुचितमेवेत्यभिप्रयन् स्तौति । कृष्णेति द्वाभ्याम् । यतोऽप्रमेयत्वादिगुणकस्त्वं आत्मनैवात्माश्रयः सृजसीति हेतुहेतुमद्भावपरतया व्याख्येयं कर्त्राद्यनेककारकसाध्या हि सर्वा क्रिया लोके दृष्टा जगत्सृष्ट्यादिक्रिया तु कर्त्रादिकारकषड्भावापन्नत्वदेकसाध्येत्युच्यते पूर्वं सृष्टेः प्राक् त्वमात्मना स्वेनैव कर्त्रा आत्मा स्वयमेवाश्रय आधारो यस्य तथाभूतः मायया स्वसङ्कल्पेनैव गुणान् स्वशरीरभूतप्रधानगुणकार्यभूतान्महदादीन्सृजसीति हि तदर्थः "तदात्मानं स्वयमकुरुत ब्रह्मवनं ब्रह्म स वृक्ष आसीत् आत्मन आकाशः संभूत" इत्यादि श्रुतेरिति भावः । तत्रैकस्यैवानेककारकभावोपयुक्तगुणवत्तां वदन् सम्बोधयति । अप्रमेयात्मन्नित्यादिभिः । कथमेकस्यानेककारकभावापत्तिरित्यतः सम्बोधयति । योगेशेति । विविधविचित्रानन्तशक्ते इत्यर्थः ननु महदादय एव सृज्या नत्वहं तत्राह । अप्रमेयात्मन्नपरिच्छेद्यस्वरूप ! अनेन सर्वसृज्यशरीरकत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वात्स्वयमेव सृज्य इति भावः । ननु चतुर्मुखादयः सृष्ट्यादिकर्त्तारो नत्वहं तत्राह । जगदीश्वर जगन्नियन्तः कार्यभूतजगदन्तर्भूतचतुर्मुखादिनियन्तृत्वेन तद्गतं कर्तृत्वं त्वय्येव पर्यवसन्नमिति त्वमेव कर्त्तेति भावः । ननु ब्रह्माण्डादिर्जगदाधारो नत्वहमित्यत आह । वासुदेवेति वासुदेवशब्दार्थं वदन्सम्बोधयति । अखिलाधारेति । अखिलस्य ब्रह्माण्डान्तर्गतादिवस्तुन आधारभूत अखिलमाधारो व्याप्यं यस्य तथाभूतेति वार्थः नन्वेवं भूत परमात्मा नत्वहमित्यत आह । सात्वताम्प्रवरेति । सात्वतामिति कर्तरि षष्ठी सात्वतैर्भक्तैर्नितरां प्रियमाणेत्यर्थः । परमात्मैव सन् भक्तैः समाश्रयणीयत्वायैवं रूपेणावतीर्ण इत्यर्थः । प्रभो ! अकर्मवश्य इत्यर्थः ॥ १० ॥

परमात्मत्वमेवोपपादयति । त्वमिति । सर्वभूतानां ब्रह्मादिस्थावरान्तानां महदादिपृथिव्यन्तानाञ्चैकस्त्वमेवात्मान्तः प्रविश्य प्रशासनेन धारकः एकः सर्वत्रैकरूपः व्याप्यवस्तुगतविकाररहित इत्यर्थः । इदमेव हि परमात्मत्वं यत्सर्वानुप्रवेशतद्गतधर्मास्पर्शनियमनैर्भर्तृत्वम् एकत्वे दृष्टान्तमाह । यथैधसां काष्ठानामन्तर्ज्योतिरेधोगतवक्रत्वादिभिर्न स्पृश्यते तद्वदित्यर्थः । यद्यहं सर्वभूतानामात्मा तर्हि तैर्दृश्येयेत्यत आह । गूढ इति । अत्रापि ज्योतिरिवैधसामित्येतद्दृष्टान्ततया योज्यं यथैधःसु ज्योतिरन्तर्गतमपि गूढं मथनाद्युपायमन्तरेण न तेभ्यो विविच्य दृश्यते तथा योगविशुद्धमनसा विना न दृश्यस इत्यर्थः । क गूढ इत्यत आह । गुहाशयः गुहायां हृदयकुहरे जीवे वा शेत इति तथा कारणत्वोपयुक्तं सार्वज्ञ्यमाह । साक्षीति । सर्वस्य साक्षाद्द्रष्टा सर्वज्ञ इत्यर्थः । अत एव महापुरुषः ब्रह्मादिजीवविलक्षणः पुरुष ईश्वरस्तेषामधिपतिश्च ॥ ११ ॥

यत एवं भूतस्ततो हे ईश्वर सत्यसङ्कल्पस्त्वं सकलकारकभावमापन्नः तावत्स्वसङ्कल्पेन गुणकार्यभूतान् स्वशरीरभूतान्महदादिपृथिव्यन्तान्सृजसि ततस्तैर्गुणैरिदं परिदृश्यमानं विचित्रसन्निवेशविशिष्टं ब्रह्मादिस्तम्बपर्यन्तं जगत्सृजसि अवसि पालयस्यसि संहरसि च ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अप्रमेयात्मन् ! अपरिच्छेद्यस्वभाव नन्वेवञ्चेदङ्गुष्ठमात्रः पुरुष इत्यादिपरिमाणवचनस्य का गतिरिति तत्राह । योगेशेति । योगिनां योगविषयत्वेन स्वेच्छाविग्रहग्रहणेन तदुपपत्तेर्योगेशत्वस्य वायुविषयत्वमिति मन्दाशङ्कां निरस्यति । जगदीश्वरेति । "आत्मन एव प्राणो जायते आकाशाद्वायुः प्राणः श्रद्धा खं वायु"रित्यादिश्रुतेः वायोर्जगदन्तःपातित्वेन तदीशत्वं न पृथग्वक्तव्यमिति भावः कृष्णशब्दस्य बह्वर्थविषयत्वेनोक्तविशेषणविशिष्टः क इति संशयनिवृत्तिः कथमिति तत्राह । वासुदेवेति । वासुदेवशब्दस्यार्थान्तरमाह । अखिलेति । नन्वेवञ्चेत्संशयस्तदवस्थ इति तत्राह । सात्वतामिति । नन्वनेन सात्वज्ञातिश्रेष्ठ इत्येवायातं ननु तदाधिपत्यमित्यत उक्तं प्रभो इति समर्थे ऽधिपतौ प्रभुरिति ॥ १० ॥

उक्तविशेषणानामन्यत्रापि कथञ्चिद्वृत्तिसंभवेनापि विष्णुत्वानिश्चय इति तत्राह । त्वमिति । प्रत्यगात्मान्तर्यामीत्यर्थः । ईदृशोऽन्यो नास्तीत्याह । एक इति । एकस्य च बहुष्ववस्थानं कथमिति तत्राह । ज्योतिरिति । मथनादिना दृग्विषयत्वेनाग्नेः सत्ता ज्ञायते न तथेति तत्राह । गूढ इति । कथं गूढत्वमित्यत उक्तं गुहेति हृदयगुहायां शेत इति जीवस्तर्हि त्वं संसारी चेतनः किन्नेत्याह । साक्षीति । संसा-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

रिणामनुष्ठीयमानयोः पुण्यापुण्ययोर्द्रष्टा बायोरन्तःस्थत्वेन साक्षित्वेऽपि मुख्यसाक्षित्वं तवैत्याशयेनाह । महापुरुष इति । पुरुषोत्तम इत्यर्थः । पुरुषोत्तमस्यैव मुख्यसाक्षित्वं यतोऽत ईश्वरत्वं तस्यैव मुख्यं न पशुपतेरिति भावेनाह । ईश्वर इति ॥ ११ ॥

अलौकिकत्वं वस्तुनोऽसाधारणलक्षणेन निर्णेतुं शक्यते इति तत्राह । आत्मनेति । पूर्वं जगदादौ आत्मना परप्रेरणामन्तरेण केनोपादानेनेत्यत उक्तं माययेति मायया प्रकृत्या कुलालस्य शालाद्यधिष्ठानदर्शनादस्य किमधिष्ठानमिति तत्राह । आत्माश्रय इति । "स भगवान् कस्मिन्प्रतिष्ठित इति स्वे महिम्नि"ति श्रुतेः गुणान् महदादीन् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवश्चासौ ऋषिः श्रीगोपालमन्त्रगणद्रष्टा चेति सर्वलीलातत्त्वतदनुक्रमाङ्कत्वं विवक्षितं परमान्तरङ्गत्वञ्च सूचितं भागवतप्रवर इति भगवतो लीलाधिकारनियुक्तभक्तेषु श्रेष्ठः । ततस्तत्सम्पादनार्थं तस्य कंसादौ तत्तत्कथनं तस्य रहस्यागत्य निवेदनञ्च युज्यते इति भावः ॥ ९ ॥

मया यत् कंसं प्रति सूचितं तद्भवदीयतादृशलीलावसरं ज्ञात्वैव यतो भगवत्प्रसादेन भगवतस्तत्त्वं लीलानुक्रमञ्च जानामीति विज्ञापयन्नाह । कृष्ण कृष्णेत्येकादशभिः ॥ १०—१४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो नारदस्य स्वापराधक्षमापणार्थं वाक्यानि निरूपयन् पञ्चदशभिः प्रथमतः तस्य समागमनमाह । देवर्षिरिति । यदैव भगवता केशी हतः तदा भगवत्समीपे न कोऽपि स्थित इति तदैव समागतः निकटे भक्तचन्नमस्कुर्वन् तदाह । उपसङ्गम्येति । देवर्षित्वाच्च तदर्थपरिज्ञानं भगवान् कथं तमनुज्ञातवानित्याह । भागवतप्रवर इति । भागवतानां मध्ये प्रवरः श्रेष्ठः भागवतमार्गोपदेष्टृत्वात् नृपेति सम्बोधनम् अनभिप्रेतो ऽप्यागच्छतीति राजलीलायाः परिज्ञापनार्थमुच्यमानः कथञ्चित् अनभिप्रेतो नारद इति भगवान् मारयेत् अतः कथन्निर्भयो भूत्वा तथा वदतीत्याशङ्क्याह । अक्लिष्टकर्माणमिति । स्वतोऽप्यागमनं परमानन्दरूपत्वात् सम्भवति तदाह । कृष्णमिति रहसीति । उभयोरद्वयत्वे एकान्ते वा गत्वा उभयोरपि तथा सामर्थ्यसम्भवान्नानुपपत्तिः इदं वक्ष्यमाणस्तोत्रपूर्वकं निवेदनात्मकमभाषत ॥ ९ ॥

> स्वापराधनिवृत्त्यर्थं त्रिधास्तोत्रं चकार ह ।
> मूलरूपन्तु सम्बोध्य मध्यकार्ये निरूपिते ।
> ततोऽवतारकार्यस्य निरूपणमतः कृतम् ॥
> अनुमोद्य करिष्यन् यः पञ्चभिस्तदुदीरितम् ।
> सामान्येन कृतं द्वेधा द्वाभ्यां स्वेन तथान्यतः ॥
> ज्ञानभक्तिविभेदेन स्वरूपञ्च निरूपितम् ।
> आनन्दचित्त्वतां रूपं ज्ञाने भक्ताविहोद्गतिः ॥
> कार्यार्थमवतीर्णत्वात् भक्तिमार्गे न दूषणम् ।
> एतत्तु भगवानेवेत्येवं सप्तभिरीर्यते ॥
> कर्ममार्गेऽप्यदोषाय सामान्यद्वयमीर्यते ।
> ततोऽन्ते ज्ञानभक्ती च स्वापराधो यतो नहि ।
> उपक्रमगतिभ्याञ्च षोडशात्मा निरूपित ॥

प्रथमं भगवन्तं नवधा संबोधयति । कृष्ण कृष्णेति । मूलरूपं निरूपयन् कृष्णेति सदानन्दो मूलम् अन्यथा जगतस्तदात्मत्वं फलरूपता च न स्यात् तत्र प्रमाणद्वयमाहानुभवं वेदश्चाग्रिमाभ्यां पुनः कृष्णेति द्विरुक्तिरादरे परमानन्द एवादरणीयो भवतीति यद्यपीश्वरमित्थंतया नानुभूयते तथापि वस्तुस्वाभाव्यात् तत्रादर उत्पद्यते अत्रार्थे प्रमाणं वदन् वेदानां गम्य इति तदर्थं वेदोत्पत्तिरिति द्वितीयं प्रमाणमाह । अप्रमेयात्मन्निति । न प्रमातुं योग्यः केनाप्यात्मा यस्य सर्वथा प्रमाणभावो नास्तीति न मन्तव्यम् आत्मत्वात् अतो भगवतैव स्वरूपकथनञ्चोपपद्यते एवं द्वाभ्यां प्रमाणरूपतां निरूप्य साधनरूपतां निरूपयति द्वाभ्यां योगेशजगदीश्वरेति । बहिर्योगः अन्तरीश्वरत्वेन नियमनं तदर्थमाराधना च यथा सम्यगेव प्रेरयतीति ईश्वरत्वाद्द्वावद्यं सेव्य इति फलरूपत्वमाह द्वयेन । वासुदेवाखिलावासेति । वासुदेवो मोक्षदाता अखिलावासेति तस्य दाने परिज्ञानं भोक्तृरूपञ्च सः भोग्यरूपश्चेत् फलत्वञ्च सम्पद्यते प्रमेयरूपत्वेन निरूपयन् भगवत्सिद्धान्तसिद्धमेव प्रमेयमिति ज्ञापयितुं द्वयमाह । सात्वतां प्रवर प्रकर्षेण व्रियत इति प्रवरः प्रकृष्टो वा वरः भर्ता सात्वतैः यो व्रियते स एव प्रमेयोमीति यश्च परिपालयितुं शक्तः स एव च पतिः एवमुपास्योपासकयोः निरूपको धर्मो निरूपितः ॥ १० ॥

एवं नवधा मूलरूपं निरूप्य स्वदोषपरिहारार्थं भगवतः सर्वात्मकत्वं निरूपयति । त्वमात्मेति । जीवा अप्यात्मानो भवन्तीति तद्व्यावृत्त्यर्थमेक एवत्वं सर्वभूतानामात्मेति जीवाः प्रत्येकमात्मानः अयमात्मशब्दः ब्रह्मवादे परमात्मपरः योगशास्त्रे विभूतिपरः भगवच्छास्त्रे आत्मनामात्मा आधिदैविको गङ्गेव सांख्ये तु न जीवब्रह्मविभागः पुरुषेश्वरयोरत्रेत्यत्र निषिद्धत्वात् चतुर्ष्वपि पक्षेषु भगवतो न विलक्षणत्वं प्रतीतिस्तूपाध्यादिविषय इति तत्र दृष्टान्तमाह । ज्योतिरिवैधसामिति । सर्वेषामेव काष्ठानां मध्ये ज्योतिरग्निरेक एव वर्णान्तरप्रतीतिस्त्वौपाधिकी सम्बन्धी निरूपितः ननु तस्यैवाधिकरणत्वम् अनेन काष्ठमग्निरेव काष्ठतापरमग्नेर्लयप्रतिबन्धिका तस्मिन् दग्धे स्वरूप एव वह्निस्तिष्ठतीति अत एव गूढः विद्यमानमपि न कोऽपि जानाति अग्नेः स्वरूपमुभयथा प्राप्नोति भ्रातृव्यवहारात् दाह्याभावाद्वा उपाधिरुभयस्यापि प्रतिबन्धकः यथा न दहति तथा न शाम्यति च तथा सङ्घाते जगति विद्यमाने आत्मा न स्वरूपं प्राप्नोति न साधनैर्नापि बाधकैः एतदर्थमेवमुक्तवान् अस्तीत्यत्र मथनवत् प्रमाणमाह । गुहाशय इति । गुहायामाशेत इति अन्यथा सर्वप्रकाशो न स्यात् किञ्च साक्षी सर्वकर्माणि पश्यति अन्यथा अयमहमेतत्सर्वद्रष्टेति अन्यथा फलभोगोऽपि न स्यात् इत्यपि निरूपितं जीवव्यावृत्त्यर्थमाह । महापुरुष इति । स्वानुभावः पुरुषो महापुरुषः अनुभावश्च परमकाष्ठामापन्नः चतुर्ष्वपि पक्षेषु भगवद्धर्म एव किञ्च ईश्वरस्त्वं सर्वनियामकः नियम्यास्तु जीवा इति यथा नियमयसि तथा कुर्वन्तीति स्वरूपत्वात्प्रेरकत्वाच्च सामान्यन्यायेन न मम दोषः ॥ ११ ॥

किञ्च उत्पत्तिविचारेणापि त्वयैव भिन्नतया सृष्टा इति

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न कंसस्य नापि मम दोष इत्याह । आत्मेति त्वं कर्त्ता आत्माश्रयस्त्वमेवाधिकरणं स्वरूपस्थितावपि त्वमेव करणमिति प्रथमतः करणानिर्देशः आत्मना मायया सर्वभवनसामर्थ्यमप्यात्मैव उभयेनेलोके मायया लोकानामन्यथा प्रतीत्यर्थं वा उत्पादिनास्तु सच्चिदानन्देभ्यः सत्वरजस्तमांसि लोकानां प्रतीतिस्तु प्रकृतिरिति अन्यथा भगवतः कर्तृत्वमेव न स्यात् स्वातन्त्र्याभावात् स्वातन्त्र्येतु उभयोः स्वतन्त्रता न सम्भवतीति प्रकृतिस्तदधीना मन्तव्या अत आत्मनैव गुणान् सृजन् मायामपि करणत्वेन स्वीकृतवान् गुणानामुपादानमात्मैव स्वरूपञ्च अन्यथा प्रतीत्यर्थमेव भगवद्रूपा भगवच्छक्तिर्व्यांप्रियत इति पश्चात् तैरेव इदं सर्वं जगत् सृजसि अत्सि भक्षयसि अवसि पालयासि ननु किमर्थमेवं करोतीत्याशङ्क्याह । ईश्वर इति । ईश्वरेच्छाया नियन्तुनशक्यत्वात् अन्यथा स्वविचारेण प्रयोजनस्याभावात् लीलायामपि प्रयोजनासम्भवः अत ऐश्वर्यमेव नियामकमिति अतस्त्वयैव सृष्टमिति त्रिभिर्गुणैरपि अग्रिमकार्यं च विचारितमिति न कस्यचित् दोषः साक्षाद्भगवतः सर्वं जायत इति पक्षः प्रकृते न सम्भवति तथा सति वैलक्षण्ये नियामकाभावात् स्वापराधस्तिष्ठेदेव स्वकृतवैयर्थ्यं च स्यादतोऽन्य एव पक्ष आश्रितः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

व्रजलीलां समाप्य स्वां लीलां दर्शय माथुरीम् ।
इत्यावेदयितुं तत्र देवर्षिस्तुष्टुवे प्रभुम् ॥

भागवतप्रवर इति । मथुरास्थानामपि भागवतानां प्रकृष्टो वरो मनोरथसिद्धिर्यस्मात् सः । अक्लिष्टेन अक्लेशेनैव कर्म केशिवधादिकं यस्य तम् ॥ ९ ॥

प्रथमं कृष्ण कृष्णेत्यानन्देन भगवतस्तवनामसङ्कीर्त्तनकृद्भक्ताभासो नारदोऽस्मीत्यात्मानं स्मारयति । अप्रमेयः प्रमातुमशक्य आत्मा मनो यस्येत्यतः परं व्रजे एव विराजमानो व्रजस्थान् पित्रादीनानन्दयिष्यसि मथुरां यास्यंस्तत्रत्यान् वेति कस्त्वन्मनो वेदयितुं क्षमत इति भावः । किञ्च योगेश योगमायाधीश्वरत्वादुभयत्रापि विराजस्येवेति भावः । जगदीश्वर इति। जगत्कार्य्यभारावतरणमपि कर्त्तव्यमिति भावः । वासुदेवेति । नन्दस्य पुत्रत्वेन स्वस्य प्रसिद्धिमकार्षीरेव । इदानीं वसुदेवस्यापि तद्भाग्यं प्रकटयेति भावः । अत एवाखिलावासः अखिलांस्त्वद्भक्तान् कंसभयाच्छिच्युतानानीय मथुरायां वासयेत्यर्थः । यस्त्वं सात्वतां यादवानां प्रवरः । यद्वा प्रकृष्टो वरो मनोरथो यस्य सिद्धिस्वरूपोऽसि । प्रभो ! त्वं सर्वं कर्त्तुं शक्नोपि । ननु मे यथेच्छा तथा करोमि करिष्यामि च तत्र त्वं किमेवं विशेषं निवेदयसि तत्राह त्वमात्मा ममान्तर्यामी त्वमेव मां निवेदयितुं प्रेरयसि तत्राहं किं करोमीति भावः । न केवलं ममैव अपि तु सर्वभूतानामन्तश्चित्ते तिष्ठसि । एधसां काष्ठानामन्तर्ज्योतिरिव गूढः किञ्च गुहाशयः यथा त्वं नन्दपुत्ररूपेण गोवर्द्धनगुहायां शेषे तथैवान्तःकरणगुहायामन्तर्यामिरूपेण शेषे साक्षी तत्र शयानोऽपि सर्वं साक्षात् पश्यसि । तत्र हेतुः महापुरुषः । अप्रतिहतयोगबल इत्यर्थः । किञ्च महापुरुषा ईशितव्या अपि भवन्ति त्वन्त्वीश्वरः सर्वनियन्ता ॥ १० ॥ ११ ॥

किञ्च त्वं यद्यस्मानस्मद्बुद्ध्यादिकं सर्वमिदं जगच्च नास्रक्ष्यस्तदा अहमप्येवं न न्यवेदयिष्यमित्याह । आत्मनेति । आत्माश्रयः स्वतन्त्रः आत्मना आत्मरूपया शक्त्या भवान् गुणान् महदादीन् ससृजे । तेनेदं त्वं यदि सृष्टवानेव तदान्ये जगज्जनास्त्वत्प्रेरिताः स्वस्वकृत्यार्थं चेष्टन्ते तथैवाहमप्यद्य त्वामेतन्निवेदयितुमेवं चेष्टे इति भावः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भागवतप्रवरः छान्दोग्यप्रसिद्धभूमादिशब्दवाच्यभगवद्विद्यामुपनयनपूर्वकं निजाचार्य्याद्गृहीत्वा तद्विद्योपदेशेन भागवतसम्प्रदायप्रवर्तकत्वात् भागवतेषु प्रवरो मुख्यः एतद्वक्ष्यमाणमभाषत ॥ ९ ॥

कंसं तद्वधार्थंम्प्रवर्त्य दैत्यविनाशाय धर्मसेतुरक्षणाय चावतीर्णोऽस्यतः दिष्ट्या केशी हतः चाणूरादिसहितं कंसञ्च निहतं द्रक्ष्ये इत्यादि वक्तुकामः प्रथमं सदानन्दत्वाप्रमेयत्वादिगुणवर्णनेन भगवन्तं स्तौति । कृष्णेति त्रिभिः । हे कृष्ण सदानन्द आदरेवीप्सा तस्यैयत्तानवच्छिन्नत्वं दर्शयितुं सम्बोधयति । अप्रमेयात्मन्निति । अप्रमेयः सकलप्रमाणैः इयत्तावच्छेदेन प्रमातुमशक्यः आत्मा स्वरूपं विग्रहो वा यस्य ननु तर्हि कथङ्गमनागमनादिव्यवहारसिद्धिरित्यतः सम्बोधयति । योगेशेति । हे अचिन्त्यप्रभावेत्यर्थः । सर्वनियन्तृत्वेन सम्बोधयति । जगदीश्वर ! निखिलप्रपञ्चनियन्तः ! सर्वनियन्तृत्वेऽपि भक्तवश्यतां दर्शयितुं सम्बोधयति । वासुदेवेति वसुदेवापत्य देवकीजठरधार्य्योऽपि तस्मिन् सर्वाधारत्वं दर्शयितुं सम्बोधयति । अखिलावास ! हे सर्वचेतनाचेतनाधार एकान्त्युपास्यतया सम्बोधयति । सात्वतां प्रवरेति सर्वशक्तिमत्वं दर्शयितुं सम्बोधयति प्रभो इति ॥ १० ॥

एवं सम्बोधनैः संस्तुत्य सर्वात्मादिना स्तौति । त्वमिति । सर्वेषां चेतनाचेतनानां त्वमात्मा आश्रय इत्यर्थः । किञ्च एधसां काष्ठानामन्तर्ज्योतिरिव सूक्ष्माग्निरिव सर्वभूतानां गुहाशयस्त्वमसि हृदाकाशगोऽसि एधसामन्तर्ज्योतिर्वत्सर्वगोऽपि सर्वदोषास्पृष्टोऽसीत्यर्थः । एवमेव गूढोऽसि यथैधःसु अरणीप्रभृतिषु उपायेनाग्निलाभस्तथोपायतोऽधिकारिभिर्द्रष्टुं शक्योऽसीत्यर्थः । किञ्च सर्वेषां भूतानां साक्षी अतः महापुरुषः सर्वश्रेष्ठस्त्वमेवासि ॥ ११ ॥

अथ स्वाश्रयत्वेन विश्वजन्मादिहेतुत्वेन च स्तौति । आत्मनेति ॥ १२ ॥

---

### भाषा टीका ।

इसके अनन्तर सब भागवतों में श्रेष्ठ देव ऋषि नारदजी भगवान् के पास जाकर सर्व कार्य कर्ता कृष्ण भगवान् से एकान्त में यह कथन करते भये ॥ ९ ॥

स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् ।
अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥ १३ ॥
दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः ।
यस्य हेषितसंत्रस्तास्त्यजन्त्यनिमिषा दिवम् ॥ १४ ॥
चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम् ।
कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो ! ॥ १५ ॥
तस्यानुशङ्खयवनमुराणां नरकस्य च ।
पारिजातापहरणमिन्द्रस्य च पराजयम् ॥ १६ ॥

भाषा टीका ।

हे कृष्ण ! हे अप्रेयात्मा ! हे योगियों के ईश ! हे जगदीश्वर ! हे वासुदेव ! हे संपूर्ण जगत् के आधार ! हे सात्वतों के पति ! हे प्रभो ! ॥ १० ॥

आप सब भूतों के अन्तर्यामी हो और एकही जैसे कि अनेक काष्ठों में अग्नि रहता है तैसे अन्तःकरण में रहने वाले गुप्त हो सब के साक्षी हो महा पुरुष हो ईश्वर हो ॥ ११ ॥

आपने अपने आत्माही में स्थित होकर सृष्टि से पहिले माया से इन महदादिकों को सृजा है आप सत्य सङ्कल्प होने से उन गुणों से इस जगत् को सृजते हो पालते हो संहारभी करते हो आप इन कार्यों में ईश्वर समर्थ हो ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रस्तुतमाह । सत्वमिति । भूधरभूतानां भुवं धरन्तीति भूधरा राजानस्तद्रूपाणाम् ॥ १३ — १४ ॥

परश्वोऽहनीति अद्यैवाक्रूर एष्यति श्वो मथुरां गन्तासि परश्वश्चाणूरादींश्च त्वया निहतान् द्रक्ष्यामीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १५ ॥

तस्यानु तदनन्तरं शङ्खादीनाम् शङ्खः पञ्चजनः वधं द्रक्ष्यामीति शेषः भाविनिर्देशमात्रमेतन्नत्वानन्तर्यं विवक्षितम् ॥ १६ ॥ — ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवमुभयरूपं दर्शयित्वा लीलामनुक्रामन् निजरूपावतारे कारणमाह । स त्वमिति । तादृशोऽपि त्वं दैत्यादीनां स्वभक्तिविरुद्धानां साधूनां स्वभक्तिप्रवर्त्तकानां पाठान्तरे सेतूनां स्वभक्तिमर्य्यादानां राजरूपाः प्रमथाः काशिराजादयः ॥ १३ ॥

तत्र पूतनाद्यो ये विनाशितास्तेऽपि दुष्टा एव किन्त्वयं परमदुर्मार इत्याह । दिष्ट्येति । अयमधुना साक्षादेवेत्यर्थः । अतस्त्वं केशव नामा भवितासीति शेषः । तथाच तेनोक्तं श्रीविष्णुपुराणे । यस्मात्त्वयैष दुष्टात्मा हतः केशी जनार्दन ! । तस्मात् केशवनामा त्वं लोके गेयो भविष्यसीति ॥ १४ ॥

अथ स्वस्य तल्लीलानुक्रमाभिज्ञतातिशयं विज्ञापयन् भविष्यं विवृणोति । चाणूरमित्यादिभिः । अप्यर्थे चकाराः सर्वैः सह योज्या तैश्च चाणूरादीनामवश्य वध्यत्वं सूचितम् । द्रक्ष्ये द्रक्ष्यामि मल्लानिति बहुत्वं कङ्कन्यग्रोधादीनपि विभो ! हे प्रभो ॥ १५ ॥

तस्येति पञ्चकम् । शङ्खादीनां वधमिति शेषः । इत्यादीनां द्रक्ष्याम्यहं तानीति वक्ष्यमाणेनान्वयः । वीराः क्षत्रियेषु शूराः तत्कन्यानां हे वीरेति वा । प्रायः स्ववीर्य्येणैवोद्वहनात् अतएवाह वीर्य्यं पराक्रमः तदेव शुल्कम् आदिशब्देन कन्याभक्त्यादि । तदेव लक्षणं प्रकारो यस्य तं तत्र क्वचित् समुदितं क्वचित्तु केवलभक्तिः यथा कालिन्द्यादेरिति ज्ञेयं पापात् विप्रगोहरणजातात् शापादिति पाठस्तु श्रीशुकसम्मतः । अग्रे शापाकथनात् । तत्र द्वारकायामिति यथार्थं पूर्वत्र परत्र च योज्यमिति द्वारकाप्रयाणमपि सूचितं हे जगत्पते ! इति तत्रेन्द्राद्यागमनेन साक्षाद्गरुडारोहणादिना च तादृशैश्वर्य्यप्रकाशनात् ॥ १६ ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र पालनं स्वावतारैः मन्वादिरूपेण चेत्यनेकविधं तत्र स्वावतारेण पालनं दुष्कृद्विनाशपूर्वकमित्यभिप्रेत्याह । सत्वमिति । स उक्तविधस्त्वं भुवो भारभूतानां दैत्यादीनां विनाशाय साधूनां रक्षणाय चावतीर्णः प्रमथा रुद्रभूतानि रक्षणाय चेति चशब्दो विनाशायेत्यनेनान्वेतव्यः सचान्वाचयद्योतकः दुष्कृद्विनाशनमानुषङ्गिकमवतारप्रयोजनं सङ्कल्पमात्रेणापि तत्सिद्धेः साधुपरित्राणमेव परमप्रयोजनमिति बोध्यम् ॥ १३ ॥

एवंविधस्य तवाचिन्त्यप्रभावस्येदं केशिहननमुचितमेवेत्यभिनन्दति । दिष्ट्येति । अयमश्वाकृतिर्दैत्यः केशी लीलयैव ते त्वया हतः दिष्ट्या ऽयमस्माकं महानानन्द इत्यर्थः । लीलया हत इत्यनेन दुर्वधोऽपि लीलया इत्येतदद्भुतमित्यभिप्रेतं दुर्वधत्वमेव व्यनक्ति । यस्य केशिनो हेषितेन संत्रस्ता नितराम्भीताः सन्तोऽनिमिषा इन्द्रादयो दिवं त्यजन्तीति ॥ १४ ॥

कर्तव्यमावेदयति । चाणूरमित्यादिना । अद्यैवाह्न्यक्रूर एष्यति श्वो मथुरां गन्तासि परश्वश्चाणूरादींस्त्वया निहतान् द्रक्ष्यामि इति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः ॥ १५ ॥

तस्यानु तदनन्तरं शङ्खादीनां नरकस्य च वधमिति शेषः । द्रक्ष्ये इत्यनुषङ्गः शङ्खः पञ्चजनः भाविनिर्देशमात्रमेवैतन्न त्वानन्तर्यं विवक्षितं यानि पारिजातापहरणादीनि यानि च द्वारकामधिवसन् भवान् वीर्याणि चेष्टितानि कर्त्ता करिष्यति तानि सर्वाणि कविभिरस्मदादिभिर्गेयान्यहं द्रक्ष्यामीति सम्बन्धः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवनप्रकारं दर्शयति । सत्वमिति ॥ १३ ॥

अनिमिषा देवाः सुरमत्स्यावनिमिषावितिच ॥ १४ ॥

स्वोक्तार्थे वचनं प्रमाणयितुं भाविनमर्थं दिव्यचक्षुषोपलभ्य वक्ति । चाणूरमित्यादिना ते तव करेण ॥ १५ ॥

यथेदानीं केश्यादिहननं प्रत्यक्षं भवत्येवमेव कालान्तरे क्रियमाणमपि कर्म दृग्विषयं भविष्यतीति भावेनाह । तस्येति तस्य कंसस्य अनु अनन्तरं शङ्खादीनां हननमिति शङ्खः पञ्चजनासुरः ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

महानिति बहुत्वं कङ्कन्यग्रोधादीनामपि तदन्तः पाताय । ते त्वया ॥ १५--२० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतस्मिन्नर्थे हेतुं वदन् एतदर्थमेव त्वमवतीर्ण इति सेवकैरपि तदनुगुणमेव कर्त्तव्यमिति न ममापराध इति वक्तुमाह । स त्वमिति । भूधरा राजानः ते भूमारका एव भूपालकत्वेन जाताः वस्तुतो दैत्याः तेषु सात्त्विकाः प्रमथा यक्षा राजसाः रक्षांसि तामसानि एते त्रयोऽपि सर्वनाशकाः नहि नाशकैः पालनं सम्भवति अतः केवलं पर्वतभूताः भाराय जाताः तेषां नाशाय अवतीर्णो भगवान् तेन भूमेर्भारो गच्छति साधवश्च परिपालनीयाः अराजके राज्ये साधूनां परिपालनं न सम्भवति अरक्ष्यमाणाः सर्व एवासाधवश्च भवन्ति अतः प्रकारान्तरेण दैत्यवधेऽपि न कार्यं सिध्यति सर्वेषां वधे प्रलय एव स्यात् अतो राजानो विधायैव दैत्या हन्तव्याः अतो भगवान् स्वयमवतीर्णः साधूनां रक्षणार्थं च चकारात् भक्तयर्थं च अतस्तदनुगुणं सेवकैरपि कर्त्तव्यमिति मयापि कर्त्तव्यमिति भावः ॥ १३ ॥

एतन्निदर्शनं वदन् भगवता साम्प्रतं कृतमनुमोदति दिष्ट्येति । त्वया अयं महान् नितरां हतः हय इत्याकृतिमात्रं वस्तुतो दैत्यः लीलयेति । स्वयंपीडाञ्च नाप्नुवन् अन्यथा पीडायामपि सेवकस्यापराध एव स्यात् अत एव दिष्ट्या मम महद्भाग्यं ननु तुच्छेनायासेनैव मार्यते किमाश्चर्यमित्याशङ्क्याह । यस्येति । हेषितेन संत्रस्ताः अनिमिषा अपि दिवन्त्यजन्ति ज्ञानशक्तिः स्थिरा अनिमिषाणां तेषामपि भयेन तथाहो निरूप्यते किञ्च निमिषोऽपि येषां नास्ति तेषां मूर्च्छादिकमसम्भावितमिति भयं सर्वथा अयुक्तं तेषामपि हेषितमात्रेण भयं जनयति तदपि भयं महत्कार्यं करोतीत्याह । दिवमपि त्यजन्तीति । अत आयासः कुतो भवेत् स न कृत इति महद्भाग्यम् ॥ १४ ॥

अन्यदप्यग्रे भविष्यतीति तदहं सर्वं द्रक्ष्यामीति मया मत्सुखार्थमेवैतत्कृतमिति स्वौत्सुक्यं प्रकटयन् स्वस्यापि दोषं स्वयमेव निवेदयन् आह । चाणूरमिति । योगजधर्मज्ञानेन सर्वात्मना सर्वं विषयीकरोतीति ज्ञापनार्थं व्युत्क्रमेण वधर्यते अन्यथा हास्तेयः प्रथमहतः नृगः पश्चात् प्रथमञ्च स्यमन्तकः ततोऽपि पूर्वं मृतपुत्रोपादानं मुष्टिकचाणूरयोः प्रधानत्वात् कीर्त्तनं बलभद्रेणापि मारितो योगजधर्मात् भगवदादेशाच्च भगवत्कृत एवेति ज्ञायते निहतं युद्धं चेति चकारार्थः अद्यसन्ध्यायामक्रूरः समायास्यति श्वो गन्तव्यं मथुरायां परश्वो हन्तव्या इति । तदप्यहन्येव ननु रात्रिपर्यन्तमपि विलम्बः उपलक्षणमेतत् पूर्वाह्न एव मल्लाः शङ्खादयः अन्ये च धनूरक्षकाः चकारात् कंसभ्रातरश्च नारदस्त्वात्समनोरथः विभो इति संबोधनं सर्वथा तथा भविष्यतीति निश्चयार्थम् ॥ १५ ॥

न केवलं कंसं हत्वा निवृत्तो भविष्यसि किन्तु अन्यानपि मारयिष्यसीति तान् गणयति । तस्य कंसस्य वधमनु शङ्खः पञ्चजनः यवनः कालयवनः मुरो नरकमित्रमेतेषां वधं द्रक्ष्यामीति सम्बन्धः एते त्रयः सात्त्विकराजसतामसभेदाः नरकस्य च तथा वधं द्रक्ष्यामीति सम्बन्धः अयं भगवत्पुत्रो विशिष्ट इति प्रथमं निरूपितः चकारादन्येऽपि तत्सेवकाः पीठादयः ततो वधं परित्यज्य केवलं जयं वक्तुं निमित्तफलान्याह । पारिजातस्य हरणं निमित्तभिन्द्रस्य पराजयः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत एव निवेदनरूपं स्वकृत्यं करोम्येवेत्याह । स जगत्स्रष्टा त्वं भूधरा राजानस्तद्रूपाणाम् ॥ १३ ॥

दिष्ट्या लोकानां भाग्येन ॥ १४ ॥

पूर्वपूर्वलब्धत्वदवतारलीलाक्रममहमेवं जानामीत्याह । चाणूरमिति ॥ १५ ॥

शङ्खः पञ्चजनः । भावि निर्देशमात्रमेतत् नत्वानन्तर्य्यमात्रं विवक्षितम् ॥ १६ ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स उक्तप्रकारस्त्वं भुवं धरन्तीति भूधरा भूपास्तद्रूपाणां दैत्यादीनाम् ॥ १३ ॥

अयं केशी ते त्वया दिष्ट्या निहतः ॥ १४ ॥

परश्व इति अर्थात् अद्याक्रूर एष्यति श्वो मथुरां गन्तासि परश्वस्तु ते त्वया चाणूरादीन् निहतान् द्रक्ष्ये द्रक्ष्यामि क्रमोऽत्र हस्त्यादिवधे न विवक्षितः ॥ १५ ॥

तस्य चरितस्य अनु अनन्तरं शङ्खवधादिकं यानि चान्यानि वीर्य्याणि द्वारकामावसन् कर्त्ता तानि च द्रक्ष्यामीति पञ्चजना-

उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्षणाम् ।
नृगस्य मोक्षणं पापाद्द्वारकायां जगत्पते ! ॥ १७ ॥
स्यमन्तकस्य च मणेरादानं सह भार्यया ।
मृतपुत्रप्रदानञ्च ब्राह्मणस्य स्वधामतः ॥ १८ ॥
पौण्ड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम् ।
दन्तवक्त्रस्य निधनं चैद्यस्य च महाक्रतौ ॥ १९ ॥
यानि चान्यानि वीर्याणि द्वारकामावसन् भवान् ।
कर्त्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न्वयः शङ्खः पञ्चजनः यवनः कालयवनः मुरश्च तेषां वधं पौण्ड्रकस्य वधमिति वधशब्दस्यात्राप्यन्वयः ॥ १६ ॥

भाषा टीका ।

सो आप राजा रूप दैत्यों के प्रमथों के राक्षसों के मध्य में जो दुष्ट हैं तिनके नाश करने को तथा धर्म मर्यादाओं के रक्षण करने को अवतीर्ण भये हो ॥ १३ ॥

आपने लीला ही से घोडा की आकृती वाले इस दैत्य को जो मारा है सो अच्छा किया जिसके कि हींसने के शब्द से त्रासित होकर सब देवता स्वर्ग को छोड जाते थे ॥ १४ ॥

हे विभो ! अब परसों के दिन चाणूर मुष्टिक तथा और मल्ल हस्ति तथा कंस इन सबों को आपके हाथ से मारे हुये मैं देखोंगा ॥ १५ ॥

उसके पीछे शंख यवन मुर नरकासुर इन का मरना भी हम देखेंगे पारिजात का हरणा और इन्द्र के पराजय को भी देखेंगे ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

भार्यया जाम्बवत्या सह स्वधामतो महाकालपुरात् ॥ १८ ॥ — ॥ १९ ॥

द्वारकामावसन् द्वारकायां वसन् कर्त्ता करिष्यति ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मृतपुत्राणां प्रदानं ब्राह्मणस्येति सम्प्रदानत्वाभावस्तस्यैव स्वत्वात् । उपादानमिति क्वचित् पाठः । स्वधामतस्तच्छिद्रोपात् अनावृत्तिस्थानादपीत्यर्थः । इति परमस्वातन्त्र्यं दर्शितं पश्चात् पौण्ड्रकवधानन्तरम् ॥ १८ ॥ १९ ॥

यानि एकेनैव युगपद्बह्वीनां बहुधा विवाहादीनि श्रीदामानुग्रहादीनि तानि चाहं द्रक्ष्यामि अत एवैकादशे । गोविन्दभुजगुप्तायां द्वारकायां कुरूद्वह । अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालस इति । अहो भाग्यमाहात्म्यं मम अहो कारुण्यमाहात्म्यं तव चेति भावः ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वीर्यमेव शुल्कादिलक्षणं प्रदेयद्रव्यस्वरूपं यस्मिंस्तं वीराणां भीष्मकादीनां या कन्या रुक्मिण्याद्यस्तासां विवाहमित्यर्थः नृगस्य शापान्मोक्षणं त्याजनमिति सम्बन्धः हे जगत्पते ! ॥ १७ ॥

भार्यया जाम्बवत्या सत्यभामया च सह द्वारकायां स्यमन्तकाख्यस्य मणेरादानं ब्राह्मणस्य ब्राह्मणाय स्वधामतः स्वस्थानात्सङ्कर्षणलोकादित्यर्थः । आनीयेति शेषः मृतानां पुत्राणां प्रदानम् ॥ १८ ॥

दीपनं दाहनं महाक्रतौ युधिष्ठिरराजसूये चैद्यस्य शिशुपालस्य च निधनं वधम् ॥ १९—२० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आदिशब्देन लक्ष्यवेधनमाह । लक्षणं कालिके चिह्ननाम्नि मुद्राङ्कसङ्गयोरिति च ॥ १७—१९ ॥

वीर्याणामवद्यवर्ज्यत्वमाह । गेयानीति । भुवीति विशेषणेन वीर्याणां संसारनिवृत्त्यर्थमेव कृतत्वं सूचयति ॥ २० ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

वीरकन्यानामुद्वाहः विवाहः फलं ननु गृहीतानां तत्रापि वन्या गृहीतानां कथं विवाह उचित इति चेत्तत्राह । वीर्यशुल्क एव आदिर्यस्य मनस्तोषणादिः गान्धर्वादिर्वा तदेव लक्षणमसाधारणो धर्मो यस्योद्वाहस्य विवाहे वीर्यमेव प्रयोजकं मूल्यक्रीते यथा न काचिच्चिन्ता सर्वं पण्यगतं शुचीति वाक्यात् तथापि वीर्यशुल्कमपि क्षत्रियकन्यानामेवोचितं ननु यस्य कस्यचित् तत्राह । वीराणामेव याः कन्याः दानमेव प्रयोजकं चेत् तदा नृगस्य दानात् न किञ्चित्सिद्धमिति पापात् ब्राह्मणगोहरणात् कृकलास-

अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै ।
अक्षौहिणीनां निधनं द्रक्ष्याम्यर्जुनसारथेः ॥ २१ ॥
विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम् ।
स्वतेजसा नित्यनिवृत्तमायागुणप्रवाहं भगवन्तमीमहि ॥ २२ ॥
त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ।
क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २३ ॥
श्रीशुक उवाच ।
एवं यदुपतिं कृष्णं भागवतप्रवरो मुनिः ।
प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः ॥ २४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कूपाद्वा द्वारकायामिति तस्योद्धारे भक्तत्वे च हेतुः ननु ब्राह्मणगोहरणमक्षय्यं भवति तत्कथमुद्धार इति चेत्तत्राह । जगत्पत इति । स एव पतिर्नियामकः ॥ १७ ॥

सत्राजितप्रसङ्गे स्यमन्तकमणेरुत्थानयनं जाम्बवता हि नीतः पश्चाज्ज्ञात्वा कन्यामपि दत्तवानिति भार्यया सह नयनं मृतपुत्रोपादानं गुरोः चकारात् मृतपुत्राणां ब्राह्मणस्य उपादानं स्वधामतो मूलस्थानात् योगजधर्मात्ते सर्वे स्फुरिताः तिरोहिता अपि योगजधर्मस्यैतावदेव बलं नत्वविद्यमानमपि पश्यति अत एव वैनाशिकप्रक्रिया असङ्गता ॥ १८ ॥

पश्चात् पौण्ड्रकस्य वध इति स्वदर्शनापेक्षया पौण्ड्रको मिथ्यावासुदेवः चकारात् काशिराजस्यापि काशीनगर्या दीपनं ज्वालनं दन्तवक्त्रस्य शिशुपालस्य च ततो वधः विपरीतक्रमः पूर्वजन्मद्वये हिरण्याक्षः कुम्भकर्णश्च प्रथमं हत इति तथैव मारयिष्यतीत्युक्तवान् महाक्रतौ राजसूये चकारात् सर्वत्र तत्संबन्धिपदार्थो ग्राह्यः ॥ १९ ॥

एवं विशेषतो निरूप्य सामान्यतो निरूपयति । यानि चान्यानि चेति शाल्ववधादीनि वीर्याणि स्त्रीणां गृहेषु नानाविधा लीलाश्च अन्यानि जीवसाधारणानि द्वारकायां वसन्निति प्रासङ्गिकानि तानीतयुक्तं भवानिति सम्मुखतया स्वस्याप्रदर्शनं सूचितं ननु दर्शनेन किंस्यादित्याशङ्क्य वीर्याणां माहात्म्यमाह । गेयानि कविभिरिति । अथवा मयोपदेक्ष्यानीति तदर्थं मया द्रष्टव्यानि भुवीति अग्रिमाणां मुक्त्यर्थानीत्यपि सूचितम् ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भार्य्यया जाम्बवत्या सह । स्वधामतो महाकालपुरात् ॥ १८—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वीर्य्यमेव शुल्कादिलक्षणं प्रदेयद्रव्यस्वरूपं यत्र तं वीरकन्यानामुद्वाहम् ॥ १७ ॥

भार्यया जाम्बवत्या सह स्वधामतः स्वस्थानतः ॥ १८ ॥

महाक्रतौ राजसूये ॥ १९ ॥

कर्ता करिष्यति ॥ २० ॥

---

भाषा टीका ।

वीर राजाओं कि कन्याओं का विवाह जिसमें की पराक्रमही मूल्य होगा हे जगत्पते ! द्वारका में नृग राजा का पाप से मोक्षण करना देखेंगे ॥ १७ ॥

स्यमंतक मणिका भार्या के सहित ग्रहण करना और ब्राह्मण के मरे हुये पुत्रों का स्वधाम से ले आना ॥ १८ ॥

पीछे पौंड्रक का वध करना और काशीपुरी का दाहन करना और महायज्ञ में चैद्य का वध तथा दंतवक्त्र का वध भी ॥ १९ ॥

और द्वारका में निवास करके और भी जिन वीर्यों को आप करेंगे जिनको कवि लोक पृथिवी में गान करेंगे तिन को भी मैं देखूंगा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

अमुष्य विश्वस्य भूभारस्य वा ॥ २१

एवं विज्ञाप्य कृताभिनन्दनं भगवन्तं नमस्यति द्वयेन । विशुद्धविज्ञानघनमिति । केवलं ज्ञानैकमूर्त्तिम् अत एव स्वसंस्थया स्वरूपसम्यक्स्थित्यैव परमानन्दरूपया सम्यगाप्ताः सर्वेऽर्था येन तम् आप्तकामतोक्ता सत्यसङ्कल्पतामाह । अमोघवाञ्छितमिति । ननु वाञ्छाचेदस्ति तर्हि दुर्निवारा संसृतिरत आह। स्वतेजसेति। चिच्छक्त्या

श्रीधरस्वामिकृतभावार्थदीपिका ।

नित्यनिवृत्तो मायाकार्यरूपो गुणप्रवाहो यस्मात्तम् अतो भगवन्तं निरतिशयैश्वर्यमीमहि शरणं व्रजेमेति ॥ २२ ॥

ननु त्रिकालज्ञस्त्वं कथं मत्प्रपञ्चं न जानासि जानासि चेत्कथमगुणप्रवाहं ब्रवीपि तत्राह । त्वामिति । ईश्वरमन्यस्य वशयितारं स्वाश्रयमन्यस्यावश मत आत्ममायया आत्माधीनया मायया विनिर्मिता अशेषविशेषा महदाद्या यादवादिरूपा वा कल्पना येन तं धुर्यं श्रेष्ठं नतोऽस्मीति ॥ २३—२४–२५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तत्तत्सर्गानन्तरमर्जुनसारथितया सतस्ते तव सम्बन्धे तत्र तत्सम्बन्धमात्रेणैवेत्यर्थः । तच्च त्वयि नाश्चर्य्यमित्याह । कालेति । अमुष्येत्यादौ विश्वमित्यर्थः । कालरूपस्य सतो विश्वमपि क्षपयिष्णोस्तन्नाशनसमर्थस्येत्यर्थः ॥ २१ ॥

विशुद्धेति । तैर्व्याख्यातं तत्र केवलेति "न चक्षुषा गृह्यते रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" इति श्रुतेः । स प्रकाशत्वेन केवलज्ञानरूपा तस्य च ज्ञानस्य बहुमूर्त्तित्वेऽपि एकस्या मुख्याया मूर्त्तेरंशित्वादेका मूर्त्तिर्यस्य तं तदुक्तमक्रूरेण बहुमूर्त्त्येकमूर्त्तिकमिति । एकेति विशब्दस्यार्थः विशिष्टाभिधायित्वेनासाधारणतया तादृशनिगमनात् । अत एवेति यतो मूर्त्तेरपि केवलं ज्ञानरूपत्वमखण्डत्वञ्च तदनुभवसिद्धम् । अतः सर्वस्वरूपत्वं स्वरूपं चात्मा आत्मा च सर्वाश्रयः सर्वश्च ज्ञानाश्रयत्वेनैव भासत इति । यत आत्मत्वमत एव परामानन्दरूपेणैव स्थितिः । निरुपाधिपरमप्रेमास्पदरूपत्वात् । यतस्तथात्वमतः स्वरूपत एव सर्वार्थप्राप्तिः । आनन्दानुगत्यैव सर्वस्यार्थत्वात् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति श्रुतेरित्यर्थः । अत एव तस्य नानारूपाद्विरर्थः स्वरूपत एव प्राप्त इति ज्ञानस्यैव मूर्त्तित्वं युक्तमेवानुभूतं तेनेति भावः । एवमाप्तकामत्वेऽपि वाञ्छा नित्यप्राप्तस्यापि लीलायामप्राप्तत्वसम्पादनपूर्वकप्राप्त्यर्था तस्याश्चामोघत्वं तादृशासम्भवकारित्वात् । सा च मायिकी न भवेदिति व्याचष्टे नन्वित्यादिना । अतस्तद्रूपादीनामप्यमायिकत्वमवधारितम् । अत एव भगवन्तमीमहीति भगवानेव निजाळम्बनतया निगमितो ननु निर्विशेषब्रह्मेति । यद्वा लोकप्रसिद्धविज्ञानमतीतमिति तत्सम्बन्धाभावाद्विशेषेण शुद्धं विज्ञानमानन्दं ब्रह्मेति प्रसिद्धं ब्रह्माख्यमानन्दात्मकं यद्विज्ञानं तद्रूपो यो घनो मूर्त्तिस्तल्लक्षणं भगवन्तमीमहि शरणं यामि । ननु विज्ञानस्य कथं करचरणाद्याकारमयमूर्त्तित्वं कथम्वा भगवत्त्वामित्याशङ्क्य श्रुतिप्रसिद्धस्य तस्य तत्प्रसिद्धत्वेनैव तादृशं वैलक्षण्यमाह । स्वसंस्थयेति । परास्य शक्तिर्विविधैव श्रूयते इति न चक्षुषा गृह्यत रूपमस्येति श्रुत्या व्यञ्जितया तत्तद्व्यञ्जकस्वरूपशक्त्या सम्यगाप्तास्तत्तद्रूपः सर्वोऽप्यऽर्थो येन तं तथाप्यमोघवाञ्छितम् इच्छाशक्त्या तत्तत्प्रकाशनाप्रकाशनसमर्थः नन्वपरा मायाख्या शक्तिरपि मम विद्यत इति "श्रूयते मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर'मिति श्रुतेः । ततस्तद्दोषेणाप्यहं स्पृष्टो भवेयमित्याशङ्क्याह स्वतेजसेति । स्वतेजसा स्वरूपशक्तिप्रभावेणेति दिक् ॥ २२ ॥

त्वामिति च तैर्व्याख्यातं तत्र ब्रवीषीति निषिध्यमानत्वेनेति शेषः । यद्वा । शुद्धवैकुण्ठादिलक्षणे मत्प्रपञ्चे जाते तत्र मायानिषेधोऽप्ययुक्तः सूर्यमण्डले तमोनिषेधवदित्यभिप्रायेणाक्षिपति नन्विति । तत्र सिद्धान्तभाग आत्माधीनयेति न शुद्धे स निषिध्येत किमुत मायिकप्रपञ्चे या तव लीला तस्यामेव । यतः प्रकृतिक्षोभात् पृथक्त्वेन शुद्धापि तवेक्षणलीला प्रकृतिमुपधाय भवति तथा स्वयं भगवत्सम्बन्धिरूपत्वेन शुद्धैवैषा स्वान्तरङ्गपरिकरस्य तव जन्मादिलीला तदितरपूर्वापरयदुवंशमुपधायेति भावः । यदुप्रभृतीनां श्रेष्ठमिति यथा तव तच्छ्रेष्ठत्वं तथा तदन्तरङ्गानां तेषामपि तद्वंश्यत्वमिति भावः । वृष्णिसात्वतानां पृथगुक्तिः श्रैष्ठ्यापेक्षयेति । ननु तादृशस्य मम मायिकप्रपञ्चेऽभिव्यक्तिः किमर्थं तत्राह । क्रीडार्थमाभि प्रपञ्चगतभक्ताभिमुख्येन आत्त आनीतो मनुष्यविग्रहे नराकृतिपरब्रह्माख्यो येन तं यद्वा । तादृशविहारार्थमङ्गीकृतं मनुष्यजातीययुद्धं येन तम् । अभ्यात्तेति पाठे स एवार्थः । अद्येति त्वदवतारसमय इत्यर्थः । अथवा उपक्रमानुसारेण उपसंहरन्नमस्यति विशुद्धेति द्वयेन । तत्र त्वामीश्वरमित्यादिकमर्द्धं पूर्ववत्तदंशतत्त्वपरम् ईश्वरं पुरुषरूपं स्वयन्तु क्रीडार्थमित्यादि । अन्यत पूर्ववदिति ॥ २३ ॥

यदुपतिमिति । तदापि श्रीगोकुलत्यागानिच्छया साक्षान्न किञ्चिदङ्गीकृतवान् किन्तु यदुपतित्वव्यञ्जकलक्षणविशेषेणैव तत्तदङ्गीकृतवानिव यस्तमित्यर्थः । प्रणिपत्य साष्टाङ्गं प्रणम्येत्यत्र हेतुः भागवतेति अतो भगवदभिप्रायं जानन् द्वारकादौ तु तादृशलोकसङ्घट्टे तन्मर्य्यादां दर्शयति तस्मिन्नन्यथाप्याचरतीति भावः । तस्य कृष्णस्य दर्शनमेवोत्सवो यस्य सोऽपि ययौ । कुतोऽभितोऽनुज्ञातः कृष्णेन प्रस्थापितः सन् ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ ननु अमुष्य भूभारस्येति कर्मणि षष्ठी क्षपयिष्णोरपचिकीर्षोः कालशरीरकस्य ते त्वयाऽक्षौहिणीनां सेनानां निधनं द्रक्ष्यामि हे अर्जुनसारथे अर्जुनादिप्रयोज्यकर्तृभिः क्षपयिष्णोरित्यभिप्रायेणार्जुनसारथे इति सम्बोधनम् ॥ २१ ॥

एवं विज्ञाप्य कृताभिनन्दनं भगवन्तं प्रपद्य नमस्करोति । विशुद्धेति द्वाभ्याम् विशुद्धविज्ञानघनमपहतपाप्मत्वादिगुणकं केवलज्ञानैकस्वरूपं स्वसंस्थया स्वनिष्ठया निरतिशयानन्दस्वात्मानुभवनिष्ठया समाप्ताः सर्वेऽर्थाः कामा यस्य तं प्रयोजनान्तरानपेक्षमित्यर्थः यद्वा सम्यगाप्ताः सर्वेऽर्थाः यस्य तमवाप्तसमस्तकाममित्यर्थः । सत्यसङ्कल्पतामाह । अमोघवाञ्छितमिति अमोघवर्त्तिनमितिपाठेऽमोघं यथा भवति तथा कार्ये वर्तमानं स्वतेजसा पराभिभवसामर्थ्येन नित्यं निवृत्ताः मायागुणास्तेषां प्रवाहः संसारो यस्य तं भगवन्तं षाड्गुण्यपूर्णमीश्वरं त्वामीमहि प्रपद्येमहि ॥ २२ ॥

स्वयमेवाश्रयो यस्य तं "स्वे महिम्नि प्रतिष्ठित" इतिश्रुत्युक्तरीत्याऽनन्याधारमित्यर्थः । आत्ममायया स्वसङ्कल्पेन विनिर्मिता अशेषाः सर्वविशेषाः पृथिव्यादयस्तेषां कल्पना देवादिरूपा सृष्टिर्येन तम् । अधुना क्रीडार्थमात्तः मनुष्यस्येव विग्रहो येन तं यद्वा देवादीनां धुर्यं श्रेष्ठं त्वां नतोऽस्मि यद्यपि सात्वच्छब्दो भगवत्परस्तस्यापि सात्वतेष्वपि भक्तित्वयोगात्प्रवर्त्तत एवमन्यत्रापि द्रष्टव्यम् ॥ २३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । तस्य कृष्णस्य दर्शनादुत्सुकः हृष्टमनाः प्रययौ ॥ २४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ भारतयुद्धे अमुष्य भूवलयस्यावशिष्टं क्षपयिष्णोः क्षीणं कर्तुकामस्य अक्षौहिणीनामष्टादशानामिति शेषः अर्जुनसारथेरित्यनेन भारतयुद्ध इति सूचयति ॥ २१ ॥

उपास्यरूपं विशिनष्टि । विशुद्धेति । भगवन्तं शरणमीमहीत्यन्वयः कीदृशं विशुद्धविज्ञानघनम् अप्राकृतज्ञानमूर्तिं स्वसंस्थया स्वव्यवस्थया अपराधीनस्थित्या समाप्तसर्वार्थं समाप्ताशेषपुरुपार्थं केचिद्धरेर्मूर्तिर्मायामयीति सङ्गिरन्ते तत्राह । अमोघेति । कुत एतत्कथ्यते इति तत्राह । नित्येति । नित्यनिवृत्तः मायागुणानां प्रकृतिगुणानां प्रवाहः परम्परा यस्मिन्स तथा नन्वेतन्मुक्तानामप्यस्तीति तत्राह । स्वतेजसेति । स्वप्रभावेण तेजोबले प्रभावे ऽत्र इति ॥ २२॥

हे आद्यन्तराक्षसनाशकर्तरीश्वरं त्वां नतोऽस्मि ईश्वरत्वं समर्थयते । स्वाश्रयमित्यादिना । आत्माधीनया मायया प्रकृत्या स्वेच्छया वा क्रीडार्थं क्रीडितुं विनिर्मिताशेषविशेपकल्पनं विरचितसमस्तदेवब्राह्मणासुरादितत्तद्वस्तुतारतम्यलक्षणविशेषव्यवस्थानं मनुष्यविग्रह इव विग्रहो यस्य स तथा तं मांसदृष्ट्या मनुष्याकारमित्यर्थः । मनुष्यदेहस्वीकारे कृत्यमाह । धुर्यमिति । धुरं वहति यो धुर्य इत्यतो यदुवृष्णिसात्वतां धुरस्य वोढारम् आद्यन्तधुर्यमिति विशेषणद्वयेन दुष्टविनिग्रहविशिष्टपालनरक्षणकार्यार्थं मनुष्यविग्रहस्वीकार इति विज्ञायते आद्यन्तो मनुष्यविग्रहो यस्येत्यर्थाङ्गीकार "आदिनो राक्षसाः प्रोक्तास्तदन्तत्वाज्जनार्दन" इति वचनं निरुणद्धि विशुद्धविज्ञानघनमित्यादिविशेषणानि चोक्तानि व्याहतानि स्युरिति ॥ २३ ॥

तस्य दर्शनेनोत्सव उत्कृष्ट आनन्दो यस्य स तथा ॥ २४-२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अमुष्य क्षपयिष्णोर्विश्वमपि नाशयितुं समर्थस्येत्यर्थः ॥ २१ ॥
विशुद्धेति द्वयम् ॥ २२—३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं साक्षात्स्वकृतमुक्त्वा कारितमाह । अथेति । परंपरया करणे हेतुं सामर्थ्यं चाह । कालरूपस्येति । अनेन कालरूपो भूत्वा भारतकार्यं कृतवानिति ज्ञातव्यं नतु कालोऽस्मीति वाक्यात् कालरूप एव भगवान् इति कालस्य नियन्ता भगवानिति तथा करणे हेतुमाह । अमुष्य भूभारस्य क्षपयिष्णोः वै निश्चयेन कालो हि निमित्तत्वमेवापद्यते अक्षौहिणीनामष्टादशपरिमितानाम् अक्षौहिणीपरिमाणञ्च —

> एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
> पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥
> सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
> अनीकिनी दशानीकिन्यक्षौहिणी-
> त्येकविंशतिसाहस्री सप्तत्यष्टशताधिका ।
> सङ्ख्या रथाश्विनोः प्रोक्ता नराणां लक्षमुच्यते ॥
> तथा नव सहस्राणि त्रीणि चैव शतानि च ॥
> पञ्चाशच्च तथाश्वानां पञ्चषष्टिसहस्रकम् ।
> दशाधिकसहस्राणि षडेवेत्येष सङ्ग्रहः ॥

एवं स्वरूपाणामक्षौहिणीनां निधनं द्रक्ष्यामि भगवता कारितमित्यत्र लौकिकं निदर्शनमाह । अर्ज्जुनसारथेरिति ॥ २१ ॥

एवञ्चरित्रनिरूपणेन लौकिकदृष्टिप्रधानानां स्वदृष्टान्तेन भगवतोऽपि लौकिकत्वं मत्वा ब्रह्मत्वाय लीलयैवैतत् कृतमिति मत्वा स्वरूपमाह द्वाभ्याम् ज्ञानभक्तिसिद्धान्तनिरूपकाभ्याम् । विशुद्धेति । त्वं स्वरूपतः ज्ञानरूपः तच्च ज्ञानं न जन्यं नापि सविषयं तदाह विशुद्धेति । ज्ञानशक्तिस्तत्रजन्यापि न विषया भवति तदैव विशिष्टा शुद्धिर्भवति तच्च विज्ञानं ब्रह्मरूपमिति वक्तुं घनमित्याह । घनमेव हि बृहत् बृंहितञ्च भवति एतादृशस्य ब्रह्मणः सर्वा सामग्री जगत्कारणे आधारादिभूतां फलञ्च स्वरूपमेव अन्यथा असङ्गत्वभङ्गप्रसङ्गः स्यात् विकारित्वञ्च स्यात् स्वरूपपक्षेतु तथैव प्रादुर्भवतीति न कोऽपि दोषः सिध्येत तदाह । स्वसंस्थयेति । स्वस्मिन्नेव सम्यग्या स्थितिः तयैव कृत्वा समाप्तसर्वार्थः समाप्ताः सर्वे अर्था यस्य वोभूयमानाशेषपुरुपार्थस्वरूपमेव तस्य स्वरूपं तत्स्वरूपस्थित्यैव भवति बहिर्मुखत्वेन भवतीति नित्यं स्वरूपे भगवानेव स्थितो नत्वन्य इति तस्यैव सिद्धाः सर्वे कामाः न केवलमिष्टसिद्धिरेव स्वरूपस्थित्या किन्त्वनिष्टमेव निवर्त्तत इति तदाह । स्वतेजसेति स्वस्य यत् तेजः कोटिसूर्याधिकप्रकाशं चैतन्यं स्वप्रकाशं तेनैव नित्यनिवृत्ता ये मायागुणाः सत्त्वादयः तेषां प्रवाहः कार्यपरंपरा यस्य एते हि दोषास्तम इव सर्वदा सर्वत्र भवन्ति सूर्यमण्डले तु यथा न तमः तथा भगवति न भवन्ति तत्र हेतुरवश्यं वक्तव्यः हेतुवशादेव नित्यनिवृत्तत्वम् अन्यथा सर्वत्र प्रवर्त्तमाना दोषास्तत्र गता न निवृत्ता भवेयुः सच्चिदानन्दगुणास्तूपयोगिन इति तन्निवारणार्थं मायेति एतादृशमपि औडुलोमिमतवत् न निर्गुणं निराकारं किन्तु भगवन्तं षड्गुणैश्वर्यसम्पन्नं त्वामीमहि शरणं व्रजेम प्रार्थनायां लिङ् ॥ २२ ॥

भक्त्यनुसारेण भगवन्तं निरूपयति । त्वामीश्वरमिति । सर्वनियन्ता भगवान् ईश्वरः अन्ये त्वीशितव्याः एतादृशोऽपि न स्वार्थमीशितव्यानपेक्षते लौकिकेश्वरवत् तदाह । स्वाश्रयमिति । स्वमात्मानमेवाश्रित्य तिष्ठति यथा गरुडादेः धारणप्रयत्नः स्वस्मिन्नेव वर्त्तत इति नाधारान्तरमपेक्षते स प्रयत्नः शाम्यतीति गरुडादयः कदाचिदन्याधारा अपि भवन्ति भगवतस्तु स प्रयत्नो नित्य इति न कदाचिदप्यन्याश्रितः परिदृश्यमानोऽपि सम्बद्ध इव दृश्यते नतु सम्बध्यते अत एव "यः पृथिव्यां तिष्ठन्नि"त्यादिश्रुतयः एवमपि सति असंयुक्त एव संयोगोऽपि न तेन सह जायते यत आत्ममाययैव निर्मिता अशेषविकल्पा येन सर्वे विकल्पाः अन्यथाबुद्धिहेतवः ते वस्तुतः माययैव प्रदर्श्यन्ते स्वरूपन्तु भगवानेवेति भगवानसङ्गोऽपि ननु दृश्यन्ते अवतारेषु देहेन्द्रियादिधर्मा इति चेत्तत्राह । क्रीडार्थमिति । क्रीडायां ये अर्थाः परिगृह्यन्ते कुजलादयो धर्मा वाहनत्वादयश्च ते आकारसङ्गे क्रियन्ते ननु भगवद्धर्माः सहजास्ते तथापि कर्म तद्भवतीति फलसाधकत्वं सहजन्ते

भगवानपि गोविन्दो हत्वा केशिनमाहवे ।
पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः ॥ २५ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

दोषरूपत्वात् तदपि न स्यात् अत एव नतोऽस्मि निर्दोषपूर्णगुणविग्रहं विशेषमाह। धुर्यमिति। यादवा वृष्णयः सात्वताश्च सात्त्विकाः यद्वृष्णिरूपा वा वैष्णवाः तेषां धुरं सर्वमेव भारं वहतीति सर्वभक्तोद्धारक इत्यर्थः॥ २३॥

एतावदुक्तेऽपि न भगवान् किञ्चिदुवाच श्रान्तो ऽयमिति केवलं गमनार्थमनुज्ञां दत्तवानित्याह। एवमिति। एतदुक्तमवश्यं करिष्यतीत्याज्ञापनार्थं यदुपतिमिति तेषां पतिर्हि तत्कार्यं करिष्यतीति कृष्णं सदानन्दं किञ्चिद्दप्यकरणे स्वतः पुरुषार्थरूपम् अवश्यं स्वज्ञातं स्वकृतञ्च स्वामिने निवेदनीयमिति निवेदितवानित्याह। भागवतप्रवर इति। एष्यत्परिज्ञाने हेतुः मुनिरिति गमनार्थं स.ष्टाङ्गं प्रणामं कृतवान् पश्चात् भगवता अभ्यनुज्ञातः ययौ ननु तमागतो न किञ्चित् प्राप्तवान् कथं व्यर्थमेव गत इति चेत् तत्राह । तस्य भगवतो दर्शनमेवोत्सवो यस्य लोके महाफलमुत्सवं तद्रूपं दर्शनमेव प्राप्तवानिति॥ २४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अमुष्य विश्वस्य। पष्ठी आर्षी। निधनं निधनरूपं ते चरितमिति शेषः ॥ २१ ॥

एवं कार्य्यं निवेद्य भगवन्तं प्रणमति द्वाभ्याम्। विशुद्धं विज्ञानमनुभवस्वरूपं यद्ब्रह्म तदेव घनं सान्द्रीभूतं त्वामीश्वरमीमहि शरणं व्रजम प्रणमामेति वा स्वीयया संश्रया सम्यक् प्रकारेण लीलापरिकरादिविशिष्टयो स्थित्या सार्वकालिक्या सम्यगाप्ता भवन्ति सर्वार्थाः सर्वविधभक्तमनोरथा यस्मात्तम् अत एवामोघमव्यर्थं वाञ्छितं स्वभक्तमनोरथनिष्पादनलक्षणं यस्य तं स्वस्य श्रीयानां वा तेजसा नित्यं प्रतिदिनमेव निवृत्तो गुणप्रवाहो यस्मात्तम् ॥२२॥

एवं विधोऽन्यः कोऽपि नास्तीत्याह। त्वामिति। ईश्वरम् अन्यस्य वशयितारं स्वाश्रयं न कस्याप्याश्रितमतोऽन्यस्यावश्यम् एतदेवान्यानधीनमैश्वर्य्यमाह आत्माधीनया मायया विनिर्मितमशेषविशेषकल्पनं विश्वं येन तं किञ्च क्रीडैव अर्थः सप्रयोजनं यस्य तम् अथ तु आत्तो गृहीतो मनुष्यैः कंसादिभिः सह विग्रहः कंसप्राणतुल्यकेशिवधहेतुकं शात्रवं येन तम् अभ्यात्तेति च पाठः एषापि तवैका क्रीडेति भावः। यतो यदुवृष्णिसात्वतां स्वबन्धूनां धुरं रक्षणपोषणादिभारं वहसीति तम् ॥ २३-२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कालरूपस्य कालात्मनः। अमुष्य भूभारस्य क्षपयिष्णोरपाचिकीर्षोः। ते कृत्यभूतमक्षौहिणीनां निधनं द्रक्ष्यामि ॥ २१ ॥

एवं केशिवधमभिनन्द्य भाविकर्म सिद्धवन्निर्दिश्य तच्छ्रवणेन प्रसन्नं भगवन्तं नमस्यति । विशुद्धविज्ञानघनमिति द्वाभ्याम् । विशुद्धविज्ञानघनं स्वभावतोपाऽस्तसमस्तदोषं केवलं परज्ञानैकस्वरूपम्। अत एव स्वकीयया स्वरूपस्थित्यैव परमानन्दात्मिकया समाप्ताः सर्वेऽर्था यस्य तम् । अमोघवाञ्छितं सत्यसंकल्पं स्वतेजसा स्वासाधारणेन प्रभावेण नित्यानिवृत्ताः मायागुणास्तत्प्रवाहः संसारश्च यस्य तम् एवंभूतं भगवन्तं स्वाभाविकैश्वर्य्यषड्गुणनिधिम् ईमहि शरणं व्रजम ॥ २२ ॥

अद्य त्वां नतोऽस्मि कथम्भूतम् ईश्वरम् सर्वेषां नियन्तारम् स्वाश्रयं नियन्तृराहितं समानातिशयशून्यत्वात्। स्वमायया संकल्परूपया त्रिगुणमय्या वा विनिर्मिता अशेषाणां पृथिव्यादीनां कल्पना नामरूपात्मिका सृष्टिर्येन तम्। ननु वसुदेवतनस्यैव भूतमीश्वरत्वं मम कथं घटेतात आह । क्रीडार्थं भक्तैः सह विहर्तुम् आत्ताः पितृत्वादिभावेन स्वीकृताः मनुष्यविग्रहाः येन तम् ॥ २३ ॥

तस्य श्रीकृष्णस्य दर्शनेनोत्सवो यस्य सः ॥ २४ ॥ २५ ॥

---

भाषा टीका ।

इसके अनंतर इस संसार के क्षय करने वाले तथा अर्जुन के सारथि काल रूप आपके किये भारत में अक्षोहिणी के निधन को देखूंगा ॥ २१ ॥

आप विशुद्ध विज्ञान घन स्वरूप हो अपनी स्थिती से आपको सब अर्थ प्राप्त हैं आपकी इच्छा व्यर्थ नहीं होती है आपने अपने तेज से नित्यही माया के गुणों के प्रवाह को दूर कर रक्खा है ऐसे आप भगवान् के मैं शरण प्राप्त हूं ॥ २२ ॥

आप ईश्वर हो अपने आश्रय से स्थित हो और आपने अपनी माया से संपूर्ण विकल्प भेदों को निर्माण किया है आज क्रीडा के लिये मनुष्य देह को आपने धारण किया है ऐसे जो आप वृष्णिसात्वतों के पति तिनको मैं नमस्कार करता हूं ॥ २३ ॥

शुकदेवजी बोले इस प्रकार से भागवतों में श्रेष्ठ नारदजी भगवान् की स्तुति कर प्रणाम करके उनके दर्शन से आनंदित होकर आज्ञा पाकर चले गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु नारदेन व्योमवधो न दृष्टस्तत्कथं व्योमवधप्रसक्तिरिति तत्रोच्यते प्रातरेव केशिवधानन्तरं नारदेनोक्तमङ्गीकृत्य पुनस्तथैव पशूनपालयता व्योमो हतः यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि

एकदा ते पशून्पालांश्चारयन्तोऽद्रिसानुषु ।
चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः ॥ २६ ॥
तत्रासन्कतिचिच्चोराः पालाश्च कतिचिन्नृप ! ।
मेषायिताश्च तत्रैके विजह्रुरकुतो भयाः ॥ २७ ॥
मयपुत्रो महामायो व्योमो गोपालवेषधृक् ।
मेषायितानपोवाह प्रायश्चोरायितो बहून् ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वेषधारिवधप्रसङ्गादत्रोच्यत इति द्रष्टव्यं केचित्तु पुनः शङ्खचूडवधात्पूर्वमेव पठन्ति च तमाह । एकदेति ॥ २६–२७ ॥

मेषायितान्मेषवदाचरितान्स्वयञ्चोरवदाचरितः सन्नपोवाहापकृष्य निनाय ॥ २८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मुनिर्ययौ भगवानपि पशूनपालयदित्यपिशब्दार्थः । यतो गोविन्दः तस्मिन् गते सति प्रकृतगोकुलेन्द्रत्वोचितलीलामेवानुमोदमान इत्यर्थः । तत्र हत्वेति नारदसम्वादात् पूर्वस्याप्यनुवादः । आहव इति तस्यान्येन युद्धे धात्वत्वमनभिप्रेत्य महाबलिष्ठत्वादिकं सूचितम् । अतः प्रीतैर्गततद्विषयकमयैः पालैस्तत्सङ्गेन गोपालकैः सह पशूनपालयत् । व्रजान्निर्गच्छन्तं तमनुगतानां व्रजजानानाञ्च सुखावहो जातः ॥ २५ ॥

एकदेति तैर्व्याख्यातं तत्र यद्वेति व्योमवधस्य श्रीमुनीन्द्रेणानुक्तत्वात् तद्दिन एव तद्वधे एकदेत्युक्तेरसङ्गतत्वाच्च तादृशलीलायाः कौमारान्त एव योग्यत्वाच्च अतो वृषमयात्मजादिति गोपिकावाक्यञ्च सङ्गच्छते वृषात्मजो वत्सो मयात्मजो व्योमासुर इति पूर्वव्याख्यानात् । निलायनं नाम चोरितस्य तिरोधापनं तद्रूपां क्रीडां तामेवाह । चौरेति । चौराः पालाश्च रक्षकास्तेषामपदेशतः अभिनयात् तदुभयेन मेषापदेशिनामपि ग्रहणम् । सम्बन्धिशब्दत्वात् ॥ २६ ॥

तत्र तस्यां क्रीडायाम् । मेषायिता इति । मेषाणां वधेऽपि क्रोशनाद्यभावेन सुखचौर्य्यत्वात् तत्राद्रिसानुषु विजह्रुः ॥ २७ ॥

प्रायो बहून् सर्वानेव चतुःपञ्चानामेवावशिष्टत्वात् ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवानाहवे युद्धे केशिनं हत्वा नारदेन विज्ञापितश्च व्रजस्य सुखमावहतीति तथाभूतः गोपैः सह पशूनपालयत् ॥२५॥

प्रातरेव पुनस्तत्रैव पशून्पालयता व्योमासुरो हतः यद्वा व्योमवधः पूर्वमेव वृत्तोऽपि वेषधारिवधप्रसङ्गादत्रोच्यत इति द्रष्टव्यं केचित्तु पुनः शङ्खचूडवधात्पूर्वमेव पठन्ति च । एकदेति । कदाचित्ते गोपाः पशून्द्रेः सानुषु चारयन्तः चोरपालव्यवहारेण निलायनाख्यां क्रीडां चक्रुः ॥ २६ ॥

तामेव दर्शयति । तत्रेति तत्र गोपानां मध्ये कतिचिच्चोरपालमेषव्यपदेश्या बभूवुः हे नृप ! केचित्तु पालाश्चौरेभ्यो रक्षकाः अवशिष्टास्तु केचिन्मेषवदाचरन्तो निर्भया विजह्रुः ॥ २७ ॥

एवं सति तदा मयस्य पुत्रो व्योमः महामायोऽत एव गोपालस्येव रूपं बिभ्राणः स्वयं प्रायशश्चोर एव तद्वदाचरन् मेषवदाचरितान् बहून् गोपानपोवाह अपकृष्य निनाय ॥ २८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चोरपालापदेशतः वयं पशूंश्चोरयामः वयं पालयाम इति अपदेशेन छन्नमनसा निलायनक्रीडां निलीनकर्मलक्षणक्रीडाम् ॥ २६—२७ ॥

चोरायितश्चोरवद्वर्तमानः ॥ २८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवम्मध्ये समागतं नारदमुपसंहृत्य केशिवधानन्तरं भगवान् गोकुले गत इति नोक्तमिति तदुपसंहरति । भगवानपीति यतो गोविन्दः यथा नारदो गतः एवं भगवानपि ततो गोकुलं गतः आहवे संग्रामे अन्यथायं वधः राजसप्रकरणे न वक्तव्यो भवेत् पूर्ववदेव पशूनपालयत् ननु नारदवाक्येन ऐश्वर्यभावे च खेदो वा जात इति प्रीतैः पालैरिति स्वाभिप्रेतनिवेदनं पूर्ववच्च स्थितिरुक्ता किञ्च अहर्निशं पूर्ववदेव व्रजसुखावहो जातः ॥ २५ ॥

यद्यप्यग्रिमकथा तस्मिन्नेव दिवसे न कृता तथापि सिंहावलोकनन्यायेन कथां निरूपयति इतो गतोऽपि भगवान् गोकुलं पालयिष्यतीति ज्ञापनार्थम् । एकदेति नवभिः । पूर्वमस्याः कथायाः प्रकरणं न स्थितमिति स्वकालेनोक्ता तदाह । कदाचित्ते सर्व एव गोपालाः अद्रिसानुषु पशून् चारयन्तः गोवर्द्धनोच्चप्रदेशेषु स्थिताः दूरादपि द्रष्टुं शक्नुवन्तीति निलायनक्रीडां चक्रुः तत्र निलायनं यासु क्रीडासु ये क्रीडन्ति तन्मध्य एव केचन लीना भवन्ति केचनान्वेषणार्थं प्रवृत्ता भवन्ति तत्रापि विशेषमाह । चौरपालापदेशत इति । एवमपि केचन निलीनाः चौरा एव भवन्ति अन्वेषकाः पाला एव ॥ २६ ॥

चौर्यविषयसिद्ध्यर्थं विशेषमाह । तत्रासन्निति सर्वे गोपालास्त्रिविधा जाताः प्रयत्नाधिक्यात् प्रथमतश्चोराः चकारात् सर्वे पराभूत्वा सर्वे भवन्तीति नृपेति सम्बोधनं लीलामात्रत्वज्ञापनार्थमेषानीयमानास्तूष्णीं तिष्ठन्तीति न छागादिरूपा निरूपिताः एक इत्य-

गिरिदर्यां विनिक्षिप्य नीतं नीतं महाऽसुरः ।
शिलया पिदधे द्वारं चतुःपञ्चावशेषिताः ॥ २९ ॥
तस्य तत्कर्म विज्ञाय कृष्णः शरणदः सताम् ।
गोपान्नयन्तं जग्राह वृकं हरिरिवौजसा ॥ ३० ॥
स निजं रूपमास्थाय गिरीन्द्रसदृशं बली ।
इच्छन्विमोक्तुमात्मानं नाशक्नोद्ग्रहणातुरः ॥ ३१ ॥
तं निगृह्याच्युतो दोर्भ्यां पातयित्वा महीतले ।
पश्यतां दिवि देवानां पशुमारममारयत् ॥ ३२ ॥
गुहापिधानं निर्भिद्य गोपान्निःसार्य कृच्छ्रतः ।
स्तूयमानः सुरैर्गोपैः प्रविवेश स्वगोकुलम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे व्योमासुरवधो नाम
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शङ्काः भगवता कृत्वा न कुतश्चिद्भयं येषां प्रायेण भगवान् बलभद्रश्च तस्मिन् दिवसे न गोचारणार्थं गतौ अन्यथा समागमनमात्रेणैव स हतो भवेत् गोकुले स्थित एव तत्र गत्वा मारितवानिति विमर्शः ॥ २७ ॥

दैत्यांशत्वात् कंसस्य तद्धितकारी मयपुत्रः स्वयमागत्य गोपानामुपद्रवं कृतवानित्याह । मयपुत्र इति । महती माया यस्येति गोपालान् वञ्चयितुं मारायितुञ्च शक्तिरुक्ता पलायनं करिष्यन्तीति व्योमासुरो गोपालरूपो जातः चौरायितप्रतिच्छायरूपः मेषायितान् मेषवत्पतित्वा स्थितान् यथान्ये गोपाला नयन्ति परन्तेषु नीयमानेषु पालायिता जाग्रति अस्मिंस्तु नीयमाने नयति सति मायया कृत्वा न कस्यापि जागरणमिति बहूनेव नीतवान् २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निलायनं चोरितवस्तुतिरोधापनम् अपदेशोऽभिनयः ॥ २६ ॥

अकुतोभया इति । चोरयितव्याश्चोरयितारश्च पालकाश्चैते त्रयो वयं सखाय एवेति विश्वासात् ॥ २७ ॥

अपोवाह चोरयामास ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निलायनक्रीडां पशुतच्चोरपालरूपधारणादिलीलाम् ॥ २६ ॥ २७ ॥

अपोवाह । अपकृष्य निनाय ॥ २८ ॥

---

भाषा टीका ।

गोविंद भगवान् भी केशी दैत्यको युद्ध में मारकर प्रसन्न गोपाळों के साथ में रह कर व्रजको सुख देते हुये पशुओं को गउओं को चराते भये ॥ २५ ॥

एक दिन वे सब गोपाल मिलकर पर्वत के शिखरों में गउओं को चराते हुये चोर और रक्षक व्यवहार से छिपने की लुक लुकानी क्रीडा करते भये ॥ २६ ॥

हे राजन् ! उहां पर कई एक जने चोर होगये काई रक्षक होगये कई एक निर्भय होकर मेढा की नकल करके विहार करते भये ॥ २७ ॥

इतने में मयदानव का पुत्र व्योमासुर गोपाळ का रूप धारण कर के चोर बनकर मेढा बनने वाले बहुत बालकों को उठा लेगया ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पिदधे छादितवान् ॥ २९ ॥

शरणद आश्रयप्रदः हरिः सिंह इव ॥ ३०—३१ ॥

पशुमारं पशुमारो यथा भवति तथा अनिःश्वासमिलथः ॥ ३२ ॥

भुवि गोपैस्तूयमान उपरि वैमानिकैर्देवैरिति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

विशेषेण दूरतोऽन्तः प्रदेशप्रवेशनेन नितरां क्षिप्त्वा ततश्च चत्वारः पञ्च वा ते चतुःपञ्चा अवशेषिता बभूवुः। अर्थान्मेषायितगोपा एव। सन्धिरार्षः। वशेषिता इति वा। वतंस इति वत्। वत्रा। चतुःपञ्चा अवशेषिता येषां तथाभूता बभूवुः तावत्पर्यन्तं तदज्ञानं च स्वचोरकृतापहारभ्रमात् ॥ २९ ॥

तन्महादारुणं कर्म तस्य विज्ञाय सतां भक्तमात्राणां शरणदः शरणरूपमात्मानं दाता। किमुत तत्तत्सत्तमगणदुर्लभभागधेयानां तेषामित्यर्थः ॥ ३० ॥

वल्यपि आत्मानं मोक्तुमिच्छन्नपि निजं रूपमास्थायापि नाशक्नोत् ॥ ३१ ॥

पश्यतां हर्षेण पश्यत्सु इत्यर्थः। दिवीति तदानीमपि शङ्कयान्तर्द्धानेन स्थित्वेत्यर्थः। पशुमारममारयत् यज्ञियं पशुमिव श्वासरोधेनामारयत्। "उपमाने कर्मणि च" इति णमुल् एवन्तस्य म्रियतेरनुप्रयोगश्च। इदमप्यनुरूपमेव तस्यां क्रीडायां चोरदण्डस्यापि क्षणिकतदनुकरणरूपत्वात् तेनापि गोपानामुच्छ्वासरोधनाच्च अच्युत इति तादृशसमुचितलीलातोऽचलनाभिप्रायेण ॥ ३२ ॥

कृच्छ्रतः गुहारूपात् दुःखस्थानान्निःसार्य्य अतएवानुगैर्गोपैर्देवैश्च स्तूयमानः। अतएव प्रकर्षेण विवेश। स्वस्य गोकुलमिति आगामिलीलास्मरणशङ्कया। स्वचित्तं समादधाति नात्यन्तीनस्तत्परित्यागो भविष्यतीत्यभिप्रायात्। तथात्वमग्रतो व्यञ्जयिष्यति। सुरैर्गोपैरिति बहुत्र पाठे सुरैः स्तूयमानोऽपि गोत्रैः सह स्वगोकुलमेवेति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
सप्तत्रिंशोऽध्याय ॥३७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवं नीतान्नीतान् गोपान् गिरिदर्य्यां गिरिगुहायां विनिक्षिप्य तस्या द्वारं शिलया पिदधे छादितवान् क्रीडायान्तु चत्वारः पञ्च वा गोपा अवशेषिताः ॥ २९ ॥

तथा तस्य व्योमस्य कर्म चेष्टितं विज्ञाय सतां शरणदः आश्रयप्रदः हेतुगर्भितत्वाद्गोपान्नयन्तं व्योमं सिंहो वृकमिवौजसा बलेन जग्राह ॥ ३० ॥

तथा स व्योमः पर्वतश्रेष्ठतुल्यं स्वासाधारणं रूपं बिभ्रद्बली ग्रहणात्पीडितः आत्मानं विमोक्तुमिच्छुरपि नाशक्नोत् ॥ ३१ ॥

तथा तं व्योमं नितरां गृहीत्वा भूतले पातयित्वा च दिवि देवानां पश्यतां सतां पशुमारो यथा भवति तथा याज्ञियपशुमिवेति यावत् मारयामास ॥ ३२ ॥

ततो गुहायाः पिधान छादनं शिलां निर्भिद्य कृच्छ्रतो दुःखाद्गिरिदरीपतनजान्निः सार्यं गोपैः सुरैः स्तूयमानश्च स्वगोकुलं प्रविवेश ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
सप्तत्रिंशोऽध्यायः ॥३७॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गिरिदर्यां पर्वतगुहायाम् ॥ २९ ॥

हरिः सिंहः ॥ ३० ॥

गुरुणा महता हरिणा गृहीत इति शेषः ॥ ३१ ॥

पशून्मारयति त्यक्तप्राणान्करोति ॥ ३२ ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ ३७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

क्रीडार्थं न नयनं किन्तु मारणार्थमित्यग्रिमकृत्यमाह। गिरिदर्य्यामिति। बहूनप्येकवारं नयति बहुवारञ्च नीतवान् गुहाद्वारमतिसूक्ष्ममिति ज्ञापयितुं नीतं नीतमित्येकवचनं ननु बालाः दयापात्रं कथमेव गुहायां प्रक्षिपतीत्याशङ्कयाह। महासुर इति। अत्यन्तमासुरस्वभावः अतएव न गुहाप्रवेशनमात्रमेव कारितवान् किन्तु शिलया द्वारमपिदधे एवं मेषायिताः क्षीणाश्चेत् चौरायिताः पालायिताश्च मेषायिता एव क्रमेण भवन्तीति चत्वारः पञ्च वा अवशिष्टाः तदानीं नीयमानेन सह पञ्च नोचेत् चत्वारः ॥ २९ ॥

तदान्यत्र स्थितो भगवान् व्योमस्य कर्म ज्ञात्वा समागत्य यत्कृतवांस्तदाह। तस्येति। तत्कर्म गुहायां निःक्षिप्य शिलापिधानलक्षणं विशेषेण ज्ञात्वा प्रत्यक्षदर्शनेव तथाज्ञाने हेतुः कृष्ण इति तदानन्दो हि सः यदैव स्वानन्दस्तेभ्यः तिरोभूतः सङ्कुपाश्च ते अतो ज्ञातवान् तथापि अक्लिष्टकर्मा भगवान् सर्वसमः किमिति तं जगृह इत्याशङ्क्याह। सतां शरणद इति। यदि भगवान् सर्वावस्थासु न पालयेत्तदा न कोऽपि शरणं गच्छेत् ततः शरणदानमेव न स्यात् सताञ्च मनसि तद्दुःखं भवेदित्यपि शास्त्ररीतिरपि नश्येदित्यपि गोपान्बहूनेव नयन्तं पालायित इव तत्रैव प्रादुर्भूतः आगतो वा जग्राह तस्यैकदेशग्रहणव्यावृत्त्यर्थं दृष्टान्तमाह। वृकं हरिरिवेति। स हि सर्वाङ्गे तं व्याप्य आच्छाद्य गृह्णातीति तथा सर्वाङ्गे गृहीत इत्यर्थः ॥ ३० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः स विचारितवान् यद्यपि भगवान् महान् तथापि रूपान्तरं गृहीतवानिति मया स्वरूपे गृहीते भगवान् स्वल्परूप इति न मारयितुं शक्ष्यति भगवानपि चेत स्वरूपं गृह्णीयात्तदाऽवतारसमाप्तिरेव भविष्यतीति कंसादीनामस्माकञ्चामारणमेव स्यादित्यभिप्रेत्य स्वरूपं गृहीतवानित्याह। स निजमिति। निजमासुरं रूपं ग्रहणायोग्यत्वायाह। गिरीन्द्रसदृशमिति। पराक्रमोऽपि वर्त्तत इति ज्ञापयितुमाह। बलीति। एवमपि कृत्वा आत्मानं मोक्तुमिच्छन्नपि अत्यन्तप्रयत्नं कुर्वन्नपि आत्मानं विमोक्तुं नाशक्नोत् दूरापास्तं विमोचनं ग्रहणेनातुर एव जातः अन्तिमावस्था ग्रहणमात्रेणैव जातेति॥ ३१॥

तथापि मुख्यदैत्यत्वात् लीनो न भविष्यतीति स्वयम्मारितवानित्याह। तं निगृह्येति। दोर्भ्यां निग्रहं कृत्वा स्वयं भयरहितः अच्युतः महीतले तं पातयित्वा यथा पशुमिष्टा देवास्तं न त्यजन्ति तथा कृत्वा यज्ञार्थे तस्य वधो भवत्विति धर्मनिरूपणार्थं पश्यतामेव सर्वेषां देवानां पशुमारं यथा भवति तथा अमारयत् मुखमुद्रणं कृत्वा गलमोडनं कृतवानित्यर्थः। देवानां दर्शनं सुखार्थमेव अन्यथा भगवानक्लिष्टकर्मा तथा न कुर्यात्॥ ३२॥

ततो यत्कृतवांस्तदाह। गुहापिधानमिति। मायया स्थापितं निर्मित्य नितरां भित्त्वा यथा पुनरन्योऽपि न प्रवेशयेत् तथा गुहात्वमेव दूरीकृतवान् कृच्छ्रतः सङ्कटात् गोपान् निःसार्य तैरेव सुरैः गोपैश्च स्तूयमानः भगवत्कृतमुपकारं ते जानन्तीत्युक्तं ततः तैः सह स्वगोकुलं प्रविवेश सर्वत्र प्रत्यापत्तिर्निरूप्यते अग्रे लीलापराणामपि तथात्वाय॥ ३३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

चतुस्त्रिंशाध्यायविवरणम्॥ ३४॥ ३७॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुःपञ्च मेषायिताः सखायः॥ २९॥

हरिः सिंहः॥ ३०॥ ३१॥

पशुमारं यज्ञियं पशुमिव श्वासरोधेनामारयत् तेनापि गुहाद्वारनिरोधादिति भावः। "उपमाने कर्मणि च" इतिणमुलण्यन्तस्य म्रियतेरनुप्रयोगः॥ ३२॥ ३३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
सप्तत्रिंशोऽत्र दशमे सङ्गतः सङ्गतः सताम्॥ ३७॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पिदधे छादितवान्॥ २९॥—॥ ३०॥—॥ ३१॥

पशुमारं यज्ञियपशुमारो यथा स्यात्तथा ऽनिश्वसन्तमसुरममारयत्॥ ३२॥ ३३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तत्रिंशाध्यायार्थप्रकाशः॥ ३७॥

———

भाषा टीका।

उस महा असुर ने उनको लेजाकर पर्वत के कंदरा में लेले डार कर पत्थर से उसके द्वार को मूंद दिया ऐसे होते २ चार पांच ही बांकी रह गये॥ २९॥

उसके उस कर्म को जानकर सत्पुरुषों के शरण देने वाले कृष्ण भगवान् गोपों को लेजात उसको भेडार को जैसे सिंह पकडे तैसे अपने बल से पकड लेते भये॥ ३०॥

इस बली दैत्य ने बडे पर्वत सरी का अपना रूप धारण किया तौभी पकडने से बडा दुखी होगया अपने को छुडाने चाहा परंतु छुडाने नहीं सका॥ ३१॥

अच्युत भगवान् ने उसको दोनों हाथों से पकडकर पृथिवी में गिराकर देवतान् के आकाश में देखते ही पशु को यज्ञ में जैसे मारैं हैं तैसे मार दिया॥ ३२॥

फिर गुफा के ढकना को खोलकर कष्ट में से गोपोंको निकाळ कर गोपों से देवतों से स्तुत होते हुये अपने गोकुळ को भगवान् पधारे॥ ३३॥

इति श्रीभागवत दशमस्कन्धपूर्वार्ध सैंतीसमें अध्याय की भाषाटीका समाप्त॥ ३७॥

———

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे सप्तत्रिंशोऽध्यायः॥ ३७॥

## ॥ अष्टात्रिंशोऽध्यायः ॥

श्रीशुक उवाच ॥

अक्रूरोऽपि च तां रात्रिं मधुपुर्यां महामतिः ।
उषित्वा रथमास्थाय प्रययौ नन्दगोकुलम् ॥ १ ॥
गच्छन् पथि महाभागो भगवत्यम्बुजेक्षणे ।
भक्तिं परामुपगत एवमेतदचिन्तयत् ॥ २ ॥
किं मया चरितं भद्रं किं तप्तं परमं तपः ।
किं वाथाप्यर्हते दत्तं यद्‌द्रक्ष्याम्यद्य केशवम् ॥ ३ ॥
ममैतद्दुर्लभं मन्य उत्तमश्लोकदर्शनम् ।
विषयात्मनो यथा ब्रह्मकीर्तनं शूद्रजन्मनः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टत्रिंशे यथाध्यायेऽक्रूरो गोकुलं गतः ।
तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥
प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ।
ततो व्योमे हते ऽक्रूरः सायं गोकुलमागमत् ॥

तदेवं नारदेन कंसवधादिकार्ये विज्ञापिते श्रीकृष्णो मथुरां गन्तुमुद्यतो वर्तते तदाक्रूरोऽपि गोकुलमागमदित्याह । अक्रूरोऽपीति ॥१ ॥ २ ॥

अपिः सम्भावनायाम् अर्हते योग्याय ॥ ३ ॥

स्वस्य कृष्णस्य दर्शने ऽसम्भवमाशङ्क्य पुनः सम्भावयति । ममैतदिति द्वयेन । विषयात्मनो विषयाविष्टचित्तस्य शूद्राज्जन्म यस्य तस्य ब्रह्मकीर्तनं वेदोच्चारणं यथेति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अक्रूराय नमस्तस्मै येन कंसोऽपि सेवितः । कुतोऽपि व्याजतो द्रष्टुं सेवितुञ्च निजेश्वरम् । अक्रूर इति तैर्व्याख्यातम् । तत्रापि चशब्दः समुच्चयेऽभिप्रेतः । समुच्चयश्च श्रीकृष्णस्य मथुरागमनोद्यमेनेति । यद्वा । अपिचशब्दः कंसगमनसमुच्चये उभयोः कंसादिष्टत्वात् यस्यां रात्रौ कंसेनादिष्टस्तां तथा श्रीहरिवंशे निशि स्तिमितमूकायां मथुरायां जनाधिप इति । अत एवात्रापि पूर्वमुक्तं प्रविवेश गृहं कंस इत्यादि । यच्च तत्रैवोक्तं तस्मिन्नेव मुहूर्ते तु मथुरायाः स निर्ययौ । प्रीतिमान् पुण्डरीकाक्षं द्रष्टुं दानपतिः स्वयमिति । तत्कल्पभेदाद्भिन्नं यद्वा । यादववर्गैः सह कंसस्य बहुलसंकथया प्रायो रात्रिशेष एवोपसन्नेऽक्रूरं प्रति तस्य प्रेरणया तथैव पर्य्यवस्यतीति । महती भक्तिरूपा मतिर्यस्य तादृशः सन्निति श्रीगोकुलजनवैक्लव्यहेतुत्वेनारोचकं तत् प्रस्थानं केवलं वर्णयितुमनिच्छुस्तद्भक्तिभागास्वादमेवावलम्बते प्रययौ प्रतस्थे ज्ञातत्वेऽपि पुनर्नन्देति विशेषणम् स्वस्य तद्विशिष्टतयैव स्फूर्त्तेः ॥ १ ॥

महामतित्वमेवाह । गच्छन्नित्यादिना नृपेत्यन्तेन । गच्छन्नेव पथि परां भक्तिमुपगतः सन्नेवं किं मया चरितमित्यादि मनोरथप्रकारैरेतत् मयापि भगवान् द्रक्ष्यते इति मनोरथसामान्यमचिन्तयत् यतो महान् भागस्तादृशं श्रीकृष्णकृपारूपं भाग्यं यस्य सः भक्तेः परात्वे हेतुः भगवति निजाशेषैश्वर्यप्रकटनपरे तथाम्बुजेक्षणे तादृशत्वोपलक्षणकमहामाधुर्यप्रकटनपरे च श्रीकृष्णे तत्तत्स्फूर्त्तेरित्यर्थः ॥ २ ॥

नाना सञ्चारिभावैश्चिन्तितमेवाह । किमित्यादिना स्वयम्भुविन्त्यन्तेन । तत्र सवितर्कमाह । किमिति । किं कतमत् परमं भद्रं भगवत्पूजादीनां भद्रकर्मणामपि मध्ये परमम् एवं परमं तपो भगवद्व्रतानां मध्ये वा समुच्चये अथ कार्त्स्न्ये भद्रादीनां यथोत्तरं श्रेष्ठ्यमूह्यं यद्यस्माद्भद्रादेः केशवं परमदुर्दर्शानां ब्रह्मरुद्रादीनामपीश्वरं द्रक्ष्यामि तच्चाद्येति अन्यत्तैः तत्र योग्याय महाभागवतायेत्यर्थः । यद्वा पूज्याय तस्मा एवेत्यर्थः । ममापीत्यन्वयः गर्हितेनापि मयेत्यर्थः ॥ ३ ॥

पुनः सदैन्यमाह । ममेति । एतदीदृशं तत्तद्भद्राचरणादि साध्यं यद्वा । आधुनिकमुत्तमःश्लोकदर्शनं यद्वा स्वानुभावमात्रं वेद्यमाहात्म्यताविवक्षया आदावेतदित्युक्त्वा वाग्गोचरत्वे क्रियमाणे तु यत्किञ्चिदेवोक्तं स्यादित्यभिप्रायेण पश्चात्तादृशानामविशेषणेन

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

साक्षादपि निर्दिशति उत्तमः संसाराख्यतमो निरसनः श्लोकः यशोऽपि यस्य तस्य दर्शनं मम मत्सम्बन्धे दुर्लभं साधनं बाहुल्यं यदा स्यात्तदापि जन्मान्तर एव लभ्यं मन्ये । कुतः विषयात्मनः प्रारब्धवशेन विषयतादात्म्यं प्राप्तस्य । अनुरूपो दृष्टान्तः यथेति । शूद्रजन्मन इति । यथा तस्य तद्बाहुल्ये सति विप्रजन्मन्येव न स्यात् तद्वत् कर्मशूद्रस्य तु प्रायश्चित्तविशेषेणेह जन्मन्यपि स्यादिति ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्हते योग्याय पात्राय ॥ १-३ ॥

ब्रह्मकीर्त्तनं वेदोच्चारणम् ॥ ४——५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथाक्रूरः स्वमालयमित्युक्तं ततः स किमकरोदित्याशङ्क्य व्रजं प्रत्यक्रूरगमनं तस्य च मनोरथासिद्धिश्चाहाष्टात्रिंशेन । अक्रूरोऽपीति । महती भगवद्विषया मतिर्यस्य स उषित्वा स्थित्वा प्रभाते रथमधिरुह्य नन्दगोकुलं प्रति ययौ प्रतस्थे इत्यर्थः ॥ १ ॥

महाभागः दुर्लभतरभविष्यद्भगवद्दर्शनात्मकमहाभाग्यवान् भगवति परां भक्तिं प्राप्तः इथीत्थं वक्ष्यमाणप्रकारेणाचिन्तयत् ॥ २ ॥

कंसकृतनिर्बन्धादलब्धभगवद्दर्शनः सम्प्रति तत्प्रेषणया भगवन्तं दिदृक्षुस्तावदात्मनस्तद्दर्शनानिदानं बहुधा तर्कयति । किम्मयेति । अर्हते योग्याय सत्पात्रभूताय दत्तं किमित्यूहः कुतः यद्यस्मादद्य केशवं द्रक्ष्याम्यन्यथैतन्न सम्भाव्यत इति भावः ॥ ३ ॥

पुनः "श्रेयांसि बहुविघ्नानि" इति न्यायेन दर्शनासम्भवमाशङ्क्य पुनः सम्भावयति । ममैतदिति द्वाभ्याम् । विषयात्मनः विषयाविष्टचित्तस्य ममैतदुत्तमश्लोकादिभिः केवलं श्लोक्यस्य स्तुत्यस्य वितर्क्यस्येति यावत् नतु दृश्यस्येति भावः । तस्य दर्शनं दुर्लभं मन्ये यथा शूद्राजन्म यस्य ब्रह्मकीर्त्तनं वेदवचनं दुर्लभं तद्वत् ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तानां भगवद्भक्तिकरणनिदर्शनार्थं गोकुलयात्राकथनच्छद्मना ऽक्रूरस्य भक्त्युद्रेकः प्रतिपाद्यते ऽस्मिन्नध्याये मधुपुर्यां मथुरायां यस्यां रात्र्यां न्यवसत् तां रात्रिम् ॥ १ ॥ २ ॥

भद्रं पुण्यं सामान्योक्तं विशिनष्टि । किन्तप्तमित्यादिना । अर्हते विष्णुभक्त्यादिगुणसम्पन्नाय ॥ ३ ॥

ब्रह्मकीर्तनं वेदाध्ययनम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—३ ॥

दुर्लभं साधनबाहुल्यं यदि स्यात्तदापि जन्मान्तर एव लभ्यं मन्ये कुतः विषयात्मन प्रारब्धवशेन विषयतादात्म्यं प्राप्तस्य अनुरूपो दृष्टान्तो यथेति । शूद्रजन्मन इति । यथा तद्बाहुल्ये सति विप्रजन्मन्येव तत् स्यात्तद्वत् ॥ ४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पञ्चत्रिंशे भक्तिमार्गस्थापनाय निरूप्यते ।
अक्रूरागमनं भक्तिः फलं चैव हि मानसम् ॥
सात्त्विकश्चेदभिमुखस्तदा भवति भक्तिमान् ।
अन्यथा दैत्यसंसर्गे स्तब्धा भक्तिर्भवेद्ध्रुवम् ॥

त्रयस्त्रिंशेऽध्याये अक्रूरः प्रेषित इत्युक्तं तस्यागमनं निरूपयति । अक्रूरोऽपीति । यस्यां रात्रौ समादिष्टः तां रात्रिं मथुरायामेव स्थितः सा हि भगवदधिष्ठिता भूमिः भगवांश्चेत् निवारयेत् मथुरा वा भगवत्सेवको वा कश्चित् तदा न गमिष्यामीति निश्चित्य तथैव स्थितः ततो गमनमेव समीचीनमिति ज्ञात्वा प्रचलित इत्याह । महामतिरिति । अयमुपायः सर्वेषामेव हितकारी अतो गत्वा समानय इति ततः कंसदत्तं दिव्यं रथमास्थाय स्वयमेकाकी सारथिरूपः नन्दस्य गोकुलं प्रति प्रकर्षेण बहिरन्तः सन्तोषपूर्वकं गृहे च सम्भूतिं कृत्वा ययावित्यर्थः ॥ १ ॥

सात्त्विकस्य भगवदाभिमुख्ये भक्तिर्भवतीति ज्ञापयितुं तस्य भगवद्विषयको मनोरथो जात इत्याह । गच्छन्निति गच्छन्नित पथि मार्गगन्तुः भक्तिरुचितैव पथि गच्छन्निति रथप्रेरणं नापेक्षत इति सूचितं ननु दुष्टसंसर्गं प्राप्य स्थितो दुष्टप्रेरितः कथं भक्तो जात इत्याशङ्क्याह । महाभागवत इति । पूर्वसञ्चितपुण्यराशिः सर्वमेव भाग्यमद्य फलोन्मुखं जातमित्यर्थः । तत्फलमाह । भक्तिं परामुपगत इति । परां प्रेमलक्षणां विषयो न विभूतिरूप इत्याह भगवतीति । अत्र जगदीक्षणे यस्येति दृष्ट्यैव सन्तापनाशकत्वं निरूपितम् अतः फलदातरि पुरुषोत्तमे भक्तिर्युक्ता सापि भक्तिः पूर्वं जाता मध्ये गता तिरोहिता पुनरुप समीपे स्वयमेवागता एतद्वक्ष्यमाणमेवं प्रकारेणाचिन्तयदिति गता भक्तिः समागता स्वतः प्रवेशमलभमाना कामनाद्वारा प्रविष्टेति भगवते महत्त्वं ज्ञात्वा तेन स्वस्योत्कर्षं यथा कामयते तथा चिन्तायुक्तं कृतवतीत्यर्थः ॥ २ ॥

प्रथमतो भगवद्धर्माणां माहात्म्यमाह । भक्तिदार्ढ्याय तत्रापि दर्शनस्य सर्वोत्कृष्टत्वमाह । किम्मया चरितं भद्रमिति । त्रयो विभागाः स्वयं भगवानन्ये सर्वे च तेषामुत्कृष्टधर्मैः सहजैरागन्तुकैर्वा सर्वात्मको भगवांस्तुष्यतीति ज्ञायते तस्मिंस्तुष्ट एव तस्य दर्शनं भवतीति यतो ब्रह्मेशयोरपि सुखमोक्षदाता भगवानिति तत्र स्वधर्म आचारः भगवद्धर्मस्तपः सर्वलोकोपकारि दानमिति आचारप्रभवो धर्म इति तदुक्तं किम्मयाचरितमिति । भद्रं कल्याणरूपं तपो मे हृदयं साक्षादिति वाक्यात् भगवद्भक्तिस्तपः अत उक्तं किन्तप्तमिति जीवधर्मतपोव्यावृत्त्यर्थं परममिति सर्वोपकारी धर्मो दानं सुपात्र एव महाफलं साधयतीति अर्हते दत्तमिति । अथेति भिन्नप्रक्रमे कैवल्याकाङ्क्षायामत्यन्तं भगवत्पराय भगवदर्थमेव सर्वविनियोगाय श्रद्धया दत्तमिति धर्मशास्त्राद्भिन्नः

मैवं ममाधमस्यापि स्यादेवाच्युतदर्शनम् ।
ह्रियमाणः कालनद्या क्वचित्तरति कश्चन ॥ ५ ॥
ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥ ६ ॥
कंसो बताद्याकृत मेऽत्यनुग्रहं द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः ।
कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नखमण्डलत्विषा ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रक्रमः अन्यथा अद्यैव भगवद्दर्शनं न भवेदतो ज्ञायते त्रयाणामन्यतरत्कृतमिति ॥ ३ ॥

एवङ्कार्यावश्यकतां ज्ञात्वा कारणं परिकल्प्य तत्र बाधकमाशङ्क्य परिहरति द्वाभ्याम् । मैमेतद्दुर्लभं मन्य इति । एतद्दर्शनं मम साधने विद्यमानेऽपि दुर्लभं तत्रोपपत्तिर्मन्य इति युक्त्यैवं निश्चीयते मम दर्शनं न भविष्यतीति अयश्च तर्कः भगवतः अलौकिकत्वज्ञापकः लौकिकत्वे इति शङ्कैव नोदेतीति दर्शनाभावे हेतुद्वयमाह । भगवन्निष्ठं स्वनिष्ठञ्च धर्मद्वयं भगवन्निष्ठमाह । उत्तमश्लोकस्य दर्शनमिति । उत्तमैरपि श्लोक्यत एव नच दृश्यते उत्तमाः सर्वज्ञा भक्ताः स्वनिष्ठमाह । विषयात्मन इति । किञ्च विषयाणां न केवलं प्रतिबन्धकत्वं तथा सति कदाचित् अनित्यत्वात् विषयाणां दर्शनमपि भवेत् किन्त्वधिकारनिवर्त्तकत्वमपि यतः सिद्धेऽपि सुलभे विषये स्वस्य न योग्यतेति तदाह । यथेति ब्रह्मकीर्त्तनं वेदोच्चारणं पूर्वजन्मनि ब्राह्मणोऽपि सर्वज्ञोऽपि वेदोच्चारणसमर्थोऽपि शूद्रबीजाद्युत्पन्नः तदा नार्हति कीर्त्तनं कर्तुम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अष्टत्रिंशे व्यधात्कृष्णो यथाक्रूरो मनोरथान् ।
तथा तान् पूरयामास तदातिथ्यं च सोऽकरोत् ॥

कंसः फाल्गुनकृष्णैकादश्यां कृत्वैव मंत्रणाम् प्रेष्य केशिनमक्रूरमादिश्य प्राहिणोद्व्रजम् । प्रातः केशिवधोऽक्रूरप्रस्थानं नारदस्तुतिः । अपराह्णे व्योमवधोऽक्रूरःसायंव्रजेऽविशत् । तामेकादश्या रात्रिं महामतिरिति । भगवत्कथार्चनादिभिर्जागरणेनैवोषित्वा पारणमकृत्वैव ययौ ॥ १ ॥ २ ॥

सहर्षवितर्कमाह।किमिति । अपिः संभावनायाम् अर्हते योग्याय॥३॥

दैन्याम्बुधौ निपतन्नाह । मम कीदृशस्य विषयात्मनः विषयाविष्टस्य शूद्रजातेर्वेदकीर्तनमिव उभयत्रैवानर्हत्वं ध्वनितम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अष्टत्रिंशेऽक्रूरभाग्योदयं वर्णयति । अक्रूरोऽपीति ॥ १ ॥

श्रीनारदेन कंसवधादिकार्य्ये विज्ञापिते सति भगवानपि तदर्थं तत्र गन्तुमियेष यदा तदाक्रूरोऽपि कंसेन नियुक्तस्तां रात्रिं मथुरायामुषित्वा तदनन्तरं रथमारुह्य नन्दगोकुलं प्रययौ ॥ १ ॥

एवमेतत् वक्ष्यमाणमचिन्तयत् ॥ २ ॥

अपीति सम्भावनायां किं साधनं मयाचरितमनुष्ठितम् अर्हते योग्याय ॥ ३ ॥

स्वस्य श्रीकृष्णदर्शनानधिकारित्वं शङ्कते । ममैतदिति । विषयेषु आत्मा मनो यस्य तस्यान्यासक्तस्य मम ब्रह्मकीर्तनं वेदपाठः ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेव जी बोले अक्रूर जी भी उस रात्री भर मधुपुरी मे रहे महा बुद्धिमान् होने से प्रातः काल मे उठ कर रथ पर बैठ कर नन्दजी के गोकुल को जाते भये ॥१॥

महा भाग अक्रूर जी मार्ग मे जाते समय कमल लोचन भगवान् मे परम भक्ति को प्राप्त होकर इस मनोरथ की चिन्ता करते भये ॥ २ ॥

क्या मैंने अच्छा कर्म किया है क्या परम तप किया है अथवा क्या किसी सुपात्र को दान दिया है जो कि मैं आज भगवान् केशव का दर्शन करूंगा ॥ ३ ॥

मैं तो समुझता हूं कि यह उत्तम श्लोक का दर्श मेरे को नहीं होना है जैसे कि विषयी को दर्शन दुर्लभ है और जैसे शूद्रयोनि को वेद का उच्चारण दुर्लभ है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्वा मैवं किन्त्वधमस्य नीचस्यापि मम स्यादेव कुत इत्यत आह । ह्रियमाणः कालनद्येति । अयं भावः यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किञ्चित्कदाचित्तरति कूलं प्राप्नोति तथा कर्मवशेन कालेन ह्रियमाणानां जीवानामपि मध्ये कश्चित्तरेदिति सम्भवतीति ॥ ५

अतो ऽनया प्रवृत्त्यैव ममामङ्गलं ध्रुवं नष्टमेवेति ज्ञायते भवो जन्म च सफलं जातमिति यद्यतो नमस्करिष्यामि ॥ ६ ॥

अमङ्गलनाशे सूचकान्तरमाह । कंस इति । बताहो आश्चर्यं अतिखलः कंसोऽपि ममात्यन्तमनुग्रहं कृतवान् यतो ऽमुना कंसेन प्रहितो हरेरङ्घ्रिपद्मं द्रक्ष्य द्रक्ष्यामीति पूर्वेऽम्बरीषादयस्तमः संसारमतरंस्तीर्णाः ॥ ७ ॥

यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिः ससात्वतैः
गोचारणायानुचरैश्चरद्वने यद्गोपिकानां कुचकुङ्कुमाङ्कितम् ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

अङ्घ्रिपद्मं विभावयति । यदिति । ब्रह्मादिभिरर्चितमिति परमैश्वर्यमाह । श्रिया चेति सौभाग्यातिशयम् । मुनिभिर्भक्तसहितैरिति परमपुरुषार्थत्वम् गोचारणायेति कृपालुत्वम् । यद्गोपिकानामिति प्रेममात्रसुलभत्वम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मतिधृतिभ्यामाह । नैवमिति । अधमस्येति तत्सन्दर्शनाखिलसाधनराहित्यं तद्वैपरीत्यं चोक्तम् । तथाप्यच्युतस्य तद्भजनाभासेऽपि कृपालुतादिमाहात्म्याच्च्युतिरहितस्य श्रीकृष्णस्य दर्शनं तन्माहात्म्यबलात् स्यादेवेत्यर्थः । सम्भावनायां लिङ् । अत्र निदर्शनं चिन्तयति । तत्तत्कर्मभोगकालप्रवाहेण संसार्य्यमाणोऽपि क्वचित् साङ्केत्यनामादिनिमित्ते सति कश्चन अजामिलादिसदृशस्तरति तत्कूलायमानं श्रीभगवन्तं प्राप्नोति यथा कथञ्चित्तदभिगमनादौ सति पूतनादिसदृशो वा । नदीरूपकेण यथा ताभ्रियमाणः तृणादिरनुकूलवातादिनिमित्ते सति तरति तद्वदिति व्यञ्जितम् ॥ ५ ॥

एवं निश्चित्यैव सगर्वमाह । ममेति । अमङ्गलं तद्दर्शने सर्वोऽप्यन्तरायः । यदिति क्रमेणाविर्भाविना श्रीभगवत्कारुण्यस्यैव प्रभावेणेति भावः । योगिभिरेव ध्येयं तैरपि ध्येयमेव च यदङ्घ्रिपङ्कजं तन्नमस्यं साक्षात्कृत्य नमस्यामीत्यर्थः । तच्च भगवतः निजाशेषैश्वर्य्यं प्रकटयतः श्रीकृष्णस्येत्यर्थः ॥ ६ ॥

सम्भावितश्रीभगवत्कारुण्यस्यैव लक्षणं सविस्मयमाह । कंस इति । तैर्व्याख्यातं तत्रापिशब्दात् भगवत्कारुण्यं विनेदं विना न सम्भवतीति भावः । अनुग्रहं ममाभीष्टसान्निध्यमित्यर्थ इति । किम्वा हरेरत्यमङ्गलहरणाभिप्रायेण कृतावतारस्येति तथापि सम्प्रति सकललोककृपार्थप्राकट्याभिप्रायेण । यस्याङ्घ्रिपद्मस्य नखमण्डलं तद्विम्बं तस्य त्विषा एकयापि कान्त्या तत्स्फूर्त्तिमात्रेणापि पूर्वं तद्भक्तस्यैवातरन् आवृतां तावत्तेषां भजनान्तराणीति भावः । इति श्रीनराकृतिविग्रहस्य सनातनत्वं विग्रहान्तराणां तदन्तर्भावश्च लभ्यते ॥ ७ ॥

पुनस्तस्याङ्घ्रिद्वन्द्वस्य महिमाधिक्यमनुसंदधानस्तादृशस्यापि प्रेमवश्यत्वगुणं स्मरन् तत्र गोकुलस्यापि परमोत्कर्षव्यञ्जकतया पर्य्यवसाययन् सचमत्कारमाह । यदिति । पूर्वयदत्र च यच्छब्दस्य वाक्यान्तिमत्वात्तच्छब्दानपेक्षयैव योजना स्यादिति पूर्वेण युग्मकं न कृतं तदुक्तं काव्यप्रकाशे । यच्छब्दस्तूत्तरवाक्यपदार्थगतत्वेनोपपत्तेः सामर्थ्यात् पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षत इति । ततश्च प्रपञ्चाधिकारिभिर्ब्रह्मादिभिः सुरैर्यदङ्घ्रिपद्ममर्चितमिति "मतिबुद्धी" त्यादिना वर्त्तमाने क्तः । "क्तस्य च वर्त्तमाने" इति षष्ठ्यभावस्यार्षः । तैरागमोक्तमार्गेण सदोपास्यमानमिति । तदेवं ब्रह्मादिकर्तृकसदोपास्यत्वमुक्त्वा तदेव द्रढयितुं क्रमेण तच्छिरस्पदैस्तदधस्पदैरपि तादृगुपास्यत्वं दर्शयति । श्रिया च देव्येत्यादिना । श्रियेति वैकुण्ठपरिकराणामुपलक्षणम् । मुनिभिरिति प्रपञ्चस्थसर्वभक्तग्राहकं तत्र मुनिभिः श्रुतिपुराणाद्यनुसारिभिः सिद्धैः साधकैश्च ससात्वतैः पाञ्चरात्रिकसहितैस्तत्साहित्यमत्र तस्यावश्यकत्वाभिप्रायेण । तदेवं यस्योत्कर्षप्रतिपादनाय च तादिदं त्रययुक्तं तस्य गोकुलस्य परमोत्कर्षं दर्शयति । गोचारणायेत्यर्द्धेन यत्तेषामागममार्गेण ध्यात्वार्चितं तदेव स्वयं गोचारणायानुचरैश्चरद्भवति तदप्यास्तां गोपिकानां कुचनिर्माल्यरूपैः कुङ्कुमैरङ्कितं भवतीत्यहो परमाश्चर्य्यमिति भावः । आचितमिति पाठे व्याप्तमित्यर्थः । तदेवं प्रायो देवर्षिमुखाद्रासश्रवणेन केवलं तत्प्रेमसुलभमेव चिन्तितं नतु रतिकेलिविशेषमयमिति । तदास्य भावेऽस्मिन्न रसाभासत्वं किम्वा गोपिकानां तमतिबालं वात्सल्याद्वक्षसि लालयन्तीनां ज्यायसीनां कासाञ्चिदित्यर्थः । गोपिका अप्यत्रोपलक्षणमेव गोपालादीनामिति ज्ञेयम् । सेयमस्य गोकुलमहिमस्फूर्त्तिस्तदाभिमुख्यप्रभावेणैवेति ज्ञेयम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भवः जन्म ॥ ६ ॥

अत्यनुग्रहम् अकृत अकरोत् तमः पापं "पाप्मा वै तमः" इति श्रुतेः ॥ ७ ॥

गोचारणाय गवां सञ्चारणाय यवसभक्षणातिप्पादनाय वा ॥ ८-१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्वा नैवं किन्त्वधमस्य नीचस्यापि ममाच्युतदर्शनं स्यादेव कुत इत्यत आह । ह्रियमाण इति । अयम्भावः यथा नद्या ह्रियमाणानां तृणादीनां मध्ये किञ्चित्कदाचित्तरति तथा कर्मवशेन कालेन ह्रियमाणानां जीवानामपि मध्ये कश्चित्तरेदिति सम्भवतीति ॥ ५ ॥

अनया प्रवृत्त्यैव ममाद्यामङ्गलं नूनं नष्टं भवो जन्मापि सफलं जातं कुतः यत् यतो योगिभिः केवलं ध्येयमेव नतु दृश्यमङ्घ्रिपङ्कजं नमस्करिष्ये ॥ ६ ॥

अथाधुना कंसो मे मह्यमत्यर्थमनुग्रहमेवाकृताकरोत् वतेत्याश्चर्थे कुतः यतः अमुना कंसेन प्रहितः प्रेषितोऽहं मुरारेरङ्घ्रिपङ्कजं द्रक्ष्यामि कथम्भूतस्य कृतः अवतरो येन तस्य कथम्भूतं यस्याङ्घ्रिपङ्कजस्य नखमण्डलत्विषा हृदि धार्यमाणया साधनभूतया पूर्वे ब्रह्मादयः तुरत्ययं तमः तमःकार्यं संसारमतरन् तमः पापं वा "पाप्मा वै तमः" इति श्रुतेः ॥ ७ ॥

अङ्घ्रिपद्मं विभावयति । यदिति । यच्छब्दयोस्तदङ्घ्रिपद्मं द्रक्ष्यामि इति पूर्वेण संबन्धः ब्रह्मरुद्रावादी येषां तैः सुरैरर्चितमनेन परत्वमुक्तम् देव्या देवस्य विष्णोः संबन्धिन्या श्रिया

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

लक्ष्म्या चार्चितमनेन पारमैश्वर्यमुक्तम् श्रिया ब्रह्मादिभिराश्रीयमाणया लक्ष्याप्यर्चितत्वोक्तेः सात्वतैर्भक्तैः सहमुनिभिरर्चितमित्यनेन सौभाग्यातिशय उक्तः सात्वन्त एव सात्वताः प्रज्ञादित्वात् स्वार्थेऽण् अनुचरैः सह वने गोचारणार्थमनुचरदित्यनेन वात्सल्यं सौशील्यं चोक्तं गोपिकानां कुचकुङ्कुमरञ्जितमित्यनेन कमनीयत्वमुक्तम् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तमनुवदति । मैवमिति । अहमेवमच्युतदर्शनं दुर्लभमिति आत्मानं मावमंस्यामि नावजानामि कुत इत्यत्राह । स्यादिति । कथमेतत्सम्भवतीत्यत्राह । ह्रियमाण इति । कश्चन विष्णुभक्तिमान् ॥ ५ ॥

भवो जन्म योगिभिः सनकादिभि ॥ ६ ॥

यत आश्चर्यम् अद्य अत्यनुग्रहमाधिकानुग्रहमकृत अकरोत् अतिममात्यनुग्रहमिति पाठे अति अत्यर्थं स म कृतवानित्यर्थः प्रहितः प्रेषितः अङ्घ्रिपद्मं विशिनष्टि । कृतावतारस्येति । पूर्वं ब्रह्मादयो यस्याङ्घ्रिपद्मस्य नखानां मण्डलस्य त्विषा तेजसा दुरत्ययं तमो ऽज्ञानं मघं वा शुचम् अतरन् तीर्णवन्त इत्यन्वयः ॥ ७ ॥

यच्च ब्रह्मादिभिः सुरैरर्चितं ससात्वतैः पाञ्चरात्रिकैः सहितैः यच्च गोचारणाय गवां तृणचरार्थमनुचरैः गोपैः समं वने भ्रान्तं यच्च वने गोपिकानां कुचकुङ्कुमेनाङ्कितं मुद्रितं तद्द्रक्ष्य इति पूर्वत्रान्वयः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अच्युतस्य सद्भजनाभावेऽपि कृपालुतादिमाहात्म्याच्च्युतिरहितस्य श्रीकृष्णस्य दर्शनं तन्माहात्म्यबलात् स्यादेवेत्यर्थः । अत्र निदर्शनं तत्तत्कर्मभोगकालप्रवाहेण संसार्य्यमाणोऽपि क्वचित् साङ्केत्यनामादिनिमित्ते सति कश्चनाजामिळादिसदृशस्तरति तत्कूलायमानं भगवन्तं प्राप्नोति । यथा कथञ्चिदभिगमनादौ सति पूतनादिसदृशो वा ॥ ५—९ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवम्प्रतिकूळतर्कं निरूप्य अनुकूलेन तस्य पराहतिमाह । मैवं ममेति । मेति निषेधार्थं यदुक्तं त्वया विषयित्वात् नाधिकारो विषयाश्च बाधका इति महतामपि केवलं स्तुत्य एव नतु दृश्य इति च एतन्मा किन्तु एवमेवैतत् उभयत्रापि साधकधर्मद्वयमाह । अधमस्यापि अच्युतदर्शनं स्यादेवेति विषयाणाम् अधमाधिकारित्वसम्पादकत्वमेव नत्वधिकारनिवारकत्वम् आसुरत्वमेव तथा "असुर्यः शूद्र" इति श्रुतेः नापि प्रतिबन्धकत्वं विषयैरपि भगवद्भजनस्य शास्त्रे निरूपितत्वात् "यद्यदिष्टतमं लोक" इति किन्त्वधमत्वमेव सम्पादयति सर्वथा निर्विषय उत्तमः बहिर्निर्विषयः मध्यमः उभयत्रापि सविषयो ऽधम इति अधमस्यापि स्यादेवाच्युतदर्शनम् अन्यथाधमो ऽधिकार एव न स्यात् किञ्च भगवानच्युतः सर्वथा च्युतिरहितः स्वरूपतो धर्मतश्च यदि कीर्त्तितः तत्कीर्त्तनं न व्यर्थमिति भगवानेव फलमिति दर्शयेदेव कदाचित् अतः स्यादेव ननूक्तो दृष्टान्तो बाधक इति तत्साधकोऽपि दृष्टान्तोऽस्तीत्याह । ह्रियमाण इति । कालनद्या ह्रियमाणः क्वचित् कदाचित् भित्तरतीति यथा तृणं दृश्यते च नौका जळे पतिता स्वयमेव कूलान्तरं गच्छति कालोऽपि नदीरूपः भगवन्तं जीवसमूहश्चान्तरा प्रवहति विषयमाया जलात्मा तत्र तीरस्थान् कदाचिन्मध्ये पातयित्वा उत्तरकूले नयेत् अनेन कालवशादपि मोक्षः सिध्यतीति केषाञ्चिन्मतमुक्तम् अत्र नियामको भगवदवतारः ॥ ५–६ ॥

ननु बाधकस्य कालस्य कथम्मोक्षसाधकत्वमिति चेत्तत्राह । कंस इति । कदाचिद्बाधकान्येव साधकानि भवन्ति विषम्भक्षयित्वा जीवति अन्यथा म्रियेतेति लोकप्रसिद्धिः तदाह । कंस इति । बतेति हर्षे यः सर्वथा बाधकः स एव मे अस्यानुग्रहमकृत य एव हि भगवद्दर्शनं कारयति स एवानुग्रहं करोतीति कदाचिदनुग्रहं करोति लौकिकं विषयादिद्वारा अयन्त्वलनुग्रह इति येन प्रहितोऽङ्घ्रिपद्मं द्रक्ष्य इति नन्न विपरीतार्थं प्रेषितवान् ततः कथमिष्टसिद्धिरिति चेत्तत्राह । हरेरिति । सहि सर्वदुःखहर्ता सम्बन्धमात्रमपेक्षते स सम्बन्धोऽनेन कारित इति कंसस्यैवायमनुग्रहः यथाकथञ्चित् संबन्ध एवात्र प्रयोजक इति ज्ञापयितुमाह कृतावतारस्येति । एतदर्थमेव भगवदवतार इति तथात्वे प्रमाणमाह । पूर्वेऽतरन्निति यस्य नखमण्डलत्विषापि पूर्वे भगवदीयाः अतरन् संसारं भावितो हृदये प्रकाशमानश्चरणः मुक्तिं ददातीति अविद्यान्धकारहरणार्थं कान्तिर्निरूपिता मण्डलपदं सूर्यादिरिव निवारकत्वं ज्ञापयति नतु दीप इव एकेनापि सूर्येणान्धकारो निवार्यते किम्पुनर्दशभिरिति ख्यापयितुं नखेति तरणं पादपोतेनैवेति अर्थात् पादयोः अतो यत्र चरणसम्बन्धमात्रेणैव ध्यानप्राप्तेन सर्वे तीर्णाः तत्र दर्शनवतो मम तरणे कः सन्देहः ॥ ७ ॥

एवं स्वस्य फलमधिकारञ्च निश्चित्य बहुधाविप्रतिपन्नत्वाद्भगवतो मोक्षदातृत्वं साधयति । यदर्चितमिति । अवश्यं मोक्षोऽस्तीत्यभ्युपगन्तव्यं स च किञ्चिदधीन इति च तत्र सन्मार्गे ब्रह्मा लोके महालक्ष्मीश्च विषयत्वेन ज्ञानशास्त्रे मुनयः भगवच्छास्त्रे सात्वताः एतदवतारे चतुर्द्धा अवतीर्णस्य दिनरात्रिभेदेन गोपा गोप्यश्च सेवकाः ये भृत्याः अन्नाद्य न कश्चन मन्यन्ते तत्रापि स्त्रियः तत्रापि तेन प्रकारेणान्ति सर्वत्र भक्तिप्राधान्यार्थं पदग्रहणं जगति त्रयो मुख्याः ब्रह्मविष्णुशिवाः तत्र ब्रह्मा शिवश्च आदिभूतौ येषां सात्त्विककल्पे विष्णुर्भगवानिति गुणावतारेऽपि विशेष उक्तः तैः सर्वैरेवेन्द्रादिभिः स्वर्गसिध्यर्थमर्चितं स्वाभिलाषा श्रिया चार्चितं प्रथमतोऽपि तस्याः परिज्ञाने सामर्थ्यमाह । देव्येति । मुनिभिश्चेति चकारात् कर्मिभिरपि फलार्थिभिः सात्वतैरिति वैष्णवभेदा उक्ताः ये सर्वैकनिष्ठाः गोपानामर्चनपरिज्ञानार्थमाह । अनुचरैरिति । अलौकिकं गवां चारणं शिक्षणीयमिति ते पूर्वं सेवकाः यस्माद्वने ग्राम्याणां भगवदर्चने बाधकसद्भावात् न भवतीति स्त्रीणामपि भजने हेतुं सूचयति । कुचकुङ्कुमरञ्जितमिति । कामेनैव तासां भजनं ताभिः बहिरपि हृदये स्थाप्यत इति—

द्रक्ष्यामि नूनं सुकपालनासिकं स्मितावलोकारुणकञ्जलोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥ ९ ॥
अप्यद्य विष्णोर्मनुजत्वमीयुषो भारावताराय भुवो निजेच्छया ।
लावण्यधाम्नो भवितोपलम्भनं मह्यं न न स्यात्फलमञ्जसा दृशः ॥ १० ॥
य ईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोभिदाभ्रमः ।
स्वमाययाऽऽत्मन् रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते ॥ ११ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ऐश्वर्यस्य श्रीस्तथा ज्ञानं कीर्त्तिर्धर्मो विरागता ।
षड्गुणास्त्वत्र निर्दिष्टाः क्रमो नात्र विवक्षितः ॥
इति ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मैवमिति मतिधृतिभ्यां दैन्यं समर्थयाह । ममेति स्यादेव स्यादपीत्यर्थः ॥ ५ ॥

एवं निश्चित्य सगर्वमाह । ममाद्येति ॥ ६ ॥

किंच कंसेन भगवत्प्रातिकूल्ये निर्दिष्टस्यापि ममात्यन्तमानुकूल्यं फलतोऽभूदित्याह । कंस इति । बतेत्याश्चर्य्ये खलोऽपि कंसः अद्यात्यनुग्रहमकृत यतोऽमुना प्रहितः प्रेषितः पूर्वे अम्बरीषादयः तमः संसारम् अतरन् तीर्णाः ॥ ७ ॥

यदङ्घ्रिपद्मं ब्रह्मादिभिरनुपहृतैर्गन्धमाल्यादिभिरर्चितं पूज्यत इत्यर्थः । "मतिबुद्धिपूजार्थेभ्यश्चे"ति वर्तमाने क्तः पद्यभाव आर्षः गोचारणाय अनुचरैः सह चरत् गवां पश्चाच्चरदित्यर्थः । यस्यानुचरा ब्रह्मादयस्तदङ्घ्रिपद्मं गवामनुचरं यस्यार्चका ब्रह्मभवादयस्तद्गोपिकानां तु कुचोच्छिष्टकुंकुमास्वादकमित्युत्कर्षपरमावधिः । कुंकुमाचितं कुंकुमार्चितमिति पाठद्वयं नच अत्राक्रूरेण दासेन स्वप्रभोरुज्ज्वलरसास्वादनं रसाभासत्वादनुचितमिति वाच्यं वाक्यस्यास्य स्वगतत्वात् । स्वगतोक्त्या हि पित्रादयोऽपि हर्षात् पुत्रादीनां श्रृङ्गाररसमनुमोदयन्तो दृष्टाः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ तद्दर्शनाधिकारं सम्भावयति । मैवमित्यादिना । मयमनधिकारो मास्तु ममाधमस्यापि अच्युतदर्शनं स्यादेव प्राप्तदर्शनावसरत्वादित्याशयेनाह । ह्रियमाण इति ॥ ५ ॥

अद्य श्रीकृष्णदर्शनार्थावसरे अमङ्गलदर्शनप्रतिबन्धकं कर्म नष्टमेव भवो जन्म सफलमेव जातं यत् यतः योगिध्येयाङ्घ्रिपङ्कजं नमस्करिष्यामि ॥ ६ ॥

दुरत्ययं दुस्तरं तमः संसारं यस्याङ्घ्रिपद्मस्य नखमण्डलमात्रस्य ध्येयस्य त्विषा कान्त्या पूर्वे ध्यातारोऽपि अतरन् तीर्णाः अहन्तु अमुना कंसेन प्रहितः अङ्घ्रिपद्मं सकलं द्रक्ष्ये एतत्फलमनुग्रहं बतेत्याश्चर्ये भागिनेयहन्ता बन्धुधुक् कंसः मे परकीयस्य अनुग्रहमकृत कृतवान् अतो ज्ञायते ममामङ्गलं नष्टं भवश्च फलवानद्येति भावः ॥ ७ ॥

एवं श्रीभगवच्चरणकमलदर्शने स्वस्य असम्भावनां पुनः सम्भावनाञ्च कृत्वा अथ चरणकमलस्य ब्रह्मादिसेव्यत्वेन स्वस्य अतिदुर्लभत्वेऽपि भक्तवश्यत्वेन सुलभत्वं विभावयति । यदिति॥ ८ ॥

---

भाषा टीका ।

अथवा ऐसा न होगा मैं अधम हूं तौ भी मेरे को अच्युत भगवान् का दर्शन होगा ही क्योंकि जैसे नदी में तिरते तृणादिक कोइ कभी नदी के किनारे लग जाता है तैसे संसार सागर में प्राणी भी भगवान के सम्बन्ध से कभी तर जाता है ॥ ५ ॥

आज मेरे सब पाप नष्ट होगये जन्म भी सफल होगया जो कि मैं योगियों के ध्यान करने योग्य भगवान् के चरण कमल का दर्शन करूंगा ॥ ६ ॥

अहो कंसने आज मेरे ऊपर बडा अनुग्रह किया है जोकि मैं इस के भेजने से हरि भगवान् के चरण कमल का दर्शन करूंगा जिन भगवान् ने मनुष्यावतार धारण किया है उन भगवान् के चरण नखों के मंडल की कांति के ध्यान से पूर्व के महात्मा दुस्तर संसार को तर गये हैं ॥ ७ ॥

जिस चरणारविन्दका ब्रह्मादिक देवतों ने लक्ष्मी देवीने पांच रात्रिक भक्तों सहित मुनिजनों ने अर्चन किया है जो चरण गोचारण के वास्ते वनमे विचरता है जो चरण गोपिकाओं के कुचों के कुंकुम से चिन्हित है तिसका मैं दर्शन करूंगा ॥ ८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मनोरथान्तरं करोति । द्रक्ष्यामीति । शोभमानौ कपोलौ नासिका च यस्मिंस्तत् स्मितसहितोऽवलोको यस्मिन् अरुणकञ्जवल्लोचने यस्मिन् तच्च तच्च मुखं गुडालकावृतं वक्रकेशावृतम् तदानीमेव शुभसूचकं दृष्ट्वातिहृष्यन्नाह । प्रदक्षिणमिति ॥ ९ ॥

पुनरप्यन्यच्चिन्तयति । अप्यद्येति । ईयुषः प्राप्तवतः लावण्यस्य धामाश्रयस्तस्य विष्णोः यद्वा विष्णोर्लावण्ययुक्तं यद्धाम वपुस्तस्य उपलम्भनं दर्शनं भविता भविष्यति अपि यद्येवं स्यात्तर्हि मह्यं मम दृशो लोचनस्य फलं न स्यादिति न अपितु स्यादेवेत्यर्थः॥१०॥

य ईक्षितेत्यादिभिः कोलापकं तत्रैवं शङ्का नन्वस्मदादिवदेव भोक्तृत्वकर्तृत्वादिधर्मैस्तत्र तत्र प्रतीयमानस्य कथं विष्णुत्वमि

**यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्मजन्मभिः ।**
**प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्यास्तद्विरक्ताः शवशोभना मताः ॥ १२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तामिमां शङ्कां श्लोकत्रयेणापाकुर्वंश्चतुर्थेन तमहं द्रक्ष्यामीति मनोरथं रोति तथाहि । य ईक्षितेति । असत्सतोः कार्यकारणयोरीक्षितापीक्षणमात्रकर्ताप्यहंरहितोऽहंकारहीनः तथापास्ततमोभिदाभ्रमः तमः स्वाज्ञानं ततो भिदा भेदस्ततो भ्रमोऽभिनिवेशादिः अपास्ता अपाकृतास्तमआदयो यस्मिन्सः कुत एतत्तत्राह । स्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेण तथापि स्वमायया स्वाधीनया मायया तदीक्षया तत्सवेक्षया प्राणाक्षधीभिः सहितैरात्मन् नात्मनि स्वस्मिन्नेव रचितैर्जीवैः सदनेषु वृन्दावनतरुषु गोपीगृहेषु च लीलया कर्माणि कुर्वन्सक्तवदभीयते आभिमुख्येन प्रतीयते ॥ ११ ॥

ननु सर्वथाहंकारादिरहितस्यात्मारामस्य लीलापि कुत इत्याशङ्क्य परानुग्रहार्थेत्याशयेनाह । यस्येति । अखिलान्यखिलस्य वा अमीवानि पापानि घ्नन्तीत्यखिलामीवहानि तैः तथा सुमङ्गलैः शोभनानि मङ्गलानि येभ्यस्तैः गुणाः करुणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचो जगत्प्राणन्ति जीवयन्ति शुम्भंन्ति शोभयन्ति पुनन्ति पवित्रयन्ति व्यतिरेकमाह । या इति । तैर्विरक्ता रहितास्तास्तु स्वलंकृता अपि वस्त्राद्यलंकृतशववच्छोभमानाः सतां सम्मताः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्थं सहजदास्येनादौ पादाब्जदर्शनं विभाव्य तत एव प्रेमोद्रेकेण लोभात् श्रीमुखदर्शनेऽपि मनोरथं करोति । द्रक्ष्यामीति । नूनं निश्चये । मुकुन्दस्येति पूर्वकृतनिरुक्त्या श्रीदन्तानां कुन्दसादृश्येन स्मितकृततदीपद्धिकाशेन च श्रीमुखस्य सौन्दर्य्यमेवाधिकं दर्शितं तन्निश्चये हेतुः मम प्रदक्षिणं यथा स्यात्तथामी साक्षादित्यर्थः । रथनिर्घोषेण दूरवर्त्तित्वाददःशब्दप्रयोगः । वै इति पाठे व्यक्तमित्यर्थः । प्रदक्षिणमिति । अत्र मृगा अयुग्मवैशिष्ट्यार्थं कृष्णमृगसहिताश्चेति ज्ञेयं तथा च शाकुनतन्त्रे । पुण्येन गत्या गवयोरयुग्माः प्रदक्षिणं गौरमृगाश्चरन्ति । समा न शस्ता न च वामयाताः कृष्णैर्विमिश्रा न भवन्ति दुष्टाः इति ॥ ९ ॥

पुनरतिलोभोद्रेकेण सर्वाङ्गदर्शने मनोरथं करोति । अपीति । अद्योपलम्भनं भवितेत्यर्थः । विष्णोः सर्वव्यापकस्य परिपूर्णस्य स्वयं भगवत इत्यर्थः । तादृशस्यापि मनुजत्वमीयुषः लीलामाधुर्य्याय प्रसिद्धमनुजसाधारणां नित्यामेव प्राप्तवतः । अयमात्मापहतपाप्मेतिवन्निष्ठाप्रयोगः । मनुवंशे प्रादुर्भूतत्वं प्राप्तस्येति वा । न चात्र स्वातन्त्र्यभङ्ग इत्याह । निजेच्छयेति । भक्तेच्छयेत्यर्थत्वेऽपि तादिच्छाभक्तेच्छयोरेकात्मकत्वात् तथैवार्थः । न केवलमेवं लीलामाधुर्य्याणामेवाश्रयत्वं सौन्दर्य्याणामपीत्याह । लावण्यधाम्न इति । अन्यत्तैः । तत्रापिशब्दस्य सम्भावनार्थत्वाद्यदीत्यादि व्याख्या । तर्हीति तर्हीत्यर्थं फलं सार्थकत्वम् । एवकार इत ऊर्ध्वं तन्नास्तीति विवक्षया । तदुक्तम् अक्षण्वतां फलमिदमित्यादि तत्र चाञ्जसा साक्षात् स्वरूपेणैव ननु छायादिवद्व्यवधानेनेति भावः । यद्वा । उपलम्भनं समीपप्राप्तिः । दृशः फलं दर्शनमञ्जसाऽनायासेन भवितेति न किन्तु चक्षुरुन्मीलनमात्रेणैव भविता । ननु योगादिसाधनबाहुल्येनेत्यर्थः । यद्वाऽपीति प्राकाश्ये तदेवं कामयित्वा तत्प्राप्तिं निर्द्धारयति । मह्यमिति । तदुपलम्भनरूपं दृशः फलं मम न भवितेति नापि तु भवितैव पूर्वनिश्चयादिति भावः । अत्राप्यञ्जसा न भवितेति पूर्ववत् ॥ १० ॥

अथ त्रिभिरेव कुलकम् । स चावतीर्ण इत्यन्तेनान्वयपरिप्राप्तेः तत्र य ईक्षितेति तैर्व्याख्यातम् । तत्र ननु अस्मदादिवदेवेत्यादिकं परमतमेवानूदितं पूर्वं श्रीभगवति दृढश्रद्धामयत्वेनोक्तत्वात् तथेक्षणमात्रकर्त्ताप्यहंराहित इतीक्षणमात्रं स करोति तदीक्षणलब्धसामर्थ्याया मायाया एव सृष्ट्यादिकर्तृकत्वमिति भावः । तस्मिन्नीक्षणेऽप्यहङ्काररहित आवेशशून्य इत्यर्थः । तदेवमावेशाभावाज्जीववैलक्षण्यमुक्तम् । स्वतेजसेत्यादिनान्येषामपि तमआदिध्वंसकत्वाज्जीवन्मुक्तेभ्योऽपि । चिच्छक्तिशब्देन हि तृतीये योगमाया व्याख्याता साच श्रीसनकादौ निषिद्धेति ततश्चिच्छक्तिस्वरूपसाक्षात्कारयोर्वैयधिकरण्य एव तृतीया तस्यावृत्तित्वात्तस्य । प्राणाक्षधीभिः कर्मेन्द्रियज्ञानेन्द्रियान्तःकरणैः । आत्मनि आत्मांशे "ममैवांशो जीवलोके जीवभूतः सनातन" इति श्रीभगवदुपनिषद्दृष्ट्या । "जाग्रत्स्वप्नसुषुप्तञ्च गुणतो बुद्धिवृत्तयः । तासां विलक्षणो जीवः साक्षित्वेन विनिश्चित" इति श्रीभगवद्वाक्यान्तररीत्या शुद्धजीवे जीवैः प्रमातृरूपैः अतः तेषां प्राणाद्यावृतत्वानुसारेण ईश्वरस्यापि तत्प्रतीतिः । तत्र च तदीक्षयेति मायायाः स्वतः सामर्थ्याभावेन आत्मनि रचितैरिति च तेषां तदेकाश्रयत्वेन स्वतो यथार्थज्ञानाभावोऽभिप्रेतः । वृन्दावनतरुष्वित्यादिकमभिशब्दस्वारस्येन ज्ञेयम् । तत्राभिमुख्येन सक्तवत्त्वं सक्तवत्तस्य प्रस्तुतविषयत्वेन वृन्दावनेत्यादि तत्र च वनिप्रत्यये हेतुर्लीलयेति पुनःपुनरिदमज्ञानमक्रूरस्य संशयानुच्छित्तेः । श्रीकृष्णस्य तत्प्रेमासक्तत्वे निर्णीते ततो नयनाप्रवृत्तिः स्यात् । यद्वा । यः स्वाधीनया मायया आत्मनि देहे रचितैः कारिताध्यासैर्जीवैः सदनेषु चिच्छक्त्या अपास्तं तमो जीवस्यैवाज्ञानं तत्कृता भिदा भ्रमश्च येन । कैः प्रतीयते तत्राह । सदसतोरीक्षया याः प्राणाक्षधियः कर्मेन्द्रियज्ञानेन्द्रियान्तःकरणानि तत्तद्रूपतां प्राप्तास्ताभिरेव तामीक्षां विना ताः स्वस्वकार्य्यक्षमा न भवन्तीति विचार्य्येत्यर्थः ॥ ११ ॥

ततेवं परमात्मत्वेन दुर्लभत्वमुक्त्वा सर्वमङ्गलार्थं कृतनानालीलावतारत्वेन सुलभस्यापि ये बहिर्मुखास्तान् निन्दति । यस्येति । गुणादिभिस्तत्प्रतिपादककथाभिर्विमिश्रा इति मध्ये मध्येऽपि विशिष्टतया तद्युक्ता इत्यर्थः । तादृश्यो वाचो भव्याः किं न श्वसन्त्युतेति न्यायेन तद्व्यतिरेके मृतप्रायत्वात् । प्रथमं तावत् सम्बन्धमात्रेण सफलजीवनं कुर्वन्ति । ततश्च यस्यास्ति भक्तिर्भगवत्यकिञ्चनेत्यनुसारेण तत्तद्गुणप्रकाशेन शोभयन्ति । ततश्च

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनन्ति मुमुक्षापर्य्यन्तविविधदुर्वासनाध्वंसनेन शोधयन्ति । अतस्तासां वाचान्तु सुतरां तत्तद्भावं इति भावः । जगदित्यधिकारापेक्षा निरस्ता । वै प्रसिद्धौ । तत्तद्धेतुत्वेन गुणादीनां स्वभावानाह । अखिलेति । सुमङ्गलेति च सर्वदुःखनाशकैः सर्वोत्तमगुणप्रदैरित्यर्थः । विशेषेण रिक्ता शून्या इति स्थानैकद्वयसम्बन्धेनापि तदाद्यभिप्रेतं शवेति सालङ्कारा अपि शवप्राया इत्यर्थः । शवस्य स्वतो व्यर्थस्थितत्वात् पुत्रोत्पादनाशक्त्या परस्यापि प्राणप्रदत्वाभावात् तथा स्वतोऽशोभनत्वात् स्वाधिष्ठानस्याप्यशोभाहेतुत्वात् तथा स्वतोऽपवित्रत्वात् परस्याप्यपावनत्वाच्च गैरिति निर्देशेन रहिता इति च व्याख्यानेन तेषामपि मते विरक्ता इत्येव पाठो नतु विरिक्ता इति स पाठस्तु प्रायः सर्वत्र तेषु विरक्ता आसक्ता इत्यर्थः । अन्यस्तैः । तत्र लीलायाः परानुग्रहाद्यर्थत्वे यद्यपि परमतत्प्रेमवत्सु व्रजवासिषु तद्वैशिष्ट्याप्त्या सक्तत्वमपि विशेषतः समायाति तथापि वैशिष्ट्यज्ञानाद पूर्ववत्तदज्ञानमेवेति तथावतारितम् ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ईक्षितेति । अहंशब्देनात्मन्यहंकारो लक्ष्यते । जीवाः स्थूलोऽहं पश्यामीति मन्यन्ते । एवं तद्देहे बुद्धिरहितोऽपि अतएव स्वगतजातिगुणादिभिदाभ्रमरहितोऽपि यः सदसतोः चिदचितोः कार्यकारणयोर्वा ईक्षिता ज्ञाता द्रष्टा सदनेषु भोगायतनेषु देहेषु तदीयस्वसंकल्पेन रचितैः प्राणाक्षधीभिः लिङ्गव्यत्यय आर्षः अधीयते गम्यते बुध्यते प्राणादीनां कारणतया ज्ञायत इत्यर्थः प्राणादिभिर्जन्तुषु भाति चित्रधा इति पाठे प्राणादीनां परमात्मशरीरत्वात् तैर्विशिष्टः चित्रधा बहुधा भातीति ॥ ११ ॥

शास्त्रवशादप्याह । अमीवहाभिः पापापहैः वाचः प्राणन्ति शुम्भन्तीति । अन्तर्भावितण्यर्थनिर्देशः । जगज्जीवयन्ति शोभयन्ति पुनन्ति चेत्यर्थः । या वाचस्तद्भिरक्ता भगवज्जन्मादिप्रतिपादनरहिताः ताः शवशोभनाः शवकल्पानां जीवन्मृतानामज्ञानां शोभनाः यद्वा गुणादिशून्याः वाचो निष्प्राणदेहतुल्याः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्रक्ष्यामीति । नूनमहं मुकुन्दस्य मुखं द्रक्ष्यामि तत्सूचकं शुभं दृष्ट्वा इत्यन्वाह । अमी मृगा मे मम प्रदक्षिणं यथा तथा प्रचरन्ति गच्छन्ति कथम्भूतं मुखं शोभनौ कपोलौ नासिका च यस्मिन् स्मितसहितः अवलोको यस्मिन् तच्च तच्च अरुणे कञ्जवल्लोचने यस्मिन् तच्च गुडालकैर्वक्रकेशैरावृतमिति ॥ ९ ॥

पुनरप्यन्यच्चिन्तयति । अप्यद्येति । भुवो भारावताराय भारापनोदनाय निजेच्छया नतु कर्मणा मनुष्यत्वमीयुषः प्राप्तवतो निरतिशयलावण्याश्रयस्य विष्णोरुपलम्भनं दर्शनं भविता भविष्यत्यप्यद्य यद्यद्युनैव स्यात्तर्हि मह्यं मम दृशोर्लोचनयोरञ्जसा आश्ववव्यवहितं फलं न स्यादिति नापितु स्यादेवेत्यर्थः । द्वौ नशब्दौ प्रकृतार्थमनुद्रढयतः ॥ १० ॥

नतु कोऽसावस्मदादिविलक्षणो यो मनुजत्वमीयिवान् यस्य च दर्शनं बहुमन्यसे इत्याशङ्क्याह । य इत्यादि चतुर्भिः श्लोकैः । यच्छब्दयोः सचावतीर्ण इत्युत्तरेण सम्बन्धः अहंरहित इत्यत्राहंशब्देन अनात्मनि आत्माभिमानहेतुरहङ्कारो लक्ष्यते असत्सतोः स्वशरीरभूतयोः प्रकृतिपुरुषयोरीक्षिता द्रष्टा ज्ञाता अपि अहंरहितः जीववत्स्वाभेदभ्रमरहितः जीवो हि देहं पश्यन् स्वाभिन्नमनुसन्धत्ते तद्वद्यः प्रकृतिपुरुषौ वीक्षन्नपि न स्वाभिन्नावनुसन्धत्ते किन्तु स्वरूपतः स्वभावतश्च स्वस्मादत्यन्तविलक्षणावेव पश्यतीत्यर्थः अनेन बद्धजीववैलक्षण्यमुक्तं तत्र हेतुं वदन्मुक्तवैलक्षण्यमप्याह । स्वतेजसेति । स्वतेजसा नित्यासंकुचितापरिच्छिन्नज्ञानेनापास्तं निरस्तं प्रतिपक्षितमोऽज्ञानं तन्मूलको भिदाभ्रमः भेदभ्रमः अस्वात्मकस्वतन्त्रवस्तुभ्रमश्च यस्य स मुक्तो हि बद्धदशायां सङ्कुचितज्ञानेनानिरस्ताज्ञानतन्मूलकाब्रह्मात्मकस्वतन्त्रवस्तुभ्रमयुक्तः यद्वा स्वतेजसा स्वसम्बन्धिना पराभिभवसामर्थ्येन निरस्तं तमोऽज्ञानं तन्मूलको भिदाभ्रमः स्वस्मिस्तद्द्वारकदेवत्वमनुष्यत्वादिभेदभ्रमश्च यस्य सः कथमेवं भूतो विज्ञायते इत्यत्राह । स्वमायया स्वशरीरभूतया प्रकृत्या कारणभूतया तदीक्षया तद्विषयकेण करणभूतेन स्वसङ्कल्पेनात्मनि स्वस्मिन्नेवाधारभूते रचितैः प्राणेन्द्रियबुद्धिभिः लिङ्गव्यत्यय आर्षः रचिताभिः प्राणेन्द्रियबुद्धिभिः कार्यभूताभिः सदनेषु भोगायतनेषु देहेषु अभीयते अभिगम्यते बुध्यते इति प्राणादीनां कारणतया ज्ञायते इत्यर्थः । प्राणादिभिर्जन्तुषु भाति चित्रधेति पाठे प्राणादीनामपि परमात्मशरीरत्वात्तैर्विशिष्टश्चित्रधा भातीति शास्त्रवशादवगम्याह नच प्राणादिसृष्टिर्जीवकर्तृकेति तत्कारणतया ज्ञायमानोऽपि जीवान्नातिरिच्यत इति वक्तुं युक्तं स्वस्य प्राणादिसृष्टेःस्वस्य कर्तृत्वासम्भवात् नहि प्रबुद्धः स्वदुःखसाधनानि स्वयं सृजति नापि सर्वप्राणादिसृष्टिरेकजीवकर्तृकैवेति युक्तिमत्तस्यापि स्वयं प्राणादिरहितस्य कर्तृत्वासंभवात् प्राणादिमत एव कर्तृत्वदर्शनात् प्रणादिमत्त्वेतु तत्सृष्टेः कर्त्रन्तरसापेक्षत्वात् नच तावत्स्वस्य प्राणादीन् सृष्ट्वा ततोऽन्येषामपि सृजतीति वक्तुं युक्तं तावत्प्राणादिरहितस्य प्राणादिसृष्टिकर्तृत्वासम्भवादन्योऽन्याश्रयश्च परमात्मा तु करणायत्तज्ञाननिरपेक्षः सङ्कल्पमात्रेणैव प्राणादीन् स्रष्टुं शक्नोतीति तत्कारणतया ज्ञायत इति सुष्ठूक्तम् ॥ ११ ॥

यस्येति । अखिलानां पठतां शृण्वताञ्च जनानाममीवं पापं घ्नन्तीति तथा तैर्यस्य गुणकर्मभिः सुमङ्गलैः निरतिशयश्रेयस्करैः विमिश्रा वाचो गिरः प्राणन्ति शुम्भन्तीत्यन्तर्भावितण्यर्थनिर्देशः। जगज्जीवयन्ति शोभयन्ति पुनन्ति चेत्यर्थः । तत्र गुणा वात्सल्यसौशील्यसौलभ्यादयः कर्माणि जगद्व्यापारप्रभृतीनि चेष्टितानि जन्मानि रामकृष्णादीनि या वाचस्तद्विरक्ता भगवद्गुणादिप्रतिपादनरहितास्ताः पदलावण्यार्थलावण्ययुक्ता अपि शवशोभनाः वस्त्राद्यलंकृतशववच्छोभनाः मताः ज्ञाताः शवकल्पानामभिमता इति भावः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नूनं निश्चयात् स्मितावलोके ऽरुणे कञ्जसदृशे लोचने यस्य तत्तथा स्मितसहितो ऽवलोको ययोस्ते तथा गुडाः निबिडाः अलकाः तैरावृतं यद्वा गुडाः गुलिकाः तद्वद्वक्राः

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्वा गुडः इक्षुविकारः तद्वत् स्निग्धा अलकास्तैरावृतं दर्शननिश्चये शकुनं वक्ति । प्रदक्षिणमिति । वा इत्यनेन अन्ये भरद्वाजादिपक्ष्यादयो गृह्यन्ते इति सूचयति गुडः पिण्डे क्षुधिकृते—स्नुहीगुलिकयोर्गुड इति च ॥ ९ ॥

ईयुषः गतवतः उपलम्भनं दर्शनं भविष्यति मह्यं मम दृशः नेत्रस्य सं समीचीनं फलं स्यान्नु स्यादेव समभेदे समीचीने इति च । दश इत्येकं वा पदं न संदशे तिष्ठतीति श्रुतिः सन्दर्शनसाधनस्य नेत्रस्येत्यर्थः ॥ १० ॥

चैतन्यैकरसस्य हरेर्गोपत्वेनावभासनं न चोद्यमिति भावेनाह । य इति । यः हरिः अहंरहितः अविद्यमानं दर्शनमात्मनि यद्यभिमन्येत तदा क्षुद्रकदोषः स्यात् नचासावस्तीत्यर्थः । यद्वदत्तद्देहस्याज्ञानादिसम्भवेनाहंभावशून्यत्ववचनमौपचारिकं किन्न स्यादिति तत्राह । अपास्तेति । अपास्तः निराकृतः तमोभिदाभ्यामज्ञानान्यथाज्ञानाभ्यामुत्पन्नो भ्रमः प्रवृत्तिर्यस्य सः भ्रमु अनवस्थान इति धातोः प्रागतिनिवृत्तावधीति अवस्थानं गत्यभावस्तदभावः कार्येषु प्रवर्तमानमित्यर्थः । वस्तुतत्त्वाज्ञानविरीतनिमित्तप्रवृत्तियुक्तो न भवतीत्यर्थः । यद्वा तमसा वस्तुतत्त्वाज्ञानेन जाता भिदा इदं रजतमित्यन्यथाज्ञानं तदेव भ्रमो भ्रान्तिज्ञानं यस्य दूरोत्सारितं सः ननु मुक्तोऽप्येतादृश इत्यत उक्तं स्वतेजसेति सत्यं किन्तु

बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्धिभोरिति

श्रुतेरस्य परप्रभावेण तदात्मानमेव वेदाहं ब्रह्मास्मीति स्वमायया स्वेच्छया आत्मन् आत्माधारतया रचितेषु जन्तुषु प्राणादिभिः सह चित्रधा सुरनरतिर्यगादिनानाजातिमिश्रत्वेन भाति ननु तर्हि विकारोऽपि स्यादित्यत्राह । तत्स्थितिं तथैव सन् अविकार एवाभ्यर्हितः श्रेष्ठ इत्यर्थः । सर्वैरभ्यर्हितो वा सत्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपीति च अनेन मूलरूपी हरिर्यथा निर्विकारस्तथा रूपान्तरवानिति सूचितं भवति हेयदेहित्वेनाभासमानस्य किं कर्मेति तत्राह । ईक्षितेति । असत्सतोः अशुभशुभयोः ईक्षिता द्रष्टा जन्तुभिः क्रियमाणस्य पुण्यपापलक्षणस्य कर्मणः साक्षीत्यर्थः । नत्वस्य दर्शनाभिमानलक्षणविकारः आपन्नबुद्धिरेति वा ॥ ११ ॥

यस्य हरेरखिलामीवहभिः अखिलानि अमीवानि पापनि घ्नन्तीत्यखिलामीवहानि तैः अत एव सुमङ्गलैः गुणकर्मजन्मभिः विमिश्राः सङ्कलिता वाचः श्रीकृष्णकृष्णसखवृष्णिवृषेत्यादिलक्षणा जगत्प्राणन्ति आह्लादयन्ति जीवयन्ति वा शुम्भन्ति शोभयन्ति-शुभयुक्तं कुर्वन्ति पुनन्ति पवित्रयन्ति वै गङ्गादौ प्रसिद्धमित्यन्वयः या वाचस्तैः विष्ण्वादिभिः विरक्ताः शून्याः वर्जिताः स्युस्ताः सद्भिः अशोभना मताः अवबोधिता इत्यन्वयः ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु सर्वथा अन्योपलम्भनं भवितेत्यन्वयः । विष्णोः सर्वव्यापकस्य परिपूर्णस्य स्वयं भगवत इत्यर्थः । तादृशस्यापि मनुजत्वमीयुषः लीलामाधुर्याय प्रसिद्धमनुजसाधारण्यं नित्यमेव प्राप्तवतः । अयमात्मापहतपाप्मेत्यादौ क्तप्रयोगवदत्र प्रयोगः । मनुवंशे प्रादुर्भूतत्वं प्राप्तस्येति वा ॥ १० ॥

ननु कथं तस्य तादृशं दौर्लभ्यं तल्लाभमाहात्म्यञ्च । यदि च तत्तर्हि कर्हि सौलभ्यं येन तवापि तादृशभाग्यश्लाघा स्यादित्यत्र विवृणोति । य ईक्षितेति चतुर्भिः । तत्राद्यद्वयं कैमुत्येनाह द्वाभ्याम् । दौर्लभ्यं तावदाह । य ईक्षितेति । अपीति समुच्चये । सदसतोरीक्षितापि तदावेशरहितोऽपि । उभयत्र हेतुः स्वतेजसेति । ईक्षितेत्यादिरूपत्वेन सर्वगोचरस्वरूपो यः स्वमायया स्वेक्षया चात्मनि रचितत्वेन स्वतः सामर्थ्यहीनैस्तं द्रष्टुमयोग्यैश्च जीवैः प्राणादिप्रवृत्तिलिङ्गेन सदनेषु तदधिष्ठानरूपेषु सर्वभूतेषु अभीयते प्रतीयते । अनुमीयते मात्रं ननु दृश्यते यथोक्तं द्वितीये "भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरिः । दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकै"रिति एवं "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति उक्तदिशा तदंशस्यापि परमदौर्लभ्यं दर्शितम् ॥ ११—१३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वनिर्द्धारं कृत्वा व्रजन् शकुनं दृष्ट्वा प्रोत्साहेन दृढरूपं दर्शनं भविष्यतीत्याह । द्रक्ष्यामीति । यतो मृगाः दक्षिणं प्रचरन्ति अतो नूनं द्रक्ष्यामि कंसभृत्यत्वात् भगवान् न सम्मुखो भविष्यतीत्याशङ्क्य मुखारविन्दमेव द्रक्ष्यामीत्याह । मुखमिति । तथापि क्रुद्धः कदाचिद्भवेत् अपकारं वा विचारयन् तिष्ठेत् तदा कपोलौ नासिका च वक्रा विषमाश्च भवेत्तन्निवारणार्थमाह । सुकपोलनासिकमिति । सुष्ठु कपोलौ नासिका च यस्मिन् इति भक्तिः तद्रसश्च निरूपितौ ननु तथाप्यपकारार्थं समागच्छन्तं कथमङ्गीकुर्यात् तत्राह । स्मितावलोकारुणकञ्जलोचनमिति स्मितमल्पहासस्तेन ज्ञानेऽङ्गीक्रियमोहस्तेनैव व्यामोह इति न ममापराधः युक्तार्थं चैतत्कृतवानिति ज्ञानाधारभूतक्रियायामरुणकमलसादृश्यं निरूपितम् अक्ष्णोररुणता युद्धं सूचयति । मुखदर्शनेन सर्वं फलं सेत्स्यतीत्याह । मुकुन्दस्येति । ननु यादिविप्रतिपत्त्या कथम्भगवानेवं मुखदर्शनेनैव मोक्षं प्रयच्छति इति चेत् तत्राह गुडालकावृतमिति । अलकाः तत्त्वविद इति पूर्वं निरूपितं ते चेत्कुण्डलाकाराः सर्वं एव कुण्डलाकाराः प्रपन्नाः तेच पुनर्मात्सर्यं परित्यज्य सर्वे सम्भूय भगवन्तमाश्रयन्ति तदा न विवाद इति गुडशब्देन परावर्त्तनमुच्यते सर्वतः प्रसरणस्वभावाः पिण्डीभावं प्राप्नुवन्तीति प्रकर्षं यथाभिलषितार्थः मद्दिच्छयैव वा तथा भवन्तीति मदर्थमेव शकुनं कुर्वन्तीति ज्ञायते प्रकर्षेण च चरन्ति नतु पलायन्ते अयमुक्तः सर्वोऽप्यर्थः न सन्दिग्धो नापि भ्रान्तिप्रतिपन्न इति वै निश्चयेनेत्युक्तम् ॥ ९ ॥

एवं शकुनेनापि दर्शननिर्द्धार्य अद्यैव भविष्यतीति मनोरथं करोति । अपीति । दुर्लभं दिनमेतदिति सम्भावना विभूतिर्भविष्यतीत्याशङ्क्याह । विष्णोर्मोक्षदातुः लीलया मनुष्यत्वमीयुषः स्वीकृतवतः उपलम्भनं भविता एतदपि किंसम्भावितमिति प्रयोजनमाह । भारावताराय भुव इति । तत्रापि नियतं हेतुमाह । निजेच्छयेति । भक्तानां ब्रह्मादीनामिच्छया फलदानं कालान्तरेऽस्तु मा वा इदानीमेव दर्शनमात्र एव परमानन्द इति तदर्थमाह । लावण्य-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धाम्न इति । सौन्दर्यमात्रस्यैव स्थानभूतस्य उपलम्भनं निकटे दर्शनं यदि भविष्यति तदा महामेव भविष्यति मदर्थमेव मम दृशः दृष्टीनामञ्जसा फलञ्च भविष्यति आत्मा तु मुक्त एव भविष्यति न संदेहः जन्मापि सफलं भविष्यति इन्द्रियाणां साफल्यात् ॥ १० ॥

एवं शीघ्रदर्शनं सम्भाव्य अवतारे अन्यधर्मसम्बन्धमाशङ्क्य तथा सति सर्वमेवान्यथा भविष्यतीति तन्निवृत्त्यर्थं भगवति प्रापञ्चिकधर्मसम्बन्धाभावमाह । य ईक्षितेति । भगवतोऽन्यधर्मसम्बन्धः अहङ्कारे गुणेषु तत्कार्ये चेन्द्रियादौ वर्त्तमाने भवति अहङ्कारादीनां तु कार्यं दृश्यमानमपि स्वरूपेणैव भवतीति न भगवतोऽन्यधर्मसंबन्धः तत्र प्रथममहङ्काराभावेऽपि तत्कार्यमाह । अहंरहितोऽपि असत्सतोरयं ईक्षिता द्रष्टा लौकिकः साहङ्कारो भवति इन्द्रियेष्वहमध्यासव्यतिरेकेण द्रष्टृत्वाभावात् ममतायांवा तथा त्वे वैदिकातिरिक्तसिद्धान्तेषु स्मार्त्तेषु पौराणिकेष्वपि अध्यासो मूलमिति ममतापक्षेऽप्यहङ्कारापेक्षा भगवांस्तु आनन्दमात्रकरपादमुखोदरादिरिति चक्षुषश्चक्षुरिति अहंरहितोऽपीक्षिता भवति अनेन भगज्ज्ञानं निर्विषयमेवेत्युक्तं दीपवदेव सर्वं प्रकाशयति तदा विषयदोषसम्बन्धाभावात् सतः असतश्चापीक्षिता भवति कार्यकारणयोर्वा सत्यञ्चानृतञ्चेतिश्रुतेः कार्यमेव सर्वं गुणकृतदोषसंबन्धाभावमाह । स्वतेजसेति । भगवत्तेजसैव अपास्ता दूरीकृताः तमस्तामसमज्ञानं भिदा भेदस्तत्कृतो राजसः ततो भ्रमः सात्त्विकोऽपि विश्वप्रतीतिरूपः नहि तमसि दूरीकृते तत्कृतचोरभयादयो वा सम्भवन्ति भगवतीन्द्रियादिसंबन्धप्रतीतिर्माययैव न वस्तुत इत्याह । स्वमाययेति । स्वाज्ञाकारिणी या सर्वभवनसमर्था माया तया कृत्वा आत्मनि स्वस्मिन्नेव रचितैः प्राणाक्षधीभिः प्राणेन्द्रियान्तःकरणैः सहितेषु सर्वेष्वेव देहेषु गृहेषु अभीयते प्रकाशते भगवान् स्वाधीनया स्वकीयानां देहेन्द्रियान्तरः कणानि प्रतीयन्ते तेष्वात्मप्रतीतिसिध्यर्थमात्मनि रचितैः तेष्वात्मप्रतीतिर्भवत्विति वस्तुतः सर्वत्रायमेव प्रतीयते यत्रान्यत्रापि स्थितो भगवान् न तद्धर्मैर्युज्यते तदा केवलः कथं युक्तो भवेत् अन्यत्रापि ते सर्वे धर्माः भगवदिच्छयैव भगवद्रूपाः माययान्यथा प्रतीयन्ते तत्र भगवत्येव किंवक्तव्यम अथवा लोकप्रतीत्यर्थं सदनेषु गोपिकागृहेषु यथा भगवानन्यत्रस्थोऽपि तत्रस्थ इव प्रतीयते एवं प्राणाक्षधीभिः सहितोऽप्यभीयते आत्मस्थान एव मायया तथा प्रतीत्युपपत्तेः उभयोस्तुल्यत्वात् न दृष्टान्तभाव उक्तः अर्थतस्तु साधनीयं द्वयमपि विमर्शत्वयमेवात्मा सर्वत्रेति कस्य दोषेणायं संयुक्तो भवेदित्यर्थः ॥ ११ ॥

किञ्च यदि भगवति केनाप्यंशेन प्राकृतधर्मसम्बन्धः स्यात् तदा भगवद्गुणनामादिकीर्त्तने कस्यापि पापक्षयो न स्यादित्यभिप्रायेणाह । यस्याखिलामीवहभिरिति । अखिलान्येव अमीवानि पापानि घ्नन्तीत्यमीवहानि भगवन्नामानि न केवलं पापनाशकानि किन्तु सुष्ठु मङ्गलजनकानि तैर्विमिश्रिताः अन्यदीया अपि वाचः गुणाः सत्यादयः कर्माणि गोवर्द्धनोद्धरणादीनि जन्मानि देवकीपुत्रादीनि सर्वेषां सर्वाण्येव पापनाशकानि अत एव या वाच एतद्युक्ताः ताः प्राणन्ति जीवन्ति वाचः प्राणरूपाः भगवद्गुणा इति शुम्भन्ति शोभनयुक्ताः पुष्टा भवन्ति ततः सानुभावा अपि भवन्ति जगत्पुनन्तीति यथा देहे प्राणाः अन्नं धनश्च एवं वाचि भगवद्गुणजन्मकर्माणि तथैव मनस्यपि वयो ज्ञातव्याः मनःपूर्वरूपं वागुत्तररूपमिति श्रुतेः न पृथगुभयोर्निर्द्देश उक्तः आधिक्यपरं भविष्यतीति सिद्धे साध्यवाक्यं तदाधिक्यं बोधयतीति न्यायात् इत्याशङ्क्य विपरीते बाधकमाह । यास्तद्विरक्ता इति । यथा शवानां शोभा वस्त्राभरणैः क्रियते तथाप्यमङ्गलरूपैव प्राणाभावात् तत्पोषकान्नाभावात् प्राणकार्यधर्माभावाच्च अतो भगवति शतांशेनापि प्राकृतधर्मसंबन्धो भवेत् तदैतन्न स्यादिति भावः ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शुभशकुनं पश्यन्मनोरथासिद्धिं निश्चिनोतीति । द्रक्ष्यामीति । नूनं निश्चितमेव गुडालकावृतं कुटिलकुन्तलावृतं यतः प्रदक्षिणमिति ॥९॥

ननु तद्दर्शनमसुरा अपि लभन्त एव तत्र तवैव का भाग्यश्लाघेत्यत आह । अप्यद्येति । अद्य निजेच्छयैव मनुजत्वमस्मद्वैवस्वतमनुवंशप्रादुर्भूतत्वं गतवतो विष्णोर्लावण्यधाम्नः किमुपलम्भनं यथार्थानुभवो भवितेत्यसुराणां दर्शनमात्रं ननु लावण्योपलम्भ इति भावः । ततश्च मम दृशः फलं न न स्यादपितु स्यादेवेत्यर्थः ॥ १० ॥

मनुष्याकृतेस्तस्य लावण्योपलम्भो नयनाभ्यामेव स च सांप्रतं नन्दग्राम एव अन्तर्यामिणः परमेश्वरस्य तस्य त्वनुमानेनैवोपलम्भोऽस्मदादीनां सदा सर्वत्र वर्तत एवेत्याह । य इति । असत्सतोः जीवस्याशुभशुभकर्मणोरीक्षिता अहंरहितो ऽप्यहं पश्यामीत्यहङ्कारहीनो ऽपीत्यपिकारेण जीवो देहाहङ्कारसहित एव ईक्षिता परमात्मा तु तद्देहाहङ्काररहित एव ईक्षिता द्रष्टा तदासीनः सन् साक्षीत्यर्थः । नन्वहङ्कारराहित्यसाहित्याभ्यां को विचारः देहस्थितश्चेत्तद्वृत्तिशोकमोहादिभिर्युज्यत एव न हि गृहे स्थित आसक्तोऽनासक्तो वा गृहवर्तिध्वान्तमौष्ण्यं शैत्यं वा नानुभवेत्तत्राह स्वतेजसा चिच्छक्त्या अपास्तं तमोऽज्ञानं तत्कृता भिदा भ्रमश्च येन सः यो ह्यन्तर्य्यामी स्वीयया मायया आत्मनि जीवेऽधिकरणे रचिताः सृष्टा याः प्राणेन्द्रियधियस्ताभिस्तासां स्रष्टा स ईयते अनुमीयते तथा तदीक्षया तासां प्राणादीनामीक्षया प्रकाशेन च तासां प्रकाशकः स सदनेषु समष्टिदेहेषु अनुमीयते यदुक्तं "गुणप्रकाशैरनुमीयते भवा"निति तद्रूपलावण्यानुभवो हि परमभाग्यफलमेव यस्य सङ्कीर्तनान्यपि जगदुद्धारकाणीत्याह । यस्येति । अखिलानि अखिलस्य वा अमीवानि पापानि घ्नन्तीत्यखिलामीवहानि तैः शोभनानि मङ्गलानि येभ्यस्तैर्यस्य गुणकर्मजन्मभिर्मिथो युक्ता वाचो वाक्यानि जगत्तद्वक्तृश्रोत्रात्मकं प्राणन्ति जीवयन्ति जीवयित्वा शुम्भन्ति कृपालुत्वं निर्मत्सरत्वादिभिरलङ्कारैः शोभयन्ति शोभयित्वा च पुनन्ति आविद्यकदोषात् पवित्रयन्ति व्यतिरेकमाह। या इति । तैर्गुणकर्मजन्मभिर्विरक्ता रहिता वाचः गुणालङ्कारादिमत्योऽपि शवशोभनाः शवान् शोभयन्तीति ताः प्रथमजीवतोऽपि तद्वक्तृश्रोत्रात्मकान् जनान् शवान् कुर्वन्ति तत उपमाद्यलङ्कारैरलंकारैरिव शोभयन्तीति शवशोभनाः सतां सम्मताः यद्वशः ॥ ११—१३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शुभसूचकं दृष्ट्वा हृष्यन्नाह । द्रक्ष्यामीति । मृगाः मे मम प्रदक्षिणं यथा तथा प्रचरन्ति यै हेतौ अतो हेतोः नूनं निश्चितं मुकु-

स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरवर्यशर्मकृत् ।
यशो वितन्वन् व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम् ॥ १३ ॥

तं त्वद्य नूनं महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।
रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ॥ १४ ॥

[1]अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये ।
धिया धृतं योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन् वनौकसः ॥ १५ ॥

अप्यङ्घ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपङ्कजम् ।
दत्ताभयं कालभुजङ्गरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥ १६ ॥

[1] अयं विजयध्वजे नास्ति

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न्दस्य मुखमहं द्रक्ष्यामि कथं भूतं शोभनौ कपोलौ नासिका च यस्मिन् तत् स्मितसहितो ऽवलोको यस्मिन् अरुणकञ्जे इव लोचने यस्मिन् तच्च तच्च तत् गुडालकैः वक्रकुन्तलैरावृतम् ॥ ९ ॥

फलवांश्चैव मे भव इत्येतत् प्रपञ्चयन् बहूनीतरजन्मानि निष्फलान्येव गतानीदं मनुष्यत्वं त्वद्य सफलं भविष्यतीत्याशयेनाह । अप्यद्य विष्णोरिति । अपि सम्भावनायाम् मनुष्यत्वमीयुषः बहुषु नानाविधेषु निष्फलेषु जन्मसु गतेषु मनुष्यभावमीयुषः प्राप्नुवतः मह्यं मम निजेच्छया भुवो भारावतारायावतीर्णस्येति शेषः । लावण्यस्याप्राकृतविग्रहसौन्दर्य्यस्य धाम आश्रयस्तस्य विष्णोः अद्य उपलम्भनं दर्शनं भविता भविष्यति एवं सति दृशो लोचनस्य फलं न न स्यादपितु स्यादेवेत्यन्वयः ॥ १० ॥

ननु विष्णोः सर्वत्र सतः सर्वत्र दर्शनं कुतो वा नन्दादिसदनेष्वेवेत्यत्राह । य इति । अहंरहितः प्रकृतिकार्यभूताहङ्कारोपलक्षितसर्वप्राकृतपदार्थविलक्षणः स्वतेजसा स्वप्रभावेण अपास्तं तमः संसारः असंसारित्वात् भिदा भेदः सर्वात्मत्वात् भ्रमः भ्रान्तिः सर्वज्ञत्वात् यस्मात् स जीवविलक्षण इत्यर्थः । असत्सतोः प्रकृतिपुरुषयोः ईक्षिता द्रष्टा सर्वकारणकारणः सर्वगो विष्णुर्द्रष्टा दृश्येन द्रष्टुमशक्य इत्यर्थः । तथापि स्वमायया स्वकृपया आत्मनि स्वविषये आत्मदर्शनार्थमित्यर्थः । प्राणाक्षधीभिः प्राणेन्द्रियबुद्धिभिः सह रचितैर्भावितैर्जीवैः सदनेषु नन्दालयादिषु तदीक्षया तद्दत्तया दृष्ट्या अभीयते प्रत्यक्षतो ऽभिगम्यते इत्यर्थः । य इत्यस्य स चावतीर्ण इति वक्ष्यमाणेन पद्येन सम्बन्धः ॥ ११ ॥

कृपया भावितैः प्रत्यक्षतो ऽभिगम्यते इत्युक्तं तत्र तत्कृपालक्ष्येन तद्गुणकर्मजन्मप्रतिपादकशास्त्रश्रवणेन जीवाः भाविता भवन्तीत्याह । यस्येति पद्यस्य स चावतीर्ण इत्यनेन सम्बन्धः अखिलानां ब्राह्मणादिश्वपचान्तानाममीवानि पापानि घ्नन्तीत्यखिलामीवहानि तैः सुमङ्गलैः शोभनानि मङ्गलानि येभ्यस्तैः यस्य विष्णोर्गुणकर्मजन्मभिः विमिश्रा युक्ता वाचः ये निश्चितं जगत् प्राणन्ति जीवयन्ति शुम्भन्ति शोभयन्ति पवित्रयन्ति पुनन्ति यास्तु वाचः तैर्विष्णुगुणादिभिर्विरक्ता रहिताः तास्तु वस्त्राद्यलंकृतशववत् शोभमाना मताः सम्मताः सतामिति शेषः ॥ १२ ॥

---

भाषा टीका ।

अवश्य मैं आज मुकुंद भगवान् के मुखारविंद का दर्शन करूंगा कैसा मुखारविंद है कि सुन्दर कपोल तथा नासिका से शोभित है मंदहास सहित देखने वाले लाल कमल सरीके नेत्रों से शोभित है टेढे घुंघुरारे केशों से शोभित है ऐसे मुख का दर्शन होगा जरूर यह शुभमृग मेरे दाहिने तरफ जाते हैं ॥ ९ ॥

और भी आज पृथिवी के भार के नाश करने को अपनी इछा से मनुष्य रूप को प्राप्त भये विष्णु भगवान् लावण्य मूर्ति वाले जो हैं तिनका मेरे को लाभ होगा तो दर्शन से मेरे नेत्रों का फल अवश्य ही होगा ॥ १० ॥

जो भगवान् कार्य कारण दोनों के जानने वाले होकर भी अहंकार से रहित हैं जिनने अपने तेज से अज्ञान कृत भेद भ्रम को दूर कर रखा है तौ भी उनकी माया से उन की ईक्षा से आत्मा में अभिमान युक्त जो जीव सो उनके प्राण इंद्रिय बुद्धि आदि द्वारा वृंदावन के वन गृहों में उनको देखते हैं ॥ ११ ॥

जिन भगवान् के सब पाप नाशक मंगल जो गुण कर्म जन्म तिनके चरित्रों से मिश्रित जो वाणी सो सब जगत् को जीवित करती हैं शोभित करती हैं पवित्र करती हैं और जो वाणी उन चरित्रों से रहित हैं सो तो जैसे अलंकृत मुरदा हो तैसी होती हैं ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वयं रचितान्सेतून् वर्णाश्रमधर्मान्पालयताममरवर्याणां सुखकर्ता सन्नवतीर्णः यद्यशः ॥ १३ ॥

त्रैलोक्ये एकमेव कान्तम् दृशिर्दृष्टिस्तद्वतां महानुत्सवो यस्मात् यद्वा महानुत्सव एव अत एव श्रिय ईप्सितमास्पदमेवं

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतं रूपं श्रीमूर्तिं दधानं तमीश्वरं द्रक्ष्यामीति अत्र लिङ्गम् उषसः प्रभातसमयाः सुदर्शनाः शुभदर्शनाः सुखं प्रभाता रजन्यः शुभसूचिका बभूवुरित्यर्थः ॥ १४ ॥

किञ्च अथ दर्शनानन्तरं सपदि तत्क्षणमेव रथादवतीर्णः सन्प्रधानयोः पुरुषयोरामकृष्णयोश्चरणं योगिभिरप्यात्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि आभ्यां सहानयोः सखीन् गोपांश्च नमस्यामीति ॥ १५ ॥

किञ्च अपीति । अधास्यत् धास्यति तद्विभावयति । दत्ताभयमिति सार्धेन ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं य ईक्षिता यस्य च नानागुणकर्मणां तादृङ्माहात्म्यं स तु सोऽपि स्वयं सात्वतान्वयेऽवतीर्णः सन् व्रजे आस्त इत्यन्वयः । किलेति महत्सु शान्तेषु च प्रसिद्धं प्रमाणयति । स्वसेतवो भगवद्धर्मादिमर्य्यादाः अमरवर्य्याः ब्रह्मरुद्रादयः । न केवलं तदवतारादिदर्शिनां तेषामेव शर्मकृत् । अपि त्वन्येषामपीत्याह । यश इति । तदेव प्रशंसति यद्यशो देवाः सर्वाराध्या अपि गायन्ति । यच्च परमतद्वत्तदंशावतारस्यापि लाभमाहात्म्यमाह । यस्येति । निकृष्टपर्य्यन्ताशषजीवानां मङ्गलमिति । तत्तत्कर्तृत्वञ्च नत्वस्मदादिवत् कर्मपारवश्येन किन्तु स्वातन्त्र्येणेत्याह । ईश्वर इति ॥ १३ ॥

नन्वेवं साधारण्यं चेत्तस्मात्तव किं वैशिष्ट्यं तत्राह । तं त्विति । नूनं निश्चये । तुशब्दः सर्वयादवादितोऽपि निजभाग्यवैशिष्ट्यविवक्षया अहन्त्वद्यैव तं द्रक्ष्ये महतां महाभागवतानां गतिं गम्यं गुरुञ्चोपदेष्टारमिति साध्यसाधनत्वमुक्तं रूपं सौन्दर्यम् एवं सामान्यत उक्त्वा श्रीकृष्णरूपे तस्मिन् विशेषमाह । त्रैलोक्यमधोमध्योर्ध्वलोकः स च महावैकुण्ठपर्य्यन्तः सोऽपि महानारायणपर्य्यन्तः तस्मादपि कान्तम् । अत एव स्वसहितानां तादृशामपि दृशिमतां महोत्सवं वक्ष्यते च महाकालपुरनाथेन श्रीभगवता । "द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता" इति । दृष्टश्च श्रीमदुद्धवेन विस्मापनं स्वस्य चेति । न केवलं स्वरूपवरीयसांमेव तादृशं तत् अपि तु स्वशक्तिवरीयस्या अपीति वदन् तादृशानुभगतायां हेतुमाह सर्वसौभाग्याश्रयरूपायाः श्रियोऽपि ईप्सितमीप्सा तस्या आस्पदं ननु महानारायणादिवद्भोग्यमपीत्यर्थः । तदुक्तं यद्वाञ्छया श्रीर्ललना इति । उषस इत्यनेन चिरं यद्वयो रात्रयः सुप्रभाताः सन्ति अन्यथेदृशं फलं न स्यादित्यर्थः । अथवा चतुःश्लोकीयमेवं प्रसञ्जनीया । ननु कथं तस्य तादृशं दौर्लभ्यं तल्लाभमाहात्म्यञ्च यदि च तर्हि कथं सौलभ्यं येन तवापि तादृशभाग्यश्लाघा स्यादित्यत्र विवृणोति चतुर्भिः । तत्राद्यं द्वयं कैमुत्येनाह द्वाभ्यां दौर्लभ्यं तावदाह । य ईक्षितेति । अपीति समुच्चये । सदसतोरीक्षितापि तदावेशरहितोऽपि उभयत्र हेतुः स्वतेजसेति ईक्षितेत्यादिरूपत्वे सर्वागोचरस्वरूपो यः स्वमायया स्वचीक्षया चात्मनि रचितत्वेन स्वतः सर्वसामर्थ्यहीनस्तं द्रष्टुमयोग्यैश्च जीवैः प्राणादिप्रवृत्तिचिह्नेन सदसत्स्वधिष्ठानरूपेषु सर्वभूतेषु अभीयते प्रतीयतेऽनुमीयते मात्रं न तु दृश्यते । यथोक्तं द्वितीये । "भगवान् सर्वभूतेषु लक्षितः स्वात्मना हरि"रिति । एवं "विष्टभ्याहमिदं कृत्स्न"मित्युक्तदिशा तदंशस्यापि परमदौर्लभ्यं दर्शितम् । तद्वत्तदंशावतारगणस्यापि लाभमाहात्म्यमाह । यस्येति । तथापि सौलभ्ये कारणमाह । स चेति । निगमयति । तं त्विति । तस्मान्महदेव मम भाग्यमिति भावः ॥ १४ ॥

भक्ततया दर्शनमात्रेणातृप्त्या मनोरथान्तरं कुरुते । अथेति । नमस्ये नमस्यामि इति वर्त्तमानसामीप्ये लट् । धिया अभ्यासे यच्छता सुविचारेण । धृतं दार्ढ्येन चिन्तितं योगिभिरात्मारामैरपि किं पुनर्भक्तियोगिभिः । स्वस्य भगवतः प्राप्तये आभ्यां सह वर्त्तमानान् सखीन् अनयोर्वयस्यान् आभ्यामनयोरिति वा । ननु भवदीया यादवाश्च केचित् सखायो भविष्यन्ति कुतस्तेष्वेवैतावानादरस्तत्राह । वनौकसः एकान्ते तेन सह विहारेण तेषामेव सख्यातिशयादिति भावः । यद्वा । किं पुनः सखीन् सर्वानपि वृन्दावनप्राणिनो नमस्यामीत्याह । वनेति । एवं पूर्वनमस्कारतो विशेषो ज्ञेयः । अन्यैस्तैः । तत्रेति शब्दस्यैतावदेव मम कृत्यमित्यर्थः ॥ १५ ॥

अधुना भक्तिविशेषोदयेन नमस्कारेणातृप्त्या करस्पर्शः मनोरथं करोति अपीति द्वाभ्याम् । अपि प्राकाश्ये । अङ्घ्र्योर्मूले तले विभुः प्रभुः निजं तादृशं तदीयं हस्तपङ्कजं तादृशत्वमेव दर्शयति । दत्तेत्यादिना । यद्यपि तत्प्रियजनस्य कस्यचिद्गोपस्य हस्तधारणेनापि मम कृतार्थता स्यादेव तथापि निजं किं धास्यतीति भावः । काल एव भुजङ्गः प्राणिसंहारकत्वात् अलक्ष्यगमनहेतुसाधनत्वेऽपि शीघ्रगामित्वाच्च । तस्य रंहसा अनुद्रवणेनोद्वेजितानाम् । अत एव शरणैषिणां सतां नृणां जीवमात्राणां चतुर्थ्यां षष्ठी तेभ्यो दत्ताभयम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वसेतुः स्वकृतमर्यादा ॥ १३ ॥

दृशिमतां चक्षुष्मतामुत्सवमानन्दकरम् । असवः इन्द्रियाणि सुदर्शनाः सुप्रसन्नाः ॥ १४ ॥

प्रधानपुंसोः श्रेष्ठयोः पुंसोः योगिभिरपि धिया बुद्ध्या धृतान् चरणान् अथावरूढः । जगदाधारत्वेन निरूपणे ऽनन्तः स्वलब्धये स्वसत्तासिद्ध्यर्थम अधात् दधार पादपीठव्यवधानमात्रं भूमण्डलं व्यवधानमिति भावः । आभ्यां रामकृष्णाभ्यां सहितान् सखीन् वनौकसो नमस्ये ॥ १५ ॥–॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स चेति । य एवं विधो विष्णुरीश्वरः स एव सात्वतान्वये यादवकुले श्रीकृष्णरूपेणावतीर्णः किल स्वसेतुः स्वकृतमर्य्यादा तं पालयन्तीति तथा तेषाममरवर्य्याणां दैवीं सपत्तिमभिजातानां शर्म सुखं करोतीति तथा भूतः यशः कीर्त्तिं वितन्वन् व्रजे आस्ते यशो विशिनष्टि । अशेषाणि अखिलानि मङ्गलानि यस्मात् तत् यश देवा गायन्ति ॥ १३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तामिति सात्वतां कुले ऽवतीर्णमुक्तविधमहमद्य नूनं द्रक्ष्यामि यतो मम उषसः लिङ्गव्यत्यय आर्षः उषांसि प्रभातसमयाः सुदर्शनाः प्रसन्नाः सुखप्रभाता रजन्यः शुभसूचका बभूवुरित्यर्थः। कथम्भूतं महतां स धूनां गतिं स्वप्राप्त्युपायं गुरुं हितकारिणं किञ्च रूपं विग्रहं दधानं बिभ्राणं कथम्भूतं रूपं त्रैलोक्यकान्तं त्रिलोकसुन्दरं दृशिमतां चक्षुष्मतां महानुत्सवो हर्षो यस्मात् तत् श्रियो लक्ष्म्या ईप्सितमास्पदमाश्रयभूतम् ॥ १४ ॥

किञ्चाथेति। अथास्य दर्शनानन्तरं सपदि रथादवरूढोऽहमीश्वरयोः प्रधानपुंसोः पुरुषोत्तमयो रामकृष्णयोश्चरणं नूनं ध्रुवं नमस्ये चरणं कथम्भूतं योगिभिरप्यात्मलब्धये स्वसत्तासिद्ध्यै धिया केवलं धृतं भावितं नतु दृष्टमिति भावः तत आभ्यां प्रधानपुंभ्यां सहानयोः सखीन् वनौकसो गोपान्नमस्ये ॥ १५ ॥

किञ्चाथानन्तरमङ्घ्रिमूले पतितस्य मम शिरसि विभुः कृष्णः स्वयं हस्तपङ्कजमधास्यत् आधास्यति हस्तपङ्कजं विभावयति। दत्ताभयमित्यादिना सार्द्धेन। काल एव भुजङ्गस्तस्य रंहसा वेगेन प्रोद्वेजितानां संसारभीरूणां शरणैषिणां रक्षणोपायत्वेनाध्यवस्यतां जनानां दत्तमभयं येन तत् ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अस्त्वेवं विधमाहात्म्यो भगवांस्ततः प्रकृते किमत्राह। स चेति। चशब्द एवार्थे ईश्वर एव व्रजे आस्ते किलेत्यन्वयः सात्वतामन्वये यदुकुले अवतीर्णः किङ्कार्यायेति तत्राह। स्वसेत्विति। स्वेन कृतः सेतुर्मर्यादा तां पालयन्ति रक्षयन्तीति स्वसेतुपालाः अमराणां वर्याः अमरवर्याः स्वसेतुपालानाममरवर्याणामिन्द्रादीनां शर्मकृत् सुखकृत देवकार्यायावतीर्ण इत्यर्थः। अत्र किम्प्रमाणमित्यत्राह। गायन्तीति। देवाः व्यासादयः पुराणादिषु गेयसम्भवे गानं युक्तं तत्कथमित्यत्राह। यश इति। यद्यशो वितन्वन्नास्ते अशेषाणां मङ्गलं श्रेयस्करं तद्यशः ॥ १३ ॥

स्वमानसं प्रति वक्ति। तं त्विति। अहमद्य तमेव द्रक्ष्ये इत्यन्वयः दृशिमतां चक्षुष्मतां महोत्सवं त्रैलोक्यकान्तं कमनीयं रूपं दधानं "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा" इति श्रुतिः ममाद्य उषसः प्रभातकालावयवा क्षणादयः सुदर्शनाः सर्वजगत्पूज्यवस्तुदर्शनप्रदा आसन्नित्यन्वयः ॥१४॥ ० ॥

कालाख्यभुजङ्गस्य रंहसा रंहोलक्षणविशेषेण अधास्यत् धास्यति धरिष्यत्यपि किम् ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

निगमयति। तं त्विति। तस्मान्महदेव मम भाग्यमिति भावः ॥ १४ ॥

आभ्यां सह वर्त्तमानान् सखीन् वनौकस एकान्तविहारेण सख्यातिशययुक्तानित्यर्थः ॥ १५—१७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतादृश एवायमवतीर्णो ननु धर्मतिरोभावेनेति वक्तुमाह। सचावतीर्ण इति। चकारात अन्तर्यामितयावतीर्णोऽपि पुनर्बहिरप्यवतीर्ण इति चकाराद्बलभद्रं वा शेषरूपः किलेति प्रसिद्धिः प्रमाणं महतो यत्र काप्यवतारो न भवतीति सात्वतान्वय इत्युक्तं यादवाः सर्वे वैष्णवाः तेषां वंशप्रसिद्ध्यर्थं वा अवतारप्रयोजनमाह। स्वस्य सेतुपालाः भगवता कृता जगति या मर्यादा तस्याः पालका देवा इति तेषामवताराणां शर्म सुखं यथैव भवति तथैव करोति अवतारेणैव भवतीति अवतारं करोतीत्यर्थः। मुख्यं प्रयोजनमाह। यशो वितन्वन्निति। अग्रे जनिष्यमाणानां मोक्षार्थं यावन्ति कर्माणि सिद्धानि न भवन्ति तावद्व्रज आस्ते ननु व्रजे स्थितौ किम्प्रयोजनम् उत्कृष्टस्थाने स्थितेनैव तथा कर्त्तुमुचितमितिचेत्तत्राह। ईश्वर इति। अपकृष्टे स्थाने स्थित्वा तादृशं कर्म कुर्वन् सर्वेषां मोक्षं साधयतीति रहस्यसिद्धान्ते चैतत्साधितम् अत एव यद्भगवतश्चरित्रं सर्वे गायन्ति विशेषतो देवाः यस्मादशेषस्यापि मङ्गलभूतं भवतीति ॥ १३ ॥

एवं भगवतो माहात्म्यमुक्त्वा सम्यगलौकिकत्वं सम्पाद्य तद्दर्शनं पुरुषार्थो भवतीति कामयते। तंत्वद्येति। तं पूर्वोक्तं नूनशब्देन प्रातीतिकं पक्षं व्यावर्त्तयति अद्यैव द्रक्ष्यामि नूनं नात्र सन्देहः किन्तु निश्चितमेवैतत् भगवतः पुरुषोत्तमत्वप्रतिपादनाय सर्वफलरूपत्वमाह। महतामेव फलं भवतीति तेषां गतिः गम्यः फलमिति यावत् साधनमपि स एवेत्याह। गुरुमिति। उपदेष्टापि स एव ज्ञानं ज्ञानोपदेष्टा च एवम्वैदिकप्रकारेणाह। त्रैलोक्यकान्तमिति। कान्तः पतिः सुन्दरश्च किञ्च विशेषतो दृशिमतां ज्ञानवतां वा महानुत्सवो भवति उत्सवः फलं भवतीत्यविवादं सर्वेषामेव पतिरपेक्ष्यत इति लौकिकं द्वयमपि फलम् एवं लौकिकवैदिकफलरूपं दधानमिति दर्शनं महाफलमिति सूचितं किञ्च लोके सर्वपुरुषार्थरूपा लक्ष्मीः "तया विना क देवत्व" मित्यादिवाक्यात् तस्या अपि ईप्सितमास्पदं स्थानं दर्शने आवश्यकं लक्षणमाह। ममासन्नुषसः सुदर्शना इति। एते प्रातःकालाः अद्यतनाः प्रतिक्षणं सुष्ठु दर्शनं येषां तथाविधाः प्रतिक्षणमानन्दजनका दृश्यन्ते ॥ १४ ॥

एवं दर्शनमनोरथमुक्त्वा दर्शनानन्तरमनोरथमाह। अथावरूढ इति। रथावरूढ उत्तीर्णः भगवद्दर्शनानन्तरं सम्भावितदर्शने वा ईशयोः चरणं नमस्ये इति आवेशावतारयोः चरणभेदो नास्तीत्येकवचनं ननु बालकयोः कथन्नमस्कार उचित इति चेत् तत्राह। प्रधानपुंसोरीशयोरिति। मातापित्रोरपि स्वामिनोरिति भावः। अतो गर्भदासाः सर्वे एवेत्युक्तं भवति ननु नमस्कारे किम्प्रयोजनं दर्शनेनैव सर्वं पुरुषार्थसिद्धिरिति तत्राह। स्वलब्धये योगिभिरपि धिया धृतमिति। आत्मप्राप्त्यर्थं यत्पदं बुद्ध्या मानसिकं ध्रियते तत्साक्षान्नमस्कृतं किञ्चिन्न करोतीति नमस्कारमनोरथोऽपि युक्त इत्यर्थः। तद्दर्शनेन नमस्कारेण मोक्षः प्रार्थ्यत इत्याशङ्क्य तन्निवृत्त्यर्थं भक्तिरेव सिध्यत्वित्यभिप्रायेणाह। आभ्यां सह एतत्सखीन् गोपाला-

**समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् ।**
**यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगन्धिकगन्धपपानुदत् ॥ १७ ॥**

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अपि नमस्य इति ततो व्रजौकस एव सर्वान्नमस्य इति भगवद्धर्माणां सर्वेषामेव सर्वोत्कृष्टत्वज्ञानं भक्तिहेतुरिति ॥ १५ ॥

ततो भगवत्प्रसादरूपमनोरथमाह । अप्यङ्घ्रिमूले पतितस्येति । अत्युद्रेकात् शनैर्न नमस्कारः किन्तु चरणमूले पातः नन्वदृष्टपूर्वे त्वयि कथम्भगवान् कृपां करिष्यतीतिचेत्तत्राह । विभुरिति । स हि ज्ञाने प्रसादे च समर्थः अप्यधास्यत् "आशंसायां भूतवच्च" ति अपीति सम्भावनायां प्रायेण हस्तं धास्यतीति धारणेनैव महत्सुखं भविष्यतीति अन्यदपि ततः फलं भविष्यतीति हस्तपङ्कजं वर्णयति । दत्ताभयमिति । पङ्कजं हि जलकार्यं करोति विपेहि जलेन प्रतीकारः तापरूपत्वाच्च अत्रापि काल एव भुजङ्गः तस्य रंहसा वेगेन प्रोद्विजितानां दंशे तु मन्त्राद्यपेक्षा केवलं दृष्ट्वैव भीताः पलायिताः कालो ग्रसिष्यतीति त्यक्तपरिग्रहाः सन्न्यासिनः विवेकिनो वा गृहस्थाः ते च ते भगवच्छरणान्वेषिणः अन्ये पुनर्दैवादियोनयः साधनं कर्त्तुं शक्ताः पश्वादयस्त्वशक्ता एव अत उक्तं नृणामिति अभयं प्रयच्छति पङ्कजमिति जले स्थिते कमले यः प्रविशति तस्य न भवत्येव सर्पभयं जले विषस्य न पराक्रमः नापि कमलं सर्पः प्रविशति ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दृशिमतां चक्षुष्मतां महोत्सवस्वरूपं श्रियो विष्णुवक्षः स्थलस्थितायाअपि लक्ष्म्या ईप्सितानां रतिरासविलासादीनामास्पदं रूपं दधानं तमीश्वरं द्रक्ष्यामि अत्र लिङ्गम् उपसः प्रभातसमयाः सुदर्शनाः शुभसूचका बभूवुरित्यर्थः । बहुवचनेन बह्वीनां रात्रीणां श्रेयः अन्यथैतदर्शं फलं न स्यादिति भावः ॥ १४ ॥

अथ दर्शनानन्तरमेव रथात् अवरुह्य सपदि अवरोहणसमय एव प्रधानयोः श्रेष्ठयोः पुंसो रामकृष्णयोश्चरणं योगिभिरपि आत्मलाभाय केवलं धियैव धृतं साक्षादहं नमस्यामि आभ्यां सहितान् सखींश्च नमस्यामि वार्तमानसामीप्ये लट् ततो वनौकसः सर्वान् व्रजवासिनोऽपि ॥ १५ ॥

ततश्च अपीति । अधास्यत् धास्यति हस्तपङ्कजं विशिनष्टि । दत्ताभयं नृणामिति चतुर्थ्यर्थे षष्ठी ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स उक्तप्रकारः स्वसेतुर्भगवद्रचितो धर्मसेतुस्तत्पालानाम् अमरो विष्णुर्धर्म्यः पूज्यो येषां तेषां शर्म सुखं करोतीति तथा अशेषाणि सम्पूर्णानि मङ्गलानि यस्मात् तदशेषमङ्गलं यच्च देवा ब्रह्मादयो गायन्ति तत् यशो वितन्वन् सात्वतान्वये यादवानां वंशे अवतीर्णः सन् व्रजे आस्ते ॥ १३ ॥

उपसः प्रभातसमयाः प्रभाता रजन्यो मम सुदर्शनाः शुभसूचकाः आसन् अतो नूनं निश्चितमुक्तप्रकारमच्युतं द्रक्ष्यामि कथं भूतं महतां गतिं गम्यते इति गतिः प्राप्यं गतिं स्वप्राप्तिसाधनं गुरुम् उपदेष्टारं त्रैलोक्ये एकमेव कान्तं सुन्दरं दृशिमतां दृष्टिमतां महानुत्सवो यस्मात्तम् श्रियः ईप्सितं वाञ्छितमास्पदमाश्रयं रूपं विग्रहं दधानं बिभ्राणम् ॥ १४ ॥

किञ्च अथ दर्शनानन्तरं सपदि रथादवतीर्णः प्रधानयोः सर्वश्रेष्ठयोः पुंसोः रामकृष्णयोश्चरणं योगिभिः ध्यानयोगनिरतैर्मुमुक्षुभिरपि स्वलब्धये अपहतपाप्मत्वादिगुणयुक्तस्वरूपलब्धये भगवत्साधर्म्यसिद्धयै धियैव केवलं धृतं भावितम् अहं तु साक्षान्नमस्यामि अहो मम भाग्यमिति भावः । किञ्च आभ्यां प्रधानपुंभ्यां सह अनयोः सखीन् गोपांश्च नमस्यामि किं बहुना श्रीकृष्णसंबन्धित्वाद्वनौकसः सर्वजन्तूनपि ॥ १५ ॥

शिरसि भगवद्धस्तस्पर्शं लब्ध्वा कृतार्थो भविष्यामीत्याशयेन तत्स्पर्शं तत्प्रभावञ्च चिन्तयति । अपीति द्वाभ्याम् । निजहस्तपङ्कजम् अधास्यत् धास्यति कथम्भूतं काल एव भुजङ्गस्तद्रंहसा वेगेन प्रोद्विजितानां मुमुक्षूणां शरणं रक्षितारमिच्छतां दत्तमभयं येन तम् ॥ १६ ॥

---

### भाषा टीका ।

यही भगवान् अब यादवों के वंश में अवतीर्ण भये हैं अपने बनाये धर्म मर्यादा के पालन करने वाले देवता आदि कों की रक्षा करके सुख देत हैं वे ईश्वर जिस यश का विस्तार करते हैं संपूर्ण जगत् के मङ्गल करने वाले उस यशको सब देवता गान करते हैं ॥ १३ ॥

वे भगवान् महा पुरुषों के गुरु हैं सब के गति दाता हैं त्रैलोकक प्रिय पति हैं दर्शन करने वालों के नेत्रों के उत्सव दायक हैं लक्ष्मीजी के अत्यंत स्थान रूप प्रिय रूपको धारण किये हैं आज निश्चय है कि मैं उन भगवान् का दर्शन करूंगा क्यों कि मेरेः सुप्रभात के शुभके सूचक भये हैं ॥ १४ ॥

इसके अनंतर मैं रथ में से उतर कर शीघ्र ही प्रकृति पुरुषों के ईश्वर दोनों के चरणों को नमस्कार करूंगा जिन चरणों को अपने लाभ के वास्ते सब योगियों ने हृदय में धारण किया है और इन दोनों के साथ उनके सखा वन व्रज वासियों को भी नमस्कार करूंगा ॥ १५ ॥

क्या विभु भगवान् चरण के नीचे गिरे हुये मेरे मस्तक पर हस्तकमल को धारण करेंगे जो कि हस्तकमल काल रूपी सर्प के वेग से डरते हुये शरण की इच्छा करने वाले मनुष्यों के अभय के देने वाला है ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

बलिना तावत्पदत्रयपरिमितभूदानसमये तस्य हस्ते उदकं निहितम् कौशिक इन्द्रस्तेनापि कदाचित्किञ्चिन्निहितमिति

न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोऽपि विश्वदृक् ।
योऽन्तर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥ १८ ॥
अप्यङ्घ्रिमूलेऽवहितं कृताञ्जलिं मामीक्षिता सस्मितमार्द्रया दृशा ।
सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशङ्क ऊर्जिताम् ॥ १९ ॥
सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् ।
आत्मा हि तीर्थीक्रियते तदैव मे बन्धश्च कर्मात्मक उच्छ्वसित्यतः ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ज्ञातव्यम् मुमुक्षूणां संसारभयनिवर्त्तकं सकामानामभ्युदयप्रदं चेत्युक्तमनुरक्तानां परमसुखदं चेत्याह । यद्वेति वाशब्दो वितर्के विहारे रासक्रीडायां सौगन्धिकस्य गन्ध इव गन्धो यस्य तत्सौगन्धिकगन्धि ॥ १७ ॥

एवं परमानुग्रहं सम्भाव्य पुनरप्यसम्भवमाशङ्क्य परिहरति । न मयीति । यद्यप्यहं कंसेन प्रहितोऽतस्तस्य दूतस्तथापि मय्यरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः । यतो विश्वदृक् सर्वज्ञोऽतो मम चेतसोऽन्तश्च बहिश्च यदीहितं चेष्टितमेतद्यः क्षेत्रज्ञोऽन्तर्यामी नित्यज्ञानेनेक्षते अयं भावः चेतसो बहिरेव कंसमनुवर्तेऽन्तस्तु कृष्णमेव तदेतदसौ हृदि स्थितो जानातीति यद्वा एतस्य जगत ईहितमिति ॥ १८ ॥

अपि यदङ्घ्रिमूले चरणोपान्तेऽवहितं संयतं कृपामृतेनार्द्रया दृशा मामीक्षिता द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः परां मुदं वोढा प्राप्स्यामीति ॥ १९ ॥

अथ मां परिरप्स्यत आलिङ्गिष्यति यदा तदैव मे आत्मा देहस्तीर्थी क्रियतेऽतिपवित्रीकरिष्यते उच्छ्वसिति श्लथो भविष्यति अतो देहात् ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनरपि तदेव हस्तपङ्कजं विशिषन् स्वमनोरथं प्रचलयति । समर्हणमिति । सम्यगर्ह्यते पूज्यते येन तत् समर्हणं दानसङ्कल्पोदकं कौशिकस्य तत्रिधानं शतक्रत्वनन्तरसमये देयं तत्कराश्रयत्वादिन्द्रपदस्य । बलिश्च जगत्त्रयेन्द्रतामापेति प्रथमत एव फलस्यापूर्वरूपत्वेनोदयात् । तथैवोक्तं श्रीविष्णुपुराणे । "यत्राम्बुविन्यस्य बलिर्मनोज्ञानवाप भोगान् वसुधातलस्थः । तथामरत्वं त्रिदशाधिपत्यं मन्वन्तरं पूर्णमपेतशत्रु"रिति । अस्य निष्कामत्वन्तु तच्छिरसि श्रीत्रिविक्रमचरणधारणात् अनन्तरमेव ज्ञानं तथापीश्वरेच्छयैव श्रीप्रह्लादवत्तदङ्गीकारः । तदेवं पूर्वार्द्धे तस्य वदान्यस्वभावत्वेन सकामभक्तेषु सर्वसमृद्धिप्रदत्वमुपलक्ष्य परमानन्दस्वरूपत्वेन स्वैकान्तिकेषु सर्वदुःखनिवर्त्तकत्वमुपलक्षयति । यद्वेति वाशब्दो वितर्के । कस्माच्चित् किञ्चित् श्रुत्वा वितर्कयामीत्यर्थः । यदेव हस्तपङ्कजं सौगन्धिकेषु दिव्यपङ्कजविशेषेषु गन्धो गुणलेशो यस्य तादृशं व्रजयोषितां कोटिसङ्ख्यानां विहारे रासाख्यनृत्यक्रीडाविशेषश्रमं पुनः पुनरावेशान्मूर्च्छापर्य्यन्तं किम्वा होरिकारूपे शङ्खचूडोपद्रवाद्त्रासेन मूर्च्छामयं स्पर्शेन तन्मात्रेण युगपदपानुदत् इत्यर्थः । ततः पूर्ववदत्रापि शब्द स्वरसयोग्यांश एव चिन्तितः । तत्र गोपीनां तत्पत्नीनाञ्चेति पद्यद्वये यथा स्वामिभिर्व्याख्यातं तद्वदेवं प्रायस्तद्विधानामभिप्राय इति ॥ १७ ॥

अथार्त्तस्वभावेन चिन्तामतिभ्यामाह । न मयीति । अच्युतः अलुप्तज्ञानैश्वर्य्य इत्यर्थः । अत एव विश्वदृक् ॥ १८ ॥

किल्बिषं कंससेवादिलक्षणं वीता अपगता विविधा शङ्का यस्य तथा भूतः सन् । अन्यत्तैः । तत्र यदीति निश्चये । धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नीतिवत् । यद्वा । तदेवं निश्चित्याप्यतृप्तिस्वभावेन मनोरथान्तरं करोति । अपीति ॥ १९ ॥

तेनाप्यतृप्त्या मनोरथान्तरं करोति । सुहृत्तममिति । सुहृत्तमं परममित्रं श्रीवसुदेवादिहितकारित्वात् । बृहद्भ्यामिति गाढालिङ्गनमभिप्रेतं हि निश्चितम् । अतीर्थमपि तीर्थं क्रियते तत्परिरम्भणेनेति शेषः । इति दैन्योक्तिः । एवकारेणान्यनैरपेक्ष्यमुक्तं कर्म प्रारब्धलक्षणं तन्मयो बन्धो बन्धनम् । अन्यत्तैः । तत्र आत्मा देह इत्येव लेखनं युक्तम् । असाविति मूलपाठाभावात् । अथवा परेषामपि पावनत्वात्तीर्थी क्रियते न केवलमेतावत् अपित्वतो देहाद्धेतोरस्य वीक्षणादिना तेषां कर्मात्मकबन्धश्चोच्छ्वसिति ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्हणम् अर्घ्यजलं तद्धस्ते कर्मभिश्च कौशिक इन्द्रः ॥ १७ ॥

यद्यप्यहं कंसस्य भृत्यभूतस्तेन प्रहितस्तथापि विश्वदृक् स मयि न शत्रुबुद्धिमुपेयात् क्षेत्रज्ञः युगपत्सर्वाणि क्षेत्राणि जानातीश्वरः एतदीहितं चेतसो व्यापारं चेतसोऽन्तर्बहिस्तिष्ठन् य ईक्षते इत्यर्थः । "यो मनसि तिष्ठ"न्निति श्रुतेः ॥ १८ ॥

वीतशङ्कः गतशङ्कः ॥ १९ ॥

तीर्थी क्रियते पवित्रीक्रियते उच्छ्वसिति शिथिली भवति ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किञ्च यत्र यस्मिन् हस्तपङ्कजे बलिर्वैरोचनिः पदत्रयपरिमितभूदानसमयेऽर्हणमर्घ्यजलं निधाय जगत्त्रयेन्द्रतां जगत्त्रयाधिपत्यं प्राप प्राप्स्यति भाविनि मन्वन्तरे इन्द्रो भविष्यतीत्यर्थः तथा कौशिक इन्द्रोऽपि कदाचिदर्घ्यं निधाय जगत्त्रयेन्द्रतां प्राप्तवानिति प्रसिद्धिमुपजीव्येत्थमुक्तम् एवं मुमुक्षूणां मोक्षदं सकामानामभ्युदयप्रदञ्चेत्युक्तम् अनुरक्तानां परमसुखदञ्चेत्याह। यद्वेति वाशब्दो वितर्के उक्तसमुच्चयद्योतको वा निपातानामनेकार्थत्वात् यद्वेत्यर्थः व्रजयोषितां विहारे यः श्रमस्तं सौगन्धिकगन्धि यद्धस्तपङ्कजं कर्तृ अपानुदत् दूरीचकार सौगन्धिकस्येव गन्धो यस्य तत्सौगन्धिकगन्धि सौगन्धिकं कमलजातिविशेषः ॥ १७ ॥

एवं परमानुग्रहं सम्भाव्य पुनरप्यसम्भवमाशङ्क्य परिहरति। न मयीति। यद्यप्यहं कंसेन प्रहितः प्रेषितस्तस्य भृत्यश्च तथापि न मयि अरिबुद्धिम् अरेरयमिति बुद्धिं नोपैष्यति न करिष्यतीत्यर्थः यतः स विश्वदृक् सर्वसाक्षी विश्वदृक्त्वमेव प्रपञ्चयति क्षेत्रज्ञः युगपत्सर्वाणि क्षेत्राणि जानन्नीश्वरः नियन्ता च सन् एतन्मच्चेतस ईहितं व्यापारं चेतसोऽन्तर्बहिश्च वसन् "यो मनसि तिष्ठन्निति" श्रुतेः योऽमलेन सङ्कोचविकासरूपविकाररहितेन चक्षुषा धर्मज्ञानेन ईक्षते सर्वं युगपत् साक्षात्करोति अयम्भावः बहिरेवाहं कंसमनुवर्त्ते अन्तस्तु कृष्णमेव तदेतदसौ हृदिस्थो जानातीति ॥ १८ ॥

अपि तच्चरणोपान्ते ऽवहितं संयतं बद्धाञ्जलिञ्च मां स्मितेन सहितं यथा तथा कृपामृतेनार्द्रया दृशा दृष्ट्या द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः विगतशङ्कश्चोर्जितां प्रभूतां मुदं वोढा प्राप्स्यामि ॥ १९ ॥

किञ्च सुहृत्तमं ज्ञातिं न विद्यते यस्मादन्यद्दैवतं यस्य तं मां पृथुभ्यां दीर्घाभ्यां भुजाभ्यां परिरप्स्यते आलिङ्गिष्यति यदा तदैव मम आत्मा देहः तीर्थी क्रियते पवित्री करिष्यते अतो हेतोर्मम कर्मात्मकः बन्धश्च उच्छ्वसिति शिथिली भविष्यति ॥ २० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यत्र निजहस्तपद्मे समर्हणं जलपूर्वपूजां निधाय दत्त्वा कौशिकः इन्द्रः जगत्त्रयेन्द्रतामाप महाबलिश्च तथा इन्द्रवत् यद्धस्तपङ्कजं सौगन्धिकस्य कह्लारस्य गन्ध इव गन्धोऽस्यास्तीति विहारे वनक्रीडायाम् अपानुदत् निराकरोत् ॥ १७ ॥

ननु किं तव बुद्बुप्रलापेन यतस्त्वं कंसभृत्यः तत्प्रहितश्च अतस्त्वय्यप्रियबुद्धिं कुर्यादच्युत इति मन्दाशङ्कां परिहरन्निवाह। न मयीति। नोपैष्यति किं नोपैत्येवेत्याह। विश्वदृगिति। विश्वदृक्त्वान्मम मनोनैर्मल्यं विजानातीत्यर्थः। एतदेव विवृणोति। य इति चेतस एतदीहितं सङ्कल्पलक्षणं चेष्टितम् अन्तर्बहिश्च स्थितमिति व्याप्तिकथनमात्रेण चेतनस्य चेष्टितसाक्षित्वं सम्यङ्न विवृतं स्यादिति क्षेत्रज्ञ इत्युपादत्त "इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते" इत्यादिना क्षेत्रज्ञशब्दार्थः सम्यग्विवृतः ॥ १८ ॥

दयार्द्रया दृशा मां सस्मितमीक्षते किम् ईक्षणफलमाह। सपदीति। ईक्षणानन्तरमपास्तकिल्बिषः सन्याङ्घ्रिराकृताशुभोऽत एव वीता विविधा शङ्का यस्य स वीतशङ्को ऽहमूर्जितामुद्रिक्तां मुदं वोढा वहिष्यामीत्यन्वयः ॥ १९ ॥

अथ यदा परिरम्भणे हेतुमाह। सुहृत्तममिति। अन्यदैवतमिष्टप्रदं यस्य नास्ति स तथा परिरम्भणात् किं फलमाप्तं भवतीति तत्राह आत्मेति। अतोऽस्मात् परिरम्भणात् आत्मा देहस्तीर्थीक्रियते शुद्धजलवत्क्रियते पात्रीक्रियते वा ज्ञानदानाय योग्यो भवतीत्यर्थः अन्येषां भगवद्भक्तौ बुद्ध्यवतारीक्रियते वा ज्ञानोपदेशाय वाधिक्रियते वा किमत इत्यत्राह। बन्धश्चेति। कामात्मकः विषयतृष्णालक्षणो बन्धः उच्छ्वसिति निर्वीर्यः छिन्नो भवतीत्यर्थः च उच्छेदेऽपि समुच्चये अतो देहहेतुको वा प्रवाहरूपेण सत्यो वा ॥ २० ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथार्त्तिस्वभावेन चिन्तामतिभ्यामाह। न मयीति। परेषामपि पावनत्वात्तीर्थीक्रियते न केवलमेतावदेव। अपि तु अतो देहाद्धेतोरस्य वीक्षणादिना तेषां कर्मात्मकबन्धश्चोच्छ्वसिति न तस्येत्यत्र सिद्धान्तः परमात्मसन्दर्भे त्रिनवतितमवाक्यस्यावतारिकाप्रघट्टके दृश्यः देहं भृतां देहभृताम् ॥ १८—३२ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमनिष्टनिवारकत्वेन चरणं संस्तूय इष्टदातृत्वेनापि स्तौति। समर्हणमिति। यत्र हस्ते समर्हणं निधाय देयं किञ्चित्समर्प्य कौशिकः इन्द्रः बलिश्च जगत्त्रयेन्द्रतामवाप अयमिन्द्रः पूर्वजन्मनि कौशिकगोत्रे उत्पन्नः बलिरिव भगवद्धस्ते सर्वं निवेदितवान् तस्य कथा काचित्प्रसिद्धा भविष्यति बलेस्तु प्रसिद्धैव अवापेति प्रवाहनित्यत्वात् पूर्वमपि बलिरैन्द्रं पदं प्राप्तवानिति "छन्दसि लुङ्लङ्लिटः" इति भविष्यदर्थे वा लिट् एवं प्रभुत्वेन अनिष्टनिवारकत्वमिष्टदातृत्वं चोक्त्वा मित्रवदपि कार्यं करोतीत्याह। यद्वा विहार इति। व्रजयोषितां सम्बन्धिनि विहारे तासां श्रमं सौगन्धिकगन्धि सौगन्धिकपुष्पवत् गन्धयुक्तं श्रमजलमपानुदत् वायुना हि श्रमो गच्छति त्रिगुणेन तद्धस्तेनापि गतमिति सूचयितुं श्रमजलसम्बन्धः मान्द्यञ्च सिद्धमिति सौरभ्यार्थं तथोक्तवान् अनेन नित्यं स भगवच्चरित्रानुसन्धानं करोतीति सूचितं वेति वह्वर्थसूचनार्थम् अनेन सर्वेषामेव धर्मान् करोतीति सर्वफलदातृत्वं सूचितम् ॥ १७ ॥

ननु शत्रुरेव भवान् शत्रुकार्यं च साधयतीति कैश्यादेरिव तवापि वधमेव करिष्यति न तु प्रसादमित्याशङ्क्याह। न मय्युपैष्यतीति। मयि अरिबुद्धिं नोपैष्यति शत्रुरयमिति नाङ्गीकरिष्यति तत्र हेतुरच्युत इति अच्युतत्वात् तस्य न कुतश्चिद्भयम् अतः स्वापकारकत्वेन न कोऽपि भगवतः अरिः दैत्यानां मारणन्तु तेषां लोकानां चोपकाराय यद्यप्यहं कंसस्य दूतः तेनैव प्रेषितः मां प्रति यावदुक्तं तावच्च करिष्यामि ततो लोकदृष्ट्या अरिबुद्धिः कर्त्तव्या तथाप्यच्युतत्वान्न करिष्यति मारणनिमित्तं तु मयि नास्तीति भावः। किञ्च विश्वदृक् व्याजेन अपकारार्थं प्रवृत्त इति ममैव हितार्थं वधं कुर्यात् तद्भगवति व्याजो न सम्भवति यतो विश्वमेव पश्यति इदञ्च ज्ञायत इति न व्याजञ्च करिष्यामि नाप्यतिक्रमम् अस्मिन्नर्थे प्रमाणमाह। योऽन्तर्बहिरितिचेतसोऽन्तर्बहिश्चेहितं भगवानीक्षते कदाचिदपि चित्तवृत्तिरेतादृशी भवेत् तदा

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

मारणमेवोचितमन्यथा तु न मारयिष्यति किंच एतदपि चित्तो-हितं विश्वासरूपं भगवान् जानाति स्वरूपे स्थित एव जानाति प्रकारान्तरेणापि जानातीत्याह । क्षेत्रज्ञ इति । सर्वं क्षेत्रं जानातीति शरीरं क्षेत्रं "महाभूतान्यहङ्कार" इत्यादिना निरूपितं सविकारं क्षेत्रदर्शनेऽपि विशेषमाह अमलेन चक्षुषेति चक्षुषः चक्षुषा तदात्ममेव भवति अमलं चक्षुर्वस्तुयाथात्म्यमेव गृह्णाति अतः सर्वमेव भगवतः प्रत्यक्षमिति मद्वृत्तान्तं जाना-तीति न मय्यरिबुद्धिः चित्तस्य बहिः कार्यमान्तरमिच्छाज्ञानञ्च इच्छामध्य इति केचित् एवं सति चित्तस्य चिदानन्दसद्रूपता भवति ॥ १८ ॥

ननु तथापि संसर्गदोषात् अन्नादिदोषाच्च त्वां नाङ्गीकरिष्य-तीत्याशङ्क्य तत्परिहारम्मनोरथमाह । अप्यङ्घ्रिमूलेऽवहितमिति । पूर्वपुण्यवशात् अहं पादयोः पतिष्यामि ततः अपराधे गते मयि दया उत्पत्स्यते नष्टो जायत इति तदा दयादृष्ट्या सप-देवापध्वस्तसमस्तकिल्बिषो भूत्वा मुदं परमानन्दं वोढा वहिष्यामि वीतविशङ्कश्च ततः प्रभृति भविष्यामि ऊर्जितश्च चरणमूले पतितो ऽवश्यं दृश्यते अन्यथाग्रे गमनं न भवेत् कदा-चिदाक्रम्योल्लङ्घ्य वा अन्यचित्तो गच्छेदित्याशङ्क्याह । अवहित-मिति । अहं सावधान आत्मानं ज्ञापयिष्यामि प्रपन्नोऽहमिति नान्यथा बुद्धिर्भविष्यतीत्येतदर्थमाह । कृताञ्जलिमिति । अत एव मामी-क्षिता अवश्यं द्रक्ष्यति तत्र प्रमाणमाह । असाविति । इदानीमेव प्रत्यक्षो जातः तदा किंवक्तव्यमिति मम प्रवृत्तिं पूर्वदौरात्म्यञ्च स्मृत्वा सस्मितोऽपि भविष्यति ततः प्रवृत्तिं ज्ञात्वा आर्द्रापि दृष्टि-र्भविष्यति एवम्भगवतः दृष्टिमन्दहासस्नेहेषु जातेषु देशकालक-र्मापेक्षाया निवृत्तत्वात् सपदेव गतपापो भविष्यामि वासनापि गमिष्यति मां परित्यज्य अधस्तादेव पतिष्यति भगवता ममै-तावानुपकारः कृत इति फलसिद्ध्या निरन्तरं सन्तोषं च प्राप्स्यामि पूर्वं यावानपराधः कृतः तावानग्रे न भविष्यतीति पूर्वस्य चेद्भगवान् निवारको जातः अग्रे कः सन्देहो भविष्य-तीति वीतशङ्कः शङ्कैव न भविष्यति ततो भगवदीयकार्येषु वा ऊर्जितः समर्थश्च भविष्यामि एतस्य सर्वस्य सर्वस्यापि मूलं दर्शनमेव ॥ १९ ॥

ततो मनोरथान्तरमाह । सुहृत्तममिति । भगवान् वृहद्भ्यां दोर्भ्यां मां परिरप्स्यते किं तथा चेदात्मा मे देहः तीर्थीक्रियते अतीर्थभूत-मपि तीर्थं भविष्यति लोकानामभ्युद्धारं करिष्यति किम्पुनर्म-मेति आलिङ्गनं त्रयाणां भवति अन्तःकरणसम्बन्धिनां देहसं-बन्धिनां शास्त्रतो भक्तानाञ्च अहन्तु त्रिरूपोऽपीति ममालिङ्गनं करिष्यत्येव सुहृत्तमोऽस्ति स्निग्धः ज्ञातिर्गोत्रजः न विद्यते अन्यत् दैवतं यस्य सुहृत्तमत्वं लोके सन्दिग्धमपि स्वानुभवान्निर्णीतमिति सिद्धवत्कारेणोक्तं हेतुत्रयं बाधाभावाय आवश्यकत्वाय कार्याय च देहे आत्मपदप्रयोगः भगवत्स्पर्शात् स्पर्शो वा तस्योत्तमत्वख्यापनाय युक्तश्चायमर्थः सर्वाङ्गे चरणो हीनः तत्र चेद्गङ्गादितीर्थान्युत्पद्यन्ते तत उत्तमाङ्गेषु ततोऽपि बहून्येव तीर्थानि निर्गच्छन्तीति परिर-म्भणानन्तरं निर्गतो देहः गङ्गाद्यपेक्षयापि महानेव भवति तद्दे-हेत्यग्रेणैव संबन्धः तदैव जातो ऽग्रेऽप्यनुवर्त्तत इति तदैव कर्मात्म-

कश्च बन्ध उच्छ्वसिति विदीर्णो भवति अनेन स्वपरोपकार उक्तः अतोऽस्मात् शरीरात् मत्तो हेतोर्वा ॥ २० ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत्र हस्तपङ्कजे सम्यक् अर्ह्यते पूज्यते येन तत् समर्हणं दानसङ्कल्पोदकं निधाय कौशिकः पुरन्दरः बलिश्च जगत्त्रये-न्द्रत्वमवाप तत्र सार्वभौमावतारे पुरन्दरेण वामनावतारे बलिना तस्य हस्ते उदकं दत्तं तत्र पुरन्दर इन्द्रत्वमाप बलिरा-प्स्यतीति बोद्धव्यम् यत् हस्तपङ्कजं वाशब्दो वितर्के विहारे रास-क्रीडानन्तरसम्प्रयोगे श्रमं विहारश्रमोत्थप्रस्वेदाम्बु अपानुदत् मार्जयामास यदुक्तं "तासां रतिविहारेण श्रान्तानां वदनानि सः प्रामृजत् करुणः प्रेम्णा सन्तमेनाङ्गपाणिने"ति तेन तस्य पादपङ्कजं ब्रह्मा-द्यर्चितमपि यथा तासां कुचोच्छिष्टकुङ्कुमधारकमुक्तं तथा हस्त-पङ्कजमपीन्द्राद्यर्हितं तासां श्रमाम्बुमार्जकमित्यहो तासां परमोत्क-र्षमाधुरी ध्वनिः पङ्कजमपि कीदृशं स्पर्शेन तासां मुखस्पर्शेन सौगन्धिकगन्धि मानसरोवरकमलं सौगन्धिकमिति पुराणप्रसिद्धं स्वगतोक्तत्वात् पूर्ववदत्रापि न रसाभासः ॥ १७ ॥

तदपि स्वस्मिन्ननुग्रहासम्भवमाशङ्क्य परिहरति । नेति । यद्यप्यहं कंसस्य दूतः प्रहितस्तेन प्रेषतोऽपि भवामि अरिबुद्धिम् अरेरय-मिति भावनां न उपैष्यति न करिष्यतीत्यर्थः । यतो विश्वदृक् चेत-सोऽन्तर्बहिर्वर्त्तमानः एतदीहितं एतस्य सर्वजगतोऽपीहितं ईक्षते ॥ १८ ॥

अपि किम् अङ्घ्रिमूले अवहितं प्रणम्य संयतन्तं मां कृपामृत-नार्द्रया दृशा ईक्षिता ईक्षिष्यते सपदि तत्क्षणादेव ऊर्जितां मुदं वोढा प्राप्स्यामि तदैव वीतविशङ्कश्च मदन्तःकरणं प्रभुर्जाना-तिस्मेति निश्चेष्यामीत्यर्थः ॥ १९ ॥

परिरप्स्यते आलिङ्गिष्यति तत्र हेतुः सुहृत्तमं न केवलं सौहार्दा-तिशय एव किन्तु ज्ञातिं ज्ञातित्वेऽपि सत्यनन्यदैवतम् एकान्तिक-दास्यवन्तं ततश्च तेन मे आत्मा अयं देहः तीर्थीक्रियते तीर्थं करिष्यते देहः पूतो भूत्वाऽन्येषामपि पावनो भविष्यतीत्यर्थः । अतस्तत्परिरम्भादेव हेतोर्बन्धश्च उच्छ्वसिति उच्छ्रथितो भविष्य-तीत्यर्थः ॥ २० ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कौशिकः इन्द्रः बलिश्च बुभुक्षुः यत्र यस्मिन् पङ्कजे समर्हणं निधाय जगत्त्रयेन्द्रताम । लोकत्रयाधिपत्यमवाप । वासमु-च्चये सौगन्धिकस्य पद्मजातिविशेषस्य गन्ध इव गन्धो यस्य तत्सौगन्धिकगन्धि तत् हस्तपङ्कजं विहारे रासक्रीडायां व्रजयोषितां श्रमं स्पर्शेन अपानुदत् ॥ १७ ॥

अपि यद्यपि अहं कंसेन प्रहितः अतः कंसस्य दूतोऽपि तथापि मयि अरिबुद्धिमच्युतो न उपैष्यति करिष्यति । तत्र हेतुं दर्शयितुमच्युतं विशिनष्टि । विश्वास्मिन् दृक् दृष्टिर्यस्य सः एतदेव प्रपञ्चयति यतः क्षेत्राणि व्यष्टिसमष्टिरूपाणि शरीराणि जानातीति क्षेत्रज्ञः चेतसोऽन्तर्बहिश्च यच्चेष्टितमेतदमलेन

लब्धाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यते ऽक्रूर! ततेत्युरुश्रवाः।
तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥ २१ ॥
न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा।
तथापि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितो ऽर्थदः ॥ २२ ॥
किंचाग्रजो माऽवनतं यदूत्तमः स्मयन् परिष्वज्य गृहीतमञ्जलौ।
गृहं प्रवेश्याप्तसमस्तसत्कृतं सम्प्रक्ष्यते कंसकृतं स्वबन्धुषु ॥ २३ ॥

श्रीशुक उवाच।

इति सञ्चिन्तयन् कृष्णं श्वफल्कतनयो ऽध्वनि।
रथेन गोकुलं प्राप्तः सूर्यश्चास्तगिरिं नृप! ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चक्षुषा ईक्षते। कंसेन प्रेपितमपि मां स्वानन्यभक्तं जानात्येवेति फलितोऽर्थः ॥ १८ ॥

अपीति सम्भावनायाम्। अङ्घ्रिमूले अवहितम् अङ्घ्र्योर्मूले तन्मध्यवर्तिभूप्रदेशे उत्तमाङ्गं निवेश्य दण्डवत्पतितम्। आर्द्रया कृपामृतवर्षिणया दृशा सस्मितं यथा भवति तथा ईक्षिता द्रक्ष्यति तदा सपद्येवापध्वस्तानि समस्तानि किल्बिषाणि पापानि यस्य सः तथाभूतः। वीतविशङ्कः। विगतविविधसंशयः सन् ऊर्जितां प्रभूततरां मुदं वोढा प्राप्स्यामि ॥ १९ ॥

अथानन्तरं न विद्यते कृष्णादन्यद्दैवतं यस्य तं मां परिरप्स्यते आलिङ्गिष्यति यदा तदा मे आत्मा देहस्तीर्थी क्रियते अतिपवित्रीकरिष्यते अतः कर्मात्मको मे बन्धश्चोच्छ्वसिति शिथिलीभविष्यति ॥ २० ॥

---

भाषा टीका।

जिस हस्तकमल में कुछ भेटजल देकर इंद्र ने तथा बलि राजा ने तीनों लोक को प्राप्त होगये हैं जिस हस्त ने अत्यंत सुगंधि वाला होने से व्रज स्त्रियों के रास विहार में स्पर्श करने से उनके परिश्रम को दूर कर दिया है ॥ १७ ॥

यद्यपि मैं कंस का दूत हूं मेरे को उसने भेजा है तौ भी जो भगवान् विश्व के द्रष्टा सर्वज्ञ हैं क्षेत्रज्ञ हैं तौ भी मेरे चित्त के बाहिर भीतर के चिन्ता को निर्मल ज्ञान रूप नेत्र से देखते हैं वे भगवान् मेरे पर शत्रु बुद्धि को नहिं धारण करेंगे ॥ १८ ॥

और भी चरण समीप में खडे हुये हाथ जोडे मेरे को जब भगवान् मंद हास युक्त शीतल दृष्टि से देखेंगे तब शीघ्र ही मेरे सब पाप नष्ट होजायेंगे तब सब शंका से रहित होजाऊंगा फिर मैं बडे आनंद को प्राप्त होजाऊंगा ॥ १९ ॥

मेरे को उत्तम सुहृत् ज्ञाति अनन्य भक्त जान कर बडे भारी भुजा ओंसे जब भगवान् आलिंगन करेंगे तब ही मेरा आत्मा शरीर पवित्र हो जावैगा। कर्मरूपी वन्ध भी मेरे शरीर में से दूर चला जायगा ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत भोस्तातेति तदा जन्मभृतः सफलजन्मानः अन्यथा तज्जन्मैव न भवतीत्याह। महीयसेति। महीयसा श्रीकृष्णेन यो नादृतोऽमुष्य तस्य जन्तोस्तज्जन्म धिक् ॥ २१ ॥

ननु सुहृदादिषु परिष्वङ्गसम्प्रश्नादयो जीवधर्माः कथमीश्वरे सङ्गच्छन्ते ऽत आह। न तस्येति। दयितः प्रियस्तद्विपरीतो ऽप्रियः सुहृत्तमो हिततमस्तद्विपरीतो द्वेष्य एतत्सर्वव्यतिरिक्त उपेक्ष्य इति दयितादयो न सन्तीति सत्यं तथापि भक्तान् भजते तत्र यथा ये भक्तास्तथा भजते "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह"मिति भगवद्वचनात् अविषमत्वेऽपि भक्तेभ्य एव फलं ददातीत्यत्र दृष्टान्तः यद्वत्सुरद्रुम इति ॥ २२ ॥

यो मयाञ्जलिः करिष्यते, तस्मिन्नेवाञ्जलौ गृहीतं माम् आप्तानि समस्तान्यर्घादिसत्कृतानि येन तं माम् ॥ २३ ॥

स तु मार्गमपि न वेद तथापि रथेन प्राप्त इति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पुनरप्यतृप्त्या मनोरथान्तरं करोति। लब्धेति। प्रणतमिति। अङ्गसङ्गलब्ध्या हर्षेण पुनः कृतप्रणाममित्यर्थः। किञ्च। कृताञ्जलिं तद्वत्वं प्रेमवैक्लव्येन वक्ष्यते यद्वा किमिति तथा वक्ष्यति परमकृपालुत्वादित्याह। उरु महत् श्रवः कीर्त्तिर्निरुपाधि कृपाकरत्वादिलक्षणा यस्य सः। तदा वयं जन्मभृत इत्यनेनास्य मनोरथस्य सर्वतो महत्त्वमभिप्रेतं प्रेमभाषणेनैव परमानन्दसिद्धेः। एवं कृतानान्तु मनोरथानामुत्तरोत्तरं श्रैष्ठ्यं महीयसा श्रीभगवता नादृतः सम्भाषणादिना न सन्मानितः एतत्कारेण कदाचित् सुखं कदाप्यादरेण सफलजन्मता सूच्यते। अमुष्येति परोक्षोक्तिस्तादृशस्य तद्दूरवर्त्तित्वाभिप्रायेण तन्महत्तमानादृतम् अमुष्याऽपि तद्दृशुक्तिरनादरदार्ढ्यबोधनार्था। यद्वा। परमापद्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वेनानिर्वचनीयमित्यर्थः । यद्वा साजात्यादिनोत्कृष्टमपि । अन्यत्तैः । तत्र जन्तोरिति महत्तमानादृततया अशेषगुणहीनताभिप्रायेणेति अथवा महीयसा कृपादिगुणमहत्तमेन तत्सेवकेन केनचिदपि किं पुनस्तेन सर्वकृपालुगुणमूर्द्धन्यमणिनेत्यर्थः । अन्यत् समानम् ॥२१॥

न तस्येति । तैर्व्याख्यातं तत्र कथमीश्वर इत्याप्तकामत्वादिना प्रियाद्यभावादिति भावः प्रियः सगुणेन प्रीतिविषयः तद्विपरीतः स्वदोषेणाप्रीतिविषयः परगुणदोषयोरावेशाभावात्तौ द्वौ न हित उपकारतःप्रत्युपकारविषयः तद्विपरीतस्त्वपकारतो द्वेषविषयः तस्मिन्नपकारादिनिमित्तासम्भवात्तौ च न सर्वस्य तदेकात्मकत्वात् उपेक्ष्योऽपि न इति सत्यमिति नञ्द्वयान्वयायोग्यं मूले चकारः सुहृत्तमादित्रयेऽप्यन्वितः पुनर्नकारः पूर्वनिषिद्धविरोधित्वात प्राप्तस्य प्रियादित्रयस्य निषेधनिर्द्धारणार्थः एवकारस्तु भक्ता-दित्यनेनान्वितः भक्तेभ्य एवेति व्याख्यास्यमानत्वात् अत्रानुप-युक्तत्वाच्च वाशब्दस्तद्गुणद्वयव्यतिरिक्तस्योपेक्षस्यापि समु-च्चये तथाहि तस्य कश्चिदेकोऽपि दयितः सुहृत्तमश्च न नैवा-प्रियश्च द्वेष्यश्च उपेक्ष्यो नाम यः सच नेत्यर्थः यद्यप्येवं प्रीत्या-दिविषयो न तथापि भक्तानेव भजते यद्यपि चाप्रीत्यादिविषयो न तथाप्यभक्तान्न भजत इत्यर्थः । तत्र च यथा यादृशभावनादिना ये भक्तास्तांस्तथा तादृशप्रादुर्भावादिनेति वशताप्राप्तिरप्यभि-प्रेता तदुक्तं श्रीवैकुण्ठदेवेन "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय" इति भक्तिसम्बन्ध-नैवेति कृपोदयो भवति कृपया च वशीभूय सुहृत्तममित्यादि-पूर्वोक्तसुहृत्तमत्वज्ञातित्वपरिरम्भित्वादिकमपि प्राप्नोति न मय्यु-पैष्यतीत्यादिपूर्वोक्तभक्तविद्वेषिद्वेष्टृत्वमपीति सिद्धान्तः तथोक्तं श्रीभगवद्गीतास्वेव "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह"मिति तत्रत्यं मयि त इत्यादिकं श्रीवैकुण्ठदेवेन विवृतम् "साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम् । मदन्यत्ते न जानन्ति नाहं तेभ्यो मनाग-पी"ति ईश्वरस्य सतो भक्तकृपासद्भावे तु दोषः पूर्वमेव दर्शितः एवमेव च वैषम्यनैर्घृण्ये परिहृते स्यातां प्राकृतगुणदोषैस्त-च्चित्तास्पर्शात् भक्त्या तत्तत्स्पर्शादिति विशेषविचारस्तु श्रीभाग-वतसन्दर्भस्य परमात्मसन्दर्भे ज्ञेयः दृष्टान्तोऽपि तथा तस्मात् पश्यन्ति पादपास्तस्मात् शृण्वन्ति पादपा इति भारतीयन्यायेन कल्पवृक्षे तु देवत्वांशसद्भावेन सुतरां सज्ञानत्वे बुद्धिपूर्वक-प्रवृत्तेः अबुद्धिपूर्वकत्वे तु पूर्वप्रकरणप्राप्तपरिष्वङ्गादिकारकतत्-कृपालुताभिप्रायासिद्धिः स्यात् कल्पवृक्षेणापि तत्सेवकप्रार्थके-भ्यस्तद्वरोऽपि देय इति सर्वं समञ्जसम् ॥ २२ ॥

अतः श्रीवासुदेवादिपरमभक्तसम्बन्धेन मय्यपि सुहृत्तमादि-भावं श्रीकृष्णः करिष्यत्येव इति सम्भाव्य लब्धाश्वासो मनोरथा-न्तरं कुरुते किं वेति किमिति सम्भावनायां वा समुच्चये अग्र-जश्च किमित्यर्थः । यदूत्तम इति । सुहृत्तमत्वं ज्ञातिवदभिप्रायः अञ्जलावेव ग्रहणञ्च सङ्कोचेनैव कृते तस्मिन्निति भावः । अग्रज इति स्वयमञ्जलिग्रहेण गृहप्रवेशनादौ हेतुः स्मयन् स्मयगान इति मनः प्रसादापेक्षयोक्तम् अतएवातिथ्येनाप्तसमस्तसत्कृतमिति तत्परिणामापेक्षया अस्य बन्धुषु श्रीवसुदेवादिषु कंसस्य कृतं चेष्टितमिति तस्यापि विशेषापेक्षया तथा सति तेनानुकूलीकृतेन श्रीकृष्णमिति आनेतुं शक्ष्यामीति चाभिप्रेतम् ॥ २३ ॥

रथेनेति तैर्व्याख्यातम् अतएवानतिदूरेऽप्यध्वनि विलम्बो जातः रथमारुह्यैव श्रीभगवत्समीपपर्यन्तगमनं सूर्यश्चास्तगिरिं प्राप्त इति सहोपमा सा चास्तगिरिणा सूर्यस्येव गोकुलमहसा तस्यावृतत्वं ध्वनयति ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम

तत तातेत्यर्थः । "तत कस्मै मां दास्यती" ति श्रुतिनिर्देशः यदा वक्ष्यते तदा परं जन्मभृतः सफलजन्मानः । महीयसा कृष्णेन यो नादृतः अमुष्य जन्म धिक् ॥ २१ ॥ २२ ॥

संप्रक्ष्यते संप्रश्नं करिष्यतीति ॥ २३ ॥—॥ २६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चोरुश्रवाः कृष्णः लब्धोऽङ्गसङ्गः परिरम्भो येन तं प्रणतं बद्धाञ्जलिञ्च मां हे अक्रूर ! हे तत तातेति च वक्ष्यति सम्बोधयति तदा वयं जन्मभृतः सफलजन्मानः भविष्यामः यस्तु पुमान् मही-यसा भगवता नैवादृतः आदृतो न भवति अमुष्यानादृतस्य तज्जन्म धिक् निन्द्यमित्यर्थः ॥ २१ ॥

पुनरपि सुहृत्तमत्वज्ञातित्वादिप्रयुक्तपरिरम्भादेरसम्भवमाश-ङ्क्यानन्यदैवतत्वप्रयुक्तस्य तस्य सम्भवमाह । न तस्येति । यद्यपि सर्व-समस्य तस्य न दयितादयः सन्ति न विषमा बुद्धिरस्तीत्यर्थः । तथापि यथा भक्ता आत्मानं भजन्ते तथा भक्तान् भजत एव "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इति तदुक्तेरिति भावः । अवैषम्येऽपि भक्तानेवानुभजत इत्यत्र दृष्टान्तः सुरद्रुमः कल्पतरुः यद्वत् यथा उपाश्रितानां भक्तानां भजतामेवार्थदः कामदस्तद्वत् नह्येतावता तस्य वैषम्यमस्तीति भावः ॥ २२ ॥

किञ्च यदूत्तमः अग्रजो रामः अवनतं प्रणतं मां स्मयन् परि-ष्वज्य यो मयाञ्जलिः क्रियते तस्मिन्नेव गृहीतं मां गृहं प्रवेश्य आप्तानि लब्धानि समस्तानि सत्कृतान्यर्घादीनि येन तं मां प्रति स्वबन्धुषु विषयभूतेषु कंसकृतं द्रोहं सम्प्रक्ष्यते प्रक्ष्यति वीप्सायां वाचि ॥ २३ ॥

इत्थं श्वफल्कतनयोऽक्रूरः पथि कृष्णमेवानुचिन्तयन् रथेन गम-नसाधनेन गोकुलं प्राप्तः हे नृप ! सूर्यश्चास्तगिरिं प्राप्तः अस्तमितो बभूव यद्यपि गोकुलमधुपुर्योरन्तरा क्रोशत्रयमेवाक्रूरस्तु प्रभा-तसमय एव रथारूढो मधुपुर्याः प्रतस्थे तथापि कृष्णानुचिन्तया परवशस्तत्र तत्र विलम्बयन् सायन्तनवेलायां गोकुलं प्राप्त इति भावः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवत ईक्षणसमये इदमित्याशयेन वक्ति । लब्धाङ्गसङ्गमिति । उरुश्रवाः पूर्णकीर्तिः व्याप्तश्रवणशक्तिमान्वा हे अक्रूर ! हे तात वत्सेति सम्बोधयति च यदि जन्मभृतः जन्मनः साफल्यं प्राप्ताः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बाधकमाह । महीयसेति । महत्तमेन भगवता यो नादृतः वागादिना सादरमर्चितो न भवति अमुष्य पुंसो यज्जन्म तत् धिक् निन्दामि निष्फलत्वात् ॥ २१ ॥

अयं श्रीकृष्णः क्षीराब्धिशाय्येव नान्य इति तस्य लक्षणमाह। नेति। "वनस्पतिर्वृक्षमात्रे फलपादौ पुष्पवर्जिते"इत्युत्पलमाला यथा यथा स्वस्वयोग्यफलदानेन ॥ २२ ॥

इदानीं बलभद्रमुद्दिश्याक्रूरचिन्तां वक्ति। किंचेति गृहीतसंचितौ गृहीतपशुपादबन्धनरज्जौ यदूत्तमो ऽग्रजोऽवनतं मानयन् स्मयन् रामः मम स्वबन्धुषु वसुदेवादिषु कंसकृतं कर्म सम्प्रेक्ष्यते विचारयिष्यति किञ्चेत्यन्वयः " पादबन्धनपाशन्तु पशूनां सञ्चितिं विदु"रिति वररुचिः गृहीतमाननं अग्रजे इति पाठे सुगमः पन्थाः यद्वा यदूत्तमः गृहीतानां फलदानाय शुभानां सञ्चितिः सङ्ग्रहो येन स तथा तस्मिन्सति स्मयन्मन्दस्मितं कुर्वन् कृष्णः मां सम्प्रेक्ष्यत इति कृष्णविषयो वा ॥ २३—२४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं मनः शरीरसंबन्धौ प्रार्थयित्वा वाचनिकं प्रार्थयति लब्धाङ्गसङ्गमिति पूर्वधर्माणामनुवृत्त्यर्थमनुवादः अन्यथा विकल्पो भवेत् लब्धः अङ्गसङ्गो येन एतावता गवा भवेदित्यत आह। प्रणतमिति। पूर्वधर्मश्चायं ततः कृताञ्जलिः पुनर्विज्ञापकः तदा हे अक्रूर ! हे तातेति मां वक्ष्यति किं नाम्ना संबोधनं महत्त्वख्यापकं पितृतुल्यत्वेन बन्धुत्वं स्नेहित्वञ्च ख्यापयति इतिशब्दः प्रकारवाची एवं संबोधने फलमाह। तदा वयं जन्मभृत इति स्वभावतः कुलतश्च अन्यथा महत्त उत्पत्तिस्तादृशे कुले चोत्पत्तिर्व्यर्था स्यात् ननु भगवान् किमित्येवं प्रतिष्ठां दद्यात् तत्राह। उरुश्रवा इति। यस्य गृहे यदधिकं भवेत् तदेवान्यस्मै च दद्यात् उरु अधिकं श्रवो यस्येति ननु स्वभावतो महान् भगवता चेदङ्गीकृतः तदा किं स्यादित्याशङ्क्याह। महीयसा योऽनादृतः अमुष्य जन्म धिगिति सर्वदा आदराभावेऽपि कदाचिदप्यादरो ऽपेक्ष्यते तदभावे जन्मवैयर्थ्यमेव तेन जन्मना लौकिकमपि कार्यं न भवतीति ज्ञापनार्थं धिगित्युक्तम् ॥ २१ ॥

ननु पुरुषोत्तमो भगवान् त्वमत्यन्तं हीनः कथमेवं तवादरं करिष्यति यस्य बन्धुत्वादि तु नापेक्ष्यत एवेति चेत् सत्यं तथापि मन्मनोरथः सेत्स्यतीत्याह। न तस्येति। वस्तुतो भगवान् सर्वेषामेव स्वरूपमन्तरान्यथा भावेतु पञ्च भगवता सह व्यवधानानीति लोके जीवानां परस्परं पञ्च संबन्धा भवन्ति बुद्धिस्त्रिविधा अपेक्षोपेक्षाद्वेषभेदात् अपेक्षा द्विविधा देहसम्बन्धान्मित्रभावाद्वा द्वेषश्च द्विविधः स्वस्य द्विष्टतया तत्कृतापकारेण वा तत्र दयितः देहसम्बन्धी स्निग्धः सुहृत्तमो ऽतिमित्रं भगवान् सर्वस्य इति तद्व्यावृत्त्यर्थं तमप्प्रत्ययः अप्रियः स्वस्य द्वेषविषयः द्वेष्यः द्वेषहेतुः विपरीतं वा भगवांस्तु कस्यापि किमपि न भवति यतो देहधर्मा एवैते तथा च लौकिकन्यायेन पुरस्कारः अपकारो वा न भवति दृष्टान्तार्थं द्वितीयमुक्तं तथापि भक्तिशास्त्रात् तथा करिष्यतीत्याह। तथापीति। अन्यथा "ये यथा मां प्रपद्यन्त" इति प्रतिज्ञा विरुद्धा स्यात् तेऽपि भगवन्तं भजन्त इति भक्तान् भजते यथा भक्तास्तथा नन्वेवं सत्यनर्थ एव स्यात् प्रयोजनाभावश्च भक्तो नमस्करोति पादसंवाहनञ्च करोति तथाचेत् कुर्यात् जीवानां कार्यमेव नश्येत् तुलसी हि समर्प्यते भगवते भगवानपि चेत् तुलसीमेव दद्यात् किं स्यादित्याशङ्क्याह। सुरद्रुमो यद्वदिति। भजनार्थमेव हि तथा करणं भगवांस्तु तदनुसार्य्यपेक्षितमेव फलं प्रयच्छति नापि तत्कृतं नापि स्वेच्छया यथा कल्पवृक्षः निकटे गत एव कार्यं साधयति अनेन सर्वात्मकत्वेऽपि भगवतः भक्तेभ्य एव दानमिति वैषम्यं परिहृतं नह्यपेक्षितं प्रयच्छन् कल्पवृक्षो विषमो भवति अन्यथा व्यवस्थितिर्न स्यादिति कर्मफलं तु तुच्छं तथा सति भगवत उत्कर्षोऽपि न स्यात् अत उपाश्रितायैव पुरुषार्थदः नत्वनुपाश्रितायेति सर्वं सुस्थम् ॥ २२ ॥

एवं भगवद्विषयकं कायवाङ्मनोरूपं मनोरथमुक्त्वा बलभद्रविषयकं मनोरथमाह। किंचेति । अग्रजो ज्येष्ठभ्राता अनेन मया सर्वोऽपि वृत्तान्तो ज्ञायत इति मयि कृपां करिष्यतीति भावः । तस्याप्यहमवनतः ज्येष्ठस्यापि कनिष्ठावनतौ उत्तमत्वं प्रयोजकमिति यदूत्तम इत्युक्तं स्मयन्निति सम्यक्त्वमागतः कंसं घातयितुमिति बन्धुत्वात् परिष्वज्य महत्त्वपूर्वकं मामञ्जलौ गृहीत्वा अतिनिकटत्वात् गृहं प्रवेश्य भोजयित्वा गृहगतमिव कृत्वा ततोऽप्यधिकं वा आप्ता समस्ता सत्कृतिर्येन तादृशं पश्चाद्विश्रान्तं स्वबन्धुषु कंसकृतं सम्प्रक्ष्यते किमिति लोके सिद्धमिति भगवान् महानिति मनोरथः ॥ २३ ॥

एवं मार्गे रथं स्थापयित्वा सन्ध्यापर्यन्तमनेकविधं मनोरथमेव कृतवान् तथापि भगवत्सम्मुखं प्रवृत्तौ सर्वं एवानुगुणा भवन्तीति रथ एव तं गोकुले समानीतवान् तदाह। इति कृष्णं सञ्चिन्तयन्नेवान्तः श्वफल्कतनयो महान् यदान्तर्भगवन्तं प्राप्तवान् तदा रथेन गोकुलमपि प्राप्तः भगवानानन्दरूपः स्त्रीणामेवेति सन्ध्यावधिरात्रावधिति मनोरथसिध्यर्थं सूर्योऽप्यस्तङ्गत इत्याह। सूर्य इति । चकारात् सूर्योऽप्यनुगुणः सर्वप्रकारेण नृपेति संबोधनं मन्त्रणं गुप्ततयैव कर्तव्यमिति ज्ञापनार्थम् अश्लीलव्यावृत्त्यर्थं गिरिपदं श्वफल्को महानुभाव इति तन्नाम्ना निर्दिष्टस्तथात्वाय अन्यथा अनिष्टरूपो न गच्छेत् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदेति। हे तात ! इति तदा जन्मभृतः सफलजन्मानः अन्यथा जन्मनो वैयर्थ्यमित्याह। महीयसा महत्तरश्लोकेन ॥ २१ ॥

ननु तस्य परमेश्वरत्वात् सर्वत्र साम्यमेव सम्भवेत् एवञ्च त्वं स्वस्मिन् तत् सुहृत्तमत्वादिकं किं सम्भावयसीति तत्राह। न तस्येति। तथापि भक्तान् भजत इति। "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह"मिति तदुक्तेः तत्रापि यथा तथेति ये यथा भक्तास्तांस्तथा भजते "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह"मिति तद्वचनात्। यद्वत् सुरद्रुम इति। आश्रयणतारतम्येन फलदानतारतम्यम् अनाश्रितेभ्यः फलाप्रदानञ्च तदपि सुरद्रुमस्य यथा न वैषम्यं तथा तस्य भगवतोऽपि किञ्च सुरद्रुमस्याश्रिताधीनत्वं तथा नास्ति यथा भगवतो भक्ताधीनत्वम् अतो भक्तिसम्बन्धेन तस्य सौहार्दद्वेषोपेक्षा अपि दृष्टा एव यथाम्बरीषादौ सौहार्दं तद्विद्वेष्टृदुर्वासःप्रभृतौ द्वेषोपेक्षे च दृष्टे एवेति ॥ २२ ॥

पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ।
ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ २५ ॥
तद्दर्शनाह्लादविवृद्धसम्भ्रमः प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः ।
रथादवस्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति ॥ २६ ॥
देहं भृतामियानर्थो हित्वा दम्भं भियं शुचम् ।
संदेशाद्यो हरेर्लिङ्गदर्शनश्रवणादिभिः ॥ २७ ॥
ददर्श कृष्णं रामञ्च व्रजे गोदोहनं गतौ ।
पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्याग्रजो बलदेवः मा मामञ्जलौ मत्कृताञ्जलौ स्वदक्षिणहस्तेन गृहीतं मामाकृष्य गृहमेकान्तसंलापार्थं प्रवेश्य सत्कृतं सत्कारः ॥ २३-२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अक्रूर ! हे तत हे तातेति च वक्ष्यते यदा तदा वयं जन्मभृतः लब्धजन्मफलाः भविष्यामः यस्तु जनो महीयसा श्रीकृष्णेन नैवादृतः अमुष्य जनस्य जन्म धिक् अयुक्तमित्यर्थः ॥ २१ ॥

ननु तस्य सर्वेश्वरस्य कंस उपेक्षो भवान् सुहृत्तमश्च कुतोऽत आह । नेति । तत्तत्कर्मानुसारेण निग्रहानुग्रहकर्तुस्तस्य भगवतः सर्वात्मनः सर्वसमस्य कश्चिदपि उपेक्षो न तथा दयितः प्रियस्तद्विपरीतोऽप्रियश्च कश्चिदपि नास्ति नच सुहृत्तमो हितस्तद्विपरीतो द्वेष्यश्चास्ति तथापि भक्तान् भजते तत्र च यथा ये भक्तास्तां स्तथा भजते तदुक्तं श्रीमन्मुखेनैव "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह" मिति सर्वसमत्वेऽपि भक्तेभ्यस्तत्तत्स्वभावानुसारेण फलं ददातीत्यत्र दृष्टान्तः यद्वत्सुरद्रुम उपाश्रितोऽर्थद इति ॥ २२ ॥

किञ्च अग्रजः कृष्णपूर्वजः रामः अवनतं नम्रं यो मयाञ्जलिः करिष्यते तस्मिन्नेव गृहीतं गृहं प्रवेश्य आप्तानि प्राप्तानि समस्तानि अर्घादिसत्कृतानि येन तं मा मां प्रति बन्धुषु कंसकृतं सम्प्रक्ष्यते ॥ २३ ॥

श्वफल्कतनयः अक्रूरः ॥ २४ ॥

भाषा टीका ।

जब मेरे को भगवान् का अङ्ग सङ्ग होगा मैं फिर प्रणाम करूंगा हाथ जोड के खडा होंगा तब मेरे को भगवान् हे अक्रूर ! हेतात ऐसा कह कर बुलायेंगे तब मैं जन्मधारी हों ऊंगा बडे महात्मा ओंके आदर योग्य हो जांऊंगा जिस को भगवान् आदर नहीं करते हैं उस के जन्म को धिक्कार है ॥ २१ ॥

इन भगवान् के कोइ प्रिय नहीं है न सुहृद है न अप्रिय है न शत्रु है न उपेक्ष है तौभी भक्तों के मनोरथ को करते हैं जैसे कल्पवृक्ष उपासना से फलदेता है ॥ २२ ॥

और भी बलदेव जी के सहित भगवान् मेरे को नम्र खडे देख कर के हसते हुये अंजलि सहित आलिंगन करके घर के भीतर लेजांयगे फिर बन्धु का सत्कार करेंगे फिर बन्धु मे कंस का कर्तव्य पूछेंगे ॥ २३ ॥

श्रीशुकदेव जी बोले अक्रूर जी इस प्रकार से मन में मार्ग मे चिन्ता करते हुये रथपर बैठे हुये गोकुल मे पंहुचे हे राजन् इतने मैं सूर्य देव भी अस्ताचल पर चले गये ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अखिलैर्लोकपालैः किरीटेषु जुष्टा अमलाः पादरेणवो यस्य तस्य क्षितिकौतुकानि क्षितेरलंकाररूपाणि ॥ २५ ॥

तद्दर्शनेन य आह्लादस्तेन विवृद्धः सम्भ्रमो यस्य सः प्रेम्णा ऊर्ध्वानि रोमाणि यस्य सः अश्रूणां कलाभिर्लेशैराकुले ईक्षणे यस्य सः अवस्कन्द्यावप्लुत्य तेषु पदेषु सोऽक्रूरः अचेष्टत व्यलुठत् अहो इति दुर्लभतां भावयन् ॥ २६ ॥

ननु किमर्थमेवं व्यलुठत् नास्ति प्रेमसंभ्रमे फलोद्देश इत्याह । देहं भृतामिति । देहभाजामेतावानेव पुरुषार्थः कंसस्य सन्देशादारभ्य हरेर्लिङ्गदर्शनश्रवणादिभिर्योऽयमक्रूरस्य वर्णित इति संदेश आद्यो यस्यार्थस्य स यावानक्रूरस्य जात इति वा ॥ २७ ॥

ततः कृष्णं रामं च ददर्श गावो दुह्यन्ते ऽस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ ॥ २८ ॥—॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोष्ठे तत्समीपे ददर्श अचिरादेव श्रीभगवतो गोष्ठान्तःप्रवेशात् पदानां माहात्म्यमाह । अखिलेति । तत्र न तिष्ठति मनः संसारादिलक्षणो येभ्य इत्यमलत्वं किरीटजुष्टत्वे हेतुः ननु रथोपर्यासीनेन सायं गोधूलिकृतान्धकारे बहुलगोपगणपदावृतानि तस्य पदानि कथं दृष्टानि तत्राह । क्षितीति । क्षितेः कौतुकमुत्सवो येभ्यस्तानीति तथैव निजालङ्कारत्वेन सुव्यक्ततया रक्षणात्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र च भक्तजनदृष्टौ स्वतः परिस्फुरणादिति भावः । ननु तस्यैव तानीति कथं विज्ञातं तत्राह । अब्जाद्यैर्विलक्षितानि विशेषेण निरूपितानि असाधारणानि वा ॥ २५ ॥

सम्भ्रम आवेग इति कर्त्तव्यतानुसन्धानाभावः अतएवाचेष्टत प्रेम्णेत्यस्य यथापेक्षं सर्वैरप्यन्वयः प्रभोः परमेश्वरस्यामूनि इमानि अन्यत्तैः तत्राहो इति प्रभोरित्यादिकस्य सर्वस्यैवोपलक्षणार्थमिति शब्दस्य सर्वान्वयित्वात् ॥ २६ ॥

अक्रूरस्य श्रीभगवत्पदेषु तथा विलुठनकथनेन भक्त्युद्रेकात्तं प्रशंसति देहं भृतां देहधारिणाम् अन्यथा देहधारणवैफल्यमिति भावः अन्यत्तैः किञ्च दम्भादिकं हित्वा योऽयं जात इति योजनिकयैवं गम्यते यथाक्रूरस्यात्र दम्भो नासीत् न मय्युपैष्यत्यरिबुद्धिमच्युत इत्यादि चिन्तनात् अथान्तःसुखान्तरतात्पर्यलक्षणो यदि दम्भो न स्यात् यथाच कंसप्रतापितो यो बन्धुगर्भस्तत्प्रतापयितव्यश्च यः तस्य तस्य हेतोर्निजकुलरक्षावतीर्णश्रीकृष्णपुरतो व्यञ्जनीयः शोको भीश्च तादृशायेशे हेतुर्नासीत् तद्दर्शनाह्लादेत्याद्युक्तेः प्रेमविभिन्नधैर्य इति तृतीयोक्तेश्च तथा यदि निजदुःखहानितात्पर्यं न स्यादिति लिङ्गमनुभवहेतुःमियं शुचमिति पाठो यद्यत्र अथ गोकुलाभ्यन्तरे रथनयनार्थं पुनरारूढ इति ज्ञेयं रथात्तूर्णमवप्लुत्येति वक्ष्यमाणत्वात् ॥ २७ ॥

ददर्शेति षट्कं प्रथमतः श्रीकृष्णं ददर्श अक्रूरस्य भक्तिविशेषेण तस्य प्रभावविशेषेण च व्रजे गवामावासमध्ये कीदृशौ तौ गोदोहनस्थानं गतौ तत्रापि वत्सवर्गमध्ये ददर्शेति श्रीपराशरवैशम्पायनौ तथाच श्रीविष्णुपुराणे "स ददर्श तदा तत्र कृष्णमादोहने गवाम् । वत्समध्ये गतं फुल्लनीलोत्पलदलच्छवि" मिति श्रीहरिवंशे च "प्रविशन्नेव च द्वारि ददर्श दोहने गवाम् । वत्समध्ये स्थितं कृष्णं सवत्समिव गोवृष" मिति तच्च गोपैर्दुह्यमानाभिर्गोभिः समं वत्सानां संमेलनार्थं ज्ञेयं तावेव यथानिर्दिष्टं वर्णयति । पीतेति सार्धपञ्चभिः तत्र दूरादेव वस्त्रदर्शनं तदेव तयोरात्मनि यः कृपावलोकस्तत्स्वभावेनान्तर्वहिरिन्द्रियाकर्षणात् तारातडिदादितोऽपि परमकान्तिकन्दलीतुन्दिलानां लोचनानामालोचनं तत्र तु रक्तिमादिना व्यक्तं व्यक्तीभूतस्य कैशोरस्यानुभवः अथ सर्वानुभवाय जातेन चापलेन प्रथमं वर्णनिर्वर्णनं ततो महाशोभोपलम्भः ततः पश्चाद्गवादिसम्भालनार्थं समुत्थापितयोर्भुजयोरवलोकनं ततः परमसुखेन तेन श्रीमुखनिभालनं ततः किञ्चिन्निकटीभूय पश्यता तेन सर्वाङ्गसौन्दर्यपर्यालोलनं ततो बालौ किशोरावपि द्विरदविक्रमाविति महौजःसहोवलागमः ॥ २८-२९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देहभृतां देहिनां संदेशात् शास्त्रानुसारात् दर्शनश्रवणादिभिः शुद्धो भवतीति यत् इयान् देहभृतामर्थः फलमियदित्यर्थः ॥ २७—३१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पदानीति । अखिलैर्लोकपालैः किरीटेषु जुष्टाः अमलाः पादरेणवो यस्य तस्य भगवतः सम्बन्धीनि चितेरलङ्काररूपाणि अब्जादिरेखाभिर्विलक्षितानि चिह्नितानि पदानि गोष्ठे ददर्श तेषां पदानां दर्शनेन य आह्लादस्तेन विवृद्धः सम्भ्रमो यस्य प्रेम्णोर्ध्वान्युदञ्चितानि रोमाणि यस्य अश्रूणां हर्षजानां कलाभिर्लेशैराकुले ईक्षणे यस्य सोऽक्रूरः रथादवप्लुत्य तेषु पदेषु अचेष्टत व्यलुठत् अहो प्रभोः कृष्णस्यामून्यङ्घ्र्यो रजांसि ब्रह्मादीनामपि दुर्लभानीति भावयन् अचेष्टतेत्यन्वयः ॥ २५—२६ ॥

नन्ववसादवदुद्धर्षोऽपि भक्तियोगविरोधी अतः किमित्येवमचेष्टतेत्यत्राह । देहभृतामिति । देहभाजामेतावानेव पुरुषार्थः कोऽसौ दम्भादींस्त्यक्त्वा हरेः सन्देशाद्वृत्तान्ताद्गुणानुकथनाल्लिङ्गानां विग्रहाणां चिन्हानाञ्च दर्शनश्रवणादिभिश्च योऽवस्थाविशेषः स एवेति प्रदर्शयितुमित्यर्थः । भक्तेः पराकाष्ठां दर्शयितुमचेष्टतेति भावः ॥ २७ ॥

ततो व्रजे कृष्णञ्च रामं च ददर्श कथम्भूतौ गावो दुह्यन्तेऽस्मिन्निति गोदोहनं तत्स्थानं गतौ प्राप्तौ श्यामलश्च श्वेतश्च तौ श्रियो लक्ष्म्याः शोभायाश्चाश्रयभूतौ बृहद्भुजौ पीनवर्त्तुलदीर्घभुजयुक्तौ शोभने प्रसन्ने मुखे ययोस्तौ बालद्विरदस्य कलभस्येव पदविन्यासौ ययोः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अखिललोकपालानां किरीटेषु सत्सु चूडामणिषु पादरणवो यस्य स तथा तस्य क्षितिकौतुकानि भूमिमङ्गलकराणि पदानि पादतललाञ्छनानि अब्जादिभिर्विलक्षितानि लाञ्छितानि विवाहहस्तसूत्रे च मङ्गले कौतुकं विदुरिति च ॥ २५ ॥

संभ्रमः भक्त्युद्रेकनिमित्तव्यापारविशेषः उत्थानि रोमाणि यस्य स तथा रोमाञ्चितगात्रश्चायम् अश्रुकलयाकुलेक्षणश्च आकुले कलिले ईक्षणे यस्य स तथा अवस्कन्द्य अवरुह्य ॥ २६ ॥—१० ॥

गोदोहनं स्थानमिति शेषः गोदोहनक्रियां गताविति वा ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत्र मध्ये तस्य भक्त्यतिशयार्थं कायिकोऽपि व्यापारो वक्तव्य इति लोकप्रसिद्ध्यर्थं च निरूपयति । पदानीति त्रिभिः । हेतुक्रियाफलानिरूपकः यो भगवान् हृदये फलत्वेन भाव्यते तस्य पदानि भूमावुद्गतानि भगवदीयशरीरसम्पादकरजोयुक्तानि दृष्टवान् तद्रजो ग्राह्यमिति वक्तुं तस्य रजसः ब्रह्मत्वाद्यपेक्षयापि महत्त्वमाह । अखिललोकपालकिरीटजुष्टामलपादरेणोरिति । अखिलाः सर्वे लोकपालाः सर्वेषामैश्वर्यं भगवदधीनमेवेति निरूपयितुं देवदैत्यादयः सर्वे एव परिगृहीताः लोकपाला इति स्वरूपतोऽपि महत्त्वं महतां सेव्य एव महान् भवतीति किरीटजुष्टत्वेन धर्मार्थं तेषां प्रवृत्तिर्निवारिता धर्मार्थं यो नमस्करोति

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

स देहेनैव नमस्करोति सर्वाभरणभूषितस्तु ईश्वरमेव नमस्करोतीति मार्गरजोऽपि गच्छतां मुकुटसंबन्धि भवति तद्व्यावृत्त्यर्थं रजसोविशेषणममलमिति एतादृशश्चरणरेणुर्यस्येति भगवत्संबन्धादेव तस्य माहात्म्यं ननु मृगमदवत् स्वरूपतो रेणुर्महान् तादृशस्य पदानि ददर्श इति निधानप्राप्तिरिव सूचिता ननु कथं ज्ञातवानेतानि भगवत्पदानीति तत्राह । विलक्षितानीति । सुखसेव्यत्वाय फलदानाय चाब्जरेखा कीर्त्तिप्रकटनार्थं यवाकृतिः मनोगजनिवारणार्थमङ्कुशरेखा आदिशब्देन ध्वजादयोऽपि ननु भगवानेवं दुर्लभानि किमिति प्रकटितवानित्यत आह । क्षितिकौतुकानीति । क्षितौ कौतुकरूपाणि भूमौ रसप्रकटनार्थं कौतुकत्वेन प्रकटितवान् भूमिष्ठानां भजनसिध्यर्थं यत्राल्पस्थानेऽपि महाफलान्येवं प्रयच्छतीति ॥ २५ ॥

भक्तस्य दर्शने यदुचितं तत्कृतवानित्याह । तद्दर्शनेनेति । भगवदीयशरीरजनकास्ते रेणवस्तेषां दर्शने पूर्वस्थितदेहादीनां निवृत्तिर्वक्तव्या तत्र भक्तिरसस्तास्मिंश्चविष्टः स्वधर्मप्राकट्येन तद्धर्मान् दूरीकृतवान् तदाह । तेषां पदानां दर्शनेन यो जातो महाह्लादः तेन विवृद्धः सम्भ्रमो यस्य मानसो धर्मः व्याकुलता निरूपिता प्रेम्णा ऊर्ध्वानि रोमाणि यस्य दैहिको धर्मो निरूपितः अश्रुकलाभिराकुले ईक्षणे यस्येतीन्द्रियधर्मा निरूपिताः ततः पूर्वधर्म्माणां गतत्वात् सङ्घातस्तेषु पतित इत्याह । रथादवस्कन्द्येति । अवस्कन्दनमचेतनानां तथा स पतित इत्यर्थः । ततो रजःप्रभावात् सः प्रसिद्धः अक्रूरो जातः अन्तर्देहो भगवदीयो जातः वहिर्देहस्यापि तथात्वाय तेषु रेणुष्वचेष्टत लुठनं कृतवान् वहिस्तथा संवेदनाभावात् चेष्टामात्रमाह । ननु लुठने को हेतुर्वारं वारं तत्राह. तद्गतमभिप्रायं प्रभोरिति । एतावत्कालं शास्त्रार्थत्वेन ईश्वरत्वेन महत्त्वेन संबन्धित्वेन वा ज्ञातवान् इदानीं शुद्धः स्वयं सेवको जातः भगवांश्च प्रभुः तथा सति तस्य परमदुर्लभान्यङ्घ्रिरजांसि कथमेवं भूमौ स्थातुमुचितानि भवन्तीति स्वशरीरे तानि सर्वाण्येव योजयितुं यावत् तानि रजांसि सर्वाणि प्रविशन्ति तावत् लुठनं कृतवान् किञ्च आश्चर्यरसाविष्टोऽपि जातः अहो इति माहात्म्यमनेन सूचितम् ॥ २६ ॥

एवं तस्य कृतमुक्त्वा फलमाह । देहंभृतामिति । यदस्य जातम् इयानेव देहं भृतामर्थः पुरुषार्थः जन्मसाफल्यम् उत्पन्नेन हि परमः पुरुषार्थः साधनीयः स च भगवदीयभावः तथा यत्नः कर्त्तव्यः यथा स भवति ज्ञानादिस्तु अवान्तरफलरूपः मोक्षादपि स्वभावत एवायं भावो ऽधिकः तदुपपादितं भगवदीयत्वेनेत्यत्र अत इयानेव पुरुषार्थ इति युक्तमिति हिशब्दः देहसङ्ग्रहणं क्लेशात्मकं तदपि कृत्वा यदि परमपुरुषार्थं न साधयेत् तदा वैयर्थ्यमिति स कोऽर्थ इत्याकाङ्क्षायामाह । सन्देशादिति । सन्देशमारभ्य हरेर्लिङ्गश्रवणदर्शनादिभिर्यो ऽर्थो जातः अयमेवार्थः सन्देशानन्तरमेव तस्य चित्तं भगवत्परं जातं तदङ्गमानं भगवदीयत्वञ्च सम्पाद्य माहात्म्यज्ञानं कारितवत् लिङ्गानां चिन्हानां भगवत्पदानां प्रथमतो दर्शनं ततस्तत्सायुज्यमिति ततो भगवदीयत्वं माहात्म्यज्ञानञ्च सर्वे च भगवदीया धर्माः सन्देशादिति हेतोर्वा अन्यार्थमपि प्रयुक्तं वाक्यमेतावत्फलं साधयतीति अल्पप्रक्षेनाप्येतावत्त्वं महाफलमित्यर्थः। परन्तत्र दोषत्रयं परित्यज्यैतत्कर्त्तव्यमित्याह । हित्वेति । दम्भो राजसः भयं सात्त्विकं शोकस्तामसः दम्भो वाह्यः भयं शारीरं शोको ऽन्तःकरणस्य एतत्सर्वथा त्यक्तव्यम् अनेनापि त्यक्तमिति दम्भं कापट्यं त्यक्तवान् यथा कंसेनोक्तं भयञ्च त्यक्तवान् भगवान् किङ्करिष्यतीति शोकञ्च त्यक्तवान् भगवति तत्र गते कंसः किङ्करिष्यतीति भयानन्तरं चैतद्भवतीत्युक्तं भगवतो माहात्म्यज्ञानाभावे शोको भवति नान्यथा एवमन्यैरपि लौकिका अलौकिकाश्चैते भावाः त्यक्तव्याः अन्यथा एतावत्त्वं न भवेदिति ॥ २७ ॥

ततो योग्यशरीरं प्राप्य भगवन्तं दृष्टवानित्याह । ददर्शेति यादृशः सेवकः तादृशं वर्णयित्वा यादृशो भगवान् तादृशं वर्णयति षड्भिः—

स्वरूपञ्च वयश्चैव देहेन्द्रियविचेष्टितम् ।
शोभा स्वरूपञ्च तथा शोभा तस्याप्यलौकिकी ॥

तत्र प्रथमम्परिदृश्यमानं स्वरूपं वर्णयति भक्तत्वात् प्रथमं कृष्णं ददर्श ततो राममावेशिनं चकाराद्वाविष्टं व्रजे अधिकरणे तत्रापि गोदोहनं गतौ गोदोहनस्थाने स्थितौ गावो दुह्यन्ते अस्मिन्निति देशमुक्त्वा आवरणमाह । पीतनीलाम्बरधराविति । भगवान् पीताम्बरधरः रामो नीलाम्बरधर इति तादृशमेव वस्त्रद्वयं द्वयं परिभूतमस्तीति ज्ञापयितुमम्बरधरावित्युक्तं शरत्काले ये अम्बुरुहे सम्यक् जाते तद्वदीक्षणी ययोः अनेन गुणा उक्ताः देशकालयोः स्वाभाविकयोः विपरीतत्वेऽपि तत्समीचीनं विधाय ज्ञानादिसर्वपुरुषार्थान् प्रयच्छतीति तथोक्तम् ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पदानि पदचिन्हानि क्षितेः कौतुकं सविस्मयसौभाग्यं यतः ॥ २५॥

अश्रूणां कला कलनमतिक्षरणं कलिहली कामधेनू अवस्कन्द्य सहसैवावप्लुत्य स अक्रूरः तेषु पदेषु अचेष्टत संरोदनमलुठत् अहो भाग्यं दुर्लभलाभो ममायमिति सगद्गदं ब्रुवन् ॥२६॥

मथुरातो यात्रामारभ्य नन्दव्रजप्रवेशपर्यन्तमक्रूरस्य मनोवाक्कायचेष्टितं वर्णयित्वा तदेव दृष्टान्तीकृत्य सिद्धान्तसारमाह । देहं भृतामिति । द्वितीया आर्षी देहधारिणामियान् एतावानेव पुरुषार्थः कंसस्य सन्देशादारभ्य हरेर्लिङ्गदर्शनश्रवणादिभिर्योऽयमक्रूरस्य वर्णितः यथा हरेर्लिङ्गं पदचिन्हं दृष्ट्वा अक्रूरस्तत्रैव धूलौ लुलोठ तत्राहमक्रूरो राजमन्त्री राज्ञोऽत्यादरणीयः कथं गोचारकस्य पदधूलौ लुठामीति दम्भं हित्वैव महद्गतोऽपि भूत्वामच्छत्रोः पदधूलौ लुठन्नृपजापकुपितात् कंसात् भयं हित्वा कुपितकंसहिनादयेषु शुचं गृहकलत्रादिषु शोकं हित्वैव लुलोठ यथा तथैव वयं पण्डितत्वादभिजातत्वादैश्वर्यवत्त्वाच्च श्रेष्ठाः कथं सर्वलोकानादरकुचेलाकिञ्चननिकृष्टवैष्णवचरणधूलौ पताम इति दम्भं स्वजननिन्दनाद्भयं तत्तत्त्यागाच्छोकं च हित्वा हरेर्लिङ्गं वैष्णवं दृष्ट्वा तच्चरणधूलौ पतेयुः यद्वा हित्वेत्यादिकं देहभृन्मात्र योग्यं नत्वक्रूरे प्रेमविह्वले इति यथा हरेर्नारदादिमुखाद्यशः श्रवणेन स्मरणेन चाक्रूरो यथा दास्यरसानुकूलान् मनोरथांश्चकार तथैव कदा हरिं परिचरिष्यामः अपि किं तं द्रक्ष्याम इत्यादिमनोरथान् कुर्य्युरिति ॥ २७ ॥

गावो दुह्यन्तेऽस्मिन् इति गोदोहनं तत्स्थानं गतौ प्राप्तौ

किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ ।
सुमुखौ सुन्दरवरौ बालद्विरदविक्रमौ ॥ २९ ॥
ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजम् ।
शोभयन्तौ महात्मानावनुक्रोशस्मितेक्षणौ ॥ ३० ॥
उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ ।
पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवाससौ ॥ ३१ ॥
प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती ।
अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यद्वा गवां दोहनं कर्म्प्राप्तौ गा दुहन्तावित्यर्थः । सानुक्रोशे सानुकम्पे सस्मिते च ईक्षणे ययोस्तौ प्रधानभूतौ पुरुषौ जगति अवतीर्णौ अर्थेषु भारावताररूपेषु प्रयोजनेषु मध्ये स्वांशः स्वस्यो यो भागस्तेन हेतुना यथा अघबकादीन् कृष्णो जघान धेनुकप्रलम्बादीन् रामो जघान यथा च चाणूरकंसादीन् कृष्णः मुष्टिकद्विविदादीन् रामो हनिष्यतीति ॥ २८ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र तस्य श्रीकृष्णस्य क्षितिकौतुकानि भूमेरलङ्काररूपाणि पदानि ददर्श तच्चरणसंस्पृष्टरेणोरपि ब्रह्मादिकिरीटकोटिसेवितत्वं दर्शयति । अखिलैः सर्वैः लोकपालैर्ब्रह्मादिभिः किरीटेषु जुष्टा अमलाः पादरेणवो यस्य तस्येति ॥ २५ ॥

सः अक्रूरः तेषां दर्शनेन य आह्लादस्तेन विवृद्धः सम्भ्रमो यस्य प्रेम्णोर्ध्वान्युदञ्चितानि रोमाणि यस्य सः अश्रूणां कलाभिर्लेशैराकुले ईक्षणे यस्य सः रथादवस्कन्द्यावप्लुत्य अहो प्रभोरमून्यङ्घ्रिरजांसीति दुर्लभतां भावयन् तेषु पदेषु अचेष्टत व्यलुटत् ॥ २६ ॥

अन्यान् शिक्षयितुमक्रूरवृत्तान्तं श्लाघते । देहंभृतामिति । देहभृतामियानेव एतावानेव अर्थः पुरुषार्थः कोऽसौ दम्भादीन् हित्वा कंसस्य सन्देशादारभ्य हरेर्लिङ्गदर्शनश्रवणादिभिर्यो ऽयमक्रूरस्य वर्णित इति शेषः एवमेव देहभृद्भिर्भगवति भावः कर्त्तव्य इति भावः ॥ २७ ॥

ततो व्रजे रामं कृष्णं च ददर्श कथम्भूतौ गावो दुह्यन्ते यत्र तद्गोदोहनं स्थानं गतौ प्राप्तौ ॥ २८ ॥

भाषा टीका ।

समस्त लोकपालों के किरीटों से जिनके चरण रेणु सेवित हैं तथा अति निर्मल हैं उन कृष्ण भगवान् के कमल यव अंकुशादिकों से चिन्हित चरणों के चिन्हों का अक्रूरजीने गउओं के गोष्ठ में दर्शन किया ॥ २५ ॥

उनके दर्शन करने से बड़े आनंद के बढने से प्रेम के मारे रोमांच खडे होगये नेत्रों में से अश्रुधारा बह चलीं आकुल नेत्र होगये झट रथ से उतरकर उन में अहो ये प्रभु के चरण रज हैं ऐसा कह कर लोटने लगे ॥ २६ ॥

देह धारियों का यही स्वार्थ है जो कि दम्भ भय शोक को छोडकर कंस के संदेश से जैसे अक्रूरजी ने हरीके दर्शन श्रवणादिकों में मन लगाया है तैसा करना ॥ २७ ॥

फिर ब्रज में गो दोहन स्थान पर आये हुये बलराम तथा श्रीकृष्ण दोनों का अक्रूरजी ने पीत तथा नील दोनों वस्त्र पहिरे और शरद ऋतु के कमल सरीके नेत्रों से शोभित उत्तम दर्शन किया ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

अनुक्रोशोऽनुकम्पा तद्विलसितास्मितयुक्तमीक्षणं ययोस्तौ ॥ ३० ॥

उदारा रुचिरा क्रीडा ययोस्तौ स्रग्विणौ रत्नस्रग्भिरलंकृतौ ॥ ३१ ॥

प्रधानभूतौ पुरुषौ प्रकृतिपुरुषात्मकौ वा कुतः आद्यौ तदपि कुतः जगद्धेतू अत एव जगत्पती विपरीतो वा चतुर्णां पदानां हेतुहेतुमद्भावः जगत्यर्थे पृथिव्या भारापनयनाय स्वांशेन मूर्ति भेदेन बलकेशवौ सन्ताववतीर्णौ ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो भगवल्लक्षणालक्षणम् अङ्घ्रिभिरिति बहुत्वं द्वयोश्चानुष्ठयत्वात् ततो अद्भुतमाधुरीभिर्विश्वेषामपि स्तम्भात् स्थगितगतिना तेन पुनरपि कृपादृष्टिवृष्टिलाभः ॥ ३० ॥

तत उदाररुचिरा महामनोहरा क्रीडा गवाह्वानरोधनादिषु विलासहासादिरूपा ययोस्ताविति कृपया सम्यगिव निजमाधुरीं दर्शयितुं तमद्दृष्ट्वेव स्थितयोरनयोश्च क्रीडायां कौतुकावेशः तत्र च वेशविशेषाणां प्रत्येकनिशामनमिति यथाक्रममेव वर्णनं स्रग्विणौ ह्रस्वमध्यमादिमालाधरौ वनमालिनौ दीर्घमालाधरौ विरजावित्यकारान्तो रजशब्दः "अर्थाः पादरजोपमा" इति प्रयोगात् स्रग्विण्यादिकं गृहात् स्नानाद्यनन्तरमेवात्रागमनात् ॥ ३१ ॥

तदेवं तस्य तस्य माधुर्यानुभवचमत्कारजाते तद्भावानुसारेण पारमैश्वर्यानुभवचमत्कारोऽपि जात इत्याह । प्रधानेति । कृष्णस्य

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सर्वापेक्षया प्रधानत्वं रामस्याप्यपेक्षयेति स्वांशेनेति स्वाविर्भाव-भेदेनेत्यर्थः। अतएव जगत्पती इति द्वित्वं बलेति बलाधिक्य-स्फूर्त्तेः केशवेति साम्प्रतं केशिहन्तृत्वस्फूर्त्तेः कंसमारणे निश्चयं बोधयति ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

प्रधानपुरुषौ श्रेष्ठपुरुषौ आद्यौ सृष्टेः पूर्वं विद्यमानौ ॥ ३२—३८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ध्वजादिरेखाभिश्चिन्हितैराङ्घ्रिपङ्कजैर्व्रजमलङ्कुर्वन्तौ महात्मानौ सुशीलौ अनुक्रोशोऽनुकम्पा तद्विलसितस्मितयुक्तमीक्षणं ययोः ॥ २९ ॥ ३० ॥

उदारा रुचिता क्रीडा ययो रत्नस्रजावनयोः स्त इति तौ पुण्येन श्रेष्ठेन गन्धेन चन्दनेनानुलिप्तानि अङ्गानि ययोः विरजे निर्मले वाससी ययोः ॥ ३१ ॥

प्रधानपुरुषौ श्रेष्ठपुरुषौ आद्यौ सृष्टेः पूर्वं विद्यमानौ जगत्कारणभूतौ जगन्मयौ जगच्छरीरकत्वेन तत्प्रचुरौ जगत्यर्थे जगत्परिपालनार्थमंशेन सङ्कल्पेनावतीर्णौ बलाधिक्याद्बलः केशौ ब्रह्मरुद्रौ वाति उत्पादयतीति केशवः—

क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्।
आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवानिति ॥

रुद्रेणैव केशवशब्दार्थस्य निरुक्तेः बलश्च केशवश्च बलकेशवौ ॥३२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

श्रियो लक्ष्म्याः कान्तेर्वा निकेतौ मन्दिरायमाणौ ॥ २९ ॥

अनुक्रोशेन दयया स्मितेन सहितमीक्षणं ययोस्तौ तथा ॥ ३० ॥

उदारा महती ख्याता वा दक्षिणा वा रुचिरा च क्रीडा ययोस्तौ "उदारे महती ख्याते दक्षिणे दानशौण्डके" इतियादवः स्नातौ शुद्धौ ॥ ३१ ॥

जगत्यर्थे भूमेरर्थे अर्थप्रदाने प्रधानपुरुषावित्यादावुच्यमाना गुणा बलभद्रे हरेः संनिधानादुच्यन्ते नस्वौत्पत्तिकाः तदुक्तं वैन्यपार्थबलेशाद्यावविष्टं पुरुषोत्तमम्। अपेक्ष्य तद्गुणाः सर्वे इत्यादौ ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वय आह। किशोराविति। कैशोरे वयसि विद्यमानौ एकादशवार्षिकौ नववर्षादूर्ध्वं षोडशवर्षपर्यन्तं किशोरावस्था गोकुलवासिषु विद्यमानः कालः स्वस्मिन् गृहीत इति तं प्रकटयितुं तथावस्था जातः अग्रे प्रयोजनाभावात् कालावस्थां न वक्ष्यति अत एव ध्याने भक्तकृपया तामवस्थां गृह्णातीति सर्वं वयसि कैशोर इत्युक्तम् एकः श्यामलः अपरः श्वेतः कैशोरे वयसि रूपमभिव्यक्तं भवतीति वयः कार्यत्वेन रूपमुक्तं श्रीनिकेतौ श्रीवत्साङ्कितौ ग्रन्थाधारणं भगवच्चिन्हमेतत् भगवत्त्वज्ञापकं तदपि तदैव प्रकटमिति भगवतो महती क्रियाशक्तिरिति बृहद्भुजावित्युक्तम् अथ्यप्रत्याय सुमुखाविति। भक्तदर्शनावस्थायां सुमुखत्वे तस्य सर्वपुरुषार्थाः सिध्यन्तीति। सुन्दरवराविति। सुन्दरश्रेष्ठौ यत्राकृतिस्तत्र गुणा वसन्तीति सर्वगुणनिधानावित्यर्थः। बालो यो द्विरदः हस्ती तद्वद्विक्रमो ययोरिति अमानुषपराक्रमौ निरूपितौ—

सौन्दर्यं च तथा पुष्टिः प्रदृश्यत्वमरूपता।
निर्भयत्वं स्वतः सिद्धशासनत्वञ्च रूप्यते
अरण्य एव तद्बुद्धिः सुखं तस्य गृहे पुनः।
नान्यत्रेति च बोधाय विदेशक्लेशवारणे ॥

तद्वत्पराक्रम इति कौतुकार्थं सर्वानेव गोपालान् दूरादेव प्रक्षिपतीति निरूपितम् ॥ २९ ॥

भगवतो धर्मान् निरूपयन् चरणानि निरूपयति। ध्वजवज्रेति। ध्वजादिभिश्चतुर्भिश्चिन्हैः पुरुषार्थचतुष्टयरूपैः चिन्हिता ये अङ्घ्रयः तैर्भूमावुद्धृतैः व्रजं शोभयन्तौ शोभायुक्तं कुर्वन्तौ ये सर्वपुरुषार्थदातारः ते यत्र शोभाकरा जाताः भगवत्कृपया इतोऽधिकं भगवान् व्रजस्य किं कुर्यात् महात्मानात्मा स्वरूपं ययोः अयं धर्मिनिर्देशः धर्माणामुत्कर्षख्यापकः तयोर्माहात्म्यमुक्त्वा कृपालुतामाह। सानुक्रोशस्मितेक्षणाविति। दयापूर्वकं स्मितपूर्वकमीक्षणं ययोः दीनेषु दया समेषु स्मितमुत्तमेषु ज्ञानमिति संसारे क्लिष्टेषु दया ततः कर्मणा परित्यागेन वा क्लिष्टेषु अल्पमोहनं सुखदानं ततो भक्तेषु ज्ञानस्थापनमिति पर्यवसानतया दयया सुखदानं प्रत्यक्षत एव स्मितेनैव परमानन्दज्ञानमिति ॥ ३० ॥

ततो लीलामाह। उदारेति। उदारा रुचिरा क्रीडा ययोः भगवल्लीला पात्रापात्रविचारव्यतिरेकेण सर्वेभ्य एव सर्वपुरुषार्थान् प्रयच्छतीति उदारा रुचिरा मनोहरा च स्वतः फलरूपा क्रीडेति सामान्यापि लीला आभासरूपा लीला न भवतीति भगवन्तं वर्णयति। स्रग्विणाविति। शिरसि कण्ठे नानाविधाः स्रजो ययोः वनमालायुक्तौ च आपादावलम्बिनीमाला वनमालेति आगन्तुकैः सहजनिवृत्तिमत्या वनमाला पृथङ्निरूपिता विरजेत्यत्रेति चन्दनपुष्पवस्त्राभरणान्येवोक्तानि विरजसेवदनस्थाद्वा पुण्येन गन्धेन अनुलिप्तान्यङ्गानि ययोः एते अभिलिप्ता एव पुण्यगन्धाः स्नानाङ्गभूताः ततः स्नातौ ततो नूतनानिर्मलवस्त्रपरिधानमिति विरजवाससौ ॥ ३१ ॥

कथमेवं गोकुलवासिनोर्महती पूजा संभृतेतिनिर्धारयन्नाह। प्रधानपुरुषाविति। प्रधानपुरुषावुभावपि कार्यप्रधानपुरुषव्यावृत्त्यर्थमाह। आद्याविति। तयोः प्रधानपुरुषत्वे हेतुमाह। जगद्धेतू इति। य एव जगत्कारणं स एव प्रथमं प्रधानपुरुषरूपो भवतीति। प्रधानपुरुषत्वं मुख्यपुरुषत्वं वा जगत्कारणत्वमपि साधयति। जगत्पती इति। भर्त्ता स य एव स्रष्टा उत्पत्तिस्थितिलयानामेककर्तृकत्वात् पालकत्वं तस्य सर्वजनीनम् अत एव साम्प्रतं रक्षामाशङ्क्य जगत्यर्थे भूम्यर्थमवतीर्णौ स्वस्य निजांशेन आनन्दांशेन उभयोरागमने विशेषकार्यं नाम्नैव निरूपयति बलः क्रियाशक्तिप्रधानः उत्पत्तिस्थितिलयकर्त्ता केशवो मोक्षदाता ब्रह्मादीनामपि ॥ ३२ ॥

---

दिशो वितिमिरा राजन्! कुर्वाणौ प्रभया स्वया ।
यथा मारकतः शैलो रौप्यश्च कनकाचितौ ॥ ३३ ॥
रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ।
पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥ ३४ ॥
भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः ।
पुलकाचिताङ्ग औत्कण्ठ्यात्स्वाख्याने नाशकन्नृप ! ॥ ३५ ॥
भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना ।
परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीनिकेतौ शोभाश्रयभूतौ अतिसुन्दरौ अत एवान्येषु वरौ श्रेष्ठौ ॥ २९ ॥

अनुक्रोशेन अनुकम्पया विलसितेन स्मितेन मन्दहासितेन युक्तमीक्षणं ययोस्तौ ॥ ३० ॥

उदाराः रुचिराः क्रीडाः ययोस्तौ स्रजः रत्नमालाः अनयोः स्युरिति स्रग्विणौ पुण्यैर्गन्धैरनुलिप्तान्यङ्गानि ययोस्तौ ॥ ३१ ॥

प्रधानभूतौ सर्वश्रेष्ठौ पुरुषौ आद्यौ सर्वसृष्टेः पूर्वं विद्यमानौ जगत्यर्थं भूभारापनयनाय स्वांशेन स्वसङ्कल्पेनावतीर्णौ कश्च ईशश्च केशौ तौ वातीति केशवः ब्रह्मशिवयोरुत्पादकः वा गतौ "आत" इति कः ॥ ३२ ॥

---

### भाषा टीका ।

किशोर अवस्था वाले एक श्यामल एक श्वेत रूप वाले लक्ष्मी के आश्रय तथा बडे भुजा वाले सुंदर मुख वाले सुंदरों में श्रेष्ठ हस्ती के छौना सरी के ॥ २९ ॥

ध्वज वज्र अंकुश कमल आदि से चिन्हित चरणों से व्रजको शोभित करते हुये अत्यंत महा प्रभाव वाले कृपा से मंदहास्य सुंदर दृष्टि युक्त ॥ ३० ॥

अति मनोहर क्रीडा वाले रत्न माळा तथा वन माळा पहिरे पवित्र चंदन गंध को अंगों में लेपन किये स्नान किये दिव्य वस्त्रों को पहिरे हुये ॥ ३१ ॥

जगत के आद्य कारण श्रेष्ठ पुरुष जगत के हेतु जगत के पति संसार के हितार्थ अपने अंश से अवतीर्ण श्रीबलराम "था श्रीकेशव जी का अक्रूरजी ने दर्शन किया ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्रभया विगततिमिरा दिशः कुर्वाणौ कनकाचितौ सुवर्ण-व्याप्तावेिति सालङ्कारयोः शैलसादृश्यार्थमुक्तम् ॥ ३३—३४ ॥

भगवद्दर्शनाह्लादेन यद्बाष्पं तेन पर्याकुले ईक्षणे यस्य सः पुलकैराचितं व्याप्तमङ्गं यस्य सः स्वाख्याने अक्रूरोऽहं नमस्करोमीति कथने नाशक्नोत् ॥ ३५ ॥

अभिप्रेत्याऽक्रूरोऽयमेतदर्थमागत इति ज्ञात्वा कंसहननसामर्थ्यं द्योतयन्निव रथाङ्गेन चक्रेणाङ्कितो यः पाणिस्तेनाभ्युपाकृष्य तमालिङ्गितवान् ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु दूरतस्तद्विशेषः कथं दृष्टः उच्यते महातेजस्वित्वादिति यतः क्रमशः राज्यंशे जातेऽपि विशेषतो व्यद्योतितामित्याह । दिश इति । शैलदृष्टान्तोऽन्यसवयस्कापेक्षया बृहत्त्वादेः स्तनशैलादिवत् तथा च श्रीविष्णुपुराणे प्रांशुमुत्तुङ्गबाह्वंशमित्यादि योजनाचेयं यथा मारकतः शैलो रौप्यश्च कनकाचितौ भवतः । तथा तौ ददर्शेति बृहत्तया सवर्णतया तथा सौवर्णालङ्कारतया चेति भावः । किं कुर्वन्तावित्यत्राह । दिश इति । एवमेव तैः सूचितं कनकेति ॥ ३३ ॥

स तथा निकटागतोऽक्रूरो रथात्तूर्णमवप्लुत्य अवाक् प्लुत्य पतित्वा रामकृष्णयोः समानस्थितयोश्चरणसमीपे दण्डवत् पपात कतिचित् पदानि पद्भ्यामेवागत्येति शेषः । तत्र सर्वत्र हेतुः स्नेहविह्वलः दास्यभावोचितप्रेमविशेषमोहितः इति । अयं भावः । दूरतः प्रथमदर्शने यन्नावप्लुतस्तत्र स्नेहवैकल्यमेव हेतुः । भूमौ रथे वा स्थितोऽहमित्यनुसन्धनाभावात् तदभिमुखं द्रुतगामितुरगेण रथेन तदीयरूपाकृष्टदृष्टिमनसः स्वस्यानुकूल्यलाभाच्च । अथ निकटागतो यदवप्लुतस्तत्रापि तदेव हेतुः । दूरस्थभावतस्तदात्मन ईषदूर्ध्वस्थितेर्न स्फुटमवगतासीत् निकटात्तु स्फुटमवगता । अतस्तदनुसन्धानाद्दादराकर्षणे जातं इति । तथा पितृव्यताव्यवहारण योग्यतायामपि प्रणामे यथाविधि तदविधाने च हेतुर्गम्य इति ॥ ३४ ॥

स्नेहविह्वलत्वमेव सहेतुकमभिव्यञ्जयति । भगवदिति । पर्याकुलेति सम्यग्द्रष्टुमपि नाशकदिति सूचितम् । उत् उद्गतः उच्चैर्गतः कण्ठस्तद्भवः स्वरो यस्य स उत्कण्ठस्तस्य भावः औत्कण्ठ्यं तस्मात् सन्नकण्ठत्वादित्यर्थः । स्वाख्यानेऽपि नाशकत् किं

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनरप्रसङ्गत्वादिसम्पादने इत्यर्थः । नाशकन्नृपेति यद्यत्र पाठेऽपि तथैवोह्यम् ॥ ३५ ॥

भगवानिति सार्वज्ञ्यं परमकारुण्यादिकञ्च दर्शितम् अभिप्रेत्य सर्वज्ञोऽपि लीलया श्रुतेनाकारेणाक्रूरोऽयमिति सम्भाव्य रथाङ्गाङ्कितत्वेन भगवल्लक्षणं व्यज्य तत्स्पर्शेनाक्रूरस्य भाग्यमाहात्म्यं दर्शयति । रथाङ्गेत्युपलक्षणं यथोक्तं श्रीपराशरेण सोऽप्येनं ध्वजवज्राब्जकृतचिन्हेन पाणिना । संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे" इति प्रीतः सन् परिरेभे ननु पितृव्यव्यवहारेण नमस्कृतवान् तत्र प्रीतत्वेऽपि पितृव्यव्यवहारामननेऽपि हेतुः । प्रणतवत्सल इति । तदीयदास्यभक्तिविशेष इत्यर्थः । ये यथा मामित्यादेः श्रीकृष्णेन प्राक् परिरम्भेऽप्ययमेव हेतुः अन्यत्तैः तत्र इत्येत्युत्प्रेक्षायां ततो वस्तुतो द्योतनार्थं नोपाकर्षत् किन्तु प्रीत्यैवेत्यर्थः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे राजन् ! स्वया प्रभया दिशो वितिमिराः कुर्वाणौ यथा कनकेनाचितः मध्ये खचितः मारकत शैलः इन्द्रनीलपर्वत इति यावत् इयं कृष्णस्योपमा रौप्य इत्यस्याअनाचित इति शेषः । इयं रामस्योपमा एवम्भूतौ ददर्शेति सम्बन्धः ॥ ३३ ॥

तदा सोऽक्रूरः तत्क्षणमेव रथादवप्लुत्य प्रेम्णा विह्वलः रामकृष्णयोश्चरणोपान्ते दण्डवत्पपात ॥ ३४ ॥

भगवद्दर्शनजाह्लादेन यद्बाष्पं तेन परित आकुले व्याप्ते ईक्षणे यस्य सः पुलकैराचितं व्याप्तमङ्गं यस्य तथाभूतः हे नृप ! औत्कण्ठ्यात्स्वाख्यानेऽक्रूरोऽहं नमस्करोमीति कथने नाशकत् न प्रबभूव ॥ ३५ ॥

भगवान् श्रीकृष्णस्तदक्रूरोऽयमेतदर्थमिहागत इत्येतज्ज्ञात्वा प्रणतवत्सलत्वात् रथाङ्गेन चक्रेणाङ्कितो यः पाणिस्तेन तमभिमुखं समीपे आकृष्य प्रीतः परिरेभे आलिङ्गितवान् ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मरकतसदृशः कृष्णः रजतपर्वतसदृशो रामः कनकाचिताविस्युभयोः समं यदेतनादित्यस्य परं कृष्णरूपमित्यत्र यथादित्यस्य कृष्णप्रभा तिमिरापहा कृष्णमरकतश्यामप्रभापि दिशो वितिमिराः करोतीति युक्तमित्यनेन कृष्णप्रभाया अन्धकारनिरासकत्वं कथमिति मन्दाशङ्का दूरतो निरस्तेति ॥ ३३ ॥

अवप्लुत्य अवरुह्य ॥ ३४ ॥

आह्लाद आनन्दः ॥ ३५

रथाङ्गं चक्रं तेनाङ्कितेन पाणिना ॥ ३६ ॥ —॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथा मारकतः शैलो रौप्यश्च कनकाचितौ भवतः तथा तौ ददर्शेत्यन्वयः । बृहत्तया सर्वांतमतया सुवर्णालङ्कारतया चेति भावः । किं कुर्वन्तावित्यत्राह । दिश इति ॥ ३३–३५ ॥

अभिप्रेत्य लक्षणादिना लोकरीत्या वितर्क्य ॥ ३६ ॥ ३७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशस्यावतारे लोके अभिशापकमाह । दिश इति । दश दिशः स्वया असाधारण्या प्रभया वितिमिराः कुर्वाणौ कान्तिरेव सूर्याधिका अलौकिकी न शीता नचोष्णा सर्वतापनाशिका सर्वेषां सर्वानन्ददायिनी ब्रह्मत्वयोधिका भवति राजन्नित्यलौकिकवस्तुपरिज्ञानार्थम् अभूतोपमामाह । यथा मारकतः शैल इति । मरकतमणिनिर्मितः शैलः भगवान् रौप्यः कैलासस्तत्तुल्यो बलभद्रः उभावपि कनकशृङ्गाङ्कितौ चेत् उपमां प्राप्नुतः सर्वत्र भगवान् धराधरत्वेन वर्ण्यते सर्वाश्रयत्वाय महत्त्वादिधर्मार्थं च ॥ ३३ ॥

एवं भगवन्तं वर्णयित्वा तादृशे स्वमिति तादृशसेवकस्य कर्तव्यपूर्वकं भगवत्कार्यमाह दशभिः । तत्र द्वाभ्यां तस्य कृत्यम् अष्टभिर्भगवत्कृत्यमिति प्रपत्तिः तस्य अष्टैश्वर्यादिदानं भगवतः रथादिति आदौ दृष्ट्वा रथे स्थित एव तूर्णमवप्लुत्य तत उच्चत्वाद्भूमौ पतित्वा ननूत्तीर्य स प्रसिद्धः पूर्वं चरणरजस्सु यः पतितः साक्षाद्दर्शनानन्तरमत्युत्कटो यो जातः स्नेहः तेनापि विह्वलः रामकृष्णयोश्चरणोपान्ते निकट एव पपात पाते वेदादिरविचारार्थमाह । दण्डवदिति । अत्र ज्येष्ठानुक्रम उक्तः व्यवहारे वयसो मुख्यत्वस्थापनार्थः ॥ ३४ ॥

अकस्मात्पतिते शङ्का भवतीति कथं स्वनाम गृहीतवान् तत्राह । भगवद्दर्शनेति । भगवद्दर्शनेन योऽयं महानाह्लादो जातः तेनान्तः पूर्णेन बहिर्बाष्पतया निर्गतेन पर्याकुले ईक्षणे यस्य ज्ञानफलेन ज्ञानं तिरोहितमिति तस्य न विचार उत्पन्न इत्यर्थः । नन्वन्योमास्तु विचारः अयमहमिमिति अपूर्वदर्शनत्वात् कथं न स्वाभिधामुक्तवान् तत्राह । पुलकाञ्चित इति । सर्वाङ्गे रोमाञ्चः प्रेमातिभरात् जातः तेन विवशत्वात् स्वाख्याने अयमहमस्मीति कथनेऽपि नाशकत न समर्थो जातः परिज्ञानार्थं संबोधनमादरार्थं वा ॥ ३५ ॥

ततस्तस्य वचनव्यतिरेकेणैव भगवांस्तं ज्ञात्वा कर्तव्यं कृतवानित्याह । भगवानिति । भगवत्त्वात् तमक्रूरोऽयमित्यभिप्रेत्य दुष्टसंसर्गजनितदोषनाशार्थं रथाङ्गेन चक्रेणाङ्कितेन कालात्मकेन तद्दोषं दूरीकृत्य पाणिना तमाकृष्य स्वसमीपं आनीय तस्मिन् स्वप्रवेशे लौकिकं कार्यं सेत्स्यतीति नमेव स्वस्मिन् आनीतवान् ततः परिरेभे उभयोरैक्यं सम्पादितवान् दण्डवत्पातेनैव प्रीतः नन्वस्य बहवो दोषाः सन्ति संसर्गजाः तत्कथं प्रीत इति चेत्तत्राह । प्रकर्षेण नतेषु वत्सलः वात्सल्ययुक्तः भक्तकृपालौ प्रकर्षेण नतिमात्रेणैव कृपा अभिव्यक्ता भवति अत आलिङ्गनमुचितमेव यो भगवता परिगृहीतः यः कृष्णपादाङ्कितेषु लोटनेन भगवदीयत्वं प्राप्तः स भगवति सायुज्यमेव प्राप्तवान् न स पुनरुद्गतः भगवता परित्यक्त इति वचनाभावात् तस्य पूर्वकामितसिध्यर्थं प्रतिज्ञातिमेव कृत्वा पृथक्कृतवानिति लक्ष्यते नहि परमप्रेम्णा भगवत्सायुज्यं प्राप्तस्य पुनरुत्थानं सम्भवति लौकिकन्याय तु भक्तिर्द्वैधैव स्यात् अतो बलभद्रालिङ्गनानुपपत्त्या भगवद्विश्लेषः तस्य कल्पयितुं शक्यः एवं सति भक्तिमार्गः

सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः ।
गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥ ३७ ॥
पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम् ।
प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत् ॥ ३८ ॥
निवेद्य गां चातिथये सम्वाह्य श्रान्तमादृतः ।
अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥ ३९ ॥
तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् ।
मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सफलो भवति अन्यथा भावान्तरमुत्पादयन् पाक्षिकफलः स्यात् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वाख्याने अक्रूरोऽहं नमस्करोमीति स्वकथनेऽपि न शशाक ॥ ३५ ॥

अभिप्रेत्य अक्रूरोऽयमेतदर्थमागत इति ज्ञात्वा रथाङ्गाङ्कितेन चक्रचिन्हाङ्कितेन पाणिना तमभ्युपाकृष्य स्वनिकटमाकृष्य आकर्षणेन कंसहननसामार्थ्यं ज्ञापयामिवेति भावः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मारकतः इन्द्रनीलमणिमयः रौप्यः रूप्यमयश्च शैलो भवति इति तयोः शरीरोपमा तौ च शैलौ यथा कनकाचितौ भवत इति सुवर्णमयालङ्कारोपमा दर्शिता उभयोः सुवर्णालङ्कारालङ्कृतत्वात् एवं भूतौ हे राजन् ! दिशो वितिमिराः स्वया प्रभया कुर्वाणौ ॥ ३३ ॥

स्नेहेन प्रेम्णा विह्वलः विकलः ॥ ३४ ॥

भगवद्दर्शनजेनाह्लादेन यद्बाष्पं तेन परितः आकुले व्याप्ते ईक्षणे यस्य सः पुलकैराचितं व्याप्तमङ्गं यस्य सः स्वाख्याने स्वनामगोत्रादिकथनेनाशकत् ॥ ३५ ॥

भगवान् सर्वज्ञः अक्रूरोऽयमस्मदानयनार्थमागत इत्यभिप्रेत्य विज्ञाय कंसादिवधसामर्थ्यं सूचयन्निव रथाङ्गेन सुदर्शनेनाङ्कितो यः पाणिस्तेनाभ्युपाकृष्य तमालिङ्गितवान् रथाङ्गाङ्कितपाणिशब्दः श्रीकृष्णविग्रहस्यानाद्यनन्ततां द्योतयति ॥ ३६ ॥

---

भाषा टीका ।

हे राजन् ! वे श्रीरामकृष्ण दोनों अपनी कांति से दशों दिशाओं को अन्धकार रहित करते हुये वैसे दीखते थे कि जैसे सुवर्ण से मण्डित मरकत मणि का तथा चांदी का पर्वत होवै ॥ ३३ ॥

तब अक्रूर जी स्नेह से बडा विह्वल होकर रथ से जल्दी उतर कर रामकृष्ण दोनों के चरणों के निकट दंड कि नाई गिर पडे ॥ ३४ ॥

भगवान् के दर्शन करने से भया जो आल्हाद तिससे आंसुओं के आने से नेत्रों से व्याकुल होगये उत्कण्ठा से पुलकित होगये और अपने कहने को समर्थ नहीं होसके ॥ ३५ ॥

भगवान् ने अक्रूरजी को जानकर चक्र से चिन्हित अपने हस्त कमल से अक्रूरजी को पकडकर आलिंगन किया और खैंच के ले आये और प्रणत भक्तों के बडे दयालु होने से बडे प्रसन्न भये ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पाणी अञ्जलिरूपेण संहतावेव गृहीत्वा ॥ ३७ ॥

मधुपर्कं पयार्हणं तस्मिन्वा यदुचितमर्हणमाहरत् आनीय समर्पितवानित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सङ्कर्षण इति । यद्वा नामपृथग्भावादित्युक्तौचित्याभिप्रायेण महत् श्रीकृष्णभक्तेषु वात्सल्यादिगुणैः सर्वत उत्कृष्टं मनो यस्य स इति पूर्ववद्धेतुः सानुज इत्यग्रजत्वव्यवहारेण तस्यातिथ्यकरणे मुख्यत्वात् गृहं श्रीमन्नन्दगृहे श्रीरामस्यापि स्वगृहत्वेनैवाभिमानात् ॥ ३७ ॥

वरं श्रेष्ठं रत्नादिमयमासनं विधिवत् यथाविधीत्यर्थः इदं सर्वत्र योज्यं प्रक्षाल्य पादावित्यत्र तदप्रत्याख्याने हेतुः आदृतः सादरः तथादरपरिपाटीभिः स्वमाधुरीव्यञ्जिता यथाक्रूरोऽपि तदैश्वर्यादिकं विस्मृत्य तदिच्छैकानुसारी बभूवेति भावः । एवं सम्वाह्य पादसम्वाहनं कृत्वेति च उभयत्र ण्यन्तत्वं वा ॥ ३८–३९ ॥

प्रीत्या भुक्तवते षष्ठ्यार्थे चतुर्थी परमधर्मेण वैष्णवधर्मेण आतिथ्यं तत्रापि द्वादशीपारणायां तत्रापि वैष्णवं प्रत्येवमेव व्यव-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दर्त्तव्यमिति लोकैः प्रवर्त्तयन्नित्यर्थः । अतः पुनरपि परमां प्रीतिं व्यधात् तस्य दिनस्य द्वादशीत्वं परश्वश्चतुर्द्दश्यां भूतराजपूजायां कंसराजमारणात् पारणायाः प्रातरकरणन्तु भगवद्दिदृक्षया न रात्रौ पारणं कुर्यादिति नियमातिक्रमस्तु साक्षाद्भगवद्गृहान्नप्राप्तेः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

संवाह्य अङ्गसंवाहनं कारयित्वा ॥ ३९ ॥

मुखवासैः कर्पूरादिभिः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सङ्कर्षणोऽपि प्रणतमक्रूरमुपगुह्याश्लिष्य प्रीतमनाः स्वपाणिना तस्य पाणिं गृहीत्वा सानुजो गृहमनयत् ॥ ३७ ॥

ततः स्वागतं पृष्ट्वा तस्मै अक्रूराय श्रेष्ठमासनं समर्प्य यथाविधि पादौ प्रक्षाल्य मधुपर्कमुपाहरदानीय समर्पितवान्॥ ३८ ॥

तत आदृतोऽतिथये अक्रूराय गां समर्प्य श्रान्तं तं सम्वाह्य पादसम्वाहनादिकं कारयित्वा मेध्यं विशुद्धं बहुगुणोपेतं षड्रसयुक्तमन्नं श्रद्धया समर्पयामास ॥ ३९ ॥

तस्मा इति । मुखवासैः कर्पूरादिभिर्गन्धमाल्यताम्बूलैश्च तस्मै तस्य परां प्रीतिं व्यधादुपापादयत् ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मधुपर्काद्दि मधुपर्कपूजां "मधुपर्कं च सक्षौद्रं दधि प्रोक्तं मनीषिभिरिति" तान्निरुक्तः आहरत् दत्तवान् ॥ ३८ ॥

संवाह्य पादाविति शेषः ॥ ३९ ॥

मुखवासैः कर्पूरताम्बूलादिभिः ॥ ४० — ४३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रक्षाल्य विधिवत् पादावित्यत्र हेतुः आदृतः सादरः तथादरपरिपाटीभिः स्वमाधुरीव्यञ्जिता यथाक्रूरोऽपि तदैश्वर्यादिकं विस्मृत्य तदिच्छैकानुसारी बभूवेति भावः ॥ ३८—४३ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सङ्कर्षणोऽपि प्रणत इति भावसङ्कटात् सङ्कर्षणोऽपि तं तथा कृतवानित्याह । सङ्कर्षणेति । अत्रापि प्रणतत्वमेव हेतुः न तु लौकिक इति चकारेणातिदिग्धोऽप्यर्थः कर्तृधर्मपर इति पुनराह । प्रणतमिति । महामना इति । तस्य लौकिकधर्माभिनिवेशः ततोऽयं पितृव्यः समागत इति पाणिना पाणिं गृहीत्वा भगवत्सहितः तं गृहमनयत् कामनासिद्धेति कथनार्थमुच्यते ॥ ३७ ॥

ततो लौकिकवैदिकमार्गेण तं पूजितवानित्याह । पृष्ट्वेति । अनामयमारोग्यं पृष्ट्वा उत्कृष्टं तस्य गृहेऽपि दुर्लभम् आसनं निवेद्य ततः शास्त्रानुसारेण अभ्यागते यथा कर्त्तव्यं तथा पादौ प्रक्षाल्य मधुपर्कसहितमर्हणं पूजामाहरत् ॥ ३८ ॥

निवेद्येति । ततो गां निवेद्य महोक्षं वा महाजं वेति स्मृतेः उत्सर्गपक्ष एव वात्र यद्यप्ययमभ्यागतः तथाप्यपूर्व इत्यतिथिरेव धर्मश्च भगवान् करोति नतु संयन्धेनेति ज्ञापयितुञ्च तथोक्तवान् अतिथिस्तु गोघ्नो भवतीति हननार्थमेवेति केचित् चकारान्महाजश्च वस्त्रादिकञ्च ततः संवाह्य तैलाभ्यङ्गमर्दनादिना सर्वाङ्गश्रमं दूरीकृत्य आदृतो जातः संवाहे हेतुः श्रान्तमिति ततो बहुगुणमनेकव्यञ्जनयुक्तमन्नमोदनं श्रद्धापूर्वमुपाहरत् । मेध्यमिति । तदानीं शुद्धतया निर्मितं रोहिण्या पक्वमित्यर्थः । ननु यथा कथं चित्सम्पादितं तथात्वे श्रद्धा हेतुः अकालेऽपि सहसा सर्वसामग्रीसिद्धौ हेतुः । विधुरिति । अतिथिधर्मं जानातीत्यक्रूरः स्वयं तथैव कृतवान् उभावपि भिन्नभावापन्नाविति न किञ्चिद्विरुध्यते ॥ ३९ ॥

भोजनान्तमेवातिथिकृत्यमिति अग्रिमोपचारं न कुर्यादिति पुनराह । तस्मा इति । भुक्तवते आतृप्तः ततः परमप्रीत्या मुखवासैस्ताम्बूलादिभिः गन्धैश्चतुः समैः माल्यैश्च राजवत् तस्मै परं प्रीतिं व्यधात् अयमसाधारणो धर्मः अतिथौ स्वसदृशं कुर्यादिति ततोऽप्यधिकं कृतवान् यद्यपि पूर्वं मधुपर्कादिसमये माल्यं दत्तमेव तथापि प्रीत्यै तद्दानमिति पुनरित्यनेनास्य लौकिकत्वमुक्तम् ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पाणिना स्वदक्षिणेन पाणी अञ्जली भूतौ गृहीत्वेति गृहीतमञ्जलाविति तथैव तन्मनोरथात् ॥ ३७ ॥ ३८ ॥

निवेद्य गामिति । पाद्याद्युपचारेषु गौरियं दृश्यतां तयेति नयनेन्द्रियसुखदानार्थं सुन्दरगवोपस्थानमप्येको मङ्गलोपचारः मेध्यमिति द्वादशीपारणविहितमित्यर्थः । अस्य दिनस्य द्वादशीत्वं परश्वश्चतुर्द्दश्यां भूतराजपूजायां कंसमारणात् न रात्रौ पारणं कुर्य्यादिति नियमातिक्रमः कृष्णगृहान्नप्राप्तिलोभात् ॥ ३९ ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अञ्जलिरूपेण संहतावेव पाणी सानुज इत्यनेनैकतः सङ्कर्षणः एकतस्तदनुजश्च गृहीत्वा गृहमनयत् ॥ ३७ ॥

मधुपर्करूपमर्हणमर्हणमुपाहरत् आनीय समर्पितवान् ॥ ३८ ॥

संवाह्य चरणसंवाहनादिकं कारयित्वा ॥ ३९ ॥

मुखवासैः ताम्बूलादिभिः गन्धैः कर्पूरादिभिः माल्यैः पुष्पैश्च परामुत्कृष्टां प्रीतिं व्यधात् उदपादयत् ॥ ४० ॥

---

भाषा टीका ।

बड़े खुशी होकर बलदेवजी ने भी उनको आलिंगित कर

१पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे ।
कंसे जीवति दाशार्ह ! सौनपाला इवावयः ॥ ४१ ॥
यो ऽवधीत्स्वस्वसुस्तोकान् क्रोशन्त्या असुतृप्खलः ।
किन्नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥ ४२ ॥
इत्थं सूनृतया वाचा नन्देन सुसभाजितः ।
अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे अक्रूरागमनं नाम
अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

भाषा टीका ।

के हाथ से दोनों हाथों को जोडकर श्रीकृष्ण सहित अपने घर में ले आये ॥ ३७ ॥

फिर उनको स्वागत पूंछकर उनके अर्थ श्रेष्ठ आसन निवेदन करके विधि पूर्वक पादों को प्रक्षालन करके मधुपर्क पूजन निवेदन किया ॥ ३८ ॥

उन अक्रूर अति थी के अर्थ गउ निवेदन करके पाद सेवा पूर्वक आदर करके विभु भगवान् ने श्रद्धा से बहुत गुण वाला पवित्र अन्नका भोजन कराया ॥ ३९ ॥

उनने जब भोजन कर लिया तब परम धर्मज्ञ श्रीबलरामजी ने प्रीति से तांबूल आदि चंदन आदि से उनकी फिर भी प्रसन्नता की ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सत्कृतं संमानितम् निरनुग्रहे क्रूरे कथं केन प्रकारेण स्थ जीवथेत्यर्थः । सौनः पशुघाती स एव पालको येषामवीनां मेषाणां त इव तत्तुल्या इत्यर्थः ॥ ४१ ॥

निरनुग्रहतामाह । योऽवधीदिति । तोकान् तोकानि असुतृप् असूनेव तर्पयति यः अतः खलः तस्य कंसस्य प्रजानां हे अक्रूर येषां जीवनमात्रमपि दुर्लभं तेषां वः किं नु कुशलं विचारयाम इति ॥ ४२ ॥

मधुरया वाचा इत्थं सत्कृतः तथैव वाचा परिपृष्टेन प्रश्नेन अध्वपरिश्रमं संसारश्रमम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम
अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं ज्येष्ठपुत्रेण सत्कृतं सन्तं हे दाशार्हेति कंसस्य यदुकुलद्वेष्टृत्वेन तस्यापि ततो भयं सूचयति शूना हत्या तया चरतीति शौनः पश्वादिघाती ॥ ४१ ॥

स्वस्य स्वसुरिति सम्बन्धस्य नैकट्यं भागिनेयं हननायोग्यत्वञ्च दर्शितं तत्रापि तोकान् बालापत्यानि तत्रापि क्रोशन्त्य इति निर्दयत्वं महादुष्टत्वञ्च तच्च केवलमात्मदेहरक्षार्थमेवेत्याह । असुतृविति । तदपि तेषु निरपराधेषु मिथ्या दोषारोपादित्याह । खल इति । तस्य प्रजानामधीनानामित्यर्थः । नु सम्बोधने स्वित् वितर्के किं कतमत् कुशलम् ॥ ४२ ॥

इत्थमिति तैर्व्याख्यातं तत्राध्वशब्देन संसारवचनमध्वपरिश्रमाभावेन वर्णितत्वात् यद्वाध्वानि परिश्रममिति न मय्युपैष्यत्यरिबुद्धिमच्युत इति पूर्वोक्तरीत्या श्रीव्रजेश्वरादिमनःप्रसादे तु सन्देहात्मको यो मनःखेद आसीत् तमपि जहावित्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टात्रिंशोऽध्याय ॥३८॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कथं स्थ तत्प्रजानां वः तद्विषयवासिनां वः ॥ ४१—४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो नन्दस्तं कुशलं पप्रच्छ प्रश्नमेवाह । कथमित्यादिना । विमृशाम ह इत्यन्तेन निरनुग्रहे प्रत्युत क्रूरे च दाशार्हे कंसे जीवति

१ इम श्रयो विजयध्वजीये न सन्ति

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सति कथञ्चेन प्रकारेण स्थ जीवथेत्यर्थः। सौनाः पशुघातिनः पालका येषां ते अवयो मेषा इव तत्तुल्या यूयमित्यर्थः ॥ ४१ ॥

निरनुग्रहतामेवाह। योऽवधीदिति। स्वसुर्भगिन्याः क्रोशन्त्याः सत्यास्तोकानपत्यानि अवधीत् असुतृप् असून् तर्पयतीति तथा अतः खलः तस्यैवं विधस्य कंसस्य प्रजानां वो युष्माकं कुशलं कीदृशमिति विमृशामहे येषां जीवनमात्रमपि दुर्लभं तेषां वः कुशलं किमिति विचारयामः इत्यर्थः ॥ ४२ ॥

इत्थं नन्देन सूनृतया मधुरया वाचा परिपृष्टः सत्कृतश्चाक्रूरः अध्वश्रमं जहौ ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टत्रिंशोऽध्यायः॥ ३८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ३८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो ग्रामप्रभुणा असम्मानितश्चेत् लोके बालकैः सम्मानितोऽपि न परितुष्टो भवेत् इति सम्भाषणात्मकं सम्मानं नन्दकृतमाह। पप्रच्छेति त्रिभिः। पूर्वमेव सत्कृत इति पूजामकृत्वैव केवलं पप्रच्छ प्रश्नमेवाह। निरनुग्रहे कंसे तस्य समीपे कथं स्थेति सम्भावितोपद्रवस्थानकुशलप्रश्नोऽयं कंसस्य न कोऽपि गुणाः सन्तीति जीवनमेवोक्तम् अपकीर्त्या वा जीवति नहि मृतकस्थाने श्मशाने काश्चित्तिष्ठतीति भावः। दाशार्हेति संबोधनं स्वतो वंशतश्च महत्त्वेन स्तोत्रार्थं सर्वत्र स्थितौ दोषाः सन्तीति जन्मभूमित्वात् स्थीयत इति चेत्तत्राह। सौनपाला इति। सूनापरः सौनः नित्यश्रमिता मांसविक्रयी स एव पालो येषां ते च अवयः गतानुगतिकाः ते यथा अविचार्य तिष्ठन्ति तथा स्थीयत इति स्थितिरनुचितेति भावः ॥ ४१ ॥

कंसस्य निर्दयत्वमाह। योऽवधीदिति। भागिनेयाः अतिमान्याः तत्रापि बालकाः तत्रापि क्रोशन्त्या कन्यया सह वा ननु क्वचित् कर्मविशेषे पुत्रादयोऽपि हन्यन्त इति किमार्थं भागिनेयहनने तत्राह। असुतृप केवलं प्राणपोषकः तेष्वमारितेषु स्वप्राणा गमिष्यन्तीति तदपि न सर्वसम्मत्या नापि क्रियादिना किं तु खलः दुष्टः यत्रैतादृशः प्रभुः तत्र प्रजानां तदधीनानां वो युष्माकं कुशलं किं विमृशामहे किं विचारयामः अतः सन्देहे प्रश्नः अत्र तु विपरीतभाव एव निश्चतया कुशलप्रश्ने बन्धुविरोधी दुष्टोऽयमक्रूर इत्युक्तं भवति अतः कुशलसम्भावनायामपि तथा नोक्तवान् ॥ ४२ ॥

एतादृशं नन्दवाक्यमुक्त्वा उपसंहरति। इत्थमिति। सूनृतया अत्यन्तं सत्यरूपया कोमलया सुखदया च वाचा नन्देन सुष्ठु सभाजितः पूजितः अक्रूरः कायिकवाचिकमानसश्रमान् जहौ सुतरां पृष्ट इति अन्याभिनिवेशेन स्मृत्या प्राप्तमपि अध्वपरिश्रमं जहावित्यर्थः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज-श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम् पञ्चत्रिंशाध्यायविवरणम् ॥ ३५ ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कथं स्थ जीवथेत्यर्थः। शौनः पशुघाती स एव पालको येषां ते ते अवयः मेषा इवेति न जाने कस्मिन्नद्यन दिने युष्मान् हनिष्यतीत्येवेति भयमिति भावः ॥ ४१ ॥

तोकान् तोकान्यपत्यानि किं कुशलमिति कुशलाभावे निश्चितेऽपि कथं कुशलं पृच्छाम इति भावः। हे इति सम्बोधने ॥ ४२ ॥

सूनृतया मधुरया वाचा यत् परिपृष्टं प्रश्नस्तेन सभाजितः जहौ तत्याज ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्
अष्टत्रिंशोऽत्र दशमे सङ्गतः सङ्गतः सताम् ॥ ३८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ततो नन्दः सत्कृतं समानितं पप्रच्छ प्रश्नमेव दर्शयति। निरनुग्रहे क्रूरे कंसे जीवति सति शौनः पशुघ्नः पालो येषां ते शौनपालाः अवयः मेषाः तत्तुल्या यूयं कथञ्चन प्रकारेण स्थ जीवथेत्यर्थः ॥ ४१ ॥

तोकान् तोकानि अपत्यानि तस्य कंसस्य प्रजानां वो युष्माकं किं नु कुशलं विचारयाम हे अक्रूर ! ॥ ४२ ॥

इत्थं सूनृतया वाचा नन्देन अक्रूरः सुसभाजितः सत्कृतः पृष्टश्च तेनैव सत्कारपूर्वकेन परिपृष्टेन अध्वपरिश्रमं जहौ ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टत्रिंशाध्यायार्थप्रकाशः ॥ ३८ ॥

---

भाषा टीका।

सत्कार हुये पीछे नंदजी ने पूछा कि हे दाशार्ह अक्रूरजी

भाषा टीका ।

उस निर्दयी कंस के जीते आप सब कैसे रहते हौ जैसे कि हत्या करने वाला बकरियों का भेडों का रक्षक होवै तौ कैसे बनै ॥ ४१ ॥

जो अपने आत्मा पोषने वाला खल है जिस ने चिन्ता करती हुई अपनी बहन के पुत्रों को मार दिया उस की प्रजा आप लोगों का क्या कुशल हम विचार कर सकते हैं ॥ ४२ ॥

इस प्रकार से सुन्दर वचन से नन्दजी ने जब बडा सत्कार किया तब पूछने से अक्रूर जी ने मार्ग के सब परिश्रम को त्याग कर दिया ॥ ४३ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे अठतीसमें अध्याय की भाषाटीका समाप्त ॥ ३८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

श्रीशुक उवाच ।

सुखोपविष्टः पर्यङ्के रामकृष्णोरुमानितः ।
लेभे मनोरथान् सर्वान् पथि यान् स चकार ह ॥ १ ॥
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
तथाऽपि तत्परा राजन्नहि वाञ्छन्ति किञ्चन ॥ २ ॥
सायंतनाशनं कृत्वा भगवान् देवकीसुतः ।
सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥ ३ ॥

श्रीभगवानुवाच ।

[१]तात ! सौम्यागतः कच्चित्स्वागतम्भद्रमस्तु वः ।
अपि स्वज्ञातिबन्धूनामनमीवमनामयम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवात्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः ।
अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥

भक्तानां मनोरथाः सत्या भवन्तीति द्योतयन्नाह । सुखोपविष्ट इति । रामकृष्णाभ्यामुरु अधिकं मानितः ॥ १—३ ॥

हे तात हे सौम्य ! स्वागतं यथा तथा आगताः स्वज्ञातिबन्धूनां स्व सुहृदः ज्ञातयः सपिण्डाः बन्धवो ऽसपिण्डाः संबन्धिनः तेषामपि किमनमीवमपापमदुःखं सुखमिति यावत् अनामयमारोग्यम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

या सद्यो लीळयेल्लीला लोकं शोकमहार्णवे ।
तद्वथापारोऽपि यः स्वैरमीरयेन्मां स मे गतिः ॥

सुखेत्ययमर्थः ततः श्रीनन्दे तमानन्द्य नक्तं कृत्याय स्वान्तर्गृहं प्रविष्टे सति श्रीरामकृष्णनिदेशेन सेवकपर्यर्पितपर्यङ्के सुखमसङ्कोचमुपविष्टः पुनः श्रीरामकृष्णाभ्यां ताम्बूलगन्धपुष्पजलव्यजनसेवकादि समाधानेनोरुमानितश्च ततः सर्वान् मनोरथान् लेभे तयोरपि स्वान्तर्गृहं प्रविष्टयोः सम्भ्रमे गते सति क्रमेण तत्तत्प्राप्तिभावनया पूर्णमात्मानं मेने तेषामनवच्छेदं वारयति । पथीति ह स्फुटम् एकान्तभक्तियोग्यत्वेन प्रसिद्धं यथा स्यात्तथा इत्यर्थः तदुक्तं देहं भृतामित्यादि तत्र दर्शनस्य सिद्धिः ददर्श कृष्णमित्यादिना दर्शिता नमस्कारस्य रथात्तूर्णमिति तत्रैव हस्तपङ्कजधारणस्य कृपेक्षणस्य च ज्ञेया कृष्णकर्तृकतदालिङ्गनस्य भगवांस्तद्विति तत्कर्तृकतातेति सम्बोधनस्य त्वग्रे भाविताया निश्चितत्वात् श्रीसङ्कर्षणेन कंसकृते स्वबन्धुवर्गदुःखप्रश्नस्य च तेनाञ्जलिग्रहणपूर्वकगृहनयनाद्यातिथ्यकरणस्य तु सङ्कर्षणश्चेति ॥ १ ॥

नन्वन्यान् धर्मार्थादिमनोरथान् कथं न चकार तत्राह । किमिति । भगवत्त्वादेव श्रियः प्रेयसीरूपाया हृदि रेखारूपायाश्च निकेतने आश्रये किञ्चनेति पूर्वमुद्दिष्टं भगवत्प्रसादमयतत्तत्प्रकारं विना यत्किञ्चिदन्यदित्यर्थः । देहं भृतामियानर्थ इत्यादेः हे राजन्निति त्वयेदं ज्ञायत एवेति भावः ॥ २ ॥

सायन्तनाशनं कृत्वेति । द्वादश्यामपि द्विर्भोजनमुपानयात् पूर्वं सम्यग्धर्मनियम इति न मर्यादाविरुद्धम् । देवकीसुत इति । तद्भावमात्मनो व्यञ्जयन्नित्यर्थः । अत एव सुहृत्सु यादवेषु वृत्तं वर्तमानां चेष्टां वृत्तमिति पाठे त्वतीतां तथान्यच्चिकीर्षितम् अध्यवसीयमाना भाविनी चेष्टा तदपि प्रपच्छ यद्वा पाठद्वयेऽपि चेष्टामात्रं यतोऽन्यत्तन्मारणलक्षं चिकीर्षितं स्वयं कर्तुमिष्टमित्यर्थः । ततश्च तद्दोपस्थापनायैव तत्प्रश्न इति भावः । अत्र यद्यपि तदग्रजकर्तृत्वेनैव तेन तत्प्रश्नः पूर्वम्भावितस्तथापि निजानुजाङ्गीकारापेक्षया क्षणं तूष्णीं स्थितस्याग्रजस्य प्रतिनिधीयमानानुजवचनमग्रजस्यैव प्रतिपद्यम् ॥ ३ ॥

हे तातेति पितृव्यतया पितृतुल्यत्वं हे सौम्येति साधुतया तत्रापि गौरवातिशयो व्यञ्जितः अत एवागता इति बहुत्वं

---

१ इतश्चत्वारो विजयध्वजीये न सन्ति ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

च इति च आगत इत्येकवचनान्तपाठो बहुत्र भद्रं क्षेममस्तु युष्माकमित्याशीःप्रश्ने सदाचारानुसारात् किम्वा दैन्येनागतस्य तस्य समाश्वासनार्थम् अनमीव अनामयमिति द्वाभ्यां क्रमेण सामान्यविशेषदुःखाभावप्रश्नः अन्यत्तैः यद्वा आगता इत्यसम्भाव्यस्य तत्र तदागमनस्य सिद्ध्या तदनुमोदनेन तं सन्तोषयति एतदेवाग्रेऽभिव्यञ्जयिष्यति दिष्ट्येत्यत्र कच्चित् स्वागतं किं सुखेनागतमिति प्रश्नः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उरुमानितः कृतबहुमानः ॥ १ ३ ॥
अनमीवम् अशुभरहितम् ॥ ४ ॥ ५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ समग्रासमनोरथेनाक्रूरेण विज्ञापितकंसचिकीर्षस्य भगवतः प्रस्थानसमुद्योगसमवलोकनभविष्यद्भगवद्विश्लेषजतापतप्तगोपीजनमिथःसम्भाषणं मध्ये मार्गमक्रूराय स्वासाधारणदिव्यविग्रहप्रदर्शनप्रकारं चानुवर्णयत्येकोनचत्वारिंशेन । सुखोपविष्ट इत्यादिना । भक्तानां मनोरथाः सत्या भवन्तीति दर्शयन्नाह । सुखोपविष्ट इति । रामकृष्णाभ्यामुरुर्बधिकं सम्मानितः पर्यङ्के सुखं यथा तथोपविष्टोऽक्रूरः पथि यान् मनोरथान् चकार तान् सर्वान् लेभे प्राप ॥ १ ॥

तथाहि भगवति षाड्गुण्यपूर्णे श्रीनिकेतने श्रीनिवासे प्रसन्ने सति किमलभ्यं सर्वं सुलभमेवेत्यर्थः । तर्ह्यैश्वर्यकैवल्यभगवत्प्राप्त्याद्यन्यतमं सत्समीहितं किमिति न वृणुते इत्यत्राह तथापि यद्यपि सर्वसुलभमेव तथापि हे राजन् ! तत्परः भगवत्परः किञ्चिदपि न वाञ्छन्ति हि तदनुभवापेक्षया सर्वस्य तुच्छत्वादिति भावः ॥ २ ॥

तदा भगवान् देवकीसुतः सायंकालगतभोजनं कृत्वा स्वसुहृत्सु वसुदेवादिषु कंसस्य वृत्तिमन्यच्च तस्य चिकीर्षितं पप्रच्छ ॥ ३ ॥

प्रश्नमेवाह । तातेत्यादिभिश्चतुर्भिः । हे तात हे सौम्य ! आगतस्त्वं कच्चित् इदमस्मदिष्टं स्वागनं निर्विघ्नमागमनं जातं किल वो युष्माकं भद्रमस्तु सर्वत्र सर्वदा कुशलमेव भूयात् स्वेषामात्मीयानां ज्ञातीनां सपिण्डानां बन्धूनामसपिण्डानां सपिण्डानाञ्च अनमीवमशुभरहितम् अनामयमारोग्यमपि स्विदस्ति कच्चित् ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोचारणायेत्यारभ्य किञ्चाव्रज इत्यन्तेन ग्रन्थेन पथि यान्मनोरथान् चकार दध्यौ तान्लेभे इत्यन्वयः "करणं कारणे काले साधनेऽनुचनादिषु । रूपद्युच्चारणे खेदे ध्यानपद्मासनादिष्वि" ति यादवः ॥ १ ॥

ननु मुख्यमनोरथो मोक्षः सो ऽनेन न लब्धः संसारानिवृत्तेरित्यत आह । किमलभ्यमिति । तत्परा मुख्यभागवतास्तत्प्रसादमन्तरेणान्यं नाकाङ्क्षन्त इति भावः ॥ २ ॥

सायन्तनाशनं रात्रिभोजनम् ।
सायं प्रातर्द्विजातीनां भोजनं श्रुतिचोदितमिति ॥

याज्ञवल्क्यः सुहृत्सु वसुदेवादिषु वृत्तिं वर्तनम् आजीवलक्षणं वृत्तिर्ग्रथाजीवयोश्चेति च ॥ ३ ॥ ० ॥ ७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

लेभे मनोरथान् सर्वानिति केषाञ्चित् प्राप्तत्वेन वर्णितत्वात् केषाञ्चिदुपलक्षितत्वेन सूचितत्वात् केषाञ्चित् प्राप्तव्यत्वेन निश्चितत्वादिति तन्वन्यान् साष्टर्यादीनपि कथं न प्रार्थितवान् तत्राह । किमलभ्यमिति । तत्परा तद्भक्त्येकनिष्ठाः किञ्चन भक्तिव्यतिरिक्तम् ॥ १—१० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

षड्विंशे भक्तकृपया हरी रूपमदर्शयत् ।
अत्यासक्तिं पूर्वसिद्धां त्यक्त्वापीति निरूप्यते ॥
अक्रूरेण च सम्वादो गमनोद्यम एव च
गोपिकानां विलापश्च भगवद्रूपवर्णनम् ॥
मनोरथस्य सिध्यर्थमुद्यमस्य तथैव च ।
तत्रागत्यागत्यभावे स भिन्न इति संशयात् ॥
चत्वारोऽर्थाः क्रमादुक्ताः पुरुषार्था यतो व्रजे ।
सर्वे सिद्धा इति ज्ञाने भक्तो भूयात्तथापरः ॥

पूर्वाध्याये तस्य मनोरथा निरूपिताः ते वस्तुतो ऽनभिप्रेता अपि भक्तिमार्गे भक्तेन कृता इति भगवता कृता इति वक्तुमाह । सुखोपविष्ट इति । नन्दे गृहं गते पश्चात् सुखशय्यायामुपविष्टः भगवता बलभद्रेण च संमाननार्थमुपवेशितः यदि लोके स्वस्मादप्यधिकः मानो दत्तः तदा किं वक्तव्यं किञ्चित् साधयिष्यति न वेति अतो मनोरथान् सर्वानेव लेभे पुरुषस्य हि सहस्रं कामाः यतः काममय एवायं तेन सर्वे प्राप्ता इत्याशङ्क्य विशिनष्टि पथि यान् चकार इति स सोऽक्रूरः पूर्वसिद्धः इत्याद्यर्थं न हि मार्गे जातो मनोरथः कस्यचित् सिध्यतीति ॥ १ ॥

यद्येवं तर्हि सर्वैरेव भक्तैर्भगवत्समीपमेव गमने कामनैव कर्तव्या स्यात् कामनामेव प्रयच्छतीत्याशङ्क्य सकामा नोत्तमा इति शुको निष्कामः तं व्याजेन निन्दन्निवाह । किमलभ्यमिति । फलं द्विविधं नित्यमनित्यं च नित्यं षड्गुणात्मकम् अनित्यं लक्ष्म्याधीनं कृष्णस्तु भगवान् लक्ष्मीपतिश्च स चेत् प्रसन्नः तदधीनं किंत्रा अलभ्यं भवेत् प्रसादो हि प्रवृद्ध आत्मानमपि यच्छति परं प्रसाद एव दुर्लभः न तु प्रसन्ने किञ्चित् अप्रसन्ने न किञ्चित् फलं भवति अतः प्रसादहेतुं प्राप्यकामानां चेत् कुर्यात् तदा भ्रान्त एव स इति वक्तुं तथा भूता न कामयन्त इत्याह । तथापीति । यतस्तत्पराः न तु विषयपराः अयन्तु मध्ये संसर्गात् मध्यमाधिकारं प्राप्त इति कामनां कृतवान् ननु सर्वैरेवोत्तमैः काम्यते तथा सत्ययमार्गः नोत्तमो भवेत् राजन्निति स्नेहेनाप्रतारणार्थं संबोधनं यतस्तत्पराः अत एव किञ्चनापि न वाञ्छन्तीति युक्तमेव ॥ २ ॥

एवं भक्तानां कामनानिर्णयमुक्त्वा कामितेऽपि वक्ष्यमाणः सम्भावनयापि सिद्धवदुक्तं समर्थयन्नाह । सायंतनाशनमिति ।

किं नु नः कुशलं पृच्छे एधमाने कुलामये ।
कंसे मातुलनाम्न्यङ्ग ! स्वानां नस्तत्प्रजासु च ॥ ५ ॥
अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः ।
यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः ॥ ६ ॥
दिष्ट्या ऽद्य दर्शनं स्वानां मह्यं वः सौम्य ! काङ्क्षितम् ।
सञ्जातं वर्ण्यतां तात ! तवागमनकारणम् ॥ ७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यावन्नन्देन सह वार्त्ता तस्मिन् शय्यायां सुप्ते वा पश्चाद्यशोदागृहे सायंकालभोजनं कृत्वा कंसस्य वृत्तं पप्रच्छेति संबन्धः पश्चाद्भोजने बन्धनश्रवणानन्तरं प्रतीकारमुद्योगं वा अकृत्वा भोजनमनुचितमिति भुक्त्वा पृष्टवान् यशोदायाः सन्तोषार्थं वा तथा भोजनार्थं सम्पादितमिति यद्यपि भगवान् जानाति न वा तस्य लौकिके न किञ्चित्कार्यं तथापि देवकीसुत इति भक्तार्थमेवाविर्भूत इति पश्चादेव पृष्टवान् देवकीपुत्रत्वादेव वसुदेवादयः सुहृदः तस्य कदाचित् सुहृत्सु दैत्यावेशाभावे वृत्तं समीचीनमेव श्रूयते अतः सन्देहात् प्रश्नः अक्रूरस्य तथा ज्ञापनार्थं मातुषभावं ज्ञात्वा कदाचिदन्यथापि वदेत् अतो गोपिका वदेवायं परीक्षणीय इति अन्यत् अन्यत्वेऽपि उदासीनेप्यपि चिकीर्षितं कृतं करिष्यमाणं चेत्यर्थः । अन्यथा समागतः को वेद वक्तुं शक्नोतेति अर्थात्कृतं बन्धनादिकं चिकीर्षितं नयनमिति भक्तस्य तस्य स्वतः कथने दोष इति भक्तानां बुद्धिग्रहणार्थं शुकस्तथोक्तवान् ॥ ३ ॥

भगवतो वाक्यान्याह चतुर्भिः तस्य तत्सुहृदां च पश्चात्तापोऽनुमोदनम् आदौ कुशलं पृच्छति तातेति यः शब्दस्तेन मनोरथे निरुक्तः स एव भगवतोक्तः सौम्येति तव न को ऽपि दोष इति । दोषपरिहारार्थं संबोधनं स्वागतं यथा भवति तथा समागतः क्वचित् महोपद्रवे समागतः आहोस्वित् अनुपद्रव इति सन्देहात् क्रियाविशेषणम् अथान्यार्थमागत इति स्ववृत्तान्तं न कथयेदिति तस्य निर्भयत्वाय समाश्वासनमाह । भद्रमस्त्विति समागमनमात्रेणैव सर्वेषामेव भद्रं भविष्यतीति बहुवचनेनोक्तं लोकवत् पृच्छति । अपीति । स्वा भक्ताः ज्ञातयो गोत्रजाः बान्धवाः संबन्धिनः अक्रूर एव वा देहपुत्रादयः स्वशब्देनोच्यन्ते स्वकीया वा ये भवन्त इति प्रश्ने हेतुरुक्तः द्वयं पृच्छति । अनमीवमनामयमिति । कंसनिकटे स्थितानां ब्रह्महत्यादिपापानि प्रत्यहं सम्भवन्तीति अमीवानां पापानामभावः प्रष्टव्यः संसर्गमात्रेणापि चिरकालदुःखदाः आधिव्याधयो भवन्तीति आमयाभावोऽपि प्रष्टव्यः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नवत्रिंशे पुरीं याति प्रिये गोप्योऽतिविह्वलाः ।
विलेपुर्यमुनामग्नोऽक्रूरो वैकुण्ठमैक्षत ॥

ननु कथमक्रूरेण केवलं कृष्णदर्शनस्पर्शनादावेव मनोरथाः कृताः ननु पारमेष्ठ्यसायुज्यादौ तत्राह । किमलभ्यमिति ॥ १—३ ॥

स्वे सुहृदः ज्ञातयः सपिण्डाः बन्धवोऽसपिण्डास्तेषां किमनमीवं पापाभावः । अनामयमारोग्यं च ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकोनचत्वारिंशे भगवदक्रूरसंवादं भगवद्गमनसमुद्योगं भगवद्विरहातुराणां गोपीनां मिथः सम्भाषणमक्रूरेण यमुनायां विष्णुलोकदर्शनं च वर्णयति । सुखोपविष्ट इति । नन्दसम्भाषणानन्तरं पर्यङ्के सुखोपविष्टः रामकृष्णाभ्यामुरुमानितः ॥ १—३ ॥

कच्चित्किं स्वागतं यथा तथा आगतः अपि च स्वज्ञातिबन्धूनां स्वेषां सुहृदां ज्ञातीनां सपिण्डानां बन्धूनामसपिण्डानां संबन्धिनां च अनमीवमपापं पापकृत्संसर्गस्मरणादेवं प्रश्नः अनामय मारोग्यं दुष्टसङ्गेन बहुचिन्ताकुलानां रोगसम्भावनया एवं प्रश्नः कृतः ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले जब अक्रूरजी सुख पूर्वक शयन के शय्या पर बैठ गये तब रामकृष्ण दोनोंने उनका अत्यन्त सत्कार किया तब मार्ग में जिन मनोरथों को उनने किया था वे सब उनके प्राप्त होगये ॥ १ ॥

श्रीनिवास भगवान् के प्रसन्न होजाने पर फिर कुछ दुर्लभ नहीं है तौ भी हे राजन् ! भगवान् की भक्ति वाले पुरुष कुछ भी और नहीं चाहते हैं ॥ २ ॥

देवकी पुत्र भगवान् जब सायंकाल का भोजन करचुके तब अक्रूरजी के पास जाय कंस की सुहृदों में वृत्ति तथा उसकी करने की क्या इच्छा है सो पूछते भये ॥ ३ ॥

श्रीभगवान् बोले हे तात ! हे सौम्य आपका अच्छा आगमन भया क्या आप का मंगल होवे आपके सब ज्ञाति तथा बन्धुओं का कुशल तथा नीरोग तो है कि नहीं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्रश्नोऽपि मम नातिसंगत इत्याह । किंन्विति । अंग हे अक्रूर !

## श्रीशुक उवाच ।

**पृष्टो भगवता सर्वं वर्णयामास माधवः ।**
**वैरानुबन्धं यदुषु वसुदेववधोद्यमम् ॥ ८ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पृच्छे पृच्छामि नोऽस्माकं कुलस्यामये रोगे नो मातुल इति नाम यस्य तस्मिन् नः स्वानां ज्ञातीनां तस्य प्रजासु च ॥ ५ ॥

अस्मदस्मन्निमित्तम् वृजिनं दुःखम् आर्ययोर्निरपराधयोः यद्धेतोर्योऽहमेव हेतुस्तस्मात् ॥ ६ ॥

हे सौम्य ! स्वानां यो दर्शनमद्य मम संजातं तद्दिष्ट्या भद्रम् ॥ ७ ॥

माधवो मधोर्वंशजः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कुलामय इति । अनामयस्य विशेषतः प्रश्ने स्वतात्पर्यं दर्शयति तदनुपहतिरेवानामयतया पृष्टेति भावः । नाममात्रेणैव मातुले वस्तुतस्त्वामये यतोऽसौ नागन्तुकः नत्वेकस्य किन्तु सर्वस्यैव कुलस्येत्यतस्तन्नाशनमेवोचितं तथाप्येतावन्तं कालं मातुलनाम्नैवासावुपेक्षित इति भावः । तस्य प्रजासु प्रजानाञ्च यद्वा तदनुजादिरूपासु चैधमानासु ॥ ५ ॥

अस्मदिति पञ्चमी हेतौ बहुत्वमेकत्वे "अस्मदोद्वयोश्चे" ति स्मरणात् यद्धेतोरिति पौनरुक्त्यमनुतापस्वभावेनात्मैकहेतुताविवक्षया च ॥ ६ ॥

तदेवं सति यदद्य वो दर्शनं सम्यगैकान्तिकं जातं तद्दिष्ट्या कीदृशानां स्वानां कंसस्य परज्ञातत्वाद्दुस्तिग्धत्वाच्च भोजराजत्येऽपि ममैव ज्ञातीनामित्यर्थः । मदीयधनरूपाणामिति वा यद्वापि सर्वनामत्वं स्वेषामात्मीयानामित्यर्थो वा कीदृशं दर्शनं काङ्क्षितं ततस्तावत् प्रियत्वेनैव यदि तत्रत्यस्यैकस्यात्मीयस्य दर्शनं भवेत् तदा तन्मारणयुक्तिः सिद्ध्यतीत्यभिप्रायेणेति भावः । अत्रैतावती विवक्षा अत्रत्या मातापित्रादयस्तत्र तेभ्योऽपि परमस्निग्धा इति तदनुमतिं विना तत्र गन्तुं न शक्नोमि तथा प्रकटेष्वपि तेषु महापराधेषूपेक्षितस्य मातुलनाम्नस्तस्य सहसा जिघांसयाभिगमने तमेव कारणीकर्तुमिच्छामि तस्माद्यदि तादृशोऽपेक्षितः कश्चिदायाति ततस्तदनुरोधेन तेषामनुमतिं लभे तेन सह युक्त्या च तस्यैव तत्कारणत्वमुद्भावयामि तदेव तन्मारणं नीतिपदवीमारोहतीति अतो हे तात ! तवागमनकारणं तावद्वर्ण्यतां तस्मिन् ज्ञाते स्वत्यायतीं चिन्तां करिष्याम इति भावः ॥ ७ ॥

पृष्ट इति युग्मकम् । भगवत इति भगवन्तं ज्ञापयितुमित्यर्थः । तादर्थ्ये चतुर्थी तन्मारणं तदभीष्टमिति तदर्थमेव वर्णयामास न स्वार्थमित्यर्थः । भगवतेति पाठः क्वचित यतो मधुवंशजः स्वरक्षत्वादिलर्थः । सर्वं किमित्यपेक्षायामाह । वैरेति सार्द्धेन वैरानुबन्धं तत्सातत्यम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अस्मत् अस्मत्तः वृजिनं पापम् ॥ ६ ॥ ७ ॥

माधवः मधुकुलप्रभवः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं प्रश्नोऽपि मम नातीव सङ्गच्छत इत्याह । किन्विति । अङ्ग हे तात ! मातुलनाम्नि नाममात्रेण मातुले न तु वृत्त्येति भावः । तथा चास्माकं कुलामये कुलस्य रोगतुल्ये कंसे वर्द्धमाने सति नोऽस्माकं स्वानां ज्ञातीनां तत्प्रजासु तदपत्येषु च कुशलं किन्तु किमिति पृच्छे ॥ ५ ॥

अहो अस्मत् अस्मत्तो निमित्तादार्ययोः पूज्ययोर्निरपराधयोर्वा मातापित्रोर्भूरि वृजिनं दुःखं प्राप्तं तदेव प्रपञ्चयति । यत् यतो यस्मादस्मत्तो हेतोर्निमित्तात् पुत्राणामस्मदग्रजानां मरणं यदस्मन्निमित्तात्तयोः पित्रोर्बन्धनञ्च प्राप्तम् ॥ ६ ॥

अस्तु तावत् हे सौम्य ! चिरस्वाञ्छितं स्वानां वो युष्माकं दर्शनं त्वद्य सञ्जातमेतद्दिष्ट्या आनन्दजनकमस्माकं हे तात ! तवागमनकारणं वर्ण्यतां कथ्यताम् ॥ ७ ॥

इतीत्थं भगवता पृष्टो माधवो मधुवंशप्रभवोऽक्रूरः सर्वं वर्णयामास सर्वशब्दविवक्षितमेव प्रपञ्चयति । वैरानुबन्धमिति सार्द्धेन यदुषु विषयभूतेषु कंसस्य वैरानुबन्धः वैरमप्रीतिस्तदनुबध्यते यदुषु इत्यनुबन्धः तत्कार्यक्लेशापादनञ्च तथा वसुदेवस्य वधोद्यमं वधार्थं यत्नम् ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

माधवः मधुकुलोद्भवः यस्य कंसस्य सन्देशो यस्य स तथा यस्य कंसस्यार्थे इतः यत्प्रयोजनमुद्दिश्येति वा तस्य कंसस्य यदुषु वैरानुबन्धं वैरेण सन्ततदोषभावं प्रकृतस्य वैरस्यानुवर्तनं वा

अनुबन्धो दोषभावे प्रकृत्यादौ विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥

इति ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कथं द्वयमेव पृच्छ्यते कुशलादिकं कथं न पृच्छ्यते इत्याशङ्क्य तत्र विपरीतनिश्चय एवेत्याह । किन्विति । तुशब्दः कुशलपक्षं व्यावर्त्तयति नो ऽस्माकं सर्वेषामेव बन्धुत्वस्यापनाय पित्रादीनात्मत्वेनैव निरूपितवान् सर्वतः अकुशले कुलस्यैवामयरूपे सर्वग्रासकमहाव्याधौ प्रत्यहमेधमाने सति प्रतीकारमकृत्वा किं कुशलं पृच्छे इत्यर्थः । रोगान्त-

**यत्सन्देशो यदर्थं वा दूतः सम्प्रेषितः स्वयम्।**
**यदुक्तं नारदेनास्य स्वजन्मानकदुन्दुभेः॥ ६॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

रक्षाङ्क्षयावृत्त्यर्थं नाम गृह्णाति। कंस इति। तर्हि कथमेतावत्कालं ज्ञात्वोपेक्षेति चेत् तत्राह। मातुल नाम्नीति। अमारणार्थं रोगे मातुलसंज्ञा जाता यथा शत्रुर्ब्राह्मण इति अङ्गेति संबोधनमप्रतारणार्थम् अतः स एव चेदुद्यमं कुर्यात् तदा निवारणे न कोऽपि प्रयास इति सूचितं स्वानां नो बन्धूनां तत्प्रजासु च कुशलं चकारात् कंसप्रजासु॥ ५॥

एवं सिद्धवत्कारेण बन्धूनामनिष्टं सम्भाव्य विशेषतः अप्रश्ने प्रश्ने च तस्य मनसि वैमनस्यं मत्वा कृते वधादिकमनुशोचन्निवाह। अहो इति। अन्यथा देवकीवसुदेवयोः उपेक्षां करोतीति दुःखं स्यात् अन्यनिमित्तमन्यस्य दुःखं भवतीत्याश्चर्यं यतः अस्मन्निमित्तं पित्रोर्महद्वृजिनमभूत् तौ वस्तुत आर्यौ अपराधरहितौ अतोऽस्माभिरेव तेषामुपद्रवः कार्यत इत्युक्तं भवति तद्वृजिनं भूरिसम्भाव्यमानमल्पं भविष्यतीति गणयति। यद्धेतोः पुत्रमरणमिति। तयोरष्टमः पुत्रो मारयिष्यतीति मद्धर्मं श्रुत्वा निष्कारणमन्ये पुत्रा मारिताः तयोश्च बन्धनमहं पुत्र इति आद्यवन्ते च॥ ६॥

एवमनुतापमुक्त्वा तस्यागमनाभिनन्दनपूर्वकमागमनप्रयोजनं पृच्छति। दिष्ट्येति। स्वानां यदद्य दर्शनमकस्माज्जातं तद्दिष्ट्या भाग्येन भक्तानां भगवद्दर्शनं भाग्येनेति लौकिकभाषा चैषा यतः हे सौम्य! महां ममैवोपकाराय मत्फलाय वा लोकोक्त्या ममैव चिरकाङ्क्षितं कदा वा दर्शनं भविष्यतीति सौम्येति संबोधनात् सत्त्वमुभयत्र हेतुरुक्तः एवमभिनन्दनं कृत्वा पृच्छति। मज्ञातं वर्ण्यतामिति यद्वृत्तं साम्प्रतं तद्वर्ण्यताम् तातेति सम्बोधनमभयत्वाय तवागमने किं कारणं तदपि वर्णय इयं पृष्टम्॥ ७॥

तदा आमूलं सर्वमेवोक्तवानित्याह। पृष्ट इति। भगवता हि पृष्टमन्तर्यामित्वात् वक्तव्यमीश्वरत्वाद्वक्तव्यं सर्वज्ञत्वाद्वक्तव्यम् आत्मत्वाच्च वक्तव्यमिति यतोऽयं माधव इति मधुवंशोत्पन्नः भक्तत्वेनापि गोत्रत्वेनापि सर्वथा वक्तव्यमेवेति तदाह। वैरानुबन्धमिति। वैरमनुबध्यतेऽनेनेति दृढद्वेष्यत्वं ततो वसुदेवस्यापि वधार्थमुद्यमः॥ ८॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कुशलप्रश्नोऽपि नातिसङ्गच्छत इत्याह। किन्विति। अङ्ग हे अक्रूर! पृच्छे पृच्छामि नः कुलामयं अस्मत्कुलस्य रोगरूपे कंसे नः स्वानाम् अस्मज्ज्ञातीनाम्॥ ५॥

अस्मत् अस्मत्तः मत्तः पुत्रात् वृजिनं दुःखं तदेव किं तत्राह। योऽहमेव हेतुस्तस्मात्॥ ६॥

काङ्क्षितमिति। यदेव कारणीकृत्य तत्र गत्वा कंसं हनिष्यामीति भावः॥ ७॥

माधवः मधुवंशभवः यः धनुर्मखच्छद्मा सन्देशो यस्य यदर्थं चाणूरादिभिर्घातनार्थम्॥ ८॥ ९॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु कुशलप्रश्नं विहाय किमेवं पृच्छसीत्यत आह। किन्नु न इति। हे अङ्ग हे तात! मातुल इति नाम यस्य नतु वृत्त्या मातुलः तस्मिन् नोऽस्माकं कुलस्य आमये रोगतुल्ये एधमाने नः स्वानां ज्ञातीनां तत्प्रजासु च किंनु कुशलं पृच्छे पृच्छामि॥ ५॥

अहो अस्मत् अस्मत्तः निमित्तभूतात् आर्ययोः निरपराधयोः पित्रोर्भूरि महत् वृजिनं दुःखमभूत् यत् यस्मादस्मत्त एव हेतोः॥ ६॥

हे सौम्य! स्वानां युष्माकं दर्शनं मह्यं काङ्क्षितं बहुकालतो वाञ्छितमद्यजातम् एतद्दिष्ट्या भद्रं ममानन्दकरमित्यर्थः॥ ७॥

माधवः मधुवंशजः अक्रूरः यदुषु कंसस्य वैरानुबन्धं वैरे हठं वसुदेववधोद्यमं च यः धनुर्मखच्छद्मा सन्देशो यस्य यदर्थं चाणूरादिभिर्घातनार्थं स्वयं दूतः प्रेषितः अस्य श्रीकृष्णस्य स्वजन्म श्रीकृष्णस्य जन्म आनकदुन्दुभेः सकाशात् तत्सर्वं वर्णयामास इति द्वयोरन्वयः॥ ८॥ ९॥

---

### भाषा टीका।

हे अक्रूरजी कुल का रोग रूप जो कंस है तिसके बढ़ने पर हम क्या कुशल पूंछेंगे जो कि हमारा मामा है उसके राज्य में जो उनकी प्रजा हैं उनका क्या भला होगा॥ ५॥

अहो हमारे पिता माता दोनों को जो कष्ट भया है जिस मेरे हेतु से उनके पुत्र बहुत मर गये फिर उनका बंधन होगया॥ ६॥

आज बड़ा मंगल भया कि जो आपने अपने होकर हम को दर्शन दिया सो सुंदर हमारा वांछित था सो तो भया अब हे तात! आपके आने का कारण कहिये॥ ७॥

श्रीशुकदेवजी बोले भगवान् के पूंछने पर माधव अक्रूर जी ने सब वर्णन किया जैसे कि कंस का यदुओं में वैर तथा वसुदेवजी के वध का उद्योग हुआ है॥ ८॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका

यो धनुर्मखच्छद्मा संदेशो यस्य यदर्थं चाणूरादिभिर्घातनार्थम् अस्य कृष्णस्य पुरतो वर्णयामास स्वजन्म कृष्णजन्म आनकदुन्दुभेः सकाशात्॥ ९॥

श्रुत्वाऽक्रूरवचः कृष्णो बलश्च परवीरहा ।
प्रहस्य नन्दं पितरं राज्ञादिष्टं विजज्ञतुः ॥ १० ॥
गोपान् समादिशत् सोऽपि गृह्यतां सर्वगोरसः ।
उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ११ ॥
यास्यामः श्वो मधुपुरीं दास्यामो नृपते रसान् ।
द्रक्ष्यामः सुमहत् पर्व यान्ति जानपदाः किल ।
एवमाघोषयत् क्षत्रा नन्दगोपः स्वगोकुले ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विजज्ञतुर्विशेषेण ज्ञापयामासतुः ॥ १० ॥

सोऽपि नन्दो गोपान् समादिशत् तदेव दर्शयति । गृह्यतामित्यादिना । गोरसः क्षीरादिः उपायनान्युत्तमवस्तूनि ॥ ११ ॥

रसान् घृतादीन् शब्दच्छलेनेदं सूचयति अचिकित्स्यस्य चिकित्सार्थं रसान् दास्याम इति क्षत्रा व्रजरक्षाधिकृतेन आघोषयत्सर्वतो घोषितवान् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यत्सन्देशः स्वयमात्मनाऽक्रूरो दूतस्तेन सम्प्रेपितो यदर्थं वा तत्सन्देशं तमर्थञ्च वर्णयामास सम्प्रति वैरसातत्यादौ हेतुः यदुक्तमिति तच्चेति पूर्ववत् अन्यत्तैः तत्र सन्देशो हरिवंशानुसारेण वाच्यः नन्दगोपैरित्यादिकः पूर्वोक्त एव ज्ञेयः यदर्थमिति यश्चाणूरादिभिर्घातनमेवार्थो यत्र तादृशं यथा स्यात्तथा प्रेपित इति योज्यम अन्यश्चाक्रूरस्य श्रीकृष्णावेदनवाक्यं श्रीवैशम्पायनेनोक्तं"स्वपुरीं मथुरां तात ! गमिष्यामः सुखाय वै । यास्यन्ति च व्रजाः सर्वे गोपालाः सपरिग्रहाः । कंसाज्ञया समुचितं करमादाय वार्षिकम् । समृद्धस्तस्य कंसस्य भविष्यति धनुर्महः । तद्द्रक्ष्यथः समृद्धञ्च स्वजनैश्च समेष्यथः । पितरं वसुदेवञ्च सततं दुःखभाजनम् । दीनं पुत्रवधश्रान्तं युवामथ समेष्यथः सततं पीड्यमानञ्च कंसेनाशुभबुद्धिना । देशान्ते शोषितं वृद्धं दुःखैः शिथिलताङ्गतम् । कंसस्य भयसंत्रस्तं भवद्भ्याञ्च विना कृतम् । दह्यमानं दिवारात्रौ सोत्कण्ठेनान्तरात्मना । ताञ्च द्रक्ष्यसि गोविन्द पुत्रैरमृदितस्तनीम् । देवकीं देवसङ्काशां सीदन्तीं विहतप्रभाम् । पुत्रशोकेन शुष्यन्तीं त्वद्दर्शनपरायणाम् । वियोगशोकसन्तप्तां विवत्सामिव सौरभीम् । उपप्लुतेक्षणां दीनां नित्यं मलिनवाससम् । स्वर्भानुवदनग्रस्तां शशाङ्कस्य प्रभामिव । त्वद्दर्शनपरां नित्यं तवागमनकाङ्क्षिणीम् । त्वत्प्रवृत्तेन शोकेन सीदन्तीं वै तपस्विनीम् । तत्प्रभावेष्वकुशलां त्वया बाल्ये वियोजिताम् । अरूपज्ञां तव विभो वक्त्रस्यास्येन्दुवर्चसः । यदि त्वां जनयित्वा सा देवकी परितप्यते । अपत्यार्थो नु कस्तस्या वरं ह्येवानपत्यता । किञ्च । त्वन्तु शक्रसमः पुत्रो यस्याः स्वसदृशो गुणैः । परेषामप्यभयदो न सा शोचितुमर्हति । वृद्धौ तवाद्य पितरौ परभृत्यत्वमागतौ । भर्त्स्यैते त्वत्कृते तेन कंसेनाशुभबुद्धिना । यदि ते देवकी मान्या पृथिवीवात्मधारिणी । तां शोकसलिले मग्नामुत्तारयितुमर्हसि । तञ्च वृद्धं प्रियसुतं वसुदेवं सुखोचितम् । पुत्रयोगेन संयोज्य कृष्ण ! धर्ममवाप्स्यसि यथा नागः सुदुर्वृत्तो दमितो यमुनाह्रदे । विमूलश्च कृतः शैलो यथा वै भूधरस्त्वया । दर्पोत्सिक्तश्च बलवानाविष्टोऽपि निपातितः । परप्राणहरः केशी दुष्टात्मा च हयो हतः । एतेनैव प्रयत्नेन वृद्धावुद्धृत्य दुःखितौ । यथा धर्ममवाप्नोषि तत्कृष्ण ! परिचिन्त्यतां निर्भर्त्स्यमानो यैर्दृष्टः पिता ते कंससंसदि । ते सर्वे चक्षुरश्रूणि नेत्रैर्दुःखान्विता भृशम् । गर्भावकृन्तनादीनि दुःखानि च बहून्यपि । माता ते देवकी कृष्ण ! कंसस्य सहतेऽवशेत्यादि ॥ ९ ॥

श्रुत्वा प्रहस्येति प्रहस्य पितरं विजज्ञतुरिति चान्वयः पूर्वत्र स्वामीष्टलाभात् उत्तरत्रावज्ञाज्ञापनेन तच्छङ्कासङ्कोचनायेति ज्ञेयं यतः परः शत्रुर्यो वीरो महाविक्रमः तं हन्तीति तथा सः विज्ञापने हेतुः पितरमिति अत एव राज्ञादिष्टमेव नत्वक्रूरोक्तमन्यदपीत्यर्थः किञ्च राज्ञेति राजाज्ञायास्तादृश्यास्तथैव वक्तुमुचितत्वात् यद्वा उत्तरत्र प्रहस्येत्यत्र हेतुः पितरं स्नेहपरवशमित्यर्थः । विज्ञापने प्रयोजनं परवीरहेति कंसहननार्थमित्यर्थः विजज्ञतुरित्यन्तर्भूतण्यर्थः विज्ञापनं पितृसन्निधानमागत्येति ज्ञेयम् ॥ १० ॥

सोऽपीति । स्वपुत्रपालनव्यग्रत्वेन प्रसिद्धः श्रीनन्दोऽपीत्यर्थः इन्द्रमखभङ्गवत् तस्यैव विज्ञापनमोहनतया परवशीभूयेति भावः एवं सर्वेषामपि विप्रतिपत्तिर्न जातेति ज्ञेयं श्लेषेण श्रीवल्लवेन्द्रोऽपि वत तत्रासंमतो नाभूत् किन्तु समादिशदिति श्रीबादरायणेर्व्रजयोपिद्भावभयशोपव्यञ्जना ॥ ११ ॥

यास्याम इति पद्यस्यैवमित्यर्द्धेन श्लक्ष्णा यान्ति जानपदा इत्यभयोक्तिः किल प्रसिद्धौ ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यत्सन्देशेति । बहुव्रीहिः तं सन्देशं तत्प्रयोजनञ्च वर्णयामासेत्यन्वयः ॥ ९—११ ॥

पर्व उत्सवम् ॥ १२—१४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यः धनुर्यागच्छद्मा सन्देशो यस्य सः स्वयमात्मा दूतः दूती-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कुतः यदर्थं सोपायं समानयनेन चाणूरादिभिर्घातनार्थं प्रेषितः आनकदुन्दुभेः वसुदेवात् सकाशात् स्वजन्म कृष्णजन्म यन्नारदेनास्य कंसस्योक्तं तत्सर्वं वर्णयामासेति सम्बन्धः ॥ ९ ॥

इत्थं वर्णितमक्रूरस्य वच आकर्ण्य कृष्णः पराञ्छत्रून् वीरान्हन्तीति तथा बलो रामश्च प्रहस्य राज्ञा कंसेनादिष्टं सर्वं नन्दं प्रति विजज्ञतुः विज्ञापयामासतुः ॥१० ॥

सोऽपि नन्दोऽपि गोपान् समादिशत् आज्ञापयामास समादेशप्रकारमेवाह। गृह्यतामित्यादिना किलेत्यन्तेन। गोरसः क्षीरादिर्गृह्यतां तथोपायनानि उत्तमवस्तूनि गृह्णीध्वं शकटानि युज्यन्तां वृषभैरिति शेषः ॥ ११ ॥

श्वः समनन्तरेऽह्नि मधुपुरीं प्रति गमिष्यामः नृपतेः कंसस्य सम्प्रदानस्य शेषत्वविवक्षया षष्ठी रसान् क्षीरघृतादीन् दास्यामः अत्र मधुपुर्यां महोत्सवं धनुर्यागं द्रक्ष्यामः जानपदा देशवासिनस्तत्र यान्ति किल तांश्च द्रक्ष्याम इत्यर्थः। इत्थं नन्दगोपः स्वगोकुलक्षत्रा सूतेन प्रयोज्यकर्त्रा अघोषयत् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य कंसस्य नारदेन यदुक्तं तदपि किन्तदुक्तं तत्राह। स्वजन्मेति ॥ ९ ॥

विजज्ञतुः विज्ञापयामासतुः ॥ १०—११ ॥

रसानाज्यादीन् हेमानि वा—

> रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे।
> रेतस्यास्वादने हेम्नि निर्यासे रसशब्दयोरिति च॥

पर्व उत्सवं "पक्षसन्ध्युत्सवे च ग्रन्थौ पर्व विदुर्बुधा" इति दत्तः क्षत्रा यन्त्रा ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सोऽपि स्वपुत्रपालनव्यग्रत्वेन प्रसिद्धः श्रीनन्दोऽपीत्यर्थः इन्द्रमखभङ्गवत्तस्यैव विज्ञापनमोहनतया परवशीभूयेति भावः ॥ ११—२१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वस्य प्रेरणे प्रकारश्च य एव सन्देशो यस्य व्याजेनानेय इति यदर्थं वा स्वयं दूतः तेनैव सम्प्रेषितः अनिष्टभावनया समाकारणार्थमिति एतस्य सर्वस्यापि मूलं नारदवाक्यमित्याह। यदुक्तमिति। नारदोक्तमेव वदति आनकदुन्दुभेः सकाशात् स्वस्य भगवतो जन्मेति अस्य भगवतः स्वस्य देहस्य वा आनकदुन्दुभिपदेन हेतुपूर्वकं सर्वमुक्तवानिति द्वयं सञ्जातं द्वयमागमनकारणं हेतुर्नारदवाक्यमिति ॥ ९ ॥

श्रुत्वेति एवं प्रश्न पदार्थान् श्रुत्वा कृष्णः कालात्मा बलश्च क्रियाशक्तियुक्तः एतदर्थमेवावतीर्णौ परस्य शत्रोर्वीराणां हन्ता आवेद्यौ यदस्माभिः कर्त्तव्यं तदनेनैव कृतमिति प्रहस्य गोप्यं गोप्यमेव विधाय अन्यथा भीतो नन्दो गन्तुं न प्रयच्छेदिति पितृत्वं तस्मिन् स्थापयन्नेव राज्ञा आदिष्टं कौतुकदर्शनार्थमागन्तव्यमिति विजज्ञतुः ज्ञापयामासतुः ॥ १० ॥

भगवदिच्छया पूर्वं शङ्कितोऽपि कंसकृतोत्साहं द्रष्टुं सामग्रीं च सम्पादयितुं सोऽपि नन्दोऽपि गोपान् समादिशत् आस्ति कश्चिद्ग्रामे वाक्यवक्ता तद्द्वारा समादिशदित्यभिप्रायवाक्यावगन्तव्यं तस्याघोषवाक्यान्याह पद्। गृह्यतामित्यादि। सर्वोऽपि गोरसः दधिदुग्धात्मकः गृह्यतामिति नयनार्थं पृथक् क्रियतां यत्प्रथमतः कर्त्तव्यं तदुच्यते अन्यथा रात्रिशेषे दध्नो मन्थनं स्यात् दुग्धानां च यथेष्टं विनियोगः एते गोपालाः प्रत्येकं समर्थाः मण्डलाधिपतय इव महाराजाः न केवलं गोरसमात्रं ग्राह्यम् उपायनान्यपि गृह्णीध्वमभीष्टानि वस्त्राभरणानि यानि भगवदर्थं युज्यन्ते तान्येतद्द्वारा नीतानीति तदर्थमेवमुक्तः एवं पदार्थसम्भृतिमुक्त्वा साधनसम्भृतिमाह। युज्यन्तां शकटानीति। यानि शकटानि गमनयोग्यानि स्वतः वाहनतश्च योजनं सज्जीकरणं चकारात् रथाश्वादिकं च ॥ ११ ॥

एवं सम्भारस्य प्रयोजनमाह। यास्याम इति। श्व एव मधुरां यास्यामः तर्हि स्वभोजनपर्याप्तमेव गोरसादिकं ग्राह्यमित्याशङ्क्याह। दास्यामो नृपतेरस्मिन्नि। रक्षकाय ह्यवश्यं देयः षष्ठो भागस्तस्यैवेति अतो नृपतेरित्युक्तं पूर्वमसाध्यबुद्ध्या रसा न दत्ताः अधुना तु क्रौर्यं परित्यज्य उत्सवार्थमाकारयतीति साध्यतापरिज्ञानं ननु निर्बन्धाभावात् शङ्कायास्त्वविद्यमानत्वात् किमिति गन्तव्यमिति चेत्तत्राह। द्रक्ष्यामः सुमहत्पर्वेति। इयं चतुर्दशी महत्पर्व भाद्रपदकृष्णाष्टम्यामेकादश वर्षा जाता, तत्र च धनुर्यागो आयत इत्यवश्यं गन्तव्यम् अत्र कापट्यं नास्तीति प्रमाणमाह। यान्ति जानपदा इति। तत्रापि प्रमाणं किलेति प्रसिद्धिः इदं सत्यं वाक्यं प्रमाणत्वाद्भिन्नमुक्तं प्रत्येकं गृहे यथेयं वार्त्ता श्रुता भवति तथा अघोषयदित्याह। एवमाघोषयदिति। क्षत्रा अन्तःपुराध्यक्षेण सहि रहस्यवेत्ता भवति अथवा गोपान् समीपे समागतानेवमादिशत् स्वगोकुले तु क्षत्रा समादिशदिति एवं सर्वत्र श्वो भगवान् गमिष्यतीति प्रकारान्तरेण ज्ञापनमुक्तं सर्वेषां प्रीत्याधिक्याय ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रहस्येति। स्वमृत्युमपि निमन्त्र्य स्वान्तिकमानेतुमुपक्रमते युष्माकं राजेत्यर्थस्य द्योतकोऽयं प्रहासः राज्ञादिष्टं धनुर्मखोत्सवनिमन्त्रणं विज्ञापयामासतुर्न तु रहस्यम् ॥ १० ॥

सोऽपि नन्दः ॥ ११ ॥

रसान् घृतादीन् नृपतेः करान् जानपदा इति सर्वजनपदवासिनश्च यान्तीत्यतोऽस्माकमत्र का विप्रतिपत्तिरिति भावः। क्षत्रा व्रजनगररक्षाधिकारिणा ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

परान् स्वप्रतिकूलान् वीरान् हन्तीति तथा विजज्ञतुः विज्ञापयामासतुः ॥ १० ॥

गोप्यस्तास्तदुपश्रुत्य बभूवुर्व्यथिता भृशम्।
रामकृष्णौ पुरीं नेतुमक्रूरं व्रजमागतम् ॥ १३ ॥
काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः।
स्रंसद्दुकूलवलयकेशग्रन्थ्यश्च काश्चन ॥ १४ ॥
अन्याश्च तदनुध्यानान्निवृत्ताशेषवृत्तयः।
नाभ्यजानन्निमं लोकमात्मलोकं गता इव ॥ १५ ॥
स्मरन्त्यश्चापराः शौरेरनुरागस्मितेरिताः।
हृदि स्पृशश्चित्रपदा गिरः संमुमुहुः स्त्रियः ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

गोरसः क्षीरादिः गृह्यताम् उपायनानि राज्ञे देयान्यन्यानि चोत्तमवस्तूनि गृह्यन्तां शकटानि च युज्यन्तामिति गोपान् सोऽपि श्रीनन्दोऽपि समादिशत् आज्ञापयामास ॥ ११ ॥

श्वो ऽनागते ऽह्नि नृपतेः कंसाय रसान् क्षीरादीन् दास्यामः सम्प्रदानस्य शेषत्वविवक्षया षष्ठी क्षत्रा प्रतीहारेण नियोज्यकर्त्रा एवमाघोषयत् सर्वतः घोषितवान्—

क्षत्ता शूद्रात्क्षत्रियजे प्रतीहारे च सारथौ।
भुजिष्यातनये क्षत्ता नियुक्ते च प्रजासृजीति विश्वः ॥ १२ ॥

---

### भाषा टीका।

जिस संदेशा को लेकर आये हैं जिस वास्ते दूत बना कर अपने को भेजा है जैसे श्रीकृष्ण के जन्म को नारदजी ने कंस से कहा है सो सब सुना दिया ॥ ९ ॥

श्रीकृष्णजी तथा दूसरे वैरियों के मारने वाले बलरामजी इस बातको सुनकर हंसकर अपने पिता नंद के अर्थ राजा का कथन सुनाते भये ॥ १० ॥

उन नंदजी ने भी सब गोपों को हुकम दिया कि दूध दही आदि सब गोरसों को इकट्ठा करो भेटों को भी लेल्यो और बैलों से गाडियों को जोडो ॥ ११ ॥

कल मथुरा को जायंगे राजा के लिये सब रस देंगे सुंदर बडा धनुर्याग देखेंगे इसके वास्ते सब देश वासी चले जाने हैं इस प्रकार से कोतवाल के द्वारा नंदजी ने सब जगे खबर करवा दिया ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

ताः कृष्णैकजीवना गोप्यस्तत्तदाऽक्रूरमागतमुपश्रुत्येति ॥ १३ ॥ व्यथालिङ्गान्याह पञ्चभिः। काश्चिदिति। तेन श्रवणेन कृतो यो हृत्तापस्तेन यः श्वासस्तेन म्लाना मुखश्रीर्यासां ता बभूवुरिति दुकूलानि च वलयानि च केशग्रन्थयश्च स्रंसन्तो दुकूलादयो यासां तथाभूताः काश्चन बभूवुरिति ॥ १४ ॥

तस्य श्रीकृष्णस्यानुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ता इमं लोकं देहमपि न जानन्ति स्म मुक्ता इवेति ॥ १५ ॥

अपराः स्त्रियः शौरेर्गिरः स्मरन्त्यः संमुमुहुः कथम्भूताः अनुरागेण यत्स्मितं तेनेरिताः हृदि स्पृशन्तीति हृदि स्पृशो मनोज्ञाः चित्राणि पदानि यासु ताः ॥ १६—१७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

उपश्रुत्य कस्यापि कुतश्चित् कथयतो मुखाच्छ्रुत्वा साक्षात्तासु कस्यापि तत्कथनाशक्तेः भृशमत्यर्थं दुःखिताः परमदुःखात्मकमपि मरणं सुखं मेनिरे इत्यर्थः। अन्यत्तैः यद्वा ताः स्वभावसिद्धप्रेयसीभावाः तत् आघोषणमात्रं श्रुत्वा भृशं व्यथिताः अन्यास्तु साधनसिद्धप्रेयसीभावास्तौ नेतुमागतमक्रूरमुपश्रुत्य भृशं व्यथिता इति योज्यं किन्तु तासामपीयं व्यथा तद्विरहभीत्यैव जाता तत्र गतस्य तस्यानिष्टशङ्कया तु न जाता तासां मुकुन्द इत्यादि वक्ष्यमाणात् तद्गमने परमधीरश्रीमन्नन्दोपनन्दादिसर्ववृद्धवृन्दसम्मतिरेव तत्र कारणम् अन्यथा सद्य एव तासामन्तर्द्धानं स्यादिति लीलाशक्तिरेव तादृशस्फूर्त्तिमरौत्सीदिति ज्ञेयं विरहभीतिरपि न सार्वकालिकी तत्रासार्वकालिकस्थितिनिश्चयेन नन्दसुनुरिति श्रीमन्नन्दनन्दनत्वेनैव निदधच्चेष्यमाणत्वात् तासां मुकुन्द इत्यादिकस्याशङ्कामयमात्रत्वात् अन्यथा तथापि प्रागुक्तमेव स्यात् आशामात्रजीवातुत्वात् प्रोषितप्रेयसीनाम् एवमपि तादृश्यवस्था परमानुरागस्वभावेनैव ज्ञेया ॥ १३ ॥

तत्र रासदर्शितप्रेमतारतम्येनासामुत्तरोत्तरमवस्थावैशिष्ट्यमाह। काश्चिदिति त्रिभिः। यद्यप्यत्र पूर्वोक्ताया एव व्यथाया लिङ्गवर्णनमिति तदुपश्रुतिकृतत्वं स्वत एव लभ्यते तथापि तत्कृतेत्यधिकप्रयोगस्तदवस्थायां तदुपश्रवणस्य स्वरूपमात्रेणैव नत्वन्याश्च तदनुध्यानेत्यादि अर्थानुसन्धानार्थकालविलम्बजाततदनुध्यानादिकार्यद्वारेति बोधयति। स्रंसदित्यर्द्धे तु कार्श्यादिनिर्देशात् तत् सहयोगाच्च तत् कृतेत्येवान्वितं गम्यमिति श्रवणमात्र-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्यत्वादत्र च तत्र चार्थानुसन्धानानन्तराण्यपि कैमुत्येन गम्यानीनि एवं सति प्रथमद्वयमुक्तमं प्रायोनित्यसिद्धञ्च स्वाभाविकहार्दात् उत्तरं कनिष्ठं प्रायःसाधनसिद्धञ्च तादृशत्वाभावात् अत्र च प्रथमे द्वये उत्तरोत्तरं श्रैष्ठ्यमुत्तरे तु न्यूनत्वमिति ज्ञेयम् अथ क्रमेण व्याख्यायते तत्रैकासां भद्रादीनां सहसा श्वासवैवर्ण्ये आह काश्चिदित्यर्द्धेन श्वासेन म्लानाः सद्यो विवर्णीभूताः मुखश्रियस्तिलकाद्योऽपि किं पुनर्वर्णो यासां ताः तत्कृतहृत्तापादिपरपराऽपि गम्यं पूर्वपूर्वावस्थाश्च अथ कासाश्चित् श्यामलादीनां सहसा कार्श्यमप्याह । स्रंसदिति ॥ १४ ॥

अथ चन्द्रावल्यादीनां कासाञ्चिदर्थानुसन्धाने विच्छेदमीत्या तदावेशानन्तरं प्रणयमाह । अन्याश्चेति । पूर्वासामप्यनुध्याने सद्य एतदुक्तं वैशिष्ट्यार्थमात्मलोकं स्वस्वरूपं प्राप्ता जीवन्मुक्ता इवेति देहाज्ञानमात्रे दृष्टान्तः अन्यतः यद्वा तस्य श्रीकृष्णगमनस्यानुध्यानं कथमसौ यास्यति कथम्वा तत्र स्थास्यति कथञ्च वयं जीवेम इत्यादिलक्षणा निरन्तरचिन्ता तेन निवृत्ताशेषवृत्तयः इमं साक्षाद्वर्त्तमानमपि लोकं देहदैहिकं सर्वमेव ॥ १५ ॥

अथ श्रीराधादीनां प्रणयातिशयमप्याह । स्मरन्त्य इति । शौरेरिति च । सम्प्रति शूरापत्यतामभिमत्य यो गन्तुकामस्तस्येत्यर्थ इति तासां पक्षपातेन श्रीशुकस्य प्रणयेर्ष्योक्तिः अनुरागेण इत्यनुरागव्यञ्जकस्वरेण विलासेन च हृदिस्पृश इत्यर्थेन चित्रपदा इति शब्देन गिरां सौष्ठवमुक्तं चित्राणि यमकानुप्रासादिलक्षणानि अद्भुतानि पदानि यासु ताः इत्यमूभिः सह श्रीभगवतः प्रणयविशेषो दर्शितः अतएव संमुमुहुः महाघातादिनाप्यप्रतिकार्यत्वेनातिशयितं मोहं प्रापुः स्त्रिय इति तत्र स्वेन न सुतरामप्रतिकार्यत्वं दर्शितम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृत्तयः इन्द्रियवृत्तयः आत्मैव लोकः आत्मलोकनं तत् साक्षात्कारिण्यः योगारूढा इवेत्यर्थः ॥ १५—१८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे नृप ! ता गोकुलस्था गोप्यस्तत्तदा अक्रूरं रामकृष्णावानेतुमागतमुपश्रुत्य व्यथिता बभूवुः ॥ १३ ॥

व्यथालिङ्गान्याह पञ्चभिः । काश्चिदिति । काश्चित् गोप्यः तेन श्रवणेन कृतो हृत्तापस्तेन यः श्वासः सोष्णो निःश्वासस्तेन म्लाना मुखश्रीर्यासां ताः स्रस्तानि दुकूलानि वलयानि केशा ग्रन्थयश्च यासां तथा भूताः काश्चन बभूवुः ॥ १४ ॥

अन्यास्तु तस्य भगवतोऽनुध्यानेन निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ता इमं लोकं देहमपि नाभ्यजानन् नानुसमदधुः आत्मैव लोकस्तं गता आत्मसाक्षात्कारिणः योगारूढा इवेत्यर्थः ॥ १५ ॥

अपराः स्त्रियः शौरेर्गिरः स्मरन्त्यः संमुमुहुः कथंभूताः गिरः अनुरागेण यस्मितं तेनेरिताः हृदिस्पृशन्तीति तथा मनोज्ञाः विचित्राणि पदानि यासु ताः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रामकृष्णौ पुरीं नेतुमागतमक्रूरं श्रुत्वा ज्ञात्वा गोपस्त्रिय एवमापन्नाः बभूवुरित्यन्वयः तत्कथमिति विविच्याह । काश्चिदिति । तस्य कृष्णस्य मधुपुरीगमनश्रवणाकृताभ्यां हृत्तापश्वासाभ्यां म्लाना मुखश्रीर्यासां तास्तथा ॥ १३ ॥

स्रंसद्दुकूलेत्यादावपि तत्कृतेति सम्बन्धयितव्यं यद्वा तत्कृते कृष्णकृते तदनुध्यानेन निवृत्ताशेषेन्द्रियवृत्तयः ॥ १४ ॥

इमं लोकं देहमात्मलोकं मोक्षं स्वदि स्पृशः तदवयवमाः मनोहराः अनुरागस्मितपूर्वकमीरिताः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतस्तथैव गोपिकानां जातमित्याह । गोप्य इति । ताः पूर्वोक्ताः तद्भगवान् गमिष्यतीति यद्यपि लोकानां स्थाने न कोऽप्युक्तवान् तथापि लोकानामेव घोषात् श्रुतमित्याह । उपश्रुत्येति । श्रवणमात्रेणैव भृशं व्यथिता बभूवुः केवलं न निष्प्रपञ्चाः किन्तु भगवदर्थं तद्भगवति प्रचलितं स्वकृतं व्यर्थमिति युक्तमेवोक्तं बभूवुर्व्यथिता इति । यथा महत्यां पीडायां प्राणस्य क्लेशापूपस्थितेषु मूर्च्छिता भवन्ति तथा जाता इत्यर्थः । कदाचित् कंसः व्याजेनाकारयतीति ज्ञात्वा व्यथिता भविष्यन्तीत्याशङ्क्य तत्परिहारार्थं निमित्तमनुवदति । रामकृष्णाविति । सर्वासामेवोपद्रवार्थमुभयोर्ग्रहणम् अन्यतरस्याप्यत्र स्थितौ भगवानागच्छेदित्युभयोर्ग्रहणं पुरीं गतस्य न शीघ्रमागमनमिति सत्यं न भविष्यतीत्याशङ्क्य हेतुमाह । अक्रूरं व्रजमागतमिति । अक्रूर इति नाम्ना प्रवेशं प्राप्तवान् एकविधा तु मूर्च्छिता एव जाताः सर्वथा अनिर्वृता या ॥ १३ ॥

अन्यासां वृत्तिमाह । काश्चिदिति । त्रिगुणा एताः गुणातीता ज्ञानप्रधाना भक्तिप्रधाना चेति पञ्चविधास्तत्र राजस्यो व्यथां प्राप्तवत्यः सात्त्विक्यस्तु श्रवणकृतो योऽयं हृत्तापः तेन सहितो योऽयं श्वासः तेन म्लाना मुखश्रीर्यासां यद्यपि पूर्णज्ञानाः तथापि सगुणत्वात् बलिष्ठोऽयं विषय इति हृत्ताप उत्पन्न एव तस्यायान्तरकार्यं श्वासः परमकार्यं म्लानतेति अन्याः पुनः श्रुत्वा क्षीणा एव जाताः महाभये शुष्कदेहाः अतः स्रंसद्दुकूला जाताः स्रंसद्वलयाश्च केशेषु ग्रन्थयोऽपि स्रंसन्तो जाताः एता अन्तर्भयेनैव शुष्काः सर्वाङ्गे न त्वेकदेश इति ता एता एव सात्त्विक्य इति केचित् ॥ १४ ॥

ज्ञाननिष्ठा अन्याश्चेति तस्य भगवतः अनुध्यानेन स्मरणानन्तरं प्राप्तेन ध्यानेन निवृत्ताः अशेषाणामिन्द्रियान्तःकरणदेहानां वृत्तयो यासां ततः सुषुप्ता इव इमं लोकं नाभ्यजानन् आत्मैव लोकः "अहरहर्ब्रह्मलोकं गच्छन्ती"ति श्रुतेः यस्तु तस्वेताः समाधिस्थिता इति असम्प्रज्ञातस्थं वक्तुं सुषुप्तिदृष्टान्तीकृता ॥ १५ ॥

गतिं सुललितां चेष्टां स्निग्धहासावलोकनम् ।
शोकापहानि नर्माणि प्रोद्दामचरितानि च ॥ १७ ॥
चिन्तयन्त्यो मुकुन्दस्य भीता विरहकातराः ।
समेताः सङ्घशः प्रोचुरश्रुमुख्यो ऽच्युताशयाः ॥ १८ ॥
गोप्य ऊचुः ।
अहो विधातस्तव न क्वचिद्दया संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान् वियुनङ्क्ष्यपार्थकं विक्रीडितं तेऽर्भकचेष्टितं यथा ॥ १९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भक्तास्तु मूर्च्छिता जाता इत्याह । स्मरन्त्य इति । अपराः कदाचिदपि परभावं नापन्नाः सेवकीभूताः चकाराद्धृदये पश्यन्त्योऽपि अत एव अनुरागपूर्वकस्मितेन मन्दहासेन ईरिताः प्रेरिताः भक्तानां परमानन्दं दातुं महाननुरागः भेदेन रसग्रहणार्थं स्मितमिति तेन स्वस्थानाच्चालिताः भगवत एता हृदि स्पृशा इति तथाकरणे हेतुः गिरां वा विशेषणं पूर्वं भगवता परमसौख्यार्थं या गिर ईरिताः ताः स्मरन्त्यः सम्मुमुहुरिति चित्राणि विचित्राणि पदानि यासु कदापि न त्यक्ष्यामि त्वं प्राण भृतेत्यादीनि पदान्येव न तु वाक्यानि वाक्यार्थाभावात् तदानीं पदार्थस्मारकत्वेन पदान्येव तानि गिरः स्मृत्वा सम्मुमुहुर्मूर्च्छिताः भगवान् गच्छतीति श्रुत्वा पुनश्च न गमिष्यतीति स्मृत्वा उभयोर्विरोधे निर्धारार्थं वर्तमानाः अनिश्चयान्मूर्च्छिताः एव जाता इत्यर्थः ॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्तदा ताः प्रसिद्धाः कृष्णैकजीवना गोप्यः अक्रूरमागतमुपश्रुत्य ॥ १३ ॥

व्यथालिङ्गानि पञ्चभिर्वर्णयंस्तासु भद्रादीनां श्वासवैवर्ण्ये आह । काश्चिदिति । तेन श्रवणेन कृतो यः सन्तापस्तस्माच्च यः श्वासस्तेन म्लाना मुखश्रीर्यासां ताः श्यामलादीनां सहसा कार्श्यमप्याह । स्रंसदिति ॥ १४ ॥

चन्द्रावल्यादीनां प्रणयमप्याह । तस्यानुध्यानेन ध्यानधारया निवृत्ता अशेषाश्चक्षुरादिवृत्तयो यासां ताः । इमं लोकं देहदैहिकपदार्थं सर्वमेव आत्मलोकं परमात्मस्वरूपं प्राप्ता इवेति देहाद्यज्ञानमात्रेण दृष्टान्तः । नत्वास्वादांशेऽपि । काचकाञ्चनयोरिव ब्रह्मास्वादप्रेमास्वादयोस्तुल्यत्वानौचित्यात् ॥ १५ ॥

राधादीनान्तु प्रणयातिशयमाह । स्मरन्त्य इति । शौरेरिति । सम्प्रति शूरापत्यत्वमभिमत्य यो गन्तुकामस्तस्येति तासां पक्षपातिनः श्रीशुकस्य प्रणयेर्ष्योक्तिः । अनुरागव्यञ्जकं यत् स्मितं तेन ईरिताः चित्राणि विस्मयजनकानि पदानि यासु ता गिरः न पारयेऽहं निरवद्य संयुजामित्यादि वाक्यानि स्मरन्त्यः सम्यगेव मुमुहुः । पूर्वास्तद्रूपस्यैव ध्यानधारयैव मुमुहुः । एतास्तु तद्वाचोऽपि स्मरणेनापि सम्यगेव मुमुहुरिति पूर्वतः प्रेमवैशिष्ट्यबलो ज्ञेयाः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यासां क्षणमपि कृष्णं विना युगशतमिव भवेत्ताः पूर्वोक्तस्वभावाः तत् तदा रामकृष्णौ पुरीं नेतुमक्रूरमागतमुपश्रुत्य भृशमत्यर्थं व्यथिता बभूवुः ॥ १३ ॥

व्यथाचिह्नानि वर्णयति । काश्चिदिति पञ्चभिः । काश्चित् गोप्यः तेन श्रवणेन कृतो यो हृत्तापस्तेन यः श्वासस्तेन म्लाना मुखश्रीर्यासां तथाभूताः बभूवुः काश्चन तु गोप्यः स्रंसन्तः दुकूलादयो यासां ताः तथाभूता बभूवुः ॥ १४ ॥

अन्यास्तु तस्य श्रीकृष्णस्य अनुध्यानेन निवृत्ता अशेषाः सकलाश्चक्षुरादिवृत्तयो यासां लोक्यन्ते कर्मफलानि भुज्यन्ते अनेनेति लोको देहस्तमिमं देहं नाभ्यजानन् न जानन्ति स्म "एष ते आत्मान्तर्य्यामी" ति श्रुतिप्रसिद्ध आत्मैव लोकस्तं गताः तद्ध्यानपरा इव आत्मनः परमात्मनः लोकं गताः त्यक्तप्राकृतदेहाः मुक्ता इवेति ॥ १५ ॥

अपराः स्त्रियस्तु शौरेः श्रीकृष्णस्य अनुरागयुक्तेन स्मितेन ईरिताः उच्चारिताः हृदि स्पृशन्तीति तथा मनोज्ञाः चित्राणि पदानि यासु ताः तथाभूता गिरः स्मरन्त्यो मुमुहुः ॥ १६ ॥ १७ ॥

———

भाषा टीका ।

गोपिन ने जब सुना कि रामकृष्ण दोनों को मथुरा लेजाने को अक्रूर व्रज में आये हैं तब तो बड़ी दुखित होगईं ॥ १३ ॥

कोइ गोपी उस चिंता के मारे ताप से श्वास लेने से मुख मलिन होकर दुखित होगईं उनके वस्त्र केशबंध माला वस्त्रों की गांठ सब वस्तु खुलने लग गईं ॥ १४ ॥

कोई भगवान् में लग गईं तो उनके सब काम छूट गये जैसे कोइ परलोक को चला जावै तैसे उनने इस लोक को भूल दिया ॥ १५ ॥

कोई दूसरी गोपी भगवान् के अनुराग युक्त वचन मंद हास के कथन जो की बडे चित्र पदों वाली वाणी के हैं हृदय से नहीं छूटते हैं उनको स्मरण करके मोहित होगईं ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

विरहेण कातरा विह्वलाः अच्युते आशयश्चित्तं यासां ताः ॥ १८ ॥

यस्त्वं प्रदर्श्यासितकुन्तलावृतं मुकुन्दवक्त्रं सुकपोलमुन्नसम् ।
शोकापनोदस्मितलेशसुन्दरं करोषि पारोक्ष्यमसाधु ते कृतम् ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णसङ्गतिं विधाय विघट्टयतीति विधातारं प्रत्येवाक्रोशन्त्य आहुः । अहो इति । मैत्र्या हिताचरणेन प्रणयेन स्नेहेन च अकृतार्थानप्राप्तभोगानपि तान् वियुनङ्क्षि वियोजयसि तस्मान्न तव दया बालिशोऽपि त्वमित्याहुः । अपार्थकमिति ॥ १९ ॥

विगर्हितं तवेदं कर्मेत्याहुः । यस्त्वमिति । शोकमपनुदतीति शोकापनोदः सचासौ स्मितलेशश्च गूढहासस्तेन सुन्दरं मुकुन्दस्य वक्त्रं सकृत्प्रदर्श्य पुनस्तस्य पारोक्ष्यमदृश्यतां करोष्यतस्तव कृतं कर्मासाधु निन्द्यमित्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुनश्च किं जातमिति शङ्कासंस्कारप्राबल्येन लब्धबाह्याः परमोत्कण्ठया श्रीव्रजेश्वरपुरद्वार एवागताः समानदुःखत्वेन सर्वाः संहत्य क्रन्दन्त्यो विलेपुरित्याह । गतिमिति द्वाभ्याम् । गतिं व्रजप्रवेशनिर्गमनादिसमयेषु स्वयमुत्कण्ठाभिर्मुहुर्दृष्टां तत्रैव चेष्टां सखिभिः सह नानाविलासरूपां तत्र चात्मनः प्रति निगूढं सस्नेहहासावलोकनं त्रयाणामेव विशेषणं सुलक्षितामिति स्निग्धेत्यत्र तु लिङ्गव्यत्ययः । तत्र सुशब्दार्थस्य परां कोटिं ता एव जानन्तीति नासौ व्याख्यातुं शक्यते एवं लब्धेऽपि स्निग्धहासावलोकने तदङ्गसङ्गप्राप्तावविश्वस्तेषु स्वेषु तदनुतापहारीणि नर्माणि तत्प्राप्तिव्यञ्जकपरिहासभङ्गी ततो नर्मणैव सङ्केतिते कुञ्जादौ प्रोद्दामचरितानि गाढानुरागोद्भटसौरतलीलाश्च ॥ १७ ॥

चिन्तयन्त्यो हन्त तत्तदस्माकं सम्प्रति विच्छिन्नमिति सानुतापं भावयन्त्यः । अत एवाश्रुभिर्लिप्तं मुखखण्डमेव तुण्डं यासां तद्विधाः सत्यः यतः स्वभावेनैव निमेषव्यवहितेऽपि भीता अधुनातूपसन्नेन महाविरहेण विह्वलाः तत्र सर्वत्र हेतुः । अच्युते स्थितः तन्मयत्वात् स एव वा आशयो यासां ताः । अच्युतेति तेनापि तदपरित्यागापेक्षया । सङ्घशः मिलनेऽप्यवान्तरसङ्घभेदात् प्रकर्षेण शोकप्रकर्षत्वेनोचुः । अत्र सर्वासामप्येकवचनस्फूर्त्तिस्तदानीमिति तदात्मकहृदयताप्राप्तेः । कदाचिदखिलमुख्या वाक्यं शृण्वतीनामन्यासां तन्मात्रस्यानुमोदनेनोपचारादनुकरणात् पूरणाच्च । एतच्च तासां परिदेवनं प्रादोषिकघोषणामारभ्य तत्प्रस्थानपर्य्यन्तं ज्ञेयम् ॥ १८ ॥

श्रीकृष्णसङ्गताविव विच्छेदेऽपि कमप्यन्यहेतुमनालोचयन्त्यो विधातारमेव तत्र हेतुं मन्यानास्तमेवाक्रोशन्त्य आहुः । अहो इति त्रिभिः । अहो खेदे हे विधातरिति सर्वं त्वमेव विदधासीति भावः । अतः सर्वेष्वपि जीवेषु दयां कर्त्तुमर्हस्यापि तव कस्मिंश्चिद्दया नास्ति विधातृत्वमेव दर्शयन्त्यो निर्दयत्वञ्च दर्शयन्ति । संयोज्येत्यादिना । देहितः देहाभिमानवशेनेतस्ततो वर्त्तमानानपि जीवान् अकस्मादन्योऽन्यं मैत्र्यापि केवलं तथा प्रणयेन च संयोज्येति विधातृत्वं दर्शितम् एवं श्रीकृष्णसङ्गतौ निजगुणादिराहित्यं सूचितम् अप्यर्थे चकारः संयोज्यापि अकृतार्थानपि वियोजयसि विविधचेष्टितम् अपार्थकम् अपगतौ अर्थौ हेतुप्रयोजने यस्येति केन हेतुना किमर्थं वा संयोजयसि अकृतार्थानपि पश्चात् केन हेतुना किमर्थम्वा वियोजयसीति नाव गच्छाम इत्यर्थः । हेतौ प्रयोजने च सति संयोजितानामकस्माद्वियोजनमयुक्तमेवेति भावः । अपार्थकत्वे दृष्टान्तः अर्भके चेष्टितं यथा हेतुं प्रयोजनञ्च विना केवलं मौढ्यादेव तद्वदित्यर्थः अन्यत्तैः तत्र हिताचरणेन तत्कृतप्रीत्या स्नेहेन सम्बन्धादिकृतप्रीत्येत्यर्थः । यद्वा स्वयं मैत्र्योपलक्षितः सन् प्रणयेन मिथो विश्रब्धप्रेम्णा सह संयोज्येति योज्यम् ॥ १९ ॥

भवतु वा सामान्यतस्तव तादृशं चरितं विशेषतस्त्विदं गर्हितमित्याहुः । यस्त्वमिति । प्रकर्षेण रसानुभवपूर्वं दर्शयित्वा असितैः कुन्तलैः कुटिलालकैरावृतं श्रीललाटोपरिभागे भ्रमरवन्निपातेन व्याप्तमित्यूर्ध्वभागस्य शोभा सुकपोलमिति पार्श्वद्वयस्य उन्नसमिति मध्यस्य शोभेति मधुरस्मितेन विकसदधरबिम्बतदारुण्यच्छुरितश्रीमद्दन्तपङ्क्तिमाधुर्याभ्यामन्तर्भाग---स्यापि सूचिता शोकश्चार्त्तानां सर्वेषां तत ईदृशस्य तद्वक्त्रस्य परोक्षताचरणात्तव कर्मासाध्वेव अत एव श्रीविष्णुपुराणे "सारं समस्तगोष्ठस्य विधिना हरता हरिम् । प्रहृतं गोपयोषित्सु निर्घृणेन दुरात्मना" इति अन्यत्तैः यद्वा यस्त्वं मुकुन्दस्य सर्वदुःखमोचकत्वेन तन्नामधेयस्य वक्त्रं प्रकर्षेण दर्शयित्वा पारोक्ष्यं करोषि तस्य ते तव कृतमसाध्वेव चातुर्वर्ण्यमित्यादिवत् स्वार्थे ष्यञ् आस्तां तावन्मैत्रीप्रणयपूर्वकतदीयसंयोगस्य वियोजनं नाम तद्दर्शनमात्रस्यापि गर्हितं किमुत तत्प्रकृष्टदर्शनस्येत्यर्थः प्रकर्षमेव दर्शयन्ति । असितेत्यादि विशेषणैः ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रणयेन विश्वासेन वियुनंक्षि । वियोजयसि । अपार्थकं प्रयोजनशून्यं पारोक्ष्यं मुखस्येति शेषः । दुःखानर्हत्वज्ञानशून्यवत् ॥ १९—२२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काश्चित्तु विरहेण भाविना कातरा विह्वलाः मुकुन्दस्य सुन्दरतरां गतिं तथाभूतां चेष्टां रासक्रीडाद्यात्मिकां स्निग्धां यो हासस्तद्युक्तमवलोकनं च शोकमपघ्नन्तीति तथा तानि कर्माणि पूतनाशकटासुरादिवधात्मकानि कर्माणि च प्रोद्दामानि गम्भीराणि चरितानि शयनासनभोजनादीनि च ॥ १७ ॥

स्मरन्त्यः अच्युत एवाशयश्चित्तं यासां ताः अश्रूणि मुखेषु यासां ताः सङ्घशः समेत्य तत्र तत्र सङ्घशो भूत्वा प्रोचुः ॥ १८ ॥

उक्तिमेवाह । अहो इत्यादिभिः तावत् श्रीकृष्णसङ्गतिं विधाय विघटयतीति विधातारं प्रत्येवाक्रोशन्त्य आहुः । अहो इति त्रिभिः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे विधातस्तव क्वचिदपि दया नास्त्यहो तथा हि मैत्र्या हिताचरणेन प्रणयेन स्नेहेन विश्वासेन च देहिनो जनान् तावन्मिथः संयोज्य अकृतार्थानप्राप्तभोगानेव तान् वियुनङ्क्षि वियोजयसि तस्मात्तव दया नास्ति अतस्तव चेष्टितमपार्थकं प्रयोजनशून्यं यथा बालकचेष्टितं तद्वन्मूर्खस्त्वमिति भावः ॥ १९ ॥

विगर्हितं तव कर्मेत्याहुः । यस्त्वमिति । असितैः कुन्तलैरावृत शोभनौ कपोलौ यस्मिन् उन्नता नासिका यस्मिन् तत शोकमपनुदतीति शोकापनोदः सचासौ स्मितलेशस्तेन सुन्दरं मुकुन्दस्य वक्त्रमस्माकं प्रदर्श्य यस्त्वं पुनस्तस्य पारोक्ष्यमदृश्यतां करोषि अतस्ते तव कृतं कर्म असाधु निन्द्यमित्यर्थः ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चित्राणि पदानि यासु तास्तथा गतिं यात्रां चेष्टाम् अङ्गविषयां स्निग्धहासेन सहितमवलोकनम् ॥ १७ ॥

अच्युताशयाः अच्युतबुद्धयः ॥ १८ ॥

हे विधातः तव क्वचिद्दया नास्ति कथं प्रणयेन देहिनः जन्तून्मैत्र्या मित्रभावेन संयोज्य एकीकृत्य पुनस्तान् देहिनः अकृतार्थान् अप्राप्तमनोरथानेव वियुनङ्क्षि वियुक्तदेहान् करोषि अहो इत्यन्वयः अतस्ते तव चेष्टितमपार्थकं निष्फलं कथमिति अर्भकचेष्टितं यथा तथेति ॥ १९. ॥

अत्र मया किमवद्यमकारीति तत्राह । यस्त्वमिति । यस्त्वं सुकपोलादिविशिष्टं मुकुन्दवक्त्रं प्रदर्श्य दर्शयित्वा पुनःपारोक्ष्यं परोक्षविषयं चक्षुरगोचरं करोषि यस्मात्त्वया कृतमसाध्वमङ्गलमित्यन्वयः शोकस्यापनोदो निरासो येन सः शोकापनोदः स्मितलेशः तथा तेन सुन्दरं मनोहरं स्मितस्य लेशः स्मितलेशः ॥ २० ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अन्याः पुनः सर्वा मिलिताः जीवनार्थं विरहवाक्यान्युक्तवत्य इत्याह । गतिमिति द्वाभ्याम् । विषयक्रियाभ्यां स्वसमीपे समागच्छतो भगवतः गतिं चिन्तयन्त्यः ततः सुष्ठु ललितां चेष्टां समाश्लेषादिरूपां ततः स्निग्धो योऽयं हासपूर्वावलोकः कन्दर्पलीलायाम् एवं कृत्वा कियत्कालवियोगानन्तरं पुनरागतस्य पूर्वं विरहकृतः योऽयं शोकः तद्दूरीकरणसमर्थानि नर्माणि परिहासवाक्यानि ततो मत्तगजवत् प्रकर्षेण उद्दामानि गनश्टङ्खलारूपाणि यानि चरितानि स्वच्छन्दलीलारूपाणि चकारादन्यान्यप्यवान्तररूपाणि ॥ १७ ॥

नन्वेताः असत्य इव निषिद्धविषयपराः किमिति निरूप्यन्ते इत्याशङ्क्याह । मुकुन्दस्येति । मोक्षदातुः मोक्षसिध्यर्थमेता लीलाः ततः पूर्वावस्था सर्वस्वरूपा गतेति अत्यन्तं भीताः धैर्याद्यभावार्थमाह । विरहकातरा इति । अल्पविरहेऽप्यत्यन्तं दीनाः शीतभीता इव ततः समानशीलव्यसनाः सर्वाः प्रत्येकं मिलिताः समूहभेदेन जाताः विश्रान्तिभेदाः परमप्रेमयुक्ताः तद्भावाभिव्यञ्जकाश्रुमुचः कामव्याप्तचित्ता अपि तथा भवन्तीति तद्व्यावृत्त्यर्थमाह । अच्युताशयाः सत्यः प्रोचुः अन्योऽन्यजीवनार्थम् ॥ १८ ॥

एतद्वाक्यैरेव भगवच्चरित्रं स्पष्टमिति न पुनर्निरूप्यते निरोधान्ते युगलरूपा द्वादश निरूपिताः तथैवैता इति तासां द्वादशधा वचनान्युच्यन्ते अत्रोपालभ्याः प्रथमतो ब्रह्मा यद्वाक्याद्भगवानागतः ततो भगवान् ततोऽक्रूरः साधारण्येन सर्वे ततो बान्धवाः ततः स्वात्मेति एवं षड्विधाः तत्र प्रथमं त्रिभिः उपालम्भमाहुः । अहो इति–

अविवेको दुरात्मत्वं दत्तापहरणं तथा ।
त्रिदोषं ब्रह्मणः प्राहुर्व्यवहाराद्यतः कृतम् ॥

आदावविवेकमाहुः । अहो इत्याश्चर्यं जगत्कर्तुर्वेदगर्भस्याप्यविवेक इति ननु मया संयोजनमेव कृतं वियोगकर्त्ता त्वन्य एवेति चेत् तत्राहुः । विधातरिति । सर्वं विदधातीति अविशेषाद्वियोजकोऽपि त्वमेव तर्हि युक्तमेवेति चेत्तत्राहुः । तव न क्वचिद्दयेति उत्पादितेषु स्वापत्यरूपेषु शिक्षार्थं दण्ड्येष्वपि क्वचिद्दया भवति कश्चिच्छरीरमेव छिनत्ति कश्चित् द्रव्यं कश्चिदिह लोकपरलोकौ कश्चिद्विषयानिति अस्माकं तु भगवान् सर्वमेवेति केनाप्यंशेन दया चेत् तदंशस्थापनार्थं वा भगवन्तं स्थापयेत् दभावात् क्वचिदपि न दयेति । ननु भवददृष्टादेव भगवान्मिलितः तदपगमे गच्छतीति चेत् तत्राहुः । संयोज्य मैत्र्येति । भगवता सह जीवानां योगेनादृष्टं कारणं वियोगजनितत्वात् सोऽन्तर्याम्यात्मा च तं प्रार्थयित्वा बहिराविर्भावयित्वा सहजसंबन्धव्यतिरेकेणैव मैत्र्या संयोज्य तान् पुनर्जीवान् भगवत्संयुक्तफलाभावात् अकृतार्थान् वियुनङ्क्षि वियोजयसि "स यदि पितृलोककामो भवती"त्यादिश्रुतौ सर्वकामनासिद्धिरुक्ता पुनरावृत्त्यभावश्च आनन्दमयमात्मानमुपसङ्क्रम्येत्यादावपि तथा अत्र तु न कोऽपि मनोरथोऽतः परं सेत्स्यति आवृत्तिश्च भविष्यतीति सर्वप्रकारेणाभिलषितभगवद्वियोगादकृतार्थान् एव जीवानस्मान्वियुनङ्क्षि वियोजयसि भवेदप्येतदेवं यदि वियोजने तव वा कश्चित् पुरुषार्थः सिध्येत् अतस्ते विक्रीडितं विशेषक्रीडारूपमेतत् अर्भकचेष्टितप्रायं जातम् अलौकिकमपि कृत्वा उत्तमामपि प्रतिमां मृदादिनिर्मितां क्षणादेव दूरीकुर्वन्तीति ब्रह्मणोऽप्यविवेकः ॥१९॥

किं च नाविवेकमात्रं किं तु असमीचीनमेव करोतीत्याहुः यस्त्वमिति । त्वं ह्यस्मदुपकारार्थं शोकापनोदार्थं मोक्षार्थं वा भगवन्मुखारविन्दं प्रदर्शितवान् तदप्रदर्शनदशायामस्यमेव शोकादिकं स्थितं साम्प्रतं त्वधिकं जायत इति यदपि त्वया कृतं तदप्यसाध्वेव कृतं यथा मोहकः समीचीनमिव प्रदर्श्यासमीचीनं करोति तथा त्वमुपपादयन्ति प्रथमतो मुकुन्दस्य मोक्षदातुर्वक्त्रं प्रधानभूतं यतो मोक्षो भवत्येव तदपि बहुभिरेव सर्वैरावृतं तदाह । असितैः कुन्तलैरावृतमिति नीलालकावृतत्वेन स्वस्यानधिकारेऽपि तत्प्राप्तिः सूचिता कामरस एवायं परितो वेष्टितः तिष्ठतीति ततः सुकपोलं रसानुभवयोग्यमूर्ध्वा नासिका यस्मिन्निति पूर्णरसत्वेन प्रफुल्लरूपं शोकादिनिवृत्तिस्तु तद्धर्मलेशेनापि भवतीत्याहुः । शोकापनोदनं करोति स्मितस्य लेश एव तादृशोऽप्यत्र सौन्दर्यं एवोपक्षीयते एतादृशं मुखं सर्वदा दर्शनयोग्यं पारोक्ष्यं करोषि परोक्षस्य धर्मयुक्तं करोषि न ह्यपारोक्ष्यकस्वरूपं भगवन्मुखारविन्दं स्वतः परोक्षतामापद्यते त्वं पुनरव्यक्तमपि व्यक्तं करोषीतीदमपि विपरीतं करोषि तत्तु सर्वोपकारीति ते कृतं साधु भवति इदं त्वसाधु किं बहुना

क्रूरस्त्वमक्रूरसमाख्यया स्म नश्चक्षुर्हि दत्तं हरसे बताज्ञवत् ।
येनैकदेशे ऽखिलसर्गसौष्ठवं त्वदीयमद्राक्ष्म वयं मधुद्विषः ॥ २१ ॥

न नन्दसूनुः क्षणभङ्गसौहृदः समीक्षसे नः स्वकृतातुरा बत ।
विहाय गेहान् स्वजनान् सुतान् पतींस्तद्दास्यमद्धोपगता नवप्रियः ॥ २२ ॥

सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् ।
याः सम्प्रविष्टस्य मुखं व्रजस्पतेः पास्यन्त्यपाङ्गोत्कलितस्मितासवम् ॥२३ ॥

तासां मुकुन्दो मधु मञ्जुभाषितैर्गृहीतचित्तः परवान् मनस्व्यपि ।
कथं पुनर्नः प्रतियास्यते ऽबला ! ग्राम्याः सलज्जस्मितविभ्रमैर्भ्रमन् ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ते तवाप्यसाधु अनेन कर्मणा तवापि नेष्टं सेत्स्यतीति भावः अत एव भगवान् न ब्रह्मलोकमार्गेण गतः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं मूर्च्छादिसञ्चारिग्रस्ता एव रात्रिं गमयित्वा पुनश्च किं जातमिति शङ्कासञ्चारिसंस्कारप्राबल्येन लब्धबाह्यानुसन्धानाः परमोत्कण्ठया प्रातर्व्रजराजपुरद्वार एव आगताः भाविविरहवत्त्वेन साम्यात् सर्वाः संहत्य विलेपुरित्याह । गतिमिति । निमेषविरहतोऽपि भीताः सम्प्रपि तु भाविना महाविरहेण विह्वलाः सङ्घशः समेताः यूथैर्यूथैः सङ्गत्य मिलिताः ॥ १७ ॥ १८ ॥

कृष्णस्य सङ्गताविव विच्छेदेऽपि कमप्यन्यं हेतुमनालोचयन्त्यो विधातारमेव दूषयन्ति । अहो इति । हे विधातरहो आश्चर्यं तवाप्येवमन्याय इति भावः । कोऽसौ तव क्वचिदपि न दयेत्येव एव ननु कथमेवं निश्चिनुध्वे तत्राहुः । मैत्र्या सख्येन यः प्रकृष्टो नयः मनः प्राणबुद्ध्यादीनां परस्परप्रापणं तेन देहिनः संयोज्य तांश्च अकृतार्थान् अप्राप्ततद्भोगानेव वियुनङ्क्षि वियोजयसि एवार्थे चकारः न च तद्वियोजनात्तव किञ्चित्प्रयोजनमस्तीत्याहुः । अपगतोऽर्थः फलं यतस्तत् अतस्तव चेष्टितमर्भकचेष्टितं यथेति त्वमतिबालिश एवेति भावः ॥ १९ ॥

सर्वपितामहस्य मम नार्भकतुल्यत्वमिति चेत्तर्हि त्वं लोकानामभद्रकारीत्याहुः । यो विधातापि भूत्वा त्वं मुकुन्दवक्त्रं शोकस्यापनोदो यस्मात्तेन स्मितलेशेन सुन्दरं प्रदर्श्य तस्य पारोक्ष्यम् अदृश्यत्वं करोष्यतस्तव कृतं कर्म असाधु अभद्रं निन्द्यमित्यर्थः ॥२०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरहेण भाविना कातराः व्याकुलाः अच्युते आशयाश्चित्तं यासां ताः गृहात् गृहात् समेत्य सङ्घशः तत्र तत्र सङ्घशो भूत्वा प्रोचुः ॥ १८ ॥

तासामुक्तिं प्रपञ्चयति । अहो इत्यादिद्वादशभिः तत्र तावत् श्रीकृष्णेन सहास्मान् संयोज्य वियोजयतीति विधातारं प्रत्याक्रोशन्त्य आहुः । अहो इति त्रिभिः अहो विधातः ! देहिनः निरपराधिनो जनान् अस्मान् मैत्र्या हिताचरणेन प्रणयेन स्नेहेन च मिथः संयोज्य तांश्चाकृतार्थान् अप्राप्तभोगान् वियुनक्षि वियोजयसि अतो ज्ञायते क्वचिदपि तव दया नास्ति सर्वत्र निर्दयोऽसीत्यर्थः । न केवलं निर्दयः अपि तु बालिशोऽपि त्वमित्याहुः । यथा अर्भकचेष्टितमपार्थकं निरर्थकं भविता तथा ते चेष्टितं कर्मापार्थकमेव ॥ १९ ॥

किंच तव चेष्टितं न केवलं निरर्थकमात्रमपित्वनर्थकरमित्याहुः । यस्त्वमिति । असितैः कुन्तलैरावृतं शोभनौ कपोलौ यस्मिन् उन्नता नासिका यस्मिन् शोकमपनुदति दूरीकरोतीति तथा सचासौ स्मितलेशः मन्दहासः तेन सुन्दरं मनोहरं मुकुन्दस्य वक्त्रं सकृत्प्रदर्श्य पुनस्तस्य पारोक्ष्यमदृश्यताङ्करोषि । अतस्तव कृतं कर्म असाधु अस्माकमहितमित्यर्थः ॥ २० ॥

---

भाषा टीका ।

भगवान् की सुंदर ललितगति चेष्टा स्नेह युक्त हंसी सहित चितवन शोक के नाश करने वाले कौतुक बडे मनोहर चरित्र ॥ १७ ॥

मुकुंद भगवान् की इन बातों को स्मरण करके भीत होकर अधीरज होकर इकट्ठी होकर भगवान् में मन लगाकर मुख नेत्रों से आंसु गिराती हुई बोलीं ॥ १८ ॥

गोपी बोलीं अहो हे विधाता ! तेरेको कहीं दया नहीं है जो कि तू प्राणियों को मित्रता से जोडकर फिर उनके मनोरथ पूरे नहीं होते ही जुदा कर देता है सो तेरा काम ऐसा है कि जैसी व्यर्थ बालकों की क्रीडा होवे ॥ १९ ॥

जोकि तू नील बालों से शोभित सुन्दर कपोल वाले उन्नत नासिका वाले शोक को नाश करने योग्य मंदहास से सुंदर शोभित श्रीमुकुंद के मुखारविंद को दर्शन कराकर फिर दूर करता है तो यह तेरा बडा बुरा काम है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च दत्तापहारित्वेनातिक्रूरस्त्वमित्याहुः । क्रूरस्त्वमिति । नन्वक्रूरो हरति नाहमितिचेदत आहुः । अक्रूर समाख्ययेति । नह्येवं कर्तुमन्यः प्रभवत्यतो नामान्तरेण ध्रुवं त्वमेवागतोऽसि

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णं हरामि न युष्मच्चक्षुरिति चेन्न येन त्वद्दत्तेन चक्षुषा मधुद्विष एकदेशे नेत्रवक्त्रादौ त्वदीयं समग्रसृष्टिनैपुण्यमद्राक्ष्म दृष्टवत्यो वयं तच्चक्षुः अयम्भावः मम सर्वं रहस्यमाभिर्ज्ञातमित्यमर्पणेव कृष्णं वियोजयन्नस्मानन्धीकरोषीति ॥ २१ ॥

विधातारं विहाय परस्परमूचुः । न नन्दसूनुरिति । बतेति खेदे क्षणभङ्गमस्थिरं सौहृदं यस्य सः गृहादीन्विहायाद्धा साक्षात्तस्यैव दास्यमुपगताः स्वकृतातुरास्तत्कृतेनैव स्मितादिना परवशा अपि नोऽस्मान्न समीक्षते नवं प्रियं यस्य सः अत एवं निवारयाम इति भावः ॥ २२ ॥

सेर्ष्यमूचुः । सुखं प्रभातेति । व्रजस्पतेः श्रीकृष्णस्य मुखं पास्यन्त्यादरेण द्रक्ष्यन्ति कथंभूतम् अपाङ्गेन नेत्रप्रान्तेनोत्कलितमुज्जृम्भितं स्मितमेवासवो रसो यस्मिंस्तत् यद्वा अपाङ्गोत्कलितस्मितेनासवरूपं यन्मुखं ततश्च पानं मुख्यमेव संभावयन्ति ॥ २३ ॥

ननु छिन्नाणि दिनानि तथा भवतु नाम तथाप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तित आगमिष्यतीत्याशङ्क्याहुः । हे अबलास्तासां मधुवन्मञ्जुभिर्भाषितैर्वशीकृतचित्तस्तथा तासां सलज्जस्मितैर्विभ्रमैर्भ्रमन् परवान् पित्रादिपरतन्त्रोऽपि यद्वा व्रजे परे ऽन्ये बन्धवः सन्ति यस्य तथा मनस्वी धीरोऽपि ग्राम्या अविदग्धा नः कथं प्रतियास्यते प्रत्येष्यति न कथंचिदित्यर्थः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हि एव त्वमेव करोषि बत खेदे तथा श्रीविष्णुपुराणेऽपि "अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम् । उत्कृत्तान्यद्य नेत्राणि विधात्राकरुणात्मने"ति यथाज्ञः पापापापमजानन् जनो दत्तमपि हरति तद्वदित्यर्थः । किन्तु त्वं सर्वज्ञोऽपि अज्ञायस इति परमदुःखदानमात्रतात्पर्यत्वेन ततोऽपि पापवैशिष्ट्यमिति भावः । कथं चक्षुर्दत्तं तत्राहुर्येनेति त्वदीयमखिलसर्गसौष्ठवं मधुद्विष एकदेशेऽद्राक्ष्मेति तदीयनेत्रवक्त्रादिसौन्दर्यामृतार्णवकलांशांश एव पद्मचन्द्रादिसौन्दर्यं पर्याप्तमपश्यामेत्यर्थः अतो ऽनभिरुचेरन्यत्राप्रवर्त्तमानस्य तन्मात्रविषयस्य चक्षुषस्तद्धरणेन चक्षुष एव हरणं तत्र मधुद्विष इति योग्यपदोपादानं नारायणसमो गुणैरिति वाक्यात् सर्वातिशयिगुणशालित्वेनैव तत्पर्यायस्येत्यर्थः । यद्वा मध्विव मधु तदितरसर्वप्राकृताप्राकृतवाञ्छनीयं तस्मै द्वेष्टि तदीयानां तद्धरतीति तस्येति यद्वा मधुपुरीपतित्वात् तत्समशीलत्वाच्च कंस एव मधु तद्द्विष इति तं हत्वा तद्राज्ये लब्धे पुनरत्रागमनं दुर्लभमिति भावः ॥ २१ ॥

उदासीनं विधातारं किं निन्दामः परमात्मीयोऽस्मज्जीवनैकहेतुः श्रीनन्दसूनुरेव तथाविध इत्याहुर्नेति । नन्दसूनुर्बल्लवेन्द्रकुमारत्वेनाप्यस्मत्समीक्षणयोग्यः किं पुनरस्माभिस्तादृशप्रेमबन्धेन सोऽपीत्यर्थः । न समीक्षते नापेक्षते अपृष्ट्वैव दूरप्रस्थानोद्यमात् समीक्षिष्यत इति च व्याख्यानेऽपि संप्रत्यपेक्षाया अदर्शनादिति भावः । अतो दृढसौहृदत्वेन ज्ञातत्वेऽपि क्षणभङ्गसौहृद एवासौ न समीक्षायां हेतुविशेषमाहुर्विहायेति । गेहादीनां यथोत्तरं श्रैष्ठ्यमूह्यम् अद्धा साक्षात् स्वदेहार्पणादिना दासीत्वमुप सामीप्येन प्राप्ताः इति दास्यविशेषः सूचितः तदुपगतावेव हेतुः स्वकृतातुरा इति तैर्व्याख्यातं यद्वा संप्रति समीक्षायां विशेषतो हेत्वन्तरमाहुः । स्वकृतेन परित्यागेनातुरा रोगेणेव पीडिताः न केवलं न समीक्षते किञ्च नवप्रियोऽसौ सर्वान् व्रजजनान् विहाय अक्रूरेण सममात्मीयतां व्यज्य गमनदर्शनान्नवप्रिय एवासौ संप्रति माधुरीभिरेव प्रीतिं विधास्यतीत्यर्थः ॥ २२ ॥

अत एव सेर्ष्यमूचुः पञ्चभिः । आशिषः विप्राद्याशीर्वादाः दीर्घमनोरथा वा सत्याः सफलाः सम्यक् पर्यन्तः प्रविष्टस्य व्रजस्पतेरिति व्रजजनानामेव हृदयमिति भावः । सुडन्नार्षः पास्यन्ति नेत्ररसनया स्वादयिष्यन्ति अत एव श्रीविष्णुपुराणे "सुप्रभाताद्य रजनी मथुरावासियोषिताम् । पास्यन्त्यच्युतवक्त्राब्जं यासां नेत्राणि पङ्क्तय" इति ॥ २३ ॥

भ्रमन् सर्वं विस्मरन् अन्यत्तैः परवान् गृहीतचित्तत्वादेव तत्पराधीनः सन्नित्यर्थः । तथाच तत्रैव "मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति । नागरस्त्रीकलालापमधु श्रोत्रेण पास्यति । विलसिवाक्यपानेषु नागरीणां कृतास्पदम् । चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति । भावगर्भस्मितं वाक्यं विलासललिता गतिः । नागरीणामतीवैतत् कटाक्षेक्षितमेव च । ग्राम्यो हरिरयं तासां विलासनिगडैर्यतः । भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यती"ति ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

व्रजस्पतेः व्रजपतेः ॥ २३ ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वक्रूरस्तस्य पारोक्ष्यं करोति नत्वहमित्याशङ्क्याहुः क्रूरस्त्वमिति । येन त्वया नोऽस्मभ्यं चक्षुर्दत्तं तत्पुनस्त्वमेवाज्ञवत् दुःखानभिज्ञवन्मूर्खवदक्रूरसमाख्यया हरसे अक्रूर इति व्याजमात्रमेव न नः त्वत्तोऽन्यः नहीव कर्तुमन्यः प्रभवतीति, अभिप्रायेणाक्रूरसमाख्ययेत्युक्तम् अतो नामान्तरेण ध्रुवं त्वमेवागतो दत्तमपहरन् क्रूर इत्यर्थः । ननु कृष्णं हरामि नतु युष्मच्चक्षुरित्याशङ्क्याहुः । येन त्वद्दत्तेन चक्षुषा मधुद्विषः श्रीकृष्णस्यैकदेशे नेत्रवक्त्रादौ त्वदीयसमग्रसृष्टिनैपुण्यमद्राक्ष्म दृष्टवत्यो वयम् अयंभावः तव सर्वं रहस्यमस्माभिर्ज्ञातमित्यमर्पेण कृष्णं वियोजयन्नस्मानन्धीकरोषीति ॥ २१ ॥

विधातारं विहाय परस्परमाहुः । न नन्दसूनुरिति । बतेति खेदे क्षणभङ्गमस्थिरं सौहृद्रं यस्य स नन्दसूनुर्गेहादीन् विहाय अद्धा साक्षात्स्वस्य तस्यैव दास्यमुपगताः स्वकृतेनैव स्मितादिना आतुराः परवशा अपि नोऽस्मानपि न समीक्षिता न समीक्षिष्यते तत्र हेतुं सेर्ष्यमाहुः । नवप्रियः नवः पुरस्त्रीजनः प्रियो यस्य तथाभूतः अत एवैनं वारयाम इति भावः ॥ २२ ॥

पुनः सेर्ष्यमाहुः । सुखप्रभातेति । पुरयोषितां मधुपुरीस्त्रयोषिताम्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इय रात्रिः सुखप्रभाता तथा तासामाशिषः कामाश्च सत्या बभूवुः । तत्र हेतुं वदन्त्यस्ता विशिंषन्ति । याः पुरयोषितः पुर्यां प्रविष्टस्य व्रजस्पतेः श्रीकृष्णस्य सुडागम "आर्षः पारस्करादेराकृतिगणत्वाद्वा अपाङ्गेन नेत्रान्तेन उत्कलितमुज्जृम्भितं स्मितमेवासवो रसो यस्य तन्मुखं पास्यन्ति मुखकमलस्थस्मितासवं पास्यन्तीति भावः ॥ २३ ॥

मथुराङ्गतोऽपि पुनरायास्यतीत्युद्भावयन्तीः काश्चित्प्रत्याहुः । तासामिति । हे अबलाः ! तासां पुरस्त्रीणां मधुवन्मञ्जुभिर्भाषितैः वशीकृतचित्तस्तथा तासां सलज्जितैर्विभ्रमैर्भ्रमन् मुकुन्दः स्वतो मनस्वी धीरोऽपि परवान् सन् परस्त्रीपरतन्त्रः ग्राम्या अविदग्धा नोऽस्मान् प्रति कथं यास्यते न कथञ्चिदित्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे विधातः ! त्वमक्रूरसमाख्यया अनृशंसो ऽयमकठिनोऽयामिति गुणसमाननाम्ना स्मृतः पूर्वमधुना क्रूर इति स्मर्यसे कुतः येन चक्षुषा मधुद्विष एकदेशे मुखाद्येकावयवे तदीयं तस्य तव विद्यमानम् अखिलस्य विश्वस्य सर्गे सृष्टौ यत्सौन्दर्यं तदद्राक्ष्म तत् त्वया हि एवं दत्तं चक्षुरस्त्वत्कृतत्वदङ्गरसे यत कष्टमित्यन्वयः–

> क्रूरो भयङ्करे कन्थे नृशंसे कठिनोष्णयोरिति च

यद्वा तस्य मधुद्विषो विद्यमानमखिलं पूर्णे सर्गे स्वाभाविकमकृत्रिमं सौष्ठवमन्यत्समम् ॥ २१ ॥

इदानीं कृष्णं कटाक्षीकृत्य वदन्ति । नेति । स्वकृते स्वात्मानं कृष्णमुद्दिश्यातुराः क्लिष्टा अपि नोऽस्मान्न समीक्षते न चिन्तयति यत्तस्मान्नन्दसूनुः क्षणभङ्गसौहृदः नवप्रियः नूतनप्रियश्च कीदृशीरस्मान् गेहादीन् विहाय स्वद्दास्यमद्धा प्रत्यक्षमुपागताः अद्धा सत्यं वा अद्धा प्रत्यक्षसत्ययोरिति च ॥ २२॥

सुखप्रभातत्वे निमित्तमाहुः । या इति । व्रजस्पतेः गोकुलनाथस्य सकारश्छान्दसः अपाङ्गेन कटाक्षनिरीक्षणेन उत्कलितमुत्पक्ष्मभीष्टवर्णकीकृतं वा स्मितमेवासवममृतं यस्मिंस्तथा ॥ २३ ॥

इदानीं कृष्णमवजानन्त्यो वदन्ति । मनस्वी महामनाः अपि मुकुन्दो मथुराङ्गतः पुनः नोऽस्मान् प्रति कथं प्रतियास्यते आगमिष्यते न केनापीत्यन्वयः । अनागमने निमित्तमाहुः । तासां मथुराङ्गनानां मधुवन्मञ्जुभाषितैः मधुवत्पुष्परसवत् मञ्जुभिः श्रुतिमनोहरैर्वचनैः गृहीतचित्तो वशीकृतचेताः अतएव परवान् पराधीनः

> परवांस्तु पराधीनो निघ्नः परवशः स्मृत इति हलायुधः ।

तासां मधुरवचनमेव कारणं न त्वन्यदित्याशयेनाहुः । अबलाः सुरतधार्ष्ट्यविधुराः किञ्च ग्राम्याः अश्लीललीलाः तदपि मुख्यं नेत्याहुः । अलज्जाः लज्जारहिताः भ्रूविलासोऽपि सुखसूचको नेत्याहुः । स्मितेन सह विभ्रमन्ती भ्रूर्यासां तास्तथा "समुद्रोर्मिवदुत्पन्नद्भ्रूविलासेन सुन्दरी । निद्रितं मदनं या तु बोधयेत्सा वराङ्गने"ति कामन्दकः यद्वा हे अबलास्ता मथुराङ्गनाः ग्राम्याः नित्यसुरतकर्मोपेताः स्मिता स्फुटीकृता विभ्रमन्ती भ्रूर्यासां तास्तया ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

न समीक्षते ॥ २२—२४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वक्रूर एव नयति भगवन्तं किमित्यहमुपालभ्ये इति चेत्तत्राहुः । न हि त्वया समानीतः त्वद्वाक्येन समागतः अक्रूरेण नेतुं शक्यः अतस्त्वमेव भगवन्नयनात् क्रूरात्मापि सन् अक्रूरोऽहमिति विपरीतं नाम धृत्वा भद्रामङ्गलयारवत् अन्यथा प्रवेशो न भविष्यतीति लोकापवादव्यावृत्त्यर्थं तेन रूपेण हरसे चक्षुः पक्ष्मचक्षुरितिश्रुत्या भगवांश्चक्षुषश्चक्षुः युक्तश्चायमर्थः प्रामाणिकत्वात् इदं पुनश्चक्षुर्न सर्वजनीनं किं तु त्वयैवास्मभ्यं विशेषाकारेण दत्तं न हि दत्तं चक्षुः देवादिभिरपि ह्रियते अन्येनापहृतं परं प्रयच्छन्ति यतेति खेदे एतदभावे सुतरामन्धत्वमेव प्राकृतं चक्षुस्तु एतत्प्राप्त्या निवर्त्तितम् अतोऽत्यन्तमपकाररूपत्वाच्च हर्त्तव्यमिति भावः । ननु ये यत्कर्तुं प्रवृत्तास्ते तत्करिष्यन्त्येवेत्युपालम्भो निरर्थक एवेति चेत्तत्राहुः । अज्ञवदिति । अत्रार्थे विमर्शकारित्वाभावाद्विवेको बोधनीय इत्युपालम्भ उचित इत्यर्थः । किञ्च तवाप्यनेन चक्षुषा महानुपकारः सिध्यतीत्याहुः । येनैकदेश इति । त्वया हि सौन्दर्यं सृष्टं क्वचित्प्रकाशनीयं तत्समुदायेन सर्वस्यापि भगवदवयवे एव भवति तन्मूलकत्वादेव तस्य सौन्दर्यस्य विष्वग्भ्य(?)हामिदं कृत्स्नमिति वाक्यात् एकांश एव जगत् तत्राप्येकदेशे सौन्दर्यमिति रूपग्रहणार्थमेव हि चक्षुषो निर्माणं रूपं त्वयैव व्यवहारस्त्वन्धानामपि सिध्यति अत एव येन चक्षुषश्चक्षुषा तवैवाखिलसर्गसौष्ठवं वयमद्राक्ष्म वयं च श्रुतिरूपाः अन्यथा त्वत्कृतमप्रामाणिकमेव स्यात् मधुद्विष इति तवाप्युपकारकर्त्ता भगवान् सोऽत्र रमते तत्प्रतिबन्धोऽपि तवानुचित इत्यर्थः ॥ २१ ॥

एवं ब्रह्माण उपालम्भमुक्त्वा स्वतन्त्रो भगवान् ब्रह्माणं न मन्यत इत्याशङ्क्य भगवत उपालम्भनमाहुः । न नन्दसूनुरिति चतुर्भिः । यद्यपि भगवान् मार्गान् विधाय स्वयमुदासीन एव तिष्ठति दूरे स्थित्वा च किञ्चित्करोति ननु सर्वथा तथापि प्रपत्तिमार्गे न किञ्चित् कृतवान् नापि शास्त्रं न वा साधनानि प्रमाणवाक्येऽपि "अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि" इति प्रमेयबलमेवोक्तवान् अत उपालभ्यो भवत्येव किं च नन्दसूनुः भक्तकृपया भक्तिमार्गेऽपि नन्दस्य पुत्रो जातः यत्रैतावद्भवति अप्रयोजके तत्रास्मासु मनोरथार्थमेव कथं न विलम्बं करोतीति अत एव प्रायेणान्याभिनिवेशो जात इत्याहुः । क्षणभङ्गसौहृद इति । क्षणेनैव भङ्गो यस्य तादृशं सौहृदं यस्येति अन्यथा विचारयेद्वा अत एव न समीक्षते सम्यक् पश्यत्यपि न न हि गतसौहृदा दृश्यन्ते द्रष्टव्या इत्यत्र हेतुमाहुः । स्वकृतातुरा इति । स्वकृते भगवदर्थमेवातुरा दीनाः वर्तन्ते खेदे कर्ममार्गेऽपि लौकिकेऽपि स्वकृतातुरेषु समीक्षा क्रियते ज्ञानमार्गे नु आत्मत्वेनैव नित्यप्रकाश इति बहिराविर्भावात् सपक्षो भगवानेव त्यक्तः स्वेषां प्रपत्त्यधिकारित्वमाहुः । विहायेति । सर्वधर्मान् परित्य-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ज्येत्यर्थः । गृहत्यागेन तद्धर्मत्याग उक्त एव बाह्याश्चत्वार आन्तराश्च तथा बाह्यानां परित्याग एव आन्तराणां तु दास्यार्थं स्थापनमिति बाह्यानि गणयन्ति । स्वजना बान्धवाः सुताः स्वस्मादुत्पन्नाः पतयो नियामकाः विशिष्टत्वाद्बाधकत्वात् स्वतन्त्रत्वात् स्वस्यैव भोक्तृत्वाभिमानाच्च आन्तरचत्वेषां दास्योपयोगः अतस्त्यक्तव्या एव स्वदास्यमित्येकशब्दार्थ उक्तः न तु देशादिसहितस्य तदप्यद्धा साक्षात् न तु नामादिद्वारा एवमुपगतःनापि न समीक्षते विचारयत्यपि न अतः केवलं खेद एव कर्त्तुमुचितः असमीक्षायां हेतुं कल्पयन्ति । नवप्रिय इति । असमीचीनमपि नवमेव प्रियं मन्यते अयमप्येकः स्वभावः ॥ २२ ॥

नवप्रियत्वेन सूचितं भावं प्रकटीकुर्वन्ति त्रिभिः नूनतं त्रिविधं भवतीति । सुखं प्रभातेति । “राजसस्तामसश्चैव सात्त्विकश्चेत्यनुक्रमः” इयं रजनी अस्मत्प्रतिपक्षाणामेव सुखं प्रभाता रजनी न त्वस्माकम् आशिषश्च मनोरथाः ब्राह्मणैर्निरूपिता वा तासामेव सत्या बभूवुः यतस्ताः पुरयोषितः चतुराः अन्यथात्रैवागच्छेयुः अत एवास्माकं गमनमपि तत्र बाधितं सपत्नीनामयमवसर इति अस्मद्भोगकालापेक्षया तासामुत्तमो भविष्यति देशश्चोत्तमः अतः पुरवासिन्यः भाव्यर्थं परिज्ञाय स्थिरा जाताश्चतुरा एव अतः ध्रुवमेव महोत्सवो भविष्यति उत्सवमाहुः । याः सम्प्रविष्टस्येति । सम्यक् प्रविष्टस्य व्रजस्पतेः गोकुलस्वामिनो गोविन्दस्य स्वस्थानं प्रविष्टस्य मुखं पास्यन्ति प्रभोर्मुखे परकीये च महानानन्दो भवतीति तस्मिन्मुखे तासां मधुपानमपि भविष्यति न केवलं लावण्यामृतपानमिति विशेषमाहुः । अपाङ्गेन उत्कलितं यत् स्मितं तत्सहितमधरामृतं तदेव देहादिविस्मारकम् अनेन तासां पूर्वदुःखस्मरणाभावात् साम्प्रतमानन्दानुभवाच्च तासामेव महद्भाग्यं न त्वस्माकम् ॥ २३ ॥

नन्वस्तु तासामद्य श्वः परश्वो वा भगवानत्रायास्यतीति अस्माकमेव सुखं भविष्यतीत्याशङ्क्याहुः । तासामिति । स हि मोक्षदाता अस्माकं मुक्तिमेव दास्यति शास्त्रसिद्धां तासां वा मधु स्वादिष्टं मञ्जु मनोहरं ग्रहणे पर्यवसाने वोत्तमं यद्भाषितम् एकेनापि कार्यसिद्धौ बहूनि तानि अतो गृहीतचित्तः चित्ताधीनश्च पुरुषः ननु नन्दोऽस्ति सङ्गे भगवांस्तु जितेन्द्रियः पराधीनस्यैव प्रवर्तते न तु स्वत इति चेत् सत्यं यद्यपि परवान् यद्यपि मनस्वी तथापि नः अस्मान् प्रति कथं प्रतियास्यति एकदा अयं रसो भुक्त इति उद्धृता इतिवद्यथा नन्दाधीनः तथान्याधीनोऽपि भविष्यति यथा वयं तथा अन्या अपीति अबला इति सम्बोधनं सम्मत्यर्थमुपायाभावार्थं च ग्राम्या इति स्वपु बाधको धर्मः यद्यपि ग्राम्यः प्राथमिको भवति रसः अतः सम्भावना तथापि नागरिकादीनां सर्वेषामेवोपभोगे महानेव कालो भवतीति पुनरावृत्तिर्भवति न वेति कथमिति प्रकारप्रश्नः प्रथमप्रवृत्तौ लज्जा ततः स्मितं ततो विभ्रमाः तैस्तत्रैव भ्रमन् पुनस्तास्वेव मण्डलपरिभ्रमं कुर्वन् कथं प्रतियास्यति न हि भ्रमे उत्पन्ने गमनमार्गस्यापि विस्मृतत्वात् भ्रमणं तुल्यमेव ॥ २४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वक्रूरः कृष्णं पुरीं नयति नाहमितिचेत्तत्राहुः । क्रूरस्त्वं विपरीतलक्षणया अक्रूरस्य समाख्यया नाम्ना नह्येवं कर्तुमन्यः शक्नोतीति भावः । तथा दत्तापहारित्वेनापि क्रूरोऽपीत्याहुः । त्वयैव दत्तं चक्षुस्त्वमेव हरसे यथाऽज्ञः पुण्यपापे अजानन् दत्तमपि हरति तद्वत् कृष्णं हरामि न युष्मच्चक्षुरिति चेत्तत्र कृष्णहरणादेवास्माकमान्ध्याच्चक्षुर्हरणमित्याहुः । येन चक्षुषा मधुद्विषः कृष्णस्यैकदेशे वक्त्रनेत्रादौ त्वदीयमखिलसृष्टेः सौष्ठवमद्राक्ष्म तेन किमन्यत् पश्यामः अतोऽन्धा एव भविष्यामः ॥ २१ ॥

हन्त हन्तास्मत्प्रेमास्पदत्वादस्मज्जीवनैकहेतुः कृष्ण एवास्माःनुपेक्षते विधातारं किमिति दूषयाम इत्याहुः । नेति । अतिप्रबल प्रेमा कथमनेन छिन्न इत्यत आहुः । क्षणमात्रेणैव भङ्गो यस्य तथा भूतं सौहृदं यस्य सः सौहृदं नैवमन्यः कर्तुं शक्नोतीति भावः । हन्त हन्त स्वस्य कृते आतुराः प्राणान्तिमदशापन्ना अप्यस्मान् न सम्यगीक्षतेऽपि एता रुदित्वा म्रियन्तां नाम अहन्तु मथुरां गत्व सुखं लभे इत्यस्य निश्चय इति भावः । वयं तु विहायेत्यादि यद्दास्यार्थं पत्यादीनप्यत्यजाम सोऽस्मांस्त्यजति तत्र हेतुः न वा एव प्रिया यस्य सः वयमधुना पुरातन्योऽभूम यतस्तस्मादिति भावः तस्माद्वयमनेनोभयलोकत एव भ्रंशिता इति ध्वनिः ॥ २२ ॥

हन्त हन्त किमद्भुतमिदमस्माकं दुरदृष्टं मथुराङ्गनानां शुभादृष्टं युगपदेव फलतिस्मेत्याहुः । सुखमिति । इयं रजनी पुरयोषितां सुप्रभाता व्रजयोषितां तु दुष्प्रभाता तासामाशिषो विप्रादिदत्ताः दीर्घतरमनोरथाः वा सत्याः सफला अस्माकं तु नष्टा बभूवुः व्रजस्पतेः कृष्णस्य सुडार्पः अपाङ्गे नेत्रान्ते उत्कलितस्मितम् उत्कृष्टा रसव्यञ्जिकाः कलाः सञ्जाता यस्य तदुत्कलितं स्मितमेव रहस्येङ्गितमासवो मादको रसो यत्र तन्मुखं पास्यन्ति स्वापाङ्गरसनाभिरास्वादयिष्यन्ति कुलधर्मलज्जाभयादिकं सहसैव त्यक्त्वा अस्येङ्गितमङ्गीकरिष्यन्तीत्यर्थः । ततश्च समुचितसमये सम्यक् प्रकारेणान्यजनालक्षिततया प्रविष्टस्य मुखमपि साक्षात् पास्यन्ति ॥ २३ ॥

ननु द्वित्राणि दिनानि तथा भवतु नाम तथाप्यस्मत्स्नेहाकृष्टः पित्रादिभिश्च परावर्तित आगमिष्यतीति चेन्नो मुग्धा न जानीथ तत्त्वं शृणुतेत्याहुः । तासां मधुतोऽपि मञ्जुभिरतिमधुरैर्भाषितैर्गृहीतचित्त आकृष्टमनाः अत एव परवांस्तदधीनः सन् मनस्व्यपि धीरोऽपि हे अबलाः ! तादृशकलालावण्यबलहीनाः कथं ग्राम्या अस्मान् प्रत्यायास्यति ननु तदपि पित्रादीन् लोकधर्मयोरपि वर्त्मानुस्मृत्य विवेकबलादायास्यत्येवेत्यतो विशिंषन्ति । तासां सलज्जस्मितैर्विभ्रमैर्मदनावेशसूचकचेष्टितैश्च भ्रमन् भ्रान्तिं प्राप्नुवन् अयमहो सर्वं विस्मरिष्यत्येवेति भावः ॥ २४ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नच तवैतत् कर्मैवासाधु त्वमपि रूपान्तरेणास्मदहिते प्रवृत्तो वञ्चकत्वदत्तापहारित्वादिदोषवत्त्वेनासाधुरसीत्याहुः । क्रूर इति । हे विधातः ! त्वं क्रूरोऽसि “क्रूरस्तु कठिने नृशंसेऽप्याभिधेयवद्” इति विश्वः यतः मधुद्विषः मधुसंज्ञकमहासुरद्वेषिणः, विख्यातकीर्तेर्विष्णोः विश्वमूर्तेः एकदेशे मुखनेत्रादौ त्वदीयम् अखिलसर्ग-

अद्य ध्रुवं तत्र दृशो भविष्यते दाशार्हभोजान्धकवृष्णिसात्वताम् ।
महोत्सवः श्रीरमणं गुणास्पदं द्रक्ष्यन्ति ये चाध्वनि देवकीसुतम् ॥ २५ ॥
मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीव दारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं प्रियात्प्रियं नेष्यति पारमध्वनः ॥ २६ ॥
अनार्द्रधीरेष समास्थितो रथं तमन्वमी च त्वरयन्ति दुर्मदाः ।
गोपा अनोभिः स्थविरैरुपेक्षितं दैवं च नोद्य प्रतिकूलमीहते ॥ २७ ॥
निवारयामः समुपेत्य माधवं किन्नो ऽकरिष्यन् कुलवृद्धबान्धवाः ।
मुकुन्दसङ्गान्निमिषार्द्धदुस्त्यजाद्दैवेन विध्वंसितदीनचेतसाम् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सौष्ठवं समग्रं सृष्टिनै पुण्यमद्राक्ष्म दृष्टवत्यो वयम् अतः सर्वसृष्टिसौष्ठवदर्शनकरणभूतं मधुद्विडाख्यं येन त्वयैव दत्तं स त्वमेव नश्चक्षुः अज्ञवत् बालवत् अक्रूरसमाख्यया हरसे नान्यश्चैतत्कर्तुं शक्नोति अतो निरपराधिजनदुःखदत्वेन वञ्चकत्वेन दत्तापहारित्वेन बालिशत्वेन च त्वमप्यसाधुरेवासीति भावः । स्मेति पादपूरणे ॥ २१ ॥

तत्र काश्चिन्नन्दसूनुमेवाक्रोशन्त्यो ऽन्योऽन्यमूचुः । न नन्दसूनुरिति । बतेति खेदे क्षणभङ्गमस्थिरं सौहृदं यस्य सः नवप्रियः नवं नवं प्रियं यस्य सः एवंभूतो नन्दसूनुः यस्मात् स्वकृतातुराः तत्कृतेनैव स्मितादिना आतुराः परवशाः गृहादीन् विहाय अद्धा साक्षात्तस्यैव दास्यमुपगताः अपि नो ऽस्मान् न समीक्षते ॥ २२ ॥

काश्चित्तु इतो गतस्य भगवतो दर्शनादिकं प्राप्य तत्रत्याः कृतार्था भविष्यन्तीत्याशयेनाहुः । सुखमितित्रिभिः । पुरयोषितामियं प्रभाता प्रातः कालरूपा रजनी सुखं यथा तथा बभूव तथा आशिषः कामाः सत्या बभूवुः यतः याः पुरयोषितः व्रजस्पतेः श्रीकृष्णस्य अपाङ्गोत्कलितस्मितासवम् अपाङ्गेन नयनप्रान्तेनोत्कलितं विकसितं यत् स्मितं तेनासवरूपं रसरूपं मुखं पास्यन्ति ॥ २३ ॥

ननु धनुर्यागोत्सवं दृष्ट्वा पुनरायास्यतीत्यत्र काश्चिदाहुः । तासामिति । हे अबलाः ! परवान् पित्रादिपरतन्त्रोऽपि स्वतो मनस्वी धीरोऽपि मुकुन्दः तासां पुरयोषितां सलज्जस्मितैर्विभ्रमैर्विलासैर्भ्रमन् तासां मधुमञ्जुभाषितैः मधुरकोमलवचनैर्गृहीतचित्तः गृहीतं वशीकृतं चित्तं यस्य सः ग्राम्याः अविदग्धाः नोऽस्मान् कथम्प्रतियास्यते प्रत्येष्यति न कथञ्चिदित्यर्थः ॥ २४ ॥

---

भाषा टीका ।

हे विधाता ! तू बडा क्रूर निर्दयी है जो की तू अक्रूरनाम से आकर पहिले दिये हमारे नेत्र को जबरदस्ती से अज्ञानी की नाई हरण करता है जिस नेत्र से कि हमने मधुसूदन के एक अंग में तेरी संपूर्ण सृष्टि को सुंदरता को देख लिया है ॥ २१ ॥

यह नंद का पुत्र भी बडा कठोर है और नई वस्तु को चाहने वाला है क्षणिक मित्रताई वाला है हम सब गोपी बडी आतुर हैं घर स्वजन पुत्र पती सबों को छोडकर सब प्रकार से साक्षात् उसकी दासी भई हैं तौ भी हमको नहीं देखता है ॥ २२ ॥

अब तो मथुरा पुर वाली स्त्रियों की सब रात सुख प्रभात वाली होगई उनके मनोरथ सफल होगये यह निश्चय है जो कि पुर में प्रवेश होते समय में व्रजपति श्रीकृष्ण के अपांग दृष्टि से मंद हास रस सहित मुख कमल के मधुको पान करैंगी ॥ २३ ॥

मुकुंद यद्यपि बडे धीर हैं तौ भी उन स्त्रियों के मनोहर वचनों से उनका चित्त खिंच जायगा तब परवश होजायंगे फिर हम गामवालीयों अबलाओं पर स्नेह नहीं करेंगे लज्जा सहित मंदहास से फिर उनके भाव वाले नेत्रों से भ्रमित होकर फिर कैसे हमारे पास आवेंगे ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

किञ्च अस्मदुत्सवभाजो ऽन्य एवाद्य भविष्यन्तीत्याहुः । अद्येति तत्र पुरे दाशार्हादीनां दृशो दृष्टेर्महानुत्सवो भविष्यते भविष्यति ये देवकीसुतं द्रक्ष्यन्ति तथा ये चाध्वनि गच्छन्तं द्रक्ष्यन्ति तेषामपि दृशो भविष्यतीति यद्वा दृश इति द्वितीया तेषां दृशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यति प्राप्त्यर्थस्य भवतेरात्मनेपदित्वात् ॥ २५ ॥

अक्रूरं शपन्त्य आहुः । मैतद्विधस्येति । एषा विधा विधानं कर्म यस्य अत एव निष्कृपस्याक्रूर इति शोभनं नाम माभूत् तत्र हेतुः । अतीव दारुण इत्यादि । प्रियात्प्राणादपि प्रियतरं कृष्णमध्वनः पारमस्मद्दृग्गोचरत्वादतिदूरं देशं नेष्यति ॥ २६ ॥

अहो धिगस्मज्जीवितमित्याहुः । अनार्द्रधीरिति । अनार्द्रा कठिना धीर्यस्य स तावदेष कृष्णो रथमधिरूढः अस्यायिनयमारलक्ष्य स्थविरैश्चोपेक्षितम् ते न निवारितवन्त इत्यर्थः । किञ्च दैवञ्चेति अयंभावः यदि दैवमस्माकमनुकूलं भवेत्तर्हि विघ्नैः कश्चिदेषां मध्ये प्रतिहन्येत अकस्माद्वज्रपातो वा भवेत् अन्यथा किञ्चिद्विघ्नं स्यान्न तु तत्किञ्चिदस्तीति ॥ २७ ॥

परस्परं सम्मन्त्र्य साहसमध्यवसायाहुः । निवारयाम इति ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अकरिष्यन् करिष्यन्ति निमिषार्धदुस्त्यजात् मकुन्दसङ्गाद्विध्वंसितानि वियोजितान्यत एव दीनानि चेतांसि यासाम् एवम्भूतानामस्माकं न मृत्योरपि भयमित्यर्थः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गुणानां गुणजातीनां सर्वास्पदमाश्रयं यदाश्रयेणैव ते सिद्ध्यन्ति तमित्यर्थः । किं बहुना सर्वगुणसम्पत्तिहेतुविष्णुप्रियां श्रियं लक्ष्मीमपि रमयितुं जातरतिं कर्तुं शीलं यस्य तमिति प्रौढिवाक्यं देवकीसुतमिति "प्रागयं वसुदेवस्य" इत्यादि तत्पुरोहितवाक्येन सच साच तत्पुत्रत्वमेवाभिमस्यत इति । यद्वा । देवकी श्रीयशोदेति पूर्वमेवोक्तं ये चाध्वनि वर्त्तमानाः पथिकास्तद्वासिनोऽपि लोकाः । तथा च "तत्रैव धन्यास्ते पथि ये कृष्णमितो यान्तमवारिताः । उद्वाहिष्यन्ति पश्यन्तः स्वदेहं पुलकाचितम् । मथुरानागरीपौरनयनानां महोत्सवः । गोविन्दावयवैर्दृष्टैरतीवाद्य भविष्यति । को नु स्वप्नः स्वभाग्याभिर्दृष्टस्ताभिरधोक्षजः । विस्तारितान्तनयना या द्रक्ष्यन्त्यनिवारिताः" ॥ २५ ॥

इति शब्देनैव एतदित्यस्यार्थस्योक्तत्वात् इत्येतदिति तैर्नालिखितं यद्वा । इत्येतत् इत्येवमित्यादिप्रयोगदर्शनाद्देहलीवर्द्धन्यायेन पौनरुक्त्यदोषो ज्ञेयः । अतीव दारुणः परमक्रूरः कुतस्तदाहुर्यं इति । असाविति दारुणत्वेनानिर्वचनीयत्वं सूचितं यद्वा । असावयमित्यर्थः । प्रत्यक्षस्थितोऽपीति अनाश्वास्य पुनरेव मया समानीय युष्मासु समर्पणीय इति वचसापि जनमिति सामान्येनोक्तेस्तन्मात्रस्याप्याश्वास उचितः किमुतावलारूपस्येत्यर्थः । अतोऽचिरादस्मिन् स्त्रीवधो भावीति सुशब्दाभिप्रायः । अतोऽतीव क्रूर एव । तथा च तत्रैव । "किं न वेत्ति नृशंसोऽयमनुरागपरं जनम् । येनायमक्ष्णोराह्लादं नयत्यन्यत्र नो हरि" मिति अतः परमस्य क्रूरस्य क्रूर इत्येव नाम युक्तमिति भावः । अन्यत्तैः यद्वा अक्रूर इति नाम मा भूदेव इत्येवमेतत्प्रकारमन्यन्नमापि माभूदित्यर्थः ॥ २६ ॥

अहो कंसदूतोऽयं क्रूर एव परमकृपाकोमलचित्तः श्रीनन्दनन्दनोऽप्यस्मान् प्रति परमकठिनोऽभूदिति परमार्त्याहुरनार्द्रधीरिति । यतो रथं सम्यगवास्थित उपरि नीडमारूढः तं रथमनु पश्चात् किम्वा श्रीकृष्णमनुवर्त्तन्ते ये तेऽमी गोपाः श्रीदामादयः अनोभिः कृत्वा शीघ्रं शकटयोजनादिना यद्वा तैः सह वर्त्तमानास्तान्यारूढा इत्यर्थः । त्वरयन्ति गमने त्वरां कुर्वन्ति यद्वा तमेवानु अनुक्षणं गन्तुं त्वरयन्ति यतो दुर्मदाः महामत्ताः अन्यथा विचारसःभवात् ॥ २७ ॥

सोऽयमस्माभिर्बाल्यमारभ्यानन्यवृत्तिना मनसा वृत इति सचाप्यस्मांस्तथैवाङ्गीकृतवानिति पतिरेव स्यात् ततः संप्रत्यस्मान् परित्यज्य व्रजत्यसौ कथं निवारणीयः कस्य वा नु सङ्कोच इत्याशयेनाहुर्निवारयाम इति । सम्यक् लज्जादिकमपहाय साहसमालम्ब्य उप समीपे गत्वा श्रीहस्तधारणादिना माधवं निवारयामः शीघ्रमेव निवारयिष्यामः ननु पित्राद्यनुमतिं विना कथं स्वातन्त्र्येण वृतोऽसौ तत्राप्याहुः । माधवमिति । नूनं लक्ष्म्यापि निगूढमयं वृतोऽस्तीति सदाचारप्रश्नेनायं दोष इति भावः । स्थापयिष्यते चेदमेवं ब्रुवाणा इत्यादौ ननु कुलवृद्धादयस्त्विदमौद्धत्यं दृष्ट्वा शान्तिं करिष्यन्ति तत्राहुः । किन्न इति । कुलस्य वृद्धा धर्मप्रवर्त्तका बान्धवाः स्नेहादिबद्धाः पत्यादयश्च धार्ष्ट्यदर्शनेन निश्चितरहस्यवृत्तान्ता अपि नोऽस्माकं किं करिष्यन्ति यतो दैवेनापरिहार्येण निजादृष्टेन हेतुना यो मुकुन्दसङ्गस्तत्प्रथमदर्शनादिस्तेनैव विध्वंसितानि देहगेहाद्यासक्तितो विचालितानि तथा यथामनोरथं तदप्राप्त्या दीनानि च चेतांसि यासां तासां नन्वतो दैवेन तद्वियोजनमधुना भद्रमेव कृतं तर्ह्यधुनापि तत्सङ्गाग्रहस्त्यज्यतां तत्र सभयमाहुर्निमिषेति । यद्वा युष्माकं ते किञ्चिदपि न करिष्यन्ति तत्राहुर्मुकुन्देति । मुकुन्दस्य सानुरागेण कुलवृद्धा देव्यो मोचकत्वात्तन्नाम्नस्तस्य माधवस्य सङ्गाद्देयेन विध्वंसिता अतएव दीनचेतसः यास्तासामस्माकं कीदृशान्मुकुन्दसङ्गान्निमिषार्धेऽपि दुस्त्यजत्वेन पूर्वमस्माभिरनुभूतादित्यर्थः । अयं भावः यद्यसौ निवृत्तः स्यात्तस्य यदि स्वैस्त्यज्येमहि तदा वनदेव्य इव वृन्दावनैकशरणा भूत्वा तं सुखमेव निषेधेमहि यदि दण्ड्येमहि निरुध्येमहि च तदापि तन्निवृत्तिं दृष्ट्वैव म्रियेमहीति सुखमेव यदि न निवृत्तः स्यात्तदोत्सर्गसिद्धमेव मरणं स्यादिति न किमपि ते कुर्युस्ततो निवारयाम एवेति ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अध्वनि ये द्रक्ष्यन्ति तेषां च महोत्सवः ॥ २५ ॥

अक्रूर इति नाम माभूदित्यन्वयः अध्वनः पारं दूरदेशम् ॥ २६—२९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चास्मदुत्सवभाजोऽन्य एवाद्य भविष्यन्तीत्याहुः । अद्येति । तत्र पुरे दाशार्हादीनां दृशो दृष्टेरद्य महानुत्सवो भविष्यते भवदिष्यति आत्मनेपदमार्षं तथा च ये जना अध्वनि श्रीरमणं लक्ष्मीकान्तं गुणानां कल्याणानामाश्रयं देवकीसुतं द्रक्ष्यन्ति तेषाञ्च दृशः नूनमुत्सवो भविष्यति यद्वा दृश इति द्वितीयाबहुवचनान्तं तेषां दृशो नेत्राणि महोत्सवो भविष्यते प्राप्स्यते प्राप्स्यर्थस्य भवतेरात्मनेपदित्वात् ॥ २५ ॥

अक्रूराय शपन्त्य आहुः । मैवं विधस्येति । एवंविधा विधानं कर्म यस्य एतद्विधस्येति पाठे एषा विधा यस्य तस्यात एव निष्कृपस्याक्रूर इतीत्थं नाम माभूत् तत्र हेतुरतीव दारुण इत्यादि । दारुणः क्रूरः अतः क्रूर इत्येव व्यपदेष्टव्य इति भावः । योऽसावक्रूरः सुतरां दुःखितंजनमस्मत्समुदायात्मकमनाश्वास्य नास्मान् सान्त्वयित्वा प्रियात्प्राणादपि प्रियं कृष्णमध्वनः पारं नेष्यति अस्मदगोचरमतिदूरदेशं नेष्यतीत्यर्थः ॥ २६ ॥

इत्थं ब्रुवन्तीनां सतीनां प्रभाते रथारूढं श्रीकृष्णमालक्ष्य शपन्त्य आहुः । अनार्द्रधीरिति । अनार्द्रा धीर्यस्य स एष कृष्णो रथमधिरूढः तमनुसृत्यामी दुर्मदा गोपाश्चानोभिः शकटैर्गमनसाधनैः स्थविरैर्वृद्धैरुपेक्षितं मूर्खत्वात्तैरप्युपेक्षितं ते न निवारितवन्त इति भावः । तं कृष्णं त्वरयन्ति किञ्च दैवमप्यद्य नोऽस्माकं प्रतिकूलं यथा तथा ईहते चेष्टते अयंभावः यदि दैवमस्माकमनुकूलं भवेद्विघ्नैरयं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विहन्येत अकस्मादधुनैव व्रजे किञ्चिदरिष्टं वा स्याद्धतु तत्किंचिदस्त्यतो दैवमपि प्रतिकूलमिति ॥ २७ ॥

परस्परं सम्मन्त्र्य साहसमधिरुह्याहुः । निवारयाम इति । तं माधवमुपेत्य वयं निवारयेम व्रजे वृद्धा बान्धवाश्च नोऽस्माकं किमकरिष्यन् किञ्चिदपि न करिष्यन्ति तत्र हेतुं वदन्त्य आत्मनो विशिषन्ति निमिषार्द्धमपि दुस्त्यजान्मुकुन्दस्य सङ्गाद्दैवेन विध्वंसितानि वियोजितानि अत एव दीनानि चेतांसि यासां तासां न इति सम्बन्धः एवम्भूतानामस्माकं न मृत्योरपि भयमस्तीत्यर्थः ॥ २८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्र मथुरायां दाशार्हादीनां दृशां महोत्सवो भवितेति शेषः महानुत्सव आनन्दो यस्य स तथा तं ये दाशार्हादयः देवकीसुतं द्रक्ष्यन्तीति यत्तस्मात् ये चाध्वनि द्रक्ष्यन्ति तेषां दृशाश्चेति॥ २५ ॥

इदानीमक्रूरं शपन्ति । मैतदिति । एवंविधस्यातिदारुणे कर्मणि प्रवृत्तस्यैतद्विधस्यैतादृशस्य वा ॥ २६ ॥

कृष्णस्येश्वरत्वं सम्वदन्ते । अनार्द्रधीरिति । अनेन निःसङ्गत्वं हरेर्दर्शितं दुर्मदाः उत्तरकार्यान्धाः स्थविरैः कुलवृद्धैः ॥ २७ ॥

नः किमनिष्टमकरिष्यन् विभ्रंशितानामत एव दीनचेतसाम् ॥ २८॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

देवकीसुतमिति प्रागयं वसुदेवस्येत्यादि तत्पुरोहितवाक्येन स च सा च तास्मिन् पुत्रत्वमेवाभिमंस्यत इत्यभिप्रायेण २५—२७ ॥

माधवं लक्ष्म्या अपि पतिभावहेतुगुणवृन्दमित्यर्थः ॥ २८-३३॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु भगवान् भक्तवत्सलः समायास्यतीति चेत् तत्राहुः । अद्येति । भक्ता अपि तत्र बहवः अतस्तेषां दाशार्हभोजान्धकवृष्णिसात्वतां पञ्चविधानां कुकुरादीनामपि संग्राहकाः तथापि सत्त्वप्रधाना एव गणिताः तेषां दृशो महोत्सवो भविता शाभ. हि द्रष्टव्या लक्ष्म्यधीना च शोभा तस्या अपि रमण इति किं च ये च अध्वनि देवकीसुतत्वात् तद्धितार्थं गच्छन्तं ये मार्गे द्रक्ष्यन्ति तेषामपि दृशो भविष्यति महोत्सवः ननु दर्शनमात्रेण कथमिष्टसिद्धिरिति चेत् तत्राहुः । गुणास्पदमिति । अनन्तगुणानामास्पदत्वात् दर्शनानन्तरं गुणास्तत्रैव समायास्यन्ति अतो महानेवोत्सवः फलपर्यवसायी त्रिविधा अपि गणिताः ॥ २५ ॥

एवं चतुर्धा भगवन्तमुपालभ्य अक्रूरोपालम्भनमाहुः । मैतद्विधस्येति । संज्ञा ह्यन्वर्थोचिता क्रौर्यादयस्त्वन्तःकरणधर्माः अतः अविचार्यैव नामकरणं कृतमिति अक्रूर इत्येतन्नामास्य माभूत यस्तु सर्वमारकः स कथमक्रूर इति यतोऽयमतीव दारुणः अत आक्रूर उचितः ननु कार्यार्थं सोऽपि समागतः किं कुर्यादिति चेत्तत्राहुः । अनाश्वास्येति । सुदुःखितं गोपीजनं तेषां सर्वस्वभूतं ताननाश्वास्य नयतीति आश्वासनं हि भगवन्तमानीय केनचिद्रूपेण वा अत्र स्थापयित्वा समागमिष्यामीति वाग्बन्धं वा कारयित्वा पश्चान्नयनमुचितं न तु धनादिदानं यतो भगवान् प्रियात् प्राणादपि प्रियः आत्मनोऽपि नयनं च न गोचारणवत् किं त्वध्वनः पारं यत्र गतः तस्मिन् दिवसे नायाति ॥ २६ ॥

सर्वा नैवोपालभन्ते । अनार्द्रधीरेष इति । गोपिकाव्यतिरिक्तानां सर्वेषामेव महानुत्साहः अतः सर्वे प्रातरेव भुक्त्वा अक्रूरव्यतीरिक्ता रथारूढा जाताः शकटारूढाश्च भगवानपि यशोदादिभिरभ्यनुज्ञातः सम्यगेवास्थितो रथम् अस्मिन्नपि समये अस्मद्विचारं न कृतवानिति अनार्द्रधीरेष कृष्णो दृश्यते न तु सोऽस्मान् पश्यति किं च तमनु यावन्तो गोपाः ते सर्वे दुर्मदाः विचाररहिताः परघातेऽपि क्लेशरहिताः अमी त्वरयन्ति यतस्तथैव दृश्यन्ते चकारादक्रूरोऽपि ते च शकटारूढा इति तेषां चलनक्लेशाभावश्च पश्चात् स्थितशकटानुरोधेन गन्तव्यं पततीति अनोभिः साधनैरित्यप्युक्तं तर्ह्युपनन्दादयो वृद्धा वक्तव्या इति चेत्तत्राहुः । स्थविरैरुपेक्षितमिति । तेषां विचारेण तथा गोप्यस्तथा नागर्यस्तथैव वसुदेवादय इति नन्वदृष्टं प्रार्थयन्तु यथा विघ्नः कियत्कालप्रतिबन्धो वा भवेत् तत्राहुः । दैवं चेति । चकारात् कालादयः सर्व एव प्रतिकूलमीहन्ते ॥ २७ ॥

स्वप्रवृत्तिबन्धकत्वेन बान्धवानुपालभन्त्यः ताननगणयन्ति निवारयाम इति । सर्वाभिः सम्भूय भगवन्निवारणीयः तथा सति बान्धवाः कोपं करिष्यन्तीति चेत्तत्राहुः । किन्नो करिष्यन्निति नोऽस्माकं किमकरिष्यन्निति किं पूर्वं कृतवन्तः करिष्यन्ति वा ते हि कुलस्यैव बान्धवाः कुलापेक्षायां सत्यां कुले स्थापयन्ति न त्वतिरिक्तं किञ्चित्कुर्वन्ति भगवतः कुलस्य च तारतम्ये विचार्यमाणे कुलं बन्धकं भगवान् मुकुन्दः किं च तस्य सङ्गः साक्षात् स तु निमिषार्धमपि दुस्त्यजः तस्माद्धेतोः दैवेनैव स्वादृष्टेनैव विध्वंसिताः अत एव दीनचेतसः तेषां कुलस्थैर्न्न किञ्चित् कर्त्तुं शक्यते यदि ते भगवते दद्युः तर्हि कुर्युरेव तत्तु न कुर्वन्तीति प्रतिबन्धकत्वाच्च न तैः किञ्चित्कार्यम् अपकारश्चेत् अस्माकं स्वत एव सिद्धः पिष्टपेषणं तैः किं कर्त्तव्यमिति ननु निवारणे किं भविष्यति यदि नागमिष्यति तत्राहुः । माधवमिति । स हि लक्ष्मीपतिः बलात् तया गृहीतस्तदीयो जातः एवमस्मदीयोऽपि भविष्यतीति यत्ने कृते तु नास्माकं बुद्धिदोषः अकृते तु पश्चात्तापो भविष्यतीति भावः । पश्चात्तापाभावार्थमेवमुद्यमः न तु कार्यं भविष्यतीति तथापि न सर्वासां संमतिरिति लौकिकालौकिकपरमार्थदृष्टियुक्ताभिरप्रवृत्तमिति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च व्रजस्थानामानन्दं पुरस्थाः प्राप्स्यन्तीत्याहुः । अद्येति । दृश इति जात्येकत्वं दाशार्हादीनां दृशां महोत्सवो भविष्यति येचाध्वनि द्रक्ष्यन्ति तेषामपि दृशामात्मनेपदमार्षं यद्वा दृश इति

यस्यानुरागललितस्मितवल्गुमन्त्रलीलावलोकपरिरम्भणरासगोष्ठ्याम् ।
नीताः स्म नः क्षणमिव क्षणदा विना तं गोप्यः कथं न्वतितरेम तमो दुरन्तम् ॥ २९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

द्वितीया तेषां दृशो दृष्टीर्महोत्सवो भविष्यते प्राप्स्यति प्राप्त्यर्थकोऽयं भवतिरात्मनेपदी ॥ २५ ॥

अक्रूरं शपन्त्य आहुः । एतद्विधस्य एतादृशस्य यद्वा एषा विधा विधानं कर्म यस्य अत एव निष्करुणस्य अक्रूर इत्येतन्नाम माभूत् न युज्यत इत्यर्थः । तत्र हेतुरतीवेति तस्मादतः परमयं क्रूर इति नाम्नाऽभिधेय इति भावः । पुनरेव मया समानीय युष्मासु समर्पणीय इति वचसापि जनं व्रजस्थमेकमपि जनमनाश्वास्य सुदुःखितमिति सुशब्देन मरिष्यतां व्रजजनानां वधपातकमयमेव प्राप्स्यतीति द्योतितम् प्रियात् प्राणादपि प्रियं कृष्णम् अध्वनोऽस्मद्गम्यस्य पारं दूरदेशमित्यर्थः ॥ २६ ॥

अहो आगत्याक्रूरेण स्वक्रूरता सर्वत्रैव सञ्चारितेत्याहुः । अनार्द्रधीरस्मान् रुदतीर्दृष्ट्वापि एष कृष्णः अनोभिः सहिता गोपा दुर्मद इत्येषामहो दुष्टा मत्तैवाजनिष्ट अत्रानागमिष्यतः कृष्णस्य विरहेण स्वयं यन्मरिष्यन्ति तदपि नानुसन्दधते इति भावः । स्थविरैर्वृद्धैरपि निषेधमकुर्वद्भिरुपेक्षितं स्वजीवितमिति शेषः किञ्च दैवतं चेति अयं भावः यदि दैवमस्माकमनुकूलमभविष्यत्तदा विघ्नैः किञ्चिदेषामुपद्रवमुत्पादयिष्यतेति तस्मादायुरेव व्रजस्थानामतः परं नास्तीति निश्चिनुम इति भावः ॥ २७ ॥

परस्परं सम्मन्त्र्य साहसमधिरुह्याहुः । निवारयामः सम्यगुपेत्य वस्त्रहस्ताकर्षणादिना भोः प्राणैकवल्लभ रथादवतरावतर त्वं स्त्रीवधकोटीर्मा गृहाणेति वाग्भिरपि निवर्तयामः ननु कुलवधूनामस्माकमेतावद्धतिधार्ष्ट्यं दृष्ट्वा लोका हसिष्यन्ति रहस्यमुद्घाटितमालक्ष्य बन्धवोऽपि त्यक्ष्यन्ति तत्राहुः । किन्नोऽकरिष्यन् करिष्यन्ति कीदृशानां निमिषार्द्धमपि व्याप्य त्यक्तुमशक्यात् मुकुन्दस्य सङ्गात् दैवेन विध्वंसिता वियोजिता अत एव दीनचेतसश्च यास्तासामस्माकम् अयं भावः यद्यसौ निवृत्तः स्यात्तदा यदि बन्धुभिस्त्यज्येमहि तदा वनदेव्य इव वृन्दावने स्थास्याम इत्यभिप्रेतसिद्धिरेव यदि वा दण्ड्येमहि रुध्येमहि वा तदाप्येकग्रामस्थितिवार्त्तानेन सखीजनचातुर्यप्रापितैतन्निर्माल्यमाल्यचर्वितादिना च सुखमेव जीवामः यदि चासौ नैव निवृत्तः स्यात्तदोत्सर्गसिद्धं मरणमस्माकमस्त्येवेति ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च तत्र पुरे अद्य ध्रुवं महोत्सवः दाशार्हादीनां दृशः नेत्राणि भविष्यते प्राप्स्यते ये चान्येऽपि जना अध्वनि देवकीसुतं द्रक्ष्यन्ति तेषामपि दृशो महोत्सवो भविष्यते ॥ २५ ॥

काचिच्च विधाताऽक्रूरसमाख्यया श्रीकृष्णं हरत्यता न स दत्तापहारित्वादिदोषवान् नापि श्रीकृष्णः क्षणभङ्गसौहृदत्वादिदोषवान् किन्त्वक्रूर एव श्रीकृष्णं हरतीत्यक्रूरं शपन्त्य आहुः । एतद्विधस्येति पादोनाभ्यां द्वाभ्याम् । एषा श्रीकृष्णहरणरूपा विधा विधानं कर्म यस्य अत एवाऽकरुणस्य अक्रूर इति शोभनं नाम माभूत् यतः योऽसौ अतीव दारुणः सुदुःखितं जनमस्मदादिरूपम् अनाश्वास्य असान्त्वयित्वा प्रियात्प्राणादपि प्रियं श्रीकृष्णम् अध्वनः पारं नेष्यति अस्मद्दृग्गोचरत्वाद्दूरं देशं नेष्यतीत्यर्थः ॥ २६ ॥

अनार्द्रा अस्निग्धा धीर्यस्य स एष अक्रूरः रथमास्थितः स्थविरैरुपनन्दादिभिरुपेक्षितं तमक्रूरं गोपाश्चापि त्वरयन्ति अन्यास्त्वक्रूरस्यापि दोषाभावं मन्यमानाः स्वदैवप्रातिकूल्यं श्रीकृष्णवियोगे कारणमाहुः । दैवमिति ॥ २७ ॥

श्रीकृष्णवियोगे दैवं कारणमित्युक्तं तत्र काश्चित् तत्प्रतीकारं पौरुषेण करिष्याम इत्याहुः । निवारयाम इति । ननु दैवप्रतीकारार्थमेवं साहसे प्रवृत्ता अस्मान् कुलवृद्धबान्धवाः वारयिष्यन्त्यत आहुः । दैवेन निमिषार्द्धदुस्त्यजादपि मुकुन्दसङ्गात् विध्वंसितानि वियोजितानि अत एव दीनानि चेतांसि यासामेवं भूतानां नोऽस्माकं कुलवृद्धाः अन्ये च बान्धवाः किमकरिष्यन् किङ्करिष्यन्ति पिष्टस्य पेषणासम्भवात् दैवताडितानां नः पुनस्ताडनासम्भवादिति भावः अतः माधवं निवारयाम एव ॥ २८ ॥

---

### भाषा टीका ।

आज निश्चय से उहां मधुपुरी में दाशार्ह भोज अंधक सात्वत इन सबों के नेत्रों को बडा उत्सव प्राप्त होगा जो कि लक्ष्मी के पति सब गुणों से पूर्ण देवकी नंदनजी के मार्ग में जाते समय दर्शन करेंगे ॥ २५ ॥

इस प्रकार के अत्यंत कठोर काम करने वाले का अक्रूर नाम नहीं होना चाहिये जो कि यह ऐसे दुःखित जन हम लोगों को आश्वासन नहीं करके हमारे नेत्रों से दूर रस्ता को हमारे प्राणों से भी प्रिय श्रीश्याम सुंदर को लेजावेगा ॥ २६ ॥

यह नंदनंदन भी निर्दय बुद्धिवाला होकर रथ पर बैठ गया है तिसके पीछे ये और भी दुर्मद गोप लोग जल्दी कर रहे हैं जो कि गाडों पै चढे जा रहे हैं वृद्ध लोग कोइ इनको नहीं समुझाते हैं दैव भी आज हमारा प्रतिकूल होरहा है जो कुछ विघ्न भी नहीं हो जाता है ॥ २७ ॥

अब हम सब जाकर माधव को लौटावेंगी कोइ कुल के वृद्ध बांधव लोग हमारा क्या करेंगे एक निमिष भी नहीं छोडने योग जो मुकुंद का संग तिससे इनको दैवने छुडा दिया है तो और क्या करेंगे ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इतोऽपि कारणादवश्यं साहसमेवावलम्बनीयमित्याहुः । हे गोप्यो यस्य ललितं स्मितं च वल्गुमन्त्रश्च लीलावलोकश्च परिरम्भणं

योऽह्नः क्षये व्रजमनन्तसखः परीतो गोपैर्विशन् खुररजश्छुरितालकस्रक् ।
वेणुं क्वणन् स्मितकटाक्षनिरीक्षणेन चित्तं क्षिणोत्यमुमृते नु कथं भवेम ॥ ३० ॥

श्रीशुक उवाच ।

एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः ।
विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द ! दामोदर ! माधवेति ॥ ३१ ॥
स्त्रीणामेवं रुदन्तीनामुदिते सवितर्यथ ।
अक्रूरश्चोदयामास कृतमैत्रादिको रथम् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चानुरागेणैतानि यस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीतास्तममुं कृष्णं विना दुरन्तं तमो विरहदुःखं कथन्नु अतितरेम न कथंचिदित्यर्थः ॥ २९ ॥

किञ्च आस्तां तावत्तमोऽतितरणं जीवनमेव कथं स्यादित्याहुः । य इति । अह्नः क्षये दिनावसाने खुररजोभिश्छुरिता धूसरा अलकाः स्रजश्च यस्य स व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नश्चित्तं क्षिणोति हरति अमुं कृष्णं विना कथं भवेम जीवेम ॥ ३० ॥

कृष्णे विषक्तानि मानसानि यासाम् सुस्वरमुच्चैः ॥ ३१ ॥

क्रूरमक्रूरतः श्रुत्वा कंसं कंसनिषूदनः ।
गोपीमनोरथारामः सरामः स्वपुरं ययौ ॥

स्त्रीणामिति । ता अनादृत्य कृतमैत्रादिको मैत्रं मित्रदैवतं सन्ध्योपासनं तदादि कर्म कृतं येन सः ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ निवारणार्थमुद्यता अपि बहुविरुद्धसङ्घट्टे तस्मिन् स्वेषां प्रवेशमदृष्ट्वा सभयमाहुर्यस्येति । रासोपलक्षणत्वेन लीलान्तरमपि ज्ञेयं वल्गुमन्त्रः मधुररहस्यसङ्केतवार्त्ता स्म विस्मये नु वितर्के तरणस्य दुष्करत्वेनातिशब्दः यथा रासक्रीडासुखेन बह्व्योऽपि रात्रयः क्षण इव भवन्ति स्म तथा तद्विरहदुःखेन क्षणोऽपि युगशतमिव स्यादतस्तत् सह्यं न स्यादिति भावः ॥ २९ ॥

अनन्तः सङ्कर्षणतया तदेकनामत्वात् शुभ्रवर्णत्वेन सारूप्यादनन्तबलत्वाच्च व्रजे कृष्णनामान्तरवत्तथा प्रसिद्धः श्रीबलदेवस्तस्य सखा तत्सहित इत्यर्थः । गोपैर्वयस्यैः परितो वेष्टितः स्मितं मन्दहासः कटाक्षोऽपाङ्गदर्शनं तत्प्रधानं निरीक्षणं वक्षोआदिनिभाळनं तेन चित्तं क्षिणोति प्रेमोद्रेकेण सम्मोहयति नु आशङ्कायाम् अतोऽद्य स्वयमेवात्रत्या मरिष्याम इति भावः ॥ ३० ॥

अथ भृशं विरहातुरत्वेन विशेषविलापशक्त्या शोकोद्दीपकतन्नामविशेषैरेव विलेपुरित्याह । एवमीदृशं भृशं ब्रुवाणा इत्यन्यदपि तादृशमूचुरिति ज्ञेयं तत्र हेतुर्विरहेणातुरा विवशाः तत्रापि हेतुर्व्रजस्त्रियः सहजप्रेमरसमयत्वेन प्रसिद्धा इत्यर्थः अत एव कृष्णे विषक्तानि प्रेम्णा सक्तानि मानसानि यासां ताः अत एव लज्जां हित्वा सुस्वरं करुणोच्चस्वरेण रुरुदुः स्म पादपूरणे तच्च प्रेमार्त्तिरशक्त्या कथं रुरुदुः हे गोविन्द ! दामोदर माधवेत्येवम् अत्र गोविन्देति गोकुलेन्द्रस्मरणात्त्वां विना गोकुलमिदं सर्वं क्षणादेव विनङ्क्ष्यतीति सूचयन्ति दामोदरेति नाम श्रीव्रजेश्वर्याः स्वकृतानुतापस्मारकं ततस्त्वां विना तस्यास्तस्य स्मरणेन सम्प्रति कीदृगवस्था भविष्यतीति व्यञ्जयन्ति माधवेति जयति तेऽधिकं जन्मना व्रज इत्यनेन सततमुरसि सौम्या श्रीर्वधूः साकमास्ते इत्यनेन च निजसम्भावनानुसारेण तया श्रीनारायणप्रिययापि गूढं वृत इति परमसहायकस्त्वं योग्यमेवास्मन्महानुरागविषयो जात इति स्मरणेन हन्त कथमस्माकमधुना कालक्षेपणं भविष्यतीति ज्ञापयन्ति मा नाम्नीं नारायणप्रियामपि धुनोति भावविशेषेण कम्पयतीति निरुक्तिश्चात्र प्रस्तुतोपयोगिनी ज्ञेया ईदृशस्यापि तव विच्छेदे वयं वा कथं जीवेम मरणे च हा पुनर्द्रष्टव्यो नासीदिति ध्वनयन्ति चकारोऽनुक्तानामन्येषामपि नाममयकरुणपरिदेविनानां समुच्चये ॥ ३१ ॥

एवमुक्तप्रकारेण रुदतीरपि स्त्रियोऽनादृत्येति अक्रूरस्यापराधो ध्वनितः सतः सर्वैरेवानुकम्प्यानां तत्रापि तादृशश्रीकृष्णप्रेम्णा तथा रुदतीनां व्रजस्त्रीणां कथमपि सान्त्वनमनपेक्ष्य प्रस्थानात् अतस्ताभिरपि तदपराधं मत्वा प्रागुक्तं योऽसावत्राश्वास्येति श्रीविष्णुपुराणेऽपि "अक्रूरः क्रूरहृदयः शीघ्रं प्रेरयते हयान् । एवमार्त्तासु योषित्सु न घृणा तस्य जायते" इति अत एव श्रीगोकुलमहिलास्तु तदपराधस्य फलमक्रूरस्य वक्ष्यमाणे स्यमन्तकप्रसङ्गे मन्यन्ते सूर्य उदित एवेति सत्कृत्यायेक्षया रथं भ्रातृभ्यां ताभ्यामिति शेषः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनन्तसखः बलभद्रसखः क्वणन् क्वणयन् ॥ ३०...३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतोऽप्यवद्यं साहसमेवाचलप्यनीयमित्याहुः । यस्येति । हे गोप्यः यस्य अनुरागेण लक्षितं स्मितं च वल्गुमन्त्रः सुन्दरतररहः

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संलापश्च लीलावलोकश्च परिरम्भणश्च एतानि यस्यां तस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीताः क्रमितास्तममुं श्रीकृष्णं विना दुरन्तं तमो विरहजं दुःखं कथं त्वातितरेम न कथञ्चिदित्यर्थः ॥ २९ ॥

आस्तां तावत्तमोऽनितरणं जीवनमेव कथं स्यादित्याहुः । य इति । योऽनन्तस्य रामस्य सखा तत्सहित इत्यर्थः । गोपैश्च परिवृतः अन्हः क्षये दिनावसाने गवां खुररजोभिः छुरिता धूसरा अलकाः स्रजश्च यस्य सः व्रजं विशन् वेणुं वादयन् स्मितेन यत्कटाक्षेण वीक्षयां तेन नोऽस्माकं चित्तं क्षिणोति हरति तममुं श्रीकृष्णं विना कथंभवेम जीवेम ॥ ३० ॥

इतीत्थं ब्रुवाणाः भृशं नितरां कृष्णे विषक्तानि मानसानि यासां ता अत एव तद्विरहेण भाविना आतुरा व्रजस्त्रियः लज्जां विसृज्य सुस्वरमुच्चैर्हे गोविन्द ! हे दामोदर ! हे माधवेति च रुरुदुः स्म ॥ ३१ ॥

इत्थं स्त्रीण रुदतीनां सतीनां सवितरि सूर्ये उदिते सत्यनन्तरमक्रूरः कृतं मैत्रं मित्रस्य कृत्यं तदादि यस्य तयेन सः गोपेषु प्रदर्शितसौहार्द इत्यर्थः । रथं चोदयामास गमयामास मैत्रं मित्रः सूर्यस्तद्दैवत्यं प्रातः संध्योपासनं तदादिकर्मकृतं येनेति वा ॥ ३२ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे गोप्यः! क्षणदा निद्रावसरदाः सुरतोत्सवप्रदा वा रात्र्यां तमो दुःखम् ॥ २९ ॥

अन्हः क्षये सन्ध्यासमये तं कृष्णमृते विना कृष्णो दरातिशयात् अम्बेति सखीसम्बोधनं भवेम तास्विति शेष : ॥ ३०-३१ ॥

कृतमैत्र्यादिकः कृतसूर्यमण्डलाधिष्ठितनारायणोपासनादिः क्रियः ॥ ३२-३३ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो निराशा आत्मानमेवोपालभन्ते द्वयेन दुःखाभावं सुखं च स प्रयच्छतीति तदभावे कथं दुःखनिवृत्तिः कथं वा अनिवृत्तौ सत्यां जीविष्यामः मरणे वा भगवन्तं न प्राप्स्याम इति किं वा भविष्यामः । यस्यानुरागेति । अनुरागादयो भगवदीयाः अनुरागपूर्वकं यत्स्मितं तत्पूर्वका ये वल्गुमन्त्रा गुह्यभाषणानि तत्सहिता लीला तत्पूर्वकोऽयमवलोकः ततोऽधिकरसोद्गमार्थं परिरम्भो रासश्च एतेषां या गोष्ठी समूहः अवसरो देशकालसहितः तस्यां क्षणदा रात्रयः क्षणमिव नीताः नात्र विविच्य प्रमाणं वक्तव्यं स्मेति प्रसिद्धिः सर्वगोपिकानुभवसिद्धं या रात्रयः अन्येभ्यः क्षणं प्रयच्छन्ति अतस्ताः बहुक्षणा भवन्ति ता अपि क्षणमिव नीताः अतः परं तं विना तदीयसर्वसामग्र्यपगमे चन्द्रादीनामप्यपगमात् तम एव निश्चलं स्थास्यति तत्कथं तरेमेति एकापि रात्रिर्न गमिष्यतीति भावः । वस्तुतः कृष्णत्रयोदशयिम् अतोऽन्धकारः सिद्धः आन्तरोऽपि ॥ २९ ॥

किञ्च अन्धकारेऽपि केचित् जीवान्ति अस्माकं तु जीवनमपि न भविष्यतीत्याहुः। योऽन्हः क्षय इति । अन्हः क्षये सन्ध्यायां क्षयशब्दप्रयोगोऽन्हो द्विष्टत्वज्ञापकः अनन्तो बलभद्रः अनन कालस्यापि तदनुगुणत्वमुक्तं गोपैः परीत इति सर्वैः सहितोऽस्मत्कार्यमेव करोतीत्याहुः । किञ्च यदपि कृतं तदप्यस्मदर्थमेवेति वर्णयन्ति । विशन् खुररजश्छुरिताळकस्रक् इति । व्रजं विशन्ति या गावः तासां खुररजसा छुरिता अळकाः स्रजश्च एके ज्ञानरूपाः अन्ये भक्तिरूपाः उभयत्रापि धर्मसंबन्धः सूच्यते उभयविधा एवं क्लेशेनाप्युद्धियन्त इति ज्ञापयितुं ततो रसानुद्बोधयितुं वेणुं क्कणन् तान् पुष्टीकरिष्यन् स्मितपूर्वकं यत् कटाक्षनिरीक्षणं तेनास्माकं चित्तं क्षिणोति पीडयति काममुद्बोधयित्वा पश्चाद्रमते एवं सर्वत्र सौख्यदातारं विना कथं भवेम कामवश्यां प्राप्स्यामः ॥ ३० ॥

एवमुपालभ्य पूर्वं रोदने प्रादुर्भूत इति रोदनं कृतवत्य इत्याह । एवमिति । अयमेकः प्रकारो निरूपितः एवमनन्तप्रकारेण जातविरहेण भावनया आतुराश्च जाताः यतो व्रजस्त्रियः सदा नन्दासक्तचित्ताः न विषयैः परितुष्यन्ति ततो लज्जां विसृज्य सुस्वरमुच्चै रुरुदुः शास्त्रतो देवादिभिः कृतं भक्तिवशादस्माभिः कृतं लोकतः स्वकृतं सर्वमेव भगवान् दूरीकरोतीति संबोधनत्रयं गोविन्दो ऽभिषिक्तः दामोदरो वशीकृतः लक्ष्मीपतिश्च माधवः एते धर्माः प्रायेण भगवता विस्मृता इति दयासिध्यर्थं रोदनपूर्वकमुच्चारितवत्यः ॥ ३१ ॥

स्त्रीणामिति । स्त्रीणां रोदने न गमिष्यतीति अभिप्रेत्य सूर्योदये जाते कालातिक्रमं च ज्ञात्वा स्वयमक्रूरः वसुदेवादिकार्यसाधकः कंसस्यापि मित्रकार्यं करिष्यन् कृतमैत्रः कृतसन्ध्यावन्दनः कृतावश्यको वा तिष्ठेदासूर्यदर्शनादिति सूर्योदयपर्यन्तं कर्मैव कृतवानिति लक्ष्यते अग्निहोत्रादिसमयेषु वा न गन्तव्यमिति ज्ञापनार्थम् अथ भिन्नप्रक्रमेण गोकुलवासनां परित्यज्य भिन्नवासनायामभिनिविष्टचित्तः रथं प्रेरयामास ॥ ३२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इतोऽपि कारणान्निवारयाम एवेत्याहुः । यस्यानुरागेणैव ललितस्मितादीनि यस्यां तत्रैव वल्गुमन्त्रः रहस्यसङ्केतवार्ता । रासगोष्ठ्यां रासोपलक्षितक्रीडामात्रसभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीताः तं कृष्णं विना दुरन्तमदृष्टपारं तमः विरहान्धकारदुःखसमुद्रं नु निश्चितं कथमतितरेम । यथास्य सङ्गसुखेन बह्वयोऽपि रात्रयः क्षण इवाभूवंस्तथैव विरहदुःखेन क्षणोऽप्यस्माकं युगसहस्रं सदा भवत्येव किन्तु वह्नी रात्रीरागामिनीर्गमयितुं कथं प्रभविष्याम इत्यर्थः ॥ २९ ॥

किञ्चाद्यैव सायं मरिष्याम इत्याहुर्य इति । अन्हः क्षये दिनावसाने अनन्तस्य रामस्य सखा व्रजं विशन् क्कणयन् निरीक्षणं वक्षोजादिनिभालनं तेन चित्तं क्षिणोति सम्मोहयति । अमुं कृष्णमृते कथं भवेम जीवेमेति । अद्य सायं तत्तद्यदि न भविष्यति तदा का खलु जीवितं धारयितुं पारयिष्यतीति भावः ॥ ३० ॥

गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः ।
आदायोपायनं भूरि कुम्भान् गोरससम्भृतान् ॥ ३३ ॥
गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ३४ ॥
तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ।
सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं विलप्य कृष्णं रथादवतारयितुं संहता एव यदा गन्तुं प्रवृत्तास्तदोरुस्तम्भादिविघ्नवशादसामर्थ्ये सति केवलं रुरुदुरेवेत्याह । एवमिति । विरहपीडया आतुराः एकमपि पदं गन्तुं स्पष्टाक्षरतया वक्तुञ्चासमर्थाः हे गोविन्द ! इत्यनेनास्माकं गा मनश्चक्षुरादीन्द्रियवृत्तिगवीः परःसहस्रा विन्द लभस्व त्वत्सङ्ग एव गच्छन्तीरेताः कृपया गृहाण स्वीयमनोवृषभेन्द्रेण सह सङ्गमय्य रक्ष नतूपेक्षस्व देहास्त्वस्माकं त्वत्सङ्गायोग्यत्वाद्दुर्भगा अत्रैव पञ्चत्वं प्राप्स्यन्ति यदि त्वं नागमिष्यसीति विज्ञापना किञ्च स्वीवधान् जिघृक्षसि चेद्गृहाण यस्याः प्रेम्णा दामबन्धनमपि स्वीकृतवानभूस्तां मातरं श्रीव्रजेश्वरीं मा जहि यदि परश्वस्त्वं नायास्यसि तदा सा सर्वथा मरिष्यतीति मातृहत्यान्तु मा गृहाणेति हे दामोदरेति पदेन विज्ञापना हे माधवेति त्वमस्माकं मा खलु धवः किन्तु सखा भवसि यदि धवोऽभविष्यस्तदा अस्मासु तव स्वत्वसम्भवात् स्ववस्तूनां पालने त्याळने वा नैवातिदोषं प्राप्स्यः किन्तु वयं परद्रव्याणि भवामोऽतोऽस्मन्नाशनिबन्धनं दोषं माङ्गीकुरुथा इति विज्ञापना द्योतिता ॥ ३१ ॥

स्त्रीणामित्यनादरे षष्ठी भो मातरः ! क्षमध्वं पराधीनस्य राजसेवकस्य ममापराधमेषोऽहमेव कृष्णमानीय समर्पयिष्यामीत्याश्वासनाकरणमेवानादरः अत एतदनादरलक्षणापराधफलमक्रूरस्य स्यमन्तकप्रसङ्गे कृष्णविच्छेददुःखं द्वारकात्यागं दुर्यशो वाराणसीवासं च भावकभक्तविशेषाः केचिन्मन्यन्ते कृतं मैत्रं मित्रदैवत्यं दैहिकं तदादिकं स्नानसन्ध्योपासनादिकं कर्म येन सः अत्र गोपीविलापाब्धिनिमग्नसम्पूर्णचेतस्त्वादेव मुनिना तात्कालिकव्रजेश्वरीविलापावर्णनमिति वैष्णवतोषिणी धनुर्महोत्सवदर्शनसोत्कण्ठमना बालकोऽयं स्वपित्रा सहैव याति यथासमयं पित्रैव भोजयिष्यमाणः पितुरङ्क एव सुखं शायिष्यमाण एकदिनं तत्र स्थित्वा परश्वः पुनः स्वपित्रा सहैवायास्यति कात्र चिन्तेति पुरन्ध्रीभिर्गोपैश्च नन्दादिभिश्च मुहुराश्वासितायास्तस्यास्तदा नातिशोक इत्यन्ये प्राहुः ॥ ३२—३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्याः सुप्राः दैवं पौरुषेणान्यथा कर्तुं कः शक्नुयात माधवञ्च सत्यसङ्कल्पमावश्यके कार्ये प्रवृत्तमितरो निवारयितुं कः शक्नुयात् अतस्तद्गुणस्मरणातुराः तद्विरहदुःखाभिभूताः तद्वियोगानन्तरं कथं जीवेमेति परस्परमूचुः । यस्येति द्वाभ्याम् । श्रीकृष्णस्य अनुरागेण ललितं स्मितं तथा वल्गुमन्त्रश्च तथा लीलावलोकश्च परिरम्भणञ्च यस्यां रासगोष्ठ्यां रासक्रीडायां नोऽस्माभिः क्षणदाः रात्रयः क्षणमिव नीताः तं श्रीकृष्णं विना हे गोप्यः ! दुरन्तं तमो विरहदुःखं कथं नु अतितरेम न कथञ्चिदित्यर्थः ॥ २९ ॥

अतस्तद्वियोगदुःखाभिभूतानां जीवनं कथं स्यादित्याहुः । य इति । यः अनन्ताः सखायो यस्य सः बलसखो वा यः श्रीकृष्णः अह्नः क्षये दिनान्ते खुररजोभिः छुरिता व्याप्ता अलकाः स्रजश्च यस्य सः गोपैः परीतः व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नोऽस्माकं चित्तं क्षिणोति हरति अमुं श्रीकृष्णं विना कथं भवेम कथं जीवेम न कथमपीत्यर्थः ॥ ३० ॥

विरहेण समासन्नेन श्रीकृष्णवियोगेन आतुराः कृष्णे विषक्तानि मानसानि यासां ताः सुस्वरमुच्चैः ॥ ३१ ॥

कृतं मैत्रादिकं मैत्रं मित्रदैवत्यं सन्ध्योपासनं तदादिकं कर्म येन सः ॥ ३२ ॥

भाषा टीका ।

हे गोपी हो ! जिन भगवान् के अनुराग युक्त ललित मनोहर मंदहास युक्त सुंदर बोल और लीला सहित जो देखना और अलिंगन करना आदि करके रास गोष्ठी में बडी रातों को भी क्षणमात्र सरी के बिताये हैं वे हम सब कैसे इस कठिन कष्ट से पार होंगी ॥ २९ ॥

जोकि दिनके सांझके समय बलदेवजी के साथ गोपों के सहित व्रज में प्रवेश होते समय में गो खुरों के रजों से लिपटी माला अलकावली को धारण किये हुये वंशी को बजाते हुये मंदहास युक्त कटाक्ष के देखने से हमारे चित्त को हरण कर लेते हैं उनके विना कैसे हम रह सकेंगी ॥ ३० ॥

श्रीशुकदेवजी बोले इस प्रकार से बोलती भई रोती व्रज स्त्री अत्यंत दुखित भई हुई श्रीकृष्ण के विषै में चित्त के लग जाने से लज्जा को छोडकर बडे ऊँचे स्वर से हे दामोदर ! माधव ! इत्यादि पुकारकर रोदन करने लगीं ॥ ३१ ॥

स्त्रियों के ऐसे रोते पर जब सूर्य उदय होगया तब अक्रूरजी ने प्रातःकाल की स्नान संध्यादि क्रिया करके रथ को चला दिया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्वसज्जन्तान्वगच्छन् ॥ ३३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संलापश्च लीळावलोकश्च परिरम्भणश्च एतानि यस्यां तस्यां रासगोष्ठ्यां रासक्रीडासभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीताः क्रमितास्तममुं श्रीकृष्णं विना दुरन्तं तमो विरहजं दुःखं कथं त्वातितरेम न कथञ्चिदित्यर्थः ॥ २९ ॥

आस्तां तावत्तमोऽभितरणं जीवनमेव कथं स्यादित्याहुः । य इति । योऽनन्तस्य रामस्य सखा तत्सहित इत्यर्थः । गोपैश्च परिवृतः अन्हः क्षये दिनावसाने गवां खुररजोभिः छुरिता धूसरा अलकाः स्रजश्च यस्य सः व्रजं विशन् वेणुं वादयन् स्मितेन यत्कटाक्षेण वीक्षणं तेन नोऽस्माकं चित्तं क्षिणोति हरति तममुं श्रीकृष्णं विना कथंभवेम जीवेम ॥ ३० ॥

इतीत्थं ब्रुवाणाः भृशं नितरां कृष्णे विषक्तानि मानसानि यासां ता अत एव तद्विरहेण भाविना आतुरा व्रजस्त्रियः लज्जां विसृज्य सुस्वरमुच्चैर्हे गोविन्द ! हे दामोदर ! हे माधवेति च रुरुदुः स्म ॥ ३१ ॥

इत्थं स्त्रीण रुदतीनां सतीनां सवितरि सूर्ये उदिते सत्यनन्तरमक्रूरः कृतं मैत्रं मित्रस्य कृत्यं तदादि यस्य तथेन सः गोपेषु प्रदर्शितसौहार्द इत्यर्थः । रथं चोदयामास गमयामास मैत्रं मित्रः सूर्यस्तद्दैवत्यं प्रातः संध्योपासनं तदादिकर्मकृतं येनेति वा ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावळी ।

हे गोप्यः । क्षणदा निद्रावसरदाः सुरतोत्सवप्रदा वा रात्र्यां तमो दुःखम् ॥ २९ ॥

अन्हः क्षये सन्ध्यासमये तं कृष्णमृते विना कृष्णो दरातिशयात् अम्बेति सखीसम्बोधनं भवेम तास्विति शेष : ॥ ३०–३१ ॥

कृतमैत्र्यादिकः कृतसूर्यमण्डलाधिष्ठितनारायणोपासनादिः क्रियः ॥ ३२–३३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो निराशा आत्मानमेवोपालभन्ते द्वयेन दुःखाभावं सुखं च स प्रयच्छतीति तदभावे कथं दुःखनिवृत्तिः कथं वा अनिवृत्तौ सत्यां जीविष्यामः मरणे वा भगवन्तं न प्राप्स्याम इति किं वा भविष्यामः । यस्यानुरागेति । अनुरागादयो भगवदीयाः अनुरागपूर्वकं यास्मितं तत्पूर्वका ये वल्गुमन्त्रा गुह्यभाषणानि तत्सहिता लीला तत्पूर्वकोऽयमवलोकः ततोऽधिकरसोद्गमार्थं परिरम्भो रासश्च एतेषां या गोष्ठी समूहः अवसरो देशकालसहितः तस्यां क्षणदा रात्रयः क्षणमिव नीताः नात्र विविच्य प्रमाणं वक्तव्यं स्मेति प्रसिद्धिः सर्वगोपिकानुभवसिद्धं या रात्रयः अन्येभ्यः क्षणं प्रयच्छन्ति अतस्ता बहुक्षणा भवन्ति ता अपि क्षणमिव नीताः अतः परं तं विना तदीयसर्वसामग्र्यपगमे चन्द्रादीनामप्यपगमात् तम एव निश्चलं स्थास्यति तत्कथं तरेमेति एकापि रात्रिर्न गमिष्यतीति भावः । वस्तुतः कृष्णत्रयोदशीयम् अतोऽन्धकारः सिद्धः आन्तरोऽपि ॥ २९ ॥

किञ्च अन्धकारेऽपि केचित् जीवन्ति अस्माकं तु जीवनमपि न भविष्यतीत्याहुः। योऽन्हः क्षय इति। अन्हः क्षये सन्ध्यायां क्षयशब्दप्रयोगोऽन्हो द्विष्टत्वज्ञापकः अनन्तो बलभद्रः अनन्तकालस्यापि तदनुगुणत्वमुक्तं गोपैः परीत इति सर्वैः सहितोऽस्मत्कार्यमेव करोतीत्याहुः । किञ्च यदपि कृतं तदप्यस्मदर्थमेवेति वर्णयन्ति । विशन् खुररजश्छुरितालकस्रक् इति । व्रजं विशन्ति या गावः तासां खुररजसा छुरिता अळकाः स्रजश्च एके ज्ञानरूपाः अन्ये भक्तिरूपाः उभयत्रापि धर्मसंबन्धः सूच्यते उभयविधा एवं क्लेशेनाप्युद्ध्रियन्त इति ज्ञापयितुं ततो रसानुद्बोधयितुं वेणुं क्वणन् तान् पुष्टीकरिष्यन् स्मितपूर्वकं यत् कटाक्षनिरीक्षणं तेनास्माकं चित्तं क्षिणोति पीडयति काममुद्बोधयित्वा पश्चाद्रमते एवं सर्वत्र सौख्यदातारं विना कथं भवेम कामवस्थां प्राप्स्यामः ॥ ३० ॥

एवमुपालभ्य पूर्वं रोदने प्रादुर्भूत इति रोदनं कृतवत्य इत्याह । एवमिति । अयमेकः प्रकारो निरूपितः एवमनन्तप्रकारेण जातविरहेण भावनया आतुराश्च जाताः यतो व्रजस्त्रियः सदा नन्दासक्तचित्ताः न विषयैः परितुष्यन्ति ततो लज्जां विसृज्य सुस्वरमुच्चै रुरुदुः शास्त्रतो देवादिभिः कृतं भक्तिवशादस्माभिः कृतं लोकतः स्वकृतं सर्वमेव भगवान् दूरीकरोतीति संबोधनत्रयं गोविन्दो ऽभिषिक्तः दामोदरो वशीकृतः लक्ष्मीपतिश्च माधवः एते धर्माः प्रायेण भगवता विस्मृता इति दयासिध्यर्थं रोदनपूर्वकमुच्चारितवत्यः ॥ ३१ ॥

स्त्रीणामिति । स्त्रीणां रोदने न गमिष्यतीति अभिप्रेत्य सूर्योदये जाते कालातिक्रमं च ज्ञात्वा स्वयमक्रूरः वसुदेवादिकार्यसाधकः कंसस्यापि मित्रकार्यं करिष्यन् कृतमैत्रः कृतसन्ध्यावन्दनः कृतावश्यको वा तिष्ठेदासूर्यदर्शनादिति सूर्योदयपर्यन्तं कर्मैव कृतवानिति लक्ष्यते अग्निहोत्रादिसमयेषु वा न गन्तव्यमिति ज्ञापनार्थम् अथ भिन्नप्रक्रमेण गोकुलवासनां परित्यज्य भिन्नवासनायामभिनिविष्टचित्तः रथं प्रेरयामास ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इतोऽपि कारणान्नियारयाम एवेत्याहुः । यस्यानुरागेणैव ललितस्मितादीनि यस्यां तत्रैव वल्गुमन्त्रः रहस्यसङ्केतवार्त्ता । रासगोष्ठ्यां रासोपलक्षितक्रीडामात्रसभायां नोऽस्माभिः क्षणदा रात्रयः क्षणमिव नीताः तं कृष्णं विना दुरन्तमदृष्टपारं तमः विरहान्धकारदुःखसमुद्रं नु निश्चितं कथमतितरेम । यथास्य सङ्गसुखेन बह्वयोऽपि रात्रयः क्षण इवाभूवंस्तथैव विरहदुःखेन क्षणोऽप्यस्माकं युगसहस्रं सदा भवत्येव किन्तु बह्वी रात्रीरागामिनीर्गमयितुं कथं प्रभविष्याम इत्यर्थः ॥ २९ ॥

किञ्चाद्यैव सायं मरिष्याम इत्याहुर्य इति । अन्हः क्षये दिनावसाने अनन्तस्य रामस्य सखा व्रजं विशन् क्वणयन् निरीक्षणं वक्षोजादिनिभालनं तेन चित्तं क्षिणोति सम्मोहयति । अमुं कृष्णमृते कथं भवेम जीवेमेति । अद्य सायं तत्तद्यदि न भविष्यति तदा का खलु जीवितं धारयितुं पारयिष्यतीति भावः ॥ ३० ॥

गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः ।
आदायोपायनं भूरि कुम्भान् गोरससम्भृतान् ॥ ३३ ॥
गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः ।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ॥ ३४ ॥
तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ।
सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥ ३५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं विलप्य कृष्णं रथादवतारयितुं संहता एव यदा गन्तुं प्रवृत्तास्तदोरुस्तम्भादिविघ्नवशादसामर्थ्ये सति केवलं रुरुदुरेवेत्याह । एवमिति । विरहपीडया आतुराः एकमपि पदं गन्तुं स्पष्टाक्षरतया वक्तुञ्चासमर्थाः हे गोविन्द ! इत्यनेनास्माकं गा मनश्चक्षुरादीन्द्रियवृत्तिगवीः परःसहस्रा विन्द लभस्व त्वत्सङ्ग एव गच्छन्तीरेताः कृपया गृहाण स्वीयमनोवृषभेन्द्रेण सह सङ्गमय्य रक्ष नतूपेक्षस्व देहास्त्वस्माकं त्वत्सङ्गायोग्यत्वाद्दुर्भगा अत्रैव पञ्चत्वं प्राप्स्यन्ति यदि त्वं नागमिष्यसीति विज्ञापना किञ्च स्त्रीवधान् जिघृक्षसि चेद्गृहाण यस्याः प्रेम्णा दामबन्धनमपि स्वीकृतवानभूस्तां मातरं श्रीव्रजेश्वरीं मा जहि यदि परश्वस्त्वं नायास्यसि तदा सा सर्वथा मरिष्यतीति मातृहत्यान्तु मा गृहाणेति हे दामोदरेति पदेन विज्ञापना हे माधवेति त्वमस्माकं मा खलु धवः किन्तु सखा भवसि यदि धवोऽभविष्यस्तदा अस्मासु तव स्वत्वसम्भवात् स्ववस्तूनां पालने ज्वालने वा नैवातिदोषं प्राप्स्यः किन्तु वयं परद्रव्याणि भवामोऽतोऽस्मन्नाशनिबन्धनं दोषं माङ्गीकृथा इति विज्ञापना द्योतिता ॥ ३१ ॥

स्त्रीणामित्यनादरे षष्ठी भो मातरः ! क्षमध्वं पराधीनस्य राजसेवकस्य ममापराधमेषोऽहमेव कृष्णमानीय समर्पयिष्यामीत्याश्वासनाकरणमेवानादरः अत एतदनादरलक्षणापराधफलमक्रूरस्य स्यमन्तकप्रसङ्गे कृष्णविच्छेददुःखं द्वारकात्यागं दुर्यशो वाराणसीवासं च भावकभक्तविशेषाः केचिन्मन्यन्ते कृतं मैत्रं मित्रदैवत्यं दैहिकं तदादिकं स्नानसन्ध्योपासनादिकं कर्म येन सः अत्र गोपीविलापाब्धिनिमग्नसम्पूर्णचेतस्त्वादेव मुनिना तात्कालिकव्रजेश्वरीविलापावर्णनमिति वैष्णवतोषिणी धनुर्महोत्सवदर्शनसोत्कण्ठमना बालकोऽयं स्वपित्रा सहैव याति यथासमयं पित्रैव भोजयिष्यमाणः पितुरङ्क एव सुखं शयिष्यमाण एकदिनं तत्र स्थित्वा परश्वः पुनः स्वपित्रा सहैवायास्यति कात्र चिन्तेति पुरन्ध्रीभिर्गोपैश्च नन्दादिभिश्च मुहुराश्वासितायास्तस्यास्तदा नातिशोक इत्यन्ये प्राहुः ॥ ३२-३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्याः सुग्धाः दैवं पौरुषेणान्यथा कर्तुं कः शक्नुयात् माधवञ्च सत्यसङ्कल्पमावश्यके कार्ये प्रवृत्तमितरो निवारयितुं कः शक्नुयात् अतस्तद्गुणस्मरणातुराः तद्विरहदुःखाभिभूताः तद्वियोगानन्तरं कथं जीवेमेति परस्परमूचुः । यस्येति द्वाभ्याम् । श्रीकृष्णस्य अनुरागेण ललितं स्मितं तथा वल्गुमन्त्रश्च तथा लीलावलोकश्च परिरम्भणञ्च यस्यां रासगोष्ठ्यां रासक्रीडायां नोऽस्माभिः क्षणदाः रात्रयः क्षणमिव नीताः तं श्रीकृष्णं विना हे गोप्यः ! दुरन्तं तमो विरहदुःखं कथं नु अतितरेम न कथञ्चिदित्यर्थः ॥ २९ ॥

अतस्तद्वियोगदुःखाभिभूतानां जीवनं कथं स्यादित्याहुः । य इति । यः अनन्ताः सखायो यस्य सः बलसखो वा यः श्रीकृष्णः अन्हः क्षये दिनान्ते खुररजोभिः छुरिता व्याप्ता अलकाः स्रजश्च यस्य सः गोपैः परीतः व्रजं विशन् स्मितेन यत्कटाक्षनिरीक्षणं तेन नोऽस्माकं चित्तं क्षिणोति हरति अमुं श्रीकृष्णं विना कथं भवेम कथं जीवेम न कथमपीत्यर्थः ॥ ३० ॥

विरहेण समासन्नेन श्रीकृष्णवियोगेन आतुराः कृष्णे विषक्तानि मानसानि यासां ताः सुस्वरमुचुः ॥ ३१ ॥

कृतं मैत्रादिकं मैत्रं मित्रदैवत्यं सन्ध्योपासनं तदादिकं कर्म येन सः ॥ ३२ ॥

---

भाषा टीका ।

हे गोपी हो ! जिन भगवान् के अनुराग युक्त ललित मनोहर मंदहास युक्त सुंदर बोल और लीला सहित जो देखना और आलिंगन करना आदि करके रास गोष्ठी में बड़ी रातों को भी क्षणमात्र सरी के बिताये हैं वे हम सब कैसे इस कठिन कष्ट से पार होंगी ॥ २९ ॥

जोकि दिनके सांझके समय बलदेवजी के साथ गोपों के सहित ब्रज में प्रवेश होते समय में गो खुरों के रजों से लिपटी माला अलकावली को धारण किये हुये वंशी को बजाते हुये मंदहास युक्त कटाक्ष के देखने से हमारे चित्त को हरण कर लेते हैं उनके बिना कैसे हम रह सकेंगी ॥ ३० ॥

श्रीशुकदेवजी बोले इस प्रकार से बोलती भई रोती व्रज स्त्री अत्यंत दुखित भई हुई श्रीकृष्ण के विषै मैं चित्त के लग जाने से लज्जा को छोड़कर बड़े ऊंचे स्वर से हे दामोदर ! माधव ! इत्यादि पुकारकर रोदन करने लगीं ॥ ३१ ॥

स्त्रियों के ऐसे रोते पर जब सूर्य उदय होगया तब अक्रूरजी ने प्रातः काल की स्नान संध्यादि क्रिया करके रथ को चला दिया ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्वसज्जन्तान्वगच्छन् ॥ ३३ ॥

**यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च ।**
**अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ॥ ३६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका

अनुरञ्जिताः परावृत्य निरीक्षणादिभिः किञ्चिदानन्दिताः प्रत्यादेशं प्रत्याख्यानम् ॥ ३४ ॥

तप्यतीः सन्तप्यमानाः आयास्ये शीघ्रमागमिष्यामीति दूतवाक्यैः ॥ ३५ ॥

कृष्णमनुप्रस्थापिता आत्मानश्चित्तानि याभिस्ताः लेख्यमयपुत्रिका इव निश्चलाः ॥ ३६-३८॥

———

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तं रथमन्वसज्जन्त पश्चादगच्छन् विविधशङ्कयाकुलचित्तत्वात् आद्यशब्देन सन्नन्दादयश्च त। इत्यनेन सूचिते विलम्बे हेतुः उपायनं रत्नाद्युत्तमद्रव्यं कुम्भांश्च एवं यात्रामङ्गलमपि सूचितम् ॥ ३३ ॥

प्रत्यादेशं गमने वैमुख्येनाक्रूरवचनादिखण्डनं यद्वा दूतादिद्वाराऽप्यधिकरणार्थनिजविज्ञप्तिवाक्यस्य प्रतिवचनमित्यर्थः। अवतस्थिरे दूरतस्तद्दृष्टिविषये परमोच्चदेशे सावधानतया स्थिता इत्यर्थः ॥ ३४ ॥

केचित्तु यदेवं व्याचक्षते दूतद्वारकसन्देशस्वरूपैरायास्यामि नतु स्वयमिति तदसत् इतिशब्दस्य सर्वान्ते निर्देशाभावात् तदप्रतिपत्तेः सन्देशमात्रागमने प्रत्युत तासां परमक्षोभापत्तेः "आगमिष्यत्यदीर्घेण कालेन व्रजमच्युत" इत्यनेन परमाप्तदूत य श्रीमदुद्धवस्य वाक्येन तदुच्छित्तेः दौत्यैर्गोप्यतया वारम्वारं दूतभिर्दूतवचनैः सप्रेमैर्विविधशपथादिपूर्वकं स्नेहमयैर्नतु सच्छलैरित्यर्थः। यदूत्तम इति। सम्प्रति तत्सामाभिमस्यैव तद्रक्षानिश्चयात् गमने हेतुः आयास्ये इति "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति तत्र लृट्प्रयोगोऽपि तथा दन्तवक्त्रवधानन्तरं सिद्धमिति पाद्मोत्तरखण्डं मूलस्वारस्यञ्च तत्रैवोदाहरिष्यते ॥ ३५ ॥

अथापि तासां त्रयः प्राणरक्षैवाभून नतु शान्तिरित्याह। यावदिति। आलक्ष्यते किञ्चिल्लक्षणेनैव दृश्यते इत्यर्थः। तावत्तं रथं रेणुञ्चानु पश्चात् प्रस्थापितात्मानः उपलक्षिता लोकैः समीपे दृष्टाः ॥ ३६ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आयास्ये हृदि सन्निधाय यास्यामीत्यभिप्रायः ॥ ३५...३८ ॥

———

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

गोरसपूर्णकुम्भादीन् भूरिप्रभूतमुपायनं चादाय ततो नन्दाद्या गोपाः शकटैस्तं रथमनुपृष्ठतः समसजन्त सङ्गताः ययुः ॥ ३३ ॥

तदा गोप्यः कृष्णमनुव्रज्य तेनानुरञ्जिता आश्वासिता भगवतः प्रत्यादेशं प्रत्युत्तरं काङ्क्षन्त्यस्तत्रैवावतस्थिरे ॥ ३४ ॥

तदा यदूत्तमो भगवान् स्वस्य प्रस्थाने निमित्ते तप्यतीस्तप्यमानास्ताः प्रत्यादेशं काङ्क्षिणीः गोपीः समवलोक्य शीघ्रमागमिष्यामीति दौत्यैः दूतद्वारा प्रेषितैर्वाक्यैः सान्त्वयामास ॥ ३५ ॥

तदा श्रीकृष्णमनुप्रस्थापिता आत्मानश्चित्तानि याभिस्ता गोप्यः यावत्केतुः पताका लक्ष्यते यावच्च रथस्य रेणुर्दृश्यते तावत्तत्रैव लेख्यानीव चित्रस्थप्रतिमा इव उपतस्थिरे ॥ ३६ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रत्यादेशं प्रतिवचनं तिष्ठन्तु नायास्यिनि गमननिषेधपरं वचनं वा ॥ ३४ ॥

समीचीनतया प्रेषयितुं योग्यैः दौत्यकैः दूतसम्बन्धिभिः वाक्यैः ॥ ३५ ॥

केतुर्ध्वजः लेख्यानि चित्राणि ॥ ३६ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रत्यादेशं प्रत्युत्तरम् ॥ ३४---३६ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो गमनोत्सवो जात इति वक्तुमाह। गोपा इति। तं भगवद्रथमनु असजन्त तत एव हेतोः ततो गोकुलाद्वा उपायनं गोरससम्भृतान् कुम्भांश्चादाय अवश्यगमने अत्यासक्तौ तेषां हेतुरुक्तः भगवत्परिपालितानां रसो भगवतैव भोक्तव्य इति ॥ ३३ ॥

ततो गोपिकारोदने पूर्ववद्भगवानन्तः प्रकट इति विशेषमनुक्त्वा पूर्ववदेव सिद्धत्वात् अग्रिमवृत्तान्तमेवाह। गोप्यश्चेति चतुर्भिः। गोप्यश्च भगवत्सङ्गे गताः सूक्ष्मरूपाः स्थूलास्तु दयितं भर्त्तारं कृष्णं सदानन्दमनुव्रज्य कियद्दूरं सङ्गे गताः ततः भगवता अनुरञ्जिताः स्वरागेण रक्ताः मध्यप्रदेशे प्रत्युत्तरं भगवतः काङ्क्षन्त्यः किमस्माभिरागन्तव्यं स्वामिना वा आगन्तव्यमिति नान्यः प्रकारोऽस्ति निस्तार इति अवतस्थिरे तथैव स्थिताः ॥ ३४ ॥

ततो भगवता यत्कृतं तदाह। ता इति। याः स्थिताः याश्च नाविर्भूतस्वरूपाः तासामर्थे तथा सन्तापयुक्ता वीक्ष्य स्वप्नमेव निमित्तमिति यदुराजसिंहः यादवकार्यमपि कर्त्तव्यमिति सम्प्रेष्यैरुत्तमदूतैः अहमेवायास्य इति दौत्यैर्दूतवाक्यैः सान्त्वयामास अत्र तासां वाक्ये भ्रमो जातः भगवांस्तु दूतवाक्यद्वारा शब्दार्थरूपः ज्ञानरूपो वा आगमिष्यामीत्याद्युक्तवान् दौत्यवाक्यैरायास्य

ता निराशा निववृतुर्गोविन्दविनिवर्त्तने ।
विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम् ॥ ३७ ॥
भगवानपि संप्राप्तो रामाक्रूरयुतो नृप ! ।
रथेन वायुवेगेन कालिन्दीमघनाशिनीम् ॥ ३८ ॥
तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम् ।
वृक्षपण्डमुपव्रज्य सरामो रथमाविशत् ॥ ३९ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

इति ताः पुनः इदानीमेतदेव वचनं दूतकार्यमिति ज्ञातवत्यः इदं भगवच्चरित्रमेव अन्यथा न वक्तव्यं स्यात् ॥ ३५

तास्तथोक्ता अपि भगवत्संबन्धदर्शनार्थं तथैव स्थिता इत्याह । यतेति शब्दादर्थौ महानिति अर्थसम्बधार्थं तथा कथनं गच्छता कालेन केतुर्ध्वजः लक्ष्यतेऽपि सम्भावनयापि दृश्यते यावद्वा रथस्य रेणुरपि तावत्पर्यन्तं भगवत्सङ्गे अनुप्रस्थापितान्तःकरणाः आधिदैविकरूपाः जीवस्वरूपा वा शरीरमात्रेण लेख्यानीव उपलक्षिताः प्रतिमायां चलनं भवतीति तद्व्यावृत्त्यर्थमुक्तम् आकृतिमात्रं तत्र स्थितं स्वरूपं तु भगवता सह गतमिति वा ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनुरञ्जिताः कृष्णेन रथस्थेनैव पश्चिमाभिमुखीभूय स्वप्रेयसीनां निर्गच्छतः प्राणानालक्ष्य भोः प्राणैकवल्लभा माखिद्यत एषोऽहमेतान् वञ्चयित्वा युष्मत्सन्निधिमेष्यामीत्यर्थद्योतकेन निरीक्षणेन किञ्चिदानन्दिताः ततश्चोर्वीद्विजाख्ये किञ्चिन्निवृत्ते सति गोप्यश्चेति । यथा गोपा आनन्देन रथमनुव्रजन्ति स्म तथा गोप्यश्च दयितमनुव्रज्य प्रत्यादेशं च काङ्क्षन्त्यः अवतस्थिरे नयनकृतमाश्वासं यथा प्रापुस्तथा वचनकृतमपि तमभिलपन्त्य इत्यर्थः ॥ ३४ ॥

तप्यतीः सन्तप्यमानाः यदूनां पालने प्रभुसमर्थत्वात् यदूत्तमः दौत्यकैर्दूतवाक्यैः कर्मणि ष्यञ् बहुवचनेन यथा तासां प्रबोधो भवति तथा बहुप्रकारैस्तद्विश्वासोत्पादकशपथशतसहितैरित्यर्थः । कप्रत्ययेनानुकम्पाव्यञ्जकैः सप्रेमैः सप्रेमभिरिति यथा यूयं मां विना विभिन्नधैर्य्यास्तथैवाहमपि विदीर्णहृदय एव पराधीन एव भवतीनां स्मितमधुरकटाक्षमाध्वीकं त्रिजगदतिदुर्लभं स्वधारसनया लिहन्नेव जीवन् पुरीं यामि यद्यहं परश्वो नागमिष्यामि तदा यूयमहं च युगपदेव प्राणान् धर्त्तुं न प्रभविष्यामो यदि वा परमायुः प्राबल्यादाशाबन्धाच्च जीविष्यामस्तदपि तज्जीवनं मरणकोटितोऽप्यतिकष्टमित्यादिप्रेमामृतस्रक्षितैरित्यर्थः । आयास्ये आयास्यामि परश्व आगमनप्रकारस्तूपरिष्टाद्व्याख्यास्यते ॥ ३५ ॥

आलक्ष्यते किञ्चिल्लक्षणेनेषद्दृश्यते इत्यर्थः । गच्छन्तं कान्तमनु प्रस्थापिता आत्मानो मनांसि याभिस्ताः अत एव लेख्यानि चित्राणीव उप समीपेऽपि लक्षिता लोकैर्दृष्टाः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततो रथचोदनानन्तरं गोपाः तं रथमन्वसज्जन्त अनुययुः ॥३३॥

गोप्यश्च कृष्णमनुव्रज्य तेन च निरीक्षणादिभिरनुरञ्जिताः किञ्चिदानन्दिताः भगवतः प्रत्यादेशं प्रत्युत्तरं काङ्क्षयन्त्यः अवतस्थिरे ॥ ३४ ॥

यदूत्तमः श्रीकृष्णः स्वप्रस्थाने निमित्ते ताः तप्यतीस्तप्यमानाः वीक्ष्य आयास्ये इति दौत्यकैः दूतद्वारकैर्वाक्यैः सान्त्वयामास आयास्ये इति "ज्ञातीन् वो द्रष्टुमेष्यामि विधाय सुहृदां सुख"मिति वक्ष्यमाणं च वाक्यं भगवता प्रतिपालितमेवेति सूचितं प्रथमे "यर्ह्यम्बुजाक्षापससार भोभवान् कुरून् मधून् वाथ सुहृद्दिदृक्षया । तत्राब्दकोटिप्रतिमः क्षणो भवेदिति" । हरिवंशे तु हंसडिम्भकवधानन्तरं श्रीगोवर्द्धने श्रीनन्दयशोदागोपीनां श्रीकृष्णादिसंयोगः प्रसिद्ध एव ॥ ३५ ॥

तदा गोप्यः श्रीकृष्णमनुप्रस्थापिताः आत्मानः चित्तानि याभिस्ताः यावत् रथस्य केतुर्लक्ष्यते यावद्रेणुश्च लक्ष्यते तावत् तत्रैव लेख्यानीव कुड्यादिषु लिखिताः प्रतिमा इवोपतस्थिरे स्थिता बभूवुः ॥ ३६—३८ ॥

---

भाषा टीका ।

नन्दादिक गोप भी सब उनके पीछे गाड़ियों में चढ़कर बहुत से भेटों को लेकर और गोरसों के घड़ों को लेकर चलते भये ॥ ३३ ॥

गोपी सब भी अति प्रिय कृष्ण के अनुराग से पीछे से आकर भगवान् के निषेधको भी इच्छा करती हुई खड़ी रहीं ॥ ३४ ॥

भगवान् ने उनको अपने जाने में ऐसी दुःखित देखकर दूतन के द्वारा सांत्वन करने को कहा भेजा कि हम चले आवेंगे कर के कहा ॥ ३५ ॥

जब पर्यन्त रथका ध्वजा दीख पड़ा जब तक रथका रज दीख पड़ा तब तक अपने मनों को गोविन्द के पीछे भेजकर चित्र लिखी सरीकी गोपी वहीं खड़ी रह गईं ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वृक्षाणां षण्डं समूहमुपव्रज्य ॥ ३९ ॥

**अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि ।**
**कालिन्द्या ह्रदमागत्य स्नानं विधिवदाचरत् ॥ ४० ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

शत्रुभ्यः शङ्कितः सन् रथोपरि निवेश्य ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतो गोविन्दस्य विशेषेण मथुरागमनोन्मुख्यं विनैव निवर्त्तने निराशाः किन्तु ततः आगमन एव साशाः सद्यो निवृत्ता इत्यर्थः । आयास्य इति तेनोक्तत्वात् तथैवाह । प्रियस्य श्रीकृष्णस्य चेष्टितं तस्मान्मच्छरणं गोष्ठमित्यादिलक्षणं तत्तत्प्रतिपालकं चरितम् आयास्य इत्यस्य प्रमाणरूपं गायन्त्यो विशोका आशाच्छेदजातेन कर्मपर्यन्तभेदकेन प्रियविच्छेदं जानन्त्यस्तद्दुःखाशङ्कालक्षणेन शोकेन रहिताः सद्योऽहनी निन्युरदर्शनदुःखातिशयं विपह्य गमयामासुः अन्यथा क्षणमपि नागमिष्यन्नित्यर्थः । यथैव स्वयं श्रीभगवता वक्ष्यते "धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन । प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिका" इति श्रीमदुद्धवेन च "गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणाञ्च । गोप्य"श्चेत्यादि अहनी राज्यहनी इत्यर्थः । तद्विशेषस्तु लीलास्तोत्राद्दौ वर्णितः ॥ ३७ ॥

अथ तासामिव प्रियजनप्रेमाङ्कितास्वभावेन सकलश्रुतिस्मृतिगीतस्य श्रीकृष्णस्यापि आर्त्तिर्जातैव किन्तु गाम्भीर्येणैव गोपिता दौत्यकैरिति बहुवचनेन तदावेशसूचनात् गमनं त्वावश्यककार्यविशेषार्थमेवेत्याह । भगवानपीति । सोऽपि तद्दुःखदर्शनाक्षमतया वायुवेगेन तद्वत् शीघ्रतया चालितेन रथेन कालिन्दीमनन्तीर्थप्रदेशावच्छिन्नां सम्यक् प्राप्तः कीदृशीमघानि अङ्घ्रोदुःखव्यसनानि नाशयतीति तां निजविरहतापनाशिनी सा भवेदिति बुद्धयैवेत्यर्थः । ननु तद्दुःखं न तत्र स्पष्टं दृष्टं तत्राह । रामेति । तत्सङ्कोचान्निगूहितमिति भाव । ननु तर्हि व्याजेनापि कथं न निवृत्तस्तत्राप्याह । रामेति । श्रीवसुदेवादित्राणाग्राहिणा तद्युगलसङ्गेन तस्यापि तदावश्यककर्त्तव्यता भगवदुद्दीपनादिति भावः । कालिन्दी प्राप्तिश्चेयं मध्यान्ह तथा च श्रीविष्णुपुराणे "गच्छन्तो जविनाश्वेन रथेन यमुना तटम् । प्राप्ता मध्यान्हसमये रामाक्रूरजनार्द्दना" इति अत एवान्ये तत्सङ्गेन गन्तुं न शक्ताः तत्र तदानीं नन्दीश्वरगिरिसन्निहितः श्रीनन्दनिलय इति प्रसिद्धावपि यद्यपि तादृशवेगस्य रथस्य तावान् विलम्बो न सम्भवति तथाप्यसौ मुहुर्दूनादिद्वारा श्रीगोपिकासान्त्वनवाहुल्येन वृक्षावृततया रथगमनं कौटिल्येन च ज्ञेयः ॥ ३८ ॥

उपस्पृश्य आचम्य आविशत् आरुरोह ॥ ३९ ॥

अहो श्रीव्रजदेवीमनःक्षोभात् किल तदाप्यक्रूरस्य तन्निजपरममधुरत्वभयावगाहिता यथा प्रह्लादेर्जाता तथा न जातेत्याह । अक्रूर इति त्रिभिः । तावुपामन्त्र्य अनुज्ञाप्य रथोपरीति सुखोपवेशार्थं कालिन्द्या ह्रदमनन्ततीर्थं तीरमिति क्वचित् पाठः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृष्टमणिप्रभं शुद्धमरकतप्रभम् ॥ ३९ ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो गोविन्दस्य विनिवर्त्तने दूरगमने सति निराशास्ता गोप्यो निववृतुः न्यवर्त्तन्त ततः प्रियस्य श्रीकृष्णस्यैव चेष्टितं गायन्त्यस्तेनैव विगतशोकाः अहानि निन्युः क्रमितवत्यः ॥ ३७ ॥

हे नृप ! रामाक्रूराभ्यां युक्तो भगवानपि वायोरिव वेगो यस्य तेन रथेन साधनेनाघं नाशयतीति तथा तां कालिन्दीं कालिन्दीगतं तीर्थविशेषं प्राप्तः ॥ ३८ ॥

मृष्टस्य निघर्षणेन निर्मलीकृतस्य मणेरिन्द्रनीलस्येव प्रभा यस्य तत्पानीयं जलं पीत्वा उपस्पृश्याचम्य च वृक्षाणां षण्डं समूहमुपव्रज्य सरामो रथमाविशत् आरूढवान् ॥ ३९ ॥

तदाक्रूरः शत्रुभ्यः शङ्कितः तौ रामकृष्णौ रथोपरि निवेश्यामन्त्र्य पृष्ट्वा माध्यान्हिकार्थं कालिन्द्या ह्रदमागत्य तत्र यथाविधिस्नानमाचरत् कर्त्तुमारेभे ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोविन्दविनिवर्तने कृष्णदर्शने ॥ ३७—३८ ॥

श्याममणिप्रभम् ॥ ३९-४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोविन्दस्य विशेषेण मथुरागमनं विनैव वर्त्तने निराशाः किन्तु आगमन एव साशाः सत्यः निवृत्ता इत्यर्थः । अत एव विशोकाः पूर्वापेक्षया शोकरहिता अपि प्रियचेष्टितमेव गायन्त्योऽहनी निन्युरित्यर्थः ॥ ३७ ॥

अथ तासामिव लीलारसाविष्टस्य श्रीकृष्णस्यापि दुःखं जातमेव किन्तु गोपितं तथापि गमनमावश्यककार्य्यविशेषार्थमेवेत्याह । भगवानपीति । सोऽपि तद्दुःखदर्शनाक्षमः सन् वायुवेगेन तच्छीघ्रतया चालितेन रथेन कालिन्दीं सम्प्राप्तः अघसङ्घानि दुःखव्यसनानि नाशयतीति तां निजविरहतापनाशिनी सा भवेदिति बुद्धयेत्यर्थः । तत्तद्दुःखं न तत्र स्पष्टं तत्राह । रामेति । ताभ्यां सङ्कोचान्निगूहितमिति भावः ॥ ३८-४५ ॥

---

निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ।
तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥ ४१ ॥
तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ।
तर्हि स्वित्स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥ ४२ ॥
तत्रापि च यथापूर्वमासीनौ पुनरेव सः ।
न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः ॥ ४३ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततोऽपि दूरङ्गते निवृत्ता जाता इत्याह । ता निराशा इति । निवृत्ताशा जाताः केनचिन्निमित्तेनायं भगवान्निवर्त्स्यत इति ततः कथं जीवितयत्य इत्याशङ्क्याह । प्रियचेष्टितं गायन्त्यः भगवद्गुणा अपि भगवानेवेति तेनैव विशोकाः अहनी निन्युः रात्रिचरित्रगानेन रात्रिं दिवसचरित्रगानेन दिनमिति विशेषं वक्तुमहनी इति द्विवचनेन निर्द्देश उक्तः । अनेन भगवतः भक्तोपेक्षादोषोऽपि निवारितः भगवदनागमनेऽपि दोषाभावश्च अहनी इति जात्यभिप्रायः गानेनैकरात्रिरिव सर्वा रात्रयो गता इत्यपि ज्ञापयितुम् ॥ ३७ ॥

यदा ता विशोका जाताः तदा भगवान् गोकुलवृत्तान्तमविचार्य अग्रे गत इत्याह । भगवानपीति । यद्यप्यत्रैव स्थित्वा कंसं मारयितुं शक्तः गोपिकाश्च सङ्गे नेतुमेकेन रूपेण स्थित्वा रूपान्तरेण वा गन्तुं तथापि मथुरामेव गत इत्यपिशब्दः रामाक्रूराभ्यां सहित एकस्मिन् रथे स्थितः तयोरप्रधानत्वाय तथोक्तिः नृप ! इति सम्बोधनं राजलीलेयमिति ज्ञापयितुं वायुवेगेन रथेनेति योजनत्रयं चतुष्टयं वा घटिकामात्रेण समागत इति सर्वे गोपाला नन्दादयः पश्चादेव स्थिताः किञ्चित्प्रदर्शयितुं परं भगवानेव समागतः अन्तर्वेद्यां गोकुलं वृन्दावनं गोवर्द्धन इति विमर्शः कल्पादौ तदीयभागाः सांप्रतमन्यत्र जाता इति न प्रत्यक्षविरोधः अन्या तु कल्पना न युक्ता सारस्वतकल्पानुसारिणी चेयं कथा एतावत् दूरमन्तर्वेद्यामेवागत्य मथुरानिकटे मथुरातः क्रोशद्वये सर्वत्रनिम्ना यमुनाह्रदेप्येव गम्भीरेति अघनाशिनी तीर्थे समागत इति साधारण्येन सर्वत्र वा कालिन्द्या विशेषणम् अक्रूरस्य सर्वपापक्षये भगवत्स्वरूपदर्शनयोग्यतासिद्ध्यर्थम् ॥ ३८ ॥

ततः प्रातःकाले भुक्तमिति तत्रागत्य यत्कृतवांस्तदाह । तत्रोपस्पृश्येति तत्र कालिन्द्यां स्वयमुत्तीर्य लीलया उपस्पृश्य स्नात्वा पानीयं पीत्वा मृष्टमुज्ज्वलं विरजत्वात् स्वान्तः स्थितमप्यक्रूरं पाययित्वा अन्यानप्यपेक्षितान् मणिप्रभमिति इन्द्रनीलश्यामं सर्वप्रकाशकमन्तः प्रविष्टमिति तत्रत्यानां शुद्धिवत् ज्ञानमपि जनयतीति ज्ञापयितुं ततो वृक्षखण्डं वृक्षसमूहं वैष्णवच्छायां समाश्रित्य बलभद्रसहितः पुनः रथारूढो जातः अग्रे किञ्चित् कर्त्तव्यमिति छायायां रथे उपविष्ट इत्यर्थः ॥ ३९ ॥

ततोऽक्रूरः प्रत्यहं नद्यामागन्तुमसमर्थः दुर्लभत्वाद्यमुनायाः तत्र स्नात्वा गमिष्यामीति स्नानार्थं प्रवृत्त इत्याह तौ इति तौ रामकृष्णौ आमन्त्र्य स्नानार्थं गमिष्यामीति प्रार्थयित्वा बालकाविति इतस्ततः क्रीडन्तौ रथोपरि निवेश्य उपवेश्यैवात्र स्थातव्यमित्युक्त्वा कालिन्द्यास्तीरे पुनः समागत्य विधिवन्मृत्तिकास्नानं पुनः कर्तुं प्रवृत्तः प्रातः काले मृत्तिकास्नानस्य निषिद्धत्वात् ॥ ४० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गोविन्दस्य विनिवर्त्तने निराशास्तास्ततः स्थानाद्विप्रवृत्तः स्वयमेवासौ सर्वान् वञ्चयित्वा निवर्त्स्यत इति वा आशा आसीत् सा नष्टेत्यर्थः । विशिष्टशोकवत्य एव अहनी द्वे निन्युः । अहनी इत्यार्षम् । अहानीत्यर्थ इत्येके ॥ ३७—३९ ॥

रथोपरि निवेश्येति सुखोपवेशार्थं शत्रुभ्यः शङ्कया वा ॥४०-४३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वृक्षषण्डं वृक्षसमूहम् ॥ ३९—४० ॥

भाषा टीका ।

फिर ये गोपी गोविंद के लौटने में निराशा होकर लौट गईं फिर प्रिय की चेष्टाओं को गान करके दिन रातों को बिताती भईं ॥ ३७ ॥

हे राजन् ! भगवान् भी बलरामजी अक्रूरजी के सहित पवन सरी के वेग वाले रथ से चलकर सब पापों की नाश करनेवाली यमुना पर पहुंचे ॥ ३८ ॥

उहां पर स्नानाचमनादि करके मणि सदृश निर्मल जल को पान करके फिर वृक्षों के समूह में जाकर रामजी सहित रथ पर बैठ गये ॥ ३९ ॥

अक्रूरजी ने उन दोनों को रथ पर बैठाकर आज्ञा मांग कर यमुनाजी के ह्रद में जाकर विधि पूर्वक स्नान किया ॥४०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्म वेदं जपन् । केमौ बालौ क तौ मह्यावित शङ्कितचेतसे । अक्रूराय जले रूपमत्याश्चर्यं व्यदर्शयत् ॥ ४१ ४२ ॥ ४३ ॥

भूयस्तत्रापि सो ऽद्राक्षीत् स्तूयमानमहीश्वरम् ।
सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः ॥ ४४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सिद्धादिभिः स्तूयमानम् ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सनातनमिति विशेषणं तत्र भक्तिविशेषे कारणं समन्वितौ पूर्ववदेकत्रैव वर्त्तमानौ ॥ ४१ ॥

ताविविति युग्मकम् । इह जले इतीति एतद्विचिन्त्येत्यर्थः । तत्रापि स्यन्दनेऽपि यथापूर्वमासीनौ व्यचष्टेति पूर्वेणान्वयः ॥ ४२ ॥

ततश्च पुनरेव पुनश्चाक्रूरो न्यमज्जत् तत्र हेतुर्दर्शनमिति मे मम कर्तृभूतस्य तयोः कर्मभूतयोः सलिले यद्दर्शनं तत् किं मृषेतीतिशब्देनान्वयः ॥ ४३ ॥

श्रीभगवांस्तु स्वीयं परममधुरैश्वर्यमनवगाहमानं तं प्रति निजांशलक्षणं श्रीविष्णुमेवानुभावितवानित्याह । भूय इत्यादि त्रिभिः अत्र भूय इति युग्मकम् । भूयस्तत्रापि तत्रैव ह्रदेऽहीश्वरमद्राक्षीत् ननु पूर्ववत् कृष्णरामौ सिद्धैः स्वशिष्यरूपैः सनकादिभिः भुजङ्गपतयो विवृता वैष्णवे "वृतं वासुकिरम्भाद्यैर्महद्भिः पवनाशिभि" रिति असुरैः प्रह्लादप्रभृतिभिः नतेति सर्वेषां विशेषणम् ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ब्रह्म प्रणवम् ॥ ४१—५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र जले सनातनं ब्रह्म नित्यब्रह्मस्वरूपावेदकं प्रणवं जपन्निमज्ज्य समन्वितौ सहभूतौ तावेव रामकृष्णौ ददर्श ॥ ४१ ॥

एवं दृष्ट्वा सोऽक्रूरस्तावानकदुन्दुभेः सुतौ रथस्थौ कथमिह स्तः यदि रथादवरुह्यागतौ तर्हि रथे न स्त इति वितर्क्य उन्मज्ज्य ददर्श ॥ ४२ ॥

तत्रापि रथेऽपि पूर्ववदासीनौ दृष्ट्वा तयोः सलिले मम दर्शनं मत्कर्तृकं दर्शनं किं मृषा उत सत्यं यदि सत्यं तर्हि पुनर्द्रक्ष्यामीति चिन्तयन् पुनर्न्यमज्जत् पुनर्निमग्नः ॥ ४३ ॥

तत्रापि जले तावदहीश्वरं शेषं ददर्श कथंभूतं नता कन्धरा ग्रीवा येषां तैः सिद्धादिभिः स्तूयमानम् ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्म अघमर्षणसूक्तं ब्रह्म वेदस्तत्त्वमिति च ॥ ४१ ॥

स्यन्दने रथे न स्तः न विद्येते स्वित्किम् ॥ ४२ ॥

सलिलं तयोः रामकृष्णयोः दर्शनं मृषा किमिति मेन इति शेषः ॥ ४३ ॥

असुरैरसुषु रतैः वशीकृतेन्द्रियैरित्यर्थः ॥ ४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्राघमर्षणजपः जले निमज्ज्य कर्तव्यः हिरण्यशृङ्गमित्यादि जले निमज्ज्य तस्मिन् सलिले सनातनं वेदात्मकं ब्रह्म जपन् तेन शुद्धान्तःकरणः तावेव रामकृष्णौ ददर्श समन्वितौ मिलितौ यथा जलमध्यस्थाः पदार्थाः दृश्यन्ते तथा तावपि दृष्टवान् तस्मिन् स्थाने माया उद्घाटितेति सानुभावं भवति स्थानं भगवांश्च पुनः सर्वत्रैव वर्त्तते देशादिदोषाद्य न प्रतीयते प्रदर्शितवांश्च तस्य सन्देहव्यावृत्त्यर्थम् ॥ ४१ ॥

तत्र तौ दृष्ट्वा सन्देहात् विचारयति । तौ रथस्थाविति । भगवतः सर्वात्मत्वं भगवत्त्वं च विस्मृत्याह । आनकदुन्दुभेः सुतौ तौ मया रथस्थौ कृतौ कथमिह दृश्येते कथं वा समागताविति यदि केनचित्प्रकारेण मय्यन्यचित्ते समागतौ तर्हि स्यन्दने न भविष्यतः इति विचार्य उन्मज्ज्य व्यचष्ट दृष्टवान् दृष्टा स एवेति अभिज्ञानार्थमाह ॥ ४२ ॥

ततोऽत्रापि दृष्टवानित्याह । तत्रापि चेति यथापूर्वं यथा स्थापितौ तथैव दृष्टवान् तस्य पुनरेव जिज्ञासा उत्पन्नेत्याह । पुनरेव स इति । निमज्ज्य मे सतः यद् भगवतो दर्शनं तत्किं मृषेति अर्थाद्विमर्शोऽयम् ॥ ४३ ॥

ततो भूयः निमज्ज्य दृष्टवानित्याह । भूय इति । प्रथमपर्याये भगवतो माहात्म्याज्ञानात् कल्पयित्वा शास्त्राप्रामाण्यं पुनरुन्मज्ज्य दृष्टवान् ततोऽनुभवात् प्रमाणमपि कृत्वा पुनर्द्रष्टुं प्रवृत्त इति नास्य लौकिकालौकिकप्रमाणेषु प्रतिष्ठेति भगवान् विचार्य तं बोधयितुं स्वमाहात्म्यं प्रकटितवानित्याह । भूयस्तत्रापीति । स एवाक्रूरः भूयो दृष्टवान् तत्रापीत्यपिशब्देन बहिर्जलमध्येऽपि अथवा तत्रापि दर्शने विशेषं दृष्टवान् यः सङ्कर्षणः तं शेषत्वेन दृष्टवान् भगवन्तं तु शेषशायिनं तस्य नारायणत्वेनैव ज्ञानं युक्तं भवतीति न तु पुरुषोत्तमत्वेन सन्देहनिवारणार्थमेवं प्रदर्शयत इति सिद्धादिभिः स्तूयमानं च दृष्टवान् सिद्धाः सर्वे शेषाविष्टसङ्कर्षणसेवकाः तथा षष्ठे निरूपिताः भुजङ्गानां सर्पाणां ये पतयः वासुकिप्रमुखाः तैरपि असुराणामपि ये पतयः कालनेमिप्रभृतयः तैरपि सर्व एव संकर्षणस्य भक्ता इति सर्वे दैत्याः ससेवकाः अतस्तैः किं भयमिति प्रथमकक्षायामेव भयाभावो निरूपितः ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वमन्त्रध्येयरूपादप्यद्भुतं रूपमीक्षितम् ।
व्रजेऽक्रूरेण तत्रैव निष्ठामप्याप चेतसः ॥
तां च्यावयन् व्रजवधूमन्त्रहेतोः पुरातनीम् ।
निष्ठामेवापयन् कृष्णो वैकुण्ठं तमदर्शयत् ॥

द्वितीयमज्जने तु तं स्वांशं श्रीविष्णुं तन्मन्त्रोपास्यदैवतं दर्शयंस्तत्रैव तन्मनोनिष्ठां धारयितुं तत्परिकरानानस्वयिलं तद्र-

सहस्रशिरसं देवं सहस्रफणमौलिनम् ।
नीलाम्बरं विसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥ ४५ ॥
तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् ।
पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥ ४६ ॥
चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ।
सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥ ४७ ॥
प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ।
कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एममपि साक्षादनुभावयामास मदभिष्टदेवो वैकुण्ठनाथ एव वसुदेवगृहेऽवतीर्ण इति ज्ञापयामास च । भूय इति त्रयोदशभिः । तत्र द्वाभ्यां बलदेवांशं शेषं वर्णयति । सहस्रं फणा मौलयः किरीटानि च विद्यन्ते यस्य तं श्रीह्यादित्यादिनिः शृङ्गैः शिखरैः श्वेतं कैलासमिव "ददृशुर्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात् पुरे"त्यत्र ब्रह्मणो लोकं वैकुण्ठमिति स्वामिव्याख्यानात् वैकुण्ठेऽपि यथा शेष इति भागवतामृतवाक्याच्च जलेऽक्रूरो वैकुण्ठमेवापश्यदिति प्राहुः ॥ ४४-४५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्म प्रणवम् उक्तरीत्या भगवत्स्वरूपगुणादिज्ञानवते शत्रुमध्ये गमयित्रेऽक्रूराय स्वरूपं तादृशज्ञानदार्ढ्यार्थं जले दर्शयामास ॥ ४१—४३ ॥

अहीनामीश्वरं शेषम् ॥ ४४ ॥

भाषा टीका ।

फिर अक्रूरजी जब ओंकार मंत्र के जाप करते जल मे मस्तक सहित डुबे तब उन्हीं राम कृष्ण दोनों का दर्शन करते भये ॥ ४१ ॥

तब उन ने विचारा कि वे तो रथ मे थे तो इहां कहां से आये जो इहां हैं तो रथ मे नहीं होंगे ऐसा जानके जल मे से मस्तक निकाल देखा तो उन्ही को रथ पर भी देखा ॥ ४२ ॥

उहां भी उन को पहिले सरी के बैठे देख कर फिर विचारा कि क्या मेरा जल में देखना झूठा है ॥ ४३ ॥

इस प्रकार से फिर भी जल मे देखा कि सिद्ध चारण गन्धर्वअसुर मस्तकों को नम्र कर के जिन की स्तुति कर रहे हैं ऐसे अहीश्वर शेषजी का दर्श न किया ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सहस्रं शिरांसि यस्य तम् सहस्रफणेषु मौलयो यस्य सन्तीति तथा तम् नीले अम्बरे यस्य तं बिसवत्कमलनालवच्छ्वेतम् शृङ्गैः शिखरैः श्वेतं कैलासमिव स्थितम् ॥ ४५ ॥

तस्योत्सङ्गे कुण्डलीकृतदेहार्धे विलोक्येत्येकादशेन श्लोकेनान्वयः ॥ ४६ ॥

शोभने भ्रुवौ यस्य उन्नता नासिका यस्य तं च तञ्च शोभनौ कपोलौ यस्य अरुणावधरौ यस्य तञ्च तञ्च ॥ ४७ ॥

तुङ्गावंसौ यस्य उरःस्थले श्रीर्यस्य तञ्च तञ्च वलिमत्पल्लवोदरं वलयस्तिर्यङ्‌निम्नरेखा यस्य सन्ति तद्वलिमत्तच्च तत्पल्लववदश्वत्थदलसदृशमुदरं यस्य तम् ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवं जगत्पूज्यं मौलिनमिति श्रीह्यादित्यादिनिः सहस्रं फणा मौलयश्च किरीटानि विद्यन्ते यस्मिन् श्वेतं श्वेताद्रिं कैलासमित्यर्थः । टीकायां कमलकन्दस्य मृणाले तात्पर्यम् ॥ ४५ ॥

अथ द्वादशकम् तस्याहीश्वरस्योत्सङ्गे तदानीं लीलया सुखमासीनमिति ज्ञेयं "तस्योत्सङ्गे घनश्यामं श्रीवत्साच्छादितोरसम् । पीताम्बरधरं विष्णुं सूपविष्टं ददर्श ह" इति श्रीवैशम्पायनेनोक्तः अत एव कुण्डलीकृतेति तैर्व्याख्यातं पुरुषं ब्रह्माण्डान्तर्यामिणो रूपविशेषं स्पष्टयिष्यते च नतोऽस्म्यहं त्वामित्यादिना शान्तं घोरत्वाद्यभावेन मनोनयनानन्दकरमित्यर्थः । पद्मपत्रवत् प्रान्ते अरुणे ईक्षणे यस्य तम् ॥ ४६ ॥

चारु सुशब्दयोर्मुहुरुक्तिर्यदा यदद्दश्यत तदा तस्यैवातिशयस्तेनान्वभूयतेति बोधनाय ॥ ४७ ॥

श्रीरत्र रेखारूपा प्रेयसीतत्सखीरूपे त्वग्रे वक्ष्यते च कम्बुवत्त्रिरेखकण्ठम् ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभगवतचन्द्रचन्द्रिका ।

सहस्रं शिरांसि फणा यस्य तं देवं देदीप्यमानं सहस्रेषु

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

फणेषु मौलयः किरीटान्यस्य सन्तीति सहस्रफणमौलिनः पामादेराकृतिगणत्वात् मत्वर्थीयनप्रत्ययस्तं नीलमम्बरं यस्य तं विसतन्तुवत् श्वेतं हिरण्मयैः शृङ्गैः रजतगिरिमिव स्थितम् ॥ ४५ ॥

तस्याहीश्वरस्योत्सङ्गे फणप्रान्तभागे पुरुषमद्राक्षीत् क्रेमौ बालौ क महाविल्याशङ्कापजिहीर्षया प्रदर्शितमात्मानमद्राक्षीदिति भावः । कथम्भूतं नीलमेघवत् श्यामं पीते कौशेये वाससी यस्य चत्वारो भुजा यस्य तं शान्तं प्रसन्नं पद्मपत्रे इव ईक्षणे नेत्रे यस्य ॥ ४६ ॥

चारु सुन्दरं प्रसन्नं च वदनं यस्य चारुहासेन युक्तं निरीक्षणं यस्य शोभने भ्रुवौ यस्य उन्नता नासिका च यस्य चारुकर्णौ श्रोत्रे यस्य शोभनौ कपोलौ यस्य अरुणः अधरो यस्य स-चासौ यस्तम् ॥ ४७ ॥

प्रलम्बा आजानुलम्बिनः पीवराश्च भुजा यस्य तुङ्गावुन्नतौ अंसौ स्कन्धौ यस्य सचासौ उरसि श्रीर्यस्य स च तं कम्बुवत् शङ्खवद्रेखात्रयोपेतः नातिदीर्घो नातिह्रस्वश्च कण्ठो यस्य निम्ना नाभिर्यस्य वलिमद्वलित्रयोपेतमश्वत्थपल्लववदुदरं यस्य ॥ ४८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

विसश्वेतं श्वेतपद्मनालतन्तुवद्धवलं शिखरैः सह श्वेतनामानं पर्वतम् ॥ ४५ ॥

उत्सङ्गे भोगे वपुरङ्कं तत्सङ्गहीनो जनार्दन इति च ॥ ४६ ॥

सुभ्रूश्च उन्नसश्च सुभ्रून्नसः तम् ॥ ४७ ॥

तुङ्गांसश्च उरःस्थलश्रीश्च तुङ्गांसोरःस्थलश्रीः तुङ्गावंसौ यस्य स तथा उरः स्थले श्रीर्यस्य स तथा तं वलिमच्च पल्लवश्चाकाशवच्च उदरं यस्य स तथा तं पल्लवश्च प्रकोष्ठे यापि विस्तृताविति वैजयन्तीमाला सुन्दररेखाङ्कितानन्ताण्डकोटिनिवेशनोदरमित्यर्थः ॥४८॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुरुषं ब्रह्माण्डान्तर्यामिरूपम् । स्पष्टयिष्यते च । नतोऽस्म्यहं त्वामित्यादि । सत्त्वं धैर्य्यम् ॥ ४६—५७ ॥

———

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

सङ्कर्षणं वर्णयति । सहस्रशिरसमिति । रूपान्तरे प्रतीतिर्दृढा न भवतीति स्वरूपमेव प्रकटितवान् सहस्रं शिरांसि यस्य दैत्यानां कामरूपे तथा भवतीति तद्व्यावृत्त्यर्थं देवमिति । सर्वत्र शिरसि फणाः मुकुटानि च एतादृशं शेषस्यैव रूपं भवति अन्यदपि ध्यानार्थमाह । नीलाम्बरमिति । तस्य आवरणं कालरूपमिति पुनस्तम इति विसश्वेतता शीतलं चिक्कणं श्वेतं विमलमिति अन्यधर्मार्थमेव श्वेतता निरूपिता वर्णनार्थं तु फणैः कृत्वा श्वेताद्रिं कैलासमिव शृङ्गैः सहितं दृष्टवान् स्थितमिति फणभागे उच्चत्वात् उत्थित इव दृष्टः ॥ ४५ ॥

ततो दृष्टं भगवन्तं वर्णयति । तस्योत्सङ्गे इति । सङ्ग उत्सङ्गे कायें कोमलत्वात् समत्वात् क्रमेण वर्त्तुलत्वेन सूक्ष्मत्वात् सर्वस्यैव शरीरस्योत्सङ्गतुल्यता सुखशयनार्थं तथोक्तवान् अन्यथा सर्पे शयनं भयानकं भवतीति उत्सङ्गपदं घनश्याममिति । तप्तानां तापनाशकं यथा आकाशमेघः स्वाधार एव भवति तथा भगवानपि पीतं यत् कौशेयं पट्टाम्बरं तदेव वस्त्रं यस्य एतेषां स्वरूपं प्रयोजनं च पूर्वमुक्तं पुरुषं पुरुषाकारं चत्वारो भुजा यस्य शान्तं गुणातीतम् उत्पत्तिस्थितिलयानां तदंशैरेव सिद्धत्वात् पद्मगर्भवत् अरुणे ईक्षणे यस्य मेघतुल्यतया प्रयोजनं निरूपितं वासः प्रमाणं पुरुष इति मूलरूपता पूर्वमेवाहमितिहासमिति निरुक्त्या पुरुषार्थचतुष्टयं दातुं चतुर्भुजाभिव्यक्तिः अन्तःकरणादिदोषाभावाय शान्तिः दृष्ट्यैव तापहारित्वाय अरुणवर्णेक्षणत्वं कंसवधार्थं च गर्भपदेन व्याजेनैव मारयिष्यति न प्राकट्येनेति निरूपितम् एवं षड्गुणा निरूपिताः ॥ ४६ ॥

चारु मनोहरं प्रसन्नं वदनं यस्य स्वरूपतः फलतश्च सर्वसुखदायि चारुः योऽयं हासः तत्पूर्वकं निरीक्षणं यस्य भक्तिज्ञानयोरुत्कर्षः सफलो निरूपितः । शोभने भ्रुवौ यस्य ऊर्ध्वा नासिका च कालासन्ययोः वहिरन्तः कार्ये निरूपिते सर्वं भगवत्यस्तीति ज्ञापयितुं निरूपयति चारू कर्णौ यस्य सर्वत्र भगवानुत्तम उक्तः सुष्ठु कपोलौ अरुणवर्णौ अधरौ यस्येति कामलोभावुत्तमौ निरूपितौ ॥ ४७ ॥

प्रकर्षेण प्रलम्बाः पीवराः स्थूला भुजा यस्य दूरस्थाः स्थूलदृष्टयोऽपि पुरुषार्थान् प्राप्स्यन्तीति ज्ञापयितुं तुङ्गावंसावुरःस्थलं च तत्र श्रीर्य्यस्य सर्वेषामेव सर्वं भारमूढ्वा सर्वं प्रयच्छतीति सर्वविद्यात्मकं त्रिवलीयुक्तं कण्ठस्थानमिति कम्बुवत् कण्ठो यस्य निम्ना नाभिर्यस्येति जगत्कर्तृत्वमस्य गूढमिति सुलक्षणत्वं च निरूपितं त्रिवली युक्तं पत्रवदश्वत्थपत्रवत् उदरं यस्य कोमलता किञ्चिदुन्नतत्वं च निरूपितं येन तद्वर्त्तिनः सर्वे सुस्था इति ॥ ४८ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कृष्णस्यांशं नारायणं वर्णयति । तस्य उत्सङ्गे कुण्डलीकृतदेहार्द्धे विलोक्येत्येकादशेन श्लोकेनान्वयः ॥ ४६-४७ ॥

तुङ्गांसमुरःस्थलश्रियश्चेति द्वयोः कर्मधारयेणैकपदं वलयस्तिर्य्यङ्क्निम्ना रेखाः सन्ति यस्य तत् वलिमत् तच्च पल्लववत् अश्वत्थदलसदृशमुदरं यस्य तत् ॥ ४८ ।

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कथम्भूतमहीश्वरम् सहस्रं शिरांसि यस्य तम् देवं दीप्यमानम् सहस्रफणेषु मौलयः शिरोभूषणान्यस्य सन्तीति तथा तम् नीले अम्बरं यस्य तम् विशदकमलकन्दवत् श्वेतम् शृङ्गैर्नानामणियुक्तैः शिखरैरिति मौलियुक्तानां फणानामुपमा दर्शिता श्वेतं कैलाशमिव स्थितम् ॥ ४५ ॥

तस्याहीशस्योत्सङ्गे पुरुषं विलोक्य गिरा गद्गदयास्तौषीदिति द्वादशश्लोकानामन्वयः ॥ ४६ ॥

चारु सुन्दरं प्रसन्नं वदनं यस्य तम् शोभने भ्रुवौ यस्य

बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ।
चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥ ४६ ॥
तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् ।
नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥ ५० ॥
सुमहार्हमणिव्रातकिरीटकटकाङ्गदैः ।
कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥ ५१ ॥
भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥ ५२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उन्नता नासिका यस्य तच्च तच्च शोभनौ कपोलौ यस्य अरुणोऽधरो यस्य तच्च तच्च ॥ ४७ ॥

प्रलम्बाः आजानुलम्बिनः पीवराः पीनाश्च भुजा यस्य तम् तुङ्गावुन्नतौ अंसौ स्कन्धौ यस्य उरःस्थले श्रीर्यस्य तच्च तं च वलयस्तीर्य्यङ्निम्ना रेखा यस्य सन्ति तद्वलिमत् तच्च पल्लववत् अश्वत्थपल्लववदुदरं यस्य तम् ॥ ४८ ॥

### भाषा टीका ।

वे देव सहस्र मस्तक वाले सहस्रफणा सहित किरीट वाले हैं नीलवस्त्र धारण किये हैं पद्म कंद सरीके श्वेत हैं जैसे शिखरों से पर्वत होवे ॥ ४५ ॥

उन शेषजी के गोद पर मेघ सरी के श्याम पीतांबर वस्त्र धारण किये चार भुजा वाले शांत पद्म पत्र सरी के लाल नेत्र वाले ॥ ४६ ॥

मनोहर प्रसन्न मुख वाले सुन्दर हास सहित देखने वाले सुंदर नासिका सुंदर कर्ण सुंदर कपोल अरुण अधर से शोभित ॥ ४७ ॥

बडे लंबे स्थूल भुजा वाले ऊंचे स्कन्ध तथा वक्षः स्थल से शोभित शंख सरीका कण्ठ गंभीर नाभि त्रिवलियुक पत्र सरी के उदर से शोभित ॥ ४८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कटितटश्च श्रोणिश्च करभसदृशमूरुद्वयञ्च बृहच्च तत्कटितटश्रोणिकरभोरुद्वयञ्च तेनान्वितम् यद्वा बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्वयेन चान्वितम् ॥ ४६ ॥

तुङ्गावीषदुन्नतौ गुल्फावरुणनखव्राताश्च तेषां दीधितिभिः तथा नवाः कोमला अङ्गुल्योऽङ्गुष्ठौ च तान्येव दलानि तैश्च विलसच्छोभमानं पादपङ्कजं यस्य तम् ॥ ५० ॥

सुमहार्हा मणिव्राता येषु तैः किरीटादिभिः ॥ ५१-५२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कटिरेव तटं विस्तीर्णत्वात् श्रोणिरत्र तदग्रभागः तयोर्बृहत्त्वं स्थौल्यं "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" उरुद्वयस्य तत्सादृश्यं यथायथं स्थूलत्वेन क्रमनिम्नत्वेन च अन्वितसंयुतादिपदं तत्सौन्दर्यातिशयव्यञ्जनायापूर्वमित्यर्थः । तच्चद्वयश्रयति ॥४६॥

नवशब्देन सौकुमार्यं तेन च नवदलवदारुण्यं लक्ष्यते नवानि यान्यङ्गुल्यादिरूपाणि दलानि तैरिति वैपरीत्येन रूपकं चातिशयितार्थं तत्र क्वचिद्व्युत्क्रमेण वर्णनेन तदूर्ध्वस्थैव भ्रमणं बोधयित्वा लोभाकुलता बोध्यते ॥ ५० ॥

अधुना भूषणादिकमाह । सुमहार्हेति द्वाभ्याम् । सुमहार्हशब्देन परमश्रेष्ठत्वं कटिसूत्रेत्यादीनामपि सुमहार्हत्वादिकत्वं ज्ञेयं तादृशकिरीटादिभिर्भ्राजमानं यद्वा तैस्तैर्विशिष्टं स्वभावतस्तु सूर्यकोटिवद्भ्राजमानं पद्मस्य पृथगुक्तिरनायुधत्वात् करसम्बन्धनोक्तिरन्यत्राप्यङ्गे तद्धारणसम्भवात् ॥ ५१ ॥ ५२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बृहता कटितटेन श्रोण्या च करभसदृशोरुद्वयेन चान्वितं चारुजानुनोर्युगं यस्य दीर्घयोर्जङ्घयोर्युगलेन संयुतम् ॥ ४९ ॥

तुङ्गावीषदुन्नतौ गुल्फौ अरुणनखव्राताश्च तेषां दीधितिभिर्वृतं नृप ! तथा नवा अङ्गुल्यः नवौ अङ्गुष्ठौ च तान्येव दलानि तैश्च शोभमाने पादपङ्कजे यस्य तं महार्हा मणिव्राता येषु तैः किरीटादिभिर्भ्राजमानम् ॥ ५०-५१ ॥

पद्मं करे दक्षिणे यस्य तमवशिष्टैस्त्रिभिः करैः शङ्खचक्रगदाः धरतीति तथा तं श्रीवत्सो वक्षसि यस्य तं भ्राजन् भ्राजमानः कौस्तुभो यस्य तं वनमाला अस्यास्तीति तथा तम् ॥ ५२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कनिष्ठिकामूलं करभः काञ्चीपदं कटितटञ्च श्रोणी च करभवद्रुचिरं मांसलमूरुद्वयञ्च तानि तैरन्वितम् ॥ ४९-५२ ॥

सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥ ५३ ॥
प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः ।
स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥ ५४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बृहत् स्थूलः कटितटो यस्य श्रोणिरपि तथा ततोऽधो भागः स्त्रीणां नितम्बस्थानीयः ततोऽप्यधस्तात् करभवत् ऊरुद्वयेनान्वितमिति अनेकपादत्वं व्यावर्त्तयति भूमिः कटितटरूपेति आधारबाहुल्यं निरूपितं ततोऽधस्तात् सर्वाङ्गेषु सौन्दर्यं निरूपयन् तथा वर्णयति सर्वाङ्गेषु तस्य दृष्टिः पतितेति चारु जानुयुगं यस्य तथा जङ्घायुगेन च संयुतमेकस्यां जङ्घायामपरां संस्थाप्य तिष्ठतीति अन्यथा विक्षेपे भक्तानां मतिर्भिन्ना भवतीति ॥ ४९ ॥

तुङ्गौ गुल्फौ अरुणा नखास्तेषां व्रातः समूहः तस्य दीधितिभिः कान्तिभिर्वृतं नखकान्तयः सर्वाङ्गं व्याप्य तिष्ठन्तीति नवा अङ्गुलयः अङ्गुष्ठौ च कमलदलप्रायाः तैर्विलसत् शोभायुक्तं पादपङ्कजं यस्य सुसेव्यत्वाय चरणौ तथा निरूपितौ ॥ ५० ॥

एवं सर्वाङ्गवर्णनमुक्त्वा आभरणानां वर्णनमाह । कटिसूत्रेति । कटिसूत्रं काञ्चीदामरूपमर्यादानिमित्तं ब्रह्मसूत्रं यज्ञोपवीतं नाममर्यादानिमित्तं हारो मुक्तानां हृदये शोभाकरः मुक्तान् जीवान् हृदये स्थापयतीति ज्ञापयितुं नूपुरं पादे कुण्डले कर्णयोः ॥ ५१ ॥

भक्तिशास्त्रं योगज्ञाने च समलंकृते एतैर्भ्राजमानम् आयुधानि वर्णयति । पद्मकरमिति । एकस्मिन् करे पद्ममेतत् सर्वायुधसमम् अतः सर्वबुद्धिभ्रामकमिति ततः शङ्खः अपां तत्त्वं पृथ्वी पद्ममिति तेजश्चक्रङ्गदा वास्वन्यरूपेति एतानि बिभर्त्तीति तथा लक्षणान्तराण्याह । श्रीवत्सो दक्षिणावर्त्तरोमरेखा वक्षसि यस्य इदमसाधारणं लक्षणं भ्राजत् कौस्तुभरत्नं यस्य शुद्धा जीवाः कण्ठे स्थिता इति वनमालायुक्तमिति कीर्तियुक्तम् ॥ ५२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बृहद्भ्यां कटितटश्रोणिभ्यां करभसदृशोरुद्वये न च अन्वितं कटितटं नितम्बः श्रोणिः कटिः कटिः श्रोणिः ककुद्मती मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः ॥ ४९ ॥

तुङ्गगुल्फेति गुल्फस्य तुङ्गता ईषन् मात्रैव व्याख्येया अतिसौकुमार्य्यात् नवा अङ्गुल्यः अङ्गुष्ठौ च त एव दलानि तैः शोभमाने पादपङ्कजे यस्य तं पृथग्भावैरिति पार्षदैः स्वामित्वेन सनकाद्यैर्ब्रह्मत्वेन ब्रह्माद्यैः परमेश्वरत्वेन मरीच्याद्यैः प्रजापतित्वेन प्रह्लादाद्यैरिष्टदैवतत्वेन तत्र वसुरुपरिचरः अत्र पार्षदाः दर्शाव्यष्टस्वपि दिक्षु सनकाद्याः पश्चात् ब्रह्माद्या दक्षिणे भागे मरीच्याद्या वामे प्रह्लादाद्याः संमुखे नारदः संमुखार्द्धे एते च सर्वे एव नित्याः प्रापञ्चिक ब्रह्माद्या एतद्ब्रह्मादिविभूतयो ज्ञेयाः यदुक्तं पाद्मोत्तरखण्डे "नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदिवेश्वराः„ इति । श्रियेति श्र्याद्यैः स्वरूपभूताः तत्र श्रीरैश्वर्य्यं पुष्टिर्बलं गीर्ज्ञानं कान्तिः श्रीः कीर्त्तिर्यशः तुष्टिर्वैराग्यमिति षड्भगशब्दवाच्याः शक्तयः इला भूशक्तिः संधिन्याख्या अन्तरङ्गा यस्या विभूतिः पृथ्वी ऊर्ज्जा लीला शक्तिरन्तरङ्गा यस्या विभूतिर्भूलोकस्था तुलसी विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू बहिरङ्गे शक्तिर्महालक्ष्मीर्ह्लादिन्यन्तरङ्गा माया विद्याविद्ययोर्मूलभूता बहिरङ्गा चकारात्तदधीना जीवशक्तिस्तत्तस्था एताभिर्नितरां सेवितम् ॥ ५० ॥ ५५ ॥ ५७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बृहता कटितटेन श्रोण्या च करभसदृशेनोरुद्वयेन च अन्वितम् ॥ ४९ ॥

तुङ्गावीषदुन्नतौ गुल्फौ अरुणा नखव्राताश्च तेषां दीधितिभिर्वृतम् नवाः अङ्गुल्यः अङ्गुष्ठौच तान्येव दलानि तैः विलसती शोभमाने पादपङ्कजे यस्य तम् ॥ ५० ॥

सुमहार्हाणां मणीनां व्राताः येषु तैः किरीटादिभिः ॥५१॥ ५२ ॥

भाषा टीका ।

अति विशाल कटितट तथा श्रोणि और हस्ति के सुंड सरी के जंघा दोनों से शोभित मनोहर दोनों जानु सुंदर उरू दोनों से अति शोभित ॥ ४९ ॥

अति ऊंचे गुल्फ तथा अरुण नखों के समूह की कांति से युक्त नूतन अंगुलि अंगुष्ठ दलों वाले चरण कमल से शोभित ॥ ५० ॥

बडे मूल्य के योग्य मणियों के समूह से युक्त किरीट कडा बाजू बंद कटि सूत्र यज्ञोपवीत हार नूपुर कुंडल इन से शोभित ॥ ५१ ॥

अति देदीप्यमान रूप युक्त हस्त में कमल को धारण किये शंख चक्र गदाओं को भी धारण किये वक्षस्थल में प्रकाशमान श्रीवत्स का चिन्ह कौस्तुभ तथा वनमाला से शोभित ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

पृथक् पृथक् भावैर्भिप्रायो येषां तैःतत्र पार्षदैः स्वामीति स्तूयमानं

श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥ ५५ ॥
विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ।
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥ ५६ ॥
गिरा गद्गदयाऽस्तौषीत्सत्त्वमालम्ब्य सात्वतः ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटः शनैः ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे अक्रूरप्रतियाने
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सनकादिभिर्ब्रह्मेति ब्रह्माद्यैर्महेश्वर इति मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापतिरिति वसुरुपरिचरः प्रह्लादनारदवसवः प्रमुखा मुख्या येषां तैः परंदैवतमिति च श्रेष्ठैर्वचोभिः पृथग्भावैर्वचोभिरिति वा ॥ ५३ ॥ ५४ ॥

विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू माया तयोः कारणम् शक्तिर्ह्लादिनी सम्विज्ज्ञानमाभिरन्याभिश्च निषेवितम् ॥ ५५ ॥

विलोक्य सुभृशं प्रीतो ऽस्मत्कृष्णोऽसावेवंभूतः परमेश्वर इति ज्ञात्वेति ॥ ५६ ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परिवारानाह । सुनन्देति त्रिभिः । तत्र पार्षदाः सेवकत्वात् सर्वान्तरङ्गाः सनकाद्या भक्तत्वेऽपि सेवांशराहित्येन ततो बहिरङ्गा निष्कामत्वेन भगवत्स्वरूपानुभवित्वेन चान्येभ्योऽन्तरङ्गाः ब्रह्माद्येषु ब्रह्मरुद्रयोर्वस्तुतस्तु तद्गुणत्वेऽपि जगदाधिकारांशाभिमानाभाससद्भावेन ततो बहिरङ्गतादर्शकत्वम् अन्ये तु बहिरङ्गा एव मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुर्भृगुर्वशिष्ठो दक्षश्चेति नव प्रजापतयो ब्रह्माद्यपेक्षया न्यूनज्ञानादित्वेन बहिरङ्गा एव प्रह्लादादयस्तत्तन्महागुणत्वेऽपि सर्वतत्तत्परिवारसहितस्य तस्य दैन्येनोपासकाभिमानितया बाहिरेव प्रायस्तिष्ठन्तीति सर्वबहिर्गणिताः एषां दिङ्नियमश्चागमानुसारात् यथा पार्षदाःपूर्वाद्यष्टस्वपि दिक्षु सनकाद्याः पश्चात् ब्रह्मद्याः ऊर्ध्वादियथास्वंदशादिक्षु देवस्य दक्षिणभागे वा मरीच्याद्या वामे प्रह्लादादयः सम्मुखे नारदस्तु सम्मुखोर्ध्वं इति एते च नित्यावरणरूपत्वात् प्रापाञ्चिकानामीशरूपा ज्ञेयाः । यथोक्तं पाद्मोत्तरखण्डे "नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः । ते वै प्राकृतनाकेऽस्मिन्ननित्यास्त्रिदशेश्वराः तेह नाकं महिमानः सचन्त इति वै श्रुति„ रिति अन्यैस्तैः तत्र श्रेष्ठैरित्यमलात्मभिरित्यस्यार्थः अविद्यमानं मलं दोषो यत्रेति पक्षे पृथग् भावैरिति वचोविशेषणमेव कृतं तथापि वक्तृष्वेव तात्पर्यम् अथामलात्मभिरिति परिवारस्य विशेषणं तेन च सर्वेषामेवाभिप्रायाणां युक्ततमत्वं व्यक्तम् ॥ ५३—५४ ॥

आवरणरूपेण च वर्त्तमानाः शक्तीराह । श्रियेति । तैर्व्याख्यातं तत्र ह्लादिनी स्वरूपानन्दानुभाविनी सम्वित् चिद्रूपा स्वरूपभूतमहाशक्तिः सैव हि शक्तिशब्दस्य प्रथमप्रवृत्तिहेतुमायातिरिक्ता च तया महालक्ष्म्याख्यया तदन्तरङ्गया निषेवितं तया तत्स्पर्शात् तदुक्तं "ह्लादिन्या सम्विदाश्लिष्टः सच्चिदानन्द ईश्वर„ इति सम्विदित्यस्यान्ते ज्ञानमित्यधिका टीका केनचिदबुद्धैव कल्पितेति लक्ष्यते मायया च बहिरङ्गया निषेवितं चशब्देन गौणताव्यक्तेस्तया तदस्पर्शात् तदुक्तं श्रीविष्णुपुराणे "ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते„ इति तथा द्वितीये च "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया„ इत्यादि अनयोरेव मूर्त्तिभेदाः श्र्यादयः प्रापञ्चिकाप्रापञ्चिकभेदेन द्विविधत्वात्तासां जात्यैकत्वं विवक्षितं तत्र श्रीः सम्पदः सम्पादयित्री पुष्टिः शरीरस्य गीर्वाचः कान्तिः शोभायाः कीर्त्तिर्यशसः तुष्टिरन्तःकरणस्य इला भुवः ऊर्जा लीलायाः विद्या यथार्थज्ञानस्य अविद्या तदज्ञानस्य तच्च कचित्तत्प्रेम्णापि भवतीति ह्लादिनी वृत्तिरपि एतदुपलक्षणत्वेनान्या अपि ज्ञेयाः तदुक्तं पाद्मोत्तरखण्डे एव "एवं परं पदे नित्यैर्मुक्तैर्हरिपरायणैः । दिव्याभिर्महिषीभिश्च राजते विभुरीश्वर„ इति ॥ ५५ ॥

विलोक्येति । तैर्व्याख्यातं तत्राध्याहारेण व्याचष्टेऽस्मत्कृष्णोऽसावित्यादि यथोक्तं वैष्णवे "बलकृष्णौ तदाक्रूरः प्रत्यभिज्ञाय विस्मित „इति तस्यानुभव एतावानेव विचारस्त्वधिको भविष्यति अद्भुतानीह यावन्तीत्यादिद्वाभ्याम् ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सत्त्वं धैर्यं रुद्धकण्ठत्वेन शनैरेव ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

नवभिः नव ब्रह्माण इति प्रसिद्धैः कश्यपादिभिः ॥ ५३—५५ ॥

भावप्रक्लिन्नात्मलोचनः स्नेहात्साश्रुलोचनः ॥ ६६ ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सुनन्दादिभिः पार्षदैः सनकादिभिश्च सुरश्रेष्ठैर्ब्रह्मरुद्रादिभिश्च नवभिर्द्विजोत्तमैर्मरीच्यादिभिश्च विशुद्धमानसैः क्रमेण सर्वशेषीति परं ब्रह्मेति सर्वकारणमिति प्रजापतिरित्येवं पृथक्पृथक् अभिप्रायवद्भिर्वचोभिः स्तूयमानम् ॥ ५३—५४ ॥

श्र्यादिभिः मूर्त्तिविशिष्टैः शक्तिभिः द्वादशभिर्निषेविनम् ॥५५॥

एवंभूतं विलोक्य नितरां प्रीतः उत्कृष्टया भक्त्या च युक्तः अत एव हृष्यन्ति उद्भिन्नतानि तनूरुहाणि लोमानि यस्य भावेन प्रीत्यतिशयेन परिक्लिन्नः आर्द्रः आत्मा चित्तं लोचने च यस्य सः ॥ ५६ ॥

सात्वतोऽक्रूरः सत्त्वं धैर्यमवलम्ब्य मूर्ध्ना प्रणम्यावनतः प्रह्वः कृतमञ्जलिपुटं येन सः गद्गदया वाचा शनैस्तुष्टाव ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नवभिः द्विजोत्तमैः कश्यपादिभिः ॥ ५३ ॥

पृथङ्मार्गैर्वैदिकतान्त्रिकमार्गविपर्ययैः ॥ ५४–५५ ॥

भावेन तद्भक्तिस्वभावेन परिक्लिन्ने आनन्दाश्रुजलस्नाते आत्मलोचने यस्य स तथा ॥ ५६ ॥

सत्त्वं सत्त्वगुणमात्मभावं वा ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ३९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं लक्षणानि निरूप्य सेवकान् निरूपयति। सुनन्देति। सुनन्दनन्दादयः अष्टौ द्वाःस्थाश्च सनकादयः आधिदैविका भक्ताः सुरेशादयः इन्द्रप्रमुखाः अष्टौ लोकपालाः ब्रह्मा रुद्रश्च आद्यौ येषामेते उत्तमसेवकाः मनुष्यान् निरूप्य ऋषीन्निरूपयति। नवभिश्चेति मरीच्यादयो नव ब्राह्मणश्रेष्ठाः भगवत्कर्मपराः ॥ ५३ ॥

भगवद्भक्ता अप्याधिदैविकास्तत्र दृष्टा इत्याह। प्रह्लादेति दैत्येषु प्रह्लादः श्रेष्ठः नारदो देवेषु वसुः भीष्मो मानुषेषु त्रिविधा एव जीवाः तत्र भक्ता एव मुख्या इति एतत्प्रमुखैर्भागवतोत्तमैः स्तूयमानं दृष्टवान् तत्र स्तोत्रे सात्त्विकराजसतामसभावाः वक्तृनिष्ठा इति पृथग्भावैः स्तोत्राणि स्तोत्रमपि न तदानीमेव कल्पयित्वा कथनरूपं किन्तु वचोभिः पूर्वसिद्धैः गद्यपद्यादिरूपैः ननु वैकुण्ठे भगवत्संनिधाने वा परमानन्दानुभवोऽस्तीति भोगं विहाय किमिति स्तोत्रं कुर्वन्तीत्याशङ्क्याह। अमलात्मभिरिति। निर्मलान्तःकरणास्ते भगवत्पराः नतु भोगपराः ॥ ५४ ॥

ततो भगवतः सर्वकार्यसाधिका द्वादशशक्तयः ता अपि दृष्टवानित्याह। श्रियेति। श्रीर्लक्ष्मीः श्रयादिभिर्निषेवितं पुष्टिर्नाम यया सर्वे पुष्टा भवन्ति सा यत्र न प्रविशति ते बह्वाहारा अपि न पुष्टा भवन्ति एवं सर्वत्र गीः सरस्वती प्रसिद्धा कान्तिः काचित् प्रभा राज्याभिषेकादिषु प्रकटा जायते अलङ्करणानि तच्छेषाण्येव कीर्त्तिः प्रसिद्धा सा यत्र न प्रविशति तत्र समानकर्मणा न कीर्तिर्भवति तुष्टिः सन्तोषात्मिका यदभावे महानपि तृणवद्भवति इला भूमिः ऊर्ज्जा सर्वसामर्थ्यरूपा विद्या ज्ञानरूपा मोक्षदायिनी अविद्या बन्धिका निद्रादयोऽपि तद्भेदा एव केचन मायाभेदा इत्याहुः। शक्तिरिच्छाशक्तिः एषा सर्वनियामिका माया सर्वभवनसामर्थ्यं व्यामोहिका चेति उभयविधापि परिगृहीता चकारेण अनेन सर्वत्र सर्वे भेदाः परिगृहीताः तेन मुख्या द्वादश अवान्तरभेदा असंख्याता एव भवन्तीति निरुक्तं भवति—

> आधार एव रूपञ्च आकारोऽङ्गानि चैव हि।
> अलङ्करणचिन्हानि सेवका द्विविधा अपि।
> शक्तयश्चेति भगवान् सप्तधा विनिरूपितः ॥

इति ॥ ५५ ॥

एवं दृष्टवतो यज्जातं तदाह। विलोक्येति। आदौ तादृशं दुर्लभं दृष्ट्वा सुभृशं प्रीतः ततः परमया भक्त्या युतः ततो हृष्यत्तनूरुहः—

> अन्तस्तोषस्तथा भक्तिर्भक्तिचिह्नानि चैव हि।
> दृष्टे भगवति ह्यासन् भक्तस्येति निरूपितम् ॥

भावेन क्लिन्नमन्तःकरणं लोचने च यस्य प्रेमोद्गमलक्षणमेतत् ततो वैकल्यमर्थादुक्तं भवति ॥ ५६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यत्कृतवांस्तदाह । गिरेति । गद्गदया वाण्या अस्तौषीत् सत्त्वमालम्ब्येति निर्गुणावस्थां दूरीकृत्य सत्त्वावस्थावलम्बनं कृतवान् यतः सात्त्वतः वैष्णवः ततः साष्टाङ्गम्प्रणम्य वैकुण्ठ एवाभिव्यक्त इति जलाद्यभावात् अवहितः सावधानो भूत्वा मनः सुस्थिरं विधाय कृताञ्जलिपुटो भूत्वा चिरकालं तूष्णीं स्थित्वा अल्पोद्गमसामर्थ्येऽपि स्तोत्रं कृतवानिति वक्तुमाह । शनैरिति । स्तोत्रे हि कृते भगवता प्रदर्शितं तस्य हृदयारूढं जातमिति ज्ञायते नान्यथेति सर्वत्र स्तोत्रव्यवस्था ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज-

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

षट्त्रिंशाध्यायविवरणम् ॥ ३६ ॥ ३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्

एकोनचत्वारिंशोऽयं दशमे ऽजनि सङ्गतः ॥ ३९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नवभिः मरीच्यादिभिः ॥५३ ॥

पृथक्पृथक्भावोऽभिप्रायो येषां तैर्वचोभिः ॥ ५४ ॥

श्र्यादिभिः मूर्तिमतीभिः शक्तिभिर्निषेवितम् तत्राविद्यया कर्मरूपया "अविद्या कर्मसंज्ञान्या तृतीया शक्ति" रिति वाक्यात् मायया त्रिगुणया ॥ ५५—५७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

एकोनचत्वारिंशाध्यायार्थप्रकाशः ॥३९॥

---

भाषा टीका ।

सुनंद नंद आदि पार्षद तथा सनकादि और ब्रह्मा रुद्रादि देवतों से तथा मरीच्यादि नौ ऋषियों से ॥ ५३ ॥

प्रह्लाद नारद वसुआदि भागवचोत्तमों से दिव्य निर्मल वचनों से स्तुत ॥ ५४ ।

श्री पुष्टी सरस्वती कांति कीर्ति तुष्टि इला उर्जा विद्या अविद्या शक्ति माया इन शक्तियों से सेवित ॥ ५५ ॥

ऐसे भगवान् के स्वरूप का दर्शन करके अक्रूरजी परम भक्ति युक्त प्रसन्न होगये शरीर उनका रोमांचित होगया ॥ ५६ ॥

फिर अक्रूरजी धैर्य को धारण करके मस्तक से प्रणाम करके दोनों हाथों से अंजलि जोडकर धीरे से गद्गदवाणी से भगवान् की स्तुति करने लगे ॥ ५७ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे उनचालीसमें अध्याय की भाषाटीका समाप्त ॥ ३९ ॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## ॥ चत्वारिंशोऽध्यायः ॥

---

श्रीशुक उवाच ॥

"एवं दृष्ट्वा तमक्रूरः प्रसन्नहृदयेन्द्रियः ।
तुष्टाव पुण्डरीकाक्षं भक्त्यावनतकन्धरः ॥" "अयं विजयध्वज पाठः"

॥ अक्रूर उवाच ॥

नतोऽस्म्यहं त्वाखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् ।
यन्नाभिजातादरविन्दकोशाद्ब्रह्माविरासीद्यत एष लोकः ॥ १ ॥
भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मनइन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ २ ॥
नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः ।
अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम् ॥ ३ ॥
त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् ।
साध्यात्मं साधिभूतं च साधिदैवञ्च साधवः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥

श्रीकृष्णं प्रणमति । नतोऽस्मीति । हे कृष्ण! त्वा त्वां नतोऽस्मि त्वमस्मात्पितृव्यः कुतो मां बालं नतोऽसि तत्राह । आद्यं पुरुषमव्ययं चानादिनिधनमित्यर्थः । कुत एतत् अखिलहेतूनां हेतुं स तु नारायणो नाहमिति चेत्तत्राह । नारायणं त्वां किं नारायण इति मां स्तौषि कात्र स्तुतिः सत्यमेवेत्याह । यन्नाभिजातादिति । यतो ब्रह्मणः ॥ १ ॥

अखिलहेतुत्वं प्रपञ्चयति । भूरिति । खस्यादिरहङ्कारः अजा माया तस्या आदिः पुरुषः एते ये जगतो हेतवस्ते सर्वे तवाङ्गभूता अङ्गाच्छ्रीमूर्तेर्भूताः उपसर्जनभूता वा ॥ २ ॥

नन्वतिस्तुतिःकथं क्रियतेऽहमेवान्यत उत्पन्नस्तत्परतन्त्र श्चेत्याशङ्क्य तवैषा माया त्वत्पारमार्थ्यं तु न कोऽपि वेदेत्याह । नत इति । एते अज आदिर्येषां ते आत्मनस्ते स्वरूपं न विदुः अनात्मतया जडत्वेन कारणेन जडत्वे हेतुः गृहीताः प्रत्यक्षादिभिर्दृष्टाः नह्यजडो दृग्गोचर इति भावः । ननु जडा मां माजानन्तु जीवस्तु ज्ञास्यतीत्यत आह । अज इति । सो ऽजो ब्रह्माप्यजाया गुणैरनुबद्ध आवृतो गुणातीतं ते तव स्वरूपं न वेदअन्यः कुतो ज्ञास्यतीति यद्वा प्रकृत्यादय आत्मनःस्वरूपं तव स्वरूपञ्च न विदुः जडत्वादेव जीवस्तु तानात्मानञ्च वेत्ति न पुनस्त्वत्स्वरूपमिति यथोक्तं हंसगुह्ये—

देहोऽसवोऽक्षा मनवोऽभूतमात्रा नात्मान मन्यञ्च विदुः परं यत् ।
सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥

इति ॥ ३ ॥

ननु यदि केऽपि न जानन्ति कथं तर्हि संसारनिवृत्तिर्जीवानामित्याशङ्क्य साक्षादगोचरत्वेऽपि येन केनापि मार्गेण भजतां त्वं गम्योऽसीत्याह । त्वां योगिन इति । हैरण्यगर्भादयोऽध्यात्माधिभूताधिदैवसाक्षिणं महापुरुषं तदन्तर्यामिस्वरूपमीश्वरं नियन्तारं च यजन्ति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तं तावत् पुरुषत्वेन स्तौति । नतोऽस्मीति । तैर्व्याख्यातं तत्र साक्षाच्चतुर्भुजत्वादिनाविर्भावेऽपि त्वमस्मत्पितृव्य इत्यादिकं विनोदेन वदेदसावित्यभिप्रायेणाद्यमित्यादिकमाहेति भावः किमित्यादिः प्रश्नः नारायणत्वमारोप्य किल मां प्रोत्साहयसीत्यर्थः केत्यादिकमुत्तरम् अत्र न कापि स्तुतिः किन्तु सत्यमेवेदामित्यर्थः अत्र तन्नाभीत्यादेर्हेतुत्वं च तर्जनीद्वयेन साक्षादरविन्दकोपदर्शनादिति ज्ञेयम् ॥ १ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूरिति तैर्व्याख्यातं तत्रादिशब्दस्य सापेक्षत्वान्निरन्तरवर्त्तमानस्य खस्यैवादितयाऽहङ्कारो लभ्यत इत्यभिप्रेत्याह । खस्येति खवदजेत्यपि पृथक् पदं पुरुषो जीवः तस्य मायात आदित्वं तदस्तीति तदंशत्वेन श्रीमूर्त्तेरिति तस्या एव परमतत्त्वरूपत्वं साधितं जन्म चाचिन्त्यशक्त्या कारणस्य विकारित्वराहित्येनैव तद्भ्रमहानार्थमेव चोत्तरः पक्षः ॥ २ ॥

गुणात् परं तदनासक्तम् अन्यत्तैः तत्र तानात्मानं चेत्यर्थात् यद्वा नन्वेतावन्तं कालं कथमेवं न ज्ञातवानसि तत्राह । न ते इति । तस्मादधुना कृपयाविर्भावादेव ज्ञायस इति भावः ॥ ३ ॥

ननु कोऽपि य जानाति चेत् कथं योगादिफलं सिद्ध्यति यतः "फलमत उपपत्तेः" इति न्यायेन बन्धको भवपाशेनेत्यादि प्रामाण्येन च तत एव सर्वं फलं स्यात् किमुत मुक्तिः तत्र शुभफलप्राप्तिश्च तस्य प्रसादेन प्रसादश्चोपासनयैव उपासना च ज्ञानेनैवेति उच्यते अन्तर्यामिणि तस्मिन्नेव सर्वोपासनावाक्यतात्पर्यपर्यवसानात् सर्वत्रैवोपास्यत्वभावस्तस्य स्यादिति तज्ज्ञानपूर्विकायामिव तदज्ञानपूर्विकाया—मप्युपासनायां तस्मादेव तत् सिद्ध्यति मिथ्यैव तु भावो यजमानदेवतान्तरयोरित्यभिप्रेत्य साधारण्येन तथा विज्ञापयति यद्वा यथैवं कारणवाक्यानां त्वय्येव तात्पर्यं तथोपासनावाक्यानामपीत्याह । त्वामिति । अद्धा साक्षादिति महापुरुषरूपेणोपासनात् अत एव साधवः अन्येभ्यः श्रेष्ठाः अन्यतैः तत्र साक्षादगोचरत्वेऽपि भजनस्य साक्षाद्विषयत्वाभावेऽपीत्यर्थः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आदिशब्देन पृथिव्यादीनां कारणभूतो ऽहंकार उच्यते अजा मूलप्रकृतिः सा कार्याणामादिभूता ये जगतो हेतवः ते तव अंशभूताः ॥ १ ॥ २ ॥

आत्मनः अन्तर्यामिभूतः सः अन्यात्मतया स्वनिष्ठात्मभ्रान्त्या अजः ब्रह्मा अजाया गुणैः प्रकृतिगुणैः सत्त्वादिभिः ॥ ३ ॥

साध्यात्मा दिदेहावस्थितेन पञ्चभूतावस्थितेन आदित्यमण्डलावस्थितेन च रूपेण सहितम् ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्तौषीदित्युक्तां स्तुतिमेव दर्शयति चत्वारिंशेन । नतोऽस्मीत्यादिना । तावत्सर्वजगत्कारणत्वसर्वान्तरत्वादिभिःस्तुवन्नमस्करोति नतोऽस्मीति द्वाभ्याम् । अखिलहेतुहेतुं त्वामहं नतोऽस्मि अखिलस्य व्यष्टिप्रपञ्चस्य ये हेतवो महदादयस्तेषामपि हेतुं कारणमित्यर्थः । नन्वखिलहेतुहेतुः सद्ब्रह्मात्माकाशप्राणादिष्वन्यतमो भवद्भिरुच्यत आह नारायणमिति । कृत्स्नकारणत्वस्यानेकनिष्ठत्वे "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्युक्तरीत्या निस्समाभ्यधिकाद्वितीयवस्त्वसिद्धा तस्यैकनिष्ठत्वस्य वाच्यत्वात्सदादिसामान्यशब्दघटितकारणवाक्याभिप्रेतकारणवस्तुविशेषाकाङ्क्षाशामकेन विशेषशब्दात्मकनारायणपरघटितेन एको हवै नारायणआसीदितिवाक्येन नारायणेतरस्य निषेधपूर्वकं तस्यैव कारणत्वं श्रावयता कारणत्वेनावगतो नारायण एव सच त्वमेवेति भावः नन्वस्त्वहं नारायण इति स एवाखिलहेतुरिति च तथापि ममापि कारणान्तरं स्यात्तत्राह पुरुषमादिम् आदि पुरुषं कारणत्वपराकाष्ठाभूतं स्वयं कारणान्तररहितमित्यर्थः एवमप्यव्ययं निर्विकारं विकाराणां शरीरभूतचिदचिद्गतत्वादिति भावः । अखिलहेतुहेतुत्वमेव प्रपञ्चयति । यन्नाभीति । एष परिदृश्यमानो व्यष्टिप्रपञ्चः यतो बभूव स ब्रह्मा चतुर्मुखः यस्य तव नाभेर्जातादरविन्दकोशात् आविरासीत् उदभवत् अनेन व्यष्टिसृष्टिश्चतुर्मुखद्वारिका समष्टिस्त्वद्द्वारिकेति दर्शितम् ॥ १ ॥

ननु किमिदमखिलहेतुत्वं निमित्तरूपमुतोपादानत्वरूपमित्याशङ्कायामुभयविधञ्चेत्यभिप्रेत्याह । भूरिति । पृथ्व्यादीत्याकाशान्तानि पञ्चभूतानि तेषामादिः कारणमहङ्कारः तथा तस्यापि कारणं महान् तस्याप्यादिकारणमजा मूलप्रकृतिः सा हि सर्वकार्य्याणामादिभूता तथा सात्त्विकाहङ्कारकार्य्यभूतानीन्द्रियाणि ज्ञानकर्मोभयेन्द्रियाणि मनश्च तेषामधिष्ठातारो विबुधा देवाः दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रप्रजापतिचन्द्रमसः इन्द्रियाणामर्था विषयाः शब्दादयश्चेति ये जगतो हेतवस्ते सर्वे ते तवाङ्गभूताः शरीरभूताः अनेन मूलप्रकृतिविशिष्टो महदादिशरीरकतया तत्तद्रूपेण परिणत इत्युपादानत्वमुक्तम् मूलप्रकृतेर्महदादीनाञ्च शरीरत्वकथनेन नियन्तृनियाम्यभावसिद्धेर्निमित्तत्वमप्युक्तं जगतो ये हेतवः इति जगदन्तर्भूतज्ञानविकासात्मककार्य्यावस्थजीवकारणभूतज्ञानसङ्कोचरूपकारणावस्थजीवानामपि तदङ्गत्वप्रतीत्या जीवान् प्रत्युपादाननिमित्तत्वरूपोभयविधकारणत्वासिद्धिः ॥ २ ॥

ननु त्वमिव सर्वेऽप्येवंविधसर्वकारणं सर्वान्तरात्मानं सर्वशरीरकं च मां किं न जानीयुस्तत्राह । नैत इति । एते त्वच्छरीरभूता अजादयः जीवादयः अन्तरात्मनस्तव स्वरूपं न विदुः अजादय इत्यत्रादिशब्दः प्रकृतितत्कार्य्यसंग्राहकः सच दृष्टान्तार्थः जडाः प्रकृत्यादयो यथा न तव स्वरूपं विदुः एवजीवा अपि न विदुरित्यर्थः ननु जडत्वात्प्रकृत्यादयो न विदुरिति युक्तम् अजडा जीवास्तु कुतो न विदुरित्यत्राह । अन्यात्मतया गृहीता इति । अन्यस्मिन् स्वस्माद्भिन्ने देहे आत्मतया आत्मभिमानेन तथा अन्यस्मिन् स्वतन्त्रात्वत्तोऽन्यस्मिन् स्वात्मनि आत्मतया स्वातन्त्र्याभिमानेन च गृहीताः ग्रस्ताः देहात्माभिमानस्वतन्त्राभिमानाभ्यां ग्रस्ताः स्वात्मानमेव देहविलक्षणमीश्वरपरतन्त्रञ्च न जानन्ति कथं नु त्वां विदुरित्यर्थः इत्थमेव ब्रह्मापि न वेद किमुत तत्सृज्यास्तदधीना इति कैमुत्यन्यायेनाह । अज इति । अजो ब्रह्मापि स्वगुणैः स्वशरीरारम्भकसत्त्वरजस्तमोगुणैरनुबद्धस्तत्परवश इति यावत् अजायाः प्रकृतेर्गुणात् जातावेकवचनं गुणेभ्यः सत्त्वादिभ्यः परम्विलक्षणं तन्नियन्तृ तव स्वरूपं न वेद किमुतान्ये न विदुरिति भावः । अनात्मनयेतिपाठे जडत्वेन दृष्टाः अजादयः प्रकृत्यादयः यथा न विदुरेवमजोऽपि ब्रह्मापि न वेद किमुतान्ये न विदुरिति योजनीयम् ॥ ३ ॥

ननु सर्वैरवेद्यं मत्स्वरूपं शशविषाणप्रायं स्यादित्याशङ्कायां देहात्माद्यभिमानिनां मांसचक्षुराद्यवेद्यमपि योगविशुद्धमनोवेद्यमित्यभिप्रयन् तदेव नानाविधज्ञानक्रियाभिर्योगिनः कर्मयोगिनश्च यजन्तीत्याह । त्वामिति । योगिन इत्यस्य केचिदित्यादिः केचिद्योगिनः आनन्दवल्ल्यादिविहितोपासननिष्ठाः महापुरुषं प्रकृतेस्तत्संसृष्टाच्चेतनान्मुक्तान्नित्याच्च विलक्षणमीश्वरं त्वामद्धा त्वामेव अद्धेत्यवधारणे साक्षात्त्वामेव सत्यं ज्ञानमनन्तमित्याद्युक्तविधं

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

यजन्ति आराधयन्ति उपासत इतियावत् केचित्साधवस्तु अन्तरादित्यप्रतर्दनादिविद्यानिष्ठास्तु साधिदैवम् आदित्यान्तस्थमिन्द्रादिदेवतान्तर्य्यामिणमिन्द्रादिशरीरकं त्वां यजन्ति उपासनां कुर्वन्तीत्यर्थः। केचित्तु साध्यात्ममात्मनि शरीरे अध्यात्मं तेन सहितं साध्यात्मं शरीरावयवाक्षिहृदयादिषु वसन्तं त्वां जयन्ति तथाहि छान्दोग्ये य एषोऽन्तरादित्ये हिरण्ययः पुरुषो दृश्यते इत्युपक्रम्य तस्य ऋक्साम गेष्णावित्यधिदैवतमथाध्यात्मं य एषोऽन्तरक्षिणि पुरुषो दृश्यते इत्युक्तम् अपरेतु योगिनः साधिभूतं सर्वभूतस्थं सर्वशरीरकं त्वां भजन्ति सर्वं खल्विदं ब्रह्म तज्जलानीत्युक्तविधामुपासनां कुर्वन्तीत्यर्थः। तदेव मुपासनानामद्वारकसद्वारकभेदेन द्वैविध्यं दर्शितम्॥ ४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अक्रूरस्तुतिव्यपदेशेन विद्वदधिकारयोग्यं भगवदुपासनाप्रकारं निरूपयत्यस्मिन्नध्याये। तत्राक्रूरो भगवन्तं दृष्ट्वोत्तरं किञ्चकारेति परीक्षितो मानसीं शङ्कां शुकः परिहरति। एवमि॥ ०॥

नम्यस्यानम्ये वैशिष्ट्यस्य ज्ञापनाय व्यावर्तकलक्षणमाह। अखिलेति। कदाचिन्नेत्यन्यथा प्रतीतिं निवारयति। भूतमिति। यदेतन्निमित्तकारणत्वं तत्कदाचिन्नापगच्छतीत्यर्थः। अखिलहेतुहेतुमिति पाठे उपादानकारणानामपि कारणमित्यर्थः। किन्नामधेयोऽयमिति तत्राह। नारायणमिति। अरविरुद्धत्वान्नारा गुणास्तेषा मयनं ननु तर्हि किमयं शब्दगुणाश्रयत्वेनाकाश इतिचेत्तत्राह। पूरुषमिति पूर्णषड्गुणम् आकाशस्यैकगुणत्वान्महान्विशेषः नन्वाकाशो वैनामरूपयोर्निर्वहितेतिश्रुतेरविनाशित्वेनाखिलहेतुत्वन्नरसमुदायो नारमिति नरसमुदायादिसर्वपदार्थस्यावकाशप्रदत्वेनाश्रयत्वेन नारायणशब्दवाच्यत्वमाकाशस्य किन्न स्यादित्यतो वाह। पूरुषमिति पूरुषस्यापि पितृपितामहादिवद्घटमृदादिवद्वा बीजपरम्परा स्यादिति तत्राह। आदिमिति। वैशेषिकपक्षे यथा परमाणोः कारणत्वं पर्याप्तम् एवमत्रापीत्यर्थः। एवंविधस्यापि सगर्भकर्कटवद्विनाशित्वं स्यात्किन्नेत्याह। अव्ययमिति। न केवलं स्रष्टृत्वेनास्य कारणत्वं पर्याप्तमपितु संहर्तृत्वेनापीति भावेनाह। आदिमिति। अद्भक्षण इतिधातोः अत्तृत्वादादिमित्यर्थः। संहर्तृत्वमप्यस्मिन्पर्याप्तमिति प्रकटनायाण्प्रत्ययप्रयोगः जीवो जीवस्य जीवनमितिन्यायेन असुरस्याप्यन्यो ऽत्ता स्यादित्यतो वाह। अव्ययमिति। सर्वधारणे विरिञ्चे जाग्रति पर्याप्तकारणत्वमस्य कथमिति तत्राह। यन्नाभीति। विरिञ्चस्य कारणत्वं तर्हि कथमिति तत्राह। यत इति। यतोविरिञ्चाल्लोको देवलोकोऽभूदिति शेषः॥ १॥

आदित्वं स्पष्टयति। भूरिति। आत्मन आकाशः सम्भूत इति श्रुतिः आदिर्भूतादिरहङ्कारः अजा च आदिश्च अजादिः प्रकृत्याख्यकारणमित्यर्थः। न केवलमस्य समस्ताचेतनहेतुत्वं किन्तु चेतनराशेरित्याशयेन वाह। अजादिरिति। ब्रह्मादिचेतनसंघ अजादिः ये सर्वे अजादयो जगतो हेतवो यथायोग्यं कारणानि ते सर्वे तवाङ्गभूता अङ्गेभ्यो जाताः पद्भ्यां भूमिरितिश्रुतेः॥ २॥

त्वदङ्गजातायविज्ञानमाहात्म्यं मत्येन मया न ज्ञायत इति किंच कत्यमित्याशयेनाह अवेदने निमित्तमाह। अन्येति। अन्यात्मतया गृहीताः एते जीवात्मानो मत्तोऽन्ये इति भगवता गृहीताः ईश्वरो भ्रान्तत्वात्तथा गृह्णातीतिचेन्न अहं परो हि मद्भिन्ना जीवात्मानोऽल्पशक्तय इत्यादेः नहीश्वरस्य सर्वज्ञस्य भ्रान्तिरुपपद्यते नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते इतिश्रुतेः ये तवाङ्गेभ्यो जातास्त एव अजादयः आत्मनस्तव स्वरूपं न विदुरित्यन्वयः अजो ब्रह्मा आदिर्येषां रुद्रादीनां ते अजादय इति तद्गुणसंविज्ञानबहुव्रीहौ ब्रह्मणोऽप्यज्ञानमापद्यते वेदाहमेतं पुरुषमिति श्रुत्या तद्विज्ञानप्रतीतेरतो ब्रह्मकारणका रुद्रादयो न विदुरित्यर्थः। किन्नस्यादित्यत आह। अज इति। अजाया गुणैर्बद्ध इति हेतुगर्भं विशेषणं गुणात्परं दूरीभूतम् अजादय इत्यत्र अजाशब्देन चित्प्रकृतिरपि ग्राह्या तस्या अपि सर्वात्मना तद्विषयज्ञानाभावात् तदुक्तं यथा हरिः स्वमात्मानं वेद तद्वद्रमापिचेत्यादि अनेन दाहमित्यस्यापि गतिरुक्ता भवति अत ईश्वरस्य दुर्ज्ञेयत्वात्साधनानुष्ठानवैयर्थ्यमित्याशङ्का परास्ता तत्प्रसादेन यथायोग्यज्ञानसम्भवाद्यथाशक्तिस्वाहितमनुष्ठेयम्॥ ३॥

अत्र किम्प्रमाणमित्यतो वृद्धाचार एव प्रमाणमित्याह। त्वामिति अधिष्ठानविशेषमाह। साध्यात्ममिति। आत्मशब्दोक्तनरैः सहततोऽधिकत्वेन वर्तमानं भूतैराकाशादिभिः सह तदुत्तमत्वेन वर्तमानं देवैर्ब्रह्मादिभिः सह ततोऽविशिष्टगुणत्वेन तिष्ठन्तं तत्तदुपासनार्थं तत्तदधिष्ठानेषु तत्तद्गुणप्रवर्तकत्वेन तत्तदुत्तमत्वेन वर्त्तमानमित्यर्थः। तदुक्तं स्थितो ब्रह्मादिदेवेषु खादिभूतेषुचेश्वर इत्यादि॥ ४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यथा कारणवाक्यानां त्वय्येव तात्पर्य्यं तथोपासनावाक्यानामपीत्याह। त्वामिति॥ १-४॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सप्तत्रिंशे तु सन्तुष्टः स्तोत्रं चक्रे मनोहरम्।
चतुर्द्धा ज्ञातमाहात्म्यसिद्धसिद्धान्त ईर्यते॥
स्वरूपेण प्रमाणेन युक्त्या वस्तुस्वरूपतः।
अवतारफलैश्चैव सर्वस्यैव विनिर्णयः॥
राजसे स्तोत्रकर्त्तायं मध्यमो विनिरूप्यते।
उत्तमे नारदो वक्ता वसुदेवादयस्तथा॥
यस्य यस्य यथा भावस्तेन तादृङ्निरूप्यते।
सर्वं शुक्तं भगवति न सर्वः सर्व एव च॥

तत्र प्रथमं स्वरूपं कीर्त्तयन् नमस्करोति। नतोऽस्म्यहमिति। त्वां साक्षादग्रे आविर्भूतं कनिष्ठशङ्का तु नास्त्येव यतोऽखिललोकस्यापि जगतस्त्वं हेतुः अखिलहेतुत्वे उपपत्तिं प्रमाणं चाह नारायणमिति। आदौ ब्रह्माण्डे नारायणादेव सर्वं जातमिति सर्वलोकप्रसिद्धं श्रुतिश्च पुरुषो ह वै नारायणोऽकामयतेति तथा-पुरुषसूक्ते तदर्थमेव पुरुषमित्याह नैतावन्मात्रपरत्वमिति वक्तरि भर्त्तारं तस्यापि मूलभूतमिति वक्तुमव्ययमक्षररूपं निरूपयति अथवा ब्रह्माण्डमध्यस्थितजगत एव कारणत्वेन भगवान् निरूप्यते तादृशमेव रूपं प्रकटितमिति तत्रैवाद्यता व्यष्ट्यपेक्षया मूल-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रूपता अविनाशित्वं च लोके कर्तृत्वमेव येन प्रकारेण तमाह । यन्नाभिजातादिति । यस्य भगवतो नाभेर्जातात् अरविन्दकोशात् कमलमुकुलात् पद्माद्विकसितात् तत्र स्थितो भ्रमर इव आविरासीत् ब्रह्मा यतो ब्रह्मणः सकाशात् एष लोकः सर्वोऽपि प्रपञ्चः ॥ १ ॥

एवं जगत्कारणत्वमुपपाद्य कार्यकारणयोर्वैलक्षण्यसिद्ध्यर्थं भगवतो नित्यमुक्तत्वं जीवानां तत्कृपया तथात्वमिति वक्तुं कार्यभूतप्रपञ्चस्य स्वरूपमाह । भूस्तोयमिति । एतस्य वा मूलभूतत्वख्यापनाय तत्वान्येतस्मादेवोत्पन्नानीत्याह । भूस्तोयमिति । मूलभूतानि चेत् एवं परमिति ज्ञातव्यम् एवं क्रमस्तत्र न विवक्षितः प्रथमपक्षे तु विवक्षित इति गणनार्थं वा स्थूलात् सूक्ष्मे बुद्धिनिवेशनार्थं खान्तानि पञ्चभूतानि आदिरहंकारः महान् महत्तत्त्वम् अजा प्रकृतिः आदिः पुरुषः ततो मनः मनसा पुरुषः सर्वं करोतीत्याधिदैविकमनोविवक्षया व्युत्क्रमेणापि निरूपितं इन्द्रियाणि चकाराद्बुद्धिः प्राणश्च ततः सर्वेन्द्रियार्था गन्धादयः वागादयश्च चकारात् तदवान्तरभेदाः स्त्र्यादयश्च किं बहुना सर्व एव विषयाः घटादयः स्रगादयश्च चकारात्तज्जनितानि सुखादीनि एते हि सर्वे यद्यपि जगतो हेतवः तथापि ते अङ्गाज्जाताः अक्षरात् तस्यैवाङ्गत्वश्रुतेः ब्रह्म पुच्छमित्यादौ अतः कारणात् त्वमेव जगद्धेतुरिति स्वरूपेण माहात्म्यमुक्तम् ॥ २ ॥

प्रमाणेन वक्तव्यमित्याकाङ्क्षायां वेदातिरिक्तं प्रमाणं नास्तीति वक्तुं ब्रह्मादीनामपीदमित्थतया ज्ञानाभावमाह । नैते स्वरूपमिति । अथवा एते तव पुत्राः पौत्रा वा कथं न मुक्ताः यद्येत एवामुक्ताः कथमन्यो मुक्तो भविष्यतीत्याशङ्क्य तेषाममुक्तौ अभिमानादज्ञानञ्च कारणमित्यभिप्रायेणाह । नैते स्वरूपं विदुरिति । अवश्यं ज्ञातव्यमिति बोधनार्थमात्मन इति यद्यपि त्वमात्मा तथापि आत्मत्वेन त्वां न गृहीतवन्त इति अनात्मतया गृहीताः कर्त्तरि क्तः ते वा त्वया कृपया आत्मत्वेन न गृहीता इति अजादयः अक्षरादयः पुरुषादयो वा ते रूपं न विदुः ब्रह्मादयो हि प्रमाणपरा ज्ञास्यन्तीति विज्ञाय तेषामपि ज्ञानाभावमाह । अजोऽनुबद्ध इति । अजो ब्रह्मा अजायाः प्रकृतेः सृष्टिरूपायाः गुणैः कर्तृत्वादिधर्मैः सत्त्वादिभिर्वा अनुबद्धः स्वासक्त्या बद्धोऽपि भगवदिच्छया या पुनस्तैरनुबद्धः अजो गुणात्परं पृथग्भूतं गुणनियामकं वा ते रूपं न वेद न हि गृहे बद्धः गृहादन्यत्र स्थितं परिपश्यति अतः परिच्छिन्नमेव मन्यते तस्मान्न मोक्ष इति यदि तेऽपि न जानन्ति कथमन्यो ज्ञास्यतीति अतो यः कश्चनैवं भविष्यति स न ज्ञास्यति यः पुनस्त्वत्कृपया ज्ञास्यति स एव कृतार्थो भविष्यतीति नालौकिकं किञ्चित् ॥ ३ ॥

तर्हि कथं ज्ञानोपाय इति चेत्तत्रोच्यते अज्ञात्वापि यथारुचि शास्त्रानुसारेण भगवान् सेव्यः ततो ज्ञापयिष्यतीत्यभिप्रेत्य सर्व एव त्वां स्वाधिकारानुसारेण तत्तद्रूपं सेवन्त इत्याह । त्वां योगिन इति षड्भिः सप्तभिर्वा । विशेषसामान्यप्रकारेण तत्रादौ योगिनः सर्वोपेक्षिणः मोक्षपरा इति तान्गणयति यद्यपि योगे चित्तवृत्तिनिरोधे आत्मस्फूर्त्तिः फलमिति ध्यानार्थमेव भगवद्रूपमिति न ते भगवदुपासकाः तथाप्यसङ्गत्वेनेश्वरप्रणिधानमुक्तं शास्त्रं वा नापेक्षत इति विरुद्धांशोऽत्र त्यक्तव्य इति योगिनोऽपि त्वामेव यजन्ति अथ वा साक्षात्ते शान्तरूपासकाः अतो वेदादिभिर्न व्यवहिताः तेषां मते पुरुष ईश्वरः साकारः सर्वजीवविलक्षणः अस्तीति नास्त्यत्र सांख्ययोगयोरीश्वरस्य साकारत्वं निराकारत्वं च स्थापितं तदाह । महापुरुषमीश्वरमिति । अन्तर्बहिर्नियामकं च साधवः पुनः सदाचाराः स्मार्त्तधर्मपराः भगवन्तमाश्रयरूपं मन्यमानाः आध्यात्मिकादिभेदत्रयं तदधीनमेवेति त्रितयसहित एव भगवानित्याहुः॥ साध्यात्ममध्यात्मसहितमेवमधिदैवसहितमिति अन्यथा कर्मणा बन्ध एव स्यात् एवं सति कर्त्ता प्रेरकश्च भगवदधीन इति नापराधस्तस्य भवति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

चत्वारिंशे श्वफल्केयः तुष्टाव विविधा ब्रुवन् ।
उपासना उपास्यांश्च गान्दिनीनन्दनो नमन् ॥

अखिलानां हेतुर्ब्रह्मा तस्यापि हेतुं पुरुषमिति पुरुषाकारत्वमेव सर्वहेतुहेतुत्वमाद्यमव्ययमित्यनादिनिधनत्वं सर्वहेतुहेतुत्वं विवृणोति । यन्नाभीति ॥ १ ॥

किञ्च पृथिव्यादयः पदार्थास्तव पुरुषाकारस्यास्य चिदानन्दमयस्यैवाङ्गानां विभूतय इत्याह भूरिति। आदिरहंकारः अजादिः प्रधानजीवकालकर्मादिवस्तुमात्रम् एते ये जगतो हेतवस्ते सर्वे तव अङ्गभूताः अङ्गात् श्रीमूर्त्तेर्भूता जाताः यदुक्तम् वाचां वह्नेर्मुखं क्षेत्रमित्यादि ॥ २ ॥

एते त्वत्तो जाता एव केवलं न तु त्वां जानन्तीत्याह । नैते इति । एते अजा आदिर्येषां ते आत्मनः परमात्मनस्ते स्वरूपं न विदुः कुतः जडत्वेन जाड्येन गृहीताः ग्रस्ता इत्यर्थः । ननु जडा मां न जानन्तु चेतनो जीवस्तु ज्ञास्यतीत्यत आह । अजो ब्रह्मापि भवन् जीवो न वेद कुतः अजाया गुणैरनुबद्धः आवृतः गुणातीतं ते स्वरूपं न वेद ॥ ३ ॥

किञ्च यद्यपि त्वां न वेद तथापि सर्वफलप्रदातृत्वं एव फलप्राप्तिमन्तोऽपि नानोपास्यानुपासीना अपि लोका वस्तुतस्त्वामेवोपासते इति ब्रुवन् सांख्यमार्गे योगमार्गे च प्रथममाह । त्वां योगिन इति । अध्यात्माधिभूताधिदैवसाक्षिणं महापुरुषमन्तर्यामिस्वरूपमीश्वरं च यजन्ति ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गिरा गद्गदयास्तौषीदिति निर्दिष्टामक्रूरकृतां भगवत्स्तुतिमवस्थादिदो प्रपञ्च्यते । अक्रूर उवाचेति । तत्रादौ सर्वकारणकारणत्वादिना श्रीकृष्णं प्रणमति । नतोऽस्मीति । त्वा त्वां श्रीकृष्णमहं नतोऽस्मीति । नमनीयत्वे हेतुं दर्शयितुं तमेव विशिनष्टि । अखिलहेतूनां प्रकृतिपुरुषकालादीनां हेतुं निःसमातिशयं सर्ववेदैकवेद्यं मुख्यं विश्वकारणमित्यर्थः । "प्रधानक्षेत्रज्ञपतिर्गुणेशः ज्ञः कालकालो गुणी सर्वविद्यः यः कारणं करणाधिपाधिपः कृष्ण एव परो देवः न तत्समश्चाभ्यधिकश्च दृश्यते सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतेः "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । येदैश्च

**त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः ।**
**यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वैरहमेव वेद्य" इति स्मृतेश्च ननु सर्वकारणकारणत्वे विकारित्वप्रसङ्ग इत्यत आह । अव्ययमिति । निर्विकारस्वरूपमित्यर्थः । त्वच्छक्तिविक्षेपतस्त्वत्परिणामः संसार इति भावः । महत्स्रष्टाण्डस्थः सर्वभूतस्थश्च त्वमेवासीत्याह । नारायणं पुरुषमाद्यमिति । नारायणमण्डस्थम् आद्यं महत्स्रष्टारम् पूरुषं सर्वभूतस्थम् व्यष्टिसमष्टिहेतोश्चतुर्मुखस्य हेतुरण्डस्थस्वमूर्तिद्वारा त्वमिति दर्शयति । यस्य नारायणस्य नाभिजादरविन्दकोशात् य एष व्यष्टिरूपो लोको जात इति शेषः स ब्रह्मा आविरासीत् अण्डस्थनारायणस्य श्रीकृष्णमूर्तित्वं "नारायणोऽङ्गं नरभूजलायना"दित्यत्रोपपादितमेव "स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि अग्रे गुणेभ्य" इत्यत्र श्रीकृष्णस्य सर्वपूर्वत्वं चोक्तमेव ॥ १ ॥

अथ समष्टिव्यष्टिहेतूनां हेतुस्त्वामिति दर्शयितुं भगवतः सर्वात्मत्वमाह । भूरिति । अजा प्रकृतिः शक्तिः आदिः नित्यस्वरूपः पुरुषो जीवः "प्रकृतिं पुरुषश्चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास सम्प्राप्ते सर्गकालेऽव्ययाव्यया" विति स्मृतिप्रसिद्धौ प्रकृतिपुरुषौ तयोरनाद्यनन्तत्वे गुणक्षोभेण प्रकृतेः पुरुषस्य तु ज्ञानविकाशेन कार्यत्वम् तत्कार्यं महान् तत्कार्यमादिः भूतेन्द्रियादिमयसर्वहेतुरहङ्कारः तत्कार्यङ्खम् तत्कार्यं पवनः तत्कार्यमग्निः तत्कार्यं तोयम् तत्कार्यम्भूः सर्वेन्द्रियार्थाः स्वादिगुणाः शब्दादयः दशेन्द्रियाणि श्रोत्रादीनि राजसाहङ्कारकार्य्याणि मनो विबुधाश्च दिगादयः सात्त्विकाहङ्कारस्य कार्य्याणि एते सर्वे जगतो हेतवः येऽन्ये कालादयस्ते च सर्वे तव श्रीकृष्णस्य अङ्गभूताः त्वं सर्वेषामङ्गीत्यर्थः । प्रकृत्याद्यचेतनवर्गस्तव शक्तिः चेतनवर्गस्तवांशो ऽतः सर्वात्मा त्वमसीति भावः ॥ २ ॥

एवं भोक्ता "भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेत" दिति श्रुतिप्रोक्तानां भोक्तृभोग्यनियन्तॄणां मध्ये नियन्तुर्ब्रह्मणः सर्वकारणत्वं सर्वात्मत्वं भोक्तृभोग्ययोस्तत्कार्यत्वम् तदात्मकत्वं चोक्तमथ भोग्यस्य जडत्वं परवेद्यत्वं भोक्तुश्चेतनत्वं गुणावृतत्वं कथञ्चित्स्ववेद्यत्वं परिच्छिन्नत्वं नियन्तृस्वरूपेयात्तनभिज्ञत्वं नियन्तुश्च सर्वकारणकारणत्वसर्वज्ञत्वसर्वात्मत्वादिस्वाभाविकगुणनिधेः प्राकृतगुणवर्जितत्वमियत्तानवच्छिन्नत्वं वर्णयति । नैते इति । एते अजादयः प्रकृतिमहदहंकारादयः आत्मनः स्वस्य स्वरूपं न विदुः हि यतस्ते प्रकृत्यादयः अनात्मतया आत्मा चेतनस्तद्भिन्नोऽनात्मा अचेतनः पदार्थः तस्य भावस्तत्ता तया जडत्वेन गृहीताः नहि जडः स्वमन्यम्वा जानाति अजो ब्रह्मादिरूपो जीवः अजो ह्येको जुषमाणोऽनुशेते' इति श्रुतेः अजायाः प्रकृतेर्गुणैरनुबद्धः अर्थात्परिच्छिन्नस्वरूपः अनात्मतया गृहीता इत्यनेनैव जडविलक्षणः चेतन इत्यर्थः । अतः आत्मानं भोक्तारमात्मात्मतया गृहीतं भोग्यवर्गञ्च जानाति ते तवापरिच्छिन्नस्य ब्रह्मणः स्वरूपं स्वकीयं स्वासाधारणस्वरूपं "हिरण्मयः पुरुषः हिरण्यकेश" इत्यादिश्रुतिप्रोक्तं विग्रहलक्षणम्वा कथम्भूतं गुणादिति जातावेकवचनं गुणेभ्यः परस्मिलक्षणमनावृतम् न वेद एवं भूतं ते स्वासाधारणं रूपं ब्रह्मादयोऽपि न जानन्ति यदा तदाहङ्कृतो जानीयामतः केवलं नतोऽस्मीति त्रयाणां श्लोकानां फलितोऽर्थः । एवमेव "देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यञ्च विदुः परं यत् । सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे" इत्युक्तं हंसगुह्ये ॥ ३ ॥

ननु तर्हि "ब्रह्मविदाप्नोति पर" मित्यादिवाक्यानि ज्ञानान्मुक्तिमाहुस्तदभावे कथम्मुक्तिः स्यान्मुमुक्षोरज्ञेयत्त्वाज्ज्ञानाभावेऽपि यथाशास्त्रं त्वां ज्ञात्वा भजतो मुक्तिः स्यादेवेत्याशयेन ब्रह्मोपासनां तदंशोपासनाञ्चाधिकारिवाहुल्यत आह । त्वां योगिन इत्यादिना । योगिनः कर्मज्ञानभक्तियोगयुक्ताः औपनिषदाः अद्धा स्फुटमेव महापुरुषमनल्पं पुरुषं "भूमा त्वेव विजिज्ञासितव्य" इत्येवं भूमविद्याप्रसिद्धं भूमानं त्वामेव यजन्ति उपासते तथा साधवो मुमुक्षवः तत्प्रकरणप्रसिद्धा औपनिषदा ईश्वरं नियन्तारम् "एष सर्वेश्वरः सर्वाधिपति"रित्यादिश्रुतिप्रसिद्धम् तथा "य एषोऽन्तरादित्ये हिरण्यमयः पुरुषो दृश्यते" इत्याद्युपक्रम्य इत्यधिदैवतम् अथाध्यात्मं "य एषोऽन्तराक्षिणि पुरुषो दृश्यते" इत्येवं छान्दोग्यादिषु प्रसिद्धं साधिदैवम् सूर्याधिष्ठितस्वरूपसहितम् साध्यात्मम् चक्षुरधिष्ठितस्वरूपसहितम् साधिभूतं तत्तद्भूतस्थस्वरूपसहितम् त्वामेव यजन्ति साहित्यमत्र तत्तत्स्थानगतस्वरूपद्वारा सर्वात्मानं सर्वस्वरूपं त्वामेवोपासते इत्यभिप्रायः उपलक्षणमेतदन्यासां वेदान्तोक्तोपासनानां तास्तु वेदान्तकौस्तुभादौ द्रष्टव्याः ॥ ४ ॥

---

भाषा टीका ।

अक्रूरजी स्तुति करते हैं कि हे प्रभो ! आपको मैं नमस्कार कर्ता हूं आप आद्य पुरुष हौ अव्यय हौ सब संसार के हेतुओं के भी हेतु हौ और नारायण हौ जिन आपके नाभि कमल से उत्पन्न भये कमल से ब्रह्मा उत्पन्न भये हैं जिन ब्रह्मा से यह सब लोक पैदा भये हैं ॥ १ ॥

पृथिवी जल अग्नि पवन आकाश अहंकार महत्तत्त्व प्रकृति पुरुष मन इन्द्रिय और सब इन्द्रियों के विषय तथा सब देवता जो कोई जगत् के हेतु हैं सो सब आपके अंग से पैदा भये हैं ॥ २ ॥

आप इनके आत्मा हौ ये सब आपके स्वरूप को नहीं जानते हैं जो कि ये सब ब्रह्मादिक हैं सोभी मायाके गुणोंसे बद्ध होने से गुणोंसे परे वर्तमान आपके स्वरूपको नहीं जानते हैं ॥ ३ ॥

साधु योगी लोग आपको साक्षात् महापुरुष ईश्वर जान कर अध्यात्म अधिभूत अधिदैव के सहित आपके स्वरूप का यजन करते हैं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं सांख्ययोगावेकीकृत्योक्तौ त्रयीमार्गं कर्मज्ञानभेदेन दर्श-

१एके त्वाखिलकर्माणि सन्न्यस्योपशमं गताः । १केचित्त्वेति-वीरराघव पाठः
ज्ञानिनो ज्ञानयज्ञेन यजन्ति ज्ञानविग्रहम् ॥ ६ ॥
अन्ये च संस्कृतात्मानो विधिनाभिहितेन ते ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्त्येकमूर्त्तिकम् ॥ ७ ॥
त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन् ! समुपासते ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

यति । त्रय्या चेति श्लोकद्वयेन । वैतानिकाः कर्मयोगिनस्त्वां वै त्वामेव यजन्ते ननु ते इन्द्रवरुणवाय्वादीन् यजन्ते नतु मामित्यत आह । नाना वज्रहस्तादीनि रूपाणि येषां ते येऽमरास्तेषामाख्यया नाम्ना त्वामेव यजन्त इति अयं भावः ऐन्द्रवारुणादिसूक्तैरिन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते नच सर्वेश्वरा बभूवुः सम्भवन्त्यतो नामभेदेन त्वामेव यजन्त इति तथाच श्रुतिः "सप्रथमः सप्रकृतिर्विश्वकर्मा स प्रथमो मित्रावरुणो ऽग्निः सप्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय हविराजुहोती" ति ॥ ५ ॥

ज्ञानयज्ञेन समाधिना ॥ ६ ॥

सांख्ययोगत्रयीमार्गा उक्ता वैष्णवशैवमार्गावाह द्वयेन । अन्ये चेति । संस्कृतात्मानो वैष्णवशैवदीक्षिताः सन्तस्ते त्वयाभिहितेन पञ्चरात्रादिविधिना त्वन्मयास्त्वन्मयत्वेनात्मानं चिन्तयन्तस्त्वदेकप्रधाना इति वा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धभेदेन बहुमूर्तिं नारायणरूपेणैकमूर्तिकञ्च त्वामेव यजन्ति ॥ ७ ॥

बह्वाचार्यविभेदेनेति । नानाभेदशैवपाशुपतादिमार्गेण ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्रय्येति तैर्व्याख्यातं यद्वा त्रय्या कर्मकाण्डमय्या "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" इत्यादेः चकारेण गौणत्वं व्यज्यात्रासाक्षात्त्वं व्यनक्ति विततैर्बहुधा विस्तारितैः ॥ ५ ॥

एके ततः श्रेष्ठाः ब्रह्मकाण्डविद उपशमं धैर्यं गताः अतो ज्ञानिनो निर्णीतपरमार्थाः सन्तः ज्ञानविग्रहं चिन्मात्राकारं ब्रह्माख्यं चिद्घनमूर्त्तिं भगवदाख्यं वा श्लोकद्वयेन वेदमार्ग उक्तः ॥ ६ ॥

अन्ये चेति । चकारात् पूर्वसाम्यं बोधयति । ते त्वयाभिहितेनोक्तेन इति पञ्चरात्रस्य परमप्रामाण्यं तेन सर्वतो मान्यत्वं चोक्तं तथैव दर्शयिष्यते मोक्षधर्मवाक्येन अतएव संस्कृतात्मानः शैवादिदीक्षितानतिक्रम्य गुणविशेषयुक्तचित्ताः अत एव त्वन्मयास्त्वत्प्रचुराः सदा बहिरन्तश्च त्वत्स्फूर्त्तिमन्त इत्यर्थः । बहव्यो वासुदेवादयो मत्स्यादयश्च मूर्त्तयो यस्य एका परमव्योमाधिपमहानारायणरूपा मूर्त्तिर्यस्य तञ्च तं च यद्वा बहुमूर्त्तिकमप्येकमूर्त्तिकमिति तत्तन्मूर्त्तीनां नानात्वेऽप्येकत्वमभिप्रेतम् ॥ ७ ॥

त्वामेवेत्येवशब्देन पूर्वतो न्यूनत्वं बोधयति राजैवायं युवराज इतिवत् अत्र भगवन्तमुपासत इति भगवान् समुपागत इति पाठद्वयम् ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैतानिकाः यज्ञपराः ॥ ५ ॥

अखिलकर्माणि काम्यानि यद्वा यज्ञादिकर्माणि संन्यस्य त्वयि समर्प्य संन्यासशब्दः समर्पणवाची नतु परित्यागवाची

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥

इतिप्रयोगात् नहि सर्वाणि कर्माणि हित्वा युध्यस्वेत्युच्यते ॥ ६ ॥

अन्ये भगवच्छास्त्रनिष्ठाः बहुमूर्त्त्येकमूर्त्तिकं व्यूहचतुष्टयवन्तं परवासुदेवं चेत्यर्थः ॥ ७ ॥

शिवरूपिणं शिवाख्यदेवतान्तर्यामिणं नतु शैवागमाभिप्रायकथनं तच्छास्त्रसिद्धिप्रदानानि वा ॥ ८—११ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कर्मणामपि तदाराधनात्मकानां द्वैविध्यमभिप्रयन् तावत्साक्षात्कर्माराध्यत्वमाह । त्रय्या चेति । केचिद्वैतानिकाः कर्मयोगिनो द्विजाः नानारूपामराः नाना विधत्वच्छरीरभूता इन्द्रादयो देवास्तेषामाख्या नामानि यस्यां तया त्रय्या विद्यया वेदत्र्यंशभागात्मिकया विद्यया बोधितैर्विविधैर्यज्ञैस्त्वां यजन्ते इन्द्रादिदेवतान्तरात्मानं तच्छारीरकं त्वामाराधयन्तीत्यर्थः । यद्वा नानाविधानि रूपाणि वज्रहस्तत्वादीनि येषां तेषामिन्द्रादीनामाख्या अभिधेयमितिशेषः । आकृत्यधिकरणन्यायेन इन्द्राद्यन्तरात्मभूतत्वत्पर्यन्ताभिधायिभिरिन्द्रादिनामभिरभिधेयं तत्तच्छरीरकं त्वां यजन्तीत्यर्थः । सिंहावलोकितन्यायेन पुनः साक्षाज्ज्ञानयोगायिशेषाराध्यमाह । केचित्त्वेति केचित् त्वा इतिच्छेदः त्वा त्वां यजन्तीति सम्बन्धः केचित्तु ज्ञानिनः भगवच्छेषतैकरसात्मयाथात्म्यज्ञानिनः भगवच्छेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च भगवांस्त्वसंख्येयैः कल्याणगुणैः परतरः इत्येवं विधज्ञानवन्त इत्यर्थः । अखिलकर्माणि तदुक्तविधस्वरूपविरुद्धान्यहङ्कारममकारगर्भाणि काम्यकर्माणि

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्यक्त्वा यद्वा मयि सर्वाणि कर्माणीत्युक्तरीत्या क्रियमाणानां नित्यनैमित्तिकादीनां फलसाधनताकारपरित्यागपूर्वकं भगवदाराधनरूपतामनुसन्धायेत्यर्थः । इदमेव हि भगवति कर्मणां यत्कैङ्कर्यरूपत्वानुसन्धानमिति उपशमं शब्दादिविषयेषु भोग्यताबुद्धिराहित्यं गताः प्राप्ताः ज्ञानयज्ञेन प्राप्यं प्रापकं चान्यदपि यन्मनोरथविषयभूतं तत्सर्वं परमपुरुष एवेत्येवं विधज्ञानयोगेन ज्ञानस्वरूपं त्वां यजन्ति यद्वा ज्ञानविग्रहम् एवम्विधज्ञानेन यजतामनिष्टपरिहारेष्टप्रापणोपयुक्तज्ञानाश्रयं त्वां यजन्तीत्यर्थः ॥ ६ ॥

अथाद्वारककर्माराध्यमाह । अन्ये चेति । ते त्वयाभिहितेन विधिना पञ्चरात्रात्मकेन त्वदुक्तश्रीमत्पञ्चरात्रोक्तप्रकारेणेत्यर्थः । संस्कृतात्मानस्तापादिभिः पञ्चभिः संस्कारैः संस्कृता आत्मानो देहा येषां तथाभूताः त्वन्मयास्त्वज्ज्ञानप्रचुरा अन्ये भगवच्छास्त्रनिष्ठाः साक्षात्त्वामेव व्यूहविभवरूपेण बहुमूर्त्तिकम् पररूपेणैकमूर्त्तिकम् च यजन्ति पाञ्चकालिकैर्धर्म्मैराराधयन्ति ॥ ७ ॥

अथ—

> येऽप्यन्यदेवता भक्तायजन्ते श्रद्धयान्विताः ।
> तेऽपि मामेव कौन्तेय।यजन्त्याविधिपूर्वकम् ॥

इत्युक्तरीत्यातत्तद्देवतामात्रपर्य्यन्तावासितबुद्धिमत्कृतयजनस्य तत्तद्देवताशरीरकततदन्तरात्मभूतपरमपुरुषाराधनरूपेणाकृततदाराधनतां वक्तुं तावत्प्रदर्शनार्थमाह । त्वामेवान्य इति । हे भगवन् बहूनामाचार्य्याणां कापालिककालामुखशैवपाशुपतादिरूपाणां भेदः आचारभेदो यस्मिन् तेन शिवोपदिष्टेन मार्गेण शैवाद्यागमोक्तप्रकारेण त्वामेव शिवरूपिणमुपासते उपासकानां तद्बुद्ध्यभावेप्युपासना तत्रैव पर्य्यवस्यत्येव किन्तु तदुपासनमविधिपूर्वकमत एवान्तवत्फलसाधनमिति भावः ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

योगिनो यजन्त्यद्धेति विशेषणात्केचिदन्यथा यजन्तीति ध्वनितमर्थमाह । त्रय्येति । त्रय्या विद्यया कर्मप्रधानप्रकाशिकया वैतानिकाः याज्ञिकाः यज्ञकर्मशीला इत्यर्थः

> अग्नीवितानमुल्लोचे विस्ताराध्वरयोः क्षणे ।
> त्रिषु शून्ये च मन्दे च विषाण्वुत्वेषु सूरिष्विति ॥

उक्तविशेषणैरयमर्थो विज्ञायत इत्याह । विततैरिति । विस्तृतैः इन्द्रंयजाग्निं यजेत्यादि बहुदैवत्य कर्मणामेकविषयत्वं कथं सङ्गच्छत इत्यत्राह नाना रूपेति नानाविधानि शुक्लादिरूपाणि सौन्दर्याणि वा स्वभावा वा यशांसि वा येषां ते नानारूपाः ते चामरा देवाः नानारूपामराः तेषामाख्यया विशिष्टं विष्णुमिति शेषः सर्वदेवेष्वपि हरिः सर्वदेवनियामक इत्यादिवचनबाहुल्यादुपगन्तव्यं विष्णोः सर्वनामत्वम् अमरेति विशेषणेन वेदस्य वाच्याभावेनाप्रामाण्यं स्यादिति शङ्का निरस्ता इदञ्च विष्णावेव मुख्यमिति ॥ ५ ॥

प्रवृत्तिमार्गविहितोपासनाप्रकारमुक्त्वा ऽधुना निवृत्तिमार्गविषयोपास्तिविधानमाह । एक इति । तुशब्देन एषां मुख्यत्वं दर्शयति । उपशमं भगवन्निष्ठाम् ॥ ६ ॥

वैदिकमतमुक्त्वा तान्त्रिकमतमाह । अन्ये त्विति । अन्ये पाञ्चरात्रिकाः तुशब्देन तत्रापि बाहुविध्यमस्तीति सूचयति संस्कृतात्मानः शिक्षितबुद्धयः सम्प्रदायागतप्रज्ञा वा शुद्धदेहा वा विहितेन विधिना पञ्चधा कथितेन कालेन वा पञ्चकालपरायणैरिति वचनात् विधौ तु दैवकालो चेति च त्वमेव मयः सर्वोत्तम इति बुद्धियैंपान्ते तथा बहुमूर्त्या वै बहुरूपेणच भक्तानुग्रहार्थं बहुत्वग्रहणं निजमेकमेवेत्याह । एकमूर्तिकमिति । व्यष्ट्या समष्ट्या च त्वामेव यजन्तीत्यर्थः ॥ ७ ॥

ननु शैवागमेषु शिवस्य यष्टव्यत्वेनोक्तत्वात्सर्वे त्वामेव यजन्तीति कथं युज्यत इति तत्राह । त्वामेवेति । शिवरूपिणं पुरुषार्थमूर्तिं शिवे रुद्रे रूपं नियामकमस्यास्तीति शिवान्तर्यामिणमित्यर्थः । दधीच्यादिबह्वाचार्यविभेदेन शैवपाशुपताद्युपदेष्टृ भेदेन वा ॥ ८ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

त्रय्या कर्मकाण्डमय्या ॥ ५ ॥

एके ब्रह्मकाण्डविदः ज्ञानविग्रहं चिन्मात्राकारं ब्रह्माख्यं चिद्घनमूर्त्तिं भगवदाख्यं वा श्लोकद्वयेन वेदमार्ग उक्तः ॥ ६ ॥

संस्कृतात्मानः पाञ्चरात्रिकदीक्षया पाशुपतादिदीक्षामतिक्रम्य गुणविशेषयुक्तचित्ताः त्वामेवेत्येवकारेण न्यूनं बोधयति राजैव युवराज इतिवत् ॥ ७ ॥ ८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमपेक्षिततमान्तरबाह्यधर्मपरान् स्मार्त्तान्निरूप्य श्रौतान्निरूपयति । त्रय्येति । श्रुतौ पक्षत्रयं काण्डत्रयभेदात् तत्र कर्ममार्गे त्रयीप्रधानम् उपनिषदो ज्ञानमार्गे उपासनायां तु प्रणवादिमन्त्राः तत्क्रमेण त्रयमाह सर्वेषामेव भगवज्ज्ञानोपयोग इत्यवोचाम मन्त्रभेदेन वेदानां त्रैविध्यम् ऋचः सामानि यजूंषीति तदुपयोगि ब्राह्मणं च बाह्यक्रिया वा यजुषा क्रियते आन्तरी साक्षाद्देवतायै द्रव्यसमर्पणारूपा ऋचा क्रियते ततो देवतायाः फलदानार्थं हविर्ग्रहणार्थं च साम्ना स्तूयते एवम्प्रकारेण वैतानिकाः यज्ञवितानपराः यज्ञस्वरूपं त्वां विस्तीर्णैः सहस्रसंवत्सरान्तैर्नानाविधैर्यज्ञैर्यजन्ते इति सर्वत्र सम्बन्धः चकारादङ्गोपाङ्गादिभिः सह ज्ञानेनापि सहेति केचित् । द्विजा इति जन्मकर्मावदाताः श्रोत्रियाः न तु सर्वेषां तत्राधिकार इति ननु तत्रेन्द्रादय एवेज्यन्ते न तु भगवानित्यभिप्रेत्याह । नानारूपेति । नानाविधानि रूपाणि येषाममराणामिन्द्रादीनां तेषामाख्यया आधिदैविकत्वात् भगवत एवं नामेति वा तेषामेवाख्यया भगवानेवेज्यते वस्तुतस्तु अङ्गप्रायास्ते यथा राज्ञः मुकुटोष्णीषादिनिर्माता सेवक एव भवति यद्यपि शिरसि एव परिचर्यां करोति एवं कर्णादिष्वपि तथापि राजसेवक एवोच्यते न त्वङ्गसेवक इति तथा प्रकृतेऽपि इन्द्रादयो बाहव इत्यादिभिरङ्गत्वश्रुतेः अतो भगवानेवेज्यते ॥ ५ ॥

एकेति । अन्ये पुनः सर्वकर्माणि त्यक्त्वा उपशमं गताः चित्तस्य परमां शान्तिं प्राप्य ज्ञानिनो भूत्वा ब्रह्मात्मत्वस्फूर्त्तिकाः आत्मयाजिनो भूत्वा ज्ञानरूपमेव यज्ञं कुर्वन्तः ज्ञानयज्ञो नाम आत्मानमेव चिपद्रूपं यज्ञरूपेण कल्पयित्वा भगवते समर्पयन्ति भगवत्प्रीतिसाधकत्वाज्ज्ञानमेव यज्ञशब्देनोच्यत

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अथवा जरामर्यादिप्रकाराः ज्ञानयज्ञास्तत्र इज्यापि ज्ञानरूपा एवेत्याह । ज्ञानविग्रहमिति उडुलोमिवत् ॥ ६ ॥

उपासकानाह । अन्ये चेति । ते हि स्वात्मानं भगवन्तं च भिन्नमभिन्नं च मन्यन्ते नारुद्रो रुद्रमर्चयेदित्यादिवाक्यैः अत आह अन्ये भिन्नाश्चकारादभिन्ना अपि संस्कृतात्मानः दीक्षादिभिः शोधितसङ्घाताः गुणा अभिहितेन मार्गेण ते प्रसिद्धाः तत्तत्प्रकारेणैव तत्तद्देवतामन्त्रोपासकाः ततस्तन्मया भूत्वा उपास्यदेवतया व्याप्तस्वरूपा भूत्वा त्वामेव वै निश्चयेन नात्र तिरोहितमिव बहुमूर्त्या मत्स्यकूर्मादिरूपैः एकमूर्तिम् एकस्य एमेव यजन्ति सर्वे हि विष्णूपासका इति अत्र शैवादयोऽपि भगवन्निष्ठा एवेति ज्ञातव्याः उपासनायां हि मन्त्र एव प्रधानं स मन्त्ररूपः यज्ञवेदक एव इन्द्रादिवत्तत्तदभिमानिन्यो देवता इति ततः एकविधैः अनेकविधैर्वा मन्त्रैः उपासनामार्गसिद्धो भगवानेक एवोपास्यते क्षुद्रोपासकांश्चाग्रे वक्ष्यते भिन्नप्रकारसिद्धांश्च ॥ ७ ॥

किं च शिवरूपोऽपि त्वमेवेति शैवा अपि त्वामेवोपासत इत्याह । त्वामेवेति । अन्य उपासकेभ्यो भिन्नाः शिवशास्त्रानुसारिणः तामसे कल्पे शिवरूपेण विष्णुः तिष्ठतीति शैवास्तमेव पक्षमाश्रित्य स्वभावरुच्या तथोपासते शिवोक्तो मार्गः शैवपञ्चरात्रे पाशुपतादौ च प्रसिद्धः तत्र शिव [illegible] विष्णुरेव केचि[illegible]वेशिनमाहुः । तत्र बहवश्चाचार्याः महापाशुपतपाशुपतादिभेदभिन्नाः भगवन्निति संबोधनात् यदा वैराग्यगुणप्राधान्येन कार्यं करोषि तदा शिवरूपो भवसीति ज्ञापितं सम्यगेवोपासत इति ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्ममार्गमाह । त्रय्या चेति द्वाभ्याम् । वैतानिकाः कर्मयोगिनः त्वां वै त्वामेव यजन्ते ननु ते इन्द्रवरुणादीन् यजन्ते ननु मामित्यत आह । नाना वज्रहस्तादीनि रूपाणि येषां ते ये अमरास्तेषामाख्यया नाम्ना त्वामेव यजन्ते अयं भावः ऐन्द्रवारुणादिसूक्तैरिन्द्रादयः सर्वैश्वर्येण प्रकाश्यन्ते नच सर्वेश्वरा बहवः सम्भवन्ति तस्मान्नामभेदेन त्वामेव यजन्त इति तथाच श्रुतिः "स प्रथमः स प्रकृतिः विश्वकर्मा प्रथमो मित्रावरुणोऽग्निः स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय हविराजुहोती"ति ॥ ५ ॥

ज्ञानमार्गमाह । एके इति । ज्ञानयज्ञेन समाधिना ज्ञानविग्रहं ज्ञानस्वरूपं यद्वा ज्ञानस्यैव विशेषतो ग्रहो ग्रहणमास्वादनं यतस्तत् ब्रह्मेत्यर्थः ॥ ६ ॥

वैष्णवमार्गमाह । अन्ये इति । संस्कृतात्मान इत्येतदन्योपासका असंस्कृतमनस इति लभ्यते विधिना पञ्चरात्रदर्शनेन त्वयाभिहितेनेति "पञ्चरात्रस्य सर्वस्य वक्ता तु भगवान् स्वय" मिति स्मृतेस्तस्य परमप्रामाण्यात् सर्वतो मान्यत्वं द्योतितम् अन्तर्बहिस्त्वदीयस्फूर्त्तिमत्त्वात् त्वन्मयाः बहुमूर्त्तिकमप्येकमूर्त्तिकमिति तन्मूर्त्तीनां चिन्मयीनां नानात्वेऽप्यैक्यमभिप्रेतम् "एको वशी सर्वगः कृष्ण ईड्यः एकोऽपि सन् बहुधा योऽवभाती"ति श्रुतेः ॥ ७ ॥

शैवमार्गमाह । त्वामेवेत्येवकारः पूर्वतो न्यूनत्वं बोधयति राजैवायं युवराज इतिवत् बह्वाचार्यविभेदेन शैवपाशुपतादिनानारूपेण भगवन्तमुपासते भगवान् समुपासते इति पाठद्वयम् ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं नानोपासनया वेदान्तिनस्त्वामेवाराधयन्तीत्युक्तमथ ब्रह्मांशोपासना दर्शयति । तत्र मीमांसका अपि गोपदगतगङ्गोदकन्यायेन तदंशभूतेन्द्रादियजनपराः इन्द्रादिद्वारा त्वामेवाराधयन्तीत्याह । त्रय्येति । वैतानिकाः इन्द्रादियजनरूपकर्मविज्ञानपराः त्वामेव यजन्ते "न ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यादि श्रुतिभ्यः इन्द्रादयो जीवाः स्वरूपतो नामतश्चेश्वराद्भिन्ना एवातस्ते इन्द्रादियजनपराः मां कथं यजन्ते इत्यत आह । नानारूपामराख्यया । नानारूपाणां पृथक् पृथक् अल्पज्ञस्वरूपाणां त्वदंशानाममराणामाख्यया नाम्ना त्वामेव यजन्ते यथा ओषधयः तत्तन्नामानि च पृथिवीमाश्रित्य वर्त्तन्ते तथा सर्वे इन्द्रादयः तत्तन्नामानि च त्वामाश्रित्य वर्त्तन्ते इत्यर्थः ॥ ५ ॥

अथानीश्वरसांख्यादयश्च ज्ञानयज्ञेन आत्मानात्मविवेकेन ज्ञानं जीवस्वरूपलक्षणं विग्रहोऽधिष्ठानं यस्य तमित्यर्थः । "यो विज्ञाने तिष्ठन्नि"तिश्रुतेः पुरुषान्तरात्मानं त्वां पुरुषद्वारा यजन्तीत्यर्थः ॥ ६ ॥

एवं ब्रह्मोपासनां तदंशोपासनाञ्चोक्त्वा ब्रह्मोपासनामेव रहस्यभेदेन दर्शयति । अन्ये चेति । अन्ये सर्ववेदार्थभूतपञ्चरात्राद्यागमनिष्ठाः संस्कृतः चतुरायुधचिन्हादिपञ्चसंस्कारैः आत्मा देहो येषां ते तथा ते च संस्काराः श्रुत्या सूचिताः "धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुम्परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदिस्थितं परात्परं यन्महतो महान्तम्" इति स्मृत्या च पञ्चसंस्काराः प्रदर्शिताः "तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः । अमी हि पञ्चसंस्काराः पारमैकान्त्यहेतवः" । इति तापशब्देन सुदर्शनादीनामङ्कितानां चिन्हं ज्ञेयम् [illegible] द्वारवत्यामेव यथोक्तं पाद्मे रुक्माङ्गदं प्रति श्रीनारदेन "अङ्कितस्तं सदा धार्य्यं द्वारवत्यां विचक्षणैः । नान्यस्थाने जातु राजन् ! सत्यमेतद्ब्रवीमि ते" इति तत्र च परमाचार्यः श्रीकृष्ण एव तत्रत्यपुरुषद्वारा तप्तमुद्राप्रदः तदुक्तं बृहन्नारदीये "चतुर्थं द्वारकास्थानं मद्धाम सुरसेवितम् । तत्राहं हेतिना साध्वि! तापयामि तनुं नृणा"मिति अन्यत्र तु गोपीचन्दनालिप्तैः सुदर्शनादिभिः पञ्चसंस्कारकाले शिष्यं संस्कुर्वन्ति भागवताः तदुक्तं वाराहे श्रीसनत्कुमारेण "कृष्णायुधाङ्कितो देहो गोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु स गत्वा किङ्करिष्यति । किञ्च [illegible] सुदर्शनस्य स्वत एवाग्निरूपत्वञ्चोक्तं सामवेदे मैत्रावरुणशाखायाम् "पवित्रमित्यग्निः अग्निर्वै सहस्रारः सहस्रारो नेमिः नेमिना तप्ततनुर्ब्राह्मणः सायुज्यं सलोकतामाप्नोती"ति अनेन शीतलमुद्राधारणमपि तप्तमुद्राधारणमेवेति सिद्धम् पुण्ड्रमूर्ध्वं पुण्ड्रं नाम श्रीकृष्णदासादिः मन्त्रोऽष्टादशाक्षरादिः यागो भगवन्मूर्त्तिपूजनध्यानादिः इति पञ्चसंस्कारनिर्णयः विस्तरस्तु स्वधर्मामृतसिन्धौ द्रष्टव्यः कथम्भूताः त्वन्मयाः त्वत्प्रधानाः अंशात्वावच्छिन्नेन रूपेण भिन्नस्वरूपा अपि अंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावादभिन्ना इत्यर्थः । एवम्भूतास्ते त्वया अभिहितेन विधिना बहुमूर्त्तिकमूर्त्तिकं व्यूहाङ्गिनं त्वामेव यजन्ति तथाह भगवाना-

सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम् ।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ! ॥ ९ ॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ! ।
विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः ॥ १० ॥
सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ।
तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥ ११ ॥
तुभ्यं नमस्ते ऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियाञ्च साक्षिणे ।
गुणप्रवाहो ऽयमविद्यया कृतः प्रवर्तते देवनृतिर्यगात्मसु ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धाचार्य्यैः "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् । व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरि" मिति ॥ ७ ॥

अथांशोपासनाया अपि रहस्यविशेषं सूचयन् अन्यदेवभक्तैस्तदुद्देशेन कृतोपासनापि;सर्वात्मनि त्वय्येव पर्य्यवस्यतीत्याह द्वाभ्याम् । त्वामेवेति । शिवोक्तेन शिवोपदिष्टेन मार्गेण कथम्भूतेन बह्वाचार्यविभेदेन बहूनां कापालिककालामुखशैवादीनामाचार्य्याणां भेदः आचरणभेदो यस्मिन् तेन ॥ ८ ॥

भाषा टीका ।

कोइ ब्राह्मण यज्ञ करने वाले त्रयी वेद विद्या से आपका पूजन करते हैं सो नाना प्रकार के देवताओं के नाम से अनेक यज्ञों के विस्तार करते हैं ॥ ५ ॥

कोइ एक ज्ञानीजन शांति को प्राप्त होकर सब कर्मों को आप के विषं अर्पण करके ज्ञान मूर्ति आपका यजन करते हैं ॥ ६ ॥

और कोइ महा पुरुष आपकी कही पंच रात्र विधि से आप में तत्पर होकर तप्त शंख चक्र धारणादि संस्कार से दीक्षित होकर बहुत मूर्ति वाले तथा एक मूर्ति वाले आपका यजन करते हैं ॥ ७ ॥

कोइ दूसरे पुरुष शिवोक्त मार्ग से शिव रूपी आपको जानकर बहुत आचार्यों के मत भेदसे भगवान् आपकी उपासना करते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ये ऽपि क्षुद्रदेवताभक्तास्तेऽपि त्वामेव यजन्तीत्याह । सर्व एवेति । हे सर्वदेवमय नन्वेते परस्परदेवताऽधिक्षेपकलहव्याकुलचित्ताः कथमेकमेव यजन्तीत्युच्यते तत्राह । यद्यप्यन्यधिय इति । बुद्धिमात्रभेदो न वस्तुभेद इत्यर्थः ॥ ९ ॥

तस्मात्सर्वे मार्गास्त्वय्येव पर्यवस्यन्तीति सदृष्टान्तमाह । यथेति । अद्रेः सकाशात्सर्वतः प्रभवन्ति या नद्यस्ताः पुनः पर्जन्येनापूरिता बहुस्रोतसः सत्यः सर्वतः सिन्धुमेव विशन्ति यथा तद्वदेता गतयो मार्गा अन्ततस्त्वामेव विशन्तीति ॥ १० ॥

अत्र हेतुमाह । सत्त्वमिति । भवतः शक्तिर्या प्रकृतिस्तस्याः सत्त्वादयो गुणाः अतः प्राकृताः प्रकृतिकार्योपाधयो ब्रह्मपर्यन्ताः स्थावरादयो जीवाः स्वोपाधिद्वारा तेषु गुणेषु प्रोताः प्रविष्टास्ते च प्रकृतौ सा च त्वयीति अतः क्रमेणोपाधिलयात्सर्वेऽपि त्वामेव विशन्तीति यद्वा भवतः प्रकृतेर्गुणेषु प्रोता ब्रह्मादयो भवद्व्यतिरिक्ता न सन्त्यतस्त्वमेव सर्वदेवमय इति ॥ ११ ॥

ननु भवतः प्रकृतेरिति वदन् ममापि प्रकृतिसम्बन्धं ब्रवीषि ततश्च तेषां मम च को विशेषः स्यादित्याशङ्क्य विशेषमाह । तुभ्यमिति । अविषक्तदृष्टयेऽलिप्तबुद्धये कुतः सर्वात्मने स्वव्यतिरिक्ताभावादविषक्तदृष्टित्वमित्यर्थः । किञ्च सर्वधियां साक्षिणे सर्वबुद्धिसाक्षित्वान्न क्वापि बुद्धिलेप इत्यर्थः । इतरे तु संसरन्तीत्याह । गुणप्रवाह इति । देवनृतिर्यञ्च आत्मानो येषां तेषु देवादिशरीराभिमानिष्वित्यर्थः । त्वदविद्यया कृतोऽयं गुणप्रवाहः प्रवर्ततेऽतो महान् विशेष इत्यर्थः ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किं तत्तद्विशेषनिर्देशेनेत्याह । सर्व इति । अत्र येऽप्यन्यदेवतेति स्वामिसम्मतः पाठः अन्यपदस्य क्षुद्रपदेन व्याख्यानात् नानेति क्वचित् पाठः अन्यस्मिन्निन्द्रादावेव ननु त्वयि धीर्येषां तथाभूता यद्यपि तथापि त्वय्येव पर्य्यवसानात् सर्व एव त्वां यजन्ति तत्र हेतुः सर्व एव देवा अधिष्ठानतया प्राचुर्येण विशन्ते यत्रेति सर्वदेवमय ईश्वरोऽन्तर्यामी तञ्च अधिष्ठानपूजा अधिष्ठात्रादावेव पर्यवस्यति किन्त्वन्याधीनत्वेन तात्त्विकं फलं न स्यादिति भावः । तदुक्तं श्रीभगवद्गीतासु "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् । अहं सर्वस्य यज्ञस्य भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते । देवान् देवयजो यान्ती" त्यादि ॥ ९ ॥

अत्राद्रिस्थानीयो वेदः पर्जन्यस्थानीया मुनयो ज्ञेयाः अन्तत इति दृष्टान्ते गमनस्य पर्यवसाने सति दार्ष्टान्तिके विचारस्येति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

व्याख्येयं तथाच मोक्षधर्मे नारायणीयोपाख्याने "साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे ! विद्धि नानामतानि वै । सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः । अपान्तरतमाश्चैव वेदाचार्यः स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन । उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः । पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् । सर्वेष्वेव नृपश्रेष्ठ ! ज्ञानेष्वेतेषु दृश्यते । यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः । नचैनमेवं जानन्ति तमोभूता विशाम्पते ! । तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम । निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयाद्धेतुबलान्नाध्यावसति माधवः । पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ! एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै । साङ्ख्यञ्च योगश्च सनातनोऽत्र वेदाश्च सर्वे निखिलेन राजन् ! । सर्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराण" मिति अपान्तरतमा इति श्रीकृष्णद्वैपायनस्यैव पूर्वजन्मनामेति तत्रैवोक्तं सर्वेष्वेवेति तत्र तत्र नारायणवत् परमोपादेयगुणत्वेनानुक्तेस्तेषां तदाकाङ्क्षासम्भवादिति भावः ॥ १० ॥

ननु विचारस्य पर्यवसाने सत्येव ते मार्गा मयि विशन्तीति कथमुक्तं कथन्त्वा प्रथमत एव न विशन्तीति तत्राह । सत्त्वमिति । तैर्व्याख्यातं तत्र पूर्वार्थे क्रमेण देवतापरित्यागो ज्ञेयः वैदिकमार्गस्य चित्तशोधकस्वभावत्वात् उत्तरार्थे ईश्वर इति योज्यं तदेवं मायामोहितत्वादेव साक्षात्त्वां न भजन्तीति भावः ॥ ११ ॥

त्वन्तु तेषु पूर्ववदुदासीनस्तिष्ठसीति विचार्य स्वयं भीतः सन् प्रपद्यमान आह । तुभ्यमित्यर्द्धेन । ते इत्यस्याविद्ययेत्यनेनान्वयः अत एव तैर्व्याख्यातं त्वदविद्याकृतोऽयमिति यद्वा यत्तुभ्यं नमो नमस्कारः तत्ते तुभ्यमिति त्वामेव प्रसादयितुमित्यर्थः । क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति. विधानात् तुशब्दो भिन्नोपक्रमे प्राकृतेभ्योऽत्यन्तभेदात् अस्त्विति पाठे स्पष्ट एव द्वितीयोऽर्थः अविपक्वदृष्टये दृष्टापि तेष्वनासक्तायेत्यर्थः । तत्र हेतुः सर्वात्मने सर्वमूलस्वरूपत्वात् सर्वेषां सर्वप्रवर्त्तकस्य कथमन्यत्रादरः स्यात् येन विरक्तिः स्यादिति भावः । नन्वादराभावेऽपि द्रष्टृदृश्यगुणस्य संक्रमः स्यादेव तत्राह । सर्वधियां सर्वसाक्षिणे साक्षिमात्रत्वान्न तव तेष्वासक्तिरिति भावः । ननु तेषां त्वय्येव पर्यवसानतो विचारे सति त्वदौदासीन्ये कथं सिद्धिः स्यात्तत्राप्याह । सर्वधियाञ्चेति । तेषां तदा त्वदाभिमुख्ये जाते भक्तत्वं जातमिति तदभिज्ञस्त्वं न तेषूदासीनो भवसीति भावः । "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह" मिति श्रीभगवद्गीतात एवेति भावः । ननु तादृशविचारात् पूर्वावस्थायां तेषां का वार्त्ता तत्राह सार्द्धेन गुणेति ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यदविद्यया यदीयया प्रकृत्या "मम माया दुरत्यये" ति वचनात् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथमतद्विषयकोपासनानां तत्पर्यवसानमित्यतः सदृष्टान्तं तदुपपादयति । सर्व एवेति द्वाभ्याम् । हे प्रभो ! ये नानादेवताभक्तास्ते यद्यप्यन्यधियः परमात्मेतरविषयकोपासनात्मकधर्मिनस्तथापि ते सर्वे त्वामेव यजन्ते तत्र हेतुं वदन् विशिनष्टि । सर्वदेवमयेश्वरं "स आत्मा अङ्गान्यन्या देवता" इत्युक्तरीत्या सर्वदेवताशरीरकत्वेन तत्प्रचुरत्वात्सर्वदेवमयः सचासौ तेषामीश्वरोऽन्तः प्रविश्य नियन्ता च तं सर्वदेवानां त्वदायत्तसत्तादिमत्त्वेन त्वदपृथक्सिद्धविशेषणत्वेन त्वत्तो व्यतिरेकाभावात् तद्विषयकोपासनास्त्वद्विषयिका एवेति भावः ॥ ९ ॥

त्वय्येव पर्यवस्यन्तीत्यत्र दृष्टान्तमाह । यथेति । अद्रेः सकाशात्प्रभवन्त्युत्पद्यन्ते इति तथा नद्यः पर्जन्येनापूरिताः बहुस्रोतसः सत्यः सर्वतः सिन्धुं समुद्रमेव विशन्ति तद्वत् गतयो बुद्धयोऽप्यन्ततः पर्यवसानतः त्वामेव विशेष्यभूतं विषयीकुर्वन्ति ॥१०॥

गतय इत्यनेन ज्ञानमात्रस्य विशेषणभूतप्रपञ्चविषयकस्य विशेष्यभूतपरमात्मपर्यन्तत्वं सूचितं तदेव व्यञ्जयितुं सर्वस्य चिदचिदात्मकप्रपञ्चस्य तद्विशेषणतामाह । स त्वमिति । भवतः प्रकृतेः त्वच्छरीरभूतप्रधानस्येत्यर्थः । "यस्याव्यक्तं शरीर" मिति श्रुतेः ये सत्त्वादयो गुणाः तेष्वेवाब्रह्मस्थावरान्ताः प्राकृताः प्रकृतिपरिणामात्मकाः तन्तुषु पटवत्प्रोताः प्रविष्टाः ब्रह्मादिक्षेत्रज्ञाधिष्ठिता देहास्त्वदपृथक्सिद्ध विशेषण भूतगुणमयप्रकृतिकार्यतया त्वदायत्तसत्तादिमन्तः त्वद्विशेषणभूता इत्यर्थः ॥ ११ ॥

एवमचेतनप्रपञ्चस्य तद्विशेषणत्वमुक्तम् अथ ब्रह्मादिक्षेत्रज्ञानां तच्छरीरत्वेन तद्विशेषणत्वं तदायत्तबन्धमोक्षादिमत्त्वं तस्य बन्धापादनाद्युपयुक्तसर्वज्ञत्वञ्च वदन्नमस्करोति । तुभ्यमिति । सर्वात्मने सर्वेषां ब्रह्मादिक्षेत्रज्ञानामात्म अनेन क्षेत्रज्ञानां तच्छरीरत्वेन तद्विशेषणत्वं फलितं यर्हि सर्वात्मा तर्हि जीववत्किं देहात्माभिमानी नेत्याह । अविपक्वदृष्टये । अविपक्वा देहादिष्वनभिनिविष्टा दृष्टिर्यस्य तस्मै देहात्माद्यभिमानरहितायेत्यर्थः । तत्र हेतुः सर्वधियां साक्षिणे सर्वासां बुद्धीनां साक्षाद्द्रष्ट्रे सर्वबुद्धिसाक्षित्वात् न क्वापि देहात्माद्यभिमान इति भावः । किञ्च यदविद्यया यदीयया प्रकृत्या हेतुभूतया देवनृतिर्यगात्मानो देहा येषां तेषु क्षेत्रज्ञेषु अयं परिदृश्यमानो गुणप्रवाहः सत्त्वादिभिर्निर्मितमूर्तिः प्रवहते प्राप्नोतीति तथा संसारः असकृदुद्भूतः प्रवर्तते तस्मै तुभ्यं ते नमः अस्तु यदविद्ययेत्यनेन "दैवी ह्येषा गुणमयी मम" त्यादिवचनार्थोऽभिप्रेतः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपसंहरति । सर्व एवेति । सर्वेषां देवानामीश्वराः इन्द्रादयः तेषामपीश्वरः सर्वदेवमहेश्वरः सर्व इति क इति तत्राह । य इति । ये इन्द्रादिनानादेवतानां भक्ताः अत एव तद्भक्तिपूर्यर्थमन्यधियः स्वातन्त्र्यबुद्धयो यद्यपि तथापि तव सर्वस्वामित्वं जानन्तो देवास्तद्दत्तबलिं त्वयि समर्प्य तत्फलार्थं स्वयं स्वीकुर्वन्त्यन्यथा पश्यतो दुरत्ययं तेषां स्यादतस्तन्न कुर्वन्ति किन्तु तत्फलमन्तर्यदेव

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथा श्रुतत्वादिति भावः । यद्वा विष्णोरन्या विलक्षणा धीर्येषां ते तथा यद्यपि तथापि पूर्वादृष्टवशाज्ज्ञानादेवताभक्ताः ये ते त्वत्सर्वोत्तमत्वज्ञानाभावाद्येषामित्यतः प्रभो इत्युक्तम् ॥ ९ ॥

एतदेव विशदयति । यथेति अद्रिभ्यः प्रभवः उत्पत्तिर्यासां ताः अद्रिप्रभवाः पर्जन्येन गर्जन्मेघेन आपूरिताः सिन्धुं समुद्रं त्वां गतयः पूजामार्गाः पुरुषार्थसाधनानि शास्त्राणि वा येऽन्ततः पूजावसाने ब्रह्मार्पणबुद्ध्यावसिता इत्यर्थः ॥ १० ॥

ननु पूजादिकं सर्वं भगवद्विषयञ्चेन्मतभेदः कथमुत्पद्यत इत्याशङ्क्य सत्त्वादिगुणोपरक्तत्वात्तदाकृष्टबुद्धित्वेन तद्भेद इत्याशयेनाह । सत्त्वमिति । प्राकृताः प्रकृतिनिमित्तास्तेषु सत्त्वादिषु प्रोताः सम्यक् स्यूताः सम्वलिता इत्यर्थः । कार्यते ह्यवश इत्यादि हिशब्देन गृहीतम् ॥ ११ ॥

ननु प्राकृतपदार्थेष्वधस्थितस्य हरेस्ततो विशिष्टत्वमहिमासम्भवात् किं विशेषेण प्रणतिः प्रार्थ्यत इति तत्राह । तुभ्यमिति । तुभ्यं नमोऽस्तु यः सात्त्विकादिनानाजन कृतपूजाविषयत्वेनोक्तस्तस्मै ते भूयोऽपि नमोऽस्त्वित्यत्यन्वादिश्यते प्रतिविशेषणमनुसंधेयमिति द्योततनाय वा अविपक्वदृष्टये अप्रतिहतज्ञानाय एकैकस्यैकैकप्रतिहतेर्दृष्टत्वादस्य कथमप्रतिहतज्ञानत्वमित्याशङ्क्य सर्वस्वामित्वेन स्वातन्त्र्यप्रतीतेर्ज्ञानप्रतिबन्धकाभावो युक्त इति भावेनाह । सर्वात्मन इति । सर्वेषां तत्तच्छक्तिमाकृष्य वशीकृत्य तिष्ठत इत्यर्थः । तदेव विशिनष्टि । सर्वेति । स हि सर्वमनोवृत्तिप्रेरकः समुदात्तत इत्यादेः यथा अनेनासङ्गत्वं स्पष्टयत इति । अस्य सर्वस्वातन्त्र्यमस्तीति कथमवगन्तुं शक्यमित्याशङ्क्य संसारस्य हरीच्छाधीनत्वप्रदर्शनादित्याह । गुणप्रवाह इति । अस्य हरेर्विषयेच्छया अनिषेधे पुमान्विष्णावपिचिन्त्रे स्वरे पुमानिति च देवत्वोपाधिविशिष्ट आत्मनीति प्रत्येकमन्वेतव्यम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वं एव व्याख्या ॥ ९—११ ॥

तेऽविधयेत्यन्वयः । त्वद्विषयेणाज्ञानेनेत्यर्थः ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं षड्विधानिरूप्य सामान्येन क्षुद्रोपासकानाह । सर्व एवेति । किं बहुना क्षेत्रपालाद्युपासका अपि त्वामेवोपासते यतस्त्वं सर्वदेवमयः तेषामपीश्वरः „अहं हि सर्वयज्ञानां भोक्ता च„ ति वाक्यात् सर्वदेवमयश्चासावीश्वरश्चेति ननु बुद्धिस्तेषां न भगवत्परेति कथं सर्वेषां भगवदुपासकत्वमित्याशङ्क्याह । येऽप्यन्यदेवताभक्ता इति । यद्यपि भगवद्व्यतिरिक्तस्य विष्णुव्यतिरिक्तस्य च देवतान्तरस्योपासका इति यद्यप्येषामन्यबुद्धिः तथापि उपास्यो महानिति मत्वा हि ते उपासते न त्वस्मदुपास्यो न किञ्चित्कर इति अन्यथा नोपासीरन् न हि कश्चिद्धीनमप्रयोजकं ज्ञात्वा कश्चनोपास्ते परं भ्रमादुपासना भवति भ्रमे तु भगवद्धर्मा एव तत्रारोपिता इति भगवानेव सेव्यते आरोपस्य तुल्यत्वात् अबुद्धिपूर्वकोऽयमिति विशेषः । योऽपि भ्रमाद्रजतं जानाति सोऽपि रजतं ज्ञातवानेव अन्यथा अनुव्यवसायोऽपि भ्रान्तः स्यात् यदुक्तं भगवता „न तु मामभिजानन्ती„ति तद्विधिपरत्वेन अविधिपूर्वकमिति वचनात् प्रतिमादावपि भगवानारोप्यते तद्धर्माश्च तथा तत्तदुपासका अपि स्वसेव्ये भगवत्त्वं तद्धर्मांश्चारोपयन्ति परं विध्यभावात् न तस्य ज्ञानजनकत्वं किं तूद्देश्यफलमेव अतो भगवद्ज्ञानात्तेषां संसार एव स्थितिरिति वदता भगवता विधिमार्गो मुख्यतया स्थापितः न त्वविहितो मार्गो निन्दितः अन्यथा "मामेव यजन्ति अहं हि सर्वज्ञानानां लभते च ततः कामान् मयैव विहितान् हितान्" इति न वदेदेव तस्माद्विधिस्तुतिपरमेवैतद्वाक्यम् अतः सुष्ठूक्तं येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः तथापि त्वामेवोपासते इति नन्वेवं भ्रमं भगवानुत्पाद्य किमिति एवं फलं प्रयच्छति कथं सर्वानेव नैकविधान् करोतीत्याशङ्क्याह । प्रभो इति स हि सर्वप्रकारसमर्थः तथापि चकारादन्यथा चनानाप्रकारान् ॥ ९ ॥

ननु तत्तदुपासकानां तत्तद्देवतासायुज्यस्योक्तत्वात् कथं प्रमेयबलविचारेण तेषां गत्यभाव इति चेत्तत्राह । यथाद्रिप्रभवा इति । साधनपरं चैतद्वाक्यम्—

> आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
> सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥

इतिवाक्यात् प्रमेयबले च तेषां भगवत्सायुज्यमेव यदि निष्कामाः परम्पराकालविलम्बश्च भवति यथाभूतोपासकाः भूतसायुज्यं प्राप्नुवन्ति ततो भूतानि महादेवसायुज्यं महादेवो भगवत्सायुज्यमिति एवं विहितानामविहितानां वा साक्षात्परम्परया वा भगवत्सायुज्यमेव फलमिति यथा सर्वासामेव पर्वतप्रभवानां नदीनां मेघैरापूर्यमाणानां सिन्धुरेव प्रवेशस्थानं चतुर्दिक्षु न त्वन्यः कश्चित्प्रवेशयोग्यो भवति तद्वदेव नदीप्राया जीवगणाः सहजेन पर्वतजलेनागन्तुकेन वा वृष्टिजलेन वा पूरिता भवन्ति तथा विधिनाविधिना च पूरिताः जीवा जन्मकोटिभिः भगवत्सायुज्यमेव प्राप्नुवन्ति तथाभूतानामपि फलं साधयतीति ज्ञापनार्थं प्रभो इति गतयः फलानि अन्ततः त्वय्येव विशन्ति ॥ १० ॥

किं च उत्पत्तिविचारेणापि त्वत्त एवोत्पन्नाः त्वय्येव विशन्ति त्वमेवेति कथं तेषां त्वत्सायुज्यं न भवेत् न ह्यन्यः कश्चिदस्ति तदाह । सत्त्वमिति त्वमेव प्रकृतिः अतो भवतः प्रकृतेस्त्वदीयाया या सत्त्वं रजस्तम इति त्रयो गुणाः तेषु सर्व एव प्राकृताः प्रकृतिप्रकारेणोत्पादिताः तेषु गुणेषु प्रोताः ब्रह्मादिस्थावरान्ताः अतः सर्वेषामेव गुणे लयः गुणाः प्रकृतौ प्रकृतिस्त्वयि त्वमेव वा ॥ ११ ॥

एवं सोपपत्तिकं प्रमाणं भगवद्विषयकं सफलं निरूप्य प्रमाणतः प्रेमतश्च महत्त्वं निरूप्य नमस्यति । तुभ्यमिति । अन्यथा महत्त्वं हृदयारूढं नेति शङ्का स्यात् तदर्थं माहात्म्यमुक्त्वा नमस्कर्तव्यं तुभ्यमेतावदाय नमः ते तुभ्यं त्वदर्थमेव त्वमेव फलमित्यर्थः । एवं त्वन्नमस्कारे त्वमेव फलं भवसीति प्रार्थयति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अस्त्विति नन्ववतीर्णोऽहं तद्धर्मैर्व्याप्त इति किं मम नमस्कारेणेत्यत आह । अविपक्तदृष्टय इति । न विपक्ता दृष्टिर्यस्य क्वापि धर्मेषु भगवद्दृष्टिर्न विषज्जते तत्र हेतुः सर्वात्मन इति । अन्यस्मिन् हि आसक्तिर्भगवांस्तु सर्व एव आत्मासक्तिः कृत्रिमैव अनेन स्वापराधोऽपि परिहृतः प्रमाणं चाह । सर्वधियां च साक्षिण इति । सर्वबुद्धीनां द्रष्टा अन्तर्बहीरूपत्वं चोक्तं चकारादात्मनः प्राणादीनां च यो हि सर्वात्मा भवति तस्यान्याध्यासो न भवति यो वा सर्वसाक्षी स कर्त्ता न भवति यस्त्वेतादृशः स विपक्तदृष्टिर्न भवति क्वापि अतो भगवति नान्यधर्मसम्बन्धः अन्यधर्माभावाच्च तर्हि कस्यापि न स्यादित्यशङ्क्य यस्याविद्या तस्य भगवतीत्याह । गुणप्रवाह इति । अयं गुणानां प्रवाहः अविद्ययैव देवनृतिर्यगात्मसु त्रिविधेषु सात्त्विकराजसतामसेष्वेव प्रवर्त्तते न तु गुणातीते ब्रह्मणि तेषां तु असकृदेव यावदविद्या न निवर्त्तेत इति ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवमुक्तलक्षणा योगिकर्मिप्रभृतय उपासकाः सर्व एव त्वां यजन्ति कुत इत्यत आह । सर्व इति । तवैव सर्वदेवमयत्वादीश्वरत्वाच्चेत्यर्थः । ननु केचित् पृष्टाः वयं शिवमर्च्चयामो वयन्तु सूर्यं गणेशमित्याचक्षते तत्राह । येऽपीति । ननु ते कादाचित्कीमपि स्मृतिं मयि न दधते तत्राह । यद्यपीति । अन्येष्वेव देवेषु नतु त्वयि धीर्येषां ते ॥ ९ ॥

ननु यदि मामेवार्च्चयन्ति तर्हि ते मामेव प्राप्नुयुः मैवं तेषामर्च्चना एव त्वां प्राप्नुवन्ति नतु ते अर्च्चकाः यदुक्तं त्वयैव "येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः।तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते । यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि मा,, मित्यतोऽहमपि दृष्टान्तेन तथैव वच्मीत्याह । यथेति । अद्रिभ्यः सकाशात् प्रकर्षेण भवन्तीति ताः अद्रिभिर्जनिता इत्यर्थः । पर्ज्जन्येन मेघेनापूरिता इति अद्रिषु पर्ज्जन्यवृष्टानि जलान्येवेतस्तत एकीभूय नद्यो भवन्ति ताश्च नद्यः सर्वतः प्रसृत्य अन्ततः सिन्धुं विशन्तीति अद्रिजनिता नद्य एव यथा सिन्धुं प्राप्नुवन्ति नतु नदीजनका अद्रयस्तथैव गतयो गम्यन्ते आभिरिति मार्गभूता अर्चना एव त्वां प्राप्नुवन्ति नत्वर्च्चकास्ते तवैव सर्वदेवाधिष्ठातृत्वात् अधिष्ठानपूजा अधिष्ठातर्येव पर्यवस्यतीति न्यायात् सर्वदेवपूजाऽपि त्वत्पूजैवेति भावः । अत्र पर्ज्जन्यस्थानीयो वेदः पर्ज्जन्यो हि सिन्धुजलमयत्वात् सिन्धोरुद्भूतः वेदोऽपि त्वत्त उद्भूतस्तदुक्ता नानापूजनविधय एव जलानि तत्राधिकारिण एवाद्रयस्तत्कृता नानादेवेशपूजा एव नानादेशनद्यस्ता नद्यो यथा नानादेशेभ्यः निःसृत्य सिन्धुमेव गच्छन्ति तथैव पूजा अपि देवेभ्यो निःसृत्य विष्णुम् ॥ १० ॥

ननु तर्ह्येवं विविच्य सर्वेऽपि किं मामेव नोपासते तत्राह । सत्त्वमिति । तेषु गुणेषु हि निश्चितं प्राकृता जीवाः प्रोताः ग्रथिताः आब्रह्मेति ब्रह्मपर्यन्ता अपि जीवा यदि मायया मोह्यन्ते तर्हि सर्वे मनुजास्त्वां कथं भजन्तामिति भावः ॥ ११ ॥

ते त्वां प्राप्तुं तुभ्यं मम नमोऽस्तु तव तु स्वभक्तेभ्योऽन्येषूपासकेषु दृष्टिर्न रज्यतीत्याह । तुभ्यमिति । अविपक्त दृष्टये कथं तर्हि सर्वदेवपूजां त्वं प्राप्नोषीति ब्रूषे यो हि येभ्यः पूजां प्राप्नोति स तेष्वनुरज्यत्येवेत्यत आह । सर्वाधिष्ठातृत्वादेव तत्तत्पूजां प्राप्नोषि नतु तस्यां तव काचिदपेक्षास्ति तेऽपि त्वां न पूजयन्ति कुतस्तव तेष्वासक्तिरिति भावः । अतः साक्षिणे इति साक्षी त्वं सर्वत्रोदासीन एवेति भावः । ननु तर्हि ते देवा स्वस्वोपासकास्तानुद्धरन्तु तत्राह । गुणेति असकृत् निरन्तरं देवनृतिर्यञ्च आत्मानो येषां तेषु देवादिशरीराभिमानिष्वित्यर्थः । तत्तदुपास्या देवा अपि स्वयं गुणप्रवाहपातिताः कथं स्वोपासकांस्तानुद्धरन्त्विति भावः ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमन्येऽपि येऽन्यदेवताभक्ताः यद्यप्यन्यधियः अन्येषु त्वदन्यतया अब्रह्मात्मकतया स्वस्वमनीषया अयमेवेश्वरः अयमेवेश्वर इत्येवं कल्पितेषु धीर्येषां ते तथाभूताः अपि वस्तुतस्तेषामब्रह्मात्मकत्वाभावात्तद्द्वारा तदुपासना ब्रह्मणि सर्वात्मनि श्रीकृष्णे त्वय्येव पर्य्यवसन्ना भवत्यतस्त्वामेव सर्वे यजन्तीत्यर्थः । तदुक्तं श्रीमुखेनैव । ये ऽप्यन्यदेवता भक्ताः यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वक" मिति । यद्यप्यन्यधिय इति बुद्धिमात्रभेदो न वस्तुभेद इति तदयुक्तमेव । एवम्वस्तुस्वीकारे । उपास्योपासकबुद्धिवाङ्व्यादिभेदासम्भवात् ॥ ९ ॥

यतः सर्वे मार्गाः सर्वात्मनि त्वय्येव पर्य्यवस्यन्तीति सदृष्टान्तमाह । यथेति । प्रभवन्ति यस्मात्स प्रभवः अद्रिः प्रभवो यासां ताः । नद्यः स्वाभाविकाः पर्जन्येन पूरिताः क्षुद्रनद्यश्च सर्वतः सिन्धुं विशन्ति यथा तद्वच्छ्रेदाद्रिप्रभवाः गतयः मार्गाः अन्यप्रवर्तिताश्च । अन्ततः सिद्धान्ततः त्वामेव विशन्ति । ॥ १० ॥

ननु "सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य" इति श्रुतिस्मृतिभ्यां वेदोक्ता गतिस्तु एकैव तत्र गतिबाहुल्यं किं निमित्तमित्यत्र त्वन्मायागुणबद्धा जीवा एवेत्याह । सत्त्वमिति । तेषु प्रोताः अतः स्वस्वमनीषया वेदादेव केचित्सात्त्विकराजसतामसरूपाः गतीः प्रवर्तयन्ति केचित्तु वेदनैरपेक्ष्येण प्रवर्तयन्तीति भावः ॥ ११ ॥

सर्वा गतयस्त्वां विशन्तीत्युक्तं तत्र सात्त्विकीगतिफलं देवभावं राजसीगतिफलं नृभावं तामसीगतिफलं तिर्य्यग्भावं त्वमेव ददासि अहन्तु त्वद्दासः अतो मां स्वचरणसङ्गं देहीत्यभिप्रायेण नमस्करोति । तुभ्यं नमोऽस्तु । कथम्भूताय यस्मादनुभूतात् ते त्वत्तः देवादयः आत्मानः स्वस्वकर्मफलभूताः देहा येषां तेषु जीवेषु विपर्य्ययं गुणप्रवाहः त्रिगुणकार्य्यभूतः संसारः अविद्यया गुणमय्या प्रकृत्या ऽसकृत् पुनः पुनः प्रवर्तते तस्मै इत्यन्वयः गुणप्रवाहप्रवर्तकत्वेन आसक्तिप्राप्तावारयति । अविपक्तदृष्टये इति । तत्र हेतुं दर्शयितुं विशिनष्टि । सर्वात्मने इति । तत्कर्मफलरूपदेवादिदेहप्रापणयोग्यतां दर्शयन् वेदमात्रविषयत्वं

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥ १३ ॥
रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥
त्वय्यव्ययात्मन् ! पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥ १५ ॥
यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ।
तैरामृष्टशुचो लोका मुदा गायन्ति ते यशः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतो दर्शयति । सर्वधियाञ्च साक्षिणे इति । साक्षिणे साक्षाद्द्रष्ट्रे धीप्रवर्तकायेत्यर्थः ॥१२॥

---

भाषा टीका ।

जो लोक और देवताओं के भक्त हैं तथा औरों में उन की बुद्धि है तौ भी हे प्रभो ! आप सर्वांतर्यामी हो इसी हेतु से आप सब देवाओंके महेश्वर हो तिस से सब आपही का यजन करते हैं ॥ ९ ॥

हे प्रभो ! जैसे पर्वतों से पैदा होने वाली नदी वर्षा से भरकर सब समुद्रही में जाती हैं तैसेही सब देवतौं का पूजन आपको ही कभी अंत में प्राप्त होता है ॥ १० ॥

सत्त्व रजः तमः ए तीन आपकी प्रकृति के गुण हैं उन गुणों से ब्रह्मा से लेकर स्थावर पर्यन्त सब प्राणी बंधे हुये हैं ॥ ११ ॥

सब विषय वासना से रहित दृष्टि वाले सर्वात्म स्वरूप सबकी बुद्धियों के साक्षी आपके अर्थ नमस्कार होवैं आपकी त्रिगुणमयी माया का यह प्रवाह है सो देवता मनुष्य तिर्यक्‌ इन जीवों में प्रवृत्त होरहा है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वात्मन इत्यनेनोक्तं सगुणं स्तौति । अग्निर्मुखमिति द्वाभ्याम् । अग्न्यादीनन्वीश्वरावयवता विधीयते योऽयमग्निः स तु तव मुखमित्यादिवचनव्यक्त्या ईक्षणं चक्षुः श्रुतिः श्रवणेन्द्रियम् कं मूर्द्धा प्राणश्च बलं च तत् ॥ १३ ॥

अद्रयः परस्य तेऽस्थिनखानि ॥ १४ ॥

न केवलमेतावत्किन्तु सर्वोऽप्ययं प्रपञ्चस्त्वदवयवभूत एवेति यद्यप्येवं सत्यपि प्रपञ्चस्य षड्जन्मादयो विकारास्त्वयि न प्रसज्जन्ते तस्य त्वयि कल्पितत्वादित्याह । त्वयीति । अव्ययात्मनि पुरुषे पूर्णे लोकादयः सञ्जिहते प्रचरन्ति हे अव्ययात्मन्निति वा कथं भूते त्वयि मनोमये मनःप्रधाने मनोवृत्तिव्यङ्ग्ये "दृश्यते त्वग्र्यया बुद्ध्या मनसैवानुद्रष्टव्य" इत्यादिश्रुतेः जले यथा जलौकसः सूक्ष्मप्राण्यण्डराशयो यथा चोदुम्बरान्तः केसरेषु मशकाः परस्परवार्त्तानभिज्ञा एवमनन्तानि ब्रह्माण्डानि त्वयि सञ्चरन्तीत्यर्थः ॥ १५ ॥

तस्मादेवं भूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथामृतमेव सन्तः सेवत इत्याह । यानि यानीति । आमृष्टा परिमार्जिता शुक् येषां ते ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वमयत्वेन सर्वमयेश्वरत्वं दर्शयति । अग्निरिति त्रिभिः । तत्राद्यं द्वयं युग्मकं मुखं मुखशक्त्यंशाधिष्ठानमित्यर्थः ॥ १३ ॥

एवमन्यदपि अतएवाभेदेनोपासनं विधीयते परस्य तेभ्योऽन्यस्य निजरूपेण पृथग्वर्त्तमानस्येति अभेदेनोक्तेभ्योऽपि भेदो दर्शितः ॥१४॥

तदेवं विराजरूपत्वेन स्तुत्वानन्तब्रह्माण्डकारणमहाहिरण्यगर्भत्वेन स्तौति । त्वयीति । हे अव्ययात्मन् ! सर्वकारणत्वेऽप्यचिन्त्यशक्त्या निर्विकार ! पुरुषे महाहिरण्यगर्भरूपे मनोमये मन आद्यन्तःकरणमयषोडशकले त्वयि लोकाः सपाला बहुजीवसङ्कुलाः सञ्चरन्तीति तत्र लोकाः ब्रह्माण्डानि सञ्चरन्ति यथाक्रमं सृष्टिप्रलययोर्बहिरन्तर्भवन्ति पाला ब्रह्मादयः अधिकारानधिकारयोरारोहन्ति पतन्ति च अन्ये जीवा अत्रामुत्रागतागतं कुर्वन्तीत्यर्थः । तत्र ब्रह्माण्डानां सञ्चरणे दृष्टान्तः यथा जल इति पाळादीनामुदुम्बरे वेति उदुम्बरमत्र ब्रह्माण्डस्थानीयम् ॥ १५ ॥

एवम्भूतस्य तत्स्वरूपस्य ज्ञानं दुर्घटं तेन सुखविशेषोऽपि न दृश्यते तदवतारलीलानां दर्शनात् । श्रवणादावपि सर्वेषां सर्वशोकनिवृत्तिः परमानन्दश्च जायते ततस्ते ता एव गायन्तीत्याह । यानीति । तथा च ब्रह्मणोक्तम् । ज्ञाने प्रयासमित्यादि । वीप्सायां सर्वेषामेव रूपाणां शोकमार्जनादिना परमसेव्यत्वमुक्तं रूपाणि बिभर्षीत्यवताराणां सर्वेषां तदीयत्वाभिप्रायेण । लोकाः सर्वे इत्यधिकारापेक्षा निरस्ता । मुदा गायन्तीति तद्गानस्य स्वतः पुरुषार्थताभिप्रेता । यद्वा । पूर्वं यदन्यसाधारण्येन वैष्णवाना-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मुपासनत्वमुक्तम् । तत्र च बहुमूर्त्त्येकमूर्त्तिकमिति यद्विशिष्य ता मूर्त्तयो नोक्तास्तत्र सन्तोषाभावात् प्रपञ्चयति । यानीति ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अक्षिणी सूर्य इति चन्द्रस्या प्युपलक्षणं चक्षुषी चन्द्रसूर्याविति श्रुतेः कं शिरः ॥ १२—१४ ॥

मनोमये विशुद्धमनोग्राह्ये त्वयि कल्पिता इत्यन्वयः संजिहते सञ्चरन्ति ॥ १५—२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तञ्चिदचिच्छरीरकत्वमेव प्रपञ्चयितुं विश्वरूपं स्तौति । अग्निरित्यादिना । अत्राग्न्याद्यनुवादेनेश्वरमुखाद्यवयवता विधीयते योऽयमग्निः स तव मुखमित्यादि अवनिस्तवाङ्घ्रिः अवनिशब्दः पातालप्रभृतिमहीतलपर्य्यन्तसङ्ग्राहकः पातालमेतस्य हि पादमूलमित्यादिस्थानप्रामाण्यात् सूर्य ईक्षणं दृष्टिः नभो नाभिः नभशब्दो भुवर्लोकप्रभृतितपोलोकपर्य्यन्तसङ्ग्राहकः नाभिशब्दस्तु तत्प्रभृतीनाम् उरोग्रीवावदनललाटानां दिशस्तव श्रुतिः श्रोत्रं द्यौः सत्यलोकस्तवः कं शिरः सुरेशा इन्द्रादयः तव बाहवः अर्णवाः समुद्रास्तव कुक्षिः मरुद्वायुस्तव प्राणश्च बलञ्च तयोः समाहारः तत्कल्पितं रचितं त्वयेति शेषः यद्वा उपासकैरिति शेषः । कल्पितं ध्यातमित्यर्थः ॥ १३ ॥

वृक्षा ओषधयश्च तव रोमाणि मेघास्तु शिरोरुहाः केशाः अद्रयो गिरयः परस्य ते तवास्थीनि नखानि च रात्रिश्च अहश्च ते तव निमेषणं प्रजापतिर्मेढ्रः वृष्टिस्तव वीर्य्यमिष्यते उपासनायामिति शेषः ॥ १४ ॥

न केवलमेतावदेव किन्तु सर्वोऽप्ययं प्रपञ्चस्त्वदवयवभूत एवेत्याह । त्वयीति । हे अव्ययात्मन् ! अविकृतस्वरूप विश्वशरीरकत्वेऽपि तद्गतविकारैरस्पृष्टेति सम्बोधनाभिप्रायः बहुभिर्जीवैः सङ्कुला व्याप्ताः पालकैः सहिताः सर्वे लोका मनोमये विशुद्धमनोग्राह्ये परमपुरुषे त्वयि कल्पिताः सञ्जिहते चरन्ति जले यथा जलौकसः सूक्ष्मप्राणिराशयः यथा वा उदुम्बरान्तः केसरेषु मशकाः परस्परवार्त्तानभिज्ञा एवमनन्तानि ब्रह्माण्डानि त्वयि सञ्जिहते चरन्तीत्यर्थः ॥ १५ ॥

तस्मादयं सूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथामृतमेव सेवन्त इत्याह । यानि यानीति । त्वं क्रीडनार्थं यानि यानि रूपाणि बिभर्षि तैरनुसंहितैरामृष्टा परिमार्जिता आध्यात्मिकादितापा येषां ते लोका रसज्ञा जना मुदा तव यशो गायन्ति ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नानादेवताभक्तैः क्रियमाणं यजनादिकं त्वद्विषयं कथं स्यादित्याशङ्क्य तेषां त्वदंशोद्भूतत्वेन त्वत्सम्बन्धित्वादिति भावेन तेषां त्वदङ्गजन्यत्वमाह । अग्निर्मुखमिति । मुखाज्जातोऽग्निस्तव मुखमित्युच्यते मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायतेत्यादावितीदं त्वयैव च प्रकल्पितमहं पश्यामीत्येवं योजनीयं विष्णोरङ्गसमुद्भूता विष्णोरङ्गानि देवता इत्याद्यैः ईक्षणं नेत्रं कं शिरः पुंसि कः कंशिरोऽन्वुनेरित्यमरः सुरेन्द्राः लोकपालाः अर्णवं वदन्तीति शेषः ॥ १३ ॥

निमेषणं निमेषोन्मेषौ निमिषो मुकुलीभावो रात्रिरुत्फुल्लता अहरुन्मेषः । प्रजापतिर्दक्षः वीर्यं रेतः ॥ १४ ॥

सञ्जिहते सञ्जायन्ते जलमेवाश्रित्य तिष्ठन्तीति जलौकसः मत्स्यादयः उदुम्बरे जन्तुफले मशकाः पिपीलिकाविशेषाः मनोमये ज्ञानस्वरूपे ॥ १५ ॥

पुरुषसूक्तोक्तभगवन्मूर्त्तिविशेषं स्तुत्वा मत्स्याद्यवतारान् स्तोतुमुपक्रमते । यानीति । आमृष्टशुचः मार्जितशोकाः परिहृतदुःखाः पूर्वमविद्यमानान्येव रूपाणि बिभर्षि नाविद्यमानानीति इदमर्थं हिशब्दो वक्ति भूतानामेव बिभर्तीशो ह्यवतारतनुं सदेत्यादेश्च ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वमयत्वेन सर्वदेवमयैश्वर्यत्वं दर्शयति । अग्निरिति त्रिभिः । मुखं मुखशक्त्यंशाधिष्ठानमित्यर्थः । एवमन्यदपि ॥ १३—१६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं निर्दोषत्वमुक्त्वा माहात्म्यं निरूप्य नमस्कृत्य अवयवानां स्वरूपमाह । अग्निर्मुखमिति । सर्वदेवतात्मको भगवानिति वक्तुं सर्वे अवयवाः देवतात्वेन निरूप्यन्ते योऽग्निः स ते मुखं या अवनिर्भूमिः सा तेऽङ्घ्रिः यः सूर्यः स ते ईक्षणं चक्षुः नभस्त्वाकाशः नाभिः एतानि महाभूतान्यपि भवन्तीति केवलं देवता एवाग्रे निरूप्यन्ते । अथो इति । दिशस्ते श्रुतिः श्रोत्रं द्यौः स्वर्गः ते कं शिरः सुरेन्द्राः ते बाहवः अर्णवाः समुद्राः ते कुक्षिः मरुद्वायुस्ते प्राणः स्थूलरूप एवायं सूक्ष्मरूप इति ज्ञात्वा तथा निरूपयति ननु पुरुषोत्तममेनं जानाति यत्किंचित् प्रकल्पितं लोके कृतिसाध्यं तत्ते बलम् ॥ १३ ॥

रोमाणीति । वृक्षौषधयस्ते रोमाणि मेघाः शिरोरुहाः ननु बाधितोऽयमर्थः कथमुच्यत इत्याशङ्क्य सर्वसमाधानार्थं च निरूपयति । परस्य त इति । त्वं परः स्वराट् परब्रह्म या अद्रयः ते अस्थिनखानि च रात्र्यहनी तु प्रजापतेः संवत्सरात्मकस्य कालस्य ते निरीक्षणं निमीलनं रात्रिरुन्मीलनमहरिति । प्रजापतिस्ते मेढ्रं गुह्यमिन्द्रियं वृष्टिस्तु तव वीर्यं तुशब्दस्तु केशामुखं व्यावर्त्तयति । ननु कथं साध्यसाधनयोर्विरुद्धरूपत्वमित्याशङ्क्य प्रमाणमाह । इष्यत इति । प्रामाणिकानामिष्टमिष्टिः दिवि चलन्तीति मेघानां केशत्वं वृष्टिः सर्वोत्पत्तिसाधनमिति रेतस्त्वं तस्य चोच्यते ॥ १४ ॥

एवमवयवान् निरूप्य सर्वलोकाधारत्वं निरूपयति । त्वय्यव्ययात्मन्निति । एतेषामाधारत्वेन उपचयापचयावाशङ्क्य पुरुषरूपे त्वयि पातालमेतस्य हि पादमूलमिति न्यायेन अव्ययात्मनि सर्वे लोकाः प्रकल्पिताः विशेषेण रचिताः भगवतो भारमाशङ्क्य दृष्टान्तमाह । यथा जले सञ्जिहते इति जले मत्स्यादिजीवास्तिष्ठन्तीति न तावतापि तस्य कश्चन भारो भवति एवं भगवत्यपि सर्वे लोकाः सञ्जिहते संहतास्तिष्ठन्ति अचेतनस्य दृष्टान्तो विषम इति चेतनमाह । उदुम्बरे वा यथा मशका इति । एकैकस्मिन् फले कोटिशो मशकाः तत्रैवोत्पन्नाः तत्र तिष्ठन्ति एकत्र बहवश्च भवन्ति यथा जलौकसां जलमेव स्थानं तथोदुम्बर एव मशकानामपि एतदपि प्रत्यक्षसिद्धं न भवति

**नमः कारणमत्स्याय प्रलयाब्धिचराय च।**
**हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १७ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

को वेदोदुम्बरस्य मशकैः क्लेशोऽस्ति नवेति शरीरावयवेषु जीवानां स्थितौ तत्रोत्पन्नानामपि क्लेशो भवतीत्याशङ्क्य दृष्टान्तान्तरमाह। मनोमय इति। मनोरथे यथा जीवा विषयासक्तमानसः सुखदा एव भवन्ति नतु भारकरूपाः तथा भगवत्यपि सुखार्थमेव कल्पितास्ते लोकास्तिष्ठन्ति नतु भाररूपा भवन्ति ॥ १५ ॥

एवं भगवदवयवानां सर्वाधारत्वं सर्वदेवतारूपत्वं च निरूप्य तादृशस्य महतः लोके जुगुप्सितरूपेणावतरणं न युक्तमित्याशङ्क्य अवतारप्रयोजनमाह। यानि यानीति। हे भगवन्नानाविधक्रीडार्थं जले स्थले अरण्ये सर्वत्र क्रीडार्थं मत्स्यादिरूपाणि करोषि तावतापि न तेषां रूपाणां लोके निन्दा किन्तु यानि यानि रूपाणि त्वं बिभर्षि क्रीडार्थं कृतत्वात्तव नातीवादरः तथापि तैः रूपैः आमृष्टशुचः सर्वतो नाशितशोकाः सर्व एव लोकाः ते यशो मुदा गायन्ति अतो लोकानां गानार्थं तव चरित्रं तेन च सर्वपुरुषार्थसिद्धिः सर्वेषां दुःखनाशार्थमवतारणि चेत्युक्तं मुदा गायन्तीत्यनेन चरित्राणां स्वतः पुरुषार्थता च निरूपिता ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किञ्च वैराजरूपस्य तव ते ते देवा अङ्गान्येवातोऽपि तत्तद्देवपूजा तवैव पूजेत्याह। अग्निरिति। कं शिरः ॥ १४ ॥

नन्वेवं चेत्तर्हि देवयाजिनोऽपि मद्याजिन एव यान्ति मद्याजिनोऽपि मामिति मदुक्तेः। कथं ते मां न प्राप्नुयन्ति तत्राह। त्वयि पुरुषे वैराजरूपे लोका भूरादयः प्रकल्पिताः पाला इन्द्रादिदेवास्तत्सहिताः संजिहते प्रचलन्ति वा इवार्थे यथा च उदुम्बरफले मशकाः सूक्ष्मकीटाः असङ्ख्याः त्वयि कीदृशे मनोमये मन आद्यखिलतत्त्वमये मायिकत्वान्नश्वरे इत्यर्थः। हे अव्ययात्मन्! न व्येति न नश्यति आत्मा देहो यस्य हे सच्चिदानन्दविग्रहेत्यर्थः। तेनानश्वराणि सच्चिदानन्दमयानि रूपाण्येव तव स्वरूपाणि तानि यजन्त एव त्वद्याजिन उच्यन्ते वैराजरूपन्तु तव मायिकं रूपं नश्वरं नतु स्वस्वरूपमतस्तदङ्गभूत देवयाजिनो न त्वद्याजिनः अतः साधूक्तं यान्ति देवव्रता देवानित्यादीति द्योतितम् ॥ १५ ॥

ननु तर्हि कानि मम स्वरूपभूतानि रूपाणीत्यत आह। यानीति क्रीडनानि अब्धिसन्तरणमधुकैटभहननादीनि तदर्थं बिभर्षि नित्यसिद्धान्येव गृह्णासि गृहीत्वा लोकान् कृपया दर्शयसीत्यर्थः। अतस्तैरनाराधितैराम्रृष्टाः परिमार्जिताः शुचः आविद्यकशोकमोहादयो मल्दा येस्ते ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सर्वात्मने नम इत्युक्तं तत्प्रपञ्चयति। अग्निरिति द्वाभ्याम्। ईक्षणं चक्षुः श्रुतिः श्रोत्रम् कं शिरः प्राणश्च बलञ्चेति समाहारे द्वन्द्वः अद्रयः अस्थिनखानि ते परस्य अप्राकृतविग्रहस्यापि उपासनाविशेषविवक्षया एवंभूतदेहावयवविधानमिति मनोरथप्रदा इति भावः ॥ १३ ॥ १४ ॥

ये हेतवस्ते जगतोऽङ्गभूताः इत्यत्र सर्वजडचेतनयोः शक्त्यंशभूतयोः विश्वकारणरूपयोरङ्गित्वेन सर्वात्मत्वमुक्तमग्निर्मुखमित्यत्र कार्यरूपयोरङ्गित्वेन सर्वात्मत्वमुक्तमथ जडचेतनात्मकस्य कार्यकारणरूपस्य कृत्स्नस्य जगतः आधारत्वं भगवतो वर्णयति। हे अव्ययात्मन्! स्वरूपतस्तु जीवोऽपि अव्ययः भवांस्तु देहतोऽप्यव्ययं इति सम्बोधनाभिप्रायः त्वयि पुरुषे पूर्णे मनोमये मनःप्रधाने शुद्धेन भक्तमनसा ग्राह्ये दृश्यते "त्वग्रया बुद्धया मनसैवानुद्रष्टव्य" इत्यादिश्रुतेः लोकाः सूक्ष्मस्थूलरूपाः प्रकल्पिताः सम्यक् स्थिताः यथा जले जलौकसः उदुम्बरे मशकाश्च पूर्वमनभिव्यक्ता एवाभिव्यक्ताः सन्तः संजिहते प्रचलन्ति तद्वत् ॥ १५ ॥

तव येन केनाप्यवतारेण सेवितेन संसारशोकरहिताः निर्भयाः सन्तस्तव यशो गायन्तीत्याह। यानीति। तैर्हेतुभूतैः आमृष्टाः परिमार्जिताः शुचो येषां ते लोकाः साधुजनाः ॥ १६ ॥

---

### भाषा टीका।

अग्नि आपका मुख है पृथिवी आपका चरण हैं सूर्य आप का नेत्र है आकाश आपकी नाभि है दिशा सब आपके कर्ण हैं अंतरिक्ष आपका मस्तक हैं देवता आपके बाहु हैं समुद्र आपकी कुक्षि है पवन आपका बळ तथा प्राण है ॥ १३ ॥

वृक्ष औषधि आपके रोम हैं मेघ आपके केश हैं पर्वत आपके अस्थि तथा नख हैं रात दिनें आपके निमेष हैं प्रजा पति आपका लिंग इन्द्रिय है वृष्टि आपका वीर्य है ॥ १४ ॥

संपूर्ण दिक् पालों के सहित अनेक जीवों के सहित सब लोक अव्ययात्मा पुरुष आप में ही कल्पित हैं आप मन से जान ने योग्य हो आप केविषे ए सब ऐसे हैं कि जैसे जल में जल जंतु होवें जैसे गुलर के फल में मशक होवें ॥ १५ ॥

आप क्रीडाके अर्थ जिन जिन रूपों को धारण करते हो तिन रूपों के चरित्रों से सब लोक सुखी होकर आनंद से आपके यश का गान करते हैं ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका

अतः स्वयमप्यवताराश्रमस्यति। नम इति। हयशीर्ष्णे हयग्रीवाय मधुकैटभयोर्मृत्यवे हन्त्रे ॥ १७ ॥

अकूपाराय बृहते नमो मन्दरधारिणे ।
क्षित्युद्धारविहाराय नमः सूकरमूर्त्तये ॥ १८ ॥
नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ! ।
वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च ॥ १९ ॥
नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे ।
नमस्ते रघुवर्याय रावणान्तकराय च ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अकूपाराय कूर्माय क्षित्युद्धारो विहारो यस्य तस्मै ॥ १८-१९ ॥ भृगूणां पतये परशुरामाय ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वकारणरूपाय मत्स्यायेति तद्रूपस्य नित्यत्वादिकमभिप्रेतम् । एष कारणत्वमग्रेऽपि ज्ञेयं चकारात् सत्यव्रतोपदेशादिकारणेन । एवमन्येऽपि चकारा योज्याः । तुभ्यमित्यत्र च योज्यम् ॥ १७ ॥

"अकूपारः समुद्रे स्यात् कूर्मराजेऽपि कीर्तित" इति विश्वः । बृहत इति । योजनलक्षविस्तारात् । शूकरस्य मूर्त्तिरिव मूर्त्तिर्यस्येति प्राकृतशूकरत्वं निरस्तम् अप्राकृततदाकारत्वेनैव च सत्संग्रहत्वं विहितम् ॥ १८ ॥

तथा भूतत्वेऽपि हे साधुलोकभयापह ! ॥ १९ ॥

कुठारायुधत्वाद्वनरूपकं तेन तेषां तत्र किञ्चिदपि कर्तुमक्षमत्वं व्यञ्जितम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कानि तानि रूपाणि यैरासृष्टशुच इत्यत्र कानिचिन्निदर्शयन्नमस्करोति । नम इत्यादिना । कारणमत्स्याय जगत्स्थितिकारणभूताय मत्स्याय कारणपदेनावतारप्रयोजनं सूच्यते एवं मधुकैटभमृत्यवे इत्यनेन एवमुत्तरत्रापि द्रष्टव्यम् ॥ १७ ॥

अकूपाराय कूर्माय क्षित्युद्धार एव विहारो यस्य तस्मा इति प्रयोजनमुच्यते ॥ १८ ॥

हे साधुलोकभयापह ! इति सम्बोधनं प्रयोजनकथनाभिप्रायकं क्रान्तं त्रिभुवनं येन तस्मै इत्यवतारप्रयोजनमुच्यते ॥ १९ ॥

दृप्तं गर्वितं प्रभूतं वा क्षत्रकुलमेव वनं तस्य छेत्रे इति प्रयोजनं दुष्टक्षेत्रेति च पाठः भृगूणां पतये परशुरामाय रावणस्यान्तं नाशं कृतवानिति तथा तस्मा इति प्रयोजनम् ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

कारणमत्स्याय मन्वादिरक्षणं निमित्तीकृत्य मत्स्यवेषधारिण इत्यर्थः । असुरमदं स्यति नाशयतीति मत्स्यः "षोऽन्तकर्मणीति" धातुः मत्स्यानामुदकमेव परं जीवनमिति सूचनाय प्रलयाब्धिचरायेति प्रलयाब्धिचरणमन्यस्य न शक्यमिति ईश्वरत्वद्योतनाय वा चशब्दो वक्ष्यमाणसमुच्चये वर्तते मधुकैटभमृत्यवे केशवाय ॥ १७ ॥

अकूपाराय कूर्मरूपाय "कूर्मेचाप्यथाकूपार" इति बृहते नित्यवृद्धाय किङ्कृत्यमित्यत उक्तं मन्दरेति ॥ १८ ॥

साधुलोकभयापह ! देवजनस्य बल्यादेः प्राप्तभयमपहन्तीति क्रान्तत्रिभुवनाय त्रिविक्रमाय ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सर्वकारणरूपाय मत्स्याय ॥ १७—२१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्यप्यनन्तानि रूपाणि तथापि प्रसिद्धानि कानिचित् गणयन् महत्त्वख्यापनाय सर्वत्र नमस्यति । नमः कारणमत्स्यायेति । मत्स्याय ते तुभ्यं नमः ननु निन्दितो मत्स्यः किमिति भगवान् जात इत्याशङ्क्याह । कारणेति । यदा मत्स्या जाताः तदा बीजत्वेन कश्चिन्मत्स्यः पूर्वसिद्धः कारणत्वेनाङ्गीकर्त्तव्यः अन्यथा मत्स्यानामुत्पत्तिर्न स्यात् उदुम्बरादिषु मांसेषु वा जीवानामुत्पत्तौ कारणभूतरूपस्य तत्र स्थितिरवश्यमङ्गीकर्त्तव्या अन्यथा कारणरूपता भज्येत अनेन जगति यावन्ति रूपाणि भगवतः कारणरूपाणीति नहि भगवतः कस्मिंश्चिद्रूपे गृहीते विगानं भवति कारणार्थं वा प्रलये सत्यव्रतरक्षा वेदोद्धारश्च कार्यं तदर्थं मत्स्य इति तस्मै नमः तदपि रूपमुपास्यमिति प्रलयकालीनो योऽब्धिः तस्मिंश्चरतीति चरित्रं सत्यव्रतरक्षात्मकं वेदोद्धारः रूपद्वयेन कृत इति हयग्रीवरूपं च कृतवानित्याह हयशीर्ष्ण इति । हयस्य शिर एव शिरोभाग एव अङ्गं तु पुरुषरूपमेव हयग्रीवावतारेण कृतं चरित्रमाह । मधुकैटभयोः मृत्युरिति । मधुकैटभौ तेन रूपेण हताविति मृत्युत्वात् खल एवोत्पन्नयोरपि वधे न कश्चिद्दोषः अनुपकारित्वात् तस्मै ते तुभ्यं सर्वदा नमोऽस्त्विति प्रार्थयति ॥ १७ ॥

कूर्मं नमस्यति । अकूपारायेति । अकूपाः अनिम्ना आरा रेखा यस्येति कूर्मः योगप्राधान्यात् समुद्रवत् कूर्मस्यापि वाचकः अकूपारशब्दः समुद्रादप्यधिक इति जलचरत्वदोषपरिहारार्थमाह । बृहत इति । अतिस्थूलाय चरित्रमाह । मन्दधारिण इति । अमृतमथने मग्नं मन्दरं धृतवानिति क्षित्युद्धारार्थमेव विहारो यस्येति वराहरूपत्वेऽपि न काचित्क्षतिः अत एव रूपात् प्रथमतः चरित्रमुक्तं शूकररूपा मूर्तिर्यस्य ॥ १८ ॥

नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वताम्पतये नमः ॥ २१ ॥
नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ।
म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे ॥ २२ ॥
भगवन् ! जीवलोकोऽयं मोहितस्तव मायया ।
अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २३ ॥
अहं चात्मात्मजागारदारार्थस्वजनादिषु ।
भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ! ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नमस्ते इति । अद्भुतसिंहोऽर्धसिंहः अर्द्धं च नरः वचनप्रामाण्यात् स्तम्भाद्वा निर्गमादद्भुतत्वं चरित्रमाह संबोधनेन साधुलोकानां प्रह्लादादीनां भयमपहन्तीति यद्यपि वामनोऽपि नावतारूपं किं तु पेन्द्र एव तथापि कार्यं तेन रूपेण कृतमिति वामनायेत्युक्तं क्रान्तानि त्रिभुवनानि पदक्रमैर्येन चेति बलिबन्धनादिकमपि कृतवान् ॥ १९ ॥

नम इति । भृगूणां पतये भार्गवोत्तमाय परशुरामाय चरित्रमाह । दृप्तं यत् क्षत्रं तदेव दैत्यत्वादतिप्रवृद्धं वनरूपं जातं तत् छिनत्तीति रघुवर्यः रघुवंशोत्पन्नेषु श्रेष्ठो रामचन्द्रः चरित्रमाह । रावणस्य अन्तकरायेति चकारादन्यदप्यनन्तमेव चरित्रं गृह्यते ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तान्येव कानीत्याकाङ्क्षायामाह । नम इति षड्भिः । सर्वकारणरूपायेति । तद्रूपस्य नित्यत्वादिकमभिप्रेतम् । एवं कारणत्वमग्रेऽपि ज्ञेयम्, प्रलयाब्धिचरायेति तत्रतत्रतत्स्खलनमेव क्रीडनम् । एवमग्रे मधुकैटभहननादीन्येव क्रीडनानि ज्ञेयानि । अकूपाराय कूर्माय । "अकूपारः समुद्रः स्यात् कूर्मराजेऽपि कीर्त्तित" इति विश्वः॥१७-२१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतः व्यूहाङ्गिवसुदेवसहितान् कांश्चिदवतारान्स्वयमपि नमस्यति । नम इति षड्भिः ॥ १७ ॥
अकूपाराय कूर्माय ॥ १८—२२ ॥

---

भाषा टीका ।

सबके कारण होकर मत्स्य रूप धारण कर प्रलय समुद्र में विचरने वाले तथा हयग्रीव अवतार से मधुकैटभदैत्यों को मारने वाले आपके अर्थ नमस्कार है ॥ १७ ॥

बडे भारी कूर्मावतार से मंदर पर्वत धारण करने वाले तथा पृथिवी के उद्धार से विहार करने वाले वाराह मूर्ति आपको नमस्कार है ॥ १८ ॥

साधु लोकों के भय नाश करने वाले अद्भुत नृसिंहावतार आपके अर्थ नमस्कार है तीनों भुवन को आक्रमण करने वाले वामनावतार आपके अर्थ नमस्कार है ॥ १९ ॥

गर्वित क्षत्रिय रूप वन के नाश करने वाले भृगुपति परशुराम अवतार आपके अर्थ नमस्कार है रावण के नाश करने वाले रघुवर श्रीरामचंद्र रूप आपके अर्थ नमस्कार है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्व्यूहरूपेण प्रणमति । नमस्ते वासुदेवायेति ॥ २१-२२ ॥

एवं स्तुत्वा बन्धमोक्षं प्रार्थयितुमाह । भगवन्निति । असति देहादौ ग्राह आग्रहो यस्य सः असन् ग्राहो यस्येति वा ॥ २३ ॥

न केवलमयं लोकोऽहमपि तथैवेत्याह । अहञ्चेति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नमस्त इति । तैर्व्याख्यातं तत्र सङ्कर्षणमित्यादेरयमर्थः । क्रमप्राप्तस्तावदत्र श्रीबलराम इति सङ्कर्षणशब्देन स एवोच्यते स च श्रीकृष्णलक्षणवासुदेवादिचतुर्व्यूहान्तःपाती ततस्तदन्तःपातितयैव तं प्रणमन् तान् सर्वानेव प्रणमतीति तापन्यादावेषां नित्यत्वश्रवणात्सदानीमनाविर्भूतयोरपि प्रद्युम्नादिकयोर्नमस्कारस्तां श्रुतिं प्रमाणयति । सात्वतां पतय इति । सर्वेषामेव विशेषणम्, सद्दंद्वयानामपि स्तुत्यर्थं तृतीयनमःशब्दः प्रद्युम्नेऽपि योज्यः ॥ २१ ॥

शुद्धाय वेदविरुद्धशास्त्रप्रवर्तकत्वेऽपि निर्दोषायैव । तत्र हेतुर्दैत्येति । म्लेच्छा एव प्रायेण साहस्येन क्षत्राणि क्षत्रियाः राज्यकारित्वात्तत्तुल्या इत्यर्थः । तेषां हन्त्रे कल्कः दम्भः म्लेच्छवेशित्वेन सोऽस्यास्तीति तादृशं रूपं यस्य तन्नाम्ने ॥ २२ ॥

एवं त्वया लोकोद्धारार्थमवतारेषु कृतेष्वपि ये महापराधसंस्कारवन्तस्ते तु त्वन्मायया मोहितास्त्वद्भक्तिं विहायान्यत्र प्रवर्तन्ते इति शोचन्नाह । भगवन्निति । हे मायातिरस्कारषड्गुणैश्वर्य ! इति निवेदने हेतुरयं कर्ममार्गेष्वेव भ्राम्यते मुहुरावृत्त्या प्रवर्त्यते न तु त्वद्भक्तावित्यर्थः ॥ २३ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वद्भक्तौ प्रवृत्तोऽहं नूनं तादृगपराधिसङ्गदोषात् पुनर्लब्धच्छिद्रया त्वन्माययावरणाद्गृहाद्यासक्तिं हातुं न शक्नोमीत्याह । अहं चेति । अप्यर्थे चकारः आत्मा देहः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम

अहं चात्मेति । आत्मशब्दः शरीरवाची । स्वप्नकल्पेषु अनित्येषु नित्यबुद्ध्या आत्मव्यतिरिक्तदेहादावात्मबुद्ध्या च विपर्यस्तमितिः ॥ २४—२७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रामकृष्णौ विभवौ वासुदेवसङ्कर्षणौ व्यूहौ च तन्त्रेणाभिप्रेत्य नमस्करोति । नमस्ते वासुदेवायेत्यर्द्धेन । प्रद्युम्नानिरुद्धौ व्यूहौ नमस्करोति प्रद्युम्नायानिरुद्धायेति सर्वेषां प्रयोजनाभिप्रायेण विशिनष्टि । सात्वताम्पतये नमः साधुपरित्रात्रे इत्यर्थः । यद्वा वासुदेवायेत्यादिभिश्चतुर्भिर्व्यूहचतुष्टयं नमस्क्रियते सात्वताम्पतय इत्यनेन रामकृष्णनमस्कृतिः तेनैव प्रयोजनं चाभिप्रेतम् ॥ २१ ॥

वेदाप्रामाण्याद्युपदेष्टृत्वेऽपि शुद्धाय विशुद्धकर्मणे तस्य दुष्कृन्निरसनार्थत्वादित्यभिप्रेत्य प्रयोजनञ्च वदन् विशिनष्टि । दैत्यदानवमोहिन इति । दैत्यान् दानवांश्च मोहयतीति तथा म्लेच्छप्रायं म्लेच्छतुल्यं यत्क्षत्रकुलं तस्य हन्त्रे इति प्रयोजनमुक्तम् ॥ २२ ॥

एवं स्तुत्वा बन्धमोक्षं प्रार्थयितुमाह । भगवन्निति । हे भगवन् सर्वोजनस्तव मायया मोहित अतएवानात्मन्यात्माभिमानरूपादस्वस्मिन् स्वत्वाभिमानरूपाच्चासतो दृष्टानर्थकराद्ग्राहाद्कर्मात्मकज्ञानात्कर्मवर्त्मसु कर्ममार्गेषु शब्दादिविषयसाधनभूतेषु भ्राम्यते यद्वा असद्ग्राह इति । अहंममेत्यसति प्रकृतिपरिणामरूपे देहतदनुबन्ध्यादौ आग्रहः असदाग्रहः ग्राहः अभिनिवेशो यस्य तथाभूत इत्यर्थः ॥ २३ ॥

भ्राम्यत्वेवं लोकस्तव किं तत्राह । अहञ्चेति । अहमित्यादिभिश्चतुर्भिस्तावदात्मनः कार्पण्यमावेद्य सोऽहमित्येकेन प्रपद्य शरण्यगुणाविष्कारपूर्वकं गोप्ता भवेति प्रार्थयते यथा सर्वलोकस्तथा तदन्तर्गतोऽहमपि गेहापत्यादिषु स्वप्नवदर्थतुल्येषु अनित्येष्वित्यर्थः । सत्यधिया नित्यबुद्ध्या भ्रमामि अतोऽहं मूढः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संकर्षणादिषु हरेः संनिधानविशेषात्तेषामवतारान्तर्भावं कृत्वा नमनं क्रियते ननु साक्षादधोक्षजावतारत्वेन तदुक्तम्—

प्रद्युम्ने चानिरुद्धे च बलदेवे च केशव इत्यादौ ॥ २१ ॥

बुद्धावतारप्रयोजनं दैत्यमोहनमेव नान्यदिति द्योतयति । दैत्येत्यादिना ॥ २२ ॥ २३ ॥

आत्मा देहः आत्मजः पुत्रः अर्थो हिरण्यादिः स्वजनो बन्धुजनादिः भ्रमामि भ्रान्तिं करोमि ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

म्लेच्छा एव प्रायेण सादृश्येन क्षत्राणि क्षत्रियाः राज्यकारित्वात्तत्तुल्या इत्यर्थः तेषां हन्त्रे ॥ २२—२६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवांश्चतुर्मूर्त्तिरवतीर्ण इति भगवतः कृष्णस्यावतारे विशेषमाह । नमस्ते वासुदेवायेति । अत्रादिमध्यावसानेषु नमनं सङ्कर्षण आवेशमपि भगवान्करोतीति तदपि रूपं चकारेण परिगृहीतं चरित्रमाह । सात्वताम्पतय इति । समस्तभक्तानां पतये सर्वथा रक्षकाय प्रार्थनाव्यतिरेकेणापि स्वकीयानां सर्वपुरुषार्थानेवावतार इत्यर्थः ॥ २१ ॥

अग्रे जायमानमाह । नमो बुद्धायेति । आर्षज्ञानेन यथा यथा पश्यति तथा तथा निरूपयति भगवान् वा तं प्रति तथा तथा आत्मानं प्रदर्शयति बुद्धो वेदादिनिन्दया विसदृशो भविष्यति इत्याशङ्क्याह । शुद्धायेति । सर्वदोषरहिताय तर्हि किमर्थं तथोक्तवानित्याशङ्कां परिहरन् चरित्रमाह । दैत्यान्दानवांश्च मोहयतीति दैत्यदानवानां यो मोहः सोऽस्य वर्त्तत इति अयं चेन्न प्रकटीकुर्यात्त तदा मोहो न भवेदिति मत्वर्थीय इन् प्रत्ययः कल्किं नमस्यति । म्लेच्छक्षत्रेति क्षत्रं रक्षकत्वेन स्थितं हन्तीति क्षत्रघ्नः क्षत्रहन्ता तदा क्षत्रिया म्लेच्छरूपा इति म्लेच्छप्रायेत्युक्तं द्वयं भिन्नतया निरूपितवान् गुणदोषयोर्विपरीतत्वबोधनाय म्लेच्छा ये सहजदैत्याः ते गुणवन्तोऽपि हन्तव्याः क्षत्रियास्तु दोषवन्त एवेति एवं प्रयोजनमुक्त्वा पश्चात्स्वरूपमाह कल्कस्येव निष्पीडितरसस्य चतुर्युगात्मकस्य कालस्य स्वरूपमस्मिन् वर्त्तत इति कल्किनि केवलं तस्यैव रूपं स्वस्मिन्प्रतिबिम्बितं प्रतीयते किं तु अस्यापि पृथग्रूपवत्त्वमुक्तम् ॥ २२ ॥

कियन्ति रूपाणि भगवतो नत्वा किञ्चित्प्रार्थयितुं सर्वेषामेव साधारणं दुःखं निवेदयति । भगवन्निति । एतादृशेऽपि त्वयि सर्वदा जागरूके लोकाः त्वन्मायया मोहिता इति दुःखं प्राप्नुवन्ति अन्यथा कथं दुःखं स्यात् भगवन्निति सम्बोधनं सर्वसामर्थ्याय अयं सर्वोऽपि परिदृश्यमानो जीवलोकः तथैव मायया अनुल्लङ्घ्यया मोहितः अन्यथा अहं ममेति दुष्टे देहादौ ग्राहः आग्रहो यस्य तादृशः कथं भवेत् अत एव कर्ममार्गेषु उच्चावचेषु श्वयोन्यादिषु भ्राम्यते पुनः परिभ्रमति यदि मायया मोहितो न स्यात् तदा सकृत् क्लेशं प्राप्य पुनरहंममाभिमानं न कुर्यात् ॥ २३ ॥

तर्हि तव किमित्याकाङ्क्षायामाह । अहं चेति यथा अन्ये मोहिताः अहम् अहमपि मोहितः किं च मयि विशेषोऽप्यस्तीत्याह । आत्मात्मजेति । आत्मा देहः आत्मजाः पुत्राः अगारं गृहं दाराः स्त्रियः अर्थो धनं स्वजनाः बान्धवाः तेषु सर्वेष्वेव सकृदवगतैश्वर्योऽपि पुनर्भ्रमामि न वा एते स्वप्नवत् सन्ति नापि कार्त्स्न्येनाभिव्यक्ताः अन्यथा तेषां कार्यम् आपाततोऽपि प्रकटं स्यात् यतोऽहं स्वप्नकल्पेष्वपि भ्रमामि न केवलमहन्तामतामात्रमपि अतो मूढः सर्वापेक्षयापि किंच न केवलं भ्रममात्रं किं तु तेषु सत्यबुद्धिरपि जायते येन विचारेऽपि अन्यथा बोधेऽपि

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् ।
द्वन्द्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियम् ॥ २५ ॥
यथाबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ।
अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः ॥ २६ ॥
नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ।
रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥ २७ ॥
सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं तच्चाप्यहं भवदनुग्रह ईश ! मन्ये ।
पुंसो भवेद्यर्हि संसरणापवर्गस्त्वय्यब्जनाभ ! सदुपासनया मतिः स्यात् ॥ २८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भ्रमो निवर्त्तते प्रभो ! इति सम्बोधनं त्वं सर्वसमर्थः एतादृशमप्यसाध्यं साधयिष्यसीति ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बुद्धाय वेदविरुद्धशास्त्रप्रवर्त्तकत्वेऽपि निर्दोषाय ॥ २२ ॥

एवं स्तुत्वा दुःखं विज्ञापयति । भगवन्निति । भ्राम्यते माययैव ॥ २३—२४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथानादिमायामोहितत्वात्संसारगर्ते पतितः स्वयमात्मविमोक्षणेऽसमर्थस्त्वच्चरणं शरणं गतोऽस्मीत्याह । भगवन्नितिपड्भिः । असतोरनित्ययोर्देहगेहयोरहमिति ममेतिच ग्राह आग्रहो यस्य सः ॥२३॥

तथैवाहं च स्वप्नकल्पेषु स्वप्नवदनित्येषु सत्यधिया नित्यबुद्ध्या ॥ २४ ॥

भाषा टीका ।

वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध सात्वतों के पति आपके अर्थ नमस्कार है ॥ २१ ॥

शुद्ध स्वरूप तथा दैत्य दानवों के मोहने वाले बुद्धावतार आपके अर्थ नमस्कार है और म्लेच्छ सरीके क्षत्रियों के मारने वाले कल्कि रूप आपके अर्थ नमस्कार है ॥ २२ ॥

हे भगवन् ! यह लोक आपकी माया से मोहित है सो मैं हूं मेरा है इस असत् बुद्धि को ग्रहण करके कर्म के मार्गों में घूमता रहता है ॥ २३ ॥

हे विभो ! मैं भी पुत्र घर भार्या धन स्वजनादिकों में जो कि स्वप्न के तुल्य अचिर स्थायी हैं तिन में मूर्ख होने से सत्यबुद्धि से भ्रमि रहा हूं ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मूढत्वमेव प्रकटयति । र्ध विपर्ययमतिरिति । अनित्ये कर्मफले नित्यांमत्यनात्मनि देहे आत्मेति दुःखरूपे गृहादौ सुखमिति विपरीतमतिरित्यर्थः द्वन्द्वेषु सुखदुःखादिष्वारमि क्रीडतीति तथा सः दुःखे कुतो रतिस्तत्राह । तमोविष्टस्तमसा व्याप्तो ऽत आत्मनः प्रियं प्रेमास्पदं त्वा त्वां न जान इत्यर्थः ॥ २५ ॥

तदेव सदृष्टान्तमाह । यथेति । तस्माज्जलादुद्भवन्तीति तदुद्भवानि तृणादीनि तैः तथा मायाच्छन्नं त्वा त्वामहं हित्वा पराङ्मुखो देहाभिमुखो वर्त इति ॥ २६ ॥

नन्वेवं जानतः कुतो विषयाभिमुखता तत्राह । नोत्सह इति । कृपणा विषयवासनायुक्ता धीर्यस्य सः अत एव कामकर्मभ्यां हतं क्षुभितमिन्द्रियैश्च बलिभिर्विषयसंयुक्तैरितस्तत आकृष्यमाणं मनो रोद्धुं नियन्तुं न शक्नोमीति ॥ २७ ॥

तदेवमस्वतन्त्रो यः सोऽहं तवाङ्घ्रिमुपगतः शरणं प्राप्तः नन्विन्द्रियपरतन्त्रस्यैतदपि कुतस्तत्राह । तच्चापीति । हे ईश ! अन्तर्यामिंस्त्वदङ्घ्र्युपगमनं चासतां दुरापमतो भवतो ऽनुग्रह एवेत्यहं मन्ये अनुग्रहे सतीति वा ननु सतां सेवयेदं भवतीति किं मदनुग्रहेणेत्यत आह । पुंस इति । जीवस्य संसारस्यापवर्गः समाप्तिर्यदा त्वत्कृपया भवेत्सम्भावनास्पदं भवति हे अब्जनाभ ! तदा सदुपासना सम्पद्यते तयैव त्वयि मतिर्भवेत् त्वत्कृपां विना न सत्सेवा नतरां त्वन्मतिर्नतमां मुक्तिरित्यर्थः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनित्यादिषु विपरीतबुद्धिः सन् द्वन्द्वारामः हि निश्चितं त्वा त्वामात्मन एव साक्षात्प्रियं परमात्मत्वात् ननु पुत्रादिवद्देहादिसम्बन्धेनेत्यर्थः । इति देहादिभ्योऽपि प्रियतमत्वेन ज्ञानयोग्यतोक्ता तथापि न जाने नानुभवामि ॥ २५ ॥

अबुधः अविवेकी तदुद्भवैः सरसशैवालादिभिरिति सुगोप्यत्वमपि सूचितं दार्ष्टान्तिकेऽपि तत्तत्प्रभावमाधुर्य्ययुक्तत्वेन अभ्येति दूरतो याति वै प्रसिद्धौ हित्वाहं त्वामित्येव पाठः तथेति टीकातः तद्वत्त्वाहमिति पाठे तु सिद्धे त्वा त्वां हित्वेत्यन्वयः तथेति टीका तु तद्वदित्यस्य मन्तव्या ॥ २६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कामः पूर्ववासना तत्प्रेरितेन कर्मणा हतं ततोऽप्यैहिकविषयाणां संयुक्तत्वात्प्रमाथिभिः ॥ २७ ॥

अस्मीति शरणागतत्वस्य दार्ढ्यं नित्यत्वं चाभिप्रैति असतामिन्द्रियपरतन्त्राणां हे ईशेति अन्तर्यामितयाधुना त्वयैव तत्र तत्प्रेरणादित्यर्थः । अयमनुग्रहे हेतुः अब्जनाभेति लोकानुग्रहेणैव लोकपद्मं निजनाभौ वहसीति भावः । अन्यस्तैः तत्र सदुपासना तद्भक्तानां सेवा संपद्यते सम्भीभवति त्वन्मतिस्त्वज्ज्ञानं मुक्तिभेक्तेरानुपङ्गिकी सापि न तमां किमुत स्वयं भक्तिरित्यर्थं इति ज्ञेयं यद्वा त्वज्ज्ञानं तु मम परमदूरतममित्याह । पुंस इति । अथवा स तथाविधोऽप्यहमङ्घ्र्यित्यत्र सुपां सुलुगित्यादिना अमो लुक् असतां तथाविधानां मादृशां दुरापं तवाङ्घ्रिं यदुपगतोऽस्मि समीपे प्राप्तवानस्मि तच्चाप्यहमित्यादि अत्र पुनरहंशब्दः केचिन्निजभजनादिकं कारणं वदन्तु अहंतु त्वदनुग्रहमेवेति व्यनक्ति अहो अस्तु तावत्त्वदङ्घ्रिसमीपप्राप्तिरन्यथा त्वयि मतिरपि दुरापेत्याह । पुंस इति । विचारेण यर्हि चिरेण सत्या उत्तमया उपासनया त्वदाराधनेन सतां चोपासनया संसारापवर्गस्तद्वासनाक्षयः स्यात्तदैव तया त्वयि मतिर्भक्तिः स्यान्नान्यदेति ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

संसरणं संसारः संसारवासना हेतुभूता त्वयि त्वद्विषया मतिः न यद्वा यदा मतिः स्यात् तदा संसारापवर्ग इत्यर्थः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मूढत्वमेवाविष्करोति । अनित्येति । अहमनित्यानात्मदुःखेषु विपर्ययस्ता मतिर्यस्य सः अनित्येषु वस्तुषु नित्यमतिमान् अनात्मनि देहे आत्माभिमानवान् अन्ततो दुःखात्मकेषु शब्दादिविषयेषु सुखाभिमानी चेत्यर्थः। द्वन्द्वेषु सुखदुःखादिषु आरमामीति क्रीडतीति तथा सः वैषयिकसुखानुबन्धितया प्राप्तं दुःखमपि सुखमन्यमान इत्यभिप्रायः तत्र हेतुः तमसा गुणेन व्याप्तः आत्मनः प्रियं न जाने निरतिशयनित्यनिरुपाधिकप्रीतिविषयं त्वां न जानामीत्यर्थः ॥ २५ ॥

उक्तमेव सदृष्टान्तमाह । यथेति । तस्मात् जलादुद्भवन्तीति तथा तैस्तृणादिभिश्छन्नं जलं हित्वा अत एवाबुधो मृगतृष्णां जलवदवभासानां मरीचिकामभ्येति तथाहमपि त्वां निरतिशयपुरुषार्थभूतं तत्साधनभूतञ्च त्वां त्यक्त्वा पराङ्मुखः देहाद्यभिमुखो वर्त्त इत्यर्थः ॥ २६ ॥

नन्वेवं जानतः कुतस्तव विषयाभिमुख्यं तत्राह । कृपणा विषयवासनायुक्ता धीर्यस्य सः अत एवान्तः कामकर्मभ्यां हतं क्षुभितमिन्द्रियैः प्रमाथिभिर्विषयसंयुक्तैरितस्ततं आकृष्यमाणं मनो रोद्धुं नियन्तुं नोत्सहे न शक्नोमि ॥ २७ ॥

तदेवं विषयपरवशः साधनान्तररहितोऽहमङ्घ्रिमुपगतः तवाङ्घ्र्युपगतः शरणं प्राप्तः कथम्भूतमङ्घ्रिम् असतां दुरापं दुष्प्रापं सापेक्षत्वाङ्घ्रिशब्दस्याप्यत्र समास आर्षः नन्विन्द्रियपरवशस्यैतदपि कुतस्तत्राह । तथापीति । तदङ्घ्र्युपगमनं भवदनुग्रहं श्रीभगवदनुग्रं त्वदनुग्रहमूलकं मन्ये अन्तरात्मतया अनुजिघृक्षोस्तवानुग्रहकारित्वं मन्य इत्यभिप्रायेण सम्बोधयति अनेन शरणवरणे स्वस्वातन्त्र्यनिवृत्तिः सूचिता ननु प्रपित्सा स्वस्यैवामूलिका ननु मदनुग्रहमूलिकेत्यत्राह । यदा पुंसः संसारिणः संसरणस्यापवर्गः समाप्तिर्यस्मात्स अनुग्रह इति विशेष्याध्याहारः तथाभूतस्त्वदनुग्रहो भवेत्तदा हे अब्जनाभ ! सतामुपासनया त्वयि मतिः स्यात्प्रपित्साभिका मतिः स्यादित्यर्थः । ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तदा विष्णोः कटाक्षः इत्याद्युक्तरीत्या सत्सङ्गादिप्रणाड्यामपि त्वदनुग्रह एव निदानमिति भावः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनित्यानात्मदुःखेषु विपर्ययमतिः। अनित्येषु नित्यबुद्धिः अनात्मन्यात्मबुद्धिः ॥ २५ ॥

तदुद्भवैः जलोद्भवैः शैवालादिभिः अबुधः मृगतृष्णां मृग्यन्त इति मृगा विषयास्तत्तृष्णाञ्च ॥ २६ ॥

मनो रोद्धुं नोत्सहे ॥ २७ ॥

तथापि प्रयत इत्याशयेनाह । सोऽहमिति । यः मनःसाधनकरणाशक्तः सोऽहं यच्च तवाङ्घ्र्युपगमनञ्च अपिशब्द एवार्थे स्वपदप्राप्तौ निमित्तं ध्वनयति । पुंस इति । यर्हि यदा संसरणात्संसारादपवर्गो मोक्षो भवेत् कस्य पुंसस्तदाह । हे अब्जनाभ । सतां पुरुषाणामुपासनया सेवया हेतुना त्वयि मतिः मननबुद्धिः अवतरतीत्यर्थः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कामेन भोगेच्छया कचित् कर्मणा केवलप्रारब्धाख्येनापि ॥ २७ ॥

सोऽहमिति । तथाविधकृपणधीरप्यहं ननु सन्मार्गं विना मदनुग्रहोऽपि कथं स्यात्तत्राह । पुंस इति । पुंसः यर्हि संसाराणामपवर्गः स्यात् सर्वज्ञैर्बोधितत्वेन सम्भाव्यते तर्हि सदुपासनया त्वयि मतिः स्यादित्यर्थः । भवापवर्गो भ्रमतो यदा भवेदित्यादेः तस्मादत्र ममापि सदुपासनैव निदानमिति भावः ॥ २८–३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु शास्त्राद्विवेके उत्पन्ने संसारस्यासारतां ज्ञात्वा स्वयमेव सर्वं त्यक्ष्यसि किं मया कर्त्तव्यमित्याशङ्कायामाह । अनित्येति । शास्त्रमप्युल्लङ्घ्य मम बुद्धिर्विपरीता जाता अनित्ये सर्वत्र नित्यबुद्धिः देहे दैहिके च अनात्मनि आत्मबाधके आत्मबुद्धिः देहादावेव दुःखे विण्मूत्रपूयास्थितौ सुखबुद्धिः अतो ज्ञानमपि शास्त्रं नानुभवं बाधते अतो द्वन्द्वेष्वेव सुखदुःखादिषु रागद्वेषादिषु वा आरामो यस्य तादृशो जातः ननु कथमेवं भ्रमस्तत्राह । तमो-

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विष्ट इति । तमो महामोहः अज्ञानमेव वा तर्हास्य निवृत्तिः कदेत्याशङ्कायां त्वयि ज्ञाते प्रकाशो भवतीति निश्चित्य त्वज्ज्ञानमेव चक्षुषि विद्यमानतमसा न जायत इत्याह । न जान इति न हि स्वप्रकाशमपि सूर्यमन्धः पश्यति तथा त्वामपि आत्मनामपि प्रियं परमानन्ददातारं सुगममपि प्रत्यक्षसिद्धमपि तथात्वेन न जाने आत्मनः परमिति वा नियन्तारम् ॥ २५ ॥

ननु श्रुत्यनुभवौ परित्यज्य युक्तिमान् विवेकी कथं न जानातीत्याशङ्क्य दृष्टान्तेन स्पष्टयति । यथेति । अबुधो मूर्खः जलार्थी सन् जलाशयोपरि तिष्ठन् कमलपत्रादिभिः आच्छन्नं जलं कमलपत्रादिसमूहमेव ज्ञात्वा तद्दूरीकृत्य मध्यस्थितं जलमगृहीत्वा दूरे मरीचिकाजलं पश्यन् तदर्थमभिधावति तद्वद्देवान्तः स्थितं भगवन्तम् अहङ्कारादिभिस्तद्गुणैराच्छन्नं तद्दूरीकृत्य परमानन्दमननुभूय दुःखात्मके बहिर्विषये अभिधावति तद्वदहं त्वां हित्वा विषयसुखार्थं गच्छामि अत्र हेतुमाह । पराङ्मुख इति । पराक् बहिरेव मुखं यस्येति मुखमत्र प्रवृत्तिस्वभाव आत्मा तस्य प्रतिनिधिरूपमिदं मुखं यदभिमुखस्तदेव च करोति अत्र शास्त्रादिद्वारा यदा अन्तर्मुखो भवति तदैव निकटे भगवन्तं प्राप्नोति बहिर्जलप्राप्तिस्तु भगवदिच्छया प्रलय इव सर्वत्र भगवदभिव्यक्तौ यथैवायं प्रदर्शयति तथैव स मन्यत इति स्वयमपि तथैव तत्प्रत्याभिव्यक्त इति न काप्यनुपपत्तिः ॥ २६ ॥

ननु जाते विवेके कथं मोह इति चेत्तत्राह । नोत्सहेऽहमिति । मनो हि द्विः स्वभावं क्रियाशक्तियुक्तं ज्ञानशक्तियुक्तं च । यथा विवेकेन शास्त्रेण च ज्ञानशक्तिरुत्पाद्यते । एवं योगेन क्रियाशक्तिरपि चेदुत्पाद्येत तदैकमुखं मनो भवति अन्यथा बलिष्ठा क्रिया ज्ञानं बाधित्वा स्वकार्यमेव करोति । अत एव केचित् ज्ञानापेक्षयापि योगमेव प्रशंसन्ति ज्ञानिभ्योऽप्यधिको मत इति भगवानप्याह । ज्ञानेच्छाप्रयत्नानामुत्तरोत्तरप्राबल्यं तथैव मनोवाक्कायानामपि तत्र कामादयो बाधकाः तैः संसार एव मनः प्रवर्त्यते योगादयस्त्वशक्याः न ह्यन्धकारे महति वायौ वृष्टौ च दीपः स्थापयितुं शक्यते तदाह । कृपणधीरिति । कृपणा दीना बुद्धिर्यस्य मनसो हि निश्चयात्मिका बुद्धिः सैवादौ कृपणा दीना विषयपरा न हि चौरेणान्यः सन्मार्गे स्थापयितुं शक्यः किं च मनः पुनः कामकर्मभ्यां हतमुत्कटेच्छा कामः तदनुगुणं च कर्म ज्ञानं तु दुर्बलमसहायं कामकर्मभ्यां च हतं न तु स्वस्थं तद्बलेन तदनुगुणमेव भवति न त्वात्मानुगुणमतो रोद्धुमुत्साहमपि न करोमि अशक्यज्ञाननिश्चयात् किं च प्रमाथिभिर्बलिष्ठैरिन्द्रियैः इतस्ततो ह्रियमाणम् अतः सर्वथैवाशक्तः केवलं शरणं गच्छामि बलिष्ठांस्तांश्च निवेदयामि स्वाशक्यत्वं च ॥ २७ ॥

एवं सति यत्कर्तव्यं भगवतैव तद्येत् क्रियेत कृपया स्वगतविचारेण अस्मद्वाक्येन तस्यैव वा कार्यार्थं तदैव निस्तारो नान्यथेत्यभिप्रायेणाह । सोऽहं तवाङ्घ्र्युपगतोऽस्मीति । सर्वथा अशक्यसाधनः सोऽहं तवाङ्घ्रिमुपगतः दीनतया शरणं प्रविष्टः इदानीमस्मि एतदपि शरणगमनमपि असतां दुरापं ये असन्तः पूर्वोक्ताः विवेकरहिता अपि विवेकेन त्वेतावत्सम्पाद्यत इति किं च भगवदनुग्रहमेव तन्मन्ये अन्यथा शरणागतो न भवेत् शरणागतो जात इति वा न भवेत् यदि सञ्जातमनुगुणं कुर्यात् त्याजयेद्वा तदा शरणागतिः सिद्धेति ज्ञातव्यम् अनुगुणपक्षस्तु ज्ञातुं सुगमः त्याजनपक्षस्तु दुर्ज्ञेयोऽपि अनुभावेन कृपाप्रकाशेन च ज्ञायते अतः स्वरूपतो निष्पत्त्या वा शरणागमनमेव भगवतोऽनुग्रहः सत्सेवानुग्रह इति स्वरूपसत्त्वमेव नियामकं तथैव ते उत्पादिताः इति मूलेच्छात्र नियामिका ननु त्याजनमनुगुणं वा तस्यापि स्वार्थमात्रेऽप्यशक्ये भगवान्कथं करिष्यतीति चेत्तत्राह । ईश इति । हे सर्वसमर्थ अत्र ममानुभव एव प्रमाणमित्याह । मन्य इति । अनेन भगवानेव यदि करोति तदैव निस्तारो भवति इति ज्ञापितम् नन्वेवं सति शास्त्रं व्यर्थं स्यात् ज्ञानस्याप्यनुपयोगादिति चेत्तत्राह । पुंसो भवेदिति । यर्हि पुंसः भगवदिच्छया संसरणापवर्गः स्यात् सृष्टिसमये हि भगवान् सर्वानेव विचारयति इममित्थं करिष्यामीति तत्र यं मोचयिष्यामीति मन्यते तत्र जन्मानि अवधिमन्ति करोति तथा सति यदैवान्तिमं जन्म भवति स संसरणापवर्ग उच्यते अग्रे संसरणाभावात् अत्रोपपत्तिरूपं किञ्चिदाह पुंसो भवेदिति । अन्यथा तं पुरुषमेव न कुर्यात् "तासां मे पौरुषी प्रिये"ति भगवद्वाक्यात् अतः पुंसां मुक्तिरस्तीति सम्भाव्यते परं कालनियमे न प्रमाणं तदाह । यर्हीति । यर्ह्येवान्तिमं जन्म करिष्यतीत्यत्र नियामकमाह । अब्जनाभेति । अन्यथा स्वयमागत्य सृष्टिं नोत्पादयेत् अब्जं नाभौ यस्येति स्वयमाविर्भूय यतः सृष्टिं कृतवान् न तु सेवकद्वारा अतो ज्ञायते केषाञ्चिन्मुक्तिं तस्यां सृष्टौ दास्यतीति तदा तस्मिन् जन्मनि भगवति मतिर्भवति "तमेव विदित्वातिमृत्युमेतीति" नियमात् "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति भगवद्वाक्याच्च भगवज्ज्ञानमावश्यकं तत्र सता बोधकत्वेन उपदिश्यमानत्वेन च शास्त्रोपयोगः साधनेनैव सर्वं करोतीति एतावानर्थस्तुल्य इति अशक्ये भगवानेव वर्त्तत इति त्याजनपक्षेऽपि न काप्यनुपपत्तिः अतः सत्सेवाशचिः भगवत्स्वरूपज्ञानेच्छा शास्त्रपरत्वं च अन्तिमजन्मज्ञापकम् ॥ २८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनित्ये कर्मफले नित्यमिति अनात्मनि देहे आत्मेति दुःखरूपे भ्रूणादौ सुखमिति विपरीतमतिरित्यर्थः । द्वन्द्वेषु सुखदुःखेषु आरमतीति सः यतस्तमसाविष्टः व्याप्तः आत्मनः प्रियं प्रेमास्पदं त्वां न जाने ॥ २५ ॥

सदृष्टान्तमाह । यथेति । तस्माज्जलादुद्भवन्तीति तदुद्भवानि तृणादीनि तैः तथाज्ञानेन मायाच्छन्नत्वेन प्रतीतं त्वा त्वां हित्वा पराङ्मुखः देहाद्यभिमुखो वर्त्ते ॥ २६ ॥

प्रमाथिभिः प्रकर्षेण मथद्भिर्बलिष्ठैरक्षैरिन्द्रियैराकृष्यमाणं मनः रोद्धुं नोत्सहे इति तथा मे धियः कार्पण्यं यथा तादृशं मनः रोद्धुमुत्साहोऽपि न जायत इत्यर्थः २७ ॥

सोऽहं तथाभूतोऽप्यहं तवाङ्घ्रिम् उपगतः शरणं प्राप्तोऽस्मि तच्च त्वदङ्घ्र्युपगमनमसद्भिर्जनैर्दुरापं भवदनुग्रह एव भवदनुग्रहे सत्यैव संभवेदित्यहं मन्ये जानामि मदनुग्रह एव कदा स्यात्तत्राह । हे अब्जनाभ ! सदुपासनया हेतुना यर्हि त्वयि मतिः

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे
पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ २९ ॥
नमस्ते वासुदेवाय सर्वभूतक्षयाय च ।
हृषीकेश ! नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ! ॥ ३० ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे अक्रूरस्तुतिर्नाम
चत्वारिंशोऽध्यायः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

स्यात् सदुपासनैव कदा स्यात्तत्राह ।पुंसो यर्हि संसरणस्य संसारस्य अपवर्गः अन्तकालः स्यात् संसारान्तकाल एव कदा स्यादिति चेत् यद्वा यादृच्छिकी सत्कृपा स्यादिति ज्ञेयं तेनादौ यादृच्छिकी सत्कृपा ततः संसारनाशारम्भः ततः सदुपासना ततः कृष्णमतिरिति क्रमः शास्त्रारम्भ एव सत्यामित्यादिना प्राक्प्रदर्शित उक्तो भवति ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनित्ये गृहादौ नित्यमिति अनात्मनि देहादावहमिति दुःखे संस्पर्शजे भोगे सुखमिति विपर्ययमतिः द्वन्द्वेषु सुखदुःखादिषु आरमति क्रीडतीति तथा सः तमसि मायायां विष्टः प्रविष्टः मायावृतज्ञान इत्यर्थः। आत्मनः अंशभूतस्य जीवात्मनः प्रियं स्थितिप्रवृत्तिहेतुमंशिनं परमात्मानं त्वां न जाने ॥ २५ ॥

सर्वदान्तर्य्यामिणं त्वत्कार्य्यभूतेषु अन्नमयादिषु अन्तर्वसन्तं परमानन्दं त्वामहं हित्वा पराङ्मुख आनन्दभ्रान्त्या कलत्रापत्याद्यभिमुखो वर्ते यथा अबुधो मूर्खः कश्चित्तदुद्भवैस्तृणादिभिः प्रतिच्छन्नं जलं हित्वा मृगतृष्णामभ्येति तद्वत् ॥ २६ ॥

एवज्ञानतोऽप्यात्मनः दैन्यमाह । नोत्सहे इति।कृपणा आत्मविमोचने अकुशला धीर्यस्य सः अत एव कामो ऽभिलापस्तन्मूलकैः कर्मभिर्हतं मोहितम् अक्षैरिन्द्रियैः प्रमाथिभिर्बलिभिरिन्द्रियैर्ह्रियमाणमभिभूयमानं मनः रोद्धुमात्मविमोक्षणोपाये प्रवर्तयितुं नोत्सहे न शक्नोमि ॥ २७ ॥

एवं दीनोऽहं तवाङ्घ्रिमुपतः शरणं प्राप्तोऽस्मि तच्चापि अङ्घ्र्युपगमनमपि असतामसाधूनां दुरापम् अतः हे ईश ! किञ्चित्साधुत्वं निमित्तीकृत्य भवतोऽनुग्रहे सति एवेत्यहं मन्ये उपगमनप्रदस्यानुग्रहस्य निर्निमित्तत्वस्वीकारे सर्वेषामुपगमनप्रसङ्गः स्यादिति भावः । तत्र साधुत्वं त्वयि मतिमत्त्वमित्याह । हे अब्जनाभ पुंसः संसारिणः यर्हि यदा सदुपासनया सतामुपासनया त्वयि मतिः स्यात्तदा संसरणस्य प्रवाहस्य अपवर्गः समाप्तिर्भवेत् सत्सेवया त्वयि मतिस्ततस्त्वदनुग्रहस्तत उपगमनं ततो मुक्तिरिति क्रमः॥२८॥

---

### भाषा टीका ।

अनित्य अनात्मा दुःख रूप देहादि को मैं मेरी विपरीत बुद्धि है तिससे मैं राग द्वेप द्वंद्व में पडकर विनष्टबुद्धि होकर आत्मा के प्रिय आपको नहीं जानता हूं ॥ २५ ॥

जैसे अज्ञानी पुरुष जलसे पैदा भये तृणादिकों से ढके हुये जलको छोडकर मृगतृष्णा को दौडता है तैसे मैं आपसे विमुख होरहा हूं ॥ २६ ॥

मैं वडा असमर्थ हूं सो काम कर्म से नष्ट भये मनको नहीं रोकसक्ता हूं क्योंकि वह मन मथन करने वालि इन्द्रियों से चळायमान होरहा है ॥ २७ ॥

सो मैं अव असत् पुरुषों को नहीं प्राप्त होने योग्य जो आपका चरण है तिसके शरण प्राप्त भया हूं तिसको भी मैं आपका अनुग्रह ही मानता हूं जब पुरुष को संसार से छूटना होता है तब हे पद्मनाभ ! सत्पुरुषों के संग होने से उनकी सेवा से आपके विषै बुद्धि होती है ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पादयोः पतन्प्रार्थयते । नम इति द्वयेन । विज्ञानमेव मात्रा मूर्तिर्यस्य तस्मै अत एव सर्वप्रत्ययहेतवे समस्तज्ञानकारणाय किञ्च पुरुषस्य ये ईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयस्तेषां प्रधानाय नियन्त्रे कुतः ब्रह्मणे परिपूर्णाय किञ्च अनन्तशक्तये अनन्ताः शक्तयो यस्य यद्वा अनन्ता मायाख्यशक्तिर्यस्य तस्मै अथवा प्रकृतिः पुरुषस्तत्प्रवर्तक ईशः काल एतत्त्रितयात्मने ब्रह्मणे वक्ष्यति च भगवान्--

> प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ।
> सतोऽभिव्यञ्जकः कालो ब्रह्म तत्रितयं त्वहम् ।

इति ॥ २९ ॥

सर्वप्रत्ययहेतुत्वमभिव्यञ्जयंस्तौति । नमस्त इति । वासुदेवाय चित्ताधिष्ठात्रे सर्वभूतक्षयाय क्षय आश्रयः अहङ्कारश्च प्राणिनामाश्रयः ततश्चाहङ्काराधिष्ठात्रे सङ्कर्षणायेत्यर्थः । हृषीकेशेति बुद्धिमनसोरधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरेकीकृत्य ग्रहणम् शरणागतं मां पाहीति प्रार्थना ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतदादिकं सर्वं स्वयं जानास्येव तत्तत्प्रतीकारेऽपि परमसमर्थोऽसीति किं विज्ञापयानीति सकाकु प्रणमन्नात्मानं समर्पयति । नम इति द्वाभ्याम् ॥ २९ ॥

वासुदेवाय सर्वकारणरूपाय सर्वभूतक्षयाय प्रलयाश्रयाय हे हृषीकेश ! स्थितावपि सर्वान्तर्यामिन्नित्यर्थः ॥ ३० ॥

तस्मै चैतन्यदेवाय नमो भगवते मुहुः ।
बुधान् स्मारयितुं यो मां याचलयति कौतुकी

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ज्ञानमात्राय मात्रचा स्वरूपे क्वाचिदपि जडत्वं नास्तीत्युच्यते सर्वप्रत्ययहेतवे सर्वेषां ज्ञानप्रदाय । पुरुषेशप्रधानायेति पाठे प्रधानभूतेन पुरुषेण रूपेण स्वेन रूपेणावस्थितायेत्यर्थः ॥ २९ ॥

सर्वभूतक्षयाय सर्वभूतनिवासाय ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विज्ञानमात्राय अनुकूलात्मकज्ञानमात्रस्वरूपाय मात्रचा स्वरूपे क्वचिदपि जडत्वशङ्काव्युदासः सर्वप्रत्ययहेतवे सर्वेषां ज्ञानप्रदाय पुरुषो जीवस्तस्येशः सचासौ प्रधानश्च प्रधानशब्दस्तच्छरीरवाचकः प्रधानपुरुषेश्वरायेत्यर्थः । यद्वा पुरुषस्य ये ईशाः सुखदुःखादिप्रापकाः कालकर्मस्वभावादयः तेषां प्रधानाय नियन्त्रे यद्वा ईश्वरो हरिः प्रधानो यस्य पुरुषश्चासावीश्वरप्रधानश्च तस्मै हरिप्रधानभूतेन पुरुषेण स्वरूपेण चावस्थितायेत्यर्थः । ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयाय बृहते अनन्ताः शक्तयः जगत्सर्गाद्युपयुक्तसामर्थ्यविशेषा यस्य तस्मै ॥ २९ ॥

वासुदेवशब्दार्थमाह । सर्वभूतक्षयाय च सर्वभूतनिवासाय हे हृषीकेश ! तुभ्यं नमः अहं त्वच्छेषभूतः मे मम नाहं मच्छेषभूतः एवं प्रपन्नं मां पाहि प्रायस्य अत्र विज्ञानमात्रायेत्यनेन प्राप्यत्वोपयुक्तं निरतिशयानन्दस्वरूपत्वं विवक्षितं सर्वप्रत्ययहेतवे इत्यनेन प्रपित्सुहेतुत्वं पुरुषेशप्रधानायेत्यनेन सर्वशेषित्वं ब्रह्मण इत्यनेन वात्सल्यशौशील्यसौलभ्यादिगुणपूर्णत्वम् अनन्तशक्तय इत्यनेन बन्धमोक्षापादनोपयुक्तसामर्थ्यवत्त्वं वासुदेवायेत्यनेन धारकत्वं हृषीकेशेत्यनेन नियन्तृत्वम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मननविषयरूपमाह । नम इति । ज्ञानस्वरूपं नान्यत् "मात्रं कार्त्स्न्येऽवधारणे" इति यादवः यद्वा विज्ञानं मात्रा मानं प्रमाणं यस्मिन् स तथा तस्मै "मात्रापरिच्छदे देशे प्रवृत्तौ कर्णभूषणे । अक्षरावयवे माने" इति च "नैषा तर्केण मतिरापनेये"ति च श्रुतिः सर्वेषां ज्ञानानां हेतवे कारणाय विरिञ्चिशङ्करयोः प्रत्ययहेतुत्वम् औपचारिकमितिभावेनाह । पुरुषेति । पुरुषेश्वरयोर्विरिञ्चिशङ्करयोरप्युत्तमोत्तमाय एवंविधस्य किन्नामधेयमित्यत उक्तं ब्रह्मण इति "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुतेः विरिञ्च्याद्युत्तमत्वे को हेतुरित्यत उक्तमनन्तेति ॥ २९ ॥

वासुदेवमूर्तेर्मोक्षहेतुत्वमिति कृत्वा तं नमति । नम इति सर्वभूतक्षयाय सर्वभूतनिवासाय "शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जन"मित्यादेः हृषीकेश ! इन्द्रियेश प्रभो ! समर्थ ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टात्रिंशोऽध्यायः ॥ ३८ ॥ ४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं विज्ञाप्य विज्ञापनासिद्ध्यर्थं नमस्यति । नमो विज्ञानमात्रायेति । शास्त्रस्य सतां च तदैवोपयोगो भवति यदा भगवान् विशिष्टज्ञानमात्रमेव भवति अन्यथा ज्ञाने सामान्यसिद्धिः मननिदिध्यासादिना च विशेषसिद्धिरित्ययमर्थो नोपपद्येत ज्ञानस्याङ्गत्वं च न स्यात् शास्त्रेण हि ज्ञानमेवोत्पाद्यते न त्वन्यत् तच्चेद्विज्ञानमन्यदेव स्यात् किं भगवद्भजनेन शरणागमेन वा स्यात् अतस्त्वं विज्ञानमात्ररूपः किं च यदि भगवान् आन्तरो न भवेत् आत्मा वा न भवेत् तदान्यत्र स्थितमन्यो न प्राप्नोति अन्यश्चान्यो न भवतीति मुक्तिरेव न स्यात् सर्वेषां प्रत्ययानां ज्ञानानां हेतुः कारणमन्तर्यामी आत्मा वा स भवानेव ननु तस्य ज्ञानैकरूपस्यात्मनः कथं जगत्कारणत्वमित्याशङ्क्याह । पुरुषेशप्रधानायेति । पुरुषः प्रकृतिभर्त्ता ईशः कालः गुणक्षोभकः गुणात्मिका न प्रकृतिः हेतुत्रितयरूपः नन्वेकस्य कथमनेकरूपता तत्राह । ब्रह्मण इति । बृहत्त्वात् बृंहणत्वात् सर्वभवनसमर्थं तदेव ब्रह्मशब्दस्ताहश एव वर्तते इति प्रकारान्तरेणापि सर्वरूपत्वमुपपादयति । अनन्तशक्तय इति । अनन्ताः शक्तयो यस्येति तत्तच्छक्त्या तथा तथा भवतीति न काप्यनुपपत्तिः स्वरूपमेव वा तथेति पक्षद्वयमप्यविरुद्धम् ॥ २९ ॥

पुनर्विज्ञापनार्थं नमस्यति । नमस्ते वासुदेवायेति मोक्षदात्रे ननु तथाप्येतावत्कालं त्वमन्यत्र स्थितः कृतापराधश्च ततः कथं

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मोक्षो देय इत्याशङ्कायामाह।सर्वभूतानां क्षयाय स्थानरूपायेति तेन त्वय्येव स्थिताः भूतेषु स्थितावपि त्वय्येव स्थिताः चकारात्सर्वभूतस्वरूपाय किं च यदपि कृतं तत्रापि त्वमेव हेतुः यतो हृषीकेशः इन्द्रियप्रेरकः अतः सर्वापराधशान्त्यर्थं तुभ्यं नमः विज्ञापनामाह। प्रपन्नं शरणागतं मां पाहि पालय यथा पुनः प्रवाहे न पतामीति प्रार्थना वाचनिकी शरणागमनं प्रथमतो मानसं पश्चात्कायिकमिति तदुपपादितं शरणागतिप्रकरणे॥ ३०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीलक्ष्मणभट्टात्मज-

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

सप्तत्रिंशाध्यायविवरणम्॥ ३७॥ ४०॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पादयोः पतन् आत्मानं निवेदयति द्वाभ्याम्। नम इति। विज्ञानस्य मदनुभवस्य मात्रा परिमाणं यतस्तस्मै यावन्तं स्वविषयकमनुभवं ददासि तावदेव त्वामनुभवामीत्यर्थः। अन्यविषयकज्ञानानामपि त्वमेव हेतुरित्याह। सर्वेति। यतः पुरुषेति पुरुषोऽन्तर्यामी तद्रूपेण कर्मादिषु प्रेरयसि ईश! ईश्वरस्तद्रूपेण कर्मादिफलं ददासि प्रधानं माया तद्रूपेण विषयेषु त्वमेव बध्नासि ब्रह्म ज्ञानैकस्वरूपं तद्रूपेण स्फुरितं सत् तस्माद्बन्धान्मोचयसि च अनन्तशक्तिर्भगवान् तद्रूपेण स्वस्मिन् भक्तिं प्रदाय कृतार्थयसि च॥ २९॥

वासुदेवायेति हे वसुदेवनन्दन! भवानेव मम सेव्यो भवतु नतु दुष्टभूपतिरिति भावः। सर्वभूतानां क्षयाय निवासायेति स्वस्मिन्नेव मां वासय नतु गृहान्धकूपे इति भावः। हृषीकेशेति मम मनआदीन्द्रियाणि भवानेव गृह्णातु नतु कलत्रपुत्रादिरिति भावः॥ ३०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

चत्वारिंशोऽत्र दशमे सङ्गतः सङ्गतः सताम्॥ ४०॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवम्प्रपन्नो भूत्वा पादयोः पतन् मां पाहीत्याह। नम इति द्वाभ्याम्। "विज्ञानं यज्ञं तनुते" इति श्रुतौ विज्ञानशब्दो जीववाचकः विज्ञानं जीवः मात्रा अंशो यस्य तस्मै अत एव सर्वेषां स्वांशभूतानां जीवानां प्रत्ययस्य ज्ञानस्य हेतवे जीवानां यथाधिकारं भुक्तिमुक्तिज्ञानप्रदायेत्यर्थः। अत एव पुरुषाणां जीवानां ये ईशाः पराभयकराः कालकर्मस्वभावादयस्तेषां प्रधानाय नियन्त्रे॥ २९॥

सर्वेषां भूतानां क्षयाय वासस्थानाय प्रपन्नं त्वदङ्घ्रिं शरणं गतं मां पाहि संसारात्त्रायस्व॥ ३०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

चत्वारिंशाध्यायार्थप्रकाशः॥ ४०॥

---

### भाषा टीका।

सब बुद्धि के हेतु विज्ञान मात्र स्वरूप आपके अर्थ नमस्कार है पुरुष प्रधान दोनों के ईश अनंत शक्ति ब्रह्म आपके अर्थ नमस्कार है॥ २९॥

सर्वभूतों के निवास हेतु वासुदेव हृषीकेश आपके अर्थ नमस्कार है हे प्रभो! मैं शरणागत हूं मेरी रक्षा करो॥ ३०॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे चालीसमें अध्याय

की भाषाटीका समाप्त॥ ४०॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे चत्वारिंशोऽध्यायः॥ ४०॥

## ॥ एकचत्वारिंशोऽध्यायः ॥

### श्रीशुक उवाच

स्तुवतस्तस्य भगवान् दर्शयित्वा जले वपुः ।
भूयः समाहरत् कृष्णो नटो नाट्यमिवात्मनः ॥ १ ॥
सोऽपि चान्तर्हितं वीक्ष्य जलादुन्मज्ज्य सत्वरः ।
कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् ॥ २ ॥
तमपृच्छद्‌धृषीकेशः किं ते दृष्टमिवाद्भुतम् ।
भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥ ३ ॥

### अक्रूर उवाच ।

अद्भुतानीह यावन्ति भूमौ वियति वा जले ।
त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका

एकचत्वारिंशकेऽहन् रजकं प्रविशन् पुरीम् ।
ततो वरानदात्तुष्टः सुदाम्नो वायकस्य च ॥
सशङ्कमक्रूरमनःप्रबोध्य स्वधामसन्दर्शनसत्कृपातः ।
स्वराजधानीं मधुरामपश्यदलङ्कृतानन्तमहोत्सवाढ्याम् ॥

॥ १—३ ॥

भूमौ वियति जले वा यावन्त्यद्भुतानि तानि त्वय्येव सन्ति तं च त्वां पश्यतो मे किमद्भुतमदृष्टम् अपितु सर्वं दृष्टमित्यर्थः ॥ ४ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्येत्यनादरे षष्ठी तमपृष्ट्वेवेत्यर्थः । समहरत् अन्तर्द्धापयामास नटो नाट्यमिवेति आकस्मिकत्वांशे दृष्टान्तः आत्मनो वपुरिति तद्वपुः स्वभावसिद्धत्वं दर्शितम् ॥ १ ॥

अपिचशब्दः उक्तसमुच्चये अन्तर्हितं तमिति वीक्ष्य आलोच्य उन्मज्ज्य निःसृत्य सर्वम् आवश्यकं माध्याह्निकजलाधिष्ठानकभगवत्पूजादिकं तच्चाभिव्याञ्जितं श्रीपराशरेण "अर्च्चयामास सर्वेशं धूपपुष्पैर्मनोमयै" रिति अत्र जलेनैव तत्तत्कल्पनान् मनोमयत्वम् ॥ २ ॥

हृषीकेशः सर्वेन्द्रियप्रवर्त्तकः सर्वज्ञोऽपीत्यर्थः । कौतुकार्थमिति भावः । इह तीर्थे ननु कुतस्त्वया ज्ञातं तत्राह । यथा दृष्टाद्भुतत्वप्रकारेण त्वां लक्षयामहे दृष्टिवैलक्षण्यादिलक्षणैरवगच्छामः तथाच श्रीविष्णुपुराणे "नूनं ते दृष्टमाश्चर्यमक्रूर ! यमुना जले । विस्मयोत्फुल्लनयनो भवान् संलक्ष्यते यत" इति बहुत्वं न केवलमहमेव मेऽग्रजचरणाश्चेति तदपेक्षया ॥ ३ ॥

पूर्वं तद्रूपं तदभेदेन ज्ञातवान् इदानीन्तु सद्यस्तत्प्रश्नप्रभावेण लब्धविशेषज्ञानस्तमेव तत्सर्वदर्शकं मत्वा तस्यापि रूपस्य तद्वैभवत्वमेव विचार्याह । अद्भुतानीति । भूम्यादिषु यावन्त्यद्भुतानि सन्ति तानि तावन्ति त्वय्येवेह सन्ति तत्र हेतुर्विश्वात्मके विश्वस्य मूलरूपत्वात् विश्वेन कार्येण आश्रित आत्मा यस्य तादृशे मध्यपदलोपी बहुव्रीहिः "यस्मिन् विज्ञाते सर्वं विज्ञातं भवती" ति श्रुतेः तस्माद्विपश्यत इति विपश्यता मे मया भूम्यादिषु किमद्भुतं दृष्टं न किमपि किन्तु यत् किमपि दृष्टं तत् त्वय्येव दृष्टमित्यर्थः । त्वद्रूपे दृष्ट एव तद्दर्शनादिति भावः ॥ ४ ॥

---

#### श्रीसुदर्शनसूरिकृतशुकपक्षीयम ।

समहरत् अन्तर्हितङ्कृतवान् ॥ १—५ ॥

---

#### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सम्प्रदर्शिताक्रूरसंस्तुतस्वासाधारणरूपो भगवान् रथप्राप्तश्रीमथुरोपवनोऽङ्गीकृताक्रूरप्रार्थनः प्रेषिताक्रूरश्च श्वः प्रविष्टश्रीमथुरो

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निगृहीतरजकस्तन्तुवायमालाकारौ परमभागवतावकरोदित्याह्निकैक-चत्वारिंशेन स्तुवत इत्यादिना । भगवान् कृष्णः आत्मनः स्वस्य वपुः स्तुवतस्तस्याक्रूरस्य दर्शयित्वा स्वासाधारणरूपं पुनःसमहरदन्तर्धापयामास यथा नटो नाट्यं नाट्यार्हं रूपं दर्शयित्वान्तर्धापयति तद्वत् ॥ १ ॥

सोऽक्रूरोऽप्यन्तर्हितं वीक्ष्य ज्ञात्वा जलादुन्मज्ज्य त्वरया युक्तः आवश्यकं माध्याह्निकं नित्यकर्म सर्वं कृत्वा विस्मितः सन् रथमाविशत् ॥ २ ॥

तमाविष्टवन्तमक्रूरं कृष्णः पप्रच्छ प्रश्नमेवाह । किंत इत्यादिना इह रथे भूमौ वियत्याकाशे जले वा किमद्भुतं चित्रं त्वया दृष्टं न किमपि दृष्टमिति मावोच इत्यभिप्रेत्याह । तथा दृष्टाद्भुतं त्वां लक्षयामहे चिन्हैरनुमिनुमः ॥ ३ ॥

इत्थमापृष्टःप्राहाक्रूरः । अद्भुतानीति । भूम्यादिषु यावन्त्यद्भुतानि तानि विश्वशरीरके त्वय्येव सन्ति तत्र त्वां पश्यतो मे मया किं दृष्टं न किमप्यद्भुतं त्वय्यविद्यमानं दृष्टमिति काक्वभिप्रेतार्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तस्मिन्निजजन्मनि योग्यताया आभिभवो नास्ति किन्तु सर्वत्राद्भुतत्वमेव यत्तदेतेषु द्वित्राध्यायेषु व्यनक्ति । तत्रादावक्रूरदृष्टभगवद्रूपस्यान्तर्धानकारणं कृष्णाक्रूरयोः प्रश्नोत्तराभ्यां हरेः सर्वैरचिन्त्याद्भुतमाहात्म्यं च वक्ति । स्तुवत इति । आत्मनो वपुः नटत्वेन दर्शितं नाट्यं नटनविषयं हनुमदादिरूपं यथा तिरोधत्ते तथा ॥ १ ॥

आवश्यकं नित्यकर्म ॥ २ ॥

दयालुः श्रीकृष्णः आत्मनो माहात्म्यं तेन वादयितुमज्ञातवत् पृच्छति । तमिति । अद्भुतमदर्शि लक्षणैस्त्वां लक्षयामहे व्यावृत्तं पश्यामः ॥ ३ ॥

अक्रूरःपरिहरति । अद्भुतानीति । इह भूम्यादौ यावन्त्यद्भुतानि सन्ति विश्वात्मके विश्वरूपे त्वयि तानि विपश्यतो मे किमदृष्टं सर्वं दृष्टमेव तानि विश्वात्मके त्वयि सन्ति तस्मात्त्वां विपश्यतो मे किमदृष्टमिति वा ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नटो नाट्यमिवेत्याकस्मिकत्वांशे दृष्टान्तः आत्मनो वपुरिति तद्वपुषः स्वभावसिद्धत्वं दर्शितम् ॥ १—११ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अष्टात्रिंशे ज्ञाततत्त्वं श्वफल्कतनयं हरिः ।
विसृज्य मथुरांसिद्धयुक्तो माहात्म्यबोधकः ॥
गोपनार्थं परीक्षोक्ता हृदयारूढबोधनम् ।
वाक्यैर्निरूपितं वप्र्यां प्रवेशो नगरी हरेः ॥
उत्सवेषु यथा रोधस्तथात्रापि चकार ह ।
माहात्म्यज्ञापनार्थाय रजकं हतवान् स्वयम् ॥
अनिष्टेष्टप्रदो लोके महानिति निरूप्यते ।
वायकस्य सुदाम्नश्च वरदानं यथेप्सितम् ॥
प्रपञ्चविस्मृतिः सर्वा कृतानेन हि राजसे ।
स्वासक्तिरग्रे वक्तव्या सामान्यं ते न सेत्स्यति ॥

पूर्वाध्याये स्तुतिरुक्ता तामुपसंहरन् अग्रे भगवत्कृतमाह । स्तुवतस्तस्येति । तस्याक्रूरस्य स्तुवत एव सतः न तु स्तोत्रसमाप्तौ तथा सति वरो देयः स्यात् ननु कथमेवं सामि कार्यं कृतवानित्याह । भगवानिति । स्वच्छन्दात्मा नावनैव कार्यसिद्धिं मत्वा न हि ब्रह्मसाक्षात्कारः परमदुर्लभो बहुकालं भवति नाप्ययं वैकुण्ठे नीतः किं तु जले स्ववपुर्ब्रह्माण्डात्मकं नारायणरूपं प्रदर्शितवान् यथाविर्भावः तथा तिरोभावोऽपि वक्तव्य इति भूयः समहरत् उपसंहृतवान् अनेन भगवति स्थित एवायं प्रपञ्चः ब्रह्माण्डात्मकः हस्त इव प्रसार्य पुनरुपसंहृत इति निरूपितम् ननु तत्रत्यः मायाजवनिकादूरीकरणेन प्रदर्शित इति यतोऽयं कृष्णः एतदर्थमेव सदानन्दोऽवतीर्ण इति अन्तः स्थितमेव प्रदर्शितमित्यत्र दृष्टान्तमाह । नटो नाट्यमवेति । यथा नटः नटविद्यामन्तः स्थितां बहिः प्रकटयत्यभिनयेन तथा भगवानप्येतादृश इति ज्ञापयितुं नारायणरूपं प्रदर्शितवानित्यर्थः । ननु नाट्यवैलक्षण्यं प्रतीयते न हि नाट्यमेतादृशमिति तत्राह । आत्मन इति । अद्भुतमेतन्नाट्यम् ॥ १ ॥

सोऽपि भगवतैव कृतमिति ज्ञात्वा ज्ञाततत्त्वोऽन्तरङ्गः भगवत्समीपमागत इत्याह । सोऽपीति । अन्तर्हितं स्वयमेव अथवा चकारेण वा अन्तर्हितं भध्ये हृदये तं वीक्ष्य बहिर्दृष्टमन्तः स्थापयित्वा युक्तश्चायमर्थः अन्यथा दर्शनं व्यर्थं स्यात् धर्मान्तरप्रवेशश्च स्यात् ततो भयं च निवर्त्येत अन्यथा बुद्धिश्च स्यात् अत एव जलादुन्मज्ज्य स्नानविधिं त्यक्त्वा पूर्णो भूत्वा भगवदपराधं सञ्चिन्त्य सत्वरः अत्यावश्यकं कर्म विधाय चकारादकृत्वापि कथमेवं दुर्लभं प्रदर्शितवानिति विस्मितः रथसमीपमागमत् ननु मननादिकं कृत्वा निवृत्तो जातः ॥ २ ॥

तदा भगवान् विस्मयांशोऽनुचित इति तन्निवृत्त्यर्थं किञ्चित् पृष्टवान् इत्याह । तमपृच्छदिति । यदि भगवत्पृष्टं वदेत् अन्यत्रापि तदा न माहात्म्यं तस्य हृदयारूढं भगवतेऽपि यदि न वदति तदान्यस्मै कथनसम्भावनैव न भवति । हृषीकेश इति । स्वयमेव तथा प्रेरितवान् इच्छानिवर्त्तनार्थं परस्पृष्टवानिति । किं ते त्वया दृष्टमिति । इहास्मिन् जलाशये जलादिकं वहेव दृष्टमिति तद्व्यावृत्त्यर्थमाह । अद्भुतमिति । अलौकिकदृष्टपूर्वमद्भुतं दृष्टं यस्तु अन्याश्चार्यं जानाति न वेत्ति तन्मनोविषयार्थं स्थानानि निर्दिशति । भूमौ वियति तोये वेति । दर्शनसमयं भूमिरपि दृष्टा गुहया गन्धर्वनगरादिवत् आकाशेऽपि दर्शनं सम्भवति निमज्ज्य पश्यतीति जल एव भवति चेत्यनादरे यत्र कचित् अवश्यं दृष्टमिति अलौकिकं ज्ञानं गोपयितुमाह । तथा त्वां लक्षयामह इति । अद्भुतदर्शनमिव स ह्याश्चर्याभिनिविष्टः प्रपञ्चमग्रिमकार्यं च न स्मरतीति । प्रपन्नो ह्यन्यथादृष्टिरद्भुतार्थनिरीक्षकः सादरं भगवान् दृष्ट्वा दर्शनं कल्पयेत्पुनः ॥ ३ ॥

अक्रूरस्तु ज्ञातमाहात्म्यः तत्र वक्तव्यमिति ईश्वरपृष्टं वक-

यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ।
तं त्वानुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ॥ ५ ॥
इत्युक्त्वा चोदयामास स्यन्दनं गान्दिनीसुतः ।
मथुरामनयद्रामं कृष्णं चैव दिनात्यये ॥ ६ ॥
मार्गे ग्रामजना राजंस्तत्र तत्रोपसङ्गताः ।
वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं नचाददुः ॥ ७ ॥
तावद्व्रजौकसस्तत्र नन्दगोपादयोऽग्रतः ।
पुरोपवनमासाद्य प्रतीक्षन्तोऽवतस्थिरे ॥ ८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

व्यमिति ज्ञात्वा सामान्यत उत्तरमाह । अद्भुतानीति । स्वरूपमाधारः भगवानेवेति प्रदेशान्तप्रश्नोऽनुपपन्नः सोऽपि वा प्रदेशः त्वय्येवास्तीति न त्वत्तोऽन्यत्राद्भुतमस्ति त्वद्दर्शनं तु अद्भुतमेवेति चिन्हमप्यव्यभिचारि इहास्मिन् समये देशे वा भूमौ वियति जले वा यान्यद्भुतानि तानि त्वय्येव यतस्त्वं विश्वात्मकः विश्वस्मिन्न द्भुतानि भवन्ति अतस्तानि किं मे मया न दृष्टानि यतस्त्वां विपश्यतः अदृष्टस्तु त्वं केनापि अन्यस्याद्भुतत्वमेव नास्ति केनचिद्दृष्टत्वात् भगवांस्तु सर्वादृष्टः तद्देशमदृष्टं भगवन्तं विपश्यतो मे किन्तानि न दृष्टानीत्यर्थात् तानीति पूर्वं चैव वा अनुवादः सर्वाद्भुताधारे दृष्टे नादृष्टं किं चिदवशिशिष्यत इति आक्षेपोयुक्तः ॥ ४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकचत्वारिंशकेऽगात् पुरीं स्त्रीमोंहयन्नहन् ।
रजकं वायकायादात् सुदाम्ने च वरान् हरिः ॥

तस्यैत्यनादरे षष्ठी समदृशदन्तर्द्धापयामास नाट्यमिवेत्युपसंहार एव दृष्टान्तः नटो नाट्यं यथोपसंहरति तथैव कृष्णो वैकुण्ठं वैकुण्ठीयञ्च सनातनं वस्तु तत्सर्वमुपसञ्जहारेत्यर्थः ॥ १—२ ॥

तथा त्वां लक्षयामहे इति । तव नेत्रे सास्रे प्रोत्फुल्ले एवात्र प्रमाणमिति भावः ॥ ३ ॥

अनेन कृष्णेनैव तत्तत्सर्वं स्ववैभवमेवाहं दर्शित इति तादृशतत्प्रश्नादेव निश्चित्य सहर्षविवेकमाह । अद्भुतानि भूम्यादौ यावन्ति सन्ति तानि त्वय्येव सन्ति अतस्तं त्वां विपश्यतो मे किमद्भुतमदृष्टमपि तु सर्वमेव दृष्टमित्यर्थः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकचत्वारिंशे पुर्य्यां भगवान् प्रविश्य रजकवधं भक्ते वायके मालाकारे चानुग्रहं कृतवानित्युच्यते ॥ १ ॥ २ ॥

भूम्यादौ इह रथे वा अद्भुतं चित्रम् ॥ ३ ॥

विश्वात्मके सर्वात्मनि त्वय्येव तानि सन्ति विपश्यतः त्वामिति शेषः मे किमदृष्टमपि तु सर्वं दृष्टमित्यर्थः ॥ ४ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले अक्रूर जी के ऐसे जल में स्तुति कर ते ही कर ते भगवान् मूर्तिका दर्शन करा कर जैसे नट नाट्य दिखाके समेटे तैसे उस मूर्ति का अन्तर्धान करते भये ॥ १ ॥

सो अक्रूरजी भी मूर्ति का अतर्धान देख कर जल में से जल्दी निकल कर संध्यादिक करके विस्मित होकर रथ पर को आगये ॥ २ ॥

हृषीकेश भगवान् उन से पूछने लगे कि तुमने आकाश भूमिल अथवा जल में क्या अद्भुत देखा है ऐसे हम तुमको देखते हैं ॥ ३ ॥

अक्रूरजी बोले इस जगत् में पृथिवी आकाश या जल में जितने यद्भुत हैं सो तो विश्वरूप वाले आप ही में हैं तो आपको देखने वाले मैंने इहां क्या अद्भुत नहीं देखा है ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु मत्प्राप्तेः पूर्वमेव त्वं विस्मितमुखो लक्षितोऽस्यतो भूमौ वियति जले वा किमप्यद्भुतं दृष्टमेवेति चेदत आह। यत्राद्भुतानीति। यत्र त्वयि सर्वाण्यद्भुतानि सन्ति तं त्वामिह पश्यतो मे ऽन्यत्र भूम्यादौ किमद्भुतं दृष्टं त्वां विना न तत्र किंञ्चिदद्भुतमित्यर्थः ब्रह्मन् हे परमेश्वरेत्यर्थः । ब्रह्मेति वा पाठः ॥ ५ ॥

गान्दिनीसुतोऽक्रूरः ॥ ६ ॥

दृष्टिं नाददुः पश्यन्त एव स्थिता इत्यर्थः ॥ ७ ॥

रामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वद्रूपेऽस्मिन् दृश्यमाने तु तानि सर्वान्यप्यद्भुताय न

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कल्प्यन्ते किन्तु तद्रूपमेवेदमित्याह । यत्रेति । भूम्यादिषु यान्यद्भुतान्यपि सर्वाणि यत्र त्वयि सन्ति तं त्वा त्वामनुपश्यन इति भाग्यतः सम्प्रति निरन्तरं पश्यता मया किमन्यदद्भुतमिह दृष्टं किं त्विदमेव त्वद्रूपं पूर्वतोऽप्यद्भुतं दृश्यत इत्यर्थः । तत्र हेतुगर्भं निशिनष्टि । ब्रह्मेति "अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयतिच" इत्यादि श्रुतौ "बृहत्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदु"रिति श्रीविष्णुपुराणे च त्वय्येव सर्वबृहत्तमत्वस्य दृष्टत्वात्तत्रापि यन्मर्त्यलीलौपयिकमित्यादौ विस्मापनं स्वस्य च सौभगर्द्धेः परं पदमिति प्रसिद्ध्या त्वद्रूपस्यास्य परमतत्त्वत्वादिति भावः । ब्रह्मन्निति पाठे स एवार्थः दृष्टमिवेति पाठेत्विवशब्दस्तस्य दर्शनस्य न्यूनत्वमेव बोधयतीति दिक् ॥ ५ ॥

अनयदित्यनेन श्रीमुनीन्द्रस्य गोकुलजनत्वाभिमानो बोध्यते दिनात्ययेऽन्त्ययामे तथापराह्ने इति वक्ष्यमाणात् वक्ष्यमाणबहुललीलाकालसमावेशाच्च तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवानिति च वक्ष्यते तथोक्तं श्रीपराशरेण "संप्राप्तश्चापि सायाह्ने सोऽक्रूरो मथुरापुरीम्" इति अत्रान्तिमदशदण्डात्मिकापराह्णस्यान्तिमषड्दण्डात्मकसायाह्नस्य च प्रायिकत्वात्तन्मध्यवर्त्तिचतुर्थप्रहरत्वमेवोभयसमञ्जसमिति यदुक्तं वैशम्पायनेन "विविशुस्ते पुरीं रम्यां काले रक्तदिवाकरे" इति सायाह्नस्यैकदेशचिह्नं मन्तव्यम् अक्रूरतीर्थादतिनिकटवर्त्तिपुरोपवनस्य दिनात्यये प्राप्तिः अक्रूरस्य तदाश्चर्यदर्शनादिना चिरं विलम्बनात् ॥ ६ ॥

किञ्च पथि लोकानां प्रीत्यर्थं शनैरागमनादपीत्याशयेनाह । मार्ग इति । ग्रामाणां जना इति मूढत्वं सूचितं तथापि व्रीडा इति वस्तुस्वभावो दर्शितः हे राजन्निति तत्त्वया बुध्यते एवेति भावः । यद्वा ग्रामे जनानामपि तादृशप्रीतिस्मरणात् प्रेमार्त्त्युदयेन शोचन् सम्बोधयति ॥ ७ ॥

यावत्ते आयान्ति तावत् प्रतीक्षमाणा अवतस्थिरेऽनिष्टाशङ्कीनि बन्धुहृदयानीति न्यायेन वर्त्मनिरीक्षमाणा ऊर्ध्वावस्थित्या अवर्त्तन्त ननु प्रविष्टा इत्यर्थः । पूर्वं रथशैघ्र्येणानुगन्तुमशक्तास्ते स्ववर्त्माग्रे रथचिन्हमदृष्ट्वापि चक्रवर्त्मान्तरे तच्चिन्हात् तेनासौ गत इत्याशङ्कमानाः शीघ्रतन्मिलनाय ऋजुवर्त्मना चलन्त एवासन् सम्प्रति त्वेकीभूतवर्त्मनि पुरसमीपेऽपि तददृष्ट्वा परमोत्कण्ठया पश्चादेव निरीक्षमाणास्तस्थुरिति ज्ञेयम् ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गान्दिनी अक्रूरस्य माता ॥ ६—१३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दृष्टं वदेत्यत आह । यत्रेति । हे ब्रह्मन् ! संबुद्धौ नपुंसकानां वेति विकल्पान्नलोपाभावः यत्र त्वयि सर्वाण्यद्भुतानि तं त्वामिह पश्यतो मे अन्यत्र भूम्यादौ किमद्भुतं दृष्टं त्वां विना न किंचिदद्भुतमित्यर्थः ॥ ५ ॥

इतीत्थमुक्त्वा गान्दिनीसुतः अक्रूरः स्यन्दनं रथं चोदयामास गमयामास ततो रामं कृष्णं च दिनात्यये दिनावसाने श्रीमथुरां प्रापयामास ॥ ६ ॥

तदा तत्र मार्गे ग्रामेषु जनाः वसुदेवस्य सुतौ रामकृष्णावुपसंगताः सन्तः तौ दृष्ट्वा प्रीताः दृष्टिं नाददुः न प्रत्याजहुः पश्यन्त एव स्थिता इत्यर्थः ॥ ७ ॥

तावदिति । यावद्रामकृष्णौ मथुरामनयत् तावदेव ततः पूर्वमेव नन्दादयो गोपाः उपवनं प्राप्य श्रीरामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किं त्वयाद्भुतं दृष्टमिति प्रश्नस्य सर्वं दृष्टमेवेति परिहारः कथमागत इत्यत उक्तमेव स्फोरयति । यत्रेति । यत्र भूम्यादौ सन्ति सर्वाणि अद्भुतानि यत्र यस्मिन् त्वयि सन्ति तं त्वानुपश्यतो मे किमद्भुतमदृष्टं सर्वमद्भुतं दृष्टमित्यर्थः । ब्रह्मन् पूर्ण ! ॥ ५ ॥

दिनात्यये अपराह्णे ॥ ६ ॥

तयोर्वसुदेवसुतयोः लग्नाः प्रीताः प्रसन्नाः दृष्टिं नाददुः प्रत्यादानं न चक्रुः ॥ ७ ॥

प्रतीक्षन्तः पश्यन्तः ॥ ८ ॥ ९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कदाचिदयमुपचाराद्वदतीति पुनः प्रश्नशङ्कायामाह । यत्राद्भुतानीति । यत्र क्वचिदद्भुतानि लोके दृश्यन्ते तानि त्वय्येव वस्तुतस्तु अतो येन केनचिदपि त्वय्येव चेदद्भुतानि द्रष्टव्यानि तदा त्वां पश्यतो मे किं वा अद्भुतमदृष्टम् अनेन तत्रापि त्वमेवाद्भुतो दृष्टः त्वय्येव च दृष्टं त्वमेव सः त्वय्येव तदिति सर्वाधारस्त्वमेवेत्याधारप्रश्नोऽपि न कर्त्तव्य इति भगवन्तमाधारत्वेन निर्दिशति तं त्वेति ब्रह्मन्निति तत्समर्थनायोपपत्तिः ॥ ५ ॥

एवं परोक्षणोत्तरमुक्त्वा भगवदिच्छां ज्ञात्वा रथं प्रेरितवानित्याह । इत्युक्त्वेति । भगवद्वाक्ये नावहेलेति उत्तरमुक्त्वा पश्चाद्रथं चोदयामास ननु कस्योत्तालता तथा ज्ञात्वा भगवान्स्वस्य प्रसादनीयः किम्वा भगवतः कार्यं तुच्छं हि तत्राह । गान्दिनीसुत इति । गोदानेन चोत्पन्ना गोरूपैव भवति तस्याश्च पुत्रः सौरभेय एव परं भगवन्तं मथुरां प्रापयन् रामो हि रतिकर्त्ता कृष्णश्च तत्फलं सदानन्दः स चेन्नगर्यां प्रतिष्ठितो भवति तदा तत्रत्यानां निरन्तरमेव सुखं भवतीति दिनात्यये संध्याकाले सा हि गोधूलिका प्रवेशे सुमुहूर्त्ता भवति चकारात् मध्ये स्थितान् सर्वानेव भगवदिच्छयैव संध्याकालोऽपि अपराह्णो भविष्यति यावता च कालेन कार्यं भविष्यति तावान् कालो ग्राह्यः अन्यथा दिनात्ययपदं बाधितं स्यात् अत्ययारम्भे वा मध्याह्नोपरि मध्याह्ने अतिक्रान्ते दिनमतिक्रान्तमेवेति । मथुरास्थितानां वा दुःख दानास्यैव स्वस्य वा ॥ ६ ॥

ततो भगवान् शनैर्गच्छन् सर्वानन्दकरो जात इत्याह । मार्ग इति । मध्ये ये ग्रामाः तदीया वा सर्वत्र मार्गे राजन्निति सम्बोधनं तथानुभवाय तत्र तथैव न देशाविशेषस्तेषां

तान् समेत्याह भगवानक्रूरं जगदीश्वरः।
गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥
भवान् प्रविशतामग्रे सहयानः पुरीं गृहम्।
वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥

॥ अक्रूर उवाच ॥

नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो !।
त्यक्तुं नार्हसि मां नाथ ! भक्तं ते भक्तवत्सल ! ॥ ११ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

दर्शने अभिप्रेते अनभिप्रेते च देशे उपसंगताः निकटे समागताः वसुदेवसुतावेतो वीक्ष्य सम्बन्धात् स्वरूपाच्च प्रीताः भगवते दत्तद्रव्यः चकारात्सर्वमपि दत्वा नाददुः न पुनर्गृहीतवन्तः सामान्येन मार्गस्थानां निरोध उक्तः दृष्टेरग्रहणे हेतुः प्रीता इति प्रीतिरेव दानफलं जातमिति पुनः कथं ग्रहणं भवेत् सुखार्थमिन्द्रियाणां परिग्रहः तस्मिन् जाते न प्रवर्त्तन्त एव तेषामधिका बुद्धिर्न जातेति वसुदेवैतस्योक्तिः ॥ ७ ॥

भगवद्गमनात् पूर्वमेव नन्दादयः मथुरोपवनपर्यन्तं गताः अग्रे भगवति समागते गन्तव्यमिति प्रतीक्षयैव स्थिता इत्याह। तावदिति। यतस्ते व्रजौकसः अनावृत एव देशे स्थातुं योग्याः अत एवाग्रेऽपि गताः बहवो बालकाः भगवन्मित्राणि सहैव स्थिताः नन्दगोपादय एव परं वृद्धाः पूर्वं गताः उपवनं नानाविधफलप्रधानं मथुरानिकटस्थम् अवतस्थिरे केवलं स्थिताः न तु तत्स्थितियोग्यं साधनमपि न संपादितवन्त इत्यर्थः। अनेन व्यवहारेऽपि भगवत एव प्राधान्यं सूचितम् ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किञ्च त्वद्रूपेऽस्मिन् दृश्यमाने सम्प्रति तु तानि सर्वाण्यद्भुतत्वाय न कल्प्यन्ते किन्तु त्वद्रूपमेवेदमित्याह। यत्र त्वयि सर्वाण्यद्भुतानि तं त्वा त्वाम् अनुपश्यतो निरन्तरमीक्षमाणस्य ममान्यत्र भूम्यादौ किमद्भुतं तद्दृष्टमपि तु न किमपि किंचिदमेव त्वद्रूपं सर्वतोऽप्यद्भुतं दृश्यते इति जले सङ्कर्षणनारायणपार्षदान्वितं यद्वैकुण्ठस्थलमद्भुतं दृष्टं ततोऽपि परः सहस्राण्यद्भुतानि त्वद्रूपेऽस्मिन् वर्त्तन्त इति प्रत्येमीत्यर्थः। हे ब्रह्मन्! ब्रह्म चेति पाठद्वयं त्वं महामहेश्वरः साक्षात् परब्रह्मैवासि त्वयि भ्रातुष्पुत्रत्वज्ञानरूपं मन्मौढ्यं सम्प्रति त्वत्कृपया निःशेषेणैवापक्षीणमिति भावः ॥ ५ ॥

गान्दिनीसुतोऽक्रूरः ॥ ६ ॥

नाददुः पश्यन्त एव निष्पन्दा बभूवुरित्यर्थः ॥ ७ ॥

प्रतीक्षन्तः रामकृष्णौ प्रतीक्षमाणाः स्थिता इति पूर्वं रथदौर्घ्येणानुगन्तुमसमर्थं रथ वर्त्म परित्यज्य ऋजुमार्गेणैव तैरग्रे गमनादक्रूरनिमज्जननिबन्धनविलम्बाच्चेति भावः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एतदेवस्पष्टयति। यत्रेति। इह रथे तं त्वा त्वां तु निश्चितं पश्यतः किमदृष्टं सर्वं दृष्टमेव ॥ ५ ॥

गान्दिन्याः सुतोऽक्रूरः दिनात्ययेऽपराह्णे तस्मिन्नेवापराह्णे रजकवधादिकं ज्ञेयं कंसश्च निहतं द्रक्ष्ये परश्वोऽहनीति देवर्षिवाक्यात् ॥ ६ ॥

दृष्टिं न आददुः न प्रत्यांजहुः चित्रलिखिता इव तस्थुरित्यर्थः॥७॥

यावदक्रूरः रामकृष्णौ मथुरामनयत्तावत् नन्दगोपादयोऽग्रतः पुरोपवनमासाद्य प्राप्य रामकृष्णागमनं प्रतीक्षन्तोऽवतस्थिरे इत्यन्वयः ॥ ८ ॥

---

### भाषा टीका।

जिन आपके विषै संपूर्ण जो भूमि आकाश जल में हैं सो सब ही अद्भुत हैं तिन आपके रूपको जो मैंने देखलिया तो फिर और क्या अद्भुत मैंने देखा होगा ॥ ५ ॥

इतना कह कर अक्रूरजी ने रथ को चलाया फिर दिन की समाप्ति के समय पर राम तथा कृष्ण दोनों को मथुरा में पंहुचाय दिया ॥ ६

हे राजन्! दिन मे जाते समय मार्ग में ग्रामों के मनुष्यादि सब वसुदेव के दोनों पुत्रों के दर्शन कर के प्रीति के वसहोने से नेत्रों को नही हटा सके ॥ ७ ॥

तितने में नंदादिक सब व्रजवासी पहिले से जाकर सहर के पास बगीचे में ठहर कर भगवान् की प्रतीक्षा करते खडे रहे ॥ ८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्रश्रितं विनीतम् ॥ ९ ॥

सगृहश्च प्रविशताम् अवमुच्योचार्य विश्राम्येत्यर्थः ॥ १०—११ ॥

**आगच्छ याम गेहान्नः सनाथान् कुर्वधोक्षज ! ।**
**सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ! ॥ १२ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

साग्रजः सहगोपालैरित्यर्थः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जगदीश्वरोऽपि निजपाणिना तत्पाणिं गृहीत्वा यतो भगवान् भक्तवात्सल्याद्यशेषगुणप्रकटनपर इत्यर्थः । प्रहसन्निवेत्यवञ्चनां सूचयितुमिति भावः ॥ ९ ॥

अथ त्वत्प्रवेशानन्तरमेव पुरीं द्रक्ष्यामः हे तातेति तत्सन्तोषार्थमादरोक्तिः एवमेव मोचनं पुरीदर्शनञ्च कार्यमस्माकमस्तीति विलम्बात् सहैव गमनं न सम्भवेदिति व्यञ्जितं तच्चासङ्कोचेन तद्दर्शनार्थम् ॥ १० ॥

परमार्त्या बहुधा सम्बोधयन् प्रार्थयते । प्रभो इत्यादिना । तत्र नाहमित्यादौ हेतुः हे प्रभो ! सर्वोपरि प्रभवनशीलत्वेन सर्वाश्रय ! ननु तथापि मदाज्ञया प्रविशत तत्राह । त्यक्तुमिति । तत्र हेतुः नाथ इति नाथयति याचयति ददाति सर्वेभ्यः सर्वान् कामानिति हे तथाभूत ! ननूदासीनस्त्यज्यत एवेति चेत्तत्राह । ते तव भक्तम् अनन्यगतिमित्यर्थः । ननु सत्यं कदापि न त्याज्य एव किन्तु स्वच्छन्देन पुरीविहाराद्यर्थमिममल्पकालं स्वगृहं प्रस्थाप्यसे तत्राह । हे भक्तवत्सल ! इति क्षणमपि भक्तत्यागो न तव युक्त इति भावः ॥ ११ ॥

तर्हि किं कार्यं तत्राह । आगच्छेति । नन्वस्मदागमनविज्ञापनाय त्वं कंसं यास्यसि इत्याशङ्क्य त्वदैश्वर्यानुभवेन कंसान्निर्भयतया नेत्याह । याम इति । अहं यूयञ्च सर्व एव प्रथमतो गृहाण्येव गमिष्यामः तथापि सम्मतिमालक्ष्य सदैन्यं प्रार्थयते नोऽस्मान् सनाथान् कुरु बहुत्वं निजबन्धुवर्गापेक्षया हे अधोक्षज ! इन्द्रियज्ञानागोचर इत्येवम्भूतस्य तव साक्षाद्गमनेनैव सनाथत्वं सिद्ध्यतीति भावः । यद्वा नोऽस्मत्सम्बन्धिनो गेहान् यामः तानेव सनाथान् कुरु दासस्य ते तु स्वामित्वाभावात् त्वद्गमनेनैव सनाथत्वसिद्धेरिति भावः । अतएव नैकाकी चागच्छेरित्याह । सहेति । तैर्व्याख्यातं तत्र छान्दसत्वाल्लिङ्विपर्ययेण पाठ इति भावः यद्वा सुहृद्भिः पित्रादिभिः तैश्च कीदृशैः सगोपालैः शाकटबलीवर्दरक्षकैरपि सह साकल्येऽव्ययीभावः । "तृतीयासप्तम्योर्बहुल" मित्यमादेशविकल्पः । ननु सद्य एव कथं घटतां तत्राह । सुहृत् निरुपाधिकृपाकरः साधुः सुहृत्तमस्तद्भक्तः साधुः सुहृत्तमस्त्वं भगवानिति तथाभूतत्वन्माहात्म्येन घटते ननु मद्योग्यतयेत्यर्थः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तान्नन्दादीन् समेत्य जगदीश्वरो भगवान् स्वपाणिना विनीतमक्रूरं पाणिं गृहीत्वा प्रहसन् वक्ष्यमाणमुवाच इवशब्देन हास्ये ईषत्त्वं द्योत्यते ॥ ९ ॥

उक्तमेवाह । भवानिति।भवान् सहयानः सरथः पुरीं तत्र स्वगृहमग्रे विशतां वयं त्विहोपवने अवमुच्य उत्तार्य्य विश्राम्येत्यर्थः । अथ प्रातः वो युष्माकं पुरीं मथुरां द्रक्ष्यामः ॥ १० ॥

एवमुक्तः प्राहाक्रूरः ।नाहमिति षड्भिः । हे विभो ! भवद्भ्यां रहितो वियुक्तोऽहं पुरीं न प्रवेक्ष्ये हे नाथ ! भक्तं मां त्यक्तुं नार्हसि तत्र हेतुं वदन् सम्बोधयति हे भक्तवत्सलेति ॥ ११ ॥

त्यक्ष्य इति ग्राम्यजनएवाग्निकुण्डं तत्कथं वेक्ष्ये प्रवेक्ष्ये दुरन्तं दुर्वचं ग्राम्यवचः ग्राम्यस्येव वचो रामकृष्णावानीताविल्येवं विधं वाक्यं कथं वक्ष्ये कंसं प्रति इति शेषः । हे जगत्पते ! कथम्भिन्नतया द्रक्ष्ये त्वच्छरीरभूतत्वेन त्वदपृथक्सिद्धान् कंसादीन् त्वत्तः पृथक्सिद्धतया शत्रुभावेन कथं द्रक्ष्ये इत्यर्थः । क्वचिदयं श्लोको न दृश्यते अतो हे अधोक्षज ! त्वमागच्छ यामः त्वयैव सहवयं गमिष्यामः नोऽस्मान् सनाथान् सेश्वरान् कुरू अग्रजः सरामः गोपालैश्च सुहृद्भिश्च सह हे सुरोत्तम ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

भवानग्रे प्रविशतां पश्चात्त्वं गृहं व्रज अवमुच्य स्कन्धावरोहं कृत्वा ॥ १०—१३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सुहृद्भिः पित्रादिभिः सगोपालैः सकटबलीवर्दरक्षकैरपि सहेति शेषः ॥ १२—३४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततोऽक्रूरविसर्ज्जनमाह । तान् समेत्येति । अक्रूरे स्थिते लोकव्यवहारे पितृव्य इति स्वच्छन्दलीला नोचितेति व्यवहारोऽपि निर्बन्धेन नागत इति ख्यापयितुं तान्नन्दादीन् समेत्य अक्रूरं प्रत्याह । भगवानिति । निःशङ्कःबहिः स्थिते कंसः कदाचिदुपद्रवं कुर्यादिति शङ्काया अभावायाह । जगदीश्वर इति । स एव हि जगतो नियन्ता स्वामी ऐश्वर्यं गुप्तं कृत्वा सख्यबन्धुत्वादिप्रकटनार्थं पाणिना पाणिं गृहीत्वा तेन नम्रं प्रहसन् व्यामोहयन् पूर्वावस्थां तस्य सम्पादयन् वक्ष्यमाणमब्रवीत् ॥ ९ ॥

भगवद्वाक्ये चित्तदार्ढ्यार्थं पृथङ्निरूपणं वचनमेवाह । भवानिति । असम्बन्धख्यापनार्थं भवानिति अस्मत्प्रवेशात्पूर्वमेव अन्यथा तव कार्यं कृतमपि उपद्रवादकृतं मन्येत कंसः ततो गृहेऽपि त्वया गन्तव्यम् अन्यथा कंसः अस्मन्निग्रहार्थं प्रेरयेत् तच्चानुचितं यथा तवापराधो न भवति तदर्थं वयमिहैव प्रतिमुच्य शिबिरं कृत्वा अथ भिन्नप्रक्रमेण यावत्कंसः आकारयिष्यति तावत्पुरीं द्रक्ष्यामः अनेन पुरी सम्यक् स्थापिता न वेति ॥ १० ॥

भगवान् मध्ये उदासीनमिवोक्तवानिति तदसहमानः किञ्चित्प्रार्थयति । नाहमिति षड्भिः सर्वे हि भगवद्गुणास्तेन वर्णनीया

पुनीहि पादरजसा गृहान्नो गृहमेधिनाम् ।
यच्छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥ १३ ॥
अवनिज्याङ्घ्रियुगलमासीच्छ्लोक्यो बलिर्महान् ।
ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥ १४ ॥
आपस्तेऽङ्घ्र्यवनेजिन्यस्त्रीँल्लोकाञ्छुचयोऽ पुनन् ।
शिरसाधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥ १५ ॥
देवदेव ! जगन्नाथ ! पुण्यश्रवणकीर्त्तन ! ।
यदूत्तमोत्तमश्लोक ! नारायण ! नमोऽस्तु ते ॥ १६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

इति स ह्येवं ज्ञातवान् यथा कंसादयस्तथायमिति ज्ञात्वा भगवान्मां दूरीकरोतीति एवं मति भगवान् स्वच्छन्दलीलां करोतु नाम मयाप्यत्रैव स्थातव्यं क्वचिन्नतु भगवद्रहितं पुरं गृहं वा प्रवेष्टव्यम् अत एव वैराग्यविधिः भगवदभावे गृहादिकं त्यक्तव्यमिति अतो भवद्भ्यां रहितः शब्दब्रह्मपरब्रह्मभ्यां मधुदैत्ययुक्तां तत्संबन्धिनीं मथुरां न प्रवेक्ष्ये "नैतमृपिं विदित्वा नगरं प्रविशेद्यदि प्रविशेन्मिथो चरित्वा प्रविशे" दिति श्रुतेः शङ्का तु तव नास्तीत्याह । प्रभो ! इति । अतः परमनागमने मत्त्यागो हेतुः तन्न कर्तव्यमिति प्रार्थयति । त्यक्तुं नार्हसीति । नाथे त्यक्ते न कापि पाल्यानां गतिर्भवतीति तत्रापि भक्तं तत्रापि ते अवतारलीलाविशेषस्फकं कार्यार्थं त्याग इति चेत्तत्राह । भक्तवत्सलेति । भक्तवात्सल्यं तिष्ठतीति न कदाचिदपि भक्तास्त्यक्तव्याः ॥ ११ ॥

नगरे स्थानं नास्तीति चेत्तत्राह । आगच्छेति । सर्वैः सहागच्छ गृहं तुल्यमिति ख्यापयितुं याम इति सर्वेषां गमनं तुल्यं निरूपितं नो गेहानिति बहवो वयं भ्रातरः एकैकस्य गृहा अपि बहवः अतो न स्थलसंकोचः ननु विशेषाभावादत्रैव स्थातव्यमिति चेत्तत्राह । सनाथान्कुर्विति । यो हि प्रभुर्भवति स स्वगृहे तिष्ठति न त्वन्यगृहे यद्यस्मद्गृहे त्वया न स्थितं स्यात् तदा अस्मन्नाथो न भवेः । तदा वयमनाथाः अतः सनाथान् कुरु अस्मत्संबन्धेन तवापराधो भविष्यतीति चेन् तत्राह । अधोक्षजेति । ज्ञानविषय एव त्वं न भवसि कुतस्तरां क्रियाविषयो भविष्यसीति अनेन भगवतो ज्ञानशक्तिर्निरूपिता "यस्या मतं तस्य मत" मिति तद्वैकाकी समागमिष्यामीत्याशङ्कायामाह । सहाग्रज इति । तवाप्यग्रजस्य सुतरामेव न भयं मान्यश्च गोरक्षणधर्मात् अचातुर्यत्वाच्च गोपालानां भयशङ्कैव नास्ति त्वयि सति केषामपि न भयमिति वक्तुं सुहृद्भिः सहेति गोपाला एव सुहृदः नन्दादयो वा बान्धवाः चकारात् सर्वे सेवकाः अनांसि वृषभादयश्च ननु कथमेतावद्भिः सह गन्तव्यमिति चेत्तत्राह । सुहृद्भिश्च सुहृत्तमेति । स्वामी भवानत्यन्तं सुहृत् भवत्संबन्धिनः सुहृत्तराः अन्ये सेवकादयः सुहृदः अतः सर्वैरेवागन्तव्यम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रश्रितं विनीतं प्रहसन्निवेति तदानन्दनार्थमेव नतु वस्तुतः प्रहसन् मथुरानगरदर्शनेन व्रजनगरत्यागस्मृत्यान्तर्विषादोदयात् ॥ ९ ॥

गृहं स्ववासं च अवमुच्य विश्राम्य ॥ १०—११ ॥

याम एते त्वञ्चाहं चास्माकं गेहान् याम इति कंसमावेदयितुं तत्समीपं प्रथमं न यास्यामिश्वो मारिष्यन् स मे किङ्कर्तुं शक्नुयात् नाहं तस्मात् किञ्चिदपि बिभेमि त्वदैश्वर्यस्य दृष्टत्वादिति भावः । नच मद्गृहे कस्यापि वस्तुनः सङ्कोचस्तस्मात्सर्वेऽपि यूयं गच्छतेत्याह । सहाग्रज इति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तान् नन्दादीन् समेत्य प्रश्रितं विनीतमक्रूरमाह ॥ ९ ॥

सहयानः सहरथः पुरीं तत्र स्वगृहमग्रे प्रविशताम वयन्तु इह उपवने अवमुच्य उत्तार्य्य विश्राम्येत्यर्थः । हे तात ! ततः पुरीं द्रक्ष्यामः ॥ १० ॥ १२ ॥

---

भाषा टीका ।

तदनंतर जगदीश्वर भगवान् ने अक्रूरजी के हाथ को अपने हाथ से पकडकर हंसकर कहा ॥ ९ ॥

आप आगे से रथ सहित पुरी को जाकर घरको जाओ हम यहां पर उतर कर फिर पुरी को देखेंगे ॥ १० ॥

अक्रूरजी बोले हे प्रभो ! आप दोनों के विना मैं मथुरा पुरी में प्रवेश नही करूंगा हे नाथ ! हे भक्तवत्सल मैं तुमारा भक्त हूं मेरे को आप छोडने को नहीं योग्य हो ॥ ११ ॥

हे अधोक्षज ! आइये हमारे घरों को कृतार्थ करो हे सुहृत्तम अपने बडे भ्राता सहित गोपालों के सहित सखाओं के सहित चलेंगे ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहाङ्गणस्थितेन ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

श्लोक्यः पुण्यकीर्त्यर्हः एकान्तभक्तानां या गतिस्तां च लेभे ॥ १४ ॥

अपुनन् पवित्रितवत्यः याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥ १५ ॥

प्रार्थयमानो नमस्करोति । देवदेवेति । अतः परमन्यच्छ्रेयो नास्तीति मत्वा बहुधा सम्बोधयति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु पित्रग्निसुरादीनां पूजादिना सदा त्वद्गृहाणां सनाथता भात्येव तत्राह । पुनीहि गृहमेधिनां नित्यं गृहेषु पञ्चसूनापराणाम् अनुशब्देन सकृल्लब्धेनापि निरन्तरं तृप्यन्तीति ध्वन्यते पितर इति । पित्रादीनामनुतृप्त्या गार्हस्थ्यकृत्यसमाप्त्या गृहस्थानां स्वत एव सुखं कृतार्थता च स्यादिति भावः ॥ १३ ॥

नचेयं स्तुतिर्दृष्टफलत्वात् यद्वा ननु तर्हि रजस्तच्छौचजलं वा तत्र नीयतामित्याशङ्क्य श्रीबलिवत्तत्र साक्षात् प्रक्षालयितुमिच्छामीत्याशयेनाह । अवनिज्येति । महान् श्लोक्यः पुण्यकीर्तिमत्सु श्रेष्ठ इत्यर्थः । श्रीव्यासादिभिरपि प्रशस्तत्वात् अतुलमिन्द्रादीनामपि दुर्लभत्वात् गतिं प्राप्यं तां च लेभे इहैव द्वारपालत्वेन श्रीभगवतः साक्षात् प्राप्तत्वात् ॥ १४ ॥

अहो आस्तां तावत् त्वत्तदवनेजनजलानां माहात्म्यं परम्परयापि तत्स्पृष्टानां माहात्म्यं परमाश्चर्यमित्याह । आप इति । शुचय इति । महापातकिपावनेनान्यतीर्थानामिवाशुचित्वं निरस्तं न केवलं त्रीन् लोकानेवापुनन् लोकपालमुख्यं सर्ववन्द्यं श्रीशिवमपीत्याह । शिरसेति । तथा चोक्तं प्रथमस्कन्धे शेषं पुनातीति बहिः श्मशानादिसम्बन्धं तिरस्करोतीत्यर्थः । इति तासां परमपुरुषार्थरूपत्वमुक्तम् अहो साक्षात्तत्स्पर्शेन पावनत्वं किं वक्तव्यं महापराधिनां चिरं स्वकृतपापेनैव दग्धानामपि दाहस्थानस्पर्शमात्रेणैव परमशोधनं ब्रह्मलोकप्रापणं चाह । स्वर्गता इति । स्वरिति त्रिलोकीपक्षे ब्रह्मलोकपर्यन्तस्य स्वर्गत्वाद्ब्रह्मलोकमित्यर्थः । तत्तु नवमे व्यक्तमेवमादौ पावनत्वं ततः परमवन्द्यत्वं ततश्च सुदुस्तरमहदपराधादपि निस्तारकत्वं परमपदप्रापकत्वञ्च क्रमेणोक्तम् ॥ १५ ॥

हे देवदेवेति । तत्र त्वद्गमनेन ध्रुवं महापुण्यं स्यादेवेति भावः । यद्वा देवानां ब्रह्मादीनां देव पूज्येति यद्यपि त एव सेवकास्त्वदनुग्राह्यास्तथापि जगन्नाथत्वेन मामप्यनुग्रहीतुमर्हसीति भावः । ननु पुण्यवत एवानुगृह्णामि तत्राह । पुण्येति । तव श्रवणादिनाहमपि पुण्यवानेव यद्वा यस्य श्रवणकीर्त्तनाभ्यामपि पुण्यं स्यात्तस्य दर्शनादिना ममापि महापुण्यं जातमेवेति भावः । किञ्च यदूत्तमेति । यदुकुलावतीर्णेन तच्छ्रेष्ठेन त्वया तत्कुलजोऽहमनुग्रहीतुं योग्य इति भावः । ननु तथापि कंससङ्गी त्वं श्रीगोकुले जातापराधश्च कथमनुग्राह्य इत्याशङ्क्याह । उत्तमःश्लोकेति । पूतनादीनामपि तादृशगतिदानेन सर्वोत्कृष्टनिजकीर्त्यपेक्षयेत्यर्थः । नन्वीश्वरस्य मम तादृशीच्छा क्वचिद्भवेत् क्वचिन्न भवेदित्याशङ्क्याह । नारं जीवसमूहस्तस्यायनमाश्रयेति भवतु मा वा तथापि जीवमात्रस्य त्वमेव गतिरिति भावः । परमैश्वर्येण सपादग्रहं प्रणमति । नम इति । एवं श्रीकृष्णमेक प्रत्येव प्रार्थनादिकम् अन्योऽन्यं महास्निग्धतया श्रीबलदेवेन सह तस्याभेदात् तस्मात् प्राधान्याच्च ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम ।

श्लोकेन बलिः महाबलिः महानासीदित्यन्वयः । लेभे त्वत्सङ्कल्पादतुलमैश्वर्यमित्यर्थः ॥ १४ ॥

अवनेजनं क्षालनं स्वर्याताः ताभिरिति शेषः ॥ १५ - २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पादरजसा गृहमेधिनामस्माकं गृहं पुनीहि पवित्रीकुरु यस्य पादरजशौचेन क्षालनादकेन पीतेन गृहाङ्गणस्थितेन शिरसि धृतेन चास्माकं पितरोऽग्नयः सुराश्च तृप्यन्ति तृप्ता भवन्ति तेन पादरजसेत्यन्वयः ॥ १३ ॥

किञ्च तवाङ्घ्रियुगलमवनिज्य प्रक्षाल्य बलिर्वैरोचनिर्बृहच्छ्लोक्यः विपुलकीर्त्यर्हः महान् गुणैरिति शेषः । आसीद्बभूव त्वत्सङ्कल्पालब्धप्रायमैश्वर्यं लेभे प्राप्तवान् तथैकान्तिनामनन्यप्रयोजनान प्रपन्नानां या गतिस्त्वत्प्राप्तिरूपा तां च लेभे लब्धवत्प्रायो बभूव ॥ १४ ॥

किञ्च तवाङ्घ्र्योरवनेजन्यः क्षालिन्य आपः गाङ्गाः शुचयः पवित्राः त्रीँल्लोकानपुनन् पवित्रितवत्यः किञ्च या आपः शर्वो रुद्रः शिरसा धृतवान् किञ्च याभिरद्भिः सगरात्मजाः स्वर्गं गता बभूवुः एवंविधमहामहिमशालिपवित्रतमगङ्गादिरूपतीर्थाश्रयपादरजसा पुनीहि इत्यन्वयः ॥ १५ ॥

एवं प्रार्थयमानोऽनितरसाधारणधर्मयुक्तं सम्बोधयन्नमस्करोति देवदेवेति । देवानां ब्रह्मादीनामपि देव जगतो नाथ पुण्यं शृण्वतां वदतां च पुण्यावहं यस्य श्रवणं कीर्त्तनञ्च तवास्य स पुण्यश्रवणकीर्त्तनः तस्य सम्बोधनम् उत्तमैर्ब्रह्मादिभिः श्लोक्यते ईड्यते इति तथा उत्तमः श्लोको यशो यस्येति वा ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवनिज्य प्रक्षाल्य एकान्तिनां भक्तमुख्यानां या गतिस्त्वत्प्राप्ता ताम् ॥ १४ ॥

अपुनन् शुद्धांश्चक्रुः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यशोरूपं भगवन्तं निरूपयति । पुनीहीति । अनेन सनाथत्वमात्रत्वं चेत् वचनेनापि सनाथत्वं संपद्यत इति किमागमनेनेत्याशङ्का परिहृता यतो गृहपावित्र्यमाधिकं कर्तव्यमिति पावित्र्योपायमाह । पादरजसेति । चरणरजो हि भगवदीयत्वं संपादयतीति परमशुद्धत्वेव तथात्वं भवतीति पादरजसा गृहाणां पावनं कर्त्तव्यं तदेतो नयने अल्पमेव रजो गच्छेत् तत्र गमने तु सर्वैव भूः चरणरजो भवतीति सर्वेषामेव गृहाणां पावनं भवति ननु भगवदीया भवन्तः गृहादय तथा सति का पावनापेक्षा इति चेत्तत्राह । गृहमेधिनामिति । गृहे मेधा हि सा नित्यमु-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

त्यचते तथा सति य एव गृहस्थो भवति ज्ञाननिष्ठो भक्तो वा स एव लिप्यते कालगुणैरिव ते चेद्गृहाः अपहतपाप्मानो भवन्ति तदैव निस्तार इति। किं च न केवलं जीवतामेव भगवदागमेन उपकारः किन्तु सर्वेषामेव पित्रादीनां परमा तृप्ति-रित्याह। यच्छौचेनेति। यस्य भगवतः शौचेन चरणोदकेन पितरः अग्नयो देवाश्च अनुतृप्ता भवन्ति। यतो ब्रह्मदण्डहता अपि मुच्यन्ते। अतस्तव चरणोदकं पितृणां परमानन्दहेतु-र्भवति। तेषां कव्यं गृहीत्वा प्रयच्छत्यग्निरिति तेषां च तृप्ति-रपेक्ष्यते। तत्र प्रविष्टा एव पितरो जाता इति च तथा तदधिष्ठाव्यो देवताः यज्ञो देवाः पितरश्च तृप्ता भवन्तीत्युक्तं भवति॥ १३॥

श्रियं निरूपयन् चरणोदकस्य माहात्म्यमाह। अवनिज्याङ्घ्रि-युगलमिति। चरणोदकानिर्माणेन प्रक्षालनक्रियया बलेस्त्रयं जातं कीर्त्तिः ऐश्वर्यं भक्तिर्मोक्षो वा श्लोक्योऽपि जातः महानपि जातः महत्त्वं सर्वलोकप्रसिद्धिः सत्यं शौचमित्यादि गुणवत्त्वं प्रार्थ्या महत्त्वमिच्छद्भिरिति वाक्यात् ऐश्वर्यमिन्द्रत्वमतुलं ततो-ऽप्यधिकं भगवान् वश इति। एकान्तिनां भक्तानां या गतिः स्वतन्त्रा भक्तिः सायुज्यं वा येति सर्वलोकप्रसिद्धा "अनिच्छतो गतिमण्वीं प्रयुङ्क्ते" इत्यादिवाक्यासिद्धा॥ १४॥

धर्मं निरूपयन् वीर्यं वा चरणोदकमेव स्तौति। आप इति। ते त्रिविक्रमस्य अङ्घ्र्यवनेजन्यः आपः चरणक्षालनो-दकानि त्रीन् लोकान् मन्दाकिन्यादिभेदेन अपुनन् यतः स्वयं शुचयः शुद्धाः नखोदकस्याशुद्धत्वमाशङ्क्य तथोक्तवान् न केवलं पवित्रत्वजनकत्वं किन्तु आधिदैविकत्वसम्पादकत्वमपीत्याह। शिरसाधत्त याः शर्व इति। शर्वो महादेवः "शिवः शिवो भू" दि-त्यत्र फलं विस्तरेण निरूपितं ततो भूमिङ्गतापि ब्रह्मदण्डहता-नपि पावयामासेत्याह। स्वर्याता इति। सगरस्य पुत्राः दुरात्मत्वेन प्रसिद्धाः स्वर्गं गताः इन्द्रेण नाशार्थं कृतप्रयत्ना अपि चरणोदकेनेन्द्रसमानाः कृता इत्यर्थः॥ १५॥

भगवत ऐश्वर्यं कीर्त्तयन् नमस्यति। ऐश्वर्यं षड्विधम् उपास्य-त्वेन प्रभुत्वेन दोषनिवारकत्वेन गुणाधायकत्वेन उत्तमस्तु त्यत्वेन जगत्कारणत्वेन च। देवदेव इति। तत्र भगवान् देवानामपि देवः उपास्यानामप्युपास्यः जगत एव नाथः नत्वेकदेशस्य पुण्ये पापनिवारके श्रवणकीर्त्तने यस्य यथा श्रवणं तथैव कीर्त्तनं पाप-नाशकम्। यदूत्तमेति। यदोरपि गुणाधायकः "अकर्त्ताचरितं पितु" रिति न्यायेन पितुः प्रतिकूलत्वात् न कस्यापि साध्यः तस्यापि गुणान् धत्त इति उत्तमैरपि व्यासादिभिः श्लोक्यत इति नारा-यणो जगत्कर्त्ता इति एवं षड्गुणपूर्णं नमस्यति। नमोऽस्तुत इति। नमस्कारप्रार्थनया नित्यं नमस्कार उक्तः॥ १६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यच्छौचेन यत्पादरजःक्षालनोदकेन॥ १३॥

श्लोक्या महायशोऽर्हः गतिं च लेभे या एकान्तिनामेव गति-रित्यपि पाठः॥ १४॥

आपो गङ्गाभिधानाः शुचयो ऽप्राकृत्यः स्वर्याता इति यत इति शेषः॥ १५॥

हे देवदेव! त्वं देवेषु दीव्यसि मद्गृहेऽपि अद्य दीव्य त्वं जगतां नाथः अद्य मद्गृहनाथो भव हे पुण्यश्रवणकीर्तन! अद्य मद्गृहमपि पुण्यं कुरु हे यदूत्तम! यदोर्मम गेहमागच्छ हे उत्तम श्लोक! पतित पावनत्वयशः प्रकाशयन् पतितं मद्गृहं पुनीहि॥ १६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यत् यस्य पादरजसः शौचेन क्षालनोदकेन गृहाङ्गणस्थि-तेन॥ १३॥

बलिः तवाङ्घ्रियुगलमवनिज्य प्रक्षाल्य श्लोक्य! पुण्यकी-र्त्यर्हः महांश्चासीत् ऐश्वर्य्यम् एकान्तिनां भागवतानां या गति-स्तां लेभे च॥ १४॥

किञ्च ते अङ्घ्र्योः अवनेजन्यः शौचभूता आपः शुचयः पवित्राः त्रीन् लोकान् अपुनन् पावित्रितवत्यः सगरात्मजा ब्रह्मदण्डहताः स्वः स्वर्गं याताः याभिरिति शेषः। किम्बहुना याः सर्वः शिवः शिरसा-ऽधत्त मस्तकेन धृतवान्॥ १५॥

हे देवदेव! ब्रह्मशिवादिपूज्य हे जगन्नाथ! पुण्ये श्रवणकीर्तने यस्य स तथा हे यदूत्तम। यदुश्रेष्ठ! हे उत्तमश्लोकः पुण्यकीर्ते हे नारा-यण अखिलनरसमूहनिवासस्थान ते! नमोऽस्तु पादरजसा पुनीहीति प्रार्थना॥ १६॥

---

भाषा टीका।

हम गृहस्थों के घरों को अपने पाद रज से पवित्र करो जिस आपके चरण जल के पवित्रता से अग्नि पितर देवता सब तृप्त होजाते हैं॥ १३॥

आपके चरण युगल को प्रक्षालन करके बली राजा बड़ा प्रशंसनीय हो गया बड़े ऐश्वर्य को प्राप्त भया और जो एकां-तियों की गति है तिसको भी प्राप्त होगया॥ १४॥

पापों को नाश करने वाले आपके चरणों के धोये जल जो पवित्र होकर जगत् को पवित्र करते भये जिन गंगा रूप जलों को मस्तक में महादेवजी ने धारण किया है जिन से सगर के पुत्र सब स्वर्ग को चले गये॥ १५॥

हे देव देव! हे जगन्नाथ! हे पुण्य श्रवण कीर्तन! हे यदू-त्तम! हे उत्तमश्लोक! हे नारायण! आपके अर्थ नम-स्कार है॥ १६॥

---

श्रीभगवानुवाच ॥

आयास्ये भवतो गेहमहमार्यसमन्वितः।
यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियम् ॥ १७ ॥

॥ श्रीशुक उवाच ॥

एवमुक्तो भगवता सोऽक्रूरो विमना इव।
पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥
अथापराह्ने भगवान् कृष्णः सङ्कर्षणान्वितः।
मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥
ददर्श तां स्फाटिकतुङ्गगोपुरद्वारां बृहद्धेमकपाटतोरणाम्।
ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

आदौ तावद्यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये दास्यामि ॥ १७ ॥

रामकृष्णावानीताविति स्वकृतं कर्मावेद्य समर्प्येति ॥ १८ ॥

गोपैः परिवारितः प्राविशत् ॥ १९ ॥

श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः। ददर्श तामिति। स्फाटिकानि तुङ्गानि गोपुराणि पुरद्वाराणि· गृहद्वाराणि च यस्यां ताम् बृहन्ति हेममयानि कपाटानि तोरणानि च यस्यां ताम् ताम्रश्चाऽऽरः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्वशालादयो यस्यां ताम् परिखाः परितः खातगर्त्तास्ताभिर्दुरासदां दुर्गमाम् उद्यानानि दूरस्थानानि वनानि रम्याण्युपवनानि च निकटानि तैरुपशोभिताम् ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आर्थेण श्रीरामेण सम्यगन्वित इति गोपैः साहित्यं निरस्तं तेषां चिरं तत्रानवस्थानात् कदेत्यपेक्षायामाह। यदुचक्रेति। यदेति शेषः सङ्केतेनैव तदुक्तिः मन्त्रभङ्गभयात् दुष्टत्वाद्वा सुहृदां यादवानां श्रीवसुदेवमोचनादिना प्रियं प्रीतिं पितरौ बद्धौ सर्वे यादवाश्चात्र दुःखिताः अतोऽत्रागतस्य मम त्वद्गृहगमनादिनातिथ्यसुखं न योग्यमिति भावः ॥ १७॥

स परमोत्सुकः श्रीभगवदानयने परमहृष्टोऽपि च इवेति वःक्यालङ्कारे यद्वा आयास्य इति तदङ्गीकारेण कंसहननप्रतिज्ञादिना चात्यन्तवैमनस्याभावात् गृहं ययाविति प्रायः श्वः कंस मारयित्वा श्रीभगवानागमिष्यतीति विभाव्य बहुधा निजगृहमुपस्कर्त्तुमिति ज्ञेयम्। अतएव तदासक्त्या तत्र तस्य श्रीभगवदागमनपर्यन्तमन्यत् कर्मादिकं किमप्यग्रे कुत्रापि न श्रूयते ॥ १८ ॥

गोपैर्वयस्यैः ॥ १९ ॥

चतुष्केण पुरीं वर्णयन्नादौ तस्याः स्वाभाविकीं शोभां वर्णयति। ददर्शेति सार्द्धद्वयेन। आर आरकूटः पित्तलं परिखाः पार्श्वद्वये ज्ञेयाः पूर्वोत्तरयोः प्रायः श्रीयमुनाया एव परिखारूपेण वर्त्तमानत्वात् उद्यानं फलप्रधानम् उपवनं पुष्पप्रधानं पूर्वमुक्तं शकटावरणस्थानोपवनकृत्रिमं बाह्यश्च उपवनस्य सौन्दर्यादिविशेषेण रम्येति विशेषणम् अन्यत्तैः यद्वा कोष्ठानि दुर्गप्राकाराः उद्यानरम्या चासावुपवनोपशोभिता चेति तां प्रत्येकं विशेषणमाधिक्यापेक्षया क्रमस्त्वेवम् उद्यानानि उपवनानि परिखाः कोष्ठानि तत्र गोपुराणि अन्यद्वाराणि द्वार्षु हेमकपाटानि ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं प्रार्थितः प्राह भगवान्। आयास्य इति। यदुचक्राय यदुवंशजसमूहाय द्रुह्यतीति यदुचक्रध्रुक् तं यदुचक्रद्रुहं कंसं हत्वा तातोऽग्रजसमन्वितोऽहं भवतो गेहम्प्रत्यायास्ये आगमिष्यामि तथान्येषां च सुहृदां प्रियं वितरिष्ये करिष्यामि ॥ १७॥

इत्थं भगवतोक्तोऽक्रूरः विमना इव किञ्चिदसन्तुष्टमना इव भूत्वा पुरीं प्रविष्टः कर्म रामकृष्णावानीताविति स्वकृतं कर्मावेद्य स्वगृहं ययौ ॥ १८ ॥

अथ श्वोऽपराह्णे भगवान् कृष्णः सङ्कर्षणेनान्वितो गोपैः परिवृतो द्रष्टुमिच्छुः श्रीमथुरां प्राविशत् ॥ १९ ॥

तां मथुरां ददर्श कथम्भूतां स्फाटिकमयानि तुङ्गान्युच्छ्रितानि गोपुराणि पुरद्वाराणि अन्यानि च द्वाराणि यस्यां ताम्रम् आरम् आरकूटश्च तन्मयाः प्रकोष्ठकाः धान्यादिशालादयो यस्यां तां परिखाभिः परितः खाताभिः दुर्गमाम् उद्यानानि दूरस्थानि रम्यारामुपवनानि च निकटानि तै रुपशोभिताम् ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यदुवर्गद्रुहं कंसम ॥ १७ ॥

त्वयोक्तं कर्म मया कृतमिति ॥ १८ ॥ १९ ॥

स्फाटिकानि स्फटिकरत्ननिर्मितानि तुङ्गानि च गोपुराणि पुर-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्वाराणि यस्यां सा तथा बृहन्ति विशालानि स्फुरन्ति शोभमानानि हेम्ना निर्मितानि कपाटानि तोरणानि च यस्यां सा यथा ताम्रैरारैरारकूटैर्लोहविशेषैर्निर्मितानि कोष्ठान्यन्तर्भवनानि यस्यां सा तथा आराण्यारकूटमित्यभिधानं यद्वा ताम्रेण विरचिते आरकोष्ठे अट्टालावयवयग्रे यस्यां सा यद्वा ताम्रकृतानि अराणि दलानि यस्मिंस्तथा ताम्रारं कोष्ठं यस्यां सा तथा सा च आसीमा परिखा खातनदी यस्यां सा तथा ताम्रारकोष्ठापरिखाम् अत एव दुरासदां दुष्प्रवेशां ताम्रारकोष्ठां परिखादुरासदामितिपठन्ति उद्यानैः सर्वसाधारणवनै रम्या रमणीया च उपवनानामारामाणां प्रमदावनानामालिः पङ्क्तिस्तया शोभिताम् उद्यानरम्योपवनालिशोभिताम् ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भगवान् नित्यकार्यकर्त्तेति भगवत्कृतस्य विघाताभावाच्च तावत् पुरीं द्रक्ष्यामह इति वाक्यात् आगमनस्य प्रार्थितत्वात् कालान्तरे समागन्तव्यमित्याह । आयास्य इति । उदासीनवचनाभावाय स्वाभिप्रेतं चाह । आगमिष्यामि परमार्यसमन्वितः इदानीं विद्यमानानां मध्ये बलभद्रसहितः प्रार्थितानां पूरणार्थमुद्धवः समागमिष्यतीति भावः । तर्हि द्वाभ्यामेव गन्तव्यमिदानीमेवेति चेत्तत्राह । यद्रूचक्रद्रुहं हत्वेति । सर्वेषामेव यादवानां चक्रस्य यो द्रोहकर्त्ता तं कंसं हत्वा सिद्धवत्कारेण कथनात् सन्देहोऽपि अप्रार्थितोऽप्यायास्ये समागमने प्रयोजनं सूचयति । वितरिष्य इति । सुहृदामत्रत्यानां पाण्डवानां च प्रियं वितरिष्य इति अनेन तेषां सुखार्थं त्वां प्रेषयिष्यामि तदर्थमागमिष्यामीति सूचितम् ॥ १७ ॥

एवमागमनं निर्द्धार्य भगवदाश्रयः गृहे गत इत्याह । एवमुक्त इति । भगवता अप्रतिहतसामर्थ्येन एवमाज्ञप्तः इदानीमेव नेष्टं सिद्धमिति विमनाः अग्रे कार्यमपि करिष्यतीति इव स्वयं प्रथमतः एव पुरीं प्रविष्टः कंसाय भगवानानीत इति स्वकृतं कर्मावेद्य गृहं ययौ शीघ्रमेव स्वगृहङ्गतः ॥ १८ ॥

एवं पूर्वसम्बन्धिनां निरोधमुक्त्वा वार्त्तयैव पूर्वमपि निरोधं सम्पाद्य स्वरूपेणापि सम्पादयितुं स्वयं मथुरां दृष्टवानित्याह । अथेति । अथ भिन्नक्रमेण मित्रभूतैरेव गोपालैः सहापराह्णे तृतीये भागे भगवान् आविष्कृतसर्वधर्मा कृष्णः एतदर्थमेवावतीर्णः कंसमारणार्थं यत्नः कर्त्तव्य इति सङ्कर्षणसमन्वितः अन्यथा उभयोरवतारो न स्यात् । गोपैः परिवृत इति । एतैः सह एतावत्कालं क्रीडा कृतेति ज्ञापनार्थं शोभार्थं मनसि शङ्काभावार्थं तेभ्यः माहात्म्यप्रदर्शनार्थञ्च मथुरां स्वनगरीं प्रकर्षेणाविशत् सामीप्ये सप्तमी पुरद्वारनिकटे गत इत्यर्थः ॥ १९ ॥

ततो भगवान् दृष्टवानित्याह । ददर्शेति । भगवद्दृष्टां पुरीं वर्णयति चतुर्भिः । पुरुषार्थचतुष्टयपूर्णा स्वरूपतो द्रव्यतश्च वैचित्र्येणाप्यनुत्तमाम् अलङ्कृतां सांप्रतं तु भगवद्दर्शनार्थिभिः तां मथुरां दृष्ट्वैव सन्तोषं प्रापितया स्फाटिकानि तुङ्गानि गोपुराणि पुरद्वाराणि च यस्यां द्वारादिषु बृहन्ति सुवर्णकपाटानि तोरणानि च यस्यां ताम्रमयाः आराः कोष्ठानि च प्राकाराः यस्याः केचित्तु आरशब्देन आरकूटमाहुः ताम्रमयान्यारकूटमयानि च कोष्ठानि यस्याः परिखा परितो गर्त्तः तया कृत्वा दुरासदां यमुना तु दूर इति परिखाया न बाधः उद्यानानि पुष्पप्रधानवाटिकाः तै रम्याम् उपवनैश्च फलप्रधानैः उपसमीपे शोभितां द्वारप्राकारपरिखा फलपुष्पैः सुशोभिता । पञ्चधा नगरी रम्या सालंकारा च रूपिणा ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सत्यं भो मां यदूत्तमं ब्रूषे तर्हि यदुचक्रद्रुहं हत्वैव भवतो गेहमायास्ये ॥ १७ ॥ १८ ॥

गोपैः परिवारितो युक्तः ॥ १९ ॥

पुरीं वर्णयति चतुर्भिः । स्फाटिकानि तुङ्गानि गोपुराणि पुरद्वाराणि द्वाराणि अन्यानि च यस्यां तां बृहन्ति हेममयानि कवाटानि तोरणानि बहिर्द्वाराणि च यस्यां तां ताम्रं च आरः पित्तलं च तन्मयाः कोष्ठाः धान्याद्यागारा यस्यां तां परिखाः परितः खाता गर्त्तास्ताभिर्दुरासदां सौवर्णाः शृङ्गाटकाश्चतुष्पथाः हर्म्याणि धनिगृहाणि निष्कुटा गृहारामास्तैः श्रेणीनाम् एकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैरलंकृतां वैदुर्य्यादिरत्नैर्जुष्टेषु वलभ्यादिषु आविष्टैरुपविष्टैरासक्तैर्वा पारावतैर्बर्हिभिश्च नादितां तत्तत्प्रतिध्वनिमत्त्वेन तैरेव कारितनादामित्यर्थः । तत्र वलभी गृहचूडेति क्षीरस्वामी आच्छादनं स्याद्वलभी गृहाणामिति हलायुधः वलभीचन्द्रशालिकेति त्रिकाण्डशेषः साच सर्वगृहोपरिवर्तिनी ज्ञया । वेदिर्गृहाग्रे इष्टकादिबद्धा विश्रान्तिभूः । जालामुखरन्ध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धभूमयः । रथ्या राजमार्गाः आपणाः पण्यवीथयः मार्गा अवान्तरवर्त्मानि चत्वराण्यङ्गणानि आपूर्णैः कुम्भैः दधिचन्दनेत्यादिपद्विशेषणविशिष्टैः स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यान्तां वृन्दं फलसंहतिः रम्भाः कदल्यः क्रमुकाः केतवो ध्वजाः सपताकाः पाट्टिका वितस्तिविस्तरपट्टवस्त्रखण्डानि अत्रेयं रीतिः द्वारेषूभयतस्तण्डुलानामुपरि कुम्भाः तत्परितः प्रसूनावलयः कुम्भानाङ्कण्ठे पट्टिकामुखेषु चूतादिपल्लवाः तदुपरि स्वर्णपात्रे दीपावलयः कुम्भानां पार्श्वद्वये रम्भावृक्षद्वयम् अग्रे पश्चाच्च क्रमुकवृक्षद्वयम् केतवः कुम्भालम्बाः ॥ २०—२३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं प्रार्थितो भगवानाह । आयास्य इति । यदुचक्राय द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा भवतो गेहमायास्ये तथान्येषामपि सुहृदां प्रियं वितरिष्ये ॥ १७ ॥

यदर्थं प्रेषितोऽस्मि तन्मया संपादितमिति स्वकृतं कर्मावेद्य गृहं ययौ ॥ १८ ॥

भगवान् सर्वं कर्तुं कुशलोऽपि सबलः गोपैः परिवारितः अथाक्रूरगमनानन्तरम् अपराह्णे तद्दिनशेषे मथुरां प्राविशत् ॥ १९ ॥

मथुरां वर्णयति । ददर्शेति चतुर्भिः । तां मथुरां ददर्श भगवानिति शेषः । कथंभूताम् स्फाटिकानि स्फटिकमयानि तुङ्गान्युन्नतानि गोपुराणि पुरद्वाराणि अन्यानि च द्वाराणि यस्यां तां बृहन्ति हेममयानि कपाटानि तोरणानि च यस्याम् ताम्रं च आरः आरकूटश्च तन्मयाः कोष्ठाः यस्यां ताम् परिखाभिर्दुरासदाम् दुर्गमाम् उद्यानैर्दूरस्थैर्वनैरम्या उपवनैः समीपस्थैर्वनैरुपशोभिता सा च सा च ताम् ॥ २० ॥

सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम्।
वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥ २१ ॥
जुष्टेषु जालामुखरन्ध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम्।
संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् ॥ २२ ॥
आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः।
सवृन्दरम्भाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥ २३ ॥
तां सम्प्रविष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना।
द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥ २४ ॥

भाषा टीका।

श्रीभगवान् बोले मैं बलदेवजी के सहित आपके घर आऊंगा सब यादवों के द्रोही को मारकर आने से सुहृदों की प्रसन्नता करूंगा ॥ १७ ॥

श्रीशुकदेवजी बोले भगवान् के ऐसे कहने से वे अक्रूरजी उदास से होकर पुर में प्रविष्ट भये कंसके अर्थ कृत कार्य को निवेदन करके अपने घर को गये ॥ १८ ॥

इसके अनंतर भगवान् तीसरेपहर में बलदेवजी के सहित ताथ गोपालों के सहित मिलकर देखने की इच्छा से मथुरापुरी मे प्रवेश करते भये ॥ १९ ॥

उहां पर भगवान् ने मथुरा को देखा कि जिसमें स्फटिक मणिके द्वारोंके गोपुर हैं बडे बडे सुवर्ण के किवाडों से तथा तोरणों से शोभित है तामाके तथा पीतलके धानादि रखने के कोठे जिसमें बन रहे हैं बडी भारी खाइसे प्रवेश होने योग्य नहीं है बाहिर उपवन बगीचाओं से अति शोभित है ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सौवर्णाः शृङ्गाटकाश्चतुष्पथा हर्म्याणि धनिनां गृहाणि च निष्कुटा गृहोचिता आरामाश्च तैः श्रेणीनामेकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैर्गृहैरुपस्कृतामलंकृताम् अमलाः स्फटिकाः हरितो मरकता वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिष्वाविष्टै रुपविष्टैः पारावतैर्बर्हिभिश्च नादितां तत्र वलभ्यो गृहपुरोभागेषु वक्रदारुच्छादनानि वेदयो वलभीनामधोदेशे विरचिता अवष्टम्भवेदिकाः जालामुखरन्ध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धा भूमयस्तेष्विति रथ्या राजमार्गाः आपणाः पण्यवीथयः मार्गा अन्ये च चत्वराण्यङ्गणानि संसिक्तानि रथ्यादीनि यस्यां तां प्रकीर्णा माल्यादयो यस्यां ताम् ॥ २१-२२ ॥

तथा स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां ताम् कैः आपूर्णैः कुम्भैर्दध्ना चन्दनेन चोक्षितैः सिक्तैः प्रसूनानां दीपानां चावलयो येषु तैः वृन्दैः फलगुच्छैरुपलक्षिता रम्भाः क्रमुकाश्च तत्सहितैः सकेतुभिः केतवो ध्वजास्तत्सहितैः पट्टिका चित्रितानिस्तारपट्टवस्त्राणि तत्सहितैः तत्रेयं रीतिः द्वारेषूभयतस्तण्डुलानामुपरि कुम्भास्तत्परितः प्रसूनावलयः कण्ठे पट्टिका मुखे चूतादिपल्लवास्तदुपरि पात्रान्तरे दीपावलयस्तत्सन्निधौ रम्भाक्रमुकाः केतवस्तोरणानि चेति ॥ २३ ॥

नरदेववर्त्मना राजमार्गेण तां पुरीं सम्प्रविष्टावितिद्वितीयान्तम् ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सौवर्णेति तैर्व्याख्यातम् तत्र वलभी पटलाधारो वंशपञ्जरस्तस्य चूडा वा इति क्षीरस्वामी आच्छादनं स्याद्वलभी गृहाणामिति हलायुधः तत्र छाजेति भाषा मध्यदेशीयानां सा चेष्टकादिनिर्मितगृहप्रान्ते पाषाणादिनिर्मितच्छादनश्रेणी वलभीश्चन्द्रशालिकेति त्रिकाण्ड शेषः सा च गृहोपरि गृहं तथा च माघकाव्ये "यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवान" इति वेदिर्गृहाग्रे इष्टकादिबद्धा विश्रान्तिभूः वलभ्यादिषु आविष्टा उपविष्टाः किम्वा तेषु वर्त्तमाना ये आविष्टा मत्ताः पारावतादयस्तैर्नादितां कारितनादां तत्प्रतिध्वनियुक्तान्तर्गृहामित्यर्थः ॥ २१ ॥

अधुना लोकेषु धनुर्महख्यापनार्थं कंसेन कृतां यद्वा नित्योत्सवमय्यास्तत्पुर्याः स्वभावतः पौरैर्नित्यक्रियमाणामलङ्कारादिशोभां श्रीकृष्णप्रवेशमङ्गलसूचनीं वर्णयन्ति। संसिक्तेति सार्द्धेन। संशब्देन सम्यग्रजोनाशनपूर्वकं सुगन्धिजलादिभिः सेको बोध्यते अङ्कुरा नवोद्भिन्नयवादयः एवं सर्वत्र सर्वसम्भवानुक्रमो ज्ञेयः एवमग्रेऽपि ॥ २२ ॥

आ शब्देन पवित्रोत्तमजलादिना सम्यक् पूरणं बोध्यते अलङ्कृतेति सुशब्दसूचितं दर्शयति। दधीत्यादिभिः। अन्यस्तैः तत्र तोरणानि चेति कपाटतोरणमित्यस्मादाकृष्टम् ॥ २३ ॥

तामिति त्रिकम्। संप्रविष्टावित्युक्तं सम्यक् प्रवेशमेव दर्शयति। वृतावित्यादिना। समीयुः सम्यक् नैकट्येन किम्वा सङ्घशः प्राप्ता एव हर्म्याणि चारुरुहुरेव निवारिता अपि न निवृत्ता बभूवुरित्यर्थः। स्वयमप्यौत्सुक्यात् सम्बोधयति नृपेति अत्र टीकायां द्वितीयान्तमित्यर्थः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सौवर्णाः शृङ्गाटकाश्चतुष्पथाः हर्म्याणि धनिनां गृहाणि च तेषु निष्कुटाः गृहोचिता आरामास्तैः श्रेणीनामेकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैर्गृहैरुपस्कृतामलंकृताम् अमलस्फटिकाः हरिन्मरकताः वैडूर्यादिरत्नैर्जुष्टेषु संयुक्तेषु वलभ्यादिषु आविष्टैः पारावतैः मयूरैश्च नादितां तत्र वलभ्यः गृहपुरोभागस्तम्भविहिताच्छादनोपष्टम्भवक्रदारूणि वेदयः वलभीनामधोदेशे विराचिता अवष्टम्भवेदिकाः ॥ २१ ॥

जालमुखरन्ध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिभूमयः रथ्या राजमार्गाः आपणाः पण्यवीथयः मार्गाः अन्ये चत्वराण्यङ्गणानि संसिक्तानि रथ्यादीनि यस्यां विकीर्णास्तत्र तत्राकीर्णा माल्यादयो यस्यां तत्र माल्यानि मालार्हाणि पुष्पाणि ॥ २२ ॥

आपूर्णकुम्भैः दध्ना चन्दनेनोक्षितैः सिक्तैः प्रसूनानां दीपानाञ्चावलयो येषु तैः सवृन्दाः फलगुच्छैः सहिताः रम्भाः कदल्यः क्रमुकाश्च तैः केतुभिश्च सहितैः पट्टिकाः वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैश्च स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां तां तत्रेयं रीतिः द्वारभूम्युभयतः तण्डुलानामुपरि कुम्भाः तत्परितः प्रसूनावलयः कण्ठे पट्टिकाः मुखे चूतादिपल्लवाः तदुपरि पात्रान्तरे दीपावलयः तत्संनिधौ रम्भाः क्रमुकाः केतवस्तोरणानि चेति ॥ २३ ॥

तामेवंभूतां पुरीं वयस्यैः सखिभिः सहितौ नरदेवानां वर्त्मना राजमार्गेण प्रविष्टौ वसुदेवनन्दनौ द्रष्टुं पुरस्त्रियस्त्वरिताः समीयुः तत्र तत्र समुदिता बभूवुः तथा हे नृप ! उत्सुकाः सत्यो हर्म्याणि चारुरुहुः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सौवर्णैः सुवर्णबद्धैः शृङ्गाटकैश्चतुष्पथैः हर्म्यैः धनिनां निवासैः निष्कुटैः पथिकावासैः गृहवाटीभिर्वा श्रेणीसभाभिः गृहपङ्क्त्यन्तरालक्लृप्तसभाभिः श्रेणी वेश्या गृहपङ्क्तिः तत्पुरतःकृतसभाभिर्वा भवनैः प्रशस्तैः गृहैरुपस्कृताम् अलङ्कृतां वेदिषु परिष्कृतभूमिषु वलभीषु आच्छादनवक्रदारुषु प्रोतचित्रभल्लकेषु मुक्ताहरिद्भिः मुक्तावलिरश्मिमिश्रितैः वैडूर्यादिभिः ॥ २१ ॥

जुष्टेषु न्युप्तेषु जालानां गवाक्षाणामामुखरन्ध्रं मुखच्छिद्रपर्यन्तेषु विद्यमानेषु कुट्टिमेषु बद्धभूमिकेषु स्थलेषु आविष्टैरुपविष्टैः पारावतैः कपोतैः बर्हिभिर्मयूरैश्च नादितां शब्दितां चन्दनादिजलैः संसिक्ता आर्द्रीकृता रथ्या रथमार्गः आपणः निषद्यामार्गः पण्यवीथिकामार्गः प्रतिगृहं पन्थाः चत्वरश्चतुष्पथः विस्तृतमार्गः यस्यां सा तथा तां प्रकीर्णानि व्याप्तानि माल्याङ्कुरलाजतण्डुलानि यस्यां सा तथा ॥ २२ ॥

आपूर्णकुम्भैः स्वलङ्कृतानि द्वाराणि येषां ते तथा स्वलंकृतद्वारा गृहा यस्यां सा तथा तां कीदृशैरापूर्णकुम्भैः दधिचन्दनरसेन चोक्षितैः सिक्तैः प्रसूनानां दीपानामावलयो येषु ते तथा तैः सपल्लवैः किसलयसहितमुखैः वृन्तेन प्रसवबन्धनेन सहिता सवृन्ता रम्भा कदली सवृन्तरम्भा तथा क्रमुकाःपूगाः तैः पट्टिकाया उपर्यानतवितानवस्त्रेण सहिता सपट्टिका ताम् ॥ २३ ॥

या पूर्वं कर्णाकर्णिसौन्दर्या तां नरदेववर्त्मना राजमार्गेण ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बाह्यतः शोभामुक्त्वा आन्तरशोभामाह । सौवर्णेति । सुवर्णमयाः शृङ्गाटकादयः तैरुपस्कृतामिति । शृङ्गाटकं पुरमध्यचतुर्मार्गे विश्रामस्थानमीरितं हर्म्याणि धनिनां गृहाः निष्कुटं कुट्टिमा भूमिः एकशिल्पोपजीविनां क्रयविक्रयस्थानं श्रेणिः सभा नराणामुपवेशस्थानानि भवनानि सर्वेषामेव गृहाः सर्वं एव सुवर्णमया इति न काप्यशोभा वैडूर्यादयो मणयः तैरप्युपस्कृतां वज्रो हीरकममलाः स्फाटिकाः नीलो नीलमणिः विद्रुमः प्रवालः मुक्ताश्च हरिन्मणयश्च एभिर्निर्मिताः पूर्वोक्ता वलभ्यादयश्च वलभ्यो द्वाराग्रे वक्रदारुनिर्मिताः उपवेशनार्थं वेदयः उपवेशनोच्चस्थानानि तेषु वैडूर्यादिभिरुपस्कृतामिति संबन्धः ॥ २१ ॥

अग्रेऽपि तैर्जुष्टेषु योजितेषु जालामुखरन्ध्रकुट्टिमेषु गवाक्षरन्ध्रमध्यभूमिषु आविष्टा ये पारावताः बर्हिणश्च तेषां नादयुक्तामेवमुपरि सौभाग्यमुक्त्वा मार्गादिसौभाग्यमाह । सम्यक् सिक्ता रथ्यादयो यस्यां रथ्या राजमार्गाः आपणयः पण्यवीथी मार्गाः अन्ये चत्वराण्यङ्गणानि प्रकीर्णानि सर्वत्र माल्यानि पुष्पाणि अङ्कुराः यवाङ्कुराः लाजाः भ्रष्टधान्यानि तण्डुलाश्च मङ्गलार्थमेतेषां विकरणम् भगवानायास्यतीति ॥ २२ ॥

आ समन्तात् पूर्णकुम्भैः दध्ना चन्दनेन च उक्षितैः दध्ना सहितैश्चन्दनैः उक्षितैः पूर्णकुम्भैः सहितामिति प्रसूनानि दीपावलयः आरात्रिकाणि पल्लवसहिताश्चैते सवृन्दाः फलसहिता रम्भाः कदल्यः क्रमुकाश्च पूगपोताः ध्वजसहिताः तैः सुष्ठु अलङ्कृताः द्वाराणि गृहाश्च यस्यां सपट्टिका रम्भादयः अत्रेयं प्रक्रिया द्वारस्योभयपार्श्वे कुम्भद्वयं तदुपरि दधिपूर्णपात्रं तत्र निकटे दीपाः रम्भाः क्रमुकाश्च ध्वजः पताका च चन्द्रवर्णाश्चन्द्राकारा आदर्शाश्च महोत्सवे सर्वत्र क्रियन्त इति ॥ २३ ॥

एवं पुरीं वर्णयित्वा तस्यां प्रविष्टावित्याह । तां सप्रविष्टाविति । सर्वेषां भगवद्दर्शनार्थमेव तथा निर्माणमिति येषां बहिरागत्य दर्शनं संभवतिताननुक्त्वा यासां न संभवति तासामुद्योगाधिक्यमाह । द्रष्टुं समीयुरिति । नगरीं प्रविष्टौ वसुदेवस्य पुत्रौ गोपालैर्वृतौ नरदेववर्त्मना राजमार्गेण संयुक्तौ गच्छन्तौ द्रष्टुं पुरस्त्रियः समीयुः सम्यगाभिमुख्येन समागताः याः साधारण्यः पुरस्त्रियः दूरस्थाश्च बहिर्निर्गमनासमर्थाश्च हर्म्याणि उच्चगृहान् आरुरुहुः चकारात् यत्रैव स्थिताः द्रष्टुं शक्नुवन्ति तमेवारुरुहुरिति नृपेति सम्बोधनं राज्ञो गमनेऽप्येवं कुर्वन्तीति ज्ञापनार्थं भगवति तु विशेषः उत्सुका इति ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नरदेववर्त्मना राजमार्गेण पुरीं प्रविष्टौ रामकृष्णौ द्रष्टुं पुरस्त्रियः समीयुः संहत्य जग्मुः । हर्म्याणि च काश्चिदारुरुहुः ॥ २४ ॥

काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ।
कृतैकपत्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम् ॥ २५ ॥
अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ।
स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्यो ऽर्भमपोह्य मातरः ॥ २६॥
मनांसि तासामरविन्दलोचनः प्रगल्भलीलाहसितावलोकनैः ।
जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥ ३७ ॥
दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः ।
आनन्दमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनन्तमरिन्दमाधिम् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सौवर्णश्रृङ्गाटकैः सुवर्णमयचतुष्पथैर्हर्म्यैर्धनिनां गृहैश्च "निष्कुटैर्निष्कुटस्तु गृहोद्याने" इति कोशप्रसिद्धैर्गृहोचितैरारामैश्च श्रेणीनामेकरूपशिल्पोपजीविनां सभाभिरुपवेशस्थानैरन्यैश्च भवनैरुपस्कृतामलंकृताम् वैडूर्य्यादिभिः मुक्ताहरिद्भिश्च जुष्टेषु यथायथं संयुक्तेषु वलभीषु गृहपुरोभागस्थवक्रदारुच्छादनेषु तथा वेदिषु वलभीनामधोदेशे विरचितासु अवष्टम्भवेदिकासु च जालामुखेषु गवाक्षाच्छिद्रेषु च कुट्टिमेषु मणिवद्धासु भूमिषु च आविष्टैरुपविष्टैः पारावतैर्वर्हिभिश्च नादिताम ॥ २१ ॥

संसिक्तानि रथ्यादीनि यस्यां तां तत्र रथ्या राजमार्गाः आपणाः पण्यवीथयः मार्गाः अन्ये चत्वराणि अङ्गणानि प्रकीर्णा माल्यादयो यस्यां ताम् ॥ २२ ॥

आपूर्णकुम्भैः दध्ना चन्दनेन च उक्षितैः सिक्तैः प्रसूनानां च आवलयो येषु तैः सपल्लवैः पल्लवसहितैः वृन्दैः फलगुच्छैरुपलक्षिताः रम्भाः कदल्यः क्रमुकाश्च तत्सहितैः सकेतुभिः केतवो ध्वजास्तत्सहितैः पट्टिका वितस्तिविस्तारपट्टवस्त्राणि तत्सहितैः स्वलंकृतानि सुष्ठुभूषितानि द्वाराणि येषां ते गृहा यस्यां ताम् तत्रायं क्रमः द्वारेषूभयतस्तण्डुलानामुपरि पूर्णकुम्भाः तत्परितः प्रसून वलयः कण्ठे पट्टिका मुखे चूतादिपल्लवाः तदुपरि पात्रान्तरे दीपावलयस्तत्समीपे रम्भाः क्रमुकाः केतवस्तोरणानि चेति ॥ २३ ॥

नरदेववर्त्मना राजमार्गेण प्रविष्टौ वसुदेवनन्दनौ द्रष्टुं समुत्सुकाः पुरस्त्रियः समीयुः हर्म्याणि चारुरुहुरित्यन्वयः ॥ २४ ॥

---

भाषा टीका ।

चौराहे सब सुवर्ण के हैं धनि पुरुषों के घर भी हैं तथा घरकेपास फलों के बाग वगीचा इनसे एक शिल्प जीविका वाले मनुष्यों के घरों से शोभित है वैदूर्य मणि निर्मल मरकत मणि मूंगा मुक्ता हरे रत्न इनसे बने हुये छज्जा उसमें बने हैं तिनसे शोभित है ॥ २१ ॥

छज्जाके झरोखोंके मुखों पर छिद्रों के सामने गची पर बैठे हुये कबूतर तथा मोर इनसे शब्दाय मान है राज मार्ग बजार गली दुकान ए सब जिस मे छिडकी हुई हैं माला फूल दूर्वादिक अंकुर खील चामल इन के बिखरने से शोभित हैं ॥ २२ ॥

जिसमें घरोंके आगे के द्वार सब जल से पूर्ण कुंभों से शोभित हैं और दधि तथा चंदन जल से सींचे हैं फूल दीपों की माला से आम्रादिके पल्लवों से शोभित हैं फल के गुच्छों सहित केला के वृक्षों से पताकों से पट्ट रेसम के वस्त्रों से उस पुरी में सब घरों के दरवाजे अलंकृत हैं तिससे शोभित है ॥ २३ ॥

हे राजन्! उस पुरी में अपने सखाओं के सहित वे दोनों वसुदेव पुत्र जब राज मार्ग में प्रविष्ट भये तब उनके दर्शन करने की इछा से पुरकी सब स्त्री बडी उत्कंठा वाली होकर उंची अटारियों का आरोहण करतीं भई ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

औत्सुक्यमेवाह द्वयेन । काश्चिदिति । विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः युगलेषु धार्येषु कुण्डलकङ्कणादिष्वेकं विस्मृत्य समीयुः कृतमेकमेव पत्रं ययोस्ते श्रवणे यासामेकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च नाङ्क्त्वा अनङ्क्त्वा एकस्मिन्नेव लोचने अञ्जनं निधायैव ॥ २५ ॥

तद्भोजनं त्यक्त्वा अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यङ्गाः अकृतोपमज्जना अकृतस्नानाः अर्भं बालकम् अपोह्य निरस्य ॥ २६ ॥

प्रगल्भा या लीलास्ताभिर्हसितानि निरीक्षणानि च तैः श्रियं रमयतीति श्रीरमणस्तेनात्मना वपुषा तासां दृशामुत्सवं ददन्मनांसि जहार ॥ २७ ॥

मुहुः श्रुतत्वात्तद्गतचेतसः सयस्तं दृष्ट्वा तस्य प्रेक्षणं चोत्स्मितञ्च तदेव सुधा तयोक्षणं सेचनं तेन लब्धो मानो याभिस्ताः दृशोद्घाटितेन नेत्रद्वारेणात्मनि मनसि लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनितमनन्तमाधिं मानसीं व्यथां जहुः हे अरिन्दम ! निर्जितकामेति सम्बोधनं शृङ्गाररसेऽनिमग्नो माभूरिति ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

काश्चिदिति । निःस्वनं निशम्येति द्वितीयश्लोकस्थेन सर्वेषामेवान्वयः । तयोः सन्दर्शनेन पौरजनानां हर्षकोलाहलं श्रुत्वेत्यर्थः । युगलेष्वित्यत्र चकारान्वयः एकमिति जातावेकत्वं काश्चिद्विपर्यगित्यादिलक्षणाः सद्यो युग्मतया धार्येष्वप्येकमेकं विस्मृत्य समीयुरित्यर्थः । अथेत्यर्थान्तरारम्भे अपरा एकपत्रैकनूपुरमात्राभरणीकृताङ्ग्यः सत्यो लोचनमङ्क्तुमारब्धवत्योऽप्येकमप्यनङ्क्त्वा समीयुः अपरास्तु तथाभूता द्वितीयं लोचनमनङ्क्त्वा समीयुरित्यर्थः । चशब्दोऽनुक्तसमुच्चये तेनान्यदपि ज्ञेयं स्वलोचनमिति तु पाठो यद्वत्र स्वशब्देनावेशातिशयः सूचितस्तथापीत्यर्थः ॥ २५ ॥

तदपास्येति सर्वत्राप्यन्वयः तत्र प्रथमतः तद्भोजनं त्यक्त्वा आचमनञ्चाकृत्वेति बोद्धव्यम् एकाः सोत्सवा विहारादिकर्मपरा विधाद्यमानादयश्च तत्तदपास्य यद्वा सर्वत्रैव हेतुः सोत्सवा हर्षभराक्रान्तचित्ता इति स्वपन्त्यः स्वप्न उत्थाय तदपास्येति निद्राजाड्यं त्यक्त्वा इत्यर्थः । अर्भं निजनवबालकं स्तन्यं निपाययन्त्यस्तदपास्य तन्निपायनं त्यक्त्वा पश्चात्तमप्यपोह्य इत्यर्थः । मातर इति स्नेहविशेषः सूचितस्तथापि आसामेवमनुक्रमोक्तिः स्वगमनानुक्रमेण ज्ञेया ॥ २६ ॥

दूरतस्तावत् श्रियोऽपि रतिजनकेन वपुषैव दृशामुत्सवं ददत् तत्रापि मत्तद्विरदेन्द्रविक्रमत्वेन दृश्यमानो दृशां तं ददत् नैकट्ये तु सति तत्राप्यरविन्दलोचनतया दृश्यमानो दृशां तं ददत् तत्रापि प्रगल्भलीलाहसितावलोकनैर्दृशां तं ददत् तासां मनांसि जहारेत्यर्थः । प्रगल्भाः मनोहरणसमर्थाः कैशोरत्वेन वैदग्धीपराकाष्ठां प्राप्ता वा या लीलाः नूनर्त्तनादयः हसितानि च तत्तद्भावसूचकस्मितभेदाः तद्युक्तैरवलोकनैरिति मत्तद्विरदस्येव विक्रमः पराक्रमविशिष्टचरणन्यासो यस्येति च विग्रहः जात्यपेक्षया एकत्वेनाप्यर्थसिद्धौ मनांसीति व्यक्त्यपेक्षया बहुवचनं क्रियमाणबाहुल्यस्य स्पष्टीभावेनैवार्थचमत्कारः स्यादिति जहारेति मनसां निधित्वोत्प्रेक्षा व्यञ्जिता तेन तल्लोभ्यत्वञ्च युक्तञ्च तत् सप्रेमत्वात्तेषाम् उत्सवं ददत् जहारेति श्लेषेण हरणचातुरी दर्शिता अन्योऽपि चतुरलुब्धो महोत्सवादिभिर्जनान् प्रलोभ्य तद्धानि गृह्णातीति इयं दर्शनक्रमेण व्याख्या पाठक्रमेण त्वेवम् अरविन्दलोचन एव सन् जहार किमुत सर्वावेलासोपरि वरता दृशावलोकनैः तादृशविक्रम एव जहार किमुत तादृश तदधिकाधिकानन्तलीलाश्रयतातादृशलक्षणवपुषेति अत एव साधकतमत्वविवक्षया उत्तरोत्तरत्र तृतीया ॥ २७ ॥

अनुद्रुतं वेगेन पश्चात् संलग्नं किम्वा निरन्तरं प्रेम्णा द्रवीभूतं चेतो यासां ताः एतच्च श्रवणेनैव सुतरां तु दर्शनेन श्रयमुपगूहने हेतुः किञ्च तदिति उत् उत्कृष्टं स्मितं यद्वा तासां श्रीकृष्णप्रेक्षणेन तस्य यदुद्गतं स्मितं मानः सम्मानः अनन्तमपि जहुः तत्र हेतुः आनन्दघनविग्रहं तमुपगुह्येति तत् कथमात्मलब्धं मनोलब्धत्वेन मनसैवेत्यर्थः । तदपि कथं दृशेति दृशा स्वलब्धमिति तस्यां दृशि चापल्येन वा लज्जया वा मोहन वा मुद्रितायां सत्यां मनासि साक्षादिव परिस्फुरत्या तत्र नितरां साक्षादिवालिङ्गनसम्पत्तेरिति भावः । उपगूहनलक्षणं हृष्यत्त्वचः महापुल

काचितसर्वाङ्ग्य इत्यर्थः । एतादृशः श्रीकृष्णविषयकप्रेमरसविशेषे विघ्नः प्राकृतश्रृङ्गारादिरसः नातिविचारस्तस्मिन्नपि दृष्टिरेव वा अरिः हे तद्दमनेति तद्दमनत्वेनैव त्वां प्रति रसविशेषोऽयं वर्ण्यते अन्यथा नवर्णयिष्यत्येवेति भावः ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विपर्यक् विपरीतं युगलेषु पाणिपादादियुगलेषु ॥ २५—४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वरामौत्सुक्यं चाह द्वयेन । काश्चिदिति । विपर्यक् विपरीतम् अयथायथं धृतानि वस्त्राणि भूषणानि च याभिस्ताः काश्चिदेवंभूताः अपरास्तु युगलेषु धार्येषु कुण्डलकङ्कणादिषु एकम्विस्मृत्य समीयुरित्यनुषङ्गः अन्यास्तु कृतं निहितमेकमेव पत्रं ताटङ्कः ययोस्ते श्रवणे श्रोत्रे यासां ताः एकमेव नूपुरं चरणाभरणं यासां तास्ताश्च स्वकीयमेकं लोचनं नाङ्क्त्वा एकस्मिन्नेव लोचने कज्जलं निधायेत्यर्थः ॥ २५ ॥

एकास्तु अश्नन्त्यः तद्भोजनं विहाय काश्चित्तु अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यङ्गाः अकृतस्नाना एव काश्चित्तु स्वपन्त्यो निःस्वनं निशम्योत्थाय अपरास्तु मातरः अर्भकं पाययन्त्यः स्तन्यमिति शेषः । तमर्भकं विहाय समीयुरिति सर्वत्र सम्बन्धः ॥ २६ ॥

मत्तगजेन्द्रस्येव विक्रमः पादविक्षेपो यस्य सः श्रियः कान्तो भगवान् प्रगल्भाः या लीलास्ताभिर्हसितानीक्षणानि च तैस्तासां पुरस्त्रीणां दृशामुत्सवं महाहर्षं विदधानः तासां मनांसि चित्तान्यपहृतवान् ॥ २७ ॥

मुहुः श्रुतत्वात्तद्गतचेतसस्तं दृष्ट्वा हे अरिन्दम ! तस्य प्रेक्षणञ्च स्मितञ्च तदेव सुधा तयोक्षणं सेचनं तेन लब्धो मानो याभिस्ताः दृशा उद्घाटितनेत्रद्वारा आत्मनि मनसि लब्धं प्राप्तमानन्दमूर्त्तिं परिष्वज्य पुलकितत्वचः तदप्राप्तिजमनन्तमधिकमाधिम् व्यथां जहुः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विपर्ययकृतानि व्यत्यस्तत्वेनालंकृतानि वस्त्राणि भूषणानि यासां ताः वस्त्रस्थाने भूषणानि भूषणस्थाने वस्त्राणीति युगलेषु मध्ये एकं विस्मृत्य एतदेव स्फारयति । कृतैकेति । वस्त्रं परिधानमात्रं एकं श्रवणभूषणम् एकं नूपुरञ्च यासां ताः एकमङ्क्त्वा एकं लोचनं नाङ्क्त्वा अञ्जितं मषीकृतमकृत्वा ॥ २५ ॥

अभ्यज्यमानास्तैललेपनं कुर्वाणाः अकृतोपमज्जनाः अकृतजलस्नानाः अर्भं बालम् अपोह्य तिर्यक् कृत्वा ॥ २६ ॥

प्रागल्भ्येन धाष्टर्येन लीलासहितहसितेनावलोकनेन कटाक्षनिरीक्षणेन ॥ २७ ॥

श्रुतं कृष्णरूपसौन्दर्यं स्त्रियः एकदापि न दृष्टोऽयमित्याधिं मनःपीडां तद्दर्शनेन जहुरित्यन्वयः । तस्य कृष्णस्य प्रेक्षितमुत्कृष्टं स्मितं च तत्प्रेक्षितोत्स्मिते ते सुधा प्रेक्षितोत्स्मित सुधा तस्या उक्षणेन लब्धो मानो

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यासां तास्तथा आत्मनि मनसि लब्धं स्थितं हृष्यत्त्वचः रोमाञ्चाञ्चिताः ॥ २८ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तासामौत्सुक्यं वर्णयन् वस्त्राभरणानां विपर्यासमाह भगवति भावो विशेषः अन्यथा लौकिक्येव भाषा भवति काश्चित् स्त्रियः विपर्यक् विपरीततया धृतानि वस्त्राणि भूषणानि च याभिः पादयोराभरणं हस्ते वस्त्राण्युपरि एवं सर्वत्र किञ्च न केवलं विपर्यासः अपि तु युगलेषु एकं विस्मृत्य च एकमेवाभरणं धृत्वागताः अथ विपर्यग्धृतेभ्यः अपराः अन्याः तत्र पूर्वापेक्षयाप्येता उत्तमा इति युगलाभरणेषु हस्तकटकादिषु एकस्यापि धारणं भवति यत्र पुनः द्वयोरेव धारणं नैकस्य एकधारणं सर्वथा विगीतं तादृशमपि कृतवत्य इत्याह । कृतैकपत्रश्रवणैकनूपुरा इति । कृतं स्थापितमेव पत्रं ताटङ्कं श्रवणे याभिः एकमेव च नूपुरं श्रवणे पादे वा कृतं याभिः ताश्च ताश्च अन्याः पुनः द्वितीयं लोचनं न अङ्क्त्वा द्रष्टुं समीयुरिति सम्बन्धः तुंशब्दोऽन्यार्थः स्वलोचनमिति अर्थादन्यलोचनमपि अन्यस्य कज्जलं प्रयच्छन्ती मध्ये ॥ २५ ॥

तथैव गतिक्रियाशक्त्यभावमाह । अश्नन्त्य एका इति । तद्दर्शनकर्म अन्नं वा अन्यथापि त्यागो भवतीति तद्व्यावृत्त्यर्थमाह । सोत्सवा इति । उल्लाससहिताः अन्याः पुनरभ्यज्यमानाः सर्वाङ्गे दत्ततैलाः शिरसि धृत्वा वा अकृतोपमज्जनाः स्नानमकृत्वैव ययुः अन्याः पुनः स्वपन्त्यः उत्थाय भगवानागत इति कोलाहलं निशम्य तथैवाच्छिन्नदेहाः समीयुः अन्याः पुनः मातरः धात्रीव्यतिरिक्ताः साक्षात्स्वप्रसूतानपि बालकान् प्रपाययन्त्यः अर्भवत्यश्च बालकमपि विसृज्यापोह्य त्वरिता ययुः इति सम्बन्धः ॥ २६ ॥

एवं सर्वासां भगवद्दर्शनार्थं प्रपञ्चविस्मृतिं निरूप्य ततो निष्प्रपञ्चासु स्वासक्त्यर्थं भगवच्चरितमाह । मनांसि तासामिति । तासां पूर्वोक्तानां मनश्चेद्भगवदीयं जातं तदा स्वासक्तिः सिद्धैव मनोमूलकत्वात् संसारस्य मनसो हि वशीकरणं द्वेधा भवति वस्तुसामर्थ्यात् मन एव वशे भवति तथोत्कृष्टविषये स्वधर्मैश्च मोहकैर्भवति यथा मन्त्रादिभिः तत्रारविन्दलोचनः कमलनयन इति स्वरूपसौन्दर्यं सर्वतापनाशकत्वेनोपकारित्वं च निरूपितं धर्मान्मोहकानाह । प्रगल्भा या लीलाः तत्सूचकं यद्धासितं तत्पूर्वकमवलोकनैरिति अतिकामुकस्य तादृशचेष्टासूचकं हास्यं भवति अवलोकनं च पुरस्थत्वात्तासां तत्परिज्ञानं तेनैव ता व्यामुग्धा भवन्तीति हसितं मन्त्रात्मकं दृष्टिः पाशात्मिकेति यस्याः मनः येनैव प्रकारेणायाति तादृशमेव प्रेक्षितं हसितं चेति ज्ञापयितुं बहुवचनं तत्र बाधिकां बुद्धिं दूरीकर्तुमाह । मत्तद्विरदेन्द्रविक्रम इति । भयं बाधकं लौकिकं तासां वैदिके अधिकाराभावात् विचारे दोषाभावाच्च तत्रायं यथा मत्तो द्विरदेन्द्रः स्वार्थं सर्वानविचार्य लौकिकालौकिकसाधनयुक्तो यथा मत्तगजः सजातीयानामप्यतिक्रमार्थम इन्द्रपदं तस्यापि सर्वथा कर्तव्यत्वेन धर्मः अत्यधिको भवतीति विक्रमपदं तस्मादस्य एतत्प्रपत्तौ तासां च सर्वथा भयाभावश्च सूचितः ननु दृष्टिद्वारा हि मनोग्राहमन्तः स्थितम् इन्द्रियान्तरव्यापारस्य तदानीमभावात् दृष्टिः पुनः चञ्चला अन्यत्र गच्छेद्यदि तदा तद्द्वारा ग्रहणं सर्वथा न सम्भवतीति कथमेकान्ततो ग्रहणमिति चेत्तत्राह । तासां दृशां श्रीरमणात्मना लक्ष्मीरमणरूपेण उत्सवं ददद्विति उत्सवासक्तो हि नान्यत् किञ्चन वेद सर्वस्वापहारोऽपि चञ्चलानां मध्ये लक्ष्मीः परमकाष्ठामापन्ना ताश्चेद्रमयति अनन्यासक्तां करोति कथमन्यां न कुर्यात् अतो निष्प्रत्यूहं तासां मनोहरणमुपपद्यते आत्मपदेन चावश्यकत्वं तत्परत्वे सूचयति ॥ २७ ॥

ननु भगवानक्लिष्टकर्मा तासां मनः कथं गृहीतवानित्याशङ्क्याह । दृष्टेति । आत्मानं सकार्यं ताभ्यो दत्त्वा तासां मनो गृहीतवान् भगवत्स्वरूपग्रहणे तासां प्रकारमाह । दृष्टेति । मुहुः पूर्वं वारं वारं श्रुतो यो भगवान् स इदानीं दृष्टः ततः प्रथमं चक्षुः प्रीतिरुक्ता श्रवणव्यतिरेकेण प्रीतिर्न भवतीति अन्यथाद्भुतरस एवोत्पद्यते तत्प्रीतिः सर्वेभ्योऽभ्यधिकप्रीतिसिद्ध्यर्थं मुहुः श्रवणमपेक्ष्यते ततस्तासां चित्ताभङ्गमाह । अनुद्रुतचेतस इति । दर्शनमनुद्रुतं चित्तं यासामत एव ध्रियमाणमपि स्वभावादिभिर्न स्थितं तमिति द्रुतमनस्कं तेन चित्तप्रतिबन्धकं मनोऽपि नास्ति प्रत्युतानुगुणमेवेति तथाप्यपुरस्कृता महान्तं प्रीतिं समर्था इति पुरस्कारमाह । तस्य प्रेक्षणपूर्वकं यदुत्स्मितमूर्ध्वस्मितं सर्वप्रपञ्चात् अधिकरसं तद्विस्मारकं च सैव सुधा मिष्टत्वाय स्मितम् अलौकिकभावाय प्रेक्षणमिति द्वयं मिलितममृतं तुल्यं भवति । आभासैरप्युपमयितं प्रकृतोपयोगाय तथा यदुक्षणं सेचनं तेन लब्धो मानो याभिः लताप्रायास्ताः अमृतासिक्ताः भगवतोऽप्यानन्दरूपं फलं फलिष्यन्तीति ततः संमाननां प्राप्य आनन्दानुभवे योग्याः सत्यः भावलक्षणं वा मानं प्राप्य तदपनोदनार्थमिव समागतं भगवन्तं स्वतः पुरुषार्थरूपमानन्दरूपा मूर्तिर्येत्येति उपगुह्य अन्तरात्मना चित्तेन च समालिङ्ग्यान्तः पूर्णा जाता । भगवत्प्रविष्टमार्गमाह । दृशा आत्मलब्धमिति । दृष्टिद्वारा ज्ञानद्वारा च आत्मन्यात्मत्वेन वा लब्धं ततोऽन्तः पूर्णानन्दः बहिरपि तं प्रकटितवत्य इत्याह । हृष्यत्त्वच इति । सर्वाङ्गेषु रोमाञ्चयुक्ताः ततः पूर्णमनोरथा जाता इत्याह । जहुरितिं भगवानस्माभिर्न प्राप्त इति पूर्वं मनःपीडा स्थिता प्राप्तेऽपि भगवति यावन्नित्यप्राप्तौ भगवान्न ज्ञायते यावद्वा नान्तः प्रविश्य स्थिरो भवति तावद्भूतभविष्यत्कालयोः भगवत्सम्बन्धाभावचिन्ता न गच्छतीति अधुनान्तः प्रविष्टे भगवति तेनैव पूर्णाः मनःपीडायाः स्थानाभावात्तां जहुः अन्यथा नित्यमनोरथः क्षणमात्रदृष्टेन सिध्येत् अरिन्दमेति सम्बोधनं लौकिकालौकिकतुल्यतया स्त्रीपुंसप्रसङ्ग इति लौकिकभावेन कामादिभिर्मैवदिति तन्निवृत्त्यर्थं अरीन् कामादीन् दमयतीति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

औत्सुक्यं विवृणोति द्वाभ्याम् । काश्चिदिति । विपर्य्यक् विपरीतं यथा स्यात्तथा धृतानि वस्त्राणि भूषणानि च याभिस्ताः युगलेषु धार्य्येषु कुण्डलकङ्कणादिषु मध्ये एकमेकं विस्मृत्य समीयुः । कृतमेकैकमेव पत्रं श्रवणेषु याभिः । एकैकमेव नूपुरं यासां ताश्च ताश्च ताः । द्वितीयं स्वलोचनं न अङ्क्त्वा किं स्वैकं वाममेव कज्जलेनाङ्क्त्वेत्यर्थः । तत् अश्नन्तं सोत्सवा इति विवाहादिकर्म परास्तत्कर्म त्यक्त्वा परिणीयमानाः कन्याश्च पतिपरिक्रमणमसमाप्यैवेत्यर्थः । सखीभिरभ्यज्यमाना एव ताः सखीस्तिरस्कृत्य अभ्यङ्गमप्यसमाप्येत्यर्थः । न कृतमुप

प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ।
अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥ २९ ॥
दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ।
तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥ ३० ॥
[१]ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् । [१]अयं विजयध्वजीये नास्ति
या ह्येतावनुपश्यन्ति नरलोकमहोत्सवौ ॥ ३१ ॥
रजकं कञ्चिदायान्तं रङ्गकारं गदाग्रजः ।
दृष्ट्वाऽयाचत वासांसि धौतान्यत्युत्तमानि च ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आधिक्येन मज्जनं याभिस्ताः स्नानमप्यसमाप्य क्लिन्नगात्र्य एवेत्यर्थः । नितरामितियत्नेन पाययन्त्य इति स्वयं पातुमजानन्तं सद्यः प्रसूतमर्भमप्यपोह्येत्यर्थः ॥ २५ ॥ २६ ॥

श्रिया स्वशोभयैव रमयति मथुराङ्गनाः क्रीडयतीति श्रीरमणः तेनात्मना देहेन दृशामुत्सवं ददत् मनांसि तासां जहारेति चाक्षुषसम्भोगदानेन ता विह्वलीकृत्यालक्षितमेव मनोरत्नानि चोरयामासेत्यर्थः ॥ २७ ॥

अनुद्रुतानि दर्शनं लक्ष्यीकृत्यैव द्रवीभूतानि चेतांसि यासां ताः तत्कर्तृकं प्रेक्षणम् उत्कृष्टं स्मितं च सुधा तया यदुक्षणं सेचनं तेन लब्धो मान आदरो याभिस्ताः दृशा एकस्यैव नेत्रस्यापाङ्गद्वारेण उद्घाटितेन आत्मनि मनसि लब्धं प्राप्तं स्वच्छन्देनैवोपगुह्य तदप्राप्तिजनितमनन्तमाधिमजहुः हे अरिन्दमेति एतादृशभगवच्चरित्रश्रवणमननादिनैव त्वया कामादयः शत्रवो जिता इति भावः ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तासामौत्सुक्यमाह । काश्चिदिति । विपर्य्ययं स्थानतः स्वरूपतश्च विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः समीयुरित्यनुषङ्गः एवमग्रेऽपि युगलेषु धार्य्येषु कङ्कणादिषु एकं विस्मृत्य कृतमेकमेव पत्रं ययोस्ते श्रवणे यासामेकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च ताः द्वितीयं स्वलोचनं नाङ्क्त्वा अनङ्क्त्वा एकस्मिन्नेव लोचने अञ्जनं निधायेत्यर्थः ॥ २५ ॥

एकाः अदन्त्यस्तद्भोजनं विहाय अन्याः अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यङ्गा अकृतस्नानाः काश्चिन्मातरः निपाययन्त्यः अर्भं बालम् अपोह्य निरस्य ॥ २६ ॥

अरविन्दे इव लोचने यस्य सः मत्तगजेन्द्रस्येव विक्रमश्चरणविन्यासो यस्य सः प्रगल्भा याः लीलास्ताभिर्हसितानीक्षणानि तैः श्रियं देवीं रमयतीति श्रीरमणस्तेनात्मना नित्यानन्दप्राकृतविग्रहेण तासां दृशामुत्सवं ददत् मनांसि जहारेत्यन्वयः ॥ २७ ॥

हे अरिन्दम ! श्रीकृष्ण भजनविरोधिदमनकर्त्तः मुहुः श्रुतमनन्तं त्रिविधपरिच्छेदशून्यं श्रीकृष्णमत एवानुद्रुतचेतसस्तद्गतचेतसः साक्षाद्दृष्ट्वा तस्य प्रेक्षणं च उत्स्मितं च तदेव सुधा तयोक्षणं प्रोक्षणं तेन लब्धमानाः दृशा नेत्रद्वारेण आत्मनि मनसि लब्धं प्राप्तमानन्दमूर्तिमप्राकृतपरमानन्दविग्रहं परिरम्य परिष्वज्य हृष्यत्त्वचः पुलकितत्वचः तदप्राप्तिजमाधिं व्यथां जहुः ॥ २८ ॥

———

भाषा टीका ।

कोइ स्त्रियों ने जळदी के मारे सिंगार करते में उलटा वस्त्रादि पहर लिया कुण्डलादिक एकही पहरे कोइ ने एक ही कान मे पुष्प पत्र धारण किये कोइने एकही पगमें नूपुर पहरे को इने एक नेत्र मे अंजन लगाया दूसर मे नहीं ॥ २५ ॥

कोई स्त्री भोजन करते समय में उस भोजन को छोड आई कोइ खुसी के मारे उबटन लगाकर विना स्नान किये ही आगई को सोती हुई शब्द को सुनकर उठ दौडी कोइ बालक की माता दूध पिवाते मे बालक को छोडकर चली आई ॥ २६ ॥

कमल लोचन भगवान् ने बडे मनोहर लीला सहित हास तथा अवलोकन आदि चेष्टा से उन स्त्रियों के मनको हरण कर लिया और मस्त हस्ती किसी चाल वाली लक्ष्मी की रमण करने वाळी मूर्ति से सब के नेत्रों को आनन्द दिया ॥ २७ ॥

वार वार सुने हुये भगवान् के विषे जिनका मन लगगया था उन स्त्रियों ने भगवान् के दर्शन करने से उनके मंद हास रूप अमृत के सिंचने से सत्कार को प्राप्त होकर आनन्द मूर्ति भगवान् जो मनमें प्राप्त होगये हैं, तिनको आलिंगन करके हे राजन् रोमों से हर्षित होकर बडी भारी मन की आधिको दूर कर दिया ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सौमनस्यैः कुसुमसमूहैः शोभनमनोभावैर्वा ॥ २९-३० ॥

पौराः पुरस्त्रियः ॥ ३१ ॥

रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रङ्गमपि कुर्वन् रङ्गकारः ॥ ३२-३३ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आधित्यागलक्षणमाह । प्रासादेति । पूर्वं हर्म्याण्यारुरुहुरित्युक्तम् इदानीञ्च प्रासादाग्रमारूढा इत्यौत्सुक्याधिक्यं दर्शितं बलं केशवं चाभितो वर्षन् एकत्र स्थितत्वात् यद्वा श्रीकृष्णाग्रजत्वेन तस्मिन्नोपभुक्ते प्रमदाः श्रीकृष्णभावेन प्रकृष्टमदा इत्येव तात्पर्यम् अयमभिवर्षणे हेतुः कंसादभये च बलकेशवाविति बलाधिक्यकेशिहन्तृत्वस्फूर्त्तेः सर्वेषां तदा तद्विषयकमपि भयं न जातमिति भावः । बलस्यादौ निर्देशः श्रेष्ठत्वेनाग्रे गमनात् ॥ २९ ॥

इत्थं प्रायो मृदुलतमहृदयतया भावविशेषयुक्ताभिः स्त्रीभिरादौ श्रीभगवत्संमानमुक्त्वा ब्राह्मणैः कृतमाह । दध्नीति । उदकपूर्णघटसहितैर्दध्यादिभिः उपायनैरप्यन्यैर्मङ्गलायनफलादिभिः नन्वेतेऽपि कथं कंसाद्भयं नाकुर्वन् तत्राह । प्रकर्षेण मुदिताः अहो सोऽयं भगवानिति परमानन्देन तद्भयापगमादिति भावः । अत्र द्विजा विप्रा एवाग्रे वैश्यानामुक्तेः ॥ ३० ॥

पौराः पौर्यः केवलगोपीनां श्लाघनात् । ङीप्प्रत्ययाभाव आर्षः यद्वा एवं स्त्रीपुंसानां सर्वेषामेव प्रमोदमुक्त्वा तत्र च प्रायो रूपदर्शनमेव कारणमिति बोधयन् तन्माहात्म्यं तात्पर्येणाह ऊचुरिति । पुरौकसः सर्वेऽपि किमूचुस्तदाह । अहो इति । तत्र गोप्य इत्युपलक्षणम् । नरलोको भूर्लोकः तत्रावतीर्णत्वेन तत्प्राधान्यात् । यद्वा । नराणामित्युक्त्वा सन्तोषाभावादाहुः लोकानां चतुर्द्दशभुवनानामपि यद्वा । नरलोका जीवलोका स्तेषां सर्वेषामपि महानुत्सवो याभ्यां तौ महोत्सवरूपाविति वा । अनु निरन्तर पश्यन्तीति वर्त्तमाननिर्द्देशः पुनस्तत्र गमनसम्भावनात् ॥ ३१ ॥

एवं शिष्टानां परमानन्देन तत्सम्माननमुक्त्वा दुष्टानां तद्वैपरीत्यं दर्शयन्नादौ रजकवधमाह । रजकमिति षड्भिः । कञ्चिदैत्यस्वभावं कंसानुगमित्यर्थः । अत उक्तं वैष्णवे "कृष्ण स्तस्य दुरात्मन" इति । रङ्गकारमित्यनेन तस्य विक्रेतव्यान्यपि कानिचित् वस्त्राण्यासन् । वञ्चनार्थमेव तु राजवस्त्राणीति वक्ष्यतीति भावः । वस्त्रधवनस्थानात् पुर्यन्तरागच्छन्तम् इति तदपि मङ्गलमेकमिति सूचितं "सधौतवस्त्रो रजकस्त्वधन्य" इत्युक्तेः । गदाग्रज इत्यनुप्रासरक्षार्थं रङ्गरङ्गेति वारद्वयश्रवणात् । यद्वा । गदोऽपि तादृशत्वेन प्रसिद्धः किमुत तदग्रजः स्वयं भगवानिति ज्ञापनार्थम् एवं यदुकुललीलारम्भे गुणतः श्रीरामकृष्णेतरसर्वभ्रातृगणमुख्यस्य गदस्यापि जन्म सूचितं गदौ च द्वौ । बलं गदं सारणञ्चेति रौहिणेयः । देवरक्षितया लब्धा नव चात्र गदादय इति देवरक्षितेयश्चेति । तत्र रौहिणेयस्य जन्माभावात् । अन्यतर एवात्र गृह्यते । सन्नानन्तरकनिष्ठः श्रीकृष्णस्यानन्तरज्येष्ठः श्रीरामवदेव सहविहारी भविष्यतीति सूचितम् । अतएव क्वचिद्गदाग्रजः सौरेयेति श्रीगोपीभिर्मम गदाग्रज एव पाणिमिति रुक्मिण्या च वक्ष्यते इति ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रीत्योत्फुल्लानि मुखाम्बुजानि यासां ताः प्रमदाः स्त्रियः सौमनस्यैः कुसुमसमूहैः रामकृष्णावभ्यवर्षन् ॥ २९ ॥

द्विजातयो ब्राह्मण्यस्तत्र तत्र प्रमुदिताः सत्यः दध्यादिभिस्तौ रामकृष्णावानर्चुः ॥ ३० ॥

पौराः स्त्रियः परस्परमूचुः उक्तिमेवाह । अहो इत्यादिना । गोप्यः किं महत्तपश्चक्रुः अन्यथैतन्न सम्भाव्यत इत्यभिप्रेत्याहुः । या गोप्यः नरलोकस्य महानुत्सवो याभ्यां तौ रामकृष्णावनुपश्यन्ति ॥ ३१ ॥

इत्थं तासु कथयन्तीषु सतीषु तदा गदाग्रजो भगवान् कञ्चिदायान्तं रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रङ्गमपि कुर्वन् रङ्गकारस्तं दृष्ट्वा धौतानि निर्णिक्तानि अद्भुतानि वस्त्राणि अयाचत ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

सौमनस्यैः सुमनसां पुष्पाणां राशिभिः ॥ २९ ॥

आनर्चुः पूजयामासुः ॥ ३० ॥ ० ॥

रङ्गकारं वर्णकारकम् ॥ ३२—३४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततः पूर्णमनोरथानां कृत्यमाह । प्रासादशिखरारूढा इति । देवानां कृत्यं पुष्पवृष्टिः एतास्तु देवरूपा जाताः अन्तःपूर्णामृतत्वात् बहिरपि देवतुल्यत्वं जातमित्याह । प्रासादशिखरेषु समारूढाः विमानेष्विव स्थिताः । अनिमिषत्वसिध्यर्थमाह । प्रीत्युत्फुल्लदृश इति । स्नेहेन कृत्वा निर्निमेषाः विकसितनयना एव स्थिताः अबलाः स्वभावतः सौन्दर्य्ययुक्ताः अतः सर्वथा देवतुल्याः सौमनस्यैः पुष्पैरुत्तमैरभ्यवर्षन् ननु निकटे स्थितानां बहुपुष्पैर्वर्षणे अति क्रमशङ्कया कथं न भीता जाता इति चेत्तत्राह । प्रमदा इति । प्रकृष्टो मदः कामात्मको यासु तदा आविर्भूतकामाः विचाररहिता जाता इत्यर्थः । किञ्च पुष्पवृष्ट्या न भगवतः काचित् अनुपपत्तिरिति नामविशेषमाह । बलं बलभद्रः बलाधिक्यादेव केशवस्तु ब्रह्मेशयोः सुखदातेति सर्वदा पुष्पवृष्टिमनुभवति मत्वर्थीये च वप्रत्यये पुष्पाणां केशेषु स्थापनं सर्वदेति नातिक्रमशङ्का ॥ २९ ॥

एवं स्त्रीणां समाननं निरूप्य ब्राह्मणानां संबन्धिसंमानमाह । दध्यक्षतैरिति । लोके स्त्रियः अलौकिके द्विजा इति द्वयमेव जगद्रत्नं तेन भूषितो भगवान्निरूप्यते देशाचारात् तिलकार्थम् दधि अक्षतादच तैः प्रथमतः अर्चनं ततः पादप्रक्षालनार्थम् उदपात्राणि बहुवचनमनेकधा जलोपयोग इति नानाविधजलानि निरूपयति ततः उत्तमाः स्रजः ततो गन्धश्चन्दनकृतो धूपकृतश्च ततः अभ्युपायनानि मिष्टान्नादीनि फलादीनि वा एवं चतुर्विधैः साधनैः तौ रामकृष्णौ आनर्चुः ततः प्रमुदिता अपि जाताः द्विजातीनां पर्यवसानेऽपि क्वचिदेव सुखं भवतीति पश्चात्प्रमोद उक्तः तत्र तत्रेति ब्राह्मणानां संमर्दो निवारितः क्रमपूजा चोक्ता द्विजातय इति सर्वं साधारण्येन पूजार्थं प्रवृत्ता इति तेषामपि निरोध उक्तः ॥ ३० ॥

एवं कायिकं मानसिकं संमानमुक्त्वा वाचनिकमाह । ऊचुरिति । सर्व एव पुरवासिनः सकृद्भगवन्तं दृष्ट्वा अमितानन्दमनुभूय

देह्यावयोः समुचितान्यङ्ग ! वासांसि चार्हतोः।
भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ ३३ ॥
स याचितो भगवता परिपूर्णेन सर्वतः।
साक्षेपं रुपितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥ ३४ ॥
ईदृशान्येव वासांसि नित्यं गिरिवनेचराः।
परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥ ३५ ॥
याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा।
बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राजकुलानि वै ॥ ३६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

विचारितवन्तः ये सर्वदैवभगवन्तं पश्यन्ति तेषां महद्भाग्यं तद्भाग्यं स्मृत्वा आश्चर्याविष्टा आहुः। अहो इति। गोप्यः तपः किमचरन्निति। भगवन्तं द्रष्टुं स्त्रिय एव जानन्तीति तासां प्रशंसा तपसैव सर्वं सिध्यतीति ज्ञातेऽस्माभिरपि तत्कर्त्तव्यमिति यत्र साधनेऽपि तत्रत्यानामिच्छा तत्र फले किं वक्तव्यमिति भावः। भगवद्दर्शनस्योत्कृष्टत्वायाह। नरलोकमहोत्सवाविति। उत्सवः कदाचिदेव भवति महोत्सवस्तु ततोऽपि दुर्लभः तत्रापि सर्वेषामुत्सवोऽतिदुर्लभः ॥ ३१ ॥

एताविति प्रदर्शनेनाद्भुतत्वे प्रमाणमुक्तम् एवं कायवाङ्मनोभिः संमाननं निरूप्य ये संमाननं न कुर्वन्ति ये वा कुर्वन्ति उभयोः फलं दर्शयितुं हीनजातीयानामतिक्रमे नाशो निरूप्यते रजकमिति सप्तभिः। हीनः भगवन्तं न मन्यत इति ज्ञापयितुमेवं कथा अन्यथा भगवान् हीनं न कुर्यात् अन्त्यजेषु मुख्यो रजकः रजकश्चर्मकारश्चेत्यादि वाक्यात् अत एव रामावतारे रजकस्याधिक्षेपवाक्यम् अत एव इयं जातिरेव दुष्टा सदा अयं किं त्रिविदिति महान्तं साभरणमुत्तमवस्त्रयुक्तमायान्तं स्वसंमुखं रजका द्विविधाः केवलमलशोधकाः रञ्जकाश्च तत्रायं रजक इत्याह। रङ्गकारमिति। ननु भगवान् राजवस्त्राणि किमिति प्रार्थयति तत्राह। गदाग्रज इति। गदो रोहिणीपुत्रो द्वितीयः सोऽग्रे भविता तस्मादग्रे जातो भगवान् सच्चोत्पादनीयः स्वकंसवधाभावे न भवतीति कंसे मारिते तानि वस्त्राणि स्वस्यैवं याचनं तु तं मेलयितुं यथा पुरवासिनः तथा तत्तुल्या अपि चेत् न मारणीया इति कश्चित्तु गदोऽयं भविष्यतीति मारणार्थं तथोक्तवानित्याहुः। कृपा दृष्टिस्तस्मिन् पतितेति तदुद्धारार्थं याचितवान् तदाह। शुश्रूषायाचतेति। ननु विद्यमानेषु वस्त्रेषु किमिति याचितवांस्तत्राह। धौतानीति। सांप्रतमेव प्रक्षालितानि स्वरूपतोऽप्युत्तमानि चकारात् नानाविधानि ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सुमनसां तासां कर्माणि भावोक्तितीन सामनस्यानि तैर्हेतु-भिरभ्यवर्षन् कुसुमानि स्मितानि चेति शेषः ॥ २९-३० ॥

पौराः पुरवासिस्त्रीजनाः ॥ ३१ ॥

रजको वस्त्रनिर्णेजकः स एव वस्त्राणां रङ्गमपि कुर्वन् रङ्गकारस्तम् ॥ ३२—३४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

प्रीत्या उत्फुल्लानि मुखाम्बुजानि यासां ताः सौमनस्यैः कुसुमकलापैः ॥ २९ ॥

द्विजातयस्त्रैवर्णिकाः ॥ ३० ॥

पौराः पुरस्त्रियः नरलोकस्य महानुत्सवो याभ्या तौ ॥ ३१ ॥

रजकं वस्त्रनिर्णेजकम् रङ्गकारं वस्त्राणां रङ्गं करोतीति तम् ॥ ३२—३३ ॥

———

भाषा टीका।

वे सब मथुरा नारी महलों के ऊपर चढकर प्रीति से प्रफुल्लित मुखवाली होकर बलदेवजी तथा केशव भगवान् के उपर सुंदर फूलों की वर्षा करती भई ॥ २९ ॥

जाते समय उन उन स्थलोंकर ब्राह्मण लोग भी दधि अक्षत चंदन जल पात्र भेट आदिकों से बडे आनंदित होकर उन दोनों भ्राताें का पूजन करते भये ॥ ३० ॥

पुरवासी लोग कहने लगे कि अहो गोपियों ने कौनसी तपस्या की है जो कि सब नर लोक के रमण करने वाले इन दोनों को रोज देखती हैं ॥ ३१ ॥

गदाग्रज भगवान् ने कपडा रंगने वाले धोने वाले आते हुये किसी रजक को देखकर धोये उत्तम वस्त्रों को उससे यांचना किया ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका

रुपितः कुपितः ॥ ३४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हे उद्वृत्ताः ! गिरौ वने चरथ ये नित्यं ते यूयं पूर्वं परिधत्तेति सम्भावनायां लोट् अभीप्सथ प्रार्थयध्वम् ॥ ३५ ॥

राजकुलानि राजकीयाः लुम्पन्ति निःस्वं कुर्वन्ति ॥ ३६-३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कथमयाचत तदाह । देहीति । समुचितानि परिधानयोग्यानि स्वस्ववर्णाकारयोग्यानि अङ्ग हे रजक ! न वक्तव्यम् एतद्वस्त्रयोग्यौ युवां न भवथ इत्याह । अर्हतोरिति । ननु मूल्यं विना कथं देयानीति चेत्तत्राह । भविष्यतीति । परमुत्तमं श्रेयो मङ्गलमैहिकमामुष्मिकञ्च कियद्विलम्बेन मूल्यमधिकं देयं पुण्यञ्च परमं भावीत्यर्थः । दुष्टं प्रत्यपीदृशं मधुरवाक्यं निजसौशील्येनायत्यां भक्तजनासह्यनिजाकीर्तिपरिहारेच्छया च श्लेषाद्कारप्रश्लेषणाद्दातुस्ते परलोके भक्तिसुखमयं वैकुण्ठप्राप्तिलक्षणं परं श्रेयो न भावि किन्तु तद्वहिर्मुखं केवलं कैवल्यमेव अत्र न संशयः जीवने सन्देहः मरणमेवेत्यर्थः ॥ ३३ ॥

सर्वतः परिपूर्णेनेति कौतुकादेवेति भावः । क्षुदुर्मदत्वमुक्तं वैष्णवे । "कंसस्य रजकः सोऽथ प्रासादारूढविस्मय" इति । क्षुद्रमुख इति पाठे परमदुर्वचनः । तदुक्त श्रीहरिवंशे । "प्राप्ताविष्टाय मूर्खाय सृजते वाङ्मयं विषमिति ॥ ३४ ॥

हे उद्वृत्ताः ! राजतो निःशङ्कचेष्टाः यतो गिरिवनेचराः तादृशा यूयम् ईदृशान्येव वासांसि परिधत्त तर्हि किं कथं राजद्रव्याण्यभीप्सथ . अत्र नाधिकलाभः प्रत्युतेदानीं राजपुरागतानां वो राजापराधतो भयञ्च भविष्यतीति भावः । अत्र यद्यपि परिधत्तेति सोपहासमेव तत्र च हेतुर्गिरिवनेचरा इति तथापि वञ्चनार्थं सत्यमुद्र्थैवावददिति किमभीप्सथेत्युक्तं यद्वा । ईदृशान्येव वासांसि किं परिधत्त येनोद्वृत्ताः सन्तो राजद्रव्याण्यभीप्सथ । वस्तुतो न परिधत्त नच तदभीप्सा योग्या किन्तूद्वृत्तत्वमेव युष्माकमवशिष्यत इति भावः । अत्र यद्यपि परिपूर्णेन सर्वत इति श्यामं हिरण्यपरिधिमित्याद्युक्तानुसारेण तद्वस्त्रन्तु सर्वोत्कृष्टमेव । तथोक्तं वृन्दावनविहारं पराशरेणापि "सुवर्णाञ्जनचूर्णाभ्यां तौ तदा भूषिताम्बरा" विति तथाप्यासुरदृष्ट्या तत्सौन्दर्यं नच दृश्यत इति तथोक्तं सरस्वती तु यथार्थमाह हे उत्कृष्टवृत्ता नित्यमेव श्रीगोवर्द्धनवनविहारिणो यूयं किमीदृशान्येव वासांसि परिधत्त अपि तु परमदिव्यान्येव राजद्रव्याणि च किमभीप्सथ अपि तु नैवेत्यर्थः । तस्माद्व्याजमात्रमेवेदं याचनमिति भावः ॥ ३५ ॥

हे बालिशा ! आशु यात पलायध्वमित्यर्थः । मैवं प्रार्थ्यं पुनः कदापि प्रार्थनमीदृशं न कार्यं घ्नन्ति प्रहरन्ति लुम्पन्ति छिन्दन्ति हि यतः सम्प्रति त्वस्माभिर्बालिशत्वादेव क्षान्तमिति भावः । सरस्वती त्वाह हे याताशुबालिशाः यातः प्राप्त आशुश्रपलो बालिशो मूर्खश्चायं रजकलक्षणो यैः तथाभूताः । यदि जिजीविषा जीवनधारणेच्छा तत्प्रकटनेच्छा तदा मैवं प्रार्थ्यं ननु शूरे रजकेऽपि कथं बलं वर्णनीयं तत्राह । हि यतः राजकुलानि राजवंश्या भवद्विधाः दृप्तं दर्पयुक्तं जनं बध्नन्तीत्यादि । जीव बलप्राणधारणयोः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

याच्ञाप्रकारमेवाह । देहीति । अङ्ग हे रजक ! योग्ययोरावयोः समुचितानि वासांसि देहि दातुस्तव परमनुत्कृष्टं श्रेयो भविष्यति नास्मिन्नर्थे संशयोऽस्ति ॥ ३३ ॥

इत्थं भगवता सर्वतः परिपूर्णेन पूर्णकामेन याचितः स रजकः राज्ञः कंसस्य भृत्यः दुर्मदश्च हेतुगर्भमिदं विशेषणद्वयम् अतो रुषितः क्रुद्धः साक्षेपम् आटोपगर्भं यथा तथा प्राह ॥ ३४ ॥

उक्तिमेवाह । ईदृशानीति द्वाभ्याम् । हे उद्धताः ! गिरौ वने च चरथ ये ते यूयम् ईदृशान्येव वासांसि परिधत्त किं सम्भावनायां लोट् राजद्रव्याणि अभीप्सथ स्वाधिकारमनालोच्येति शेषः ॥ ३५ ॥

हे बालिशाः ! आशु यात यर्हि जीवितुमिच्छा तर्हि मैवं प्रार्थनीयं यद्येवं प्रार्थ्यते तर्हि राजकुलानि राजकीयाः दुष्टान् युष्मान् बध्नन्ति घ्नन्ति लुम्पन्ति निस्वं कुर्युः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साक्षेपवाक्यं विवृणोति । ईदृशानीति । परिधत्थ परिधानं कुरुथ ॥ ३५ ॥

जिजीविषा जीवितुमिच्छा लुम्पन्ति अवच्छेदं कुर्वन्ति राजकुलानि राज्ञां समूहाः ॥३६—३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ईदृशानीति । तदिदमासुरदृष्ट्या श्रीविष्णुपुराणे लौकिकदृष्ट्यापि "सुवर्णाञ्जनचूर्णाभ्यां तौ तदा रूपिताव" वित्युक्तमत्यावगमात् मूलेऽपि श्यामं हिरण्यपरिधिमिति दृश्यते ॥ ३५—३९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

याचनमाह । देह्यावयोरिति । गोपालेभ्यः पश्चाद्देयमिति संकोचाद्दावयोरेवेत्युक्तं समुचितानि मह्यं पीतप्रधानानि बलभद्राय नीलप्रधानानि अङ्गेति सम्बोधनं तस्मिन् स्नेहसूचकमतिक्रमाभावार्थं च वासांसि परिधानयोग्यानि चकाराद्यदि तथाभरणानि भवन्ति गोपालेभ्योऽपि वा न ज्ञायत इति चेत्तत्राह । अर्हतोरिति आवामुत्तमवस्त्राण्यर्हन्तौ दाने किं स्यादत आह । भविष्यति परं श्रेय इति । अन्येभ्यो दानापेक्षयापि मह्यं दानं परमधिकमेव श्रेयो भविष्यति परं दातुरेव तेन त्वद्दाने अन्यथा भगवद्वाक्यमन्यथा स्यात् दानपक्षे पश्चाद्राजत्ये मृतेऽपि दोषान्तरशङ्कया श्रेयो न भवेदिति शङ्कां वारयति । नात्र संशय इति ॥ ३३ ॥

एवं व्यवहारसिद्धत्वात्तदुपकारार्थं याचनेऽपि कृते दुष्टो नाङ्गीकृतवानित्याह । स याचित इति । अविद्यमानत्वाद्याचनं व्याचष्टयति । भगवतेति । सर्वसमर्थस्यापि कदाचिन्न भवेदिति तदर्थमाह । परिपूर्णेन सर्वत इति । सर्वदेशेषु सर्वकालेषु च परितः सर्वद्रव्याणि सर्व-

एवं विकत्थमानस्य कुपितो देवकीसुतः ।
रजकस्य कराग्रेण शिरः कायादपातयत् ॥ ३७
तस्यानुजीविनः सर्वे वासःकोशान् विसृज्य वै ।
दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥ ३८ ॥
वसित्वात्मप्रिये वस्त्रे कृष्णः सङ्कर्षणस्तथा ।
शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥ ३९ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

फलानि सर्वतः पूर्णानि ततश्च तादृशाय वचनेनापि हितं वक्तव्यमिति तन्नोक्तवानित्याह । साक्षेपमिति । आक्षेपपूर्वकं रुपितः प्राह अन्तर्बहिः तस्य दोषौ निरूपितौ रोषः आन्तरः साक्षेपं यथा भवतीति बाह्यं तस्य तथात्वे हेतुमाह । भृत्यो राज्ञ इति । कंसस्य भृत्यः स्वभावतोऽपि दुष्ट इत्याह । सुदुर्मद इति । सुतरां दुष्टो मदो यस्येति ॥ ३४ ॥

आक्षेपमाह । ईदृशान्येवेति । यो हि समीचीनवस्त्राणि परिधत्ते स कदाचिदभावे याचयित्वापि परिधत्ते द्रव्यं दत्त्वा वा तथा किं भवन्तः ईदृशान्येवात्युज्ज्वलानि नित्यं परिधत्त तथैवेत्याशङ्कायामाह । गिरिवनेचरा इति । गिरौ वने च चरन्ति ते विद्यमानवस्त्रा अपि कुचैला एव भवन्ति नित्यं ये गिरिवनेचराः तेषामुत्तमवस्त्रपरिग्रहो व्यर्थ एव । नन्वपरिहितान्यपि औत्सुक्यात् याच्यन्त इति चेत्तत्राह । किमुद्वृत्ता इति । औत्सुक्ययाचने न राजकीयानि याच्यन्ते किं तु साधारणानि । नन्वसाधारणान्यपि याच्यन्ते का मर्यादेति चेत्तत्राह । तर्हि किं भवन्त उद्वृत्ता इति । उद्गतं वृत्तं मर्यादारूपं येभ्यः एतादृशोद्वृत्तता किमर्थं क्रियत इति हो येन राजद्रव्याण्यभीप्सथ यस्तु मूर्द्धाभिषिक्तः तन्मात्रोपभोग्यानि मत्प्रक्षालितानि वस्त्राणि तान्यपि यतोऽभीप्सथ ॥ ३५ ॥

अज्ञात्वा याचितमिति चेत्तत्राह । यातार्श्विति । इतः शीघ्रमेव यात ग्रामान्तरं गच्छत यतोऽत्रत्यवृत्तान्तो न ज्ञायते भवाद्भिः हितमाह । मैवं प्रार्थ्यमिति । बाधकमाह । यदि जिजीविषेति । यतः प्रार्थयितारं राजकुलानि मर्यादार्थं युक्ता राजभटाः अल्पापराधे बध्नन्ति महत्यपराधे गृहस्थासंमते तमेव घ्नन्ति अन्यथा लुठन्ति सर्वस्वलुण्ठनं कुर्वन्ति तथाकरणे दोषमाह । घ्नन्तीति । अतो यावत् इतनं न जानन्ति तावदन्यत्र यातेति रोषवाक्यम् एवं सर्वसाधारणं भगवन्तं ज्ञात्वा बहुवचनेन सर्वान् प्रत्युक्तवान् ॥ ३६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृत्तात् सौशील्यात् उद्गताः हे दुःशीला इत्यर्थः । परिधत्तेति सम्भावनायां लोट् सरस्वतीत्याह हे उत्कृष्टचरित्रा गोवर्द्धनगिरिचरा यूयं किम् ईदृशानि प्राकृतानि परिधत्त अपितु नैवेत्यर्थः । तस्मात्स्त्रीणामपि किं राजद्रव्याण्यपवित्राण्यभीप्सथ वृत्तं पद्ये चरित्रे त्रिष्विलमरः ॥ ३५ ॥

यातेति स्पष्टं पक्षे हे बालिशा ! बलिं घ्नन्ति त्रिपादभूमि प्रार्थ्य तनू कुर्वन्तीति बालिशाः, स्वार्थेऽण् बालिशा हे परमेश्वराः यदि मे जिजीविषास्ति तर्हि मैवं प्रार्थ्य बलिरिव तुभ्यं यदि वासांसि ददामि तर्ह्येव मे जीवनं न स्थास्यतीत्यर्थः । कुत इत्यत आह । बध्नन्तीति । राजकुलानि अत्रत्याः राजकीयाः पुरुषा इदं कंसराजाभिःशङ्कं जनं प्रथमं बध्नन्ति ततो राजानं विज्ञाप्य घ्नन्ति ततो लुम्पन्ति तद्गृहं लुठन्ति ॥ ३६—३७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रुपितः कुपितः साक्षेपं यथा तथा प्राह ॥ ३४ ॥

हे गिरिवनेचराः ! गिरौ वने चरथ यूयम् ईदृशान्येव वासांसि परिधत्त किं सम्भावनायां लोट् राजद्रव्याणि अभीप्सथ प्रार्थयध्वम् ॥ ३५ ॥

हि यतः राजकुलानि राजकीयाः बध्नन्ति निर्व्यापारं कुर्वन्ति घ्नन्ति निर्जीवितं कुर्वन्ति लुण्ठन्ति निःस्वं कुर्वन्ति अत आशु यात यदि जीवितुमिच्छा तर्हि मैवं प्रार्थ्यम् एवम्प्रार्थना न कर्तव्येति फलितोऽर्थः ॥ ३६—३७ ॥

### भाषा टीका ।

भगवान् बोले हम दोनों के अच्छे उचित वस्त्र सब हैं हम इनके योग्य हैं सो हम को तू वस्त्रों को देदे तो देने से तेरा भला होगा इसमें कुछ सन्देह नहीं है ॥ ३३ ॥

सब प्रकार से परिपूर्ण भगवान् के ऐसे मागने पर भी राजा का भृत्य बडा दुर्मद वह धोबी गुस्सा होकर कटुक वचन से कहने लगा ॥ ३४ ॥

अहो रोज पर्वत वन में घूमने वाले तुम लोग ऐसे ही कपडों को पहरते हो क्या अहो उद्धतो ! राजा के द्रव्य को चाहते हो ॥ ३५ ॥

हे बालको ! तुम चले जाओ यदि जीने की इच्छा है तो कभी ऐसी चाहना नहीं करना ऐसे गर्वित पुरुषों को राजा के कुल के पुरुष बांधते हैं मारते हैं लूटलेते हैं ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वासःकोशान् वस्त्रपुटकान् ॥ ३८—३९ ॥

ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत् ।
विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ॥ ४० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वायकस्तन्तुवायविशेषः वेषमलङ्कारं, चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विकत्थमानस्य विरुद्धमात्मश्लाघापूर्वकमुच्चैर्जल्पतः अत्रात्मश्लाघा च एवम्भूतमहाशिपिराजात्मीयसेवकोऽहमिति व्यञ्जनया स्पष्टं दर्शिता श्रीवैशम्पायनेन ।"अहं कंसस्य वासांसि नानादेशोद्भवानि वै। कामरागाणि शतशो रञ्जयामि विशेषत" इत्यादौ। कुपितः कंसपक्षपाताद्विशेषतश्च बहुवचनेन तत्साक्षादग्रजादीन् प्रति दुरुक्तिस्पर्शात् । अतएव खड्गानुकारिणा कराग्रेणैकेनैव तिष्ठत एव तस्य शिरः कायादहरत् छित्त्वा दूरे चिक्षेपेत्यर्थः। देवकीसुत इत्यत्र कंसेन क्रियमाणया देवक्या यातनया कदर्थितः सोऽयं तदीयानां जनानां कथमौद्धत्यं सहतामिति भावः। यद्वा यतो दुष्टसंहारार्थं तस्यां जात इत्यर्थः ॥ ३७ ॥

वै एव चेति पाठेऽनुक्तसमुच्चयः ते गर्दभादीन्यपि सर्वत इतस्ततो मार्गं दुद्रुवुः। यद्वा। मार्गस्य सर्वा दिशो दुद्रुवुः। अकारप्रश्लेषेण अमार्गमिति वा । मार्गं हित्वा तदितरस्थानं प्रति दुद्रुवुरित्यर्थः । अच्युत इति । तत्स्थानस्थितिमपि व्यञ्जयति ॥ ३८ ॥

आत्मप्रिये पीतनीलवर्णे वस्त्रे परिधानीयोत्तरीये आदत्त आ सम्यक् तत्तदिच्छायनुरूपं वस्त्रं दत्तवान् तदर्थं गृहीतवानिति वा । कानिचिदयोग्यानि अधिकानि च । अत्रायमपि श्रीभगवतोऽभिप्रायः नूनं कंसेन महोत्सवे स्वपरिकरसुशोभार्थमेतान्यपूर्वाणि वस्त्राणि धावयितुं दत्तानि तस्मात्तच्छोभां नाशयंस्तैरहमेव स्वपरिकरसुशोभां कुर्वन् प्रथमतस्तदुत्सादयामीति वस्तुतस्त्वेतानि वस्त्राणि नरककृतकुमारीवत्तदीयान्येव लीलासौष्ठवाय लीलाशक्त्या तद्द्वारैव तु मिलितानीति ज्ञेयम् ॥ ३९ ॥

इत्थं शिष्टहर्षार्थमेव दुष्टनिग्रहं कृत्वा शिष्टाननुजग्राहेति वदन्नादौ वायकानुग्रहमाह । ततस्त्विति । ततस्तद्वधाद्वस्त्रपरिधानाच्च वायकः प्रीतः सन् चैलेयैरेवाकल्पैः कटककुण्डलादिभिस्तयोर्वेशं रचितवान् आकल्पत्वमेव स्थापयति । विचित्रवर्णमणिजटितसुवर्णकल्पवत् विरच्य स्वगृहादानीतैरित्यर्थः। ननु कुतस्तौ निजमणिमयालङ्कारं त्यक्तवन्तौ कुतो वा सोऽपि चैलेयमेवालङ्कारं दत्तवान् तत्राह । अनुरूपतः मल्ललीलायां गात्रतोदकत्वेन तस्यैवानुरूप्यादित्यर्थः । अनेन तयोः स्वस्वानुरूप्यमपि ज्ञेयम् ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं रजकस्य विकत्थमानस्य सतः भगवान् मुकुन्दः कराग्रेण तस्य शिरः कायादपाहरत् ॥ ३७ ॥

ततस्तस्य रजकस्यानुजीविनः सर्वे वासःकोशान् वस्त्रपुटकान् विसृज्य सर्वतो मार्गान् प्रति दुद्रुवुः पलायितवन्तः ततो भगवान् वासांस्यादत्त ॥ ३८ ॥

तदा सङ्कर्षणः श्रीकृष्णश्चात्मप्रिये स्वाभीष्टे वस्त्रे वसित्वा परिधाय शेषाणि गोपेभ्यः आदत्त अदात् कानिचिद्वासांसि भुवि विसृज्य त्यक्त्वा अगादिति शेषः ॥ ३९ ॥

ततः कश्चिद्वायकः तन्तुवायकः प्रीतः प्रीतियुक्तः विचित्रवर्णैश्चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैर्यथानुरूपं तयो रामकृष्णयोर्वेषमलङ्कारमकल्पयत् विदधे ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वासःकोशान् वस्त्राश्रयराशीन् कोशोऽस्त्री कुड्मले दिव्ये शास्त्रेऽथोघ गृहे तनाविति च वस्त्रकरण्डकान् वा ॥ ३८ ॥

वस्त्रे परिधानोत्तरीये विसृज्य ॥ ३९ ॥

वयाकः तन्तुवायकः वेषमङ्कृतालङ्कारमेतदेव विशदयति। विचित्रेति। विचित्रा नानाविधा वर्णाः नीलरक्तादयो येषां ते तथा तैः शैलेयैः धातुभिः आकल्पैः आभरणैः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

चैलेयैरेवाकल्पैः कटककुण्डलादिभिः रत्ननिर्मितवत् विचित्रवर्णैः तत्रैव हेतुः । आनुरूप्यतः मल्ललीलायां गात्रतोदकत्वेन तस्यैवानुरूप्यादित्यर्थः ॥ ४०—४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र बलभद्राक्षेपमसहमानः अग्रे कार्यमपि कर्त्तव्यमिति तं मारितवानित्याह । एवमिति । विशेषेण कत्थमानस्य असम्बद्धभाषिणः भगवन्माहात्म्यमज्ञात्वा स्वोत्कर्षमेव वदतीति अत एव कुपितः किञ्च । देवकीसुत इति । देवकी तु वञ्चा तस्यां कृपया कंसो मारणीय इति तं मारितवान् अथवा मातुलेयो न मारणीय इति तं ज्ञापयितुं स्वस्य पौरुषप्राकट्यार्थं रजकं मारितवान् कराग्रेण चपेटेन नखेन वा केचित् अदृष्टं सुदर्शनं कल्पयन्ति तस्य मुखस्यैव दोष इति शिरः कायात् दूरीकृतवान् उभयोः सम्बन्धो न युक्त इति ॥ ३७ ॥

तत्प्रक्षालितानि हि भगवता परिधेयानीति ततोऽन्ये अहन्यमाना अपि पलायिता इत्याह । तस्यानुजीविन इति । तस्य मुख्यरजकस्य अनुजीविनः सेवकाः सर्व एव रजकाः अतस्ते वासःकोशान् वस्त्रभारान् भण्डाररूपान् विसृज्य वै निश्चयेन पुनः प्राप्तिप्रत्याशां दूरीकृत्य यथा कथंचित् दुद्रुवुः सर्वत एव मार्गो यथा भवति तथा भीतपलायने सर्वत्रैव मार्गा भवतीति ततो भगवान् अप्रतिहतः स्वयं वासांसि जगृहे क्षत्रियाणामयं धर्मः

नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः ।
स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥ ४१ ॥
तस्य प्रसन्नो भगवान् प्रादात्सारूप्यमात्मनः ।
श्रियं च परमां लोके बलैश्वर्यस्मृतीन्द्रियम् ॥ ४२ ॥
ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः ।
तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥ ४३ ॥
तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः ।
पूजां सानुगयोश्चक्रे स्रक्ताम्बूलानुलेपनैः ॥ ४४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हतस्य शत्रोः पदार्थाः स्वस्यैवेति च्युतिराहित्यमत्र कोलाहलादिना भयशङ्काव्यावृत्त्यर्थम् ॥ ३८ ॥

अत एव निर्भयव्यवहारमाह । वसित्वात्मप्रिये वस्त्रे इति । आत्मप्रिये सिते संकर्षणोऽपि तथा तथा शेषाणि पुनर्वस्त्राणि गोपेभ्यः आधत्त भगवान् संकर्षणश्च तेषां स्वतो ग्रहणमनुचितमिति भारं उपरि यदि अनाभिप्रेतं भवेत् तानि भुवि विसृज्य उत्तमान्येव दत्तवान् । प्रायेण बहून्येव गृहीतानि त्यक्तानि तु बहूनि वस्त्रे इति द्विवचनं जात्यभिप्रायमुभयोर्वैजात्येन वस्त्रजातीयाः प्रिया इति न तु वस्त्रद्वयमेव एतदर्थमेवावतीर्ण इति कृष्णस्योचितं परिधानं सम्यक् कर्पतीति द्वन्द्वद्वययोर्मेलक इति संकर्षणस्यापि परिधानमुचितम् ॥ ३९ ॥

ततो यथा कथंचिद्बन्धनार्थं प्रवृत्तौ ज्ञाततत्त्वावपि मुग्धभावेन वायकपरितोषार्थं तदा संतुष्टो वायकः वस्त्रपरिधानकारयिता यः प्रभुभ्योऽपि सम्यक् परिधानं कारयति स मम कार्यमेतदिति स्वकार्ये प्राप्ते सर्वोऽपि प्रीतो भवति तत्राप्युत्कर्षे तयोः कृष्णरामयोः यो वेष उचितः स्वयं पूर्वं ध्यातो वा तमकल्पयत् स्वयं विचार्य नानाविधवस्त्राणि कोशेभ्यः भगवतैव वा पूर्वं गृहीतानि । विचित्रो वर्णो येषामिति यस्मिन् भागे यादृशो वर्ण उचितः । चैलेयैरुत्तमवस्त्रैराकल्पैराभरणरूपैः अनुरूपत इति । यथा श्यामे यथा शुक्ले वेश उचितो भवति एकत्रैव एकविषय एव हिताहितसिद्धिरिति ज्ञापयितुं वायकनिरूपणम् ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वासःकोशान् वस्त्रसंपुटान् ॥ ३८—३९ ॥

वायकः वेणवसौचिकः आकल्पैःकटककुण्डलकेयूरादिभिश्चैलेयैः कोमलचेलखण्डनिर्मितैः विचित्रवर्णैर्मणिजटितस्वर्णतुल्यवर्णैः अनुरूपतः मल्ललीलायां गात्रतोदकत्वेन चैलेयालङ्काराणामेवौचित्येनानुरूप्यात् तयोर्वर्णानुरूप्याच्च ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वासःकोशान् वस्त्रपुटकान् मार्गं राजमार्गञ्च विसृज्य सर्वतः दुद्रुवुः ॥ ३८ ॥

कृष्णस्तथा सङ्कर्षणः आत्मप्रिये वस्त्रे वसित्वा परिधाय गोपेभ्य कानिचित् तत्प्रियाणि वस्त्राण्यादत्त अदात् शेषाणि भुवि विसृज्य अगादिति शेषः ॥ ३९ ॥

ततस्तदनन्तरं वायकस्तन्तुवायकः प्रीतः प्रीतियुक्तः विचित्रवर्णैः चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैः । तयोर्वेषमलङ्कारमकल्पयत् विदधे ॥ ४० ॥

---

### भाषा टीका ।

इस प्रकार से बकवाद करने वाले रजक के ऊपर देवकी सुत भगवान् कुपित भये तब अपने करके अग्र भाग से उस धोबी के शरीर में से शिरको तोडकर नीचे गिरा दिया ॥३७॥

तिसके पीछे उसके नौकर जितने रहे सो वस्त्रादि पदार्थों को जहां तहां छोडकर चारों तरफ की रस्ता को भाग गये उन सब कपडों को भगवान् ने लेलिया ॥ ३८ ॥

श्रीकृष्ण भगवान् ने तथा बलरामजी ने भी अपने प्रिय बस्त्रों को पहर लिये बांकी वस्त्र और गोपों को देदिये और कुछ जमीन ही में छोड दिये ॥ ३९ ॥

तिसके अनंतर किसी भक्त दरजी ने प्रसन्न होकर विचित्र प्रकार के वस्त्रों से उन दोनों के अनुरूप वेष कल्पाना कर दिये ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका

पर्वण्युत्सवे ॥ ४१ ॥

इह लोके परमां श्रियं च बलं चैश्वर्यञ्च स्मृतिश्चेन्द्रियं तत्पाटवं च प्रादात् ॥ ४२—४५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नाना बहुविधं लक्षणं प्रकारो ययोस्ताभ्यां वेशाभ्यां छन्दाभ्यां छित्वं तत्तदनुरूपत्वेन द्विधाभेदात् विरेजतुरित्यत्र भक्तसेवास्वीकारादिति तत्त्वं सितेतरौ शुक्लकृष्णौ बालगजाविव दार्ष्टान्तिकवर्णव्यतिक्रमेण दृष्टान्तवर्णोक्तिः केवलमलङ्कारकृतशोभायां तात्पर्येण पूर्वापरताऽनपेक्षणात् ॥ ४१ ॥

तस्य तस्मै प्रकर्षेणादात षष्ठी पूर्वत एव तस्य तद्भक्त्या सारूप्यादीनां तत्स्वामित्वबोधनार्थं लोक इत्यत्रैव लोके किमुत परत्रेत्यर्थः । यद्वा लोके पश्यत्येवेत्यर्थः । प्रशब्दार्थमभिव्यञ्जयति । आत्मनः श्रीगोपालरूपस्येति परमां ब्रह्मादिदुर्लभां श्रियं द्रव्यादिसम्पदं परमामिति लिङ्गादिव्यत्ययेनाग्रेऽपि योज्यं चकारादैश्वर्यं प्रभुत्वं दानञ्च त्रिवक्रायत्ततत्कालमेव ज्ञेयं तत्सम्भावनार्थमाह । भगवानिति ॥ ४२ ॥

ततस्तदनन्तरमिति चैलेयाकल्पानन्तरं पुष्पमालानामपेक्षत्वादित्यर्थः । यद्वा । वायकानुग्रहानन्तरं वायकादपि मालाकारं प्रत्याधिकानुग्रहार्थमित्यर्थः । सर्वलोकवत्तस्य पूर्वं स्वयं श्रीकृष्णनिकटाप्रयाणं तु तदुपायनार्थापूर्वमालारचनाभिनिवेशेनेति ज्ञेयं अग्रे च व्यक्तं भावि सम्यक् ससंभ्रममासनत्यागादिप्रकारेणोत्थाय शिरसा भुवि ननाम । यथोक्तं वैष्णवे । "भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा मही" मिति । श्रीभगवद्दर्शनार्थं निष्कान्तपरिकरस्य तन्मालानिविष्टदृष्टेस्तस्य कृपया सहसान्तिकसमागमनेन प्रणामस्थानसंकोचापत्तेः सम्भ्रमेण तद्विस्मरणाद्वा ॥ ४३ ॥

अर्घ्यं गन्धादिद्रव्याष्टकम् अर्हणञ्चान्यत् पूजोपकरणं धूपदीपनैवेद्यादि । आदिशब्दाच्चामरवीजननीराजनादीनि । अर्हणशब्देनादिशब्देन च गृहीतानामपि स्रगादीनां पृथगुक्तिस्तत्प्राचुर्यस्य पुनः पूजनस्य चाभिप्रायेण ॥ ४४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सितेतरौ सितश्च तदितरश्च आसितः श्वेतकृष्णवर्णौ गजाविव ॥ ४१—५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा तौ रामकृष्णौ नानाविधवेषाभ्यां विरेजतुः यथा पर्वण्युत्सवे स्वलंकृतौ सितेतरौ श्वेतवर्णकृष्णवर्णौ बालगजौ रेजतुस्तद्वत् ॥ ४१ ॥

ततो भगवान् प्रसन्नस्तस्य वायकस्य स्वसारूप्यं स्वसाधर्म्यं मुक्तिमिति यावत् प्रादात् देहावसाने दास्यामीति सङ्कल्पितवानित्यर्थः । श्रियमित्यादि अस्य जीवद्दशायामितिशेषः इह लोके परमां श्रियं बलं वैश्वर्यंश्च स्वविषयकस्मृतिश्चेन्द्रियं तत्पाटवञ्चादात् ॥ ४२ ॥

ततः सुदाम्नः सुदामाख्यस्य मालाकारस्य गृहं जग्मतुः गतवन्तौ स च तौ रामकृष्णौ दूरादेव दृष्ट्वोत्थायाभ्येत्य शिरसा भुवि ननाम नमश्चक्रे ॥ ४३ ॥

तयोरासनमानीयादाय समर्प्य पाद्यं च समर्प्येति शेषः



अर्घ्यार्हणादिभिः स्रगादिभिश्च सानुगयोस्तयोः पूजां चक्रे अर्हणशब्द उपात्तेतरपूजासाधनसंग्रहार्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावळी ।

लक्षणं मुद्रा पर्वणीव पौर्णमास्यमावास्ये इव सितेतरौ श्वेतश्यामौ ॥ ४१ ॥

बलञ्च ऐश्वर्यञ्च स्मृतिश्च इन्द्रियञ्च बलैश्वर्यस्मृतीन्द्रियाणि तानि बलं शरीरशक्तिः रूपं सौन्दर्यं वा ऐश्वर्यमणिमादि स्मृतिर्भगवत्स्मरणम् इन्द्रियं ज्ञानेन्द्रियम् ॥ ४२—४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्परिधापनेन भगवतः शोभामाह । अन्यथा तस्मै वरदानं सारूप्यलक्षणमयुक्तं स्यात् अतस्तत्क्रियया शोभा जातेत्याह । नानालक्षणेति । नानालक्षणानि वेषाः वेषाकृतौ तस्य वैयग्र्याभावाय सदानन्दत्वं रतिजनत्वं चोक्तं विशेषेण पूर्वापेक्षयापि रेजतुः यतः स्वलंकृतौ भगवतोऽतिमहतः स्वरूपेणोत्कृष्टस्यालंकारेण कौतुकमेव भवतीति ज्ञापयितुं दृष्टान्तमाह । बालगजौ अतिसुन्दरौ यथा पर्वणि नवम्यादावुत्सवे अलंकृतौ भवतस्तथातिचपलाविव अतिसुन्दरौ सर्वैर्दृष्टावित्यर्थः ॥ ४१ ॥

तदा सर्वेषामधिकसन्तोषे फलं देयमिति । सन्तुष्टो भगवान् फलं दत्तवानित्याह । तस्य प्रसन्न इति । मनसि रूपं भावयित्वा रूपं कृतवानिति सारूप्यमेव दत्तवान् सामर्थ्यार्थं भगवानिति मुक्तिः प्रसन्न एव भवतीति प्रसन्न इत्याह । आत्मनः सारूप्यं व्यापिवैकुण्ठवासिनः । एतद्देहावसाने भविष्यतीति तदानीमनभिप्रेतमिति । फलान्तरमप्याह । बलैश्वर्येति । बलं देहस्य ऐश्वर्यं वाचकम् आज्ञासामर्थ्यमिति यावत् । स्मृतिर्मानसी भगवदनुसंधानरूपा आत्मानुसन्धानरूपा इन्द्रियमपि सर्वेन्द्रियसामर्थ्यं दत्तवान् एवमन्तश्चतुर्द्धा ऐहिकं पारलौकिकं चेति षट् फलानि दत्तानि । धर्म एव तेन सम्पादित इति न स्वरूपदानम् ॥ ४२ ॥

भक्त्या सह स्वरूपदानार्थमुपाख्यानान्तरमाह । ततः सुदाम्न इति । यो हि दाता स पूर्वं यद्देयं तद्दस्यैव दुर्लभं प्रयच्छति अतस्तदनन्तरम् उत्तममालाकर्तुर्भवनं गतौ प्रायेण तस्य भवनं न राजमार्गे अन्यथा प्रासङ्गिकमेव स्यात् । विक्रयस्थाने तु नोत्तमाः पदार्था भवन्तीति भवनमेव जग्मतुः सुदामपदं रूढं वा भवेदिति विशेषमाह । मालाकारस्येति । साधारण्येन मालाकर्तुः नन्वक्लिष्टकर्मा भगवान् किमित्यल्पार्थं परगृहं गत इति शङ्काव्युदासाय तस्य भक्त्यादिकं निरूपयति । तौ दृष्ट्वेति सार्धैः षड्भिः । षड्गुणेभ्योऽधिकं देयमिति भक्तिरुक्तमिति । स हुत्तमां मालां विचाय किं कर्तव्यमिति तिष्ठति तदैवागतौ रामकृष्णौ दृष्ट्वा प्रसिद्धः पूर्वमपि भगवद्भक्तः समुत्थाय भुवि शिरसा साष्टाङ्गं ननाम लौकिकपेषा भावेति यथाकृतमुक्तवान् निरोधार्हौ भवतीति ज्ञापयितुं वा प्राकृतत्वाभावाय भक्त्याभावाय च मध्यभावं निरूपयन्निरूपयति ॥ ४३ ॥

एतावन्महत्युदासीनेनापि क्रियत इति विशेषतः पूजामाह । तयोरासनमानीयेति । स्वगृहे तादृशं योग्यं प्रायो नास्तीति यदेवोत्तमं तदेवानीय

प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ! ।
पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥ ४५ ॥
भवन्तौ किल विश्वस्य जगतः कारणं परम् ।
अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥ ४६ ॥
न हि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ।
समयोः सर्वभूतेषु भजन्तं भजतोरपि ॥ ४७ ॥
तावाज्ञापयतं भृत्यं किमहं करवाणि वाम् ।
पुंसोऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥ ४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दत्तवान् । अव्यवहार्यं वा तथा पाद्यं च चकारादन्येऽप्युपचारास्तथैव कृताः अर्हणादिभिश्चन्दनादिभिः पाद्यान्ते उपचारे कृते सान्निध्यात् जातस्नेहः भक्त्युत्तरं कृतवानिति ज्ञापयितुमथ शब्दः अतः सानुगयोः पूजां चक्रे इयं पूजा आकस्मिकीति लोकसाधारणीमाह । स्रक्ताम्बूलानुलेपनैरिति । आदौ चन्दनानुलेपनम् । ततस्ताम्बूलं ततो मालेति तथापि स्वधर्मो मालेति व्युत्क्रमेण निरूपितवान् । भक्तिवशाद्वा यदैव यत्संपन्नं तदेवाग्रे कृतवानिति । ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नानाविधं लक्षणं ययोस्ताभ्यां वेषाभ्यां द्विलं तत्तदनुरूपत्वेन द्विधा भेदात् पर्वणि उत्सवे सितेतरौ सितश्यामौ ॥ ४१ ॥

इन्द्रियमिन्द्रियपाटवम् ॥ ४२ ॥

वस्त्रालङ्कारपरिधानानन्तरं माला अपेक्ष्यन्त इत्यत आह । तत इति ॥ ४३—४६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पर्वणि उत्सवे सितेतरौ शुक्लकृष्णौ ॥ ४१ ॥

सारूप्यं साधर्म्यलक्षणं मोक्षम प्रादात् इह लोके लीलादर्शनार्थं श्चावद्वासस्तावत्कालं श्रियं बलं च ऐश्वर्यं च स्मृतिञ्च इन्द्रियमिन्द्रियपाटवञ्च कंसादिभ्यः सर्वशः श्रेष्ठयं प्रादादित्यर्थः ॥ ४२ ॥

सः सुदामा ॥ ४३ ॥ ४५ ॥

भाषा टीका ।

नाना प्रकार के वेश से रामकृष्ण दोनों ऐसे शोभित भये जैसे पूर्णिमा अमावास्या पर्व में सफेद तथा श्याम हस्ति दोनों अलंकृत किये जावें । ॥ ४१ ॥

उस दरजी के ऊपर भगवान् प्रसन्न भये सो उसको अपना सारूप्य देदिया इस लोक में परम श्री बल ऐश्वर्य इन्द्रिय शक्ति इन सबन को भी दे दिया ॥ ४२ ॥

तिसके अनंतर सुदामा नामा माला कारके घरको भगवान् जाते भये वह माळाकार उन दोनों का दर्शन करके उठ खडा भया औ पृथि में गिरकर शिरसे प्रणाम करता भया ॥ ४३ ॥

उनके लिये दिव्य आसन लाकर दिया विधि पूर्वक सब अनुचरों के सहित उन दोनों का पूजन किया माला ताम्बूल आदिक सब दिये तथा चन्द्रन लगाये ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

क्षेमायाभयाय भवायोद्भवाय ॥ ४६ ॥

रजकवधेन वायकानुग्रहेण च युवयोर्विषमदृष्टितयाऽनीश्वरता नाशङ्कनीयेत्याह । नहि वामिति । अत्र हेतुः । समयोरिति । अत्रापि हेतुद्वयं सुहृदोरिति जगदात्मनोरिति च ॥ ४७—४८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ भक्त्या स्तुतिश्च कृतेत्याह । प्राहेति । प्रेमगद्गदिकाद्युत्तमप्रकारेणावदत् । न इति बहुत्वं तदागमनेनात्मनो बहुमानात् निजपरिवाराद्यपेक्षया वा । आगमनेनेति कृपया वास्तुस्पर्शमात्रेण किमुत साक्षाद्दर्शनदानेनेति भावः । अहो किं वक्तव्यं युष्मदागमनसौभाग्यवर्ता युवामेव साक्षात् पश्यतामस्माकं जन्म सार्थकमिति अनेनैव पूर्वपुरुषाः सम्बन्धिनश्च सर्वे भूतभविष्या निस्तीर्णा इत्याह । पावितञ्चेति । नित्यपूज्यानां पित्रादीनां प्रीत्युत्पत्त्या समातकृत्यता च वृत्तेत्याशयेनाह । पितृदेवेति । ईति प्रमाणं दर्शयति । तथा चाक्रूरेण वक्ष्यते । अद्येश नो वसतय इत्यादि । तत्र सर्वत्रैव हेतुः हे विभो ! परमेश्वरेति ॥ ४५ ॥

ननु नन्दगोपसुतौ आवां कथमीदृशी स्तुतिः क्रियते तत्राह । भवन्ताविति । किल शास्त्रादिप्रसिद्धौ विश्वस्य सर्वस्य जगतोऽखिलस्य महदादेः कारणं पुरुषरूपेण कारणावस्थातः परञ्च स्वयं भगवद्रूपत्वेन इह मथुरायां अंशेनेति । जाताद्येकत्वम् अंशैर्गोपयादवादिभिः सहेत्यर्थः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यद्वांऽशेन जगतः कारणमित्यन्वयः । तथाच वक्ष्यते "यस्यांशांशांशभागेन विश्वस्थित्यप्ययोद्भवा" इति । चकाराभ्यां द्वयोरपि प्राधान्यं वोध्यते । तत्र क्षेम इहामुत्र चाभयं भव उद्भवो वृद्धिर्वा ॥ ४६ ॥

ज्ञानक्रियाशक्तिदातृत्वेनोपकारात् सुहृदोरर्थात् सर्वेषां चेतनानां मूलकारणत्वेन जगतः कृत्स्नस्य चेतनस्याचेनतस्य चात्मनोः । यद्वा जगत् कृत्स्नं व्याप्य सुहृदोः आत्मनोश्च । अपिरुक्तसमुच्चये । विशेषतो भजन्तं ब्राह्मणचण्डालादीनामेकतरमाश्रयमाणमात्रं भजतोः स्वयमाश्रयतोश्च । अतः समयोर्युवयोर्न विषमा दृष्टिः । किम्वा सुहृदोर्जगदात्मनोश्च तावन्न विषमा दृष्टिः । तथा भजन्तमेव भजतोः कृपयतोरपि न सा । यतः समयोः प्राकृते दुःखे सुखे च तुल्ययोः । सूर्ये तमस इव पेचकचक्षुर्ज्योतिष इव च तच्चेतसि तस्य तस्य स्पर्शासम्भवात् स्वरूपभूताह्लादिनीशक्तिविळासविशेषरूपाया भक्तेरेव स्पर्शादिति भावः । तदुक्तं श्रीगीतासु । "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह"मिति । नवमे च । "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी" ति उभयत्र भक्त्यैव नत्वयेन तच्चित्तं लिप्तं भवतीत्यर्थः । अन्यत्तैः । अथवा ईश्वरयोर्युवयोर्भक्तिहीनाधमगृह आगमनं सर्वत्र समतयैवेति दैन्यमात्रादाह । नहीति । अयमनुग्राह्यः अयञ्च नेति विषमा दृष्टिर्नास्ति यतः सुहृदोर्निरुपाधिकृपाकरयोः । किञ्च जगदेवात्मा प्रियं ययोः कुतः भजन्तं भजतोरपि सर्वभूतेषूत्तमाधमेष्वपि समयोर्जगन्नाथत्वादीनवात्सल्याच्चेत्यर्थ ॥ ४७ ॥

तौ विषमदृष्टिरहितावपि । ननु मदाज्ञा वेदरूपास्त्येव तत्राह । किमिति साक्षादागतयोर्युवयोरधुना किं कार्यं तादित्यर्थः । नन्वाज्ञां विनापि पूर्वमातिथ्येन स्वयं तत्कृतमेव तत्राह । पुंस इति । हि यस्माद्भवद्भिर्यन्नियुज्यते हि एव एष एव पुंसो जीवस्य निजजनस्य वा अनुग्रहः परमानुग्राह्यत्वमिति पुंसस्त्विति पाठे अनुग्रहस्त्वेष इत्यन्वयः । भवद्भिरिति बहुत्वं तदीयापेक्षया । अतोऽधुना भवदाज्ञया किंचिच्चिकीर्षामीति भावः ॥४८॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तौ प्राह उक्तिमेवाह । नः सार्थकमित्यादिना इत्यभिप्रेत्येत्यतः प्राक्तनेन वां युवयो :आगमनेन नोऽस्माकं जन्मसार्थकं जातं नः कुलञ्च पावितं पवित्रीकृतं पित्रादयश्च मह्यं तुष्टा बभूवुः ॥ ४५॥

कथं यादवयोरावयोरागमनमात्रेण सर्वमेतत्सम्पन्नं तत्राह । भवन्ताविति । विश्वस्य कृत्स्नस्य जगतो भवन्तौ परं कारणं मूलकारणभूतावित्यर्थः । कथमेवं विधयोः कर्मकृतं प्राकृतं जन्मेत्यत आह । अवतीर्णाविति । अंशेन सङ्कल्परूपज्ञानेन नतु कर्मणेति भावः । इह लोके अवतीर्णौ जन्मनः सुखदुःखानुभवार्थत्वं वारयन् प्रयोजनमाह । क्षेमाय साधूनामिति शेषः । क्षेमः प्राप्तश्रियः पालनं भवो लब्धसुखप्रापणम् ॥ ४६ ॥

ननु कश्चिदनुगृह्णन्तौ कश्चिद्यानुगृह्णतौ कश्चिद्यातिगृह्णन्ताववां नेश्वरौ किन्तु प्राकृतौ जीवावित्यत आह । नहीति । जगत आत्मनोः अतएव सु॰दोः नहि स्वशरीरे कस्यचिदप्यसौहार्दं दृष्टमिति भावः । युवयोर्विषमा दृष्टिर्न विद्यते तत्र हेतुं वदन् विशिनष्टि भजन्तं भजतोरनुगृह्णतोरपि समयोः नहि भक्तेष्वनुग्रहो वैषम्यमूलकः नह्यप्रार्थितार्थदस्य सुरद्रुमस्य वैषम्यमस्ति वैषम्यपरिहारार्थं भजनात्मकं व्याजमपेक्षते इति भावः ॥ ४७ ॥

स्वस्मिन्नत्यन्तपारतन्त्र्यमावेदयितुं कैङ्कर्यानुशासनं प्रार्थयते । साध्विति । वां युवयोरहं किङ्करवाणि किं करोऽस्मीत्यर्थः अतो भृत्यं मां साधु यथा तथा आज्ञापयतम् एतावतैवाहमनुगृहीतो भविष्यामीत्यभिप्रेत्याह । पुंसस्त्विति । भवद्भिर्नियुज्यते अनुशिष्यते इत्येष एव पुंसो जीवस्यानुग्रहस्त्वत्कृतानुग्रह इतीत्थं विज्ञापयन्निति शेषः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सार्थकं सप्रयोजनं पावितं शुद्धीकृतम् ॥ ४५—४७ ॥

शाधि शिक्षस्व कर्तव्यमनुजानीहीति वा एतत्कुर्विति नियुज्यते प्रेर्यत इति यदेषः ॥ ४८—५२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मह्यं मां प्रति ॥ ४५—४६ ॥

सुहृदोर्जगदात्मनोश्च तावन्न विषमा दृष्टिः । तथा भजन्तं भजतोः कृपयतोरपि न सा । यतः समयोः प्राकृते दुःखे सुखे च तुल्ययोः ॥ ४७ ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कायिकमुक्त्वा तत्कृतां वाचनिकीं पूजामाह । त्रिभिः प्राहेति । स्वकृतार्थत्वं भगवत्कृतस्य फलत्वाय भगवतो निर्दोषपूर्णगुणत्वं च निरूपयति आदौ भक्तोद्धारको भगवानिति स्वकृतकृत्यमाह । नः सार्थकं जन्मेति । पुरुषार्थपर्यवसायि जन्म सार्थकं न इति गृहस्थानां सर्वेषामेव । ये वा भगवतैवं कृताः श्लाघायां वा यद्यपि जन्मकाल एव तादृशं फलं भविष्यतीति सर्वदैव सार्थकं तथापि फलोन्मुखता अद्येति ज्ञानं येन प्रतिदिनं देहाद्युत्पत्तेर्वाद्येत्युक्तं प्राहेति पाठे तु न संदेहः । न केवलं मम जन्म किं तु मत्संबन्धिनां सर्वेषामेवेत्याह । पावितं च कुलमिति । चकारात् कुलस्थाः सर्वे च तथात्वे सामर्थ्यं प्रभो इति सर्वस्यापि स्वकृतस्य जन्मकोटिभिः संपादितस्य विनियोगोऽत्रैवेति वक्तुं पूर्वं स्वाराधितदेवादीनां प्रसादफलमेवेत्याह । पितृदेवर्षयइति युवयोरागमनेन पितृदेवर्षयो मह्यं तुष्टा इति केचित् । वस्तुतस्तु पितृदेवर्षयो मह्यं तुष्टाः युष्मच्छायमर्थः । युवयोरागमनेनेति फलकीर्त्तने करणता त्वग्रिमफलार्थम् । अथवा नातः परं पित्राद्याराधनं कर्त्तव्यं यतस्त्वदागमनेनैव ते सन्तुष्टाः । मह्यमिति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदर्थं फलं दातुं मम वा अनेन स्वच्येन पूजिते सुतरां ते तुष्टा भवन्तीति किं वक्तव्यमित्युक्तम् ॥ ४५ ॥

महत्यारोपन्यायेन स्तुतिरेवंविधा संभवतीति तद्व्यावृत्त्यर्थं स्वस्य भगवत्स्वरूपज्ञानमाविष्करोति भवन्ताविति । विश्वस्य सम्बन्धिनौ भवन्तौ किल प्रसिद्धौ विश्वस्मिन् भवन्तौ प्रसिद्धावित्यर्थः । अनेन जगति यावन्तो महद्धर्माः ते सर्वे निरूपिताः कारणत्वं च निरूपयन्नाह । जगतः कारणं परमिति । जगद्यज्जायते तस्य मूलकारणं भवानेव विश्वशब्दो वा सर्वशब्दवत् सामान्यविशेषवाची उत्पादकत्वेन महत्त्वेन फलत्वेन च उत्पत्त्या चोपपत्त्या च माहात्म्यं निरूपितं नतूत्पत्तिस्थितिलयैर्न न्यूनता स्यात् । सर्वनिधानत्वेनैव वा सर्वप्रकारेण स्तुत्यता निरूपिता साधारणकारणत्वं कालस्यापि वर्तत इति परमिति । अनन्तमूर्त्तिर्भगवानिति द्विवचनं न दोषाय रूपद्वयेन चाविर्भूत इति माहात्म्यं परमुच्यते तादृशयोरवतारे प्रयोजनमाह । अवतीर्णाविहांशेनेति । इह प्रपञ्चे अंशेन क्रियाशक्त्या अवतीर्णौ ज्ञानांशेनान्य एव सृष्टा इति । पूर्ववदेव देशेन वा । एकवचनं तु तदंशान्यत्राविष्टमित्येकावतारामिप्रायम् अत एव क्रियाप्रयोजनमाह । क्षेमाय च भवाय चेति । स्थितस्य परिपालनार्थं चकारादक्षेमव्यावृत्त्यर्थं भवायोद्भवाय आधिक्यार्थं चकारान्मोक्षाय च । आधिक्यम भक्तिः अतः कार्यचतुष्टयार्थं भगवदवतार इत्युक्तं सर्वदुष्टनिराकरणार्थं सतां रक्षणार्थं मोक्षार्थं भक्त्यर्थं च ॥ ४६ ॥

नन्वेवं क्रियमाणे अब्रह्मत्वं स्यात् विषमकरणादित्याशङ्क्य सर्वदोषान् परिहरति । न हि वां विषमा दृष्टिरिति । मूलकारण एव हि नैर्घृण्यमपि प्रसिद्धं भवति अवतीर्णेषु वैषम्यमेव प्रसिद्धमिति तदेव निराक्रियते वां युवयोर्न विषमा दृष्टिः कश्चिन्मारणीयः कश्चित्स्थाप्य इति तत्र हेतुत्रयं वदति सुहृदोः जगदात्मनोः समयोरिति युक्त्या प्रमाणेन च पदार्थं निर्णीते प्रातीतिको दोषः भ्रमप्रतीतिरपि अन्यथा वा व्याख्येयेति न काप्यनुपपत्तिः युक्तश्चायमर्थं इति सर्वथैवं निर्णय इति हिशब्दः न हि किंचित्पुत्रं मारयन् कंचिदभिनन्दन् पिता विषमो भवति शिक्षार्थमेव तथा करणात् न हि हस्तेन पादं प्रक्षालयन् शिरश्चाप्रक्षालयन् विषमो भवति क्वचिदेव वा अलंकुर्वन् कालमुखे प्रविष्टानां जीवानामुद्धारार्थमागतः कालं वञ्चयित्वा नयन् वञ्चनार्थं सुहृदेव अन्तर्यामित्वात् सखित्वात्कृपालुत्वाच्च प्रदर्शनार्थं विषममपि कुर्वन्न विषमो भवति तदाह । सुहृदोरिति । यथैव सौहार्दं सिध्यति तथैव कुरुतः जगत एवात्मानौ कथमेकस्यैव विषमौ भविष्यतः अनेन स्वात्मानं यथासुखं करोतीति नैर्घृण्यमपि परिहृतं ज्ञातव्यम् । सर्वभूतेषु समत्वं कारणत्वादेव सिद्धं भूतपदेन च रोगादिवत् ये निवर्तनीया एव सहजासुराः ते व्यावर्तिता इति केचित् वस्तुतस्तु जाताभिप्रायम् अन्यथा आत्मैवेति नात्मनः समो भवति साम्यस्य भेदसहिष्णुत्वात् । नन्वेतच्छिक्षार्थं मारणे गतिरुक्ता वरदानादेः का गतिरिति चेत्तत्राह । भजन्तं भजतोरपीति । "ये यथा मां प्रपद्यन्त" इति वाक्यात् कल्पतरुस्वभावत्वाच्च प्रार्थितायैव प्रयच्छतीति सर्वेभ्यः अदानेऽपि न वैषम्यम् ॥ ४७ ॥

एवं स्तुत्वा स्वस्य मानसं निवेदयति । तावाज्ञापयतमिति । अयं हि मनसा भगवते सर्वं निवेद्य दासो जातः स चेद्भगवता दासत्वेन क्रियते तदा दासः संपद्यते । तस्य चाभिज्ञापकमाज्ञापनम् अतस्तौ स्वामिनौ भृत्यं मामाज्ञापयत ननु वेदे सर्व एव जीवाः भृत्या आज्ञप्ताः तथा भवानपीति चेत्तत्राह । किमहं करवाणि वामिति । युवयोरर्थं किं विशेषेण करवाणि अन्यथा विशेषतो दासभावप्राप्तेः कः पुरुषार्थः स्यात् ननु पूर्णकामावावां नास्मभ्यं किञ्चित् कर्तव्यमिति चेत्तत्राह । पुंसोऽत्यनुग्रह इति । न ह्ययं नियोगः भवदुपकाराय किं त्वस्मदुपकाराय यथा वरदानं वरापेक्षयाप्ययमत्यनुग्रहः यत्सेवकत्वेन स्वीकृत्य नियुज्यते युक्तियुक्तश्चायमर्थः वरः परिच्छिन्नः अपरिच्छिन्नं च दासत्वमिति तस्य हि सर्वं कार्यं स्वामिनैव कर्तव्यमिति । भवद्भिरिति बहुवचनं ससेवकाभिप्रायम् एव इति भक्त्या भगवदाज्ञापनं तस्य पुरः स्फूर्तिकमिति उक्तम् । अत एवाग्रे अनुक्तोऽपि मालां दास्यति अनेन भगवत्प्रपत्तेः स्वतः सामर्थ्यं द्योतितम् ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भजन्तं भजतोरपीति । समोऽहं सर्वभूतेष्वित्यत्र ये भजन्ति च मां भक्त्या मयि ते तेषु चाप्यहमिति तदुक्तेः वस्तुतस्तु विप्रश्वपचादिषु सत्कर्मकुकर्मवत्स्वपि मध्ये यः कोऽपि त्वां भजति तमेव त्वं भजसीति न तव जात्यादिवैषम्यं यतोऽत्रत्येष्वपि मध्ये भजन्तं वायकं मालाकारं च मां कृतार्थयसीति भावः ॥ ४७—४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अंशेन स्वसङ्कल्पेन क्षेमाय मोक्षाय भवायोद्भवाय भोगाय मुमुक्षुभ्यो मोक्षप्रदानाय बुभुक्षुभ्यो भोगप्रदानायेत्यर्थः ॥ ४६ ॥

रजकवायकादिनिग्रहानुग्रहकर्तृत्वं युवयोस्तत्तत्कर्मसापेक्षत्वादित्याह । नहीति ॥ ४७ ॥

नियुज्यते एवं कुरु इत्येवमनुशिष्यते इत्येष पुंसः अनुशिष्टस्य महान् त्वत्कृतोऽनुग्रहः ॥ ४८ ॥

---

भाषा टीका ।

फिर बोला हे प्रभो ! मेरा जन्म सफल हो गया मेरे कुल को आपने पवित्र करदिया आप के आगमन से मेरे पितर तथा देवता सब तृप्त हो गये ॥ ४५ ॥

आपतो संपूर्ण जगत् के परम कारण हो इस जगत् के कल्याण ताथ पालन के वास्ते अंशोंसहित अवतीर्ण भये हौ ॥४६॥

इत्यभिप्रेत्य राजेन्द्र ! सुदामा प्रीतमानसः ।
शस्तैः सुगन्धैः कुसुमैर्माला विरचिता ददौ ॥ ४९ ॥
ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ।
प्रणताय प्रपन्नाय ददतुर्वरदौ वरान् ॥ ५० ॥
सोऽपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ।
तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥ ५१ ॥
इति तस्मै वरं दत्त्वा श्रियं चान्वयवर्धिनीम् ।
बलमायुर्यशः कान्तिं निर्जगाम सहाग्रजः ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे मथुरापुरप्रवेशो नाम
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

भाषा टीका ।

आप सब के सुहृद हो जगत् के आत्मा हो आपकी विषम दृष्टि नहीं है आप सब भूतों पर सम हो भजने वालों को फल देने वाले हो ॥ ४७ ॥

सो आप अब मुझ भृत्य को आज्ञा दो आप दोनों को मैं क्या करूं आप का जो कुछ आज्ञा करना है सो तो भृत्य पुरुष पर अनुग्रह करना है ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यभिप्रेत्य इत्येवं विज्ञापयन्नभिप्रेत्य तन्मतं ज्ञात्वा॥४९—५१॥

अन्वयवर्धिनीं वंशे वृद्धिमतीमित्यर्थः । अप्रार्थितं श्रीप्रभृतिकञ्च दत्त्वा ततो निर्जगामेति ॥ ५२ ॥

स्वैरंचरन्मधुपुरे रजकं निकृत्य कृष्णः प्रदाय च वरानथ वायकाय ।
मालाकृतं समनुकम्प्य चकार कुब्जामृज्वीं धनुश्च सहसा नमयन्नभञ्ज ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अभिप्रेत्येति लज्जादिना ताभ्यां साक्षादनुक्तमपि मालाकारस्य स्वस्य गृहागमनेन मालाविशेषविषयदृष्ट्या च सम्भाव्येत्यर्थः । हे राजेन्द्रेति महाराजस्यापि ता दुर्लभा इति सूचयति । यद्वा । तद्भाग्यविशेषं बोधयति न सम्बोधयति । शस्तैः संवर्णसौकुमार्यादिगुणैर्मङ्गलकरत्वान्मङ्गलैरिति वा । विरचिता इति । यासु निजकुटुम्बैः सह स्वयं विशेषेण रच्यमानासु तौ सहसैवानुगतौ ता विरचिताः सतीर्ददावित्यर्थः । पूजायान्तु शैघ्र्येण पूर्वं । सिद्धा राजादियोग्या एव ददाविति भावः । अन्यथा विरचिता इति व्यर्थं प्रीतमानसत्वेन दानप्रकारस्तु श्रीपराशरेणोक्तः । "ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः । चारूण्येतानि चैतानि प्रददौ स विलोभय"न्निति ॥ ४९ ॥

प्रणताय मालादानानन्तरं कृताष्टाङ्गप्रणामाय प्रपन्नाय रक्ष रक्षेत्यादि प्रकारेण शरणागताय । यद्वा प्रथमत एव भक्ताय ॥ ५० ॥

ननु के ते वराः तांश्च परमैकान्ती सुदामा स्वयं वृतवान् न वा तत्राह । सोऽपीति । तस्मिन् श्रीकृष्ण एव । ननु कथं पूर्वभक्तिरीत्या श्रीसङ्कर्षणेऽपि न वृतवान् तत्राह । अखिलानां सङ्कर्षणादीनां स्वांशानामात्मनि मूलस्वरूपेऽशिनीत्यर्थः । तेन सा च सिध्येदिति विविक्तपुरुषार्थतयेति भावः । पूर्वन्तु समयुग्मतावर्णनं तदग्रजतया तस्यापि गौरवलीलासारादेकमेव द्विधा प्रकाशमानं तत्तद्धर्मैकपरमैश्वर्य्यस्याश्रययोग्यं भवत्येवेति प्रशंसातात्पर्य्येणेति भावः । परां श्रेष्ठां निरुपाधिदयाम् । आद्यश्चकारस्त्वर्थे द्वितीय उक्तसमुच्चये ॥ ५१ ॥

इति एतदप्रार्थितान् । ननु कथं वदान्यशिरोमणिरसौ स्वयमन्यान् वरान् न ददौ तत्राह । श्रियञ्चेत्यादि । द्वितीयचकारोक्तं समुच्चिनोति । अन्यत्तैः । अन्वयवर्द्धिनीमितीवन्तपाठ एव तेषां सम्मतः । मतुपा व्याख्यातत्वात् । वर्द्धनं वर्द्धः अन्वयवर्धोऽस्तीति तत्र वंश इति सप्तम्यन्तासमस्तपाठे तद्वंशेऽनवच्छिन्नां श्रियमित्यर्थः । समस्तपाठे वंशवृद्धिश्चेत्यर्थः । तदुक्तं श्रीपराशरेण"बलहानिर्न ते सौम्य ! धनहानिस्तथापि वा । यावद्दिनानि तावच्च न विनङ्क्ष्यति सन्ततिः । भुक्त्वा च विपुलान् भोगांस्त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य दिव्यलोकमवाप्स्यसि । धर्मे मनश्च ते भद्र ! सर्वकालं भविष्यति । युष्मत्सन्ततिजातानामायुर्दीर्घं भविष्यति । नोपसर्गादिकं दोषं युष्मत्सन्ततिसम्भवम् । अवाप्स्यति महाभाग ! यावत्सूर्य्यो भविष्यती"ति । बलमा-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

वुरिति पाठे च तत्तत्सर्वं श्रयाचन्तर्भूतमेव ज्ञेयम्। अग्रजेन सह वरान् दत्त्वा तेनैव सह निर्जगामेत्यर्थः॥ ५२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् एकचत्वारिंशोऽध्यायः॥ ४१॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकचत्वारिंशोऽध्यायः॥ ४१॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीत्थं विज्ञापयन्निति शेषः हे राजेन्द्र! अभिप्रेत्य तयोरभिमतं ज्ञात्वा प्रीतमानसः सुदामा प्रशस्तैः सुगन्धिभिश्च कुसुमैर्विरचिता मालास्ताभ्यां ददौ॥ ४९॥

ताभिर्मालाभिरलंकृतौ वरदौ तस्मै प्रपन्नाय शरणागताय वरानिष्टार्थान् ददतुः॥ ५०॥

के ते वरास्तेन वृता यान् ददतुरित्यत आह।सोऽपीति। अखिलस्य चिदचिदात्मकस्य जगतः आत्मनि तस्मिन् भगवत्यचलां भक्तिं भागवतेषु सौहार्दं मैत्रीमानुकूल्यं भूतेषु भगवच्छरीरभूतचेतनात्मकेषु दयां स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वरूपां वृतवान्॥५१॥

इतीत्थं यथावृत्तं तस्मै वरं दत्त्वा तेनावृतामन्वयवर्द्धिनीं वंशवृद्धिमतीं श्रियं तथा बलादींश्च दत्त्वा सहाग्रजस्ततो निर्जगाम तत्र बलं देहधारणसामर्थ्यम्॥ ५२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकचत्वारिंशोऽध्यायः॥ ४१॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकोनचत्वारिंशोऽध्यायः॥ ३९॥ ४१॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

विरचिता इति। तदागमनं श्रुत्वा तदर्थं निजकुटुम्बैः सह स्वयं रच्यमानायां यस्यां तौ सहसैवागतौ तां विरचितां सतीं ददावित्यर्थः। पूजायां तु दैर्घ्येणान्या इति भावः। ताभिरित्येकशेषत्वात् तया अन्याभिश्चेत्यर्थः॥ ४९—५२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकचत्वारिंशोऽध्यायः॥ ४१॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यथात्रालौकिकवस्तुत्वं भगवद्धर्मेणैवाज्ञा बोधितेति वाक्यापेक्षाभावात् न किंचिदुक्तवन्तौ स्वयमेव ज्ञात्वा यत्कृतवांस्तदाह। इत्यभिप्रेत्येति। राजेन्द्रेति संबोधनं केचन सेवकाः अभिप्रेतार्थमपि जानन्तीति नाश्चर्यमेतदिति ज्ञापनार्थं तादृशाः सेवकाः सार्वभौमे एव भवन्तीतीन्द्रपदं पदार्थे निदिश्यते प्रीतमानसो जातः। आज्ञा प्राप्तेति ततः शस्तैः शास्त्रतः स्तुतैः स्वरूपतश्च सुगन्धैः मल्लिकादिभिः कुसुमैर्विरचितामेकामेव मालां ददौ माला विरचिता इति वा पाठः। एकवचने तु भगवति दत्ते भगवानाविष्ट इति तत्रापि बलभद्रेऽपि स्फुरति प्रतिबिम्बवत्। अन्यथा अपि माला दत्तवान् इति ज्ञातव्यम्॥ ४९॥

ततो भगवान् वरं दत्तवानिति वक्ष्यन् तत्कृतं शोभातिशयमाह। ताभिः स्वलंकृताविति। उत्कृष्टमालाभिः सुष्ठु अलंकृतौ ततः प्रीतौ जातौ सदानन्दरमणकर्तारौ फलसाधनरूपौ सर्वसेवकैः सह प्रीतौ निर्विवादौ प्रणताय नम्राय विनीताय कर्मज्ञानमार्गयोरपि फलदानयोग्याय प्रपन्नाय शरणागताय भक्तिमार्गेऽपि फलदानयोग्याय यतो वरदौ अतो वरान् ददतुः वरदेश्वरत्वं नाविर्भावितं किं तु वरदत्वमेव वरान् दास्यावः प्रार्थयेत्युक्तवन्तावित्यर्थः॥ ५०॥

अथवा स्वयं वरान् दत्तवन्तावेव सोऽपि पृथग्याचितवानिति वदाह। सोऽपि वव्र इति। भगवता दत्तवरोऽपि कृतार्थोऽपि अचलां भक्तिं वव्रे विषये वैलक्षण्याभावाय तस्मिन्नित्येकवचनं ज्ञानापरपर्यायरूपा सा भक्तिरिति ज्ञापयितुमाह। अखिलात्मनीति। अनेन सर्वत्र विषमा दृष्टिरपि परिहृता। तथापि भक्तैर्वैशिष्ट्यं वक्तुं भेदसहिष्णुत्वाय सर्वोत्तमत्वं स्थापयितुमन्यद्वरद्वयमाह। तद्भक्तेषु च सौहार्दमिति। चकाराद्भगवदीयव्यतिरिक्तेष्वौदासीन्यं भूतेषु दीनेषु सर्वेषु च परामुत्कृष्टां दयां लोकोत्तरां यया ते कृतार्था भवन्ति चकारात्प्रश्रयादिकमपि स्वोत्कर्षेषु प्रार्थितं भवति॥ ५१॥

प्रार्थितं च दत्तवानित्याह। इतीति। एवंप्रकारेण प्रार्थितं वरं तस्मै दत्त्वा स्वयं पुनः वंशं तद्वृद्धिं तत्र सर्वत्र श्रियः अविच्छेदं श्रियं च दत्तवान्। एतद्बाह्यम्। आभ्यन्तरं च दत्तवानित्याह। बलमिति। बलं देहसामर्थ्यम् आयुः यशः कान्तिं सौन्दर्यं चेति एवं दत्त्वा ततो भक्तगृहान् निर्जगाम अत्र दाने भगवानेव कर्ता बलभद्रः सहभावमात्रमिति निर्गमने वा प्राधान्येन निर्गत इति। सहाग्रज इति। बलभद्रसहितः एतदर्थमेवावतीर्णाविति गमनायद्वयकर्तृत्वं सूचितम्॥ ५२॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम् अष्टत्रिंशाध्यायविवरणम्॥ ३८॥ ४१॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भो सुदामन्! यस्तवाभिप्रायस्तमेव कुर्विस्यैवावयोराज्ञेति चेत् भद्रं भद्रमित्याह। इत्यभिप्रेत्येति। एवं स्वाभिप्रेतं कृत्यं प्राप्येत्यर्थः। तर्हि माला दीयन्तामित्यभिप्रायेणैवाज्ञां ज्ञात्वेति भावः। सौरभ्यसौरूप्यसौकुमार्यैरत्यतिशयवद्भिः मालामित्ये-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कचवचनेन भ्रातृभ्यां तुल्यतयैव दीयमानास्वपि मालासु मध्ये एवालक्षितं कृष्णाय सर्वश्रेष्ठामेकां मालां ददावित्यर्थः ॥ ४६—५१ ॥

श्रियं चेति श्रीयलादीनां तस्य ग्रहीतुमनपेक्ष्यत्वेऽपि स्वस्य दातुमपेक्ष्यत्वाद्ददाविति तस्य भक्तवात्सल्यमेवं सर्वत्रैव प्राय इति ज्ञेयम् ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

एकचत्वारिंशकोऽयं दशमेऽजनि सङ्गतः ॥ ४१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अभिप्रेत्य तयोरभिमतं ज्ञात्वा ॥ ४६ ॥

ताभिर्मालाभिः ॥ ५० ॥

स इति

स भक्तिं केवलां वव्रे भक्तसौहार्दसंयुताम् ।
सर्वभूतदया युक्तां श्रेष्ठां तामुत्तरोत्तराम् ॥ ५१ ॥

इति तत्प्रार्थितं वरं दत्त्वा तेनाप्रार्थितामन्वयवर्द्धिनीं वंशवृद्धिमतीं श्रियं तथा बलादिकञ्च दत्त्वा ततो निर्जगाम ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकचत्वारिंशाध्यायार्थप्रकाशः ॥ ४१ ॥

---

भाषा टीका ।

हे राजेन्द्र ! इस प्रकार से मनमें विचार करके सुदामा बडा प्रसन्न भया फिर सुंदर सुगंध वाले फूलों से बनाई हुई माळा पहिराई ॥ ४९ ॥

उन सब मालाओं से अच्छे अलंकृत होकर कृष्णराम दोनों सब अनुचरों के सहित प्रसन्न भये फिर नमस्कार करते हुये शरणागत माळाकार को वरदान देते भये क्योंकि आप सब के वर देने वाले हैं ॥ ५० ॥

उस माळा कारने भी उन भगवान् के विषै अचल भक्ति मांगी और उनके भक्तों में सुहृदभाव तथा सब भूतों में परम दया का होना मांगा ॥ ५१ ॥

इस प्रकार से भगवान् बलदेवजी के सहित वरदान देकर और वंश के बढाने वाली लक्ष्मी को और बल आयु यश कान्ति ये सब उसको देकरके वहां से चले गये ॥ ५२ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे एकतालीसमें अध्याय की भाषा टीका समाप्त ॥ ४१ ॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## ॥ द्विचत्वारिंशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीताङ्गविलेपभाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यान्तीं प्रहसन्रसप्रदः ॥ १ ॥
का त्वं वरोर्वेतदुहानुलेपनं कस्याङ्गने वा कथयस्व साधु नः ।
देह्यावयोरङ्गविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति ॥ २ ॥

सैरन्ध्र्युवाच

दास्यस्म्यहं सुन्दर ! कंससम्मता त्रिवक्रनामा ह्यनुलेपकर्मणि ।
मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥ ३ ॥
रूपपेशलमाधुर्यहसितालापवीक्षितैः ।
धर्षितात्मा ददौ सान्द्रमुभयोरनुलेपनम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भिदा ।
वधस्तद्रक्षिणां कंसारिष्टं रङ्गोत्सवादि च ॥

अङ्गविलेपाश्चन्दनादयः गृहीतान्यङ्गविलेपानां भाजनानि यया ताम् रसप्रदः सुखप्रदः ॥ १ ॥

हे अङ्गने हे वरोरु इति सोपहासं सम्बोध्य पृच्छति त्वं का एतदनुलेपनं कस्य वा उ ह इति निपातौ भ्रूविक्षेपयुक्ते वितर्के अस्मत्सेवा सद्यः फलत्येवेत्याह । न चिरादिति ॥ २ ॥

तिस्रो ग्रीवोरःकटयो वक्रा इति त्रिवक्रेति नाम यस्याः सा अनुलेपसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ॥ ३ ॥

रूपं चाङ्गसौष्ठवं पेशलञ्च सौकुमार्यं माधुर्यञ्च रसिकता हसितञ्चालापाश्च वीक्षितञ्च तैर्धर्षितात्मा मोहितचित्ता सान्द्रं घनम्॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

राजपथेनेति । तस्मिन् लोकसुखदातृत्वं दर्शयति । युवतीमिति । कामिनामिति पदद्वये नान्यत् सौष्ठवं स्वस्तीति बोधितं यान्तीं कंसगृहं गच्छन्तीं तथा च तस्या एवोक्तिः । श्रीहरिवंशे । राज्ञः स्नानगृहं यामीति प्रकर्षेण साकूततया हसन् स्वभावत एव रसप्रदः । अत्र तु रसः कुब्जायां श्रृङ्गारः सहचरेषु हास्यः सर्वत्र त्वद्भुतश्च तं तं प्रदातुमित्यर्थः ॥ १ ॥

साधु सत्यं वा लज्जया यदुक्तिवैकल्यं तद्भिन्नैव वा यदि स्यात् । अङ्गविलेपनम् अस्मद्गात्रयोग्यं तथा च तत्रैव । "तामुवाच हसन्तीं तु कृष्णः कुब्जामवस्थिताम् । उभयोर्गात्रसदृशं दीयतामनुलेपन"मिति । किञ्च । "वयं विदेशातिथयो मल्लाः प्राप्ता वरानने ! । द्रष्टुं धनुर्महं दिव्यं राष्ट्रञ्चैव महर्द्धिमत्" इति । सम्बोधनद्वयमुपहासेन । वरौ ऊरू यस्या इति न केवलं तावेव तादृशौ अपि त्वङ्गं मूर्तिरेव प्रशस्तं यस्या अस्तीति सर्वे गुणाः सन्त्येव तत्रैकमेवात्र बहुत्वं दोष इत्यभिप्रायात् ॥ २ ॥

त्रिवक्रनामेति पुंवद्भाव आर्षः । हि प्रसिद्धौ । तथाच तत्रैव "कुतश्चागम्यते सौम्य ! यन्मां त्वं नावबुध्यसे । महाराजस्य दयितां नियुक्तामनुलेपने" इति । मया भावितं साधितं तदनुलेपनं युवामिति सामान्योक्त्या श्रीरामेऽपि तदर्हताप्राप्तिस्तत्सम्बन्धेनैवाभिप्रेयते । हे सुन्दरेति । तस्यैव सम्बोधनेन तदेकतात्पर्यत्वात् । युवां विनाऽन्येषु बहुषु श्रेष्ठो यः सोऽपि कोऽर्हति । यद्वा । अन्यतमः युवाभ्यामत्यन्तभिन्न इति युष्मदीयाः सखायोऽप्यर्हन्तीति अन्यत्तः । यद्वा । तवाहं दास्यस्मीति भावविशेषेणादावुक्त्वा पश्चात् तत्प्रश्नोत्तरमाह । कंसेत्यादिना ॥ ३ ॥

रूपेति तैर्व्याख्यातं यद्वा । माधुर्यं स्वभावतो मनोहरत्वं तदुक्तं किमेतदद्भुतमिव वासुदेवेऽखिलात्मनीत्यादि तच्च रूपं पेशलं सौन्दर्यसौष्ठवयुक्तं वाचः पेशैरितिवत् तथा तत्रैव । हसितेनालापेन वीक्षणेन च विशेषत इत्यर्थः । रूपादिभिरिति श्रीकृष्णस्यैवेति ज्ञेयं तत्रैव भावस्य स्वयमभिव्यञ्जयिष्यमाणत्वात् । उभयोरपि योग्यं तदिच्छया ददौ समर्पितवती । तथाच श्रीविष्णु-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुराणे "श्रुत्वा तमाह सा कृष्णं गृह्यतामिति सादरम् । अनुलेपञ्च प्रददौ गात्रयोग्यमथोभयो" रिति । अत्र दानं हस्ते समर्पणं गात्रे लेपनं वा । पूर्वत्र सान्द्रमिति तत्संज्ञकं ततः स्वयहनयोग्येन स्वल्पेनापि सहचरवृन्दसहितयोः पर्याप्तिरभूदिति बोध्यते उत्तरत्र सर्वाङ्गव्याप्तमित्यर्थः । उभयत्र मालाकल्पानुपघातपूर्वकानुलेपनं ज्ञेयम् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ त्रिवक्रासमर्पितानुलिप्ताङ्गरागः ऋज्वीकृतत्रिवक्रो निर्भिन्नचापश्चापशकलघातिततत्पालकः समुत्पादितकंसभयः पुनः स्वनिकेतनमाविवेशेत्याह द्विचत्वारिंशेन । अथेत्यादिना । अथ मालाकारानुग्रहानन्तरं राजमार्गेण व्रजन् गृहीतान्यङ्गविलेपनानां सुगन्धिचन्दनानां भाजनानि पात्राणि यया वरं सुन्दरमाननं यस्यास्तां कुब्जां विलोक्य सुखप्रदो भगवान् प्रहसन् तां युवतीं पप्रच्छ ॥ १ ॥

प्रश्नप्रकारमेवाह । का त्वमिति । हे अङ्गने! हे वरोरु इति सोपहाससंबोधनं त्वं का इहास्यां पुर्य्यामितदनुलेपनं कस्य वा कस्मै नयसीत्यर्थः । साधु यथार्थं नोऽस्मभ्यं कथयस्व कस्मै चिन्नवतु किन्तूत्तममिदमनुलेपनमावयोरावाभ्यां देहि ततोऽनुलेपनदानेन हेतुना तवाचिरादेव श्रेयो भविष्यति ॥ २ ॥

इत्थमापृष्टा याचिता च सा प्राह । दासीति । हे सुन्दरवराहं कंसस्य सम्मता तस्य दासी त्रिवक्रनाम्नी नित्यमनुलेपनकर्मणि तेन नियुक्तास्मि तिस्रो ग्रीवोरुकट्यः वक्रा यस्याः सा त्रिवक्रेत्यन्वर्थं नाम कंससम्मतत्वे हेतुमाह । मद्भावितं मया साधितमनुलेपनं भोजपतेः कंसस्यातीव प्रियमतोऽहं तत्संमतेति भावः अतस्तद्दासः प्रियमनुलेपनं वां भवन्तौ विना अन्यः को वा पुमान् तदर्हतीति युवामेवार्हावित्यर्थः ॥ ३ ॥

रूपेति । भगवत इत्यादि भगवतः रूपादिभिः मोहित आत्मा चित्तं यस्याः सा सान्द्रं तदनुलेपनमुभयोर्ददौ तत्र रूपमङ्गसौष्ठवं पेशलं सौकुमार्य्यं माधुर्य्यं रसिकत्वम् ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ निर्गमनानन्तरं धात्रीं सैरन्ध्रीं दृष्ट्वा पप्रच्छेत्यन्वयः गृहीताङ्गविलेपभाजनां गृहीतचन्दनपात्रां कुब्जां वक्रशरीरां वयसा युवतीं तरुणीं वचसा रसप्रदः आनन्दप्रद्रः कामरागप्रदो वा ॥ १ ॥

हे वरोरु ! साधु सत्यं
निर्दोषे पेशले सत्ये साधुशब्दं प्रयुञ्जत इति ॥ २ ॥

यच्छास्त्रविहितं ननु तदेव दासी अनुलेपकर्मणि चन्दनसौरभ्यकर्मणि सम्मता अविप्रतिपन्ना अन्यतमः अन्येष्वपि श्रेष्ठतमः ॥ ३ ॥

धर्षितात्मा अस्ववशमनाः वशीकृतमना वा ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

युवामिति । त्वत्सम्बन्धेन श्रीरामोऽप्यर्हतीति भावः ॥ १ ॥ ३ ॥

माधुर्य्यं स्वभावतो मनोहरत्वं तच्च रूपपेशलं सौन्दर्य्यसौष्ठवयुक्तं तथा तत्रैव हसितादिना विशेषत इत्यर्थः । रूपादिभिरिति श्रीकृष्णस्यैव ज्ञेयम् । उभयोरपि योग्यं तदिच्छया ददौ तथा च वैष्णवे "श्रुत्वा तमाह सा कृष्णं गृह्यतामिति सादरम् । अनुलेपनं प्रददौ गात्रयोग्यमथोभयोरिति" ॥ ४—३८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

> एकोनचत्वारिंशे तु हरेरद्भुतकर्मणः ।
> स्वासक्तयर्थं राजसानि वीर्यं तस्य निरूप्यते ॥
> अलौकिकं लौकिकं हि प्रसन्नः कुरुते फलम् ।
> नान्यस्तत्र फलं दातुं शक्नोति हि यतः कथा ॥
> लौकिकालौकिकत्वेन सामर्थ्यं लक्षणं पुनः ।
> निरूप्यते स्वदोषस्य निवृत्त्यै स तथापि हि ॥
> न निवर्त्तेत इत्युक्त्वा मल्लरङ्गकथापरा ।
> एतावता क्रियैकमा हरिरत्र निरूपितः ॥
> प्रमाणानां फलं ह्येतत् कार्यं चापि निरूपितम् ।
> कुब्जाप्यत्र धनूरूपा वायुना तु तथा कृता ॥
> आध्यात्मिको रुद्ररूपः शिष्टौ धनुषि संस्थितौ ।
> यत्पालकं तस्य खण्डौ साधनं नाशने मतम् ॥
> कालोऽपि विपरीतोऽभूद् दुर्निमित्तैः प्रतिक्षिपाम् ।
> बुद्धिर्हि न हिता तस्य प्रतिकूलेऽखिलं हरौ ॥

पूर्वाध्यायान्ते सुदाम्नो भवनान्निर्गत इत्युक्तं तत्र पुनरन्यस्य गृहे गमनं संभवतीति तद्व्यावृत्त्यर्थं भिन्नप्रक्रमेण स्वपूर्वलीलयैव भगवान्प्रचलित इत्याह । अथेति । राजमार्गेणैव व्रजन् स्त्रियं ददर्शेति । स्त्रियो हि भगवतः कृपापात्रमिति तत्र भगवतो नान्यन्त्रप्रयासः कालेनैव ताः भगवदीयाः क्रियन्ते "तत्प्रियार्थं संभवन्तु सुरस्त्रिय" इत्यादिवाक्यात् । अतः कुब्जा मध्ये मिलिता अलौकिकं तत्समीकरणमिति अलौकिकसामर्थ्यज्ञापनाय चतुष्पथ एव तथा करणम् । माधव इति । लक्ष्मीपतित्वात्तदंशभूता सेति तस्या उद्धारः कर्त्तव्यः तस्या नामाप्रसिद्धमिति जात्यादिकमेव निरूपितम् । स्त्रियमिति । विशिष्टं भोगयोग्यं गृहीतमङ्गविलेपभाजनं यया सा हि स्वगृहे अङ्गविलेपनं सज्जीकृत्य कंसार्थं नयति भगवति च प्रविष्टे ततो राजधर्मा निवृत्ताः भगवत्येव समागताः अत एव वस्त्राणि चन्दनं माला राजभोग्याः भगवतैव गृहीताः तां कुब्जां निर्गतपृष्ठभागां युवतीं वयसोत्तमां दर्शनेऽप्युत्तमामाह । वराननामिति । भोगे परमयोग्या मुख्ये उत्ताने अदृष्टसामर्थ्यात् अतोऽर्धफलां तां मध्ये मार्गे दृष्ट्वा पप्रच्छ यान्तीमेव न तु सा भगवन्तं दृष्ट्वा स्थिरीभूता भोगाभावनिश्चयाद्भक्तिज्ञानादावनधिकारात् दर्शने मनोभवपीडासम्भवात्

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

गच्छन्तीव सा जाता। प्रहसन्निति। तस्याःसर्वमेव विवेकं दूरीकुर्वन् परिभाषणं कृतवान्। यथा सा पश्यति कृपापात्रं भगवान् स्वयमप्याकार्य स्वस्मिन् प्रवर्त्तयतीति ज्ञापयितुमाभाषणं कृतवान् कुब्जेयमपूर्वा गच्छतीति लोकरीत्या प्रहसनम्। ननु गच्छन्तीकिमित्याकारितवान् तत्राह। रसप्रद इति। रसमात्मस्वरूपं कामरसं प्रकर्षेण ददातीति॥ १॥

प्रश्नमाह। का त्वमिति। वरोर्विति संबोधनं भोगयोग्यतां सूचयति। उ ह अपि च। एतदनुलपेनं कस्य त्वं वा कस्येति अङ्गनेति पुनः प्रीत्या संबोधनं तव विशेषप्रीत्या भोगयोग्यतां संपादयिष्यामीति ज्ञापनार्थं चेत्यनादरे नोऽस्माकं संबन्धिपरिज्ञाने न किंचित् प्रयोजनमिति। साधु यथा भवति तथा नोऽस्मभ्यं कथयस्व। किं च। आवयोरेतदनुलेपनमुत्तमं प्रतीयत इति देहि। अङ्गविलेपने दत्ते अङ्गमेव दास्यामीति भगवदभिप्रायः तदेवाह। श्रेय इति। ततस्ते आचिरादेव श्रेयो भविष्यति। यद्यपि दानफलं देशादीनां प्रशस्तत्वाभावात् शीघ्रं न भविष्यति तथापि दर्शनमपि दाने शीघ्रं सफलं भविष्यतीति तथोक्तिः॥ २॥

सा तु सैरन्ध्री अन्तःपुरदासिका बहिस्तिष्ठति अभर्तृका च सा स्वस्वरूपं निरूपयति। दास्यस्मीति स्वभावतो जात्यैव दासी सुन्दरवर्येति सम्बोधनात् त्वं चेत् कृपां करिष्यसि तथैव भविष्यामीति राजदास्योऽपि वेश्याप्रायाः गुप्ताः परम् मनुलेपककर्मणि चतुःसमनिर्माणे सम्मता सर्वेषामेव अस्मिन्नर्थे अनुलेपभोक्ता राजा प्रमाणमिति तस्यापि सम्मतिमाह। मद्भावितमिति। मया भावितं भागशो निर्मितमङ्गविलेपनं भोजपतेः कंसस्यातिप्रियम् अतः युवां भवन्तौ विना अन्यतमः को वा अर्हति भोजपतेः प्रियमेव न तु भोजपतिरर्हतीति॥ ३॥

यद्यपि राजकीयं तत् ततो जीवति राज्ञि अर्हतु वा मा वा तथापि नान्यस्मै दातुमुचितं तथापि कामेन भगवद्वशा भूत्वा दत्तवतीत्याह। रूपेति। रूपं भगवतो नीलमेघश्यामं तस्य पेशलं कोमलता अङ्गनानां भोगयोग्यता माधुर्यं तस्यैव कोमलताया अयमधिको गुणः माधुर्ययुक्तं च हसितं हासितपूर्वकमाभाषणं च। वीक्षितानि च रूपं हसितं भावितं वीक्षणमिति देहेन्द्रियान्तःकरणात्मनां वशीकरणसाधनान्येतानीति तैर्धर्षितात्मा स्वरूपाच्याचितदेहेन्द्रियादिरूपा सान्द्रं गाढम् अन्तः स्थितमुभयोरनुलेपनं ददौ उभयत्रापि मनःप्रीतिरिति भगवतापि तथैव याचितमिति॥ ४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

द्विचत्वारिंशके कुब्जा हास्योन्नमनचापभित्।
कंससेनावधारिष्टक्षणरङ्गोत्सवाद्यभूत्॥

अङ्गविलेपादन्दनादयः रसं कुब्जायाः श्रृङ्गारं स्वसहचरेषु हास्यं सर्वत्र स्वद्भुतं प्रददातीति सः इयं स्वरूपभूतायाः साक्षाद्भूकेः सत्यभामाया अंशभूता अन्या एव विभूतिः पृथिवी प्रसिद्धा अतस्त्वा सहैन्यैनैव परस्सहस्त्रसुदासुरभारसुग्नत्वं स्वकुब्जेन दर्शयन्ती स्वयं गन्धगुणं चन्दनादिमिषेणोपहरन्ती पृथिव्येव परमभक्ता प्रीत्या पथि सङ्गताभूत् भगवांश्च सानन्दमेव गन्धं गृहीत्वा स्वीयं माधुर्यमेव रसं ददानो भो मद्भक्ते पृथ्वि! सम्प्रत्येव कंसादि स्वभावान् मया पहतानेव विद्धि तदधुनैव त्वं सुखा भवेति तामाश्वासयन्नानन्दमग्नाम् ऋज्वीं चक्रे इत्येवैतत् प्रकरणतत्त्वमिति केचिदाहुः॥ १॥

हे अङ्गने हे वरोर्विति सोपहासं सान्तःस्पृहं च सम्बोध्य पृच्छति। कात्वङ्कस्य वा एतदनुलेपनम्॥ २॥

दास्यस्मीत्यन्यस्य सम्बन्धिपदस्यानुपादानात् प्रत्यासत्त्या तवेति द्योतनं तवेत्युक्ते अनृतं भावव्यक्तिश्च स्यादिति तत्र प्रयुक्तं सुन्दरत्यकवचनेनैकस्मिन् कृष्ण एव स्पृहा युवामिति द्विवचने स्वीयभावस्यावहित्था च द्योतिता त्रिवक्रो त्रीवोरःकट्यो वक्रा यस्याः सा नाम यस्याः सा पुंवद्भाव अर्थः हि एवार्थे अनुलेपनकर्मण्येवाहं कंससम्मता न त्वन्यत्र कुब्जदोषादिति स्वशुद्धिर्ज्ञापिता॥ ३॥

रूपेण सौन्दर्येण पेशलैः सम्मोहनकर्मणि दक्षैर्माधुर्याद्यैर्धर्षितचित्ता "दक्षे तु चतुरपेशलपटव" इत्यमरः॥ ४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्विचत्वारिंशे कुब्जोन्नमनधनुर्भञ्जनतत्पालवधादिकं भगवत्कर्म वर्णयति। अथेति। गृहीतान्यङ्गविलपानां चन्दनादीनां भाजनानि यया ताम् रसप्रदः भक्तिरसप्रदः॥ १॥

भावि उर्वादिसौन्दर्य्यं सिद्धवदालक्ष्य सम्बोधयति। हे वरोरु त्वं का एतदनुलेपनं कस्य वा साधु यथार्थं नोऽस्मभ्यं कथयस्व ततः अङ्गविलेपार्पणेन ते श्रेयः न चिरात् सद्य एव भविष्यति॥ २॥

हे सुन्दरवर्य्य! त्रिवक्रो त्रीवोरःकट्यो वक्रा इति त्रिवक्रेति नाम यस्याः सा भोजपतेर्दासी अहमस्मि भोजपतेरिति सर्वत्र युज्यते अनुलेपनकर्मणि भोजपतेः संमता मद्भावितं मया भावितं वासितं संस्कृतमनुलेपनं "भावितं वासिते प्राप्ते" इति हैमः भोजपतेः अतिप्रियम् तद्राज्ययोग्यमनुलेपनं युवां विना अन्यतमः को ऽर्हति न कोऽपि युवां तु अर्हथेत्यर्थः॥ ३॥

रूपादिभिर्धर्षितो मोहितः आत्मा चित्तं यस्याः सा सान्द्रं घनम् तत्र पेशलं दक्षत्वं "चारौ दक्षे च पेशल" इत्यमरः माधुर्य्यं रसिकत्वम्॥ ४॥

---

भाषा टीका।

श्रीशुकदेवजी बोले इसके अनन्तर माधव भगवान् जब राज मार्ग में जाने लगे तब अङ्गविलेपन चंदन का वरतन लियी हुई एक स्त्री को देखते भये उस कुब्जा को जाती हुई देखकर सब के रस देने वाले भगवान् उस वराननासुंदरी से पूंछते भये॥ १॥

हे वरोरु! तू कौन है हे अंगने! यह किसके लेपन का चंदन है सो अच्छी तरह से हम से कह दे यह सुंदर अंगलेपन चंदन है सो हम दोनों को देदे तिस के पीछे शीघ्रही तेरा कल्याण होजायगा॥ २॥

ततस्तावङ्गरागेण स्ववर्णेतरशोभिना । १
सम्प्राप्तपरभागेन शुशुभाते ऽनुरञ्जितौ ॥ ५ ॥
प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम् ।
ऋज्वीं कर्तुं मनश्चक्रे दर्शयन् दर्शने फलम् ॥ ६ ॥
पद्भ्यामाक्रम्य प्रपदे द्व्यङ्गुल्युत्तानपाणिना ।
प्रगृह्य चुबुके ऽध्यात्ममुदनीनमदच्युतः ॥ ७ ॥
सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा ।
मुकुन्दस्पर्शनात्सद्यो बभूव प्रमदोत्तमा ॥ ८ ॥

१ सुवर्णेतरेति विज० पाठः

भाषा टीका।

सैरंध्री कुब्जा बोली हे श्याम सुंदर ! मै कंस की दासी हूं उस की बडी संमत हूं त्रिवक्रा मेरा नाम है मैं अनुलेप कर्म में रहती हूं मेरा बनाया चंदन कंस राजा को बडा प्रिय है अब तो आप दोनों के विना इस चंदन के योग्य और कौन होगा ॥ ३ ॥

फिर वह कुब्जा भगवान् के रूप मधुरता सुंदरता हसना बोलना देखना आदिक चेष्टाओं से वशी होकर सुंदर चंदन को दोनों रामकृष्ण के अर्थ देती भई ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्ववर्णेतरशोभिना रामकृष्णयोर्वर्णाभ्यामितरः पीतादिवर्णस्तेन शोभितुं शीलं यस्य तेन सम्प्राप्तपरभागेन सम्प्राप्तः परो नाभेरुपरितनो भागो येन सः सम्प्राप्तः परभागः शोभातिशयो येनेति वा तेनानुरञ्जितौ ॥ ५ ॥

स्वदर्शने सद्यः फलं दर्शयन् ॥ ६ ॥

तस्याः प्रपदे पादाग्रद्वयं पद्भ्यामापीड्य द्वे अङ्गुल्यावुत्ताने उन्नते यस्मिन् पाणौ तेन चुबुके मुखस्याधोभागे धृत्वा ऽध्यात्मं देहमुन्नमयामास ॥ ७ ॥

तदैवर्जुसमानमङ्गं यस्याः बृहत्यौ श्रोणी पयोधरौ च यस्याः सा मुकुन्दस्पर्शनादिति मुख्यकारणम् ॥ ८—११ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अनुरञ्जितौ पत्रभङ्गीरचनाविधिना श्रीगण्डवक्षोभुजादिष्वनुलिप्तौ सखिभिस्तयैव स्वयम् ॥ ५ ॥

कुब्जामतएव त्रिवक्रां तत्संज्ञकाम् ऋज्वीं कर्तुमिति । अनृज्वीमृज्वीं कर्तुमित्यर्थः ऋजुकरणे हेत्वन्तरं रुचिराननामिति । अन्यदैः । तत्र सद्यः फलमापातफलमिति ॥ ६ ॥

तच्च मल्लालङ्कोचितग्रहणप्रावीण्यपूर्वकमेवेत्याह । पद्भ्यामिति द्वे अङ्गुल्यौ मध्यमातर्जन्यौ उत्ताने उपरिकृताङ्गभागे यत्र तेन पाणिना दक्षिणेन वामेन तु पृष्ठावष्टम्भनं ज्ञेयम् । आत्मानं जीवमधिकृत्य वर्तमानमध्यात्मं देहम् इति जीवत्यागपर्यन्तं तद्देहस्य प्रारब्धवशेनापरिहार्यं तत्कुब्जत्वं सूचितम् । अच्युतः निजलीलाविशेषादच्युत इति अतएव तथा प्रग्रहणम् । अन्यथेच्छामात्रेणैव तत्तत्सम्भवात् ॥ ७ ॥

ऋजूनि वक्रतापगमात् अतएव कुब्जतया वक्षोभागादेः स्वल्पत्वादिना पूर्वमसमानानि अधुना तु समानं योग्यं मानं परिमाणं येषां तथा भूतान्यङ्गानि यस्याः तदेव दर्शयति । बृहदिति । न केवलमेतावदेव प्रमदानां मध्ये उत्तमा च बभूव । भगवदङ्गसङ्गानुरूपोत्कर्षमपि लेभे इत्यर्थः । अतोऽत्र मुकुन्दस्पर्शनमेव मुख्यं कारणं ग्रहणादिपरिपाटी तु विनोदमात्रत्वाद्गौणमिति भावः । मुकुन्देति कैमुत्येन हेतुगर्भं यो निजांशेनापि तेन च चिन्त्यमानमात्रेणाप्यशेषसंसारदोषदूरीकरणपूर्वकं सारूप्यादिमुक्तिमपि ददाति तस्य साक्षाद्भूतस्य कियदिदमिति भावः ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्ववर्णेतरशोभिना स्वदेहवर्णविरुद्धवर्णशोभिना ॥ ५—६ ॥

अध्यात्मं शरीरम् उदनीनमत् उन्नमयामास ॥ ७ ॥

ऋजुसमानाङ्गी समानशब्दो रूपपरः ॥ ८...१८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । स्ववर्णेतरशोभिना स्वस्याङ्गरागस्य यो वर्णः यथा हरुधिरवल्लोहितवर्णःतस्मादितरौ यौ वर्णौ तयोःशरीरगतौ विशुद्धौ सितासितवर्णौ ताभ्यां शोभिना अतएव प्राप्तः परभागो महातिशयो येन तेनानुरञ्जितौ तौ रामकृष्णौ शुशुभाते यद्वा तौ रामकृष्णौ स्वदेहगतविशुद्धसितासितवर्णाभ्यामितरेणेतरवर्णेनातएव शोभिनातएव च सम्प्राप्तमहातिशयेन यद्वा सम्प्राप्तः पर उत्कृष्टः भागः शरीरैकदेशो येन तेनानुरञ्जिताविल्यर्थः ॥ ५ ॥

श्रेयस्ततस्ते न चिराद्भविष्यतीत्युक्तं श्रेयश्चकारेत्याह । प्रसन्न इति । स्वदर्शनफलं तस्याः दर्शयन् तां त्रिवक्राम् ऋज्वीं कर्तुमवक्रां कर्तुं मनश्चक्रे मनश्चकार मनस्कारपूर्वकमृज्वीं चकारेत्यर्थं ॥ ६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्प्रकारमेवाह। पद्भ्यामिति। तस्याः प्रपदे पादाग्रद्वयं स्वपद्भ्यामापीड्य आक्रमणेनावष्टभ्य द्वे अङ्गुली उत्ताने उन्नते यस्मिन् तथाभूतेन पाणिना तस्याश्चिबुके मुखस्याधोभागे गृहीत्वा अध्यात्मं देहम् उदनीनमत् उन्नमयामास ॥ ७॥

सा तदैव ऋज्वी समानमनुरूपमङ्गं यस्याः बृहत्यौ श्रोणी पयोधरौ च यस्याः तथाभूता मुकुन्दस्पर्शनान्निदानात् सद्य एव प्रमदोत्तमा बभूव ॥ ८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सुवर्णादितरद्रजतं तेन कर्पूरो लक्ष्यते कर्पूरसम्पर्केण शोभापरिमलातिशयलक्षणास्यास्तीति सुवर्णेतरशोभिना भगवच्छरीरकान्तिमपेक्ष्य सम्प्राप्तः अपरभागो गुणोत्कर्षराहित्यं येन स तथा तेन ईषद्गुणोत्कर्षं प्राप्तेन वा भगवदङ्गसङ्गेन सम्यगुत्कर्षं प्राप्तेन वा अनुरञ्जितौ स्वकान्त्यनुकूलरागशोभां प्राप्तौ ॥ ५॥

ऋज्वीं कर्तुम् समीकर्तुम् आत्मनो दर्शने यत्फलं तद्दर्शयन् एष्यत्कंसहननं लोकान्प्रत्याययन्निति भावः ॥ ६॥

कुब्जायाः प्रपदे पादाग्रे स्वपादाभ्यामाक्रम्यावष्टभ्य द्वे अङ्गुल्यौ उत्ताने यस्मिन्पाणौ तेन द्व्यङ्गुलोत्तानपाणिना चुबुके मुखाधःप्रदेशे आस्यं प्रगृह्य उदनीनमत् उन्नमयांचकार ऊर्ध्वमाकृष्टवानित्यर्थः ॥ ७-८॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो भगवतः त्रिविधोऽप्यलङ्कारो ज्ञात इत्याह। ततस्ताविति। स्ववर्णात् शुक्लनीलात् इतरो यः पीतो वर्णः तेन शोभायुक्तेन अङ्गरागेण तावुभावपि शुशुभाते स्वरूपतः शोभाकर्तृत्वं वारयति। सम्प्राप्तपरभागेनात। सम्यक्प्राप्तः परो नाभेरूर्ध्वभागो येनाङ्गरागेण नाभेरूर्ध्वं सर्वत्रैव कण्ठपर्यन्तं व्याप्तमनुलेपनं यथा वस्त्राणां मालादीनां वा शोभा नापगता भवति तथा प्राप्तिः सम्यक्प्राप्तिः ननु वस्त्रादिघर्षणेन स्वतो वा तदपगमे कथं शोभा प्रतिष्ठिता स्यादत आह। अनुरञ्जिताविति। माञ्जिष्ठादिना वस्त्रमिव तेन रागयुक्तौ जातौ प्रीतौ वा ॥ ५॥

ततो भगवान् वाक्यं कृतमिति किञ्चित्फलं तदानीमेवाग्रिमफलसाधकं कर्तुमारब्धवानित्याह। प्रसन्न इति। तस्याः कृतं शोभातिशयं ज्ञात्वा प्रसन्नो जातः भगवांश्च सर्वफलदानसमर्थः तथाप्यादौ दोषो दूरीकर्तव्य इति दोषमेव दूरीकृतवान् तदर्थमाह। कुब्जामिति। न केवलं कुब्जत्वमात्रं किं तु त्रिवक्रां ग्रीवापादौ मध्यमिति मुखं वक्रतामाशङ्क्य तद्व्यावृत्त्यर्थमाह। रुचिराननं यस्याः ऋज्वीं कुब्जतां वक्रत्वं च दूरीकरिष्यामीति मनश्चक्रे ब्रह्मसृष्टौ सा तथाभूतैवेति मूलेच्छाया अभावात् नूतनं मनः कर्तव्यं राजसा स्यातिकाठिना इति तेषामर्थे नूतनमपि करोतीति ज्ञापयन्ति। नन्वेतदङ्गरागदानफलं तथा सति शास्त्रविरुद्धमित्याशङ्क्याह। दर्शन फलं दर्शयन्निति ॥ ६॥

आक्रम्येति। तस्याः पादाग्रद्वयं स्वस्य पद्भ्यामाक्रम्य पृष्ठभोग हस्तं दत्त्वा द्व्यङ्गुलोत्तानपाणिना कनिष्ठानामिके सङ्कोच्य मध्यमादेशिनीद्वयमुत्तानं विधाय चिबुकाधो गृहीत्वा अध्यात्मं तस्य शरीरमुदनीनमत् ऊर्ध्वं नीतवान् ननु स्त्रीस्पर्शो भावान्तरोत्पत्तेरायव्ययकत्वात् कथमव्यग्र एवं कृतवानित्याह। अच्युत इति। अच्युतत्वादेव तामपि नावयवशश्च्युतां कृतवान् किं त्वपेक्षितप्रकारेणैव समां चक्रे भगवान् प्रकारान्तरेणापि ऋज्वीं करोति तथा सा यान्ती स्थितेति तस्यै काममोक्षावेव दातुं द्वे एवाङ्गुल्यौ उत्ताने कृते अङ्गुष्ठस्य तु सर्वसमत्वात् न योजनम् ॥ ७॥

एवं कौतुकमिव यन्त्रपुत्तलिकावत्सऋज्वींचकारभगवत्स्पर्शपर्यन्तमेव तथात्वमिति स्थितिस्थापकसंस्कारेण पूर्ववदेव माभवस्थिति भगवता परित्यक्ता परित्यक्तामपि तां वर्णयति। सा तदेति। सा त्रिवक्रापि तदैव ऋज्वी समानं चाङ्गं यस्यास्तादृशी जाता ननु कुब्जभागे ये अवयवाः बहवः स्थिताः ते चेत्तदुदरे प्रविशन्ति तदा कृशोदरीत्वं भज्येत अथापगच्छेयुः तदेकदेशनाशात् अच्युतस्पर्शः न युक्तो भवतीत्याशङ्क्याह। बृहच्छ्रोणिपयोधरेति। श्रोण्योः पयोधरयोश्च ते भागाः प्रविष्टा अतो भोगोपकारायैव जाताः किं च मुकुन्दो मोक्षदाता सर्वेषामेव सर्वावस्थां त्याजयित्वा स्वानन्दं प्रापयति। तथा तस्या अपि पूर्वावस्थां दूरीकृत्य लक्ष्मीसमानावस्थां प्रापितवान् यदाह। मुकुन्दस्पर्शनात्सद्य एव प्रमदोत्तमा जाता ॥ ८॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स्ववर्णेतरेण कृष्णरामयोर्वर्णाभ्यामितरेण पीतवर्णेन श्यामवर्णेन च शोभितुं शीलं यस्य तेन संप्राप्तः परभागः भूषणभूषणाङ्गमिति न्यायेन परमोत्कर्षो येन तेन ॥ ५॥ ६॥

तस्या प्रपदे पादाग्रद्वयं पाद्भ्यमापीड्य द्वे अङ्गुल्यावुत्ताने उन्नते यस्मिन् तेन पाणिना चिबुके मुखस्याधोभागे धृत्वा अध्यात्मं देहमुन्नमयामास ॥ ७॥

तदैव ऋज्वी समानमङ्गं यस्याः सा ॥ ८॥ ९॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

स्ववर्णाभ्यां सितासिताभ्यामितरेतरवर्णेन शोभितुं शीलं यस्य तेन सम्प्राप्तः परः सर्वत उत्कृष्टः भागः रामकृष्णविग्रहरूप आश्रयो येन तेन अङ्गरागेणानुरञ्जितौ शुशुभाते ॥ ५॥ ६॥

अच्युतः श्रीकृष्णः स्वपद्भ्यां कुब्जायाः प्रपदे पादाग्रे आक्रम्य द्वे अङ्गुल्यौ उत्ताने उन्नते यस्मिन् तेन पाणिना चिबुके प्रगृह्य अध्यात्मं शरीरम् उदनीनमत् उन्नमयामास ॥ ७॥

तदा मुकुन्दस्य स्पर्शनात् सा ऋजुसमानमङ्गं यस्याः सा बृहत्यौ श्रोणी पयोधरौ च यस्याः सा सद्यः प्रमदोत्तमा बभूव ॥८॥

---

### भाषा टीका।

तब तो रामकृष्ण दोनों अपने वर्ण से दूसरा वर्ण अति शोभा वाला जो कि नाभी के उपर शरीर में लगा है तिस चंदन से रंगे हुये अत्यंत शोभा को प्राप्त होते भये ॥ ५॥

ततो रूपगुणौदार्यसम्पन्ना प्राह केशवम्।
उत्तरीयान्तमाकृष्य स्मयन्ती जातहृच्छया ॥ ९ ॥
एहि वीर! गृहं यामो न त्वां त्यक्तुमिहोत्सहे।
त्वयोन्मथितचित्तायाः प्रसीद पुरुषर्षभ! ॥ १० ॥
एवं स्त्रिया याच्यमानः कृष्णो रामस्य पश्यतः।
मुखं वीक्ष्यानुगोपानां प्रहसंस्तामुवाच ह ॥ ११ ॥
एष्यामि ते गृहं सुभ्रुः! पुंसामाधिविकर्शनम्।
साधितार्थोऽगृहाणां नः पान्थानां त्वं परायणम् ॥ १२ ॥

भाषा टीका।

फिर भगवान् प्रसन्न भये तीन जगे से टेढी उस कुब्जा को सीधी करके अपने दर्शन का फल दिखाने को विचार करते भये ॥ ६ ॥

भगवान् ने उसके पैरों की अंगुलियों को अपने पैर के अंगुठा से दवाकर हाथ की दो अंगुलियों से उसकी ठोडी को उठाकर ऊपर को हाथ करके झटक दिया ॥ ७ ॥

वह कुब्जा तबही सीधी समान अंग वाली वडी कटि वाली दिव्यस्तनों वाली होगई मुकुंद भगवान् के स्पर्श करते मात्र सब स्त्रीयों में वडी उत्तम स्त्री होगई ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

माधिविकर्शनं मनःपीडाशमनम् कंसवधेन स्वयं साधितोऽर्थः सुहृदां प्रयोजनं येन सः अगृहाणामकृतदाराणां पान्थानां प्रवासिनां परमयनमाश्रयस्त्वम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ततस्तत्स्पर्शनादेव रूपगुणयोरौदार्य्यं महत्त्वं तेन सम्पन्ना सती इति प्रमदोत्तमात्यमेव दर्शितम् अतो योग्यताप्राप्त्या जातहृच्छया प्रकटीभूतकामा स्मयो मदः स्मितं वा तत्सहितं यथा स्यात्तथा स्मयन्तीति पाठे स्मयमाना प्रकर्षेण कटाक्षवीक्षणादिना आह। तदुक्तं श्रीपराशरेण "विलासललितं प्राह प्रेमगर्भभरालस"मिति ॥ ९ ॥

वीरेति निजभावोद्दीपनगुणविशेषविशिष्टतया सम्बोधयति। श्लेषेण हे अभीष्टपूरणसमर्थ! मम गृहं त्वमेहि। ननु निजसङ्गिन इमान् विहाय कथमेकाकी यायामिति चेत्तत्राह त्वमेते ऽहञ्च सर्वे यामः। ननु दिनान्तरे गमिष्यामः तत्राह। नेति। इह राजमार्गे त्यक्तुं न शक्नोमि वासस्थानानिश्चयेन पुनर्दुष्प्रापत्वात्। अतो गृहमेव नेष्यामीत्यर्थः। यद्वा तर्हि ज्येष्ठोऽयं सखीनामेको वा नीयतां तत्राह। नेति। त्वय्येव मदपेक्षा नत्वन्यस्मिन्निति भावः। नन्वीदृशमत्र ते धार्ष्ट्यं न योग्यं तत्राह। त्वयेति। अतो मम न कोऽपि दोष इति भावः। अतएव प्रसीद स्वयमेवानुग्रहं कुरु। त्वत्प्रसादे सति धार्ष्ट्यादपि न बिभेमीति भावः। तत्र हेतुमाह। पुरुषर्षभ! हे पुरुषोत्तमेति। किञ्च। निजपुरुषर्षभतापेक्षया त्वयापि नाहं त्यक्तुं योग्येति भावः ॥ १० ॥

रामस्य पश्यतः अनुगानाञ्च पश्यतां तत्तत् साक्षात् स्त्रिया कामिन्या याच्यमानः रहस्यं किमपि प्रार्थ्यमानः अतएव तस्य तेषाञ्च मुखं वीक्ष्य प्रहसन् कौतुकेनोच्चैर्हसन्। तथाचोक्तम्। श्रीवैशम्पायनेन "तौ जातहर्षावन्योऽन्यं सतामाक्षेपमव्ययौ। वीक्ष्यमाणौ प्रहसितौ कुब्जायाः श्रुतविस्तरा"विति। ह स्फुटमेवोवाच। तथा तथ श्रीरामादीन् प्रति एतां वञ्चयामीति व्यञ्जनाय तां प्रति तु प्रतिजानाम्येवैतदिति बोधनायेति भावः ॥ ११ ॥

तथैव तद्विषयकस्वकाममपि सूचयति। एष्यामीति। अगृहाणामित्यादौ च बहुवचनादिना स्वस्य साधारण्यानन्याश्रयत्वाभ्यां पूर्ववदेव व्यञ्जना ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किञ्च रूपादिसम्पन्ना सती जातः हृच्छयः कामो यस्याः सा अतएव स्मयन्ती मुकुन्दमुत्तरीयाग्रमाकृष्य प्राह तत्र रूपं सौन्दर्यं गुणा यौवनादयः औदार्यं गत्यवलोकनादि श्रेष्ठ्यम् ॥ ९ ॥

उक्तिमेवाह। एहीति। हे वीर! अस्मद्गृहं प्रत्यागच्छ यामः गच्छामः इह त्वां त्यक्तुं नोत्सहे न शक्नोमि त्वयोन्मथितं क्षोभितं चित्तं यस्यास्तस्या मम प्रसीद हे पुरुषर्षभ! ॥ १० ॥

इत्थं तया स्त्रिया रामस्य पश्यतः सतः याच्यमानोऽपि भगवान् अनुगानां गोपानाञ्च चशब्दाद्रामस्य मुखमवलोक्य प्रहसन् तामुवाच ॥ ११ ॥

उक्तिमेवाह। एष्यामीति। हे सुभ्रु! साधितः कंसवधरूपोऽर्थः प्रयोजनं येन तथाभूतः पुंसामाधिविकर्षणं कामप्रयुक्तमनःपीडाशमनं तव गृहं प्रत्यागमिष्यामि अगृहाणां न विद्यन्ते गृहाः अस्यां पुर्यां येषां तेषां पान्थानामस्माकं त्वमेव परायणमुपभोग्येत्यर्थः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्तरीयान्तमुत्तरीयवस्त्राञ्चलं सस्मयं समदं हृच्छयःकामः॥ ९॥

त्वया कारणेन उन्मथितचित्तायाः विलोलितमनसः॥ १०॥

हेत्यनेनायमितिहासो लोके प्रवर्ततामिति सूचयंस्तामाहेति ज्ञाप्यत इति॥ ११॥

तरुणानां पुंसामाधिविकर्शनं मनःपीडापरिहारनिमित्तं गृहमागमिष्यामि किन्तु किञ्चित्कार्यमस्तीत्याह। साधितार्थ इति। अर्थः कंसवधलक्षणः त्वं सर्वथा परिहारार्थी नेत्याह। अगृहाणामिति। अगृहाणां गृहरहितानां वनवासिनामित्यर्थः। पान्थानां पथिकानां नोऽस्माकं त्वं परायणमुत्तमाश्रयः अनेनासङ्गानामीश्वराणामस्माकं भक्ता एव पूजादिनाश्रयभूता इति दर्शितम्॥ १२॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततो भगवान् स्वार्थमेव कृतवानिति भगवन्तमेव गृहीतवतीत्याह। तत इति। ततः तस्याः रूपं सम्पन्नं गुणाश्च पद्मगन्धादयः पूर्णो रसः तस्य च दानार्थमौदार्यं च सम्पन्नम् औदार्ये च सर्वे गुणा इति आन्तराः सत्यादयः सर्वे निरुक्ताः एवं सर्वगुणसम्पन्ना सती केशवं ब्रह्मादिभ्योऽपि सुखदातारं प्राह सा, दासीति प्रमदा जातेति भगवदङ्गस्पर्शोऽपि वृत्त इति निर्भया सती विटमिव कामरसिकमिव उत्तरीयान्तं भगवत आकृष्य तदानीमेव जातभावा स्वहृदयं बोधयन्तीव स्मयन्ती वक्ष्यमाणमाह।ननु कथं सभायां चतुष्पथे तथा कृतवतीत्याह।जातो हृच्छयो यस्या इति॥ ९॥

तस्या वाक्यमाह। एहीति। स्त्रीणां रसान्तरं न रोचत इति गोपिकावदियमपि काममेव पुरुषार्थं मन्यते तं दातुं समर्थ इति वीरेति सम्बोधनं गृहं रमणयोग्यमिति आत्मानं भगवन्त च आत्मतया सम्भाव्य याम इत्याह। सर्वेषां कार्यमस्ति चेत् त्वयावश्यमागन्तव्यमित्यभिप्रायेणाह। न त्वां त्यक्तुमिहोत्सह इति। अकृतकार्यत्वात् सम्भृतिरेव सम्पादिता न तु भोजितेति त्यागो दूरे तदर्थमुत्साहमपि न करोमि। नन्वेवं निर्बन्धे को हेतुरत्राह। त्वयोन्मथितचित्ताया इति। त्वया हि चित्तं मदाभ्युन्माथितं येन चेतना गता मथनं कृत्वा हि तत्फलं नवनीतमिव भोक्तव्यम् अतो भोगार्थं निर्बन्ध इत्यर्थः। नन्वीश्वरे कथमेवं धाष्टर्यमिति शङ्कायामाह। प्रसीदेति। प्रसीदेति प्रसन्नो भव स्वामिन्! त्वयि प्रसन्ने एव सर्वं भवतीति तर्हि निष्कामां करिष्यामीति चेत्तत्राह। पुरुषर्षभेति। हे पुरुषश्रेष्ठ! न हि पुरुषः स्त्रियं निष्कामां करोति अपि तु कामपूर्णामेव सुतरामेव पुरुषर्षभः॥ १०

एवं कामपीडितायां तस्यां प्रार्थयमानायां सत्यां तदुल्लङ्घनमनुचितमिति भगवान् किं कृतवानित्याशङ्कायामाह।एष्यमिति। एवं निर्बन्धप्रकारेण स्त्रिया याच्यमानः कृष्णः तेषामेवार्थे अवतीर्णः तथापि रामस्यापि बालाः कौतुकचेतसः बलभद्रो युद्धाभिलाषी इयं च कामपरा एवं च सति सर्वानुरोधः कर्त्तव्य इति प्रहसन् प्रकर्षेण तां मोहयन् उवाच हेत्यादचर्यं नहि स्त्रीभिः प्रार्थितः कृष्णो विलम्ब करोतीति। अथवा पूर्णानन्दः कथमेवमाह। अहमागमिष्यामीति॥ ११॥

भगवद्वाक्यमाह। एष्यामि ते गृहमिति। सुभ्रु इति सम्बोधनं प्रार्थनार्थमिवेति सूचयति परिहासार्थं यथा तस्या अयं रसो गुप्तो भवति तदर्थमुपहासवदाह। पुंसामाधिविकर्षणमिति। ये केचन पुरुषाः तेषां मनःपीडागुप्तार्थी तां त्वद्गृहमेव त्याजयति अतः आधिविकर्षणं परमारब्धं समाप्य कर्तव्यमिति विलम्बः कर्त्तव्य इत्याह। साधितार्थ इति। कंसं हत्वेत्यर्थः। ननु पश्चादागमिष्यसीत्यत्र किं प्रमाणमित्याशङ्क्याह। अगृहाणां नः पान्थानां त्वमेव परायणमिति परिहासोक्तिरेषा स्वार्थमेवागमिष्याम इति नात्र सन्देहः कर्त्तव्यः। पान्थानामिति। गृहार्थमप्यागमनं क्वचित् स्थातव्यमिति यदि कश्चित् प्रार्थयेत्तदा तत्र स्थितौ कः सन्देह इत्यर्थः। किञ्च त्वमेव परमयनमिति। अस्माकं सुतरां स्वार्थमुत्पादिता परायणं भवत्येव॥ १२॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे वीरेति। अन्ये धर्मवीराद्या भवन्ति त्वं तु स्त्रीजनधर्मध्वंसवीरो भवसीति भावः। ननु त्वमेहीत्यादिना भोजनार्थमेव मां निमन्त्रयासि किं तत्राह। न त्वां त्यक्तुमित्यादि। त्वदुक्त्या तु लोका इह राजमार्गे हसन्तः अन्यथा संभावयन्ति तस्मादेवं मावादीस्तत्राह। त्वयोन्माथितेति। तर्हि त्वया मच्चित्तं कथमुत्कर्षेण माथितमिति तवैवायं स्पर्शदोषो न ममेति भावः। सप्तम्यर्थे षष्ठी॥ १०॥

मुखं वीक्ष्येति। भो आर्य्य! भोः सखायश्च किमधुनापि युष्माकं मुखानि हास्यार्णवे न विप्लुतानि पश्यत नेयं स्त्रीमूर्तिः किं तु हास्यरस एव युष्मान् कौतुकिनो ज्ञात्वा मिलितुमुपक्रमते मथुरापुर्य्यां हास्यवैदग्धीयं वा स्वं परिचाययतीति भावः॥ ११॥

कुब्जां प्रति प्रियोऽयं मां स्वीकरोतीति रामादीन् प्रति तु ग्राम्यां स्त्रियमिमामयं कृष्णो वञ्चयतीति द्योतयन्नाह। एष्यामीति पुंसामिति। बहुवचनेन तां प्रति परिहासः। साधितार्थ इति। कंसवधाद्यावश्यककृत्यं कृत्वा निश्चिन्तो भूत्वेति समयसंकेतश्च व्यञ्जितः अगृहाणां "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति न्यायेनाकृतदाराणां नोऽस्माकमिति राजपुत्रत्वादात्मन आदरेण खल्वेकत्वेऽपि बहुवचनं सा मन्यते स्म पान्थानामिति गोकुले स्वनगरे मम गोप्योऽनुरागिण्यो वर्तन्ते तथात्र पुर्यामपरिचितायां न काश्चन केवलं त्वमेवैकानुरागिणी प्राप्तेति तां प्रत्यनुरागश्च व्यञ्जितः रामादींस्तु बहुवचनेन आधिपदेन पान्थपदेन च प्रयुक्तेन कृष्ण एतामस्वीकुर्वन् सामान्यवनितात्वलक्षणगालिप्रदानेनैनामनभिज्ञां तिरस्करोतीति प्रत्याययामास॥ १२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततस्तदनन्तरं रूपेण गुणैर्मधुरभाषणादिभिः औदार्य्येण च संपन्ना जातो हृच्छयः श्रीकृष्णेन सह विहर्तुं कामो यस्याः सा॥९॥

गृहं मदीयं यामः॥ १०—११॥

पुंसां प्रविशताम् आधिविकर्षणं मनः पीडाशमनम्। ते गृहमेष्यामि। पान्थानां प्रवासिनां कंसभयाद्देशान्तरे वर्तमानानामगृहाणां त्यक्तगृहाणां सुहृदां कंसवधेन साधितो ऽर्थः प्रयोजनं

विसृज्य माध्व्या वाण्या तां व्रजन्मार्गे वणिक्पथैः।
नानोपायनताम्बूलस्रग्गन्धैः साग्रजोऽर्चितः ॥ १३ ॥
तद्दर्शनस्मरक्षोभादात्मानं नाविदन् स्त्रियः[१] ।[१]अयं विजयध्वजीये नास्ति,
विस्रस्तवासःकवरवलयालेख्यमूर्त्तयः ॥ १४ ॥
ततः पौरान् पृच्छमानो धनुषः स्थानमच्युतः।
तस्मिन् प्रविष्टो ददृशे धनुरैन्द्रमिवाद्भुतम् ॥ १५ ॥
पुरुषैर्बहुभिर्गुप्तमर्चितं परमर्द्धिमत्।
वार्यमाणो नृभिः कृष्णः प्रसह्य धनुराददे ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

येन सः हे सुभ्रु ! त्वं नः परायणं मनोवासस्थानं त्वयि अस्माकं मनो वर्तत इत्यर्थः। यद्वा त्वं नोऽसि अतस्ते गृहं परायणमेष्यामीति ॥ १२ ॥

### भाषा टीका।

फिर तो कुब्जा रूप गुण उदारता से संयुक्त होकर भगवान् के वस्त्र के अग्र भाग को पकड कर कंदर्प के वस होकर हंस के कहने लगी ॥ ९ ॥

हे वीर ! आओ घरको जायंगे इहां पर मैं आपको नहीं छोड सकती हूं तुमारे रूप से मेरा चित्त चंचल होगया है सो हे पुरुषोत्तम ! मेरे पर प्रसन्न होजाओ ॥ १० ॥

इस प्रकार से बलदेवजी के देखतेही जब उस स्त्रीने याचना करी तब गोपों के मुखों को देखकर हंसकर भगवान् उससे बोले ॥ ११ ॥

हे सुभ्रु ! पुरुषों की मनकी चिंता को नाश करने वाले तुमारे घरको मैं अपने और सब कामों को करके आऊंगा क्यों कि विना घर वाले मार्ग में आने वाले हम लोगों को तुही आश्रय है ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

मधुरया गिरा तां प्रस्थाप्य व्रजन् वणिक्पथैर्वणिग्भिरर्चितः ॥ १३ ॥

लख्याश्चित्रन्यस्ता इव मूर्त्तयो यासां ताः ॥ १४ ॥

धनुर्मखशालां पृच्छन् ॥ १५ ॥

प्रसह्य बलात् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नानाविधैरुपायनरूपैस्ताम्बूलादिभिश्च उपायनगृहीतानामपि ताम्बूलादीनां पृथक् निर्देशस्तदानीमुपादेयानां तेषां प्राचुर्यविवक्षया। स्रजः रत्नमुक्तादिमालाः। गन्धः सुगन्धिश्चन्दनादिभिः पङ्कः अगुर्वादिसाधितद्रवविक्षेपः विचित्रवर्णचूर्णाद्यश्च। साग्रज इत्युपलक्षणं सानुगोऽपि श्रीयमुनान्तिके पुर्यन्ते वर्त्तमानत्वादादौ विप्रैः कृतमधुनाचान्तर्वर्त्तमानैर्वैश्यैरर्चनमुक्तं क्षत्रियाश्च प्रायो मध्ये वसन्तीति तत्कृतं नोक्तमिति ज्ञेयम् ॥ १३ ॥

वणिक्पथेष्वपि स्त्रीणान्तु कोमलस्वभावत्वादधिको भावो जात इत्याह। तदिति। स्त्रियः वणिग्योषितः। तस्य दर्शनेन यः स्मरः स्मरणमात्रेणापि जायमानः प्रेमविलासरूपः कामस्तेन क्षोभो धैर्यक्षयः मोहो वा तस्माद्धेतोः आत्मानं देहं देहिनं नाविदन् का वयं क्व वर्त्तामहे इत्यनुसन्धातुं न शक्ता इत्यर्थः अतएव विशेषेण स्रस्तानि वासआदीनि यासां ताः तत्र वासो वलयविस्रंसः स्मरवेगेन सद्य एव कार्श्याद्यापत्तेः केसविस्रंसस्तु गात्रमोटनकम्पायामर्दात् किञ्च लेख्यवन्मूर्त्तयो बभूवुरिति शेषः ॥ १४ ॥

तत इति। साद्धकं भक्तजनानुग्रहानन्तरं स्नानाद्यैश्वर्यतः सर्वथाच्युतिरहितोऽपि लीलाकौतुकावेशेन धनुःस्थानं पृच्छमित्यादि योज्यम् ऐन्द्रं धनुरिवेति रत्नादिजटितत्वेन विचित्रवर्णत्वात् बृहत्तरत्वाच्च अतएवाद्भुतं तथाच हरिवंशे। "स तयोर्दर्शयामास तद्धनुः स्तम्भसन्निभम्। अनारोप्यमसम्भेद्यं दैवैरपि सवासवै"रिति। पुरुषैः कंसभृत्यैरर्चितत्वादेव परमर्द्धिर्भूषणादिमहाधनसम्पत्तिस्तद्वत् ॥ १५ ॥

वार्येत्यर्द्धकम्। नृभिस्तद्रक्षिभिः क्रोधात्तथा सर्वैरपि कंसभीत्यास्नेहाद्वार्यमाणोऽपि ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एवंविधया माध्व्या मधुरया वाण्या तां विसृज्य उत्तरीयान्तं त्याजयित्वेति भावः। ततो मार्गे व्रजन् ततो वणिक्पथे प्रविष्टः तत्र नानाविधैरुपायनैः श्रेष्ठवस्तुभिः ताम्बूलादिभिश्च सरामः समर्चितो बभूव ॥ १३ ॥

तदा तस्य भगवतो दर्शनेन यः स्मरक्षोभस्तेन स्त्रियः आत्मानं देहं नाविदन् नानुसमदधत वेदनाभावमेव दर्शयन् विशिनष्टि। विस्रस्ताः वासःप्रभृतयो यासां ताः लेख्यवालिखितप्रतिमावन्निश्चलाः मूर्त्तयो तासां ताः ॥ १४ ॥

ततो धनुषः स्थानं धनुर्मखशालां पौरान्प्रति पृच्छमानोऽच्युतस्तस्मिन् धनुषः स्थाने प्रविष्टः ऐन्द्रं धनुरिवाद्भुतम् ॥ १५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

बहुभिः पुरुषैर्गुप्तमर्चितं परमा ऋद्धिः सुवर्णालङ्कारादिसम्पत्तिरस्यास्तीति तथा तद्धनुर्दृष्टवान् तदा तत्रस्थैः पालकैः बहुधा वार्य्यमाणोऽपि कृष्णः प्रसह्य बलात् तद्धनुराददे ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

माध्व्या मधुरया वणिजां पन्थानो येषां ते तथा तैः दर्शनार्थमागतैः पण्यवीथिकाश्रितैः वैश्यैश्चार्चितः नानाविधोपायनं ताम्बूलादिकं येषां ते तथा तैः ॥ १३ ॥ ० ॥

पृच्छमानः पृच्छन् ॥ १५—१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमुक्त्वा प्रकृतार्थमेव प्रवृत्त इत्याह। विसृज्येति। वाग्मी तु माध्वी अर्थस्तु विलम्बसाधकत्वान्न मधुरः तामिति सा एका स्त्री कृतोपकारा च एते तु तद्विपरीता इति एतेषां मनोरथसिद्ध्यर्थं मार्ग एव व्रजन् राजमार्गे गच्छन् तत्रत्यैर्वणिग्जनैः नानाविधान्युपायनानि रिक्तहस्तपरिहाराय ताम्बूलस्रग्गन्धाः पूजासाधनानि बलभद्रसहितः पूजितः ॥ १३ ॥

एवं साधारणपुरुषाणां विनियोगमुक्त्वा साधारणस्त्रीणामाह। तद्दर्शनेति। तस्य भगवतो दर्शनात् यः स्मरस्य क्षोभः तेन आत्मानं देहं नाविदन् यदा प्रपञ्चविस्मृतिरुक्ता भगवद्दर्शनं हि स्मरं जनयति नूतनं पूर्वमप्येकः स्मरः सहजः उभौ मिलितौ लुब्धौ जातौ मुख्यतया द्वस्था जातः काम इति स एव क्षोभक उक्तः यत्र देहस्याप्यस्मरणं तत्रान्यस्मरणं दूरादपास्तमिति अत्यन्तविस्मरणं ज्ञापयितुमाह। विस्रस्तेति। सर्वाभरणभूषिता भगवद्दर्शनार्थमागताः तत्र भगवद्दर्शनेन क्षोभे जाते आभरणानि स्वत एव विश्लथलितानि जातानि उभयोरप्युपयोगाभावात् विशेषेण स्रस्तानि अधः पतितानि वासांसि कबरः केशपाशः वलयाः कङ्कणा द्याभरणानि किञ्च सर्वा क्रियापि निवृत्तेत्याह। आलेख्यं चित्रमिव मूर्तिर्यासामिति पूर्वापेक्षयाप्येतासां सर्वक्रियाराहित्यमधिकमुक्तम् ॥ १४ ॥

एवमधिभूतरूपाणां प्रपञ्चविस्मृतिमुक्त्वा आधिदैविकानामपि तथा प्रेरणाभावाय भयं वा प्रपञ्चविस्मृतिं वा जनयन् धनुर्भङ्गार्थं प्रवृत्त इत्याह। ततः पौरान् पृच्छमान इति। सन्ति तत्र द्रष्टुमप्यागता जानपदाः तद्व्यावृत्त्यर्थं पौरा विशेषं जानन्तीति पृच्छमानः कुत्र धनुर्यागो जायत इति। ननु धनुर्यागे कथं गच्छति भयस्थानत्वादित्याशङ्क्याह। अच्युत इति। तैरुक्त इत्युक्तसिद्धत्वान्नोक्तम् अथवा लोकानां भ्रमासिद्ध्यर्थमेव प्रश्नः गुप्ततयैव हि सर्वं कर्तव्यमिति। एवं पृच्छमान एव तस्मिन् यागस्थाने प्रविष्टः धनुर्ददर्श प्रायेणेदं धनुः उपास्यदेवतया स्थापितं यावदिदं धनुः स्थास्यति तावन्न तव पराजय इति। अन्यथा भगवान् तद्भङ्गं न कुर्यात्। सोऽपि मरणसंशये तदाराधनं न कुर्यात् यथा ऐन्द्रं धनुर्वैचित्र्यं भवति महच्च तथैवैतदपि ततोऽप्यद्भुतं तदेकविधमेव भवति। इदमनेकविधमिति तत्तस्य प्राणभूतमिति। ॥ १५ ॥

पुरुषैर्बहुभिर्गुप्तं तद्रक्षकाः शस्त्रपाणयः तद्देवताश्च दैत्यहितैषिण्यस्तदाह। बहुभिरिति। किंच तदर्चितं वस्त्रादिभिः अनेन देवतासान्निध्यमुक्तम्। अनुभावमप्याह। परमर्द्धियुक्तमिति। ततो दर्शनार्थं गतो भगवान् अदृश्यः अतः प्रविष्टः सन् तद्धनुर्गृहीतवानित्याह। वार्यमाणो नृभिरिति। सर्वैरेव नृभिः ग्रहणे वार्यमाणः कृष्णः तदर्थमेवावतीर्णः प्रसह्य बलात् तान् दूरीकृत्य धनुराददे पूजास्थानं पद्भ्यामाक्रम्य धनुर्गृहीतवान्। ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

माध्व्या मधुरया वणिक्पथैर्वैश्यैर्वाणिज्यवर्त्मवर्तिभिर्नानाजातिभिरित्यर्थः ॥ १३ ॥

तेषां स्त्रियस्तु परमभक्ताः "चक्षूरागः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्यु"रिति काव्यक्रमोद्धविष्णूरपि स्मरदशाः सद्य एव प्रापुरित्याह। तद्दर्शनेति। आत्मानं नाविदन्निति। का वयं क्व वर्त्तामहे किं कुर्मह इत्यनुसंधातुमक्षमा इति त्रपानाशपर्यन्ता दशा उक्ताः विस्रस्तेति वाससां वलयानां च विस्रंसः स्मरवेगजनितकार्श्यातिशयात् कबरविस्रंसस्तु महाकम्पगात्रमोटनभूतललोटनाद्यामर्दात् एष एव उन्मादोऽष्टमः ततश्च लेख्यास्चित्रन्यस्ता मूर्तयो यासां ता इति मूर्च्छा नवमी दशमी त्वमङ्गलत्वात् प्रेमवतीनां प्रायो न भवतीति प्राञ्च ॥ १४ ॥ १५ ॥

प्रसह्य बलात् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वणिक्पथैः वणिग्भिः ॥ १३ ॥

तस्य भगवतः दर्शनेन यः स्मरक्षोभस्तस्मात्। कुड्यादौ लिखिता इव मूर्तयो यासां ताः आत्मानं नाविदन् कुतो लोकमिति भावः ॥ १४ ॥

तस्मिन् पौरैः सूचिते धनुषः स्थाने ॥ १५ ॥

नृभिस्तद्रक्षिभिः वार्यमाणोऽपि प्रसह्य आददे गृहीतवान् ॥ १६ ॥

---

भाषा टीका।

ऐसे मधुर वचन से उसको विदा करके मार्ग में जाते समय में पुरवासि वैश्य जनों से भेट तांबूल माला चंदनादि द्वारा भगवान् पूजित भये ॥ १३ ॥

उन भगवान् के दर्शन करने से कंदर्प के क्षोभ होने से उहां की सब स्त्रियों ने अपने होसको छोड दिया उनके वस्त्र केशबंध वलय अन्यथा होगये लिखे चित्र सी खडी रह गइ ॥ १४ ॥

करेण वामेन सलीलमुद्धृतं सज्जं च कृत्वा निमिषेण पश्यताम्।
नृणां विकृष्य प्रबभञ्ज मध्यतो यथेक्षुदण्डं मदकर्युरुक्रमः ॥१७॥
धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः।
पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् ॥ १८ ॥
तद्रक्षिणः सानुचराः कुपिता आततायिनः।
ग्रहीतुकामा आवव्रुर्गृह्यतां बध्यतामिति ॥ १९ ॥
अथ तान् दुरभिप्रायान् विलोक्य बलकेशवौ।
क्रुद्धौ धन्वन आदाय शकले तांश्च जघ्नतुः ॥ २० ॥

भाषा टीका।

तिसके पीछे पुरवासियों से उत्तम धनुष के स्थान को पूछते हुये भगवान् उहां पँहुंचे तब उस स्थान में इंद्र धनुष सरीके बडे अद्भुत धनुष को देखा ॥ १५ ॥

वह धनुष बहुत से रक्षकों से रक्षित पूजित है बडी संपत्ति से युक्त है तब उसके पास जाते समय रक्षक पुरुषों ने निषेध किया तौ भी श्रीकृष्ण भगवान् जबरदस्ती से जाकर धनुष को उठा लेते भये ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

निमिषेणातिशीघ्रम् मदकरी मत्तहस्ती ॥ १७—१८ ॥

गृह्यतां बध्यतामिति वदन्तो जिघृक्षव आवृतवन्तः ॥ १९ ॥

न केवलं क्रुद्धौ किन्तु भग्नस्य धनुषः शकले गृहीत्वा जघ्नतुश्चेति ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सलीलं सावहेलं चकारादस्य सर्वैरप्यन्वयः। तथा निमिषेणेत्यस्यापि उद्धृतमुत्थापितं पश्यतां नृणां तत्र रक्षिणां कुद्दानामन्येषाश्चासम्भवं मल्लानामिति ज्ञेयम् अनादरे षष्ठी । अकारप्रश्लेषेणानिमिषेण निर्निमेषतया पश्यतामिति ॥ १७ ॥

नच तन्मृदुलं मन्तव्यं किन्तु वज्रसारतोऽपि परमतिकठिनमित्याशयेनाह। धनुष इति। प्राक् खमन्तरीक्षं पूरयामास शब्दस्याकाशगतत्वात् ततः रोदसी द्यावाभूमी महत्तरत्वेनोर्ध्वाधो गामित्वात्। ततश्च दिशः सर्वाः। एवं सर्वानपि लोकान् अपूरयदित्यर्थः। कंसो जगद्दीपणोऽपि उप आधिक्येन त्रासं प्राप्तः निर्घातकोटिनिष्ठुरतच्छब्दादेव। विचारतश्च तस्मात् सद्यो मृत्युप्राप्तिमननात् ॥ १८ ॥

सानुचरं श्रीरामादिसहितम् आततायिनः गृहीतायुधाः गृह्यतां राज्ञे समर्पणाय जीवन्नेव भ्रियतां पश्चाद्बध्यतां पार्श्वैर्यन्त्र्यतामिति एषा महामदेनावहेलोक्तिः। वाग्देवीमते तु अस्मद्विधो गृह्यतां बध्यतामिति ज्ञेयम् ॥ १९ ॥

दुरभिप्रायान् दुष्टभावान् धन्वनो धनुषः तान् विलोक्य क्रुद्धौ जघ्नतुश्चेति वाक्यभेदात्तानित्यस्यापुनरुक्तता ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

आततायिनः जिघांसया शस्त्रपाणयः ॥ १९—२२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उरुक्रमो भगवान् सलीलं यथा तथा वामेन करेणोद्धृतं धनुः सज्यं समारोपितज्याकं कृत्वा निमेषेणाशु नृणां पश्यतां सतां विकृष्य मध्यतो बभञ्ज भग्नमकरोत् यथा मतङ्गजः इक्षुदण्डं तद्वत् ॥ १७ ॥

तथा भज्यमानस्य धनुषो ध्वनिः खमाकाशं रोदसी द्यावापृथिव्यौ दिशश्च पूरयामास यं शब्दं श्रुत्वा कंसः त्रासं भयं प्राप्तवान् ॥ १८ ॥

तस्य धनुषो रक्षिणः पालकाः सानुचराः आततायिनः जिघांसया गृहीतशस्त्राः जिघृक्षवः गृह्यतां बध्यतामिति ब्रुवाणाः आवव्रुः आवृतवन्तः ॥ १९ ॥

तानागतान् दुरभिप्रायान् जिघांसूनवलोक्य रामकृष्णौ धनुषः शकले आदाय ताभ्यां तान् जघ्नतुः ॥ २० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ज्यया मौर्व्या सहितं सज्यं निमिषपरिमितेन कालेन अनिमिषेण निमेषणराहितेन वा स्तिमितपक्ष्मणा नेत्रेणेत्यर्थः। मदकरी नित्यमदजलस्रावी गजः मदयुक्तो गजो वा ॥ १७ ॥

रोदसी द्यावापृथिव्यौ ॥ १८ ॥

आततायिनः आयुधान्यातत्य विस्तृत्यागच्छन्तः ॥ १९ ॥

धनुषः द्वे शकले खण्डे आदाय ॥ २० ॥

**बलं च कंससहितं हत्वा शालामुखात्ततः।**
**निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसम्पदः ॥ २१ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ग्रहणे प्रकारं वदन् भङ्गमाह। करेणेति। धनुर्हि वामकरे एव स्थाप्यते दक्षिणेनापि गृहीत्वा अवहेलया। दैत्यांशत्वाच्च वामेनैव ग्रहणं महतोऽपि ग्रहणं लीलयेति। तेषां युद्धार्थं प्रवृत्त्यभावाय। एवमपि पश्यन् यदि युद्धार्थं प्रवर्तेत तदा भगवतो न कोऽपि दोष इति ज्ञापयितुं सलीलमुद्धृतं सज्जं च कृत्वा निमिषेण निमेष—मात्रेण स्थित्वैव प्रत्यञ्चाभङ्गभयाभावात् अग्रे नामितवान्। तथा करणमल्पेनापि कालेन भवति। अनिमिषेण वा पश्यतां सतां ततो मध्ये धृत्वा विकृष्य प्रबभञ्ज मध्य एव। यथा योजितं न भवति दृढमुष्टिं बद्ध्वा गाढमाकृष्य पश्चान्मुष्टिमध्यशैथिल्ये धनुषो भङ्गो भवति। अतस्तथा विकृष्य मध्यतः प्रबभञ्ज प्रकर्षेण भङ्गः नायवशः किंतु खण्डद्वयप्रकारेण आयासाभावाय दृष्टान्तमाह। यथेक्षुदण्डमिति। दण्डपदेन शुष्कताप्युक्ता। मदयुक्तश्च करी जानात्यपि न। ननु दृष्टान्तमात्रेण न साध्यं सिध्यति किंतु दार्ष्टान्तिकयुक्तेन तत्कथं बालेन धनुषो भङ्गोऽनायासेनेतिचेत् तत्राह। उरुक्रम इति। ॥ १७ ॥

तर्हि दैवगत्यैव तद्भग्नं भविष्यतीत्याशङ्क्य भङ्गस्य शब्दमाह। धनुषो भज्यमानस्येति। शिथिलभङ्गे महान् उत्तिष्ठति। ननु स शब्दः अल्पहेतुक एव तदानीं जातो भविष्यतीति तत्परिहारार्थमाह। भज्यमानस्येति। वर्तमानप्रयोगेण ततः शब्दोत्पत्तिरुक्ता। तेन सर्व एव स्वाश्रयः पूरित इति वक्तुं खं ब्रह्माण्डमध्यं रोदसी द्यावापृथिव्यौ चतस्रो दिशश्च पूरयामास। धनुर्भङ्गशब्द एव सर्वत्र श्रूयते नान्यशब्द इति। एतदल्पकालेनैव कृतमिति तेषां निवारणसामर्थ्यं न वृत्तं पश्चात् शब्देनैव कियत्कालं व्यापृताः। अतो धनुर्भङ्गः निष्प्रत्यूहो जातः। अस्य च प्रयोजनं कंसभयजननमिति तज्जातमित्याह। यं नादं श्रुत्वा कंसस्त्रासं महाभयमुपागमत् निकट एव फलं प्राप्स्यामीति संत्रस्तो जातः॥ १८ ॥

उभयतः प्रतीकारार्थं प्रवृत्तानां निराकरणमाह। तद्रक्षिण इति त्रिभिः। प्रथमं धनुःस्थान एव धनूरक्षकाः स्थिताः ते भगवन्तं बलभद्रं गोपांश्च ग्रहीतुकामाः कुपिताः सन्तः अन्यायः कृत इति मूर्खाः आततायिनः शस्त्रपाणयो जाताः ततः आवव्रुः वेष्टितवन्तः तेषां मानसकायिकं च व्यापारमुक्त्वा वाचनिकमाह। गृह्यतां वध्यतामिति। ये गृहीतास्तेषां बन्धनमादिशन्ति ॥ १९ ॥

ततो भगवन्तौ तेषामतिक्रमं ज्ञात्वा नैतावतापि त्यक्ष्यन्तीति तेषां दुष्टमभिप्रायं ज्ञात्वा भिन्नप्रक्रमेण लीलां परित्यज्य आविष्कृतपौरुषौ गोपानां रक्षार्थं कंसं च ज्ञापयितुं प्रवृत्तावित्याह। अथ तानिति। बलो बलभद्रः ब्रह्मरुद्रयोरपि सेव्यः ततो महान् केशवः भक्तातिक्रमं ज्ञात्वा क्रुद्धौ जातौ ततः साधनेनैव मारणीया इति तेऽपि शस्त्रपाणय इति यद्येतावत्कालं पालितवन्तः तदेव तन्मारकं जातमिति ज्ञापयितुं धन्वनः शकले आदाय तान् चकारादन्यानपि दुष्टान् जघ्नतुः आधिदैविकदेवान् वा धन्वन्शब्दोऽपि धनुर्वाचकः धन्वनाजिजयेमेति प्रयोगात् देशमपि वक्ति धन्वन्निव प्रपा असीति ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नृणां पश्यतां प्रबभञ्जेति हंहो लोकाः श्रुतचरमहिमद्रढिमकमेतदेव धनुः पूज्यते युष्माकं राज्ञा इदं तु मत्पाणिस्पर्शमात्रेणैव विदीर्णं घुणजीर्णमेवोपलब्धमिति प्रोवाचेति ज्ञेयम् ॥ १७ ॥ १८

सानुचरं कृष्णं ग्रहीतुकामाः वध्यतामिति ब्रुवाणा आवव्रुः वाग्देवीमते तु अस्मद्विधो जनो वध्यतामेति ॥ १९ ॥

धन्वनो धनुषः शकले द्वे खण्डे गृहीत्वा ॥ २० ॥ २१॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

निमिषेणात्यल्पेन कालेन मदकरी मत्तहस्ती इक्षुदण्डमिव सलीलं यथा तथा विकृष्य बभञ्ज द्विधाऽकरोत् ॥ १७ ॥—॥ १८ ॥

आततायिनः शस्त्रपाणयः तस्य धनुषो रक्षिणः गृह्यतां वध्यतामित्येवं जल्पन्तो ग्रहीतुकामाः आवव्रुः आवृतवन्तः। ॥ १९ ॥ — ॥ २० ॥

---

### भाषा टीका।

उस धनुष को भगवान् ने बडे सहज से बांये हाथ से उठा लिया फिर उसको चढा भी दिया फिर सम्पूर्ण मनुष्यों के देखते ही खैंच करके बडे पराक्रमी भगवान् ने जैसे हस्ती ऊंख के दंडको तोडता है तैसे उस धनुष को मध्य में से तोड दिया ॥ १७ ॥

टूटते समय में धनुष का जो शब्द है उसने आकाश पाताल तथा सब दिशों को भर दिया जिसको कि सुनकर कंस को बडी त्रास होगई ॥ १८ ॥

उस धनुष के रक्षा करने वाले सब मनुष्य अनुचरों सहित बडे कुपित भये सब शस्त्र धारण करके दौडे और पकडो बांधो कह करके भगवान् को घेर लेते भये ॥ १९ ॥

इसके अनंतर रामकृष्ण दोनों उनको दुष्ट अभिप्रायवाले जानकर क्रोधित भये और उसी धनुके दोनों टुकडों को पकड कर उन सबों को मारते भये ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

परतः प्रातर्गन्तव्यमिति शालामुखादेव पुनर्निष्क्रम्य ॥ २१ ॥

तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः ।
तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ ॥ २२ ॥
तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान् ।
कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः ॥ २३ ॥
गोप्यो मुकुन्दविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्यभूवन् ।
सम्पश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

तेजः प्रभावम् प्रागल्भ्यं धृष्टताम् ॥ २२ ॥

शकटं शकटावमोचनस्थानम् ॥ २३ ॥

मुकुन्दस्य विगमे व्रजान्निर्गमनसमये या आशिष आशासत सुखं प्रभाता रजनीयम् अद्य ध्रुवं तत्र द्रक्ष्यो भविष्यत इत्यादि यदुकवस्ता ऋताः सत्या बभूवुः पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मीं शोभां कथम्भूतस्य गात्रस्य तु अहो इतरान्ब्रह्मादीन् हित्वा यदयनमाश्रयं श्रीः कामयाभास यां गात्रलक्ष्मीमिति वा ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कंसेन प्रहितं बलं सैन्यं श्लेषेण कंसस्य सामर्थ्यमिवेति ततस्तस्मादेवेति शालामुखविशेषणं पुरसम्पदो निरीक्ष्य हृष्टा सन्तौ पुनरपि चेरतुः । लीलया पुर्यन्तर्बभ्रमतुः ॥ २१ ॥

एवं दुष्टदमनादिना शिष्टानामानन्दो नितरां जात इत्याह । तयोरिति । तत् तत्रत्यं वीर्यं धनुर्भञ्जनादौ पराक्रमं तेजः सर्वाभिभवनस्वभावः प्रागल्भ्यमकुण्ठत्वं रूपं सौन्दर्यञ्च । तेजआदीनां द्वन्द्वैक्यं विबुधोत्तमौ शिवविष्णू ततोऽप्युत्तमौ श्रीसङ्कर्षणवासुदेवौ वा ॥ २२ ॥

विशेषतो बहुत्रत्यतया चरतोः आदित्योऽस्तमिति तदानीमाविष्कृततत्प्रतापासहनत्वादेवेति भावः ॥ २३ ॥

अथ श्रीगोपीनां पुरजनानाञ्च प्रेमवर्णनमुपसंहरति।गोप्य इति। अयमर्थः । मुकुन्दस्य विगमे व्रजं परित्यज्य मथुराप्रस्थाने गोप्यो विरहातुराः सत्यो या आशिषः सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः पुरयोषितां ध्रुवम् । इति रीत्या पुरयोषितां कामिनीनां यान् अर्थान् आशासत अवश्यप्राप्यत्वेनेष्टवत्यः स्वयमभिप्रेतवत्य इत्यर्थः । आङ् शासु इच्छायां ता आशिषो मधुपुरि मधुपुरे पुरुषभूषणस्य मुकुन्दस्य सम्यक् पश्यतामन्येषामपि जनानामव्यभिचारिण्यो बभूवुः । तदुत्कर्षार्थं तद्गात्रलक्ष्मीमेव विशिनष्टि । हित्वेति । श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या इत्यादिरीत्या यद्वाञ्छया श्रीरित्यादिरीत्या च भजतः स्वसम्पत्तिकामनया समुपासीनानपि इतरान् हित्वा तन्मयनिजान्तर्वैभयमनादृत्य यामेवायनमाश्रयं कामयामास । तदेवं परमयोग्यानां तासां विरहमनभिनन्दन् परमयोग्यत्वादेव पर्यवसानेन तु न स्थास्यत्येव विरह इति ध्वनयति । वक्ष्यते च स्वयं भगवता । मय्यावेश्य मनः कृष्णे विमुक्ताशेषवृत्ति यत् । अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथेति ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शकटं नन्दादीनां विश्रमस्थानम् ॥ २३ ॥

पुरुषभूषणः भूषणभूतः कृष्णस्तस्य गात्रलक्ष्मीं सम्पश्यताम् आशिषः ऋताः सत्या अभूवन् इत्यर्थः ॥ २४ ... २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा कंसेन प्रेषितं सैन्यं हत्वा ततः शालाद्वारान्निर्गत्य तत्र तत्र पुरसम्पदो निरीक्ष्य हृष्टौ चेरतुः ॥ २१ ॥

तयोरामकृष्णयोस्तद्धनुर्भञ्जनाद्यात्मकं कर्म निशाम्य दृष्ट्वा श्रुत्वा च तेजः पराभिभवनसामर्थ्यं प्रागल्भ्यं धृष्टतारूपञ्च तेषां समाहारस्तेनातितरसाधारणेन तौ देवोत्तमौ मेनिरेऽमन्यन्त ॥ २२

स्वैरं यथा तथा तयोर्विचरतोः सतोः सूर्योऽस्तमाप्तः ततस्तौ गोपैः सह पुरात् शकटं शकटावमोचनस्थानं नन्दादीनां विश्रमस्थानमिति यावत् ईयतुः आजग्मतुः ॥ २३ ॥

मुकुन्दस्य विगमे व्रजान्निर्गमनवेलायां विरहेणातुरा गोप्यः या याः आशिषः आशासत सुखं प्रभाता रजनीयम् अद्य ध्रुवं तत्र द्रक्ष्यो भविष्यत इत्यादिकमुक्तवत्यः ताः सर्वा आशिषो मधुपुर्यां पुरुषभूषणस्य गात्रलक्ष्मीं पश्यतां जनानामृताः सत्या बभूवुः कथम्भूतस्य गात्रस्य भजतः सेवमानानितरान् ब्रह्मादीन् हित्वा श्रीर्महालक्ष्मीर्यद्गात्रमाश्रयं चकमे अचीकमत यामिति पाठे यां गात्रलक्ष्मीमित्यर्थः । यमिति पाठे यं पुरुषभूषणमित्यर्थः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शालामुखाद्धनुर्गृहद्वारात् ॥ २१ ॥

वीर्यं पराक्रमं तेजः बलं प्रभावस्या प्रागल्भ्यं धार्ष्ट्यंरूपं सौन्दर्यम् एकवद्भावादेकवचनं तेजः प्रागल्भ्ययोरूपं चक्षुर्ग्राह्यमिव स्थितमित्यर्थः ॥ २२ ॥

अस्तम् अस्तगिरिं शकटमुपशल्यं स्वावस्थानम् ॥ २३ ॥ ० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं रक्षकान् देवान् नगांश्च हत्वा गमनार्थमुद्युक्तौ तावता कोलाहले जाते कंसो बलं च प्रेषितवान् एकहेलया तं च हत्वा निर्गतावित्याह । बलञ्चेति । हस्त्यश्वरथपदात्यात्मकं बलं सेनां हत्वा शालामुखान्निष्क्रम्य युद्धावेशं परित्यज्य क्षणान्मनोहररूपावेव जातौ अतः हृष्टौ सन्तौ पुरसंपदो निरीक्ष्य चेरतुः यथैताभ्यां धनुर्वार्त्तापि न ज्ञायत इति लोकप्रतीतिर्भवति तत्र पूर्ववदेव स्त्रीणां पुरुषाणां च व्यवहारो जात इति न विशेष उक्तः एवं तयोर्महत्यानन्दे आग्रिमानन्दासिद्ध्यर्थं तयोर्विचरतोरेव सतोः सूर्योऽस्तं गत इत्याह । स्वैरं यथासुखम् अनेनामर्यादापि लीला निरूपिता ये दैत्यांशाः ते मारिताः लुण्ठिताश्च कंसहितैषिणः स्त्रियश्चात्यन्तकामपीडिताः सन्तोषं प्रापिताः एवमनुग्रह—निग्रहात्मकं तु कुर्वाणौ विचेरतुरिति ॥ २१ ॥

तदा आदित्योऽस्तं गतः भीत इति केचित् भगवानपि निवृत्त इत्याह । कृष्णरामाविति । अत्र मध्ये क्वचिदेकः श्लोकः अविगीत एव श्रूयते यदा बलं हत्वा निर्गतौ तदा लोकानां भगवदासक्त्यर्थं माहात्म्यज्ञानमपि वृत्तमित्याह । तयोस्तदद्भुतं वीर्यमिति । तदद्भुतमङ्गलक्षणं पराक्रमं यत्रैव भगवन्तं पश्यन्ति तत्रैव पृष्ठतः प्रवृत्ता लोकाः एताभ्यां धनुर्भङ्गादिकं कृतमिति सर्वत्रैवाहुः ततो निशम्य सर्वं एवं पुरवासिनः तयोः तेजः शरीरकान्तिः प्रागल्भ्यं प्रागल्भतारूपं च कोटिकन्दर्पलावण्यं रूपं च दृष्ट्वा श्रुत्वा च तौ विबुधोत्तमौ मेनिरे यथा नन्दादयः प्रथमप्रकरणे गोपवृद्धाश्च गोप्यश्चेत्यत्र तामसास्तृतीये तज्ज्ञातवन्तः राजसास्तु द्वितीये ज्ञातुं युक्ताः प्रथमे निरूप्यन्त इति विगीतमित्यपि केचित् गोकुलचरित्रमपि श्रुतमित्यर्थादेतदपि द्वितीयं द्वितीये च वक्ष्यति मन्ये कृष्णं च रामं चेति स्वापेक्षया देवा उत्तमाः तेभ्योऽप्येतावुत्तमाविति ब्रह्माण्डे सर्वोत्तमत्वमुक्तं भवति गोपैः सहितौ कृष्णरामौ पुरदर्शनं परित्यज्य शकटं शकटस्थानं यत्र नन्दादयस्तिष्ठन्ति तदीयतुः ॥ २२ ॥ २३ ॥

एवं भगवच्चरित्रमुक्त्वा प्रमाणप्रकरणत्वात् तत्र प्रमाणमतिदिशन् माहात्म्यमाह । गोप्य इति । मथुरायां तावदेव जातं यावद्गोपीभिरुक्तं युद्धादिकं तु दोषनियत्तकमिति न तन्निष्पन्नत्वेनोच्यते अनेन गोपिकाः परित्यज्य तासु क्लिष्टासु कथमन्यत् कृतवान् इत्यपि दूषणं निराकृतं यतस्ता एव याः आशिष आशासत ता एव सत्याः कर्त्तव्या इति भगवांस्तथा कृतवान् तासामेव वचनप्रमाणार्थं यतो भगवान् मुकुन्दः असत्यवचने मोक्षोऽपि दातुमशक्य इति तत्रापि मुकुन्दस्य विगमे वियोगे उपस्थिते विरहातुराः सत्यः भगवता निरुद्धा इति द्वेषादिकमकृत्वा आशिष एवाशासत ताभ्यो हितमपि कर्त्तव्यं तदभावे वाक्यं वा कर्त्तव्यमिति अतस्ता एवाशिषः मधुपुरि मथुरायां सत्या जाताः तदपि भगवता कर्त्तव्यमिति न कृतं किन्तु अनुषङ्गादेव जातमित्याह । सम्पश्यतामिति । पुरुषाणां भूषणरूपस्य मुकुटमणेर्भगवतः गात्रलक्ष्मीं सम्पश्यतामिति । ननु कथं स्त्रीणामेवं वचनं सत्यत्वेन निरूप्यते नान्येषामित्याशङ्क्याह । श्रियेति । आदौ वाक्श्री स्त्रीणां मूलभूतया लक्ष्म्या च भगवान् परिगृहीतः अतः पर्(?)ब्रह्मदार्ढ्यात् ता एवात्र प्रमाणं श्रीरितरान् ब्रह्मादीन् नु निश्चयेन भजतोऽपि सेवार्थमागतानपि हित्वा स्वस्यायनं स्थानभूतं चकमे अयमेव मम स्थानं भवत्विति सैव सर्वा गोप्यः तासां स्ववाक्यमत्र सिद्धं नत्वातिरिक्तं किंचित् ॥ २४ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वीर्यं बलं तेजः प्रभावः विबुधोत्तमौ विष्णुरुद्रौ वासुदेवसंकर्षणौ वा ॥ २२ ॥

शकटं शकटावमोचनाभिधं मधुराप्रान्तस्थं नन्दावासम् ॥ २३ ॥

व्रजसुन्दरीभावभावितत्वादकस्माद्विरहस्मृतिजनितविषादो— मुनीन्द्रः परीक्षितं पूर्वकथां स्मारयति । गोप्य इति । मुकुन्दस्य विगमे व्रजान्निर्गमनसमये या आशिषः भविष्यन्तीः सुखसम्पत्तीः आशासत अस्माकमाशिषोऽद्य पुरस्थाः प्राप्स्यन्तीत्यभाषन्त सुखं प्रभाता रजनीयमिति अद्य ध्रुवं तत्र दृशो भविष्यत इत्यादिकास्ता मधुपुर्य्यां कृष्णगात्रशोभां पश्यताम् अङ्ग ताः सत्या यथार्था एवाभूवन् कथं तादृशीनां विलापोक्तिरप्यन्यथा भवेदिति भावः । श्रीस्त्रैलोक्यवर्तिन्यपि शोभा सर्वशोभाधिष्ठात्री देवता इतरान् भजतः स्वं कामयमानानपि पुंसस्त्यक्त्वा यां गात्रशोभां चकमे भूषणभूषणाङ्गमितिवत् स्वं शोभयितुमिति भावः । गात्रलक्ष्मीं विशिनष्टि । अयनं प्राकृताप्राकृतसर्वशोभानामाश्रयणीयमित्यर्थः ॥ २४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरसंपदो निरीक्ष्य चेरतुः ॥ २१ ॥

तेजः पराभिभवनसामर्थ्यं प्रागल्भ्यं धृष्टत्वम् ॥ २२ ॥

शकटं शकटावमोचनस्थानम् ईयतुः आजग्मतुः ॥ २३ ॥

गोप्यः मुकुन्दस्य विगमे व्रजान्निर्गमने सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः । अद्य ध्रुवं तत्र दृशो भजिष्यते इत्यादि या आशिषः आशासत उक्तवत्यः ताः सर्वाः पुरुषभूषणगात्रस्य श्रीकृष्णगात्रस्य लक्ष्मीं पश्यताम् अङ्ग ताः सत्याः बभूवुः उ अहो श्रीः भजतो ब्रह्मादीन् हित्वा यद्गात्रमयनमाश्रयं चकमे कामयामास ॥ २४ ॥

———

भाषा टीका ।

फिर कंस की भेजी हुई बड़ी सेना को भी मारकर उहां से शाला के दरवाजे से बाहर निकलकर नगर की संपत्ति को देखकर बड़े हर्ष से दोनों भाई विचरते भये ॥ २१ ॥

उन दोनों रामकृष्ण के उस अरित्र वीर्य को देखकर तथा तेज को ढिठाई को रूप को देखकर सब पुरवासी उनको कोई उत्तम देवता मानते भये ॥ २२ ॥

उन दोनों के इस प्रकार से निर्भय होकर विचरते संते सूर्यनारायण अस्त होगये तब रामकृष्ण दोनों गोपों के साथ मिलकर नगर से बाहर शकटस्थान में चले गये ॥ २३ ॥

व्रज से भगवान् के चलते समय में मथुरा वासियों के जिन भाग्यों को गोपियों ने इच्छा किया रहा वह सब आज

अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ।
ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ २५ ॥
कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ २६ ॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७ ॥
अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ।
असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २८ ॥

भाषा टीका।

पुरुषों के भूषण भगवान् जिनको कि अपने भजने वाले सब देवतों को छोड़कर लक्ष्मी भजन करती है उन भगवान् के शरीर की शोभा देखने वालों के सब मनोरथ सफल होगये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अवनिक्तं क्षालितमङ्घ्रियुगलं ययोस्तौ क्षीरमिश्रमन्नं भुक्त्वा सुखं न्यवसताम् ॥ २५ ॥

परं केवलं गोविन्दरामयोर्विक्रीडितं तन्नतु पराक्रमः कश्चित् ॥ २६ ॥

उभयथा स्वप्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च तथाच मन्त्रः "इत्था उलूकश्चापप्तन् हिरण्याक्षो अयोमुखः । रक्षसां दूत आगत" इत्यादिः तथा "यदेतद्भूतान्यन्वाविश्य दैवीं वाचं वदसि" इत्यादिश्च ॥ २७ ॥

तानि दर्शयति । श्लोकत्रयेण जलादौ प्रतिरूपे दृश्यमानेऽपि शिरसस्तत्रादर्शनम् असत्यपि द्वितीये चक्षुषोऽन्तर्धानेऽङ्गुल्यादौ ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अवनिक्त इति तैर्व्याख्यातं तत्र ययोरिति षष्ठ्या तत्तदङ्गसेवककर्तृकत्वं बोध्यते । क्षीरमिश्रमिति श्रीव्रजेश्वर्या सायमशनार्थं शकटस्थापिताग्निधानीस्थितभाण्डवृन्दनिक्षिप्तमिति ज्ञेयं क्षीरेणोपसिच्यते इति कर्मणि ल्युड्विधानात् । कंसस्य चिकीर्षितं प्रातर्मञ्चारूढमहाजनसमागममध्ये रङ्गभूमौ मल्लयुद्धादिविधापनेच्छां ज्ञात्वा लोकमुखात् श्रुत्वा सुखं तद्यथार्थमायासं विना स्वस्थं यथा स्यात्तथा । यत् स्वल्पत्र, रजकादिकं हत्वा पादावनेजनमात्रं कृत्वा नतु स्नात्वा भुक्तं तत्रेदं मन्यामहे पापिनां वधः खलु परमधर्म एव तथा "प्रत्यङ्मुखन्तु तीर्थानि प्रतिहन्तं सुरालया" इति मथुरामाहात्म्ये वचनादरः कर्त्तव्य एव ततस्तदनन्तरं स्नानं युक्तमिति ॥ २५ ॥

कंसस्त्विति युग्मकम् । कंसस्तु धनुर्भङ्गादिकं निशम्य तच्च परं केवलं रामकृष्णयोर्विचित्रक्रीडारूपं नतु युद्धरूपं निशम्य भीतो दुर्निमित्तान्यचष्ट ॥ २६ ॥

दुर्मतिस्तदानीमपि श्रीभगवद्भागवतद्रोहानिवृत्तेः । अयं सर्वत्रैव हेतुः । बहूनि राज्यभङ्गादिहेतूनि तावद्ददर्श । तथा मृत्योर्दौत्यमिव कुर्वन्तीति तत्कराणि तत्सूचकानि च ददर्शेत्यर्थः ॥ २७ ॥

अदर्शनमिति त्रिकम । द्वितीयेति तैर्व्याख्यातम् । तत्र चक्षुषः अन्तर्धानं तद्धेतुर्यदङ्गुल्यादि तस्मिन्नसत्यपीत्यर्थः । आदिग्रहणात् तत्र मुख्यत्वेन मृत्युसूचकानि जागरदुर्निमित्तानि विशेषाद्दर्शयति काचकामलादयः । द्वैरूप्यं द्वित्वभानं चकारद्वयमदर्शनदर्शनयोर्द्वयोरपि प्राधान्यबोधनार्थम् । एवं तथेत्यस्य परेणान्वयः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अवनिक्तं क्षालितमङ्घ्रियुग्मं ययोस्तौ क्षीरमुपसेचनं यस्य तदन्नं क्षीरमिश्रान्नमित्यर्थः । भुक्त्वा परेद्युः कंसचिकीर्षितं ज्ञात्वा तौ च सुखं यथा तथा तां रात्रिमूषतुः उषितवन्तौ ॥ २५ ॥

कंसस्तु रामकृष्णयोः केवलं क्रीडारूपं धनुर्भङ्गं तद्रक्षिणां स्वबलस्य च वधं निशम्याकर्ण्य भीतो दीर्घप्रजागरः अलब्धनिद्रः दुःखितो बहूनि उभयथा स्वप्नजागरितभेदेन स्वाप्नानि जागरितानि च मृत्योर्दौत्यकराणि दुष्टानि निमित्तानि अचष्ट ददर्श ॥ २६ ॥ २७ ॥

तान्येव कानि चिदाह त्रिभिः । तावज्जागरितानि तान्याह । अदर्शनमिति द्वाभ्याम् । वियज्जलादौ प्रतिरूपे दृश्यमाने सति स्वशिरसस्तत्रादर्शनम् असत्यपि द्वितीये ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

क्षीरोपसेचनं क्षीरोपसेचनकभूयिष्ठमन्नम् ॥ २५ ॥

धनूरक्षिणां वधं प्रेषितस्वबलस्य वधश्च किंकृतमिति तत्राह । गोविन्देति । गोविन्दरामाभ्यां विक्रीडितम् ॥ २६ ॥

दीर्घः प्रजागरः निद्राराहित्यं यस्य स तथा अचष्ट अपश्यत् उभयथा दैहिकानि बाह्यानि च यद्वा जाग्रति स्वप्ने च दौत्यकराणि सूचकानि ॥ २७ ॥

तान्येव व्यनक्ति । अदर्शनमित्यादिना । प्रतिरूपेषु छायालक्षणेषु

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।**

एवं रक्षकान् देशान् नगरं च हत्वा गमनार्थमुद्युक्तौ तावता कोलाहले जाते कंसो बलं च प्रेषितवान् एकदेलया तं च हत्वा निर्गतावित्याह । बलञ्चेति । हस्त्यश्वरथपदात्यात्मकं बलं सेनां हत्वा शालामुखान्निष्क्रम्य युद्धावेशं परित्यज्य क्षणान्मनोहररूपावेन जातौ अतः हृष्टौ सन्तौ पुरसंपदो निरीक्ष्य चेरतुः यथैताभ्यां धनुर्वार्त्तापि न ज्ञायत इति लोकप्रतीतिर्भवति तत्र पूर्ववदेव स्त्रीणां पुरुषाणां च व्यवहारो जात इति न विशेष उक्तः एवं तयोर्महत्यानन्दे आग्रिमानन्दासिध्यर्थं तयोर्विचरतोरेव सतोः सूर्योऽस्तं गत इत्याह । स्वैरं यथासुखम् अनेनामर्यादापि लीला निरूपिता ये दैत्यांशाः ते मारिताः लुण्ठिताश्च कंसहितैषिणः स्त्रियश्चात्यन्तकामपीडिताः सन्तोषं प्रापिताः एवमनुग्रह—निग्रहात्मकं तु कुर्वाणौ विचेरतुरिति ॥ २१ ॥

तदा आदित्योऽस्तं गतः भीत इति केचित् भगवानपि निवृत्त इत्याह । कृष्णरामाविति । अत्र मध्ये क्वचिदेकः श्लोकः अविगीत एव श्रूयते यदा बलं हत्वा निर्गतौ तदा लोकानां भगवदासक्त्यर्थं माहात्म्यज्ञानमपि वृत्तमित्याह । तयोस्तदद्भुतं वीर्यमिति । तच्चनुर्भङ्गलक्षणं पराक्रमं यत्रैव भगवन्तं पश्यन्ति तत्रैव पृष्ठतः प्रवृत्ता लोकाः एताभ्यां धनुर्भङ्गादिकं कृतमिति सर्वत्रैवाहुः ततो निशम्य सर्व एव पुरवासिनः तयोः तेजः शरीरकान्तिः प्रागल्भ्यं प्रागल्भतारूपं च कोटिकन्दर्पलावण्यं रूपं च दृष्ट्वा श्रुत्वा च तौ विबुधोत्तमौ मेनिरे यथा नन्दादयः प्रथमप्रकरणे गोपवृद्धादच्च गोप्यदचेत्यत्र तामसास्तृतीये तज्ज्ञातवन्तः राजसास्तु द्वितीये ज्ञातुं युक्ताः प्रथमे निरूप्यन्त इति विगीतमित्यपि केचित् गोकुलचरित्रमपि श्रुतमित्यर्थादेतदपि द्वितीयं द्वितीये च वक्ष्यति मन्ये कृष्णं च रामं चेति स्वापेक्षया देवा उत्तमाः तेभ्योऽप्येतावुत्तमाविति ब्रह्माण्डे सर्वोत्तमत्वमुक्तं भवति गोपैः सहितौ कृष्णरामौ पुरदर्शनं परित्यज्य शकटं शकटस्थानं यत्र नन्दादयस्तिष्ठन्ति तदीयतुः ॥ २२ ॥ २३ ॥

एवं भगवच्चरित्रमुक्त्वा प्रमाणप्रकरणत्वात् तत्र प्रमाणमतिदिशन् माहात्म्यमाह । गोप्य इति । मथुरायां तावदेव जातं यावद्गोपीभिरुक्तं युद्धादिकं तु दोषनिवर्त्तकमिति न तन्निष्पन्नत्वेनोच्यते अनेन गोपिकाः परित्यज्य तासु क्लिष्टासु कथमन्यत् कृतवान् इत्यपि दूषणं निराकृतं यतस्ता एव याः आशिष आशासत ता एव सत्याः कर्त्तव्या इति भगवांस्तथा कृतवान् तासामेव वचनप्रमाणार्थं यतो भगवान् मुकुन्दः असत्यवचने मोक्षोऽपि दातुमशक्य इति तत्रापि मुकुन्दस्य विगमे वियोगे उपस्थिते विरहातुराः सत्यः भगवता निरुद्धा इति द्वेषादिकमकृत्वा आशिष एवाशासत ताभ्यो हितमपि कर्त्तव्यं तदभावे वाक्यं वा कर्त्तव्यमिति अतस्ता एवाशिषः मधुपुरि मथुरायां सत्या जाताः तदपि भगवता कर्त्तव्यमिति न कृतं किन्तु अनुपङ्गादेव जातमित्याह । सम्पश्यतामिति । पुरुषाणां भूषणरूपस्य मुकुटमणेर्भगवतः गात्रलक्ष्मीं सम्पश्यतामिति । ननु कथं स्त्रीणामेवं वचनं सत्यत्वेन निरूप्यते नान्येषामित्याशङ्क्याह । हित्वेति । आदौ वाक्स्त्री स्त्रीणां मूलभूतया लक्ष्म्या च भगवान् परिगृहीतः अतः परिग्रहदार्ढ्यात् ता एवात्र प्रमाणं श्रीरितरान् ब्रह्मादीन् तु निश्चयेन भजतोऽपि सेवार्थमागतानपि हित्वा स्वस्यायनं स्थानभूतं चकमे अयमेव मम स्थानं भवत्विति सैव सर्वा गोप्यः तासां स्ववाक्यमत्र सिद्धं नत्वतिरिक्तं किंचित् ॥ २४ ॥

---

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।**

वीर्य्यं बलं तेजः प्रभावः विबुधोत्तमौ विष्णुरुद्रौ वासुदेवसंकर्षणौ वा ॥ २२ ॥

शकटं शकटावमोचनाभिधं मथुराप्रान्तस्थं नन्दावासम् ॥ २३ ॥

व्रजसुन्दरीभावभावितत्वादकस्मात्त्विरहस्मृतिजनितविषादो—मुनीन्द्रः परीक्षितं पूर्वकथां स्मारयति । गोप्य इति । मुकुन्दस्य विगमे व्रजान्निर्गमनसमये या आशिषः भविष्यन्तीः सुखसम्पत्तीः आशासत अस्माकमाशिषोऽद्य पुरस्त्र्यः प्राप्स्यन्तीत्यभाषन्त सुखं प्रभाता रजनीयमिति अद्य ध्रुवं तत्र दृशो भविष्यत इत्यादिकास्ता मधुपुर्यां कृष्णगात्रशोभां पश्यताम् ऋताः सत्या यथार्था एवाभूवन् कथं तादृशीनां विलापोक्तिरप्यन्यथा भवेदिति भावः । श्रीस्त्रैलोक्यवर्तिन्यपि शोभा सर्वशोभाधिष्ठात्री देवता इतरान् भजतः स्वं कामयमानानपि पुंसस्त्यक्त्वा यां गात्रशोभां चकमे भूषणभूषणाङ्गमितिवत् स्वं शोभयितुमिति भावः । गात्रलक्ष्मीं विशिनष्टि । अयनं प्राकृताप्राकृतसर्वशोभानामाश्रयणीयमित्यर्थः ॥ २४ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।**

पुरसंपदो निरीक्ष्य चेरतुः ॥ २१ ॥

तेजः पराभिभवनसामर्थ्यं प्रागल्भ्यं धृष्टत्वम् ॥ २२ ॥

शकटं शकटावमोचनस्थानम् ईयतुः आजग्मतुः ॥ २३ ॥

गोप्यः मुकुन्दस्य विगमे व्रजान्निर्गमने सुखं प्रभाता रजनीयमाशिषः सत्या बभूवुः । अद्य ध्रुवं तत्र दृशो भजिष्यते इत्यादि या आशिषः आशासत उक्तवत्यः ताः सर्वाः पुरुषभूषणगात्रस्य श्रीकृष्णगात्रस्य लक्ष्मीं पश्यताम् ऋताः सत्याः बभूवुः उ अहो श्रीः भजतो ब्रह्मादीन् हित्वा यद्गात्रमयनमाश्रयं चकमे कामयामास ॥ २४ ॥

---

**भाषा टीका ।**

फिर कंस की भेजी हुई बड़ी सेना को भी मारकर उहां से शाला के दरवाजे से बाहर निकलकर नगर की संपत्ति को देखकर बड़े हर्ष से दोनों भाई विचरते भये ॥ २१ ॥

उन दोनों रामकृष्ण के उस चरित्र वीर्य को देखकर तथा तेज को ढिटाई को रूप को देखकर सब पुरवासी उनको कोई उत्तम देवता मानते भये ॥ २२ ॥

उन दोनों के इस प्रकार से निर्भय होकर विचरते संते सूर्यनारायण अस्त होगये तब रामकृष्ण दोनों गोपों के साथ मिलकर नगर से बाहर शकटस्थान में चले गये ॥ २३ ॥

व्रज से भगवान् के चलते समय में मथुरा वासियों के जिन भाग्यों को गोपियों ने इच्छा किया रहा वह सब आज

अवनिक्ताङ्घ्रियुगलौ भुक्त्वा क्षीरोपसेचनम् ।
ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् ॥ २५ ॥
कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥ २६ ॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥ २७ ॥
अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ।
असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥ २८ ॥

भाषा टीका ।

पुरुषों के भूषण भगवान् जिनको कि अपने भजने वाले सब देवतों को छोडकर लक्ष्मी भजन करती है उन भगवान् के शरीर की शोभा देखने वालों के सब मनोरथ सफल होगये ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवनिक्तं क्षालितमङ्घ्रियुगलं ययोस्तौ क्षीरमिश्रमन्नं भुक्त्वा सुखं न्यवसताम् ॥ २५ ॥

परं केवलं गोविन्दरामयोर्विक्रीडितं तत्रतु पराक्रमः कश्चित् ॥ २६ ॥

उभयथा स्वप्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च तथाच मन्त्रः "इत्था उलूकश्चापप्तन् हिरण्याक्षो अयोमुखः । रक्षसां दूत आगत" इत्यादिः तथा "यदेतद्भूतान्यन्वाविश्य दैवीं वाचं वदसि" इत्यादिश्च ॥ २७ ॥

तानि दर्शयति । श्लोकत्रयेण जलादौ प्रतिरूपे दृश्यमानेऽपि शिरसस्तत्रादर्शनम् असत्यपि द्वितीये चक्षुषोऽन्तर्धानेऽङ्गुल्यादौ ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अवनिक्त इति तैर्व्याख्यातं तत्र ययोरिति षष्ठ्या तत्तदङ्गसेवककर्तृकत्वं बोध्यते । क्षीरमिश्रमिति श्रीव्रजेश्वर्या सायमशनार्थं शकटस्थापितान्नधानीस्थितभाण्डवृन्दनिक्षिप्तमिति ज्ञेयं क्षीरेणोपसिच्यते इति कर्मणि ल्युड्विधानात् । कंसस्य चिकीर्षितं प्रातर्मञ्चारूढमहाजनसमागममध्ये रङ्गभूमौ मल्लयुद्धादिविधापनेच्छां ज्ञात्वा लोकमुखात् श्रुत्वा सुखं तद्व्यधार्थमायासं विना स्वस्थं यथा स्यात्तथा । यत् त्वद्यन्त्र, रजकादिकं हत्वा पादावनेजनमात्रं कृत्वा ननु स्नात्वा भुक्तं तत्रेदं मन्यामहे पापिनां वधः खलु परमधर्म एव तथा "प्रत्यक्षुलन्तु तीर्थानि प्रतिहत्तं सुरालया" इति मथुरामाहात्म्ये वचनादरः कर्त्तव्य एव ततस्तदनन्तरं स्नानं युक्तमिति ॥ २५ ॥

कंसस्त्विति युग्मकम् । कंसस्तु धनुर्भङ्गादिकं निशम्य तत्र परं केवलं रामकृष्णयोर्विविचित्रक्रीडारूपं ननु युद्धरूपं निशम्य भीतो दुर्निमित्तान्यचष्ट ॥ २६ ॥

दुर्मतिस्तदानीमपि श्रीभगवद्भागवतद्रोहानिवृत्तेः । अयं सर्वत्रैव हेतुः । बहूनि राज्यभङ्गादिहेतूनि तावद्ददर्श । तथा मृत्योर्दौत्यमिव कुर्वन्तीति तत्कराणि तत्सूचकानि च ददर्शेत्यर्थः ॥ २७ ॥

अदर्शनमिति त्रिकम । द्वितीयेति तैर्व्याख्यातम् । तत्र चक्षुषः अन्तर्धानं तद्धेतुर्यदङ्गुल्यादि तस्मिन्नसत्यपीत्यर्थः । आदिग्रहणात् तत्र मुख्यत्वेन मृत्युसूचकानि जागरदुर्निमित्तानि विशेषाद्दर्शयति काचकामलादयः । द्वैरूप्यं द्वित्वभानं चकारद्वयमदर्शनदर्शनयोर्द्वयोरपि प्राधान्यबोधनार्थम् । एवं तथेत्यस्य परेणान्वयः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अवनिक्तं क्षालितमङ्घ्रियुग्मं ययोस्तौ क्षीरमुपसेचनं यस्य तदन्नं क्षीरमिश्राम्नमित्यर्थः । भुक्त्वा परेद्युः कंसचिकीर्षितं ज्ञात्वा तौ च सुखं यथा तथा तां रात्रिमूषतुः उषितवन्तौ ॥ २५ ॥

कंसस्तु रामकृष्णयोः केवलं क्रीडारूपं धनुर्भङ्गं तद्रक्षिणां स्वबलस्य च वधं निशम्याकर्ण्य भीतो दीर्घप्रजागरः अलब्धनिद्रः दुःखितो बहूनि उभयथा स्वप्नजागरितभेदेन स्वाप्नानि जागरितानि च मृत्योर्दौत्यकराणि दुष्टानि निमित्तानि अचष्ट ददर्श ॥ २६ ॥ २७ ॥

तान्येव कानि चिदाह त्रिभिः । तावज्जागरितानि तान्याह । अदर्शनमिति द्वाभ्याम् । वियज्जलादौ प्रतिरूपे दृश्यमाने सति स्वशिरसस्तत्रादर्शनम् असत्यपि द्वितीये ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्षीरोपसेचनं क्षीरोपसेचकभूयिष्ठमन्नम् ॥ २५ ॥

धनूरक्षिणां वधं प्रेषितस्वबलस्य वधश्च किङ्कृतमिति तत्राह । गोविन्देति । गोविन्दरामाभ्यां विक्रीडितम् ॥ २६ ॥

दीर्घः प्रजागरः निद्राराहित्यं यस्य स तथा अचष्ट अपश्यत् उभयथा दैहिकानि बाह्यानि च यद्वा जाग्रति स्वप्ने च दौत्यकराणि सूचकानि ॥ २७ ॥

तान्येव व्यनक्ति । अदर्शनमित्यादिना । प्रतिरूपेषु छायालक्षणेषु

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्स्वपि स्वशिरसो ऽदर्शनं द्वितीये चन्द्रादावसति अविद्यमानेऽपि ज्योतिषां चन्द्रादीनां द्वैरूप्यं द्विमूर्तित्वं द्वौ चन्द्रावित्यादि बहुवचनेन दीपादयो ग्राह्याः द्विशिखात्वमित्यादिना ॥ २८ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अवमोचनं गतस्य भगवतश्चरित्रमाह । अवनिक्तमङ्घ्रियुगलं याभ्यां क्षीरमुपसिच्यते अस्मिन्निति क्षीरोपसेचनं पायसं वा पृथुका वा पक्वान्नविशेषो वा क्षीरस्योपसेचनं यथा भवति तथा वा प्रथमतो नगरगमने क्षीरोदनभोजनं मुख्यमिति यथा गमने दध्योदनभोजनं लघुपाकार्थं वेति केचित् ॥तस्तां रात्रिं सुख-मूषतुः अन्यत्रासुखं वक्तुं भगवति विद्यमानसुखस्यानुवाद उक्तः ननु पितरौ बद्धौ अमोचयित्वा कथं सुखमूषतुस्तत्राह । ज्ञात्वा कंसचिकीर्षितमिति । कंसस्य चिकीर्षितं ज्ञात्वा कंस एव तत् करिष्यति किमित्यस्माभिः क्लिष्टं कर्त्तव्यमिति यथैतावान् कालः वसुदेवपुत्रत्वं सङ्गोप्य नीत एवमियमपि रात्रिः सङ्गोप्या अन्यथा नन्दादीनां क्लेशो भवेत् व्यवहारेऽपि शत्रुं हत्वैव परि-गृहीतं ग्राह्यम् अन्यथा चौर्यं स्यात् अतः स्ववधार्थं कंस एव यत्नं करिष्यतीति निश्चित्य सुखमूषतुः ॥ २५ ॥

एवं भगवच्चरित्रमुक्त्वा अग्रिमं चरित्रंसिध्यर्थं कंसवृत्तान्तमाह । कंसस्त्विति । कंसस्य रात्रौ महती अनिर्वृत्तिर्जाता आदौ निद्रा-भावः निद्रायामपि दुःस्वप्नादिकमिति एवं मरणं निश्चयाक-मपि ज्ञात्वा पुनर्मरणार्थमेव प्रवृत्त इति भगवतो ऽक्लिष्टकर्म-त्वार्थमिदमुपाख्यानमुक्तवान् । आदौ निद्राभावे हेतुमाह । तुशब्दः सुखात्मकतां व्यावर्त्तयति । अग्रे कंसस्य दुःखमेवेति ज्ञापयितुं धन्वनो धनुषो भङ्गं श्रुत्वा रक्षिणां स्वबलस्य च वधं श्रुत्वा एतदपि गोविन्दस्य रामस्य च विक्रीडितत्वमात्रं श्रुत्वा दीर्घप्रजागरो जातः प्रकृष्टो जागरः बहिर्विक्षेपसहितः परमुत्कृष्टं विक्रीडितं परमित्यर्थः । विषये वा न केवलं प्रजागर-णमात्रं किं तु भीतोऽपि जातः । अन्तःकरणमेव तस्यादौ मरणं सूचयति । एवमपि न भगवन्तं प्रपद्यत इति । दुर्मतित्वात् दुर्नि-मित्तानि दुष्टनिमित्तानि अवश्यं भाविमरणसूचकानि बहून्येव व्यचष्ट अनेन द्वेषेणापि भगवन्तं चिन्तयन् कथं दुर्निमित्तानि दृष्टवानिति परिहृतं यतो दुर्मतिः भगवत्यनिष्टं भावयति तच्चा-त्मने फलतीति बहूनि बहुविधानि प्रकारबहुत्वमत्र विवक्षितम् उभयथा यो मृत्युः स्वस्वकीयविषयः ऐहिकपारलौकिकविषयो वा परलोकोऽपि न भविष्यतीति भयोत्पादनार्थं तथा दृष्टानि उभयथा स्वप्नजागरितानीति वा नन्वेतानि किमिति दृश्यन्ते तत्राह । मृत्योर्दौत्यकराणीति । मृत्युरत्रायास्यतीति दूतवदवबोध-यन्ति चकारात् स्वतोऽपि भयानकानि ॥ २६ ॥ २७ ॥

जागरितान्याह । अदर्शनमिति सप्तविधानि । मृत्युरपि भगवा-निति । प्रतिबिम्बे दर्पणादौ स्वशिरसः अदर्शनं ग्रीवापर्यन्तमेव प्रतिरूपं दृश्यते । चकारात्प्रत्यक्षेऽपि नासिकादिमुखाभावो दृश्यते सोऽपि न दृश्यत इति तर्ह्येतस्यैवाभाव इति चेत्तत्राह । सत्यपीति । स्पर्शादिना बहिर्ज्ञायते अन्यश्च प्रतिबिम्बो दृश्यत इति । चक्षुर्हि ज्ञानात्मकं तत् आत्मानमेव गृह्णाति स्वप्रकाशत्वात् विषयदोषसंभवाच्च । तथा सति भगवानेव दृश्यते सर्वत्र यत्र पुनः येनांशेन तिरोधत्ते तत् क्रियया सदपि ज्ञानविषयत्वेन न सम्भवति । तत्र देहे ग्रीवान्तं क्रियाप्रधानं ज्ञानांशेनैव तिरोहितः । न तु सदंशेन अग्रे क्रियायाः कर्त्तव्य-त्वात । अनेन मरणं निर्द्धारितं न तु कृतमिति बोधितम् । द्विती-यमाह । असत्यपि द्वितीये च द्वैरूप्यमिति । भगवानेक एव सर्वत्र यदा प्राणी कालाभिमुखो भवति तदा द्वितीयः कालो भासते । तदत्र सूचयति द्वितीयः समागत इति । तृतीयमाह । ज्योतिषां तथेति । ज्योतिषामपि द्वैरूप्यं दृश्यते दीपचन्द्रनक्षत्रा-दीनामेकस्मिन् दीपे अक्षिनिकोचनादिव्यतिरेकेणापि दीपद्वय-प्रतीतिः ज्योतिर्ह्याधिदैविकं रक्षकं तदपि कालव्याप्तं जातमिति ज्ञापितम् ॥ २८ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अवनिक्तं [दासैः क्षालितमङ्घ्रियुगलं ययोस्तौ क्षीरोपसेचनं क्षीरेण व्रजस्थकृष्णप्रियवस्कयणीदुग्धेन शकटोपरिस्थाग्निधान्यां व्रजेश्वर्य्यैवार्पितभाण्डस्थेन उपासिच्यमानमोदनं भुक्त्वा कंसस्य चिकीर्षितं परेद्यवि स्वहिंसनव्यवसायं ज्ञात्वापि सुख-स्वापाधिक्येन ऊषतुः भोः पुत्रौ अद्य किं कृतं मुग्धाभ्यां युवाभ्यां हन्त हन्त कथमर्चितं धनुर्भग्नं कथं वा तद्रक्षिणो हताः न जाने क्रुध्यन् कंसः श्वः किं करिष्यति हा हा कथं मया गोष्ठात् युवामानीतावित्यादिभीतस्य सर्वां रात्रिमनिद्राणस्य पितुर्नन्दस्य वाक्यं स्वापाधिक्यादेव तौ न श्रुतवन्ताविति ज्ञेयम् ॥ २५ ॥

तं च वधं केवलं रामकृष्णयोर्विक्रीडितं न तु पराक्रमं निशम्य ॥ २६ ॥

उभयथा स्वप्नजागरप्रकारेण मृत्योर्दौत्यमिव कुर्वन्तीति तानि ॥ २७ ॥

तानि दर्शयति त्रिभिर्दर्पणादौ प्रतिरूपे दृश्यमानेऽपि स्वशिर-सस्तत्रादर्शनं द्वितीये द्वैरूप्यहेतुभूते चक्षुरन्तर्धानकारियङ्गुल्यादौ असत्यपि ज्योतिषां चन्द्रादीनां द्वित्वम् ॥ २८ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अवनिक्ताङ्घ्रियुगलौ क्षालिताङ्घ्रियुगलौ क्षीरोपसेचनं दुग्ध-मिश्रमन्नम् ॥ २५ ॥

कंसस्तु धनुर्भङ्गादिकं गोविन्दरामयोः परं केवलं विक्रीडितं निशम्याकर्ण्य भीतः दीर्घप्रजागरः । अलब्धनिद्रः उभयथा स्वप्नजागरितभेदेन मृत्योर्दौत्यकराणि दुर्निमित्तानि अचष्ट ददर्श ॥ २६ ॥ २७ ॥

तान्येव दर्शयति । अदर्शनमितित्रिभिः । प्रतिरूपे जलादौ सत्यपि तस्मिन् स्वशिरसो ऽदर्शनम् द्वितीये असत्यपि ज्योतिषां चन्द्रादीनां द्वैरूप्यम् ॥ २८ ॥

———

छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ।
स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥ २९ ॥
स्वप्ने प्रेतपरिष्वङ्गः खरयानं विषादनम् ।
यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥ ३० ॥
अन्यानि चेत्थम्भूतानि स्वप्नजागरितानि च ।
पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिन्तया ॥ ३१ ॥
व्युष्टायां निशि कौरव्य ! सूर्ये चाद्भ्यः समुत्थिते ।
कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ॥ ३२ ॥

भाषा टीका ।

फिर भगवान् वासस्थान मे जाकर ठहरे तब उनके दोनों के चरण प्रक्षालनादिक भये फिर सुन्दर दुग्ध के साथ भगवान् ने भोजनादि किये फिर कंस के कर्तव्य को जान कर सुख से उस रात्री मे उहां निवास किया ॥ २५ ॥

उहां कंस ने धनुष का टूटना तथा रक्षक जनों का और अपने भेजे फौज का भगवान् से वध होना इन को केवल भगवान् की पराक्रम क्रीडा मात्र सुना ॥ २६ ॥

फिर उस दुर्मति कंस को डर होने से रात भर नींद नहीं आई बडे असगुन देख पडे दोनों प्रकार के जो कि मानो मृत्यु के दूत हैं ॥ २७ ॥

जैसे कि अपने शिर के पास मे रहते ही दर्पणादिकों मे मस्तक का नहीं दीखना दूसरा नहीं है तौ भी चन्द्र सूर्य दो दीखने ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

छायायां प्रतिबिम्बे छिद्रप्रतीतिः पिहितकर्णपुटस्य योऽन्तः श्रूयमाणो ध्वनिः स प्राणघोषस्तस्याश्रवणम् वृक्षेषु स्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामदर्शनम् एतानि जागरितानि दुर्निमित्तानि ॥ २९ ॥

स्वाप्नान्याह । स्वप्न इति । प्रेतैर्मृतैः परिष्वङ्गः खरमारुह्य यानम् विषभक्षणम् नलदमाली जपाकुसुममाली यायादिति यत्तदप्येकं निमित्तमिति ॥ ३० ॥ ३१ ॥

कष्टेन कथञ्चित्प्रभातायां पुनः सूर्यंचाद्भ्यः समुत्थित इति तथा च श्रुतिः "अद्भ्यो वा इति यं उदगान्महतोऽर्णवात् विभ्राजमानः सलिलस्य मध्यात् समा वृषभो लोहिताक्षः सूर्यो विपश्चिन् मनसा पुनातु" इति च ॥ ३२ ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वच्छायायां छिद्रप्रतीतिः सच्छिद्रतादर्शनमित्यर्थः टीकायां जागरितानीति संजातो जागरो येषु तानि जागरसम्बन्धीनीत्यर्थः ॥ २९ ॥

दीर्घप्रजागरत्वेऽपि कदाचिच्चिन्तयैव तन्द्रा स्यादिति स्वप्न इत्युक्तम् ॥ ३० ॥

स्वप्नजागरितानि तत्तत्सम्बन्धीनि ॥ ३१ ॥

व्युष्टायामिति अरुणोदयो विवक्षितः । तर्हि कथमन्धकारांश एव नेत्याह । सूर्ये चेति । समुद्रतीरस्थैः सूर्यो यदा तत एवोत्तिष्ठन्नद्दश्यत तदैवात्रत्योदयसन्निधावित्यर्थः । इति त्वरा तदनुरूपकालता च दर्शिता । मल्लक्रीडात्मकं महोत्सवं कारयामास आरेभ इत्यर्थः । एवमात्मवधोपायः स्वयमेव कृत इति तद्बुद्धयुद्धधाश्चर्येण सम्बोधयति । कौरव्येति ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नलदमाली मस्तककृतपद्मकुसुम इत्याद्युः ॥ ३० ३८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

छायायां छिद्रप्रतीतिः रन्ध्रदर्शनं कर्णरन्ध्रयोः पिहितयोः सतोरन्तःश्रूयमाणो यो ध्वनिः स प्राणघोषः तस्याश्रवणं वृक्षेषु स्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामदर्शनमित्येतानि जागरितानि दुर्निमित्तानि ॥ २९ ॥

अथ स्वाप्नान्याह । स्वप्न इति । प्रेतैः मृतैः परिष्वङ्गः आलिङ्गनं खरमारुह्य यानं विषभक्षणं नलदमाली जपाकुसुममाली तैलेनाभ्यक्तः दिगम्बरश्चैकः ॥ ३० ॥

अथान्यान्यपीत्थं भूतानि स्वप्नानि जागरितानि च दुष्टानि निमित्तानि पश्यन् तत्सूचितमरणादतीव भीतश्चिन्तया निद्रां न लेभे न प्राप्तवान्॥ ३१ ॥

हे कौरव्य ! कथञ्चिन्निशि व्युष्टायां प्रभातायां सत्याम् अद्भ्यः सकाशात्सूर्ये समुत्थिते सति "य उदगात् महतोऽर्णवाद्विभ्राजमानः सलिलस्य मध्यात्समा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनात्विति" श्रौतीं प्रसिद्धिमुपजीव्याद्भ्यः सूर्ये समुत्थित इत्युक्तम् मल्लानां क्रीडैव महानुत्सवः तं यद्वा मल्लानां क्रीडार्थं यस्तेषामुत्सवः मङ्गलस्नानादिरूपस्तं कंसः कारयामास ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

छायायां छिद्रप्रतीतिः सुषिरदर्शनं कर्णे प्रतिष्टब्धे करेण प्राणघोषस्य शरीरस्थायाः प्रणवमुखरतो मन्द्रध्वनेरनुपश्रुतिरदर्-

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चणं वृक्षेषु स्वर्णच्छायादर्शनं पृथिव्यां स्वपदानां पादलाञ्छनानामदर्शनम् ॥ २९ ॥

प्रेतपरिष्वङ्गः मृतालिङ्गनं स्वप्ने विषादनं पद्मकन्दभक्षणलक्षणं नलदमाली दक्षिणामुखो व्राजयतीति श्रुतिः—

पद्ममाशां शिरः कृत्वा यो गच्छेद्दक्षिणामुखः ।
एवं पश्यन्निशि स्वप्ने तत्क्षणान्मृत्युमेष्यतीति ॥
स्वप्ननिदर्शन इति यद्वा चक्ररक्तपुष्पं मृणालद्वयम् ।
वर्षासु जायमानं नलदं तत्कृतमालाधारी ॥

अभयं नलदं सेव्यममृणालं जलाशयमित्यमरः ॥ ३० ॥

अन्यानि "वनभूकर्णसप्तानां पञ्चनेत्र विनासिका । एक जिह्वेति पञ्चत्वलक्षणं विबुधाविदु"रित्यादीनि ॥ ३१ ॥

निशि व्युष्टायाम् निवृत्तायाम् अभिसमुत्थिते उदयपर्वतादिति शेषः ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतिदेशेन तत्राप्येकदेशाप्रतीतिरपि चतुर्थमाह । छिद्रप्रतीतिरिति । छायामध्ये छिद्रं प्रतीयत इति पुरुषोऽयं भगवानिति ज्ञापयितुं प्रतिच्छाया भवति पुरुषाकृतिं तं केचित् तेजोऽभावमाहुः सर्वत्र विद्यमानं पुरुषव्यवधानात् तावद्दूरे न दृश्यत इति तथा सच्चिदानन्दोऽपि तिरोहित इति प्रपञ्च एव तत्तदाकारेण भासत इति वस्तुतस्तु छाया पुरुषो भिन्नो भगवद्रूपस्तत्र जीवश्छिद्रं प्रकाशयेत् तदान्यत्रापि निर्गतो भविष्यति जीव इति ज्ञानवत् छायापुरुषेऽप्यर्थतिरोधानं जीवांशस्यैव आध्यात्मिकी व्यवस्थैषात्र आधिभौतिकी पूर्वं निरूपिता तत्रेयं तामसी प्राणघोषो राजसः पीतप्रतीतिश्चाक्षुषी सात्त्विकीति प्राणस्य क्रियैव प्रधानमिति तस्याः कार्यं निवर्तितम् इतो भगवान् क्रमशो निवृत्तव्यापारो भविष्यतीति ज्ञापनार्थं सामि कार्याणि निरूप्यन्ते प्राणघोषस्य कर्णपिधानेऽपि अनुपश्रुतिः वृक्षेषु सर्वत्र स्वर्णप्रतीतिः वृक्षा हि दारुरूपाः अग्नेश्च रेतः सुवर्णं तेषु यद्यग्निः तदा सर्वात्मभावः अग्नेः रेत एव तेषु दृष्टमित्यर्द्धनाश एव बोधितः । आधिदैविकमाह । स्वपदानामदर्शनमिति । स्वस्य पदानां भूमौ स्थापितानामदर्शनं भूमिर्देवता तं त्यक्ष्यतीति तत्पदानि भूमौ नाभिव्यक्तानि भवन्ति ॥ २९ ॥

एवं जागरितानि निरूप्य अवस्थान्तरेऽपि दुर्निमित्तानि निरूपयति अन्यथा मृतप्रायो व्याधितो वा जीवेत् तान्यपि सप्तविधानि प्रेतस्य परिष्वङ्गः श्मशाने पतितः शवः कंसे गते तदालिङ्गनं करोति तस्य मित्रमयमपि भविष्यतीति । प्रेतानां या मृतानां समालिङ्गनं साधु समागतोऽसीति । खरयानमिति । गर्दभारूढमात्मानं पश्यति वाक्यात् विषभक्षणम् आधिभौतिकमेतत् त्रयं सस्वरजस्तमोरूपं प्रेतानामालिङ्गनमेव ननु प्रेतत्वं गर्दभेन गमनमात्रं न तु यमपुरीप्रवेशः विषस्य भक्षणमेव मरणमिति सामिकार्याणि पुनस्त्रिविधान्युक्त्वा धर्मिणमपि चतुर्थमाह । यायादिति । नलदमाल्यायुक्तमात्मानं दृष्टवान् महाराजोऽप्येकाकी यायादिति । आशंसितमेतदिति ज्ञापनार्थं लिङ्प्रयोगः तैलाभ्यक्तं चात्मानं पश्यति एकत्वं तामसमिति दिगम्बर इत्याधिदैविकं सर्व- देवतामयेन वाससा त्यक्त इति "सर्वदैवत्यं वास" इति श्रुतेः क्रिया पुनर्यान्ते निरूपिता सा तस्य गमननिर्द्धारं कारयति ॥ ३० ॥

एवं कानिचित् निरूप्य अन्यान्यपि कालेन सूचितानि दृष्टवानित्याह । अन्यानि चेति । चकारात्स्वप्नेपि ऽविशेषतः अनुक्तौ हेतुमाह । इत्थंभूतानीति । चकारादेतान्यपि पुनः पुनर्दृष्टानीत्याह । स्वप्नजागरितानीति । चकारात् स्वप्ने यः स्वप्नः तत्र तदुपयोग्यानि दृष्टानीति न केवलमेतानि दृष्टानि किं तु स्वकार्यमपि चक्रुरित्याह । पश्यन्मरणसंत्रस्त इति । मरणात् संत्रस्तः मरणं निश्चित्य त्रासं प्राप्तवानित्यर्थः । एतदर्द्धरात्रसमये ततः प्रभृतिचिन्तया निद्रां न लेभे ॥ ३१ ॥

एवमपि न निवृत्त इत्याह । व्युष्टायामिति । कौरव्येति विश्वासार्थं सम्बोधनं निशि व्युष्टायां प्रभातायां सत्यां दोषे अपगते गुणेऽपि जाते सूर्ये चाद्भ्यः समुत्थित इति "अद्भ्यः प्रातरुदेत्यपः सायं प्रविशति य उद्गान् महतोऽर्णवा" दित्यादिश्रुतेः चकाराल्लोकेष्वप्युत्थितेषु त्रैवर्णिकानामावश्यककर्मानन्तरं च मल्लक्रीडामहोत्सवं कारयामासेति मल्लक्रीडाप्रधानोऽयं महोत्सवः यस्मिन्महोत्सवे मल्लाः क्रीडन्ति लोकवञ्चनार्थं तमेकं परिकल्पितवान् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

छायायां स्वप्रतिबिम्बे छिद्रप्रतीतिः पिहितकर्णपुटस्य योऽन्तः श्रूयमाणो ध्वनिः स प्राणघोषस्तस्याश्रवणं वृक्षेषु स्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामदर्शनम् एतानि जागरणदुर्निमित्तानि प्रेतैर्मृतैर्भ्रातृपितृबन्धुभिः सहपरिष्वङ्गः खरयानं गर्द्दभारोहणं विषादनं विषभक्षणं नलदमाली जपाकुसुममालावान् यायाद्गच्छेदिति यत्तदप्येकं दुर्निमित्तम् ॥ २९ ॥ ३० ॥

स्वप्नजागरितानि तत्सम्बन्धीनि ॥ ३१ ॥

व्युष्टायां प्रभातायां सूर्ये चाद्भ्य इति । तथा च श्रुतिः "य उद्गान्महतोऽर्णवात् विभ्राजमानः सलिलस्य मध्यात् समा वृषभो लोहिताक्षः सूर्यो विपश्चिन् मनसा पुनात्विति" ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वपदानां रजःकर्दमादिष्वदर्शनम् ॥ २९ ॥

प्रेतैः मृतैः परिष्वङ्गः आलिङ्गनम् खरेण यानं खरमारुह्य गमनम् विषस्य अदनं भक्षणम् .नलदमाली जपाकुसुममाली यायादिति यत्तदेकं दुर्निमित्तम् । तैलाभ्यक्तः दिगम्बरो नग्नो यायादिति चैकं दुर्निमित्तम् ॥ ३० ॥ ३१ ॥

व्युष्टायां प्रभातायाम् सूर्ये चाद्भ्यः समुत्थिते सति मल्लक्रीडारूपं महोत्सवं कारयामास "श्रूयते हि कयाचिच्छ्रियक्ष्या सूर्य्यस्याद्भ्यः समुत्थानम् । य उद्गान्महतोऽर्णवाद्विभ्राजमानः सलिलस्य मध्यात्समा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुना,,-त्विति ॥ ३२—३३ ॥

आनर्चुः पुरुषा रङ्गं तूर्यभेर्यश्च जघ्निरे ।
मञ्चाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ॥ ३३ ॥
तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ।
यथोपजोषं विविशू राजानश्च कृतासनाः ॥ ३४ ॥
कंसः परिवृतोऽमात्यै राजमञ्च उपाविशत् ।
मण्डलेश्वरमध्यस्थो हृदयेन विदूयता ॥ ३५ ॥
वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च ।
मल्लाः स्वलङ्कृता दृप्ताः सोपाध्यायाः समासत ॥ ३६ ॥

भाषा टीका ।

अपनी छाया में छेद दीखना कान के भीतर के शब्द का नहीं सुनना वृक्षों में सुवर्ण की प्रतीति होना कीचड आदि में अपने पैरों का चिन्ह नहीं दिखाना ॥ २९ ॥

स्वप्न में मुरदा का अलिंगन करना गदहा की असवारी करना विष का खाना और औडहुल फूलों की माला पहर कर तेल को लगा कर नंगा होकर इकेला दक्षिण को जाना ॥ ३० ॥

और भी इस प्रकार के स्वप्न जाग्रत के कुसगुनों को देख कर मरण से डर कर चिंता से कंस को निंद्रा नहीं आई ॥ ३१ ॥

हे कौरव्य ! परीक्षित जी रात के बीतते ही जलों में से सूर्य के उदय होते ही कंस ने मल्लों की क्रीडा का बडा उत्सव करवाया ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथोपजोषं यथासुखम् ॥ ३४ ॥ ३५ ॥

मल्लताल उत्तर उपरि उच्चैः श्रूयते येषु तेषु तूर्येषु उपाध्याया मल्लाचार्याः ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

महोत्सवत्वमेवाह । आनर्च्चुरिति । रङ्गं मल्लक्रीडास्थानं पुरुषाः कंसभृत्याः आनर्च्चुर्मङ्गलकलसस्थापनादिना अलं चक्रुः । तथा च हरिवंशे कंसादेशः । "श्वः सचित्राः समालाश्च सपताकास्तथैवच । सुवासिता वपुष्मन्तः उपनीतोत्तरच्छदाः । क्रियन्तां मञ्चवाटाश्च वलभ्यो वीथयस्तथा । अक्षवाटे करीषस्य कल्प्यन्तां राशयोऽव्ययाः । घण्टाभरणशोभाश्च वळयश्चानुरूपतः । स्थाप्यन्तां सुनिखाताश्च पानकुम्भा यथाक्रमम् । उदभारवहाः सर्वे सकाञ्चनघटोत्तमाः । वळयश्चोपकल्प्यन्तां कषायाश्चैव कुम्भशः" इति । पताकाभिश्चैलानि वस्त्रनिर्मितानि तोरणानि तैश्च ॥ ३३ ॥

यथोपजोषमित्यत्र विशेषः श्रीविष्णुपुराणे । "राजमञ्चेषु चारूढाः सह भृत्यैर्महीभृतः । अन्तःपुराणां मञ्चाश्च तथान्ये परिकल्पिताः । अन्ये च वारमुख्यानामन्ये नगरयोषिताम् । अक्रूरवसुदेवौ च मञ्चमध्ये व्यवस्थितौ । नगरीयोषितां मध्ये देवकी पुत्रगर्द्धिनी"ति । हरिवंशे । "मञ्चागारैः सुनिर्मुक्तैर्युद्धाय सुविभूषितैः । समाजवाटः शुशुभे समेघौघ इवार्णवः । श्रेणीनाञ्च गणानाञ्च मञ्चा भान्त्यचलोपमाः । अन्तःपुरगणानाञ्च प्रेक्षागाराण्यदूरतः । रेजुः काञ्चनचित्राणि रत्नजालाकुलानि च । गणिकानां पृथङ् मञ्चा शुभैरास्तरणाम्बरैः । शोभिता वारमुख्याभिर्विमानप्रतिमौजसः । अन्ये च मञ्चा बहवः काष्ठसञ्चयबन्धनाः रेजुः प्रस्तरणास्तत्र शतशोऽथ सहस्रश" इत्यादि । अत्र पूर्वत्र मञ्चप्रान्त इति रात्र एवेति ज्ञेयम् । मुख्यत्वेन तस्यैव प्रान्तः । ताभ्यां या देवकी भावविक्षतिशङ्कया कंसेन तथाचरितत्वाच्च नागरीमञ्चे देवकीप्रवेशे हेतुः पुत्रगर्द्धिनीति कंसेनानादृतत्वेनान्तःपुरमञ्चाप्रवेशादिति भावः । विविशुरुपाविशन् कृतं निर्माय न्यस्तमासनं तत्तद्योग्यपीठादिकं येषां ते ॥ ३४ ॥

राजमञ्चश्चोक्तस्तत्रैव । "प्राङ्मुखश्चाथ निर्मुक्तो मेरुशृङ्गसमप्रभः रुक्मयन्त्रनिभस्तम्भश्चित्रनिर्योगशोभितः । प्रेक्षागारः स कंसस्य चकाशेऽप्यधिकं श्रिया । शोभितो माल्यदामाग्रैर्निवासकृतलक्षण" इति । "स दृष्ट्वा सर्वनिर्मुक्तं प्रेक्षागारं नृपोत्तमः । श्रेणीनां दृढसंयुक्तैर्मञ्चवाटैर्निरन्तरम् । सोत्तरणाय मुक्ताभिर्वलभीभिर्विभूषितम् । काञ्चनीभिः प्रवृद्धाभिरेकस्तम्भैश्च शोभितम् । सर्वतः सारनिर्यूहं स्वायतं सुप्रतिष्ठितम् । उदक्कल्पनसुश्लिष्टं मञ्चारोहणमुत्तमम् । नृपासनपरिच्छिन्नं सञ्चार पथसङ्कुलम् । छन्नं तद्वेदिकाभिश्च मानवौघभयक्षय"मिति । तत्र मञ्चप्रेक्षागारयोः स्वल्पबहुलपरिच्छदादीनां भेदो ज्ञेयः । मण्डलेश्वराः खण्डमण्डलपतयः तेषां मध्यस्थः । कंससेवकत्वेन तेषां तन्मञ्च एवस्थितेः । राजानश्चान्ये तन्मित्रनृपा इति भेदः । यद्वा । पृथङ्मञ्चोपविष्टानां तेषामेव मञ्चवर्गमध्ये कंसमञ्चस्य वृत्तेः । विशेषण दूयता दूयमानेन हृदयेनोपलक्षित इति । स्वभावतो नित्यभीतत्वाद्विशेषतश्च दुर्निमित्तादिदर्शनात् ॥ ३५ ॥

न केवलं स्वयमेव वाद्यमानेषु अपितु मल्लानां तालश्च स्वबाहुमूलघातः । स उत्तरस्तदधिकतया श्रूयमाणो येषु नादेषु चेति तद्वाद्याद्प्यधिकशब्दोऽयं मल्लानां मद्यावलिप्तत्वोक्ता । यद्वा । बहिः साधारणेषु तूर्येषु वाद्यमानेषु अन्तस्तु मल्लोचिततालप्रधानेषु वाद्यमानेष्विति । यतो दृप्ताः सगर्वाः । अतएव सम्यगसङ्कोचेनासर्वतोऽविशन् प्रविविशुः ॥ ३६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुरुषा भृत्या रङ्गं मल्लक्रीडास्थानमानर्चुः मार्जनचन्दनाम्भःसेचनादिभिरिति शेषः। तूर्याणि भेर्यो भेरीश्च जघ्निरे वादितवन्तः स्रग्भिः पताकाभिश्चैलैश्चित्रपटैस्तोरणैश्च मञ्चाः द्विदृक्षूणामुपवेशस्थानानि उच्चानि स्वलंकृताः ॥ ३३ ॥

ततस्तेषु मञ्चेषु ब्राह्मणक्षत्रियादयः पौराः पुरवासिनो जानपदा देशवासिनश्च प्रजाः यथोपवेशं राजाज्ञामनतिक्रम्य यथोपजोषमितिपाठे यथासुखं विविशुः तथा राजानः देशान्तरेभ्यः समाहूतास्ते राजानः कृतानि परिगृहीतानि आसनानि सिंहासनानि यैस्तथाभूताः ॥ ३४ ॥

कंसस्तु मण्डलेश्वरमध्यस्थो विदूयता उपतप्यमानेन हृदयेन सहित इति शेषः अमात्यैर्मन्त्रिभिः परिवृतो राजमञ्चमखण्डमण्डलेश्वरोपवेशयोग्यं मञ्चमुपाविशत् ॥ ३५ ॥

तदा मल्लानां तालैः करतलैः भुजास्फालनमुत्तरमुच्चैः श्रूयमाणं येषु तेषु तूर्येषु वाद्यमानेषु सत्सु उपाध्यायाः मल्लाचार्याः तैः सहिताः सर्वे मल्लाः स्वलंकृताः समाविशन् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

पणवगोमुखादितूर्यम् ॥ ३३ ॥

ब्रह्माणः ब्राह्मणाः क्षत्रा मण्डलेश्वराः पुरोगमा मुख्या येषां ते तथा यथोपजोषं यथासुखं राज्ञो विविशुरिति । राजान इति ॥ ३४ ॥

विदूयता तप्यमानेन ॥ ३५ ॥

मल्लानां तालशब्दोत्तरेषु उच्चैः श्रावितताल‌शब्देष्वित्यर्थः उपाध्यायाः मल्लशिक्षाचार्याः तैः सहिताः ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र संभारानाह । आनर्चुरिति । पुरुषा अधिकारिणः रङ्गं रङ्गप्रदेशम् आनर्चुर्लेपादिना पूजितवन्तः तद्धि भूम्यन्तरिक्षाकाशात्मकं तत्र भूमिप्रदेशस्य पूजोक्ता मध्यप्रदेशस्याह । तूर्यं तूर्यो वा मङ्गलवाद्यानि भेर्यश्च उत्सवसूचकानि चकारा दन्यानि जघ्निरे शब्दिताः भेरीणां हननाभावात् ढोल्लकापरपर्यायो वा भेरीशब्दः विसर्गलोपः तूर्यशब्दो वा तूर्याणि भेर्यश्चेति उपरि शृङ्गारमाह । मञ्चाः स्वलङ्कृता इति । सर्वत्र मालाभिः स्वलङ्कृताः पताकादिभिश्च वस्त्रमयानि च तोरणानि वस्त्रैस्तोरणैश्चेति वा ॥ ३३ ॥

एवमलङ्कृतस्य रङ्गस्थानस्य उपयोगमाह । तेषु पौरा इति । आदावुपरि विनियोगः तेषु मञ्चेषु पौराः पुरवासिनो जानपदा देशवासिनश्च ब्रह्मक्षत्रौ पुरोगमावग्रे उपविष्टौ येषां मञ्चानां बहुत्वसूचनायाह । यथोपजोषमिति । ये समाहुताः खण्डमण्डलाधिपतयो राजानः ते कृतासनाः दत्तासनाः संमाननार्थं युद्धार्थं चकाराद्राजकार्याश्च कृतमासनं येभ्य इति ॥ ३४ ॥

कंसोऽप्युपविष्ट इत्याह । कंस इति । अमात्यैः परिवृतः राजमञ्चमध्ये श्रेष्ठत्वेन विनिर्मितमुपाविशत् तत्र मण्डलेश्वरा अप्युपवेशिता इत्याह । मण्डलेश्वरमध्यस्थ इति । मण्डलेश्वराणां मध्ये तिष्ठतीति बहिः शोभा निरूपिता हृदयेन विदूयता उपलक्षितः सहितो वा तेनान्तःशोभाभाव उक्तः ॥ ३५ ॥

वाद्यानां निमित्तत्वेन मध्यस्थानामुपयोगमाह । वाद्यमानेष्विति । तूर्याणां वाद्ये मङ्गलप्रतीत्या सर्वे मल्लाः समागताः तत्र च मल्लानां तळशब्दाः आस्फोटनरूपाः उत्तराणि येषां तूर्यैराकारिता मल्ला आस्फोटनतलशब्दान् कृत्वा आगता एव वयमित्युत्तरमुक्तवन्तः । एवमाकारणं प्रतिवचनं च सत्यवाक्यानामागमननिमित्तमुक्तं ततस्ते समागता इत्याह । मल्लाः स्वलंकृता इति । अथ विद्याप्राकट्यमिति मल्ललीलया अलंकृताः । अथवा कटकादिभिरेव यतो दृप्ताः केवलं शोभार्थं गच्छामः न तु कश्चिदस्माकं प्रतिपक्षोऽस्तीति । अथवा भगवतो माहात्म्यं श्रुत्वा अभीताः कथमागता इत्याशङ्क्याह । दृप्ता इति । विद्याबलमपि तेषां नास्तीति सूचयितुमुपाध्यायसहिता आगता इत्युक्तं बुद्धिदोपाभावं ज्ञापयितुं वा भगवता तथा कृताः सम्यगेव पुरस्कारपूर्वकं रङ्गस्थानमाविशन् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पुरुषाः कंसस्य कर्मचारिणः आनर्चुः मङ्गलकलसस्थापनादिना अलं चक्रुः जघ्निरे वादनार्थं काष्ठिकाभिरताडयन्त ॥ ३३ ॥

यथोपजोषं यथासुखम् ॥ ३४ ॥

विदूयता दूयमानेन हृदा उपलक्षितः ॥ ३५ ॥

मल्लतालोत्तरेषु मल्लोचिततालप्रधानेषु ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथोपजोषं यथासुखम् ॥ ३४—३५ ॥

मल्लतालः उत्तर उपरि उपरि प्रतीयमानो येषु ॥ ३६ ॥

---

भाषा टीका ।

रंग भूमी के पुरुषों ने रंग स्थान का अर्चन किया फिर ढोल नगारा सब बजे और बडे ऊंचे मंच माळा पताका वस्त्र तोरणादिकों से भूषित किये गये ॥ ३३ ॥

उन मंचानो पर पुर ग्रामों के आये ब्राह्मण क्षत्रियादिक अपने अनुकूल सुख से बैठे और बहुत राजा भी सिंहासनों पर बैठ गये ॥ ३४ ॥

कंस भी बहुत से मंत्रियोंके सहित राजा के योग बडे मंच पर बैठ गया वह सब मंडलेश्वरों के मध्य में बैठा है तौ भी हृदय उसका कांपता था ॥ ३५ ॥

जब इधर बाजा बजे और मल्लों के ताल ठोकने के शब्द भये तब बडे मल्ल अलंकृत होकर बडे गर्व से उपाध्यायों के सहित उहां पर आते भये ॥ ३६ ॥

---

चाणूरो मुष्टिकः कूटः शलस्तोशल एव च ।
त आसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः ॥ ३७ ॥
नन्दगोपादयो गोपा भोजराजसमाहुताः ।
निवेदितोपायनास्ते एकस्मिन् मञ्च आविशन् ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे मल्लरङ्गोपवर्णनं नाम
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपस्थानम् मल्लरङ्गम् ॥ ३७ ॥

समाहुताः समाहूताः निवेदितान्युपायनानि यैस्ते ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उपातिष्ठन्ति आराधयन्ति कंसं यत्र तदुपस्थानं मल्लरङ्गोचितस्थलम् आसेदुः प्राप्तवन्तः एव कारेण चाणूराद्य एवासेदुः किमुतान्ये तच्छिष्या इत्यर्थः । चकारात् प्राश्निकवर्गश्च । तथा श्रीविष्णुपुराणे । "मल्लाः प्राश्निकवर्गश्च रङ्गमध्ये समीपगः । कृतः कंसेनेति । अस्यार्थः । मल्ला बाहुयोधिनः प्राश्निकाश्चानुमोदनादिना तदुत्साहनादिपरास्तेषां वर्ग इति ॥ ३७ ॥

भोजराजेन कंसेन सम्यक् नूनमक्रूरज्ञातिभोजवर्गप्रस्थापनेन वृद्धगोपाः सादरमाहूताः सन्तः अतो धनुर्भङ्गादि शङ्कया स्वयमप्रविष्टा इति ज्ञेयम् । समाह्वानमाश्वासनाय । तच्च श्रीकृष्णरामयोर्मल्लयुद्धे प्रवर्त्तनार्थमिति ज्ञेयम् । ते श्रीकृष्णैकप्रिया अपि कुवलयापीडवधपूर्वकं स्वच्छन्देन रङ्गान्तः प्रवेष्टुं श्रीकृष्णेच्छयैव तेषामादौ तत्र गमनमित्यूह्यम अतएवैकस्मिन्नेव ननु पृथक् पृथक् मञ्चे उपविष्टाः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथा चाणूराद्यो मल्ला वल्गुवाद्यैर्मधुरवाद्यैः प्रहर्षितास्तदुपस्थानं मल्लरङ्गमासेदुराजग्मुः ॥ ३७ ॥

तथा नन्दादयो गोपाश्च भोजराजेन कंसेनाहूताः निवेदितान्युपायनानि यैस्ते एकस्मिन्मञ्चे आविविशुः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कांश्चिन्मल्लान्नाम्ना निर्दिशति । चाणूर इति । ये चाणूरप्रभृतयः त एव मल्लेषु प्रधानाः त एवमुपस्थानं रङ्गसमीपम् ॥ ३७ ॥

भोजराजेन समाहूता ये नन्दादिगोपास्ते किमकुर्वन्निति तत्राह । नन्दगोपादय इति । निवेदितोपायनाः दत्तप्रभृताः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
चत्वारिंशोऽध्यायः ॥ ४० ॥ ४२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः सर्वेष्वागतेषु चाणूराद्यो युद्धभूमिं युद्धवेषेण समागता इत्याह । चाणूर इति । पञ्चैते दैत्यप्राणरूपाः पञ्चैव उपस्थानमागताः उपसमीपे स्थीयते अस्मिन्निति यद्युद्धस्थानं चकाराद्

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्सेवका अपि आसेदुः आगतानामुत्साहमाह । वल्गुवाद्येन प्रहर्षिता इति ॥ ३७ ॥

एवं सर्वसामग्रीसम्पत्तौ समाहूता नन्दादयः समागता इत्याह । नन्दगोपादय इति । बालकास्तु भगवन्मित्राणि भगवतैव सहागमिष्यन्ति । नन्दगोपादि सदृशा ये ते भोजराजेन अप्रतिहतप्रतापेन समाहुताः समानीताः उपायनानि निवेद्य यतो गृहादेयोपायनानि गृहीतवन्तः तदाह । त इति । सर्वदा वा तदधीनाः प्रसिद्धा या प्रसिद्धैरुपायनं देयमिति विजातीयैः सह कलहशङ्कया दुर्बलाः एकस्मिन्नेव मञ्चे आविशन् अनेन मञ्चानां स्थूलता निरूपिता॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्
एकोनचत्वारिंशाध्यायविवरणम् ॥ ३९ ॥ ४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपस्थानं मल्लरङ्गभूमिम् ॥ ३७ ॥

समाहुताः सम्यक् सादरं साश्वासं चाहूता इत्यर्थः । तत्राश्वासश्च भो व्रजराज ! त्वं मे मण्डलेश्वरमुख्योऽसि गोष्ठादागतोऽपि किं भीत्यैव मां न सङ्गतोऽभूः धनुर्मङ्गं खलु पुत्रयोर्दौरात्म्यं मामंस्थाः ताभ्यां ह्यः स्वबलपरीक्षैव मह्यं दत्ता तौ बलिष्ठौ श्रुत्वैव द्रष्टुमाहूतौ तत् यूयं शीघ्रमागच्छत मामैष्येत्यादिकः अत एव राजगौरवादेव क्वापि प्रातरेव गतौ स्वपुत्रौ तत्रापश्यन्नपि तदागमनमनपेक्ष्यैव परमाप्तबुद्धिमतो गोपानेव तयो रक्षार्थं शीलशिक्षणार्थं च नियुज्य हितोपदेशवाक्यं सन्दिश्य च द्रुतं नन्द आजगाम उपनन्दादयश्च द्रुतमायाताः कंसाय निवेदितदधिघृतवस्त्रस्वर्णमुद्राद्युपायनाः राजमञ्चे उपवेशस्थलादर्शनाद्राज्ञ आज्ञयैवान्यस्मिन्नेकस्मिन् मञ्चे उपविविशुः ॥ ३८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्विचत्वारिंशकः साधु दशमेऽजनि सङ्गतः ॥ ४२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपस्थानं मल्लरङ्गं चाणूरादय आसेदुः ॥ ३७ ॥

समाहुताः समाहूताः ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्विचत्वारिंशाध्यायार्थप्रकाशः ॥ ४२ ॥

---

भाषा टीका ।

चाणूर है मुष्टिक है कूट है शल है तोशल है ए सब मनोहर बाजों से हर्षित होकर युद्ध स्थान को प्राप्त होते भये ॥ ३७ ॥

नंदादिक सब गोप भी भोज राजके बुलाने से भेटको राजा को देकरके एक दूसरे मंच पर बैठ गये ॥ ३८ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे बैयालीसमें अध्याय
की भाषा टीका समाप्त ॥ ४२ ॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

॥श्रीशुक उवाच॥

अथ कृष्णश्च रामश्च कृतशौचौ परन्तप ! ।
मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ १ ॥
रङ्गद्वारं समासाद्य तस्मिन्नागमवस्थितम् ।
अपश्यत्कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् ॥ २ ॥
बद्ध्वा परिकरं शौरिः समुह्य कुटिलालकान् ।
उवाच हस्तिपं वाचा मेघनादगभीरया ॥ ३ ॥
अम्बष्ठाम्बष्ठ ! मार्गं नौ देह्यपक्रम माचिरम् ।
नोचेत्सकुञ्जरं त्वाऽद्य नयामि यमसादनम् ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिचत्वारिंशके हत्वा गजेन्द्रं रामकृष्णयोः ।
रङ्गप्रवेशसौभाग्यं चाणूरेण च भाषणम् ॥

पूर्वेद्युरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ एत-दुक्तं भवति धनुर्भङ्गाविनाऽवाभ्यां निजैश्वर्ये सूचितेऽपि पितरौ नमुञ्चत्यावाञ्च पुनर्जिघांसत्यतोऽस्य मातुलस्यापि वधे नावयोर्दोष इत्येवं कृतापराधपरिहाराविति । मल्लानां दुन्दुभीनाञ्च निर्घोषं मल्लतालं दुन्दुभिनिर्घोषं वा ॥ १ ॥

अम्बष्ठो हस्तिपस्तेन चोदितम् ॥ २ ॥

परिकरं युद्धोचितपरिधानं कृत्वा समुह्य निबद्ध्य ॥ ३ ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

द्रष्टुमिति । दिदृक्षाव्याजेनेत्यर्थः । अम्बष्ठादिवञ्चनार्थे परि-धानीयोत्तरीयपरिधानेन मल्लवेशास्वीकारात् । अन्यथा वक्ष्यमाण-परिकरबन्धवैयर्थ्यं स्यात् उपेयतुः रङ्गस्थलान्तिकं ययतुः । परन्तप ! हे शत्रुनाशनेति तादृशदुष्टेभ्यो भवादृशां शीघ्रमेवेति भावः । अन्यत्तैः । यद्वा कृतशौचाविति नरचेष्टानुकरणमात्रम् एतन्मिषे-णैव वृद्धगोपेभ्यः पूर्वमेव विच्छिन्नाविति ज्ञेयम् ॥ १ ॥

अवधानेन स्थितमपश्यत् एतच्चाम्बष्ठप्रणोदितमपश्यदित्यर्थः॥२॥

शौरिरिति । तद्वंशयानामानन्दार्थमिति भावः । परिकरं बद्धा कञ्चुकं विसृज्य परिधानीयं मध्यबन्धपटीपटेन वेष्टयित्वा प्रालम्बमालादिकं वैकक्ष्यादित्वेन विधायेत्यर्थः । विचित्रवेशाभरणस्रगम्बराविति वक्ष्यमाणात् । कुटिलान् स्वभावतो वक्रान् अत एव पूर्वं कङ्कतिकया खण्डुष्णीषेषु दीर्घकेशेषु प्रवेशितानपि युद्धकाले विक्षेपशङ्कया अलकान् चूर्णकुन्तलान् समुह्योत्तरीये-णापि गाढं बद्धेत्यर्थः । समूह्येति पाठे दीर्घत्वमार्षं श्लेषेण दुष्ट-वधे मुखावरणादिना विघ्नापादनात् कुटिलानां स्वीयानामपि सम्यग्बन्धनं युक्तमेवेति ध्वनितम् । अन्यत्तैः तत्र परिकरमित्य-नन्तरं बद्ध्वेति पतितमिव यद्वा बद्ध्वेत्यस्यैव टीका कृत्वेति ॥ ३ ॥

वीप्सा दृढावधानार्थं क्रोधादेव वा मार्गरोधनं किल महा-पातकमित्याशयेनाह । माचिरं द्रुतम् अपक्राम मार्गादपसर नयामि प्रेष्यादि सामीप्ये वर्त्तमानवत्त्वम् । अद्येति एतावन्तं कालमुद्वृत्तो वर्त्तसे तस्मादद्य त्वामित्यर्थम् यमस्य सदनमेव सादनं स्वार्थेऽण् वस्तुतस्तु यमेन मनोनिरोधेन साद्यते आसाद्यते यत्तन्मोक्षलक्षणं वस्त्वित्यर्थं ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥
अम्बष्ठप्रचोदितं हस्तिपप्रचोदितम् ॥ २—६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् इत्युक्तम् अथ किमप-रेद्युः कंसचिकीर्षितं क्रिया तावकुरुतामित्यत्राह । अथेत्यादिना हे परन्तप ! परेद्युः प्रातः रामः कृष्णश्च कृतशौचौ कृतं शौचं स्नानादिकर्म याभ्यां तौ मल्लानां दुन्दुभीनां च निर्घोषं श्रुत्वा द्रष्टुमाजग्मतुः ॥ १ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रङ्गस्य मल्लक्रीडास्थानस्य द्वारमासाद्य तस्मिन् द्वारेऽवस्थितेन हस्तिपेन प्रचोदितं कुवलयापीडाख्यं गजं भगवानपश्यत् ॥ २ ॥

परिकरं परिधानं यथोचितं बद्ध्वा कुटिलालकान् समूह्य निबध्य गर्जितवद्गम्भीरया वाचा हस्तिपमुवाच ॥ ३ ॥

उक्तिमेवाह । अम्बष्ठाम्बष्ठेति । अपक्रम मार्गं परित्यज माचिरं विलम्बं माकार्षीः नोचेन्मार्गं न दास्यसि चेदद्य सकुञ्जरं त्वां यमलोकं प्रापयामि ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णरामाभ्यां नन्दादिभिः सह स्थितमुत पृथगिति संशयनिरासार्थं तत्कर्म कथयति । अथेति । कृतशौचौ मुखप्रक्षालनादिना प्राप्तशुद्धी यद्वा कृतं पर्याप्तं पूर्णं शौचं शुचेरग्नेः सर्वदहनत्वं ययोस्तौ अग्निवत्सर्वदाहकावित्यर्थः । अत्रापि विशेषोऽस्तीत्याह । परन्तपाविति । शत्रूणामेव तापकौ न सर्वेषामित्यर्थः । मल्लदुन्दुभिनिर्घोषं मल्लयुद्धोचितदुन्दुभिध्वनिं मल्लयुद्धं द्रष्टुं तत्समीपमाजग्मतुः ॥ १ ॥ २ ॥

परिकरं कक्षाख्यमुदरबन्धं काञ्चीमथ्वा कुटिलालकान् समूह्य एकीकृत्य बद्ध्वा ॥ ३ ॥

अपक्राम अपसर यमसादनं यमगृहम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मल्लानामथनिरित्यादि ॥ १—४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शब्दस्य हि बलं पूर्णं सप्तभिर्विनिरूपितम् ।
अर्थस्यापि बलं रोधे तावद्भिर्गिनिरूप्यते ॥
प्रपञ्चो विस्मृतः सर्वैरुत्सवार्थैरनेकधा ।
माहात्म्यस्य परिज्ञानात्तदासक्तिर्निरूप्यते ॥
द्रष्टॄणां च तथा पित्रोः सर्वेषामेव चैव हि ।
पूर्वोक्तानां तथान्येषां द्वाभ्यां द्वाभ्यामुदीर्यते ॥
एवमासक्तिशुद्धौ हि तदेकपरता पुनः ।
वक्तव्येति ततो हेतोः फलं चापि निरूप्यते ॥
चत्वारिंशत्तमेऽध्याये कृष्णासक्तिर्निरूप्यते ।
दृष्ट्वा सामर्थ्यमतुलं विस्मितानामनेकधा ॥

पूर्वाध्याये भगवतो दोषाभावाय विशेषचेष्टाफलं साधारणचेष्टारूपस्य कालस्य च दुर्निमित्तप्रदर्शनलक्षणं निरूपितं तथाप्यनिवृत्तौ भक्तोपेक्षादोषो भगवतोऽपि भविष्यतीति । अनाहूतयोरपि रामकृष्णयोर्दर्शनार्थं प्रवृत्तिर्निरूप्यते तत्र प्रथमं रङ्गदर्शनार्थं प्रवृत्तावित्याह । अथ कृष्णश्च रामश्चेति । चकारद्वयं समुच्चयार्थं सत्साधनमफलं च तत्र गच्छतीति निरोधे न कोऽपि सन्देह इति भावः । अथेति प्रक्रियान्तरं प्रमेयबलमारभ्यत इति कृतशौचौ कृतावश्यकाविति केचित् पूर्वदिन एव कृतं शौचं सशुद्धता याभ्यां परन्तपेति सम्बोधनं गूढार्थपरिज्ञानाय ब्रह्मधर्मोद्भेते तपसा ज्ञातव्या इति तदा मल्लानां दुन्दुभीनां च नितरां घोषं श्रुत्वा सर्वसामग्री सिद्धेति स्वयमपि द्रष्टुमुपेयतुः ॥ १ ॥

प्रमेयनिरोधे दृष्टं माहात्म्यं प्रयोजकमिति वक्तुं प्रथमं कुवलयापीडवधो निरूप्यते । रङ्गद्वारमिति त्रयोदशभिः । कालजयो हि पौरुषमिति स त्रयोदशात्मा संवत्सरो निरूपितः कुवलयं भूमण्डलं तस्यापीडं मुकुटस्थानीयमासमन्तात् पीडा वा यस्मात् द्विपश्रेष्ठं हन्तुमुद्यत इत्याह । रङ्गद्वारमिति । रङ्ग उत्सवस्थानं तस्यापि शोभार्थं द्वारादिनिर्माणं तावत्पर्यन्तं सम्यगेव गत्वा तस्मिन् द्वारमध्ये गजमवस्थितमपश्यत् तदैव ह्युत्सवः सम्पद्यते यदि कालो निवृत्तो भवति तदोत्सवदर्शनमिति मृत्युर्हि गजरूपः पञ्चमे निरूपितः अवस्थितमचलं दृष्ट्वैव हननार्थमपश्यत् सर्वथा हनने हेतुः कुवलयापीडमिति । सर्वेषामेव दुःखदं तत्रापि अम्बष्ठेन सङ्करोद्भवेन जातिहीनेन प्रकर्षेण प्रेरितं स्वसंमुखमागच्छन्तम् अनेन भगवतो ऽक्लिष्टकर्मत्वं निरूपितं कदाचित् साधारणोऽयं भवेत् अतस्तच्छङ्कापरिहारार्थं कृष्ण इति ॥ २ ॥

कालात्मानं दृष्ट्वापि तेन बलक्षये जातेऽपि पुनः प्रबोधं कृतवानित्याह । बद्ध्वेति । परिकरमुत्तरीयवस्त्रं कटिसम्बद्धं कृत्वा कुटिलालकांश्च हस्तद्वयेन चूडाकारेण बद्ध्वा कालमुभयतो निरुध्य भ्रमनिवृत्त्यर्थं वाचा निर्भर्त्सनं कृतवान् इत्याह । उवाचेति । हस्ती चेत् दुष्टः हस्तिपेन वारणीयः हस्तिपश्चेत् स एव मारणीयः अन्यथा उभावपि मारणीयाविति तदधीनो हस्तीति तस्य निर्भर्त्सने यथा भयमुत्पद्यते तथा सिंहसमानस्य मेघस्येव नादं कृतवानित्याह । मेघनादगभीरया वाचेति । मेघनादापेक्षयापि गम्भीरा अनेनान्तःस्थितानां तप्तानां वसुदेवादीनां तापोऽपि निवारितः ॥ ३ ॥

निर्भर्त्सनमाह । अम्बष्ठाम्बष्ठेति । निन्दायां वीप्सा प्रतिलोमजोऽम्बष्ठ इति तस्य सहजदोषकीर्तनेनैव तिरस्कारो भवति अनवहितस्य श्रवणार्थं वा द्विरुक्तिः नो मार्गं देहीति । अयमस्माकमेव मार्गः उत्सवोऽस्मदर्थमेव कृत इति अस्मभ्यं मार्गं देहीति च कथं देय इति चेत्तत्राह । अपक्रमेति । इतो ऽन्यत्र गच्छ चिरं मा अन्यथाज्ञोल्लङ्घने मदीयः कालो ऽधिकारी मारयिष्यतीति । किं च यदि केनापि प्रकारेण मार्गं न दास्यसि तत उभयोर्दोषे कुञ्जरसहितं त्वामद्यैव यमसादनं नयामि प्रापयिष्यामि मध्ये न त्यक्ष्यामीति मृत्युरेव यमगृहम् अन्यथा मल्लेभकङ्क्ययना इति गणना विरुध्येत कदाचिद्धस्ती मम युद्धसाधनमिति न मन्तव्यमित्यभिप्रायेणाह । स कुञ्जरमिति । अद्यैवेति तव मारणेऽपि विलम्बो न भविष्यतीत्यर्थः । अद्येति वर्त्तमानकालवाचकं न तु दिनवाचकम् ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्रिचत्वारिंशके हत्वा हस्तीन्द्रं रङ्गभूगतः ।
माधुर्य्यैश्वर्य्यवर्षी स चाणूरं प्रत्यभाषत ॥

अथेति । उषसि पित्रादीनपृष्ट्वैव सर्वैरलक्षितौ सवयस्यौ यमु-

एवं निर्भर्त्सितोऽम्बष्ठः कुपितः कोपितं गजम् ।
चोदयामास कृष्णाय कालान्तकयमोपमम् ॥ ५ ॥
करीन्द्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत् ।
कराद्विगलितः सोऽमुं निहत्याङ्घ्रिष्वलीयत ॥ ६ ॥
संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम् ।
परामृशत्पुष्करेण स प्रसह्य विनिर्गतः ॥ ७ ॥
पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ।
विचकर्ष यथा नागं सुपर्ण इव लीलया ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नातीरं रामकृष्णौ गतौ तत्रैव कृतदन्तधावनादिकौ भो भो वयस्याः ! मल्लतालमयो दुन्दुभिघोषोऽयं श्रूयते तदित एव प्रविशाव इति द्रष्टुं द्रुतमीयतुः ॥ १ ॥

अम्बष्ठो हस्तिपस्तेन स्वं प्रति हिंसार्थं प्रेरितम् ॥ २ ॥

परिकरं बद्ध्वा कञ्चुकं विसृज्य परिधानीयवस्त्रं मध्यबन्धनघटीपटेन वेष्टयित्वा प्रालम्बमालादिकं वैकक्षकादित्वेन निधायेत्यर्थः । कुटिलालकान् उष्णीषबन्धनकाले अङ्गुल्या केशान्तःप्रवेशितानपि युद्धकाले विक्षेपशङ्कया समुह्य उत्तरीयेणापि गाढं बद्ध्वेत्यर्थः । समूह्येति पाठे दीर्घत्वमार्षम् ॥ ३ ॥

यमस्य सादनं सदनं वस्तुतस्तु यमेन मनोनिरोधेनासाद्यते प्राप्यते इति यमसादनं मोक्षम् ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

त्रिचत्वारिंशे कुवलयापीडवधरङ्गप्रवेशादिकं भगवच्चरितं वर्णयति । अथेति । कृतं शौचं स्नानादिकं याभ्यां तौ ॥ १ ॥

अम्बष्ठेन हस्तिपेन प्रचोदितम् ॥ २ ॥

समुह्य निबध्य ॥ ३ ॥ ४ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले हे परंतप ! परीक्षित्‌जी इसके अनंतर प्रातः काल स्नानादि क्रिया करके मल्लों के नगारों के शब्द को सुनकर देखने के वास्ते रामकृष्ण दोनों पास में चले जाते भये ॥१॥

रंगद्वार में जाते मात्र श्रीकृष्ण ने देखा कि उहां पर कुवलयापीड नाम का एक हस्ती है तिसको पीलवान ने अपने ऊपर चला दिया है ॥ २ ॥

इसको देखकर शौरि भगवान् ने कमर बांधकर अलकावली को संभाल कर मेघ सरी की गंभीर वाणी से पुकार कर पीलवान् से कहा ॥ ३ ॥

हे अंबष्ठ ! तु इहां से हटजा जल्दी हमको मार्ग देदे नहीं तो आज मैं हाथी के सहित तेरेको यमपुरी को भेज देऊंगा ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

अन्तको मृत्युः कालस्तन्निमित्तं यमस्तन्नियन्ता तैरुपमा यस्य तम् ॥ ५ ॥

विगलितो विच्युतः मुष्टिना निहत्यालीयतादृश्यो बभूव ॥ ६ ॥

अचक्षाणोऽपश्यन् घ्राणमवघ्राणं तेन दृष्टिर्दर्शनं यस्य सः लोचनागोचरमपि हि पशवो घ्राणेन जानन्तीति प्रसिद्धम् परामृशत्स्पृष्टवान् पुष्करेण शुण्डाग्रेण स कृष्णः प्रसह्य बलेन ॥ ७ ॥

धनुषो धनुषां पञ्चविंशतिर्यावत्तावन्तं देशं विचकर्ष आकृष्य नीतवान् कं क इव विचकर्ष यथा नागं सर्पवद्वर्त्तमानं गजं सुपर्णवत्स्वयमिति आविरासीद्यथाप्राच्यां दिशीन्दुरिव पुष्कल इतिवत् ॥८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कृष्णाय कृष्णं ग्रहीतुम् ॥ ५ ॥

अग्रहीत् धृतवानेव महाकौतुकितया तस्य सर्वसंभवात् एवमग्रेऽप्यूह्यम् । अतएव वक्ष्यते लीलयेति क्रीडयेति च । विशेषेण गलितो निष्क्रान्तः सन् विशब्देन वज्रमाखादीनामपि निराकुलता बोध्यते । एवमग्रेऽपि अङ्घ्रिषु अलीयत पदचतुष्टयमध्यगः सन् तेनादृश्योऽभूत् ॥ ६ ॥

पुष्करेणेति श्लेषात्तस्य श्रीमदङ्गे कमलवत् कोमलताऽज्ञतेनेति ध्वन्यते ॥ ७ ॥

यथेति तैर्व्याख्यातम । यद्वा यथा [यथावत् विचकर्ष तन्मध्ये तेन क्वचिदपि स्थैर्याशस्याप्यशक्यत्वात् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

घ्राणदृष्टिः हस्ताग्रे दृष्टिर्यस्य स तथोक्तः ॥ ७—१६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थं निर्भर्त्सितो हास्तिपः क्रुद्धः कोपितं कोपं प्रापितमन्तको मृत्युः कालः तन्निमित्तं यमस्तु नियन्ता तैरुपमा यस्य तं गजं कृष्णाय चोदयामास कृष्णं प्रति प्रापयामासेत्यर्थः ॥ ५ ॥

करीन्द्रस्तं कृष्णमभिद्रुत्य बलात्कारेणाग्रहीत्स कृष्णः कराद्विगलितः

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

विच्युतः अमुं करीन्द्रं निहत्य मुष्टिना प्रताड्य तस्याङ्घ्रिषु चरणानां मध्ये ऽलीयत तस्माददृश्यो बभूवेत्यर्थः ॥ ६ ॥

तं कृष्णमचक्षाणो ऽपश्यन्नत एव संक्रुद्धः स करीन्द्रः घ्राणदृष्टिः हस्ताग्रे दृष्टिर्यस्य तथाभूतः सन् केशवं पुष्करेण तुण्डाग्रेण परामृशदन्वेषयामास स कृष्णः प्रसह्य बलात्कारेणाङ्घ्रिमध्याद्विनिर्गतः ॥ ७ ॥

तमतिबलं पुच्छे प्रगृह्य धनुषः पञ्चविंशतिर्यावत्तं देशं विचकर्षाकृष्टवान् यथा सुपर्णो गरुडः लीलया नागं सर्पं विकर्षति तद्वत् ॥ ८ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बलादाकर्षणे "कालः मृत्युर्यमे कालो मृत्यौ यमे चैवे"ति संहारेऽन्तको रुद्र इव रुद्रो माविशान्तक इति श्रुतिः क्रूराजनने यम इव स्थितः कालान्तकयमोपमः तम् ॥ ५ ॥

करीन्द्रकराद्विगलितः विश्लथितः स कृष्णः अमुं करीन्द्रं निहत्य मुष्टिनापहत्य करीन्द्रस्याङ्घ्रिषु पादेष्वलीयत निलीनो ऽभूत् ॥ ६ ॥

अचक्षाणः अपश्यन् घ्राणदृष्टिर्यस्य स तथा गजो घ्राणेन पादमध्ये निलीनं केशवं ज्ञात्वा पुष्करेण शुण्डाग्रेण तं कृष्णं परामृशत् आकृष्टवान् स कृष्णः पुष्करग्रहणात् प्रसह्य सहसा विनिर्गतः ॥ ७ ॥

विनिर्गत्य किञ्चकारेति तत्राह। पुच्छ इति । पञ्चविंशतिधनुःपरिमितस्थलपर्यन्तं नागं सर्पम् ॥ ८ ॥

---

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह। एवं निर्भर्त्सित इति । एवमित्यसह्यं निर्भर्त्सनं नितरां भर्त्सितः अम्बष्ठो हीनः अत एव हितवाक्येऽपि कुपितः हस्ती पूर्वमेव तेन कोपितः कृतोऽस्ति अतस्तत्कर्मनिपुणः मूर्खः कृष्णाय सदानन्दाय कालाय वा प्रेरयामास ननूपद्रवार्थं प्रेरणम् उपद्रवो हि कालो निमित्तमन्यथा साधनानि विपरीतानि भवेयुः अन्तको मृत्युः स चेत् कुतश्चित् जायेत ततोऽनिष्टं भवेत् अधिकारी यमो वा यथाज्ञां दद्यात् एवमङ्गं श्रुतिपुराणशास्त्रभेदेन तेष्वसंगतेषु प्रयोजनाभावात् किं प्रेरणयेत्याशङ्क्याह। कालान्तकयमोपमामिति। त्रितयप्रतिरूपोऽयं यत्रैतदभावः तत्र तेषामपेक्षा न त्वस्मिन् विद्यमाने ॥ ५॥

यद्यम्बष्ठप्रेरितः हस्ती विशेषतो नापकुर्यात् तदा न मारयेदिति तस्य विशेषापकारमाह। करीन्द्रस्तमभिन्द्रुत्येति । ननु भगवत्समीपागमने दैवैः कथं न निरुद्ध इत्याशङ्क्याह। इन्द्र इति। क्रियाशक्तिप्रधानः करी क्रियायामधिपतिश्चेन्द्रः अतो निष्प्रत्यूहं तं भगवन्तमभिप्रेत्य तरसा शीघ्रमेव करेण शुण्डादण्डेन भगवन्तमग्रहीत्। क्रिययापि भगवान् व्याप्तो भविष्यतीति बुद्ध्या तथा कृतवान् भगवांस्तु भक्तवश्य इति कराद्विगलितो जात इत्याह। विशेषेण गलितः करो हि धर्तुमेवाशक्तो जातः स्थूलबुद्ध्या धृतः सूक्ष्मो जातः यतः स प्रसिद्धः सर्वशक्तिः ततः अमुं हस्तिनं निहत्य तस्याज्ञानार्थं अङ्घ्रिष्वलीयत तस्यैव पादचतुष्टयमध्ये गुप्तो जातः अनेन दैवाद्विमोकः पलायनं च व्यावर्तितं तस्यान्तर्दृष्ट्यर्थं च जिज्ञासायामेव प्राप्यत इति ज्ञापनार्थम् ॥ ६ ॥

ततो यज्जातं तदाह। संक्रुद्ध इति। ताडनेन सुतरां क्रुद्धः दृष्ट्वा हि प्रयत्नः कर्तव्य इति दर्शनार्थं यतमानोऽपि नापश्यदित्याह। तमचक्षाण इति । भगवन्तमपश्यन् पशुत्वात् घ्राणदृष्टिर्जातः घ्राणेन हि ते जानन्ति । यतः स प्रसिद्धः युद्धादौ समर्थः केशवं परामृशत् स हि ब्रह्मादीनां सुखार्थमवतीर्ण इति तेनापि धृतो जातः तत्रापि पुष्करेण पुष्करं हस्तमुखं तदा भगवान् स्थूलो भूत्वा प्रसह्य बलात् पुष्कराद्विनिर्गतो जातः नहि पुष्करनाभः पुष्करेण ग्रहीतुं शक्यः ॥ ७ ॥

ततो भगवान् विशेषाकारेण कोपमुत्पादयितुं पश्चाद्गत्वा पुच्छं गृहीतवानित्याह। पुच्छे प्रगृह्येति। प्रकर्षेण हस्तद्वयेन गृहीत्वा धनुषो मानेन चतुर्हस्तेन पञ्चविंशतिसंख्या यावता भवति तावद्दूरं विचकर्ष धनुषः पञ्चविंशतिर्यत्रेत्यलुक्समासः ननु गजो महान् सूक्ष्मश्च भगवान् कथमाकर्षणं कृतवान् इत्याह। यथा नागमिति। सुपर्णो हि महान्तमपि नागमाकर्षति भक्ष्यो हि निःसत्त्वः कर्तव्यः अन्यथा भक्षणे प्रतिबन्धको भवेत्। तथा भगवानपि मारणार्थं तस्य बलनाशं करोति पञ्चविंशतितत्त्वानि तस्मिन् सन्ति तेषामनुरोधात् धनुश्च रक्षकमिति तेन मिता भूमिः तदर्थमाकृष्टा। तावता मार्गो भवति शतहस्तं तु करिणमिति तावद्दूरे गते मार्गस्थानां नापकाराय भवतीति धनुर्हस्तचतुष्टयम्। एतदपि लीलया अनेन तस्य स्वबलमपि ज्ञापितवान् ॥ ८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कृष्णाय कृष्णं ग्रहीतुं कालेन अन्तः आयुः शेषो येषां तेष मनुष्यादीनां यो यमः प्रसिद्धस्तेनोपमा यस्य तं तन कृष्णस्यासौ किमपि कर्तुं न प्रभविष्यतीति भीतं राजानं प्रत्याश्वासो ध्वनितः ॥ ५ ॥

तं निर्भयत्वेनैव स्थितं कृष्णं करेण शुण्डेन मध्यदेशे अग्रहीत् ततश्च स कृष्णः अमुं कुञ्जरं निहत्य वाममुष्ट्या शुण्डे प्रहृत्य तत्प्रहारविवशात् शुण्डाद्विगलितः सन् अङ्घ्रिषु तस्य महास्थूलपादेषु अलीयत अतः अदृश्यो बभूव अत्र अङ्घ्रिष्विति बहुवचनेनैवं व्याख्येयं प्रथममेकस्मिन् पादपृष्ठे अलीयत तदा घ्राणदृष्टौ कुञ्जरे तत्रैव धर्तुमुद्यते सति अन्यस्मिन् पादे अलीयत तत्रापि धर्तुमुद्यते अपरस्मिन्नित्येवं सहासमुखाम्बुजो महाकौतुकी स कुञ्जरं बहुशो वञ्चयन् स्वखेलामिवाद्भुतां लोकान् दर्शयामासेति भावः ॥ ६ ॥

अचक्षाणोऽपश्यन् पशुत्वाद्घ्राणदृष्टिः गन्धेनैव जानन् पुष्करेण शुण्डाग्रेण परामृशत् तं जग्राहेति स्वीयखेलान्तरं लोकान् दर्शयिष्यन् कृष्णः स्वमेकवारं तदुत्साहवर्धनार्थं ग्राहयामासेति भावः। ततश्च कुञ्जरे तस्मिन् कृतार्थंमन्ये सति स कृष्णः प्रसह्य बलात्कारेणैव किमरे बलं दर्शयसीत्युक्त्वा स्वं मोचयित्वा बहिर्निर्गतोऽभूत् ॥ ७ ॥

स पर्यावर्त्तमानेन सव्यदक्षिणतोऽच्युतः ।
बभ्राम भ्राम्यमाणेन गोवत्सेनेव बालकः ॥ ९ ॥
ततोऽभिमुखमभ्येत्य पाणिनाहत्य वारणम् ।
प्राद्रवन् पातयामास स्पृश्यमानः पदे पदे ॥ १० ॥
स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ।
तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सोऽहनत् क्षितिम् ॥ ११ ॥
स्वविक्रमे प्रतिहते कुञ्जरेन्द्रोऽत्यमर्षितः ।
चोद्यमानो महामात्रैः कृष्णमभ्यद्रवद्रुषा ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

धनुषः धनुषां पञ्चविंशतिं शतहस्तप्रमाणदेशं व्याप्य यथेति यथावदेव विचकर्ष कुञ्जरः स तदा यत् किञ्चिदपि स्थैर्य्यं धर्त्तुं न शशाकेति भावः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वयं कुपितः कोपितं कोपं प्रापितं मृत्युः प्राणवियोजको देवताविशेषः । कालस्तन्निमित्तभूतः यतो नियन्ता तैरुपमा यस्य सः तं कृष्णाय कृष्णं प्रति चोदयामास ॥ ५ ॥

तं श्रीकृष्णम् करेण अग्रहीत् सः श्रीकृष्णः करात् विगलितः प्रच्युतः मुष्टिना निहत्य प्रताड्य अङ्घ्रिषु करचरणानां मध्ये अलीयत करिणोऽदृश्यो बभूव ॥ ६ ॥

स करीन्द्रः तं केशवम् अचक्षाणः लोचनेन अपश्यन् अपि घ्राणेन दृष्टिर्दर्शनं यस्य सः अवघ्राणेन प्रत्यक्षीकृत्य पुष्करेण शुण्डाग्रेण परामृशत् गृहीतवान् सः श्रीकृष्णः प्रसह्य बलात् विनिर्गतः ॥ ७ ॥

केशवः अतिबलं करीन्द्रं पुच्छे यथा यथावत् सुदृढमित्यर्थः प्रगृह्य धनुषः पञ्चविंशतिं धनुषाम्पञ्चविंशतिर्यावत् तावन्तं देशं लीलया विचकर्ष आकृष्य नीतवान् सुपर्णो गरुत्मान् नागं सर्पमिव॥८॥

भाषा टीका ।

इस प्रकार से भर्त्सना करने से पीलवान् बडा कुपित भया और फिर कुपित उस हाथि को कृष्ण के उपर चलाता हुआ जो कि हाथी काल अंतक यमके सदृश भयंकर है ॥ ५ ॥

वह हाथी कृष्ण के उपर दौड कर बडे जोर से उन को सूंड से पकडाता भया फिर भगवान् उस के सूंड मे से छूट कर उस को घुंसामार कर उस के पैरों के आट में छिपगये ॥ ६ ॥

नासिका की दृष्टि वाला वह हाथी उन को नहीं देखने से बडा क्रोधित हो गया फिर सूंड से जाकर केशवजी को पकडता भया फिर भगवान् हठात् निकलगये ॥ ७ ॥

फिर बलिष्ठ उस हाथी को पूंछ में से पकड कर पचीसधनुष तक ऐसे खैंच लेगये कि जैसे गरुड सहजही सर्प को खैंच लेजावे ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स पर्यावर्त्तमानेनेति । पुच्छग्राहिणं श्रीकृष्णं ग्रहीतुं यदि दक्षिणतः परिवर्त्तते गजस्तर्हि सव्यतो भ्रामयति यदा सव्यतः परिवर्त्तते तदा दक्षिणतो भ्रामयंस्तेन सह बभ्राम गोवत्सेन भ्राम्यमाणेन बालकः स एव कृष्णो यथान्यो वा बालक इवेति ॥ ९ ॥

वारणं गजं प्राद्रवन्प्रकर्षेणासमन्ततो धावन्पातयामास यथा पतति तथा तं वञ्चयन्प्राद्रवदित्यर्थः ॥ १० ॥

किञ्च स धावन्निति अहनदहन् ॥ ११—१४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अच्युत इति । कदाचिदपि तदा तत्पुच्छग्रहणाच्युतिराहित्याभिप्रायेण । यद्वा द्रुतगतिविशेषेण सव्ये दक्षिणे चालातचक्रवद्वर्त्तमानत्वात् ॥ ९ ॥

ततो भ्रामणलीलानन्तरम् आगत्य ईषत् प्रहत्य अन्यथा सद्य एव मरणात् व्यथादावपि तदनुधावनाशङ्कैः वारणेन स्पृश्यमानः अन्यथा निकस्वाहतया तस्य वैमुख्यसम्भवात् । कौतुकविशेषासम्पत्तेश्च ॥ १० ॥

स इति तैर्व्याख्यातं तत्र किञ्चेति । पूर्वोक्तपातेन युक्तिश्चेत्यर्थः । मूले सहसेति अतिद्रुतमुत्थानेनामुना नष्टतर्कणात् । अत एव क्षितिमहनत् जानुभ्यां पतित्वा चंसानेत्यर्थः तथाच श्रीहरिवंशे । पपात भूमिं जानुभ्यां दशनाभ्यां तुतोद चेति ॥ ११ ॥

स्वलप्यालमर्षितः संजातपरमामर्षः पुनश्च महामात्रैः प्रेर्यमाणो रुषा तद्वैशिष्ट्येनाभ्यद्रवत् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति स भगवान् पुच्छग्राहिणमात्मानं ग्रहीतुं यदि गजः दक्षिणतः परिवर्त्तते तर्हि सव्यतो भ्रामयन् यदापसव्यं परिवर्त्तते तदा दक्षि-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

णतो भ्रामयन् एवं पर्याववर्त्तमानेन करिणा सह स्वयं बभ्राम यथा बालो भ्राम्यमाणेन गोवत्सेन सह भ्राम्यति तद्वत् अत्र बालकः श्रीकृष्ण एव बाल्यदशावस्थो दृष्टान्ततया विवक्षितः ॥ ९ ॥

ततो वारणं गजमभिमुखमभेत्य पाणिना आहत्य प्राद्रवन् धावन्पदे पदे वारणेन स्पृश्यमानः पातयामास स यथा पतन्निव तथा तं वञ्चयन्प्राद्रवदित्यर्थः ॥ १० ॥

यदा च गजः पतति तदा स भगवानपि क्रीडया धावन् भूमौ पतति पतितं दृष्ट्वा स यदाभिधावति तदा भगवानुत्थितो धावति गजस्तु पतितं स्थितमेव मत्वा क्रुद्धः केवलं दन्ताभ्यां क्षितिमाहन्तीति ॥ ११ ॥

एवं स्वस्य गजस्य विक्रमे प्रतिहते क्षीयमाणे सति कुञ्जरेन्द्रः केवलमत्यन्तक्रोधमात्रयुक्तः हस्तिपैर्वेलाच्चोद्यमानः प्रेर्यमाणः कृष्णं रुषाभ्यद्रवदभ्यधावत् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽच्युतः सव्यदक्षिणतो बभ्राम पुच्छङ्गृहीत्वेतिशेषः परि परित आवर्तमानेन पुनः पुनः सव्यतो दाक्षिणतश्च भ्रमता गजेन गृह्यत इति कथमिव बालको भ्राम्यमाणेन गोपुच्छेन गृहीतेन भ्रमति यथा तथेति ॥ ९ ॥

ततः किमनया लीलयेति मत्वा पुच्छं मुक्त्वा करीन्द्रस्याभिमुखं गत्वा पाणिना वारणम् आहत्य प्राद्रवदित्यन्वयः ततः किमभूदिति तत्राह । यापयामासेति प्राद्रवन्कृष्णः करीन्द्रं यापयामास स्वपृष्ठत आगमयायास गजोऽपि तमन्वाद्रवदित्यर्थः ॥ १०—१३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः स मोचयितुं समर्थः स्थिरीभवितुं च परावृत्या भगवान् धर्तव्य इति यत्नं कृतवानित्याह । स पर्यावर्तमानेनेति । सव्यदाक्षिणतः वामेन दक्षिणेन च भागेन परिवर्तमानेन कृत्वा स प्रसिद्धो येनाकृष्टः भयाभावायाह । अच्युत इति । श्रोतुः शङ्कानिवृत्त्यर्थं सर्वत्रैव तथोक्तवान् । स्वयमपि भगवान् बभ्राम । स हि भगवदर्थं प्रयत्नं करोतीति । किं च भगवतैव स भ्राम्यमाणो जातः । अतो भ्रामयन् स्वयं बभ्राम । ननु भगवान् सर्वसमर्थः किमिति बभ्राम तत्राह । गोपुच्छेनेव बालक इति । बालको हि लीलया परिभ्रमति तथा लीलाप्रदर्शनार्थं तथा कृतवान् ॥ ९ ॥

बीलार्थमेव तथा करणमिति पश्चाल्लीलां त्यक्त्वा प्रौढलीलाप्रदर्शनार्थं सम्मुखमागत्य युद्धं कृतवानित्याह । तत इति । ततः पुच्छं विसृज्य अभिमुखमभ्येत्य हस्तिसम्मुखे गत्वा सजातीयबालकसम्मुखमिव पौरुषख्यापनार्थं पाणिना मुखे आहत्य प्राद्रवन् स हि हस्ती वारणः सर्वानेव निवारयितुं शक्नोति तादृशोऽप्यप्रयोजको जात इति वक्तुं तथोक्तवान् किं च तथैव प्राद्रवत् यथा पदे स्पृश्यमानो भवति । तथा भवनस्य प्रयोजनमाह । पातयामासेति । सूक्ष्मो भगवान् महानुच्चैः स्पृष्ट्वा धर्तव्य इति नीचो भवन् पतति एवमनुलोमप्रतिलोमाभ्यां क्रीडां कृतवान् ॥ १० ॥

ततो वञ्चनेन दैत्यांशः स इति सोऽपि प्रकारो ज्ञायत इति ज्ञापयितुं लीलां कृतवानित्याह । स धावन्निति । क्रीडया धावन् अनवहित इव भूमौ पतितः पतनपर्यन्तमेव स दृष्टवान् । भगवांस्तु पतित्वा सहसैवोत्थितः ततस्तस्य भ्रमकार्यमाह । तं मत्वेति । भगवन्तं तथा मत्वा पूर्वमपकृतः क्रुद्धः सन् भुवं दन्ताभ्यां पतितस्थानमहनत् ततोऽतिव्यथां प्राप्तवान् साधनत्रयमपि तस्यैवं पराहतं जातम् ॥ ११ ॥

ततः क्रुद्धो यत्कृतवांस्तदाह । स्वविक्रम इति । स हि साधनबळे क्षीणे सम्पूर्णेनैव शरीरेण तदुपरि पतिष्यामीति बुद्ध्या प्रवृत्तः यतः कुञ्जरेन्द्रः स्वरूपतो महान् अतः साधने क्षीणेऽपि न निवृत्तः किं तु साधनक्षयः रोष एव हेतुर्जात इत्याह । अत्यमर्पण इति । अधिकं मर्षणं क्रोधो यस्य तादृशो जातः तत्रापि महामात्रैः उपरि पृष्ठतः परितश्च चोद्यमानः कृष्णं सर्वमारकं सुतरां साम्प्रतं दैत्यपक्षस्य शुद्धभावेन चेद्गच्छेत् कृतार्थो वा भवेत् किं तु रुषा अभ्यद्रवत् ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च कुञ्जरस्य किञ्चिदुत्साहप्रापणार्थमाकर्षणवेगं भगवान् किञ्चित् शिथिलीचक्रे इत्याह । स अच्युतः पर्य्यावर्त्तमानेन कुञ्जरेण सह सव्यदक्षिणतो बभ्रामेति किंचिदुत्साहं प्राप्य पुच्छग्राहिणं कृष्णं ग्रहीतुं यदि दक्षिणतः परिवर्त्तते कुञ्जरस्तदा तं सव्यतो भ्रामयन् स्वयं भ्रमति यदि च सव्यतस्तदा दक्षिणत इत्येवं स बभ्राम भ्राम्यमाणेन गोवत्सेन सह बळवान् बालक इवेति ॥ ९ ॥

अथान्यां खेलां दर्शयन् पुच्छं तत्याजेत्याह । तत इति । पाणिना आहत्य ईषदेव प्रहृत्य यथावत्प्रहारे सद्योमरणात् प्रारभ्यमाणखेला न निष्पद्येत इति भावः । प्राद्रवन् सन्निति प्रकर्षेण द्रवन्नपि आ ईषदेव द्रवन् तदुत्साहवर्द्धनार्थं स्वस्य प्रद्रवणं दर्शयामास तं वस्तुतस्तु स्वस्य नदीपदेव द्रवणमित्यर्थः । अत एव पदे पदे तेन स्पृश्यमानः सन् तं पातयामासेति तं पातयितुमेव स्वयं मुहुर्मुहुर्द्रवणासमर्थ इव स्खलतिस्मेत्यर्थः ॥ १० ॥

ततश्च कठोरतरशिळामय्यां भूमौ तमत्याघातं प्रापयितुं स्वस्य पतनमेव तं दर्शयामास न तु लाघवादुत्थानमित्याह । स इति । तं पतितं मत्वा तमेव हन्तुमुद्यतोऽपि क्षितिमेवाहन् जानुभ्यां पतित्वा चखानेत्यर्थः । तस्य दन्तक्षेपकाले एवातिसूक्ष्मे कृष्णस्योत्थायान्यत्र गमनात् अत एव अतर्कितेति सहसेत्यभिधानात् सहसोत्थित इति प्रयुक्तम् ॥ ११ ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लीलया विचकर्षेत्युक्तं तां लीलां दर्शयति । सः अच्युतः श्रीकृष्णः पुच्छग्राहिणमात्मानं ग्रहीतुं यदि दक्षिणतः परिवर्तते गजस्तर्हि सव्यतो यदि सव्यतः परिवर्तते तदा दाक्षिणतश्च भ्रामयन् इत्थं सव्यदक्षिणतः पर्यावर्तमानेन भ्राम्यमाणेन गजेन्द्रेण सह बभ्राम भ्राम्यमाणेन गोवत्सेन बालक इव ॥ ९ ॥

ततस्तदनन्तरं स अच्युतः पुच्छं हित्वा अभिमुखमभ्येत्य वारणं

तमापतन्तमासाद्य भगवान् मधुसूदनः।
निगृह्य पाणिना हस्तं पातयामास भूतले ॥ १३ ॥
पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया।
दन्तमुत्पाट्य तेनेभं हस्तिपांश्चाहनद्धरिः ॥ १४ ॥
मृतकं द्विपमुत्सृज्य दन्तपाणिः समाविशत्।
अंसन्यस्तविषाणोऽसृङ्मदबिन्दुभिरङ्कितः।
विरूढस्वेदकणिकावदनाम्बुरुहो बभौ ॥ १५ ॥
वृतौ गोपैः कतिपयैर्बलदेवजनार्दनौ।
रङ्गं विविशतू राजन्! गजदन्तवरायुधौ ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

गजं पाणिना आहत्य वारणेन पदे पदे स्पृश्यमानः प्राद्रवन् पातयामास कष्टेन समं ततो धावनेन मोहयित्वा पातयामासेत्यर्थः ॥ १० ॥

किञ्च सः श्रीकृष्णः तमुत्थितं दृष्ट्वा धावन् पुनः प्राद्रवन् क्रीडया भूमौ पतित्वा सहसोत्थितः यदा तदा तं श्रीकृष्णं पतितं मत्वा सः गजः क्षितिमहनत् अहन् ॥ ११--१४ ॥

---

भाषा टीका।

वे अच्युत भगवान् घूमते हुये उस हाथी के दहिने बांये तरफ से घुमाने से ऐसे घूमे जैसे गऊ के बछारा से बालक घूमता है ॥ ९ ॥

तिसी के पीछे हाथी के सामने आकर हाथ से हस्ती को थप्पड मार कर दौड कर पीछे से गिर कर पैंड पैंड मे उसको गिराते गये ॥ १० ॥

वह भगवान् क्रीडा से दौडते हुये भूमी में गिर कर शीघ्र ही उठ कर खडे भये उनको गिरे हुये जान कर क्रोधित हो कर हाथी ने दातों से पृथिवी मे प्रहार किया॥११॥

अपने पराक्रम के नाश होने से हस्ती बडा क्रोधित भया फिर पीलवानों के प्रेरणा से रोष के मारे श्री कृष्ण के ऊपर दौडता भया ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

रङ्गं समाविशत्तदा वीरश्रिया बभौ कथम्भूतः अंसे न्यस्तं विषाणं गजदन्तो येन सः असृजो रक्तस्य मदस्य च बिन्दुभिः परितोऽङ्कितः विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनाम्बुरुहं यस्य सः ॥ १५ ॥

न केवलं स एकः समाविशत्किन्तु वृतौ गोपैरिति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स्वयं भगवानप्यंशेन च तादृशमधोः सूदनोऽपि श्रीमन्तराकारोचितमल्लक्रीडारसानुरूप्येणैव पाणिना हस्तं शुण्डां प्रगृह्येत्यर्थः ॥ १३ ॥

पतितं सन्तं तं श्रीचरणेन शिर आक्रम्य पाठान्तरे पतितस्य स्वतः तस्य दन्तमुत्पाट्य हरिरिति सिंहवत्तत्प्राणहरणात् हस्तिहननेन सिंहरूपत्वाच्च ॥ १४ ॥

मृतकमित्यर्द्धकं दन्तयुक्तवामपाणिः। द्वितीयदन्तोऽस्य श्रीबलदेवेनोत्पाट्य गृहीत इति ज्ञेयं गजदन्तवरायुधाविति वक्ष्यमाणत्वात्। सम्यक् मत्तगजेन्द्रगत्या शोभाविशेषेण च आ ईषद्द्वारान्तः आविशत् प्रविवेश शोभाविशेषमाह। अंसो वामस्कन्धः अङ्कितः विचित्रैरिव भूषितः विशेषेण विचित्रतया वा रूढाः प्रादुर्भूताः। रुहेः प्रादुर्भावार्थत्वात् सच्चिदानन्दविग्रहे विकारासम्भवात् अन्तर्भूतानन्ततादृशविलासधर्माणां लीलानुरूप्येण केवलाविर्भावतिरोभावसम्प्रतिपत्तेश्च। अम्बुरुहरूपकेण तस्यापि जलबिन्दुभिर्यथा शोभा स्यात्तथा इति ध्वन्यते ॥ १५ ॥

प्रवेशे पूर्वतो विशेषविवक्षयोक्तपोपन्यायेनाह। वृताविति। कतिपयैरिति। वृद्धानां श्रीव्रजेन्द्रेण सह गमनात् सवयस्सामन्यमासन्नानामेव श्रीगोकुलतः सङ्गमनात् बलदेव इत्यनुजस्नेहेन दुष्टवधार्थं तदानीं बलविशेषप्रकटनात्। जनार्द्दन इति जनैर्निजभक्तैः श्रीनारदादिभिरर्द्यते कंसवधार्थं याच्यते यः स तथा राजन्निति हर्षेण सम्बोधयति गजस्य दन्तावेव तन्मारणसाधनतया कंसादौ भयदत्वेनांसगृहीततया च वरे आयुधे ययोः यद्वा गजदन्तश्रेष्ठौ आयुधे ययोस्तौ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदा भगवानापतन्तं गजमासाद्य स्वपाणिना हस्तं तस्य शुण्डं प्रगृह्य भूतले पातयामास ॥ १३ ॥

पतितं गजेन्द्रं यदा पादेनाक्रम्यावष्टभ्य सिंह इव दन्तमुत्पाट्य तेनैव दन्तेनैव हस्तिपानहनत् ॥ १४ ॥

मृतं गजमुत्सृज्य दन्तः पाणौ यस्य तथाभूतः ततोऽंसे न्यस्तः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निहितो विषाणो गजदन्तो येन सः असृजः रुधिरस्य मदोदकस्य च बिन्दुभिरङ्कितः विरूढा उद्गताः स्वेदकणिका यस्मिंस्तद्वदनाम्बुरुहं यस्य तथाभूतो बभा ॥ १५ ॥

रामकृष्णौ कतिपयैर्गोपैः परिवृतौ गजदन्तौ एव वरे श्रेष्ठे आयुधे ययोस्तौ हे राजन्! रङ्गं मल्लक्रीडास्थलं विविशतुः ॥१६॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तेन दन्तेन हस्तिपान् महामात्रान् ॥ १४ ॥

क्षिपं गजं विषाणोपरक्तेन असृजा रुधिरेण मदजलबिन्दुभिश्च विरूढा विस्तृता स्वेदजलकणिका यस्मिंस्तत्ऽरूढस्वेदकणिक तादृशं वदनाम्बुरुहं ययोस्तौ तथा ॥ १५॥१६ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भगवान् सर्वात्मना समायातीति मारितवानित्याह । तमापन्तन्तमिति । उपरि पतन्तमासाद्य स्वयमग्रे गत्वा मारणप्रकाराभिज्ञः भगवान् शङ्का या अमारणं वा न सम्भावितमिति ज्ञापयितुमाह । मधुसूदन इति । यो हि मधुकैटभौ मारितवान् तस्यास्य सत्त्वस्यास्य हनने कः प्रयास इति किं तु स्वपाणिना तस्य हस्तं प्रसार्यमाणं निगृह्य नितरां लकुटवत् गृहीत्वा शाखामिव भूतले पातयामास स्थूलशरीरस्य पातनेनैव मूर्च्छा सम्पन्ना ॥ १३ ॥

ततो यत्कृतवांस्तदाह । पतितं तं पदाक्रम्येति । प्रथमव्यापारेणैव पतितः तादृशं मस्तके पादं दत्त्वा दन्तमुत्पाट्य तेनैव दन्तेनाहनत् उत्पाटने प्रकारमाह । मृगेन्द्र इति । स हि कुम्भस्थलं विदार्य तत्र दन्तमूलं बन्धनेभ्यः पृथक्कृत्य पश्चाद्धन्तमेवोत्पाटयति । परं महता प्रयासेन भगवांस्तु लीलयेति विशेषः ततस्तेनैव दन्तेन सर्वानेव महामात्रान् यैर्यैः प्रेरितः तानहनत् चकारात् हस्तिनं ननु गजः किमिति हतः अर्धमृत एव त्यक्तुमुचित इति चेत्तत्राह । हरिरिति सिंहो हि मारयत्येव शाश्वतिको विरोध इति भगवांश्च हरिः सर्वदुःखहर्ता अर्धमृतस्य जीवने महान् क्लेश इति वसुदेवादीनामपि दुःखं दूरीकर्तव्यमिति ॥ १४ ॥

एवं हस्तिनं हत्वा प्रतिबन्धकापगमे तन्निवृत्तिं सूचयन् अन्तः प्रविष्ट इत्याह । मृतकमिति । स हि पूर्वमेवासमर्थः अप्रयोजको जीवः यतः यानेऽप्युभयसापेक्षः अतस्तं विसृज्य दन्तपाणिर्भूत्वा सम्यग्गत्वा आविशत् तदा प्रविष्टस्य भगवतः स्वरूपं वर्णयति । अंसन्यस्तविषाण इति । लोकानां प्रतीत्यर्थं दन्तोऽयं महामार इति अंसे स्थापितवान् साप्येका लीला ततः असृङ्मदयोः बिन्दुभिरङ्कितोऽपि जातः सर्वाङ्गे समाकर्षणेन दन्तस्य तत्र स्थितः मदः रुधिरं च कणशो भगवति सम्बद्धः यथा पूर्वदिवसे माल्यया चन्दनेन कुङ्कुमे एवमिदानीमपि दन्तेन मदबिन्दुभिश्च कुङ्कुमे विषाणमिति कदाचिद्गोपविषाणं गोपालाः स्कन्धेऽपि बिभ्रति नापूर्वमिति स्थापयितुं कुवलयापीडं च बलीवर्दं ज्ञापयितुं किं च विशेषेण रूढा याः स्वेदकणिकाः ता वदनाम्बुरुहे यस्य भक्तार्थे भगवानेवं प्रयासं करोतीति ज्ञापयितुं कणिकोद्भेदः एतादृशोऽपि बभौ सर्वोत्कृष्टकान्तियुक्तो जात इत्यर्थः ॥ १५ ॥

एवं भगवन्तं वर्णयित्वा सर्वेषां सुखेन रङ्गप्रवेशमाह । वृताविति । केचन गोपाला इतस्ततः पलायिताः केचनान्तः प्रविष्टाः केचनैव स्थिताः अतः कतिपयैरेव गोपैर्वृतौ बलभद्रेणापि द्वितीयो दन्तो गृहीतः हस्तिनः सर्वस्वं तदिति शत्रोर्धनं ग्राह्यमिति अग्रे साधनस्याप्यपेक्षितत्वात् तत्र प्रवेशे दैत्यवधार्थं सामर्थ्यं सहजद्वैपं सूचयितुं बलदेव इत्युक्तवान् जनार्दनः अविद्यामपि मारयतीति । किं तस्य तदुग्रहीतमारणे प्रयास इति रङ्गमिति तादृशौ रङ्गं रङ्गप्रदेशं गजदन्तावेव वरे उत्कृष्टे आयुधे ययोः तादृशौ इदानीमेव मारयिष्याव इति बोधयन्ताविव निर्विविशतुः निःशङ्कतया प्रविष्टौ ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च समयाधिक्यमालक्ष्य तेन सह खेलां समापयामासेत्याह । तमिति । पाणिना एकेनैव अवहेलया वामेनैवेत्यर्थः हस्तं शुण्डं नितरां गृहीत्वा ॥ १३ ॥ १४ ॥ ॥

अंसन्यस्तविषाणः स्कन्धार्पितगजदन्तः असृजो रक्तस्य मदस्य च बिन्दुभिः परितोऽङ्कितः विरूढा उद्गताः प्रस्वेदकणिकास्ताभिर्नीहारकणिकाभिरिवोपलक्षितं वदनाम्बुरुहं यस्य स मूर्तया वीररसश्रियेव बभौ ॥ १५ ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

समाविशत् रङ्गमितिशेषः असृजो रक्तस्य च बिन्दुभिः परितः सर्वतोऽङ्कितः विरूढा उद्गताः स्वेदकणिकास्ताभिरुपलक्षितं वदनाम्बुरुहं यस्य सः इत्थम्भूतया वीरश्रिया बभौ ॥ १५ ॥

प्राधान्यविवक्षया रङ्गे भगवत्प्रवेशमुक्त्वा अथ बलादिसहितस्य प्रवेश माह । वृताविति ॥ १६ ॥

### भाषा टीका ।

मधुसूदन भगवान् ने उसको आते देखकर अपने हाथ से उसके सूंड को पकड कर जमीन में गिरा दिया ॥ १३ ॥

फिर हरि भगवान् ने गिरे हुये उस हाथि को सिंह की नाईं अनायास से पैर से दबा कर दान्त उखाड कर उस हाथी को तथा हस्ति पालक सबों को मार दिया ॥ १४ ॥

फिर भगवान् मरे हुये उस हाथी को छोड कर दांत को हाथ में ले कर फिर दांत को कांधे में रख कर रक्त के बिंदुओं से अंकित हो कर बीच में पसीना के बिंदुओं से मुख में शोभित होते भये भीतर को गये ॥ १५ ॥

हे राजन्! कई एक गोपों के सहित बलदेव जी तथा श्रीकृष्ण दोनों गज दंत के आयुध को लेकर रंग भूमी में प्रवेश करते भये ॥ १६ ॥

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्।
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनाम् ।
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥ १७ ॥
हतं कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ ॥
कंसो मनस्यपि तदा भृशमुद्विविजे नृप ! । १८ ॥
तौ रेजतू रङ्गगतौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ ।
यथा नटावुत्तमवेषधारिणौ मनःक्षिपन्तौ प्रभया निरीक्षताम् ॥ १९ ॥
निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप !।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम् ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र शृङ्गारादिसर्वरसकदम्बमूर्तिर्भगवांस्तत्तदभिप्रायानुसारेण बभौ न साकल्येन सर्वेषामित्याह । मल्लानामिति । मल्लादीनामशानां द्रष्टृणामशन्यादिरूपेण दशधा विदितः सन् साग्रजो रङ्गं गत इत्यन्वयः मल्लादिष्वभिव्यक्ता रसाः क्रमेण श्लोकेन निबध्यन्ते--

रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा ।
भयानकश्च बीभत्सः शान्तः सप्रेमभक्तिकः ।

अविदुषां विराट् विकलः अपर्याप्तो राजत इति तथा अनेन बीभत्सरस उक्तः विकलत्वञ्च क्व वज्रसारसर्वाङ्गावित्यादिना वक्ष्यते ॥ १७ ॥

उद्विविजे भीतो बभूव ॥ १८ ॥

यथा नटाविति निर्भयत्वं दर्शितम् ॥ १९ ॥

प्रहर्षवेगेनोत्कलितान्युज्जृम्भितानीक्षणान्याननानि च येषां तयोराननं पपुः परं न तृप्ताः निराकाङ्क्षा न बभूवुरित्यर्थः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मल्लानामिति तैर्व्याख्यातम् । तत्र सर्वरसकदम्बमूर्त्तिरिति कार्यकारणाभेदात् । "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवती"ति श्रुतेः । विशेषश्चैवं मल्लानां परमशूरम्मन्यतया गर्वितानामवज्ञातचरस्याप्यशनितुल्याङ्गत्वेन हरेः स्फुरणादशनिवद्विरोधिजनमवगणय्य प्रवेशाच्च मल्लानां क्रोधस्थायिभावमयो रौद्रः । नृणां तद्द्वेषितदीयम्मन्यव्यतिरिक्तानां पौरादीनां लोकोत्तरविलासादिदर्शनेन विस्मयस्थाय्यद्भुतः । स्त्रीणां मान्यादिव्यतिरिक्तानां स्मरत्वेन प्रियभावमयी रतिर्व्यक्ता ततस्तत्स्थायी शृङ्गारः गोपानां श्रीदामादीनां स्वजनो वयस्यः ततोऽसङ्कुचितचित्ततया गजरक्तमदबिन्दुदन्तादिजातविलक्षणवेशदर्शनेन तेषां हासस्थायिभावो हास्यः । असतां राज्ञां शास्तेति तद्वीर्यातिशयदर्शनेन युद्धोत्साहस्थायी वीररसः । पित्रोः श्रीदेवकीवसुदेवयोः श्रीनन्दयशोदयोर्वा तदुपलक्षणत्वेन तत्समवासनानामन्येषामपि शिशुत्वस्फूर्त्तेस्तदीयमार्दवज्ञानेन मल्लादिदौरात्म्यशङ्कया शोकस्थायी करुणः । एष एव दयाशब्देन लक्षितः कंसस्य मृत्युस्तद्धेतुः तेन भयस्थायी भयानकः अविदुषां सच्चिदानन्दविग्रहत्वेन विद्वद्गणसंमतेऽपि तस्मिन् विकलत्वमननेन भौतिकनिर्णयाज्जुगुप्सा स्थायी बीभत्सः । योगिनां ज्ञानिभक्तानां परं तत्त्वं परंब्रह्मविग्रहः तेन शान्तिस्थायी शान्तः । शमो मन्निष्ठता बुद्धेरिति शान्तिशब्दस्य तन्निष्ठावाचित्वेन तन्निष्ठायाश्च तत्प्रीतिमात्रजन्यत्वेन दास्यसख्यादिभावविशेषानिर्देशेन चाखिलाग्यवासना शान्तिपूर्वकस्तत्स्वरूपैकालम्बनः प्रीतिविशेष एव शान्तिरित्युच्यते साऽस्यास्तीति अर्शआदित्वादच् । वृष्णीनां परमाराध्य इति सप्रेमभक्तिकः भक्तिराराध्यतया ज्ञानम् । प्रेमात्मिका भक्तिः प्रेमभक्तिः । तया स्थायिरूपया सह वर्त्तत इत्यतोऽयं रससंग्रहश्लोकः "रौद्रोऽद्भुतः शुचिरथो धृतिसख्यहासो वीरोऽथ वत्सलयुतः करुणो भयाङ्कः । बीभत्ससंज्ञ उदितोऽथ तथैव शान्तः सप्रेमभक्तिरिति ते ह्यधिका दश स्युः" इति अत्र क्रमं विना निर्देशस्तत्रोच्चावचजनानां दृष्टिपातस्तथैव जात इति विवक्षया । अथवा अथ ये तत्र प्रतिकूलज्ञानाः अज्ञानाः सज्ञाना अनुकूलज्ञानाश्चेति सामान्यतश्चतुर्विधास्तद्यान्तरभेदेन विशेषतो दशविधा द्रष्टारः सन्ति तेषामसौ यथायोग्यं पृथक् पृथक् तत्तद्धर्मप्रकटनेनाविर्बभाविति तादृक् मधुरविलासे परमैश्वर्यमपि दर्शयति । मल्लानामिति । तत्र मल्लाः कंसपक्षीयाः सक्षितिभुजः कंसश्च प्रतिकूलज्ञानाः परमसुखविग्रहे तस्मिन् तथा तथा दुःखदत्वायोगात् । किन्तु तमोदूषितदृष्टयः तस्मिन् विपरीतमेव धर्मं प्रतियन्ति । खण्डे पित्तदूषितजिह्वायास्तिक्तत्वमिव तत्र मल्लानां स्वाङ्गस्पर्शातिकर्कशत्वादिना सर्वयादवादिसाधुगणस्य तथा तस्यापि पराभवं भावयतां ततोऽप्यतिकर्कशत्वादित्थं प्रकटितमित्यशनिः । असतां साधूनामेव शास्ति कुर्वतां तत एवानधिकारिणामपि बलादेव क्षितिभुजां तदुपभोगकर्तृणां श्लेषेण तामभ्यवहरतामिव शास्ता दण्डकर्त्ता । भोजपतेश्च राक्षसदैत्यादिनिजगणद्वारा स्वयञ्चानेकसाधूनां मृत्युहेतुत्वेन स्वमाग्रादौ स्वस्मिश्च तथोद्यमकारित्वेन प्रसिद्धस्य अतः श्लेषेण सर्वज्ञिलानां श्रेष्ठस्येत्यर्थः । तस्य मृत्युर्यम इव अथ न द्वेषिणो नच

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सज्ञाना नचानुकूलज्ञाना याज्ञिकब्राह्मणा इव केचिदविद्वांसः तादृशतत्स्वरूपानुभूते सुखोदयाभावायोगाश्च जानन्त्येव किं तु तादृशत्वानुभावकतच्छक्तिविशेषप्रसादालाभेन यत्किञ्चिन्नृबालकत्वेनैवानुभवन्ति तेषां विराट् विराडंशनृबालकविग्रहः अथ सज्ञाना आकाशस्थितयोगिनः सनकादयः ते तु सर्वाश्रयभूततया जानन्तीत्यानुकूल्यांशस्य नातिसम्भवात् केवलतज्ज्ञानमात्राः तेषां परं तत्त्वम् अखण्डस्वरूपतल्लक्षणं गुणानां पिण्डरूपश्रीभगवदाकारत्वेन केवलस्वरूपमात्राविर्भावब्रह्माकारतोऽपि श्रेष्ठं वास्तववस्त्वित्यर्थः। अथ नरवरः स्त्रियो वृष्णयः पितरो गोपाश्चानुकूलज्ञानाः। तथा तथा ज्ञानस्यानुकूल्यमयत्वात्तेषां तत्तद्रूप इति स्वाभाविकानन्तमाधुरीप्रभाववृन्दस्य तस्य तांस्तान् प्रति तत्तदुल्लासात् यद्यदंशांशाभासलाभेन जीवा अपि तथा तथा रोचन्ते। तत्र नृणामितरानुकूलचतुष्टयव्यतिरिक्तानां साधारणानां निरीक्ष्य तावुत्तमपूरुषौ जना इत्यादि वक्ष्यमाणानां मध्ये केषाञ्चित् पुरुषाणां महानयं वताधर्म इत्यादि वक्ष्यमाणवचनानां मध्ये कासाञ्चित् स्त्रीणाञ्चेत्यर्थः। तेषां नरवरः नरश्रेष्ठः एषां ज्ञानित्वं प्रभावमाधुर्यांशज्ञानेनैव तच्छ्रेष्ठत्वावगमात् आनुकूल्यत्वञ्च तथा तथा वचनात्। एवमुत्तरोत्तरत्रापि तारतम्येन तत्त्वे ज्ञेये। स्त्रीणां तादृशवाक्यानां मध्ये गोप्यस्तपः किमचरन्नित्यादि वचनानां कासाञ्चित् स्मरस्तद्धेतुमाधुरीविशेषप्रकाशनेन श्रीकृष्णावभासिते चेतसि प्राकृतस्मरवेषतया अधिकारसामर्थ्येन च स्वयमेतद्रूपः। अतएवाह मूर्त्तिमानिति। मृत्युत्वेन त्विदं न विशेष्यतेऽयथावत्त्वात्। परतत्त्वेऽपि न तेन सह मूर्त्तेरभेदात्। वृष्णीनां तत्प्रधानानां यादवानां परदेवतापारमैश्वर्यस्फुरणेन सम्बन्धस्फुरणस्यावृतप्रायत्वात्। परा सर्वतः श्रेष्ठा या देवता स्वयं भगवत्त्वेन निजाराध्या सैव स्वयम्। अतः पित्रोः यदुकुललीलायां पितृत्वेन प्रसिद्धयोः श्रीवसुदेवदेवक्योर्वृष्णिश्रेष्ठत्वेन तज्जन्मलक्षणमारभ्य तादृशस्तुत्यादिश्रवणैनैश्वर्यज्ञानावावृतवात्सल्ययोरपि शिशुरिति तदानीं तादृशसङ्कटसमये श्रीनन्दादिसङ्गेनैव शुद्धवात्सल्यस्योल्लासादिति ज्ञेयम्। स्वशब्दोऽत्र वृष्णिभ्योऽन्तरङ्गत्वव्यञ्जनाय स्वपित्रोरिति क्वचित् पाठः। अत्र विशेष्यपदं नाध्याहार्यं गोपानां श्रीनन्दादीनां श्रीदामादीनाञ्च स्वजनः पुत्रादिरूपो मित्रादिरूपश्चेति तेषां स्वभाव एवोक्तः। तथा तथैवं श्रीगोकुललीलायां श्रीमुनीन्द्रादिभिस्तेषामसकृत् प्रशस्तत्वात्तदपेक्षयान्येषां कनिष्ठीकृतत्वाच्च अत्र चैवं ज्ञेयम् उक्ता भावास्तावत्त्रिविधाः प्रतिकूलज्ञानानां प्रीतिविरोधिनः अज्ञानां प्रीत्युदासीनाः। अन्येषामेषां प्रीत्यात्मका इति। तत्राद्यानामशनित्वशास्तृत्वमृत्युत्वभानाद्भयप्राया एव लक्ष्यन्ते तच्च तेषां भयं रसतां न प्राप्नोति। प्राकृतरसशास्त्रविदः श्रव्यकाव्यदर्शनीयेषु दृश्यकाव्यानुकार्येषु च नलदमयन्त्यादिषु रसोत्पत्तिं न रसं प्रतिपद्यन्ते किन्तु तत्तत्काव्यानुभवितृष्वेव तेष्वपि तत्सवासनेष्वेव सम्प्रति पद्यन्ते मल्लादि सवासनास्तु न भगवत्काव्याधिकारेण इति श्रीभागवतरसविदस्तु तादृशं भावं द्वेष्यत्वेनैव मन्यन्ते। वस्तुतश्च दुःखरूप एवासाविति न सुखस्वरूपरसतामर्हति। अथाज्ञानामवज्ञैव सापि रसतां न प्राप्नोति। अथान्येषामेषां प्रीत्यात्मकत्वेनैक्येऽपि तत्तद्विशेषात् पञ्च भेदाः। योगिनां ज्ञानभक्तस्य परपर्याया शान्तिः। वृष्णीनां तदुपलक्षितभक्तिमतां प्रेमपर्याया भक्तिः मित्राणां सख्यं पित्रादीनां शिशुत्वपुत्रत्वभावनामयप्रीतिमतां वात्सल्यं स्त्रीविशेषाणां प्रियता भावनामयी रतिरिति। यत्र तु वैशिष्ट्यं न जातं तत्र शुद्धैव प्रीतिः तथा नृणामिति षट्। एष च प्रीत्यात्मकः सर्वोऽपि भावो रसतां प्राप्नोत्येव ब्रह्मानन्दतोऽपि स्वत एव परमानन्दरूपत्वात्। प्राकृत रसशास्त्रज्ञानामपि यत्किञ्चिदानन्दरूपत्वेनैव प्रीत्यादीनां रसता सम्प्रतिपत्तेः। विभावादिसद्भावश्चात्र स्वत एव परमालौकिकः। अतः प्राकृतरसवत् कविकृत्रिमालौकिकत्वमपि नापेक्ष्यते। अतोऽत्र वर्णनीयानुकार्ययोरेव मुख्या रसोत्पत्तिः। एष एव भागवतरसो नाम कौमुदीकारादिभिर्दर्शितः। मूलेऽपि पिबत भागवतं रसमालयमित्यादौ। तत्रोदाहरणञ्च। "स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्। भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्। क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दति वदन्त्यलौकिकाः। नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृता" इति। अत्र हरिरालम्बनो विभावः स्मरणमुद्दीपनो विभावः विशेषेण भावयति रसमिति विभावशब्दस्यार्थः। स्मरणादिक उद्भास्वराख्योऽनुभावः। पुलकः सात्त्विकाख्यः अनुभावयति ज्ञापयति रसमिति तच्छब्दार्थः चिन्तादयः सञ्चारिभावाः रसे सम्यक् चरन्तीति सञ्जातया भक्त्येति स्थायी भावः सर्वाश्रयत्वात् स्थातुं शीलमस्येति। भवन्ति तूष्णीं परमेत्य निर्वृता इति तत्सम्वलनं परं परमरसात्मकं वस्त्वित्यर्थः। एवं "भगवद्दर्शनाह्लादवाष्पपर्याकुलेक्षणः। पुलकाचिताङ्ग औत्कण्ठ्यात् स्वाख्यानेऽपि हि नाशकदि"त्यादि। एवं प्रीतेरैक्येन तन्मयरसस्याप्यैक्यं तद्भावानां षोढाभेदेन रसा अपि षोढाः। यथा शान्तिस्थायी शान्तः प्रेमभक्तिस्थायी सप्रेमभक्तिकः। सख्यस्थायी सख्यमयः। वात्सल्यस्थायी वत्सलः। रतिस्थायी शृङ्गारः। अवशिष्टप्रीतिस्थायी तु प्रीतिमय एव। अथ येऽन्येऽद्भुतादयो भागवताः सप्त रसास्तेऽपि तेषु भगवत्प्रियजनेषु भगवत्प्रीतेरेवाविर्भवन्ति तत्रैव च तिरोभवन्तीति तत्तद्रससञ्चारिभावप्राया गौणत्वान्नात्र गण्यन्ते। तद्विरोधितदुदासीनभावौ तु तज्ज्ञानायैव दर्शिताविति। एते च भावरसाः प्रायः संज्ञान्तरेण परिभाष्य रसामृतसिन्धौ श्रीमद्भ्रातृशुभाशयैर्विस्तरतः करतल इव दर्शिताः। सङ्क्षेपतस्तदर्थसङ्ग्रहश्लोकाश्चैते। "स्थायी भावो विभावानुभावैः सञ्चारिभिस्तथा। स्वाद्यत्वं नीयमानोऽसौ रस इत्यभिधीयते। कारणान्यथ कार्याणि सहकारीणि यानि च। तान्येव व्यपादिश्यन्ते विभावाद्याख्यया रसे। आलम्बनोद्दीपनाख्ये विभावस्य भिदे उभे। आलम्बनौ च द्विविधौ विषयाश्रयभेदतः। रसस्य विषयः कृष्णस्तस्यानुभविताश्रयः। सचानुभविता प्रेम्णा यः श्रेष्ठोऽन्यस्पृहाकरः। उद्दीपनास्तु सम्बन्धिपदार्थाः कंसवैरिणः। अनुभावाः सात्त्विकाः स्युराङ्गिकाश्चेति ते द्विधा। स्तम्भः स्वेदोऽथ रोमाञ्च स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः। नृत्यं विलुठितं गानं श्वासहासादयोऽपि च आङ्गिका अनुभावास्ते यथायथमुदीरिताः। निर्वेदश्च विषादश्च दैन्यं ग्लानिस्तमो मदः। गर्वः शङ्का त्रासवेगा उन्मादापस्मृती तथा। व्याधिर्मोहो मृतिश्चैव आलस्यं जाड्यमित्यपि। व्रीडा वहित्था स्मरणं वितर्कश्चिन्तनं मतिः। हिंसौत्सुक्यत्वौग्र्यमर्षासूयाश्च धृतिचापले। निद्रा च सुप्तिराळस्यमितीमे व्यभिचारिणः। निर्वेदाद्यास्त्रयस्त्रिंशद्भावाः स्युर्व्यभिचारिणः। स्थायिनं वर्द्धयन्तो ये प्रादुःषन्ति तिरोऽपि च। आनुकूल्यात्मका

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

याचिर्लिप्सोल्लासमधर्मिका। स स्थायी तारतम्येन रतिःप्रेमादिनामभाक्। रतिःप्रेमतथास्नेहः प्रणयो मानरागकौ। अनुरागमहाभावावेत भावकमा मताः। शान्तिः प्रीतिस्तथा सख्यं वात्सल्यं प्रियता च सः। ज्ञानादरस्वतुल्यत्वकृपावल्लभभावतः। शान्तः प्रीतस्तथा प्रेयान् वत्सलो मधुरो रसाः। सामान्याद्भक्तिशब्दोक्तः स्थायी भक्तिरसो मतः। विस्मयो हास्य उत्साहक्रोधभीतघृणाशुचः। ये चैते स्थायिनो मत्केर्जातास्ते तत्र गौणकाः। अद्भुते हास्य वीरौ च रौद्रस्तद्वद्भयानकः। बीभत्सः करुणश्चैव तेषु गौणरसाः क्रमात्। श्रीकृष्णविषयत्वन्तु भक्तिद्वारात्र सम्मतम्। क्वचित् स्वतोऽपि येन स्यात् स्थायिनो नहि दूषण"मिति॥ १७॥

हतं दृष्ट्वेति। महोत्थमञ्चोपर्युपवेशात्। प्रतिदुर्जयत्वदर्शनं कुवलयापीडहननात् तेजोविशेषाभिव्यञ्जनाद्वा। मनस्वी महाशूरोऽपि तदेति ततः प्राक् तादृशभयाभावात् नृपेति कंसस्य तादृशोद्वेगात् प्रहर्षेण सम्बोधनम्॥ १८॥

विचित्राणि विविधानि अद्भुतानि च वेशादीनि ययोस्तौ तत्र वेशस्तिलकादिः आभरणं तिलकमेव कटककुण्डलादि कृतोऽपि महायुद्धे तेषामम्लानत्वादि व्यञ्जनया कौशलविशेषो व्यञ्जितः। निरीक्षमाणानां मल्लादिदशविधजनानां प्रभया अशनित्यादिरूपया स्वतेजसा मनःक्षिपन्तौ यथायथं विक्षिपन्तौ उत्तमवेशधारिणाविति नटविशेषणम् उत्तमास्तथा तथा प्रत्यापनसमर्था ये वेशा नानानेपथ्यानि तद्धारिणावित्येकस्य नानात्वं प्रकाशमात्रेण तु कालभेदे दृष्टान्तः। यद्वा ऐन्द्रजालिकनट एवात्र दृष्टान्तः स च स्वाभिन्द्रजालाख्यं सत्यासत्यधर्मान् युगपद्दर्शयतीति॥ १९॥

ये तु प्रतिकूलज्ञानव्यतिरिक्तास्तेषु तु साधारणानामपि परमप्रेमैव जातः किमुतासाधारणानामित्याह। निरीक्ष्येति। उत्तम पूरुषावित्यखिलसौन्दर्यवैदग्ध्यादिकं सूचितं मञ्चस्थिता इति निरीक्षणसम्यक्त्वं नागराः पौराः राष्ट्रिकाश्च जानपदा लोकाः सर्वेऽपीत्यर्थः। उत्कलितत्वं विकाशितत्वं पपुरित्यनेन नयनानां चसकत्वम् आननस्य च सौन्दर्यामृतनिधानपात्रत्वम्। आननं पपुरिति सौन्दर्यप्राचुर्यात्तेनाभेदोत्प्रेक्षया केवलाननिर्देशो दर्शने तत्प्राधान्यात्॥ २०॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

विराट् देहमात्रबुद्धिविषयः॥ १७—२४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्र शृङ्गारादिरसकदम्बैकमूर्त्तिर्भगवांस्तत्तदभिप्रायानुसारेण बभौ न साकल्येन सर्वेषामित्याह। मल्लानामितिमल्लादीनां दशानां द्रष्टृणामशन्यादिरूपेण दशधा विदितः सन् साग्रजो रङ्गं रङ्गस्थानं गत इत्यन्वयः अशनिवद्रौद्रः स्त्रीणां मूर्त्तिमान्स्मरः विदितः असतां दुष्टानां क्षितिभृतां शास्ता स्वपित्रोः शिशुरनेन करुणो रसः प्रदर्शितो भवति भोजपतेः कंसस्य मृत्युरनेन भयानकरसः अविदुषां देहात्माभिमानिनां विराट् देहमात्रबुद्धिविषयः योगिनां परमात्मोपासनात्मकयोगनिष्ठानां परं तत्त्वमिति विदितः स्वोपास्यवस्तुत्वेन विदित इत्यर्थः॥ १७॥

हतमिति। हतं कुवलयापीडं दृष्ट्वा ततस्तौ रामकृष्णावतिदुर्जयौविति ज्ञात्वा मनस्वी धीरोऽपि कंसः हे नृप! नितरामुद्विविजे भीतो बभूव॥ १८॥

ताविति विचित्रो वेषः तथा आभरणानि स्रजश्च ययोस्तौ रामकृष्णौ स्वकान्त्या पश्यतां जनानां मनःक्षिपन्तावपहरन्तौ क्षोभयन्तौ वा रेजतुः यथोत्तमवेषधारिणौ नटौ तद्वत्॥ १९॥

निरीक्ष्येति। हे नृप! पौरा जानपदाश्च जनाः तावुत्तमपूरुषौ निरीक्ष्यावस्थिता निश्चलाः प्रहर्षवेगेन उत्कलितान्युज्जृम्भितानीक्षणान्याननानि च येषां ते नयनैर्लावण्यपानपात्रभूतैस्तयोराननं पपुराननगतलावण्यरसं पीतवन्त इत्यर्थः। परन्तु न तृप्ता निराकाङ्क्षा न बभूवुरित्यर्थः॥ २०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मल्लानामशनिरिव भासमानः उपर्यप्येवं योगिनां परंतत्त्वं ब्रह्म ब्रह्म वेदस्तपस्तत्त्वमिति च भोजपतेः कंसस्य मृत्युरिव नित्यमेवेति योज्यम्॥ १७॥

मनस्वी शूरोऽपि उद्विविजे ओ विजी भयचलनयोरिति धातुः भीतोऽभूत॥ १८॥

देहप्रभया निरीक्षतां मनः क्षिपन्तौ आकर्षन्तौ॥ १९॥

नागराः नगरवासिनः राष्ट्राः जनपदवासिनः प्रहर्षवेगेन उत्कलितमुत्फुल्लमीक्षणमाननञ्च येषां ते तथा॥ २०॥२१॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तादृशवेषेण प्रवेशस्य प्रयोजनं वदन् भगवतः स्वरूपं बलभद्रसहितं सर्वेभ्यः यथाधिकारं नानाभावान् जनयतीत्याह। मल्लानामशनिरिति। "प्रमेयेण निरोधोऽत्र कर्त्तव्यो हरिणा भृशम्। लोकाश्च दशधा भिन्नास्ततो दशविधोऽभवत्। यस्य भावो यथा लोके तस्यानुसरणे कृते। निरोधो जायते सम्यक् अन्यथा बन्धनं भवेत्। गुणा नवविधाः प्रोक्तास्तद्भावस्तथापरः। शृङ्गारादिरसाश्चैव तेषामेव निरूपकाः। राजसास्त्रिविधाः पूर्वं तामसाश्च ततः पराः। आध्यात्मिकास्तथा पूर्वं दैविकास्तु ततःपरम्। रौद्रोऽद्भुतश्च शृङ्गारो हास्यं वीरो दया तथा। भयानकोऽपि बीभत्सः शान्तो भक्तिरसस्तथा। एतान् दर्शयितुं भावान् हरिरेवं बभौ महान्। अतस्तास्मिन्न गुणा एव सर्वे भावा न चान्यथा" आदौ मल्लाः प्रतियोगिनमन्यमानाः भगवाच्च प्रतियोगी किं तु विसदृश इति सोऽपि सर्वथा मारक एवेति ज्ञातवन्त इत्याह। मल्लानामशनिरिति। विद्भिः साग्रजो बलभद्रसहितः रङ्गं गत इति यत्र हि विद्युत्पतनं वृष्टिश्च तत्र न समीचीनमिति ज्ञात्वा विद्युतोऽतिवेगात् पलायनेऽप्यशक्ता जाता इत्यर्थः। तेन मल्लस्वभावा निरूढाः ये रौद्रप्रकृतयः ततोऽन्ये साधारणाः राजसाः भगवन्तमद्भुतं ज्ञातवन्त इत्याह। नृणां नरवर इति। अद्भुतो नरः नरश्रेष्ठ इति भगवन्तं दृष्ट्वा अद्भुतदर्शनमिति अद्भुतरस एवोत्पन्नः साधारणा स्त्वद्भुतरसेनैव वशे भवन्तीति सर्वत्रेति विदितो रङ्गं गत इति संबध्यते तादृशावस्थायामपि स्त्रीणां तामससात्त्विकीनां भगवान्स्वफलरूप एव प्रतिभाव इत्याह। स्त्रीणामिति। द्रष्टुमागतानां ताः कामपूतनाः कदापि स्वस्वामिनं न दृष्टवत्यः स्मरो हि स्मरसंख्यात्मा स इदानीं मूर्तिश्चेज्जातस्तदा सनाथा

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

जाताः अतः परं सर्वैरेवेन्द्रियैः शरीरेणान्तःकरणेन च सेव्यो जात इति एवमेकविधास्त्रयो निरूपिताः सर्वाधमाः मल्ला उत्तमाः स्त्रिय इति पुष्टिमार्गे क्रम उक्तः आधिभौतिकाभिमानिनामेवा रीतिरिति एवं सामर्थ्यप्रकटनेऽपि गोपानां राजसतामसानां स्वजनः अस्मदीय एवायं बन्धुः परमुत्कर्षापन्नः अतो भगवता यो वेषः कृतो विलक्षणः स हास्यरसजनको जातः यथा स्वकीये वेषे कृते आध्यात्मिके एते देहस्वरूपाः इन्द्रियरूपास्त्वग्रिमाः आत्मरूपास्तत इति दम्यत्वेन इन्द्रियतुल्यता राज्ञां भगवन्तं दृष्ट्वा तेषां वीररस उत्पन्न इत्याह। असतां क्षितिभुजां शास्तेति। सन्तो ये ते वृष्णित्वेन वक्तव्याः भक्त्यधिकारिणः ये च लौकिकाः असन्तस्ते पामरा एव वीभत्सरसे वक्तव्याः ये पुनः राजसराजसाः ते राजसभावसिद्ध्यर्थं क्षितिभुज उच्यन्ते वीररसस्तेषामेव भगवन्तं दृष्ट्वा युद्धार्थं बुद्धिस्तेषामुत्पन्ना परमयं शास्तेति तेषां न प्रवृत्तिः वीररसस्तूत्पद्यत एवेति रसोत्तमत्वार्थमेवमुक्तं यथा हीनस्यापि पुरुषस्य महाराजावरोधे दृष्टे शृङ्गाररस उत्पद्यत एव परं तासां नोत्पद्यते अधमबुद्धेर्बाधकत्वात् स्वस्मात्तत्रोत्कर्षबुद्धिः सर्वत्र रसपोषिका अतो वीराणामसतां विचाररहितानां दृप्तानां शास्तृत्वप्रतीतावपि वीररसो युक्त एव यथा स्त्रीणां स्नेहो भगवति तथैव ततोऽप्यधिको वसुदेवदेवक्योः स्नेहः परं तमः अज्ञानात्मकमिति कामस्तत्र प्रयोजकः अत्र तु मोह इति मोहांशे राजसत्वं स्नेहांशस्तु सर्वत्र सात्त्विक एव लौकिकत्वाद्राजसत्वं निषिद्धत्वात्तामसत्वं विहितत्वात्सात्त्विकत्वं चेति स्नेहे त्रयो भेदाः तत्तदधिकारिणां तथैव निरोध उक्तः स्वपित्रोर्वसुदेवदेवक्योः शिशुर्बालक एव करुणापरपर्यायो दयारस उत्पन्नः स हि स्नेहस्यान्तरङ्गं भवति सा दया करुणारूपा स्नेहधर्मात् बालक एवेति तेषां शिशुरेव प्रतिभातः सात्त्विकान् गणयति ये हि मुक्त्यधिकारिणः अलौकिकाः ते भयवीभत्सशान्तरसेष्वधिक्रियन्ते तत्रानुपदमेव मुक्तिर्भविष्यतीति दुष्टकर्मकर्तेति कंसः तामससात्त्विकः देहाधिष्ठातृदेवतेव प्राप्त इव निरूप्यते। मृत्युर्भोजपतेरिति। मृत्युर्भयात्मकः न हि ततोऽधिकं भयमस्ति लोकन्यायेन नरकापेक्षयापि मृत्युरेव महान् भोजानां पतिरिति महत्त्वं सात्त्विकत्वार्थमुक्तम्। विराडविदुषामिति। ये हि भगवत्स्वरूपानिष्ठा भक्ताः राजससात्त्विकास्तेषां स्नेहात् रुधिरमदधिन्वृभिः कृत्वा वीभत्सरस उत्पद्यते यथा स्वपुत्रादौ असद्द्रव्यसंबद्धे विचिकित्सा भवति अन्यथा तद्दूरीकरणार्थं प्रवृत्तिर्न स्यात निन्दा तु भगवल्लीलाऽपरिज्ञानात् उत्कृत्योत्कृत्य क्षितिमित्यादिकमपि महतामेव वीभत्सरसजनकं न तु प्राकृतानाम अन्यथा निरोधे ते न वक्तव्याः स्युः न ह्यतिप्राकृताः त्यक्तव्या एव भगवानिति बुद्धियुक्ताः निरोधाधिकारिणो भवन्ति विराट्शब्दः शोभाभाववाचकः विगतराजनरूपः न तु प्रसिद्धः अदृष्टत्वादसंमतत्वाच्च न हि तत्स्वरूपज्ञा अविदुषो भवन्ति परं योगिनो हि सात्त्विकसात्त्विकाः प्रवृत्तिस्वभावत्वान्न गुणातीताः तेषां स्वेष्टसिद्ध्यर्थमात्मत्वेन च स्फुरणात्प्रकारद्वयेन च स्नेहः अतो योगिनां परमेव तत्त्वं पुरुषोत्तमरूपं तेषां सर्वं तस्यात्मकमित्यात्मापि तत्स्वरूपो भवति योगमार्गव्ययोरेवैषा व्यवस्था परत्वं परमकाष्ठापन्नत्वं वृष्णयो हि यादवा भगवदीया गुणातीताः येषां सात्त्विकं तेषां परमनिरोधो वक्तव्यः शय्यासनाटनालापेति तेषां भगवति परत्वं स्वामित्वं देवतात्वं च विदितं जातं दासस्य हि स्वामी नियामकः स लौकिकोऽपि भवतीति तद्व्यावृत्त्यर्थं देवतापदं स्वस्मिन् अलौकिकबुद्धौ हीनत्वाभावात् दृढा भक्तिर्न भविष्यतीति स्वस्मिन् प्राकृतत्वबुद्धिरेव अतः परे देवतात्वं भगवति युक्तं भगवांस्तु यादृशस्तादृश एव सर्वविलक्षणः सर्वरूपश्चेति अत उक्तमिति विदित इति रङ्गस्थानं गतः यत्र सर्वेषामेव रसः पुष्टो भवति यद्यपि शान्तरसस्य न विशेषाभिनयः तथापि तथोपदेशनेन सामान्याभिनयोऽस्त्येव अष्टौ नाट्ये रसा इति विशेषाभिप्रायं भक्तिरसोऽपि रसवृष्टिवत् निपुणैरभिनेय इति सर्वेषामेवार्थे रङ्गं गतः साग्रजो बलभद्रसहितः समानतया सर्वत्र निरूपयन् अत्र गौणत्वार्थं सहभावमेवोक्तवान् अन्यथा द्विवचनेनैव वदेत् वेदसहभावोऽपि भगवति वक्तव्यः अलौकिकत्वाय तत्रापि सवर्णसम्बन्धे पित्रोरित्यादि न सामञ्जस्येन युक्तं भवेत् गोपानामपि लीलाया अकृतत्वात् न हास्यरसत्वं तस्मादसर्वत्वात् सहभाव एवोक्तः ॥ १७ ॥

रसोत्पत्तौ तत्तद्बुद्धियोग्यत्वेन निरूपिता फलमुख्यत्वाय प्रधानक्रमेण कंसस्यादौ भयमाह। हतं कुवलयापीडमिति। स हि ज्ञातवान् वञ्चयित्वा समायास्यतीति तत्र मारयित्वा समागत इति यद्यपि महाशूरः राजापि तथापि भृशमुद्विग्ने यदि गजो हतः अशस्त्रेण तर्ह्यन्यानपि मारयिष्यतीति युक्तिः प्रमाणमाह। दृष्ट्वा तावपि दुर्जयाविति। मनसा दृष्ट्या च एतौ दुर्जयाविति प्रतिभाति मया च यत्नः कर्तव्यः कृतश्च भूयानपकृतश्च पित्रादिबन्धनेन अतो मारयिष्यत्येव नान्यथेति भृशमुद्विग्नः दुःखेन जयो ययोरिति नात्र योगो वक्तव्यः किं तु अजेयाविल्येव रूढोऽर्थः नृपेति सम्बोधनं शत्रोस्तथात्वदर्शनात् विश्वासार्थम् ॥ १८ ॥

एवं प्रधानस्य रसाविर्भावमुक्त्वा मल्लानामतिकठिनानां भगवतो गुणश्रवणमपि अधिकमपेक्ष्यत इति तान् परित्यज्य शिष्टानां रसाविर्भावो जात इत्याह। तौ रेजतुरिति। निरीक्षतां प्रभया मनः क्षिपन्तौ रेजतुरिति। मनो हि प्रतिबन्धकं क्षणेन रसान्तरमप्युत्पादयेत् अतस्तस्याक्षेपो वक्तव्यः यथा नोत्पादयेदिति प्रतिबन्धकनिवृत्त्यर्थं प्रथमतो भगवच्छोभावर्णनं शोभायामुभयोस्तुल्यता यथा नीलमुक्तामणी नटवदेव भगवन्तौ रूपान्तरं गृहीतवन्तौ तौ चेद्रङ्गगतौ भवतः वेषः सार्थको भवतीति परमार्थतः लोकेऽपि रङ्गस्थान एव नटोत्तमता नान्यत्र अतो रङ्गगतौ रेजतुः पूर्वापेक्षयापि नन्वयं रङ्गः कृत्रिमः कथमत्र रमणमिति चेत्तत्राह। महाभुजाविति।तथापि भुजाभ्यामेव सर्वे निराकर्तव्या इति युक्तैव शोभा ननु तथापि ये रसानभिज्ञाः प्राकृताः शुद्धस्वाङ्गरसं न जानन्ति तेषां कथं रसोत्पत्तिरित्यत आह। विचित्रवेषाभरणस्रगम्बराविति। विचित्रो वेषो यथा भवति तथा आभरणानि स्रजः अम्बराणि च ययोः विविधान्यथाभरणानि वैचित्र्यं जनयन्तीति अन्येषामपि रसयोग्यता नन्वेतयोः नटवद्रूपान्तरग्रहणमिति हि महतां प्रतीतिः न सर्वेषां तत्कथं नटबुद्ध्यभावात् रसोत्पत्तिरिति चेत्तत्राह। यथा नटाविति। नटवदेव तदानीमभिनयं कुरुतः अतः सर्वेषामेव नटप्रतीतिः न तु स्वाभाविकाविव अपूर्वदर्शनात्तयोः कथं न भवेदित्याशङ्क्याह। उत्तमवेषधारिणाविति। उत्तम-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वेषं धारयन्तौ इति नटाभिनयो न स्वाभाविकोऽतः सर्वेषामेव स्वप्रभया मनोहरणं युक्तम् ॥ १९ ॥

ततस्तेषां रस आविर्भूत इति वक्तुं भगवति प्रेमपूर्वकमवलोकनमाह । निरीक्ष्येति । पुरुषमात्रमपि सुन्दरं दृष्ट्वा प्रमोदो भवेदेतौ तु पुरुषोत्तमौ उत्तमः पुरुषः परमात्मेति आत्मनोऽपि नियामकौ जनाः सर्व एव प्राणिनः साधारणाः ततो विशिष्टाः मञ्चस्थिताः दर्शनयोग्यत्वाय वा मञ्चस्थितत्वं नागरराष्ट्रकाः नगरवासिनो देशवासिनश्च नगरवासिनो रसाभिज्ञाः देशवासिनो बहुज्ञाः अत उभये विशिष्टा गणिताः ततोऽपि नृपास्त्रिविधाश्चतुर्विधा वा सर्वेषामपि नियन्तारं दृष्ट्वा मुदिता जाताः न केवलं हर्षमात्रं किं तु प्रहर्षस्य यो वेगः तेनोत्कलितं विकाशाभिमुखमाननं येषां प्रथमदर्शन एवैतत् अग्रे वाक्यैर्विकाशं वक्ष्यति अतस्तदाननं पपुस्तेन मार्गेणान्तः प्रवेशितवन्तः नयनैरिति नयनरूपाण्येव तानि अतो मुखमपि नीतवन्ति । इयमेव तदासक्तिः यदन्तर्बहिः स एव दृश्यते ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ तत्र रङ्गभूमौ स्थितेषु नानाविधजनसमुदायेषु श्रुतिप्रथितमहारसस्वरूपः स्वयं भगवानयमन्तः करणानुरूपमेव स्फुरति स्मेति यद्दशयमेव सर्वोपनिषत्सारार्थो मूर्त इति साक्षादिव दर्शयति । मल्लानां पर्वतोपमशरीराणां चाणूरादीनामशनिरिव विदितोऽभूदित्येवमेव सर्वत्रान्वयः क्वचित् तृतीयार्थे क्वचित् सम्बन्धे च षष्ठ्यः अतिसुकुमारसुशीतलसुमधुराङ्गोऽपि स पर्वतैर्महाकठोरसुसंतापककटुतराङ्गो वज्र इव मल्लैर्दुष्टान्तःकरणैरनुभूतः पित्तदूषितरसनैर्मत्स्यण्डिकापिण्ड इवातितिक्त इति तैस्तत्सवासैस्तत्रत्यैः सभ्यैरपि दृष्ट्वापि भगवतः स्वरूपं नास्वादितमिति तेषु रसाभास एव न तु रसः नृणां माथुराणां द्वेषादिराहित्यादुत्पत्त्यैव प्रेमसामान्यवतां नरवरः नरेष्वसाधारणैरतिचमत्कारकरूपगुणलीलादिभिः श्रेष्ठ इति तैः शुद्धसत्त्वमयान्तःकरणैस्तस्य नरवरत्वं स्वरूपमेवास्वादितमिति तेषु विस्मयरसः स्त्रीणां जनन्यादिव्यतिरिक्तानां युवतीनां स्मर इति कृष्णविषयककामस्य प्राकृतत्वाभावात् तासां माथुरत्वेन प्रेमवत्त्वात् ताभिस्तस्य साक्षान्मन्मथमन्मथत्वं स्वरूपमेवास्वादितमिति तासूज्ज्वलो रसः अत्रैव मूर्तिमानिति विशेषणोपन्यासेनास्यैव स्वरूपस्याङ्गित्वं ध्वनितं गोपानां स्वजन इति तैरपि स्वरूपमास्वादितं यतो गोपमित्रत्वं खलु तस्य स्वरूपमेवेति तेषु सख्यरसो हास्यरसश्च असतामसाधूनां क्षितिभुजां श्लेषेण सज्जनवर्तीं पृथ्वीं ग्रसतामिव भक्तापराधिनां तेषां शास्ता अन्तकः इत्यन्तकत्वं सर्वसुहृदः सर्वानन्दकन्दस्य कृष्णस्य न स्वरूपमतस्तैर्मल्लैरिव तन्नास्वादितमिति तेषु रौद्ररसाभास एव स्वपित्रोर्नन्दवसुदेवयोर्यशोदादेवक्योर्वा शिशुरिति ताभ्यां च स्वरूपमास्वादितं यतो नन्दात्मजत्वं वसुदेवात्मजत्वं च तस्य स्वरूपमेवेति तत्र वात्सल्यरसो विजिगीषुलोकदर्शनात् करुणारसश्च भोजपतेः कंसस्य मृत्युरिति मृत्युत्वं माधुर्यसुधावर्षुकस्य कृष्णस्य न स्वरूपमतस्तेन तस्य तन्नास्वादितमिति तस्मिन् भयानकरसाभासः अविदुषां कंस-



पुरोहितादीनामपराधिनां विराट् व्यष्टिः प्राकृतो मनुष्यः हंहो अयमेव किं परमेश्वर इत्युच्यते भ्रान्तैरयन्तु पारदारिकत्वेन गवादिघातित्वेन च श्रुतचरः संप्रति प्राण्यस्थिरक्तकलिलगात्रो मनुष्येष्वप्यनाचारो घृणास्पदी भवत्यस्मन्नेत्राणामिति व्याहरत्सु महापापिष्ठेष्वावेशाभावात् कंसादिभ्योऽप्यधमेषु मन्दभाग्येषु तेषु बीभत्सरसाभासः योगिनां सनकादीनां परं तत्त्वं मूर्तं परं ब्रह्मेति तस्य स्वरूपम् तैरास्वादितमिति तेषु शान्तरसः वृष्णीनां परदेवता पास्यपरमेश्वर इति तत्स्वरूपं तैरास्वादितमिति तेषु दास्यरस इत्येवं तत्र दशविधेषु जनसमुदायेषु चतुर्णां विमुखत्वेन तद्रसास्वादनासामर्थ्यात् षड्भिरष्टौ रसाः स्वादिता इत्यतो "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवती„ति वै निश्चितमेव सः श्रीभागवतीयदशमस्कन्धदर्शितायां माथुररङ्गभूमौ प्रसिद्धः कृष्ण एव रसः तं रसं कृष्णमेवायमानन्दमयोऽपि लब्ध्वानन्दी आनन्दभूमवान् भवतीति रसश्रुतिरेवं व्याख्येया ॥ १७ ॥

मनस्वी महाशूरोऽपि यद्वा पूर्वत एव चिन्ताकुलोऽपि तदानीमतिचिन्ताकातरो बभूव ॥ १८ ॥

मनः स्पृशन्तौ आश्लिष्य मनांसि लग्नीभूय तिष्ठन्तावित्यर्थः ॥ १९ ॥ प्रहर्षवेगेन सूर्य्योदयशैघ्र्येणेव उत्कलितानि विकसितानि ईक्षणानि आननानि च कमलानि येषां ते तदाननमाधुर्य्यं पपुः ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रङ्गं गते भगवति मल्लादीनां स्वस्वबुद्ध्यनुसारतो नानाप्रतीतयो जाता इत्याह मल्लानामशनिरिति । विदितः नृणां नरवर इति विदितः स्त्रीणां मूर्तिमान् स्मर इति विदितः गोपानां स्वजन इति विदितः असतां शास्तेति विदितः स्वपित्रोः शिशुरिति विदितः भोजपतेः मृत्युरिति विदितः अविदुषां देहात्माभिमानिनां विराट् देहात्माभिमानीति विदितः योगिनां ज्ञानभक्त्यादियोगवतां तत्त्वज्ञानां परं सर्ववेदैकवेद्यं तत्त्वमिति विदितः वृष्णीनां परदेवता अस्मद्रक्षणाय परदेवतास्मत्सु बन्धुरूपेण वर्तते इति विदितः सन् साग्रजो रङ्गगतोऽभूदित्यर्थः । एवं श्रीकृष्णे अन्या अपि प्रतीतयः मनुष्यत्वजारत्वदेवत्वनारायणांशत्वादिकाः उक्ताः वक्ष्यमाणाश्चातत्त्वज्ञानां सन्तीति ज्ञेयम् ॥ १७ ॥

विशेषतः कंसस्तु तौ रामकृष्णौ दुर्जयौ दृष्ट्वा भृशमुद्विग्नो भीतो बभूव ॥ १८ ॥—॥ १९ ॥

तयोराननं नयनैः पपुः तथापि न तृप्ताः ॥ २० ॥

---

भाषा टीका ।

भगवान् रंग भूमीमें जाते समय में नवरस मूर्ति होकर सब को दीखपडे तिसमें मल्लों को वज्र सरीके दीखे मनुष्यों को उत्तम सुंदर मनुष्य दीखे स्त्रियों को मूर्तिमान् काम देव सरीके दीखे गोप लोगों को अपने स्वजन सरीके दीखे असत् राजाओं को शासन करने वाले सरीके दीखे अपने पिता माता को पुत्र सरी के भोज पति कंस को मृत्यु सरी के दीखे अविद्वान् लोगों को असमर्थ सरीके दीखे योगिजनों को परम तत्त्व सरी के

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ।
जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ २१ ॥
ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम् ।
तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥ २२ ॥
एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि ।
अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥ ॥ २३ ॥
एष वै किल देवक्यां जातो नीतश्च गोकुलम् ।
कालमेतं वसन् गूढो ववृधे नन्दवेश्मनि ॥ २४ ॥

भाषा टीका ।

दीखे वृष्णि वंशियों को परम देवता सरीके दीखे इस प्रकार से बलदेवजी के सहिये रंग भूमी मे पधारे ॥ १७ ॥

हे नृप ! कुवलयापीड को मारा देखकर रामकृष्ण दोनों को दुर्जयजान कर यद्यपि बडा उत्सही है तो भी कंस बडा डरता भया ॥ १८ ॥

बडे भुजा वाले वे दोनों रंग भूमिमें विचित्र वेष आभरण माला वस्त्रों से अत्यन्त शोभित भये जैसे उत्तम वेष धारण करने वाले नट होवें और अपने तेज से देखने वालों के मन को आकर्षण करते थे ॥ १९ ॥

हे नृप ! उन उत्तम पुरुषों को देखकर मंचों पर बैठे नगर के राज्य के जो मनुष्य हैं सो हर्ष के वेग से उनके नेत्र मुख अति प्रसन्न होगये वे सब बडी तृष्णा से उनके मुखरूपी अमृत का पान कर के भी तृप्त न भये ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवाह । पिबन्त इवेति।श्लिष्यन्तः पारिष्वङ्गं कुर्वन्त इव लक्षिता इत्यर्थः ॥ २१ ॥

यथादृष्टं धनुर्भङ्गादि यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य तदनुरूपमित्यर्थः । प्रत्यक्षञ्च तयोरूपं गजदन्तादियुक्तं गुणाः शौर्यादयो माधुर्यं हसितालापादि प्रागल्भ्यं धार्ष्ट्यं तैः स्मारिता इव स्मरणं प्रापिता इव ॥ २२ ॥

विस्मितानां वाक्यान्याह । अष्टभिरेतावित्यादिभिः ॥ २३ ॥
किलेति सर्वत्रान्वयः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पिबन्त इति युग्मकम् । ताविति शेषः । इवेत्युत्प्रेक्षायां नेत्रविस्तारणलिङ्गेन ताभ्यां तयोः पानमिव कुर्वन्त इत्यर्थः । प्रत्येकापेक्षया द्वित्वादि एवं जिह्वाद्वारा तन्माधुर्यवर्णनलिङ्गेन तया तयोर्लेहनमिव कुर्वन्त इत्यर्थः । तथा हर्षवशात् तदतिसाम्मुख्यपूर्वकनासाफुल्लत्वसंभ्रमश्वासोत्तोलनादिलिङ्गेनाविच्छिदुरतत्सौरभ्यलाभलालसया तावेव नासयोः प्रवेशयितुमिव प्रवृत्ता इत्यर्थः । तद्वदेव च परस्परदर्शनार्थं करचालनालिङ्गेन बाहुभिस्तयोरालिङ्गनमिव कुर्वन्तः अत एव चालनलाघवं वहव इव दृश्यन्त इत्यभिप्रायेणात्र तु बहुत्वं केषाञ्चित्तत्तद्योग्यानां तत्तदिच्छाप्यस्ति ततः किञ्चिदनुकरणमपि सम्भवतीत्यपि पिबन्त इवेत्यादिकमुक्तम् ऊचुरिति तैर्व्याख्यातम् । तत्र यथादृष्टमित्याद्येवं विवेचनीयम् । समासोऽयमव्ययीभावः सचा "व्ययं विभक्ती," त्यादिना सूत्रेण"यथासादृश्य,,इत्यादिना च वर्ण्यते तत्र प्रथमेन यथर्थत्वे प्रवर्त्तमानस्यैवं विवेकः यथार्थाश्चत्वारः योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यञ्चेति । अत्र पदार्थानतिवृत्तिस्तदनतिक्रमः । तत्रोदाहरणं यथाबलमध्येति बलमनतिक्रम्येत्यर्थः । योग्यतायामुदाहरणम् अनुरूपस्य दानं यथादानमिति योग्यमित्यर्थः अत्र तु यथाशब्देन प्रयुज्यते नत्वन्यशब्दैः एवं सर्वाणं ध्वनतीत्यत्र सादृश्यार्थे सहशब्दवत् । तस्माद्यथा दृष्टमित्यादौ दृष्टं यद्धनुर्भङ्गादि तदनातिक्रम्य यथाश्रुंत श्रुतं यद्गोवर्द्धनोद्धरणादि तत्तदनातिक्रम्येति विभज्यैव योज्यं तदनुरूपमित्यर्थः इत्यत्र तु योग्यतायामेवाव्ययीभावो गम्यते अनुरूपमस्य दानमितिवत् ततश्च तत्तद्योग्यमित्यर्थः । पदार्थानतिवृत्तियोग्यतयोरव्ययीभावयोर्भिन्नार्थत्वेऽपि योग्यतार्थे यत् पर्यवसानं कृतं तत् खलु तत्रैव तात्पर्यमित्यपेक्षयागम्यते। "यथासादृश्य,,इत्यसादृश्ये प्रवर्त्तमानस्य द्वितीयसूत्रस्योदाहरणं यथावृद्धं प्रविशन्तु ये ये वृद्धास्त इत्यर्थः । प्रत्यक्षमित्यनेन तच्छब्दो व्याख्यात इति । यद्वा । यथेति योग्यतार्थ एव दृष्टं यद्धनुर्भङ्गादि तदनुरूपमेव श्रुतं यन्नारायणांशवत्त्वादि तदनुरूपमेव नाधिकमित्यर्थः । अतएव वक्ष्यतेंऽशेनेति । तत्तदपि तेषां संदिग्धमिवासीत् सम्प्रति तद्दर्शनेनैव निश्चितं जातमित्याह । तद्रूपेति । तस्य रूपं भगवल्लक्षणाकारः गुणा असमोर्ध्वसौन्दर्यशौर्यादयः माधुर्यं कचिदाच्छादितेष्वपि रूपगुणेषु तत्स्वभावत एव मनोहरत्वं प्रागल्भ्यं सर्वत्राकुण्ठत्वं तैः स्मारिता इव इवेत्युत्प्रेक्षायां वस्तुतस्त्वसम्भावनाविपरीतभावनाभ्यां संदिग्धत्वमेव ननु श्रुत्यापि दृष्ट्वापि विस्मृतत्वामिति तैः प्रतीतिं प्रापिता इत्यर्थः । यद्वा तत्तत्तु तेषां सदा स्मर्यमाणमपि तदानीं तद्रूपादिदर्शनेनातीव चमत्कृतमासीदिति नूतनस्मरणविषयतामिव प्राप्तमित्याह । तद्रूपगुणेति । अतपर्यन्तत्र विस्मितानां वाक्यमाहेति तैर्व्याख्यास्यते ॥ २१ ॥ २२

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यदूचुस्तदेवाह अष्टभिः भगवतः स्वाभाविकासमोर्ध्वनिखिलैश्वर्ययुक्तस्यहर्तुः सर्वदुःखहर्तुरभीष्टदानादिना मनोहरस्य च यतो नारायणस्यसर्वजीवाश्रयस्य तस्य साक्षादंशेन ननु शक्त्यावेशादिना इत्यंतौ सर्वाभीष्टप्रदौ भविष्यत इति दर्शितम् इह श्रीमथुरायां तत्रापि श्रीवसुदेवस्य वेश्मनीति खेषु चातिशयेन पक्षपातो दर्शितः। वेश्मनीति साक्षाद्भगवदंशत्वेन विकारासम्भवात् गौर्देवीतिवत्याह अंशेन तच्छक्तिमयत्वात्तदंशोपलक्षितो यो वसुदेवस्तस्य वेश्मनीत्यर्थः ॥ २३ ॥

एवं सामान्येन द्वावप्युक्त्वा भगवदवतारत्वमेव स्पष्टयितुं तच्चरितानि वक्ष्यन्तः प्राधान्येन श्रीकृष्णस्यादावाहुः । एष इति षड्भिः । वै प्रसिद्धो यो जातः प्रादुर्भूतः स एवैषः एष इत्यङ्गुल्या निर्देशात् किल निश्चये एतमेतावन्तम् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तदेवाह । पिबन्त इवेति । श्लिष्यन्तः परिष्वङ्गं कुर्वन्त इव इत्थं लक्षिता इत्यर्थः ॥ २१ ॥

ऊचुरिति । यथादृष्टं धनुर्भङ्गादि यथाश्रुतं गोवर्द्धनोद्धरणादि तदनतिक्रम्य तदनुरूपमित्यर्थः । ते नागरराष्ट्रकाः परस्परमूचुः कथम्भूताः तयोरूपं गजदन्तादियुक्तं गुणाः शौर्यादयः माधुर्यं हसितालापादिगतं प्रागल्भ्यं धार्ष्ट्यं तैः स्मारिता इव स्मरणं प्रापिता इवानितरसाधारणतद्रूपगुणादि याथात्म्यबोदिन इव इवशब्दोऽनतिरिक्तिद्योतकः ॥ २२ ॥

तदेव दर्शयंस्तेषामुक्तिमाह । एतावित्यष्टभिः । एतौ रामकृष्णौ नारायणस्यांशेनावतीर्णौ नारायण एव स्वसङ्कल्परूपेणांशेन रामकृष्णरूपेणावतीर्ण इत्यर्थः । यद्वा छत्रिन्यायेनांशेनावतीर्णौ इत्युक्तं श्रीकृष्णस्य साक्षान्नारायणावतारत्वेन रामस्य तदंशभूतसङ्कर्षणावतारत्वात् ॥ २३ ॥

तत्र श्रीकृष्णचरित्रं जन्मत आरभ्य सङ्गृह्णन्ति । स एष इति । देवक्याञ्जातः वसुदेवादित्यध्याहारः गोकुलं प्रतिनीतः वसुदेवेनेति शेषः किलेत्याश्चर्ये प्रसिद्धौ वा एतमेतावन्तं कालम् अत्यन्तसंयोगे द्वितीया नन्दगृहे गूढः इतरैरविज्ञातो वसन् ववृधे एधाञ्चक्रे ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावळी ।

तयोः कृष्णरामयोः रूपगुणः शब्दगुणः माधुर्यश्च तेन यद्वा रूपगुणेन कान्तिगुणेन कीर्तिगुणेन वा माधुर्येणवा वाच इति शेषः प्रागल्भ्येन वैशारद्येन च स्मारिताः स्मृतिं कारिताः

रूपं शब्दे पशौ श्लोक इत्यादेः

॥ २२॥२३ ॥

एतं कालम् एतावन्तं कालम् ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न केवलं योगिवदन्तः स्थापयित्वा चरितार्था जाताः किं तु तु भक्ता इव परमाकाङ्क्षायुक्ता इव मुग्धा इव क्षुधिता इव प्रोष्यागता इव परमस्निग्धा इव जाता इत्याह । पिबन्त इवेति । चक्षुर्भ्यां पिबन्त इव जाताः प्रत्येकं चक्षुर्द्वयेनान्तः दुःसहतापशान्त्यर्थम् अन्तर्निवेशितवन्तः यथा पानसमये जलमन्तर्बहिर्व्याप्तं तिष्ठति तथा भगवान् जात इत्यर्थः यथा गौर्वत्से जाते जिह्वया प्रेमपूर्त्यर्थं लेहनं करोति तथा ज्ञानानन्तरं भावमाविष्कृतवन्तः यथा पिता तदर्थमेव संपादितपदार्थः प्रोष्यागतः मूर्ध्नि जिघ्रति जातं वा तथा भगवति सर्वे जाताः ज्ञानप्रेमानन्तरं बहिरात्मत्वेन व्यवहृतवन्त इत्यर्थः । यथा वा मित्राणि स्त्रियो वा चिरागतमालिङ्गन्ति तथा भगवति सर्व एव जातभावा जाताः ज्ञानप्रेमात्मव्यवहारेषु सिद्धेषु सख्यान्तमात्मसमर्पणान्तं वा भक्तिसाधनानि क्रियन्ते तथा कृतवन्तः एवं ज्ञानक्रियाशक्तिविनियोगेन अन्तःकरणशरीरयोर्भगवति विनिवेशनमुक्तं लेहनाघ्राणाभ्यामिन्द्रियप्राणयोरपि ॥ २१ ॥

एवं चतुर्द्धा ज्ञानक्रियाशक्ती निरूपिते अनेन तदासक्तिः सिद्धैव तथापि स्थूणाखननन्यायेन यदि न स्थिरीक्रियते रसस्तदा रूढो न भवतीति भगवति वाचनिकमाह । ऊचुरिति । यद्यपि सर्वे जानन्ति तथापि वक्तारः श्रोतारश्च सर्व एव जाताः दार्ढ्यकरणस्यैव प्रयोजकत्वात् अतः परस्परमेवोचुः यतस्ते प्रसिद्धाः निरूढाः सर्व एव तथा जाता इति वक्तुं निश्चयमाह तत्र भगवन्माहात्म्यं ज्ञात्वा वक्तव्यमिति ज्ञापनार्थं दर्शनं श्रवणं चाह । यथादृष्टं यथाश्रुतमिति । न तु कल्पनया श्रुतं कीर्त्यत इति सिद्धं दृष्टमसम्भावनादिनिराकरणाय ननु कः प्रसङ्गोऽत्र भगवद्गुणनिरूपणे तत्राह । तद्रूपेति । तस्य रूपं गुणाः माधुर्यं कोमलता च प्रागल्भ्यं सामर्थ्यं तैर्दृष्टश्रुतं स्मारितं येषु तेन संस्कारोद्बोधात् संयोगापेक्षया संस्कारस्य बलवत्त्वात् ऊचुरेव अन्यथा प्रत्यक्षविषये परिदृश्यमाने अन्यचित्तता न स्यात् वस्तुतस्तु भगवद्गुणाः स्वरूपं च भगवत्कृपया तेष्वाविर्भूतमेव तथापि स्मृता इव वदन्तीतीवेत्युक्तम् ॥ २२ ॥

तेषां वाक्यान्याह । एतावित्यष्टभिः । अष्टैश्वर्याणि वक्तव्यानीति गुणैः सह भगवान् प्रमाणं चेति वा जन्मावधि सर्वमाहुः तत्रोभयोरुत्पत्तौ तुल्यतामाहुः । एतौ रामकृष्णौ भगवतः पुरुषोत्तमस्य साक्षात्स्वयमागत्य सर्वदुःखनिवारकस्य स एव स्वस्मिन् तानानीय स्वकीयान् देहादीन् तेषु संपाद्योद्धारं कुर्वन् समागत इत्याहुः । नारायणस्येति । अनेन भूतलमध्यब्रह्माण्डभावा निरूपिताः तस्यैतावान् समारम्भः सर्वमुक्त्यर्थः स भगवदवतारव्यतिरेकेण न सम्भवतीति युक्त एव तस्यावतार इति हिशब्दः अवतारो हि ये उद्धर्तव्याः तेषां मध्ये अवतरणं कूपे पतितो हि गुणैः स्वयमागत्य चोद्ध्रियते तत्राशेषु स्वागमनमयोचितमिति अवतीर्णौ इह प्रपञ्चे यावतांशेन एते उद्धृता भवन्ति तावन्तमेवांशं व्यापृतवानित्याहुः । अंशेनेति । अंशत्वं स्वरूपत्वं च सर्वत्र पूर्णके आनन्दमात्रकरपादमुखोदरादावनन्तमूर्त्तौ पूर्णेन विरुध्यते सर्वप्रसिद्धमेतदिति वदता वसुदेवस्य वेश्मनि गृहे भार्यायां चेत्युक्तम्

पूतनाऽनेन नीतान्तं चक्रवातश्च दानवः ।
अर्जुनौ गुह्यकः केशी धेनुकोऽन्ये च तद्विधाः ॥ २५ ॥
गावः सपाला एतेन दावाग्नेः परिमोचिताः ।
कालियो दमितः सर्प इन्द्रश्च विमदः कृतः ॥ २६ ॥
सप्ताहमेकहस्तेन धृताऽद्रिप्रवरोऽमुना ।
वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥ २७ ॥
गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम् ।
पश्यन्त्यो विविधांस्तापांस्तरन्ति स्माश्रमं मुदा ॥ २८ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अतो ह्ययमपि समर्थितं गृहे ह्याविर्भाव एवेति यथाश्रुतमिति वाक्यात् तावदेव तैः श्रुतमिति ॥ २३ ॥

एवमुभयोः सामान्यरूपमुक्त्वा भगवति विशेषरूपमाह । एष इति । एष कृष्णः वै निश्चयेन किलेति प्रसिद्धौ देवक्यां जातः गोकुलं च नीतो वसुदेवेन चकारात्तत्प्रतिनिधित्वेन कन्याप्यानीता नारदवाक्यादेषा प्रसिद्धिः ततः एतावत्कालम् एकादशवर्षपर्यन्तं तत्रैव वसन् नन्दवेश्मनि ववृधे तर्हि कथं सर्वैर्न व्यक्त इति चेत्तत्राह । गूढ इति । गुप्तत्वार्थं गुप्तत्वेन वा न व्यवहृत इत्यर्थः । वृद्धिर्जननवत्प्रातीतिकी ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पिबन्त इवेत्यादीनि नयनविस्ताररसानाकलनप्रफुल्लनासाश्वासग्रहणबाहुप्रसारणलिङ्गनाद्यपितानीत्यर्थः । दृष्टं धनुर्भङ्गादि श्रुतं गोवर्द्धनोद्धरणादि तत्सदनतिक्रम्य ऊचुः रूपाणि श्यामत्वरक्तदन्तपाणित्वादीनि गुणाः शौर्य्यादयः माधुर्य्याणि हसितापाङ्गार्पणादीनि प्रागल्भ्यानि धनुर्भङ्गादिष्वकुण्ठानि तैस्तत्प्रभावादीन् श्रुतान् स्मारिता इवेत्यनधिकारार्थम् ॥ २१ ॥ २२ ॥

अंशेनेति तेषां तथैव प्रतीतेः ॥ २३ ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेव दर्शयति । पिबन्त इति । दिलष्यन्त इव परिष्वङ्गं कुर्वन्त इव एवं लक्षिता इत्यर्थः ॥ २१ ॥

तयोः रूपादिभिः स्मारिता इव स्मरणं प्रापिता इव यथादृष्टं धनुर्भङ्गादि यथाश्रुतं पूतनावधादि वैशब्देन यथामति च ऊचुः ॥ २२ ॥

ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतामित्येतत्प्रपञ्चयति । एतावित्याद्यष्टभिः । हरेर्नारायणस्यांशेनेत्युक्तिः वक्तृमत्यनुरूपा यद्वा छत्रिन्यायेन रामस्यांशत्वात् श्रीकृष्णस्य परब्रह्मनारायणत्वात् ॥ २३ ॥—॥ २४ ॥

---

भाषा टीका ।

सब मनुष्य नेत्रों से उनका पानसा करने लगे जीभ से उनको चाटते सरीके नासिकाओं से उनको सूंघते सरीके बाहुओं से अलिंगन से करते भये ॥ २१ ॥

वे सब परस्पर मे कहने लगे कि जैसे सुनते थे तैसे हि देखे हैं उन के रूप गुण माधुर्य के स्मरण करने से मोहित हो कर वाले ॥ २२ ॥

ए दोनों साक्षात् हरि भगवान् नारायण अंश सहित है इन ने इहां पर वसुदेव जी के घर मे अवतार लियाहै ॥ २३ ॥

यह कृष्ण जी देवकी के गर्भ मे प्रगट भये हैं फिर गोकुल मे पंहुचाये गये सो इतने काल गोकुल मे नन्द जी के घर रह कर बडे भये हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

गुह्यकः शङ्खचूडः अन्ये व्याघासुरादयः ॥ २५—२७ ॥

आश्रममीषच्छ्रमयुक्तं सुखम् अश्रमं सुखमिति वा यद्वा अश्रमं यथा भवति तथा तरन्ति स्मेति ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्तं विनाशम् ॥ २५ ॥

सर्पति इतस्ततः प्रसरतीति सर्प इति शिरःसु नृत्येन तद्गमनमशक्यमिति । तथा कालिय इति तन्नामप्रसिद्ध्यैव महाविषयमत्वादिकं सूचितम् ॥ २६ ॥

विमदकरणप्रकारमेवाह । सप्ताहमिति । प्रथमश्चकारः उक्तस्य समुच्चये । द्वितीयोऽनुक्तस्य । तेन श्रीगोविन्दाभिषेकमपि गृहीतम् ॥ २७ ॥

तत्रैव भावविशेषवतीनां कासाञ्चित् स्त्रीणां वाक्यमाह । गोप्य इति । नित्यं मुदितं हर्षेण प्रसन्नञ्च तत् हसितेन प्रेक्षणमिव लोकनं यस्मिन् तच्च । यद्वा । नित्यं मुदितञ्च तत् अत एव हसितं हासयुक्तञ्च प्रकृष्टं कटाक्षादिना सुन्दरमीक्षणं यस्मिन् तच्च । यद्वा । उदितं हसितयुक्तं प्रेक्षणं यस्मिन् तद्विधं मुदा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पश्यन्त्यः । अतएवाश्रमम् अनायासेन तरन्तिस्म अतरन् । ता एव तेरुर्नास्मद्विधमन्दभाग्या इति दैन्येनातीतत्वं यद्वा स्म प्रसिद्धावेव नातीते । अतो वर्त्तमानप्रयोगस्तस्य व्रजगमने सम्भावनानपगमात् विविधान् गुरुपत्यादिकृतनिन्दातर्जनादिना विरहादिभेदेन वा एवं रासादिलीलापि सूचिता ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चक्रवातः तृणावर्त्तः ॥ २५-२८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनेन श्रीकृष्णेन पूतना निहता तथा चक्रवातः तृणावर्तश्च दानवो निहतः अर्जुनौ पातिताविति शेषः अनेनेत्यनुषङ्गः धेनुकादयश्च तथाविधा अन्ये चाघासुरादयो निहताः तत्र गुह्यकः शङ्खचूडः ॥ २५ ॥

एतेनैव गोपालैः सहिता गावश्चाग्नेः सकाशात्परिमोचिताः कालियाख्यः सर्पश्च अनेनैव दमितः विगतो मदो यस्य तथाभूतः इन्द्रश्च कृतः ॥ २६ ॥

अद्रिप्रवरो गोवर्द्धनोऽनेन श्रीकृष्णेन कर्त्रा हस्तेन धृतः वर्षधाराभ्योऽशनिभ्यश्च गोकुलं परित्रातं रक्षितम् ॥ २७ ॥

नित्यप्रमुदितं हसितमीक्षणञ्च यस्मिंस्तदस्य मुखं पश्यन्त्यः यद्वा नित्यविकसितं हसितेनेक्षणाभ्याञ्च युक्तमस्य मुखं मुदा पश्यन्त्यः विविधान् तापानाध्यात्मिकादीन् अश्रमं न श्रमो विद्यते यस्मिन्कर्मणि तद्यथा भवति तथा तरन्ति स्मातिवर्त्तन्ते स्म ॥२८॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्तं नाशं नीता गुह्यकः शङ्खचूडः ॥ २५—२७ ॥

श्रमञ्च तरन्ति ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न केवलं तूष्णीं वृद्धिं गतः किं तु चरित्राण्यपि कृतवानित्याहुः । पूतनेत्यादिपञ्चभिः । दुष्टनिग्रहः शिष्टदुःखदूरीकरणं तेभ्यः फलदानं चेति तत्र दुःखं त्रिविधम् आधिभौतिकमाधिदैविकमाध्यात्मिकमिति ततश्चरित्रं पञ्चविधं तत्र प्रथममाह । अनेन पूतना अन्तं नीता प्रथमं ततश्चक्रवातस्तृणावर्त्तः अन्तं नीतः स च दानवो महान् ततोऽर्ज्जुनौ यमलौ वृक्षौ ततो धेनुकः ततः सारूप्तं केशी गुह्यकः शङ्खचूडः अन्ये चारिष्टादयः तद्विधाः पूर्वोक्तसमानाः "एते प्रतिपक्षास्तु इन्द्रियाणीव रूपिताः। अतिदिष्टास्तथा चान्ये सर्वतुल्या यतः परे" ॥ २५ ॥

आधिभौतिकोपद्रवपरिहारमाह । गावः सपाला इति । एतेन भगवता सपाला गावः दावाग्नेः सकाशात् परितो मोचिताः अचेतनबाधानिराकरणमुक्तं सचेतननिराकरणमाह । कालीयः सर्पो दमितः आधिदैविकोऽपि भूततुल्यो जात इति वक्तुं सह कीर्त्तनम् इन्द्रश्च विमदः कृत इति चकाराद्ब्राह्मणाः वरुणादयश्च ॥ २६ ॥

आधिदैविकोपद्रवनिराकरणमाह । सप्ताहमिति । एकहस्तेनाद्रिप्रवरो गोवर्द्धनः धृतः धारितः अनायासार्थमेकहस्तेन धृत इत्युक्तं सर्वत्राप्रयोजकव्यावृत्त्यर्थमुक्तिविशेषः यथा कालीयः सर्प इति सर्पो हि दमने दुःसाध्य इति अमुना भगवतेति बालकत्वं प्रदर्शितवन्तः किं धारणेन कृतमित्याशङ्कायामाह । वर्षवाताशनिभ्यश्चेति । अशनिप्रायाः पाषाणाः यदि वा क्षणं तिष्ठेयुस्तदाशनयोऽपि पतेयुरिति निर्द्धारितत्वादुक्तम् ॥ २७ ॥

आध्यात्मिकपीडापरिहारमाह । गोप्य इति । अशनिभ्यश्चेति चकारात् इन्द्रयागादपि उपधर्मात् परिपालिता इति गोप्यो हि अस्य मुखं पश्यन्त्यः विविधांस्तापान् जहुः नित्यमुदितं च तत् हसितपूर्वकं प्रेक्षितं यत्र तादृशं च नित्यमुदितत्वेन तत्र न किञ्चित्कर्तव्यं दृष्टिश्च स्वतः प्रवृत्ता भवति विवेकेन ये क्लेशाः ये वा अज्ञानेन ते उभये हसितप्रेक्षिताभ्यां निराकृताः मुखं हि परमानन्दरूपं विविधास्तापाः कामादयः अज्ञानादयः विषयाद्यनुरोधादयश्च तरणे प्रसिद्धिरेव प्रमाणम् अश्रममिति कर्मज्ञानभक्तिमार्गेषु श्रमोऽप्यस्त्यन्ततः अत्र तु श्रमाभावः किं च नौकानद्यादितरणे श्रमाभावोऽस्ति अत्र तु मुदेत्यधिकम् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुह्यकः शङ्खचूडः ॥ २५—२७ ॥

अस्य कृष्णस्य विविधान् पतिश्वश्र्वादितर्जननिरोधादीन् अश्रमं यथा स्यात्तथेति तत्र तासां दुःखगन्धोऽपि न भवेदित्यर्थः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुह्यकः शङ्खचूडः अन्ये चाघासुरादयः ॥ २५—२७ ॥

अश्रमं यथा भवति तथा विविधान् तापान् तरन्ति स्म ॥ २८ ॥

---

भाषा टीका ।

इनने पूतना को मारा है तृणावर्त दानव को मारा है यमलार्जुन को शंखचूड को केशी को धेनुक को और जो तैसे दुष्ट हैं उनको भी मारा है ॥ २५ ॥

गोपालों के सहित सब गऊओं को इनने दावाग्नि में से छुड़ाया है कालिय सर्प को दमन किया है इंद्रको मद रहित किया है ॥ २६ ॥

इन्हीने एक हाथ से गोवर्धन पर्वत को सात दिन तक धारण किया है वर्षा पवन वज्र आदिक से गोकुल की रक्षा की है ॥ २७ ॥

नित्य ही गोपी सब इनके हास दृष्टि युक्त मुखारविंद का दर्शन करती हुई आनंद को पाकर सब श्रम और तापों से तर जाती हैं ॥ २८ ॥

---

वदन्त्यनेन वंशोऽयं यदोः सुबहुविश्रुतः ।
श्रियं यशो महत्त्वञ्च लप्स्यते परिरक्षितः ॥ २९ ॥
अयञ्चास्याग्रजः श्रीमान् रामः कमललोचनः ।
प्रलम्बो निहतो येन वत्सको ये बकादयः ॥ ३० ॥
जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च ।
कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥ ३१ ॥
हे नन्दसूनो ! हे राम ! भवन्तौ वीरसम्मतौ ।
नियुद्धकुशलौ श्रुत्वा राज्ञाहूतौ दिदृक्षुणा ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अनेन परिरक्षितो यदोर्वंशः सुबहुविश्रुतः सन् इत्यादि लप्स्यते इति वदन्तीति ॥ २९ ॥

धेनुकबकवत्सकासुरेषु विपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥ ३० ॥

जनेष्वेवं ब्रुवाणेषु सत्सु तदसहमानश्चाणूरोऽब्रवीदिति ॥ ३१-३४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ श्रीमथुरादौ करिष्यमाणां लीलामुद्दिशन्ति । वदन्तीति । शास्त्रज्ञाः कथयन्ति महत्त्वं सर्वत उत्कर्षम् ॥ २९ ॥

एवं श्रीबलदेवस्याप्याहुः । अयमिति । अप्यर्थे चकारः । अग्रजत्वेन श्रीमान् तदनुरूपसर्वशोभायुक्तः तत्रापि नेत्रशोभया लोभयन्ति । कमलेति । वत्सको वत्सप्रतिरूप एव नतु वत्सः "इवे प्रतिकृता"विति कन् इति तद्वधदोषः प्रत्याख्यातः । आदिशब्दाद्धेनुकज्ञातयः विपर्ययोक्तिस्तैर्योजिता । अत्र यथादृष्टं यथाश्रुतमित्युक्तेस्तत्त्वज्ञानाभाव एवोपजीव्यः ॥ ३० ॥

एवमेतत्प्रकारं ब्रुवाणेष्विति प्रहर्षेण तेषामुक्त्यसमाप्तिरुक्ता जनेष्विति बाहुल्यात्तेषामनिवार्यत्वं ज्ञापितं तदुक्तेरप्रमाणत्वञ्च खण्डितम् एवं तेषां मात्सर्यादयः । तूर्येषु नितरां नदत्स्वित्यनेन युद्धोत्साहश्च दर्शितः । अत एवाब्रवीत् । समाभाष्य आहूय सम्बोध्य वा वाक्यमिति पौनरुक्त्यं विशेषेण विशेषोऽत्र देय इत्यभिप्रायेण सच निष्ठुरमिति गम्यः । यद्वा । अकारप्रश्लेषेण वक्तुमयोग्यमित्यर्थः ॥ ३१ ॥

समाभाषणप्रकारमेवाह । हे इति । नन्दसूनुत्वेन सम्बोधनं तदीयसत्पुत्रत्वस्य व्यञ्जनाय । रामेति सकललोकरतिहेतुत्वस्य तत्तच्च युद्धाय प्रोत्साहनं श्लेषेण तु गोपपुत्रत्वेनामहत्त्वं तद्वत् पितृसम्बन्धानुल्लेखेनाज्ञातपितृकत्वञ्च सूचयति तत्तूपहासेन तेजोम्लापनार्थमिति ज्ञेयं वीर्येण बलेन सम्मतौ लोकानामादृतौ तत्रापि नियुद्धे बाहुयुद्धे कुशलौ दक्षौ श्रुत्वा अतएव दिदृक्षुणा भवन्तौ नियुद्धं वा द्रष्टुमिच्छता राज्ञेति तद्योग्यतोक्ता । अहो अत्र मल्लयुद्धेन क्रीडतमिति भावः । अत्रापि विरोधिलक्षणयोपहास एव तात्पर्यम् ॥ ३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अनेन परिरक्षितो वंश इत्यन्वयः ॥ २९-३७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अनेन परिरक्षितो यदोर्वंशः सुबहुविस्तरः सन् विश्रुत इति पाठे प्रसिद्धः सन् श्रियं कीर्त्तिं महतां पूज्यतां च लप्स्यते ॥ २९ ॥

अथ रामस्य गुणान् सङ्ग्रहेण आहुः अयञ्चेति । अस्य श्रीकृष्णस्याग्रजोऽयं रामः कमललोचनः श्रीमान्कल्याणगुणसमृद्धिमाननेन प्रलम्बादयो निहताश्च ॥ ३० ॥

इतीत्थं जनेषु ब्रुवाणेषु तूर्येषु वाद्यमानेषु च सत्सु चाणूरः कृष्णरामौ समाभाष्य सम्बोध्य वाक्यमुवाच ॥ ३१ ॥

हे नन्दसूनो इति चतुर्भिः भवन्तौ वीराणां संमतौ मल्लयुद्धे प्रवीणाविति च श्रुत्वा दिदृक्षुणा युद्धदर्शनेच्छुना राज्ञा आहूतौ ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इति वदन्ति अनेन कृष्णेन ॥ २९-३१ ॥

वीर्येण पराक्रमेण संमतौ सम्यक् प्रख्यातौ नियुद्धं बाहुयुद्धं मल्लयुद्धमितियावत् तस्मिन् कुशलौ निपुणौ ॥ ३२ ॥ ३३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं दुःखाभावमुक्त्वा सत्सु सर्वसुखप्रदानं भविष्यदाहुः । वदन्त्यनेन वंशो ऽयमिति । अनेन भगवता गृत्वा यदोर्वंशः विगीतोऽपि सुबहुविश्रुतो भविष्यति दुष्टो हि न श्रूयते दोषनिराकरणे तु स श्रूयते ततोऽपि गुणाधाने विश्रुतो भवति । अलौकिके तु गुणे बहुविश्रुतो भवति । मोक्षदानार्थं भगवति समागते तु सुबहुविश्रुतो भवति । किं च श्रियं च लप्स्यते पूर्वस्मादधिकं यशश्च श्रियो हि सांसिद्धिको दोषो लोभ इति तन्निवृत्त्यर्थं यशसो निरूपणं बहिः शोभया अन्तः शोभार्थमाह । महत्त्वं चेति । महत्त्वेन सत्यादयः सर्वे गुणा उक्ताः चकारान्मोक्षं च प्राप्स्यति । अनेनैव परिरक्षितश्च भविष्यति

प्रियं राज्ञः प्रकुर्वन्त्यः श्रेयो विन्दन्ति वै प्रजाः ।
मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥ ३३ ॥
नित्यं प्रमुदिता गोपा वत्सपाला यथा स्फुटम् ।
वनेषु मल्लयुद्धेन क्रीडन्तश्चारयन्ति गाः ॥ ३४ ॥
तस्माद्राज्ञः प्रियं यूयं वयञ्च करवाम हे ।
भूतानि नः प्रसीदन्ति सर्वभूतमयो नृपः ॥ ३५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न तु सन्निपातेन म्रियमाणः यथा गङ्गया मुक्तः क्रियते तथा सति न सर्वोत्कर्षो भगवति समायाति ॥ २६ ॥

एवं भगवच्चरित्रमुक्त्वा प्रमाणबलमिव निरूपयन् बलभद्रचरित्रमाह । अयं चेति । यथा भगवान् षड्गुणैश्वर्यसम्पन्न एवमयमपीति चकारादतिदिश्यते अनेन तुल्यत्वनिरूपणेऽप्युपदेशातिदेशकृतवैलक्षण्यमुक्तं भवति अस्य भगवतः अग्रजो ज्येष्ठभ्राता तस्य ज्येष्ठत्वे च हेतुमाह । श्रीमानिति । शोभातिशयवान् अधिकश्च दृश्यते राम इति प्रसिद्धः अनेन साधनरूपता तस्योक्ता कमललोचन इति दृष्ट्यैव सर्वतापनाशक इति अस्य पौरुषं तथा न प्रसिद्धमिति रूपमेव बहु वर्णितं पौरुषमप्याहुः । प्रलंबो निहतोऽनेनेति न वक्तव्यः लोके बलभद्रेण हत इति प्रसिद्धत्वाद्भणितः । धेनुकादय इति । तत्संबन्धिनः ताश्च भगवतापि धेनुको हत इति प्रसिद्धिः अतः पूर्वमुक्तं वे वकादय इति वा पाठः अप्रसिद्धत्वात् दुर्दुरादय आदिशब्देन ग्राह्याः ॥ ३० ॥

एवं सर्वे भगवद्गुणतत्पराः कायवाङ्मनोभिर्भगवत्प्रपन्ना जाताः ततो गुणश्रवणेन मल्लानामपि रस आविर्भूत इत्याह । जनेष्विति । अन्यथा भयात् रौद्ररस उत्पन्नोऽपि प्रतिबद्धः स्थितः भीता एव रौद्ररसेन जाताः गुणश्रवणे तु गैद्रता गतेति इदानीं सम्भाषणार्थं प्रवृत्ताः एवं सर्वेष्वेव जनेषु प्रकर्षेण नृणत्सु तूर्याणि च निरन्तरं वाद्यमानानि जातानि चकारात् मल्लविस्फोटनानि ॥ ३१ ॥

एवं मङ्गले सम्पन्ने स्वस्य जयमाशङ्क्य कृष्णरामौ समाभाष्य सम्यगाभाषणं कृत्वा कुशलप्रश्नादिकं विधाय ततः प्रसन्नौ ज्ञात्वा चाणूरो वाक्यमब्रवीत् मुख्यत्वात् पदार्थास्तदीया बाधितार्थाः युद्धं कर्तव्यमिति वाक्यार्थः परमबाधितः अतो वाक्यमित्युक्तं स हि चतुरः गोप्यं गोप्येनैव निरूपयन्नाह । हे नन्दसुतो ! इति । वस्तुतो जानात्येव नायं नन्दसूनुरिति तथा सति भ्रातरमिव भागिनेयमपि युद्धं न युञ्ज्यात् कंसः रामेति वचनं नाममात्रेण सन्तोषार्थम् उत्कर्षवाचकत्वात् बलभद्रेति नोक्तं सङ्कर्षणत्वं च गोप्यमेव नामग्रहणानन्तरं तयोस्तुतिमाह । भवन्तौ वीर्यसम्मताविति । पराक्रमे विषये सर्वैः स्तुतौ न कोऽपि युवयोः पराक्रमं विप्रतिपद्यत इति । अतः राज्ञा आहूतौ किं च नियुद्धकुशलौ मल्लानामिव बाहुयुद्धे समर्थौ राज्ञा श्रुतं प्रामाणिकमेव भवति अतो दिदृक्षुणा अर्थात् बाहुयुद्धं राज्ञा आहूतौ ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनेन रक्षितो यदोर्वंशः श्र्यादिकं लप्स्यते इति वदन्ति ॥ २० ॥
धेनुकवत्सकादिषु विपर्य्ययोक्तिर्जनवादेष्वनिश्चयात् ।३०।३१।
नियुद्धं बाहुयुद्धम ॥ ३२ ॥ ३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यदोर्वंशः अनेन श्रीकृष्णेन परिरक्षितः अत एव सुबहुविश्रुतः सन् श्र्यादिलप्स्यते इत्यन्वयः ॥ २९ ॥

वत्सको ये बकादयः ते रामेण निहता इत्युक्तिरपि तन्मल्लतुरूपा अत एव ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतमित्यत्र यथामतीत्यपि योजनीयम् ॥ ३० ॥

चाणूरः प्राक्कंसानुशिष्टः जनवादं चासहमानो ऽब्रवीत् ॥ ३१ ॥

तदेवं चाणूरस्य वयमिव रामकृष्णावपि राज्ञः प्रजान्तर्गताविवेयं मन्वानस्य वाक्यं दर्शयति । हे नन्दसूनो इति चतुर्भिः ॥ ३२—३४ ॥

---

भाषा टीका ।

इन्ही से यह यदुवंश बड़ा विख्यात होगा ऐसा कहते हुँ यही वंश इनसे रक्षित हो कर श्री यश महत्त्वको प्राप्त हो जायगा ॥ २९ ॥

कमल नेत्र श्रीबलराम जी श्रीमान् इन के बड़े भाइ हैं जिनने प्रलम्ब वत्स वक आदिक असुरों को मारा है ॥ ३० ॥

इस प्रकार से मनुष्यों के बोलते संते और बाजान के बजते भे राम कृष्ण दोनों को संबोधन दे कर चाणूर मल ने ये वचन कहे ॥ ३१ ॥

हे नन्द पुत्र श्रीकृष्ण ! हे बलराम ! तुम दोनों वीरों के बड़े संमत हौ तुम दोनों को बाहु युद्ध मे बड़े प्रवीण सुन कर देखने की इच्छा से राजा ने बुलाया है ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

हे कृष्ण ! प्रियं करवामेति राज्ञि प्रीते भूतानि च प्रसीदेयुः ॥ ३५—३७ ॥

तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः ।
नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनन्द्य च ॥ ३६॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र च वैमुख्यं न युक्तं तथा च स्मृतिरित्याह । प्रियमिति । प्रकुर्वन्त्य इत्यार्षो नुम् एतच्च भवतः श्रेयोऽर्थमिति भावः ॥ ३३ ॥

न वक्तव्यं गोपैरस्माभिस्तत्र सम्यक् ज्ञायत इति यतो नित्यमिति । गोपा गोपजातयो वा सपालाः वत्सपालत्वमारभ्य तथा तेन प्रकारेण वनेषु मल्लयुद्धेन क्रीडन्तो गाश्चारयन्तीत्यर्थः तदेतद्विधान्यस्य ग्राम्यस्य वाक्यानि कष्टान्ययानि यथावदेव मुनीन्द्रेणोपहासार्थमनूदितानीति ज्ञेयं गोपा गवां रक्षकाः समुच्चयेऽप्यर्थे वा तथाशब्दः वत्सपाला अपि गा गोजातीः स्फुटं व्यक्तं प्रसिद्धमेवेत्यर्थः । इदमपि निगूढोपहासयुक्तम् एवमुत्तरत्रापि यथेति पाठे यथावदित्यर्थः ॥ ३४ ॥

तर्हि गोपैः सह तत्क्रीडा कार्य्येति चेत्तत्राह । तस्मादिति । राज्ञः प्रियार्थमस्माभिः सह कार्य्येति भावः । भूतानि जीवाः नृपस्य सर्वभूतमयत्वं सर्वभूतस्य तदुपजीवनत्वात् तस्मान्निजप्रजारूपयोर्मच्चतोरनेन रक्षैव कार्य्येति माच भैषमिति भावः । अन्यत्तैः तत्रेतिशब्दस्य प्रकारार्थस्य राज्ञीत्यादिनान्वयः ॥ ३५ ॥

तन्निशम्याभिनन्द्य च देशकालोचितं तदानीं तादृशमेव वक्तुं योग्यं वचोमात्रमब्रवीत् वस्तुतोऽभिप्रायस्त्वन्य एवेति भावः । तादृशवचने हेतुः नियुद्धमित्यादि । तत्र हेतुः कृष्णः तादृशलीलाकौतुकितया प्रसिद्ध इत्यर्थः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मनः प्रभृतिकरणत्रयेण राज्ञः प्रियं कुर्वन्त्यः प्रजाः श्रेयः सुखं लभन्ते अतोऽन्यथाप्रियं कुर्वन्त्यस्तु विपरीतमश्रेयो दुःखं विन्दन्ति ॥ ३३ ॥

नावां नियुद्धे कुशलावित्यत आह । नित्यमिति । वत्सानां पाला वत्सपाला वत्सपालनयोग्यवयसः आरभ्येति भावः । गोपाः यावद्गोपालनयोग्यवयसः भवन्तः वनेषु मल्लयुद्धेन क्रीडन्त एव गाश्चारयन्ति अतो नियुद्धकुशलावेवेतिभावः ॥ ३४ ॥

तस्माद्यूयं वयञ्च राज्ञः कंसस्य प्रियं करवामहे एवं राज्ञि प्रीते सति सर्वाणि भूतानि नोऽस्माकं प्रसीदन्ति कुतः यतो राजा सर्वभूतात्मकः ॥ ३५ ॥

तच्चाणूरवाक्यं निशम्याकर्ण्य भगवान्नियुद्धं स्वस्याभिमतमेव मन्यमानोऽत एव तद्वचो ऽभिनन्द्य देशकालोचितं वचो ऽब्रवीत् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तत्कथमवगतमिति तत्राह । नित्येति।नियुद्धेन क्रीडन्तः गोपाला वत्सपालाश्च गोवत्सांश्च चारयन्तीति किंवदन्त्यावगतमित्यर्थः ॥ ३४ ॥

किं कलहेन फलमिति तत्राह । भूतानीनि ॥ ३५ ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु राज्ञो दर्शने सुखं भवति अस्माकं कः पुरुषार्थ इति चेत्तत्राह । प्रियं राज्ञ इति । राज्ञः प्रियं प्रकर्षेण कुर्वन्त्यः तदधीनाः प्रजाः श्रेय उत्तमफलं धनादिकं विन्दन्ति परं कापट्ये फलं न भवतीत्यभिप्रायेणाह । मनसा कर्मणा वाचेति । ये हि कायवाङ्मनोभिः प्रियं कुर्वन्ति ते श्रेयो वै निश्चयेन विन्दन्ति । न केवलं प्रिये कृते श्रेयः प्राप्यते अन्यथा नेत्येतावदेव किं तु विपरीतं यः प्रियं न करोति कायवाङ्मनोभिः सः अतः अस्माद्धेतोः अन्यथा अश्रेयो मारणादिकं च प्राप्नोति यतः प्रजानामयं स्वधर्म इति ॥ ३३ ॥

नन्वस्माभिर्बालैर्वनस्थैः क मल्लयुद्धं शिक्षितमिति चेत्तत्राह । नित्यं प्रमुदिता इति । एके हि जीवितार्थं शिक्षन्ति अन्ये तु बलार्थं पुष्टाः सन्तः शिक्षकाः परंपरया प्राप्ताः परं ते लौकिका भवन्ति अतः शास्त्रीयेभ्यः फलतो हीना अपि स्वरूपतः पुष्टा भवन्ति तदाह । नित्यमेव प्रमुदिता गोपा यान्येऽपि वत्सपालाः स्फुटमेव वनेषु मल्लयुद्धेन क्रीडन्तः गाश्चारयन्ति गोचारणे हि श्रमे दुग्धपानं स्वतः सिद्धं वृषभाणां निग्रहश्च बलिष्ठैरेव भवति अतः सर्वथा श्रुतं सत्यम् ॥ ३४ ॥

तस्माद्राज्ञः प्रियंकर्त्तव्यमित्याह । तस्मादिति । राजा हि सर्वाराध्यः अतो यूयं लौकिका वयं च शास्त्रीयाः चकारात् एवमन्ये विद्यावन्तोऽपि प्रियं करवामहे सर्वानेकीकृत्य वदति एकमार्गप्रवृत्तानां हि मुख्यानुसरणं युक्तमिति अस्माभिश्चेत्कर्त्तव्यं भवद्भिरपि कर्त्तव्यमेवेति ततः किमत आह । भूतानि नः प्रसीदन्ति इति । सर्वभूतमयः प्राणी अतस्तेषां हितं कर्त्तव्यम् अन्यथात्वे शापप्रसादे कृतघ्नता भवेत् फलदानार्थं यतः सर्वभूतमयो नृपः भूतान्यत्र देवतारूपाणि तस्य विवक्षितानि वस्तुतस्तु पाञ्चभौतिक एव ॥ ३५ ॥

ततो भगवान् युक्तियुक्तं ग्राह्यमिति लौकिकमपि न बाधनीयमित्यक्लिष्टकर्मा उत्तरमाहेत्याह । तन्निशम्येति । तद्युक्तियुक्तं वचः कृष्णस्तदर्थमेवावतीर्णः समागतश्च तथापि देशकालयोरनुचितं तदाह । लौकिकत्वात् प्रश्नस्य शस्त्रादियुद्धापेक्षया नियुद्धमात्मनोऽभीष्टं क्षत्रियाणां हि शस्त्रग्रहणं षोडशे वर्षे उपनयनानन्तरं च शिक्षा अत इदानीं बाहुयुद्धमेवात्मनोऽभीष्टं मन्यमानः देशकालावस्थानामनुगुणत्ववचनात्तं चाणूरमभिनन्द्य चकारात् राजानं च उवाच ॥ ३६ ॥

---

प्रजा भोजपतेरस्य वयं चापि वनेचराः ।
करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥ ३७ ॥
बाला वयं तुल्यबलैः क्रीडिष्यामो यथोचितम् ।
भवेन्नियुद्धं माऽधर्मः स्पृशेन्मल्लसभासदः ॥ ३८ ॥

॥ चाणूर उवाच ॥

न बालो न किशोरस्त्वं बलश्च बलिनांवरः ।
लीलयेभो हतो येन सहस्रद्विपसत्त्वभृत् ॥ ३९ ॥
तस्माद्भवद्भ्यां बलिभिर्योद्धव्यं नानयोऽत्र वै ।
मयि विक्रम वार्ष्णेय ! बलेन सह मुष्टिकः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे कुवलयापीडवधो नाम
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नियुद्धकुशलत्वं कथमाययोरित्यत आह । नित्यमिति ॥ ३४॥३५ ॥ ३६ ॥ ३७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्मात्सर्वभूतमयः नृपः तस्माद्वयं यूयं च राज्ञः प्रियं करवाम एवं राज्ञि प्रीते सति हे कृष्ण ! नोऽस्माकं सर्वभूतानि प्रसीदन्ति प्रसीदेयुरित्यर्थः ॥ ३५—३७ ॥

---

भाषा टीका ।

राजा की प्रसन्नता करने से प्रजा का कल्याण होता है सो मन वचन कर्म से करनी चाहिये जो नहीं करै तो उलटा राजा कोप करता है ॥ ३३ ॥

आप गोपाल लोग बछराओं के पालने में आनंदित होकर वनों में मल्ल युद्ध करते हैं सोबात प्रसिद्ध है ऐसी क्रीडा करते गउओंको चराते हैं ॥ ३४ ॥

तिससे हम तुम सब मिलकर राजा का संतोष करेंगे तब संपूर्ण प्राणी हम पर प्रसन्न होंगे क्योंकि राजा ही सर्व भूत मय है ॥ ३५ ॥

इस बात को सुनकर बाहु युद्ध को अपना अभिष्ट समुझकर इस देश काल के उचित वचन को श्रीकृष्ण भगवान् बोलते भये ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यथोचितं नियुद्धं बाहुयुद्धं भवेत् मल्लसभासदो मल्लसभाधिकृतान् जनानधर्मो मास्पृशेत् स्पृशेदित्यर्थः हे मल्लेति वा ॥ ३८ ॥

सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा ॥ ३९ ॥

बलिभिर्मादृशैः सह अनयोऽधर्मः विक्रम पराक्रमं कुरु मुष्टिको विक्रमतादित्यनुषङ्गः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अभिनन्दनमेवाह । प्रजा इति । भोजपतेरिति गौरवात् तत्राप्यस्येति नतूग्रसेनस्यापीत्यर्थः । वयं च प्रजाः कीदृशा अपि वनेचरा अपि चकाराद्भवन्तस्तावत्तत्पुरवासिनः सुतरामेवेत्यर्थः । तस्माद्वयमपि राज्ञः प्रियमाज्ञाप्रतिपालनादिकं करवामैव तच्च नोऽस्मभ्यं भोजपतेरनुग्रह एव यत एव वयमत्र प्रवृत्ता भवामेति भावः । वस्तुतस्तु अस्येत्यनादरे वयं च।पि वयमपि प्रजाः अपितु नैवेत्यर्थः । तत्र हेतुः वनचराः नित्यं वृन्दावनविहारिण इत्यर्थः । अयन्त्वाधुनिक इति भावः । तस्माद्वयं राज्ञः स्वस्य श्रीगोपराजस्यैव प्रियङ्करवाम कर्तुमिच्छामः नतु भोजपतेः । नन्वीश्वरस्य तवान्यत्र राजत्वादिमननमाज्ञाप्रतिपालनादिकं चासम्भवमित्याशङ्क्याह । तच्च नोऽस्माकमनुग्रहः प्रेमविशेषकर्तृजनविषयदेवतोद्गमविशेष एव येन तादृशीमपि चर्यतां प्रतिपद्यमहीति भावः ॥ ३७ ॥

बाला बालत्वेनाल्पबला इत्यर्थः । बहुत्वमन्येषामपि बालानां स्वकोटौ प्रवेश्य दृष्टान्तस्थव्यञ्जनाय सांसर्गिगोप गोपापेक्षया वा तुल्यबलैरिति बालेष्वपि ये न्यूनबला अधिकबला वा तैरपि

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नेत्यर्थः। क्रीडिष्याम इति। तत्रापि क्रीडायामेव ममेच्छेति भावः। अन्यत्तैः वस्तुतश्च हे बाला! अज्ञाः तुल्यबलैः गोपैः सखिभिरेव सह क्रीडिष्यामः नत्वल्पबलैर्युष्माभिरित्यर्थः। "गोपैः समानगुणशीलवयोविलासवेषैश्च मूर्च्छितकलस्वनवेणुवीणै"रिति प्रसिद्धेः मल्लानामशनिरिति च तथापि भगवद्दशामाग्रहात्तत्र प्रवर्तामहे ततोऽशनिस्वभावमदङ्गस्पर्शेन भवतां वधे तु नास्माकं दोष इति भावः—

श्रीहरिवंशे विष्णुपर्वणि कंसवधे अष्टाशीतितमाध्याये।
नियुद्धे निपातनानन्तरमवध्यस्यापि मल्लस्य॥
तस्य वधे कार्ये स्वदोषपरिहारार्थं—
स्पष्टमेव श्रीभगवद्वचनम्॥
अहं बालो महानन्ध्रो वपुषा पर्वतोपमः।
युद्धं ममानेन सह रोचते बाहुशालिना॥
युद्धव्यतिक्रमः कश्चिन्न भविष्यति मत्कृतः।
न ह्यहं बाहुयोधानां दूषयिष्यामि यन्मतम्॥
योऽयं करीषधर्मश्च तोयधर्मश्च रङ्गजः।
कषायस्य च संसर्गः समयो ह्येष कल्पितः॥
संयमः स्थिरता शौर्यं व्यायामः सत्क्रिया बलम्।
रङ्गे च नियता सिद्धिरेतद्युद्धविदां मतम्॥
यदयं बाहुयुद्धं वै सवैरं कर्त्तुमुद्यतः।
अत्र वै निग्रहः कार्यस्तोषयिष्याम्यहं जगत्॥
करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः।
बाहुयोधी शरीरेण कर्मभिश्चात्र चिन्त्यताम्॥
एतेन बहवो मल्ला निपातानन्तरं हताः।
रङ्गप्रतापकामेन मल्लमार्गश्च दूषितः॥
शस्त्रसिद्धिस्तु योधानां सङ्ग्रामे शस्त्रयोधिनाम्।
रङ्गे सिद्धिस्तु मल्लानां प्रतिमल्लनिपातजा॥
रणे विजयमानस्य कीर्त्तिर्भवति शाश्वती।
हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते॥
रणे ह्यभयतः सिद्धिर्हतस्येह घ्नतोऽपि वा।
सा हि प्राणान्तिकी यात्रा महद्भिः साधु पूजिता॥
अयन्तु मार्गो बलतः क्रियातश्च विनिःसृतः।
मृतस्य रङ्गे कः स्वर्गो जयतो वा कुतो रतिः।
ये तु केचित् स्वदोषेण राज्ञः पण्डितमानिनः॥
प्रतापार्थं हता मल्ला मल्लहन्तुर्वधो हि सः।

इति॥ ३८॥

किशोरश्च न भवसि तस्यापि बाल्यसादृश्येनाल्पबलत्वात् किन्तु बलिनां मध्ये वरः श्रेष्ठः वरत्वमेव दर्शयति। लीलयेति। येनेति। येन येनेत्यर्थः। द्वयोरपि स्कन्धे गजदन्तस्य दृष्टत्वादनुमाय तदिदं प्रोक्तमिति ज्ञेयम्॥॥ ३९॥

बलिभिरिति बहुत्वं सर्वेषामेव मल्लानां क्रमेण नियुद्धेच्छया यद्वा बालिभिर्बहुभिरप्येकदा योद्धव्यं तथापि नानयः कथं तर्हि भवता योद्धव्यमित्याशङ्क्य पुनः साभिमानमाह। मयि तु विक्रम मान्यं स्वविक्रम दर्शयेत्यर्थः। अहं तु न दर्शयिष्यामीति भावः ननु गोपा वयं राजसभायां न क्रीडायोग्या इत्यत्राह। हे वार्ष्णेय! तादिदमपि वयं जानीम इति भावः॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
त्रिचत्वारिंशोऽध्यायः॥ ४३॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

बालशब्दो ऽत्यन्तशैशवपरः॥ ३८॥ ३९॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्रिचत्वारिंशोऽध्यायः॥ ४३॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह। प्रजाइति द्वाभ्याम्। अस्य भोजपतेः कंसस्य वनेचरा वयमपि प्रजा एव तद्देशवनोपजीवित्वाद्वयमपि कथञ्चित्प्रजा एवेत्यर्थः। ननु युष्मद्विधा इति भावः। अतस्तस्य प्रियङ्करवाम परं केवलं तत्कथं चित्प्रीतिरित्येतन्नोऽस्माकमस्मद्विषयोऽनुग्रहः॥ ३७॥

वयन्तु बाला अतस्तुल्यबलैः सह क्रीडिष्यामः नत्वधिकबलैर्भवद्भिरिति भावः। यथोचितं नियुद्धं भवेन्मल्लसभासद्भिः मल्लसभाधिकृतानधर्मो मास्पृशतु हे मल्लेति वा॥ ३८॥

एवमुक्तः प्राह चाणूरः। न बाल इति। बालशब्दोऽत्यन्तशैशवपरः तच्च दृष्टान्तार्थं यथा नात्यन्तशिशुस्तथा न किशोरोऽपि किं तु युवेति भावः। अथापि बलहीन इत्यत आह। बलिनांवरः। यादृशस्त्वं तादृश एव रामोऽपीत्याह। बलश्चेति। बलिनांवरत्वे लिङ्गं वदन् विशिनष्टि। येन त्वया लीलयैव सहस्रद्विपानां सत्त्वं बलं बिभर्तीति तथा इभो गजः कुवलयापीडो हतः॥ ३९॥

तस्माद्बलिभ्यामावाभ्यां सह बलवद्भिर्युष्माभिर्योद्धव्यम् अत्र युद्धे अनयोऽधर्मो न विद्यते वै नूनं हे वार्ष्णेय! मया सह त्वं विक्रम पराक्रमं कुरु युद्ध्यस्वेति यावत् बलेन रामेण सह तु मुष्टिको विक्रमिष्यते॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रिचत्वारिंशोऽध्यायः॥ ४३॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यूयं भोजपतेः प्रजाः वयं चापि विशेषोऽस्ति वयं वनेचराः यूयं तत्समीपचराः अतो विशेषप्रियाश्च तथापि वयं तस्य नित्यं प्रियं करवामो नाप्रियमिति यत्तस्मान्नः परमनुग्रह एव॥ ३७॥

तत्रापि किञ्चित्कर्तव्यमस्तीत्याह। बाला इति। वयं बाला इति यद्तस्तुल्यबलैः मल्लैः समं नियुद्धामित्ययं धर्मः अधर्मो मास्पृशेन स्पृशतु॥ ३८॥

चाणूरः कृष्णोक्तं परिहरति। नेति॥ ३९॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनयोऽन्यायलक्षणः अधर्मः विक्रम विक्रमस्व मुष्टिका बलेन रामेण सह विक्रमं करोत्विति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां

एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ४३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

राज्ञः प्रियं प्रकर्त्तव्यमेव परं त्वया सह नियुद्धं न कर्त्तव्यम् अतुल्यबलत्वादिति तदाह द्वयेन । प्रजा इति । अस्य भोजपतेः कंसस्य प्रदर्शनेन तिरस्कृत इव वयमिति प्रदर्शनेन कथं वा प्रजात्वमित्युपहसितः वयं चकाराद्यूयं च वस्तुतस्तु यूयमेव वस्त्वर्थे वयं तु वनेचरा इति नास्माकं राज्ञा कृत्यं तथापि नित्यं करवाम फलं तु नापेक्षयत इत्याह । तन्नः परमनुग्रह इति । मातुलो हि राजा स चेद्भागिनेयगुणान् पश्येत् तदा अनुगृह्णीयादेवेति युक्तत्वादभिनन्दनम् ॥ ३७ ॥

एतावानर्थः साधारणः विशेषमाह । बाला वयमिति । प्रदर्शनमेव ह्यत्र प्रयोजनं न त्वन्यत् चेत्तदा बाहुयुद्धं शास्त्रानुसारेण कर्त्तव्यमिति तथैव करिष्याम इत्याह । बाला वयमिति। नियुद्धशास्त्रे हि समानवयस्कैरेव समानबलदेहैर्युद्धं कर्त्तव्यमिति हि स्थितिः अतः बालैः समानवयस्कैः तुल्यबलैरेतैर्गोपैः सह क्रीडिष्यामः तथा सत्युचितं भवति तदाह । यथोचितमिति । नन्वाज्ञा प्रमाणं कार्यमितीत्याशङ्क्याह । भवेन्नियुद्धमिति । समानैः क्रियमाणमेतस्मिन् युद्धेऽधर्मो मा भवेत् ततो द्रष्टॄणां मल्लसभासदां दोषोऽपि न भवेदित्याह। मल्लसभासदः । मा स्पृशेदिति । चाणूरोक्ते हि लौकिको धर्मः तद्विरुद्धोऽयं शास्त्रीयो धर्म इति युक्तमुक्तं भगवानपि चाणूरादयो दैत्या इति छलेनैवोक्तवान् बलसंबन्धिनो वयं बालाः तुल्यबलाः प्रातीतिकाः सखित्वाद्गोपा बलभद्रो वा भवांस्तु न तुल्यबलः किं तु हीनबल इति अभिप्रायेण प्रत्युक्तम् ॥ ३८ ॥

चाणूरस्तु विपरीतं ज्ञात्वा अनिष्टफलार्थं विपरीतत्वं सम्पाद्य युद्धार्थं प्रवर्त्तयते । न बाल इति द्वाभ्याम् । उपपत्त्या बलं साधयति न वा त्वं बालः बालाभिप्रायेण सूक्ष्मत्वमाशङ्क्य इयत्सिद्धिं मत्वा अङ्गीकारे तत्परिहारार्थमाह । न किशोर इति । वयस्तु बलादिनियामकं न भवतीत्यभिप्रायः । वस्तुतोऽपि तथा बलश्चेति चकारात् सोऽपि न बालो न किशोरः किं तु बलिनां वरः सोऽपि भवांश्च उभयोर्बलमपि प्रतिज्ञाय अन्यतरबलसाधनदृष्टान्तेनैतत् साधयितुं सहस्रद्विपानां सत्त्वं बिभर्त्ति इति तादृशरूपः कुवलयापीडः द्विपस्य बलं शास्त्रप्रसिद्धं पुरुषाच्छतगुणं बलमिति भारं वहति पुरुषः शतभारं वहति गज इति तादृशोऽपि लीलयैव हतः न ह्यसाधनेन ससाधन इभः पुरुषेण बालेन वा हन्तुं शक्यः अतोऽतिपुरुषकारस्त्वयि वर्त्तत इति न भवान् पुरुषैस्तुल्यः ॥ ३९ ॥

एवं बलभद्रोऽपि ततः किमेतस्मादिति भवद्भ्यां सह गजादपि बलिष्ठैर्योद्धव्यम् एवं युद्धे नानयः शत्रुभिर्योद्धव्यमेव न्यायाविरोधोऽपि नास्ति वै निश्चयेन तर्हि गोपालास्तथाविधाः सन्ति तैः सह युद्धं कर्त्तव्यमिति चेत्तत्राह । मया विक्रमेति । वार्ष्णेयेति सम्बोधनं छलं दूरीकरोति कपटं परित्यज्य स्पष्टं मया सह युद्धं तु कुरु त्वं कंसस्य भागिनेयो ऽततः किमिति छलवादः क्रियते छलं परित्यज्य मया सह द्वेषिणा स्पष्टं युद्धं कर्त्तव्यं तदाह । विक्रमेति । पराक्रमं कुरु बलेन सह च मुष्टिकः पराक्रमं करोतु अनेन मुष्टिको हीनबलः प्रबलस्त्वम् अहं महाबलस्त्वत्तोऽपीति निरूपितवान् अत एव भगवता चाणूरो हतः अन्यथा अक्लिष्टकर्मा न हन्यात् हननस्याप्रतिज्ञातत्वात् एवं वाग्बन्धावधि सर्वेषां द्रष्टॄणां भगवत्यासक्तिर्निरूपिता ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

चत्वारिंशाध्यायविवरणम् ॥ ४० ॥ ४३ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मल्लसभासदो मल्लसभाधिकृतान् अधर्मो मा स्पृशेदित्यतो बालैरेव सहक्रीडिष्यामोऽन्यथा त्वधर्मः स्पृशेदेवेति भावः ॥ ३८ ॥ ३९ ॥

बलिभिर्मद्विधैरेव सह न चास्माभिर्बालैस्तेषां त्वत्तुल्यबलत्वाभावादिति भावः ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

दशमस्य त्रयश्चत्वारिंशोऽप्यजनि सङ्गतः ॥ ४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं चेत्तर्हि राज्ञः मल्लसभाधिकृतजनद्वारा अधार्मिकत्वं यथा न स्यात्तथा क्रीडिष्याम इत्याह । बाला इति । तुल्यबलैः सह क्रीडिष्यामः ननु बलिभिर्भवद्भिः सहेति यथोचितं नियुद्धं भवेत् मल्लसभासदः मल्लसभाधिकृतान् जनान् अधर्मः सद्यो नाशहेतुर्मास्पृशेत् ॥ ३८ ॥

सहस्रद्विपानां हस्तिनां सत्त्वं बलं बिभर्त्तीति तथा ॥ ३९ ॥

अनयोऽधर्मो नास्ति हे वार्ष्णेय ! त्वं मयि विक्रम पराक्रमं कुरु रामेण सह मुष्टिकः विक्रमताम् ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

त्रिचत्वारिंशाध्यायार्थप्रकाशः ॥ ४३ ॥

---

भाषा टीका ।

तुम लोग इन भोज राज के प्रजा हो और जंगल में रहने वाले हम भी प्रजा ही हैं हम सदां प्रिय करते ही हैं यह तो हमारे ऊपर बडा अनुग्रह ही है ॥ ३७ ॥

हम बालक हैं अपने बरोबर बल वाले बालकों के साथ खेल कुस्ती करेंगे जैसा उचित है ऐसे युद्ध होने से मल्ल सभा वालों को अधर्म नहीं लगैगा ॥ ३८ ॥

चाणूर बोला तुम न बालक हौ न किशोर हौ ऐसे ही बलराजी भी बलियों में बली हैं जिन तुमने कि हजारों हाथियों के ज़ोर वाले कुवलया पीड को सहजही से मार दिया है ॥ ३९ ॥

तिससे तुम दोनों के साथ बल वाले मल्लों को युद्ध करना चाहिये इसमें कोई अन्याय नहीं है हे कृष्ण! मेरे साथ तुम युद्ध करो बलदेवजी के साथ मुष्टिक युद्ध करेगा ॥४०॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे तेंतालीसेंमें अध्याय की भाषा टीका समाप्त ॥ ४३ ॥

———

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

श्रीशुक उवाच ।

एवं चर्चितसंकल्पो भगवान् मधुसूदनः ।
आससादाथ चाणूरं मुष्टिकं रोहिणीसुतः ॥ १ ॥

हस्ताभ्यां हस्तयोर्बद्ध्वा पद्भ्यामेव च पादयोः ।
विचकर्षतुरन्योऽन्यं प्रसह्य विजिगीषया ॥ २ ॥

अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ।
शिरश्शिर्ष्णोरसोरस्तावन्योऽन्यमभिजघ्नतुः ॥ ३ ॥

परिभ्रामणविक्षेपपरिरम्भावपातनैः ।
उत्सर्पणापसर्पणैश्चान्योऽन्यं प्रत्यरुन्धताम् ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ।
कंसयोषित्समाश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥

चर्चितो निश्चित एव सङ्कल्पो यस्य सः ॥ १ ॥ २ ॥

बाहुमध्यात्कनिष्ठाङ्गुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः ॥ ३ ॥

परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनम् विक्षेपो नोदनम् परिरम्भो बाहुभ्यां निष्पीडनम् अवपातनमधः क्षेपः उत्सर्पणमुत्प्लुत्य पुरतो. गमनम् अपसर्पणं पृष्ठतो गमनम् एतैः प्रत्यरुन्धतां प्रत्यावृतवन्तौ ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवानशेषैश्वर्यसम्पन्न इति सद्य एव इच्छामात्रेण तद्वधसामर्थ्यं सूचितं तथापि चाणूरमाससाद क्षणं मल्लयुद्धकौतुकार्थमन्तिके गतः यतो मधुसूदनः यथा सद्यो हन्तुं शक्तोऽपि चिरं बाहुयुद्धक्रीडां कृत्वा मधुं हतवान् तद्वदित्यर्थः । "लोकवत्तु लीलाकैवल्यम्" इति न्यायेनेति भावः । अथ तदनन्तरं मुष्टिकमित्यादि । आससाद इति क्वचित् पाठः ॥ १ ॥

क्रीडामेवाह । हस्ताभ्यामित्यादि चतुर्भिः । चकार उक्तसमुच्चये एवशब्दस्य हस्ताभ्यामित्यनेनाप्यन्वयः । अन्येनान्यस्य मिश्रणे वैषम्यापत्त्या मल्लक्रीडापाटवहानेः । एवमग्रेऽपि । अन्योऽन्यं विजिगीषयेति श्रीभगवतोऽपि नरलीलायुद्धव्यवसायत्वेन जयेच्छासम्भवात् ॥ २ ॥

द्वे इति प्रत्येकं पृथगित्यर्थः । तौ श्रीभगवच्चाणूरौ तावित्यस्य पूर्वेण परेणाप्यन्वयः । अभितो जघ्नतुः प्रहृतवन्तौ । अरत्निशब्दस्तैर्व्याख्यातः । अत्र प्रमाणवाचकः खल्वयं ततस्तेन युद्धं न सम्भवति कथञ्चित्तद्रूपअकाकाराङ्गवाचकत्वेऽपि निःसृतकनिष्ठाङ्गुलितया प्रहारसौकर्यं न सम्भवति नापि मल्लेन तादृशं युद्धं प्रसिद्धं तस्मान्मुष्ट्युपलक्षितत्वेन कथञ्चिन्मुष्टिरेव वाच्या व्याख्यास्यते च भगवन्नात्राणामरत्निजान्वादीनामिति । यद्वा । अरत्निः कफणौ हस्ते सप्रकोष्ठे तदङ्गुलाविति विश्वप्रकाशात् कफोणिरेवोच्यते । कफोणिः कफणिस्तथेति द्विरूपकोषादिति ॥३॥

उत्सर्पणमग्रे गमनम् अपसर्पणं पश्चाद्गमनं प्रत्यरुन्धतामित्यस्य स्थाने लुङ्प्रयोगे श्नम्प्रत्यय आर्षः । परस्परं मुहुः स्थगितोद्यमं चक्रतुरित्यर्थः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ चाणूरमुष्टिककूटशलकंसवधात्मकं कर्मानुवर्णयति चतुश्चत्वारिंशेन । एवञ्चर्चितो निश्चितः स्वसङ्कल्प एव यस्य सः चाणूरमाससादाभ्यपद्यत तथा रोहिणीसुतो रामो मुष्टिकमाससाद ॥ १ ॥

तदा तौ कृष्णचाणूरौ राममुष्टिकौ च हस्तयोर्हस्ताभ्यां पादयोः पादाभ्यां च बद्ध्वा परस्परं जेतुमिच्छयाऽन्योऽन्यं विचकर्षतुर्विकृष्टवन्तौ ॥ २ ॥

कनिष्ठां विना कृतमुष्टिहस्तोऽरत्निः अरत्निभ्यां द्वे जानुनीमिथोऽभिजघ्नतुः तथा जानुभ्यां जानुनी शिरसा शिरः उरसोरश्चाभिजघ्नतुः ॥ ३ ॥

परिभ्रमणं हस्तादिषु गृहीत्वा परितश्चालनं विक्षेपो नोदनं परि-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

रम्भो बाहुभ्यां पीडनम् अवपातनमधः पातनम् उत्सर्पणम् उत्सृज्य पुरतो गमनम् अपसर्पणं पृष्ठतो गमनमेतैस्तौ कृष्णचाणूरौ राममुष्टिकौ चान्योऽन्यं प्रत्यरुन्धतां प्रत्यावृतवन्तौ ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवञ्चाणूरोक्तप्रकारेण चिन्तितः सङ्कल्पो मनोरथो येन स तथा हेति युद्धप्रारम्भे प्रत्यारम्भे प्रसिद्धौ हेति च ॥ १ ॥

तत्र मल्लयुद्धकरणप्रकारं कथयति। हस्ताभ्यामिति।
आस्फोट्य हस्तौ हस्ताभ्यामूरूचैव परस्परम्।
विसृज्य भूयः सङ्गृह्य परिक्रम्य परस्परम् ॥
इत्येकश्लोकमादित्येन केचित्पठन्ति ॥ २ ॥ ३ ॥

विक्षेप आकृष्य मोचनम् अवपातनमधोमुखेन पातनम् उत्सर्पणमुत्क्षेपः अपसर्पः पृष्ठतो गमनम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अरत्निः कफोणिः। अरत्निः कफणौ हस्ते सप्रकोष्ठतलाङ्गुलाविति विश्वप्रकाशात्। कफोणिः कफणिस्तथेति द्विरूपकोशात् ॥ १—४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एकचत्वारिंशत्तमे वधः कंसस्य रूप्यते।
तदीयैः सह तस्माद्धि पित्रो रोधश्च दीनयोः ॥
बलक्षयाय लीलापि वाक्यान्यासक्तियोधने।
भक्तार्थं मारणं चास्य कंसस्यापि तथैव च ॥
प्रतिबन्धनिवृत्त्यर्थमेतावद्भगवत्कृतम्।
निरुद्धास्तेऽपि मुक्ता हि पूर्वस्माच्च विशिष्टता।
बोधिता ज्ञानकथनात् आसक्तिश्च स्थितैव हि ॥
त्रिविधाः सर्व एवैते गुणातीतोऽपि सात्त्विकः।
अथावतिः पुनर्वाच्यास्तत्रैके मोचिताः स्वतः ॥
निरुद्धाः सफलाः प्रोक्ताः पितरौ पूर्वतोऽधिकौ।

पूर्वाध्याये युद्धार्थं चाणूराकरणमुक्तम् आहूतो न निवर्तेतेति शास्त्रात् हीनबलेनापि युद्धार्थं प्रवृत्ताविंत्याह। एवमिति। चर्चितो विचारितः सङ्कल्पो येन यस्य वा चर्चा हि विचारात्मिका अविचार्य चेत् दुर्बलेन सह युद्धं कुर्यात्तदा दोषो भवेत् किं च भगवान् तद्धृदयमपि जानाति युद्धाभावे न निवर्त्तत इति शङ्का तु नास्तीत्याह। मधुसूदन इति। यो मधुमपि हन्ति तत्रायं को वराक इति अत एवासखाद निकटे सम्बद्धो जातः अथेति प्रथमं चाणूरस्य यश्चाणूरः स्वस्मिन् योजितः भिन्नपक्षे मारितो दूरीकृतो वा अथ तदनन्तरं चाणूरमासखाद मुष्टिकं तु रोहिणीसुत इति मुष्टिको ह्यप्रयोजकः बिभेति च स्वतः स्वयं च नोक्तवान् तथापि चाणूरे संलग्ने तद्वाक्यात् स्वयमपि संलग्नः तदनुचितमिति रोहिणीसुत इत्युक्तम् ॥ १ ॥

मल्लयुद्धप्रकारेण प्रवृत्ताविति तदाह चतुर्भिः—

बलं शिक्षा च माया च प्रसादश्च गुरोस्तथा।
चत्वारोऽपि निराकार्यास्ततः श्लोकचतुष्टयम् ॥

हस्ताभ्यामिति। हस्ताग्रे हस्ताग्रं धृत्वा पादाग्रे च पादाग्रं विचकर्षतुः प्रथमं समत्वायाह। अन्योऽन्यं प्रसह्य विजिगीषया आकर्षणं कृतवन्तौ येनैवाकृष्टोपरः आकृष्टो भवति स पराजितो भवति इति अङ्गुलीनां बन्धनं परस्परमुभयोः अत्रैव जये महाबलत्वम् ॥ २ ॥

ततः साक्षात्सर्वाङ्गेषु संयोगेन युद्धमाह। अरत्नी द्वे इति। हस्तमध्ये उभयत्रापि हस्तसम्बन्धः अरत्निवाच्यो भवति तथा जानुद्वयमपि अधोभागसहितजानुद्वयेन संवेष्टितं भवति क्रमेणैतच्चतुष्टयं योद्धव्यं शिरः शीर्ष्णा उरसा उरः एवं तौ अन्योन्यमाभिमुख्येन जघ्नतुः ॥ ३ ॥

बलशिक्षे निरूपिते मायया शास्त्रीयप्रकारमाह। परिभ्रामणेति। परितो भ्रामणमेकस्यैकेन ततो दूरे विक्षेपः ततः पुनरागतयोः परिरम्भः गाढालिङ्गनं ततो मिलितेनैव भूमावपपातनम् एवं चत्वारः एकक्रमेण ततो विश्लिष्टयोः उत्सर्पणमूर्ध्वे प्रक्षेपः अपसर्पणं हत्वा पश्चात्सर्पणमधः सर्पणं वा पतितो मल्लः ऊर्ध्वं सर्पणेनापि उपरितनं जयति उपरितनो वा अधस्तनम् एवमन्योऽन्यं प्रत्यरुन्धताम् अन्योऽन्यस्य बलं यथा प्रतिरुद्धं भवति ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

चतुश्चत्वारिंशकेऽत्र मल्लकंसा हताः स्त्रियः।
आश्वासितास्च भ्रातृभ्याममभूत् पित्रोश्च दर्शनम् ॥

चर्चितश्चाणूरमहं हन्यामिति विचारितः संकल्पो येन सः ॥ १ ॥ २ ॥

कनिष्ठाङ्गुलिव्यतिरेकेण कृतमुष्टिर्हस्तोऽरत्निः यद्यपि ताभ्यां मल्लयुद्धं दुष्करत्वादप्रसिद्धं प्रसिद्धं तु समुष्टिहस्ताभ्यामेव तथापि वेणुवाद्य उरुधा निजाशिक्षा इतिवद्भगवता निष्कनिष्ठमुष्टिहस्तेनैवारब्धे नियुद्धे चाणूरेणापि कष्टं प्राप्तेनापि वीराभिमानिना तथा कृतमिति ज्ञेयम् ॥ ३ ॥

परिभ्रामणं हस्तादिषु गृहीत्वा परितश्चालनं विक्षेपो नोदनं परिरम्भो बाहुभ्यां निष्पीडनमवपातनमधःक्षेपः उत्सर्पणमुत्सृज्य पुरतो गमनम् अपसर्पणं पृष्ठतो गमनम् एतैः प्रत्यरुन्धतां प्रत्यावृतवन्तौ लुङि ङनमप्रत्यय आर्षः ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

चतुश्चत्वारिंशे मल्लकंसवधादिकं भगवत्कर्म वर्णयति। एवमिति। एवं चर्चितो निश्चितः संकल्प एव यस्य सः ॥ १ ॥

कृष्णचाणूरौ राममुष्टिकौ च विजिगीषया अन्योऽन्यं जेतुमिच्छया विचकर्षतुः ॥ २ ॥

अरत्न्यादिकमरत्न्यादिभिरन्योऽन्यमभिजघ्नतुः तत्र बद्धमुष्टिर्याहुमध्यात्कनिष्ठाङ्गुलिमूलपर्यन्तो हस्तोऽरत्निशब्दार्थः ॥ ३ ॥

किंच पोरभ्रामणादभिरन्योऽन्यं प्रत्यरुन्धतां प्रत्यावृतवन्तौ तत्र हस्तादिषु गृहीत्वा परितश्चालनं परिभ्रामणम् नोदनं विक्षेपः

उत्थापनैरुन्नयनैश्चालनैः स्थापनैरपि ।
परस्परं जिगीषन्तावपचक्रतुरात्मनः ॥ ५ ॥
तद्बलाबलवद्युद्धं समेताः सर्वयोषितः ।
ऊचुः परस्परं राजन् ! सानुकम्पा वरूथशः ॥ ६ ॥
महानयं बताधर्म एषां राजसभासदाम् ।
ये बलाबलवद्युद्धं राज्ञोऽन्विच्छन्ति पश्यतः ॥ ७ ॥
क्व वज्रसारसर्वाङ्गौ मल्लौ शैलेन्द्रसन्निभौ ।
क्व चातिसुकुमाराङ्गौ किशोरौ नाप्तयौवनौ ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बाहुभ्यां निष्पीडनं परिरम्भः अधः क्षेपो ऽवपातनम् उत्सृज्य पुरतो गमनमुत्सर्पणं पृष्ठतो गमनमपसर्पणम् ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले मधुसूदन भगवान् इस प्रकार संकल्प करके चाणूर के पास जाकर उपस्थित भये इसी प्रकार से रोहिणी पुत्र बलदेवजी मुष्टिक के पास पहुंच गये ॥ १ ॥

वे दोनों दोनों हाथों से हाथों को पादों से पादों को जोड कर जीतने की इच्छा से आपस में एक को एक खैंचते भये ॥ २ ॥

कनिष्ठिका छोडकर पंजा से पंजा मिलाकर जंघा से जंघा पिंडरी से पिंडरी मिलाकर शिर से शिर छाती से छाती जोडकर आपस में एक को एक प्रहार करते भये ॥ ३ ॥

घुमाना फैंकना पकड लेना नीचे डार देना छोडकर पीछे हटना पीछे से दौड जाना इस प्रकार से एक को एक घेर कर लडाई करते भये ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उत्थापनं जानुनी पादौ च पिण्डीकृत्य पतितस्योद्घाटनम् उन्नयनं हस्ताभ्यामुद्धृत्य नयनम् चालनं कण्ठादिलग्नस्य निःसारणं स्थापनं पादादिपिण्डीकरणम् एवं परस्परमात्मनो देहस्यापचक्रतु-रपकारं कृतवन्तौ ॥ ५ ॥

तद्युद्धं बलाबलवदेकतो बलमन्यतोऽबलं तद्युक्तं विषममित्यूचुरित्यर्थः ॥ ६ ॥

तदेव दर्शयति । महानिति । यद्वा बलाबलवतोर्युद्धं दृष्ट्वा महानयमधर्म इत्यूचुरित्यन्वयः बालयोर्बलवतोश्च युद्धं राजा चेत्प-श्येत्स्वयं वारणीयः एते तु राज्ञः पश्यतः स्वयमन्विच्छन्त्यनुमन्यन्त इति महानधर्म इत्यर्थः ॥ ७ ॥

बलाबलवद्युद्धतां प्रपञ्चयति पञ्चभिः । क्वेति । वज्रसाराणि वज्रवत्कठिनानि सर्वाण्यङ्गानि ययोस्तौ ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आत्मनोऽपचक्रतुरिति श्रीभगवतो वस्तुतस्तदभावेऽपि चाणूराभिप्रायानुसारतः ॥ ५ ॥

तद्युद्धं बलाबलवदूचुरित्यन्वयः । सानुकम्पा इति तेषां शुद्ध-प्रेम्णः प्रशंसा वरूथशः स्वस्ववर्गभेदेन ॥ ६ ॥

किमूचुस्तदाह । महानिति दशभिः । राजसभ्यत्वेन धर्मज्ञत्वादि-योग्यतोक्ता । राज्ञि पश्यतीत्यर्थः । बत खेदे ॥ ७ ॥

क्व अत्यन्तबाधकेऽधर्मे तथा क्व अत्यन्तबाध्ये धर्मे वर्त्तेत इत्यर्थः । सम्मिलिताविति वा पाठः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उत्थापनं पादौ जानुनी च पिण्डीकृत्य पतितस्योत्थापनम् उन्नयनं हस्ताभ्यामुद्धृत्य नयनं चालनं कण्ठादिलग्नस्य निःसरणं स्थापनं पाणिपादादेः पिण्डीकरणम् एभिः परस्परमात्मनो देहस्या-पचक्रतुरपकृतवन्तौ ॥ ५ ॥

तदा हे राजन् ! सर्वाः योषितः सङ्घशः समेत्य सहिताः सानु-कम्पा रामकृष्णविषयकानुकम्पायुक्ता अत एव परस्परं बलाबल-वद्युद्धमूचुः एकतो बलमन्यतोऽबलं तद्युक्तं विषममित्यूचुरि-त्यर्थः ॥ ६ ॥

तदेव दर्शयितुं तासामुक्तिमाह । महानिति दशभिः । एषां राज-सभासदां राजसभाधिकृतानामयं महानधर्मः बतेति खेदे कोऽसा-वधर्म इत्यत्र विशेषणमुखेनाह । य इति । ये राजसभासदः बलयो-र्बालबलवतोश्च युद्धमन्विच्छन्ति राजा चेत्पश्येत्स्वयं वारणीयः एते तु राज्ञः पश्यतः स्वयमप्यन्विच्छन्त्यनुमन्यन्त इत्ययं महानधर्म इत्यर्थः ॥ ७ ॥

बलाबलवद्युद्धमेव दर्शयति पञ्चभिः । क्वेति । वज्रवत्कठिनानि सर्वाङ्गानि ययोस्तौ शैलेन्द्रतुल्यौ मल्लौ क्व अतिसुकुमाराण्य-ङ्गानि ययोरनाप्तमप्राप्तं यौवनं याभ्यां तावेतौ किशोरौ क्व ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उन्नमनमुत्तानीकरणम् अभिचक्रतुः मुख्यनियुद्धं कृतवन्तौ

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मल्लयुद्धं नियुद्धञ्च विशेन्दं प्रचक्षते ।
द्वात्रिंशद्भेदमपरं चत्वारिंशद्विधं तथेति ॥

सङ्ग्रामविजयवचनात् सर्वनियुद्धविधिदर्शनार्थं भगवतैवं क्रीडितं तत्तद्विधायासाभावाद्वयमेवार्थं उपरि तैस्तैर्नियुद्धविधिभिर्विधिधैरच्युततरौ युयुधात इत्यादिना सूच्यते च ॥ ५ ॥

वालवलवतोः कृष्णचाणूरयोः युद्धं तत्प्रेक्ष्य वरूथशः सङ्घशः ॥६॥

राजसभायां सीदन्त्युपविशन्तीति राजसभासदः तेषां कोऽयमधर्म इत्याहुः । य इति । बालस्य बलवता सह युद्धमन्विच्छन्ति अनुकूलं मन्वते राज्ञः पश्यतः सत इत्यनेन उभयेषामप्यधर्मः प्राप्त इति ज्ञायते ॥ ७ ॥

कथमधर्म आसीदिति तत्राहुः । केति । वज्रवत्साराणि वलाढ्यानि सर्वाणि अङ्गानि करचरणादीनि ययोस्तौ तथा—

सारो बले स्थिरांशे ऽर्थे पुमान्न्याये वरे ऽर्थवत् ।

इति च ॥ ८ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मनोऽपचक्रतुरिति श्रीभगवतस्तद्भावेऽपि चाणूराभिप्रायानुसारात् ॥ ५—६ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः प्रसादेनापि प्राप्तैः प्रकारैर्युद्धमाह । उत्थापनैरिति । उपविष्टं स्थिरं प्रतिज्ञाय उत्थापनं करोति स जयति यस्तूर्ध्वं तिष्ठति तं य उन्नमयति सोऽपि जयति तथा यः स्थिरो भवति तं च यश्चालयति प्रतिज्ञया सोऽपि तथा यश्चलतीतस्ततस्तं यः स्थिरीकरोति सोऽपि एवमेनेऽपि चत्वारः प्रकाराः तैः जिगीषन्तौ मल्लौ आत्मनः अपचक्रतुः देहस्यापकारं कृतवन्तौ अत्र सङ्घातः प्रत्यक्षः स्थूलः कार्पास इव चाणूरादेः सूक्ष्मोऽतिनिष्ठुरः वज्रस्येव भगवतः ॥ ५ ॥

एवं फलतः भगवज्जयेऽपि प्रतीत्या विपरीत इति ये पूर्वं व्यासक्ताः कृताः तत्रापि स्त्रियो मुग्धाः तास्त्वसहमानाः स्वहृदयस्थं भावं प्रकाशितवत्य इत्याह । तदिति एकादशभिः । तत्र सप्तभिर्दुष्टवर्णनं भगवच्चरित्रत्वाय चतुर्भिः स्वनिन्दार्थं गोपिकास्तोत्रमिति तत्र प्रथमं युद्धं दृष्ट्वा खिन्नानामाक्रोशार्थं प्रवृत्तिमाह । तद्युद्धं बलाबलवत् अतः परस्परं योषितः समेताः सानुकम्पाः स्वस्वदेशग्रामभेदेन वरूथशः समेताः वक्ष्यमाणमूचुरिति संबन्धः तत्प्रसिद्धं वा बलाबलवद्युद्धमनेनोचुः एतद्बलाबलयुक्तमिति ततस्तस्य दोषानप्यत्र ऊचुरिति केचित्तद्युद्धमालक्ष्य वा समेताः बलाबलवतोर्युद्धं बलं चाबलं च मनुष्यभयत्र सम्बध्यते तयोः बलाबलयुक्तं यथा भवति तथा वा युद्धं सर्वयोषित इति । निरोध एव नियामको न सम्बन्धादिरित्युक्तं परस्परमिति । समानशीलव्यसनता सर्वेषामुक्ता राजन्निति स्नेहात्सम्बोधनमवधानाय स्त्रीणां वचनमिति कदाचिदुपेक्षां कुर्यादिति स्निग्धे स्नेहस्यायं गुणः यत्समर्थेऽप्यसमर्थबुद्धिरिति सुहृद्बाहुल्ये हि सम्यक् श्रवणं भवतीति दशविधा बाललीलया सगुणा नवविधा एकविधा निर्गुणा इति एवं दशप्रकारसमूहाः ॥ ६ ॥

तत्रैकाः न्यायाभिनिविष्टाः अन्यायमसहमाना आहुः । महानयमिति । बतेति खेदे कथमेवमकस्मात् अनर्थः प्रवृत्त इति अयं महानेवाधर्मः एषां राजसभासदां भविष्यति यद्यपि राजसम्बन्ध एवाधर्मः तत्रापि सभासम्बन्धः तत्राप्यधिकारः सर्वापेक्षयापि अयं महानेवाधर्मः तमेवाह निमित्त वा ये बालबलवद्युद्धमिति । एको बालः अपरो बलवानिति तयोर्युद्धं शास्त्रविरुद्धमिति तत्रापि राज्ञः पश्यतः राजा हि धर्ममूर्तिः तस्य दर्शने सुतरामधिकृतैरन्यायो न कर्त्तव्य इति अतः राज्ञः पश्यतोऽपि सतः अन्विच्छन्तीति । अनेन राजाप्येवं ज्ञास्यति एते सर्वेऽप्येवंभूता दुष्टा इति ततो दृष्टयापकारोऽपि भविष्यतीति तासामाशयः ॥ ७ ॥

ननु भगवानपि सबलो बलिष्ठः अतो नाधर्मो भविष्यतीति चेत्तत्राहुः । क वज्रसारसर्वाङ्गाविति । नहि बाधितमर्थं वेदोऽपि बोधयति भगवतोऽङ्गानि कोमलानीत्यनुभवसिद्धं मल्लानामप्यङ्गान्यतिकठिनानि इत्यपि लोकप्रसिद्धिः किञ्च तावुभौ एतौ च सूक्ष्मौ यत्र कृतिस्तत्र गुणा इति । न्यायविरोधोऽत्र प्रदर्शितः तदाहुः । वज्रादपि सारभूतानि सर्वाङ्गानि ययोः सुतरां मल्लौ मल्लविद्यायां निपुणौ तत्रापि शैलेन्द्रसन्निभौ महामेरुतुल्यौ क एतौ बालकौ वा अतिसुकुमारौ क अत्यन्तसुकुमाराण्यङ्गानि ययोः वयसा तु किशोरौ लोके किशोरावपि देहवशाद्देशादिवशाद्वा प्राप्तयौवनाविव भवतः तदपि नास्तीत्याहुः । न प्राप्तं यौवनं याभ्यामिति नसमासः स्पष्टतया प्रदर्शनार्थः ॥ ८ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

उत्थापनं पादौ जानुनी च पिण्डीकृत्य पतितस्योच्चाटनं उन्नयनं हस्ताभ्यामुद्धृत्य नयनं चालनं कण्ठादिलग्नस्य निःसारणं स्थापनं पाणिपादादिपिण्डीकरणम् एवं परस्परमात्मनो देहस्यापचक्रतुः भगवतस्तद्भावेऽपि द्रष्टृलोकाभिप्रायमनुसृत्य तथोक्तम् ॥ ५ ॥

तद्युद्धं बलाबलवत् ऊचुरित्यन्वयः एकतो बलम् अन्यतश्चाबलं तद्वत् तद्युक्तमतो विषममित्यर्थः । तत्र हेतुः सानुकम्पा इति । स्नेहस्य स्वभाव एवायं यत् स्वविषयस्य बलाधिक्यं न प्रत्याययेदिति ॥ ६ ॥

तासामुक्तिमाह । महानिति दशभिः । बालाभ्यां सह बलवतोर्युद्धं राजा चेत् पश्येत् सोऽपि वारणीयः एते तु राज्ञः पश्यतोऽनुपश्चात् स्वयमपि पश्यन्ति इच्छतस्तस्यानु स्वयमपीच्छन्तीति शपन्तस्य दृशोराक्षेपात् तिष्ठन्तोऽपि इतिश्लिष्यते तथैव तिष्ठन्तस्येच्छतेराक्षेपात् सोऽपि शपन्तो लभ्यते ॥ ७ ॥

बलवत्त्वाबलवत्त्वे तर्जनीभिर्दर्शयन्ति । क्वेति ॥ ८ ॥

———

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किंच जिगीषन्तौ जेतुमिच्छन्तौ उत्थापनादिभिरात्मनो देहस्य परमपचक्रतुरपकारं कृतवन्तौ तत्रोत्थापनं पादौ जानुनी च पिण्डीकृत्य पतितस्योच्चाटनम् उन्नयनं हस्ताभ्यामुद्धृत्य नयनम् चालनं कण्ठादिलग्नस्य निःसारणं स्थापनं पाणिपादादिपिण्डीकरणम् ॥ ५ ॥

धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्।
यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित्॥ ९॥
न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन्।
अब्रुवन् विब्रुवन्नज्ञो नरः किल्बिषमश्नुते॥ १०॥
वल्गतः शत्रुमभितः कृष्णस्य वदनाम्बुजम्।
वीक्ष्यतां श्रमवार्युप्तं पद्मकोशमिवाम्बुभिः॥ ११॥
किं न पश्यत रामस्य मुखमाताम्रलोचनम्।
मुष्टिकं प्रति सामर्षं हाससंरम्भशोभितम्॥ १२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ततस्तस्मिन्समये सानुकम्पाः रामकृष्णविषयकदयायुक्ताः सर्वयोषितः बलाबलवतोः कृष्णचाणूरयोः राममुष्टिकयोर्युद्धं दृष्ट्वा परस्परमूचुः रामकृष्णावबलवन्तौ चाणूरमुष्टिकौ बलवन्तावतस्तद्युद्धमयुक्तमिति स्वबुद्ध्यनुसारेण ज्ञात्वोचुरित्यर्थः॥ ६॥

तासामुक्तिं दर्शयति। महानित्यादिना। राज्ञः कंसस्य पश्यतो निरीक्षतः अर्थात्तदाज्ञयैव बलाबलवद्युद्धमन्विच्छन्ति मन्वते ये तेषां सराजकानां महान् सद्योनाशहेतुरयमधर्मः वर्ततेति खेदे॥ ७॥

वज्रवत्साराणि कठिनानि सर्वाण्यङ्गानि ययोस्तौ क्व अतिसुकुमाराणि अतिकोमलान्यङ्गानि ययोस्तौ च क्व॥ ८॥ ९॥

---

भाषा टीका।

उठालेना खैंच लेजाना ढकेल देना पादादिकों का जोड देना इत्यादि मल्ल युद्ध की रीतियों से जीतने की इच्छा से अपकार उपाय करते भये॥ ५॥

हे राजन्! उस दुर्बल तथा बलियोंके युद्ध को देखकर संपूर्ण स्त्रीजन दयायुक्त होकर इकट्ठी होकर बहुतसी बातें परस्पर कहने लगीं॥ ६॥

अहो इन राज सभा वालों का यह बडा अधर्म है जो कि राजा के देखते ही दुर्बल तथा बलियों के युद्ध की चाहना करते हैं॥ ७॥

देखो कहां तो वज्र सरी के कठोर शरीर वाले पर्वत सरीके मल्ल दोनों और कहां अत्यन्त सुकुमार शरीर वाले युवा अवस्थाके विना किशोर मूर्ति रामकृष्ण दोनों हैं॥ ८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

समाजस्य सभायाः॥ ९॥
अपरा ऊचुः। न सभामिति। अब्रुवन् ज्ञात्वाऽपि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन् अज्ञो न जानामीति ब्रुवन् अतः प्राज्ञो न सभां प्रविशेदिति॥ १०॥

वल्गतः शत्रुमभित इति। शत्रोः सर्वतो धावतः कृष्णस्य श्रमवारिणा उप्तं व्याप्तं मुखाम्बुजं दृश्यताम्॥ ११॥

अन्या ऊचुः। किं न पश्यतेति। सामर्षं सक्रोधं हासेन संरम्भ आवेशस्तेन शोभितम्॥ १२॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सभ्यगुत्तिष्ठेत् उद्भवेत् तस्माद्वयमत्र स्थातुं न योग्या इति भावः॥ ९॥

तथाप्यत्र यत् प्रविष्टास्तन्महापराधा जाता एवेत्याशयेनाहुः। नेति। प्राज्ञः युक्तवचनायुक्तवचनयोर्दोषज्ञः। नर्हि तत्र तस्य सावधानत्वे को दोषस्तत्राहुः। सभ्यानां कथञ्चित् कस्यचिद्दोषः स्यात् एवं स्वस्यापि भ्रमादिनेति सभ्यानां संसर्गजं स्वस्यापि भ्रमादिजं दोषं विचारयन्नित्यर्थः। दोषानेवाहुः। अब्रुवन्निति। विज्ञोऽपि मौनमपलापं वा कुर्वन् तथा स्वयमज्ञोऽपि विरुद्धं ब्रुवन् किमुत विज्ञोऽपीत्यर्थः॥ १०॥

नन्वेतयोः श्रमादृष्टया बलवत्त्वानुमानान्न कोऽपि दोषप्रसङ्ग इत्याशङ्क्य श्रीकृष्णस्य तावत् श्रमं दर्शयन्ति। वल्गत इति। श्रमश्चायं तादृशस्निग्धानेव प्रति भासते ननु सर्वानिति ज्ञेयम्। मल्लानामशनिरित्याद्युक्तेः। रूपकेण तत्तद्धर्मं साधयित्वापि पद्मेति पुनरुपमानादिदं बोधयन्ति आकृष्टाम्बुजगणसौन्दर्यात्तन्मुखमेवाम्बुजं तथा श्रमवार्येव तच्छोभादिहेतुत्वेन तदुपयुक्तं वारीति स्वानुभवव्यञ्जनाय रूपकं कृतं यथा कथञ्चित् साधारणजनानुभवार्थेव तु पुनरुपमा कृतेति। श्रमवारीत्यत्र भिसोलुक् छान्दसः। तत एवाम्बुभिरित्युपमानेन योगः स्यादिति कोपपदोपादानेन मुखस्यापि स्मितेनपद्धिकाशित्वं ज्ञापितम् अतएव विशेषेणेक्ष्यताम्॥ ११॥

अथ तद्वत् सुकुमारस्यापि श्रीरामस्य तत्क्रमदर्शनेन स्वश्रममभिभूय जातं क्रोधतेजः पश्यतेति तदेव स्थापयन्ति। किं न पश्यतेति। हासेनावज्ञा च दर्शिता। हासकर्तृको य आवेशः अविच्छिन्नोदयस्तेन शोभितम्। अन्यत्तैः यद्वा। हासेन संरम्भ आटोपस्तेन॥ १२॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

विब्रुवन् विपरीतं ब्रुवन् ॥ १०-१२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अतोऽस्य समाजस्य सभाया महान् धर्मव्यतिक्रमः धर्मव्यत्यासः धर्मविपर्ययोऽधर्मो भवेत् किं विधेयमित्यत्र काश्चिदिवृक्ते काश्चिदाहुः। यत्राधर्म इति। समुत्तिष्ठेत् प्रवर्त्तेत तत्र कर्हिचित् क्षणमपि न स्थेयमिति ॥ ९ ॥

अपरा आहुः। न सभामिति। सभ्यानां दोषानुस्मरन्प्राज्ञश्चेत्तां सभां न प्रविशेत् अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन्नज्ञ इव तिष्ठन् ज्ञात्वापि न जानामीति ब्रुवन्नित्यर्थः। एवं विधो यो नरः स किल्बिषमद्भुतं प्राप्नोति ॥ १० ॥

अन्यास्त्वाहुः। वल्गत इति। शत्रुमभितः शत्रोः सर्वतः वल्गतो धावतः कृष्णस्याम्बुकणैः पद्मकोशमिव श्रमवारिणा उप्तम् व्याप्तं वदनाम्बुजं दृश्यताम् ॥ ११ ॥

अन्या ऊचुः। किं नेति। आ ईषत्समन्ताद्वा ताम्रे लोचने यस्मिं स्तत् मुष्टिकं प्रति सामर्षं सक्रोधं हासेन संरम्भ आवेशस्तेन शोभनं रामस्यापि मुखं किं न पश्यतेत्यर्थः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

समाजस्य सभ्यसमूहस्य अर्थतो मन्वादिवाक्यं प्रतीक्षयन्ति यत्रेति ॥ ९ ॥

किमित्यप्रवेश इति तत्राहुः। अब्रुवन्निति विब्रुवन् विपरीतं ब्रुवन् "आत्मसर्वाङ्गसम्बन्धमलङ्घ्यं किल्बिषमुच्यते" इति च अनपायिमलं किल्बिषमित्यर्थः ॥ १० ॥

श्रमपर्याप्तं श्रमवारिभ्युप्तं पद्मकोशं पद्ममुकुलम् ॥ ११ ॥

हे सख्यः! रामस्य मुखं न पश्यत किम्पश्यतेत्यन्वयः अमर्षेण सहितो हासः सामर्षहासः तेन संरम्भेण च शोभनं चारुतरम् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्राज्ञो निवृत्तिमार्गज्ञः ॥ १० ॥ ४६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

एवमधर्मं हेतुभूतं न्यायविरोधं निरूप्य न केवलमधर्मः एवं भविष्यति किन्तु यस्य धर्मस्य प्रभावेण ऐश्वर्यादिकं भुङ्क्ते तस्याप्यतिक्रमो भविष्यतीत्याहुः। धर्मव्यतिक्रम इति। अस्य समाजस्य ध्रुवं धर्मव्यतिक्रमो भवेत् शुभफलं धर्मादेवेति तदतिक्रमे तादृश एव ततः पूर्वं विषमनियोगेनाधर्मः अन्येऽपि सहजाः अधर्माः अन्येन वस्तुनोऽपि धर्मस्य प्रभुरच्युत इति प्रभोरन्यथा विनियोगे लीलादर्शने वा धर्मसेवकानां भवत्येवातिक्रमः सोऽप्यधर्मः धर्मं नातिक्रमेदिति निषेधात् एवमधर्मः अस्मिन् समाजे सर्वत्र प्रवृत्तः अतो यत्र सम्यगधर्मः उत्तिष्ठेत् तत्र दुःखस्यावश्यम्भावात् कदाचिदपि न स्थेयं यद्यपि दुःखसम्भावना नास्ति तथापि कारणोत्पत्तेर्विद्यमानत्वात् सर्पनिकटशयनवत् न स्थेयमेव ॥ ९ ॥

नन्वेवं सति सर्वेषामेवाधर्मः को विशेषः समाजस्येति चेत्तत्राहुः। न सभां प्रविशेदिति। अथवा किमित्यच्युते निर्गन्तव्यं वा तूष्णीं स्थातव्यमित्याशङ्क्य स्वार्थमित्याहुः। न सभामिति। सभास्थैरवश्यं वा वक्तव्यम् अथासामर्थ्यं चेत् प्रथमत एव प्राज्ञः अग्रिमार्थं सर्वं जानन् सभामेव न प्रविशेत्—

सभायां न प्रवेष्टव्यं न वदेद्वासमञ्जसम्।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी। इति

मनुवाक्यात् एते हि सभ्यदोषा इत्याहुः। अब्रुवन्निति। सभायां उपविष्टेनावश्यं वक्तव्यं पृष्टः अपृष्टो वा यथोचितं न वदेत् तथापि नरकभागी स्यात् यदि वा विरुद्धं वदेत् अन्यायं पृष्टः अपृष्टो वा पृष्टश्चेज्जानन्नपि नाहं जाने इति वदेत् सोऽज्ञ इत्युच्यते एवं त्रिविधा अप्येते नरकभाजो भवन्ति सभायां प्रविशन् सभास्मरणे तद्गतगुणदोषाणामपि स्मरणमावश्यकमिति तथोक्तं किल्बिषमावश्यकं नरकम् ॥ १० ॥

ननु भगवतोऽपि बलमवश्यमस्ति कुवलयापीडवधात्तत्राहुः। वल्गतः शत्रुमभित इति। शत्रुं चाणूरमभितः वल्गतः मल्लशब्दान् कुर्वतः कृष्णस्य सदानन्दस्य अस्माकं सर्वस्य वा वदनाम्बुजम्प्रस्वेदजलैः व्याप्तं च पश्यत यद्यधिकबलः समबलो वा स्यात् तदा शत्रोरिवास्यापि श्रमो न स्यात् शब्दश्चासमर्थस्यैवेति लोकप्रसिद्धिः श्रमवारिभिर्व्याप्तं न तु कणैः अनेनान्तःश्रमाधिक्यं द्योतितं ननु भवत्येव कर्मणा श्रमः को दोष इति चेत्तत्राहुः। पद्मकोशमिवाम्बुभिरिति। पद्मकोशो हि जलादुद्गतो भवति कदापि जलं न स्पृशति यथाजलं वर्धते तथा तन्नालमपि वर्द्धत इति तस्य जलव्याप्तिरसम्भाविता। तथा भगवतोऽपि श्रमजलसम्बन्धोऽसम्भावित इत्यर्थः। तासामासक्तिसिद्ध्यर्थं भगवता तथा प्रदर्शितम् अन्यासक्ता मा भवेयुरिति कंसादीनां च प्रथमतः सुखार्थम् ॥ ११ ॥

एतत्सर्वेषां न प्रकटमिति चक्षुरपि कदाचिद्दर्शनाभावात् बलभद्रं सर्वजनीनं तदिति साक्षेपमाहुः। किं न पश्यतेति। रामस्य मुखमासमन्तात्ताम्रलोचनं किं न पश्यत भ्राता ज्येष्ठोऽयमस्य श्रमः सर्वजनीनः अन्यथा क्रोधाविर्भावं न कुर्यात् अशक्तस्यैव तथा करणात् ननु स्वभावतोऽपि ताम्रो भवेदित्याशङ्क्याह। मुष्टिकं प्रति सामर्षमिति। मुष्टिको मारणीय इति क्रोधमाविर्भावयति ततो हासमर्थानां कामादयः प्रवर्त्तका भवन्ति। नन्वेतदपि सहजमिति चेत्तत्राहुः। हाससंरम्भशोभितमिति। हासेन यः संरम्भः क्रोधः तेन शोभितम् अथवा पूर्वं हाससंरम्भेण हासपूर्वकः कामलीलया शोभितं पूर्ववचने अस्मान् खिन्नान्वा दृष्ट्वा हास्यसंरम्भाभ्यां शोभितम् एता अस्मान्न जानन्तीति हास्यं दुःखं प्राप्नुवन्तीति शीघ्रं मारणीय इति संरम्भमपि करोति उभाभ्यां चातिशोभितम् अतो न सहजं किमपीत्यर्थः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

धर्मव्यतिक्रमोऽधर्मः समाजस्य सभायाः न स्थेयमित्यतोऽस्माभिरित उत्थाय गम्यतामिति भावः ॥ ९ ॥

अस्माभिरत्रागत्यैवापराद्धमित्यपराः शास्त्रशासनमाहुः। न

पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो वनचित्रमाल्यः ।
गाः पालयन् सह बलः क्वणयंश्च वेणुं विक्रीडयाञ्चति [1]गिरित्ररमार्चिताङ्घ्रिः ॥ १३ ॥
गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसार[2]मसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥ १४ ॥
या दोहनेऽवहनने [3]मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रम[4]चित्तयानाः ॥ १५ ॥
प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सभामिति । सभायामधर्मे उत्पद्यमाने सति धर्मं ज्ञात्वापि तम् अब्रुवन् तूर्ष्णीं तिष्ठन्नित्यर्थः । विब्रुवन् विधर्ममेव ब्रुवन् वा अज्ञः ज्ञात्वापि न जानामीति ब्रुवन् वा किल्बिषं प्राप्नोत्यतः सभां न प्रविशेदिति सभाप्रवेशनिषेधो व्यवहारसापेक्षस्यैव प्राज्ञस्य नतु व्यवहारनिरपेक्षस्य प्राज्ञस्य यथा सभापर्वणि द्यूते द्रौपदीविपदि व्यवहारसापेक्षाः प्राज्ञाः भीष्मादयो ऽब्रुवाणा एव तस्थुः व्यवहारनिरपेक्षः प्राज्ञो विदुरस्तु धर्मं ब्रूतेस्मैवेति रङ्गभूमौ तु सर्व एव प्राज्ञाः कंसाद्भीताः व्यवहारसापेक्षा एवेति ॥ १० ॥

ननु तयोः श्रमादृष्ट्या बलवत्त्वानुमानान्न कोऽपि दोषप्रसङ्ग इत्याशङ्क्य कृष्णस्य तावत् श्रमं दर्शयन्ति । बलात्तः शत्रुमभित इति । शत्रोः सर्वतो धावतः कृष्णस्य श्रमवारिणा उप्तं व्याप्तं वदनाम्बुजं मुखचन्द्रो दृश्यताम् अब्जौ शङ्खशशाङ्कौ चेत्यमरः क्लीवत्वमार्षम् ॥ ११ ॥

सामर्षं सक्रोधमिति क्रोधस्य कारणं मुष्टिकप्रहारजनितः श्रम एव बुद्ध्यतामिति भावः । कोपोत्थेन हासेन सह संरम्भो युद्धावेशस्तेन शोभितम् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अज्ञानतो ह्यधार्मिकसमाजप्रवेशे सति तत्र न स्थेयमित्युक्तम् ज्ञानपूर्वकन्तु तस्मिन् प्रवेशमपि न कुर्यादित्याहुः । नेति । अब्रुवन् ज्ञात्वापि तूर्ष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन् अज्ञोऽस्मि न जानामीति ब्रुवन् किल्बिषमश्नुतेऽतः प्राज्ञः सभ्यदोषाननुस्मरन् सभां न प्रविशेत् ॥ १० ॥

प्रस्तुतमाहुः । शत्रुमभितः चाणूरस्य परितः वल्गतः श्रमवारिणा उप्तं व्याप्तं कृष्णस्य वदनाम्बुजं वीक्ष्यताम् दृश्यताम् ॥ ११ ॥

अन्या आहुः । किं नेति । ईषत्ताम्रे लोचने यस्मिन् तत् सामर्षं सक्रोधं हासेन संरम्भः आवेशस्तेन शोभितं रामस्य मुखं किं न पश्यत ॥ १२ ॥

---

भाषा टीका ।

इस सभा का तो धर्म व्यतिक्रम अवश्य होजायगा जहां से धर्म उठ जाता है उहां पर कभी भी नहीं रहना चाहिये ॥९॥

सभ्य जनों के दोष को जानने वाला पुरुष कभी राजा के सभा में प्रवेश न करै आप अज्ञानी होकर कहने या न कहने से मनुष्य पाप का भागी होता है ॥ १० ॥

शत्रु के पीछे चारों तरफ दौडते हुये श्रीकृष्णचन्द्र के मुख कमल को देखो कि परिश्रम की पसीना से ऐसा शोभित है जैसा कि जल के बिंदुओं से कमल का फूल होवै ॥ ११ ॥

क्या तुम नहीं देखती हो कि मुष्टिक के ऊपर क्रोधकर के हास तथा समारंभ से शोभित कुछ लालवर्ण वाला श्रीबलरामजी का मुख कैसा शोभा देरहा है ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्या ऊचुः । पुण्या बतेति । नृलिङ्गेन मनुष्यदेहेन गूढः वनस्थानि चित्राणि माल्यानि यस्य सः गिरित्रः शिवो रमा च ताभ्यामर्चितावङ्घ्री यस्य सः अयं भावः । धिगिमां सभां यस्यामयं पराभूयते तास्तु व्रजभुवो धन्याः यद्यासु अयं कृष्णो विविधक्रीडयाञ्चति गच्छतीति ॥ १३ ॥

अहो कष्टमल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयम् गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः । गोप्य इति । अमुष्य श्रीकृष्णस्य रूपमङ्गं लावण्येन सारं श्रेष्ठं किञ्च असमोर्ध्वं न विद्यते सममूर्ध्वमधिकं च यस्य तत् तदपि नान्येनाभरणादिना सिद्धं किं तु स्वत एव ऐश्वरस्यैश्वर्यस्य चैकान्तधामाव्यभिचारिस्थानं पाठान्तरे अमुष्य ईश्वरस्येत्यन्वयः एवं भूतं नित्यं नवीनं रूपं या नेत्रैः पश्यन्तीति ॥ १४ ॥

किञ्च या दोहनादिष्वेनं गायन्ति ता व्रजस्त्रियो धन्याः प्रेङ्खनं दोलान्दोलनम् उक्षणं सेचनं कथम्भूताः उरुक्रमे चित्तमुरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः पाठान्तरे उरुक्रमं चिन्तयन्त्य इत्यर्थः । कुतः अनुरक्तधियः तत्र लिङ्गमश्रुकण्ठ्य ॥१५॥

प्रातरिति। या अबला अस्य वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यन्ति ता भूरि पुण्या इति ॥ १६ ॥

---

१ गिरावमरार्च्चिताङ्घ्रिः   २ मथनोत्थ   ३ मथनोपजल्प   चित्तयामाः इति वि० पाठः

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विब्रुवन् विपरीतं ब्रुवन् ॥ १०-१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतोऽस्य समाजस्य सभाया महान् धर्मव्यतिक्रमः धर्मव्यत्यासः धर्मविपर्ययोऽधर्मो भवेत् किं विधेयमित्यत्र कामिश्चिद्युक्ते काश्चिदाहुः । यत्राधर्म इति । समुत्तिष्ठेत् प्रवर्त्तेत तत्र कर्हिचित् क्षणमपि न स्थेयमिति ॥ ९ ॥

अपरा आहुः । न सभामिति । सभ्यानां दोषाननुस्मरन्प्राज्ञश्चेत्तां सभां न प्रविशेत् अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन्नज्ञ इव तिष्ठन् ज्ञात्वापि न जानामीति ब्रुवन्नित्यर्थः । एवं विधो यो नरः स किल्बिषमश्नुते प्राप्नोति ॥ १० ॥

अन्यास्त्वाहुः । वल्गत इति । शत्रुमभितः शत्रोः सर्वतः वल्गतो धावतः कृष्णस्याम्बुकणैः पद्मकोशमिव श्रमवारिणा उत्तम् व्याप्तं यद्वनाम्बुजं दृश्यताम् ॥ ११ ॥

अन्या ऊचुः । किं नेति । आ ईषत्समन्ताद्वा ताम्रे लोचने यस्मिंस्तत् मुष्टिकं प्रति सामर्षं सक्रोधं हासेन संरम्भ आवेशस्तेन शोभनं रामस्यापि मुखं किं न पश्यतेत्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समाजस्य सभ्यसमूहस्य अर्थतो मन्वादिवाक्यं प्रतीक्षयन्ति यत्रेति ॥ ९ ॥

किमित्यप्रवेश इति तत्राहुः । अब्रुवन्निति विब्रुवन् विपरीतं ब्रुवन् "आत्मसर्वाङ्गसम्बन्धमलङ्घ्यकिल्बिषमुच्यते" इति च अनपायिमलं किल्बिषमित्यर्थः ॥ १० ॥

श्रमपर्याप्तं श्रमवारिभ्यसं पद्मकोशं पद्ममुकुलम् ॥ ११ ॥

हे सख्यः । रामस्य मुखं न पश्यत किम्पश्यतेत्यन्वयः अमर्षेण सहितो हासः सामर्षहासः तेन संरम्भेण च शोभनं चारुतरम् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

प्राज्ञो निवृत्ति मार्गदः ॥ १० ॥ ४६ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवमधर्मे हेतुभूतं न्यायविरोधं निरूप्य न केवलमधर्मः एवां भविष्यति किन्तु यस्य धर्मस्य प्रभावेण ऐश्वर्यादिकं भुङ्क्ते तस्याप्यतिक्रमो भविष्यतीत्याहुः । धर्मव्यतिक्रम इति । अस्य समाजस्य ध्रुवं धर्मव्यतिक्रमो भवेत् शुभफलं धर्मादेवेति तदतिक्रमे तादृश एव ततः पूर्वं विषमनियोगेनाधर्मः अन्येऽपि सहजाः अधर्माः सन्त्येव वस्तुतोऽपि धर्मस्य प्रभुरच्युत इति प्रभोरन्यथा विनियोगे लीलादर्शने वा धर्मसेवकानां भवत्येवातिक्रमः सोऽप्यधर्मः धर्मं नातिक्रमेदिति निषेधात् एवमधर्मः अस्मिन् समाजे सर्वत्र प्रवृत्तः अतो यत्र सम्यगधर्मः उत्तिष्ठेत तत्र दुःखस्यावश्यम्भावात् कदाचिदपि न स्थेयं यद्यपि दुःखसम्भावना नास्ति तथापि कारणोत्पत्तेर्विद्यमानत्वात् सर्पनिकटशयनवत् न स्थेयमेव ॥ ९ ॥

नन्वेवं सति सर्वेषामेवाधर्मः को विशेषः समाजस्येति चेत्तत्राहुः । न सभां प्रविशेदिति । अथवा किमित्यच्युते निर्गन्तव्यं वा तूष्णीं स्थातव्यमित्याशङ्क्य स्वार्थमित्याहुः । न सभामिति । सभास्थैरवश्यं वा वक्तव्यम् अथासामर्थ्ये चेत् प्रथमत एव प्राज्ञः अग्रिमार्थं सर्वं जानन् सभामेव न प्रविशेत्—

सभायां न प्रवेष्टव्यं न वदेद्वासमञ्जसम् ।
अब्रुवन् विब्रुवन् वापि नरो भवति किल्बिषी । इति

मनुवाक्यात् एते हि सभ्यदोषा इत्याहुः । अब्रुवन्निति । सभायां उपविष्टेनावश्यं वक्तव्यं पृष्टः अपृष्टो वा यथोचितं न वदेत् तथापि नरकभागी स्यात् यदि वा विरुद्धं वदेत् अन्यायं पृष्टः अपृष्टो वा पृष्टश्चेज्जानन्नपि नाहं जाने इति वदेत् सोऽज्ञ इत्युच्यते एवं त्रिविधा अप्येते नरकभाजो भवन्ति सभायां प्रविशन् सभास्मरणे तद्गतगुणदोषाणामपि स्मरणमावश्यकमिति तथोक्तं किल्बिषमावश्यकं नरकम् ॥ १० ॥

ननु भगवतोऽपि बलमवश्यमस्ति कुवलयापीडवधात्तत्राहुः । बलगतः शत्रुमभित इति । शत्रुं चाणूरमभितः वल्गतः मल्लशब्दान् कुर्वतः कृष्णस्य सदानन्दस्य अस्माकं सर्वस्य वा वदनाम्बुजम्प्रस्वेदजलैः व्याप्तं च पश्यत यद्यधिकबलः समबलो वा स्यात् तदा शत्रोरिवास्यापि श्रमो न स्यात् शब्दश्चासमर्थस्यैवेति लोकप्रसिद्धिः श्रमवारिभिर्व्याप्तं न तु कणैः अनेनान्तःश्रमाधिक्यं द्योतितं ननु भवत्येव कर्मणा श्रमः को दोष इति चेत्तत्राहुः । पद्मकोशमिवाम्बुभिरिति । पद्मकोशो हि जलादुद्गतो भवति कदापि जलं न स्पृशति यथाजलं वर्धते तथा तन्नालमपि वर्धत इति तस्य जलव्याप्तिरसम्भाविता । तथा भगवतोऽपि श्रमजलसम्बन्धोऽसम्भावित इत्यर्थः । तासामासक्तिसिद्ध्यर्थं भगवता तथा प्रदर्शितम् अन्यासक्ता मा भवेयुरिति कंसादीनां च प्रथमतः सुखार्थम् ॥ ११ ॥

एतत्सर्वेषां न प्रकटमिति चक्षुरपि कदाचिद्दर्शनाभावात् बलभद्रे सर्वजनीनं तदिति साक्षेपमाहुः । किं न पश्यतेति । रामस्य मुखमासमन्तात्ताम्रलोचनं किं न पश्यत भ्राता ज्येष्ठोऽयमस्य श्रमः सर्वजनीनः अन्यथा क्रोधाविर्भावं न कुर्यात् अशक्तस्यैव तथा करणात् ननु स्वभावतोऽपि ताम्रो भवेदित्याशङ्क्याह । मुष्टिकं प्रति सामर्षमिति । मुष्टिको मारणीय इति क्रोधमाविर्भावयति स्वतो ह्यसमर्थानां कामादयः प्रवर्त्तका भवन्ति । नन्वेतदपि सहजमिति चेत्तत्राहुः । हाससंरम्भशोभितमिति । हासेन यः संरम्भः क्रोधः तेन शोभितम् अथवा पूर्वं हाससंरम्भेण हासपूर्वकः कामलीलया शोभितं पूर्ववचने अस्मान् खिन्नान्या दृष्ट्वा हास्यसंरम्भाभ्यां शोभितम् एता अस्मान्न जानन्तीति हास्यं दुःखं प्राप्नुयन्तीति शीघ्रं मारणीय इति संरम्भमपि करोति उभाभ्यां चातिशोभितम् अतो न सहजं किमपीत्यर्थः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मव्यतिक्रमोऽधर्मः समाजस्य सभायाः न स्थेयमित्यतोऽस्माभिरित उत्थाय गम्यतामिति भावः ॥ ९ ॥

अस्माभिरत्रागत्यैवापराद्धमित्यपराः शास्त्रशासनमाहुः । न

पुण्या बत व्रजभुवो यदयं नृलिङ्गगूढः पुराणपुरुषो वनचित्रमाल्यः ।
गाः पालयन् सह बलः क्वणयंश्च वेणुं विक्रीडयाञ्चति [1]गिरित्ररमार्चिताङ्घ्रिः ॥ १३ ॥
गोप्यस्तपः किमचरन् यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुरापमेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥ १४ ॥
या दोहनेऽवहनने [2]मथनोपलेपप्रेङ्खेङ्खनार्भरुदितोक्षणमार्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यो धन्या व्रजस्त्रिय उरुक्रम[3]चित्तयानाः ॥ १५ ॥
प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणयतोऽस्य निशम्य वेणुम् ।
निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकम् ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सभामिति । सभायामधर्मे उत्पद्यमाने सति धर्मं ज्ञात्वापि तम् अब्रुवन् तूर्ष्णीं तिष्ठन्नित्यर्थः । विब्रुवन् विधर्ममेव ब्रुवन् वा अज्ञः ज्ञात्वापि न जानामीति ब्रुवन् वा किल्बिषं प्राप्नोत्यतः सभां न प्रविशेदिति सभाप्रवेशनिषेधो व्यवहारसापेक्षस्यैव प्राज्ञस्य नतु व्यवहारनिरपेक्षस्य प्राज्ञस्य यथा सभापर्वणि द्यूते द्रौपदीविपदि व्यवहारसापेक्षाः प्राज्ञाः भीष्मादयो ऽब्रुवाणा एव तस्थुः व्यवहारनिरपेक्षः प्राज्ञो विदुरस्तु धर्मं ब्रूतेस्मैवेति रङ्गभूमौ तु सर्व एव प्राज्ञाः कंसाधीनाः व्यवहारसापेक्षा एवेति ॥ १० ॥

ननु तयोः श्रमादृष्ट्या बलवत्त्वानुमानान्न कोऽपि दोषप्रसङ्ग इत्याशङ्क्य कृष्णस्य तावत् श्रमं दर्शयन्ति । बलात: शत्रुमभित इति । शत्रोः सर्वतो धावतः कृष्णस्य श्रमवारिणा उप्तं व्याप्तं वदनाम्बुजं मुखचन्द्रो दृश्यताम् अब्जौ शङ्खशशाङ्कौ चेत्यमरः क्लीवत्वमार्षम् ॥ ११ ॥

सामर्षं सक्रोधमिति क्रोधस्य कारणं मुष्टिकप्रहारजनितः श्रम एव युद्धयतामिति भावः । कोपोत्थेन हासेन सह संरम्भो युद्धावेशस्तेन शोभितम् ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अज्ञानतो ह्यधार्मिकसमाजप्रवेशे सति तत्र न स्थेयमित्युक्तम् ज्ञानपूर्वकन्तु तस्मिन् प्रवेशमपि न कुर्यादित्याहुः । नेति । अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन् अज्ञोऽस्मि न जानामीति ब्रुवन् किल्बिषमश्नुतेऽतः प्राज्ञः सभ्यदोषाननुस्मरन् सभां न प्रविशेत् ॥ १० ॥

प्रस्तुतमाहुः । शत्रुमभितः चाणूरस्य परितः वल्गतः श्रमवारिणा उप्तं व्याप्तं कृष्णस्य वदनाम्बुजं वीक्ष्यताम दृश्यताम ॥ ११ ॥

अन्या आहुः । किं नेति । ईषत्ताम्रे लोचने यस्मिन् तत् सामर्षं सक्रोधं हासेन संरम्भः आवेशस्तेन शोभितं रामस्य मुखं किं न पश्यत ॥ १२ ॥

---

### भाषा टीका ।

इस सभा का तो धर्म व्यतिक्रम अवश्य होजायगा जहां से धर्म उठ जाता है उहां पर कभी भी नहीं रहना चाहिये ॥९॥

सभ्य जनों के दोष को जानने वाला पुरुष कभी राजा के सभा में प्रवेश न करै आप अज्ञानी होकर कहने या न कहने से मनुष्य पाप का भागी होता है ॥ १० ॥

शत्रु के पीछे चारों तरफ दौडते हुये श्रीकृष्णचन्द्र के मुख कमल को देखो कि परिश्रम की पसीना से ऐसा शोभित है जैसा कि जल के बिंदुओं से कमल का फूल होवै ॥ ११ ॥

क्या तुम नहीं देखती हो कि मुष्टिक के ऊपर क्रोधकर के हास तथा समारंभ से शोभित कुछ लालवर्ण वाला श्रीबलरामजी का मुख कैसा शोभा देरहा है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्या ऊचुः । पुण्या बतेति । नृलिङ्गेन मनुष्यदेहेन गूढः वनस्थानि चित्राणि माल्यानि यस्य सः गिरित्रः शिवो रमा च ताभ्यामर्चिताविङ्घ्री यस्य सः अयं भावः । धिगिमां सभां यस्यामयं पराभूयते नास्तु व्रजभुवो धन्याः यथासु अयं कृष्णो विविधक्रीडयाञ्चति गच्छतीति ॥ १३ ॥

अहो कष्टमल्पपुण्या वयं यतोऽस्माभिरनवसरे दृष्टोऽयम गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः । गोप्य इति । अमुष्य श्रीकृष्णस्य रूपमङ्गं लावण्येन सारं श्रेष्ठं किञ्च असमोर्ध्वं न विद्यते समम् ऊर्ध्वमधिकं च यस्य तत् तदपि नान्येनाभरणादिना सिद्धं किं तु स्वत एव ऐश्वरस्यैश्वर्यस्य चैकान्तधामाव्यभिचारिस्थानं पाठान्तरे अमुष्य ईश्वरस्येत्यन्वयः एवं भूतं नित्यं नवीनं रूपं या नेत्रैः पश्यन्तीति ॥ १४ ॥

किञ्च या दोहनादिष्वेनं गायन्ति ता व्रजस्त्रियो धन्याः प्रेङ्खनं दोलान्दोलनम् उक्षणं सेचनं कथम्भूताः उरुक्रमे चित्तमुरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः पाठान्तरे उरुक्रमं चिन्तयन्त्य इत्यर्थः । कुतः अनुरक्तधियः तत्र लिङ्गमश्रुकण्ठ्यः ॥१५॥

प्रातरिति। या अबला अस्य वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यन्ति ता भूरि पुण्या इति ॥ १६ ॥

---

१ गिरावमरार्च्चिताङ्घ्रिः  २ मथनोत्थ  ३ मथनोपजल्प  चित्तयामाः इति वि० पाठः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पुण्या इति तैर्व्याख्यातं तत्रायं भाव इत्यस्येदन्तु विवक्षितमित्यर्थः । यद्वा । अथ काश्चिद्विदग्धा यज्ञपत्नीप्राया ऐश्वर्यज्ञानमिश्रपरमप्रेमवत्यस्तत्तस्माद्वैगुण्येन मधुपुरीमप्यवहुमन्वानाः तत्रत्यानां साद्गुण्ये श्रीव्रजभुवमेव प्रशंसन्ति । पुण्या इति चतुर्भिः बत विस्मये । व्रजभुवः व्रजसम्बन्धिन्यो भूमय एव पुण्याः परमधन्याः । न त्वियं महापुर्यपि । बहुत्वनिर्देशेन तासां बह्वीनामपि यादृशपुण्यत्वं न त्वेकस्या अपि तादृशत्वमित्यर्थः । यत् यासु अयं श्रीकृष्णाख्यः पुराणपुरुषोऽपि नवो नित्यनूतनो यः स एव च पुरुषः तन्मुख्यत्वेन तच्छब्दः । प्रथमोऽभिधेयः सोऽञ्चति भ्रमति । वर्त्तमानप्रयोगस्तत्सामीप्यात् पुनस्तत्र गमनाभिप्रायाच्च वस्तुतस्तु यथार्थभारतीनिःसृतिरियं तत्र तदीयनित्यलीलायाः स्थापयिष्यमाणत्वात् । अन्यत्र परममहतामप्यसौ दुर्लभ इत्याह । गिरित्रेण रमयापि हृदयेनार्च्चितौ आगमोक्तार्च्चनमात्रेण उद्दिष्टैवाराधितौ ननु व्रजवासिवत् साक्षात् सेवितौ अङ्घ्री यस्य तादृश इत्यर्थः । नन्वु सम्प्रत्यत्राप्ययमञ्चति तत्राहुर्विक्रीडयेति । अत्र प्रतिकूलैः पराभवितुमिष्यते विविधोदासीनलोकैः सङ्कीर्यते चेति नात्यभीष्टविक्रीडिषोदयस्तत्र विशिष्टा क्रीडा । तत्र तु सर्वस्याप्यनुकूलत्वेनैव कान्तत्वेन च परमाभीष्टविक्रीडिषोदयाद्विशिष्टैवेति कुतः साम्यमेवेति भावः । सर्वानुकूल्यं वैशिष्ट्यञ्च दर्शयन्ति । वनेत्यादिना । वने सर्वाभीष्टपुष्पादिनिधाने परमैकान्ते श्रीवृन्दावने चित्राणि विशिष्टक्रीडाकौतुकितया सखिभिर्मिलित्वा विविधाश्चर्यत्वेन यावदभीष्टं रचितानि माल्यानि यस्य तादृशः । उपलक्षणञ्चैतत् वेशान्तराणां तथा गाः पालयन् स्वयं निजपरमस्नेहपात्राणां गवां तत्तन्निजाभीष्टक्रीडास्वैरता सहायं पालनं विश्वमोहनं मधुराह्वानादिना कुर्वन् । किञ्च । सहबलः तत्र तत्र बलसहाय इति स्वयमभीष्टतत्तत्क्रीडेन श्रीबलेन पुष्टतत्तत्क्रीड इत्यर्थः । अहो किमपरं वक्तव्यं शङ्करशर्वपरमेष्ठिमोहनः तरूणामपि पुलककारकं वेणुञ्च क्वणयन् तद्वाद्यमाधुरीं मुहुरुल्लासयन्निति ॥ १३ ॥

गोप्य इत्यत्र तेषामवतारिकायां दृष्टोऽयमिति पर्यन्तः पूर्वपद्याभिप्रायः । गोप्यस्त्विन्युत्तरत्रयस्य ज्ञेयः । असमोर्ध्वम् अनन्तनन्दादिभिर्भावेष्वपि न विद्यते समं किमुतोर्ध्वं यस्य तदित्यर्थः । पिबन्तीति तृषार्त्ता इवामृतमिति भावः । अनुसवाभिनवं प्रतिक्षणमधिकाधिकाविर्भावप्रेमतत्स्फूर्त्योः परस्परवर्द्धनत्वादिति भावः । दुरापं लक्ष्म्यादिभिर्दुर्ल्लभमपि श्रियः सर्वशोभायाः । ईश्वरस्येति पाठे परमेश्वरस्यापि परमालम्बनरूपमित्यर्थः । अन्यत्तैः । तत्र सौन्दर्यमिति लेख्येऽप्यसङ्गमिति नूनं प्रथमलेखकभ्रमात् अन्यथा किञ्चित् द्वयस्य तदपीत्यादेश्चासङ्गतारिति । यद्वा । व्रजभुवां धन्यत्वेन तत्रागिमात्रधन्यत्वं व्यञ्जितं तत्रापि श्रीगोपीनां किं वक्तव्यमिति परमविदग्धाः काश्चित् श्रीशुकेनाप्यनुमोद्यमानेष्वमीषु वाक्येषु वाढमनुमोद्यमानं वाक्यमाहुः । गोप्य इति । तपो भगवदाराधनलक्षणं किं चरन् आचारतवत्यः ईदृशफलस्य वाङ्मनसातीतत्वात् तदपि तादृशमित्यर्थः । यदि जानीथ तदा वयमपि तदाश्रमं करवामेति भावः । यद्वा । किन्तपोऽचरन् अपि तु नैवाचरन् तपोमात्रस्यैदृशफलदानाशक्तेः तदीयनित्यप्रेयसीसमुचित पुनायमुदय इति भावः । तथात्वे हेतुं परमेवाहुः । यत् यस्मात् अमुष्य साक्षात् भावेऽपि निर्देष्टुमशक्यस्येत्यर्थः । रूपं परमशोभनप्रमाणाङ्गप्रत्यङ्गवत्त्वं दृग्भिः पिबन्तीति नैरन्तर्येऽपि तस्याक्षयिष्णुत्वं तासामतृप्तिञ्च सूचयित्वा रूपस्य सुधासमुद्रत्वमुत्प्रेक्षन्ते किञ्च दर्शनमात्रस्य तादृशत्वं दर्शयित्वा आलिङ्गनादेः कैमुत्यमानयन्ते कीदृशं तत् लावण्यस्य कान्तिकन्दलीचाकचिक्यस्य सारः श्रेष्ठांशो यत्र तादृशं तत् प्राचुर्यात्तद्रूपमेव वा । नन्वनन्ता एव तत्प्रादुर्भावा इति तत्र तत्रापि तादृशत्वं सम्भवति तत्राहुरसमोर्ध्वम् । नन्वन्यत्र नास्ति चेत् कुतो लब्धं तत्राहुः । अनन्यसिद्धं स्वभाविकमेवेत्यर्थः । इति नित्यत्वञ्च दर्शितम् । अतएव यशआद्युपलक्षितानां षण्णां भगानामतिशयितं धाम नित्याश्रयं पाठान्तरेऽपि ईश्वरत्वस्येत्येवार्थः । नन्वेवं सदैकरूपत्वेन पश्यन्ति चेत्तदापि नासकृत् चमत्कारः स्यात्तत्राहुरनुसवेति । नन्वीदृशं रूपं तत्रास्ति चेत्तदान्येऽपि पश्येयुस्तत्राहुर्दुरापमिति । स्वतस्तादृशप्रेम्णोऽसम्भवादन्येषां तादृशत्वं तासामेव दृढावधानेन स्फुरति अन्यथा तु न स्फुरतीत्यर्थः ॥ १४ ॥

एवं दर्शनवदर्शनेऽपि तद्रूपं तथैव तासां स्फुरतीत्याहुर्या इति । दोहनावहनने अन्तर्भूतण्यर्थपदे ज्ञेये अवहननं तुषापकरणं चकार उक्तसमुच्चये । कदाचित् पश्यन्ति कदाचिद्गायन्ति चेत्यर्थः । एवं पूर्वोक्तरूपं यदा न पश्यन्ति तदापि तद्रूपं स्फुरतीति भावः । एवं तादृशगानाभावाद्वयमधन्या एवेति तात्पर्यम् । अन्यत्तैः । यद्वा । अश्रुकण्ठ्यः रोदनपराश्च भवन्ति यतोऽनुरक्तधियः अतः उरुक्रमचित्तमेव यानं गमनसाधनं यासां ताः । यत्र यत्र तच्चित्तं याति तत्र तत्रैव तस्मिंस्ता एव स्फुरन्तीत्यर्थः । चिन्तयाना इति पाठेऽपि चिन्तनं चिन्ता तदेव यानं यासामिति समानोऽर्थश्च ॥ १५ ॥

दृग्भिः पानमेव वर्णयन्ति । प्रातरिति । व्रजतः श्रीवृन्दावनं गच्छतः गोभिरित्युपलक्षणं गोपवर्गैश्च समं वेणुमित्यस्योभयत्राप्यन्वयः । वेणुं क्वणयतः अतएव वेणुं तद्वाद्यद्वारा निशम्य श्रवणकरणकज्ञानं विधायेत्यर्थः । अयं तूर्णनिर्गमे हेतुः वेणुसम्बन्धात् श्रीमुखस्य शोभाविशेषोऽपि सूचितः । "तन्मुखं कथमिवाम्बुजतुल्यरूक्षं वाचामवाचि ननु पर्वणि पर्वणीन्दोः । तत् किं ब्रुवे किमपरं भुवनैककान्तः वेणुं त्वदाननमनेन समं नु यत् स्या" दिति श्रीलीलाशुकोक्तिः । अबला वेणुनादेन सततप्रेमभरेणैव वा दोहादिसामर्थ्यहीनत्वात्तत्राम्नेव धाव्या इत्यर्थः । अत इतस्ततः प्रस्खलन्त्य इति भावः । यद्वा । अन्यसङ्गे गन्तुमशक्यत्वादस्य वर्त्मन्येव ता इति । सुस्मितेत्यादिविशेषणद्वयं तत्राप्यतिशयद्योतकं तथा सायं आ सम्यक् वन्यवेशादिना उत्तमप्रकारेण व्रजं प्रविशतश्च तत्रापि गोभिः सममित्यादिकं सर्वं योज्यम् ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

नृलिङ्गगूढः नरशरीरगूढः गिरित्रो रुद्रः अञ्चति गच्छति ॥ १३ ॥

अनन्यसिद्धं स्वाभाविकम् अनुसवेति अनुसन्ध्यं प्रतिक्षणमित्यर्थः ॥ १४ ॥

प्रेङ्खोलने डोलाविहारे ॥ १५—१७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अपराश्चाहुः । पुण्या इति । स्वयं पुराणपुरुषः श्रीमन्नारायणः सन्नृलिङ्गेन मनुष्यस्येव शरीरेण गूढः तिरोधापितस्वस्वरूपगुणः वन्यानि विचित्राणि माल्यानि यस्य सः गिरित्ररमाभ्यां रुद्रमहालक्ष्मीभ्यामर्चितावङ्घ्री यस्य सः गिरित्रग्रहणं चतुर्मुखादीनामप्युपलक्षणं सहबलः बलरामेण सहितः वेणुं वादयन् गाश्च पालयन् विक्रीडयाञ्चति अटति अयम्भावः त्रिविमां सभां भूम्यामयं परिभूयते तास्तु व्रजभुवो धन्या यतो यास्वयं श्रीकृष्णो विविधक्रीडया चरतीति ॥ १३ ॥

अहो अल्पपुण्या वयं यतोऽस्माभिरनवसरे अयं दृष्टः गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः । गोप्य इति । गोप्यःकिन्तपःसमाचरन् ताभिराचरितं तपोऽनिर्वचनीयमित्यर्थः।कुतःयद्यस्मादमुष्य श्रीकृष्णस्य रूपमङ्गप्रत्यङ्गलावण्येन सह सारं श्रेष्ठं किञ्चासमोर्ध्वं न सममूर्ध्वमधिकञ्च यस्य ताभिः समाभ्याधिकामित्यर्थः । तदपि नान्येन नाभरणादिना सिद्धं किन्तु स्वत एवाकर्मायत्तं वा किञ्च यशसः श्रियो लक्ष्म्याः ईश्वरस्य भावप्रधानोऽयं निर्देशः ऐश्वर्यस्य च एकान्तधामाव्यभिचारिस्थानं सदाभिनवं दुरापमकृतपुण्यानां चक्षुषापि प्राप्तुमशक्यम् एवंभूतं रूपं याः नेत्रैरनुपिबन्ति पश्यन्तीति ॥ १४ ॥

किञ्च या दोहनादिष्वेनं गायन्ति ता व्रजस्त्रियो धन्याःकथम्भूताः उरुक्रमे चित्तमुरुक्रमचित्तं तदेव यानं सर्वपुरुषार्थप्राप्तिसाधनं यासां ताः पाठान्तरे उरुक्रमं चिन्तयमाना इवेत्यर्थः। कुतोऽनुरक्तधियः तत्र लिङ्गमश्रुकण्ठ्यःआनन्दाश्रुनिरुद्धकण्ठयः तत्र गोदोहनं गवां दोहनम् अवहननमुलूखलादौ धान्यादिसंस्कारःवहनं जलाद्यानयनं मन्थनं दध्नः उपलेपो गृहाणां लेपनं प्रेङ्खेङ्खनं दोलान्दोलनमर्भरुदितं रुदद‍र्भकसान्त्वनम् उक्षणं सेचनं मार्जनं गृहसंमार्जनम् ॥ १५ ॥

अपिच प्रातरिति । या अबलाःगोभिः सह प्रातर्व्रजाद्विर्गच्छतः ततः सायमाविशतश्च वेणुं क्वणयतस्तस्य वेणुरवमाकर्ण्य गृहात्तूर्णं निर्गत्य पथि तस्य सदयोऽवलोको यस्मिंस्तद्युक्तं मुखं पश्यन्ति ता भूरिपुण्याः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

नृणां लिङ्गेन लक्षणेन गूढः छन्नः अयं कृष्णनामा पुराणपुरुषः यद्यासु व्रजभूमिषु विक्रीडया क्रीडेच्छया अञ्चति गच्छति पादाभ्यामिति शेषः । गाश्चारयन् गिरावञ्चति च ता व्रजभुवः स गिरिश्च पुण्याः पावनाः बत आश्चर्यावधेः स्थितिः किम्विशिष्टः विद्यमानानि विचित्राणि नानावर्णानि माल्यानि पुष्पाणि यस्य स तथा गिरावमरैर्देवैरार्चिताङ्घ्रिः व्रजभुवि अमरैरमलैः शुद्धान्तःकरणैर्गोपालैरर्चितश्रीचरणः ॥ १३ ॥

अमुष्येश्वरस्य यल्लावण्यसारमथनोत्थं शृङ्गाररसमथनादुत्पन्नं नचेदं कृत्रिममित्याह । अनन्यसिद्धमिति । अन्यस्मात्प्रकृतेर्जातं न भवतीति अन्येषामविद्यमानं वा अनुसवं प्रतिक्षणम् अभिनवं नूतनं ज्ञानमन्तरेण दुष्प्रापं श्रियो यशसश्चैकान्तधाम यत्स्थानरूपं द्रव्याश्रयलक्षणगुणं तद्याः दृग्भिः पिबन्ति ता गोप्यः किन्तपः अचरन् चक्रुरित्यन्वयः ॥ १४ ॥

या गोप्यो गोदोहनादावेनं कृष्णं गायन्ति ता गोकुलस्त्रियः पुण्या इत्यन्वयः अवहनने व्रीहिताडनकाले दधिमन्थनवेलायाम् उत्थजल्पे मिथःसम्भाषणसमये उपलेप इतिकेचित्पठन्ति गोमयादिना स्थललेपनकाले प्रेङ्खेङ्खने दोलाचलनकाले अर्भरुदिते बालरोदनकाले उक्षणे प्राङ्गणसेचनसमये मज्जने स्नानकाले मार्जन इति केचित् आदिशब्देन स्खलनपतनादिकं गृह्यते उरुक्रमचित्ते यामः कालविशेषो यासां तास्तथा उरुक्रमचित्तेन गतो यामो यासां ता इति वा ॥ १५ ॥

वेणुरवं निशम्य व्रजान्निर्गत्य पथि स्थित्वा ॥ १६—१७ ॥ ० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्नेहवशादभ्रान्तेऽपि भगवति भ्रमं मत्वा अनवसरे भगवानस्माभिर्दृष्ट इति स्वभाग्यं विगर्हयन्त्यः गोकुलवासिनां भाग्यमभिनन्दन्ति । पुण्या बत इति चतुर्भिः । आदौ भूमिमभिनन्दन्ति पश्चात् स्त्रियः आदौ व्रजभुव एव धन्याः यदयं नृलिङ्गेन कपटमानुषवेषेण गूढ सन् स्वयं पुराणपुरुषोऽपि वनचित्रमालायुक्तश्च तत्रत्याः गाः पालयन् ससहायोऽपि तत्परः बलभद्रसहितः विक्रीडयैव विशेषेण क्रीडार्थमेव अञ्चति व्रजभुवं गच्छति वा स्वयं तु गिरित्रेण रमया च अर्चितौ अङ्घ्री यस्य भूमिः स्वभावतः पुण्या भवति यद्यपि मथुरापि तथा गणिता तथापि मथुरामण्डले व्रजभुव एव पुण्याः पुण्यं हि सुखफलं भवति निरन्तरं तत्रस्थानां सुखानुभवात् अत्र तु तद्विपरीता इति वर्तते इति हर्षे एतादृशमपि लोके स्थानं भवतीति गोप्यश्च हि क्रीडासुखदायिनी अतो भगवतोऽपि गुप्तक्रीडासाधनत्वात् सुखदा भूमिः । पुराणपुरुष इति । तासां स्वरूपज्ञानं दृढमिति ज्ञापितं तथापि श्रमाविर्भावात् स्थलान्तरप्रशंसैव गुप्तश्च सर्वं व्यवहर्तुं शक्यते तथात्वेन नियामकमप्याहुः । वनस्थानामपि चित्रमाल्यानां धारक इति । गाः पालयन्निति सुतरां गौणभावाश्रयणात् स्वच्छन्दलीला संपद्यते बाधकनिराकरणार्थं ससहायोऽपि रसोद्बोधनार्थं रक्षकदेवोद्बोधनार्थं वा द्विनेऽपि परमानन्दानुभवार्थं च वेणुक्वणनं चकाराद नानाविधां च लीलां कुर्वन् भूमेः पूजने तत्रत्यानपि पूजयन्तीति स्वच्छन्दलीलायामतिक्रमेऽपि नापराधो भवति अन्यत्र गुप्ताभावे स्वस्य नेष्टं गुप्तत्वे तु चाणूरादीनामतिक्रम इति उभयथाप्यत्र दुःखं न च गोकुले स्वरूपप्रच्युत एव तिष्ठतीति शङ्कनीयं यतस्तत्र स्थितमपि महादेवो लक्ष्मीश्च पूजयति स हि पशुपतिः तदीयानां पशूनां पालानां भगवान् रक्षक इति स्वमपराधी च पूजनया स्वापराधं दूरीकरोति महादेवेत् स्वकार्यं करोति तदा दीनो लज्जते अतः पूजयति अन्यथा गोवर्द्धनोद्धरणे इन्द्रस्यापकारं कुर्यात् गोवर्द्धनं वा विशकलितं स हि यथास्थितान् पर्वतान् पालयति सुदर्शनस्यापि मोक्षं नाङ्गीकुर्यात् अतः सेवकत्वेनैव तस्य व्यवहारो दृश्यते लक्ष्मीः पुनः सर्वस्त्रीमूलप्रकृतिः तद्विभवरूपा गोप्यः तासामपि कृपां करोतीति अथवा महादेवो भगवति पशुपालने क्रियमाणे तस्य पालनं गमिष्यतीति रमा च गोपिकासु स्थितासु आदरो गमिष्यतीति ॥ १३ ॥

एवं भूमिमभिनन्द्य गोपिकाभिनन्दनमाहुः त्रिभिः । गोप्यस्तपः किमचरन्निति । भगवतो रूपं यादृशं ध्येयं तादृशं यतः पश्यन्ति भगवन्तमेव च गायन्ति सदासक्ताश्च तिष्ठन्तीति न ह्येतद्वयं

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

स्वल्पतपसा प्रसिद्धतपसा वा भवति अन्यथा अन्येषामपि स्यात् अतो न ज्ञायते किं वा तपस्ताभिः कृतमिति यद्यप्यस्माभिरपि भगवद्रूपं दृश्यते तथापि अमुष्यैतद्रूपं लावण्यमेव सारभूतं यत्र केवलं लावण्यमेव तत्र प्रकाशते लावण्यस्यापि वा सारम् इदानीं तु क्रोधाद्याविर्भावात् भवस्थया तिरोहितमिव प्रतिभाति किं च असमोर्ध्वं न समभूर्ध्वं च यस्मात् तासां हि दृष्टौ भगवानेक एव प्रतिभाति अत्र तु दुष्टः सम्बन्धी चाणूरादिरपि दृश्यते ऊर्ध्वता च कंसादेः मञ्चस्थितत्वात् प्रतीयते किं च अनन्यसिद्धं स लावण्यरसः केवलं भगवत्येव सिद्धः अन्यथा भुव्यन्येऽपि भाग्ययुक्ता भवेयुः अतस्तादृशामृतपानं तपसा विना न भवतीति अवश्यं तपस्ताभिः कृतमिति सिद्धम् । किं च दृग्भिः पिबन्ति दूरादपि पातुं शक्यते दृशा तत्रापि नानाविधैः अलसवलितादिभिः पानमनेन सर्वोऽपि रमणप्रकारस्तासां सूचितः चर्वितचर्वणत्वव्यावृत्त्यर्थमाहुः । अनुसवाभिनवमिति । अनुसवं प्रतिक्षणं नूतनमेव भवति पूर्वानुभूतरसादुत्कृष्टं नापि तत्सर्वं सुलभमित्याहुः । दुरापमिति । सर्वेषामेव दुःखेनापि प्राप्तुमशक्यं तासां त्वयत्नसिद्धं जातमिति । ननु केवळं भोग एव भगवता सिद्ध इति कथं सर्वोत्कृष्टता यद्धि सर्वमेव फलं साधयति तत्सर्वोत्तममिति चेत्तत्राहुः । एकान्तधामेति । भोगस्त्वैहिकपारलौकिकः सर्वोत्कृष्ट इति वीर्यस्य न पृथगुपयोगः ज्ञानवैराग्ययोश्च अतस्त्रयमेवावशिष्यते यशः श्रीः ऐश्वर्यं चेति तेषामेकान्ततः भगवल्लावण्यामृतमेव धाम तस्मिन् प्राप्ते ऐश्वर्यादिकं सर्वं सिध्यतीति न भोगमात्रपरत्वम् ऐश्वर्यमिति भावे अत्र चकारादपेक्षितानामपि ज्ञानवैराग्यादीनां ग्रहणम् ॥ १४ ॥

ननु सर्वोत्तमा भगवद्भक्तिः तासां तु कामः प्रधानमिति का स्तुतिरिति चेत्तत्राहुः । या दोहन इति । दोहनं सायं प्रभाते वा ततः अवहननं ततो मथनं दध्नः प्रातरवलेपनं च एतच्चतुष्टयं गृहकार्यं व्रजस्त्रीणां सहजं सर्वासां ततः प्रेङ्खेङ्खनं दोलयान्दोलनं विद्यमानबालकानामर्भरुदितं बालकरोदनम् उक्षणं सेचनं वृक्षादिषु सूक्ष्मेषु तुळस्यादिषु वा मार्ज्जनं प्राङ्गणादेः एतेषु एनं भगवन्तं गायन्ति चकारात् स्मरन्ति भावयन्ति तदर्थमेव च कुर्वन्ति धर्मपरा अपि तत्कुर्वन्ति इति तद्व्यावृत्त्यर्थमाहुः । अनुरक्तधिय इति । अनुरक्ता धीर्यासाम् अनुरागमात्रेण न भक्तिर्भवति उत्कटभावाभावात् लौकिकप्रेमवतां धर्ममार्गेऽपि तथात्वादित्यत आहुः । अश्रुकण्ठ्य इति । अश्रूणि नेत्रयोः गद्गदकण्ठता च तदुभयं निर्दिष्टम् अथवा नेत्रयोः श्रवणाभावात् अन्तर्दृष्टीनामश्रूणि कण्ठ एव समागतानीति तथोक्तवत्यः अतः सर्वभावेन प्रपन्नाः फलं च प्राप्नुवन्तीति व्रजस्त्रियो धन्याः किं च उरुक्रमचिन्तयानाः न केवलं यदा कदाचिदेव तासामेवं भावः किं तु सर्वदेति वक्तुं सर्वदैवोरुक्रमं चिन्तयानाः उरुक्रमं चिन्तयन्ति ॥ १५ ॥

किं च एतादृश्योऽपि न केवलं योगिवत् साक्षात्काररहिताः किं तु तपस्विन इव वरदानार्थमागतं भगवन्तं सर्वदैव पश्यन्तीत्याहुः । प्रातर्व्रजाद्व्रजत इति । गूढास्तु लीलाः ताभिर्न ज्ञायन्त इति भगवद्दर्शनं सायं प्रातरेवेत्याहुः । प्रातः काले गाः नीत्वा व्रजाद्व्रजनः सायं काले च व्रजमाविशतः चकारादन्यदापि यदृच्छया आगच्छतः अन्यादृच्च दर्शनावस्थाः सर्वा एव सङ्गृहीताः गोभिः सममिति पाल्यमानानामानयनमावश्यकमिति निर्भयार्थं च न हि वेदबोधिते पदार्थे कस्यचिदपि शङ्का भवति किं च वेणुं क्वणयत इति । यथाचित्तमपहृतं भवति तथा वेणुनादं करोति तेन सद्भावाः सर्वे भगवद्विषयका आविर्भवन्ति अन्ये तु तिरोभवन्ति अतस्तस्य वेणुनादं निशम्य तूर्णं गृहान्निर्गताः पथि मार्ग एव भगवन्तं पश्यन्ति योगिनो हि समागते भगवति पश्यन्ति । एतास्तु अर्द्धसमागत एवेति विशेषः अतो भूरिपुण्याः भवला इति तासां दोषाभावो भूरिपुण्यत्वे हेतुरुक्तः किं च सस्मितं मुखं पश्यन्ति अन्तरानन्दमाविर्भावयत् तेन यथा भक्तिप्रतिबन्धकमुत्पन्नमपि ज्ञानं निवृत्तं भवति तादृशं प्रेमानन्दमेव प्रयच्छतीति मोक्षादप्यधिकफलमुक्तं किं च सदयावलोकमिति । दयापूर्वकमवलोकनं यस्मिन् न च वक्तव्यं संसारो न निवर्त्तिष्यत इति यतो भगवान् दयया पश्यति कृतार्था एताः कर्त्तव्या इति दयया दोषनिवृत्तिः अवलोकनेन सर्वस्वदानमिति द्वयमुक्तम् अतः स्त्रीणां तादृशभगवल्लीलायां महानेव प्रयास उक्तः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथ काश्चित् यज्ञपत्नीसवासनास्ता एव वा तद्वार्त्तिसंतापस्फुरिततदैश्वर्यज्ञानाः महाप्रेमवत्यो दृश्यमानां तामनीतिमसहमाना व्रजभुवस्तत्रत्यजनांश्च स्तुवाना मथुरायास्तद्वासिनां च निन्दामभिव्यञ्जयन्ति । पुण्या इति । बत विस्मये यत् यासु नृलिङ्गेन स्वस्वरूपलक्षणेनापि बहिरङ्गजनैर्ज्ञातुमशक्यत्वात् गूढः विविधया स्वमनोरथोत्थया क्रीडया अञ्चति भ्रमति तेन धिगिमां मथुरापुरीं यतोऽस्यामस्यैतादृशो दुःखातिशयस्तं चात्रत्या जनाः पश्यन्ति तास्तु वनभूमयोऽपि धन्या एव यास्वस्य वेणुवादनादिविविधक्रीडानन्दः तं च तत्रत्याः सानन्दं पश्यन्तीति द्योतितम् अत्राञ्चतीति वर्तमानप्रयोगस्तासां तत्रैव पुनः कृष्णगमनाभिप्रायात् वस्तुतस्तु यथार्थैव भारतीयं तन्मुखेभ्यो निःसृता लीलानां नित्यत्वस्य स्थापितत्वात् स्थापयिष्यमाणत्वाच्च ॥ १३ ॥

हन्त हन्त महासुकृतिन एव व्रजभूमिपूत्पद्यन्ते तेष्वपि गोपीजनाः अतिश्रेष्ठा इत्याहुः । गोप्य इति । किमचरन्निति । भोः सख्यः ! तत् तपः यदि यूयं सर्वज्ञस्य कस्यचिन्मुखात् जानीथ तदा ब्रूत यथा तदेवास्मिन् जन्मनि कृत्वा व्रजभूमौ गोप्यो भवेम यत् यतस्ता अमुष्य रूपं सौन्दर्य्यामृतं पिबन्ति वयं तु मथुरास्था अस्य पराभवविषं पीत्वा आनखशिखं ज्वलाम इति भावः । तासां दृग्भिः पानस्यैव तादृशतपःफलत्वमुक्त्वा स्वाङ्गैरालिङ्गनादेस्त्वनिर्वाच्यहेतुकत्वं ज्ञापितं किं चास्य रूपे लावण्यमधिकं वर्त्तत इत्यत उपादीयते इति न वाच्यं किं तु लावण्यसारं लावण्यस्यापि यःसारस्तत्स्वरूपमेवैतत् ननु स्वर्लोकादिभ्योऽपि न्यूने भूर्लोकेऽस्मिश्चेदेयं रूपं दृश्यते तर्हि सर्वतः श्रेष्ठे महावैकुण्ठलोके इतोऽप्यधिकमधुरं श्रीनारायणस्य रूपं भवेदिति तत्राहुः । असमोर्ध्वम् एतद्रूपस्य सममेव रूपं क्वापि नास्ति किमुताधिकमिति भावः । ननु तर्हि कृष्णेनैतद्रूपं कुतः सकाशात् प्राप्तं तत्राहुः । अनन्यसिद्धमस्मिन्नेतत् स्वाभाविकमित्यर्थः । नन्वेवमप्येतद्रूपं ताः सदैकरूपत्वेन पश्यन्ति चेत्तदापि तासां नासद्व्यमत्कारः स्यात्तत्राहुः । अनुसवाभिनवं प्रतिक्षणं नूतनम् एवं चेत्तर्हि तत्रैव गत्वा अन्यदेशीयाभिरपि स्त्रीभिः सुखेनायं दृश्य-

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ।
शत्रुं हन्तुं मनश्चक्रे भगवान् भरतर्षभ ! ॥ १७ ॥
[1]सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ ।
पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥ १८ ॥
तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ।
युयुधाते यथाऽन्योऽन्यं तथैव बलमुष्टिकौ ॥ १९ ॥

[1] अयं विजयध्वजीये नास्ति

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तामित्यत आहुर्दुरापं लक्ष्म्यापि दुर्लभं ननु भवतु नामास्य सौन्दर्य्योपाधिक एव सर्वोत्कर्षः श्रीनारायणादौ तु भगशब्दवाच्यषडैश्वर्य्यमधिकं वर्त्तते तत्राहुः । एकान्तेति । यशआद्युपलक्षितानां षण्णामेव भगानाम् एकान्तधाम अतिशयितमास्पदं ऐश्वरस्य ऐश्वर्य्यस्य ईश्वरस्येत्यपि पाठः ॥ १४ ॥

किं च तासां गृहकर्माण्यपि नैतन्माधुर्य्यपानप्रतिबन्धकानीत्याहुः । या दोहनादिषु एनं गायन्ति चकारात् कापि पश्यन्ति चलेतन्माधुर्य्यं रसनाभिरपि दृग्भिरपि पिबन्तीति पानाविच्छेद उक्तः प्रेङ्खेङ्खनं दोलान्दोळनम् उक्षणं सेचनम् उरुक्रमस्य चित्तं यानं वाहनं यासां ता इत्ययमुरुक्रमोऽपि ब्रह्मादिभिः स्वचित्तेपूह्यमानोऽपि वा स्वयं स्वचित्ते वहतीति तास्वपि कृष्णोऽयमनुरक्तधीरिति तासां सौभाग्यभरो दर्शितः । चिन्तयाना इति पाठे उरुक्रमं चिन्तयन्त्य इत्यर्थः ॥ १५ ॥

प्रातर्व्रजाद्वनं व्रजतः सायं वनाद्व्रजमाविशतः प्रविशतोऽस्य कृष्णस्य वेणुं निशम्य गृहेभ्यो निर्गम्य पथि गवानयनमार्गसमीपोपवनादौ पश्यन्ति सदयः स्वविरहखिन्नाङ्गीस्ता दृष्ट्वा तदभीष्टवितरणव्यञ्जकानुकम्पासहितोऽवलोको यस्य तम् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुज्ञाततत्त्वा आहुः । पुण्या इति चतुर्भिः । नृलिङ्गगूढः नृणां ब्रह्मादिमत्कुणपर्य्यन्तानां लिङ्गेषु देहेषु गूढः सर्वव्यापक इत्यर्थः । यत्तु नृलिङ्गेन मनुष्यदेहेन गूढ इति तन्न असमोर्ध्वमनन्यसिद्धम् एकान्तधाम यशसः श्रिय ईश्वरस्य आत्मानमप्युचयापचयौ न यस्येत्यादि वक्ष्यमाणवचनविरोधात् एवम्भूतः पुरापि नवश्चासौ पुरुषश्च सोऽयं कृष्णः वनानि वन्यानि चित्राणि नानाविधानि माल्यानि यस्य सः गिरित्रिरमाभ्यामर्चिताङ्घ्री यस्य सः यासु विक्रीडया हेतुभूतया अञ्चति गच्छति ताः व्रजभुवो धन्याः अत्र त्वास्वेनक्रीडायित्वा सराजकाः चाणूरादयो मरिष्यन्ति न रामकृष्णयोः किञ्चिदप्यपकारं करिष्यन्तीति भावः ॥ १३ ॥

अत एव व्रजगताः गोप्यः सुकृतिन्य इत्याहुः । गोप्य इत्यादित्रिभिः । अहो गोप्यः किमद्भुतं तपः आचरन् यत् येन तपआचरणेन अमुष्य श्रीकृष्णस्येश्वरस्य सर्वनियन्तुः रूपं श्रीमन्मङ्गलविग्रहं लावण्येन सह सारं श्रेष्ठम् असमोर्ध्वम् निःसमानाधिकम् अनन्यसिद्धम् अन्यसिद्धं कर्मजन्यं प्राकृतं रूपं तद्भिन्नमनन्यसिद्धमप्राकृतमित्यर्थः । तत एव अनुसवाभिनवं सर्वदा नूतनम् अतएव यशसः श्रियः महालक्ष्म्याश्च एकान्तधाम अव्यभिचारिस्थानम् दृग्भिः पिबन्ति ॥ १४ ॥

किञ्च अनुरक्तधियः श्रीकृष्णासक्तबुद्धयः अत एव उरुक्रमीचन्तयानाः उरुक्रमं चिन्तयन्त्यः अतएवाश्रुमुख्यः याः दोहनादिषु एनं श्रीकृष्णं गायन्ति प्रेङ्खेङ्खनं दोलान्दोलनम् उक्षणं सेचनम् ॥ १५ ॥

क्वणयतः वादयतः ॥ १६ ॥

---

भाषा टीका ।

हे सखि ! हो ये व्रज भूमि धन्य हैं जिनभूमियों में पुराण पुरुष ये भगवान् गुप्त होकर वन की विचित्र फूलों की मालाओं को धारण किये हुये बलदेवजी के सहित गउओं को चराते हुये वंशी को बजाते हुये क्रीडा करते विचरते हैं जिन भगवान् के कि चरण कमल को श्रीमहादेवजी तथा लक्ष्मी आदि कपूजन करते हैं ॥ ॥ १३ ॥

गोपियों ने क्या जाने क्या तप किया है जो कि लावण्य की खान का सार जिसके न कोई समान है न कोई जिस से अधिक है और विना भूषणादि से ही सिद्ध है नित्य नवीन है औरों को दुर्लभ है यशका श्रीका ऐश्वर्य का एक धाम है ऐसे भगवान् के रूप को नेत्रों से सब काल में पान करती हैं ॥ १४ ॥

जो गोपी गोदोहन में धान कूटने में दधि मंथन में घर लीपने में झूला झुलाने में बालक के रोदन समय में घरके सींचने झाडने में त्रिविक्रम भगवान् में चित्त लगाकर अनुरक्त बुद्धि वाली होकर अश्रु कंठ वाली होकर इन श्रीकृष्णचंद्र का गान करती हैं वे व्रज स्त्री धन्य हैं ॥ १५ ॥

जो कि गोपी प्रातः काल में व्रज से वन को जाने में सायंकाल में व्रज से आते समय में गउओं के साथ वेणु को बजाते हुये इन भगवान् के शब्द को सुन कर शीघ्र ही घरों में से निकल कर दया युक्त दृष्टि सहित मंद हास युक्त मुखारविंद को देखती हैं वे व्रज स्त्री बडी पुण्य वाली हैं ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयनिवृत्तये कृष्णः शत्रुं हन्तुं मनश्चक्रे ॥ १७ ॥

सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया

भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ।
चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह ॥ २० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

आतुरौ विह्वलौ पुत्रयोर्बलमजानन्तौ पितरावनुतापं प्राप्ताविति ॥१८-१९॥

तदा भगवतो गात्राणामरत्निजान्वादीनां निष्पतैः प्रहारैर्वज्रस्य निष्पेषस्तीव्रप्रपातस्तद्वन्निष्ठुरैः भज्यमानाङ्गः श्लथद्गात्रः॥ २०॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यद्यप्यन्यदापि तत् सन्दर्शनं सम्पद्यते तथापि तन्निर्गमनाप्रवेशयोरनुव्रजाभिगमनच्छलाल्लोकानामग्रेऽप्यसङ्कोचेन तत् सिद्ध्यतीति तथा विरहापगमापगमयोरत्यन्ताशक्त्या विशेषतस्तत् स्यादिति तदानीन्तनमेव तदुक्तम् । ईदृशमात्रस्य दर्शनमस्माकं न कथमपि सम्भवेदित्यत एवापुण्या एव वयमिति भावः । एवमीदृशं प्रकर्षेण प्रेमार्त्त्या सभयं भाषमाणासु सतीष्विति तादृशभाषणासामनिवृत्तिरुक्ता । अर्हानर्हयोश्चेत्यनेन सप्तमी चार्हार्थे तदा तद्विधानं योग्यमेवेत्यर्थः । योगेश्वर इति । स्वेच्छया स्वशक्तिप्रकाशनाप्रकाशनयोर्हेतुः हरति भूभारं हारिरिति तद्वधप्रवृत्तावौत्सर्गिकश्चास्ति हेतुरिति भावः । शत्रुमिति सद्विद्वेषित्वात् । भगवानिति स्वरूपनिर्देशः सर्वत्रैव हेतुगर्भः । हे भारतर्षभेति चिरं युद्धक्रीडया तद्वधविलम्बादप्रसन्नचित्तं राजानमुल्लासयति भरतवंश्यत्वात्त्वमपि भारतयुद्धादावीदृशीं तल्लीलां जानासीत्यभिप्रायेण ॥ १७ ॥

स्त्रीणां तथाविधगिरः उप सामीप्येनाधिक्येन वा श्रुत्वा पितरौ तदानीं तादृशाभिमानमेवावृताविति पुत्रेत्यादौ हेतुः । आतुरत्वादेव बलं वाप्यनयोः अबुधौ अजानन्तौ सन्तौ तदनुसन्धानुमशक्तावित्यर्थः । अन्वतप्येतां कथं व्रजे गमिष्यत्यक्रूर एव प्रथमतस्तथा न शिक्षितः यथा नैतावानेष्यदित्यादिकं पश्चात्तापमकुर्वेताम् अत्र बलमबुधावित्यत्र षष्ठ्यभावस्तस्याः षष्ठ्या अनित्यत्वात् । यदुक्तं । "कर्तृकर्मणोः कृती" सूत्र भाष्यवृत्तौ विहिततदर्हमिति सूत्रनिर्देशेनानित्यताज्ञापनात् । धार्यैरामोदमुत्तममिति भट्टिरिति । तद्धितप्रत्ययः खलु सूत्रप्रथमनिर्दिष्टविभक्त्यन्तादेव नियमितः । यथा तस्यापत्यमित्यत्र उपगोरपत्यमौपगवः यथाचात्र धनमर्हतीति धन्य इति ॥ १८ ॥

पुनर्युद्धवर्णनमवतारयति । तैरिति पूर्वदर्शितदिङ्मात्रैः । वीप्सा तेषां वैचित्र्याद्यपेक्षया । उभाविति चाणूरस्यापि तत्र नैपुण्यं बोधयति अन्यथानर्हतया लीलासौष्ठवं न स्यात्तच्च लीलाशक्तिसम्पादितमिति भावः । विविधैरच्युतेतराविति पाठे इतरश्चाणूरः ॥ १९ ॥

अचिन्त्यशक्तित्ववाचको भगवच्छब्दोऽत्र मल्लेषु तादृशस्फूर्त्तौ हेतुः । वज्रनिष्पेषस्तत्करणकचूर्णनं तस्मादपि निष्ठुरैः ॥ २० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पितरौ देवकीवसुदेवौ ॥ १८ ॥

अच्युतेतरौ अच्युतचाणूरौ ॥ १९–३३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं स्त्रीषु प्रभाषमाणासु सतीषु हे भरतर्षभ ! योगेश्वरो भगवान् हरिः श्रीकृष्णः शत्रुं हन्तुं मनश्चक्रे ॥ १७ ॥

तथा पितरौ देवकीवसुदेवौ नन्दवसुदेवौ वा पुत्रयोः रामकृष्णयोर्बलमजानन्तौ केवलं स्त्रीणामुक्तरीत्या भाषमाणानां गिरो वचांस्याकर्ण्यान्वतप्येतामनुतप्तवन्तौ ॥ १८ ॥

अच्युतेतरौ कृष्णचाणूरौ चान्योऽन्यं नानाविधैस्तैस्तैर्नियुद्धविधिभिः पूर्वोक्तपरिभ्रमणविक्षेपादिभिर्यथा युयुधाते तथैव बलमुष्टिकौ राममुष्टिकौ च युयुधाते ॥ १९ ॥

तदा भगवतो गात्रनिष्पातैररत्निजान्वादिप्रहारैर्वज्रस्य निष्पेषस्तीव्रप्रहारस्तद्वन्निष्ठुरैर्भज्यमानाङ्गः ;चाणूरो मुहुर्ग्लानिमवापावाप्तवान् ॥ २० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतरश्चाणूरः ॥ १९ ॥

ग्लानिं प्राणसन्देहक्लेशम् ॥ २०-२४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवांस्तदसहमानः यत्कृतवांस्तदाह । एवं संभाषामाणास्विति । स्त्रीष्वेवं सम्यग्भाषमाणासु अन्येन सहासकोऽपि सर्वोत्मत्वात् शृणोत्येव योगेश्वरत्वादपि दूरश्रवणदर्शनादेस्तद्धर्मत्वात् दूरादेव श्रुत्वा हरिस्तासां सर्वदुःखहर्त्ता शत्रुं कंसमेव हन्तुं चाणूरं तासां विषादं वा मनश्चक्रे स ह्यक्लिष्टकर्मा न मारयेत् संध्यापर्यन्तं युद्धं च कुर्यात् ततः सम्यक्ताडिताः न प्रातरागच्छेयुः तथापि मारणार्थमेव नूतनं मनः कृतवान ननु कथमेवं नूतनं पूर्वसिद्धादधिकं करोतीति चेत्तत्राह । भगवानिति । विश्वासार्थं भरतर्षभेति सम्बोधनम् ॥ १७ ॥

ननु तथापि स्त्रीणां वाक्यात् सर्वात्मा कथं तान्मारयितुं प्रवृत्त इति चेत्तत्राह । उपश्रुत्येति । तासां वाक्यात् देवकीवसुदेवयोर्महानेव क्लेशो जातः यदि शीघ्रं भगवान्न मारयेत्तयोरपि क्लेशः अधिकः अनुवर्तेत अतः पित्रोरप्यर्थं हन्तुं मनश्चक्रे इति स्त्रीणां गिर उपश्रुत्य तावपि तत्र समानीताविति निकटे च गिरो जाता इति अन्वतप्येतां तासां वचनं भगवतः असामर्थ्यमिव प्रतिभातम् अतः पूर्वं सामर्थ्यं जानतोरपि वाक्यश्रवणेनानुतापो जातः । ननु माहात्म्यज्ञानस्य जातत्वात् कथं ताप इति

स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ ।
भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥ २१ ॥
नाचलत्तत्प्रहारेण मालाहत इव द्विपः ।
बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन् हरिः ॥ २२ ॥
भूपृष्ठे पोथयामास तरसा क्षीणजीवितम् ।
विस्रस्ताकल्पकेशस्रगिन्द्रध्वज इवापतत् ॥ २३ ॥
तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै ।
बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥ २४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

१चेत्तत्राह । पुत्रयोरबुधौ बलमिति । माहात्म्यं तु जानीतः परं न बलं ततः क्लेशं प्राप्नोतीति तयोरनुतापः ॥ १८ ॥

एवं प्रासङ्गिकमुक्त्वा प्रस्तुतं वदन् यत्पूर्वं कृष्णचाणूरयोः प्रकारचतुष्टयं निरूपितं तद्रामुष्टिकयोरप्यातिदिशति । तैस्तैरिति । नियुद्धविधिभिः बाहुयुद्धप्रकारैस्तैस्तैः प्रसिद्धैः पूर्वोक्तैर्वा ततोऽपि विविधैरनेकप्रकारैः यथाऽच्युतेतरौ अन्योऽन्यं युयुधाते तथैव बलमुष्टिकावपि तेनैव प्रकारेण युयुधाते अन्योऽन्यमिति द्वन्द्वयुद्धता अनुपदेशश्चोक्तः ॥ १६ ॥

अग्रे चाणूरमारणं वक्तुं पूर्वकृतयुद्धस्य वैयर्थ्ये उत्तरत्रापि तथैव भविष्यतीति पूर्वकृतस्य फलमाह । भगवद्गात्रेति । भगवतो गात्राण्यथयथाः तेषां निपातैः उपरि पातैः वज्रनिष्पेषात् वज्रेण पेषणादपि पुनः पुनर्घर्षणादपि निष्ठुरैः अतिदुःसहैः चाणूरो भज्यमानाङ्गः मुहुर्वारंवारं ग्लानिमवाप इत्याश्चर्यं स हि पूर्वमिन्द्रेण सह युद्धे वज्रे प्रक्षिप्ते वक्षः स्पर्शे च तं वज्रं दूरीकृतवान् ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

योगेश्वर इति । तत्रत्यानुकूलप्रतिकूललोकानां स्वगता अपि वाचः शृण्वन्नित्यर्थः । हन्तुं मनश्चक्र इत्यलमेता अनुरागिणीर्दुःखयित्वेति भावः ॥ १७ ॥

पितरौ देवकीवसुदेवौ वसुदेवनन्दौ वा अन्वतप्येतां हन्त हन्त व्रजे गमिष्यन्नक्रूर एव कथं तथा न शिक्षितो यथा नैतावानेष्यत् स इति हन्त हन्त कथमनार्य्यपुरे मयका सुतः कथमसौ न निगह्य गृहे धृत इत्यादिकं पश्चात्तापमकुर्वतां बलमबुधौ अजानन्तौ षष्ठ्या अभावः "तदर्हम्" इति निर्देशेन तस्या अनित्यत्वज्ञापनाम् ॥ १८ ॥

अच्युतश्च इतश्चाणूरश्च तौ ॥ १६ ॥

निष्पातैः प्रहारैः वज्रेण निष्पेषः सञ्चूर्णनं तद्वन्निष्ठुरैः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं सभयं निर्भयञ्च प्रभाषमाणासु योगेश्वरः सर्वचित्ताभिज्ञः ॥ १७—१८ ॥

अच्युतेतरौ श्रीकृष्णबलदेवौ ॥ १९ ॥

भगवतो गात्राणामरत्न्यादीनां निष्पातैः प्रहारैः वज्रस्य निष्पेषस्तीव्रः प्रपातस्तद्वन्निष्ठुरैर्दुःसहैः ॥ २० ॥

भाषा टीका ।

हे पुरुष श्रेष्ठ ! परीक्षित्जी इस प्रकार से स्त्रियों के भाषण करते ही भात्र में योगेश्वरों के ईश्वर हरि भगवान् ने शत्रु के मारने की इच्छा की ॥ १७ ॥

भय युक्त स्त्रियों के वचनों को श्रवण करके पिता माता वसुदेव देवकी नंदयशोदा दोनों बडा शोच करते भये क्यों कि वे चारों पुत्रों के बलको नहीं जानते हैं ॥ १८ ॥

अच्युत भगवान् और चाणूर दोनों उन नाना प्रकार के युद्ध प्रकारों से जैसे युद्ध करते भये तैसे ही बलदेवजी और मुष्टिक दोनों युद्ध करते भये ॥ १९ ॥

फिर तो वज्र के निष्पात सरी के निठुर जो भगवान् के शरीर के प्रहार तिनों से चाणूर के सब अंग ढीळे होने लगे इससे बारंबार ग्लानि को प्राप्त होने लगा ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्येनस्येव वेगो यस्य स चाणूरः अबाधतताडयत् ॥ २१ ॥ २२ ॥

भूपृष्ठे भुव उपरि पोथयामासाऽऽस्फालयत् इन्द्रध्वजो यज्ञं यद्वा इन्द्रध्वजो गौडेषु प्रसिद्धः कस्मिंश्चिदुत्सवे महांस्तम्भो ध्वजपताकाद्यलङ्कृतः पुरुषाकृतिरुच्छ्रीयते स यथा पतति तद्वदपतदिति ॥ २३—२४ ॥

१एतत्पद्यव्याख्याने उपश्रुत्येतिप्रतीकधारणेनाधिकः पाठः मूले प्रतीयते परन्तु सुबोधिनीसहितपुस्तकेऽपि मूले इदानीं स नोपलब्ध इति ज्ञेयम्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्येनवेग इति । पूर्वं ग्लानिं प्राप्य दूरे गमनं बोधितम् । उभाविस्येकदैव मुष्टीकृताभ्यां द्वाभ्यामेव प्रहारात् महाबलिष्ठत्वं नियुद्धकुशलत्वञ्च दर्शितं भगवन्तं वासुदेवमिति तन्मूढत्वदौरात्म्यव्यञ्जकं तत्तन्निरुक्तेः ॥ २१ ॥

श्रीभगवानपि तादृशनिजजनहर्षणाय तस्य तत्तदेव व्यञ्जितवान् ननु स्वविनोदाय स्वस्य क्षोभलेशमप्यनुकृतवानित्याह । नेत्यर्धेन । स्रग्भिरित्यनेन सुगमपि तस्य सूचितम् । बहुत्वस्य यदि बह्वीभिरपि ताभिर्हतः स्यात्तदपि तस्य यथा न किञ्चिदपि स्यात्तथास्य बलबाहुल्येनापीति भावः । अथ श्रीहरिवंशवचनानि ज्ञेयानि । "यद्दयं बाहुयुद्धं वै सदैवं कर्त्तुमुद्यतः । तत्र वै विग्रहः कार्यस्तोषयिष्याम्यहं जगत् । करूषेषु प्रसूनोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्मभिश्चानुचिन्त्यताम । एतेन बहवो मल्ला निपातानन्तरं हताः । रङ्गप्रतापकामेन मल्लमार्गाश्च दूषिताः । ये तु केचित् स्वदोषेण राज्ञः पण्डितमानिनः । प्रतापार्थे हता मल्ला मल्लहन्तुर्वधो हि स इति । बहुशः बहुवारान् बहुधा चेत्यर्थः । तरसा भ्रमणवेगेनैव क्षीणजीविनमाकाश एव मृतं तथाच श्रीविष्णुपुराणे । "भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित् । भूमावास्फोटयामास गगने गतजीवित" मिति । अतएव अहो मृत एवायमित्युक्त्वा परित्यागभियेवैव पोथयामासेति ज्ञेयम् ॥ २२ ॥

अपतत् स चेति शेषः । इन्द्रध्वजोपमया तद्देहस्य बृहत्तरत्वमपि ध्वनितं यथोक्तं श्रीहरिवंशे । "देहेन तस्य मल्लस्य चाणूरस्य गतायुषः । सन्निरुद्धो महारङ्गः सशैलेनेव लक्ष्यत इति ॥ २३ ॥

अभिमुखं हतेन प्रहृतेन । बलभद्रं बलोच्छ्रयाविति स्वभावत एव महाबलिष्ठेन तत्रापि बलिना प्रकटितबलेनेत्यर्थः । तलेन चपेटेन ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स चाणूरः श्येनस्येव वेगो यस्य स उत्प्लुत्य क्रुद्धः उभौ मुष्टीकृतौ करौ वासुदेवं वक्षस्यताडयन्मुष्टीकृतकराभ्यां वासुदेवस्य वक्षस्यताडयदित्यर्थः । मुष्टीकृत्येति पाठे उभौ करौ मुष्टीकृत्य ॥ २१ ॥

भगवांस्तत्प्रहारेण नाचलत् यथा स्रग्भिर्हतः ताडितो द्विपो गजो न चलति तद्वत् किन्तु तरसा चाणूरं बाह्वोर्गृहीत्वा बहुकृत्वो भ्रामयंस्तेनैव त्यक्तं जीवितं यस्य तं गतप्राणं भूपृष्ठे पोथयामास आस्फोटयत् तेनैवं पातितश्चाणूरः विस्रस्ता विक्षिप्ताः केशाः आकल्पा आभरणानि स्रजश्च यस्य तथाभूतो न्यपतत् यथेन्द्रध्वजस्तद्वत् ॥ २२ ॥ २३ ॥

तथा मुष्टिकोऽपि तावत्स्वमुष्टिताडितेन रामेण कर्त्रा भृशं करतलेनाभिताडितः प्रवेपितः कम्पितः अर्दितः पीडितः मुखतो रुधिरमुद्गमन्नुद्गिरन् गतप्राणो वा तेन चण्डमारुतेनाहत उन्मूलितमूलोऽङ्घ्रिपो वृक्ष इव उर्व्युपस्थे भूपृष्ठे पपात ॥ २४-२५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशो हि चाणूरः कथं मूर्च्छामवापेति ततो मारणं वक्तुं भगवानक्लिष्टकर्मेति प्रथमं तस्यापराधमाह । स श्येनवेग इति श्येनादप्यधिको वेगो यस्य श्येनो हि भ्रातृव्यं निपात्यादत्ते श्येनात्सर्वे सपक्षा बिभ्यति अतस्तत उत्पत्य उभावपि करौ मुष्टीकृत्य गदावदेकीकृत्य पृथग्वा मुष्टिद्वयं संयोज्य सर्वेश्वरमगणयन्तं वासुदेवं मोक्षदातारमन्यथा भुजाधिष्ठातेन्द्रो न प्रवर्त्तयेत् मोक्षं दास्यतीति भगवदिच्छया अन्यथा कर्तुमशक्ताः कालादयस्तूष्णीं स्थिताः नन्वन्तर्यामी कथमेवं प्रेरित इत्याह । क्रुद्ध इति । क्रोधेन व्याप्तस्तथा कृतवान्न बुद्धिपूर्वकं प्रेरितो वा राज्याद्यर्थे लक्ष्मीनिवासभूतमिति सन्तुष्टात् कंसाल्लक्ष्मीं प्राप्स्यामीति वक्षः स्पर्शमात्रं कृतवान् ॥ २१ ॥

सोऽपि स्पर्शस्तस्य व्यर्थो जात इत्याह । नाचलदिति । तस्य प्रहारेण ईषदपि चलनं स्यन्दनमपि न प्राप्तवान् दूरे स्यन्दनं ज्ञातवानपि नेति वक्तुं दृष्टान्तमाह । मालाहत इवेति । हस्ती हि अङ्कुशप्रहारमपि न मन्यते का वार्त्ता मालाप्रहारस्य ततो भगवांस्तं मारितवानित्याह । बाह्वोर्निगृह्येति । यौ बाहू मुष्टीकृत्य भगवति प्रक्षिप्तवान् तावेकहस्तेन गृहीत्वा यथा न मोचयति तथा गृहीत्वा बहुशो बहुवारमभ्रामयत् ॥ २२ ॥
तस्य पुनरुत्थानाभावायाह । तरसा क्षीणजीवितमिति । शीघ्रमेव भ्रामणसमय एव क्षीणं जीवितं यस्य भगवान् हि दूरादेव प्रक्षिप्तवान् न त्वेकं भागं धृत्वा भूमौ ताडितवान् अतस्तस्य भगवद्धस्ताद्विमुक्तस्य भूमौ पतने प्रकारमाह । विस्रस्ताकल्पकेशस्रगिति । विस्रस्ताः इतस्ततः प्रक्षिप्ताः आकल्पाः आभरणानि केशाः स्रजो मालाश्च यस्य तादृशो भूत्वा लक्ष्मीस्थानप्रहारेण लक्ष्मीस्तस्य विमुखेति तत्सम्बन्धिनः पदार्थाः विशेषेण स्रस्ताः ततः इन्द्रध्वज इव पूर्वमिन्द्रगर्वनाशो भगवता कृत इति तद्वदस्यापि जातमिति ज्ञापयितुं पूर्वदेशप्रसिद्धः इन्द्रध्वज उच्चैः स्तम्भः परितो रज्जूनामाकर्षणेनोत्थापितः यथा रज्जूनां शैथिल्ये गलितवस्त्राद्याभरणानि पातन्ति तथा कालादृष्टकर्मादीनां विशकलितत्वेन रक्षकाभावात् शरीरं स्तम्भयितुमशक्तः भूमावपत् मल्ला हि पतन्तोऽपि स्वं शरीरं धारणावशाद्धारयन्ति तदत्र नाभूदिति ज्ञापयितुं दृष्टान्तकथनम् ॥ २३ ॥

यथैतस्य भगवता मारणं कृतमेवं मुष्टिकस्यापि बलभद्रेण कृतमिति वक्तुमाह । तथैवेति । बलभद्रस्याप्यक्लिष्टकर्मत्वं बोधयितुं पूर्वं मुष्टिकस्यातिक्रम उच्यते तथेत्यनेन स्त्रीणां वचनानन्तरं तद्दुःखदूरीकरणाय शत्रुहननेच्छा तथैव गात्रस्पर्शैः शत्रोः सर्वाङ्गव्यथा ततो मारणमिति सर्वमतिदिष्टं मारणे प्रकारं वक्तुं पुनर्निरूपणमाह । स्वमुष्ट्या अभिहतेन बलेन तलेन चपेटेनाभिहतः भृशं मुखाद्रुधिरमुद्वमन् अत्यन्तमर्दितः व्यसुः सन् पपात असावधानत्वाय दृष्टान्तः वाताहत इवेति । चपेटताडनेनैव क्रियाशक्तिस्तस्यापगता बलवता सजातीयेनोपहतेति स्वमुष्ट्येति मुष्टिकनाम्ना तस्य मुष्टिरेव प्रसिद्धा अतएव तेनाभितो हतः आभिमुख्येन वा प्रथमपक्षे मुष्टिभिः सर्वाङ्गेषु हननं द्वितीये तु मुखे वक्षसि वा सकृदेव हननमिति ननु चपेटमात्रेण कथं हननमित्याशङ्क्याह । बलिनेति । अनेन कर्णप्रान्ते मर्मस्थानमिति दैवगत्या हत इति पक्षो व्यावर्त्तितः ॥ २४ ॥

प्रवेपितः स रुधिरमुद्वमन्मुखतोऽर्दितः ।
व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ २५ ॥
ततः कूटमनुप्राप्तं रामः प्रहरताम्वरः ।
अवधील्लीलया राजन् ! सावज्ञं वाममुष्टिना ॥ २६ ॥
तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः ।
द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥ २७ ॥
चाणूरे मुष्टिके कूटे शले तोशलके हते ।
शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अबाधत अताडयत् ॥ २१ ॥ २२ ॥

इन्द्रध्वजः प्राच्येषु प्रसिद्धः ॥ २३ ॥

तलेन पाणितलेन ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स चाणूरः श्येनस्येव वेगो यस्य सः अबाधत अताडयत् ॥ २१ ॥ २२ ॥

ध्वजपताकाद्यलङ्कृतः प्रतिसम्वत्सरमुच्छ्रीयते य इन्द्रध्वजः

अद्यप्रभृति यश्चैवं करिष्यति नरेश्वरः ।
आरोग्यञ्च सुभिक्षञ्च तस्य राष्ट्रे भविष्यति ॥

इत्यादिपुराणान्तरप्रसिद्धस्तद्वदित्यर्थः ॥ २३ ॥ २४ ॥

---

भाषा टीका ।

तब वह चाणूर बाज की नाईं ऊपर को कूदकर दोनों हाथों को जोडकर क्रोधित होकर भगवान् वासुदेव के हृदय में ताडन करता भया ॥ २१ ॥

परंतु उस प्रहार से भगवान् कुछ भी चलायमान नहीं भये जैसे कि माला के मारने से हाथी दुखित नहीं होता है फिर तो भगवान् हरि ने चाणूर को दोनों भुजाओं से उठाकर घुमाया ॥ २२ ॥

उतने ही में वेग से उसके प्राण निकल गये फिर उसको जमीन पर पटक दिया तब वह चाणूर ऐसा पडा जैसा इंद्र ध्वज गिरता है तैसे भूषण केश माला उसके सब खुल गये और गिर पडा ॥ २३ ॥

इसी प्रकार से मुष्टिक ने क्रोधित होकर बलभद्रजी को प्रहार किया फिर बलभद्रजी ने उस पर अत्यंत प्रहार किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अर्दितः पीडितः उर्व्युपस्थे भूतले ॥ २५--२८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वमिन्द्रध्वजदृष्टान्तः ऊर्ध्वात् पतनेऽत्र वृक्षदृष्टान्तो भूमेरेवेति ॥ २५ ॥

लीलया अप्रयासचेष्टया । यतो वाममुष्ट्या तत्रापि सावज्ञं हेलयैवेत्यर्थः ॥ २६ ॥

शलस्तोशलकश्च मल्लन्यायमतिक्रम्य भयान्मिलित्वैवालक्षितयुगपत्तत्पादद्वयाक्रर्षणाय नीचितमस्तकः सन्निति ज्ञेयम् ॥ २७ ॥

युद्धे श्रीकृष्णतः भयुद्धेतु कंसतः प्राणरक्षां कर्त्तुमिच्छव इत्यर्थः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो रामः तमनु समनन्तरं प्राप्तं कूटाख्यं मल्लं सावज्ञं सावहेलनं यथा तथा लीलया वाममुष्टिना ऽवधीत् ॥ २६ ॥

तदैव कृष्णस्य प्रपदा पादाग्रेण ताडितशिराः शलाख्यो मल्लः तोशलस्तु द्विधा विदीर्णः विदारितः उभौ तावेतौ शलतोशलकौ निपेततुः ॥ २७ ॥

इत्थं चाणूरादिषु हतेष्ववशिष्टाः सर्वे प्राणपरीप्सया प्राणानाप्तुमिच्छया जीवितुमिच्छयेति यावत्प्रदुद्रुवुः पलायितवन्तः प्राणपरीप्सव इति पाठे जीवितुमिच्छव इत्यर्थः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उर्व्युपस्थे भूमिपृष्ठे ॥ २५ ॥

सावज्ञम् अनायासम् ॥ २६-२८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अभितो हत इत्यनेनापि यतो बलमस्य भग्नमेव उपकार्येवेति आहननमात्रेण कथं प्राणोद्गम इति आशङ्क्य प्रकारमाह । प्रवेपित

गोपान् वयस्यानाकृष्य तैः संसृज्य विजह्रतुः ।
वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥ २९ ॥
जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः ।
ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥ ३० ॥
हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् ।
न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥ ३१ ॥
निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ।
धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इति। प्रकर्षेण वेपित इति मूर्च्छया परितः कम्पितो जातः ततोऽन्तःक्षोभात् आघातेन सर्वाङ्गे तु रुधिरमेकीभूतं मुखाद्विर्गतं ततः पीडितो जातः यथा प्राणापगमो भवति ततः स्तम्भकस्याभावात् पतितः, बलक्रियापतनपर्यन्तमपि व्यापृतेति ज्ञापयितुं दृष्टान्त उक्तः नावयववियोगे परमकारणनाशात् पतितः किं तु बलमूलकारणयोरेव सामर्थ्यादिति ॥ २५ ॥

तस्मिन् हते कूटो नाम बहुकपटाभिज्ञः युद्धे कूटवत् स्थिरोऽपि बलभद्रं ताडितवान् ततो बलेन लीलयैव हत इत्याह । अत्र न बलव्यापारः किं तु मल्लरसस्योद्गमनार्थं रमणात्मक इति रसोद्गमार्थमेव प्रहर्तास्वर इति लीलयेति च पुरुषकारोऽपि निरूपितः राजन्निति विश्वासार्थं सम्बोधनमलौकिकत्वात् क्रियाशक्तिप्रधानः राम इति बलनामवतः रामनाम्नोऽपि सामर्थ्यप्रतिपादकत्वं वक्तुमिदमुक्तम् ॥ २६ ॥

एवमुभयोर्वधो बलान्निरूपितः अवशिष्टयोर्वधं भगवतः सकाशादाह । तर्ह्येवेति । न तु बलभद्रव्यापारानन्तरं शलतोशलौ हतौ किं तु यदैव कूटो हतः तदैव शलोऽपि चतुर्थः कृष्णपादायहतशीर्षको जातः स हि पादं धर्तुमागतः क्षिपता पादेन हतः तस्मिन्नेव समये तोशलकोऽपि समागतः स तु द्विधा विदीर्णः यदैव उभयोरपि पदव्यापारः साक्षाद्भगवता हताविति वक्तुमेवं वचनमुचितं एवं प्रकारान्तरादपि सम्भवति कृष्णपदापहतं दूरं प्रक्षिप्तं शिरो यस्य तादृशः शलो जातः तेन द्विधा विदीर्णः तस्य शिरसा तोशलको हतः द्विधा विदीर्णः प्रदरवत् न तु भगवत्पदा हत इति अर्थद्वयेऽपि उभावपि निपेततुः सद्यदेव एको विदीर्णः एकस्तिर्यक् द्विधा जात इति विशेषः ॥ २७ ॥

एवं भगवतोऽक्लिष्टकर्मत्वं निरूपितम् । चाणूर इति गणना हतानामक्षिग्रानार्था पञ्चानां मध्ये एकस्मिन्नपि प्राणे स्थिते यथा देहो नापगच्छति तथा शिष्टा मल्ला नापगच्छन्तीति ततः सर्वे स्वप्राणरक्षकाः धनप्राप्त्याशां दूरीकृत्य प्रकर्षेण दुद्रुवुः अयुद्धं कंसाद्भयं युद्धे तु भगवत इति पलायनमेव शरणम् अन्येषां वीराणामपि पलायनं मा भवत्विति मल्लग्रहणं स विशेषे शिष्टानां युद्धं कर्तव्यमिति सर्वग्रहणं ननु सर्वैरेव स्वपौरुषं प्रदर्शनीयं कथमतिक्रम इति चेत्तत्राह । सर्वे प्राणपरीप्सव इति । यदि चाणूरादीन्न हन्याच्चदा अन्येऽपि युध्येरन् न हि धीरा इव मल्लाः प्राणनिरपेक्षं यतन्ते परिपालयितुमीप्सवः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उर्व्युपस्थे भूतले श्लेषद्योतितं गालिप्रदानं च ॥ २५—२८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उर्व्युपस्थे भूतले ॥ २५—२८ ॥

भाषा टीका ।

तब वह मुष्टिक कांपता हुआ मुख से रुधिर को उगिलता हुआ बडा पीडित होकर प्राणों को त्याग करके जैसे पवन के मारे पेड गिरे तैसे पृथिवी के ऊपर गिर पडा ॥ २५ ॥

तिसके पीछे कूट मल्ल आया तिसको प्रहार करने वालों में श्रेष्ठ बलरामजी ने हे राजन्! बडी अवज्ञा से बांयीं मुष्टि से मार दिया ॥ २६ ॥

तिसी वखत शल नाम का मल्ल आया सो श्रीकृष्ण के पाद के प्रहार से मस्तक के फूटने से पेले ही तोसल मल्ल भी दो टुकडा से विदीर्ण होकर दोनों गिर पडे ॥ २७ ॥

इस प्रकार से चाणूर मुष्टिक कूट शल तोशल ये सब जब मर गये तब बांकी जो मल्ल रहे सो प्राण की रक्षा करने की इच्छ से सब भग गये ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वल्गन्तौ नृत्यादि कुर्वन्तौ ॥ २९ ॥

साधु साधु इति वदन्तः ॥ ३०—३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गोपानित्येव प्राक् ततश्च विहृत्येति ज्ञेयम् । आकृष्य आपातप्रवृत्तौ लज्जया स्वयमनागच्छतोऽपि बलादाकृष्य संसृज्य

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मल्लरीत्या मिथो गृहीत्वा वल्गन्तौ मल्लगतिं कुर्वन्तौ तदानीं चैलेयालङ्कारत्वेऽपि रत्ननूपुराविति चरणे प्रतिमल्लाभिमर्दाभावात् गात्रातोदकत्वेन वल्गनपोषकशब्दत्वेनच तदपरित्यागात् । एतद्वयस्याकर्षणादिकं कौतुकार्थं तच्च कंसक्रोधविवर्द्धनमपि ज्ञेयम् ॥२९॥

विप्रेषु मुख्याः साधवश्च ये ते तु तन्महिमज्ञानबलेनाकुतोभयत्वात् साधु साधु साध्विति स्पष्टमेव वदन्तः प्रजहृषुः ॥ ३० ॥

स्वस्यैव तूर्याणि न्यवारयदिति न तु देवानां निवारयितुं शक्तः तदानीं हततेजस्कत्वात् । नच यानि स्वयमवाद्यन्त तानि वा अशक्यत्वादिति भावः । स इति पाठेऽपि स एवार्थः । श्रीविष्णुपुराणे तु पूर्वमेव न्यवारयदित्युक्तं "बलक्षयं विवृद्धिञ्च दृष्ट्वा चाणूरकृष्णयोः । वारयामास तूर्याणि कंसः कोपपरायणः । मृदङ्गादिषु वाद्येषु प्रतिषिद्धेषु तत्क्षणात् । खे सङ्गतान्यवाद्यन्त देवतूर्याण्यनेकशः । जय गोविन्द ! चाणूरं जहि केशव दानवम् । इत्यन्तर्द्धिं गता देवास्तदोचुरतिहर्षिता "इति । श्रीहरिवंशे च । ततःप्रस्विन्नवदनः कृष्णप्रणिहितेक्षणः । न्यवारयत तूर्याणि कंसः सव्येन पाणिना । प्रतिषिद्धेषु तूर्येषु मृदङ्गादिषु तेषु वै । खे सङ्गतानी-" त्यादि । किञ्च । स्वयमेव अवाद्यन्त तूर्यघोषाश्च सर्वश इति । अत्रैकवाक्यतावादकैः पुनः प्रवर्त्तितत्वाज्ज्ञेया निवारणे छलं दर्शयति । वाक्यञ्चेति ह स्फुटं निजादेशश्रवणार्थमिवेति भावः । भोजैर्यादवभेदैः कतिपयैरेव राजत इति तथा सः इति तदानीं सर्वेषामपि तदनादरः सूचितः ॥ ३१ ॥

नियुद्धक्रीडायां मल्लहननाद्दुर्वृत्तौ । युक्तं चानयोस्तदित्याह-यतो वसुदेवात्मजौ पुरान्निःसारयतेत्यपकर्तुमशक्यत्वात् निःसारणशक्यत्वञ्चानयोः प्रायो वनवासिनोर्वनाभिरुचेः स्यादिति गूढोऽभिप्रायः प्रकटस्तु भागिनेयावेताविति दुर्मतिं वसुदेवेन सह सौहृद्यात् तथाप्यज्ञानादेव मच्छत्रुपालनं कुरुत इति बध्नीतेव नतु हन्यातेत्यर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो रामकृष्णौ वयस्यान् सखीन् गोपानाकृष्याहूय तैः संसृत्य सङ्गम्य तूर्येषु वाद्यमानेषु सत्सु चारुणी नूपुरे ययोस्तौ वल्गन्तौ नृत्यादि कुर्वन्तौ ॥ २९ ॥

तदा कंसं विना सर्वे जनाः रामकृष्णयोः कर्मणा युद्धात्मकेन नितरां हृष्टवन्तः तथा साधवो विप्रश्रेष्ठाश्च साधु साध्वित्यूचुः ॥ ३० ॥

इत्थं मल्लवर्येषु चाणूरादिषु हतेष्ववशिष्टेषु पलायमानेषु च सत्सु स भोजराट् कंसः तूर्याणि न्यवारयदिदं वक्ष्यमाणं वाक्यमुवाच ह ॥ ३१ ॥

तदेवाह । निःसारयतेति द्वाभ्याम् । दुर्वृत्तौ वसुदेवस्यात्मजौ द्वितीयान्तमिदं पुरान्निःसारयत निर्वासयत स्वभृत्यान् प्रतीयमुक्तिः गोपानां धनं हरत गृहीत तथा दुष्टा बुद्धिर्यस्य तं नन्दं बध्नीत बद्धं कुरुत ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संसृज्य सङ्गम्य वल्गन्तौ नृत्यन्तौ तौ वीक्ष्य चुतनूपुरौ स्तुततुलाकोटी चुतनूपुराविति केचित् तुलाकोटिस्तु नूपुर इति ॥२९-३१॥
निःसारयत निर्गमयत ॥३२-३३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवांस्तुल्यबलैः क्रीडिष्याम इति पूर्वमेव प्रतिज्ञानात् तेषु गतेष्वपि राजप्रीतिश्चिकीर्षितत्वाद्गोपैः सह मल्लयुद्धं कृतवानित्याह । गोपान् वयस्यानिति । वयस्याःसमानवयसा प्रतीत्या कालकृततुल्यबलाः तेऽपि किञ्चिद्भीता इत्यालक्ष्य स्वयंहस्तेन धृत्वा समाकृष्य विजह्रतुः ननु भगवान्न विहरणार्थं प्रवृत्तः नापि कंसस्यैतदभिप्रेतमिति किमिति विजह्रतुः प्रतिज्ञा तु पूर्व तैः सह युद्धनिषेधार्था न तु बालैः सह युद्धार्थापि उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गात् प्रकरणं नियामकमिति निषेधो वक्तव्य एवेति चेत्तत्राह । वाद्यमानेषु तूर्येष्विति । तेषु हतेष्वपि मल्लानां रसजनकानि तूर्याणि वाद्यमानान्येव जातानीति निमित्तस्य विद्यमानत्वात् लोकप्रतीत्यर्थं लीलया कस्यापि सन्तापो न जात इति लोकानां प्रीत्यर्थं तथा कृतवन्तौ किंच वल्गन्तौ शब्दं कुरुतः मल्लानां जयख्यापकं किञ्च रत्ननूपुरौ च जातौ नूपुरयोरपि जयख्यापकत्वं लोकसिद्धम् ॥ २९ ॥

एतदर्थं कृतं तज्जातमित्याह । जनाः प्रजहृषुरिति । जनाः प्रकर्षेण जहृषुः हर्षं प्राप्ताः सर्वे इति अष्टविधाः मल्लकंसव्यतिरिक्ताः रूपेण तथा जाता भविष्यन्तीत्याशङ्क्याह । कर्मणेति-रामकृष्णयोरुभयोरपि मल्लवधलक्षणेनालौकिकेन कर्मणा सांप्रतं बालैः सह मल्लयुद्धलक्षणेन वा । पूर्वकर्मतुद्भजकमिति न रसोत्पादकं कंसस्यापि सुखमाशङ्क्याह । ऋते कंसमिति । तत्रापि ये विप्रमुख्याः ये वा साधवः भगवत्पराः साधु साध्विति वदन्तो जहृषुः कायिकव्यापारो दर्शनमेव हर्षो मानसः वाचनिकी प्रशंसेति सर्वथा तेषां हर्षो निरूपितः हीनानां प्रशंसा करणमयुक्तमिति विप्रश्रेष्ठाः साधवश्च गणिताः ॥ ३० ॥

मध्ये कियत्कालं यावता गोपैः सह युद्धं तावच्चिन्ताकुलो विचारमूढः स्थितः पश्चात्पुनरत्यावेशेन बहिर्मुखो जात इति निवारणादिकं कृतवानित्याह । हतेष्विति । केचन हताः केचन विद्रुताः तथापि प्रसिद्धत्वेव अपकारः कर्त्तव्य इति विचारितवान् यतो भोजराट् आदौ निमित्तं दूरीकृतवानित्याह । निवारयत्स्वतूर्याणीति । न्यवारयदिति वा इदमग्रे वक्ष्यमाणं वाक्यं चोवाच चकाराद्युद्धार्थं सावधानोऽपि जातः कपटलीला स्वेनैव निराकृता ईश्वरत्वं चाविष्कृतवान् तथा सति यदि नयोर्वैरं दृष्ट्वा तूष्णीं वा अन्तर्गच्छेत् तदा न काचिच्चिन्ता स्यात् अक्लिष्टकर्मा हि भगवान् वसुदेवं मोचयित्वा नयेत् स्थापयेद्वा भक्तद्रोहे वधः स्मृत इति भगवत्प्रतिज्ञेति अक्लिष्टतासिद्ध्यर्थं वक्ष्यमाणमुक्तवान् इत्याश्चर्यं एतावदपि दृष्ट्वा पुनर्निर्लज्ज आज्ञापयतीति ॥ ३१ ॥

तस्यायुक्तवचनान्याह । निःसारयतेति द्वाभ्याम् । भगवति तत्सम्बन्धे च लोके दोषप्रतीतिव्यावृत्त्यर्थं कपटेन वदति यतो दुर्वृत्तौ बालौ च नहि मारणमुचितं युद्धदर्शनार्थमत्र परमाकारितौ वसुदेवस्यैवैतौ अतो भागिनेयाविति निःसारणमेव

वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः ।
उग्रसेनः पिता चापि सानुगः परपक्षगः ॥ ३३ ॥
एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः ।
लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्गमारुहत् ॥ ३४ ॥
तमाविशन्तमालोक्य मृत्युमात्मन आसनात् ।
मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥ ३५ ॥
तं खड्गपाणिं विचरन्तमाशु श्येनं यथा दक्षिणसव्यमम्बरे ।
समग्रहीद्दुर्विषहोग्रतेजा यथोरगं- तार्क्ष्यसुतः प्रसह्य ॥ ३६ ॥

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कुर्वन्तु गोपानां च धनं हरत धनेन तैः पोषिताविति नन्दः अस्मदीयोऽपि भिन्नपक्षो जात इति बध्नीत ननु कोऽपराधो नन्दस्य सहि स्वपुत्रत्वेन जानाति नत्वन्यथेति चेत्तत्राह । दुर्मेधा इति । दुर्बुद्धिरयं विलक्षणं पुत्रं दृष्ट्वा स्वस्माज्जातः कथमेवं भविष्यतीत्याशङ्कायां राज्ञे खलु निवेदनीयं विचारकाणां चतुराणामेषा रीतिरिति तदकरणात् दुर्मतिः अतस्तस्य बन्धनमेव दण्डः ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वल्गन्तौ नृत्यादि कुर्वन्तौ ॥ २९ ॥

विप्रेषु ये मुख्याः साधवो ये ते साधु साध्वित्यूचुः विप्राधमाः कंसपुरोहितास्तु हाहेत्यूचुरिति भावः ॥ ३०-३१ ॥

निः सारयतेत्यादौ सरस्वतीमतेतु दुर्गमं वृत्तं चरित्रं ययोस्तौ पुरात् पुरमध्यास्य निः शेषेण सारं श्रेष्ठं कुरुत गोपानां धनं श्रीकृष्णं हरत अत्रैव रक्षत नन्दं बध्नीत प्रेमरसनयेति शेषः तेन सहाति प्रीतिं कुरुतेत्यर्थः । दुर्गमा मतिर्यस्य तम् ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वल्गन्तौ निःशङ्कं धावमानौ ॥ २९ ॥

साधुसाध्विति वदन्तः ॥ ३०-३३ ॥

---

### भाषा टीका ।

फिर तो भगवान् तथा बलरामजी दोनों अपने सखाओं को खैंचकर विहार करते भये उस समय पर सब बाजा बजते थे और उनके चरणों में नूपुर बजते थे ॥ २९ ॥

उन दोनों के उस कर्म से एक कंस को छोड कर सब मनुष्य बडे हर्षित भये और उत्तम ब्राह्मण लोग साधु साधु इस शब्द से प्रशंसा करते भये ॥ ३० ॥

ऐसे बडे मल्लों के मरने से औरों के भग जाने से भोज राज ने सब अपने बाजों को बंद करवा दिये और इस वचन को कहता भया ॥ ३१ ॥

इन दुर्वृत्त वसुदेव के दोनों पुत्रों को इस पुरी में से निकालो सब गोपों के धनको छीन ल्यो और दुर्मति नंद को बांधद्यो ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अव्ययोऽश्रमः लघिम्ना लाघवेन ॥ ३४-३५ ॥
दुर्विषहमविषह्यमुग्रं तेजो यस्य स श्रीकृष्णः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुदुर्मेधाः पुत्रपरिवर्त्तनादिकौटिल्येन अतोऽसत्तमः स्वपुत्रार्पणप्रतिज्ञाखण्डनात् । वसुदेवस्त्वित्यपि पाठः क्वचित् चकार उक्तसमुच्चये । अपिशब्दात् यद्यपि पिता तथापीत्यर्थः । परपक्षगो वसुदेवाद्यनुगः । वाग् देवी तु यथार्थमाह । दुः दुर्गमं वृत्तं चारित्रं ययोरिति प्रपतितो वर्गः प्रचर्ग इतिवत् कृदन्तपदलोपात् । पुरान्निःसारयत मथुरापुरीमधिकृत्य व्यञ्जयत प्रकाशयतेत्यर्थः । गोपानां धनं श्रीकृष्णं हरत अत्रैव रक्षत । ननु श्रीनन्दो नैनं त्यक्ष्यति तत्राह । दुःखितमार्तिं नन्दं बध्नीत कृष्णद्वारैव समयं विधाय प्रतिबद्धं प्रतिश्रुत्थं कुरुत ततः सुदुर्गमबुद्धिर्वसुदेवो हन्यतां गम्यतां सर्वैराश्रियतामित्यर्थः । न विद्यते सत्तमो यस्मात् सः । तथोग्रसेनोऽप्याश्रियतां परः परमेश्वरस्तत्पक्षग इति ॥ ३३ ॥

विकत्थमान इति । तथा तर्ज्जनस्याप्यात्मश्लाघायां तात्पर्यात् अव्ययः श्रीकृष्णः तन्नामत्वेन प्रसिद्धत्वादश्रम एव सन्नित्यर्थः । लघिम्ना शैघ्र्यातिशयेनालक्षिततयेत्यर्थः । तरसा वेगेनारुहत् आरोहदित्यर्थः ॥ ३४ ॥

आविशन्तं वेगेन मञ्चान्तः प्रविशन्तम् आत्मनो मृत्युं मृत्युमिव अत्यन्तभीत्या साक्षात् मृत्युत्वेन प्रतीयमानमित्यर्थः । मनस्वीति निन्दार्थे विन् "भूमनिन्दाप्रशंसासु,, इत्यादि स्मरणात् निन्दितमना भीत इत्यर्थः । अत एव कंसोऽशक्तोऽपि तस्मिन्नासिचर्मणी द्वे अपि जग्राह ॥ ३५ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

दक्षिणं वामञ्च भागं व्याप्य गतिकौशलेन आशु वेगेन विविधं चरन्तं भ्रमन्तं तत्रानुरूपो दृष्टान्तः यथाकाशे श्येनमिति अनेन दुर्ग्रहत्वमुक्तं तथापि प्रसह्य बलात् समग्रहीत् । कुतः दुर्विषहोग्रः नतु साधारणोग्रः पराक्रमो यस्य स इति । तार्क्ष्यसुतोऽपि दुर्विषान् सर्पान् हन्तीति दुर्विषहा अतएवोग्रतेजाश्च तद्दृष्टान्तेन तु साधारणोग्रः लीलया ग्रहणमपि सूचितम् ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

लघिम्ना लाघवेन ॥ ३४—३५ ॥

तार्क्ष्यसुतः कश्यपपुत्रो गरुडः ॥ ३६—४६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

असत्तमो दुरात्मा वसुदेवः आशु शीघ्रं हन्यतां तथा नोऽस्माकं पिता उग्रसेनश्च परपक्षगः शत्रुपक्षपाती हेतुगर्भमिदं तस्मात्सानुगो हन्यताम् ॥ ३३ ॥

इत्येवं कंसे विकत्थमाने विरुद्धं यथा तथा कथयति सति अव्ययो भगवान् प्रकुपितो लघिम्ना लाघवेन उत्पत्य तरसा बलेनोत्तुङ्गमुन्नतं मञ्चं कंसाधिष्ठितं पीठमारुरोह ॥ ३४ ॥

तदा तत्कालिककर्तव्याभिज्ञः कंसः स्वमृत्युमिवापतन्तं कृष्णमालोक्य सहसा त्वरया आसनादुत्थाय खड्गखेटौ जगृहे ॥ ३५ ॥

असिसह्यमुग्रं तेजो यस्य स भगवान् खड्गः पाणौ यस्य तं दक्षिणवामतोऽम्बरे ऊर्ध्वं च श्येनमिव च चरन्तं कंसं समग्रहीत् यथा तार्क्ष्यसुतः कश्यपपुत्रो गरुडः प्रसह्य बलादुरगं सर्पं गृह्णाति तद्वत् ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

लघिम्ना पक्षिवत् लाघवेन। अव्ययः योगवित् प्रधानपुरुषेश्वर इत्यर्थः ॥ ३४ ॥

मनस्वी धीरः ॥ ३५ ॥

दुर्विषहे च उग्रे च तेजसी बलार्चिषी यस्य स तथेति ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

वसुदेवस्तु मुख्योऽपराधी अतोऽस्माद्विशेषमाह । वसुदेवेति । तुशब्देन बन्धनपक्षं व्यावर्त्तयति । दुर्मेधा इति । स्वयमष्टमो मया आनेय इति प्रतिज्ञायापि नानीतवान् कंस एव मारणीय इति च कपटं कृत्वान्यत्र स्थापितवान् अतो हन्यतामाश्रित्य-विचारेण सतां बन्धूनां हननं निषिद्धमिति चेत्तत्राह । असत्तम इति । सर्वोपास्यराजहननार्थं कृतप्रयत्न इति नन्वेवं सति यादवाः त्वां मारयेयुरिति चेत्तत्राह । उग्रसेन इति । यद्यपि पिता तथाप्युग्रसेनो हन्तव्यः सानुगो देवकसहितः स एव, परपक्षग इति अन्ये अराजकभयात्साधारणत्वाद्वा नापकरिष्यन्तीति भावः । स्वाधिकबलानां हननं दृष्टापि दुर्बुद्धिः ॥ ३३ ॥

अनुनयं परित्यज्य विपरीतं वदति अतो मारणीय इति तस्य दोषं ख्यापयितुं मारणार्थं प्रवृत्त इत्याह । एवं विकत्थमान इति । रजकतुल्योऽयं कंस इति कं प्रति कंसः न कमपीति एवं वदतीति अधिक्षेपविषयत्वादव्ययः स्वतो भयाभावात् प्रकुपितः भक्तानामपकारश्रवणात् लघिम्ना मल्लविद्यायामिवोत्पतनप्रकारेण उत्तुङ्गं स्थूलं मञ्चमारुहत् यत्र कंसस्तिष्ठति अयं हि ततो ऽधःपातनीयः उच्चस्थानोपवेशनाद्यतो वल्गति ॥ ३४ ॥

ततो यज्जातं तदाह । तमापतन्तमिति । उपर्यागत्य पतन्तं तं तदानीमपि यदि प्रपन्नो भवेत्तदापि न मारयेदिति सूचयितुं तत्रापि तस्यातिक्रम उच्यते । स हि पूर्वमेव तथात्मनो मृत्युत्वेन श्रुतवान् तथापि मनस्वी शूरः शूराणामन्तकाले शौर्यमाविर्भवतीति तदा आसनात्सहसोत्थाय आसने उपवेशनमयुक्तमित्याशङ्क्य स्वधर्मविध्यर्थं युद्धे च मरणं क्षत्रियस्योक्तमिति स्वधर्ममिव खड्गचर्मणी जगृहे निकटे तयोरेवोपयोगात् ॥ ३५ ॥

ततो युद्धार्थं यतमानं तं विलोक्य अन्तरिक्षे च युद्धं न युक्तमिति भूमावुत्पन्नत्वात् तं भूमौ पातयितुं गृहीतवानित्याह । तं खड्गपाणिमिति । तस्य महत्त्वाय युद्धकौशलमाह । आशु विचरन्तं श्येनमिव अलौकिकी शिक्षा तदीयोक्ता सह ह्युपरि पतन्नेव दृष्टः अम्बरे च अम्बर एव तं गृहीतवान् ननु प्रहारात्कथं न भयं तत्राह । दुःसहः दुःखेनापि विशिष्टं सहो यस्य असह्यमुग्रं तेजो यस्य अग्रे वा सर्वापेक्षया तेजो यस्य प्रभावसामर्थ्ययोर्विद्यमानत्वात् न भयम् अत एव तेजः सामर्थ्यात् न शस्त्रप्रक्षेपः ग्रहणसिद्धिश्च कालात्मा भगवान् तं मारणार्थमेव गृहीतवानिति दृष्टान्तमाह । यथोरगं तार्क्ष्यसुत इति । प्रसह्य बलादनेन तस्य शरीरव्यापारः प्रतिकूलः सूचितः तथापि गृहीत इति तस्याग्रेऽपि विनयार्थं सामर्थ्यं प्रदर्शितवान् ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

दुर्गमबुद्धिर्वसुदेवो हन्यतां गम्यतां सर्वैराश्रीयतामित्यर्थः । न विद्यते सत्तमो यस्मात् सः परस्य परमेश्वरस्य पक्षं गच्छतीति सः ॥ ३३ ॥

स्वभक्तद्रोहश्रवणात् प्रकुपितः प्रकृष्टकोपेनापि जीवानामिव नास्ति व्ययो यस्य सः लघिम्ना सर्वदृष्ट्यालक्षितमिति भावः ॥ ३४—३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लघिम्ना लाघवेन ॥ ३४-३५ ॥

दुर्विषहमविसह्यं तेजो यस्य सः श्रीकृष्णः ॥ ३६—३९ ॥

---

### भाषा टीका ।

और दुर्बुद्धि असत्तम वसुदेव को जल्दी मारो और पर पक्ष में रहने वाले उग्रसेन पिता को भी भृत्यों सहित मारो ॥ ३३ ॥

प्रगृह्य केशेषु चलत्किरीटं निपात्य रङ्गोपरि तुङ्गमञ्चात् ।
तस्योपरिष्टात्स्वयमब्जनाभः पपात विश्वाश्रय आत्मतन्त्रः ॥ ३७ ॥
कंसोऽपि कृष्णेन जगत्त्रयैकनिवासभूतेन निपात्य सोऽधः ।
तेनात्मतन्त्रेण च पीडितोऽसुं तत्याज राजन्निमिषान्तरेण ॥०॥ इति विज० पाठः
तं सम्परेतं विचकर्ष भूमौ हरिर्यथेभं जगतो विपश्यतः ।
हाहेतिशब्दः सुमहांस्तदाऽभूदुदीरितः सर्वजनैर्नरेन्द्र ! ॥ ३८ ॥
स नित्यदोद्विग्नधिया तमीश्वरं पिबन् वदन् वा विचरन् स्वपन् श्वसन् ।
ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥ ३९ ॥
तस्यानुजा भ्रातरोऽष्टौ कङ्कन्यग्रोधकादयः ।
अभ्यधावन्नभिक्रुद्धा भ्रातुर्निर्वेशकारिणः ॥ ४० ॥

### भाषा टीका ।

कंस के इस प्रकार बकवाद करते ही में अव्ययात्मा श्रीकृष्ण भगवान् बड़े कोपित भये और बड़ी फुर्ती से उछांग मार कर बड़े ऊंचे कंस के मंच पर चढ़ गये ॥ ३४ ॥

अपने आत्मा के मृत्यु रूप उन भगवान् को पैठते देखकर पुरुषार्थी होने से जल्दी से उठकर उसने ढाल तरवार दोनों को उठा लिया ॥ ३५ ॥

तरवार को हाथ में लिये बाज पक्षी की नांई आकाश में दहिने बांये तरफ घूमते हुये कंस को देखकर दुर्विषह उग्र तेज वाले भगवान् ने जैसे गरुड सर्प को पकड़े तैसे जबरदस्ती से कंस को पकड़ लिया ॥ ३६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

गरिष्ठत्वाय विश्वाश्रयत्वमुक्तम् तत्र हेतुः अब्जनाभः कुतस्तथापर्येव पपात यत आत्मतन्त्रः स्वतन्त्रः ॥ ३७—३९ ॥

निर्वेशो निष्कृतिरानृण्यमित्यर्थः । तत्कारिणः सन्तस्तेऽभ्यधावन् ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्यक् ग्रहणमेव व्यञ्जयति । केशेषु प्रकर्षेण दृढं गृहीत्वेति ननु मुकुटयुक्तकेशानां द्रुतं ग्रहणं कथं स्यात्तत्राह । चलत् ग्रहणोद्यम एव सवेगप्रथमस्तकचालनेन विगलत्किरीटं यस्य तं तथा च श्रीविष्णुपुराणे । "केशेष्वाकृष्य विगलत्किरी"टामिति । श्रीहरिवंशे च । "मुकुटश्चापतत् तस्य काञ्चनो वज्रभूषितः । शिरसस्तस्य कृष्णेन परामृष्टस्य पाणिने"ति । अन्यत्तैः । यद्वा । आत्मतन्त्रत्वे हेतुः विश्वाश्रयः तत्र कैमुत्येन हेतुः अब्जनाभः गर्भोदशायिरूपेणांशेनापि भुवनकोषपद्मनाभ इत्यर्थः ॥ ३७ ॥

उपरि श्रीभगवत्पातादेव सम्यक् परेतं सन्तं जगतो विपश्यत इति । केनापि न निवारितमिति सर्वेषामेव सुखमिति च सूचितम् । हाहेति शब्दोऽत्र विस्मये महागुरुस्याप्यस्यावज्ञया वधात् । तथा श्रीविष्णुपुराणे । "ततो हाहा कृतं सर्वमासीत्तद्रङ्गमण्डलम् । अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वर" मिति । नरेन्द्रेति तं हृष्टं दृष्ट्वा स्वयमतिहृष्टः सम्बोधयति ॥ ३८ ॥

प्रसङ्गात् कंसस्य मोक्षमाह । स इति । नित्यदा नित्यमेवोच्चैर्भीतया भयेनाकृष्टया धिया ददर्श । तस्य यद्रूपं नित्यं दृष्टं तदेवाधुनापि स्फुरितं सत् प्रापेत्यर्थः । "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय ! सदा तद्भावभावितः "इति श्रीभगवद्गीतातः पेशस्कारिकीटवदिति भावः । दुरवापमाप । ननु कालनेमिजन्मनि श्रीमदजितेन हतस्याप्यप्राप्तमोक्षस्य तादृशद्रूपस्य तत् कथं घटेत तत्राह । तं निजाशेषैश्वर्यप्रकटनपरमीश्वरमिति ॥ ३९ ॥

अनुजा अनुगा इति वा पाठः तत्तुल्या पवेत्यर्थः ॥ ४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः केशेषु प्रगृह्य दृढं गृहीत्वा चलद्विक्षिप्तं किरीटं यस्य तं कंसमुत्तुङ्गमञ्चाद्रङ्गोपरि निपात्य तस्य कंसस्य उपरिष्टात्स्वयमब्जनाभो भगवान् पपात कथम्भूतः विश्वाधारः अनेन गरिष्ठत्वमुक्तम् आत्मतन्त्रः स्वतन्त्रः संहारकर्तेत्यर्थः ॥ ३७ ॥

ततो जगतो जनस्य पश्यतः सतः परेतं मृतं कंसं भूमौ विचकर्ष यथा हरिः सिंहः इभं मृतं तद्वत् तदा हे नरेन्द्र ! सर्वैर्जनैः सुमहानत्युच्चैर्हाहेतिशब्दः उदीरित उद्घोषितोऽभूत् ॥ ३८ ॥

यतः सदोद्विग्नया भीतया धिया तमीश्वरं कृष्णमेव पानभोजनाद्यवस्थास्वग्रतश्चक्रायुधं ददर्श ततः स कंसो दुरापमपि तदेव रूपं प्राप्तवान् तत्सारूप्यलक्षणां मुक्तिमवापेत्यर्थः ॥ ३९ ॥

ततस्तस्य कंसस्य भ्रातरः कङ्कादयोऽष्टौ भ्रातुर्निर्वेशं निष्कृतिमानृण्यं तत्कारिणोऽतिक्रुद्धा अभ्यधावन् ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्तुङ्गमञ्चादवपतनादङ्गभङ्गः कथं नाभूत्तत्राह । विश्वाश्रय इति । विश्वमाश्रयो यस्येति विग्रहे उकचोद्यानिस्तार इत्यत उक्तमात्मतन्त्र इति अपराधीनत्वात् ॥ ३७-० ॥ ३८ ॥

स कंसः चीर्णपुण्यफलादानार्थं कंसे स्थितो वायुः संसारावस्थायां तद्द्वद्विग्नबुद्ध्या भीतबुद्ध्या अन्यत्र मरणाद्युद्विग्नबुद्ध्या वमीश्वरं ध्यायन्नित्यदाप्यनादौ पुनः दैत्यस्य मृत्युसमये मञ्चेऽग्रतः स्थितं यदच्युतमविनाशि नित्यं चक्रं सुदर्शनमायुधं यस्य स तथा ददर्श हरे रूपमाप आविष्ट इत्यर्थः । अन्यस्त्वच्युतं चक्रं छत्रैवायुधं यस्यास्तमोदेवतायास्तच्चक्रायुधमन्यथाज्ञानसाध्यं यद्दर्श तदेव तमोदेवतायाः रूपं नित्यदुःखलक्षणमाप दुरवापमित्युभयत्र समम्—

चक्रं सैन्ये जलावर्ते रथाङ्गे चक्रराष्ट्रयोः ।
सञ्चारे मण्डले वृत्ते छत्रभेदार्थदम्भयोरिति च ॥

॥ ३९ ॥

भ्रातुर्निर्वेशो निष्कृतिरानृण्यं तत्कारिणः सिंहव्याघ्रौ मृगाधिपाविति च ॥ ४० ॥ ४१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथाप्यचिनीतं पातितवानित्याह । प्रगृह्येति । स हि भगवता स्पृष्टोऽपि न किन्तु केशेषु गृहीतः वैयग्र्यसूचनायाह । चलत् किरीटं यथा भवतीति । ततः सर्वथा सज्जीकृतं रङ्गस्थानमिति स्वपदेन पवित्रमिति भगवदीयरूपसिध्यर्थं तुङ्गमञ्चाद्रङ्गोपरि निपात्य स्वयमपि तदुपरि पतितः यथा अनवहितौ ततः पतितौ भवतः तथा लोकप्रतीतिर्जनिता तत्क्रियायां स्वयमपि व्यापृत इति न क्लिष्टकर्मत्वम् । नन्वेवं कथं पातलक्षणमपूर्वं साधनं कृतवान् न हि शत्रुमारणे स्वयमात्मा साधनत्वेन युज्यते तत्राह । अब्जनाभ इति । स हि कमलनाभो मूलकारणं स्वात्मानमेव सर्वत्र नियुङ्क्ते तथापि अनेनालौकिकपक्षकरणदोषोऽपि निवारितः सर्वेषां च पितृत्वेनोद्धारोऽपि कर्तव्य इति तथा कृतवानित्यर्थः । विश्वाश्रय इति । तस्य भारेणैव मारणं कृतमिति केचित् वस्तुतस्तु तस्यापि भगवानाश्रय इति तस्मै स्वात्मानं दत्तवान् आत्मतन्त्र इति । स्वस्य शङ्काभावाय स हि स्वतन्त्रः उभयत्रापि हेतुरपीडायाम् अनधिकारिणं स्वात्मानं प्रयच्छतीत्यत्रापि ततस्तस्मै स्वात्मदानेन कृतार्थं तं लोकप्रतीत्यर्थं कपटं कृत्वा तिष्ठतीति ॥ ३७ ॥

भ्रान्तानां प्रतीतिसिध्यर्थं च सम्परेतमपि तं विचकर्षेत्याह । तं सम्परेतमिति । सम्यक् परः इतः प्राप्तो येन भगवद्धस्ते वा सम्यक् मृत इति नास्य प्राणा उत्क्रान्ताः किन्तु मूर्च्छया अन्तर्दृष्टौ अन्तर्बहिः यद्रूपं भगवदीयं सर्वदालपते तस्मिन् स्वयं प्रविशन् प्राणानपि प्रवेशितवानिति सारूप्यपक्षे भवति । सायुज्ये तु अस्मिन्नेव शरीरे आत्मनि वा प्राणानां लयः इहैव समवलीयन्ते इति मृत्युर्यस्योपसेचनमिति च श्रुतौ । ततस्तादृशस्य भगवदीयशरीरोत्पत्त्यर्थं विचकर्ष यत्र यत्राङ्गिरेणवः तत्र सम्यङ्कृतवान् अत एव भूमावित्युक्तम् । लोकप्रतीतौ तस्य निकृष्टत्वख्यापनाय विकर्षणं विशीर्णावयवं च विकर्षणेन कृतवानिति ज्ञापयितुं दृष्टान्तमाह । हरिर्यथेभमिति । अल्पमूर्तिः सिंहः स्थूलमपि गजं हत्वा दैवाद्देवायं मृत इति शङ्का भविष्यतीति विशीर्णावयवं यथा भवति तथा कर्षणं करोति तथा दैवगत्या कदाचिन्मृतो भवेदिति शङ्कापरिहारार्थं वस्तुतस्तु हरिः सर्वदुःखहर्ता यथा गजेन्द्रमुपरि नीतवान् तथात्र कंसं भूमौ विशेषेण चकर्षेति विशेषः, अधिकः प्रयत्नो न कृत इति माहात्म्यार्थमक्लिष्टकर्मत्वख्यापनार्थं च प्रमाणमाह । जगतो विपश्यत इति । पितरौ क्लेशिताविति तयोः सन्तोषार्थं विकर्षणमिति केचित् तत्र दृष्टान्तादिकं न सङ्गच्छते स यमुनां प्रापित इति पुराणान्तरं तत्र च विश्रान्त इति किञ्च सर्वेषामेव स मारित इति प्रतीतिर्ज्ञातेत्याह । हा हेति शब्दः सुमहानभूदिति । अयुक्ते तथा शब्दः पित्रोर्हितार्थे तथा करणे सर्वजनानां हा हेति शब्दो नोपपद्येत राजत्वाद्वा अकस्मात्तथा वचनं नरेन्द्रेति सम्बोधनं लोकपीडकेषु रक्षकाणां तथा भवतीति ज्ञापनार्थम् ॥ ३८ ॥

एवं सर्वजनीने तस्य मारणे प्रवृत्ते प्रमेयबलमाश्रित्य तस्य परलोके किं जातमित्याकाङ्क्षायां सारूप्यं वा सायुज्यं वा जातमित्याह । स नित्यदोद्विग्नधियेति । सर्वदैव भयेनोद्विग्नबुद्ध्या तमेव भगवन्तं भयप्रत्यासत्त्या प्रदर्शितेश्वरस्वरूपं चक्रायुधं शङ्खचक्रगदापद्मधरं सर्वावस्थासु पश्यन् तदेव रूपमवाप सदा तद्भावभावितः अन्ते तु तं दृष्ट्वानेव याने हि दुःखनिवृत्त्या सुखेन च विषयप्राबल्यात् सर्वविस्मरणं सिद्धं तथा भोजने विशेषेण चरणे आखेटकादावपि स्वपन् निद्रायां इव सन्मूर्च्छायामपि यत्र पञ्चस्ववस्थासु दर्शनं तत्रोपवेशनादौ न संदेह एव किंच न केवलं स्मरणमात्रं किंत्वग्रतश्चक्रायुधं ददर्श सर्वदेवभयजनको भगवानिति तस्य न भयं निवृत्तम् अतोऽन्तेऽपि सुतरां भगवान्मारयितुं प्रवृत्त इति भयजननात् तदेव रूपं प्रकटीभूतम् अन्तरेवेति विमर्शः बहिः पक्षे उत्क्रान्तिरप्यपेक्षते यद्यपि कालरूपसायुज्यं युक्तं योधानामिव तथापि भावनाया बलिष्ठत्वात् सर्वदा साक्षात् कृतं सदेव रूपमवाप तद्वस्तुतः सर्वेषामेव दुरापम् ॥ ३९ ॥

एवं तस्य भगवदिच्छया तथा समापन्नस्य स्वतो दोषाभावात् गुणस्य च विद्यमानत्वात् सायुज्यमुक्त्वा व्यवहारे शिष्टं कृत्यं वदन् तद्भ्रातॄणां वधमाह । तस्यानुजा इति । तस्य कंसस्य भ्रातरः अष्टौ भ्रातरः कङ्कन्यग्रोध इति सपक्षता महत्त्वनिरूपणार्थं नामद्वयं निरूप्य तदादि भूता निरूपिताः कंसे निहते भ्रातरि जीवति भ्राता परैर्न हन्तव्य इति हते पुनः जिघांसन्तं जिघांसीयादिति न्यायात् भ्रातुर्निर्वेशनं निष्कृतिं कुर्वन्तीति अतिक्रुद्धाः सन्तः अभ्यधावन् कपटेनाकस्मान्मारितायान्नित्यतिक्रोधः एकः कथंचिन्मारितः वयमप्राबल्यत्वे मारक इति कृत्वाबुद्धयः अभिमुख्येनैव धावनं कृतवन्तः निर्वेशो ऋणशोधनं हन्यात् हतो वा भवेत् अन्यथा न निर्वेशः स्यादिति अत्रापि भ्रातेव ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कंसो मृत इति यदा कोऽपि न प्रतीयाय किं तु मूर्च्छितोऽयमिति मन्यते स्म तदा तं विचकर्ष तन्मृत्युं सर्वान् प्रत्याययितुमिति भावः । हाहेति शब्दोऽत्र विस्मये महाशूरस्याप्ययशया

तथातिरभसांस्तांस्तु संयत्तान् रोहिणीसुतः ।
अहन् परिघमुद्यम्य पशूनिव मृगाधिपः ॥ ४१ ॥
नेदुर्दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ।
पुष्पैः किरन्तस्तं प्रीताः शशंसुर्ननृतुः स्त्रियः ॥ ४२ ॥
तेषां स्त्रियो महाराज ! सुहृन्मरणदुःखिताः ।
तत्राभीयुर्विनिघ्नन्त्यः शीर्षाण्यश्रुविलोचनाः ॥ ४३ ॥
शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचतीः ।
विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यथात् यदुक्तं वैष्णवे "ततो हाहाकृतं सर्वमासीत्तद्रङ्गमण्डलम् । अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वर" मिति ॥ ३७-३८ ॥

कंसस्य भयहेतुको भगवदावेश एव सर्वापराधक्षयपूर्वकमोक्षहेतुरासीदित्याह । स इति ॥ ३९ ॥

निर्वेशो निष्कृतिरानृण्यमित्यर्थः ॥ ४०—४३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निर्वेशो निष्कृतिरानृण्यं तत्कारिणः ॥ ४० ॥

---

भाषा टीका ।

तदनंतर सब संसार के आश्रय स्वतंत्र पद्मनाभ भगवान् किरीट जिसकी चलायमान होरही है ऐसे कंसके केशों को पकडकर बडे ऊंचे मंच पर से रंगभूमी में गिराकर आप भी उसके ऊपर ही कूद पडे ॥ ३७ ॥

इतने में वह कंस प्राणों से रहित होगया फिर भी सब संसार के देखते ही जैसे हाथी को सिंह खैंचे तैसे उस कंस को जमीन पर भगवान् खैंचते भये फिरतो हे नरेन्द्र ! सब मनुष्यों के उच्चारण करने से उस समय में बडा भारी एक हा हा कार का शब्द होता भया ॥ ३८ ॥

वह कंस सदा काल उद्वेग को पाकर उसी बुद्धि से खाते पीते बोलते घूमते सोते श्वास लेते आदि समयों में उन्हीं भगवान् श्रीकृष्णचंद्र को ही चक्र धारण किये हुये आगे देखता था तिससे मरने पर सर्व दुर्लभ उसी रूप को प्राप्त होगया ॥ ३९ ॥

उस कंस के भाई छोटे कंक न्यग्रोध आदिक आठ थे सो भ्राता की बदली लेने के वास्ते क्रोधित होकर दौंड ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथा तारगतिरभसो वेगो येषां तान् संयत्तानुद्युक्तान् ॥ ४१-४३ ॥ शोचन्त्यो विलापांश्चक्रुः शुचः अश्रूणि ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथेति तैर्व्याख्यातं । तत्र तादृगिति । कंसरभससदृश इत्यर्थः । यद्वा । तेनातिक्रोधादिप्रकारेणेति । परिघं तत्रैव दैवतः प्राप्तं यद्वा । परिघाकारं गजदन्तमेव ॥ ४१ ॥

विभूतयस्तद्वत्तैश्वर्यास्तत्सेवका इत्यर्थः । स्त्रियोऽप्सरसः ॥ ४२ ॥ सुहृदः पत्न्यादयः ॥ ४३ ॥

वीराणां शय्या युद्धे मरणभूमिः तस्यां शयानान् सुखवत् पतितान् ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदातिरभसो वेगो येषां तानुद्युक्तान् रामः परिघमुद्धृत्याहन् जघान मृगाधिपः सिंहः पशूनिव ॥ ४१ ॥

तदा स्वविभूतिभूता ब्रह्मरुद्रादयः पुष्पैः किरन्तः शशंसुस्तुष्टुवुः स्त्रियो ऽप्सरसो ननृतुः ॥ ४२ ॥

ततः हे महाराज ! तेषां कंसादीनां स्त्रियः पत्न्यः भर्तृमरणेन हेतुना दुःखिताः स्वशिरांसि विनिघ्नन्त्यः अश्रूणि लोचनयोर्यासां तास्तत्र भर्तृसंनिधावाजग्मुः ॥ ४३ ॥

वीरशय्यायां युद्धभूमौ शयानान् स्वभर्तॄनालिङ्ग्य शोचन्त्यः मुहुः शुचोऽश्रूणि विसृजन्त्यः सुस्वरं यथा तथा विलेपुर्विलापं चक्रुः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

विभूतयः हरिविशेषसन्निधानपात्राणि ॥ ४२ ॥ ४३ ॥

वीरशय्यायां रणभूमौ विलेपुः विप्रलापं चक्रुः विसृजन्त्यः ददत्यः

त्यागो विहापितं दानमुत्सर्जनविसर्जने ।

इति हलायुधः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अष्टानामनुकल्प एक एव तान् मारितवानित्याह । तथातिरभसानिति । यथा कंसः अतिवेगवान् एवं ते

हा नाथ ! प्रियधर्मज्ञ ! करुणानाथ ! वत्सल ! ।
त्वया हतेन निहता वयं ते सगृहप्रजाः ॥ ४५ ॥
त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ! ।
न शोभते वयमिव निवृत्तोत्सवमङ्गला ॥ ४६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वं एव अतिशीघ्रमागतास्तान् प्रसिद्धान् तु इति भगवन्मारणपक्षं व्यावर्त्तयाति नाप्युपेक्षाः यतः संयत्ताः शस्त्रपाणयः ननु भगवानेव मारयेत् किमिति बलभद्रेण हतस्तत्राह । रोहिणीसुत इति । देवकी भ्रातरस्ते अतो मातुला भगवता न हन्तव्या इति कंसस्तु अन्येन वधं नार्हतीति कथं चिद्धतः । अविमृश्यकारित्वात् अत एव सशस्त्रान् स्वयमपि परिघप्रायं दन्तमेव गृहीत्वा अन्यद्वा तत्र विद्यमानमायुधमर्गलामेव वा तेन प्रहृत्य मारितवान् पशूनिवेत्यत्रापि संबध्यते यथा लकुटेन पशवो हन्यन्ते तथा सर्वे मारिताः तेषां छेदनं न भविष्यतीत्याशङ्क्य दृष्टान्तमाह । मृगाधिप इवेति । सिंहो हि क्षुधितः भक्षणार्थमेव मारयतीति तथा सर्वे विशीर्णावयवाः कृता इत्यर्थः । अनायासेन मारणे सन्देहाभावे वा दृष्टान्तः ॥ ४१ ॥

एवं सम्भ्रातरि हते देवानामपि परमानन्दो जात इति देवविपक्षवधेन भगवतो धर्मस्थापनमेव जातमिति मातुलदोषपरिहारार्थं देवकृतं पुष्पवृष्ट्यादिकमाह । नेदुर्दुन्दुभय इति । ब्रह्मा ईश्वरश्च आदौ येषां विष्णुर्भगवानेवेति ह्ययवावशिष्टाविति द्वयोर्गणना प्रमेयप्रमाणभूतौ वा तं भगवन्तं प्रीताः सन्तः पुष्पैः किरन्तः शशंसुः दुन्दुभीनां नादनं स्वतन्त्रं तत्प्रेरणायां जातमिति तत्कायिकं भिन्नकर्तृकमपि ब्रह्मादीनां मानसं भवति पुष्पवृष्टिः कायिकी शंसनं वाचनिकं तेषां तु स्त्रियः पुरुषधर्मैस्तुल्या अपि एकदेशेनोक्ताः भगवति स्नेहविशेषात् ननृतुः ननु ब्रह्मणः सर्वतुल्यत्वान्महादेवस्य च कंसो भक्त इति कथं सर्वेषामनुमोदनमिति चेत्तत्राह । विभूतय इति भगवतो विभूतिप्रायाः विभूतिमान् भगवान् अतः स्वामिकृतं तेषामभिनन्द्यमेव ॥ ४२ ॥

भगवान् स्त्रीणां सुखार्थं अवतीर्ण इति कथं तेषां स्त्रीणां सुतरां मातुलानीनां वैधव्यं संपादितवानित्याशङ्क्य तासामति दुःखं न जातं भर्तृदोषस्मरणात् अन्यथा निर्वाहाभावात् भगवत्यादरातिशयाच्चेति वक्तुं तेषां स्त्रीणामुपाख्यानमाह । तेषां स्त्रिय इति । मल्लादीनां कंसादिनवानां च महाराजेति सम्बोधनं नाश्चर्यमेतदिति ज्ञापनार्थं प्रोत्साहनार्थं वा लौकिकमिति कदाचिन्न शृणुयात् सुहृदां भर्तृणां मारणेन अतिदुःखिताः अन्यायित्वेन पतितत्वात् भर्तृत्वमनुक्त्वामित्रत्वमेवाह । पत्ना हि सर्वस्य मित्रमिति श्रुतेः मरणेनैव दुःखिताः यदि भगवांस्तान् बन्दीकुर्यात् तदा दुःखमपि न भवेत् अतः शीर्षाणि विनिघ्नन्त्यः तत्राभीयुः अश्रूणि लोचनयोर्यासाम् अश्रूण्यन्तः करणधर्मो हननमिन्द्रियाणामभिगमनं कायिकं शोककार्यं त्रयमपि कुलस्त्रीणां सभास्वागमनं नान्यदा ॥ ४३ ॥

आगत्य यादृक् दृष्टवत्यस्तदाह । शयानानिति । वीरशय्यायामिति । रणाङ्गणे शय्यायामेव शयने स्त्रीणामाधिकार इति । पतीनालिङ्ग्येति स्नेहोद्गम उक्तः ततः शोचन्त्यो जाताः विलेपुः सुस्वरं यतो नार्यः अन्तःकरणपूर्वकत्वायाह । मुहुः शुचो विसृजन्त्य इति । लौकिक्येका भाषा यथा देवक्यादयः पुत्राद्यपाये रोदनं कृतवत्यः तथा तासामपि जातमिति भगवान् भक्तकृपया तथा कृतवानिति वक्तुमेवं निरूप्यते ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शोचतीः शोचन्त्यः ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथा तादृशः अतिरभसो वेगो येषां तान् ॥ ४१—४३ ॥
शोचतीः शोचन्त्यः विलेपुः विलापांश्चक्रुः शुचः अश्रूणि ॥ ४४—४७ ॥

---

भाषा टीका ।

उस प्रकार बडे यत्न से लडने वाले बडे वेग वाले उनको रोहिणी सुत बलरामजी ने परिघ आयुध उठाकर जैसे सिंह मृगों को मारता है तैसे सबको मार दिया ॥ ४१ ॥

तब तो आकाश में नगारा बजे और ब्रह्मा महादेव आदि जो भगवान् की विभूति हैं वे सब प्रसन्न होकर फूलों की वर्षा करते भये और स्वर्गस्त्रियों ने नृत्य किया ॥ ४२ ॥

हे महाराज ! उन आठ भाइयों की स्त्री सब अपने पतियों के मरण होने से दुखित होकर आंसु गिराती हुई मस्तकों को हाथों से ताडन करती हुई आई ॥ ४३ ॥

वीर शयनों में सोये हुये पतियों को आलिंगन करके सोच करती हुई वारं वार आसुओं को गिराती हुई सब नारी बडे ऊंचे स्वर से रोदन करती भई ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

धर्मज्ञ इत्यादीनि विलापे प्रेमसम्बोधनानि ते त्वदीया वयम् ॥ ४५ ॥

त्वया पत्या विरहिता पुरीयं न शोभत इति सदृष्टान्ताभिधानम् ॥ ४६ ॥

अनागसामिति तु परमार्थाभिधानम् ॥ ४७ ॥

अनागसां त्वं भूतानां कृतवान् द्रोहमुल्बणम् ।
तेनेमां भो दशां नीतो भूतध्रुक्को लभेत शम् ॥ ४७ ॥
सर्वेषामिह भूतानामेष हि प्रभवाप्ययः ।
गोप्ता च तदवध्यायी न क्वचित्सुखमेधते ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एष कृष्णः प्रभवत्यस्मादिति प्रभवः अपियन्त्यस्मिन्नित्यप्ययः स च स च तदवध्यानं तदवज्ञा तत्कर्तुं शीलं यस्य सः ॥ ४८–४९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हा नाथेत्याद्येकत्वं प्रत्येकं पृथग्विलापात् मुख्यत्वेन कंसस्त्रीणामेव तद्वर्णनाद्वा । करुण दयालो ! आ ईषत् प्रहतेऽपि निहताः किं पुनर्मारिते त्वया हतेनेति पाठः क्वचित् । त्वया हतेनैव कर्त्रेति दुःखोक्तिः । गृहैः प्रजाभिश्चापत्यादिभिः सहिताः ॥ ४५ ॥

विशेषेणापुनर्योगतया रहिता निवृत्त उत्सवः गीतवाद्यादिमङ्गलानि च शुभसूचकानि यस्याः सा । नचान्यतस्तत्त सर्वं सम्भवेदित्याहुः । पुरुषर्षभेति । गीर्देवी तु निन्दन्ती अनाथेत्याकारविश्लेषेणैकपद्यात् । तथैवाह पुरुषपशु बलीवर्द काका न शोभते किमिति श्लेषाच्च ऋषभः स्वरभेदे स्यादृष्ववर्गौषधे वृषे । श्रेष्ठार्थे चेति विश्वप्रकाशात् ॥ ४६ ॥

दैहिकव्यवहारमात्रेण ताभिः सह शोचन्त्यः काश्चित् परमार्थदर्शिन्य आहुरनागसामिति द्वाभ्याम् । उल्बणमुत्कटं बहुधा दुर्मारणात् ॥ ४७ ॥

किञ्च सर्वेषामिति तदवध्यायी तदवज्ञातापि किं पुनर्द्रोहीत्यर्थः । सुखं यथा स्यात्तथा नैधते स सदा दुःखेन क्षीयत इत्यर्थः । क्वचिदिह परत्र चेत्यर्थः । इदं तत्स्वभावनिन्दापेक्षयैवोक्तं नतु तादृशानामपि सुखपर्यवसायकभगवत्स्वभावदृष्ट्येति ज्ञेयम् ॥ ४८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूतध्रुक् भूतद्रोही शं सुखम् ॥ ४७ ॥
अवध्यायी अवज्ञाकारी ॥ ४८–५१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

विलापनप्रकारमेवाह । हानाथेति । नाथेत्यादीनि विलापे प्रेमसम्बोधनानि एतेन त्वया सहैव ते त्वदीयाः सगृहाः सप्रजाश्च वयमपि निहतप्रायाः ॥ ४५ ॥

पत्या प्रभुणा त्वया विरहितेयं पुरी हे पुरुषर्षभ ! यथा वयं तद्वन्निवृत्त उत्सवा मङ्गलानि सुखानि च यस्यां सा तथाभूता पूर्ववन्न शोभत इति स्वदृष्ट्योचुः ॥ ४६ ॥

अथ परमार्थदृष्ट्योचुः । अनागसामिति । त्वं निरपराधानां भूतानां दुःसहं द्रोहं कृतवान् तेन कारणेन भो भर्तः ! इमां दशामवस्थां प्राप्तः भूतेभ्यो द्रुह्यतीति तथा सः को वा शं सुखं लभत किं तु दुःखमेवेति भावः ॥ ४७ ॥

किं चैष कृष्णः सर्वेषां भूतानां प्रभवः प्रभवन्त्यस्मादिति प्रभवः स्रष्टेत्यर्थः । अपियन्ति लीयन्तेऽस्मिन्नित्यप्ययः संहर्तेत्यर्थः गोप्ता रक्षिता चातस्तदवध्यायी तस्मिन् विषयेऽध्ययानमवज्ञा तत्कर्तुं शीलं यस्य सः क्वचिदपि सुखं यथा तथा नैधते न वर्द्धते किं तु दुःखमेवाद्ववन्नश्यतीत्यर्थः ॥ ४८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

करुणया नाथन्ते प्रार्थयन्ते इति करुणानाथास्तेषु वत्सल स्निग्ध ! ते तव विद्यमानाः ये पुरासनाथास्ते वयमिति वा ॥ ४५—४७ ॥

प्रभव उत्पादकः अप्ययः संहारहेतुः प्रभवाप्ययौ हि भूतानामिति श्रुतिः यथा सुखं भवति तथा नैधते न वर्धते ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दैहिकव्यवहारमात्रेण ताभिः सह शोचन्त्यः काश्चित् परमार्थदर्शिन्य आहुरनागसामिति द्वाभ्याम् ॥ ४७—५१ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुर्भिर्विलापमाह । हा नाथेति । आदौ तावत् शोचन्ति ततः पुरीं ततस्तेषां दुर्दशां तत ईश्वरापराधेन परलोकेऽपि न सुखमिति । प्रथममात्मानं शोचन्ति हेति । महादुःखे संबोधनानि स्वस्य धर्मादिमत्त्वन्तं पञ्चपुरुषार्थसाधकत्वेन । नाथत्वात् धर्मस्तस्य सेवया सिध्यति प्रियत्वादर्थं साधयति धर्मज्ञत्वात्कामं स्त्रीणां व्रतमनुस्मरन्निव करुणेति तत्कृपया मोक्षो भवतीति । अनाथवत्सलेति । दीना वयं त्वच्छरणं गता इति भक्तिरपि सिध्यति । इदानीं तु त्वया हतेन ते वयं त्वदीयाः सगृहप्रजाः निहताः त्वया निहतेन कयाचित्क्रियया व्यासो भवतु यथा कथंचिन्मरणहेतुः मारक एव भवति । शरीरेण गृहेण पुत्रैर्वा धर्मः सेत्स्यतीति पक्षो निराकृतः यतो वयं सर्वे हता एव ॥ ४५ ॥

ननु मथुरेयं तीर्थभूता अत्र जीवता मृतेन वा मोक्षः साधनीय इति किं भर्त्रपगमे शोकः क्रियत इति चेत्तत्राहुः

**श्रीशुक उवाच**

राजयोषित आश्वास्य भगवान् लोकभावनः।
यामाहुर्लौकिकीं संस्थां हतानां समकारयत् ॥ ४९ ॥
मातरं पितरं चैव मोचयित्वाथ बन्धनात्।
कृष्णरामौ ववन्दाते शिरसास्पृश्य पादयोः ॥ ५० ॥
देवकी वसुदेवश्च विज्ञाय जगदीश्वरौ।
कृतसम्वन्दनौ पुत्रौ सस्वजाते न शङ्कितौ ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे कंसवधो नाम
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

**श्रीमद्वल्लभाचार्यकृतसुबोधिनी।**

त्वया विरहितेति। त्वया पत्या विरहिता इयं पुरी स्वयमेव न शोभते किमन्येषामुपकारं करिष्यतीति भावः। यतो निवृत्तानि उत्सवाः मङ्गलानि च यस्यां तस्मिन्विद्यमान एव उत्सवो मङ्गलानि च प्रवृत्तानि। ननु निवृत्ते तासां दृष्ट्या अमङ्गलमिव प्रतिभातीति वाद्यानां निवृत्तत्वादुत्सवो निवृत्त इति तथोक्तम्। अत एव न शोभते क्षणान्तरे शोभिष्यत इत्याशङ्क्याहुः। वयमिवेति। यथा वयमतः परमशोभायुक्ता एव तथा पुर्यपीति तासां प्रतिभा यतः त्वया पत्या विरहिता यद्यपि पुर्याः पतिर्भविष्यति यः कश्चित्तथापि सको भविष्यतीति जीर्ण पट इव शोभाकरो भविष्यतीति भगवांस्तु पतिर्न भविष्यतीति तासां वचनं सत्यमेव स्वकव्या च ततः परं तदाहुः। हे पुरुषर्षभेति॥ ४६ ॥

ननु स्त्रीणां भाग्ये अवैधव्ये विद्यमाने कथमेवं भवेत् अतो भवतीनामेव दुर्भाग्यान्मृत इति किमिति विलापः क्रियते इति चेत्तत्राहुः। अनागसामिति। निरपराधानां प्राणिनां त्वमुल्वणं पुत्रादिमारणरूपं द्रोहं कृतवान् तेनैवं दुर्मृत्युरूपां दशां नीतः। ननु धर्मोऽपि भूयान् कृत इति। यथा धर्मफलं न जातं तथैतदपि न भवेदित्याशङ्क्य द्रोहस्य विशेषमाहुः। भूतध्रुगिति। अत्यन्तधर्मकर्तापि भूतद्रोहं चेत् कुर्यात् तदा शं न लभेतैव सर्वं धर्मं बाधित्वा द्रोहः स्वफलमेव प्रयच्छतीति ॥ ४७ ॥

ननु राज्ञां द्रोहः स्वाभाविक एव भवतीति कथमन्यरीत्या फलमिति चेत्तत्र विशेषमाहुः। सर्वेषामिह भूतानामिति। राज्ञोऽपि सर्वथा सर्वभूतद्रोहे भवत्येवानिष्टं ततोऽपि तव प्रकारान्तरेण महज्जातमिति तत्फलं तथा यतः सर्वेषामेव भूतानामेष भगवान् प्रभव उत्पत्तिस्थानमप्ययो नाशश्च तेन मध्येऽपि स एव युक्तश्चायमर्थः यतो ब्रह्म भगवान् कारणत्वेनोक्तः अतस्तदवध्याने भूतसाध्यं सुखमिति न कश्चिदपि सुखं भवेत् भूतानां हि भगवानाराध्यः मारकत्वाद्भयजनकश्च गोप्ता च रक्षकः अतस्तद्विरोधे तदात्मकमेव सर्वमिति न कश्चित् सुखं तस्मात्स्वदोषेणैव तवेयमवस्थेति ॥ ४८ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।**

तत्र सुभगा जरासन्धकन्याद्या आहुः। हा नाथेति द्वाभ्याम् सगृहप्रजाः गृहैः प्रजाभिश्च सह वर्त्तमानाः ॥ ४५—४६ ॥

दुर्भगाः शुद्धान्तः करणा आहुः। अनागसामिति द्वाभ्याम् ॥ ४७॥

एष श्रीकृष्णः प्रभवन्त्यस्मादिति प्रभवः अपियन्त्यस्मिन्नित्यप्ययः स च स च अवध्यानमवज्ञा तत्कर्तुं शीलं यस्य सः ॥ ४८ ॥

---

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।**

एष कृष्णः प्रभवत्यस्मादिति प्रभवः उत्पत्तिस्थानम् अपियन्त्यस्मिन्नित्यप्ययः प्रवेशस्थानं स च स च तथा तदवध्यानं कर्तुं शीलमस्यास्तीति तदवध्यायी ॥ ४८—५० ॥

---

**भाषा टीका।**

ये कहने लगीं हा नाथ! हे प्रिय धर्मज्ञ! करुणानाथ हे वत्सल! तुम्हारे मरने से हम भी सब घर पुत्रों सहित नष्ट होगई ॥ ४५ ॥

हे पुरुष श्रेष्ठ! तुम से पति से रहित होने से यह पुरी मंगल उत्सवों से रहित होने से नहीं शोभती है जैसे कि हमारी शोभा बिगडी है ॥ ४६ ॥

आपने विना दोष वाले प्राणियों का बड़ा द्रोह किया है तिससे तुम्हारी यह दशा भई है भूत द्रोह करने वाले को किसी को सुख नहीं होसक्ता है ॥ ४७ ॥

यह कृष्ण तो इस संसार में सब भूतों का उत्पत्ति स्थिति प्रलय करने वाला है रक्षा करने वाला है इसकी अवज्ञा करने वाला कोई भी कहीं भी सुख नहीं पाता है ॥ ४८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका।**

आस्पृश्य ईषत्स्पृष्ट्वा ॥ ५० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

पुत्रभ्रान्तिं विहाय जगदीश्वराविति ज्ञात्वा शङ्कितौ न सस्वजाते नालिङ्गितवन्तौ किन्तु बद्धाञ्जली तस्थतुरित्यर्थः ॥ ५१ ॥

प्रसह्य हत्वा हस्तीन्द्रं मल्लेन्द्रान्मल्ललीलया।
बीभत्सचरितं कंसं सर्वाभत्समहारयत् ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आश्वास्येत्यत्र हेतुः लोकभावनः स्वाभाविक्या दयया सर्वलोकपालक इति। अतएव श्रीविष्णुपुराणे। "बहुप्रकारमस्वस्थः पश्चात्तापातुरो हरिः। ताः समाश्वासयामास स्वयमस्राविलेक्षणः" इति। श्रीहरिवंशे "कंसनारी विलापांश्च श्रुत्वा सकरुणान् बहून्। गर्हमाणस्तथात्मानं तस्मिन् यादवसंसदि। अहो मयातिबाल्येन नवरोपातिवर्त्तिना। वैधव्यं स्त्रीसहस्राणां कंसस्यास्य कृते कृत" मित्यादि। संस्थाम् अन्त्यकृत्यं सा च। स नीतो यमुनातीरमुत्तरमित्यादि श्रीहरिवंशानुसारेण परिज्ञेया। तच्च तासां महाशोकदर्शनपरिहारार्थं तीर्थानामनाविलतार्थं चेति गम्यते ॥ ४९ ॥

अथ तदनन्तरमिति परदुःखासहिष्णुतया आदौ कंसस्त्रीणां पतिदेहेन सह प्रेषणाय व्यग्रत्वात्। सर्वेषु स्वस्वस्थानं गतेषु कोलाहलशान्तिश्च आस्पृश्य सम्यक् स्पृष्ट्वा ॥ ५० ॥

विशेषतो ज्ञात्वेति सम्प्रत्यद्भुतकर्मदर्शनादिना स्मृततज्जन्मवृत्तान्तत्वेन पुनरैश्वर्यज्ञानोद्बोधात् कृतसभक्तिवन्दनावपि पुत्रावपि जगदीशबुद्ध्या भीतौ सन्तौ अन्यस्तैः। यद्वा। न सस्वजाते किन्तु प्रणतौ स्तुवन्तौ च स्थिताविस्यर्थः। तथाच श्रीविष्णुपुराणे। "उत्थाप्य वसुदेवस्तु देवकी च जनार्दनम्। स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थिता" विति। स्तुतिश्च दीर्घा तत्र विद्यते ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थं शोचतीः राजयोषितः सान्त्वयित्वा लोकभावनः लोकं भावयति श्रेयो युक्तं करोतीति तथा तस्यात् हतानां यां लौकिकीं संस्थां दाहादिक्रियामाहुर्मन्वादयो याज्ञवल्क्यादयः तामकारयत् ॥ ४९ ॥

ततो रामकृष्णौ मातरं देवकीं पितरं वसुदेवं च बन्धनान्मोचयित्वा तयोः पादयोः शिरसा ईषत्स्पृष्ट्वा ववन्दाते नमस्कृतवन्तौ ॥ ५० ॥

कृतं सम्वन्दनं याभ्यां तौ पुत्रौ जगदीश्वरौ विज्ञाय न शङ्कितौ कंसभयशङ्कारहितौ सस्वजाते आलिङ्गितवन्तौ ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

संस्थां मृतसंस्कारम् ॥ ४९ ॥ ५० ॥

न सस्वजाते आलिङ्गनं न कुर्वाते। किन्तु बद्धाञ्जली तस्थतुरित्यर्थः ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं तासां सत्यवचनं श्रुत्वा ताः आश्वास्य भगवान् समर्थः आश्वासनेनैव तासां परमानन्दो जात इति अलौकिकं सामर्थ्यं भगवच्छब्दादवगम्यते लोकभावन इति न तस्य शत्रुमित्रोदासीनत्वम् अतः शत्रुस्त्रीणामपि कृत एव भगवतोपकारः तासु कृपयैव परलोकक्रियां कारितवानित्याह। यामाहुर्लौकिकीं संस्थामिति। दाहादिरूपाम् हतानामिति न तासां सह गमनं भगवता आश्वासनस्य कृतत्वात् यद्यपि अस्ति प्राप्तौ दुष्टे तथाप्यग्रे लीलायाः कर्त्तव्यत्वात् नानुमरणे बुद्धिर्दत्ता सम्यगकारयत् तथा शब्दतो नियोगं कृतवान् ॥ ४९ ॥

एवं दुष्टमारणं तत्रातिसंनिहितप्रतिक्रियां च कृत्वा यदर्थमेतावत्कृतं तयोः पित्रोर्लौकिकनिरोधं त्याजयित्वा स्वनिरोधं कृतवान् इत्याह। मातरं पितरमिति द्वाभ्याम्। मुख्यं दुःखं मातुरेव अतः प्रथमं निरूपिता यद्यपि बहव एव बद्धा उग्रसेनादयः तथापि प्रथममेतावेव मोचितौ चकारादेतन्निकटे सेवकाश्च आदौ निरोधात् दूरीकृतवन्तौ अथ बन्धनात् प्रथमं मानसो विमोकः द्वितीयः कायिकः तयोर्वैलक्षण्यप्रतिपादनाय अथेति नियोगानन्तरं वा

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतकार्यत्वेनाव्यग्रत्वाय ततः कृष्णरामौ फलसाधनभूतौ ववन्दाते अभिवादनं कृतवन्तौ । तथैव तौ निरुद्धौ भवत इति शिरसा पादयोरास्पृश्य सत्यलोकादुपरि तौ नीतौ फलं च तयोर्वैयं ननु दुःखनिवृत्तिमात्रं यत्र पुत्रस्य सत्यलोकप्रापणं तत्र पित्रोस्ततो ऽधिकस्थानप्रापणं युक्तमेव । आसमन्तात्स्पर्शनं तु सत्यमाक्रम्य यथागच्छतः तथोपायं कृतवन्तौ ॥ ५० ॥

एवमुक्तप्रफलदानलक्षणस्वगृहनयनेन निषिद्धौ तौ अनधिकारिणौ माभवत इति लोके ज्ञापनार्थं तयोरधिकारमाह । देवकीवसुदेवश्चेति । चकारस्तूक्तसमुच्चयार्थः अन्यतरस्यापि गौणत्वाभावाय कंसादिकमारणेन वैकुण्ठप्रापणेन च प्रत्यक्षतो ऽनुभावं दृष्ट्वा जगदीश्वरावेताविति विज्ञाय कृतसम्बन्दनौ कृतनमस्कारौ भगवन्तौ न सस्वजाते नालिङ्गितवन्तौ यतः शङ्कितौ ईश्वरे हि सम्बन्धिनामपि शङ्का भवत्येव प्रपञ्चः कंसेनैव निराकृतः आसक्तिः स्थितैव फलं साधनं च परं कर्त्तव्यं तत्र फलं वैकुण्ठप्राप्तिः साधनं ज्ञानमिति तयोः पूर्णनिरोधो निरूपितः ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम् एकचत्वारिंशाध्यायविवरणम् ॥ ४१ ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

राजयोषितो दुर्भगा एवं मयि पालयितरि का युष्माकं चिन्तेत्याश्वास्य ॥ ४९ ॥

आस्पृश्य सम्यक् स्पृष्ट्वा ॥ ५० ॥

विज्ञायेति । जन्मसमयस्मृत्या कंसवधाद्यैश्वर्यदृष्ट्या च परमैश्वर्यदृष्टिमन्तौ न सस्वजाते लोकव्यवहारदृष्टिमन्तौ च नापि नमश्चक्राते किं तु शङ्कितौ स्तब्धावेव स्थितौ ॥ ५१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमस्य चतुश्चत्वारिंशोऽप्यजनि सङ्गतः ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न सस्वजाते नालिङ्गितवन्तौ ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुश्चत्वारिंशाध्यायार्थप्रकाशः ॥ ४४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले लोकों की रक्षा करने वाले भगवान् राजा आदि मरेन की स्त्रियों की धीरज आश्वासना करके मरने पीछे जो लौकिक क्रिया कही है तिसको कराते भये ॥ ४९ ॥

इसके अनन्तर माता पिता दोनों को बंधन में से छुडा कर श्रीकृष्ण राम दोनों ने उनके पादस्पर्श करके वंदना किया ॥ ५० ॥

देवकी तथा वसुदेव दोनों ने भगवान् को जगदीश्वर जानने से पुत्रों के वंदन करने पर भी शङ्कित होने से आलिंगन भी नहीं किया केवल खडे रह गये ॥ ५१ ॥

इति श्रीभागवत दशमस्कन्धपूर्वार्धे चौमालीसमें अध्याय की भाषा टीका समाप्त ॥ ४४ ॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

। श्रीशुक उवाच ।

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः ।
माभूदिति निजां मायां ततान जनमोहिनीम् ॥ १ ॥
उवाच पितरावेत्य साग्रजः सात्वतर्षभः ।
प्रश्रयावनतः प्रीणन्नम्ब ! तातेति सादरम् ॥ २ ॥
नास्मत्तो युवयोस्तात ! नित्योत्कण्ठितयोरपि ।
बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन् क्वचित् ॥ ३ ॥
न लब्धो दैवहतयोर्वासो नौ भवदन्तिके ।
यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदम् ॥ ४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम् ।
उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥

उपलब्धार्थौ विदित्वेति । अयमर्थः उप समीपे आवयोः पुत्रबुद्ध्या सांसारिकपरमसुखभोगात्पूर्वमव लब्धार्थावावामीश्वराविति लब्धः प्राप्तः परमज्ञानरूपोऽर्थो याभ्यां तौ तथाभूतौ ज्ञात्वा मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं स्यात् दुर्लभन्तु मयि पुत्रतया प्रेम अत इदानीमेव तज्ज्ञानं माभूदिति निजां स्वाधीनां मायां तयोः प्रसारितवानिति ॥ १ ॥

तदेव दर्शयति । उवाचेत्यादिभिरष्टभिः । प्रीणन्प्रीणयन्सादरं ब्रुवन् ॥ २ ॥

अस्मत्तोऽस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगण्डकैशोरास्तत्तदवस्थानुभवसुखानीत्यर्थः । नाभवन्निति । अस्मत्तः पुत्राभ्यामिति सामानाधिकरण्यं वा ॥ ३ ॥

किञ्च आवामेव दैवहीनावित्याह । न लब्ध इति । पितृगेहस्था बाला यां मुदं विन्दन्ते सा च न लब्धेति ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो भगवतो नौमि बलात् सर्वप्रवर्त्तनम् ।
प्रादिष्णोचः स्वशून्येऽपि श्रीनन्दादीनपि व्रजे ॥

अथ तं सम्परेतं विचकर्ष भूमावित्यारभ्य उवाच पितरावित्येतत्पर्यन्तस्य प्रकरणस्य लीलाक्रमघटनार्थं पचयन्तां विविधाः पाठा इतिपदार्थिक एव क्रमो गृह्यते । तथाहि । प्रथमं तावत् कंसस्य मृत्युप्रत्यायनार्थं रङ्गभूमावेव यत् किञ्चिद्विकर्षणं ततः कंसभ्रातृणां हननं ततः श्रीवसुदेवदेवकीमोचनं तत्रैव ताभ्यां वन्दमानयोस्तयोः सङ्कोचवचनं ततः पर्वतकायस्य कंसस्य यमुनातीरं प्रति नयनासम्भवात् श्रीकृष्णेन स्वयमेव पुनर्विकर्षणं तेन च परिखा जातेति श्रीविष्णुपुराणे प्रसिद्धम् । यथा "गौरवेणातिमहता परिखा तेन कृष्यता । कृता कंसस्य देहेन वेगेनेव महाम्भस" इति । सा चाद्यापि विश्रान्तितीर्थपर्यन्तसङ्गता कंसस्य खातमिति कंसनदीति च प्रसिद्धा दृश्यते । एवं कंसदेहस्य स्थौल्यकाठिन्येऽपि व्यक्ते । ततः कंसादिस्त्रीणां तत्रैव गमनं विलापश्च । ततश्च पितरावुपलब्धार्थावित्यादि । अथ तदिदं प्रकरणं व्याख्यायते । उपलब्धार्थाविति उपोऽत्र हीने । पुत्रभावमयप्रेमतो हीनतया लब्धोऽर्थः पारमैश्वर्यज्ञानं याभ्यां तादृशौ तन्मोचनानन्तरं वन्दनसमये ज्ञात्वा तत्तु मा भूदिति विचार्य जनमोहिनी या माया पुत्राद्यासक्तिरूपा निजां तां स्वविषयिकां ततान । "या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पत्विति" वत् अन्यत्रैः । यद्वा । स्वीयामसाधारणीं कृपां किम्वा स्वविषयिकां पितृभावमयीं कृपां वात्सल्यं तामभिव्यञ्जयति जनानां स्वभक्तानां मोहिनीं यद्दर्शनेन तदानीन्तना यच्छ्रवणेनेदानीन्तनाश्च भक्ताः प्रेममोहं प्राप्नुवन्तीत्यर्थः । एतेन तादृशभावस्य परमपुरुषार्थत्वं ध्वनितं श्रीशुकादीनामपि तादृशभक्तगणान्तःपातात् । यद्वा । तां मायां पुनः कीदृशीं अंशेन जनमोहिनीञ्च किञ्चिदन्यथावचनत्वेन पुरतः प्रणीयमानत्वात् तच्चामू प्रति युक्तमेव । स्त्रीषु नर्म विवाहे च वृत्त्यर्थे प्राणसङ्कटे इत्यादिन्यायात् पुत्रभाव एवानयोः पितृत्वेन स्वीकृतयोर्वृत्तिरिति । वक्ष्यते चेति मायेत्यादौ परिरभ्याप्तुर्मुदमिति ॥ १ ॥

तदेव विवृणोति । उवाचेति । उवाच पितरावेत्येति पूर्वं मोचयित्वा गृहमेव प्रस्थापितौ तावागत्येत्यर्थः । कंसादिसंस्कारार्थ-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मन्यान्नियोज्येति भावः । सात्वतर्षभ इति स्ववंश्यत्वेनानुगृहीतेषु यादवेषु च कृपां विस्तारयितुमुचितोऽयमिति तद्दर्शनया तेष्वपि तां विस्तारितवानिति भावः। तथाच विष्णुपुराणे । मोहाय यदुचक्रस्य विततान स वैष्णवीमिति। साग्रजत्वं तत्साहित्येन तयोरधिकविश्वासाद्यर्थम् । अन्यत्तैः । यद्वा । हे अम्ब तातेत्येवं सम्बोधनेन प्रीणन्तौ प्रीणयन् किम्वा स्वयमेव हृष्यन् सादरमुवाच ॥ २ ॥

हे तातेति प्राधान्यात् । किम्वा ज्ञानपरस्य तस्य स्नेहोत्कर्षमसम्भाव्य पितृवत् मातृवत् स्नेहनिष्ठोदयाय क्वचिदंशांशेऽपि तदिदं कैशोरस्य पूर्वपूर्वावस्थैवोच्यते । अथात्र वर्षक्रमो विचार्यते । क सप्तहायनो बालः क महाद्रिविधारणमिति श्री व्रजवासिवचनेन तद्धारणसमये सप्तहायनत्वं श्रूयते । तद्धारणञ्च तत्पूजासमयकार्त्तिकशुक्लप्रतिपदानन्तरतृतीयायामेव गम्यते वर्षपूरणसमयस्तु गौणभाद्रकृष्णाष्टम्यामिति मासद्वयदिनदशकाधिकेऽपि वात्सल्यात् सप्तवर्षमात्रतां ते प्रोक्तवन्तः तस्मात्तन्मर्यादया पूर्वपूर्वपर्यालोचनया च तदभ्यन्तरलीलावर्षाणि गण्यन्ते। तत्र कालेनाल्पेन राजर्षे इत्यादिदृष्ट्या राजकुमारादिषु दृष्टत्वेन कैमुत्यप्राप्त्या च नासम्भावना कार्या । तत्र सति वर्षे पूर्णे तृणावर्त्तवधः। तृतीयवर्षारम्भे कार्त्तिके दामोदरलीला ततः कतिचिद्दिनान्ते वृन्दावनप्रवेशः । प्रविष्टे च वृन्दावने द्वित्रमासानन्तरं वत्सचारणारम्भः तत्र वत्सबकव्योमवधः । तदेवं तृतीये पूर्णे चतुर्थारम्भे शरदि बालवत्सहरणं तत्र पौगण्डस्य प्रवेशोऽपि यत्कौमारे हरिकृतं पौगण्डे परिकीर्त्तितमिति वचनात्तद्धरणहेतोरनुल्लासेन स्तम्भः पञ्चमारम्भे पौगण्डप्रकाशः तत्र कार्त्तिकशुक्लाष्टम्यां गोचारणारम्भः पञ्चमस्य निदाघे कालियदमनं षष्ठे गोचारणकौतुकमात्रं सप्तमारम्भे कैशोरप्रवेशः तत्रैव पक्वतालावसरे धेनुकवधः । तत्सन्ध्यायां पीत्वा मुकुन्दमुखसारघमित्यादि रीत्या प्रथमतादृशभावाभिव्यक्तिः । कालियदमनधेनुकवधयोर्विपर्ययः प्रतिपन्न एव सप्तमस्य निदाघे प्रलम्बवधः। अष्टमस्याश्विने वेणुगीतं कार्त्तिके गोवर्द्धनोद्धरणमिति क सप्त हायनो बाल इति वचनमनुस्मृत्य स्थापितम्। अथैकादशसमास्तत्र गूढार्चिः सबलोऽ...ादित्यनुसृत्य निरूप्यते अष्टमारम्भे एव कार्त्तिकशुक्लैकादश्यां गोविन्दाभिषेकः द्वादश्याञ्च वरुणलोकगमनं तत्पूर्णिमायां ब्रह्महृदावगाहनं श्रीवराहदेवेन तस्यां तन्महिमकथनात् हेमन्ते वस्त्रहरणं निदाघे यज्ञपत्नीप्रसादः नवमस्य शरदि रासलीला शिवरात्रिचतुर्दश्यामम्बिकावनयात्रा फाल्गुन्यां शङ्खचूडवधः । दशमे स्वैरलीला एकादशस्य चैत्रपौर्णमास्यामरिष्टवधः द्वादशस्य गौणफाल्गुनद्वादश्यां केशिवधः । तच्चतुर्दश्यां कंसवध इति द्वादशस्तत्र न पूर्ण इत्येवोक्तम् । किन्तु नवमान्त एव पूर्णकिशोरता । सा च न व्यवच्छिद्यते कृष्णं मत्वा स्त्रियो ह्रीता निलिल्युस्तत्र तत्र हेति प्रद्युम्नस्यागमनेऽपि तत्साम्यावगमादिति प्रस्तुतमनुसरामः ॥ ३ ॥

नेति नैरन्तर्यमिति(?) नेति नैरन्तारितम्। तत्र किञ्चेत्यस्य न केवलं युवयोरेव हानिः किन्त्वावयोरपीत्यर्थः। अतएव कारणेन व्यावर्त्तितां किन्त्वस्य पुत्रजातीया एवेति ज्ञेयम् । यद्वा मादृशयोरप्रयोजनकयोः पुत्रयोस्तेनापि युष्मत्सुखदत्वं न स्यादेव किन्त्वावयोरेव सर्वसुखहानिर्जातेत्याह । नेति । कर्त्तरि सम्बन्धविवक्षया षष्ठी । अकारप्रश्लेषेणादैवहतयोः कर्माधीनतारहितयोरिति तत्त्वार्थः । पितृगेहस्थत्वादेव पितृभ्यां लालिताः सन्तः । यद्वा । पितृगेहस्था एव स्वभावतो यां मुदं विन्दन्ते विशेषतस्ताभ्यां लालिता इति ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपलब्धार्थौ उपलब्धतत्त्वार्थौ ॥ १—२ ॥

पुत्राभ्यामावाभ्यामावयोः अन्यत्र इत्यतीतकालो गत इत्यर्थः ॥ ३–२९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ पितृसान्त्वनोग्रसेनराज्याभिषेचनोपनयनगुर्वभिगमनविद्याग्रहणगुरुदक्षिणाप्रकारात्मकं चरित्रमुपवर्णयति पञ्चचत्वारिंशेन। विज्ञाय जगदीश्वरौ इत्युक्तं तत्र भगवान्मयि पुत्रे सत्यनयोर्मद्विषयकं ज्ञानं न दुर्लभं किं तु मद्याथात्म्यानुभवादपि मयि पुत्रप्रेमजानन्दोऽतिरिच्यत इत्यालोच्य स्वविषयकयाथात्म्यज्ञानतिरोधायिनीं मायामाततानेत्याह । पितराविति । उपलब्धः विज्ञातः अर्थः निरतिशयपुरुषार्थरूप आत्मा याभ्यां तथाभूतौ पितरौ विदित्वा पुरुषोत्तमः भगवान्माभूदित्यविच्छिन्नं स्वयाथात्म्यज्ञानं माभूदिति जनमोहिनीं निजां मायां ततान विस्तृतवान् आच्छादितवानित्यर्थः ॥ १ ॥

ततः साग्रजः सरामः सात्वतर्षभः भगवान्निजमाययात्मानं केवलं पुत्रमेव मन्वानौ पितरावुपेत्य प्रश्रयेण विनयेनावनतो नम्रः सादरं यथा तथा हे अम्ब ! हे तातेति सम्बोधयन्प्रीतिं जनयन्नुवाच ॥ २ ॥

उक्तिमेवाह। नेति सप्तभिः। हे तात ! अस्मत्तोऽस्मन्निमित्तं नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यां पुत्रयोरावयोर्बाल्याद्यवस्थाः क्वचिद्भवदन्तिके नाभवन् अन्यत्रैवान्कालो गतः न तु युष्मदन्तिक इत्यर्थः ॥ ३ ॥

तदेवाह। न लब्ध इति। दैवेन हतयोर्हतभाग्ययोर्नावावयोर्भवदन्तिके वासो न लब्धः आवामेव भाग्यहीनौ इत्यर्थः । पितृगेहस्था बाला यां मुदम्विन्दन्ति सा च न लब्धेति ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मुरारेर्भगवतो बन्धनशक्तेः प्रकारः प्रतिपाद्यते ऽस्मिन्नध्याये तत्र शुकः कंसवधानन्तरं श्रीकृष्णेन किमकारीति राज्ञो मानसं प्रश्नं परिहरति। पितराविति । उपलब्धः सम्यग्ज्ञातो ऽर्थः वस्तु नित्याप्रतिहतं भगवत्स्वरूपम् अस्मत्सुतौ नेति याभ्यां तौ तथा विधौ ज्ञात्वा माभूज्ज्ञातमत्स्वरूपौ माभूतामिति निरूप्य निजां मायां बन्धकशक्तिं ततान विस्तृतवान् ॥ १ ॥

प्रीणयन्प्रीतिमुत्पादयन् प्रश्रये प्रकृष्टसेवायामवनतो नम्रः ॥२॥

अस्मन्निमित्तं नित्योत्कण्ठितयोर्युवयोः पुत्राभ्यामावाभ्यां

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बाल्यपौगण्डकैशोरा वयोऽवस्थाः पित्रोरानन्दहेतवो नागमन् युष्मत्पुरतो बाल्याद्युचिता लीला न प्राप्ता इत्यर्थः ॥ ३ ॥

अप्राप्तौ निमित्तमाह । नेति । दैवहतयोर्भाग्यहीनयोः नौ आवयोः भवत्समीपे वासो न लब्ध इति यस्मात् ये बालास्ते पित्रोर्गृहे स्थिता यां मुदं विन्दन्ते सापि न लब्धेत्यन्वयः विन्दते इतिछान्दसः "अभयं प्रतिष्ठां विन्दते" इति श्रुतिः ॥ ४ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उपलब्धार्थाविति उपोऽत्र हीने पुत्रप्रेम्णा प्रेक्ष्य दीनतया लब्धोऽर्थः मत्पारमैश्वर्यज्ञानं याभ्यां तादृशौ ज्ञात्वा तच्च मा भूदिति विचार्य्य मायां स्वविषयिकां कृपां वात्सल्यं ततान । तदुक्तं नन्दः किमकरोद्ब्रह्मन्नित्यादौ नेमं विरिञ्चो न भव इत्यादौ च पुनः कीदृशीम् अंशेन जनमोहिनीं च किञ्चिदन्यथा वचनत्वेन पुरतः प्रतीयमानत्वात् ॥ १—५ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साधारणेन सर्वेषां त्रिरूपोऽपि निरूप्यते ।
द्विचत्वारिंशे ऽध्याये निरोधः सर्वसम्मतः ॥
पित्रोरान्तस्तथान्येषां स्वस्यापि च निरूप्यते ।
त्रिरूपे मध्यमं रोधे यादवत्वं प्रयोजकम् ॥
स्वस्य शब्दात्मके रोधः स्वाज्ञायां निखिलस्य च ।
देवे दैत्ये च सर्वत्र कालादिष्वपि सर्वतः ॥

पूर्वाध्याये विशेषतो निरोध उक्तः पित्रोः स चासौ लौकिकः लौकिकोऽपि कर्त्तव्य इति नयोर्बोधनेन तमाह । पितराविति । एकादशभिः । मध्यमत्वाद्गुणैर्ज्ञानभक्तिभ्यां चेति अन्यथा पूर्वस्मादप कर्षः स्यात् लौकिको निरोधः अलौकिके बोधे विद्यमाने न भविष्यतीति तदाच्छादनार्थं मायां विस्तारितवानित्याह । उपलब्धार्थौ पितरौ विदित्वा उपलब्धार्थता मा भवत्विति जनमोहिनीं निजां मायां ततान प्रपञ्चस्येव सर्वे निरोधे । किं बहुना व्यापिवैकुण्ठमपि दत्तवान् तथापि वेषेण क्रीडतीति ज्ञानं न लीलोपयिकम् अतो बाधकत्वात् स माभवत्विति मायाच्छादनं ननु को दोषः स्यात्तत्राह । पुरुषोत्तम इति । मूलभूतः यदि कश्चिदंशः समागच्छेत् तस्य लोके ज्ञानं नात्यन्तं लज्जाकरं भवतस्तु मूलभूतस्य भवत्येव । तत्फलं च भविष्यत्येव भक्तिः परमानन्दस्य तुल्यत्वात् । ननु मायया मोहे न कोऽप्यपकर्षो भवेत्तत्राह । निजामिति । सा हि स्वकीया यथा युक्तमेव कार्यं करिष्यतीति । ननु भगवदतिक्रमे दोषः स्यात्ततो ऽनिष्टसाधकत्वं मामाया इत्याशङ्क्याह । अनयैव मोहयति ननु भगवदीयान् जनेषु च मोहयति न तु भगवति तत्र हेतुर्वा स्वेति तस्याः कार्यानिदर्शनार्थं जनमोहिनीत्युक्तम् ॥ १ ॥

अतः अलौकिकमुपायं विधाय लौकन्यायेन सापराधावेताविति एतस्मिन् कृते वसुदेवो दुःखं प्राप्नोतीति नालिङ्गनं कृतवानिति प्रतीतिमुत्पाद्य तद्दोषपरिहारार्थं तादृशानि वचनान्याह । उपाचेति । नमस्कारं परित्यज्य पत्य निकटे समागत्य यत्र भ इत्थं पश्च न जानातीति तस्यापि दोषः परिहरत्येव इति तत्सहितः सात्वतामृषभः स्वामी भगवद्भक्तानां शिक्षकः सन्मर्यादां शिक्षयन् प्रश्रयेण विनयेन नम्रो बाल इव प्रीणन् प्रीतिमुत्पादयन् आदरपूर्वकमम्ब ताततेति सम्बोधनमुवाच लज्जा सापराधत्वञ्च लोकदृष्टौ सम्भवतः तत्र प्रथमं लज्जा निवारणीया पुत्रः स्वात्मैवेति न तेन कृते मोचने लज्जा भवति अतः पुत्रत्वं ज्ञापयन् अम्ब ताततेति सम्बोधनं कृतवान् उपचारव्यावृत्त्यर्थं सादरं कपट एवोपचारप्रयोगः तथापि तद्धृदये पूर्वस्मृतिनाशेऽपि विपरीता बुद्धिः कथमुत्पद्येत तत्राह । प्रीणन्निति । यथा प्रीतिर्भवति तथा मुखचेष्टां कुर्वन् अवगणनया पुत्रत्वेऽपि बोधिते प्रीतिर्नोत्पद्यते इति विनयप्रकाशनम् ॥ २ ॥

एवं लज्जां दूरीकृत्य अपराधनिराकरणे नास्माभिरपराधः कृत इति वक्तुं तत्साधनाय तयोरपेक्षितत्वं ज्ञापयति । नास्मत्त इति । नित्योत्कण्ठितयोरपि सर्वदा पुत्रयोर्बाल्यपौगण्डकैशोरा द्रष्टव्या इत्याकाङ्क्षा बाल्यादयो मुद इति सन्तोषे हि सर्वस्याकाङ्क्षा भवति पुत्राभ्यामिति पञ्चमी आवाभ्यां पुत्राभ्यां हेतुभूताभ्याम् आवयोः सम्बन्धिनः बाल्यादयः अन्येषां च कीर्त्तिमत्प्रभृतीनां न जाता भगवानुत्पत्स्यत इति श्रवणाल्लोकोपद्रवः इति स्वस्यैव निमित्तता । स्वस्यापि बाल्याद्यदर्शने अक्लिष्टकर्मत्वाय स्वमेवोक्तवान् मां गोकुले नयेति अतः स्वयमेव निमित्तं समर्थावुपेक्षां कृतवन्तावित्यपि स्वधर्मपरिपालनं हि गोप्यता अक्लिष्टकर्मता स्वस्यैव रक्षणीया पित्रोस्तु बाधिकैव अतः स्वनिमित्तमेव बाल्यादीनामननुभवः ॥ ३ ॥

यद्यपि भवतां सुखाभावः तथाप्यस्माकं भूयान् क्लेशो भवतामल्प इति निरूपयति । न लब्ध इति । दैवहतयोः दैवं हतं याभ्याम् अर्थाद्भवदीयं ब्रह्मणो हि नादृष्टं दैवप्रेरितयोर्वा तथाप्यन्यथा प्रत्यायकः शब्दः मोहिकया मायया जनित इति न भगवद्वाक्ये बाधितार्थत्वविरोधः परोक्षता तु व्याख्यातैव लौकिकीयं भाषा अतो भगवान् गोप्य एव सर्वथा विशेषेपीति फलिष्यति । भगवतापि बाल्यमाविष्कृतमिति तथादृशं लोके प्रशस्तं भवति तादृशं प्रकटीकर्त्तव्यम् इदं त्वस्मिन्वंशे विकलमिति श्रुत्वा यथार्थतापि भवति आत्मत्वेन तद्धर्माः परिगृहीता इति ऐक्यानिरूपणमिति न दोषाय स्वबाल्यस्य लोकप्रसिद्धत्वात् कथं विकलेत्याशङ्क्याह । यां बाला इति । लोकानां सन्तोषे हेतुर्बाल्यं यद्यप्यस्मदीयं तथाप्यस्मत्संतोषहेतुर्न भवति नन्दादिषु तथा हृदयं न प्रकटीकृतमिति सहजो धर्म्मस्तेषु नोत्पन्नः कृत्रिमो हि न सुखदायी अन्यथा बन्धनं न कुर्यात् भारे वा भूमौ न स्थापयेत् तस्मात् सुष्ठूक्तं पितृगेहस्था एव बालाः पितृभ्यां लालिताः मुदं विन्दन्तीति । मुदमित्येकवचनं सर्वेषां बालानां तुल्यत्वाय तेनान्ये उत्कर्षहेतवो धर्माः स्थिता अथ प्रयोजका इति निरूपितम् ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वपित्रोः सान्त्वनं कंसताते राज्यं प्रजेशितुः ।
समाधिं पञ्चचत्वारिंशे स वासं गुरौ व्यधात् ॥

उपलब्धोऽर्थः अस्मदैश्वर्य्यज्ञानरूपं धनं याभ्यां तथाभूतौ पितरौ ज्ञात्वा माभूदिति स चार्थोऽनयोर्मास्तु किं तु

सर्वार्थसंभवो देहो जनितः पोषितो यतः ।
न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तदावरको वात्सल्यप्रेमैव संप्रत्यस्तु मम चानयोश्च तेनैव परमानन्दलाभादिति मनसि विमृश्य निजामन्तरङ्गां मायां स्वैश्वर्य्यज्ञानमावरीतुं योगमायां ततान जनमोहिनीं "ध्रीयमानं न गृह्णन्ति विना मत्सेवनं जना" इत्यत्र जनशब्देन भक्ता एवोक्तास्तान्मोहयितुं शीलं यस्यास्तां यद्वा जनयत इति जनौ जननीजनकौ तयोर्मोहिनीं श्रीस्वामिचरणाश्चात्र मयि प्रसन्ने सत्यनयोर्ज्ञानं नाम किं दुर्लभं स्यात् दुर्लभं तु मयि पुत्रतया प्रेमेति भगवदभिप्रायमाङ्कुरत एव पितरौ वात्सल्य-रसं ग्राहयितुमग्रिमश्लोकेषु तयोः कपटोक्तिरपि न दोषायेति ज्ञेयम् ॥ १ ॥ २ ॥

अस्मत्तः अस्मद्धेतोर्नित्यमुत्कण्ठितयोरपि युवयोः पुत्राभ्यमा-वाभ्यां कृत्वा बाल्यपौगण्डकैशोरास्तत्तदवस्थानुभवलालनादि-सुखानि पुंस्त्वमापि ननु क चातिलघुकुमाराङ्गौ किशोरौ नाप्तयौवनाविति पुरस्त्रीणामुक्तेः कथं कैशोरस्यातीतत्वमुच्यते "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशात् यौवनं तु ततः पर"मितिवचनात् पञ्चदशवर्षपर्य्यन्तमेव कैशोरं कृष्णस्त्वेकादशवर्षवया एव कंसं जघान "एकादशसमास्तत्र गूढोऽर्चिः सबलोऽवस"दित्युद्धवोक्तेर्व्रजभूमावुपनयनाभावाच्चात्यस्तदानीं तयोः कैशोरस्यारम्भ एव न तु शेषोऽपीति सत्यं यद्यपि सामान्यतो वयोगणना ईदृश्येव तथापि "कालेनाल्पेन राजर्षे रामः कृष्णश्च गोव्रजे । अघृष्टजानुभिः पद्भिर्विचक्रमतुरञ्जसे"त्युक्ते राजकुमारा-दावपि क्वचित् क्वचिदतिसुखिनि पौगण्डवयस्यपि शरीरवृद्धि-मतिकैशोरस्यैवादर्शनात् कृष्णे तु कैमुत्यप्राप्तेर्वैष्णवतोषणी भक्तिरसामृतानन्दवृन्दावनादिमतमनुसृत्यैवं व्यवस्थेयं मासचतु-ष्टयाधिकवर्षत्रयस्यैव कृष्णे पञ्चवर्षीयमाणत्वात् तत्प्रमाणं प्रथमं वय एव कौमारं तत्र कृष्णस्य महावने स्थितिः ततः परमष्टमासाधिकषड्वर्षपर्य्यन्तं वयः पौगण्डं तत्र वृन्दावने स्थितिः ततः परं दशवर्षपर्य्यन्तं कैशोरं तत्र नन्दीश्वरे स्थितिः ततः सप्तमे मासि चैत्रे कृष्णत्रयोदश्यां मथुरागमनं चतु-र्दश्यां कंसवध इति तत्र दशमवर्षे तु शेषकैशोरं तत्रच नित्यस्थितेरतस्तदनन्तरं सर्वकालमेव तस्य कैशोरमेव ज्ञेयं कृष्णं मत्वा स्त्रियो ह्रीणा निलिल्युस्तत्र तत्र हेति किशोरस्य प्रद्युम्नस्यागमने तत्साम्यावगमात् सन्तं वयसि कैशोर इति सामान्योक्तेश्च आगमादिष्वपि विंशाक्षरादिमन्त्राणां द्वारकाली लामयध्यानेष्वपि तथा दृष्टेश्च तस्मात् कंसवधदिने तस्य कैशोरागमः कैशोरानपगमश्चेति कृष्णस्य पुरस्त्रीणां च वाक्यं संगच्छते स्म ॥ ३ ॥

किं चावामेव भाग्यहीनावित्याह । नेति । दैवहतयोर्हतभा-ग्ययोर्भाग्येन प्राप्तयोरिति वास्तवोऽर्थः । तृतीयार्थे षष्ठी बाला यां मुद विन्दन्ते सा च न लब्धेति शेषः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ पञ्चचत्वारिंशेऽध्याये वसुदेवनन्दादिसान्त्वनोग्रसेनराज्या-भिषेकोपनयनगुरुगृहवासतत्परिचर्यादिरूपं भगवच्चेष्टितं वर्णयति पितराविति । उपलब्धः सर्वजनकः श्रीकृष्णो नास्मत्पुत्र इत्येवं बोधरूपोऽर्थो याभ्यां तौ तथाभूतौ विदित्वा पुत्रभावेनातिदुर्लभेन मां भजमानयोरनयोस्तादृशबोधरूपो ऽर्थो माभूदिति निजां मायां तयोस्ततान ॥ १ ॥

तदनन्तरमुवाच प्रीणन् प्रीणयन् हे अम्ब ! हेतातेति सादरं संबोधयन् ॥ २ ॥

किमुवाचेत्याकाङ्क्षायामाह । नास्मत्त इत्यादि । हे तात ! अस्मत्तः अस्मन्निमित्तं नित्योत्कण्ठितयोरपि युवयोः अवाभ्यां पुत्राभ्यां कृत्वा बाल्यपौगण्डकैशोराः तत्तदवस्थानुभवविनोदाः कचि-त्कास्माश्चन्निमित्ते सति नाभवन् ॥ ३ ॥

किंच । दैवहतयोरिव नौ आवयोर्भवदन्तिके वासो न लब्धः । यां पितृगेहस्था बाला विन्दन्ते सा च न लब्धेत्यन्वयः ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले पुरुषोत्तम भगवान् ने जब पिता माता दोनों को अपने चरित्र से ज्ञान उत्पन्न देखा तब इनको ऐश्वर्य ज्ञान मत होजावे इस इच्छा से पुत्र प्रेम बढाने के लिये जनों की मोहने वाली माया का विस्तार किया ॥ १ ॥

सात्वतवंशियों में श्रेष्ठ भगवान् बडे भ्राता के सहित प्रेम से नम्र होकर पिता माता के पास जाकर बडे आदर से, हे माता हे तात इस प्रकार बोले ॥ २ ॥

हे तात ! आप दोनों सदा बडे प्रेम से उत्कण्ठित रहे तौ भी आपके सामने हम दोनों पुत्रोंके बाल्य पौगंड कैशोर अवस्था कभी नहीं भई कि जिनका सुख आप को होता ॥ ३ ॥

हम दोनों के ही प्रारब्ध हीन होने से आपके पास हमारा निवास नहीं होने पाया जिस वास से कि बालक सब पिता माता के घर में रह कर लालित होने से आनंद को प्राप्त होते हैं सो भी नहीं भया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका

एवं तयाश्लोकत्रयेण युवयोरावयोश्च कामहानिर्जातेत्युक्तमावयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह । सर्वार्थसम्भव इति । सर्वेषां धर्मादर्थानां सम्भवो यस्मिन्स देहो यतो याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शत-सम्वत्सरमात्रेणाऽऽयुषा न प्राप्नोति ॥ ५ ॥

यस्तयोरात्मजः कल्प आत्मना च धनेन च ।
वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ६ ॥
मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ७ ॥
तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः ।
मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तन्मध्येऽपि तु यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न सम्पादयेत्तं प्रेत्य लोकान्तरे यमदूताः स्वस्यैव मांसं खादयन्तीति ॥ ६ ॥

किञ्च मात्रादिशुश्रूषामकुर्वन् विफलजीवितश्च भवतीत्याह । मातरमिति । अबिभ्रदपुष्णन् श्वसन्नपि मृततुल्य एवेति ॥ ७ ॥

तत्तस्मान्नौ आवयोः मोघं व्यर्थम् अनर्चतोरपूजयतोः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जननपोषणे पृथगेव कारणे विवक्षिते ताभ्यां पोषणाभावात् ॥ ५ ॥

यस्तयोरित्यत्र टीकायां तन्मध्येऽपि त्वित्येव पाठः नतु पितुरिति स्वस्य तस्यैव मांसं तं खादयन्ति ॥ ६ ॥

वृद्धं कुलवृद्धं कल्पः समर्थोऽपि श्वसन्मृत एव अकल्पस्तु सुतरामित्यर्थः ॥ ७ ॥

तदेवात्मनो निर्दिशति । तदिति । अकल्पत्वे हेतुः कंसादिति । वां युवाम् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं युवयोरावयोश्च कामहानिर्जातेत्युक्तम् अथावयोः पुनर्युष्मत्परिचर्यालोपेन धर्महानिरपि जातेत्याह । सर्वार्थसम्भव इति । सर्वेषां पुरुषार्थानां धर्मादीनां सम्भवो यस्मिन् स देहो यतो याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्वेशं निष्कृतिमानृण्यं मर्त्यः शतवर्षमात्रेणाप्यायुषा नैति नाप्नोति ॥ ५ ॥

तन्मध्ये पितुर्यः पुत्रः कल्पः समर्थः सन्नात्मना देहेन धनेन च पित्रोर्वृत्तिं जीविकां न दद्यान्न कल्पयेत्तं प्रेत्य लोकान्तरे यमदूताः स्वस्यैव मांसं खादयन्ति हि ॥ ६ ॥

किञ्च समर्थोऽपि मात्रादीन् यथोचितमबिभ्रन्न पुष्णाति सः श्वसन्मृतः जीवन्नपि मृतप्रायः ॥ ७ ॥

तत्तस्मान्नित्यं कंसादुद्विग्नं भीतं चेतो ययोस्तयोर्वां युवयोरनर्चतोरपूजयतोः वामिति कर्मणः सम्बन्धविवक्षया षष्ठी असमर्थयोर्नावावयोर्मोघं वृथा बहव एते दिवसाः व्यतिक्रान्ताः यद्वा वामिति द्वितीया युवामनर्चतोस्तत्र हेतुरकल्पयोस्तत्रापि हेतुर्नित्यं कंसादुद्विग्नचेतसोर्नावावयोर्मोघमेते व्यतिक्रान्ता इत्यन्वयः कंसादुद्विग्नचेतसोरित्यनैश्वर्यमभिनयतोरुक्तिः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वेषामर्थानां मोक्षादिपुरुषार्थानां सम्भव उत्पत्तिर्यस्मात्सर्वार्थसम्भवो देहो याभ्यां जनितः पुनः पोषितश्च तयोः पित्रोः शतायुषा वर्षसहस्रेणापि निर्वेशं निष्कृतिं न याति मर्त्यः अल्पायुः ॥ ५ ॥

अल्पायुश्चेत्कथं निष्करोतीत्यतो यावदायुःपितृपरिचर्या कार्या अन्यथाऽनर्थः स्यादिति वक्ति । यस्तयोरिति । यस्तयोः पित्रोः आत्मना प्रेषितपुरुषमन्तरेण स्वयमेव धनेनालम्बुद्धिजनकेन च द्रव्येण च वृत्तिं जीवनं न दद्यात् तं प्रेत्य यमलोके स्वमांसं खादयन्ति यमभटा इति शेषः आत्मज औरसोऽपि निर्धनश्चेत्किं कुर्यादित्यत आह । कल्प इति । देहेन धनेन च कर्तुं समर्थ इत्यर्थः । हिनाऽत्र वृद्धौ च माता पितराविति स्मृतिं प्रमाणयति ॥ ६ ॥

सूचितस्मृतिमर्थतः प्रतीकयति । मातरमिति । मातरं सर्वावस्थासु न त्याज्यां पितरं वृद्धं जरसा ग्रस्तं भार्यां भरणयोग्यामपि साध्वीमक्षतव्रतां सुतं शिशुं स्वजीवनप्रवृत्तावसमर्थं गुरुं ज्ञानोपदेष्टारं विप्रं ज्ञानपूर्णं प्रपन्नं शरणागतं च एतानबिभ्रद्भरणमकुर्वन्सः श्वसन्नपि जीवन्नपि मृतः मृतकल्प इत्यर्थः । कञ्चन वृद्धं काञ्चन साध्वीं कञ्चन शिशुं प्रेक्षायां शयानं कञ्चन विप्रमिति पृथग्वान्वेतव्यमिति ॥ ७

नन्वेवमस्तु प्रकृते किमिति तत्राह । तन्नाविति । यत एवं शास्त्रार्थस्तस्मात्कंसात् कसि हिंसायामिति धातोः सर्वहिंसाधिकरणत्वेन तन्नाम्नो भोजपतेर्नित्यमहोरात्रमुद्विग्नचित्तयोः अत एव वामनर्चतोः परिचर्यामकुर्वतोः अकल्पयोः शक्तिसामग्रीहीनयोः नौ आवयोः एते इतः पूर्वे दिवसाः मोघं व्यतिक्रान्ता इत्यन्वयः ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कल्पः सर्वेन्द्रियपाटवयुक्तोऽपि श्वसन्मृत एव । अकल्पस्तु सुतरामेवेत्यर्थः ॥ ६ ॥ ७ ॥

तदेवमात्मनो निर्दिशति अकल्पत्वे हेतुः कंसादिति ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपेक्षाशङ्का तु न कर्त्तव्यैव लोकतः स्वार्थमेवापेक्षितत्वात् वेदे तु तस्य बाधकत्वात्तदाह । सर्वार्थसंभव इति । सर्वे अर्था धर्मादयः अस्मिन्नेव मानुषशरीरे सम्भवन्ति तथा

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लीला अपि सामान्योक्तेः नात्यन्तं भगवत्परता वक्तव्या जनितः पित्रा पोषितो मात्रा आवश्यकपोषो हि तथैव भवति अथवा उभाभ्यां जनितः पोषितश्च भवति यथोपयोगं यतो याभ्यां यस्माद्वा तयोर्निर्वेशं निष्कृतिं प्रत्युपकारं शतायुषापि न भवति । मर्त्यं इति मरणधर्मा स हि कालेनोपद्रुतः स्वयमेवासमर्थः जीवनेऽपि तयोः कमुपकारं करिष्यति अथवा नायमनृणः यतो मर्त्यो म्रियते न हि दोषाभावे म्रियते वर्षाणां शतेनाप्यानृण्यं न भवतीति । पूर्णमायुर्भुक्त्वापि म्रियते अन्यथा अग्रेऽपि जीवेत् पापेन हि दुःखमेव अन्यथा पुण्यपापोपभोगः सर्वत्रैव नियत इति एतच्छरीरत्याजनेन पुण्यपापयोः कः उपकारः स्यात् आनृण्ये तु तावत्कालं प्रतीक्ष्य तदधिकारिणः स्वसन्तानान् तं दूरीकुर्वन्ति तस्मान्मर्त्यता युक्ता भवति । शतायुषेति—परमावधिः कालस्य शतवृत्ताावप्यनुपयोगे अग्रे नोपयोग एवेति तन्निवृत्तिः तत्रत्यानां देवानां पूर्वमेवाकाङ्क्षानिवृत्तौ शीघ्रं मरणम् अन्यथा तु ततोऽप्यधिकं जीवनमिति शतसंख्या उपलक्षिका ॥ ५ ॥

तत्र विशेषमाह । यस्तयोरात्मज इति । तयोः पित्रोः शरीराज्जातो न करोत्येव तयोर्निष्कृतिं बुद्धिपूर्वकं तिष्ठत्वन्यत् यो वृत्तिं जीविकां न दद्यात् तं प्रेत्य परलोके मृत्वा स्थित्वा प्रकर्षेण पत्यागत्य वा स्वमांसं तस्यैव मांसं खादयन्ति युक्तश्चायमर्थः तदुद्भवेन शारीरेणोत्पादितं तदीयमेव भवति यथा दासकृतं स्वक्षेत्रोद्भवं वा तद्वत् स्वार्थमेव नियोगं कुर्यात् शरीरं पोषयेत् परलोकं वा साधयेत् तदा अविशेषात् शरीरेणापि तदुद्भवेन तत्साधयतु मुख्यत्वाच्च तस्मादयमेव दण्डो विहितः । निष्कृतिश्च भवति तदीयमनेन भक्षितमिति परस्वमक्षक एव भवेत् ननु तेन किञ्चित् अतो देवास्तदुपकारार्थं वृद्धयभावाय निष्कृतेश्च सम्भावना नास्तीति तन्मांसमेव तं खादयन्ति । यो हि वृत्तिमेव न दधाति स किमन्यत्करिष्यतीति । एवं सामान्यविशेषप्रकाराभ्यां पितृविषयकं दैविकबाधकमुक्त्वा प्रसङ्गात्सामान्यतः तेषां पोषणाभावे जन्मैव निष्फलमिति मृत एवेति मृतवत् तादृश उपेक्षणीय एव स्वस्य जन्मवैयर्थ्यभयात् बुद्धिमांश्च नोपेक्षां करिष्यतीति ॥ ६ ॥

अपालने जन्मवैफल्यमाह । मातरं पितरमिति । पितृविशेषणं वृद्धमिति । अन्यथा स एव समर्थः माता त्वग्रिमविशेषणरहितापि पोषणीया साध्वीति भार्या विशेषणं शिशुमिति सुतस्य उपनीतः पश्चाद्भिक्षादिना स्वयमेव स्ववृत्तिं संपादयिष्यति । गुरुं विप्रं पुरोहितमितिं यावत् अयं धर्मः क्षत्रियाणां तथैव प्रपन्नं च शरणागतं पृथगुपदेशात् शरणसाहचर्याच्च विप्रपदमुभयत्र सम्बध्यते कल्पः अबिभ्रत् श्वसन्नेव मृतो भवति श्वासमात्रं तस्य परं न तु जीवनोपयोगोऽन्यः कश्चन अतो दोषत्रयेण स्वस्यैवायमपराधः ॥ ७ ॥

तेन चाकार्यं न तु भवतां काचित्क्षतिरिति निरूपयति । तन्नावकल्पयोरिति । तत्तस्मात्कारणाद्वाधकस्य ज्ञानस्य विद्यमानत्वात् नौ आवयोरकल्पयोरेव बाधकान्तराभावात् एते दिवसा मोघं व्यतिक्रान्ताः पुरुषार्थसाधका न जाताः तत्र हेतुः वामनर्चतोरिति । युवयोरर्चामकुर्वतोः असामर्थ्यं लोकरीत्या देशान्तरे स्थितः असमर्थौ भवत्येव बालत्वाच्च यद्यपि लीलयैवार्चा भवति तथापि कंसान्नित्यमुद्वेग इति न तत्सम्पन्नमित्याह । कंसादिति । स हि नित्यं पूतनादिदैत्यान् प्रेषयति तत उद्वेगः वस्तुतस्तु युवयोर्निमित्तं स हि कदा वा भवत्स्वरूपं ज्ञात्वा उपद्रवं कारयिष्यतीति अत एवान्ते तथैव जातम् अत एवैते दिवसा भवदुपयोगाभावात् मोघा जाताः वां युवामनर्चतोः नमस्कारादिना महत्त्वात् पूजादिना च ॥ ८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वेषां धर्मार्थार्थानां संभवो यस्मिन् स देहो यतो याभ्यां निर्वेशम् आनृण्यम् ॥ ५ ॥

यस्तु कल्पः समर्थः शास्त्रविधिना दातुं योग्यः कर्मवर्त्मनि स्थितः इति यावत् वृत्तिं जीविकां तं प्रेत्य मृत्वा वर्त्तमानं यमदूताः स्वस्य तस्यैव मांसं बलात् तं खादयन्ति ॥ ६ ॥

अबिभ्रत् अपुष्णन् ॥ ७ ॥

तत् तस्मात् नौ आवयोः अकल्पयोः अत्राकल्पशब्दः केवलासमर्थस्यैव वाचकः तत्र हेतुः कंसादिति अत एव मोघमिति दोषोक्तिः न विद्यते कल्पो याभ्यां तयोः कंसात् कंसमाकर्ण्य युद्धोत्साहवशात् नित्यमुदीरत एव विग्नचेतसोः पुरीप्रतिचलितचेतसोः ओविजी भयचलनयोः मोघमित्यादि काकुक्तिरिति वास्तवोऽर्थः ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतो याभ्यां जनितः पोषितश्च तयोर्निर्वेशं निष्कृतिमानृण्यं शतायुषा शतसम्वत्सरात्मकेनायुषापि मर्त्यो न याति ॥ ५ ॥

कल्पः समर्थः स्वमांसं खादयन्ति यमदूता इति शेषः ॥ ६-७ ॥

नौ आवयोः अकल्पयोः बालयोर्वामनर्चतोः अपूजयतोः मोघं व्यर्थम् ॥ ८ ॥

---

### भाषा टीका ।

संपूर्ण पुरुषार्थों के संपादन करने लायक देह जिन से उत्पन्न होता है और जिनसे पालित होता है उन दोनों पिता माता के प्रत्युपकार को मनुष्य सौ आयु से भी नहीं कर सक्ता है ॥ ५ ॥

जो पुत्र सर्वथा धन से और शरीर से समर्थ है फिर पिता माता को सेवा वृत्ति नहीं देता है उसको यम लोक में यम भट अपना मांस खवाते हैं ॥ ६ ॥

वृद्ध माता पिता सती भार्या बालक पुत्र गुरू ब्राह्मण शरणागत इन सबों को समर्थ होकर जो नहीं पालन करता है सो तो मानों श्वास लेते ही मरा सरी का है ॥ ७ ॥

तिस से असमर्थ तथा कंस से नित्य ही उद्विग्न चित्त वाले हम दोनों के आप की सेवा करने विना इतने दिन व्यर्थ ही चले गये ॥ ८ ॥

---

तत् क्षन्तुमर्हथस्तात ! मातर्नौ परतन्त्रयोः ।
अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ॥ ९ ॥

। श्रीशुक उवाच ।

इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा ।
मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् ॥ १० ॥
सिञ्चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ ।
न किंचिदूचतू राजन् ! बाष्पकण्ठौ विमोहितौ ॥ ११ ॥
एवमाश्वास्य पितरौ भगवान् देवकीसुतः ।
मातामहं तूग्रसेनं यदूनामकरोन्नृपम् ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

दुर्हृदा कंसेन कृत्वा ॥ ९-११ ॥

आश्वास्य सान्त्वयित्वा ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदनर्थनं हे तात ! मातरिति पुनः सम्बोधनं स्नेहभरजननार्थं तात मातृत्वादेव शुश्रूषामकुर्वतोरपि नौ क्षन्तुमर्हथः । किञ्च परतन्त्रयोः निन्हुतयासेनास्वाधीनयोरतो दुर्हृदा कंसेन क्लिष्टयोरावयो रसामर्थ्यादेवेति भावः ॥ ९ ॥

तत्र श्रीशुक उवाचेति क्वचिदस्ति मोहितौ विस्मारितवात्सल्यव्यतिरिक्तसर्वौ तत्र हेतवः मायामनुष्यस्येति कृपाप्रधानेन नराकृतिपरब्रह्मणः । हरेरसमोर्ध्वमाधुर्येण सर्वमनोहरस्य विश्वात्मनः परमात्मत्वेन विश्वस्यापि निरुपाधिपरमप्रेमास्पदस्येति अङ्कमारोप्य तावितीति शेषः ॥ १० ॥

चकार उक्तसमुच्चये । स्नेहपाशेनावृतौ सन्तौ पाशात्मवदपरिहार्येण दीर्घेण च प्रेम्णा बहिरन्तर्व्याप्यमानौ अतएव विमोहितौ न किञ्चिदप्यनुसन्धातुं बाष्परुद्धकण्ठौ च सन्तौ न किञ्चिदप्यूचतुश्च किन्तु केवलमश्रुधाराभिः सिञ्चन्तौ तयोरभिषेकमिव कुर्वन्तौ स्थिताविल्यर्थः । हे राजन्निति स्नेहभरस्वभावो भवता गम्य एवेति भावः । तदिदं वृत्तं श्रीनन्दादीनामगोचर एव ज्ञेयम् उभयत्रैव भगवता पितृत्वव्यञ्जनात् ॥ ११ ॥

मातामहमित्यवश्यमान्यत्वेन पितृभ्यां सह सम्बन्धविशेषेण तत्सम्मतत्वेन च यदुराजयोग्यतोक्ता । अतएव तुशब्दस्तद्विधाने मुख्यं प्रयोजनं स्वस्य गोकुलगमनेच्छयैव ज्ञेयं तथाच श्रीहरिवंशे तं प्रति श्रीभगवद्वाक्यम् "अहं स एव गोमध्ये गोपैः सह वनेचरः । प्रीतिमान् विचरिष्यामि कामचारी यथा गजः । एतावच्छतशोऽप्येवं सत्येनैव ब्रवीमि ते । न मे कार्यं नृपत्वेन विज्ञाप्यं क्रियतामिदम् । भवान् राजा तु मान्यो मे यदूनामग्रणीः प्रभुः । विजयायाभिषिच्यस्व स्वराज्ये राजसत्तमे"ति । नृपं राजानमकरोत्तु पूर्ववदधिपं यतो भगवान् कर्तुमकर्तुमन्यथा कर्तुं समर्थत्वात् । भक्तवात्सल्येन ययातिशापमपि नापेक्षितवानिति भावः । अतः पूर्वेषां राजत्वन्तु स्वकपोलकल्पितमित्यायातम् । अस्य राजत्वविधानं बन्धनान्मोचयित्वा इति ज्ञेयम् । प्रथमाध्यायान्ते निगृह्येत्युक्तेः । अतएव श्रीविष्णुपुराणेऽपि । "उग्रसेनं ततो बन्धान्मुमोच मधुसूदनः । अभ्यषिञ्चत्तथैवैनं निजराज्ये हतात्मज" मिति । हरिवंशे तु यदुग्रसेनस्य कंसशोकादिकं तत्तु लोकव्यवहारमात्रेणानुकृतमिति श्रीशुकेनानादृतं यच्च तस्य वसुदेवादेरपि कंसेनानिग्रहणं तादृशमन्यच्च कल्पभेदेन व्यवस्थितम् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हे मातः ! परतन्त्रयोरावयोस्तत् युष्मदनर्चायां निमित्तभूतायां तदागोऽपराधं तत् क्षन्तुमर्हथः कथं भूतयोः भृशं नितरां क्लिष्टयोर्वा युवयोः शुश्रूषामकुर्वतोरत एव दुर्हृदोर्दुरात्मनोः ॥ ९ ॥

इतीत्थं विश्वात्मनो मायया स्वसङ्कल्पेन न मनुष्यस्य हरेर्गिरा मोहितौ देवकीवसुदेवौ पुत्रावङ्कमारोप्य परिष्वज्य च मुदं प्रापतुः ॥ १० ॥

हे राजन् ! विमोहितावत एव पाशेन यन्त्रितौ बद्धावश्रूणां धाराभिः पुत्रौ सिञ्चन्तौ वाष्पं कण्ठयोर्ययो स्तौ किञ्चिदपि नोचतुः ॥ ११ ॥

इत्थं भगवान् देवकीसुतः पितरावाश्वस्य सान्त्वयित्वा मातामहमुग्रसेनं यदूनां नृपमधिपतिमकरोत् ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतदेव विशिनष्टि । तत्क्षन्तुमिति । दुर्हृदोः दुः अयुक्तमनसोः दुरशोभनदुः खयोरिति यादवः ॥ ९ ॥

विश्वात्मनः सर्वान्तर्यामिणः ॥ १० ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मोहितौ विस्मारितवात्सल्यातिरिक्ताखिलौ । तत्र हेतवः । मायामनुष्यस्य कृपाप्रधाननराकृतिपरब्रह्मणः हरेः असमभोर्ध्वमाधुर्येण सर्वमनोहरस्य विश्वात्मनः परमात्मत्वेन विश्वस्याऽपि निरुपाधि परमप्रेमास्पदस्येति ॥ ९---११ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृपं राजानमकरोत् नतु पूर्ववदधिपम्। यतो भगवान् कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वाद्भक्तत्वात्सत्येन ययातिशापमपि नापेक्षितवानित्यर्थः ॥ १२—१८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु सामर्थ्यस्य विद्यमानत्वात्तदैवसमागत्य कथं कंसो न हत इति चेत्तत्राह। तत्क्षन्तुमर्हथ इति। स स्वपराधोऽस्ति परमर्दे स्वयमेकाकिना आलौकिकेन प्रकारेण समागत्य हन्तुमुचितो भवति तथा सति अवतारवैयर्थ्यं हन्तुं च न शक्यते अलौकिकास्तस्य वधो वरान्निषिद्ध इति तथापीश्वरत्वात् पित्रोरनुरोधेन मारणीयो भवेत् तन्न कृतमित्यपराधः क्षन्तव्यः क्षमायां तात मातरिति मातृत्वं पितृत्वं—च प्रयोजकं नौ आवयोरिति उभयोरयं दोषः समानः किंच नैकान्ततोऽस्मद्दोषः यतः परतन्त्रावावां नन्दाधीनौ तथाहि बुद्धिरुत्पादिता तस्यातिक्रमे प्राणानेव त्यजेत् अतएव कालीयावसरे परीक्षितः तेन सहागमने परराष्ट्रवत् युद्धेन मारणं प्रसज्येत तत्तस्यैवानभिप्रेतम् एतच्च परीक्षितमिन्द्रयागभङ्गोपदेशेन अलौकिकत्वात्तैरङ्गीकृतमपि एतत्तु प्रजात्वादङ्गीकारमपि नार्हति अतः परतन्त्रयोरशक्या सेवा अपरामाह। अकुर्वतावां शुश्रूषामिति। कंसादिमारणेन लोकेऽपि सामर्थ्यं प्रतीतमिति सेवायोग्यता स्वार्थे हि सर्वमिति पुत्रादपि सेवा मग्यत एव दुर्हृदेति तस्य क्लेशदाने न कश्चित्पुरुषार्थः सिद्धः किं तु हृदयदोषात् केवल क्लेशितः तत्रापि भवद्वादिबन्धेन सुरतरामेव क्लेशं प्रयच्छतीति भृशमित्युक्तम् ॥ ९ ॥

नन्वीश्वरः कथमेवमनीश्वरवद्वदतीतिचेत्तत्राह। इतीति। मायया मनुष्यो यथा कायिकं चेन्मायिकं वाचनिकमपि तथैव कर्तव्यमिति मनुष्यत्वमात्रं प्रदर्शितं मायिकमिति न भगवति काचित्क्षतिः मायिकेषु तु सर्वमेव मायिकं ननु कंसादिवधार्थं तथा कृतवान् अत्र प्रयोजनाभावात् जातं ज्ञानं किमिति नाशयतीत्याह। हरेरिति। अन्यथा तौ पूर्वमपि क्लिष्टौ ज्ञानं च क्लेशात्मकं साधनमेव परं तत्पुरुषार्थस्य चिन्ताद्यपगमात् तदानीमपि सुखमिव प्रति भाति अतो ज्ञानेन दुःखं प्राप्स्यतीति नन्वत्यन्तोपकारी फलाव्यभिचारिमार्गेण यतमानं किमिति व्यावर्तयति नानान्तरीयकञ्च दुःखं नात्यन्त द्वेष्यमत आह। विश्वात्मन इति। स हि परमदयालुः सर्वास्यात्मा यथासुखं सर्वान् प्रेरयतीति मत्तैव स कृतार्थः कर्तव्य इति युवां मां पुत्रभावेनेति मुक्तेः सिद्धत्वात् सिद्धसाधनं ज्ञानमिति ज्ञाननिराकरणार्थं वाचा मोहनमुचितमेव ततो मोहितौ तदानीमे वपरिष्वज्य मुदमापतुः अन्यथा देहावसान एव सुखं स्यात् ॥ १० ॥

ततो लौकिकं सुखं महदेव जातमित्याह। सिञ्चन्ताविति। अश्रुधाराभिः पुत्रौ कर्म सिञ्चन्तौ जातौ अश्रूणां धाराभिः बहुकालवियोगस्मरणात स्नेहपाशेन च आवृतौ पाशपदेनैव लौकिकत्वं पुत्रत्वं बोध्य ततः न किंचिदुक्तवन्तौ इदमप्येकं मोहकार्यं निर्भरतया पुत्रस्नेहपरत्वम् अन्यथा स्तुतौ अवश्यं गुणा वक्तव्या-इति पुनरपि ज्ञानमुद्बोधितं स्यात् राजन्निति संबोधनं श्रवणार्थम् अवचने इदं हेतुमाह। बाष्पकण्ठाविति। सर्वथा भगवत्स्पर्शेऽपि मोहोऽनुवृत्त इति अद्य तयोर्दृढं मोहमुत्पाद्य निश्चिन्तो जात इति वक्तुमाह। विमोहिताविति। अन्ते पुनर्विशेषेण मोहितौ यथा न कदाचिदपि आत्मज्ञानं भगवज्ज्ञानं वा तयोरुदेति ततः प्रस्तापत्तिं वक्ष्यति ज्ञानाध्याये अन्यथा भगवानिष्टकर्ता स्यात् अतो निरोधे समाप्ते पश्चात् निरूपणम् ॥ ११ ॥

एवं पित्रोर्निरोधमुक्त्वा सर्वयादवानां निरोधं वदन् प्रथमतो राज्ञ उग्रसेनस्य निरोधमाह। एवमिति। पितरावाश्वास्य मातामहं यदूनां नृपमकरोत् मातामहत्वं स्पष्टयति। देवकीसुत इति। भाक्तहितकारित्वाय यतोऽवतारः पितरि श्वशुरे च राजनि दुहितुर्जामातुश्च चिन्तारहितो महान् भोगो भवतीत्यनुसिद्धम् अतो न वसुदेवं राज्येऽभिषिक्तवान् स च क्लिष्टो भवेत् पुत्रा हता इति एवं च सति उग्रसेनार्थमेव कंसो हत इति तेन गृहीतं राज्यं तस्मै दत्तमिति। तुशब्दः स्वपक्षं स्वसंबन्धिपक्षं च व्यावर्तयति नाम्ना तस्य सामर्थ्यमाह। उग्रसेनमिति। पूर्वं तु तस्य देशाधिपत्यं स्थितं यादवास्तु न मन्यन्ते आधुना तु यदूनां नृपमकरोत् यदूनामाधिदैविकरूप इति तदधीनाः सर्वे भगवत्कृतं मन्यन्ते ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नौ आवयोर्द्वितीयार्थे षष्ठी पक्षे परतन्त्रयोरिति दुर्हृदा कंसेन क्लिष्टयोरिति वामित्यस्य विशेषणे ज्ञेये ॥ ९ ॥

इति एवं माया कपटं मनुष्येषु यस्येति गद्यादिः ॥ १० ॥ ११ ॥

एवमाश्वास्येत्यादिकं श्रीनन्दस्य परोक्षमेव। मत्पुत्रं युद्धश्रान्तमेते परमानन्दमत्ताः स्नेहेन भोजयितुमन्तःपुरं नयन्ति तन्नयन्तु अहन्तु संप्रति पुत्रार्थं गतभीः स्वावासे एवान्हिकं कृत्यं करवै इत्युक्त्वा तेन तत्रैव गतत्वात् ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

दुर्हृदा दुरात्मना कंसेन भृशं क्लिष्टयोः अतएव वां युवयोः शुश्रूषामकुर्वतोः तत्तस्मात् क्षन्तु मर्हथः ॥ ९ ॥

मायया दुष्टजनविशेषविमोहिन्या मनुष्यवत्प्रतीयमानस्य मायाश्रितानां नरदारकेणेत्युक्तेः ॥ १०—१२ ॥

---

### भाषा टीका।

अब हे पिता माता हमने परतन्त्र रहने से आप दोनों की सेवा नहीं की है और जो कंस ने आपको हमारे निमित्त से क्लेश दिया है तिसको आप क्षमा कीजिये ॥ ९ ॥

श्रीशुकदेवजी बोले इस प्रकार से माया मनुष्य विश्वात्मा श्रीहरिके वचन से मोहित होकर वसुदेव देवकी दोनों ने

आह चास्मान्महाराज! प्रजाश्चाज्ञप्तुमर्हसि ।
ययातिशापाद्यदुभिर्नासितव्यं नृपासने ॥ १३ ॥
मयि भृत्य उपासीने भवतो विबुधादयः ।
बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः ॥ १४ ॥
सर्वान् स्वान् ज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाकुलान् ।
यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् १५ ॥
सभाजितान् समाश्वास्य विदेशावासकर्शितान् ।
न्यवासयत्स्वगेहेषु वित्तैः सन्तर्प्य विश्वकृत् ॥ १६ ॥

भाषा टीका।

दोनों पुत्रों को आलिंगन किया और परम आनंद को प्राप्त भये ॥ १० ॥

हे राजन्! स्नेह के पाश में बंध गये आँसुओं की धाराओं से उनको सींचन करते भये कंठ गद्गद होगया विशेष मोहित होगये फिर कुछ भी नहीं कह सके ॥ ११ ॥

देवकी पुत्र भगवान् ने इस प्रकार से पिता माता दोनों को आश्वासना देकर माता मह उग्रसेनजी को यदुओं का पति कर दिया ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

. त्वमेवाऽऽज्ञापयेति मायदेत्याह । ययातिशापादिति । तव तु यादवत्वेऽपि मदाज्ञया न दोष इति भावः ॥ १३ ॥

मम तादृशी शक्तिर्नास्तीतिचेत्तत्राऽह । मयीति । मत्प्रसादेन सर्वं भविष्यतीत्यर्थः ॥ १४ ॥

स्वान् ज्ञातीन् सम्बन्धांश्च दिग्भ्य आनाय्येति ॥ १५-१६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अस्मान् यादवान् ननु भवद्विधाज्ञापने मम का योग्यता तत्राह । प्रजा इति । त्वदधीनानित्यर्थः । तुशब्दो निर्द्धारणे हे महाराजेति यदुराजत्वेन साम्राज्यमभिप्रेतम् । अन्यस्तैः । किन्तु यद्यपि भवतामपि यदुत्वमेव तथापि भवतां भोजानां प्रायः परम्पराराज्यप्राप्तेरस्माकं वृष्णीनां तु प्रायस्तदप्राप्तेर्भवतामेव राज्यं योग्यमिति विशेषणो भावः ॥ १३ ॥

तदेव दर्शयति । मयीति । अवनता भक्त्या नम्राः सन्तः बलिं हरन्त्वित्याज्ञा । तथाच श्रीविष्णुपुराणे । ययातिशापाद्वंशोऽयमराज्यार्होऽपि साम्प्रतम् मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैरिति । हरन्तीति पाठः हरिष्यन्तीत्यर्थः । अन्ये इतरेभ्यो न्यूना इत्यर्थः । नराधिपा अप्यन्ये इति वा ॥ १४ ॥

सर्वानिति युग्मकं स्वे आत्मीयाः सम्बन्धाश्च कृतवैवाहिकादिसम्बन्धाः दिग्भ्य आनाय्येति शेषः दिग्भ्य इति कर्मणि

चतुर्थी वा गतावित्यनेनान्वयात् । यद्विति यदुभेदाः भोजादयः इत्यर्थः । आदिशब्देन सात्वतादयः भोजाश्च प्रायोऽक्रूरेण सह तत्रवासन् इत्येते यादवानामष्टौ भेदाः मुख्यतमा ज्ञेयाः॥ १५ ॥

सभाजितान् सतः शीघ्रं यानप्रस्थापनादिमानेनेत्यर्थः । अतः सम्यक्सुखं शीघ्रं चानाय्य विदेशावासेन कर्पितान् कृशतां प्रपितान् अतो बहुलधनेन सन्तर्प्य नितरां गृहाद्युपस्कारपरिच्छदवृत्तिप्रदानादिना समहोत्सवमवासयत् । नन्वसङ्ख्यानां कथं तथा निवासनं द्रुतमेव सम्भवेत्तत्राह । विश्वकृदिति । अतस्तद्वैभवस्येन्द्रादिदुर्लभत्वमपि सूचितम् । तत्र श्रीरोहिणीमपि व्रजादानेष्यतीति ज्ञेयम् ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

तमुवाच च उक्तिमेवाह । अस्मानित्यादिना । नराधिपा इत्यन्तेन हे महाभाग! त्वमस्मान् त्वत्प्रजाभूतानाज्ञप्तुं मर्हसि विधेयान्कर्तुमर्हसि अधिपति र्भवितुमर्हसीत्यर्थः ननु समर्थस्त्वमेव राजा भवितुमर्हसीत्यत आह । ययातिशापादिति नृपासने नासितव्यं नोपवेष्टव्यं तव तु यादवत्वेऽपि ममाभिमततया न दोष इति भावः ॥ १३ ॥

नन्वहमसमर्थः कथमधिपतिर्भवितुमर्हामीत्यत आह । मयीति । त्वद्भृत्ये मयि त्वां सेवमाने सति विबुधश्रेष्ठाः अप्युपनताः सन्तो भवते बलिं हरन्ति समर्पयन्ति किमुतान्ये नराधिपाः अर्पयन्तीति मत्प्रभावात्सर्वं भविष्यतीत्यर्थः ॥ १४ ॥

ततो विश्वदृग्भगवान्सर्वान् स्वज्ञातीन् स्वसम्बन्धिनश्च यादवादीन् भयात्पलायिनात् दिग्भ्य आनाय्य तान्सान्त्वयित्वा सभाजितान्संमानितान्कृत्वा परदेशावासेन कृशीभूतान् वित्तैः सन्तर्प्य स्वस्वगेहेषु न्यवासयत् ॥ १५-१६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

स्वाः प्रजाः अस्मान् ज्ञप्तुमाज्ञप्तुं यद्वा प्रजास्त्वासु कांश्चिदस्मानिति ययातिशपात् नृपासने यदुभिर्नासितव्यं न स्थातव्यमिति शङ्कां त्यजेति शेषः ॥ १३ ॥

शङ्का त्यागे कैमुत्येन निमित्तमाह । उपासीने सेवमाने सति ॥ १४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विश्वं सर्वं सृजति ददातीति विश्वसृक् दिग्भ्य आनीय ॥ १५—१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अत एव विश्वासार्थं कृत्यधिकं वाक्यमप्युक्तवानित्याह । आह चेति । चकारान्मनसापि तं राज्ये स्थापितवान् यादवानां विधेयत्वार्थमाह । हे महाराज ! अस्मान्प्रजा आज्ञाप्तुमर्हसीति । वयमेव प्रजाः तुशब्देन सन्ततिरूपां प्रजां वारयति तर्ह्यहमपि यादव इति प्रजास्वेवान्तर्भाव इति चेत्तत्राह । महाराजेति । खण्डमण्डलाधिपतित्वं पूर्वमपि स्थितमिति यादृशी पूर्वमाज्ञापना तादृशी भवतीत्याशङ्क्य महत्त्वमुक्तं राज्ञा ह्यवश्यमाज्ञापनीया इति विधिवशादेवाज्ञापनं बोध्यते न त्वाज्ञाप्यत इत्यर्थः । ननु किं स्वगृहीतं राज्यं दीयते आहोस्वित् पूर्वसिद्धमेव परिपाल्यते आद्ये स्वयमादौ राज्यं गृहीत्वा पश्चाद्देयम् अतस्त्वमादौ सिंहासने उपविश द्वितीयः पक्षस्तु कंसेन त्वया च निराकृतः महाराजत्वं चाधिकं कंसस्थं प्रायेण स तु तद्घातक एव भवति नैकट्य एव तद्धर्मस्तस्मिन् प्रविशति । अतस्त्वयैव सिंहासने उपवेष्टव्यमित्याशङ्कायामाह । ययातिशापादिति । यदुभिर्नृपासने नासितव्यं यदुर्हि ज्येष्ठ एवासीत् स चेत्पित्रा निवारितः ततः प्रभृति न मर्यादाराज्यम् अर्जुनादयस्तु पुष्ट्या सार्वभौमा जाताः अत एवहताः कंसोऽपि भगवता तु तत्र कर्त्तव्यं मर्यादार्थमवतीर्ण इति ईश्वरत्वं ज्ञापयितुं कदाचित्परं पुष्टिमवलम्बते राज्यं तु सर्वं पुष्टिहेतुर्भवति यो हि यद्वेपं करोति स तस्य सहजानेव धर्मान् गृह्णाति नतु केनचित्कदाचिदन्यथा कृतम् अतोऽस्माभिः मुख्यशाखायामागतैः नासितव्यमेव भोजत्वादयश्च प्रान्तशाखाः अत एव विवाह उपपद्यते भगवान् सर्वेश्वर इति चरणाधिपत्यं कस्मैचिद्दद्यादपि नतु स्वयं गृह्णीयात् वैयर्थ्यादनीश्वरत्वापत्तेः सिद्धत्वाच्च ॥ १३ ॥

तर्हि मया कथं ग्राह्यं शापादीनां तुल्यत्वात् सामर्थ्याभावाच्चेति चेत्तत्राह । मयि भृत्य उपासीन इति । अवश्यं हि साधारणत्वं भजता कश्चित्प्रभुः स्वीकर्त्तव्यः स च कंसः स्थितः तस्य पुत्राभावात् पितापुत्रयोरैक्यात् अग्रे अनुवृत्त्यभावात् पितरि समागतः अतः स्थित एवानूद्यते अतो ग्रहणदानापेक्षिते क्रौर्याभावेनाङ्गीकरिष्यन्तीति चेत्तत्राह । मयि भृत्ये उपसमीपे आसीने सति भवतः भवते विबुधादयोऽपि बलिं हरिष्यन्ति ये मेर्वादिभूसंबन्धेन भोगं प्राप्नुवन्ति अन्ये नराधिपाः ये केवलभूसंबन्धिभोक्तारः ते किं वक्तव्याः । अवनता इति । नम्राः न तु प्रसादरूपेण प्रसन्नाः सन्तः नरास्तु भूमिष्ठा एव स्थूलसकृद्घाताभिमानिनः देवास्तु सूक्ष्मेन्द्रियाद्यधिकारिणः भगवान् "भर्त्ता सन् भ्रियमाण" इति श्रुतेः भरणीयोऽपि भवति साधारणयादवत्वस्य क्रीडायां स्वीकृतत्वात् राजनि भृत्यत्वमुपपद्यते । यतः पुत्रत्वं वसुदेवे लौकिक्येषा भाषा सर्वथा भगवान्गोप्य इति फलिष्यति । मन्निमित्तं वा यो भृत्यः मदभिप्रेत स्थाने उपासीनो भवति तस्मै तुभ्यं विबुधादयोऽपि हरन्तीति वास्तवोऽर्थः एवं स निरुद्ध एव अन्यथा अतिविरक्तः कदाचिज्ज्ञानार्थं वा प्रयत्नं कुर्यात् अतो भगवान् स्वार्थमेव तं स्थापितवानिति भगवदर्थमेवेति निरोधः सिद्धः ॥ १४ ॥

सर्वेषां साधारणं निरोधमाह । सर्वानिति पञ्चभिः । स्वा भक्ताः ज्ञातयः गोत्रिणः संबन्धिनो वैवाह्याः स्वशब्देन भ्रातरो वा बहव एव वसुदेवपुत्राः पित्रादयश्च । ते त्रिविधाः सात्त्विकादयः दिग्भ्यः समाहूय स्वगेहेषु न्यवासयदित्युत्तरेण सम्बन्धः दिक्षु वा कंसभयाद्गतान् दिग्भ्य इति चतुर्थी वा भयेन दिश एवोद्देश्याः अनेन पुनरागमनाभाव उक्तः तत्र हेतुः कंसभयाद्गतानिति । कंसो ह्यतिक्रूरात्मा तथैव लोके प्रसिद्धः अत एव नन्द आह योऽवधीत्स्वस्वसुस्तोकानिति सर्वेषामेव भयं षड्विधा यादवा अपि गणिताः यदुवृष्ण्यन्धकेति आदिशब्देनान्येऽपि बहवस्तद्भेदाः सन्तीति ज्ञापितम् ॥ १५ ॥

तत्सम्बन्धिनो वा न केवलमाकारणमात्रेण पूर्वसिद्धदानं किन्तु अधिकमपि दत्तवानित्याह । सभाजितानिति । सभाजिताः सत्कारं प्रापिताः अयं तेषां मानसो ह्यधिकः ततः समाश्वासनं वाचनिकं ततः कायिकं वक्तुं तेषां श्रममाह । विदेशवासेन परदेशस्थित्या कर्शितान् दुर्बलान् धनाद्यभावेन दीनान्वा केवलं गृहे स्थित्यापि सुखं न भविष्यतीत्याशङ्क्य परदेशस्थित्या गतं धनादिकं ततोऽप्यधिकं सर्वेभ्यो दत्तवानित्याह । वित्तैः सन्तर्प्येति । ननु राज्यस्थं सर्वमेव द्रव्यं भक्षितं नाशितमिति कुत एतावद्दत्तवानित्याशङ्क्याह । विश्वकृदिति । स विश्वमेव कर्तुं समर्थः किं तेभ्योऽवदाने वक्तव्यमित्यर्थः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

भगवंस्त्वमेव नृपो भव त्वमेवास्मानाज्ञापयेति मावदेत्याह । ययातिशापादिति । तव तु यादवत्वेऽपि मदाज्ञया नास्ति दोष इति भावः ॥ १३ ॥

मम तादृशी शक्तिर्नास्तीति चेत्तत्राह । मयि भृत्ये तत्राप्युपासीने त्वदुपासनां कुर्वति सति ॥ १४—१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु त्वमेव राजा भवितुमर्हसीत्यत आह । ययातिशापाद्यदुभिर्नृपासने नासितव्यम् भवतो यादवत्वेऽपि भोजत्वेन किञ्चिद्वैलक्षण्यान्न दोष इति भावः ॥ १३-१४ ॥

कंसभयाद्दिक्षु गतान् ताभ्यो दिग्भ्यः स्वान् ज्ञातीन् संबन्धांश्च आनाय्येति शेषः स्वगेहेषु न्यवासयदिति द्वयोरन्वयः ॥ १५ ॥ १६ ॥

---

भाषा टीका।

फिर भगवान् बोले हे महाराज ! हमको तथा सब प्रजाओं को आज्ञा दीजिये यद्यपि ययाति के शाप से हम लोगों को राजासन पर नहीं बैठना चाहिये ॥ १३ ॥

तौ भी मैं भृत्य पास में रहूँगा तो देवतादिक आपको भेट देंगे और राजन का तो क्या कहना है ॥ १४ ॥

कृष्णसङ्कर्षणभुजैर्गुप्ता लब्धमनोरथाः ।
गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥ १७ ॥
वीक्षन्तोऽहरहः प्रीता मुकुन्दवदनाम्बुजम् ।
नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥ १८ ॥
तत्र प्रवयसोऽप्यासन् युवानोऽतिबलौजसः ।
पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः ॥ १९ ॥
अथ नन्दं समासाद्य भगवान् देवकीसुतः ।
सङ्कर्षणश्च राजेन्द्र ! परिष्वज्येदमूचतुः ॥ २० ॥

भाषा टीका ।

संपूर्ण जितने अपने ज्ञाति संबिधि हैं वे सब कंस के भय से आकुल थे यदु वृष्णि अंधक मधु दाशार्ह कुकुरादिक सबों को दिशाओं से बुला लिये ॥ १५ ॥

विश्वकर्ता भगवान् ने विदेश के वास से कर्षित उनको सत्कार से आश्वासना देकर धनों से तृप्त करके अपने अपने घरों में उनका निवास कराया ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सिद्धाः पूर्णाः कृष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो येषां ते ॥ १७ ॥

सदयस्मितं वीक्षणं यस्मिंस्तत् ॥ १८ ॥

प्रवयसो वृद्धा अप्यतिशयितं बलमोजश्च येषां ते ॥ १९ ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ तेषां सर्वोत्तमां स्थितिमाह त्रिभिः । तत्र कृष्णेति युग्मकम् । प्रथमं तावत् कंसादिवधेन गतज्वराः ततश्च पुनर्वासादिना लब्धमनोरथाः तदनन्तरं श्रीकृष्णसङ्कर्षणभुजैर्गुप्ताः कंसभयादितो रक्षिता स्ततस्तैरेव लब्धमनोरथाः तदर्पितस्वाविर्भावसहितताद्दशमथुरावासादिना पूर्णकामाः सन्तो रेमिरे ताभ्यां क्रीडां चक्रुः तेनैव सिद्धाः कृतकृत्याश्च बभूवुः । तत्र च कृष्णरामाभ्यामन्यनिरपेक्षतया तत्स्वरूपमात्राभ्यां गतज्वरा बभूवुः । ताभ्यां व्यतिरिक्ते सर्वत्रैव तापः सुखन्तु तयोरेव येषां तथा बभूवुरित्यर्थः । तत्तदर्थयोग्यतत्तन्नामनिरुक्तिस्तून्नेया ॥ १७ ॥

सुखमेव विवृणोति। वीक्षन्त इति । विशेषेण सन्निकृष्टत्वादिना मुखमीक्षमाणाः तत्राप्यहरहर्वीक्षमाणाः प्रीता बभूवुः इति दर्शनसौख्यं नित्यमेवाधिकं दर्शितं तेनातृप्तिरपि दर्शिता । तत्र हेतवः । नित्यप्रमुदितं क्षणक्षणमेव प्रकर्षेण हृष्यत् । अतो नित्येति सर्वत्रैव व्यञ्जयं क्षणक्षणमेव श्रीमत् प्रशस्तशोभं तथा सदयेत्यादिना ॥ १८ ॥

तत्र भगवत्पार्षदत्वमेव तदावरणपूज्यदेवतानां श्रीमदुद्धवादीनामिति प्रवयस्त्वं न स्यादेव । ये केचिदन्धकादयो वा प्राचीनवृद्धास्तेऽपीत्यपि शब्दार्थः । अतः स कथं सेवया तस्य कालेन जरसङ्गत इति श्रीमदुद्धवमुद्दिश्य श्रीविदुरवाक्यन्तु प्राकट्यावसरप्रमाणचरमकक्षां गत इत्येवाभिदधाति अलौकिकगुणास्वादशालित्वात् सुधेव सुधा सौन्दर्यं मुखाम्बुजस्य सुधामिति तथाप्यलौकिकत्वं तामक्षैरक्षिभिः पिबन्त इति तेनैव तादृशं कमलमिति च पुनस्तयोः परमालौकिकत्वं व्यञ्जितं । मुहुः प्रतिक्षणं पिबन्तः प्रतिक्षणमतिशयेन युवानः शरीरेन्द्रियबलयुक्ताश्चासन् उपलक्षणञ्चैतत् सहस्रादीनामिति ॥ १९ ॥

अथ श्रीमद्व्रजराजस्य प्रस्थापनं प्रक्रममाणः श्रीकृष्णस्य भगवत्तायां देवकीसुततायाः प्रस्तावे च परीक्षितः समुल्लसन्मुखतामवेक्ष्य राजेन्द्रेति सम्बोधनेन तन्मुखमवलोक्य तदीप्सिततानुरूपं वदन्नपि श्रीकृष्णस्यैव वचनपरिपाटीभिर्निजाभीप्सितं स्थापयिष्यन्नाह । अथेति । अथ यादवानां तथा भावादनन्तरमिति अद्य सायमस्माभिः प्रस्थापितव्यं सायञ्च सति प्रातरित्येवं यदुकुलाश्वासनपौरसंमाननाद्यावश्यकृत्याद्यपेक्षया दिनकतिपयविलम्बविधानात् । यद्यहं सहसैव गोकुले गच्छामि तदा जरासन्धादिसम्मर्दैस्तत्र स्यादत्रत्यानामरक्षा चेत्यङ्गीकृतनरलीलाघटितया शङ्कया तदसमाप्तौ तु कदाचिदेकान्ते सम्यगासाद्य पुत्रोचितनमस्कारादिसद्व्यवहारेणोपेत्य केवलवात्स्योचितभावाविष्कारेण परिष्वज्य च । इदं श्लोकत्रयेण वक्ष्यमाणं केवलतत्पुत्रोचितमब्रवीत् । कोऽसौ भगवान् पूर्णसर्वैश्वर्येण निरपेक्षः । यश्च देवकीसुतः देवक्यां प्रकटितजन्मा स एव । तथा सङ्कर्षणश्च । तत्तन्निरुक्त्या यो वसुदेवात्मजत्वं प्राप्तस्तदनुपङ्केन स वैवोचतुरिति भयङ्गियथार्थमेव मन्तव्यम् । नच श्रीवसुदेवदेवक्योरिव यत् किञ्चिदन्यथाकर्तुं तत्र सिद्धान्तस्य प्रायो विरुद्धत्वादत्र तु नन्दस्त्वात्मज इत्यादौ सिद्धान्तस्य दर्शितत्वात् । तथा तत्र मायां ततान जनमोहिनीमितिवदत्र श्लेषेणाप्यनुक्तत्वात् श्रीनन्दप्रभृतीनां भावस्य श्रीब्रह्मशुकोद्धवादिभिः स्वाभाविकत्वेन सर्वदुर्लभत्वेन स्तुतत्वाच्च । अहो भाग्यमित्यादिभिर्नेमं विरिञ्च इत्यादिभिर्युवां श्लाघ्यतमावित्यादिभिश्चेति । तत्र राजेन्द्रेति राजेन्द्राणां भवतां महाराजकन्यायाः प्रपितामह्याः सम्बन्धेन तत्रैव निष्ठा युक्ता भिक्षुकाणामस्माकं तु यथारुच्येवेति भावः ॥ २० ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः कृष्णरामाभ्यां गतो निवृतो ज्वरस्तापो येषां लब्धः मनोरथो यैस्ते सिद्धाः पूर्णकामाः कृष्णसङ्कर्षणयोर्भुजैर्गुप्ताः पालिताः गृहेषु रेमिरे ॥ १७ ॥

दयास्मिताभ्यां सहिते वीक्षणे यस्मिंस्तच्छ्रीमत्सौन्दर्यवन्नित्यं प्रमुदितं विकसितं मुकुन्दस्य वदनाम्बुजमहरहः पश्यन्तो रेमिर इत्यनुषङ्गः ॥ १८ ॥

तत्र तदा प्रवयसो वृद्धा अपि मुहुर्मुकुन्दस्य मुखाम्बुजसुधां नेत्रैः पिबन्तो युवानो नितरां बलीयसश्चासन् अति बलौजस इति पाठे अतिशयितं बलमोजश्च येषां त आसन् ॥ १९ ॥

अथेति नन्दं समासाद्य समीपमेत्य हे राजेन्द्र ! तमालिङ्ग्येदं वक्ष्यमाणमूचतुः ॥ २० ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सिद्धा इति लुप्तोपमा मुक्ता इव कृष्णरामाभ्यां गतज्वराः नष्टसन्तापाः कृष्णे रामेण रमणेन रत्या वा ॥ १७ ॥ १८ ॥

तत्र मथुरायां प्रवयसो वृद्धा अपि युवानः आसन् तत्र किमौषधमिति तत्राह । पिबन्त इति ॥ १९ ॥ २० ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीमदुद्धवादीनां तदावरणपूज्यदेवतात्वेन नित्यपार्षदत्वात् प्रवयस्त्वं न स्यादेव ये केचिदन्धकादयः प्राचीनवृद्धास्तेऽपि इत्यपिशब्दार्थः ॥ १९ ॥

इदं श्लोकत्रयं वक्ष्यमाणं केवलं पुत्रोचितमूचतुः ॥ २० ॥

---

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं भगवत्कृतं दुःखाभावसुखभेदेन द्वयं निरूपितमधुना तेषां प्रपञ्चविस्मृतिर्भगवदासक्तिश्च वक्तव्या यतः स्वरूपे समागताः स्वस्था हि सर्वे सर्वत्राधिकृता भवन्ति एते गृहा भगवद्दत्ता इति पूर्वं एव सम्बन्धस्याज्यः स तु चिन्तात्मक इति पूर्वं तदभावो निरूप्यते राजसा हि विषयैरेव तदासक्ता भवन्ति अतः प्रथमं तेषां भगवद्दत्तो विषयभोगो निरूप्यते । इयमेव प्रपञ्चविस्मृतिस्तथात्वं निरूपयता भगदासक्तिस्ततो निरूप्यते । तस्य च फलं कालातिक्रम इति राजसत्वात् फलमपि निरूप्यते परमैहिकं तत्र प्रथममाह । कृष्णसङ्कर्षणभुजैरिति । कृष्णसङ्कर्षणयोर्भुजाः एकः फलात्मा अन्यो जीवं ब्रह्मणि सम्यगाकर्षति इति साधनरूपः तयोः क्रियाशक्तयः सर्वपुरुषार्थसाधकाः ता हि नियतफलाः अतस्ते सर्वे गुप्ता लब्धमनोरथाश्च जाताः दुःखाभावपूर्वकं सुखं प्राप्तवन्तः अग्रेऽपि भयाभावाय गोपनम् अन्यथा अनुभूतभयाः कंससम्बन्धिनां जरासन्धादीनां विद्यमानत्वात् अतो निश्चिन्ता अन्तर्बहिः खेदरहिताः गृहेषु रेमिरे इदं रमणं मुक्त्युत्तरकालीनमिव तदाह । सिद्धा इति । तत्तत्कामनया पीडितास्तथा रमणं कृतवन्त इति पक्षो निवारितः चिन्ताभावायाह । कृष्णरामाभ्यां सर्वतो विगतज्वराः आध्यात्मिकादितापा मुक्तानामपि भवन्तीति तदर्थमुक्तं सिद्धानां तापाभावलक्षणं कृष्णरामौ फलसाधनभूतौ अथवा तेषां संसारे भगवद्दत्ते आपाततो रमणमुक्त्वा निषेधति निरोधार्थं कृष्णरामाभ्यां कृत्वा आगताः आगतो वा ज्वरो येषां गोपिकावत्सर्व एवैते विरहातुराः सर्वदा भवन्तीति तासां तु गुणैरपि रमणं भवति एतेषां तु तदपि नास्तीत्युभयोर्ग्रहणम् ॥ १७ ॥

एतदेव साधयितुं भगवदासक्तिमाह । वीक्षन्त इति । अहरहः प्रतिदिनं मुकुन्दवदनाम्बुजं वीक्षन्तः प्रमुदिता जाताः प्रतिक्षणमपूर्वैव प्रीतिः अतः परमार्थज्ञानाभावेऽपि वस्तुसामर्थ्यादेव भगवन्मुखारविन्ददर्शनं नित्यप्रमुदितं प्रीतिमुत्पादयति नित्यनूतनं वस्तुतस्तु रसस्यैवायं स्वभावः आदौ प्रीतिस्तु आकाङ्क्षावशादिति वस्तुरससंभूतमेव विषयबलाज्जायमाना प्रीतिः सर्वदैव जायते अतएव लौकिकोपाख्याने सूपकारविद्यायां तथा रसः प्रसिद्धः "रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवती" ति श्रुतेश्च हीति युक्तता लोकवेदसिद्धा अन्यथा आनन्दमेव प्राप्यानन्दी भवतीति वक्तव्यं स्यात् अत एव कामशास्त्रोपयोगश्च सहजश्च काम इन्द्रियवदाकाङ्क्षारूपः न पुरुषार्थं साधयति ननु विषयत्वेनासक्तौ बन्धः स्यात् इत्याशङ्क्याह । मुकुन्द इति । तस्य रसरूपस्य मुखारविन्दस्य कदाचित्तिरोभावे प्रीता न न भविष्यन्तीत्याशङ्क्य नित्यप्रमुदितत्वमाह । तर्हि रसपुरः सरमेवानन्दं जनयतीति । रूपाद्यपेक्षार्थमन्यासक्तिः स्यात् यद्यपि विषया दत्तास्तथापि कामः समुद्र इति "समुद्र इव हि कामः नैव हि कामस्यान्तोऽस्ति न समुद्रस्येवे"ति श्रुतेः अत आह श्रीमदिति । तल्लक्ष्मीयुक्तं सर्वविषयरूपं तथापि सर्वलौकिकसिद्धावपि धर्मार्थं भक्त्यर्थं च अन्यासक्तिरवश्यमपेक्षितेत्याशङ्क्याह । सदयस्मितवीक्षणमिति । दयाधर्मस्थानीया तदात्मको धर्म इति स्मितं भक्तिस्थानीयं वीक्षितं ज्ञानरूपं त्रितयमपि मुखारविन्दे वर्तत इति काण्डत्रयार्थमपि अन्यापेक्षा न युक्तेत्यर्थः ॥ १८ ॥

एवं निरुद्धानां कालातिक्रममाह । तत्र प्रवयस इति । अग्रे कालातिक्रमो न भविष्यतीति न वक्तव्यमेव योऽपि विषयः कालेन भक्षितः सोऽपि तस्य मुखात् निष्कास्यते तदाह । ये प्रवयसः स्थिताः वृद्धाः वार्द्धक्ये बहिः शरीरकान्तिः अन्तर्बलं च गच्छति तदुभयमाह । युवानोऽपि जाताः अतिबलीयसश्चोति अलौकिकसामर्थ्यात् तथात्वमाशङ्क्याह । पिबन्तो ऽक्षैरिति । मुखाम्बुजसुधां पिबन्त एव तथा जाताः ननु सुधाया अपि न तथा साधकत्वं यतस्त्रिदशाः कालेन च ग्रासं प्राप्नुवन्ति अत आह । मोचदानुमुकुन्दस्येति यो ह्यात्मस्वरूपं प्रयच्छति स कालातिक्रमं कारयत्येव तत्रापि तस्य मुखं प्रधानभूतं तत्राप्यम्बुजं परमशीतं सर्वतापनाशकं स्वभावत एव तादृशधर्मयुक्तं तत्रत्या च सुधा अलौकिकी भवत्येवेति कालेन भक्षितपदार्थानामपि पुनरुद्गमनं युक्तमेव तत्रापि मुहुरिति अनेन तेषाममृतमयत्वमेव युक्तं कियदेतदतिबलिष्ठत्वादि ॥ १९ ॥

एवं सर्वेषां निरोधमुक्त्वा नन्दादीनां प्रस्थापनेन तामसानामप्युत्कर्षार्थं राजसप्रकरणे विशेषमाह । अथ नन्दमिति पड्भिः । भगवतैव षड्गुणैस्ते व्यावर्तिताः अतिबलेन अन्यथा अव्यावृत्त एव भवेयुरिति "संभावनार्थमुद्योगः पूर्वस्थापनमेव च । निराकृतिश्च बाधानां प्रेषणाज्ञापनं ततः ! दानं च प्रीतिसंसिद्ध्यै गमनं

पितृभ्यां युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम् ।
पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥ २१ ॥
स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ।
शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥ २२ ॥
यात यूयं व्रजं तात ! वय च स्नेहदुःखितान् ।
ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ २३ ॥
एवं सान्त्वय्य भगवान्नन्दं सव्रजमच्युतः ।
वासोऽलङ्कारकुप्याद्यैरर्हयामास तादरम् ॥ २४ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

चापिं रूप्यते" अथेति भिन्नप्रक्रमे "प्रामाणिकत्वं दासत्वं स्वामित्वं च निरूपितम् । पुनः संस्थानतासिद्धयै नन्दसामीप्यमागतौ" । सम्यगासाद्य पूर्ववदेव भगवदिच्छाया बलिष्ठत्वात् पुत्रप्रतीतिर्दृढोत्पादितेति अन्यथा शङ्काभावात् सम्यगेवासाद्य भगवान् सर्व. समर्थः प्रत्यक्षदृष्टमप्यन्यथा कर्तुं समर्थः प्रेषणार्थं संकर्षणश्च उभौ मिलित्वेदमूचतुः उभयोरप्यन्यपुत्रत्वेन तुल्यत्वात् समानमावं च स्थापितवन्तौ नन्वेवं किमिति कृतवान् कथं गोकुलपर्यन्तं न गत इत्याह । संकर्षण इति । चकारात्सोऽपि देवकीसुतः तर्हि कथं रोहिणीसुत इत्याशङ्क्य तदुदराद्यापादकं धर्मं सूचयितुं संकर्षण इत्याह । राजन्द्रेति महामन्त्रयुक्तानां राज्ञामयं धर्म इति बोधयति परिष्वज्य विरहाभावाय स्वधर्मस्थापनार्थं बाला हि दूरादागत्य पितरमालिङ्गन्ति इदं वक्ष्यमाणम् ॥ २० ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रवयसो वृद्धा अपि ॥ १९ ॥

बहुदिवसीयकथां कथयित्वा कंसवधदिवसस्य परेद्यवि कस्याश्चिदतिमुख्याया दुरधिगमार्थायाः कथायाः कथनारम्भबोधनायाथशब्दः नन्दं सम्यगासाद्येति तत्पुत्रत्वाभिमानवत्त्वेनैवेत्यर्थः । देवकीसुत इति । देवकीसुतत्वाभिमानमपि गृह्णन्तित्यर्थः । भगवानित्युभयोः समाधात्रीं स्वीयामैश्वर्यशक्तिमेवाश्रित्येति भावः । संकर्षणश्चेति यदुनामपृथग्भावात् संकर्षणसुशान्त्यपीति स्वनाम्नो व्युत्पत्तिं दर्शयन्निति भावः । परिष्वज्येति प्रणामेऽवसराप्राप्तेरिति भावः । तदवसरप्राप्त्यभावश्च तयोर्दर्शनमात्रेणैवार्गलोपमाभ्यां भुजाभ्यां श्रीनन्देनानन्दसमुद्रनिमग्नेन युगपदेवोद्धृत्यातिविस्तीर्णे स्ववक्षसि तयोर्द्वयोरेव धारणात् अतस्तयोरत्र परिष्वङ्गकर्मत्वेनैव परिष्वङ्गकर्तृत्वमभूदिति बुद्ध्यते ऊचतुरिति तदनन्तरमुपविष्टे व्रजराजे तदासनमध्यास्य तद्भुजाश्लिष्टावेव तौ संप्रदत्तोत्तरवृत्तयदुवृत्तान्तकथनानन्तरमिदं सविनयं सान्तः संकोचं यादवजनतोपरोधज्ञापनपूर्वकं साश्वासं ससान्त्वनमूचतुः ॥ २० ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णरामाभ्यां गतस्त्रिविधतापलक्षणो ज्वरो येषां ते ॥ १७ ॥

सदयास्मितं वीक्षणं यस्मिन् तत् ॥ १८ ॥

अतिशयितं बलमोजश्च येषां ते ॥ १९-२० ॥

———

भाषा टीका ।

फिर तो कृष्ण तथा संकर्षण इन दोनों के भुजों से पालित होकर सब मनोरथों को पाकर सर्वार्थ सिद्ध होकर कृष्ण राम के हेतु से सब दुःखों से छूटकर सब मनुष्य मथुरा में रहने लगे ॥ १७ ॥

नित्य प्रति प्रसन्न रूप नित्य प्रमुदित शोभा युक्त दया हास से युक्त कटाक्ष सहित श्रीमुकुन्द के मुख कमल के दर्शन करते तृप्त रहे ॥ १८ ॥

उस मथुरा में श्रीमुकुन्द के मुख कमल रूपी अमृत को बारंबार नेत्रों के द्वारा पान करने से जो वृद्ध थे सो भी बढे बल तेज वाले यौवन अवस्था वाले होगये ॥ १९ ॥

हे राजेंद्र ! कुछ दिनके अनंतर देवकी पुत्र भगवान् तथा संकर्षण भगवान् दोनों श्रीनंदरायजी के पास जाकर आलिंगन करके यह वचन बोले ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

भृशमात्मानोऽप्याधिक्येन पोषितौ नचाश्चर्यमेतदित्याह । पित्रोरिति । आत्मनो देहादप्यात्मजेष्वभ्यधिका हि प्रीतिरिति ॥ २१ ॥

देवकीवसुदेवयोः पुत्रौ युवां नास्मत्पुत्रावित्यपि नवाच्यामित्याह । स पितेति ॥ २२—२३ ॥

सव्रजं व्रजवासिभिः सहितम् कुप्यानि स्वर्णरजताद्व्यतिरिक्तकांस्यपात्रादीनि तत्प्रभृतिभिः ॥ २४-२५ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथैव हेतुर्द्धे पितः ! हि यस्मात् आत्मानमप्यतिक्रम्य पित्रोरात्मजेष्वौरसेषु अभ्यधिका प्रीतिः स्यात्तस्मादेव भृशमत्यर्थं

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

स्निग्धाभ्यां युवाभ्यां भोजनादिना पोषितौ स्नपनादिना लालितौ च तदिदं नाश्चर्यमिति भावः ॥ २१ ॥

अत्र सङ्कर्षणोऽपि नान्यथा मन्तव्य इति स्वयं श्रीकृष्ण आह। स पितेति। चकारोऽप्यर्थे। सोऽपि तस्मात् सङ्कर्षणोऽपि नान्यथा मन्तव्य इति मम तु जन्मादित्रयहेतू एव भवन्ताविति भावः। यद्वा। स एव पिता सैव जननी ननु त्यक्तवन्तः पूर्वपित्रादयः। तस्माद्यद्यन्यतो जन्म स्यात्तथापि किमुतात्मजादित्रयमित्यादि ॥ २२ ॥

तथैव सान्त्वय्येति। यातेति। वयमिति द्वित्वे "अस्मदोद्वयोश्च" इति वचनात्। चकारेणोद्धवं संगृह्णाति पूर्वमेतायागमिष्यतः पश्चात् स्वयमित्यर्थः। सुहृदां भवत्सख्यादिसम्बन्धेनैव पित्रादितया मतानां श्रीवसुदेवादीनां सुखं विधायेति तदिच्छया तत्तत्कार्यसाधनाय यद्यस्मिन् यादवपाण्डवादिमेलनेच्छया च तदौरसत्वख्यापनपूर्वकं तद्विद्वेषिदन्तवक्त्रपर्यन्तदुष्टवधाद्यधिकमभीष्टं सम्पाद्येत्यर्थः। एतदर्थं भवतां यदुवंशोत्पन्नत्वमवलम्ब्य मातृपक्षेऽपि "ब्राह्मणादुग्रकन्यायामावृतो नाम जायते। आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वण" इति मनुस्मृतेस्तदुत्तमत्वमालम्ब्य क्षत्रियकन्या अपि परिणेष्यामीत्यनुक्त्वा प्रार्थनव्यञ्जना च। आपाततगमनेनैषां प्रीतिभङ्गः स्याद्धवतान्तु न कोटिकल्पान्तरेऽपीति भावः। तदेव स्थापयति ज्ञातीन् साक्षात् पित्रादीन् स्नेहदुःखितान् द्रष्टुमेष्यामः पश्यन्त एव स्थातुमागमिष्याम इत्यर्थः। तदर्थतायां विहितेन तु तुमुन्प्रत्ययेन तस्यैव पुरुषार्थत्वव्यञ्जनात्। यद्वा। तथापि भूमन्महिमागुणस्येत्यत्र बोधगोचरीभवितुमितिवदत्रापि दृष्टिगोचरीभवितुमिति व्याख्येयं नच यत् किञ्चिदेव दर्शनमात्रार्थं किन्त्वविच्छिन्नमेवेत्यभिप्रेत्याह। स्नेहदुःखितानिति। स्नेहस्य निरवधिकत्वे तद्धेतुकादर्शनदुःखस्य तादृशत्वमिति विचार्य यस्मात् करुणाकुलतया गमिष्यामस्तस्मान्नित्यनिजाविर्भावदानेन युष्माकं तद्दुःखमवश्यमेव दूरीकरिष्याम इत्यर्थः। अत्र सुखं विधायेति क्त्वाप्रत्ययेन तस्य तु पुनरपेक्षणीयत्वं दर्शितं तदेवं ज्ञातिषु भवत्सु नित्यावस्थानमेव युक्तं तेषु सुहृत्सु पुनरैच्छिकमेव तदिति भावः। किञ्च सुहृदां सुखं विधायेति मध्ये मध्ये समागमने कदर्थनैव स्यात्। आपातसमाधानार्थं साक्षात्कारतुल्यं ममाप्रकटलीलास्फोरणं तदुद्धव एव करिष्यतीति व्यञ्जितं तदेतदुद्धवसन्देशे व्याख्यास्यते। व्रजमागत्य श्रीकृष्णस्य नित्यावस्थितिश्च दन्तवक्त्रवधान्ते स्थापयिष्यते। श्रीनन्दस्तु तदेतत् सर्वं तदभिप्रेतं न तदानीं सद्यावगतवान् क्रमेणैव तु बोद्धेति गम्यम ॥ २३ ॥

सान्त्वय्येत्यत्र हेतुः। भगवान् सर्वं कर्तुं समर्थ इत्यर्थः। मत्पुत्रोऽयं सत्यवाक्यात् कदापि च्युतो न स्यादिति श्रीनन्दसम्भावनोत्पादनायेति भावः। सव्रजं सर्वव्रजजनैः सहितं ये तत्र सङ्गे गतास्तान् साक्षादेव तत्तादृशप्रणयवाक्येन तत्तत्प्रदानेन च ये च व्रजस्थाः श्रीयशोदादयस्तानपि तत्तत्प्रेषणेन चेत्यर्थः। कुप्यानि गोदोहनाद्यर्थं कांस्यादिपात्राणि आदिशब्दादुत्तम यानादीनि। व्रजस्य तत्तदधिकसम्पत्सद्भावेऽपि तत्तद्दानं प्रीतिमयत्वाद्धर्षितत्तमं गन्धपुष्पादिवदेवाह सादरं यथा स्यात्। यद्वा। सादरं श्रीनन्दं पुत्रेण यदुच्यते क्रियते वा तत्र तत्रैव स्नेहभरेण प्रीयमाणमित्यर्थः। अर्हयामासेति श्रीवसुदेवोग्रसेनादीनानाय्य तद्द्वारा पूजयामास स्वयन्तु सान्निध्येनैव हेतुरासीदित्यर्थः। कार्ष्णोऽग्निरध्यापयतीति वत् तदा युक्तत्वात् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उक्तिमेवाह त्रिभिः। हे पितः! स्निग्धाभ्यामनुरक्ताभ्यां युवाभ्यां भृशमात्मनोऽप्याधिक्येन पोषितौ पालितौ च न चाश्चर्यमेतदित्याहतुः पित्रोरिति। मातापित्रोरात्मनः स्वशरीरादप्यात्मजेष्वभ्यधिका प्रीतिरिति ॥ २१ ॥

ननु युवयोः पितरौ देवकीवसुदेवौ नावामित्यत्राहतुः। स पितेति। पोषणे रक्षणे चाकल्पैरसमर्थैर्बन्धुभिः उत्सृष्टांस्त्यक्तान् शिशून् यौ स्वपुत्रवत्पोषितवन्तौ तावेव पितरावित्यर्थः ॥ २२ ॥

अस्तु प्रकृते किं तत्राहतुः। यातेति। हे तात! यूयं व्रजं प्रति गच्छत वयं त्वत्रत्यानां सुहृदां प्रियं विधाय अस्मत्स्नेहेन दुःखितान् युष्मान् द्रष्टुमेष्यामः आगमिष्यामः ॥ २३ ॥

इत्थं सभार्यां सव्रजं व्रजवासिभिः सहितं नन्दं सान्त्वयित्वा वस्त्रादिभिः सादरं यथा तथाऽर्हयामास तत्र कुप्यानि सुवर्णरजताद्व्यतिरिक्तानि कांस्यादिपात्राणि तत्प्रभृतिभिः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

आत्मनः स्वस्मादपि ॥ २१ ॥

पुष्णीताम् अपुष्णीतां पोषणमकुर्वत पोषरक्षणे पोषणरक्षणयोः ॥ २२ ॥

वयं नोऽस्माकं ज्ञातीन् स्नेहनिमित्तेन दुःखितान् युष्मान् द्रष्टुमेष्यामोऽधुना व्रजं यात इदानीमागन्तुककार्यमस्ति तत्संसाध्य स्याद। विधायेति ॥ २३ ॥

सान्त्वय्य सान्त्वयित्वा सव्रजं सगोपं वासोभिरलङ्कारैश्च कुप्याद्यैः रजतहेमादिव्यतिरिक्तद्रव्यश्रेष्ठैश्च अकुप्यं रूप्यहेमादि कुप्यमन्यद्धनादिकमिति हलायुधः ॥ २४—२५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ननु वसुदेवदेवक्यौ प्रतीव किञ्चित् किञ्चिदन्यथात्वेन जनमोहनमित्यर्थः। कोऽसौ भगवान् पूर्णसर्वैश्वर्यत्वेन निरपेक्षः। यश्च देवकीसुतः देवक्यां प्रकटितजन्मा स एव तथा सङ्कर्षणश्च तत्सन्निधत्त्वा यो वसुदेवात्मजतां प्राप्तः तदनुसङ्गेन स चैव[1] तत्रैव हेतुः हि यस्मादात्मानमप्यतिक्रम्य पित्रोरित्यादिकोऽन्यः तदिदं नाश्चर्यमिति भावः ॥ २१ ॥

तदेतदप्यस्तु यतः स पितेत्यादि चकारोऽप्यर्थे। सोऽपि साऽपि। तस्मात् सङ्कर्षणोऽपि नान्यथा मन्तव्यः। मम तु जन्मादित्रयहेतू एव भवन्ताविति भावः ॥ २२ ॥

तदेव स्पष्टयति। यातेति। ज्ञातीन् पित्रादिरूपान्। इति भवन्मध्य एव मम वासो भवितेति भावः द्रष्टुमिति। भवद्दर्शनमेव मम तत्र पुरुषार्थः। सुहृदां भवत्-

---

१ वक्ष्यपाठानुरोधेनात्रपतिता व्याख्येयं पूर्वश्लोकस्य

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सख्यादिसम्बन्धेनैव पित्रादि तया मतानां श्रीवसुदेवादीनां सुखं विधायेति तदिच्छया तत्तत्कार्यसाधनाय स्वस्मिन् यादवपाण्डवादिमिलनेच्छया तदौरसत्वख्यापनापूर्वं वां तद्विश्लेषिदन्तवक्त्रपर्यन्तदुष्टवधावधिकमभीष्टं सम्पाद्येत्यर्थः ॥ २३—४१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेदचाह । पितरिति त्रिभिः । आदौ पूर्वकृतस्य परिपालनस्याभिनन्दनमाह । पितरिति संबोधनं पूर्ववत् तस्योपकारमनुवदति स्निग्धाभ्यां युवाभ्यां यशोदानन्दाभ्यां भृशं पोषितौ लालितौ च अवां तु यथा जनकः तथैव पोषकः तद्वक्ष्यति धर्मार्थमपि पालनं भवतीति तद्व्यावृत्त्यर्थं स्निग्धाभ्यामिति पोषणमात्रं स्नेहेनापि भ्रात्रादिष्वपि संभवति एतदर्थमाह । लालिताविति अल्पलालनं बालत्वाद्भ्रातृपुत्रादावपि भवति तत आह । भृशमिति स्वशरीरापेक्षयाप्यधिकं लालितौ एतच्च लालनं पुत्र एव भवति किंच न केवलं लालनं बाह्यमान्तरः स्नेहोऽप्यसाधारणः आवयोः कृत इति पित्रोरप्यधिका प्रीतिरिति आत्मनोऽप्यधिका आत्मजेषु पित्रोरेव भवति क्षेत्रजादिव्यावृत्त्यर्थमात्मजेष्वित्युक्तं प्रजा ह्यात्मनोऽन्तरन्तरेति श्रुतेः लोकेऽपि स्वानिष्टं परं वाञ्छति न पुत्रस्य तदाह । हीति ॥ २१ ॥

ननु सहजे पुत्रे एतदुचितं ननु कृत्रिम इत्याशङ्क्याह । स पिता सा च जननीति । पितृत्वं पुत्रत्वं वा अन्नविकारत्वात् । आत्मत्वेन परिगृहीतान्तःकोशो भवति तदन्नं साधारणं तत्र यद्यन्य एवाभिमानं कुर्यात् तादृशं तदा तस्यैव भवति अन्नस्य साधारणत्वात् अन्यथा अन्योद्भवे भर्तरि भार्यायां च स्वाधिकस्नेहो न स्यात् स्नेहश्च कालीयप्रसङ्गे परीक्षितः नहि दृष्टे अनुपपन्नं नाम अतः सिद्धमेव पुत्रत्वं च स्नेहानुभवाभ्यां ननु लोके तथा न प्रसिद्धिः एकेन परिपालने उपचारोऽपि भवेत् न तु उभाभ्यां बहुभिरप्युपचारः तत्रापि पोषणे अबाह्याभ्यान्तरभावः पुत्र एव भवति चेत्तदा लोक इव सहृदयेऽपि सम्भवति तत्रापि विशेषः बन्धुभिः सर्वैरेव उत्सृष्टान् पुष्णीतः परित्यागे न दानरूपं परित्याजनं किन्तु पोषणं रक्षणं च एकवद्भावेन निरूपितम् अन्यतरसामर्थ्यनिराकरणाय तत्रासमर्थैः सर्वथा ॥ २२ ॥

एवं पूर्वसिद्धं पितृत्वं स्थापयित्वा सर्वस्वं च निवेद्य आज्ञापयते । यात यूयमिति । यूयं सर्वे गोपालाः व्रजं यात वयं च कार्यार्थं यास्याम इति चकारार्थः भवन्तः कुत्र गमिष्यन्तीत्याशङ्क्य देवगुह्यत्वान् परोक्षेणाह । ज्ञातीन् वो द्रष्टुमेष्याम इति गोपेष्वात्मभावः प्रापित इति सर्वात्मकता तेषु सिद्धा अतस्त एव ज्ञातयो भवन्ति ये यादवगोव्रजाः अथवा वयमिति अस्मत्संबन्धिनः पुत्रादयोऽपि सर्वे भवतामेवेति वयं सर्वे भवतामेव ज्ञातयः भवन्तश्चास्माकमयमधिको वरो दत्तः अत एवाद्यापि गोकुलसंबन्ध्येव भगवान् कीर्त्यते विवाहादिष्वपि कुलादेव विवाहः । भगवदिच्छयैव सर्वलोकानामपि तथा प्रतीतिः अत एव रुक्मिवचनं गोपाल इति तथैव श्रुतावुपासनाकाण्डेऽपि मन्त्राः तस्माद्भवन्त एव ज्ञातयः तथाप्येतेऽपि सुहृदः अतस्तेषां सुखं विधाय पश्चादागमिष्यामः ज्ञातीनेव द्रष्टुं ननु गोकुलमित्यपि अत एव भगवान् वक्ष्यति गतांश्चिरायितान् शत्रुपक्षक्षपणचेतस इति आगमने हेतुः स्नेहदुःखितानिति नत्वन्यद्भयं भविष्यतीति भावः ॥ २३ ॥

एवं त्रयमुक्तम् अलौकिकं लौकिकमपि बहुदत्तवानित्याह । एवं सान्त्वय्येति । भगवानित्यङ्गीकारे सामर्थ्यं ननु कथमेवं पूर्वमर्थं स्थापितवान् लीलार्थमेव हि भगवतः सेवकाश्च ते कस्तेषामनुरोध इति चेत्तत्राह । अच्युत इति । स हि सर्वदा च्युतिरहितः पूर्वधर्मपरित्यागे धर्मतः च्युतिः स्यात् न केवलं गोपालानेवार्हयामास किन्तु सव्रजमिति स्त्रीणां पुरुषाणां च सर्वेषामेवार्थे वस्त्राण्याभरणानि च दत्तवान् कुप्यात्राणि व्यवहारपात्राणि सुवर्णरजतातिरिक्तधातुमयानि सादरमिति प्रत्येकं नामग्रहणेन गृहस्थवत् नतु महाराजवत् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रथमं ज्येष्ठत्वाद्बलदेव आह द्वाभ्याम् । हे पितर्युवाभ्यां मातापितृभ्यां यशोदानन्दसंज्ञाभ्यामित्यर्थः । एतच्च युक्तमेवेत्याह । पित्रोरिति । आत्मनो देहादपि आत्मजेष्वभ्यधिका प्रीतिः स्यादेव पोषितौ लालिताविल्यत्र द्विवचनेन मित्रपुत्रे कृष्णे च युवयोस्तुल्यवात्सल्यस्य दृष्टत्वात् युवामेव यथा कृष्णस्य तथा ममापीत्यावयोर्द्वयोरपि पितराविति द्योतयित्वा युवां लालकौ विना कोटिप्राणप्रियतमं कृष्णं भ्रातरं च विना अत्र पुर्यामपरिचितायां देवकीवसुदेवयोः पित्रोर्गृहे मया स्थातुं न शक्यते इत्यनुद्योतितम् ॥ २१ ॥

ननु भो बलभद्र ! सत्यमेव त्वं वसुदेवस्य मन्मित्रस्यैवौरसः पुत्रोऽसि स च विपन्मुक्तश्चिरात् प्राप्तं स्वपुत्रं त्वां कथं त्यक्तुं प्रभविष्यत्यतः त्वं संप्रति स्वपितुस्तस्यैव गृहे तिष्ठ आवां तु त्वद्विच्छेदाविदीर्णस्वहृदयं विवेकशिलया पिधाय कथंचिज्जीविष्यावो न तु वसुदेवस्य सख्युः दुःखं द्रष्टुं प्रभविष्यावो यत आवां तव पोषकावेव पितराविति चेत्तत्राह । स इति । तेषां शिशूनां स एव पिता सैव जननी नत्वाधानकर्त्तापि पिता स्वकुक्षौ धृतवत्यपि जननी ताभ्यामुत्सृष्टानां शिशूनां यदि प्राणा निरयास्यदास्तदा केषां तौ पितरावभविष्यतामतः शिशुभिरपि विवेकिभिः पोषकावेव पितरौ ताभ्यामपि सकाशाद्बहुमाननीयावतो मया नात्र स्थातव्यं यदि स्वयं ब्रह्माप्यागत्य वदेत्तेनापि ममायं हठो न शिथिलयितुं शक्यः । हन्त हन्त पितुस्तव सङ्गे कृष्णो व्रजं गत्वा सुखेन खेलिष्यति अहं तु कृष्णविच्छेददावदग्धो मथुरायां स्थास्यामीति सर्वथैव न भवेत् तस्माद्भो पितरहं शपथमेवेदं ब्रुवे यदि कृष्णो मां हित्वा त्वत्सङ्गेन व्रजं यास्यति तदा मे प्राणाः सद्य एव यास्यन्तीति स्वाभिप्रायो द्योतितः ॥ २२ ॥

ततश्च हन्त हन्त किमहं करोमि यदि बलदेवं नीत्वैव व्रजं यामि तदा व्रजे महासुखं भविष्यति किं त्वत्र यादवानां विशेषतो वसुदेवस्य महादुःखं भविष्यति ममापि महाकलङ्को भावी हाहा कंसेन मे सर्वे पुत्रा हता यस्त्वेकस्तद्धस्तादपि रक्षितोऽवशिष्टोऽभूदयं बलभद्रस्तमपि नीत्वा नन्दो व्रजं जगाम तन्मे नायं सखा किं तु दैवहतस्य मम द्वितीयः कंस

इत्युक्तस्तौ परिष्वज्य नन्दः प्रणयविह्वलः ।
पूरयन्नश्रुभिर्नेत्रे सहगोपैर्व्रजं ययौ ॥ २५ ॥
अथ शूरसुतो राजन् ! पुत्रयोः समकारयत् ।
पुरोधसा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥ २६ ॥
तेभ्योऽदाद्दक्षिणा गावो रुक्ममालाः स्वलङ्कृताः ।
स्वलङ्कृतेभ्यः सम्पूज्य सवत्साः क्षौममालिनीः ॥ २७ ॥
याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः ।
ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवेति भावयन्नतिसंतप्तो वसुदेवः परस्सहस्रानभिशापान्मे दास्यति ततश्च मे कृष्णस्यापि कुतः कुशलमिति भावनासंकटग्रस्तं नन्दं कतिशः क्षणांस्तूष्णीमेव स्थितमालक्ष्य तं युक्त्या प्रबोधयन् कृष्णःससान्त्वनमाह । यातेति । हे तात ! यूयं संप्रति व्रजं यात वयमित्यहं बलदेवो मधुमङ्गलादयः प्रियसखाश्च वो ज्ञातीन् द्रष्टुमेष्यामः संप्रति कतिशो दिनान्यत्रैव पुर्य्यां वसेमेति भावः । कदा आयास्यथेत्यत आह । वः सुहृदां वसुदेवादीनां सुखं विधायेति यथा त्वां कलङ्को न स्पृशेत् यथैतेषां च सपुत्रं बलदेवं प्राप्याभिमत्य संलाल्यास्मद्गृहे स्थास्यतीति विश्वस्य सुखं भवेत्तथा कृत्वेत्यर्थः ॥ २३ ॥

एवं सात्वय्येति । यद्यत्र मम कतिचिद्दिनाविलम्बो भवेत्तदापि न व्याकुलीभवितव्यं मम तत्रैव मनोऽस्त्यत्रत्वेतदनुरोधेनैव स्थितिरिति सव्रजं व्रजवासिभिः सहितं कुप्यानि स्वर्णरजतातिरिक्तकांस्यादिपात्राणि तत्प्रभृतिभिः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनः स्वस्मादपि ॥ २१—२३ ॥

सव्रजं व्रजवासिभिः सहितं वासोऽलङ्कारादिभिः सादरं यथा तथा अर्हयामास तत्र कुप्यानि स्वर्णरजतातिरिक्तकांस्यादिपात्राणि ॥ २४-२६ ॥

---

भाषा टीका ।

हे पितः ! आप दोनों ने बडे स्नेह से हमारा लालन पालन किया है पिता माता को तो अपने शरीर से भी पुत्रों पर बडी प्रीति होती है ॥ २१ ॥

वही पिता है वही माता है जो कि अपने पुत्र की नाईं उनके पोषण करते हैं जिन पुत्रों को कि पोषने रखने में समर्थ नहीं होने से बंधुओं ने छोड दिया है ॥ २२ ॥

हे तात ! आप लोग व्रजको जाओ हम सब सुहृदों के सुख विधान करके स्नेह से दुःखित ज्ञाति आप लोगों के दर्शन को आवेंगे ॥ २३ ॥

इस प्रकार से अच्युत भगवान् ने नंदजी को सांत्वन करके वस्त्र अलंकार ताम्रादि पात्र द्रव्यों को देकर आदर पूर्वक सब व्रज वासियों सहित पूजन किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पुरोधसा गर्गाचार्येण द्विजसंस्कृतिमुपनयनम् ॥ २६ ॥

गावो गाः रुक्मस्य माला विद्यन्ते यासां ताः क्षौमवस्त्रमालावतीः ॥ २७ ॥

याः पूर्वं मनोदत्ता आसंस्ता पश्चाददात् ननु ताः कंसेनापहृताः सत्यम् राजगोष्ठादाच्छिद्यादत्ता इत्याह । कंसेनाधर्मत इति ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्युक्त इत्यस्य यात यूयमित्याद्यन्त पूर्वपद्यत्रयेण व्यवहितेनाप्यन्वयः । प्रणयविह्वल इति स्तम्भमोहादिकञ्च सूचयति गोपैः सहेति तेषामपि प्रत्येकमालिङ्गनं तथा प्रेमविह्वलत्वादिकं चोक्तम् । "अहो भगवतो नौमि बलात् सर्वप्रवर्तनम् । प्राहिणोत् यः स शून्येऽपि श्रीनन्दादीनपि व्रजे । त्वां व्रजेश्वरि ! शोचामि त्वाञ्च वृन्दावनेश्वरि ! कृष्णं विना गतेष्वेषु हा हा जीविष्यथः कथम्" ॥ २५ ॥

अथ तदनन्तरमिति युक्तत्वात् शूरसुत इति स्वपित्रा सहित इति सूचयति । अतः श्रीरोहिणीमपि व्रजादानयामास इति ज्ञेयम् ॥ २६ ॥

रुक्मेति तैर्व्याख्यातं तत्र विद्यन्त इति पदन्यासाद्रुक्ममालिनीरिति मत्वर्थीयान्तपाठस्तर्क्यते स च कुत्रापि न दृश्यते इति तद्विचार्य्यं स्वलङ्कृतेभ्य इति कर्मप्रत्ययेन दातृकर्तृकत्वमेव बोध्यते ॥ २७ ॥

रामकृष्णयोर्जन्मनक्षत्रे तदुपलक्षितसमय इत्यर्थः । अतः कृष्णावतारोत्सवेत्यादिवत् रामजन्म श्रुत्वापि तथैवाददादिति बोद्धव्यं तथा दानं हेतुर्महामतिरिति । तज्जन्मसमये भाविवृत्तज्ञानादधुना च तदनुस्मरणादिति भावः ॥ २८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थमुक्तो नन्दः तौ रामकृष्णावालिङ्ग्य प्रणयेनानुरागेण विह्वलः अश्रुभिर्नेत्रे पूरयन् गोपैः सह व्रजं प्रति ययौ ॥ २५ ॥

अथानन्तरं शूरसुतो वसुदेवः पुरोधसा गर्गाचार्येण ब्राह्मणैश्च यथाविधि उभयोः रामकृष्णयोर्द्विजसंस्कृतिं द्विजत्वापादकसंस्कारम् उपनयनं सम्यगकारयत् ॥ २६ ॥

ततः स्वलङ्कृतेभ्यः तेभ्यः ब्राह्मणेभ्यः सम्पूज्य दक्षिणां गावो गाश्चादात् कथम्भूता रुक्मस्य सुवर्णस्य माला आसां सन्तीति तथा स्वलङ्कृताः वस्त्रैः सहिताः क्षौमवस्त्रमालावतीः ॥ २७ ॥

रामकृष्णजन्मनक्षत्रे याः गावो मनोदत्ताः ताश्चानुस्मृत्याऽऽददौ ननु ताः कंसेनापहृताः सन्त्यच राजगोष्ठादाच्छिद्यदत्ता इत्याह । कंसेनाधर्मत इति ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

द्विजसंस्कृतिं ब्राह्मणसंस्कारम् उपनयनलक्षणम् ॥ २६ ॥

गावो गाः रुक्मं सुवर्णं क्षौमाणि पुष्पमालाश्चासां सन्तीति क्षौममालिनीः ॥ २७ ॥

याः कृष्णरामयोः जन्मनक्षत्रे मनसा दत्ताः सङ्कल्पितास्ताश्च अददात् याः कंसेनाधर्मेण हृतास्ता अपि ॥ २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

दानानन्तरं गताविति शङ्कां वारयितुमाह । इत्युक्त इति । तौ कृष्णरामौ परिष्वज्य नन्दः प्रणयविह्वलः भगवद्दत्तसर्वार्थैः पूर्णः किञ्चिदपि वक्तुमसमर्थः तत्र अश्रुभिः नेत्रे पूरयन् गोपैः सह व्रजं ययौ भगवता गोपाला अपि प्रस्थापिताः ननु मित्राणीव केचित्स्थापिताः ॥ २५ ॥

एवमेतेषां निरोधमुक्त्वा वेदेन भगवतोऽपि निरोधमाह । अथेति यावदध्यायपरिसमाप्ति । तत्र प्रपञ्चविस्मृतिं पञ्चभिराह । शिष्टैर्वेदार्थासक्तिर्वक्तव्या अथ सर्वकार्यसिद्ध्यनन्तरं शिष्टाचारं शूरसुतः वसुदेवः राजनीति क्षत्रियाणामवश्यकर्तव्य इति ज्ञापनार्थं पुत्रयोः सम्यगकारयत् पुरोधसा गर्गेण अन्यैश्च ब्राह्मणैः क्षत्रियाणां पुरोहित एवोपदेष्टा उपनयने मातामहप्राधान्यव्यावृत्त्यर्थं शूरपदं यथावत् स्वगृह्योक्तानुसारेण द्विजसंस्कृतिं येन द्विजो भवति चूडाकरणसंस्कारः पूर्वमेव जातः काकपक्षधराविति वचनात् उपनयनसंस्कारस्तत्र कृतः ब्राह्मणे पञ्चमाब्दमिति संवत्सरविचारेण तु एकादश एव भवति काम्यपक्ष एवाश्रयणीयः सप्रायश्चित्तमित्यन्ये ॥ २६ ॥

ततस्तेभ्यः उत्सवार्थं दक्षिणार्थं च दानानि दत्तवानित्याह । तेभ्य इति । गवादय एव दक्षिणा विहिता वा रुक्ममालायुक्ताः स्वलङ्कृतास्स्वलंकृतेभ्यः संपूज्य तेभ्यश्च विधानपूर्वकमन्यत्तद्द्वयं भगवज्जन्मनि रामजन्मनि च तावदन्यथा वा या मनोदत्ताः महामोदेरेति स्मरणे पूर्वमेव तेरस्यतीति दाने वा ताः अनुस्मृत्य ब्राह्मणेभ्यः अदात् नन्वेतावत्यो गावः कुत्रत्या वसुदेवस्येति चेत्तत्राह । कंसेन गृहलुण्ठनसमये हृताः ॥ २७ ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रणयविह्वलः पुत्रविच्छेदोत्थमूर्च्छो विवशः व्रजं ययौ रामकृष्णौ तौ तु श्रीवसुदेवस्य गृहमागत्य सुखं वर्त्तेते स्मेति अत्र केचिद्रसज्ञाः प्रेम्णोऽणुमात्रमप्यपचयमसहमाना आक्षिपन्तो विवदन्ते इति तांश्च समाधित्सामो व्याख्यान्तरेण तच्च ये उपादित्सते त एवोपाददतां तत्रायमाक्षेपः पितर्युवाभ्यामित्यादिश्लोकपञ्चकस्य यथाश्रुतार्थः खलु प्रेमप्रतिकूल एव स्पष्टः एतावता व्याख्यानेनापि न प्रेमा स्थिरीभवति नन्दकृष्णयोर्मिथस्त्यागात् तत्रापि कृष्णः सर्वेश्वरो दुर्गमलीलो नन्दं पितरमपि त्यक्त्वा तिष्ठतु नाम नन्दस्तु कृष्णं त्यक्त्वा कथं व्रजं गन्तुमशकत् प्राणकोट्यधिकप्रेष्ठं तमप्युपेक्ष्य व्रजे गोधनाद्यपेक्षैव किं तस्य दुस्त्यजाभूत् मथुराप्रान्त एव तावत् कालं किं नावसत् तद्व्याख्यानं चैवं श्रीनन्दप्रबोधनामात्रोपक्षीणं न तु रामकृष्णयोस्तादृश्येव मनसि निष्ठा यास्तत्री यतो रामोऽपि व्रजमायास्यन् दशमे वर्णितो न तु कृष्णः निखिलान् स्ववध्यान् शत्रून् दन्तवक्त्रपर्यन्तान् हत्वा निश्चिन्तीभूय यद्व्रजागमनं पद्मोत्तरखण्डदृष्टं यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वेति प्रथमस्कन्धीयवाक्यज्ञापितं च वर्त्तते तदपि न प्रेमलक्षणम् संगमयति तथा हि तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः । सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैरिति शुकोक्तौ दौत्यकैर्दूतवाक्यैरिति टीकाकाराणां व्याख्यानं तत्र बहुवचनेन बहूनां दूतानां वाक्यैरेकस्यैव वा दूतस्य आयास्ये आयास्ये आयास्ये अवश्यमायास्याम्येवेति पुनः पुनरुक्तेरिति बुद्ध्यते कीदृशैः सप्रेमैः प्रेमसहितैरिति दुर्लङ्घ्याज्ञस्य राज्ञो धनुर्मखदर्शनार्थकनिमन्त्रणानुरोधेनैवाद्य मथुरां युष्मांस्त्यक्त्वा यामि न तु स्वेच्छया अतः श्वो धनुर्मखं दृष्ट्वा परश्व आयास्यामि तत्र यदि कार्यान्तरमापतेत् तदपि श्व एव कृत्वा परश्वस्तु शीघ्रमायास्याम्येवेत्येषोऽर्थ एव कृष्णस्य यदि वाङ्मनसयोः स्यात्तदैव तद्वाक्यानां प्रेमसहितत्वं स्यादन्यथा तु कपटसहितत्वमेवं यथा न लब्धो दैवहतयोर्वासो नौ भवदन्तिके । यां बालाः पितृगेहस्थाः विन्दन्ते लालिता मुदमित्यादिदेवकीवसुदेवमोक्षनार्थकानां तद्वाक्यानामिति सन्तु वा तद्वाक्यानि तादृशान्येव श्रीशुकदेवः कथं सप्रेमैरित्यनेन तानि विशिनष्टि स्म तत्तस्माद्यदि जरासन्धादिदुष्टदमनादिनानाकृत्यान्यनपेक्ष्यैव कंसवधपरदिन एव कृष्णः शीघ्रं व्रजमागच्छेत् तदैव तस्य गोपीनां प्रेम्ण्यपेक्षा स्यादन्यथा तूपेक्षैव सप्रेमैरिति पदार्थश्चालीक एव स्यात् तस्माद्गोपपरिषीदन्त्तन्तर्गाथा तत्रेयं चिन्ता वसुदेवादयोऽपि प्रेमवन्तो भवन्त्येवैतेषामप्युपेक्षा अनुचिता नन्दादयस्त्वसमोर्ध्वप्रेमवन्तस्तेषामुपेक्षा सर्वथैवानुचिता जरासन्धादिदुष्टवधशिष्टपालनमप्यवतारप्रयोजनमवश्यं सम्पाद्यं रुक्मिण्यादिपारिजाताद्याहरणधर्मपुत्रादिसाहित्यविचित्रचरित्रात्मिका द्वारिकादिलीलाप्यवश्यप्रकाश्या धनुर्मखं दृष्ट्वैवायास्यामीति गोपीष्वागमनं प्रतिश्रुतं च सत्यं कार्यं वाल्ह्वादोहन कनकस्वरूपमिव महाप्रयासविप्रलम्भप्रकाशितं तासामसमोर्ध्वप्रेमस्वरूपञ्च मथुराद्वारकाप्रेमपरिकरमुख्यमभिज्ञचूडामणिमुद्धवं दर्शयित्वा तस्यैव

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रेम्णः सर्वोत्कर्षश्च स्थापनीय इत्याद्यावश्यकनिखिलकृत्यसमाधात्रीमतर्क्यैश्वर्यां स्वीययोगमायाशक्तिमाश्रित्य बलदेवसहित एव कृष्णः श्रीनन्दं पितरमासाद्य तदैव तेषां नन्दादीनां स्वस्य च द्वौ द्वौ प्रकाशावाविर्भाव्य प्रथमेन प्रकाशेन श्रीनन्दं प्रति पितर्युवाभ्यामिति श्लोकत्रयं यदुवाच तस्य एवं सान्त्वयेति तदुत्तरस्य श्लोकद्वयस्य च व्याख्याकृतैव तत्रैव प्रकारान्तरेण वर्तमानौ कृष्णरामावाहतुः पितरिति युवाभ्यां स्निग्धाभ्यां आवां कृष्णरामौ द्वावपि पोषितौ लालितौ चेति युवयोरावां पोष्य पुत्रावेव न त्वात्मजौ किमित्यावाभ्यां त्वं पृच्छ्यसे अत्र तत्त्वं ब्रूहि अत्रत्यास्तु नन्दस्य पोष्यपुत्रावेवेत्युग्रसेनादयः सर्वे एव यादवा ब्रुवन्ति अत एव देवकीवसुदेवौ आवामात्मजौ मत्वा लालनादिकं कृत्वा मथुरायामत्रैव बहुतरं निरुद्ध्य रक्षितुमीहेते त्वत्समीपमायातुमपि न दद्याते त्वं तत्प्रियसखोऽपि लौकिकरीत्या श्वो भोजनार्थमपि न निमन्त्रितः अद्यापि त्वां मिलितुमपि केऽपि यादवा नायान्ति आवां त्वतितरामुद्विग्नौ तैरलक्षितं बलात् पलाय्यैव त्वत्समीपमायातावितिति भावः । ननु भोः कृष्ण ! त्वं पूर्वजन्मनि वसुदेवस्य पुत्र आसीरेव "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज" इति त्वन्नामकरणसमये गर्गेणोक्तं तेनैव वसुदेवं प्रत्यपि तथैवोक्तमित्यनुमिमे अतो वसुदेवस्त्वां गुणार्णवमतज्जन्मन्यपि पुत्रत्वेनाभिमत्य जिघृक्षति बलदेवं स्वपुत्रं तु स्वगृहं नेष्यत्येवेत्यहं जाने एव तत् त्वामप्यहं पृच्छामि एतेषां वाचैव त्वं किमावां पोषकौ पितरावेव संप्रति मन्यसे आवयोः किं त्वं पोष्य एव पुत्रोऽभूस्तत्र कृष्णः सास्रमाह । पित्रोः स्वस्वात्मजेष्वेव पुत्रेषु आत्मनो देहाद जीवात्मनश्चापि सकाशादप्यधिका प्रीतिर्भवेत् यद्यहं युवयोः पोष्य एव पुत्रः आत्मजस्तदा कथमहं युवयोरात्मप्राणकोटेरपि प्रियोऽभूवमतस्त्वद्वैरिणां वसुदेवादीनां मुखमप्यतः परं न द्रक्ष्यामीति भावः । ननु भो वत्स ! बलदेव ! तव कोऽभिप्रायस्तं ब्रूहीत्यत आह । स पितेत्यादि । तदहं वसुदेवस्य गृहे त्वां कृष्णं च हित्वा नैव स्थास्यामि यदि स्वयं ब्रह्माप्यागत्य वदेदिति पूर्वव्याख्यात एव भावः । ततश्च यदि बलदेवमपि नीत्वा व्रजं यामि तर्ह्येते महादुःखिनो भविष्यन्ति एतैः स्वार्थपरैर्मयि वैरभावः कृत एव अहं तु वैरं कथं करवाणीति क्षणं चिन्तयन्तं व्रजराजं ता सत्वरमाहतु । यातेति । हे तातेति हे तात ! यूयं व्रजं यात वयं च व्रजं यामः न चात्र क्षणमपि विलम्ब्यतामिति भावः "ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फल"मिति नीतिशास्त्रं जानास्येव तदपि स्वसाधुत्वेन यद्येषां दुःखगन्धमपि सोढुं न शक्नोषि तर्हि शृणु यद्ब्रूमहे इत्याहतुः । ज्ञातीनिति । वो युष्माकं यादवत्वेन ज्ञातीन् वसुदेवादीन् द्रष्टुम् एष्यामः सुहृदां तत्रत्यानां सौहार्दवतां जनानां स्वदर्शनदानादिना सुखं विधाय इति ताभ्यामुक्तस्तौ कृष्णरामौ वामदक्षिणाभ्यां भुजाभ्यां परिष्वज्यैव कृपणः स्वधनमिव न तु स्वाङ्गविच्युतीकृत्येत्यर्थः । प्रणयानन्दविवशः अश्रुभिरानन्दधाराभिर्नेत्रे पूरयन्नेव कनकशकटमारुह्य व्रजं ययौ अतो योगमायाप्रभावात् परस्परालक्षित एको नन्दः कृष्णवियुक्त एव व्रजं ययावन्यस्तु कृष्णसंयुक्त इति एवं च व्रजस्थानामपि सर्वेषां गोपीगोपपश्वादीनां प्रकाशद्वयीकरणादेके कृष्णवियुक्तेन नन्देन सह दुःखसमुद्रे निमग्ना अन्ये कृष्णसंयुक्तेन नन्देन सहानन्दसमुद्रे निमग्ना व्रज एव तत्र परस्परमलक्षिता असंपृक्ता एव वर्त्तन्ते स्म यथा द्वारकायां नारददृष्टप्रकाशेषु एकत्र कृष्णं लालयन्ती भोजयन्ती देवकी परमानन्दनिमग्ना तदैवान्यत्र कृष्णवियुक्ता हन्त हन्त मृगयां कृत्वा अधुनापि मत्पुत्रो नायातः क्षुधातृषा व्याकुल इति वदन्ती परमदुःखे निमग्नैवेति यदुक्तम् भागवतामृते आश्चर्यमेकदैकत्र वर्त्तमानानपि ध्रुवम् । परस्परमसम्पृक्तस्वरूपाण्येव सर्वथेति"यद्यपि प्रकाशास्तु न भेदेषु गण्यते सहि नो पृथगित्युक्तेर्वस्तुतो न प्रकाशानां भेदस्तदप्यभिमानचेष्टादीनां लीलाशक्तिप्रभावाद्भेदस्तिष्ठत्येवेति योगमायाविभूत्यध्याये बहुलाश्वश्रुतदेवोपाख्याने च व्यक्तीभविष्यतीति प्रकाशद्वयस्य क्रमेण प्रयोजनद्वयं यथा स्वीयकनकस्यानर्घ्यस्य स्वरूपज्ञापनार्थमेव यथा वह्निना तत्सन्दह्यते तथैव स्वीयसर्वप्रेमपरिकरमुख्यमप्युद्धवं दिव्योन्मादचित्रजल्पादिभिर्महाचमत्कारमयं व्रजप्रेम्ण उत्कर्षं ज्ञापयितुमेव प्रथमो वियोगमयः प्रकाशः प्रकाशितः अत एव व्रजं प्रत्युद्धव एव प्रस्थापयिष्यते स च प्रायस्तमेव वियोगमयं प्रकाशं दृष्ट्वा महाप्रेमचमत्कारमाप्नुवन्नेताः परं तनुभृतो भुवीति नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः... 

श्रियोऽङ्गेति आसामहो चरणरेणुजुषामित्यादिपद्यैस्तत्प्रेम्ण एव सर्वोत्कर्षमुद्घोषयिष्यति स एव प्रकाशः कुरुक्षेत्रं गत्वा देवकीवसुदेवादीन् रुक्मिण्यादींश्च स्वं दर्शयित्वा महाप्रेमचमत्कारं प्रापयिष्यति बलभद्रोऽपि व्रजं गतस्तमेव प्रकाशं प्रेमोन्मादमयं दृष्ट्वा चमत्कारमाप्स्यतीति व्रजविषयकं स्वाश्रयकं प्रेमाणां निश्चलमेव ज्ञापयितुं द्वितीयः संयोगमयः प्रकाशः अत एव विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितमित्यत्राहनी इति द्विवचनेन द्वे अहनी व्याप्यैव विच्छेदो न तत इति ज्ञापितम् उद्धवेनापि हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् । यदाह वः समागत्य कृष्णः सत्यं करोति त" दिति तदा वर्तमानकाळ एव प्रयुक्तः तथा तेन व्रजप्रवेशे प्रथमं स संयोगमय एव प्रकाशः सामान्यतो द्रक्ष्यते यद्वक्ष्यते वासितार्थेऽभियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैरिति गोदोहशब्दाभिरवं वेणूनां निस्वनेन चेति स्वलंकृताभिर्गोपीभिर्गोभिश्च सुविराजितमिति तादीपद्यैर्भैर्मणिभिर्विरेजु रज्जुविकर्षद्भुजकङ्कणस्रजः चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कुमाननाः सामान्यतो द्रक्ष्यते उद्गायतीनामरविन्दलोचनमित्यादि कृष्णसंयोगानन्दलक्षणमित्येवं प्रकाशद्वयस्य प्रयोजनं प्रमाणं चोक्तम ॥ २५ ॥

पुरोधसा गर्गेण द्विजसंस्कृतिमुपनयनम् ॥ २६ ॥

क्षौमवस्त्रमाल्यवतीर्गाः २७ ॥

मनसा दत्ता या यावत्य आसन् कंसेनापहृता इति ता एव स्वीया राजगोष्ठादाच्छिद्य अददात् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्विजसंस्कृतिमुपनयनम् ॥ २६ ॥

तेभ्यः गावः गाः अदात् क्षौमवस्त्रमालावतीः ॥ २७—२८ ॥

भाषा टीका ।

इतने कहने से नन्दजीने प्रेमसे विह्वल होकर राम कृष्ण

ततश्च लब्धसंस्कारौ द्विजत्वं प्राप्य सुव्रतौ ।
गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ ॥ २९ ॥
प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ ।
नान्यसिद्धामलं ज्ञानं गूहमानौ नरेहितैः ॥ ३० ॥
अथो गुरुकुले वासमिच्छन्तावुपजग्मतुः ।
काश्यं सान्दीपनिं नाम ह्यवन्तीपुरवासिनम् ॥ ३१ ॥
यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ।
ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥ ३२ ॥

भाषा टीका ।

दोनों को आलिंगन किया नेत्रों को आंसु से भरलाये फिर गोपों के सहित व्रजको चले गये ॥ २५ ॥

हे राजन् ! इसके अनंतर वसुदेवजी ने पुरोहित तथा ब्राह्मणों के द्वारा दोनों पुत्रों के यज्ञोपवीतादिक द्विजाति संस्कार कराये ॥ २६ ॥

उन ब्राह्मणों को दक्षिणा दिये ब्राह्मणों को अलंकार पहराये पूजा किया और सुवर्ण की माला अलंकार सहित और बछरों सहित रेशमों की माला पहराई गऊ दिई ॥ २७ ॥

और श्रीकृष्ण जन्म समय में जो गउ मनसे दान किये थे उनको कंसने बंद कर दियाथा उनको भी स्मरण करके देते भये ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

गायत्रं व्रतं ब्रह्मचर्यम् ॥ २९ ॥

प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ अत एव सर्वज्ञौ स्वतः सिद्धममलं ज्ञानं प्रच्छादयन्तौ नरचेष्टितैः ॥ ३०-३१ ॥

यथा यथावत् उपसाद्य प्राप्य गुरौ वृत्तिमन्यान् ग्राहयन्तौ शिक्षयन्तौ गुरुमुपेतावुपगतौ सेवितवन्तावित्यर्थः ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गर्गादिति तच्छिक्षयेत्यर्थः । गायत्रमिति प्राजापत्यब्राह्मयोरप्युपलक्षणं तत्र गायत्रं गायत्रीमधीयानस्य त्रिरात्रव्यापि प्राजापत्यं वेदारम्भपर्यन्तं ब्राह्मं तत्समाप्तिपर्यन्तम् अतएव सामान्यतो ब्रह्मचर्यमेव तैर्व्याख्यातं सुव्रतौ सन्तौ ॥ २९ ॥

किञ्च प्रभवाविति युग्मकं सर्वविद्यानां प्रभवावपि अथो अनन्तरम् उपजग्मतुः रथमारुह्येति ज्ञेयम् । रथस्य वक्ष्यमाणत्वात् । काश्यं काश्यां जातम् ॥ ३० ॥ ३१ ॥

यथा समित्पाणिरित्यादि श्रुत्युक्तप्रकारेण दान्तौ तथा च श्रीहरिवंशे । "निवेद्य गोत्रं स्वाध्यायमाचारेणाप्यलङ्कृतौ । शुश्रूषू निरहङ्कारावभुवौ रामजनार्दनाविति" । वृत्तिमनुवृत्तिं परमदैवतमिव आदृतौ सादरौ गुरुणा सम्मानितौ सन्तौ वा । स्मेति तद्वृत्तं प्रसिद्धमेवेत्यर्थः ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ईहितैः चेष्टाभिः ॥ ३०—३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततश्चेति लब्धः संस्कार उपनयनाख्यो याभ्यां तौ द्विजत्वं प्राप्य यदुकुलस्याचार्याद्गायत्रं व्रतं गर्गोपदिष्टं ब्रह्मचर्यमास्थिताचाभितौ ॥ २९ ॥

अथो ततः सर्वभूतानां प्रभवौ प्रकर्षेण भवन्त्याभ्यामिति प्रभवावतः सर्वज्ञौ स्वतः सिद्धामलं ज्ञानं नरचेष्टाभिः प्रच्छादयन्तौ ॥ ३० ॥

गुरुकुलावासमिच्छन्तौ काश्यं काश्यपगोत्रजमवन्तीपुरवासिनं सान्दीपन्याख्यं गुरुमभिजग्मतुः ॥ ३१ ॥

तौ रामकृष्णौ यथावत् उपसाद्य दान्तौ जितेन्द्रियौ सन्तौ निर्दिष्टां गुरौ वृत्तिमन्यान् ग्राहयन्तौ शिक्षयन्तावादरयुक्तौ देवभक्त्या गुरुमुपेतौ सेवितवन्तौ इत्यर्थः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

द्विजत्वमुपनीतत्वं प्राप्य लब्धसंस्कारौ लब्धदेहशुद्धी गायत्रं व्रतं गायत्रीजपनियमं ब्रह्मचर्यमथ्वा ॥ २९ ॥

प्रभवौ मूलकारणे नान्येत्येकं पदं नगनाकशब्दवत् अन्यस्य सिद्धं न भवतीति नान्यसिद्धम् औत्पत्तिकम् अत एवामलं यज्ज्ञानं तन्नरेहितैः मनुष्यचेष्टाभिश्छादयन्तौ ॥ ३० ॥

यस्मादथो तस्मात् काश्यङ्काश्यपगोत्रजातम् ॥ ३१ ॥

यथावदुपसाद्य समित्पाणी उपेतौ स्म प्रापतुः भक्त्या देवमिवेत्यनेन "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इति श्रुतिं सूचयति ॥ ३२ ॥

तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः ।
प्रोवाच वेदानखिलान् साङ्गोपनिषदो गुरुः ॥ ३३ ॥
सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा ।
तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम् ॥ ३४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽन्येन निरोधे कारितेऽपि स्वतोऽपि कर्त्तव्यमिति व्रतात्मकं नियमं पूर्वसिद्धत्यागापरपर्यायं स्वयं कृतवन्तावत्याहि । ततश्चेति द्वाभ्याम् । ग्रहणसमर्थनभेदेन तदनन्तरमेव संस्कारादिनं परित्यज्य दिनत्रयं मासषट्कं सम्वत्सरमात्रं वा सुव्रतौ शोभनवेदव्रतयुक्तौ ब्रह्मचर्यनियमयुक्तौ वा यदुकुलस्यैवाचार्यो गर्ग इति गायत्रं व्रतं सावित्रापरपर्यायं व्रतमास्थितौ जातौ ॥ २९ ॥

नन्वेतस्य व्रतस्य कारुयत्वं यथा सरसस्फूर्तिर्भवति तदत्र प्रकृते नोपयुज्यत इति किमिति व्रतमास्थितावित्याशङ्कायामाह । प्रभवाविति । यद्यपि सर्वविद्यानां प्रभवौ विद्यापेक्षाभावे स्वतोऽपि सर्वज्ञौ मास्तु वा ज्ञानं जगदीश्वरौ कर्तुमकर्तुमन्यथा कर्तुं समर्थौ क्रियाशक्तिरेवोत्कृष्टेत्यर्थः । तथाप्यनन्यसिद्धं स्वतः सिद्धमेव ज्ञानं नरेहितैर्मनुष्यलीलाभिः गूहमानौ गोप्यं कुर्वाणौ गायत्रं व्रतमास्थिताविति पूर्वेणैव सम्बन्धः । सर्वज्ञता ब्रह्मविदामिव कृत्रिमाऽपि भवतीति नान्यसिद्धेत्युक्तम् ॥ ३० ॥

एवं प्रपञ्चविस्मरणात्मकनिरोधमुक्त्वा आसक्त्यात्मकनिरोधमाह । अथो इति विज्ञात्वा ततो द्वाभ्यां प्रत्यापत्तिं वक्ष्यति अन्यथा अग्रे क्रियमाणो निरोधः कर्तृरहितः स्यात् आत्मैकविंश इति नक्षत्रस्थानीया एते धर्मा भगवतो निरूपि अवश्यं हि गुरुकुल एव विद्याग्रहणम् अतः गुरुकुले वासमिच्छन्तौ जातौ तत ईश्वरत्वात्कश्चिद्गुरुः स्वयमुपस्थितः भगवता वा कल्पित इति शङ्कां वारयितुमथ जग्मतुः काश्यमिति । सान्दीपनिरिति सन्दीपनस्यापत्यं सान्दीपनिः "अत इञ्" पितृनाम्नैव तस्य प्रसिद्धिः काश्य इति एकदेशग्रहणेन काश्यपगोत्रजः काश्यो वा स्वतन्त्रः गोत्रप्रवर्तकः काश्यः कुत्सो गृत्समद इति गृत्समदात् शौनकः तथा काश्यस्यापि ब्रह्मवंशजनकत्वं यद्यपि विज्ञातो नोक्तं तथाप्यवगम्यते केचन ऋषयः पितृनाम्नैव प्रसिद्धा इति सन्दीपनिरेव निरुक्तः सम्यक् दीपनं बुद्धेर्यस्मादिति अवन्तीपुरं तु शैवं महाकालस्थानं तत्रापि यथा मुक्तिर्भवति सोऽपि तीर्थवासेन विरक्तो महान् ॥ ३१ ॥

तत्र गत्वा यथा गुरुवृत्तिः कर्तव्या तथैव कृतवन्तौ नन्वैश्वर्येण धनादिना वा विद्याग्रहणमित्याह । यथोपसाद्येति । अरिक्तहस्ततया ब्रह्मचर्यमागामुपमानयस्वेत्यादि वाक्यात् उपसाद्य निकटं गत्वा आवश्यकधर्मपरिग्रहणार्थमाह । दान्ताविति । नन्वेवं किमर्थं कृतवन्तौ तत्राह । गुरौ वृत्तिमनिन्दितां ग्राहयन्तौ गुरावेवं गुरुशुश्रूषयैव नीचत्वेनैव विद्याप्राप्नोति शिक्षयितुं निन्दिता वृत्तिर्धनादिना अत एव उपेतौ स्म यतः उपनीतौ गुरुणा समीपे आनीतौ अत्र प्रमाणं न वक्तव्यं गुरुः कथमेवं धार्ष्ट्यं कृतवानित्यपिनाशङ्कनीयं यतः स्मेति प्रसिद्धं भगवदिच्छा तत्र युक्तिः ततो ग्रहणानन्तरं विहितभक्त्या परमादरयुक्तौ प्रेमबहिरपि भक्तिधर्मोऽपि पदद्वयेनोक्तः देवमिव आराध्येष्टदेवतामिव उपेतौ स्म बहिरन्तश्च समीपं गतौ स्मेत्यर्थः ॥ ३१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गायत्रं ब्रह्मचर्य्यम् ॥ २९ ॥

अनन्यसिद्धं स्वाभाविकं ज्ञानं नरचेष्टितैरेव यत आच्छादयन्तावथो अत एव गुरुकुले इत्यादि ॥ ३०—३१ ॥

यथा यथावत् गुरौ वृत्तिम् उपसत्तिम् अन्यान् ग्राहयन्तौ शिक्षयन्तौ उपेतौ स्म सेवितवन्तौ गुरुणा तेनाप्याद्दतौ ॥ ३२ ॥ ३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गायत्रं सावधिब्रह्मचर्य्यम् ॥ २९ ॥

ननु सर्वज्ञस्य सर्वगुरोः श्रीभगवतः तदवतारस्य बलस्य च गुरुकुले वासः किमभिप्राय इत्यत्र नरशिक्षार्थं इत्याह । प्रभवाविस्यादिना । प्रकर्षेण भवन्त्याभ्यामिति प्रभवौ नरेहितैः नरशिक्षार्थकैः नरचेष्टितैः नान्यसिद्धं स्वाभाविकममलं ज्ञानं गूहमानौ प्रच्छादयन्तौ ॥ ३०—३१ ॥

तौ रामकृष्णौ यथा यथावदुपसाद्य प्राप्य गुरौ अनिन्दितां शुद्धां वृत्तिमन्यान् ग्राहयन्तौ शिक्षयन्तौ भक्त्या देवमिव गुरुमुपेतौ उपगतौ सेवितवन्तौ अत्र "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति । श्रुतिरनुसंधेया ॥ ३२ ॥

भाषा टीका ।

तिसके पीछे राम कृष्ण दोनों द्विज संस्कार के होने से द्विजत्व को प्राप्त भये सुंदर व्रतों को करने लगे और ब्रह्मचर्य व्रत को धारण करते भये ॥ २९ ॥

वे सर्वज्ञ हैं जगदीश्वर हैं सर्व विद्याओं के प्रभु हैं उनका ज्ञान स्वयं सिद्ध है तौ भी मनुष्य चेष्टाओं से उस ज्ञान को गुप्त करके रहते भये ॥ ३० ॥

इसके अनंतर गुरु कुल में वास करने की इच्छा से अवंतीपुर उज्जैन में रहने वाले काशीके काश्यपगोत्री सांदीपनी गुरुके पास जाते भये ॥ ३१ ॥

वे राम कृष्ण दोनों जितेंद्रिय होकर निर्मल वृत्ति गुरुके विषे करके औरों को गुरु सेवा शिखाते हुये भक्ति से देवता सरी का गुरू में आदर करते भये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शुद्धो भावो यासु ताभिरनुवृत्तिभिः साङ्गोपनिषदः अङ्गानि शिक्षादीनि तैरुपनिषद्भिश्च सहितान् ॥ ३३ ॥

सर्वं नरवरश्रेष्ठौ सर्वविद्याप्रवर्त्तकौ ।
सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ! ॥ ३५ ॥
अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः ।
गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ! ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सरहस्यं यन्त्रदेवताज्ञानसहितम् धर्मान्मन्वादिधर्मशास्त्राणि न्यायपथान्मीमांसादीन् आन्वीक्षिकीं तर्कविद्याम् षड्विधां "सन्धिश्च विग्रहो यानयासनं द्वैधमाश्रय "इत्येवं षड्विधां राजनीतिम् ॥ ३४ ॥

सकृन्निगदमात्रेणैकवारं गुरोरुच्चारणमात्रेण ॥ ३५ ॥

तावतीश्चतुःषष्टिकलाः ताश्च शैवतन्त्रोक्ता लिख्यन्ते यथा गीतम् ॥१॥ वाद्यम् ॥ २ ॥ नृत्यम् ॥ ३ ॥ नाट्यम् ॥ ४ ॥ आलेख्यम् ॥ ५ ॥ विशेषकच्छेद्यम् ॥ ६ ॥ तण्डुलकुसुमबलिविकाराः ॥ ७ ॥ पुष्पास्तरणम् ॥८ ॥ दशनवसनाङ्गरागाः ॥९ ॥ मणिभूमिकाकर्म ॥१०॥ शयनरचनम् ॥ ११ ॥ उदकवाद्यमुदकघातः ॥१२॥ चित्रयोगाः ॥१३ ॥ माल्यग्रथनविकल्पाः ॥१४॥ शेखरापीडयोजनम् ॥१५ ॥ नेपथ्ययोगाः ॥ १६ ॥ कर्णपत्रभङ्गाः ॥ १७ ॥ सुगन्धयुक्तिः ॥ १८ ॥ भूषणयोजनम् ॥ १९ ॥ ऐन्द्रजालम् ॥ २० ॥ कौचुमारयोगाः ॥ २१ ॥ हस्तलाघवम् ॥ २२ ॥ चित्रशाकापूपभक्ष्यविकारक्रियाः ॥ २३ ॥ पानकरसरागासवयोजनम् ॥ २४ ॥ सूचीवायकर्म ॥ २५॥ सूत्रक्रीडा ॥ २६ ॥ वीणाडमरुकवाद्यानि ॥ २७ ॥ प्रहेलिका ॥ २८ ॥ प्रतिमाला ॥ २९ ॥ दुर्वचकयोगाः ३० ॥ पुस्तकवाचनम् ॥ ३१ ॥ नाटकाख्यायिकादर्शनम् ॥ ३२ ॥ काव्यसमस्यापूरणम् ॥ ३३ ॥ पट्टिकावेत्रवाणविकल्पाः ॥ ३४ ॥ तर्ककर्माणि ॥ ३५ ॥ तक्षणम् ॥ ३६ ॥ वास्तुविद्या ॥ ३७ ॥ रूप्यरत्नपरीक्षा ॥ ३८ ॥ धातुवादः ॥ ३९ ॥ मणिरागज्ञानम् ॥ ४० ॥ आकरज्ञानम् ॥ ४१ ॥ वृक्षायुर्वेदयोगाः ॥ ४२ ॥ मेषकुक्कुटलावकयुद्धविधिः ॥ ४३ ॥ शुकसारिकाप्रलापनम् ॥ ४४ ॥ उत्सादनम् ॥ ४५ ॥ केशमार्जनकौशलम् ॥ ४६ ॥ अक्षरमुष्टिकाकथनम् ॥ ४७ ॥ म्लेच्छितकुतर्कविकल्पाः ॥ ४८ ॥ देशभाषाज्ञानम् ॥ ४९ ॥ पुष्पशकटिकानिर्मितिज्ञानम् ॥ ५० ॥ यन्त्रमातृकाधारणमातृका ॥ ५१ ॥ सम्पाठ्यम् ॥५२॥ मानसीकाव्यक्रिया ॥ ५३ ॥ अभिधानकोशः ॥५४॥ छन्दोज्ञानम् ॥ ५५॥ क्रियाविकल्पाः ॥५६ ॥ छलितकयोगाः ॥ ५७ ॥ वस्त्रगोपनानि ॥ ५८ ॥ द्यूतविशेषः ॥५९ ॥ आकर्षक्रीडा ॥ ६० ॥ बालक्रीडनकानि ॥ ६१ ॥ वैनायिकीनाम् ॥ ६२ ॥ वैजयिकीनाम् ॥ ६३ ॥ वैतालिकीनाञ्च विद्यानां ज्ञानम् ॥ ६४ ॥

इति चतुःषष्टिकलाः छन्दयामासतुरुपलोभितवन्तौ ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शुद्धेन भावेन भक्त्या या अनुवृत्तयस्ताभिः । तद्विशेषश्चात्रे श्रीदामविप्रोपाख्याने श्रीभगवन्मुखादेव व्यक्तो भावी । अत एवात्र स्वयं बादरायणिना न प्रपञ्चित इति ज्ञेयम् ॥ ३३ ॥

सरहस्यमिति सार्द्धद्वयकम् अखिलान् चतुरोऽपीत्यर्थः । एतदुपदेशश्च शब्दमात्रतः । तदर्थज्ञानं मीमांसोपदेशेनैव भविष्यतीति तदनन्तरं तत्पाठशुद्ध्यर्थमावश्यकत्वादर्थसहितान्येवाङ्गानि तानि चोक्तानि । "शिक्षा व्याकरणं कल्पो ज्योतिषं छन्द एव च । निरुक्तञ्च निरुक्तानि षडङ्गानि मनीषिभिः"रिति । ज्योऽतिकृत्यं तदर्थकालादिशुद्ध्यपेक्षणात् । अङ्गानन्तरं रहस्यत्वेनानुपदिष्टचरीरुपनिषदः एताश्च पूर्ववत् प्रथमतः शब्दत एव ततश्च क्षत्रियजातावावश्यकत्वाद्धनुर्वेदं एतदादीन्यर्थतोऽपि ज्ञेयानि । ततश्च तत्तत्सर्वं विद्योपकारकत्वेनापेक्ष्याण्येव धर्मशास्त्राणि । ततश्च वैशिष्ट्यधनार्थं न्यायपथान् तत्तद्वेदार्थनिर्णायकान् जैमिनिकपिलपतञ्जलिबादरायणरचितान् पूर्वमीमांसादीन् शब्दानुगतयुक्तिग्रन्थान् । ततश्च बाह्यवादिनिरासार्थं स्वतन्त्रयुक्तिमयीमान्वीक्षिकीमपि एवं ज्ञातायां राजत्वयोग्यतायां राजनीतिमित्येवं क्रम एव सिद्ध्यति ॥ ३४ ॥ ३५ ॥

ततश्च कौतुकविशेषार्थं कला अप्युपदिदेश इत्याह । अहोरात्रैरिति । यावतीः कलाः सञ्जगृहतुरिति चतुःषष्टिकलाः संगृह्य एतावन्त्यहोरात्राणि अखिलवेदादिलक्षणेनाप्यहोरात्राणि ज्ञेयानि । कलानां नामानि तैरेव लिखितानि स्वरूपाणि तु लेख्यानि । तत्र गीतं गानशिक्षा गीतनिर्माणं स्वजातिरागभेदाः तालमात्रादिरचनाप्रकाराः साधकबाधकस्वरादिमेलनानां परिज्ञानञ्च १ अथ वाद्यं चतुर्विधं तत्रापि शिक्षादयः पूर्ववज्ज्ञेयाः एवमुत्तरत्रापि २ नृत्यं सामान्यम् ३ नाट्यं रूपकमयं ४ आलेख्यं चित्रकर्म ५ विशेषकच्छेद्यं तिलकेषु नाना विच्छेदरचना ६ तण्डुलादिबलिविकारास्तण्डुलानां कुसुमानाञ्च पूजोपहाररूपाणां विकारा नानाप्रकाररचना ७ पुष्पास्तरणं पुष्पादिभिः शय्या रचनं ८ दशनवसनाङ्गरागास्तेषां तेषाञ्च रञ्जनभेदाः ९ मणिभूमिकाकर्म मयनिर्मितपाण्डवसभावन्मणिबद्धभूमिक्रिया १० शयनरचनं पर्यङ्कादिनिर्माणम् ११ उदकवाद्यं सरोवरादिस्थापितभाण्डे उदकपूरितपात्रे वा मधुरनानातानसमुत्थापनं १२ उदकघातः जलस्तम्भविद्या १३ चित्रा योगाः नानाद्भुतदर्शने सम्यगुपायाः १४ माल्येत्यादि सप्तकं सुगमं १५—२१ कौचुमारयोगाः कुचुमारनाम्ना प्रकाशिता स्वस्मिन्नानारूपा व्यञ्जना २२ हस्तलाघवं चमत्कारलम्भनार्थमलक्षितेन हस्तसञ्चारेण तत्तद्वस्तुप्रवर्त्तनं २३ चित्रेऽति द्वयं चित्रमत्र नानाप्रकारं २४ पानकरसरागः पानकेषु रसस्य रागस्य च नानानिर्माणमित्यर्थः । तद्वदासवयोजनञ्चेत्यर्थः । २५ सूचीति सुगमं २६ सूत्रक्रीडादि सूत्रसञ्चालनेन पुत्तलिकादिचालनं २७ प्रहेलिका अपह्नुतवागर्थपरिज्ञानं २८ प्रतिमाला सर्ववस्तुप्रतिकृति निर्माणं २९ दुर्वचयोगाः यद्वक्तुं न शक्यते तद्वक्तुमुपायाः ३० पुस्तकवाचनम् अतिशीघ्रमविद्यमानानपि वर्णान् योजयित्वा तद्वाचनं ३१ नाटकाख्यायिकादर्शनं तत्तच्छास्त्राणां परिज्ञानं निर्माणञ्च ३२ काव्यसमस्यापूरणं काव्येषु गुप्तपदस्य समस्यायाः सङ्क्षेपेणोक्तस्य सहसा पूरयितुमशक्यस्य श्लोकांशस्यांशान्तरेण पूरणं ३३ पट्टिकावेत्रवाणविकल्पाः नूतन चिपिटा-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

कारस्य बन्धनादिसाधनस्य फलाया बाणस्य च कल्पनाः ३४ तर्कुमर्माणि सूत्र निर्माणसाधनलौहशलाकया साध्यानि विविधसूत्रकल्पानि ३५ तक्षणं तक्ष्णां कर्म ३६ वास्तुविद्या गृहोचितभूम्यादीनां तन्निर्माणभेदानाञ्च ज्ञानं ३७ रूप्यरत्नपरीक्षा रूप्यादीनां रत्नानां सदसत्त्वाज्ञानं ३८ धातुवादः स्वर्णादिकल्पनं ३९ मणिरागज्ञानं मणिषु रागनिर्माणज्ञानं ४० आकरज्ञानं दर्शनादेव मण्याद्युद्भवभूमिज्ञानं ४१ वृक्षेति त्रयं स्पष्टम् ४२–४४ उत्सादनं मन्त्रादिना परस्परासक्तित्याजनं ४५ केशेति स्पष्टम् ४६ ॥ अक्षरमुष्टिकाकथनम् अक्षराणामदृष्टानां तथा मुष्टिकास्थितवस्तूनाञ्च स्वरूपस्य सङ्ख्यायाश्च कथनं ४७ म्लेच्छितविकल्पाः। म्लेच्छविविधभाषाभरत शास्त्राणां ज्ञानं ४८ देशभाषाज्ञानमिति स्पष्टं ४९ पुष्पशकटिकानिमित्तज्ञानं पुष्पशकटीपाधिकायां कस्याश्चिद्विद्यायां निमित्तस्य ज्ञानं ५० यन्त्रमातृकापूजार्थं मातृका वर्णैर्यन्त्रनिर्माणं ५१ सैव धारणार्था चेद्धारणमातृका ५२ सम्पाट्यम् अभेद्यस्यापि हीरकादेर्वेधीकरणं ५३ मानसीकाव्यक्रिया परमनः स्थितस्यार्थस्य श्लोकनं ५४ क्रियाविकल्पाः एकैकस्याः क्रियाया विविधैरुपायैर्निष्पादनं ५५ छलितकयोगाः परवञ्चनोपायाः ५६ अभिधानेति सुगमं तत्राभिधानकोषयोर्नानार्थता पर्यायसमर्थता भेदाच्छेदः छन्दः तच्छास्त्रं एतानि च वेदाङ्गानि अन्यानि तत्ताद्विपश्चिन्नियद्धानि ५७ वस्त्रगोपनानि तूलसूत्रमयादिवस्त्राणां पट्टवस्त्रादितया दर्शनप्रक्रिया ५८ द्यूतेति स्पष्टम् ५९ आकर्षक्रीडा दूरस्थान्यपि क्रीडाद्रव्याणि यत्राकृष्यन्ते स क्रीडाविशेषः ६० वालेति स्पष्टं ६१–६३ वैनायिकी वैजयिकी वैतानिकी चेति विद्यात्रयमुन्नेयं ६४ केचित्तु कलाः कल्पसंहितोक्ताः सुधियामेव प्रत्येकमेकाहोरात्रशिक्षणार्हाः क्षुद्रसिद्धिरूपाः परचित्तज्ञता दूरश्रवणदर्शनचिन्ता रत्नामृतविशेषनिर्माणाद्या अन्या एवाहुः यद्वा। तत्सर्वं कलाश्चाहोरात्रैश्चतुःषष्ट्या सञ्जगृहतुरित्यन्वयः। तथाच श्रीविष्णुपुराणे। "सहरस्यं धनुर्वेदं ससङ्ग्रहमधीयताम्। अहोरात्रैश्चतुःषष्ट्या तदद्भुतमभूद्द्विजे"ति श्रीहरिवंशे च "तौ च श्रुतिधरौ वीरौ यथावत् प्रतिपद्यताम्। अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयता" मिति छन्दयासतुः तदनिच्छुकमपीच्छां कारितवन्तौ ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

न्यायपथान् मीमांसान्यायान् आन्वीक्षिकीं तर्कविद्यां षड्विधां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयरूपाम् ॥ ३४—४६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

शुद्धः भावो यासु ताभिरनुवृत्तिभिस्तुष्टो द्विजवरः गुरुरङ्गैः शिक्षाकल्पादिभिः षड्भिरुपनिषद्भिश्च सहितानखिलान्वेदांस्तयोः प्रोवाच ॥ ३३ ॥

तथा सरहस्यं मन्त्रदेवताख्यानसहितं धनुर्वेदं धर्मन्यायपथान्मन्वादिधर्मशास्त्राणि मीमांसान्यायांश्चान्वीक्षिकीं तर्कविद्यां षड्विधां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयरूपां राजनीतिं च प्रोवाचेत्यन्वयः ॥ ३४ ॥

हे नृप ! सर्वमिति। तावमरश्रेष्ठौ परमपुरुषावत एव सर्वविद्याप्रवर्तकावत एव सकृन्निगदमात्रेणैव तद्गुरूपदिष्टं सर्वं जगृहतुः सम्यग्गृहीतवन्तौ ॥ ३५ ॥

कियता कालेन कति विद्याः सञ्जगृहतुरित्यत्राह। अहोरात्रैरिति। अहोरात्राणाञ्चतुः षष्ट्या चतुःषष्टिसंख्याकैर्दिवसैश्चतुःषष्टिविद्याः संजगृहतुरित्यन्वयः ततो हे नृप! गुरुदक्षिणयेति हेत्वर्थे तृतीया गुरवे देयदक्षिणार्थमाचार्यं छन्दयामासतुरभीष्टः वरयेति प्रलोभयामासतुः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अङ्गैः शिक्षादिभिः उपनिषद्भिः वेदान्तैस्तदुपयोगिभी रहस्यज्ञानैर्वा सहितान् ॥ ३३ ॥

सरहस्यं प्रयोगोपसंहारसहितं धर्मपथः वर्णाश्रमधर्मलक्षणः पूर्वमीमांसालक्षणो वा न्यायपथान् ब्रह्मतर्कादि तर्क शास्त्रलक्षणांश्च आन्वीक्षिकीं मीमांसाशास्त्रं वेदेतिहासाद्यर्थनिर्णायकम्

> सन्धिश्च विग्रहश्चैव यानमासनमेव च।
> द्वैधीभावं संश्रयश्च षड्गुणान्कवयो विदुरिति ॥

षड्विधाम् ॥ ३४ ॥

सकृन्निगदमात्रेण एकवारं पाठमात्रेण ॥ ३५ ॥

चतुःषष्ट्या संख्यातैरहोरात्रैः कालावयवैस्तावतीः तावत्संख्याः कलाः चतुःषष्टिकला विद्या इत्यर्थः। संयत्तौ सम्यक् प्राप्तौ छन्दयामासतुः प्रार्थयामासतुः ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो गुरुकर्तव्यमाह। तयोरिति द्वाभ्याम्। स हि द्विजवरः ब्राह्मणश्रेष्ठः सर्वधर्मप्रवर्तकः प्रथमतस्तत्स्वरूपमज्ञात्वापि तयोरनुवृत्तिमेव दृष्ट्वा सन्तुष्टो जातः तत्रापि शुद्धेन भावेन सहिता अनुवृत्तिः अत्र भावशुद्धिः अलोलुपत्वादिः प्रसादातिरिक्तकामनाभावश्च ततो विद्यार्थमागताविति आदौ सर्वानेव वेदान् प्रोवाच चत्वारो वेदा बहुशाखावितताः ततोऽङ्गानि षट् उपनिषदश्च ब्रह्मप्रतिपादिकाः यतो गुरुरुपदेष्टा नत्वीश्वरः ॥ ३३ ॥

अन्या अपि विद्या उक्ता इत्याह। सरहस्यमिति। सरहस्यं मन्त्रसहितं धनुर्वेदं पाठितवान् क्षत्रियाणामिदं दृष्टोपयोगि उपवेदेषु नान्ये धर्मान् धर्मशास्त्रं न्यायपथान् न्यायमार्गान् सामार्थान् आन्वीक्षिकी आत्मविद्या सांख्ययोगादिरूपा राजनीतिरन्या सा षड्विधा सन्धिविग्रहयानासनद्वैधीभावसंश्रयाख्या ॥ ३४ ॥

एतावतीं विद्यां कियता कालेन पठितवन्तावित्याह। सर्वं नरवरश्रेष्ठाविति। यावद्गुरुणा उक्तं तावत्सकृन्निगदमात्रेणैव एकवारश्रवणेन सञ्जगृहतुः सम्यक् गृहीतवन्तौ यावता कालेनाध्ययनादिपरिपालनेन गुरुस्तावतीं विद्यामुच्चारितवान् तावता कालेन गृहीतवन्तौ नृपेति सावधानार्थं सम्बोधनम् ॥ ३५ ॥

किञ्च कौतुकविद्या अपि कलारूपाः पठितवन्तावित्याह। अहोरात्रैरिति। चतुःषष्टिसंख्यायुक्तैः अहोरात्रैः संयत्तौ तावतीः कलाः चतुःषष्टिकलाः सञ्जगृहतुरिति संबन्धः। एकस्यां कलायां बहुप्रकाराः बहवो ग्रन्था: शिक्षा च महती तथा-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्येका कला एकस्मिन्नेव दिवसे शिक्षिता । ताः कलाः शैवतन्त्रोक्ता लिख्यन्ते गीतं वाद्यं नृत्यं आलेख्यविशेषकच्छेद्यं तण्डुलकुसुमवलिविकाराः पुष्पास्तरणं दशनवसनाङ्गरागाः मणिभूमिकाकर्म शयनरचनम् उदकवाद्यम् उदकाघातः चित्रायोगाः माल्यग्रन्थनविकल्पाः शेखरापीडयोजनं नेपथ्ययोगाः कर्णपत्रभङ्गा गन्धयुक्तिः भूषणयोजनम् ऐन्द्रजालानि कौचुमारयोगाः हस्तलाघवं चित्रशाकापूपाश्चेति भक्ष्यविकारक्रियापानकरसरागासवयोजनं सूचीवानकर्म सूत्रक्रीडावीणाडमरुकवाद्यानि प्रहेलिका प्रतिमाला दुर्वाचकयोगाः पुस्तकवाचनं नाटकाख्यायिकादर्शनं काव्यसमस्यापूरणं पत्रिकाचित्रवाचनविकल्पाः तर्ककर्माणि तक्षणं वास्तुविद्या रूप्यरत्नपरीक्षा धातुवादः मणिरागज्ञानम् आकारज्ञानं वृक्षायुर्वेदयोगाः मेषकुक्कुटलावकयुद्धविधिः शुकसारिकाप्रलापनम् उत्सादनं केशमार्जनकौशलम् अक्षरमुष्टिकाकथनं म्लेच्छितकलिकल्पाः देशभाषाज्ञानं पुष्पशकटिकानिमित्तज्ञानं यन्त्रमातृकाः धारणमातृकाः सम्पाठ्यं मानसीकाव्यक्रिया अभिधानकोशः छन्दोज्ञानं क्रियाविकल्पाः एताश्चतुःषष्टिकलाः तत्र गीतं गानशिक्षा गीतकारणं रागभेदाः तानमात्रादिरचनाप्रकाराः साधकबाधकतानानामपरिज्ञानं च एवमेकस्य गीतस्य तथैव वाद्ये चतुर्विधवादनसामर्थ्यं ज्ञानं तदाधाररचनं तद्भेदानां कारणज्ञाने साधकबाधकज्ञानं च पञ्चप्रकाराः सर्वत्र नृत्यमभिनयमात्रं नाट्यं ग्रन्थरूपम् आलेख्यं चित्रकर्म तत्र ये विशेषाः के कुत्सिताः ग्रामकाश्च सर्वे कप्रत्ययेन सङ्गृहीताः तेषां छेद्यं यथा छेदनप्रकारेण छिन्ने वैचित्री भवति तथा चणकाच्छिद्दलेहस्तिशतलेखनं तण्डुलानां कुसुमानां च मारात्रिकाकारेण वलिविकाराः पूजायां वा स्थापनप्रकाराः पुष्पास्तरणं स्पष्टं शय्यादौ दशनवसनानां राग भेदाः अधरोष्ठयोः लक्षणपरिज्ञानं रसार्थमेषा परीक्षा मणिभूमिकाकर्म यथा मणयो यत्र यादृशाः अपेक्ष्यन्ते तत्र यादृशी भूमिः तत्क्रिया शयनं शय्यास्थानं तस्य रचनमुदकवाद्यं यथा स्वतएवोदके नादाः स्पष्टा भवन्ति उदकाघातः उदकस्याघातः यथा आहतमुदकमुपरिगच्छति अधोगच्छति विपरीतं च गच्छति चित्रा योगाः विचित्राः प्रकाराः सर्वत्र माल्यानां पुष्पाणां रचने विविधाः प्रकाराः शेखरस्य शिरसः केशबन्धस्य आपीडयोजनं केशादीनां पुष्पाणां मुकुटस्य वा योजनप्रकाराः नेपथ्ययोगाः नटशालादिनिर्माणप्रकाराः कर्णपत्राणां कर्णाभरणपत्राणां भङ्गः अनेके भेदाः गन्धयुक्तिः गन्धयुक्तिश्चन्दनादेः पुष्पवस्त्राद्याकारेण निर्माणं नाना सुगन्धनिर्माणं वा भूषणानां योजनप्रकाराः ऐन्द्रजालाः मायादर्शनप्रकाराः यासु माया सु कौलपकायुक्तिने सम्भवति विंशतिभेदा एते कौचुमारयोगाः बहुरूपप्रकाराः हस्तलाघवं स्पष्टं चित्रं शाकपूपाद्येति प्रायेण खाद्यसङ्कीर्णाः भक्ष्यविकाराणां क्रिया पानकानां ये रसाः रागाश्च तेषामासावता माद्कता भावप्रधानो निर्देशः पानकानां रसानाम् आसवानां रागाणां सूचीवानकर्म सूच्या वानं सीवनमिव परिवयनं तत्र नानाप्रकाराः योजनप्रकारा वा सूत्रक्रीडा सूत्रैर्नानाविधा क्रीडा यथा भ्रमरादि भ्रामणं सूत्रोपरि चलनं च बन्धनप्रकारो वा वीणाडमरुकवाद्यानां वादनप्रकाराः प्रहेलिका कूटवाक्यानां परिज्ञानं प्रतिमाला वस्तूनामनुकरणं दुर्वाचकयोगाः चतुरक्षरादिप्रकाराः पुस्तकवाचनमतिशीघ्रमविद्यमानानपि वर्णान् योजयित्वा वाचनं नाटकाख्यायिकादर्शनं दीप्यव्यवधायक पेटे नाटकाख्यायिकाया नाटकस्थितकथायाः प्रदर्शनं वस्त्रादिनिर्माणे वा नाटकस्थकथायाः प्रदर्शनं काव्यं अविद्यमाने पदे तस्यैव पदस्य पूरणं कविकर्मानुसारेण वा समस्या पूरणं पत्रिकाचित्रवाचनविकल्पाः नाना विधाः पत्रिकाः व्यस्तसमस्तमेषशुद्धादिप्रकाराः तत्र विविधाः कल्पाः तर्ककर्माणि तर्केणैव सर्वपदार्थज्ञानं कृतिश्च तक्षणं चन्द्रावर्त्तादिप्रकारेण शिल्पभेदाः वास्तुनिर्माणं वास्तुविद्या गृहनिर्माणप्रकाराः रूप्यरत्नपरीक्षा रूप्याणां रत्नानां च परीक्षा इति विंशतिः धातुवादः प्रसिद्धः मणिरागज्ञानं मणिषु रागनिर्माणज्ञानम् आकरज्ञानं राशिं दृष्ट्वैव एतावदस्तीति । वृक्षाणामायुर्वेदयोगाः वृक्षाणां जीवनप्रकाराः फले निर्बीजकरणं वृक्षान्तरात्फलोत्पादनमित्यादि मेषाणां कुक्कुटानां लावकानां युद्धप्रकाराः शुकसारिकादीनामशिक्षितानामपि प्रकर्षालापप्रकारः उत्सादनं यस्य कस्य चिद्युद्वेगोत्पादनेनान्यत्र गमनप्रकारः केशमार्जनं कौशलं स्पष्टमक्षरमुष्टिका कथनम् अक्षराणां परवृष्टानां मुष्टिकादीनां च मुष्टिकास्थितपदार्थानां कथनं म्लेच्छितकलिकल्पाः म्लेच्छितकल्पाः कलिकल्पाश्च यथा शत्रुर्म्लेच्छितो भवति सर्वैः सह कलिं च करोति तथोपायाः देशभाषाज्ञानं सर्वदेशेषु भाषापरिज्ञानं पुष्पशकटिकापुष्पैरेव शकटीविमानादि रचनाप्रकारः निमित्तज्ञानं काकादिभिरन्यैर्वा भाव्यर्थपरिज्ञानं यन्त्रमातृका प्रतिमादिचालनभाषणादिप्रकाराः करपल्लवीवाधारणमातृका वस्त्रादिपदार्थधारण एव आदिमध्यान्तवर्णभेदमातृकावर्णपरिज्ञानं भवति सम्पाठ्यमभेद्यस्यापि हीरकादेर्वेधीकरणप्रकारः मानसी काव्यक्रिया मानसिकसमस्यापूरणमभिधानकोशः अन्योच्चारितानां सर्वेषामेव पदानां क्रमेण पुनरुच्चारणसामर्थ्यं पुरुषं दृष्ट्वैव तस्य छन्दोज्ञानमयमेवं वृत्तइति । कामिन्यादीनां मनोज्ञानं वा क्रियाविकल्पाः सर्ववस्तुषु या प्रक्रिया पूर्वसिद्धा तामनादृत्य अन्यैरेव प्रकारैस्तन्निर्माणं विंशतिः कामादिसान्त्वनं उद्बुद्धानां शमनं तदुद्बोधः शत्रुमित्रकरणं सर्ववस्तूनामन्यथाकरणं प्रतिभानेन च तत्र उक्ताः पूर्वोक्तेषु वा अवान्तरभेदाः क्वचिद्ग्राह्याः ततो गुरवे तु वरं दत्त्वेति श्रुतेः । गुरुदक्षिणादेयेति दक्षिणार्थे मनस्यभीष्टा दक्षिणा ग्राह्येति छन्दयामासतुः स्वाच्छन्द्यं संपादयामासतुः विद्यासमाप्त्यनन्तरं या दक्षिणा गुरवे दीयते तथा कृत्वा स्वाच्छन्द्यम् "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षते" इति । यद्यप्युभौ वरद्वयं न दास्यतस्तथापि उभयोः कर्तव्यमिति स्वच्छन्दज्ञानं निरूप्यते । नृपेति । तादृशा राज्ञः स्थाने समागत्य कृतार्था भवन्तीति अनुभवार्थं गुरुस्तु बहूनेवाध्यापयामास नैवं विधौ कदाचित् दृष्टौ अत एताभ्यामलौकिकमपि दातुं शक्यत इति निश्चयं कृतवान् पत्नी च कदाचिद्गां दुहन्ती दोहनपात्रं विस्मृत्य सन्ध्यावन्दनार्थं नियमेनोपविष्टं भगवन्तं प्रार्थितवती तदा भगवान्नियमोल्लङ्घने गुरुपत्नीवाक्योल्लङ्घने च दोषं दृष्ट्वा उपविश्यैव हस्तं प्रसार्य दोहनपात्रं दत्तवान् तदा अनुत्थितं भगवन्तं स्वनिकटे दोहनपात्रं च दृष्ट्वा विस्मिता आसीदिति पुराणान्तरप्रसिद्धिः ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सरहस्यं मन्त्रदेवताज्ञानसहितं धर्मान् मन्वादिशास्त्राणि न्यायपथान् मीमांसादीन् आन्वीक्षिकीं तर्कविद्यां सन्धिनीं

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विग्रहो यानमासनं द्वैधमाश्रय" इत्यमरोक्तां षड्विधां राजनीतिम् ॥ ३४ ॥ ३५ ॥

तावतीश्चतुःषष्टिकलाः ताः शैवन्तन्त्रे द्रष्टव्याः छन्दयामासतुः कामप्यभीप्सितां दक्षिणां गृहाणेत्युक्त्वा तत्प्राप्तीच्छां कारयामासतुरित्यर्थः । अभिप्रायवशौ छन्दावित्यमरः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुरुरपि शुद्धो भावो यासु ताभिरनुवृत्तिभिः तुष्टः अङ्गैः "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृत" मिति षड्भिः उपनिषद्भिश्च सहितान् ॥ ३३ ॥

सरहस्यं मन्त्रदेवताज्ञानसहितं धर्मान् मन्वादिधर्मशास्त्राणि न्यायपथान् मीमांसादीन् आन्वीक्षिकीं तर्कविद्यां षड्विधां सन्धिविग्रहयानासनद्वैधीभावसमाश्रयरूपां राजनीतिं प्रोवाचेत्यनुषङ्गः ॥ ३४ ॥

हे नृप ! तावपि सकृन्निगदमात्रेण एकदैवोच्चारणमात्रेण जगृहतुः ॥ ३५ ॥

अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः संयत्तौ रामकृष्णौ चतुःषष्टिसंख्याकैरहोरात्रैस्तावतीः चतुःषष्टिः कला विद्याः सञ्जगृहतुरित्यन्वयः । ताश्चोक्ता विद्यासङ्ग्रहनिबन्धे—

मुक्तिविद्या समाख्याता पराऽनेककला यथा ।
मुमुक्षूणां हिता श्रेष्ठा परमार्थप्रदायिनी ॥
भक्तिविद्या तथा चात्र बुभुक्षूणां हिता मता ।
भोगेच्छुस्तामनाश्रित्य किङ्करिष्यति बालिशः ॥
तत्र षष्टिकलास्तास्तु ह्युद्देशेन वदाम्यहम् ।
सन्ति विद्याकलास्तिस्रो गान्धर्वेषु प्रतिष्ठिताः ॥
उत्तमा गीतसंज्ञास्ति १ वाद्यसंज्ञास्तु मध्यमा २ ।
नृत्याख्या तु कनिष्ठास्ति ३ गृहीता नारदादिभिः ॥
नाट्यविद्या ततो भिन्ना या गृहीता शिवादिभिः ४ ।
आलेख्याख्या कला ज्ञेया त्रिलोकीलिखिता यया ५ ॥
ज्ञेया विशेषकच्छेद्यविद्या यस्यां विशेषतः ।
छेद्यते ६ न्या कला यत्र तण्डुलादिबलिक्रिया ७ ॥
पुष्पास्तरणसंज्ञान्या ८ दशनाद्यङ्गरञ्जना ९ ।
मणिभूमिक्रियाख्या च १० शयनरचनात्मिका ११ ॥
ज्ञेया चोदकवाद्याख्या १२ अन्या चोदकघातकः १३ ।
चित्रयोगसमाख्या च कला ज्ञेया बुभुक्षुभिः १४ ॥
माल्यग्रथनभेदाख्या १५ शेखरापीडयोजना १६ ।
नेपथ्यकक्रियाख्या च कला ज्ञेया सुबुद्धिभिः १७ ॥
या कर्णपत्रभङ्गाख्या १८ युक्तिर्यान्या सुगन्धिका १९ ।
भूषणयोजनाख्या च २० ह्यैन्द्रजालक्रिया तथा २१ ॥
कौचुमारक्रिया चापि २२ हस्तलाघवसंज्ञिका २३ ।
चित्रशाकस्तूपूपादिविकारजननक्रिया २४ ॥
रसानामासवस्यापि पानके योजना तथा २५ ।
सूचीक्रिया २६ तथा सूत्रक्रीडाख्या च कलापरा २७ ॥
प्रहेलिका कला ज्ञेया २८ प्रतिमाला कला तथा २९ ।
या दुर्वाचकयोगाख्या कलान्या परिकीर्तिता ३० ॥
पुस्तकवाचनाख्या च ३१ नाटकाख्यायिका गतिः ३२ ।
ज्ञेया काव्यसमस्यातु पूरणाख्या कलापरा ३३ ॥
पट्टिकावेत्रवाणादिविकल्पाख्या तथापरा ३४ ।
तर्ककर्मसमाख्या च ३५ तक्षणाख्या परा मता ३६ ॥
वास्तुविद्या च ३७ रूप्यादिपरीक्षाख्यकलापरा ३८ ।
ज्ञेया च धातुवादाख्या ३९ मणिरागाद्यभिज्ञता ४० ॥
आकरज्ञानसंज्ञान्या कला प्रोक्ता मनीषिभिः ४१ ।
वृक्षायुर्वेदयोगाख्या कला चात्र प्रकीर्तिता ४२ ॥
मेषादियुद्धयुक्तिश्च ज्ञातव्या कलहप्रियैः ४३ ।
या शुकसारिकादीनां प्रलापनक्रिया कला ४४ ॥
उत्सादनक्रिया चापि ४५ केशानां मार्जनक्रिया ४६ ।
अक्षरमुष्टिकाप्रोक्तिः कला ज्ञेया विवेकिभिः ४७ ॥
म्लेच्छिततर्कभेदाख्या ४८ देशभाषा विधारणा ४९ ।
पुष्पशकटिकाहेतुबोधाख्या च कलापरा ५० ॥
यन्त्रमातृकया साकं ज्ञेया धारणमातृका ५१ ।
सम्पाठ्याख्या कला चान्या ५२ मानसी काव्यमुक्रिया ५३ ॥
अभिधानकोशविद्या च ५४ तथा छन्दोऽवधारणा ५५ ।
क्रियाविकल्पसंज्ञान्या ज्ञेया च सूक्ष्मबुद्धिभिः ५६ ॥
या छलितकयोगाख्या ५७ वस्त्रगोपनसंज्ञिका ५८ ।
द्यूतविशेषविद्या चा ५९ कर्षक्रीडा कलापरा ६० ॥
बालक्रीडनकाख्या च ६१ विद्या वैनायकापरा ६२ ।
विद्या वैजयिकाख्या च ६३ ज्ञेया वैतालिकापरा ६४ ॥

इतिचतुःषष्टिकलाः आचार्य्यं गुरुदक्षिणया छन्दयामासतुरुपलोभितवन्तौ ॥ ३६ ॥

---

भाषा टीका ।

वे द्विजोत्तम गुरु उन दोनों भ्राताओं पर उनके शुद्ध भावों की अनुवृत्ति से संतुष्ट होकर अंग उपनिषदों के सहित सब वेदों का उपदेश करते भये ॥ ३३ ॥

मंत्रादि कों के संहित धनुर्वेद मनुस्मृति आदि धर्मशास्त्र न्याय मीमांसादितर्क विद्या संधि आदि छै प्रकार राज नीति को दिये ॥ ३४ ॥

हे राजन् ! सब विद्याओं के प्रवर्तक सत्तमों में श्रेष्ठ उन दोनों भ्राताओं ने एक वखत के कहने ही से सब का ग्रहण कर लिया ॥ ३५ ॥

हे राजन् ! चौसठि अहो रात्रों में चौसठ कला की विद्याओं को ग्रहण करलिये फिर गुरु दक्षिणा देने को आचार्य से प्रार्थना करते भये ॥ ३६ ॥

---

द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम् ।
सं मन्त्र्य पत्न्या स महार्णवे मृतं बालं प्रभासे वरयाम्बभूव ह ॥ ३७ ॥
तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरन्तविक्रमौ ।
वेलामुपव्रज्य निषीदतुः क्षणं सिन्धुर्विदित्वाऽर्हणमाहरत्तयोः ॥ ३८ ॥
[1]तमाह भगवानाशु गुरुपुत्रः प्रदीयताम् । [1] तमाह वरुणो देव इति वि० पाठः
योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा ॥ ३९ ॥

समुद्र उवाच ।

नैवाहार्षमहं देव ! दैत्यः पञ्चजनो महान् ।
अन्तर्जलचरः कृष्ण ! शङ्खरूपधरोऽसुरः ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयामास ॥ ३७ ॥
ईश्वराविति विदित्वा समुद्रस्तयोरर्हणमाजहार ॥ ३८-३९ ॥
पञ्चजनस्त्वसुरोऽहार्षीत् स च महान्ममासाध्य इत्यर्थः ॥ ४०-४३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रभासे मृतमिति । तीर्थयात्रायां पितृभ्यां सह तत्र महाशिवक्षेत्रे गतस्य बालतया जले क्रीडतः ग्राहासुरेण ग्रसनादिति ज्ञेयम् ॥ ३७ ॥

तथेति । स्वीकृत्येत्यर्थः । अथानन्तरं सद्य एवेत्यर्थः । महारथौ वीरप्रवरौ इति सर्वायुधसाहित्यादिकमुक्तं दुरन्तविक्रमौ अनन्तपराक्रमौ वेलां समुद्रतीरं निषेदतुरुपविष्टौ निषीदतुरिति पाठस्त्वार्षः अर्हणममूल्यरत्नादिकम् ॥ ३८ ॥

भगवानित्यैश्वर्यं प्रदर्शयन्नित्यर्थः । असौ प्रकर्षेणाविकृतशरीरस्य दिता दीयतां देवत्वात्तथा शकेरिति भावः । इह प्रभासे ॥ ३९ ॥

समुद्र उवाचेति क्वचिदस्ति क्वचित्तु न किन्तु टीकाकृद्भिस्तद्वाक्यत्वेन न स्पष्टीकृतं नचेत्यर्द्धकं नैवेति क्वचित् पाठः । देव हे क्रीडापरेति तं सर्वं जानन्नपि यदेवमाज्ञापयसि सेयमेका तव क्रीडा इति भावः । अत्र दैत्य इत्यस्यैव असुर इति टीका ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

द्विज इति हे राजन् ! द्विजः सान्दीपनस्तयो रामकृष्णयोस्तं चतुःषष्टिदिवसैस्तावत्कलाग्रहणात्मकमद्भुतं महिमानमतिमानुषीं मनुष्येष्वसम्भावितां गतिं चेष्टां चावलोक्य वा महापुरुषौ इमौ इति निश्चित्येति शेषः । पत्न्या सहालोच्य प्रभासे क्षेत्रे महार्णवे मृतं बालं स्वं पुत्रमयाचत स्मेति [illegible] मृतप्रत्यादानमसम्भावितमिति विस्मीयत ॥ ३७ ॥

तदा तथेत्यङ्गीकृत्य महारथौ रामकृष्णौ रथमारुह्य दुरन्तोऽपारो विक्रमो ययोस्तौ प्रभासं सम्प्राप्य तत्र वेलां तीरं समुद्रस्येति शेषः । उपव्रज्य [illegible] निषेदतुः उपविष्टवन्तौ तदा सिन्धुः समुद्रा

विदित्वा ईश्वराविमाविति ज्ञात्वा तयोरर्हणं पूजामाजहार समर्पयामास चकारेति यावत् ॥ ३८ ॥

ततः भगवान् सिन्धुमाह । किमिति । इह यो बालको गुरुपुत्रः त्वया कर्त्रा महतोर्मिणा तरङ्गेण ग्रस्तोऽन्तर्द्धापितः सोऽस्मद्गुरुपुत्रः आशु प्रदीयताम् इति ॥ ३९ ॥

इत्थमुक्तः प्राह सिन्धुः । नैवेति । हे देव तं द्विजपुत्रमहं नाहार्षं नापहृतवान् किन्तु हे कृष्ण ! पञ्चजनाख्यो दैत्योऽहार्षीत्स च महान्ममासाध्य इत्यर्थः । तदेवाह सोऽसुरोऽन्तर्जलचरः शङ्खाकृतिधरश्चास्ते विवेक्तुमशक्य इति भावः । तेन पञ्चजनेन नूनमपहृत इति एतत्सिन्धोर्वचः श्रुत्वा श्रीकृष्णः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महार्णवे प्रभासे तीर्थे ॥ ३७ ॥
वेलां तीरसीमाख्यम् ॥ ३८ ॥
योऽसौ गुरुपुत्रः त्वया महतोर्मिणा ग्रस्तः स प्रदीयतामित्यन्वयः ॥ ३९ ॥
तं कृष्णम् शङ्खमत्स्यरूपधरः ॥ ४०-४३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत उभयोरपि भगवन्माहात्म्यपरिज्ञानादलौकिकमेव याचनीयमिति निश्चित्य तथा याचितवानित्याह । द्विज इति । स हि यज्ञादीनां चिकीर्षुः पुत्रवांश्चाधिकारी तस्मिन्नुपहते स्वगितः विचार्य च वंशकर्तृत्वेन तथोत्पादितः ईश्वरकृपाव्यतिरेकेण कालेन तदुपहतं तथापि वेदप्रामाण्यात् ईश्वरेच्छामज्ञात्वा कालं प्रतीक्षन्नेव स्थितः अतस्तस्य तदावश्यकमिति ज्ञापयितुं द्विज इत्युक्तं तृतीयजन्मापेक्षितं तयो रामकृष्णयोः तदलौकिकं महिमानं श्रुतं च दृष्टं च अद्भुतश्च महिमा दृष्टः तौ पाठयन् स्वयं ज्ञातवान्नहि पूर्वमयमेतादृशः स्थितः अन्यथा प्रवृत्तिभ्योऽप्यधिकः स्यात् अतस्तौ पाठयन् स्वयमेव पठितवान् वैपरीत्यमेवाद्भुतत्वं

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

संलक्षयति स ऊहापोहकुशलः सन् पश्चात् पूर्णज्ञानं भगवत्कृतमेवेति निश्चित्य लोकन्यायेन भगवदिच्छयैव गुरुत्वं स्थापयितुं महार्णव एव मृतं पुत्रमयाचतेति सम्बन्धः । राजन्निति क्लिष्टत्वादादरेण सम्बोधनं विश्वासार्थं च किञ्च मतिरप्यलौकिकी न त्वलौकिक एव भावः यन्त्रादिष्विव अतः असाध्यमपि ज्ञास्यति करिष्यतीति निश्चित्य दृष्टादृष्टस्य साधनस्य विद्यमानत्वात् पत्न्या च यज्ञकर्मयोग्यया सम्मन्त्र्य एतदेव प्रार्थनीयमिति भावयतः सः प्रसिद्धः तदाकाङ्क्षी तदुपपादितं महार्णवे न तु सागरे मृतं ते प्रभासयात्रायां यद्वच एव गताः तत्र सकुटुम्बगमने अग्निकुण्डे बालको निमग्नः ननु कोऽयं निर्बन्धः मृत्युकालादीनां सत्यतापि स्यात्तत्राह । बालमिति । तत्रोत्पन्नः स्नेहः स निवृत्त इति प्रभासे मृतः पुनर्नायातीति मन्त्रादिनापि तदानयनमशक्यं वरयाम्बभूव वरत्वेन याचितवान् गुरुत्वे तु वरं दद्यादिति वरदानमावश्यकमिति हेत्याश्चर्यं विदितसर्वतत्त्वाः किं प्रजया करिष्याम इति श्रुतिवशात् प्रजाव्यतिरेकेणापि कार्यसिद्धिः तथापि याचितवानिति निरोधो भगवता तस्यापि कर्त्तव्य इति तथैव याचितवान् पुनः ॥ ३७ ॥

अलौकिके दत्ते स्वात्मानं ज्ञास्यतीति गोपनार्थं वृतोऽपि कालादिमर्यादापि दूरीकर्त्तव्येति कदाचिन्न करिष्यतीत्याशङ्क्याङ्गीकारमाह । तथेति । ओमिति वक्तव्या आकृतिरेव तुल्येति समानरूपं सङ्घातान्तरमेवानेष्यतीति शङ्काव्यावृत्त्यर्थं य एव सङ्घातः यादृशस्तथैवानेतव्य इति तथेति स्वाङ्गीका एतच्च शिष्यभावेन सम्भवतीति ऐश्वरं भावमाश्रित्य भिन्नप्रक्रमेण तदर्थं गतावित्याह । अथेति । महारथं सर्वगामिनं स्वयमपि महारथौ रथशिक्षायां निपुणौ एकमेव रथं समारुह्य पर्यायेण सारथित्वं सम्पादयन्तौ शीघ्रमेव प्रभासमासाद्य समुद्रादपि भयाभावायाह । दुरन्तो विक्रमो ययोरिति । ततः समुद्रवेलामुपव्रज्य ज्ञापयन्ताविव क्षणमुपसेदतुः ततः सिन्धुर्भगवन्तं जामातरं गृहपतिं बन्धकं च ज्ञात्वा अर्हणं पूजां तयोराहरत् ॥ ३८ ॥

त्रेधा हि तस्य बालकस्य विनियोगः वियोजनं प्राणापानयोः समुद्रेण कृतं शरीरभोगः पञ्चजनेन गृहीतः अन्यश्च सङ्घातः सर्वंवशात्पूर्वंसूक्ष्मावस्थया सतः स जीवः यमपुर्यां तिष्ठति भगवता च तावती भूमिः समुद्रात् पृथक्कर्त्तव्या लीलौपयिकं भवति न वेति विचारणीयम् अतः समुद्रं प्रति भगवान् किञ्चिदुवाचेत्याह । तमाहेति । ननु पूजया तत्सापेक्षः सङ्कोचं च प्राप्य कथमेवमाज्ञां दत्तवानित्याशङ्क्याह । भगवानिति । स हि सर्वेश्वरः सेवकः सङ्कोच इति तथैवाज्ञां दत्तवान् आशु गुरुपुत्रः प्रदीयतामिति । मम स्थाने क्वेति न वक्तव्यम् आधिदैविकं रूपं प्रदर्शयन्नाह । योऽसाविति । असौ यः अभिज्ञानार्थं प्रदर्शनं क्रिययापि समागत इत्याशङ्कायामाह । त्वया ग्रस्त इति । ननु ब्राह्मणः कथं ग्रासमर्हतीति तत्राह । बालक इति । अनुपनीतः ग्रासश्च न बुद्धिपूर्वक इत्याह । महतोर्मिणेति । महता तरङ्गेण तस्मात्तु दण्ड्यः ॥ ३९ ॥

प्रत्युत्तरमाह समुद्रः । तं नाहार्षमिति । शरणागतः पञ्चजन इति भगवता ऐक्यात्समुद्र एव निरुक्तः त्वया ग्रस्त इति सुतस्थित्यर्थमेवाहं प्रयोजकः न तु तत्कृतगुणदोषयोरिति तं पृथक्कृत्य आत्मनो दोषाभावमाह । तं नाहमहार्षम् ऊर्मयः करा भवन्ति न हि कराः हरणे साधनत्वेन समागताः किंतु स्वभावत एव निमित्तत्वं जातमिति न दोष इति समुद्राभिप्रायः साक्षात्कर्तारं निर्दिशति । दैत्यः पञ्चजन इति । अत्र विश्वासार्थं देवेति सम्बोधनं प्रत्यक्षेणापि सर्वं पश्यति स कथं न निराकृत इत्याशङ्कायां दैत्य इत्याह । दैत्या हि बहवो बलिष्ठाश्च तत्राप्ययं पञ्चजनः वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति पञ्चानामयमेवानुकल्प इति पञ्चजनरूपः पञ्चसम्वत्सरात्मको वा दैत्यरूपः पञ्चपर्वाविद्यारूपो वा तत्रापि महान्मयापि मारयितुमशक्यः तमसाध्यं निरूपयितुं स्वरूपमुक्त्वा स्थानं निरूपयति । अन्तर्जलचर इति । जलमध्य एव चरति न कदाचिदपि बहिरायाति रूपमात्रं दृष्ट्वा भीतः सन् परमन्यथा वदति । ननु स्वरूपं जानातीति शङ्कां वारयितुमाह । कृष्णेति । परिज्ञानार्थमाकृतिमाह । शङ्खरूपधर इति । अन्यथापि स वध्य इति वक्तुं तद्दोषमाह । असुर इति । सुरप्रतिपक्षी ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रभासे मृतमिति । तत्र महाशिवक्षेत्रे बालतया जले क्रीडतस्तस्य शङ्खासुरेण ग्रसनादिति ज्ञेयम् ॥ ३७-३९ ॥

पञ्चजनोऽहार्षीदिति शेषः । स च महान् ममासाध्य इत्यर्थः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सः द्विजोऽपि तयोः रामकृष्णयोः अद्भुतमचिन्त्यं महिमानं संलक्ष्य प्रभासे क्षेत्रे महार्णवे मृतं बालं वरयांबभूव वरयामास ॥ ३७ ॥

प्रभासं क्षेत्रमासाद्य वेलां सिन्धुतीरमुपव्रज्य क्षणं निषीदतुः सिन्धुरपि भगवन्तौ स्वतीरस्थौ विदित्वा तयोरर्हणमाजहार ॥ ३८ ॥ ३९ ॥

पञ्चजनो दैत्यः अहार्षीत् शङ्खरूपधर इति "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्" । इत्यादिषु प्रोक्तमनादिसिद्धम् त्वत्प्राप्त्यर्थं मयि वसन्तं पाञ्चजन्यमाश्रित्य वर्तते इत्यर्थः । नन्वसुरस्य मच्छङ्खाश्रयणे कोऽधिकार इत्यत आह । महानिति । कश्चिद्दयद्भक्त एवेति भावः ॥ ४०—४२ ॥

---

भाषा टीका ।

हे राजन् ! उन गुरु ब्राह्मण ने उनकी अद्भुत महिमा को तथा अति मानुष बुद्धि को देखकर पत्नी के साथ सलाह करके प्रभास क्षेत्र में मरे हुये अपने बालक के लाने का वर मांगा ॥ ३७ ॥

तब उस बात को सुन कर अंगीकार करके महारथी दोनों रथ पर चढ़के बड़े विक्रम से प्रभास में पहुंच समुद्र के किनारे पर क्षण मात्र स्थित भये तब समुद्र ने खबर पाकर उन दोनों का पूजन किया ॥ ३८ ॥

भगवान् उस समुद्र से बोले कि श्रीगुरु के पुत्र को शीघ्र देयो जिस बालक को कि तुमने इहां पर बड़े लहरों से ग्रसित कर लिया है ॥ ३९ ॥

आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुः ।
जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम् ॥ ४१ ॥
तदङ्गप्रभवं शङ्खमादाय रथमागमत् ।
ततः संयमनीं नाम यमस्य दयितां पुरीम् ॥ ४२ ॥
गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः ।
शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ॥ ४३ ॥
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम् ।
उवाचावनतः कृष्णं सर्वभूताशयालयम् ।
लीलामनुष्य ! हे विष्णो ! युवयोः करवाम किम् ॥ ४४ ॥

भाषा टीका ।

समुद्र बोला हे देव ! मैंने नहीं हरण किया है किंतु हे कृष्ण ! पञ्चजन नामा एक दैत्य है सो बडा भारी है सो जल के भीतर रहता है शंख के रूप को धारण किया है ॥ ४० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

सपर्यां पूजाम् सर्वेषां भूतानामाशया अन्तःकरणानि तान्यालयो निवासो यस्य तम् ॥ ४४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जलमिति श्रीशुकोक्तिः । आविश्य सक्षोभमन्तः प्रविश्य अर्भकं तदस्थीन्यपीत्यर्थः । तदन्वेषणञ्च यद्यप्यस्थीन्यपि प्राप्स्यामि तदा गुरुप्रसादेन जीवयिष्यामीति समुद्रं प्रति लौकिकलीलाव्यञ्जनार्थम् । एकवचनादेकाक्येव श्रीकृष्णः प्रविष्ट इति ज्ञेयं तथाच श्रीविष्णुपुराणे । "इत्युक्तेऽन्तर्जलं गत्वा हत्वा पञ्चजनं तु तम् । कृष्णो जग्राह तस्यास्थिप्रभवं शङ्खमुत्तम" मिति । तच्च रथरक्षार्थं श्रीबलदेवस्य तीरे स्थापनात् ॥ ४१ ॥

तदङ्गप्रभवमिति तस्वतो विप्रशापापेक्षया नित्यपार्षदेन शङ्खेन दैत्यत्वानुकरणात् जयविजयवत् । अतएवेच्छया श्रीकृष्णहस्तेषु वाद्ययोग्यसूक्ष्माकारोऽप्यभवदिति ज्ञेयम् । अवन्तीखण्डमते तु "ततः पञ्चजनं हत्वा ग्राहरूपं महासुरम् । तन्मध्यस्थं स जग्राह शङ्खं ग्रस्तं हि यत् पुरा । तस्योदरे यदा बालं नापश्यांस्तं जनार्द्दनः । यमालयगतं मत्वा तदा वरुणमब्रवीत् । भगवन् ! यादसामीश ! रथो मे दीयतां महान् । येनाहं विहितात्मा हि पश्येऽहं सङ्गरे यमम् । पुराजिरे हता दैत्या दानवा बलगर्विताः । त्वया येन रथेनाद्य मह्यं स दीयतां रथ" इत्यादि । दयितामिति तत्र निवासनिश्चयादित्यर्थः ॥ ४२ ॥

जनार्द्दनः सर्वनिजजनाभीष्टपूरकः । अतएव हलायुधेनापि संहतनाम्ना वस्य हलप्रकटनमपि तदा ज्ञेयं शङ्खप्रध्मानानन्तरमवन्तीखण्डे त्वेवं । "तेन शब्देन वित्रस्ताः कृतान्तालयवासिनः । नरकान्तर्गता मर्त्याः पापाचारपरायणाः । सुखमापुः प्रशान्ताश्च बहवः कृष्णदर्शनात् । शस्त्राणि कुण्ठतां प्रापुर्यन्त्राणि विविधानि च । विदीर्णानि तदा व्यास वासुदेवस्य दर्शनात् । असिपत्रवनं नाम शीर्णपर्णमजायत । रौरवं नाम नरकमरौरवमभूत्तदा । अभैरवं भैरवाख्यं कुम्भीपाकमपाचकम् । शृङ्गाटकमशृङ्गाटं लोहसूच्यप्यसूचिताम् । जगाम जगतामीशे प्राप्ते तत्र जनार्द्दने । हस्तमात्रतरा जाता तदा वैतरणी नृणाम् । नरकान्ते तदा याते तत्र विश्वेश्वरे विभौ । पापक्षयात्ततः सर्वे विमुक्ता नारका नराः । पदमव्ययमासाद्य दृष्ट्वा विष्णुं तमोऽपहम् । विमानायुतसाहस्रैरारूढास्ते समन्ततः । समीक्ष्य पुण्डरीकाक्षं मुक्तास्ते सर्वपातकात् । ततः शून्यं मुने जातं सर्वं निरयमण्डलम् । दर्शनात्तस्य देवस्य विष्णोर्विश्वस्वरूपिण" इति प्रजा संयमन इति भयङ्करत्वमुक्तं सोऽप्यत्र शुद्धश्च सूचितं श्रीविष्णुपुराणे । जित्वा वैवस्वतं यममित्युक्तेः । अवन्तीखण्डे बहुशो वर्णितम् ॥ ४३ ॥

सर्वेति । तस्य तत्र निष्कपटतामपि जानन्तमित्यर्थः विष्णोर्व्यापकत्वेन विश्वप्रभो इत्यात्मनस्तत्सवकत्वं सूचितं लीलाप्रधानमनुष्याकारयोः लीलामनुष्य हे इति क्वचित्पाठः किन्तु लीलामनुष्ययोर्विष्णोरित्येव पाठः स्वामिसंमतो लक्ष्यते एकसंबोधनस्याग्रत एव वत्सेत्यत्र करिष्यमाणसमाधानत्वात् किम् करवाम तदाज्ञापयेति शेषः ॥ ४४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्वरं यथा तथा जलमाविश्य तं पञ्चजनं हत्वा तस्योदरे बालं नापश्यत् किं तु तस्य पञ्चजनस्याङ्गाज्जातं शङ्खं पाञ्चजन्याख्यमादाय रथमारुरोह ॥ ४१ ॥

ततो यमस्य प्रियां संयमनीं नामपुरीं गत्वा शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास ॥ ४२ ॥

तदा प्रजानां शास्त्रातिलङ्घिनां शास्ता यमः शङ्खनिर्ह्रादमाकर्ण्य आगत्य भक्त्युत्कलितां तयोर्महतीं पूजां चक्रे ॥ ४३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वेषां भूतानामाशया हृदयानि तान्यालयानि यस्य तं कृष्णमवनतः सन्प्रोवाच किं हे लीलामनुष्य ! लीलार्थपरिगृहीतमनुष्यसंस्थान ! हे विष्णो ! युवयोः वः किं करवाम किङ्करा वयमित्यर्थः ॥ ४४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वभूतानामाशयो हृदयस्थानमालयो यस्य स तथा, तम् ॥ ४४—४६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदङ्गप्रभवमिति । तत्ततो विप्रशापापेक्षया नित्यपार्षदेन शङ्खेन दैत्यानुकरणात् ॥ ४२—५० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यदि पश्चात्सोऽपि मृतः स्यात्तदापि व्याजत्वं संभवति तन्निवृत्त्यर्थमाह । मास्त इति । जीवतीत्यर्थः । तेनैवाहृतः तत्र प्रविश्यान्यो मारितवानिति शङ्काव्यावृत्त्यर्थमाह । नूनमिति । नयनमात्रं निषिद्धमिति संयोगविभागः अनेनैव कृत इति एतस्मात्संयोगः बलं च गृहीतं कालादीनां परिणामहेतूनां प्रतिलोमतया निवेशनार्थम् उत्तम कार्यं भगवान् गृह्णातीत्याह । तच्छ्रुत्वा दूरेमागच्छत्विति शीघ्रमेव समर्थत्वात्स्वयमेकाकी समुद्रजलं प्रविश्य पलायमानं तं शङ्खोद्धारे हत्वा तदुदरे तं बालकं प्राणेन्द्रियजीवसंघातरूपं नापश्यत् ततः कर्मवशात् अन्यत्र गत इति ननु गच्छत्वेवान्यत्र किमिति जिज्ञासया दृष्टः हतो वेत्याशङ्क्याह । अर्भकमिति । बालकत्वाददनकर्माधीनो भविष्यतीत्याशङ्क्य दर्शनं हेतुः ॥ ४१ ॥

मारणे तु तदङ्गप्रभवं शङ्खमादायेति अत एव भगवतः शङ्खः पाञ्चजन्यः तत्र स्थितान् सूक्ष्मानवयवान् प्रति लोमतया मज्जनक्षणस्थितपर्यंतान् विधाय तान् पुनः यमलोके स्थितः देहे निवेश्य तत्र स्थितान् प्रतिलोमतया पुनरुत्क्रमेणावस्थास्थितान् कर्तुं रथमागमत् यत्र बलभद्रः ततः संयमनीं सम्यग् यमयति सर्वानेवेति मर्त्यदेवतायाः पुरीं नामेति प्रसिद्धां यद्भयात्सर्व एव सन्मार्गरता भवन्ति यद्यपि यमस्य बहूनि स्थानानि सन्ति तथापि सा दयिता ॥ ४२ ॥

अभयार्थमाह । जनार्दन इति । जनामविद्यामेव यत्रार्दयति तत्र कान्यवार्ता तत्रापि सहलायुधः पातालस्यापि पतिः समुद्रयद्यमस्यापि कृत्यमाह । शङ्खनिर्ह्रादमाकर्ण्येति । शङ्खनादनं तु सर्वप्रबोधनार्थं तत्रत्यावयवानां प्रेरणार्थं प्रजानां संयमन इति स्वस्वाधिकारव्याख्यर्थं च ॥ ४३ ॥

भीतः सन् तयोः महतीमेव सपर्यां पूजां वैष्णवत्वाद्भक्त्युपबृंहितां चक्रे स हि कृतार्थः सन् आत्मानं कृतकृत्यं मन्यमानः सन् कार्यविशेषात् समागतइति विज्ञाय स्वापराधनिवृत्त्येव तत्र पृच्छति । उवाचेति । नम्रः सन् कृष्णं सदानन्दकरणार्थमागतं वा भयाभावार्थमुक्तं ज्ञात्वैव पृच्छतीति शङ्काव्यावृत्त्यर्थमाह । सर्वभूताशयालयमिति । सर्वभूतानामाशयेष्वन्तःकरणेषु आलयो गृहं यस्य अज्ञात्वा कथं न व्यावर्तयति लीलामनुष्येति लीलामनुष्य हे विष्णो ! युवयोः करवाम किं वस्तुतस्तु विष्णुरेव भगवान् एवं सति युवयोरहं किङ्करः किङ्करवाणीति वा सर्वानात्मतया परिगृह्य मर्यादां बाधकत्वेन वक्ष्यति ॥ ४४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अन्तर्जलचर इत्यत्रास्ते इति शेषो ज्ञेयः आस्ते तेनाहृतो नूनं तच्छ्रुत्वा सत्वरं प्रभुरिति पद्यार्द्धमधिकं क्वचिदिति वैष्णवतोषणी अत उत्तरत्रापि प्रभुरित्यध्याहार्य्यम् ॥ ४१ ॥

रथमागमदिति । रथं तत्रस्थं बलदेवं च तीरे स्थापयित्वैव स्वयमेकाक्येव कृष्णः सर्वज्ञत्वात्तज्जानन्नपि तदन्वेषणमिषेण स्वीयं शङ्खमानैषीदिति ज्ञेयं तदङ्गप्रभवमिति । चिन्मयत्वान्नित्यस्यापि पाञ्चजन्यस्य जयविजयवदसुरत्वमिति केचिदाहुः । "ततः पञ्चजनं हत्वा ग्राहरूपं महासुरम् । तन्मध्यस्थं स जग्राह शङ्खं ग्रस्तं हि यत्पुरे"त्यवन्तीखण्डवचनदृष्ट्या तदङ्गमध्ये प्रकर्षेण भवः स्थितिर्यस्य तमिति च केचिद्व्याचक्षते ॥ ४२ ॥

शङ्खं प्रदध्माविति तद्ध्वनिं श्रावयित्वा सर्वानेव नारकान् जीवान् कृपासिन्धुः संसारादुद्धारेत्यवन्तीखण्डदृष्ट्या यथा "असिपत्रवनं नाम शीर्णपत्रमजायत । रौरवं नाम नरकमरौरवमभूत्तदा अभैरवं भैरवाख्यं कुम्भीपाकमपाचक"मित्यादि अन्ते च "पापक्षयात्ततः सर्वे विमुक्ता नारका नराः । पदमव्ययमासाद्य"त्यादिना वैकुण्ठं च तान् प्रस्थापयामासेत्यपि दृष्टम् ॥ ४३ ॥

लीलामनुष्ययोर्विष्णोरिति लीलामनुष्य हे विष्णो इति च पाठद्वयम् ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सम्यक् यमयतीति संयमनस्तथा सः ॥ ४३ ॥

सपर्य्यां पूजां सर्वभूताशयालयम् सर्वप्राणिहृत्पद्मनिलयम् । हे लीलामनुष्य ! लीलार्थं मनुवंशे आविर्भूत ! ॥ ४४ ॥

---

### भाषा टीका ।

उसने उसका हरण किया है सो अवश्य वह बालक है इस बात को सुनकर प्रभु श्रीकृष्णजी ने शीघ्रता से जल में प्रविष्ट होकर उस शंखासुर को मारकर देखा तो उसके उदर में बालक नाहीं मिला ॥ ४१ ॥

फिर उसके अंग से बने शंख को लेकर रथ पर को आगये तिसके पीछे संयमनी नाम की यमराज की प्रियपुरी को गये ॥ ४२ ॥

बलदेवजी के सहित श्रीजनार्दन भगवान् उहां जाकर शंख को बजाते भये उस शंख के बडे शब्द को प्रजा के दंड देने वाले यम ने सुना ॥ ४३ ॥

तब यमराज ने भक्ति से भगवान् की बडी भारी पूजा की फिर सब भूतों के अन्तःकरण में रहने वाले श्रीकृष्ण

श्रीभगवानुवाच ।

गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् ।
आनयस्व महाराज ! मच्छासनपुरस्कृतः ॥ ४५ ॥
तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ ।
दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ॥ ४६ ॥

गुरुरुवाच ।

सम्यक्सम्पादितो वत्स ! भवद्भ्यां गुरुनिष्क्रयः ।
को नु युष्मद्विधगुरोः कामो नामावशिष्यते ॥ ४७ ॥
गच्छतं स्वगृहं वीरौ ! कीर्तिर्वामस्तु पावनी ।
छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४८ ॥

भाषा टीका ।

भगवान् से नम्र होकर बोला कि हे लीला मनुष्य ! हे विष्णो ! आपका हम क्या कार्य करैं ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

निजं कर्मैव निबन्धनं यस्य तथाभूतमपि मदाज्ञापुरस्कारेण न्यतस्ते न दोष इत्यर्थः ॥ ४५ ॥ ४६ ॥

वत्सेति प्राधान्येनैकस्य सम्बोधनम् गुरोर्निष्क्रयो गुरुदक्षिणा युष्मद्विधयोर्गुरोर्मम कामानां मध्ये कोऽनु कामो ऽवशिष्यते न कोऽपीति ॥ ४७ ॥

हे धीरौ ! ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निजं कर्म प्रारब्धलक्षणं निबन्धनमवश्यभोग्यं यस्य तथाभूतमपि हे महाराजेति तदत्यन्तातिक्रममभिप्रेत्य कृपया तत्प्रोत्साहनाय सादरं संबोधनं मदाज्ञानुवर्ती सन् अयं भावः । प्रारब्धस्यावश्यकत्वं मदाज्ञयैव अधुना च गुरुपुत्रानयनं मदाज्ञयैव किन्तु विशिष्य साक्षान्मया क्रियमाणत्वादियमेव बलवतीति ॥ ४५ ॥

तथेत्युक्त्वा तेन यमेन उप समीपे आनीतं गुरुपुत्रमिति यादृशो मृतस्तादृशतच्छरीरकमेवेत्यर्थः । अवन्तीखण्डे प्युक्तं तच्छ्रुत्वा धर्मराजस्तु पुत्रं सान्दीपनेस्तदा । ससर्ज बालरूपं च तनुमानं तदुद्भवम् पश्यतां सर्वदेवानां तदद्भुतमिवाभवदि"ति तच्च श्रीकृष्णाज्ञाप्रभावेणैवेति ज्ञेयं मच्छासनपुरस्कृत इत्यनेनैव क्रोडीकृतत्वात् यतो वक्ष्यते एकादशे "मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्ध" मिति तत्र तेनैव शरीरेणेति तट्टीका च अत्र तत्प्रभाव एव हि विवक्षित इति तथाच श्रीविष्णुपुराणे" तं पाञ्चजन्यमापूर्य गत्वा यमपुरीं हरिः । बलदेवश्च बलवान् जित्वा वैवस्वतं यमम् तं बालं यातनासंस्थं यथापूर्वं शरीरिणम् । पित्रे प्रदत्तवान् कृष्णो बलश्च बलिनां वर" इति अत्र यातनासंस्थमिति प्राचीनावस्थोक्ता सर्वेषां यातनाशान्तेः अस्य वैकुण्ठागमनं तु भगवदिच्छया अथ समुद्राहृतं च रत्नादिकं तस्मै दत्तमिति ज्ञेयं तथाच श्रीहरिवंशे "ततः सान्दीपनेः पुत्रं तद्रूपवयसं तदा । प्रादात् कृष्णः प्रतीतात्मा सहरत्नैरुदारधी" रिति स्वशब्देन गुरौ महाभक्तिर्बोध्यते अतः परामपि दक्षिणां वृणीष्वेति भूयः पुनरूचतुः तच्च युक्तमेवेत्याशयेनाहं । यदूत्तमाविति । तादृशसद्धर्मप्रचारार्थं यदुकुलेऽवतीर्णत्वादित्यर्थः ॥ ४६ ॥

वत्सेति स्नेहविशेषाच्छ्रीकृष्णं प्रति तथा सम्बोधनं युष्मद्विधानामपि किमुत युवयोर्गुरोरित्यर्थः ॥ ४७ ॥

स्वगृह इति यद्यप्येतन्मद्गृहमपि युवयोरेव गृहं तथापि तत्र केवलनिजाभिमानात् स्वीये माथुरगृहे इत्यर्थः । स्वगृहमिति पाठः क्वचित् हे धीराविति तादृशदानात्तादृशशौर्याच्च ततस्तद्दादीन् प्रणम्य गच्छन्तावाशिषाभिनन्दयति । कीर्त्तिरिति ॥ ४८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कोनु इति युष्मद्विधगुरोः युष्मद्विधानां गुरोः ॥ ४७—५० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुक्तः प्राह भगवान् । गुरुपुत्रमिति । इह त्वत्संनिधावानीतं त्वद्भटैरिति शेषः । निजकर्मनिबन्धनं स्वकर्माधीनं स्वकर्मणेह प्रापितमप्यस्मद्गुरुपुत्रं हे महाराज ! यम मच्छासनपुरस्कृतस्त्वमानय मदाज्ञापुरस्कारेणानयतस्तत्र न दोष इति भावः ॥ ४५ ॥

तथेत्यङ्गीकृत्य तेन यमेनोपानीतं गुरुपुत्रमादायागत्य स्वगुरवे दत्त्वा पुनर्वरान्तरं वृणीष्वेत्यूचतुः ॥ ४६ ॥

एवमुक्तः प्राह द्विजः । सम्यगिति । हे वत्सौ भवद्भ्यां गुरुनिष्क्रयः गुरुदक्षिणा सम्यक् सम्पादितः युष्मद्विधयोर्गुरोर्मम कामानां मध्ये को नु कामोऽवशिष्यते न कोऽपि ॥ ४७ ॥

गुरुणैवमनुज्ञातौ रथेनानिलरंहसा ।
आयातौ स्वपुरं तात ! पर्जन्यनिर्देन वै ॥ ४९ ॥
समनन्दन् प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ ।
अपश्यन्त्यो बह्वहानि नष्टलब्धधना इव ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे गुरुपुत्रानयनं नाम
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतो हे वीरौ ! स्वगृहं गच्छतं वां युवयोः कीर्त्तिर्लोकं पुनानाऽस्तु विपुला भवतु ॥ ४८ ॥

——

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवान् ईश्वरवाक्यमाह । गुरुपुत्रमिहानीतमिति । निजकमेव नितरां बन्धनं यस्य स्वतः कर्माधीनम् अतस्त्वया स्वार्थं नानीतः भाविज्ञानेऽप्यतो नापराधः आज्ञामाह । आनयस्वेति। कथं मर्यादा मया त्यक्तव्येति शङ्कायां महाराजसम्बोधनं स हि कदाचित्पुष्टिमपि स्वीकरोतीति विशेषमप्याह । मर्यादातिक्रमे मच्छासनपुरस्कृत इति मम शासनमाज्ञैव पुरस्कृतं येन ॥ ४५ ॥

एवमधिकारवशादीश्वराज्ञया च निरूपितार्थे तदर्थं निःसंदिग्धं प्रवृत्त इत्याह । तथेति । तथैव करिष्यामीति तेनानीय दत्तं गुरुपुत्रं भगवत्कृपया पूर्वावस्थां प्राप्तं प्रति संक्रमेण दृष्टत्वेव न त्वलौकिकप्रकारेण समानीय यादवश्रेष्ठौ यदुरपि धर्मपरायणः अतो गुरूक्तं तथैव कृतवन्तौ ततः स्वगुरवे दत्त्वा भूयो वृणीष्वेत्यूचतुः अयं तु वस्तुतो न दक्षिणारूपः किं तु तेषामेव तेभ्यो दत्तमिति प्रतिबन्धनिवर्त्तकत्वेनाज्ञाकारी जातः ॥ ४६ ॥

द्वितीयवारं वरो न याचनीय इति तस्य बुद्ध्या स एव वर इति लोकबुद्ध्या अप्रार्थयन्निव प्रार्थयति । सम्यक् संपादितो वत्साविति । भवद्भ्यां गुरुनिष्क्रयः गुरोः प्रत्युपकाररूपः दक्षिणात्मकः । भवद्भ्यामेव सम्यक् संपादितः नान्यस्य असाध्यं कर्तुं शक्यः सर्वं सति शास्त्रप्रामाण्यात् शिष्याद्गुरुर्महान् भवतीति भगवत्कृपयैव मदस्ये सिद्धे युष्मद्विधस्य गुरोर्मम कामानां मध्ये कः कामोऽवशिष्यते यः प्रार्थनीयः स्यात् परमेतदेव कर्त्तव्यमिति ॥ ४७ ॥

अभ्यनुज्ञारूपं द्वयं प्रार्थयति । स्वगृहं गच्छतं वीरौ भवतं गार्हस्थ्येन स्थातव्यं सर्वदा जय एव भवत्वित्यर्थः । कीर्त्तिश्च सर्वलोकपावनी भवतु आशीर्वादो वा वरो वा यथाधिकारं ज्ञातव्यः ॥ ४८ ॥

——

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निजं कर्म प्रारब्धलक्षणमवश्यभोग्यं यस्य तथाभूतमपि । मर्त्येन यो गुरुसुतं यमलोकनीतमित्येकादशोक्तेः तेनैव शरीरेणैव युक्तमिति टीका व्याख्यानाच्च मच्छासनेति मदाज्ञा पुरस्कारेणानयतस्तत्र को दोष इति भावः ॥ ४५॥४६ ॥

युष्मद्विधानामपि गुरोः किमुत युवयोर्गुरोर्मम कामानां नानाविधानां मध्ये कः कामः ॥ ४७—५० ॥

——

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निजानि कर्माण्येव नियन्धनानि यस्य तम् । मच्छासनं पुरोऽग्रे शिरसि कृतं येन सः ॥ ४५-४६ ॥

गुरोर्निष्क्रयो विद्यासमाप्तौ दक्षिणा ॥ ४७ ॥

हे वीरौ ! स्वगृहं गच्छतम् वां युवयोः पावनी लोकपावनी कीर्तिरस्तु ॥ ४८ ॥

——

भाषा टीका ।

श्री भगवान् बोले अपने कर्म वश होने से जिस गुरु पुत्र को तुम यहां ले आये हो सो हे महाराज ! मेरी आज्ञा का मानकर तुम उसको ले आओ ॥ ४५ ॥

यमराजने आज्ञा मान कर देदिया तब यदूत्तम राम कृष्ण दोनों गुरु पुत्र को लेकर गुरुजी को देकर फिर भी कुछ वर मांगो यह वचन बोले ॥ ४६ ॥

गुरु बोले हे वत्स ! तुम दोनों ने गुरु का उपकार अच्छा किया है तुम सरीके ईश्वरों का जो गुरु होगा उसकी कौनसी कामना बांकी रहेगी ॥ ४७ ॥

हे वीरौ तुम दोनों अपने घरको जाओ तुमारी यही पवित्र कीर्ति होवे तुमारे वेदादि शास्त्र सदा काल नवीन बने रहें के इस लोक में तथा पर लोक में रहेंगे ॥ ४८ ॥

——

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनिलवद्रंहो वेगो यस्य तेन पर्जन्यो मेघस्तद्वन्निर्दो यस्य तेन ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका

नष्टमदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

गुरुणैवमनुज्ञाताविति अनुज्ञातौ स्वगुरुणेति च पाठद्वयं स्वपुरमिति । तत्र ममतया स्नेहो दर्शितः अतएवानिलरंहसेति शीघ्रमागमनमनिलरंहस्त्वादेव पर्जन्यो गर्जन्मेघस्तद्वन्निनदो यस्य तेन अतो विदूरादेव तच्छब्दश्रवणेन सर्वे ऽभिजग्मुरिति ज्ञेयं हे तातेति प्रहर्षात्॥४९॥

सर्वाः पौर्य्यो जानपदश्च तत्र जानपद्यः काश्चित्पथिदृष्ट्वा काश्चिच्च पुर्य्यामागताः सत्य इति ज्ञेयं तद्विशेषश्च श्रीहरिवंशे "ततः प्रत्युद्यताः सर्वे यादवा यदुनन्दनौ । सबला हृष्टमनस उग्रसेन पुरोगमाः । श्रेण्यः प्रकृतयश्चैव मान्त्रिणः सपुरोहिताः । सबालवृद्धा साचैव पुरी समभिवर्त्तत । नन्दितूर्य्याण्यवाद्यन्त तुष्टुवुश्च जनार्द्दनम् । रथ्या पताकामालिन्यो राजन्ते स्म समन्ततः । प्रहृष्टमुदितं सर्वमन्तः पुरमशोभत । गोविन्दागमनेऽत्यर्थं यथैवेन्द्रमखेः तथा । मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः । जयाशीःप्रथिता गाथा यादवानां प्रियंकराः गोविन्दरामौ सम्प्राप्तौ भ्रातरौ लोकविश्रुतौ । स्वे पुरे निर्भयाः सर्वे क्रीडन्ति सहबान्धवैः । न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः । मथुरायामभूद्राजन् गोविन्दे समुपस्थिते । वयांसि साधुवाक्यानि प्रहृष्टा गोहयद्विपाः । नरनारीगणाः सर्वे भेजिरे मनसः सुखम् । शिवाश्चवाताः प्रववुर्विरजस्का दिशोदश दैवतानि च हृष्टानि सर्वाण्यायतनेषु च यानि लिङ्गानि लोकस्य बभुः कृतयुगे पुरा । तानि सर्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्द्दने" इत्यादि॥५०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं गुरुणानुज्ञातौ हे तात ! अनिलवद्रंहो वेगो यस्य पर्जन्यो मेघस्तद्वन्निनदो यस्य तेन रथेन स्वगृहमाजग्मतुः ॥ ४९ ॥

नाथयोरत्यहानि अत्यन्तसंयोगे द्वितीया अपश्यन्त्यः प्रजा मथुरास्थास्तदा रामजनार्द्दनौ दृष्ट्वा नष्टमदृष्टं पुनर्लब्धं धनं याभिस्तास्ता इव समनन्दन् सञ्जहृषुः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरुनिष्क्रया गुरुकृतप्रतिक्रिया युष्मद्विधानां पुंसां गुरोः को नु कामानां मध्ये कामो ऽवशिष्यते सर्वोऽपि कामः सिद्धो भवतीत्यर्थः ॥ ४७—४९ ॥

तौ अपश्यन्त्यः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एतदपि गुरुवाक्यं कृतवन्ताविति वदन् प्रत्यापत्तिमाह । गुरुणैवमनुज्ञाताविति । भगवदिच्छानुसारेणैव गुरुणा उक्तौ क्षणमात्रेणैव अनिलरंहसा रथेन स्वपुरमायाताम् आगतौ वा स्वपुरत्वेन प्रत्यापत्तित्वमुक्तम् दूरादेव तापनाशकत्वाय पर्जन्यवन्निनदो यस्येत्युक्तम् ॥ ४९ ॥

भगवन्तं पूर्ववदुक्त्वा तत्सम्बन्धिनोऽपि पूर्ववदेव जाता भगवति निरुद्धा वेत्याह । समनन्दन्निति । सर्वाः विद्यानधिकारिणोऽपि विद्यया तेजोऽनुभावौ भगवता प्रकटिताविति तदर्थमाह । दृष्ट्वा रामजनार्द्दनाविति । सामान्यतोऽपि दर्शनाकाङ्क्षायामाह । अपश्यन्त्य इति । बहून्येव दिनानि वर्षत्रयचतुष्टयात्मकानि अपश्यन्त्यः सत्यः दृष्ट्वा परमानन्दयुक्ता जाताः पूर्वापेक्षया अधिकत्वमाशङ्क्य तथा सति प्रमाणबलं भविष्यतीति तन्निराकरणार्थं दृष्टान्तमाह । नष्टः अदृष्टः क्वचिल्लीनः पुनर्लब्धश्चेत् धनादिश्चेत्तदा पूर्ववदेव जायमानमपि सुखविशिष्टमिव भवतीति भगवत्यपि तथा जातमित्यर्थः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्
द्विचत्वारिंशाध्यायविवरणम् ॥ ४२ ॥ ४५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमस्य पञ्चचत्वारिंशोऽप्यजनि सङ्गतः ॥ ४५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पर्जन्यवन्मेघवन्निनदो यस्य तेन ॥ ४९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नष्टानि पुनर्लब्धानि धनानि याभिस्ता इव सर्वाः प्रजाः समनन्दन् सञ्जहषुः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चचत्वारिंशाध्यायार्थप्रकाशः ॥ ४५ ॥

---

भाषा टीका ।

हे तात ! गुरु के इस प्रकार आज्ञा देने से पवन के से वेग वाले मेघ कैसे शब्द वाले रथ पर चढकर अपने मथुरा पुर को भगवान् आते भये ॥ ४९ ॥

उहां पर राम जनार्दन दोनों के दर्शन करके सब प्रजा बडे अनंदित भये जोकि पहिले बहुत दिनसे नहीं देखतेथे वे नष्ट धन सरीके उनको प्राप्त होकर कृत कृत्य होगये ॥ ५० ॥

इति श्रीमद्भागवत दशमस्कन्ध पूर्वार्ध पैंतालीस मे अध्यायकी भाषाटीका समाप्त ॥ ४५ ॥

---

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## ॥ षट्चत्वारिंशोऽध्यायः ॥

### श्रीशुक उवाच

वृष्णीनां प्रवरो मन्त्री कृष्णस्य दयितः सखा ।
शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः ॥ १ ॥
तमाह भगवान् प्रेष्ठं भक्तमेकान्तिनं क्वचित् ।
गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः ॥ २ ॥
गच्छोद्धव ! व्रजं सौम्य ! पित्रोर्नः प्रीतिमावह ।
गोपीनां मद्वियोगाधिं मत्सन्देशैर्विमोचय ॥ ३ ॥
ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।
ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम् ॥ ४ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ।
यशोदानन्दयोश्चक्रे कृष्णः शोकापनोदनम् ॥
कामचारं द्विजातिः सम्परित्यज्यातिसंयतः ।
गुरोर्ज्ञानमनुप्राप्य सख्या गोपीरुपादिशत् ॥

गोपीनां सान्त्वनमपि रहस्यं सन्मन्त्रिसाध्यमिति तदर्थमुद्धवं विशिनष्टि । वृष्णीनामिति । बुद्धिसत्तमो बुद्ध्या ऽतिश्रेष्ठः ॥ १-३ ॥

गोपीनां विशेषतः सन्देशे कारणमाह । ता इति । मय्येव सङ्कल्पात्मकं मनो यासां ताः अहमेव प्राणो यासां ताः मदर्थे त्यक्ता दैहिकाः पतिपुत्रादयो याभिस्ताः ततः किमत आह । ये त्यक्तलोकधर्मा इति । मां प्रति ये त्यक्तवन्तः लोकधर्मानिहामुत्र सुखं तत्साधनानि च यैस्तान् बिभर्मि पोषयामि सम्वर्धयामि सुखयामीत्यर्थः ॥ ४ ॥

---

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आर्तैकशरणं कृष्णमार्तान् व्रजजनांश्च तान् ।
तच्चार्ताश्वासकं भक्तमार्त्या वन्दे दुराशया ॥

एवमात्मनः प्राथमिकावश्यसमाप्त्या तथा आयास्य इति द्रष्टुमेष्याम इति स्ववाक्यव्यभिचारतर्कतस्तेषामार्तिविशेषशङ्कया च व्रजं गन्तुमर्होऽपि यन् श्रीभगवान्नाजगाम तत्र श्रीनन्दयशोदादिप्रेमवक्रतया पुनस्तदागमनाभावमाशङ्कमानानां श्रीवसुदेवदेवक्यादीनां गुरुत्वेनालङ्घनीयवाक्यानामनुवृत्तैव कारणं लक्ष्यते ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमित्याद्युक्तत्वात् । श्रीव्रजराजादिभिश्च सन्निधगुरुजनानामच्छारक्षासम्पुलङ्घ्य तदागमनस्य तत्र मङ्गलातिक्रमशङ्कया स्फुटमप्रार्थितत्वात् जरासन्धादिमहाशत्रुभ्यो रक्षा चास्यास्मद्व्रजे न स्यात् किंतु दुर्गादिसम्पत्तिमत्यां पुर्य्यामेव स्यादिति स्वयमपि विचारितत्वाच्च । अतः श्रीवसुदेवादिभ्यो गोपनानुसारेणैवोद्धवं प्रति भक्तमेकान्तिनं क्वचिदिति वक्ष्यते । "अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया । गतांश्चिरायितान् शत्रुपक्षक्षपण चेतस" इति वक्ष्यमाणानुसारेण जरासन्धादिदुर्जननिर्जयादिकृत्यशेषोऽपि कारणान्तरवत् । अन्यथा तैर्यदूनां व्रजजनानामपि महानुपद्रवः स्यात् । अत औदासिन्यव्यञ्जनाय श्रीनन्दादीन् स्वनिकटेऽपि नाजुहाव । किञ्च युगपदुभयत्र पितृत्वादिव्यवहारस्याभिरुचितलीलावेशादीनां समञ्जसतायां दुर्घटता स्यात् निजप्रेयसीनां चानयनेऽनानयने चासमञ्जसत्वमिति । अतएव पूर्वमपि वयञ्च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्याम इत्येवोवाच । न त्वाह्वयिष्याम इति। अतस्तादृशानपि वो वयमेव द्रष्टुमेष्यामः ननु यूयमत्रागच्छतेति व्यञ्जनामभिप्रेत्यैव तयोर्दिदृक्षया स्वयं नन्दादयोऽतिनिरूढा अपि व्रजान्नागताः । तत्तदुपद्रवापातात् पुरे व्रजे च युगपत् प्रकटा स्थितिश्च न स्यात् । तज्ज्ञाने श्रीनन्दादीनामस्मदीयत्वे ज्ञानदान्या बन्धुभावहानिश्च स्यात् यथैव वक्ष्यते यथा दूरचरं प्रेष्ठ इत्यादि तस्मात्तथा स्थितिमपि न चकार । अप्रकटा स्थितिस्तु तस्य सर्वदास्त्येव तथैव प्रतिपादयिष्यते । मा शोचतं महाभागावित्यादौ । भवतीनां वियोगो मे नहि सर्वात्मना क्वचिदित्यादौ च किन्त्वसौ प्रकटलीलाविर्भाविनां तेषामनुभव गोचरो न भवति प्रकटलीलायामपि मध्ये यत्तस्य व्रजस्थं कञ्चित् काञ्चित् प्रति गुप्तमागमनं तदप्युत्कण्ठाप्रधानानां स्फुरणभ्रमकरत्वाद्विश्वासाय न भवति । तस्मादन्तवक्त्रवधान्ते वर्णयिष्यमाणं श्रीभागवतमते च व्यञ्जयिष्यमाणं यावत्तत्र निजगमनं सम्पद्यते

---

१ श्रीभगवतोपदिष्यादौ न इति सुबोधिन्यां नौ इति च पाठद्वयम् ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तावत्तेषां यथा केनापि व्याजोपदेशेन तत्ताद्विश्वासास्पदं स्यान्महाराजत्ववैभवं श्रवणं स्यात्तथा समाधातुं स्वयमगत्वा स्वस्यागमने केवलश्रीरामगमनञ्च दुःखकरं मत्वा स्वतुल्येन श्रीमदुद्धवाख्येन प्रियसखेन तादृशं सान्दिश्य श्रीव्रजवासिनः सान्त्वयामासेति क्रमप्राप्तां लीलां वक्तुमारभते अध्यायद्वयेन । वृष्णीनामिति । वृष्णीनामसङ्ख्यानामूर्ध्वोर्ध्वमहानुभावानां विविध भावानामपि सर्वेषामेव यादवानां सम्मतस्तादृशवचनाचरणः । प्रवर इति पाठेऽपि तथैवाभिप्रायः । इति परममाहात्म्यं परमसामञ्जस्यमभिप्रेतं तेन. च व्रजजनानामपि तादृशां सान्त्वने सामर्थ्यं किञ्च मन्त्री गुप्तयुक्तिप्रदोऽमात्यविशेष इति विश्वासास्पदत्वेन युक्तिनैपुण्येन च तत्सामर्थ्यं तेन च पूर्वलिखितयुक्तिरपि श्रीभगवता तस्मिन् स्वयमेव कदाचिद्व्यञ्जितास्तीति गम्यते । न केवलमेतावत् किन्तु कृष्णस्य च दयितो दयाविशेषविषय इत्यनिर्वचनीयगुणत्वं तेनात्मीयतया स्वीकृतत्वं चोक्त्वा आत्मगम्यस्थप्रस्थापने श्रीगोपिकास्वपि सन्देशे योग्यत्वञ्च । एवमन्तरङ्गलोकदृष्ट्या यथोत्तरश्रेष्ठेन तन्महिमानमुक्त्वा तद्योग्यतावैशिष्ट्यं तथा सखा असङ्कोचप्रेम्णा दत्तसख्यपदवीकोऽपि इति । श्रीकृष्णेनापि गुणरूपवयआदौ साम्यं सर्वयादवेभ्यः तस्य परमासङ्कोचविस्रम्भास्पदत्वं चोक्त्वा बहिरङ्गलोकदृष्ट्याप्याह । बृहस्पतेः साक्षादेव शिष्यः नतु शिष्यादिद्वाराध्यापनादित्यर्थः । तच्च नीतिशास्त्रमारभ्य श्रीभागवतपर्यन्तस्येति ज्ञेयम् । बृहस्पतेरपि तत्र सङ्कर्षणसम्प्रदायान्तःपातादिति च परमवाग्मित्वमुक्त्वा तेषां श्रीकृष्णजित्वरशुद्धप्रेमवाक्यानां प्रत्युत्तरे तस्य तु यत्किञ्चित् सामर्थ्यं व्यञ्जितं सर्वत्र हेतुः बुद्धिसत्तम इति । एवं श्रीभगवत इव षड्गुणा दर्शिताः । एतदेव च मनसि विचारितं श्रीभगवता गोद्धवोऽप्यपि मन्यून इति उद्धव नामा श्रीवसुदेवस्य भ्रातुर्देवभागस्य पुत्रः तत्रास्तीति शेषः । यद्यपि हरिवंशे । "उद्धवो देवभागस्य महाभागः सुतोऽभवत् । पण्डितानां परं प्राहुर्देवश्रवसमुद्भव"मिति । द्वयोरपि भ्रात्रोरुद्धवनामानौ पुत्रौ कथ्येते तथाप्ययं देवभागसुत एव ज्ञेयः महाभागत्वं खलु तादृशश्रीकृष्णकृपायोग्यत्वं नतु पण्डितमात्रत्वं तदेवमेव काञ्चिदङ्ग महाभाग सखा नः शूरनन्दन इति स एष व्रजेश्वरेण तथा सम्बोधयिष्यते श्लेषेण साक्षादुद्धवः मूर्त्तिमानुत्सव इति ॥ १ ॥

तस्य श्रीकृष्णदयितत्वादौ हेतुं तत्र तत्परतां च विशेषणैर्दर्शयन् तादृशतद्वर्णनस्योद्देश्यमाह । तमिति । प्रेष्ठं बाल्यमारभ्यैवातिशयेन प्रीतिकर्त्तारं भक्तं परमादरेण सेवातत्परञ्च "यः पञ्चहायनो मात्रा प्रातराशाय याचितः । तन्नैच्छद्रचयन् यस्य सपर्यां बाललीलये"त्यादि तृतीयाद्युक्तेः अत एव एकान्तिनं तदेकापेक्षकं यथोक्तं श्रीगजेन्द्रेण "एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्ना" इति श्रीवैष्णवैरपि "विहाय पितृदेवादीन् परिनिष्ठाङ्गतो हरौ । नद्धाढप्रेमभिः पूर्णं एकान्तीति निगद्यत" इति अत्र सर्वयादवापेक्षामप्यतीत्य तस्यैकान्तित्वं ज्ञेयं तथा तथाभूतं तमाह किमर्थं प्रपन्नानां तवास्मीति सकृद्याचमानानामपि किमुत तदेकजीवनानां व्रजजनानां य आर्तिं हरति सः तेषामार्तिं हर्तुमित्यर्थः । तस्य तत्तज्ज्ञानतादृशानुग्रहादौ योग्यं पदं भगवानिति सार्वज्ञ्यदयादिगुणानां मर्यादाधारान्निधिरित्यर्थः नन्वपरिहार्य्यनानास्निग्धजनवेष्टितेन श्रीभगवता तादृशसन्देशो दुष्करः तत्राह । क्वचित्कथं विलम्बे तदेकद्वितीये स्थाने हन्त तादृशं सन्देशं कथा मुद्रयोवाच तत्राह । गृहीत्वेति । तच्च निजेष्टप्रयोजने तस्यानुरागोत्पादनेच्छातः परमगोप्यत्वेन शनैर्निकटे विवक्षातः तदुक्तिप्रवृत्त्या प्रेमभरोदयस्वभावाच्च ॥ २ ॥

न इतिवद्वत्वं तत्पितृकत्वेनात्मनो बहुमानात् किंवा मत्पितृत्वेन भवादृशामपि तौ पितरावित्यभिप्रायेण इति तयोस्तस्य स्नेहं वर्द्धयति । नाविति क्वचित्पाठः कृष्णरामयोरित्यभिप्रायेण पित्रोर्मद्विच्छेददुःखितयोः प्रीतिं सुखम् मा सम्यग्वह स्वचातुर्य्येण बलादिव प्रापय मद्विना तयोः प्रीतेर्दुःसाध्यत्वात् यद्वा प्रवाहन्यायेन कुरु यथात्वत्पश्चादपि तयोः प्रीतिस्तिष्ठेदेवेत्यर्थः । ननु तत्र मम वराकस्य का शक्तिरित्याशङ्क्य सम्बोधयति हे उद्धवेति । उद्धव एव त्वमसीति पूर्वोक्तसद्गुणगणनिधित्वं सूचयति । उद्धवशब्दस्य श्लेषार्थश्चोक्त एव किञ्च सौम्य ! हे शान्तमूर्त्ते मनोज्ञेति वा अस्तु तावत्तच्चातुर्य्यं त्वद्दर्शनमात्रेण च तयोः प्रीतिर्भवितेति भावः । इदं प्रोत्साहनार्थं गोपीनां तु मद्वियोगेन आधिस्त्वं तं विशेषेण मोचय दृढबन्धनवद्दुर्विसंलग्नमपुनः स्पर्शतया एवमाधिविमोचनमात्रमेव त्याजयतासां नतु प्रीतिं कर्त्तुं शक्यसीत्यर्थः तच्च मत्सन्देशैर्बहुभिरेव नतु त्वद्वाक्चातुर्यादिना नापि द्वित्रैर्वा ॥ ३ ॥

गोपीनां विशेषतः सन्देशे द्वाभ्यां विशेषावस्थावर्णनेन कारणं वक्तुं प्रथमतः साधारणावस्थां वर्णयति । ता मन्मनस्का इति । विशेषणत्रयेण क्रमेण तासां स्वं विना धर्माद्येशार्थेषु देहेषु लोकेष्वपि नैरपेक्ष्यमुक्तम् अन्यत्तैः तत्रादिग्रहणाद्भोजनपानादयश्च दैहिकाः यद्वा मन्मनस्का इतिबाह्यसर्वप्रियार्थानादरः मत्प्राणाः इति ततोऽपि प्रियाणामन्तरीणसर्वार्थानामनादरः मदर्थं इत्यादिना भोक्तृत्वे सुखदुःखानां पुरुषःप्रकृतेः पर इत्यात्मपर्य्यवसायिसर्वभोगानादरादात्मानादरश्च विवक्षितःतत्र तत्र हेतुमाह मामेव दयितं प्रनसागता निश्चितवत्यःनतु बाह्यान् विषयान् तथा प्रेष्ठं ततोऽपि प्रियतमं मामेव नतु ततोऽन्तरीणप्राणादीन् मद्वियोगे तत्तदनादरात् तथा निरुपधिप्रेष्ठमात्मानमपि मामेव नतु देहिनं मद्वियोगे तस्यापि शून्यायमानत्वात् मद्विना भूतानां तासामात्मान्यत्र प्रीतिमात्रं न स्पृशतीत्यर्थः तदेवं त्रिभिर्योग्यैः पदैर्मामेव पतिं निश्चिक्यत्य इत्यर्थः । ननु किंवदन्तीप्राप्तमन्यदित्यर्थः । तथैव ता एव वक्ष्यन्ते अपि वत मधुपुर्यामार्यपुत्रो भुनास्त इति इदं पद्यार्द्धं बहुत्र तत्त्ववादिनां टीकायामपि ध्रियते किन्तु स्वामिपादैरनभिमतमिव लक्ष्यते मध्ये प्रविष्टस्य दुर्गमस्याप्यव्याख्यानात् । य इति । सामान्येन निर्देशः अधिकाराद्यनपेक्षया भरणस्यावश्यकत्वाभिधानार्थं चकारात्तानपि किं पुनः प्राणाद्यनपेक्षिकास्ता इत्यर्थः यद्वा मम मनो यासु ताः किञ्च मम ता एव प्राणाः यतो मदर्थं इत्यादि तत्र हेतुः मामेवेत्यादि कैमुत्येन हेतुः य इत्यादि अहं ब्रह्मादि ध्येयोऽपि बिभर्मि अन्तर्धारयामि सदा चिन्तयामीत्यर्थः तथाचादिपुराणे "भक्ता ममानुरक्ताश्च कति सन्ति न भूतले । किन्तु गोपीजनः प्राणाधिकप्रियतमो मम"ेति अतस्तासामाधिमद्वन्तःप्रवेशेन सदाहमप्याधिमानिति भावः । यद्वा ये ताभिस्त्यक्ताः सखीदास्यादिलोकाः भोजनादिदेहधर्मा लज्जादिसाध्वीधर्माश्च तानप्यहं बिभर्मि रक्षामि किमुत ताः ॥ ४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

त्यक्तदैहिकाः त्यक्तदेहभूषणाः ॥ १—८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथाध्यायद्वयेन भगवतः स्वसखोद्धवमुखेन गोपीसान्त्वनात्मकं चरित्रमनुवर्ण्यते गोपीनां सान्त्वनमतिरहस्यं सन्मन्त्रिसाध्यमित्यतर्थमुद्धवं विशिनष्टि। वृष्णीनामिति । दयितः सखा प्रियसखः साक्षाद्बृहस्पतेः शिष्यः अनेन बुद्धिकौशलं सूचितं बुद्धिसत्तमः निसर्गतोऽपि बुद्धया श्रेष्ठः ॥ १ ॥

तमिति। क्वचिन्निर्जने देशे प्रपन्नार्त्तिहरः हेतुगर्भमिदं तत्त्वात्संदेशप्रेषणमुचितमिति भावः ॥ २ ॥

तदेवाह। गच्छेति सार्द्धैश्चतुर्भिः। हे उद्धव! नोऽस्माकं पित्रोर्नन्दयशोदयोः प्रीतिमावह हर्षं जनय मत्संदेशैरित्यपकर्षःमद्वियोगाद्धेतोर्य आधिर्मनःपीडा तं विमोचय त्याजय ॥ ३ ॥

गोपीनां विशेषतः संदेशनयनकारणमाह। ता इति। मय्येव संकल्पात्मकं मनो यासाम् अहमेव प्राणो यासां ताः मदर्थे त्यक्तदैहिकाः त्यक्तदेहपोषणाः मामेव दयितं दयास्य संजातेति दयितस्तं दयावन्तं प्रियंतमं तत्र हेतुरात्मानं मनसा आगमन् गत्यर्था बुद्ध्यर्थाः अध्यवसितवत्यः सन्त्वेवं विधास्ताः किंतवेत्यत आह। ये जना मदर्थे त्यक्ता लोकधर्मा यैस्तानहं विभर्मि संवर्धयामि सुखयामीति यावत् ॥ ४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

भगवन्मनोवशीकरणार्थं भक्तिरेव प्रधानसाधनमिति दर्शयितुं हरेर्गोपीष्वनुकम्पित्वं निरूपयत्यास्मिन्नध्याये।तत्र कृष्णेन उद्धवं गोकुलं गमयितुं वक्ति। वृष्णीनामिति ॥ १ ॥

य एवंविधगुणोपेत उद्धवस्तमाह क्वचिद्गृहसि ॥ २ ॥

मद्वियोगेन मम विरहेण य आधिस्तं मत्सन्देशैर्मदीयाश्वासवचनैः ॥ ३ ॥

अहमेव प्राणो जीवनं यासां तास्तथा त्यक्तदैहिकाः दूरीकृतदेहधर्माः दायितामिष्टस्य दातारं प्रेष्ठं स्वशरीरादेरपि प्रियतमम् आत्मानं सन्ततानुगतरूपम् ॥ १ ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

परमात्मनः प्राथमिकावश्यकृत्यासमाप्त्या तथा आयास्य इति द्रष्टुमेष्याम इति स्ववाक्यव्यभिचारतर्कतः तेषामार्त्तिविशेषाशङ्कया च व्रजं गन्तुमनाअपि यच्छ्री भगवान्न जगाम तत्र श्रीनन्दयशोदादिप्रेमबहुतया पुनस्तदागमनाभावमाशङ्कमानानां श्रीवसुदेवदेवक्यादीनां गुरुत्वेनालङ्घनीयवाक्यानामनुरोधेव कारणं लक्ष्यते। ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमित्युक्त्वात् अतः श्रीवसुदेवादिभ्यो गोपनानुसारेणैव उद्धवं प्रति भक्तमेकान्तिनं क्वचिदिति वक्ष्यते ज्ञानहान्या बन्धुभावहानिश्च स्यात् । पुत्रादिरूपस्य स्वस्य महाराजताश्रवणेन तूत्कण्ठात्ययप्रेमानन्दवृद्धिः स्यात् यथैव वक्ष्यते । यथा दूरचरे प्रेष्ठे इत्यादि । तस्मात्तथा स्थितिमपि न चकार । अप्रकटा स्थितिस्तु तस्य तत्र सर्वदास्त्येव तथैव प्रतिपादयिष्यते माशोचतं महाभागावित्यादौ भवतीनां वियोगो मे नहि सर्वात्मना क्वचिदित्यादौ च। किन्त्वसौ प्रकटलीलाविर्भाविणां तेषामनुभवगोचरो न भवति । तस्माद्दन्तवक्त्रवधान्ते पाद्मोत्तरखण्ड वर्णयमानं श्रीभागवत मते च वर्णयिष्यमाणं यावत्तत्र निजगमनं सम्पद्यते । तावत्तेषां यथा केनापि व्याजोपदेशेनाशावनुभवगोचरः स्यान्महाराजत्वे वैभवश्रवणं च स्यात् तथा समाधातुं स्वयमगत्वा स्वस्यागमने केवलं श्रीरामगमनञ्च दुःखकरं मत्वा स्वतुल्येन श्रीमदुद्धवाख्येन प्रेयस्त्वेन तादृशं सन्दिश्य श्रीव्रजवासिनः सान्त्वयामासेति क्रमप्राप्तां लीलां वक्तुमारभते अध्यायद्वयेन वृष्णीनामिति। ये त्यक्तेति। यच्छब्दसामान्यनिर्देशः। तन्निर्देशश्च विप्रत्याद्यनपेक्षार्थः। चकारात्तानपि किमुत तन्मनस्का इत्यादि लक्षणास्ता इति ॥ १—५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

त्रिचत्वारिंशकेऽध्याये स्वास्थित्यैव निरोधनात्।
यशोदानन्दयोश्चैव ह्युक्तोऽपि विनिरूप्यते ॥
गोपिकानां ततो वाच्यस्तेनोक्तं च समर्थितम्।
राजसत्वं च संसिद्धं गुणोत्कर्षश्च रूपितः ॥

पूर्वाध्याये ज्ञातीन् वो द्रष्टुमेष्याम इति नन्दं प्रति भगवता निरूपितं तेषामेव च सम्बन्धः पुत्रत्वादिरूपः स्थापितः तत्र मध्ये विद्याग्रहणेन विलम्बो जात इति स्वस्यापि गमनं कार्यस्यावश्यकत्वात् न संभवतीति विचारतः समागत्य नन्दादीनां सान्त्वनार्थमुद्धवं प्रेषयतीति निरूप्यते । तत्र सन्ति त्रिविधाः प्रकटसंदेशयोग्याः यशोदानन्दप्रभृतयः मित्रभूता गोपाः अल्पगोप्याः गोप्यस्त्वतिगोप्याः अत एतादृशेऽर्थे निपुणेन दूतेन भाव्यमिति उद्धवं प्रेषणार्थं वर्णयति। वृष्णीनां प्रवर इति। कुलीनः कर्मसु प्रशस्तः तत्रापि स्वगोत्रजः तत्रापि महानिति प्रेषणे स्वरूपयोग्यता निरूपिता दौत्यार्थं सहकारियोग्यतामाह। मन्त्रीति । स हि मन्त्रं न प्रकाशयति तद्वाचितमेव वदेन्नानुचितमिति भगवदुक्तमपि न वदेदतो गह्यार्थं प्रेषणमयुक्तमित्याशङ्क्याह। कृष्णस्य दयित इति । दयितोऽत्यन्तप्रियः । यद्यनभिप्रेतधर्मवान् भवेत् तर्ह्यत्यन्तप्रीतिविषयो न स्यात् । गुर्वादिरप्येतादृशो भवतीति पितृव्यत्वाच्च तथात्वे गुह्यं न वक्तव्यमित्याशङ्क्याह। सखेति । भगवतः समानशीलव्यसनत्वात् तथाप्यनीतिज्ञश्चेत् देशकालप्रकरणादिनिरपेक्षतया वदेत ततश्च यथार्थमपि भाषितं फलाय न भवेदित्यत आह। बृहस्पतेः देवगुरोः शिष्य इति। नीतिस्तत्रैव तिष्ठति। साक्षादिति । न ग्रन्थद्वारा साक्षादुद्धवो वा उत्सवात्मकः दूरे गतस्य बन्धोः पुनरागमनव्यापकः परम्परयोत्सवहेतुर्भवति अयं तु साक्षात् एव दृष्ट्वैव जानन्ति भगवद्दर्शनेनेव च सुखिता भवन्ति तथापि

१ एतन्मते वक्राक्षरं च मामेव दयितं प्रेष्ठमात्मनं मनसा गताः इत्यर्थमाधिकं दृश्यते

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यावदुक्तार्थग्रहणसामर्थ्यं मृग्यत इति तादृशो वक्तव्य इत्यत आह। बुद्धिसत्तम इति। बुद्ध्या अत्यन्तं सन् बुद्धिमत्त्वेऽपि कार्यसिद्धौ स्वतोऽपि छायया गोकुलवासिनां दुःखदूरीकरणसमर्थ इति तथोक्तम्॥ १॥

एवं दूतगुणानुक्त्वा तादृशे भगवान्नियोगमाह। तमाहेति। तेन कार्यं सेत्स्यतीति ज्ञानार्थमत्यनुरोध्येषु स्वागमनार्थं च प्रेष्ठोऽत्यन्तं प्रियः अतः स्वसमान इति प्रतिनिधित्वात्प्रेषणीयः तथापि स्त्रीषु विक्रियां प्राप्स्यतीत्याशङ्क्याह। भक्तमिति। स्वीकृतस्तथा भविष्यतीत्याशङ्क्याह। एकान्तिनमिति। एकान्ते स्थातुं योग्य उभयेषां विकारानालम्बनमिति क्वचिदेकान्ते यत्र कोऽपि न पश्यति तत्र पाणिना पाणिं गृहीत्वा आहेति सम्बन्धः। एवं निर्बन्धेन कथने को हेतुस्तत्राह। प्रपन्नार्तिहर इति। शरणागताः गोकुलवासिनः तेषामार्तिर्हर्तव्येति सहज एव धर्मस्तस्य तादृश इति न तद्धर्मपरित्यागः॥ २॥

भगवद्वाक्यान्याह चतुर्भिः—

प्रमाणं च प्रमेयं च उपपत्तिश्च बाधकम्।
चत्वारोऽत्रैव वक्तव्या अन्यथा प्रेषणं न हि॥

आदौ नियोगमाह। हे उद्धव! व्रजं गच्छ सौम्येति सम्बोधनान्नान्यः प्रेषयितुमुचित इति सूचितं गत्वा कर्तव्यमाह। पित्रोः यशोदानन्दयोः नौ आवयोः उभाभ्यां तस्मिन्नेव पितृत्वं स्थापितमिति तदुपपादितम् अतो ययैव प्रीतिर्भवति अस्मदागमनेनेव तथा प्रीतिमावह अयं प्रकटः सन्देशः गुप्तमाह। गोपीनां मद्वियोगाधिमिति। मम वियोगेन आधिर्मनःपीडा तां मत्संदेशैः मत्पत्रलिखितैः तत्र प्रकटीकृतैः विमोचय आधिग्रस्तास्ताः यथा तन्नाशो गच्छति तथोपायं कुरु॥ ३॥

ननु तासु को विशेष इत्याशङ्क्य तासां स्वरूपमाह। अस्मत्कथने प्रमेयबलत्वेन ता मन्मनस्का इति प्राणिनामात्मा मदीय एव सर्वसाधारणः सर्वसिद्धत्वात् ज्ञातेऽपि तथा नादरणीयः किं तु देहेन्द्रियमनांसि अन्यपराण्येवोत्पत्तिशिष्टानि तानि चेन्मत्पराणि स्युः तदा तत्संघाता मदीया भवन्ति तदाह। मय्येव मनो यासां मय्येव प्राणा इन्द्रियाणि च तदर्थमेव जीवति मय्येव सति जीवति सर्वाणीन्द्रियाणि मत्प्रियकाण्येव कुर्वन्ति देहमपि मदर्थमेव कुर्वन्तीत्यतदर्थमाह। मदर्थे त्यक्तदैहिका इति। दैहिका हि देहोपयोगिनः तेषु विद्यमानेषु न भगवदर्थमेव देहो भवेत् अतस्ते त्यक्तव्याः ननु तेषां त्यागे देहनिर्वाहो न भवेत् तत्राह। ये 'त्यक्तलोकधर्माश्च मदर्थे इति। त्यक्तः लोकः धर्मो वैदिकश्च यैः चक्रा, रात्सर्वे लौकिकधर्मा वेदैश्च परिगृहीता एतादृशानहं बिभर्मि यथा मद्धस्तस्थितपदार्थः केनापि नोपहन्यते तथा त इत्यर्थः अतस्तेषां न कोऽप्युपद्रवः किं तु मद्विरहः ससन्देशो निराकर्तव्यः॥ ४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षट्चत्वारिंशके गोष्ठं गत उद्धव उद्धवम्।
ददर्शास्येशयोः कृष्णविरहादत्यनुद्धवम्॥

स्वविच्छेदवतां व्रजस्थानां दुःखमनुस्मृत्य तेन स्वयं व्याकुलस्तद्दुःखहरं मत्सन्देशं प्रापयितुं तत्तत्प्रेम्णाञ्च सर्वोत्कर्षं ख्यापयितुमत्र पुर्यां कोऽनुरूपो यः खलु व्रजनगरस्थः तत्रस्थानां तत्तत्प्रेम्णाञ्च माधुर्यसुधासिन्धौ खेलितुं कृतपरःसहस्रतपस्कोऽस्तीति परामृशति भगवत्यकस्मात्तत्रैवागतमुद्धवं तत्कृत्यसाधकं ज्ञापयितुं विशिनष्टि। वृष्णीनां सम्मतः यदुवंश्यैः सर्वैरेव प्रमाणीकृतवचनाचरणादिरित्यर्थः। तेन व्रजादागत्य यदयं तत्तत्प्रेमाणमनुभूय श्रीयशोदानन्दयोः गोपानां गोपीनां प्रेम्णां सौभाग्योत्कर्षान् अत्र तेभ्योऽपि परःसहस्रान् वक्ष्यते तत्र सर्वेऽपि वृष्णयो विश्वासं प्राप्स्यन्ति। येऽमी परमेश्वरपुत्रकत्वेन देवकीवसुदेवयोरेव सौभाग्यस्य प्रेम्णश्च सर्वोत्कर्षं तत्सम्बन्धित्वेन स्वेषामेव च तं मन्यन्त इति भावः। मन्त्रीति व्रजस्थानां सान्त्वनं यया मन्त्रणया सम्भवेत्तदभिज्ञ इति भावः। कृष्णस्य दयितो वल्लभ इत्यत एव व्रजप्रेमसुधापानयोग्यतेति भावः। सखेति व्रजभूमौ सुबलस्येवास्याप्युज्ज्वलरससंलापवावदूकत्वं ह्युत्पन्नमेवाग्रतस्त्वदधिकमेवोत्पत्स्यते तथा नोद्धवोऽण्वपि मन्न्यून इति तृतीयोक्तेश्च कृष्णतुल्यत्वात् कृष्णप्रतिमूर्तिना अनेन कृष्णदूत्यं साधु सम्पत्स्यते इति भावः। बृहस्पतेः साक्षात् शिष्य इत्यस्य बुद्धेरति तैक्ष्ण्यं दृष्ट्वा स्वयमेव बृहस्पतिरिमं सर्वशास्त्राण्यध्यापयामास किन्त्वेकस्मिन् शास्त्रे बृहस्पतेरप्यगम्येऽस्य न्यूनतेत्यतस्तत् सर्वमुकुटोत्तमं कृष्णवशीकारकं प्रेमशास्त्रमेनं कृष्णदयितत्वात् व्रजे गोपिका एवाध्यापयिष्यन्तीति भावः। बुद्धिसत्तम इति। अतिबुद्धिमत्त्वात् तच्छास्त्रावधारणक्षममेनं कृष्णोऽपि रहसि पट्टमहिषीसभायां तच्छास्त्रमेव वाचयिष्यति। तदेव श्रुत्वा "व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मनः" इत्युक्तिमत्यः पट्टमहिष्योऽप्यभिलषिष्यन्तीति भावः। उद्धवोऽयं वसुदेवभ्रातुर्देवभागस्य पुत्रः। तदुक्तं हरिवंशे "उद्धवो देवभागस्य महाभागः सुतोऽभवदित्यत एव क्वचिदत्र महाभागेति श्रीनन्देन सम्बोधयिष्यते। श्लेषेण साक्षादुद्धवो मूर्तिमानुत्सव इतीमं दृष्ट्वा व्रजस्था उत्सवं प्राप्स्यन्तीति भावः॥ १॥

भक्तं तत्राप्येकान्तिनं "विहाय पितृदेवादीन् परिनिष्ठाङ्गतो हरौ तद्गाढप्रेमभिः पूर्ण एकान्तीनि निगद्यते" इति तल्लक्षणं तत्रापि प्रेष्ठं तेष्वतिप्रीतिविषयं क्वचित् विविक्ते गृहीत्वा पाणिना पाणिमिति स्वधैर्यस्यूर्ध्वोतना। प्रपन्नमात्रस्याप्यार्तिहरः किमुत प्रेमवच्छिरोमणीनां व्रजस्थानामिति भावः॥ २॥

आ सम्यक् प्रापय विमोचयेत्यनेन मद्वियोगाधिस्तासां हृदि दृढेन ग्रन्थिना निबद्ध इति ज्ञापयति तद्विमोचनमपि मम सन्देशैरेव ननु तच्छास्त्रानुयायिभिः। सन्देशैरपि बहुभिरेव ननु सन्देशेनैकेन ज्ञानयोगोपदेशेन ननु द्वाभ्यां तदनन्तरं वक्तव्याभ्यां सन्देशाभ्यां मत्प्राप्त्युपायाभ्यासनाभ्यां तत्प्रेमवाडवाग्निज्वालया भस्मीभावित्वात्। किन्तु सर्वान्ते प्रकाशितैस्ताभ्योऽन्यत्र ज्ञापनानर्हैः सन्देशैः रहस्यव्यञ्जकैर्बहुभिरेव॥ ३॥

मय्येव संकल्पात्मकं मनो यासां ताः अहमेव प्राणो यासां ताः त्यक्ता दैहिकाः पतिपुत्रपितृशयनभोजनपानादयोऽपि याभिस्ताः तत्र तत्र हेतुः मामेव ननु स्वपतिमन्यं दयितं प्रियं मनसा गता ज्ञानवत्यः न केवलं दयितमेव अपितु प्रेष्ठं न च प्रेष्ठमेव किन्त्वात्मानं ताभिरहमेव स्वजीवात्मा परमात्मा च

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग ! विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥ ५ ॥
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथं चन ।
प्रत्यागमनसन्देशैर्वल्लव्यो मे मदात्मिकाः ॥ ६ ॥

श्रीशुक उवाच ।

इत्युक्त उद्धवो राजन् ! संदेशं भर्तुरादृतः ।
आदाय रथमारुह्य प्रययौ नन्दगोकुलम् ॥ ७ ॥
प्राप्तो नन्दव्रजं श्रीमान्निम्लोचति विभावसौ ।
छन्नयानः प्रविशतां पशूनां खुररेणुभिः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निश्चित इत्यर्थः । सचाहमत्र मथुरायामतस्ताभिः स्वस्वदेहान्तिगतात्मान एव मन्यन्ते केवलं मदीययोगमाययैव दुस्तर्कया शक्त्या जीव्यन्ते इति भावः । येन्येऽपि साधकभक्ता अपि मन्निमित्तं लोकधर्मादींस्त्यजन्ति तानपि बिभर्मि किंपुनस्ताः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षट्चत्वारिंशे भगवदाज्ञया व्रजं गतेनोद्धवेन यशोदानन्दयोः शोकापनोदनं कृतमिति वर्णयति । वृष्णीनामिति ॥ १।२।३ ॥

यशोदानन्दयोर्ममार्ययोरयद्यं सान्त्वनं करिष्यति मत्प्रियाणां गोपीनामपि सान्त्वनं तत्स्वभावानुसारेणयं करोत्वित्येतदर्थं तासां स्वास्मिन्प्रेमातिशयमाह । ता इति त्रिभिः । मय्येव मनो यासां ताः अहमेव प्राणो यासां ताः त्यक्तानि दैहिकानि देहसुखसाधनानि याभिस्ताः अतस्तान् बिभर्मि सम्वर्द्धयामि सुखयामीत्यर्थः । किम्बहुना ये जनाः मदर्थे त्यक्तलोकधर्माः त्यक्तः लोकधर्मः । ऐहिकामुष्मिकलोकप्रापकः प्रवृत्तिरूपो धर्मो यैस्तान् सर्वांश्च बिभर्मीत्यर्थः ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले वृष्णी वंश के बडे श्रेष्ठ मंत्री श्रीकृष्ण भगवान् के प्रिय सखा बृहस्पति के साक्षात् शिष्य बुद्धिमानों में उत्तम श्रीउद्धवजी हैं ॥ १ ॥

किसी दिन किसी एकांत स्थान में शरणागतों के दुःख के नाश करने वाले हरि भगवान् अपने प्रिय अत्यंत एकांति उन उद्धवजी के हाथ को हाथ से पकड कर यह वचन बोले ॥ २ ॥

हे सौम्य ! हे उद्धवजी ! आप व्रजको जाओ हमारे पिता माता को प्रसन्न करो गोपियों को जो हमारे वियोग की पीडा है तिसको मेरे संदेशों से छुडाओ ॥ ३ ॥

उन गोपियों का मन मेरे हि में है मेरे हि में उनके प्राण हैं मेरे वास्ते उनने सब देह के काम छोडदिये हैं कोइ भी हो जिन ने मेरे वास्ते लोक तथा धर्म को छोड दिया है उनका पालन पोषण मैं ही करता हूं ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तासां वियोगार्धिं दर्शयति द्वयेन । मयि ता इति । विरहेणौत्कण्ठ्यं तेन विह्वलाः परवशाः ॥ ५ ॥

गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसन्देशास्तैः मे मदीया वल्लव्यो गोप्यः मदात्मिका इति तासामात्मा यदि स्वदेहे स्यात्तर्हि विरहतापेन दह्येतैव तस्य मयि वर्तमानत्वात्कथञ्चिज्जीवन्तीति भावः ॥ ६ ॥

सन्देशं भवतीनां वियोगो मे नहि सर्वात्मना क्वचिदित्यादिकम् ॥ ७ ॥

निम्लोचत्यस्तं गच्छति सति छन्नं यानं यस्येति तदा गोपीभिरज्ञातत्वेन नन्दसङ्गं लब्धवानिति सूचयति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु या मयन्मनस्कादिरूपास्ता लब्धमयत्का एव तर्हि कथमनुशुच्यन्तां सत्यमन्तरनुसन्धाने तादृश्य एव ताः किन्तु बहिरवधाने जात परमव्यग्रा भवन्तीत्याह । मयीति । गोकुलस्त्रीत्वेन तावन्मदीयदर्शनमात्रजीविनाः तत्रापि ताः अनिर्वचनीयस्वभावाः द्वयोः प्रकर्षे खलु तरवीयसुनौ बहूनांतु तमबिष्ठनाविति प्रियं तावत्सर्वं ममतास्पदं ततोऽपि प्रियः प्रेयानहन्तास्पदमात्मा ते च यथेकस्य बहवः सम्भवन्ति तदा तेषां कोटिसंख्यानामति प्रेष्ठे तानप्यतिक्रम्य ये मत्संबन्धिनः प्रियास्तेभ्योऽप्यधिकप्रिय इत्यर्थः । एवं भूते मयि कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृदृशामिति तद्वाक्यानुसारेण निकटस्थेऽपि महार्तिप्रदः सम्प्रति तु दूरस्थ इत्यर्थः । स्मरन्त्यः तत्र मम दूरस्थत्वं भावयन्त्यः तद्भावनारम्भवत्य एव मुह्यन्ति मूर्च्छां

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्राप्नुयन्ति एवं तथा भावनायाः स्वल्पकालत्वं मूर्च्छायास्तु चिरस्थायित्वं व्यञ्जितं ततश्च हा कष्टं मद्भावनमपि कर्तुं न शक्नुवन्तीति भावः । वर्तमानप्रयोगेण स्मरणस्य मोहस्य च पौनः पुन्यं दर्शितं मोहे हेतुः विरहेति अतो बाळास्त्राचांदरयमपस्माराख्यः संचारी भावः अतः कुजगतिं गमिता न विद्मः कश्मलेन कबरं वसनं वेति पूर्वमपि तथावस्थास्पष्टानामेव मया त्यक्तानां सम्प्रति तु लब्धतदतिशयानां मयि भावस्य सर्वतः प्रचारादपि साम्प्रतं तत्र गमेन मम लज्जापि जायत इति भावः । अङ्गेत्यार्त्या संबोधनं श्लेषेण हे मदङ्गतुल्येति तासां सान्त्वनाय प्रोत्साहनं च ॥ ५ ॥

अथ तासां दशमीं दशामपि शङ्कते अत्यायासेनैव प्राणान् धारयन्ति निर्गच्छतोऽप्यवस्थापयन्ति अतोऽग्रे कतिदिनानि वा धारयितुं शक्ष्यन्तीति भावः । ननु कोऽसावायासः येन धारयन्ति तत्राह । कथं चनेति । केनापि प्रकारेण यत्नेन तदेवं स्वयाकुचलनलज्जया कारणं व्यक्तमनुक्त्वा पश्चाद्गत्यन्तराभावात्स्पष्टमेव निर्दिशति प्रतीति । सन्देशस्य बहुत्वं मध्ये सन्देशान्तराणामपि प्रेषितत्वात् इत्थं प्रथमोक्तमत्प्रत्यागमनदिनसम्भावनप्रपञ्चः । ततो विलम्बतर्कितो मूर्च्छा ततस्तस्यामेव उद्भूतस्वाभाविक तत्स्मरणं तच्चेतना पुनस्तत्संभावनादि पौनःपुन्यादायासेनैव धारयन्तीत्यर्थः मे वल्लव्य इति । ब्राह्मणस्यास्य ब्राह्मणीति वन्मम गोपरूपस्य गोपीरूपा भार्या इत्यर्थः पूर्वं हि पित्रोर्नः प्रीतिमावहेत्यनेन तु गोपाभिमानित्वं स्वस्य स्वयमेव व्यञ्जितं न केवलं साधारणलोकरीत्या सादात्म्यव्यवहारस्ताभिर्मम किन्तु मदात्मिका मत्स्वरूपभूतशक्तय इत्यर्थः । मन्मनस्का इत्यादिकं तूकमेव ब्रह्मसंहितायां तु स्पष्टमेव तादृशत्वम्—

> आनन्दचिन्मयरसप्रतिभाविताभि-
> स्ताभिर्य एव निजरूपतया कलाभिः ।
> गोलोक एव निवसत्यखिलात्मभूतो-
> गोविन्दमादिपुरुषं तमहम्भजामीति ॥

तस्मात्परदारतया कल्पनं तासां वागनिर्गलताप्रकटनाय लीलाशक्त्या कृतमिति प्रातीतिकमात्रं परशय्यासम्बन्धश्च तासां नासूयन्नित्यादौ प्रत्याख्यात एवेति भावः । यद्यपि मदीयत्वभावमयेन प्रेम्णा मद्वाक्ये विश्वासानपगमात् मत्प्राप्त्याशां कदाचिदपि न त्यक्तुं शक्नुवन्तीति तथापि प्राय इति काश्चिन्न धारयन्त्यपीति सम्भाव्यते अतः प्रत्यागमनपर्य्यवसानैरेव सन्देशैरधुनापि ताः सान्त्वनीया इति भावः । अत्र यद्यपि सर्वेऽपि व्रजवासिनस्तदेकजीवनत्वात्सान्त्वनार्हाः एवां घोषनिवासिनामित्यादिषु यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते इत्यादिभ्यः अहो भाग्यमहोभाग्यमित्यादिभ्यः कालियहृदप्रवेशोत्थापनयोः पशूनां स्थावराणामपि सुखदुःखवर्णनाच्च दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम्नन्द ! ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथमित्यादिभ्यश्च अतो मनसि चिन्तितं स्वयं भगवता तस्मान्मच्छरणं गोष्ठमित्यादि तत्रापि श्रीमदुपनन्दादयस्तत्रापि श्रीदामादयस्तदर्हाः तत्र तत्र तथा तथा प्रशस्तत्वात् अतः श्रीव्रजराजेन वक्ष्यते—

> अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ।
> गोपान् व्रजं चात्मनाथं गावो वृन्दावनङ्गिरिम् इति ।

तथापि यशोदानन्दतत्स्वमादिदङ्क्ष्यते केषु चिच्छ्रीपित्राद्यन्तः पातित्वेन केषु चित्स्वभिप्रायविशेषेण सान्त्वनाभाव एव सान्त्वनमभिप्रेतमिति तथाहि श्रीमति गोकुले प्रेमा खलु त्रिविधो दृश्येत औत्कण्ठ्यप्रधानो विस्रम्भप्रधानो विवेकशून्यश्चेति सचान्यत्रापि सर्वोऽपि गरिष्ठः सन् प्रेष्ठस्फूर्त्तिसाक्षात्कारमेव जनयति यथा श्रीलीलाशुकचरणैरुक्तम् "अग्रे समग्रयति कामपि केलिलक्ष्मीमन्यासु दिक्ष्वपि विलोचनमेवसाक्षी„ तितत्र चश्रीजयदेवचरणैरपि वर्णितं "श्लिष्यति चुम्बति जलधरकल्पम् हरिरुपगत इति तिमिरमनल्प„मिति अत्रैव च वक्ष्यते व्रजराजेन मनो याति तदात्मतामिति तत्रोत्तरोभयभावानां साक्षात्कारबुद्धिजनिकैव सा भवेत् विस्रम्भाविवेकयोरन्यत्वप्रतीतिजननायोग्यत्वात् प्रथमभावानां तु साक्षात्कारेऽप्यप्रतीतिः स्यात् किमुत स्फूर्त्तौ उत्तरकाले तु सर्वथोत्कण्ठाया विकटस्वभावत्वात् यथा द्वारकाजलविहारे पट्टमहिषीणां वर्णयिष्यते अत उत्कण्ठाप्रधानप्रेमाणः पितरौ प्रेयस्यश्च वियोगिमानिन एवासन् यथैवोक्तं गच्छोद्धवेत्यादिना वक्ष्यते च इति संस्मृत्येत्यादिना इति गोप्यो हि गोविन्द इत्यादिना च अथ ये विवेकशून्यप्रेमाणो गवादयः ये च विस्रम्भप्रधानप्रेमाणः श्रीदामादयस्ते संयोगिमानिन एवासन् गवादीनां स्वानुभवेनैव निश्चयात् श्रीदामादीनां च मान्त्वेकान्ते मथुरात इहागत्य मिलतीति रहो मिथः संवादेन तदाकर्णात् अत एवैषां हर्षोऽपि वर्णयिष्यते वासितार्थेऽभियुध्यद्भिरित्यादिना तस्मात्पित्रोः प्रेयसीनां च सान्त्वनमेव सान्त्वनम् अन्यथा समाधानाभावात् श्रीदामादिषु तुसान्त्वनाभाव एव सान्त्वनं सान्त्वने प्रत्युत संदेहापत्तेरिति तदेवं त्रिविधानामुत्कण्ठादिप्रधानानां सान्त्वनासान्त्वनव्यवस्थायां सिद्धायामन्येषां तत्तदनुगतभावानां तथैव तद्व्यवस्था यथा अक्रूर अगतः किं वा यः कंसस्यार्थसाधक इति वचनोपलक्षितानां दुःखं गोप्यः समुत्थायेत्यादि तदुपलक्षितानां सुखं वृक्षाणां पक्षिणां च तथा तथा वर्णयिष्यमाणानां प्राचीनतत्स्पर्शदर्शनादिसंस्कारविमुक्तानां सुखमिति कालियहृदप्रवेशनिर्गमयोः स्थावराणामपि किमुत मृगपर्य्यन्तप्राणिनां दुःख सुखयोर्व्यक्तिस्तु तत्तदनिष्टेष्टतापरमातिशयलीलाविशेषश्लिष्टकालस्य तादृशस्वभावत्वादेव जातेति मन्तव्यं यत्र भुवि दिवि चामङ्गलमङ्गलनिमित्तानि जातानीति केचित्तु सर्वानां गमनागमनाभिप्रायेण सान्त्वनमिति व्याचक्षते तच्चु न युज्यते तत्र श्रीगोपेन्द्रप्रश्ने सर्वानित्यस्यासारस्यात् तदेवमग्रिमग्रन्थोऽपि व्याख्येयः ॥ ६ ॥

भर्तुरिति तस्य तद्ध्यानेन भक्तिभरो योत्यते रथमारुह्येतिशीघ्रगमनं बोधयति प्रकर्षेण प्रकृष्टमनोरथाचरणादिना यथा नन्दयतीति नन्दस्तस्य गोकुलमिति तद्गोकुलस्यापि श्रीकृष्णप्रेम्णानन्दकत्वमभिप्रेतम् ॥ ७ ॥

प्राप्त इति पद्यकं श्रीमान् स्वशोभया रथशोभया च विराजमानः श्रीमद्विति पाठे सम्बोधनं किन्तु छन्दयानः । प्रविशतामिति । अनन्तानां पशूनां व्रजे प्रवेशेन खुररेणूनां महासम्भाराणां चाधिकाधिकोत्थानं विवक्षितम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तासां वियोगाधिं दर्शयति द्वयेन । मयि ता इति । प्रेयसां प्रीतिविषयाणां मध्ये निरतिशयप्रीतिविषये दूरस्थेऽपि मयि

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विषयभूते स्मरन्त्यः ताः गोकुलस्थाः स्त्रियः । अङ्ग हे उद्धव ! विरहेण यदौत्कण्ठ्यं तेन विह्वलाः विवशाः विमुह्यन्ति देहधर्मान् विस्मरन्ति ॥ ५ ॥

किं च गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशाः तैर्मदीया वल्लव्यो गोप्यः मच्चित्ताः कथंचित्कृच्छ्रेण क्लेशेन प्रायः प्राणान् धारयन्ति विरहतापेन दह्यन्त एव मच्चित्तत्वात्कथंचिज्जीवन्तीति भावः ॥ ६ ॥

इत्थमुक्त उद्धवो हे राजन्नादृतः भर्तुर्भगवतः संदेशं "भवतीनां वियोगो मे न हि सर्वात्मना क्वचि" दित्यादिना वक्ष्यमाणमादाय रथमारुह्य नन्दगोकुलं जगाम प्राप्तः ॥ ७ ॥

कदा कीदृशश्च प्राप्त इत्यत आह । प्राप्त इति । विभावसौ सूर्ये निम्लोचति अस्तं गच्छति सति श्रीमत्संपत्तिमन्नन्दव्रजं प्राप्तः अक्रूरवत्कृतयुद्रेकान्मध्ये मध्ये विलम्ब्यास्तमयवेलायां व्रजं प्राप्त इति भावः । कथंभूतः प्रविशतां पशूनां खुररेणुभिः छन्नं यानं रथो यस्य सः अनेन गोपीभिरज्ञातः सन्नन्दसंगमं लब्धवानिति सूच्यते ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वभक्तवात्सल्यं कथयति । य इति । ये ये जना मदर्थं मां निमित्तीकृत्य त्यक्तलोकधर्माः लोको देहस्तद्धर्माः अशनवसनानुलेपनादिलक्षणास्त्यक्ता यैस्ते ताथ यद्वा त्यक्ताः स्वर्गादिलोकविषयाः धर्माः यागादिसुकृतलक्षणाः मदर्थं मन्निमित्ते निवृत्तौ वर्तमाना ये ते यद्वा मामुद्दिश्य त्यक्ता दत्ता लोकधर्माः जनविषयाः नमनाद्याचारा यैस्ते अहं तान् बिभे मि तेभ्यः भीतोऽस्मि बिभर्मि रक्षितास्मि मत्सायुज्यमावहन्तीति भक्तवश्यतां दर्शयति बिभर्मि वा॥ ५ ॥

विरहेणोत्पन्नमौत्कण्ठ्यम् उत्कण्ठारागित्वं तेन विक्लवाः ॥ ६ ॥

प्रत्यागमनसन्देशैः आगमिष्यति युष्मत्प्रेष्ठः कृष्ण इत्यादिवाक्यैः मयि आत्मा मतिर्मननशक्तिः मतिर्बुद्धिर्यासां तास्तथा मत्स्वभावा वा॥ ७॥

विभावसौ सूर्ये निम्लोचति अस्तं गच्छति सति सूर्यवन्ही विभावसू इति दिवाकर इतिकेचित् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धारयन्तीति । अतः प्रत्यागमनपर्यवसानैरेव सन्देशैरधुनापि ताः सान्त्वनीया इति भावः । मे वल्लव्य इति वस्तुनस्तस्यैव पत्नीत्वात् । मन्मनस्का मत्प्राणा इत्यनेन पौनरुक्त्यान्मदात्मिका मत्स्वरूपभूता इत्येवार्थः । तत्र यद्यपि सर्वेऽपि व्रजवासिनस्तदेकजीवनत्वात् सान्त्वनार्हाः । यद्वामार्थं सुहृदित्यादिभ्यः । तत्रापि श्रीव्रदुपनन्दादयः तत्रापि श्रीदामादयः । अतः श्रीव्रजराजेन वक्ष्यते । अपि स्मरति नः कृष्णो मातरः सुहृदः सखीन् । गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिमिति । तथापि यस्तेषामनुल्लेखस्तस्मादिदं गम्यते । केषुचित् श्रीपित्रादयन्तःपातित्वेन सान्त्वनं केषुचित्स्वभिप्रायविशेषेण सान्त्वनाभाव एव सान्त्वनमभिप्रेतं तथाहि श्रीमति गोकुले प्रेमा त्रिविधो दृश्यते । उत्कण्ठाप्रधानो विश्रम्भप्रधानो विवेकशून्यश्चेति स च सर्वोऽपि गरिष्ठः स्फूर्त्तिं साक्षात्कारमेव जनयति तत्रोत्तरभावानां साक्षात्कारबुद्धिजनिकैव सा भवेत् विश्रम्भाविवेकयोरन्यत्वप्रीतिजननायोग्यत्वात् । प्रथमभावानां तु साक्षात्कारेऽप्यप्रतीतिः स्यात् किमुत स्फूर्त्तौ । उत्तरकाले तु सर्वथा उत्कण्ठाया विकल्पस्वभावत्वात् । अत उत्कण्ठाप्रधानप्रेमाणौ पितरौ प्रेयस्यश्च वियोगमानिन एवासन् । यथोक्तं गच्छोद्धवेत्यादि वक्ष्यते च इति संस्मृत्येत्यादि । अथ ये विवेकशून्यप्रेमाणो गवादयः । ये च विश्रम्भप्रधानप्रेमाणः श्रीदामादयस्ते संयोगमानिन एवासन् तत्तत्कनिष्ठप्रेमाणः पितृप्रेयसीतरगोप्यादयस्तु कासांचिदेव गवादीनां स्वानुभवेनैव निश्चयात् । अन्येषां मां तु एकान्ते मथुरात इहागत्य मिलतीति मिथः सम्वादेन तद्दार्ढ्यात् । यथैतेषां हर्षोऽपि वर्णयिष्यते वासिभार्थेऽभियुध्यद्भिरित्यादिना च । तस्मात् श्रीदामादिषु सान्त्वनं केषु चित्तत्तदन्तःपातित्वेनैव सान्त्वनमिति ॥ ६—१४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु फलसाधकत्वात भक्तिमार्गे विरह एव पुरुषार्थ इति किमिति निराक्रियते तदाह । मयि ता इति । ता विमुह्यन्ति क्षणे क्षणे मूर्च्छां प्राप्नुवन्ति कातरा दीनाश्च भवन्ति प्राणा रक्ष्या दैन्यं च दूरीकर्तव्यं ननु मूर्च्छायां को हेतुः ज्ञानस्य मानसव्यापारस्य घातकत्वाभावात् प्राणघाते हि मूर्च्छा भवति तत्राह । ताः मयि दूरस्थे सति गोकुलस्त्रियः विचारचातुर्यादिरहिताः प्रेयसामतिप्रियाणां सर्वेषामेव मध्ये प्रेष्ठ अतिप्रिये प्राणादप्यधिकप्रिये दूरे विद्यमाने सति स्मरन्त्य एव विमुह्यन्ति स्मरणमात्रमेव मूर्च्छाहेतुः अङ्गेति सम्बोधनं तासु स्नेहात् तदर्थे प्रेषणीयेऽपि स्नेहसूचकं मरणमनेनैव भवत्यनेन नेति किंचिदुपपन्नमस्ति यथा महाभयात्प्राणोत्क्रमणमतिक्रूरदर्शनाच्च यथा वा पुत्राद्यपगमश्रवणे तथा तासामपि प्राप्तिसम्भावनारहिते मयि सति मत्स्मरणमात्रेणापि न हि दृष्टेऽनुपपन्नं नाम भगवत्प्राप्तिसम्भावनाभावसहिता भगवत्स्मृतिः महाप्रहार इव मूर्च्छाहेतुः प्रेष्ठत्वात् स्मरणमावश्यकम् अतोऽचिकित्स्यदोषात् निरन्तरं मूर्च्छैव । किं च पूर्वमनुभूतस्यार्थस्य साम्प्रतमभावो विरहः तेन तासामुत्कण्ठा महती अत औत्कण्ठ्येन कातरा दीनाश्च मत्स्मरणे मूर्च्छा मद्धर्मस्मरणे तु कातरत्वमिति उभयं मत्सन्देशो निवारयिष्यति ॥ ५ ॥

तर्ह्येवं मूर्च्छायां जीवने का प्रत्याशङ्केत्याशङ्कायामाह । धारयन्त्यतिकृच्छ्रेणेति । अतिकृच्छ्रेणेति अतिकष्टेन प्राणान्धारयन्ति वाह्या मृता इति प्रायग्रहणं देहेन्द्रियान्तःकरणानि तु विकलान्येव प्राणान् केवलं धारयन्ति ·तत्र का उपपत्तिरित्याशङ्कायामाह । कथंचिदिति । न काप्युपपत्तिः प्रसिद्धा वस्तुतस्तु मरणमेवोचितं जीवनमस्तीति किञ्चित्साधनं परिकल्प्यते अप्रसिद्धत्वात्कथञ्चिदित्युक्तं प्रमेयबलेनेति भगवदिच्छयेति जीवनमात्रं प्रमेयबलस्यापि दुःखदूरीकरणे न सामर्थ्यं किं तु धारणात्मकं भूत्वा कथञ्चिद्धारयन्ति तर्हि सन्देशेन किं कर्त्तव्यं तत्राह । प्रत्यागमनसन्देशैरिति । भगवान्प्रत्यागमिष्यतीति यो ममैव सन्देशः आयास्य इति तज्जीवने साधनं तत्कालेन जीर्णे चेत् मरणमेवेति । तदर्थमुपायान्तरं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कर्तव्यं स उपायः पत्रे स्पष्टो भविष्यतीति भावः। ननु स्त्रीणां स्थाने तत्रापि गुह्यसन्देशे कथं पुरुषाः प्रेष्यन्ते तत्राह । वल्लव्यो म इति। त्वयि न सन्देहः ता पुनः मे मदीयाः न हि मदीयानामन्यत्र मनो भवति मत्सम्बन्धस्यैव तथासामर्थ्यात् वल्लवीपदेन चैतत् ज्ञापयति वल्लवानां गोपानां स्त्रियः अहोरात्रं च गोपाः स्त्रीणां वलयप्राया इति ताः संवेष्ट्यैव तिष्ठन्तीति गतिकामुकाः नित्यं स्त्रीसुखदातारः- तादृशानामपि स्त्रियो भूत्वा तान्परित्यज्य मत्पराश्चेत् अन्यस्मिन् शङ्कैव नेति । ननु ममैव यदि तास्वन्यथा बुद्धिर्भवेत् तदा का गतिरिति शङ्कायामाह। मदात्मिका इति। अहमेवात्मा यासां मत्स्वरूपास्ताः अतस्तव मद्बुद्धिरेव भविष्यतीति न काचिच्चिन्तेत्यर्थः ॥ ६ ॥

एवमुपपत्तिपूर्वकं गोकुलगमनार्थमाज्ञप्तस्तथा कृतवानित्याह इत्युक्त इति। राजन्निति ईश्वराज्ञा सेवकैरवश्यं कर्तव्येति ज्ञापनार्थं स हि उत्सवात्मकः यत्रैव गच्छति तत्रैवोत्सवः भर्ता हि स्वामी अनेन पतिव्रत्यं तस्योक्तं तेन निन्दा स्तुतिः लोकातिक्रमः परलोकादिबाधो वा सर्वमवगणय्य भर्तुः सन्देशमेवादाय नन्दस्य गोकुलं प्रययौ तत्राप्यादरपूर्वकं परमपुरुषार्थं प्राप्त इव भगवत्स्मरणेन मार्गे वैकल्ये गमनं बाधितं भविष्यतीति रथेन प्रययौ ॥ ७ ॥

गमनदिवसे सन्देशो वक्तुमशक्य इति आदौ नन्दश्च वक्तव्य इति स्मारकेण तासां विरहोऽधिको भविष्यतीति सन्ध्यायां गत इत्याह । प्राप्त इति । नन्दस्यैव व्रजं गतः विशेषाकारेण कालस्य तथा त्वात् अतिथिप्रकारेण गमनमाशङ्क्य निराकरोति श्रीमानिति। सर्वसम्पत्तियुक्तः विभावसौ सूर्ये निम्लोचति अस्तं गच्छति सति विशेषेण भा कान्तिरेव धनं यस्येति योगप्राधान्यात् सूर्यवाचकोऽग्निवाचकश्च अनेन सर्वेषां लौकिकवैदिककर्मणि वैयग्र्यात् स्वाज्ञानं सूचितं किं च प्रविशतां पशूनां खुररेणुभिः छन्नयानः आच्छन्नरथः प्रवेशे पशूनां वेगो भवति भगवद्रहितत्वात ॥८॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु तासां यदि त्वमेव मनःप्राणादयः प्रेष्ठ आत्मा च तर्हि ताः कथमत्र नायातास्तत्र स्थातुमेव कथं शक्नुवन्ति तत्राह। मयि ताः खलु गोकुलस्य स्त्रियः गुञ्जागैरिकमुरलीमयूरपिच्छाद्यलंकृतेन गोपवेशेनैव मया सह तत्र गोकुले एव विलासे प्राप्तमनोनिष्ठा मयाप्यत्रानेतुमनभिप्रेताः कथमत्र वृष्णिपुर्य्यामागच्छेयुरिति भावः। ततश्च प्रेयसामपि प्रेष्ठे दूरस्थे सतीति प्रियं तावत्सर्वं ममतास्पदं ततोऽप्यधिकोऽहंतास्पदमात्मा प्रेयान् ते च यद्येकस्य बहवः सम्भवन्ति तदा तेषामपि कोटिसंख्यानां प्रेष्ठे इति यद्यात्मकोटिभ्योऽपि केचित् पदार्थाः प्रियाः सम्भवेयुस्तेषामपि मध्ये योऽतिप्रियस्तद्रूपे मयीत्यर्थः। अत एव विमुह्यन्ति विशिष्टां मूर्च्छां प्राप्नुवन्तीत्यर्थः। मदीयदुस्तर्क्यया शक्त्या जीव्यमाना अपि न जीवयितुमिव शक्यन्त इति भावः ॥ ५ ॥

अतिकृच्छ्रेणेति । तासां मत्प्राप्त्याशया प्राणधारणमेवातिकष्टं प्राणत्यागस्तु सुगम एवेति भावः। ननु केन प्रकारेण प्राणान् धारयन्त्यत आह। प्रतीति । गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशास्तैरतो मत्प्राप्त्याशैव महाबलवती निर्गच्छतोऽपि प्राणान् बध्नातीति भावः। तत्र का भवन्ति तास्तत्राह। वल्लव्यः यद्यपि ता बल्लवानामेव स्त्रियस्तदपि मे मदीया एवं तासां महामाधुर्य्यमयरूपरसगन्धशब्दस्पर्शादिसम्बन्धगन्धमपि तत्पतयः स्वप्नेऽपि न लभन्ते किंत्वस्मज्ज्ञाय्यो इमा इत्यभिमानमात्रमेवेत्यतो रसशास्त्रेऽपि संपुष्ट्यर्थमनादित एव नित्यपरकीयाः कृता अपि ता मद्भोग्या मदीया एव यतो मदात्मिकाः मत्स्वरूपशक्तेर्ह्लादिन्या अपि महासारप्रेमवृत्तित्वान्मत्स्वरूपभूता अपि सर्वोत्कृष्टाह्लादरूपत्वान्मदाकर्षणसमर्था अत एवात्मारामस्यापि मम तासु रमणसुखमत्यधिकम् अत एव मयात्मनः सकाशादपि ता अधिकमनुकम्पनीया इत्यनुकम्पार्थकः कप्रत्ययः प्रयुक्तः श्लेषेण ममात्मा मनो रमणार्थी यासु ता मय्येवात्मा तथा भूतो यासां ता इति वा मत्सम्भोग्यत्वान्मदीया इत्यर्थः ॥ ६—७ ॥

निम्लोचति अस्तं गच्छति सति छन्नयानः आच्छन्नरथः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विरहेण यदौत्कण्ठ्यं तेन विह्वलाः कातराः ॥ ५ ॥

आयास्ये इति दौत्यकैः प्रत्यागमनसन्देशैः कथञ्चित्प्राणान् धारयन्ति ॥ ६ ॥

भर्तुः श्रीकृष्णस्य भवतीनां वियोगो मे न हि सर्वात्मना क्वचिदित्यादिनिजवाक्यरूपम् ॥ ७ ॥

विभावसौ सूर्ये निम्लोचति अस्तं गच्छति सति तत्रापि खुररेणुभिश्छन्नयानो नन्दव्रजं प्राप्त इत्यनेन गोपीभिरलक्षित एव नन्दगृहे प्रविष्ट इतिसूच्यते ॥ ८ ॥

---

भाषा टीका ।

मैं उनका प्रिय से भी प्रिय हूं मेरे दूर होने से वे गोकुल की स्त्री मेरे को स्मरण करके मोहित होती हैं विरह की उत्कंठा से विह्वल होजाती हैं ॥ ५ ॥

प्रायः करके बडे कठिन से किसी प्रकार से प्राणों को धारण करती हैं सो भी गोपी मेरे में प्राणों के रखने से मेरे संदेशों से जीती हैं ॥ ६ ॥

श्रीशुकदेवजी बोले हे राजन्! इस प्रकार कहने से उद्धवजी अपने पति भगवान् के संदेशा को लेकर रथ पर बैठ कर नंदजी के गोगुल को जाते भये ॥ ७ ॥

वे श्रीमान् उद्धवजी सूर्य के अस्त होने समय में जाते हुये पशुओं के खुरों की रेणुओं से रथ को छिपाकर नंद व्रज में पहुंच गये ॥ ८ ॥

---

वासितार्थेऽभियुद्ध्यद्भिर्नादितं शुष्मिभिर्वृषैः ।
धावन्तीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ॥ ९ ॥
इतस्ततो विलङ्घद्भिर्गोवत्सैर्मण्डितं सितैः ।
गोदोहशब्दाभिरवैर्वेणूनां निःस्वनेन च ॥ १० ॥
गायन्तीभिश्च कर्माणि शुभानि बलकृष्णयोः ।
स्वलङ्कृताभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥
अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः ।
धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम् ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

व्रजं वर्णयति पञ्चभिर्वासितार्थ इत्यादिना । वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युध्यद्भिः शुष्मिभिर्मत्तैर्वृषैर्नादितम् वास्राभिर्धेनुभिः स्ववत्सकान्प्रति ॥ ९ ॥

विलङ्घद्भिरुत्पतद्भिः गोदोहशब्दैः सहाभितो रवाः मुञ्च मा मुञ्च नय आनय देहि गृहाणेत्यादयो यस्मिंस्तत्तद्वेणूनां निःस्वनेन च मण्डितम् ॥ १० ॥

गायन्तीभिर्गोपीभिर्गोपैश्च सुविराजितम् ॥ ११ ॥

अग्न्याद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्च मनोरमम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेव वर्णयन् श्रीमद्वृन्दावनानन्दनत्वं व्यनक्ति पञ्चभिर्वासितार्थ इति । युध्यद्भिर्युध्यमानैः वत्सकानित्यनुकम्पायां कन् ॥ ९ ॥

सितैरिति शुभ्रताधिक्यविवक्षया गोदोहशब्दमिश्रा अभिरवा यस्मिंस्तदिति टीकायां तु लेखकभ्रमः । निःस्वनेन च गोपैश्च सुविराजितमिति गोपीभिः प्रेयसीभिश्च इतराभिः मदर्थे त्यक्तदेहिका इत्याद्युक्तैः श्रीगोपैः श्रीदामादिभिरन्यैश्च कैश्चित् स्वलङ्कृतैरिति योज्यम् ॥ १० ॥ ११ ॥

एवं लौकिकशोभां वर्णयित्वा वैदिकशोभामपि वर्णयति । अग्नीति । नित्यहोमोपस्थानादिनाऽग्न्यर्कयोः ग्रासदानादिना गवाम् आतिथ्यादीनां चतुर्णां सत्कारादिना । यद्वाऽग्न्यादयः पञ्च भगवत्पूजाधिष्ठानान्येव पित्रादयश्च स्वगृहस्थानामवश्याच्चर्या एवेति वैष्णवानां तेषां ते च तदीयत्वेनैवेति तेषामर्च्चनान्वितैः यद्यपि महाभागवतैरप्युपास्यानां श्रीव्रजवासिनां विधिकैङ्कर्यं नास्ति तथापि श्रीभगवत इव तेषाञ्च कर्मकरणमिदं लीलयैवेति ज्ञेयं किन्तूभयथा वैश्याभीरतया द्विजत्वमेवैषां दर्शित तदुक्तं श्रीकृष्णरामनामकरणे कुरु द्विजातिसंस्कारमिमिति । वैश्यस्तु वार्त्तया जीवेदित्यादौ । वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशमिति च अन्तर्गृहशोभां वर्णयति । धूपेति ॥ १२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वासितार्थे संयोगार्थे शुष्मिभिर्मत्तैः ॥ ९—१४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

व्रज वर्णयति पञ्चभिः । वासिताः पुष्पिण्यो गावः तदर्थे संयोगार्थमिति यावत्परस्परं नियुध्यद्भिः शुष्मिभिर्मत्तैः वृषैर्नादितं तथा वास्राभिर्धेनुभिरूधोभारैरुपलक्षिताभिरिति शेषः वत्सान्प्रति धावन्तीभिर्मण्डितम् ॥ ९ ॥

तथा इतस्ततो विलङ्घद्भिः सितैर्वत्सैर्गोवत्सैर्मण्डितं गोदोहशब्दैः सहाभिरवा मुञ्च मा मुञ्च नय मानयेत्यादिविधास्तैर्वेणूनां निःस्वनेन च ॥ १० ॥

रामकृष्णयोश्चेष्टितानि गायन्तीभिर्गोपीभिर्गोपैश्च स्वलंकृतैरिति । लिङ्गव्यत्ययेन सम्बन्धः सुविराजितम् ॥ ११ ॥

अग्न्यांद्यर्चनान्वितैर्गोपगृहैर्धूपादिभिश्च मनोरमं मनोरमैरिति पाठे तैर्गोपावासैर्धूपादिभिश्च सुविराजितमिति सम्बन्धः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यानं रथः वासितार्थे सम्भोगार्थे वृषकामिनी वासिता वा शुष्मं स्रोमा दृढं बलमेषामस्तीति शुष्मिणः तैः ॥ ९ ॥

ऊधोभारेण युक्ताभिः वास्राभिर्वत्सलोलुपाभिर्गोभिश्च वत्सैश्च गुम्फितं नादितं गवां योनिनदीगुम्फेति यादवः इतस्ततो वल्गुधद्भिर्गोपैश्च सुविराजितामिति पाठः वल्गुधद्भिरुत्पतद्भिः नृत्यद्भिर्वा इतस्ततो विलङ्घद्भिरिति केचित् पठन्ति विलङ्घनं कुर्वद्भिः ॥ १०—१४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

पञ्चधा वर्णयति गोकुलमैश्वर्यरहिताः अन्ये गुणाः सन्ति वीर्यं कामे प्रतिष्ठितमिति तत्र पशूनां कामलीलामाह । वासितार्थ इति । शुष्मिभिर्मत्तवृषैर्नादितं तेन पित-

सर्वतः पुष्पितवनं द्विजालिकुलनादितम्।
हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितम्॥ १३॥
तमागतं समागम्य कृष्णस्यानुचरं प्रियम्।
नन्दः प्रीतः परिष्वज्य वासुदेवधिया ऽऽर्चयत्॥ १४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

रोऽपि तृप्यन्तीति प्रसिद्धेः स च नादो जयपूर्वक इति वक्तुं युद्धमाह। युध्यद्भिरिति। वासिता भोगयोग्या गौः यथा ऋतुकाले स्त्री सा विरलैव भवतीति तदर्थं वृषाः युद्धं कुर्वन्ति वृषभाणामुक्त्वा गवामाह। धावन्तीभिरिति। वास्राः सद्यः प्रसूताः धेनवः सवत्साः पुनः इतस्ततो धावन्ति वत्सादर्शनात् सवत्सकानन्यान् स्थूलान् विलङ्घद्भिः गोवत्सैर्विशेषेण लङ्घद्भिः मण्डितं वत्सकान् प्रति धावद्भिर्धेनुभिर्मण्डितं तानेव विलङ्घद्भिः गोवत्सैश्च मण्डितम् अथवा वास्राभिर्धेनुभिश्च नादितम् ऊधसो भारेण धावनमशक्यमिति तथापि धावनं प्रेमाधिक्यात् तत्तद्धीर्यमेव स्त्रीपुरुषैर्निरूपितम्॥ ९॥

इतस्तत इति। श्रीवर्णनं श्वेतगोवत्सैः शोभातिशयो भवतीति गोदोहनशब्देन अभितो रवो यत्र वेणूनां निःस्वनेन च मण्डितं स्वरूपतः शोभा धनं श्रीकार्यं च वीणावादनं वेणुवादनमपि श्रीकार्यमेव चकाराद्वीणादिवाद्यान्यपि॥ १०॥

यशो गायन्तीभिश्चेति। बलकृष्णयोः शुभानि कौतुकलीलाकर्माणि गोकुलवासिनामुत्सवनिरूपणार्थं कर्मणां शुभत्वं निरूपितम् त्यक्त्वा गत इत्यपि कर्म भवति तथापि स्वस्य हितकरं न भवति तद्व्यावृत्त्यर्थं वा गानं च यशोरूपं स्त्रियश्चेद्गायन्ति अन्यथा भगवद्गुणगानस्य विहितत्वात् धर्मत्वमेव स्यात् अतो गोपाः गोप्यश्च वर्णयति। स्वलंकृताभिर्गोपीभिः गोपैश्च स्वलंकृतैः सुष्ठु विराजितमिति ज्ञानार्थं धर्ममाह। प्रवृत्तिभावमेव ज्ञानमुपयोगीति॥ ११॥

अग्न्यर्कातिथीति। अग्नयः अग्निहोत्रादिना पूज्यन्ते अर्कः सन्ध्यावन्दनादिभिः अतिथयः पूज्यन्त एव गावो व्रतादौ दाने च तथा विप्राः पितृणां देवतानां च नैमित्तिके अर्चनम् अनेन श्रौतः स्मार्तश्च धर्मस्तत्र वर्तत इति निरूपितं देवता हविर्मन्त्राश्च श्रौते निरूपिताः पितरो देवताः स्मार्ते श्राद्धे होमे च तान्त्रिकधर्मोऽपि तत्र वर्तत इति ज्ञापयितुमाह। धूपदीपैश्च माल्यैश्चेति। अर्चनायामन्वितैर्धूपादिभिर्विराजितं मनोहरं वा व्रजस्य गृहाः सुन्दरा न भविष्यन्तीति धर्मप्रस्तावे आधारत्वेन निरूपितं गोपानामावासैरुत्तमगृहैः मनोरमं सर्वेषामेव मनोरतिजनकम्॥ १२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

व्रजं वर्णयति। वासितार्थं इति पञ्चभिः। मदीयव्रजस्य शोभामुद्धवः पश्यत्विति भगवदिच्छाशक्तिप्रेरिता योगमाया निर्वेदविषादैन्यादिसञ्चारिभिर्विधुरं कृष्णवियुक्तप्रकाशं सम्वृत्य हृपात्सुक्यचापल्योत्साहादिभिरतिमनोहरं कृष्णसंयुक्तप्रकाशं प्रथमं सायं समये सामान्यत एवोद्धवं दर्शयामासेति ज्ञेयं वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युद्धद्भिः मिथो युद्धयमानैः शुष्मिभिर्मत्तैः नादितं नादयुक्तीकृतं वास्राभिर्धेनुभिश्च नादितं स्ववत्सकान् नूतनान् प्रति धावन्तीभिः॥ ९॥

गोदोहशब्दैः सह अभितोरवा मुञ्च मामुञ्च उपेहि अपसर त्वरस्व मात्वरस्व नयानय देहि गृहाणेत्यादयो यस्मिंस्तत् वेणूनां निःस्वनेन च गायन्त्यादिभिश्च विराजितम् अग्न्यर्केति गोपावासैरित्यस्य विशेषणम्॥ १०—१३॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीमद्व्रजमित्युक्तं तच्छ्रीमत्त्वमाह। वासितार्थं इति पञ्चभिः। वासितानां पुष्पवतीनां गवामर्थे अभितो युध्यद्भिः शुष्मिभिर्मत्तैर्वृषैर्नादितम्। वास्राभिर्धेनुभिः॥ ९॥

विलङ्घद्भिरुत्पतद्भिः गोदोहशब्दैः सह अभितो रवाः यस्मिन् तत्॥ १०-११॥

अग्न्याद्यर्चनान्वितैर्गोपानामावासैर्गृहैः॥ १२॥

---

भाषा टीका।

यह व्रज कैसा है कि पुष्पवती गऊ के वास्ते आपस में युद्ध करते भये मतवाले वृषभों से शब्दाय मान है और गउ सब स्तनों के भारों से अपने बछरों पर दौड़ती हैं॥ ९॥

और इधर उधर दौड़ते हुये शुक्ल वर्णके गउओं के बछरों से यह व्रज शोभित है गोदोहन के शब्दों से तथा वंशीयों के शब्दों से युक्त है॥ १०॥

श्रीकृष्ण तथा बलरामजी के किये शुभ कर्मों को गान करती हुई सुंदर अलंकार वाली गोपियों से तथा गोपों से शोभित है॥ ११॥

अग्नि सूर्य अतिथि गउ ब्राह्मण पितृ देवताओं की पूजा से धूप दीप माला वाले गोपों के घरों से बड़ा मनोहर है॥ १२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

षण्डैः समूहैः॥ १३॥

आर्चयत्पूजयामास॥ १४॥

भोजितं परमान्नेन संविष्टं कशिपौ सुखम् ।
गतश्रमं पर्यपृच्छत् पादसम्वाहनादिभिः ॥ १५ ॥
कच्चिदङ्ग ! महाभाग ! सखा नः शूरनन्दनः ।
आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कशिपौ शय्यायां सम्विष्टम् ॥ १५-१६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

बहिः प्रदेशशोभां वर्णयति । सर्वत इति । पद्मषण्डैः सरोवरादिगतैः ॥ १३ ॥

आगतं स्वगृहद्वारि प्राप्तं समागम्य श्रुत्वाभ्यन्तरतः सन्निकृष्टमागम्यानुचरं भक्तम् अतः प्रियं कृष्णस्यात्मनो वा वासुदेवधिया वैष्णवस्य तदधिष्ठानत्वात्तदभेदेन ॥ १४ ॥

पूर्वं परमान्नेन पायसेनोत्कृष्टान्नेन वा भोजितं ततः कशिपौ शय्यायां संविष्टं क्षणं कायं प्रसार्य विश्रान्तवन्तं ततश्च सेवकद्वारा पादसम्वाहनादिभिर्गतश्रमं सुखं सुखोपविष्टं पर्यपृच्छदित्यर्थः ॥ १५ ॥

तत्र श्रीकृष्णस्य विश्लेषदुःखवृद्धिशङ्कया सहसा स्पष्टं प्रष्टुमशक्यत्वादादौ तत्प्रश्नभूमिकारूपं श्रीवसुदेवस्य कुशलं पृच्छति । कच्चिदिति । हे महाभागेति श्रीकृष्णस्य सन्निहितत्वाद्भवान् प्रसिद्धायां महाभागतायां योग्य एव वयं तादृशतायामयोग्यास्तेन परित्यक्तुं योग्या एवेति भावः । शूरनन्दन इति । तेन तत्पितुर्भाग्योदयो विवक्षितः । तच्च श्रीकृष्णस्य तत्र पुत्रायमाणत्वाभिप्रायेण । मुक्तः सर्वापद्भ्यः अपत्याद्यैर्युक्त इत्यनेन च सामान्यतः सर्वेषां तथा श्रीकृष्णस्यापि कुशलं पृष्टम् ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कशिपौ पर्यङ्के ॥ १५—२४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परितः पुष्पितानि वनानि यस्मिन् , द्विजानां पक्षिणां भृङ्गाणां च समूहैर्नादितं हंसैः कारण्डवैर्जलकुक्कुटैश्चावकीर्णं व्याप्तं पद्मसमूहैश्च मण्डितं हंसकारण्डवाद्याकीर्णं पद्मषण्डमण्डितसरः प्रान्तवर्ति द्विजालि कुलनादित पुष्पितवन मण्डित मित्यर्थः ॥ १३ ॥

तावत्कं चित् समागतं ततस्तं कृष्णस्यानुचरं प्रियं चोद्धवमाकर्ण्याभ्येत्येति शेषः । प्रीतः परिष्वज्य भगवद्बुद्ध्या पूजयामास ॥ १४ ॥

ततः परमेणोत्कृष्टेनान्नेन पायसेन भोजितं परमान्नेनेति कर्मणः करणत्वविवक्षया तृतीया परमान्नं भोजितमित्यर्थः । कशिपौ पर्यङ्के सुखं यथा तथा संविष्टं गतः अध्वश्रमो यस्य तमुद्धवं पादसंवाहनादिभिः परिचरन्निति शेषः । पर्यपृच्छत् ॥ १५ ॥

प्रश्नमेवाह । कच्चिदित्यादिना । अङ्ग हे महाभाग ! नोऽस्माकं सखा शूरनन्दनः वसुदेवः मुक्तः बन्धादिति शेषः सुहृद्भिर्वृतः अपत्याद्यैः सह कुशली सुखी आस्ते कच्चित् ॥ १६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कशिपौ शयनतल्पे ॥ १५ ॥

मुक्तः बन्धनक्लेशात् ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पादसम्वाहनादिकं सेवकद्वारा सुहृदस्तन्मातुलादीन् १५-२८॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वैराग्यं निरूपयन् गृहे उद्वेगे बहिर्निर्गतस्य महत्सौख्यं तत्रेति वदन् आह । सर्वतः पुष्पितवनमिति । सर्वतः पुष्पितानि यत्र वनानि अत्र वनशब्देन उपवनप्रायाणि वनानि जलानि चोच्यन्ते पुष्पाणामत्युत्कृष्टत्वाय तद्गन्धरसाभिज्ञान्निरूपयति । द्विजानामलीनां च कुलैर्नादितमिति । जलस्थानामुत्कर्षं वक्तुं विशेषणमाह । हंसैः कारण्डवैः आकीर्णमिति मुख्यानि पद्मानीति पद्मषण्डैः पद्मसमूहैः मण्डितमिति ॥ १३ ॥

एवं व्रजं वर्णयित्वा तादृशे गतस्य पूजादिकमाह । समागतमिति । सम्यगागतायाग्रे गत्वा तत्र हेतुद्वयं कृष्णस्यानुचरं पूर्वमपि प्रियमिति अतो नन्दः आगमनेनैव प्रीतः अनेन स्वरूपत्वमुक्तम् परिष्वज्येति समानत्वं वासुदेवधिया भगवत्सेवके भगवद्बुद्धिः कर्तव्येति बुद्ध्या अर्चयन्ति यो यच्छ्रद्धः स एव स इति वाक्यात् ॥ १४ ॥

विजातीयत्वात् परमान्नेन पायसेन भोजनमिति केचित् । वस्तुतस्तूत्कृष्टेनान्नेन ततः कशिपौ पल्यङ्के तूलिकायां सुखमुपविष्टमित्युपलक्षणतया राजोपचारा निरूपिताः ॥ १५ ॥

ततो गतश्रमं स्वयमन्येन वा पादसंवाहनादिभिः कुशलं पर्यपृच्छत्तदेवाह । कच्चिदङ्गेति । तस्य तु कुशलं स्वामिकुशलेनैवेति भगवन्तं पृच्छन् आदौ स्वमित्रं वसुदेवं पृच्छति परिहासार्थः हे अङ्ग परमस्निग्ध भगवद्भक्तत्वात् महाभागवतः सखा शूरस्य नन्दनः वसुदेवः अपत्याद्यैर्युक्तः बन्धनान्मुक्तः सुहृद्भिश्च वृतः कुशल्यास्त इति । अनेन रोहिण्याद्यास्तत्रैव गता इति ज्ञापितम् । अन्यतोऽपि समागताः पुत्रादयश्चेत्यपि पृष्टं

दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना ।
साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा ॥ १७ ॥
अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् ।
गोपान् व्रजं चात्मनाथं गावो वृन्दावनं गिरिम् ॥ १८ ॥
अप्यायास्यति गोविन्दः स्वजनान् सकृदीक्षितुम् ।
तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम् ॥ १९ ॥
दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः ।
दुरत्ययेभ्यो मृत्युभ्यः कृष्णेन सुमहात्मना ॥ २० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

स्वस्य साक्षित्वेन पुत्रस्थापनकन्यानयनादिभिः वैमनस्यं परिहृतं परमानन्दं प्रापित इति शूरनन्दन इति पितृनाम्ना तस्य स्वतो महत्त्वमुक्तम मुक्त इत्यनुवादोऽपि सर्वचिन्ताव्यावृत्त्यर्थः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथोद्धवः कृष्णवियुक्तप्रकाशं नन्दालयं प्रविवेशेत्याह । तमिति । समागम्य अभ्यन्तरतः समीपमागत्येति स्वपुत्रसारूप्यावलोकनेनोद्धवस्य च स्वदृष्टजनमात्रोत्सवदायित्वशक्त्या च श्रीनन्दस्य बाह्यव्यवहारानुसन्धानसम्भाषणादिसामर्थ्योदयो ज्ञेयः वासुदेवधिया अतिथिरूपेण मदिष्टदेवो नारायण एवागत इत्यार्चयत् पाद्यादिना ॥ १४ ॥

भोजितं परमान्नेनेति । यद्यपि मधुराप्रस्थानदिनावधि व्रजस्थजनानां सर्वमेव महानसममार्जितमलिप्तं तृणपत्रधूलिभिः परिपूर्णं लूतातन्तुवितानमयमेवाभूत् परस्परप्रतिवेशिजनदत्तैर्दधिदुग्धतक्रादिभिरेव प्राणान् धारयन्तो हा हताः स्मेति वादिनः सर्वे विषीदन्त्येव तदपि तद्दिने हन्त हन्त मद्गृहमायातो ऽयमुद्धवोऽद्य मा क्षुधा विषीदत्विति व्रजराजस्याशयमभिज्ञाय कश्चित् परिजनो ब्राह्मणः खण्डतण्डुलपयोभिरेकपुरुषमात्रभोज्यं परमान्नं पपाचेति ज्ञेयं पादसम्वाहनं सेवकद्वारैव उद्धवस्य तद्भ्रातुष्पुत्रत्वात् ॥ १५ ॥

कृष्णस्य प्रश्नेऽश्रुकण्ठावरोधादयः सहसोद्भविष्यन्तीत्याशङ्क्य प्रथमं वसुदेवस्य कुशलं पृच्छति मुक्तो बन्धनात् सर्वापत्यश्च ॥ १६—१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पद्मानां षण्डैः समूहैः ॥ १३-१४ ॥

श्रीनन्दभृत्यकर्तृकैः पादसम्वाहनादिभिर्गतश्रमम ॥ १५-१६ ॥

---

भाषा टीका ।

सब तरफ फूले वनों से शोभित पक्षी तथा भ्रमरों के समूहों से शब्दाय मान है हंस काण्डव पक्षीओं से युक्त पद्म समूहों से मंडित है ॥ १३ ॥

इतने में श्रीकृष्ण के अत्यंत प्रिय अनुचर आये हुये उद्धव जी से मिलकर नंदजी ने बड़े प्रसन्न होकर आलिंगन करके वासुदेव की बुद्धि से अर्चन किया ॥ १४ ॥

फिर रात्रि में उनको क्षीरान्न का भोजन कराया फिर सुख पूर्वक पलंग पर जब बैठ गये तब पादों की सेवाकरने से उनका श्रम चला गया तब उनसे नंदजी पूंछते भये ॥ १५ ॥

हे महा भाग! हमारे शूर पुत्र वसुदेवजी बंधन से छूटकर सुहृदों के सहित पुत्रादि के साथ कुशल से तो हैं क्या सो कहिये ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

साधूनामिति कर्मणि षष्ठ्यः ॥ १७ ॥

गावो गाः गिरिं गोवर्धनम् ॥ १८ ॥

अप्यायास्यत्यागमिष्यति किम् ॥ १९ ॥

श्रीकृष्णोपकारस्मरणादिभिरनुपमानन्देनाभिभूयमान आह । दावाग्नेरित्यादिना । वाताद्वर्षाच्चेति अन्येभ्यश्च वृषात्सर्पाच्च दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्म. ॥ ५० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्षणं निजधैर्य्यार्थं मुक्तत्वस्य मुख्यकारणमेव साक्षात् कृष्णप्रस्तावस्यव्यवधानतया प्रतीति । दिष्ट्येति । स्वेनेति तद्धननं दोषः परिहृतः । पाप्मानमेवाह । साधूनां सदाचाराणामत एव धर्मपराणामतस्तदर्थं तत्र श्रीकृष्णगमनमस्माभिरप्यनुज्ञातमिति भावः ॥ १७ ॥

ततश्च धैर्य्यं चिरमक्षमः प्रष्टव्यमेव साक्षात् पृच्छति । अपीति । कृष्णः सर्वचिराकर्षको मत्पुत्रः किं स्मरति किं न विस्मृतवानस्तीत्यत्र न इति बहुत्वमुपनन्दाद्यपेक्षया सा च समानस्निग्धत्वविवक्षया । मातरमिति । तन्मात्रनिर्द्देशस्तु तस्या अत्यन्तदुःखदर्शनव्यग्रतया तदेकस्फुरणात् सुहृदः सम्बन्धि गोपाल-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तन्मातुलादीन् सखीन् श्रीदामादीन् गोपानिति साधारणान् एकशेषत्वेन गोपीरपि ताश्च तादृशीः आत्मा कृष्ण एव नाथो यस्य तम् । व्रजस्य तन्नाथत्वेन सर्वेषां तन्नाथत्वं सिद्ध्यतीत्यस्यैव विशेषणं दत्तम् । गावो गाः गौरवानुसारेण यथाक्रममन्यूनोक्तिः । वृन्दावनाद्रिरेगुरुत्वं तदन्तर्भूतत्वात् । अथवा प्रथमत आत्मस्फूर्त्तेरेव लभ्यत्वात् पूर्वं न इत्युक्तं ततश्चोत्तरोत्तरस्यासङ्कोचस्थानत्वातिशयेन सान्निध्यातिशयात् स्मरणातिशयसम्भावनया सखिपर्यन्तानुक्रमोक्तिः अथ विशेषस्मरणासम्भावनया सामान्यत्वेनापि द्वयोस्तद्विषयत्वं पृच्छति पदद्वयेन तत्रापि सामान्योक्तिर्व्रजश्चेति । तत्र तत्रासम्भावनया पुनर्विशेषोक्तिर्गाव इति अहो अहरहस्तमपि त्यक्त्वा यत्सङ्गे यत्र चारमत ता गास्तद्वृन्दावनं च किं स्मरति तत्र च विचित्रक्रीडा सुखसम्पत् कल्पद्रुमं स्वयं प्रवर्त्तितपूजनं सप्ताहं स्वकरे धृतं गिरिं वा स्मरति मारितेऽप्येकस्मिन् कंसे तत्र तत्पत्नीद्वयावर्त्तिनामन्यत्र च तद्रिपुपित्रादीनां परः कोटीनां दुरुद्यमभाजां प्रतिघातार्थं स्वजनानामपि यदूनां ततस्तत आनीय सुखवासार्थं व्यग्रचित्तत्वादात्मनः स्मरणमपि तस्य तत्र तत्र प्रतिरुद्धस्य न सुघटते किमुतान्येषामिति भावः ॥ १८ ॥

ननु धीमान् कृतज्ञोऽसौ सदा स्मरत्येव किन्तु विधाय सुहृदां सुखमित्युक्तेः कार्य्यवशात्किञ्चित् मात्र एव विलम्बः स्यादित्याशङ्क्य फलं द्वयमन्यत् पृच्छति । अपीति । गोविन्दो गोकुलपालकः इत्यागमनावश्यकतोक्ता स्वशब्देन स्नेहपात्रतयेक्षणावश्यकता आस्तां पौनः पुन्याशा सकृदपि तथैवास्तां सान्त्वनाद्याशा ईक्षितुमपि किमायास्यति तत्रेक्षितुमिति स्वेषां महाव्याधितानामिव तापः सूचितः सकृदिति तत्राप्यसम्भावितजीवनानामिव यन्मात्रेणास्मासु मरिष्यमाणानां पुनर्दर्शनाभावदुःखं कथंचिज्जीविष्यतां च पुनर्दर्शनासम्भावनदुःखम् उभयेषां चापाततस्तृष्णाया असह्यतादुःखं नङ्क्ष्यतीति भावः । तस्मिन्नपि तदागमने द्वयं फलान्तरं सधैर्यम्यमभिव्यनक्ति । कर्हीति । कदागमनं स्यात्कदा द्रक्ष्याम इत्यर्थः । सलोप आर्षः तर्हीति पाठे तर्ह्येवेत्यर्थः । ज्ञातीन् वा द्रष्टुमेष्याम इत्यस्मास्माकं तत्र गमनस्यानभिप्रेतत्वात् एवं श्रीमद्वक्त्रस्मरणे तदीयशोभाविशेषं मुहुरिव स्मरति सुनसमित्यादि ॥ १९ ॥

ततः सधैर्य्यमिव खेषु तत्कर्तृकात्मदुःखायनपेक्षितस्नेहदानं निजसान्त्वनार्थमिव स्मरन् प्रत्युत तेन हृदि निर्दार्य्यन्निव विलपति दावाग्नेरिति अहोपरमयाल्याद्देव तेनास्माकं रक्षामुहुरेव कृतास्ति कति वा वर्णयामः यत्र दावाग्नेरपि स्वयमनुकम्पावेशेन पातुमारब्धास्ततो नगोद्धिप्रनारायणसमप्रभावत्वेन वा तं दृष्ट्वा स्वत एव दयया वा पीयूषीभूयाप्यायिततद्देहाद्वयं रक्षिता स्मः एवं वातवर्षादावपि योज्यं मृत्युभ्यो मरणाविघ्नात्तद्देवताभ्य इतरेभ्यः सुष्ठु महानात्मा कारुण्यप्रभावादिः निरुपाधिप्रेमारूपदादि स्वभाव औत्पत्तिकगुणो यस्य तेन ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पापः कंसः सानुगः स्वकीयेन दुष्टेन कर्मणा निदानेन हतः दिष्ट्या अयं नो महानानन्द इत्यर्थः । पापमेव व्यनक्ति । साधूनामिति कर्मणि षष्ठी यः कंसः साधून् धर्म एव शीलं येषां तान् यदून् द्वेष्टि अद्विक्षदित्यर्थः ॥ १७ ॥

पित्रादिरूपाश्चोऽस्मानात्मा स्वयं नाथो यस्य तं व्रजं गावो गाः वृदावनं गिरिं गोवर्द्धनं चापि स्मरति किमित्यर्थः ॥ १८ ॥

अप्यायास्यत्यागमिष्यति किं तर्हि यदाऽऽगमिष्यति तदा तस्य मुकुन्दस्य वक्त्रं द्रक्ष्यामः कथम्भूतं शोभना नासिका यस्मिन् सुस्मिते शोभनस्मितयुक्ते ईक्षणे यस्मिंस्तत् ॥ १९ ॥

भगवत्कृतानुपकारानुस्मरति । दावाग्नेरिति । वाताद्वर्षाद्वृपात्सर्पाच्चान्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः कृष्णेन वयं रक्षिताः कथम्भूतेन सुमहात्मना आश्रितार्त्तिहारिस्वभावेन ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दिष्ट्या दैवेन स्वकृतेन यदूनामिति षष्ठी द्वितीयार्थे कर्मपदमित्यध्याहार्यं वा ॥ १७ ॥

मातरः मातृः गावो गाः ॥ १८—२० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतः परं भगवत्कुशलं पृच्छन्नादौ प्रातीतिकं दोषं परिहरति । दिष्ट्या कंस इति । कंसो यो हतः सानुगो भ्रातृसहितः तद्दिष्ट्यामयरूप इत्याशङ्क्य इति च इन्द्रादीमप्यशक्य इति मातुलो भगवता स हत इति तदर्थमाह । स्वेन पाप्मना हत इति भगवतापि मारणपक्षो दोषाभावाय पाप इति तस्योत्कटं पापमाह । साधूनां धर्मशीलानां यदूनां द्वेष्टीति षष्ठ्या तत्सम्बन्धि सर्वमेव द्वेष्टीति निरूपितं साधूनामिति ज्ञानमार्गोत्कर्षः । धर्मशीलानामिति कर्ममार्गः यदूनामिति भक्तौ अतः सन्मार्गमात्रमेव तस्य द्वेष्य इति उत्कटं पापं तद्वधश्च युक्त एवेति निरूपितं कार्यवशात् कादाचित्को दोषः नात्यन्तं विगीत इति सदेति एवं दोषं परिहृत्य भगवद्गुणानामाधिक्यं पराक्रमाश्चोच्यन्ते ॥ १७ ॥

एवं सति दशभिर्गुणातीतेन सह कुशलमुक्तं भवति तत्र प्रथमम् अस्माभिर्निरन्तरं स्मर्यते तत्स्मारकाणां बहूनां विद्यमानत्वाद् तथापि किं सविस्मरति न वेति स्मारकाभावात् पृच्छति । अपीति । संभावनायां नः अस्मान् कृष्णेति स्नेहेन नामग्रहणं स्मारकाभावात् कथं स्मरणमित्याशङ्क्य सम्बन्धानाह । मातरमिति । आदिपदैश्चिन्ता तत्र संस्कारोद्बोधिका निरूपिता मातरं यशोदामिति पूर्वं स्वात्मानमुक्तवान् बहुवचनं तु सर्वापेक्षं सुहृदः अस्मानन्यांश्च उपनन्दादीन् सखीन् मित्राणि गोपान् व्रजं स्थानं तस्य स्मरणे हेतुः आत्मनाथमिति । आत्मैव नाथो यस्येति पाल्यमानत्वाद्गावः गा इत्यर्थः क्रीडास्थानं वृन्दावनं विशेषलीलाधारो गोवर्धन इति गिरिः ॥ १८ ॥

एवमष्टौ स्मरणहेतवः स्मरतीत्युत्तरं प्राप्याह । आप्यायास्यतीति । यो हि यत्स्मरति सर्वदा स तदभिलाषी सन् तत्र गच्छति अतोऽत्रापि सम्भावना नत्वत्र गुणभावः तत्र च राज्यमिति कथमागमनमितिचेत्तत्राह । गोविन्द इति । देवादिभिः संवरे-

स्मरतां कृष्णवीर्याणि लीलाऽपाङ्गनिरीक्षितम् ।
हसितं भाषितं चाङ्ग ! सर्वा नः शिथिलाः क्रियाः ॥ २१ ॥
सरिच्छैलवनोद्देशान् मुकुन्दपदभूषितान् ।
आक्रीडानीक्षमाणानां मनो याति तदात्मताम् ॥ २२ ॥
मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ ।
सुराणां महदर्थाय गर्गस्य वचनं यथा ॥ २३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बायेन्द्रत्वेन स्थापितः किञ्च स्वजनानिति स्वजना हि द्रष्टव्याः यद्यपि बहुधैवागमनमुचितं सकृदप्यायास्यतीति परमोऽभिलाषो द्योतितः आयास्यतीत्युत्तरे मनोरथमाह । तर्हि द्रक्ष्यामः तद्वक्त्रमिति । ईश्वरप्रेरणाभावात् आज्ञाभावाच्च गमनमसम्भावितं यतस्तन्निरुद्धाः आगमनमेवहि निरोधज्ञापकम् घ्रुनसमिति । सौन्दर्यं निरूपितं सुस्मितसहितमीक्षणं यत्रेति तस्य सर्वे कृपादिभावा निरूपिताः ॥ १९ ॥

नित्यं निरीक्षितमपि प्रेमाधिक्यात् कामितमिव जातम् अस्माकं तु तत्स्मरणं सर्वदैव स्मारकाणां बहुत्वादिति वक्तुं भगवत्कृतोपकारान्निर्दिशति । दावाग्नेरिति । साक्षान्नन्देन यावद्दृष्टं तावद्गणयति विशेषतः दावाग्निः कालीयह्रदे वातवर्षात् गोवर्धनोद्धरणे वृषोऽरिष्टः सर्पः सुदर्शनः चकारात् सर्वे श्रुताः संगृहीताः द्वितीयचकारेण वरुणाद्युपद्रवात् किं बहुना दुरत्ययेभ्यो मृत्युभ्यः ये मृत्यवोऽप्रतीकार्याः कंसादयो दावानलादय एव वा कृष्णेन सुमहात्मनेति फलरूपेण साधनरूपेण आत्मत्वादुपकारानपेक्ष्यत्वं महद्वा बहूपकारत्वम् ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततः साश्रुगद्गदं पृच्छति । अपीति । मातरमिति तन्मातुर्दुरवस्था त्वयैव दृश्यतामिति तर्जन्या तां दर्शयति आत्मा स्वयमेव नाथो यस्य तमिममनाथं सम्प्रति निःशोभं व्रजं च पश्येति भावः गावः गाः ॥ १८ ॥

अप्यायास्यतीति किंचिदुद्धव ! तन्मनोऽभिप्रायं जानासीति भावः । ननु जानाम्येव स आयास्यति युष्मान् सान्त्वयिष्यति निश्चलमत्रैव स्थास्यतीति तत्रास्मत्सान्त्वनं दूरं वर्ततां निश्चलवासोऽपि मा भवतु किन्तु तद्दर्शनमात्रमहं याचे इत्याह । गोविन्द इति । स्वस्वजनानस्मान् विरहमहाज्वरपीडितानद्य श्वो वा मरिष्यतो द्रष्टुमपि सकृदपि किमायास्यति गोविन्द इति परः पराद्धान् गास्तदुपलक्षितानि कोटिशः स्वर्णमुद्रामुक्ताहीरकाद्रिरत्नराजितकाञ्चनपात्रविविधवस्त्रालङ्कारचन्दनागुरुकुङ्कुमाद्यनेकगृहद्रव्याणि स्वीयानि विन्दतां लभताम् आवयोर्मृतयोरेतषु वस्तुषु कोऽन्यः स्वत्वं कल्पयेदत एतानि गृहीत्वा यत्र तस्य वस्तुमिच्छास्ति तत्रैव वसत्विति भावः । ननु किमेवं द्योतयसि तमागतप्रायं विद्धीति तत्र विलम्बमसहमान आह । कर्हीति । तर्हीति च पाठः

द्रक्ष्याम इति सलोप आर्षः तच्चन्द्रकोटितिरस्कारिवक्त्रं तां निरुपमां नासां तदमृतमधुरं स्मितं ते कमलदलाकारे सुदीर्घनयने अस्मिन्नन्तकाले उपसन्ने दृष्टैव प्रियेमहीत्याकाङ्क्षा महती वर्त्तते इति भावः ॥ १९ ॥

ननु नैव मरिष्यथ बहुकालमेव तं स्वसुतं लालयन्तो जीविष्यथेति तत्राधुना तु मृत्युहस्तान्न मुच्यामहे इति वक्तुमतीतान् मृत्यून् गणयति । दावाग्नेरिति । सुमहात्मना महास्नेहमयस्वभावेन किंत्वधुना सुमहावाडवानलात् कथं न तेन रक्ष्यामहे इति न जानीम इति भावः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साधूनामिति कर्मणि षष्ठी ॥ १७ ॥

नः अस्मान् गावो गाः ॥ १८ ॥

अप्यायास्यति आगमिष्यति किम् ॥ १९ ॥

दुरत्ययेभ्यो दुरतिक्रमेभ्यः ॥ २० ॥

---

### भाषा टीका ।

बड़ा पापी कंस अपने भाइयों के सहित मारा गया सो अपने पापही से मरा सो अच्छा भया जो कि सदा काल धर्म शील साधु यदुओं का द्वेष करता रहा ॥ १७ ॥

क्या कृष्ण माता सुहृत् सखा हम लोगों को स्मरण करते हैं कि नहीं और गोपों को अपने रक्षित व्रज को गउओं को वृंदावन को गोवर्धन पर्वत को स्मरण करते हैं कि नहीं ॥ १८ ॥

क्या अपने मनुष्यों को देखने को गोविंद यहां आवेंगे कि नहीं तब ही सुन्दर नासिका वाले सुंदर नेत्रवाले उस मुखारविंद का दर्शन करेंगे ॥ १९ ॥

दावानल से और पवन से वर्षा से अरिष्टासुर से सर्प से रक्षा किया है बड़े मृत्युओं से भी सुहृत् आत्मा कृष्ण चन्द्र ने हमारी रक्षा करी है ॥ २० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च स्मरतामिति । लीलयापाङ्गेन निरीक्षितम् अङ्ग हे उद्धव ! ॥ २१ ॥

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा ।
अवधिष्टां लीलयैव पशूनिव मृगाधिपः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न केवलं शिथिला एव किन्तु शनैरुपरमन्तीत्याह। सरिच्छैलेति। सरितश्च शैलाश्च वनोद्देशाश्च तान् आक्रीडान् क्रीडास्थानानि ॥ २२ ॥

सुराणामर्थाय महद्गम्भीरं गर्गस्य वचनं यथा ॥ २३ ॥

न केवलं तद्वचनानुसारेणैव व्यवहारसम्वादादपीत्याह। कंसमिति ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं पद्यद्वयेन माधुर्य्यप्रभावौ स्मृतौ तत्रोभयथापि स्मरणे धैर्यमन्यं लब्ध्वा एतदेव प्रात्यहिकमात्मदुःखं निवेदयति। स्मरतामिति। कृष्णेति। कृष्णस्येत्यर्थः सुपां सुलुगित्यदिना सुपो लुक् अत एव लीलेत्यादावप्यन्वयः कृष्णेति मुहुरुक्तिः पितुः पुत्रस्य मूलनामन्यासक्तेः वीर्याणि दावाग्निमोक्षणादिरूपप्रभावमयचरितानि न केवलं तानि अपि तु माधुर्य्यमयचरितानि चेत्याह। लीलेत्यादि। लीला नेत्रयोः स्वाभाविकविलासः तत्पूर्वकमपाङ्गेन लज्जास्वभावान्नेत्रैकदेशेनैव निरीक्षितं सर्वत्रैव स्निग्धस्वभावतया सावधानमीक्षणं तथा तत्रैव हसितं तत्रैव भाषितं च स्मरतां तद्व्यसनमापन्नानां सर्वा भोजनादिक्रियाः शिथिलाः अन्तर्व्यग्रतया बहिः प्रयत्नशून्याः ईश्वरेणैव प्रवर्त्तिता इत्यर्थः। क्रियाभिरन्यचित्ततया वा स्वस्थास्तिष्ठेम तदपि न सिध्येदिति भावः ॥ २१ ॥

ननु स्वगृहावस्थाने पुत्रस्मरणमधिकं स्यादिति तत्त्यागाय स्वयमेव गाः पालयता यमुनातीरादौ भ्रम्यतामित्याशङ्क्य तेनाप्यप्रतीकारं निवेदयति। सरिदिति। उद्देशाः प्रदेशाः तान् मुकुन्दस्य अजगरवरुणादिभ्योऽस्मदादिमुक्तिदातृत्वेन तन्नाम्ना व्रजे विख्यातस्य पदैश्चरणचिन्हैः श्रीपृथिवीदेव्यापि स्नेहादद्यापि निजाङ्के तथैव रक्षमाणैर्विभूषितान् तथा आक्रीडान् तत्तत्क्रीडाचिन्हमनोहरान् ईक्षमाणानां प्राणिमात्राणां किमुतास्माकं मनस्तदात्मतां तत्तत्स्फूर्त्तिमयतां याति अस्माभिः किं कर्त्तव्यमिति भावः ॥ २२ ॥

एवं हठात् पुनरागतेन माधुर्यस्फुरणेन लब्धचित्तास्वास्थ्यः पुत्रबुद्ध्या स्नेह एवात्यन्तार्तिहेतुरित्याशङ्क्य तदाच्छादनाशया विश्लेषविषयमयप्रीतिजातिस्वभावात्तन्माहात्म्यकीर्त्तनेच्छया वा पुनः प्रभावान् स्मरति। मन्य इति चतुर्भिः। इह मद्गृहे प्राप्तौ स्वाच्छन्द्येनैव जन्मानुकृतवन्तौ सुरोत्तमौ नारायणसमौ कावपि मन्ये सम्भावयामीति पुत्रभावस्यैव सहजत्वमन्तर्गतत्वञ्च बोधयति ॥ २३ ॥

मल्लौ चाणूरमुष्टिकौ तथाशब्देन मल्लयोर्गजपतेश्च नागायुतप्राणत्वमुक्तम्। अवधिष्टां हतवन्तौ यो यश्च यथास्यमिति शेषः मृगाधिप इत्येकत्वं प्रत्येकदृष्टान्तत्वात् ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आत्मनोऽवस्थानप्रकारमाह द्वाभ्याम्। अङ्ग हे उद्धव ! भगवतो वीर्याणि चेष्टितानि लीलया अपाङ्गेन निरीक्षणं च हसितं च भाषितं च स्मरतां नोऽस्माकं सर्वाः क्रियाः व्यापाराः शिथिलाः ॥ २१ ॥

न केवलं शिथिला एव किन्तु शनैरुपरमन्त्यपीत्याह । सरिदिति। सरितः शैलाश्च वनोद्देशाश्च तानाक्रीडानि क्रीडास्थानानि चेक्षमाणानां नो मनस्तदात्मतां कृष्णानन्यविषयकतां प्राप्नोति ॥२२॥

अनितरसाधारणचेष्टितैर्लिङ्गै रामकृष्णौ भगवदवताराविव्यवस्यति। मन्य इति। रामं कृष्णं च सुरोत्तमौ वासुदेवसङ्कर्षणौ इह लोके प्राप्ताववतीर्णौ मन्ये किमर्थं सुराणां महतेऽर्थाय प्रयोजनाय तत्र शिष्टसम्वादं प्रमाणयति । गर्गस्य वचनं यथेति ॥ २३ ॥

तत्र लिङ्गान्याह। कंसमिति त्रिभिः । नागायुतस्य गजायुतस्य प्राणो बलं यस्य तं कंसं बहुवचनान्तपाठे तान्मल्लान् गजपतिं गजेन्द्रं कुवलयापीडं लीलयैवावधिष्टां हतवन्तौ यथा सिंहः पशूंस्तद्वत् ॥२४॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

क्रियाः गृहादिविषयाः ॥ २१ ॥
तदात्मतां तस्मिन्नेव व्याप्तताम् ॥ २२ ॥
महते अर्थाय प्रयोजनाय ॥ २३ ॥
नागायुतवत् प्राणो बलचेष्टा यस्य तथा तम् ॥ २४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एष्यदप्यप्रार्थितमपि सर्वमेव हितं करोतीति श्रुते तर्हि कथं न गम्यत इत्याशङ्क्याह। स्मरतामिति। कृष्णवीर्ये स्मरतामप्यस्माकं सर्वाः क्रियाः शिथिला भवन्ति भगवतः स्थाने गमनं प्रेम्णा भवति अस्मदीयो भगवान् किमिति तत्र तिष्ठति गत्वा समानेय इति तत्र वीर्याणि स्मृत्वा एतावन्तमुपकारं भगवान् कृतवान् किमस्माभिः कृतं के वा वयं कथं चैतत् धार्ष्ट्यमिति शैथिल्यं भवति। सुखार्थं चेत् कृष्णत्वात् सदानन्द इति स्मृत एव सुखं प्रयच्छति। अत उभयथापि गमनं बाधितम्। अथेन्द्रियसुखार्थं भगवान् द्रष्टव्य इति चेत्तत्राह। लीलापाङ्गनिरीक्षितमिति। लीलया यदपाङ्गनिरीक्षणं तत्स्मरतामिति भगवतो दृष्टिश्चेद्भाव्यते तावदेव पश्यतीति बुद्ध्या चक्षुः शाम्यति लीलापूर्वकं पश्यतीति लीलादर्शनेन प्राणास्तृप्यन्ति अपाङ्गेन यत्पश्यति तेनैश्वर्यं प्रकटयन् धार्ष्ट्यं दूरीकरोति हसितेन च मोहयति भाषितेन श्रोत्रादिसुखं सम्पादयति अतः सर्वार्थं प्रयत्नान् दूरीकरोति नास्माकं गमनसामर्थ्यमिति भावः। चकारात्सर्वं भगवच्चरित्रम् अङ्गेत्यप्रतारणाय सर्वाः दैहिका मानसिका लौकिका वैदिकाश्च तदर्थमुद्योगे तत्स्मरणमावश्यकं स्मरणे च गमनासम्भवः ॥ २१ ॥

किञ्च क्षणे क्षणे वयं मुक्ताश्च भवाम इत्याह । सरिच्छैलेति। यत्र यत्र भगवता स्वानुभावः प्रकटीकृतः स्थापितः तद्दर्शनेनैव

तालत्रयं महासारं धनुर्यष्टिमिवेभराट्।
बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम् ॥ २५ ॥
प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो बकादयः।
दैत्याः सुरासुराजितो हता येनेह लीलया ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मनस्तदात्मतां भगवदावेशमेव प्राप्नोति तेन सुतरामेव गमनाभावः सरिद्यमुना शैला गोवर्द्धनादयः वनोद्देशाः वृन्दावनभूमयः। एतेषु भगवदनुभावार्थमाह। मुकुन्दस्य मोक्षदातुः पदैर्भूषितानिति आभासिप्रेतेष्वपि कदाचित्पदानि भवन्तीति तेषु भगवतस्तात्पर्यार्थमाह। आक्रीडानिति। आसमन्तात् क्रीडास्थानभूतान् ईक्षमाणानामिति नैकधा दर्शनमावश्यकम्। ईक्षणमेव च मनसस्तदात्मकत्वे हेतुः॥ २२॥

ननु कथमेवं सामर्थ्यमवगतं विपरीतबुद्धेर्दृढत्वादित्याशङ्क्याह। मन्ये कृष्णं च रामं चेति। महत्त्वाद्वस्तुसामर्थ्येनैव मनस्तदात्मकं भवतीति श्रुतमपि कदाचिदसम्भावनया प्रतीतिं न गृह्णातु अनुभवः प्रतीतिं गृह्णातीति मन्य इत्याह। कृष्णं च रामं चेति। चकारद्वयं सर्वदेवगणसमुच्चयार्थं ननु तादृशयोः सुरोत्तमयोर्ब्रह्मादेरप्यधिकयोरिहागमने को हेतुरित्याशङ्क्याह। सुराणां महत्कार्यार्थमिह स्वयमेव समागतौ नतूत्पन्नौ येन विना तत्कार्यं न भवति ननु तर्को न प्रमाणमिति कथं निर्णेतुं शक्यते तत्राह। गर्गस्य वचनं यथेति। गर्गस्य तथैव वचनम्॥ २३॥

अतः प्रमाणानुभवाभ्यां देवोत्तमत्वं सिद्धमिति माहात्म्यज्ञानं युक्तमेव सामर्थ्येनापि तन्निश्चीयत इत्याह। कंसमिति त्रिभिः। सात्त्विकी राजसी तामसी च लीला क्रमेण निरूपिता। नागायुतस्य हस्तिनां दशसहस्रस्य यावद्बलं तावान् प्राणो बलं यस्य मल्लावपि चाणूरमुष्टिकौ नागायुतप्राणौ गजपतिः कुवलयापीडस्तथा वस्तुतोऽयमपि नागायुतप्राणः चाणूरस्तु स्वापेक्षया हीनत्वं युद्धार्थं वदन् तथोक्तवान्। सहस्राणां वा द्विपानां सत्त्वं बिभर्तीति तत्र योजनीयम् अन्यथात्र तथेति वचनमसङ्गतं स्यात्। ततश्चतुर्णां बलं चत्वारिंशत्सहस्रगजपरिमितं भवति एतादृशानां लीलयैवावधिष्टां तर्हि मन्त्रादिसामर्थ्येन हतवानित्याशङ्क्य दृष्टान्तमाह। पशूनिव मृगाधिप इति। सिंहः स्वभावत एव पशून् हन्ति गजो हि तस्य प्रतिपक्ष्यपि भवति ननु पशवो गवादयः अतस्ततोऽनन्तगुणं सामर्थ्यं भगवतः सूचितम्॥ २४॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु तदीयमुखचन्द्रस्मरण सुधयैव सर्वे सन्तापाः शाम्यन्तीति सत्यं तत्स्मरणं सर्वसन्तापहरमपि सम्प्रति दुरदृष्टवशादस्माकं सर्वसन्तापकरमेवाभूदित्याह। स्मरतामिति। क्रियाः शिथिला इति स्नानभोजनपानाद्या अभ्यासवशाज्जायमाना अपि सम्प्रति शिथिली भवन्त्यत एव न जीवाम इति भावः॥ २१॥

ननु यद्येवं तर्हि गृहावस्थाने पुत्रस्मरणमधिकं स्यादतस्तत्त्यागाय स्वयमेव गाः पालयता भवता यमुनातीरादौ भ्रम्यतामित्याशङ्क्य तेनाप्यप्रतीकारं ज्ञापयति। सरिदिति। उद्देशाः प्रदेशाः तदात्मतां तत्स्फूर्त्तिमयतां तस्मिन् लीनतां वा॥ २२॥

विश्लेषमयप्रीतिजातिस्वभावादेव सहसा स्फुरितेन तदैश्वर्येण क्षणं लब्धविवेक इवाह। मन्ये इति। इह मद्गृहे प्राप्तौ मम च वसुदेवस्य च भाग्यात् पुत्रायभूतामित्यर्थः। सुराणाम् अर्थाय कंसादिशत्रुवधलक्षणाय प्रयोजनाय महत् गम्भीरं गर्गस्य वचनं यथा॥ २३॥ २४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अङ्ग हे उद्धव! लीलया अपाङ्गेन निरीक्षितम्॥ २१॥

आक्रीडान् क्रीडास्थानभूतान् सरिदादीन्॥ २२॥

महद्गृढार्थं गर्गस्य वचनं यथा तथैवाहं सुरोत्तमौ सर्वदेवश्रेष्ठौ मन्ये॥ २३॥

तयोः कर्माण्यपि तौ भगवन्ताविति सूचयन्तीत्याह। कंसमित्यादित्रिभिः॥ २४—२६॥

भाषा टीका।

कृष्णचंद्र के चरित्र लीला सहितनेत्र कटाक्षों से देखना हसना बोलना इनको स्मरण करने से हमारी सब क्रिया शिथिळ होजाती हैं॥ २१॥

यमुनानदी गोवर्धन पर्वत वन के सब देश जो कि मुकुंद के पदों से भूषित हैं और जो उनके क्रीडा के स्थान उनों को देखने से हम लोगों के मन कृष्ण मय होजाते हैं॥ २२॥

हमको मालूम होता है कि कृष्ण राम दोनों देवताओं में श्रेष्ठ हैं देवताओं के बडे कामों को करने के वास्ते इहां आये हैं जैसे कि गर्गजी का वचन है॥ २३॥

दश हजार हाथि के बल वाले कंस को तथा दो मल्लों को तथा कुवलया पीड हस्ति को ऐसा मारा कि जैसे सिंह मृगों को मारता है॥ २४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इभराड् यष्टिमिव तालत्रयप्रमाणं धनुर्बभञ्ज॥ २५-३०॥

। श्रीशुक उवाच ।

इति संस्मृत्य संस्मृत्य नन्दः कृष्णानुरक्तधीः ।
अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः ॥ २७ ॥
यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ।
शृण्वन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तालः षष्टिहस्तप्रमाणकपरिणततालवृक्षः । तालो नवचित-स्तय इति देवबोधः । एकेन वामेनैव । यष्टिमिव इक्षुदण्ड-मिव बभञ्ज ॥ २५ ॥

येनेति येन येनेत्यर्थः ॥ २६ ॥

स्वत एव कृष्णानुरक्तधीः । विशेषत इति पूर्वोक्तं माधुर्यं प्रभावमयनिजपालनञ्च सम्यक् मुहुः स्मृत्वा प्रेमवेगविवशः अत एवाश्रुपूर्णकण्ठः सन् तूष्णीमभूत् परं किञ्चिद्वक्तुं न शशाके-त्यर्थः । वीप्सया स्मरणस्य त्यागे शक्त्यभावो बोध्यते ॥ २७ ॥

पुत्रस्येति सुरोत्तमावित्यादि श्रवणेऽपि प्रत्युत तया निश्चिते तत्रैवावेशो दर्शितः । चरितानि प्रभावमयानि । चकारात् किमुत सौन्दर्यादीनीत्यर्थः । अतएव वर्त्तमान शतृशानाभ्यां प्रवृत्ति-मात्रेणैव नैरन्तर्येण चैवेत्यर्थः । अव समन्तात् निजवस्त्रादिक-माप्लाव्य अस्राक्षीत् विससर्जैव केवलं ननु किञ्चित् कर्त्तुं प्रष्टुं वक्तुं वा शशाकेत्यर्थः । एवं व्रजेश्वरादावपि विशेष उक्तः स्नेहप्रस्नुतपयःपयोधरा च जातेत्यर्थः । इति चिरकालेऽतीतेऽपि तादृशत्वात् स्वाभाविकमहास्नेहः सूचितः ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तालं परिमाणविशेषः ॥ २५—३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तालं परिमाणविशेषः तत्त्रयपरिमितं महासारमयोवद्दृढं धनुर्बभञ्ज यथा गजेन्द्रो यष्टिमिक्षुदण्डं तद्वत् तथैकेन हस्तेन गिरिं गोवर्द्धनं सप्ताहमित्यत्यन्तसंयोगे द्वितीया सप्तदिवसपर्यन्त-मदधादधार ॥ २५ ॥

तथा देवदानवजयिनः प्रलम्बाद्यो दैत्या येन श्रीकृष्णेन हताः एतान्यमानुषाणि चेष्टितानि परत्वलिङ्गानीति भावः । येनेति । प्रयो-ज्यप्रयोजककर्त्रोस्तन्त्रेण निर्देशः अतः प्रलम्बो हत इत्यस्या-विरोधः ॥ २६ ॥

इत्थमिति कृष्णेऽनुरक्तानुरागयुक्ता धीर्यस्य अश्रूणि कण्ठे यस्य सः प्रेमसंरम्भेण प्रेमोद्रेकेण विह्वलः परवशः तूष्णीं बभूव न किञ्चिदुवाच ॥ २७ ॥

तथा यशोदा च वर्ण्यमानानि भर्त्रेति शेषः । पुत्रचरितानि शृण्वन्ती स्नेहेन स्नुतौ प्रस्नुतौ पयोधरौ स्तनौ यस्याः साश्रू-ण्यवास्राक्षीत् दृग्जनेत्रजलबिन्दून् ववर्ष ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अङ्कुष्ठमध्यमे विस्तृते यत्परिमाणं स ताल इत्युच्यते एतादृ-शतालत्रयपरिमाणं प्रादेशस्तालगोकर्णइति याष्टिमिक्षुदण्डम् ॥ २५ ॥

सुरासुराञ्जयन्तीति सुरासुरजितः ॥ २६ ॥

प्रेमप्रसरेण प्रेमसन्दोहेन विह्वलः विवशः ॥ २७ ॥

अवास्राक्षीत् निरन्तरममुञ्चत् ॥ २८ ॥ २९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

राजसीं लीलामाह । तालत्रयमिति । तालवृक्षस्य शतत्रयहस्त-परिमितस्य यावान् विस्तारः तालानां त्रयं यत्रेति । महासारमिति । अतिदृढधनुर्यष्टीमिति । धनुरेव यष्टिरूपमनन्त्रम् अनन्त्रस्य भङ्गः सुतरामेवाशक्यः अत्रापि प्रकारान्तरेण भङ्गाभावाय दृष्टान्तः इभराडिति यष्टिमिव वा । इभराडिति । यष्टिरपि इक्षुः यथे-क्षुदण्डं मदकरी ति वाक्यैकवाक्यतया तत्रापि एकेनैव हस्तेनेत्यं-त्रेऽपि सम्बध्यते सप्ताहमदधाद्गिरिमिति ॥ २५ ॥

तामसीमाह । प्रलम्ब इति । नात्र क्रमो विवक्षितः आदि-शब्देन वत्सादयः सर्व एव दैत्याः मानुषैरवध्याः किञ्च सुरा-सुरजितः सुरा असुराश्च जिता यैस्ते सर्वे अस्मत्समक्षमेव लीलयैव हताः अतः सामर्थ्येनापि देवोत्तमत्वमेवेति निर्द्धारः ॥ २६ ॥

एवं स्निग्धाय भगवद्गुणानुवर्णने यज्जाव्यं तज्जातमित्याह । अयमर्थः नोद्धवो बोधितः किंतु पदार्थस्मरणाभिलाप एवेति उत्तमाधिकारं बोधयितुं संस्मृत्य संस्मृत्येत्युक्तं नतूक्त्वोक्त्वा यत्रैव स्मरणानन्तरं वचने सामर्थ्यं बुद्धेरनुरागः मनस उत्कण्ठा तत्रैव तूष्णीं स्थित इति स्मरणतूष्णींभावयोर्मध्ये भावोदयमवान्तर-व्यापाररूपमुत्पन्नामित्याह । कृष्णानुरक्तधीरुत्कण्ठ इति । चित्तस्य स्मरणं बुद्धेरनुरागः मनस उत्कण्ठा मनश्च वाचः पूर्वरूपं तत्र अनुरक्तबुद्ध्या औत्कण्ठ्येन च ज्ञानक्रियारूपाभ्यां शब्दोत्पत्ति-प्रतिबन्धात्तूष्णींमभवत् । तर्हि तयोः प्रतिबन्धकत्वेन न पुरुषा-र्थपर्यवसायित्वमित्याशङ्क्य तथा स्वतन्त्रकार्यमाह । प्रेमप्रसरेण प्रेमप्रचारेण विह्वलो जात इति ॥ २७ ॥

एवं यशोदापि जातेत्याह । यशोदेति । नन्देनैव वर्ण्यमानानि भगवच्चरितानि शृण्वन्ती चकारात्स्मरन्ती च अन्तःप्रेम-पूर्णा अश्रूणि नेत्रयोरस्राक्षीद्विरहव्याकुला जाता अन्तर्भगवदावे-शेन दृढप्रेम्णा स्नुतपयोधरा जाता यथानन्दे आवेशो विरहश्च एवमस्यामपि द्वयं वर्णितम् ॥ २८ ॥

तयोरित्थं भगवति कृष्णे नन्दयशोदयोः ।
वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा ॥ २९ ॥

। उद्धव उवाच ।

युवां श्लाघ्यतमौ नूनं देहिनामिह मानद ! ।
नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ॥ ३० ॥
एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम् ।
अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ ॥ ३१ ॥
यस्मिन् जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् ।
निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तालः षष्टिहस्तप्रमाणकपरिणततालवृक्षः एकेन वामेनैव ॥ २५ ॥ २६ ॥

कृष्णानुरक्तधीरिति । स्मृत्यारूढेन महैश्वर्य्येणापि हन्त हन्त एतादृशैश्वर्य्यवता गुणरत्नाकरेण स्वपुत्रेण दुरदृष्टवशाद्विश्लिष्टोऽवभूवमिति कृष्णे अनुरक्तेव धीर्न तु वसुदेवस्यैवैश्वर्य्यगन्धेनापि शिथिलितस्वसम्बन्धासंकुचितानुरागा धीर्यस्य सः । प्रेमप्रसरविह्वल इति । अतिप्रमाणाधिक्यवतः प्रेम्णोऽगस्त्यस्याग्रे स्वलैश्वर्यस्य समुद्रोऽपि कियानिति भावः ॥ २७ ॥

एवं कृष्णस्य पिता नन्दो गाम्भीर्य्यबलादेव धृतिं धृत्वा लौकिक्या रीत्या उद्धवमातिथ्येन संमानयितुं सम्यगीक्षितुं परिचेतुं कुशलं प्रष्टुं कृष्णस्य प्रभावमयं चरितं च वक्तुं शशाक माता श्रीयशोदा त्वधैर्य्यसिन्धुभ्रमिनिमज्जनोन्मज्जनवती तत्तत् किमपि कर्त्तुं न शशाकेत्याह । यशोदेति । मथुराप्रस्थानदिनमारभ्यैव शतशः स्त्रीपुंसजनैः प्रबोध्यमानापि पुत्रमुखं विना अन्यत् किमप्यहं न द्रक्ष्यामीति प्रतिक्षणमेव प्रतिजनानां मुद्रितनेत्रैव अश्रूणि अत्र समन्तात् निजवस्त्रादिकमाप्लाव्य अस्राक्षीत् विससर्ज्जैव केवलं नतूद्धवं परिचेतुं वात्सल्यविषयीकर्त्तुं स्वयं किंचित् प्रष्टुं पुत्रं प्रति किञ्चित् संदेष्टुं च शशाकेत्यर्थः । स्नेहेन पुत्रविषयकेण स्नुतपयसौ पयोधरौ यस्याः श्लेषेण स्नुतानां वर्षणे जलधारायमाणा ॥ २८ ॥

---

भाषा टीका ।

तीन ताल बरोबर लंबे धनुष को उनने वैसा तोडा है जैसे बडा हाथी लाठी को तोड देवै सो भी एक ही हाथ से तोडा है और पहिले एक हाथ से सात दिन तक गोवर्धनपर्वत को धारण किया है ॥ २५ ॥

प्रलंब धेनुक अरिष्ट तृणावर्त्त बकासुर आदिक दैत्यों को मारा है जिन ने कि सुर असुरों को जीत लिया है तिनको कृष्ण ने सहजही मार दिया ॥ २६ ॥

श्रीशुकदेवजी बोले इस प्रकार से स्मरण कर कर के नंदजी श्रीकृष्ण के विषे बुद्धि से अनुरक्त होगये बडी उत्कंठा होने से प्रेम के फैलने से विह्वल होकर चुप होगये ॥ २७ ॥

यशोदाजी भी वर्णन किये हुये पुत्र के चरित्रों को सुनकर आंसुओं को गिराती भई उनके स्तनों से दुग्ध बहने लगा ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अखिलगुरुत्वमेव जनकत्वेन नियन्तृत्वेन चाह । एताविति । रामो मुकुन्दश्चेत्येतौ विश्वस्य बीजयोनी निमित्तोपादाने ननु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह । पुरुषः प्रधानमिति । पुरुषोंऽशः प्रधानं शक्तिः अतः प्रधानपुरुषावप्येतावेवेत्यर्थः । एवं जनकत्वमुक्तं किञ्च अन्वीयभूतेषु भूतेष्वनुप्रविश्य भूतानां तदुपहितस्य विलक्षणस्य नानाभेदस्य ज्ञानस्य जीवस्य चेशाते ईश्वरौ नियन्तारौ भवतः कुतः पुराणावनादी अनादित्वात्कारणत्वं तनश्च नियन्तृत्वमित्यर्थः ॥ ३१ ॥

ननु सुखादिकर्माधीनात्मनुष्यादिजन्मदर्शनाच्च तस्यान्येभ्यः को विशेष इत्याशङ्क्याह । यस्मिन्निति द्वाभ्याम् । कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवानर्कवर्णः शुद्धसत्त्वमूर्त्तिः सन् परां गतिं तत्पदं याति ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तयोः कीदृशो भावो तौ भवेतामिति सविस्मयं परिचिन्त्यमानयोः श्रीनन्दयशोदयोरित्थं पूर्वोक्तप्रकारेणानुरागं निरन्तरमाह । कृष्णेतिप्रश्रयमयस्नेहं भगवति सर्वेश्वरे वीक्ष्य विशेषेण साक्षात्कृत्य तत्रापि कृष्णे परमपूर्णाविर्भावे तस्मिन् वीक्ष्य तत्रापि परमं सर्वोत्कृष्टं वीक्ष्य उद्धवो नन्दं तस्यैव प्राधान्यात् तस्याग्रे प्रवृत्तत्वाच्च श्रीयशोदायास्तु परमधैर्य्येण तत्प्रत्यशक्त्या तमेवाह उच्चैः सान्त्वयितुमिति शेषः । तत्र मुदा अहो मम भाग्यम् एतादृशदर्शनमपि जातमिति हर्षेण तदंशाविष्कारेणैवोपलक्षितः ननु तद्दुःखदर्शनमयदुःखांशाविष्कारेणेत्यर्थः । तस्य हि नन्दैश्वर्यस्फूर्त्तेरेव प्राधान्यात् तदनुरागस्यापि महिमांशस्फूर्त्तिरेव

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रथमतो जाता ननु वैयग्र्यांशस्फूर्त्तिः। केवलवैयग्र्यांशस्फूर्त्तेर्योग्यत्वे तु सान्त्वनानधिकारिणं मन्यमानो भगवानपि न तं प्रास्थापयिष्यदिति भावः॥ २९॥

अतस्तत्र प्रथमतस्तन्महिमवर्णनद्वारेव प्रोत्साह्य तौ सान्त्वयितुमिच्छन् तज्जातीयश्रीनन्दवाक्यावसरं प्राप्य तथैवाह। युवामिति द्वाभ्याम्। इह श्रीकृष्णावतारावतीर्णतदीयमहाभक्तगणपूर्णे जगति देहिनां तत्पर्यन्तानां सर्वेषां मध्ये ये श्लाघ्याः श्रीनारदादयः श्रीगोकुलवास्यन्तास्तेषामपि मध्ये श्रेष्ठौ हे मानदेति एवं युवाभ्यामेव तदीयानामस्माकं मानो दत्तः यतः श्रीकृष्णसम्बन्धिनः एवंविधा जाता इति लोकैः कीर्त्तयिष्यत इति भावः। यद्यस्मान्नारायणे नारस्य मत्स्यकूर्मप्रभृतिपुरुषावतारसमूहस्याप्याश्रयेऽखिलगुरौ परमव्योमनाथादितोऽपि परमोत्तमप्रकाशे उभयथा परमोपादेये परमदुर्लभे परमभाग्यप्रापाश्रयमात्रे इत्यर्थः। तस्मिन्नीदृशी पुत्रभावनया तद्वश्यतातिशयकारिणी मतिः कृता विधत्ते युवाभ्यामेवेति शेषः॥ ३०॥

हि एव एतावेव मुकुन्दश्चेति चकारान्वयः। भूतेषु प्राणिषु अन्वीय तद्विलक्षणस्य ज्ञानस्य शुद्धचिन्मात्रस्वरूपस्य जीवस्येशाते चकाराद्भूतानाञ्च स्वाधिरार्थः। इमाविति पुनरुक्तिस्तयोरेव तादृशतां निर्द्धारयति। अन्यत्तैः। तत्रानादित्वात् कारणत्वमिव स्वातन्त्र्येणेति वैशिष्ट्यं ज्ञेयं जीवादेरप्यनादित्वादिति यद्वा। नारायणत्वमखिलगुरुत्वमप्याह। एताविति। अंशांशिनोरभिन्नत्वाद्येन रामेण सांकस्वरूपो यो मुकुन्दस्तावेतौ रामकृष्णाभिधनया पृथग्दृश्यमानावेतावेव च विश्वस्य चकारादवतारादीनां च बीजयोनी द्वावपि निमित्तोपादानरूपौ विश्वस्य तत्तद्रूपतया नाम्नापि पुरुषः प्रधानमिति विख्यातौ। इमावेव तदंतद्द्वयं रामकृष्णरूपेण पुराणवचनादिसिद्धौ सन्तौ भूतेषु अन्वीय तत्तदुपाध्यन्तर्यामिरूपेणानुप्रविश्य विलक्षणस्य ज्ञानस्य चाद्वयज्ञानस्वरूपस्य ब्रह्मणोऽपीशाते प्रकाशनाप्रकाशनयोः समर्थौ भवतः। यथोक्तं "प्रकृतिर्यस्योपादानमाधारः पुरुषः परः। सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम्"मिति। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति ब्रह्मणो हि प्रतिष्ठाहममिति श्रीभगवद्गीताभ्यः। "मदीयं महिमानञ्च परंब्रह्मेति शब्दितम्। वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि" इति॥ ३१॥

तत्र तयोश्चेतःप्रसत्तिमवेक्ष्य तदेव पुनः कैमुत्येन विवृणोति। यस्मिन्निति युग्मकेन। तत्र कृष्णे एकस्य निर्देशो द्वयोरभेदाभिप्रायेण जनो यः कश्चिदपि जीवः मरणसमये क्षणमपि विशुद्धमपि मनः समावेश्य यथा कथञ्चिल्लब्धपदं कृत्वा आशु तत्पदं ब्रह्ममयः श्रीभगवत्पार्षदरूपतया चिच्छक्तिवृत्तिः शुद्धस्वरूप एव नादसमूर्त्तित्वेन स्वरूपप्रकाशप्रचुरः ननु प्राधानिकवत्तिर्हितनन्दशः अतोऽर्कवर्णः स्वयमेव प्रकाशमानोऽन्यांश्च प्रकाशयन्नित्यर्थः। आदित्यवर्णः आदित्यवर्णं तमसः परस्तादितिवत्। अमिळतेति तैर्व्याख्यातं तदात्मा स्वांश नामीश्वररूपाणां विभिन्नांशानां च जीवानां मूलरूपः हेतुश्च सर्वप्रकाशक इति ज्ञेयम्॥ ३२॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

एतौ रामो मुकुन्दश्च बीजयोनी बीजभूतानां पृथिव्यादीनां कारणभूतौ पुरुषप्रधानं प्रधानं पुरुषमन्वीय अत एव योनिभूता इत्यर्थः। विलक्षणस्य ज्ञानस्य ईशाते प्रवर्त्तकावित्यर्थः॥ ३१॥

तदेव विवृणोति। यस्मिन्निति। निर्हृत्य दग्ध्वा ब्रह्ममयः ज्ञानप्रचुरः अर्कवर्णः अप्राकृतरूपः॥ ३२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

इत्थं तयोर्नन्दयशोदयोः भगवति षाड्गुण्यपूर्णे श्रीकृष्णे परमं सर्वोत्कृष्टमनुरागमवलोक्य उद्धवः मुदा नन्दमाह॥ २९॥

उक्तिमेवाह। युवामित्यादिना। एवं निशा सेत्यतः प्राक्तनेन ग्रन्थेन। हे मानद! युवां दम्पती देवानामपि श्लाघ्यतमौ पूज्यतमावित्यर्थः कुतः यत् यस्मादखिलगुरौ नारायणे श्रीभगवति कृष्णे एवंविधाऽनुरागयुक्ता मतिः कृता अनेन कृतकृत्यत्वं सूचितं हितकृत्त्वेन जनकत्वेनाखिलगुरुत्वं विवक्षितम्॥ ३०॥

तदेवोपपादयति। एताविति। रामो मुकुन्दश्चेत्येतौ विश्वस्य बीजयोनी बीजभूतानां पृथिव्यादीनां कारणभूतौ ननु विश्वसजातीयौ प्रकृतिपुरुषौ तस्य बीजयोनी नैतावित्यत आह। पुरुषः प्रधानं प्रधानपुरुषशरीरकावेतावेव बीजयोनी इत्यर्थः। अनेन जनकत्वं स्पष्टीकृतम् इमौ पुराणौ पुरुषौ विलक्षणेषु देवमनुष्यादिरूपेण नानाविधेषु भूतेष्वन्वीयान्तः प्रविश्य ज्ञानस्य ईशाते विलक्षणस्येति पाठे शब्दादिविषयगोचरस्य ज्ञानस्येशाते नियन्तारौ प्रवर्त्तकौ भवत इति यावत्। अनेन नियन्तृत्वमुक्तं यद्वा विलक्षणस्य ज्ञानस्येति सम्यग्ज्ञानस्य प्रवर्त्तकत्वेन हितकृत्त्वमीशात इति नियन्तृत्वमुक्तम्॥ ३१॥

यत्कृतामतिरीदृशीत्यनेन सूचितां कृतकृत्यतामेवोपपादयति। यस्मिन्निति द्वाभ्याम्। यस्मिन्नित्यस्य तस्मिन्नित्युत्तरेणान्वयः क्षणं क्षणमात्रमपि विशुद्धं विषयान्तरविमुखं मनो यस्मिन्निधाय कर्माशयं कर्मवासनां निर्हृत्य दग्ध्वा ब्रह्ममयः ज्ञानप्रचुरः अर्कवर्णोऽप्राकृतरूपः परां गतिं तत्पदं याति॥ ३२॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

नूनमिदानीम्॥ ३०॥

नारायणशब्दार्थौ पेरावतो नागराज इतिवत् नारायणो नाम कश्चित् किन्न स्यादखिलगुरुश्च पाषाणवदिति तत्राह। एताविति। एतौ कृष्णरामौ विश्वस्य प्रपञ्चस्य बीजयोनी बीजत्वेन रतिहेतुत्वात्त्रेतस्त्वेनोपजीव्यत्वेन वा योनित्वेन स्वमहिम्ना रतो निधानस्थानत्वेन कारणत्वेन वा कीर्त्तिताविति शेषः। बीजं शुक्रे फले सस्याद्ये इत्यादय. योनिः स्त्रीणां भगस्थाने कारणे ताम्रके पणे इति च यद्वा विश्वनाम्नो हरेः बीजं फले निष्पन्नरूपौ योनी गोवर्धनस्योद्धरणादिकर्मणा तत्रत्य योग्यौ च योग्यं यत्नक्षमारूपध्यानाराधिषु चन्दन इति लाभे निष्पत्तिभोगश्च बीजं फलधने फलमिति च यद्ययं न विष्णुस्तर्हि गोवर्धनोद्धरणादिकर्म न कुर्यात् मानवबलासाध्यत्वादित्यादि हिशब्दो वाक्ति अजामेकां लोहितशुक्लकृष्णां प्रधानादिपुरुषजमित्यादिना प्रकृतेर्बीजयोनित्व प्रतीतेः कथमेतयोरुच्यत इति तत्राह। इमाविति। यस्त्वेष पुरुषः प्रकृतिरिति

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतेः प्रधानं प्रकृतिर्मूलकारणमित्यर्थः। अनेन विरिञ्चस्य कारणत्ववाच्यपि चित्प्रयुक्तेत्याशयेनाह । पुरुष इति । "प्रकृतिं पुरुषश्चैव प्रविष्टं पुरुषोत्तम" इत्यादेः तत्कारणत्ववाच्योऽपि गतिरुक्ता भवतात्त असङ्गस्य तत्प्रवेशः कथमित्यतउक्तं पुराण इति पुरमणति प्राप्नोतीति तद्वानुप्राविशदिति श्रुतेरसङ्गस्यापि प्रवेशो युज्यत इत्यर्थः यद्वा । बीजयोनित्वे हेतुमाह । प्रधानमिति प्रधानत्वात् सर्वस्मादुत्तमत्वात् एकमेवाद्वितीयमिति श्रुतिः उत्तमत्वं कुत इत्यत्राह । पुरुष इति । पुरातनपुरुषत्वात् अन्येषामर्वाचीनपुरुषत्वादित्यर्थः । केवलमवतारप्रयोजनं कंसादिहननं न भवति किन्तु स्वोपदिष्टज्ञानरक्षणं चेति भावेनाह। अन्वीयेति । इमौ पुराणौ पूर्णानन्दौ कृष्णरामौ विलक्षणेषु विविधलक्षणेषु नानाविधव्यावर्तकधर्मेषु भूतेषु अन्वीय अवतीर्य विज्ञाय व्यासाद्यात्मना विशिष्टज्ञानमुत्पाद्यासुरजनप्रकृतिजनेन तन्नाशं विज्ञाय तद्धननेन तिरोहितज्ञानोपदेशेन च ज्ञानस्येशाते समर्थयेते रक्षत इत्यन्वयः ॥ ३१ ॥

जन्मादिकं श्रोतव्यं श्रीकृष्णस्यैव मोक्षहेतुत्वात्तस्येति भावेनाह । यस्मिन्निति । कर्माशयं शरीरारम्भकर्मसमूहं यस्मिन्मनो वा निगृह्य विनियम्य विनाश्य ब्रह्ममयः ज्ञानप्रधान इत्यर्थः । अर्कवत्स्फटिकवद्वर्णः प्रकाशो यस्य स तथा अतिस्वच्छ इत्यर्थः ॥ ३२ ॥

———

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मुदा अहो मम भाग्यम् एतादृशदर्शनमपि जातमिति । हर्षांशाविष्कारेणोपलक्षितः । नतु तद्दुःखांशाविष्कारेणेत्यर्थः । तस्य हि तदैश्वर्यांशस्फूर्त्तेरेव प्राधान्यात्तदनुरागस्यापि महिमांशस्फूर्त्तिरेव तावज्जाता नतु वैयग्र्यांशस्फूर्त्तिः वैयग्र्यांशमयत्वे तु सान्त्वनानधिकारिता स्यादिति ॥ २९ ॥

अतस्तत्र प्रथमतः तन्महिमवर्णनद्वारैव प्रोत्साह्य तौ सान्त्वयितुमिच्छन् तज्जातीयश्रीनन्दवाक्यावसरं प्राप्य तथैवाह । युवामिति द्वाभ्याम् । नारायणे नारस्य महत्तत्त्वप्रभृतिपुरुषाकारसमूहस्याप्याश्रये अखिलगुरौ परमव्योमाधिपाद्वितोऽपि महत्त्वप्रकाशे मतिः तद्धृदयताकारी वात्सल्यमयो भावः । भूतेषु प्राणिषु तद्विलक्षणस्य ज्ञानस्य शुद्धचिन्मात्रस्वरूपस्य जीवस्येशाते यद्वा । नारायणत्वमखिलगुरुत्वमप्याह । एतावितिं । विश्वस्य चकारादवतारादीनाञ्च यतः भूतेषु सर्वभूतेषु अन्वीयाऽपि तद्विलक्षणस्यान्तर्यामिणः तथा तादृशतया स्थितस्य ज्ञानस्य चिन्मात्रस्य प्रधानस्वरूपस्यापि ईशाते प्रकाशनाप्रकाशनयोः प्रभवतः । तयोरप्याश्रयत्वात् विष्टभ्याहमित्यादि प्रसङ्गो हि प्रसिद्धाहमित्यादिश्रीगीताभ्यः ॥ ३० ॥ ३१ ॥

तत्र तयोरधिकप्रवृत्तिमदङ्ग्रा तदेव पुनः कैमुत्येन विवृणोति । यस्मिन्निति द्वाभ्याम् । जनः यः कश्चिदपि जीवः मरणसमयेऽपि क्षणमपि अविशुद्धमपि ब्रह्ममयः श्रीभगवत्पार्षदरूपतया चिच्छक्तिवृत्तिशुद्धसत्त्वस्यैव तादृशमूर्तित्वेन स्वरूपप्रकाशप्रचुरः । नतु प्राधानिकवर्त्तिरोहिततदंशः । अतोऽर्कवर्णः स्वयमेव प्रकाशमानोऽन्यांश्च प्रकाशयन्नित्यर्थः । आदित्यवर्णं तमसः परस्तादित्यादिवत् ननु नारायणश्चतुर्भुजस्तत्राह । सर्वकारणं यत्परं तदेवामर्त्याकारा मूर्त्तिर्यस्य सः नराकृति परं ब्रह्मेत्यर्थः । भावमीदृशानुरागं तथाप्यजातशान्तौ प्रत्युत त एवहितेऽपि तदुत्कर्षमेवं कथयन्तीति पितृत्वे हेतुः । भगवानपि सात्वतानां भक्तानां पतिः पालकः । तद्धर्मोद्धसुखसम्पादकः । ये यथा मामित्यादेः तत्तस्माद्धेताः सत्यं सपथमेव कुर्वन्नास्त इत्यर्थः । सत्यं शपथतथ्ययोरित्यमरः ॥ ३२—३५ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उभयेनापि अनुराग एव भाति परमप्रेमात्मको निरूपितो भवति परमं लौकिकः अयं च ज्ञानेनालौकिकः कर्तव्यः तत्कर्तुं प्रेषित उद्धव इति तदुपयोगिसर्वमाहात्म्याह । तयोरित्थमिति । उभयोरपि भक्तौ मुख्यत्वान्नन्दस्य प्रथमतो नन्दग्रहणमसहजः सम्बन्धो लौकिको नास्तीति नन्दाद्यशोदायां विशेषः नन्दयशोदयोः भगवति कृष्णे आविर्भूते सदानन्दे परमनुरागं सर्वक्रियात्याजनपूर्वकं सर्वभावभगवद्ग्रहणात्मकं वीक्ष्य यशोदा कदाचिल्लज्जिता भविष्यतीति नन्दमाह । यतः स उद्धव उत्सवात्मकः तस्मिन्नागते शोकांशेन न भाव्यमिति मुदेति भगवद्भक्तान् दृष्ट्वा संभाषणेनाहमति कृतार्थो भविष्यामीति वा स्नेहमभिनन्द्य विषयस्यालौकिकत्वं सम्बोधयति । येन माहात्म्यज्ञानपूर्वकः सर्वतोऽधिकः स्नेहो भवति ॥ २९ ॥

युवामिति । प्रथमतोऽभिनन्दनं तत्रापीह भूमौ युवां यशोदानन्दौ श्लाघ्यतमौ सत्कर्मणा श्लाघ्या भवन्ति । ततो ऽपि ज्ञानेन ततोऽपि भक्त्या भक्तावपि परमप्रेम सर्वोत्कृष्टं प्रमाणाच्च प्रमेयबलमधिकं तेन स्वतन्त्रभक्त्यपेक्षयापीयं प्रमेयभक्तिः रसाला अत आह । नूनमिति । मानदेति सम्बोधनं मह्यं मानं प्रयच्छसीति मद्वाक्यमपि सत्यतया स्वीकुर्वित्यर्थः । ननु पुत्रे स्नेहातिशयः कथं स्तूयते तत्राह । नारायण इति । अयं हि नारायणो मूलपुरुषः नारायणशब्दोऽत्र पुरुषोत्तमवाची अखिलगुराविति प्रमाणरूपोऽप सर्ववेदवक्ता नारायणः पुरुषोत्तम एवेति अतः सर्वशास्त्रार्थरूपे प्रमेयबलवति यद्यस्मात्कारणात् एतादृशी मतिः कृता देवोत्तमत्वं तु नन्दनोत्कर्षकोटिकसंभावनया ज्ञातमेव तस्मादसंभावना न भविष्यतीति तत्र पुरुषोत्तमत्वं बोधितवान् अतः परं तस्मादधिको विषयो नास्ति भक्तेरप्यधिकं कर्तव्यं नास्तीति वक्तव्यम् ॥ ३० ॥

तत्र प्रथमं भगवतः सकाशादन्यो महान्नास्तीति आह । एतौ हीति द्वाभ्याम् । धर्म्युत्कर्षेण धर्मोत्कर्षेण च माहात्म्यं द्विविधमिति तत्र प्रथममाह । एक एव ताभ्यां जात इति आवेशितमपि ज्ञापयितुं तुल्यतया सम्बन्धं च दूरीकर्तुं कृष्णरामौ निर्दिशति । एतौ हि निश्चयेन विश्वस्य बीजयोनी समवायिकारणं तन्निमित्तकारणं च बीजं हि समवायि कारणं तत्र भगवत्सामर्थ्येन सजातीयत्वमापद्यमानाः भूम्यवयवाः पुष्णन्ति ततो वर्द्धते सजातीयैव योनिरपि श्रूयते विजातीया नोत्पद्यते उत्पन्नमन्यथा स्यादेतदुभयमेव दृष्टं कारणम् अन्यत्तु जलान्नादिसाधनपोषकत्वेन तत्र यथाकप्रकारेण भवनां वृद्धिह्रासौ आविर्भावतिरोभावौ न संगच्छेयातां ततो भगवानुभयात्मको भवति लोके तु उभयोः साधकाः अन्येऽपि श्रूयन्ते अत्र भगवानेवेति तदेकप्रयोजनाय च तथा जात इति न

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सहकार्यपेक्षा अत एव प्रथमं प्रकृतिपुरुषरूपेण भवति एवं सति युक्तिर्ब्रह्मणि संगच्छते ब्रह्मवादे तु तदेव सर्वशक्तियुतं क्रमेणैवाभिव्यक्तो भविष्यामीति प्रथमस्तष्टौ तादृशमुत्पाद्य क्षयवृद्ध्यनपेक्षं वा तादृशमेवोत्पाद्य पश्चाल्लोके बहुप्रकारसिद्ध्यर्थमेवैकस्य बहुधोपयोगाय शक्तिसमूहं विभज्य बीजयोन्यादिभावेन वस्तूनि परिकल्प्य स्थापितवानिति विशेषः । उभयथापि पश्चात्प्रकारद्वयं सिद्धमिति मन्तव्यम् अनुभवसिद्धत्वात् तथात्रापि मोक्षसृष्ट्यादिचतुर्विधपुरुषार्थान् साधयितुं सर्वस्यापि सर्वं माभवत्विति स्वशक्तिं विभज्य मोक्षभक्त्योः स्वयं बीजं योनिश्च रामः सृष्ट्यादौ नु विपरीतमिति उभावपि योनिबीजभावेन सर्वलोकानां हितार्थमवतीर्णौ अत एकस्यैव हितार्थत्वेन ग्रहणेन कोऽपि पुरुषार्थः सिद्ध्येत् अत एव सर्वत्राभ्युदयफलेषु रामस्य प्राधान्यं भगवतः सहभावमापन्नं क्वचिद्रामस्य प्राधान्यं प्रथमनिर्देशेन साक्षात् महती शक्तिः कृष्ण एवेति न क्वापि सहभावो निरूपितः निःश्रेयसे तु रामस्य सहभावः साधारण्यं द्वयोस्तुल्यतया निरूपणमिति सर्वत्रैव विमर्शः अतो भगवतो जगत्कारणत्वं मोक्षदातृत्वं निरूपयन् निरूपयति एषा शक्तिर्हिशब्देनोच्यते एतौ कृष्णरामौ विश्वस्य बीजयोनी उभावपि तौ गणयति । मुकुन्द इति । नाम्नाभ्युदयनिःश्रेयसफलं ज्ञापितम् एतानिति भक्त्या प्रादुर्भूतौ प्रदर्शयन्निवाह द्रष्टुमेष्याम इत्यनेन सत्वं निरूपितं द्विरूपता किमर्थेत्याशङ्क्य दृष्टान्तमिव वदन् स्वरूपद्वयं निर्दिशति पुरुषः प्रधानमिति अनयोः प्रकृते विशेषमाह । अन्वीय सर्वेषु भूतेषु विलक्षणस्य वि: काल एव लक्षणं यस्य तस्याभ्युदयस्येशानौ तथा ज्ञानस्य च मोक्षसाधकस्य विलक्षणत्वं प्रापञ्चिकाद्वैलक्षण्यं चकाराद्भक्तेरपि ईशाते समर्थौ भवतः एतदर्थमेवैतौ प्रादुर्भूतावित्यर्थः । एवं सति ब्रह्म भगवान् कार्यमिव एतत्प्रयोजकावेतावाविर्भूताविति शङ्का स्यात् तद्व्यावृत्त्यर्थमाह । इमौ पुराणाविति । एतावेवं भूतौ पूर्वसिद्धावेवान्तमूर्त्तिनाज्ञगतः ॥ ३१ ॥

एवं स्वरूपोत्कर्षमुक्त्वा धर्मोत्कर्षमाह । यस्मिन्जन इति । यद्यपि परः सहस्त्रं भगवद्धर्माः सन्ति तेषां माहात्म्यं च भगवत एव धर्मधर्मिणोरभेदात् भगवानेव धर्मरूपेण भवतीति सिद्धान्तात् धर्मान् परित्यज्य प्रमाणबलेन भावकेन भगवता परिकल्पितं भगवद्रूपं सर्वेषां स्वाधीनं भुदा तस्य माहात्म्यमाह यस्मिन्मानसे रूपे जनः प्राणी प्राणवियोगकाले क्षणं मनो विशुद्धं समावेश्य कर्माशयं निर्हृत्य परां गतिं याति साधनान्तरनिरपेक्षत्वज्ञापनाय यस्मिन्मानसे रूप इत्युक्तं जन इति सामान्यः ननु ब्राह्मण ऋषिर्वा तत्रापि प्राणवियोगकाले सर्वेन्द्रियवैकल्ये अशुद्धावस्थायां क्षणं चित्तं समावेश्य ननु बहुकालं नापि वा देहयोरनुवृत्तिः तदपि कथं सर्वफलसाधकमिति विशुद्धमित्युक्तम् अन्यथा कामनायां तदेव फलिष्यतीति विशेषेण शुद्धिः कामनाशाय एव ननु "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतोऽभवत्यत्र ब्रह्म समश्नुत" इति श्रुतेः कामने भाव एव पुरुषार्थसिद्धौ निष्कामं सदात्मगाम्येव भवतीति निरूप्यते येनान्यथा सिद्धं स्यात् किन्तु क्षणं सम्यगावेशेनैव मनो विशुद्धमपि भवति ततः कर्माशयं कर्माण्याशेरते ऽस्मि[illegible] संघातं च निवर्त्य स्वाभिमानपरित्यागेन मुत्तमिव तदिति ज्वालानामिव तं कारणभूतमपि संघातं दग्ध्वा उत्तरत्र गमनसाधनान्तरमप्यनपेक्ष्य परां गतिं स्वरूपेणैव याति तत्रापि न सायुज्यार्थं जीवभावे गमनं किंतु ब्रह्ममयः ब्रह्मैव सन् ब्रह्माप्येतीत्येषा गतिर्भवति तत्रापि भगवद्धर्माणामपि सर्वेषां स्फूर्तिर्भवतीति ज्ञापयितुमर्कवर्ण इति । तस्माद्यावान् पुरुषार्थः सर्वैरेव ज्ञानविभिर्भवति क्रमेणापि साध्यं सकृदेव च भवतीति भगवद्धर्माणां माहात्म्यमुक्तम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वीक्ष्य ज्ञातचरतन्महाप्रेमकोऽपि विशेषेण ईक्षित्वा परमं देवकीवसुदेवाभ्यां सकाशादप्युत्कृष्टं मुदेति ममैतज्जन्मैव सार्थकमभूत् यदीदृशोऽनुरागो दृष्ट इति तयोर्दुःखदर्शनेऽप्युद्धवस्यानन्दः ॥ २९ ॥

इह जगति श्लाघ्येषु भक्तेष्वपि मध्ये देवकीवसुदेवौ श्लाघ्यतरौ ताभ्यामुत्कर्षात् युवां श्लाघ्यतमौ नारायणेऽखिलगुराविति मन्ये रामं च कृष्णं च प्राप्ताविह गुरोस्तमाविति तद्वाक्येनैव तस्य कृष्णैश्वर्य्यस्फूर्त्तिं ज्ञात्वा तदैश्वर्य्येणैव तौ सान्त्वयितुं तदेव व्याचष्टे स्मेति भावः ॥ ३० ॥

नारायणत्वमखिलगुरुत्वं चाह । एताविति । अंशांशिनोरभिन्नत्वाद्द्विमूर्त्त्यैकमूर्त्तिकमित्यक्रोक्तेश्च एतौ द्वावप्येक एव नारायण इत्यर्थः । विश्वस्य बीजयोनी द्वावपि निमित्तोपादानरूपौ द्वावेव पुरुषः प्रधानं शक्तिशक्तिमतोरैक्यादिति भावः। "प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वह"मित्येतदुक्तेः भूतेषु अन्वीय अन्तर्य्यामितया प्रविश्य विलक्षणज्ञानस्य ईशाते प्रदानसमर्थौ भक्तेभ्यो भगवद्ज्ञानस्य ज्ञानिभ्यो ब्रह्मज्ञानस्य च कृपया दातारौ स्याताम्—

> तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
> ददामि बुद्धियोगं तं येन मामुपयान्ति ते इति

"मदीयं महिमानं च परंब्रह्मेति शब्दितम् । वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदी"ति चैतदुक्तेः चकाराद्विलक्षणज्ञानस्य प्राकृतस्य स्वर्गादिसाधनस्यापि कर्मिभ्यो दातारौ ॥ ३१ ॥

निर्हृत्य दग्ध्वा परां गतिं वैकुण्ठलोकं ब्रह्ममयश्चिन्मयशरीरः सन् अर्कवर्णः सूर्य्यतुल्यतेजाः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विश्वस्य अयने प्रवेशनिर्गमनस्थाने विश्वहेतौ अखिलस्य प्राणिमात्रस्य गुरौ ज्ञानप्रदे श्रीकृष्णे ॥ ३० ॥

हेतुत्वं ज्ञानप्रदत्वं चाह । एताविति । विश्वस्य बीजयोनी निमित्तोपादानहेतू इति हेतुत्वमुक्तम् ज्ञानप्रदत्वमाह । भूतेषु अन्वीय अनुप्रविश्य विलक्षणस्य निखिलक्षणस्य तत्तत्प्राणियोग्यस्य भोगमोक्षानुरूपस्य इमौ पुराणपुरुषौ ईशाते ईश्वरौ उद्बोधकावित्यर्थः । ननु चेतनाचेतनपरमपुरुषभेदात्तत्त्वत्रयमस्ति तत्र परमपुरुषो विश्वहेतुरेकोऽस्ति एतौ बीजयोनी इति कथं द्विवचनमत आह । रामो मुकुन्द इति । तदवतारत्वात् अत एक एव विश्वहेतुः ननु चेतना-

तस्मिन् भवन्तावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ ।
भावं विधत्तां नितरां महात्मन् किं वाऽवशिष्टं युवयोः सुकृत्यम् ॥ ३३ ॥
आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ।
प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः ॥ ३४ ॥
हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ।
यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥ ३५ ॥
माखिद्यत महाभागौ ! द्रक्ष्यथः कृष्णमन्तिके ।
अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चेतनात्मकविश्वहेतुत्वं पुरुषप्रधानयोर्युक्तमनुरूपत्वादित्यत्र पुरुषस्याल्पज्ञत्वाद्सर्वज्ञत्वात् प्रधानस्य जडत्वादसर्वात्मत्वाच्च उभयोर्मुकुन्दनिरपेक्षस्थित्याद्यभावाच्च न विश्वहेतुत्वं सर्वात्मा सर्वज्ञः श्रीमुकुन्द एव विश्वहेतुरित्याशयेनाह । पुरुषो जीवः जातावेकवचनम् स्वासाधारणेन रूपेण भिन्नोऽपि मुकुन्दनिरपेक्षस्थितिप्रवृत्त्यभावात्तदभिन्न एव तदंशत्वात् तथा प्रधानमपि मुकुन्द एव तच्छक्तित्वात् अतः सर्वात्मा सर्वगुणशक्त्याद्याश्रयः श्रीकृष्णः सर्वस्य हेतुर्गुरुश्चेति सिद्धम् ॥ ३१ ॥

अत एव कारणन्तु ध्येयमिति श्रुतिप्रोक्तस्य तद्ध्यानस्य मोक्षहेतुत्वमाह । यस्मिन्निति । यस्मिन्नित्यस्य तस्मिन्नित्युत्तरेण सम्बन्धः ब्रह्ममयः ब्रह्मप्रधानस्तत्परो जनो मुमुक्षुः यस्मिन् क्षणमपि प्राणवियोगकालेऽपि विशुद्धं मनः समावेश्य कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा अर्कवर्णः प्रकाशरूपाप्राकृतमूर्तिः सन् परां गतिं तत्पदं याति ॥ ३२ ॥

भाषा टीका ।

उन नंद यशोदा दोनों के श्रीकृष्ण भगवान् में इस प्रकार के अनुराग को देखकर उद्धवजी बडे आनंद को प्राप्त होकर नंदजी से बोलते भये ॥ २९ ॥

उद्धवजी बोले हे मानद ! नंदजी यह बात निश्चित है कि आप दोनों बडी श्लाघा के योग्य हो जिन तुमने कि सकल लोक के गुरु नारायण के विषै इस प्रकार की बुद्धि लगाई है ॥ ३० ॥

ए राम कृष्ण दोनों इस संसार के उपादान तथा निमित्त कारण हैं और प्रकृति पुरुष ए दोनों इनके ही अधीन हैं ए दोनों पुराण पुरुष हैं सो सबभूतों में प्रविष्ट होकर विलक्षण ज्ञान का नियम न करते हैं ॥ ३१ ॥

जिन श्रीकृष्ण के विषै पुरुष प्राण वियोग के समय क्षणमात्र भी निर्मल मन को लगाने से शीघ्रही कर्म वासना को दूर करके दिव्य ज्ञानी होकर सूर्य सा प्रकाशित होकर परम गति वैकुण्ठ को चला जाता है ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अखिलस्यात्मा च हेतुश्च तस्मिन् कारणेन मनुष्याकृतौ महात्मन् महात्मनि परिपूर्णे भवन्तौ भक्तिं कुरुतः अतः कृतकृत्यावित्यर्थः ॥ ३३ ॥

प्रस्तुतमाह । आगमिष्यतीति पित्रोर्युवयोः ॥ ३४ ॥

"यात यूयं व्रजं तात ! वयं च स्नेहदुःखितान् । ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् " इति यदाह कृष्णस्तत्सत्यं करिष्यतीति ॥ ३५ ॥

कालविलम्बमसहमानौ प्रत्याह । माखिद्यतमिति । हे महाभागौ अन्तिके इदानीमेव समीपे वा कुत इत्यत आह । अन्तर्हृदीति । तर्हि सर्वैः किमिति न दृश्यते तत्राह । ज्योतिरिवैधसीति । तद्यथा मथनं विना न दृश्यते तथा भक्तिं विना कृष्णोऽपीति भावः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र हेतुर्नारायणे । ननु स चतुर्भुजस्तत्राह । सर्वकारणं यत्तत्त्वं तदेव मर्त्याकारा मूर्त्तिर्यस्य तस्मिन्नराकृतिपरब्रह्मणीत्यर्थः । भावमीदृशानुरागं नितरामित्यनेन श्रीवसुदेवदेवकीभ्यामपि तदुत्कर्षं बोधयति हे महात्मन् ! तादृशानुरागशालित्वात् परमोत्कृष्टस्वभाव ! श्रीव्रजेश्वर ! वाशब्दो भूक्षेपे तयोर्युवयोः किं कतरत् अवशिष्टं किन्तु सर्वं परिपूर्णमेव केवलं युष्मत्सन्तोषकं तस्यैव कृत्यमवशिष्यत इति स्वशब्दार्थः युवयोस्त्विति पाठे स एवार्थः ॥ ३३ ॥

तथाप्यजातशान्ती प्रत्युत हन्त त एव हि तेऽपि तदुत्कर्षमेवं कथयन्तीति तद्गुणचिन्तनेनात्यन्तार्त्तौ तौ वीक्ष्याधुना तु तद्वैयग्र्यस्पृष्ट आह । आगमिष्यतीति । अच्युतः सत्यसङ्कल्पत्वादिना तन्नामासौ प्रियमव्यभिचारिसङ्गमरूपम् । अवश्यं प्रियविधाने हेतुः पित्रोः यथा युवाभ्यां पितृभावमयेन महाप्रेम्णा वशीकृत्य पुत्रत्वेन सम्पादितोऽसौ तथा तेनापि पितृत्वेनैवाभिमतयोर्युवयोरित्यर्थः । ये यथा मामित्यादेः । यतो भगवानपि सात्वतानां पतिः पालकः तदभीष्टसुखसम्पादकः । यद्वा । भगवानपि यादवानां पतिरपि तादृशप्रेमवशत्वादिति भावः ॥ ३४ ॥

ननु तस्यागमनमत्र न प्रतीम इत्याशङ्क्याह । हत्वेति । यद्वा पितृत्वं विलम्बकारणञ्च तद्वाक्येनैव प्रतिपादयति । हत्वेति । करो-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तीति वर्त्तमानसामीप्ये वर्त्तमानवद्वा । किं वा । तत्तस्माद्धेतोरस्माभिः सह सत्यं शपथं करोति कुर्वन्नेवास्ते इत्यर्थः । सत्यं शपथतथ्ययोरित्यमरः ॥ ३५ ॥

आगमिष्यतीत्यप्यसहमानौ प्रत्याह । मा खिद्यतमिति महाभागावित्यधुना द्वयोः सम्बोधनं पुत्रागमनवार्त्तया तस्या अपि स्वं प्रति दृष्टिनिक्षेपं दृष्ट्वा । अथाल्पविलम्बमसहमानावाशङ्क्य शोकशमकलोकरीत्या तत्त्वोपदेशमारभमाण आह अन्तरिति । स कृष्णः भूतानां सर्वेषामेव प्राणिनामन्तर्हृदि हृदयाभ्यन्तरं यदन्तःकरणाख्यं हृदयं तत्राप्यास्ते किमुत बहिरिति । अप्रकटतामात्रांशे दृष्टान्तः । ज्योतिरिवेति दामबन्धनमृद्भक्षणलीलादौ श्रीमत्या मात्रैव तद्व्यापकत्वानुभवात् तत्रान्येषां स्वतोऽप्यनुभावो नास्तीत्यसन् निवर्त्तते भवतोस्तु सदा स्फूर्त्तेर्हृदयाभ्यन्तरेऽपि सन्नेव विराजते इत्यलं बहिस्तदपेक्षया तथापि तदपेक्षा चेत् तदा शीघ्रमेव तदपि भविष्यतीत्यर्थः । अथवा भूतानामन्तर्हृदि परमात्मलक्षणं ज्योतिरिव एधसि वाग्निलक्षणं ज्योतिरिवाप्रकटः सन् अन्तिके युवयोर्निकटे तत्रैव स्वयं भवद्भ्यां दर्शितं गोलोकाख्यं प्रकाशं आस्ते स तु युवां निकटात् पश्यत्येव युवाञ्च मनसा तं पश्यथ एव चक्षुषापि शीघ्रं पश्यतमेवेति तात्पर्य्यम् ॥ ३६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

किमवशिष्टं किं कर्त्तव्यं युवां कृतकृत्यावित्यर्थः ॥ ३३—३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मिन् नारायणे कारणमर्त्यमूर्त्तौ साधुपरित्राणरूपनिमित्तास्वसङ्कल्पोपात्तमनुष्यविग्रहे महात्मनि अखिलस्य चिदचिदात्मकप्रपञ्चस्यानुगते आत्मनि कारणभूते च भवन्तावत्यर्थं भावमनुरागं विधत्ताम् अकुरुतामतो युवयोः प्रियं विधास्यत इत्यर्थः ॥३३॥

प्रस्तुतमाह । आगमिष्यतीति । अदीर्घेण कालेनाच्युतो व्रजं प्रत्यागमिष्यति तथा भगवान्पित्रोर्युवयोः प्रियं संविधास्यते करिष्यति ॥ ३४ ॥

सर्वेषां सात्वतां यादवानां भगवद्भक्तानां वा प्रतीपं प्रतिकूलं कंसं रङ्गमध्ये हत्वा भगवान् कृष्णः वो युष्मान्प्रति यदाह "यात यूयं व्रजं तात ! वयं च स्नेहदुःखितान् । ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां प्रियम्" इति यदाह तत्सत्यं करिष्यति ॥३५॥

तथापि विलम्बमसहमानौ प्रत्याह । माखिद्यतमिति । हे महाभागौ ! माखिद्यतं खेदं मा कुरुतमन्तिके अनतिविप्रकृष्टकालेन कृष्णं द्रक्ष्यथः किं च भगवान्न मथुरायामेवास्ते किं त्वत्रापीत्याशयेनाह । अन्तर्हृदीति । तर्हि सर्वैः किमिति न दृश्यते तत्राह । ज्योतिरिवैधसीति । यथैधसि दारुणि ज्योतिरग्निर्मन्थनाद्युपायमन्तरेण न दृश्यते तद्वद्भगवान् श्रीकृष्णः भक्तिं विना न दृश्यत इत्यर्थः ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भावं भक्तिं यद्वा लीलादिकं वा यद्विषयमन्तरेण किमपि नास्तीत्यर्थः । व्यधत्तां व्यदधातां कृतवन्तावित्यर्थः । महात्मन् महात्मनि चेतनोत्तमे इत्यर्थः ॥ ३३-३४ ॥

प्रतीपं प्रतिकूलम् ॥ ३५ ॥

अन्तिके कालक्षेपं विना यालबुद्धिमन्तरेण कृष्णस्य दूरस्थत्वं नास्तीत्याह । अन्तर्हृदीति । एधसि काष्ठे ज्योतिरग्निः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मा खिद्यतं विशेषतश्च चिरं विलम्बमसहमानावाशङ्क्याह । मेति । अल्पविलम्बमप्यसहमानावाशङ्क्य शोकशमकलोकरीत्या तत्त्वोपदेशमाह । अन्तरिति । यद्यपि कारणान्तरेण प्रियाप्रियादयो न सन्ति तथापि साधुत्वेन प्रियादयः । तद्वाहित्येनाप्रियादयश्च सन्तीत्याह । सदिति । सज्जातिरि यमसज्जातिरियमित्यादरा नादरावननुसन्धाय तासु तदनुकारिस्वरूपविग्रहेण प्रकटीभूय साधूनां साधुत्वेन प्रियादितया स्वीकृतानां सर्वतो रक्षणाय योग्यो भवतीत्यर्थः ॥ ३६—३८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एतादृशे च भगवत्स्वरूपे यैः सर्वात्मना सर्वदा सर्वभावेन मनो निहितं तेषां फले किं वक्तव्यमित्याह । तस्मिन् भवन्ताविति । यादृशं हि उपास्यं चिन्त्यं ध्येयं वा तादृशमेव भवतीति सर्वजनीनं भगवांश्च सर्वफलरूपः अतो नावशिष्यत इति वक्तुं सर्वहेतुत्वमाह । अखिलात्महेताविति । अखिलानामात्मा हेतुश्च सर्वस्यात्मा भवति सर्वमस्यात्मा भवति सर्वमस्यात्म भवतीति फलं सिद्ध्यति किञ्च विकृतेऽपि हेतुरात्मेति च वक्तुं अयं पुरुषो नारायण इत्याह । अयं पुरुषो नारायणः किञ्चित्कारणार्थं सर्वेषामुद्धारार्थमेव कपटवेशमपि कृतवान् अनेन फलावश्यकत्वं द्योतितं प्रायिकत्वशङ्काव्यावृत्त्यर्थं यतः लोकस्य व्यसनापनोदपरो दासस्य किं न क्षम इति सिद्धान्तो भवति तत्रापि नितरां भावं विधत्तां रसत्वव्यावृत्त्यर्थं भावपदं पुत्रत्वेऽपि देवत्वाप्रतीतस्तथापि फले स्वरूपयोग्यताप्यपेक्ष्यत इति यथा मर्यादायां ब्राह्मणानामेव मुक्तिः पुष्टौ वा वैकुण्ठेषु पश्वादिरूपत्वं तद्व्यावृत्त्यर्थमाह । महात्मन्निति । महात्मत्वं भगवदागमनान्निश्चीयते अतः युवयोः कृत्यं नावशिष्यते अनेनेयमेवावस्था पुरुषार्थ इति ज्ञापितम् ॥ ३३ ॥

एवं विषयं साधनं चाभिनन्द्य लौकिकभावेन खेदं वारयितुमाह । आगमिष्यतीति । अदीर्घेणैव कालेन व्रजमागमिष्यतीति यतः अच्युतः स्वरूपतो धर्मतश्च अन्यथा वाक्यतश्च्युतः स्यात् लौकिकभाषया न बाधनमिति केचित् शास्त्रार्थतः समागमिष्यतीति अन्ये भगवद्वाक्यानुरोधेन भगवदीयानां च कुरून्मधूंश्चेति वाक्याच्च पित्रोरिति विशेषवचनाच्च गतांश्चिरायितानिति वाक्यविरोधाभावात् नन्दं द्रष्टुं समागत एव भगवान् वरं यथा न गोपिकाप्रतीतिस्तथेति अर्थादवगम्यते आर्थिके विरोधा-

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

भावादिममर्थमेव ज्ञापयितुमाह। प्रियं विधास्यते पित्रोरिति। यथैव प्रियं भवति येन प्रकारेणागते च तथैव विधास्यति एतादृशकरणे सामर्थ्यमाह। भगवानिति। एवं गुप्ततयागमने हेतुमाह। सात्वतां पतिरिति। यादवानां भगवद्भक्तानां च पतिः यादवानुरोधान्मार्गानुरोधाच्च तथा समागमिष्यतीति भावः। प्रीतिमावहेति वाक्यादेवमुच्यते अन्यथा शास्त्रार्थमात्रमेव कथयेत ॥ ३४ ॥

ननु भगवानेवमायास्यतीत्यत्रावश्यकत्वे च किं प्रमाणमिति चेत्तत्राह। हत्वेति। कंसं हत्वा यदा भगवान् वो युष्माकं स्थाने समागत्य तत्सत्यमेव करोतीति कंसो व्याजेनैव मारणीय इति परोक्षवादेनापि तावत्पर्यन्तं वदति अतो गोपिकाः प्रति समागमनकथाशास्त्रार्थत्वेनापि सङ्गच्छते कंसमारणानन्तरं तु प्रयोजनाभावान्न परोक्षकथायां निमित्तमस्ति कापट्ये हि शीघ्रं हतो भवत्यक्लिष्टकर्मा नान्यथेति वधश्च शीघ्रमेव कर्तव्य इत्यत्र हेतुमाह। प्रतीपं सर्वसात्वतामिति। सतां भक्तानां सर्वथा प्रतीपं प्रतिकूलं पूर्वमन्यथाकरणे ज्ञापकमाह। रङ्गमध्य इति। रङ्गस्थानं हि लीलाया न तु वधस्य तत्राप्यनुरोधात् युष्मानागत्य तत्रापि कृष्णः फलरूपः सर्वनिरपेक्षः अनेन हेतुवादे प्रयोजनाभाव उक्तः अतस्तात्सत्यं करोत्येव वर्त्तमानप्रयोगेण साम्प्रतमपि तस्यागमनं सूचितं वर्तमानसमीपे च वर्त्तमानप्रयोगः अत आगमिष्यतीत्यप्यविरुद्धम् ॥ ३५ ॥

ननु यथेदानीमागतो न दृश्यते तथाऽग्रेप्यागतो न द्रष्टव्य इति किमागमनेन सत्यवाक्यं न वेत्याशङ्क्याह । मा खिद्यतमिति। भगवद्दर्शनार्थं खेदं माकुरुतं दर्शने स्वरूपयोग्यो हेतुर्युवयोरस्तीत्याह। महाभागाविति। प्रतीत्या अनुमानेन च युवयोर्महाभाग्यं प्रतीयते तदवश्यं दर्शयतीति दर्शने न सन्देहः योगज्ञानादिना दर्शनं वारयति। अन्तिक इति। लौकिके भगवानेवापेक्ष्यत इति न रामग्रहणं तस्य प्रादुर्भावः सर्वत्रैव सुगम इति ज्ञापयितुमन्तर्निरूपयति। अन्तर्हृदीति । अन्यो भविष्यतीत्याशङ्कां व्यावर्त्तयति। स इति। यो भवद्भिरपेक्ष्यते स एव सर्वेषामन्तर्हृदये वर्तत इति तत्र प्रमाणमाह। भूतानामिति। अन्यथा ते कथं जाताः प्राणिनः आधारव्यतिरेकेण अन्नादिक्रियाणां स्थित्यसम्भवात् अतः सूत्रापेक्षयाप्याधारत्वेन सर्वत्रैव वर्त्तते अन्तर्हृदीति प्रतीत्यर्थं विशेष उक्तः जीवात्मत्वयोर्व्यावृत्त्यर्थं दृष्टान्तमाह । ज्योतिरिवैधसीति। भूखत्वाविशेषेऽपि यथा घटादयो निमज्यन्ते न ज्वलन्ति तथा न काष्ठादयः उत्पन्नानपि भूम्यंशान् स्वसमानान् न गृह्णन्ति अतो ज्ञायते स्वभावत एव ते वह्न्यात्मकाः जलेन च पुष्टा भवन्ति उभयोर्व्यवधायकाभावेन सूक्ष्माः पृथिव्यवयवाः उभयोरप्यपगमे यावद्भस्म तावन्मात्राः अतो भूयानंशस्तेजस एव जलस्थानीयो ह्रासन्यः पृथिव्यंशस्थानीयो जीव इति सर्वत्र भगवानचेतनेषु उत्तम्भनचलनादिना वर्त्तत इत्यवसीयते अन्यथा मथनेनैव योगादिना न प्रादुर्भूतः स्यात् ॥ ३६ ॥ ० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अखिलानामात्मा च हेतुश्च तस्मिन् कारणं च मनुष्यमूर्तिश्च तस्मिन् युवयोस्तु कृत्यं किमवशिष्टमिति तुकारेण तस्य कृष्णस्यैव युष्मत्सान्त्वनप्राणनवशीभवनादिकृत्यमवशिष्यते इति ज्ञाप्यते स्वकृत्यमिति पाठेऽपि स एवार्थः ॥ ३३ ॥

भो वत्स उद्धव! त्वमतिबुद्धिमान् श्रुतः किं तु मुग्ध एवासि यदावामपि स्तौषि हन्त हन्त तादृशो गुणार्णवः पुत्रो यद्गृहादन्यत्र गतस्ततोऽधिको मन्दभाग्योऽधमो दुःखी त्रिभुवनमध्ये कोऽस्तीत्यावां सर्वनिन्दनीयावेवेति तदुक्तिमाशङ्क्य साश्वासमाह। आगमिष्यतीति। अच्युतः द्रष्टुमेष्याम इति सत्यवाक्यात् च्युतिरहितः सात्वतां यदूनां पतिः पालक एव केवलमत्रैव स्थित्वा भविष्यति युवयोस्तु प्रियं मनोऽभीष्टं करिष्यतीति ॥ ३४ ॥

यदाह। यात यूयं व्रजं तातेति श्लोकेन तत्सत्यं करोति करिष्यति वर्त्तमानसामीप्ये लट् वस्तुतस्तद्वचनादग्रस्तत्रैव ताभ्यां तदैव लालितः स प्रकाशान्तरेण वर्तत एवेत्युद्धवमुखात् सत्यैव वाग्देवी निरगात् ॥ ३५ ॥

हन्त हन्त धिगावां ययोरभाग्यस्य प्राबल्यमेव सत्यवचसोऽपि पुत्रस्यात्रागमने प्रतिबन्धकं भवतीति खिद्यन्तौ तौ प्रत्याह। मेति। नन्वन्तिके यत् द्रक्ष्यावस्तत् कस्मिन् दिने श्वः परश्वो वा पञ्चमे दिने दशमे दिने वा सम्प्रति निर्जिगमिषून प्राणान् केनाश्वासेन स्थापयिष्यावस्तावत् न चेदागमिष्यति तदेव निश्चित्य ब्रूहि निर्यान्तु प्राणा आस्तु तन्निरोधनकष्टमावयोरित्युक्तवति श्रीनन्दे उद्धवः सह्रद पराममर्श हन्तात्र कमुपायमनुतिष्ठामि प्राकृतपुत्रवियोगातुराः खल्वेवं प्रबोध्यन्ते भो भोः! किमिति सांसारिकमोहे मग्ना भवथ मिथ्याभूतपुत्रकलत्रादिष्वासक्तिमनर्थहेतुं परित्यज्य भगवत्यासक्तिः क्रियतामिति यस्य तु भगवत्येव पुत्रीभूते आसक्तिः स नन्दोऽयं कथं प्रबोधयितव्यः न च वसुदेवस्यैवास्य पुत्रभावः ऐश्वर्यप्रदर्शनया शिथिलयितुं शक्यः प्रत्युत तयोः सगाढत्वमेवापद्येत हन्त प्राकृतपुत्रमपि गृहे खेलन्तमदृष्ट्वा तत्पितरौ दुःखेन म्रियेते आवयोस्त्वतिभाग्यवशात् परमेश्वरोऽपि पुत्रीभूतो गृहे खेलन्नस्म आवयोः क्षणमपि लालनमप्राप्य खिद्यते स्म स गृहे तं पुत्रमदृष्ट्वा कथं जीविष्यावः धिगावां यत्तादृशादपि पुत्रात्सुयुक्ताविल्येवंविधानयोर्मनोनिष्ठा देवकीवसुदेवौ त्वेतत्पारमैश्वर्य्यानुभवे सति हन्तावयोरयमाराध्य एव न पुत्र इत्येतत्पारिच्छिन्नलालनादावपि शङ्केते न च केवलमेषामेव कृष्णे ममताग्रन्थिर्दृढः किं तु परमेश्वरस्यापि तस्यैतेषु दृढैव ममता गृहीत्वा पाणिना पाणिं पित्रोर्नौ प्रतिमावहेत्येतदर्थं तस्यापि व्याकुलता मया दृष्टैव दुस्त्यजश्चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसां नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथामिति गोपवागपि श्रुता स्मर्य्यते एव यदि पुनर्मथुरां गत्वा श्वस्तमानयामि तदा कंसभार्य्याद्वयोपज्ञापकुपिते जरासन्धे मथुरां हन्तुमागमिष्यति सति तत्र एव वसुदेवादीन् यादवान् को रक्षेत यदि तद्रक्षार्थं कृष्ण एव पुनर्मथुरां गच्छेत् तदैते म्रियेरन् यदि चानयनुः पञ्चवर्षान्ते आयास्यतीति ब्रवीमि तदा तावत्कालपर्य्यन्तं धैर्यादिधीर्याप्येतैर्दुष्करा चतुःपञ्चदिनान्ते आयास्यतीत्यलीकोक्त्या आश्वासने तद्दिन एव मदुक्तेरलीकत्वे व्यक्ते म्रियेरन् तस्मादुपायान्तराभावादधुना कृष्णस्य परमात्मत्वेन सर्वत्रौदासीन्यं

नह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः।१ १अयं सुबोधिनीकारमते नास्ति।
नोत्तमो नाधमो वापि समानस्यासमोऽपि वा ॥ ३७ ॥
न माता न पिता तस्य न भार्या न सुतादयः ।
नात्मीयो न परश्चापि न देहो जन्म एव च ॥ ३८ ॥
न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु ।
क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते ॥ ३९ ॥
सत्त्वं रजस्तम इति भजते निर्गुणो गुणान् ।
क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तथा निर्विशेषब्रह्मस्वरूपत्वेन जन्मकर्मशरीरपित्रादिसम्बन्धराहित्यं तदनुकूलमध्यात्मयोगं च प्रपञ्चयानयोः प्रेमा संकोचनयिः तेन तेनाप्यप्रेमयो दुष्पारो दुर्निवारप्रेमा यदि प्रत्युत वर्द्धेतैव तदा मथुरां गत्वा कृष्णवसुदेवयोप्रसेनादिमहासदस्यनयोः प्रेम्णो निरुपमां कीर्तिं कीर्तयित्वा सर्वान् विस्माप्य कृष्ण एव मयोपालम्भनीय इति मनसि कृत्वा प्रथमं कृष्णस्य परमात्मत्वं द्योतयन्नाह। अन्तरिति। तर्हि सर्वैः किमिति न दृश्यते तत्राह। ज्योतिरिति। तद्यथा मन्थनं विना न दृश्यते तथैव कृष्णोऽपि तस्माद्युवाभ्यां तस्मिन् पुत्रे कृष्णे वैष्णवैरिव भक्तिः कर्तुं न शक्यते कथं स साक्षात्स्वगृहे द्रष्टव्य इति द्योतिते सति येन तेन प्रकारेण पुत्रः स गृहमायातु पुत्रेऽपि तस्मिन् भक्तिः कर्तव्येति नन्दयशोदाभ्यां मनसि विचारितम् अत एव मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रया इत्युत्तरं प्रत्युपरिष्टाद्दृश्यते ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् महात्मन् महात्मनि अखिलस्य आत्मा च हेतुश्च तस्मिन् कारणेन भजनमिति तेन ये मर्त्याः धृतमर्त्यशरीरास्ते मूनयः स्वमूर्तिवरप्रिया यस्य तस्मिन् भक्तप्रिये भावं भक्तिं विधत्तामकुरुताम् ॥ ३३ ॥

पित्रोर्युवयोः ॥ ३४ ॥

यः युष्मान्प्रति यदाह "यात यूयं व्रजं तात! वयं च स्नेहकातरान्। ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुख"मिति तत्सत्यकरिष्यत्येव ॥ ३५ ॥

किं च अन्तिके समीपे कृष्णं द्रक्ष्यथः यतः स एव कृष्णः अन्तर्हृदि आस्ते अतो मा खिद्यतम् ॥ ३६ ॥

---

### भाषा टीका ।

हे महात्मन्। नंदजी सब संसार के हेतु भक्तोंके प्रेम से मर्त्यरूप श्रीनारायणके विषे तुम दोनों ने भावना किया ह तो अब तुम दोनों का कौनसा काम बांकी रहा होगा ॥३३॥

सात्वतों के पति अच्युत भगवान् थोडे ही दिनों में ब्रज को आवेंगे और माता पिता दोनों का संतोष करेंगे ॥ ३४ ॥

रंग भूमी में सब सात्वतों के शत्रु कंस को मारे पीछे आपसे भगवान् श्रीकृष्णजी ने जो कहा है उस बात को आकर सत्यही करेंगे ॥ ३५ ॥

हे महाभागो! आप दोनों खेद मत करो श्रीकृष्णजी को तुम अपने पास ही देखोगे वह तो सब भूतों के हृदय के मध्य में विराजमान हैं जैसे कि लकडी के भीतर अग्नि रहता है ॥ ३६॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो आस्तामेतत्तस्य त्विहागमनं स्वस्यातिप्रियान्पित्रादीन्विहाय न सङ्गच्छत इति मन्ये तत्राह। नह्यस्येति। अस्य प्रियादयो न हि सन्ति तत्र हेतुः अमानिनः समानस्येति च ॥ ३७-३८ ॥

सोऽपि जन्मकर्मादिरहितोऽपि क्रीडाप्रयोजनः सन्स साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्त्विकराजसतामसयोनिषु यद्वा देवादिमत्स्यादिनृसिंहादियोनिषु कल्पते आविर्भवतीत्यर्थः ॥ ३९ ॥

ननु जन्मकर्मादिरहितस्य कुत एतदित्यत आह । सत्त्वमिति । क्रीडामतीतोऽपि क्रीडन् तथापि मायागुणैर्घटत इत्यर्थः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न ह्यस्यास्तीति तैर्व्याख्यातम् । तत्रास्तामेतदिति न वयमन्तर्हृदीत्यादिकं बुध्यामहे इत्यर्थः । यथा जीवानां तेन तेन लौकिकप्रकारेण प्रियादयः कर्मान्ताः चतुर्दश भावाः स्युस्तथास्यामी न सन्तीत्याह। नहीति त्रिकेण। अस्तीति सर्वत्र निषेधे योज्यम्। अस्य श्रीकृष्णस्य उपकारादिना प्रियोऽतिशयेन न ह्यस्ति एकांशेनापि नास्तीत्यर्थः । अपकारेणाप्रियोऽपि नास्ति कश्चिदिति यथासम्भवमग्रेऽपि योज्यं तथा सौन्दर्यपाण्डित्यादिगुणदृष्टिहेतोरुत्तमः स्तुत्यो न कौरूप्यकौबुद्ध्यादिदोषदृष्टिहेतोरधमो निन्द्यो न तादृशगुणदोषाभावदृष्टिहेतोः आ सर्वतः सम उपेक्षाबुद्धिविषयो न धातुद्वारोत्पादनहेतो र्न माता न पिता च। अतः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुतादयोऽपि न । विवाहसम्बन्धहेतोर्भार्या न । सर्वकारणादिहेतोरात्मीयो न । तदभावहेतोः परोऽपि न । अभिन्नदेहदेहिस्वरूपादन्यत्रात्मत्वाभिमानहेतोर्देहो न । अन्यादृशदेहस्वीकाराज्जन्मैव च न कुतो देह इत्यर्थः । अपूर्णोत्पत्तियोगत्वाभावात् । कर्म शुभाशुभमदृष्टं च नेति । सर्वत्र यथायथं हेतुः अमानिनः तत्तदभिमानशून्यस्य समानस्य विकाररहितस्येति प्रायः सर्वत्रैव नञः प्रयोगस्तन्निषेधनिर्द्धारणार्थः आद्यो वाशब्दः समुच्चये अन्ये च तत्सम्भावनायामपि तन्निरासार्थाः । जन्म एव चेति च शब्दः क्काचित्कः ॥ ३७ ॥ ३८ ॥

किन्तु तस्यैवम्भूतस्यापि साधुत्वेन प्रियादयः साधुद्रोहित्वेनैवाप्रियादयः सन्तीत्यभिप्रेत्याह । साद्विति । सज्जातिरियमसज्जातिरियमित्याद्यादरानादराननुसन्धाय तासु तदनुकारिस्वरूपविग्रहेण प्रकटीभूय साधूनां साधुत्वेनैव प्रियादितया स्वीकृतानां सर्वतो रक्षणाय योग्यो भवतीत्यर्थः । ननु सङ्कल्पेनैव तत् स्यात् किं तत्तत्प्रादुर्भावेन तत्राह । क्रीडार्थं "लोकवत्तु लीलाकैवल्यम्" इति न्यायेन क्रीडाप्रयोजनः सन्नित्यर्थः । अयमभिप्रायः । अन्यलेपस्तस्मिन्न भवत्येव किन्तु परमसद्गुणशिरोमणये तस्मै साधुत्वं खलु रोचेत साधुत्वस्य च तदेकनिष्ठतायामेव मुख्या वृत्तिः धर्मः प्रोज्झितकैतवोऽत्रेत्यत्र मोक्षेच्छापर्यन्तस्य कैतवतास्वीकारात् । "न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् । साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी"ति स्पष्टत्वात् । तदेकनिष्ठता च तत्प्रेमतारतम्यैकतारतम्यात्तद्वैविध्येन विविधा च प्रेमैकहेतुत्वात्तस्याः । तथाचोक्तं यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासमिति । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमित्यादि । तच्च तत्प्रेम निर्गुणम् । "सात्त्विकं सुखमात्मोत्थं विषयोत्थन्तु राजसम् । तामसं मोहदैन्योत्थं मन्निष्ठं निर्गुणं स्मृतम् । सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायान्तु निर्गुणा" इति श्रीभगवता निर्णयात् अतस्तादृशसाधुमात्रापेक्षी भगवान् । मद्भक्तानां विनोदार्थं करोमि विविधाः क्रिया इति पाद्मस्थतदुक्तानुसारेण तत्सुखमयस्वसुखाय क्रीडति यत्तत्तस्य स्वभाव एवेति स्थिते ये यथा मामिति न्यायात् यथावसरं प्रियादिरूपतामपि प्राप्नोति । सम्प्रति च वसुदेवदेवक्यादिभ्योऽपि युवयोः शुद्धवात्सल्याख्यप्रेमातिशयवत्त्वात्तानपेक्ष्य युवयोरक्षामिच्छन् युवयोः प्रेमभिराकृष्यमाणो युवयोरेव पुत्रत्वमात्मनि बहु मन्वानो युवयोरग्रे तदुचितमनोहरलीलाप्रकाशनलालसो व्रजमागमिष्यत्येवेति । तदुक्तं स्वयमेव । गच्छोद्धव व्रजं सौम्य पित्रोर्नः प्रीतिमावहेति ॥ ३९ ॥

सत्त्वमिति तैर्व्याख्यातम् । तत्र तथापीति तत्सान्निध्यबलेन तन्मायागुणास्तत्र कुर्वन्ति तत्तस्मिन्नारोप्यत इत्यर्थः । यद्वा इतः क्रीडा च तस्य स्वभाव एव यत्र प्राकृतसत्त्वादिनाप्यनुरक्ती करोतीति दर्शयति गुणेभ्यः सत्त्वादिभ्यो निष्क्रान्तस्तत्संसर्गरहितोऽपि क्रीडन् निजभक्तसुखमयनिजसुखक्रीडाहेतोः सत्त्वं रजस्तम इति गुणानपि भजते स्वीकरोति तर्हि तैराविष्टो भवति नहि नहीत्याह गुणैः स्वरूपभूतैर्ज्ञानादिभिस्तानतिक्रान्तस्तद्वनाविष्ट इत्यर्थः । अत एव अजः जन्मादिविकाररहितस्वे तन्नाभेत्यर्थः । प्राकृतसत्त्वादिभिर्यां क्रीडामप्याह । सृजतीति ॥ ४० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अमानिनः ममताभिमानरहितस्य समानस्य सर्वसमस्य ॥ ३७—३८ ॥

कल्पते कर्मवश्यो न भवति यद्वा स भगवान् परित्राणाय कल्पत इत्यर्थः ॥ ३९ ॥ ४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्मत्तोऽपि प्रियतरान् वसुदेवादीन् विहायात्रागमिष्यतीत्येतदसंम्भावितमित्यत्राह । न ह्यस्येति । अस्य भगवतः प्रियादयो न सन्ति तत्र हेतुरमानिनः समानस्येति च ममताभिमानरहितस्य सर्वसमानस्य चेति ॥ ३७ ॥

तथापि मात्रादयः सन्त्येवेत्यत्राह । न मातेति । तत्र हेतुर्न देह इति । देहस्यैवाभावे कुतस्तत्सम्बन्धिनो मात्रादय इति भावः । ननूपलभ्यते तस्यापि देहस्तत्कथं न चास्य देह इति ब्रूषे अत आह । कर्तेवेति । पुण्यपापात्मककर्मारब्ध देहो ऽस्य नास्तीत्यर्थः ॥ ३८ ॥

ननूपलब्धा तस्यापि देहोत्पत्तिस्तत्राह । न चास्य जन्मेति । तस्योत्पत्तिरवताररूपेति भावः । किमर्थमवतारस्तत्राह । लोक इति । सोऽपि जन्मकर्मादिरहितोऽपि क्रीडार्थं साधूनां परित्राणरूपपरमप्रयोजनाय लोके सदसन्मिश्रयोनिषूत्तमाधममध्यमयोनिषु देवतिर्यङ्मनुष्ययोनिषु कल्पते आविर्भवति अनेन विलक्षणजन्मकर्मादिभिर्जीववैलक्षण्यं सूचितम् ॥ ३९ ॥

तदेव विशदयति । सत्त्वमिति । निर्गुणः सत्त्वादिप्राकृतगुणेभ्यो निर्गतः गुणपारवश्यरहित इत्यर्थः । जीवस्तु सत्त्वादिगुणवश्य इति भावः । सत्त्वादीन् भजते स्वलीलोपकरणतया नियाम्यतया च तान्प्रतिगृह्णाति जीवस्तु भोग्यतया नियमनाशक्त्या च ताननुवर्तते इति भावः । गुणैरुपकरणभूतैः क्रीडन्नपि तानतीतोऽतिक्रान्तः स्वरूपतः स्वभावतश्च गुणैरनभिभूत इत्यर्थः । जीवस्तु तैः स्वभावतोऽभिभूत इति भावः । क्रीडन्नित्यनेन जीवस्य गुणकार्यशब्दादिविषयभोगः सूचितः काऽसौ क्रीडेत्यतस्तां दर्शयति । सृजतीति । विश्वमिति कर्मपदमध्याहर्तव्यम् अजः स्वयं विश्वगतोत्पत्त्यादिरहितः सृजत्यवति रक्षति संहरति च जगद्व्यापारस्तस्य क्रीडेति दर्शितं भवति अनेन जीवस्तु सुखाद्यनुभवाय पुण्यपापात्मककर्माणि करोतीति सूचितम् अज इत्यनेन विश्वगतोत्पत्त्यादिभाक्त्वं भवतीति जीवस्तु जातोऽहं मृतोऽहमिति देहधर्मानात्मनि मन्यत इति विशेषः ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रेष्ठानां हृदेव वर्तते नान्येषामिति नियमो नास्तीति भावेनाह । नहीति । अमानिनः अहं ममाभिमानरहितस्य योग्यतानुसारेण समानस्य समोऽपि चेति पाठः ॥ ३७—३८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नन्वेवं विधस्य हरेः कथञ्जन्मादिकमुपपद्यत इति तत्राह । लोक इति । सदसन्मिश्रयोनिषु सुरनरतिर्यग्योनिषु ॥ ३९ ॥

अनुगुणैस्तत्तत्कर्मानुकूलैः सत्त्वादिभिः ॥ ४० ॥ ० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु सङ्कल्पेनैव तत् स्यात । किं तथा प्रादुर्भूतः तत्राह । क्रीडार्थं तत्प्रियादिभावमयक्रीडाप्रयोजनः सन्नित्यर्थः । "मद्भक्तानां विनोदार्थं करोमि विविधाः क्रिया" इति पाद्मे तद्वाक्यात् । अयं भावः । अन्यत्रैपस्तास्मिन्न भवत्येव किन्तु परमसद्गुणशिरोमणये तस्मै साधुत्वं खलु रोचत साधुत्वस्य च तदेकनिष्ठायामेव मुख्या वृत्तिः । धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतामित्यत्र मोक्षेच्छापर्यन्तस्य कैतवतास्वीकारात् तदेकनिष्ठता च प्रेमतारतम्यैकतारतम्या तद्वैविध्यतो विविधा च प्रेमैकहेतुत्वात्तस्याः । तथाचोक्तं यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासमिति । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमित्यादि । अतस्तन्मात्रापेक्षी भगवान् इति स्थिते श्रीवसुदेवदेवक्यादिभ्योऽपि युवयोः शुद्धवात्सल्याख्यप्रेमातिशयतया तानप्यपेक्ष्य युवयो रक्षामिच्छन् युवयोः प्रेमभिराकृष्यमाणो युवयोरेव पुत्रत्वमात्मनि बहु मन्वानो युवयोरग्रे तदुचितलीलाप्रकाशलालसो व्रजमागमिष्यस्येवेति । क्रीडामयसाधुपरित्राणमेव योजयति ॥ ३९ ॥

सत्त्वमिति । यथा निर्गुणो निर्गता गुणेभ्यः सत्त्वादिभ्यो गुणा यस्य तादृशोऽपि गुणान् सत्त्वादीन् भजते सान्निध्येनोपकरोति । तथा सत्त्वादिमयक्रीडातीतोऽपि क्रीडन् "लोकवत्तु लीलाकैवल्य" न्यायात् साधुपरित्राणमयक्रीडां कुर्वन् सान्निध्येन गुणैः सत्त्वादिभिः सृष्ट्यादिकं करोतीत्यर्थः ॥ ४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रादुर्भावे सुलभतामुक्त्वा तथापि दुर्लभ इति वक्तुं लौकिकप्रयोजकान् सर्वानेव सम्बन्धान् वारयति । न मातेति । अनेनासूयापि निवार्यते न हि भगवान् कस्यचिदुपालम्भ्यो भवतीति तस्य सर्वान्तर्यामिणः कृष्णस्य यशोदाद्या मातृत्वेन प्रसिद्धा अपि ता न मातरः तथा नन्दादयोऽपि न पितरः न च सीताप्रभृतयो भार्याः न वा कुशादयः सुताः आदिशब्देन न भ्रातरः बलादयोऽपि आत्मीयः स्वस्वात्मकः परः शत्रुः परकीयोऽपि पर एवेति न सम्बन्धी निरूपितः चकारान्नोदासीनः अयमर्थो निर्द्धारित इत्येवकारः नापि देहः यदर्थमेते अपेक्ष्यन्ते तस्य कारणं जन्मापि नास्ति एवकारः पूर्ववत् वेत्थनादरेण अनेन यत्किञ्चिदत्र सम्भावितं तदपि निषिद्धम् ॥ ३८ ॥

ननु कर्मसु विद्यमानेषु जन्माद्युच्छेदात् कर्मणां च प्रसिद्धत्वात्कथं जन्माद्यभाव इत्याशङ्क्याह । नचास्येति । नापि अस्यान्तर्यामिणो निर्लेपस्य असिवत्स-धर्द्धकस्य सदसन्मिश्रयोनिषु उत्कृष्टापकृष्टमध्यभावेषु देवतिर्यङ्मनुष्यरूपेषु अस्य कर्मापिवेत्थनादरे जातेऽपि तेन न किञ्चित्कर्त्तव्यमिति तर्हि किमर्थमेतावत्करोतीत्याशङ्क्याह । क्रीडार्थं इति । अयं सर्वोऽपि भगवद्भावः क्रीडार्थः सोऽपि क्रीडाभावः साधूनां परित्राणाय तदपि नोद्देश्यः किन्तु कल्पते स्वयमेव समर्थो भवति तथा सूर्ये समागते स्वयमेवान्धकारो नश्यति ननु तदर्थं प्रयत्नोऽपि कर्त्तव्यः यथा महाराजनि क्रीडार्थमप्यागते चौरभयनिवृत्तिः ॥ ३९ ॥

एतदप्यङ्गीकृत्योच्यते मतान्तरे तु तदपि नास्तीति वदन् पूर्वोक्तमेवोपपत्तिमाह । सत्त्वं रजस्तम इति । स्वयं निर्गुण एव मूलभूतानेतान् क्रीडन् भजते तेषां विशेषप्रयोजनमाह तैः सृजत्यवति हन्तीति ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अथापि प्रेमाणमसङ्कुचन्तमालक्ष्य भो व्रजराज ! कृष्णः साक्षात् परं ब्रह्मैव भवतीत्याह त्रिभिः अस्य प्रियादयो न सन्ति तत्र हेतुः अमानिनः समानस्येति च न मातेत्यादि प्रकटार्थो नन्दं ज्ञापयितुमभीप्सितः अप्रकटोऽर्थस्त्वन्य एव तत्र सदसन्मिश्राः सात्त्विकतामसराजस्यो या योनयस्तासु अस्य जन्म नास्ति जन्माभावादेव तदुत्तर कालभवं कर्मापि नास्ति तादृशजन्मा देहोऽपि नास्ति तेन देहेन क्रीडापि नैव अर्थः प्रयोजनं च नैव या गुणातीताः शुद्धसत्त्वस्वरूपा यशोदादेवकीकौसल्याद्यास्तासु जन्म च तदनन्तरं कर्म च तज्जन्मा देहश्च क्रीडा च प्रयोजनं चास्ति तद्रूपा मात्राद्याश्च सन्तीति भावः । किं त्वयं नन्दं ज्ञापयितुमनभीप्सितः सोऽपि एवं ब्रह्मस्वरूपोऽपि साधूनां स्वभक्तानां दुःखत्राणाय कल्पते योग्यो भवत्येव भक्तवात्सल्यादिति भावः ॥ ३७—३९ ॥

ननु यदि तस्य सर्वत्र साम्यात् प्रियाप्रियादयो न सन्ति तर्हि कथं तेन केचित् सुखिनः केचिद्दुःखिनश्च जगत्यत्र सृष्टास्तत्र गुणकृतमेव सुखदुःखादिकं न तत्कृतमित्याह । सत्त्वमिति । निर्गुणोऽपि स्वमायाशक्त्या वीक्षणादिना गुणांस्तदीयान् भजते स्वीकुरुते किमर्थं क्रीडन् क्रीडितुम् अतीतः क्रीडामतीत इति क्रीडापि तस्य नास्तीति नन्दं बोधयितुमभीप्सितोऽर्थः वस्तुतस्तु गुणान् अतीतः सन् अत्र मायिकलोकमध्ये कृष्णरामाद्यवतारेण स्वभक्तैः सह क्रीडितुमित्यर्थः । अतो गुणान् अतीतोऽपि गुणैर्जगत् सृजति यत एव प्राक्कल्पगतजीवाः स्वस्वशुभाशुभकर्मसाधनफलसिद्ध्यर्थं बुद्धीन्द्रियादीनि प्राप्य सुखिनो दुःखिनश्च भवन्तीति तत्र तस्य को दोषः न हि तस्य ते प्रिया अप्रियाश्चेति भावः ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यपि सर्वसमस्तथापि भवद्विधानां साधूनां विशेषतोऽनुग्रहायावतीर्णस्तस्मात् युवयोरन्तिके आगमिष्यत्येवेत्याशयेनाह । नचास्येति त्रिभिः । अस्य श्रीकृष्णस्य अतिप्रियादयो न सन्ति तत्र हेतुगर्भं विशेषणम् अमानिन इति समानस्येति च ॥ ३७ ॥

किं च तस्य श्रीकृष्णस्य कर्मसाध्याः मात्रादयो न सन्ति

यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते [१] ।
चित्ते कर्तरि तत्रात्मा कर्तेवाहंधिया स्मृतः ॥ ४१ ॥
युवयोरेव नैवायमात्मजो भगवान् हरिः ।
सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः ॥ ४२ ॥
दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च ।
विनाऽच्युताद्वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः ॥ ४३ ॥
एवं निशा सा ब्रुवतोर्व्यतीता नन्दस्य कृष्णानुचरस्य राजन् ! ।
गोप्यः समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमन्थन् ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यतः अस्य तन्निमित्तं लौकिकं कर्म नास्ति "जन्मकर्म च मे दिव्य" मितिश्रीवचनात् लोके प्राकृतलोके सदसन्मिश्रयोनिषु देवातिर्य्यङ्मनुष्ययोनिषु आविर्भावस्थानेषु स्वाभाविकनिजविग्रहयुक्त एव सोऽपि कर्मसाध्यमात्रादिजन्मान्तपदार्थसंबन्धवर्जितोऽपि क्रीडार्थः क्रीडाप्रयोजनः निजभक्तमनोरथसिद्धिप्रयोजनः साधूनां परित्राणाय च कल्पते अविर्भवतीत्यर्थः । देहारम्भकं कर्म नास्ति तदभावे देवादियोनिषु मातृविकारमयो देहो नास्ति तदभावे अपूर्वदेहग्रहणरूपं जन्म नास्ति तदभावे मात्रादयो न सन्तीति फलितोऽर्थः ॥ ३८ ॥ ३९ ॥

कर्माभावे देहतज्जन्मतन्निमित्तकमात्राद्यभाव इत्युक्तमथ तादृशं कर्मासौ भगवान् कुतो न करोतीत्यत्र प्राकृतगुणवश्यो जीवस्तादृशं कर्म करोति तद्देहादिसिध्यर्थं स्वतः पूर्णकामो भगवांस्तु प्राकृतैर्नियम्यैर्गुणैः सृष्ट्यादि करोति नत्वात्मनो देहादिसिध्यर्थं कर्म करोति प्राकृतगुणरहितत्वादित्याह । सत्त्वमिति । निर्गुणोऽपि प्राकृतगुणरहितोऽपि सत्त्वं रजस्तम इति गुणान् सृष्ट्याद्युपकरणतया गृह्णाति तैर्गुणैः विश्वं सृजत्यवति हन्ति स्वयमतीतोऽपि सृष्ट्याद्यविषयभूतोऽपि यतोऽजो नित्यविग्रहयुक्तः स्वरूपतस्तु जीवस्याप्यजत्वात् किं कुर्वन् क्रीडन् केवलं जीववदितीयेव विहरन् स्वतः अवाप्तसमस्तकामत्वादित्यर्थः ॥ ४० ॥

---

भाषा टीका ।

ये परमात्मा मान रहित हैं इनका कोइ अति प्रिय भी नहीं है वैरी भी नहीं है वे सब को समान मानते हैं उनके कोई भी समान उत्तम या मध्यम नहीं है ॥ ३७ ॥

उनके कोइ माता पिता या भ्राता सुत आदिक नहीं हैं न कोई अपना है न पराया है न देह है न जन्म है ॥ ३८ ॥

इन सत् असत् तथा मिश्र योनियों में उनका कोई कर्म नहीं है तो भी वे साधुओं के रक्षा करने को क्रीडा में प्रवृत्त होते हैं ॥ ३९ ॥

ये प्राकृत गुण रहित होकर भी दिव्य सत्व रजः तमः गुणों को भजते हैं वे क्रीडा करते हैं प्राकृत गुणों से रहित होकर भी संसार की उत्पत्ति स्थिति प्रलय आदि को करते हैं ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्राविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टान्तीकुर्वंस्तस्याविद्ययैव कर्तृत्वमिति सदृष्टान्तमाह । यथेति । भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यतीति यथा प्रतीयते एवं चित्ते कर्तरि सति तत्र चित्ते अहंधिया आत्माध्यासेनात्मा कर्ता स्मृतो यथा तद्वदिति ॥ ४१ ॥

किञ्च युवयोरेव नायमात्मजः किन्तु सर्वेषामपि तत्रापि नात्मज एव किन्तु शत्रुमित्रादिरूपोऽपीति सर्वात्मत्वनिरूपणेन मोहनिवृत्तेय सम्बन्धमनैकान्तिकी करोति युवयोरिति द्वाभ्याम् ॥ ४२ ॥

अच्युताद्विना तरां नितरां तत्त्वतो वाच्यं निर्वचनार्हं वस्तु नास्तीति ॥ ४३ ॥

दीपान्निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नहि कथं तत्तद्गुणाविष्टः प्रतीयते तत्राह । यथेति । यथा जीवैर्भ्रमरिकादृष्ट्या कुम्भकारचक्रवन्निजदेहपरिभ्रमणसंस्कारवत्या दृष्ट्या मही भ्राम्यतीव प्रतीयते । यथा जीवैर्विवेऽपि कर्तरि सति तत्र चित्तेऽहंधिया चित्तसंवादमिति बुद्ध्या शुद्धस्वरूप आत्मा स्वं कर्तेव स्मृतः स्मर्यते प्रतीयत इत्यर्थः । तथैवरोऽपि सृष्ट्याद्याविष्टः प्रतीयत इति शेषः ॥ ४१ ॥

अतः प्रेमविशेषवशत्वेनैव युवयोः पुत्रोऽसौ ततः कथञ्चि-

---

१ अयं विजयध्वजीये नास्ति ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

दन्यत्र गतोऽप्यागमिष्यत्येव। यदि च प्रातीतिकेन जन्यजनकभावेन तस्मिन् पुत्रत्वं मन्यसे तदा सर्वात्मकत्वेन न केवलं युवयोरेव अपि तु सर्वेषां नच केवलं पुत्र एव अपि तु पित्रादिरपि तत्र तत्र च साक्षात्तदालम्बनकप्रेमविशेषाभावान्न कदाचिदनुगच्छेदिति बोधयन्नाह। युवयोरेवेति द्वाभ्याम्। अयं मद्विधस्येश्वरः भगवानखिलैश्वर्ययुक्तः हरिः सर्वदुःखहर्त्ता। यद्वा। तस्मात् प्रेमविशेषसद्भावमात्रस्य तस्मिन् पुत्रत्वापादकत्वात् युवयोरेवायमात्मजः नैव ननु सर्वेषामात्मजः। हि यस्मात् सर्वेषामात्मा परमात्मा पिता जनयिता माता धारयिता ईश्वरः कर्मफलदाता चेति॥ ४२॥

तत्र हेतुत्वेन सर्वात्मकत्वमेव दर्शयति। दृष्टमिति। अविनाभावत्वे हेतुः परमात्मभूतः सर्वेषां मूलस्वरूपः परमार्थभूतः इति पाठेऽपि स एवार्थः। अर्थो वस्तु॥ ४३॥

एवं पूर्वोक्तप्रकारेण तत्र श्रीनन्दस्य तत्प्रकारो यथाकथञ्चित् स्वपुत्रागमनमात्रतात्पर्यकः श्रीमदुद्धवस्य तत्प्रकारस्तु सान्त्वनमात्रतात्पर्यकः। वीक्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा इत्याद्युक्तेः। यथा भवतामनयोर्भावः सर्वेषामेव श्लाघनीयः। एतादृशभावमूलकं चेदं विरहदुःखं तच्च सम्प्रति परमदुःसहं जातं श्रीकृष्णागमनञ्च न सम्प्रति घटते। तस्माद्भावश्लाघासहितेनैव तत्त्वोपदेशेन भावमेवैतं यत्किञ्चिच्छिथिलयमानं विधाय तद्दुःखञ्च तादृशं विधेयमिति सान्त्वनमात्रतात्पर्यकः। ब्रुवतोः सतोरिति शतृप्रयोगेण तु द्वयोरपि पुनः पुनस्तादृगुक्तिं बोधयति। सा तयोः संलापसम्बन्धिनी दीर्घापि निशैव विशेषेण निःशेषेणातीता। नच श्रीगोपेन्द्रस्य शोको नाप्युद्धवस्य तदर्थवाक्प्रयोगो विरराभेत्यर्थः। कृष्णानुचरस्येति तदादेशानुसारेणाशेषवाक्चातुर्यवतोऽपीत्यर्थः। ततश्च प्रातःकृत्यार्थं त्वरया श्रीमदुद्धवो वहिर्निर्गत इति ज्ञेयम्। तदागमनज्ञानेन च गोप्यः प्रातर्गृहकृत्यं कर्तुं प्रवृत्ता इत्याह। गोप्य इति। गोप्योऽत्र विश्रम्भप्रधानान्तःपातिन्यः साधारण्ये वा। दधिमन्थनमिदं प्रायः कृष्णाय नवनीतप्रेषणापेक्षया॥ ४४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

गुणैः सृष्ट्यादिव्यापारं कुर्वतोऽपि भगवतो जीवस्येव गुणकार्यभ्रमो नास्ति चेतनस्य व्यवस्थितस्यापि नास्तीत्याह। यथा भ्रमरिकादृष्ट्येति। अतिवेगभ्रमणक्रियानिष्ठदृष्ट्या मही भूमिर्भ्राम्यतीव ईयते प्रतीयते तत्र गुणवद्दयतया जीवस्य चित्ते कर्तरि भ्रमः कर्तरि करणे कर्तृत्वोपचारः भ्रमहेतुर्भूमिर्भ्राम्यतीव ईयते प्रतीयते तत्र गुणवति जीवस्य मनस्यनवस्थितोऽपि आत्मा परमात्मा अकर्तैव भवति अहंधिया बुद्धिर्बुद्धिमतामस्मीत्यादि प्रकारेण तच्छरीरकोऽहमिति मन्यमानः स्थितोऽप्यकर्तैव भवतीत्यर्थः॥ ४१॥

सर्वेषामिति। मातापित्रादिशरीरकः परमात्मेत्यर्थः॥ ४२—४९॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एतदेव दृष्टान्तमुखेनोपपादयति। यथेति। भ्रमरिकाऽतिवेगभ्रमणक्रिया तयोपलक्षितया दृष्ट्या यथा भूरपि भ्राम्यतीव वभ्रम्यमाणेवेयते प्रतीयते तथात्मा कर्ता च सन्नेव जीवस्तत्रात्मन्यकर्तरि च चित्ते चित्तशब्दोपलक्षिते देहे अहंधिया स्वाभेदाभिमानेन स्मृतः मतः स्वगतकर्तृत्वात्मज्ञातृत्वादीन् विस्मृत्य देहमेव तथाविधं मन्यत इत्यर्थः। यद्वेवं जीवविलक्षणो भगवान् कृष्णः तद्याथात्म्यविद्भिः स्वतुल्यतया दृश्यते इति सदृष्टान्तमाह। यथेति। स्वयं भ्रमरिकारहितापि भूर्यथा भ्रमरिकादृष्ट्या भ्राम्यतीव प्रतीयते तथायं श्रीकृष्णोऽप्यहंधिया स्वतुल्यबुद्ध्या कर्ता पुण्यपापात्मककर्मकर्ता य आत्मा जीवः स इव चित्ते कर्तरि स्मृतः करणभूते चित्तेऽनुसन्धीयते त्यर्थः। यद्वा कर्तरीत्येव च्छेदः कर्तरि जीवे यच्चित्तं तस्मिन्नहंधिया तामेव प्रपञ्चयति तत्र चित्ते आत्मा कर्तैव पुण्यपापादिकर्ता तदायत्तदेहादिभाग्जीव इव स्मृतः मत इत्यर्थः॥ ४१॥

एवं जीववैलक्षण्यमुपपाद्य तयोः तस्मिन् केवलं पुत्रत्वाभिमानं वारयन् तदनवगतसम्बन्धान्तराण्युपदिशन् तानि च सर्वजीवसाधारणानीत्याह। युवयोरिति। अयं ज्ञानादिकल्याणगुणगणाकरो निरस्तनिखिलदोषः आश्रितवन्धनहरः श्रीकृष्णः युवयोरेवात्मज एव न भवति किं तु सर्वेषामप्यात्मजः कुतः हि यस्मादात्मा सर्वान्तरात्मा तत्तदात्मजाद्यन्तरात्मतया तत्तच्छरीरकत्वेन तत्तद्रूपत्वादिति भावः। न केवलमात्मज एवापि तु पिता सर्वकारणत्वादिति भावः। माता च हितैककारित्वादिति भावः। यद्वा सर्वात्मकत्वान्मात्रादिरूपोऽपि स एवेति भावः। ईश्वरः स्वामी च अनेन "मात भ्राता पिता निवासः शरणं सुहृद्गतिश्च नारायण" इति श्रुत्यर्थोऽभिसंहितः॥ ४२॥

सर्वेषामात्मेत्यनेनोक्तं सर्वात्मकत्वमेव प्रपञ्चयति। दृष्टमिति। दृष्टाद्यन्यतमं यत्किञ्चिद्वस्तु तदच्युतं विना नास्ति सर्वमच्युतायत्तसत्तादिमत्त्वेन तच्छरीरकत्वेन च तदात्मकमेवेत्यर्थः। कुतः यतः परमार्थभूतः लोकत्रयमप्यन्तः प्रविश्य प्रशासनेन तस्य भर्ता व्याप्यगतदोषास्पृष्टश्चातः सर्वं जगत्स एव विशेषणवाचिशब्दयोराकृत्यधिकरणन्यायेन विशेष्यपर्यन्तत्वस्वाभाव्याद्विशेषणस्य विशिष्टवस्त्वन्तर्भूतत्वेन विशिष्टात्पृथगवस्तुत्वाच्च जगद्रूपेण स एवानुसन्धेय इत्यर्थः॥ ४३॥

एवमिति। हे राजन्! इत्थं कृष्णानुचरस्योद्धवस्य नन्दस्य च ब्रुवतोः सतोः सा निशा व्यतिक्रान्ता बभूव तदा निशायाः पश्चिमे यामे गोप्यः समुत्थाय दीपान्निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् समभ्यर्च्य गन्धादिभिरिति शेषः दधीन्यमन्थन्ममन्थुरित्यर्थः॥ ४४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सम्यक्प्रणिहिते आत्मनि मनसि जायते प्रकाशत इत्यात्मज इत्यध्यात्मम्॥ ४२॥

युवयोरेकं तत्त्वं सङ्क्षिप्य वदामीत्याह। दृष्टमिति। भविष्यत् भूतं भवद्वर्तमानं स्थास्नु स्थावरं चरिष्णु जङ्गमम् अच्युताद्भिनाऽन्यत् ब्रह्मादिकं वस्तुनया स्वातन्त्र्येण नैवास्ति किं तु सर्वं स एव तदधीनमेव स कीदृशः परमार्थरूपः नित्याप्रतिहतस्वरूप इति बुध्यध्वमिति॥ ४३॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निरूप्य प्रज्वाल्य वास्तून् गृहद्वारिदेहल्यादिषु वास्तुदेवताः मार्जनालेपनाक्षतादिभिः सम्यगभ्यर्च्य अमन्थन् ममन्थुः ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ईश्वरे साक्षात् कर्तृत्वादिकं तु जीवेनारोप्यत एवेति दृष्टान्तेन योजयति । यथेति ॥ ४१ ॥

तदेवं साधारणेषु तस्य साधारणं वैभवं वदन् तत्रैवार्थविशेषेण तयोः सम्बन्धविशेषं स्थापयति । युवयोरिति ॥ ४२ ॥

युवयोरेव सर्वात्मकत्वमिति दर्शयति । दृष्टमिति ॥ ४३ ॥

एवमिति । समाधानं तु न जातमिति भावः । गोप्यः साधारण्यः ॥ ४४—४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यथा स्वयमजः स्वरूपतो न जायते अन्यथा तु कार्यरूपेण जननमावश्यकमेवमात्मस्पृष्ट्यभावे गुणैरेव सर्गे जीवानामपि औपाधिकभेदेनैव भेदसम्भवात् कुत्राप्यात्मनः कर्तृत्वं नास्तीति निरूपयन् अन्तःकरणाध्यासेनैव कर्तृत्वं न स्वत इति दृष्टान्तेनोपपादयन् कैमुत्यन्यायेन भगवति कर्तृत्वे निषेधमाह । यथा भ्रमरिकेति । यो हि वात्याचक्रमिति तस्य दृष्टिर्भ्रमरिका भवति तस्य दृष्ट्या भ्राम्यतीव मही ईयते वस्तुतस्तु दृष्टिरेव भ्रमति अन्यथा क्षणान्तरे अन्यैर्वा भ्रमणमुपलभ्यते तथा चित्ते कर्त्तरि सति कर्तृत्वाभिमानस्यैव प्रयोजकत्वात् प्राप्ताप्राप्तविवेकेन अहंकार एव कर्त्ता भवति तत्राहंधिया जीवोऽपि कर्तैव स्मृतः न तु वस्तुतः कर्त्ता एवं केचिद्दृष्टान्तदार्ष्टान्तिकभावेन एकवाक्यतया योजयन्ति वस्तुतस्तु दृष्टान्तद्वयमन्तर्बहिर्भेदेन अन्यथा इत्येव सङ्गतं स्यात् दृष्टान्ते च विपय अन्यथा बुद्धिर्दार्ष्टान्तिके तु कर्तृत्वे सति असामञ्जस्यं च स्यात् अनुपयुक्तार्थश्च नहि साक्षाद्भगवच्चरित्रे उपपद्यमाने प्रासङ्गिकत्वेन योजनमुचितं तत्र भगवान् ब्रह्मरूपः स्वयं तादृश एवाभिव्यक्तः नित्यस्वरूपगुणक्रियारूपः क्रमेण परं पुरुषाणां दृष्ट्या गृहीतः तत्र भ्रामिका दृष्टिः स्वधर्मं च तत्र योजयति ततो ब्रह्मरूपमेव प्राकृतसम्बन्ध्येव तत्र तत्र परिदृश्यमानं तथा कल्पयति तस्माद्भगवति नैते धर्मा युक्ताः स्वभ्रमादेव सच्चिदानन्दे प्राकृतत्वप्रतीतिः किञ्च यथा स्मृतौ सांख्यादिशास्त्रे चित्ते कर्त्तरि आत्मा कर्तैव दृश्यस्तदध्यासात् तथा भगवति स्वसम्बन्धारोपासद्भावः प्रतीयते न तु वस्तुतो भगवांस्तथा भवति ततः पूर्ण एव व्यापकः परिच्छिन्नदृष्ट्या तत्तत्पदार्थेषु अभिव्यक्त्या सूर्यवत्सम्बद्धस्तथा दृश्यते स्वधर्मारोपेण वा तथा मन्यते वस्तुतो दृश्यतेऽपि न अतः पूर्ण एव परमानन्दः परिच्छेदकदृष्ट्या तदिच्छया क्वचिदुपलभ्यते क्वचिदिति यशोदानां भगवदिच्छया मथुरायामिति निर्दिश्यते न तु सर्वाङ्गैर्यथा वा अस्मदादिभिर्दृश्यमानमपि भवन्तो वदन्ति नात्र भगवान् किन्तु मथुरायामिति एवं भ्रमो भवदीयस्तस्मादिमं भ्रमं परित्यज्य सर्वत्रैव भगवान् ज्ञातव्य इत्यर्थः । साक्षात्कारस्तु तदिच्छया भविष्यति ॥ ४१ ॥

ननु अस्माभिरयं पुत्रत्वेन एतावत्कालं व्यवहृतः कथमिदानीमपुत्रत्वं स्वस्य वा भ्रान्तत्वं मन्यामह इत्याशङ्क्याह । युवयोरेवेति । यद्भवतोर्लीलया भगवान् पुत्रो जात इति तथैवाङ्गीक्रियत इति मतं तदा युवयोरेवं भूतो नान्येषामिति नास्ति किन्तु सर्वेषामेवायमात्मजादिः सर्वात्मा ह्ययं तेषां पुत्रत्वाकारेण यदि न भवेत् आधिदैविकप्रकारेण न वा तदा संसारे प्राणिनामानन्दो न भवेदिति को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति श्रुतेः यतोऽयं हरिः अकारणसर्वदुःखहर्त्ता भगवान् समर्थः यदि समर्थो भूत्वा न दुःखं दूरीकुर्यात् तदा अयुक्तं भवेदिति अतो युक्तत्वादेव सर्वेषामात्मजः आत्मा च सङ्घातरूपः तथा पिता सङ्घातस्तु बीजं माता योनिः स च जीवः ईश्वरो नियन्ता अन्तर्यामी च एतावद्रूपो भगवान् सर्वेषां भवतीति किमाश्चर्यं भवतां पुत्रत्वेन स्वात्मानं स्थापितवानिति ॥ ४२ ॥

ननु सर्वेषां तथात्वेऽपि न सर्वेषां तथा प्रतीतिः किं त्वस्माकमेव इदं च भगवता लीलयैव तथैव कृतम् अतः पुत्रोऽस्माकमेव न सर्वेषामिति चेत्तत्राह । दृष्टं श्रुतमिति । भगवान् सर्वेषामेव सर्वरूपो भूत्वा तथात्वं बोधयति तथा सति यदि कोऽपि न मन्यते तदा तेषामभाग्यं भवद्भिरपि भ्रममात्रं मन्तव्यं किन्तु सर्वत्वेन पुत्रत्वमपि मन्तव्यमिति न तु पुत्रत्वमेव परिच्छिन्नदृष्ट्या तावदेव गृहीतमिति तत्रान्यथा बुद्धिर्न कर्तव्येति दृष्टं प्रत्यक्षतः ऐहिकं श्रुतं श्रुत्यादिना पारलौकिकं च भगवानेवेत्यर्थः । भूतभवद्भविष्यदिति त्रिविध कालपरिच्छेद उक्तः अनेन कालपरिच्छिन्नमपि भगवानेवेत्युक्तम् अनेन परिच्छेद्यापरिच्छेद्यविरुद्धसर्वधर्माश्रय इत्युक्तं परिच्छिन्नेऽप्यवान्तरभेदवानयमेवेत्याह । स्थास्नुश्चरिष्णुरिति । स्थावरं जङ्गमं च तत्रापि तृणमेरुभावौ सिकताब्रह्माण्डभावौ वा मशकब्रह्मभावौ च भगवानेवेत्याह । महदल्पकं चेति । एवं चतुर्धा भिन्नो भगवान् चतुर्मूर्तिः स्वयमेव यतः अच्युतः अन्यथा केनाप्यंशेन परिच्छेदे च्युतत्वं स्यात् अतः अच्युताद्भिन्ना अच्युतव्यतिरेकेण इतरद्वस्तु न वाच्यं किन्तु स एव सर्वम् अच्युतमिति अच्युतं विभक्तमपि न भवति अच्युतभिन्नमपि न भवति नन्दस्य प्रथमाधिकारित्वात् आधिदैविकप्रकारेण विश्वासार्थं भगवतः सर्वत्वमाह । परमार्थभूत इति । परमार्थो भगवान् भूतः आधिदैविकः परमार्थ आध्यात्मिकः किं त्वर्थो भवति भौतिकस्त्वनर्थः अत एव ब्रह्मवादात् आधिदैविकवादः पूर्वमीमांसासिद्धः किञ्चिदपकृष्टः ततोऽपि भेदवादः आध्यात्मिकरूपः ततोऽपि मायावाद इति बोधने उत्तरोत्तरमपकृष्टप्रकाराः तत्राधिभौतिको भौतिकः सुखित्व प्रमेयबलेनेति ॥ ४३ ॥

एवं नन्दोपदेशः समाप्तः रजनी च ततः समाप्तेत्याह । एवं निशेति । सा निशा एवं युवतोरेव व्यतीता यस्या मुखं समागतः परं भार्यया सह भगवद्गुणालापेनापि रात्रिर्गच्छतीति तद्व्याकुलत्वं गणयति । नन्दस्य कृष्णानुचरस्येति । नन्दो भगवद्भक्तः प्रसिद्ध एव उद्धवः कदाचिदन्यदपि भवेदित्याशङ्क्य तन्निवृत्यर्थमाह । कृष्णानुचरस्येति । सेवको हि स्वामिकथामेव कर्तुं मागतः स्वामिकथामेव करोति राजन्निति तदभिज्ञत्वात्सम्बोधनं निशा प्रभातेत्यत्र निदर्शनमाह । गोप्यः समुत्थायेति । सम्यगुत्थाय ननु रात्रावेव निमित्तवशादुत्थानं निरूप्य दीपानिति तासां सम्पत्तिरधिका निरूपिता वास्तून् समभ्यर्च्येति दीपानिति बहुवचनेन भगवतो मङ्-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

त्रारात्रिकमपि सूचितं देहल्यादीनां सम्यगर्चनं कुलधर्मख्यापनार्थं भगवानत्र स्थित इति भक्त्या दर्शीनि नानाविधानि प्रातः कृतानि मध्याह्नकृतानि सायंकृतानि च मन्थनं रूपस्येव लौकिको दोह-स्त्रिवारं वैदिको द्विवारं त्रिवारमित्येके अनेन गोपिकानां सन्तो-षार्थमयमागतः तासां सुखचरितेन तुष्यतीति नन्दातिथ्यवत् ताभिः कृतमातिथ्यं निरूपितम् ॥ ४४ ॥

— ---- —

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जगत्स्रष्टृत्वमपि तत्र परमेश्वरे वस्तुतो नास्ति तस्यापि गुणकृतत्वादित्याह । यथेति । भ्रमरिका परिभ्रमणं वातादिधातुवैगु-ण्यात्तद्युक्तया दृष्ट्या जनेन मही कुम्भकारचक्रवद्भ्राम्यतीव ईयते प्रतीयते यथा च जीवेन चित्तेऽपि कर्तरि सति तत्रैवाहंधिया चित्तमेवाहमिति बुद्ध्या आत्मा कर्ता स्मृतः स्मर्य्यते तथैव गुणकृतैव जगत्सृष्टिरीश्वरे प्रतीयत इति शेषः । एवञ्च स्वरूपेणैव तस्य जगत्स्रष्टृत्वं नास्ति किन्तु स्वरूपभूताया अपि मायाया-स्तच्छक्तित्वेन तदभेदाज्जगत्स्रष्टृत्वमस्यापीति ज्ञेयम् ॥ ४१ ॥

अतः सर्वजगत्स्रष्टरि तस्मिन् परमेश्वरे पुत्रादिभावना सुख-दुःखदत्वादिभावना च कर्तुं नोचिता तदपि परमेश्वरोऽपि स कृष्णो ममैव पुत्र इति यदि मन्यसे तदा शृणु तत्त्वमित्याह । युव-योरेव न आत्मजः किन्तु ये ये तस्मिन्नात्मजभावं कुर्युस्तेषां सर्वेषा-मेवात्मजः आत्मा आत्मवत्प्रेष्ठः ये ये तस्मिन्नात्मैवायमिति भावं कुर्युस्तेषामात्मा एवं पित्रादिभाववतां स पित्रादिः ईश्वर इती-श्वरत्वात्तस्मिन् किमपि नायुक्तमिति भावः ॥ ४२ ॥

वस्तुतस्तु भो व्रजराज युष्मदादिकं सर्वमिदं जगत् तच्छक्ति-सृष्टत्वात्तदात्मकमेव जानीहि बूहि च तदनुरूपमित्याह । दृष्टमिति । अच्युतादृतेना वस्तु न तरां नैव वाच्यं प्रकृतिप्रत्यययोः पौर्वापर्या-भाव आर्षः ॥ ४३ ॥

एवं तयोर्वचनोरेव सा निशा व्यतीता ननु नन्दयशोदयोः सान्त्वनं कर्तुमुद्धवः शशाक नाप्युद्धवस्य प्रबोधनं तौ जगृहतु-रिति भावः । अत्र व्रजराजो मनस्येवं विचारयामास अयं कृष्णः परमेश्वर एवेति प्रबोधयन्नुद्धवस्तत् किमहं न जानामि अस्य नामकरणसमय एव नारायणसमोऽयमिति गर्गमुखादश्रौषमेव नारा-यणस्य समस्तं विना कोऽन्यस्तस्मात्तथा पूतनाबकादिमारणा-ऽघवर्धनधारणदावानलोपशमनादिलक्षणलोकपालप्रणमनात्मारायणान्य-मत्यान्त्ववृम एव नारायण एव परमात्मा स एव पं[illegible]र्णेन-दपि जानाम्येव तदप्ययमावयोरेव पुत्र इत्यत्रापि निःसन्देहानु-भव एव प्रमाणं तस्मान्मन्द्भाग्यो[illegible]ऽयं न इति श्रीगर्गमहामुनि-वाक्यमपि परमेश्वरेऽपि तस्मिन्नाराध्यत्वबुद्धिमकुर्वतोरपि स्तनु-[illegible]नाद्यलंकरणादिकं समर्पितवतोरस्यावयोर्मनःप्रसादान्य-थानुपपत्तिरपि कृष्णजन्मनः पूर्वमावयोरिष्टदेवो नारायणो ध्यानं [illegible] पदार्पितेनुना नु ध्यानमात्र एव स्फुरत्याविर्भवति [illegible]स्मिनः प्रसादं [illegible]मनः आवयोः पुत्रे तस्मिंस्तत्तद्व्यव-हारेण दोषः तथा कृष्णस्यापि पित्रावेवेत्यत्र कृष्णस्यैवानुभवः प्रमाणम् आवयोस्तनावलम्बनप्रदानाक्रोडरोहणपरिष्वङ्गचुम्बनादि-लक्षणलालनस्यप्राप्तौ सत्यां तस्य मुखम्लानेर्वृद्धो दृष्टत्वात् यदि तस्येयं माता न स्यात् तदा भाण्डस्फोटापराधे तं कथं बबन्ध बन्धने मुखम्लाने मया मोचने मुखप्रसादस्य च तदानीं दृष्टत्वात् आवयोः पितृत्वे सत्येव परमेश्वरोऽपि स विविधा-नुशासनभर्त्सनबन्धनादिकमङ्गीकुरुते स्म अन्यथा परब्रह्मणः सर्वव्यापकस्य परमेश्वरस्य कथं बन्धनमिति किन्तु सांप्रतं मथुरायां चाणूरकंसादिवधानन्तरं हे कृष्ण ! त्वं परमेश्वर एवेति सर्वे एव ब्रुवते स्म तत्र देवकी त्वहन्ते मातेति वसुदेवः अहं ते पितेति केचिदन्ये वयं ते पितृव्या इति केचिच्च वयं भ्रातर इति आत्मीया इति बन्धव इत्युक्त्वा बहव एव यदा तं स्वस्वगेहं प्रति नेतुं निमन्त्रयन्तो मथुरायामेव रोद्धुं प्रावर्त्तन्त तदा मत्पुत्रो महाभव्यशिरोमणिः स महासङ्कटे तत्तन्मु-खापेक्षया जाले पतितः स्वीयं व्रजमप्यागन्तुमपारयन् सर्वत्रैव दाक्षिण्यादेवमब्रवीदित्यहमनुमिमे अहं खलु परमेश्वर एव सर्वविश्वस्रष्टा मम का माता कः खलु पिता क आत्मीयः को वा परः किन्तु यूयं सर्वशास्त्रं पश्यत यो मे भक्तिं करिष्यति तस्यैवाहं नान्यस्य तस्यैव गृहं यास्यामि स एव मे पित्रादिरिति अयं तूद्धवो बालक एव बुद्धिमानपि मत्पुत्रस्य तस्य महागम्भी-रहृदयमवगाढुमसमर्थस्तद्वाचं तां श्रुत्वा कृष्णस्यायमेवाशय इति मत्वा तत आगत्यात्र मां तथैव प्रबोधयति स्म किञ्च मत्पु-त्रेण चातुर्य्यात् सम्यगेतदुक्तं यो मे भक्तिं करिष्यति स एव मे पित्रादिस्तस्यैव गृहे वसामीत्यतोऽहमप्युद्धवद्वारा संदेशमिमं संप्रेष-यिष्यामि हे कृष्ण ! त्वच्चरणे मम भक्तिर्भवेत्तथा कृपया प्रसीद यथा त्वदीयश्रवणकीर्तनस्मरणप्रणमनादिभक्त्या त्वामहं प्राप्नुयामिति ततश्च सर्वयादवसभासु मत्संदेशमिमं प्रथयित्वा भो भो यदुवंश्याः ! भवन्तोऽत्र मद्भक्तिं कर्तुं न शक्नुवन्ति नन्दस्तु करोत्यतः स एव पिता बन्धुः प्रियश्च तद्गृहमेव यामीत्युक्त्वा स शीघ्रमिहागच्छेदिति तदन्ते व्रजराजस्तमपि परा-मर्श दैन्यसञ्चारिप्राबल्येन विसस्मारेव अथ प्रकृतमनुसरामः ब्राह्मे मुहूर्ते समुत्थाय दीपान् निरूप्य प्रज्वाल्य वास्तून देह-ल्यादीन् ॥ ४४ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्तम्भे नृहरिमूर्तिवत् भक्तमनोरथपूर्त्यर्थं प्रादुर्भूते ऽस्मिन् अजे पुरुषस्य जनकत्वबुद्धिस्तु भ्रान्त्यैवेत्याह । यथेति । भ्रमरिका परिभ्रमणरूपा क्रिया तयोपलक्षितया दृष्ट्या मही सुस्थिरापि भ्राम्यतीव ईयते प्रतीयते तथा तत्र तस्मिन्कर्तरि विश्वसृष्ट्या-दिकर्तरि सर्वजनके आत्मा जीवात्मा पुरुषः कर्तेव जनकधिया स्वबुद्ध्या चित्ते स्वकीये एव स्मृतः नतु शास्त्रे तज्जनकः कश्चिदुप-लभ्यत इत्यर्थः । “ अजायमानो बहुधा व्यजायत ” इति श्रुतेः ॥४१॥

भक्तितस्तु युवयोरेव तत्राप्यात्मज एव नायं श्रीकृष्णः किन्तु युवयोरन्येषामपि सर्वेषाम् आत्मजः पिता माता च “ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह ” मिति श्रीमुखोक्तेश्च हि हेतौ यतो हेतोः सः श्रीकृष्णः ईशः नियन्ता हरिः क्लेशहरः आत्मा च सर्वं कृष्णात्मकमित्यर्थः ॥ ४२ ॥

सर्वस्य श्रीकृष्णात्मकत्वं श्रीकृष्णस्य सर्वात्मत्वं चाह । दृष्ट-मिति । अच्युतादृतेना तरां नितरां दृष्टश्रुतादिकं वस्तु न वाच्यं

ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकङ्कणस्रजः ।
चलन्नितम्बस्तनहारकुण्डलत्विषत्कपोलारुणकुङ्कुमाननाः ॥ ४५ ॥
उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः ।
दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम् ॥ ४६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न कथनीयम् अतदात्मकवस्त्वभावात् यतः सर्वं चिदचिदात्मकं वस्तु परमार्थभूतः कारणभूतः स एव "सर्वं खल्विदं ब्रह्म तज्जलानिती"ति स्वरूपतश्चिदचिद्ब्रह्मपदार्थानामभेदासम्भवात् चिदचितोर्ब्रह्मानिरपेक्षस्थितिप्रवृत्त्याद्यभावाद्ब्रह्मणि सर्वात्मनि श्रीकृष्णे अभेद इत्यर्थः ॥ ४३ ॥

कृष्णानुचरस्योद्धवस्य निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् अमन्थन् ममन्थुः ॥ ४४ ॥

भाषा टीका ।

जैसे घूमते हुये पुरुष की दृष्टि में पृथिवी घूमतीसी दीखती है तैसे ही आत्मा का जो अहमर्थ है तिसको चित्त देहादिकों में आरोप करके आत्मा देहादिकों को कर्ता मानता है ॥ ४१ ॥

ये भगवान् हरि तुमारे ही पुत्र नहीं हैं किंतु सब जीवों के पुत्र आत्मा भी हैं पिता भी माता भी हैं वही ईश्वर हैं ॥ ४२ ॥

जगत् में जो दृष्ट या श्रुत है भूत या भविष्यत् है स्थिर है चर है या बडा छोटा है सो सब अच्युत के विना कुछ भी नहीं है वही परमार्थ होने से सर्व स्वरूप हैं ॥ ४३ ॥

हे राजन्! नंदजी के तथा कृष्णदास उद्धवजी के ऐसे बोलते ही सब रात बीत गई प्रातःकाल में गोपीं सब उठीं और दीपक लगाकर वास्तु देवों का पूजन करके दधि का मंथन करतीं भईं ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मणिभिः काञ्च्यादिषु स्थितैः रज्जूर्विकर्षत्सु भुजेषु कङ्कणानां स्रजो यासां ताः चलन्तो नितम्बाः स्तना हाराश्च यासां ताः कुण्डलैस्त्विषन्तः स्फुरन्तः कपोला यासां ताः अरुणानि कुङ्कुमानि येषु तान्याननानि यासां ता एव ताश्च ताश्च ॥ ४५-४६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

दीपैर्हेतुभिर्दीप्तैस्तत्प्रतिबिम्बेन विशेषतः विरेजुरिति स्वत एव रेजुः पुनश्च तादृशैर्मणिभिर्विशेषत इत्यर्थः । यद्वा । दीपादपि दीप्तैः । अतो विशेषतो रेजुः ततो दीपज्वालनं तु मङ्गलत्वेनैव विराजमाने हेत्वन्तरं रज्जूरित्यादि । स्रक् श्रेणी कुण्डलस्यापि चलनं प्रकरणवशाज्ज्ञेयम् । अरुणेति वाह्लीकदेशोद्भवानि कुङ्कुमानि व्यज्यन्ते ॥ ४५ ॥

सन्ततं श्रीकृष्णावेशयुक्तानामपि तासां व्रजव्यवहाररक्षणाय श्रीकृष्णकरक्षिततत्तत्संस्कारवशाद्दधिमन्थनेऽपि तदावेशं सूचयन् तत्र च योगावसरतया गाननातिशयं दर्शयन् तेन जगतोऽपि मङ्गलं जातमित्याह । उदिति । उच्चैरित्यावेशो दर्शितः अरविन्दलोचनमिति । सौन्दर्यप्रधानं गानं व्रजाङ्गनानामिति तादृशप्रसिद्धैर्गानैर्नैपुण्यञ्च । एवं प्रेम्णोर्धैर्गानात्तासां बाहुल्याच्च गीतध्वनेर्व्यापकता ज्ञापिता । अत एव दिवमस्पृशत् तत्र हेत्वन्तरञ्च दध्न इति । निर्मन्थनं निरन्तरविलोडनं चकारात् कङ्कणादेश्च शब्दः मिश्रितः दिशां दशदिग्वर्त्तिनां सर्वेषामेव लोकानाममङ्गलम् ऐहिकामुष्मिकाशेषदुःखं तन्मूलञ्च कर्म निरस्यते सवासनं दूरतः क्षिप्यते ॥ ४६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मन्थन्तीस्ता वर्णयति । ता इति । ता मन्थन्त्यो गोप्यः दीपैर्दीप्ता ये काञ्च्यादिस्थिता मणयस्तैर्विरेजुः कथम्भूताः मन्थनदण्डरज्जूर्विकर्षत्सु भुजेषु कङ्कणानां स्रजो यासां ताः चलन्तो नितम्बाः स्तना हाराश्च यासां ताः कुण्डलैस्त्विषन्तः स्फुरन्तः कपोला यासां ताः अरुणानि कुङ्कुमानि येषु तान्याननानि यासां ताश्च ताश्च ॥ ४५ ॥

तादात्विकध्वनिं लक्षयति । उद्गायतीनामिति । अरविन्दलोचनं श्रीकृष्णम् उच्चैर्गायतीनां गोपीनां ध्वनिः दध्नो निर्मन्थनजशब्देन मिश्रितो ध्वनिः शब्दः दिवमस्पृशद्व्याप्तवान् येन ध्वनिना दिशाममङ्गलं निरस्यतेऽपनुद्यते ॥ ४६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मन्थनरज्ज्वा विकर्षन्तः उल्लिखन्तः करकङ्कणा यासां ताः यद्वा मन्थनरज्ज्वाऽविकर्षन्तः चलद्भिर्नितम्बादिभिस्त्विषन्ति कपोलादीनि अरुणकुङ्कुमानि आननानि यासां तथा अरुणानि कुङ्कुमानि येषु तानि तथा वा ॥ ४५ ॥

येन ध्वनिना दिशाममङ्गलमित्यनेन दिगन्तवासिनां जनानामशुभं नश्यतीत्युच्यते ॥ ४६ ॥

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

यद्यपि सकृत्स्मितेव सन्तुष्टो भवति तथापि तासामुत्कर्षमप्याह । ता दीप्तदीप्तैरिति । दीप्तैर्दीप्ता ये मणयः दीपप्रतिबिम्बग्रा-

भगवत्युदिते सूर्ये नन्दद्वारि व्रजौकसः ।
दृष्ट्वा रथं शातकौम्भं कस्यायमिति चाब्रुवन् ॥ ४७ ॥
अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः ।
येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥
किं साधयिष्यत्यस्माभिर्भर्तुः प्रेतस्य निष्कृतिम् ।
इति स्त्रीणां वदन्तीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे नन्दशोकापनयनं नाम
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

हिणः तैर्विशेषेण रेजुः स्वरूपापेक्षयापि अधिका कान्तिरिति भगवद्योग्यता निरूपिता। भगवद्गुणगानयोग्यता वा एवं स्वरूपं ;वर्णयित्वा क्रियाभिनिवेशेऽपि शोभातिशयमाह । रज्जूनां विकर्षयुक्तौ यौ भुजौ तत्र कङ्कणानां स्रजो यासु स्थूलकङ्कणपरिधानं भगवद्विरहात् क्षामत्वं वा बोध्यते चलन्नितम्बः स्तनौ च तत्र हाराः कुण्डले च यासां कुण्डलयोर्वा त्विट् कान्तिस्तद्युक्ते कपोले त्विष्यत्कपोले सामान्यतस्त्विड्युक्ते वा कपोले ताभ्यां कृत्वा अरुणः कपोलयोर्वारुणः अरुणकुङ्कुमयुक्तमुखाः सर्वाङ्गेषु सौष्ठवमाभरणान्युत्तमत्वं च निरूपितम् ॥ ४५ ॥

एवं स्वरूपतो भगवद्योग्यत्वेनातिथ्यमुक्त्वा भगवद्गुणपरत्वेनापि तथात्वमाह । उद्गायतीनामिति । धर्मबुद्ध्यापि गानं सम्भवतीति तद्व्यावृत्त्यर्थमाह । अरविन्दलोचनमिति । सहि कमलनयनः कोटिकन्दर्पसुन्दरः। ननु कथं ब्रह्मत्वादिगुणा नोक्तास्तत्राह। व्रजाङ्गनानामिति। ता हि व्रजस्त्रियः सौन्दर्येणैव वशीकृताः किं ब्रह्मत्वादिना प्रशस्तान्यङ्गानि यासामिति तावन्मात्रपरत्वे हेतुरप्युक्तः। अन्यथाङ्गप्राशस्त्यं व्यर्थं स्यात्तासां लौकिकवैदिकानरपक्षत्वाय गाने विशेषमाह । उद्गायतीनां ध्वनिर्दिवमस्पृशदिति । कार्यकारणसहितं गानं निरूपितम्। कारणाधिक्याल्लोकपरित्यागः तथा सति लोकविच्छिन्नत्वात् अस्वर्ग्यमाशङ्क्य तत्रैव स्वर्गबन्धः कः सन्देहस्तत्फलस्येति तेनैव चरितार्थत्वात् वैदिकानिरपेक्षता च तासां भगवदीयत्वेन स्वर्गस्यानपेक्षितत्वात् वाचनिककायिकयोरेव कर्मणोः स्वर्गबन्धप्रतिपादनार्थं दध्नश्च निर्मन्थनशब्दमिश्रित इत्युक्तं चकारात्कङ्कणानामपि रणत्कारेण मिश्रितः भगवदीयानां संबन्ध्यपि गोपिकानां गवां च सम्बन्ध्यपेक्षत इति भगवानिव तद्गुणा अपि तत्सापेक्षा इति तासां महत्त्वं सूचितम् ननु सर्वधर्मपरित्यागे तासामपापं भवेदिति कथं तद्वर्णनेन आतिथ्यं माहात्म्यं चेत्याशङ्क्याह । येन ध्वनिना दिशामेवामङ्गलं निरस्यते किमु तत्सम्बन्धिनाम् ॥ ४६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मणिभिः कङ्कणकिङ्किण्यादिषु स्थितैः रज्जुर्विकर्षत्सु भुजेषु कङ्कणानां स्रक् श्रेणी यासां ताः चलन्तः कम्पमाना नितम्बाः स्तना हाराश्च यासां ;कुण्डलैस्त्विष्यन्तः स्फुरन्तः कपोला यासां अरुणकुङ्कुमं यद्वाह्लिकदेशोद्भूतं तद्युक्तान्याननानि यासां ताश्च ताश्च ताश्च ताः ॥ ४५ ॥

उद्गायतीनामित्यानन्दद्योतकं वस्त्रालङ्कारकुङ्कुमालेपमधुरगानादिकं विरहे न घटत इत्यतः कृष्णसंयुक्तप्रकाश एवोद्धवेन सामान्यतो रात्र्यन्तेऽपि दृष्टो यथा दिनान्ते इति ज्ञेयम् ॥ ४६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ताः गोप्यः रज्जुर्विकर्षत्सु भुजेषु कङ्कणानां स्रजो यासां ताः चलन्तो नितम्बाः स्तना हाराश्च यासां ताः कुण्डलैः त्विषन्तः स्फुरन्तः कपोला यासां ताः अरुणानि कुङ्कुमानि येषु तान्याननानि यासां ताश्च ताश्च ताश्च मणिभिराभरणानि तैर्विरेजुः ॥ ४५ ॥ ४६ ॥

भाषा टीका ।

दीपों से प्रकाशित मणियों से वे गोपी बड़ी प्रकाशित भई मंथन करने की रस्सी के खैंचने से उनके भुजा और कंकण माला चलायमान होरही हैं नितंब कटि भाग भी चलायमान हैं स्तन भी हार भी कुण्डल चंचल होरहे हैं तिनकी कांति के पडने से और कुंकुम से उनके मुख अरुण होरहे हैं ॥ ४५ ॥

कमल लोचन भगवान् के गान करने से जो व्रज नारियोंकी ध्वनि है सो दधि मंथन के शब्द के साथ मिलने से यह शब्द आकाश को स्पर्श करने लगा जिससे कि दशों दिशों के अमंगलों के नाश होते थे ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपि ।

तदा व्रजौकसो गोप्यः ॥ ४७ ॥

॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! महातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणि विद्वांसोऽकार्षुः चातकास्स्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्यानन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकद्वार्दिंसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम् अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रसमयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतद्ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणां ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधिकारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्योपपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्तिगिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम् रौप्यकपञ्चकम् ५)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपणपर सुस्पष्टपद्यात्मकं महाकाव्यम् तदनुगुणमिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

### श्रीमद्भागवत सम्बन्धीय नियमावली ।

इतने बड़े परिश्रम और अध्यवसाय पर भी सर्व साधारण के सुलभ संग्रह के अर्थ पूर्ण ग्रंथ का मूल्य केवल ५०) रुपया अग्रिम रखा गया है राजा महाराजा और संमान्य मनष्यों के सन्मान रक्षाके लिये उनसे केवल १००) रु० मात्र लिया जायगा डाकमहसूल २४) रु० अलग पड़ेगा यह भागवत दशटीकोपेत है ।

असमर्थ ग्राहकों से चार किस्तों में रुपया लिया जायगा—प्रथम किस्त १२) रु० पञ्चमस्कन्ध तक, द्वितीय किस्त १२) षष्ठस्कन्ध तक, तृतीय किस्त १२) सप्तमस्कन्ध तक, चतुर्थ किस्त १४) दशमस्कन्ध तक और डाक महसूल २४) द्वादशस्कन्ध तक लियाजायगा।

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु जातेषु इदानीं स्थूलमतिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समययापनयोग्यानि तानि च भगवद्विषयकाणि चेद्भुक्तिमुक्तिप्रदानीति विचार्येदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषयं प्रतापरुद्रनृपतितोषार्थं रामानन्दराय कविना निर्मितम्. अत्र ५ पञ्चाङ्काः सन्तितत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावनानन्तरं श्रीराधाकृष्णमदनिका विदूषकाणां वृत्तान्तैः पूर्वरागनिरूपणम् १ द्वितीये च भावपरीक्षादिनिरूपणम् २ तृतीये भावप्रकाशादिनिरूपणम् ३ चतुर्थे श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्रागपद्यान्यपि विद्यन्ते ॥ मूल्यम् द्वादश आणकाः ॥।)

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपारावारपारङ्गताः !

विदितमेव भवतां श्रीमदद्वैतवासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणकरो वेदान्तसारो नाम ग्रन्थरत्नम्. स इदानीं सुललितनागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्द्धरूपकमूल्येन गृहीत्वा मनोनयनानन्दं प्राप्नुवन्तु भवन्तः। अस्य मू० ३)

**श्रीश्रीनिम्बार्कदर्शनम्**--भो भोः परितोषितविद्वांसः! अस्मन्मुद्रणालये अद्यावधि कदाप्यमुद्रितम् भाष्यत्रयोपेतम् 'श्रीमन्निम्बार्कदर्शनम्' समग्रं सम्मुद्रितं तत्त्वदर्शिनां ग्रहणोत्सुकैः सप्तमुद्रा-मूल्येन, पश्चादधिकेन लभ्येत इति विदन्तु मू० ७)

श्रीमद्भागवत कार्यालय—श्रीदेवकीनन्दन प्रेस
श्रीवृन्दावन—जिला मथुरा । } विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी ।

श्रीधरस्वामिकृतभावार्थदीपिका ।

सक्रोधमाहुः । अक्रूर इति । अर्थं साधितवानित्यर्थसाधकः तदाहुः । येन नीत इति ॥ ४८ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्य स्वयमेव कारणं सम्भावयन्ति । किमिति । तदा साधितेन कार्येण प्रीतस्य तुष्टस्य भर्तुः पाठान्तरे प्रेतस्य मृतस्य कंसस्य निष्कृतिमौर्ध्वदेहिकमस्माभिः कृत्वा साधयिष्यते किम् अस्मन्मांसैः पिण्डान् कृत्वा दास्यतीत्यर्थः । इत्येवं वदन्तीनां स्त्रीणां ततस्तस्मिन्नवसरे कृताह्निकः कृतस्नानादिनियम उद्धव आगत इति ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवतीति । तमोनाशनादिशक्त्यभिप्रायेण श्रीभगवत्पूजाधिष्ठानत्वादिना वा । तादृशी स्तुतिश्च तदुदयस्य सर्वेषां व्रजवासिनां श्रीकृष्णवार्त्ताप्राप्तिसुखसमयहेतुतया सन्तोषेण । व्रजौकसः पुरुषाः । स्त्रीणां वक्ष्यमाणत्वात् । तच्छब्दप्रयोगश्च सदा व्रज एव निवासात्तद्व्यथापरिचये हेतुः । किञ्च शातकौम्भं स्वर्णपरिवृतमिति वैलक्षण्यमुक्तम् अतोऽयं कस्येत्यब्रुवन् । चकारादनुक्तं चान्यत् किञ्चित् समुच्चिनोति ॥ ४७ ॥

अथोत्कण्ठाप्रधानान्तःपातिनीनां कासाञ्चिद्वाक्यमाह । अक्रूर इति द्वाभ्याम् । मधुपुर्यधिकारित्वदैत्यत्वाभ्यां कंसोऽपि मधुः किञ्च तस्य पुरीमिति तस्यां तन्नयनायोग्यतोक्ता । कृष्ण इति । हन्त नास्मत्पुत्रादिरन्योऽपि किन्तु स्वयमेव कृष्ण इत्यर्थः । तत्रापि कमललोचन इति । विशेष्यसौन्दर्यविशेषसर्वतापहारितागुणविशेषस्मरणेन निजहृदयार्त्तिविशेषं निवेदयन्ति । अत एव तादृशस्य व्रजाद्बहिरपि नयनमयुक्तं किमुत मधुपुर्यामिति भावः ॥ ४८ ॥

यद्यपि स्वभर्तुः कंसस्यैवार्थसाधनाय श्रीकृष्णं नीतवांस्तथापि दैवात्तस्मिन् घातिते स्वार्थसाधनाय तत्रैव श्रीकृष्णं रक्षित्वा यत् पुनरत्रागतस्तन्नूनमेवमभिप्रायेणैव इत्यभिप्रेत्याहुः । किमित्यर्धेन । पूर्वं प्रीतस्य पश्चाद्दैवादेवान्यथात्वं प्राप्तस्येत्यर्थः । पाठान्तरे प्रेतस्यापि निष्कृतिमानृण्यमिति ततस्तादृशोक्तिश्रवणात् स्त्रीणां तत्तद्गृहवर्त्तिनीनां सर्वासामेवं वदन्तीनां तास्वपि तथैव परस्परं वदन्तीष्वपीत्यर्थः । षष्ठी श्रुत्वाप्यश्रुतवदाचरणेन श्रीमदुद्धवस्य तदादराभावनात् । अगाद्यत्र श्रीकृष्णप्रेयस्यस्ता नित्यं मिथःसमदुःखतया मिलित्वा वसन्ति तमेव स्थानविशेषमेकान्तमन्विष्य गत इत्यर्थः । एवमुक्तः विस्तारदैर्घ्ययोश्चतुरष्टौ क्रोशान् व्याप्तस्य व्रजस्य नानागृहस्थानां तासां परोक्षाणां युगपदेव सहसा तद्दर्शनासम्भवात् । अगृहाणामग्रतो न इति तासां गृहपरित्यागस्य व्यञ्जयिष्यमाणत्वात् । मिलित्वा कृतवनवासत्वादेवासनादिभिस्तदातिथ्यस्य भ्रमरागमनस्यापि वक्ष्यमाणत्वात् । रहस्यपृच्छन्नुपाविष्टमासन इत्यहं भर्तुरहस्कर इति वक्ष्यमाणत्वात् व्रजस्य वर्त्मनि गृहे च कस्मिंश्चित्तत्तदसमावेशात् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्माभिः मृताभिरित्यभिप्रायः निष्कृतिं प्रतीकारम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो भगवत्यादित्ये उदिते सति व्रजौकसो गोप्यः नन्दद्वारि शातकौम्भं सुवर्णालङ्कारं रथं दृष्ट्वा कस्यायमित्यूचुः सक्रोधमिति शेषः ॥ ४७ ॥

तदेवाह सार्द्धेन । अक्रूर इति । किं वा सोऽक्रूरः आगतः कोऽसौ यः कंसस्यार्थे प्रयोजनं साधितवान् तदाहुः । येन च श्रीकृष्णो मधुपुरीं नीतः प्रापितः ॥ ४८ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्य कार्यं सम्भावयन्ति । किमिति । तथा साधितेन कार्येण प्रेतस्य मृतस्य भर्तुः कंसस्य निष्कृतिमौर्ध्वदैहिकमस्माभिः कृत्वा साधयिष्यति किमस्मन्मांसैः पिण्डान् कृत्वा दास्यति किमित्यर्थः । इतीति शुकोक्तिः इत्थं स्त्रीणां वदन्तीनां तस्मिन्नेवावसरे कृतस्नानादिनियम उद्धवोऽगादाजगाम ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शातकौम्भं शातकुम्भेन सुवर्णेन विरचितम् ॥ ४७-४८ ॥

प्रेतस्य मृतस्य भर्तुः कंसस्य निष्कृतिमानृण्यमस्माभिः करिष्यति अस्मद्दण्डेन कर्तुमिच्छति किमित्यर्थः । इतिवदन्तीनां कृताह्निकः अनुष्ठितप्रातःकालक्रियः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ४६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

व्रजौकसः पुरुषाः स्त्रीणां वक्ष्यमाणत्वात् ॥ ४७—४८ ॥

अगात् यत्र श्रीकृष्णप्रेयस्यस्तं प्रत्यहं मिथःसमदुःखतया मिलन्ति तमेव स्थानविशेषमेकान्तमन्विष्य गत इत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तासां जिज्ञासापर्यन्तं निलीयैव स्थित इति वक्तुं जिज्ञासाप्रकारमाह । भगवत्युदित इति । वाच्यार्थानुपयुक्ता कथा नोच्यत इति उद्धवस्य प्रातः कृत्यं नोक्तं तद्दिनसूर्यः भगवत्स्मारक इति गोपिकानामुद्धवस्य च परमपुरुषार्थदायीति सूर्यस्य भगवत्त्वमुक्तं नन्दस्य राजगृहद्वाह्निक एव व्रज इति तद्द्वार्येव रथः स्थापित इति मुख्यतया स्थितः । किं बहुना सर्वं एव वृत्तान्तानभिज्ञाः नन्दादीनां तत्सम्बन्धिनां चायं रथो न भवतीति ज्ञातकौम्भत्वात् सर्वतः सुवर्णेनालंकृतत्वात् निश्चित्य कस्यायं रथ इत्यब्रुवन् चकाराद्विचारितवन्तः पृष्टवन्तश्च ॥ ४७ ॥

ततः कस्यचित्पुरवासिनो राजकीयस्य सम्बन्धी रथ इति निश्चित्य पूर्वमागतत्वात् अक्रूर एव लब्धस्वादुः पुनरागत इति सम्भावनां कृतवत्यः तदाह । अक्रूर आगतः किं वेति । प्रायेणाक्रूरेणैवेयं भूर्दृष्टेति अक्रूर एवागतः तथापि प्रयोजनाभावात् तस्यागमनं न सम्भवतीति बाधकज्ञानात् सम्भावना । ननु सर्वेषु विद्यमानेषु सुतरां वसुदेवादिषु किमित्यक्रूर एव सम्भाव्यत इत्यत आह । यः पूर्वं कंसस्य अर्थं पुरुषार्थं साधितवान् विपरीतोक्त्या वदन्ति वस्तुतस्तु परमपुरुषार्थं मोक्षं साधितवानेव ननु भवतीनां तस्मिन् कोऽयं दोष इत्याहुः । येन नीतो मधुपुरीमिति । कृष्णः फलात्मा कमललोचनः फलसाधनमैहिकफलरूपं वा ॥ ४८ ॥

तर्हि तादृशस्य कृतकार्यस्य द्विष्टस्य च कथं पुनरागमनमिति चेत्तत्राहुः । किं साधयिष्यतीति । प्रायेणास्मान् गोपिकाः विशेषाकारेण नेतुमागतः नीत्वा च प्रेतस्य कंसस्य निष्कृतिं करिष्यति स हि स्वार्थं नीत्वा स्वपुरुषार्थमप्यसाध्य अस्मत्पुरुषार्थमपि नाशयित्वा जनैराकृष्टः तदपराधपरिहारार्थं कृष्णमत्र प्रेषयितुमसमर्थः अस्मानेव तत्र नेष्यति तावता निष्कृतिर्भवति भर्त्सनापवादः परिहृत इति । अन्ये तु मृतस्य कंसस्य दैत्यत्वाद्रुधिरं मांसप्रियस्य मांसं दातुं सुतरामस्मानयति तथा च सति यथापूर्वमनोरथो विपरीतो जातः एवमयमपि भविष्यति ततो भगवानेव बलिं दास्यति भ्रान्तोऽयं समागत इति उपहासमुक्तवत्य इत्याहुः तदेवाह । किं साधयिष्यति न किञ्चिदिति । इदं विशेषाकारेण वचनं स्त्रीणामेवेति वदन् पूर्वभावमुपसंहरति । स्त्रीणामिति वदन्तीनां सतीनां क्षणं विलम्बे ज्ञापमपि इयुः भयादागत इति पक्षं व्यावर्त्तयति । कृताह्निक इति । प्रातः काल एव सर्वमाह्निकं कृतवान् अग्रे महती व्यावृत्तिरिति । उद्धवत्वादेव न भयं द्वितीयो भगवत्सन्देशः गोपीनां मद्वियोगाधिमिति सोऽग्रे प्रारम्भणीय इति पूर्वसमाप्तिः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

त्रिचत्वारिंशाध्यायविवरणम् ॥ ४३ ॥ ४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

व्रजौकसो विरहिण्यो गोप्यः ॥ ४७ ॥

सक्रोधमाहुः । अक्रूर इति । अर्थं साधितवानिति सः ॥ ४८ ॥

कंसं घातयित्वा पुनः किमर्थमागत इत्याशङ्क्य कार्यं सम्भावयन्ति । किमिति । तदा साधितेन कार्येण प्रीतस्य भर्तुः प्रेतस्येति पाठे मृतस्य कंसस्य निष्कृतिमौर्ध्वदेहिकम् अस्माभिः कृत्वा साधयिष्यते अस्मन्मांसैः पिण्डान् कृत्वा दास्यतीत्यर्थः इति वदन्तीनां समीपमगात् ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षट्चत्वारिंशकोऽध्यायो दशमेऽजनि सङ्गतः ॥ ४६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजौकसो गोप्यः ॥ ४७ ॥

कंसस्य अर्थं साधितवानित्यर्थसाधनः पूर्वं यः कंसं जीवितरूपादर्थाद्वियोज्य लोकान्तरमर्थं तस्य साधितवान् स अक्रूर आगतः किम् ॥ ४८ ॥

पुनरागमने प्रयोजनं सम्भावयन्ति । किमिति । प्रेतस्य मृतस्य निष्कृतिमानृण्यम् अस्माभिः कृत्वा साधयिष्यते किम् अस्मन्मांसैः पिण्डान् कृत्वा दास्यति किमित्यर्थः । कृताह्निकः कृतस्नानादिनियमः अगात् आगतः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षट्चत्वारिंशाध्यायार्थप्रकाशः ॥ ४६ ॥

---

भाषा टीका ।

तदनन्तर सूर्य भगवान् के उदय होने पर व्रजवासी जब नंद द्वार में आये तब सुवर्ण मय रथ को देखकर यह रथ किसका है ऐसा पूंछने लगे ॥ ४७ ॥

भाषा टीका ।

गोपी बोलीं क्या फिर अक्रूर आया है क्या जो कि कंस के अर्थ के सिद्ध करने वाला है जो कि कमल दल लोचन श्रीकृष्ण चंद्र को मधुपुरी को लेगया था ॥ ४८ ॥

अब मरे भये अपने स्वामि का हमसे क्या कार्य सिद्ध करेगा इस प्रकार से गोपनारियों के बोलते ही में उद्धवजी भी स्नान संध्यादि क्रिया कर के उहां आ गये ॥ ४६ ॥

इति श्रीभागवत दशमस्कंध पूर्वार्ध
छयालीस में अध्याय की
भाषा टीका समाप्त ॥ ४६ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

श्रीशुक उवाच ।

तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलम्बबाहुं नवकञ्जलोचनम् ।
पीताम्बरं पुष्करमालिनं लसन्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥
शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ।
इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदाम्बुजाश्रयम् ॥ २ ॥
तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः ।
रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥
जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ।
भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ।
बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागमत्पुरीम् ॥

॥ १ ॥

अपीच्यं सुन्दरं दर्शनं यस्य सः अच्युतस्येव वेषो भूषणानि च यस्य सः कोऽयं कुतो वा कस्य चेति वदन्त्यस्तं परिवव्रुः ॥ २ ॥ ३ ॥

पार्षदं सेवकम् ॥ ४ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी

कृष्णमनुचरति भक्तिविशेषेणात्रैव सारूप्यादिप्राप्त्यानुगच्छतीति तथा तं व्रजस्त्रियः सदा श्रीकृष्णरूपवेशादिध्यानगानपरा इति भावः । अतो वीक्ष्य साक्षाद्दूरतो दृष्ट्वैव सुविस्मिताः परमविस्मयं प्राप्ताः प्रायः श्रीकृष्णसारूप्यात् तदेव दर्शयति । प्रलम्बेत्यादिना । तत्राद्येन पदद्वयेन रूपतः ततोऽन्येन तद्द्वयेन परीत्यनेन च भूषणतः लसत् सुन्दरस्मितादिना शोभमानं मुखारविन्दं यस्य तमिति शोभातः यद्वा लसदित्यत्रैव हेतुः परिमृष्टेति ॥ १ ॥

दृश्यत इति दर्शनं रूपम् अनेनानुक्तमपि श्रीकृष्णसदृशमाकारवयोवर्णादिकं सङ्गृहीतम् अच्युतेत्यनेन च तत्सदृशमौक्तिकहारादि तत्र वेषः नटवरच्छन्दः किं वा अच्युतस्य वेषो भूषणमेव भूषणं यस्य तं त्वयोपयुक्तस्रग्गन्धवासोऽलङ्कारचर्चिता इतिन्यायेन तदीयवस्त्रादिधारणात् अत एवोत्सुकाः सम्भ्रान्ताः समुत्कण्ठिता वा सत्यः सर्वाः एकैकशः स्वस्वस्थानादागताः किंवा विरहार्त्या सर्वासामेवैकत्र स्थित्या युगपदागताः परितो वव्रुः आवृतवत्यः यतः उत्तमश्लोकः श्रीकृष्णस्तत्पदाम्बुजमेवाश्रयो यस्य तमित्येकान्तितया गुणेनापि तत्सादृश्यमुक्तं यद्वा उत्तमश्लोकपदाम्बुजयोः संवाहनाद्यर्थमुपधानवदाश्रयमिति सततात्यन्तसमीपवर्तिता परमप्रियता चोक्ता वाक्यभेदाच्चमित्यस्यापौनरुक्त्यम् ॥ २ ॥

व्रजस्त्रियः परिवारणानन्तरमेव प्रश्रयेण विनयेन अवनता नम्रशिरसः सत्यः तं रहसि एकान्ते आसने उपविष्टमुद्धवं रमापतेः संदेशहरमिङ्गितेन विज्ञाय सव्रीडहासेक्षणसूनृतादिभिः सुसत्कृतं यथा स्यात्तथापृच्छन् व्रीडा च लज्जाविशेषः तत्सहितो हासश्च दरहसितं तेन युक्तमीक्षणं च मनागवलोकनमिति त्रयं भगवत्सारूप्यदर्शनजातस्य श्रीभगवति भावविशेषस्य स्वभावादुद्भूतं सूनृतं च स्वागतं कुशलं च इत्यादिप्रियवाक्यं तेन आदिशब्दादासनपाद्यार्पणादिभिश्च अत एव सुष्ठु सत्कृतं पूजितमित्युद्धवविशेषणं वा भगवच्छायदर्शनेन तदीयसुखविधानात् रमापतेः लक्ष्मीकान्तस्येति प्रियजनपरिपालकत्वेनात्मन्यपेक्षा तस्य सम्भाविता यद्वा रहसि प्राप्त्या सन्देशहरं दूतं विज्ञाय रहअगमनादिना निर्द्धार्य्यापृच्छन् ॥ ३ ॥

सम्यक् राजरथारोहणादिना श्रीव्रजेश्वरान्तिके आगतं जानीम एवेति तद्विशेषप्रश्नादिनालमिति भावः । यदुपतेरिति । तस्याधुना व्रजजनेषूपेक्षा युक्तेति भावः । जानीम इत्येव विवृण्वन्ति । भर्त्रेति । तत्परित्यक्तेऽपि व्रजेऽत्र तवागमनं भर्त्राज्ञाया भृत्येनावश्यपाल्यत्वादिति भावः । ननु मत्प्रेषणादत्र तस्य परमापेक्षावगम्यतां तत्राहुः । पित्रोरिति । केवलं तयोर्द्वयोरेव ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तमिति युग्मकम् । रहसीत्यस्य तृतीयपद्यस्थस्याप्यत्रान्वयः कार्यः । कोऽयमित्यादिना वितर्क्य जानीमस्त्वामिति स्वयमेव निर्णयात् आह्निकं कृत्वा व्रजमागतश्चेत्तदाभविष्यत्तर्हि लोकसङ्घट्टे तस्मिन् परम्परायाः सोऽयं महारथी व्यक्त एवाभविष्यदिति व्रजस्त्रिय इति व्रजेऽपि श्रेष्ठत्वेन याः प्रसिद्धा भगवत्प्रेयसीरूपाः स्त्रियस्ता इत्यर्थः । व्रजस्त्रियः कृष्णगृहीतमानसा इत्यादिष्वपि तथैव तत्प्रसङ्गे तच्छब्दप्रयोगात् । तमुद्धवं वीक्ष्य तञ्च कृष्णानुचरं वीक्ष्य तदाकारतया निभाल्य तत्र हेतुः प्रलम्बबाहुमित्यादिः । तत्र पुष्करमाला तु प्रस्थापनसमये श्रीभगवतैव स्वकण्ठात् प्रसादीकृतेति गम्यते व्रजेऽप्येतादृशतत्समनिवेशरूपा एव तदनुचरा इत्यनुमानात्तदनुचरत्वेन वितर्क्येत्यर्थः ॥ १ ॥

अतः सुविस्मिता अन्यत्रापि कथमेतादृशोऽस्तीति तदेतदाहुः । कोऽयमिति । शुचिस्मिता इति पाठे तस्य प्रसादायारोपितस्मिता इत्यर्थः । दृश्यत इति दर्शनं रूपं वेशो वस्त्रातिलककेशबन्धादिः । भूषणं कटककुण्डलादि । यद्वा । अच्युतस्य वेशभूषणे एव वेशभूषणे यस्य तं त्वयोपयुक्तस्रग्गन्धवासोऽलङ्कारचर्चिता इत्येतद्वाक्यानुसारात् तत्राप्यापाततोऽसङ्कोचे हेतुः उत्सुकाः कालाक्षमत्वेन विचारशून्याः पश्चादपि तत्र हेतुः उत्तमःश्लोकः श्रीकृष्णः तत्पादाम्बुजमेवाश्रयो यस्य तं यद्वा । उत्तमःश्लोकपदाम्बुजयोः सम्वाहनाद्यर्थमुपधानवदाश्रयं यस्य तथा तदात्मीयतां निर्धार्येत्यर्थः ॥ २ ॥

ततश्च तमिति तमुद्धवं रहसि रमापतेः संदेशहरं विज्ञाय स्वयमेव पूजाङ्गत्वेन दत्ते आसने उपविष्टं सन्तं प्रश्रयेणावनताः सत्यः पुनः सव्रीडहासेक्षणसूनृतादिभिः सुसत्कृतं सन्तमपृच्छन्निति क्रमः कर्त्तव्यः अत्रासन इति सामीपिकार्थमेवाधिकरणं ज्ञेयं तद्विधासु तस्य महाभक्तेरेव निर्णेष्यमाणत्वात् ।यतः सैरिन्ध्र्यादिषु तस्य तादृशता वर्णयिष्यत इति कैमुत्यलाभाच्च । प्रश्रयेणावनताः विनयनम्रशिरसः व्रीडो व्रीडा हासः प्रसादः ताभ्यां युक्तमीक्षणमवलोकनं सूनृतं च स्वागतं कुशलञ्च इत्यादि प्रियवाक्यं तदादिभिस्तत्पुरःसरासनपाद्यादिभिः सुसत्कृतमादृतं ततश्च रहसि विजातीयभावागोचरे तत्रासन उपविष्टं सन्तं तादृशरहःस्थलागमनोपवेशादिहेतो रमापतेः संदेशहरं विज्ञाय अस्मास्वपि कमपि संदेशमानीतवानयमिति निश्चित्यापृच्छन् रमापतेरिति जयति तेऽधिकं जन्मनेत्यनुसारात्तादृशतत्सम्पत्तिदर्शनेन जातस्य तासामेवाभिप्रायस्य प्रकटनमिति विशेष्य व्याख्येयम् ॥ ३ ॥

तथा निश्चयेऽपि दुःखेन स्वसम्बन्धमपलपन्त्य आहुः । जानीम इति । सम्यगेतादृशपरिच्छेदतया व्रजजनसमीपागतं त्वां यदुपतेः पार्षदं जानीमः ततस्तत्प्रश्नेनालमिति भावः । आगमने हेतुः भर्त्रा तेन निजस्वामिना प्रेषितः स्वयमनागत्य तव प्रेषणमनादेशेऽपि लौकिकतामात्रादिति तत्परित्यक्तेऽपि व्रजे तवागमनं भर्त्राज्ञाया भृत्येनावश्यपाल्यत्वादिति भावः । यदुपतेरिति । स्वेषु तत्कृतानादरं हेतुव्यञ्जकं स्वेषां तस्मिन्नयोग्यत्वं व्यञ्जयति । अतस्तत्र भर्त्रेति च सौदासीन्यं वचनं प्रयोजनन्तु किञ्चिदेकमेव जानीम इति तथैवाहुः । पित्रोरिति । तथापि न स्वंप्रस्मेति भावः ॥ ४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । कृष्णस्यानुचरं भृत्यं प्रलम्बावाजानुलम्बितौ बाहू यस्य नवकञ्जे विकसितपद्मदले इव लोचने यस्य पीते पिशङ्गे अम्बरे यस्य पुष्कराणां पद्मानां मालास्यास्तीति तथा व्रीह्यादित्वान्मत्वर्थीय इनिः मुख मरविन्दमिव मुखारविन्दम् उपमितं व्याघ्रादिभिरिति समासः लसन्मुखारविन्दं यस्य परिमृष्टे निर्मलीकृते कुण्डले यस्य तमुद्धवं वीक्ष्य व्रजस्त्रियः सर्वा उत्सुकाः सत्यः उत्तमश्लोकस्य पदाम्बुजमेवाश्रयो यस्य तमुद्धवं परिवव्रुः परिवेष्टितवत्यः ॥ १ ॥

किं कुर्वत्यः अपीच्यं सुन्दरं दर्शनं यस्य अच्युतस्येव वेषो भूषणानि च यस्य सः कोऽयं कुतो वा कस्य वेति वदन्त्य इति शेषः । स्मेति विस्मये ॥ २ ॥

तमिति । सव्रीडेन हासेनेक्षणेन सूनृतेन मधुरभाषणेनादिशब्देनार्घ्यादिभिश्च तं रहस्येकान्ते आसने उपविष्टं तं रमापतेः श्रीकृष्णस्य संदेशहरं वार्त्ताहर्तारं विज्ञाय ज्ञात्वाऽवनता नम्राः प्रणता इति यावत् प्रश्रयेण विनयेनापृच्छन् पप्रच्छुः ॥ ३ ॥

प्रश्नमेवाह । जानीम इति । त्वां यदुपतेर्भगवतः पार्षदं भृत्यमत्र समवस्थितं समागतं जानीमः किमर्थं समुपस्थितोऽहमित्यत्राहुः । भर्त्रेति । भर्त्रा यदुपतिना पित्रोर्नन्दयशोदयोः प्रियं कर्तुमिच्छयाऽत्र भवान् प्रेषितः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गोपस्त्रीणां व्यामोहोक्तिभङ्ग्यापि श्रीकृष्णैकभक्तिं निरूपयत्यस्मिन्नध्याये तत्र गोपीनामुद्धवसंदर्शनात् हृष्टमनसां तत्प्रश्नप्रकारं वक्तुमाह । तं वीक्ष्येति । परिमृष्टकुण्डलं शाणोल्लीढवत् द्योतमानकर्णाभरणम् ॥ १ ॥

अतीव प्रशस्ततमं दर्शनमवलोकनं यस्य स तथा अयमिति सामान्यप्रश्नः कुतो देशादागत इति च विशेषप्रश्नः अच्युतस्येव वेषभूषणानि यस्य स तथा वैष्णवलक्षणैनेतरव्यावृत्तोऽसौ कः वैष्णवेषु किन्नामधेय इति ततोऽपि विशेषप्रश्न इति मिथोऽनुव्रज्य सामान्यतोऽस्मत्प्रेष्ठ इति स्मृत्वा तं परिवव्रुः आवेष्टितवत्य इत्यन्वयः ॥ २ ॥

पुनस्ताभिः किङ्कृतमत्राह । तमिति । अनेन सामान्यज्ञानं विशेषज्ञानपर्यवसायीति निर्णायि प्रश्रयेणोपचारेण प्रियं सत्यञ्च सूनृतमिति च ॥ ३ ॥

पार्षदार्थं पार्षदानां समीपवर्तिनां भृत्यानां श्रेष्ठं तैः पूज्यत्वात् अनुव्रतं भगवन्मनोऽनुकूलव्रतम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

व्रजस्त्रिय इति। व्रजेऽपि श्रेष्ठत्वेन याः प्रसिद्धा भगवत्प्रेयसीरूपाः स्त्रियस्ता इत्यर्थः ॥ १ ॥ २ ॥

सव्रीडहासेति। व्रीडो व्रीडा हासः प्रसादस्ताभ्यां युक्तमीक्षणं रहसि विजातीयभावागोचरे देशे रमापतेरिति जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि इत्यनुसारात्तादृशतत्सम्पत्तिदर्शनेन जातस्य तासामेवाभिप्रायस्य प्रकटनम् ॥ ३ ॥

पित्रोरिति तत्रापि न स्वप्रेम्णेति भावः ॥ ४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चतुश्चत्वारिंशेऽध्याये गोपीनां ज्ञानदेशतः।
निरोधं सम्यगेवाह पूर्वस्माच्च विशेषतः॥
याते कृष्णे लोकरीत्या नैकधा भावतः स्फुटम्।
न निरुद्धा इति प्रायः सर्वेषां च भवेन्मतिः॥
सेवकेनोपदेशेन प्रीत्या चैव निरोधतः।
ज्ञानेनापि निरुद्धास्ता आत्मत्वेनैव सर्वथा॥
वस्तुनिश्चयनं पूर्वमुपालम्भस्तथैव च।
व्याजोक्ता दोषगणना त्रिदोषो वर्ण्यते पुरा॥
अन्यथा ज्ञानसंदेशो व्यर्थः स्यादिति निश्चयः।
बीजं भक्तिस्ततः स्तोत्रमुपदेशस्तथैव च॥
ततो दोषनिवृत्त्या च पूर्वस्नेहो निरूप्यते।
ज्ञानस्य च फलं चैव कृतार्थत्वं ततस्तथा॥
सप्तधा विनिरुद्धास्ता गुणैर्भगवतापि च।

तत्र प्रथममुपालम्भ्यत्वेन उद्धव इति निर्द्धारं कृतवत्य इत्याह। तं वीक्ष्येति त्रिभिः। "आकृतिर्निश्चयश्चैव चेष्टया तु विशेषतः। स्वार्थमेव ततो ज्ञात्वा मानाद्दोषत्रयं ततः। तत्र प्रथमं मानार्थं भगवत्सारूप्यमुद्धवे गोपिकाभिर्दृष्टं वर्णयति। तमुद्धवम् आकृत्या-कृष्णानुचरोऽयमिति वीक्ष्य अथवा न हि महतां चेतः अधर्मे पततीतिवत् तस्य दर्शने कामं वारयितुं कृष्णानुचरमित्युक्तं वस्तुत एव भगवतः अनुचरः तथापि महान्तं भूषितं दृष्ट्वा लज्जिता भवन्ति स्त्रियः कथमयं दृष्ट इत्याशङ्क्याह। व्रजस्त्रिय इति। नागरीणामयं स्वभावो नान्यासां भगवत्सारूप्यत्वाय वर्णयति। प्रलम्बबाहुमित्यादिपञ्चभिः पदैः भगवत्त्वाय स्त्रीणां हि कामप्राधान्यात्तदुपयोगिपञ्चगुणा वक्तव्याः प्रकर्षेण लम्बौ बाहू यस्य स्मारकत्वेनास्यावयवा उपयुज्यन्ते क्रियाशक्तिः परिरम्भोपयोगश्च सूचितः नव कमलवल्लोचने यस्येति सर्वतापहारिका ज्ञानशक्तिः कामोद्बोधिका च निरूपिता, एवं क्रियाज्ञानशक्ती निरूप्य मायाशक्तिं निरूपयति। अनावृते रसो न भवतीति पीताम्बरं यस्य सवर्णो नीले अधिकां शोभामुत्पादयति सर्वत्रैव तद्वर्णनं पुष्करमालिनं कमलमालायुक्तं कीर्तिमत्त्वमुक्तं लसन्मुखारविन्दं यस्य श्रीर्निरूपिता मणिभिर्मृष्टे उज्ज्वले कुण्डले यस्येति वैराग्यमिव शास्त्रीयकान्तिः सर्वाभरणकृता निरूपिता ॥ १ ॥

एवं स्वरूपं वर्णयित्वा भगवत्सेवकोऽयमिति ज्ञातवत्य इत्याह। शुचिस्मितमिति। शुद्धं व्याजलोभाद्यनुपहतं स्मितं यस्य नैतादृशो गोकुले दृष्टः अक्रूरो वा अतः कोऽयमिति जिज्ञासा स्वयं मध्य एव कश्चिदुत्प्रेक्षकश्चेत् महान् भवेत् स वदत्विति कथयन्त्य इवाहुः किञ्च विरुद्धोऽस्मिन् धर्मो दृश्यते स्वरूपतोऽयं निष्कामः एतस्य च दर्शनमपीच्छं स्त्रीणां प्रियम् अतो विरुद्धधर्माश्रयत्वात् भगवदीयो भवितुमर्हति किं च न केवलमाकृतिस्वभावावेव भगवतः किन्तु वेशः पीताम्बरादिभूषणानि च भगवत एव कुतश्चेति उपमायां तु नाश्चर्यं स्वाभरणानि परिधाप्य किं भगवान् अहोस्वित् तद्रसाभिनयार्थं नटवत् समागतः अहोस्विद्भगवानेव रूपान्तरं कृत्वा समागत इति बहूनां विद्यमानत्वात् कुत इति विशेषजिज्ञासा युक्ता किं च कस्यायं पुत्रः पौत्रो वा सम्बन्धज्ञाने हि विशेषप्रीतिर्भवतीति जिज्ञासार्थमेव स्मेति प्रसिद्धे सर्वा एव परिवव्रुः ननु तासां किम्प्रयोजनं तत्राह। उत्सुका इति। औत्सुक्यस्वभावादेव कृष्णस्मारक इति कृष्णौत्सुक्या च तम्परितो वेष्टयामासुः ननु भगवत्स्त्रियस्ता रक्षिताः रक्षकाश्च कालादयः ततो रक्षकेषु विद्यमानेषु कथं गता इत्याह। उत्तमश्लोकस्य पदाम्बुजमेवाश्रित्य तिष्ठतीति भगवच्चरणसेवकः भक्तिमार्गानुसारी तत्रापि शास्त्रीय इत्यर्थः ॥ २ ॥

एवं निष्प्रत्यूहं संदिग्धा एव तं वेष्टितवत्यः ततो विशेषज्ञानं जातमित्याह। तं प्रश्रयेणेति। तमुद्धवं महान्तं दृष्ट्वा प्रश्रयेणावनता नम्रा जाताः ततः सुष्ठु आसनादिना सत्कारमपि कृतवत्यः पूर्वमेव वा वस्त्राभरणादिभिः सुसत्कृतः ततो भर्तृसम्बन्धिसेवकोऽयमिति ज्ञात्वा व्रीडा काम एवोद्दिश्य इति ज्ञापयितुं हासः सत्कारे अन्या दृष्टिः क्रूरा रूक्षा वा भवतीति हास्यपूर्वकं निरूपितं सूनृतानि उत्तमवचनानि कुशलप्रश्नरूपाणि आदिशब्देन आसनपुष्पाद्युपचारान् एकान्ते यत्र नन्दादीनां न दृष्टिः रसार्थमेतत् सव्रीडादिभिः सहिता वा आसने उपविष्टमव्याकुलं तत्सत्कृतिग्रहणेन ज्ञातवत्यः अयमस्मदर्थमेव समागतः अन्यथा नास्माकमुपचारं गृह्णीयात् नापि सह तिष्ठेत् निष्कामश्चायम् अतः भगवत एवायं संदेशहारकः तर्ह्याकारणार्थं समागत इति रमापतिवचनं साम्प्रतं रमया सह तिष्ठतीत्यस्मदुपेक्षा इति वयमप्रयोजिका इति केवलं मनोऽनुरञ्जनार्थं प्रेषितवानिति तासां मानमुत्पादयति ॥ ३ ॥

अनेनैको दोषो निरूपितः तेन द्वितीयोत्पत्तिमाह। जानीम इति सप्तभिः। स गोपिकार्थमागतोऽहमिति मन्यत इति बुद्ध्वा तदन्यथा कर्तुमन्यथा गमनं निरूपयन्ति अन्यथोपकारस्वीकारे उपालम्भो न घटेतेति बीजमेतत् तस्य च समर्थनमनन्यनिषेधनपूर्वकं स्वसम्बन्धस्य पूर्वसिद्धस्य औपाधिकत्वेन स्वार्थपरसाधनम् अन्यथोभयोरपि समानत्वात्को वा उपालम्भ्यः स्यात् ततो दृष्टान्तौ कृतघ्नतासमर्थनम् एवं पञ्चभिर्दोषं समर्थयित्वा तस्य साध्यत्वज्ञापनाय तासां देहादिस्मरणाभावमुपपादयति ततोऽपि सुसाध्यत्वाय भगवदासक्तिसाध्यो रोगः प्रतिष्ठितो भवति ततोऽग्रिमारम्भः स महादोष इति कस्याश्चिदेव तामसतामस्या वर्णितः आदौ तस्यागमनमन्यथा कथयन्ति तत्र ज्ञात्वा अन्यथा करणं युक्तमिति ज्ञानमाहुः। त्वां यदुपतेः पार्षदं जानीम इति। पूर्वं गोपिकापतिरधुना यदुपतिरिति नास्मदुपकारं करिष्यतीति भावः। तस्य च पार्षदः सभापतिरतिचतुरः अनेन त्वद्वाक्यमपि नादरणीयमिति सूचितं समुपागतमिति सम्यगुप-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

समीपे समागतं तत्रापि सर्वतः कुशलं तत्रापि अन्यथा उपेक्षादोषायापि न भवेत् एवं भगवन्तमन्यथा कल्पयित्वा स्वयमेवैताः कदाचिन्नष्टा जाता इति शङ्का स्यात् तद्व्यावृत्त्यर्थं भर्त्रेत्याहुः । प्रसङ्गादागतत्वं न वदन्ति सर्वथा मिथ्या भविष्यतीति इहैव गोकुले प्रेपितः प्रयोजनमाहुः । पित्रोः प्रियचिकीर्षयेति । ये हि सत्तामात्रेण सुखिता भवन्ति ऐश्वर्याद्युत्कर्षेण च अतः कुशलमैश्वर्यं च ज्ञापयितुं भवान् प्रेपितः अनलंकृते साधारणे प्रेपिते ऐश्वर्ये संदेहः स्यात् अस्माकं तु न तावता सुखमिति त्वदागमनसाधनमिति अस्मदर्थं न प्रेपितवानेव ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सप्तचत्वारिंशकेऽस्मिन् चित्रजल्पान् दशोद्धवः ।
आकर्ण्य प्रोच्य संदेशान् गोपीः स्तुत्वा पुरीं ययौ ॥

शुचि शुद्धं स्मितं यासामिति कृष्णस्मारकवेषदर्शनोत्थेन हर्षेण स्मितं सुविस्मिता इति पाठे कृष्णस्यैव पीतोत्तरीयमिदं तदङ्गोत्तीर्णमेव कमलमाल्यञ्च कथमनेन प्राप्तमिति विस्मयः अपीच्यं सुन्दरं दर्शनं यस्य सः कोऽयङ्कुतः कस्य वा मनुष्य इति वदन्त्यः कृष्णवृत्तान्तप्राप्तिसम्भावनया उत्सुकाः ॥ १ ॥ २ ॥

प्रश्रयेणावनता विनयनम्रशिरसः व्रीडा स्त्रीयस्वभावोत्था मूर्द्धादेरीषद्वस्त्रावरणलक्षणा लज्जा सा ह्यादरणीयजनसामान्यदर्शने सहसैव भवेत् हासः स्वप्रियदास एवायमिति निश्चयेन मुखप्रसादः ताभ्यां युक्तमीक्षणं सम्पूर्णावलोकनं सूनृतं स्वागतं कुशलमित्यादि प्रियवाक्यम् आदिशब्दात् यथा समयं यथोपस्थितं च पाद्यादिकमातिथ्यं तैः सुसत्कृतमादृतं रहसि विजातीयजनागोचरे स्थले अपृच्छन् तादृशस्थले सहसैवागमनेन तं रहः संदेशहरं विज्ञाय रमापतेरिति गोपीपक्षपातिनः शुकस्यासूयाद्योतनं सम्प्रति मथुरायां स्पष्टमेव परमेश्वरं तं सुखयितुं रमा एवागमिष्यति किमेतासु संदेशप्रेपणदम्भेनेत्याकारकम् ॥ ३ ॥

जानीम इत्यत एवालं प्रश्नेनेति भावः । यदुपीतरिति सगोपजातिरपि सम्प्रति यदूनां पतिरभूदिति वृहत्पदप्राप्तस्य स्वयं कथमत्राजिगमिषा सम्भवेदिति भावः । अत एव भवान् प्रेपितः पित्रोः प्रियचिकीर्षया नतु स्वेपां तेन यशोदानन्दाभ्यां पितृभ्यां गोपजातिव्यञ्जकाभ्यां तस्य किं प्रयोजनमिति भावः । नन्दयशोदे कदित्वा म्रियेते कृष्णो मथुरायां राज्यं करोतीति लोकनिन्दा भयादेव त्वं प्रेपित इति मन्यामहे किन्तु भोश्चतुरवर्य्य ! तेन सुबुद्धिशेखरेण प्रेपितः पित्रोः प्रियचिकीर्पया त्वं चात्रायातोऽतः प्रयाहि यशोदानन्दयोः समीपं तौ हि त्वा प्राप्यानन्देन कृष्णं तं विस्मरिष्येते इति धन्यैव तस्य विवेकतीक्ष्णतेत्याद्याः बह्व एव व्याजस्तुतिमयोत्पन्नतिरस्कृतवाच्यध्वनेः पल्लवाः ॥ ४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रमाकान्तमखण्डेन्द्रवन्द्यमानपदाम्बुजम् ।
वन्दे प्रेमभराक्रान्तस्वान्तादच व्रजयोपितः ॥

सप्तचत्वारिंशकेऽथ गोपिकानां निरूप्यते ।
उद्धवभ्रमराभ्यां तु संवादः श्रोतृमोददः ॥

अथ सूर्योदयानन्तरं स्वस्वगृहाद्बहिर्निःसृत्य शातकौम्भं रथं व्रजद्वारि स्थितमवलोक्य कस्यायं रथ इति ब्रुवन्त्यः स्थितास्ततो यमुनायां स्नात्वा समायान्तमुद्धवं दृष्ट्वा कोऽयमित्यादि वदन्त्यस्तत्सन्निधौ गत्वा तं परिवव्रुरित्याह । तमिति । ननु स्त्रीणामेवंविधं पुरुषं दृष्ट्वा लज्जया एकान्तं स्वस्थानगमनमुचितमित्याशङ्क्याह । व्रजस्त्रियः नगरस्त्रीणामयं स्वभावो न तु ग्राम्यस्त्रीणामिति भावः । ननु तथापि तासां भयात्ततः पलायनं साम्प्रतमित्यत आह । कृष्णानुचरं व्रजाधीशकृष्णसखीनां कृष्णानुचरत्वाद्वा न भयसम्भावनेति भावः । ननु तथाविधानां तासां यः कश्चित्तदनुचरोऽपि नानुसरणीय इत्याशङ्क्याह । प्रलंबेत्यादि । प्रकर्षेणालम्बौ बाहू यस्य नवीनपद्मवल्लोचने यस्य पीतमम्बरं यस्य कमलग्रथिता माला विद्यते अस्य लसत् स्फुरत् मुखपद्मं यस्य मणिभिर्मृष्टे उज्ज्वले कुण्डले यस्य तथा च स्वस्वाम्यनुग्रहपात्रतया तद्दत्ततद्वस्त्रभूपणादिधारी तदनुचरस्तदीयैरस्यर्थमादरणीयः अयं तु तदवयवसमानावयवधार्यप्रीति परममहान् भवतीत्यतोऽस्यानुसरणे नास्ति कश्चिद्दोष इत्याशयः प्रियविरहव्याकुलमनुश्रान्तेन यत्किंचित्सादृश्यवानप्यादरणीयो भवति अयं त्ववयववस्त्रभूपणैः प्रियसदृशत्वात् तत्तत्प्रियावयवजनिततत्सुखस्मारकतया परमादरविषय इत्यपि ध्वनितम् ॥ १ ॥

तद्दर्शनेन तासां महान् सम्भ्रमो जात इत्याह । शुचीति । अपीच्यं सुन्दरमवयवदर्शनं यस्य अच्युतवत् वेपः पीताम्बरादिभूपणानि कुण्डलादीनि यस्येति पूर्वश्लोकोक्तविशेपणविशिष्टत्वेन दृष्टस्यानुवादः तथाचैवंविधस्य गोकुले अदृष्टचरत्वात् अक्रूरस्य चातादृशत्वात् कोऽयमिति जिज्ञासा चतुरशिरोमणिः काचिदस्ति चेन्निश्चित्य वदत्वित्यभिप्रायः नन्वपीच्यदर्शने पीतपटाद्यलङ्कृते दामोदरे आसक्तचित्ता व्रजाङ्गनास्तथाभूते मय्यप्यासक्ता भविष्यन्तीति दुराशया तादृशविग्रहवेपादिकं विधाय कश्चित्कामुकोऽयं समागत किं वा प्रियतुल्यविग्रहादिमन्तं मां दृष्ट्वा गोपिका बहुधनं दास्यन्तीत्याशया तत्सदृशो भूत्वा कश्चिल्लुब्धोऽयमागत इत्याशङ्क्याहुः । शुचि कामलोभादिदोपविनिर्मुक्तं शुद्धं स्मितं यस्य तथा च परमसज्जनत्वात् नायमुक्ततर्कगोचर इति भावः । अत एवंभूतोऽयं कः किंजातीयः किन्नामधेयः किं च कुतः कस्माद्देशाद्यमागतः किञ्चाकारादिसदृशाकारादिकमेनं विधायास्मत्प्रियेणैवायं प्रेपितत्वात्तत्सकाशादागतः किं स्वत एव स्वगृहादागतः किञ्च कस्यायं पुत्रः पौत्रो वा विशिष्टसंबन्धं ज्ञात्वा प्रीत्यतिशयस्य विधीयमानत्वात्तत्संबन्धज्ञानमप्युचितमिति भावः । इति संशयव्याकुलमानसास्तन्निरासार्थमुत्सुकाः प्रियसादृश्यदर्शनेन तदीय एवायं कदाचित्स्यादिति तन्निश्चये उत्कण्ठितचित्ताः सर्वाः व्रजस्त्रियस्तं सर्वतो वेष्टयामासुः उत्सुकानामप्येवंविधसंशयाक्रान्तचेतसां दूतीद्वारा निर्णयं कृत्वा तत्सन्निधौ गत्वा तत्परिवेष्टनमुचितमित्याशङ्क्याहोत्तमेति उत्तमः श्लोको यस्य तत् भगवतः पादकमलमेवाश्रयो यस्य तं तथा च भगवत्पादपद्माश्रयणस्य सर्वाकर्षणकारणस्य तस्मिन्वर्तमानत्वात्तदङ्घ्रिसरोरुहाश्रयाणां तदीयानां लवमात्रविलम्बसहनाक्षमाणां तासामाकर्पणे को विस्मय इति भावः ॥ २ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथ परिवेष्टनानन्तरं स्वयुद्धयैव तं प्रियसंदेशहरं ज्ञात्वा सत्कृत्य पप्रच्छुरित्याह । तमिति । प्रियदूतत्वात्सव्रीडहासादिभिरयं सत्कारार्ह इति तैः सुसत्कृतं सव्रीडहासपूर्वकमीक्षणं सूनृतानि प्रियवचनानि कुशलप्रश्नाद्यात्मकानि आदिपदेनासनपुष्पाद्युपचारसंग्रहः तैः सुसत्कृतं क स्थितमित्यपेक्षायामाह । रहसि एकान्ते रसाविर्भावाय नन्दादिपुरुषमात्रदृष्ट्यगोचरे स्थाने सम्यग्वस्त्रादिभिर्निर्मिते कोमले आसने उपविष्टम् अव्याकुलतया स्वसन्निधौ निषण्णं तमुद्धवं प्रश्रयेण प्रेम्णा नम्राः सत्यः अपृच्छन् निष्कामस्यास्यास्मत्कृतसत्कृतिग्रहणमस्माभिः सहावस्थानं चास्मदर्थमेवातोऽयं प्रश्रयेण नम्रीभूय प्रष्टव्य इति भावः ननु प्रियसन्देशहारक इति किमिति ज्ञातवत्यः नत्वस्मदाकारणार्थमागत इत्यत उक्तं रमापतेरिति । इदानीं रमया लक्ष्म्या रमाभिः रामाभिर्नागरस्त्रीभिश्च सह वर्तमानस्य तस्यास्मदपेक्षारहितत्वादप्रयोजिकानामस्माकमाकारणं न घटते किं तु मद्विरहव्याकुलचित्तानां मरणं भवेच्चेत्तर्हि मम पापं स्यादिति तन्नरयेनास्मदनुरञ्जनहेतुसंदेशनार्थमेवायं प्रेषित इति ज्ञातवत्य इत्यर्थः ॥ ३ ॥

तं प्रियसंदेशहरं विज्ञाय स्वस्य उपेक्षणीयत्वमनुमाय प्रणयकोपाक्रान्तस्वान्तास्तदागमनमन्यथा वर्णयन्ति । जानीम इति । यदुपतेः पार्षदं न तु गोपिकापतेः तथा च त्यक्तगोपिकापतिभावस्य स्वीकृतयदुपतित्वस्यास्मदुपकाराय प्रवृत्तिरीतिदुर्लभेति भावः । तस्य पार्षदः सभानायकोऽतिचतुरस्त्वमपि यथा राजा तथा प्रजेति न्यायात् तथाच वृथा सान्त्वनकुशलोऽविश्वास्यवचनोऽसीति भावः । एवम्भूतं त्वां सम्यगुप समीपे आगतं जानीमः तव समीचीनवक्षेणास्मत्समीपागमनेन च प्रियस्य तत्रत्यानां तदीयानां तव च कुशलमित्यपि विद्मः ननु पराधीनस्य ममात्रागमनं भवतीभिः कथं ज्ञातमिति चेत् तत्राहुः । भर्त्रेह भवान् प्रेषितः । ननु भवतीभिरेव तस्मिन् स्वपतित्वं त्यक्तम् अस्मत्पतेरिति वक्तव्ये यदुपतेरिति विशेषणदानात् स तु स्वात्मानं गोपिकापतिमेव मन्यते इत्याशङ्कानिवृत्त्यर्थं भर्त्रेति पदं तेनैवास्मद्भर्तृत्वं विहाय यदुपतित्वमुररीकृतं न त्वस्माभिस्त्यक्तं यथा पूर्वमेव स्थानादिति भावः । यदुपतित्वमस्मद्भर्तृत्वं च तस्यैव विरुद्धमुत्कृष्टजातिनिविष्टत्वात् न त्वस्माकं निकृष्टत्वादित्यप्यनेन ध्वनितम् । अन्यत्र कचित्प्रेषितः प्रसङ्गादिह समागत इति सर्वथान्यथा करणस्य मिथ्याभाषणे पर्यवसानमाभिप्रेत्येत्युक्तम् नन्विह प्रेषणं जानतीनां तदुपरि दोषारोपणमनुचितं परमप्रियाणां भवतीनां प्रियसम्पादनस्यैवात्र मत्प्रेषणप्रयोजनत्वादित्याशङ्क्याहुः । पित्रोरिति । नन्दयशोदयोः प्रियचिकीर्षया नत्वस्माकं पित्रोर्हि पुत्रास्तित्वनतैश्वर्यश्रवणेनापि सुखं भवतीति तत्सुखार्थम् अलङ्कृतत्वाद्यैश्वर्यकुशलताबोधको भवान् प्रेषितः नत्वस्मत्सुखार्थं तावता सुखासिद्धेरित्याशयेन भवानित्युक्तम् अस्मत्प्रियचिकीर्षा तस्य स्याच्चेत्तदालङ्कृतां काञ्चिद्दूतीं प्रेषयेत्तु राजकार्यकुशलं दूतं भवन्तमित्यपि ध्वनितम् ॥ ४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सप्तचत्वारिंशे गोपीनां भगवति प्रेमातिशयं भगवत्सन्देशेन तत्सान्त्वनं पुर्यां प्रत्युद्धवागमनञ्चेति वर्णयति । तमिति । तमुद्धवं वीक्ष्य लसत् शोभमानं मुखारविन्दं यस्य तं परिमृष्टे उज्ज्वलीकृते कुण्डले यस्य तम् ॥ १ ॥

शुचि परदोषादिनिमित्तवर्जितं स्मितं यस्य तम् अपीच्यं सुन्दरं दर्शनं यस्य तम् अच्युतस्येव वेषो भूषणानि च यस्य तं कोऽयं कुतो वा कस्य वेति परस्परं वदन्त्यः सर्वाः गोप्यस्तं परिवव्रुः आवेष्टितवत्यः ॥ २ ॥

तं रमापतेः सन्देशहरं विज्ञाय अवनताः नम्राः प्रश्रयेण विनयेन सव्रीडहासादिभिश्चोपलक्षिताः सुसत्कृतं रहस्येकान्ते उपविष्टम् अपृच्छन् ॥ ३ ॥

जानीम इत्यादीनि वाक्यानि याः श्रीकृष्णं केवलं कान्तं विदुस्तासाम् । पार्षदं सेवकम् भर्त्रा स्वामिना ॥ ४ ॥

---

### भाषा टीका ।

श्रीशुकदेवजी बोले व्रजस्त्रियोंने उद्धवजी को देखा कि ये श्रीकृष्ण के अनुचर हैं लंबे उनके भुजा हैं नये कमल सरीके उनके नेत्र हैं पीतांबर को पहरे हैं कमलों की माला पहरे हैं मुखारविंद उनका अति शोभित है और मणिके अत्यंत उज्ज्वल कुंडलों से शोभित हैं ॥ १ ॥

तब उत्तम श्लोक भगवान् के चरण कमलके आश्रय करने वाले उन उद्धवजी को देखकर गोपी कहने लगीं यह कौनहै जिसकी मनोहर हास है यह सुंदर रूप वाला है श्याम सुंदर के से इसके वेष और भूषण हैं यह किस का पुरुष है कहां से आया है ऐसा कहकर बडी उत्कंठा वाली होकर चारों तरफ से उद्धवजी को घेर लेती भईं ॥ २ ॥

गोपीजनों ने जब जाना कि ए श्रीकृष्ण के संदेशा कहने वाले हैं तब उनको एकांत में लेगईं उत्तम आसन में बैठा दिया फिर बडे आदर के साथ लज्जा हास सहित दृष्टि मीठे वचन आदिकों से उनका सत्कार करके प्रेम से नम्र होकर पूंछने लगीं ॥ ३ ॥

गोपी बोलीं हम तुमको जानती हैं कि तुम यदुपति कृष्ण के पार्षद हो यहां आये हो तुमारे स्वामीने तुम को यहां पर पिता माता के प्रसन्न करने को भेजा है ॥ ४ ॥

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ।
स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥
अन्येष्वर्थकृतां मैत्री यावदर्थविडम्बनम् ।
पुंभिः स्त्रीषु कृता यद्वत् सुमनस्स्विव षट्पदैः ॥ ६ ॥
निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ।
अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥
खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ।
दग्धं मृगास्तथाऽरण्यं जारा भुक्त्वा रतां स्त्रियम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पित्रोः प्रियचिकीर्षयेत्यत्र हेतुः स्नेहानुबन्ध इति ॥ ५ ॥

अन्यथा गोव्रजे तस्येत्यत्र हेतुः । अन्येष्विति । अर्थकृता कार्यनिमित्ता विडम्बनमनुकरणमात्रं नतु तात्त्विकी मैत्री पुंभिरिति दृष्टान्तौ ॥ ६ ॥

अस्यैवान्यार्थनिदर्शनैः प्रपञ्चः । निः स्वमित्यादिना । दत्ता दक्षिणा येन तं याज्यम् ॥ ७ ॥

पक्षिणो विगतफलं वृक्षम् रतामनुरक्तामतृप्तामित्यर्थः ॥ ८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी

अन्यथा तौ विना गवां व्रज इति परदैन्येनात्मनो गोसादृश्यमननात् स्मरणीयं जनं किञ्चिद्वा न पश्यामः बन्धूनां बन्धुषु स्नेहस्य अनुबन्धप्रवृत्तिर्मुनेरात्मारामस्यापि किं पुनरैश्वर्य्याद्यपेक्षस्य तस्य ॥ ५ ॥

अन्येषु बन्धुव्यतिरिक्तेषु मैत्री स्नेहः अन्यत्तैर्व्याख्यातं यद्वा यद्यपि मुनेरपि सुदुस्त्यजस्तथापि न चक्ष्महे प्रियव्यतिरिक्तानां तस्य बन्धूनामत्राभावात् । ननु अबन्धुष्वपि स्नेहो दृश्यते सत्यं स त्वौपाधिको ऽस्थिर इत्याहुः । अन्येष्विति । सा ह्यर्थे सिद्धे पश्चान्नैवानुवर्तते इत्याहुः । यावदर्थं निजप्रयोजनसाधनपर्य्यन्तमेवेति अत एव विडम्बनं कदाचित् कस्य चित्पुंसः कस्यांचित् स्त्रियां सह दृढमैत्रीदृष्ट्या दृष्टान्तान्तरं सुमनःस्विति श्लेषेण शोभनचित्तेष्विति न तेषां तत्र दोषः किन्तु चाञ्चल्यात् षट्पदानामिवेति भावः ॥ ६ ॥

निःस्वं पूर्वं धनवन्तमपि पश्चाद्व्ययादिना निर्द्धनं सन्तम् एवमग्रेऽप्यूह्यम् अकल्पं पालनासमर्थम् ऋत्विजो याजकाः ॥ ७ ॥

खगाः खे भ्रमन्तः फलानि दृष्ट्वा तदर्थमागताः अतिथयः निमन्त्रणेन क्षुधादिना वा भोजनार्थमेवागताः तथेति समुच्चये अनां नवतृणाद्यर्थमागता इति खगवज्ज्ञेयाः जारा इत्यत्यन्तदैन्येनात्मादृदृशसम्भवेऽपि सामान्येनैवोक्तं नत्वात्मोद्देशेनेति ज्ञेयं प्रेमविशेषेण तदेकपरत्वादिना तासु तस्य केवलप्राकृतजारत्वाभावात् । एवं क्रमेण धनपालनाध्ययनपूजाश्रयणभोजनोपजीवनरतयोऽष्टौ प्रायो लोकानामपेक्ष्यार्था उक्ताः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्यथा तौ विना तु तस्य यदुपतेर्गोव्रजे तन्मात्रधनगोपावासे स्मरणयोग्यमपि न पश्यामः किमुत स्मरणपथगतमित्यर्थः । यत्तु तयोरपि स्मरणं तदपि तयोरेव स्नेहस्य गुणो ननु तस्येत्याहुः । स्नेहेति । बन्धूनामिति बन्धुषु पित्रादिषु स्नेहानुबन्धः स मुनेः सन्न्यासिनोऽपि दुस्त्यजः कृच्छ्रेणैव विस्मर्त्तुं शक्यते ननु सहसा त्यक्तुमिति ततोऽपि काठिन्यमित्यर्थः ॥ ५ ॥

अन्येषु मैत्री अर्थकृता प्रार्थनीयपदार्थोपाधिका ननु बन्धुष्विव स्वाभाविकीत्यर्थः । सा च यावदर्थविडम्बनं यावन्तस्तेऽर्थास्तावदेव तस्या मैत्र्या अनुकरणमात्रम् । अस्मासु तु न काचिद्बन्धुता मिथुनतासम्बन्धश्च न स्थिरः स्यादिति । शालीनतया दृष्टान्तोपदेशेनैवाहुः । पुंभिरिति दृष्टान्तस्यैव दृष्टान्तः सुमनःस्विति श्लेषेण शोभनचित्तेष्विति न तेषां तत्र दोषः किन्तु लौल्यात् षट्पदानामेवेति भावः ॥ ६ ॥

मिथुनतासम्बन्धश्च यदि धर्मप्रधानतः स्यात्तदा स्थिरोऽपि स्यात् केवलग्राम्यधर्ममयश्चेत् अस्थिर एव स्यादित्यर्थान्तरन्यासव्याजेन तदेव पर्यवसाययन्ति । निःस्वमिति युग्मकेन । निःस्वं निर्धनीभूतम् अकल्पं पालनासमर्थीभूतम् ऋत्विजो याजकाः ॥ ७ ॥

दग्धं दग्धीभूतं जारा भुक्त्वा रतां स्त्रियमित्यत्र दृष्टान्तपक्षेषु पुरुषेषु निन्द्यं जारपदं न्यस्तं स्त्रियान्तु तद्वत् पुंश्चलीपदं न न्यस्तं किन्तु रतापदमेव तत् खलु दार्ष्टान्तिकेषु स्वेषु तद्दोषसंक्रमणनिरसनार्थमेवं स्थिते वयमुत्पत्तित एव निजं तस्मिन्ननुरागं निर्णीय तमेवानन्यतया स्वयं वृतवत्यः । स पुनरस्मान् भुक्त्वा परित्यजन् जारायमाण एव जात इति तमेवानन्यभावाः जारा इति बहुत्वमुक्त्वा स्त्रियमित्येकवचनन्तु जारपरायाः स्त्रिया बहुजारत्वमपि सम्भवतीति तद्विधायां निन्दाया विवक्षया तेषां पुनरेतादृशतायाः इति ज्ञेयम् एवं धनपालनाध्ययनपूजोपजीवनभोजनाश्रयणरतयोऽष्टौ प्रायो लोकानामपेक्ष्या अर्था भद्राभद्राश्च सर्वेऽप्युपाधय इति न स्नेहनिर्वाहका इति भावः ॥ ८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अर्थकृता प्रयोजनावधिकतया विडम्बनमात्रम् ॥ ६—११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कुतोऽयं निश्चय इत्यत्राहुः। अन्यथा पित्रोः प्रियचिकीर्षामन्तरेणेत्यर्थः। तस्यावाप्तसमस्तकामस्येति भावः। गोव्रजेऽतिहीन इति भावः। स्मरणीयं स्मर्तुं योग्यं वस्तु न चक्ष्महे न पश्यामः प्रियचिकीर्षयेत्यत्र हेतुः स्नेहानुबन्ध इति बन्धूनां पित्रादीनां सम्बन्धी स्नेहरूपोऽनुबन्धः पाशः मुनेरपि त्यक्तुमशक्यः ॥ ५ ॥

अन्येषु बन्धुषु तु मैत्र्यर्थकृता स्वप्रयोजनप्रयुक्ताऽतः सा यावदर्थनिबन्धना यावत्प्रयोजनं निबन्धनं कारणं यस्यास्तथाभूतेत्यर्थः। विडम्बनेति पाठे यावत्प्रयोजनं विडम्ब्यतेऽनुक्रियते इति तथाभूतेत्यर्थः। न तु सा तात्त्विकी मैत्रीति भावः किं क्वचिदेवं दृष्टमित्यत्राहुः। पुम्भिरिति। यद्वद्दृष्टा स्त्रीषु पुंश्चलीषु पुम्भिः कृता मैत्री यथा सुमनःसु मधुभरितेषु कुसुमेषु षट्पदैर्भृङ्गैः कृता च एते उदाहरणे न तु दृष्टान्तौ ॥ ६ ॥

उदाहरणान्तरमुखेन यावदर्थनिबन्धनत्वं स्पष्टयन्त्यः प्राहुः। निःस्वमिति द्वाभ्याम्। न विद्यते स्वं धनं यस्य तं गणिका वेश्यास्त्यजन्ति यावत्स्वमनुभूय ततस्त्यजन्तीत्यर्थः। एवमुत्तरत्रापि अकल्पं प्रजापालनासमर्थं नृपमधीता विद्या यैस्ते शिष्या इत्यध्याहारः दत्ता दक्षिणा येन तं यजमानमृत्विजस्त्यजन्ति विगतानि फलानि यस्मात्तं वृक्षं खगाः पक्षिणः तथा दग्धमरण्यं मृगास्त्यजन्ति तथा जारः स्त्रियं भुक्त्वा तां रतामनुरक्तामतृप्तामेव त्यजति ॥ ७—८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अन्यथा यशोदानन्दगोपयोः प्रियकरणेच्छामन्तरेण स्मरणीयं स्मरणकारणयोग्यं न चक्ष्महे न पश्यामः गोव्रजे भुवि गोष्ठे सुरभिलोकव्यावृत्त्यर्थो गोशब्दः गवां व्रजः समूहो यस्मिन् स्थाने तत्तथा तस्मिन्वा पशुजातियुक्तगोष्ठे वा ॥ ५ ॥

इतोऽपि स्नेहलक्षणानुग्रहं विना ऽन्यत्रास्तीति भावेनाहुः। अन्येष्विति। अन्येषु पितृव्यतिरिक्तेषु बन्धुषु मैत्री स्नेहानुवृत्तिलक्षणा मित्रभावोक्तिः अर्थकृता प्रयोजननिबद्धा इत्यन्वयः कथमिवेति तत्राहुः। यावदर्थेति। यद्वत् यथा पुम्भिः स्त्रीषु कृता मैत्री यावदर्थं यावत्प्रयोजनसमाप्तिपर्यन्तं विडम्बनमनुकरणमात्रं यस्याः सा तथा यावदर्थं विडम्बयत्यनुकरोतीति यावदर्थविडम्बना वा इममर्थं दृष्टान्तान्तरेण द्रढयन्ति। सुमनःस्विति षट्पदैः भृङ्गैः ॥ ६ ॥

निःस्वं वित्तहीनम् अकल्पं रक्षणादावसमर्थं दत्तदक्षिणं यजमानम्वा ॥ ७ ॥

वीतफलं फलरहितं प्रणयकोपातिरेकदर्शनार्थं बहुदृष्टान्तकथनं जार उपपतिः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

यत्तु तयोरपि स्मरणं तदपि तयोरेव स्नेहस्य गुणो नतु तस्येत्याहुः। स्नेहेति। पूर्वत एव गोविन्दगतरागादयः विरहे त्यक्तलौकिकाः। कृष्णदूते व्रजायातेऽनुगायन्त्य इत्यादि ॥ ५-१० ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

ननु भवतीनामपि सुखं कर्तव्यं सम्बन्धस्य तुल्यत्वात् कथमप्रेषणमिति चेत्तत्राहुः। यद्यपि अन्ये स्मर्तव्याः अस्मदादयोऽपि परं नन्दशेषत्वेन नन्दव्रजे तिष्ठन्तीति नन्दमाहात्म्यार्थम् इममुपाधिं परित्यज्य अन्यप्रकारान्तरेण भोगप्रकारेण गोव्रजे पशुयोग्ये स्थाने तस्य सर्वेश्वरस्य सर्वसमृद्धियुक्तस्य स्मरणीयं न चक्ष्महे अपेक्षितं हि स्मरन्ति लोकाः नन्वेवं सति नन्दस्याप्यस्मरणं स्यात् ईश्वरस्यापेक्षाभावात् तत्राहुः। स्नेहानुबन्ध इति। यथा अपेक्षा स्मारिका एवं स्नेहोऽपि तत्र भवतीष्वपि तुल्य इति चेत्तत्र विशेषमाहुः। बन्धूनामेव स्नेहानुबन्धः पूर्वमुत्पन्नः स्नेहेनानुबन्धो यस्येति न स्नेहमात्रमुभयेषां स्नेहस्य ग्रन्थिरिति यावत् सतु दुस्त्यजो भवति स्नेहकारणस्य सम्बन्धस्य सहजत्वात् आकाङ्क्षायाश्च कृत्रिमत्वात् यथा देहपरित्यागे दैहिकेषु स्नेहो गच्छति एवमाकाङ्क्षापरित्यागेऽपि तत्र तादृशविषयान्तरसम्भवे आकाङ्क्षा निवर्तत इति औपाधिकः सम्बन्ध इत्याहुः। अन्येष्वर्थकृतेति। यावद्देहसम्बन्धः तावत् न ज्ञानादिनापि स्नेहो निवर्तयितुं शक्यते किं वक्तव्यं विषयैः तदाह। मुनेरपि सुदुस्त्यज इति। लौकिकाद्वैदिकं बलिष्ठमिति ज्ञापनार्थमपिशब्दः सुशब्दो नित्यविवेकस्मरणेऽप्यशक्यत्वाय अन्येषु देहसम्बन्धरहितेषु अर्थकृता प्रयोजनकृता प्रयोजनं देहधर्मः धर्मिणो दुर्बलः औपाधिकोऽपि न चिरस्थायी यथा माञ्जिष्ठादिरागः चिरकालमपि तत्रापि तिष्ठति बिडम्बनमेव अनुकरणमेव नटवत् अतोऽस्मासु भगवत्स्नेहः कदापि न स्थितः अनुकरणमात्रं स्थितमिति विडम्बनमात्रत्वान्न स्मरति ॥ ५ ॥

अर्थकृतत्वं प्रतिपादयितुमौपाधिकं धर्ममाहुः। पुंभिः स्त्रीष्विति। पुरुषाः स्वतन्त्राः सर्वसमर्थाः तद्विपरीताश्च स्त्रियः तासु स्नेहं न कुर्युरेव यदि कामो न भवेत् कामाच्च स्नेहमेव कुर्वन्ति अन्यथा सिद्धे गते वा कामे निवर्तते शास्त्रमपि विरागे त्यागं विधत्ते। यदहरेव विरजेदिति ननु तत्र धर्मोऽप्यस्ति पुत्रादिद्वारा च स्नेहो भवति ततश्चागन्तुकमपि सहजमिवेति भवति भवतीष्वपि तथा भगवत इत्याशङ्क्य तत्परिहारार्थं दृष्टान्तान्तरमाहुः। सु मनः सु षट्पदैरिवेति गमनक्रियाबाहुल्यार्थं षट्पदशब्दप्रयोगः तेषां मकरन्दग्रहणानन्तरं पुष्पनाशे न कापि क्षतिः अयमस्माकं युक्तो दृष्टान्तः नतु सर्वथैव दृष्टान्तः सुलभः ॥ ६ ॥

ननु तावता कार्यं सिध्यति ततः पुष्पाणामाशुतरविनाशयुक्तानां भ्रमराणां च बहूनां साधारणत्वात् भगवत एकत्वाद्भवतीनामसाधारणत्वाच्च न युक्तो दृष्टान्त इत्याशङ्क्य औपाधिकानामेव व्यवस्थेति वक्तुं दृष्टान्ताष्टकमाहुः। निःस्वमिति। यद्यपि नवं कैशोर एव कामोपाधिकः किं त्वाबाल्यादेवेत्यतो निरुपाधिक एव तदपि कृष्णेन वयं त्यक्तास्तस्मात्तद्दृष्टान्तोऽपि तत्र

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सर्वत्र बहुत्वं साधारणत्वं चोपाधिरस्त्येव तथापि बहुधा दर्शनात् सन्दिग्धोपाधित्वं साधयितुं दृष्टान्तानां कथनं सर्वथा निराकरणे अचिकित्स्य एव दोषः स्यात् यथा मित्रातनयत्वं संदिग्धोपाधिकं दशमोऽपि चेत् श्याम एव स्यात् तदोपाधिर्न भवेदेव अन्यथा तु भविष्यतीति एवं बहुत्वसाधारणत्वेऽपि भगवांस्त्यक्ष्यत्येव तदास्माकं स्वभावान्नोपाधिर्भविष्यतीति भावः। तत्र प्रथमं स्त्रियः स्वभावतः अदुष्टाः पुरुषो दुष्ट इतीर्ष्यावशात् भगवान् दूष्यत इति इमं पक्षं व्यावर्तयितुं स्त्रीणामेव प्रथमं स्वार्थाभावे पुरुषपरित्यागमाहुः। निःस्वं त्यजन्तीति। ता हि प्रथमतः सर्वभावेन भजन्ते नह्ययं कश्चिदात्मानं परस्मै निवेदयति तत्रापि यस्मै कस्मैचित् अनेन धर्मार्थमपि भजनं निषिद्धं लोकेऽपि निन्दिताः एवं लोके वेदे विरुद्धा अपि सर्वानपि परित्यज्य यं काञ्चित् सर्वभावेन भजन्ते ताः सर्वोत्तमा भवितुमर्हन्ति यद्यर्थं न कामयेयुः अर्थश्च न केवलं निर्वाहकः किन्त्वधिकोऽपि तस्मात्तासां तावद्धयर्थमेव निमित्ताभावे तादृशस्यापि त्यागात् यस्तु तथाभूतानां विदित्वा सर्वस्वं निवेदयति तादृशमपि धनरहितं स्वशब्देनोपार्जनेऽप्यसमर्थं गणिका वेश्यास्त्यजन्ति नहि तादृशः स्नेहोऽन्यत्र भवितुमर्हति। ननु तथाप्येताः समभावेन भजनं कृतवत्यः नतूत्कर्षभावेन सेवन्ते तेषु त्यागो न भविष्यतीत्याशङ्क्याहुः अकल्पमसमर्थं नृपं राजानमपि प्रजास्त्यजन्ति पूर्वं सर्वभावेन पालयमानाः प्रजाः स्वयमपि सर्वभावेन भजनयुक्ताः। तथापि पश्चात्पालनासामर्थ्ये तं परित्यज्य तच्छत्रोर्भवन्ति तादृशेन मन्येरन् न कोऽपि भवेद्राजा तथापि कः प्रयासं करिष्यतीति अल्पेनापि निमित्तेन परंपरागतमपि राजानं त्यजन्ति अनेन ज्ञायते देहसंबन्धव्यतिरिक्तेषु कथमपि लौकिकं भजनं यावदर्थमेव नतु कदाचिदपि क्षणमात्रमपि अनुपयोगे भजन्त इति। ननु लौकिके तथास्तु वैदिके वाक्यप्रामाण्यात्तथा भविष्यतीत्याशङ्क्य परिहरन्ति। अधीतविद्या इति पादद्वयेन। शब्दानुष्ठानभेदेन आदौ विद्या सर्वा यतो गृहीता यतः सर्वोऽपि पुरुषार्थो भवति तादृशीमपि प्राप्य ग्रहणपर्यन्तमेव आचार्यं सेवन्ते नत्वग्रे "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षत" इति एतादृशमपि स्वकार्ये संपन्ने त्यजन्तीति सर्वथा अन्योन्यार्थकृतैव मैत्री किञ्च यत्र वैदिकः सम्बन्धः सूतकव्यवहारः। अधीनस्यार्थोपयोगे जीविका च स्वस्य भवति तादृशमपि दत्ता दक्षिणा येन दक्षिणामेव प्राप्य शिष्टमर्थं यजमानं च त्यजन्ति कदाचिद्वा अदत्तदक्षिणं तस्मादन्वयव्यतिरेकाभ्यां प्रयोजनकृतैव मैत्री ॥ ७ ॥

एवमेकेन श्लोकेन धर्मार्थापेक्षयैवेतरभजनं न स्वाभाविकं दैहिकवदित्युक्तम् अधुना कामार्थं लौकिकवैदिकप्राकृतनिषिद्धभेदेनापि प्रवृत्ताः तत्तत्फलमनुभूय पश्चात्त्यजन्तीत्याहुः। खगा वीतफलमपि कामो हि द्विविधः उपर्यधश्चेन्द्रियभोगभेदेन तत्र खगाः पक्षिणः क्षुत्पीडिताः फलवन्तं वृक्षमाश्रयन्ति यदैव वीतफलो भवति तदैव च त्यजन्ति उपलक्षणमेतत् छायार्थिनो गतच्छायं तत्तदर्थिनस्तत्तदर्थापगमे तथा अतिथयः असम्बन्धिनो ब्राह्मणाः क्षुत्पीडिताः भुक्त्वा चकारादन्यमपि सत्कारं प्राप्य तद्गृहे अनिष्टेऽपि जाते निरीक्षणरहिताः गच्छन्ति कदाचिदेक एव कुर्यादिति सन्देहव्यावृत्त्यर्थं सर्वे एव तथाविधा इति ज्ञापयितुं सर्वत्र बहुवचनं यस्मिन्नरण्ये मृगा उत्पन्नाः वृद्धिश्च गताः तादृशस्य जातायामापदि अग्रे सम्पत्तिसम्भावनायामपि अल्पानुपयोगमाशङ्क्य त्यजन्ति मृगाः सर्वत्र साधारणं मत्वा असाधारण्येन तस्य नाशमपि कृत्वा गच्छन्तीत्याहुः। जारो भुक्त्वेति। स्वाहि परस्य स्त्री भोग्या स्वयं जारस्तदेकस्वभावस्तदुपजीवी वा तादृशोऽपि भोगानन्तरं तां चेत्कश्चिद्धन्यात्तदपि अनपेक्षमाणस्त्यजत्येव तथैतज्ज्ञातमित्यभिप्रायः अथवा एतादृशविधान् दश दृष्टान्तानाहुः तत्र सात्त्विकादिभावेषु तथा वचनं जारो भुक्त्वेत्यन्ते राजसतामस्याः अथवा दृष्टान्ताष्टकमेवैतदवधि तामसतामसस्यास्तु सर्वभावापन्नायाः भ्रमरकथायां स्वरूपं वक्तव्यम् अत एव काचिदित्येकां निरूपयिष्यति ॥ ८ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

स्मरणीयं स्मरणयोग्यं जनं कमपि न चक्ष्महे न पश्यामः स्मृतयोः यशोदानन्दयोः पित्रोरपि तेन यथेष्टमनादरः कृतस्तदा अस्मदादीनां तदीयस्मृत्येकभूमिकायामध्यारोहणयोग्यता कुत एव स्यादिति भावः। मुनेः कृतसंन्यासस्यापि दुस्त्यजः पत्नी आर्या कृष्णेन तु परस्त्रीपुञ्जेषु रममाणेनापि दुस्त्यज एवेत्यहो कृष्णस्य वैराग्यतीव्रतेति भावः ॥ ५ ॥

ननु कृष्णस्य पितृभ्यां भ्रात्रादिभिश्च निष्प्रयोजनत्वान्ममता मास्तु युष्माभिः स्त्रीभिस्तु लम्पटत्वात् तस्य प्रयोजनमस्त्येवेति यूयमेव स्मरणीया भवथेति तत्राहुः। अन्येष्विति। अर्थकृता प्रयोजनवती निर्ध्येय मैत्री यावदर्थविडम्बनं यावत्तावच्च साकल्ये इत्यभिधानात् सर्वार्थविडम्बनरूपाया मैत्र्याः कर्त्ता यश्च मैत्र्याः प्रतियोगी यश्च प्रयोजकः यश्चोपकरणं तेषां सर्वेषामप्यर्थानां विडम्बनं तिरस्कारस्तद्रूपेत्यर्थः। स्वस्य प्रयोजनसद्भावे मैत्र्याः सत्त्वं प्रयोजनाभावे मैत्र्या अभाव इत्यर्थः। तत्रापि पुंभिः सुमनःस्विव पुष्पसदृशीषु सौन्दर्यसौरभ्यसौकुमार्यमाधुर्यवतीष्वपि स्त्रीषु श्लेषेण शोभनमनस्कास्वचञ्चलचित्तास्वपि मैत्री तद्वत् कृता यद्वत् षट्पदैः कृतेत्यन्वयः। षट्पदा हि सौरभ्यादिगुणवन्त्यपि पुष्पाणि सकृत् पीत्वैव स्वचाञ्चल्यदोषात् यथा त्यजन्ति तथैव पुमांसः स्वसम्भोगार्हमाधुर्यादिमतीरप्येकनिष्ठा अपि स्त्रीः सम्भुज्य त्यजन्तीति प्रयोजनसद्भावेऽपि मैत्र्या अभाव इत्यतिनिन्दा ॥ ६ ॥

तत्र स्वप्रयोजनाभाव एव मैत्र्या अभाव इत्यत्र दृष्टान्तान् दीपकन्यायेनाहुः। निःस्वं गणिकास्त्यजन्ति तेन यावद्धनप्राप्तिस्तावन्न त्यजन्तीत्येवमग्रेऽपि व्याख्येयम् अकल्पं पालनासमर्थं दत्ता दक्षिणा येन यजमानं वीतफलं विगतफलं जाराः खलु रतां रमणवतीमपि स्त्रियं त्यजन्ति तेन यावत्तस्या यौवनं तावन्न त्यजन्तीति पूर्ववदर्थाभावात् यत् किञ्चित्प्रयोजनाभावेऽपि मैत्र्या अभावः प्रतिपादितः तेन तस्य स्वप्रयोजनसिद्धिः पुरस्त्रीभिरेव भवतीति कथं वयं स्मरणीया भवामेति कृष्णस्य स्वेषु प्रेमाभावो व्यञ्जितः तत्रापि जारा इति बहुवचनेन स्त्रियमित्येकवचनेन च बहुजारपरायाः कामोपाधिकप्रीतिमत्यास्तु त्यागः सम्भवतु अस्माकं तु बहूनामपि तदेकनिष्ठत्वमेव केवलं प्रेमापि

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न सम्भवेदित्यभिव्यज्य निरुपमं नृशंसत्वमेव कृष्णस्य द्योतितम् ॥ ७—८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु दूतीप्रेषणे तयोः सन्तोषो न भवेदतोऽर्थान् सोऽपि भवत्वित्याशयेन भवतीनामेव प्रियचिकीर्षया युष्मद्भर्त्राहं प्रेषितो भवत्यस्तु वृथैवान्यथा वर्णयन्त्यः क्लिश्यन्तीत्याशङ्कयाहुः । अन्यथेति । पितरौ विना तस्य पशुपतेः गोव्रजे स्मरणविषयं न पश्यामः यदर्थं भवादृशं प्रेषयेत् त्यक्तगोपालत्वस्य प्राप्तयद्वाधिपत्यस्यानुपयुक्तत्वाद्गोगोपादिकमपि पशुपालादिस्थितियोग्ये स्थाने स्मरणीयं न चक्ष्महे अस्माकं तु स्मरणप्रसक्तिरेव नास्तीत्याशयः अन्यथास्मद्गृहानागत्यैकत्र स्थित्वास्मानाहूय प्रियसन्देशानुक्त्वा पश्चान्नन्दराजगृहे प्रवेशस्त्वया कृतः स्यान्न तु तथा कृतवानसि किन्तु स्वत एवास्माभिरागत्य परिवेष्टितोऽस्यतोऽस्मत्तर्को यथार्थ एवेति भावः । नन्वनपेक्षणीयत्वरूपहेतोः पित्रोरपि तुल्यत्वात्तत्स्मरणं तत्प्रियार्थं दूतप्रेषणादिकं चापि न संभवतीत्याशङ्कयाहुः । स्नेहेति । स्नेहेनानुबन्धः बन्धनं स्नेहेनानुसम्बन्धो यस्य स स्नेहग्रन्थिर्वा बन्धूनां मातापित्रादिसम्बन्धी सम्बन्धो मुनेस्तत्त्वविदोऽपि भ्रत्यर्थं दुस्त्यजस्त्यक्तुमशक्यः ननूक्तहेतुर्भवतीष्वपि समान इत्याशङ्कानिवृत्त्यर्थं बन्धूनामित्युक्तं स्नेहमात्रं चेत् कदाचित्त्यक्तुमपि शक्येत परस्परस्नेहकृततद्ग्रन्थिस्तु यथोक्त एवेति बोधयितुमनुबन्धपदोपादानं सम्बन्धेन सह जातस्य स्नेहस्य सम्बन्धनिवृत्त्यैव निवृत्तिर्भवति औपाधिकभ्रमस्य यावदुपाधिसत्त्वनियमात् अत एव तत्त्वविदामपि यावद्देहस्तावत्तत्र स्नेहानुवृत्तिरुपलभ्यते यो मुनेरपि दुष्परिहरः स विषयिभिः कथं परिहर्तुं शक्य इत्यपिशब्देन बोधितं यथा चास्मदादिषु तस्य यावत्प्रयोजनमपेक्षाबुद्धिरासीत्सा च तदभावान्निवृत्तातो नान्यस्य स्मरणादियोग्यता नन्दराजमाहात्म्यात् तद्व्रजसम्बन्धीनां सर्वेषामपि न स्मरणं क्रियते चेत्तर्हि पराङ्गतया स्मरणादिकं नास्माकं सन्तोषकरमुत्कर्षानापादकत्वादिति भावः ॥ ५ ॥

कृत्स्न मेवैतत् न तु वयमपूर्वं कल्पयाम इत्याशयेनाहुः । अन्येष्विति । अन्येषु देहसम्बन्धरहितेषु अर्थकृता प्रयोजनोपाधिका मित्रता यावदर्थविडम्बनमनुकरणमात्रं ननु स्वाभाविकी अतोऽर्थनिवृत्त्या न तिष्ठति अस्मासु तु भगवत्स्नेहः कदापि न स्थितः किन्तु तदनुकरणमात्रं स्थितमतो नास्माकं स्मरणादियोग्यतेत्याशयः तत्रोदाहरणानि निवेदयन्ति । पुम्भिरिति । तद्यथा पुम्भिः स्त्रीषु कृता मैत्री कामबाधानिवृत्तिरूपार्थपर्यन्तं विडम्बनमात्रं स्वतन्त्राः सर्वसमर्थाः पुमांसः अबलासु स्त्रीषु कामादेव स्नेहं कुर्वन्ति अन्यथा सिद्धे निवृत्ते वा कामं तदभावदर्शनात् "यदहरेव विरजेत्तदहरेव प्रव्रजे"दिति श्रुत्या सिद्धहितस्य संन्यासविधानाच्च ननु तत्रौपाधिकोऽपि स्नेहः कदाचित्पुत्राद्युत्पत्त्या तद्द्वारा सहजोऽपि भवतीत्यरुच्योदाहरणान्तरमाहुः । सुमनः स्विति । यथा वा षट्पदैः कृता पुष्पेषु मैत्री मकरन्दग्रहणपर्यन्तं विडम्बनमात्रं तत्र मकरन्दाभावान्निवर्त्तते भ्रमरेत्यत्र गमनक्रियाबाहुल्यसूचनार्थं षट्पदशब्दप्रयोगः ॥ ६ ॥

ईर्ष्यावशान्न पुरुषाणामेव दूषणोद्घाटनमेताभिरारब्धमित्याशङ्कानिरासार्थमाहुः । निःस्वमिति । गणिका वाराङ्गनाः लोकद्वयभयनिर्मुक्ताः परममैत्रीं विडम्बयन्त्यो धनवन्तं पुरुषं भजन्ते तस्य निर्धनतादशायां तं त्यजन्ति तथा चार्थकृता मैत्री स्त्रीष्वपि कृत्रिमैवातो न वयमीर्ष्यावशात् पुरुषेषु दोषमारोपयाम इति भावः । एवं चास्मदुक्तनियमस्य नास्ति क्वापि भङ्ग इत्याशयेनोदाहरणान्तराण्याहुः । अकल्पमिति । पूर्वं सर्वभावेन पाल्यमानाः स्वयं च सर्वभावेन तद्भजनयुक्ताः प्रजाः पश्चात्तमेव परम्परागतं राजानं पालनाशक्तं त्यजन्ति पालनक्षमं तच्छत्रुं भजन्तीति प्रसिद्धम् अधीतविद्या यैस्ते शिष्याः ।

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षते ॥

इत्युक्तं स्वयं सर्वपुरुषार्थहेतुभूतविद्याप्रदायकत्वात्परमोपकारिणमाचार्यं त्यजन्ति यथा वा दत्ता दक्षिणा येन तं याज्यम् ऋत्विजस्त्यजन्ति कदाचित् अदत्ता दक्षिणा येन तं तत्समीपमपि न गच्छन्तीति वा एतेन मूर्खाणामेवेयं कथा न पण्डितानामित्याशङ्कापि परिहृता ॥ ७ ॥

तथा खगाः पक्षिणः क्षुत्पीडिताः फलवन्तं वृक्षं सेवमानास्तदपगमे तं त्यजन्ति छायार्थिनस्तु द्रुहिनमित्यस्यापीदमुपलक्षणं तथा अतिथयः असम्बन्धिनो ब्राह्मणादयः क्षुत्पीडिता भुक्त्वा चकारादन्यदपि सत्कारादिकं लब्ध्वा भोजनादिदातृगृहं त्यजन्ति तद्गृहे कस्मिंश्चित् दाहादिरूपोपद्रवेऽपि जाते तदवलोकनमप्यकुर्वन्तो गच्छन्ति तथा यस्मिन्वने उत्पन्ना वृद्धिं च गतास्तादृशमपि वनमुपयोगाभावात्त्यजन्ति न तावदेक एव कश्चिदेवं करोति किन्तु सर्व एव एवम्विधा इति सूचयितुं सर्वत्र बहुवचनप्रयोगः तथा रतां स्वपतिपुत्रादिकं परित्यज्य स्वस्मिन्नेवात्यर्थमनुरागवतीं भुक्त्वा स्वकार्यार्थं तदीयं लोकद्वयमपि नाशयित्वा अतृप्तामेव स्त्रियं जारस्त्यजति एवम्विधः कश्चिदेवास्मत्प्रियसदृश इति ध्वनयितुं जार इत्येकवचनम् इतः परमुदाहरणान्तरानुपादानमेतस्य कृतघ्नशिरोमणित्वख्यापनार्थम् ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु पित्रोरपि प्रियचिकीर्षा तास्मिन् निःस्नेहे कथं सम्भावनीया इत्यत आहुः । स्नेहानुबन्ध इति ॥ ५ ॥

अन्येषु तु तन्मैत्री अर्थकृता प्रयोजननिमित्ता अत एव यावदर्थविडम्बनं यावत्प्रयोजनानुकरणं तावदेव पुम्भिर्दुर्वृत्तैः स्त्रीषु पुंश्चलीषु यथा प्रयोजननिमित्तकृता यथा वा सुमनःसु पुष्पेषु षट्पदैः भ्रमरैस्तद्वत् ॥ ६ ॥

इयं लोकरीतिरेवेति विमनस्का आहुः । निःस्वमिति द्वाभ्याम् । दत्तदक्षिणं याज्यम् ॥ ७ ॥

वीतफलं विगतफलं वृक्षम् रतामनुरक्ताम् ॥ ८ ॥

भाषा टीका ।

यदि ऐसा नहीं होतो उनको इस गउ के गोष्ठ व्रज में स्मरण करने योग्य कुछभी नहीं दीखता है परन्तु स्नेहका निमित्ततो मुनि को भी छोडना कठिन होता है ॥ ५ ॥

जो अपने निज नहीं हैं उन के तो मतलब मात्र की मित्रता

[1]इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः।
कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥
गायन्त्यः प्रियकर्माणि रुदन्त्यश्च गतह्रियः।
तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥ १० ॥
काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम्।
प्रियप्रस्थापितं दूत कल्पयित्वेदमब्रवीत् ॥ ११ ॥

गोप्युवाच।

मधुप ! कितवबन्धो ! मास्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥

भाषा टीका।

रहती है सो जब तक प्रयोजन होवै तबहीतक मित्रता रहती है जैसे कि दूसरे की स्त्रियों के साथ पुरुषों की और फूलों मे भौंरों की मित्रता रहती है ॥ ६ ॥

धन बीतजानेपर वेश्या उस पुरुष को छोड़ देती हैं असमर्थ राजा को प्रजा छोड देती हैं विद्या पढ लेनेपर विद्यार्थी अध्यापक को छोड देते हैं दक्षिणा देदेने पर ऋत्विज लोग यजमान को छोड देते हैं ॥ ७ ॥

पक्षी फल बीतने पर पेड को छोड देते हैं अतिथी लोग भोजन किये पीछे उस घर को छोड देते हैं जल जाने पर घांस के विना वन को मृग छोड देते हैं जार पुरुष भी भोगे पीछे प्रेम वाली भी स्त्री को छोड देता है ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

त्यक्तलौकिकास्त्यक्तलोकव्यवहाराः ॥ ९ ॥

प्रियस्य कर्माणि गायन्त्यस्तथा तस्य बाल्यकैशोरयोर्यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियः सत्यो रुदत्यश्च तमपृच्छन्निति पूर्वक्रिययैव सम्बन्धः ॥ १० ॥

प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत् यद्वा तस्मिन्नप्युद्धवे प्रियप्रस्थापितं दूतमिति दूतत्वादृष्टिं कृत्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः ॥ ११ ॥

हे मधुप! कितवस्य धूर्तस्य बन्धो! नोऽस्माकमङ्घ्रिं मास्पृश मा मां नमस्कारेण प्रार्थयस्वेत्यर्थः। तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणाह। सपत्न्याः कुचाभ्यां लुलिता सम्मर्दिता या कृष्णस्य वनमाला अत एव तस्याः कुङ्कुमं येषु तैः श्मश्रुभिरुपलक्षितः किन्तु तासामेव मानिनीनां प्रसादं मधुपतिर्वहतु किमस्मत्प्रसादनेन तस्य यदुसदसि विडम्ब्यमुपहासास्पदम् कुतः यस्य दूतस्त्वमीदृशः ॥ १२ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

इति एतद्वदन्त्य इत्यर्थः। यद्वा इत्येवं त्यक्तलौकिकाः सत एव पूर्वं गोविन्दे गोकुलेन्द्रे श्लेषेण सर्वेन्द्रियव्यापके भगवति अत एव गतानि प्राप्तानि वागादीनि यासां ताः तत्र कायप्राप्तिः निजाङ्गानां सर्वेषां प्राणानां वा समर्पणात् तदाऽविष्टतया कायस्य विस्मरणाद्वा यद्वा कायिकव्यापारस्य तदर्थं त्यागात् किंवा तदर्थकमात्रकर्माचरणात् पुनश्च कृष्णस्य स्वचित्ताकर्षकस्य प्रेष्ठदूते तत्र चोद्धवे व्रजमायाते सति अन्यत्सैर्व्याख्यातं यद्वा गतह्रियो बभूवुरिति किंवा रुदत्यो मुमुहुरिति शेषः ॥ ९ ॥

पौगण्डस्य बाल्येऽन्तर्भावो ज्ञेयः कैशोरस्यादावुक्तिः तत्र रासादिक्रीडाविशेषापेक्षया ॥ १० ॥

काचित् कापि तासां मुख्यतमैका यद्वा के प्रेमसुखे आसमन्तात् चित् विज्ञानं यस्याः सा राधा यथा आग्नेये—

> गोप्यः पप्रच्छुरुषसि कृष्णानुचरमुद्धवम्।
> हरिलीलाविहारांश्च तत्रैकां राधिकां विना ॥
> राधा तद्भावसंलीना वासनाया विरामिता।
> सखीभिः साभ्यधाच्छुद्धविज्ञानगुणबृंहिता ॥
> इज्यान्तेवासिनं वेदचरमांशविभावनैः। इति

अस्य सार्धपद्यत्रयस्यार्थः राधिकां विना अन्या गोप्यस्तत्रोद्धवं हरिलीलाविहारान् पप्रच्छुः सा राधा तद्भावसंलीना तस्य कृष्णस्य भावेन महाभावेनैव वेदचरमांशविभावनैः वेदचरमांशा उपनिषदः तासां विभावनैर्विशेषभावनैः सारप्रकाशनैः इज्यान्तेवासिनं गोष्पतिशिष्यमुद्धवं मभ्यधात् कथंभूता प्रेम्णा शुद्धविज्ञानं तदेकरसतयानुभवः तेन बृंहिता उत्फुल्ला एतेन—

> उपनिषत्सारसंग्रहरूपो भ्रमरगीताख्योऽयंसार उच्यते
> महाभावविशेषस्य गतिं कामप्युपेयुषः।
> भ्रमाभा कापि वैचित्री दिव्योन्माद इतीर्यते ॥
> उद्घूर्णाचित्रजल्पाद्यास्तद्भेदा बहवो मताः।
> तथा प्रेष्ठस्य सुहृदालोके प्रणयक्रोधजृम्भितः ॥
> भूरिभावमयो जल्पश्चित्रजल्पस्तदुद्भवः।

तदुद्भवः दिव्योन्मादोद्भवः अतोऽन्तिमपद्यं विहायान्यत्र सर्वत्रैव रोपव्यञ्जनं ज्ञेयमिति मधुकरं स्वयमकस्मात्तदैव प्राप्तं तत्र

[1] ददर्श गोपीर्गोविन्दमनोवाग्देहचेष्टितः। कृष्णदूतो व्रजं प्राप्त उद्धवस्त्यक्तलौकिकाः ॥ इति वि० पाठः।

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

प्रियप्रस्थापितं दूतं मत्वा तत्र हेतुः ध्यायन्तीति कृष्णसङ्गमे चित्तस्य प्रवेशेन विरहार्तिविश्रृङ्खलितमहाभाववैवश्येन चानुसन्धानाभावतः श्यामत्वादिना मधुकरतया प्रतीतेरिति ॥ ११ ॥

स्वतः प्रेमजवार्तायां गोविन्दे लीनचेतसः ।
राधायाः केन वागर्थो वेद्यः स्यात्तत्कृपां विना ॥

मधुपेति । श्लेषेण हे मद्यपेत्यर्थः । मद्यपस्तु प्रायः परं वञ्चयत इति संबोधयति कितवः शठः श्रीकृष्णः अस्मत्परित्यागेन न पारयेऽहं निरवद्यसंयुजामित्यादिवचनार्थव्यभिचारात् तस्य वन्धो ! तद्बन्धुत्वं दूतत्वादेव वर्णादिसाम्याद्वा किंवा त्वं मधुपः सोऽपि मधुपतिरिति नामसाम्यात् मद्यपकितवयोः प्रायः सख्यं भवतीति कर्म्मसाम्याद्वा सोऽयं कृष्णसन्देशहरसंन्दर्शनेन वाढमुल्लङ्घितमर्य्यादस्य महाभावामृतराशेस्तरङ्गरूपैर्गाढासूयागर्वेर्य्यानादरोपहासादिभिर्भावविमाधुरीभरमेव नीयमानः श्रीराधाया जल्पः कस्य विद्वेद्य वोधनोचरीभवितुमर्हतीति तत्र कितवेत्यसूया रक्तणकुसुमधिया नखेषु पिपतिषन्तं भृङ्गं प्रसादनाय पादग्रहणं कुर्वन्तं मत्वाह मङ्घ्रिं मास्पृशेति । वयं तु मानवत्यः परमस्वतन्त्रास्तेन त्वद्विधेन प्रसादनीया न भवेमेत्यङ्घ्रिस्पर्शनेन किमित्यर्थं इति गर्वः किंवा कृष्णसङ्गमध्यानावेशेनात्मप्रसादनार्थमुद्धयमेव तथा कुर्वन्तं मत्वाह एवं महाभावोन्मादेनोक्त्याद्याख्यानामसङ्गत्या महागुणत्वेऽपि सतां प्रीतये कथञ्चित् काचित् सङ्गतिः कार्य्या सपत्न्याः लक्ष्म्याः पुरस्क्रिया वा कस्याश्चित् जातावेकत्वं वा विद्वग्धेन दृढालिङ्गनत्वादिकं बोध्यते न इति वहुत्वं निजसखीवर्गापेक्षया गर्वेणैव वा एवमपि मधुपस्य दूततया भगवदीयत्वेन तत्र च तद्वनमालायां निवासेन तस्यां च रतिसमये लग्नकुङ्कुमेन श्मश्रूणां कौटिल्यसम्भावनया तथोक्तं यच्च केचिदित्थमुद्धवस्य रक्तश्मश्रुलत्वं मन्यन्ते तदसङ्गतं अपीच्यदर्शन इत्युक्तत्वात् पक्षान्तरे तु भ्रमरतयोद्धवस्य कल्पनया तदीयाशेपरूपगुणादेरुद्धवेऽध्यासेन सर्वं सङ्गतमेव अहो सपत्न्या सह रत्यैव वयं तेन किल विस्मृताः स्म इति भावः । इतीर्ष्या अतस्तासां तेन रमितानां तदीयानां वा नागरीणां मानिनीनां सतीनां वहुत्वमेकस्यां प्रसादितायामन्यस्या मानात् तस्यामपि प्रसादितायामन्यस्या इत्येवं वाहुल्याभिप्रायेण प्रसादं वहतु पादग्रहणादिना प्रयत्नेन नित्यं प्रापयतु मादृशां तेन किमायातमित्यर्थः इत्यनादरः यतो मधुपतिः यदुकुलेश्वरः ऐश्वर्य्येण तद्युक्तमेवेति भावः । श्लेषेण मद्यस्वामी इत्यविचारः सौहृदाभावः सूचितः मद्यपे सौहृदं नास्तीति प्रसिद्धेः यद्यस्मात् उ इति संबोधने भो मधुप! यदु सदसि विदग्धवर्गाणां सभायां विडम्व्यमुपहसनीयं तस्य चरितमिति शेषः । ईदृक् सपत्नीकुचकुङ्कुमाक्तश्मश्रुर्निर्लज्ज इत्यर्थः । यादृशः स्वामी तच्छीलास्तदनुजनय इति न्यायात् त्वञ्च एव तत्स्वभावोऽपि ज्ञात एव यद्वा प्रसादनार्थं प्रेषितोऽपि यत सपत्नीकुचकुङ्कुमयुक्तश्मश्रुभिरागतोऽसीति निर्बुद्धिरेवेत्यर्थः । स्वतः स्त्रैणत्वाद्दूतस्य चरकत्वाद्विडम्व्यमेवेत्युपहासः अन्यत्तव्याख्यात यद्वा श्मश्रुभिः कृत्वा मा स्पृश कुतः कितवेति कितववन्धुत्यादित्यर्थः । कैतवं च व्यञ्जितमेव सपत्न्या इत्यादिना तदस्माभु कैतवेनालं पुरश्चारमेव सदा तनोति यच्छयेनाह । वहत्विति । यस्य त्वमीदृङ्

मधुपो दूतः स मधुपतिः कथम्भूतं प्रसादं विडम्व्यं विडम्बनार्हं पादग्रहणादिना विडम्बनमेव करोपीत्यर्थः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति पूर्वोक्तवचनप्रकारेण गोप्यस्त्यक्तलौकिका अनादृतलोकसंकोचा बभूवुः क सति कृष्णस्य सर्वेषामप्याकर्षकतया तन्नाम्नस्तस्य निजप्रेष्ठस्यान्यत्र गतस्य सतो दूते तत्राप्युद्धवे समायाते सति तत्र हेतुः हि यस्मात् गोविन्दे पूर्वमेव गोकुलेन्द्रे श्लेषेण सर्वेन्द्रियव्यापके तस्मिन् गतानि वागादीनि यासां ताः तत्र कायेन गतिः निजाङ्गानां समर्पणात् तदर्थकमात्रकर्माचरणात् तदाविष्टतया कायस्य विस्मृतत्वाच्च तस्मात्तासामिदानीमीदृशीभवनं युक्तमेवेति भावः । इत्थमेव च पूर्वमनन्यतया स्वयं वृतवत्य इति व्याख्यातम् ॥ ९ ॥

ततश्च गतह्रियः सत्यो यानि कैशोरबाल्ययोः प्रियकर्माणि तानि मुहुः स्मृत्वा गायन्त्योऽपि बभूवुः रुदन्त्यो रुदत्यश्च बभूवुरित्यर्थः । कैशोरस्य प्रथमोक्तिस्तासां स्वरसोद्दीपनत्वेन बाल्यं कौमारपौगण्डात्मकं तदीयस्मरणमावाल्यस्नेहेनेति ॥ १० ॥

अथ "महाभावविशेषस्य गतिं कामप्युपेयुषः । भ्रमाभा कापि वैचित्री दिव्योन्माद इतीर्यते । उद्घूर्णाश्चित्रजल्पाद्यास्तद्भेदा बहवो मताः । प्रेष्ठस्य सुहृदालोके प्रणयक्रोधजृम्भितः । भूरिभावमयो जल्पश्चित्रजल्पस्तदुद्धव" इति रसग्रन्थानुसारेण तास्वेव कस्या अपि दिव्योन्मादमयं चित्रजल्पं वक्तुमाह । काचिदिति । काचित् कापि परमप्रेष्ठा सा च श्रीराधेत्यर्थः । श्लेषेण च के प्रेमसुखे आ समन्तात् चित् ज्ञानं यस्याः सेति कं सर्वेषां प्रेमसुखमाचिनोति क्षणे क्षणे वर्द्धयति या सेति च मुख्यत्वात् सैव । तथैव सैषा एतच्छास्त्रेणैव प्रतिपादिता वासनाभाष्येऽपि । तादृशी सा पीतपरागपिञ्जरश्मश्रुं कञ्चिद्भ्रमरमकस्मात् दृष्ट्वा तं दूतं कल्पयित्वा वक्ष्यमाणभङ्गीमयमिदमब्रवीत् । ननु महाविरहदुःखेऽस्मिन् कुतो मानस्तत्राह । प्रियसङ्गं ध्यायन्ती स्फूर्त्तिस्वप्नयोर्यः प्रियसङ्गमस्तमेव गुप्तं मुहुरागतस्यैव तस्य साक्षात्तया स्मरन्ती । ननु तथापि यद्यन्यनायिकया प्रियस्य तत्र प्रसङ्गः स्यात्तदा सम्भवत्यपि मानस्तत्राप्याह । कल्पयित्वेति । या भ्रमरमपि दूतं कल्पयति सा तदपि कल्पयेदिति भावः । वक्ष्यति च सपत्न्याः कुचविलुलितेति प्रियेण स्वविषयकपरमप्रेमवता तेन प्रस्थापितं दूतं वितर्क्येदं चित्रजल्पाख्यं श्लोकमब्रवीत् । अतो यत्तत्र वासनाभाष्योत्थापितमाज्ञेयवचनम् । "गोप्यः पप्रच्छुरुपसि कृष्णानुचरमुद्धवम् । हरिलीलाविहारांश्च तत्रैकां राधिकां विना । राधा तद्भावसंलीना वासनाया विराभिता । सखीभिः साभ्यधाच्छुद्धविज्ञानगुणजृम्भितम् । इज्यान्तेवासिनं वेदचरमांशविभावनै"रिति । तदेतत् पूर्वं तस्या निर्वेदाख्यं भावान्तरं जातमासीदित्यपि ज्ञेयम् । यन्मूलतया प्रणयरोषमयोऽयमपि भावविशेषो जज्ञे । विचित्रसञ्चारिमयत्वात्तादृशावस्थायाः भक्तस्तद्भावमयद्दशमीदशानन्तर्यपर्यालोचनया वासनाया विरामिता पुनस्तत्सङ्गमसम्भावनरहिता बभूव । ततश्च तज्जातीयवार्त्तामसहमाना तदाच्छादनाय देहान्तरेष्वपि तद्दुःखपारावारमपश्यन्ती मुक्तिरेव वरमिति प्रतिपादनाय वा वेदचरमांशस्य ज्ञानकाण्डस्य विभावनैर्वदादरर्थैः शुद्धेत्यादि यथा स्यात्तथैवाभ्यधात् सम्वाद-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

माचचार । न केवलं सा किन्तु सख्योऽपीत्याह । सखीभिरिति योज्यम् । अथवा वेदचरमांशस्तादृशभावप्रकाशको वेदः । वासना तादृशभावेतरः सर्व एव भावः शुद्धविज्ञानं च तादृशभावमयानुभव उच्यते । "यं सर्वे वेदा आमनन्ति मुमुक्षवो ब्रह्मवादिनश्चे" ति मुक्त्यवस्थोपरि सामान्यभक्तेरपि प्राशस्त्याम्नानात् । वाञ्छन्ति यद्भवभियो मुनयो वयञ्चेति श्रीगोपिकामात्राणामपि सर्वस्पृहणीयभावत्वात् । इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या इत्याद्येकादशानुसारेण यथा भक्त्यैवानुभावोदयाच्च ॥ ११ ॥

" स्वतः प्रेमजवार्त्ताथा गोविन्दे लीनचेतसः । राधायाः केन वागर्थौ वेद्यः स्यात् तत्कृपां विना " । सोऽयमसङ्गतिप्रायोऽपि कृष्णसन्देशहरसन्दर्शनेन बाढमुल्लङ्घितमर्यादस्य महाभावामृतराशेस्तरङ्गभरैर्गूढासूयागर्वेर्ष्यानादरोपहासादिभिर्माधुरीभरमेव नीयमानः श्रीराधाया दिव्योन्मादमयचित्रजल्पः कस्यचिदेव बोधगोचरी भवितुमर्हतीति तत्र मानिनिमन्याह । मधुपेति । श्लेषेण हे मद्यपेत्यर्थः । मद्यपस्तु प्रायः परं वञ्चयते इति सम्बोधयति । कितवः शठः श्रीकृष्णः अस्मत्परित्यागेन न पारयेऽहं निरवद्यसंयुजामित्यादिवचनव्यभिचारात् । तस्य बन्धो तद्बन्धुत्वं दूतत्वादेव वर्णादिसाम्याद्वा । किं वा त्वं मधुपः सोऽपि मधुपतिरिति नामसाम्यात् । मद्यपकितवयोः प्रायः सख्यं भवतीति कर्मसाम्याच्च । तत्र कितवेत्यसूयाविष्कृता । रक्तगणकुसुमधिया नखेषु पिपतिषन्तं भृङ्गं प्रसादनाय पादग्रहणं कुर्वन्तं मत्वाह । अङ्घ्रिं मा स्पृशेति । वयन्तु मानधनाः परमस्वतन्त्रास्तेन त्वाद्विधेन प्रसादनीया न भवेमेति अङ्घ्रिस्पर्शनेन किमित्यर्थः इति गर्वः स्पर्शनिषेधे तु विशेषमप्याह । सपत्न्याः अद्य श्वो यासु स रमते तासां मुख्यायाः कस्याश्चित् सपत्नीशब्दप्रयोगः स्त्रीणां स्वपत्युपपत्न्यां द्वेषे तथोक्तिस्वाभाव्यात् विशब्देन दृढालिङ्गनत्वादिकं बोध्यते । न इति बहुत्वं निजवर्गापेक्षया गर्वेणैव वा । अयं भावः । प्रायो मधुपजातिरयं तदनुवर्त्ती रहोवेदी च तत्समीपत इतस्ततोऽप्यव्यक्तरवेण भ्रमणलीलत्वात् विशेषतो अस्मान् परितस्तथा चरितत्वात्तदीय दूत एव पीतश्मश्रुरसौ वनमालानिवासित्वात्तथैव सम्भाव्यत इति । तदेवं याभिः किल वयं विस्मारिता विदूरे परित्याजिताश्च तासां तन्त्यत्वादयोग्यानामेव मानिनीनां प्रसादं वहतु इतीर्ष्या बहुत्वमेकस्यां प्रसादितायामन्यस्या मानात्तस्या मपिप्रसा दिनाया मन्यस्या इत्येवं बाहुल्याभिप्रायेण । मधुपतिरिति वहत्विति वैभवर्येण सयुक्तमेवेत्यस्माकं वा तेन किमित्यनादरः । श्लेषेण मद्यपस्यामीत्यभिचारः सौहृदाभावश्च सूचितः ततश्च मद्यपतित्वान्मुख्ये मद्यपे सौहृदं नास्तीति प्रसिद्धेः सच्च प्रसादस्तेन स्वमाहात्म्यरूपेण मन्यमानोऽपि वैपरीत्या नैवं सम्पत्स्यत इत्याह । यदुसदस्यपि विडम्ब्यमुपहासास्पदतां गमिष्यन्तं कथमसौ व्यक्तीभविष्यतीत्याकूयाह । यस्य दूतोऽपि स्वशीघ्र व्यक्ततदीयसुरतचिह्नधारी तस्यैतद्व्यक्तौ किमाश्चर्य्यमित्यर्थः । इति तस्याः कौशलं दर्शितम् अन्यसैः । यद्वा । श्मश्रुभिः कृत्वा मा स्पृशेति ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कुङ्कुमश्मश्रुभिर्नः मधुपतिः यदुपतिः मानिनीनां सपत्नीनां प्रसादं वहतु प्रसादपात्रं भवतु न वयं प्रसादनीया इत्यर्थः । यदुसदसि विडम्ब्यं हास्यं कृष्णस्य प्रणयित्वमधिक्षेप्यमित्यर्थः । यद्वा यथा विडम्ब्यं भवतीति क्रियाविशेषणम् ईदृग् भुक्तपूर्वपुष्पपरित्यागशीलस्त्वं यस्य भवत्वित्यन्वयः ॥ १२-१३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । इत्थं कृष्णस्य दूते उद्धवे व्रजं गते सति गोप्यः गोविन्दे गतानि निविष्टानि वागादीनि तद्व्यापाराश्च यासां ताः ॥ ९ ॥

तस्य प्रियस्य कृष्णस्य भगवतो यानि कैशोरबाल्ययोः कर्माणि तानि पुनः पुनः संस्मृत्य संस्मृत्य गायन्त्यः त्यक्तलज्जाः रुदन्त्यश्च त्यक्तलौकिकव्यवहारा अपृच्छन्निति पूर्वेणान्वयः ॥ १० ॥

तत्र काचिद्गोपी कृष्णसङ्गंध्यायन्ती मधुकरं भ्रमरं दृष्ट्वा तं प्रियेण प्रस्थापितं प्रेषितं दूतं कल्पयित्वा कृष्णेन मां प्रसादयितुं प्रेषितोऽयं दूत इत्यभिमत्येत्यर्थः इदं वक्ष्यमाणमब्रवीज्जगौ यद्वा तस्मिन् भ्रमरे प्रियप्रस्थापितोद्धवदृष्टिं कृत्वा मधुकरापदेशेन उद्धवमेवाब्रवीदित्यर्थः ॥ ११ ॥

तदेवाह दशभिः । मधुपेति । हे मधुप ! भ्रमर हे कितवबन्धो नोऽस्माकमाङ्घ्रिं चरणं मा स्पृश मा मां नमस्कुरु मा प्रार्थयस्वेत्यर्थः । तत्किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणा सासूयं प्राह । सपत्न्याः कुचाभ्यामिवलुलिता संमर्दिता या माला अत एव तस्याः कुङ्कुमं येषु तैः श्मश्रुभिरुपलक्षितस्त्वं मा स्पृशेति सम्बन्धः । किं तु यदुपतिः मधुपतिरिति पाठे मधूनां यादवविशेषाणां पतिः तासां नः सपत्नीनां मानिनीनां प्रसादं वहतु प्रसादपात्रं भवतु न वयं प्रसादनीया इत्यर्थः । कुत इत्यत आह । यत् यस्मात् उ इत्यवधारणे विडम्ब्यं प्रणयित्वमिति शेषः । यस्मात् यत्प्रणयित्वं सदसि विडम्ब्यमुपहास्यं कृष्णस्य प्रणयित्वं सभायामधिक्षेप्यमित्यर्थः । यस्माच्च यस्य भगवतो भुक्तपूर्वयोषित्त्यागिन ईदृग्भुक्तपूर्वपुष्पत्यागशीलो दूतस्त्वमागत इत्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उत्तरकथाप्रसङ्गः क इति तत्राह । ददर्शेति । गोविन्दगतमनआदिभिस्त्यक्तलौकिकाः त्यक्ताः लोकाचाराः पुरुषाग्रतः श्लथितवसनादिदृढीकरणादिलक्षणक्रिया याभिस्तास्तथा ॥ ९ ॥

गायन्त्यः गायतीः रुदन्त्यः रुदतीः कैशोरशैशवावस्थायां गताह्रिय इति लोकाचारविरुद्धाचरणं गानादिकम् ॥ १० ॥

तथाच कृष्णसङ्गमध्यानेन मुग्धा काचिन्मधुकरं दृष्ट्वा प्रियेण कृष्णेन प्रस्थापितं दूतं कल्पयित्वा इदं वक्ष्यमाणमब्रवीदित्यन्वयः ॥ ११ ॥

हे मधुप ! सपत्न्याः मथुरायां स्थितायाः समानभार्यायाः अधरमधुपानलोलोद्धव ! तस्या आलिङ्गनकाले दर्पोन्नतकुचाभ्यां विलुलितायामितस्ततो विक्षिप्तायां मालायामनुषक्तकुचकुङ्कुमेन रूपितश्मश्रुभिरञ्जितस्त्वमस्मान् मास्पृश प्रणयकोपात्कितवबन्धो इति सम्बोधयति कितवस्य नवनीतादिपरद्रव्यचोरस्य कृष्णस्य बन्धो ! न केवलं त्वमेव मास्पृश किन्तु स कितवो न स्पृशत्विति भावेन वक्ति । वहत्विति । स मधुपतिः श्रीकृष्णः तस्यां मथुरायां विद्यमानानां मानिनीनां

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मानधराणां स्त्रीणां प्रसादं प्रणयकोपशान्तिलक्षणमनुग्रहं वहतु नतमूर्ध्नेति शेषः कीदृशं यत्तुसदसि विडम्ब्यम् अनुकरणयोग्यं सोत्प्रासपूर्वं वक्तव्यं सोत्प्रासः समनाक् स्मितमिति स्वकैतवं परस्मिन्नपि संक्रामयितुं पटुतम इति भावेनाह । यस्येति । यस्य कृष्णस्य दूतस्त्वमपीदृग्धूर्त इत्यर्थः । हे भ्रमर कितवबन्धो उन्मत्त-पुष्पबन्धो सपत्न्याः भृङ्ग्याः कुचस्पर्शनेन विलुलितमाल उद्बुद्धकाम आसमन्तात् कुङ्कुमपुष्परसमिश्रमुखरोमभिरस्मान्मा स्पृश ईदृक् त्वं यस्य वसन्तस्य दूतस्स मधुश्चायं पतिश्चेति मधुपतिः वसन्तनामा परिवृढः यत्सदसि पुष्पसमूहे विडम्ब्यं खिरीक-तव्यमेतन्मानिनीनां भृङ्गीणां प्रसादं प्रसन्नभावं वहतु करोतु कृष्णवद्वैलक्षण्यं न करोतीयति वा उन्मत्तः कितवो धूर्त इत्यमरः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

काचित् कापि परमश्रेष्ठा सा च राधेत्यर्थः । वासनाभाष्ये तत्र सैव व्याख्याता । यत्तत्र तदुत्थापितमाग्नेयवचनम् । "गोप्यः पप्रच्छु-रुषसि कृष्णानुचरमुद्धवम् । हरिलीलाविहारांश्च तत्रैकां राधिकां विना । राधा तद्भावसंलीना वासनाया विरामिता । सखीभिः सा व्यधाच्छुद्धविज्ञानगुणजृम्भिता । इज्यान्तेवासिनं वेदचर-मांशविभावनै"रिति । तत्रैतत् पूर्वं तस्या निर्वेदाख्यं भवान्तरं जानमासादित्याद्यपि ज्ञेयं तन्मूलकतया प्रणयरोपमयोऽपि भाव-विशेषो ज्ञेयः । विचित्रसञ्चारिमयत्वात्तादृशावस्थायाः ततस्त-द्भावमशदृशमदशानन्तर्यालोचनया वासनाया विरामिता पुन-स्तत्सङ्गमसम्भावनरहिता बभूव । ततश्च तज्जातीयवार्त्तामसह-माना तदाच्छादनाय देहान्तरेऽपि तद्दुःखपारमपश्यन्ती मुक्ति-रेव वरमिति प्रतिपादनाय वेदचरमांशस्य ज्ञानकाण्डस्य विभावनैरुदाहरणैः । शुद्धेत्यादि यथा स्वात्तथैवाभ्यधात् सम्वादमकरोत् सखीभिः सहेति अथवा वेदचरमांशस्तादृशभा-वप्रकाशको वेदः वासना तादृशभावेतरः सर्व्व एव भावः । शुद्धविज्ञानं च तादृशभावमयानुभव उच्यते । यं सर्वे वेदा आमनन्ति मुमुक्षवो ब्रह्मवादिनश्चेति मुक्त्यवस्थोपरि सामान्य-भक्तैरपि प्राशस्त्याम्नानात् ॥ वाञ्छन्ति यद्भवभियो मुनयो वयं चेति श्रीगोपिकामात्राणामपि सर्वस्पृहणीयभावत्वात् इत्यच्यु-ताङ्घ्रिं भजतोऽनुशृङ्ग्यैकादशानुसारेऽपि यथा भक्तश्चैवानुभावो-दयाच्च ध्यायन्तीति मध्ये मध्ये तत्स्फूर्त्तेः ॥ ११ ॥

मधुपत्यादि किञ्च सपत्न्या अद्य श्वो यस्यां रमते तस्याः कस्याश्चित् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वेवमसूयायां दुष्टा एव जाताः किं ज्ञानेन पुनः सञ्जीकि-यन्त इत्याशङ्क्य तासां क्लेशवशादयं स्वभावो जातः वस्तुत-स्तु न ता इत्याह द्वाभ्याम् । इतीति । समाप्तौ प्रकारे च पूर्वोक्तदोषस्य तदासक्तिः फलं ननु नाश इति वक्तुं गतवाक्कायमानसा इत्युक्तं ननु कथमेवं कल्प्यते दुष्टा एव कथं न भवेयुरित्याशङ्क्याह । गोप्य इति ता मुग्धाः न कापट्यमवि-विवेकं च जानन्ति अतः खेदवशात्तथैव मनोवृत्तिर्भवति तथैव वदन्तीति न दुष्टाः हि युक्तश्चायमर्थः महता कष्टेन हि सर्वप-रित्यागो न सर्वभावेन पूर्वं भगवन्तं प्रपन्नाः किञ्च गोविन्दो भगवान् तासामेवेन्द्रः सर्वैर्देवैः कृतः अन्यथा तेषां करणं व्यर्थं स्यात् दुष्टस्वामित्वं वा भवेत् । अत एतैश्चिह्नैर्गतवाक्कायमानसा एव ता इति ज्ञायते अथवा पूर्वमेव गोविन्दं स्वत एव गतानि कायवाङ्मनांसि यासामत एतान्यपि वचनानि न दोषःस्यात् भगवदीयत्वात्तेषां तासां सर्वपरित्यागे निदर्शनमाह । कृष्णदूत इति । साक्षाद्भगवति समागते को वेद किम्वा कुर्युः कृष्णस्य स्वामिनः दूतेऽपि उद्धवे व्रजमागते त्यक्तलौकिका जाताः सर्वापेक्षां परि-त्यज्य प्रकटा भूत्वा तेन सह यत उपविष्टाः किञ्च तस्याप्यग्रे प्रियस्यैव कर्माणि गायन्त्यो जाताः अनेन भगवत्येव निवेदिता वाक् नान्यतः सङ्कोचं लभत इत्युक्तं रुदन्त्यश्च जाताः ॥ ९ ॥

एवमुपवेशनेन कायं गानेन वाचं रोदनेनान्तःकरणमिति साधारण्येन त्रयमपि निवेदितमुक्तम् असाधारणस्वभावमपि त्यक्त-वत्य इत्याह । गतह्रिय इति । स्त्रीणां स्वाभाविको धर्मः लज्जा तामपि चेत्त्यक्तवत्यः किमवशिष्यते तासु । नन्वेतत्सर्वं कादाचि-त्कमित्याशङ्क्य तत्परिहारार्थं विशेषमाह । तस्य संस्मृत्येति । तस्य भगवतः कैशोरबाल्ययोः अवस्थाद्वयसम्बन्धीनि यानि संस्मृत्य पुनः पुनरादरेण स्मृत्वा ताः पूर्वोक्तविधा जाता इति सम्बन्धः ॥ १० ॥

एवमिममपि दोषममहान्तं मत्वा महता प्रबन्धेन साध्यत्वं निरूपितं ततोऽप्यधिकं दोषं निरूपयन् प्रस्तावनामाह । काचिदिति । तस्य च साध्यत्वमग्रे वक्ष्यति तत उपदेशः अर्थसङ्गतिस्तु पूर्वमुपालम्भनमुक्त्वा स्वासक्तिख्यापनार्थं स्वगतान् भावान् रससङ्गो-पनार्थं काचिदाह तत्रापि व्याजेन अन्यापदेशन्यायेन अन्यथा रसः पुष्टो न भवेत् भगवान् वा गोपिकानां स्वरूपमुद्धवाय प्रदर्शयितुं भ्रमरमपि प्रेषितवान् तदा तं दृष्ट्वा आर्षज्ञानेन भगवदीयत्वं मत्वा काचिदाह यथोद्धवस्य मयोपकारः कृत इति गर्वो न भवेत् अन्या-पदेशन्यायेन तु पदान्युद्धवेऽपि योजनीयानि तदा दोषसम्भाव-नापि भवति द्वितीयेऽप्यर्थे न कापि सम्भावना स्यात् मधुकरो भ्रमरः वस्तुतोऽयं विपरीतनामा मधु भक्षयति नतु करोति अतो वसन्तो मधुकरः अयं मधुपोऽपि मधुकरत्वेनोच्यते अन्यथा पुष्पाणि तदभिमानिन्यो वा देवता एन न प्रवेशयेयुः पूर्वं हि सा कृष्ण सङ्गमं ध्यायन्ती स्थिता प्रथमतो भगवता सह मनसा सम्बन्धं प्राप्य पश्चान्मानवती जाता तदा भगवानन्यां गृही-तवानिति परिकल्प्य सा न समीचीनेति च पुनर्भगवान्मामेव प्रार्थ-यितुं भ्रमरं प्रस्थापितवान् इति ज्ञातवती तदाह । प्रियप्रस्था-पितं दूतं कल्पयित्वेति इदं वक्ष्यमाणमब्रवीदिति ॥ ११ ॥

आदौ हि मानवत्याः क्रोधेन पारुष्यं भवतीति ततः प्रथमं तामसतामसी तद्भावयुक्ता वा दूषणमाह । मधुपेति । सर्वत्र हि रसे विप्रलम्भे दूतो नायकश्च दुष्यते यथा अज्ञातपीडागमा अधमस्ये-त्युभयोर्दूषणं तथात्राप्याह । मधुप कितवबन्धो इति । मतान्तरमार्ष-यमिति कामशास्त्रानुरोधिनी निरूपितेति न समाधिभाषायां भक्तिमार्गे वा विरोधः यद्यपि भ्रमरो मधु भक्षयति तथाप्यन्यार्थे-ऽपि सक्त इति तत्सूचकत्वेन निन्दापि भवति अन्यापदेशे तु यादवाः सर्वे पानरता इति लोकप्रसिद्ध्या निन्दा भवति यद्यपि भगवद्भक्ता भग-वांश्च न भवति अनुकरणं साधारणाविगीतधर्माणामेव नतु सर्वेषां

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथापि साधारण्यं न प्राप्तो धर्मः श्रुतोऽत्यन्तं खेदाय भवति वस्तुतस्तु सरस्वती अन्यार्थमप्याह। भगवान् स्वामी कालश्च दूतः स्वयं च श्रुतय इति कालद्वारा हि भगवान् वक्तव्यो ज्ञातव्यो वा भवति अत्र सम्वत्सरात्मकः काल आदौ मधुं वसन्तं पालेच ततः कितवस्य ग्रीष्मस्य वञ्चयित्वा सर्वसंहारकस्य बन्धुरपि भवति स चेन्द्रगवत्सम्बधिनं वृन्दावनादिभूप्रदेशं भगवच्चरणं वा तत्रत्यं स्पृशेत्तदा क्लेशो महानेव भवेदिति पादस्पर्शं निषेधति मास्पृशाङ्घ्रिमिति। पूर्वं तु भगवति विद्यमाने निदाघवन्हार्कभवः भुवो रसं न गृहीतवानित्युक्तम् अधुना दूरे भगवानिति मत्वा कदाचित्स्पृशेदिति निषेधः अतो नमस्कारार्थमागतं भ्रमरमुद्धवं वा निषेधति। ननु नमस्कारे को दोष इत्याशङ्क्य मधुपत्वाच्चरणकमलमकरन्दमपि पास्यतीति निषेधति तदा चरणौ गतसारौ भगवदुपयोगाय न भवेयातां मधु मादकं च यः पिवति स न स्पृश्यो भवति ननु दूतोऽहं भगवता आकरणार्थं प्रेषितः ननु कश्चिद अहमुदासीनः स्त्रीणां च भोगार्थिनां तादृशी अवस्था उचितेत्याशङ्क्य स हि वञ्चनार्थमेव त्वां प्रेषितवानित्याह। कितवबन्धो इति। कितवोऽयं वञ्चकः तत्रापि धूर्तः अतः फलस्याभावान्मानापनोदनादिसाधनं व्यर्थमिति अङ्घ्रिं मास्पृशेति निषेधो युक्तः अनेनोद्धवस्यापि सम्माननार्थं निषेध एव इममर्थमभिप्रेत्यैव निषेधः किञ्च पत्न्याः कुचविलुलितमाला कुङ्कुमश्मश्रुभिरुपलक्षितः सपत्नी द्यौः तस्या मेघाः कुचस्थानीयाः तत्र विलुलिता मालाः विद्युतः तत्र कुङ्कुमसदृश्यो दीप्तयः तत्सहिताः श्मश्रुस्थानीया धाराः तैरपि सहितो मा स्पृश शरदेव परमस्माकं हितकारिणीति वर्षापर्यन्तं निषेधः न केवलं ममैव किन्तु सर्वासामेवेत्युक्तं न इति। यो हि सम्माननार्थमायाति स हि छिष्टपदार्थं दूरीकृत्य समायाति ननु तत्प्रदर्शयन् भ्रमरस्य श्मश्रुस्थानीयानि रोमाणि मकरन्दसम्बन्धात् पीतानि भवन्ति तद्भगवदीयस्य नान्यपुष्पेषु मकरन्दार्थं गमनं सूच्यत इति भगवत एव मालास्थपुष्पाणां मकरन्दसम्बन्धः तत्र ग्रथितानां मकरन्देऽन्तः प्रवेशाभावात् श्मश्रुतत्सम्बन्धो वहिरेव तथा पीतत्वं कुङ्कुमसम्बन्धादेव नान्यथा घटेततथोद्धवस्यापि भगवदुपभुक्तमालाप्तौ आघ्राणेन कुङ्कुमसम्बन्धः सम्भवति तस्यापि श्मश्रूणि तादृशान्येव प्रायेणेति लक्ष्यते निरन्तरमालाघ्राणात् रञ्जितान्येव श्मश्रूणि आघ्राणं च मकरन्दपानं वा वहिःप्रदेश एवेति न भगवदङ्गरागेण पीतत्वं विलुलितपदेव च सम्भोगो लक्ष्यते न त्वालिङ्गममात्रं तथा सत्यनुरोधेनापि तथाकरणं सम्भवति तदा नात्यन्तं द्वेष्यः श्रमश्च तस्याः सूच्यते तेन महासौरतं द्योतितं तस्मान्मानवृद्धिजनकत्वात् अर्थत्रयेऽप्यङ्घ्रिस्पर्शनिषेधो युक्तः ननु भवत्यो हि भगवदीयाः भगवांश्चेत्तथा मन्यते कथं भवतीनामस्वीकार इत्याशङ्क्याह। वहतु मधुपतिरिति। कालपक्षे ऋतुद्वयस्यैव निरोधः आवलङ्ग्रहार्थमाह। मधुपतिरिति। वसन्तसम्बन्धी सम्वत्सरः तत्रत्यानां मानिनीनां प्रसादं वहतु ता हि मानं परित्यज्य प्राप्तसन्तोषाः कालाय प्रसादं कुर्वन्ति यतो वर्णनायां तत्सम्बन्धेन महत्त्वमापद्यते अस्माकं तु न तत्रापि प्रसादः शरदेव भगवत्प्रसादस्य जातत्वात् ऋतुद्वये निषेधः वसन्ते शरदि च तस्य प्रशंसा तथापि वसन्ते भगवत्कृतः कालोत्कर्षः शरदि तु सर्वथेति वसन्ते हि यज्ञा अग्नयः संस्काराश्चेति सपत्नीभिर्हि प्रसादतया भगवते कुचकुङ्कुमं दत्तं यो हीश्वरः स चेदासीनां प्रसादं लभते तदा यदुसभायां वाच्यता भवत्येव अन्योपभुक्तस्यान्येन ग्रहणं देवव्यतिरिक्ते वाच्यतापादकं महतः सुतरां तर्हि भगवता कथं स्वीकृत इत्याशङ्क्याह। मधुपतिः। मधुदेशस्य मथुरायाः पतिः ईर्ष्यया वा यथेष्टं मधुपानकर्ता अतो देशस्वाभाव्याद्वस्तुस्वाभाव्याद्वा प्रसादग्रहणं तादृशत्वाप्ययं प्रसादं गृह्णातीत्ययमपि नादरणीयः अनेनैवं सूचयति अत्रैवागत्य एकान्ते परं भोगः कर्तव्यः। ननु मथुरायां यादवा उपहसिष्यन्ति तत्र चावश्यं यादवत्वाद्यदुसभायां गन्तव्यं सजातीयवाच्यता च दुःसहा अथापि इतरसम्बन्धात्स एव तत्प्रसादं वहत्वयम् अस्मासु तु गतास्वपि तथैव करिष्यति प्रसादत्वेन परं कुङ्कुमं दास्यति एतच्च नापेक्षितमिति स्वार्थे निषेधः प्रशस्ता एव धर्मा भगवदीया ग्राह्या इति अप्राशस्त्यार्थं विडम्ब्यमित्युक्तम् ननु भवतीभ्योऽप्येतदेव दास्यतीति अत्र किं प्रमाणं वस्तुतस्तु तास्यध्यतीशङ्क्याह। यस्य दूतस्त्वमीदृगिति। तत्सम्बन्धी भवांस्तस्यातिप्रियः तुभ्यं चेद्ददाति अस्मभ्यमपि दास्यति अन्यथा दैन्येन प्रेषयन् त्वां पीतश्मश्रुं न प्रेषयेत् अतो ज्ञापनार्थमेव तथाविधं प्रेषितवान् अनेन तथैवं ज्ञातमिति प्रतिभाति गाढसुरते व्यजनाद्यपेक्षणात् पुरे सर्वतो निरोधेन सहजवाय्वभावाद पुरुषस्य यादृशस्यापि तत्र स्थातुमयुक्तत्वात् पूर्वोपभुक्ताः अस्मान् तस्याः दासीकर्तुं व्यजनार्थमाकारयतीति एतच्च सर्वथा आवश्यकमिति भ्रमरोद्धवपक्षे निषेधो युक्तः वसन्तकृतश्चोत्सवः धर्मरूपः यादवसभायां विडम्ब्य एवानुकार्यः ते हि लौकिकप्रधानाः अनुकरणमात्रेण धर्मं करिष्यन्तीति कालकृतो धर्मः भगवदीयकृताधीन इति वा प्रमाणमित्याकाङ्क्षायां यस्य मुख्यस्य कालस्य भगवतो वा सम्बन्धी दूतः कलिस्वरूपस्त्वमीदृक् श्यामः नहि धर्मे उत्कृष्टे तदाधारः श्यामो भवति अतोऽस्मान् प्रति ऋतुत्रयनिषेध एव युक्तः पुष्टिमार्गे हि दक्षिणायनस्यैव प्राशस्त्यात् तत्र हि रात्रयः स्थूला दिवसाश्च सूक्ष्मा इत्यनङ्गीकारे मुख्यो हेतुः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

त्यक्तलौकिकाः स्वमुखेनैवोपपत्यस्पष्टीकरणात् त्यक्तलौकिकव्यवहारा बभूवुः ॥ ९ ॥

रुदन्त्यश्च बभूवुः कैशोरवाल्ययोरिति। वाल्यमारभ्यैव तासां तासां प्रेमा निरुपाधिक एव न तु कैशोर एव कामोपाधिक इति भावः ॥ १० ॥

काचिदिति। ह्लादिनी शक्तिसारवृत्तिरूपस्य प्रेम्णोऽपि या सप्तमी भूमिका महाभावस्तन्मयी श्रीवृषभानुनन्दिनीयमिनि वैष्णवतोषिणी कृष्णकर्तृकं सङ्गमं मथुराङ्गनासु ध्यायन्ती ध्यानेन कल्पयन्ती अत एव उद्भूतमाना प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वा कमपि मधुकरमब्रवीत् यद्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः ॥ ११ ॥

स्वचरणकमललोभेन भ्रमन्तं भ्रमरं वीक्ष्य दिव्योन्मादवती श्रीवृषभानुनन्दिनी प्रजल्पति। हे मधुप! भ्रमर! कितवस्य धूर्तस्य एवं मदर्थोज्झितेत्यादिना न पारयेऽहमित्यादिना आयास्य इति दौत्यकेन च मिथ्यावचनवृन्देन वञ्चकस्य कृष्णस्य बन्धो! बन्धुतारूपदौत्यकारिन्! अङ्घ्रिं मास्पृश। ननु किमिति

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नमस्कर्तुं न ददासि तत्राह। हे मधुप! मद्यप मधु मद्ये पुष्परसे इत्यनेकार्थवर्गः मद्यपस्पर्शे चरणस्यापावित्र्यं स्यादतो नमश्चिकीर्षा चेद्दूरमपसृत्य नमस्कुर्विति भावः। नन्वदुष्टेऽपि मयि मिथ्या मद्यपत्वपरिवादं किमर्पयसीति तत्र नायं परिवादः किन्तु यथार्थमेव वच्मीत्याह। मम सपत्न्याः कुचयोः कृष्णवक्षः संघर्षेण विलुलिता विमर्दिता या माला किंवा कुचाभ्यामेव विलुलिता या कृष्णस्य वनमाला तत्सम्बन्धि कुङ्कुमयुक्तैः श्मश्रुभिर्मास्पृशेति भ्रमरस्य स्वाभाविकश्मश्रुपीतिम्न एव तथारोपः तेन च मानिनीं मामनुनेतुं त्वमिहायातोऽस्यथ च तथाभूतकुङ्कुमश्मश्रुप्रक्षालनं विनैवेति विवेकाभाव एव मद्यपानलक्षणम् एतद्दर्शनया मानो वर्ध्येत एव नतु निवर्त्येत इति बुध्यस्वेति भावः। ननु यथा तथास्तु त्वं तावत् प्रसीदेति तत्राह। हे मधुप! मधुपालक! तत्र गत्वा निजप्रभोः पेयं मद्यमेव पालय पिब च तत्कर्मैव त्वं कर्तुं शक्नोषि नतु दौत्यं निर्बुद्धित्वादिति भावः। नन्वेवं चेदहं मया सम्प्रत्यहं पुनर्मथुरामेव यामि स एव गोपेन्द्रनन्दनः स्वयमेत्य त्वां प्रसादयिष्यतीत्यत आह। वहत्वित्यादि। मधूनां यादवविशेषाणां पतिः सम्प्रति सोऽभूत् प्रजेदधरीगर्भजातत्वेन गोपजातिरपि भाग्यवशात् क्षत्रियजातिरभूदतस्तन्मानिनीनां क्षत्रियस्त्रीणां प्रसादं वहतु प्राप्नोतु ता एव सदा प्रसादयतु किमस्माभिर्निकृष्टाभिर्गोपस्त्रीभिरिति भावः। अत्र बहुवचनेन वहधातुप्रयोगेण च मधुस्त्रीणामानन्त्यात्तासामेव तद्भुक्तत्वात् एकस्यां प्रसादितायामन्यस्या मानोत्पत्तेस्तस्यामपि प्रसादितायामन्यस्या इत्येवं तासां प्रवाहरूपेण प्रसादं प्राप्नोत्वित्यस्मत्सन्निधावागमने तस्यावसर एव नास्तीति भावः। ननु त्वदीयसर्वसौभाग्यनिधे! देवि! मैवं वादीर्यदि त्वयि तस्य मनो नास्तितर्हि कथमहं तेन दूतः प्रस्थापितस्तत्राह। यस्य दूतस्त्वमीदृक्। क्षत्रियस्त्रीजनसुरतचिह्नधारी तस्य यदुसदसि विडम्ब्यं विडम्बनमेव यदुस्त्रीणां तत्कृतस्य धर्मलोपस्य व्यक्तीभावेन कुपितैस्तत्तत्पतिभिस्तस्य विडम्बनमेव करिष्यत इति भावः। यद्वा यस्य त्वमीदृग्दूतस्तस्ययस् यदुसदस्तत्र आधिकरण एव विडम्बनं भावि गोपन तन्नारीणां भुक्तत्वात् यदूनां निन्द्य सर्वदेशे भाविष्यतीत्यर्थः। श्लेषेण यस्य दूतस्त्वमीदृक् स च मधुपतिर्मधूनां मद्यानां पतिरिति मद्यप एव यतो मद्यस्य विक्षेपेणैव त्वादृशो भ्रमरो दूतः कृत इति अत्र किरावैत्यसूया सपत्न्या इत्यादिनेर्ष्या मदङ्घ्रिं मास्पृश इति मदः वहत्वित्यादिना अवधीरणं यदुसदसीत्यादिना अकौशलोद्गार इत्ययं प्रजल्पः यदुक्तमुज्ज्वलनीलमणौ "असूयेर्ष्या मदयुजा योऽवधीरणमुद्रया। प्रियस्याकौशलोद्गारः प्रजल्पः स तु कीर्तितः" इति॥ १२॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

इयं चेर्ष्या तासां विरहव्याकुलचेतसां प्रणयकोपनिबन्धना ननु कोपनिबन्धनानस्तदुपदेशार्थं भृत्यप्रेषणं भगवत उचितमित्याशयेनाह। इतीति। गोप्य इत्यपृच्छन्निति पूर्वक्रियया अन्वयः इति वदन्त्यः एवम्भूता जाताः इति वा। ननु प्रणयकोपवतीनामप्युपालम्भो न युक्त इत्याशङ्कानिरासार्थं गोप्य इत्युक्तं तथा चात्यन्तं विवेकहीनानां मुग्धानामियमुक्तिर्न दौष्ट्यमूलेति भावः। तासां दुष्टत्वे तु तत्पतित्वसिद्ध्यर्थं गवामिन्द्रादिभिर्भगवान्नाभिषिक्तः स्यादिति सूचयितुं गोविन्दपदप्रयोगः यद्वा यो यज्ञरक्षणार्थं सप्तदिनपर्यन्तं गोवर्द्धनं धृतवान् तेन च गवामिन्द्रत्वं प्राप्य गोविन्देति संज्ञामवाप्तवान् स च विरहानलज्वालासु ता निक्षिप्य यद्युपेक्षेत तर्हि तासामियमुक्तिर्नायुक्तेति ध्वनयितुं गोप्यो गोविन्द इत्युक्तं किञ्च प्रियगतवागादिव्यापाराणामुपालम्भात्मकव्यापारोऽपि तत्रैवोचित इत्याशयेनाह। गतेति। अत एव कृष्णदूते व्रजं प्राप्ते सति स्वकं लौकिकं गृहकृत्यादिकं याभिस्ताः प्रियदूतसमागमनाद्यासामेवम्भूता दशा जाता तासां प्रियसमागमनलम्भाविता दशा तु वाचामप्यगोचरश्रुता इति भावः। कृष्णेन मनः आकृष्य गतेनास्मत्स्वामिना वयं स्मृता यतोऽस्मद्व्रजे तेन स्वदूतः प्रेपितस्तस्माद्यावत्कालमस्यात्रावस्थानं तावत्कालं सर्वं लौकिकं विहायास्माकमवस्थितिरेतत्सन्निधावेव भवित्र्येति विचार्य तथाभूता जाता इत्यर्थः॥ ९॥

किञ्च तस्य यानि कैशोरबाल्ययोरवस्थयोः सम्बन्धीनि प्रियकर्माणि तानि संस्मृत्य संस्मृत्य गायन्त्यो रुदन्त्यश्च गतह्रियो जाता गायन्त्यो रुदन्त्यो गतह्रियश्च पूर्वश्लोकोक्तस्वरूपा जाता इति वा गायन्त्य इति तासां वाग्व्यापारस्य रुदन्त्य इति कायव्यापारस्य संस्मृत्येति मनोव्यापारस्य भगवद्गतत्वं बोधितं त्यक्तलज्जा इत्यनेनासाधारणधर्मोऽपि याभिस्त्यक्तस्तासु किमवशिष्यत इति सूचितं स्मरणधाराबोधनार्थं संस्मृत्यपदावृत्तिः तथा चानुक्षणं सर्वभावेन तासां तत्परत्वमित्यर्थः॥ १०॥

गोपिकासमुदायवचोपालम्भैः परितोषमलभमानायाः परममानवत्याः श्रीवृषभानुनन्दिन्याः ह्लादिन्याः शक्तेर्वृत्तमावेदयति काचिदिति। काचित्कृष्णसङ्गमं ध्यायन्ती मधुकरं दृष्टवती दृष्ट्वा च तं प्रियेण मां प्रति पृथक् प्रस्थापितोऽयं दूत इति कल्पयित्वा इदं वक्ष्यमाणमब्रवीत् मधुकरस्तु कश्चिदकस्मात्सौरभ्यलोभात्तत्र समागतः भगवतैव वा प्रेयसीप्रेमातिरेकमुद्घाय दर्शयितुं प्रेपितः स्वयमेव प्रेयस्याश्चित्रजल्पमाधुरीपिपासया तद्रूपेण समागत इति वा कृष्णसङ्गमं लब्धवती पूर्वं प्राप्तं कृष्णसङ्गमं स्मरन्तीति वा प्रियसङ्गमः कदा भविष्यतीति विलपतीति वा यद्वा नागरस्त्रीणां प्रियेण सार्द्धमिदानीं सङ्गमोऽस्तीति चिन्तयन्ती मम परितोषायेयं न समीचीनेति कोपनिवृत्त्यर्थं वाऽयं दूतः प्रेपित इति कल्पयित्वा वा च तद्व्याजेनोक्तं प्रत्येयोक्तवतीति वा मधुकरशब्दप्रवृत्तिस्तु तेनैव स्वपानार्थं प्राचीनकर्मणा मधुकृतं स्वकृतमेव सर्वोऽपि भुङ्क्त इति प्रसिद्धेरित्यभिप्रायेण मधुकृन्तनाद्वा॥ ११॥

पादसरोजसौरभलोभात्तत्समीपमागतं तं प्रियशिक्षितोऽयं मां प्रसादयितुं मदङ्घ्रिं स्पृशतीति कल्पयित्वा प्रजल्पति। मधुपेति। हे मधुप! नोऽस्माकमङ्घ्रिं चरणसरोजं मास्पृश मधुपत्वात्स्पृशन् अङ्घ्रिसरोजमकरन्दमपि पास्यसीति मदङ्घ्रिर्निःसारो भविष्यति तत्रत्यप्रेयस्या रममाणेन मदागमनभयान्मदङ्घ्रिभङ्गार्थं त्वं प्रेपितो न स्पर्शार्थमिति तव दौष्ट्यं मया बुद्धमतस्त्वं गत्वा स्वस्वामिनं प्रति ब्रूहि भो भगवन्! सा वदति मया कदापि तत्र नागम्यते यथेष्टं रमतां तव स्वामी किमर्थं स्पर्शव्याजेन मदङ्घ्रिभङ्गार्थं त्वं प्रेपितः अन्यथान्यमेव प्रेषयेदितीति संबोधना-

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

शयः । यद्वा "मधु पुष्परसे मद्ये" इति कोशात् हे मद्यप ! तव स्पर्शोऽपवित्रतासम्पादकोऽतस्तवात्यन्तभक्तिरस्ति चेत्तर्हि दूरे स्थित्वा नमस्कारं कुर्विति भावः । ननु भवतीं प्रति त्वत्प्रियेणाहम्प्रेषितो भगवतोऽस्यर्थे प्रियायाश्चरणस्पर्शेनात्मानं कृतार्थीकर्तुमिच्छामीति महापातकित्वेन मामुपेक्षस इति चेत्तत्राह । हे कितव बन्धो ! कितवस्य न पारयेऽहं निरवद्यसंयुजामित्याद्युक्त्वापि परित्यज्य गतस्याहङ्कृतस्य श्रीकृष्णस्य बन्धो ! स च मधून्पातीति मधुपस्त्वं च मधुप इति नामैक्यात् वर्णसाम्यात् चञ्चकत्वरूपधर्मसादृश्यात् मधुपतिधूर्तयोः सख्याद्यवस्थाभावाच्च तद्बन्धुस्त्वं तस्मान्न मया त्वयि दोष आरोप्यतेऽपि तु यथार्थमेवाऽभिधीयतेऽतस्त्वं न केवलं मधुप किन्तु शठबन्धुरपीति सर्वथा त्वं दोषविनिर्मुक्तत्वात् परमपवित्राभिरस्माभिरस्पृश्योऽसीति भावः । किञ्च तेनाप्यागत्यास्मदङ्घ्रिसमीपे चिरं पतितेनाप्यस्मद्दुःखमपनेतुमशक्यं त्वद्विधेन दूतमात्रेण क्रियमाणचरणस्पर्शमात्रेण दुःखापनयस्य का प्रत्याशाऽस्ति निष्फलमिदं कर्मणानुष्ठेयमित्यपि चरणस्पर्शनिषेधेन ध्वनितम् । ननु भो मात. दूरे स्थित्वैव श्मश्रुभिरेवाहं त्वदङ्घ्रिस्पर्शं करिष्यामि तेन च स्वस्वाम्याज्ञापालनं स्वपापापाकरणं च मम भविष्यतीत्याशङ्क्य ससम्भ्रममाह । श्मश्रुभिस्तु सर्वथा मा स्पृश किमर्थमित्यपेक्षायामाह । सपत्न्या इति । यथेदानीं रमते तस्याः कुचाभ्यां विलुलिता विमर्दिता वा श्रीकृष्णवनमाला कुचयोः कृष्णवदनसङ्घर्षेण मर्दिता या मालेति वा तत्संबन्धि कुङ्कुमं येषु तैस्तथाच स्पर्शमात्रेण वहनक्षमविपसम्पृक्तश्मश्रुभिः स्पृष्ट्वा चरणमारभ्य शिखापर्यन्तं दग्धुं समागतोऽस्यतः कृपया दूरे तिष्ठेत्याशयः यद्वा ननु मयि मद्यपता मत्स्वामिनि कितवता च श्रीमत्या त्वया कथमवधारितेत्यपेक्षायामाह । सपत्न्या इति । तथा चास्मत्कोपोद्दीपकताद्दशकुङ्कुमवद्भिरेव ननु प्रक्षालितैः श्मश्रुभिरस्मत्कोपानिवृत्त्यर्थमस्मच्चरणं स्प्रष्टुं तवागमनमेव विवेकशून्यस्य तव मद्यपत्वं बोधयति तव स्वाम्यपि यदि साधुः स्याचर्हि तत्र गत्वा उदासीनतया तिष्ठेत् तदनुरोधेन तदालिङ्गनमात्रं वा कुर्यात् ननु तथा तेन कृतं किन्त्वतिसौरतं कृत्वा श्रान्तो वर्तते श्रान्तत्वादेव विवेकोऽपि तस्य नष्टवत्प्रतिभाति यतस्त्वादृशं मद्यपं प्रेषितवान् नापि श्मश्रुक्षालनादिकृत्वा समाहितो भूत्वा गन्तव्यमिति शिक्षितवानत एव तत्कापट्यमस्माभिर्ज्ञातमिति तच्चेष्टा तस्य कितवत्वं ज्ञापयति यद्वा मधुपश्चासौ कितवश्च तस्य बन्धो ! मधवो यादवास्तत्पतिर्वा मधुपः तेषां प्रायेण मद्यपत्वादयमपि यादवत्वाद्वा तदर्थं मद्यपालकत्वाद्वा प्रियाधरामृतलक्षणमधुपानकर्तृत्वाद्वा मधुपः त्वमपि तच्छिष्यभूतः मधुपानादिकर्मानुष्ठानक्षमो ननु विवेकसाध्यं दौत्यं कर्तुं योग्यस्तस्मादुगुरुसमीपं गत्वा मधुरक्षणादिरूपायां तत्सेवायामेव संलग्नस्तिष्ठ ननु तथाभूतश्मश्रुप्रदर्शनेन तदपकीर्तिं लोके प्रसारयेत्याशयः । विप्रलम्भे शृङ्गाररसे धूर्तनायकयोग्यमद्योद्गमनं तत्पोषकत्वाद्रसशास्त्रानुगुणं "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे नूनमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" मित्यादौ तथा दर्शनात् सपत्न्या इत्येकवचनस्य न इति बहुवचनस्य चाभिधानेन स्वस्य तदपेक्षयो-त्कृष्टता ध्वनिता तस्य श्मश्रुलौहित्ये कुङ्कुमसंबन्धाल्लौहित्यमिति तदारोपः । नन्वेवं चेत्सम्प्रत्यहं मथुरां प्रति गच्छामि स्वयमेव श्रीयशोदानन्दनः समुपागत्य त्वां प्रसादयिष्यतीति चेत्तत्राह । वहत्विति । मधूनां यादवविशेषाणां मधुदेशस्य वा पतिः मधुमानिनीनां प्रसादं वहतु ताः प्रसन्नाः करोतु तथा च भाग्यवशाल्लब्धमधुपतित्वस्य स्वमानिनीनां प्रसादन एवास्ति सम्प्रत्यधिकारो न तु निकृष्टानां गोपिकानामस्माकमतो मिथ्यैव वनेऽपि स्वयमेवेत्यादि तस्मात्सङ्कोचमपि विहाय तासां प्रसादं वहत्वित्यस्माभिरप्यनुज्ञायत इति भावः । तासां बाहुल्यात्प्रसादन एव तस्यायुर्गमिष्यति अस्मत्प्रसादनायागन्तुं तस्यावकाश एव दुर्लभ इति सूचयितुं मानिनीनामिति बहुवचनं यद्वा युष्मत्स्माभिस्त्वदागमनकृत्यं श्मश्रुभिस्तादृशकुङ्कुमरूपतन्मानिनीनां प्रसादं भूत्वास्मभ्यं दातुमागतोऽसि तस्य च मस्तके लापयितुमुचितस्य चरणे लापनं मद्यपस्य तवोन्मादविजृम्भितम् अस्माभिस्त्वेवंविधवस्तु चरणेनापि न स्पृश्यते गुरुदेवतातिरिक्तोपभुक्तैवंविधवस्तुधारणस्य निषिद्धत्वात् अहो नास्ति तवापराधः स एव भूताधिराजोऽस्मदुपहारार्थं निषिद्धवस्तुप्रदानाय त्वां प्रेषितवान् त्वमपि मद्यपत्वाद्विवेकमकृत्वैवागतवान् अतः कस्मादस्मांस्तत्र गमनार्थं प्रार्थयसि तत्र गतास्वप्यस्मासु प्रसादत्वेन परं कुङ्कुममेव दास्यति अतिप्रियाय तुभ्यमपि तस्यैव प्रदानात्तज्ज्ञापयितुमेव तथाविधश्मश्रुमतो दूतस्य प्रेषणाच्च अपरं कैतव्यं तस्य ज्ञातमस्माभिः किं तदिति चेत् शृणु गाढसुरते श्रमापनोदनार्थं खलु वायुरपेक्षितः स च स्वाभाविकः सर्वतो निरुद्धे पुरे दुर्लभः व्यजनवायुस्तु कर्तृसाध्यः तत्कर्ता पुरुषस्तु त्वादृशोऽपि तत्र स्थातुमयोग्यस्तस्मात्पूर्वोपभुक्ताः तदर्थं दासीः कर्तुमाकारयतीति तच्च जन्मान्तरेऽप्यशक्यमिति । ननु स्वयमपि यं प्रसादं धारयन्ति तद्धारणे भवतीनां को दोष इति चेत्तत्राह । वहतु मधुपतिः रिति । मद्यपस्य तस्यैव तद्धारणं योग्यं न त्वस्माकमिति भाव । मद्यपत्वादेव ममापकीर्तिर्भविष्यति न तु तासां काचिद्धानिरित्यपि तेन विचारितं नापि यदुसभायामुपहासकरमिदं कर्मेति चेत्साशयेन प्रसादं विशिनष्टि । यदुसदसि विडम्ब्यमुपहासास्पदं ननु तत्र केनैवंविधं कर्म ख्याप्यत इति चेत्तत्राह । यस्य दूतस्त्वमेतत्पर्यन्तं ख्यापनायागतेन त्वया सन्निधाने कथं न ख्यापितं स्यादिति भावः । ननु तत्रावसराभावात्तूष्णीमेव मया स्थीयत इति चेत्तत्राह । ईदृक् एवंविधश्मश्रुधारिणस्तव दर्शनमपि तस्यापकीर्तिकरमिति भावः । ईदृक् मद्यपत्वात्स्पष्टसुरतचिह्नधारी सोऽपि मद्यपोऽतः स्वशठशास्त्यमेव तेन दूतः कृतः विवेकी कश्चित्स्य हितैषी यदि भवेत्तर्हि एवं बोधयेत् भो व्रजराजकुमार! किमिदं स्वस्य यदूनां चापकीर्तिकरं कर्म कर्तुं प्रवृत्तोऽसि व्रज एव गत्वा रहसि स्वसखीभिरेव किमर्थं न रमसे इत्यप्यनेन ध्वनितम् । यदुसदसि प्रसादं वहतु सर्वत्र विडम्ब्यमिति वा एतद्.रभ्य दशभिः श्लोकैर्दशाङ्गश्चित्रजल्पो ऽत्र मुनिना वर्णितस्तदङ्गानि तु प्रजल्पादीनि तदुक्तम्—

> चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितः ।
> विजल्पो जल्पसञ्जल्पा अवजल्पोऽपजल्पितम् ॥
> आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्तितः इति ।
> असूयेर्ष्यामदयुजा यो ऽव धीरणमुद्रया ।
> प्रियस्याकौशलोद्गारः प्रजल्पः स तु कीर्तित इत्युक्तं ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

प्रथममङ्गमाघपद्य दर्शितं तत्र कितवेत्यसूया सपत्न्या इतीर्ष्या अङ्घ्रिं मा स्पृशेति मदः वहत्वित्यधीरणं यदुसदसीत्यकौशलोद्गार इति उद्धवपक्षे हे मधुप ! मधुपते भगवद्ध्यानपरां तत्प्रियामवलोक्य तत्पादपद्मं द्रष्टुं नम्रीभूतं श्मश्रुभिर्मदङ्घ्रिं स्प्रष्टुमिच्छतीति प्रकल्प्य निषेधति । मास्पृशेति । तिलकदानावसरे सम्प्रति वा श्मश्रुषु पतितान्कुङ्कुमकरणानालक्ष्याह । सपत्न्या इति । समानमन्यत् रसशास्त्रानुरोधेनेत्थं वर्णयता मुनिना स्वशास्त्रसिद्धान्तोऽपि निरूपितः गोपिकानां श्रुत्यवतारत्वात् तथा हि काचित्तत्त्वमस्यादिरूपा मुख्या श्रुतिर्मधुकरं स्वकर्मभक्ष्या मधुसदृशतत्फलस्य कर्तारं जीवात्मानं दृष्ट्वा करुणाक्रान्तस्वान्ता तस्य कृष्णस्य सङ्गमं ध्यायन्ती "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत" इत्युक्तत्वात्कृष्णेन सच्चिदानन्दस्वरूपेण परब्रह्मणा सङ्गममभिन्नत्वं ध्यायन्ती तत्राभिशयवती प्रियेणानन्दात्मत्वात्परमं प्रेमास्पदेन प्रस्थापितं प्रवेशितं दूतं कल्पयित्वेदं वक्ष्यमाणमब्रवीत् जीवात्मनः प्रियप्रस्थापितत्वम् "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतिसिद्धं श्रुतिरूपनायिकासङ्गमानन्दानुभवार्थं ब्रह्मणो जीवात्मभावेन दूतत्वमवगन्तव्यं तथा च श्रुतिः रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति इदं वक्ष्यमाणं वाक्यं प्रियप्रस्थापितं दूतं कल्पयित्वा ब्रवीदित्यपि द्रष्टव्यं यदब्रवीत्तदुदाहरति । हे मधुप ! पानोदर्कमधुतुल्यविषय रसपानपरायण ! यद्यपि त्वं कर्तृत्वभोक्तृत्वाविनिर्मुक्तः सच्चिदानन्दघनस्तथापि यत्सम्पर्कादनर्थपरम्परां प्राप्तोऽसि तं त्वं न जानास्यतोऽहं त्वां बोधयामीत्याशयेनाह । हे कितवबन्धो ! त्वत्तः सत्तां प्राप्य त्वामेव तत्तद्विषयसुखरूपमधुलवान्प्रदर्श्य जन्ममरणादिलक्षणसंसारानलज्वालामालायां क्षेप्तुं प्रवृत्तत्वात्परमशठस्य चित्तस्य बन्धुस्तथा च तत्तादात्म्यात्त्वयि संसारो न स्वत इति भावः । ननु संसारापादकान्तःकरणतादात्म्याध्यासिको हेतुः कथं च स्वस्वरूपप्राप्तिरिति चेत्तत्राह । मास्पृशेति । वस्तुतः स त्रिगुणात्मकमायापतिः परमात्मैव त्वं स सपत्न्या मायाया अङ्घ्रिं स्पृष्टवानसि तदधीनतया तत्पादप्रहारास्पदतां गतोऽसि तेन चान्तःकरणाध्यासेन संसृतिमापन्नोऽसि स्त्रीजितो यथा स्वामित्वं तिरोधाय कैङ्कर्यादिदुर्दशां भजते तद्वत्" सम्प्रति तव मोक्षेच्छास्ति चेत्तर्हि मदङ्घ्रिं मास्पृशेत्यर्थः । तथा च श्रुतिः "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यो अभिचाकशीति । अजामेकां लोहितशुक्लकृष्णामजो ह्येको जुषमाणोऽनुशेत" इत्याद्या स्त्रीपुरुषादिदेहतादात्म्याध्यासमपि तच्चरणस्पर्शमाहात्म्यादेव प्राप्तोऽसीत्याशयेनाह । कुचेति । कुचाभ्यां तत्र स्फुरन्मालाकुङ्कुमाभ्यां श्मश्रुभिश्चोपलक्षितः तदुत्पन्नविलक्षणोऽपि एतत्सङ्गातरूप एवाहमिति ज्ञातवानसीत्यर्थः । तर्हि तदधीनत्वनिवृत्तौ क उपाय इति चेत्तत्राह । वहत्विति । समधुपतिर्भवांस्तेन मानिनीनां तत्प्रत्यगभिन्नं ब्रह्मैव प्रमाणं तात्त्विकमिति प्रतिपाद्यत्वेनास्ति यासां तासां तत्त्वमस्यहं ब्रह्मास्मि प्रज्ञानं ब्रह्मेत्यादिकानां यद्वा तत्र प्रामाण्यवतीनां नोऽस्माकं प्रसादं वहतु प्रत्यगभिन्नं परमात्मानं मामेव सर्वाः श्रुतयः प्रतिपादयन्तीति सर्ववेदान्तवाक्यसमन्वयावधारणरूपं प्रसादं धारयतु नन्वल्पज्ञस्य संसारिणो मम कथं समस्तश्रुतितात्पर्यं विषयतेति चेत्तत्राह यदिति । यद्यस्मात्सदेवासिउशब्दोऽवधारणे त्वय्यल्पज्ञत्वादेः परमेश्वरे सर्वज्ञत्वादेर्मायिकत्वात्सच्चिदानन्दरूपस्त्वं तत्स्वरूपं ब्रह्मैवासीत्यर्थः प्रसादोऽपि नवास्तवोऽन्यथा द्वैतापत्तेरित्याशयेन प्रसादं विशिनष्टि । विडम्ब्यमिति । यथा तव जीवभावेन संसरणं विडम्बनमात्रं तथास्वात्मबोधायस्यास्मिञ्छ्रुतितात्पर्यावधारणमपि यक्षानुरूपो बलिरिति न्यायादित्याशयेनाह । यस्य दूतस्त्वमीदृक् । यस्य सद्रूपस्य ब्रह्मणःस्वरूपतोऽपि त्वमीदृक् अनुकरणमात्रेण दूतो न वस्तुत इत्यर्थः ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्यक्ता लौकिकाः लोकव्यापारा याभिस्ताः ॥ ९ ॥

तस्य भगवतः कैशोरबाल्ययोर्यानि प्रियाणि मनोज्ञानि कर्माणि तानि संस्मृत्य संस्मृत्य गायन्त्यः गतह्रियः रुदन्त्यस्तमपृच्छन्निति पूर्वेणान्वयः ॥ १० ॥

काचित् गोपी कृष्णसङ्गमं ध्यायन्ती मधुकरं दृष्ट्वा प्रियेण श्रीकृष्णेन प्रस्थापितं दूतं कल्पयित्वा इदं वक्ष्यमाणमब्रवीत् कल्पयित्वेत्यस्यायमर्थः अस्मत्सान्त्वनार्थे श्रीकृष्णेनोद्धवः प्रेषित इति मन्वाना तं च श्रीकृष्णसन्देशविषयक्षुमप्यलब्धावसरत्वात्तूष्णीं स्थितमवधार्य श्रीकृष्णस्नेहवैवश्यात्प्रेमसंरम्भवेगेनोद्धवस्य शृण्वतो भ्रमरमुद्धवस्थाने दूतमारोप्य प्रायः साक्षादुद्धवं प्रति कितव बन्धो ! इत्यादिवक्तुमशक्यत्वात्चेदमब्रवीदिति ॥ ११ ॥

हे मधुप ! भ्रमर हे कितवबन्धो ! हे धूर्त ! दूत नोऽस्माकमङ्घ्रिं मास्पृश ननु तस्मिन्कैतवमस्तु मास्तु वा मयि को दोष इत्यत आह। सपत्न्याः कुचाभ्यां विलुलितायाः सम्मर्दितायाः कृष्णवनमालायाः कुङ्कुमं येषु तैः श्मश्रुभिः उपलक्षितः कृष्णवर्णस्य तव श्मश्रूणां लोहितत्वमन्यथा नोपपद्यते अतस्तादृशमाला सेवित्वात्त्वमपि धूर्त एवेति भावः । किन्तु यस्य त्वं दूतस्तस्य कृष्णस्य मानिनीनाम्रीदृशेव कुचकुङ्कुमं विडम्ब्यमुपहासास्पदं प्रसादं यदुसदसि मधुपतिर्भगवान् वहतु उपहासास्पदीभूतप्रसादवाहं भवन्तं प्रति यदुसदो गताः प्रसन्ना भवन्तु किमस्मदङ्घ्रिस्पर्शनेनेत्यर्थः ॥ १२ ॥

---

भाषा टीका ।

इस प्रकार से श्रीकृष्ण के दूत उद्धवजी के ब्रज में जाते समय सम्पूर्ण गोपियों ने मन वचन कर्म से गोविंद तत्पर हो जाने से इस लोक के सब व्यवहारों को छोड दिया ॥ ९ ॥

केवल अपने प्रिय के कर्मों को गान करने लगी उन भगवान् के बाळकैशोर अवस्था के जो कर्म हैं तिन को स्मरण करके और लज्जा को छोड कर रोदन करने लगीं ॥ १० ॥

कोइ एक गोपी श्रीकृष्णचन्द्र के सङ्गम के ध्यान करते समय आये हुये एक भौंराको देखकर अपने प्यारेका पंहुंचाया हुआ समुझ कर इस गीत वचन को गाने लगी ॥ ११ ॥

वे श्रीराधिका गोपि बोलीं हे मधुप ! मधु के पान करने वाले भ्रमर ! तु कपटी का मित्र है हमारी सौतिन के स्तनों के मर्दन से लिपटी हुई माळा के कुंकुम लगे हुये मूंछों से हमारे चरणों में नमस्कार करके मत छुवे इस ऐसे प्रसाद को तेरा

सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ।
परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥ १३ ॥
किमिह बहु षडङ्घ्रे ! गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥

### भाषा टीका।

मधुपति हि धारण करैं जो कि प्रसाद यादवों के सभा में हंसने योग्य है सो उन्ही को उचित है जिनका कि तू उन्ही सरीका अविश्वासी काला दूत है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु किमित्येवं तमवजानीथ किम्वस्तेनापकृतमत आह। सकृदिति। भवादृक् त्वादृशो दुर्मनाः सुमनसः कुसुमानि यथा त्यजति तद्वत् अहो बताविश्वस्य तस्य पादपद्मं श्रीः कथं सेवते चित्रितं मयेत्याह । अपीति । बतेति खेदे उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलापैः प्रायो हृतचेताः वयं तु न लक्ष्मीवदविचक्षणा इति भावः ॥१३॥

झङ्कारान् बहुधा कुर्वन्तमस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वाह । किमिहेति । पुराणं पुरातनं बहुशोऽनुभूतम् विजयसखस्य श्रीकृष्णस्य साम्प्रतं याः सख्यस्तासामग्रतस्तत्प्रसङ्गो गीयतामिष्टाः कृष्णस्य प्रियाः तेन पूजिता इति वा तेनालिङ्गितेन क्षपिता कुचरुग्यासां तास्तवेष्टमपेक्षितं दास्यन्तीति ॥ १४ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

सुष्ठु दधाति पिबतां चित्तं मादकत्वादिना गृह्णातीति सुधा इति परममाधुर्य्यपायनं सूचयति सुमनस इति दृष्टान्तेन सदा तस्मिन्मनः शुद्धभावश्च ध्वनितः तथापि सद्यस्तत्याज इति तस्य निर्दयता वञ्चकता च । ननु साध्वीनां धैर्य्यं योग्यं यद्वा ननु तस्य पुरीप्रस्थाने किमिति भवतीभिर्विघ्नो न कृतः तत्राह । मोहिनीं बुद्धिभ्रंशिनीमिति भवादृशेति भवन्तं कथञ्चिदनुकरोति मधुमक्षिकादिः सोऽपि किं पुनर्भवानित्यर्थः इति तस्यात्यन्तास्थिरसौहृदत्वेन चापलं सूचितं पूर्वोक्तं बन्धुत्वमपि साधितं अन्यैस्तैर्व्याख्यातं यद्वा भवानिव चपलप्रकृतिर्दर्शयत इति भवादृक् श्रीकृष्णः सुमनसो यथा सुहृदाघ्राय त्यजति लोकः स एव वा तद्वत् एवमस्थिरसौहृदत्वादकृतज्ञत्वादिना तस्यासेव्यत्वमभिप्रेतं तथापि लक्ष्म्या सदा तत्सेवां स्मृत्वा तत्कारणमुत्प्रेक्षन्त्याह । परीति । नु अहो कथं कुतो हेतोः तस्य उक्तस्वभावस्य मधुपतेः पादपद्मं पद्मरूपकेण कमलहस्तायास्तस्या लीलाकमलवत् सम्वाहनादिना सदा तत्सेवनं ध्वन्यते अहो अविचक्षणत्वादित्याह । अपीति । सम्भावनायामुत्तमश्लोकस्य तस्य जल्पैः न पारयेऽहमित्यादिवत् कपटमिश्रगोष्ठीभिः यद्वा उत्तमः श्लोकस्तद्यशस्तस्य जल्पैः अनुत्तमस्यापि तद्यशसो वन्दिजनैरुत्तमतया गीयमानगाथाभिरित्यर्थः । यद्वा उत्तमश्लोकोऽयमिति जल्पैः मिथ्याभूततत्सेवकवार्ताभिः इति सपत्न्याः मुग्धता स्वेषां चातुरी च सूचिता ॥ १३ ॥

हे षडङ्घ्रे इति जातिस्वभावेन गानचातुर्य्यात् तथा षड्चतुष्पात् त्वं तु षट्पदः तेन सार्द्धपशुत्वेन बुद्ध्यभावादेव गायसि न तु विचारादित्यर्थः । तत्रापि बहु किं वा गायसि तत्रापि नोऽस्माकमग्रतः समक्षं चेत्तव दुर्निवारा गानेच्छा तर्हि सकृदेव परोक्षं गाय बाढमस्माभिरश्रूयमाणमपि तं मुहुः समक्षं किं गायसीत्यर्थः इति गूढमानगर्भासूया सूचिता । ननु निजेष्टसिद्ध्यर्थं तथा गायामि तत्राह । इह व्रज इति । पुर्य्यामेव तवेष्टसिद्धिर्न तु वनमध्येऽत्रेति भावः । ननु पुरीतोऽप्युत्तममिदं तत्राह । यदूनामधिपतिमिति । परिपाल्यमानानां तेषामेवाग्रे तद्गानं युक्तं न त्वन्येषामिति भावः । ननु युष्माकमपि स एव प्राणनाथः तत्राह । अगृहाणामित्यर्थः धन्यत्वेनास्माकं गीतार्थं ज्ञानादिकं नास्तीति भावः । इति सोल्लुण्ठोक्तिः ननु यूयमेव परमविदग्धाः तत्राह । पुराणं बहुशस्तज्ज्ञातमस्माभिः श्रुतमेवास्तीत्यर्थः इति सेर्ष्यः कटाक्षः अन्यैस्तैर्व्याख्यातं यद्वा नोऽस्माकमगृहाणां दारेषु च गृहा इत्यमरः अभार्य्याणामप्रियाणामितियावत् अग्रतः पुराणं पुरा पूर्वमेव णं निर्वृतिरूपं सुखरूपं णश्च निर्वृतिवाचक इत्युक्तेः न तु साम्प्रतं साम्प्रतं दुःखकरमित्यर्थः । किं गायसि तर्हि क्व गायामि तत्राह विजयसखसखीनां विजयस्य जगत्पराजयशक्तेः सख्युः सहचरस्य कृष्णस्य सखीनां स्थाने तत्प्रसङ्गो गीयतां क्षपितकुचरुकयैव साम्प्रतं प्रियकरणादिष्टास्तास्तवेष्टं कल्पयिष्यन्तीति समासस्य कौटिल्यं यद्वा विजयते सर्वोत्कर्षेण वर्त्तते इति विजयः कृष्णस्तस्य सखे श्रीकृष्णबन्धुत्वेन तत्सखीनामपि त्वत्सखीत्वेन तवैव सखीनां तस्मिन् कृष्णे प्रसङ्गः परमासक्तिः यद्वा सः कुचरुक्क्षपणादिलक्षणः प्रसङ्गो गीयताम् अयं धार्ष्ट्यप्रदर्शनेनोपहासः क्षपिता श्रीकृष्णेनालिङ्गनेन नखक्षतादिरत्यापहृता कुचयो रुक् कामपीडा यासां ताः कल्पयन्ति तव प्रियं सदा कुर्वन्त्येव बत इष्टा एवं त्वया गानेन मानिताः सद्यो विशेषेण कल्पयिष्यन्तीत्यर्थः ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्य कैतवमेव दर्शयन्ती माने कारणमाह । सकृदिति । अत्रैश्वर्य्याधिक्येनागृहीतमपि कर्त्तृनाम वाक्यस्य पूर्वितत्वतया मधुपतिरिति पूर्वस्मादेवाकृष्यते तस्य कृतत्वाद्वयावृत्तेनेन मधुप एव लभ्यते । तत्रैवं योजना मधुपतिरसौ स्वाम् असाधारणीं निजाधरसुधामस्मान् सकृत् पाययित्वा बलाच्छलादपि साध्वीरस्मान् पानायापाद्य सद्यस्तत्याज कीदृशीमित्याशङ्क्याह । मोहिनीं बुद्धिं भ्रंशयित्वा दुःसहनिजदुरन्तलालसासम्पादिनीं तत्र तस्य तथा पायने नास्त्येव दृष्टान्त इति त्यागे तु सोऽयं दृष्टान्तः क्रियत इत्याह । भवादृक् भवद्विधमधुपजातीयः सुमनस इवेति । अयमर्थः । भवद्विधमधुपजातिस्तन्मधुजीविकत्वात्तासु बहुषु यत्र तत्र रसमल्पमल्पं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्राप्य बुभुक्षाशान्त्यभावात्तां तां सुमनसं स्वसुखार्थं यत्त्यजति तद्युक्तमेव। मधुपतिस्तु सुधामयाधरत्वादन्यरसापेक्षामतीतः किन्तु दुःशीलत्वाच्छोभनमनसां दुःखदानमेव स्वसुखतया मन्यते तस्माद्भवतापि तस्मिन् कितवे बन्धुता न कार्येति। अथवा भवादृगित्युभयत्र सम्बन्धनीयम्। तत्र दृष्टान्तपक्षे मधुपजातीयः दार्ष्टान्तिकपक्षे विदूरसौरभग्रहणसमागमनपरितो भ्रमणमधुरास्फोटनसदृचुम्बनादिभिर्भवद्वच्चेष्टमानोऽपीति योज्यम्। ननु जयति तेऽधिकमित्यादिकभवद्वाक्यरीत्या पद्मायाः अपि तदासक्तायाः सम्प्रति तत्रापि तदुपासनं दृश्यते भवत्या कथमसौ निन्द्यते तत्राह। परिचरतीति। सकलपद्माधिकारिण्यपि पद्मा तत्पादपद्मं कथं नु परिचरतीति न बुध्यते तदेतदुक्त्वा क्षणं विभाव्याह। अपि वतेति। अपीति सम्भावनायां वतेति खेदे हीति प्रसिद्धौ उत्तमःश्लोकस्येव ये तस्य जल्पाः प्रलोभनमयानि भाषितानि तैर्हृतचेताः सती तत्परिचरतीति ज्ञानं ज्ञातमित्यर्थः। तदेवं तस्या अविचक्षणत्वं व्यज्य स्वस्यतु विचक्षणत्वं व्यञ्जितम्। तस्मात् कितवे तस्मिन्नस्माकमपि मान एव युक्त इति भावः। तत्रासकृत्पायनमप्युत्कण्ठया विस्मृत्य सकृदेव पाययित्वेति तस्यानायासत एव वञ्चनाकरीं सामग्रीसम्पत्तिं दर्शयित्वा स्वस्य श्वासातिशयः प्रकटितस्तस्मिन्नीर्ष्यावतिशयश्च सूचितः तथापि मोहिनीमित्युक्त्वा स्वलावण्यसाम्यपच्छेदं प्रत्याख्याय मोहाद्यतिशयश्च व्यञ्जित इत्याद्धिकमूह्यम्॥ १३॥

तदेवं तदीयसरोषवरणसरोलाविक्षेपेणापसृत्य पुरतो रुवन्तं मधुपमस्मत्प्रसादनायैव श्रीकृष्णं बहुधा गायस्यसाविति वितर्क्य तमवज्ञातुमन्यथोत्प्रेक्षते हे षडङ्घ्रे तज्जातिस्वभावादेव गानस्वभाव तस्माद्यद्गायसि तदिह व्रजे परमदुःखितं किं किमिति गायसि तत्रापि बहु किं गायसि तत्रापि यदूनामधिपतिं किं गायसि स यदूनां महाराजवंश्यानामसंख्यानामधिपतिः अत्रत्यास्तु गोपास्तत्रापि सम्प्रति तेनानादृताः अतस्तत्परिपालयमाना वयं एव गानजीविनस्त्वदिष्टं विधातुमर्हन्ति न त्वेते इति स्वल्पं वा बहु वा तत्रैव गातव्यमिति भावः। षडङ्घ्र इत्यस्य पशुश्चतुष्पात् त्वन्तु षट्पदः तेन सार्द्धपशुत्वेन बुद्ध्यभावातिशयादेव गायसि ननु विचारादिति च इत्यसूया। ननु व्रज एव सर्वाधिकप्रेमवानसौ ततो व्रज एव श्रेष्ठ इत्याशङ्क्य विशिनष्टि। पुराणं बहुशोऽनुभूतं तत्तत् सर्वं कापट्येनैवानुष्ठितवानिति निश्चितम्। यद्वा। चिरमतिक्रान्तसम्बन्धं पूर्वमेव व्रजस्य तत्तदासीत् नाधुनेति भावः यद्वा "कृषिर्भूवाचकः शब्द" इति धात्वर्थत्वेऽपि पुराणं पुरैव णं तदेव व्रजस्य सुखरूपम् अधुना तु केवलं कर्षति धात्वर्थसत्तारूपेणैवावशिष्टमित्यर्थः। किञ्च हन्त कुरुत्व नाम व्रजेऽपि गानमस्माकमग्रतः किं गायसि तत्रापि बहित्यादि। कथम्भूतानाम् अगृहाणां तेन स्वोच्छिष्टमोहनरसविशेषसकृत्पायनमात्रपूर्वकत्यागान् विशिष्य त्याजितगृहाणाम् अतो यदुपुरेऽपि तत्प्रेयस्य एव विशिष्टं तव गानस्थानमित्याह। विजयते सर्वं वशीकरोतीति विजयः श्रीकृष्णः स एव सखा त्वद्बन्धुस्तस्य सखीनां सह खेलन्तीनामेवाग्रतस्तत्प्रसङ्गस्य विजयस्य साम्प्रतमस्मत्परित्यागपूर्वकयादवकुलाधिपत्यफलं तत्पुरवनिताशतवशीकरणलक्षणस्य प्रसङ्गः। तत्सुखदः प्रस्तावो गीयताम्। ततस्ता दृष्टास्तेन त्वयैव वा सम्मानि तास्तवेष्टं द्रुतमेव कल्पायिष्यन्ति। यद्वा। कल्पयन्ति सदा कुर्वन्त्य एवासते। अधुना त्वस्मद्दुरवस्थां दृष्ट्वा तद्वर्णनपूर्वकेण तासां सौभाग्यज्ञानेन त्वया मानिताः सत्यो विशेषेण कल्पयिष्यन्तीत्यर्थः। यतश्च क्षपितकुच रुजः सम्प्रति श्रीकृष्णेनैव खण्डित कामपीडाः दुःखान्ते लोकाः समुल्लासाद्यन्दिभ्यो बहुशो ददति। इति समात्सर्यकौटिल्यं धाष्ट्र्यप्रदर्शनेन सकटाक्षोपहासश्च॥ १४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अगृहाणां वनचरीणां विजयसखसखीनामिति अन्यासां कृष्णप्रेयसीनामग्रतो गीयतां ता तादृशाः तां चेष्टङ्कल्पयान्ति ता एव विशिनष्टि। तत्प्रसङ्गक्षपितकुचरुजः कृष्णकथाप्रस्तावनिरस्तस्तनसापाधयः॥ १४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु किमित्येवमवजानीथ किं वस्तेनापकृतमत आह। सकृदिति। मोहिनीं तापत्रयविस्मारिणीं स्वासाधारणामधरस्य सुधां सकृत्पाययित्वाऽस्मांस्तत्यजे त्यक्तवान् यथा त्वं सुमनसः। पुष्पाणि पीतमधूनि त्यजसि तद्वदतः स भवादृक त्वमीदृगित्युक्तं भवति अत्र तु स भवादृगिति अयं भावः त्वं तादृशः स तु त्वादृशः अहो युवयोरेव स्वामिभृत्यभावो विधात्रा निर्मित इति इत्याक्षेपगर्भमिदं वचः न्यूनाधिक्ये एव स्वामिसेवकभावो न तु समयोरिति दिक् वयन्तु कदापि तादृश्यो न भवामः सोऽस्मादृशः कदापि न भवतीत्यतः सदा स्वामिसेवकभावसम्बन्धज्ञानप्रतिपादकश्रुतिस्मृत्याचार्यपरम्पराहार्दाव्युत्पन्नो नाचार्यो भवितुमर्हतीति गूढोऽभिप्राय इति दिक् अहो वताकृतज्ञस्य पादपद्मं कथं श्रीः सेवते विदितं मयेत्याह। अपीति। उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिर्हृतं चेतो यस्यास्तथाभूता तत्पादपद्मं परिचरति वतेति खेदे वयं तु न लक्ष्मीवद्विचक्षणा इति भावः॥ १३॥

झङ्कारान् बहुधा कुर्वाणं तमस्मत्प्रसादलाभाय श्रीकृष्णं गायतीति मत्वाह। किमिहेति। हे षडङ्घ्रे इहागृहाणां वनचारिणीनां नोऽस्माकमग्रतः पुरतः पुराणं बहुशोऽनुभूतं यदुपतिं किं किमर्थं गायसि नानेन तव काचिदिष्टसिद्धिरिति भावः। किंतु विजयसखस्य श्रीकृष्णस्य सखीनां पुरस्त्रीणामग्रतः तस्य विजयसखस्य प्रसङ्गो गीयताम् एवं चेत्तस्येष्टास्तास्तवेष्टं कल्पयन्त्यपेक्षितं दास्यन्ति तत्र हेतु वदन्ती ता विशिनष्टि। क्षपिता विजयसखालिङ्गनेन निरस्ता कुचरुग्यासां ताः॥ १४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कृष्णस्य कितवत्वं कथमापाद्यते इत्यत एवमिति व्यनक्ति। सकृदिति। भवादृक् भावनिव पूज्य इव स्थितः कः पुरुषः मां त्यजेन्न त्यजति मत्त्यागे इत्यादोषो भवति।—

ब्राह्मणं स्वयमाहूय याचमानमकिञ्चनम्।
पश्चान्नास्तीति यो ब्रूयात्तमाहुर्ब्रह्मघातकमिति॥

स्मृतिर्वदतीति भावेन कथितः स्वामधरसुधामधरोष्ठामृतं पाययित्वेति निषेधवचनाभावादुक्तदोषः कथं स्यादित्याशङ्क्य सकृत्पानेन बहुतृष्णाजननहेतुत्वात्तताऽप्याधिक इवेति भावेनोक्तं सकृदिति।

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तृष्णाजनकत्वञ्च कथमित्यत उक्तं मोहनीमिति बुद्धिमोहकरीं मोहिनीमिति पाठे मोहकत्वशक्तिरस्यास्तीत्यर्थः। अत्र निदर्शनमाह। सुमनस इवेति। यथा सुमनसः पुष्पस्य गन्धमाघ्राय पुनस्तदानीमेव तत्त्यागो षट्चरस्तथेति। तस्य त्वत्तृष्णा नास्ति चेत्तथापि माभूदिति माशङ्कीति भावगर्भमाह। परिचरतीति। अत्र लक्ष्मीपदममरश्रीपदञ्चाध्याहृत्य व्याख्येयं लक्ष्मीः मथुरां गता वा तस्य कृष्णस्य पद्मकिञ्जल्कवत् कोमलं पादं कथं केन प्रकारेण परिचरति शुश्रूषतीति शङ्कित्वा हेतुमाह। अपीति। सापि उत्तमश्लोकजल्पैः उत्तमश्लोकस्य हरेः जल्पैः मधुरवचनविशेषैर्हृतचित्ता मुग्धचित्तत्वात्तृष्णया परिचरतीत्येवं निश्चेयं यत हृयं ह्रित्ता उत्तमेति सन्ध्यकरणेन प्रियत्वातिरेकदर्शनार्थमेवं कथनं न तु दोषापादकत्वेन निर्दोषत्वात्तस्य सर्वधेलक्षण्यप्रदर्शनार्थञ्चेति ज्ञाप्यत इति सुमनस इव सद्य इत्यनेन शरीरदौर्गन्ध्यं कितवेति पाण्डित्यप्रदर्शित्वञ्चेति प्रवयस्त्वं त्यागनिमित्तानि सन्तीति सूचयति सुमनस इव पुष्पस्य सदृशी यथापुष्पं सौरभ्येण घ्राणेन्द्रियतर्पकत्वेन च सेव्यं स्यात्तथाहं सद्यः सद्यस्का यथा प्रत्यग्रवयसि वर्त्तमाना तरुणी तरुणैः परिहर्त्तुं न शक्या तथेति किञ्च सुमनसः मालत्या लतायाः तनुत्वं यथा मम मध्ये मुष्टिग्राह्यत्वमनेनालिङ्गने सुखोद्रेकं लक्षयति यथा सुमनसो देवाः स्वसेवकं न त्यजन्ति तथा मामपि यथा बुधाः कामकलाज्ञास्तरुणीं न मुञ्चतीति वा अतो भावादेव श्रीकृष्ण एव नृशंसत्वेन त्यक्तवानिति वा सुमनाः पुष्पमालत्योः स्त्रीदेवबुधयोः पुमानिति यादवः इतरस्त्वमं परिहरतीति केचित्पठन्ति ॥ १३ ॥

स्वपुरतो वर्ण्यमानया प्रियवार्तयोद्बुद्धमदनकलिका पुनरपि श्रोतुकामा असहमानेवाधिक्षिप्तं कोपनार्थमधिकं वक्तीति कृत्वा तमुद्धवमाक्षिपतीव वाक्ये। किमिहेति। षट्सु दर्शनेषु सन्ध्यादिषु चाङ्घ्रिरवक्रगतिर्यस्य स तथा, षट्सु विषयेषु भगवद्वाक्यपीरपन्थिषु अङ्घ्रिः पादो यस्य स तथेति वा तस्य सम्बुद्धिः हे षडङ्घ्रे उद्धव! आग्र रघि लघिगत्यर्थौ इति धातुः स्वमगृहाणां गृहाश्रमरहितानां वनचारिणामित्यर्थः। नोऽस्माकमिहाग्रतः पुराणं पुरे वर्तमानं यदूनामधिपतिं किम्बहुकर्णविलपूरं गायसि न शब्दयेत्यन्वयः कै गै शब्द इतिधातुः तस्य गृहान्तर्वर्तित्वेन वनमध्यवासिपुरतो गायनमनन्वितमित्यर्थः। तर्हीदं कस्याग्रतो युक्तमिति। तत्राह। विजयेति विजयोऽर्जुनस्तस्य सखा कृष्णः तस्य सखीनां मथुराङ्गनानामग्रतस्तस्य कृष्णस्य प्रसङ्गः गायतां गीयतां त्वयेति शेषः तत्र गातुस्तव फलसिद्धि रप्यस्तीत्याह। क्षपितेति। तत्प्रसङ्गेन क्षपिता निरस्ता कुचानां रुक्सन्तापलक्षणा यासां तास्तथा इष्टाः कृष्णप्रियाः मथुराङ्गना उद्धात्रे ते तुभ्यमिष्टमभीष्टं धनादिकं कल्पयन्तीत्यन्वयः तस्मात्ते ऽयं धनसमय इतिश्रुतेः तत्प्रसङ्गमितिपाठे भवान्गायतामित्यात्मने पदे लोट् तत्प्रसङ्गक्षपितेतिपाठे वा यदुपतिविषया गीतिस्तां त्वं गायेति परस्मै पदे लोट् तस्य प्रसङ्गेन प्रकृष्टालिङ्गनलक्षणेन विजयसखसखीनामग्रतो यदुपतिं गायतां पुंसां ते कृष्णेष्टाः स्त्रीजना अभीष्टं कल्पयन्तीति वा ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ जयति तेऽधिकं जन्मना व्रज इत्यादिरीत्या लक्ष्म्याः सदा तत्सेवां स्मृत्वा सा कथं सिद्ध्यतीति व्रजचारित्वस्मरणेन सकारुण्यमिव वितर्क्य तत्र कारणमाभापयन्ती क्षमानमेव द्रढयति। परीति ॥ १३ ॥

विजयते सर्वं वशीकरोतीति विजयः श्रीकृष्णः सखा तद्बन्धुः तस्य सखीनां सह खेलन्तीनामेवाग्रतः तत्प्रसङ्गः तस्य विजयस्य साम्प्रतमस्मत्परित्यागपूर्वकयादवकुलाधिपत्य फलतत्पुरवासिवनिताशतवशीकारलक्षणस्य प्रस्तावः क्षपितकुचरुजः श्रीकृष्णेनैवखण्डितकामपीडाः ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

ननु कथमेवं धार्ष्ट्येन भगवति दोषा आरोप्यन्ते अस्मास्वपि चेत्याशङ्क्याह। सकृदधरसुधामिति। यो हि यं वञ्चयति स तस्याक्रोशं करोति भगवांश्च सर्वथास्मान्वञ्चितवान् वञ्चनामेवाह। अधरसुधां पाययित्वा तत्यज इति। अस्मान् त्यक्त्वा गतः अधरेस्वेनेन उच्छिष्टतया लोके जातिभ्रंशो निरूपितः मोहिका च सा सुधात्वात् पीता ननु तर्ह्युपकार एव कृतः यो हि जलमपि पाययित्वा गच्छति सोऽप्याक्रोशं नार्हति किम्पुनः सुधां सुतरां लोभात्मके स्थापितां तत्राह। मोहिनीमिति। मोहिका हि सा नहि मोहकानां लड्डुकादिकं दानफलमुपकारं वा जनयति। नन्वन्येन तर्हि तदुत्तारणं क्रियतां किमाक्रोशेनेत्यत आह। स्वामि स्वन्योपायसहस्रेणापि तत्कृतो मोहो निवर्त्तयितुं न शक्यते ननु मोहनस्य न फलं किञ्चिज्जातं रसश्चोत्तमः पीत इत्याशङ्क्याह। सकृदिति। बहुवारं चेत्पाययेत् तथाप्यन्ततः सुखं भवेत् किन्तु सकृदेव अन्यथा सकृदेवाधरसुधाप्राप्त्या पुष्पाणि च यथा मृदितानि सर्वकार्यानुपयुक्तानि भवन्ति तथा भगवता वयं वीर्यविवेकादिभिर्हीनाः कृताः अतोऽस्माकं सर्वनाशं कृत्वा यदर्थमस्माभिः सर्वं त्यक्तं तमपि हत्वा इतो गतवान् तर्हि कथं न धृत इत्याशङ्क्याह। सद्यस्तत्यज इति। भवादृगिति भ्रमरतुल्यः स हि पीत्वा निः सारान् कृत्वा गच्छति तथा भगवानपि पाययित्वेति विशेषः अग्रेऽपि रसानुत्पादनार्थमन्यथा कमलादिवत् सूनरसः स्यात् अतः पाययित्वा भगवान् गतः पीत्वा च भ्रमर इति वैषम्यात् समाधानं परिहृतं सुधापानेनासक्तिर्जनिता अधरसंबन्धेन लोकस्याजितः मोहेन विवेकाद्यभावात् ज्ञानभक्ती निवारिते परित्यागादाश्रयोऽपि निराकृतः अतोऽस्माकं न पूर्वसिद्धा इमे लोका अपि भगवानित्युभयतो भ्रष्टा वयं जाता इति गुरुः पयोपालम्भः। ननु भवत्य एव भगवतो जाताः भगवदीयत्वमेव परमपुरुषार्थः अतः कथं शोक इति चेदुच्यते नहि भगवदीया भगवांस्त्यजति त्यक्ताश्च न भगवदीयाः प्रत्यासत्तिश्च न भवति मोहेन तत्र दृष्टिगतत्वात्। ननु भगवान् मोहं किमिति सम्पादयति नापि स्वार्थं त्यक्तत्वात् नापि तासामर्थं दोषनिवृत्तावपि गुणाभावात् दोषश्चावश्यकदुः खनिवृत्तिः तदभावाद्दोषश्च तस्माद्युक्तं मोहनीमिति चेत् सत्यं भवेदेतदेवं यदि तासां मनसो भगवत्यनुवृत्तिर्न स्यात् अतो मोहाभावे स्वस्थानगमनकृतोऽपि निरोधो व्यर्थः स्यात् तात्पर्याज्ञानादयं मोहः एतत्कृतो वा अग्रे स्मरणेन च परिहर्त्तव्य इति तदर्थमेव वायमुद्योगः। ननु

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवानेतादृश एव नहि सर्वोऽप्येकविधो भवति तस्मान्नोपालम्भ्य इति चेत्तत्राह । परिचरतीति । स्त्रीणां मध्ये मूलभूता चतुरा लक्ष्मीः सा कथं भगवन्तमेतादृशं ज्ञात्वा सेवितवती । अथ साप्येवं वञ्चिता तथापि केनचिदुपायेन सा पुनः सेवते तथोपायश्चेज्ज्ञातः स्यात् तदास्माभिरपि सेव्यते इति प्रश्नार्थो वा कथंशब्दः पक्षेरुत्तरं वा साहि परिचरणे भाति अत एव चरणस्य कमलत्वं सापि कमला चरणात्मकं तं प्राप्य सा तिष्ठतीति न तस्याः कापि क्षतिः गोपिकानामपि भूमौ निरन्तरं चरणे वा सम्बन्धे जाते घटते नान्यथेति अपि च पुनश्च पद्मासम्भूतेति वाक्यात् रूपान्तरेषु सौम्येष्वप्यादिलक्षोऽत्यन्तं कठिनो भ्रमणश्च स्वभावतश्च तत्र कथं सेवां कृतवतीति प्रश्नः उपालम्भो वा तादृश एवायमवतारः प्रति भातीति भावः । एकत्र स्थैर्याभावात् । ननु लक्ष्म्या अवतारो न जात इति शङ्कां वारयितुमाह नु इति वितर्के साहि भगवन्तं विना क्षणमपि स्थातुमशक्तेति पद्मेति प्रमाणं चोक्तं परिचरतीति वर्तमानप्रयोगादिदानीमपि सेवा लक्ष्यते भगवांस्तूदासीन इति तु निर्विवादं तर्हि का उपपत्तिरिति चेत्तत्राह । अपीति । प्रमाणमत्र बाधितं परं किञ्चित्सम्भाव्यते उत्तमश्लोकजल्पैः हृतचेताः प्रायेण तथा सति यत्र खेदे उत्तमश्लोकाः कीर्त्तिमन्तो ये भक्ताः ये नारदादयः तेषां जल्पाः स्वपक्षस्थापनपूर्वकपरपक्षनिराकरणरूपाः कथास्तेन वादिन्यायेन प्रायेण सा परिगृहीता यथानभिप्रेतमपि युक्त्या साधितमर्थं प्रतिवादी मन्यते तर्हि लक्ष्मीपक्षेऽपि कथं न युक्तिरिति चेत्तत्राह । उत्तमश्लोकेति । तेषां तु कीर्त्तिरुत्तमा लक्ष्म्यपेक्षयापि अतो लोके प्रतिष्ठितत्वात् भक्तानामेव जयः न लक्ष्म्याः प्रायेणैवं भविष्यतीत्यर्थः ॥ १३ ॥

एवं भ्रमरगतिं पादस्पर्शत्वेन निषिध्य तदागमनं च परिहृत्य तद्गतं शब्दं निषेधति । किमिह बहुषडङ्घ्रे इति । उद्धवस्याग्रे वाक्यमध्येन निषिध्यते कालगतानि सर्वाण्येव प्रमाणानि चतुर्भिः प्रमाणैः भगवद्गता धर्माः दोषाः परिहर्तुं गुणा वा वक्तुं शक्याः अतो व्यर्थमिति त्रिष्वपि साधारणं हे षडङ्घ्रे इह अस्मत्समीपे किमिति गायसि नन्वन्यत्र गन्तुमशक्त इति चेत्तत्राह । बह्विति । गायसीति स्थानान्तरे गानं नापि कदाचिद्गानशङ्का यतो बहु गायसि । ननु भवतीनां स्वामी कृष्ण इति भवत्समीपे गानं युक्तमिति चेत्तत्राह । यदूनामधिपतिमिति । यादवानामधिपतिर्न त्वस्माकं साम्प्रतम् अतो यादवानामग्रे गानमुचितं नत्वन्येषां ननु सर्वेश्वरो भगवान् यादवत्वेऽपि न दुष्यति अतः सर्वेषामुपकारार्थं स्वार्थं च सर्वत्रैव गानमुचितमिति चेत्तत्राह । अगृहाणामिति । गृहरहितानां वयं स्वकगृहा मार्गे उपविष्टाः नाप्यस्माकं स्वगृहं नापि भगवद्गृहमिति तादृशीनामग्रे गानेन किं फलं भवेत् गृहस्था एव हि किञ्चिद् दातुं शक्ताः । ननु त्वमेका न त्वमप्यच्छसि अन्या दास्यन्तीत्याशङ्क्याह । न इति । सर्वा एव वयं तादृश्यः ममाधुनाप्युपकाराभावेऽपि धर्मो भविष्यतीति भवतीनां च अपूर्वार्थप्रदर्शनेन सन्तोषे आशीर्वादेन वा कृतार्थता भविष्यतीति कथङ्गानं निषिध्यत इत्याशङ्क्याह । पुराणमिति । नायमपूर्वो वादः किन्तु बहुधैव श्रुतो भगवान् । ननु भगवद्गुणान् श्रुत्वा न कोऽपि विरज्यते । कथमेता विरक्ता इति चेत् । सत्यं पूर्वं श्रवणेन हि वयमेवं जाताः इतोऽधिकं च फलं न पश्यामः पुनश्चेत् श्रोष्यामः स्वरूपेणापि निवृत्ता भविष्याम इति परमेतदपेक्षया अश्रवणमेव स्थिते स्वरूपे तु भगवान् कदाचित्प्राप्येतापि संसारपतनभयंचेत् सम्भाव्येत तदा पुरातनत्वादेव सुलभत्वात्तदैव गानं भवत्विति साम्प्रतं नोपयोग इति भावः । ननु वयं गायका एव भगवांस्त्रीप्रियः पुरुषास्तथा न रसिकाः स्त्रीणां चाग्रे गानमावश्यकमतोऽनन्यगत्या गानं क्रियत इति चेत्तत्राह । विजयसखसखीनामिति । सन्ति स्त्रियः सुखिताः विजयसखस्य भगवतः सख्यः भगवता तुल्यभावं प्रापिताः परमानन्दयुक्ताः । यथार्थमर्जुनवत् बलस्यादि मत्स्यादिवेधमपि कृत्वा यथेष्टलक्ष्मणाप्रभृतीनां विवाहं करोति विविधश्च जयस्तस्येति लुण्ठने वधे एव स्त्रियः प्राप्यन्ते अर्जुनेनापि दीयन्ते सखित्वात् स्वयमपि तादृशः । अर्जुनसखित्वेन कालरूपतया सर्वमारकत्वं चोक्तं ततश्च तत्स्त्रीणां विलापे दुःखसम्मार्जनं कुर्वन् सखेव भवति ता गतभर्तृकाः भोगनिरपेक्षाः कथायां मुख्याधिकारिण्यः नतु वयं भोगसापेक्षा इति भावः । वक्रोक्त्या वा द्योतितातस्त्व मारयिष्यन्तीति । यथास्ति प्रभृतयः विजय एव प्रकृष्टजयः सखा यस्य सखीनां योऽहि सर्वत्रजयं प्राप्नोति तमेव मन्यन्ते नान्यान् वयं त्वेकनिष्ठा इति प्ररोचनार्थमपि गानं नोपेक्ष्यत इति अतस्ताः स्मर्या एव क्षपितकुचरुजः सत्यः युद्धे कठिनभावं प्राप्तेन हस्तेन मर्दितरुजः भारक्लेशनाशेन सूचिताः ते इष्टाः सत्य इष्टं सङ्कल्पयिष्यन्ति यदेवेष्टं तव नष्टप्राप्तपुरुषार्थः काश्चिदन्येष्टं सम्पादयति अत उद्धवं प्रत्यपि तावद्दौत्यं कर्त्तव्यं भगवद्गुणवर्णनेन नास्मासु अनुभूतेऽर्थे वचनस्य दुर्बलत्वात् कालपक्षेऽपि ऋतुभिः षडङ्घ्रिर्भवति सम्वत्सरः स हि ऋतुभेदेन कोकिलादि शब्दैर्वेदैश्च भगवन्तं स्मारयति ते च शब्दा भगवत्सहितानां ज्ञानिनां धर्मपराणां वा उदासीनानां भक्ताना वा भगवति मिलितानां सुखदा भवन्ति नत्वस्मत्सदृशीनां सर्वत्रासक्तिरहितानां धर्मिणामेवापेक्ष्यमाणानां कालादि निरपेक्षाणां तैः शब्दैः सुखं भवति पूर्वावस्थाप्राप्तौ तु तादृशशब्दानां सुलभत्वात् तदानीमेव सर्वथा श्रवणे न किञ्चित् प्रयोजनमित्यर्थः ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु भ्रमरजातेर्ममायं स्वाभाविक एव स्मश्रुपीतिमा ननु सुरतकुङ्कुममिदं तस्य च त्वदेकतानमानसस्य मधुपुर्यां कामपि स्त्रियं स्वप्नेऽप्यपश्यतः कोऽपराधो यतस्त्वमीदृशं मानमाविष्करोषीति तत्राह । सकृदिति । पायनस्यासकृत्त्वेऽपि सकृदित्युक्तिरनुरागेण तत्र तृष्णाधिक्यं व्यञ्जयति । अधर एव सुधा तामित्यत एव एतावद्भिरपि सन्तापैर्न म्रियामहे इति भावः । एता मदर्त्तेः कष्टैर्यदि मरिष्यन्ति तदाहं काभ्यः कष्टं दास्यामि तस्मादासां मरणाभावाय स्वामधरसुधां पाययामीति स पूर्वं विचारयामासेति भावः । अतः सकृदेव पाययित्वा सद्यस्तत्क्षण एवास्मांस्तत्याज । अतोऽस्मत्सुखदाने तात्पर्यं सति सुधापायनस्यासकृत्त्वं स्यादिति त्वमेव विचारयेति भावः । तत्रापि पाययित्वेति णिचा तस्य बलात्कारो दर्शितः । नन्वेवञ्चेत् साध्व्यो भवत्यः कथं तस्मै स्पृहयन्ति तत्राह । नोहिनीं सुक्तिभ्रंशिनीम् । अतस्तेनास्मदादयो लोकद्वयत एव भ्रंशिता इति "विषवृक्षोऽपि सम्वर्द्ध्य स्वयं छेत्तुमसाम्प्रतमि"ति न्यायोऽपि कृष्णेन न गणित

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

इति भावः । किञ्च तस्य प्रीत्यप्रीती द्वे एवातिचित्रे इत्याह । सुमनसो देवश्रेणीरिव विष्णुः कृष्णोऽस्मान् सुधां पाययित्वा सुमनसो मालतीर्भवादृक् भ्रमर इवास्मांस्तत्याजेति पायनत्याजनयोः कर्मणि कर्त्तरि च पृथक् पृथक् दृष्टान्तः । देवपक्षे हे अधर ! निकृष्टेति सम्बोधनं "सुपर्वाणः सुमनस" इत्यमरः । ननु तस्य युष्मत्कर्मकत्यागे युष्माकमेव कोऽपि दोषः कारणमस्ति तस्य वेति तत्राह । सुमनस इवास्मान् स भवादृक् तत्याज । भ्रमरो यन्मालतीस्त्यजति तत्र दोषः कस्येति त्वयैव विचार्यतामिति भावः । "सुमना मालती जाति"रित्यमरः । सौरभ्यसौकुमार्यपावित्र्यसर्वोत्कर्षादिभिः सुमनःसाधर्म्यात् शोभनमनस्कत्वाच्च वयं सुमनस इति व्रजे प्रसिद्धा एव स च भ्रमरसाधर्म्यात् चपलः स्वसुखमात्रार्थी प्रसिद्ध एवेति नेदं कवितामात्रमिति ध्वनिः । ततश्च चाञ्चल्यदोषादेव मालती बहीरपि त्यक्त्वा निकृष्टेष्वपि पुष्पेषु विषज्जति अविषज्जति वा भ्रमरे इव कृष्णे कथं वयं मानिन्यो न भवाम इत्यनुध्वनिः । ननु कृष्णस्य निर्दोषत्वं शास्त्रप्रसिद्धमेव शास्त्रज्ञेन गर्गेण नारायणसम इत्युक्तत्वात् । तत्र भवतु स नारायणस्तथापि परवञ्चनादिदोषाणां तत्र प्रत्यक्षत एव दृष्टत्वात्ते कथमपलपनीया भवान्त्विति विमृश्य सविचिकित्समाह । परिचरतीति । पद्मा लक्ष्मीः परिचर्यायामपि हेतुं स्वयमेवोद्भावयन्त्याह । अपि वतेति । उत्तमःश्लोक इति ये जल्पास्तावकलोकानां स्तुतिमात्राणि तैर्हृतं चेतो यस्याः सा । तेन लक्ष्मीरति ऋजी वयन्तु वैचक्षण्यवैदग्ध्यबुद्धिवैचित्र्यादिगुणानां विधात्रा दत्तत्वात् कथं तादृश्यो भवितुं प्रभवामेति भावः । अत्र पाययित्वेति मोहिनीमिति च तस्य शाठ्यं सद्यस्त्यागान्निर्दयत्वं भवादृगिति चापल्यं लक्ष्म्या आर्ज्जवव्यञ्जनया स्वविचक्षणत्वम् आदिशब्दादकृतज्ञत्वप्रेमशून्यत्वादिकं तु सर्वत्रैवानुस्यूतमित्ययं परिजल्पः । यदुक्तम् ।

> प्रभोर्निर्दयताशाठ्यचपलाद्युपपादनात् ।
> स्वविचक्षणता व्यक्तिर्भङ्ग्या स्यात् परिजल्पितम् ॥ १३ ॥

भ्रमरजातिस्वभावेन हुंकारान् कुर्वन्तं तं मत्कृतेन तिरस्कारेणाप्तः संरम्भोऽयं स्वीयं गानगुणं प्रकाशयतीति मत्वाह । इह गोपीसभासु किं गायसि अज्ञस्य तव गाने नैताः प्रसीदन्तीति भावः । तदपि पुनः पुनर्गायसि । तत्रापि यदुपतिं यदूनां पतित्वेन श्लाघ्यमानं तत्रापि नोऽस्माकमग्रतः । कीदृशीनाम् अगृहाणां तेनैव त्याजितगृहाणामिह वनप्रदेशे उपविष्टानां तुभ्यञ्च शाकमुष्टिभिक्षादानेऽप्यसमर्थानाम् । ननु स्वाङ्गोत्तीर्णपुरातनवस्त्रमाल्यादिकं किञ्चिद्देहीति चेत् तुभ्यं सर्वथैवानभिज्ञाय नैव ददामीत्याह । पुराणं गायसि तस्य यदुपतित्वे पुराणं प्रमाणयसीत्यर्थः । हे षडङ्घ्रे ! इति पशुस्तावच्चतुष्पात् त्वन्तु षट्पदः सार्द्धपशुः कुत्र किं वा गातुमुचितमिति बुद्ध्यभावान्न जानासि पशुत्वात् पुराणं वा कथं जानास्यतः कथं भिक्षां प्राप्स्यसीति भावः । किन्तु तव पशुत्वात्तुभ्यं वयं न कुप्यामः किन्तु गानोपजीविनस्तद्व्यसनमुपदिशामः शृण्वित्याह । विजयेति । कामयुद्धे विशिष्टो जयो यस्य विगतजयो वा यस्य स चासौ सखा चेति विजयसखस्तस्य सखीनां तव सखा कामयुद्धे या जयति याभिर्वा विजीयते तासामेवाग्रतस्तत्प्रसङ्गः सुरतजयपराजयविरुदावली गीयतां श्लेषेण पूर्वं सुबलसख आसीत् सम्प्रति विजयोऽर्ज्जुनस्तस्य सखा अभवदिति भाविवार्त्तापि तस्या मुखात् स्वयं निःसृतेति ज्ञेयम् । ततश्च ताः क्षपितकुचरुजः खण्डितकुचज्वालास्तवेष्टं वाञ्छितं कल्पयिष्यन्ति त्वया च त्वद्गानश्रावणया इष्टाः पूजिताः सत्यः अत्र उत्तरार्द्धे असूया मानगर्भा सर्वत्रैव उपहासात्मकः कटाक्षः कृष्णे पर्याप्नोतीत्ययं विजल्पः । यदुक्तम् ।

> व्यक्तयासूयया गूढमानमुद्रान्तरालया ।
> अघद्विषि कटाक्षोक्ति र्विजल्पो विदुषां मतः ॥

इति ॥ १४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु मदन्यया प्रेयस्या मत्प्रियो मथुरायां रमत इति केन प्रमाणेन श्रीमत्या ज्ञातं प्रत्यक्षेणोतानुमानेन किम्वा शब्देन नाद्यः अयोग्यत्वात् न द्वितीयः धूलीपटले धूमभ्रमवत् श्मश्रुनिष्ठस्वाभाविकलौहित्ये तादृशकुङ्कुमलौहित्यभ्रमात् न तृतीयः अनाप्तवाक्यस्याप्रमाणत्वाद्यथार्थवादिनोऽनाप्तत्वात्तस्मात्सर्वदा त्वत्सङ्गमध्यानपरे स्वप्नेऽपि त्वदन्यस्त्रीसमागमरहिते त्वद्विरहव्याकुलस्वान्ते परमप्रेष्ठे श्रीव्रजराजनन्दने परमभक्त्या भगवत्प्रियायाश्चरणसरोजं द्रष्टुं स्प्रष्टुं च तदाज्ञयागते मयि च किमित्येवं दोषा आरोप्यन्त इति चेत्तत्राह । सकृदिति । असकृत्पायनेऽपि तत्पिपासाया अनिवृत्तत्वात्तदुपकारतिरोधानाय प्रवृत्तत्वाद्वा सकृदित्युक्तम् अधरसुधां सकृत्पाययित्वा यथोऽस्मांस्तत्याज उत्कृष्टवस्तुलाभनिश्चयं विना पूर्वसिद्धं वस्तु केनापि न त्यज्यते प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायात्तथा च : त्यागान्यथानुपपत्त्येदं कल्प्यत इत्यर्थापत्तिप्रमाणेन मयेदं ज्ञातमिति भावः । ननु यः सुधां पाययित्वा गच्छति स किमुपालम्भविषयो भवति पिपासितस्य जलमपि पाययित्वा यो गच्छति स कृतज्ञैः सर्वदा स्तूयत एव ननु निन्द्यत इत्यपि शङ्काऽनेन निरस्ता शुष्ककाष्ठैर्यो दहति तदपेक्षया आर्द्रगोमयेन यो दहति सोऽत्यन्तदुःखप्रद इति न्यायोऽत्र घटते ननु त्वदुक्तस्तथा च मरणे दुःखाननुभवात्सुधां पाययित्वा गतो नत्वस्मदुपकारार्थं तथा कृतवान् येन तदवहेलनेऽस्माकमकृतज्ञतादोषः स्यादन्यथा पुनः पुनस्तत्पायनं कुर्यात् त्यागं च न कुर्यादिति अधरपदेन जातितोऽपि वयं भ्रंशिता इति ध्वनितं नन्वेवम्भिधा सुधा किमर्थं भवतीभिः पीतेत्याशङ्कानिवृत्त्यर्थं बलात्कारः सूचितः । ननु तदर्थं सन्तापो न कार्यस्तत्राहं गत्वेदं कथयिष्यामि स च श्रुत्वैव तां सुधां कनकपात्रे निधाय प्रेषयिष्यति यां पीत्वा तृप्ता भविष्यथेति चेत्तत्राह । स्वीयेन दानं विना तदधररूपपात्रं विना च पातुमयोग्याम् अधरनियोगे तु तस्याः सुधात्वमेव नश्येदिति भावः । नन्वलभ्यवस्तुस्पृहा न युक्तेति विचार्य स्वस्थचित्ता भवथेति चेत्तत्राह । मोहिनीं विवेकं नाशयित्वा दुरन्तलालसोत्पादिनीं दृष्ट्वा येन त्यागः कृतः स्यादित्याशङ्क्याह । सुमनस इति । सुमनस इवास्मान्स भवादृक् तत्याज तथा च भ्रमरकर्तृकमालतीत्यागे यथा नास्ति तासां कश्चिद्दोषः तथा साधुमनसां तत्समानामस्माकमपि तथा च स्वस्थानस्थितत्वादयं मालतीसमाः स तु अन्यत्र गतत्वाच्चञ्चलो भ्रमरसम इतीदं प्रत्यक्षमेव न तु कल्पनेति भावः । अत एव सद्यस्तत्याज एतेन ननु भवतीभिः कुतो न धृत इत्याशङ्कापि परिहृता यथा त्वं मालतीभिर्धर्तुमशक्यस्तद्वदतिचञ्चलत्वादतिचलिष्ठस्य च तस्यास्माभिर्धर्तुमशक्यत्वात् यद्यपि भ्रमरः

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

पीत्वा गच्छति भगवांस्तु पाययित्वा गत इति वैषम्यं तथापि तादृशत्यागे दृष्टान्ताभावव्यञ्जनार्थं त्यागमात्रे भ्रमरो दृष्टान्तीकृतः तथा चाधरसुधासम्बन्धाज्जातिभ्रष्टानां तदासक्तचित्तत्वाल्लौकिककृत्यायोग्यानां विवेकनाशात्परलोकसाधनसम्पादनाक्षमाणां तेन गतत्वादालम्बनविधुराणां न पूर्वसिद्धसामग्री नापि प्रेष्ठ इत्युभयतो भ्रष्टास्तेन वयं कृता इत्यस्मत्कृत उपालम्भो नेर्ष्यामूलकः किं तु यथार्थ एवेति त्वमेव पक्षपातं विहायेदं विचारयेति यद्यपि परितो भ्रमणमधुरभाषणसहावस्थानचुम्बनश्यामत्वादिना तत्सदृशत्वात् भवादृगिति तद्दृष्टान्तत्वेन भवानस्माभिरुपात्तस्तथापि तत्र तत्रात्मरसप्राप्त्या बुभुक्षानिवृत्त्यभावात्सुमनसां त्यागेन दुःखदानमयुक्तमेवातो त्वयापि तस्मिन्कितवे बन्धुता न विधेयेति भावः। ननु भगवान्सर्वास्वेवंविध एवातो नोपालम्भयोग्यः स्वभावस्य दुरतिक्रमणीयत्वादित्याशङ्क्याह। पद्मा लक्ष्मीः परमचतुरा तत्पादकमलं कथं सेवते तथा च तत्सेवां तत्सन्निधौ स्थित्वा गृह्णातीति अस्मांस्तु त्यजत्यतो नैकविधस्वभावोऽपि तु वञ्चनादिदोषवानेव प्रत्याक्षेणोपलभ्यतेऽतश्चतुरशिरोमणिरपि तद्दूतस्त्वं तानपलपितुमशक्तोऽसीति भावः। नारायणसमो गुणैरिति गर्गोक्तिमनुसृत्य श्रयत इन्दिरा शश्वदत्र हीति पूर्वं यथोक्तं तद्वदिदमुक्तमिति द्रष्टव्यं यद्वा कंसादिषु दोषवत्त्वेन व्यक्तमेव तस्य भ्रमिद्विष्णववतारत्वेत्यभिप्रेत्येदं यद्वा ननु स वञ्चकश्चेत्तर्हि लक्ष्मीं कुतो न वञ्चितवांस्तस्मात्तद्वशीकारहेतुभूतसेवाज्ञानमेव युष्माकं नास्तीति चेत्तत्राह। परीति। तत्कृतसेवाप्रकारो ज्ञातः सन्ननुष्ठातुं शक्यः स त्वस्माभिर्न ज्ञातः प्रियसन्निधौ तत्प्रष्टुमवकाशस्यालब्धत्वादिदानीं तस्य दूरचरत्वादतस्त्वयैव करुणया तत्र गत्वा तां पृष्ट्वात्रागत्य वक्तव्यः परं तु स प्रकारो ज्ञातोऽपि अस्माभिरनुष्ठातुमशक्यो यतः सा पद्मा यदि चरणे मातीति तथा तदभिन्नतयावस्थिता अस्माकमपि चरणभेदो भूमिभावो वा यदि भवेत्तदा तत्सादृश्यं स्यान्नान्यथेति भावः। एतेन लक्ष्म्यवताराप्रसिद्धेः कथमेवमुक्तमिति शङ्कानिरासाय तत्र प्रमाणमप्युक्तं तस्या भगवन्तं विना क्षणमात्रमपि स्थातुमशक्तत्वात् अत एव परिचरतीति वर्तमानापदेशः यद्वा ननु यदि तस्मिन् दोषगन्धोऽपि चेद् भवेत्तर्हि चतुरशिरोमणिर्भूत्वा ब्रह्मादिभिरपि प्रार्थ्यमानपादपद्मा मा कथमनिशं तत्पादपद्मसेवापरा स्यादित्याशङ्क्याह। परिचरतीति। नु वितर्के चपलशिरोमणिभूतेन तेन तथाभूतायास्तस्याः कथं निरन्तरः सम्बन्धः इति तु वयं न विद्म इत्यर्थः। च्छणं निचार्याहो ज्ञातं भवेत्याह। अपीति। अपिः सम्भावनायां वतेति खेदे हिः प्रसिद्धौ उत्तमश्लोकस्योपमयदाक्षिण्येन व्याप्तस्य जल्पैर्निरर्थकसान्त्वनवचोभिर्हृतं चेतो यस्याः सा तथा चेतद्वचनान्यनर्थकानीत्यबुद्ध्वैव सेवत इत्यसौ नास्मद्वदभिज्ञेति भावः। उत्तमश्लोकस्येव जल्पैरिति वा यद्वा उत्तमश्लोकानां नारदादीनां जल्पैर्वचनैः स्वपक्षस्थापनपूर्वकपरपक्षनिराकरणात्मककथाविशेषैरिति वा तथा च दोषानुद्भावयन्तं प्रमाणाभासं वदद्भिर्वक्तृभिः पुरुषैर्वादिभिर्बलात्कारेण स्वमते प्रवेशिता सती परप्रतिप्रसिष्ठितैरयुक्तं सर्वैर्युक्तमित्येव मन्यत इति तद्वक्तोक्त्युक्त्या लक्ष्म्याः पराजय इति भावः। अस्मिन्पक्षे परिजल्पो वर्णितः पाययित्वा तत्याज भवादृगिति प्रभोः शाठ्यनिर्दयचापल्यादिमत्त्वादेः प्रतिपादनात् उत्तरार्द्धेन स्वस्य च विचक्षणताभिव्यक्तेश्च तदुक्तं "प्रभोर्निर्दयताशाठ्यचापल्याद्युपपादनात्। स्वविचक्षणताव्यक्तिभङ्ग्या स्यात्परिजल्पित"मिति उद्धवपक्षे हे अधर! त्वं वासुदेवं धृतवतां यादवानां मध्ये मुख्य यथा श्रीविष्णुः सुमनसो देवान् सुधां पाययित्वा स्वां मोहिनीं तद्रूपं तत्याज तथा श्रीकृष्णः अधरसुधां स्वामस्मान् पाययित्वा अस्मांस्तत्याज भवादृक् भवद्वयवचसदृशावयवादिमान् अन्यत्समानं श्रुतिपक्षे मायाङ्घ्रिस्पर्शात्त्वं संसारी तदस्पर्शादीश्वरोऽसंसारी तया सेव्यमानपादपद्म इत्याह। सकृदिति। हे अधर! तच्चरणसेवनादनीश्वरत्वभ्रान्त्या निकृष्ट अनीशया शोचति मुह्यमान इत्यादिश्रुतेः स परमेश्वरः सकलजीवमोहकरीं मोहिनीं मायां स्वां सुधां सत्तास्फूर्तिलक्षणां सकृत् पाययित्वा स्वां स्वाधीनां मोहिनीमिति वा तत्याज जहात्येनां भुक्तभोगामजोऽन्य इत्यादिश्रुतेः इवशब्दः पायने त्यागे च संबन्धनीयः तयोर्वस्तुत्वाभावात् असुभिर्मां प्रमा यस्य स इन्द्रियजन्यतत्तद्विषयकयथार्थत्वज्ञानवान् सुमनसस्तस्य संबोधनं हे असुमेति असूपलक्षितसङ्घाते आत्मत्वप्रमा यस्येति वा अस्मान्न तत्याज यः सर्वज्ञः सर्वविद् सर्वस्य वशी सर्वस्येशानः मायिनन्तु महेश्वरमित्यादिभिरस्माभिः प्रतिपाद्यत्वेन न जहौ त्वन्तु देहादावात्माभिमानं कृत्वास्मत्प्रतिपाद्यमात्मस्वरूपं विस्मृतवानसीति भावः। नन्वहमनीश्वरत्वेन तस्मादत्यन्तविलक्षणत्वान्नोपालम्भयोग्य इति चेत्तत्राह। भवादृक् भवत्सखैव सः न तु वस्तुतोऽत्यन्तविलक्षण इत्यर्थः। सयुजा सखायेत्यादिश्रुतेः ननु स यदि मायां त्यक्तवांस्तर्हि कथं लक्ष्मीरूपेण सा तत्पादपद्मं सेवत इति शङ्कते। परीति। नन्वर्थे नुः समाधत्ते। अपीति। वतेत्याश्चर्ये हृतचेता वशीकृतचित्ता सती उत्तमश्लोकजल्पैर्यशःकीर्तनादिभिस्तत्पादपद्मं परिचरति स तु सर्वदोदासीन एव तिष्ठतीति भावः। यद्वा ननु सा तस्मिन्नेवास्ति अधिष्ठानात्पृथगारोपितस्य स्थित्ययोगादित्याशङ्क्याह। परीति। स्वयं लक्ष्म्यादिरूपेण परिणता च सती तत्पादपद्मं वतेत्याश्चर्ये कथं नु परिचरति तस्यास्तत्परिचरणस्य चानिर्वाच्यत्वात्तद्विरुद्धस्वभावाच्चेति भावः। यद्वा विपर्यये बाधकमाह। परीति। न हि मायावृतं पद्मा परिचरत्यतोऽसौ निर्माय इति भावः॥ १३॥

एवं वद्धुधोक्तोऽपि पादं स्प्रष्टुमेव प्रवृत्तस्ततश्च सकोपतया प्रक्षिप्तेन पादेन ततोपसृत्य बहुधा झङ्कारानकरोत् तान् श्रुत्वाऽस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वा आह। किमिति। हे षडङ्घ्रे! किं किमर्थं गायसि ननु तत्र को दोष इति चेत्तत्राह। इहेति अत्र शोकाविष्टे व्रजे रुदतां सन्निधौ रोदनमुचितं न गानमिति भावः। किं च यत्र गानमयुक्तं तत्र बहु गायसि किं च दुःखशमोपयुक्तं गानमपि कृतं चेन्नास्ति तादृशोऽपराधस्त्वं तु क्षतोपरि क्षारं निक्षेप्तुमुद्यतोऽसीत्याह। यदूनामधिपतिं ननु गोपिकानामधिपतिं तथा च रोदनं गानं वा यदि ते कर्त्तव्यं तर्हि गोपिकाधीशसम्बन्ध्येवात्र कुरु सम्प्रत्यसौ यदुपतिरित्यभिप्रेत्य गायसि चेत्तर्हि यादवा एव तवेष्टं विधास्यन्ति न त्वत्रत्या अत गत्वा तत्सन्निधावेव गानं कुर्विति भावः। चतुष्पादपशुर्हि विवेकशून्यो भवति त्वं तु षट्पद इति सार्द्धपशुत्वात्स्थानविवेकविधुरत्वात्तथा करोषीति ध्वनयन्ती संबोधयति हे षडङ्घ्र! इति यद्वा यद्यपि मद्गानं भवतीनां दुःखजनकं तथापि गानस्वभावोऽहमन्यत्र गन्तुमशक्तत्वादत्रैव-

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

गायामीति चेत्तत्राह। हे षडङ्घ्र! इति छिपादपि यद्दूरे गन्तुं शक्नोति त्वं तु षट्पदत्वादन्यत्र किमर्थं न गच्छसि किमित्यस्मद्दुःखदानाय प्रवृत्तोऽसीति भावः। ननु व्रजे तस्य प्रेमातिशयादहमपि व्रजं दृष्ट्वा प्रसन्नः सन् गायामीति चेत्तत्राह। पुराणं प्रेमातिरेकस्तस्यास्माभिर्बहुशोऽनुभूतो न त्वया वर्णनीयः सकपटैव तत्प्रीतिः स्थितेति भावः। यद्वा यावत्कालं स इह स्थितस्तावत्कालं तस्य प्रीतिरासीन्नाधुनेति भावः। यदि व्रजे एव गानं मया कर्तव्यमिति तवाग्रहस्तर्हि यत्र स्थितस्य तव गानशब्दोऽस्मत्कर्णपथं नावगाहेत तत्र स्थित्वा गानं कुर्वित्याह। नोऽस्माकमग्रतः किं गायसि। कुत इति चेत्तत्राह। अगृहाणामिति। न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यत इत्युक्तत्वाद्गृहिणीनां तेन त्याजितगृहिणीभावानां तथा च दुःखितानामस्माकं दुःखदाने तव को लाभः यद्वा सर्वेश्वरस्य भगवतो यदुपतित्वेनापि गानं तच्छ्रवणं च नानुचितमिति चेत्तत्राह। अगृहाणामिति। त्वं स्वार्थं गायसि किं वास्मदर्थं नाद्यः यतो वयमगृहास्तेनैव त्याजितपूर्वगृहाः स्वगृहे च न स्थापितास्तस्मात्स्वगृहभगवद्गृहविधुराणां मार्गप्रविष्टानां चणकमुष्टिमात्रभिक्षादानेऽप्यशक्तानामग्रे गानकर्तुस्तव किं फलं सेत्स्यति सर्वा अप्येवंविधा इति बोधयितुं बहुवचननिर्देशः ननु युष्मत्प्रसादलब्धैर्युष्मदङ्गोत्तीर्णजीर्णवसनमालाशीर्वादादिभिरेवाहं कृतकृत्यो भविष्यामि धर्मं वा लप्स्यामीति चेत्तत्राह। पुराणमिति। भगवतो बहुधा दृष्टत्वाच्छ्रुतत्वाच्च तद्गानस्य विस्मयकारित्वाभावादुक्तं फलमपि दुर्लभं नाप्यत्र तद्गाने तव कश्चिद्धर्मविशेषः अस्माकं तेन सुखाप्राप्तेः एतेन द्वितीयः पक्षोऽपि निरस्तस्तच्छ्रवणस्यानिष्टापादकत्वात् श्रवणादिनैवं दशाप्रापकत्वेनानुभूतस्य संबन्धिगानादिकमितः परं वयं न श्रोष्याम इतोऽधिकफलादर्शनेन पारिशेष्यात्तेन स्वरूपनाशस्यैव सम्भावितत्वात् स च स्वरूपे सति भगवान्कदाचित्प्राप्येतेत्याशावतीनामस्माकमनिष्टोऽतो नास्मदर्थमपीदं तव गानमिति अथ मन्दझङ्कारान्कुर्वन्तं खिन्नचित्तं मत्वा भो भ्रमर! माविषण्णो भव विवेकशून्ये गानोपजीविनि न वयं कुप्यामोऽपि तु तव प्राप्त्युपायं वदाम इत्याशयेनाह। विजयेति। विशेषेण जयते सर्वोत्कर्षेण वर्तत इति विजयः श्रीकृष्णः स चासौ तव सखा चेति विजयसखस्तस्य सखीनामेवाग्रतस्तस्य प्रसङ्ग अस्मत्त्यागपूर्वकपुरस्त्रीवश्यतावाक्यसन्दर्भो गीयतां ततस्ता दृष्टास्तेन सम्मानिताः अस्मद्दुर्दशापूर्वकतत्सौभाग्यगानेन त्वया वा सम्मानिताः सख्यस्तवेष्टं विशेषतः करिष्यन्ति यद्वा कामयुद्धे विशिष्टो विगतो वा जयो यस्य सः स चासौ सखा चेति तथा तस्य सखीनां प्राप्तजयपराजयानामग्रतः सुरतजयपराजयनिरूपकसंदर्भो गीयतां यद्वा प्रकृष्टो जयश्च सखा यस्य तस्य सखीनां तथा च ता एवंभूतास्तस्य सख्यो वयं त्वेकनिष्ठत्वान्न तथाभूता अत्र प्ररोचनार्थं गानं नापेक्षितमिति भावः। यद्वानवच्छिन्नभगवद्ध्यानलब्धसर्वैश्वर्या भावी वृत्तान्तोऽपि भूतवन्निर्दिष्टः तथा च विजयस्यार्जुनस्य सखा विजयसखस्तस्य सखीनां हरणादिना प्राप्तव्यानां कल्पयन्ति कल्पयिष्यन्ति यद्वा इन्द्रादिकृतगवेन्द्राभिषेकमारभ्य श्रीकृष्णस्य गोविन्देति नामधेयं यथा प्रतिष्ठितमभूत्तथा स ह्यर्जुनस्तव सखा भविष्यति स च त्वया पालनीय इतीन्द्रोक्तिमारभ्य विजयसख इत्यपीति तदभिप्रायेण भगवति तच्छब्दः प्रयुक्तस्तथा च स्त्रिय एव तत्प्रिया रसिकाश्चेत्यतो गायके तु मया तत्सन्निधावेव गानं विधेयं न तु पुरुषाणां समीप इति यदि तवाभिप्रायस्तर्हि विजयसखसख्यो यथोक्तलक्षणत्वात्तच्छ्रवणधारिण्यो नेदानीं वयमिति भावः। अप्राप्तपुरुषार्थस्यान्येष्टसम्पादनाशक्तत्वात्ता एव लब्धपुरुषार्थत्वात्ता एव तवेष्टसम्पादनायालमित्याशयेनाह। क्षपितेति। कामयुद्धे गाढालिङ्गनेन कठिनभावं प्राप्तेन हस्तेन वा मर्दनेन क्षपिता नाशिता कामकृतकुचपीडा यासां ता इति सकटाक्षमुपहासः अत्र विजल्पः तदुक्तं "व्यक्तयासूयया गूढमानमुद्रितलीलया। अलं छिपि कटाक्षोक्तिर्विजल्पो विदुषां मत" इति उज्ज्वलपक्षे हे यदुषडङ्घ्र! पुष्करमालासौरभाकृष्टानां बहूनां षडङ्घ्रीणां तत्सन्निधौ विद्यमानत्वात् बहवः षडङ्घ्रयो यस्य स तथा समानमन्यत् श्रुतिपक्षे ननु प्रकृतेः परमेश्वरपराधीनत्ववर्णनमनुपपन्नं परमविद्भिः सांख्यैरीश्वरमनङ्गीकृत्य त्रिगुणात्मिकायाः प्रधानापरसंज्ञायाः प्रकृतेः स्वतन्त्राया एव जगत्कारणत्वाभिधानात् न चाचेतनायाः प्रकृतेः स्वतन्त्राया जगत्कारणत्वमनुपपन्नं तदैक्षतेत्यादिश्रुतौ जगत्कारणस्येक्षितृत्वश्रवणादिति वाच्यम् अचेतनेऽपि प्रधाने चेतनवदुपचारात् दृष्टो ह्यचेतनेऽपि कूले कूलं पिपतिषतीति चेतनवदुपचारः यथा लोके चेतनो देवदत्तादिः स्नात्वा भुक्त्वा चापराह्णे रम्यं नगरं प्राप्स्यामीत्यालोच्यानन्तरं नियमेन तथैव प्रवर्तते तथा प्रधानस्यापि महदाद्याकारेण नियमेन प्रवर्तनात्तत्र चेतनवदुपचारः तत्तेज ऐक्षत ता आप ऐक्षन्तेतिवत् जहात्येनामित्यादिश्रुतयस्तु मुक्तजीवपरास्तस्मात्कथमुक्तमीश्वरः सर्गाद्यर्थं स्वशक्तिभूतां प्रकृतिमधितिष्ठति जहाति चेति चेत्तत्राह। किमिहेति। "श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च अधिष्ठाय मनश्चायं विषयानुपसेवत" इत्युक्तं मनः षष्ठानीन्द्रियाणि अङ्घ्रयो गमनागमनसाधनानि यस्यात्मनः स षडङ्घ्रिस्तस्य सम्बोधनं हे षडङ्घ्रे इह स्वस्वरूपभूतपरब्रह्मोपलब्धिसाधनाऽधिकारिशरीरे ऊनां न्यूनां जडात्मत्वादपरां "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परा"मिति भगवतोक्ता बहुस्वतन्त्रेयमित्यादिना पुनः पुनरुत्कृष्टत्वेन यद्गायसि तत्राप्यस्माकं श्रुतीनामग्रतः श्रुतिसिद्धान्तत्वेन तत्किं न किमपि तद्गानमयुक्तमिति यावत् इह श्रुतिमस्तकेषु जडत्वेन प्रतिपादितामिति वा तर्हि किं युक्तमिति चेत्तत्राहाधिपतिमिति। वासुदेवाधिपतिं प्रकृत्यधिष्ठातारं तत्सत्तास्फूर्तिप्रदत्वेन ततोऽपि पुरातनत्वात्पुराणम् वासुदेवः गृहाणाम् अयमर्थः स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति प्रकृतस्य जगत्कारणस्यात्मत्वेनोपदेशादनात्मभूतायाः प्रकृतेर्न स्वातन्त्र्येण जगत्कारणत्वं श्रुतिसिद्धम् उदाहृतदृष्टान्तेष्वपि तदधिष्ठितृत्वप्रयुक्तमेवेक्षितृत्वमतः प्रकृतिस्वातन्त्र्यवादस्य श्रुत्यनभिमतत्वात्तदनुसरणं त्वया न कार्यमिति यः सर्वकारणं भगवान्वासुदेवः स एव त्वं नान्योऽतोऽहमेव वासुदेव इति स्वात्मत्वेन तं गृहाणेति सम्बोधनाशयः यद्वा अधिपतौ मा प्रमा यस्य स तस्य सम्बोधनं हे अधिपतिम तथा च श्रुतिबहिर्भूतं मतमुपेक्ष्य सर्वानर्थहेतुमायातरणार्थं तदधीशविषयकप्रमामेव सम्पादय "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवद्वचनादिति भावः। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः सततं

**दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।**
**चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

कीर्तयन्तो मामित्युक्तत्वात्प्राप्त्युपायं श्रवणादिकमाह । विजयेति । "ब्रह्मह देवेभ्यो विजिग्ये ब्रह्मणो वा एतद्विजये महीयध्व" मित्यादि-श्रुत्या विशेषेण जयो यस्य स विजयः परमात्मा सयुजा सखायेति श्रुत्या तत्सखा जीवात्मा तस्य सम्बोधनं हे विजयसखेति नोऽस्माकं सखीनां "यतो वा इमानि भूतानि जायन्ते सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं सत्यं ज्ञानमनन्तं विज्ञानमानन्दं ब्रह्म अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ नान्योऽतोऽस्ति द्रष्टेत्याद्यानां तस्मिन् प्रत्यगभिन्ने परमात्मनि प्रसङ्गः समन्वयो यस्य तस्य सखीनामस्माकमिति वा विजयसखत्वात्तवेदमेवोचितमिति संबोधनाशयः तत्प्रसङ्गं विशिनष्टि । क्षपितेति कुत्सितं चरति अनर्थहेत्वहंकाराद्यात्मना परिणमत इति कुचरु अज्ञानं तस्माज्जातः सर्वोऽपि संसारः कुचरुजः क्षपितो नाशितः समूलः कुचरुजो येन सः एवं सम्मानिता उक्तसख्यस्तद्गानपरायणस्य तवेष्टं मोक्षं कल्पयन्ति प्रतिपादयन्ति "तरति शोकमात्मवित् ब्रह्मविदाप्नोति परं ब्रह्म वेद ब्रह्मैव भवती"त्यादिश्रुतेः वर्तमानापदेशेन मोक्षप्राप्तेः कालान्तरसाध्यत्वं वारयति "अत्र ब्रह्म समश्नुते विमुक्तश्च विमुच्यते ब्रह्मैव सन् ब्रह्माप्येती" त्यादिश्रुतेः ॥ १४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काश्चिच्छ्रुततत्त्वा आहुः । सकृदिति । भवादृक् यथा त्वं सुमनसः पीतमधूनि पुष्पाणि त्यजसि तद्वत्प्रियवस्तुत्यागित्वात्त्वत्समः मोहिनीमधरसुधां नः सकृत्पाययित्वा बतेति खेदे सद्यः अस्मान् तत्यजे नु वितर्के अपि अहो पद्मा श्रीः तत्पादपद्मं कथं परिचरति अन्या आहुः उत्तमश्लोकस्य उत्तमकीर्तेः जल्पैर्मनोहरैर्वचनैः हृतचेताः मोहितचित्ता परिचरतीति ॥ १३ ॥

भ्रमरशब्दं श्रीकृष्णगुणगीतं कल्पयित्वा अन्या आहुः । किमिहेति हे षडङ्घ्रे ! पुराणं पुरातनं बहुशोऽनुभूतं यदूनामधिपतिं कृष्णम् अगृहाणां वनचरीणां नोऽस्माकमग्रतोऽग्रे किङ्किमर्थं त्वं बहु गायसि विजयसखस्य अर्जुनमित्रस्य सखीनां पुरवासिनीनामग्रतस्तत्प्रसङ्गो गीयताम् ताः इष्टाः कृष्णस्य प्रियाः क्षपिता कुचरुक् यासां ताः ते इष्टं वाञ्छितं कल्पयन्ति दास्यन्ति ॥ १४ ॥

---

### भाषा टीका ।

वे श्रीकृष्ण तुमही सरीके हैं जैसे तुम लोगफूलों के रस को चूस कर छोड देते हो तैसे उनने भी सब के मोह करने वाली अपनी अधर सुधा का एक ही वखत पान करा कर हमको छोड दिया है पद्मवन में वास करने वाली लक्ष्मी जाने कैसे उनके चरण की सेवा करती है हां मालुम पडता है कि उन उत्तमश्लोक कृष्ण के मीठे वचनों से चित्त के हरण हो जाने से सेवा करती होगी ॥ १३ ॥

हे षट्पद ! भ्रमर हमतो विना घर द्वार वाली हैं हमारे आगे तू उन पुराने देखे सुने यदुपति की कीर्ति को क्या गाता है तू यहां से जाकर अर्जुन के सखा की सखियों के आगे गान कर तो वे कृष्ण की प्यारी हैं उनके स्तनोंका कामाग्नि रोग मिट गया है वे तेरे मनोरथ को पूरा करैंगी ॥ १४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

भो मातर्मैवं वोचस्त्वामनुस्मृत्यानङ्गविक्लवस्त्वां प्रसादयितुं मामादिष्टवानित्यत आह । दिवीति । दिवि भुवि रसातले च याः स्त्रियः स्युस्ताः का नाम दुरापा न काश्च तदित्यव्ययम् तस्येत्यर्थः । कपटेन रुचिरेण हासेन भ्रूविजृम्भो यस्य तस्य हे कपट इति वा किञ्च यस्य चरणरजः श्रीः सेवते तत्र वयं काः अपि च यद्यप्येवं तथापि कृपणपक्षे कृपणानुकम्पिनि पुंस्युत्तमश्लोकशब्दो भवतीति तथा कथनीयं त्वयेति भावः ॥ १५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

दिवि भुवि रसायां चेति । ऊर्ध्वमध्याधोलोकत्रय इत्यर्थः । चरणस्य रज उपास्त इति सुष्ठु नीचतया सेवोक्ता हि निश्चितं अन्यैस्तु व्याख्यातं यद्वा ननु भवत्य एव केवलं तन्नाद्रियन्ते सर्वत्र यावत्यो युवतयस्तावत्य एव तद्वशे वर्तन्ते इत्यत आह । दिवीति सर्वभुवनेषु काः स्त्रियः क्षुद्रस्त्रियोऽपि यास्तास्तद्दुरापाः स्युः किं वा याः काः स्त्रियः काश्चन स्त्रियः सर्वा इत्यर्थः । तस्य दुरापाः स्युः इत्यवहेलनं तत्र हेतुः कपटेनैव रुचिरो हासयुक्तो भ्रुवोर्विजृम्भो नर्तनं भ्रूविजृम्भो भ्रुकुटी वा यस्य तस्य इति स्त्रीजनप्रतारणमात्रचातुर्येण तस्य कुहकता ननु किमेवं रूपे सुन्दरीवृन्दवृन्दिष्ठा यदिन्दिरापि तत्पदारविन्दरजो वन्दते इति चेत्तत्राह । चरणेति । यस्य चरणरजो भूतिश्रीरुपास्ते तर्हि उपास्तान्नाम तत्र वयं काः किमस्माकमायातं न हि मद्विधानां मध्ये श्रीवदेकतमापीत्यर्थः इति गर्वेर्ष्ययोः सूचनम् अपि च कृपणानां पक्षः सहायो यस्तस्मिन्नेव उत्तमश्लोक शब्दो नाम ख्यातिर्वा भवति अतः कृपणानामुपेक्षया गानकारणयशोहानेस्तस्य गानमेव न युज्यत इति भावः यद्वा ननु उत्तमश्लोकशब्दाश्रयत्वादेव लोकोत्तरे तस्मिन्नुपेक्षा नोचितेत्यत आह । अपिचेति । कृपणपक्षेऽपि च कृपणो निष्ठुरो बद्धमुष्टिर्वा तेन स्वदर्शनादिसौख्यादानात् अदातृत्वं लक्ष्यते तत्पक्षेऽपि तद्विषयेऽपीत्यर्थः तस्मिन्नुत्तमश्लोक इति शब्दस्तद्विधैरेव स्तावकैः सेवकैः क्रियत इत्यर्थः इत्यसूयया तदाक्षेपः ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उन्मादस्वाभाव्यादकस्मादानो मानभङ्गीं परित्यज्य कलहान्तरिताभङ्ग्याह । दिवीति । ऊर्ध्वमध्याधोलोकत्रय इत्यर्थः । कपटत्वं सच्छलत्वमन्यजनवञ्चनाय चरणस्य रज उपास्त इति ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्तु नीचतया सेवोक्ता हि निश्चितम् अन्यत्तैः तत्र तस्य दुरापा इति सम्बन्धविवक्षया षष्ठी । अथवा मान एवानुवर्त्तनीयः तथा हि नन्वेवं चेत्तर्हि तत्सम्बन्धे प्रथमत एव कथं न सावधाना जाताः स्थ इत्याशङ्क्य स्वदोषं परिहरन्ती मायया ग्रह इव गृहीतवानस्मानचलाजनानधुनाप्यसौ परित्यजतादिति सदैन्य-मिव सेर्ष्यं संदिशति । दिवीति । कपटेन माययैवापातरुचिरौ हासभ्रूविजृम्भौ यस्य तस्य अन्यत् पूर्ववत् । अत उत्तमः श्लोकत्वेऽपि कटाक्ष एव व्यञ्जितः । यद्वा । दिवि भुवीत्यादिना तस्य प्रभावातुयादं सामयं ज्ञात्वा तथापि शेषं तदवज्ञत्वं सूचयन्ती सदैन्यमिव सेर्ष्येण गर्वेण सोल्लुण्ठमाह । का दुरापा इति । अपि तु यत्राकस्तुमिष्यन्ते तत्रैव सुलभाः । लक्ष्मीस्तु तत्र तत्रैवानुगच्छन्ती चरणरज उपास्ते तत्र वयं का इति । अपिचेति कृपणा एव तत्रोत्तमश्लोकत्वं जल्पन्ति नतु मादृशाः कृपणाँ इति एवमाक्षेपः ॥ १५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रसातले च ताः कास्तद्दुरापाः न कादिचदपीत्यर्थः कपटरुचि-रहासभ्रूविजृम्भस्य यस्येत्यन्वयः कृपणः कदर्यः लुब्धकोऽपि तस्य पक्षे इत्यर्थः ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु यदि पौरस्त्रियः तद्वशङ्गतास्तदालिङ्गेन क्षपितकुच-रुजो भवेयुस्तदा मदिष्टं कल्पयेयुस्तस्य ता एव दुष्प्रापा इत्य-त्राह । दिवीति । दिवि स्वर्गे भुवि रसायां पाताले च याः स्त्रियः स्युस्तासां मध्ये काः स्त्रियः तदिति पृथक् पदमव्ययं तस्य श्रीकृष्णस्य दुरापाः दुष्प्रापाः सर्वाः अपि स्त्रियः सुलभा एवे-त्यर्थः । तत्र हेतुं ब्रुवन्ती विशिनष्टि । कपटो रुचिरः सुन्दरश्च हासो भ्रूविक्षेपश्च यस्य तस्यात एव यस्य भगवतश्चरण-रेणुं भूतिर्लक्ष्मीरप्युपास्ते कपटरुचिरहासभ्रूविजृम्भाभ्यां च तद्वशगा तच्चरणरजः सेवत इत्यर्थः । वयन्तु विचक्षणाः ताभ्यां न तद्वशगा इति भावः । तदाह । वयं का इति । तद्वशगानां मध्ये न काश्चिदित्यर्थः । किञ्च कृपणपक्षे कृपणानां दीनानां जनानां पक्षे कोट्यामेव ह्युत्तमश्लोकशब्दः उत्तमश्लोकप्रसङ्गो-चरः शब्दो गेय इति शेषः । नत्वदीनपक्षे ऽस्मत्समुदाये इति भावः । एवं भ्रमणशीलं भ्रमरं स्वपादमूले चरन्तमात्मानं प्रसाद-यितुमिवाळस्य तं प्रत्युक्तम् ॥ १५ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु प्रगल्भा चेत्वमेवं प्रलपनं विना । मत्तकाशिन्या लज्जाभा-वात्कृष्ण आगमिष्यतीति शङ्का माभूदित्याह । दिवीति । स्वर्गा-दिषु विद्यमाना देवस्त्रियः तस्य कृष्णस्य दुरापाः दुष्प्रापाः स्युः किन्तु सुप्रापा एव कर्णेण मन्त्रमाह । कपटेति । याः स्त्रियः कपटश्च रुचिरश्च हासयुक्तो यो भ्रूविजृम्भः भ्रूभङ्गस्तस्य विषया लक्ष्मी-भूताः स्युः अध्यात्मकमानन्दं पटयति गमयतीति कपटां रुचिं स्पृहां राति ददातीति । कपटे रुचिरः हे कपटेति वा तत्र हेतुमाह । चरणेति । भूतिर्लक्ष्मीर्यस्य हरेश्चरणरज उपास्ते तदनुग्रहार्थमिति शेषः । ननु भवत्योऽपि तथा कुर्वन्त्वित्य-त्राह । वयमिति । तत्र वयं वनचारिण्यः काः स्याम अपि च पुनरपि शृणु कृपणस्य किम्पचानस्यास्मद्विधस्य जनस्य पक्षे प्रान्तिके उत्तमश्लोकशब्द एव कर्णविषयो नतु वाच्योऽर्थश्चक्षुर्विषय इत्यर्थः । यद्वा उत्तमश्लोकशब्दः कृपणपक्षे दीनपक्षपाती श्रुतः सोऽप्यस्मद्विषयो नाभूदित्यर्थः ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

उन्मादस्वाभाव्यादकस्मान्मानभङ्गीं परित्यज्य कलहान्तरिताभ-ङ्ग्याह । दिवीति । कपटत्वं सच्छलत्वम् अन्यजनवञ्चनाय सोल्लु-ण्ठमेवेदं वचनम् ॥ १५ ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रार्थनां वारयितुं तस्य भगवतः स्त्रीसौलभ्यमाह । दिवीति । लोकत्रये याः स्त्रियः तासां भगवान् दुरापः ननु भगवतस्ताः स्त्रियो हि त्रिविधास्तत्र लोके तास्तु भगवतः सुलभा एव तत्र हेतुं वक्ष्यति चकाराद्ब्रह्माण्डाद्बहिः स्थिता इति स्त्रीणां हि रमणमपेक्ष्यते नाना विलासैर्हि रमणं देवस्त्रीणां प्रत्येक-नियततया रमणं भूस्त्रीणां विलासतया च रमणं काश्चिद्भूस्त्रीणां परं निरोधस्तुल्यः अतिगुप्ततया रमणं रसास्त्रीणां भगवति पूर्वश्लोकै-रुक्तप्रकारेण त्रिविधत्वमप्यस्ति ! प्राकट्यविलासरूपः प्रथमं निरू-पितः विरुद्धतया द्वितीये अतिप्रयासेन अतिगुप्ततया सुभद्रा-हरणवत् विजयसखित्वेन रमणनिरूपणात् गुप्ततया द्वितीये अति-प्रयासेन रमरमणमुक्तं किञ्च सुतरां स्त्रियः येन धर्मेण वशे भवन्ति स धर्मो भगवति वर्त्तत इत्याह । कपटेति । कपटपूर्वकं यो रुचिरो हासः तेन भ्रूविजृम्भः स्थलाद्रिसर्वसूचनपूर्वकं रत्यर्थमाकारण-रूपः स यस्य वर्तते धर्मस्यैव वा याः स्त्रियो भवेयुः तदधीनास्ताः यदि काश्चिन् यथा न प्रकटी भवति तथा गोप्यं विधाय तथा समर्थः यथैव तासां मनःप्रीतिर्भवति तथा रमणं कुर्वन् सर्व-सामग्रीं सम्पाद्य समाकारयति चेन्न कापि स्त्री दुर्लभा भवति अत एव क्वचित् श्लोकः "स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थ-यिता नरः । तेन नारद ! नारीणां सतीत्वमुपजायते" इति अत एता-वत्यर्थे कृते प्रार्थना व्यर्था अकृतेऽपि व्यर्थेति उभयथापि प्रार्थना न कर्तव्येति भावः । किञ्च एतदस्माभिर्दृष्टोपायत्वेन निरूपितम् अलौकिकोपाये तु किमपि न कर्त्तव्यमित्याह । चरणरज उपास्त इति । सर्वैरेवार्थार्थिभिः सेव्यमाना विभूतिर्लक्ष्मीः यस्य स्वतः सामर्थ्यात् वस्तुमाहात्म्याद्वा चरणरज उपास्ते अत्यादरेण दासीत्वं प्रार्थयते तत्रैवं विधेऽर्थे च वयं काः तस्या कोट्यंशभूताः तस्मादस्मान्प्रति न किञ्चिदेतावत्कर्त्तव्यं किञ्च एतदप्यस्माभि-र्विचारेणोच्यते वस्तुतस्तु भगवति विचारोऽपि न कर्त्तव्य इत्याह । अपिचेति । उत्तमश्लोकशब्दः कृपणपक्षे सति भवतीति नान्यथा भगवांश्च सर्वलोकप्रसिद्धः उत्तमश्लोक इति वयमतीव दीनाः अस्म-त्पक्षपातं करिष्यत्येव अन्यथा कथमुत्तमश्लोकजल्पो भवेत् युक्तश्चायमर्थः तस्मात्प्रमाणबलेन प्रमेयबलेन लोकप्रसिद्ध्या भगवान् दीनानुकम्पीति यथैवास्माकं युक्तं तथैव करिष्यति न

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

दूतोऽपेक्षते नापि वचनानीति निर्गुणगोपिकाया वचनं तद्भावापन्नाया वा एतत्तामसप्रकारेणं तमोरजःसत्त्वानि गुणतीतश्च प्रकारो निरूपितः अतः परं राजसप्रकारेण ततोऽग्रे सात्त्विकप्रकारेण चोभयत्र त्रैविध्यं निरूपयिष्यति। रजस्तमःसत्त्वानां तमोरजःसत्त्वानां च क्रमः श्लोकानां ज्ञातव्यः ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु भोः कृष्णप्रेयसीशिरोमणे तत्र स्थितः स रात्रिन्दिवमेव त्वां ध्यायन् कामशरार्दितः खिद्यति। त्वञ्चेत् प्रसीदसि तदैव तस्य निस्तार इति तत्र सासूयमाह। दिवीत्यादि। अयमर्थः। कृष्णस्य स्त्रीभिर्विना कालो न यातीत्यहं सुष्ठु जानामि तत्र यदि मथुरायां स्त्रियो न मिलन्ति तदा सोऽस्मान् ध्यायतु प्रसादयतु तत्र नेतुं तादृशं दूतञ्च प्रस्थापयतु। न च गोपजातिं तं पुरस्त्रियः क्षत्रियजातयः कथमङ्गीकरिष्यन्तीति वाच्यम्। यतो दिवि भुवीति। तदित्यव्ययं तस्य का दुरापाः यदि स स्वर्गे गच्छेत् तदा देव्योऽपि रसायां रसातलादिषु नागपत्न्योऽपि स्वस्वपतींस्त्यक्त्वा तमागच्छेयुर्मथुराङ्गनानां का वार्त्तेति भावः। न च तत्तदङ्गनाप्राप्तौ तस्य किञ्चित् पणादिकमपेक्षितव्यमित्याह। कपटेनापि रुचिरौ सर्वासां मनोहरौ भ्रूविजृम्भहासौ यस्य तथा भूतस्यैव तस्य या देव्यादयः स्युः। नतु स्वस्वपतीनामित्यर्थः। सकपटहासमूल्येनैव ताः स्वयमेव क्रीता भूत्वा स्वस्वपतींस्तास्त्यजन्ति। कपटपदेन कृष्णस्तु ताः ताः सकृदेव भुक्त्वा त्यजति नवप्रियत्वादिति भावः। देव्यादयो दूरे वर्त्तन्तां भूतिर्लक्ष्मीर्नारायणस्यापि स्त्री चरणरज उपास्ते तदङ्गसङ्गार्थमिति नागपत्नीवाक्यं वयं पौर्णमासीमुखाद् श्रौष्म। अतो वयं काः कस्यां गणनायां तिष्ठामो यतो मानुष्यस्तत्रापि गोप्यस्तत्रापि वृन्दावनीया इति भावः। इदं दैन्यमयवाक्यमपि समस्तकाकुधूननस्वरविशेषेण गर्वगर्भितामीर्ष्यामेव व्यनक्ति। सा चेर्ष्या स्वेषां लक्ष्म्यादितोऽपि प्रेमाधिक्यं रूपसावर्ण्याधिक्यञ्चानुव्यनक्ति अपि च। किञ्च उत्तमःश्लोकशब्दो हि कृपणपक्ष एव सन्ततं दीनहीनजनान् यो दयते स ह्युत्तमःश्लोक उच्यते कृष्णे तु तल्लक्षणाभावान्मिथ्यैवोत्तमःश्लोकतेत्यर्थः यद्यस्माद्विधान् कृपणजनान् स नादुःखयिष्यत्तदा तस्मिन् कथमुत्तमःश्लोकशब्दवाच्यत्वमधास्यदिति वा आक्षेपध्वनिः। अत्र पूर्वार्द्धे दिवि भुवीत्यादिना कुहकताख्यानं चरणरज इति तृतीय चरणे गर्वगर्भिता ईर्ष्या। अपिचेति चतुर्थपादे सासूय आक्षेप इत्ययमुज्जल्पः। यदुक्तं।

> हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया।
> सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईर्यते ॥

इति ॥ १५ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

ननु भो मानदचातुर्यसागरभूते मथुराख्ये पुरे क्षत्रियाङ्गनानां स्वस्वान्तःपुरेऽवस्थितानां दर्शनस्यापि दुर्लभत्वाद्भगवतश्च त्वद्दासकाचित्तत्वेन त्वां चिन्तयतस्त्वद्वियोगेन विह्वलतया वर्तमानत्वान्नासौ यथोक्तोपालम्भविषयोऽतः प्रसीद त्वदनुस्मरणोत्थमन्मथाविष्टपरवशो न तव प्रियेण त्वत्प्रसादार्थमेवाहं प्रेषितस्त्वत्प्रसादमप्याकर्ण्य तस्य सुखं भविष्यत्यतस्तदुपरि करुणां कुर्वित्याशङ्क्य करमर्दनाशिरःकम्पपूर्वकं सेर्ष्यमाह। दिवीति। दिवि स्वर्लोकादारभ्य ब्रह्मलोकान्तेषु लोकेषु भुवि सभुवर्लोके रसायां सप्तसु पातालेषु चकाराद्ब्रह्माण्डाद्बहिरपि या स्त्रियस्ताः का नाम तत् तस्य दुरापाः दुष्प्रापा न काश्चनापि तथा च स्वर्लोकादौ गतस्यात्रैव वा तदाकर्षणपरस्य स्त्रीमात्रमपि यदा न दुष्प्रापं तदा मधुपुरस्त्रीणां का कथेति भावः। यद्वा तत्तल्लोकस्थिता दुष्प्रापा अपि याः स्त्रियस्ता अपि तस्य स्युः नतु स्वपतीनां यतस्तद्वशीकरणसामग्री तत्सन्निधौ पुष्कला वर्तत इत्याशयेन तं विशिनष्टि। कपटेति। कपटेन रुचिरेण चारुणा हासेन च भ्रूविजृम्भो यस्य कपटेन रुचिरौ हासभ्रूविजृम्भौ यस्येति वा कपटपूर्वकं यो रुचिरो हासस्तेन भ्रूविजृम्भः स्थानादिसूचनपूर्वकरत्यर्थमाकारणरूपो यस्येति च तथा चैवंविधस्य न कापि स्त्री दुर्लभेत्यर्थः। तदुक्तं "स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः। तेन नारद! नारीणां सतीत्वमुपजायते" इति किं चालौकिकसामग्री तस्य निकटे या वर्तते तत्सत्त्वे लौकिकसामग्र्यपेक्षैव नास्तीत्याशयेनाह। चरणेति। सर्वैरर्थार्थिभिरर्थ्यमाना विभूतिर्लक्ष्मीः यस्य स्वतः सामर्थ्याद्वस्तुमाहात्म्याद्वा चरणरज उपास्ते परमादरेण किङ्करीवत्सेवते यद्वा अन्यासां स्त्रीणां का कथा परमसतीत्वेन प्रसिद्धा नारायणाङ्कविभूतिरपि तच्चरणरज उपास्त इत्याह। चरणेति। तत्रैवंविधस्य तस्य निकटे वयं का विभूतिकोटिकोट्यंशादपि न्यूना व्रजस्त्रियः कस्यां गणनायां स्थातुं योग्याः अत एव वयं तेन निकृष्टाः एवं सति किमस्मास्वेवं कपटं कर्तुमागतोऽसीत्याशयेन हे कपटेति सम्बोधनम् एवं स्वस्यायोग्यत्वमापाद्य परिहरति अपि चेति। यद्यप्येवं तथापि कृपणपक्षपातिनि दीनानुकम्पावति पुरुषे उत्तमश्लोकशब्दः प्रवर्तते इति प्रसिद्धं तथा चोत्तमश्लोकशब्दवाच्यस्य तस्य दीनानामस्माकं पक्षपात उचितो यथा चैवं भवेत्तथा त्वयास्मत्प्रियो वक्तव्य इति भावः। यद्वा यद्यप्येवं तथाप्युत्तमश्लोकशब्दः तस्मिन्मिथ्यैव प्रयुज्यते कृपणपक्षपातित्वरूपतत्प्रवृत्तिनिमित्ताभावात् तथा च तच्छब्दयाथार्थ्ये च यदि तस्य प्रार्थ्ये तर्ह्यस्मद्विधदीनजना दुःखसागरादुद्धर्तव्या इति भावः। अनया वक्रोक्त्या विभूतिसहितस्योपेक्षया स्वस्थानमत्यजन्त्यो वयमेवोत्तमा इति ध्वनयति यद्वा यथा वयं तस्यागण्यास्तथाऽस्माकं सोऽप्यगणनीयः कार्पण्याभावादित्याशयेनाहापिचेति कृपणा एव तस्योत्तमश्लोकत्वं जल्पन्ति तदर्थमनुसन्धाय तदधीनाश्च भवन्ति नत्वस्माद्वयो निःस्पृहस्य तृणं जगदिति न्यायादित्यर्थः। अत्रोज्जल्पस्तदुक्तं "हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया। सासूयश्च तदाक्षेपो धीरैरुज्जल्प इष्यत" इति इदं पद्यमुद्धवपक्षेऽपि समानं श्रुतिपक्षे ननु ब्रह्मणोऽपि श्रुतिप्रतिपाद्यत्वमसङ्गतं प्रत्यक्षादिविषयपरिनिष्ठितवस्तुप्रतिपादने हेयोपादेयरहितप्रयोजनाभावात् अत एव जैमिनिना "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां" मित्याशङ्क्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु" रित्यर्थवादवाक्यानां विधिस्तावकत्वेनार्थवत्त्वमुक्तं मन्त्राणां वेपे त्वादीनां क्रिया तत्साधनाभिधायकत्वेन तत्त्वमुक्तं तस्मादुपनिषदामपि कर्मापेक्षितकर्तृस्वरूपदेवतादि-

**विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात्।**
**स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ॥ १६ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

प्रकाशनेन क्रियाविधिशेपत्वमास्थेयमिति चेत्तत्राह । दिवीति-स्वर्गादौ काः आनन्दघनब्रह्मसम्बन्धिन्यः याः स्त्रियः पतिव्रता-स्त्रीवत्स्वार्थाविनाभूताः याः स्युः तत् ताः कपटरुचिरहा-सभ्रूविजृम्भस्य कर्मकर्तुर्दुरापाः प्रतिपादकत्वेन प्राप्तुमशक्याः रुचिरौ हासभ्रूविजृम्भौ मायापरमेष्ठिधिष्ण्ये यस्य कपटश्चासौ रुचिरहासभ्रूविजृम्भश्च "तस्य हासो जनोन्मादकरी च माया तद्-भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्" इत्युक्तत्वात् हासभ्रूविजृम्भाभ्यां मायासत्यलोकौ गृह्येते भ्रूविजृम्भ इत्युपलक्षणं लोकान्तराणा-मपि रुचिरौ स्त्र्यादिहासभ्रूविजृम्भौ यस्येति वा तथा च विचि-त्रवासनाक्रान्तत्वान्तस्य दुःखासत्याद्यात्मके कार्यकारणभूते प्रपञ्चे सुखसत्याद्यात्मकत्वभ्रान्तिमतः स्त्र्यादिविषयासक्तचि-त्तस्य कर्मकर्तुः प्रतिपादन उपनिषदां नास्त्युपयोगः "सदेव सोम्येद-मग्र आसीदात्मा वा इदमेक एवाग्र आसीत् तदेतद्ब्रह्मापूर्वमन-परमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ब्रह्मैवेदममृतं पुरस्तात् अचक्षुरश्रोत्रम् अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिकदम्बस्य प्रत्य-गभिन्ने ब्रह्मणि समन्वितस्यान्यपरत्वमुपचरितार्थत्वं कल्प-यितुमिन्द्रादेरप्यसमर्थत्वात् यद्यपि परिनिष्ठितं ब्रह्म तथापि तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्या प्रत्यक्षाद्यविषयत्वा-त्तत्त्वमसीति ब्रह्मात्मभावः शास्त्रमन्तरेण नावगम्यते नच हेयो-पादेयरहितत्वादुपदेशानर्थक्यं शङ्क्यं हेयोपादेयविधुरब्रह्मसाक्षा-त्कारादेव समस्तक्लेशविनिवृत्त्या पुरुषार्थसिद्धेः ननु जातिगुणकर्म-स्वरूपसंज्ञासम्बन्धानां शब्दप्रवृत्तिनिमित्तानां ब्रह्मण्यभावात् कथं तस्य युष्मत्प्रतिपाद्यत्वमित्याशङ्क्यैवं चेद्यदा तव ज्ञानं तर्हि परम-सिद्धान्तं शृण्वित्याशयेनाह । चरणेति । तथाचानन्तकोटिब्रह्माण्ड-रचनायां समर्था विभूतिः सकलैश्वर्यवती महामायाशक्तिरपि यच्च स्पृशति तत्र निर्गुणे ब्रह्मणि वयं कास्तद्द्वयमपि दूरत एव तत्स्व-रूपं लक्षयामः तथा च श्रुतयः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । को अद्धा वेद क इह प्रावोच" दित्याद्या इति भावः । नन्वेवं तर्हि किमिति महता प्रयासेन श्रुतिप्रतिपाद्यत्वं ब्रह्मणः स्थापितमिति चेत्तत्राहापि चेति । यद्यप्येवं तथापि उत्तमश्लो-कस्य प्रतिपादकः शब्दरूपः श्रुतिकदम्बः कृपणस्याज्ञस्या-सम्भावनाविपरीतभावनाविष्टचित्तस्य जीवस्य पक्षे तत्पक्षपाती तदुपकारायेति यावत् तथा च श्रुतिः "आत्मानमविदित्वा योऽस्मा-ल्लोकात्प्रैति स कृपणः तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं स उपसन्नाय प्राह" इत्याद्या ॥ १५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु युष्मान् प्रसादयितुं प्रेषितोऽस्मि श्रीकृष्णेन इत्यत आहुः । दिवीति। तदित्यव्ययं पृथक्पदम्। हे कपट ! तत्तस्य रुचिरः सुन्दरः हासः भ्रूविजृम्भश्च यस्य तथाभूतस्य दिवि भुवि रसायां रसातले याः स्त्रियः स्युः ताः का दुरापा न काश्चन किञ्च यस्य चर-णरजः भूतिः श्रीरप्युपास्ते तत्र वयं काः सर्वथा तस्याऽनीप्सिता एवेत्यर्थः । किञ्च कृपणानां भगवतोऽनीप्सितानामस्माकं पक्षे उत्तमश्लोकस्य पुण्यकीर्तेः श्रीकृष्णस्य शब्दः संदेशशब्दोऽपि दुराप इत्यर्थः । दुरापशब्दस्य वचनव्यत्ययेनान्वयः ॥ १५ ॥

---

### भाषा टीका।

उन कृष्ण के कपट की हांसी मनोहर है भौं का चलाना उत्तम है तो उनके लिये स्वर्ग मर्त्य पाताल तीनों लोकों में कौन स्त्री ऐसी है कि जो न मिलसकेगी महालक्ष्मी भी जिनके चरण के रजकी उपासना करती है उनके लिये हम कौनसी हैं तो भी दुखियों पर दया करने ही से उत्तम श्लोक नाम होता है यह उनसे तुम कहदेना ॥ १५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

पादमूले प्रविशन्तं क्षमापयिष्यन्तमिव मत्वाह । विसृजेति । शिरसि न्यस्तं पादं विसृज तथाप्यमुञ्चन्तमाह । वेद्मीति । मुकुन्दादभ्येत्य ततः शिक्षितस्त्वमित्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयविदुषः प्रार्थनाचतुरस्य ते तव सर्वमहं वेद्मि मुकुन्दवत्त्वमप्यविश्वसनीय इति भावः । ननु तेन किमपराद्धं तत्राह । स्वकृत इति । तदर्थमेव विसृष्टा अपत्यपत्यन्यलोकाः अप-त्यानि पतयश्चेतीह लोकेऽन्यलोके धर्मसाध्याश्च याभिस्ता नः अकृ-तचेताः असंयतचित्तो यो व्यसृजदस्मिन्किन्नु सन्धातव्यमिति ॥१६॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

अहमिति अन्या नजानातु नाम अहन्तु विचक्षणा जानाम्येवेत्यर्थः। दौत्यैर्दूतकृत्यैश्चाटुकारैः यद्वा चाटुकारैर्दौत्यैश्च पादग्रहणादिभिः यद्वा मुकुन्दात्तत्सकाशात् दूतत्वैरभ्येत्य वहुत्वं गौरवात् तत्र च मुक्ति कुत्सितामपि ददातीति लोकवञ्चनया धूर्तत्वमभिप्रेतं तदीयत्वेन पुनश्च दूतस्य धूर्तस्वभावत्वेन परमधूर्ततोक्ता श्लेषेण मुखे कुन्दतुल्या दन्ता यस्येति सौन्दर्य्यमेवास्ति न च विचार इत्यर्थः अन्यत्तैर्व्याख्यातं यद्वा कमलबुद्ध्या पादोपरि पतितं मृदु रुवन्तं भ्रमरमवेक्ष्य भो देवि मारोषं कार्षीः सकृदपि मे विज्ञप्तिं कृपया शृण्विति याचमानमिव तं मत्वाह।विसृजेति। त्वां मुकुन्दश्च युवयोः शीलञ्च सर्वमहं वेद्मि तस्मान्मे पादं ते स्वदीयैरसाधारणैश्चाटुकारैः सह विसृज मत्पादं निजचाटुकारांश्च त्यजेत्यर्थः। कथम्भूतैः अनुन-यविदुषो मुकुन्दादभ्येत्य दौत्यैः दूतकृत्यैः । ननु स्वामिनि तेन प्रेष्ठेन सह विग्रहेच्छयालं सकृदपराधं क्षान्त्वा मया मीलनं सन्धिरेव कर्तुं युज्यते इति तत्राह । स्वेति । विसृष्टाः पतयश्चापत्यानि च अन्ये च गृहादयः लोकाश्च सर्वे ऐहिकामुष्मिकसुखभोगसहायाः यद्वा किञ्चिद्विशेषनिर्देशेन अयं परश्चेति लोको याभिस्ताः अकृत-चेताः न विद्यते कृते चेतो यस्य सः अस्माकं त्वस्य च कृत-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

मननुसन्दधानः । अकृतज्ञ इत्यर्थः यद्वा न कृतमस्मासु चेतः एता अनन्यगतय इति मनोऽपि येन सः यद्वा स्वकृते स्वार्थमस्मान् विसृष्टापत्यपत्यन्यलोका अकृत चकार इताश्च प्राप्तास्तु व्यसृजत् तु अहो अस्मिन् ईदृशेऽति कठोरे शठवरे किं सन्धेयं संयोज्यम् अपि तु नैवेत्यर्थः इत्याक्रोशः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहमित्यन्या न जानन्तु नाम अहं तु विचक्षणा जानाम्येवेत्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैर्दूत्यैरिति क्वचित्कं मुकुन्दादित्यस्माकं सर्वासां गृहादिसर्वपरित्यागं ददातीति तथानाम्नः इत्यनेन धूर्त्तत्वं कृतत्वञ्चाभिप्रेतं तदीयत्वेन दूतस्य च धूर्त्तस्वभावत्वेन तस्य तु परमाविश्वसनीयत्वमुक्तम् अन्यत्तैः । यद्वा कमलबुद्ध्या पुनरुपसृत्य पादोपरि तं मृदु रुवन्तं भ्रमरमवेक्ष्य भो देवि मा रोषं कार्षीः सकृदपि मे विज्ञप्तिं कृपया शृण्विति याचमानामिव च तं मत्वाह विसृजेति । तत्र सोल्लुण्ठमाह त्वां मुकुन्दञ्च युवयोः शीलञ्च सर्वमहं वेद्मि तस्मान्मे पादं ते त्वदीयैरसाधारणैश्चाटुकारैः सह विसृज मत्पादं निजचाटुकारांश्च युगपत्त्यज इत्यर्थः । कथम्भूतैः । अनुनयविदुषो मुकुन्दादभ्येत्य कृतैर्दूतकृत्यैः । ननु स्वामिनि तेन प्रेष्ठेन सह विग्रहेणालं सकृदपराधं क्षान्त्वा मया मीतेन सन्धिरेव कर्त्तुं युज्यत इति तत्राह । स्वेति । विसृष्टाः पतयश्चापत्यानि चान्ये च गृहादयो लोकाश्च सर्वे ऐहिकामुष्मिकसुखभोगसहायाः । यद्वा । किं विशेषेणायं परश्चेति लोको याभिस्ताः । अकृतचेताः न विद्यते कृते उपकृते चेतो यस्य सः अकृतज्ञ इत्यर्थः । यद्वा । न कृतमस्मासु चेतः एता अनन्यगतय इति मनोऽपि येन सः अथवा स्वकृते स्वार्थम् अस्मान् विसृष्टापत्यपत्यन्यलोका अकृत अकार्षीत् इताश्च प्राप्तास्तु व्यसृजत् । तु अहो ईदृशेऽस्मिन् कठोरे शठवरे किं सन्धेयं सन्धानुमर्हमपि तु नैवेत्यर्थः इत्याक्षेपः ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शिरसि पादं त्यच्छिरसि निहितं पादम् अकृतचेतुः अकृतज्ञः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ स्वशिरसि भ्रममाणं तं श्रोत्रान्तःपांशु प्रियोक्तीरभिधातुं चरन्तमिवाळक्ष्याह । विसृजेति । शिरसि पादं न्यस्तमिति शेषः । विसृज पादेन मच्छिरो मास्पृशेत्यर्थः । तथाप्यमुञ्चन्तमाह । वेद्मीति । मुकुन्दादभ्येत्य ततः शिक्षितैरित्यर्थः । दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियवचनैश्चालमनुनयविदुषः प्रार्थनाचतुरस्य ते वेद्मि सर्वं विचक्षितं वेद्मीत्यर्थः । मुकुन्दवस्त्वमपि न विश्वसनीय इति भावः । ननु तेन किमपराद्धं तत्राह । स्वकृत इति । स्वकृते तदर्थमेव विसृष्टान्यपत्यानि पतयोऽन्ये लोका धर्मसाध्या याभिस्ता अस्मान् व्यसृजदकृतज्ञोऽन्यो महानपराध इति भावः । अतो ऽसावकृतचेताः अकृतज्ञः कृतघ्न इति यावत् अतोऽस्मिन् किंतु सन्धेयं सन्धिना साध्यं किमस्तीत्यर्थः । नहि कृतघ्नेन सन्धिरुचितः नवा कृतोऽपीष्टसाधनमिति भावः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रणतकृष्णशिरःस्थितस्वपादस्मरणातिरेकविवशा स्वपादमुद्धवशिरसि स्थितं मत्वा वक्ति । विसृजेति । तव शिरसि स्थितं मम पादं विसृज मुञ्च अहं त्वां वेद्मि अनुनयसारैः सान्त्वनविपर्ययैश्चाटुकारैरापातरमणीयैः प्रियवचनैः अलं पर्याप्तं किञ्च दौत्ये स्थितस्त्वं मुकुन्दं याहि किमित्येवं कोपगर्भवचनं वदसीति तत्राह । स्वकृत इति । स्वकृते स्वनिमित्तं कृष्णार्थमित्यर्थः विसृष्टापत्यपत्यासलोकाः त्यक्तपुत्रभर्तृबन्धुजनाः अस्मानिह वने व्यसृजदिति यदतोऽकृतचेताः अकृतज्ञः कृतघ्न इत्यर्थः । इतोऽहं त्वां सन्दधामीति तत्राह । किन्न्विति । अस्य कृष्णस्यानुसन्धेयं किन्तु न किमपीत्यन्वयः अनुनयसारैः श्लेषोक्त्या—

उमाप्रणामसङ्क्रान्तचरणालक्तकः शशी ।
सन्ध्यारुण इवाभाति यस्य पायात्स वः शिव ॥ इति

वचनात् ईश्वरोऽप्यज्ञजनमोहनार्थमेवं विधलीलो जयतीति ॥ १६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु नास्माभिर्ज्ञाताः भवत्यः क्रुद्धाः इति उदासीना इति वा तथा सति दौत्येन नागच्छेम अधुना तु समागताः किञ्चित्कर्तव्यमिति प्रार्थनया भगवता सह सन्धिः कर्तव्य इति ससाष्टाङ्गप्रणामं भ्रमरवञ्चयो वा करोतीत्यभिप्रेत्याह । विसृजेति । शिरसि बलात् स्थापितं पादं विसृज नह्येतावता उपपत्त्यभावात् अस्माभिरङ्गीकर्तुं शक्यते अतः वृथैव पादग्रहणनिर्बन्धः । ननु यथैव भवतीभिर्वक्तव्यं तथैव करिष्याम इति कथं निषेध इति चेत् तत्राह । वेदम्यहमिति । इममर्थं करिष्यति भगवान् न वेतीममर्थमहं वेद्मि सन्दिग्धे हि वचनेन बोधनम् अस्माकं तु विपरीतनिश्चय एव ननु कश्चित्स्वापमानं करोति अनभिप्रेत्य कार्यं तस्मात् न निरादरणं कर्तव्यमित्याशङ्क्याह । चाटुकारैरनुनयविदुष इति । अयं प्रकारस्तु स्वकपोलकल्पितः ननु भगवताप्युक्तः यतः स मुकुन्दो मोक्षदाता मारयिष्यत्येवेति भावः । ननु जीवतीनामस्माकं सुखं करिष्यति ततश्च त्वमागतो ऽस्मदभिप्रेतं करिष्यामीति कथं वदस्यतः स्वामिविरुद्धवाक्यत्वाद्दूतस्त्वं वञ्चक एव । ननु तदकथनं मया कृतः शिक्षितमिति चेत्तत्राह । अनुनयविदुष इति । अनुनयं कर्तुमत्यन्तमभिज्ञस्त्वमतस्ते विद्यां जानामि । न केवलं वृथानुनय एव किन्तु चाटुकारैः सहितोऽपि अतः उत्पत्त्या उपपत्त्या च तव मनो न शुद्धं कायेन वाचा च वञ्चनार्थमनुनयाभिनयं करोषीति भावः । ननु कथमेवं निषिध्यते अन्तःकरणस्याप्रत्यक्षत्वात् कायवाग्भिरेव तदभिज्ञानादतः क्रोधवशादेवान्यथा स्फुरति नत्वस्मासु दोषोऽस्तीति चेत्तत्राह । स्वकृत इह विसृष्टेति । नहि युक्तिबाधितं वेदोऽपि बोधयति भगवानीश्वरः यथं गोपिकाः यावत्कर्तव्यमस्माभिः तावत्कृतं स सर्वस्मयोऽपि न किञ्चित्कृतवान् एवमर्थे पूर्वं जाते पुनरधुना किं कर्त्तव्यं तदाह । स्वकृते इदं विसृष्टाः अपत्यानि पतयश्च अन्ये च

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लोकाः स्वर्गादयोऽपि भर्त्राद्या शातिक्रमात् त्यक्ता याभिर्लोको हि दूरे गत्वा परित्यज्यते जनस्तु तत्रैव त्यक्तुं शक्तः त्यागोऽपि भगवदर्थ एव अत्यागे भगवानस्मान्न ग्रहीष्यति परसम्बन्धात् तादृशीश्च व्यसृजत् । ननु लोको हि कार्यार्थे गच्छति सर्वत्रैव विलम्बश्च भवति नैतावता त्यागो भवतीति चेत्तत्राह । अकृतचेता इति । न कृतं चेतो येन यो हि गच्छति सोऽन्तःकरणे तानत्यक्त्वैव गच्छति तास्त्वन्तःकरणं कृत्वैव गच्छति भगवांस्तु तद्विपरीतः अत एतादृशे भगवति किं संधेयं नु इति वितर्कं येन सन्धितो भवति तं हेतुं न पश्यामीति । बहिः स्थिता अस्माभिरेव त्यक्ता अस्मदीया अन्तःस्थिताश्च तेनैव त्यक्ताः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सौरभलोभेन चरणतले प्रविशन्तमपि भ्रमरं ननु लक्ष्मीकोटिनिर्मञ्छनीयनखद्युते देवि ! सत्यं त्वयमपराद्ध एव कृष्णस्तस्मात्त्वं कृपयैव क्षमस्वेति प्रणमन्तं तं मत्वाह । शिरसि धृतं मम पादं विसृज त्यजेतो दूरीभवेत्यर्थः । वेद्म्यहमिति । लक्ष्म्यादिकेव नाहं प्रतार्येति भावः । मुकुन्दात् सकाशादभ्येत्य चाटुकारैः प्रियोक्तिरचनारूपैर्दौत्यैर्दूतकर्मभिरनुनयविदुषस्तस्मादमुनयप्रकारं शिक्षितवतस्तव सर्वं शीलादिकमहं वेद्मि । कर्मणि वा षष्ठी । त्वां वेद्मीत्यर्थः । ननु स्वामिनि ! त्वत्प्राणकोट्यधिकेन तेन सह विग्रहेणालं प्रत्युत मया तीर्थेन सन्धिरेव कर्तुं युज्यत इति तत्राह । स्वकृते तदर्थं विसृष्टानि त्यक्तानि अपत्यानि च पतयश्चान्यलोकाश्च मातापित्रादयश्च याभिः । तत्र रासमुरलीवादनसमये अन्तर्गृहनिरुद्धगोपीभिरपत्यानि त्यक्तानि तदानीं तानि त्यक्त्वैवाभिसृतत्वात् । अस्माभिः पतयः धन्यादिककन्याभिः पित्रादय इति यथासम्भवं ज्ञेयम् । ता गोपीर्यो व्यसृजत् । कीदृशः । अकृतचेताः न विद्यते कृते उपकृते चेतो यस्य स अकृतज्ञ इत्यर्थः । नु अहो ईदृशेऽस्मिन् कठोरे किं नु सन्धेयं सन्धातुमर्हम् अपि तु नैवेत्यर्थः । अत्र पूर्वार्द्धे सोल्लुण्ठा आक्षेपमुद्रा । उत्तरार्द्धे अकृतज्ञता आदिशब्दाभिर्दयत्वपरद्रोहित्वप्रेमशून्यत्वानीत्ययं सञ्जल्पः । यदुक्तम् ।

सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया ।
तस्याकृतज्ञताद्युक्तिः सञ्जल्पः कथितो बुधैः ॥

इति ॥ १६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

सरोजबुद्ध्या पादतले प्रविशन्तं भो मातः ! सज्जनाग्रगण्यास्तव पादं शिरसि धृत्वाऽहं त्वां क्षमापये पदोपरि शिरःस्थापनमात्रेऽपि क्षमन्ते सज्जनाः अतः क्षमैव तवोचितेति ज्ञापयिष्यन्तमिव मत्वाह । विसृजेति । स्वशिरसि स्थापितं मदीयं पादं विसृज एतावता अस्मद्दुःखनिवृत्त्यभावात् वृथैव तद्धारणाग्रह इति भावः । तथाप्यत्यजन्तं प्रत्युत रुदन्तं भो देवि ! त्यज्यतां कोपस्त्वन्मनोऽनुकूलमेव भविष्यतीति प्रार्थयन्तमिव मत्वाह । वेद्म्यहमिति । मुकुन्दादभ्येत्य तत्तस्मात्सर्वं शिक्षित्वा दौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयविदुषः प्रार्थनाभिज्ञस्य तव सर्वमहं वेद्मि त्वामिति कर्मणि वा षष्ठी मुक्तिं ददातीति मुकुन्द इति बन्धनकर्तुरिदं विपरीतं नाम तस्मात्त्वया सर्वं शिक्षितमतो विपरीतार्थतावृत्तत्वात्त्वद्वाक्यं मुकुन्दवत् त्वं च न विश्वासार्ह इति भावः । अनभिज्ञा हि वञ्च्यन्ते न चाहं लक्ष्मीवदनभिज्ञा किन्तु विपरीतार्थनिश्चयवतीति वेद्म्यहमित्यनेन सूचितं वञ्चनाय प्रवृत्तस्य तव चातुर्यमपि प्रत्युत मन्निश्चयमेव दृढीकरोतीति ज्ञापनाय चाटुकारैरित्युक्तं सुपुष्पितः स्यादफल इत्युक्तत्वेन निष्फलवाङ्माधुर्यस्य वञ्चनायामेव पर्यवसानात् यद्वा मुकुन्दादभ्येत्यास्मद्गृहान् प्रत्यागत्यैवंविधस्य तव विद्वत्तामहं जानामि मदग्रे त्वया स्वविद्वत्ता न प्रकटनीया स्वत एवैवंविधविनयं जानासि न तु परत इति सूचनाय त इत्युक्तम् । ननु दूतत्वात्तच्छिक्षित एवाहमिदं ब्रवीमीति शङ्कानिवृत्त्यर्थमभ्येत्य विदुष इत्युक्तम् अत्रैवागत्यायं प्रकारस्त्वया कल्पितः किं च स मुकुन्दः मरणानन्तरं मोक्षप्रदः जीवतीनामस्माकं सुखावहमुक्तप्रकारं शिक्षयितुमयोग्य इति मुकुन्दपदेन सूचितं यद्वा केवलं कल्पितोक्तप्रकारेण नास्माकमेव त्वं वञ्चकः किन्तु स्वभर्तुरपि निरुक्तमुकुन्दाख्यस्वस्वामिकार्यविरुद्धकार्यसंपादकत्वान्मोक्षसाधनब्रह्मज्ञानाद्युपदेष्टुः सकाशादागतस्य तयाननुरूपत्वाद्वास्य प्रकारस्येति ध्वनयितुं मुकुन्दपदयोगः तथा च वृथैवदतव पाण्डित्यप्रकटनमस्माभिर्बुद्धत्वात्स्वभर्तुः प्रतिकूलत्वाच्चात इतो दूरे गत्वा तूष्णीं तिष्ठेत्यर्थः । ननु तर्काप्रतिष्ठानादिति न्यायात्तत्त्वानिश्चायकैः कोपोद्भूतैरेवंविधतर्कैः स्वभर्तरि दोषानारोप्य वृथैव तेन विग्रहवती जातासि तेन च संतप्यसे अतः प्राणप्रियया त्वया प्राणप्रियेण तेन सन्धिरेव कर्त्तव्य इति बद्धाञ्जलिः सन् त्वामहं प्रार्थयामीति चेत्तत्राह । स्वकृत इति । स्वस्य कृष्णस्य कृते तत्सुखार्थं तत्सङ्गजन्मसुखार्थं वा इह जीवद्दशायामेव विसृष्टास्त्यक्ताः अपत्यानि पतयः अन्ये पित्रादयः लोका इतरजनाः स्वर्गादयश्च याभिस्ता नः अकृतचेताः असंयतचित्तः न कृते अस्मत्कृतोपकारे चेतो यस्य स अकृतज्ञ इति व्यसृजत् त्यक्तवान् यद्वा न च कृतमस्मासु चित्तं येन स यो हि प्रेष्ठो गच्छति स प्रेयसीं चित्ते धृत्वैव गच्छति स तु नैवं कृतवान् यद्वा आत्मार्थमस्मान् विसृष्टापत्यादिका अकृत अकार्षीत् इनाः प्राप्तास्तु सतीर्व्यसृजत् नु अहो एवंभूते अस्मिन् कठोरे अकृतज्ञे शठे संधातुमर्हं किं न किमपि यावत्कर्त्तव्यं स्थितं तावद्गोपिकाभिरस्माभिः कृतं स तु सर्वसमर्थोऽपि न किंचित्कृतवानेवमर्थे पूर्वजाते पुनरधुना किं कर्तव्यं वक्तव्यान्तराभावान् फलाभावश्चेत्यर्थः तथा चैवं भूतानिप्रसिद्धापराधवति दोषोद्भावनं नासत्तर्कविजृम्भितं सयुक्तिबोधिनं स्वर्थं वेदोऽपि न बाधनायालमिति भावः । यद्वा सन्धिः कर्तव्य इत्यस्मान्प्रति प्रार्थना व्यर्था तस्य निग्रहपूर्वकत्वात्तस्य च तेनैव कृतत्वादतः स एवैवं प्रार्थनीय इत्याशयेनाह स्वकृत इति । अस्माभिस्तु सन्धिसाधनं सर्वमप्यनुष्ठितं न किञ्चिद्प्यवशिष्टमतो न वयं तत्र नियोज्या वस्तुतः सोऽपि न नियोज्यः एवं कृतोपकारा अप्यस्मानकृतार्था विहाय गतः स किमर्थं सन्धिवार्तामपि श्रोष्यतीत्यर्थः । अत्र संजल्पः तदुक्तम्

सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया ।
तस्याकृतज्ञताद्युक्तिः सञ्जल्पः कथितो बुधैः ॥

मृगयुरिव कपीन्द्रं विव्यधे [१] लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि [२] बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

इति निर्दयत्वपरद्रोहित्वप्रेमशून्यत्वान्यायिपदादादेयानि उद्धवपक्षेऽपि तथा करिष्यन्तं तमाक्षेप्येयमुक्तिः समाना श्रुतिपक्षे एवमविद्यावृतस्य जीवस्यान्तःकरणादितादात्म्याध्यासादनर्थपरंपराप्राप्तिः समस्तोपनिषत्तात्पर्यविषयप्रत्यगभिन्नब्रह्मसाक्षात्कारात्तन्निवृत्तिरित्युक्तमथेदानीं तदन्तरङ्गसाधनभूतां भगवदनुवृत्तिं विधत्ते विसृजेति । मुकुन्दान्मुक्तिप्रदानाय वेदरूपेण कृष्णादिरूपेण च त्वदुपायोपदेशपरायणात् निःसृतैर्दौत्यैः दूतभावं प्राप्तैरिव वाक्यैः "देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे यस्य देवे परा भक्तिः परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं ददामि बुद्धियोगं तं येन मामुपयान्ति ते । तमेव शरणं गच्छ सर्वभावेन भारत ! तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे" । इत्यादिभिः चाटुकारैरभ्येत्य तमनुसृत्यानन्यशरणो भूत्वा यस्तवानुनयस्य प्रावो विमुक्त्याभिमुख्यरूपनिवृत्तिस्तद्विदुषः परमात्मनः पादं शिरसि विसृज धारय कदापि तत्पादपद्मं मामुञ्च मनसा प्रपन्नत्वनिश्चयः वचसा तवास्मीति प्रार्थना शिरसा तच्चरणोदकादिधारणं चेति मनोवाक्कायैर्भगवदाराधनं त्वया सर्वदा कार्यमितीदमेव तव निःश्रेयसकरमित्येवमहं वेद्मीत्यर्थः । इममेवार्थं तदननुवृत्तिरहितनिन्दया द्रढयति । स्वकृत इति । स्वस्य जीवस्य कृते धर्मार्थकाममोक्षार्थम् अपत्यानि पतयो भर्त्तारः स्वामिनो राजादयश्चान्ये पितृभ्रातृभार्यादयः लोकाः स्वर्गादयः विसृष्टा रचिताश्च ते अपत्यादयश्च ते यस्मिन् वर्तन्ते तथाभूतेऽस्मिन् परमात्मनि अकृतचेताः चित्रेकचिधुरः कृतघ्नो वा इहाधिकारिशरीरे सन्धेयं संधिसाधनं किमिति व्यसृजत् त्यक्तवान् अयोग्यमिदमित्यर्थः । यद्वा अत्र शिष्टाचारं प्रमाणयति । स्वेति । स्वकृते स्वाभीष्टसिद्ध्यर्थं विसृष्टास्त्यक्ता अपत्यादयो यैस्ते भगवत्यर्पितसर्वार्था इतः मोक्षं गताः हे अकृत अज ! अस्मिंश्च एवंभूतेऽपि भगवति सन्धेयं किन्न व्यसृजत् तथा च श्रुतयः "आराममस्य पश्यन्ति न तं पश्यति कश्चन । न तं विदाथ य इमा जजान अन्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती" स्यादाः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कान्तमात्रज्ञानवती काचित् शिरसि निहितचरणं कर्णे सन्देशश्रावयिष्णुमिव मत्वाह । विसृजेति । शिरसि निहितं पादं विसृज पादं मदीयं शिरसि माकुर्वित्यर्थः । मुकुन्दादभ्येत्य ततःशिक्षित्वा दौत्यैर्दूतकर्मभिः चाटुकारैः प्रियवचनैश्च अनुनयविदुषः शिक्षाकुशलस्य ते सर्वमहं वेद्मि मुकुन्दसन्देशैरस्मत्स्नेहार्थं प्रवृत्तोऽसीति भावः तत्स्नेहस्तु अनुभूतपूर्व इत्याह । स्वकृत इति । स्वकृते मुकुन्दकृते विसृष्टाः पत्यादयो यया तां माम् अकृतचेताः अकृतं नार्पितं मयि चेतो येन सः व्यसृजत् एवम्भूतेऽस्मिन्मुकुन्दे पुनः किन्नु सन्धेयं न किमपीत्यर्थः ॥ १६ ॥

भाषा टीका ।

अपने शिर पर जो तैने पाद रक्खाहै तिस को छोड दे मैं जानती हूं कि तू मुकुंद के पास से आया है तू दूतों के मीठे से मीठे प्रिय वचनों से मनामनी करने जानता है इन कृष्ण में हम कैसे विश्वास करें जिनने कि अपने पीछे इस लोक में जिनने पति पुत्र लोक वेद सब को छोड दिया है उन सबों को भी सन्तोष करे विना ही त्याग कर के उपकार को भी न समुझकर चले ही गये हैं ॥ १६

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च कृष्णस्य पूर्वाणि कर्माण्यनुसन्दधाना 'बिभेम्यहमस्मा' दित्याह । मृगयुरिवेति । मृगयुर्लुब्धक इव यः कपीन्द्रं वालिनं विव्यधे अविध्यत् लुब्धधर्मा क्रौर्यवान् अलुब्धधर्मेति वा लुब्धको हि तन्मांसमत्तुकामो विध्यत्ययन्तु न तथाऽतो वृथा कठिन इत्यर्थः । तथा स्त्रियं शूर्पणखां स्त्रीजितः सीतापरतन्त्रः काम एव यानं प्राप्तिसाधनं यस्यास्तां विरूपां छिन्नकर्णनासिकामकरोद्दाशरथिरूपेण तथा बलिमपि तद्दत्तं बलिमत्त्वा भक्षयित्वा ध्वाङ्क्षवत्काकवदवेष्टयद्बबन्ध वामनरूपेण बलिमत्त्वाऽक्षिपद्विष्टपाच्च इति पाठे बलिं पूजां गृहीत्वा विष्टपात्स्वर्गादधोऽक्षिपदित्यर्थः । तत्तस्मादसितस्य कृष्णस्य सख्यैरलं एवञ्चेत्किमिति तं नित्यं गायथ तत्राह । दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति ॥ १७ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

कपीनामिन्द्रं परमश्रेष्ठमिति निर्दोषत्वादिकमभिप्रेतं स्त्रीजित इति । लक्ष्म्या सह सापत्न्येन तदवतारश्रीसीतायामपि सापत्न्यात् ध्वाङ्क्षवत् काको यथा बलिमस्यापि लोकं हिनस्ति तथेत्यर्थः । यद्वा काकमिव इति महावशा बन्धनदृढता निर्दयता च सूचिता एवमकृतज्ञत्वादिकमप्यभिप्रेतम् । असितेति । श्यामा ईदृशा

[१] यः किरातः [२] विलयासं चेद्रविष्टगंवन्ध ।

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

यत्र भवन्ति तस्य कृष्णस्यापि श्यामस्य सख्यैरलमिति भावः। यद्वा तत्त्वं सर्वस्यै-तत्सख्यस्य निरसनार्थम् अन्यत्तैर्व्याख्यातं यद्वा अहो श्रूयतां तस्य तत्र स्वयुगुणा इति सोपालम्भमाह । मृगयुरितिभारेण महीं कम्पयतीति कपीन्द्रो नृपवरः"महीं महाककुत्कायः कम्पयन् खुरविक्षता"मित्युक्तेः तं तद्विपाणेनैव व्याधवद्धर्मविमुखो विव्याध तथा लुब्धधर्मा लुब्धाचारः कामुकः विरूपां स्त्रियं कुब्जां कामयानामकृत चकमे इत्यर्थः। स्त्रीजितः कुस्त्रीवश्यः तथा गोपैर्गिरये दत्त बलिम् उपहार-मत्त्वा इन्द्रस्यापि बलिं पूजां विष्णुपादधोऽक्षिपत्। ननु तर्हि मिथस्तद्वा-र्ता किमिति क्रियते तत्राह तस्य कथैवार्थः प्रयोजनं यस्य सः व्रज इति शेषः व्रजस्य सदा तद्वार्तापरत्वेनास्माकमपि तत्सङ्गत्या तद्वार्ता स्यात् न च स्वेच्छया स च व्रजस्त्यक्तुं न शक्यते अहो वत किं कार्य्यमिति भावः। यद्वा ननु नाख्येयं परदूषणमिति हि निषेधः सत्यं निषिद्धत्वाद्वक्तुमयुक्तमपि तद्वैगुण्यं तस्य पर-मान्यायकारित्वादुत्पद्यमानेन महता रोषावेशेन त्यक्तुं न शक्यत-इत्याह। दुस्त्यज इति। तद्वैगुण्यरूपकथाप्रयोग इति ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

किञ्च न केवलं तस्य तादृशचेष्टितादेव बिभेमि अपि तु श्यामतास्वभावादपीति तद्गुणयोगेन तदभेदबुद्ध्या धीरोदात्त-त्वादिगुणतया प्रसिद्धेष्वपि श्रीरामवामनादिरूपेषु दोषं दर्श-यन्ती तद्रूपं कैमुत्यं दर्शयति। मृगयुरिवेति । मृगयुर्व्याध इव निर्दयो गुप्तश्च सन् एको योऽसितः सोऽपि कपीनामवध्या-नामीशमपि वालिनं विव्यधे। प्रसिद्धस्य मांसादिलुब्धस्य धर्माः क्रौर्यादयो यत्र तादृशः। अलुब्धधर्मा तद्धर्मरहितोऽपीति वा । तदप्यास्तां य एव स्त्रियं तत्रापि कामयानां कामयमानामपि साक्षाद्विभवःप्रभवां विरूपां छिन्नकर्णनासामकृत । तस्य च क्षत्रियजातितया क्रूरस्य तत्तदपि सम्भवेन्नाम । योऽऽन्योऽ-सितो ब्राह्मणजातितया तत्रापि ब्रह्मचारितया शान्त्यादिगुण-योग्योऽपि बलिं परमधर्मात्मानमपि तत्रापि बलिं तस्य पूजामुप-हारम् अत्त्वा भुक्त्वा गोप्यवदात्मसात्कृत्यापि छलेन दानपूर्त्ति-ममत्वा विष्टपात् त्रैलोक्यराज्यादक्षिपत् भ्रंशयामास तत्राप्यधोऽ-क्षिपत् भूविवरे विचिक्षेप पाठान्तरे त्ववेष्टयत् ववन्ध ध्वाङ्क्षव-दिति । काको यथा बलिं अद्यापि लोकं वेष्टयति स्वजा-तीयानन्यानाहूय तद्गृहमावृणोति तद्वत् । अत्र विव्याध इत्यादिभिः काठिन्यं स्त्रीजित इति कामित्वं बलिमपीति धौर्त्यमभिप्रेतं तस्मात्तदिति तस्यासितमात्रस्य सख्यैर्बहुषु सख्यप्रकारेष्वेके-नाप्यलं नतु प्रयोजनमित्यर्थः । ननु तर्हि कथं तस्य कथा-रूपोऽर्थो मुनिभिरपि न त्यज्यते तत्राह। दुस्त्यज इति। सोऽय-मिति तस्यैको दुरन्तो मोहनः स्वभाव इति भावः। इति भियेव सेर्ष्योक्तिः। यद्वा। ननु नाख्येयं परदूषणमिति हि निषेधः सत्यं निषिद्धत्वाद्वक्तुमयुक्तमपि तद्वैगुण्यं तस्य परमान्याय्यकारि-त्वादुत्पद्यमानेन रोषावेशेन त्यक्तुं न शक्यते इत्याह। तद्वैगुण्य-रूपकथाप्रयोगो दुस्त्यज इति ॥ १७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कपीन्द्रं वालिनं निरपराधमिति भावः । असितसख्यैः कृष्ण-सख्यैः ॥ १७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमयमकृतज्ञ एवापि तु क्रौर्यकाठिन्यादियुक्तश्चेत्याह । मृगयुरिवेति। मृगयुरिव व्याध इव वञ्चित्वा कपीन्द्रं निरपराधिनं वालिनं विव्यधे जघानातोऽयं लुब्धधर्मा लुब्धस्येव धर्माः क्रौर्यकाठि-न्यादयः तद्युक्त इत्यर्थः यद्वा अलुब्धधर्मेतिच्छेदः मृगयु-रिवेत्यनेनैव तत्साद्दश्यलाभात् अलुब्धधर्मा लुब्धेऽप्यसम्भाविता ये धर्मास्तद्युक्त इत्यर्थः। लुब्धको हि मांसमत्तुं मृगान् हन्ति अयन्तु न तथेति वृथा काठिन्यादिमानिति भावः। तथा स्त्रीजितः स्त्रियां सीतया जितः तद्वशङ्गत इत्यर्थः। कामायानां काम एव यानं प्राप्तिसाधनं यस्याः कामेन याति स्वेच्छया चरतीति तथा तामिति वा नन्द्यादित्वात्कर्तरि ल्युः स्त्रियं शूर्पणखां विरूपामकृत छिन्नकर्ण-नासिकामकरोदित्यर्थः। एवं दाशरथिरूपेण कृत्वा तथा वामन-रूपेण यो ध्वाङ्क्षवत्वायसवद्बलिं पूजां वैरोचनिसमर्पितामत्त्वा भुक्त्वा परिगृह्येत्यर्थः। बलिं वैरोचनिमवेष्टयत्पाशैरिति शेषः। ववन्धे-त्यर्थः। तत्तस्मादसितस्य श्रीकृष्णस्य सख्यैरलम् असितेत्यनेन नैल्यं दुष्टं हीनि पामरन्यायोऽभिप्रेतः एवञ्चेन्निराकृतं गायथेत्यत्राह । दुस्त्यज इति। तस्यासितस्य कथारूपोऽर्थो दुस्त्यजस्त्यक्तुम-शक्यः ॥ १७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रणयकोपातिरेकेणासन्धेयत्वे दोषानुत्पादयति। मृगयुरिति। यो रामनामा भूत्वा कपीन्द्रं वालिनं विव्यधे हिंसितवान् क इव मृगयुर्लुब्धक इव यथा लुब्धकः उपाशये स्थित्वा विध्यति मृगं तथायमपीत्याक्षेपार्थः कपेः सुग्रीवस्य इन्द्रियं द्रावितवा-नित्यपराधं दृष्ट्वेति स्तुत्यर्थः। किञ्च किरातः निषाद इव स्त्रियं विरूपां छिन्ननासिकाकर्णत्वेन सौन्दर्यहीनामकृत परामृष्टायाः शूर्पणख्या मे पतिर्भवेति विरूपं विपरीतशब्दं श्रुत्वा विरूपा-मकरोत् नतु शुद्धस्त्रियमिति निष्कृष्टोऽर्थः किन्नः परमानन्दिनो शुकाः रातं मित्रं यस्य स किरातः स्त्रीजितः स्त्रैणः स्त्री जिना पराभूता येन स तथा। कामयानां पतिमिच्छन्तीं काम एव यानं यस्याः सा तथा स्मरनामरथाधिरूढत्वाद्धृष्टामित्यर्थः । किञ्च वामनावतारे महायहपवें यज्ञे सबहुमानं बलेः त्रिपदपरिमितं भूम्युपहारमादाय कृतघ्न इवायं बलिनामानं दैत्यं बिलवासं पातालवासिनम् अकृत पूजायां हेतुमाह। वेदेति। वेदविदामृषीणां वर्गेण समूहेन वन्द्य इति यत्तस्मान्मुग्धावृबलेः पूजामवाप्यापि तं यद्वा पातालनिवासिनमकरोदित्यर्थः। बलपरिवर्तने इति धातोः वालीमिन्द्रस्य विद्यमाने त्रैलोक्ये परिवर्त्त परकीयं स्वीयवत् वर्षा कृत्वा चरणलक्षणं चौर्याख्यापराधं दृष्ट्वा दुष्टदिक्षणं कृतवानित्याध्याहारार्थः वकारवकारयोः अन्योऽन्यात्मकमनुशा-सनसिद्धं कृष्णः कीदृशः वेदविदां वैदिकानां वर्गो वर्जनं येषु ते वेदाविद्वर्गा वन्ध्यादयः तैः वन्द्य इत्यनेनाविद्यमानकथननिपुण-त्वेनास्मन्मनो मोहनं कृत्वा हतवानिति सूचितं निन्दास्तुत्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपसंहरति। तदिति। यतोऽयं कृष्णोऽस्मासु शोकाधानमकरोत्तस्मादसितेन मलिनेन कृष्णेन सह सख्यैः सहासनशयनादिलक्षणैरलं वारितम् असितस्य मेघश्यामस्य नित्यमुक्तस्य वा षिञ्बन्धन इति धातुः हरेः सख्यशब्देनार्चनादिकमुपलक्ष्यते अर्चनादिभिरलम्भूषणमात्मन इति शेषः। निर्विण्णा चेत्किमिति तत्प्रसङ्गं करोषीति तत्राह। दुस्त्यज इति। तस्य कृष्णस्य कथार्थः चरितविषयव्यवहारो दुस्त्यजस्त्यक्तुमशक्यः पारवश्यादिति शेषः। किञ्च दुःखं त्यजतीति यद्वा तस्य कथानिवृत्तिः अशोभनं ददातीति ॥ १७ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदिति। तस्य असितस्य श्याममात्रस्य सुपां सुलुगित्यादिच्छान्दससूत्रेण सुपो लुक्। दुस्त्यजः। इत्ययमप्येकस्तस्य दुरन्तो मोहनस्वभाव इति भावः ॥ १७ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नन्वेवमस्ति सन्ध्येयं सख्यमिति पूर्वं हि प्रपन्ना अपि भवत्यः भगवता त्यक्ताः अधुना प्रार्थनया तं दोषं परिहृत्य तेन सह सख्यं कर्त्तव्यमिति चेत्तत्राह। मृगयुरिति। "न वै स्त्रैणानि सख्यानी" ति वयं सख्ये अनधिकृता एव ईश्वरोऽपि सख्ये नाधिकृतः राजा मित्रं केन दृष्टं श्रुतं वेति सुतरां भगवता सह सख्यं न भवति खलत्रये अनिष्टदर्शनात् आर्षज्ञानेन भगवत्स्वरूपं ज्ञात्वा स्वस्मात् पूर्वावस्थां भावयति। तत्र भगवान् रामः पूर्वतनः तेन सह सख्यं पुरुषेण स्त्रिया च कृतं तयोर्मरणं जीवन्मृतत्वं च जातमिति सुग्रीवेण सहाग्निसाक्षिकं मैत्री कृता तस्यैव भ्राता वाली भगवता हतः तद्भ्रात्रा सह सख्यं कृतमेव कपीनां च स इन्द्रः अनेन कार्यार्थतापि निवारिता तेन ततोऽपि अधिकं कार्यं भवतीति नहि कश्चित् कपिभिः सह सख्यं करोति अनेन सख्यशास्त्रानभिज्ञता च सूचिता। तत्रापि सर्वसमर्थः युद्धेन न हतवान् किन्तु हरिणान्तरं योजयित्वा यथा आरण्यं हरिणं मारयति लुब्धकः तद्वत्सुग्रीवं योजयित्वा तेन सह युध्यमानमविध्यन् ननु हरिणादयः सर्वथैवमेव हन्यन्ते को दोष इति चेत्तत्राह। अलुब्धधर्मेति। लुब्धकस्येव नास्मिन् धर्मः तन्मांसस्याभक्ष्यत्वात् ईश्वरत्वेन तदपकाराभावाच्च किञ्च स्त्रियं सूर्पणखां काममोहितां सर्वथा सम्माननीयां विरूपां छिन्नकर्णनासिकाम् अकृत ननु युक्तमेवोर्ध्वरेतसस्त्वपतिक्रमे तथात्वमिति चेत्तत्राह। स्त्रीजित इति। सीतया वशीकृतः अन्यथा तदुक्तं न कुर्यात् सापि न प्रतिबन्धिका ताटकेव किन्तु कामयाना काम एव यानं यस्या इति वा तत्र दूषणद्वयं ततोऽपि पूर्वजन्मनि दोषं विचारयन्ती परशुरामे अलभमाना वामने दृष्टत्याह। बलिमपीति। बलिरित्यनेन बलिरूप एव पूजात्मकः अतः श्रद्धया तथा पूजां कृतवान् ब्राह्मणक्षत्रिययोः तुल्यता सख्यं च भवति तथाप्यन्योऽन्यकार्यसाधकयोः ध्वांक्ष लोकत्रयप्रदानं न दोषाय यथाकथञ्चित् स्वकीयं ग्राह्यमेवेति किन्त्वन्यदस्तीति पूर्वमनुवदति बलिम् अस्या जग्ध्वा नात्र धात्वादेशः बहुलं छन्दसीत्यग्रे वक्ष्यमाणत्वात् आवेष्टयत् गर्त्तविशेषे बद्ध्वा स्थापितवान् ध्वाङ्क्षवत् द्वितीयार्थे वतिः अयुक्तो हि काकः पायसादिभक्षण इति तथा कृतवन्तं दुष्टं बध्नाति प्रभुः तथा कपिरपि इन्द्रवद्ध्यप्रियमाणो हन्तव्यः मृगत्वात् ध्वांजनैव मारणीयः ब्रह्मणा तथैव तेषां मृत्युर्निर्मित इति मत्स्यानां तु बुद्ध्यैव स्त्रीजित इत्यनेनैव स्त्रियैव स्त्री विकृता ननु भगवता अत एव ताः सजातीयातिक्रमं न कुर्वन्ति तथा वयमपि न करिष्यामः कृते त्वनिष्टं स्वधर्मत्यागादेव तथा हीना वयं नोत्तमभावं प्राप्स्यामः "अयोग्यमिच्छन् पुरुषः पतत्येव न संशय" इति वाक्यात् मर्यादोल्लङ्घने तद्रक्षकैः दण्डयत इत्यभिवादं स्त्रियो जिता अनेनेति नहि रामः स्त्रीवश्यः जितानां च हितं कर्त्तव्यमिति तथा नगरे अस्मद्वदुपभोग्यो भगवान् यथा बलेस्तन्मन्वन्तरकालः अतः हीनत्वात् स्वायोग्यं स्त्रीत्वात् अतिक्रममन्यावसरत्वाच्च कालमर्यादोल्लङ्घनं च कर्त्तव्यमिति प्रार्थनया सख्यं न करणीयं तदाह। तदलमिति। तत्तस्मादसितसख्यैरशुद्धसख्यैरलं कपटसख्यानि न कर्त्तव्यानि यतो विपरीतफलानि तामसभावाद्वा कृष्णवर्णपरोऽसितशब्दः ननु सर्वं परित्यज्य भगवदवलम्बनं कृत्वा भगवन्तमपि परित्यज्य क्व यास्यथेत्याशङ्क्याह। दुस्त्यज इति। यस्य कथारूपोऽर्थो दुस्त्यजः कथामवलम्ब्य तिष्ठामः सोऽपि त्यक्तव्य इत्यस्ति मनःप्राणबाधात् तथापि त्यक्तुमेवाशक्य इति दुस्त्यजः सापि भगवानिव चेत्स्वयं त्यक्ष्यति तदा त्यजतु नाम न त्वस्माभिस्त्यक्तुं शक्यत्यर्थः। यदंकालेऽपि भगवद्धर्मा बोध्यन्ते श्रवणादयः धर्मत्वेन तत्रापि सख्यमात्मनिवेदनं च बोध्यते यथा सुपर्णावेतौ ब्रह्मैव सन् ब्रह्माप्येतीति वेदा यज्ञाश्च न कालात्मका इति शिर उपनिषदो भवन्त्येव तत्र भगवन्निरूपणं न कर्त्तव्यमिति पुष्टिश्रुतीनामभिप्रायः इतरथा अन्यथासिद्धिः स्यात् ननु भक्तिमार्ग इव तत्रापि भगवदुत्कर्षः प्रतिपाद्यत इति कथं निषेध इत्याशङ्क्याह। वेदाश्चहमिति। स हि भगवदभिमतः परमात्मा मोक्षप्रद एव तस्य दूतेनात्यन्तनिपुणेनापि मोक्ष एव फलति प्ररोचनार्थमेव भक्तिमिव प्रेमेव वदति न वारे पुत्राणां कामायेत्यादिभिः यमेवैष वृणुत इति च किञ्च शास्त्राणां सर्वपरित्याजनपरत्वं यथा आत्मकामः सर्वं परित्यजेत् तादृशविरक्तस्यापि नित्यमात्मानुसन्धानयुक्तस्य यदि नात्मस्फूर्त्तिः किन्तस्योपनिषदा गुरुभिर्वा भविष्यति तस्मात् सख्यादिकमनभिप्रेतमेव तथापि वैदिकत्वेन भाव्यमन्यथा पाषण्डित्वं स्यात् एवं सर्वत्र योजनीयम् ॥ १७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नन्वतिकोमलमनाः स त्वामेव ध्यायंस्तत्रास्माभिर्दृश्यत इति। तत्र त्वमर्वाचीनो दासस्तस्य तत्त्वं न जानासि न केवलं सहास्मिन्नेव जन्मनि कठोरः किन्तु पूर्वपूर्वजन्मस्वपीति पौर्णमासी मुखादस्माभिः श्रुतत्वादित्याह। यदा स क्षत्रियजातौ रामचन्द्रोऽभूत्तदा क्षत्रियधर्मं परित्यज्य मृगयुर्व्याध इव कपीनामिन्द्रं वालिनं विव्यधे विव्याध। निर्दयो गुप्तः सन्नित्यर्थः। अधर्मकथापि तदुपाख्याने ज्ञेया। अत्रापि लुब्धस्य व्याधस्यापि धर्मरहितः। न हि व्याधो वानरान् हिनस्ति तन्मांसस्याभक्ष्यत्वेन केनाप्यक्रेयत्वादिति भावः। अन्यमधर्मं श्रृणुवित्याह। स्त्रियं सूर्पणखां कामयानां तमेव कामयमानां तां विरूपां

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

छिन्नकर्णनासामकृत । अन्योऽपि कोऽप्येतां न सम्भुङ्क्तामिति क्रौर्य्येणेति भावः । नच जटावल्कलधारित्वाद्वैराग्येणेत्यत आह । स्त्रिया सीतया जितः । तथा तत्पूर्वजन्मनि स ब्राह्मणोऽभूत्तदापि ब्राह्मणधर्मं शान्त्यकैतवादिकं परित्यज्य बलिं परमधार्मिकमपि तत्रापि बलिं तत्पूजोपहारम् अत्वा भुक्त्वा विष्टपात् त्रैलोक्यराज्यादक्षिपत् तत्रापि भूविवरे । पाठान्तरे अवेष्टयत् छलेन बबन्ध । ध्वाङ्क्षवत् काकवत् स यथा बलिं जग्ध्वापि स्त्रीजनं वेष्टयति स्वजातीयानन्यानाहूय तमावृणोति कदर्थयति च । तस्मादसितस्य कृष्णवर्णस्य तस्य सख्यैः सर्वैरेवालमस्माकं गौरीणां तत्सम्बन्धिनः सख्यस्य यावन्तः प्रभेदास्तेषामेकोऽपि न भद्र इति बहुवचनेन द्योतितम् । असिताः खल्वशुद्धचित्ता भवन्तीति तेभ्यो भयस्यावश्यम्भावित्वादिति भावः । नन्वभीक्ष्णं परनिन्दां कुर्वती किं शुद्धचित्तासीति तत्राह । तस्य कथायाः प्रतिजन्मचरित्रस्यार्थो व्याख्या दुस्त्यजः सोऽस्मानेवं दुःखयति । अस्माभिस्तत्कथाया अप्यर्थो न वक्तव्य एव किम् अत्र निन्दा वा भवतु यथार्थभाषणत्वेनानिन्दा वा भवतु । असौ त्यक्तुमशक्य एवेति भावः । यद्वा । स त्वस्माभिस्त्यक्त एव किन्तु तत्कथारूपोऽर्थो वस्तुविशेषस्तु दुस्त्यज एव । कर्तृपदानुक्त्या सर्वैरेव मुन्यादिभिरपीत्यर्थः । अत्र विव्यधे इति काठिन्यं स्त्रीजित इति कामित्वं बलिमपीति धौर्त्यम् असितसख्यैरित्यासक्त्ययोग्यता भयमीर्ष्या चेत्ययमवजल्पः । यदुक्तं "हरौ काठिन्यकामित्वधौर्त्यादासक्त्ययोग्यता । यत्र सेर्ष्याभियेवोक्ता सोऽवजल्पः सतां मत" इति ॥ १७ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु भो मातः ! निरपराधापकाराय तु न प्राकृतोऽपि प्रवर्त्तेत स पुनः कृतशात्रवः शोभनगुणालङ्कृतो भगवानपराधनिर्मुक्तानां युष्माकं दुःखाय प्रवृत्त इति का वाचोयुक्तिरतः स्वात्मसु कश्चिदपराधोऽन्वेषणीय इति चेद्दर्शनश्रवणाभ्यां निरपराधपीडाकरमेतदीयं स्वभावं वर्तमानप्राचीनजन्मसंबन्धितया सञ्जानतीनामस्माकमग्रे किमित्येवमबुद्ध्वा जल्पसीत्याशयेनाह । मृगयुरिवेति । यः दाशरथिर्भूत्वा मृगयुरिव कपीन्द्रमपराधविनिर्मुक्तं वालिनं विव्यधे यथा व्याधः मृगचर्मणा स्वशरीरमाच्छाद्य मृगं वेधयति तथा वृक्षेणायमपि तमपि अविध्यत् यतः लुब्धस्य धर्मैः क्रौर्यादिर्निर्युक्तः यद्वा व्याधा अनुपकारिणं स्वोपकाराय नाशयन्ति स तु ततोऽपि विलक्षण इत्याह अकृतेति । वानरस्याभक्ष्यत्वात्सीतान्वेषणस्य वालिनातिसुकरत्वाद्दूरुंधव तं नाशितवानित्यर्थः । स्त्रियं शूर्पणखां निरपराधां विरूपां छिन्नकर्णनासामकृत न केवलं निरपराधामपि तु सेवनाय कामयानामपि काम एव यानं प्राप्तिसाधनं यस्यास्तां कामयमानामिति वा यतः स्त्रीजितः सीतापरतन्त्रः तथा यः वामनो भूत्वा बलिमपि निरपराधं प्रत्युत त्रैलोक्यार्पणात्परमोपकारिणमपि तद्दत्तबलिमत्त्वा भक्षयित्वा ध्वाङ्क्षवत् काकवदवेष्टयत् काको यथा बलिं जग्ध्वा अन्यान् काकानाहूय बलिदातारं सर्वत आवृणोतिति तद्वद्बबन्ध वामनोऽधिक्षिपद् इति पाठे इति बलिं पूजां गृहीत्वा तं त्रैलोक्यराज्यादधः पातितवानित्यर्थस्तस्मादसितस्यैवंभूतस्य कृष्णस्य सख्यैः दुःखसागरे पतितत्वादितः परं तत्सख्यसम्पादनजन्यदुःखभोगसामर्थ्यमस्माकं नास्तीत्यर्थः । नन्वेवं तर्हि किमिति नित्यं तत्कथापरायणा यूयमिति चेत्तत्राह । दुस्त्यज इति । यद्यप्येवं तथापि तत्कथारूपं वस्तु त्यक्तुमशक्यं किं कुर्मस्तत्त्यागे उपायं न पश्याम इत्यर्थः । यद्वा कथं तर्हि कृष्णस्य तत्तदवतारकथा मुनिभिर्न त्यज्यत इति चेत्तत्राह । दुस्त्यज इति । तत्कथायां का वा मोहनशक्तिरिति न जानीमः । यद्वा ननु नाख्येयं परदूषणमिति निषेधात् किमिति दूषणाख्याने यूयमुद्युक्ता इति चेत्तत्राह । दुस्त्यज इति । यद्यप्येवं तथापि रोगावेशात् तूष्णीं स्थातुं न शक्यत इति भावः । यद्वा ननु सर्वं विहाय भगवत्सख्यमास्थिता इदानीं तदपि परित्यज्य किं करिष्यथ इति चेत्तत्राह । दुस्त्यज इति । तत्कथामवलम्ब्य स्थास्यामः अस्माभिस्तु स त्यक्तुं न शक्यते स एव कृष्णस्त्यक्ष्यति चेत्तदा तु मरणमेव भविष्यतीति भावः । यद्वा ननु सख्या केनचित्कारणेन प्राप्तेऽपि यत्किञ्चिद्वैमनस्ये तन्मार्जयित्वा पुनः सख्यमेव सम्पादयितुमुचितं न तु सर्वदा विग्रहपालनमित्याशङ्क्याह । मृगयुरिवेति । अहो किमित्येवं त्वया बोध्यते कृष्णात्प्राप्तदुरन्तदुःखाभिरस्माभिरितः परं शठत्वकामित्ववञ्चकत्वादिदोषाक्रान्तत्वात्कृष्णवर्णेन केनापि सख्यं न सम्पाद्यमिति निश्चयः कृतोऽतः पुनस्तेन सख्यसम्पादनं तु दूरापास्तमिति भावः । नन्वेकत्र कृष्णे वञ्चकत्वादि दृष्ट्वा यत्र यत्र कृष्णत्वं तत्र तत्र वञ्चकत्वादिकमिति व्याप्तिः कथं गृहीतेत्याशङ्क्य भूयो दर्शनेनेत्याह । मृगयुरिति । तथा च स्वधर्मनिष्ठस्य क्षत्रियस्य रामचन्द्रस्य तथाविधकर्मानुष्ठाने तदेव प्रयोजकम् एवं शान्त्यादिगुणालङ्कृतस्य ब्राह्मणस्य ब्रह्मचारिणो वामनस्य तथा चान्यत्र प्रयोजकान्तरसत्त्वेऽपीदमेव प्रयोजकमाश्रयणीयमनुगतत्वात् इदञ्च शठत्वादीनामप्युपलक्षणं कोऽपि सख्यभेदोऽसितवर्णैर्नापेक्षित इति सूचनाय सख्यैरिति बहुवचनं नन्वेवं तर्हि तत्कथयाप्यलङ्कृतो न क्रियत इति चेत्तत्राह । दुस्त्यज इति । तत्कथार्थोऽपि परित्याज्य इति सर्वदाप्यस्मन्मनो वर्त्तते तथापि त्यक्तुं न शक्यते किं कुर्मः अशक्यत्वाद्दुःखं सहामः कृष्णोऽपि नास्माभिः परित्यक्तः किन्तु स एवास्मान् परित्यज्य गतस्तत्कथामपि यदि त्यक्ष्यति त्यजतु नाम नास्माकं तत्त्यागसामर्थ्यमित्यर्थः ।

हरौ काठिन्यकामित्वधौर्त्यादासक्त्ययोग्यता ।
यत्र सेर्ष्याभियेवोक्ता सोऽवजल्पः सतां मतः ॥

इत्युक्तेरयमवजल्पः उद्धवपक्षेऽपि समानमिदं श्रुतिपक्षे भगवानेव शरणीकरणीय इतीममर्थं द्रढयितुं तत्तदवतारे कृतं भगवतो भक्तपक्षपातमावेदयति । मृगयुरिवेति । अलुब्धधर्मा पूर्णकामत्वाल्लुब्धादिधर्मैरसंस्पृष्टोऽपि कपीनामिन्द्रं मारणायोग्यमपि मृगयुरिवायोग्योपायेनापि स्वभक्तस्य सुग्रीवस्य परित्राणाय विव्यधे तथा स्त्रियमपि तत्रापि कामयानां विरूपत्वानर्हामपि भक्तिमत्या सीतया जितो वशीकृतः विरूपामकृत तथा बलिं परमधार्मिकं बलिमपि तदीयां पूजां गृहीत्वापि महेन्द्रादिभिः तदर्थमाराधितत्वादवेष्टयत् यथा काकः स्वजातिपक्षपाती तद्वत् एवं भूतो यः स्वभक्तपालनायाकृत्यमपि करोति तस्य कथारूपार्थस्तदनन्यशरणैर्दुस्त्यजः तत्कथैव परमपुरुषार्थत्वेन तैः सेव्यते ननु तैः प्रार्थ्यत इति ज्ञापनायार्थपदं तत्तस्मादसितानां मलिनानां भार्यापत्यधनादीनां मलिनैः संसारार्थप्रदैः सख्यैरलम् असङ्ख्यातकल्पेषु तत्फलं भुक्तमितः परं तानि परित्यज्य वासुदेवैकशरणो भवेत्यर्थः ॥ १७ ॥

**यदनुचरितलीलाकर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्मा विनष्टाः।**
**सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति॥ १८॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मां तु सप्राणां साङ्गां सधनाञ्च व्यसृजदहो मम भाग्यमन्ये त्वनेन केचित्प्राणतः केचिदङ्गतः केचिद्धनतश्च वियोजिता इत्याह। मृगयुरिवेति। यः कृष्णः मृगयुरिव व्याध इव कपीनामिन्द्रं राजानं निरपराधिनं विव्यधे अविध्यत् व्याधस्तु मांसमत्तुं मृगं हन्ति अयन्तु वृथैवाविध्यत् यतः अलुब्धधर्मा तन्मांसभक्षणलोभाभावात् नापि धर्मयुद्धे अविध्यत् किन्तु ध्वाङ्क्षवत् ध्वाङ्क्षमिव यथा ध्वाङ्क्षं काकं छलेन कश्चिद्धन्ति तद्वत् तथा काम एव यानं प्राप्तिसाधनं यस्यास्तां कामातुरां स्त्रियं सूर्पणखां स्त्रिया स्वप्रियया जितः विरूपां छिन्नकर्णनासिकाम् अकृत अकरोत् दाशरथिरूपेण तथा बलिमपि बलिं तद्दत्तां पूजामत्त्वा भक्षयित्वा अवेष्टयत् नागपाशैर्बबन्ध वामनरूपेण ध्वाङ्क्षं यथा कश्चिद्वेष्टयति तद्वत् तत्तस्मादसितस्य कृष्णस्य सख्येनालम् तर्हि किमर्थोऽयं तद्विषयकः प्रवादः अत्राह। तत्कथारूपोऽर्थस्तु दुस्त्यज इति॥ १७॥

---

### भाषा टीका।

जिनने रामावतार में कपीन्द्र बाली को बधिक की रीतिको लेकर व्याध की नाईं मारा है सीता स्त्रीके वश होकर सूर्पणखा को नाक कान काट कर कुरूप कर दिया है जिनने वामनावतार में बलि राजा की भेट को लेकर भी कौआ की नाईं फिर उसी बलिको बांधकर नीचे पाताल मे रख दिया है उनका क्या कहना है तिससे काले पुरुषों की मित्रता कैभी नहीं करनी चाहिये फिर क्या करैं उनकी चर्चा कथा तो छोड़ी नहीं जांती है॥ १७॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

अपि च जानीम एव तत्कथापि त्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुं शक्नुमः किं कुर्म इत्याह। यदनुचरितेति। यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वन्द्वधर्मा रागादयो येषां तेऽत एव विनष्टा असत्तुल्या दीनं दुःखितं गृहकुटुम्बं विहाय दीना भोगहीना विहङ्गा अपि भिक्षुचर्यां प्राणवृत्तिमात्रं चरन्त्यतस्त्याज्यस्तथापि त्यक्तुं न शक्नुम इति निन्दापरत्वेऽप्ययं तात्पर्यार्थः दुस्त्यजत्वेऽपि पारमार्थिकोऽयमर्थः विधूतद्वन्द्वधर्मा इत्यन्तःसमासः पूर्ववत् ततस्ते च ते अविनष्टाश्चेति समासः इतरे पुनर्द्वन्द्वधर्माणो विनष्टा एव सपदि तत्क्षणमेव दीनं तुच्छं गृहसहितं कुटुम्बं विहाय दीना इवाकिञ्चनाः धीरा इति वा पाठः बहवो विहङ्गा हंसा इव सारासारविवेकचतुरा भिक्षुचर्यां पारमहंस्यं चरन्ति तस्मादेवं परमपुरुषार्थरूपत्वाद्दुस्त्यज एव तत्कथार्थ इति॥ १८॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

तस्य निष्ठुरता किंवाच्या तच्चरितलवमपि ये केचित् सकृदपि शृणुयुः तेऽपि निष्ठुराः स्युरित्याह। यदिति। अनुचरितं स्वस्य अनुकूलं कर्मैव लीला बालचेष्टितवत् स्वच्छन्दखेलामात्रमिति निर्देश लोकहितार्थकर्मणा सहलीलायाः प्रतियोगित्वात् तदेव कर्णपीयूषं शब्दतः कर्णसुखप्रदं तत्वर्थतो मनःप्रीतिकरमित्यर्थः। तस्यापि विप्रुट् न तु बाहुल्यं तस्या अपि सकृदप्यदनं कथंचित् किञ्चिद्ग्रहणं तेनापि विशेषेण धूता द्वन्द्वधर्मा मिथुनाचाराः खादनपानादिरागा वा यैस्तथाभूताः सन्तः विहङ्गाः पक्षिणोऽपि तत्रापि बहव एव न तु द्वित्राः सपदि लीलाश्रवणानन्तरमेव दीनमपि गृहस्य कुटुम्बं तातजननीभार्यादिकं सर्वपरिवारमवश्यापेक्ष्यमपि इह सर्वसमृद्धियुक्ते वृन्दावनेऽपि स्तुतिपक्षे इह संसारे बहवो जनाः विहङ्गा इव विहङ्गाः हंसवद्विवेकिन इत्यर्थः। अत एव तैरपि व्याख्यातं हंसा इवेति एवमिवेलेव पाठः। एष च सर्वटीकाकृतां सम्मतः यद्वा विभ्यः पक्षिभ्यो नष्टा अदर्शनं प्राप्ताः विविक्तवासत्वात् भिक्षुचर्य्याम् इन्द्रियग्रामानिग्रहम्॥ १८॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यस्यानुचरितं स्वस्यानुकूलं कर्मैव लीला बालचेष्टितवत् स्वच्छन्दखेलामात्रमिति निर्देश लोकहितार्थकर्मणा सह लीलायाः प्रतियोगित्वात्। तदेव कर्णपीयूषं शब्दतः कर्णसुखप्रदं तत्वर्थतो मनःप्रीतिकरमित्यर्थः। तस्यापि विप्रुट् नतु बाहुल्यं तस्या अपि सकृदप्यदनं दूरदेशात् कथञ्चित् किञ्चिदास्वादनं तेन विशेषेण धूता द्वन्द्वधर्मा मिथुनाचारा उष्णशीतादिभोगा वा यैस्तथाभूताः सन्तः विहङ्गाः आकाशगामित्वाद्दूरादागता हंसादयः पक्षिणोऽपि तत्रापि बहव एव नतु द्वित्राः। सपदि लीलाश्रवणानन्तरमेव। दीनमपि गृहस्य कुटुम्बं तातजननीभार्यादिकं त्यक्त्वा स्वयमपि दीना विनष्टाश्च सन्त इह तल्लीलास्थाने वृन्दावने समागत्य भिक्षुचर्यामेव चरन्ति। धीरा इति पाठे तेषां दुःखेनाक्षुभिताः कठोरचित्ताः सन्त इत्यर्थः। बहव इवेति पाठः सर्वटीकाकृतां सम्मतः। श्रीस्वामिभिरपि स्तुतिपक्ष एव हंसा इवेति गौणवृत्तियोतनायैव इवशब्दो दत्त इति। अयं भावः। येऽमी पक्षिणो दृश्यन्ते नूनं न प्राचीनाः तेषां तद्वियोगे जीवनासम्भवात् ततोऽमी आगन्तुका एव। तत्र तादृशमागमनमीदृशी भिक्षुचर्या च तेनैव सम्भवन्ति यथा भवदागमनं दौत्येनैवेति। यद्वा तस्य निष्ठुरता किं वाच्या तच्चरितलवमपि ये केचित् शृणुयुस्तेऽपि निष्ठुराः स्युरित्याह। यदिति। अर्थः पूर्ववत्। यद्वा। तर्हि कथं मां गातुं निषेधसि तत्राह। यदिति। अर्थः पूर्ववदेव। विशेषतश्च इह बहव एव विहङ्गास्तदावेशात्तद्गानलीला भिक्षुचर्यां चरन्ति तत्र को वा वराको भवान् तत्र च ते प्रायो व्रजपत्यलीलामेव गायन्ति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तथापि न रोचन्ते भवांस्तु यादुपत्यलीलामिति कथंतरां रोचतां नामेति ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यदनुचरिताः विहङ्गाः पक्षितुल्याः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

न केवलमस्माकमेव तत्कथार्थो दुस्त्यजः किन्त्वन्येपामपि नापि वयमेव तदर्थे विसृष्टापत्यादयः अपि त्वन्येऽपीति स्तुतिगर्भम् निन्द्-न्त्याह । यदनुचरितेति । इह लोके बहवो जना यस्यानुचरितमेव लीला तदेव कर्णयोः पीयूषममृतं तस्य विप्रुट् कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वन्द्वधर्मा रागद्वेषादयो येषां तेऽत एव विनष्टा असत्तुल्याः अचेतनप्राया इति यावत् लब्धात्मस्वरूपसत्ताका इति स्तुतिरप्यभिप्रेता समस्तत्वेऽविनष्टा इतिच्छेदात् सपदि तदैव दीनं दुःखितं गृहकुटुम्बं विहाय दीना विहङ्गा इव भिक्षुचर्यां चरन्ति संप्राप्तिवत्प्राणधारणमात्रं कुर्वन्ति ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

गुणा अप्यनेन सूचिता इति प्रकटनायोत्तरवाक्येन गुणानेव वक्ति । यदनुचरितेति । यस्य कृष्णस्यानुवचनमनुगुणमन्वयवतारं वाचरिता लीलैव कर्णपीयूषं कर्णामृतं तस्य विप्रुट् बिन्दुस्तस्य सकृददनेन एकवारश्रवणलक्षणेन विधूता द्वन्द्वधर्मा रागादिलक्षणा येषां ते ते चाविनष्टा अनुच्छित्तिज्ञानधर्माश्च अनुच्छित्तिधर्मेति श्रुतेः विनष्टा इति पृथक्पदं वा विगतं नष्टं नाशनं येभ्यस्ते तथा मुक्तावपि स्वरूपभेदधर्मरहिता न भवन्तीत्यर्थः । "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय" इत्यादिश्रुतेः सपदि वैराग्यज्ञानानन्तरं दीनं दारिद्र्यापादकं कुटुम्बं विसृज्य दीनाः दीङ्क्षय इति धातोः दीना निर्दोषा इत्यर्थः । बहवो विहङ्गाः विहायसा नाम्नाकाशेन हरिणाधारेण गच्छन्तीति विहङ्गाः सन्यासिन इह जीवराशौ भैक्ष्यचर्यां ज्ञानलक्षणामुद्दिश्य चरन्ति देहयात्रां कुर्वन्ति ज्ञानार्थमेव तेषां देहधारणं नोदरपूरणार्थमित्यर्थः । "प्रव्रजन्त्येतद्धस्मवैते पूर्वे विद्वांसः प्रजां न कामयन्ते किम्प्रजां करिष्यामो येषां नोऽयमात्मा यं लोक इति ते हस्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यां चरन्ती"ति श्रुतेः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्यानुचरितं तस्यानुकूलं कर्मैव लीला बालचरितवत् स्वच्छन्दलीला । सैव कर्णामृतस्य पीयूषं न तु मनसः आपाततः सुखप्रदा परिणामतस्तु दुःखदेत्यर्थः । तस्यापि विप्रुट् नतु बाहुल्यमित्यादि स्वयं दीना विनष्टाश्च सन्तः इह तल्लीलास्थाने । धीरा इति पाठे तेषां दुःखेनाक्षुभिताः कठोरचित्ताः सन्तः ॥ १८ ॥ १६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु तर्हि कथमेव कुर्वन्तु किमिति भगवतो दोषा उच्यन्ते नहि भगवद्गुणतत्परा भगवद्दोषान् कथयन्ति नवा तेषामन्यथा स्फुरतीति चेत्तत्राह । यदनुचरितेति । यथा भगवान् तथैव तत्कथापि ततोऽप्यधिकापि वयं हि स्त्रियः नात्यन्तं विवेकवत्यः भगवता बहुकालं स्थित्वा कथंचिन्नयामोहिताः तत्रापि न भिक्षां प्रार्थयामः नापि भ्रान्ता इव जातिभ्रष्टा जाता नापि त्यक्तस्थानाः कथा त्वदीयस्यापि महान्तमनर्थं सम्पादयति इत्याह । यस्य भगवतः अनुचरितं भगवतानु पूर्वमाचरितं तत्पुनः व्यासादिभिरुपनिबद्धमनुचरितं जातमनेन शब्दव्यवहितमपि तथा कार्यं सम्पादयतीत्युक्तं यथा निदाघे वस्त्रादिव्यवहितोऽपि भानुः सन्तापयत्येव तत्रापि ग्रहणसौकर्यार्थमाह । लीलेति । दुर्ज्ञेयत्वं ज्ञात्वा अभक्ष्यमपि रसव्यामोहितो भक्षयति तत्रापि न प्रयत्नसाध्यता कार्येत्याह । कर्णपीयूषेति । निमीलिताक्षेणापि कर्णामृतं पातुं शक्यं बहुपाने तु को वेद किं वा भवेत् किन्तु तस्यामृतस्य विप्रुट् बिन्दुमात्रं तस्यापि सकृददनं सादरमनन्ना ग्रहणं तेनैव विधूता द्वन्द्वधर्मा रागादयो येषां तैर्बद्धस्तिष्ठति अतस्तदभावात् विनष्टा भवन्ति "णश अदर्शने" यथा सर्वप्रतीत्या गृहीता भवन्ति तथा गच्छन्तीत्यर्थः । लौकिकवैदिकमार्गादपि पुष्टिमार्ग एवाभिनिवेशात् अन्यानुरोधेनापि तेषां स्थितिं निवारयति । सपदीति । ज्ञानिनो विरक्ताः कर्मिणोऽपि स्वार्थमपेक्षाभावेऽपि परार्थमपेक्षन्ते एतेषां तदपि नास्ति यतः सपद्येव गृहस्थितमपि कुटुम्बं दीनमपि उत्सृज्य त्यक्त्वा स्वयमपि दीनाः सन्तो बहव एव विहङ्गा जाताः इहास्मिन् जन्मन्येव हंसाः परमहंसा वा विहङ्गपदं गताः साधारण्यप्रतिपादनार्थमितो गताः काका गृध्रा हंसा वा भवन्तु परं गच्छन्त्येवेति ज्ञापनार्थं तेषां तु आकाशगतिरिव सर्वविलक्षणा भवतीति । ननु तादृशाः कथमुपलभ्यन्ते तत्राह । भिक्षुचर्यां चरन्तीति । भिक्षुश्चतुर्थाश्रमवान् तस्य चर्यामाचारं गृह्णन्ति तदनधिकारिणोऽपि तत्फलानभिलाषिणोऽपि तन्मार्गरहिता अपि तदाचारं गृह्णन्तीत्यर्थः । एवं स्वधर्मं परित्याज्य परधर्मं ग्राहयति दुःखितांश्च करोति तान् सम्बन्धिनश्च स्वसुखमपि बहु ताननुभावयति अतः कथापि त्यक्तव्यैव परमशक्यत्वात्र त्यज्यत इति भावः । पुष्टिमार्गश्रुतीनामपि भगवन्मर्यादाश्रुतयोऽपि नात्यन्तद्वेष्याः किन्तु ग्राह्या एव परं नाभिप्रेता इति तृतीयपर्याये प्रथमं तामस्याः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वयं साक्षात्तेन सह सख्यं कृतवत्यो यद्दुःखिन्यो ऽभूम तत्र किं चित्रं तल्लीलाकथापि सर्वजगत्सन्तापनीयेत्याह । यस्यानुचरितं प्रतिक्षणचेष्टितमेव लीला सैव कर्णपीयूषं शब्दमात्रेणैव सुखदं किं पुनरर्थत इति भावः । तस्या अपि विप्रुट् तस्या अपि सकृदप्यदनं किञ्चिदास्वादनं तेनापि विधूता विशेषेण खण्डिता द्वन्द्वधर्मा स्त्रीपुंसादिपरस्परसम्बन्धरूपधर्मा येषां ते तत्कथां स्त्री चेत् शृणोति सद्य एव पतिस्नेहं त्यजति । पतिश्चेत् स्त्रीस्नेहम् एवं पुत्रश्चेत् पितरं मातरञ्च । माता चेत् पुत्रमित्येवं परस्परत्यागाद्विशेषेण नष्टा इति ते नाश तथा न दुःखं यथा वैराग्य इति सांसारिकलोकानुभव एव प्रमाणमिति भावः । किञ्च । ते जनाः

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्निग्धमनसोऽपि कठोरस्य कृष्णस्य लीलाश्रवणादतिकठोरा निर्दया कृतघ्नाश्च भवन्तीत्याह । सपदि कथाश्रवणक्षणमात्र एव गृहकुटुम्बं पितृभ्वस्त्रादिपर्यन्तमपि दीनम् अन्यस्योपार्ज्जकस्याभावात् श्वो यद्भोक्ष्यते तद्धनरहितमपि । यद्वा तद्विच्छेदकातरम् उत्सृज्य सूत्रवे कुशवारिसंयोगेन सम्प्रदायैवेत्यर्थः । हन्त हन्त ते स्त्रीपुत्रादयो म्रियन्तां नाम स्वयमपि सुखिनो नैव भवन्तीत्याह । दीनाः गृहं त्यक्त्वा गच्छन्तश्चित्तविक्षेपाद्वराटकमात्रमपि ग्रन्थौ न गृह्णन्तीति भावः । धीरा इति पाठे भार्यादिरोदनदर्शनेऽप्यक्षुभ्यन्तो महाकठोरा इत्यर्थः । नच ते एकद्वा द्वित्रा वा चतुःपञ्चा वा किन्तु बहवः परःशताः परःसहस्राश्च । ननु ततस्ते कया जीविकया जीवन्तीत्यत आह । विहङ्गाः पक्षिण इव भिक्षुचर्य्यां गोधूमादिकणभिक्षापरिपाट्यैव जीवन्ति ननु केनापि दत्तया स्थूलभिक्षयापीति भावः । इहेति पाठे अत्रैवास्मद्दुःखस्थाने वृन्दावन एवागत्येति अस्मत्सकाशादपि महादुःखिनो भवन्तीति भावः । तेन तत्कथाया बडुमत्स्यपिण्डकामयधुस्तूरबीजचूर्णत्वं कथावाचकस्य साधुवेशच्छन्नमहाघातकत्वम् । पुराणपुस्तकस्य जालत्वम् अत एव ते वनाद्वनं भ्रमन्तोऽपि स्वकक्षगृहीतपुस्तका एव दृश्यन्ते व्यासादीनां जालनिर्मातृत्वं कृष्णस्य परमेश्वरत्वेन तत्तदादेष्टृत्वम् एतदर्थमेव कृष्णेन परमेश्वरता गृहीता गोप्य इव सर्वलोका अपि दुःखाब्धौ पतन्त्विति तस्य विचारः । ईदृशपरदुःखदर्शनमेव तस्य सुखम् अत ईदृशपरदुःखदानजन्यफलभागी यथा स भविष्यति न तथा व्यासादय इति परःशता एव ध्वनयोऽस्य पद्यस्य सर्व एव सिद्धान्ततो व्याजस्तुत्या भक्तेः सर्वोत्कर्षव्यञ्जका ज्ञेयाः । अत्र स्वगं सदृशाकृत्य सज्जनानां खेदनात्तस्य त्याग एव समुचित इत्यनुतापमयं वाक्यमित्यभिजल्पः । यदुक्तम् । "भङ्ग्या त्यागौचिती तस्य खगानामपि खेदनात् । यत्र सानुशयं प्रोक्ता भवेदभिजल्पितम्" ॥ १८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यद्यपि तत्कथार्थोऽन्यपुरुषार्थमूलोच्छेदक इति जानीमस्तथापि त्यक्तुं न शक्नुमः किं कुर्म इत्याशयेनाह । यदिति । यस्यानुचरितमेव लीला स्वच्छन्दक्रीडा तदेव कर्णपीयूषं तस्यापि विप्रुट् कणिका तस्यापि सकृददनं दूरात्कथञ्चिदास्वादनं तेन निरस्ता द्वन्द्वधर्मा रागादयः भिक्षुनीभूताचारस्त्यादयो वा यैः तत्कथां पुरुषश्चेच्छृणोति सद्य एव भार्यादिस्नेहं जहाति स्त्री चेत्पत्यादिस्नेहं पुरुषश्चेत् पित्रादिस्नेहं माता चेत्पुत्रादिस्नेहमिति परस्परत्यागात् विनष्टा मृतादपि संबन्धिनो विरक्तास्तस्मादधिकदुःखस्य सांसारिकानुभवगोचरत्वाद्विशेषेण नष्टाः सपदि लीलाश्रवणव्यवहितक्षण एव गृहं तत्र स्थितं कुटुम्बं पितृभार्यादिपोष्यवर्गं च दीनं जीवनोपायरहितत्वाद्धनोपार्जकत्वविच्छेदकातरं परित्यज्य स्वयमपि दीनाः निष्किञ्चनत्वात् भोगहीना धीरा इति पाठे रुदतः पित्रादीनवलोक्याप्यतिकठिनचित्तत्वात् धैर्यमत्यजन्त एवंविधा असंख्याताः पक्षिण इव भिक्षुचर्य्यां चरन्ति गोधूमादिकणभिक्षापरिपाट्यैव जीवनवृत्तिं सम्पादयन्ति इहेति पाठे विहङ्गास्तद्वत्परिग्रहरहिताः इहास्मद्वृन्दावने अस्मत्समक्ष एवातस्तेषां तत्कथार्थकृतामुक्तदशां प्रत्यक्षेणानुभूयापि वयं ततो निवृत्तिं न भजाम इति महत्कष्टमित्यर्थः । एतेन कृष्णादिष्टव्यासादिकृतपुस्तकात्मकजालस्थितकथारसास्वादनकृतजालबन्धनमवाप्य बहवोऽपि दुर्दशां प्राप्ता इति निरूपणेन कृष्णस्यैवं परदुःखजातसुखार्थिनः समस्तदुःखाय गृहीतेश्वरभावस्य मूलकारणस्य दुःखदानजन्यफलभाक्त्वमित्यपि ध्वनितं यद्वा ननु सर्वथा दोषाढ्य एव कृष्णश्चेत्तर्हि तत्कथार्थत्यागे कः प्रयासः दोषदर्शनस्यैव वैराग्योपायत्वाभिधानाद्गोपिकानां तत्कथार्थत्यागासामर्थ्यमात्रे किं चित्रं यतस्तल्लवोऽपि महतोऽपि महदनर्थसम्पादक इत्याशयेनाह । यदिति । यस्य कृष्णस्यानुचरितं यादृशः कृष्णस्तादृशमेव तदनुचरितमधिकानर्थसम्पादकत्वादधिकमपि भगवता पूर्वमाचरितं पश्चाद्व्यासादिभिरुपनिबद्धं तस्माच्छब्दव्यवहितमपि तथा कार्यसम्पादकं वस्त्रादिव्यवहितस्यापि ग्रीष्मसूर्यस्य तापजनकत्वं यथेति भावः । अन्येषां पीडाकरमपि तस्य सुकरमिति ज्ञापनाय इह लीलेति दोषसहस्राक्रान्तमपि विजातीयरसलोभविमोहिता भक्षयन्तीति सूचयन्नाह । पीयूषेति । कर्णामृतं निमीलिताक्षेणापि पातुं शक्यमिति भावः । श्रवणमात्ररम्यमपीति वा तत्रापि विन्दुमात्रं बहुपाने तु किं स्यादिति भावः । एवं भूतस्य विन्दुमात्रस्याप्यत्यादरेण ग्रहणं तेनैव विधूता द्वन्द्वधर्मा रागादयो येषां ते तद्वद्भृदयत्वाद्विनष्टाः अहृदयत्वं प्राप्ता गृहकुटुम्बादिकं दीनमुत्सृज्य स्वयमपि दीनाः सन्तः इहास्मिन्नेव जन्मनि विहङ्गा हंसाः परमहंसा वा जाताः । ननु तादृशाः कथमुपलभ्यन्त इति चेत्तत्राह । भिक्षुचर्यां भिक्षाटनादिरूपमाचारं चरन्ति कुर्वन्ति अस्मद्गृहद्वारि भिक्षार्थमागत्य स्थिता इत्युपलभ्यन्त इत्यर्थः । तथा च महान्तोऽपि तत्कथालवेनाप्येवंविधदुःखमनुभवन्तोऽपि यदा तं न त्यजन्ति तदा त्यागे अस्माकं किं सामर्थ्यमिति भावः । यद्वा ननु तत्कथार्थो दुस्त्यज इति यदि जानासि तर्हि किमर्थं तद्गानं कुर्वन्तं मां निषेधसीति चेत्तत्राह । यदिति । इह बहवो विहङ्गास्तद्गानशीलाः सन्तो भिक्षुचर्यां चरन्ति तत्र को वराको भवान् ते च गोपिकापतिं गोपिकाश्च गायन्तो नादरं लभन्ते भवांस्तु यदुपतिं तत्सखीश्च गायन् कथं तरामादरं लभतामित्याशयः । समानमन्यत् यद्वा मास्तु तत्कथात्यागात्यागकथा स तु सर्वदुःखप्रदत्वात्स्वकुभेर्योचित इत्याशयेनाह । यदिति । "भङ्ग्या त्यागोचितिस्तस्य खगानामपि खेदनात् । यत्र सानुशयं प्रोक्ता तद्भवेदभिजल्पितम्" इत्युक्तेरत्राभिजल्पः उद्धवपक्षेऽप्येवं श्रुतिपक्षे शृणु तत्कथालवस्याप्यलौकिकं माहात्म्यमित्याह । यदिति । पूर्वार्द्धमेकपदं यथोक्ताश्च ते अविनष्टाश्च यद्वद्वन्द्वधर्माणस्ते विषभक्षकत्वाद्विनष्टाः तदुक्तम्—

> भोगा विषयसम्भोगा भोगा एव फणावताम्—
> स्पृशन्नपि मनाग्दष्टो दृष्टो नष्टः प्रतिक्षणम् । इति

त्यक्तविषयत्वात्पीतामृतत्वादेत एवाविनष्टाः सपदि तत्क्षणमेव दीनं तुच्छं गृहकुटुम्बं विहाय दीना औद्धत्यरहिता विनयसम्पन्ना निष्किञ्चना वा धीरा इति क्वचित्पाठः बहवो विहङ्गा हंसा इव सारासारसत्यासत्यादिविवेकचतुराः भिक्षुचर्यां पारमहंस्यं चरन्ति इहेति पाठे अस्मिन् अधिकारिशरीरे विहङ्गाः

**वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।**
**ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् ! भण्यतामन्यवार्ता ॥ १९ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

चिदाकाशगाः तथा च यत्कथाश्रवणमात्रग्राहिणामपि यदा कृतकृत्यता तदा तदनन्यशरणानां माहात्म्यं किं च वक्तव्यमित्यर्थः । तथा च तत्कथाप्रसादश्रवणरतसज्जनानां माहात्म्यप्रतिपादिका श्रुतयः "यथा पुष्करपलाश आपो न श्लिष्यन्ते तद्वद्विदि पापं कर्म न श्लिष्यते न कर्मणा लिप्यते पापकेन तत्सुकृतदुष्कृते विधूनुते" इत्याद्याः ॥ १८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्कथापि प्रवृत्तिमार्गविरोधिनीत्याह । यदनुचरितेति । इह बहवो जनाः यत् यस्य कृष्णस्य अनुचरितमेव लीला तद्रूपकर्णपीयूषस्य विप्रुट् कणिका तस्याः सकृददनेन सेवनेन विधूता निरस्ता द्वन्द्वधर्मा ऐहिकामुष्मिकलोकद्वयसङ्कल्पा येषां ते अतः विनष्टाः लोकद्वयसाधनापेक्षया नष्टतुल्याः दीनं वियोगकातरं गृहेण सहितं कुटुम्बं सपदि उत्सृज्य दीनाः फेनोपायेन श्रुतचरितलेशस्य कृष्णस्य प्राप्तिः स्यादिति दैन्ययुक्ताः विहङ्गाः प्रवृत्तकर्मत्यागात् कृष्णप्राप्त्युपायस्वीकारात् हंसवद्विवेकयुक्ताः भिक्षुचर्यां चरन्ति उपस्थितं विषयानन्दं त्यक्त्वानुपस्थितं किमपि कृष्णप्राप्तिसुखं वाञ्छन्ति अतः प्रसिद्धसुखतत्साधनप्रवृत्तिमार्गविरोधिन्यपि तत्कथा तथापि सा दुस्त्यजा तस्मात्कथ्यतामिति भावः ॥ १८ ॥

### भाषा टीका ।

जिनकी लीला चरित्र रूपी कान के अमृत के बिंदु का एक बखत भी जिनने पान किया है वे लोग सब रागद्वेष धर्मों से छूट गये हैं और अकिंचन होकर दुखित भी अपने गृह कुटुंब को छोडकर आप भी संसार से दुखी होकर बहुत से मनुष्य पक्षि से बन कर इस संसार में भिखारी के आचरण को करते हैं सो उनकी कथा का सुनना ठीक नहीं है ॥ १८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

ननु किमेवं द्वेषे पूर्वं त्वयैव साकं रहसि विहरन्तं किमेवं नाबोच इत्यत आह । वयमिति । हे उपमन्त्रिन् ! दूत ! आस्तामियं वार्त्ता यतः कुलिकस्य मृगयोः रुतं गीतमज्ञा यथा कृतं सत्यमिति श्रद्दधानाः कृष्णस्य हरिणस्य वध्वो भार्या हरिण्यः शरैः क्षताः सत्यो रुजो ददृशुः एवं जिह्मस्य कुटिलस्य तस्य व्याहृतममृतमिव श्रद्दधानाः स्पृहयन्त्यो वयमसकृदेतद्ददृशिम किं तत् तस्य नखैः स्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः तस्मादन्या वार्त्ता भण्यतां कथ्यतामिति ॥ १९ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो तल्लीलाश्रवणाद्वहवो व्यसनं प्राप्ता इति किमवक्तव्यं वयमपि तत्कपटोक्त्या महादुःखमन्वभूमेत्याह । वयमिति । असत्यमपि ऋतमिति श्रद्दधानाः कृष्णवध्व इति असितजनवधूत्वेन तद्युक्तमेवेति पूर्वोक्तमलमसितसख्यैरित्येतदेव दृढीकृतम् अन्यत्तैर्व्याख्यातं यद्वा भो देवि ! तव प्रेयान् संदिशति प्रिये ! प्रसीद न कदापि पुनर्वियोक्ष्ये ततः शीघ्रमत्रागत्य मामनुगृहाणेति चेत्तत्राह । वयमिति । अज्ञत्वादेव पूर्वं कृष्णवध्वः सत्यः तन्नखस्पर्शतीव्रस्मररुजो वयं साम्प्रतं तु जिह्मस्य कुटिलस्य तस्य व्याहृतं गमनसमये आयास्ये इति दूतद्वारा लब्धम् तथा यातीन् वो द्रष्टुमेष्याम इति मधुपुराज्ञोपद्वारा च लब्धम् ऋतमिति श्रद्दधानाः इयन्ति लोकोक्तौ एतत् किमप्यनिर्वचनीयं प्रगाढशाभरेण देहधारणलक्षणम् असमोर्ध्वदुःखं ददृशिम इति सनिर्वेदो विषादः अन्यस्य कृष्णेतरस्य वार्ता ततश्च कराभ्यां गाढं वक्षो धृत्वा व्याकुला क्षणं विमुह्य भूमौ निपपातेति एतच्छब्दध्वनितोऽर्थः एतो मधुकरोऽपि प्रस्थित इति ज्ञेयम् ॥ १९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वयमिति । तैरवतारितम् । तत्रैवमिति जानीम एवेत्यादि पूर्वपद्यावतारिकात्मकं पूर्वपद्यार्थमित्यर्थः । उत्तरेवद्यन्त्रोऽपि तदर्थः । पूर्वः किंशब्द आक्षेपे । उत्तरस्तु प्रश्ने । आस्तामिति तद्वाक्यं यदि प्रमाणं स्यात्तदैव त्वया प्रष्टव्यं नत्वन्यथा । यतस्तद्वाक्यप्रामाण्यबुद्ध्यैव वयं दुःखसागरे मग्ना इत्यर्थ इति । यद्वा । अहो तल्लीलाश्रवणमात्रेण बहवो व्यसनं प्राप्ताश्चेत् कथं तत्कपटोक्त्या महादुःखं वयमन्वभूमेति किमाश्चर्यमित्याह । वयमिति । यद्वा ननु देवि ! प्रथमतः प्रियसंदेशं शृणु ततो विचारय ततस्तुष्य कुप्य वा तत्राह । वयमिति । वयं जिह्मस्य पूर्वोक्तस्य कितवस्य त्वद्बन्धोरसकृद्व्याहृतं न पारयेऽहमित्यादिकम् आयास्य इत्यन्तं वचनसहस्रम् ऋतं सत्यमिवासकृच्छ्रद्दधानाः यथा महतां वाक्यं सत्यं तद्वत् निश्चिन्वानाः मुहुर्व्यभिचारेऽपि मुहुः श्रद्दधाना इत्यर्थः । ततो मोहेन कृष्णस्य तस्यैव वध्वोऽपि सत्यस्ततोऽसकृन्नखस्पर्शेन मुहुः स्वाङ्गेषु तच्चिह्नदर्शनात् तीव्रस्मररुजः तीव्रा स्मररुजो यासां तथाभूताश्च सत्यः एतदृशं दुरवस्थानमेव ननु कदापि स्मरसुखं ददृशुः ददृशिम प्रातश्च इत्यर्थः । तिङां तिङो भवन्तीति छान्दसवार्त्तिकात् सनत्कुमारादीनास्मत्प्रयोगानुसन्धानाद् अतः परोक्षप्रयोगोऽपि तदानीं बोधावरणं सूचयति यत एवं तस्मात् वयमज्ञा एवेति । तत्र दृष्टान्तो हरिण्यः कुलिकरुतमिवेति यथा हरिण्यः कुलिकरुतं सत्यमिवास्मदनुकूलमेवेदं न पुनरन्यथारूपमिति मन्यमानाः भवद्बन्धुनखसदृशकुलिकबाणस्पर्शेनास्मत्स्मरकृतरुजः सत्यः एतदस्मदीयदुरवस्थासदृशीं दुरवस्थानं ददृशुः प्राप्नुवन्तीत्यर्थः । उभयत्र तयोर्यतार्थे

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विशेषणमज्ञा इति । ननु भवत्यस्तावत् कुलवध्वस्तास्तु पशुजातयी मनुष्यभक्ष्यास्तां दुरवस्थां प्राप्तुमर्हन्त्येव इति तासु कथं स्वसाम्यं निर्दिशसीत्याशङ्क्य स्वपक्षान्तःपात्यमानानां तासां पक्षपातमाचरन्ती श्लाघामाह । कृष्णवध्व इति । तद्भर्त्तारोप्यात्मानं परमोत्कृष्टकृष्णनामतया व्यापयन्ति ततस्तद्वन्धुतस्तेषां को निकर्षो येन तासामपि निकर्षः स्यात् । ततो यथा तादृशीषु तासु कुलिक एव दुःखदायी स्यात् तथास्मासु भवद्बन्धुरेवेति भावः । ततो हे उपमन्त्रिन् ! दाम्भिकतया तूर्ष्णीं स्थितस्यास्य तन्मान्त्रिणः प्रतिनिधे । यद्वा । तत्रोपमान्त्रिणो राजन्नानाहास्यरसैर्विभुमित्यत्र तथा व्याख्येयानुसारेण हे भण्डविद्यापण्डित ! अन्या वार्त्ता भण्यतामुपहासस्त्यज्यतामिति । "उन्मादवचने तासां या कृष्णादर्थसङ्गतिः । तदुत्कर्षाय सा भातीत्यनूक्तं मुनिभिस्तथेति" ॥ १९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वयं कृष्णवध्वः कुलिककृतं मृताभमात्वासमकर्त्तुः श्वम्बगानम् उपमन्त्रिन् । दूत ॥ १९ ॥ २७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्ह्येयं विचक्षणास्तत्र पूर्वं कथं तद्वशं गता इत्यत्राह वयमिति । कृष्णस्य हरिणस्य वध्वो हरिण्यः अज्ञाः कुलिककृतमिव मृगविश्वासकर्त्तुर्व्याधस्य गानरूपशब्दमिव वयं जिह्मस्य कुटिलस्य तस्य व्याहृतं भाषणरूपं सत्यमिति श्रद्दधानाः तस्य नखरूपैर्निशितैः तीव्रा स्मररुग्यासां तथाभूताः असकृदेतद्रूपं चिह्नं स्वात्मनि स्ववदेद्द स्वात्मस्वरूपेणेति शेषः प्रणयुक्तं स्वात्मानमिति यार्थः दृष्टिमाक्षाप्म अतो हे उपमन्त्रिन् ! दूत अन्यवार्त्ता भण्यतां कथ्यतां तद्वार्त्तया स्थलमिति भावः ॥ १९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कृष्णवध्वो वयं यस्य जिह्मं कुटिलं व्याहृतं वचनामृतं सत्यमिति श्रद्दधानाः यथा अज्ञाः कृष्णमृगवध्वो हरिण्यः कुलिकस्य मृगविश्वासकर्त्तुः रुतं गीतं नानाप्रकारं श्रद्दधते आसक्तिपर्यवसितां कुर्वन्ति तथा तस्यैतस्य तत्करजस्पर्शनेन नखस्पर्शोपलापनेनोत्पन्नेन तीव्रेण स्तनानां रुजेन क्षतेन जाता या तां परमाम् असुरकटाक्षिसुखलक्षणां पीडां सेहिम अनुभूयिष्मेति यत्तेनाऽस्य वार्त्ता भण्यतां श्रुतया तयाप्यानन्दमाप्नुयामह इति जिह्मं सन्दूतवचनमपि व्याहृतमिति वदतः श्रद्दधानाः ईश्वराणां वचः सत्यं तथैवाचरितं क्वचिदिति वचनात् जिह्मं मन्येमवक्रयोरिति वचनात् अस्याः हरिणीनां कुलिककृतवत्सत्यं न त्वसत्यं तद्विस्यामं ओऽस्य अन्यत्वानीति केचित् अन्याविषयं वचनं नस्वेतद्विषयं सर्वस्मादन्यस्य विलक्षणस्य भिन्नस्येति वा ॥ १९ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ननु यावन्ति दूषणान्युच्यन्ते तानि सर्वाण्येवासङ्गतानि प्रमाणाविरोधात् तत्राह । वयमृतमिति । वयमपि पूर्वं प्रमाणपरा एव जाताः भगवता हि पूर्वमुक्तं न मयोदितपूर्वं वा अनृतमिति ततः न पारयेऽहं निरवद्यसंयुजामिति साधनकाले फलकाले च वाक्यत्रयं जिह्मव्याहृतं कपटेनोक्तमन्यथोक्तमन्यथा प्रतीतिं जनयति भगवता उक्तं पूर्वं मया नानृतमुक्तं भवदर्थं वक्ष्यामीति भवतां साधुकृत्यं न पारये इति न करिष्यामीति परं परिज्ञाने अस्माकमेवान्यथा बुद्धिर्जाता अयमस्मान् प्रति अनृतं न वक्ष्यति क्षणिस्ववचनात् कदाप्युदासीनो न भविष्यामीति अत एव वयं जिह्मव्याहृतमपि ऋतमिति सत्यमिति श्रद्दधाना जाताः नन्विदानीं विचारचतुराः पूर्वं कथं भ्रान्ता जाता इत्याशङ्क्याह । कुलिककृतमिति । वयमप्यारण्याः हरिणोऽपि हरिण्येवं कृत्वा मृगपुर्णीयति तदा हरिण्यो मुग्धाः पूर्वं हारिणादेनं विश्विष्टं मत्वा हरिणोऽयं हरिणकार्यमधिकरिष्यति गानादिकमधिकं करोति भ्रमात् पूर्वहारिणं परित्यज्य तत्स्थाने गताः तदाह । अज्ञाः कृष्णवध्व इति । भ्रमादेव द्वितीयकृष्णसारस्य वध्वो जाताः । यथा वयं कृष्णपत्न्यः । ननु को दोषो जात इति चेत्तत्राह । हरिण्य इति । हारिणस्य हि ता भार्याः नत्वाकृतिसाम्यादन्यस्य इमा गोपभार्याः नापीश्वरस्य नापि क्षत्रियस्य नापि यादवस्य परं स एव गोपत्वेन स्थित इति गोप एवास्मत्स्थितं करिष्यतीति प्रवृत्ताः पश्चात्स ईश्वर एवेश्वरो जातः गोपीकाः परं नष्टा इति भावः । ननु किमिति नाशो भाव्यते हरिण्यस्तु तेन विद्धा नैतु भवत्य इति चेत्तत्र तुल्यार्थतामाह । दद्रुरिति । एतद्दद्रुः स्वावस्थामभिनयेन प्रदर्शयन्तीः हरिणीनां तामवस्थामाह । हरिण्योऽप्युभयतो भ्रष्टा जाताः स्वयमेव हरिणीनां बोधने दृष्टान्तभूता इति पूर्वं हरिण्युपक्रमेण निरूप्यमाणमप्यर्थं पश्चात्स्वप्राधान्येन निरूपयति । तत्करस्पर्शेति । नखकामयोः स्वास्मिन्नेव प्रसिद्धिरिति बाणवेदनमुपलक्ष्यते तस्य भगवतः नखानां यः स्पर्शः तेन तीव्रा या स्मररुक् सा यासां कटाक्षादयो विस्मृता अपि भवन्ति न नैवादयः अन्या वेदना त्वौषधेनापि शाम्यति स्मरणेनैव तथा भवति इति स्वस्योपमानत्वम् उपमन्त्रिन्निति सामीप्येन नीतिज्ञत्वेन च सम्बोधनमाह । एतत्र प्रकटी कर्त्तव्यं ज्ञायते च भगवत्स्वरूपमिति अतो भगवद्वार्त्तया क्लेश एव भवतीति अन्यवार्त्ता भण्यताम् अन्यार्थमागतः कश्चिद्वयमन्य इति ज्ञाप्यतामित्यर्थः । तदेवमुपालम्भं न करिष्यामः ॥ १९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नन्वेवञ्चेत् परमविज्ञाभिर्भवतीभिः कृष्णे तस्मिन् कथं सख्यं कृतं तत्राह । वयं तस्य न न पारयेऽहं निरवद्यसंयुजामित्यादिकं जिह्मव्याहृतमपि ऋतमिव सत्यमिव श्रद्दधाना अज्ञा अभूम कुलिकस्य व्याधस्य रुतं श्रद्दधाना हरिण्यः कृष्णवध्वः कृष्णसारस्त्रिय इव ततः किकिमित्यत आह । एतत् कुलिककृतं वद्भुः स्तस्य दर्शनासम्भवात् तत्फलं शराघातं वद्भुरित्यर्थः । तथैव

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वयमपि तन्नखस्पर्शेन तीव्राः स्मररुजः कन्दर्पपीडा ददृशिमेत्यर्थः असकृदिति । एकवारं तत्फलदर्शनेऽपि पुनरपि विश्वासात् पुनरपि तत्फलदर्शनाद्दुःखाधिक्यं हरिणीनां तथैवास्माकमपि लब्धपुनःपुनर्मानोत्थदुःखदशानां तस्मात् उपमन्त्रिन् ! हे विदूषक अन्यवार्त्ता भण्यतां तस्य तद्वार्त्तायाश्च दुःखदत्वादन्यकथैव सम्प्रत्यस्माकं सुखदा इत्यर्थः । अत्र तस्य कौटिल्यं तद्वार्त्ताया दुःखदत्वम् अन्यवार्त्तायाः सुखदत्वात्मिखयमाजल्पः । यदुक्तम्

जैह्म्यं तस्यार्त्तिदत्वञ्च निर्वेदाद्यत्र कीर्त्तितम् ।
भङ्ग्यान्यसुखदत्वञ्च स आजल्प उदीरितः ॥ १९ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु पूर्वं तेन सख्यमासाद्य रमिता त्वं किमिदानीमेवं वक्तुं प्रवृत्तासि परमाभिज्ञया त्वया प्रथममेव विचारणीयं स्थितमतः प्रियसंदेशमाकर्ण्य ततो विचार्य तुष्य वा कुप्य वेत्याशङ्क्याह । वयमिति । यद्वा दूरस्थितास्तत्स्वभावानभिज्ञा आपातरम्यां तत्कथामाकर्ण्य अधोकदशां प्राप्नुवन्ति वेत्प्राप्नुवन्तु नाम यूयं तु तत्सहचर्य्यैः बालभावमारभ्य तत्स्वभावाभिज्ञाः कथं तस्मिन् विश्वस्यैवंविधां दुर्दशां प्राप्ता इति चेत्तत्राह । वयमेव अज्ञाः सहचरत्वेऽपि ग्रामीणत्वाद्धङ्कत्वादिलक्षणतत्स्वभावानभिज्ञाः जिह्मस्य कपटस्य स्वच्छन्दोव्याहृतमबलकुङ्कपदीय एवाहमित्यादिभिरुभाषितं सत्यं वेद वाक्यमिव श्रद्धाना जिज्ञिस्यानाः यद्वा कपटेनान्यथा प्रयुक्तमन्यथा प्रतीतिं जनयित्वा साभिप्रायेण भाषितं न मर्यादितपूर्वं वा अनृतमिति साधनकाले न पारयेऽहं निरवद्यसंयुजामिति फलकाले इदं वाक्यद्वयं पूर्वं मया नानृतमुक्तं भवदर्थं तु वक्ष्यामि भवतीनां साधुकृत्यं न पारये न करिष्यामीत्यर्थविवक्षया तेन प्रयुक्तम् अस्माभिस्तत्कपटानभिज्ञाभिः अन्यथैव बुद्धमिति भ्रान्त्वा सत्यमिव श्रद्धानाः कचिदृतमितीति पाठः स्वाज्ञानहेतुं ज्ञापयन्ती अनुरूपं दृष्टान्तमाह । कुलिकेति । कुलिकस्य मृगवेषं विधाय गायमानस्य रुतं तत्प्राणापहाराभिप्रायेण प्रयुक्तं गीतशब्दं सत्यमिव श्रद्धाना अयं कृष्णसारो मत्कृष्णसाराद्भिन्नः तत्कार्यं करिष्यति गानं चेति मत्वा तद्रुतं कृष्णसाररुतं सत्यमिव श्रद्धानास्तदनुध्यात्वार्थं तत्सन्निधौ गताः यथा गोपभार्या वयं गोपत्वेनाच्छन्नं यादवमीश्वरं वा कृष्णं गोपं मत्वा कृष्णवध्वो जाता इति सूचनायाह । कृष्ण वध्व इति । शरैः क्षताः सत्यो दुःखं ददृशुस्तथा वयमेतद्ददृशिम किमित्यपेक्षायामाह तस्य नखस्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः एता इदानीमप्यनुभूयमानास्तन्नखस्पर्शतीव्रस्मररुज इति वा यद्वा ननु यूयमेवंविधविशालनेत्राः किमिति वञ्चनां प्राप्ता इत्याशङ्क्य प्रज्ञाचक्षुर्विधुरा वञ्च्यन्त एवातो न वयमेवोपालम्भनीया इत्याशयेनाह । वयमिति । यथा जिह्मव्याहृतं सत्यं श्रद्धाना अज्ञा वयं तन्नखस्पर्शेन तीव्रः स्मरस्तेन रुक्पीडा यासां तथाभूता जातास्तथा कृष्णसारवध्वो हरिण्योऽपि कुलिकरुतं श्रद्धाना अज्ञा एतदेव ददृशुः अस्मदनुभूयमानदुःखसमानशराघातजन्यं दुःखं ददृशुः कटाक्षादयः कदाचिद्विस्मर्यन्ते नतु नखक्षतानि स्मारकचिह्नानां विद्यमानत्वादिति ध्वनयितुं नखस्पर्शेत्युक्तम् अन्याः पीडास्त्वौषधैः स्वनिदानानिवृत्त्या निवर्तन्ते एतास्तु न कदापि एतन्निदानस्य स्मरणस्य सर्वदा सत्त्वादिति सूचयितुं स्मर इत्युक्तं यद्वा तिष्ठत्वस्माकमन्येषां च वार्त्ता तिर्यग्योनिजा अपि दुर्दशां प्राप्ता इत्याह । वयमिति । तन्नखस्पर्शतीव्ररुजो वयमिवाज्ञाः कृष्णसारवध्वो हरिण्यो व्याधगीतसदृशं कृष्णस्य मुखेन वेणुना व्याहृतम् रुतं श्रद्धाना एतदस्माभिरनुभूयमानं कामजन्यं दुःखमसकृद्ददृशुर्वयं नखस्पर्शेन यां दशामधिगतास्तास्तां तद्व्याहृतश्रवणेनैव प्राप्ताः इति कोऽस्माकमपराध इति भावः । तस्माद् हे उपमन्त्रिन् ! अन्यवार्त्ता भण्यतां कृष्णवार्त्तायाः क्लेशप्रदत्वादन्यार्थमहमागतोऽहमन्यो न तु कृष्णसंदेशहरः इत्युक्त्वा अन्यवार्त्ता कथ्यतां तदेवारब्धं न हास्याम इत्यर्थः । तत्सरूपस्य ग्रामस्वात्तस्य च तन्निकटवर्त्तितया सुखवार्त्ताधारित्वात्तद्वधूसप्रकटीकरणस्यायुक्तत्वाच्च मास्तु तद्वार्त्तेति सम्बोधनाशय. यद्वा हे हास्यप्रधानभावहविधानिधानोपहास्यवार्त्तातिरिक्तवार्त्ता प्रोच्यतां रुदतीनामस्माकमुपहासवार्त्ताया हृदयविदारकत्वादिति भावः—

जैह्म्यं तस्यार्त्तिदत्वं च निर्वेदाद्यत्र कीर्तितम् ।
भङ्ग्यान्यसुखदत्वं च स आजल्प उदीरितः ॥

इत्युक्तत्वादयमाजल्पः उद्धवपक्षे हे उपमन्त्रिन् ! अन्तरङ्गमन्त्रिन् समानमन्यत् श्रुतिपक्षे ननु—

अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति
अपाम सोममसृता अभूम

इत्यादिभिर्वेदवाक्यैः—

यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ॥

इत्याद्यभियुक्तवाक्यैश्च स्वर्गसुखस्यानित्यत्वाभिधानात्तद्गमे तत्प्राप्त्युपाये सति किमर्थं सर्वत्यागरूपे महत्यायासे नियोजयसीति चेत्तत्राह । वयमिति । कपटेन व्याहृतं हि वाक्यमन्यार्थमभिधायकमन्यथाप्रतीतिं जनयति उदाहृतवाक्यमपि कर्मश्राद्धस्यबोधनाय प्रयुक्तं तत्फलनित्यत्वबोधकत्वाज्जिह्मेन व्याहृतं तद्ज्ञाः कर्मैव यागभराक्रान्ताः यज्जन्यं तदनित्यमिति व्याप्तिज्ञानविधुरत्वान्मन्दमतयः ऋतं यथार्थार्थकमिव श्रद्दधानाः नखानीन्द्रियाणि तैः स्पृश्यन्त इति स्पर्शा विषयाः तेषु तीव्रो यः स्मरः कामः स्मरणस्याभिलाषे लक्षणा तेन स एव वा रुक् येषां ते असकृत् पुनः पुनः एतज्जन्ममरणादिलक्षणं संसृतिचक्रं ददृशुः कृष्णवध्वो हरिण्यो यथा कुलिकरुतं श्रद्दधानाः दुःखं ददृशुस्तद्वत् तथाचोक्तं भगवता—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
कामात्मानः स्वर्गपरा भोगैश्वर्यगतिं प्रति ।
गतागतं कामकामा लभन्ते ॥

इत्यादि यस्मादुदाहृतवाक्यजातं न स्वार्थे प्रमाणं—

तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र
पुण्यचितो लोकः क्षीयते इति ॥

तर्कानुगृहीतश्रुतिवाक्यैः कर्मफलस्यानित्यत्वाभिधानात् तत्तस्मात् हे उपमन्त्रिन् ! प्रपञ्चानित्यत्वब्रह्मनित्यत्वप्रतिपादकान्तरङ्गमन्त्रार्थैव वयमिवान्यत् प्रतिपादयामस्तद्वत् तथा च श्रुतिः—

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्युं ते पुनरेवापियन्ति ॥
यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।

प्रियसख ! पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ! ।
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य ! श्रीर्वधूः साकमास्ते ॥ २०

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ ।
नानुध्यायेद्बहून् शब्दान् वाचो विग्लापनं हि तत् ॥

इत्याद्या ॥ १९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यास्तु आस्तां बहुदुःखदस्य कृष्णस्य कथाऽन्यवार्ता कथ्यतामित्याहुः । वयमिति । हे उपमन्त्रिन् ! दूत कृष्णवध्वः कृष्णमृगभार्याः हरिण्यः अज्ञाः कुलिकहार्दानभिज्ञाः कुलिकस्य वधिकस्य इतं गीतम् ऋतमिव श्रद्दधानाः शरैः क्षताः सत्यो रुजो ददृशुः एवं वयं जिह्मस्य दुर्ज्ञेयहार्दस्य व्याहृतमृतमिव श्रद्दधानाः अलं छन्देतत् वदाशिम किन्तत् तस्य नखस्पर्शेन यस्तीव्रः कामस्तेन रुजः पीडाः तस्माद्दुःखदस्य कथां हित्वा ऽन्यवार्ता भवता कथ्यताम् ॥ १९ ॥

---

भाषा टीका ।

जैसे कपटी व्याध के गान के उपरश्रद्धा कर के कृष्णसार मृग की वधू हारिणी बंध जाती हैं तैसे हम भी अज्ञानवाली हो कर इन कपटी कृष्ण के वचनों को सुन कर लुभाय गईं परंतु बारंबार उन कृष्ण के नखों के स्पर्शों के देखने से हम को बड़ी काम की पीड़ा होती है तिस से हे कृष्णदूत ! तू अब उन की बातों को छोड़ कर दूसरों की बातों को कर ॥ १९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पराङ्गत्य गत्वा पुनरागतं प्रत्याह । प्रियसखेति हे प्रियस्य सखे प्रेयसा कृष्णेन पुनः प्रेषितः किंस्वमागतोऽसि अङ्ग हे दूत ! मे माननीयः पूज्योऽसि अतो भवान् किमनुरुन्धे प्राप्तुमिच्छतीत्यर्थः तदरय वृणीष्व सम्मानितं प्रत्याह । नयसीति । इह सतीः अस्मान् दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य पार्श्वं समीपं कथं नयसि नेष्यसि तथा हि हे सौम्य ! श्रीर्नाम वधूः साकं सदैव सततमास्ते तथाप्युरसि वक्षस्येव ॥ २० ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

क्षणान् स्वस्थोत्थिता सती मधुपमप्यागतं दृष्ट्वाह । प्रियेति । उद्धवपक्षे च संभ्रमभरेण जलाद्याहरणार्थं वेगेन गतं तं पुनरागतं दृष्ट्वेति हे प्रियसखेति पुनरागमनात् प्रेयसेति तत्र पुनरागमनेन तत्प्रेषणमननात् दुस्त्यजद्वन्द्वत्वमेव दर्शयति । सततमिति । हे सौम्य ! शान्तप्रकृते अतस्तेन सह तत्र सख्यमनुचितमिति भावः । अन्यैस्तव्याख्यातं यद्वा पुरःस्थमपि ते प्रेमोन्मादाद्गतमेव संभाव्य ततश्च भावान्तरापत्त्या पुनरागतं च मत्वा सविषादमिवाह । प्रियेति । प्रेयसा प्रेषितोऽपि किं किमिति त्वं पुनरागाः मादृशां मानधनात्वात् त्वदभीष्टासिद्धेः भवतु "यथोक्तवादिनो दूता नावमान्याः कदाचन" इति न्यायेन मे माननीयोऽसि ततः किमनुरुन्धे कमनुरोधमनुरुणत्सि करोति कं ते कामं पूरयामीत्यर्थः । ननु युष्माकं मधुपुरीगमनमेव वृणोमि तत्राह । नयसीति । सौम्य हे सोमवत् प्रियदर्शन ! अतो रूपमेवास्ते न तु बुद्धिरिति भावः । दुस्त्यजं द्वन्द्वं पुरस्त्रीभिः सह मिथुनीभावो येन तस्य पार्श्वं सदा पुरस्त्रीभिः सह तस्य प्रसङ्गात्तत्रास्माकं गमनं व्यर्थमिति भावः । इतीर्ष्या ननु युष्मासु प्रयातासु ताः सद्यः परित्याज्याः तत्राह । सततमिति । सा नित्यं तत्प्रियत्वाद्विना प्रसिद्धा कं सुखं यथा स्यात्तथास्ते उरसीति विपरीतरत्या वक्ष आक्रम्येति श्लेषः इत्यसूया ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततो भ्रमरस्वभावतो व्यवधानमपि प्राप्तं वा प्रदेशान्तरमेव गतं वा निजोन्मादमूर्च्छयोरेकतरतस्तत्रैव स्थितमप्यननुसंहितं वा क्षणं तमदृष्ट्वा सहजप्रेमोत्कण्ठास्वभावतस्तदुपेक्षामाशङ्क्य मङ्क्षु कलहान्तरितावस्थामिव प्राप्नुवन्ती दैवात्तं पुनरागतं वान्यमेव वा तमेवानुसंहितं वा दृष्ट्वा हृष्यन्त्याह द्वयेन तत्र सस्तुतिकमाह अर्द्धेन । ईदृशोपकारपरत्वात् प्रियसख! अभिलषितमिवेति प्रेयसेति च परमोत्कण्ठात् किमनुरुन्धे अनुरुंत्से कामयसे । पूर्ववत् तिङ्व्यत्ययः । यद्वा । कामये एतमेव कामयिष्ये कर्तुमिच्छामीत्यर्थः । हन्त युष्माकं मधुपुरीगमनमेव वृणोमि तत्र सत्यानस्य सयुक्तिकं सकाकु प्रत्याख्यानमाह अर्द्धेन । दुस्त्यजं द्वन्द्वम् अस्मद्विजातीयतत्रत्यनागरीभिर्मिथुनभावो येन तस्य त्वद्बन्धोः पार्श्वं वयं कया युक्त्या नयसि । ननु भवद्गमनेन सर्वास्ताः स्वयमेव न्यक्करिष्यन्ते सत्यं ता वराक्यः काः किन्त्वस्मद्व्रजतस्तेन सहैव गता सा लक्ष्मीरेव तत्र स्मरमथाय तं रक्षतीति तां प्रत्यपि सेर्ष्यमाह । श्रीरिति । सा तस्य वधूः श्रीरादरवाहुल्येन कं सुखं यथा स्यात्तथा उरस्यास्ते वसति तदेतच्च लक्ष्मीरेखामेव तन्मूर्च्छितयोत्प्रेक्ष्योक्तम् । गोप्यः किमाचरदयं कुशलं स्म वेणुरितिवत् । श्लेषेण तस्या विपरीतस्थितिस्तत्रत्यनया माहात्म्यादिद्वयमपि दर्शितः । इति मत्सरास्तवे । अयमभावः । यद्यप्यत्रापि सा तदविच्युतैवासीत् तथापि श्रीमन्नन्दव्रजसम्बाध्येन तस्य तदा प्रेममाधुर्यादरान्न तादृशस्तदादरो दृष्टः । तत्र तु सम्पत्तिमात्रपुरुषार्थत्वान्महानेव तदादरः इत्यतो वयं कथं तत्र यास्याम इति तस्मादत्रैव तमानयेति गूढोऽभिप्रायः । एवमीर्ष्यासूया स्पृहा च ॥ २० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

परावृत्य पुनरागतं प्रत्याह । प्रियसखेति । हे प्रियस्य सखे पुनः प्रेयसा प्रियतमेन श्रीकृष्णेन प्रेषितस्त्वमागाः किमागतोऽसि किं तर्ह्यङ्ग हे भ्रमर मम संमाननीयोऽसि पूज्योऽसि अतः कियत्किञ्चिदनुरुन्धे भवान्प्राप्तुमिच्छति तद्वरय वृणीहि इह स्थिता इति शेषः अस्मान् कथं दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य भगवतः पार्श्वं समीपं नयसि नेष्यसि तथा हि हे सौम्य ! श्रीर्लक्ष्मीर्नाम वधूः साकं सदैव तत्राप्युरसि इति वक्षस्येव सततमास्ते इति ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मनः कृष्णैकचित्तत्वं दर्शयन्ती ग्रहाविष्टेव वक्तिप्रियेति । हे प्रियसख ! प्रियस्य कृष्णस्य सखे पुनरागाः पश्चाद्व्यावृत्यागतोऽसि पुनरप्रथमे प्रश्ने व्यावृत्तावयधारण इति त्वं प्रेयसा कृष्णेन पुनः प्रेषितः असि किमनुरुन्धे कमर्थमस्मत्तः स्वीकर्तुमिच्छति तं वरय प्रेष्ठबन्धुत्वात्त्वमस्माकं माननीयोऽसि आत्मनो नेतुमागत इति भ्रान्तबुद्धिराह । अङ्गेति । अङ्ग भो उद्धव इह स्थितानस्मान् दुस्त्यजं बन्धोः कृष्णस्य पार्श्वं समीपं नयसि किं दौर्घट्यमित्यतः सपत्नीबुद्ध्या न शक्यमित्याह । सततमिति । श्रीनामवधूस्तस्योरसि सततमास्ते सततशब्दः आपेक्षिक इति तत्राह । साकमिति । अर्धाङ्गित्वेन आस्त इति सपत्न्याः लक्ष्म्या कदापि वियोगाभावात् त्वत्प्रीतानां तद्दर्शनमपि दुर्लभं किम्पुनः सम्भाषणं किन्तरां तदधिताधरदानं कुतस्तमां सुरतलीलानुभव इत्यास्तामयं प्रसङ्ग इति ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीर्वधूः साकमास्ते इति लक्ष्मीरेखामेवोद्दिश्योत्प्रेक्षितम् ॥ २०—२३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमुक्त्वा सम्बन्धं विनिवार्य मूर्च्छिता जाता पुनः सात्त्विकराजसभावेनाह । प्रियसखेति । वहव एव दोषा निवृत्ताः सत्त्वप्राधान्याद्गुणकथनाद्वा अतस्त्वां दृष्ट्वा प्रथमपर्यायात् अन्यथाबुद्धिजनकत्वेन प्रकारान्तरेणागमनं सम्भावयति । भ्रमरमपि पुनरागतमिव भगवतो दोषान् श्रुत्वा तत उत्थाय मूर्च्छितायामुद्धवः पुनरागत इति वा इदानीमपि किं प्रेयसैव प्रेषितः तदा आकाङ्क्षाधिक्यादस्मत्कार्यं भविष्यतीति भावः । हेमन्ते तासां साधनोपक्रम इति पुनर्नवम्युक्तौ व्याप्रियत इति नवमश्लोके हेमन्ते प्रथमो मासो भवति । पुनर्दण्डकलितवदावृत्तिर्भविष्यतीति मत्वा फलदात्रा भगवता प्रेयसा प्रेषित इति तथेत्यङ्गीकृतेत्याह । वरयेति । वरं ब्रूहि साधनेनेदं कार्यं सेत्स्यति अयुक्तमपि वरेण सिध्यति सात्त्विकः कालः भक्तानुगुणो वा तदीयश्रमाणान् उररीकृत्य भागवतादिकामिव प्रदर्शयन् पुनरागमनमाह । तत्रापि मन्त्रदेवतावरेणैव तत्कार्यं भवति नान्यथेति ज्ञापयितुं वरयेत्युक्तम् । उद्धवेऽप्याशीर्वादो देयः भ्रमरस्याप्यामोदोपभोगः कारणीय इति किमिह पुनरुन्धे तुभ्यं ददामि तत्कथयेत्यर्थः । ननु कोऽयं निर्बन्ध इति चेत्तत्राह । माननीयोऽसीति । अङ्गेति स्नेहसम्बोधनं मित्रत्वात् उपकारं हि कुर्वन् माननीयो भवति । ननु तथास्माभिर्न दीयते तथा त्वयापि न देयमित्याशङ्क्याह । नयसीति । त्वं तु नयनार्थमागतः अयमेवोपकारः परं नयने साधनापरिज्ञानादस्माकं संदेहोऽस्ति तत्कथयेत्याह । कथमिहास्मानिति । वयं बह्व्यः स्त्रियः गोकुलं च निरोधस्थानं त्वं चैकः किंच दुस्त्यजो द्वन्द्वो यस्य भगवान् हि नित्यभार्यः विभज्यैव शक्तिं कृष्णो भगवानवतीर्ण इत्यवोचाम ननु सांप्रतं क्वापि तिष्ठति चेत्तत्राह । सततमुरसीति । सौम्येति सम्बोधनं साधुत्वाय श्रीरेव वधूः नतूरसि लक्षणमात्रं लोकप्रदर्शनार्थं लक्षणत्वमापन्ना वस्तु साकमास्ते सदैव तिष्ठति सौम्यत्वात् । संमतिर्दर्शने निरूपिता ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अथोन्मादेन तत्रैव भ्रमन्तमपि तं भ्रमरमननुसन्धाय क्षणमन्तर्हितं वा तमपश्यन्ती सखेदं परामम्रर्श । हन्त हन्त मम तीक्ष्णया गिरा सन्तप्तेनानेन दूतेन मथुरां गतेनावेदितसर्ववृत्तान्तः कृष्णो मामुपेक्षाञ्चक्रे इति कलहान्तरितां दशां प्राप्ता प्रेमाम्बुधिना तद्गुणमौलिना मत्कान्तेन पुनरपि स एव प्रेषितो दूतोऽत्रायात्विति तद्वर्त्म निरीक्ष्यमाणा अकस्मात्तं विलोक्य सादरमाह । हे प्रियसख ! मत्प्रियस्य सखे पुनरागाः मद्वाक्शरताडितोऽपि स्वसाद्गुण्येन मदपराधमगणयित्वैव आगाः । आं जानामि प्रेयसा मय्यतिप्रेमवता मदपराधकोटीरप्यगणयता तेनैव किं प्रेषितः तर्हि वरय वृणु किम् नु रुन्ध अनुरुन्त्से कामयसे इत्यर्थः । यद्वा । कमनुरोधं ते सम्पादयामीत्यर्थः । तव मथुरागमनमेव वृणोमीति चेद्यामि मथुरामित्युक्त्वापि पुनः परस्त्रीवेष्टितं तं तत्र पश्यन्त्या मेऽपदयं मानो भवतीति । परामृश्याह । नयसीति । दुस्त्यजं द्वन्द्वं मिथुनीभावो यस्य तस्य पार्श्वे नन्वेकाकी तत्र स वर्तत इति शपथं ब्रवीमीति तत्राह । हे सौम्य ! आर्यबुद्धिरसीति भावः । श्रीरेव वधूः साकं सदैव तत्रापि सततं तत्राप्युरसि पुरुषायितत्वेनैवेति भावः । अयमर्थः । श्रियो देवीत्वेन नानारूपधारित्वशक्तेः कृष्णो यदा अन्याः स्त्रीः सम्भुङ्क्ते तदा स्वर्णरेखारूपैव तद्वक्षसि तिष्ठति । यदा तमन्याः स्त्रियो नायान्ति तदा रेखारूपतां हित्वा प्रकटमेव युवतिर्भूत्वा तं रमयतीति । अत्र दूतं सम्मान्यापि तदुक्तिमङ्गीकृत्याप्यनौचित्यं ज्ञापयन्ती नाङ्गीकुरुते इत्ययं प्रतिजल्पः । यदुक्तम्—

दुस्त्यजद्वन्द्वभावेऽस्मिन् प्राप्तिर्नार्हेत्यनुद्धतम् ।

दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः ॥ २० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं हस्तक्षेपादन्यत्र गतं तत्रैव भ्रमन्तं वा विह्वलत्वादपश्यन्ती अहो असौ मदुक्तं स्वस्वामिन आवेदयितुं मथुरायां गतः भवतु द्रष्टव्यं मत्प्रियस्तन्निवेदितान्मदुक्तोपालम्भानाकर्ण्य मामुपेक्षते किं वा मदनुनयार्थमन्यं तमेव वा प्रेषयति स्वयमेव वा ससम्भ्रममायातीत्यादि मनसि भावयन्ती तदागमनपथि दत्तदृष्टिः पुनरपि सौरभलोभात् स्वसन्निधावागच्छन्तमवलोक्य

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

क्षान्त्यादिगुणगणाकरेण प्रेमभराक्रान्तस्वान्तेन मत्कान्तेन प्रेषितः स एव पुनरागत इति मत्वा विकासितवदनारविन्दा सादरमाह । प्रियसखेति । हे मत्प्रियस्य श्रीकृष्णस्य सखे अन्यथा मां प्रति त्वामेव पुनः पुनः किमिति प्रेषयेदिति भावः । प्रेयसा प्रेषितस्त्वं किं पुनरागतोऽसि मत्प्रेमातिरेकदत्तदृष्टिर्मदपराधानगणयित्वा मत्प्रप्रेयांस्त्वां पुनः प्रेषितवान् । किं वा मया तिरस्कृतत्वादितो गतः स्वसौजन्येन मदपराधमुपेक्ष्य सन्देशान् गृहीत्वा गन्तव्यमिति विचार्य मार्गमध्यात्परावृत्य स्वयमेवागतोऽसीति किंशब्दार्थः उभयथापि मानार्हस्त्वमित्याह । वरयेति । अङ्ग हे प्रियदूत ! भवान् किमवरुन्धे प्राप्तुमिच्छति यदिच्छसि तदेव वरय वृणीष्व त्वन्मनसेप्सितं वस्त्वहं दातुमिच्छामि यतः संमाननीयः पूज्योऽसि तत्सन्निधौ त्वमेव मुख्यः इतः पूजामप्राप्य प्रत्युत तिरस्कारमवाप्यापि तत्र गतस्त्वं न मद्दत्तोपालम्भानुक्तवान् किन्तु मत्प्रेमातिरेकमेवावादितवानतः सज्जनशिरोमणिश्चेति पुनस्त्वदागमनेन मयावगतमतो यथेष्टत्वत्पूजां कर्तुं मम स्पृहा महती वर्त्तत इति भावः । यदीप्सितं वरं दातुं प्रवृत्तासि चेत्तर्हि प्रेयसा सार्द्धं त्वत्समागममेवाहं प्रार्थये स्वामिकार्यमेवेप्सितं तत्सिध्यनन्तरमनुग्रहेण यद्दास्यसि तद्ग्रहीष्यामीतिचेत्तत्राह । नयसीति । अहो मां तत्र नीत्वा मथुरायां तेन सार्धं संयोजयितुमिच्छामि परं भयादेवं न ब्रवीमि भगवत्या सर्वज्ञया मदभिप्रायानुरोधेनेदमुक्तमतः अवश्यं तत्र चलनीयमिति चेत्तत्राह । कथमिति । अस्मान्नेतुमेव त्वमागतश्चेत्तदुपकरणं शिविकादिकं किमर्थं नानीतवानसि तद्विना च कथमस्मान्नयसीति भावः । किं चेह गोकुले सत्यः तथात्र निरोधस्थाने स्थिता वयं तत्रापि बहवस्त्वञ्चैकोऽतोऽस्मान्नेतुमशक्तोऽसीति भावः ननु यद्यप्यहं भवतीर्नेतुमशक्तस्तथापि भवत्यो गन्तुं शक्ता इति चेत् सत्यं तथापि पुरस्त्रीचेष्टितं द्रष्टुं न शक्ता इत्याशयेनाह । दुस्त्यजेति । दुस्त्यजं द्वन्द्वं तत्रत्यैस्त्रीभिर्मिथुनीभावो येन तस्य त्वत्स्वामिनः पार्श्वे ननु त्वां प्रतीक्षन् एकाकी स वर्तते सशपथं ब्रवीमीति चेत्सन्तु ता नास्ति ताभ्यो मम भयं मद्गमने ता वराक्यः स्वत एव धिक्कृता स्युस्तथापि तेन सार्धमित एव गता श्रीस्तं रमयतीति सेर्ष्यमाह । सततमिति । श्रीरेव वधूः साकं सहैव तत्रापि सततं तत्राप्युरसि श्रियो नानारूपग्रहणसामर्थ्यात्कृष्णो यदा अन्याभिः स्त्रीभिः क्रीडते पुरुषेषु च तिष्ठति तदा रेखारूपेण सा तदुरसि तिष्ठति यदा रहसि स वर्तते तदा प्रकटमेव वधूर्भूत्वा तं रमयतीतिति तत्सादित्थं सर्वदा तस्य वर्ततेऽतोऽस्मद्गमनं तत्र नोचितमिति भावः । यद्वा याऽस्मद्वयाग्रे रेखारूपेण तिरोहिता आसीत् सा श्रीरिदानीं निर्भयस्थाने स्थितत्वात्कं सुखं यथा स्यात्तथा च वधूर्भूत्वा सततमुरसि आस्ते इदानीं प्राप्ताधिकारात्वास्तस्या अस्माकं भयमतस्तत्सार्धमस्मत्समागमं कर्तुमिच्छासि चेत्तमेवात्रानयेतिभावः । यद्वा प्रेयसा त्वत्समागममहमिच्छामीति चेत् किमस्मांस्तत्र प्रापयसि किं वा तमत्रेति विकल्प्य नाद्यः अस्माकं मानिनीनां तत्र गमनायोगादित्याद्यपेक्षायोगमभिप्रेत्य द्वितीयं प्रतिक्षिपति । नयसीति । इह इत्युक्तेः अस्मिन्व्रजे अस्मान्प्रति दुस्त्यजद्वन्द्वपार्श्वं कथम्प्रापयसि दुस्त्यजं द्वन्द्वपार्श्वे यस्य तं द्वन्द्वसम्बन्धस्य दुस्त्यजत्वात्तत्सादित्थेनास्मान्प्रत्यागमनस्य च दुर्घटत्वात्कथमित्यर्थः । ननु भवत्यर्थे सर्वमपि तस्य सुत्यजामिति चेत्तत्राह । सततमिति । हे सौम्य ! साधो त्वं पक्षपातं विहायैतत्सर्वं ज्ञातुं योग्योऽसीति सम्बोधनाशयः "दुस्त्यजद्वन्द्वभावस्य प्राप्तिर्नार्हेत्यनुद्धृतम् । दूतसम्मानेनोक्तं यत्र स प्रति जल्पक" इत्युक्तत्वादत्र प्रतिजल्पः उद्धवपक्षे भगवतो दोषान् श्रुत्वा तत उत्थाय गतः गते च तस्मिन्मूर्च्छितायां तस्यां पुनरागतः निवृत्तमूर्च्छां पुनरागतं तमवलोक्याह । प्रियेति । यद्वा स्वाम्युपालम्भानाकर्ण्य खिन्नचित्तं तमाळक्ष्याश्वासयति । हे प्रियसखेति । प्रियसन्निधायितोऽप्याधिकं वयं वक्तुं शक्ताः सोऽपि तच्छ्रुत्वा प्रत्युत्तरं दातुं मनसि खेदं वा दातुं न समर्थस्तस्य सखा त्वं किमिति खिन्नोऽसीति संबोधनाशयः वयं तवोपरि प्रसन्ना यतस्त्वमस्मान् प्रत्येवागतः पूर्वमिदमबुद्ध्वैवैव मुक्तमित्याह । पुनरिति । पित्रोः प्रियचिकीर्षया प्रेषितो नागतोऽसि किं पुनः किन्तु अस्मात्प्रियचिकीर्षया प्रियेण प्रेषितः आगतोऽसि तथात्वे सति वरयेत्यादिपूर्ववत् श्रुतिपक्षे यद्वैमुख्येन कृतकर्मणां फलभोगाय संसृतिचक्रे प्रवेशितोऽसि सर्वभावेन तदाश्रयणेनैव तव मोक्षो नान्यथेत्याह । हे प्रियसख प्रेयसा परमेश्वरेण प्रेषितः प्रेरितः किमपि अनिर्वचनीयं संसृतिचक्रमागतः आसमन्तात्प्राप्तवानासि तमेव वरय शरणत्वेनाश्रय किमवरुन्धे संसारपाताय तदतिरिक्तं भवान् किमभिलषितवान् "तमु ह्येष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य ऊन्निनीषति तमुह्येष एवासाधु कर्म कारयति यमेभ्यो लोकेभ्यः अधो निनीषति तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ सर्वभावेन भारत तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् इत्यादिश्रुतिस्मृतिभ्यः एवं चेदनन्यभावेन भगवदाराधने त्वं प्रवृत्तस्तदा मम हे सौम्य ! माननीयः अधिकारिसम्पत्सम्पत्त्या मदर्थविचारतत्फलप्राप्तियोग्यः अन्यथा तु नास्ति मोक्षो नापि भोग इत्याह । कथमिति । तत्त्वज्ञानान्तरङ्गसाधनभगवद्भाक्तिलभ्यभगवत्प्रसादाभावे इह स्वस्वरूपभूतपरमात्मनि समन्विता अस्मान्प्रति दुस्त्यजद्वन्द्वपार्श्वे मनः कथं नयसि द्वन्द्वं रहस्ये कलहे पार्श्वान्तिके कक्षाद्यावयवे च पापे पशुगणेऽपि चेतिकोशात् दुस्त्यजद्वन्द्वपार्श्वे कलहपापे येन तत् दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्यादिश्रुत्यैकाग्रमनसो ब्रह्मसाक्षात्कारकरणत्वाभिधानात् निष्कामकर्मभगवद्ध्यानविनिर्मुक्तं कलहादिदोषाविलं यन्मनस्तेन क्रियमाणो वेदान्तविचारो न फलाय कल्पत इति भावः । तथा श्रीर्वधूः साकं सहैव तत्रापि सततमुरस्येवास्ते यद्वा या सर्वैर्भोगार्थिभिरभिलष्यते सा श्रीरपि वधूः कं सुखं यथा स्यात्तथा तस्य भगवतः उरस्येव सततमास्ते तथा च भगवदनुग्रहं विना कथं तत्प्रसादस्तमृते च कथं भोगस्तस्माद्भोगमोक्षार्थिभिर्भगवान् वासुदेव एव सर्वभावेनानुक्षणमाराधनीय इति भावः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

काचित्पुनरागतं प्रत्याह । प्रियसखेति । हे प्रियसख ! मधुकर प्रेयसा अतिप्रियेण श्रीकृष्णेन पुनः प्रेषितः त्वमागतः आगतोऽसि किम् तर्हि हे अङ्ग दूत ! त्वं मे माननीयोऽसि भवान्

अपि वत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहान् सौम्य ! बन्धूंश्च गोपान् ।
क्वचिदपि स कथा नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत्कदा नु ॥ २१ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किमनुरुन्धे प्राप्तुमिच्छति तद्वरय वृणीष्व मां नेतुं पुनः प्रेषित इतिचेत् तर्हि इह सतीः अस्मान् दुस्त्यजं दुर्निवारं द्वन्द्वमन्यसाहित्यं यस्य तस्य श्रीकृष्णस्य पार्श्वे वामाङ्गे कथं नयसि नेष्यसि अन्य-साहित्यं दर्शयति । हे सौम्य मधुकर ! श्रीवधूः श्र्याख्यवधूः साकं सहैवोरसि नित्याचिन्त्यापरिमितश्रीमन्मङ्गलविग्रहैकदेशे वक्षसि सततं निरन्तरं कालत्रयेऽपि आस्ते अनेनापि श्रीविग्रहस्य नित्यता द्योत्यते ॥ २० ॥

---

भाषा टीका ।

हे प्रिय के सखा ! क्या फिर आया है क्या तेरे को प्यारे ने भेजा है अव तू मांग ले मैं तेरे को क्या देऊं हे प्रिय ! तू मेरा मान्य है जिनके संग को पुर स्त्री छोडा नहीं चाहती हैं उस कृष्ण के पास हम को तू कैसे ले जायगा हे सौम्य वे तो सव वखत लक्ष्मी वधू को हृदय मे रख कर साथ ही मे रहते हैं ॥ २० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेन संमन्त्रिता सती ब्रूते । अपिवतेति । वत हर्षे हे सौम्य ! गुरु-कुलादागत्यार्यपुत्रः कृष्णोऽधुना किं मधुपुर्यां वर्त्तते कदाचिदपि नोऽस्मकं वार्ताः किं ब्रूते अगरुवत्सुगन्धं भुजं नो मूर्ध्नि कदा नु धास्यतीति ॥ २१ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

एवं निजप्राणनाथे सर्वसद्गुणमये विरहार्त्तिभरजनितक्षो-भोद्रेकेण कठिनतरोक्तथा विशेषतः प्रेमवेगोदयेन परमार्ता सती सार्जवमिव सगाम्भीर्य्यं सदैन्यं सचापलं सोत्कण्ठमुच्चैर्वदती पृच्छति । अपीति प्रश्ने अस्य वाक्यत्रयेणैवान्वयः वत भो दूत यद्वा सुखमित्यर्थः । आर्य्यस्य श्रीगोपेन्द्रस्य पुत्रः अस्मत्-स्वामीति वा प्रागयं प्रश्नः मधुपुर्य्यामवस्थित्या नैकट्येन व्रजागमनसंभवात् ननु देवि तत्रासौ सुखमास्त एवेति चेत्तर्हि अत्रस्थान् किं स्मरतीत्यन्यत् पृच्छति एवमग्रेऽपि व्याख्येयं पूर्वपूर्वस्मिन्नवतृप्त्योत्तरोत्तरप्रश्नो ज्ञेयः स मधुपुरनिवासी व्रजजनैकजीवातुर्य्यार्य्यपुत्रः पितुः श्रीव्रजेन्द्रस्य गेहान् गेहानि इति जन्मभूमित्वादिना स्मरणयोग्यतोक्ता वहुत्वं व्रजस्यैतस्ततो गमनेन पुत्रसुखार्थं स्थाने स्थाने विचित्रगृहनिर्माणाद् यद्वा नित्यनिवासभूतस्थाने श्रीनन्दीश्वराख्य एव दिव्यमहाप्रासादवा-हुल्यात् किं वा निकुञ्जाद्यपेक्षया एवं पित्रोः स्मरणप्रश्नोऽप्या-यात एव यद्वा पितरौ गृहांश्च निजान् स्मरति तेषामेव तद्गृहत्वाद्विशेषणाप्रयोगः तत्स्मरणेनापि तत्सम्बन्धेन निज-स्मरणसम्भावनया किं वा स्वतस्तेषु स्नेहेनैव तत्स्मरणप्रश्नः हे सौम्य ! सोमवंशोद्भव महाकुलप्रसूतत्वाद्भवता न कार्य्यंति भावः । बन्धून् ज्ञातीन् उपनन्दादीन् गोपांश्च श्रीदामादीन् यद्वा गोपानामेव विशेषणं बन्धून् सखीनिति अयं स्मरणे हेतुः क्वचित् कस्मिंश्चित् प्रसङ्गे स्थानेऽवसरे वा सः श्रीदामप्रियसखोऽस्मत्प्रा-णनाथो वा गृणीते स्वमुखेनोच्चारयेदपि तत्र योग्यतामाह । किङ्क-रीणामिति । बहुधा कृतसेवानां किं वा स्वयमेव दासीभूताना-मित्यर्थः । कथा इति वहुत्वं किङ्करीणां वहुत्वात् किं वा प्रत्येकं कथाया वैचित्र्या स्वत एव बाहुल्यात् अगुरुसुगन्धमिति ध्यान-विशेषेण साक्षात्सौरभ्यमनुभवन्तीव भावविशेषं द्योतयति मूर्ध्नि धास्यतीति स्पर्शविशेषापेक्षया यद्वा तन्मात्रेणापि कृतार्थ-तामननात् तत्र च मूर्द्धनि सर्वाङ्गश्रेष्ठे धारणेन सर्वाङ्गेष्वेव धार-णासिद्धेः किं वा परमदैन्येन तस्मिन् धारणस्यापि वहुमानात् यद्वा रासाभिप्रायेण कण्ठ इति वक्तव्ये लज्जादिना मूर्ध्नीति धारणे हेतुः किङ्करीणामित्येव तु प्रश्ने पूर्वमप्यनुयुक्तेऽपि पुनर्नु-शब्दोत्यन्तार्त्तिप्रश्नात् यद्वा किन्वित्यादिवत् कदाचिदित्येकमेव-पदम् एवं प्रश्नानां चतुर्णामेषां यथोत्तरं लालसाधिक्येन श्रेष्ठ्य-मूह्यम् अन्यत्तैर्व्याख्यातं यद्वा वत खेदे अधुनाप्यास्ते किम् एतावन्तं वहुकालं तत्र स्थातुं नार्हतीति भावः । यत आर्य्यपुत्रः सौम्यश्च ते बन्धवश्च तान् इति सुप्रकृतित्वादिना स्मरणयोग्यतोक्ता मूर्ध्नीत्येकत्वं लालसाविशेषेण दैन्यभरेणैव वा केवलमात्मापे-क्षया मे इति साक्षादनुक्तिः धार्ष्ट्यपरिहारार्थं वैदग्धीविशेषेण वा प्रेमभरस्वभावेनैव वेति दिक् ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो ! किं किं मया प्रलपितं प्रष्टव्यं तु न पृष्टमिति पर्य्यवसाने सार्जवं सगाम्भीर्य्यं सदैन्यं सचापलं सोत्कण्ठं सगद्गदबाष्पधारं पृच्छति । अपीति । अपि प्रश्ने अस्य चरणत्रयमयवाक्यत्रयेणाप्यन्वयः वत भो दूत ! आर्यपुत्र इति कृतया वृत्त्या आर्यस्य श्रीगोपेन्द्रस्य पुत्र इति तच्छब्देन स एवास्माकं वास्तवः पतिः अन्यस्तु लोकप्रतीतिमात्रमयः वाल्य-मारभ्यान्यत्रास्मदीयभावाभावादिति व्यञ्जितं तदुक्तम् इति गोप्यो हि गोविन्दे इत्यादिना इत्यार्जवं तत्र मधुपुर्यामास्त इति प्रागयं प्रश्नश्चिरात्संदेशस्याप्यनागमनात् ननु केवलतयातिदूरगुरुकुल-गमनश्रवणात् तच्छ्रवणे सति व्यग्रतया प्रथमं तदेव पृच्छ्येत ननु मानभङ्गी प्रसङ्गं लभेत यस्मादेव व्रजनरदेवेनापि तत्र पृष्टं तदश्रवणं च प्रथमं लब्धगायत्रीपुरश्चरणार्थं गुप्तवासव्याजेन तत्प्रख्यानात् स च व्याजः शत्रुभिरतिक्रान्तिभयात् व्रजस्थानामेषां महादुःखस्य च शङ्कितत्वाद्भिति ज्ञेयं तदेवमन्यत्र गमनाज्ञानेऽपि सोऽयं प्रश्नस्तु-पालम्भकं गाम्भीर्य्यं व्यनक्तीति गाम्भीर्य्यं ननु देवि तत्रासौ सुख-मास्त एवेति चेत्तर्हि अत्रत्यान् पित्रादीन् किं स्मरती-त्यन्यत् पृच्छति स्मरतीत्यादि एवमग्रेऽपि व्याख्येयं पूर्व-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पूर्वस्मिन्नतृप्त्योत्तरोत्तरः प्रश्नो ज्ञेयः तत्र पित्रादिस्मरणगर्भितं तद्गृहस्मरणं पृच्छति। स मधुपुरीनिवासी रोचमानतत्पुरचिरवासो वा तत्र विलम्बमानो वा व्रजजनैकजीवातुर्वा आर्यपुत्रः पितुर्व्रजेन्द्रस्य गेहान् इति जन्मभूमित्वादिना स्मरणयोग्यतोक्ता बहुत्वं व्रजस्येतस्ततो गमनेन पुत्रसुखार्थं स्थाने स्थाने विचित्रगृहनिर्माणात् श्रीनन्दीश्वराख्ये शैले एव दिव्यप्रासादबाहुल्याद्वा गेहशब्देन तत्स्थपितृमातृतल्लालनं तत्र स्वकीयबाल्यलीलादिकमुपलक्ष्यते बन्धून् ज्ञातीनुपनन्दादीन् गोपांश्च श्रीदामादीन् क्वचित्कस्मिंश्चित् स्थाने ऽवसरे वा स श्रीदामप्रियसखोऽस्मत्प्रियनाथो वा गृणीते स्मरन्सनोच्चारयेदपि तत्र योग्यतामाह। किङ्करीणामिति। बहुधा कृतसेवानामिति दैन्यं बहुत्वं किंकरीणां बहुत्वात् विविधसुबहुवृत्तान्तगर्भवाक्यप्रबन्धरूपाः इति प्रत्येकं कथाः वैचित्र्या स्वत एव बाहुल्याच्च कर्गामिति पाठे एकामपि अगुरुसकाशादपि सुष्ठु गन्धो यस्य तादृशं भुजमिति ध्यानविशेषेण साक्षात् सौरभमनुभवन्तीयोत्कण्ठावेशं द्योतयति मूर्ध्निधास्यतीति दैन्यात् किङ्करीत्वमेव सर्वविघ्ननिवारणपूर्वकं स्थापयिष्यतीत्यर्थः। इति चापलं कदेति तत्रानिश्चयेन परमवैकल्यं सूचयति तत्रापि वितर्के नुशब्दो विचारतो ऽप्यनिश्चयं सूचयतीति परमोत्कण्ठापरकाष्ठा दर्शिता पूर्वमार्यपुत्र इत्युक्त्वा स्वस्य तद्वधूत्वं स्थापयित्वा संप्रतिकिंकरीत्वस्थापनप्रार्थना दैन्यादेव तात्पर्यं तु तद्वधूत्व एव यथा नन्दगोपसुतं देवि पतिं मे कुरुते नम इति सङ्कल्प्यापि श्यामसुन्दर ते दास्य इति कुमारीभिरुक्तं तद्वत् तस्याहं गृहमार्जनीत्यादि श्रीकालिन्द्यादिवचनवच्च अन्यैस्तैः यद्वा एत खेदे अधुनापि मधुपुर्यामेवास्ते किमेतावन्तं कालं तत्र स्थातुं नार्हति किन्तु शीघ्रमागन्तुमर्हतीति भावः। यतः आर्यपुत्रः सौम्यादव ते बन्धवश्च तान् इति सुप्रकृतित्वादिना स्मरणयोग्यतोक्ता ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अपि वतेति हर्षे हे सौम्य! आर्यपुत्रः श्रीकृष्णोऽधुना मधुपुर्यामास्ते किमितरभ्रातृदेहैश्च सहितान् बन्धून् गोपान् स्मरति च किं क्वचिदपि कदाचिदपि किङ्करीणां नोऽस्माकं कथां वार्तां गृणीते किं कदा नु कदा वा अगरुवत्सुगन्धं भुजं नो मूर्ध्नि अधास्यन्निधास्यति ॥ २१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इदं योगमत्प्रलपनसमर्थमित्याह। अपीति। अधुना आर्यस्य पूज्यस्य वसुदेवस्य पुत्रः श्रीकृष्णः मधुपुर्यां वत लोकस्य मनःसन्तोषं विधाय आस्ते अपि किं किञ्च स कृष्णः पितुर्नन्दस्य गेहभार्यां यशोदां तञ्च पितरं स्मरत्यपि किञ्च बन्धुभूतान् गोपांश्च स्मरति अपि च स कृष्णः क्वचित्कञ्चनकालमादाय किङ्करीणां नोऽस्माकं गृहीनोऽपि अनुग्रहं करोति किम्वद कोऽयमनुग्रह इति तत्राह। भुजमिति। कदा नु अगुरुवत्सुगन्धं भुजमस्मन्मूर्ध्नि अधास्यत् धारयिष्यति तदापि वक्तव्यामित्यर्थः। यद्वाग-मिष्यत्तर्ह्यधास्यन्न सन्देहः तदागमनं कदान्विति पृच्छामीति वा ॥ २१—२२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मुखेन नेष्यामीति स्वीकृतवन्तमिवाह। अपि वतेति। अपीति सम्भावनायां वतेति हर्षे भगवान् उपनीतो विद्यार्थकृत इति श्रुतं ततः समागत्य मधुपुर्यां पुष्टिपुर्यामार्यस्य नन्दस्य वसुदेवस्य वा पुत्रः भर्तृत्वेन नामाग्रहणं सत्कुले प्रादुर्भूतः नास्मांस्त्यक्ष्यतीति भावः। अधुना किमास्ते अथवा नीत्वा यावदागमनं स्थापयिष्यतीति सन्देहात्प्रश्नः विद्यमानोऽप्यन्यत्राभिनिविष्टश्चेत् न कार्यं सेत्स्यतीत्यभिप्रायेणाह। स्मरति स पितृगेहानिति। तदा गोकुलस्मरणादस्मत्परत्वं बहुवचनेन स्वच्छन्दरमणमपि सूचितम् एवं वचनं पुरुषान्तरम् अयुक्तमित्याशङ्क्याह। सौम्येति। सम्बोधनं व्याजेन पृष्ट्वा विशेषतोऽपि पृच्छन्ती आह बन्धूंश्च गोपानिति। नन्दगोत्रिणो बान्धवाः अन्ये च गोपाः चकाराद्गोकुलस्थाः सर्वे तदाभिनिवेशो ज्ञायत इति एवं पृष्ट्वा पुनः स्थातुमशक्ता स्ववार्त्तामपि पृच्छति। क्वचिदपीति। रसभावकथायां लौकिककथायां वा पूर्वस्वामी नोऽस्माकं सर्वासां कथामपि स्मरणे हेतुः किङ्करीणामिति। नन्वन्तःकरणवार्त्ता कथं ज्ञायत इत्याह। गृणीते क्वचिदिति। तथोत्तरं दत्तमिति ज्ञात्वा पूर्वमपि परमसन्तापानन्तरं प्रादुर्भूतमिव कथं द्रक्ष्यामीति मनोरथाभिलापमाह। भुजमगरुसुगन्धमिति। कदा वा अगरुसुगन्धं भुजम् अगर्वपेक्षया वा अगरुणा वा कदा वा पुनः मूर्ध्नि अधास्यद्धास्यति ॥ २१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

हन्त हन्त मयोन्मत्तया किं प्रलप्यते प्रष्टव्यं तु न पृच्छ्यत इत्यनुतप्य ससंभ्रममाह। अपि वतेति। मधुपुर्यामास्ते व्रजमिव तामपि त्यक्त्वा अन्यत्र किं स्थिन्न यियासतीति भावः। इतः समीपवर्तिन्यां तत्र पुर्यां तस्य स्थितिरत्रागमनसंभावनामप्युत्पादयतीत्यभिप्रायेण यद्वा सुखमास्ते इत्यनुक्तेरस्मत्प्रणयस्मरणव्याकुलोऽनुरोधवसादेव तत्रास्ते यत आर्यस्य यदुभिर्दुर्विनीतैः प्रतार्यमाणत्वात् सारल्यसमुद्रस्य श्रीव्रजराजस्य तदेकप्राणस्य पुत्रः हन्त हन्त मत्पितापि मां व्रजं नेतुं नाशकत्तदहं तत्र गन्तुं कमुपायं करोमीति स्वविलम्बमसहमानस्त्वां प्रस्थापयति स्मेति भावः। तेन मधुपुर्यामास्ते इति तस्य को दोषः यत आर्यस्यातिसरलस्य स्वपरिणामदर्शित्वेनापि शून्यस्य नन्दस्य पुत्रः तादृशं पुत्रं तादृशः पिता यदुपुर्यां त्यक्त्वा व्रजमायास्यतीति को जानाति यद्यायास्यत् व्रजराज्ञी सा तावदक्रूररथारूढस्य स्वपत्रं कण्ठे कुर्वत्येव मथुरामयास्यत् तामनु गोपिकाश्रेण्यश्चेति व्रजराजस्यार्यत्वमेवास्माकं सर्वनाशे कारणमभूदिति भावः। अनस्तादृशस्यापि पितुरतिसरलस्य वसुदेवेन महाप्रतारकेणाच्छिद्य गृहीतपुत्रस्य व्रजमागत्य मूर्च्छया पतित्वा स्थितस्य गेहान् कोशागाररन्धनागारशयनागारादीन् संप्रत्यमार्जितालिप्तत्वेन तृणधूलिपत्रकृतातन्तुवृतान् शून्यायितान् स्मरति क्वचित् तथा गेहान्तरेषु बन्धून् सुबलादीन् संप्रति

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मूर्च्छितान् क्वचिदपीति यद्वा तस्य मनोऽभिरुचितं कैङ्कर्य्यं कर्तुं पुरस्त्रियो न जानन्ति तदैव तत्सुखमनुपलब्धवतीभिस्ताभिः सुखानुपलम्भकारणं पृष्टो नोऽस्माकं कथां गृणीते वनमाला-गुम्फने स्थासकसंपादने वीटिकानिर्माणे वीणावादने रागताला-दिसृष्टौ गीतनृत्यरासादौ सौन्दर्य्यलावण्यवैदग्ध्यादिषु प्रश्नोत्तर-विलासे संप्रयोगलीलायां प्रेमस्नेहमानप्रणयादिषु यथास्मद्व्रजस्था गोप्यो मां सुखयन्ति न तथा यूयमिति गच्छत भो यदुस्त्रियः स्वस्वपतीनेवालमलं युष्माभिः अहं तु श्वः प्रातर्व्रजमेव गच्छन्न-स्मीत्युक्त्वा अत्रागत्य अगरुसुगन्धभुजमस्माकं मूर्ध्नि कदाधा-स्यत् धास्यति तेन च समाश्वसितः भोः प्राणप्रेयस्यः सशपथ-मिदमहं ब्रवीमि भवतीस्त्यक्त्वा न क्वापि यास्यामि त्रिभुवन-मध्ये क्वापि युष्मत्साद्दृश्यगन्धलेशमपि नोपलब्धवानस्मीति व्यञ्जयिष्यति अत्र प्रथमे पादे आर्जवं द्वितीये स्वप्रसङ्गानुत्था-पनेन गाम्भीर्य्यं तृतीयचतुर्थयोर्दैन्यचापलोत्कण्ठा इत्ययं संजल्पः यदुक्तम् "यत्रार्जवात् सगाम्भीर्यं सदैन्यं सहचापलम् । सोत्कण्ठं च हरिः पृष्टः स सुजल्पो निगद्यते" इत्येवं दशविधो दिव्योन्माद-प्रभेदश्चित्रजल्पो ज्ञेयः स च दिव्योन्मादो महाभावोत्कृष्टभा-गस्य मोहनस्य विलासविशेषो वृन्दावनेश्वर्या वर्णितः—

प्रायो वृन्दावनेश्वर्यां मोहनोऽयमुदञ्चति ।
एतस्य मोहनाख्यस्य गतिं कामप्युपेयुषः ॥
भ्रमाभा कापि वैचित्री दिव्योन्माद इतीर्य्यते ।
उद्घूर्णा चित्रजल्पाद्यास्तद्भेदा बहवो मताः ॥
प्रेष्ठस्य सुहृदालोके गूढरोषाभिजृम्भितः ।
भूरिभावमयो जल्पो यस्तीव्रोत्कण्ठितान्तिमः ॥
चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितः ।
विजल्पोऽजल्प सञ्जल्पः अवजल्पोऽभिजल्पितम् ॥
आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्तितः । इति

प्रेयस्याश्चित्रजल्पमाधुरीपिपासया कृष्ण एव भ्रमररूपमधादिति केचित् ॥ २१ ॥ २२ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु युष्मांस्तत्र नेष्यामीत्यङ्गीकृतवन्तमिव मत्वाहापीति । सम्भावनायामपि वर्तते इति हर्षे उपनीतो भगवान् विद्याध्ययनार्थं गत इति श्रुतं तत आगत्याधुना आर्यस्य नन्दस्य वसुदेवस्य वा पुत्रो मधुपुर्य्यामास्ते भर्तृत्वेन नामाग्रहणम् अस्मद्गमनपर्य्यन्तं तत्र स्थास्यति न वेति संदेहात् प्रश्नः विद्यमानोऽप्यन्यासु अभिनिविष्टश्चे-न्नास्मत्सुखावह इति स्वस्मिन्नभिनिवेशजिज्ञासार्थं पृच्छति । स्मरतीति । यद्वा अहो कामाक्रान्तस्वान्तत्वादुन्मत्तया मया वृथैवैतत्प्रलपितं प्रष्टव्यं तु न पृष्टमिति पश्चात्तापेन सरलहृदया सखी ससम्भ्रमं पृच्छति । अपि वर्तेति । वर्तेत्या-दरार्थे आर्यपुत्रोऽधुना मधुपुर्य्यामास्ते किम् अहो अस्माभिर्ज्ञानं ततोऽप्यन्यत्र गतः नो चेन्निकटस्थाने वसन् किमिति स्वयं नागच्छेत्संदेशहरं कञ्चिदेतावत्कालपर्यन्तं न प्रेषयेत्तथा चास्म-दृष्ट्या तत्र नास्त्येवेति व्यङ्ग्यं यद्वा आर्यस्य वसुदेवस्य पुत्रः सन्नधुना मधुपुर्य्यामेवास्ते किं वा नन्दराजपुत्रस्त्वं परित्यज्य

वसुदेवपुत्रः सन् यथेतो मथुरायां गतस्तथा तत्पुत्रत्वमप्यपहा-यान्यपुत्रः सन् ततोऽप्यन्यत्र गत इति व्यङ्ग्यं यद्वा तत्र तस्य स्थितौ निकटवर्तित्वात्तदागमनस्यापि सम्भावना वर्तत इति कृत्वैवं पृच्छामीति भावः । यद्वा सुखमास्त इति वक्तव्ये तत्स्थि-तिमात्रं पृच्छन्त्या अयमाशयः अस्मत्प्रेमातिरेकस्मरणव्याकुलमान-सोऽसौ तत्रत्यानुरोधेनैव तत्रास्ते न सुखपूर्वकमित्यहं जानामि यत आर्यस्यातिसरलस्य वसुदेवादिकृतं प्रतारणमजानतस्तदेक-प्राणस्य पुत्रः अहो मत्पितापि व्रजं प्रति मां नेतुं नाशकत् उपायान्तरं च नास्त्यतः किं कर्तव्यमित्युत्कण्ठया व्याकुलमना यथाकथञ्चिच्चित्तसमाधानाय त्वां प्रेषितवान् अहो प्राणप्रिय-पुत्रपरित्यागपरिणामाज्ञानरूपसरलता श्रीनन्दरायस्य न ज्ञाता नोचेत्तन्माता स्वपुत्रं कण्ठे कुर्वन्त्येव मथुरामयास्यत् तामनुगोपिकाश्रेण्यश्चेति व्रजराजार्यत्वमेवास्माकमनर्थकरं जात-मिति अतः पितृगेहान् स्मरति पितुरतिसरलस्य वसुदेवेन महाप्रतारकेणाच्छिद्य गृहीतपुत्रस्य व्रजमागत्य मूर्च्छया निपतितस्य गेहान् कोशागारधनागारादीन् सम्प्रत्यमार्जितालिप्तत्वेन तृणधू-लिपत्रलूतातन्तु घृतान् शून्यायितान् स्मरति कच्चित् हे सौम्य ! स्वविरहव्याकुलमानसान् मूर्च्छितप्रायान् बन्धूनुपनन्दा-दीन् गोपान् श्रीदामप्रभृतीन् तव दर्शनेन किं चिन्तापोपशमनं जातमिति संबोधनाशयः यद्वा सौम्याश्च ते बन्धवश्चेति स्मर-णयोग्यतासूचनाय विशेषणं चकारात् गोवर्द्धनादिसंग्रहः स अस्मत्प्राणनाथः क्वचिद्देशे काले वा उपहासकथायां लौकिककथायां वा नोऽस्माकं कथां गृणीते स्वमुखेन कथयति तत्र योग्यतामाह । किङ्करीणामिति । बहुधा कृतसेवानाम् अस्मत्कैङ्कर्य्यं कर्तुमसमर्थाभिः पुरस्त्रीभिरुदासीनं तमालक्ष्यौदासीन्यकारणे पृष्टे अस्माकं किङ्करीणां कथां गृणीत इति भावः । वार्ताकथनेन स्वात्मिकां तदन्तःकरण-वृत्तिं विज्ञातवानस्यतः कथयेति भावः । यद्वा अस्मासु तु किमर्थं त्वमागतः स एव कुतो नागत इत्याशयेनाहापीति । वर्तेति खेदे विस्मये वा आर्यपुत्रोऽधुनापि मधुपुर्य्यामेवास्ते कंससंहारकरूपस्य कार्यस्य जातत्वादेतावत्पर्य्यन्तं तत्र किमर्थं स्थितः अत्र कुतो नागतः आर्य्यपुत्रोऽपि मधुपुर्य्यामपीत्यनेनार्यस्य पितुरत्रागतत्वा-न्मद्यपानादिविनिर्मुक्तपुत्रत्वाच्च मद्यपप्रधाने पुरे किमर्थमास्त इति ध्वनितं ननु तदीयं चित्तं तत्र संलग्नमतो नागत इति चेन्न तदीयं मनोऽहं जानाम्यतोऽत्र स्थितापि तदन्तःकरणवृत्तिं ब्रवीमीत्याशयेनाह । स्मरतीति । पितृगेहतुल्यानां सक्रीडायोग्य-स्थानानामलाभेन पितृगेहादिविरहव्याकुलचित्त एव तत्रास्त इत्यहं जानामि दुःखितस्य तत्र निरोधो भवतां बोधित इति सूचनाय संबोधयति हे सौम्येति यद्वा स आर्यपुत्रोऽधुना मधुपुर्या-मास्त इत्येव ननु तत्स्थित्या तत्र तत्रत्यानां वा कश्चिदुपकारोऽस्ति सर्वदा पितृगेहादिस्मरणादिना व्याकुलचित्तत्वादित्याशयेनाह । स्मरतीति । यद्वा मधुपुर्य्यां प्रियस्य स्थितिं जानत्यपि प्रयोजनाभा-वात्तत्रास्ति न वेति न जानामीति स्वगाम्भीर्य्यद्योतनाय अजान-तीव पृच्छति । मधुपुर्य्यामिति । सर्वमेवमेवस्य [illegible] बाल-क्याह । भुजमिति । तादृशक्रीडायोग्यस्थानानां तथाविध बन्धुगोपा-दीनां वनमालागुम्फनवीटादिनिर्माणगीतनृत्यरससौन्दर्यलावण्य-वैदग्ध्यप्रश्नोत्तरविलाससम्भोगलीलारासक्रीडाविहारादि[illegible]गु-णाढ्यानां चाज्ञादर्शनान्मम मनो नात्र लगति [illegible] वा व्रजमेवाहं गन्तेत्युक्त्वाऽऽगत्य अगरुसुगन्धं [illegible] मूर्ध्नि-

श्रीशुक उवाच ।

अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ।
सान्त्वयन् प्रियसंदेशैर्गोपीरिदमभाषत ॥ २२ ॥

उद्धव उवाच ।

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

कदा अधास्यत् धास्यति तेन समाश्वासयेत् भो प्राणप्रेयस्यः सशपथमहं ब्रवीमितः परं भवतीस्त्यक्त्वा क्वापि न यामि लोकत्रये युष्मत्साहश्यगन्धलेशस्याप्यनुपलम्भनादिति पूर्वमपितिरोहितःपुनश्चा विर्भूत इति कृत्वा तद्वत्तदागमनाशा मम महती वर्त्तते इति भावः "यत्रार्जवं सगम्भीर्यं सदैन्यं सहचापलम् । सोत्कण्ठं च हरिः पृष्टः स सुजल्पो निगद्यत" इत्युक्तत्वादत्र सुजल्पः उद्धवपक्षेऽपि समानं श्रुतिपक्षे अथ स्वस्वरूपभूतं परमात्मानं विस्मृत्य देहादावहं ममाभिमानवन्तं जीवात्मानमालक्ष्य सखेदमाहापीति । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः । ममैवांशो जीवलोके जीवभूतः सनातन" इत्यादिश्रुतिस्मृतिभ्यामार्यस्य परमात्मनः पुत्रः अंश इवांशः भगवानधुना अज्ञानावस्थायां मधुपुर्यां मधुलवसदृशविषयरसोपभोगायतनभूतदेहलक्षणनवद्वारनगर्य्याम् आस्ते अहमेवेति तादात्म्याध्यासेन तद्रूपो भूत्वा तिष्ठति मधुपुर्य्यामपीत्यपिशब्दोऽत्यन्तविलक्षणेन देहेन तादात्म्यमत्यन्तानुचितमिति द्योतयति मधुनापि अधिकारिशरीरं लब्ध्वापि देहादितादात्म्यं न त्यजसीति चापिशब्दार्थः आर्यस्य सर्वत्र पूर्णस्य परमात्मनः पुत्रस्तदात्मभूतः "आत्मा वै पुत्रनामासी"तिश्रुतेः तथाभूतोऽपि किं देहमात्रपरिच्छिन्नाभिमानेन परिच्छेदं प्राप्तोऽसीति चापिशब्दार्थः । तदनुरूपैव तव प्रवृत्तिर्दृश्यत इत्याह । स्मरतीति । पित्रा परमात्मना निर्मितान् गेहान् गृहान् भूरादिलोकांश्च स्मरति हे सौम्य ! बन्धून् सहोदरादीन् बान्धवान् चकाराद्भार्यापुत्रादीन् गोपान् तत्तद्विषयसम्भोगार्थं तत्तदिन्द्रियाधिष्ठातृदेवान् स्मरति न तु स्वस्वरूपभूतं परमात्मानं कदाप्यनुसन्धत्ते क्वचिदपि अहो देहाद्विलक्षणोऽहं स्वकर्मानुसारेण स्वर्गनरकभोक्तेति विद्वद्दशायामपि नोऽस्माकं किङ्करीणां स्वर्गकामो यजेतेत्यादिकानां श्रुतीनां कथां गृणीते न त्वस्माकम् अतो ऽस्माकं [illegible]त्कण्ठा वर्तते अगरुसुगन्धं तत्स्थानीयं साधनचतुष्टयस्पर्शसम्पन्नं भुजस्थानीयमन्तःकरणं श्रुतीनां मूर्ध्नि मस्तके कदा अधास्यत धास्यति यद्वा प्राप्ताधिकारिशरीरं जीवात्मानमालक्ष्येदं शरीरमासाद्य स्वोद्धार एव त्वया कर्तव्य इति सखेदमाहापीति । अधुना आर्यपुत्रो भवान् ब्रह्मानन्दपर्यन्तसुखमात्रसाधनभूतायां मनुष्यशरीरलक्षणपुर्य्यामास्ते अपि वर्ते[illegible] तत्रापि सर्वविवेकसमर्थोऽसीत्याह । स्मरतीति सर्वदा[illegible] त्वयि [illegible]स्मत्युत्कण्ठितास्मीत्याह । भुजमिति । यद्वा [illegible]देहाद्यभिमानं विहाय भगवदाराधनपरायणं जीवात्मानमालक्ष्य तत्पराक्रमानुवादपूर्वकमुर्वरितग्रहणे सोत्कण्ठामाविष्करोति । अपिवर्तेति । वत हर्षे मधुपुर्य्यां सर्वासक्तिस्थानभूतायामपि देहलक्षणपुर्य्यामार्यपुत्रः भगवदंशभूतो देहादिविलक्षणो नगरस्थानीयदेहस्वरूप इत्येवमास्ते तत्र स्थितिरपि तव न भोगायापितु भगवदाराधनायेत्याह । स्मरतीति । पितुः परमेश्वरस्य गेहान्मथुराद्वारवत्यादिरूपान् यद्वेमान् देहान् चतुर्दशभुवनानि पितुर्गेहान् देवालयभूतान् स्मरति हे सौम्य ! तद्बन्धून् वलदेवादीन् चकारान्नन्दादीन् गोपान् श्रीदामप्रमुखान् स्मरति किङ्करीणां गोपाङ्गनानां कथां च भवान् क्वचिद्गृणीते यद्वा बन्धून् गोपात्मकान् स्मरति नोऽस्माकं श्रुतीनां मध्ये किङ्करीणां भगवत्कैङ्कर्यप्रतिपादिकानां सर्वदा भगवत्परायणो भवानस्ति अतोऽवशिष्टमपि सम्पादयतु अगरुसुगन्धम्भुजं निरुक्तमन्तःकरणं श्रुतिमस्तके कदाधास्यत् ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या अतिस्निग्धस्वभावा आहुः । अपीति । हे सौम्य ! आर्यपुत्रः श्रीकृष्णः अधुना मधुपुर्याम् आस्ते सः श्रीकृष्णः पितृगेहादीन् स्मरति क्वचित्सः अस्माकं प्रियः नोऽस्माकं किङ्करीणामपि कथा गृणीते यते अगुरुवत्सुगन्धं भुजं नो मूर्ध्नि कदा नु धास्यत धास्यतीति ॥ २१ ॥

---

भाषा टीका ।

क्या इस समय में श्री व्रजराज के पुत्र मथुरा ही में अच्छे तो हैं हे सौम्य ! वे पिता के घरों को बंधुओं को गोपों को स्मरण करते हैं कि नहीं किसी समय में वे हम दासियों की कथा को भी गाते हैं कि नहीं अगरु आदि से सुगंधित भुजा को हमारे मस्तक पर कभी धारण करेंगे क्या सो पूछ लेना ॥ २१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णदर्शनोत्सुका गोपीः प्रियस्य संदेशैः सान्त्वयन् प्रथमं तावदिदमभाषत ॥ २२ ॥

तदाह षड्भिः । अहो इति । स्म नूनं यूयं पूर्णार्थाः कृतार्थाः ॥ २३ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अथेत्यारम्भे संदेशारम्भे प्रवर्तमान इत्यर्थः । तादृशप्रेमवैकल्योदये सद्यः किञ्चिदपि वक्तुमयोग्यत्वात् पश्चादारम्भं कृतवानित्यर्थः । एवमेतत् अननुभूतपूर्वप्रेमविज्ञापितं निशम्य सान्त्वयन् सान्त्वयितुं प्रियस्य संदेशैरिति तेषामपि प्रियत्वं ध्वनितं यद्वा प्रियैः संदेशैः प्रकृतत्वात् कृष्णस्यैवेत्यर्थः । वक्ष्यमाणानां सन्देशानां प्रियत्वं कृष्णसंबन्धादेव यद्वा हे प्रियेति श्रीपरीक्षित् संबोधनं प्रेमभरोदयात् प्रेमवैकल्योपशान्तावेव सत्यां संदेशास्ते श्रुतिपथं प्रविशेयुः सफलाश्च स्युरिति दैन्यविरोधिधन्यताप्रतिपादनेनादौ वैकल्यं त्याजयितुं पूर्वमिदं वक्ष्यमाणमभाषत ॥ २२ ॥

अहो आश्चर्ये हर्षे वा स्म एव अस्य यथापेक्षं सर्वैरप्यन्वयः पूर्णाः साकल्येन संसिद्धा अर्थाः सर्वसाध्यपदार्था यासां तथा भूता यूयमेव नतु लक्ष्म्यादयः अत एव लोकानां चतुर्दशभुवनानां सर्वजीवानां वा पूजिताः वर्तमाने क्तप्रत्ययः पूज्या इत्यर्थः यूयमिति प्राक् प्रहर्षोदयेन पश्चाच्च भक्त्या भवत्य इति एवमग्रेऽप्यूह्यं वासुदेवे सर्वान्तर्यामिणि भगवति षड्गुणैश्वर्ये यद्वा श्रीवसुदेवनन्दने भगवति साक्षात्परमेश्वरे श्रीकृष्णे वसुदेवगृहे साक्षाद्भगवान् पुरुषः पर इत्यादि प्रसिद्धया यद्वा वसुश्रेष्ठनन्दने श्रीगोपेन्द्रतनये भगवति स्वयमनु भूतासमोर्ध्वसौन्दर्यविलासाढ्ये श्रीपुरुषोत्तमे इति श्रीकृष्णस्य सर्वत आधिक्यकथनेन तासां पूर्णार्थतातिशयबोधनार्थमिति एवं प्रेमविशेषेण यासां यामिर्मनोऽर्पितम् ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं पूर्वोक्तप्रकारं साक्षात्परम्परया श्रुतचरं प्रेमवचनं निशम्य अथ तादृशप्रेमविकारशान्तेरनन्तरं सान्त्वयन् सान्त्वयितुम् इदं श्रीकृष्णैश्वर्यतत्प्रेममहिमज्ञापनमयतया तादृशप्रेमविकारस्तम्भनाय तासां श्लाघामयतया दैन्यशमनाय च तथा प्रयुक्तं वक्ष्यमाणम् अन्यथा श्रावणाशक्तेः गोपीः सम्भ्रमेण श्रीराधां साक्षादसम्भाष्यमाणां श्रावयन्नन्याः ॥ २२ ॥

अहो आश्चर्ये ऽदृष्टाश्रुतं खल्वेतदिति भावः । स्म निश्चये यूयमेव यूयं भवत्य इति पदद्वयेन तासामावृत्तिरत्यन्तादरेण वर्तमाने क्तः । पूर्णस्वरूपेण सर्वैश्च गुणैः सर्वोद्रिक्तः अर्थः श्रीकृष्णप्रेमलक्षणो यासां ता इति स्वतः सम्पत्तिः । अत एव लोकैरन्यैः सर्वैरेव पूजिता इति परतोऽपि यद्वा । यूयं पूर्णार्था इति श्रीराधायाः प्रति । भवत्यो लोकपूजिता इति अन्याः प्रति ज्ञेयं यासां वासुदेवे सर्वाश्रये सर्वांशिनि भगवति सर्वैश्वर्यादीनां परमाश्रये स्वयं भगवति श्रीकृष्णे इत्यर्थः । अनेन महाप्रेमप्रकारेण । यासामिति भर्तरि सम्बन्धमात्रविवक्षया षष्ठी । मनसः स्वातन्त्र्येण कर्मकर्तृत्वबोधनार्थम् ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । श्रीकृष्णदर्शनोत्सुका गोपीर्निशाम्य दृष्ट्वा प्रियप्रेषितैः संदेशैः सान्त्वयिष्यंस्तावदिदं वक्ष्यमाणमभाषत ॥ २२ ॥

तदेवाह षड्भिः । अहो इति । स्म नूनं यूयं पूर्णार्थाः कृतार्थाः भवत्यो यूयं लोकेषु पूजिताः उभयत्र हेतुं वदंस्ता विशिनष्टि । यासां युष्माकम् इतीत्थं भगवति वासुदेवे मनोऽर्पितं निहितम् ॥ २३ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

पूर्णार्थाः कृतकृत्याः इतिशब्दो हेत्वर्थः ॥ २३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वभावेन सर्वावस्थासु उत्कृष्टापकृष्टास्वपि भगवत्परत्वं बोधितं प्रातीतिको दोषोऽप्युक्तः ततो दोषनिर्हरणार्थमुपदेशपूर्वमुद्धवोऽभिनन्दनं कृतवानित्याह । अथोद्धव इति । स हि उत्सवात्मकः ताभिः दोषगुणमिश्रतया निरूपितानपि भगवद्धर्मान् गुणत्वेनैव स्वीकृतवान् अतो भिन्नप्रकारेणैव निशम्य दोषाभावात् तात्पर्यतः एवं कृष्णदर्शनलालसाः विदित्वा यथा सभायामपि भुजगगरुसुगन्धमिति मनोरथाभिलाषः एतादृशाः अवश्यं सान्त्वनीया इति ताः सान्त्वयन् तत्रापि प्रियसंदेशेनैव न तु स्वतः यतो गोप्यः भगवदीयाः आज्ञा च भगवतस्तथैवेति इदं स्तोत्ररूपं वक्ष्यमाणमभाषत ॥ २२ ॥

तासां स्वाभाविको दोषोऽपि भगवत्कृत इति भगवद्गुणैः गुणा एव इति ज्ञापयितुं षड्भिः स्तोत्रमाह । अहो इति । तासामभिनन्दनं हि भक्तत्वात् भक्तेश्च तासु आक्तिस्थापनं च—

तत्राप्यनन्यता तासां सर्वभावेन च स्थितिः ।
अतिकृपा हरेर्युक्ता सफलत्वाय सोच्यते ॥

अहो इत्याश्चर्यमस्मदादीनामपि दुर्लभो भावः एतास्विति स च भावः सर्वदा सिद्धः कादाचित्को हि न तथा सामान्यतो भक्तस्तोत्रव्यावृत्त्यर्थं यूयमिति पूर्णः अर्थो यासां भक्तिः स्वतन्त्रफलेति ततश्च यथा भगवान् स्वतन्त्रस्तथा भवत्योऽपि जाता इत्याह । भवत्यो लोकपूजिता इति । भवच्छब्दलोकशब्दौ सर्वसाधारण्यार्थौ तेषां भ्रमात् प्रवृत्तिं वारयति । मनः अर्पितमिति ॥ २३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहो इति । स्म नूनं यूयं पूर्णार्थाः कृतार्थाः यासां मन इति एवं प्रकारेण भगवत्यर्पितमित्यन्वयः अन्येषामपि भक्तानां मनो भगवत्यर्पितं इदं किं त्वेवं प्रकारेण तु न दृष्टमिति भावः ॥ २३ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं भगवत्प्रियावाक्यामृतपानासक्तमानसः किञ्चिदपि वक्तुमवसरमलभमानस्तत्प्रेमातिरेकमवलोक्यातिचकितहृदयो हाहेत्यादि मनस्येव वदन् तद्वचनानि शृण्वन् तूष्णीमासित्वा भगवत्प्रियाचेतःपरं वक्तुमक्षमावाशांदापस्त्वद्व चिरन्तूष्णीं स्थितास्तदनन्तरं तदाश्वासनार्थमुद्धव उवाचेत्याहेति एवं विरह-

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे [1]भक्तिर्हि साध्यते ॥ २४ ॥
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥ २५ ॥

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

व्याकुलमानसानां लोकोत्तरप्रेमाक्रान्तानामुपालम्भवाक्यान्याकर्ण्योद्धवः कृष्णदर्शनलालसा गोपीः प्रियसंदेशैः सान्त्वयन्निदं वक्ष्यमाणमभाषत उत्कृष्टः सर्वोत्तमः श्रीकृष्णो धवः स्वामी यस्य स तथा भगवद्भृत्यस्य भगवत्प्रियाणामाश्वासने प्रवृत्तिरुचितेति भावः । चित्तमाकृष्य गतस्य कृष्णस्य दर्शने लालसा यासां ताः । ननु किमिति मथुरायां गत्वा दर्शनं न कृतवत्य इत्यत आह । गोपीः गोपपराधीनाः तत्र गन्तुमशक्ताः यद्वा गोपस्य कृष्णस्येमाः गोपकृष्णदर्शनाभिलाषाः । ननु यदुपतिकृष्णदर्शनलालसाः सान्त्वयन् तत्रापि प्रियस्य कृष्णस्य संदेशैः ननु स्वतः यद्वा प्रियसंदेशैर्न स्वायाति प्रिय इत्युक्त्वा अत एव सान्त्वयन्नतु हर्षयत् इदं वक्ष्यमाणमब्रवीत् ॥ २२ ॥

यद्वाहाहो यूयमिति । वसन्ति भूतान्यस्मिन्निति वासुः वसतीति वा वासुः स चासौ देवश्च वासुदेवस्तस्मिन्भगवति षड्गुणैश्वर्यसम्पन्ने यासामिति इत्थं मनः समर्पितं ता यूयं स्म नूनं कृतार्थाः स्मेति प्रसिद्धमिति वा किं च भवत्य एवं विधप्रेमातिरेकवत्यो लोकपूजिताः अस्मदादिभिर्लोकैः पूज्यतां गताः "यं लब्ध्वाचापरं लाभं मन्यते नाधिकं ततः" इत्युक्तेर्वासुदेवे सर्वात्मभूते परब्रह्मणि अर्पितमानसत्वात्पूर्णार्थाः भगवति ब्रह्मादिपूज्यपादपाथोरुहे तस्मिन्नासक्तचित्तत्वात् लोकपूजितास्त्स्म त्स्वात्मानं दुःखितं हीनं च मावगच्छतेति भावः ॥ २३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णदर्शने लालसा औत्सुक्यं यासां ताः गोपीः प्रियस्य श्रीकृष्णस्य संदेशैः सान्त्वयन् प्रथमं तावदिदं वक्ष्यमाणमभाषत २२ ॥

स्मेति नूनम् पूर्णार्थाः कृतकृत्याः ॥ २३ ॥

---

### भाषा टीका ।

श्री शुकदेवजी बोले श्रीकृष्ण भगवान् के दर्शन मे लालसा वाली उन गोपियों को देख कर उद्धवजी संतुष्ट होकर प्यारे के संदेशों से उनको सांतत करने के लिये गोपियों से इस वचन को बोलते भये ॥ २२ ॥

उद्धवजी बोले अहो आश्चर्य है आप सबों के सब मनोरथ पूर्ण हो गये हैं आप सब लोकों मे पूजने योग्य हो जिनके कि श्रीवासुदेव भगवान् मे इस प्रकार से मन अर्पित हो गये हैं ॥ २३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रेयोभिः श्रेयःसाधनैः ॥ २४ ॥
अनुत्तमा अतिश्रेष्ठा ॥ २५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु श्रीकृष्णप्राप्त्यैव पूर्णार्थता स्यान्नतु मनोऽर्पणमात्रेण तत्राह । दानेति द्वाभ्याम् व्रतं कृच्छ्रादि तपः स्वधर्म होमो हवनं यज्ञः स्वाध्यायो वेदाभ्यासः संयमः सर्वेन्द्रियनियमः दानजपौ प्रसिद्धौ एते च प्राय आवश्यकत्वात् सर्वकर्मश्रेष्ठतया लोके प्रसिद्धत्वाच्च व्यक्तमुक्ताः श्रेयांसि ज्ञानादीनि अन्ये च मोक्षादयस्तैः विविधैरिति प्रत्येकं सर्वेषां विशेषणं तत्र मोक्षस्य विविधत्वं न्यायवेदान्तादिसिद्धान्तभेदेन सालोक्यादिभेदेन वा अन्यत्स्पष्टं दानादीनामेषां भक्तिसाधनत्वे यथोत्तरं श्रेष्ठत्वं कृष्णे परमेश्वरे हि एव भक्तिरेव या काचित् साध्यते अन्यथा तेषां वैयर्थ्यात् तथोक्तमेव धर्म्मः स्वनुष्ठीतः पुंसामित्यादिना ॥ २४ ॥

भवतीभिस्तु भगवति सर्वनिजैश्वर्यप्रकटके अत उत्तमश्लोके तस्मिन् अनुत्तमा प्रेमलक्षणा प्रवर्त्तिता स्वाचारेण लोकेषु प्रचारितेति यत् एतद्दिष्ट्या भद्रं जातमित्यर्थः । स्वत एव सर्वलोकस्य परमहितासिद्धेः नचैतत्मानुमानेन सर्वेषां सुलभा मन्तव्येत्याह । मुनीनामिति । श्रीसनकादीनामपि एवं भक्तिरेव परमफलं ततश्च श्रीकृष्णः स्वत एव वश्यः स्यादिति तात्पर्य्यम् ॥ २५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेव कैमुत्येन प्रतिपादयति । दानेति । दानाद्यात्मकानि यानि श्रेयांसि अन्यैश्च विविधैर्योगसांख्यज्ञानादिभिः कृष्णेऽर्पितैः सद्भिः नैष्कर्म्यमप्यच्युतभाववर्जितमित्याद्युक्तेः । कृष्णे स्वयं भगवति भक्तिः श्रवणादिरुचिमात्रं साध्यते । स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे इति । धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनेत्यन्वयव्यतिरेकाभ्याम् । तत्र व्रतं नियमः तपः कृच्छ्रादि संयम इन्द्रियनिग्रहः ॥ २४ ॥

भवतीनां तु महाभावात्मिका भक्तिर्नित्यासिद्धैव । ततः सा किं श्लाघ्या किन्तु तदाविष्कृतया लोकानां भाग्यमेव श्लाघ्यमित्याह । भवतीभिर्भगवति सर्वनिजैश्वर्यप्रकटके अत उत्तमश्लोके तस्मिन् अनुत्तमा सर्वतोऽपि श्रेष्ठा महाप्रेमलक्षणा प्रवर्तिता सद्दर्शनश्रवणप्रभावेण लोकेषु प्रचारितेति यत् । यथा वक्ष्यते सर्वात्मभावोऽधिकृत इत्यादि । यथा च प्रोक्तं । विक्रीडितं व्रजवधूभिरित्यादि । एतद्दिष्ट्या भद्रं जातमित्यर्थः ॥ २५ ॥

---

१ भक्तिर्न साध्यते इति वीरराघ॰ पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कथं तदर्पणमात्रेण पूर्णार्थता पूजितता चेत्यत्राह । दानेति । दानादिभिरन्यैश्च श्रेयःसाधनैः नानाविधैर्या भगवति वासुदेवे भक्तिर्न साध्यते न साधयितुं शक्यते ॥ २४ ॥

सा भक्तिरनुत्तमोत्कृष्टा मुनीनामपि दुर्लभा युष्माभिर्दिष्ट्या सुखेनैव भगवति प्रवर्तिता यद्वा दिष्ट्या अयमस्माकं महानानन्द इत्यर्थः । तत्र दानं सत्पात्रे वित्तत्यागः तपोऽनशनादिः स्वाध्यायो वेदाध्ययनं संयम इन्द्रियनिग्रहः अत्र "नाहं वेदैर्न तपसा" इत्यादि भगवद्वचनार्थोऽभिप्रेतः "नान्यः पन्था" इति श्रुत्यर्थश्च ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शाश्वतो नियमकरणं व्रतं संयम इन्द्रियनिग्रहः हितसाधनानुष्ठानं श्रेयोविधिः ॥ २४ ॥

दुर्लभेति वचनं भक्तेः कर्तव्यत्वपरं नतु मुनीनां तादृशी भक्तिर्नास्तीति ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गोप्यः किमाचरदितिवत् भक्तिः श्रवणादिरुचिः साध्यते ॥ २४ ॥

भवतीनां तु महाभावात्मिका भक्तिर्नित्यसिद्धैव । ततः सा किं श्लाघ्या किं तु तच्छिक्षया लोकानां भाग्यमेव श्लाघ्यमित्याह । प्रवर्त्तिता स्वाचारेण लोकेषु प्रचारितेति यत् एतद्दिष्ट्या भद्रं जातमित्यर्थः ॥ २५ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

नन्वयं भावः सुलभः कामाद्य जात इति तत्राह । दानव्रतेति । दानादिभिः सर्वैः कृष्णे स्नेह एव साध्यते स चेत्कामेनैव जातः किं दानादिना स्नेहे वैलक्षण्याभावात् फले वैलक्षण्याभावे साधनवैजात्यमप्रयोजकं तदघं हित्वेति विशेषस्तूक्तः दानं तुलापुरुषादि व्रतमेकादश्यादि तपः कृच्छ्रादि होमः काम्यः अग्निहोत्रादिरपि जपो मन्त्रादिः स्वाध्यायो वेदाध्ययनं वेद एव वा सर्वविधोऽपि संयमो योगादिः अन्यानि श्रेयांसि कूपारामादीनि सर्वेषामेषाम् "एकस्य तूभयत्वे संयोग पृथक्त्व"मिति न्यायेन तत्तत्फलसाधकत्वं भक्तिसाधकत्वं च अन्यैरित्यविहितैरपि कृष्णे सदानन्दे तस्यैव फलत्वमिति एतदर्थमेवाविर्भूत इति वा भक्तियोगविधानार्थमिति वाक्यं विशब्देनोच्यते साध्यत इत्यनेन आत्मत्वेन नित्यस्नेहो निवारितः ॥ २४ ॥

तर्ह्यस्मद्भक्तिरन्यादृशीति चेत्तत्राह । भगवतीति । सत्यं भिन्ना परं सर्वोत्तमा उत्तमैरपि श्लोक्यत इति तेषामपि वाक्यमेव भवति नत्वेवम्भूतं मनः भवतीभिरिति वहुत्वं सामर्थ्यं च द्योतितं न उत्तमा यस्याः भवदीयायाः अन्या भक्तिरस्ति अतो ब्रह्मकल्पमारभ्य अद्यप्रभृति भक्तिर्गूढा अद्य पर्यवसिता यतो भवतीभिरेवेयं दर्शिता एतदस्मदादीनां भाग्येन एतादृशी भक्तिरस्तीति । ननु बहिर्मुखेष्वेवैता उत्तमा इति चेत्तत्राह । मुनीनामपि दुर्लभेति । अन्यथेदं परित्यज्य मननार्थं कथं प्रवृत्ता भवेयुः ॥ २५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दानादिभिः साधनैः कृष्णे भक्तिः साध्यते तत्र दानं विष्णुवैष्णवसम्प्रदानकं व्रतमेकादश्यादिकं तपः कृष्णार्थभोगत्यागादि होमो वैष्णवः जपो विष्णुमन्त्राणां स्वाध्यायो गोपालतापन्यादिपाठः श्रेयांस्यपि भक्त्यङ्गान्येव ज्ञेयानि अन्येषां दानादीनां भक्तिहेतुत्वाभावस्य प्राक् प्रतिपादितत्वात् ॥ २४ ॥

भवतीनां भक्तिस्त्वन्यैव सर्वविलक्षणेत्याह । भगवतीति । अनुत्तमा सर्वश्रेष्ठा । प्रवर्त्तितेति प्रागियं नासीत् परन्तु भवतीनां रागात्मिकां भक्तिमनुसृत्यैव रागानुगा भक्तिर्लोकैः क्रियमाणा प्रचरिष्यतीत्यर्थः । प्रवर्त्तितेति "आशंसायां भूतवच्च" इति निष्ठा । दिष्ट्या लोकानामतिभाग्येन ॥ २५ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु जारबुद्ध्या भगवति वासुदेवे समासक्तचेतसां दानव्रतादिभक्तिसाधनविधुराणामस्माकं कथं पूर्णार्थता कथं वा लोकपूज्यतेत्याशङ्क्य "येन केनाप्युपायेन मनः कृष्णे निवेशयेत्" इत्युक्तत्वात्कृष्णे मनः सन्निवेशरूपभक्तेः फलस्य साधनतयोपायसाध्यस्यानुज्ञातत्वादेकेनोपायेन तस्य जातत्वान्नोपायान्तरान्वेषणं युक्तमप्रयोजकत्वादित्याशयेनाह । दानेति । दानं तुलापुरुषादि व्रतमेकादश्युपवासादि तपः कृच्छ्रचान्द्रायणादि होमः अग्निहोत्रादि जपः प्रणवादिमन्त्राणां मनसावृत्तिः स्वाध्यायो वेदाध्ययनं विविधैर्वापीकूपतडागारामादिनिर्माणप्रमुखैः श्रेयःसाधनैः कृष्णे भक्तिर्हि साध्यते उत्पाद्यते हिः प्रसिद्धिं द्योतयति यद्यपि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने"ति श्रुत्या यज्ञादीनां संयोगपृथक्त्वन्यायेन विविदिषाया वेदनस्य वा साधनत्वमभिहितं तथापि भक्त्या त्वनन्यया भक्त्या मामभिजानातीत्यादिवचनानामेतस्य चानुरोधेन भक्तिद्वारा तेषां तत्साधनत्वं व्याख्येयं तथा च दानादीनां भक्तिरेव फलं सा च जन्मान्तरेष्वनुष्ठितदानादिसर्वसाधनानां युष्माकमेवं विधप्रेमातिरेकवतीनां कृतार्थतादौ नास्ति संशय इति भावः ॥ २४ ॥

नन्वस्माकं व्रजराजकुमारविषयककामवतीनां कथं भक्तिमत्त्वं कामस्य तदुपायत्वानभिधानादिति चेत्तद्विषयककामस्य दानादिभिरपि दुर्लभत्वात् तदान्येयं भक्तिरनुत्तमेत्याशयेनाह । भगवतीति । उत्तमैर्नारदादिभिः श्लोक्यते स्तूयते इत्युत्तमश्लोकस्तस्मिन् अनेन भवतीभिः स निन्द्यते भवत्यस्तु तेन स्तूयन्त इति महान्विशेष इति ध्वनितं भवतीतरेषां भगवान् भवतीनां तु याच्ञादिमानिति सूचनाय भगवतीति दिष्ट्या अहो भाग्यमस्मदादीनां याभिर्भवतीभिरेवंविधा भक्तिः प्रवर्त्तिता आविर्भाविता भक्तिरपि प्रकटिता तासां दर्शनादिना अस्मदादयो भाग्यातिरेकवन्तः सम्पन्ना युष्मद्भाग्यं तु वक्तुमशक्यमित्यर्थः । न चासौ शास्त्राविहितत्वाल्लोकाप्रसिद्धत्वाच्च निकृष्टेति भ्रमितव्यम् उक्तहेतुभ्यः सर्वोत्कृष्टत्वाद्विद्याहानुत्तमा न विद्यते उत्तमा यस्याः सा यतो मुनीनां दानादिसाधनकदम्बवतामपि दुर्लभा तदधिकाराभावात् अत्रेदमवधेयम् उपायपूर्वकं भगवति मनःस्थिरीकरणं भक्तिः सा द्वेधा विहिता अविहिता च तत्राद्या द्वेधा मिश्रा शुद्धा च मिश्रा त्रेधा कर्ममिश्रा

दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ।
हित्वावृणीत यूयं यत् कृष्णाख्यं पुरुषं परम् ॥ २६ ॥
सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ।
विरहेण महाभागाः ! महान्मेऽनुग्रहः कृतः ॥ २७ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

कर्मज्ञानमिश्रा ज्ञानमिश्रा च कर्ममिश्रा त्रेधा तामसी राजसी सात्त्विकी चेति तत्र तामसी त्रेधा हिंसार्था दम्भार्था मात्सर्य्यार्था चेति राजसी च त्रेधा विषयार्था यशोऽर्था ऐश्वर्य्यार्था च सात्त्विकी च त्रेधा कर्मक्षयार्था विष्णुप्रीतिसिद्ध्यर्था विधिसिद्ध्यर्था च कर्मज्ञानमिश्रा त्रेधा उत्तमा मध्यमा अधमा चेति ज्ञानमिश्रा त्वेकधा गुणकार्याणामनुपलम्भान्निर्गुणा शुद्धाप्येकधा अहैतुक्यव्यवहिता कर्मज्ञानाभ्याममिश्रत्वाच्छुद्धा एवं विहिताया श्चतुर्दश भेदाः अविहितापि चतुर्धा कामजा द्वेषजा भयजा स्नेहजा चेति तत्र कर्ममिश्रा नव गृहस्थानां कर्मज्ञानमिश्रास्तिस्रो वनस्थानां ज्ञानमिश्रैका भिक्षुकाणां शुद्धैका सर्वेषां कामजा गोप्यादिसमानां द्वेषजा शिशुपालादितुल्यानां भयजा कंसादिसमानानां स्नेहजा पाण्डवादिसदृशानामेवं भक्तेरष्टादश भेदास्तत्र सर्वोत्कृष्टा कामजा अन्येषु तद्भेदेषु तथाविधमनःस्थिरीकरणस्यालभ्यत्वादिति ॥ २५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्यैश्च श्रेयोभिः कल्याणोपायैः—
जन्मान्तरसहस्रेषु तपोदानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
इति पुराणान्तराच्च ॥ २४ ॥
अनुत्तमोत्कृष्टा ॥ २५ ॥

---

भाषा टीका ।

दान व्रत तप होम जप वेदाध्ययन संयम तथा और भी अनेक प्रकार के धर्म इन सबों से श्रीकृष्ण चरण में भक्ति ही सिद्ध की जाती है ॥ २४ ॥

आप सबों ने तो उत्तम श्लोक भगवान् के विषै उत्तम भक्ति को संपादन किया है जो कि भक्ति मुनि जनों को भी दुर्लभ है सो यह बड़ा मंगल है ॥ २५ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अवृणीत वृतवत्यः ॥ २६ ॥

सर्वात्मभावः एकान्तभक्तिः अधिकृतः प्राप्तः भगवत्प्रेमसुखप्रदर्शनेन ममैव महाननुग्रहः कृत इति ॥ २७

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु तर्हीदृशभक्तिमती लक्ष्मीरेव श्लाघ्यतां वयं तु परमास्वतन्त्रत्वात्तादृशभजनासमर्थाः तत्राह । दिष्ट्येति । एतच्चातीव भद्रं जातमित्यर्थः स्वजनं भ्रातृभगिन्यादिकम् अवृणीत स्वकान्ततया स्वीकृतवत्यः परं पुरुषं पुरुषोत्तमं तत्र च कृष्ण इति आख्या नाम ख्यातिर्वा यस्य तम् इत्यशेषरूपगुणादिप्रकटनेन माहात्म्यविशेष उक्तः पुत्रादीनां त्यागः तत्तत्स्नेहत्यागेन साक्षात् परित्यजनेनैव वा ततश्च देहानां त्यागस्तत्र नैरपेक्ष्येण मृततुल्यतावाप्तेः त्यागस्य यथोत्तरं न्यूनताभिप्रायेण तत्तत्क्रमेण निर्देशः अत एवाप्यर्थे चकारः इति भक्तेरेव प्रकारविशेषेण लक्ष्मीतोऽपि यूयं परमधन्या इति भावः ॥ २६ ॥

ननु तर्हि तेन सह वियोगो न स्यात् सत्यं स तु भक्तेरेवोत्कर्षविशेषार्थमित्याह । सर्वेति । अधोक्षजे इन्द्रियवृत्त्यगोचरेऽपि भगवति सर्वात्मना सर्वेन्द्रियवृत्तीनां तदेकनिष्ठत्वादिना भावः प्रेमा विरहेणाधिकं कृतः हे महाभागाः ! इति परमभाग्यवतीनां भवतीनामेवायं सम्भवेत् नत्वन्यजनस्येति सर्वप्रियजनेभ्यो यूयं धन्यतमाः किम्पुनर्महालक्ष्म्याः सकाशात् अतोऽस्मत्प्रभुरसा भवतीभिरेव वशीकृत इति भावः । महानिति तैर्व्याख्यातं यद्वा ईदृशोऽद्भुतः कोऽपि महाभाव एकोऽवश्यं वर्त्ततेत्रेति बुद्ध्या चिरमनुमीयमानो ऽप्यदृष्टाश्रुतत्वान्मादृशां भक्तानां विश्वसनीयो न स्यात् अधुना तु साक्षादनुभवेन ममात्राप्युत्पन्न इति महानेवानुग्रहो भवतीभिः श्रीभगवतैव वात्र प्रेषणेन कृतः ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भक्तिप्रवर्त्तनरीतिमेव स्पष्टयति । यद्यस्मात् पुत्रादीन् तत्तन्मन्यान् निजकृष्णैकालम्बनस्वाभाविकभावबलेन हित्वा अवास्तवबुद्ध्या परित्यज्य कृष्णेति आख्या ख्यातिर्यस्य तं परं पुरुषं नराकृतिपरब्रह्मरूपं यूयमवृणीत वास्तवकान्ततया स्वीकृतवत्यः । तद्दिष्ट्या भद्रं लोकानां महद्भाग्यमित्यर्थः । भवतीनां तादृशचरितं दृष्ट्वा श्रुत्वान्ये च तथा प्रवर्त्तेरन्निति ॥ २६ ॥

अधिकृत इति शीलादित्वात् वर्त्तमाने क्तः । तद्योगे च भवतीनामिति कर्त्तरि षष्ठी । ततश्चाधोक्षजे सर्वात्मना परिपूर्णत्वेन यो भावो महाभावपर्यन्तस्तद्दशां प्राप्तः निरन्तरतदाविर्भावकः प्रेमा स भवतीभिरधिक्रियते वशीकृत्य स्थाप्यत एव । यद्वा । तस्मिन् यः सर्वत्रात्मभावः । "आततत्वाच्च मातृत्वादात्मा हि परमो हरि"रिति न्यायेन सर्वत्र स्फुरति स भवतीष्वेव दर्शनाद्भवतीभिरेव वशीक्रियते इत्यर्थः । अतः सोऽपि भवतीनां न दूर इति भावः । अत एव हे महाभागास्ततो विरहो नामायं बहिरङ्ग एवेति न तत्रान्तःकरणावेशो युज्यत इति । किन्तु महामेतादृशप्रेममहिमदर्शनानुग्रहार्थमेवासौ विरहो बहिः स्फुरतीति मन्ये इत्याह । विरहेणेति । विरहेण कर्त्रा ॥ २७ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च पुत्रादींस्त्यक्त्वा यद्यस्माद्यूयं श्रीकृष्णाख्यं परमपुरुषं वृणीत वृतवत्यः एतदपि दिष्ट्या भद्रं जातमित्यर्थः । अतः भवत्यः पूर्णार्थाः लोकपूजिताश्चेति सम्बन्धः ॥ २६ ॥

भवतीभिरहमपि कृतार्थीकृत इत्याह । सर्वात्मभाव इति । हे महाभागाः ! विरहेण हेतुना ऽधुनाधोक्षजे भवतीनां कर्तरि षष्ठी युष्माभिर्यत्सर्वात्मभावोऽधिकृतः प्रस्तुतः सर्वात्मना करणत्रयेण भावो भक्तिः सर्वोऽप्यात्मनो मनसः भावोऽभिप्रायविशेषोऽधिकृतः प्रस्तुतः प्रकाशित इति वा एष मे मह्यं महाननुग्रहः कृतः तस्मात्तेनाहमपि कृतार्थीकृत इत्यर्थः ॥ २७ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यूयं कृष्णाख्यं परमपुरुषं वृणीतेति यत्तद्दिष्ट्या सदैवानुग्रहः ॥ २६ ॥

भवतीनां सर्वात्मना अखण्डस्वामिना हरिणा सह भावो लीलाधिगतः प्राप्त इति यदतो विरहेण महाननुग्रहः कृत इति मन्ये ॥ २७ ॥

---

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्तिप्रवर्त्तनरीतिमेव स्पष्टयति । दिष्ट्या पुत्रानिति ॥ २६ ॥

भवतीनां तु सर्वात्मना परिपूर्णत्वेन यो भावो महाभावपर्यन्तदशां प्राप्तः प्रेमा यस्त्वधोक्षजेऽपि कृतः अधिकारितया प्रवर्त्तितस्तद्वशकारीत्यर्थः । अतः सोऽपि भवतीनां दूर इति भावः । किन्तु महामेतादृशप्रेममहिमदर्शनार्थमेवासौ भवतीष्वभ्युदित इति मन्यतामित्याह । विरहेणेति । विरहेण कर्त्रेति भवतीनामित्यादि ॥ २७ ॥ २८ ॥

---

## श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

न केवलं स्नेहोत्कर्षेणैव भवतीनामुत्कर्षः किं तु प्रपत्तिरप्युत्कृष्टेत्याह । दिष्ट्येति । प्रपत्तिबाधका एते पुत्रादयः पुत्रादीनामासक्तिजनकत्वात् अनासक्तो हि प्रपद्येत स्त्रीणां सुतरामेवैते प्रतिबन्धका इति गणयति । देहाः स्वस्यैव अवस्थाभेदेन भिन्नाः नानाविधोपयोगा इति तदपेक्षाभावाय बहुवचनं स्वार्थे विनियोगाभावात्त्यागः अन्यथा भगवतः स्थाने गच्छेयुः किं तु भगवदाकाङ्क्षामेव भावयमानास्तिष्ठन्तीति पुत्रादिवत् देहत्यागोऽपि तथा भिन्नानां स्वजनानां गोपिकानां परस्परमपि प्रासङ्गिकः समाजः गृहाणामाधारभूतानामपि परित्यागः पूर्वमुपपादितः चकारात् लोकानामपि वृथा परित्यागं वारयति । वृणीतेति । पुरुषत्यागो दोषायेति तदर्थमाह । परमिति । व्यभिचारिण्यो पतिं यदि भजन्ति तदापि पूर्वदोषं परित्यज्य कृतार्था भवन्ति जगति प्रायेण सर्पिणीरूपाः व्यभिचारिण्य एव परं द्विजन्मव्यवस्थाः अतः परः पुरुषः सेव्य एव ननु पूर्वमपि स्थिताः यथा दोषात्ततोपगता एवमग्रेऽपि भविष्यन्तीति किं परमपुरुषप्रपत्त्येत्याशङ्क्याह । वृणीतेति । इदानीं हि वरप्राप्तौ भगवान् पूर्वमिच्छयांत विशेषः किं च कृष्णाख्यमिति स हि तदर्थमेवावतीर्णः प्रमेयबलेनापि न त्यक्ष्यति पुरुषत्वेन फलान्तराभावेन न काचित् क्षतिः ॥ २६ ॥

एवं भक्तिप्रपत्ती निरूप्य सर्वात्मभावं निरूपयति । सर्वात्मभाव इति । तदुपपादितं दशधा तत्रापि विशेषमाह । विरहेणेति सम्भोगे भवदपि तादृशी मतिः सर्वोऽप्यात्मनो भावः भगवत्येवाधिकृतः उत्तरोत्तरवृद्धिमारब्ध इव । विषयस्याप्यलौकिकत्वमाह । अधोक्षज इति । अधः अक्षजं यस्मात् इति कोऽपि भावः तत्र कर्तुमशक्यः तादृशे सर्वात्मभावो दुर्लभः तत्रापि बह्वीनां तत्रापि साधनरहितानां तर्हि साधनाभावे दृश्यमानं कार्यं भ्रमप्रपन्नं भविष्यतीति आशङ्क्याह । हे महाभागाः ! इति भवतीनामुत्पत्तिशिष्टमेव तादृशं भाग्यं साधनमिति न साधनाभावः ननु स्तुतिरेवैषा क्रियते न वस्तुत इत्याशङ्क्याह । महान्मेऽनुग्रहः कृत इति । न हि कोऽपि परस्तोत्रं कुर्वन् आत्मनो गुणभावमङ्गीकरोति । अतः स्वाभिप्रायप्रदर्शनेन त्वयाप्येवं कर्तव्यमिति उपदेशेन महानेवानुग्रहः कृतः ॥ २७ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुत्रादीन् ममतास्पदानि त्यक्त्वा कृष्णाभिधानं परं पुरुषं स्वसम्भोक्तृत्वेन यत् अवृणीत एतद्दिष्ट्या ममातिभाग्येनैव ॥ २६ ॥

ननु वयं धर्मं त्यक्त्वा यत् परपुरुषं वृतवत्यस्तत्र भवतः किं भाग्यमभूत्तत्राह । सर्वात्मेति । अधोक्षजे अन्यैः प्रत्यक्षीकर्तुमप्यशक्ये श्रीकृष्णे प्रेमैव तावद्दुर्लभः । भवतीनां तु सर्वात्मभावः सर्वात्मना सर्वेणैव स्वरूपेण सहितः परिपूर्णो यो भावः स महाभाव इत्यर्थः । सूर्यो यथा सर्वांस्तापसङ्क्रमणेन व्याप्नोति चन्द्रो यथा सर्वान् शैत्यसङ्क्रमणेन व्याप्नोति तथा यः सर्वान् स्वधर्मसङ्क्रमणेन अतति व्याप्नोतीति । सर्वात्मा चासौ भावश्चेति स इति श्लेषेण तल्लक्षणमपि प्रकटीकृतं । यदुक्तम् "अनुरागः स्वसंवेद्यदशां प्राप्य प्रकाशितः । यावदाश्रयवृत्तिः स्याद्भाव इत्यभिधीयते" इति । स च महाभावः प्रेम्णः सप्तमो विलासः भवतीनां न त्वन्यासां लक्ष्म्यादीनामपीत्यर्थः । कीदृशः अधिकृतः अधिकारविपर्यीकृतः तत्राधिकारो भवतीभ्य एव परमेश्वरेण दत्तो नान्याभ्य इति भावः । अत एव विरहेण कर्त्रा मे मम महान् अनुग्रहः कृतः दिव्योन्मादचित्रजल्पादिमहाभावभेदान् दर्शयित्वेति भावः । यदि भवतीनां विरहो नाभविष्यत्तदा कृष्णो न मां प्रास्थापयिष्यत् । अहञ्च एतदाश्चर्यं नाद्रक्ष्यमिति सभाग्यपरार्धिकः ॥ २७ ॥

---

## श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

"स्वकृत इह विसृष्टा" इति पश्चात्तापो न विधेयस्तेनैव कृतार्थत्वसम्पादनादित्याह । दिष्ट्येति । देहाभिमानस्य देहव्यापाराणां च परित्यागाद्देहत्यागः अत एव मथुरां न गच्छन्ति पुत्रादीन् हित्वा तद्योगक्षेमाद्यनुसंधानं विहाय यत्कृष्णाख्यं परं पुरुषं वृणीत तद्दिष्ट्या महद्भाग्यं पुत्राद्यासक्तिरेव भगवदासक्तौ प्रतिबन्धिका तदासक्तित्यागश्चातिदुष्करः तत्रापि यूयं स्त्रियः यासां पुत्राद्यासक्तित्यागः परमदुष्करः न तत्त्यागो वृथा यतः परं

श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ।
यमादायागतो भद्रा ! अहं भर्तुरहस्करः ॥ २८ ॥

श्रीभगवानुवाच ।

भवतीनां वियोगो मे नहि सर्वात्मना क्वचित् ।
यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ।
तथाऽहं च मनःप्राणभूतेन्द्रियगुणाश्रयः ॥ २९ ॥
आत्मन्येवाऽऽत्मनाऽऽत्मानं सृजे हन्म्यनुपालये ।
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ ३० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

सर्वोत्कृष्टं पुरुषं पूर्णं परमात्मानं वृणीत ननु स्त्रीणां स्वपुरुषत्यागः परपुरुषस्वीकारो अतिदोषावहत्वेन शास्त्रे प्रतिपादितः "पतिशुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया"त्यादिना भगवता च पतिशुश्रूषणादिरेव धर्मत्वेन निरूपित इत्याशङ्कानिवृत्त्यर्थमुक्तं कृष्णाख्यं सच्चिदानन्दाख्यपरमेश्वरस्यैव सर्वपतित्वात्तं विहाय पत्यादिशुश्रूषणस्य परमानर्थावहत्वात्पतिशुश्रूषणमपि वासुदेवबुद्ध्यैव श्रेयस्करं किं पुनर्वक्तव्यं साक्षात् परब्रह्मासक्तमतीनां भवतीनां माहात्म्यं यथा व्यभिचारिण्योऽपि पुनरासक्तिपूर्वकं स्वपतिशुश्रूषणात्कृतार्था भवन्ति तद्वत्स्वपतिकृष्णत्यागाद्व्यभिचारित्वं तत्रैव पुनः समासक्तिसम्पादनात्परमपतिव्रततेति भाव. ॥ २६ ॥

ननु प्रियविरहानलज्वालामालाव्याकुलहृदयानां क्षणमात्रमपि स्वास्थ्याभावादुभयभ्रष्टानामस्माकं कुतस्त्वं कृतार्थत्वमित्याशङ्क्याह । सर्वात्मेति । सर्वात्मना भाव एकान्तभक्तिः अधिकृतः प्राप्तः यद्वा सर्वोऽपि आत्मनोऽन्तःकरणस्य भावः प्रीतिमात्रं भवतीनामधोक्षज एवाधिकृत उत्तरोत्तरं वृद्धिं नेतुमारब्धः भवतीनां साधनविधुराणां तत्रापि वहीनां तत्राप्यधः अक्षजं वृत्तिमात्रं यस्मात्तस्मिन् वृत्तिमात्रागोचरे परमात्मनि कामजस्तादृशो भावो विरहेण पुष्टिं गमिष्यति अतो नायं विरहोपकारकः अधो न क्षीयते जातिवति [illegible] च सत्यस्वरूपे तस्मिन् पुष्टिं गतो भावः प्रियवियोगाभावाय फलिष्यतीति भावः । ननु साधनैर्विना कथमेवं जातं कार्यमात्रस्य साधनसाध्यत्वनियमादित्याशङ्क्याह । हे महाभागाः ! पूर्वपुण्योत्थभाग्यवशादस्मिन् जन्मनि भगवद्भक्तिसाधनेषु दानादिषु प्रवृत्तिर्भवति पूर्वजन्मनि सम्यगनुष्ठितसाधनानां तु महाभाग्यशालिनां नास्मिन् जन्मनि साधनापेक्षा तस्मान्महाभागानां भवतीनामिदानींतनसाधनाभावेऽपि तथा भूतभावोत्पत्तौ न विरोध इति भावः । न चेदं प्रशंसामात्रमिति शङ्क्यं ममाप्येवंविधभावस्य साध्यत्वादित्याशयेनाह । महानिति । तादृशभावबोधनेन तत्रोत्कण्ठामुत्पादयन्तीभिर्भवतीभिर्ममोपरि महानपरिच्छिन्नोऽनुग्रहः कृत इत्यर्थः ॥ २७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

परं निःसमानातिशयं वृणीत वृतवत्यः ॥ २६ ॥

सर्वैरात्मभिः मनोवचनदेहैर्यो भावो भक्तिः स तथाभूतः अधिकृतः प्राप्तः विरहो वियोगस्तेन अत्र मम आगमेनेन हेतुभूतेन मम महाननुग्रहः कृतः ॥ २७ ॥

---

भाषा टीका ।

आप सब पुत्र पति देह स्वजन घर इन सबों को छोड कर परम पुरुष श्रीकृष्णको ही चाहती हो सो बडा मंगल है ॥ २६ ॥

आप सबोंका अधोक्षज भगवान् के विषें विरह के मारे सब प्रकार से आत्मभाव होगया है सो हे महाभागो ! तुमने जो मेरे को दर्शन दिया सो बडा अनुग्रह किया है ॥ २७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भर्तुः कृष्णस्य रहस्करो रहस्यकार्यकर्ता ॥ २८ ॥

भवतीनां मे मया सह वियोगो नास्ति कुतः सर्वात्मना सर्वस्योपादानकारणेन अत एव सर्वेषु मनआदिकार्येष्वहमनुगतत्वेन स्थित इति सदृष्टान्तमाह । यथेति । भूतेषु चराचरेषु महाभूतानि वाय्वग्निर्वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः । यथा तथाहञ्चेति मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयत्वेनानुगत इत्यर्थः ॥ २९ ॥

ननु कारणत्वे सर्वानुगतत्वे च कार्यकारणभेदः स्यादत आह । आत्मन्येवेति । ननु नित्यसिद्धस्य कुतः सृष्ट्यादिरूपता अत आह । भूतेन्द्रियगुणात्मना बुद्धीन्द्रियेति वा पाठः तद्रूपेणेति । ननु निर्विकारस्य कुतस्तद्रूपतेति तत्राह । आत्ममायानुभावेनेति ॥ ३० ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

एवमाश्वास्य किं चित्स्वास्थ्यमुपलभ्य वक्तव्यमाह यद्वा तथापि वैकल्याद्दासमदृष्ट्वा व्यग्रः सन् तत्संदेशेनैव वा स्वास्थ्यं भवेदिति सम्भाव्य तमेव वक्तुमारभते । श्रूयतामिति । ननु तेन संदेशेनालं येनास्तु तत्प्राप्तिर्न स्यात् तत्राह । भवतीनां परमोत्कण्ठितानां सुखावहः सत्प्राप्तेर्निर्द्धारणात् यद्वा भवतीनां प्रियस्य संदेशः

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

तदर्थमेवाग्रागतोऽस्मि नत्वन्यार्थमिति तस्मिन्नादरं जनयति। यमिति। अन्यथा गोव्रजे तस्येत्यादिकमनेन प्रत्युत्तरितं भर्तुरित्यात्मनस्तद्भृत्यत्वं बोधितं तत्र च रहस्करः इत्यात्मनः परमाप्तत्वेन तत्संदेशादानयोग्यत्वं तथा संदेशस्य गोप्यत्वं किं च भद्राः! हे साध्व्य इति तासामपि तत्संदेशैकपात्रत्वं तथा संदेशस्यापि भद्रमादराथ सूचितम् अत्र पक्ष श्रूयतामिति तासां विरहवैकल्येन लेखवाचनाशक्तिं किं वा प्रवहदश्रुधारया लेखलोपं सम्भाव्य पत्रं दर्शयित्वा तन्मुद्रामुन्मुच्य स्वयमेवावाचयदिति ज्ञेयम् एवं पूर्वोक्तं बुद्धिसत्तमत्वं तथा बृहस्पतिशिष्यतया वाग्मित्वादिकं च दर्शितम्॥ २८॥

हि निश्चितं क्वचित् कदाचिदपि अन्यत्तैर्व्याख्यातं यद्वा सर्वात्मना सर्वेण प्रकारेण वियोगो नास्ति भवतीनां प्रकाशविशेषैरेव सह नित्यं रासादिलीलाभिर्व्रजे विहरमाणत्वादिति नित्यलीला सूचिता यद्वा सर्वत्रैव बहिरन्तश्च सदा मत्स्फूर्तेरिति सदृष्टान्तमाह। यथेति। खमित्यादि। यथाक्रमनिर्देशेन खादीनामपि पूर्वपूर्वस्य कारणत्वेनोत्तरस्मिन् कार्य्ये स्थितिः सूचिता तथाहमपि भवतीनां मनआदीनि गुणाश्च सौशील्यादयः किम्वा मनआदीनां गुणा वृत्तय एवाश्रयो यस्य तथाभूतः तत्र तत्र सदा वसन् परिस्फुरामीत्यर्थः॥ २९॥

नचैवमत्र पुर्यां वर्तमानस्यापि तत्र तत्र स्थितिर्मेमासम्भाव्येति मन्तव्यं मच्छक्तेर्दुर्वितर्क्यत्वादित्याह। आत्मनीति। सृजे प्रकटयामि हन्मि अन्तर्धापयामि अनु निरन्तरं पालये विचित्रविभूतिभिर्विभूषयामि तत्र चात्मन्येवेत्यादिना सृष्ट्यादेराधारः करणं कर्म कर्ता चाहमेवेति तत्र कारकान्तरसम्बन्धो निरस्तः। ननु नूनं त्रिगुणात्मिकया मायया सृजसि तत् किं नस्तेनेत्यत आह। आत्ममायानुभावेन। आत्ममाया स्वरूपभूतमाया चिच्छक्तिः तस्याः प्रभावेण। ननु किमस्माकमन्येन त्वदीयरूपेण वयं तु त्वामेव व्रजेन्द्रनन्दनं लब्धुमिच्छामःतत्राह। भूतेन्द्रियगुणात्मना विशिष्टमात्मानमेव सृजे भूतानां सर्वजीवानाम् इन्द्रियाणि चक्षुरादीनि सौन्दर्य्यादिगुणवति स्वस्मिन्नावर्तयतीति भूतेन्द्रियगुणो य आत्मा स्वभावस्तेन भवतीनां मनोहरं रूपमेवेत्यर्थः॥ ३०॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवमाश्वास्य किञ्चित् स्वास्थ्यमुपलभ्य वक्तव्यमाह। यद्वा। तथापि वैकल्यह्रासमदृष्ट्वा व्यग्रः सन् तत्सन्देशेनैव वा स्वास्थ्यं भवतीति। सम्भाव्य तमेव वक्तुमारभते। श्रूयतामिति। प्रियस्य सन्देशः। ननु तेन सन्देशेनालं येनाशु तत्प्राप्तिर्न स्यात् तत्राह। भवतीनां परमोत्कण्ठितानां सुखावहः आश्वेव तत्प्राप्तेर्निर्द्धारणात्। तदर्थमेवाग्रागतोऽस्मि न त्वन्यार्थमिति अस्मिन्नादरं जनयति। अन्यथा गोव्रजे तस्येत्यादिकमनेन प्रत्युत्तरितम्। भर्तुरित्यात्मनस्तद्भृत्यत्वं बोधितं तत्र च रहस्कर इत्यात्मनः परमाप्तत्वेन तत्संदेशदानयोग्यत्वं तथा सन्देशस्य गोप्यत्वं किञ्च भद्रा हे साध्व्य इति तासामेव तत्सन्देशैकपात्रत्वं तथा सन्देशस्यापि भद्रत्वमादरार्थं सूचितम्॥ २८॥

तत्र च श्रीभगवानुवाचेति तत्तदक्षरैणैवाहं तद्वक्ष्यामीति भावः। तत्र च सुप्तोऽहं किल विललाप हेतिवत् लिटा परोक्षनिर्देशस्तदर्थं तु नाहं विवेक्तुं शक्नोमि किन्तु भवत्य एव विचारयन्त्विति व्यनक्ति तथैवाह। भवतीनामित्यादि। तत्रापातप्रतीतो ज्ञानरूपः प्रथमार्थो रहस्यार्थान्तरगोपनाय प्रयुक्तोऽपि लोकरीत्या शोकशमक इव च भवतीति स्वयं भगवता विचार्य प्रयुज्यते स्म। तत्र न ज्ञानं नच वैराग्यं प्रायः श्रेयो भवेदिहेति नात्यन्तिकं विगणयन्त्यपि ते प्रसादमिति साधारणभक्तैरपि ज्ञानस्य तत्फलस्य च हेयतां शुद्धमत्प्रेममाधुर्यस्य सर्वातिशयितां स्वानुभवेनैव निश्चिन्वतीनां तासां स्फुरिष्यतीति विचार्य प्रेमानुभवप्रमाणकसिद्धान्तमयस्तासां प्रतीतये मध्ये न्यस्तः। अथ तथापि तासां तत्र स्फूर्त्तिमात्रप्रतीत्या समुत्कण्ठाक्लेशपराकाष्ठामाशङ्क्य ताभिरस्यामवस्थायामनुभूयमानो नित्यलीलारूपस्तृतीयस्त्वर्थः सद्यः शान्तये स्यात्। तदनुसन्धानञ्च मदुपदेशप्रभावेण भविष्यतीति विचार्यैव निर्दिष्ट इति ज्ञेयं तत्र भवतीनामित्यर्द्धकं मुख्यवाक्यम्। अस्य प्रथमोऽर्थस्त्वेवं मे मया सह भवतीनां वियोगः क्वचिदपि न हि स्यात् तत्र हेतुः। सर्वात्मना सर्वेषामात्मना उपादानरूपेणान्तर्यामिरूपेण चेति। अथ द्वितीयः। सर्वत्रैव बहिरन्तश्च सदा मत्स्फूर्तेः सर्वात्मना सर्वं प्रयत्नेन सर्वथैव मया सह वियोगो नास्तीति तदेव सदृष्टान्तमाह। यथेति। तत्राहमपि भवतीनां मनआदीनि गुणाः सौशील्यादयः मनआदीनां गुणवृत्तय एव वा आश्रयो यस्य सः। तेषामेवाश्रयरूपो वा तथा भूतोऽहं तत्र तत्र सदा वसन् परिस्फुरामीत्यर्थः। अथ तृतीयः सर्वात्मना सर्वेण प्रकाशेन वियोगो नास्ति किन्त्वेकेनानेन प्रापञ्चिकलोकप्रकटप्रकाशेनैव साम्प्रतोऽयं वियोगः अन्येन तदप्रकटप्रकाशेन तु संयोग एवेत्यर्थः। कथं तत्राह। यथा खादीनि भूतानि स्वस्व कार्येषु वाय्वादिषु अप्रकटप्रकाशेन वर्त्तन्त एव तथाहञ्च तत्र तत्र वर्त्ते इत्यर्थः। किमाकारस्तत्राह। भवतीनां बुद्ध्यावाश्रयाकारः श्यामसुन्दरवेणुविलासिरूप एव सन्नित्यर्थः। एतदुक्तं भवति वृन्दावने मथुरायां द्वारकायामपि नित्यैव तस्य स्थितिः श्रूयते। वृन्दावने यथास्कान्दे तत्र वृन्दावनं रम्यं वृन्दादेवीसमाश्रितम्। हरिणाधिष्ठितं तच्च ब्रह्मरुद्रादिसेवितमिति। वत्सैर्वत्सतरीभिश्च सदा क्रीडति माधवः। वृन्दावनान्तरगतः सरामो बालकैर्वृत इति च। पाद्मपातालखण्डे। अहो अभाग्यं लोकस्य न पीतं यमुनाजलम्। गोगोपगोपिकासङ्गे यत्र क्रीडति कंसहेति। यमुनाजलकल्लोले सदा क्रीडति माधव इति च। बृहद्गौतमीये च इदं वृन्दावनं रम्यं मम धामैव केवलम्। इत्यारभ्य सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित्। आविर्भावस्तिरोभावो भवेन्मेऽत्र युगे युगे। तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषेति। श्रीगोपालतापनीश्रुतौ। गोविन्दं सच्चिदानन्दविग्रहं वृन्दावनभूसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या परितोषयामीति। जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयं योऽसौ सौर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गाःपालयति योऽसौ गोपेषु तिष्ठतीत्यादि। मथुरायां यथादिवाराहे। अहोऽतिधन्या मथुरा यत्र सन्निहितो हरिरिति। पातालखण्डे। अहो मधुपुरी धन्या यत्र तिष्ठति कंसहेति। वायुपुराणे। चत्वारिंशद्योजनानां ततस्तु मथुरा स्मृता। यत्र देवो हरिः साक्षात् स्वयं तिष्ठति सर्वदेति गोपालतापनीश्रुतौ। प्राप्य मथुरां पुरीं रम्यां सदा ब्रह्मादिसेविताम्। शङ्खचक्रगदाशार्ङ्गै रक्षितां मुसलादिभिः। यत्रासौ

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

संस्थितः कृष्णस्त्रिभिःशक्त्या समाहितः।रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति । अत एवोक्तम् मथुरा भगवान् यत्र नित्यं सन्निहितो हरिरिति। द्वारकायां यथैकादशस्कन्धान्ते। द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात्। वर्जयित्वा महाराज ! श्रीमद्भगवदालयम्। नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः । स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलमिति । अत्र श्रीविष्णुपुराणे त्वयं विशेषः।यदुदेवगृहन्त्वेकं नाप्लावयदिति कृष्णक्रीडाकरं स्थानमिति च। सर्वत्र जयति जननिवास इत्यादिकमुदाहरणीयम् । अतस्तत्र तत्र नित्यैव तस्य स्थितिर्वर्त्तते अथ च जन्मादिलीलायां गमनत्यागौ च श्रूयेते इति प्रकाशभेदेनैवोभयविधत्वं व्यवतिष्ठते तथाहि नचान्तर्न बहिर्यस्येत्यादिदामोदरलीलादृष्टया मृद्भक्षणलीलादौ च श्रीव्रजेश्वर्यादीनां तथानुभूत्याञ्च श्रीकृष्णविग्रहस्य मध्यमत्वे एव विभुत्वं दृश्यते। तच्च विरोधिधर्मद्वयमेक एतस्मिन्नासम्भवम् अचिन्त्यशक्तित्वात्। तस्य च“श्रुतेश्च शब्दमूलत्वात्” इत्येतन्न्यायसम्मतत्वात्। तदेवं विभुत्वे सति युगपदनेकस्थानाद्यधिष्ठानार्थं रूपान्तरसृष्टिः विष्टपेपिता । किन्तु युगपन्मध्यमत्वविभुत्वप्रकाशिकया तयैवाचिन्त्यशक्त्या तदिच्छानुसारेणैक एव श्रीविग्रहोऽनेकधा प्रकाशते।बिम्ब इव स्वच्छोपाधिभिः किंतु तत्रोपाधिमात्रजीवनत्वेन साक्षात्स्पर्शाद्यभावेन वैपरीत्यादिनियमेन बिम्बस्य परिच्छिन्नत्वेन च प्रतिबिम्बत्वम् । अत्र तु स्वाभाविकशक्तिस्फुरितत्वेन साक्षात्स्पर्शादिभावेन यथेच्छमुदयेन तद्विग्रहस्य विभुत्वेन च बिम्बत्वमेवेति विशेषः। तत्र तेषां प्रकाशानां तयैवाचिन्त्यशक्त्या पृथक् पृथगेव क्रियादीनि भवन्ति अत एव युगपदाविर्भूतानां प्रकाशभेदावलम्बिनीनां निमेषोन्मेषादिक्रियाणामविरोधः। अत एव विभोरपि परस्परविरोधिक्रियागणाश्रयस्यापि तत्तत्क्रियाकर्त्तृत्वं यथार्थमेव तद्यथार्थत्वे बहु श्रीभागवतादि वर्णितं विदुषां तदुद्भवं सुखं नोत्पद्यते इति तदन्यथानुपपत्तिश्चात्र प्रमाणम् । इत्थमेवाभिप्रेत्य भगवता नारदेन “चित्रं वतैतदेकेन वपुषा युगत् पृथक्” इत्यादौ वपुष एकत्वेऽपि पृथक् प्रकाशत्वं तेषु प्रकाशेषु पृथक् पृथक् क्रियाधिष्ठानादित्वं तादृशमुन्यादावपि न सम्भवतीति स्वयं चित्रत्वं च वक्ष्यते। एष प्रकाशः क्वचिदात्मशब्देनोच्यते क्वचिद्रूपादिशब्देन च। यथात्रैव नहि सर्वात्मना क्वचिदिति। अन्यत्र कृत्वा तावन्तमात्मानमिति । तावद्रूपधरोऽव्यय इति कृष्णेनेच्छाशरीरिणेति च। तत्र नानाक्रियाद्यधिष्ठानत्वादेव लीलारसपोषाय तेषु प्रकाशेष्वभिमानभेदं परस्परमननुसन्धानञ्च प्रायः स्वेच्छयाङ्गीकरोति भगवानित्यपि गम्यते एवं तच्छक्तिमयत्वात्तत्परिकरेष्वपि ज्ञेयम् । तत्र तेष्वपि प्रकाशभेदो यथा कन्याषोडशसहस्रविवाहे श्रीवसुदेवदेवक्यादिषु । वक्ष्यते च टीकाकृद्भिः । अनेन देवक्यादिबन्धुजनसमागमेऽपि प्रतिगृहं यौगपद्येन सूचित इति । तेषु श्रीकृष्णे च प्रकाशभेदादभिमानभेदो यथा नारददृष्टयोगमाया वैभवे । तत्र तत्र क्वचन। दीव्यन्तमक्षैस्तत्रापि प्रियया चोद्धवेन च । पूजितः परया भक्त्या प्रत्युत्थानासनादिभिरिति । तत्रान्यत्र मन्त्रयन्तं च कस्मिंश्चित् मन्त्रिभिश्चोद्धवादिभिरिति। तत्र भावभेदादभिमानभेदो लक्ष्यते। अयमेतद्वयस्थोऽहमत्रास्मीति एवं षोडश सहस्र कन्याविवाहे कुत्रचित श्रीकृष्णसमक्षं कर्म कुर्वत्या देवक्यास्तद्दर्शनसुखं भवति तत्परोक्षं तद्दर्शनोत्कण्ठेति । यथा योगमायावैभव एव क्वचिदुद्धवेन संयोगः क्वचिद्वियोग एव इति विचित्रता। तदेवं तत्र प्रकाशभेदे सति तद्भेदेनाभिमानक्रियाभेदेचावस्थिते सति स च प्रकाशो द्विविधो ज्ञेयः। प्रकटोऽप्रकटश्च। तत्र प्रकटः प्रापञ्चिकेष्वभिव्यक्तिः । अप्रकटस्तेष्वनभिव्यक्तिः । तत्र पूर्वमष्टाविंशेऽध्याये यो गोलोकतया दर्शितः श्रीवृन्दावनस्यैव प्रापञ्चिकेष्वप्रकटः प्रकाशविशेषस्तत्र तदानीमपि स्थितेन श्रीकृष्णस्याप्रकटाख्येन प्रकाशविशेषेण तासामप्यप्रकटप्रकाशैः संयोगः श्रीवृन्दावनप्रकटप्रकाशे प्राक्स्थितेन सम्प्रति मथुराप्रकटप्रकाशं गतेन श्रीकृष्णस्य प्रकटप्रकाशेन तु तासां प्रकटप्रकाशैर्वियोग इति । तदेव सदृष्टान्तमाह । यथेति। तत्र प्रथमार्थे खं वाय्वग्निर्जलं महीति । खादीनि भूतानि यथा भूतेषु वाय्वादिपार्थिवपर्यन्तेषूपादानतयानुगमितानि तथा अहं सर्वेष्वित्यर्थः। अथ द्वितीयः। यथा भूतानि भूतेषु कार्यरूपेषु भूतानि कारणरूपाणि आश्रयत्वेन वर्त्तन्ते तथाहमपि भवतीनां ये मनआदयो गुणाश्च धैर्यादयस्तेषां मत्स्फूर्त्त्येकजीवनानामाश्रय इत्यर्थः। अथ तृतीयः । तत् कथं तत्राह। यथा खादीनि भूतानि स्वस्वकार्येषु वाय्वादिषु अप्रकटप्रकाशेन वर्त्तन्त एव तथाहञ्च तत्र वर्त्ते इत्यर्थः । किमाकारस्तत्राहं भवतीनां मनआद्याश्रयाकारः श्यामसुन्दरवेणुविलासिरूप एव सन्नित्यर्थः ॥ २९ ॥

आत्मन्येवेति। तत्र प्रथमार्थः। नन्वेकस्योपादानत्वमन्तर्यामित्वं च दुर्घटं घटादौ मृत्तिकादेरन्तर्यामित्वासम्भवात् मतान्तरेऽप्युपादानरूपाणाम्परमाणूनामचेतनानामन्य एव चेतन ईश्वरस्तन्नियामकः तत्राह। आत्मन्येवेति। आत्मन्येवाधिष्ठाने आत्मना निमित्तेनात्मानमुपादानरूपं भूतेन्द्रियगुणात्मना भूतरूपेणेन्द्रियरूपेण गुणरूपेण जीवरूपेण च सृजामि प्रकटयामि बुद्धीन्द्रियेति पाठे भूतान्युपलक्षणीयानि। नन्वात्मा खल्वेक एव तस्याधिष्ठानादित्वं युगपत्कथं सिद्ध्यतीत्याशङ्क्य सर्वाशङ्कानिरसनार्थमाह । आत्ममायानुभावेन अचिन्त्यशक्तिप्रभावेण “श्रुतेस्तु शब्दमूलत्वात्”इति न्यायेन चिन्तामण्यादिष्वपि तादृशत्वदर्शनेन चेति भावः। द्वितीयो यथा ननु सत्यमस्मासु तथैव त्वं स्फुरसि त्वयि तु न वयं संयोगो नाम च स्वप्नादिव्यतिरिक्तं मिथो मिलनमेव तत्राह। आत्मनि चित्ते निर्विकारेऽपि आत्मना मनसा सङ्कल्पविकल्पात्मकेन आत्मानं प्रयत्नं भवत्संयोगविलासात्मकमेकं सृजे करोमि आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु प्रयत्ने चेति विश्वप्रकाशः। न केवलं सृजे अनुपालयामि चिरकालं व्याप्य संवर्द्धयामि च तथा हन्मि विलासान्तरार्थं तं दूरीकरोमि च एवमन्यमपि जानीतेत्यर्थः। कीदृशेनात्मना आत्मनः स्वस्य माया भवतीषु दया आत्मनि स्वस्मिन् भवतीनां वा दया तस्या अनुभावः प्रभावो यत्र तादृशेन पुनः कीदृशेन भूतानि सिद्धानि साक्षात् स्थितान्येव इन्द्रियाणि चक्षुरादीनि गुणा रूपादयः आत्मनः अहङ्कारास्पदानि च यत्र तादृशेन बुद्धीति पाठे ननु मनोरथमात्रमिदं भवतः कथं सत्यं स्यात्तत्राह । बुद्धिगुणाः विवेकादयः इन्द्रियगुणा दर्शनादयश्च आत्मानस्तदात्मतां प्राप्ता यत्र तादृशेन विचारसिद्धप्रत्यक्षसंवलितेनेत्यर्थः तस्मादुभयानुभवाद्बहिः प्रातीतिकोऽयं वियोगो नादरणीय इति भावः। तृतीयो यथा। ननु तथा तथा प्रकाशः कथं सम्भवति तत्राह।आत्मनि विग्रहस्वरूपे ऽधिष्ठाने आत्मनि तेनैव करण-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भूतेन आत्मानं तत्प्रकाशविशेषं सृजे तदात्मानं सृजाम्यहमिति यत् आविर्भावयामि अनुपालये ऽभीष्टलीलापर्यन्तं रक्षामि हन्मि तदवसानेऽन्तर्धापयामि । ननु कथं तेनैव सृजसि तत्राह । आत्ममाया अचिन्त्यशक्तिस्तस्या अनुभावो यत्र तादृशेन तेन पुनः कीदृशेन भूतानि नित्यसिद्धानीन्द्रियाणि गुणा रूपादयश्च आत्मा स्वरूपं च यस्य तादृशेन बुद्धीति पाठे बुद्धयोऽन्तःकरणानि च इन्द्रियाणि च गुणाश्च आत्मानः स्वरूपभूतान्येव यत्र तादृशेन अतस्तत्र तत्र प्रकाशमात्रमेव स्यात् न तु विकार इति भावः ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रहस्करः रहस्यप्रकाशकः ॥ २८ ॥

तथाहं चेति । व्याप्य स्थित इति शेषः स्वमेव विशिनष्टि । मन इति । मनः प्राणाख्याधारभूतः स्थित इत्यर्थः ॥ २९ ॥

मायानुभावेन स्वसङ्कल्पानुभवेन भूतेन्द्रियगुणात्मना भूतेन्द्रियादिरूपेण सृजामीत्यर्थः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं ताः प्रशस्याथ प्रियसन्देशः श्रूयतामित्याहाश्रूयतामिति । हे भद्राः भवतीनां सुखकरः प्रियस्य सन्देशः श्रूयतां सन्देशं विशिनष्टि भर्तुः रहस्करः भगवतः रहस्यप्रकाशकः अहं यं सन्देशमादायागतः ॥ २८ ॥

स्वतन्त्रात्मभ्रमदेहात्मभ्रमरूपमोहशान्तये चिदचिदीश्वरतत्त्वोपदेशपराणि प्रियसन्देशवचनान्येव सान्त्वनरूपाण्याह । भवतीनामिति नवभिः । मे मम सर्वात्मना भावप्रधानो निर्देशः सर्वेषामन्तरात्मतया भवतीनां वियोगो मद्विश्लेषो नास्ति नह्यात्मानं विहाय शरीरं तिष्ठतीति भावः । सर्वकारणतयापि न वियोग इति दृष्टान्तमुखेनाह । यथा भूतेषु देवमनुष्यादिशरीरेषु कार्येष्वाकाशादीनि महाभूतानि वर्तन्त इति शेषः । वाय्वग्निजलमिति समाहारत्वेनैकवचननिर्देशः यथा महाभूतानां तत्कार्याणां च मिथो वियोगो नास्ति कारणतया तेषां तेषु समन्वयादित्यर्थः । तथाहमपि मनआदीनामाश्रयः आधारः तद्विशिष्ट इति यावत् कृत्स्नजगदन्तर्भूतचिदचिदात्मकपदार्थेषु कारणतया समन्वितः अत्र प्राणो जीवः इन्द्रियाणि श्रोत्रादीनि गुणाः शब्दादयः साश्रयाः गुणपदेन मुख्यप्राणोऽपि सङ्गृह्यते वायुपरिणामविशेषरूपत्वात् अयं भावः महदादिपृथिव्यन्ताचेतनवर्गशरीरकः कृत्स्नजगद्रूपेण परिणतो ऽहमतो न वियोगः नहि कारणं विहाय कार्यं तिष्ठति कारणस्यैवोत्तरोत्तरावस्थाविशिष्टस्य कार्यत्वादिति ॥ २९ ॥

सत्यं कार्यं न कारणाद्वियुज्यते मनआदिशरीरकत्वरूपविशिष्टविशेषणत्वं कृत्स्नजगदुपादानकारणं तथापि मनआदीनामन्यकारणकत्वे तु न तव कृत्स्नजगदुपादानत्वसिद्धिः तथाधारोपकरणकर्मंहेतुस्थितिलयकारणानामन्यत्वेऽपि चेत्यत आह । आत्मन्येवेति । आत्मन्येवेत्यनेनाधारान्तरव्यावृत्तिः आत्मनेत्यनेनोपकरणान्तरस्यात्मानमिति सृज्यान्तरस्य सृज इत्यनेन निमित्तान्तरस्यानुपालये हन्मीति पदाभ्यां स्थितिलयकारणान्तरयोः एवं न केवलं व्यष्टिरूपेणैव सृजाम्यपि तु समष्टिरूपेणापीत्यभिप्रायेण भूतेन्द्रियगुणात्मनेत्युक्तम् अनेन महदादिपृथिव्यन्तानामपि स्वोपादानकत्वसिद्धिः । आत्ममाया स्वसङ्कल्पः एकोऽहं बहु स्यां प्रजायेयेत्येवं रूपःतस्यानुभावे न प्रभावेण हेतुना अनेन हेत्वन्तरव्यावृत्तिः कारणत्वोपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिगुणयुक्तिश्चाभिप्रेता अत्र "ब्रह्म वनं ब्रह्म स वृक्ष आसीत् तदात्मानं स्वयमकुरुत" इत्यादिश्रुत्यर्थोऽभिप्रेतः तत्राधारत्वनिमित्तत्वस्थितिकारणत्वान्यविशिष्टब्रह्मगतान्युपादानत्वोपकरणत्वसृज्यत्वव्यष्टिसृष्टिसंहारकारणत्वानि तु चिदचिच्छरीरकब्रह्मगतानीति विवेकः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदानीं कृष्णसन्देशं वक्तुमुपक्रमते । श्रूयतामिति ॥ २८ ॥

सर्वात्मना सर्वप्रकारेण निरूप्यमाणे सति एनमर्थं दृष्टान्तेनोपपादयति । यथेति । यथा पञ्चभूतानि भूतेषु चराचरशरीरेषु कारणत्वेनानुगतानि तथाहं कानि तानि भूतानीत्यत आह । खमित्यादिना । वाय्वग्निरिति छान्दसः प्रयोगः ॥ २९ ॥

सामान्यतउक्तं विशिनष्टि । मन इति । नन्वत्र मुख्यकारणत्वं कस्येति तत्राह । आत्मना परजेरणामन्तरेणात्मानं देहादिसर्वं सृजे हन्मि संहरामि अनुपालये रक्षामीति ननु तर्हि भूतवत्त्वं तद्भिन्नः किमित्यत उक्तम् आत्मनीति ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अत्रापातप्रतीतो ज्ञानरूपः प्रथमार्थो रहस्यान्तरगोपनाय प्रयुक्तोऽपि लोकरीत्या शोकशमक इव भवतीति प्रयुज्यते स्म तत्रारुचिशङ्कया द्वितीयस्त्वर्थः प्रेमानुभवप्रमाणकसिद्धान्तमयो मध्ये विन्यस्तः । अथ तासां तथाप्युत्कण्ठापराकाष्ठामाशङ्क्य तामिरस्यामवस्थायामननुभूयमानो नित्यलीलारूपस्तृतीयस्त्वर्थः । सद्यः शान्त्ये सहसैव निर्दिष्ट इति ज्ञेयम् । तत्र प्रथमोऽर्थष्टीकायामेव दृश्यः । तृतीयः कृष्णसन्दर्भे । अथ द्वितीयो यथा । सर्वत्रैव बहिरन्तश्च सदा मत्स्फूर्तेः सर्वात्मना सर्वथैव मया सह वियोगो नास्ति तदेव सदृष्टान्तमाह । यथेति । तथाहमपि भवतीनां मनआदीनि गुणाश्च सौशील्यादय आश्रयो यस्य तथाभूतः सन् तत्र तत्र सदा वसन् परिस्फुरामीत्यर्थः इत्यादिकं श्रीदशमटिप्पण्यां दृश्यम् ॥ २६—४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतोऽनुगृहीतेन धार्ष्ट्यान् किञ्चिद्विज्ञाप्यत इत्याह । श्रूयतामिति । स्तोत्रवद्वैदग्ध्यमभिप्रेत्य ग्राहयन्नित्याह । प्रियसन्देश इति । भगवतोऽयं सन्देशपदेन चैतत् ज्ञापयति तदुक्तं भवतीभिरवश्यं कर्तव्यमिति । अन्यथा तदुपदेशं शृणुतेत्येव वदेत् । प्रियेणोपदिष्टत्वात् असाध्यता दुःसाध्यता च निवृत्तैव कदाचिदन्यार्थमुपकारकत्वेन तद्वचनार्थमाह । भवतीनां सुखावह इति । दृष्टफलापेक्षा भवत्यः सुखं वाचयन्तीति तत एव सुखं न तु भवतीनां पुनः साधनान्तरापेक्षापि । नन्वेताद्दशस्य किं प्रमाणं तत्राह । यमादायागत इति । मया हि प्रथमतः सोऽर्थो ज्ञातः ज्ञायते च भवतीनामधिकारः एवमपि सति यत्पुनः तमेव सन्देशमाद-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

याहमागतः भर्तृरहस्करः भर्त्ता हि सः भवतीनां ममापि स तमुपायं न वक्ष्यत्येव येन वयममृता भवामः नापि प्रायिकोऽर्थः यतोऽहमेकान्त एवाभिप्रेतं करोमि एकान्तं वा करोमि एकान्तं गूढकर्त्ता न प्रतार्यते भर्त्ता च न प्रतारकः अतः संदेशो यथोक्तफलकः ॥ २८ ॥

तमेवाह दशभिः । भवतीनामिति—

षड्भिः स्वरूपकथनं पुरुषार्थास्ततः परैः ।
जीवब्रह्मविभेदेन द्वेधा रूपं निरूप्यते ॥
दोषाणां मूलभूतस्य विरहस्य निवारणे ।
बन्धमोक्षव्यवस्थायां जीवो द्वेधा निरूप्यते ॥
आश्रयत्वाच्च कर्तृत्वाद्द्वेधा ब्रह्मापि रूप्यते ।
दोषाभावप्रतिज्ञाये हेतुभिर्विनिरूप्यते ॥
फलं जीवेति येनैषा बुद्धिर्नश्यति सर्वथा ।
गुणा विभाजका यस्मात् तदा त्रिभिरुदीर्यते ॥

तत्र प्रथमं वियोगाभावाय मूलहेतूनुवदन् प्रतिजानीते।भवतीनामिति। वियोगः स्वाभाविकः औपाधिकः अज्ञानतश्चेति त्रेधा भवति आत्मनां जीवानामेकत्वात् परस्परभेदाभावेऽपि औपाधिको भेदो हि तत्रोपायः उद्यमो वा माया वा भगवदिच्छा वा अज्ञानं चेति वादान्तरं जीवब्रह्मणोस्तु भेदे अज्ञानमेव हेतुः सुतरां वियोगे ब्रह्मणस्तु तदुभयाभावात् न जीवैः सह कथञ्चित् भेदः भगवांस्त्यक्त्वा गत इति हि ईर्ष्यादौ हेतुः स नापि त्यजति नापि त्यागं मन्यते जीवास्तु भगवन्तं त्यक्ष्याम इति वदन्तः भ्रान्ता एव अतोऽयमर्थो निरूपणीयः तत्र द्वेधापि प्रतिजानीते । भवतीनां वियोगो मम नास्ति मम च वियोगो भवतीनां नास्ति । एकत्र कृतघ्नता अपरत्र दुःखं च फलति वस्तुस्वरूपेण वियोगाभावेऽपि एकदेशेन वृक्षकापिवियोगवत्कालभेदेन च स्त्रीपुरुषवच्च वियोगः सम्भवति तदुभयं निषेधति । नहि सर्वात्मनेति । क्वचिदिति काले सर्वात्मना केनाप्यंशेनेति देशे एवं चतुर्द्धा भवति अत्र प्रायेण साधनचतुष्टयप्रतिपादकम् अर्द्धमन्तरितामिति प्रतिभाति आत्मत्वात् भक्तवश्यत्वात् सत्यवाक्त्वात् स्वभावत इत्ययं रूपं गोपिकावियोगो भगवतो नास्ति भगवानात्मेति भगवद्वियोगश्च न गोपिकानां भक्तवश्यत्वात् कालभेदेनापि न वियोगः न पारयेऽहमिति नह्येताव दृष्ट्वा एतावत्यर्थे तासामिच्छां किन्न पूरयेत् भगवतश्चायं स्वभावः यत् स्त्रीषु कृपावान् अतः केनाप्यंशेन ता न परित्यजन्ति विशेषहेतव एते चेद्भवन्ति सामान्यहेतूनाह । यथा भूतानीति द्वाभ्याम् भगवानाश्रय इति ता विहाय क्वयास्यति अन्यथा आधारात्तासां भावे स्वरूपमेव न तिष्ठेत् । अथ देहभावेन आत्मा गौण इति देहेन सह वियोगः आविर्भूतस्योच्येत तदपि न घटते समवायिकारणत्वेन तेषु वर्त्तत इति अन्यथा देहा निःस्वभावाः स्युः आविर्भूतेन वियोगस्तु हितकारी अन्यथा स्वरूपनाश एव स्यात् यथाग्निकाष्ठयोः सर्वसम्बन्धेनैवैता अर्द्धदृष्ट्या पुनः सम्बन्धेन संवाद एव स्यात् सुखानुभवस्तु स्वान्तःस्थितान्यभिव्यक्तिवत् स्वान्तः स्थित भगवदभिव्यक्त्या सर्वदाभिव्यक्तौ काष्ठांशो ज्वलिष्यतीति न सम्भवते यतो भगवान् प्रलयकर्ता स्थितिहेतुत्वात् नैकदेशेनापि वियोगः सम्भवति तदाह । दृष्टान्तेन यथा भूतानि महाभूतानि अन्येषां भूतानामाधारभूतानि सन्ति तेभ्यो न वियुक्तानि भवन्ति तथा भगवानपि देहांशेन न वियुक्त इति दृष्टान्तेनैव साधितं प्रकारेणैव तल्लभ्यमिति अनन्यलभ्यो हि शब्दार्थः साधारणदृष्टान्तेन च चकारात् पुनरुक्तेन दृष्टान्तान्तरमाह । यथाहमिति । देहव्यतिरिक्तानि च मनःप्राणबुद्धीन्द्रियगुणात्मकानि तेषामप्यहमाश्रयः समसङ्ख्यार्थं पञ्च गणिताः सत्त्वादिगुणेषु प्रकृतेरन्तर्भावः अहङ्कारस्य च त्रिगुणात्मकत्वात् बुद्धौ चित्तस्य प्राणाः दशेन्द्रियाणि च सङ्कल्पादि सर्वधर्मसहितं च मनः क्रमेण च अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वागीति सा हि बुद्ध्यात्मिका ज्ञानप्राधाना यथारूपं क्रियाप्रधान इन्द्रियाणि प्राणेन वायुना पुष्टानि गुणाश्चाकाशे अत एवाव्रतमः प्रकाशाः आकाशे भवन्ति च खं वाय्वग्निर्जलं महीत्युत्पत्तिप्रकारेणाधारत्वेन वा गणना अन्नं महीपर्यायः एतेषु जीवास्थितेषु कारणभूतानि सन्तीति वक्तव्येऽपि प्रसिद्धभावात् नोक्तम् ॥ २९ ॥

अतः परं कारणभूतत्वात् कार्यस्य न कारणव्यतिरेक इति भगवद्विरहो गोपिकानां नास्तीति वक्तुमाह । आत्मन्येवेति । कर्ता भगवान् "यतो वा इमानि भूतानि जायन्ते" इति श्रुतेः समवायश्च भगवान् "तस्माद्वा एतस्मादिति" श्रुतेः स आत्मानं स्वयमकुरुतेति श्रुतेश्च कार्यमपि स्वयमेव जीवपरत्वेऽपि सुतरामेत्र न संदेहः आधारे संदेह इति समवाय्यतिरिक्ताधारं निरूपयन्नाह । आत्मन्येवेति । यथा कुलालश्चक्रे घटं करोति आत्मानात्मसङ्करप्रतिषेधाय एवकारः करणस्य भिन्नत्वमाशङ्क्याह । आत्मनेति । वैषम्यनैर्घृण्यादिदोषाभावाय कार्यस्याप्यन्यत्वं निवारयति । आत्मानमिति । कदाचिदानीय कश्चित् घटादिकमपि स्वस्मिन् स्थापयति स्वपादं च स्वजंघने स्फोटयति च स्वस्मिन् तन्निषेधाय उत्पत्त्यादीनाह । सृजे हन्मि नाशयामि पालये परंपरया वा तत्त्वेष्वेव भवत्कारणता प्रतीयते न भौतिकेषु अत एव भूतैर्यदा पञ्चभिरित्यादि वाक्यानि तत्राह । आत्ममायानुभावेनेति । अहमेव तत्रापि करोमि परं मन्मायानुभावेन लोकोऽन्यथा मन्यते मायया वहितः मायां पुरस्कृत्य वा करणात् । ननु वाक्यानुभावाभ्यां पृथिव्यादेरेव कारणत्वं प्रतीयते तत्कथमत्र व्यामोह इति चेत्तत्राह । भूतानि । इन्द्रियाणि गुणाश्च आधिभौतिकादिभिन्नास्त्रिविधाः तदात्मभूता माया तेषु प्रविष्टा सा हि यत्र प्रविशति तत्रान्यदेव भासयति अकरणेषु करणत्वम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु किमेतथैवास्मत्स्वश्लाघया चास्मान् सान्त्वयितुं स्वामिद्वायातः किञ्चिदस्ति वा कृष्णसंदेशादिकमस्मद्दुःखोपशमकं तद्ब्रूहीत्यत आह । श्रूयतामिति । भर्त्तुः कृष्णस्य रहस्करः रहस्यकार्यकर्त्ता ॥ २८ ॥

अत्र प्रथमो ज्ञानोपदेशरूपः संदेशः परमविज्ञान् प्रति तत्प्रेम्णोऽन्याधर्षणीयः महाबलवत्त्वज्ञापनार्थकः मन्दधियः प्रति तत्प्रेममाहात्म्याच्छादनार्थकश्च तथा हि मया गोपीभ्यो दातुमुद्धवद्वारा ज्ञानामृतं प्रेषितं तदपि तासां प्रेमाग्निं निर्वापयितुमसमर्थं प्रत्युत तत्तापेनैवालीढं बभूवेत्यहो तासां प्रेमप्राबल्यं यन्मनो योगेश्वरेण मयाप्युपदिष्टो ज्ञानयोगो वैयर्थ्यमगात् । यथा रासारम्भे कायोग इत्यन्तरङ्गविश्रम्भकान् प्रेम्णः प्राबल्यं प्रकाशया-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मास । महाप्रेमवतीष्वपि गोपीषु सर्वहितकारिणा परमेश्वरेण मोक्षसिद्ध्यर्थं ज्ञानोपदेशः कृतः इत्यन्यान् पण्डितंमन्यान् मन्दधियः प्रति प्रेम्णो माहात्म्यमाच्छादयामास रहस्यत्वादित्ययं भक्तविबुधान् प्रेमामृतस्य प्रदानेन पुष्णाति अभक्तांस्तुरासुप्रदानेन वञ्चयतीत्युभयमेव मोहिनीसधर्मणः शास्त्रस्यास्य प्रयोजनं ज्ञेयम् अथ प्रकृतमनुसरामः भगवानुवाचेत्युद्धववाक्यं तत्रोवाचेति लिटा महाप्रेमवतोऽपि मत्प्रभोरेतादृशो वचनस्य प्रयोजनं मम दुर्गमत्वात् परोक्षमेवेति ज्ञापितं भवतीनां मे मया सह सदा वियोगो नास्त्येव कथं रुदित्वा रुदित्वा मर्त्तुमीहध्वे इति भावः । कुतःसर्वेषामात्मनापरमात्मनाअहं हि परमात्मा भवामि अत्र सर्वशास्त्राणि सर्वे गर्गादयो मुनयश्च वरुणादयो देवाश्च प्रमाणं तस्मात्परमात्मरूपेण भवतीनां देहेष्वहं वर्त्ते एवेत्यतो मया सह सदा संयोग एवेति भावः । अत्र च यथा रासारम्भे धर्मोपदेशवाक्यं व्याप्याभ्यन्तरी शृङ्गारकथा स्वोपालम्भनदोषनिवृत्त्यर्थां स्थापिता तथा हि दिनान्तरे भो कृष्ण ! कामुकशिरोमणे त्वया रासकेलिदिने कथमस्मासु धर्मोपदेशः कृत इति प्रेयसीभिः सोपालम्भमुक्ते सति भो अविदुष्यः मया तु तद्दिने सम्भोगकृत्योपदेश एव कृतः कथं मुग्धाभिर्भवतीभिर्धर्मोपदेश एवावधारितः इत्युक्त्वा रजन्येषा घोररूपा इत्यादिवाक्यानां सम्भोगकथारूपं द्वितीयमर्थं कृष्णो व्याचष्ट स्म तथैव सुदूरप्रवासान्ते भाविनि संयोगे भोः प्राणनाथ ! कथमस्मासु महाविरहिणीषूद्धवद्वारा त्वया ज्ञानोपदेशः कृत इत्याभिर्गोपीभिर्वक्ष्यमाणे भो अविदग्धा मया तूद्धवद्वारा प्रेमरीत्युपदेश एव कृतः कथं युष्माभिर्ज्ञानोपदेश एवावधारितं इत्युक्त्या भवतीनां वियोगो मे इत्यादिवाक्यानां द्वितीयं प्रेमरीतिमयमर्थं व्याख्यास्यतीत्यत एतेषु वाक्येषु वर्त्तमान एव द्वितीयः प्रेमरीतिमयोऽर्थो व्याख्येयः स यथा भवतीनां मया सह विरहो न सर्वेणात्मना किं त्वेकेन देहेनैव आत्मशब्दस्य देहजीवमनोबुद्धिवाचित्वात् प्रेमा ह्यात्मधर्म एव ममात्मबुद्धीन्द्रियादयो भवतीष्वेव स्थिताः केवलमेको देह एव मया मथुरामानीतः भवतीनामप्यात्मानो बुद्धीन्द्रियादयो मय्येव वर्त्तन्ते केवलं देहा एव तत्र व्रजे स्थिताः किं त्वहं सर्वशास्त्रेषु सर्वैः प्रेमाधीन एव निरूपितः अत एव प्रेम्णि मम नास्ति स्वातन्त्र्यं प्रेमवतामस्माकं परस्परदेहविच्छेद एव विप्रलम्भस्तमारुह्य प्रेमा सम्प्रत्यतिवर्द्धितुमिच्छति अतो मया सोत्कण्ठेनापि स्वदेहः कथं साम्प्रतं व्रजमानेतुं शक्यः किं तु स एव प्रेमा स्वाभीप्सितां वृद्धिं प्राप्य विप्रलम्भं दर्शयित्वा यदा सम्भोगभूमिकामारोक्ष्यति तदैव मया तदधीनेन स्वदेहो व्रजमानेतव्य इति देहेनापि वियोगोऽपयास्यतीति भावः । किं त्वहम उपादानकारणत्वादपि सर्वभूतेषु वर्त्ते एवेत्याह । यथेति । भूतेषु चराचरेषु भूतानि महाभूतानि तान्येव कानीत्यत आह । खमिति । वाय्वग्निः वायुसहितोऽग्निः यथा वर्त्तते तथैवाहं मनआदीनि कार्याणि गुणास्तेषां कारणं सर्वेषामपि परमकारणत्वेनाश्रयः । तत्र तत्रानुगतो वर्त्ते एवेत्यर्थः । पक्षे मां सदा प्रेम्णा ध्यायन्तीनां भवतीनां मनःप्राणबुद्धीरिन्द्रियगुणान् शब्दादींश्च आश्रयामीति सः आश्रित्य तत्र तत्र स्फुरन्नेवाहं सदा वर्त्ते इत्यर्थः ॥ २९ ॥

किञ्चाहमेव कर्त्ता अधिकरणं कर्म चेत्याह । आत्मन्येवाधिष्ठाने आत्मनैव कारणेन आत्मानमेव जगद्रूपं सृजे सृजामि । ननु त्वं सच्चिदानन्दस्वरूपः । जगदिदं ततो भिन्नं प्रतीयते तत्राह । आत्मनो मम या माया शक्तिस्तस्या अनुभावः कार्यं तेन भूताद्यात्मना सृजामि । तस्या मद्बहिरङ्गशक्तित्वाज्जगतोऽस्य मद्रूपत्वं ननु मत्सरूपत्वमिति भावः।पक्षे भवतीनामात्मनि मनसि आत्मना प्रयत्नेन आत्मानं स्वं सृजाम्याविर्भावयामि सम्भोगादिलीलार्थं मुहूर्त्तमनुपालयामि । ततो हन्मि अन्तर्द्धापयामि केन प्रयत्नेन आत्ममायाप्रभावेण योगमायाप्रभाव एव मम प्रयत्न इति भावः।आत्मानं कथम्भूतं भूतान्यङ्गानि इन्द्रियाणि चक्षुरादीनि गुणाः सौन्दर्यमाधुर्यवैदग्ध्यादयः । आत्मानो बुद्ध्यादयस्तेषां द्वन्द्वैक्यं तेन सहितम् ॥ ३० ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वक"मिति भगवद्वाक्यात् भगवद्भक्तिमूलं तत्त्वज्ञानं भगवद्वाक्यैर्वक्तु भवतारयीत। श्रूयतामिति । ननु नेमानि स्तुतिवाक्यान्यस्माकं सुखजनकानि प्रियेणास्मान्प्रति किञ्चिदुक्तं चेत्तर्हि तद्वदेति चेत्तदेवेदानीं निवेदयामीत्याह । प्रियेति । सम्यगुपदेशरूपः संदेशः अवश्यकर्तव्यःप्रियसम्बन्धित्वाच्च प्रियवदादरणीयः तत्रापि भवतीनां सर्वसाधनफलैरेवंविधप्रेमवतीनां सर्वासामस्मिन्नेव जन्मनि सुखावहः नतूत्कृष्टसाध्यसाधनेषु प्रवर्ततेन दुःखजनकः अत एवायं संदेशः भगवन्मुखपद्मादादायाहमागतो नत्वन्यायः कश्चित् यतोऽहं भर्तू रहस्करः रहस्यकार्यकर्ता तथा च रहस्यमेवार्थं तेनोपदिष्टं वक्तुमहमागत इति भावः । यतः भवत्यो भद्राः कल्याणरूपिण्यस्तत्पात्रभूताः एतेन भर्त्रैह प्रेषित इत्याद्युपालम्भो निराकृतः युष्मत्प्रियचिकीर्षया समागतोऽप्यहमेतद्गोपनार्थमादौ तत्पितृगृहं प्रविष्ट इत्याशयात् ॥ २८ ॥

तत्र सर्वोपालम्भकारणं व्यसृजदकृतचेता इत्युक्तं त्यक्त्वा तद्गमनं भगवत्संदेशेन निराकरोति। भवतीनां मे मया सार्द्धं वियोगो नास्तीति प्रतिज्ञा तत्र हेतुगर्भितं विशेषणं सर्वात्मनेति सर्वस्यात्मना उपादानकारणेन"तदनन्यत्वमारम्भणशब्दादिभ्य" इति न्यायात् तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते कुतः "यथा सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यादिश्रुतिभ्यः आदिशब्दादैत"दात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि सर्वं यदयमात्मा ब्रह्मैवेदं सर्वम् आत्मैवेदं सर्वं नेह नानास्ति किञ्चने"त्येवमाद्यात्मैकत्वप्रतिपादनपरं वचनजातं गृह्यते तथा च यथा घटाद्याकाशानां महाकाशात् यथा च मृगतृष्णोदकादीनामूषरादिभ्यो नान्यत्वं दृष्टं नष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वादेवमस्य भोग्यभोक्त्रादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावः । ननु यथा वृक्षो नैकशाख एवमनेकात्मकमनेकशक्तिप्रवृत्तियुक्तं ब्रह्मात एकत्वमनेकत्वमुभयमपि सत्यमेव तथा मृदादिदृष्टान्ता अप्यस्मिन् पक्षे नानुरूपा इति चेन्न मृत्तिकेत्येव सत्यं तत्सत्यमिति दृष्टान्तदार्ष्टान्तिकयोः प्रकृतिमात्रस्य सत्यत्वावधारणात् तत्त्वमसीति शारीरस्य ब्रह्मभावोपदेशाच्च उक्तमर्थं स्फोरयितुं सदृष्टान्तमाह । यथेति । भूतेषु स्थावरजङ्गमसंघातेषु महाभूतान्याकाशादीनि वायुसहितोऽग्निर्वाय्वग्निः ॥ २९ ॥

यथा भूतेषु चराचरेषु स्वस्मिन् कल्पितनामरूपत्वाद्वाचार

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रम्भणमात्रेषु प्रकृतित्वात्सत्याधिष्ठानरूपेण महाभूतानि वर्तन्ते तथाहमपि वाचारम्भणमात्राणां कार्यभूतानां मनआदीनां तत्कारणभूतानां सत्त्वादिगुणानां चाश्रयः अधिष्ठानरूपत्वात्सत्यत्वेनानुगतः ननु कार्यकारणयोरनुगतव्यावृत्तयोर्लोके भेदोपलम्भात् कथं सर्वकारणात्सर्वानुगतात्परमात्मनः सर्वस्यानन्यत्वमित्याशङ्क्याह। आत्मन्येवेति। वाचारम्भणमित्यादिश्रुत्या विकारमात्रस्य मिथ्यात्वबोधनात् तत्प्रतियोगिकतद्धर्मिकभेदास्यत्वावधारणात्तत्प्रतीतिर्भ्रान्तिनिबन्धनेति भावः। तथा च श्रुतिरेकोऽहं बहुस्यां तदात्मानमकुरुतेत्याद्या । नन्वेकस्मिन्नाधारत्वकारणत्वकार्यत्वरूपविरुद्धधर्मसम्बन्धः कथं युज्यत इति चेत्तत्राह । भूतेति । तथा च सत्तास्फूर्तिप्रदातृत्वेनाधारत्वं भूताद्यात्मना कार्यत्वं गुणात्मना कारणत्वमित्यवच्छेदभेदान्नास्ति विरोध इत्यर्थः। नन्वसङ्गनिर्विकारस्य कथं तद्रूपतेति चेत्तत्राह। आत्ममायेति। स्वात्मनः प्रकाशाल्लब्धसत्ताकाया मायाशक्तेरनुभावः अन्यस्यान्यात्मनावभासनसामर्थ्यं तेन तथा चानिर्वचनीयमायाकृतमेवानिर्वचनीयं ब्रह्मणस्तदात्मत्वमिति भावः॥ ३०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रहस्करः रहस्यकार्यकरः॥ २८॥

विरहसन्तप्तानां संयोगेन शान्तिः स्यात् स च द्विविधो हि भगवत्संयोगः सर्वोपादानकारणत्वेन सर्वान्तर्यामित्वेन सर्वसाधारणः "तदैक्षत बहु स्यां तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवत् तत्सृष्ट्वा तदेवानुप्राविशदि"त्यादिश्रुतिप्रसिद्धः श्रीमूर्तिमत्त्वेनचानेकविधः तत्तदधिकारिविशेषविषयः तत्र कार्यकारणरूपप्रकृतिसम्बन्धरहितानां मुक्तानामप्राकृतलोके सदा पश्यन्ति सूरयः निरञ्जनः परमं साम्यमुपैतीत्यादिश्रुतिप्रसिद्धः प्राकृतलोके च अनुकूलानां प्रतिकूलानाञ्च जीवानां भगवत्संयोगो यथोपयोगं प्रसिद्ध एव एवं सति गोपिकानां भगवत्प्रियाणां कारणत्वेनान्तर्यामित्वेन संयोगं श्रीमूर्तिवियोगे तु ध्याने निष्ठा भवत्वित्येवं रूपं कारणं भगवत्पदप्राप्तिरूपं ध्यानफलं च भगवद्वाक्येनैव वर्णयति। भवतीनामित्यादिना। मे मया सर्वात्मना सर्वस्योपादानकारणेन अन्तर्यामिरूपेण च भवतीनां वियोगः क्वचिदपि नास्ति "येनाशरीरमिदं सर्वम् अन्तर्यामी"त्यादिश्रुतेः एतदेव सदृष्टान्तमाह। यथेति। खं वायुरग्निर्जलं च मही चेत्येवं नामकानि महाभूतानि यथा भूतेषु चराचरेषु कारणत्वेन समन्वितानि तथा अहं परमकारणभूतः मनआदीनि कार्याणि गुणाः कारणं तेषामाश्रयः कारणम् अत्र मनआदिकरणनिर्देशो जीवोपलक्षणार्थः गुणनिर्देशः सर्वप्राकृतपदार्थोपलक्षणार्थः तेषामाश्रयः सर्वचेतनाचेतनात्मके विश्वस्मिन् कारणत्वेन समन्वितोऽहमित्यर्थः चकारादन्तर्यामित्वेन प्रविष्टोऽस्मीति बोध्यम्॥ २९॥

एतदेवोपपादयितुं स्वस्य सर्वकारणत्वं दर्शयति। आत्मनीति। अत्र उपलक्षणतया अपादानं सम्प्रदानञ्चेति कारकद्वयमप्यूह्यम् एवं सति चिदचिच्छक्तिमानहं कर्ता आत्मनि अधिकरणे आत्मना करणेन आत्मनः अपादानरूपात् कारकात् आत्मानं विश्वं कर्मरूपम् कारकम् आत्मना भूतेन्द्रियादिचिदचिद्रूपेण सृजे अनुपालयामि हन्मि च ननु भवतो ब्रह्मणः अपादानत्वे परिणामित्वप्रसङ्गात् कर्मत्वे अनित्यत्वप्रसङ्गात् सम्प्रदानत्वे संसारित्वप्रसङ्गात् सर्वे दोषाः त्वयि ब्रह्मण्येव भवेयुरित्यत आह। आत्ममायानुभावेनेति । आत्मा जीवश्च माया च तयोश्चेतनाचेतनरूपयोर्मत्प्रकृत्योः "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो! ययेदं धार्यते जगत्"इति श्रीमद्गीतोक्तयोः अनुभावः संसारित्वविकारित्वादिरूपो यस्मिन् तेन इन्द्रियोपलक्षितचेतनोऽपि ग्राह्यः तथा च सचेतनेन भूतेन्द्रियादि सृज्यरूपेण आत्मानं सृजामीति संबन्धः अतः संसारित्वपरिणामित्वादयो धर्माः प्रकृतिद्वयस्य नतु प्रकृतिमति मयि ब्रह्मणि दोषप्रसक्त इति सिद्धान्तः एवं चिदचिद्ब्रह्मपदार्थानां स्वरूपतो हि भेदः चिदचितोः ब्रह्मशक्तित्वेन पृथगवस्थानाभावादभेदः इति स्वाभाविको भेदाभेदसंबन्धः पूर्वाचार्यैर्वेदान्तकौस्तुभादौ सुदृढं निर्णीतः ये केचित्तु स्वाभाविकभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमाद्गुणवद्दोषाश्च स्वाभाविका भवेयुरित्याशङ्कुः ते एतेन प्रत्युक्ताः किञ्च तदात्मानं स्वयमकुरुतेत्यादिश्रुतिभिः ब्रह्मणः स्वत एव विश्वभावोऽभ्युपगम्यते ब्रह्मणो जीवभावमात्रस्यैव शङ्का अपरया प्रकृत्या परया च नित्यसिद्धया देहदेहिभावं ब्रह्मैव प्राप्नोतीति सिद्धान्तात् किंच तैरपि ब्रह्मणो जगदुपादानकारणत्वमभ्युपगम्य कार्यावस्थकारणावस्थयोर्ब्रह्मणोरैक्यमभ्युपगम्यते एवं सति तन्मते एव सर्वे दोषाः ब्रह्मण्येव तदुक्त्यैव भवेयुरित्यलं विस्तरेण॥ ३०॥

---

भाषा टीका ।

हे गोपि हो! आप के प्रिय श्रीकृष्णचंद्र के सँदेशा को अच्छी तरे से श्रवण करो वह संदेशा तुमारे सुख का देने वाला है हे भद्रा रूप गोपियो! मैं अपने पति का एकांत कार्य करने वाला हूं सो इस संदेश कूं लाया हूं. सो सुनो॥ २८॥

श्रीभगवान् के वाक्य हैं हे गोपियो हो तुमारा हमारा तो किसी प्रकार से किसी समय में कहीं पर भी वियोग है ही नहीं जैसे कि आकाश वायु अग्नि जल पृथिवी इन पांचों भूतों का किसी प्राणी के साथ वियोग नही होता है तिसी प्रकार से हम भी सब जीवों के मन प्राण पंचभूत इन्द्रिय गुण इनके आश्रय हो कर रहते हैं॥ २९॥

हम अपने दिव्य ज्ञान संकल्प के प्रभाव से भूत इंद्रिय गुण रूप होकर अपने शरीर होने से अभिन्न जो जगत् तिस को अपने स्वरूप से आप ही मे सृजते हैं पालन करते हैं तथा नाश करते हैं॥ ३०॥

---

आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ।
सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ॥ ३१ ॥
[1]येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः ।
तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥ ३२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

नन्वात्मनो भूतादिरूपत्वे तद्दोषप्रसङ्गः स्यात्तत्राह । आत्मेति । आत्मा तु शुद्धः कुतः अगुणान्वयः न गुणैरन्वेतीति तथा तत्कृतः व्यतिरिक्तः तदपि कुतः ज्ञानमयो ज्ञानस्वरूपः नन्वहंप्रत्यये स्वसंवेद्यमेवात्मनो नानावस्थावत्त्वमिति कुतः शुद्धतेति तत्राह।सुषुप्तीति । मायाकार्यमनोवृत्तिभिर्विश्वतैजसप्राज्ञरूपेण प्रतीयते न स्वत इत्यर्थः ॥ ३१ ॥

कुतः मनोनिरोधे तदभावादिति व्यतिरेकं दर्शयितुं मनोनिरोधं विधत्ते । येनेति । उत्थितः पुमान् यथा मिथ्याभूतमेव स्वप्नं ध्यायत्येवं बाधितानपीन्द्रियार्थान् शब्दादीन् येन मनसा ध्यायेच्चिन्तयेत् ध्यायंश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप तन्मनोऽनिद्रोऽनलसः सन्निरुन्ध्यान्नियच्छेदिति ॥ ३२ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो बत मायया सृजामीति कथमुच्यते जीवस्यापि तत्त्वतो मायिकदेहेन संबन्धो नास्ति मम तु कुतः स्यादिति दृष्टान्तमाह । आत्मेति । मनो वृत्तिभिरिति । तस्य विश्वादिभेदो मायिक एव न वस्तुत इत्यर्थः । अन्यैस्तैर्व्याख्यातं यद्वा मयापि सदा भवत्यो दृश्यन्त इत्याह । आत्मेति । परमादरात् आत्मना [illegible] प्रेमविशेषेणाभेदाद्वा भवतीत्यर्थः । तासां चान्योऽन्यस्नेहभेदाभावात् एकत्वं सुषुप्त्याद्यवस्थाभिः अन्याभिरिव मनोवृत्तिभिरीयते तत्र तत्र दृश्यत इत्यर्थः । यद्यपि जीवस्यैवावस्थायामिदं तथापि श्रीभगवतोऽपि लीलाविशेषोऽयं सम्भवेत् सुषुप्तौ दर्शनासम्भवेऽपि तथोक्तिर्दर्शनस्याविच्छेदविधाने तात्पर्यार्था यद्वा सुषुप्तिस्तदेकाग्रतया सामधिरूपा ननु दुर्लभगात्रास्माकं कुतस्तयोऽयमित्याशङ्क्य तदेव दर्शयति । ज्ञानेत्यादि चतुर्भिर्विशेषणैः आत्मपदविशेषणत्वात् पुंस्त्वं ज्ञानमयः जीवेश्वरभक्त्यादितत्त्वज्ञानपूर्णः अत एव शुद्धः माया गुणाद्यस्पृष्टः अत एव व्यतिरिक्तः प्रपञ्चाद्विलक्षणः अत एव गुणानां नित्यसद्रूपयोः वैदग्ध्यादीनामन्वयो यस्मिन् सः यद्वा आत्मा भवतीनां देहः ननु प्राकृतनिन्द्यास्मदीयदेहस्य त्वया सदा दर्शनं न घटत इत्याशङ्क्य तस्य सच्चिदानन्दघनतां द्योतयति । ज्ञानमयः ज्ञानघन इत्यर्थः । यतः शुद्धः अतो व्यतिरिक्तः अन्यत्समानम् ॥ ३१ ॥

अहो अन्तर्यामित्वेन सर्वेन्द्रियप्रवर्तकत्वेन च सर्वत्र प्रकाशमानमपि मां भवतीर्विना न कोऽपि विषयासक्तया द्रष्टुमर्हतीति विषयेभ्योऽन्येन सर्वेण मनो नियन्तव्यमेवेति प्रसङ्गात्तासां माहात्म्यार्थमेवाह । येनेति । तैर्व्याख्यातं यद्वा ततश्च विनिद्रः निर्मायः सन् इन्द्रियाणि प्रति सर्वेन्द्रियेभ्योऽप मां मन्दकः प्रत्यपद्यत प्राप्तेर्भिक्षारार्थमतीतनिर्देशः प्रतिपद्यत एवेत्यर्थः । यद्वा शुद्धार्थं पूर्वपूर्वसदाचारो दर्शितः अन्यत्समानम् ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आत्मा ज्ञानमय इति । प्रश्नार्थः । नन्वेतावन्तं कालं तवात्मानं घनश्यामवर्णं परिमितसर्वाङ्गं परमाश्चर्यकरं रूपवन्तमेव मन्यामहे स्म । सम्प्रति भवता त्वचिन्त्यशक्तिमयस्तत एव सर्वेषामुपादानतया अन्तर्यामितया च व्यापक एव स इत्यस्माकं भवता सह न वियोग इत्युपदिश्यते । स च न केनापि दृश्य इत्यरूपश्चेत्यवगते तत्तद्रूपता च तव भवदेकगम्येति भवतु नामायं सन्देशः । वयन्तु स्वं स्वमात्मानं परिच्छिन्नदेहरूपमेवानुभवामः ततः कथञ्चिज्जातीयेनानेन तादृशस्य भवदात्मनः सङ्गममनुभविता स्मः । तत्राह । आत्मा ज्ञानमय इति । सर्वेष्वात्मा सुषुप्त्यादिभिर्मनोवृत्तिभिस्तत्तद्रूपास्तु तद्वृत्तिषु प्रतीयते एव सुषुप्तावपि सुखमहमस्वाप्समिति प्रत्यभिज्ञाबलात् किमुतान्ययोरिति भावः । यतो ज्ञानमयः प्रकृतिज्ञानस्वरूपत्वात् स्वयं प्रकाशः । यतोऽसौ तत्तद्गुणानुगतोऽपि व्यभिचारिणीभ्यस्तत्तद्वृत्तिभ्यो व्यतिरिक्तत्वात् शुद्ध इत्यर्थः । तस्मात् ज्ञानरूपेण सर्वेषामुपादानेन व्यापकेन मदात्मना ज्ञानरूपस्य निजात्मनस्तादात्म्यभावनया सुखिन्यो भवत किमनया बहिर्योगदुःखमयभावनयेति भावः। मायावृत्तिभिरिति पाठेऽपि स एवार्थः । द्वितीये त्वर्थे । यो मम [illegible] भवतीभिर्निर्धारितः स तु सुषुप्त्यादिवृत्तिषु भवतीभिरीयते अनुभूयते एव मत्समाधेरेव भवतीषु सुषुप्त्यवस्थासमानत्वात् यथोक्तं "जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः । या काचिन्मनसो वृत्तिः सा भवेदच्युताश्रयेति" । [illegible] । ज्ञानमयो नानाविद्याविदग्धः शुद्धो दोषरहितः व्यतिरिक्तो विशेषेण सर्वोत्तमः गुणान्वयः [illegible] ! तृतीयेऽप्यर्थे भवतीभिर्यत् सुषुप्त्यादिषु [illegible] यो ममात्मानुभूयते स च [illegible] । "नवीननीरदश्यामं नीलेन्दीवरलोचनम् । वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणमिति वर्तमानवन्दनात्मकस्य सार्वदिकानुशीलनीयस्य श्रीगोपालस्तवराजादेर्दृष्ट्या नित्यतात्विक एव ज्ञेय इति भावः ॥ ३१ ॥

येनेति । तैर्व्याख्यातं तत्र चिन्तयेत् चिन्तयति प्राप प्राप्नोतीत्यर्थः । द्वितीयोऽर्थो यथा । ननु सत्यं साक्षात्कारमिमा मा

---

१ अयं विजयध्वजीये नास्ति ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्फूर्तिः किन्तु न सदेति बहिर्दृष्ट्या वियोगस्फूर्त्तेरप्येक उपायः उच्यते । बहिर्वृत्तितो मनो निरोध एवेति योगशास्त्रक्रियामुपदिशति । येनेति । तृतीयेऽपि । हन्त यद्यस्मिन् प्रकाशो वियोग एव च तद्दृष्टिश्चास्माकं हातुमशक्या भवतश्च नागमनं तर्हि कथमिव कालं क्षिपाम इत्याशङ्क्य ममागमनं यावन्मनोनिरोधः क्रियतामित्यभिप्रेत्याह । येनेति ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मा जीवः अगुणान्वयः स्वतो गुणान्वयरहित ॥ ३१ ॥

येनेन्द्रियर्थानिति । येन मनसाः विनिद्रः । निवृत्ताज्ञानः प्रतिपद्यते ॥ ३२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवमब्रह्मात्मकस्वतन्त्रवस्तुभ्रमो निरस्तः अथ देहात्मभ्रमं निरस्यति । आत्मेति । आत्मा जीवः व्यतिरिक्तः देहेन्द्रियमनःप्राणादिभ्य इति शेषः । अतएवागुणान्वयः वस्तुतः प्राकृतसत्त्वादिगुणान्वयरहितः यद्वा गुणान्वय इति छेदः व्यतिरिक्तः कर्मनिमित्तो गुणानामन्वयो यस्मिन्निति तथाभूतः अत एव स्वतः स्वरूपतः शुद्धः निर्मलः अस्तु किन्तत्स्वरूपं तत्राह । ज्ञानमयः । अन्योऽन्तर आत्मा विज्ञानमय इत्यत्रेव स्वार्थिको मयट् ज्ञानमयस्वरूप इत्यर्थः । यद्वा प्राचुर्ये मयट् नच ज्ञानप्राचुर्यमज्ञानाल्पत्वमवगमयतीति शङ्क्यं तत्प्राचुर्यस्य तदल्पस्यैव व्यावर्तकत्वाद्व्यतिरिक्तस्य कथं न तथा प्रतीतिः कथं वा देवोऽहं मनुष्योऽहं सुप्तोऽहं किल विललाप सुखमहमस्वाप्समित्यादि रूपेण प्रतीतिस्तत्राह । सुषुप्तीति । मायावृत्तिभिः प्रकृतिपरिणामभूतमनो व्यापारविशेषात्मिकाभिर्जाग्रत्स्वप्नसुषुप्तिभिर्देवादिशरीरात्मतादात्म्यादिविषयाभि र्देवादिरूपेण प्रतीयत इत्यर्थः । तत्र जाग्रन्मायावृत्तिर्बाह्येन्द्रियद्वारा बाह्यविषयगोचरा आन्तरसुखदुःखादि गोचरा च ननु व्यतिरिक्तात्मस्वरूपगोचराऽतो देवोऽहमिच्छामि द्वेष्मि सुख्यहं दुःख्यहमिति प्रतीतिः स्वप्नवृत्तिस्तु तद्दशायां तत्स्वप्नद्रष्टृकर्मानुगुणं तदेककरणतया तत्कालमात्रावस्थायितया च परमपुरुषसृष्टचक्षुरादीन्द्रियद्वारिका वा तदेकानुभाव्यतत्कालमात्रावस्थायिपरमपुरुषसृष्टविषयदेहादिगोचरा ननु व्यतिरिक्तात्मगोचरेति तदा न तथा प्रतीतिः सुषुप्तौ तु यद्यपि न मनसो व्यापारः अत एव न देवाद्याकारप्रतीतिरेवं च व्यतिरिक्तात्मस्वरूपप्रतीतिरपि सुलभा तथाप्याप्रबोधमहमित्येव प्रकाशेत ननु देहेन्द्रियादिभ्यो व्यतिरिक्तोऽहमिति प्रतियोगिग्राहकमनोव्यापाराभावात्प्रतियोगिन एवाप्रतीतेः यद्यपि सुषुप्तावहमिति प्रतीतिर्न मायावृत्तिस्तथापि छत्रिन्यायेन मायावृत्तिभिरित्युक्तम् ॥ ३१ ॥

तदेवं संसृतिहेतुभूतदेहात्मभ्रमादेर्मनः पारवश्यकृत इत्युक्त भवति कथं तर्हि तत्पारवश्यनिवृत्तिरित्यपेक्षायां तन्नियमनेनेत्याह । येनेति । उत्थितः स्वप्नादिति विभक्तिविपरिणामेन संनिहितत्वात् सम्बध्यते प्रबुद्धः स्वप्नदृष्टस्वाप्नार्थानिव येन मायापरिणामरूपेण मनसा इन्द्रियार्थान् मृषा शब्दादिविषयान् सम्प्रत्यविद्यमानानपि पूर्वाननुभूतानप्यनुभूतसजातीयान् दुर्लभान् ध्यायीत तन्मनो निरुन्ध्यान्नियच्छेदिति सम्बन्धः "ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते सङ्गात्संजायते काम" इत्याद्युक्तरीत्या विषयध्यानतत्सङ्गाद्यापादनद्वारा मनसो बन्धकत्वमिति येनेन्द्रियार्थान् ध्यायीतेत्यनेनोक्तं येनेत्युपात्तं मनो विशिनष्टि । येन चेन्द्रियाणि बाह्यानीन्द्रियाणि प्रत्यपद्यत प्राप कथंभूतः विनिद्रोऽनलसः निरुन्ध्यात् यद्वा तन्मन इन्द्रियाणि चेति शेषः । विनिद्रः देहात्मभ्रमरहितः अन्तर्बाह्येन्द्रियाणि निरुन्ध्यात् प्रत्यपद्यतेत्यस्य मामित्यादिः येन निरुद्धेन मनसा मां यथावज्जानीयादित्यर्थः । यद्वा तदित्यव्ययं तेभ्यो विषयेभ्यो ध्यातेभ्य इन्द्रियाणि निरुन्ध्यात् यथेन्द्रियाणि तत्प्रावण्यरहितानि भवेयुस्तथा निरुन्ध्यादित्यर्थः । अनेन तावन्मनसा बाह्येन्द्रियनियम उक्तः कथम्भूतः विनिद्रः पूर्ववदर्थः. अनेन मनोनियमनोपयुक्तदेहात्मभ्रमराहित्यमुक्तम् एवमान्तरिन्द्रियनियम उक्तः कथमेतदुभयं लभ्यं तत्राह । प्रत्यपद्यत मामिति पूर्ववच्छेषः मां प्रति पद्येतेत्यर्थः । मद्विषयज्ञानेन तत्सुलभमिति भावः ॥ ३२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वाधारत्वेनाततत्वेन आत्मनेत्युक्तं विवृणोति । आत्मेति । आत्ममायानुभावेन स्वरूपेच्छानिश्चयेन निश्चयं विशिनष्टि । भूतानीति भूतादीन् व्याप्य वर्तमानेन अनेन भूतादीनामवान्तरकारणत्वेन तत्कारणत्वोक्तिविरोधः भूतेन्द्रियगुणात्मनेत्यनेन जडरूपत्वं परमात्मनः प्राप्तं निवारयति । आत्मेति । ज्ञानमयः पूर्णज्ञानः गुणानां सत्त्वादीनामन्वयो यस्य स तथा न केवलं ज्ञानमेव गुणोऽस्य किन्त्वन्येऽप्यानन्दादयः सन्तीत्यतो वोक्तं गुणान्वय इति आनन्दादिगुणानामन्वयो यस्मिन् स तथा उक्तार्थे किम्प्रमाणमिति तत्राह । सुषुप्तीति । मायया हरेरिच्छया वृत्तिः स्वरूपलाभो यासां तास्तथा ताभिः स्वापादिकं सकर्तृकं कार्यत्वात् घटवदित्याद्यनुमानं पक्षधर्मतावलेनेयते ज्ञायत इत्यर्थः ॥ ३१ ॥ ० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं ब्रह्मधर्मनिरूपणेन वियोगाभावं निरूप्य जीवधर्मनिरूपणेनापि तदभावं निरूपयन्नाह । आत्मेति । आत्मा जीवः गोपिकाः अहमिति मन्यन्ते स देह एवेति प्रतीतिसिद्धत्वात् तद्व्यतिरेकार्थमाह । ज्ञानमय इति । मयट् प्राचुर्ये सच्चिदानन्दरूपत्वात् ज्ञानप्रचुरोऽयमात्मेत्यर्थः । तर्हि वैषयिकज्ञानमयो भविष्यतीत्याशङ्क्याह । शुद्ध इति । ननु शुद्धमात्मानं तु पश्यामः अतः प्रमाणाभावात् प्रतीतस्य चाशुद्धत्वात् बाधितार्थ इति चेत्तत्राह । व्यतिरिक्त इति । अस्माद्देहादिसंघाताद्व्यतिरिक्तः यथा तप्तवालुकातः सूर्यो व्यतिरिच्यते । नन्वत्र व्यतिरेके का उपपत्तिरिति चेत्तत्राह । अगुणाश्रय इति । स हि गुणानाश्रित्य न तिष्ठति गुणाश्रया अन्ये स तु तद्व्यतिरिक्तः अत्र सर्वत्रानुभवं प्रमाणयति सुषुप्तीति । मायाया गुणमय्यास्तिस्रो वृत्तयः जाग्रत्स्वप्नसुषुप्तिभेदाः तिसृष्वप्यलौकिकसामर्थ्यात् मायाग्रहणम् अन्यथा सुषुप्तौ

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

परमानन्दस्य स्फूर्त्तिः स्वप्ने नानाविधपदार्थानां जागरणदशायां च चतुर्विधपुरुषार्थसिद्धिर्न स्यात् अत्र सर्वत्र आत्मनः अन्वयो दृश्यते एकस्यां वृत्तौ द्वितीयवृत्तिव्यतिरेकश्च तद्धर्माणां च अतो ज्ञायते यदा मूलभूतगुणाद्व्यतिरिच्यते अयमात्मा तदा सङ्घातव्यतिरेके किमेवं कुर्य्यामीति अतो वस्तुत आत्मा सङ्घातात् व्यतिरिक्त इति आत्मनैव अहं प्राप्तव्यः ॥ ३१ ॥

ननु देहसहितेन ह्युत्तमः पदार्थः स्वोपभोग्यो धनैः सह भोक्तुमर्हः । अतोऽस्मात्सङ्घातादादौ निवृत्ता भवत पश्चान्मदुपभोगं कुरुतेति तात्पर्यम् साधनाकाङ्क्षायां तदुपदिशति । येनेन्द्रियार्थान् ध्यायेतेति । येन मनसा इन्द्रियार्थान् रूपादिविषयान् मृषा अविद्यमानान् असम्भावितांश्च ध्यायेत् पुरुषः यस्मिन् विद्यमाने ध्यानमावश्यकमिति । नन्वयमपि पुरुषार्थ इति चेत्तत्राह । स्वप्नवदिति । जन्मान्तरोत्पत्त्यर्थमेव तस्य ध्यानं यथा स्वप्नः सूचकः तथा ध्यायमानं मनोऽपि जन्मान्तरं सूचयति ननु स्वरूपतः किञ्चित्पुरुषार्थसाधकमतोऽनर्थसूचकं तन्मनो निरुन्ध्यात्तस्यापि निरोधे इन्द्रियानिरोधः कारणमिति इन्द्रियाणि च निरुन्ध्यादित्याह । इन्द्रियाणीति । उभयनिरोधे किं स्यादित्याशङ्क्याह। विनिद्रः प्रतिपद्यत इति।अवस्थाद्वयं समीचीनम् आनन्दोऽभिव्यज्यते पुरुषार्थाश्चान्यत्रेति अतः स्वप्न एव व्यर्थ इति सूचयितुं वैयर्थ्यापगमाय विनिद्रः सन् आत्मानमयमस्मीति प्रतिपद्यते व्यतिरिक्तम् ॥ ३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु तर्हि तव स्वस्वरूपं किं लोकैः कथं वा ज्ञेयमिति चेत् मत्स्वरूपं तु गुणातीतमन्तर्यामिसंज्ञं सर्वत्र प्रतीयत एवेत्याह । आत्मा परमात्मा ज्ञानमयः ज्ञानं मायातीतं चित् तन्मयः गुणैः सृष्ट्यादिकर्तृत्वेऽप्यचिन्त्यशक्त्या तत्सम्बन्धाभावाच्छुद्धः । शरीरमध्यवर्त्तित्वेऽपि व्यतिरिक्तः । गुणाधिष्ठातृत्वेऽपि न गुणान् अन्वेतीति सः । स तु सर्वैरप्यनुमानगम्य इत्याह । सुषुप्तेति । ईयते अनुमीयते । यदुक्तं पंक्षे "गुणप्रकाशैरनुमीयते भवान् इति।भगवान् सर्वभूतेषु लक्षितःस्वात्मना हरिः ।दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकै"रिति च आत्मा अहं ज्ञानमयः अत्र स्थितोऽपि युष्मद्विषयकातिशयज्ञानवान् ननु कदाचिदपि युष्मान् विस्मरामीत्यर्थः।स्थितोऽपि मथुराङ्गनासङ्गदोषरहितःयतो व्यतिरिक्तः युष्मद्वियोगखिन्नः कथमन्या रोचयामीति भावः । यतो गुणान्वयः युष्मद्गुणान् सौन्दर्यमधुरकटाक्षावलोकादीन् अन्वेमि ध्यानेन निरन्तरं प्राप्नोमीत्यर्थः । एवम्भूतो युष्माभिरपि सदैवाहमनुभूय इत्याह । सुषुप्तेति । तत्र सुषुप्तेन ममात्मनोऽनुभूतचरस्य रूपगुणादिसामान्यं स्वप्ने न तद्विशेषः । जागरेण तु हास्यलास्यादिसम्भोगमाधुर्यमयः । साक्षादात्मैव ईयते अनुभूयते एव ॥ ३१ ॥

उपदिष्टोऽयं ज्ञानयोगो मनोनिरोधे सति फलतीति मनोनिरोधं विधत्ते । येन मनसा इन्द्रियार्थान् विषयान् ध्यायेत उत्थितः प्रबुद्धो जनः स्वप्नवत् स्वप्ने यथा मृषाभूतानप्यर्थान् ध्यायेत् तन्मन इन्द्रियाणि च निरुन्ध्यात् यतो विनिद्रः सावधान एव जनः प्रत्यपद्यत । प्रतिपन्नो ज्ञानवानभूदिति पूर्वाचारः प्रमाणितः । पक्षे उत्थितः मूर्च्छातः प्रबुद्धो भवद्विधो जनः इन्द्रियार्थान् मद्दर्शनसंस्पर्शनाधरपानालिङ्गनादीन् विषयान् मद्भाविर्भावजनितत्वात् सत्यानेव येन मनसा स्वप्नवन्मृषाभूतानेव ध्यायेत तन्मनो निरुन्ध्यात् तिरस्कुर्वीत तदप्रामाण्यादिति भावः । यतो विनिद्रः निद्रारहित एव भवदादिः इन्द्रियाणि स्वनेत्रादीनि प्रत्यपद्यत प्रत्यक्षत एव निरञ्जननीरागनिश्चन्दनानि अपश्यत ज्ञातवानेव युष्माभिरनुरागान्धाभिर्महाविरहौत्कण्ठ्यविगतविचाराभिर्मत्कर्तृकयुष्मत्कर्मकनानाविध सम्भोगोऽपि यन्मृषाभूत एव मन्यते एतदेव मे महद्दुःखम् । अत एव तत्तत्सत्यापनार्थकमेतत्सन्देशप्रेषणं ममेति भावः ॥ ३२ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

परमार्थतस्तु आत्मा ज्ञानमयः ज्ञानस्वरूपः ज्ञानमित्युपलक्षणं सच्चिदानन्दरूपःसत्यं ज्ञानमनन्तं विज्ञानमानन्दंब्रह्मेत्यादिश्रुतेः अज्ञानोपहितमेवात्मरूपं केचिदङ्गीकुर्वन्ति तान्निराह।शुद्ध इति ।अविद्योपाध्यसंस्पृष्टः निरवद्यं निरञ्जनमित्यादिश्रुतेः अत एवाहङ्कारादिभ्योऽपि व्यतिरिक्तः "अप्राणो ह्यमनाः शुभ्र" इत्यादिश्रुतेः अत एवागुणान्वयः गुणसंबन्धरहितः "साक्षी चेता केवलो निर्गुणश्चे"त्यादिमन्त्रवर्णात् देहादिवैशिष्ट्यप्रतीतिस्त्वौपाधिकीत्याह । सुषुप्तेति मायाजनितैर्जाग्रत्स्वप्नसुषुप्तिभिरन्तःकरणधर्मैरीयते विश्वतैजसप्राज्ञरूपेण प्रतीयते स्वतः यदा सुषुप्त्यादिभिर्मनोवृत्तिभिर्गुणान्वयः प्रतीयते तथा चान्तःकरणतादात्म्याध्यासात्तदवस्थावत्त्वेन प्रतीयत इति भावः । यद्वा सुषुप्त्यादिभिर्व्यतिरिक्तः ईयते अनन्वागतः स तेन भवतीत्यादिश्रुत्या सर्वावस्थास्वनुगतादात्मनोऽवस्थानां व्यतिरेकाभिधानात् अत एवागुणान्वयः गुणकार्यावस्थात्रितयसंबन्धशून्यः नन्वेवमात्मन एकत्वैकान्ताभ्युपगमे नानात्वाभावात्प्रत्यक्षादिप्रमाणानि विधिप्रतिषेधमोक्षशास्त्रं च व्याहन्येतेति चेन्न स्वप्नव्यवहारस्य प्राक् प्रबोधादिवत् सर्वव्यवहाराणां प्राक् ब्रह्मात्मत्वप्रबोधात् सत्यत्वोपपत्तेः । नन्वसत्येन वेदान्तवाक्येन कथं सत्यब्रह्मात्मत्वप्रतीतिरितिचेन्न शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः कल्पितादपि दुःखत्वादिधर्मान्नगो नाग इति पर्वतादिविषयकप्रमोत्पत्तिदर्शनाच्चेति संक्षेपः॥ ३१ ॥

तथा च मानसः संसारो मनोनिरोधाच्छाम्यतीत्याह । येनेति । यथा निद्राया उत्थितः पुमान्मिथ्याभूतमेव स्वप्नं ध्यायति तथा बाधितानपि इन्द्रियार्थान् शब्दादिविषयान् येन मनसा ध्यायेच्चिन्तयेत् ध्यायंश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप्तवान् तन्मनः विनिद्रोऽनलसः सन्निरुन्ध्यान्नियच्छेत् यद्वा मनोनिरोधान्वयव्यतिरेकाभ्यां संसारभाननिश्चयात्संसारविनिर्मुक्तात्मस्वरूपावगत्यर्थं मनसो निरोधः सम्पाद्य इत्याह । येनेति । उत्थितः समाधेः सकाशादुत्थितो येन मनसेन्द्रियार्थान् ध्यायेत् स्मरयन् मृषा भूतान्मिथ्याभूतानपि चिन्तयति समाधिस्थश्च न चिन्तयति तस्मात्तन्मनो निरुन्ध्यादिन्द्रियाणि च निरुन्ध्यात् तत्रापि विनिद्रः लयशून्यः प्रत्यपद्यतात्मस्वरूपमवाप्नोतीत्यर्थः। यद्वा एवम्भूतात्मज्ञानमपि नात्मसकाशात्पृथगतस्तदपि निरुन्ध्यादन्यथा द्वैतापत्तेरित्याशयेनाह । येनेति । उत्थितो देहादिभ्यो व्यतिरिक्तात्मज्ञानाभ्या-

एतदन्तः समाम्नायो योगः सांख्यं मनीषिणाम्।
त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः॥ ३३॥
यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम्।
मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया॥ ३४॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

सवान् येन ज्ञानेनेन्द्रियार्थान् स्वप्नवन्मृषा मिथ्याभूतान्ध्यायेत् तज्ज्ञानमिन्द्रियाणि बहिरन्तर्भेदेन द्विविधानि कारणानि च निरुन्ध्यात् ततश्च विनिद्रः अज्ञानतत्कार्यविनिर्मुक्तः प्रत्यपद्यत ब्रह्म सम्पद्यत इत्यर्थः॥ ३२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ननु विश्वभावापन्नस्य तव संसारित्वादयो दोषा मा भवन्तु पराप्रकृतिनाम्न आत्मनस्तु कार्यत्वेनानित्यत्वे सति कस्य पुनस्त्वत्प्राप्तिलक्षणमोक्ष इत्यत्र प्रलयकाले सङ्कुचितज्ञानस्य सृष्टिवेलायां देवमनुष्यादिदेहतादात्म्यात्तत्तदनुरूपज्ञानविकाशादिना कार्यत्वं न स्वरूपत इत्याह। आत्मेति। ज्ञानमयः ज्ञानप्रचुरः शुद्धः निर्विकारः देहादिभ्यो व्यतिरिक्तः एवम्भूतो ममांशः आत्मा क्षेत्रज्ञः सृष्टिसमये गुणेषु गुणकार्येषु देवमनुष्यादिदेहेन्द्रियादिषु अन्वेति तादात्म्यं प्राप्नोति इत्यन्वयः एवं कार्यभावं प्राक् कर्मसाक्षिणा मया नीतः न स्वरूपतःकार्यभावापन्नोऽतो नानित्य इति भावः। ननु देहेन्द्रियादितादात्म्यं गतः अनित्येभ्यः देहेन्द्रियादिभ्यः पृथक् कथं बोद्धुं शक्योऽत आह। सुषुप्त्यादिभिर्मनोवृत्तिभिरीयते देहादिभ्यो मनोवृत्तिविपर्ययेभ्यः प्राहकत्वेन पृथक् प्रतीयते॥ ३१॥

एवं जगत्कारणं सर्वदा सन्निहितं मां ममैवांशभूतः क्षेत्रज्ञो मच्छक्तिपरिणामरूपं जगज्जलधिं तर्तुं "कारणं तु ध्येय"मिति श्रुत्युक्तरीत्या ध्यायेदित्याह। येनेति। पूर्वं स्वप्नयान् दृष्टस्वप्नः पश्चादुत्थितः प्रबुद्धो जनः स्वप्नदृष्टं पदार्थं यथा मृषा प्रबोधवेलायामसन्तं ध्यायति तथेन्द्रियार्थान् दृष्टश्रुतान् शब्दादीन् ध्यानवेलायामविद्यमानानेव अतीतान् अनागतान् येन मनसा ध्यायेत् तन्मनः इन्द्रियाणि च निरुन्ध्यात् नियच्छेत् तदनन्तरं विनिद्रः सन् क्षेत्रक्षेत्रज्ञमूलभूतं सर्वनियन्तारं मयि "या निशा सर्वभूतानां तस्यां जागर्ति संयमी"त्येवं प्रबुद्धः सन् प्रत्यपद्यत मद्ध्यानेन मां प्राप्त एव भवेदित्यर्थः॥ ३२॥

भाषा टीका।

आत्मा मैं ज्ञान स्वरूप है शुद्ध है सब देहादिकों से भिन्न है तीनों गुणों से रहित है परन्तु प्रकृति सम्बन्ध से जाग्रत् स्वप्न सुषुप्ति इन अवस्थाओं में प्रकाशित होता है॥ ३१॥

जैसे स्वप्न में से उठने पर जिस मन से स्वप्न के विषयों का अनित्य ज्ञान होता है तैसे जाग्रत् अवस्था में जिस मन से इंद्रिय के विषयों का ध्यान होता है उस मन को तथा उन इंद्रियों को रोक देवे तब सावधान होने से मेरे स्वरूप को जान जाता है॥ ३२॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तावता च कृतार्थो भवतीत्याह। एतदन्त इति। एष मनोनिरोधः अन्तः समाप्तिः फलं यस्य सः समाम्नायो वेदः स तत्र पर्यवस्यतीत्यर्थः। योगोऽष्टाङ्गः सांख्यमात्मानात्मविवेकः त्यागः सन्न्यासः तपः स्वधर्मः दम इन्द्रियदमनं मार्गभेदेऽप्येकत्र पर्यवसाने दृष्टान्तः समुद्रान्ता आपगा नद्य इवेति॥ ३३॥

ननु किमन्यानिवास्मानात्मविषयया प्रलोभयसि वयं तु सर्वसुन्दरसकलगुणगणालङ्कृतेन त्वया विरहं नैव सहाम इतिचेदत आह। यत्त्वहमिति। दृशां दूरे यद्वर्ते तन्मदनुध्यानार्थम् तच्च ध्यानं मनसः सन्निकर्षार्थमिति॥ ३४॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एष मनोनिरोधः किं वा एषा सर्वेन्द्रियेषु मत्प्राप्तिरेव अन्तो यस्य अस्य लिङ्गविपरिणामेन सर्वैरप्यन्वयः मनीषिणां बुद्धिमतामिति निर्बुद्धीनां लाभपूजाख्यात्यर्थमेवेति भावः। आम्नायः शास्त्रं ज्ञापकं योगादयः साधनानि तत्र सत्यं विविधकर्म्मस्वपि सदा वित्तशाठ्यादिवर्जनं योगः सांख्यं च सर्वेषामेव सामान्यो धर्म्मः त्यागादयः क्रमेण प्रायो यतिवनस्थब्रह्मचारिगृहिधर्म्माः अन्यरैर्व्याख्यातं यद्वा त्यागो दानं गृहिधर्मः सत्यं समदर्शनं यतिधर्म्मः यद्वा सर्व एवैते मुख्याः सामान्यधर्म्माः॥ ३३॥

ननु एवं वञ्चनयालं साक्षादेव त्वां द्रष्टुमिच्छामः तत् किमर्थं तत्र चिरं विलम्बसे तत्राह। यत्त्विति द्वाभ्याम्। तुशब्दो भिन्नोपक्रमे प्रिय इति दूरस्थित्ययोग्यतोक्ता तथापि दूरे वर्ते दृशामिति साक्षाच्चक्षुर्गोचर एव केवलं न वर्ते अन्येन्द्रियेषु च सदा वर्त्त एवेत्यर्थः। तच्च ममानुध्यानं निरन्तरं भवत्कर्म्मकं चिन्तनं तत्काम्यया पाठान्तरेऽपि स एवार्थः तच्च मन्मनः भवतीनां सन्निकर्षार्थं नैकट्याय अयमर्थः यथा सर्वपरित्यागेन भवतीनां मनो मयि सदा सुस्थिरं तथा मम न भवतीषु अतो लज्जया दोषापेक्षया निजमनसो भवतीनां सदा सामीप्यप्राप्त्यर्थमत्र तिष्ठामीति॥ ३४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एतदिति तैर्व्याख्यातम्। किञ्च आम्नायः शास्त्रं ज्ञापकं योगादयः साधनानि अत्र सत्यं विविधकर्म्मस्वपि सदा वित्त-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शाठ्यादिवर्जनम् । योगः साङ्ख्यञ्च सर्वेषामेव सामान्यधर्मः । त्यागादयः क्रमेण यतिवनस्थब्रह्मचारिगृहिधर्माः । यद्वा । त्यागो दानं गृहिधर्मः । सत्यं समदर्शनं यतिधर्मः । यद्वा । सर्वं एवैते मुख्याः सामान्यधर्मा इत्यर्थत्रयेऽपीदं समानम् ॥ ३३ ॥

तदेवमप्रकटप्रकाशे वियोग एव नास्तिप्रकटप्रकाशेऽपि बहिः प्रातीतिकःप्रायिक एव च कदाचित् स्फूर्त्तेरपि साक्षात्कारपदवी प्राप्तत्वात्।स चकेनापि मम स्वाभाविकेन दूराग्रहेणैवास्तीति ज्ञायतामित्यभिप्रेत्य तमेवाग्रहं दर्शयति । यत्त्विति द्वाभ्याम्।तुशब्दोभिन्नोपक्रमे कंसवधलक्षणमहाकार्यानुरोधेनैव तावदत्रागतः । सम्प्रति तु कार्यावशेषपरित्यागपूर्वकागमनयोग्यत्वेऽपि यदहं भवतीनां यादृशो नेत्राणि तासामेव दूरे वर्त्ते । ननु भवतीनामपि अप्रकटप्रकाशेन तत्र विद्यमानत्वात् । तत्रापि केवलं वर्त्ते नतु सुखेनास्मीत्यर्थः । तत् खलु मत्कर्तृकं यदनुध्यानं तत्कामाय तद्धेतोरेव ध्यानं भवत्कर्तृकं क्षणं युगशतमिव यासां येन विनाभवदिति प्रसिद्धया पूर्वत एव सिद्धं मद्विषयम् अनुध्यानं तदनुगतं तत् सदृशतां प्राप्तं मत्कर्तृकं भवद्विषयं प्रेयसीकर्त्तृकस्याग्रे वक्ष्यमाणत्वात् तन्मम मनस्युदियादिति वाञ्छयेत्यर्थः । तच्च किमर्थं तत्राह । मनसो यः सन्निकर्षः भवतीनां सान्निध्ययोग्यता तदर्थमित्यर्थः । यतस्तां विना मम चेतसि सदैव लज्जा जायत इति भावः । उक्तञ्च स्वयमेव । न पारयेऽहं निरवद्यसंयुजामित्यादि । एवमीदृशभवदुपासनयैव तद्योग्यता स्यादिति ईदृशमपि दुःखं सहे इति वाक्यार्थः । उक्तं हि मुनिभिः

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते इति॥ ३४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एतद्न्तः समाम्नाय उपदेशः ॥ ३३—३६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं मनोनियमनेनेत्यत्राह । एतदन्त इति।समाम्नायादयःसत्यान्ता एतदन्ता मनोनियमनान्ता अन्तः फलं मनोनियमनफला इत्यर्थः । एतदन्त इत्येकवचनं समाम्नायादि प्रत्येकाभिप्रायकं नियमने च मनसि मत्प्राप्तिः सुलभेति भावः । तत्र दृष्टान्तमाह । समुद्रान्ता इवापगा इति । समुद्रपर्यन्तगमनमेव नदीभिः कार्यं ततः तत्प्राप्तिर्यथा सुलभा तद्विषयान्तरेभ्यो मन आकृष्य मयि नियन्तव्यं ततो मत्प्राप्तिरयत्नलभ्येति तात्पर्यं यद्वा प्रत्यपद्यतेतीन्द्रियनियमः तस्य यथावत्सविषयकज्ञानं फलमिति सूचितं तदेव सदृष्टान्तं विवृणोति।एतदन्त इति । तत्र समाम्नायः तदुपदेशः वेदार्थज्ञानानुष्ठाने वा योगः विवेकादिसाधनसप्तकानुगृहीतः सांख्यं प्रत्यगात्मयाथात्म्यावलोकनं त्यागो दानं तपोऽनशनादि दम इन्द्रियनिग्रहः सत्यं सत्यवचनम्॥ ३३ ॥

यद्यप्युक्तरीत्या त्वद्वियोगो नास्ति तथापि निरतिशयसुखावहं स्वविग्रहं किं न दर्शयसीत्यत्राह।यत्त्विति ।हे प्रियाः ! अहं भवतीनां दृशां दूरे वर्त्ते वर्त्तमान इति यत्तु मदनुध्यानकाम्यया मदनुध्यानार्थं तच्च मनसः सन्निकर्षार्थम् ॥ ३४ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

उपजीव्यप्रमाणाभावेनानुमानस्य दुर्बलत्वं स्यादिति तत्राह । एतदन्त इति । समाम्नायः निर्दोष आगमः एतस्यानुमानार्थस्यान्तो निर्णयो यस्मात्स तथा अन्तोऽस्त्यवसिते मृत्यावितिति च न केवलमनुमानेनायमर्थःसम्पद्यते वेदादिनापीति भावेन चाह।एतदन्त इति। हरितत्त्वनिर्णायकः एतज्ज्ञानपर्यवसायीत्यर्थः "वासुदेवपरा वेदा वासुदेवपरा मखाः । वासुदेवपरा योगा" इत्यादेः त्यागो दुर्दर्शनाभ्यासवर्जनं सत्यं सत्यभूतं वाक्यम अत्र दृष्टान्तमाह । समुद्रान्ता इति ॥ ३३ ॥

कस्त्यजेन्मां भवादृगित्युक्तिपरिहारमियाह । यत्त्विति । योऽहमन्तिके वर्तमानोऽपि भवतीनां दृशां दूरे वर्तीति प्रतीयत इति यत्तन्मदनुध्यानकाम्यया निरन्तरमदुपासनेच्छया मनःसन्निकर्षार्थं कृतमित्यन्वयः ॥ ३४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु शास्त्रेषु वेदादिषु बहून्येवात्मज्ञानार्थंसाधनान्युक्तानि तत्कथं मनोनिरोधमात्रमुच्यते इत्याशङ्क्याह । एतदन्तः समाम्नाय इति । वेदो हि साधनान्युपदिशति तस्यापि मनोनिग्रह एव अन्तः पर्यवसितसाधनमेतदेवान्तो यस्य तादृशः समाम्नायो वेदः सर्वे मनोनिग्रहलक्षणान्ता इति शास्त्रात् योगस्य त्वेतदेव प्रयोजनं सांख्यमप्यध्यासं निवर्त्तयन् मूलकारणं मन एव व्यावर्त्तयात । ननु लोका नैवं व्याचक्षते तत्राह । मनीषिणामिति । विवेकिनामेतद्व्याख्यानं मनस ईषिणो मनीषिणः आत्मसम्बन्धः साक्षान्मनस्यवेतिहेतुरप्युक्तःननु स्वतन्त्राणि मोक्षफलानि साधनानि श्रूयन्ते यथा सन्यासः यथा तपो वनस्थस्य यथा वा दम इन्द्रियसंयमो गृहस्थस्य सत्यं ब्रह्मचारिणो वेदाध्ययनरूपम् एतेषामाश्रमधर्माणामपि मनोनिग्रहपर्यवसायित्वमेव तत्र हेतुं वदन् दृष्टान्तमाह । समुद्रान्ता इवापगा इति । बहन्नीरापः भूमौ न पर्यवसिताः तथा सति स्थावरा इवात्रैव तिष्ठेयुः अतो भूम्यन्ताय प्रसर्पन्ति तत्रावधिः समुद्र एव तथा सह्यान्तेऽपि प्रविष्टाः लौकिकवन्तत्रास्थिराः तदपगमाकाङ्क्षिणः सन्मार्गे प्रवृत्ताः न्यासाधिकारिणः मध्ये स्थितिमलभमानाः साक्षान्मनसि सम्बद्धमात्मानं मोचयन्तः तन्निग्रह एव विश्रान्ता भवन्ति ॥ ३३ ॥

एवं वियोगाभावं वियोगस्यात्तमत्वं च परमार्थेनो निरूप्य लौकिकप्रतीतौ तद्व्यधिकरणमिति मत्वा दूरे स्थितिलक्षणस्य वियोगस्य चतुर्विधपुरुषार्थसाधकत्वमाह । यत्त्वहमिति चतुर्भिः । गोपिकानां धर्माद्यो भगवानेव परं प्रकारविशेषमापन्नः तत्र धर्ममाह । तुशब्दः तत्त्वनिरूपणं व्यावर्तयति अहं भवतीनां यत् दूरे तन्मनसः सान्निकर्षार्थं दृशो दूरे स्थितो मनसि संनिकृष्टो भवति तत्र हेतुमाह । प्रिय इति । अयमर्थः बहिर्भगवान् गोपिका दृष्टिं प्रक्षिपन्तां स्वधर्मान् दृष्टिधर्मान् वा योजयति ननु स्वयं भगवद्धर्मान् गृह्णाति मनसि तु भगवति समागमे मनो भगवद्-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

र्मान् गृह्णाति एतत्तु हिताचरणं प्रियस्य कार्यम् अनेन योगाद्यपेक्षयापीयमवस्था समीचीनेति ज्ञापितं योगे हि चतुर्वत मनोऽपि स्वधर्मानेव भगवत्यारोपयति परं स्वयं निर्माणार्थं शास्त्रतः तद्धर्मान् गृह्णातीति विशेषविरहेण स्मरणे तु बलादागत इति भगवानेव धर्मान् स्थापयति मनोधर्माणां दुर्बलत्वात् विपरीतत्वाच्च भगवतः यतोऽहं प्रियः अतो दूरे वर्ते मनसा ह्यात्मा सम्बद्ध इति च तथा सत्यात्मगामि भवति विषयेषु तु तेषामभावात् जन्मान्तरसाधकत्वेन अनर्थहेतुत्वमेव किञ्च न केवलं संनिकर्षमात्रं फलं किन्त्वन्यदप्यस्तीत्याह । मदनुध्यानकाम्ययेति । ममानुध्यानमेव ममाभिप्रेतं गोपिकाश्चेन्मदभिध्यानं कुर्वन्ति तदाहं तासु रतिं करोमि नत्वन्यथा अक्लिष्टकर्मत्वात् अतः स्वार्थमप्येवं करोमीत्यर्थः । कामेन हि सम्बन्ध उभयोः स च मनसि प्रतिष्ठितः मनसो दूरभावे मानादिना सम्बन्धाभावादहमपि निवृत्तो भवामि ॥ ३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मनोनिरोधार्थका एव सर्वशास्त्रोक्ता सर्वेऽप्युपाया इत्याह । एतदन्त इति । एष मनोनिरोध एव अन्तः समाप्तिः फलं यस्य सः समाम्नायः सम्पूर्णो वेदः स तत्र पर्य्यवस्यतीत्यर्थः। योगोऽष्टाङ्गः सांख्यमात्मानात्मविवेकः मार्गभेदेऽप्येकत्र पर्य्यवसाने दृष्टान्तः समुद्रान्ता आपगा नद्य इव पक्षे यथा मनोनिरोधे सत्येव संसारतरणं तथैव भवतीनामपि मद्विरहतरणं मनोनिरोधादेव यत् खलु मनः सत्यमपि मत्सङ्गं भवतारलोकत्वेन प्रत्याययतीति भावः । अर्थस्तूभयत्र तुल्य एव ॥ ३३ ॥

भो उद्धव ! एतेन सन्देशेनास्मांस्त्वं द्विगुणं ज्वालयासि स्म । तस्मात्त्वं सन्देशप्रेषकं कालदेशपात्रानभिज्ञं किं मूनस्त्वां वा परामर्शशून्यं किमाक्षिपामः । एतद्ब्रह्मज्ञानं खलु व्रजभूमावस्यां कः क्रेष्यति यस्य भावस्त्वया एतावत् दूरमानीतः । किमेते गोपीजना जन्मावधि श्रीकृष्णसौन्दर्यामृतपायिनः सम्प्रति ब्रह्मज्ञाननिम्बरसं पास्यन्ति महादुर्भिक्षे हि वरमिह स्त्रियः प्राणान् जहति तदपि घासं नाश्नन्ति । शृणु रे महामूर्ख शृणु इदं ब्रह्मज्ञानं खलु संसाररोगस्यौषधं महामुनिचिकित्सकानां हृदयपण्यशालायां तिष्ठति । किमिदं कृष्णप्रेममहारोगस्य भेषजं भवति ते चिकित्सका अपि किमिमं रोगं तावत् कदापि परिचिन्वन्त्यपि सान्दीपनिमुनेः सकाशाच्चिकित्साशास्त्रमधीत्य त्वामुद्धवमध्याप्य अस्मभ्यं प्रेमज्वालोपशमकमौषधं प्रेषयामास । गच्छाधुनैवास्मत्प्रेषित इदमौषधं नीत्वा स एव एतत् पीत्वा अस्मद्विषयकस्य प्रेमरोगस्य ज्वालां न्यवर्तयत् पुनरपि रोगशेषं निवर्त्तयतु अस्माकं प्रेमानलमहाज्वालेयज्ञान जन्मपर्यन्तं वर्त्ततां नचैतदौषधस्पर्शोऽपि किमरे दावानलोपशमकोऽप्यम्बुराशिर्यज्ञानलमुपशमयितुं शक्नोति । किञ्चास्य सन्देशस्यान्तरस्मत्किञ्चिदनुकूलाऽप्यर्थो यो यथा कथञ्चिद्भासते स किं तदभिप्रेतो घुणाक्षरन्यायेनायातो वेति न तत्र विश्वसिम इति ससंरम्भं ब्रुवाणासु तासु भो स्वामिन्यः क्षणमवधत्त ब्रह्मज्ञानादन्यमपि सन्देशमानीतवानस्मीत्युक्त्वा तत्र श्रोतुं श्रद्धानास्ताः प्रति कृष्णवाक्यमाह । यत्त्वहमिति । भवतीनां दृशां प्रियोऽपि यदधुना दृशां दूरे वर्त्ते तन्मदनुध्यनकाम्ययैव । तद्धानुध्यानं मनसः सन्निकर्षार्थम । अतोऽधुना भवतीनां मनस समीप एव वर्त्ते । एकत्रोपलक्षणमेतत् मम दृशां प्रिया अपि भवत्यो यदधुना दृशां दूरे स्थितास्तन्मनसः समीप एव वर्त्तध्वे इत्यप्यर्थः । तेन च दृक्समीपवर्त्तित्वे मनोदूरवर्त्तित्वं मनःसमीपवर्त्तित्वे दृग्दूरवर्त्तित्वमासक्तिविषयीभूतस्य वस्तुनो भवति अत्रापि मनोदृशोर्मध्ये मनस एवाभ्यर्हितत्वात् मनःसमीपवर्त्तित्वमेव मदभीप्सितं तदेवं भवतीनामप्यभीप्सितं भवत्विति भावः ॥ ३४ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एतत्सिद्धौ कृतकृत्यता भवतीत्याह । एतदन्त इति । इयं ब्रह्मसम्पत्तिः अन्तः समाप्तिः फलं यस्य सः समाम्नायः कर्मकाण्डरूपो वेदभागः योग उपासनाकाण्डलक्षणो वेदभागः साङ्ख्यं ज्ञानकाण्डात्मकस्तद्भागः यद्वा समाम्नायः काण्डत्रयात्मको वेदः ननु वेदस्य कर्मादिप्रतिपादनपरत्वदर्शनात्कथमेतदन्तत्वमित्याशङ्क्य फलवदर्थावबोधनपरस्य वेदस्यैतदन्तत्वमेव न्याय्यमेतदतिरिक्तस्य मुख्यफलत्वाभावादित्याशयेनाह । योग इति । कर्मयोग उपासनायोगश्च सांख्यमात्मानात्मविचारात्मको ज्ञानयोगः ननु सर्वं एवं कुतो न प्रतिपन्ना इत्याशङ्क्याह । मनीषिणां पण्डितानाम्—

सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।
एकं साख्यं च योगं च यः पश्यति स पश्यती

त्यादिशास्त्राच्चतत्काण्डोक्तसाधनान्यप्येतदन्तान्येवेत्याह । त्यागः आहुतित्यागदानादिसंन्यासपर्यन्तः तपः कृच्छ्रचान्द्रायणादिमनःसंयमान्तं दमः इन्द्रियदमनं सत्यं यथार्थभाषणमिदमहिंसादेरप्युपलक्षणं तत्रानुरूपदृष्टान्तमाह । समुद्रान्ता इति । यथा आपगाः सर्वा नद्यः साक्षात्परंपरया च समुद्रान्तास्तद्वत् ॥ ३३ ॥

नन्वात्मस्वरूपेण यद्यपि न त्वं वियुक्तस्तथापि सौन्दर्यसौष्ठवादिगुणालंकृतविग्रहनन्दनन्दनात्मा दृशां प्रियो ऽसह्यविरहः किमर्थं दूरे वर्तत इति चेत्तत्राह । यत्त्वमिति । दृशां प्रियो यदि निकटे वर्तते तदा कदाचिन्मनोऽसन्निकृष्टमपि भवति दूरे तु तस्मिन्मनः सन्निकृष्टमेव भवति अतः भवतीनां मनः सान्निकर्षार्थं भवतीनां दृशां प्रियोऽहं दूरे वर्ते वै निश्चयेनैवं ज्ञातव्यं यो मदनुध्यानं करोति स मम प्रिय इति कृत्वा मदनुध्यानकाम्ययाहं दूरे वर्ते अनुध्यानेन च परस्परं मनः सान्निकृष्टं भवतीत्यर्थः ॥ ३४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवम्भूतः मत्प्राप्तिफलका वेदः अत एव वेदोक्तानि कर्मज्ञानवैराग्यादिसाधनानि च मत्प्राप्तिफलकानीत्याह । एतादिति । एषा मत्प्राप्तिः फलं यस्य स तथा समाम्नायो वेदः न वेदवेदी महती विनष्टीमित्यादिश्रुतेः यदर्थपरो वेदस्तदर्थबोधकतया वेदो यस्यास्तीति वेदी स महती विनष्टीं पुनः पुनर्जन्ममरणलक्षणां न वेद किन्तु वेदार्थप्राप्तिलक्षणां मुक्तिं प्राप्नोतीतिश्रुत्यर्थः वेदार्थः श्रीकृष्णः वेदैश्च सर्वैरहमेव वेद्य इति श्रीमुखोक्तेः योगः वेदोक्तः कर्मयोगो विविदिषोत्पादनद्वारा एतदन्त एव तमेतं ब्राह्मणा यज्ञेन दानेन तपसानाशकेन विविदिषन्तीति श्रुतेः सांख्यं वेदोक्ता

यथा दूरचरे प्रेष्ठे मन आविश्य वर्तते।
स्त्रीणाञ्च न तथा चेतः सन्निकृष्टेऽक्षिगोचरे ॥ ३५ ॥
मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत्।
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथ ॥ ३६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हि आत्मानात्मपरमात्मविवेको ज्ञानम् एतदन्तमेव ब्रह्मविदाप्नोति परमिति श्रुतेः अत्र योगशब्देन सांख्यशब्देन च केनापि मुनिना पतञ्जलिना कपिलनामकेन च प्रोक्तं पातञ्जलं योगशास्त्रं सांख्यशास्त्रञ्च वेदविरुद्धं सूत्रकारविदूषितं न ग्राह्यमिति द्योतयितुमाह। मनीषिणामौपनिषदानां यो योगः यत्सांख्यमित्यर्थः। त्यागो मद्भजनविरोधिवस्तुषु वैराग्यम् "किम्प्रजया किंधनेन त्यागेनैकेनामृतमानशु"रिति श्रुतेः तपः मदर्थतीर्थे वासदेहशोषणशाकाहारब्रह्मचर्य्यैकादश्युपवासादि दम इन्द्रियनिग्रहोपलक्षितमद्ध्यानं भक्तिः "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः "कृष्ण एव परो देवस्तंध्यायेदि"त्यादिश्रुतिभ्यः तथा सत्यं सत्यान्मत्तोऽनपेतं सत्यमनुक्तं मत्प्राप्तिसाधनमात्रमित्यर्थः। सर्वेषां वेदानां तदुक्तानां योगादीनामेकत्र पर्य्यवसाने दृष्टान्तः समुद्रान्ता इवापगा इति समाम्नायग्रहणेनैव सर्वग्रहणेऽपि तद्विरुद्धशास्त्रोक्तयोगादित्यागार्थस्तत्प्रपञ्च इति ज्ञेयम् ॥ ३३ ॥

ननु सत्यमुक्तरीत्या सर्वज्ञसर्वशक्तेः सर्वकारणकारणस्य सर्वान्तर्यामिणः सर्वत्र संयोगोऽस्ति तथापि कान्त्यादिगुणयुक्तमनोहरविग्रहादर्शनेनातिव्याकुला वयमित्यत आह। यत्त्वहमिति। भवतीनां दृशामहं दूरे वर्ते इति यत्तत्तु मदनुध्यानकाम्यया मनसः सन्निकर्षार्थम् एकाग्रेण मनसा मद्ध्यानार्थमित्यर्थः ॥ ३४ ॥

---

### भाषा टीका।

बस इस मन का रोकना ही सब विद्वान् लोगों का वेदार्थ है यही योग है यही सांख्य है यही शम दम है यही सत्य है जैसे कि सब नदियों की समाप्ति समुद्र में हो जाती है ॥ ३३ ॥

जो मैं तुमारी दृष्टि का प्रिय हो कर भी दूर में रहता हूं सो तो तुमारे मन के एकाग्र से लगने के लिये है जिस से मेरे ध्यान के होने से मन स्थिर हो जावैगा ॥ ३४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

एतदुपपादयति द्वयेन। यथा दूरचर इति ॥ ३५—३६ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

तत्र स्थित्या कथं तत् सिद्ध्येत्तदुपपादयति। यथेति। च अपि स्त्रीणां प्रेष्ठेऽपि दूरचरे सत्येव यथा तस्य मनः आविश्य वर्तते स्त्रीष्वाविष्टं भवति स्त्रीणामिति स्त्रीष्वित्येव वार्थः ॥ ३५ ॥

ननु तथापि तदर्थं चिरं तत्र स्थातुं नार्हसि सत्यम् अधुना तत् सुसिद्धम् अतो मामागतप्रायं जानीथेत्याह। मयीति। अचिरादेव मां नित्यम् अवलम्बनतया प्राप्स्यथ नित्यमिति पुनर्विरहं निरस्यति। ननु सर्वज्ञकिहीना वयं तत्र निजं किमपि साधनं न पश्यामः तत्राह। मयीति विशेषण मुक्तास्त्यक्ता अशेषा वृत्तयः अन्यसङ्कल्पविकल्पात्मिका येन तत् इति स्वरूपमात्रकथनं स्वतः सुखेनावेशबोधनार्थं किञ्च कृष्णे भवतीनां चित्ताकर्षक इति अतो मामेवैकमनुस्मरन्त्यः इत्यनेन भवतीनां मदनुस्मरणेनैवाहमाकृष्य तत्र नेतव्यः तत्र भवतीनां साधनान्तरेण किमित्यर्थः ॥ ३६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु भवतु नाम भवतो भावसिद्धिस्तत्रास्माकं किमित्याशङ्क्याह। भवतीनामपि तदाधिक्यं स्यादिति कामनयापीत्याह-यथेति। स्त्रीणामन्यासामपि किमुत भवतीनां चेत्युक्तार्थसमुच्चये। अतो मिथः प्रेमवर्द्धनाभिलापजो दुर्निग्रहोऽयं मम दुराग्रहो भवतीभिः क्षन्तव्य इति भावः ॥ ३५ ॥

तदेतावत् सन्दिश्य पुनर्विचारयति स्म मया यन्निधा समाधानं कृतं तद् यद्यप्रकटलीलामयन्ते सम्भावनया तान् मंस्यन्ते मनोनिरोधे च नोत्सहिष्यन्ते तर्हि प्रकटलीलायामेव साक्षान्मत्प्राप्तिः समाधानाय कल्प्येतेति। तदेतद्विचार्य सोऽपि मम दुराग्रहो भवतीनामाग्रहेण चिरादेव नङ्क्ष्यतीत्याह। मय्यावेश्येति। पद्येऽस्मिन्नुत्तरत्र च मयीत्यादयस्मच्छब्दप्रयोगस्य त्रिस्त्रिरावृत्त्या तत्राप्यादित एव कृष्ण इति विशिष्य सर्वत्राप्युन्नेयमिदमित्यधिकारनिर्मित्या कृष्णपदं यथायथं योज्यम्। तच्चावश्यकत्वायान्याकारप्राप्तिपरिहाराय च गम्यमिति स्थिते सोऽयमर्थः। यद् यस्माद्विमुक्ते तयाशेषवृत्तिकं मनो मयि कृष्णे यथाकथञ्चिदाश्रयिभ्यः सद्यायकतया प्रसिद्धेऽस्मिन् कृष्णतया प्रसिद्धाकारे आवेश्य निरन्तरं मां कृष्णतया प्रसिद्धाकारमेव स्मरन्त्यः स्थ तस्मादचिरादेव मां कृष्णतया प्रसिद्धाकारम् उप समीपे एष्यथ प्राप्स्यथैव। न तु ममात्र स्वातन्त्र्यमिति भावः। नन्वेवञ्चेत् पुनरपि तथा दुराग्रहो भवतः स्यात्तत्र सचाटु प्राह। नित्यमिति। सहासेनैव तथाकरवं किन्त्वित उर्द्ध्वं न करिष्यामीति भावः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्चक्षुर्गोचरे त्वय्यनुध्यानं मनसः सन्निकर्षार्थं न लभ्यते इत्यतो नेत्याह । यथेति । प्रेष्ठे प्रियतमे दूरचरे सति तस्मिन् यथा स्त्रीणां मन आविश्य वर्तते स्थिरतयेति शेषः तथा तासां चेतः संनिकृष्टेऽक्षिगोचरे प्रियतमे नं वर्तते तद्वत् ॥ ३५ ॥

किं तदनुध्यानेन मनः सान्निकर्षेण च साध्यमित्यत आह । मयीति-विमुका अशेषा वृत्तयः व्यापाराः यस्मात्तन्मन स्तन्मयि कृत्स्नं कार्त्स्न्येन निवेश्य मामेव नित्यमनुस्मरन्त्योऽचिरादेव मामुपैष्यथ ॥ ३६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निदर्शनेनैतमर्थमुपपादयति । यथेति चशब्दात्पुरुषाणामिति ग्राह्यं प्रेष्ठे प्रियतमे पदार्थे पूर्वानुभूते इति शेषः अक्षगोचरे इन्द्रियविषये ॥ ३५ ॥

लोके प्रियतमस्मरणे फलसन्देहो न तथा मत्स्मरणं फलानिश्चयादिति भावेनाह । मयीति । यद्विमुक्ता अशेषा वृत्तयो यस्य तत्तथा तन्मनः मय्यावेश्य नित्यं मामनुस्मरन्त्यो यूयं शीघ्रं मां तथा उपैष्यथेत्यन्वयः॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु किमेतदुच्यते अस्माकं तु सर्वदैव त्वयि मन इति चेत्तत्राह । यथा दूरचर इति । अयमेव च गोपिकानां धर्मः यथा सर्वदा मां स्मरन्ति ममाप्ययं धर्मः यथा ताभ्यः आनन्दं प्रयच्छामि एतदुभयं तदैव घटेत नान्यथेति धर्मो निरूपितः अर्थोऽपि भगवानेव परं गुप्ततया संरक्ष्यतयैवबहिर्गोपायति यत्र निरन्तरं मनस्तिष्ठति अन्यथा क्षणमपि प्रमादे अर्थो गच्छेत् अतः पाक्षिकः कदाचित्कोऽपि दोषः परिहरणीय इति सन्निकर्षापेक्षया विप्रकर्षे मनसः स्थैर्यमाह । दूरचरे दूरेऽप्यस्थिरे अन्यथा स्वयं गच्छेत् निराशो वा भवेत् अतो दूरचरे आवश्यके प्रेष्ठे यथा मनो वर्तते निश्चलं सर्वदा तत्रापि स्त्रीणां निकटे हि शीघ्रमेव मानादिदोषोत्पत्तिसम्भवात् चकारादन्येष्वपि सम्बन्धेषु यथा पुत्रं माता स्मरति पिता च वा एवमन्य अपि सन्निकृष्टे चेतो न स्मरति अयं हि बहिः पूर्वस्त्वान्तरः किञ्च अयमक्षिगोचरः नह्यन्यविषये अन्यदिन्द्रियं स्वतन्त्रतया प्रवर्तेत अत एवाक्षिगोचरे न चेतः प्रवर्तेत बलिष्ठं च चेतः अन्यथा प्रत्यक्षे विषये अन्यचिन्तना न स्यात् ॥ ३५ ॥

नन्वस्माभिः स्वप्राप्त्यर्थं चिन्ता क्रियते तथा सति किं मनःस्थापनेन किं निरन्तरसम्बन्धेन वा कामार्थं हि प्रयत्नः लोके च यादृशः व्यवहारसिद्धः तत्र क्षणं मनश्चाञ्चल्यमप्यावश्यकत्वात् न विगीतामिति वाशङ्क्याह । मय्यावेश्येति । अहं हि कृत्स्नप्रसादेनापि प्रायः कृत्स्नेनापि साधनेन प्राप्तुं योग्यः सा च कृत्स्नता अन्त्यामेवावस्थायां भवति नान्यथा कृत्स्नतायां हेतुं वदन् अवस्थान्तरे तदभावमाह । विमुक्ताशेषवृत्तीति । विमुक्ताः सर्वेभ्यो विषयेभ्यो अंशाया दशापि वृत्तयो यस्य एकादश द्वादश वा सहजाश्चेत् गुणकृतास्तु दशैव ताः भ्रमरवाक्येषु निरूपिताः "एकादशामी नमनसो हि वृत्तय" इत्यत्र स्वाभाविका अपि निरूपिताः । ननु सर्ववृत्त्यभावे स्वरूपनाश एव स्यादित्याशङ्क्याह । तदिति । प्रसिद्धं तन्मनः इदानीं त्वहमाविष्टः अतः परं भवतीभिर्मय्यावेश्य बलान्मयि मनोनिवेशनं कृत्वा पश्चात् शीघ्रमेवाहं प्राप्तव्यः। ननु वस्तुविचारे मनस्त्वन्यदेव तस्मिन्निविष्टे कथं भगवत्प्राप्तिरिति चेत्तत्राह । अनुस्मरन्त्य इति । मनोद्वारा आत्मापि स्मरति यद्यपि स्मरणं चेतसो धर्मः तथाप्यनुस्मरणमात्मन एव अनेनोभयविधोऽपि सम्बन्धो निरूपितः मनोद्वारा स्वयं भगवति प्रविष्टाः स्मरणद्वारा च भगवांस्तास्वन्तु प्रविष्ट इति एवं सत्यचिरादेव मामवाप्स्यथ परंपरया नित्यं सम्बन्धे संघर्षादन्तरास्थितं गच्छति तथा मनोविलये चित्तस्यापि विलयादचिरादेव प्राप्तिः आत्मगाम्येव कामेन फलरूपोऽहं मुख्य इति तात्पर्यम् ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतदेव स्त्रीपुंसानामनुभवदर्शनायोपपादयति। यथेति । स्त्रीणाञ्चेति चकारात् पुंसाञ्च दूरवर्त्तिन्यां श्रेष्ठायां यथा मन आविश्य वर्त्तते। न तथा सन्निकृष्टायामक्षिगोचरीभूतायाञ्चेत्यर्थः ॥ ३५ ॥

हं हो उद्धव ! एषोऽपि सन्देशः सम्प्रति त्वया स्वहृदयसम्पुटे एव स्थाप्यतां सम्प्रति कृष्णेन याः स्त्रियः सम्भुज्यन्ते कदाचित्तासां दशां दूरवर्त्तिनि कृष्णे भविष्यति सति । ताभ्य एव तदानीं त्वया दातव्यः। सम्प्रति व्रजस्थास्तु नास्य ग्राहिकाः। यासां पूर्वं व्रजवर्त्तिन्यपि दृग्गोचरीभूतेऽपि तस्मिन् कृष्णे एकैकनिमेषेणैकैकयुगकालं व्याप्य सहग्दूरवर्त्तीकृत एवाभूत् तदा तदैव सहस्रशो विरहेषु सहस्रकृत्व एव मनःसन्निकर्षः स्वल्व भूदेवासामिति सावहेलमाचक्षाणासु ताषु भोः स्वामिन्यः यद्येषोऽपि न रोचते तर्ह्यस्मादप्यन्यं सन्देशं शृणुत मयातु बहव एव सन्देशा आनीता इति प्रोच्य पुनः कृष्णवाक्यमाह । मयीति । विशेषेण मुक्तास्त्यक्ता गृहपत्यादिविषयाः अशेषाश्च स्ववृत्तयो येन तथाभूतं मनः मयि कृष्णे आविश्य मां नित्यमनुस्मरन्त्यो यद्वत्स्यथे तदचिरादेव मामुप स्वसमीप एव वर्त्तमानम् पश्यथ प्राप्स्यथ ॥ ३६ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

ननु किमित्येवमुच्यते अस्माकं तु सन्निकृष्टेऽपि त्वयि मनः सन्निकृष्टमेवासीदिति चेत्सत्यं तथाप्यस्ति विशेष इत्याह । यथेति । यथा प्रेष्ठे दूरचरे तच्चिन्तया मनसस्तस्मिन्नेव सन्निविष्टत्वं न तथा सन्निकृष्टे नैरन्तर्यार्थः । यद्यपि पुरुषाणामप्येवं तथापि स्त्रीणां विशेषतः इत्थमिति द्योतयितुं स्त्रीणामित्युक्तं चकारात्पुरुषाणामपि ॥ ३५ ॥

एतत्फलमाह । मयीति । कृत्स्नमित्येतद्विवृणोति निवृत्ता अशेषास्तत्तद्विषयगोचरा वृत्तयो यस्य तथाभूतं यत् तन्मनो मय्यावेश्य मामेवानुक्षणं स्मरन्त्यो ऽचिरात्मान् मामेवाप्स्यथ ॥ ३६ ॥

---

या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः ।
१ अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया ॥३७॥

श्रीशुक उवाच ।

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ।
ता ऊचुरुद्धवं प्रीतास्तत्सन्देशागतस्मृतीः ॥ ३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथाह । यथेति ॥ ३५ ॥

ध्यानफलमाह । मयीति । माम् अनुस्मरन्त्यो ध्यायन्त्यः अचिरान्मामेवैष्यथ प्राप्स्यथ ॥ ३६ ॥

### भाषा टीका ।

जिस प्रकार से अपने प्रीतम के दूर रहने से स्त्रियों का मन लगता है तैसे स्त्रियों का चित्त पास मे नेत्र के गोचर होने से नहीं लगता है ॥ ३५ ॥

मेरे दूर रहने से सब विषयों से छूटे हुये संपूर्ण मन को मेरे मे लगाने से नित्य मेरा स्मरण करने से थोडेही काल मे तुम मेरे मे प्राप्त हो जाओ गी ॥ ३६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपैष्यथेति माधुर्यमात्रमितिचेदत आह । या इति । हे कल्याण्यः स्वमर्त्तृभिः प्रतिपिद्धा या वने क्रीडता मया सहालब्धक्रीडास्ताः स्त्वैव मामापुः प्रापुः ॥ ३७ ॥

तस्य सन्देशेनागता स्मृतिर्यासां ताः प्रथमार्थे द्वितीया ॥ ३८ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु तत्र विश्वासं कर्तुं न शक्नुमः तत्राह । या इति । मया क्रीडता सह क्रिया मयि क्रीडति सतीत्यर्थः । अस्मिन्निति सदैव चित्तान्तःसाक्षादिव तद्वृत्तेः किम्बा तत्रागमनस्याथिलम्बतावोधनार्थं मा न माशङ्को नन्वथ अलब्धरासा न वृत्ताः किन्तु मम वीर्यार्णां रासक्रीडादिलक्षणानां चिन्तया ध्यानेन वा मामापुरेव यतः कल्याण्यः युष्मन्नस्त्य सौभाग्यवत्य इत्यर्थः । मद्ध्यानस्यायं प्रभावो व्यक्त एवेति विश्वासः कार्य एवेति भावः ॥ ३७ ॥

एवमेतत् स्मृतिर्ज्ञानं अन्यैर्व्याख्यातं यद्वा अहो यत तथापि तासां शोको न निवृत्तः विशेषतश्च तत्सन्देशाज्ञातस्मृतिवेगेन सर्वा अपि विलेपुरित्याह । एवमिति । ईदृशमप्याकर्ण्य प्रीता हृष्टाः किं काका नैवेत्यर्थः । यतो व्रजस्त्रियः तद्दर्शनैकजीवना इत्यर्थः । अतस्तत्सन्देशादागता विशेषेणोद्गता तत्स्मृतिर्यासां तथाभूता ऊचुः । यद्वा तत्सन्देशेन कृष्णसन्देशेन आगता रासे सखीनां तासां कृष्णप्राप्तौ स्मृतिर्यासां ताः अत एव विश्वासेन प्रीताः ॥ ३८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र प्रमाणं दर्शयति । या इत्यस्मिन् प्रकटप्रकाशात्मके वृन्दावने रात्र्यां तस्यां क्रीडता मया कृष्णतया प्रसिद्धाकारेण सह अलब्धरासाः तत्र हेतुर्व्रज आस्थिता यद्वा इत्यर्थः ता अपि मद्वीर्यचिन्तया मम कृष्णतयाप्रसिद्धाकारस्य सर्वातिक्रमिमद्गुणप्रभावेण मा मां कृष्णतया प्रसिद्धकारमापुरेव अप्रकटप्रकाशात्मकेवृन्दावनेइतिभावः कल्याण्य इति सम्बोध्य भवत्यस्तु साक्षादेव प्राप्स्यन्ति नतु जड़गुणमयं देहमिमिति रीत्येति व्यञ्जितम् ॥ ३७ ॥

एवमिति क्रमेण यदा यदा यच्छ्रुतं तदा तदा तत्रार्थत्रयस्यापि तासिस्तारतम्येनानुसंहितत्वात् प्रथमार्थे स्वप्रेयसि तस्मिन् । पूर्वं यत् पत्यपत्यसुहृदामित्यादिषु या सर्वतनुभृतां निरुपाधिप्रेमास्पदत्वादिना परमात्मता स्थापिता सम्प्रतितेन ज्ञानमयेन सन्देशेनागता तदात्मिका स्मृतिर्यासां ताः । तन्त्रेण तु तेन ज्ञानमयेनापि सन्देशेन न गता स्मृति र्निजभावोचितानुसन्धानरूपा यासां ताः । तत्र हेतुः । प्रीताः तस्मिन् स्वाभाविकतादृशप्रेमवत्य इत्यर्थः । प्रियतमादिष्टमिति सोऽप्येवमस्मासु नोपदिशेदिति विभाव्येति भावः । द्वितीयार्थे । तेन प्रेमकृतसाक्षात्कारसूचकेन सन्देशेनागता स्मृतिः साक्षात्कारस्य स्मरणं यासां ताः । तृतीयार्थे तेनाप्रकटप्रकाशे संयोगं सूचयता सन्देशेनागता स्मृतिर्जातिस्मरणवत्तत्संस्काररूपा यासां ताः । अन्यार्थद्वये अत एव प्रीताः प्राप्तपरमानन्दाः अत एव विश्वासे हेतुः प्रियतमेति । अथ गद्यावेद्य मनः कृष्णा इति चतुर्थपक्षे मा स्मृतिस्तु पूर्वं स्वर्गवज्ञातपूर्वानुरागतया दृष्टानां तासां रासे तु तत्रादृष्टानामप्येतावन्तं कालं स्वीयश्रीकृष्णानुरागावेशेनाननुसंहितानामनेन तु सन्देशप्रभावेणानुसन्धानरूपेति ज्ञेयम् । अत्रेदं श्रीभगवतोऽभिप्रायः मम सम्प्रति गमनादिकं न सम्भवतीति सान्त्वनसन्देशे प्राप्ते प्रथमत आगमनप्रतिषेध समाकुला भाविनि कालविलम्बे तु न केवला सा समशर्मान विविधसमाधानसन्धायकविविधार्थसम्बन्धे सन्देशोऽपि योग्यः । यस्य पर्यवसानार्थेन मुहुरुत्तरत्वमित्यादिवदाराद्नुसंधानमपि भवेत् । कदाचिद्विहिरनुसन्धाने तु मद्दर्शनतृष्णा च मुहुस्तत्स्फुरणरसाश्चाद्यचमत्कारहेतुः स्यात् । आयत्यां मत्साक्षात्कारे परमचमत्कारः स्यादिति ॥ ३८ ॥

१ अलब्धावासकल्याणा आपुर्मां मद्विचिन्तया इतिविज० पाठः

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

या रात्रयः क्रीडया नीताः तासु मामापुरित्यन्वयः ॥ ३७—३८॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

व्यामोहनमात्रमेतदित्यतो निदर्शयति । या इति । हे कल्याण्यः याः स्त्रियः व्रज एवास्थिता भर्त्रादिप्रतिबन्धादिति भावः । वने क्रीडिता मया सह न लब्धः रासः क्रीडा याभिस्तथाभूताः मदीयानां मच्चेष्टितानामनुचिन्तया मामेवापुः प्रापुः खलु ॥ ३७ ॥

एवमिति । इत्थं प्रियतमेन भगवतादिष्टं श्रुत्वा तस्य सन्देशेनागता स्मृतिर्यासां ताः व्यत्ययेन द्वितीया प्रीता हृष्टा उद्धवमूचुः ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मिन्नर्थे स्वानुभूतमर्थं प्रमाणयति । यन्मयेति । यद्यथा व्रजे आस्थिता अस्मिन् वने अलब्धावासकल्याणाः अप्राप्तगृहसुखाः यूयं मया रात्रीः क्रीडिताः मद्विचिन्तया मामापुः एवमिति शेषः ॥ ३७ ॥

तत्सन्देशेनागतभगवद्विशेषस्मरणाः ॥ ३८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एतस्य निदर्शनं वदन् मोक्षप्रकारमाह । या इति । भवत्यः समागताः गृह एव स्थिताः तास्तदैव सर्वप्रकारेण मां प्राप्तवत्यः अनेनैव निदर्शनेन भवतीभिरप्यहं प्राप्तव्यः तस्मान्मदर्थजीवनस्थापनमिति पक्षो निरर्थकः । अन्यथा समागतानां भवत् अनुभवसिद्धश्च क्लेशः । ननु ताः प्रतिबन्धेन तथाभूताः कथं स्तुत्या इत्याशङ्क्याह । कल्याण्य इति । तासां महद्भाग्यमस्तीति अवश्यं प्रतिबन्धरूपं दुरितं दृष्टं एवोपक्षीणमिति कण्टकेन कण्टकोद्धारवद्देहनिराकरणं एवोपक्षीणं भवतीनां तु तद्दुरितं पश्चादिमामवस्थां प्रापितवत् अतो मदुक्तप्रकारेण दोषं परित्यज्य तामवस्थां प्राप्स्यथेति भावः । रात्र्यां क्रीडता मया सहालब्धरासाः क्रीडा स्वतः सिद्धेति निरूपणार्थं तथोक्तं प्रतिबन्धाभावाय रात्र्यामिति वन इति साधनसंपत्तिः मयैव क्रीडा क्रियत इति न तासां प्रयासः अस्मिन्नेव वन इति भगवानपि तत्रैव स्थित्वा वदतीति ज्ञापितम् अस्मिन्निति व्रजस्थत्वस्यापि अस्मिन्नेव व्रजे ता आस्थिता इति भवतीनामपि निर्बन्धनाय्यैवास्थापनम् । अलब्धरासा इति तासां भाग्यमुपभोगेन नोपक्षीणमिति ज्ञापितम् अत एव पूर्णभाग्याः । ननु तासां किं साधनमित्याकाङ्क्षायामाह । मद्वीर्यचिन्तयेति । ता हि गमनार्थं प्रवृत्ताः भर्त्रादिभिः प्रतिबद्धाः तत्प्रतिबन्धाभावाय भगवत्पराक्रमं स्मृतवत्यः ततो भगवद्धर्मा अपक्लिष्टा इति एव पराक्रमः तदीयं तेभ्यो दत्त्वा स्वात्मकमिव दोषान्निवार्य भगवन्तं समश्रमास अतो मत्पराक्रमस्यैव चिन्तोचिता ननु दोषपुरःसरं ममेति भावः । यद्वा नन्वाचिरान्मामवाप्स्यथेत्यनेन व्रजे समागतस्य भगवतः पूर्ववन्मिलनलक्षणः प्रातिरुच्यत उतान्तर्गतगोपभार्याणामिव सोच्यते आद्या-चेद्दोमिति ब्रूमः अन्त्या चेदनिष्टत्वान्नेदं समाधानमित्यत आह । या मयेति । या गोप्यो व्रजस्थिता एव वने स्थितं मामापुराक्षेपलभ्यत्वादमङ्गलत्वाच्च तद्देहत्यागः स्पष्टतया नोक्तः देहत्यागपूर्वकं तासां स्वप्राप्तौ हेतुभूतविशेषमाह । रात्र्यां क्रीडता मया सह पूर्वमलब्धरासा यतो व्रजस्थिता एव सत्यो वने स्थितं मामापुरित्यर्थः । भवतीनां लब्धरासत्वान्न तथा भविष्यतीति भावः । अत एव कल्याण्य इति शम्बोधनम् अत्रायं भावः रासे हि पूर्णस्वरूपानन्द एतासु स्थापितः स च भगवत्स्वरूपात्मक इति तदनुभावेन विरहेऽपि जीवनमेव सम्पद्यते । न वैपरीत्यं भवितुं शक्नोति । यद्यप्ययं भावोऽति कठिनोऽत एव प्रियेणाप्यतिक्लक्ष्ण्येण प्रायः कथं च नेति पदत्रयमुक्तम् अग्रे च प्रत्यागमनसन्देशैरिति प्राणधारणे हेतुरुक्तः तथापि सन्देशानुसन्धानेऽप्युक्तधर्मकार्यमेवेति ज्ञेयम् अन्यथैतस्य सर्वतिरोधायकत्वेनातितीक्ष्णत्वेन क्षणमात्रेणैवान्यथा भवेदतः सुष्टूक्तं देहत्यागे तामामलब्धरासत्वं हेतुरिति । तथा च तासु विरहसामयिकजीवनहेतूक्तरूपधर्माभावात्तथाप्तिरभूद्भवतीनां तु तद्वत्त्वाद्यथा पूर्वमेव मेलनं भाविष्यतीति अत एव जन्मोत्सवेऽप्यात्मानं भूपयाञ्चक्रुरित्यत्र शरीरपदं त्यक्त्वात्मपदं तद्वाचकमुक्तमविकृतत्वज्ञापनाय अन्यथा स्वक्रीडातो लब्धरासोक्तिप्रयोजनं न पश्याम इति ॥ ३७ ॥

एवमुपदेशेन तासां दोषो निवृत्त इत्याह । एवमिति पञ्चदशभिः । विद्यारूपास्ता इति तासां चतुर्दशवाक्यान्युपक्रमश्चापरः तथा सति सर्वा एव भगवत्कलास्तासु सिद्धा इति निरूपितं भवति प्रतारणशङ्काभावायाह । प्रियतमेनादिष्टमिति । आज्ञापूर्वकमुक्तम् अमानने दण्डोऽपि निरूपितः व्रजयोषित इति शुद्धाः कापट्यरहिताः ताश्च भगवता अनुगृहीताः उक्तार्थफलं स्वास्मिन् जातमिव ज्ञापयितुमिव उत्सवरूपम् उत्सवेऽपि प्रियस्मरणं दृढं भवतीति उपदेशेनैव प्रीताः पूर्वासूयादिक्लेशान् त्यक्तवत्यः । ननु कथं पूर्वमाक्रोशः कथमिदानीं प्रीतिः विरहस्य तुल्यत्वादित्याशङ्क्याह । तत्सन्देशेन तादृशसन्देशेन पूर्वं ज्ञात एवार्थः मध्ये कालादिदोषाद्विस्मृतः भावान्तरमुत्पादितवान् स पुनरिदानीं स्मृतः अस्मरणकार्यं दूरे चकार ॥ ३८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्रार्थे भवतीनां मध्ये पूर्वमन्तर्गृहनिरुद्धा या गोप्यस्ता एव प्रमाणमित्याह । या इति । अस्मिन् वृन्दावने रात्र्यां क्रीडता मया सह या अलब्धरासा अभवन् कुतः व्रजे आस्थिताः भर्तृभिर्निरुद्धत्वादिति भावः । ताः स्वमनोरथासिद्ध्या मद्विच्छेदमहापीडया च मर्त्तुकामा अपि कल्याण्यः कल्याणवत्यो जीवन्त्य एव मद्वीर्यचिन्तया मा मां तदैवापुः । तत्रैवाविर्भूय रममाणेन मया सार्द्धमेव तस्यां रात्रौ व्रजे स्थिताः तत्परराविष्वपि रासमपि प्राप्ता इत्यर्थः ॥ ३७ ॥

ता अन्तर्गृहनिरुद्धचर्यं एवोचुः । तेन सन्देशेन आगताः स्मृतिर्यासां ताः । द्वितीया आर्षी । आं सत्यमेव तस्यां रात्रौ तेन रममाणेनैव सह वयमास्मेति स्मरन्त्यः स्वानुभवं प्रमाणीकृत्य उद्धवं प्रति प्रीतास्ता एव लौकिकरीत्या उद्धवं पप्रच्छुः ॥ ३८ ॥

गोप्य ऊचुः ।

दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ।
दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥ ३९ ॥
कच्चिद्गदाग्रजः सौम्य ! करोति पुरयोषिताम् ।
प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४० ॥
कथं रतिविशेषज्ञः प्रियश्च वरयोषिताम् ।
नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ॥ ४१ ॥
अपि स्मरति नः साधो ! गोविन्दः प्रस्तुते क्वचित् ।
गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४२ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

नेदं स्व्युत्पादकमात्रमपि तु यथास्थितमदनुस्मरणफलस्य सखीषु भवतीभिर्दृष्टत्वादित्याह । या मयेति । स्वभर्त्रादिभिः प्रति बद्धत्वाद्या व्रजे स्थिताः अस्मिन्वने रात्र्यां क्रीडता मया अलब्धरासाः मद्वीर्यचिन्तया मां प्रापुः कल्याण्यः जन्मान्तरेषु अनुष्ठितसुकृताः यद्वा मदनुचिन्तया मत्प्राप्तिप्रतिबन्धकदुरितक्षयात्कल्याण्यः यद्वा अलब्धरासा अपि मां प्रापुः भवत्यस्तु लब्धरासा अत एव कल्याण्यः तथा च ब्रह्मलोकाद्यधिभोगमात्रं यदपेक्षया तुच्छं तन्मया सह क्रीडनं प्राप्तवतीनां युष्माकं मत्स्वरूपप्राप्तिरेवावशिष्यते न त्वन्यत्सा च यथोक्तोपायेन भविष्यत्येवाऽतोऽसूयादिकं विहायानन्यतया मदनुस्मरणं कार्यमिति भावः । "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" मित्यनुरोधेनास्मिन्नित्युक्तम् अहमपि युष्मत्संनिधावेव तिष्ठामि मन्मनसो युष्मासु प्रविष्टत्वात् ॥ ३७ ॥

एवमुक्तप्रकारेण प्रियतमेनानुप्रेक्षणीयवचनेनाप्ततमेन तत्राप्यादिष्टमाज्ञापूर्वकमुपदिष्टमाकर्ण्य सम्यगवधार्य प्रीताः अस्मदुपकाराय भगवानिमं दूतं प्रेषितवानिति विचार्य प्रसन्नचित्ताः यतः प्रियतमसन्देशैरागता स्मृतिर्वयमनुचर्यो भगवान्स्वामी सर्वदा सूयादिदोषनिवृत्तिपूर्वकमनुसन्धेय इत्यादिलक्षणं स्मरणं यासां ताः अनुगृहीता यतः व्रजयोषितः अनुकम्प्य स्थानवासिन्यः सरलचित्ता उद्धवमूचुः ॥ ३८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतद्देवोपपादयति । या इति । हे कल्याण्यः ! भर्त्रादिभिः प्रतिरुद्धाः याः वने क्रीडता मया सह अलब्धरासाः ता मद्वीर्यचिन्तया मद्गुणानुध्यानेन मा मामेवापुः प्रापुरिति ॥ ३७ ॥

तस्य भगवतः सन्देशेनैव आगता स्मृतिर्यासां ताः आगतस्मृतीः आगतस्मृतयः प्रथमार्थे द्वितीया ॥ ३८ ॥

---

भाषा टीका ।

हे कल्याणीयो हो ! इस व्रज में रहते समय इस वन में रात्रि में जब मैंने रासक्रीडा करी तब जिन गोपियों को रास क्रीडा नहीं मिली वे गोपी मेरे पराक्रम को चिन्तन कर के मेरे को प्राप्त हो गईं ॥ ३७ ॥

श्रीशुकदेवजी बोले इस प्रकार से अपने प्रियतम के संदेश को सुन कर सब व्रज स्त्री बडी प्रसन्न होकर उस संदेश से भगवान् के स्मरण होने से उद्धव जीके प्रति बोलती भईं ॥ ३८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदूनामहितः शत्रुः अघकृद्दुःखदः दिष्ट्येत्यानन्दे आप्तैः प्राप्तैर्हितैर्वा सह ॥ ३९ ॥

अन्या ऊचुः । कच्चिदिति । नो ऽस्माकं करणीयां प्रीतिं कच्चित्पुरयोषितां करोति स्निग्धश्च तत्सव्रीडहासेनोदारमीक्षणं तेनार्चितस्ताभिरस्माभिर्वा ॥ ४० ॥

अन्या ऊचुः । कथमिति । तासां वाक्यैर्विभ्रमैश्चानुभाजितः पूजितः ॥ ४१ ॥

पुनरन्या ऊचुः किमनया चिन्तया ऽस्मान् कचित्प्रस्तुते प्रसङ्गे स्मरति क ग्राम्या अविदग्धाः ॥ ४२ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

अहो अस्माकं निजसुखेन सिद्धेनासिद्धेनैव वा किं तस्य सुखमेवास्माकं सर्वमङ्गलमित्यभिप्रायेणादौ तदभिनन्दन्ति । दिष्ट्येति । लब्धसर्वार्थैरिति । तेषामप्यशेषसुखासिद्ध्या तदर्थचिन्ता निरस्ता अतः कुशली सुखी अच्युत इति कथमपि सुखतश्च्युतिराहित्याभिप्रायेण । अधुनेति पूर्वमत्रासौ बहुधा दुःखं प्राप्तोऽस्तीति भावः । अन्यैस्तैर्व्याख्यातं यद्वा दिष्ट्या एतदेव भद्रमित्यर्थः अहितः तद्द्वेष्टा यदूनामघकृत् आप्तैस्तत्र प्राप्तैर्यदुभिः अन्यत्समानम् ॥ ३९ ॥

### श्रीमत्सनातनगोस्वामीकृतबृहत्तोषिणी ।

अत्र बहुधा वाक्यभेदेन वक्तृभेदकल्पनायां योग्यायामपि यथाकथञ्चित् सङ्गतिः पूर्ववत् कार्य्या सुखस्थितिप्रकारमेव प्रेमलालसोत्कर्षेण पृच्छन्ति । कच्चिदिति । गदाग्रज इति । पौरस्त्रीजनसङ्गत्या पुरस्त्रीप्रीत्या स्मरणार्हतोक्ता उदारम् उत्कृष्टम् अन्यैस्तैर्व्याख्यातं यद्वा नोऽस्मदीयः स्वामी गदाग्रज इत्यन्वयः अथवा अधुनास्मासु कृपां किं कर्त्तेति प्रेमार्त्त्या पुनः पृच्छन्ति । कच्चिदिति । पुरयोषितां स्निग्धसव्रीडहासादिभिरर्चितोऽपि नोऽस्माकं प्रीतिं किं करोति करिष्यति सामीप्यापेक्षया वर्तमाना ॥ ४० ॥

अहो तत् किं पृच्छ्यते सन्देह एव तत्र नास्तीत्याहुः । कथमिति । प्रियश्च रूपवेशोपकारादिना तथा तासां वाक्यविभ्रमैरनुभाजितः एवं मिथः प्रीतिहेतुवैदग्ध्यादिकमुक्तम् अतः कथं नानुबध्येत कुतस्तास्वासक्तो न भवेत् अपितु भवितैवेत्यर्थः । यद्वा तद्वाक्यविभ्रमैर्नानुबध्येत न वशीक्रियेत तैरेवानुभाजितश्च अन्यत् समानं पक्षान्तरे ननु तस्य ताभिः सङ्ग एव नास्तीति चेत्तत्र सम्भवतीत्याहुः । कथमिति । अर्थः स एव अतस्तास्वासक्तोऽस्माकं प्रीतिं न कर्त्तैवेति भावः ॥ ४१ ॥

सुषुप्त्यादिष्वपि भवत्यो दृश्यन्त इति सन्देशातः श्रुतेऽपि स्वसौभाग्ये पुनः प्रेमविशेषेणाशान्त्या पृच्छन्ति । अपीति । क्वचित् कस्मिंश्चित् प्रस्तुते प्रस्तावे तमेवाहुः । पुरस्त्रीणां या गोष्ठी सभा तन्मध्ये या स्वैरकथा स्वच्छन्दवार्ता तस्या अन्तरे मध्ये ग्राम्या अपि नः किं स्मरति गोविन्दः गोकुलेन्द्र इति स्मरणार्हतोक्ता हे साधो ! इति तत्र कदापि किञ्चिन्मिथ्या न वाच्यमिति भावः यद्वा क्वचिदित्यस्याग्रेऽप्यन्वयः अहो अन्यप्रस्तावे क्वचिन्न स्मरतु नाम गोष्ठीमध्येऽपि क्वचित् स्मरति तत्रापि स्वैरकथान्तरेऽपि क्वचित् स्मरति अन्यत् समानं पक्षान्तरे अहो प्रीतिमस्माकं न करोतु नाम कदाचित् किं स्मरत्यपीति पृच्छन्ति । अपीति । अर्थः स एव एवमग्रेऽन्यदप्यूह्यम् ॥ ४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथागतस्मृतितया किञ्चिदाश्वासयुक्तानां पुनरननुसंहितप्रकटप्रकाशतया आत्मविरहस्फूर्त्तीनां वाक्यानि दर्शयितुमाह । गोप्य ऊचुरिति । अहो अस्माकं निजसुखेन सिद्धेनासिद्धेनैव वा किं तस्य सुखमेवास्माकं सर्वमङ्गलमित्यभिप्रायेणादौ तदभिनन्दन्ति । दिष्ट्येति । लब्धसर्वार्थैरिति । तेषामप्यशेषसुखसिद्ध्या तदर्थचिन्ता निरस्ता अतः कुशली सुखी अच्युत इति कथमपि सुखतदच्युतिराशिषाभिप्रायेण । अधुनेति पूर्वमसौ कंससम्बन्धेन बहुधा दुःखं प्राप्तोऽस्तीति भावः । अन्यत्तैः । यद्वा दिष्ट्या एतदेव भद्रमित्यर्थः । अहितस्तद्वंश्यो यदूनामघकृच्च । आसत्त्व प्राप्तैर्बन्धुभिः । अन्यत् समम् ॥ ३९ ॥

अत्र वक्तृभेदेऽपि सङ्गतिरुत्तरोत्तरमेकमत्येनोक्तकार्थैव तथापि अथ सुखस्थितिप्रकारं प्रेमलालसौत्कट्येनैव पृच्छन्त्यः तदीयविलासविशेषस्फूर्त्तैः पुरस्त्रीणां स्मरणात् सापत्न्यस्वभावेनेर्ष्यामङ्कुरयन्ति । कच्चिदिति । सप्तम्यर्थे षष्ठ्यौ । गदाग्रज इति । गदोऽवरं प्रथमो देवरक्षितायाः पुत्रः श्रीकृष्णानुजः तस्मिंश्च सम्प्रत्यनुजताभिमननेन तस्याधिक्ये प्रीतिं श्रुत्वा गोकुलसम्बन्धः शिथिलीभूत इति व्यञ्जयन्त्यः स्वेषु तद्वत्स्नेहशैथिल्यं पुरस्त्रीषु तदाधिक्यं व्यञ्जितवत्यः उदारमुत्कृष्टम् ॥ ४० ॥

अहो तत् किं पृच्छ्यते सन्देह एव तत्र नास्तीत्याहुः । कथमिति । प्रियश्च रूपवेशोपकारादिना तथा तासां वाक्यविभ्रमैरनुभाजितः । तद्वाक्यैर्विभ्रमैश्चेति क्वचित् । एवं मिथः प्रीतिहेतुकवैदग्ध्यादिकमुक्तम् अतः कथं नानुबध्येत कुतस्तासु आसक्तो न भवेत् अपितु भवितैवेत्यर्थः ॥ ४१ ॥

अथोत्कण्ठया सोल्लुण्ठं पृच्छन्ति । अपीति । क्वचित् कस्मिंश्चित् प्रस्तुते प्रस्तावे । प्रस्तावमेव विशिषन्ति । पुरस्त्रीणां या गोष्ठी सभा तन्मध्ये या स्वैरकथा स्वच्छन्दवार्त्ता तस्या अन्तरे मध्ये ग्राम्या अपि नः किं स्मरति । गोविन्दः गोकुलेन्द्रः इति स्मरणार्हतोक्ता । हे साधो ! इति तत्र कदापि किञ्चिन्मिथ्या न वाच्यमिति भावः । यद्वा । क्वचिदित्यस्याप्यग्रेऽप्यन्वयः । अहो अन्यप्रस्तावे क्वचिन्न स्मरतु पुरस्त्रीणां गोष्ठीमध्येऽपि क्वचित् स्मरति तथापि स्वैरकथान्तरं क्वचित् स्मरति । अन्यत् समम् ॥ ४२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दिष्ट्येति । यदूनामहितः शत्रुरघकृत् दुःखकृत् कंसः हतः किलैतद्दिष्ट्या अयमस्माकं महानानन्द इत्यर्थः। लब्धाः सर्वेऽर्थाःपुरुषार्था यैस्तैराप्तैर्मित्रैः सहाच्युतोऽधुना कुशल्यास्ते किल ॥ ३९ ॥

कच्चिदिति । हे सौम्य ! गदाग्रजः श्रीकृष्णः पुरयोषितां स्निग्धं च तत्सव्रीडहासेनोदारमीक्षणं तेनार्चितो बहुमतो वशीकृत इति भावः । तासां प्रीतिमस्मासु कर्तव्यां करोति कच्चिदितीष्टप्रश्ने ॥ ४०॥

ननु स्वतन्त्रः स कथं तद्वशः स्यादत आहुः । कथमिति । तद्वाक्यैः पुरयोषिन्मधुरवाक्यैः तद्विभ्रमैश्चानुभाजितः कथं नानुबध्येत अनुबध्येतैवेत्यर्थः ॥ ४१ ॥

अपीति । हे साधो!पुरस्त्रीणां गोष्ठीनां मध्ये तत्रापि ग्राम्यस्वैरकथान्तरे ग्रामे भवा ग्राम्या जनास्तेषां सम्बन्धि यादृच्छिककथान्तरं तस्मिन् प्रस्तुते सति तदा नोऽस्मान् स्मरति किं प्राधान्येनास्मान् न स्मरत्येव यदृच्छयापि स्मरति किमित्यर्थः॥ ॥ ४२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदूनामहितः आर्त्तैर्जनैः ॥ ३९—४० ॥

तासां वाक्यैः कथं नानुबध्येत विभ्रमैः शृङ्गारचेष्टाभिः अनुभाजितः सभाजितः ॥ ४१ ॥

ग्राम्याणां शब्दादिविषयलालसानां स्वैरकथान्तरे स्वच्छन्दविषयस्य व्यवहारविशेषे प्रस्तुते प्रसक्ते ॥ ४२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्वीर्यस्मरणावश्यकमिति कृतमभिनन्द्य भाविवीर्यस्मरणार्थं कुशलं पृच्छन्ति । दिष्ट्येति । दोषरहितास्त एव भावाः पुरुषार्थसाधका इति सिद्धान्तेन कीर्त्तयन्ति । दिष्ट्या अस्मदादिभाग्येन

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

कंसो हतः अद्यास्य कारणत्वमातुलवधदोषाभावाय पूर्वं हि नाः अक्रूर आगतः किमेति वाक्ये तं दोषं गृहीतवत्यः तस्य प्रतिप्रसवोऽत्र निरूप्यते यतः अहितः न ह्यस्य नान्येषामतस्तस्यापि भाग्येन स हतः किञ्च सुतरां यदूनां भक्तानामहितः अनेन प्रसङ्गात् भ्रातृवधः कृत इति निराकृतः केवलं हितमेव न करोतीति न किन्तु अयकृत् पापं सम्पादयति हितं न करोति पापं च कारयति येन तेषां परलोकनाशः स्यात् तस्मादेतादृशो हन्तव्य एव किञ्च आप्तैर्बन्धुभिः पुनर्भगवत्कृपया लब्धोऽर्थः सर्वोऽपि पुरुषार्थो यैः यत्र कालातिक्रमोऽपि स्वतः सिद्धः अनेन तेषामाहितं दूरीकृत्य हितं च सम्पाद्य अग्रे तदनुवृत्त्यर्थमधुना कुशली किमास्ते केवलमयमनुवादः यतः सोऽच्युतः न तस्य काचिदन्या सम्भावनास्ति ॥ ३९ ॥

एवं माहात्म्यज्ञानं सर्वोपकारकत्वं च भगवतो निरूपितं ततः पुरस्त्रीषु मात्सर्याभावज्ञापनार्थमाहुः । कच्चिद्गदाग्रज इति । गदाग्रजत्वेन वंशजननसामर्थ्यमुक्तम् अस्मिन् गते मथुरायां रोहिण्या गदो जातः ' अनेन भगवतः प्रद्युम्नरूपता निरूपिता अत एव स्त्रीणां सर्वकामनापूरक इति पुरयोषितां प्रीतिं कच्चित् करोतीति प्रश्नः सङ्कुच्छते सौम्येति संबोधनं तथा सति दोषदृष्ट्यभावाय । ननु ता धाष्ट्र्येन कथं प्रसन्ना भविष्यन्तीत्याशङ्क्याहुः । नः स्निग्धसव्रीडहासोदारेक्षणार्चित इति । लोकः पूजितपूजक इति प्रथमतोऽस्माभिः स्निग्धादिभावैरर्चितः अनेनास्माभिः पूजित एव ननु भगवानुपभुक्त इति कामाभावः सूचितः । अनेन रसाभासोऽपि निरूपितः कुत्सितेऽपि रसे कदाचित्पुरुषः प्रवर्तत इति भगवतोऽप्यस्मासु प्रवृत्तिः इत उत्तमाः पुरस्त्रियः तत्रापि न स्वतः प्रवृत्तिः किन्तु तदिच्छयेति ज्ञापयितुं तासां प्रीतिं करोतीति आदौ धाष्ट्र्यसिद्ध्यर्थं स्निग्धा भगवति दृष्टिः तत उदारा भगवत्संप्राप्तिः सूचिता भगवतोऽपि सौख्यदायिनी शब्दव्यवहितापि सर्वेषां सर्वपुरुषार्थदायिनी च मध्ये हासः स्वपुरुषार्थसूचकः . तस्यापि प्रथमप्रवृत्तौ पश्चात्कृतार्थतेति ज्ञापयितुं व्रीडाप्युक्ता एवंविधैरीक्षणैरर्चितः प्रथमतः स्नेहेन परिग्रहः ततः भगवति प्रसन्ने प्रथमप्रवृत्त्या व्रीडा ततो निर्भरानन्देन हासः ततः सर्वामेव कलां प्रयच्छतीति उदारा भवति ॥ ४० ॥

ननु विलम्बे भगवान् किमित्येवं करिष्यतीति आशङ्क्याभिप्रायमाहुः । कथमिति । स हि सर्वरतिविशेषान् जानाति नागरिको बन्धो नागरीष्वेव भवति अन्यथेदं ज्ञानं व्यर्थं स्यात् कदाचिदेतदवश्यप्रकटनीयं स्वकीयासु तु न भवत्येव किञ्च उत्तमस्त्रीणां स प्रियः प्रीतिविषयः अन्यथोत्तमत्वमेव न स्यादतस्तासां जन्मसाफल्याय ज्ञानसाफल्याय तस्य ज्ञानसाफल्याय च कथं तद्रसाभिनिविष्टो न भवेदित्याहुः । नानुबध्येतेति । अनुबन्धो नाम निरन्तरं वर्द्धमाना प्रीतिः यथा रसमात्रेण न प्रीतिर्निष्पुत्रे नाप्यल्पवृद्धे नापि जातमात्राङ्कुरे यथा सर्वगुणसम्पन्ने पुत्रे भवति अयमनुबन्धः अतः कथं निरन्तरं वर्द्धमानया प्रीत्या नानुबध्येत । ननु तथापि पोषकाभावात् मूर्खे पुत्र इव नानुबन्धः स्यात्तत्राह । तद्वाक्यैरिति । तासां वाक्यानि विभ्रमाश्च मनोऽनुरञ्जनं चकारार्थः एवं कायवाङ्मनसामुत्तमधर्मैः अनुभावितः अनुभावितः अनुभवपर्यन्तं नीतः भावकद्रव्यैरिव वा भावितः अनुभावयुक्तो वा कारितः अभिनिविष्टो हि रसः स्वानुभावं जनयति वाक्यादीनि वोद्दीपकानि अतो भगवान् प्रकारद्वयेनापि विभक्तवीर्यः आविर्भूतः सम्यग्भावित इति नागरिकाणां दोषाभावपूर्विका सर्वगुणसिद्धिर्निरूपिता॥ ४१ ॥

भगवानिदानीमुपदेशेन गुरुर्जातः अस्माभिस्तु पूर्ववासनया पूर्वावस्थोऽवश्यं स्मर्तव्यः तथा सति भगवता चेत् स्वभावस्त्यज्यते तदा अस्माकमपराधो भवतीति भगवतः अस्या अवस्थायाः स्मरणं पृच्छन्ति । अपि स्मरतीति । असम्भावनया प्रश्नः । ननु स्मरणाभावे कथमुपदेशार्थं प्रेषणमिति चेत्तत्राहुः । पुरस्त्रीणां गोष्ठीमध्य इति । ननु शास्त्रार्थज्ञानभावनादशायां नन्वेवमुपदेष्टा स्मरिष्यतीति का सम्भावना तत्राहुः । गोविन्द इति । स ह्यस्माकामिन्द्रः इन्द्रत्वायैव चास्मदुपयोगं कृतवान् किञ्च अनुभूतत्वात्तादृशपदार्थानुभवे सदृशादयः संस्कारबोधका इति कदाचित्स्मरणं भवेत्तदाहुः । प्रस्तुते कस्मिंश्चिदिति । तदा हि भगवान् स्वाभिलषितावस्थः सत्यसंकल्पश्च तत्स्तामप्यवस्थां सम्पादयेत् किञ्च व्यावर्त्तकत्वे स्मरणमावश्यकमित्याहुः । ग्राम्या इति । कथमेवमन्यथा वन्ध्यं करोति गोपिकेयेति स्वैरकथायाः स्वेच्छाकथायाः अन्तरे मध्ये । नन्वेतदहं कथं जाने इति चेत्तत्राहुः । साधो ! इति । सर्वोपकारी च भगवान् अतो गुह्यमपि वक्तव्यमिति॥ ४२ ॥

———.

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

दिष्ट्या भद्रमित्यर्थः । अहितः शत्रुः ॥ ३९ ॥

अन्याः सेर्ष्यमाहुः । कच्चिदिति । गदाग्रज इति । गदो देवरक्षितायाः प्रथमः पुत्रः देवकीपुत्रमात्मानं मत्वा सम्प्रति तस्याग्रजोऽभूदिति गोकुलसम्बन्धस्तस्य शिथिलीभूत इति द्योतयामासुः । नोऽस्माकं स्निग्धं च तत् सव्रीडहासेनोदारं च यदीक्षणं तेनास्माभिरर्चितः स सम्प्रति पुरयोषितां प्रीतिमुत्पादयति सहासावलोकादिभिस्ता अर्चयति किं शिव शिव अस्मदर्चनीयः संस्तासामर्चकोऽभूदित्यस्माकमेव दौर्भाग्यमिति भावः ॥ ४० ॥

अयि मुग्धाः ! किमिदमपि जिज्ञास्यं अत्र सन्देह एव नास्तीत्यन्याः सोल्लुण्ठं सान्तःकोपमाहुः । कथमिति । रतिविशेषज्ञः स साम्प्रतं पुरयोषितां योऽभूत् कथं नानुबध्येत नावक्रो भवेत् । तासां वाक्यैस्तादृशैर्विभ्रमैश्च अनुभाजितः निरन्तरं ता भजन्नसौ तैर्भाजितः भजनं कारित इत्यर्थः । तेन वयं ग्रामयोषितः रतिविशेषज्ञ मतामत्वाय तस्मै न किं लालसादि । तादृशीवाक्यमनुकूलां विभ्रमांश्च न जानीम इत्यतो वयं तेन ताः प्राप्य त्यक्ता एवेति निश्चितमुच्चकैरिति पृच्छ्यते इति भावः ॥ ४१ ॥

अपीति । सख्यः ! सत्यमेव स्वकुमतैस्त्यागेन वयं त्यक्ता एव किञ्च लोके हि अतिनिकृष्टा अपि सम्भुक्तत्यक्ता अपि केन चिद्गुणांशेन दोषांशेन वा स्मृत्यारूढाः कदाचिद्धननीति पृच्छ्यते इत्याहुः । ग्राम्या अविदग्धाः स्वैरकथान्तरे गानवंशीप्रहेलीकविताविरचनाकथामध्ये भोः पुरस्त्रियः यूयं यथा गानादिकं जानीध्वे एवमस्मद्गोष्ठे नान्योऽपि प्रायः किञ्चन्

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किञ्चिज्जानन्ति। यद्वा। एवं नैव ता ग्राम्यत्वाज्जानन्तीति किमस्मानुल्लिखतीत्यर्थः॥ ४२॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

यदूचुस्तदाह। दिष्ट्येति। अहितः शत्रुः प्रेषणेन विरहकारणत्वादस्माकमपि यदूनामघकृत् दुःखदः यद्वा यदूनामाहितः ब्राह्मणादिदुःखकरत्वात्पापकृत् हतस्तत्रापि सानुगः अनुजसहितः तद्दिष्ट्या परमानन्दकरं यच्च लब्धसर्वार्थैराप्तैर्वसुदेवादिभिः सहाच्युतोऽधुना कुशली आस्ते तदपि दिष्ट्या यद्यपि प्रियतमसन्देशैर्लब्धस्मृतयस्तथाप्यारूढसख्यभावा विरहव्याकुलचित्ता उक्तवाक्येन स्वदुःखमपि व्यञ्जयन्ति यदूनां शत्रुर्हतः अस्माकं तु सर्वेऽपि यदव एव सम्प्रति शत्रवो जीवन्ति च लब्धसर्वार्थाः सम्पन्ना वयं तु नष्टसर्वार्थाः तेषामिदानीं संनिहितत्वादच्युतोऽस्माकं तु प्रच्युत इति तेषां भाग्यातिशयोऽस्माकं भाग्यानतिशय इति॥ ३९॥

हृदिस्थं स्वभावभूतं मात्सर्यं गूहितुमशक्ताः स्पष्टं समात्सर्यमाहुः। कथमिति। सः अनुभूतपूर्वः रतिविशेषान् जानातीति रतिविशेषज्ञः अत एव पुरयोषितां प्रियः प्रीतिविषयः स्वदत्तसुखविशेषाभिज्ञस्य प्रीतिविषयत्वनियमात् तद्वाक्यैर्व्यङ्ग्यार्थगर्भितैर्विभ्रमैः कटाक्षादिनेत्रादिविचेष्टितैश्चकारान्मनोवृत्तिभिश्च तथा च वाक्कायमानसव्यापारैरनुभावितः अनुभवपर्यन्तं नीतः अनुभवयुक्तो वा कारितः पूजित इति वा अनुभाजित इति क्वचित्पाठः कथं नानुबध्येत प्रेमशृङ्खलाबद्धः कथं न भवेत् अस्माकं तादृशनयनसामग्रीविधुरत्वादितो गतस्तद्देशात्क्वापि न गमिष्यतीति भावः। पुरेण सहितानां योषितां प्रिय इति वा तथाच पुरवासिनां तत्पत्यादीनामपि तदासक्तचित्तत्वान्नास्ति तादृशबन्धनप्रतिबन्धकं किञ्चिदिति भावः॥ ४०॥

अस्मासु करणीयां प्रीतिं तासु करोतीत्यनुसन्धाय सदुःखमाहुः। कच्चिदिति। स्निग्धं च तत्सव्रीडहासेनोदारमीक्षणं तेनार्चितः अस्माकं तादृशकटाक्षेणार्चितो रामानुजो यथा च प्रीतिं करोति स्म तथेदानीं गदाग्रजः पुरयोषितां तेनार्चितस्तासां तथा प्रीतिं करोति कच्चित् यद्वा अस्माकं तेनार्चितः प्रीतिं न कृतवान् अपि तु विहाय गतः पुरयोषितां तु प्रीतिं करोति कच्चित् यद्वा नस्तेनार्चितः प्रीतिं पुरयोषितां करोति कच्चित् सौम्यस्त्वमतस्त्वामेवं पृच्छाम इति संबोधनाशयः यद्वा अस्माकं तादृशकटाक्षेणार्चितोऽस्मास्वासक्तचित्तस्तासां प्रीतिं मनोऽनुरञ्जनमात्रं करोति कच्चित् यद्वा स्त्रियः कामितकामिन्यः लोकः पूजितपूजक इति न्यायादस्माकं तादृशेक्षणेनार्चितोऽनस्तासामपि तेनार्चितः॥ ४१॥

यद्यप्यधुना भगवान् ब्रह्मोपदेष्टृत्वाद्गुरुर्जातस्तथापि सखित्वभावनाभावितस्वान्तानामस्माकं तथात्वेनैव स्मृतिपथमारोहति न गुरुत्वेन नापि परमात्मत्वेनातो भगवानपि सखीत्वेनैवास्मान् स्मरति चेत्तर्हि नास्त्यस्माकमपराध इति मनसि निधाय पृच्छन्ति नोऽस्मान् स्मरति स्मरणसम्भावनया प्रश्नः। ननु स्मरणाभावे कथमुपदेशार्थं मां प्रेषितवानित्याशङ्क्य नोपदेशार्थं स्मरणं वयं पृच्छामः किन्तु पूर्वानुभूतवृत्तान्तसंबन्धित्वेनेत्याशयेनाहुः। पुरस्त्रीगोष्ठीमध्ये ननु तत्र भवतीनां स्मरणे का सम्भावनेति चेत्तत्राहुः। प्रस्तुते कश्चित् एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात् कस्मिंश्चिदस्मत्सदृशप्रसङ्गे प्रस्तुते सति। ननु युष्मत्संबन्धिस्मरणे कः प्रसङ्ग इति चेत्तत्राह। स्वैरकथान्तरे अहो व्रज इवात्र स्वैरतया प्रवृत्तिं कर्तुं न शक्नोऽस्मीत्ययं कथान्तराले किञ्च व्यायत्येते वा न तु स्मरणमात्रइयकामित्याशयेनाहुः। ग्राम्या इति। तस्मिन्स्मरणकर्मत्वयोग्यतामुपपाद्य तस्मिंस्तत्कर्तृत्वयोग्यतामाहुः। गोविन्द इति। अन्मद्रक्षणेन लब्धगोविन्दपदो भगवान् कृतान्यस्माभिः सार्द्धविचेष्टितानि स्मर्तुं योग्य इति साध्नोति परकार्यमिति साधुस्त्वमस्मत्सुखावहमेतदुत्तरं निर्व्याजेन देहीति सम्बोधनाशयः॥ ४२॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अघकृत् दुःखकृत् आप्तैः शिष्टैर्यदुभिः सह॥ ३९॥

अन्या आहुः। हे सौम्य! नोऽस्माकं करणीयां प्रीतिं पुरयोषितां कच्चित् किं करोति स्निग्धञ्च तत् सव्रीडहासेनोदारमीक्षणं तेनार्चितस्ताभिः सत्कृतः॥ ४०॥

अन्याः आहुः। कथमिति। विभ्रमैर्विलासैश्चानुभाजितः पूजितः॥ ४१॥

अन्या आहुः। अपीति। हे साधो! पुरस्त्रीणां गोष्ठीमध्ये स्वैरकथान्तरे यादृच्छिककथान्तरे प्रस्तुते प्रवृत्ते सति ग्राम्याः अविदग्धाः नः अस्मान् स्मरति किम्॥ ४२॥

---

### भाषा टीका।

गोपी बोलीं सब यादवों को क्लेश देनेवाले कंस शत्रु को मारा सो अच्छा किया है और सर्वार्थ सिद्धि को प्राप्त होने वाले अति प्रिय यादव बांधवों के सहित अच्युत भगवान् इस वखत कुशली हैं सो अच्छा है॥ ३९॥

हे सौम्य! गदाग्रज भगवान् मथुरा पुर की स्त्रियों के मनोहर हास लज्जा उदार कटाक्षों से पूजित होकर कभी हमारे पर भी प्रेम करते हैं कि नहीं॥ ४०॥

जो कृष्ण विशेष रतिके जानने वाले हैं उत्तम स्त्रियों के बड प्रिय हैं तो उन स्त्रियों के कटाक्षादिक से पूजित होने से उनके वचनों से अवश्य बंध जांयगे॥ ४१॥

हे साधो! उद्धवजी किसी समय मथुरा पुरकी स्त्रियों की समाज में किसी प्रकार विनोद की कथाओं में प्रसंग चलने पर श्रीगोविन्द ग्रामवाली हम स्त्रियों को कभी स्मरण करते हैं कि नहीं॥ ४२॥

---

ताः किं निशाः स्मरति यासु तदा प्रियाभिर्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ॥
रेमे क्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथः कदाचित् । ४३ ।
अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥
संजीवयन्नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः । ४४ ।

श्रीधरस्वामिकृतभावार्थदीपिका।

अन्या ऊचुः। ताः किमिति। कुमुदैः कुन्दैः शशाङ्केन च रम्ये वृन्दावने क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यामस्माभिः प्रियाभिरीडिता मनोज्ञाः कथा यस्य स तदा यासु निशासु रेमे ताः कदाचित्किन्नु स्मरति वा न वेति ॥ ४३ ॥

स्वनिमित्तेन शोकेन तप्ता नोऽस्मान् गात्रैः करस्पर्शादिभिः सञ्जीवयन् किन्नु ईष्यतीति ॥ ४४ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो नागरीगणप्राप्त्याऽस्मान् वा न स्मरतु तद्रासक्रीडारात्रीरपि क्वचित् स्मरेदिति पृच्छन्ति। ता इति। तासां स्मरणयोग्यतामाहुः। यास्वित्यादिना। तत्र बहुत्वेन तासामसङ्ख्यत्वमुक्तं क्वणन्ति तस्यास्माकं च नूपुराणि यस्यां रासलक्षणायां गोष्ठ्यां क्रीडायां किं वा तादृशरासे पश्चाद्या गोष्ठी गोपीनां सभा तस्यामीडितमनोज्ञकथः। अस्माभिरिति। सत्सहायाः वृन्दावन इति सत्स्थानं कुमुदेति सूचितया शरदा सत्कालस्तथा सत्पुष्पादिरत्युपकरणं च क्वणदिति सल्लीला तत्र च क्वणच्चरणनूपुरेति सन्नृत्यगतिः ईडितेति तत्र सदुत्साहहेतुश्च अन्यैर्व्याख्यातं यद्वा तदा तदानीं याः प्रियाः प्रियतया स्वीकृतास्ताभिरस्माभिः सह रेमे ईडिता तदानीं व्योमन्यागतैर्देवादिभिः स्तुततया गीता मनोज्ञा जगतां तस्यैव वा चित्ताकर्षिका कथा विविधवैदग्ध्यादिवार्त्ता यस्य स इयमप्येका स्मरणयोग्यता। यद्वा। तत्र तैः पुरस्त्र्यादिभिरीडितमनोज्ञकथः सन् स्मरति किमिति मनोज्ञकथाप्रसङ्गश्चेत्तत्स्मरणयोग्यतैवाभिप्रेता ॥ ४३ ॥

ननु स्मरत्येवेति चेत्तर्हि तस्यात्रागमनं नैव प्रतीम इत्याशयेन किं वा रासस्मरणजनितौत्कण्ठ्यभरेण पृच्छन्ति। अपीति। दाशार्हः यदुकुलोद्भव इति तत्पालनार्थं व्यग्रोऽपीति भावः। यद्वा दाशो दानं व्रजजनेषु निजदर्शनदानं तदर्हतीति दाशार्हस्तेनात्रागमनयोग्यत्वमभिप्रेतं शुचा विरहशोकेन तप्ता इति तद्दर्शनैक प्रतीकारत्वं स्वकृतयेति। अन्यथा कृतघ्नत्वस्य स्त्रीवधस्य च प्रसङ्गः स्यादिति गात्रैः सम्यग् जीवयन्निति तत्स्पर्शानाममृतमयत्वं तत्र तु वर्तमानया समागमकाल एव करस्पर्शादिकं च। यद्वा। संजीवयितुं यथेति दृष्टान्तेन तात्कालिकत्वं तदेकसाम्यत्वं च दृढीकृतम ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणीः।

अहो नागरीगणप्राप्त्यास्मान् वा न स्मरतु तद्रासक्रीडारात्रीरपि क्वचित् स्मरतीति पृच्छन्ति। ता इति अयमर्थः। यः खल्वस्माभिर्दुर्भिक्षभिक्षुकीभिरिव साम्प्रतमीडिता मनोज्ञा तस्य युष्माकं च मनोरमा कथा दिष्ट्या हितो हतः कंस इत्यादिरूपा यस्य स तत्रेश्वरसाक्षान्नामनिर्देशेन लघूकर्तुं शङ्कनीयस्तां साम्प्रतिकीभ्यः पराभ्यश्च विलक्षणाः तत्र च बहुत्वाद्विस्मर्तुमपारणीया निशाः किं कदाचिदपि स्मरति। यासु मुकुदकुन्दशशाङ्करम्यत्वाद्विलक्षण एव वृन्दावने तदानीं या काश्चन तस्य प्रिया आसन्। एषा भवतास्मासु दृश्यमाना दुःखावस्था तासु न सम्भवतीत्यस्मादृशीभ्यः सर्वाभ्योऽप्यन्याभिरेव ताभिः सह तस्य तासां च क्वणच्चरणनूपुरतयातिमनोहरायां रासगोष्ठ्यां रेमे स्वयं चिक्रीडेति ॥ ४३ ॥

ननु स्मरत्येवेति चेत्तर्हि तस्यात्रागमनं नैव प्रतीम इत्याशयेन रासस्मरणजनितौत्कण्ठ्यभरेण तदागमनसन्देशविस्मृत्यैव वा पृच्छन्ति। अपीति। दाशार्हः दाशार्हाणां राजा तत् पालनार्थं व्यग्रोऽपीति भावः। स्वकृततया शुचेति तत्स्पर्शैकप्रतीकारत्वम् अन्यथा अस्निग्धहृदया विशल्यं स्त्रीवधादर्भाग्यत्वञ्च ज्ञापितम। गात्रैः सम्यग् जीवयन्निति तत्स्पर्शानाममृतमयत्वम्। तत्र तु वर्त्तमानप्रयोगेण समागमकाल एव करस्पर्शादिकञ्चेति निळम्बासहत्वञ्च। यथेति दृष्टान्तेन तात्कालिग्वं तदेकसाम्यत्वञ्च दृढीकृतम्। गर्जनादिनेव सन्देशादिना च तापापनोदनं निराकृतम् ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पुनरन्या ऊचुः। ताः किमिति। कुमुदैः कुन्दैः शशाङ्केन च रम्ये वृन्दावने क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यामस्माभिः प्रियाभिरीडिता मनोज्ञा कथा यस्य तथा यासु निशासु रेमे ताः कदाचित्किं नु स्मरति ॥ ४३ ॥

अप्येष्यतीति आगमिष्यति किं स्वनिमित्तेन शोकेन सन्तप्ता नोऽस्मान् दाशार्हः कृष्णः दाशार्हेति पाठे हे उद्धव! स्वकरस्पर्शादिभिः संजीवयिष्यति किं यथेन्द्रः यथा वनमिन्द्रोऽम्बुदैः सञ्जीवयति तद्वत् ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यासु निशासु ॥ ४३ ॥
गात्रैरवयवैः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशधर्मविशिष्टाश्चेत् वयं स्मृताः तदा भगवत्परितोषणे गुरुदक्षिणायामपि न किञ्चिद्देयं स्यात् ताः पूर्वं वरे दत्ता मंयमा रंस्यथ क्षपा इति स्वदत्तान् हि स्मरति सर्वोऽपि किं कालस-

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

रयोनेत्याशङ्क्य तद्गतं विशेषमाहुः । यास्विति । यासु तदा रेमे
ननु साम्प्रतं कालदेशयोर्विद्यमानत्वेऽपि रमणाभावात् पुनः
पुनः स्मरणं तदा वा वयं प्रियाः अधुना तु शिष्याः वृन्दा-
वन इति स्वच्छन्दलीलास्थानमुक्तं नैव लीला नगरेषु सम्भवति
कुमुदैः कुन्दैः शशाङ्केन च रम्ये क्वचिद्दोषोऽप्यन्यत्र गुणः यद्यपि
शशाङ्कस्तथापि कामे उद्बोधकः कुमुदमपि रात्रिविकासि चन्द्रः
ससामग्रीकः तत्र रतिवर्द्धनोऽस्तीति • ज्ञापयितुमेवं प्रक्रिया
निरूपिता कुन्दाः सर्वकालीनपुष्पाणि रात्रिविशेषपुष्पाणि साधा-
रणानि तेषां विकासहेतुश्च यत्र रतिवर्द्धनः तत्रापि रसोत्पत्त्यर्थं
क्वणच्चरणनूपुराणां स्त्रीणां यो रासः तत्सभायामस्माभिः सर्वा-
भिरेव ईडिता मनोज्ञाः कथा यस्य कदाचिदिति तस्या अव-
स्थाया दुर्ल्लभत्वं यदीदानीमपि भवेत् मनोज्ञकथया ईडितो
भवेत् ततो लौकिकमपि कुर्यात् अस्माभिरिति प्रमाणमुक्तं
क्वणन्ति चरणेषु नूपुराणीति भगवदवलम्बनादिति भावः सूचितः ।
योऽस्मान् नर्त्तयेत् ततो नृत्यगीतादिना समाराधितो भगवान् तद्वे-
त्स्मरिष्यति तदा साधनरहिता अपि कृतार्था भविष्यामः दोष-
निवृत्त्यावेव तात्पर्यमिति भगवतोऽपि मनोनिग्रहो नाभिप्रेतः
उपदेशेन वयं तथा भविष्यामः ॥ ४३ ॥

एवं तथापि पूर्ववत् पुनः किं कृपां करिष्यतीत्यभिप्रायेणाहुः ।
अप्येष्यतीति । अन्यथा नोचेद्वयम् इति वाक्यं श्रुत्वा
किमिति भोगमङ्गीकृतवान् तस्मादुत्कटं कामं दूरीकृत्य कोमले
जाते पश्चादुपदेशफलं भविष्यतीति पुनः पूर्ववदाकाङ्क्षा तत्र गमने
तु सुखं न भविष्यतीति ज्ञातं स्वच्छन्दभावात् नन्वीश्वरः कथमाया-
स्यतीति चेत्तत्राहुः । दाशार्ह इति । दाशानामर्हः योग्यः यो हि
दयालुः सुतरां परदुःखाभिनिविष्टः एवं तापहारकः भगवद्धर्मा-
न्निरूप्य स्वतापमाहुः । तप्ता इति । आध्यात्मिकादितापव्यावृत्त्यर्थं ज्ञानो-
पदेश एव क्रियत इति चेत्तत्राहुः । स्वकृतया शुचा इति । अयं
शोको भगवतैव सम्पादितः स्वनिर्गमात् शुचा च द्रवमाणा
जाता इति साम्प्रतं शुद्रा एव कथमुपदेशयोग्या इति भावः ।
तस्मा.च्छोके गत एवाधिकारः किञ्च जीवने हि जाते पश्चात्सर्व-
मेतत् सकाममरणे तु न मुक्तिः अत इदानीं जीवनं यथा
भवति तथा गात्रैः मुखारविन्दादिभिः नोऽस्मान् सञ्जीवयन् किमा-
यास्यति तुशब्दो ज्ञानपक्षं वारयति । ननु विशेषतो भगवत
एवं करणे को हेतुरिति चेत्तत्राह । यथेन्द्र इति । साधारणमेव
वनं ग्राव्हवनं वा न हि पर्जन्यादन्यः दावानलं शमयति । गृह-
दाहादयस्तु जलान्तरेणापि शाम्यन्ति ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो भो गोप्यः ! वक्रोक्त्या अलं तासां तस्य च निन्दया
स्पष्टमेव किं न ब्रूध्वे अन्यच्छेदश्चाधिकमस्मद्दौर्भाग्यवशात् कृष्णेन
विस्मर्यतां नाम स्ववासः कथं विस्मृत इत्यन्याः सरोदनमा-
हुस्ता इति । कुमुदकुन्दशशाङ्कैर्वृन्दावनीयपुलिनस्य सर्वशुक्ली-
कृतत्वाद्रम्ये क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यां
प्रियाभिरस्माभिः सह रेमे । ईडिता विमानचारिणीभिः स्वर्गाङ्ग-
नाभिरपि स्तुताः कथा यस्य स इति तेन पुराङ्गनाः वराक्यः
का वा कथा जानन्ति मथुरायां क्वचा पुलिनमेतादृशं तद-
भिमतानि नृत्यगीतवादित्राणि चूडामुकुटस्वासकवनमालावीटि-
कादिरचना वा तत्र काः कर्त्तुं जानन्तीति मथुरायां स्थित्वा
कृष्णस्य सर्वमेव सुखमस्तीभूतमिति तदीयानन्दाभावमेव स्मृत्वा
वयं दुःखेन म्रियामाहे वयमिव तत्र काश्चित्तदभिमता विला-
सिन्यः स्युश्चेत्ताभिः सह रासलास्य वेणुवाद्यादिविनोदश्च
शृणुयाम चेत्तदात्र तद्विरहेऽपि वयं सुखेनैव वर्त्तेमहीति
ध्वनितम् ॥ ४३ ॥

भो सख्यः ! अत एव तस्मात् पुरादुद्विग्नः कृष्णः शीघ्रम-
थायात्विति तदागमनमाशासनम् । अन्यास्तत्समभावा आहुः ।
अपीति । स्वनिमित्तेन शोकेन तप्ता अस्मान् स्वगात्रैर्दर्शितैः
सञ्जीवयन् किं नु इहैष्यतीति ॥ ४४ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अहो रासक्रीडाधिकरणभूता निशास्त्ववश्यं तेन स्मर्तव्या-
स्तत्सम्बन्धेनास्माकमपि स्मरणमावश्यकमित्याशयेन तत्स्मरणं
पृच्छन्ति । ता इति । ताः मयेमा रंस्यथ क्षपा इति पूर्वं वरे दत्ताः
स्वदत्तं वस्तु स्मर्य्यते सर्वैरिति भावः । किञ्च दुःखाधिकरणभूतः
सुखाधिकरणभूतो वा कालोऽवश्यं स्मरणपथमवरोहतीत्याहुः । यासु
तदास्मद्यायकतादृशायां रेमे तत्रापि प्रियाभिरस्माभिः यदा
तस्य स्मरणमपेक्षितं स्थितं तदा वयं प्रियाः कारिताः इदानीमि-
तरप्रियालाभे वयं शिष्या इति व्यक्तं तत्रापि वृन्दावने स्वच्छन्द-
लीलास्थाने नानुभूतास्य सा लीळा नगरेषु नागरीभिः सम्भव-
तीति भावः । कुमुदैः कुन्दैः शशाङ्केन च रम्ये अनेनोद्दीपनसा-
मग्री सम्प्रयुक्ता तत्रापि क्वणन्ति चरणनूपुराणि यस्यां रासगोष्ठ्यां
तस्यां प्रियाभिरस्माभिरीडिता मनोज्ञा अतिरम्याः कथा यस्य
तथा चैवम्विधाखम्वनोद्दीपनजन्यस्य वैकुण्ठलोकमप्यतिक्रम्य
सुखस्याधिकरणभूता निशाः कदाचित्कस्मिंश्चित्काले स्मरति
किं यदि स्मरति तर्हि सर्वसाधनसंपन्ना गुरुदक्षिणा वयं प्रिय-
त्वेनैव नं स्मरिष्यामो ननु गुरुत्वेन नापि परमात्मत्वेनेति
भावः ॥ ४३ ॥

स्मरति नवेतीति तु मुख्यमस्मदभिलषितं यथा वदूयूहीं-
त्याशयेनाहुः । अप्येष्यतीति । ननु युष्माभिरेव तत्र कुतो न गम्यत
इत्याशङ्कानिवृत्त्यर्थमिहास्मिन् वृन्दावने इत्युक्तं तत्र स्वच्छन्दाद्य-
भावाच्चादृशरसोत्पत्तिर्न सम्भाव्यत इति भावः । ननु स्वतन्त्रोऽसौ
कथमायास्यतीतिचेत्तत्राहुः । दाशार्ह इति । यथा तेषां दुःखनिरा-
साय तत्र गतस्तथास्मत्तापनिवृत्त्यर्थमत्राप्यायास्यतीति भावः । जीव-
नदानात्परं दानं नास्तीति विचार्य्यायास्यतीत्यस्त्यस्माकं सम्भा-
वनेत्याशयेनाहुः । तप्ता नः स्वगात्रैर्मुखारविन्दादिभिः सञ्जीवयन्
जीवनापगमे तदुपदिष्टार्थाभ्यासः कथं भविष्यति सकामतया
मृतानामस्माकं मुक्तिरपि दुर्लभा तस्मात्स्वोपदेशसाफल्यायापि
तदीयमागमनमुचितमिति भावः । तुशब्देन यथोक्तज्ञानोपदेशैर्नोऽ
स्माकं जीवनलाभ इति द्योतयन्ति । ननु सकलतापोच्छेदकात्मो-
पदेशादपि युष्माकं तापनिवृत्तिः कथं न भवतीतिचेत्तत्राहुः । स्वकृ-
तया शुचेति । नन्दनन्दनविरहजनितेन शोकेन तप्तास्तथा च
स्वविरहजनितशोकस्य तदुपगम एव निवर्तको नान्यत आत्मज्ञा-

कस्मात्कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥
नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः । ४५ ।
किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः ।
श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः ॥ ४६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तस्य सांसारिकदुःखनिवर्तकत्वादिति भावः । यद्वाऽकशोकेन तदात्मत्वात्तेन द्रवमाणानां शूद्रत्वाद्वा तापनिवृत्तिं विनात्मोपदेशाधिकाराभावात्त्वयमेवात्रागत्य तापं निवर्तयतु आत्मज्ञानं चोपदिशतु भगवानिति भावः । तत्रानुरूपं दृष्टान्तमाहुः । यथेति । गृहादिदाहस्तु जलान्तरैरपि शाम्यति वनदाहस्त्विन्द्रनियुक्तपर्यांदैरेवोपशाम्यति तत्तद्देवायमस्माकं तापः प्रेष्ठप्रदर्शितसमुखारविन्दादिनैवोपशान्तिं गमिष्यति नान्यथेत्यर्थः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्याः आहुः । ता इति । कुमुदैः कुन्दैः शशाङ्केन च रम्ये वृन्दावने क्वणन्ति चरणनूपुराणि यस्यां तस्यां रासगोष्ठ्यां यासु निशासु तदा अस्माभिः सह रेमे ताः निशाः ईडितः मनोज्ञा कथा यस्य सः कच्चित्स्मरति किम् ॥ ४३ ॥

स्वकृतया स्वेन दूरं गतेन कृता उत्पादिता तया शुचा शोकेन तप्ता नोऽस्मान् ॥ ४४ ॥

भाषा टीका ।

उन रातों को वे कभी स्मरण करते हैं कि नहीं जिन रात्रियों में कुमुदिनी के फूल तथा चन्द्रमा से सुशोभित वृन्दावन में शब्दायमान नूपुर वाले चरणों के शब्दों से वे हम प्यारियों के साथ रमण क्रीडा करते थे और हम उनके मनोहर कथाओं की स्तुति करके किसी समय पर गाती रहीं ॥ ४३ ॥

वे दाशार्ह वंश वाले कृष्ण कभी यहां आवेंगे क्या अपने शोच से तपायमान हमको जैसे मेघवन को शीतल करता है तैसे अपने अंगों से हमारे प्राणों को कभी बचावेंगे क्या ॥ ४५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्या ऊचुः । कस्मादिति । अनन्यगतित्वेन पूर्वमत्रावसत्सम्प्रति महदैश्वर्यं प्राप्तः कस्मादिहागमिष्यतीति ॥ ४५ ॥

अन्यास्तु परमार्थमूचुः । किमस्माभिरिति । वनचरीभिरन्याभिर्वा राजकन्याभिर्महात्मनो धीरस्य किञ्च श्रीपतेः तत्रापि आप्तकामस्य पवाऽऽप्तकामस्यात एव कृतात्मनः पूर्णस्य किं कोऽप्यर्थः क्रियेत न कश्चिदिति ॥ ४६ ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ननु एष्यत्येवेति चेत्तन्न घटतेत्याहुः । कस्मादिति । कृष्णः परमानन्दपरिपूर्ण इति भावः । तदेव दर्शयन्ति प्राप्तेत्यादिना । ननु तस्य राज्यापेक्षा नास्तीति चेत्तथाप्यागमनं न सम्भाव्यत इत्याहुः । हताहित इति । शत्रुवधोपायार्थमेवात्रासीत् अधुना तत् सिद्धौ कुतोऽत्रैष्यतीति भावः । ननु तथापि भवतीनां विरहार्त्तं एष्यत्येव तत्राहुः । नरेति । नरेन्द्राणां महाराजानां कन्या इति महादैन्येनात्मनः सकाशात्तासामुत्कर्षः सूचितः भाविन्यपि प्रीत इत्यतीतत्वं तस्यातिसान्निध्यान्निर्द्धाराच्च । ननु तथा सत्यपि पितृमात्रादीनामत्यन्तानां परमसुहृदां प्रीत्यर्थमेष्यत्येव तत्राहुः । सर्वेति । तत्रैव सर्वे पितृमात्राद्यां निजसुहृदो लब्धाः परेष्वधुना कापेक्षेत्यर्थः । यद्वा तत्रत्यैः सुहृद्भिरत्रागच्छन्नसौ निवारयितव्य इति भावः ॥ ४५ ॥

ननु तथापि भवतीषु परमापेक्षयात्रैष्यत्येव तत्राहुः । किमिति । अर्थः प्रयोजनम् अन्यैस्त्वर्थ्यांश्यातं यद्वा किं क्रियेत अपि तु नैवेत्यर्थः । तत्र हेतुः महात्मनो जगदादृतस्य जितेन्द्रियस्येति वा ननु तथापि प्रेमविलासपरिपाकरूपतया भवतीनां सम्भोगरसिकशेखरस्य तस्येच्छास्त्येव तत्राहुः । श्रीपतेरिति । तदर्थं लक्ष्मीर्विंशात्येव किमन्याभिरित्यर्थः । ननु लक्ष्मीतोऽपि भवतीष्वधिकापेक्षा तत्राहुः । आप्तकामस्य । अस्माभिः सह कृतरतेरित्यर्थः । ननु तथापि तत्र तस्य तृप्तीर्नास्तीति चेन्नेत्याहुः । कृतात्मन इति । अन्यत् समानम् एषातिदैन्योक्तिः सोल्लुण्ठोक्तिरेव वा प्रियजनपरवशस्य तस्य कदापि तादृशत्वाननुभवात् ॥ ४६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नन्वेष्यत्येवेति चेन्न घटतेत्याहुः । कस्मादिति । तदेव दर्शयन्ति । प्राप्तेत्यादिना । ननु तथापि भवतीनां विरहार्त्तं एष्यत्येव तत्रान्यथा सम्भावयन्ति । नरेति । प्रीत इति । अस्मद्विप्रयोगजातस्तस्य तेनैवाभीष्टक्षत्रियजातित्वसिद्धेः कान्तान्तिदापलाभाच्च । ननु तथा सत्यपि मातापुत्रादीनामत्यन्तानां परमसुहृदां प्रीत्यर्थमेष्यत्येव तत्राहुः । सर्वेति । सर्वे ते लब्धाः परेष्वधुना कापेक्षेत्यर्थः । यद्वा । तत्रत्यैः सुहृद्भिरत्रागच्छन्नसौ निवारयितव्य इति भावः ॥ ४५ ॥

नरेन्द्रकन्योद्वाहस्य हेतुत्वमाक्षिप्य तत्रापि कारुण्यं व्यञ्जयन्त्य इव तत्र नैरपेक्ष्यमेव हेतुं स्पष्टमाहुः । किमिति । तत्र हेतुर्महात्मनः महान् तत्रपर्यन्ते वर्त्तमान आत्मा चित्तं यस्य यतः श्रीपतेः श्रियः सर्वैराश्रयितुमभीष्टाया अपि तत्र तत्र तद-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नुगामिन्या लक्ष्म्याः पत्युः। अत एवाप्तकामस्य यथेष्टविषयपूर्णस्य तत एव कृतात्मनः लब्धधृतेरिति ततः काचिदपि कन्यका तस्य विवाहाय नाहर्त्तव्येत्युद्धवं प्रति च निगूढः प्रयत्नः सूचितः ॥ ४६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्या ऊचुः। कस्मादिति। अनन्यगतित्वेन पूर्वमत्रोषितवान् अधुना तु प्राप्तं राज्यं येन हता अहिताश्च शत्रवो येन तथाभूतः नरेन्द्रकन्या उद्वाह्य प्रीतः सुहृद्भिश्च वृतः अतः कस्मादेतानिहागमिष्यति ॥ ४५ ॥

अन्यास्तु परमार्थमूचुः। किमस्माभिरिति। वनवासिनीभिरन्याभिः पुरयोषिद्भिर्वा महात्मनः श्रीकृष्णस्य किं को वार्थः प्रयोजनमित्यर्थः क्रियेत तत्र हेतुं वदन्त्यो विशिंषन्ति महात्मनः श्रियः पतेः तदप्यास्तां स्वत एवावाप्तसमस्तकामस्य ॥ ४६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अदीर्घेण कालेनागमिष्यामीति यदुक्तं तत्स्तोभनमात्रम् आगमने निमित्ताभावादित्याहुः। कस्मादिति ॥ ४५ ॥

कृतात्मनः पूर्णरूपस्य अर्थो विषयः किं क्रियेत किं सुखं कुर्यात् ॥ ४६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तस्मात् क्लिष्टानां तापनाशश्चेदादौ भवेत् पश्चाज्ज्ञानं प्रवर्त्ततामिति समग्रमनोरथसम्भावनयैतदुक्त्वा युक्त्या निषेधमाहुः। कस्मादिति। कस्मात्कृष्ण इहायास्यतीत्यर्थः। वर्त्तमानप्रयोगेणैतत् ज्ञापयन्ति यद्यागच्छेत् इदानीमेवागच्छेत् छद्मापि कृत्वा गच्छेत् विलम्बे प्रयोजनाभावात् ननु साम्प्रतं नागर्यः स्त्रियो भक्ता इति तासां समाधानानन्तरमायास्यतीति चेत्तत्राहुः। प्राप्तराज्य इति। उत्तरोत्तरमागमने प्रतिबन्धा एव भविष्यन्तीति आदौ राज्यमेव ततो मारणीयाः शत्रवः ततो दिग्विजये नरेन्द्रकन्यानामुद्वाहः ततस्तासु प्रीतिः ततः सर्वसुहृद्वृतः पुत्रपौत्रादिभिः परिवृतः ततः सर्वानुरोधयुक्तः कथमायास्यतीति भावः ॥ ४५ ॥

यथा ते अनुरोधाः तथा यूयमपीति ततः समायास्यतीति चेत्तत्राहुः। अस्मत्तापो वा आगमने हेतुः भगवदपेक्षा वा आद्ये इदानीमेवागच्छेत् नत्विदानीं मत्कार्यमस्तीति चेत्तत्राहुः। अन्याभिर्वेति। स्वोपकारात् कार्यस्वरूपं तदन्योपकारात् तथा सति वयमेवावश्यकाः स्वार्थं नु किमस्माभिरन्याभिर्वा स्वस्य सर्वथा अप्रयोजकत्वमाहुः। वनौकोभिरिति। वनचर्या वयमनेन वानरतुल्यत्वात् सर्वथा वा उपकारः सूचितः अस्तु वा धर्मत्वं तथापि अनवता न कः उपपुरस्कर इत्याह। अन्याभिर्वेति। हेत्वनादरे सर्वत्र हेतुमाह महत इति न हि महतोऽन्य न हि महतो ऽन्यापेक्षा तत्राप्यात्मनः न हि सर्वांश एव एवं दयालुत्वाति महानुभावस्य वा इत्यलौकिक उपाय उक्तः लौकिकमाह। श्रीपतेरिति। सहि लक्ष्मीपतिः

### 

सर्वापेक्षा पूरिका हि सा सेवकानामपि किमुत स्वामिनः किञ्च आत्मकामस्येति आप्तः स्वत एव कामा येन अन्येषामपि कामानां फलदाता स्वयं कथं पूर्णकामो न भवेत् अतो ऽस्मदादिभिः कोऽवा अर्थः क्रियेत किञ्च कृतात्मन इति कृताः स्वार्थमात्मानो येन सर्वे हि क्रीडार्थमेव तेन जनिताः वशीकृत चित्ता इति एके ॥ ४६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत् श्रुत्वा अन्या वाम्यमयस्वभावाः भोः सख्यः! कृष्णस्य रासादिभिः किं सुखं तावत् मुग्धा यूयं किमपि न जानीध्वे तदभिमतसुखं मन्मुखात् शृणुतेति वक्रोक्त्याहुः। कस्मादिति। अत्र गोचारणक्लेशस्तत्र तु प्राप्तराज्योऽभूत्। अत्र गोपजातिभिस्तत्रापि परकीयाभिः किं सुखं अत्रगोपस्तत्र तु नरेन्द्र इत्यादि उद्वाह्येति क्वचित्। पुराणे मथुरास्थस्य कृष्णस्य रुक्मिण्युद्वाहः कल्पभेदेन ज्ञेयः। प्राप्य मथुरामित्यधिकृत्य रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुरिति गोपालतापन्याञ्च श्रूयते ॥ ४५ ॥

भोः सहचर्यः! प्रेमशून्ये कृष्णे ईर्ष्यासूयादिकं त्यज्यतामिति वदन्त्यस्तस्य सर्वत्रौदासीन्यमन्या आहुः। किमिति। ननु श्रीपतित्वात्तस्यां तस्य प्रेमास्ति चेन्न आप्तकामस्य कृतात्मनः पूर्णस्वरूपस्य तयापि किं कोऽर्थः क्रियते। युगपर्याप्तयोः कृतमित्यमरः। पर्याप्तिः परिपूर्णता नतश्च काचिदपि कन्यका तस्य विवाहार्थं नाहर्त्तव्येत्युद्धवं प्रति किमपि निगूढं तत्त्वं सूचितम् ॥ ४६ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तदागमनसम्भावनयैतदुक्त्वा पुनर्विचार्यानागमनहेतूननुसन्धाय तदागमनं न सम्भवतीत्याहुः। कस्मादिति। वर्तमानकाले अत्रागमनहेतुं न पश्यामः यतः प्राप्तराज्यः पूर्वं हि आपद्ग्रस्तत्वादिहागत्य स्थित इदानीं लब्धराज्य इह गोपालनादिनिकृष्टाधिकारस्थाने कस्मादायाति किञ्च हतः यद्भयात्पलाय्यात्रागतः स चाहितः हतः शत्रुः कंसो येन स तथा च तादृशशत्रुरपीदानीं तत्र नास्ति यद्भयादत्रायाति अत्रापि स नास्ति यद्धननार्थं वात्रायातीति भावः। ननु अत्र लब्धमुपकारं स्मृत्वा प्रत्युपकारार्थं सद्य एव यातीति शङ्कानिरासाय कृष्ण इत्युक्तं श्यामवर्णत्वात्सकपटस्तस्मात्रास्ति प्रत्युपकारेण प्राप्तिसम्भावनेत्याशयः नन्विदानीं नव्यानां प्रियाणां नगरस्त्रीणामनुरञ्जने लब्धे श्रीराज्यास्थित्युपकरणसम्पादनादौ च व्यापृतत्वान्नायाति पश्चादवकाशदशायामायास्यतीति चेत्तर्ह्येवं विधप्रतिबन्धकानामुत्तरोत्तरं बहूनां सम्भावितत्वात्कदापि तस्यावकाशो दुर्लभः उद्वाहनोद्योगस्ततः पुत्रोत्पादनोद्योगस्ततः पुत्रपौत्रादिसुहृद्वृतत्वं तत्रैव प्रीतत्वं तदनुरोधपरायणत्वं चेति सर्वदा निरवकाशः कस्मादायास्यतीति भावः ॥ ४५ ॥

ननु श्रीपतेस्तस्य किं राज्येन किम्वा नरेन्द्रकन्याभिरिति चेत्तर्हि सर्वापेक्षया निकृष्टाभिरस्माभिरपि किं यदर्थमायास्यतीत्याशयेनाहुः। किमिति। धर्मार्थकाममोक्षाख्य पुरुषार्थेषु तस्मा-

परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला ।
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया ॥ ४७ ॥
क उत्सहेत सं त्यक्तुमुत्तमश्लोकसंविदम् ।
अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥ ४८ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

धनेषु कामनावद्भिरेव सर्वैः समाश्रीयते न चासौ धर्माभिलाषुरित्याहुः।कृतात्मनः।कृतकृत्यस्य नाप्यर्थाभिलाषुरित्याहुः।श्रीपतेरिति। सर्वार्थमूलभूतायाः श्रियः पतिस्तस्य नापि कामाभिलाषुरित्याहुः आप्तकामस्य नापि मोक्षार्थीत्याहुर्महात्मनः परब्रह्मणो मोक्षस्वरूपस्य मुमुक्षुत्वायोगात् एवंभूतस्य तस्यास्माभिर्वनौकोभिर्वनचरीभिः पशुतुल्याभिरन्याभिः सर्वोत्कृष्टाभिर्नरेन्द्रकन्योर्वश्यादिभिर्वा कः अर्थः क्रियेत किं वा प्रयोजनसम्पादनं न किमपीत्यर्थः। इदं राज्यादेरप्युपलक्षणम्। यद्वा। महात्मनः परमात्मनः अत एव श्रीपतेरत एवाप्तकामस्यात एव कृतात्मनः पूर्णस्य ॥ ४६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्या आहुः। कस्मादिति ॥ ४५ ॥

तत्रज्ञा आहुः । किमिति । किं कः अर्थः क्रियेत न कोऽपि ॥ ४६ ॥

---

भाषा टीका ।

अब तो श्रीकृष्णजी ने शत्रु को मार लिया उनका उसका राज्य मिल गया बडे राजाओं की कन्या का उनने विवाह कर लिया बंधुओं से मिलकर प्रसन्न हैं अब वे इहां क्यों आवेंगे ॥ ४५ ॥

वे तो लक्ष्मी पति हैं सर्व काम परिपूर्ण हैं उन महात्मा का हम जंगल वाली स्त्रियों से अथवा और कोइ स्त्रियों से क्या कार्य हो सकेगा अर्थात् कुछभी नहीं होगा ॥ ४६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यतोऽघटमाना या कृष्णस्य सङ्गतिः सैवास्मान् व्याकुलयत्यतो नैराश्यमेव परमं सुखं तच्चातिदुष्करमित्याहुः।परं सौख्यमिति। स्वैरिणी कामचारिणी ॥ ४७ ॥

सम्विदमेकान्तवार्ताम् ॥ ४८ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

परं परमं हि एव नैराश्यमेव स्वैरिणीत्वेन तथा वक्तुमनर्हापीत्यपिशब्दार्थः न च मन्तव्यं तद्वयं न विद्म इत्याहुः । तत् तस्या वाक्यं वा नैराश्यमेव सुखमिति जानतीनां यद्वा तज्जानतीनामपीत्यन्वयः तथा तादृशी आशा दुरत्यया कथमपि त्यक्तुमशक्येत्यर्थः।कुतः कृष्णे चित्ताकर्षके श्रीव्रजेन्द्रनन्दन इत्यर्थः। यद्यपि श्रीकृष्णाशापि तत्त्वतः परमानन्दमयी सैव जीवनावलम्बनं च तथापि विरहार्त्या जीवननैरपेक्षेण तथोक्तम् अन्यैस्तु व्याख्यातं तत्र अघटमानायाः श्रीकृष्णसंगतेराशैवेति लक्ष्ये या श्रीकृष्णसङ्गतिः सैवेति लेखकभ्रमादिति अथवा तत् तदीयसत्यवाक्यत्वादिकं जानतीनामनुसन्दधानानामिति दुरत्ययत्वे एव हेतुः ॥ ४७ ॥

तदेवाभिव्यञ्जयन्ति।क इति।को जन इति सामान्यनिर्देशः सर्वलोकापेक्षया यद्वा कः पुमानपि किं पुनः स्त्रीत्यर्थः। उत्सहेत उत्साहमध्यवसायमपि कुर्यात् किं पुनस्त्यजेदिति संयुक्तं विस्मर्तुमपि किं पुनस्तदाशां क्षणमपि त्यक्तुम् उद्गतं तमो यस्मात्तथाभूत श्लोको यशो यस्येति यस्य यशः श्रवणादपि तमोहानिस्तस्य किं वा उत्तमा श्लोकाः गुणरूपादिवर्णनेन कवीनां पद्यानि यस्मिन्निति माहात्म्यविशेष उक्तस्तस्य संविदं संत्यक्तुमिति संशब्देन कदाचित् कथञ्चित् त्याज्यता निरस्ता कुतस्तदाहुः । अनिच्छत इति । श्रियमनपेक्षमाणस्यापि समन्ततः परिपूर्णत्वात् श्रीर्लक्ष्मीः अङ्गात् वक्षसः क्वचित् कदाचिदपि न] च्यवते नापयाति अन्यैस्तु व्याख्यातम् ।; यद्वा। संविदमेकं सङ्केतनर्मापि श्रीः शोभा अङ्गात् श्रीमूर्तेः अन्यत्समानम् ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परं परमं हि एव नैराश्यमेव स्वैरिणीत्वेन तथा वक्तुमनर्हापीत्यपिशब्दार्थः। न च मन्तव्यं तद्वयं न विद्म इत्याहुः । नैराश्यमेव सुखमिति जानतीनामपीत्यन्वयः । तथापि तादृशी आशा दुरत्यया कथमपि त्यक्तुं न शक्येत्यर्थः। कुतः कृष्णे चित्ताकर्षके श्रीव्रजेन्द्रनन्दन इत्यर्थः। अन्यैस्तु। तत्राघटमानायाः श्रीकृष्णसङ्गतेराशैवास्मानाकुलयतीत्युन्नेयम्।स्वैरिण्यपीत्यनेन'तन्मनस्कास्तत्प्राणास्तदर्थे त्यक्तदैहिकाः। तमेव दयितं प्रेष्ठमात्मानं मनसा गताः"। वयं स्वैरिण्यस्तु न मन्तव्या इति व्यज्य श्रीभगवता वल्लव्यो मे मदात्मिका इतिवत् तथा स्वयमपि जारा भुक्त्वा रतां स्त्रियमित्यर्थान्तरन्यासीकृत्य तस्मिंस्तत्परिहारवन्मधुपुर्यामार्यपुत्रोऽधुनास्त इति साक्षादुक्तिवच्च परमसाधुशिरोमणावुद्धवे सङ्कोचः परिहृत इति च ज्ञेयम् ॥ ४७ ॥

तदेवाभिव्यञ्जयन्ति। क इति। को जनो लोकमात्रं किं पुनः स्त्रीत्यर्थः। उत्सहेत अध्यवसायमपि कुर्यात् किं पुनस्त्यजेदिति सन्त्यक्तुम्। अदार्ढ्यवानैरपि प्रयत्नात्तु किं पुनर्विस्मर्तुम्। उत्तमाः श्लोकाः गुणरूपादिवर्णा अपि यस्य तस्य सम्विदं न पारयेऽहमित्यादिरूपां संत्यक्तुमिति संशब्देन मानाद्यवस्थायामपि त्यागो निरस्तः। कुतस्तदाहुः। अनिच्छत इति । नाहमात्मानमाशासे

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्यादिवन्नवनवप्रियजनानुरागेण श्रियमपेक्षमाणस्यापि श्रीर्लक्ष्मी-रेखारूपेण वर्त्तमानाऽङ्काद्वक्षसः क्वचित् कदाचिदपि न च्यवते नापयाति ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्याः पुनराहुः। परं सौख्यमिति। यत्पिङ्गलाख्या वेश्या प्राह। नैराश्यं परमं सौख्यं हीति। तज्जानतीनामपि नोऽस्माकं तथापि नैराश्यसुखहेतुत्वदर्शनेऽपि कृष्णे कृष्णविषये आशा दुरत्ययाऽपरि-हार्या ॥ ४७ ॥

युक्तं चैतदिति काश्चिदाहुः। क इति। उत्तमश्लोकस्य संविदमेकान्तवार्तां त्यक्तुं को जन उत्सहेत न कोऽपीत्यर्थः। तत्सं-वित्यागानुत्साहमेव दृष्टान्तमुखेन दर्शयन्त्यस्तं विशिंषन्ति। अनि-च्छतोऽपीति। श्रीर्लक्ष्मीरनिच्छतोऽकामयमानस्यापि यस्योत्तम-श्लोकस्याङ्कादुरःस्थलात्क्वचित्कदाचिदपि न च्यवते ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

कृष्णस्य पूर्णकामत्वात्तत्तथास्तु युष्माकं सुखनिमित्तं किं तत्राह। परमिति। आशा अतितृष्णा ॥ ४७ ॥

न केवलमस्माकमेव कृष्णाशा दुस्त्यजा अन्यस्यापीत्याहुः। क इति ॥ ४८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तर्ह्येवं सति किङ्कर्त्तव्यमित्याशङ्क्य कंचिदुपायं परिकल्प्य दूषयन्ति। परं सौख्यमिति। आशा हि सर्वेषां दुःखहेतुः सा त्यक्त-व्येति साधनं "प्रजायत आशाया वै शाम्यती"ति श्रुतेः अतो नैराश्य-मेव श्रुत्यनुभवसिद्धं साधनं तस्य फलाव्यभिचारमाहुः परं सौख्य-मिति। स्वभावतोऽपि परमसुखरूपं युक्तश्चायमर्थः "औपस्थ्यजैह्व्य-कार्पण्याद्गृहपालायते नरः" इति किञ्च या हि स्वैरिणी सा मनो-विक्षेपसहिता अन्यथैकत्र प्रतिष्ठिता स्यात् सापि नैराश्यं कृतव-तीत्याहुः। स्वैरिणीति। यथा संछिद्य कान्ताशामित्यग्रे वक्ष्यति अनेन आशाया अन्तो नास्तीत्यपि सूचितं पिङ्गलानाम वेश्या इयमपि कथा नारदादिभिः श्रुत्वा आर्षज्ञानेन वा ज्ञायते तज्जा-नतीनामपि प्रकारतः फलतः उपपत्तितश्च नोऽस्माकं सर्वासामेव कथं न स पक्ष आद्रियत इति चेत्तत्राहुः। कृष्णे तथाप्याशा दुरत्य-येति। पिङ्गला हि कृष्णाशया इतराशां त्यक्तवती सर्वस्मात् कृष्णो-ऽधिक इति वयं किमाशया कृष्णाशां त्यक्ष्यामः उत्कर्षः कृष्ण एव पर्यवसित इति अर्थोत्कर्षत्वात् एतासामाशापूर्त्त्युपायापरिज्ञानं कृष्णाशा ततोऽपि सिद्धा भवेत् नवेति सन्देहश्च तमाशाश्रयी-द्वित्यत्र तथा निर्णीतम् ॥ ४७ ॥

नन्वाशापरित्यागे पदार्थविस्मरणं हेतुरास्ति तस्मिन् कृते आशा निवर्त्तिष्यत इति चेत्तत्राहुः। क उत्सहेतेति। उत्तमश्लो-कस्य भगवतः संविदं स्मरणात्मकं संयुक्तं क उत्सहेत संविच्छब्देन सम्बन्धो ज्ञानं चोच्यते उत्तमैः श्लोक्यते एव नतु संबन्धमभिप्राप्नुवन्ति। सर्वैरेव श्लोक्यत इति सुलभं भगवत्स्मरणम् अविगीतत्वात् बाधरहितं विस्मर्त्तव्यत्वं सम्बन्धो वा दूरीकर्त्तव्य इति को वा उत्साहमपि कुर्यात् अशक्यत्वात् अत्यन्तमीप्सितत्वाच्च ज्ञानपक्षे अशक्यत्वमुत्तम-श्लोकपदेनैव साधयित्वा सम्बन्धत्यागेच्छाभावे विद्यमानेऽपि हेतौ न जायत इत्युपपादयन्ति। अनिच्छतोऽपीति। इच्छामात्रा-भावे कामाभावः सुतरां सिद्धः तादृशे हि स्त्रियो विरक्ता भवन्ति तत्रापि स्वतः प्रौढाः तत्रापि पित्रादेर्गृहे लब्ध-प्रतिष्ठाः स्थिता अपि औदासीन्येन तिष्ठन्ति धर्मपरिपालका इव भगवाननिच्छन् भवति तादृशस्यापि अङ्काद्वक्षस्थलात् श्रीः अर्थार्थिभिः सर्वदा सेव्यमानापि कदापि न च्यवते च्युता न भवति ॥ ४८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

तर्हि तत्प्राप्त्याशा त्यज्यतामिति चेन्न सा सर्वथैव त्यक्तु-मशक्येत्याहुः। परमिति। तदपि कृष्णे आशा कृष्णविषया ह्याशा दुरत्यया सर्वैरेव दुस्त्यजा। पिङ्गलायाः खलु पुरुषान्तर एवाशा-सीदतः सा तया त्यक्तेति भावः ॥ ४७ ॥

किञ्च लोभी खलु लोभ्यं वस्तु प्राप्नोतु न प्राप्नोतु वा किन्तु तत्रौत्सुक्यं त्यक्तुं नोत्सहते इत्याहुः। क इति। उत्तमः श्लोकस्य कृष्णस्य संविदं सौन्दर्यमाधुर्याद्युपलब्धि त्यक्तुं क उत्सहेत न कोऽपि। श्रियमनपेक्षमाणस्यापि यस्य श्रीर्लक्ष्मी-रेखारूपेण वर्त्तमाना अङ्काद्वक्षसः कदापि न च्यवते नाप-याति ॥ ४८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

तथा चैवंविधनिरपेक्षापेक्षवतीनामस्माकं नास्ति तापनिवृ-त्तिकरः कश्चिदुपायः यद्यप्यस्ति नैराश्यरूप एकस्तथापि नासा-वस्माभिरनुष्ठातुं शक्य इत्याशयेनाहुः। परमिति। आशायाः सर्वदुःखनिदानत्वात्तन्निवृत्तिरेव परं सौख्यं हि शब्दः "प्रजायते आशायाः शाम्यति औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते नरः यतो यतो निवर्त्तेत विमुच्येत ततस्ततः। निवर्त्तनाद्धि सर्वतो नवेत्ति दुःखमेव मि"त्यादि श्रुतिस्मृतिप्रसिद्धिं द्योतयति अतिपामरप्र-सिद्धोऽप्ययमर्थ इत्याशयेनाहुः। स्वैरिण्यपीति। तथा तज्जानतीनाम-प्यस्माकं कृष्णे या आशा सा आशा दुरत्यया त्यक्तुमशक्या पिङ्गला हि वेश्या कृष्णाशयान्याशां त्यक्तवती सदानन्दरूपस्य परमात्मनः सर्वोत्तमत्वाद्वयं किमाशया कृष्णाशां त्यक्ष्याम इति भावः ॥ ४७ ॥

नन्वत्यन्तालभ्यविषये किमित्याशया संतप्तचित्ताः संपन्ना इत्या-शङ्क्य यथा सावत्यन्तालभ्यस्तथा तद्विषयकाशापीत्यर्थः। दुरत्यया केनाप्यत्यक्तत्वादतो न वयमेवोपालम्भनीया इत्याशयेनाहुः। क इति। उत्तमश्लोकस्य संविदम् एकान्तवार्तां ज्ञानं वा सम्बन्ध एकान्त-वार्तादिविषयिकामाशां कः संत्यक्तुमुत्साहमपि कुर्यात्त्यागस्य तु का वार्ता यतोऽसावुत्तमैरपि श्लोक्यते श्लाघ्यते अन्येषां

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ।
संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ! ॥ ४९ ॥
पुनः पुनः स्मारयन्ति नन्दगोपसुतं वत ।
श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

का वार्ता ब्रह्मादिभिः प्रार्थनीयकरुणाकटाक्षा सर्वोत्तमा श्रीश्चलापि अनिच्छतोऽपि यस्य भगवतोऽङ्गाद्वक्षःस्थलात्कचिन्न च्यवते कदाचित्कुत्रचिदपि प्रच्युता न भवति तस्याशां वयं वराक्यः कथं त्यक्तुं शक्ष्याम इत्यर्थः ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वैरिणी स्वेच्छाचारिणी ॥ ४७ ॥
सम्विदं रहस्यवार्ताम् ॥ ४८ ॥

भाषा टीका ।

आशा नहीं करना ही वडा सुख है इस वात को पिंगला वेश्याने भी कहा है इस वातको हम जानती भी हैं तौ भी श्रीकृष्ण के विषै वडी दुस्तर हमारी आशा है सो नहीं छूटती है ॥ ४७ ॥

उन कृष्णकी एकान्त वार्ता को कौन छोड सकेगा जिनके कि नहीं चाहने पर भी लक्ष्मी जिनके अंग में से वक्षःस्थल में से कहीं नहीं जाती है ॥ ४८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च तद्विस्मृतौ न तावद्दुःखमस्ति सापि नास्माकं सम्भवतीत्याहुः । सरिच्छैलेति त्रिभिः । आचरिताः सेविताः ॥ ४९—५० ॥

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अहो तद्विस्मरणे सत्याशापि हीयेत तच्च नैव घटेतेत्याहुः । सरिदिति । यदि जलान्तिके यामस्तदा सरितः गृहे चेत्तिष्ठामस्तदा शिलावद्भूभागेन स्मार्यमाणा अत्युच्चत्वाद्वा दृश्यमानाः शैलाः यदि वा वनानि प्रविशामस्तदापि वनस्थानानि जलस्थलवनानि सर्वाण्येवेत्यर्थः । इमे इत्यस्य लिङ्गविपरिणामेन सर्वत्रान्वय इति तेषां सर्वेषामेव प्रत्यक्षतोक्ता यद्वा इमे तद्विरहातुराः साक्षादग्रैवैते निपतिताः श्रीदामसुबलादयस्तत्सहचराः तेषामत्यन्तश्रीकृष्णस्मारकहेतुमहार्तिजननान्नामाग्रहणम् एवं सरिदादीनां यथोत्तरं स्मरणे श्रेष्ठ्यमूह्यं सम्यक् कर्षति श्रीकृष्णस्य क्रीडासुखार्थं सखीन् किं वा स्नेहभरेण तस्य चित्तमेवाकर्षतीति सङ्कर्षणः सहायः सखा यस्य तेन किम्वा सङ्कर्षणस्य सहायेनेत्युभयथापि मिथः स्नेहेन सुखक्रीडा सूचिता कृष्णेन जगच्चित्ताकर्षककीडनेति तत्क्रीडास्पदानां सरिदादीनामपि चित्ताकर्षकत्वमभिप्रेतम् आचरिताः सेविता इति तैर्व्याख्यातम् । यद्वा । स्वक्रीडासाधनत्वं नीताः यद्वा आचरिताः कृता इति वेणुरवाणामेव विशेषणं ततश्च सङ्कर्षणसहायेनेति तदुपगायनत्वेन तेषामेव माधुर्यविशेषः सूचितः सरिदादीनां तु श्रीकृष्णाक्रीडत्वं व्यक्तमेव यद्वा आचरिताः प्रवर्तिता गोपानां वेणुरवाः इमे इदानीतनाः तत्तद्व्रजजातत्वेनैव तत्प्रकारविशेषशिक्षणात् ॥ ४९ ॥

पुनः पुनरिति कथञ्चित् प्रयत्नेन तच्चिन्तायां त्यक्तायामपि पुनः स्मारणात् पुनस्तथैव त्यक्तायामपि पुनः स्मरणादित्येवमसकृदित्यर्थः किम्वा अविरतमेवेति प्रभो ! इति परमदैन्येन सम्बोधनं यद्वा हे बोद्धुं समर्थेति भवतेदं बुद्ध्यत एवेति भावः नन्दो गोपो महाराजस्तस्य सुतमिति प्रयत्नशतैरीश्वरत्वेन स्मर्तुमिष्यमाणमपि श्रीवल्लवेन्द्रकुमारत्वेनैव स्मारयन्तीत्यर्थः वत खेदे ननु तत्र श्रीकृष्णसम्बन्धानां बलात्यक्तु तं विस्मरत तत्राहुः श्रीनिकेतैः ध्वजाद्यसाधारणलक्षणैः श्रियः सर्वस्याः सम्पदः शोभाया वा निकेतैः तस्य नन्दगोपसुतस्य पदकैः कोमलपदैः सर्वत्रोदितैः तदानीमपि तथैव तेषामनुवृत्तिः प्राक्व्युत्पादितैव ॥ ५० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो तद्विस्मरणे सत्याशापि हीयेत तच्च नैव घटत इत्याहुः । सरिदिति युग्मकेन । वनोद्देशेन व्रजोऽपि गृह्यते । तदन्तर्वर्त्तित्वात्तस्येति । सर्वाण्यवस्थानानीत्यर्थः । वेणुरवा इदानीमपि कैश्चित् क्रियमाणाः । इमे इति स्फूर्त्या प्रत्यक्षा इव क्रियन्ते तत्र गाव इत्यत्र लिङ्गं विपरिणमनीयम् । आचरिताः सेविता अनुशीलिता इत्यर्थः । अन्यकृतवेणुरवस्यापि तदनुशीलितत्वं जात्यैक्यात् । सङ्कर्षणसहायेनेति । तत्र तत्र शोभादिपरिपोषात्तेनापि सहागमनमीहितम् ॥ ४९ ॥

पुनःपुनरिति स्मरणाविच्छेदेऽपि स्मरणविशेषाणां पुनःपुनरविशेषिता ध्वनिता प्रभो ! इति परमदैन्येन यद्वा हे प्रभो ! सर्वदा समर्थेति त्वमेवात्र न्यायकर्त्ता भवेति भावः । श्रीनन्दाभिधस्य गोपस्य राज्ञः सुतमिति भवद्भिश्चोपदेशात् प्रयत्नशतैरीश्वरत्वेन स्मर्तुमिष्यमाणमपि तद्रूपं तथैव स्मारयन्तीति ज्ञानाद्यनवसरो ध्वनितः । ननु तत्र तथानुसन्धानमात्रं बलात् त्यक्त्वा तं विस्मरत तत्राहुः श्रीनिकेतैर्ध्वजाद्यसाधारणलक्षणैः श्रियः सर्वस्याः सम्पदः शोभाया वा निकेतैस्तस्य पदकैः सर्वत्रोदितस्तत्तल्लीलाभेदेन पदचिह्नानां प्रकारैः । स्थूलादित्वात् प्रकारे कन् । तदानीमपि तेषामनुवृत्तिः प्राग्व्युत्पादितैव ॥ ५० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं च तद्विस्मृतौ तु नास्माकं दुःखमस्ति सापि न संभवतीत्याहुः त्रिभिः । सरिदिति । प्रभो ! हे उद्धव ! सङ्कर्षणसहितेन कृष्णेन सरिदादय आचरिताः सेविताः ॥ ४९ ॥

ततः किमित्यत आहुः । पुनःपुनर्नन्दगोपसुतं स्मारयन्ति बत कैर्लिङ्गैरित्यत आहुः । श्रीनिकेतैः श्रियः सौन्दर्यसम्पदो निकेतैराश्रयैः तस्य भगवतः पदकैः पदानीव पदकानि "इवे प्रतिकृतौ" इति कः प्रत्ययः तैः स्मारयन्तीति पूर्वेण संबन्धः अतस्तं विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आक्रीडितैः क्रीडारङ्गीकृताः इमे सरिदादयः ॥ ४६ ॥

नन्दगोपसुतं पुनःपुनः स्मारयन्ति बत आश्चर्यं ननु सरिदादिदर्शन एव श्रीकृष्णस्मरणम् अन्यदा नास्तीत्यायातमिति तत्राह । श्रीनिकेत इति । तस्य श्रीकृष्णस्य पदके प्रशस्तपदे प्रशस्तत्वं कुत इत्यत उक्तं श्रीनिकेत इति ॥ ५० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वेणुरवा इदानीमपि कैश्चित् क्रियमाणा इमे इति स्फूर्त्या प्रत्यक्षा इव श्राव्यन्ते स्म एषां तदाचरितत्वं जात्यैक्यात् ॥ ४९ ॥

पुनःपुनरिति । स्मरणाविच्छेदेऽपि स्मरणविशेषाणां पुनः पुनरतिशयिता ध्वनिता ॥ ५०—५२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्मरणत्यागाशक्यतामुपपादयन्ति । सरिच्छैलेति त्रिभिः । स्मारका हि बहवः येष्ववश्यं प्रवृत्तिः सर्वपरित्यागेऽपि जलार्थमवश्यं गन्तव्यं बहिर्निर्गत उच्चैः स्थितं पश्यन्त्येव अतो यमुनागोवर्द्धनदर्शनमावश्यकं विहारार्थमवश्यं वनोद्देशाश्च द्रष्टव्याः एते त्रयः सत्त्वाद्भेदाः गृहेऽप्यवश्यं द्रष्टव्या गावः निमीलितचक्षुषामपि इमे वेणुरवाः स्मारकाः ये इदानीमप्यनुभूयन्ते अतः स्मारकाः सर्वत्र किं च भगवतः आचरितान्यपि भगवत्स्मारकाणीत्याहुः । सङ्कर्षणेति । बहिर्वृत्तिनिरोधे पूर्वोक्ता न स्मारका भगवच्चरितानि तु चौर्यादीनि दैत्यादिमारणेन पालनरूपाणि स्वच्छन्दरमणरूपाणि च आचरिता इत्युच्यन्ते सङ्कर्षणसहायत्वं लीलादौ निर्भयत्वाय तत्रापि कृष्णेन सदानन्देन अस्मदर्थमेवाविर्भूतेन स्मारणार्थमेव तादृशकर्मा प्रभो ! इति सम्बोधनं तादृशार्थविस्मारणे कदाचित्तव सामर्थ्यं भवेत् न त्वस्माकमिति ज्ञापितम् अनेन स्वदृष्टान्तेन भवतीभिरपि सुखेन स्थातव्यमिति पक्षो निवारितः अत एव त्वं सखो वर्त्तसे न वयम् ॥ ४९ ॥

स्मारकाधिक्यस्य तैः क्रियमाणस्मरणस्य बलिष्ठतामाहुः । पुनः पुनः स्मारयन्तीति । स्मरणेन पीडया मूर्च्छायां जातायां विस्मरणमाशंसमानानां सर्ववृत्तिनिरोधे स्मारयिष्यन्तीति भयात्स्मृता एव भगवन्तः पुनः पुनः स्मारयन्ति । किं च पीडायां समर्थाश्रयणं कर्तव्यमिति विचारेऽपि नन्दश्चेत् स्मृतः तदा नन्दगोपसुतः इति स्मृत एव भवति भगवान् किं च लक्ष्मीस्थानरूपाण्यतिसुन्दराणि सर्वत्रोदितानि पदान्यच्युतत्वादाधारस्थिते अतिरोभावस्वभावानि तादृशैः तस्यैव भगवतः पदैरसाधारणैर्हृदयादिषु स्थापितैर्वा सानुभावैः दृष्टादृष्टोपायेन बलिष्ठैः कृत्वा विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च तद्विस्मृतौ सत्यामाद्यापि हीयते सा त्वमस्माकं नैव घटत इत्याहुः । सरिदिति त्रिभिः । आचरिताः सेविता अनुशीलिताः । श्रीनिकेतैर्ध्वजवज्रादिचिन्हशोभायुक्तैः शिलादिष्वद्यापि वर्त्तमानैः ॥ ४९ ॥ ५० ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एतद्दुःखस्य भैषज्यं यदेतन्नानुचिन्तयेत् । एतद्विज्ञानसामर्थ्यं न भक्तेः समतामियादित्यादिना नन्वस्मरणं यद्यपि दुःखौषधमुक्तं तथाप्यस्माकं तदतीव दुर्लभं स्मारकाणां प्रबलानां बहूनां विद्यमानत्वादित्याहुः । सरिदिति । सरित् सर्वत्यागेऽपि जलानयनार्थमवश्यं गन्तव्या नदी यमुना बहिर्गताभिरनिवारितदर्शन उच्चैः स्थितः शैलो गोवर्द्धनः विहारार्थमवश्यं गन्तव्या वनोद्देशा वृन्दावनस्य तत्तत्प्रदेशाः गृहादावश्यं द्रष्टव्या गावो निमीलितनेत्राभिरवारितश्रवणा वेणुरवाः संकर्षणसहायेन कृष्णेन सदानन्दस्वरूपेण स्मृतिसन्ततिसंपादनार्थं संकर्षणेन सह कृतावतारेणाचरितास्तदाचरणसंबद्धा इमे सरिदादयः अवश्यमनुभूयमानाः पुनः पुनः स्मारयन्तीति परेणान्वयः यद्वा च चौर्यदैत्यमारणादिस्मृत्या पालनलालनस्वच्छन्दस्मरणादिरूपाणि भगवच्चरितानि निरुद्धश्रोत्रादिवृत्तीनामपि स्मारयन्ति प्रभुणा प्रेषितस्त्वमप्यस्माकं प्रभुरतोऽस्मद्दुःखमाकर्ण्य निवारयेति सम्बोधनाशयः तद्विस्मरणे त्वं प्रभुः स्याः न तु वयमिति वा ॥ ४९ ॥

कदाचिन्मूर्च्छादौ क्षणमात्रं विस्मरणे पुनः पुनः स्मारयन्ति इति स्मारकाणां प्राबल्यमुक्तं तत्रापि नन्दगोपसुतं महत्यां पीडायां प्रबलाश्रयणं कार्यमिति विचारे नन्दरायश्चेत्स्मृतिपथमारोहति तदा तत्सुतस्येव श्रीकृष्णोऽपीति भावः यद्वा ननु दूरस्थितं वस्तु स्मर्यते भगवांस्तु न दूरस्थितः किं तु सर्वेषामात्मत्वादत्यन्तनिकटवर्त्ती अत एव भवतीनां वियोगो मे न हि सर्वात्मना कश्चिदिति भगवतादिष्टमित्याशङ्कानिरासायोक्तं नन्देति. किं च श्रियः सर्वलावण्यकारणभूताया निकेतैर्वा संस्थानैस्तस्य पदकैः कोमलैश्चरणारविन्दैः हृदि कृतदृढस्थानैः स्मरणपुष्कलकारणैः कृत्वा विस्मर्तुं नैव शक्नुमः बतेति खेदे अहो कष्टं न प्राप्तुं शक्यते नापि विस्मर्तुं किं कुर्मः क गच्छाम इत्यर्थः ॥ ५० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे प्रभो ! उद्धव ! कृष्णेन आचरिताः सेविताः सरिच्छैलवनोद्देशा-

गत्या ललितयोदारहासलीलाऽवलोकनैः।
माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥ ५१ ॥
हे नाथ ! हे रमानाथ ! व्रजनाथार्तिनाशन !।
मग्नमुद्धर गोविन्द ! गोकुलं वृजिनार्णवात् ॥ ५२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शादयः तस्य पदकैः चरणचिन्हैः सहिता पुनः पुनः स्मारयन्ति विस्मरणेन कदाचित्स्वास्थ्यसम्भावनायां विस्मर्तुं नैव शक्नुमः इति द्वयोरन्वयः ॥ ४९ ॥ ५० ॥

### भाषा टीका।

हे प्रभो ! उद्धवजी ये सब नदी वनौं के देश ये गऊ ये वंशी के शब्द जो हैं इनसे बलदेवजी के साथ में रह कर श्रीकृष्णचंद्र ने विहार किये हैं ॥ ४९ ॥

ये सब देश नंद गोपराजके पुत्र को वेर वेर स्मरण कराते हैं और उनके चरण चिन्ह जो लक्ष्मी के स्थान हैं तिनके देखने से हम उनको भूल नहीं सकती हैं ॥ ५० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

हे उद्धव ! तं कथम्विस्मरामेति ॥ ५१-५२ ॥

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी।

ननु तेषु दृष्टिमकृत्वा बुद्ध्या मनोऽन्यत्र नीत्वा सर्वं तदीयं विस्मृत्यासौ विस्मर्य्यतां तत्राहुः। गत्येति। देहचेष्टोपलक्षिता उदारहासाश्च लीलयावलोकनानि च तैरिति माधुरीभिर्मनो-भावविशेषः बहुत्वं तेषां प्रत्येकं परंपरया माध्व्या शब्दतोऽर्थतश्च मधुरया एवं त्रिधा हृतबुद्धयः तत्तद्गत्यादिकं तदीयसौहृदं वा कथं केनोपायेन विस्मराम अपि तु कथमपि विस्मर्तुं नैव शक्नुम इत्यर्थः। तत्तत्स्मरणेन तस्यैव स्मृत्युत्पादनात् तमिति पाठो वा ॥ ५१ ॥

ततश्च प्रेमार्तिभरोदयेन श्रीभगवन्तमेव साक्षादिव सम्बोध्यार्त्तनादेन प्ररुदत्यआहुः। हेकृष्णेति। स्वतः परमानन्दघनमूर्त्तं न चानन्दपरिपूर्णत्वाद्भक्तोपेक्षास्तत्याहुः। हे रमानाथ ! लक्ष्मीपते इति। अत्यन्तार्त्या पुनः पुनर्हेशब्दः न च रमानाथत्वादन्यजनोपेक्षा-स्तीत्याहुः। व्रजनाथ ! हे व्रजपालकेति। यद्वा हे रम ! हेकान्त रम कान्ते रमा लक्ष्म्याम् इत्यभिधानात् हे अनाथ ! व्रजनाथ ! न विद्यते त्वां विना नाथोऽन्यो यस्य तस्य व्रजस्य नाथ ! तत्र च कदापि तव दीनजनोपेक्षा नास्त्येवेत्याहुः। आर्तिनाशनेति। एतच्चात्मोद्देशेनोक्तम्

अतो दुःखसमुद्रे मग्नं गोकुलं सर्वानत्वात् प्राणिन उद्धर सकृन्निजदर्शनेन सर्वं दुःखमपास्य पुनर्जीवयन् सुखीकुर्वित्यर्थः तच्च तवावश्यकृत्यमेवेत्यभिप्रायेण सम्बोधयन्ति गोविन्द ! गोकुलेन्द्रेति मग्नमित्यतीतनिर्देशेनार्णवरूपकेण च सतोऽप्रतिकार्य्यतया महादैन्यं सूचितमिति ॥ ५२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु वस्त्रेण नेत्रमावृत्य बुद्ध्या मनोऽन्यत्र नीत्वा सर्वं तदीयं विस्मृत्य स विस्मर्यतां तत्राहुः। गत्येति। अनया देहचेष्टामात्रमुपलक्षितम् उदारहासश्च लीलावलोकनानि च तैरिति तदीयभावविशेषः बहुत्वं तेषां प्रत्येकं परम्परया। माध्व्या शब्दतोऽर्थतश्च मधुरया एवं त्रिविधचेष्टया हृतबुद्धयः। तद्गत्यादिकं तदीयसौहृदं वा कथं केनोपायेन विस्मरामः अपि तु न कथमपीत्यर्थः। यद्वा पुनरन्यो वा तदुपाय उपदिश्यता-मित्यर्थः ॥ ५१ ॥

ततश्चास्माकं दुःखमस्योपदेशान्नापगच्छेदिति तमुद्धवमप्यनादृत्य समुत्थिततया मधुरामभिमुखीभवन्त्यः समुच्चतनादेन स्वकान्तमेव सम्बोधयन्त्यः सदैन्यरोदनमाहुः तत्र च तस्य गोकुल प्रियतास्मरणेन गोकुलदुःखासहनतया स्वदुःखमप्यनादृत्य गोकुलरक्षामेव प्रार्थयन्ते हे कृष्णेति। सर्वतदीयाद्भुतरूपगुणक्रीडाक्रोडीकारितया सन्ततं निजान्तःस्फुरता विशेष्यनाम्ना प्रथमतः सम्बोधनं हे रमानाथेत्यादिना। विशेषेण नामभिरिति ज्ञेयम्। हे कृष्णेत्यत्र हे नाथेति क्वचित्पाठः प्रथमतः स्वीयभावस्फूर्त्तेः हे सर्वासामस्माकमासां स्वामिन्नित्यर्थः हे रमानाथेति रमापर्यन्तनाथ्यमानकृपादृष्टितया परमदुर्ल्लभ ! तत्र च तस्मान्मच्छरणं गोष्ठं मन्नाथमित्याद्यनुसारेण व्रजस्य नाथः आर्त्तिनाशनश्च सन् निर्वाहिततादृशसङ्कल्प ! अतोऽधुना तु दुःखसमुद्रे मग्नं गोकुलं सर्वान् तत्र च हे गोविन्देति सम्बोध्य गोकुलेन्द्रतयाभिषिक्तस्य तव गोविन्दतापालनार्थ-मप्यवश्यमेवेदं कृत्यमिति सूचितवत्यः। "स्वपामात्मवियोगार्त्तिमप्य-वज्ञाय वल्लभाः। व्रजस्य दुःखं शृण्वाना निरस्यंतु कथमच्युतः" ॥ ५२ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किं च गत्यादिभिर्हृता धीर्यासां ता वयं कथं कृष्णं विस्मरामहे ततश्च स्मारकैर्लिङ्गैस्तत्स्मृतिरवर्जनीया ततश्च दुःखमपीति भावः ॥ ५१ ॥

ततश्चेदं दुःखं स एव भगवानपनुदतु इति प्रार्थयन्ते तत्र बुद्ध्यासन्निधापितस्य भगवतः संबोधनानि हे नाथेत्यादीनि।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

वृजिनार्णवे दुःखाब्धौ मग्नं गोकुलमुद्धर नाहं शक्त इत्यत्र संबोधयन्ति । हे नाथेति ईश्वरस्य न किमप्यशक्यमिति भावः । नन्वीश्वरो निगृह्णात्यपीत्यत आहुः । हे रमानाथेति । "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकः सर्वसिद्धान्त" इत्युक्तरीत्या केवलकारुण्यमूर्त्या पुरुषकारभूतया लक्ष्म्या नित्ययुतस्य तवानुग्रह एवोचित इति भावः । नन्वेवमपि कांश्चिन्निगृह्णन्नेव दृश्ये इत्यत्राहुः । व्रजनाथेति । व्रजन्त्वनुगृह्णन्नेव दृश्यस इत्यभिप्रायः तमेवाविष्कुर्वन्ति हे आर्तिनाशनेति विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलादिति तत्तत्प्रयुक्तपीडाहारित्वं बहुशो दृष्टमिति भावः ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तमेव द्रढयन्ति । गत्येति ॥ ५१ ॥

नित्यं स्वजाप्यं विज्ञापयन्ति । हे नाथेति ऐश्वर्यमूर्ते ! रमाया अपि आशीःप्रद ! व्रजनाथानां गोपानाम् आर्तिनाशन ! मग्नं दुःखार्णवे इति शेषः गवां विन्दो लाभो यस्मात्स तथा गोविन्द इति ५२ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चचत्वारिंशोऽध्यायः ॥ ४६ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

किं च विस्मरणे हि मनोनिरोधः साधनं मनश्च अमलया बुद्धया निरुध्यते सा बुद्धिः पूर्वमेव भगवता हृतेति कोऽन्य उपायो विस्मरण इति पृच्छन्त्य इत्याहुः । गत्येति । बुद्धिर्हि त्रिविधगुणैस्त्रिविधा तामपि बुद्धिं कायवाङ्मनोविषयां त्रिविधा धर्मा हरन्ति तत्र प्रथमं भगवतः कायिकचेष्टया देहविषयिणी बुद्धिर्हृतेत्याहुः । ललितया गत्येति । गतिर्हि स्वयं गच्छन्ती बुद्धिमपि नयति ललिता तु मनसो निरोधेन नयति तदंशमनसो हरणात् मनसो हरणं उपायमाहुः । उदारहासलीलावलोकनैरिति । मनो हि सङ्कल्पविकल्पात्मकं तत्र सङ्कल्पांशं भगवतो हासो निवारयति मोहात्मकत्वात् सङ्कल्पसाधनरूपं सुखं च बहुधा प्रयच्छतीति फलेनापि न सङ्कल्पः साधयितुं शक्यते तदाहुः । उदारेति । भ्रान्तो हि विकल्पान्करोति तन्निवृत्त्यर्थं च लीलावलोकनानि ज्ञानात्मकत्वादवलोकनस्य विकल्पं नाशयत्येव तथापि फलाभावात् ज्ञानं दुर्बलं भवेत्तन्निषेधार्थं लीलेति स्वतः पुरुषार्थमित्यर्थः वाक्प्रधानन्तु गीर्हरति सञ्जगीयहारिणी स्त्री स्त्रियं चेद्धरेत् न कोऽपि प्रतिबन्धको भवति । तत्रापि फलरूपत्वाय माध्व्येति एवं लोकप्रसिद्धप्रकारेण विस्मरणासम्भवात् तत्कथं विस्मरामहे इति प्रश्नः । तस्मिन् हि विस्मृते साधनान्तरं प्रवृत्तिः सम्भवति अतो भगवदुक्तं ज्ञानं पूर्वार्धविस्मरणे भवतीति अशक्यमेवोपदिष्टवान् ॥ ५१ ॥

एवं लौकिकप्रकारेण वैदिकप्रकारेण च वयं सर्वथा दुःखसागरान्निस्तीर्णा भविष्याम इत्याहुः । हे नाथेति ! प्रमेयबलादेवोद्धर्तव्याः ननु प्रमाणबलेन तथा करणे आवश्यको हेतुः तथात्वं नन्वच्युतोऽहमंसक्तोऽहं च अतो ममाप्यशक्यो रमणेनैव भवतीनामुद्धारो भवतीति चेत्तत्राहुः । हे रमानाथेति । स्मरणैकस्वभावा हि सा उत्तरोत्तरं वर्द्धमाना नित्या च तस्यास्त्वं नाथ इति सर्वजनीनं साप्यस्मत्प्रकारेणैव साध्या भवति लक्ष्मीत्वादेव न पोषणादिकमपेक्ष्यते ननु तदावश्यकमिति कथञ्चिन्निर्वोढ्यत इतिचेत्तत्राहुः । व्रजनाथेति । यथा त्वं लक्ष्मीपतिः सर्वजनीनः एवं व्रजपतिरिति लक्ष्मीव्रजयोस्तुल्यत्वाद्दोषगुणास्तुल्या इति भावः । ननु साप्यशक्या चेत्त्यज्यत एवेति कोऽयं दृष्टान्त इति चेत्तत्राहुः । आर्तिनाशनेति । हरिस्त्वम् आर्तिं नाशयस्येव कुर्यादन्यन्न वा कुर्यात् आर्तिं तु नाशय अन्यथा हरित्वमेव न स्यादतः स्वरूपरक्षार्थमेतदवश्यं कर्तव्यं किं च इदं हि सर्वमेव गोकुलं दुःखसमुद्रे निमग्नं तदुद्धर पूर्वं ह्येको गजः सोऽपि पुष्करिण्यामर्द्धनिमग्न एव स्थितः सोऽपि दयया चेदुद्धृतः किमस्मदुद्धारे दयाया विलम्बो भवेत् मग्नोद्धारे त्वमेव समर्थः यथा मन्दरोद्धारे ननु तेऽस्मद्वाक्यात्प्रवृत्ता इति तदर्थमुद्धृताः भवत्यस्तु नास्मद्वाक्यात् प्रवृत्ता इति चेत्तत्राहुः । गोविन्देति । त्वं ह्यस्मदिन्द्रत्वेन सर्वैरभिषिक्तः अतो यावदधिकारत्वादाधिकारिकमिति न्यायेन यावद्गोकुलं जीविष्यति तावदस्य रक्षा भवत आवश्यकी अन्यथा प्रमाणबलं त्वयैव नाशितं स्यात् पूर्वमपि मत्स्यादिभावेन वेदा उद्धृताः तथा गोविन्दभावेन वयमप्युद्धर्तव्याः नत्पुद्धवेन तथा सति जघन्यताऽऽपत्तिरिति भावः ॥ ५२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु तर्हि सरिद्वादिषु कुत्राप्यगत्वा वस्त्रेण नेत्रमावृत्य धिया मनोऽन्यत्र नीत्वा स विस्मर्यतां तत्रास्माकं धीर्नोस्त्येव तेनैव हृतत्वादित्याहुः । गत्येति । माध्व्या मधुरया । हे उद्धव ! ॥ ५१ ॥

ततस्तत्रोद्धवमप्यनादृत्य परमार्त्या मथुराभिमुखीभवन्त्यः कृष्णाभिमुखेनैव संबोधयन्त्यः सदैन्यरोदनमाहुः । हे कृष्ण! अयोग्यानामप्यस्माकं चित्ताकर्षक हे रमानाथ ! रमयापि नाथ्यमानाद्भुतमाधुर्यरसविलासादिमहासम्पत्ते ! हे व्रजनाथ ! व्रजस्त्वां नाथति हे आर्तिनाशन ! पूर्वं गोवर्द्धनं धृत्वा इन्द्रकृतामार्तिमनाशयत् भवानित्यर्थः । सम्प्रति तु त्वद्विरहादेव सर्वतोऽप्यधिके वृजिनस्यार्णव एव अद्य श्वो वा नश्यदेव गोकुलं स्वयमेवागत्योद्धर हे गोविन्द ! स्वपालितचराः स्वीयगवीर्विन्दस्व [अलं दूतप्रस्थापनयेति भावः ॥ ५२ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

किं च बुद्धया विस्मरणसाधनं मनोनिरोधः संपाद्यते इत्यविशादस्माकं सा भगवता पूर्वमेव हृतातोऽस्माभिस्तद्विस्मरणे क उपाय आश्रयणीय इत्याशयेनाहुः। गत्येति । महत्या सेनया हृतास्माकं बुद्धिः पुनः समानेतुमशक्येति ज्ञापनार्थं गत्येत्यादि गतौ ललितत्वं हासे उदारत्वम् अवलोकनेषु लीलापूर्वकत्वं गिरि मधुरत्वमित्युक्तया यथोक्तविशेषण विशिष्ट गत्यादीनां कुत्राप्य-

## श्रीशुक उवाच ।

ततस्ताः कृष्णसन्देशैर्व्यपेतविरहज्वराः ।
उद्धवं पूजयाञ्चक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥ ५३ ॥
उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः ॥
कृष्णलीलाकथां गायन् रमयामास गोकुलम् ।५४।

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

त्तुपलम्भात्तद्वत्यादीनां प्राबल्यं बोधितं तथा च भगवान् दृतबुद्धित्वादस्मान् विस्मरतु नाम वयं तु हृताधियः तदीयं गत्यादिकं कथं विस्मरामहे तन्न सम्भवतीत्यर्थः । त्वं तदुपायं जानासि चेत्तर्हि वदेति प्रश्नो वा यदा अनुस्मरन्त्यो मां नित्यमचिरान्मामुपैष्यथेति भगवत्सन्देशोत्तरत्वेन ध्यस्मरणाद्युक्तिप्रतिपादनपरो प्रश्नो योजनीयस्तथा चैवंविधस्मरणवतीनामस्माकं प्रवृत्तप्रवर्तनरूपोऽयमुपदेशः तादृशस्मरणे सत्यप्यद्यापि तस्यालाभाद्व्यर्थ इवेति भावः ॥ ५१ ॥

एवं वर्णयन्त्यः स्वदुःखनिवृत्तावुपायमपश्यन्त्यः साक्रोशं तमेव प्रार्थयन्ति हे नाथेति गोकुलवासिगोपिकाजनं त्वद्विरहजनितदुःखसागरे निमग्नं स्वोद्धाराद्यक्तं त्वमेव दुःखसमुद्रादुद्धर अत्र त्वत्तृणपर्णादयोऽपि त्वद्विरहजनितदुर्जिगार्णवे निमग्ना इति ज्ञापयितुं गोकुलमित्युक्तम् । यतस्त्वमेव सर्वस्य नाथः स्वामी यथा गजेन्द्रमन्दराचलादयस्त्वयोद्धृतास्तथा स्वाम्यत्वाविशेषाद्गोकुलमप्युद्धरेत्याशयेनाहुर्हे रमानाथेति । तत्र तत्सङ्गमेऽवादिनिरपेक्षत्वादेकस्मरणस्वभावा रमा यथा सर्वदा स्वसंप्रदानेनानुगृह्यते तथानुग्रहाकाङ्क्षावत्यो वयमिति भावः । ननु रमानाथत्वेन विशेषतः प्रसिद्धत्वात्तन्मनोरथं पूरयामीति चेत्तत्राहुर्हे व्रजनाथेति तथा च विशेषतो व्रजनाथत्वेनापि प्रसिद्धस्त्वं तद्दुःखं किमिति नापकरोषीति भावः । किञ्च स्वीयानां सर्वेषां दुःखापहारकत्वाद्धरिः सर्वार्तिनाशनस्त्वं स्वस्वरूपरक्षणार्थमस्मदार्ति नाशयेत्याशयेन संस्बोधयन्ति हे आर्तिनाशनेति किंच गोकुलरक्षणेन गोविन्दाख्यां प्राप्तवानस्तत्र तदरक्षणं नोचितमित्याशयेनाहुः हे गोविन्देति । यद्वा महेन्द्रभयाद्रक्षितं गोकुलं त्वद्भये किमर्थं निमज्जयसीति सम्बोधनाशयः यद्वा पूर्वं मत्स्यरूपेण गोकुलं स्वभयं किमर्थं श्रुतिसमुदायं यथोद्धृतवांस्तेन च गोविन्दनाम लब्धवान् तद्वत्सम्प्रत्यगोकुलोद्धारोऽप्युचित इति अतः सर्वथाप्यस्य दुःखनिवर्तकत्वमेव तवोचितमित्यर्थः ॥ ५२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सत् परं ब्रह्म मित्रभ्वा श्रीकृष्णं हे उद्धव ! कथं विस्मराम ॥ ५१ ॥ ५२ ॥

---

### भाषा टीका ।

इन श्रीकृष्णजी की मनोहर गति सुंदर हंसी कौतुक सहित विलोकन मधुरी बोली इनों से हमारी बुद्धि हरण होगई है सो हम उनको अब भूल सकती हैं ॥ ५१ ॥

हे नाथ ! हे रमानाथ हे व्रजनाथ हे आर्तिनाशन हे गोविंद ! दुःख सागर में डूबे हुये इस व्रज का जल्दी उद्धार करो ॥ ५२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीकृष्णमधोक्षजं ज्ञात्वा तच्च स्वात्मानं ज्ञात्वा ॥ ५३ ॥
विनुदन्नपनयन् ॥ ५४-५५ ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

ततः तस्माद्विलापादेः पश्चादिति क्षणं निश्चेष्टतया निपत्य स्थितानां तासामथ कथञ्चिद्धैर्यतः किञ्चित्स्वस्थतायां सत्यामित्यर्थः कृष्णस्य परमाकर्षकस्य सन्देशैरिति तत्सन्देशानामपि चित्ताद्याकर्षकत्वमभिप्रेतम् अत एव अधोक्षजमिन्द्रियज्ञानागोचरमपि भगवन्तं किं वा सकटाक्षाद्यो महासंकटात् पुनर्जातमिव श्रीव्रजेन्द्रनन्दनम् आत्मानम् उक्तप्रकारेण सदा सर्वथा स्वव्यापकं ज्ञात्वा विश्रामरूपेणापेतो विरहस्य ज्वरः बाह्याभ्यन्तरतापोद्रेको यासां तथाभूताः सत्यः उद्धवं तादृशसन्देशप्रापणादिना साक्षाद्दुःखरूपं भागवतप्रवरं पूजयां चक्रुः श्लाघादिना सम्मानितवत्यः तस्य प्रीत्यर्थं किं वा तत्कृपणेन श्रीकृष्णस्य सुखार्थं शोकशान्त्यर्थं यद्वा व्यपेतविरहज्वरा एव सत्य अधोक्षजमात्मानं ज्ञात्वेति योज्यं तादृशज्ञानासम्भवात् एतच्च श्रीपरीक्षिच्चित्तसमाधानार्थमुक्तम् अथवा आत्मानं प्रियम् अधोक्षजं व्रजराजकुमारं कृष्णस्य तस्यैव सन्देशैर्गवतीनां वियोगो मे इत्याद्विलक्षणोक्त्या अधुनाऽपैव पश्यमेति विज्ञायेत्यर्थः । अत एव व्यपेतविरहज्वरा उद्धवं सम्मानितवत्यः ॥ ५३ ॥

गोपीनां शुचः शोकान् विनुदन् हेतौ शतृप्रत्ययः विनोदकतिचित् दर्शनावश वा मासान् उवास व्रजेऽवसत् एवं तस्य तत्र वासस्य मुख्यप्रयोजनमुक्त्वाऽन्यदप्याह । कृष्णेति । गोकुलं तद्वत्यान् मनुष्यपशुपक्षिवृक्षादीन् सर्वानेव रमयामास सुखयामास उपनन्दादिवृद्धेषु तत्पत्न्यादिषु वृद्धासु च कृष्णस्य वन्दनादिना तथा श्रीदामादिवयस्येषु परिरम्भादिना विज्ञापनादिना तथा पशुपक्षिवृक्षादिषु प्रत्येकं कुशलप्रश्नादिना यथायथं रमणं तच्च गोकुलस्थेषु वन्दनादिविज्ञापनादिकमेव हरिलीलाकथागानमित्यर्थः । यद्वा किमर्थं रमणं कृष्णलीलाकथा गायन् गातुं गोकु-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

लरमणं विना तत्रत्यश्रीकृष्णलीलाश्रवणाभावेन तत्कथागानासिद्धेः इत्थं प्रागुक्तं वृष्णिकुलसम्मतत्वं मान्त्रित्वं च तस्य दर्शितम् यद्वा गोपीनां शुचो विशेषेण नुदन् तत्र तत्र कृष्णसंदर्शनेन नोदनस्य वैशिष्ट्यम् अत एव सर्वत्र कृष्णप्राकट्यदर्शनेन उत्फुल्लः कृष्णलीलानां कथाः प्रबन्धान् ॥ ५४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतः पुनरपि तासां वैयग्र्यं दृष्ट्वा कथितैर्भवतीनां वियोगो न इत्यादिकैर्मय्यावेश्य मनः कृष्ण इत्याद्यन्तैर्महामन्त्रैरिव कृष्णसन्देशैर्व्यपेतो विरहोत्थज्वरो महासन्तापो न तु तत्प्राप्त्यैकनाश्यो विरहो यासां तादृशः सत्यः सम्प्रत्येवोद्धवं यथा स्यात्तस्यातिथ्योचितं पूजयाञ्चक्रुरिति पूर्वमारब्धापि पूजा दुःखेन वितथा जातेत्यधुना तु विशेषेणैवेत्यर्थः । ननु सन्देशमात्रेण कथं व्यपेतविरहज्वरत्वं तत्राह । ज्ञात्वेति । तत्र प्रथमार्थे यस्यात्मनो ज्ञानं सन्दिष्टं तमात्मानमधोक्षजं श्रीकृष्णमेव मत्वा नत्वन्यम् । तत्रायमभिप्रायः । अनुवादमनुक्त्वा तु न विधेयमुदीरयेदिति न्यायादत्र तदुपदेशात् ज्ञातत्वेन तस्यात्मत्वमनूद्य पुनरधोक्षजापरपर्यायश्रीकृष्णत्वमेवाभिधीयते । तत्रात्मशब्देन सर्वात्मोच्यते । अधोक्षजशब्देन रूढिवृत्त्या प्रसङ्गसङ्गत्या च श्रीकृष्ण एव प्रतिपाद्यते । तत्रैव योगवृत्त्या सर्वेन्द्रियाधिकारित्वञ्च तत्र च सति भवा सर्वात्मनेति यत् पूर्वमुपदिष्टं तत् खलु लक्षणया निर्विशेषस्वरूपत्वेनैवेत्यविद्यावादिनः । परमविशेषवत् परमस्वरूपत्वेनैवेत्यचिन्त्यशक्तिवादिनः । तादृशविशेषवत्त्वेऽपि मे मयेत्युक्तः कृष्णतया विलक्षणेनेति प्रकरणार्थदर्शिनः । तथैव हि कृष्णमेनमवेहि त्वमात्मानमखिलात्मनामित्यादौ स्वाभाविकपरमप्रेमास्पदत्वोचितं सर्वात्मत्वं स्थापयित्वा देहीवाभाति माययेत्यत्र देहिशब्देन जीवत्वं निषिद्धमिति तत्र व्याख्यातमेव । तत्र यद्यपि गोवर्द्धनमखप्रवर्त्तनाय कर्मवादादिवद्दर्शनमप्यत्र प्रथमार्थे परमरहस्योत्तरार्थद्वयाच्छादनाय तस्मादुपरततया विरहसन्तापमयकालक्षपणाय च श्रीभगवता निर्विशेषत्वमेव प्रतिपादितं प्रथमतस्ताभिरप्यपेक्षितम् । तथापि पुनस्ताभिस्तच्छ्रवणाद्विलक्षणस्वरति स्वाभाव्येन श्रीकृष्णस्यैव सदा सर्वत्र स्फुरणान्निजसर्वेन्द्रिय प्रवर्त्तकत्वेनाभिगमाच्च । तत्र श्रीकृष्णत्वमेव पर्यवसाय्यते स्म । तदेवास्माभिरप्यनूद्य विधेययोरात्माधोक्षजशब्दयोः क्रमवलाद्दृश्यते । अन्यथा अद्वैतावेशे सति पूज्यपूजकत्वानुसन्धानात् भिन्नद्वयस्य पूजनं न प्रसज्यते चेति । द्वितीयेऽर्थे । यथा सावस्मान् सदानुभवति तथा वयमपि तमित्यविनाभावस्फूर्तेरात्मानमधोक्षजमात्मव्याप्तं मत्वेति व्याख्येयम् । तृतीयेऽर्थे । यथा तेन संदिष्टं तथैवात्मानमधोक्षजं मत्वेत्यर्थः । मय्यावेश्य मनः कृष्णे इति । चतुर्थपक्षे तु । यथा कृष्णेनादिष्टं तथात्मानमचिरात् कृष्णं प्राप्स्यन्तं तथैवाधोक्षजञ्च कृष्णमचिरात् स्वं प्रापयिष्यन्तं ज्ञात्वा निश्चित्येत्यर्थः । च शब्दं विनापि तदर्थः स्वयं गम्यते । अधोक्षजेति परमात्मेति भगवानितिवत् । किन्तु ततस्ताः कृष्णसन्देशैर्ज्ञात्वात्मानमधोक्षजम् । व्यपेतविरहज्वराः पूजयाञ्चक्रुरुद्धवमिति क्रमम् अकृत्वा । यदुद्धवमित्याद्यनन्तरं ज्ञात्वा आत्मानमधोक्षजमिति पठितम् । तत् खलु यथा श्रीनन्दस्य गर्गदर्शने तं दृष्ट्वा सादावानर्चाधोक्षजधिया इति तथोद्धवदर्शने वासुदेवधियार्च्चयदित्यातिथ्यतोचिता तथैव सङ्गच्छते यदत्रापि विशेषणद्वयेन तासां तत्र परमात्मदृष्टिरेव निर्दिष्टेति ॥ ५३ ॥

ततश्च श्रीगोपीप्रमुखानां श्रीकृष्णस्फूर्त्तौ साक्षात्कारत्वप्रतीत्या तन्नित्यलीलायां मानसप्रत्यक्षमयप्रवेशेन मय्यावेश्य मनः कृष्ण इति तदाश्वासने च प्रायो विच्छिन्न एव शोक इत्याह । उवासेति त्रिभिः । विनुदन् बहिर्विरहानुसन्धानेन विस्मृतौ सत्यां पुनः पुनस्तैः सन्देशैरपनयन् । एतदुपलक्षणत्वेन श्रीनन्दयशोदयोरपि तथा तदपनयनं ज्ञेयं यत्त्वन्यद्गोकुलं तज्जनवृन्दं तत्स्फूर्त्यैव तत्साक्षात्कारप्रतीतिमयं तदपि माथुरीर्गोकुलसम्बन्धिनीश्च श्रीकृष्णस्य लीलाकथा गायन् रमयामास तत्तल्लीलानां साक्षादिव स्फोरणेन प्रीणितवान् ॥ ५४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । ता गोप्यः कृष्णसन्देशैर्व्यपेतो विरहज्वरो यासां ता अधोक्षजं श्रीकृष्णमात्मानं सर्वान्तरात्मानं ज्ञात्वा कृष्णसंदेशैरधोक्षजमात्मानं ज्ञात्वा व्यपेतो विरहज्वरो याभिस्ता इति वा उद्धवं पूजयामासुः ॥ ५३ ॥

उवासेति शुचः दुःखानि वितुदन्नपनयन् रमयामास सुखयामास ॥ ५४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तिमेव निरूपत्यस्मिन्नध्यागे तत्रादौ गोप्यः उद्धवं कृष्णबुद्ध्या पूजयन्ति स्मेत्याह । शुक इति ॥ १ ॥

विनुदन् परिहरन् कृष्णस्य लीलाः यासु ता स्तथा ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत इति । यथा तेन संदिष्टं तथात्मानमधोक्षजं ज्ञात्वेत्यर्थः । विनुदन् बहिर्विरहानुसन्धानेन विस्मृतौ सत्यां पुनः पुनस्तैः सन्देशैरपनयन् एतदुपलक्षणत्वेन श्रीनन्दयशोदयोरपि तदपनयनं ज्ञेयम् । तत्त्वन्यत् गोकुलं तज्जनवृन्दं तत्स्फूर्त्यैव तत्साक्षात्कारप्रतीतिमयं तदपि माथुरीर्गोकुलसंबन्धिनीश्च श्रीकृष्णलीलाकथा गायन् रमयामास ॥ ५३—५५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तासां विलापं श्रुत्वा पुनस्तमेवार्थमुपदिष्टवानित्याह । तत इति । तदनन्तरमपि कृष्णसन्देशैः विशेषेण अपेतः विरहज्वरः यासाम् एतत्सर्वं भगवदुक्तार्थाज्ञानाद्भवति वियोगे हि सति दुःखं चिन्ता उद्धरणादिकं न हि विस्मृतकण्ठचामीकरस्य चामीकरस्मारणादतिरिक्तं दुःखविस्मारकं साधनमस्ति अतः प्रथमोपदेशेन अभिप्रायः सिद्धः भगवति दोषबुद्धिर्नि-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वृत्ता ततो निर्दुष्टानां भावः पुनर्वर्णितः सोऽपि पदार्थः पुनरुपदेशास्मारणेन निवर्तितः तदा भगवति आत्मत्वं ज्ञातमित्याह । ततः कृष्णसन्देशैः कृत्वा विशेषेण अपेतविरहज्वराः ज्वराभावे दृष्टमेव द्वारं ज्ञातमित्याह । अधोक्षजमात्मानं ज्ञात्वेति । स्वात्मैवाधोक्षजः अधोक्षजपक्षेन चैतज्ज्ञापितमिन्द्रियाध्यासात् संघातात्मबुद्ध्या च भगवानात्मत्वेन प्रतीतः तद्रूपमेऽप्रतीत इति अथवा अन्तः स्वरूपं प्राप्ताः यथा कोशमध्ये प्रतिमा तथा तासां सङ्घातमध्ये आत्मानं जीवं स्वस्मिन् अन्तर्भाव्य तत्प्रदेशे वा स्वयमाविर्भूय तत्रैव वा आनन्दांशाभिव्यक्तादेव तत्स्वरूपत्वेन सम्पाद्य पश्चादपरोक्षतया स्वप्रकाशत्वेन वा आत्मानं ज्ञापितवान् इति अन्यथा अध्यारोपन्यायेन प्रतीतिः स्यात् शब्दमात्रे तु विरहाभावः आत्मा न भेदेन प्रतीतः यतः संयुक्तः तथा हि भगवत्कृतिर्भगवत एवेत्यासां ज्ञानमेव ततो गुरूपदेशः प्राप्त इति साक्षाद्गुरुत्वाभावेऽपि श्रुतत्वाद्युपदेशात् निगरणार्थस्य विद्यमानत्वात् पूजयांचक्रुः आत्मविदं वा सन्मानितवत्यः अथवा पूर्वं भगवन्तं भिन्नतया ज्ञातवत्यः इदानीमात्मत्वेन अग्रे तु तथैव भविष्यतीति ब्रह्मभावयोग्यता निरूपिता । तथात् नाभिलषितं स्यात्तदा न भवेत् इत्युत्कटेच्छां ज्ञापयितुमुद्धवपूजा निरूपिता ॥ ५३ ॥

कोमलकण्टकन्यायेनायं भावः अदृढश्चेत् पूर्वभावेन बाध्येतेति पुनः पुनः स्मारणार्थं किञ्चित्कालं तत्रैव स्थित इत्याह । उवास कतिचिन्मासानिति । स्थितस्य प्रयोजनमाह । गोपीनां विनुदन् शुच इति । पुनः पूर्ववासनया भेदः स्फुरति स्फुरणमात्रे च क्लेशो भवति तद्दूरीकरणार्थं स्थितिः यावत्स बाधा न स्फुरति सजातीयप्रत्ययसंचालितमेतदेव वर्तमानं ज्ञानं भेददुःखानुत्पाद समर्थमिति देशादिधर्मैः अन्तःकरणावरणे भेदज्ञानभावकमिति तन्निराकरणार्थं भगवज्ज्ञानं कृतवानित्याह । कृष्णलीलाकथाः गायन्निति लौकिकाः कथामात्र एवासक्ता भवन्ति सर्वे लीलायां कथायां मुक्ता भक्ताश्च कृष्णकथायामिति योगसमुदायाभ्यां प्रतिपाद्यते ॥ ५४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततश्च तासु दुःखेनाशामपि शिथिलयित्वा मर्तुमुद्यतासु अन्यानन्यातिरहस्यान् संदेशान् उक्त्वा उद्धवस्ता आनन्दयामासेत्याह । ततस्ता इति । ततस्तदनन्तरं ये कृष्णसंदेशाः पूर्वसंदेशेभ्यो भिन्नास्तैरित्यन्वयः ते च संदेशाः श्रीशुकेनाविवृता अपि फलतो ज्ञेयाः यथा भोः प्राणप्रेयस्यः ! मत्प्रेषितस्योद्धवस्याग्रे युष्माभिश्चक्षूंषि मुद्रयितव्यानि ततश्च पूर्वं यथा गोपबालकाश्चक्षुर्मुद्रणेन मुञ्जाटवीदावानलादुद्धृतास्तथैव विरहानलान्तरात्युद्धरिष्यामि पश्यत मे योगबलमिति संदेशश्रवणेन ता यदैव चक्षूंषि मुद्रयामासुस्तत्क्षणमध्य एव शतकोटिवर्षसमयं योगमायया प्रवेश्य तत्र ताभिः सह रासवृन्दावनविहारधूनमधुपानजलविहारहिन्दोलनादि विलासानन्याल्लक्षितान् कृष्णस्तावच्चक्रे यावद्भिः सा विरहपीडा सम्यगेव विस्मृता भवेत् ततश्च तासामज्ञानानन्दप्रमुदितान्यालक्ष्य मुहूर्तानन्तरं भोः स्वामिन्यः ! सांप्रतं चक्षूंष्युन्मीलयतेत्युद्धवेनोक्ते सति ताश्चक्षूंष्युन्मील्य अधोक्षजम् अधः कृतभ्योऽक्षिभ्यो निमीलितेभ्यो नेत्रेभ्यः परस्तादानन्दप्राप्त्या पुनर्जातामिव आत्मानं स्वं ज्ञात्वा पूजयांचक्रुः भोः प्रेमवत्यः ! यदि यूयं प्राणांस्त्यक्तुमीहध्वे तर्हि युष्मद्दशां श्रुत्वा अहमपि प्राणांस्त्यक्ष्यामि नात्र सन्देहः शपथसहस्रं कुर्वन्नहं ब्रवीमि यूयमेव प्राणा भवथ व्रजं गन्तुं प्रतिक्षणं यतमानोऽप्यहं यन्न शक्नोमि तत्रायं काल एव कर्मैव वा व्याख्यातलक्षणः प्रेमैव वा प्रतिबन्धक इत्यहं शङ्के इत्येवं प्रकारकैः संदेशैर्व्यपेतो विरहज्वरः येषु तत्प्रेमाभावनिश्चयलक्षणः संतापो यासां ताः अधोक्षजं कृष्णमात्मानम् आत्मतुल्यं विरहसन्तापजर्जरं ज्ञात्वा किं वात्मानमात्मनः स्वानेव अतः प्राणा यस्य तथाभूतमधोक्षजं कृष्णं ज्ञात्वा उद्धवं पूजयांचक्रुरिति भो उद्धव ! साम्प्रतमतः परं कष्टेनापि स्वप्राणान् वयं रक्षिष्याम एवं यदीमं सन्देशं त्वं नाख्यास्यस्तदा वयममरिष्यामैव ततश्च सर्वनाश एवाभविष्यदतोऽस्मद्विधा सर्वरक्षा त्वया कृतेति तं संमानयामासुः आत्मानं स्वस्य जीवात्मानम् अधोक्षजं परमात्मानं ज्ञात्वेतिप्रकटोऽर्थोऽसुरमोहनार्थ एव न तु वास्तवः शास्त्रस्य अस्य मोहिनीसाधर्म्यात् न हि केनापि प्रेमरसास्वादिना भक्तेनात्मैक्यज्ञानं कदापि रोचितम् आभ्यः प्रेमिभक्तमुकुटमणिभ्यस्तत् कथं रोचतां "त्वत्कथामृतपाथोधौ विहरन्तो महामुदः कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपम"मित्यार्षशास्त्रतात्पर्याभिज्ञैः स्वामिचरणैरप्युक्तम् नापि बलवता अध्यात्मज्ञानेन संपूर्णः प्रेमा काप्याच्छादयितुं शक्यो दृष्टः वसुदेवार्जुनयोरपि महैश्वर्यदर्शनोद्दीपितदास्यभक्तवात्सल्यसख्यभावावृतौ न तु ब्रह्मज्ञानेन यत्तु ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृता इति व्रजौकसां ब्रह्मरसनिमग्नत्वं श्रूयते तदपि ब्रह्मज्ञानस्य तद्रोचकत्वज्ञापनार्थमेव ते एव तत्रोद्धृता इति पदं प्रयुक्तम् यथा संसारकूपाज्जीवा उद्धियन्ते तथैव ब्रह्मरसात्ते व्रजौकस उद्धृता इति किं चासामुत्पन्नाभेदात्मज्ञानत्वे गोप्यो हसन्त्यः पप्रच्छुः रामसंदर्शनाद्दताः कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभ इति कथं नु गृह्णन्त्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः कुलस्त्रिय इत्याद्यग्रिमवचनानि साभिमानान्यज्ञानद्योतकानि न सम्भवेयुरिति विवेचनीयम् ॥ ५३ ॥ ५४ ॥

———

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं प्रियविरहानलज्वालाव्याप्तमानसानां तासां तद्वृत्तं कीदृश्यवस्था सम्पन्नेत्यपेक्षायां श्रीशुक उवाच ततः स्वदुःखनिवेदनानन्तरमुद्धवेन त एव प्रियसन्देशाः पुनः श्राविताः तैः प्रियस्य सन्देशैः भवतीनां वियोगो मे नहि सर्वात्मना क्वचिदित्यादिकैः प्रियेण परमाप्तेन प्रेषितत्वाद्यथार्थत्वप्रतीतिजनकैस्ताः प्रियमधोक्षजं सर्वेन्द्रियजन्यज्ञानाविषयं नित्यं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा व्यपेतो विशेषेण निवृत्तो विरहज्वरो यासां ताः उद्धवं भगवदुपदेशप्रापकत्वाद्गुरुप्रतिनिधिं मत्वा पूजयांचक्रुः सम्माननं कृतवत्यः तथा च तत्त्वज्ञानमवाप्य जीवन्मुक्तदशां प्राप्ताः सफलजन्मवत्यः सम्पन्ना इति भावः ॥ ५३ ॥

ताभिः सम्मानित उद्धवस्ततः किं कृतवानित्यपेक्षायामाह । उवासेति । गोपीनां पूर्ववासनया गोपालस्वरूपं प्रियविरहानुसन्धानवतीनां पुनः पुनरुत्थितान् शोकान् विनुदन् भगवत्स्वरूपा-

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः ॥
व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥ ५५ ॥
सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् ॥
कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥ ५६ ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

पदेशावृत्त्या सम्यगपनयन् कतिचिन्मासानुवास अभ्यासवशात्कृष्णलीला कथास्वेव तत्रत्यानां रमणमालोक्य ता एव गायन् गोकुलं रमयामास कृष्णस्य परब्रह्मणो या गोवर्द्धनोद्धारणादिरूपा लीलास्तासां कथानां गानं मुमुक्षूणां मुक्तानां च रमणस्थानमतः शोकापनोदकात्मज्ञानोपदेशावसरे तद्गानमपि परमानुकूलमेवेत्याशयेनोद्धवस्य तथा प्रवृत्तिरित्यर्थः ॥ ५४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ततः श्रीमदुद्धवं गवतीनां वियोगो मे नहीत्यादिकृष्णसन्देशैः अधोक्षजं सर्वज्ञं सर्वात्मानं सर्वगतं ज्ञात्वा आत्मानं च क्षेत्रज्ञमल्पज्ञत्वादिना भिन्नमपि तदंशत्वात्तदभिन्नं ज्ञात्वा व्यपेतविरहज्वराः सत्यः उद्धवं पूजयांचक्रुः अत्र "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति सूत्रमप्यनुसन्धेयम् ॥ ५३ ॥

शुचः शोकान् दुःखानीत्यर्थः । विनुदन् अपनुदन् ॥ ५४॥५५ ॥

भाषा टीका ।

श्रीशुकदेवजी बोले तिसके अनन्तर वे गोपी श्रीकृष्ण के संदेशों से कुछ दुःख से निवृत्त होकर उद्धवजी के आत्मा को भगवान् की बुद्धि से मान कर पूजन करती भई ॥ ५३ ॥

फिर उद्धवजी श्रीकृष्ण लीलाओं की कथाओं का गान करते हुये गोपियों के शोकों को दूर करते हुये कितने एक महीना तक गोकुल में निवास करते भये ॥ ५४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सरिद्वनगिरिद्रोण्यादिषु प्रत्येकं श्रीकृष्णं लीलासम्प्रश्नादिभिः संस्मारयन् रेमे ॥ ५६ ॥

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

स प्रागुक्तमाहात्म्यः तथा तथा गोकुलरमणो वा तावन्ति बहुतराण्यहानि व्रजवासिनां सर्वेषामेकक्षणतुल्यान्यासन् कुतः कृष्णस्य वार्तय उद्धवेन पुनरेव वा कथ्यमानया लीलाकथया कृष्णवार्तास्वभावेन परमानन्दजनतात् यद्वा कृष्णस्य वार्तया तत्र तत्र वर्तनेन ॥ ५५ ॥

स तु तेषां सङ्गेन श्रीवृन्दावने परिभ्रमन् परमसुखीबभूवेत्याह । सरिदिति । दर्शयितिचित्रप्रसादादिना निजमनोहरस्य श्रीभगवतो दासः साक्षाद्विविधसेवानिष्ठः कृष्णं प्रति तत्तद्वार्तया व्रजौकसः सम्यक् स्मारयितुं सरिदादीन् वीक्षमाणो रेमे इति तेषां सङ्गत्या तत्र तत्र परिभ्रमणेन वीक्षणे गुणविशेष उक्तः एवं यदा कदापि भगवत्प्रियजनसङ्गेन तल्लीलास्थलदर्शनस्य परमानन्दकारित्वान्माहात्म्यविशेषोऽपि दर्शितः यद्वा व्रजभूमेः सरिदाद्यासु तत्र तत्र सदा पुष्पितद्रुमांश्च प्रति कृष्णं वीक्षमाणो रेमे व्रजौकसां गोपीनां कर्मणि षष्ठी ताः प्रति भवतीनां वियोगो मे इत्यादि तत्सन्देशस्य यथार्थतां संस्मारयन् ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेव विवृणोति । यावन्तीति द्वाभ्याम् ॥ ५५ ॥

सम्यक् स्मारयन् साक्षात्कृतनिर्विशेषं कुर्वन्नित्यर्थः । तादृशानामपि तेषां स्मरणे यत् सम्यक्त्वं तत्तथैव पर्यवस्यतीति अत एव स्वयमपि रेमे । गवादिवत् स्फूर्त्तिविशेषात् द्रुमाणामपि कुसुमितत्वमुक्तम् ॥ ५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यावन्तीति । उद्धवो नन्दस्वामिके व्रजे यावन्त्यहानि दिनानि अवात्सीत्तावन्त्यहानि कृष्णस्य वार्तया क्षणतुल्यानि बभूवुः ॥ ५५ ॥

सरिदादीन् पश्यन् तेषु प्रत्येकं कृष्णलीलाप्रश्नादिभिस्तं व्रजौकसां स्मारयन् रेमे सुखयामास ॥ ५६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवात्सीत् उवास क्षणप्रायाणि क्षणकल्पानि ॥ ३ ॥

पाददंष्ट्रयोन्नतनिम्ना निम्नकुसुमितवृक्षनिविष्टा स्थली द्रोणी सानुविशेषः व्रजौकसां कृष्णक्रीडास्मरणं यथा भवति तथेति क्रियाविशेषणं सुखं कृत्वा रेमे हरिदास उद्धवः ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सरिदिति । तत्र तत्रत्यलीलाविष्टतया सम्यक् स्मारयन्नित्यर्थः । जगामेति प्रत्यहं गमनागमनसमये किञ्चिद्व्यवहितदूरे स्थित्वेति ज्ञेयम् ॥ ५६-५७ ॥

दृष्ट्वैवमादिगोपीनां कृष्णावेशात्मविक्लवम् ॥
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥ ५७ ॥
एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः ।
वाञ्छन्ति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ५८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च सर्वमेव गोकुलं रमयामास अन्यथा संसर्गतोऽपि दुःखं भवेदिति एतत्कृतं गोकुलं जातमित्याह । यावन्त्यहानीति । नन्दस्य व्रजे अयमवात्सीत् यतोऽयमुत्सवात्मकः तावन्त्यहानि क्षणप्रायाणि जातानि आकाङ्क्षायाः परस्परं प्रतिक्षणं वृद्धत्वात् क्षणमिव बभूव इति प्रायग्रहणं बहिः संवदने हि दिनादिगणना ते ह्यात्मत्वेनैव भगवन्तं ज्ञात्वा तन्मया एव जाता इति कालातिक्रमः सुगमः उद्धवासक्त्या तथात्वमाशङ्क्यत इति निवृत्त्यर्थमुक्तमपि हेतुं पुनः स्मारयति कृष्णस्य वार्तयेति ॥ ५५ ॥

ननु परार्थं कथं बहुकालं तिष्ठेत् भगवन्तं परित्यज्येत्याशङ्क्याह । सरिद्वनेति । भगवल्लीलास्थानानि तत्रत्यानि सर्वाणि स्वयं प्रष्टव्यानीत्येव पूर्वमेव मनोरथः अतः प्रसङ्गादागतः भगवद्वाक्यमिति पालितं भवति भगवल्लीलापि दृष्टा भवतीति शास्त्रार्थस्य च श्रुतत्वात् भगवल्लीलार्थमेव बहुकालं तत्र स्थितः सरिद्यमुना वृन्दावनं गोवर्द्धन उभयतः पर्वतानां मध्ये निम्ना भूमिः द्रोणीसमा गोकुलेऽपि कुसुमितान् द्रुमान् चम्पकादीन् अपर्तावपि भगवदनुभावेन सार्वकालिकपुष्पयुक्तान् एतावान् स्वार्थः कृष्णं स्मारयन्निति भगवदाज्ञाकरणम् अत उभयार्थस्य संपन्नत्वात् रेमे हरिदास इत्यनेनान्यो भावो निवारितः तत्सङ्गस्य प्रसङ्गादप्यागतस्य फलमाह । व्रजौकसामिति- सामान्येन सर्वेषां ग्रहणं भगवता उभयोरेव सुखजननमाज्ञप्तं अयं तु सर्वानेव भगवद्भावापन्नान् कृतवानित्यर्थः ॥ ५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

क्षणप्रायाणीति । उद्धवस्यान्वर्थनामत्वाद्भगवताप्यानन्ददातृत्वस्वशक्त्यर्पणाच्चेति गम्यते ॥ ५५ ॥ ५६ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं प्रवृत्तिश्च सफलाऽभूदित्याह । यावन्त्यहानीति । स उद्धवो यावन्ति दिनानि नन्दस्य व्रजे नन्दनन्दनासकमानलवासस्थाने अवात्सीत् वासं कृतवान् तावन्ति व्रजवासिनां कृष्णस्य परब्रह्मणो वार्तया तत्त्वोपदेशरूपया गृहीतनन्दनन्दनावतारस्य च वार्तया लीलाकथया हेतुभूतया क्षणप्रायाण्यासन् क्षणादपि न्यूनत्वबोधनाय प्रायः पदं बहिर्मुखैर्हि दिनानि गण्यन्ते ननु कृष्णाभिन्नात्मभिर्नापि तल्लीलाकथाश्रवणाद्यासक्तचेतोभिरिति भावः ॥ ५५ ॥

ननु भगवन्तं परित्यज्य किमिति तदर्थं बहून्मासान् तत्र स उवासेत्याशङ्क्य भगवद्दासस्य तस्य लीलास्थानानि सर्वाणि स्वयं गत्वा साक्षाद्द्रष्टव्यानीति चिरकालादारभ्य मनोरथ आसीत्तत्तश्च सर्वाभिप्रायविदा भगवता प्रेषितस्तदाज्ञापालनस्वपरप्रयोजनसिद्ध्यर्थं तत्रैव बहुकालमुवासेत्याशयेनाह । सरिदिति । यमुनावृन्दावनगोवर्द्धनतद्दरीः भगवदनुभावेनापर्तावपि कुसुमितपुष्पयुक्तान् चम्पकादिवृक्षान् साक्षात्पश्यन् अत्र श्रीकृष्ण इमां लीलां कृतवानत्रेमामिति व्रजवासिभिः प्रदर्शितानि तत्तत्स्थानानि साक्षात्कुर्वन् परं व्रजौकसां च तत्तत्प्रश्नद्वारा कृष्णसन्देशप्रदानेन च कृष्णं परमेष्टं परमात्मानं संस्मारयन् रेमे तथा च भगवदाज्ञापालनतत्स्वेष्टसम्पादनाविरोधेन स्वार्थं सम्पादयामास हरिदास इत्यनेन तत्र मलिनभावेन तस्य वासो निवारितः सामान्येन सर्वदुःखहारिभगवद्दासत्वाच्च सामान्येन सर्वेषां तत्रत्यानां दुःखं निवारयामासेति द्योतनाय व्रजौकसामित्युक्तम् ॥ ५६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हरिदासः उद्धवः सरिदादीन् पश्यन् तेषु प्रत्येकं कृष्णलीलाप्रश्नादिभिः कृष्णं व्रजौकसां संस्मारयन् रेमे ॥ ५६ ॥

---

भाषा टीका ।

जितने दिन तक ये उद्धवजी नन्दजी के व्रज में रहे तब तक श्रीकृष्णजी की चर्चा होने से व्रजवासियों के दिन क्षणमात्रसरी के बीत गये ॥ ५५ ॥

वृन्दावनकी यमुना नदी निकुंजादिवन गोवर्धन पर्वत की गुफा खिले हुये फूलों के वृक्ष इन सबों के दर्शन कर कर के उद्धवजी व्रजवासियों को श्रीकृष्ण स्मरण कराते हुये रहे ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

कृष्णावेशेनाऽऽत्मनो मनसो वैक्लव्यं वैकल्यं ता गोपीर्नमस्यन्नन्तर्नमस्यन् उत्तमस्यात्मनो गोपस्त्रीणामकृतिरन्यथा न भवतीति दर्शयितुं तासां महत्त्वं पद्यभिर्जगौ उवाच ॥ ५७ ॥

एता इति । एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः । यदिति । यं रूढं भावं भवभियो मुमुक्षवो मुनयो मुक्ता अपि वाञ्छन्ति यं च वयं भक्ता अपि अतोऽनन्तस्य कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसम्बन्धिभिः श्रौतसावि-

श्रीधरस्वामिकृतभावार्थदीपिका।

त्रयाणामैकैस्त्रिभिर्जन्मभिः किं कोऽतिशयः यत्र तत्र जातः स एव सर्वोत्तम इत्यर्थः। यद्वा। अनन्तकथासु रसो यस्य तस्य ब्रह्म-जन्मभिश्चतुर्मुखजन्मभिरपि किमित्यर्थः॥ ५८॥

———

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी।

एवमुक्तप्रकार आदिर्यस्य तत् आदिशब्दान्मुकुन्दमत्तवञ्च-नादिकं मुहुर्मूर्च्छादिकं च ज्ञेयं यद्वा आदिगोपीनां नित्य-प्रियाणां व्रजसुन्दरीणां कृष्णे आवेशेन तथा तथानुभवात् सम्यगभिनिवेशेन आत्मनो विकृतं दिव्योन्मादं दृष्ट्वा साक्षा-दनुभूय नमस्यन् अग्रे नमस्कर्तुं प्राक् स्तोत्रतया किं वा परमभक्त्या साक्षादेव प्रणमन् इदं वक्ष्यमाणं जगौ उच्चैः सुस्वरं कीर्तयामास कुतः परमप्रीतः निजेश्वरेऽननुभूतपूर्वप्रेम-विशेषदर्शनेनात्यन्तहृष्टः सन्॥ ५७॥

"गोपीमाहात्म्यविज्ञश्चर्यसर्वभागवतोत्तमम्। तमुद्धवं प्रपद्येऽहं तद्गीतार्थविलुब्धधीः"एताःश्रीव्रजेन्द्रव्रजवासिन्यःगोपवध्वो गोप्यःभुवि पृथ्वीमध्ये इति अत्रैव सुष्ठु साधनादिसंपत्त्या जन्मसाफल्य-सिद्धेः अखिलात्मनि सर्वान्तर्यामिणि परमेश्वरे तत्रापि गोविन्दे रूढभावाः जातप्रेमविशेषा बभूवुः तत्रापि एवमनेन सर्व-नैरपेक्ष्येण तथा निर्वचनीयाखिलालक्षार्ति विकारभङ्ग्यादिना प्रका-रेण तत्र च जगच्चमत्कारकारिभावविशेषेण वाञ्छन्त्येव केवलं न तु लभन्ते यं वयमपि वाञ्छामः एवं मुमुक्षुमुक्तभक्तेभ्योऽधिक-माहात्म्यमुक्तम् अत ईदृशमेव जन्म सर्वोत्तमं न तु जगत् स्रष्टृत्वादिना सर्वश्रेष्ठतया प्रसिद्धं श्रीब्रह्मजन्मापीत्याह। किमिति। बहुत्वं गौरवेण किं वा बाहुल्यापेक्षया श्रीभगवत्कथारसेन श्रीब्रह्मजन्मतोऽप्यधिकफलसिद्धेः अथवा अखिलस्यात्मनि प्रिय-तमे इत्यर्थः। तथापीदृशो भावोऽस्मिन्न कस्याप्यन्यस्यास्तीति भावः। अन्यैर्व्याख्यातं यद्वा ब्रह्मजन्मभिः ब्रह्माकारमनोवृत्ति-भिरपि किं बहुत्वं गौरवेण समअनपेक्षया वा यद्वा ईदृश-भावाभावेन ब्रह्मजन्मनापि न किमपीत्याह अकारप्रश्लेषेण अनन्तकथायां न रसो यस्य तस्य तद्रसेनैव ब्रह्मजन्मना-मपि साफल्यसिद्धेः आसां च कथादिसाधनभावविशेषसं-पत्त्या सर्वतः श्रैष्ठ्यं युक्तमेवेति भावः॥ ५८॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं यद्यपि सर्वेषामेव व्रजवासिनां श्रीकृष्णे सर्वविलक्षणः प्रेमा तथापि श्रीगोपीषु तस्य परमचमत्कारमयी भक्तिर्जातेति दर्शयति। दृष्ट्वेत्यादिना। एवमुक्तप्रकार आदिर्यस्य तद्वारितमिति शेषः। कृष्णावेशेनात्मनो विक्लवो दिव्योन्मादादिर्यत्र तदनु-भूतं दृष्ट्वा परमप्रीतः तद्दर्शनात् स्वभाग्यस्फुरणेन चासां गुणानु-मोदनेनैव चात्यन्तहृष्टः नमस्यन् नमस्कर्तुं स्तोत्रतया जगौ आवेशेन सुस्वरं नुनाव। किंवा झटिति प्रणमन्नेव जगौ प्रत्यहं गमनागमनसमये किञ्चिद्व्यवहितदूरं स्थित्वेति शेषम्॥ ५७॥

"गोपीमाहात्म्यविज्ञश्चर्यसर्वभागवतोत्तमम्। तमुद्धवं प्रपद्येऽहं तद्गीतार्थविलुब्धधीः"। ननु भवाद्भिः क्षत्रियतनुभिर्ब्राह्मणतनव एव नमस्या इति स्थिते "क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टा" इति कस्यचित् दुर्मतमाशङ्क्य तासामेव सर्वोत्तमतनुत्वं त्रिभिः स्थाप-यन् प्रथमं तावद्भगवन्महाप्रेमप्रकाशाकारत्वेन स्थापयति तदाह। एता इति द्वाभ्याम्। एताः श्रीनन्दव्रजवासिन्यः श्रीभगवत्प्रेयस्यः परं केवलं सम्प्रति श्रीभगवदवतारसहभावसम्पन्नतद्भक्तिसाधकसिद्ध-नित्यसिद्धालङ्कृतायां भुवि तनुभृतः परमोत्तमतनुधारिण्य इति स्त्रीत्वादिदृष्ट्या नावमन्तव्याः। कथं तत्राह। अखिलात्मनि सर्वांशिनि स्वरूपत्वादेव सर्वेषां तावन्निरुपाधितादृशपरमप्रेयसी-योग्ये तथापि गोविन्दे परमरूपगुणसीमनाविख्यातश्रीगोकुलेन्द्र-तया प्रकाशमाने रूढभावा उद्भूतमहाभावाः तत्राप्येवमित्यनुभवे-कवेद्यनानिर्वचनीयप्रकारेणेत्यर्थः। तस्मात्तादृशभावात्तेजोमय्यस्तन-वोऽप्यासां सर्वतोऽप्युत्तमा इति भावः। तत्र प्रमाणानि तु समनन्तर-मेव दर्शयिष्यन्ते तदर्थं तादृशभावमहिमानमाह। यद्भावमात्रमासां तावद्दूरतस्तद्विशेषयास्तां मुमुक्षवो मुक्ताश्च वाञ्छन्ति वयमपि नित्यतत्साक्षिणो भक्ताः महिमदृष्ट्या केवलं वाञ्छामः नतु प्राप्नुमः। दूरतस्त्वन्ये भावस्यास्य यन्निदानं तन्माधुर्यविशेषानुभवस्तद-लाभादिति भावः। टीकायाम् अत इत्यस्याप्येतदेव तात्पर्यम्। अन्यत्तैः। यद्वा ईदृशभावाभावेन ब्रह्मजन्मभिरप्यलमित्याह अकारप्रश्लेषेण। अनन्तस्य परममाधुरीभिरपारस्य तस्य कथा-स्वपि अरसो रुचिमात्रस्याभावो यस्य तस्येति तेषां द्वितीय-पक्षेऽपि अरस इत्येव पाठो युज्यते। अन्यथा पूर्वत्र चतुर्मुखजन्म-भिर्धेति मात्रमवक्ष्यतेति॥ ५८॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

दृष्ट्वेति। एवं प्रदर्शितमादिर्यस्य तद्गोपीनां कृष्णावेशेनात्मनो मनसो विक्लवं वैक्लव्यमधार्ष्ट्यं दृष्ट्वा नितरां प्रीत उद्धवस्ता गोपी-र्नमस्यन्नमस्करिष्यन्निदं वक्ष्यमाणं जगौ उत्तमस्यात्मनो गोपस्त्री-नमस्कृतिरन्याय्या न भवतीति दर्शयितुं तासां महत्त्वं पञ्चभिर्जगा-वित्यर्थः॥ ५७॥

एता इति। एता गोपवध्वः परं केवलं तनुभृतः सफलजन्मानः तत्र हेतुं वदन् गोपवधूर्विशिनष्टि। एवमित्थमात्मनि सर्वान्तरा-त्मनि गोविन्द एव रूढः भावः प्रेमात्मको यासां ताः कुतस्ता-वतैव तनुभृत्त्वमित्यत आह। यद्यस्मात्कारणाद्भवभियो मुमुक्षवः मुनयः शुभाश्रयमननशीला वयमभक्ताश्चास्मदादयः वाञ्छन्ति रूढभावमिति विभक्तिविपरिणामेन संबन्धः यद्गूढभावत्वमिति वा यत एवमतः अनन्तस्य गोविन्दस्य कथासु रसोऽनुरागो यस्य तस्य ब्रह्मजन्मभिः शौक्लसावित्रयाज्ञिकैः त्रिभिर्जन्मभिः किं कोऽतिशयः अनन्तकथारसत्वमेवातिशयावहं ननु ब्रह्मजन्मेति भावः। यद्वा। अनन्तकथारसस्य ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपीत्यर्थः॥ ५८॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गोपीनामेवमादिकृष्णावेशात्मविक्लवं दृष्ट्वा नमस्यन् प्रावचनं कुर्वन्॥ ५॥

अखिलात्मनि पूर्णात्मनि गोविन्दे रूढभावाः एवं नित्यमति-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वर्धमानभक्त्या एता गोपवध्वस्तनुभृतां मध्ये परमुत्तमं शरीरभरणफलभाज इत्यन्वयः मुन्यादिषु सत्सु किं विशिष्योच्यत इति तत्राह । वाञ्छन्तीति । भवभियः भद्रबुद्धयोऽपि मुनयः यद्भक्तिलक्षणं मुक्तिसाधनं वाञ्छन्ति वयं च वाञ्छामः नात्विन्थं प्रभवामः तत्र को हेतुरित्यतो वोक्तं भवभिय इति संसारोद्विग्नबुद्धित्वादित्यर्थः । भवभयादिति पाठे संसारभयं सन्द्रक्ष्यंति ल्यब्लोपे पञ्चमी मुनीनां ब्रह्मकुलोत्पन्नोत्तमत्वात्किंनिनिन्दिषुरिव ब्रवीपीति तत्राह । किं ब्रह्मेति । यत्र येषु ब्राह्मणजननेषु अनन्तस्य हरेः कथा नास्ति तैः किं न किमपि प्रयोजनं जीवन्मृतत्वादित्यर्थः ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एता इत्यादिकम् तत्र या वै श्रियार्चितामित्यत्र तथापि श्रिया यत्तद्प्राप्तिस्तत्त्वल्वेतासामिव तस्मिन्नमस्यत्वभावादिति ॥ ५८—६४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवदाज्ञां कृत्वा इतस्तस्य निर्गमनमाह । दृष्ट्वेति । प्रत्यहमुपदेशः प्रत्यहवैक्लव्यमेवमुभयं दृष्ट्वा आत्मतत्त्वेऽपि बहिः संवेदनमात्रेणैव तासां भगवदाकाङ्क्षोत्पद्यते परं निर्दुष्टा एवं तासां दृष्ट्वा कृष्णावेशेन आत्मनो देहस्य विक्लवं दृष्ट्वा अन्तर्निष्ठा वा विरहो वा द्वयमेव ननु तासामन्या लौकिकी अवस्था एवं दृष्ट्वा अन्तर्निष्ठा वा विरहो वा द्वयमेव दृष्ट्वा परम प्रीतो जात एवमेव स्थातव्यं भक्तेनेति पश्चात्तासूभयं दृष्ट्वा स्वस्मिन्नेकमवेति आधिक्यात् ता नमस्यन् मनोदोषशङ्काभावाय तासां स्तुतिरूपमिदं वक्ष्यमाणं जगौ ॥ ५७ ॥

तस्यैव व्याख्यान्याह । एताः परमिति षड्भिः । तासु भगवतः सर्वधर्मज्ञापनाय आदौ तासां स्तुतिमाह । तनुभृतश्चेत् एता एव नापि ज्ञानिनो नापि लौकिका नापि भक्ताः तत्र लौकिकास्तु व्यर्थजीवना एव नहि रज्ज्वा बद्धः पाशी भवति स्वाधीनः पाश एव तथा एवं तनुभृतोऽपि येषां स्वाधीना तनुः ज्ञानिनां तु ज्ञानप्राप्तिपर्यन्तमेव साधनत्वेन शरीरोपयोगादग्रे व्यर्थमेव देहः अनपेक्षितभारवत् गृह्णातीति भक्ता अपि मौढ्यात् देहमेवात्मानं मन्यमानाः तथैव न पर्यवसितमतयो बहिर्मुखत्वात्तनुरूपा एव ननु भृतः कालान्तरे परं सफलम् अस्मदादयस्तु भक्ता अपि प्राप्तज्ञाना अपि मन्दभावं प्राप्ताः नोत्कर्षेण तनुभृतः अतः परमुत्कर्षेण एता एव तनुभृतः नुन्वेतादृश्यः सन्ति तनुभृतः लक्ष्मीप्रभृतयस्तत्राह । भुवीति । ननु भुव्यपि उत्कृष्टभक्ताः प्रह्लादादयः सन्त्येव तत्राह । गोपवध्व इति । एतादृशीमवस्थां प्राप्य नकोऽप्येवंविधो जात इत्याद्यर्थं किञ्च गोविन्दे स्वकीयत्वेन ज्ञाते वस्तुतः अखिलात्मनि एवं रूढभावाः अतो देहस्य स्वाधीनस्य तदेव फलमिति सर्वात्मत्वेन ज्ञात्वापि निर्द्दोषपूर्वभावनिष्ठा एव ननु ज्ञानावस्थोत्तरेति आत्मलाभान्न परं विद्यत इति एता भगवता ज्ञाननिष्ठाः कृताः इति च वस्तुत एवाग्रे देहस्यानुपयोगात्कथंमेषा स्तुतिरिति चेत्तत्राह । वाञ्छन्तीति यं भावं भवात् भीः येषां ते मुनयो मुक्ताः वयं भक्ताः सत्कारात्स्वयं एव धर्ममार्गपरा अपि अवश्यं हि विद्वत्कैवल्यपर्यन्तं सर्वेषां बहिः सम्वेदनास्त्येव जीवन्मुक्तानां तथा भवणात् तत्र लौकिक एव भावः सर्वेषां जायत इति कालावच्छेदेन जन्मवैयर्थ्यमेव अन्येषां तु वैयर्थ्यं सिद्धमेव नारदादीनामपि कदाचित्प्राकृतवद्व्यवस्था अन्यथा लौकिकसमानकार्यं न स्यात् प्रह्लादस्यापि राज्यादिकरणात् तथावसीयते बहिः सम्वेदने तु एवैवावस्था सर्वशास्त्रपर्यवसितातोऽन्या कचिदप्यस्तीति अवस्थायां विचार्यमाणायामेता एव तनुभृतः । नन्वेतदपेक्षया ये श्रोत्रिया ब्रह्मविदो ब्राह्मणा वसिष्ठादयस्ते महान्तो भविष्यन्तीत्याशङ्क्याह । किं ब्रह्मजन्मभिरपि ब्रह्मभावनापन्नानां जन्मभिः शुक्लसावित्रयाज्ञिकैः किं न किञ्चित् यद्यपि बहिः सम्वेदने तेषां वेदार्थानुष्ठातृत्वं दीर्घसत्रित्वादिरूपम् अन्तर्निष्ठतायां तु ब्रह्मपरत्वमिति तथापि कर्मापेक्षया भक्तिरधिका कर्म हि प्रपञ्चे स्वास्थ्यं सम्पादयति न तु भक्तिः यो हि दुष्टं मन्यते स दुष्ट इति निर्द्धारं तत्तत्प्रकरणे तत्तत्प्रशंसा तु प्रकरणानुरोधिनी अतः अनन्तकथायामरसस्य ब्रह्मजन्मभिः कर्मोपयोगिभिरपि न किञ्चित् । ननु तथाप्युत्कर्षहेतुर्लौकिकं तद्भवतीति युक्त्या बाधेऽपि प्रसिद्ध्यैव उत्तमफलत्वं पर्यवसानविधया कल्प्यत इति चेत्तत्राह । अनन्तकथायां रसयुक्तस्य पूर्वोक्तैः ब्रह्मजन्मभिः न कोऽपि पुरुषार्थः साधनीयः ततोऽप्युत्कृष्टस्यैव साधनदशायां फलदशायां च फलस्य सिद्धत्वात् कर्मापेक्षयापि भक्त्यैव ज्ञाने अधिकारकरणाच्च ॥ ५८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

एवमादि चरितमिति शेषः । कृष्णावेशेनात्मनो मनसो विक्लवो दिव्योन्मादादिर्यत्र तत् । नमस्यन्निदं नमस्कारमन्त्रमिव [जगाद] उच्चैरुच्चारयामास । क्षत्रियजातेरपि स्वस्य गोपस्त्रीनमस्कृतिरन्याय्या न भवतीति दर्शयितुमिति श्रीस्वामिचरणाः ॥ ५७ ॥

तासां सर्वोत्कृष्टं माहात्म्यमाह पञ्चभिः । एताः परं केवलं तनुभृतः सफलजन्मानः । रूढभावाः महाभाववत्यः । यदिति यं निरूढभावं भवभियो मुमुक्षवः । मुनयो मुक्ताः वयञ्च श्रीकृष्णसङ्गिनोऽपि भक्ताः वाञ्छन्ति नतु प्राप्नुवन्ति । अतोऽनन्तकथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसम्बन्धिभिः शौक्रसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिश्चतुर्मुखजन्मभिर्वा किं कोऽतिशयः न कोऽपि । यतोऽनन्तकथासु राग एव सर्वोत्कर्षप्रतिपादको नान्य इति भावः । यद्वा । अनन्तकथासु अरसो यस्य तस्य विप्रजन्मभिर्वा किम् । यतस्तत्कथासु रागाभाव एव तत्तत्सर्ववैफल्यप्रतिपादक इति भावः ॥ ५८ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

क्षणमात्रं कृष्णमात्मत्वेन ज्ञात्वा व्यपेतविरहज्वरत्वेनावस्थानं क्षणमात्रं तं प्रेष्ठं मत्वा तद्विरहतापव्याकुलत्वेनेत्यवस्थाद्वयमेकत्र दृष्ट्वातिविस्मितस्वान्त उद्धवोऽतिप्रीतो जात इत्याह । दृष्ट्वेति । गोपीनां स्वीकृतगोपवेशप्रियाणां कृष्णस्य चित्ताकर्षकस्य श्यामसुन्दरस्य प्रेष्ठस्यावेशेन हा क्व गत इति तत्सम्बन्धिविरहजनितदुःखावेशेना-

**क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ।**
**नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तमनो मनआदेर्विकृतं वैकृत्यं गोपस्य सर्वेन्द्रियपालकतया स्वान्तर्नियन्तृत्वस्यांशभूतत्वेन तदात्मना कृष्णस्य सच्चिदानन्दरूपस्य परमात्मन आवेशेन सम्यगभेदसम्पत्त्या आत्मनो देहादेर्वैकृत्यमहम्भावत्यागाच्छ्रीत्युक्तप्रकारकादिरूपं दृष्ट्वा उद्धवः परमप्रीतः अहो एतासामुत्कर्षातिशयः समाहितचेतसां ब्रह्मस्वरूपेणावस्थाने व्युत्थितमनसां तदीयविरहव्याकुलत्वेन न त्वेतासां देहाद्यनुसन्धानं लोकव्यवहारानुसन्धानं तु दूरापास्तमित्यनुसन्धाय परमप्रसन्नो जातः एवमेव च भगवद्भक्तैरवस्थेयमेतद्वयमप्यस्त्यत एता मत्तोऽप्यधिका इति मनसि निश्चित्य ता नमस्यन् उत्तमस्य तव गोपाङ्गना नमस्कृतिरयुक्तेति लोकाशङ्कानिरासायेदं वक्ष्यमाणं तासां महत्त्वं जगौ ॥ ५७ ॥

तदुदाहरति । एता इति । परं केवलम् एता एव तनुभृतः सफलजन्मानः न तु तनूरूपा इति वा यतः अखिलात्मनि गोविन्दरूपेण प्रेमत्वमापन्ने रूढभावाः रूढः पराकाष्ठांगतो भावः प्रेमा यासां गोविन्दे स्वप्रेष्ठे भगवत्सन्देशैरीखिलात्मत्वेनावगते एवं रूढभावा वासुदेव एवाखिलात्मा नातोऽन्यत्किंचिदस्तीति दृढनिश्चयवत्यस्तथा च नैवम्विधा लौकिकाः देहतादात्म्याध्यासवत्त्वाद्स्वाधीनसङ्घातत्वाच्च ननु सन्ति लक्ष्मीप्रमुखा एवंविधा इति चेत्तत्राह । गोपवध्वः लक्ष्म्याद्यास्तु नारायणवध्वस्तेन कदापि न वियुक्ता अतस्तस्मिन् यद्यपि प्रेमवत्यस्तथापि नैवम्विधरूढभावा इति भावः । यद्वा ता उत्कृष्टा एतास्तु गोपवध्वो निकृष्टजात्युत्पन्नास्तत्रापि भुवि तास्तु वैकुण्ठादौ स्थिताः भूमौ लब्धस्य जन्मन एवंभूतरूढभावसम्पादनेनैव साफल्यं तच्च तद्व्यतिरिक्तस्य सर्वस्यापि दुर्लभमित्यपि भुवि गोपवध्व इति पदाभ्यां ध्वनितम् इदमेव स्पष्टयति । वाञ्छन्तीति । यत् यं रूढभावं भवभियो भवाज्जन्ममरणलक्षणसंसृतिचक्राद्भीर्भयं येषां ते मुमुक्षवो वाञ्छन्ति मुनयस्तत्त्वविदो जीवन्मुक्ता वयं भगवद्भक्ताश्च मुमुक्षूणां तूभयविधोऽपि भावोऽप्राप्तत्वाद्वाञ्छाविषयः तत्त्वविदां तु सर्वात्मनि रूढभावत्वेऽपि तादृशरूढप्रेमाभावाद्वाञ्छा भक्तानां केषाञ्चिद्तत्त्वेऽपि सर्वात्मनिष्ठत्वाभावात्तद्वाञ्छा यद्यपि नारदप्रह्लादादीनामुभयविधभावो वर्तते तथापि स्वदेहाधिकारानुरूपलौकिकव्यापारपरतापि दृश्यतेऽतो नैवंविधरूढभाववत्त्वमिति भावः । ननु केचित् ब्रह्मर्षयः अन्तर्मुखतादशायां ब्रह्मनिष्ठावहिर्मुखतादशायां दीर्घसत्राद्यनुष्ठानेन परमात्माराधनपरायणाश्च दृश्यन्ते ते चोत्कृष्टजन्मवत्त्वादेताभ्यः श्रेष्ठाः स्युरित्याशङ्क्य तेषामपि तत्तत्कर्मानुष्ठानरूपस्य व्यवधानस्य सत्त्वान्नैवमित्याशयेनाह । किमिति । अनन्तस्य कथासु रसो यस्य तस्य ब्रह्मजन्मभिः तत्सम्बन्धिभिः शौक्लसावित्र्यादिभिस्त्रिभिर्जन्मभिः किं न कोऽप्यतिशयः यथोक्तभाववान् यत्र कुत्रापि जातः सर्वस्मादनन्तकथारसाद्युत्तमः यद्यनन्तकथारसस्य यस्य कस्याप्येवं तर्हि किं वक्तव्यं भगवत्प्रियाणां तासामित्याशयः ननु यद्यप्येवं तथापि जातितस्ता निकृष्टा इत्याशङ्क्याह । किमिति । जातेरुत्कृष्टताया अपकृष्टताया वा अप्रयोजकत्वादिति भावः । यद्वा एताभिर्लब्धं पदं सर्वे वाञ्छन्ति एतासां तु चतुर्मुखजन्मसहस्रमपि नाभिलाषास्पदमित्याशयेनाह । किमिति । तथा च ब्रह्मादिवन्द्यपादपद्मानामग्रे के वयं वराका इति भावः ॥ ५८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमादिपूर्वोक्तमादिर्यस्य तत् कृष्णावेशेन आत्मनो मनसो विकृतं वैकृत्यं दृष्ट्वा ताः गोपीर्नमस्यन् नमस्करिष्यन् इदं वक्ष्यमाणं तासां महत्त्वं श्रेष्ठस्यापि कनिष्ठहरिभक्तनमस्कृतिरन्याय्या नेति अन्यान् ग्राहयितुं पञ्चभिर्जगौ उवाच ॥ ५७ ॥

मुनयोऽन्तर्वृत्तय ऊर्ध्वरेतसः वयञ्च गृहस्थाः भवभियो मुमुक्षवः इत्युभयत्र सम्बध्यते अखिलात्मनि यद्रूढं भावं वाञ्छन्ति गोपवध्वस्तु रूढः प्राप्तविषयः प्रीत्यात्मको भावो यासां ताः अत एव एताः परन्तु केवलं तनुभृतः सफलजन्मानः अतः अनन्तस्य विष्णोः कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिः वृहद्भिः शौक्लसावित्र्ययाज्ञिकैस्त्रिभिर्जन्मभिः किं काधिकता विष्णुकथारागी यत्र क्वचन जातोऽपि सर्वोत्तम इत्यर्थः । यद्वा अनन्तस्य कथासु अरसो यस्य तस्य ब्रह्मजन्मभिरनेकैश्चतुराननजन्मभिरपि किं न किमपीत्यर्थः । भगवद्भजनपरः सर्वोत्तम इति फलितोऽर्थः ॥ ५८॥

---

### भाषा टीका ।

पूर्वोक्त प्रकार से गोपियों की श्रीकृष्णजी में बडी भारी आसक्ति होने से उनकी बडी विह्लता देख कर उद्धवजी बडे ही प्रसन्न होकर उन गोपियों को नमस्कार करते हुये इन गीतों को गाते भये ॥ ५७ ॥

अहो इस पृथिवी में केवल गोपस्त्री हि देहधारणके फल को प्राप्त भई हैं जिनके कि केवल गोविन्द चरण ही में सब भाव लगे हैं जिस भाव को कि संसार से डरने वाले मुनि लोग तथा और हम लोगभी चाहते ही हैं इससे यह निश्चित है कि भगवत्कथा के रसके चाहने वाले को कुछ ब्राह्मण जन्मही कारण नहीं है केवल प्रेमही चाहिये ॥ ५८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च ईश्वरप्रसादो महत्त्वे कारणं तस्य च न जातिराचारो ज्ञानं वा कारणं किन्तु केवलं भजनमेवेत्याह । क्वेमा इति । साक्षाद्भजतः पुंसः ननु अहो उपयुक्तः सेवितः अगदराजोऽमृतं यथेति ॥ ५९ ॥

---

### श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

अहो ममायोग्यस्याप्याभिः सङ्गः केवलं श्रीभगवत्कृपाया विशे-

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

येणैव संसिद्ध इत्याशयेनाह । केति । इमाः प्रोक्तमाहात्म्याः क वनचरीः वनचर्य्यः यद्वा अकारप्रश्लेषेण अस्य विष्णोर्वने वृन्दावने चरन्ति सह तत्प्रेम्णा परिभ्रमन्तीति तथाभूताः अत्र यस्य आसामहो चरणरेणुजुषामहं स्यामित्यादिप्रार्थना तस्योद्धवस्य व्यभिचारदुष्टा इत्यतीवानुचितो वाक्प्रयोगस्तासु परमाराध्यासु कदापि न सम्भवत्येवेति ततश्चायमर्थः क च मादृशाः इत्यर्थात् कथम्भूता मादृशाः व्यभिचारदुष्टाः व्यभिचारः सत्कर्मणि अन्यथात्वं परामुक्षतेति यावत् तेन दुष्टाः यद्वा पूर्वपद्यस्थस्य वयमित्यस्योत्कृष्टया व्यभिचारदुष्टा वयं च केति यद्दुत्यं स्वसदृशानामन्येषां ग्रहणार्थं परमविस्मितः सन् सरोमाञ्चं साभिनयमाह । कृष्णे मादृशामीश्वरे परमेश्वरे वा एव ईदृशः रूढ भावो महाभावः परां कोटिकामारूढभावविशेषः स्यात् संभवेत् यद्वा स्त्रियः स्त्रीत्वेन सलज्जत्वादन्यसमक्षमागन्तुमप्ययोग्याः मादृशास्तु पुमांसः तत्रापि वनचर्य्यः मादृशास्तु पुरवासिनः तत्रापि इमाः ईदृश्यः परमाश्चर्य्यमहाभावविलक्षणशीलाः मादृशास्तु कृष्णे व्यभिचारदुष्टा व्यभिचारो महापराधः तेन दुष्टा इति वैसादृश्येनासां सङ्गस्य सर्वथातिदुर्लभतोक्ता इमा इति सूचितं माहात्म्यभरमेव व्यञ्जयति यः परमात्मनि रूढभावः परमश्चासावात्मनि रूढभावश्चेत्येकं पदम् आत्मनि चित्ते नितरां रूढो निरूढः अतिप्रसिद्धो वा भावः स एष एव । ननु विस्मये वितर्के निश्चये वा अविदुषः भक्तिमाहात्म्यादिकमजानतोऽपि अनुगतानुगतिकत्वेन किं वा कस्यचिदनुगतत्वेन अनुकाररूपेण वा भजतोऽपि साक्षात्प्रत्यक्षमेवाव्यवधानेन श्रेयः परमहितं विस्तरेण करोति यतः ईश्वरः परमस्वतन्त्रः किं वा मत्प्रभुः परमदयालुः श्रीकृष्णः अज्ञाने सेवाभासेनापि श्रेयोविस्तारणे दृष्टान्तःअगदेति तत्र नुइति लेख्ये नन्विति लेखकभ्रमात् तथा नन्विति च न व्याख्यात स्पष्टार्थत्वात् नु इति तु अनुभजत इति निरासार्थमिति उपयुक्तः उप सामीप्येन आघ्राणमात्रेण वा स्पर्शमात्रेण वा अज्ञानेनापि गृहीतः श्रीकृष्णस्य तथासाञ्च माहात्म्यादिकमजानतोऽपि ममाभिः सङ्गतिः केवलं यथाकथञ्चित्तस्य संबन्धप्रभावादेवेत्यर्थः ॥ ५८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं पूर्वपद्येन वहिर्मुखानां निगृह्य तदेव.त्र केमा इत्यादि पद्ये प्रथमचरणेन साभ्यसूयमनुयुज्यते । यत्र च "निगृह्यानुयोगे" इति वाक्यस्य टेः प्लुतो विभाषितोऽस्ति यथाह काशिकायां स्वमतात् प्रच्यावनं निग्रहःअनुयोगस्तस्य मतस्य आविष्करणं तत्र निगृह्यानुयोगे यद्वाक्यं वर्त्तते तस्य टेः प्लुतो विभाषा । अनित्यः शब्द इति केनचित् प्रतिज्ञातं तदुपपत्तिभिर्निगृह्य साभ्यसूयमनुयुङ्क्ते । अनित्यः शब्द इत्यात्थ इत्यादि इह च तद्वदेव परापेक्षानुयोगगर्हितं सिद्धान्तमाह । केति । कृष्णे क चेत्याद्यर्थस्य सद्भावे सति केमाः स्त्रिय इत्याद्यर्थस्य सम्भावना नैव घटते इत्यर्थः । अत्र च तद्वत् पूर्वपद्यवत् द्वितीयेन चरणेन दार्ष्टार्थे स्वसिद्धान्तमनूद्य पराङ्केनाप्यजेनाप्युपयुक्तस्यामृतादीद्रव्यतनुताकारित्वमीश्वरशक्तेः । कैमुत्यातिशयं साधयतीति व्याख्येयं प्रथमचरणे स्थितस्य निकृष्टभूमिकया च कस्य केत्यस्य प्रतियोगितया द्वितीयचरणे क चेति निर्दिष्टं यदि कृष्णविषयकरूढभावात्मिका परमोत्कृष्टभूमिका ताभिर्लब्धा तदा तासां निकृष्टभूमिका स्थितिः कुत्र स्थिता एताः परं तनुभृत इति तदीयतनुव्यवसायभावानां श्लाघितत्वात् । यन्नामधेयश्रवणानुकीर्त्तनादित्यादेः विप्राद्द्विषड्गुणयुतादित्यादेः । भक्तिः पुनाति मन्निष्ठा स्वपाकानपि सम्भवादित्यादेश्चात्र कैमुत्यलाभात् । ध्रुवस्यापि पार्थिवदेहस्य सद्यो हिरण्मयत्वश्रवणात् किञ्च स्वतन्त्रश्रीमदुद्धवेन तासु तादृशानिकृष्टवचनं न प्रमोक्तव्यम् । उपक्रमोपसंहारादावादिषु तस्य परमादरात् वस्तुतस्तु व्यभिचारस्तासां नास्त्येव गोपीनां तत्पतीनाञ्च इति श्रीशुकसिद्धान्तात् । अत्र च श्रीमदुद्धवेनैव पूर्वमखिलात्मनि तत्र च परमात्मनीति तस्य सूचनात् । न च तासां स्वाभाविकोऽनाचार आशङ्क्यः आर्यपथञ्च हित्वेति वक्ष्यमाणानुसारेण स्वतः सदाचारताप्राप्तेः ननु स्त्रीत्वं दूषणयं लक्ष्म्यादेरपि स्त्रीत्वात् । न चेमा इति निन्दावचनम् आसामहो इत्यादावासामित्यनेन इदन्तानिर्देशेन स्तुतेरेव व्यञ्जयिष्यमाणत्वात् । न च वनचरीत्वं निन्द्यम् । वनस्यास्य तद्भूरिभाग्यमित्यादिना ब्रह्मणापि प्रार्थ्यमानत्वात् । आसामहो इत्यादिना स्वयमपि । उत्तरार्द्धे तु अगदराजस्तावद्देहमेव दिव्यं करोतीत्येकैनैकांशेन दृष्टान्तः । तादृगगदराजादिस्वभावमूलकारणमीश्वरस्वभावस्तु सर्वमपि श्रेयः स्वमविदुषोऽपि जगतः कुर्यादेव तासां तदीयगुणग्रामविद्वत्तराणामिति तस्मात् परकीयाभ्यसूयावाक्यसञ्चार्यनुवादस्य तदुत्तरस्थया कृष्णे क चेत्यादिवाक्यमय्या सञ्चारिलक्षणया मत्या आराध्यत्वेनोक्तत्वात् गुणत्वमेव यदुक्तं काव्यप्रकाशे । सञ्चार्यादेर्विरुद्धस्य वाक्यस्योक्तिर्गुणावहेति । अत्र च यथा तिष्ठन् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यतीत्यत्र पिहितेत्यनन्तरं नैव घटत इति निर्देशं विनाप्युत्तरा प्रतिपत्तिः पूर्वां बाधते इति न्यायेनान्वयो लभ्यते तद्वदप्यत्र तं विनापीपि न किञ्चिदप्यसमञ्जसम् । अथवा ननु भवतीप्रभृतयो यूयमप्युत्तरोत्तरं महान्त एव कथं तद्वाञ्छथ तत्राह । केमा इति । स्त्रिय इति जात्यैव सुकोमलत्वं दर्शितं तत्र चेष्टा इति । सचमत्कारनिर्देशेन विशेषतः । अथेमाः स्त्रियः इति सर्वोत्तमत्वं दर्शितम् । तथा वनञ्च प्रस्तुतत्वात् श्रीवृन्दावनम् । तच्च श्रीकृष्णैकान्तविहारास्पदं तच्चारिण्य इति सामान्यतस्तावन्माहिमा सूचितः । ता इमाः कृष्णविषये क तमाश्रित्य कस्य मूर्द्धभूमिकायां वर्त्तन्ते । तथा ईदृशगाढतदासक्त्या भाव एव व्यभिचारः । अत्र परमविस्मितमानसो सरोमाञ्चं साभिनयं हेतुमाह । परमात्मनि सर्वेषामेव निरुपाधिपरमप्रेमयोग्येऽपि तादृशतयानुभावितुं परमदुर्लभे तस्मिन् एव ईदृशतया आसु दृश्यमानो रूढभावः परां कोटिमारूढो महाभावः तस्मादासु तल्लेशोऽपीत्यर्थः । न चासामेव तस्मिन्नेतादृशसौहृदं ननु तस्यासु इति वाच्यं तस्य परमेश्वरस्य परमसहृदयतया असाधारणेष्वपि दृश्यते किन्तु साधारणेष्वित्याह । नन्वीश्वर इतिननु निश्चये अनु सादृश्ये । भजनानुकरणमपि कुर्वतः अविदुषस्तन्माहात्म्यमजानतोऽपि दैन्याभासदासस्यापीत्यर्थः । साक्षादव्यवधानेन श्रेयः एतासां दर्शनादिप्रसादमयं परमहितं तनोति किमुतासां तन्माधुरीपरमोत्कर्षानुभावित्वेन तन्माहात्म्यपरमकाष्ठामिनिविष्टानामिति भावः ॥ ५९ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु वर्णाश्रमधर्मानुग्राह्यो निरूढभावस्तदभावेऽपि कथमाभिलब्ध इत्यघटितघटनदर्शनेनेश्वरः स्वयमेव स्वप्राप्तौ केनापि व्याजेन हेतुरिति सम्भावयन्नाह । केमा इति । इमाः स्त्रियः जात्यापि हीना इति भावः । वनचरीरित्यनेन सत्सङ्गादिसाधनाद्यभावोऽभिप्रेतः व्यभिचारशीला इत्यनेन बाधकसद्भावः एवं विधानां सर्वथाधिकाररहितानां परमात्मनि परमात्मनि श्रीकृष्णे रूढभावः क कुघटमेतदिति भावः । यद्यप्येवं तथापीश्वरः स्वात्मयाथात्म्यमजानतोऽप्यनुभजतः केनापि भावेनानुवर्त्तमानस्य साक्षात्स्वयमेव श्रेयस्तनोति ननु स्वज्ञविदुरामपि श्रेयःकार्यकर्तृत्वे दृष्टान्तमाह । अगदेति । यथाऽगदराजऔषधश्रेष्ठः उपयुक्तः भुक्तः आरोग्यमेव तनोति तद्वत् ॥ ५९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इमाः स्त्रियः क कृष्णे एष रूढभावः क अन्वयानुपपत्तेः कथमिति तत्राह । वनचरा इति । तत्रोऽर्थे वनचरत्वं क न स्याद्भित्यत उक्तं व्यभिचारशीलाः अनैकान्तिकस्वभावाः अनियतभर्तृभिः रतितृप्ता इत्यर्थः "शीलं वृत्तस्वभावयो"रिति कृष्णोऽपि कश्चिद्दीपः किं न स्यादित्यत उक्तं परमात्मनीति अनन्वये किमर्थं श्रेयः प्रयच्छतीत्यतो भक्तिरेव प्रयोजिकेत्यभिप्रायेणाह । नन्विति । अविदुषोऽपि शास्त्रोक्तिमजानतोऽपि अनुभजतः स्वयोग्यतानुरोधेन भक्तिं कुर्वतः पुंसः ईश्वरः साक्षाच्छ्रेयस्तनोति नन्वित्यनेन भक्त्यास्त्वनन्यया शक्य अहमेवंविधोऽर्जुनेत्येतिह्यं दर्शयति प्रश्नावधारणेति हासमीहानुमते नान्वेति उपयुक्तः सेवितो ऽगदराजः औषधश्रेष्ठो पेगिकर्मानुकूलं फलं ददाति यथा तथायमपीति ॥ ७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तर्ह्येवमवस्थाप्रापकाणि ब्रह्मजन्मानि भविष्यन्तीत्याशङ्क्य व्यभिचारात्परस्परशाप्युपभोगाभावमाह । केमा स्त्रिय इति । इमा इति गोप्यः जातिहीनाः तत्रापि स्त्रियो योनितो निकृष्टाः स्थानतोऽपि निकृष्टत्वमाह । वनचरीरिति । ग्रामोत्पन्ना एव वनचरणादिना उत्कृष्टा भवन्ति तदर्थमेवोच्यते वने तु सात्त्विको वास इति अन्यथा वानराणामप्युत्कर्षः स्यात् वनचरीरित्यनेन स्वच्छन्दचारित्वमपि सूचितम् अनेन कृत्यादिसर्वापकर्षः सूचितः अन्तःकरणापचारमाह । व्यभिचारदुष्टा इति । व्यभिचारबुद्ध्या दुष्टा इति केचित् ननु धर्मशास्त्र एतत्प्रायश्चित्तोक्त्यभावादविवाहितपुरुषभजनं न व्यभिचारः स्त्रीमात्रस्यैतद्दोषत्वेन तत्प्रसूतानामधर्मजातत्वेनाग्निहोत्रादिधर्मानधिकाराच्च चतुर्वर्गोच्छेदप्रसङ्गश्च तद्बोधकमानवैयर्थ्यं च स्यात् भगवत्पुत्रानुदिश्याकथनात् भगवत्पत्न्यतिरिक्तासु सतीपदप्रयोगश्च भागवतादावनुपपन्नः स्यात् इति चेत् अत्रायमाशयः वर्णाश्रमाणां देहनिष्ठत्वेन तानाधिकृत्य च धर्मशास्त्रस्य प्रवृत्तत्वेन दैहिकधर्मनिरूपकं तन्न तु भगवद्धर्मनिरूपकं भिन्नाधिकारात् अध्यासेनात्मसात्कृतत्वाद्देहस्य तद्धर्मेषु स्वधर्मप्रयोगः वस्तुतस्त्वात्मधर्माः एव स्वधर्मा स्वशब्दस्य तत्रैव शक्तेः अत एवाविद्वदधिकारित्वेनैषु उच्यते ब्रह्मविदां तत्रानधिकारो भक्तौ मुख्योऽधिकारश्च तदुक्तमवतारहेतुनिर्णयप्रस्तावे तथा परमहंसानां मुनीनाममलात्मनां भक्तियोगवितानार्थमिति । मुक्तोपसृप्यव्यपदेशात् इति तत्त्वसूत्रं च प्रकृते च भक्तिमार्गमधिकृत्य सर्वोऽर्थो निर्णीयेत तत्र च भगवदतिरिक्तभजनस्य दोषहेतुत्वमेवेति सिद्धान्तः अत एव आज्ञायैवं गुणान् दोषान्मयादिष्टानपि स्वकान् । धर्मान् संत्यज्य यः सर्वान् मां भजेत्स च सत्तम" इत्यादिवाक्यैस्तत्त्यागपूर्वकं भजनमत्रोच्यते अन्यत्रोक्तन्यायेनास्वधर्मस्यापि स्वधर्मत्वेनोक्त्या कापट्यं मन्वानो व्यासो भक्तिशास्त्रं निरूपयन् धर्मः प्रोज्झितकैतवोऽत्रेति प्रतिज्ञातवान् एवं सति भक्तिमार्गीय विहिता निषिद्धाकथनं धर्मशास्त्रे युक्तमेव भिन्नविषयत्वात् वात्स्यायनीय इव धर्मशास्त्रीये तदकथनं न हि तद्दोषमिति धर्मशास्त्रे न तद्बाधकं न वा धर्मशास्त्रं बाधकमिति तद्विरुद्धोपदेशो वात्स्यायनीये कामरसनिरूपणे हि तत्प्रवृत्तं स च यादृशं न्यरूपयदिति न काप्यनुपपत्तिः प्रकृतेऽपि भगवतोऽतिदुरापत्वे यत्स्वातन्त्र्येण स्थितौ स्त्रीणामुत्कटभोगेन यथेच्छाचाराशाशो भविष्यतीति भगवान् धर्ममार्गीयास्ताः कृत्वा विषयरागपूर्तिपूर्वकं तदुक्तनियमस्थाः कृतवान्न हीतावता नायं व्यभिचारः सहजभर्त्रतिरिक्तभजनात् अत एवाद्य श्रीमहिष्या गीतं "त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम् । जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री"इति अतस्तद्दुरापत्वेऽपि तदाशया तद्भजनमन्यभजनरहितं कुर्वद्भिरेव सर्वैः स्थेयमिति भक्तिमार्गनिष्कर्षः एतास्तु भगवदर्थमेव प्रकटिताः अतः सुष्ठूक्तं वस्तुतस्त्वित्यादि यद्वा धर्मो द्विविधोऽन्तरङ्गो बहिरङ्गश्च सोऽपि प्रत्येकं त्रिविधः तथा हि विहितत्वेन क्रियमाणो भगवद्विषयकः श्रवणादिरन्तरङ्गतमो धर्मः योगादिसाधनैरात्मचिन्तनं तादृक्तरः "अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्"इति स्मृतेः फलानुद्देशेनेश्वरार्पणधिया क्रियमाणो यागादिरन्तरङ्गः वर्णाश्रमधर्मत्वेन स्वर्गादिफलोद्देशेन क्रियमाणो वैदिको धर्मो बहिरङ्गः ततस्तुच्छस्वर्गादिफलको त्रिविधस्त्रीपुरुषाधिकारिकपातिव्रत्यादिविविधदेवताव्रतादिः स्मार्त्तो बहिरन्तरः ऐश्वर्यारोग्यादिफलकविविधदेवताग्रहादिभजनरूपः स्मार्त्तो बहिरङ्गतमः अत्र पूर्वपूर्वप्राबल्यं ध्येयं पूर्वपूर्वासम्भव उत्तरोत्तरकर्त्तव्यता च प्रेमानन्तरं स्वस्य सम्मतः क्रियमाणः श्रवणादिर्न धर्मस्तल्लक्षणाभावात् पूर्वोक्ते सर्वत्र प्रवृत्तिनिवृत्त्योस्तदधिकार एव प्रयोजकः भगवान्मर्यादापुष्ट्योर्मध्ये यं जीवं यस्मिन्मार्गे मनुते तस्मिंस्तस्य तदेवाधिकाररूपं तत्तच्छास्त्रं च तत्तन्मार्गीय धर्मनिरूपकं पूर्वोक्ताधिकारवता स्वस्वाधिकारवता स्वस्वाधिकारिकधर्माकरणे च दोषः अत एव पार्थस्य पुष्टावङ्गीकारान्मर्यादामार्गे निषिद्धस्यापि गुर्वादिहननस्याकरणे भगवाननिष्टं फलमाह । अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसीति प्रकृतेऽपि स्त्रीरत्नानामासां पुष्टिपुष्ट्यामङ्गीकार इति न मर्यादामार्गीयधर्मेऽधिकारः किं त्वविवाहेऽपि भगवत एव भजने अत एव मर्यादाधर्मो भगवतोक्तोऽपि नैताभिरङ्गीकृतः अङ्गीकारे तत्राधिकारस्य हेतुत्वात् न ह्यनधिकारिहृदि धर्मः स्फुरति एतज्ज्ञापनार्थैव हि भगवतास्युक्तम् एतेन मर्यादामार्गस्य पुष्टिमार्गीयधर्मानङ्गीकार इत्यपि ज्ञेयम् एवं च सति मर्यादामार्गीयो धर्म एतासां परधर्म इति विवाहितपुरुषभजनमपि व्यभिचार एवेत्यभिप्रेत्य तथोक्तं सहजभर्तृत्वेऽपि भगवतो विवाहकरणं तु तादृशभक्तनिरोधार्थं तत्तद्रसानुभवार्थं मर्यादा-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्थापनेन लोकशिक्षार्थं च अदित्यादीनां लीलार्थं मातृत्वेनाङ्गीकारात्पुत्रभावेनैव भजनं भगवत्प्रापकं कश्यपादिषु च पितृत्वेनाङ्गीकारात्तासां तासां तत्तत्पतिभजनमेव स्वधर्मः भगवता तथैवाङ्गीकृतत्वात् नतु तत्र विवाहप्रयोजकः तद्विवाहस्य भगवल्लीलोपयोगित्वेन भगवद्विवाहतुल्यत्वादित्यलमधिकोक्त्या वस्तुतस्तु भगवता स्वार्थमुत्पादिता मध्ये कालविलम्बे अन्यान् गोपालान् भ्रमात्पतिबुद्ध्या गृहीत्वा व्यभिचारं कृतवत्यः तेन दुष्टा अपि जाता पुत्राद्युत्पत्त्या यथा अहल्या भ्रमात् प्रवृत्ता दुष्यति अतो जाते दोषे अयं भावो निवर्त्तितुं योग्यः यथा भर्त्रा व्यभिचारिणी त्यज्यत इति तथापि भगवद्भाव उत्पन्न एवेत्याश्चर्यमित्याह। कृष्णे क्व चैष इति। केचित्तु निवेदनानन्तरं पुनर्गोपसम्बन्धाद्व्यभिचारमाहुः-बलादपि नाशिता नाशितैवेति तत् मन्यमानाः स्वपार्श्वस्थानिति भावेनैव तत्पतीनां रमणं न तु ताभिः सह यथा नाशशङ्का स्यात् तां रीतिं न हि ते तासु कर्तुं शक्ताः तासामेवानुभावेन भगवता वा भस्मसाद्भवेयुः किं च यदि क्रमानन्तरं दोषः स्यात् भावश्च न भवेत् तदाह। कृष्ण इति। न हि सदानन्दे फलरूपे भावो दोषाय तथा सति फलार्थं कोऽपि न कुर्यात् उद्धारार्थं वा परमानन्दः प्रकट इति तत्र य एतादृशो भावः सोऽवश्यं सर्वपुरुषार्थसाधक इति ब्राह्मण्यादिरहितानां सर्वपुरुषार्थसाधको भावो जातः। ननु कथमेवमकारणककार्योत्पत्तिः विरुद्धस्य वा कारणतेति चेत्तत्राह। नन्विति। सत्यमेवैतत् विरुद्धमेतदुभयमिति तथाप्येवं वितर्कं ईश्वरः अविदुषोऽपि अनुभजतः स्वानुरूपमेव श्रेयः करोति ननु सेवकानुरूपं यद्यप्ययमर्थः लोके वेदे प्रसिद्धः तथापि गोपिकासु दृष्टत्वादेव वितर्कः उपपत्तिरीश्वरत्वादेव ईश्वरो हि क्वचित्सेवां न मन्यते विपरीतमपि फलं प्रयच्छति प्रमादादप्यपराधे प्राणानेव वियोजयतीति क्वचिदधिकमेव फलं तत्रादृष्टं नियामकमिति चेत् न ईश्वरत्वभङ्गप्रसङ्गात् लोके परमेश्वरत्वाभावात्तथा कल्पनायां प्रमाद एव लोकेऽन्यार्थेनाप्येकदेशेन दृष्टान्तमाह। अगदराज इवेति। अमृतं हि प्रमादादप्युपभुक्तं प्रसादं सम्पादयत्येव भ्रमादग्निस्पर्शोऽपि दाहहेतुर्भवति न गदो यस्मादिति गदनिवर्त्तकं वा अगदमौषधं सर्वेषां शक्तिरेकत्र प्रतिष्ठिता राजत्वमापादयतीत्यगदराजोऽमृतं भगवतः स्वानुरूपमेतदेव प्रमाणानां तु बलमेकमेव तदपि न परमकाष्ठामापद्यते अन्यथा केषाञ्चिदेवं स्यादतः प्रमेयबलादेवैवं भाव इति लक्ष्यते अनुभजत इति भगवदिच्छया भजनमभिप्रेतं "यदेव विद्यया करोति" इति श्रुत्या ज्ञानाभावे भजनं न फलसाधकमिति शङ्कापरिहारार्थमपिशब्दः साक्षाद्भजत इति विशेषः अनेन मन्त्रादिद्वारा भजनं तु भजनानुरूपमेव फलतीति सूचितम् उपयुक्त इति। समीपे निःसंदिग्धः सर्वलोके नन्वन्यत्र मिश्रितः अथयानन्तकथारसस्य किं ब्रह्मजन्मभिरित्युक्ते प्राप्ताशङ्कायामाह। क्वेमा इति। आशङ्का तु न तु स्त्रियः पुरुषमात्रे कामुक्यः स्वभावत एव भवन्ति भगवांश्च पुरुषोत्तमः तथा च कामभावेन भगवति भक्तानामेतासां कथं ब्रह्मजन्मादिवन्द्योऽप्युत्कर्षो युज्यत इति तन्निरासायात्र सर्वाभ्यः स्त्रीभ्यः सर्वेभ्यः पुरुषेभ्यश्चाधिक्यमुपपाद्यते। तत्रापि स्त्रीभावेन भक्तानां कथमुत्कर्ष इति शङ्कानिरासाय प्रथमं स्त्रीभ्यो वैलक्षण्यमुच्यते इमाः क्व साधारण्यः स्त्रियश्च क्व अल्पसाधर्म्यं एवमन्योऽन्यं नास्तीत्यसम्भावनापूर्वकं कथनम्। अन्यासु स्त्रीशब्दप्रयोगादेतासु स्त्रीत्वमपि न निरूपयितुं शक्यमिति ज्ञायते। स्त्रीणां कामद्वारैव पुंसि स्नेहस्य नियतत्वात्। एतासामतथात्वात् यद्यपि कामलीलाप्येतासु निरूप्यते तथापि न तदुपाधिकः स्नेहोऽत्र किं तु निरुपाधिरेव भगवान् स्वयं तादृग्रसदानार्थं तं भावं संपाद्य तं रसं ददातीत्यवोचाम वैलक्षण्यमेवाह। अवनचरीरिति। एतास्तु भगवता कालकर्मादिसम्बन्धेभ्योऽपि सर्वदा रक्ष्यते किं पुनः पुरुषान्तरसम्बन्धादित्यवने रक्षण एव चरन्तीति तथा। पुत्रोत्पत्त्यादिकं तु सर्वभवनसमर्थादलौकिकप्रकाराद्भगवत एव गोपानां तु मन्यमानाः स्वपार्श्वस्थानिति न्यायेनाभिमानमात्रमेव सर्वत्र व्यवहारमात्ररक्षयैतद्वार्ता गोपनेनैतद्रसपोषायैव भगवता क्रियते। अतः केवलभगवदीयत्वं नान्यासु तदेवाह। व्यभिचारदुष्टा इति। स्त्रीणां विशेषणं जीवमात्रस्यैव भगवानेव भर्त्ता तत्रापि स्त्रीणां तथा वान्येष्वेव सदा तासां सम्बन्धात्ताः सर्वा व्यभिचारदुष्टा एव अतो बहुधैव वैलक्षण्यमिति भावः। अतः परं पुरुषेभ्योऽप्युत्कर्षमाह। कृष्ण इति। सन्ति नारदब्रह्मादयो भगवति भाववन्तस्तथाप्येष भावः क्व तेषु वर्त्तत इति चकाराद्व्यभिचारादिदोषरहितायां लक्ष्म्यामपि नायं भावः। एष इति स्वानुभव उक्तः तेनान्यत्रैतत्सजातीयभावश्रवणस्याप्यभावात्कथमन्यत्रैषोऽस्तीति मन्तव्यमिति भावः। अथवा बर्हापीडेति श्लोके गोपिकानामेव भावरूपस्तदर्थमेव कोटिकन्दर्पलावण्यं प्रकटीकृत्य तद्भोग्यत्वेन प्रकटः कृष्णशब्दार्थ इति विवृतं तथा च ब्रह्मादीनां भावो यद्यप्यस्ति तथापि कृष्णे पूर्वोक्तलक्षणे क्व भाव इत्यर्थः। न हि कदाचिद्भगवांस्तद्भोग्यत्वेन तदर्थं प्रकट इति भावः। विषयतो वैलक्षण्यमुक्त्वा स्वरूपतो वैलक्षण्यमाह। एष भावः क्वेति। अनुभवैकवेद्यो लोकवेदाप्रसिद्ध इत्यर्थः। प्रकारतोऽपि वैलक्षण्यमाह। परमात्मनि क्वेति। आत्मा हि प्रियः सर्वत्र प्रियत्वस्य तदुपाधिकत्वात्। एतासां तु आत्मनः सकाशात्परमोऽधिकः प्रियो यस्तस्मिन् भावः तेन नात्मार्थं भगवान् प्रियः किं तु भगवदर्थं स्वात्मत्यागाति ब्रह्मादीनां तु भगवान्नियामकत्वेनात्महितकर्तृत्वेनैव प्रियोऽतो बहुवैलक्षण्यमित्यर्थः। उत्पत्तितोऽपि वैलक्षण्यमाह। रूढभावः क्वेति। रूढः सहजो लोकवेदाद्यजनित इत्यर्थः। अन्येषां त्वेतादृशभावाभावस्त्वाद्वैलक्षण्यं किं च रूढभावपदेन प्रमाणतो वैलक्षण्यम् एष भाव इति प्रमेयतः। परमात्मनीति साधनतः कृष्ण इति फलतश्च। अन्यत्र नैवं रूपत्वमुक्तं तथापि भगवति ईश्वरत्वेन ज्ञानाभावाल्लौकिकत्वज्ञानस्य जघन्यत्वात्कथं ब्रह्मादिभ्योऽप्युत्कर्ष इत्याशङ्क्याह। भाव इति। अयमर्थं भावः फलाधिक्येनैवाधिक्यं ननु साधनप्रकारविशेषैः तथैतासामेव दृष्टं नान्येषु एतदेवाह। अविदुषोऽपि ईश्वरत्वेन स्वरूपमविदुषोऽप्यनुभजतः शास्त्रार्थत्वेन ज्ञात्वा भजतः पुरुषस्य साक्षात्स्वयमीश्वरः किं श्रेयस्तनोतीति काकूक्तिः किं तु न तनोतीत्यर्थः। तेषां भगवज्ज्ञानवचनभक्त्यादिभगवद्धर्मैरेवाखिलपुरुषार्थसिद्धिः न तु स्वयं भगवानागत्य किञ्चित्करोतीति तथा अस्तु वा कदाचिद्भक्त्यतिशयेन गजेन्द्र इव पुरुषार्थदानं तथाप्यगदराज इव किं श्रेयस्तनोत्यन्येषु विवक्षितार्थस्यातिगोप्यत्वात् दृष्टान्तव्याजेनाह। अत्रायमर्थः "एका तदङ्घ्रिकमलं सं तत्रास्तनयारधादिति"

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न्यायेन विरहानलसन्तापहृदयगतस्मररोगशमनाय यथैकैकमङ्गं भगवतः स्वहृदयादिदेशेष्वेताः स्थापयन्ति न तथा ब्रह्मादयः यत ईश्वरान्नित्यं ते बिभ्यत्येव तत्राप्येतासु भगवतो न स्वातन्त्र्यं प्राधान्यं वा किं तु तासामेतदाह । उपयुक्त इति पदेन यथौषधस्य तापरोगनिवर्तकत्वे नैवोपयोगो न मुख्यत्वं पुरुषस्यैव मुख्यत्वं तथेत्यर्थः । यथा रोगनिवृत्त्यनन्तरमपि पोषकं रस्यं च यदि भवत्यौषधं तदा यथेच्छं भोगस्तस्य तथा तत्रापि विरहतापोपशमनानन्तरं यथेच्छं भोग इति ज्ञापनाय राजपदम् अथवा साक्षाच्छ्रेयस्तत्किं तनोत्येव इति योजना इतररागविस्मारकत्वेनास्यैव रसस्य साक्षाच्छ्रेयोरूपत्वादेतदन्येषु तद्दानात्तथा अथवा विदुषो जनस्य भगवान् श्रेयस्तनोतीति सत्यं तथापि किमनुभजतो विदुषस्तथाकरणमिति अत्रानुभजनं भगवद्भजनानन्तरं स्वभजनं विरचितचाटुलय वनम् इत्यादिगीतोक्त्यान्येन नह्येवं ब्रह्मादिषु सम्भवति अथवा प्रतिपदं काकूक्तिर्वैया तथा हि विदुषो जनस्य किमीश्वरः श्रेयस्तनोति अयमर्थः कर्तुमकर्तुमन्यथा कर्तुं समर्थो हीश्वरः नहि ब्रह्मादिष्वेवं रूपं प्रकटीकृत्य फलं ददाति एतासु पूर्णकामत्वात्मारामत्वादीन् स्वरूपधर्मानप्यन्यथा कृत्वा ददाति । तेषु वाङ्मर्यादामपि नान्यथा करोतीति तथा अनुभजतः किं तनोतीति पूर्ववत् । अन्यस्य यच्छ्रेयस्तनोति तत्किं विदुषस्तनोति किं त्वविदुष एव तज्ज्ञानानुरूपं श्रेयस्तनोतीत्यर्थः । स्वरूपस्यानन्दरूपत्वात्तस्य चानुभवैकवेद्यत्वेन वाक्चक्षुराद्यवेद्यत्वाद्ब्रह्मादीनां च पुरुषत्वेन भगवद्दानाच्च साक्षात्स्वरूपानुभवाभावादविद्वत्त्वम् एतासां तथा प्रसिद्धं साक्षाच्छ्रेयोऽपि किं तनोतीति पूर्ववत् । साक्षात्स्वयं किं तनोतीत्यप्युक्तं तनोति किमित्यपि एषु श्रेयः सकृद्ददाति न तु विस्तारयति विस्तारणं च तदेकपरचित्तत्वं तदर्थैकप्रयत्नपरत्वादिकम् । तदुक्तम् तत्र मम हृदयमतियत्नं प्रति विशति वितनोत्यन्यो न कोऽपीत्यादिना । न ह्येवमन्यत्र करोतीति तथा अगदराज इव किमिति पूर्ववत् उपयुक्तः किं श्रेयस्तनोतीति । न हि ब्रह्मादीनामुप समीपे एकस्मिन्नासने शयनादौ वा युक्तो भगवान् भवति यतो भगवद्दर्शनमपि तेषां दुर्लभम् एतासामुपयुक्तस्तथेति बहुत्र तारतम्यमित्यर्थः यद्वा ननु भक्तिमार्गेऽन्यभजनराहित्येन भजनं मुख्यमित्येतासां स्वपतिसम्बन्धेन कथमेताः परं तनुभृत इत्याशङ्कानिरासायोच्यते इमाः स्त्रियो व्रजस्त्रियो व्यभिचारदुष्टाः क नेत्यर्थः । वनचरीरिति सर्वदा स्वस्य भगवदुपभोगयोग्यतां ज्ञात्वा रक्षणपरा इत्यर्थः । किं च यदि तादृश्यस्तदा कृष्णे परः रूढभावः क च असम्भावितस्यात् तथाहि रूढपदेन भावस्याविच्छिन्नत्वमुच्यते तेनान्तर्बहिर्भेदो नाहर्निशं भगवद्भगवन्य आत्मनस्तावत्तद्भावरहितत्वं न कदाप्येतासामिति क तत्सम्भावनापि अत्र विवाहितपतिभजनमेव व्यभिचारशब्दवाच्यं तदपेतासां नास्तीत्युच्यते । ननु श्रृण्वन्त्यः एतान् काश्यप् सा वार्यमाणाः पतिभिरित्यादिकथनात्तत्सम्बन्धाभावो न वक्तुं शक्य इति चेन्न तत्सम्बन्धस्तासामाभिमानिक एव न तु वास्तवः अस्माकम तत्प्रयुक्ति नान्यसमक्षमङ्गः स्थातुं त्वयाभिरमिता इत्यत्र मन्यमानाः स्वपार्श्वस्थानित्यत्रापि तथोक्तत्वात् पुंश्चलिदारपदेनापि तत्सम्बन्धाभाव एव तासु ध्वन्यते न चाभिमानिकस्यापि तस्य सद्दोषत्वमेवेति वाच्यं स एवाधात्मेति

श्रुतेरेतत्स्पष्टेः स्वरूपात्मकत्वेन रसार्थं च प्रभुणैव तथा स्थापितत्वात् न च भगवत्सम्बन्धात्पूर्वं तथात्वं वाच्यम् उक्तोपपत्तेः न च यथा भगवत्सम्बन्धात् पूर्वं तथात्वं न तथोक्तहेतोस्तदनन्तरमपीति वाच्यं तासां तत्स्वरूपातिरिक्ते तदात्मकत्वास्फूर्तेः वस्तुतस्तु फलप्रकरणीयरमणात्पूर्वमपि तासां स्वप्नेषु तत्सम्बन्धः समजनीति लक्ष्यते अन्यथास्माकम त्वयाभिरमिता इति च सम्बन्धस्य भूतार्थतां न वदेयुः किं च अन्यसमक्षं स्थातुं न पारयामः इत्युक्त्वा यत्रान्यत्र समीपस्थितिरप्यशक्या तत्र तदनन्तरभाविन्याः कृतेः किं वाच्यमिति भावो व्यज्यते तेन तासामेतत्संबन्ध कालो न कदापीति नोक्तानुपपत्तिः भगवत्सम्बन्धस्य तु तथात्वं वक्तुमयुक्तं सर्वप्रमाणविरोधात् अन्तर्गृहगतानां तादृशबुद्धियुक्तत्वेन प्रतिबन्धाभावाच्च परमात्मपदेनाप्येतदेव ज्ञाप्यते तद्भजनस्यातथात्वात् ननु पूर्वं ज्ञानादिसाधनवतामेतद्भावाभावेनाकृतार्थतोक्त्या तदतिरिक्तं साधनं किमेताभिः कृतं येनैतादृशं फलमित्याशङ्क्याह । नन्विति । ईश्वरः साधननैरपेक्ष्येण सर्वकरणसमर्थः विदुषोऽपि ज्ञानयुक्तस्यापि पुरुषस्य नैष्कर्म्यमप्यच्युतभाववर्जितमिति वाक्यात्केवलज्ञानस्यापुरुषार्थसाधकत्वं ज्ञात्वा अनु पश्चात् भजतः भजनं कुर्वतः साक्षात् स्वयं भजनातिरिक्तसाधनानपेक्षः श्रेयः फलं तनोतीत्यर्थः । परं ये यथा मां प्रपद्यन्त इति वाक्यात्तदधिकारानुसारेण अपिशब्देन परं स्वार्थसाधनत्वेनापि भजनकर्तुः श्रेयः स्वयं साक्षात्तनोति तत्र तदर्थैकभजनपराणामेतासां साक्षात्स्वयं तनोतीति ज्ञाप्यते प्रत्युत न पारयेऽहं निरवद्यसंयुजामित्यत्रैतद्भजनानुरूपस्य श्रेयस एव भावाभावः सर्वकरणसमर्थेन प्रभुणाप्युक्तः अत एव यथैतासां तत्तनोति न तथा पूर्वोक्तस्येति ज्ञापनाय दृष्टान्तमाह । अगदराज इवेति । अत्रायं भावः यथामृतं स्वभजनकर्तुरभीष्टं साक्षात्स्वयमनुपानादिसाधनव्यतिरेकेणापि तनोति न तु तेनामृतस्य तत्तन्यते तथा स्वार्थसाधनत्वेन भजनकर्तुर्ज्ञानिनोऽप्यभीष्टं भगवांस्तनोति ननु तेन भगवतस्तत्तन्यते स्वार्थपरत्वात् अत्र तु यथैतासामभीष्टं प्रभुस्तनोति तथैता अपि तस्य तत्तन्वन्तीति नानुपपत्तिः काचित् अथवा निषेधस्य प्राप्तिपूर्वकत्वेनान्यत्र तदभावात्प्रकारान्तरेण व्याख्यायते एताः परं तनुभृत इत्यनेन व्रजसीमन्तिनीनां सर्वोत्कर्षं निरूप्य तत्रैवोत्तरार्धे साधनानां तत्साधकत्वोक्त्या तदभावे कथमेवमेतासामित्याश्चर्यमिव मन्यमानो यत्र भगवत्कृपया सर्वसाधनरहितासु हीनजातीयासु पुलिन्दीष्वप्युत्कर्षसिद्धिस्तत्र किं वाच्यमङ्गसङ्गाधिकारवतीष्वेतास्वित्याशयेनाग्रे पुलिन्दीराह । केमा इति । इमाः स्त्रियः पुलिन्द्यः क कृष्णे एष रूढभावः क च यद्यपि ता नमस्यन्निदं जगाविरथुकेरतन्वीक्षणस्य कालान्तरीयत्वेऽपि भावनया पश्यन्निव वदतीति इति प्रदर्शनं यदि पुष्टिमार्गीयं वा किमपि साधनं भवेत्तदा सम्भवेदपि एतासां तदुभयाभावादसम्भावितमिवोच्यते तत्र पुष्टिमार्गीयं वा किमपि तदभावायाह । व्यभिचारदुष्टा इति । अत्रापि व्यभिचारपदं विवाहितपतिभजनपरं यतोऽस्मिन्मार्गे साधनं सर्वात्मभावस्तन्मतत्यागस्यापि विहितत्वेनाङ्गीकृतिः संत्यज्य सर्वविषयान् पतिसुतान्वयभ्रातृबान्धवानित्याद्युक्तेः तेनैतासामेवं भावाभावेन व्यभिचारदुष्टत्वमेवेति पुष्टिसाधनाभावः सूचितः मर्यादामार्गीयतदभावायाह । वनचरीरिति । मर्यादायामधिकारिणामेव साधननिष्पत्तिरुच्यते

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

अतो वनचरीत्वेनातिक्षुद्रजातीयत्वेनाधिकाराभावात्तद्भावः जन्मान्तरीयं तद्दिति नाशङ्कनीयं प्रमाणाभावात् तादृशाधिकारस्याप्यजातत्वात् तर्हि कथमेवमेतासामिति चेत् तत्रोपपत्तिमाह । नन्विति । ईश्वरः साधनानपेक्ष्यः सर्वकरणसमर्थः साक्षात्स्वयं श्रेयस्तनोतीत्यर्थः ननु स्वरूपस्योभयत्र साधनत्वे फलस्याविशेषात् कथमेतदपेक्षयोत्कर्षस्तत्प्रियाखित्याशङ्कानिरासायाधिकारभेदात्फलभेद इत आधिक्यं चेति विशेषणद्वयेनाह । अनुभजतो ऽविदुष इति । व्रजरत्नप्रियाणां स्वागतं वो महाभागा इत्यपि तत्कृतनिषेधेऽपि स्वभावदार्ढ्यात् भजनकर्तृत्वेन नानुभजनं प्रत्युत मानापनोदनादिषु प्रभोरेव तथात्वमस्ति नन्वेतासामेतादृशत्वं क्वचित्सिद्धं तत्रापि दयितास्तनमण्डितेन कुङ्कुमेनाननकुचेषु लिम्पन्त्यस्तदाधिं जहुरित्यत्र दयितापदेन व्रजदेवीनामुक्तत्वात्तत्सम्बन्धिकुङ्कुमेन प्रभुसम्बन्धाधिकारस्य जातत्वाद्भजनादनुभजनमेतासां सिध्यतीत्यनुभजत इत्युक्तं किं च "रसो वै स" इति श्रुतेर्भगवतो रसात्मकत्वेन तत्स्वरूपाभिज्ञत्वं वीक्ष्यालकावृतमित्युक्तरीत्या तत्प्रेयसीनामेवोच्यते एतासां तदभावादविज्ञत्वमित्यविदुष इत्युक्तं विदुष इति पदच्छेदे माहात्म्यज्ञानवत्त्वेन तद्भावराहित्यमेव अधिकारानुसारेण ज्ञानं ज्ञानानुसारेण फलमिति मल्लानामशनिरित्यत्रोपपादितम् एकवचनं जात्यभिप्रायेण सामान्यत्वज्ञापनाय तादृशभोग्यशरीराभावाय पुल्लिङ्गनिर्देशः ईश्वरत्वाद्यत्रानधिकारिणामपि श्रेयस्तनोति तत्र किं वाच्यं तास्वित्यपिशब्देन द्योत्यते तत्र दृष्टान्तमाह । अगदराज इवेति । यद्यमृतं सम्बद्धं सदधिकारिणं विचारयति तथात्रापीत्यर्थः । अपि च अत्रामृतादिपदानि विहाय केवलरोगनिवर्त्तकत्वापादकागदपदोपादानेन पुलिन्दीनां भगवत्सम्बन्धः स्मररोगशान्त्यर्थमित्यवगम्यते जहुस्तदाधिमित्यत्र तन्निवृत्तिमात्रस्यैव मनोरथत्वेन कथनात् व्रजखनिसमुद्भूतरत्नानामेतासां तु विरहदशोत्पन्नस्मररोगापगमे जातेऽप्यग्रे विविधरतिकेलिकलापैरखिलरसमयप्रियतमस्वरूपमतिस्वादनमुष्यमिति नैतद्दृष्टान्तत्वं पूर्वोक्तस्येति ज्ञेयं वस्तुतस्तु व्रजपरिवृढप्रेयसीनां प्रियवियोगकालीनानिरूपस्यापि भावस्य ता मन्मनस्का इत्यादि भगवदुक्त्या तदात्मकत्वेनानन्दरूपत्वात् गदत्वमनुपपन्नमिति तथोच्यते उपयुक्तपदेनापि पुलिन्दीनामुपसमीपे स्थितिरेतासां तु साक्षादङ्गसङ्ग इति महद्वैलक्षण्यं सूच्यते तथा चात्र पुलिन्दीरूपगनेव सुष्ठु यद्यपि दृष्ट्वमादिगोपीनामित्यत्र ता नमश्रभिर्द् अगावित्युक्तेस्तत्प्रसङ्ग एवात्र समायानि तथाप्युद्धवः कालान्तरे पुलिन्दीष्वपि भगवद्भावानुभावं दृष्टवानिति लक्ष्यते "सच्छिन्नगिरिद्रोणीर्वीक्षन् कुसुमितद्रुमान्" इत्यनेन गिरिस्थितानां तासामपि वीक्षणस्यानूक्तसिद्धत्वात् तथा च पूर्वमेताः परं तन्नुश्रुत इत्यनेन घोषसीमन्तिनीः स्तुत्वा तदाश्चर्यमिव मत्वा पुनः पुलिन्दीः स्तुत्वा यत्र तास्वप्येवं तत्र किं वाच्यं तत्प्रियास्वित्याशयेनेदमुक्तमिव गम्यते तेन तासामेवात्र स्तुतिरिति नोक्तानुपपत्तिः किं च इमा इति प्रदर्शनं कथनं प्रभुवल्लभासु नोद्धवस्य सङ्गच्छते तत्रापि फेल्यसम्भावनापूर्वकं किं च तासां निरुपाधिभाववत्त्वेन स्त्रीत्वकथनमपि नोपपद्यते स्त्रीणां कामोपाधिकभावस्यैव नियतत्वात् उक्तेन वनचरीपदं तदङ्गसङ्गिनीषु न प्रयोक्तुं शक्यं छिन्नायविशेषणं वा तत्स्वरूपाभिज्ञत्वात् अपरं च कृष्णस्य दयितः सखा । तमाह भगवान् श्रेष्ठं भक्तमेकान्तिनं क्वचित् । तं वीक्ष्य कृष्णानुचरमित्यादिवाक्यैरत्यन्तरङ्गभक्तस्योद्धवस्यासामहो चरणरेणुजुषामिति तच्चरणरजःसम्बन्धिजन्मप्रार्थनमिति विरुध्यते अतः पूर्णाः पुलिन्द्य इत्यत्र तासां भगवत्सम्बन्धस्योक्तत्वादुक्तानुपपत्तेश्च ता एवात्रोच्यन्त इति सर्वमनवद्यम् ॥ ५६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माज्जनानां महोत्कर्षे भक्तिरेव कारणं न तु तपोज्ञानादिकं सा च भक्तिः स्वयं सर्वोत्कृष्टापि सर्वलोकप्रतिष्ठितत्वेन सर्वोत्कृष्टेऽपि स्थले न तिष्ठति सर्वलोकविगीतत्वेनातिनिकृष्टेऽपि स्थले तिष्ठति स्थित्वा च तदेव स्वास्पदं सर्वोत्कृष्टं सर्वपूज्यं सर्वदुर्लभपदवीकञ्च करोतीति सविस्मयं सरोमाञ्चमाह । केति द्वाभ्याम् । इमाः स्त्रियः इति स्त्रीत्वेन गोपसन्ततित्वेन च जात्या विगीताः । वनचरीर्वनचर्य इति वनभ्रमणशीलत्वात् स्वभावेनापि व्यभिचारदुष्टा इत्याचारेणापि विगीता इमाः क्व कृष्णे परमात्मनि वैकुण्ठनाथादिभ्य आत्मभ्योऽपि परमे सर्वांशिनि पूर्णस्वरूपे रूढभावः भक्तेरपि परममहान् विलासो महाभावः केत्यन्तासम्भवे कद्वयप्रयोगः । अहो अत्याश्चर्यमिति विमृश्य क्षणं विभाव्य ज्ञाततत्त्वो नैतदत्याश्चर्यमित्याह । नन्विति । निश्चये नु भो इति स्वमन एव सम्बोध्योक्तिः । ईश्वरो भगवान् भजतो जनस्य नापि भजनसिद्धस्य अविदुषोऽपि तत्पदार्थत्वम्पदार्थज्ञानरहितस्यापि साक्षाच्छ्रेयः संसारमुक्तिपूर्वकस्वप्रेमरसास्वादरूपं मङ्गलं सर्वमुक्तैरपि दुर्लभं वस्तु तनोति यथा अगदराजोऽमृतम् उपयुक्तः पीतः सन् तत्स्वरूपमजानतोऽपि जनस्य श्रेयः सर्वव्याधिप्रशमनपूर्वकमपूर्वास्वादविशेषं तनोति किं पुनरासां भक्तिसिद्धनित्यसिद्धशिरोमणीनां तत्स्वरूपरूपगुणैश्वर्यमाधुर्यमहाविदुषीणां तत्परिचर्योपकरणीकृतसीयबुद्धीन्द्रियसर्वगात्रयौवनालङ्कारपरिच्छदानां नारदादिसर्वभक्तदुर्लभं रूढभावं न तनुयादिति भावः । रूढभावस्य लक्षणमुज्ज्वलनीलमणौ द्रष्टव्यम् । व्यभिचारदुष्टा इति स्त्रीणां त्रैविध्यात् । व्यभिचारस्त्रिविधः पतिमुपपतिञ्च रमयन्त्या एकः स हि लोकशास्त्रयोर्विगीतः । पतिं त्यक्त्वा उपपतिमेकमेव रमयन्त्याः अन्यः स हि लोकशास्त्रविगीतत्वेऽपि एकपुरुषमात्रप्रीतिमत्त्वेन रसशास्त्रसम्मतः । स्वपतिं त्यक्त्वा उपपतिबुद्ध्या भगवन्तमेव रमयन्त्या अपरः स हानभिज्ञलोकविगीतत्वेऽप्यभिज्ञलोकसम्मतत्वाल्लोकशास्त्रयोः परमार्हणीयत्वाच्च यद्यपि न व्यभिचारस्तथापि व्यभिचार साधर्म्यादेव व्यभिचार उच्यते व्रजसुन्दरीणाम् अतोऽत्र व्यभिचारेण दुष्टा इवेति व्याख्येयम् ॥ ५९ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

अथात्यन्तायोग्यत्वात्कथमेवंविधं ब्रह्मादिभिरपि प्रार्थनीयं भावं प्राप्ता इत्यालोच्य विस्मितचित्त आह । केति । द्वौ कशब्दौ महदन्तरं बोधयतः तदुपपादकानि विशेषणानि इमा इत्यादीनि दर्शना गोप्यो हीनजात्युत्पन्नास्तत्रापि स्त्रियो योनितो निकृष्टतापादकत्वात्तत्स्वः ननु वने तु सास्विको वास इत्युक्त्वात्कथं वनवासस्य निकृष्टतापादकत्वमुक्तमिति शङ्कानिरासाय वनचरी-

**नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥ ६० ॥**

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

रित्युक्तं तथा चोत्कृष्टजात्युत्पन्नानां शास्त्रोक्ततपआद्यनुष्ठानपराणां वनवासः सात्त्विकः न तु यथोक्तानां स्वच्छन्दचरीणां वानरादिसमानाम् अनेन लौकिकचातुर्वर्ण्यशास्त्रीयानुष्ठानतदाराधनोपकरणाद्यभावः सूचितः अन्तःकरणतोऽपि हीना इत्याह । व्यभिचारबुद्ध्या दुष्टाः लोके व्यभिचारेण दुष्टत्वेन प्रसिद्धा इति वा कृष्णे सदानन्दरूपे परमात्मनि रूढभावः क्वेति महदाश्चर्यं तथा च जात्याचारज्ञानादिहीनानां सर्वोत्कृष्टपदप्राप्तिदर्शनात् भगवद्भजनलब्धतत्प्रसाद एव परममहत्त्वे हेतुर्न तु जात्यादिकमिति निश्चीयत इत्याशयेनाह । नन्वीश्वर इति । भजनाधारवतोऽविदुषोऽपि भगवत्स्वरूपानभिज्ञस्यापि साक्षाच्छ्रेयस्तनोति न तु परम्परया तत्रानुरूपं दृष्टान्तमाहागदराजः अमृतम् उपयुक्तः स्वरूपेणाज्ञातोऽपि यथा तद्वत् यद्वा ननु जारबुद्ध्या भगवति भक्तानां स्त्रीणामासां कुतस्त्वमेवम्विधं माहात्म्यमित्याशङ्क्याह । क्वेति । इमा भगवत्प्रियाः क अन्या लौकिकस्त्रियश्च क अतस्तत्साजात्यमात्रेण नैतास्वपकृष्टत्वबुद्धिर्विधेयेति भावः । यतः सामान्यस्त्रियः प्रायेण व्यभिचारदुष्टा भवन्ति एतास्तु अवनचरीः अवने भगवता क्रियमाणे सर्वतो रक्षणे चरन्तीति तथा एवं यासां भगवत्सम्बन्ध एव ननु गोपसम्बन्धः मन्यमानाः स्वपार्श्वस्थानितियुक्तत्वाद्गोपानां तत्सम्बन्धस्य प्रातीतिकत्वात् तथा पुत्रादिसम्बन्धोऽपि तासां लोकप्रतीत्येति भावः । एवं लौकिकस्त्रीभ्यो वैलक्षण्यमुक्त्वा ब्रह्मादिभ्य उत्कृष्टत्वमुपपादयति । कृष्ण इति । एव लोकवेदप्रसिद्धः गोपाङ्गनाभिरनुभूयमानः क ब्रह्मादौ लक्ष्म्यादौ च दुर्लभस्तत्रापि कृष्णे तदर्थमेव प्रकटीकृतकोटिकन्दर्पाधिकलावण्यादिगुणवत्कृष्णविग्रहे तत्रापि परमात्मनि सर्वस्यात्मार्थे सर्वं प्रियं भवति एतासां तु तदर्थमेव आत्माप्रिय इति विशेषः यद्वा बहिर्मुखतादशायां यथोक्तस्वरूपे कृष्णे अन्तर्मुखतादशायां परमात्मनि तत्रापि रूढः परां काष्ठां प्राप्तस्तथा चैवम्विधे विषय एवंविधस्य भावस्य कुत्राप्यसम्भवात्सिद्धं सर्वोत्तमत्वमासामिति भावः । ननु स्वरूपमविज्ञायानुरक्तानामासां स्वस्मिन्नेवम्विधो भावः किमिति भगवता ताभ्यो दत्त इत्याशङ्क्याह । नन्विति । ननु निश्चयेन यतोऽसावीश्वरः कर्तुमकर्तुमन्यथाकर्तुं वा समर्थोऽतो नु भजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोतीत्यर्थः । यद्वा स्त्रियस्तत्रापि निकृष्टजात्युत्पन्नास्तत्रापि वनचर्यः प्रायेण व्यभिचारदुष्टा दृष्टाः इमा अपि तद्धर्मवत्त्वात्तथात्वयोग्या अपि क क क चैव परमात्मनि कृष्णे रूढभाव इत्यहो परमाश्चर्यमित्यादि पूर्ववत् केचित्तु भगवता स्वार्थमुत्पादिताः मध्ये कालाविलम्बे अन्यान् गोपालान् भ्रमात्पतिबुद्ध्या गृहीत्वा व्यभिचारं कृतवत्यस्तेन दुष्टा इत्याहुः । अन्ये तु भगवत्सम्बन्धानन्तरं पुनर्गोपसम्बन्धरूपेण व्यभिचारेण दुष्टा इति वदन्ति ॥ ५९॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्भजनपरो जनः सर्वोत्तम इत्युक्तमत एव भगवानप्युपनयनगुरुकुलवासयथार्थज्ञानादिविहीनस्यापि कथंचिद्भजतः श्रेयस्तनोतीत्याह । क्वेमा इति । एषः शास्त्रप्रसिद्धः विधिप्राप्तोपनयनेन लब्धगुरुकुलवासेन स्वोचितकर्मभिः प्रक्षालितान्तःकरणमलेन सुज्ञातपरमात्मस्वरूपगुणादियाथात्म्येन लभ्यो रूढभावः मुक्तिहेतुः क इमाः स्त्रियः द्विजातिसंस्कारवर्जिताः क तथापि आसां जात एवेत्यर्थः । अत इमाः वनचरीः वनचारिण्यः व्यभिचारदुष्टाश्च न किन्तु भगवत्प्रियाः भगवदीयेष्वपि जनेषु कस्याश्चिदपि जातौ स्थितेषु केनापि भावेन भजत्सु पूज्यत्वबुद्धिर्युक्तेति भावः । ईश्वरोऽपि तु अहो अविदुषोऽपि क्रमप्राप्तस्वात्मयाथात्म्यज्ञानरहितस्यापि साक्षाद्भजतः केनाऽपि भावेन साक्षात्स्वरूपमनुवर्तमानस्य श्रेयस्तनोति मुक्तिं ददाति उपयुक्तः साक्षात्सेवितः अगदराजः अमृतं श्रेय आरोग्यं तनोति यथेति ॥ ५९ ॥

---

### भाषा टीका ।

देखो इन स्त्रियों की महिमा कौन कह सके जिनको कि अज्ञानी लोग व्यभिचार वाली दूषित स्त्री कहते हैं इनको देखो तो श्रीकृष्ण परमात्मा में इन का बड़ा दृढ भाव प्रेम हो रहा है तिससे यह निश्चित है कि जो अज्ञानी कोइ हो वै तिसका भी ईश्वर कल्याण करते जैसे कि विना जाने भी अमृत अपने गुण को करही देत है ॥ ५६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अत्यन्तापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह । नायमिति । अङ्गे वचसि उ अहो नितान्तरतेरेकान्तरतिमत्याः श्रियोऽपि नायं प्रसादोऽनुग्रहोऽस्ति नलिनस्येव गन्धो रुक्कान्तिश्च यासां तासां स्वर्गाङ्गनानामप्सरसामपि नास्ति अन्याः पुनर्दूरतो निरस्ताः रासोत्सवे कृष्णभुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगादाविर्बभूव ॥ ६० ॥

---

### श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

अहो हरिप्रियेति प्रसिद्धा महालक्ष्मीरप्येतादृशप्रेमाश्रयो न स्यादित्याह । नेति । नञः प्राङ्निर्देशो निषेधदार्ढ्यार्थः सप्तम्यर्थे षष्ठी तथा विमलोत्कर्षिणीज्ञानादीनां स्वर्योषितां दिव्याङ्गनानां नलिनगन्धरुचामिति रासयाग्यताका तत्र रुक्शब्देन कोमलगौरकान्तिर्ग्राह्या अन्याः मानुष्याद्याः रास एवोत्सवस्तस्मिन् दण्ड-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

रूपकेण दृढालिङ्गनं ध्वनितं व्रजस्य सुन्दरीणामिति व्रजस्त्रियो रमादिभ्योऽप्युरुमाधुर्य्यमण्डिता इति बृहद्धामनानुसारेण रमादिभ्यो ह्याकृत्या प्रकृत्या च माधुर्य्येणासामेव रासार्हता समर्थिता अन्यैस्तर्व्याख्यातं यद्वा उशब्दः परमविस्मयाक्रोशविशेषे नितान्ता गाढा चासौ रतिश्च नितान्तरतिः प्रेमा तस्या यः प्रसादः प्रसन्नता उत्कर्ष इति यावत् रासोत्सवे व्रजसुन्दरीणाम् उदगात् प्रकटोऽभूत् अयं श्रियोऽपि नास्ति तथा हि रासे "गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकान्तवल्लभम् । गृहीतकण्ठ्य-स्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे" । अस्यार्थः श्रियः कान्तं वल्लभं आत्मन एकान्तवल्लभं नितान्तप्रेष्ठम इति सर्वतः श्रैष्ठ्यमासां प्रेमातिशयमाकलय्यबादरायणिनोक्तं तथा ताभिरपि तथैव गीतम् "भटति यद्भवानह्नि काननमि"त्यादि यदा श्रिय एवैवं वार्त्ता तदा स्वर्योषितां कुतः स्वर्योषितो वैकुण्ठदेव्यः धरणीलीलायाः तासाम् अन्याः कान्ताद्याः दाक्षिणाद्याश्च ॥ ६० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु परमव्योमनाथकृष्णयोरभेद एव निरूप्यते । तत्र पूर्वस्य च सदा वक्षःसङ्गिनी लक्ष्मीः सर्वभक्तशिरोमणिस्तस्यां भावः कथं नाभिनन्द्यते किञ्च यथा दूरचरे प्रेष्ठ इत्यादिरीत्या वियोग-मयभावस्योत्कर्षः सर्वत्र लभ्यते । ततो यदि संयोगेऽप्यासां तेनाधिक्यं स्यात्तर्हि तथा वर्ण्यताम् । संयोगे तु लक्ष्म्या एव तदा-धिक्यं गम्यते । किञ्च लक्ष्मीर्हि स्वरूपशक्तिस्तदपेक्षया स्वरूपे-णामून्यूनाः स्युः कथमेता एव स्तुतेर्विषयीक्रियन्ते तत्र सर्वोद्धि प्राह । नायमिति । अङ्गे महीश्वरस्य श्रीकृष्णस्य मूर्त्तिविशेषे तस्मिन् संसक्ता या श्रीस्तस्या अप्ययम् एतावान् प्रसादस्तदङ्गसङ्ग-सुखोल्लासः उ निश्चितं न विद्यते कीदृश्या अपि तस्याः नलिनस्य दिव्यस्वर्णकमलस्येव गन्धो रुक् कान्तिश्च यासां तासां स्वर्योषितां स्वश्चूडामणिं शुभगयन्तमिवात्माधिष्ण्यमित्युक्त-दिशा दिव्यसुखभोगास्पदलोकगणशिरोमणिवैकुण्ठस्थितानां योषितां भूलीलाप्रभृतीनां मध्ये नितान्तरतेः परमप्रेमयुक्तायाः । तदेवं सति कुतोऽन्याः सर्वा एव स्त्रीजातयो दूरत एव परास्ता इत्यर्थः । तं प्रसादमेव दर्शयति । रासेति । व्रजसुन्दरीणां नित्य-स्थितः एव यो यावान् रासोत्सवे उदगात् प्राकट्यं प्राप । कीदृशीनाम अस्येत्यासां समीपे यन्मर्त्यलीलौपयिकमित्याद्यनु-सारेण परमव्योमनाथादप्युत्कृष्टस्य मया साम्प्रतं साक्षादिवानु-भूयमानस्यापि श्रीकृष्णस्य यौ भुजदण्डौ ताभ्यां गृहीतः स्वल्प-स्यापि विश्लेषस्य भयादिव यः कण्ठः कण्ठालिङ्गनं यत्कृत-मित्यर्थः । तेन लब्ध आशिषो मनोरथा याभिस्तासाम् । तस्मा-ल्लक्ष्मीतोऽपि सर्वथा वैलक्षण्याद्यासां स्वरूपेण चास्मिन् प्रेयसी-भावेन च वैलक्षण्यं दर्शितम् । अत एव लक्ष्मीविजयवाक्येऽस्मिन् व्रजसुन्दरीणामित्युक्त्वा सौन्दर्यादीनामप्याधिक्यं दर्शितम् । यस्यास्ति भक्तिरित्यादिरीत्या भक्तितारतम्येन तारतम्याद्युक्त-मेव चेदम् । व्रजवल्लवीनामिति पाठे तु व्रजस्य च तासाञ्च प्रसिद्धिः सूचिता ॥ ६० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्यन्तापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह । नायमिति । अङ्गे वक्षसि वामाङ्गे या उ अहो नितान्तरतेः एकान्तरतिर्यस्यास्तस्याः श्रियो लक्ष्म्याः नायं प्रसादोऽनुग्रहोऽस्ति नलिनस्येव गन्धो रुक्कान्तिश्च यासां तासां स्वर्योषितां स्वर्गाङ्गनानामप्सरसामपि नास्त्यन्याः इतरस्त्रियस्तु कुतः प्रसादविषया इति शेषः दूरतो निरस्ता इति भावः । कोऽसौ प्रसादो यः श्रिया स्वर्योषिद्भिश्च न लब्ध इत्यत्राह । रासोत्सव इति । रासक्रीडायां कृष्णस्य भुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनामुदगादाविर्बभूव वल्लवीनां मध्ये उदगाज्जगावेति वा ॥ ६० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यः प्रसादः व्रजवल्लवीनां गोष्ठस्थानां गोपीनाम् उदगात् उदितः अयं भक्त्या नितान्तरतेः श्रियः स्वर्योषितां च नास्ति नन्वस्माभिरनुज्ञातं न तु शास्त्रेणेत्यर्थः । कीदृशीनां स्वर्गाङ्गनानां ललिताङ्गरुचाम् अखिलविलासोपेतशरीरकान्तीनां कथम्भूतानां गोपीनां रासक्रीडोत्सवे अस्य कृष्णस्य भुजदण्डेन गृहीतकण्ठाश्च लब्धाशिषश्च सुरतसुखबोधकशुभवाक्यप्रबन्धाश्च यास्तासां अन्याः अन्यासां स्त्रीणां बहुलं छन्दसीति विभक्तिव्यत्यय-विधानात् अन्यस्त्रिय ईदृशप्रसादं नापुरिति कुत इति वा ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

नन्वेतदन्योऽन्याश्रितम् एवं भावो भगवति उत्तमकारणाभावे कथं भवतीत्याशङ्क्य ईश्वरस्तथा कृतवानित्युक्तम् ईश्वरः कथं करोतीत्याशङ्कायां तदिच्छानुसारेण भजनादित्यनुभजनेन निरूपितम् इच्छानुसारिभजनमकारणमिति पुनः स दोषस्तदवस्थः अत एकं निश्चित्य साधनं वक्तव्यं भगवदिच्छाकारणानन्तरं चेति आद्ये तासां न कापि स्तुतिः कारणान्तरे तु किं ब्रह्मजन्मभिरिति विरुध्यत इत्याशङ्क्याह । नायं श्रियोऽङ्ग इति । वस्तुतो भगव-दिच्छैव नियामिका परमियमेतावता कालेन न कापि जातेति तासां स्तुतिरुच्यते अन्यथा यादृशास्तासु प्रसादस्तादृशोऽन्यत्रापि भवेत् तत्र सम्भावितस्थानान्यनूद्य परिहरति । एकान्ततो रति-र्यस्यां तादृशी लक्ष्मीः तस्यापि निरन्तरं रतिं प्रयच्छन्नपि न प्रसादं दत्तवान् स्वर्योषितामपि इन्द्रोपेन्द्रादिभावापन्नोऽपि बहुभिः सह रममाणोऽपि न दत्तवान् नलिनवत् गन्धो रुक् कान्तिश्च यासां तेन कमलभ्रमोऽपि तासु सम्भवति कमलप्रियश्च भग-वानिति कमलखण्डे पूजित इव कदाचित्तासु तिष्ठेत्तस्या अपि निषेधः अन्याः पुनस्तत्तदवतारेषु सम्बद्धा अपि कुतस्तत्प्रसादं प्राप्नुवन्तीत्यर्थः । स कः प्रसाद इत्याकाङ्क्षायामाह । रासोत्सव इति । अस्य भुजदण्डैर्गृहीतकण्ठैर्लब्धा आशिषो याभिः न हि कदाचिदप्यनेकरूपाणि कृत्वा रमणार्थमेव रसाभिनिविष्टो भवतीति तत्रापि व्रजवल्लवीभिः सह तास्त्वसंवृता दध्यादिविक्रये सर्वत्र पर्यटनपरा महतामपि प्रार्थनया कदाचिद्भगवानेवं रूपं गृह्णाति महति कार्ये आनन्दश्च तासां सर्वोत्तमः संपादितः अतएव

आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥
या वै श्रिया ऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ।
कृष्णस्य तद्भगवतश्चरणारविन्दं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम् ॥ ६२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

रसमुत्पाद्यतो अतो ज्ञायते नैतादृदयः काश्चन नाप्येतादृशः क्वापि भगवत्प्रसाद इति अतो ज्ञायते भवस्थापि तासामेतादृशी प्रमाणेष्वश्रुतापि सर्वोत्तमेति ॥ ६० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यथा सर्वावतारश्रेष्ठ एव कृष्णो गोचारणवानरबालकैः सहभोजित्वदधिचौर्यपरस्त्रीचौर्यादिलोकविगानं गृहीत्वैव सर्वसङ्गीतः सर्वोत्कर्षसीमानं प्राप तथैव सर्वाह्लादिनीशक्तिशिरोमणिभूता अपि इमाः स्त्रियो गोपस्त्रीत्ववनचारित्वव्रजलोकविख्यातव्यभिचारादिविगानं गृहीत्वैव लक्ष्म्यादिभ्योऽपि परमसौभाग्योत्कर्षसीमानमवापुरित्याह । नायमिति । अयं प्रसादः उ अहो अङ्के नारायणस्य वक्षसि वर्त्तमानायाः श्रियोऽपि नितान्तरतेः प्राप्तात्यन्तरमणाया अपि कदापि नोदगात् कुतः पुनः स्वर्योषिताम् उपेन्द्राद्यवतारपत्नीनां नलिनस्येव गन्धो रुक् कान्तिश्च यासामिति सौन्दर्यसौरभ्यादिमत्त्वे सत्यपीति भावः । अन्याधतारास्त्रियः पुनः कुत एतत्प्रसादभाजः स्युरित्यर्थः । रासोत्सवे अस्य तु भुजदण्डाभ्यां गृहीत आलिङ्गितो यः कण्ठस्तेन लब्धा आशिषो याभिस्तासां तेन भक्तिमज्जनानां मध्ये सर्वोत्कर्षकोट्यां गोप्य एव स्थिताः साक्षात् श्रेयसोऽपि मध्ये सर्वोत्कृष्टकोट्यां रास इति सूचितम् ॥ ६० ॥

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

यथैव विरुद्धभावः कुत्रापि नास्ति तथा भगवता यः प्रसाद एतासु कृतः स तु कुत्रापि न कृत इत्याह । नायमिति । अङ्के स्ववक्षसि नितान्तरतेः एकान्तरतिमत्याः श्रियोऽपि नायं प्रसादोऽनुग्रहः न अहो अत्याश्चर्यं स्ववक्षसि स्थाप्य निरन्तरं रतिं प्रयच्छन्नपि नेमं प्रसादं दत्तवान् तथा स्वर्योषितां स्वर्गाङ्गनानां नलिनस्य कमलस्येव गन्धो रुक्कान्तिश्च यासां तासामपि अयं प्रसादो न दत्तः इन्द्रोपेन्द्रादिरूपमापन्नोऽपि यकाभिः सह रममाणोऽपि नेमं प्रसादं दत्तवान् अन्यास्तु तत्तदवतारेषु लब्धसम्बन्धा अपि कुतः कस्माद्धेतोरिमं प्रसादं प्राप्नुयुः अत्यर्थं दुर्लभं प्रसादस्वरूपमाविष्करोति । रासोत्सव इति । अस्य तिरस्कृतकोटिकन्दर्पस्य भुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां च उदगात् आविर्बभूव तथा च ब्रह्मादीनामपि प्रार्थनया कदाचिदेकमेव रूपं गृह्णाति न त्वनेकरूपाण्याविष्कृत्य यथोक्तरासाभिनिविष्टो यथोक्तं प्रसादं करोतीत्यहो व्रजवल्लवीनां तादृशप्रसादप्राप्त्युपायविधुराणामपि यथोक्तप्रसादलाभे भगवदिच्छैव कारणमिति भावः ॥ ६० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गोपीषु भगवतोऽनुग्रहातिशयमाह । नायमिति । अङ्के भगवद्वक्षसि । उ अहो नितान्तरतेः एकान्तरतिमत्याः श्रियो लक्ष्म्या अपि अयं प्रसादः अनुग्रहः नास्ति । नलिनस्येव गन्धः रुक् कान्तिश्च यासां तासां स्वर्गाङ्गनानामप्सरसामपि नास्ति । अन्याः स्त्रियस्तु तादृशप्रसादविषयाः कुत इत्यर्थः । कोऽसौ प्रसाद इत्यत आह । रासोत्सवे इति । रासोत्सवे अस्य श्रीकृष्णस्य भुजदण्डाभ्यां गृहीतेन आलिङ्गितेन कण्ठेन लब्धा आशिषो याभिस्तासां व्रजसुन्दरीणां य उदगादाविर्बभूव ॥ ६० ॥

भाषा टीका ।

यह भगवान् की कृपा यथार्थ सदा रति वालीप्रेम करने वाली लक्ष्मी पर नहीं है और कमल के से सुगंध वाली देव स्त्रियों पर भी नहीं भई है और स्त्रियों की तो क्या बात है जो कि प्रसाद रासक्रीडा में ईश्वर के भुजा तथा कंठको ग्रहण करने से मनोरथों के प्राप्त होने से व्रजवासि गोपियों को प्राप्त भया वह प्रसाद किसी को नहीं होना है ॥ ६० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किं च आस्तां तावद्गोपीनां भाग्यं ममप्येतावत्प्रार्थ्यमित्याह । आसामिति । गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्किमप्यहं स्यामित्याशंसा कथम्भूतानाम् या इत्यादि आर्याणां मार्गं धर्मञ्च हित्वा ॥ ६१ ॥

पुनस्ता एव विशिनष्टि । या वा इति । योगेश्वरैरप्यात्मन्येवार्चितं स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ॥ ६२ ॥

श्रीमत्सनातनगोस्वामिकृतबृहद्वैष्णवतोषिणी ।

एवं श्रीगोपीनां सर्वतः श्रैष्ठ्यं गीत्वा तासां दास्यमन्तरिच्छन्नपि सुदुर्लभं मत्वा तत्पदाम्बुजैकरसःसंपर्कमप्याशास्ते आसामिति । अहो अत्यन्तदुर्लभलालसाखेदे वृन्दावने प्रति सदा तथैव तासां भ्रमणादिना सांनिध्यात् गुल्मस्तम्बः अप्रकाण्डे स्तम्बगुल्मावित्यमरः क्षुपादीनामनुक्तिः अत्युच्चत्वेन तेषां तत्परेण-

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

रेणुजोपणासिद्धेः गुल्मादीनां यथोत्तरं न्यूनत्वमूह्यं परमदीनतया आत्मनोऽतिनीचत्वमननेन तृणत्वमात्रप्रार्थने पर्य्यवसानात् गीतमपि तासां माहात्म्यं पुनरप्यत्यौत्सुक्येन गायति । या इति । दुस्त्यजमत्याज्यं स्वजनं पतिपुत्रादिकं मु मुक्तिः कुत्सिता यस्मात् प्रेम्णः तं भजमानेभ्यो ददातीति मुकुन्दो भगवान् श्रीकृष्णः तस्य पदवीम् । अनुवृत्तिं भेजुः भक्त्याकुर्वन् यद्वा तद्दर्शनार्थं सन्ध्ययोरनुगमनाभिगमनाभ्यां तद्गमनागमनमार्गं भेजुः असेवन्त इति मुकुन्दे परमप्रेमासक्तिरुक्ता । ननु स्वजनस्यार्य्यपथस्य च त्यागो वेदविरुद्धः साधुवर्गपूज्यपादाभिस्ताभिस्त्यक्तुं न युज्यते तत्राह । श्रुतिभिर्विमृग्यामेव केवलं नं तु प्राप्तां प्राप्यां वेत्यर्थः । अतो धर्मज्ञानाद्युपदेष्ट्रृणां श्रुतीनां दुर्लभतरस्य वस्तुनो लब्धये तदधीनतानर्हत्वेन तत्तत्त्यागः युक्त एवेति भावश्चायं श्रुतीनां धर्माद्यपेक्षास्ति एताश्च सर्वं परित्यज्य भावविशेषेण तमेकमेवाभजन् अतः श्रुतीनामद्यापि विमृग्यामेव तथा श्रीब्रह्मस्तुतौ अद्यापि यत्पदरजः श्रुतिमृग्यमेवेति एतास्तु सम्यक् प्रापुरेवेति ताभ्योऽप्यासामुत्कर्ष एवेति अथवा त्वं मे भृत्यः सुहृत्सखेति त्वं तु भागवतेष्वहमित्यादि श्रीभगवद्वचनादिना त्वं भक्तवर्गश्रेष्ठतमोऽत एव साचाच्छ्रीभगवद्विचित्रसेवाप्रसादविशेषयोग्योऽसि कथमेवं प्रार्थयसे तत्राह । या इति । स्वजनाद्यत्यागान्मम तादृशी भक्तिर्नास्त्येवेत्यर्थः । ननु गृहस्थस्य तत्त्यागो वेदविरुद्धः तत्राह । श्रुतिभिरिति । भक्तवर्गादिगुरुश्रीब्रह्मणोऽपि ज्ञानप्रदत्वादिनादि गुरूणां श्रुतीनामप्राप्यतया तदनुवर्तितात्यागेन श्रीमुकुन्दप्राप्त्यर्थं श्रीगोपीनामेवासामनुगत्वाय तत्पदाब्जरजःस्पर्शिजन्मैव युक्तमित्यर्थः एवमुक्तमाहात्म्यभरस्योद्धवस्यैवंप्रार्थनया श्रीगोपीनां महानुत्कर्षः सिद्ध एव पश्चात्तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमाऽङ्घ्रिरजोऽभिषेकमिति श्रीब्रह्मप्रार्थनतोऽस्यायं प्रार्थनाविशेषः सोऽस्यैव तस्य सेवकत्वाद्यभावेन तथा चतुर्मुखत्वादिना महावैलक्षण्येन ब्रजे चिरं स्थातुमप्ययोग्यत्वेन यस्य कस्यापि गोकुलीयस्य पादरजोऽभिषेकार्थं तत्र तृणादिकिञ्चिज्जन्मप्राप्त्यैव कृतार्थतया तादृशप्रार्थनाया योग्यत्वात् अस्य तु सदानिकटतरसेवकतया तथा ब्रजे चिरवासादिना तत्रत्यानामनुग्रहभरसंपत्त्या च भावविशेषोदयादतृप्त्या ततोऽप्युत्कृष्टाय मधुराय श्रीमुकुन्दभावविशेषाय श्रीगोपिकादास्यार्थं तादृशप्रार्थनस्यौचित्यादुपपद्यत एवेति दिक् ॥ ६१ ॥

ननु सर्वैरपि भक्तैः श्रीभगवदर्थं प्रायः स्वजनादयस्त्यज्यन्त एवेत्यनेन को नाम गोपीनां विशेष इत्याशङ्क्य परमदुर्लभस्य लाभविशेषेण माहात्म्यविशेषं साधयति । या वा इति । श्रिया महालक्ष्म्या अर्चितं प्रेमसंवाहनादिभिः संलालितम् अत एव अजो ब्रह्मा आदिशब्दाच्छ्रीरुद्रादयः यद्वा अजा ब्रह्मादिमेव्या योगमाया आदिशब्दाच्छ्रियाशक्त्यादयस्ताभिरर्चितं विधिश्रीपासनया संमानितम् आप्तकामैर्मुनैरपि रक्तत्वादिना तापहरत्वादिना मधुररसभावित्वादिना च तत् यद्वा प्रकृष्टं सर्वथोत्कृष्टमात्मन्येव अर्चितं ध्यानरूपया मुक्तितुच्छताविधानेन परमफलतयाश्रितं योगो भक्तियोगस्तस्मिन् ईश्वराः समर्थाः समग्रभक्तिसम्पन्ना इतिष्ठा इत्यर्थः तैरपि सदात्मनि सन् उत्तमः विशुद्धो य आत्मा चित्तं तस्मिन्नेवार्चितं प्रेमध्यानादिना सेवितं तेषामपि सर्वेषां प्रायस्तस्य साक्षाद्दर्शनाभावान् मनस्येवार्चनात् यद्वा सदेत्यस्य परेणान्वयः एवं शशाङ्कांशुविराजिता निशा इत्युक्तेः तच्च तत्रैव व्याख्यातं तेन परमदौर्लभ्यमभिप्रेतम् अर्चकानामजादीनामेषां यथोत्तरं श्रेष्ठ्यं प्रायो यदर्चितमित्याद्यक्रूरोक्तवद्बुद्ध्यम् एवमजाद्यर्चितत्वेन क्रमेण सर्वार्थप्रदत्वं परमफलत्वं परमाराध्यत्वं च माहात्म्यमुक्तम अर्चितमित्यतीतनिर्देशः सर्वांशैः परिपूर्णतयाऽवतीर्णस्य स्वच्छन्दं गोकुले विक्रीडतोऽनन्यापेक्षस्य श्रीभगवतोऽधुनान्यैरर्चयितुमलभ्यत्वात् कृष्णस्य परमानन्दघनमूर्त्तेः तत्रापि भगवतः निजाशेषैश्वर्य्यं प्रकटयतः यद्वा कृष्णस्य जगदीश्वरस्य भगवतः परमस्वच्छन्दस्य तदिति बहुधा संसेवितमनुभूतरूपगुणादिमाहात्म्यं चिरविरहोदितप्रेमभरेण संस्मरति।किं वा रूपगुणादिनाऽनिर्वचनीयमित्यर्थः । प्रपदं पादाग्रमेवारविन्दं रक्तत्वादिना तापहरत्वादिना मधुररसभावित्वादिना च तत् यद्वा प्रकृष्टं सर्वथोत्कृष्टं पदारविन्दं या गोप्यो रासरूपायां गोष्ठ्यां क्रीडायां यद्वा रासे रासोपक्रमे या गोष्ठी गोपीनां सभा तस्यां तथा हि तत्रैव एका तदङ्घ्रिकमलं सन्तप्तास्तनयोरधादिति अत्र एकेत्युपलक्षणार्थं किं वा भजतो नु भजन्त्येक इत्यादिप्रश्नोत्तराभ्यां श्रीकृष्णेन सह संळापस्तस्यां स्तनेषु न्यस्तं संलग्नं यथा स्यात्तथा परिरभ्य गाढमालिङ्ग्येत्यर्थः । संस्पर्शनेनाङ्कृताङ्घ्रिहस्तयोरिति तत्रैवोक्तत्वात् यद्वा प्रेमवैवश्यात्स्वयमेव भगवतैव वा नागरशेखरेण धृतं परिरभ्य स्तनोपर्य्येव निधायालिङ्ग्य तापं कामज्वरं विरहदाहं वा विशेषेण जहुः वै एतत् प्रसिद्धमेवेत्यर्थः । अक्रूरेणापि पथि मनोरथे यद्गोपिकानामित्यादिना वर्णितत्वात् एवं तेषामात्मन्येव तस्यार्चनम् आसान्तु क्रीडाविशेषे साक्षात्तादृशपरिरम्भणमपीति माहात्म्यं स्वतः सिद्धमेव तत्र भगवतः कृष्णस्यैत्यजादिभ्यः सकाशात् प्रपदारविन्दं साक्षात्परिरभ्यैत्याप्तकामेभ्यः स्तनेष्विति मधुररसविशेषाभिव्यञ्जनात् योगेश्वरेभ्यः रासगोष्ठ्यामिति लक्ष्मीतोऽपीत्येवं विवेचनीयम् एवमुद्धवस्य श्रीगोपीसङ्गप्रभावेण तादृशभावोत्पत्तिर्ज्ञेया अतः सख्यामिव प्राप्तस्यास्य गूढोऽयमभिप्रायः तथा त्यक्ततापानामासां एताधुना विरहतापनोदार्थं मया प्रयत्नः कार्य्य इति यद्वा कृष्णस्य श्रीव्रजेन्द्रनन्दनस्य यत्प्रपदारविन्दं तदीयासमोर्ध्वसौन्दर्य्यसारसर्वस्वमेवास्य मोहितया श्रिया तदुपलब्धये तपआदिभिरर्चितमिति पूर्वमेव गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीरित्यत्र लिखितमेव ॥ ६२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ पूर्वोक्तरीत्या तस्य नित्यप्रेयसीनामपि तासां जन्मादिलीलाविस्मृततात्कालिकदशानां तादृशीनामपि तास्मिन्नु इहलोकधर्मातिक्रमिरागाणां तादृशीनामपि श्रुतिदुर्लभतापदवीमासामनुगतिं वाञ्छन् तच्चरणरज एव तत्र साधनं निश्चिन्वन् प्रचुरतत्स्पर्शयोग्यं तत्र स्थावरजन्माप्याशास्ते । आसामिति । अहो इत्यत्यन्तदुर्लभलालसा खेदे । वृन्दावन इति । सदा तत्रैव तासां भ्रमणादिना सान्निध्यात् । गुल्मः स्तम्बः । अप्रकाण्डे स्तम्बगुल्मावित्यमरः । वृक्षादीनामनुक्तिरत्युच्चत्वेन सम्यक् तद्रेणुपणासिद्धेः गुल्मादीनामनुक्रमेणोक्तिर्नीचनीचतया रजसां सम्यक् प्राप्तेरुत्तराभिलाषाधिक्यात् दैन्याच्च । गुल्मादीनां यथोत्तरं न्यूनत्वमूह्यम् । परमदीनतयात्मनोऽतिनीचत्वमननेन तृणत्वमात्रप्राथने

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पर्यवसानात् । गीतमपि तासां माहात्म्यं पुनरत्यौत्सुक्येन गायति या इति । या मुकुन्दस्य पदवी तत्प्राप्त्येकोपायः पूर्वमुक्तो रूढभाव एव । मुकुन्देति मुक्तिं ददातीति निरुक्त्या तादृशभावस्य दुर्लभतां सूचयति । मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति प्रेममात्रदानकार्पण्यसूचनात् । कीदृशीं श्रुतिभिः कर्त्रीभिर्विमृग्यां परमपुरुषार्थतयान्वेषणीयां किं कृत्वा भेजुः स्वजनमार्यपथञ्च हित्वा लोकमर्यादां वेदमर्यादाञ्च त्यक्त्वेत्यर्थः । तत्तु दुस्त्यजं पूर्वोक्तैः श्रीप्रभृतिभिः सर्वैरप्यत्याज्यं ते खलु सर्वलोकसर्वमहावेदपुरुषार्थसारबुद्ध्यैव भजन्तीत्यतो न तेषु रागोत्कर्षमेव कारणमित्येता एवासमोर्द्ध्वरागा इति भावः । तदेवं मुकुन्दपदवीमिति तत्रापि श्रुतिभिर्विमृग्यामिति तस्याः नित्यत्वं सर्वोत्तमत्वञ्च गम्यते । तत्रापि तास्तां भेजुरिति तं शीघ्रं ग्रहीष्यन्त्येव । गृहीतश्चासौ नात्मानं मोचयितुं शक्ष्यतीति नित्यतत्सङ्गित्वं बोध्यते । परमान्तरङ्गेणाप्युद्धवेन तासां यथाकथञ्चित् चरणसम्बन्धेन जन्मप्रार्थनात् । तत्रापि वृन्दावन एव तत्सम्भवमननात्तासां तस्य च तद्विधत्वं बोध्यते इति ज्ञेयम ॥ ६१ ॥

न केवलं तादृशतल्लाभसाधनस्य तादृशरासस्थैर्योत्कर्षेण तासां माहात्म्यम् अपि तु भगवल्लाभस्यापीत्याह । या इति । वै प्रसिद्धं सर्वलोकचमत्कारकरं यथा स्यात्तथा । कृष्णस्य भगवतः कृष्णस्तु भगवान् स्वयमित्यादावसमोर्द्ध्वरूपत्वेन प्रसिद्धस्य तस्य तत्तादृशभावैकभाव्यं प्रपदारविन्दं गोप्यस्तपः किमचरन्नित्यादिरीत्या प्रकृष्टाविर्भावं पदारविन्दं परिरभ्य यत्ते सुजातचरणाम्बुरुहं स्तनेष्वित्यादिरीत्या परमस्नेहमयं रागेणालिङ्ग्य तापं जहुः । तादृशतत्प्राप्तितः पूर्वं यः कश्चिद्भावः स सर्वोऽपि तादृशभावानां खल्वनुभवेन ताप एव तत सर्वं तत्यजुरित्यर्थः । पद्मापादानेन भक्तिव्यञ्जनया तादृशश्रीकृष्णस्य परमदुर्लभता सूचिता । तथापि लिट्प्रयोगेण तत्त्यागस्य स्वपरोक्षतां सूचयित्वा स्वपर्यन्तमहाभागवतागम्यत्वं सूचितम् । श्रीभगवतोऽपि ताभिः परिरम्भे रागं दर्शयति न्यस्तं तेन बलादर्पितम् । तत्र समयवैशिष्ट्यमप्याह । रासगोष्ठ्यां रासोपक्रमसभायां तस्यां परमापूर्वलीलायां प्रवर्तमानायामित्यर्थः । संस्पर्शनेनाङ्कृताङ्घ्रिहस्तयोरिति तदानीन्तनप्रसिद्धेः । ततश्च तदानीं तासामाविरभूदित्यादिना त्रैलोक्यलक्ष्म्येकपदं वपुर्दधदित्याद्यनुसारेणाप्रत्यनयान्तरादपि परमाभ्युदयाविर्भावरमिति भावः । कथम्भूतम् अपि श्रिया वैकुण्ठलक्ष्म्यापि आत्मनि मनस्येव सदार्चितं भावविशेषेण बोध्यमानमेव वर्त्तते । न तु तथा प्राप्तं यद्वाञ्छया श्रीर्ललनाचरत्तप इत्युक्तेः । अत एव सुतरामजादिभिर्ब्रह्मादिभिराधिकारिकैर्वैराप्तकामैरात्मारामभक्तैर्योगेश्वरैः सर्वयोगानामीश्वरैः । शुद्धभक्तियोगिभिरपीति मनस्येवार्चितमिति पूजार्थत्वाङ्गतामेव कः । तस्मात् सर्वदुर्लभचरणारविन्दस्य तस्यापि तादृशतया लब्धत्वात्तदिरादेवाकृष्य वशयितव्य इति भावः । यदात्मनीति चरणारविन्दमिति क्वचित् पाठः ॥ ६२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किं तासां भाग्यं सर्वेषां दुर्लभमेव मम त्वेतावदेव प्रार्थ्यमित्याह । आसां गोपीनां चरणरेणुजुषां गुल्मलतौषधीनां मध्येऽहं किमपि स्याम्, केनापि तृणकीटादिरूपेण तच्चरणरेणुसंस्पर्शयोग्येनोद्भवेयमिति तत्र हेतुं वदंस्ता विशिनष्टि । या इति । या गोप्यः स्वजनमार्याणां पन्थानं च धर्मं च हित्वा श्रुतिभिर्वेदैरपि विमृग्यां मुकुन्दस्य पदवीं भेजुः मुकुन्दस्वरूपरूपगुणानुचिन्तनपरा बभूवुः इत्यर्थः ॥ ६१ ॥

पुनस्ता एव विशिनष्टि । या वा इति । यद्भगवतः श्रीकृष्णस्य चरणारविन्दं रासगोष्ठ्यां स्तनेषु न्यस्तं निहितं तत् या गोप्यः परिरभ्य तापमान्तरं बाह्यं च जहुरिति सम्बन्धः चरणारविन्दं विशिनष्टि । श्रिया लक्ष्म्यार्चितं तथाप्तकामैरजादिभिश्चतुर्मुखादिभिश्च तथा योगीश्वरैरात्मनि चित्ते चार्चितम् ॥ ६२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अहम् आसां गोपीनां चरणरेणुजुषां वृन्दावने प्ररूढानां गुल्मलतौषधीनां मध्ये गुल्मादिकं किमपि स्याम उद्भवेयम् अहो अमीषां पूर्वजन्मार्जितपुण्यराशिः या गोप्यः त्यक्तुमशक्यं स्वजनं भर्त्रादिकम् आर्यपथं स्मार्तमार्गं नियतस्वभर्तृसङ्गविषयं हित्वा वेदशिरोभिरपि मार्गणीयां मुकुन्दपदवीं भेजुरित्यन्वयः ॥ ९ ॥

श्रियाऽजादिभिः ब्रह्मादिभिराप्तकामैः सत्यसङ्कल्पैः योगेश्वरैः सनकादिभिरपि आत्मनि हृदये निधाय यदर्चितं या गोप्यः कृष्णस्य भगवतश्चरणारविन्दं स्तनेषु न्यस्य परिरभ्य कामनिमित्तसन्तापं विजहुः आसामिति पूर्वेणान्वयः ॥ १० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वीर्ष्यया तासामवस्थां श्रुत्वा किमीश्वर एतदेव प्रार्थ्यते तथा सति स्वाभिलषितत्वात् न वस्तुनिरूपणे तात्पर्यमिति नोत्कर्षः सिद्ध्येदित्याशङ्क्याह । आसामहो इति । अहमासां दासानुदासत्वेऽपि न योग्यः कथमेतद्भावयिष्यामि “अयोग्यमिच्छन् पुरुषः पतत्येव न संशय” इति आसां चरणरेणुजुषां गुल्मलतौषधीनां मध्ये किमप्यहं स्याम् आदौ जङ्गमत्वाधिकारो नास्ति तथा सति क्रियया तत्तोपगमनं स्यात् व्यवहारयोग्ये तु समतया भावः स्यात्तदप्ययोग्यं स्थावरत्वे वृक्षादिभावे चिरकालावस्थितौ न शीघ्रं भगवत्प्राप्तिः स्यात् अतो यो यस्य चरणरजो वाञ्छति स तद्भवति तदीयो वा भवतीति वा अल्पायुः चरणरजः प्राप्तियोग्यं जन्माभिलषितम् अतो गुल्मलतौषधीना तामसराजससात्त्विकानां तत्रापि रजःसम्बन्धयोग्यानां न तु तुलसीकुन्दजातीव्रीह्यादिषु तेषु हस्तसम्बन्धः तदीयानां भगवत्सम्बन्धशिरःसम्बन्धश्च भवेदिति व्याजेनोत्कर्षप्रार्थनं भवेत वृन्दावनं हि परमोत्कर्षोपादकं भक्तिजनकञ्च अहो इत्याश्चर्ये न ह्येतदपि भविष्यतीति साधनप्रकारेणैव जात उत्कर्षः फलपर्यवसायी भवति नान्यथा किमपीत्यादरे नात्र सत्त्वाद्युत्कर्षोऽभिप्रेतः रजःसम्बन्ध एवोत्कर्षजनक इति तस्य तुल्यत्वात् नन्वेतासां रजसा क्रमेणैतद्भाव एव भवेत् न तु

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्भावः ततः किमित्येवं प्रार्थ्यत इत्याशङ्क्याह । या दुस्त्यजमिति । भगवद्भावः आसां सुलभः न त्वन्यत्र तथैवोपपादितत्वात् दृष्टत्वाच्च तदसम्भावितामेति मतश्च पुनस्तासां धर्मानतिवदति । दुस्त्यजाः स्वजनाः पुत्रादयः तत्रापि दुस्त्यजः आर्यमार्गः "संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यत" इति अयमार्यमार्गो लौकिकः यादृशास्ते स्वजनाः वस्तुतस्तु भगवानेव स्वजनः आर्यमार्गश्च अन्यथा फले व्यभिचारश्च एवं त्यक्त्वा चकाराद्भगवदुपदेशं च अन्यथा बहिः संवदने स्वास्थ्यं भवेत् पश्चान्मोक्षदातुः पदवीं भेजुः यो हि यन्मार्गं गच्छति स तावति धर्मे तत्तुल्यो भवति तत एता अपि मोक्षदात्र्यो जाताः तथा वयमपि भविष्याम इति भगवद्भजनापेक्षयाप्येतदुत्तमामिति भावः । नन्वेवं सति ब्रह्मभाववदयमपि कथं वेदेनोक्तस्तत्राह । श्रुतिभिर्विमृग्यामिति श्रुतयोऽपि वक्तुं विचारयन्ति परमिदमित्थन्तया वक्तुं न जानन्ति दृष्टान्तापरिज्ञानात् इदानीमेव हि गोपिकाः भगवता दृष्टान्तीकृताः भगवदभिप्रायः श्रुतीनामपि ज्ञातुमशक्य इति न सर्वज्ञव्यादिनापि दूषणं तदुपपादितं व्यासाधिराज्वरेहार्थैरिति इममेवार्थमुररीकृत्य यस्यामतं तस्य मतमित्यादिश्रुतयः अज्ञानमेव तुष्टुवुः तथापि स्वार्थमज्ञाने विशेषजिज्ञासाया अवश्यंभावात्स्वभावसामर्थ्यमवश्यं मन्यमानाः मृगयन्त्येव तत्रापि सर्वोत्कृष्टत्वाद्विशेषेण मृग्यम् ॥ ६१ ॥

किं च यत्सर्वेषां पूज्यमाराध्यं तत्तासां तापहारकत्वेन नियुक्तं तापे हि पूज्यस्पर्शोऽपि निषिद्धः पूजार्थमपि तत्राप्यङ्गभावं प्राप्त इति विशेषत उत्कर्षमाह । या वै श्रियार्चितमिति । सर्वत्र फलरूपा लक्ष्मीः तयापीष्टसिद्ध्यर्थम आर्चितं न तु यथेष्टं विनियोक्तुं शक्यं किं च अजादयो ब्रह्मादयो सनकादयश्चाप्तकामाः योगेश्वराः सिद्धादयः ये सर्वं कर्तुं समर्थाः सर्वोऽपि पुरुषार्थः प्राप्तो वशीकृतः सर्वसाधनाश्च तेऽपि ततोऽप्युत्तमफलसिद्ध्यर्थं तच्चरणमानर्चुर्बहिरवस्थायाम् अर्चनं भविष्यतीत्याशङ्क्य विशेषमाह । यदात्मनीति । यदात्मन्यर्पितं ध्यानं कृत्वापि पूजितमित्यर्थः । तादृशमपि कृष्णस्य सदानन्दस्य फलरूपस्य तत्रापि तत्प्रसिद्धं स्वतन्त्रफलदातृत्वं तत्र भक्तिमार्गप्रवर्त्तकं भगवतः सर्वं समर्थस्य एवं स्वतः संवन्धतोऽप्युत्कृष्टायां रासगोष्ठ्यां कौतुकक्रीडायां स्वयं स्वेच्छया नर्त्तनं कृत्वा श्रान्ताः सत्यः कमलादिकमिव व्यजनवायुमिव चन्दनमिव तन्मन्यमानाः स्तनेषु न्यस्य तापं जहुः धार्ष्ट्यात् अयुक्तमेव तथा कृतवन्य इति शङ्कानिवृत्त्यर्थं भगवतैव न्यस्तमित्युक्तं भगवानप्यत्यन्तवशः तासां शीघ्रं तापापनोदनार्थं स्वयमपि शीघ्रं तत्स्तनेषु स्थापितवान् अत आह । न्यस्तमिति ततस्तत्परिरभ्य स्वाधीनं कृत्वा तापं जहुरिति प्रमाणतः प्रमेयतश्च ता उत्कृष्टा इत्यर्थः । अन्यार्थमेवैषा प्रशंसेत्याशङ्क्य पूर्वमपि नमस्कारार्थमेतदारब्धमिति प्रमाणतः प्रमेयतश्च ता उत्कृष्टा इत्यर्थः ॥ ६२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

तस्मादासां भावे परमदुर्लभे मनोरथस्याप्यनौचित्यं वाञ्छन्ति यद्भवभियो मुनयो वयञ्चेति यन्मयोक्तं तद्विचारादेव । साम्प्रतन्तु सविचारमाशासे एतदेव मे भूयादित्याह । आसामिति । इमा यासामुपरि चरणौ विन्यस्यन्ति तासामतिक्षुद्रजातीनां गुल्मलतौषधीनां मध्ये किमप्यहं स्यां ननु भजनस्य सर्वोत्कृष्टकाष्ठा का खल्वेतासु वर्त्तते । यामवालक्ष्य त्वमासामेव चरणरेणून् वाञ्छसि ननु लक्ष्म्यादीनामपीत्यत आह । या इत्यादि । लोकधर्मधैर्यलज्जामर्यादादित्रोटनपूर्वकं महारागेण भजनमेवं मया न क्वापि दृष्टमत एव प्रतिरजनि यदा यदा स्वकुलधर्मादिमर्यादा वज्रशलाका अपि महारागबलेन त्रोटयित्वा कृष्णमभिसरिष्यन्ति तदा कृष्णपार्श्वे प्रतिगमने धर्माधर्मविचारो नासामिति तृणादिरूपस्य मम मूर्ध्नि चरणावर्पयिष्यन्ति अधुना तु काण्डिशः सकाकु प्रार्थिता अपि नैता मन्मूर्ध्नि चरणान्नाधित्सन्तीत्यतस्तदैव मम धन्यजन्मता भविष्यतीति भावः ॥ ६१ ॥

पुनरपि तासां लक्ष्म्यादिदुर्लभवस्तुलाभान्माहात्म्यमाह । या वै या एव स्तनेषु न्यस्तं कृष्णस्य चरणारविन्दं परिरभ्य तापं जहुः यत् खलु श्रिया लक्ष्म्या अजादिभिश्च आत्मनि मनस्येव अर्चितं न तु साक्षात् स्प्रष्टुं शक्यमिति भावः यद्वाञ्छया श्रीर्ललनाचरत्तप इत्यादेरासगोष्ठ्यां रासस‍भायाम् ॥ ६२ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं तासामुत्कर्षं वर्णयित्वा तत्पदमयोग्यत्वादप्रार्थयन्स्वायोग्यां पदवीं प्रार्थयति । आसामिति । वृन्दावनगुल्मलतौषधीनां मध्ये किमपि अहं स्यां तत्राप्यासां चरणरेणुजुषां एतावतैव मम कृतार्थता भविष्यतीति भावः । एतावदप्यतिदुर्लभमिति बोधनाय तासां माहात्म्यमनुवदति । याः दुस्त्यजं स्वजनं पतिपुत्रादिकम् आर्यपदं कीर्तिपदं पतिशुश्रूषणादिरूपं शिष्टमार्गं तत्साध्यं परलोकसुखं च हित्वा मुकुन्दस्य मोक्षप्रदस्य भगवतः पदवीं स्वरूपं भेजुः स्वरूपं भेजुः आपुर्यथा भगवान् श्रवणादिना मोक्षप्रदस्तथैता अपि सम्पन्ना इति द्योतनाय मुकुन्दपदवीमित्युक्तं सा च पदवी परमविलक्षणत्वात्केनापि न लब्धेत्याशयेनाह । श्रुतिभिर्विमृग्यां श्रुतिभिरपि परमात्मस्वरूपं दूरत एवान्विष्यते यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतेस्तथा च श्रुतिभिरपि या विमृग्या तत्रान्येषां का गणनेति भावः ॥ ६१ ॥

किञ्चान्यदपि यत्ताभिर्लब्धं न तत्केनापीत्याह । या इति । याः व्रजाङ्गना रासगोष्ठ्यां भगवतश्चरणारविन्दं परिरभ्य संन्यस्य तस्याप्राप्तिजनितं मनस्तापं जहुः तत्यजुः तदालिङ्गनं च तासां भगवदनुग्रहादेव सम्पन्नमित्याह । न्यस्तमिति । तद्विरहजन्याप्त्याशावर्जनादिजनितपरिश्रमादिना स्तनेषु भगवतानुग्रहात्तत्तापनिवृत्त्यर्थं न्यस्तं तदपि भगवतः समग्रैश्वर्यादिषड्गुणसम्पन्नस्य चरणन्यासमात्रेण भवतापादकस्य तत्रापि कृष्णस्य तदर्थमेव गृहीतकृष्णविग्रहस्य कीदृशं तच्चरणारविन्दं सर्वोत्तमया श्रियापि समर्चितमेव न तु यथेष्टं विनियुक्तं तथा ब्रह्मादिभिराप्तकामैरितरैश्च योगेश्वरैर्वशीकृतसर्वसिद्धिभिरपि यदात्मनि मनस्येव ध्यानादिना समर्चितं तथा चैवंविधं तत्पदारविन्दं भगवता तत्स्तनेषु न्यस्तमिति किं वक्तव्यं तासां माहा-

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥

श्रीशुक उवाच ।

अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ।
गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६४ ॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

त्यजन्तीत्यर्थः । तथापि स्तनेष्विति बहुवचनात् चरणारविन्दमित्येकवचनात्तत्तापनिवृत्त्यर्थं परमत्वरयाऽसंख्यातस्तनेषु तत्स्थापनजनितपरिश्रमो भगवता न गणित इत्यहो भगवतस्तदनुग्राहकताधेश इति ध्वनितम् ॥ ६२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आसां व्रजसुन्दरीणां चरणरेणुजुषां गुल्मादीनां मध्ये यत् किमपि वृन्दावने अहं स्यां भवेयं कथं भूतानां या इत्यादि अहो याः दुस्त्यजं स्वजनम् आर्य्यपथमार्य्याणां मुमुक्षुशिष्टानां पन्थानं च हित्वा श्रुतिभिर्विमृग्यां मुकुन्दस्य पदवीं भेजुः—

> यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
> स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
> अस्त्वेवमेतदुपदेशपदे त्वयीशे
> प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥

इत्याद्युक्तरीत्या मुमुक्षुपथं जगृहु रित्यर्थः ॥ ६१ ॥

तासां पुनः कथंभूतानां या इत्यादि यत् कृष्णस्य चरणारविन्दं श्रिया अजो ब्रह्मा तदादिभिश्च अर्चितं योगेश्वरैःज्ञानभक्तियोगनिष्ठैः आत्मनि हृदि अर्चितम् तयाः स्तनेषु न्यस्तं परिरभ्य तापं जहुस्तासाम् ॥ ६२ ॥

---

भाषा टीका ।

अहो इन गोपियों के चरण रजों की सेवन करने वाली लता गुल्मों में मैंभी कोई एक जन्म होजाऊं तो अच्छा होवै जिन गोपियों ने कि अपने बंधु तथा श्रेष्ठ भी मार्ग को छोड कर सब श्रुति जिसको ढूंढ रही हैं ऐसी मुकुंद भगवान् की पदवी को ग्रहण किया है ॥ ६१ ॥

जिन गोपियों ने लक्ष्मीजी से तथा सर्वार्थ सिद्धि वाले ब्रह्मा रुद्रादिकों से भी जो चरणारविंद अर्चित है योगेश्वर भी जिस चरणार विंद का अंतःकरण में ध्यान करते हैं उस कृष्ण भगवान् के चरणार विंद को रास गोष्ठी के मध्य में अपने स्तनों पर स्थापन करके आलिंगन करके अपनी सब मन की पीडा को नाश किया है ॥ ६२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं महत्त्वं प्रतिपाद्य नमस्करोति । वन्द इति ॥ ६३ ॥

अनुज्ञाप्यानुज्ञां याचित्वा आमन्त्र्य पृष्ट्वा ॥ ६४-६५ ॥

---

श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

अतःसाक्षाच्छ्री भगवास्तद्दशासेवापि मे दूरे तावदास्तामीदृशभावासिद्धये श्रीगोपी रेवैताः प्रणमामीति यद्वा आसामीदृशमाहात्म्यगाने मम का शक्तियोग्यता केवलं यत्र तत्र निपतितमासां पादाब्जरज एवैकं नमामि इत्येवमेव सदा वन्द इत्याहावन्द इति । नन्दव्रजस्य स्त्रीणामिति किम्पुनरासां श्रीभगवत्प्रियतमानाम् आसां सम्बन्धेन सर्वासामपि नन्दव्रजवर्तिस्त्रीजातीनामित्यर्थः । यासां हरेः सर्वथा सर्वमनोहरस्य भगवतःकथाया उद्गीतम् उच्चैर्गानं भुवनत्रयमऊर्ध्वाधो मध्यलोकान् जगदेव पुनाति मुमुक्ष्वादिसर्वमनः शोधयति तथा च प्रागुक्तम् उद्गायतीनामित्यादि यद्वा हरिकथावत् उद्गीतं यासामुच्चैर्माहात्म्यगानं माहात्म्यनिबन्धमुच्चैर्गीतं वा यद्वा यासामुद्गीतमेव हरिकथा इत्यासां माहात्म्यगानमेव मम कृत्यम् अत्र चिरवासादिना श्रीयदुकुलाद्यपराधतोऽपि न मे किञ्चिद्भयमिति गूढभावः । इदं गानवन्दनञ्च तासां साक्षादेव ध्येयं ततश्च नन्दव्रजस्त्रीणामिति प्रत्यक्षत्वेऽपि परोक्षवदुक्तिः तेनैव शब्देन तासां माहात्म्यभरबोधनाय किम्वा गौरवविशेषेण तथैव वाच्यत्वात् अत एव यूयमित्याद्यनिर्देशः यद्वा परमलज्जादिगुणवतीनां तासां माहात्म्यस्तुत्यसहिष्णुतया परोक्षमेवोक्ति ततश्च एता इति आसामिति च नैकट्येन प्रस्तुतत्वेन वा किम्वा सदा हृदि वर्त्तमानत्वेन प्रत्यक्षत्वादिवेति ॥ ६३ ॥

> तं श्रीमदुद्धवं वन्दे कृष्णभक्तवरोऽपि यः ।
> गोपीपादाब्जधूलीस्पृक्तृणजन्माप्ययाचत ॥

अथ कालान्तरं अप्यर्थे एवशब्दःचशब्दः समुच्चये चकारात्तद्दासदासीगवादीश्चामन्त्र्य गोप्यादीनां यथोत्तरं श्रीभगवत्प्रेमतारतम्येन तत्तदनुज्ञादिप्रार्थनेऽपि तत्तत्क्रमेण निर्देशः अत एव गोपानामामन्त्रणमेव दाशार्हः यदुकुलोद्भव इति यादवानां हितार्थमिति भावः । अन्यथा सर्वोपकारपरसम्मन्त्र्यभावेन तेषां दुःखापत्तिः आरुरुह आरोढुमुद्यतः ॥ ६४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तस्मादहो आस्तामतिमुग्धस्य ममासां साक्षान्नमस्कारसाहसः एतत् सजातीयत्वात् अन्यासामपि पादरेणुमेव नमस्करवाणि न च साक्षादेव ता इति सकम्पगद्गदं वादुमाह । वन्द इति । यासामिति याभिः कर्त्रीभिरित्यर्थः । हरिकथाया उद्गानम् उद्गायतीनामरविन्दलोचनमित्येतत्प्रकारं यद्वा । यत्सम्बन्धिहरिकथाया

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उद्गानं तत्तन्महानुभावैकश्लोकगानं सम्बन्धपरम्परया भुवनत्रयम् ऊर्ध्वाधोमध्यलोकं सर्वमपि पुनाति । एतद्विपरीतोदासीनत्वं भावापन्नात्ततः शोधयति मद्भक्तियुक्तो भुवनं पुनातीति वत् प्रकरणेऽस्मिन् श्रीवेदव्यासमहावक्तॄणां तात्पर्यमिदम् । सर्वभागवतानां मध्ये श्रीकृष्णसम्बन्धिनः खलु परमश्रेष्ठास्तस्यैव स्वयं भगवत्त्वात् । तत्रापि तल्लीलापरिकरा एवान्तरङ्गाः अन्येषां तदनुगतत्वात् तेष्वपि श्रीमानुद्धवः त्वन्तु भागवतेष्वहं भक्तमेकान्तिनं क्वचित् । अहं भसुरहस्करः कृष्णस्य दयितः सखा नोद्धवोऽण्वपि मन्न्यून इत्यादिदर्शनात्तस्य चेदृशी तद्भावस्पृहा तास्वादरो दैन्यञ्च श्रूयते न जातु पट्टमहिषीष्वपीति केन वा तासाञ्च चरणारविन्दं नानुगमनीयं तत्रापि श्रीराधाया इति ॥ ६३ ॥

> तं श्रीमदुद्धवं वन्दे कृष्णप्रेष्ठवरोऽपि यः ।
> गोपीपादाब्जधूलिस्पृक् तृणजन्माप्ययाचत ॥

अथ कालान्तर एव चशब्दः समुच्चये । अनुज्ञाप्य तेषां चित्तसमाधानपूर्वकमाज्ञां प्रार्थयित्वा । गोप्यादिनिर्देशक्रमोऽयं तदादीनां प्रेम्णो यथापूर्वप्रकर्षमनुभूय तत्क्रमादेवानुज्ञा प्रार्थितेति व्यनक्ति । पूर्वोक्तयुक्त्या सान्त्वनाया मुख्यत्वात् गोपांस्त्वामन्त्र्य यथायथं श्रीव्रजेश्वराद्यनुज्ञाश्रावणसहितं सम्बोध्य हे अमुक ! तेषामाज्ञा जातास्ति सम्प्रति गच्छाम इति प्रतिजनं सम्भाष्येत्यर्थः । दाशार्ह इति तत्कुलोद्भवत्वेनैव सर्वनीतिज्ञः किं पुनः स वैशिष्ट्येनेति भावः ॥ ६४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं व्रजस्त्रीणां पूज्यतां प्रतिपाद्य नमस्करोति । वन्द इति । अभीक्ष्णशः पुनः पुनर्नन्दव्रजस्थस्त्रीणां पादरजो वन्दे सेवे कथंभूतानां यासां नन्दव्रजस्त्रीणां हरिकथोद्गीतमिति भावे क्तः हरिकथोद्गानं लोकत्रयं पुनाति तथाभूतानाम् ॥ ६३ ॥

अथानन्तरमनुज्ञाप्यानुज्ञां याचित्वा आमन्त्र्य पृष्ट्वा दाशार्ह उद्धवः यास्यन् "लक्षणहेत्वो" रिति शत्रादेशः यातुं रथमारुरुहे ॥ ६४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वन्दे स्तौमि ॥ ११--१३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्यार्थमेवैषा प्रशंसेत्याशङ्क्य पूर्वमपि नमस्कारार्थमेतदारब्धमिति प्रतिज्ञातत्वात् ता नमस्यति । वन्दे नन्दव्रजस्त्रीणामिति । तासां नमस्कारेऽपि नास्माकमधिकारः किन्तु नन्दस्य श्रीमान्तस्य पादरेणुमेवैकम् अभीक्ष्णशो वन्दे अस्मदपेक्षया स रेणुः महानेवोत्कृष्टः फलरूपश्चेत्पादरेणुं वन्दे । ननु कथमेवमत्याश्चर्यम् उच्यत इत्याशङ्क्य लोके तदुपपादयति । यासां हरिकथोद्गीतमिति । हरिकथासम्बन्ध्यपि हरिकथया वा सह ऊर्ध्वं गीतं यासां सम्बन्धि गीतं भुवनत्रयमेव पुनाति गानमात्रेणैव पुनातीति गङ्गातोऽप्युत्कर्षः गुणानां साधकत्वं बाधकत्वं वा नास्तीति ज्ञापनाय प्रथममिति ॥ ६३ ॥

एवं भगवत्कृतं तासां निरोधं समर्थयित्वा तादृशमपि भगवान् करोतीत्यवगतभगवन्माहात्म्यः भिन्नप्रक्रमेण भगवत्स्थाने समागत इत्याह । अथ गोपीरिति । अनुज्ञां प्रार्थयित्वा तथा यशोदां नन्दमेव च त्रय एवात्र प्रकरणे मुख्याः ततोऽग्रभूतान् गोपानामन्त्र्य गच्छामीत्युक्त्वा यतोऽयं दाशार्हः यादवश्रेष्ठः दाशार्हभेदः वस्तुतो भक्तिप्रधानो भक्तिहितकारी ततो यास्यन्नपि विश्रामार्थं रथमारुरुहे न पूर्वमप्येवं बहुधा चकार ततो नोद्यमनमात्रेण गमनौपयिकं कोऽपि करोति ॥ ६४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं महत्त्वं प्रतिपाद्य प्रणमति । वन्द इति । पादरेणुमभीक्ष्णं तत्रापि शस्प्रत्ययेन प्रतिक्षणमेव न तु त्रिकालं पञ्चकालं वेत्यर्थः यावदनायासेन तत्प्राप्त्यनुकूलतृणादिजन्मभाग्यं मे नाभूदिति भावः । यासामुद्गीतं यश् कर्मकर्तुर्धर्मान्तमेव हरिकथा भुवनत्रयं पवित्रीकरोत्यविद्यामालिन्यादिति भावः । प्रकरणेऽस्मिन् व्यासादिमहावक्तॄणां तात्पर्यमिदं सर्वभागवतानां मध्ये कृष्णसम्बन्धिनः श्रेष्ठाः कृष्णस्य तस्यैव स्वयं भगवत्त्वात् तत्रापि तल्लीलापरिकरा एवान्तरङ्गाः अन्येषां तदनुगतत्वात् तेष्वपि श्रीमानुद्धवः त्वं तु भागवतेष्वहमिति नोद्धवोऽण्वपि मन्न्यून इत्यादि दर्शनात्तस्यापीदृशी भावस्पृहा तास्वादरोऽधिकः न जातु पट्टमहिषीष्वपीति केन वा तासां चरणकमलं नानुगमनीयं तत्रापि श्रीराधाया इति श्रीवैष्णवतोषणी ॥ ६३ ॥

अनुज्ञाप्य अनुज्ञां याचयित्वा आमन्त्र्य पृष्ट्वा ॥ ६४ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

एवं तदीयं महत्त्वं प्रतिपाद्य तासां साक्षान्नमस्कारे स्वाधिकाराभावं मन्यमानस्तत्पादरेणुं नमस्करोति । वन्द इति । तत्राप्येकमेव रेणुमभीक्ष्णशः पुनः पुनः कोटिकोटिवारं परमादरेण वन्दे न चास्मदाद्यपेक्षया तत्पादरेणुमहत्त्वे विस्मयः कार्यो यतः स्नानादिना पावनशक्तिमतीनां श्रीगङ्गायमुनादीनां सरिद्वराणां पुलिनरेणुरपि वन्द्यते नन्दव्रजयोषितस्तु गानमात्रेण सर्वपावनशक्तिमत्य इत्याशयेनाह । यासामिति । हरेः पापहारकस्य कथापेक्षयापि उत्कृष्टं गीतं हरिकथासहितमूर्ध्वं गीतमिति वा हरिकथारूपम् उच्चैर्गीतमिति वा भुवनत्रयं समस्तं ब्रह्माण्डं पुनाति तथा चैवम्भूतानां तासां पादरेणुवन्दनेनापि वयं कृतार्था इति भावः ॥ ६३ ॥

एवं यदर्थं भगवता प्रेषितस्तत्सर्वं सम्पाद्य पुनर्भगवत्सन्निधौ गन्तुं प्रवृत्त इत्याह । अथेति । गोपीर्भगवत्प्रेयसीः यशोदां तत्पूज्यां तदनन्तरं तथा सपरिवारं श्रीनन्दरायं च एवकारेण तत्सम्बन्धाभावेऽपि प्राधान्यं बोधितम् अत एवानुज्ञाप्यानुज्ञां प्रार्थयित्वेत्यर्थः तत्सन्निधावस्थितान् गोपानामन्त्र्य गच्छामीत्युक्त्वा यास्यन्नपि विश्रामार्थं रथमारुरुहे यतो दाशार्हेषु यादववंशेषु मुख्यः तत्र भगवदादिनिराकाङ्क्षितसन्निधानः ॥ ६४ ॥

---

तं निर्गतं समासाद्य नानोपायनपाणयः ।
नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ६५ ॥
मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं गोपीनां महत्त्वमुक्त्वा नमस्करोति । वन्दे इति ॥ ६३ ॥ दाशार्हः महाकुलप्रसूतोऽपि गोपीः हरिप्रियाः अनुज्ञाप्य आज्ञां याचित्वा आमन्त्र्य पृष्ट्वा ॥ ६४ ॥ ६५ ॥

### भाषा टीका ।

इन व्रजस्त्रियों की चरण रजको मैं निरंतर वंदना करूंगा जिनकी गाई हुई हरिकथा का गान तीनों भुवनों को पवित्र करता है ॥ ६३ ॥

श्री शुकदेव जी बोले इस के अनंतर उद्धव जी गोपी तथा नंदजी एवं यशोदा जी इन सबों से आज्ञा मांग कर पूंछ कर और गोपों से भी मिल कर जाने के लिये रथपर चढते भये ॥ ६४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नोऽस्माकं मनसो वृत्तयः कृष्णपादाम्बुजाश्रयाः स्युः अभिधायिनीरभिधायिन्यः ॥ ६६ ॥

### श्रीमत्सनातनगोस्वामिकृतबृहत्तोषिणी ।

निर्गतं व्रजाद्बहिर्निर्गतं सन्तं समासाद्य दूरतः सङ्गम्य यद्वा सम्यक् आसाद्य प्राप्य निविशेत्यर्थः वारं वारं कृतप्रस्थानस्यापि तस्यादूरतो विदुरतोऽपि निवृत्तः नानेति निजमुद्रालाञ्छितं पुत्रार्थं श्रीव्रजेश्वर्या दत्तं नवनीतक्षीरलड्डुकादिकं पृथक् तथा-श्रीबलरोहिण्यर्थं श्रीदेवक्यर्थं च पृथक् पृथक् श्रीव्रज देवीभिश्च निजप्राणेश्वरार्थं निजनिजशिल्पचिह्नितं गुञ्जाहारादिकं पृथक् श्रीदामादिभिश्च प्रियसखार्थं तत्परिचितवन्यफलमूलादिकं पृथक् श्रीव्रजेश्वरेणापि पुत्रार्थं कस्तूरीगजमौक्तिकहारादिकं श्रीवसुदेवार्थं घृतपक्वादिकमुग्रसेनार्थं च गोरसादिकं पृथक् पृथगित्येवं नानाविधैरुपायनैर्युक्तपाणयः सन्तः अनुरागेणाश्रुयुक्तलोचनाश्च सन्तः अत एव प्रकर्षेण आर्तस्वरगद्गदभाषादिना सर्वचित्ताकर्षकत्वाद्विनावोचन् ॥ ६५ ॥

कृष्णस्य कृष्ण इत्याख्यया प्रसिद्धस्य साक्षाद्भगवतः पादाम्बुजमेवाश्रयो विषयो यासां तथा भूताः स्युः सन्तु वृत्तय इत्यनन सदा सर्वत्रैवान्तस्तत्पादपरिस्फूर्त्तिरभिप्रेता वाचो गिरः वागिन्द्रियस्य च वृत्तयो वा तदिति तस्य एवमत्रापि तत्सम्बन्धः तस्य कृष्णस्य नाम्नां श्रीकृष्णदामोदरगोविन्दादीनां किंवा गौरवेण बहुत्वं कृष्णेति नाम्नः अभिधायिनीः कीर्तनशीलाः प्रह्वणं भक्त्या प्रणामः आदिशब्दात् परिचर्यादयश्च तेषु एवं मानसवाचिककायिकभक्तिप्रकाराः प्रार्थिताः विशुद्धवात्सल्यभाजोऽपि श्रीव्रजेशस्य कृष्णपादाम्बुजाश्र-। इत्यादिषु पादादिशब्दप्रयोगः प्रबलेन विदलपजन्मदैन्यवैवश्यनैवेति ज्ञेयं यद्वा नन्दादयो ऽश्रुलोचनाः सन्तः प्रावोचन्नित्यत्र यदुक्तं प्रवृत्तस्य व्रजेशस्याश्रुरुद्धकण्ठत्वे जातेऽपरे गोपाः प्रावोचन्नित्यत्रातद्गुणसंविज्ञानो बहुव्रीहिः यतो मनसो वृत्तयो नः स्युरिति तस्य प्रार्थना न घटते स्मरतां कृष्णवीर्याणीत्यादिना सदैव तत्स्मरणस्योक्तत्वात् ॥ ६६ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रथारोहणपरिपाटीमाह । निर्गतं रथारोहणार्थं व्रजद्वारि निर्गत्य स्थितं सन्तं नानेति निजमुद्रालाञ्छितं पुत्रार्थं श्रीव्रजेश्वर्या दत्तं नवनीतक्षीरलड्डुकादिकं तथा श्रीबलदेवरोहिण्यर्थं श्रीदेवक्यर्थञ्च श्रीव्रजदेवीभिश्च प्राणेश्वरार्थं निजशिल्पचिन्हितं गुञ्जाहारादिकं श्रीदामादिभिश्च प्रियसखार्थं तत्परिचितवन्यपुष्पफलमूलादिकं श्रीव्रजेश्वरेणापि पुत्रार्थं कस्तूरीगजमौक्तिकहारादिकं श्रीवसुदेवार्थं घृतपक्वादिकमुग्रसेनार्थञ्च गोरसादिकं सर्वैश्च श्रीमदुद्धवार्थं वस्त्रालङ्करणादिकं पृथक् पृथगित्येवं नानाविधैरुपायनैर्युक्तपाणयः सन्तः प्रकर्षेण गद्गदत्वादिगुणयुक्ततया अवोचन् ॥ ६५ ॥

अनुरागेण प्रावोचन्नित्युक्त्वान्मनस इत्यादिरनुरागकृतैवोक्तिर्नत्वैश्वर्यज्ञानकृता । तस्मात्स्वैश्वर्यप्रधानं मतमालोच्य स्वात्यन्तानुरूपव्यञ्जकेन तदभ्युपगमवादेनैव स्वाभीष्टं प्रार्थयन्ते । मनस इति द्वाभ्याम् । यदि भवद्भिरसावीश्वरत्वेनैव मन्यते यदि चास्माकं तत्प्राप्तिर्दूरतः एव तथापि तत्रैवास्माकं तदुचिता वृत्तयः सर्वाः स्युर्नेतु तत उदासीना इत्यर्थः । प्रह्वणं प्रह्वाणं नम्रत्वं तदादिषु आदिग्रहणात् सेवादिकम् ॥ ६६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । निर्गतं व्रजाभिष्क्रान्तं तमुद्धवं समासाद्यानुरागेण प्रोचुः कथम्भूताः नानाभिधान्युपायनान्यर्हवस्तूनि पाणिषु येषामश्रूणि लोचनयोर्येषां तथाभूताः ॥ ६५ ॥

उक्तिमेवाह । मनस इति । नोऽस्माकं मनसो वृत्तयः कृष्णपादाम्बुजविषयाः स्युः वाचस्तु तन्नाम्नामभिधायिन्यः स्युः काया देहास्तु तन्नमस्कारादिषु प्रवणाः स्युः ॥ ६६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नोऽस्माकं मनसो वृत्तयो व्यापाराः कृष्णपादपद्माश्रयाः स्युः अस्माकं वाचो नाम्नामभिधायिनीर्यदन्त्यः स्युः अस्माकं कायस्तस्य प्रवणादिषु नमस्कारादिषु स्यादित्यन्वयः ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

रथारोहणपरिपाटीमाह । तमिति । निर्गतं रथारोहणार्थं व्रजद्वारि निर्गत्य स्थितं सन्तम् ॥ ६५ ॥

अनुरागेण प्रावोचन्नित्युक्तत्वान्मनस इत्यादिरनुरागकृतेवोक्तिर्न त्वैश्वर्यज्ञानकृता तस्मात्तत्प्रधानं मतमालोक्य स्वान्तदुःखव्यञ्जकेन तदभ्युगमवादेनैव स्वाभीष्टं प्रार्थयन्ते । मनस इति द्वाभ्याम् । यदि भवद्भिरसावीश्वरत्वेनैव मन्यते । यदि न्वास्माकं तत्प्राप्तिर्दूरत एव तथापि तत्रैवास्माकं तदुचिता वृत्तयः सर्वाः स्युः न तु तदुदासीना इत्यर्थः ॥ ६६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यदा पुनः स निर्गत एव तदा तदर्थं भगवदर्थं च उपायनान्यानीय प्रस्थापनार्थं समागता इत्याह । तं निर्गतमिति । समादायाग्रे मिळित्वा नानोपायनानि पाणौ येषां स्नेहेन नन्दादयः अश्रुळोचनाः सन्तः प्रावोचन् ॥ ६५ ॥

तदुपदिष्टोऽर्थः तेषां हृदये समागत इति ज्ञापनार्थं तत्फलसिद्ध्यर्थं गुरुं प्रार्थयन्ति । मनसो वृत्तय इति द्वाभ्याम् । अस्माकं कायवाङ्मनांसि कृष्णसम्बन्धिकार्यपराण्येव भवन्तु अयमेवोत्कर्षः प्रार्थनीयः न तु लोके प्रसिद्धः अन्यः कोऽप्युत्कर्ष इति ज्ञापयितुं कर्मभिर्भ्राम्यमाणानां यत्र क्वचिद्यानौ सतां तदर्थं प्रार्थनायामुदासीनानां सर्वैरेव मङ्गलाचरितैर्दानैश्च मङ्गलाचरितानि सर्वसाधारणानि दानं विशेषधर्मः वैश्येष्वेव दयामुनिवृत्तिः कृष्णे रतिरसाधारणी इतोऽप्युत्तमास्माकमस्तु कथं प्रार्थितं सङ्घातस्य भगवति विनियोगः आत्मनश्च भगवति स्नेह इति मनसो ह्येकादश वृत्तयः ताः सर्वाः कृष्णपादाम्बुजमेवाश्रित्य तिष्ठन्तु क्रियया ज्ञानेनाभिमता च अम्बुजे हि रूपरसगन्धस्पर्शाः स्पष्टाः शब्दोऽन्यत्रापि स्वतन्त्रतया विनियोक्ष्यत इति न न्यूनता कापि आश्रयपदेन प्रसङ्गात्करणं निवारितम् वाचोऽपि नाम्नामेवाभिधायिन्यः न तु तत्रैव पर्यवसितसर्वशक्तिरूपं भवति मत्वेवंविधानि गुणकर्माणि पदार्थान्तरवाचकत्वाच्छान्दसप्रयोगाल्लौकिकपरा वाचो मा भवन्त्विति ज्ञापितं कायः शरीरं च तस्य भगवतः प्रह्वणादिनमस्कारादिपूजासाधनादिषु भवतु प्रकरणेन प्रार्थना कर्मभिरवश्यं भ्रमणम् ईश्वरस्यापि तथैवेच्छेति न कर्मस्वातन्त्र्यम् अत एव स उत्कर्षः अप्रयोजक इति यत्र कापीत्युक्तं ननु वाङ्मनसां भगवति विनियोगे मङ्गलाचरितानि कुत्रत्यानीति चेत् सत्यं यावदेतद्भविष्यति तावत्कर्माणि न त्यक्तानीति तेषामन्यथा फलं मा भवत्विति तथा प्रार्थयन्ति किं च ईश्वरभाव एव कृष्णे सर्वदा भवत्वित्यपि प्रार्थनात्रयम् ॥ ६६ ॥ ६७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नानोपायनानि कृष्णस्य पौगण्डकैशोरविलाससमय एव यानि सञ्चितानि बहुरत्नस्वर्णमुद्रामुक्तालङ्कारादीनि यौवने सति कृष्णस्य परिधास्यमानानि तदा तु तद्वियोगात्तेषु ममतात्यागात्तान्येवोपायनत्वेन कल्पितानि ज्ञेयानि ॥ ६५ ॥

भो आयुष्मन्नुद्धव! आवयोर्मातापित्रोस्तादृशोऽपि महारूपगुणशीलसमुद्रेऽपि बालके महाकठोरत्वमेवासीदधुनापि वर्त्तत एव तदानीं यद्बहुतरस्नेहलालनादिकं कृतं तत् सर्वं कृत्रिममेवेत्यधुनाऽवगतं यत्तद्विरहेऽप्यावाभ्यां जीव्यते पिता खलु जगत्येकः स एव दशरथो यः पुत्रं रामं विदूरगतं श्रुत्वैव प्राणांस्तत्याज आवयोस्तु तस्मिन् पुत्रे कृष्णे प्रेमगन्धोऽपि नास्तीत्यत एवाभिज्ञचूडामणिरस्मत्पुत्रः सः स्वानुरूपौ पितरौ परित्यज्य परमेश्वरत्वेनातर्क्यविचित्रत्वादन्यावेव देवकीवसुदेवौ पितरौ चकार तद्विगावां त्रिजगत्यतिदुर्भगौ यशोदानन्दौ तदपि कस्मिंश्चिदपि भाविजन्मनि तस्मिन्मतिः स्तादृतिः स्तादिति प्रार्थयते द्वाभ्याम् । मनसो वृत्तयो न स्युरिति । महानुरागमहावर्त्त एवायम् अत एव मनआदीन्द्रियाणां प्रतिक्षणमेव कृष्णरूपादिनिमग्नत्वेऽपि मनसो वृत्तयः कृष्णपादाम्बुजाश्रयाः स्युरिति रतिः स्यादिति प्रार्थनायां लिङ् दैन्यसञ्चारिणो महाप्राबल्यं ज्ञापयति किं च सख्यवात्सल्योज्ज्वलप्रेमवतां स्वभाव एवायं यत् विरहवैवश्येन निजयालम्बनस्य स्वस्मिन्नौदासीन्य ज्ञानेन च जनिते महादैन्ये स्वस्वभावविच्युतिर्दास्यभावग्रहणं च यथायमपि कृष्णे नाद्यावधि नः विद्वस्नेनौदासीन्यादेवेति मत्वा बलदेवेन प्रायो मायास्तु मे भर्तुरित्युक्तं दास्यास्ते कृपणाया मे इति श्रीवृन्दावनेश्वर्याः क्वचिदपि स कथां नः किङ्करीणां गृणीते इति श्रीगोपीभिर्मनसो वृत्तयो नः स्युरिति श्रीनन्दाद्यैः न तु सुखसमयेऽपि देवकीवसुदेवाभ्यामिव युवां न नः सुताविल्यादिकमैश्वर्यज्ञानजनितस्वसम्बन्धत्यागपूर्वकं कदाप्युक्तम् ॥ ६६ ॥ ६७ ॥

---

### श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका ।

तद्गमनस्य कस्याप्यनभिलषितत्वात्पूर्वं केनाप्युपायनानामानयनोद्योगो न कृत इत्याशयेनाह । तमिति । अकस्मात्तं निर्गतमेव समासाद्योपलभ्य नानोपायनानि पाणौ येषान्ते नन्दादयः अनुरागेणाश्रुभिरन्धीकृतलोचनाः सन्तः प्रकर्षेणोचैरवोचन् ॥ ६५ ॥

तत्प्रवचनमुदाहरति । मनस इति । नोऽस्माकं मनसो वृत्तयः कृष्णस्य सदानन्दरूपस्य परमात्मनोऽस्मदर्थं गृहीतकृष्णावतारस्य पदाम्बुजमाश्रयो यासां तथाभूताः स्युस्तथा चास्मन्मनसो या वृत्तिरस्तु सा तदाश्रयैवास्तु न त्वन्यालम्बना तद्व्यतिरिक्तं वस्तुमात्रमस्मच्चित्ते कदापि मा प्रविशतु तथा वाचोऽपि कृष्णस्य नाम्नामभिधायिन्यः स्युः तथा कायस्तस्य श्रीकृष्णस्य वन्दनादिषु स्यात् तथा च सर्वदा तद्गतकायवाङ्मानसाः स्यामेत्यस्मत्प्रार्थना श्रीकृष्णाग्रे वक्तव्येत्यर्थः ॥ ६६ ॥

---

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ।
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥
एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ! ।
उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥
कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ।
वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे उद्धवप्रतियाने
सप्तचत्वारिंशोऽध्याय ॥ ४७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नोऽस्माकं मनसो वृत्तयः अभिधायिनीः अभिधायिन्यः ॥ ६६—६९ ॥

---

भाषा टीका ।

जाते हुये उन उद्धव जी को देख कर नंदादिक सब गोप हाथों में नाना प्रकार के भेटों को लेकर अनुराग के वश होकर नेत्रों मे आंसू लाकर बोलते भये ॥ ६५ ॥

हम सब लोगों की मनकी वृत्ति सब श्रीकृष्ण चरण कमल में लगी रहैं हमारे वचन उनके नामों को कथन करैं हमारे शरीर उनके प्रणामादिकों में लगे रहैं ॥ ६६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कृष्णे रतिः स्यादिति ॥ ६७-६८ ॥

कृष्णादिभ्यो भक्त्युद्रेकमाह । उपायनानि चाददादिति ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिणी ।

नत्वप्रार्थितैरेतैर्भक्ति प्रकारैश्च शुभकर्मभिः श्रीकृष्णप्रेम विनाऽन्यत्किञ्चिद्वाञ्छाम इत्याहुः । कर्मभिरिति । ईश्वरस्य तस्यैव कर्मफलदातुरिच्छया कर्मभिर्यत्र क्वापि भूमावूर्ध्वलोके वा भ्राम्यमाणानां नोऽस्माकं मङ्गलाचरितैर्नित्यनैमित्तिकादिशुभकर्मभिः पृथग्वा विदानैश्च मङ्गलाचरितान्तर्भूतानामपि दानानां पृथगुक्तिः गोपेन्द्रस्य परमवदान्यत्वात् यद्वा प्रार्थितैर्मनोवृत्त्यादिरूपैर्मङ्गलाचरितैः दानैश्च तस्मिंस्तत्तदर्पणैः बहुत्वं प्रत्येकं सर्वेषामेवार्पणेन तद्बाहुल्यात् कृष्णे रतिरस्तु "न कर्मबन्धनं जन्म वैष्णवानां तु विद्यत" इति पाद्माद्युक्त्वा वैष्णवानामेव तावत् कर्मभिर्भ्रमणं नास्ति तत्रापि नित्यप्रियाणां व्रजवासिनां तथापि श्रीभगवदिच्छानुसारिलीलानिमग्नत्वेन संसारित्वाभिमानादेतैस्तथोक्तम् ॥ ६७ ॥

एवम् ईदृशमिति तादृशमन्यदपि बोधयति । तच्चासकृच्छ्रीकृष्णागमनादिकं ज्ञेयम् । यद्वा एतदित्यर्थः तस्यापि प्रीत्यधीनत्वात् कृष्णे भक्तिः प्रेमलक्षणतयैव हेतुना सम्यक् प्रार्थितं यतो गोपैस्तदेकप्रियैरित्यर्थः प्रेम्णो दैन्योत्पादनशीलत्वात्तद्वतां तादृशप्रार्थनं श्रीभगवत्प्रियवरे तस्मिन् युक्तमेवेति भावः । तच्च त्वया बुद्ध्यत एवेत्याशयेन सम्बोधयति । नराधिपेति । यद्वा कृष्णभक्त्येत्यस्य परेणान्वयः गोपानां कृष्णभक्त्या हेतुना तद्विज्ञापनार्थं मथुरामगच्छदित्यर्थः । उद्धव इति तदागमनेन गृहे परमोत्सवोऽभूदिति भावः नन्वेतावन्तं कालं सन्मन्त्रादिप्रदेन तेन विना कथं तत्रत्याः सुखमासन् तत्राह । कृष्णेन पालितामिति । एतेन तत्र पूर्वतोऽधिका विविधसम्पत्तिरपि सूचिता ॥ ६८ ॥

प्रणिपत्य साष्टाङ्गं प्रणम्येति भक्तिस्वभावात् तत्रापि चिरप्रवासागमनात् किं वा विज्ञापनाविशेषार्थम् आह अकथयत् भक्तेः उद्रेकं विरहे विवृद्धिम् अतः साक्षात्त्वद्दर्शनादेव तेषां प्रीतिर्दुःखशोकनिवृत्तिश्च न तु मद्वाचातुर्येण त्वत्सन्देशेनेति भावः । ननु तर्हि कथमत्र ते नायान्ति तत्राह । व्रजौकसामिति । तत्रैव त्वत्सन्दर्शनमिच्छन्ति न त्वत्र स्वातन्त्र्यरहिते पद इति भावः । स्वर्थे चकारः कृष्णाय वसुदेवरामाभ्यां च भक्त्युद्रेकमाह । राज्ञे उग्रसेनाय तु उपायनान्यदात् न च भक्त्युद्रेकमाह राजत्वेन तस्य मात्सर्यशङ्कया यद्वा समुच्चये चकारः कृष्णादिभ्यः प्रणिपत्य भक्त्युद्रेकमाह । उपायनानि च तान्यदात् ॥ ६९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमत्सनातनगोस्वामिकृतवृहत्तोषिण्याम्
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

कृष्ण ईश्वर इति। ईश्वररूपेऽपि कृष्ण एवेत्यर्थः। तदिच्छयेत्यनुक्त्वा ईश्वरेच्छयेति पृथगीश्वरपदोक्तिः स्वभावानुसारेण कर्मभिरिति नरलीलापरत्वादात्मनि साधारण्यमननेन मङ्गलाचारैतैः पुण्यकर्मभिः। दानस्य पृथगुक्तिस्तेषां खेषु प्राचुर्यात्। अथ च वाक्यद्वयमिदं वियोगमयपितृवात्सल्येनापि सम्भवतीति॥ ६७॥

एवमध्यायद्वयोक्तिक्रमेण सभाजितः कृष्णभक्त्या कृष्णासक्त्यैवेति पूर्ववत्। नन्वासामहो इत्यादिरीत्या तादृशवृन्दावनासक्तश्चेत् कथं मथुरां पुनरागच्छत्तत्राह। कृष्णपालिताम्। सम्प्रति श्रीकृष्णेन सा पाल्यत इति तत्प्रियतमभृत्यैस्तैस्तत्रागमनं कथमिव कर्तुं शक्यत इति भावः॥ ६८॥

प्रथमं तावन्निजान्तःपुरस्थिताय श्रीकृष्णाय प्रणिपत्य प्रणिपातपूर्वकं तत्कृतालिङ्गनकुशलप्रश्नादिकं पूर्वं वृत्तं निर्वाह्य क्रमतस्तत्कृतप्रश्नविशेषमुपलभ्य व्रजौकसां तत्पित्रादीनां भक्त्युद्रेकं प्रेमातिशयं तद्वचनचेष्टात्मकं यथावसरं यथायोग्यं सर्वमेवाह। तच्च साक्षात्तद्दर्शनादेव तेषां प्रीतिर्दुःखशोकनिवृत्तिश्च सम्यग् भवति न तु मच्चातुर्येण त्वत्सन्देशैर्वेत्यभिप्रायात्मकमिति ज्ञेयम्। तदनन्तरं यथावसरं पूर्ववत् यथाक्रमं वसुदेवादिभ्यस्तेषां भक्त्युद्रेकं यथायुक्तमाह। तदनन्तरमेव यथावसरं तस्मै तेभ्यश्चोपायनान्यप्यदादिति विवेचनीयम्॥ ६९॥

सोऽयमुद्धवसन्देशः श्रीरामस्य व्रजागमः।
दन्तवक्त्रवधस्यान्त्या टिप्पणी च पुरेक्ष्यताम्॥
व्रजैकजीवनैः शीघ्रं व्रजे कृष्णगतीप्सुभिः।
तत्प्रयुक्तं गवेन्द्रस्य व्रजागमनमङ्गलम्॥
अन्तर्हित्य व्रजौकोभिर्नित्यक्रीडासु शर्म च।
पद्यादायेष्टमन्यच्च दृश्यतां तस्य पुष्टये॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

१ स कृष्णेन चरिता इति सरिच्छैलवनोद्देशविशेषणम् ॥ ४८—५६॥

कृष्णावेशात्मविक्लवं कृष्णसमावेशेन मनसो वैक्लव्यम्॥ ५७॥

एतेन गोविन्द एव रूढभावः यद्रूढभावस्त्वं भवभियः संसाराद्भीतिमन्तः ब्रह्मजन्मभिः ब्राह्मणजन्मभिः ५८॥ ६०॥

अविदुषामप्यकर्मकरत्वे मनो ब्राह्मिकदृष्टान्तमाह। आसां गोपीनां चरणरेणुजुषां गुल्मलतौषधीनां याः तासां मध्ये अहं किमपि स्याम॥ ६१॥ ६५॥

प्रह्वणं प्रणामः॥ ६६॥ ६९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कर्मभिरिति यत्र क्वचिदीश्वरेच्छया कर्मानुगुणया कर्मभिः पुण्यापुण्यात्मकैर्भ्राम्यमाणानां संसरतामस्माकं यदि मङ्गलाचरितानि शुभकर्माणि दानानि च सन्ति तर्हि तैर्हेतुभिः कृष्णे भगवति रतिरनुरागः स्यादिति मङ्गलचरितप्रदर्शनार्थं दानैरित्युक्तम्॥ ६७॥

एवमिति। हे नराधिप! राजन् इत्थं गोपैः कर्तृभिः कृष्णभक्त्या करणभूतया सभाजितः संमानितः स इति पृथक् पदं वा उद्धवः कृष्णेन पालितां लालिताम् इति पाठे मनुराज्ञितां मथुरां पुनराजगाम॥ ६८॥

ततः श्रीकृष्णाय नमस्कृत्य प्रीत्या हर्षेण व्रजौकसां भक्त्युत्कर्षं प्राह वसुदेवाय श्रीकृष्णाय रामाय राज्ञे उग्रसेनाय च उपायनानि नन्दादिभिः समर्पितान्यर्हवस्तून्यदात् समर्पितवान्॥ ६९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यत्र क्वापि देवयोनिषु अचेतनस्य कर्मणः प्रवर्तकत्वं कथं घटत इत्यत उक्तम् ईश्वरेच्छयेति। रतिर्भक्तिलक्षणा॥ ६५-६७॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्। षट्चत्वारिंशोऽध्यायः॥ ४६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कृष्ण ईश्वर इति। ईश्वररूपेऽपि कृष्ण एवेत्यर्थः। तदिच्छयेत्यनुक्त्वा ईश्वरेच्छयेति स्वभावानुसारेण। कृष्णभक्त्या कृष्णासक्त्यैव॥ ६७॥

नन्वासामहो इत्यादिप्रार्थना चेत् कथं मथुरां पुनरागच्छत् तत्राह। कृष्णपालितां सम्प्रति। श्रीकृष्णेन पाल्यत

---

१ अयं पाठः पद्मात्तलब्ध इत्यत्र निवारितः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति तत्प्रियतमभृत्यैस्तैस्तत्रागमनं कथमिव कर्त्तुं शक्यत इति भावः॥ ६८॥ ६९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः स तुष्टः तथेति मनसैवाभ्यनुज्ञाय मथुरामागत इत्याह। तेषां प्रार्थनया स्वोत्कर्षो वा तेषाम् अन्यभजनं वा ज्ञातमिति शङ्कां वारयितुं कृष्णभक्त्येत्युक्तं नराधिपेति सम्बोधनं सेवकानुवृत्तिः स्वाम्यर्थेति ज्ञापनार्थं तस्य प्रीतिरेव मुख्येति परमप्रीत इत्युक्तं वचनं तु निर्बन्धादपि यदेदिस्यप्रयोजकं मथुरां पुनरागच्छन् भगवांस्तावत्पर्यन्तं मथुरायामेव स्थितः कृष्णपालितामिति विशेषतो भयशङ्कया स्वयमेव पालयतीति भगवदनागमने विशेषहेतुरुक्तः अनेन तादृशं स्थानं परित्यज्य किमित्युद्धवः समागत इति शङ्का निवर्त्तिता॥ ६८॥

एतत्सर्वं दासभावेनैव कृतमिति ज्ञापयितुं निवेदनमाह। कृष्णायेति। उपायनान्यदादिति सम्बन्धः भगवन्तं प्रणिपत्य भक्त्युद्रेकमाह एतावानर्थः पूर्वं भगवता नोक्त इति प्रायेण भगवान् न विचारितवान् इति ततो वसुदेवायाप्युपायनान्यदादन्यत्र सम्बधः तिष्ठतीति ज्ञापयितुं रामाय चादरात्पूर्वावस्था तथैव तिष्ठतीति मर्यादामप्यङ्गीकुर्वन्तीति ज्ञापनार्थं राज्ञे चकारादक्रूरादिभ्योऽपि दोषाभवज्ञापनार्थम्॥ ६९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्
चतुश्चत्वारिंशाध्यायार्थविवरणम्॥ ४४॥ ४७॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कृष्णभक्त्या महानुरागमय्या कृष्णपालितामित्यत एवोद्धवेन व्रजभूमावत्यनुरक्तेनापि तत्र गतम् सम्प्रति मथुरा कृष्णेन पाल्यते व्रजः कथं न पाल्यते इत्युपालब्धुमेवेति मुनेराशयः॥ ६८॥

व्रजौकसां भक्त्युद्रेकं मधुरौकोभ्यः सकाशादित्यर्थस्तेन भोः प्रभो! कृष्ण! त्वं भक्तिवशगो भक्तिप्राप्या भक्तहृदय इति सर्वशास्त्रार्थस्तेषां च मया त्वदीयसर्वभक्तेभ्योऽपि सकाशात् भक्त्युद्रेक एव दृष्टो यतः "अधीनीकृताखिलजनं विरहेण तवाधुना। गोकुलं कृष्ण! देवर्षेः श्वेतद्वीपसमं दधे" त्वत्पितुर्नन्दस्य तु महानुरागसमिरियं त्वयैव बोद्धुं शक्या यदुक्तं मनसो वृत्तयो नः स्युः इति पद्यद्वयं त्वन्माता तु गद्गदरुद्धकण्ठी नैव किमपि वक्तुं शशाकेति श्रुत्वा कृष्णो विगलितधैर्यो मध्ये सभमप्युच्चै रुरोद तत्प्रेयसीनां प्रेमवाडवानलस्तु रजन्यां कुत्रचिद्रहस्येवोद्धवाय दर्शितस्तत्प्रेयसीशिरोमणेस्तु दिव्योन्मादचित्रजल्पादिदिङ्मात्रमेवाविष्कृतं यदवधार्य कृष्णस्तां रात्रिं सर्वां जज्वालैवेति॥ ६९॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
सप्तचत्वारिंशकोऽयं दशमेऽजनि सङ्गतः॥ ४७॥

---

श्रीधनपतिसूरिकृतभागवतगूढार्थदीपिका।

एतत्फलं च नोऽस्माकं न स्वर्गादिमोक्षपर्यन्तसुखमाकाङ्क्षितं किं तु तस्मिन् रतिरेवेत्याशयेनाहुः। कर्मभिरिति। कर्मभिर्निमित्तभूतैस्तत्तत्कर्मफलप्रदानायोद्भूता या फलप्रदातुरीश्वरस्येच्छा तया यत्र क्वापि भ्राम्यमाणानामस्माकं तथा च तत्तन्निवृत्तिरस्माभिः प्रार्थ्यते इति भावः। मङ्गलभूतैराचरितैर्भगवदर्चनादिभिर्दानोपलक्षितैर्वर्णाश्रमोचितसमस्तकर्मभिश्चेह जन्मनि प्राचीनजन्मसु वा कृतैः कृष्णाख्ये ईश्वरे नोऽस्माकं रतिरुत्तरोत्तरं वर्धमाना स्यादिति प्रार्थनारूपः सन्देशोऽस्मदीयः स्वस्वामिसन्निधौ त्वया वक्तव्य इत्यर्थः॥ ६७॥

इतः परं वक्तुमशक्तास्ते तूष्णीं स्थिता उद्धवश्च तावतैव तैः सम्पूजितो मथुरां प्रत्यगादित्याह एवमिति। एवमुक्तरीत्या गोपैः भगवदीयैः सभाजितः पूजितः पूजोपकरणमाह। कृष्णभक्त्येति। तत्कृता कृष्णभक्तिरेव तेन स्वस्य पूजोपकरणत्वेन गृहीता इत उत्कृष्टायाः पूजाया अभावात् यद्वा किमर्थं तैः सभाजित इत्यपेक्षायामाह। कृष्णभक्त्येति। न तु तेषामैश्वर्यादिकं किञ्चिदपेक्षितमासीत् न चैवंविधभक्तानां सङ्गं विहाय किमिति मथुरां प्रति गतवानित्याशङ्क्याह। कृष्णपालितां तथा च भगवत्सन्निधानार्थं तत्र भगवानिति भावः। किं च नराधिपानामप्याज्ञा नोपलङ्घितुं शक्या किं पुनर्ब्रह्माद्यधिपस्येति सम्बोधनाशयः॥ ६८॥

तत्र गत्वा यत्कृतवान् तदाह। कृष्णायेति। प्रणिपत्य सम्यक् प्रणामं विधाय व्रजौकसां भक्त्युद्रेकं प्राह। तत्प्रेषितं मुख्यमुपायनं निवेदितवान् वसुदेवाय पूर्वसख्यस्थितिख्यापनाय रामाय पूर्वस्नेहस्थितिबोधनाय राज्ञ उग्रसेनायादरज्ञापनाय चकारादक्रूरादिभ्यस्तद्योग्यागणनासूचनाय तैः प्रेषितान्युपायनान्यदात् "सकलनिगमबोध्यं सच्चिदानन्दरूपं हरविधिहरिमुख्याभ्यर्च्यपादारविन्दम्। व्रजयुवतिसुखार्थं स्वीकृतानेकखेलं धनपतिरहमीशं नौमि गोपालबालम्"॥ ६९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिकृतायां श्रीमद्भागवतगूढार्थदीपिकायाम्
दशमस्कन्धे पूर्वार्धे सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्तचत्वारिंशाध्यायार्थप्रकाशः॥ ४७॥

---

भाषा टीका ।

ईश्वरकी इच्छा से कर्मों के वश होकर हम लोग जहां कहीं घूमते रहैं तहां पर उसी जन्म में मंगळा चरण-दान आदि कर्मों से हमारी मति श्रीकृष्ण मे लगी रहै॥ ६७॥

हे नराधिप! परीक्षित् जी! इस प्रकार से कृष्ण भक्ति से गोपों के पूजा करने पर उद्धवजी उंहां से श्रीकृष्ण पालित मथुरा को चले आते भये ॥ ६८ ॥

उद्धवजी उहां मथुरा में जाकर श्रीकृष्ण तथा बलराम जी को प्रणाम करके व्रजवासियों की भक्ती की बडी प्रशंसा करके कहते भये और वसुदेवजी को तथा राजा उग्रसेन को सब प्रकार की भेट देते भये॥ ६९॥

इति श्रीभागवत दशमस्कंध पूर्वाध

सैंतालीस में अध्याय की

भाषा टीका समाप्त ॥ ४७॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे सप्तचत्वारिंशोऽध्यायः समाप्तः॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥

श्रीशुक उवाच ।

अथ विज्ञाय भगवान् सर्वात्मा सर्वदर्शनः ।
सैरिन्ध्र्याः कामतप्तायाः [1]प्रियमिच्छन् गृहं ययौ ॥ १ ॥
महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ।
मुक्तादामपताकाभिर्वितानशयासनैः ।
[2]धूपैः सुरभिभिर्दीपैः स्रग्गन्धैरपि मण्डितम् ॥ २ ॥

गृहं तमायान्तमवेक्ष्य सा ऽऽसनात्सद्यः समुत्थाय हि जातसम्भ्रमा ।
यथोपसङ्गम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ॥ ३ ॥
तथोद्धवः साधुतयाऽभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ।
कृष्णोऽपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ।
अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥
सैरन्ध्रीकाममापूर्य पूरयित्वा मनोरथान् ।
अक्रूरस्य ततः कृष्णस्तेन पार्थानसान्त्वयत् ॥

॥ १ ॥

महार्हैरनर्घ्यैरुपस्करैर्गृहोपकरणैरन्वितं कामोपायैस्तदुद्दीपकैः सुरतबन्धादिलेख्यैरुपबृंहितम् ॥ २ ॥

यथा यथोचितम् ॥ ३ ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"सैरिन्ध्रीमपि संत्यक्तुमहं शक्तोऽस्मि नोद्धव ! किमुत व्रजलोकांस्तानिति व्यञ्जन्निमामगात् । श्रीसैरिन्ध्र्यै नमस्तस्यै यत्कृपाकृष्टमानसः । स्वयं गृहं गतो रन्तुमसङ्गोऽपि रमापतिः"। अथेति सार्धद्वयकं भगवान् श्रीकृष्णः । अथेत्युद्धवस्यागमनहेतोर्विज्ञाय बहूनि दिनानि व्याप्य तन्मुखाद्व्रजौकसां पित्रादीनां प्रत्येकं सान्त्वनप्रायं विशेषेणानुभूय कदाचित् सैरिन्ध्र्या गृहं ययौ । कीदृश्याः कामतप्तायाः स्वार्थाभिलापविशेषेण दह्यमानायाः तर्हि किमयोऽपि कामी नेत्याह । प्रियमिच्छन् मत्प्रीत्यर्थमसावङ्गरागं मह्यमर्पितवती तस्मादहमस्याः प्रीतिविशेषमेव कृत्वा अनृणः स्यामिति विचारवानित्यर्थः ॥ १ ॥

ननु कुतस्तस्यास्तादृशमपि वाञ्छितं विधित्सितवान् ज्ञातवांश्च तत्राह । सर्वेति । सर्वात्मत्वेन सर्वहितकारित्वात्तदपि कर्तुमुचितः सर्वदर्शनत्वेन तदपि ज्ञातमित्यर्थः । कामोपाया मधुताम्बूलादयः उपस्करानेव प्रपञ्चयति । मुक्तेत्यादिना । मुक्तादामानि गृहस्यान्ते पताकाश्चोपरीति ज्ञेयं सुरभिभिरिति । यथायथं वितानादिभिरपि योज्यम् ॥ २ ॥

अवेक्ष्य दूरे दृष्ट्वा सम्यगत्युल्लासेनोत्थाय हि पादपूरणे । तच्च करणं तस्याः सम्भ्रमक्रमेण । उल्लासकार्यमाह । जातसम्भ्रमा सम्भ्रमश्चित्तत्वरा अच्युतमिति प्रतिज्ञातच्युतिराहित्याभिप्रायात् ॥ ३ ॥

तथेत्युक्तसमुच्चये । उद्धवश्च साधु यथा स्यात्तथा तया सैरिन्ध्र्या अभितः पूजित उर्व्यां न्यषीददिति भक्त्या आसनमभिमृश्य स्पृष्ट्वेति तस्याः प्रीत्यर्थं वन्दित्वेत्यर्थो वा । महाधनम् अमूल्यरत्नादिमयमित्यर्थः । तूर्णं विवेशेति पूजायां पूर्वमासने निविष्टस्तत उत्थाय सत्वरं गृहान्तःशय्यायां स्वयमेवोपविवेशेत्यर्थः । तत्र हेतुः । लोकानामाचरितानि स्वैरस्त्रीगृहमध्ये रत्यर्थं स्वेच्छयैवाशु तच्छय्याधिष्ठेयेति पर्यन्तलक्षणानि सर्वाण्येवानुवृत्तोऽनुसृतः । स्वीकृतलौकिकशीलत्वादित्यर्थः । अत इदमपि रात्रावेव बोद्धव्यम् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—१८ ॥

[1] प्रीतिं यच्छन् इति दि० पाठः
[2] कामशास्त्र कृतालेख्यैर्नानावर्णैः सुशोभनैः इत्यधिकं श्रीमच्छुकदेववीरराघवीयपाठे ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पूर्वं त्रिवक्रया अक्रूरेण च प्रार्थितो भगवांस्तयोर्गृहान्प्रत्येष्यामीत्युक्तवानित्युक्तम् अधुना स्वं वचः सत्याययितुं भगवांस्तयोर्गृहान् गत्वा तदिष्टं चकारेत्यनुवर्णयत्यष्टचत्वारिंशेन । अथेत्यादिना । अथोद्धवगमनानन्तरं विज्ञायागमिष्यामीत्युक्तं त्रिवक्राक्रूरयोरभिप्रेतं चानुस्मृत्य तत्र हेतुः सर्वान्तरात्मात एव सर्वदर्शनः युगपत् सर्वसाक्षात्कारकर्ता तावत् कामेन तप्तायाः सैरन्ध्र्याः प्रियमिच्छन् कर्तुमिति शेषः ॥ १ ॥

गृहमनुवर्णयति द्वाभ्याम् । महार्हैरनर्घ्यैः गृहोपकरणैराढ्यमन्वितं कामोपायैः क्रीडोपकरणैरुपबृंहितं समृद्धं वितानैर्विपुलैः शयनादिभिः शय्यादिभिः वितानैः गृहोपरि चन्द्रोदयैश्शयनादिभिश्चेति वा ॥ २ ॥

सुरभिभिर्दीपैः स्रग्भिर्गन्धैश्च मण्डितमलङ्कृतं तथा नानावर्णैः सुशोभनैः सुन्दरैश्च कामशास्त्रकृतालेख्यैः कामशास्त्रोपदिष्टै रतिबन्धादिभिरालेख्यैरभिमण्डितम् ॥ ३ ॥

गृहमिति । उक्तविधं गृहं प्रत्यायान्तं श्रीकृष्णमवलोक्य सुजातः संभ्रमो यस्याः सा सैरन्ध्री सद्यस्तदैवासनात्समुत्थाय सखीभिः सह यथा यथोचितमुपसङ्गम्याभिसमेत्य समीचीनैरासनादिभिरादिशब्दादर्घ्यादिभिश्च सभाजयामास पूजयामास ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भक्तभक्तिरमालिङ्गितगात्रः श्रीनारायणः सत्सभतवाञ्छितार्थसाधनार्थमवतीर्ण इत्येतमर्थमभिप्रेत्यस्मिन्नध्याये 'तत्रादौ सैरन्ध्र्या अभीष्टसाधनार्थं तद्गृहगमनं वक्ति । अथेत्यादिना । अथ कथान्तरारम्भः सैरन्ध्र्याः गन्धकारिकायाः कृष्णागमनकामेन तप्तायाः यच्छन् ददत् ॥ १ ॥

महार्हैः महतां योग्यैरुपस्करैः उपकरणैरुपेतं कामोपायैः कामभोगसाधनैः उपबृंहितं पूर्णम् एतानेव दर्शयति । मुक्तेति । वितानमुपरिपट्टिका ॥ २ ॥

येन प्रकारेणोपगमनं कार्यं यथोपसङ्गम्य सदासनादिभिः ॥३॥

साधुतया उचिततया अभिमृश्य परिमृज्य स्पृष्ट्वेत्यर्थः । दान्तं गजदन्तरचितं महाधनेन विक्रीयते आपाद्यते चेति महाधनम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सैरन्ध्रीमपि संत्यक्तुमहं शक्तोऽस्मि नो[illegible] ! ।
किमुत व्रजलोकांस्तानीत व्यञ्जन्निमामगात् ॥

अथ उद्धवागमनानन्तरं श्रीगोकुलस्य किञ्चिदाश्वासेन ज्ञात एव सर्वात्मा सर्वदर्शनोऽपि ॥ १—३ ॥

न्यसीदद्दुर्व्यामिति साक्षात् स्थितस्य स्वप्रभोगौचित्यात् इति ज्ञेयम् ॥ ४—७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं पूर्वनिरोधस्य सान्त्वनोत्कर्षवर्णनम् ।
कृत्वा भविष्ययोश्चैव सान्त्वनं विनिरूप्यते ॥
मथुरावासिनः सर्वे राजसाः परिकीर्तिताः ।
सात्त्विकाः पाण्डवा भक्तास्तयोः सान्त्वनमुच्यते ॥
राजसत्वप्रसिद्ध्यर्थं स्त्रीपुंसोरत्र वर्णनम् ।
प्रक्रियान्तररूपा हि किञ्चिद्द्वारा तथा कृताः ॥
अक्रूर उद्धवान्मुख्यस्ततोऽग्रे प्रेषणं मतम् ।
दासभावेत्युद्धवस्तु शास्त्रतस्त्वयमेव हि ॥
स्त्रीसान्त्वनं तु पुरतो राजसत्वात्स्वरूपतः ।
वाचान्यस्य निरूप्यं हि स्तुत्या च प्रेषणेन च ॥
पञ्चचत्वारिंशेऽध्याये कुब्जाक्रूरादिसान्त्वनम् ।
कायेन वचसा चक्रे भाव्यर्थमिति वर्ण्यते ॥

प्रथममेकादशभिः कुब्जायाः कथामाह साधिकैः । अथ विज्ञायेति । तस्या हि सर्वा मनोवृत्तयः पूरणीयाः ततोऽप्यधिकं च कर्त्तव्यमिति आदौ भगवान् तस्या गत इत्यर्थः । अथेति । अथ भिन्नप्रक्रमे भक्तभावात् परं तस्याः दुःखं तुल्यमिति तन्निवृत्त्यर्थं गत इत्यभिप्रायेणाह । विज्ञायेति । प्रकरणात् कामसन्तापज्ञाने सामर्थ्यं भगवानिति तथा करणे दोषाभावे चावश्यको हेतुः सर्वात्मेति इच्छावश्यं प्रतीकारः कर्त्तव्य इति सर्वदर्शन इति फलमुखो हेतुरुक्तः पूर्वमयोग्यता देहे स्थितेति न तस्याः कामपीडा इदानीं तु देहयोग्येऽपि स्त्रीचर्या सर्वां जानातीति तस्याः कामपीडा महती जातेत्याह । सैरन्ध्र्या इति । सैरन्ध्री हि अन्तः पुरे अधिकारिणी स्त्री स्त्रीचरित्रं जानातीति कामतापो युक्त एव तस्या आगमनसामर्थ्याभावात् स्वयमेव गृहं ययौ स्वगमनमात्रेणैव तस्यास्तापो निवर्तत एव तथापि प्रियमिच्छन् ययौ मनसा तस्याः प्रियं भवत्विति विचारितवान् ॥ १ ॥

ननु किमेवं विचारेण कर्तव्यमेव हि प्रियं तद्गमनेनैव भविष्यतीत्याशङ्क्य तन्निराकरणार्थं भगवदिच्छया जातोत्कर्षं गृहं वर्णयति । महार्हेति सार्धेन । यथा प्राकृतमपि गृहं भगवदिच्छयैवं जातम् एवं सापि गोपिका तुल्या भविष्यतीति प्राकृतायाः तथात्वं कर्त्तव्यमिति प्रियेच्छा युक्तैव महार्हाणयमूल्यानि गृहादीनि पात्रादीन्युपस्करा यस्य तैर्वा आढ्यं सम्पन्नं कामोपायाः कामशास्त्रोक्तानि साधनानि उद्दीपकानि प्रियाणि पुष्पादिसम्पत्तिः इन्दुर्मन्दिरमित्यादीनि तैरुपबृंहितं लौकिकस्तच्छास्त्रीयश्च उत्कर्ष उक्तः अलौकिकोत्कर्षमाह । मुक्तादामभिः पताकाभिश्च वहिर्मण्डितं वितानैश्चन्द्रातपैः शयनार्थमुपवेशनार्थं च सुखस्पर्शास्तरणैः प्रत्यहं वैशेषिकैरपि मण्डितमित्याह । धूपैरिति । अगरुसम्भवाः आमोदाः दीपा अग्निमयाः मणिमया वा स्रग्भिः गन्धैश्च शैत्यार्थं सर्वत्र लेपनं मण्डनम् ॥ २ ॥

एवं त्रिविधोऽप्युत्कर्षः भगवदिच्छया तस्मिन्गृहे जात उक्तः ततो गते भगवति यत्कर्तव्यं तदाह । गृहं तमायान्तमिति । भगवदिच्छाविषयत्वाद्गृहस्यापि कर्मता यतस्तं तादृशं भगवन्तमायान्तमवेक्ष्य तथैवासनादुत्थाय प्रथमं जातसम्भ्रमा जाता इति कर्त्तव्यतामूढा जाता युक्तश्चायमर्थः ततः यथावदुपसङ्गम्य सखीभिः सहिता सभाजयामास । ननु एतावताऽयं पूजया विलम्बितः निवृत्तकामो भवेत् तत्राह । अच्युतमिति । सदासनादिभिरिति । सुवर्णमयान्यासनानि शय्यामयानि वा अनुपभुक्तानीति सत्पदेन ज्ञापितम् ॥ ३ ॥

तथोद्धव इति । तथैव उद्धवोऽपि पूजितः परं साधुतया अनेन भगवान् भर्तृतया पूजित इति ज्ञायते कामोऽपि दोषात्मक इति अर्थात् व्यावृत्तिः फलति उर्व्यामेवोपविष्टः आसनमुपस्पृश्येति राजधर्मपरिज्ञानं निरूपितं तस्या कृते जाते भगवानपि स्वकार्य

सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधासवादिभिः ।
प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥ ५ ॥
आहूय कान्तां नवसङ्गमह्रिया विशङ्कितां कङ्कणभूषिते करे ।
प्रगृह्य शय्यामधिवेश्य रामया रेमे ऽनुलेपार्पणपुण्यलेशया ॥ ६ ॥
सानङ्गतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रन्त्यनन्तचरणेन रुजो मृजन्ती ।
दोर्भ्यां स्तनान्तरगतं परिरभ्य कान्तमानन्दमूर्तिमजहादतिदीर्घतापम् ॥ ७ ॥
सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ।
अङ्गरागार्पणेनाहो दुर्भगेदमयाचत ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कृतवानित्याह । कृष्णोऽपीति । तदर्थार्थमारोपिते कामे क्षणविलम्बे तद्वेत् जगत्काममयमेव स्यादिति तूर्णमेव शयनं विवेश नन्वनिर्दिष्टमुपभुक्तं मा भवेदिति भगवदर्थे वा अन्यार्थे वेत्यपि शङ्कां व्यावर्तयितुमाह । महाधनमिति । महत् धनमुपपादनार्थं तस्य तदत्युत्कृष्टं भगवदर्थमेवेति विवेशेति पूर्वोपवेशस्थानात् विविक्त इति ज्ञापयितुं ननु भगवानक्लिष्टकर्मा किमित्येवं प्रार्थनाव्यतिरेकेण स्वयमेव गत इति चेत्तत्राह । लोकाचरितानुव्रत इति । सा हि लौकिकी लोकरीत्यैव प्राप्नोति तस्यास्तथैव मनोरथः सा गृहस्थवत् ईश्वरस्वभावं न जानाति गुप्तत्वात् स्वङ्गव्यवहारं तु जानाति प्रकटत्वात् अतस्तथैव मनोरथ इति लोकानां साधारणानि चरितानि भगवानप्यनुव्रतो जातः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टचत्वारिंशकेऽगात् कुब्जां रमयितुं हरिः ।
स्तुतोऽक्रूरेण तद्गेहे प्राहिणोत्तं गजाह्वयम् ॥

विज्ञाय उद्धवोक्तेः विशेषतो ज्ञात्वा तत्र समाधानं पूर्वमेव कृतवानित्याह । भगवान्महात्म्यैश्वर्य्यादेव मथुरायां स्थितोऽपि प्रकाशान्तरेण व्रजमगादित्यर्थः । सर्वात्मत्वाद्य सर्वमनोरथं पूरयितुमित्यर्थः । किन्तूद्धवसमाधानार्थं सर्वदर्शनः तदा उद्धवं प्रति स्वीयप्रकाशाद्वैतविरहप्रकाशोऽन्याविर्भावादिकमतिरहस्यमपि ज्ञापयामासैवेत्यर्थः । ततश्च पूर्वं यत् प्रतिश्रुतं तत् दातुं तेन सह कुब्जाया गृहं जगामेत्याह । सैरन्ध्र्या इति ॥ १ ॥

महार्हेति संभोगोत्सवोपयोगिबहूपकरणान्वितमित्यर्थः । कामोपायाः कामोद्दीपकालेख्यविशेषा औषधविशेषाश्च ॥ २ ॥

यथा यथोचितम् ॥ ३ ॥

उर्व्यां न्यषीददिति कृष्णप्रियया तया स्वहस्तदत्तासने दासस्य तस्योपवेशानौचित्यात् । अभिमृश्य स्वहस्तेन स्पृष्ट्वेति तस्याज्ञापालनार्थम् । शयनमन्तर्गृहस्थितशय्याम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सैरन्ध्र्यकृरगृहगमनादिभगवच्चरितमष्टचत्वारिंशे वर्णयति । अथेति । अथोद्धवागमनानन्तरम् एष्यामि ते गृहं सुभ्रू इति स्ववाक्यं विज्ञाय यथा जीवानामन्योऽन्यसंयोगे विधिनिषेधौ भवतः नतु पृथिव्यास्तत्संयोगे तस्यास्तादात्म्यत्वादेवं जीवानामन्योऽन्यसंयोगे विधिनिषेधौ भवतः नतु श्रीकृष्णस्य तत्संयोगे इत्याह । सर्वात्मेति ॥ १ ॥

कामोपायैः कामोद्दीपकैः ॥ २ ॥

यथा यथोचितमुपसंगम्य अभिसमेत्य सदासनादिभिः समाजयामास पूजयामास ॥ ३ ॥

आसनं श्रीकृष्णासनमभिमृश्य शिरसा संस्पृश्य ॥ ४ ॥

---

भाषा टीका ।

श्रीशुकदेवजी बोले इसके अनंतर सब के अंतर्यामी सब जानने वाले भगवान् समय जान कर काम से तपायमान् सैरंध्री कुब्जाके प्रियकी इच्छा करके उसके घरको जाते भये ॥ १ ॥

उसका घर कैसा है कि बडी भारी सामग्रीयों से युक्त है काम के सब उपायों से संयुक्त है मुक्ता के माला पताका चांदनी पलंग आसन धूप सुगंध द्रव्य दीप पुष्प माला, इन सबों से मण्डित है ॥ २ ॥

उस कुब्जाने अपने घर में आते हुये उन भगवान् के दर्शन करते ही मात्र शीघ्रही आसन से अछी तरह से उठ कर बडी संभ्रमित होकर सब सखियों के सहित अच्युत भगवान् से संभाषणादि से मिलकर सुंदर आसनादिक देकर भगवान् का पूजन किया ॥ ३ ॥

तिसी प्रकार से अच्छे पूजित होकर उद्धवजी भी पृथवी पर आसन में हस्त लगा करके बैठते भये श्रीकृष्ण भगवान् भी जल्दी से बडी संपत्ति युक्त शयनागर में लोक रीति के अनु वर्तन करते हुये प्रविष्ट भये ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रसाधितो योग्यतामापादित आत्मा देहो यया सा सव्रीडं यल्लीलयोद्गतं स्मितं तद्येषु विभ्रमेषु तद्युक्तैरीक्षितैरुपलक्षिता ॥ ५ ॥

अनुलेपार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं पुण्यलेशेत्युक्तं ननु पुण्यस्याल्पत्वविवक्षया ॥ ६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कुचादीनां रुजो मृजन्ती जिघ्रन्ती च चरणम् ॥ ७ ॥

काममेव प्राकृतवद्यथा अयाचत न च गोप्य इव सा तन्निमित्ति दुर्भगेत्युक्तम्, कृतार्थत्वे तु तस्या न सन्देहः ॥ ८ ॥ ९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आलेपश्चन्दनादिपङ्कः गन्धो बहिः सम्पर्कजश्चन्दनादिनिर्यासः । सुधाख्यदासवो मधु । उपससार समीपं शनैर्गता । माधवं लक्ष्मीकान्तमिति । अहो दीनविषयकृपापारवश्यं कियद्वर्णनीयमिति भावः ॥ ५ ॥

नवसङ्गमह्रिया विशङ्कितामित्यनेन तस्याः प्राचीनतत्स्पर्शप्रभावेण तस्मास्तदेव शरीरं परमदिव्यकुमारीभावाय सम्पन्नमित्येतद्व्यञ्जितं कङ्कणभूषित इति सुकोमलाङ्गीत्वात् कङ्कणोपर्येव प्रगृह्येत्यर्थः । तादृशानुग्रहे भक्तिरेव हेतुरित्याह । अनुलेपेति । तैर्व्याख्यातम् । यद्वा अनुलेपार्पणलक्षणं पुण्यं लान्ति आत्मसात् कुर्वन्तीत्यनुलेपनलाः तेषामीशया अनुलेपार्पकभक्तवर्गश्रेष्ठयेत्यर्थः । स्वयं भगवति श्रीकृष्णे तत्रापि साक्षात् तत्रापि समयविशेषेऽनुलेपार्पणात् ॥ ६ ॥

अनङ्गतप्तेत्यस्य उरसाक्षिभ्यामप्यनुषङ्गः । अनङ्गतप्तेति असमस्तत्वेऽपि सप्लुतत्वात् अनन्तस्यापरिच्छिन्नमाधुर्यतया च तस्य तथा नाम्नश्चरणेन स्वयं तेन वा तत्र तत्र निहितेन रुजः कामपीडा मृजन्ती अपसारयन्ती एतच्च रत्यन्ते ज्ञेयं स्तनान्तरगतं स्तनरूपाच्छादितं प्राप्तमन्तरमवकाशावधीति अमरेणानार्थात् । अत एवानन्दमूर्तिं तत्रापि कान्तं मधुरभावविशेषमयम् अत एवात्यन्तदीर्घमपि तदप्राप्तितापं सद्यो जहौ ॥ ७ ॥

ईश्वरं परमस्वतन्त्रम् अत एव परमदुष्प्रापं तथापि अङ्गरागार्पणमात्रेण । एवमुक्तप्रकारेण तत्रापि केवलशुद्धभक्तेस्तस्य भावः कैवल्यमेकान्तरतिः । कैवल्यसम्मतपथस्त्वथ भक्तियोग इत्यत्र कैवल्यमित्येव सम्मतः पन्था यो भक्तियोग इति स्वामिव्याख्यानात् । यथा वर्णविधानमपवर्गश्च भवतीत्यादिपञ्चमस्कन्धगद्यानुसाराच्च तस्य नाथं तत्प्रदानप्रभुं तत्तया प्राप्य प्रकर्षेण लब्ध्वा दुर्भगा पूर्वं कुब्जात्वदासीत्वलक्षणदौर्भाग्ययुक्तापि न तु श्रीगोपीवत् स्वतः श्रीविज्ञपितत्वद्गुणयुक्ता अहो आश्चर्यम् इदं वक्ष्यमाणं सुदुर्लभं पद्ममयाचत । अस्या दुर्भगावस्थत्वस्य प्राचीनत्वेन निर्देशः किमनेन कृतं पूर्वमवधूतेन भिक्षुणेत्यादिवत् ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । अथोद्धवस्तया सैरन्ध्र्या साधु यथाभिपूजितस्तया समर्पितमासनमभिस्पृश्य संस्पृश्य उर्व्यामेव न्यषीददुपविवेश न त्वासने भगवता साम्यमनुचितं मन्वानः केवलमुर्व्यामेवोपविष्टवानित्यर्थः । कृष्णस्तु लोकानां कामुकानां चरितानि चेष्टितानि अनुकृतानुसरन्नूनं नवीनं कैश्चिदप्यनधिकृढं महाधनमनर्घ्यं शयनं पर्यङ्कमाविवेश सेति । सा सैरन्ध्री मज्जनादिभिः प्रसाधितां योग्यतामापादित आत्मा देहो यया तथाभूता सती यल्लीलयोद्गतं स्मितं तत्र येषु विभ्रमेषु तद्युक्तैरीक्षितैरुपलक्षिता माधवमुपससार उपजगाम ॥ ५ ॥

आहूयेति । नवसङ्गमे विषये या ह्रीर्लज्जा तया विशङ्कितां सहगन्तुं लज्जन्तीमित्यर्थः । तां कान्तामाहूय कङ्कणेन भूषिते हस्ते गृहीत्वा शय्यामधिवेश्य विलेपार्पणमेव पुण्यलेशो यस्यास्तया स्त्रिया रामया सह रेमे अनुलेपार्पणादन्यत्तस्याः पुण्यं नास्तीति दर्शयितुं तद्विशेषणम् ॥ ६ ॥

सेति । जिघ्रन्ती सन्निहितत्वादनन्तचरणमिति । विभक्तिविपरिणामेन सम्बन्धः । अनन्तस्य भगवतश्चरणं जिघ्रन्ती तेनानन्तचरणेन हेतुनाऽनङ्गेन कामेन तप्तयोस्तनयोरुरसोरक्ष्णोश्च रुजः पीडाः मृजन्त्यपनयन्ती कुचादिषु निधाय तेन तद्गताः पीडा निराकुर्वन्तीत्यर्थः । स्तनान्तर्गतं कुचमध्यगतं यथा तथा कान्तं प्रियमानन्दघनं भगवन्तं दोर्भ्यामालिङ्ग्येति दीर्घं बहुकालानुवृत्तं तापमनङ्गतापमजहात्तत्याज ॥ ७ ॥

सैवमिति । सा सैरन्ध्री कैवल्यं प्रकृतिसम्बन्धराहित्यं तस्य नाथं मोक्षदं योगिभिरपि दुष्प्रापं तं भगवन्तमेवमित्थं केवलमङ्गरागार्पणेनैव हेतुभूतेनानुभूयेति शेषः । दुर्भगा भाग्यहीनेदं वक्ष्यमाणमयाचत अहो इति । खेदे साक्षान्निरतिशयपुरुषार्थभूतमोक्षदं प्राप्यापि केवलं तुच्छमेवायाचतेति । दुर्भगेति । मुनिः खिद्यति ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुधाकल्पासवादिभिः प्रसाधितात्मा अलङ्कृतदेहा सव्रीडली- लादिभिर्युक्ता ॥ ५ ॥

रतौ निमित्तमाह । अनुलेपेति । अनुलेपार्पणेन हरेर्गन्धसमर्पणेन लब्धः पुण्यलेशः पुण्यैकदेशो यया सा तथा तया ॥ ६ ॥

रुजः कामज्वरान् संसारज्वरान् वा सास्तनान्तरगतं वक्षस्थलगतम् ॥ ७—१० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सैवमिति द्वयम् ॥ ८ ॥ ९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नन्वनुयायकमेतत्पदं निरोधविरोधापत्तेः ततः सापि गतेति तस्याः संस्कारपूर्वकं गमनमाह । सा मज्जनालेपनेति । आलेपः सुगन्धादिभिः स्नानार्थमेव भगवदिच्छया पूर्वमेव तस्यास्तथात्वं सुधासव इति शक्त्यर्थं देहविस्मरणार्थश्च कामशास्त्रोक्तद्रव्यपानमुक्तम् आदिशब्देन तथोद्बोधकानां पदार्थानामपि चन्द्रावर्त्तादीनां स्थापनम् एवमेतैः प्रसाधितशरीरा तत्तज्ज्ञायापन्ना लक्ष्मीपतिरयमिति तथा करणं शङ्कारहिता माधवमुपससार तथा भगवति सर्वे भावाः स्वान्तःस्थिताः क्रमेण सूचिता इत्याह । सव्रीडेति । स्त्रीभावान् प्रथमसम्बन्धे व्रीडा ततो हासः प्रवृत्तायाः ततो भगवच्चेष्टानां सादरं निरीक्षणं ततोऽप्यभिलषितानां भाषणं सूनृतम् अयमेव क्रमो भगवता कर्तव्य इति प्रथमतस्तादृशीं चेष्टां कुर्वाणैव गतेत्यर्थः ॥ ५ ॥

ततः सा कान्ता जाता भगवद्धर्मावेशात्ततो यथाभिलषितं कृतवानित्याह । आहूयेति । स्वतः प्रवृत्त्यभावे हेतुमाह । नवसङ्गमह्रिया विशङ्कितामिति गतायां शङ्कायामाह । कङ्कणभू-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पिते करे प्रगृह्येति । कङ्कणानां परिधानं सुवासिन्याः अस्यास्तु भगवद्व्यतिरिक्तः पतिर्नास्तीति भगवांश्चेत् न परिगृह्णीयात्तदा कङ्कणपरिधानं व्यर्थमेव भवेदिति सूचितम् शय्यामधिवेश्येति प्रथमसुरतमेवोक्तम् । नन्वेवं कास्त्री सम्बन्धा न सर्वत्र कर्त्तव्या इति चेत्तत्राह । रामयेति । भोगार्थमेवैषा स्त्री नान्नि चिन्त्या रामासुंपयादिति विशेषणनिषेधादन्यदा तया सम्बन्धो न दोषाय न त्ववश्यं सुखानुभवे धर्मो हेतुः ततः परमानन्दं कथमनुभवतीत्याशङ्क्याह । अनुलेपार्पणपुण्यलेशयेति अनुलेपार्पणादन्यानि लेशमात्राणि यस्याः अनुलेपार्पणस्य वा पुण्यमात्रं लेशो यस्याः अथवा सा त्वनुलेपार्पणपुण्यलेशयुक्तेवातस्तस्याः सद्भाव एव कृतः भगवान्स्वयमेव रेमे तावत्फलं स्वयमेवाधिकं दत्तवान् न तु कर्मणा जातमिति तथोक्तम् अथवा भगवान्सर्वसमर्थः । तस्यास्तावन्मात्रमेव सुखं तथा दत्तवानिति ज्ञापयितुं तथोक्तम् ॥ ६ ॥

तथा सापि लब्धधार्ष्ट्या स्वाभिलषितं कृतवतीत्याह । सेति । सा सैरन्ध्री अनङ्गेन तप्तयोः कुचयोः मध्ये या उरसः वक्षःस्थलस्य अनन्तचरणेन एतेषां रुजं मृजन्ती जाता स्वरूपतः केनचित्सम्बन्धेन तत्तापस्योभयत्र व्याप्तत्वात् बहिःस्पर्शेन तापापगमेऽपि अन्तस्तापनिवृत्त्यर्थमुपायमाह । जिघ्रन्तीति । अर्थादनन्तचरणमेव अनन्तत्वादेव पर्यायेण तापनाशो निवारितः तथा सति शीघ्रं तापाभावो न स्यात् । केवलं दुःखाभावः तस्याः फलितः किं तु परमानन्दोऽप्यनुभूत इत्याह । दोर्भ्यामिति । पूर्वमेव स्तनान्तरे हृदये निविडं बहिर्दोर्भ्याम् आलिङ्ग्य तापं जहौ स्तनान्तः आगतं वा कान्तत्वात् तथाकरणे नापराधः न केवलं पर्यवसानवृत्त्या सुखजनकत्वं किं तु स्वरूपतोऽपि तथात्वमित्याह । आनन्दमूर्त्तिमिति । अत एव अतिदीर्घमपि त्रिविधमपि तापं जहौ कामताप एव या जन्मकोटिष्वनुस्यूतो दीर्घो भवति ॥ ७ ॥

एवमनुलेपार्पणफलमुक्त्वा फलानुभावार्थं या भगवतः सेवा कृता निरूपादिता तस्याः फलं व्यक्तमिति तन्निरूपयति सैवमिति त्रिभिः । इदं हि पूर्वस्मात् उत्कृष्टमपि वरत्वेन पर्यवसितं तथा सति न फलं काचिन्मर्यादा इयदेवेति तथापि भाग्यमेवात्रमिति तादृश्येवेति अल्पमेव याचितवतीति शुकस्तां निन्दति । दुर्भगेदमयाचतेति । दातरि समर्थे प्रसन्नेऽपि अल्पयाचनं भाग्याभावादेव भवति । सा पूर्वोक्ता एवं जाता तं तथोपकारिणं स्वयमागत्य सर्वसुखदातारं कैवल्यस्यापि नाथं सर्वैरेवोपायैः दुष्प्रापमीश्वरत्वात् अन्यथा साधनाधीनत्वात् तादृशमपि प्राप्य मोक्षं गोपिकावद्व्यस्थां वा न प्रार्थितवती किं तु कालपरिच्छिन्नं भगवत्सम्बन्धमेव यद्यपि स्वरूपतो महान् तथापि कालेन परिच्छिन्नः फलत्वान्न साधनतामापद्यते अतो दुर्भगैव ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गन्धोऽगुरुधूपः प्रसाधितः रतियोग्यतामापादित आत्मा देहो यया सा ॥ ५ ॥

नवसङ्गमेति । विशङ्कितेति पदाभ्यां मन्दधियः प्रति तस्याः अनन्यभोग्यत्वं ज्ञापितं तत्र तस्याः महासुन्दर्या अपि कुब्ज एव रक्षकः आसीदिति भावः । अनुलेपार्पणलक्षणस्तत्प्रापकः यस्या पुण्यलेश इति । न तु साधनसिद्धानां व्रजस्त्रीणां पुरस्त्रीणामिव वा पुण्यपुञ्ज इति भावः ॥ ६ ॥

कुचादीनां रुजो मृजन्ती चरणं जिघ्रन्ती च ॥ ७ ॥

सा तं कैवल्येनैव नाथम् अयाचत । केवलया मयैव सह रमस्व न त्वन्यया कयाचिदपि इति प्रार्थयामासेत्यर्थः । तथाभूतवरस्य कृष्णेनाप्रदास्यमानत्वात् दुर्भगा ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सा सैरन्ध्री मज्जनादिभिः प्रसाधितो योग्यतां नीत आत्मा देहो यया सा सव्रीडं यल्लीलयोद्धतं स्मितं तत् येषु विभ्रमेषु विलासेषु तद्युक्तैरीक्षितैरुपलक्षिता ॥ ५ ॥

अनुलेपार्पणपुण्यलेशयेत्युक्तिः कृष्णार्थे किंचित्कृतमपि महाफलं भवतीति द्योतयति ॥ ६ ॥

अनन्तस्य चरणेनेत्यादरोक्तिः अनन्तेनेत्यर्थः । यद्वा अनन्तचरणेन अनन्तचरित्रेण भगवता बहुधा रममाणेन कामतप्तानां कुचादीनां रुजो मृजन्ती आनन्दमूर्तिकार्यकारणप्रकृतिविलक्षणा आनन्दरूपा मूर्तिर्यस्य तं परिरभ्य तमेव जिघ्रन्ती अतिदीर्घतापम् अजहात् ॥ ७ ॥

इदमयाचतेति अरण्ये प्रविष्टो महाराजः कयाचित् फलपुष्पादिना स्वल्पेन पदार्थेन तोषितः तस्यै मनसा स्वसामीप्यं दत्त्वा स्वदेशं गन्तुं प्रवृत्तस्तया दुर्भगया महाराजसङ्कल्पः न ज्ञातः कृतार्थयापि प्रभो ! मयेदं वस्तु न भुक्तं तद्देहीति याचितो भवति तद्वत् कैवल्यनाथं प्राप्य अर्थाच्चत्कृपया आसन्नमोक्षापि दुर्भगा औपस्थ्यसुखलम्पटा औपस्थ्यसुखमात्रप्रदं भगवन्तं मत्वा इदं काममयाचत इदं चरित्रं तन्मनोरथासिद्ध्यर्थमिति फलितोऽर्थः ॥ ८—१० ॥

---

भाषा टीका ।

वह कुब्जा स्नान करना चंदन लगाना सुन्दर वस्त्र पहरना भूषण धारण करना माला पहरना अतर लगाना पान खाना मादक पदार्थों का सेवन करना इस प्रकार से अपने देह को सजा कर लज्जा सहित हंसी क्रीडा मंदहास के कटाच आदि विभ्रमों के सहित माधव भगवान् के पास उपस्थित होती भई ॥ ५ ॥

भगवान् उसको नूतन संगम से लज्जित तथा शंकित देख कर कंकणों से भूषित उसके हस्त को पकडकर उसको लाकर पलंग पर बैठा कर जिसके केवल चंदनही देने से सब पुण्यही चुके हैं उस कुब्जा के साथ रमण करते भये ॥ ६ ॥

वह कुब्जा कामसे तपायमान कुचों पर और छाती मे नेत्रों में भगवान् के चरणों को लगा कर नासिका से सूंघ कर अपने मनकी पीडाको नाश करके दोनों भुजाओं के मध्य में स्थित आनन्द मूर्ति कान्त श्री कृष्ण का आलिंगन करके बडे दिनों के भारी ताप को दूर करती भई ॥ ७ ॥

वह कुब्जा इस प्रकार से मोक्ष दाता भगवान ईश्वर को चंदन के अर्पण करने से प्राप्त होकर अहो लौकिक बुद्धि से यही सुख मागती भई ॥ ८ ॥

आहोष्यतामिह प्रेष्ठ ! दिनानि कतिचिन्मया ।
रमस्व नोत्सहे त्यक्तुं सङ्गं तेऽम्बुरुहेक्षण ! ॥ ९ ॥
तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ।
सहोद्धवेन सर्वेशः स्वधामागमदर्चितम् ॥ १० ॥
दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ।
यो वृणीते मनोग्राह्यमसत्त्वात्कुमनीष्यसौ ॥ ११ ॥
अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ।
किञ्चिच्चिकीर्षयन् प्रागादक्रूरप्रियकाम्यया ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

काम एव वरस्तं दत्त्वा मानयित्वा चालङ्कारादिदानैः ॥ १० ॥

मनोग्राह्यं विषयसुखम् असत्त्वात्तुच्छत्वात् ॥ ११ ॥

किञ्चिच्चिकीर्षयन् हस्तिनापुरप्रस्थापनं कारयितुमिच्छन्नित्यर्थः । अक्रूरप्रियकाम्यया च ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवाह । सहेति । आहोष्यतामिति पाठः सर्वत्र स तु पुनरुक्तः अयोचतेत्युक्तत्वात् । याचनमेव विवृणोति । सहेति । इह मद्गृहे मया सहोष्यतां त्वया तत्र प्रयोजनमाह । रमस्वेति । तत्रापि मया सहेति योज्यम् । ननु ममान्यत्र कृत्यानि बहुतराणि सन्तीति चेत्तत्राह । नोत्सह इति । अतस्त्वं यत्र यास्यसि तत्रैवाहं यायामन्यथा प्राणं त्यक्ष्यामीति भावः । कुतः हे प्रेष्ठेति प्राणादीनां त्वमेव परमालम्बन इति भाव । तत् कुतः हे अम्बुरुहेक्षण ! परमसौन्दर्यादिगुणयुक्तत्वेनाकृष्टमदीयसर्वेन्द्रियत्वादिति भावः ॥ ९ ॥

कामः सहोष्यतामित्यादिना तथा प्रार्थितः स्मरोपभोगः स एव वरोऽभीष्टार्थः । आगत्यागत्य रंस्य इति तत्सङ्कल्पात्मकस्तम इति श्रीगोपीवत् शुद्धप्रेमविशेषाभावो दर्शितः यत्ते सुजातचरणाम्बुरुहमित्यादिरीत्या तासां तदीयसुखैकसुखदत्त्वादस्यास्तु स्वसुखमात्रोद्देशात् "किन्तु लक्ष्मीसहस्रकोटीनामप्याविर्भावेन च प्रभोः सैरिन्ध्र्याः स्वीकृतिः सेयं व्यनक्ति स्म परां कृपाम्" । तत्र च तस्य स्वाभाविककरुणैव कारणमित्याह-मानद इति उद्धवेन सहित इति । यथा तेन सह गतस्तथा एवागतः । तच्च लोकाचारितमनुसृत्य तस्य परमधर्मनिष्ठस्य सङ्गेनापलपनार्थमिव । वस्तुतस्तु परमप्रणयेनेति भावः । स्वधाम श्रीवसुदेवान्तर्गृहम् । तत्र तत्र च च तस्य लीलेच्छैव कारणमित्याह । सर्वेश इति । अर्चितमृद्धिमत् सर्वविधप्रियजनतत्संयोपकरणसम्पन्नमिति तत्रागमनयोग्यतोक्ता । अत्रेयं माथुरहरिवंशकथेति श्रूयते । पूर्वजन्मनीयं राजकन्यासीत् तत्र नारदात् श्रीभगवद्गुणगानश्रवणेन तस्मिन् जातानुरागा बभूव । पश्चाच्च श्रीनारदं प्रति तस्या योग्यवरे राज्ञा पृष्टे स उवाच । तामेव कन्यां पृच्छामः कोऽभिप्रायस्तस्या इति ततश्च पृष्टा साप्युवाच यं भवान् सर्वोत्तमत्वेन गायति स एव मम वरः इति । ततः श्रीनारदेन तत्प्राप्त्यसम्भावनाया दर्शितायामपि जन्मकोटिभिरपि वरयिष्यामीति तद्वचनं श्रुत्वा विवाहस्य च सा तत्प्राप्तिसाधनमुपदिष्टा चिरं तपस्तप्तवती तदाकाशवाणी जाता जन्मान्तरे भवती कुब्जिका सती यत्स्पर्शेण सौन्दर्यं लप्स्यते सोऽहं तव पतिः स्यामिति तनदच्च; कंसमन्त्रिवरवैश्यगृहे सा तथैव जाता कंसेन सा प्रार्थ्य निजगन्धयुक्तौ निर्दिष्टेति । एवमङ्गरागार्पणेनाहो इति यथाधुनिकदृष्टमेवेति ज्ञेयम् । कल्पभेदकथा स्थितमेवेति वा ॥ १० ॥

तदेवं तत्कथां समाप्य तस्या लौकिककामिनीवत् प्रतीयमानत्वेऽपि निन्दां निराकुर्वन् प्रशंसामेव व्यनक्ति । दुराराध्यमिति । विष्णुं सर्वव्यापकं परिपूर्णं स्वयं भगवन्तमित्यर्थः । अतः सर्वेषामीश्वराणां महत्स्रष्ट्रादिपुरुषाणामपीश्वरमाविर्भावादिहेतुं सर्ववरेश्वरमिति पाठे सर्वेषां वरणीयानामर्थानां मुक्तिभाक्पर्यन्तानामीश्वरं प्रदानसमर्थम् अत एव दुराराध्यं तादृशमपि सम्यगाराध्य यो मनोग्राह्यं वस्तु वृणीते स्वप्रीतिजनकत्वेन प्रार्थयते । असावेव जनः कुमनीषी कुत्सितबुद्धिः । तत्र हेतुरसत्त्वात् अतितुच्छानित्यानर्थकार्यार्थवरणात् । एषा तु वाङ्मनसागोचरानन्दमूर्तिं श्रीभगवन्तमेव तादृशत्वेन प्रार्थितवतीति परमसुबुद्धिरेवेत्यर्थः । यथैव प्रार्थितं श्रीप्रह्लादेन । या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पत्विति । विष्णुपुराणे श्रीप्रह्लादप्रार्थनमपि तथैवेति भावः ॥ ११ ॥

श्रीसैरिन्ध्र्या इवाक्रूरायापि दत्तं वरं सम्पादयंस्तद्गृहं गत इत्येतद्दर्शने प्रसङ्गसाजात्याल्लीलाक्रमाच्चाह । अक्रूरेति । रामोद्धवाभ्यां सहित इति । आर्यमनन्वित इति भगवता पूर्वं तथाङ्गीकारात् तथाग्रजं विना स्वातन्त्र्येण तादृशकार्यविधानानौचित्याच्च । रामस्यादित्यमुद्धवस्यादित्यञ्च सर्वत्रैव तस्य तदनुगत्वात् । कार्यविशेषनिर्द्धारणार्थं मन्त्रिवरसापेक्षत्वाच्च ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

याच्ञामेवाह । आहेति । हे अम्बुरुहेक्षण ! तव सङ्गं त्यक्तुमहं नोत्सहे न प्रभवामीति हे प्रेष्ठ मया सह कतिचिद्दिनानि रमस्वात इह मद्गृहे उष्यतां त्वयेतिशेषः एवमाह ॥ ९ ॥

तस्यै इत्थं याचमानायै सैरन्ध्र्यै मानयित्वा मधुरभाषणादिभिः संमानयित्वा काम एव वरस्तद्दत्त्वा याचितं सफलीकर्तुं पुनरेष्या-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मीत्युक्तवेत्यर्थः। मानदः संमानाचरणशीलः अतस्तस्यैव संमानं वरदानं च युक्तमिति भावः। उद्धवेन सह सर्वसम्पत्समृद्धं गृहं स्वगृहमाजगाम॥ १०॥

तस्या दौर्भाग्यमेव स्पष्टयति। दुराराध्यं भक्तिप्रपत्तिव्यतिरिक्तोपायैर्दुःसाध्यं सर्वेश्वरो ब्रह्मा तस्यापीश्वरं भगवन्तं समाराध्य केवलमङ्गरागदानेनैव प्रसाद्य या सैरन्ध्री मनोग्राह्यं शब्दादिविषयसुखमसत्त्वादसाधु या तुच्छत्वात्तद्यतो ऽयाचत ततोऽसौ सैरन्ध्री कुमनीषी कुबुद्धिर्मूर्खा दुर्भगेति भावः॥ ११॥

एवं सैरन्ध्री मनोरथं सफलीचकारेत्युक्तम्। अथाक्रूराभिमतं सफलीकर्तुं तद्गृहं जगामेत्याह। अक्रूरभवनमिति। किञ्च हस्तिनापुरप्रस्थानं कारयितुमिच्छं स्तावद्रामोद्धवाभ्यां सहितो भगवान् कृष्णः अक्रूरस्य प्रियं कर्तुमिच्छया तस्य भवनं प्रति प्रागात्॥ १२॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मनोग्राह्यं शब्दादिविषयं मनसाप्यग्राह्यमसत्त्वाद्रागदुष्टत्वात् तत्त्वनिश्चयाभावाद्वा अत एव कुमतिः कासते शब्दादौ मतिर्यस्याः सा तथा॥ ११॥

मद्गृहमागन्तव्यमिति प्रागुक्तं सत्यं कर्तुम् अक्रूरगृहगमनं कृष्णस्य वक्ति। अक्रूरेति। किञ्चित् पाण्डववृत्तान्तज्ञानायाक्रूरप्रेषणकार्यं कर्तुमिच्छन्॥ १२॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

काम एव वर आगत्य रंस्य इति लक्षणरतम्॥ १०—१२॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

याचनमाह। सहोष्यतामिति। इहैवोष्यतामिति विवाहस्याकृतत्वात् कचिच्छयनं कर्तव्यं तदिदैव कर्तव्यमित्यर्थः। किमिदंय प्रार्थन इत्याशङ्कायामाह। प्रेष्ठेति। परमप्रियस्तथोच्यत इति तत्राप्यन्तर्यामिवत् स्वस्ति वारयति कतिचित् दिनानि मया सह रमस्व ननु कोऽयं निर्बन्धः अयमेव वर इति कामादिर्याकथं न प्राध्येत इत्याशङ्क्याह। नोत्सहेत्यस्तुं मञ्ज त इति। तत्र हेतुः अम्बुरुहेक्षणेति रूढ्या सर्वसुखदायककामोद्बोधकेति वा॥९॥

भगवान् यद्यपि फेनलं सुखं दास्यामीति विचारितवान् तथापि याचितं दत्तवानित्याह। तस्यैकामवरं दत्त्वेति सत्यसङ्कल्पत्वात् अविचारितमपि दत्तवानित्याह। मानयित्वेति। तान्मानितवान् हि मोक्षं भक्तिश्च दातुमागतः येभ्यो दास्यति तन्मध्ये एतामप्यङ्गीकृतवानित्यर्थः। चकारादास्मानमपि मानद इति। भगवान् सर्वेभ्यो मानं ददातीति स्वधर्मांच अस्यैव मानं दत्तवान् ततो बहिरागत्य उद्धवेन सहितः स्वदिच्छानुसारेण धर्मान्तरमपि परिगृह्य कार्यं स्वसम्पन्ने पुनः सहजमेव धर्मं गृहीतवानित्याशङ्क्याह। सर्वेश इति। अनेन तस्या यथा कियद्दिनरमणं भवति तथैव कृतवानित्यपि लक्ष्यते यथा नारदस्य मायया क्षणमध्यषष्टिसम्वत्सरप्रतीतिः तथा अस्या अपीति इतो गतस्य पुनरागमनाभावः सूचितः ननु आकाङ्क्षयां पुनर्गच्छेदित्याशङ्क्याह। ऋद्धिमत् स्वधाम अगमदिति॥ १०॥

भगवन्तं प्राप्य स्वयं न किञ्चित् प्रार्थनीयं भगवानेव यत्करिष्यति तत्करोतु अन्यथा स कुमनीष्येव भवतीत्याह। दुराराध्यमिति। प्रथमतः स आराधयितुमेवाशक्यः। अत एवास्मदादीन् मुक्त्वा अपि तथैव स्थिता तादृशमप्याराध्य तत्रापि प्रासादपर्यन्तं सम्यक् विष्णुं पालनार्थमेवागतमनाराधनेऽपि पालकं तत्रापि सर्वेश्वराणां कालादीनामपीश्वरं नियन्तारं सर्वेषां हि कालग्रासो ऽनिवारणीयः। एवं सति यो मनोग्राह्यं वृणीते स कुमनीषी महाराजस्थाने गत्वा स्वयं क्षुधितः सर्वोपद्रवयुकोऽपि स्वसम्बन्धिने मर्कटाय यथौदनं प्रार्थयते तद्वत् स्वयमात्मा मर्कटरूपाय मनसे हितं प्रार्थयतीति। नन्वेवमस्तु तथाप्यल्पमेव प्रार्थितं भवेत् न तु मर्कटवदित्याशङ्क्याह। असत्त्वादिति। न हि मनोधर्माः स्वस्य भवन्ति अध्यारोपितास्त्वसन्त एव तर्हि कथं प्रार्थयत इत्याशङ्क्याह। कुमनीषीति। स हि दुर्बुद्धिः अतः प्रमादादन्यथा प्रार्थयत इत्यर्थः॥ ११॥

प्रकरणान्तरमारभते। अक्रूरभवनमिति। तस्मिन्नेव दिवसे अक्रूरायापि वरो दत्त इति तस्यापि गृहे भगवान् गतः ननु पूर्वन्तस्मै वरो दत्त इति कथं व्युत्क्रमेण निरूप्यते तत्राह। कृष्ण इति। स हि तासामर्थे समागत इति पूर्वमवोचाम तत्र बलभद्रस्यापि कार्यमस्तीत्यत आह। सहराम इति। उद्धवो हि उत्सवासक्तत्वात् रसप्रधान एव रमणं तु स्त्रीभिरेव अतः कुब्जायाः गृहे उद्धवेन सह गमनं भगवांस्तत्र प्रधानमिति बलभद्रस्य क्रोधोऽपि स्यात् आवेशभूत इति रमणारमणाभ्यां रसाभासानौचित्यं स्याताम् अत्र तु अक्रूराय सम्पूर्णो भावो नेय इति रमणारमयोर्भावार्थे रामं निमित्तभावार्थमुद्धवं च सह नीतवान् नन्वनाकारितः किमिति गत इत्याशङ्क्याह। प्रभुरिति। सर्वेषां हि स्वामी सेवकगृहेऽपि सेवकसम्माननार्थं गच्छति कस्तमाकारयितुं समर्थः प्रयोजनमाह। किञ्चित् क्वचित् प्रेषणं चिकीर्षयन् चिकीर्षामुत्पादयन् अक्रूरे तदर्थं स्वतोऽपि अक्रूरप्रियकाम्यया च प्रकर्षेण प्रभुरीत्या अगात् अस्योपाख्यानं स्मार्त्तत्वरंधः प्रतिपाद्यते अयं हि स्मार्त्त इति ज्ञापयितुम्॥ १२॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तत्रापि कतिचिद्दिनानि इहान्तर्गृहे एव उष्यतां न तु बहिर्निष्क्रम्यतां भोजनपानादिव्यवहारसिद्धिरत्रैव गृहमध्ये एव सर्वा वर्तत इति भावः। सहोष्यतामाहोष्यतामिति च पाठद्वयम्॥ ९॥

कामवरं दत्त्वेति मत्कर्तृकपूर्णसंभोग एव तवाभिप्रेतः स च मन्मान्यस्त्रीसत्त्वेऽपि ते सेत्स्यतीति प्रतिश्रुत्येत्यर्थः। मानयित्वा तत्र तां समतां कारयित्वा निरन्तररमणं तु स्वदिष्टं न सम्भवेत् किंवदन्तीभयादिति चोक्त्वा अगमत् गमनागमनयोरुद्धवसाहित्यं लोकचर्चाभावाय तस्य महादिगदिशिरोमणित्वेन सर्वत्र ख्यातत्वात् कुब्जेयं भूदारकेविभूतिर्ज्ञेया पूर्वव्याख्यानात्॥ १०॥

स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबान्धवान् ।
प्रत्युत्थाय प्रमुदितः परिष्वज्याभिनन्द्य च ॥ १३ ॥
[1]ननाम कृष्णं रामञ्च स तैरप्यभिवादितः ।
पूजयामास विधिवत्कृतासनपरिग्रहान् ॥ १४
पादावनेजनीरापो धारयन् शिरसा नृप ! ।
अर्हणेनाम्बरैर्दिव्यैर्गन्धस्रग्भूषणोत्तमैः ॥ १५ ॥
अर्चित्वा शिरसाऽऽनम्य पादावङ्कगतौ मृजन् ।
प्रश्रयावनतोऽक्रूरः कृष्णरामावभाषत ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रसङ्गात् प्रेयसीभावेन भजतो जनान् शिक्षयति । दुराराध्यमिति । मनोग्राह्यं स्वेन्द्रियसुखं तेन कृष्णेन्द्रियसुख एव सर्वथा स्पृहया यद्यानुषङ्गिकं त्विन्द्रियसुखं स्यात्तदा न दोषः भक्तिमात्रैककामित्वेऽपि संसारध्वंसवदिति ज्ञेयम् ॥ ११ ॥

अक्रूरप्रियकाम्ययैव किञ्चित् चिकीर्षयन् दासस्य स्वविषयकप्रभुनिर्देशस्यैव प्रियत्वमननात् ॥ १२ ॥ १३ ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मनोग्राह्यं प्राकृतं सुखम् असत्त्वात् असाधुत्वात् ॥ ११ ॥

किंचिच्चिकीर्षयन् पाण्डववृत्तान्तजिज्ञासया हस्तिनापुरप्रस्थानं कारयितुमिच्छन् अक्रूरप्रियकाम्यया च रामोद्धवाभ्यां सहितः अक्रूरभवनं प्रागात् ॥ १२ ॥

---

भाषा टीका ।

कुब्जा बोली हे प्यारे ! इहां ही पर कुछ दिन तक रहिये मेरे साथ विहार कीजिये हे कमल लोचन ! आपको मैं नहीं छोडना चाहती हूं ॥ ९ ॥

तदनंतर भगवान् उसको मनोरथ वर देकरके उद्धवजीके साथ मिलकर अतिशय पूजित अपने स्थान पर जाते भये ॥ १० ॥

बडे कठिन से आराधन करने योग्य सबके ईश्वरों के ईश्वर विष्णु की आराधना करके जो जीव इंद्रिय भोगही को मांगता है सो बडा दुर्बुद्धि है ॥ ११ ॥

फिर कभी बलदेवजी के तथा उद्धवजी के सहित प्रभु भगवान् अक्रूरजी की मनो कामना पूरी करने को तथा कुछ और अपने काम कराने को अक्रूरजी के घर को गये ॥१२॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

आराद्दूरादेव ॥ १३ ॥ १४ ॥

आ अप इतिच्छेदः अप आ सर्वतो धारयन्नित्यन्वयः ॥१५–१६॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णस्य तदीयं पाण्डवीयञ्च सौहृदांश प्रकाश्यैव तत्र गतत्वात् प्रथमतोऽक्रूरस्यापि तादृशो भावो जात इत्याह । स इति । नरवरेषु श्रेष्ठान् आरात्तदर्थं प्रायश्चन्द्रशालिकाद्युपविश्य स्थापयित्वा दूरादेव स्वयं विलोक्य प्रमुदितः सन् प्रत्युत्थाय प्रत्युद्गम्य चेति ज्ञेयम् । ततः परिष्वज्य शुभाशंसनादिनाभ्यनन्दत् । अभिनन्द्य चेति पाठे युग्मकम् ॥ १३ ॥

पश्चादातिथ्यकरणे भक्तवशमवलम्ब्य सभात्रोद्रयेनैश्वर्यस्फूर्त्तिस्तदनुक्रमेणैव कृष्णं रामञ्च ननामेत्यन्वयः । उद्धवन्तु वैष्णवे बन्धुसत्कृत्या इत्यनेन बन्धूचितमेव सत्चकारेति ज्ञेयम् । तत्रापि पूर्वयुक्त्या तैः श्रीकृष्णादिभिरभिनन्दित एव अभिवादित इति पाठान्तरम् ॥ १४ ॥

पादेति युग्मकम् । पादौ अवनिज्येते अवनिक्ते याभिस्ताः । धारयन्निति सामीप्ये वर्त्तमानवद्वा । अर्हणेन चतुर्विधान्नताम्बूलपर्यन्तेनार्हणद्रव्येण तदनन्तरं पूर्वतोऽप्यपूर्वाम्बरादिभिश्चार्चयित्वा शिरसानम्य पादसम्वाहनारम्भे भक्त्या तौ शिरसा स्पृष्ट्वा पादावितिं श्रीकृष्णरामयोः सह विश्रान्तयोरेकमेकमित्यर्थः । तथाभिप्रेत्यैव श्रीकृष्णेन तथा विश्रान्तत्वात् । मृजन् सम्वाहयन्नित्यर्थः । श्रीकृष्णरामावुत्तानशायिनौ ॥ १५ ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । सोऽक्रूरस्तान्नरवरेभ्योऽपि श्रेष्ठान् रामकृष्णोद्धवानाराद् दूरत एवोद्वीक्ष्य प्रत्युत्थाय नितरां मुदितः परिष्वज्याभ्यनन्दताभिनन्दितवान् ॥ १३ ॥

ननामेति । सोऽक्रूरः कृष्णं रामञ्च ननाम ववन्दे चकाराद्धवञ्च तथा तै रामकृष्णोद्धवैरप्यभिवादितः कृत आसनपरिग्रहो यैस्तान् विधिवत्पूजयामास ॥ १४ ॥

हे नृप ! सोऽक्रूरः पादाववनिज्येते प्रक्षाल्येते याभिस्तथा ता आपः आ अप इति छेदः विशेषणस्य द्वितीयान्तत्वाद् आ सर्वतः

---

[1] अयं विजयध्वजीये नास्ति

दिष्ट्या पापो हतः कंसः सानुगो वामिदं कुलम् ।
भवद्भ्यामुद्धृतं कृच्छ्राद्दुरन्ताच्च समेधितम् ॥ १७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शिरसा धारयन् अर्हणेनार्घ्यादिना वरादिभिश्चार्चित्वा दिव्यैः इति पूर्वोत्तरान्वयी ॥ १५ ॥

अङ्कगतौ उत्सङ्गे निधापितौ पादौ शिरसा प्रणम्य मृजन् स्वोत्तरीयेणेति शेषः । यद्वा । सम्वहन् प्रश्रयेण विनयेन नम्रः कृष्णरामौ प्रत्यभाषत ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आरात् दूरात् तान् वीक्ष्य ॥ १३ ॥ ० ॥

पादावनेजनीः पादप्रक्षालिनीः आअप इतिच्छेदः आ इत्यास्याद्य अपो धारयन् अर्हणेन योग्यपूजासाधनेन ॥ १५ ॥

मृजन् परिमृजन् मृदु पीडयन्नित्यर्थः ॥ १६ ॥ १७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्री कृष्णस्य तदीयपाण्डवीयं च सौहृदांशं प्रकाश्यैव तत्र गतत्वात् प्रथमतोऽक्रूरस्यापि तादृशो भावो जात इत्याह । स तामिति । पश्चादातिथ्यकरणे भक्त्यंशमवलम्ब्य स्वभावोदयेनैश्वर्यस्फूर्त्तेस्तदनुक्रमेणैव कृष्णं रामञ्च ननामेत्यर्थः ॥ १३— ॥ २१ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

ततो गतानामक्रूरकृतं सत्कारमाह । धर्मप्रतिपादनाय स तानिति । तस्य सर्वे तुल्या अतो मर्यादया पूजयतीति न बलभद्रादेरपि धैर्मनस्यं नरवरेभ्योऽपि श्रेष्ठान् नरो नरवरो नरवरात् ज्येष्ठश्चेति वा उद्धवरामस्वामिनः क्रमेणोद्दिष्टाः आराद् दूरादेव दृष्ट्वा स्वबान्धवानिति अवश्याभ्युत्थाने लौकिकोऽपि हेतुः प्रत्युत्थाय प्रथमतः प्रमुदितो जातः भक्तत्वाभावात् न साष्टाङ्गप्रणामः पूर्वाक्रूरस्तु मुक एव प्रमोदानन्तरं परिष्वङ्गः ततोऽभिनन्दनम् ॥ १३ ॥

एवं कायिकं वाचनिकमुक्त्वा मानसिकं नमस्कारमाह । ननामेति । बहिर्नमस्कारस्तु व्यावहारिकः अत एव भगवतापि ताभ्यां सह नमस्कृताभित्याह । स तैरप्यभिवादित इति । पूर्वचकारात् फलाद्युपायनादानं द्वितीयाद्युद्धयं च स त्रिभिरप्यभिवादितः अपि शब्दस्तुल्यतामापादयति ततो गृहागता इति पूजयामासेति विधिवत् शास्त्रदृष्टेन प्रकारेण यथा महापुरुषानभ्यागतान् पूजयति लोकः कृतः आसनपरिग्रहो यैः अत्रोद्धवेनापि धर्मानुरोधात्तुल्यतया आसनं गृहीतं यथा श्राद्धे गुरुशिष्यौ ॥ १४ ॥

ततः पादावनेजनीरापः शिरसा धारयन् इयं धर्मनिष्ठायामधिका भक्तिः नृपेति धर्मपरिज्ञानार्थं ततः दिव्यैर्गन्धैः स्रग्भूषणोत्तमैः सहितेन अर्हणेन पूजयामासेति पूर्वेणैव सम्बन्धः पूजासाधनरूपा पूजयामासेत्याराधयामासेत्यर्थः ॥ १५ ॥

ततो यत् कृतवांस्तदाह । अर्चित्वेति । उच्चासने स्थितस्य भगवतः स्वाङ्कगतौ पादौ मृजन् सेवनार्थं सम्वाहयन् प्रश्रयेण अवनतो भूत्वा अक्रूरः पूर्वोक्तः कृष्णरामावुभौ ,पूर्वेद्याविति अभाषत स्तोत्रं कृतवानित्यर्थः ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आ सर्वतः अपः शिरसा शिरसि धारयन् मृजन् हस्ताभ्यां मर्दनेन संवाहयन् ॥ १५ ॥ १६ ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अक्रूरः आरात् दूरत एव ॥ १३ ॥ १४ ॥

पादौ अवनिज्येते प्रक्षाल्येते याभिस्ताः पादावनेजनीः अपः आ सर्वतः शिरसा धारयन् अर्हणमर्घ्यं तेन अम्बरादिभिश्च अर्चित्वा पादौ मृजन् अक्रूरः कृष्णरामौ अभाषतेति द्वयोरन्वयः ॥ १५ ॥ १६ ॥

---

भाषा टीका ।

अक्रूरजी ने उन तीनों उत्तम पुरुषों के दर्शन करते मात्र दूरही से बड़े प्रसन्न होकर सब का आलिंगन करके प्रणाम करके राम कृष्ण दोनों को नमस्कार किया ॥ १३ ॥

उन तीनोंने भी उनको नमस्कार किया अक्रूरजी उनको दिव्य आसनों पर बैठाकर उनका पूजन करते भये ॥ १४ ॥

हे नृप ! उनके चरणों के धोये जलों को मस्त में धारण किया बड़ी पूजा से वस्त्रों से दिव्य चन्दनादि गन्धों से मालाओं से भूषणों से उनका पूजन करते भये ॥ १५ ॥

श्रीकृष्ण का पूजन करके मस्तक भूमि में लगाके प्रणाम करके चरणों को गोद में रखकर दबाने लगे फिर अक्रूरजी प्रेम से नम्र होकर राम कृष्ण दोनों से यह वचन बोलकर स्तुति करने लगे ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

वां युवयोरिदं कुलमुद्धृतं समेधितं च ॥ १७ ॥

---

युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ।
भवद्भ्यां न विना किञ्चित्परमस्ति नचापरम् ॥ १८ ॥
आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः ।
ईयते बहुधा ब्रह्मन् ! श्रुतप्रत्यक्षगोचरम् ॥ १९ ॥
यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भान्ति नाना ।
एवं भवान् केवल आत्मयोनिष्वात्मात्मतन्त्रो बहुधा विभाति ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदिदं कुलमित्या दिव्यवहारदृष्ट्योक्त्वा परमार्थमाह । युवामिति । जगन्मयौ युवाम् कुतः जगद्धेतू तदपि कुतः प्रधानपुरुषौ तदात्मकौ अतो भवद्भ्यां विना परं कारणमपरं कार्यं च नास्तीति ॥ १८ ॥

ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यते ऽत आह । आत्मसृष्टमिति । हे ब्रह्मन् ! परमेश्वर ! ब्रह्मेति वा पाठः रजआदिस्वशक्तिभिरात्मनैव सृष्टमिदं विश्वमन्वाविश्य कारणत्वादननुप्रविष्टोऽप्यनुप्रविष्टेव स्थितः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवानेव प्रतीयते ॥ १९ ॥

एकस्यैव बहुधा प्रतीतिं सदृष्टान्तमाह । यथा हीति । योनिषु स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेषु चराचरेषु यथा महीप्रमुखानि कारणान्येव नाना भान्ति आत्मयोनिषु स्वकारणेषु भूतभौतिकेषु जीवोऽपि नरमृगादिशरीरेषु बाल्ययुवाद्यवस्थासु च तथा तथा प्रतीयत इति तद्व्यवच्छेदार्थमात्मतन्त्रग्रहणम् ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सम्यगेधितञ्च विचित्रैर्वैभवैः । वां युष्मदीयमिति तद्युक्तमेवेत्यर्थः ॥ १७ ॥

इदं कुलं वां किमुच्यते जगदपि युष्मदीयमेवेत्याह । युवामिति । एकस्यापीश्वरस्य द्विधाविर्भावाद्द्वित्वेन निर्देशः । बहिरन्तरङ्गशक्तिभ्यां प्रधानपुरुषौ सन्तौ जगद्धेतू जगदुपादाननिमित्तकारणे । अत एव ताभ्यामेवांशाभ्यां जगन्मयौ तत्तादात्म्येनापि स्थितावित्यर्थः । तथा चैकादशे । आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम । तन्मायाफलरूपेण द्विधा समभवद्बृहदित्यादि । अतो भवद्भ्यां विना भूतं भिन्नं कारणं कार्यञ्च किञ्चिन्नास्ति इति जगदेव युवाभ्यामुद्धार्यं समेध्यं चेति भावः ॥ १८ ॥

तादृशतत्कार्यस्य विश्वस्य तदव्यतिरेकेण तदभिन्नत्वं साधयन् पुनरन्तर्यामितया तद्व्याप्तत्वेन च साधयति । आत्मेति । श्रुतं प्रत्यक्षञ्च गोचरो यस्य तादृशं यथा स्यादित्येवं ब्रह्मलिङ्गस्यापि नपुंसकत्वम् ॥ १९ ॥

ननु महादिवद्विकारीत्याह । केवलः शुद्धः अचिन्त्यशक्त्या विकाररहित इत्यर्थः । अत एव आत्मतन्त्रः स्वतन्त्रः ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृतिपुरुषकालैः सृष्टमित्यन्वयः सत्त्वरजस्तमोभिरेवेत्यर्थः ईयते प्रतीयते श्रुतिप्रत्यक्षगोचरः प्रत्यक्षश्रुतिगोचरः वेदान्तयोगिप्रत्यक्षगोचरो वा ॥ १९ ॥

केवल एकरूपः आत्मा स्वयं योनिरुपादानं येषां तेषु पदार्थेषु स्वेन रूपेणावस्थितस्य गुणक्रमान्वयाभाव उक्तः ॥ २० ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भाषितमेवाह । दिष्ट्येत्यादिना । दिष्ट्या परमानन्द इत्यर्थः किं सानुगः सानुचरः पापात्मा कंसः हतः वां युवयोरिदं कुलं दुरन्तादपाराच्च कृच्छ्रात् कंसकृतात् दुःखादुद्धृतं समेधितं सम्यग्वर्द्धितं चेति ॥ १७ ॥

युक्तं चैतत् युवयोरित्याह । युवामिति । प्रधानपुरुषौ श्रेष्ठपुरुषौ पुरुषोत्तमौ इत्यर्थः । जगतो हेतू कारणभूतावत एव जगन्मयौ स्वार्थे मयट् जगद्रूपौ प्रधानपुरुषाविति विशेषणव्यावर्त्यं दर्शयति भवद्भ्यां विना परमुत्कृष्टं किञ्चिदपि नास्तीति भवन्तावेव सर्वोत्कृष्टावित्यर्थः जगन्मयावित्यस्य व्याचख्यमाह । न चापरमिति । अपरमन्यत्तदात्मकं नास्तीत्यर्थः । यद्वा । प्रधानपुरुषावित्यनेन प्रकृतिपुरुषशरीरकत्वं विवक्षितं "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्" इति प्रकृतिपुरुषयोः परमात्मशरीरत्वश्रवणात् शरीरवाचिशब्दानामपृथक्सिद्धविशेषणवाचिनां गवादि शब्दानां व्यक्तिपर्यन्तबोधकत्ववत् आत्मपर्यन्त बोध कत्वात्सामानाधिकरण्योपपत्तेः जगद्धेतू इत्यनेन प्रकृतिपुरुषशरीरकत्ववेषेण जगदुपादानत्वं विशेषाकारेण तन्निमित्तत्वं चाभिप्रेतम् । यतो विशिष्टाकारेणोपादानत्वमत एव कार्यस्य कारणादभिन्नत्वात्तद्व्यतिरिक्तं नास्तीत्यभिप्रायेणोक्तम् । जगन्मयौ नचापरमिति जगन्मयावित्यन्वयमुखेन जगन्मयतादात्म्योक्तिः । नचापरमिति व्यतिरेकमुखेनोक्त विवेकः । न चास्ति परमित्यनेन निमित्तकारणान्तरव्युदासः युवयोर्जगदुदयविभवलयैककारणत्वात् यथात्मसङ्कल्पं कंसादिसंहारः स्वकुलोद्धारश्च उचित एवेति भावः ॥ १८ ॥

ननु लोके विविधकार्यवर्गाणां विविधोपादानकत्वदर्शनात् कथं जगतोऽस्मदेककारणत्वं कथञ्चैकस्य समानेकदेवमनुष्यादिपदार्थात्मकत्वमत आह । आत्मसृष्टमिति । स्वशक्तिभिः स्वविशेषणभूतैः प्रकृतिपुरुषकालैरात्मसृष्टमात्मनः

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्रकृतिपुरुषशरीरकत्वात्त्वस्मादुपादानभूतात् सृष्टमात्मना प्रकृतिपुरुषयोर्नियन्त्रा स्वेन संसृष्टमित्यर्थद्वयमत्र तन्त्रेण विवक्षितम् अनेनोपादानान्तरस्य निमित्तान्तरस्य च व्यावृत्तिः इदं नामरूपविभागविभक्तं चिदचिदात्मकं विश्वमन्वाविश्य नियन्तृतयान्तरात्मतया चानुप्रविश्य हे ब्रह्मन्! बहुधा ईयसे प्रतीयसे ईयत इति पाठे भवानित्यध्याहारः स्वात्मन्याधारभूते स्वेनैव कर्त्रा स्वात्मानं प्रकृतिपुरुषशरीरकं जगद्रूपेण परिणमय्य तत्र नियन्तृतयात्मत्वेन चानुप्रविश्य स्वपर्यन्तं देव मनुष्यादिशब्दबुद्धिविषयतया नाना प्रतीयत इत्यर्थः। अनेन कृत्स्नं विश्वं प्रति परमपुरुषस्यैकस्यैव प्रकृतिपुरुषविलसच्छरीरकत्ववेषेणोपादानत्वं स्वस्वरूपेण निमित्तत्वं तदुभयकारणत्वोपयुक्तसर्वज्ञत्वसर्वशक्तित्वादिगुणयुक्तत्वं देवादि बुद्धिशब्दयोरात्मभूतपर्यन्तत्वं चोक्तम् भवति। ननु लौकिकानां देवादिबुद्धिशब्दयोर्देवादिमात्रविषयत्वेनानुभवसिद्धत्वात्कथं तयोर्मत्पर्यन्तता विश्वस्य मदेकोभयकारणत्वे च प्रमाणामित्यतस्तं विशिनष्टि। श्रुतिप्रत्यक्षगोचर इति। श्रुतिप्रत्यक्षयोर्गोचरो विषयः तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च काक्षिवान्नृपिरस्मिविप्र इति श्रुतिप्रसिद्धानां साक्षात्कृतब्रह्मपर्यन्तस्वात्मयाथात्म्यानां तत्पर्यन्तत्वेन गृहीताचिदचिद्धविशिष्टशब्दार्थशक्तीनां वामदेवादीनां प्रत्यक्षस्य अयमात्मा ब्रह्म तत्त्वमसि ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेत्यादि श्रुतीनां चोक्तविधत्वेन विषय इत्यर्थः नहि देहात्मभ्रमस्वतन्त्रात्मभ्रमयुक्तम् लौकिकानुभवमात्रेण देवादि बुद्धिशब्दानां तत्पर्यन्तत्वहानिरिति भावः। श्रुति प्रत्यक्षगोचरमिति पाठे क्रियाविशेषणम् ज्ञेयम ॥ १९ ॥

उक्तमेवोपादानकारणत्वं कारणस्य तदवस्थायामेकत्वेनावस्थितस्यापि कार्यावस्थायां नानात्वेन भावं च सदृष्टान्तमुपपादयति। यथा इति। दृष्टान्ते योनिष्विस्यस्य स्वेत्यादिः दार्ष्टान्तिके त्वात्मयोनिष्वित्यात्मशब्दप्रयोगात्स्वे महादयो योनयः उपादानकारणानि येषां तेषु चराचरात्मकेषु भूतेषु व्यष्टिभूतेषु महादिषु समष्टयः नाना भान्ति कारणानि समष्टिभूतानि एकैकशाऽवस्थितान्यनेककार्यात्मना भान्ति इति दृष्टान्तार्थः एवं भवान्केवलमेकरूपः अविभक्त नामरूपप्रकृतिपुरुषकालशरीरक आत्मा योनिः कारणं येषां तेषु व्यष्टिसमष्ट्यात्मकसर्वपदार्थेषु बहुधा विभाति योनिष्वात्मयोनिषु इत्युभयत्र सप्तमीनिर्देशस्यायमभिप्रायः अवस्थाभेदमात्रमेव ननु कार्य्यं नामकारणाद्व्यतिरिक्तं वस्त्वस्तीति कार्यावस्थायां कारणमेव तत्तत्कार्यावस्थाविशेषविशिष्टतया बहुधा प्रतिभातीति न केवलं तत्र कारणत्वेव कार्य्यतया बहुधा भानमपित्वन्तरात्मतयाऽपीत्यभिप्रायेण विशिनष्टि। आत्मेति। अयंभावः यथैकस्य जीवस्य क्रमेण देवमनुष्याद्यनेकशरीरविशिष्टत्वाकारेण बहुधा प्रतीतिः यथा च सौभर्यादेर्युगपदनेकशरीरविशिष्टत्ववेषेण तथा भवतः कृत्स्नचिदचिदन्तरात्मत्वात्तत्तच्चिदचिद्विशिष्टत्वाकारेण बहुधा भानमिति ननु जीवदृष्टान्तेन यथैकस्यानेकधा तत्तच्छरीरविशिष्टताकारेण भानं तर्हि तद्वदेव कर्मवश्यतापत्तिरित्यतो विशिनष्टि। आत्मतन्त्र इति। स्वतन्त्रः अकर्मवश्य इत्यर्थः। नह्येकस्यानेकधावस्थानमेव कर्मवश्यत्वापादकमपि तु सुखदुःखादिभोक्तृत्वं तत्तु न तवास्ति तथाच श्रूयते अनश्नन्नन्योऽभिचाकशीति भावः। अनेन जीववैलक्षण्यं सूचितम ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

जगन्मयौ जगद्व्यापिनौ एतदेव विशिनष्टि। भवद्भ्यामिति ॥ १८ ॥

अन्वाविश्य पदार्थानामणुत्वमहत्त्वानुकूलतया प्रविश्य स्वशक्तिभिः इच्छादिस्वरूपशक्तिभिः श्रुतेः प्रत्यक्षस्य च विषयः "अनृतेन हि प्रत्यूढाः वाचारम्भणं विकार" इत्यादिश्रुतिः अयं घटोऽयं पट इत्यादिनिर्दोषार्थेन्द्रियसन्निकर्षलक्षणं प्रत्यक्षं तत्सृष्ट्वा तदेवानुप्राविश,,दिति श्रुतेः "ऋतस्य तन्तुं विततं वितत्य तदपश्य"दित्यादिश्रुतेः ब्रह्मादिज्ञानिप्रत्यक्षस्य च विषयो वा ॥ १९ ॥

इममेवार्थं सदृष्टान्तं दर्शयति। यथेति। योनिषु भोगस्थानेषु उत्पत्तिमत्त्वात् भूतशब्दवाच्येषु चराचरेषु पूर्वादृष्टवशात् गमाभेषु वस्तुषु पृथिव्यादयो नानाशुक्लनीलपीताद्यात्मना भान्ति आत्मा स्वयं योनिः कारणं येषां तानि तथा तेषु आत्मा परमात्मा केवल आत्मतन्त्र इति विशेषणद्वयेन महान् विशेषोऽस्ति महादिभ्य इति सूचयति ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तां स्तुतिमाह। दिष्ट्येति—

दशभिस्तुतिरुक्ता हि प्रार्थनैकेन दोषनुत्।
सर्वभावैरिह स्तुत्यो निरोधे ह्यधिकारिभिः॥
सर्वेष्वेव च भावेषु कृष्णोत्कर्षो निरूप्यते।
अयुक्तं प्रार्थयेद्यस्तु तस्मै दद्यान्न सर्वथा।
न दत्तं पूर्वगोपीभ्यः नोत्तरस्यापि दास्यति।
निरोधो ह्यन्यथाद्य स्यात्फलार्थं कर्मतद्भवेत्॥
ईश्वरः सर्वहितविदविरोधो न दूषणम्॥
तथा बालकरोधो हि पित्रापि विनिरूपितः।
निवर्त्तयति कामांस्तान् ज्ञानेन गृहिला मतिः॥
यदि स्यादुत्कृष्टा दुष्टा निर्दुष्टा वा विचारतः।

प्रथमं भगवत्कृतकर्मणामभिनन्दनरूपां स्तुतिमाह। स्वसाधनधर्मत्वेन युवयोर्युवाभ्यामिदं कुलं कृच्छ्राद् दुरन्तादुद्धृतम् अनेन कुलसम्बन्धेन कुलस्यानिष्टशङ्कितं निवारितं प्रत्युतेष्टमेव कृतमिति किं च तस्यैकस्य निवारणेन समुदायपर्यवसितं यदैश्वर्यं कुलस्य तत्प्रत्येकं पर्यवसितमपि कृतमित्याह। समेधितमिति। चकारादनुक्तमपि कृतं पूर्वसम्बन्धे पापादुद्धृतमिति ॥ १७ ॥

एवं तेन दृष्टं द्वयमेवेति तावद्देवाभिनन्दितं स्वरूपमाह। युवां प्रधानपुरुषाविति। योनिबीजवदत्रापि व्याख्येयं प्रधानपुरुषत्वम् आधिदैविकं भविष्यतीति ब्रह्मत्वेनैव स्तुतिर्निर्द्धर्म्मिका पर्यवस्यतीत्याशङ्क्याह। जगद्धेतू इति। कारणाधर्मेव प्रधानपुरुषौ निमित्तत्वमात्रं भविष्यतीत्याशङ्क्याह। जगन्मयाविति। विकारे वा तत्प्रकृतवचने वा मयटोऽर्थाविधाने भगवन्मयत्वं जगतो नायापि यद्यपि तथापि भगवत्त्वेन कारणत्वेन जगद्रूपेत इति वक्तुं भगवत एव तन्मयत्वमुक्तम् अन्यथा असतः सत्ता स्यात् भगवतो

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वा परिणामः स्यात् "विष्टभ्याहमिदं कृत्स्न"मिति वाक्यात् लोके जगतो महत्त्वविधानात् तेन भगवन्माहात्म्यं वक्तुम् अन्नमयो यद्य इतिवत् जगन्मयेत्युक्तम् । ननु तथापि भगवतः साधारणं कारणत्वं स्यात् कालादिवत् समवायि कारणत्वमपि साधारणमेव मृदादिवत् तत्राह । भवद्भ्यामिति । भवद्भ्यां कृष्णरामाभ्यां विभक्तशक्तिभ्यां विना परमुत्कृष्टमपरमपकृष्टं चकारात्तदवान्तरभेदा वा न भवन्ति त्वन्मूलकमेव सर्वं यत्र स्वसामर्थ्यं बहुप्रकटयसे तदुत्कृष्टं यत्राल्पं तदपकृष्टमिति ॥ १८ ॥

एवं कारणत्वेन च भगवन्तं निरूप्य भगवन्तमेवाधेयत्वेनापि निरूपयति । भेदाभेदपक्षपरिहाराय आत्मसृष्टमिति । यद्यप्यात्मसृष्टेष्वभेदाभेदो दोषाय भवति तथापि भिन्नसृष्टावपि यथेदं दूषणं न भवेत् तदर्थमेतदुच्यते स्वेनैव सृष्टमिदं सर्वमेव विश्वं सृष्ट्यनुसारेण सृष्ट्यनन्तरमेव वा अनु पश्चादाविश्य स्वशक्तिभिरिति सर्वथा सामर्थ्ययुक्तः बहुधा ईयते अनन्तप्रकारेण प्रतीयत इत्यर्थः । तथापि वैदिकार्थोऽन्य एव भविष्यति "विरोधः शब्द इति चे"दित्यपि तथापि निरूपणात् भ्रमप्रतिपन्नं च भिन्नं स्यात् अतो न कर्तृत्वं भगवतः सम्भवतीत्याशङ्क्याह । श्रुतिप्रत्यक्षगोचरमिति । श्रुतिप्रतिपादितो विषयो वा प्रत्यक्षविषयः सोऽपि सर्वं त्वमेव साधारणप्रत्यक्षस्य तव स्तुतिरूपकत्वमित्यभिप्रायेण सामान्यग्रहणं गोचरशब्दोऽपि विशेष्यनिघ्नो भवति अन्वाविश्येत्यस्य वा कर्म ब्रह्मन्निति सम्बोधनं ब्रह्मसम्वादे सर्वैवोपपत्तिः सिद्ध्यति नायमर्थः पुनः साधनीय इति ज्ञापयितुम् ॥ १९ ॥

नन्वेकस्य नानात्वं वैचित्र्यं वा लोके नास्तीति लौकिकन्यायव्यतिरेकेण केवलमलौकिकमङ्गीकुर्वाणान् प्रति लोकानुसारेणापि एकस्यानेकरूपत्वे दृष्टान्तमाह । यथा हि भूतेष्विति स्थावरजङ्गमेषु सर्वेष्वेव भूतेषु वस्तुतः पार्थिवेषु कारणभूतानां पृथिव्यादीनां विलक्षणस्य सिद्धत्वेऽपि जीवसामर्थ्येन तत्र कारणत्वेन प्रविष्टा महादयः नाना भान्ति तत्रोपपत्तिमाह । योनिष्विति । चराचराणां भूतानि योनिवशादेव तथोत्पद्यन्त इति कदाचिन्महादीनामकारणता प्रतीयेत बीजस्यापि वापनानन्तरं स्वरूपतो नाशात् योनित्वापत्तिरिति योनिष्वित्युक्तं तत्र महादीनां चेद्बीजं शक्तिवशात् तथात्वमुपपद्यते तदा बीजापन्नं ब्रह्म पूर्वमेव भगवति विद्यमानं जगद्रूपं स्वसामर्थ्येन शिष्टं स्वाभिलषितप्रकारेण योनिभावापन्नं स्वस्मिन् प्रवेशयन् अनन्तजगदाकारेण वृद्ध्यादिषु बहुलपरिग्रहाविर्भावेन भगवानपि केवल एव आत्मयोनिषु आत्मरूपासु योनिषु जगद्रूपेषु बहुधा विभाति शक्तिवशाद्विद्यमानस्थाने आकर्षणादनित्यता स्यादिति तद्व्यावृत्त्यर्थमाह । आत्मेति । सर्वत्र व्याप्त एव अपकृष्ट एवाभिव्यक्तो भवतीत्यर्थः । दृष्टान्ते पारतन्त्र्यं प्रति भासत इति तद्व्यावृत्त्यर्थम् आत्मतन्त्र इत्युक्तं तदपेक्षयाप्यनेकप्रकारत्वं ख्यापयितुं दृष्टान्तेन नानात्वे समागतेऽपि प्रकारान् विधत्ते बहुधेति । नन्वहमेवेत्यत्र किं प्रमाणं वादिप्रतिपन्नमतेष्विव भिन्नतयैव तथा जगद्भवत्विति चेत्तत्राह । विभातीति । कारणापेक्षयाप्याधिक्येन कार्ये भानं दृश्यते यथा चित्रपटादिषु अतो भगवानेवत्यध्यवसीयत इत्यर्थः ॥ २० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इदं कुलं वामिति किमुच्यते जगदपि युष्मदीयमित्याह । युवामिति । एकस्यापीश्वरस्य द्विधाविर्भावाद्द्वित्वेन निर्देशः तेन त्वमेव प्रधानं त्वमेव पुरुष इत्यर्थः । जगद्धेतू जगन्मयाविति त्वमेव कारणं त्वमेव कार्य्यमित्यर्थः । एतदेव व्यतिरेकेणाह । भवद्भ्यामिति । परं कारणमपरं कार्य्यम् ॥ १८ ॥

एक एव भगवान् जगद्रूपेण नाना भवतीत्याह । आत्मसृष्टं स्वकार्य्यं विश्वमिदमन्वाविश्य अत्र प्रविश्य स्थित इत्यर्थः बहुधा देवगन्धर्वादिरूपेण मनुष्यगवादिरूपेण च ईयते अवगम्यते यतो विश्वमिदं श्रुतप्रत्यक्षगोचरम् श्रवणदर्शनविषयीभूतं क्लीवत्वमार्षम ॥ १९

एकस्यैव नानारूपत्वे दृष्टान्तमाह । यथा भूतेषु भौतिकशरीरेषु चराचरेषु योनिषु जातिषु महादयः हेतवो नाना भूत्वा भान्ति एवं केवल एक एव आत्मयोनिषु आत्माभिव्यक्तिस्थलेषु आत्मा भवान् बहुधा विभाति आत्मतन्त्र स्वतन्त्रः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यां युवयोरिदं कुलम् ॥ १७ ॥

प्रधानपुरुषौ मुख्यपुरुषौ जगतो हेतू निमित्तोपादनकारणभूतौ अत एव जगन्मयौ कारणस्यैव कार्य्याकारेण स्थितत्वात्कार्यरूपावित्यर्थः । स्वार्थे मयट् परं कारणमपरं कार्यम् भवद्भ्यां विना नास्तीत्यतः सर्वकार्यकारणरूपौ भवन्तावेवेत्यर्थः । जगद्धेतू श्रीकृष्णः एक एव बलस्तत्कलाभूतः समीपस्थोऽतो द्विवचनम् ॥ १८ ॥

ननु कारणसदृशं कार्यं भवति प्रकृते तु वैपरीत्यम् अहं चेतनः जगदचेतनमिति अतोऽचेतनात्प्रधानाज्जगदुत्पत्तिर्युक्तेत्यत आह । आत्मसृष्टमिति । हे ब्रह्मन् ! परमात्मन् इदं श्रुतिप्रत्यक्षयोर्गोचरं विषयभूतम् आत्मसृष्टत्वेन श्रुत्या "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रम्य स आत्मेत्यादिश्रुत्या प्रतिपादितम् प्रत्यक्षेऽपि घटरथाद्युत्पत्तिश्चेतनादेव अत आत्मसृष्टम् चेतनसृष्टम् त्वया निर्मितम् नहि अचेतनात्कार्योत्पत्तिः श्रूयते दृश्यते चेति भावः । यदुक्तं कारणसदृशं कार्य्यं भवतीति तदयुक्तं गोमयादेर्विसदृश वृश्चिकाद्युत्पत्तिदर्शनात् । ननु जगदुपादानत्वस्वीकारे मम विकारित्वं स्यान्नेत्याह । स्वशक्तिभिरात्मसृष्टमिति । एवमनन्तशक्तिकस्त्वं स्वरूपतो निर्विकारोऽपि जगदभिन्ननिमित्तोपादानमनुरसीति सिद्धान्तः किञ्च "तत्सृष्ट्वा तदेवानुप्राविश"दिति श्रुतेः भवान् अन्वाविश्य तदन्नियन्तृतया बहुधा ईयते प्रतीयते ॥ १९ ॥

कार्यकारणयोः विश्वपरमात्मनोः सदृष्टान्तं भेदाभेदसम्बन्धमाह । यथाहीति । यथा योनिषु कारणदर्शनस्थानेषु भूतेषु महादिकार्येषु महादयः हेतवः तत्तदाकारेण नाना भान्ति एवं भवान् सर्वकारणकारणः चिदचिच्छक्तिः आत्मा स्वयं योनिः कारणं येषां तेषु स्वदर्शनस्थानेषु वा स्वकार्येषु केवलः कारणत्वेन एक एव भवान् सर्वात्मा नाना तत्तदाकारेण आत्मान्तर्यामिरूपेण च आत्मतन्त्रः पारवश्यादिसर्वदोषास्पृष्टस्वरूपो भाति सर्वेषु चेतनाचेतनेषु भवदात्मकेषु अनुकूलाचाराध्यवसायः कर्तव्यो मुमुक्षुभिरिति भावः ॥ २० ॥

---

सृजस्यथो लुम्पसि पासि विश्वं रजस्तमःसत्त्वगुणैः स्वशक्तिभिः ।
न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बन्धहेतुः ॥ २१ ॥
देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात् ।
अतो न बन्धस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः ॥ २२ ॥
त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः ।
बाध्येत पाखण्डपथैरसद्भिस्तदा भवान् सत्त्वगुणं बिभर्ति ॥ २३ ॥
स त्वं प्रभोऽद्य वसुदेवगृहे ऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः ।
अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् ॥ २४ ॥

भाषा टीका ।

पापी कंसको उसके अनुचरों सहित जो आपने मारा सो अच्छा भया और आपने इस यदुकुल को बडे कष्ट में से उद्धार किया है और वर्धन किया है सो अच्छा किया है ॥ १७ ॥

आप दोनों श्रेष्ठ पुरुष हो सब जगत के कारण हो और सब जगत में व्याप्त हो आप दोनों के विना कार्य कारण स्थूल सूक्ष्म कुछ भी नहीं है ॥ १८ ॥

हे ब्रह्मन् ! अपने बनाये इस जगत् में प्रविष्ट होकर आप अपनी शक्तियों से वेद तथा प्रत्यक्ष प्रमाण के गोचर होकर बहुत प्रकार के मालूम पडते हो ॥ १९ ॥

जैसे स्थावर जंगम इन भूतों में पृथिव्यादिक तत्व रह कर नाना रूप से प्रतीत होते हैं इसी प्रकार से आप भी अपनी बनाई नाना योनियों में स्वतन्त्रता से प्रवेश होकर नाना प्रकार से मालूम पडते हो ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु सृष्ट्यादिकर्तृत्वेन च मम किञ्जीववद्बन्धः उक्तो न हि नहीत्याह । सृजसीति । तद्गुणकर्मभिर्वा तैर्गुणैः कर्मभिर्वेत्यर्थः । यतः क्व च कदाचिदपि बन्धहेतुरविद्या तव नैवास्ति कुत इत्यत आह । ज्ञानात्मन इति । मायाया आश्रयानावरकत्वादिति भावः ॥ २१ ॥

किञ्च आस्तां तावत्तव बन्धशङ्का यतोऽविद्योपाधेर्जीवात्मनोऽपि न वस्तुतो बन्धोऽस्तीत्याह । देहाद्युपाधेरिति । भवो जन्म तन्मूला भिदा च साक्षात्स्वरूपतो न स्यादिति ननु मम बन्धाभावं वदता त्वया किम्मोक्षोऽङ्गीक्रियते ओमिति चेत्तर्हि बन्धाभावे मोक्षासम्भवादापन्नो बन्धोऽपीत्याशङ्क्याह । अत इति । यतो नाविद्या अतो न बन्धो मोक्षश्च एवमुभौ न स्यातामित्यर्थः । ननूलूखले मां बद्धं श्रुतवान् यमुनाह्रदे मुक्तं दृष्टवानस्यतः कथमुभयं नास्त्यत आह । निकाम इति । स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव परमसम्भूत इति यद्वा नोऽविवेक एव तयोभौ स्यातामिति ॥ २२ ॥

ननु तर्हि ममावतारास्तच्चरित्राणि च शुक्तिरजतवदवि- याकल्पितान्येव किं न हि न हि इयन्तु तव लीलेत्याह द्वयेन । त्वयोदित इति ॥ २३ ॥

सुरेतरांशा ये राजानस्तेषामक्षौहिणीशतानां वधेन भूमेर्भारमपनेतुं स्वांशेन रामेण सहावतीर्णोऽसि ॥ २४ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु भवत्वचिन्त्यशक्तित्वाच्चिन्तामण्ययस्कान्तादिवदुपादाननिमित्तत्वेऽप्यविकारित्वं कथं नाम वीक्षणादिव्यापारमयसृष्ट्वा दिकं कथम्वा तेन न बन्धः तत्राह । सृजसीति । सिद्धान्तमाह । ज्ञानात्मनः । चिच्छक्तिविलासमात्रप्रयत्नस्य मायाविलासोऽपि यस्तव प्रयत्नः प्रतीयते सोऽपि तत्सम्बन्धेनैवेत्यर्थः । एतदुक्तं भवति मायिकप्रपञ्चेऽपि चिच्छक्तिविलासास्त्वद्भक्त्यादिरूपा अनुगता दृश्यन्ते तथा चैकादशे । "सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायान्तु निर्गुणे" त्यादि । ततो मायिकब्रह्माण्डान्तर्गतसाधकभक्तजनार्थमेव वीक्षणादिकं कुर्वति त्वय्यानुषङ्गिकमेवान्यसृष्ट्यादिकं भवतीति । पासीति पश्चान्निर्दिष्टस्य तात्कालिकत्वेन दृष्टान्ततया विन्यासात् । यथोक्तं प्रथमे श्रीकुन्त्या । "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थं कथं पश्येमहि स्त्रिय" इति तदेवं मायाविलास एव विकारित्वं ननु चिच्छक्तिविलासे तत्र तन्निषेधात् । यथोक्तं द्वितीयस्कन्धे वैकुण्ठवर्णने । न यत्र मायेति न च काल विक्रम इति च । तथा मायाविलासनशक्तेः तेन न बन्धः ततो न दोष इति भावः ॥ २१ ॥

देहेति । तैर्व्याख्यातं तत्रोलूखले बन्धश्रवणात् नराकृतिमूर्त्तौ संसारबन्धोऽपि सम्भाव्यते । यमुनाह्रदे दृष्टदेवाकृतिमूर्त्तौ तत्तदैश्वर्यसामग्री दर्शनात् । ततो मुक्तत्वञ्च प्रतीयत इत्यभिप्रायः । अनिरूपितत्वादनिर्वचनीयत्वादित्यर्थः । यद्वा यदि वा स्यातां तादृशौ तदा नोऽस्माकं प्रियवर्गाणां नितरां काम एव तौ द्वौ तव स्यातां प्रेमजातिविशेषोचितमनोरथविशेषं प्राप्यैव तादृश्यो लीलास्तवोदयन्ते । यथा श्रीयशोदाया वात्सल्यमनोरथविशेषेणार्भकभावमयलीलाविशेषोदयात् बन्धनादिप्राप्तिलीलोदय इति भावः । ननु कथं प्रकटैश्वर्येऽपि मयि

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तेषां तादृशभावः सम्भवति तत्राह । न तिष्ठति विवेकः ऐश्वर्य-दर्शनेऽपि तदनुसन्धानं यस्मात् तादृशोऽपि निकाम इति अतः "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्त-हृदयो भक्तैर्भक्तजनप्रिय" इत्युक्तेस्तथापि तादृशो भावः स्यादिति भावः ॥ २२ ॥

अतः स्वभक्तितात्पर्यपर्यवसानं वेदमार्गं रक्षन् तदभिव्यक्तिस्थानं सत्त्वगुणमपि पुष्णातीत्याह । त्वयेति । त्वयेश्वरेणोदित उक्त इति भ्रमादिदोषचतुष्टयराहित्यात् प्रामाण्यम् अवश्यपाल्यत्वञ्च न चेत्थं कृत्रिम इत्याह । पुराणः अनादिः । तत्रानादित्वेन त्वत्त एवानादितो मुहुराविर्भावित्वेन चेति भावः । स यदा यदा तादृशत्वदपेक्षाहभक्तवृन्दाभावात्त्वदौदासीन्येनासद्भिः बाध्येत अतिशयेन पीडितः स्यात्तदा दैवात् श्रीप्रह्लादस्येव कस्यचिद्भक्तजनस्यैकस्य बहूनां वा प्राकट्ये सति तत्पोषणार्थं स्वयमवतीर्य सात्त्विकगणवर्द्धनेन वेदपथं पुष्णन् स्वयमेव सत्त्वगुणं भवान् बिभर्त्ति पुष्णातीत्यर्थः ॥ २३ ॥

तदेवमुपोद्घातानन्तरं दिष्ट्या पापो हतः कंस इत्यादि निर्द्दिष्टं प्रकृतमेवानुवर्त्तयति । स इति । एवमुक्तमाहात्म्यो यदुषु अवतीर्य सन्मार्गप्रवर्त्तकस्त्वं विभो हे सर्वैश्वर्यपरिपूर्ण वसुदेवस्य यादवश्रेष्ठस्य श्लेषेण वसु भक्तिलक्षणो धर्मस्तेन दीव्यति द्योतत इति तथा तस्य ॥ २४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ जीवशरीरकस्यापि तस्य जीवगतबन्धमोक्षाद्यस्पर्शनमाह । देहादीति । अनिरूपितत्वात् भोगार्थतया निरूपितत्वाभावात् चिदात्मनः जीवान्तरात्मनः तव भवः संसारः साक्षान्नास्ति शरीरभूतजीवस्येत्यर्थः । यथा सिंहस्य श्वेत इत्यत्र श्वैत्यं देहगतं तद्वत् कामाद्यभावहेतुरविवेकाभावः ॥ २२—२३ ॥

वितन्वन्निति "लक्षणहेत्वोः क्रियाया" मिति शतृप्रत्ययः यशो विस्तारयितुमवतीर्णोऽसीत्यर्थः ॥ २४ ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवोपपादयति । सृजसीति । स्वशक्तिभिः कार्योपयुक्तस्वापृथक्स्थितनामविशेषणात्मकैः रजआद्याख्यैः प्रकृतिगुणैर्विश्वं सृजसि लुम्पसि हरसि पासि रक्षसि रजःप्रचुरचतुर्मुखाख्यजीवशरीरकत्ववेषेण सृजसि तमःप्रचुररुद्राख्यजीवशरीरकत्ववेषेण लुम्पसि सत्त्वप्रवर्त्तकस्वावतारेण पासीत्यर्थः । यद्यप्येवमथापि तैर्गुणैः कर्मभिः रजआदिगुणमूलकसृष्ट्यादिव्यापारैश्च न बध्यसे गुणपारवश्याभावात् सृष्ट्यादिकर्मणां पुण्यापुण्यमूलकत्वाभावाच्च सुखदुःखादिभोक्तृत्वापादककर्मबन्धो नास्तीत्यर्थः । बन्धाभावहेतूपन्यासेन बन्धहेतुं निराकुर्वन् विशिनष्टि आत्मन इति । स्वस्वरूपेणावस्थितस्य स्वत एव निरस्तनिखिलदोषस्य समस्तकल्याणगुणस्य गुणपारवश्यापादकपुण्यापुण्यरूपकर्मान्वयरहितस्य तव बन्धहेत्वभावात्प्रत्युत बन्धप्रतिभटधर्मयोगाच्च न बन्धशङ्काहेतुसम्भावनापीत्यर्थः । जीवस्तूक्तविधत्वाद्विपरीत इति भावः ॥ २१ ॥

तदेवं स्वेन रूपेणावस्थितस्य जीववैलक्षण्यापादकगुणकर्मान्वयाभावस्तत एव बन्धाभावश्चोक्तः अथ जीवशरीरकस्यापि तस्य जीवगतबन्धमोक्षाद्यस्पर्शमाह । देहाद्युपाधेरिति । देवमनुष्यादिदेहादिरूपोपाधेरनिरूपितत्वात् भोगाद्यर्थतया निरूपितत्वाभावाच्चिदात्मनः जीवान्तरात्मनस्तव भवः संसारः साक्षान्नास्ति शरीरभूतजीवस्यैवेति भावः । यथा सिंहः श्वेत इत्यत्र श्वैत्यं देहगतं न त्वात्मगतं तद्वत् चिदात्मनः स्यादिति पाठान्तरं तदा चिदात्मन इत्यनेन दृष्टान्तोऽभिप्रेतः यथा शरीरगता देवत्वमनुष्यत्वादिभिदा न तदात्मनः साक्षात्स्यादपि तु शरीरद्वारा तथा जीवगतो भवोऽपि न साक्षाद्भवतः स्यादपि तु जीवद्वारा स्वरूपतस्तु भवान्वयरहित एव भवानित्यर्थः । यद्वा आत्मन इति । हेतुगर्भं विशेषणम् आत्मनः चिदचिदन्तरात्मत्वात्तव न शरीरभूतचिदचिद्गता भिदास्ति नहि शरीरगतबाल्यादिभिदा शरीरिणि प्रसजतीति भावः । ननु शरीरगतधर्मान्वयरहितेऽपि जीव इव भवान्वयो दुर्वार इत्यत आह । देहाद्युपाधेरनिरूपितत्वाद्भवो नेति । जीवस्य कर्ममूलकसुखदुःखादिभोगार्थतया करणकलेवराद्युपाधेर्निरूपितत्वाद्भवोऽस्ति तव तु क्रीडार्थत्वादिति न भवोऽस्तीति भावः । यतो न भवोऽस्त्यतः न बन्धः भवनिदानभूतः कर्मबन्धः नास्ति तस्मान्मोक्षश्च नास्ति बन्धाभावाच्च तदवधिकमोक्षश्च नास्त्यतस्तावुभौ न स्याताम् इति नञा वृत्या वाक्यभेदेनान्वयः अतो बन्धो मोक्षश्च न स्यातामित्यन्वये तु नञन्तरवैयर्थ्यं प्रत्येकान्वये तु स्याताम् इति द्विवचनान्वयानुपपत्तिः यद्वा नञा बन्धमोक्षयोः प्रत्येकमेव निषेध्यत्वावगतेर्नञोऽद्वयप्रत्येकमेव क्रियान्वयित्वावगमस्वारस्याच्च स्यातामिति द्विवचनमतन्त्रं स्यादित्यर्थः । नन्वहमपि रामकृष्णादिरूपभागतः कर्मवश्य इत्यत आह । स कामस्त्वयीति । स रामकृष्णादिरूपदेहाद्युपाधिः कामः काम्यत इति कामः केवलं स्वेच्छामूलको नतु कर्ममूलक इत्यर्थः तर्हि तथा सर्वैः किं नावसीयते इत्यत आह । नोऽविवेक इति । नोऽस्माकमविवेकः जीवेश्वरयाथात्म्यविवेकाभावप्रयुक्तः त्वद्देहाद्युपाधेः कर्ममूलत्वोद्भावनमित्यर्थः ॥ २२ ॥

ननु देहाद्युपाधेः कर्ममूलत्वमत एव तत्फलभूतसुखदुःखाद्यखिलभोगार्थत्वं च जीवेषु निश्चितं मद्देहाद्युपाधेर्मां दृष्टकर्ममूलकत्वे किं तत्प्रयोजनमित्यत आह । त्वयेति द्वाभ्याम् । जगतो हितार्थं यस्त्वयोपदिष्टः पुराणो वेदमार्गः त्वत्तः श्वसितभूतवेदबोधितो धर्ममार्गः स यदाऽसद्भिः सर्माहितासाधनैः प्रत्युतानर्थावहैः पाषण्डपथैः वेदपथविरोधिभिः बाध्येत तदा भवान् सत्त्वगुणं शुद्धसत्त्वमयं विग्रहं बिभर्त्ति "यदा यदा हि धर्मस्य परित्राणाय साधूना" मिति श्लोकद्वयोक्तप्रयोजनार्थमवतरसि ननु कर्मफलभोगार्थं जीववज्जन्ममरणादिमच्छरीरद्वारा जायस इति भावः ॥ २३ ॥

स इति । यो रामादिरूपेणावतीर्णः स त्वं हे प्रभोऽधुना इह लोके वसुदेवगृहे स्वांशेन बलरामेण सह सङ्कर्षणरूपेणानेन धाऽवतीर्णोऽसि किन्तु सुरेतराणामासुरप्रकृतीनां राज्ञां कंसादीनामक्षौहिणीनां यानि शतानि तेषां वधेन भूमेर्भारमपनेतुं निराकर्तुमस्य यादवकुलस्य यशो वितन्वन् "लक्षणहेत्वो" रिति शत्रादेशः । विस्तारयितुं चेत्यर्थः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विश्वस्यात्मयोनित्वं स्पष्टयति । सृजतीति । केवलत्वं स्पष्टयति नेति । गुणैः सत्त्वादिभिः उत्पत्तिहेत्वभावादितियुक्तमितिभावेनाह । त इति । शून्यस्त्वमिति नेत्याह । ज्ञानात्मन इति । क्व च कस्मिंश्चिद्देशे काले च ॥ २१ ॥

जनितोऽत विष्णुरिति जन्मप्रतीतेर्जातस्य हि ध्रुवो मृत्युरिति मरणस्य अवश्यंभावात् कथन्नैव हेतुरित्युच्यत इति तत्राह । देहेति । देहादिरेवोपाधिः देहाद्युपाधिः तस्योत्पत्तौ कारणभूतगुणकर्मणामनिरूपितत्वादसम्भावित्वात्साक्षाद्भवः शुक्रशोणितसम्पर्कलक्षणं जन्म न स्यात् हि यस्मात्तस्तव देहबन्धो न स्यात् देहावियोगलक्षणो मोक्षश्च नैव स्याद्यावन्यत्र स्यातामतो नो निकामं यावद्योग्यं त्वयि विवेकः तत्त्वनिश्चायकं ज्ञानं स्यादित्यन्वयः ॥ २२ ॥

साक्षाद्भवो नास्तिचेत्तर्हि कीदृशोऽस्तीति तत्राह । त्वयेति । त्वयोदितः प्रकाशितः अयं भवो देहयोगलक्षणो जगतो हिताय ज्ञानलक्षणाय भवति कथमिति तत्राह । यदेति ॥ २३ ॥

एतदेव विशिनष्टि । स त्वमिति अमुष्य कुलस्य यदूपपदस्य ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यत एवं जीवस्यापि वास्तवो न बन्धः अतो न तरां ततो न तमां मोक्षः यदि वा स्यातां तादृशौ तदा नोऽस्माकं प्रियवर्गाणां नितरां काम एव तौ द्वौ स्याताम् । प्रेमजातिविशेषोचितमनोरथविशेषं प्राप्यैव तादृश्यो लीलास्तत्रोदयन्ते । यथा श्रीयशोदाया वात्सल्यमनोरथविशेषेणार्भकभावमयलीलाविशेषोदयात् । बन्धनादिप्राप्तिलीलादय इति । कीदृशो निकामः ऐश्वर्यादिदर्शनेऽपि न विद्यते विवेको यत्र तादृशः ॥ २२—२६ ॥

---

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

एवं जगद्रूपतां निरूप्य कर्तृत्वे प्राप्तान् दोषान् वारयितुमाह । सृजस्यदो लुम्पसीति । अदः प्रसन्नं भगवन्तं दृष्टवतः प्रपञ्चास्फुरणाददः इति परोक्षनिर्देशः अनेनास्फुरणे हेतुरप्युक्तः रजसा सृजसि तमसा लुम्पसि सत्त्वेन च पासि रजस्तमः सत्त्वानां स्वधर्मप्रतिपादनाय गुणत्वं तथापि स्तृतिन्यायेन भगवतः कर्तृत्वं न भविष्यतीत्याशङ्क्याह । स्वशक्तिभिरिति । ननु प्रकृतिधर्मैः धर्मत्वेऽपि सामर्थ्यमापन्नानीति शक्तित्वं यद्यपि शक्तिरंशेनाध्यासो नास्तीति कर्मबन्धो निवारित एव तथापि लोकन्यायेनापि दूषणं परिहर्तुं ज्ञानेन तदभावमाह । न बध्यसे तद्गुणकर्मभिर्वेति । तद्गुणैर्बन्धो मोहवशाद्बन्धो ऽनिच्छयापि चेतनादरे कालेनापि न सम्बन्ध इति सुतरामेव तुच्छैर्लोकैः न इनुमाह । ज्ञानात्मनस्त इति । ज्ञानेनापि बन्धाभाव इति सर्वशास्त्राणि भवांस्तु ज्ञानस्याप्यात्मा त्वत्सामर्थ्यादेव ज्ञानं तथा करोतीत्यात्मपदेन सूचितम् अत एव बन्धहेतूनां निराकृतत्वात् ते सर्वसमर्थस्य को वा बन्धहेतुर्भवति इत्याह । क्वेति । चकारात् देशे काले अवस्थायां च ॥ २१ ॥

ननु तथापि अवतारान्यथानुपपत्त्या सोपाधिरेव सत्त्वगुणाभिमानिनो ऽवतार इति लोकप्रसिद्धेश्च सुतरामेवावतारे बन्धो भविष्यतीत्याशङ्क्याह । देहाद्युपाधेरिति । देह इन्द्रियाण्यन्तःकरणं स्वभावः कर्म कालो वा यस्योपाधिभूता भवन्ति तस्यात्मनः प्रथमं भावो भवति ननु ममापि वसुदेवाद्भवो दृश्यत इति चेत्तत्राह । साक्षादिति । नटवद्वेपार्थं जन्मप्रकाशनं न जन्म किञ्च आत्मनो भिदापि न स्यात् पूर्वसङ्घातपरित्यागेन सङ्घातान्तरग्रहणं भेदोऽत्र विवक्षितः यतः अयमात्मा नहि सर्वत्र व्याप्तस्तथा भवितुमर्हति आत्मत्वान्न भेदः भेदाभावाच्च न जन्म यतो मूलभूते विष्णौ भगवति वा अत एव हेतोः तवापि न बन्धो नैव च मोक्षः येन सत्कर्मकरणार्थं धर्मस्थापनादिकं कुर्यात् अत एव बन्धमोक्षौ न स्याताम् । ननु यावदधिकारं स्वाधिकारिकमिति न्यायेन विष्णोरप्यधिकाराग्नो स्मार्तसम्मता मुक्तिः ब्रह्मवादिनोऽप्येकदेशिनः यद्ब्रह्मविद्यया सर्वं भवन्तो मनुष्या मन्यन्ते तद्ब्रह्म किं भवेदित्याशङ्क्य ब्रह्म वा इदमग्र आस आत्मानमेवावेदहं ब्रह्मास्मीति तस्मात्सर्वमभवदिति वाक्यानुरोधात् प्रपञ्चभवनवत् ब्रह्मविदाप्नोति परमित्यत्रापि ब्रह्मज्ञानेनैव ब्रह्मणोऽपि परत्वप्राप्तिरित्यध्यवसीयते कर्मकाण्डेऽपि परमेष्ठिनो वा एष यज्ञोऽग्र आसीदित्युपक्रम्य सर्वेषामुत्कर्षो दर्शपूर्णमासाभ्यां निरूपितः एवं परब्रह्मणोऽपि दर्शपूर्णमासाभ्यामेव उत्कर्षः प्रतीयते परमेष्ठिशब्दश्च ब्रह्मपर्यायः इन्द्रे प्रजापतौ ब्रह्मणीत्युपक्रमेण तत्प्रकरणस्थानामेवोपलम्भात् अतः सर्वेषामेव बन्धमोक्षौ स्त इति मन्यन्ते किञ्च "इमां विद्यां कृष्णाय देवकीनन्दनाय प्रोवाचे"त्युपाख्याने ब्रह्मविद्याग्रहणमपि श्रूयते अतः सम्भावितत्वात् बन्धमोक्षौ प्राप्ताविति तन्निराकरणं युक्तमेव एते तु निरूपिताः पूर्वपक्षाः अविवेकेनैव प्राप्ता इत्याह । निकामस्त्वयि नोऽविवेक इति । नोऽस्माकं सर्वेषामेव भ्रान्तानां निकामः स्वेच्छया अविवेकः अधिकारस्तु न स्वामिपरः लोके महाराजे अधिकारपदप्रयोगाभावात् परमेष्ठिब्रह्मशब्दौ चतुर्मुखवाचकौ अन्यथा यज्ञो वै विष्णुरिति श्रुत्या दर्शपूर्णमासयोर्यज्ञत्वविधि र्व्यर्थः स्यात् ब्रह्मविद्याद्यधिकारोऽपि सन्दीपनेरिव लीलया सम्भवति अतोऽस्माकमेवाविवेकः ॥ २२ ॥

ननु परब्रह्मणि बन्धमोक्षौ कथं चित्सम्भवत इति चेत्तत्राह । त्वयोदित इति । यदैव त्वयोदितो वेदमार्गः पाषण्डपथैः विरुद्धमार्गप्रतिपादकैः पुरुषैः बाध्येत तदा तेषां च बलिष्ठत्वात् कालविशेषात् सर्वेषामेव बुद्धिनाशात् भगवानेव शक्त इति तदा भगवान् सत्त्वगुणं बिभर्षि भगवद्गृहीतं सत्त्वं बलवत् सद्रजस्तमसोरभिभावकं भवतीति अनेन वैषम्यदोषः परिहृतः नैर्घृण्यदोषस्तु अवतीर्णे नास्तीति न तन्निषेधकं वचनम् ॥ २३ ॥

नन्विदानीं वेदानां पाठाभावात् व्यासावतारस्य जातत्वात् बुद्धावतारस्याद्याप्यजातत्वात् किमनेनावतारेणेत्याशङ्क्याह । स त्वं प्रभोऽद्येति । स एव त्वं सर्वरक्षकः न केवलं वेदमात्ररक्षकः तदाह । प्रभो इति । क्रियाशक्तेरपि पूर्णाया विद्यमानत्वात् वसुदेवस्य गृहे सत्त्वरूपस्य गृहे अभिमानस्थाने अभिमानप्रकारेण पालयिष्यामीत्यवतीर्णः स्वांशेन बलभद्रेण सह इहैवागत्य भारमपनेतुं ननु वैकुण्ठे स्थित्वा मनसा अवतीर्णोऽसीति संमतिमिव पृच्छन्नाह भारस्य महत्त्वख्यापनायाह । सुरेतराणां दैत्यानां शतस्य वधेनेति ननु न दैत्याः साम्प्रतं प्रतीयन्त इत्यत आह । राजभिरिति ।

अद्येश ! नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः ।
यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज ! याः प्रविष्टः ॥ २५ ॥
कः पण्डितस्त्वदपरं शरणं समीयाद्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्वान् ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्य ॥ २६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रयोजनान्तरमप्याह । अमुष्य वसुदेवकुलस्य यशो वितन्वन्निति रूपद्वयेनावतारेण प्रयोजनद्वयमुक्तम् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतस्त्वमेवैको जगदीश्वर इत्याह । सृजसीति । तत्तदभिधैस्तैर्गुणैस्तैस्तैः कर्मभिश्च जीव इव त्वं न बध्यसे ननु कुतोऽहं न बध्ये तत्राह । ज्ञानात्मनः ज्ञानस्वरूपस्य परब्रह्मणस्तव बन्धहेतुरविद्या क्व जीवस्यैव तव सा नास्तीत्यर्थः ॥ २१ ॥

ननु मे यद्यविद्या नास्ति तदात्मदेहोऽयमाविचकः कुत आयातस्तत्राह । देहादीति । तव देहाद्युपाधेरनिरूपितत्वादिति । तव देहादिरुपाधिराविचक इति कैरपि शास्त्रज्ञैर्न निरूपित इत्यर्थः । अत एव तव न भवः जीववत् संसारो जन्म वा नैव स्यात् तथापि देहादिरविद्यको यदि भवेत् तदा त्वमपि स्वातन्त्र्येऽपि जीवतुल्य एव जन्मादिमानेव स्या इत्यर्थः । अतस्तव देहादेरुपाधित्वाभावात् जीववत् साक्षात् पैतृकधातुकधातुसम्बद्धं जन्म न स्यात् किन्त्वाविर्भावात्मकमेव जन्म भवेत् । तथा आत्मनो देहाद्भिदा भिन्नत्वं जीवस्येव तव नास्ति त्वद्देहोऽपि त्वमेवेत्यर्थः । देहदेहिविभागोऽत्र नेश्वरे विद्यते क्वचिदित्युक्तेः । अतस्तव अज्ञत्वादेवाविद्याविद्याभ्यामतीतस्य नैव बन्धो नैव मोक्षः उलूखले मात्रा निबद्धस्य कालियह्रदान्मुक्तस्य मम बन्धमोक्षौ स्त इति चेत् स्यातां तौ तु ते न निषिद्धावेव इति भावः । कुतस्त्वयि स बन्धः स मोक्षश्च सोऽस्माकं भक्तानां निकामो ध्येयत्वादभीष्ट एव । यतो विवेकः स बन्धो मोक्षश्च विवेक एव मयि तत्त्वाभावात् ज्ञानस्वरूपस्य तव तु न तत्त्वज्ञानजो भवबन्धमोक्षावित्यर्थः ॥ २२ ॥

तदेवं गुणातीतस्वरूपलीलोऽपि त्वं धर्ममार्गरक्षया शिष्टजनपालनार्थं सत्त्वगुणं पुष्णन्नाविर्भवसीत्याह । त्वया उदित उक्तः वेदपथः धर्ममार्गः पुराणः प्राचीनः ॥ २३ ॥

स्वांशेन रामेण सह । सुरेतरांशा ये राजानस्तेषामक्षौहिणीदातस्य वधेन भूमेर्भारमपनेतुम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मतन्त्रत्वमुपपादयति । सृजसीति । स्वशक्तिभिः प्रकृतिकालादिभिः रजआदिभिर्गुणैश्च विश्वं सृजसि लुम्पसि पासि अथापि तैर्गुणैर्निद्रासृष्ट्यादिगुणैः कर्मभिश्च न बध्यसे अत आत्मतन्त्रोऽसीत्यवसीयसे यतो ज्ञानात्मनः परज्ञानस्वरूपस्य सर्वात्मनस्ते बन्धहेतुश्च न क्वापीत्यर्थः ॥ २१ ॥

बन्धहेतुश्च ते नास्तीत्येतदुपपादयन् न बध्यसे इत्येतत्प्रपञ्चयति । देहाद्युपाधेरिति । साक्षादात्मनः स्वाश्रयस्वरूपस्य तव बन्धहेतोः प्राकृतदेहतन्मूलकर्माज्ञानाद्युपाधेरनिरूपितत्वात् न भवः अपूर्वदेहग्रहणरूप उद्भवः न भिदा देहत्यागश्च अतो न बन्धो न मोक्षश्च तव स्यात् किन्तु नोऽस्माकं देहग्रहणत्यागौ बन्धमोक्षौ च स्याताम् अत्र हेतुरस्तीत्याह । निकामः मायामोहितजीवानुरूपः त्वयि नो जीवानामविवेकः अविवेकोपलक्षितं पराङ्मुखत्वमित्यर्थः ॥ २२ ॥

एवं भूतानामविवेकिनां त्वयि विवेकः नावेदविन् मनुते तं बृहन्तमिति व्यतिरेकश्रुतेः त्वदुक्तवेदमार्गाश्रयणेनैव भवति तमपि असन्तः यदा यदा दूषयन्ति तदा स्वावतारैस्तद्रक्षणं भवानेव करोति इत्याह । त्वयोदित इति । नियम्यधृतं सत्त्वगुणं बिभर्ति वेदपथत्राणार्थमिति शेषः ॥ २३ ॥

स एव वेदपथरक्षकस्त्वम् अमुष्य यदुकुलस्य यशो वितन्वन् सुरेतराणामसुराणां राज्ञामक्षौहिणीनां यानि शतानि तेषां वधेन भूमेर्भारमपनेतुं स्वांशेन सह यदुकुले वसुदेवगृहे अवतीर्णोऽसि ॥ २४ ॥

भाषा टीका ।

आप इस संसार को रजोगुण तमोगुण सत्वगुण वाली तीनों शक्तियों से सृजते हो और पालते हो तथा नाश करते हो तौ भी उनके गुण कर्मों से आप नहीं बंधते हो ज्ञान स्वरूप आपको बंधन का हेतु कहां से होगा ॥ २१ ॥

देहादिक की उपाधि आप के वास्ते नहीं है तिससे आप को साक्षात् किसी वस्तु से भेद नियोग भी नहीं है और बंध तथा मोक्ष भी नहीं है यदि कोइ आपका बंधन मानता है सो तो हम लोगों का अविवेक है और कुछ नहीं ॥ २२ ॥

आप का उपदेश किया हुआ यह पुराना वेद मार्ग जब असत्पुरुषों के पाखंड मार्गों से बाधित होता है तब उसके रक्षा करने को सत्वावतार मूर्ति को आप धारण करते हौ ॥ २३ ॥

हे प्रभो ! आप इस समय अपने अंश के सहित वसुदेवजी के घरमें अवतीर्ण भये हो असुर अंशी राजाओं के सैकड़ों अक्षौहिणी सेना को मार कर पृथिवी के भारको दूर करके इस यदुकुल के यशको विस्तार करोगे ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अत एवंभूतस्य तवागमनेन कृतार्थोऽस्मीत्याह द्वयेन । अद्येति । हे ईशाद्य ! नो वसतयो गृहास्तत्पावनादपि बहुपुण्याः कुतः या

दिष्ट्या जनार्दन ! भवानिह नः प्रतीतो योगेश्वरैरपि दुरापगतिः सुरेशैः ।
छिन्ध्याशु नः सुतकलत्रधनाप्तगेहदेहादिमोहरशनां भवदीयमायाम् ॥ २७ ॥
इत्यर्चितः संस्तुतश्च भक्तेन भगवान् हरिः ।
अक्रूरं सस्मितं प्राह गीर्भिः सम्मोहयन्निव ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

वसतीस्त्वं साक्षात्प्रविष्टः कथम्भूतः यस्य तव पादसलिलमेव गङ्गा त्रिजगत्पुनाति यश्च त्वं पञ्चयज्ञदेवतामूर्तिः स त्वं जगद्गुरुरिति ॥ २५ ॥

स्वमनोरथः परिपूरित इति तुष्यन्नाह । कः पण्डित इति । ऋतगिरः सत्यवाचः त्वत्तोऽपरं शरणं कं समीयाद्गच्छेत् यतो भवान् भजतः सर्वानभिमतः कामांश्च ददात्यात्मानमपीति ॥ २६ ॥

नोऽविवेकिनाम् तत्रापीह गृह एव ॥ २७-२८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यादवेषु चाहं त्वया नितरामनुगृहीत इत्याह । अद्येति । ईश हे सर्वेश्वर भूरिभागा बलि प्रभृतिभ्योऽपि बहुमाहात्म्याः । यतः देवादयो मूर्त्तयोऽधिष्ठानानि यस्य यज्ञरूपांशावतारे । यस्य च तव श्रीवामनरूपांशावतारे पादशौचसलिलमपि त्रिजगत् पुनाति स त्वं जगद्भ्यः सर्वेभ्यः स्वाविर्भावेभ्योऽपि गुरुर्महान् या मद्वसतीरेव प्रविष्टः न स्वधापि अन्ययादवगृहानित्यर्थः । जगद्गुरुत्वादेव हे आधोक्षज सर्वज्ञानातीत ! ॥ २५ ॥

भक्तस्तेहेशादिना पूतनादिभ्योऽपि तादृशपददानात् । प्रीतिविषयत्वेन प्रसिद्धो यस्य तस्मात् । तथोक्तं श्रीमदुद्धवेनापि अहो बकीयमित्यादि । तत्प्रियत्वेऽपि ननु कथमप्यनवधानादिना तत्पालनप्रतिज्ञाव्यभिचारः स्यादित्याह । ऋतगिरः सत्यसङ्कल्पात् कदाचित्तस्य परमभक्तान्तरावेशेऽपि संकल्पस्यैव तत्कार्यसाधकत्वादिति भावः । नचोपकारात्मकस्य भजनस्याप्यपेक्षा किन्तु कथञ्चिदाश्रयमात्रस्य इत्याह । सुहृदः नचोपकारानभिज्ञतेत्याह । कृतमुपकारं जानाति बहुमन्यत इति कृतज्ञात् । तथोपकाराभासस्यापि बहु मन्यमानत्वे पर्यवस्यतीत्याह । सर्वानिति यस्य विषयळाभाळाभादिना उपचयापचयौ न स्तः स । भजतः भजनमात्रं कुर्वतः पुष्पपत्रादिनापि सेवमानाय सर्वास्तदभीष्टान् कामान् ददाति तत्र सुहृदः सौहृद्ययुक्ताय यत आत्मानमपि सुहृद्रूपेण ददाति तदधीनं करोतीत्यर्थः । तस्मान्मदीयगृहागमनमपि तव नाश्चर्यमिति भावः ॥ २६ ॥

तादृशानुकम्पां श्लाघमानः सळज्जः सन् निजतदेकनिष्ठतान्तरायच्छ्यादीनि प्रार्थयते । दिष्ट्येति जनार्दन इति । हे ब्रह्मादियाच्यमानदर्शन तदेव दर्शयति । योगेति । योगेश्वरैः सनकादिभिः सुरेशैर्ब्रह्मभवादिभिर्गतिर्ज्ञानं यस्य सः प्रतीतः प्रत्यक्षं प्राप्तः एतद्दिष्ट्या अहो अस्माकं भाग्यमहिमेत्यर्थः । छिन्धीत्यादिकं नरलीलोचितं वचनम् आप्ताः सुहृदः ॥ २७ ॥

सम्यक् जिज्ञास्यार्थानुकूलवचनतया स्तुतः । स त्वं प्रभो ! इत्यादिभिरुक्तत्वात् । गीर्भिरिति तद्वैशिष्ट्यं बोधयति । शुद्धप्रेममयलौकिकलीलाविशेषाभिरुचेस्त्वन्नो गुरुरित्यादिलक्षणाभिर्गीर्भिः सम्मोहयन् मूर्च्छयन् इवेति चेतनायामपि विवेकलोपात् । तत्र शक्तिद्योतकं भगवान् सर्वैश्वर्यादिसम्पन्नो हरिर्मनोहारिलीलश्चेति ॥ २८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ऋतगिरः सत्यवाक्यात् त्वत्तः अपरमित्यन्वयः आत्मानमपीति ददासीति मोक्षप्रदत्वमुक्तं यस्य आत्मनः उपचयापचयौ वृद्धिह्रासौ न ॥ २६—२९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवन्तं स्तुत्वा सम्प्रति तदागमनेनात्मतदनुबन्धिनां कृतार्थतामाविष्करोति । अद्येति । हे ईश ! अधुना नोऽस्माकं वसतयः गृहा भूरिभागा बहुभाग्यवत्यः तत्र हेतुं वदन् भगवन्तं वसतीश्च विशिनष्टि । हे अधोक्षज ! जगद्गुरुः त्वं या वसतीः प्रविष्टः कथम्भूतः यो भवान् सर्वे देवा ब्रह्मरुद्रेन्द्रादयश्च पितरश्च भूतानि च नृदेवाश्च मूर्त्तिः शरीरं यस्य तथा भूतः स आत्मा अङ्गान्यन्या देवता इत्यादि श्रुत्यर्थोऽत्रानुसंहितः यस्य च तव पादयोः शौचं क्षालनेन पवित्रं सलिलं गङ्गात्मकं कर्तृ त्रिजगत् त्रिलोकीं पुनाति सर्वदेवपितृभूतनृदेवमूर्तिरिति देवादीनां शरीरत्वकथनेन पारतन्त्र्यमुक्तम् ॥ २५ ॥

अत एव को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् एष एवानन्दयतीति श्रुत्युक्तरीत्या काममोक्षप्रदस्तदुपायभूतश्च त्वमेवेति वक्तुम् उपायत्वोपयुक्तगुणैस्तमेव विशिंषन् तदन्यशरणमिच्छुर्मूर्ख इत्याह । क इति । पण्डित इत्यस्य चेदिति शेषः पण्डितश्चेत्को वा त्वत्त्वत्तोऽन्यं शरणं समीयाद्व्रजेत् समीहितसाधनत्वेनाध्यवस्येदित्यर्थः । योऽन्यं शरणं समीयात्स मूर्ख इति भावः । तत्र बहुव्रीहिपक्षे भक्तानां प्रीतिविषयत्वोक्त्या प्राप्यत्वोपयुक्तगुणवत्त्वम् ऋता सत्या गीर्वाग्यस्य तस्मात् पार्थ नैवेह "नामुत्र विनाशस्तस्य विद्यते न मे भक्तः प्रणश्यति अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचने" ति सप्रतिज्ञं सत्यमेव ब्रूत इत्यर्थः । अयमपि शरण्योपयुक्तगुणः कृतज्ञात् कृतं यादृच्छिकं प्रासङ्गिकानुषङ्गिकान्यतमं तदल्पतमविज्ञातं स्वतस्त्वकृतमपि सुकृतत्वेन जानातीति तथा तस्मात् रक्षणे व्याजमात्रापेक्षिणो न तु पुष्कलकारणापेक्षिण इति भावः । अनेन दयालुत्वं फलितं सुहृदः हितैकाचरणशीलात्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सुहृदः हितैकाचरणशीलात् अनेन कंसादिमारणम् अन्ततः शिक्षैवेति गूढोऽभिप्रायः ततस्तद्धितार्थंचरति भावः । कुतः यतो भवान् सुहृद भवत्तोपैककरवर्णाश्रमोचितधर्मानुष्ठाननिष्ठस्य भजतो भक्ति कुर्वतः पुरुषस्याभिकामान् सर्वान् समीहितान् ददाति कियदेतदभिकामान् ददाति यतो निरतिशयानन्दरूपमत एव निरतिशयपुरुषार्थरूपं चात्मानमपि ददाति अनेन मोक्षप्रदत्वमुक्तं भवति कथं भूतमात्मानं यस्यात्मनः स्वस्य उपचयापचयौ वृद्धिह्रासौ न भवतस्तम् अनेनानिर्विकारत्वं तएवाचिदचिद्वैलक्षण्यञ्च फलितम् ॥ २६ ॥

अथैवम्भूतस्य दुर्दर्शस्य तथा तस्य केवलं स्वमांसचक्षुर्विषयतापत्त्या तस्मिन्सौलभ्यतया स्वस्यालभ्यलाभरूपमहानन्दप्राप्तिं च वदन् तन्मायानिवृत्तये तमेवोपायत्वेन प्रार्थयते । दिष्ट्येति । हे जनार्दन सर्वान्तरात्मनः सुरेशैर्ब्रह्मादिभिर्योगीश्वरैः सनकादिभिश्च दुरापा दुष्प्रापा प्राप्तुमशक्या गतिः प्रकारो याथात्म्यम् इति यावत्सा यस्य स भवानिहमनुष्यलोके नोऽस्माकं केवलमज्ञानां प्रतीतः चाक्षुषसाक्षात्कारात्मकप्रतीतिविषयो जातः दिष्ट्या महानन्दोऽस्माकमित्यर्थः । इहेत्यद्यास्मिन् गृहे एवेत्यर्थः । ननु मद्दर्शनमेव किंवहुमन्यसे ननु समीहितं याचसे इति चेदिदं याचे इत्यभिप्रायेणाह । छिन्धीति । नोऽस्माकं भवदीयमायाकार्यभूतां सुतादिषु मोह एव रशना पाशस्तामाशु छिन्धि इदमेव मम प्रार्थनीयमित्यर्थः ॥ २७ ॥

इतीति । भक्तेनाक्रूरेण स्तुतश्च हरिः सस्मितं स्मितेन सहितं यथा तथाक्रूरं प्राह कथम्भूतो वाग्भिरेव तं संमोहयन्निव स्वयाथात्म्यविषयकमोहं जनयन्निव इवशब्देनैवमपि न तस्य निस्तनुकस्य मोह इति सूच्यते ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे अधोक्षज ! सर्वे देवादयो मूर्तयः प्रतिमा यस्य स तथा जगद्गुरुः सत्वं या वसतीः प्रविष्टः हे ईश ! अद्य ता वसतयो नोऽस्माकं गृहाः भूरिभागा पूर्णभाग्याः अभवन् खलु नैतच्चित्रमित्याह । यत्पादेति ॥ २५ ॥

एकमेवाद्वितीयमिति श्रुत्यर्थं गुरुमुखात्सम्यक् ज्ञातवानहं त्वामतः स्तौमीत्याशयेनाह । क इति । भक्तप्रियात् ऋत गिर इति पदच्छेदः भक्तप्रियाऋतगीश्चेति वा तस्माद्भजतः सेव्यमानस्य सुहृदः फलापेक्षारहितस्य आत्मानमपि स्वात्मानमपि सायुज्यलक्षणं मोक्षमपि सारूप्यम्वा यस्योपचयापचयौ वृद्धिक्षयौ च न स्त इत्यनेन कृष्णस्य बालवार्धकादिकं न स्वाभाविकमिति दर्शितम् ॥ २६ ॥

योगेश्वरादिभिरपि दुरापगतिः दुष्प्रापस्वरूपो भवान् नः प्रतीतः प्रतीतिविषयं गत इत्यत इदकृतव्यमिति प्रार्थयते किन्तदिति तदाह । छिन्धीति । भवदीयमायां भवदाज्ञाकरीं वन्धकशक्तिं छिन्धीत्यन्वयः किंस्विधामत्राह । सुतेति । मोहलक्षणां रशनां रज्जुम् ॥ २७ ॥

लोकविषयाभिर्गीर्भिः सम्मोहयन् तत्त्वज्ञानम् अन्यथा कुर्वन्निव न स्वकृतस्येत्यन्वयः ॥ २८-२९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवदवतारं प्रसङ्गात् कर्माणि च श्रुत्वा भगवदागमनं स्तौति । अद्येश न इति । नो वसतयो गृहाः अद्य भूरिभागाः मस्मत्कुले भवतीर्णं इति वयं पूर्वमेव भूरिभागाः वसतयस्त्वद्य इति बहुवचनं ज्ञात्राद्यभिप्रायं ननु निरोधाधिकारिणो भवन्तः तदर्थमागमनं ननु धर्मार्थमिति कथं वसतीनां कृतार्थतेति चेत्तत्राह । ईश इति । उभयमपि कर्तुं समर्थं ननु भगवत्सम्बन्धादेव तेषां भाग्यमस्तु पृथक्किमिति निरूप्यत इत्याशङ्क्याह । भूरिभागा इति । मद्भाग्यं चेत् यदैव ममेच्छा तदैवागच्छेत् अतो गृहस्यैव भाग्यं ननु गृहं हि त्रिगुणात्मकं गुणातीतो हि भगवदनुगुणो भवतीति कथमेवमुच्यत इति चेत्तत्राह । यः ससर्वदेवपितृदेवनृदेवमूर्त्तिरिति । गृहाणामपि स्वोत्कर्षो येन सिद्ध्यति तदपि रूपं भगवति वर्त्तते गृहं हि देवतायोग्यं भवति पितॄणां नराणां तत्र ये हि लोके गृहं सुखिता भवन्ति तेषां स्वदेवत्वमुत्कर्षदेवमात्रे सन्तुष्टे गृहं युक्तं भवत्यन्यथा व्यर्थमेवमित्यनयोस्तत्र देवोत्तमो भगवानिति तत्प्राप्तौ भवत्येव सर्वोत्कर्षः योग्यता च एवमितरयोः किञ्च शुद्धिरप्यपेक्षिता सापि जातेत्याह । यत्पादशौचसलिलमिति । पादशौचसलिलं गङ्गा सा परम्परासम्बन्धापि देशकालव्यवहितापि जलान्तरेण मिश्रिता लोकत्रयमपि पुनाति अत्र तु साक्षादेव पततीति किं गृहभाग्यं वक्तव्यमित्यर्थः । ननु रूपभेदात् वैलक्षण्यं भविष्यतीत्याशङ्क्याह । स त्वमिति । अत्रापि प्रमाणमेवेत्यत आह । जगद्गुरुरिति । तर्हि कथं लोका न जानन्तीत्याशङ्क्याह । अधोक्षजेति बहिर्मुखत्वादज्ञानं याः वसतीः पुनर्ग्रहणं तासामभिनन्दनार्थं च ॥ २५ ॥

एवं भगवदागमनं स्तुत्वा भगवति प्रत्यापत्तिं स्तौति । स्वचिकीर्षितम् । कः पण्डित इति । स्तुत्यनन्तरं हि फलं प्रार्थनीयं तत्प्रपत्त्यतिरिक्तं नास्तीति ज्ञापयितुं प्रपत्तिमेव स्तौति प्राणिनां कर्त्तव्यतया प्रपत्तिरेव कर्त्तव्येति विवेकवान् हि पण्डितः इममेवार्थमधिकृत्य "पण्डितो मोक्षबन्धवित्" इयुक्तं तत्रानायासेन फलसिद्धिर्विद्यमाने स्वोत्कृष्टे समाश्रयणमेव युक्तम् आश्रयो हि स्वाधीनं सर्वमेव यच्छति मनस्तु क्षणिकमिति सर्वपदार्थाभिलापि भवतीति कदा वा किं प्रार्थयेदिति तत्तत्साधनेष्वशक्तो हि प्रपत्तिमार्गमवलम्बते तदपि कृत्वा चेत्फलं न प्राप्नुयादसमर्थभजनात् तदा प्रपत्तिर्व्यर्थेति को वा विवेकी त्वत्तः अपरं शरणं सत्यगीयान् साधनत्वेन गुरुत्वेन वा अनुवृत्तिं कुर्यात् अतु शरणं गच्छेत नन्वाहत्य कथं त्वं प्राप्तव्यः अतोऽन्यानुवृत्तिः प्रथममावश्यकीति कथमन्यनिरोधः क्रियत इति चेत्तत्राह । त्वदपर इति । त्वमपरो यस्य नियामकत्वे ननु बुद्ध्या गृहीतः गुर्वादिस्तु नैवं विधो भवतीति न दोषः भगवतः शरणागतो हेतुनाह । भक्तप्रियाद्दृतगिरः सुहृदः कृतज्ञादिति । षट् हेतवोऽपि भगवति तत्र फले हेतुद्वयं साधने चतुष्टयमिति साधनेऽपि स्वधर्मपुरस्कारेण हेतुर्वक्तव्यः अन्यथा फलं काकतालीयं स्यात् यो हि सेवकानपेक्ष्यते स सेवकेभ्यः प्रयच्छति स ईश्वर एव न भवति तथापि सेवकधर्मं चेदुररीकुर्यात् तदैव सेव्यो भवति तदाह । भक्तप्रियादिति । लोका हि फलार्थं सेवमानाः सेवायामसक्ताश्चेन्न फलं प्राप्नुवन्ति भजनानुरूपं च प्राप्नुवन्ति नहि प्रभुस्तस्य क्लेशं मन्यते अन्यथा दुःखदं साधारणे देहो

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

काले च तान् सर्वान्न प्रवर्त्तयेत् यथा पुत्रं भगवांस्तु न तथा भक्तम् अतो भगवानेव सेव्यः किञ्च स्वधर्ममप्यपेक्ष्य भक्तहितं करोतीत्याह । ऋतगिर इति । सत्यवाक् सत्यसङ्कल्पः सङ्ग्रामे च प्रपन्नानां तवास्मीति च यो वदेत् । कौन्तेय प्रतिजानीहीत्यादि-वाक्यात् यो हि सेवकक्लेशं सहते स न मनसि शुद्धः यो वाचि न दृढः स वाचि तथा यस्तु समागतेऽवसरे मित्रमिव कार्यं न करोति शरीरतः सकायस्तथा एतत्त्रयं लौकिकं स्वतः कर्त्तव्यं तस्य ऋतं जानातीति तद्धर्मकरणे हेतुरुक्तः दोषाभाव एते आत्मवत् पुत्रवच्च भक्ताः कायवाङ्मनोभिः विपर्यीकर्त्तव्या इति गुणाः प्रह्लादे सर्वापत्सु मनसा हितं कृतवान् वाचा गोपिकादिषु कायेनास्माखिति एवं भावे भगवद्गुणे न कोऽपि सन्देहः कृतः तथा भावे प्रत्राह्लकरणान्नोत्कर्षः स्यात्फलदातृत्वमाह । सर्वान् परेषामनिष्टं वा कर्तुं वाञ्छन्ति तदा न ददातीति ज्ञापयितुं सुहृद इति शुद्धान्तःकरणस्य स्वद्रोहं वा विचारयतः सर्वानेव कामान् ददातीति दाने हेतुभंजनमित्याह । भजत इति । एकस्मि-न्नपि प्रार्थितं अभितः सर्वतः प्रयच्छसि न त्वन्येऽप्येतादृशा भव-न्तीत्याह । आत्मानमपीति । अत्र भजनमेव हेतुः तेन तारतम्येन सर्वं सङ्गच्छते यः स्वात्मानं भगवते प्रयच्छति भगवानपि तथा तस्मै प्रयच्छतीति नन्वेतादृशमपि लोके क्वचित् सिद्धमिति चेत्त-त्राह । यस्योपचयापचयौ न स्त इति । यत्सम्बन्धिनः सर्वस्यैवोपच-यापचयाभावः उभयनिरूपणमुचितं चेद्दत्तं तस्य नापचयं करोति अपचितं चेद्दुःखादिकं तत्कदाचिदपि नोपचितं करोति अथवा एवं रूपमेव सर्वेभ्यो भक्तेभ्यः प्रयच्छति ननु विषमं वस्त्वेव तथेति नेच्छापि तत्र प्रयोजिकेति धर्मिणि तौ धर्मौ निरूपितौ ॥ २६ ॥

एवं सर्वप्रकारेण स्तुत्वा किञ्चित्प्रार्थयते दिष्ट्या जनार्दनेति । पूर्वमपि भक्ताः परमापाततः त्वत्स्वरूपाज्ञानात् अद्य तु नोऽस्मा-भिरिह भवान् प्रतीतः अतो ज्ञाते कल्पतरौ अभिलषिते विलम्बो न युक्त इति प्रार्थनीय इति भावः । कथमेतावता काले न ज्ञातवान् कथमद्यैव ज्ञातवानित्याशङ्क्य हेतुद्वयमाह । दिष्ट्या जनार्दनेति । भाग्यमद्यैवोन्मुखं जनयतीति जनानामर्दयति इदानी-मेवाज्ञानं नाशितवान् प्रसन्नो हि स्वधर्मानाविष्करोति सेवक-धर्मोऽज्ञातो भाग्यं मोहनाशश्च प्रकाशितवानित्यर्थः । आगमने प्रसादो निरूपितः साधनान्तरं व्यावर्त्तयति । योगेश्वरैरपि दुरा-पगतिरिति । योगवशीकरणादिकं स्वसामर्थ्यं न हि नियताः स्वधर्माः अन्येन पोषयितुं शक्यन्ते दुःखेन प्राप्या गतिर्यस्येति भगवद्-भिप्रायापरिज्ञानमुक्तं स्वाधीनं हि मार्थित्वा वाहित्वसाधनीयं नदेकः भवानो भगवता दत्ता इति तावन्मात्रे वक्तव्यता भवति नान्यत्रेति सुष्ठूक्तम् अलौकिकेनापि सामर्थ्येन भवति इत्याह । सुरेश्वरिति । प्रार्थनामाह । छिन्ध्यादित्यति । सुतादिषु मोहरसनं छिन्धि यतस्त्वयैव सम्पादितमित्याह । भवदीयमाया-भिरिति । अन्ये छेदनं कारयन्ति । आश्विति । अत्यन्तदृ-ढमूले छिद्यमाने पुनरुद्गमः छेदके वैमनस्यं च भविष्य-तीति ॥ २७ ॥

भगवतो ह्ययं भावः शास्त्ररहस्यसिद्धः यो हि यादृशः स तादृश एव कर्त्तव्यः भक्तिवशात् अन्यथाकरणेऽयुक्तता भवतीति भक्तिमध्यस्त्रा ज्ञानं यथा शृङ्गारलीला गोप्यैव तथा ऽवतारलीला गोप्यैव तां यः प्रकटीकुर्यात् स नाभिप्रेत इति विपरीतं वदेत् यथा गोपिकागीतेन गोपिकास्त्यक्ताः तथायमपि लीलार्थमुत्पादितः स्वरूपापरिज्ञानात् वहिर्मुखतया ज्ञानिनमात्मानं मन्यमानः तत्प्रार्थयते । अतोऽस्य सर्वाण्येव वचनान्यसम्बद्धानि । अतस्तन्निवारणार्थं भगवान् मोहयितुं प्रवृत्त इत्याह । इत्यर्चित इति । पूर्वोक्तेन प्रकारेणार्चितः सम्यक् स्तुतश्च भक्तश्चायं तथापि भगवानीश्वरः सर्वदुःखहर्त्ता च भक्तश्चायम् । अत उभयमिभिप्रेत्य सस्मितं प्राह । स्मितो हि मन्दहासः अल्पमेव मोहितवान् । गीर्भिरपि सम्यक् मोहयन्निव जातः सम्यक्त्वं लीलौपयिकत्वेनान्यथा प्राकृते लीलामपि त्यजेत् ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

या वसतीः स एव त्वं प्रविष्टः यस्त्वं सर्ववेदादि-मूर्त्तिः ॥ २५ ॥

त्वदपरं त्वत्तोऽन्यम् ऋतगिरः सत्यवाक्यात् कंसं हत्वा त्वद्-गृहं यास्यामीति स्ववाक्यं सत्यं कृतमिति भावः । सुहृदः हित-कारिणः येन दासस्य हितं स्यात्तत् त्वमेव ज्ञात्वा करोषीत्यर्थः। कृतज्ञात् कादाचित्कमपि यत्किञ्चिदपि भक्तेन विस्मृतमपि त्वद्भ-जनं कृतं त्वं जानास्येवेत्यर्थः। यो भवान् सुहृदः शोभनान्तः-करणाय निस्कामायेत्यर्थः । भजते भजनं कुर्वते जनाय अभि-कामान् अभिवाञ्छितार्थान् सर्वानेव तेनाकामितानपि ददाति नच तावतोऽपि दत्त्वा निवर्त्तसे इत्याह । आत्मानं स्वमपि ददाति अत्र भवानित्यध्याहार्यं ननु स्वपर्यन्तदानं नाम महान-पचयस्तत्राह । यस्यहि तव उपचयापचयौ न स्तः । कोटि-ब्रह्माण्डवर्त्तिद्रव्येषु कोटिसङ्ख्यब्रह्मादिभिस्तुभ्यमुपहृतेष्वपि तव न कोऽप्युपचयः । त्वया स्वभक्ताय स्वपर्यन्तवस्तुजातप्रदानेऽपि न कोऽप्यपचयः । अतर्क्यानन्तशक्तित्वादिति भावः ॥ २६ ॥

नोऽस्माभिः प्रतीतः प्रत्यक्षीकृतः ॥ २७ ॥

सम्मोहयन् स्वैश्वर्यज्ञानं पुष्णन् । इवेति सम्यगलुप्त-मपि ॥ ॥२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे ईश ! अद्य नोऽस्माकं वसतयः गृहाः खलु निश्चितं भूरि-भागाः बहुभाग्यवत्यः यतः हे अधोक्षज ! यो भवान् जगद्गुरुः यस्य तव पादशौचसलिलं गङ्गादि त्रीणि जगन्ति त्रीन् लोकान् पुनाति यो भवान् सर्वदेवाः पितरश्च भूतानि च नृदेवाश्च मूर्तयो . विभूतयः सर्वदेवादिषु मूर्तिस्तदङ्गुष्ठपरिमिता यस्य स तथाभूतो वा "अङ्गुष्ठमात्रं पुरुषं मध्ये आत्मनि संस्थितं तं ज्ञात्वामृत्युमत्येति नान्यः पन्था विमुक्तये" इति श्रुतेः एवं भूतो यः सः साक्षात् त्वं याः वसतीः प्रविष्टोऽसि ॥ २५ ॥

ऋता सत्या न मे भक्तः प्रणश्यतीत्यादिर्गीर्वाग् यस्य तस्मात् त्वत्तः अपरमन्यं शरणं पण्डितः सन् कः समीयात् गच्छेत् न कोऽपीत्यर्थः । यतः भजतो ऽभिकामान् सर्वान् सम्पूर्णान् किं बहुना यस्योपचयापचयौ वृद्धिह्रासौ न स्तस्तमात्मानं देहमपि ददाति ॥ २६--२८ ॥

---

श्रीभगवानुवाच।

त्वं नो गुरुः पितृव्यश्च श्लाघ्यो बन्धुश्च नित्यदा।
वयं तु रक्ष्याः पोष्याश्च अनुकम्प्याः प्रजा हि वः॥ २६॥
भवद्विधा महाभागा निषेव्या अर्हसत्तमाः।
श्रेयस्कामैर्नृभिर्नित्यं देवाः स्वार्था न साधवः॥ ३०॥
नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः॥ ३१॥
स भवान् सुहृदां वै नः श्रेयान् श्रेयश्चिकीर्षया।
जिज्ञासार्थं पाण्डवानां गच्छस्व त्वं गजाह्वयम्॥ ३२॥

भाषा टीका।

हे ईश! आज हमारे घर सब पवित्र होगये और हम बडे भागवान् होगये जिनके घरों में कि जगत्के गुरु आपने प्रवेश किया है जो कि आप सर्व देवता पितर भूत राजा आदि के अंतर्यामी हो और जिन आपके चरणका प्रक्षालित जल तीनों लोकों को पवित्र करता है॥ २५॥

पंडित होकर ऐसा कौन है कि जो आपसे दूसरे के शरण जायगा आपतो भक्तों को बडा प्रिय मानते हौ और बडा आदर सत्य वाणी से बोलते हो सबके बडे सुहृद हौ और कृतज्ञ हौ आप अपने को भजने वाले सुहृदों को सब मनोरथ देते हौ और आत्माको भी देते हौ और आपके प्रभावकी कभी वृद्धि या हास भी नहीं होती है॥ २६॥

हे जनार्दन! आपकी गति तो योगेश्वरोंको भी बडी दुर्लभ है और देवताओं को भी दुर्लभ है हमको जो आप प्रघट भये हौ सो बडा मंगल है सो अब आप हमारी पुत्र भार्या धन बंधु घर देहादिकों की मोहरूपी बंधन डोरी है सो आपकी माया है इसको जल्दी छेदन करदो॥ २७॥

श्रीशुकदेवजी बोले इस प्रकार से भक्तिसे पूजित होने पर तथा स्तुति करने पर हरि भगवान् मंदहास से वचनों से मोहते सरीके अक्रूरजी से बोलते भये॥ २८॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

वो युष्माकं प्रजाः पुत्रा हि वयमिति॥ २९॥

ननु नृभिर्देवाः सेव्या इति प्रसिद्धं तत्राऽऽह। देवा इति। स्वार्थाः स्वकार्यसाधनपराः साधवस्तु केवलं परानुग्रहपराः परमार्थतस्तु साधव एव देवा इति त एव सेव्या इत्यर्थः॥ ३०॥

तर्हि मृच्छिलादिमयाः किं देवादयो नेत्यत आह। नहीति। अम्मयानि तीर्थानि मृन्मयाः शिलामयाश्च देवा न भवन्तीति न अपि तु भवन्त्येव तथाऽपि साधूनां तेषाञ्च महदन्तरमित्याह। ते पुनन्तीति॥ ३१॥

किञ्चिच्चिकीर्षयन्प्रागादिति यदुक्तं तत्कार्यमादिशति। स इति नः सुहृदां मध्ये भवान् श्रेष्ठोऽतः पाण्डवानां श्रेयश्चिकीर्षया गजाह्वयं गच्छस्व गच्छेति यद्वा स्वेति पृथक्पदम् हे स्व! आत्मीयेत्यर्थः॥ ३२॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नोऽस्माकमिति विनयेनात्मनः साधारण्यापादनार्थं श्रीबलदेवाद्यपेक्षया। गुरुरुपदेष्टा बन्धुश्च हिताचरणेन। तत्र श्लाघ्यः परमोत्तमत्वात् किञ्चास्य सर्वैरप्यनुपङ्गः। नित्यदेत्यस्य परेणान्वयः। नित्यमित्यर्थः। आपद्भ्यो रक्ष्याः भोजनादिना पोष्याः सदुपदेशादिनानुकम्प्याश्च हि यतो वः प्रजा वयम्॥ २९॥

अतो महत्तमत्वाच्च विशेषतोऽस्माकं त्वमेव सेव्य इत्याशयेनाह। भवद्विधा इति। किं पुनः साक्षाद्भवन्त इत्यर्थः। अतो देवेभ्योऽपि भवद्विधा महत्तमा इति भावः। नृभिर्नित्यं सम्यक्तनिरतं सेव्याः। अतो महाभागाः महान् भागः परमभागवतत्वप्राप्तिहेतुर्भागो भाग्यं येषां ते महत्तमा इत्यर्थः। अतोऽर्हत्तमाः सेवायोग्यतमा इत्यर्थः। पाठान्तरे अर्हन्ते इति अर्हाः पूज्याः तेषु सत्तमाः नृभिरिति प्रायो मनुष्याणामेव श्रेयःसाधकत्वात् अत्र च स्वस्यापि पितृव्यतयोक्त्या यादवतया मनुष्यतामननात् श्रेयस्कामैरिति बहुत्वेन मुक्तिभगवद्भक्तिपर्यन्तानि श्रेयांसि गृह्यन्ते अतो भगवद्भागवतव्यतिरिक्तानां देवजातीनां न तावती शक्तिः। स्वल्पफलदायकत्वेऽप्यस्ति दोषान्तरमित्याह। देवा इति। अतो देवेभ्योऽपि भवद्विधा देवत्वादिजातिनिरपेक्षतया महत्तमा इति साधवस्तितिक्षव इत्यारभ्य त एते साधवः साध्वीतिपर्यन्तेन लक्षिताः॥ ३०॥

अतो यदि देवाः साधारणाः केचित्तु साक्षाल्लभ्यन्ते तथापि न साम्यं साक्षात्तु दुर्लभा एव ततः प्रतिमारूपेण यत्र सेव्यन्ते तत्र तु तदपेक्षयातिनिकर्ष इति वक्तुं प्रसङ्गतस्तीर्थानामपि साधारणानां तमाह। नहीति। ते तत्तद्रूपतीर्थदेवाः एकशेषत्वेऽपि नपुंसकत्वाभाव आर्षः। पुनन्ति चित्तमलनः शोधयन्ति तद्दर्शनादेवेति प्रथमक्षणदर्शन एवेदं तुल्यते द्वितीयक्षणादौ तु नेति भावः॥ ३१॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतावता यद्विवक्षितं तदाह । स साधुत्वेनोक्तमाहात्म्यः विशेषतश्च नोऽस्माकं सुहृदो यादवास्तेषां मध्ये किम्वा सुहृदां ज्ञातीनां नो मध्ये वै प्रसिद्धौ श्रेयश्चिकीर्षया पाण्डवानां या विज्ञासा धृतराष्ट्राश्रये ते कथमवतिष्ठन्त इति पर्यालोचनं तदर्थम् ॥ ३२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्हत्तमाः उत्कृष्टतमाः देवा इन्द्रादयः स्वप्रयोजनपराः ननु साधवः ते परोपकारपराः ॥ ३०—३३ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह । त्वमिति सप्तभिः । त्वं नोऽस्माकं गुरुर्हितकृत पितृव्यः पितुर्भ्राता अनेन पूज्यत्वमुक्तं श्लाघ्यो बन्धुश्च ननु कंसादि वाभिन्द्यबन्धुर्नाप्युपेक्ष्यः अपि तु प्रशस्यबन्धुरनेनान्योऽन्यप्रीतिविषयत्वमुक्तं त्वमेवं विधः वयं तु रक्ष्यास्त्वयेति शेषः । गुरुत्वाद्धितोपदेशनाहिताद्रक्ष्याः पोष्याः पितृव्यत्वात् अनुकम्प्या मद्विषयकप्रीत्याश्रयत्वाद्दयनीयाः यो युष्माकं प्रजाः पुत्रा वयमित्यर्थः । अतो न वयं पूज्याः किन्तु त्वमेवेति भावः ॥ २९ ॥

न केवलमस्माकमेव यूयं पूज्या अपि तु सर्वेषामपीति सहेतुकमाह । भवद्विधा इति । भवादृशा भागवता अत एवार्हसत्तमाः उत्कृष्टतमाः अत एवात्मविशुद्धिरूपश्रेयस्कामैः सर्वैर्मानवैर्नित्यं संनिषेव्याः ॥ ३० ॥

नन्वेवमपि श्रेयस्कामैर्गङ्गादिपुण्यनदीजलानां मृच्छिलामयभगवत्प्रतिमानाम् एव निषेव्यतायाः पावित्र्यावहत्वादित्यत आह । नहीति । अम्मयानि जलमयानि गङ्गादीनि तीर्थानि न भवद्विधा इव पावनकराणि पुनन्तीत्यस्यानकर्षो वा न तथा पुनन्तीत्यर्थः । तथा मृच्छिलामया देवाः श्रीभगवत्प्रतिमाश्च न यथा भवद्विधाः पुनन्ति किं नु प्रकारान्तरेण पुनन्तीत्यर्थः । अभिप्रेतं वैषम्यं विशदयति । त इति । तानि च ते च पुंशेष आर्षः अम्मयानि देवाश्च उरुकालेन स्नानपानपरिचर्य्यादिसहचरितेन दीर्घेण कालेन पुनन्ति साधवो भवद्विधास्तु दर्शनादेव पुनन्ति अत्र केचिदेवं व्याचक्षते किं देवादयो न सेव्या एवेत्यत आह । नहीति । अम्मयानि तीर्थानि मृच्छिलामयाश्च देवा न भवन्ति न अपि तु भवन्त्येवेत्यर्थः । तथापि साधूनां तेषां च महदन्तरम् इत्याह । ते पुनन्तीति । तच्चिन्त्यं देवाः स्वार्था न साधव इत्यनेनैवासेव्यत्वस्योक्तत्वात् पुनरसेव्यत्वाशङ्कापरिहारयोरयुक्तत्वात्सेव्यस्यापादकपवित्रत्वापादकत्वतदभावयोरेव संशयोदयात् अत एव ते पुनन्त्युरुकालेनेति पवित्रताकरत्वतारतम्योक्तेः सङ्गच्छते किञ्च प्रवाणां चातीर्थत्वादेरप्राशङ्क्यां हि गङ्गत्वं प्रकृतमर्थं सूचयतीति न्यायेन तीर्थत्वदेवत्वस्थिरीकरणोपपत्तिः तदा ह्येवमाशङ्कनीयं तर्हि किमम्मयानि न तीर्थानि च मृच्छिलामयाः किं न देवा एवेति न च पूर्वग्रन्थादिदं शङ्क्येदिति अतो यथोक्त एवार्थः ॥ ३१ ॥

किञ्चिच्चिकीर्षया प्रागादिति यदुक्तं तत्कार्यमादिशति । स इति स उक्तविधो भवान् नोऽस्माकं ये सुहृदस्तेषां मध्ये श्रेयानतो नः श्रेयः कर्तुमिच्छया पाण्डवानां जिज्ञासार्थं सुखदुःखविचारार्थं हास्तिनापुरं गच्छ ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अर्हाणां पूज्यानां मध्ये श्रेष्ठाः देवाः स्वार्थाः स्वप्रयोजनरता आत्मार्चकेभ्यो ऽर्चनादितृप्तिलक्षणप्रयोजनं प्राप्य फलानां दातारः ननु सर्वसमा इत्यर्थः । साधवः सर्वतुल्याः न स्वार्थपरायणाः परार्थैकनिष्ठा इत्यर्थः । समा स्त्रीवत्सरे धातुसर्वतुल्येषु वाच्यवदिति यादवः ॥ ३० ॥

देवा अपि हि अम्मयादिशब्दवाच्या न भवन्ति तत्र सन्निहितत्वात् तासां देवशब्दवाच्यत्वमिति भावेनाह । नहीति । अम्मयानि जलमयानि तीर्थशब्दवाच्यानि न भवन्ति किन्तु तत्संहितानि दैवतानि किमत इति तत्राह । त इति । ते उरुकालेन कृतया सेवया ॥ ३१ ॥

पाण्डवानां वृत्तिजिज्ञासार्थं किञ्चिकीर्षयेत्यस्य विवरणमेतत् गजेन सम आह्वयो यस्य स तथा हास्तिनापुरमित्यर्थः ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रेयस्कामैरिति । बहुत्वेन मुक्तिभगवद्भक्तिपर्यन्तानि श्रेयांसि गृह्यन्ते अतो देवजातीनां न तावती शक्तिः स्वल्पफलदायकत्वे ऽप्यस्ति दोषान्तरमित्याह । देवा इति ॥ ३० ॥

अतो यदि देवाः सेवितुं साक्षाल्लभ्यन्ते तदापि न साम्यं साक्षात्तु दुर्लभा एव ततः प्रतिमारूपेण यत्सेव्यन्ते तत्र तु तदपेक्षया त्वतिनिकर्ष इति वक्तुं प्रसङ्गतस्तीर्थानामपि तमाह । नहीति । पुनन्ति चित्तमलतः शोधयन्ति ॥ ३१—३६ ॥

———

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

भगवान् लौकिकवैदिकविविधशास्त्रप्रकारेण तं मोहयन्नाह । त्वं नो गुरुरिति त्रिभिः । हितोपदेशगुरुः प्रायेण धनुषोऽभ्यासं तं कारितवानिति लक्ष्यते । अवश्यं केनचिल्लोकन्यायेन धनुःशिक्षणीयम् । अन्यद्वात्रार्थं गुरुर्नोक्तः भगवांश्च सत्यमेव वदतीत्यर्थादयं नो गुरुः न इति बलभद्रादीनामभिप्रायेण बालाभ्यासं कारयति पितृव्यः स्पष्टश्चकाराद्धितकारी न ह्यन्यः अन्यत्र क्वापि सतः स्वगृहे समानयति श्लाघ्यः महत्त्वेन प्रसिद्धः पितृव्यादीनां सापत्न्याभाववत् भ्रातृव्यत्वात् अन्यथा त्वाशङ्क्याह । बन्धुश्चेत्यिदेति । सर्वदा बन्धुकृत्यमेव करोति एवं चकारेण सहपञ्चधर्मास्तस्मिन्निरूपिताः ततोऽन्यथा पञ्चधर्मान् स्वास्मिन्निरूपयति । वयं त्विति । तुशब्दः पूर्वसम्बन्धेन तुल्यतां वारयति । गुरुस्तु रक्षकः भगवता साधनेषु दत्तेष्वपि बुद्ध्यभावे रक्षासम्भवाद्वयं रक्ष्याः पितरः पोषकाः पुत्राः पोष्याश्चकारान्न वयं भवद्धितकारिणः किन्तु भवन्त एव

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अर्थादयापात्रमित्युक्तं भवति । अनुकम्प्याः श्लाघ्या हि नानुकम्प्याः सर्वदा हिताचरणं पतिभिः कर्तव्यं यो युष्माकमिति वसुदेवादींस्तानङ्गीकृत्य निरूपयति । अन्यथा स्तुतित्वं ज्ञायेत ॥ २९ ॥

एवं लौकिकोत्कर्षमुक्त्वा प्रवृत्तिप्रकारेण वैदेहिकोत्कर्षमाह । भवद्विधा इति । यदि सर्वप्रकारेणोत्कृष्टास्ते सर्वैरुपास्याः । भवद्विधा इति । तेषामुत्कर्षो निरूपितो यावच्छास्त्रतत्रापि महाभागाः परमभाग्ययुक्ता इति तेषां मेपनिरूपिता तत्राप्यर्हत्तमाः उत्तमा ये उपकारकर्तारः सभृद्धाः सर्वे सम्प्रतिपन्नास्ते सर्वैरुपास्या इत्यर्थः । तत्रापि श्रेयस्कामैः अनेन स्वार्थमेवोपासनमुक्तं दृष्टार्थत्वं च निरूपितम् । नृभिरिति । मनुष्याधिकारो निरूपितः । तेनास्माकमिदमावश्यकमित्यर्थः । ननु शास्त्रे देवा एव सेव्या न त्वन्य इति चेत्तत्राह । देवाः स्वार्थाः स्वार्थ ह्यात्मैव हितं कुर्वन्ति । साधवस्तु नैवम् । अतो देवभजनापेक्षयापि साधुभजनमेवोत्तमं किञ्च निवृत्तिमार्गे तीर्थानि तीर्थस्थानानि तदपेक्षयाप्येत एव सेव्या इत्यर्थः ॥ ३० ॥

नह्यम्मयानि तीर्थानीति । तीर्थेषु स्नात्वा तदधिष्ठातृदेवतापूजनं कर्तव्यं तदा तीर्थं कृतं भवति तदुभयमप्यप्रयोजकमित्याह । नह्यम्मयानीति । तीर्थशब्देन जलाभिमानिनीदेवतोच्यते सा चिन्मयी देवता च चिदानन्दमयीत्येव शास्त्रमर्यादा अम्मयानि तु तीर्थानि न भवन्ति देवा अपि मृच्छिलामया न भवन्ति । स्थानस्य देवतापक्षे मृन्मयत्वं प्रतिमाया देवतात्वपक्षे तु शिलामयत्वमुभयमपि लोकप्रसिद्धं निवार्यते शास्त्रप्रामाण्यात् अन्यथा शास्त्रमनुवादकं सदप्रमाणं भवेत् किञ्च अत एव साधनोपदेष्टारः भक्तिप्रवर्तका वा दर्शनमात्रेणैव ज्ञानभक्त्योः साधितत्वात् फलतोऽप्युत्कर्षः ॥ ३१ ॥

एवं स्तुत्वा सम्मोहमुत्पाद्य स्वाभिलषितं करिष्यतीति अभिप्राय किञ्चिदाज्ञापयति । स भावनिति त्रिभिः । तेषु त्रिविधं हि कार्यं कर्तव्यं मोक्षः सम्पादनीयः भक्तिर्वा पाण्डवेषु राज्यं वा देयं शत्रवश्च मारणीया इति सः सर्वथोपकारकर्त्ता भवान् तत्रापि सुहृदां भगिनीभागिनेयानां वै निश्चयेनेति तेऽवश्यं पालनीया इति पुरुषस्य पितृवर्गो वा रक्षको भवति तत्रापि तत्र पितृवर्गो न तेषां रक्षकः पितुर्निवृत्तत्वादन्येषां प्रतिकूलत्वादिति वक्ष्यति अत एव वयमेव सुहृदः अस्माकं मध्ये त्वं च श्रेयान् अतः श्रेयश्चिकीर्षया हिताचरणार्थं गजेन समाहृतं हास्तिना पुरं गच्छ अनेन प्रसिद्धया तत्र गमनं न निन्दितं भवति गुप्तस्थानेषु न तिष्ठन्तीत्यर्थः ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रजाः पुत्रतुल्याः । एवं व्यवहारदृष्ट्या । त्वमस्माकमादरणीय एव परमार्थदृष्ट्या तु त्वं परमवैष्णवत्वात् पूज्य एवेत्याह । भवद्विधा इति । अर्हन्त इत्यर्हाः पूज्यास्तेषु सत्तमाः । ननु नृभिर्देवाः सेव्या इति प्रसिद्धिस्तत्राह । देवाः खलु स्वार्थाः स्वकार्यसाधनपराः । नतु तथा साधवः । ते तु परादुःखकातरा एवेति भावः ॥ २९ ॥ ३० ॥

अम्मयानि तीर्थानि नहोति शिरश्चालने नञ् अपि तु एवं देवा अपि तु भवन्त्येव एव देवा अपि किन्तु साधूनां तेभ्यो महदन्तरमित्याह । ते इति । एकशेषे पुंस्त्वमार्षं दर्शनादपि ॥ ३१ ॥

अतः पितृव्यत्वेनास्मत्प्रियंकरत्वात् साधुत्वेन परोपकारकत्वाच्च इदं त्वया कर्त्तव्यमित्याह । स इति । गच्छस्व गच्छ स्वेति सम्बोधनं वा ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यो युष्माकम् ॥ २९ ॥

देवाः स्वार्थाः स्वः स्वकीयः अर्थ एव येषां ननु परमात्मा इत्येवमर्थप्रियाः साधवस्तु नार्थप्रियाः किन्तु परमात्मप्रियाः ॥ ३० ॥

अम्मयानि तीर्थानि दर्शनान्न पुनन्ति मृच्छिलामया भूप्रदेशाः क्षेत्राणि च दर्शनान्न देवाश्च दर्शनान्न पुनन्ति किन्तु ते सर्वे उरुकालेन सेविताः पुनन्ति साधवस्तु दर्शनादेव भगवच्चरणस्पृष्टाः मृदादिप्रदेशाः अम्मयानि तीर्थानि चात्र प्रयोजनार्हाणि "धन्या अहो अमी आलयः गोविन्दाङ्घ्रिसरोजरेणवः यान् ब्रह्मेशो रमादेवी दधुर्मूर्ध्न्यघनुत्तये यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवो ऽभू"दित्याद्युक्तेः ॥ ३१ ॥

हे स्व । अक्रूर नः सुहृदां मध्ये भवान् श्रेयान् श्रेष्ठोऽतः पाण्डवानां श्रेयश्चिकीर्षया जिज्ञासार्थं तेषां रहस्यजिज्ञासार्थं च हास्तिनापुरं गच्छ ॥ ३२ ॥

---

भाषा टीका ।

श्रीभगवान् बोले हे अक्रूरजी आप सर्वदा हमारे गुरु हौ काका हौ बन्धु हौ सब प्रकार से श्लाघा करने योग्य हौ हम तो आप से रक्षित होने योग्य हैं और पोष्य हैं अनुकंपा योग्य हैं और आपके प्रजा हैं ॥ २९ ॥

आपके सरी के भागवत तो सेवित होने योग हैं श्रेष्ठ पुरुष हैं कल्याणार्थि पुरुषों के सदा सेव्य हैं देवता तो स्वार्थ साधक होते हैं साधु पुरुष ऐसे नहीं होते हैं ॥ ३० ॥

जल मय तीर्थ तथा मूर्ति मय देव तो भक्ति भाव साधन से फल देने वाले हैं अधिक दिन सेव्य हैं और साधु तो दर्शन मात्र ही से फल देने वाले हैं ॥ ३१ ॥

सो आप हम सुहृदों के श्रेष्ठ हौ हमारे कल्याण करने की इच्छा से पाडवों की व्यवस्था जानने के वास्ते हस्तिनापुर को जाओ ॥ ३२ ॥

पितर्युपरते बालाः सह मात्रा सुदुःखिताः ।
आनीताः स्वपुरं राज्ञा वसन्त इति शुश्रुम ॥ ३३ ॥
तेषु राजाम्बिकापुत्रो भ्रातृपुत्रेषु दीनधीः ।
समो न वर्तते नूनं दुष्पुत्रवशगोऽन्धदृक् ॥ ३४ ॥
गच्छ जानीहि तद्वृत्तमधुना साध्वसाधु वा ।
विज्ञाय तद्विधास्यामो यथा शं सुहृदां भवेत् ॥३५ ॥
इत्यक्रूरं समादिश्य भगवान् हरिरीश्वरः ।
सङ्कर्षणोद्धवाभ्यां वै ततः स्वभवनं ययौ ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
पूर्वार्धे अक्रूरगृहगमनं नाम
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

राज्ञा धृतराष्ट्रेण वसन्ते निवसन्ति शुश्रुम श्रुतवन्तो वयम् ॥ ३३ ॥

दुष्टा ये स्वपुत्राः दुर्योधनादयस्तद्वशेन गच्छतीति तथा यतोऽन्धदृगन्धनेत्रः ॥ ३४—३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जिज्ञास्यमेव सकारणं सप्रयोजनञ्चाह । पितरीति त्रिभिः । उपरते शान्ते इति तादृशादरणीयजनेष्वश्लीलवचनानर्हता ख्यापनाय बाला इत्यानयनसमयापेक्षया । राज्ञेत्यन्धस्यापि तस्याधुना दैवाद्राजत्वप्राप्तिश्च जातेति सूचितं शुश्रुमेति लौकिकलीलामाधुर्यं अग्रे नूनमिति च ॥ ३३ ॥

नूनं वितर्के समो न वर्तते तत् कुतः । अम्बिकापुत्रः पाण्डोर्वैमात्रेयत्वादित्यर्थः । तेनान्तरं दुष्पुत्रवशगः तत् कुतः दीनधीः क्षुद्रबुद्धिः तदपि कुतः । अन्धदृक् तदादीनां सामुद्रिके बहुदोषस्मरणात् । अधुनैव गच्छ तस्य राज्ञो वृत्तं साधु वा भवत्यसाधु वेति जानीहीत्यर्थः । तत्तथा । भगवान् समग्रैश्वर्यादिपूर्णोऽपि हरिः मनसैव दुष्टसंहारसमर्थोऽपि ईश्वरः सर्वनियन्तापि । इति पूर्वोक्तानुनयप्रकारेणैव सम्यक् पुरस्कारपूर्वकं आदिश्य ततोऽक्रूरगृहात् सङ्कर्षणोद्धवाभ्यां सहेति न त्वनुव्रजनार्थमक्रूरेणापीति तत्प्रस्थापनत्वरा दर्शिता स्वेति तस्मिन् भवने तदनन्तरं स्वेच्छामयविलासः सूचितः । वै सम्बोधने तत्र लीलामाधुर्यानुभववैशिष्ट्याय ॥ ३४—३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अम्बिकापुत्रः धृतराष्ट्रः अन्धदृक् अन्धः ॥ ३४—३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पितरि पाण्डावुपरते स्वर्गं गते सति बाला अत एवातिदुःखिताः राज्ञा धृतराष्ट्रेण स्वपुरं प्रत्यानीताः सन्तस्तत्राधुना वसन्तीति शुश्रुम ॥ ३३ ॥

अम्बिकापुत्रो धृतराष्ट्रः राजा भ्रातृपुत्रेषु युधिष्ठिरादिषु विषयभूतेषु दीना कृपणा धीर्यस्य तथाभूतः समो न वर्तते नूनं निश्चितं तत्र हेतुः दुष्पुत्रो दुर्योधनः तद्वशगः तत्रापि हेतुरन्धदृगन्धः ॥ ४४ ॥

अतस्त्वं गच्छ साध्वसाधु वा तेषां पाण्डवानां वृत्तं वर्तनमवस्थानमिति यावत् जानीहि तद्वृत्तं विज्ञाय ततः सुहृदां पाण्डवानां शं सुखं यथा भवेत्तथा विधास्यामः करिष्यामः ॥ ३५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । इत्थं समादिश्याज्ञाप्य ततः सङ्कर्षणोद्धवाभ्यां सह स्वगृहं गतवान् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शतशृङ्गगिरिनिवासिभिः ऋषिभिरानीता राज्ञा सह वसन्ते वसन्ति स्वमहिमानमाच्छाद्येति शेषः इत्यत आत्मनेपदम् ॥ ३३ ॥

तत्र हेतुरन्धदृगिति तत्त्वज्ञानशून्यत्वात् ॥ ३४ ॥

तद्विधास्यामः तथा करिष्यामः शं सुखम् ॥ ३५—३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् ।
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

का जिज्ञासेत्याकाङ्क्षायामाह । पितर्युपरत इति । पाण्डौ संस्थिते बाला एव ते च वध्वश्च मात्रा सह स्थिता इति स्तनन्धयप्राया इत्यवस्थाया दयापात्रत्वमुक्तम् । अतिदुःखिता इति दयायाः साधारणो हेतुः तदीयानां पालकत्वमस्ति नवेति वचनार्थं परिग्रहो निरूप्यते । आनीताः स्वपुरमिति । ते चेच्छत्रवः सुतरामेवानर्थपर्यवसायित्वं स्वस्थाने स्थापिता इति तत्रापि राज्ञा अनेन तेषां राजत्वाभावो निरूपितः ॥ ३३ ॥

किं च न केवलं ते वसन्ते किन्तु उपद्रुता इत्यपि शङ्का यतोऽयमम्बिकापुत्रः तेषु प्रसिद्धेष्वपि निष्ठुरेष्वपि भ्रातृपुत्रेषु विनीतेषु समो न वर्तते तत्र हेतुः दीना धीर्यस्येति बुद्धिस्तु दरिद्रो हि दुर्गतः सर्वमेव कर्तुं समर्थः निषिद्धं विहितं स्वदाकः आगन्तुकदोषमाह । दुष्पुत्रवशग इति । दुष्टः सहजः कलित्वात् दुर्योधनो हि कलेरवतार इति । अत एव कालस्य प्राबल्यात् तद्वशगः पुत्रत्वात् मोहेनापि तद्वशगो जातः स्वतो विचारसामर्थ्याभावायाह । अन्धदृगिति सद्विजात्यन्धः शब्देनैव व्यवहरति प्रियमेव शब्दं सर्वो मन्यते पुत्रशब्दश्च प्रियः ॥ ३४ ॥

तर्हि किं कर्तव्यमित्याकाङ्क्षायामाह । गच्छ जानीहीति । एकवचनेन सेनाद्यभावः सूचितः युद्धार्थं न गन्तव्यं किंत्वधुना तेषां साधुमङ्गलमस्ति असाध्यमङ्गलं वा अनिष्टमस्ति येनादरे नो भयं वा ज्ञानस्य कुतोपये.ग इत्याकाङ्क्षायामाह । विज्ञायेति । तदनुरूपम् विधास्यामः प्रकारजिज्ञासायामाह । यथा शमिति । सुहृदां बन्धूनां येनैव प्रकारेण शं भवेत् स एव प्रकारः कर्तव्य इत्येतत्सर्वं जिज्ञासानन्तरं कर्तव्यम् अन्यथा कृतं न सुखपर्यवसायि भवतीति अतो जिज्ञासार्थमेव गच्छ नत्वन्यत्किञ्चित्कर्तव्यमिति भावः । मोहितस्यायं गुणः यदधिकमपि करिष्यति अत एव धृतराष्ट्रोऽपि तेन निर्भर्त्सितः ॥ ३५ ॥

एतावतैव कार्यं भविष्यतीत्यभिप्राय भगवान् स्वगृहं गत इत्याह । इत्यक्रूरं समादिश्येति । आज्ञासिद्धौ भगवत्त्वं हेतुः आज्ञापने हरित्वं स्वत आगमने ईश्वरत्वं स्तुत्वा स्वापेक्षयाप्याधिक्यमुपपादयेदानीं च सेवकार्थं दूतत्वं च कारितवानितीश्वरचर्या संकर्षणोद्धवयोरन्यतरस्य वा गमनं भविष्यतीत्याशङ्क्याह । संकर्षणोद्धवाभ्यामिति । निर्गमन एव सह भावः स्वभवनगमने तु नायं निर्बन्ध इति ज्ञापयितुं तत इत्युक्तं तस्मात् स्थानात् तदनन्तरं वा कार्यान्तराद्युत्यर्थं स्वस्य भवनं ययौ प्रापणकथनेन मध्येऽपि कार्यान्तरं व्यावर्तितम् ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्
पञ्चचत्वारिंशाध्यायार्थविवरणम् ॥ ४५ ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

राज्ञा धृतराष्ट्रेण वसन्ते वसन्ति ॥ ३३—३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टचत्वारिंशकोऽयं दशमेऽजनि सङ्गतः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वपुरमानीताः शतशृङ्गाख्यपर्वतान्मुनिभिरिति शेषः राज्ञा धृतराष्ट्रेण गृहीताः इति शेषः । वसन्ते तत्रैव निवसन्तीति शुश्रुम श्रुतवन्तो वयमित्यर्थः । तेषां पर्वते जन्म तत्रैव पितुर्मृत्युः तत आगमनादिकमादिपर्वणि द्रष्टव्यम् ॥ ३३ ॥

दुष्पुत्राणां दुष्टानां दुर्योधनादिपुत्राणां वशेन गच्छतीति तथा ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टचत्वारिंशाध्यायार्थप्रकाशः ॥ ४८ ॥

---

भाषा टीका ।

पिता पांडुजी के चले जाने के पीछे माता के सहित पांचों युधिष्ठिरादिबालकों को धृतराष्ट्र राजा ले आया तिस पीछे वे उहां रहते हैं ऐसा सुनते हैं ॥ ३३ ॥

भाषा टीका ।

उनके ऊपर धृतराष्ट्र राजा भाइ के पुत्र होने परभी कुत्सित बुद्धि होने से खोटे पुत्र दुर्योधन के वश होने से समबुद्धि नहीं रखता है क्योंकि अंधा है ॥ ३४ ॥

आप जाकर भली या बुरी उसकी चालको जान कर आओ फिर जानकर उस उपाय को करेंगे जिससे सुहृदों का भला होगा ॥ ३५ ॥

हरि भगवान् ईश्वर इस प्रकार से अक्रूरजी को आज्ञा देकर बलदेवजी तथा उद्धवजी के सहित अपने गृहको जाते भये ॥ ३६ ॥

इति श्रीभागवत दशमस्कंध पूर्वार्धे

अठतालिस में अध्याय की

भाषा टीका समाप्त ॥ ४८ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः समाप्तः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ॥

---

श्रीशुक उवाच ।

स गत्वा हास्तिनपुरं पौरवेन्द्रयशोऽङ्कितम् ।
दद‍र्श तत्राम्बिकेयं सभीष्मं विदुरं पृथाम् ॥ १ ॥
सहपुत्रञ्च वाल्हीकं भारद्वाजं सगौतमम् ।
कर्णं सुयोधनं द्रौणिं पाण्डवान् सुहृदोऽपरान् ॥ २ ॥
यथावदुपसङ्गम्य बन्धुभिर्गान्दिनीसुतः ।
सम्पृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम् ॥ ३ ॥
उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया ।
दुष्प्रजस्याल्पसारस्य खलच्छन्दानुवर्तिनः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनपञ्चाशत्तमे तु गत्वाक्रूरोऽगजाह्वयम् ।
राज्ञः स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥

पौरवेन्द्राणां यशोभिस्तत्कृतदेवब्राह्मणायतनादिभिरङ्कितम् ॥१॥

बाह्लीकपुत्रः सोमदत्तः भारद्वाजो द्रोणः गौतमः कृपः ॥ २॥

अव्ययं कुशलम् ॥ ३ ॥

दुष्प्रजस्यासत्पुत्रस्याल्पसारस्य मन्दधृतेः खलानां कर्णादीनां छन्दमिच्छामनुवर्तितुं शीलं यस्येति तथा तस्य ॥ ४॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स गत्वेति युग्मकम् । प्रथमं राज्ञो दर्शनयोग्यं ततः कुलश्रेष्ठत्वात् श्रीभीष्मस्य तद्दिने तु तयोरेकत्र स्थितिरासीदिति समीष्मभित्युक्तं ततः आत्मीयत्वात् श्रीविदुरस्य ततस्तत्सङ्गेन स्वभगिन्याः पृथायाः ॥ १ ॥

ततः कुलवृद्धत्वाद्बाह्लीकस्य ततः पाण्डवान्वेषणे तदुपाध्यायस्य भारद्वाजस्य ततस्तत्सहचारित्वेन गौतमस्य ततः सहाध्यायित्वेन कर्णादीनां सर्वेषामेव । बालकानामिति तथा पाठक्रमः तत्र पाण्डवानां पश्चाद्भावः स्वस्य मध्यस्थख्यापनेन धर्मोपदेशाय पश्चान्मिलनात् प्रथमश्चशब्दोऽनुक्तसमुच्चये सर्वत्र योज्यः द्वितीयस्तुप्त्यर्थं ब्राह्मणस्यापि भरद्वाजस्य क्षत्रियमध्यपातात् सगौतममिति क्वचित् पाठः अपरान् शकुन्यादीन् ॥ २ ॥

यथावद्वृद्धादीन् प्रणामादिना उपसङ्गम्य स्नेहाधिक्येन मिलित्वा सुहृदां यादवानां वार्त्तां सम्यक् यथाविख्यातिख्यपूर्वकं सस्नेहं पृष्टः ॥ ३ ॥

कतिचिन्मासानिति । बहुदिनवासात्तस्य कौटिल्यातिशयो व्यञ्जितः वृत्तमेव कारणद्वारा सूचयति । दुष्प्रजस्येति ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वृत्तविवित्सया वृत्तं वेदितुमिच्छया ॥ १-५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथैवं प्रेषितोऽक्रूरः सम्यग्ज्ञातसुहृद्वृत्तान्तः पुनरागतः तद्भगवते न्यवेदयदित्याहैकोनपञ्चाशत्तमेन । स गत्वेत्यादिना । सोऽक्रूरः कौरवेन्द्राणां कुरुवंशोद्भवानां यशोभिः यशः सूचकदेवब्राह्मणाद्यायतनादिभिरङ्कितं हास्तिनपुरं गत्वा तत्र भीष्मेण सहितमाम्बिकेयं धृतराष्ट्रं विदुरादींश्च ददर्शेति द्वयोरेव संबन्धः तत्र पृथा कुन्ती ॥ १ ॥

बाह्लीकपुत्रः सोमदत्तः गौतमः कृपाचार्यः भारद्वाजो द्रोणः द्रौणिर्द्रोणपुत्रोऽश्वत्थामा अपरान् सुहृदः ज्ञातीन् इत्यर्थः ॥ २ ॥

यथावदिति । गान्दिनीसुतोऽक्रूरः यथायोग्यम्बन्धुभिः सह युधिष्ठिरादिभिः साकं समुपेत्य तैर्बन्धुभिः सह समेत्य सम्पृष्टस्वकुशलः स्वयमपि सुहृदामव्ययं कुशलं पप्रच्छ ॥ ३ ॥

किञ्च उवासेति । ततो राज्ञो धृतराष्ट्रस्य वृत्तपरिशीलनार्थं कतिचिन्मासानुषितवान् कथम्भूतस्य राज्ञः दुष्टाः प्रजाः दुर्यो-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

धनादयः पुत्रा यस्य प्रसिजभाव आर्पः अल्पसारस्य मन्दः सारो धृतिर्यस्य अत एव खलान् कर्णादीननुवर्त्तितुं शीलमस्येति तथा तस्य ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

योग्यानां भगवति हरौ स्वत एव भक्तिः प्रकाशयत इति व्यनक्त्यस्मिन्नध्याये तत्रादावक्रूरस्य धृतराष्ट्रादिदर्शनं वक्ति। स गत्वेति ॥ १ ॥

बाह्लीकं कुरुवंशे कञ्चनवृद्धं राजानं शन्तनोर्भ्रातरं भारद्वाजं भरद्वाजस्यापत्यं द्रोणं सगौतमं सकृपम् ॥ २ ॥

तैर्भीष्मादिभिः सुहृद्वार्त्तां प्रति सम्पृष्टः अभूदिति शेषः अक्रूरः स्वयं च तेषामव्ययमनामयं पृष्टवान् ॥ ३ ॥

वृत्तविवित्सया स्वपुत्रेषु वृत्तं वर्तनं समं विषमं चेति ज्ञातुमिच्छया अल्पमन्याय्यं सारं यस्य स तथा तस्य तत्र हेतुः खलच्छन्दानुवर्तिन इति खलानां पुत्राणां छन्दमिच्छामनुवर्तितुं शीलमस्यास्तीति तस्य ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

जगदीश्वरमपि कृष्णं स्वजनं निजबन्धुतयानुस्मृत्य १—३१ ॥

---

श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी।

षट्चत्वारिंशके ऽध्याये सात्त्विकानां निरूप्यते।
सान्त्वनं चान्यमुखतो निरोधो महाधिकारतः ॥
भगवत्प्रेपितोऽक्रूरः कृत्वा सान्त्वनपूर्वतः।
ज्ञानेन तत्प्रतीकारं मत्वा तथोक्तवान् स्वयम् ॥
पाण्डवैर्ज्ञापिताशेषं विचारे कुशलो यतः।
अतः स्थित्वा गतिं बुद्ध्वा स्वशक्तिं ज्ञातवांस्ततः ॥

अन्यथा भगवत्कार्यं निराशो न भविष्यति। प्रथमं भगवत्कार्यं कृतवानित्याह। स गत्वेति षड्भिः। स अक्रूरः स्वतो भगवदाज्ञया च विशिष्टो हस्तिनपुरं हस्तिन् शब्दादपि रूढत्वाभावाय तेन निर्मितमिति ज्ञापनार्थं बहुलेन गन्तव्यं तथापि स्वभावत उत्तममित्याह। पौरवेन्द्रश्रियोऽङ्कितमिति। पौरवेन्द्राणां श्रिया अङ्कितमिति मुख्यत्वात् प्रथमतो राजदर्शनम् आम्बिकायाः पुत्रो धृतराष्ट्रः धृतं राष्ट्रं येनेति व्युत्पत्तिः सम्भविष्यतीति तन्निषेधार्थं मातृनाम्ना व्यपदिष्टः राजस्थान एव भीष्मं दृष्टवान् विदुरं पृथामिति ज्ञापको ज्ञाप्यश्च निरूपितः ॥ १ ॥

सहपुत्रमिति। बाह्लीकः शन्तनोर्भ्राता। तत्पुत्रा भूरिश्रवादयः भरद्वाजो द्रोणः गौतमः कृपः कर्णदुर्योधनाश्वत्थामानः। एते महारथाः गणिताः षट्सहपुत्रत्वेन ससहाया अपि गणिताः ततोऽग्रे तेषां निवारणसमर्था इति ज्ञापयितुं पाण्डवाः गणिताः लोकन्यायेन सर्वबन्धुप्रियकृदिति ज्ञापयितुं सुहृदः अपरांश्च दृष्टवानित्युक्तम् ॥ २ ॥

यथावदिति। ततो यथायोग्यं नमस्कारादिप्रकारेणोपगमनम् अस्यापि माहात्म्यं मातृपुरमाह्तैः मधुरास्थवार्त्ता सम्यक् पृष्टः वसन् स्वयं च तेषामव्ययमपृच्छत चकारेण वार्त्तां समागतैश्चाव्ययमिति व्ययोऽत्र कस्यचित्परित्यागः अव्ययं यथा भवति तथा सर्वानेव पृष्टवान् आपाततो वृत्तान्तज्ञानं न भवतीति स्वतो ज्ञानार्थं स्थितवान् वर्त्तमानस्यैव ज्ञानं भवतीति ज्ञानं श्रुतवान भविष्यज्ज्ञानार्थं प्रबोधितवानिति संग्रहः ॥ ३ ॥

तत्र प्रथमं स्थितिमाह । उवासेति। कतिचिन्मासानिति निरन्तरं यावत्तत्परिज्ञानं भवति मासत्रयं स्थितवानिति लक्ष्यते मासे हि नूतना दिवसा आवर्त्तन्ते त्रयो हि पदार्था ज्ञातव्याः धृतराष्ट्रकाः स्वदोषाः पुत्रादिमोहकृता दोषाः संसर्गदोषाश्चेति एते नैमित्तिका अपि भवन्तीति मासपर्यन्तं निरन्तरपरिज्ञानार्थं स्थितिः निरन्तरं परिज्ञाने त्रयाणां संश्लेषेण गुणदोषव्यवस्थापकानां प्रत्येकं व्यभिचारात् परिज्ञानं न भवतीति एकैकस्य परिज्ञानार्थं तदीयगुणदोषनिर्द्धारार्थं मासपर्यन्तं स्थितिः एवं दोषत्रये मासत्रयमिति शीघ्रापरिज्ञाने राजत्वं हेतुः राजमन्त्रं गूढं भवतीति दोषानाह। दुष्टाः प्रजाः पुत्रा अल्पः सारो विवेकधैर्यादिकं यस्य खलाः शकुनिप्रभृतयः तेषां छन्दो वृत्तं तदनुवर्त्तनशीलश्च ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

ऊनपञ्चाशत्तमेऽगादक्रूरो हस्तिनापुरम्।
भ्रातुष्पुत्रेषु वैषम्यं राज्ञो ज्ञात्वागमत्ततः ॥

पौरवेन्द्राणां यशोभिर्यशोद्योतकैस्तत्कृतदेवब्राह्मणायतनादिभिरङ्कितम् आम्बिकेयं धृतराष्ट्रं सहपुत्रं सोमदत्तसहितं भारद्वाजं द्रोणं गौतमं कृपम् ॥ १ ॥ २ ॥

अव्ययं कुशलम् ॥ ३ ॥

खलानां कर्णादीनां छन्दमिच्छामनुवर्तितुं शीलं यस्य तथा तस्य ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एकोनपञ्चाशत्तमेऽक्रूरो हस्तिनपुरं गत्वा सुहृद्वृत्तान्तं ज्ञात्वा श्रीमथुरां पुनः प्राप्य तद्वृत्तान्तं श्रीरामकृष्णाभ्यां न्यवेदयदित्याह। स गत्वेति। पौरवेन्द्राणां पुरुवंश्यानां नरेन्द्राणां यशोभिः यशःसूचकैस्तद्देवायतनादिभिरङ्कितम् आम्बिकेयं धृतराष्ट्रम् ॥ १ ॥ पुत्रेण सोमदत्तेन सहितम् गौतमेन कृपेण सहितं भारद्वाजं द्रोणम् अपरान् भूरिश्रवःप्रभृतीन् ॥ २ ॥

अव्ययं कुशलम् ॥ ३ ॥

दुष्टाः प्रजाः दुर्योधनदुःशासनाद्याः यस्य तस्य अल्पसारस्य स्वल्पधर्मरुचेः खलानां शकुनीकर्णादीनां छन्दमिच्छामनुवर्तितुं शीलमस्येति ॥ ४ ॥

---

तेज ओजो बलं वीर्यं प्रश्रयादींश्च सद्गुणान् ।
प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम् ॥ ५ ॥
कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम् ।
आचख्यौ सर्वमेवास्मै पृथा विदुर एव च ॥ ६ ॥
पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम् ।
उवाच जन्मनिलयं स्मरन्त्यश्रुकलेक्षणा ॥ ७ ॥
अपि स्मरन्ति नः सौम्य ! पितरौ भ्रातरश्च मे ।
भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च ॥ ८ ॥

भाषा टीका।

श्रीशुकदेवजी बोले अक्रूरजीने हस्तिनापुर में जाकर देखा तो वह पुर कौरव राजोंकी संपत्ति से भरा है उहां पर उनने धृतराष्ट्र को भीष्म विदुर कुन्ती इन सबों को देखा ॥ १ ॥

सोमदत्तपुत्र के सहित बाल्हीक राजाको द्रोणको कृपाचार्यको कर्णको सुयोधनको अश्वत्थामाको पांडवों को तथा और भी सुहृदों को देखा ॥ २ ॥

गांदिनी के पुत्र अक्रूरजी मर्यादा पूर्वक सबके साथ मिले उन सबों ने उनसे सुहृदों की बातें पूछीं फिर आपभी सबका कुशल पूछते भये ॥ ३ ॥

फिर राजाके वृत्तांत को जानने के वास्ते कई एक महिना वहां पर निवास करते भये जो कि राजा खोटे पुत्र वाला है थोडी बुद्धि वाला है खलों के मत में चलता है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तेजः प्रभावः ओजः शस्त्रादिनैपुणं वीर्यं शौर्यम न सहद्भिरसहमानैः चिकीर्षितमित उपरि कर्तुमिष्टम् ॥ ५ ॥

गरस्य विषस्य दानादि अपेशलमन्याय्यम् तेज ओजइत्यादि सर्वं कथयामास ॥ ६ ॥

तत्कथनात्पूर्वतरं पृथाया वृत्तमाह । पृथा त्विति । अश्रूणां कला लेशा ययोस्ते ईक्षणे यस्याः सा ॥ ७ ॥

अपि किम् जामयः कुलस्त्रियः ॥ ८ ॥

---

श्रीजीवगोस्वामिकृतवैष्णवतोषिणी।

तेज इति युग्मकम् । आदिशब्दाल्लज्जाधैर्यादयः गरस्य दानं श्रीभीमाय आदिशब्दाज्जलनिक्षेपादि कृतं चिकीर्षितं तु लाक्षागृहादि ॥ ५ ॥

किंपुन पृथा यतः पितृष्वस्रेन उभयत्र समो विदुर एव सोऽपीत्यर्थः । अन्यैस्तः तत्र तेज ओज इत्यादिकमिति सर्वमित्यस्यैव व्याख्या ॥ ६ ॥

श्रीभगवद्भक्तिविशेषेण कुन्त्या वृत्तं निचार्याह । पृथेति । अत एवान्यतो विशेषायतुशब्दः प्राप्तं समृद्धं समागतं सन्तं तं श्रीभगवद्भक्तवरत्वेन ख्यातम् अश्रूणि कलयतः निरन्तरं मुञ्चत इत्यश्रुकले ईक्षणे यस्याः सा ॥ ७ ॥

नोऽस्मानिति पुत्राद्यपेक्षया सौम्य ! हे शान्तप्रकृते इति भयाद्यां बन्धुवात्सल्यसाधुत्वादिति भावः । पितरौ शूरतत्पत्न्यौ जामयः श्रीदेवक्यादयः सख्यः समशीला अन्याः ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तेज इत्यादि । पार्थेषु प्रजानामनुरागं येषां तेजआदिगुणास्तानसहमानैर्धार्तराष्ट्रैर्दुर्योधनादिभिर्यत्कृतं विषप्रदानादिकमपेशलं कठिनं दुष्टं कर्म यच्च चिकीर्षितमग्रे करणीयं तत्सर्वमस्मै अक्रूराय पृथा विदुरश्चाचख्यौ इति द्वयोरेकान्वयः तत्र तेजः पराभिभवसामर्थ्यम् ओजः परैरनभिभूतत्वं बलं शारीरं धातुर्यं च वीर्यं शौर्यं तच्च युद्धे स्वगृहे इव प्रवेशसामर्थ्यम् ॥ ५ ॥ ६ ॥

तत्र पृथाया विशेषमाह । पृथा त्विति । तत्र पृथा तु तदाख्यानात् पूर्वमेव समागतं भ्रातरमक्रूरमुपसृत्य समुपेत्य जन्मनिलयं जन्मभवनं स्मरन्ती अश्रूणां कला लेशा ययोस्ते ईक्षणे यस्याः सा तमक्रूरं प्रत्युवाच ॥ ७ ॥

उक्तिमेवाह । अपीति षड्भिः । हे सौम्य ! अक्रूर मे पित्रादयः नोऽस्मान्स्मन्त्यपि स्मरन्ति किम् तत्र जामयः कुलस्त्रियः सख्यः सहचर्य्यः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तेजो ज्योतिर्लक्षणा दीप्तिः ओजः पराभिभवलक्षणं सामर्थ्यं बलं शारीरं रूपं वा वीर्यं पराक्रमः ॥ ५ ॥ ६ ॥

जन्मनिलयं जन्मगृहम् ॥ ७ ॥

जामयः भ्रातृवर्गभार्याः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्कृतं समीचीनं मन्यत इत्यर्थपूजार्थपरिज्ञानमाह । तेज इति द्वाभ्याम् । तेजः कान्तिः ओज इन्द्रियशक्तिः बलं देहस्य वीर्यं पराक्रमः वीररसाभिनिवेशकृत् एते क्षत्रियोत्कृष्टत्वप्रतिपादकधर्माः

आत्रेयो भगवान् कृष्णः शरण्यो भक्तवत्सलः ।
पैतृष्वस्रेयान् स्मरति रामश्चाम्बुरुहेक्षणः ॥ ९ ॥
सपत्नमध्ये शोचन्तीं वृकाणां हरिणीमिव ।
सान्त्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान् ॥ १० ॥
कृष्ण ! कृष्ण ! महायोगिन् ! विश्वात्मन् विश्वभावन ! ।
प्रपन्नां पाहि गोविन्द ! शिशुभिश्चावसीदतीम् ॥ ११ ॥
नान्यत्तव पदाम्भोजात् पश्यामि शरणं नृणाम् ।
बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात् ॥ १२ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सद्गुणानाह । प्रश्रयादीनिति । विनयादयो हि सात्त्विकधर्मास्तेन स्वभावतस्ते जीवा उद्धर्तव्या इत्युक्तं दोषे हेत्वन्तरमप्याह । पार्थेषु युधिष्ठिरादिषु प्रजानुरागं च द्वेषा हि मात्सर्यमुत्पन्नं त्रिदोषात्मकं सत् अचिकित्स्यमिति तत्कृतं फलमाह । न सहद्भिश्चिकीर्षितमिति ॥ ५ ॥

सर्वथा मारणं कृतं तु गरदानं भीमाय विषमोदकाः प्रदत्ता इति स च पातालं गत्वा समागत इति च अतिशब्देन बहुधा भीममारणार्थमुद्यमोऽपि प्रदर्शितः अपेशलमसुन्दरं कदाचिदपमानादिकमपि कृतमिति वृत्तान्तसहितमेतत्सर्वं पृथा विदुरश्च स्वकीयसाधारणश्च सर्वमेवाचाख्यौ एकेन स्वरूपज्ञानमपरेण भावमिति चकाराल्लोकमुक्ततोऽप्येवं भूतार्थपरिज्ञाने भगवदीयत्वं हरेरिति ॥ ६ ॥

पृथाया भगवदीयत्वनिरूपणार्थं भगवति तस्यानवधानभावमाह । पृथा त्विति । यद्यप्येषा कुन्तिभोजाय दत्ता तथाप्युत्पन्ना शूरादेवेति पितृगृहं वसुदेवादयः एव भवन्ति वसुदेवो भ्रातृत्वमपि भ्राता तुशब्दः तज्ज्ञानाभिन्नप्रक्रमार्थं प्राप्तमिति तस्याऽलभ्यलाभो दर्शितः उपसृत्येति आचख्यौ सर्वमेवास्मै पृथेत्युक्तं वस्तुतस्तु पूर्वमेव समागमादनन्तरमेव भगवति भावः अत एव तुशब्दप्राप्ताशब्दौ उपसृत्य समीपं समागत्य तं पर्यनुयुञ्जाना जन्मनिलयं जन्मगृहं पितृकुलमिति यावत् तत्स्मरन्ती लोकवदश्रुकलेक्षणा जाता एतत्कायिकं मानसिकं च निरूपितम् ॥ ७ ॥

वाचनिकं निरूपयति । अपि स्मरन्तीति । सौम्येति सम्यक् कथनार्थं सम्बोधनं नोऽस्मान् पाण्डवान् अपीति सम्भावनायां यतः पितरौ यतो भ्रातरः पित्रोर्वृद्धत्वेनाप्रयोजकता शङ्कयेनेति भ्रातृग्रहणं स इति स्वस्य प्रियत्वं सूचितं यद्यपि भगिन्योऽप्यत्र सन्ति तथापि पितृगृहं समायान्तीति तेषां स्मरणज्ञानसम्भावनया अन्यस्मै दत्तेति शङ्कया कदाचिदस्मरणं तथा सति न निस्तार इति भावः । स्मरणे स्वाभजनसम्पत्तिः सिद्ध्यति न तथा दुःखं भवति भ्रातृपुत्राः वसुदेववसुदेवादिपुत्राः चकाराद्भगिनीपुत्राश्च जामयः कुलस्त्रियः पितृवंशस्थिताः देवकीप्रभृतयः सख्यः स्वस्य तासां स्मरणमावश्यकमिति सर्वाश्च ताः सख्य एव चकारात् बालकाश्च सम्पूर्णवंशस्य ममत्वेन दुःखमिति भावः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तेजः प्रभावः ओजः शास्त्रादिनैपुण्यं वीर्यं शौर्यम् अपेशलमन्याय्यम् ॥ ५ ॥ ६ ॥

तत्कथनात् पूर्वतरं पृथावृत्तमाह । पृथा त्विति ॥ ७ ॥

यामयः कुलस्त्रियः ॥ ८ ॥ ९ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथा पुत्रेषु प्रजायाः पौरजानपदजनतायाः अनुरागम् पार्थानां तेजआदिसद्गुणांश्च न सहद्भिः असहमानैर्धार्तराष्ट्रैर्दुर्योधनादिभिर्यदपेशलं कठिनं विषदानादि कृतं यच्च चिकीर्षितमत उपरि कर्तुमिष्टं तत्सर्वम् अस्मै अक्रूराय पृथा विदुरश्च आचख्यौ इति द्वयोरन्वयः एवकारस्तेषां दुष्टान दुर्मन्त्रितं प्रायो ऽन्यो न ज्ञातवानिति सूचयति ॥ ५ ॥ ६ ॥

कृतचिकीर्षिततत्कर्मकथनात् पूर्वमक्रूरं समुपेत्य पृथया यदुक्तं तद्वर्णयति । पृथेति सप्तभिः । उपसृत्य समुपेत्य जन्मनिलयं जन्मभूमिं स्मरन्ती अश्रूणां कला लेशाः ययोस्ते ईक्षणे यस्याः सा तमक्रूरमुवाच ॥ ७ ॥

जामयः कुलस्त्रियः ॥ ८ ॥

### भाषा टीका ।

और पांडवों के प्रभाव शस्त्रादि बल शरीरबल शूरता इनको आदि लेकर जो सद्गुण हैं तथा प्रजाओं में जो अनुराग है तिसको नहीं सहने वाले धृतराष्ट्र के पुत्रोंने विषदानादिक जो अयुक्तकार्य किये हैं इन सब बातोंको अक्रूरजी से कुंती तथा विदुरजी कहते भये ॥ ५ ॥ ६ ॥

कुंतीजी तो अक्रूर भाइको आये हुये देख उनके पास जाकर जन्म भूमिको स्मरण करके नेत्रों में आंशु लाकर वचन बोलती भई ॥ ७ ॥

हे सौम्य ! अक्रूरजी मेरे पिता माता भाइ बहिन भाइके पुत्र और कुलस्त्री सखी ये सब भी मेरी कभी याद करते हैं कि नहीं ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पैतृष्वस्रेयान्मत्पुत्रान् ॥ ९ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शोचन्तीं मां वाक्यैः सान्त्वयिष्यति किम् ॥ १० ॥

हे महायोगिन् ! महान् योग उपायो मायाख्योऽस्यास्तीति हे विश्वात्मन् ! सर्वान्तर्यामिन् हे विश्वभावन ! विश्वपालक प्रपन्नां शरणागताम् अवसीदन्तीं क्लिश्यन्तीम् ॥ ११ ॥

आपवर्गिकान्मोक्षप्रदात् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्रैव विशेषतः पुनः पृच्छति । भ्रात्रेय इति । तादृशप्रश्ने निजयोग्यतोक्ता न चासौ मम भ्रात्रेयोऽन्यसाधारणः किन्तु भगवान् तत्र शरण्यः रक्षितृवाचकेन शरणशब्देनात्र तद्धर्मो लक्ष्यते ततश्च तत्र साधुरित्यर्थः । सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दमितिवत् तत्र प्रवृत्तौ हेतुः भक्तवत्सलः अत एव सम्भावयामीत्याह । स्मरति किमिति शेषः पैतृष्वस्रेयानिति स्नेहविशेषपात्रत्वेन स्मरणीयविशेषतां बोधयति अम्बुजेक्षण इति परमसौन्दर्यम् एवं दिदृक्षया तस्मिन् निजसहभ्रातृवात्सल्यमपि ततः करिष्यमाणा निजरक्षाप्रार्थनापि तद्विलास एव ज्ञेयः ननु कामनामात्रेण विपदः सन्तु ताः शश्वदित्याद्युक्तेः विशेषणान्येतानि द्वयोरेव योग्यत्वात् रामस्य पश्चान्निर्देशस्तदनुगत्येव तच्छ्राघात् ॥ ९ ॥

ननु स्मरन्नेव मामत्र प्राहिणोदित्याशङ्क्याह । सपत्नेति । अनेनात्मनः परमार्त्तत्वं व्यञ्जितं वाक्यैः प्रियवचनैः पूर्ववत्सङ्कचनशुश्रूषया ॥ १० ॥

ननु तत्रत्येषु खेषु निजकृत्यं समाधायाचिरादागतः सान्त्वयिष्यत्येवेति चेत् अन्तरा यावत् तद्दर्शनामृतं लभेमहि तावत्तत्र स्थितोऽप्यसावस्माकं प्राणरक्षां कुर्यादिति परमसामर्थ्यं निरूपयन्ती परमार्त्या साक्षादिव तमेव सम्बोध्य त्रिभिः सकरुणं वदन्ती प्रागुपसन्नापद्रक्षां प्रार्थयते कृष्णेति पूर्वं मुख्यनाम्ना संबोधनं तत्र वीप्सया झटित्याभिमुख्याय तत्र तादृशसामर्थ्यव्यञ्जकं सम्बोधनं महायोगिन् हे परमोपायसामर्थ्ययुक्तेति नच त्वयि विज्ञापनापेक्षास्ति सर्वज्ञानादिप्रवर्त्तकत्वादित्याह । विश्वात्मन्निति । नच ज्ञात्वापि कथञ्चिदुदासते जगत्पालकत्वादित्याह । विश्वभावनेति । तत्र च प्रपन्नवात्सल्यं दर्शयति । गोविन्द हे गोवर्द्धनोद्धारण प्रकाशिततन्नामन्निति नच तत्र विलम्बः कार्य इत्याह । शिशुभिः सह शत्रुसङ्कटे निरन्तरं दुःखं प्राप्नुवन्तीमिति ॥ ११ ॥

नचैतदर्थमन्यः प्रार्थनीयः यतः सर्वदुःखमूलान् संसारादपि सर्वेषामपि त्वच्छरणमेव निस्तारकमिति मम निश्चय इत्याह । नेति । अन्यब्रह्मज्ञानादपि येऽन्येऽरविन्दाक्ष इत्याद्युक्तेः नृणां जीवानां मृत्युसंसारान् अनादिमृत्युपरम्पराप्राप्तेः नान्यत् पश्यामीत्यत्र हेतुमाह । ईश्वरस्येति । मदीयं महिमानञ्च परं ब्रह्मेति शब्दितं वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदीत्यष्टमस्कन्धस्थश्रीमत्स्यदेववचनानुसारेण यो मामव्यभिचारेण भक्तियोगेन सेवते स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाहममृतस्य श्रीमद्भगवद्गीतानुसारेण च प्रसिद्धमर्द्धनार्यस्य-

त्यर्थः । अत एवापवर्गिकात् नच तैर्व्याख्यातं यद्बेश्वरस्य महादेवस्यापि वृकासुरादिभयविविधभयतो मोक्षप्रदात् ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भ्रात्रेय इति । देहसम्बन्धेनाप्यात्मनां रक्षत्वख्यापनाय भ्रात्रेय इत्युक्तिः भ्रातुर्वसुदेवस्य पुत्रो भ्रात्रेयः शरणमुपायतामर्हतीति शरण्यः अनेन सम्बन्धाधिक्यमनादृत्य शरणागतरक्षाशीलत्वमुक्तम् तदुपयुक्तगुणपूर्त्तिरुच्यते । भगवानिति । शरणागतानपि कदाचिद्दोषाविष्करणेन न रक्षेदित्याशङ्कां निराकुर्वन् व्याचष्टे । भक्तवत्सल इति । भक्तेषु दोषादर्शी पितृष्वसुः पितृभगिन्याः ममापत्यरूपान् युधिष्ठिरादीन् स्मरति अपीति कोऽपोऽनुपन्ना वा स्मरति किमित्यर्थः । तथाम्बुजवदीक्षणे यस्य स रामोऽपि स्मरति किम् तदीक्षणप्रसादमात्रेणैव निस्तापा वयं भविष्याम इत्यभिप्रायेण तदीक्षणयोरम्बुजोपमा ॥ ९ ॥

किञ्च सपत्नमध्य इति । वृकाणां मध्ये हरिणीमिव तथा शत्रूणां मध्ये शोचन्तीं मां पितृहीनान् बालकान् पुत्रांश्च वाक्यैः सान्त्वयिष्यति किम् ॥ १० ॥

एवमक्रूरं प्रति परोक्षमुक्त्वाथ सर्वान्तरात्मानं भगवन्तं बुद्ध्या सन्निधाप्य कार्पण्यनिवेदनपूर्वकमात्मीयरक्षां प्रार्थयते । कृष्ण कृष्णेति । हे महायोगिन् सर्वज्ञ हे सर्वान्तरात्मन् विश्वं भावयति स्वभक्तजनं सुखयुक्तं करोतीति तथा शिशुभिः पुत्रैः सहावसीदन्तीं क्लिश्यन्तीमधुना शरणागतां च मां पाहि ॥ ११ ॥

ननु ब्रह्मरुद्रादिषु प्रपत्तव्येषु सत्सु किं ममैव शरणं गच्छसीत्यत्राह नान्यदिति । मृत्युरूपात्संसाराद्विभ्यतां ब्रह्मादीनामप्यपवर्गप्रदादीश्वरस्य तव पदाम्भोजादन्यन्नृणां शरणमिष्टसाधनं न पश्यामः ब्रह्मादीनामपि प्रपत्तृतुल्ययोगक्षेमत्वान्न प्रपत्तव्यतेति भावः ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पैतृष्वस्रेयान् पितृष्वसुः पुत्रान् पाण्डवान् ॥ ९ ॥

सपत्नमध्ये शत्रुमध्ये वृकाणां मध्ये स्थिताम् ॥ १० ॥

सुमणरद्यादुत्फुल्लया नलिन्या यथा तथा अक्रूरस्य दर्शनादुद्रेचितया भक्त्या विवशा विशेषप्रबुद्धभगवद्गुणा नित्यं तत्परा कुन्ती मनस्याविर्भूतं कृष्णं स्तौति । कृष्णेति । महानपरिच्छिन्नो योगो ज्ञानमुपायो वास्तीति तत्सम्बुद्धिः महायोगिन् महत्पूज्ययोगो ज्ञानमुपायो वास्तीति तत्सम्बुद्धिः महायोगिन् महत्पूज्य- [sic] निशाल्ययोरिति यादवः । सर्वमाप्नोति धारयतीति सर्वात्मा हे सर्वात्मन् ! गोविन्द गवामिन्द्र ! ॥ ११ ॥

मृत्युवत् भयहेतोः संसारात् आपवर्गिकात् अपवर्गाख्यक्रियासाध्यफलप्राप्तेः साधकात् तथापाद्यकार—

अपवर्गः क्रियासाध्यफलाप्तौ त्यागमोक्षयोरिति

वैजयन्ती ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च स्मरत्यन्ये मा वा । भ्रात्रेय इति । भ्रात्रेयः कृष्णः स्मरति

**नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने ।**
**योगेश्वराय योगाय त्वामहं शरणं गता ॥ १३ ॥**

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न वेति पृच्छति प्रायेणेयं नन्दगृहे ममागत्य गतेति लक्ष्यते तदुपपादितं प्रथमस्कन्धे सा मां विमोहयतीत्यज्ञातो भगवतो ऽनुभवात्स्मरणं पृच्छन्ती स्मरणे सम्बन्धमाह । पैतृष्वस्रेयानिति । पितृष्वसुः पुत्रान् पाण्डवान् रामोऽपि स एव सम्बन्ध इति रामश्चेत्युक्तं चकाराद्भगवद्भक्ता उद्धवादयोऽपि अम्बुरुहेक्षण इति स्मरति चेत्तापं ज्ञात्वा समायास्यतीति लक्ष्यते इत्यत्र तापदूरीकरणार्थम् ॥ ९ ॥

तदर्थं तापं निरूपयति । सपत्नमध्ये शोचन्तीमिति । व्यवहारे नाममात्रेण सम्बन्धिनः वस्तुतः शत्रवः नापकारमात्रं तेषां किन्तु सर्वनाशकत्वमिति दृष्टान्तमाह । वृकाणां मध्ये हरिणीमिति । प्रसङ्गादागमनं निवारयति । सान्त्वयिष्यतीति । प्रसङ्गादागतवाक्यानि न सर्वथा सान्त्वनसमर्थानि भवन्ति मामिति । पाण्डवास्तु भ्रातरो भवन्ति अहं पितृभगिनीति । उभयोर्विशेषाकारेण सान्त्वनं करिष्यति किं वाक्यैरर्थवद्भिः सुखेन सर्वान् स्थापयिष्यामीति इह लोके परलोके च पितृहीनांश्चकारात् मातृहीनानपि कृष्णस्य विशेषणं भगवानित्युक्तत्वात् । अन्येषामवस्थादोषो भवति बालकानित्युक्तं स्वतः असमर्थान् ॥ १० ॥

एवं मनोरथमुक्त्वा तदानीमेव समागतं मन्यमाना संमुखतया प्रार्थयते । कृष्ण कृष्णेति । आदरे वीप्सा अकस्मादागतवानहमन्यत्र अत्र तव दृष्टिभ्रमो भविष्यतीत्याशङ्कयाह । महायोगिन्निति । तथापि किमेवमेतावद्दूरं सर्वपदपरित्यागेनागमनेनेति चेत्तत्राह । विश्वात्मन्निति । सर्वस्य भगवानात्मा आत्मना हि देहादेः प्रियं कर्तव्यं प्रयत्नस्य तदधीनत्वात् अतः सर्वथा आगमनं तथाप्यक्रूरवदेवागन्तव्यं किमिति विशेषाकारेणागतमिति चेत्तत्राह । विश्वभावनेति । विश्वमेवानुभावयतीति नह्यलौकिकाकरणे विश्वमनुभावितं भवति अलौकिकस्तुतायेवालौकिकानुभावो भवति एवं भगवन्तं सर्वांश्च समागमनं तत्प्रकारं चोक्त्वा प्रार्थयते । प्रपन्नां पाहीति । साधारणा अपि प्रपन्ना रक्षणीया भगवतः सम्बन्धो नापेक्षितः अतः प्रपत्तिरेव हेतुत्वेन निरूपिता अवसीदतीम् अवसादं प्राप्नुवतीमिति प्रपन्नामिति परिपालने हेतुः तत्रापि शिशुभिः सह लाक्षागृहदाहे वा भगवन्तमिव पश्यन्ती ॥ ११ ॥

ननु पुत्रा अपि तव समर्थाः पितरो भ्रातरश्च अतः किमिति विषादः क्रियत इत्याशङ्कयाह । नान्यत्तव पदाम्भोजादिति । मृत्युसंसाराद्भिभ्यतामन्यच्छरणमेव नास्ति मृत्योः संसाराच्च प्रतिभय मृत्योर्भयं तु संसारमेव भगवत एव निवर्तते उभयं स्वतन्त्रमत एव निवर्तेत इति पदाम्भोजद्वयपदं ननु भगवन्तं परित्यज्य चरणात् कथं निवृत्तिरुच्यते इति चेत्तत्राह । ईश्वरस्येति । स हि चरणद्वारापि सर्वं कर्तुं समर्थः किञ्च ईश्वरत्वात् दुराराध्यत्वात् निर्विचिकित्सं फलार्थिनः प्रवृत्तिरपि कुण्ठिता भवेत् । चरणौ तु नियतौ अत एव नियतो भक्तिमार्गः फले फलावद्यंभावे ईश्वरत्वादस्तु हानिप्रदः ईश्वरत्वान्मृत्युनिराकरणमापवर्गिकादपवर्गाधिपतेः संसारनिवृत्तिरियं संसारस्तु अपवर्गपर्यन्तो भवतीत्यापवर्गिकः मृत्युरपि तथा ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वृकाणाम् इत्यनन्तरं मध्ये इत्यध्याहार्यम् ॥ १० ॥

महायोगिन्निति । मथुरायां स्थितोऽपि ममैतां खेदोक्तिं शृणोषीति भावः । किञ्च विश्वात्मन्निति । मम हृद्यपि त्वं स्थितः शृणोष्येवेति भावः । विश्वभावनेति । विश्वमपि त्वं पालयसि मत्पालनं ते कोऽतिभार इति भावः । हे गोविन्द ! मम नेत्रगोचरीभव त्वामहं द्रक्ष्यामीति भावः ॥ ११ ॥

आपवर्गिकात् अपवर्गदानार्हात् ॥ १२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पैतृष्वस्रेयाम् वसुदेवभागिनेयान् ॥ ९ ॥

सपत्नानां शत्रूणां धार्तराष्ट्रशकुन्यादीनां मध्ये सान्त्वयिष्यति किम् ॥ १० ॥

योगः सर्वकार्यनिष्पादनसामर्थ्यं यस्य तस्य संबोधने हे महायोगिन् ! अवसीदतीं क्लिश्यन्तीम् ॥ ११ ॥

आपवर्गिकात् सर्वक्लेशघ्नात् ॥ १२ ॥

---

### भाषा टीका ।

भाइ के पुत्र भगवान् कृष्ण शरण रक्षक भक्तवत्सल मेरे पुत्र पांडवों को याद करते हैं क्या और भी कमल लोचन बलरामजी स्मरण करते हैं कि नहीं ॥ ९ ॥

वे कृष्ण कभी भेडहारों के बीच में जैसे हिरणी होवे तैसे शत्रुओं के बीच में शोचती हुई मोकों तथा पिता से हीन इन बालकों को कभी आकर समुझावेंगे क्या ॥ १० ॥

हे कृष्ण ! हे कृष्ण ! हे महायोगिन् ! हे विश्वात्मन् ! हे विश्वभावन ! हे गोविन्द ! बालकों सहित मैं दुखी हूं शरणागत हूं मेरी रक्षा करो ॥ ११ ॥

आपके चरणारविन्द से दूसरे किसीको मैं रक्षक नहीं देखती हूं सब मनुष्य तो मृत्यु संसार से डरते हैं आप ईश्वरहो आपका चरणतो मोक्ष देने वाला है ॥ १२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

शुद्धाय धर्मात्मने ब्रह्मणे ऽपरिच्छिन्नाय परमात्मने जीवसखाय योगेश्वरायाणिमाद्रियुक्ताय योगाय ज्ञानात्मने ॥ १३ ॥

श्रीशुक उवाच ।

इत्यनुस्मृत्य स्वजनं कृष्णं च जगदीश्वरम् ।
प्रारुदद्दुःखिता राजन् ! भवतां प्रपितामही ॥ १४ ॥
समदुःखसुखोऽक्रूरो विदुरश्च महायशाः ।
सान्त्वयामासतुः कुन्तीं तत्पुत्रोत्पत्तिहेतुभिः ॥ १५ ॥
यास्यन्राजानमभ्येत्य विषमं पुत्रलालसम् ।
अवदत्सुहृदां मध्ये बन्धुभिः सौहृदोदितम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रपितामही प्रपितामहः पाण्डुस्तस्य भार्या रुरोद ॥ १४ ॥

पृथया सह समं दुःखं सुखं च यस्य सः तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेन्द्रादिभिस्तत्कथनैरित्यर्थः ॥ १५ ॥

बन्धुभिः रामकृष्णादिभिः सौहृदेनोदितमुक्तं यत्तदवदद्विति ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

निजाभीष्टयोग्यमेव तं प्रणमन्ती शरणं याति । नम इति । शुद्धायेति धर्मात्मतयाऽवद्यं शरणागतरक्षाभिप्रेता । ब्रह्मन् इत्यादि पदद्वयेन तत्र च सदा सर्वत्र सर्वरक्षा योग्यता योगेश्वरायेति तदर्थं स्वतः सर्वार्थपूर्णता योगायेति चान्यतो ज्ञानानपेक्षा यद्वा कृष्णाय स्वयं भगवते परिपूर्णभक्तीनां परिपूर्णैश्वर्यादियुक्तायेत्यर्थः । ब्रह्मणे निर्विशेषज्ञानिनामपि परिच्छिन्नतत्त्वज्ञानमात्ररूपाय परमात्मने अन्तर्यामित्वमात्रैश्वर्यज्ञानिनां तद्रूपाय त्रिष्वपि विशेषणं शुद्धाय मायास्पर्शरहिताय योगेश्वराय निजभक्ता तथाविर्भावानुभवोपायदात्रे शक्तिशक्तिमतोरभेदांशेन स्वयं तत्तद्रूपाय च तुभ्यमिति शेषः । अतो नासाध्यं तव किञ्चिदिति भावः । प्रतस्त्वामित्यादि ॥ १३ ॥

इत्येवं स्वजनं पित्रादिकं जगदीश्वरमिति जगदीशतया कृष्णं चानुस्मृत्य वारं वारं स्मृत्वा यद्वा च अपि स्वजनं बन्धुतां प्राप्तमपि कृष्णं जगदीश्वरतयानुस्मृत्य किम्वा जगदीश्वरमपि स्वजनं निजबन्धुतयानुस्मृत्य तदप्राप्त्या दुःखिता सती प्रकर्षेण सगद्गदेत्यादिनारुदत् भवतां प्रपितामहीति तस्यास्तादृशप्रणयवत्याः साक्षात् कृष्णपितृष्वसुः प्रपौत्रत्वेन तस्य भाग्यं सूचयन् हर्षं वर्द्धयति अत एव परमादरेण भवच्छब्दप्रयोगः तत्र बहुत्वञ्चातः प्रहर्षेण सम्बोधयति राजन्निति ॥ १४ ॥

चेति स्वर्थे विदुरस्तु महायशाः स्वभावतः पाण्डवविषयकपक्षपातादिसत्कीर्तिर्यस्य सः तत्पुत्रेति तैन्यायत्वातं तत्र देवदेभ्य उत्पन्नत्वात्तेषां कदाचिदप्यशुभं नास्तीत्येवं कथनैरित्यर्थः । अथवा तत्पुत्रोत्पत्तेर्हेतवः भूभारावतारार्थमवतीर्णस्य श्रीकृष्णस्य लीलामाहात्म्यानि तैः ॥ १५ ॥

पुत्रेषु तेषां राज्यादिसिद्धये लालसा महामनोरथो यस्य तं सुहृदां भीष्मादीनां मध्य इति तस्य लज्जोत्पादनेन निजोक्तिग्राहणार्थम् ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अपेशलम् अशुभम् अपीति पित्रादयः किं स्मरतीत्यर्थः ॥ ९—२८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रपत्तिमपि यथावत्कर्त्तुमशक्नुवन्त्या मम भगवत्प्रसादेऽञ्जलिरेवेत्यभिप्रायेण प्रणमति । नम इति । शुद्धाय रागद्वेषादिरहिताय किञ्चित्स्वानुकूल्यमात्रापेक्षायेति यावत् अञ्जलिरेव तं प्रसादयितुमलमिति भावः । ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते अनेन पूर्णस्य नास्माभिर्विधेयमन्यदपेक्षितमित्यभिप्रेतम् परमात्मने अन्तः प्रविश्य प्रशासनेन भर्त्रे त्वत्प्रशासनानुरूपमेवास्मत्प्रवृत्तिरित्यभिप्रेतम् योगेश्वराय तत्तदधिकार्यनुरूपमनेकधावस्थितन्यासात्मकयोगनिर्वाहकाय योगाय युज्यते सर्वैरभिरिति योगस्तस्मै निरुपाधिकसर्वविधबन्धवे पथ्यभूताय श्रीकृष्णाय स्वर्गापवर्गसुखहेतवे नमः केवलं नमनमेव करोमीत्यर्थः । त्वामुक्तविधमहं कृपणा शरणं गता शरणागतशब्दभागस्मीति भावः ॥ १३ ॥

इतीति । इदं शुकवचनम् हे राजन् ! भवतां प्रपितामहः पाण्डुः तस्य स्त्री कुन्ती इत्थं श्रीकृष्णं स्वजनं चानुस्मृत्य दुःखिता सती प्रारुदद्रुरोद ॥ १४ ॥

तदा समं दुःखं सुखं च यस्य सः कुन्त्या सहेति शेषः यद्वा बन्धुजनदुःखसुखदर्शनजमनोविकाररहितः ज्ञाननिष्ठत्वात् अक्रूरो विदुरश्च तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेन्द्रादिभिः तत्कथनैरित्यर्थः । सत्पुत्रैरित्यादिपाठान्तरं तत्र सद्भिर्धर्मानुवर्तिभिः पुत्रैः तदुत्पत्तिहेतुभिश्च पूर्वोक्तैः कुन्तीं सान्त्वयामासतुः धर्मानुवर्तित्वाद्दिक्पालांशजत्वाद्भगवदभिमानविषयत्वाच्च न तेषामशुभमस्तीत्येवंविधैर्वचनैः सान्त्वयामासतुरित्यर्थः ॥ १५ ॥

यास्यन्निति । गमिष्यन्मथुरां प्रतीति शेषः । पुत्रलालसं पुत्रेष्वासक्तबुद्धिमत एव विषमं भ्रातृपुत्रेष्विति शेषः । विषमबुद्धिं राजानं धृतराष्ट्रमभ्येत्य बन्धुभिः श्रीकृष्णादिभिः यत्सौहृदेन कथितं तत्सुहृदां मध्येऽवोचत् ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

कृष्ण लीलायलोहेपु इत्यतः कृष्णशब्दस्य लीलायेऽपि वृत्ते-स्तन्निरासार्थं शुद्धायेति । किंतत् शुद्धमत्राह । ब्रह्मण इति । अस्याप्य-नेकार्थवृत्तेर्न निर्णय इत्यत : परमात्मन इति । दुर्भगशरीरे वसतो हरेः कर्दम इव शुद्धत्वं कथं युज्यत इति तत्राह । योगेश्वरायेति । योगैश्व-र्याद्वदत इत्यर्थः । ननु तर्हि योगैश्वर्यनिमित्तं शुद्धत्वं चेत्स्वतो नास्ती-त्यायातमित्यत उक्तं योगायेति ज्ञानसंहताय ज्ञानात्मत्वेनाप्राकृत-त्वात्स्वाभाविकमित्यर्थः । ततः किमत्राह । त्वामिति ॥ १३ ॥

इति पद्यमादिगुणपूर्णम् ॥ १४ ॥

तस्याः पुत्राणां युधिष्ठिरादीनाम् उत्पत्तेर्हेतुभिः दुर्वाससोऽनु-ग्रहेण धर्मानिलेन्द्रसंयोगादिलक्षणैः ॥ १५ ॥

यास्यन् गन्तुमिच्छन् पुत्रलालसं पुत्रस्नेहकातरं बन्धुभिः सहितं सौहृदेनोदितं सुहृद्भावेन कथितम् ॥ १६ ॥ १७ ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एतावत्प्रार्थनानन्तरमङ्गीकारेणैव तत्परितोषं कृत्वा तिरो-धानकृते तादृशाय पुनर्नमस्करोति । नमः कृष्णायेति । नमस्कारे सम्बन्धस्य विरुद्धत्वात् यदैव चिकीर्षितः तदैव तिरोहितः कृष्णा-येति सदानन्दाय अवतारत्वेऽपि धर्मा न बाधका इत्याह । शुद्धा-येति अवतारसम्बन्धिधर्मैरस्पर्शात् अनेन कालान्ताः सर्वधर्मा एव निवारिताः नन्वागतस्य सर्वथैतत्सम्बन्ध इति चेत्तत्राह । ब्रह्मण इति । जीवानामेवागतानां बन्धो न ब्रह्मणः ननु जीवोऽपि वस्तुतो ब्रह्म भवतीति को विशेष इति चेत्तत्राह । परमात्मन इति । परमश्चासावात्मा चेति । उत्कृष्ट आत्मा आत्मनामात्मा वा ननु तर्हि कथं मूलसमागमनं देशभावादेशत्वे परिच्छेदे हि समा-गमनं सम्भवति तत्राह । योगेश्वरायेति । योगो ह्यलौकिककर्तुं शक्तः यत्र बुद्धिर्न प्रसरति तस्यापीश्वरः कथं स्वागमनमपि न सम्पादयेत् किञ्च योगस्यापि सामर्थ्यं भगवत एवेत्याह । योगा-येति । भगवानेव योगः अतः सामर्थ्यस्य दृष्टत्वादनुपपन्नं किं चित् अतो यथा आगतोऽपि तद्धर्मैर्न लिप्यते सर्वत्र पूर्णोऽप्यागच्छति एवमस्मानपि पालयिष्यतीति निश्चित्याह । त्वामहं शरणङ्गतेति । शरणागमने परिपालनमावश्यकमिति ॥ १३ ॥

ततः किञ्चात्मनि याकाङ्क्षायामाह । इत्यनुस्मृत्येति । स्वजनं पित्रा-दीन् कृष्णं चकाराद्बलभद्रं भगवद्गुणांश्च जगदीश्वरमिति सर्व एव पाल्या इति धार्तराष्ट्राः निरोधनात्पाक्षिकरक्षामाशङ्क्य प्रकर्षेणाक्र-न्दत् यतो दूरीकरिष्यति एवं परीक्षितं कथंचित्स्थापयिष्यतीत्येवं भव-द्वंशे स्त्रियोऽपि भक्ता इति ज्ञापयितुमाह । भगवतां प्रपितामहीति । पितामही सुभद्रा कुन्ती तु प्रपितामही ॥ १४ ॥

भगवतः सान्त्वनं तु पाक्षिकं मन्यत इति भगवदीयैः सान्त्वनं क्रियत इत्याह । समदुःखसुख इति । तदर्थं अक्रूरस्य सान्त्वनमनुचितं मत्वाह । समे दुःखे सुखे यस्येति यद्यपि जाते अनिष्टे इष्टे वा सुखं दुःखं समानं तथाप्ययमक्रूरः प्रसिद्धः पुरुष इति सान्त्वनमुचितमनेन विदुरोऽपि तुल्यस्तथापि धर्मपक्ष इत्याह । महायशा इति । तत एव हि भवति नान्यथा सान्त्व-यामासतुः ननु तद्दुःखं दृष्ट्वा स्वव यकार्थं प्रवृत्तौ यतः कुन्ती कुन्तिभोजाय दत्ता तत्रापि स्वरक्षार्थं धर्मादयः प्रार्थिताः इत्यक्रूरविदुराभ्यां युद्धे कृते तत्प्रयत्नो व्यर्थो भवतीति तत्पुत्रोत्पत्तिहेतुभिर्धर्मादिभिः कृत्वा सान्त्वनमेव कृत-वन्तौ नतु युद्धार्थं प्रवृत्तावितिं युक्तम् ॥ १५ ॥

तथाप्यक्रूरः असहमानः वाक्ये न धिक्कारे कृते यद्ययं विमतो भविष्यति तदा मारयिष्यामीति निश्चित्य तद्गृहे स्थितः तदधीनो भवतीति निर्गच्छन् राजसम्बोधनार्थं प्रवृत्त इति तदाह । यास्यन्निति । राजानं धृतराष्ट्रं राजत्वादवश्यं वक्तव्यः अन्यथा मर्यादातिक्रमो भवेत् अभित एत्येति । निःशङ्कं ननु राजा न वक्तव्यः सर्वप्राणिभिः यथा भगवान् तत्कथमुक्तवा नित्याशङ्क्याह । विषममिति । तत्र हेतुः पुत्रलालसमिति पुत्रो हि स्वयञ्जीवन् पाण्डवान् मन्यते अधुना किं पाण्डवा हन्तव्याः पुत्रो वेति विचारे दुष्टो हन्तव्य इति धर्म-शास्त्रात् पुत्रस्यैव मारणं प्राप्तं तत्र करोति विषमः सहजो धर्मो विहितं धर्मं बाधते एतच्च राजाधिकारे निविष्टस्य बोधनमनुचितमिति भावः । तदपि नैकान्ते तथा सति लज्जा न भवेदतः सुहृदां मध्ये तस्मिन् विषमेऽप्यन्येषामविषम-त्वात् न वचने किञ्चिदभीष्टं तत्रापि बन्धुभिरुदितं वसुदे-वादिभिः तत्रापि सौहृदादेवोदितं न तु विषमबुद्ध्या ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कृष्णाय भक्तैरुपस्यायेत्यर्थः । शुद्धाय दृश्यत्वेऽपि मायातीताय ब्रह्मणे ज्ञानिभिरुपास्याय परात्मने योगिभिरुपास्याय योगानां तत्तत्प्रा-प्त्युपायानां भक्त्यादीनामीश्वराय प्रदानसमर्थाय योगाय तत्तद्रूपाय स्वरूपाय च ॥ १३ ॥

प्रपितामही कुन्ती ॥ १४ ॥

तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलादिभिः एते धर्मांशांशाः केन नाशयितुं शक्या इत्यादि तत्प्रभावकथनैरि-त्यर्थः ॥ १५ ॥

सुहृदां भीष्मादीनां मध्ये स्थितं बन्धुभिर्विदुरादिभिः सहितं सौहृदेनोदितं सौहृदव्यञ्जकं वाक्यम् ॥ १६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

शुद्धाय स्वभावतोऽपास्तसमस्तदोषाय ब्रह्मणे बृहत्स्वरूपगुणश-क्तिराशये परमात्मने सर्वोपास्याय योगेश्वराय स्वप्राप्तिसाधनभू-ताय युज्यते इति योगस्तस्मै प्राप्यायेत्यर्थः ॥ १३ ॥

हे राजन् ! परीक्षित् भवतां प्रपितामहस्य पाण्डोर्भार्या ॥ १४ ॥

तस्याः पुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेन्द्रनासत्यदस्रैस्त-त्कथनैरित्यर्थः ॥ १५ ॥

राजानं धृतराष्ट्रं बन्धुभिः रामकृष्णादिभिः यत्सौहृदेनोदितं तदवदत् ॥ १६—१८ ॥

---

**अक्रूर उवाच ।**

भो भो वैचित्रवीर्य ! त्वं कुरूणां कीर्तिवर्द्धन ! ।
भ्रातर्युपरते पाण्डावधुनासनमास्थितः ॥ १७ ॥
धर्मेण पालयन्नुर्वीं प्रजाः शीलेन रञ्जयन् ।
वर्तमानः समः स्वेषु श्रेयःकीर्तिमवाप्स्यसि ॥ १८ ॥
अन्यथा त्वाचरँल्लोके गर्हितो यास्यसे तमः ।
तस्मात्समत्वे वर्तस्व पाण्डवेष्वात्मजेषु च ॥ १९ ॥
नेह चात्यन्तसम्वासः कर्हिचित्केनचित्सह ।
राजन् ! स्वेनापि देहेन किमु जायात्मजादिभिः ॥ २० ॥

### भाषा टीका ।

आप श्रीकृष्ण शुद्ध स्वरूप ब्रह्म परमात्मा योगेश्वर हो आपके अर्थ नमस्कार है मैं आपके शरण प्राप्त हूं ॥ १३ ॥

श्रीशुकदेवजी बोले इस प्रकार से जगदीश्वर कृष्णका स्मरण करके हे राजन् ! तुमारी प्रपितामही दुःखित होकर वडे जोरसे रोने लगी ॥ १४ ॥

वडे यश वाले अक्रूर तथा विदुरजी दोनों समान दुःख सुखवाले होगये तौभी कुंतीजीको उसकी पुत्रों के उत्पत्ति की महिमा कर कर समझाते भये ॥ १५ ॥

जब विदुरजी जाने को तैयार भये तब अपने पुत्रों पर लालसा करने वाले विषम मति धृतराष्ट्र राजा से सुहृदों के मध्य में अपने बन्धुओं का जो कथन तिसको कथन करते भये ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

भ्रातर्युपरत इति । पाण्डोः पुत्रेषु सत्सु राजासनं त्वमास्थित इति कटाक्षः ॥ १७ ॥

भवतु तथाप्येवं वर्त्तमानः श्रेयोऽवाप्स्यसीत्याह । धर्मेणेति ॥ १८ ॥

तमो नरकमिव महद्दुःखमिति भावः ॥ १९ ॥

नन्वात्मजात्मजादिषु कथं समत्वं स्यात्तत्राह । नेह चेति । अत्यन्तं नित्यं संवासः सम्यक् स्थितिः ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्राक् सोत्कण्ठं सामप्रायमाह । भो भो इति । वीप्साऽत्यन्ताभिमुख्यार्थम् । वाक्यार्थाप्रियत्वेन तस्य वैमुख्यसम्भवात् ॥ १७ ॥

शीलेन सद्वृत्तेन स्वेषु स्वपुत्रपाण्डवादिषु श्रेयः कुशलं कीर्तिञ्च ॥ १८ ॥

अथ सस्मितं सपरिहासमिवाह । अन्यथेति । तमः महा-दुःखम् अत्र पुत्रवियोगादिजम् अमुत्र च नरकादिकमित्यर्थः ॥ १९ ॥

इह लोके चकारादमुष्मिंश्च लोके कर्हिचित्कदापि कस्यचिदिति पाठः क्वचित् हे राजन्निति राजत्वेऽपि तदपरिहार्यमिति भावः । स्वेन आत्मतया प्रतीतेनापि अतः पुत्रादिव्यवहारस्यानित्यत्वात्तत्रासक्तिं विधाय धर्मरक्षार्थं स्वेषु समतावर्त्तनमेव युक्तमिति भावः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह । भो भो इति नवभिः । हे वैचित्रवीर्य ! हे कुरूणां कीर्त्तिवर्द्धन एवम्विधस्य तवेयं विषमा बुद्धिरनुचितेति सम्बोधनद्वयाभिप्रायः भ्रातरि पाण्डावुपरते सत्यधुना त्वं नृपासनमधिष्ठितवान् इतोऽप्यनुचितं नेति भावः ॥ १७ ॥

तदाह । धर्मेणेति । शीलेनावैषम्यादिस्वभावेन रञ्जयन् स्वस्मिन् तासामनुरागं जनयन्स्वेषु समो वर्त्तमानः अविषमः सन् श्रेयः कीर्त्तिं च प्राप्स्यसि ॥ १८ ॥

अन्यथा वैषम्यमाचरन् जनैर्निन्दितस्तत्तमो नरकं यास्यसि प्राप्स्यसि तस्मात्पाण्डवेषु युधिष्ठिरादिष्वात्मजेषु च विषये समत्वेन वर्त्तस्व ॥ १९ ॥

नन्वनपायिष्वात्मजेषु यावत्स्वार्थमनुवर्त्तमानेषु भ्रातृपुत्रेषु च कथं साम्यं स्यादित्यत्राह । नेहेति । इह लोके कस्यचित्केनचित्साकमत्यन्तं सम्वासः नित्यं सम्यक् स्थितिर्नास्ति संयोगवियोगयोः कर्ममूलत्वेन यावत्कर्मैव तावदित्यर्थः । तदेव कैमुत्यनयेनाह । हे राजन् ! धृतराष्ट्र स्वेन स्वकीयेन देहेन सहापि नात्यन्तसम्वासः भार्यापुत्रादिषु सहात्यन्तसम्वासो नास्तीति किमु वक्तव्यमित्यर्थः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तमोऽन्धं दुःखमित्यर्थः । पुत्रनाशेनेति शेषः । तमो राहुस्तमोऽन्धं चेति च दुःखेऽप्यज्ञानेऽप्यघमिति च ॥ १९ ॥

सर्वस्यानित्यत्वात्कात्रिस्कस्मिंश्चिदपि विशेषस्नेहो न कार्यः योग्यतामन्तरेणेति भावेनाह । नेहेति । इह लोके कस्य चित्केन

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चिरसहात्यन्तसम्वासो नास्त्येव जायात्मजादिभिः सह संवासनिदर्शनात्किंविशिष्य निषिध्यत इत्यत्र कैमुत्यमाह । स्वेनापीति ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वचनान्याह नवभिः । भो भो इति । सर्वैर्भावैः सर्वविधात्युक्तानि वचनानीति आदौ रजःसत्वतमोभावेन लौकिकेन प्रबोधनं त्रिभिः अन्धत्वान्न पश्यतीति वारत्रयं कम्बोधनं राष्ट्रं न बिभर्तीति न धृतराष्ट्रता प्रज्ञाचक्षुरिति चेदुच्यते तर्हि मर्मभेदो भवेत् तथा व्यासात्मज इत्यपि स्त्रीपुत्रादिसम्बन्धो हीनत्वप्रतिपादकः राजत्वं तु नास्तीति मन्यमानः कृत्रिमपितृनाम्ना सम्बोधयति वैचित्र्यवीर्येति । विचित्रवीर्यस्य क्षेत्रजः पुत्र इत्यर्थः त्वमित्येकवचनेन स्वजन्मानुसन्धीयतामिति द्योतितं किं च कुरूणां वंशे त्वमुत्पन्नः तत्कीर्तिवर्द्धनमुचितं वर्द्धनशब्देन छेदनमप्युच्यत इति कीर्तिच्छेदकस्त्वमित्यर्थाद्युक्तं भवति राजाधिकारार्थे पुत्र उत्पादनीय इति विचार्य प्रथममुत्पादितः ततश्चान्ध इति त्वं परित्यक्तः ततः पाण्डुरुत्पादितः तस्मिन्नुपरते आगत्याधुना आसनमास्थितः सिंहासने उपविष्टः अनेनायुक्तमेव करोषीति द्योतितम् ॥ १७ ॥

अङ्गीकृत्यापि सात्विकेन बोधनमाह । धर्मेणेति । धर्मेण पृथिवीपालनं कर्तव्यं तदा दृष्टादृष्टोपायेन पालिता भवति भगवता हि नामरूपप्रपञ्चौ निर्मितौ अतोऽन्यपरिपालनाय तदेकेन रहितं व्यक्तं भवति अतो धर्मेणैव सह पालनं कर्तव्यं केवलकरणत्वे योगिनामिवास्यापि पालनं भवेत् अनेन परलोके सुखमिह लोके तु राज्यैकविषयिकं सुखं कीर्तिजन्यं तु ततोऽप्यधिकमिति तत्साधनं बोधयति । प्रजाः शीलेन रञ्जयन्निति । शीलं सुखसाध्यत्वेनैव प्रजा अनुरक्ता भवन्ति अन्यथा तु युक्तं दंयं प्रयच्छन्ति यद्यपि कीर्तिसाधनमेतत् अतः कीर्तिसाधनमाह । वर्त्तमानः समः स्वेष्विति । सर्वेष्वेव बन्धुषु समो भवेत् ततोऽत्यन्ताकीर्त्तिजनैश्च तदा राजा श्रेयः कीर्त्तिं च प्राप्स्यसि ॥ १८ ॥

अनङ्गीकारेनामसवचनमाह । अन्यथेति । उक्तप्रकारादन्यथा प्रकारेण भूपालनं प्रजाननुरागं विषमत्वं च कुर्वन् कीर्तिप्रतिनिधिं च प्राप्स्यसीत्याह । गर्हितो निन्दितः तमोऽन्धं तमः महद्दुःखं प्राप्स्यसीति अतो बाधवशादपि समो भवेत्याह । तस्मादिति । समत्वे समत्वार्थे वर्त्तस्व यथैव त्वं समो भवसि तथोपायं कुर्वित्यर्थः । वैषम्यस्थानमुद्घाटयति । पाण्डवेष्वात्मजेष्विति चकारात्स्वबन्धुषु च ॥ १९ ॥

एवं लोकन्यायेन बाधक इति शास्त्रन्यायेनाह । समाभ्यां त्रिभिस्त्रिभिरन्तरं बोधयति । नेह चेति । स्वार्थे हि सर्वेण कर्तव्यं तथा स्वार्थः सिद्ध्यति तत्र कालो बाधक इति हि तमहितं बहिरङ्गस्थापनार्थं यत्नो न कर्तव्य इत्याह । इहास्मिल्लोके अत्यन्तं सर्वदा केनापि सह संवासः कस्य चिदपि न अलौकिकबोधनं इत्यत्रेच बोधो न भवतीति कोमलवचनेन सम्बोधनं इत्येतदर्थं मम[illegible]स्पदेन नास्त्येव संवास इदापि

व्यभिचारदर्शनात्स्वदेहेन तु न व्यभिचारं पश्यतीति तत्राप्युपदिशति । स्वेनापि देहेनेति । पुत्रादीनामपि देहः स्वस्यैवेत्यपि शब्दं निरूप्य तान्निर्दिशति । किमु जायात्मजादिभिरिति । आदिशब्देन भ्रातृपित्रादयः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भ्रातर्य्युपरते इति । पाण्डोः पुत्रेषु सत्स्वपि त्वं राजासनमाश्रित इति कटाक्षः ॥ १७ ॥

भवतु तदाप्येवं वर्तस्वेत्याह । धर्मेणेति ॥ १८ ॥

तमो नरकम् ॥ १९ ॥

न च ते प्रिया अपि पुत्रा दुर्योधनादयश्चिरस्थायिन इत्याह । नेहेति ॥ २० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तमः नरकम् ॥ १९ ॥

अत्यन्तं नित्यं संवासः सम्यक् स्थितिः ॥ २० ॥

---

भाषा टीका ।

अक्रूरजी बोले हे विचित्रवीर्य के पुत्र धृतराष्ट्रजी आप कुरुवंश की कीर्ति के बढाने वाले हौ आपके भ्राता पांडु के चले जाने से इस वख्त आप राज्यासन पर बैठे हौ ॥ १७ ॥

सो धर्म से पृथिवी के पालन करने से शील स्वभाव द्वारा प्रजा के रंजन करने से अपने पुत्रादिकों में सम बुधि से रहने से आप यश और कीर्ति को प्राप्त होओगे ॥ १८ ॥

यदि अन्यथा आचरण करोगे तो लोक में गर्हित हो कर नरक या दुःख को प्राप्त होओगे तिस से पांडवों में तथा अपने पुत्रों में सम बुद्धि से वर्ताव करो ॥ १९ ॥

हे राजन् ! इस संसार में कभी भी किसी के साथ सदा संग नहीं रहता है अपने देह के साथ में भी नहीं रहता है तो स्त्री पुत्रादिकों का तो संग कैसे रहैगा ॥ २० ॥

---

एकः प्रसूयते जन्तुरेक एव प्रलीयते ।
एकोऽनुभुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ २१ ॥
अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ।
सम्भोजनीयापदेशैर्जलानीव जलौकसः ॥ २२ ॥
पुष्णाति यानधर्मेण स्वबुद्ध्या तमपण्डितम् ।
तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः ॥ २३ ॥
स्वयं किल्बिषमादाय तैस्त्यक्तो नार्थकोविदः ।
असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तमः ॥ २४ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र तावदुत्पत्तिमरणयोः सुखदुःखयोश्च केनापि साहित्यं नास्तीत्याह । एक इति ॥ २१ ॥

किञ्च यदा च सह संवसन्ति तदाऽपि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह । अधर्मेति । सम्भोजनीयाः पोष्याः पुत्रादय इति व्यपदेशैरल्पमेधसो मूढस्य वित्तं हरन्ति जलौकसां मत्स्यस्य जीवनभूतानि जलानि यथा तत्पुत्रा हरन्ति तद्वदिति ॥ २२ ॥

किञ्च यानेवं पुष्णाति ते धनमादाय मृता जीवन्तोऽपि वा तं परित्यजन्तीत्याह । पुष्णातीति । स्वबुद्ध्या स्वीया इत्यभिमानेन रायोऽर्थाः अकृतार्थमप्राप्तभोगम् ॥ २३ ॥

स पुनः पारैकपाथेयो नरकं विशतीत्याह । स्वयमिति । असिद्धार्थोऽपूर्णमनोरथः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसूयते प्रसूतो भवतीति प्रमीयते मृत्युना हिंस्यते म्रियत इत्यर्थः प्रलीयत इति पाठेऽपि स एवार्थः । युग्मद्वयेऽप्युत्तरत्रैव एवकारः सम्पदि न करोतु नाम कोऽपि बन्धुः साहाय्यं विपदि तु सर्वथा कुर्यात् तत्र च न करोतीत्यभिप्रायेण चशब्द उक्तसमुच्चयार्थः उभयत्र युग्मेऽपि योज्यः अनु तत्तत्पुत्रादिसहभावात् पश्चादेव मरणं जन्मान्तरञ्च लब्ध्वा पूर्वं पूर्वं कर्म भुङ्क्ते ॥ २१ ॥

अधर्मेण स्वधर्मातिक्रमेण निषिद्धाचरणेन च उपचितं स्वयं यत्नतः समुपार्जितमपि अन्ये पुत्रादयः अल्पमेधसो जनस्येति तत्तद्विचाराभावात् । जलान्यत्र क्षयिष्णूनि ज्ञेयानि बहुसङ्घट्टेन तेषां क्षयदौर्गन्ध्यापातात् महामत्स्यस्य पूर्वमेव मरणापत्तेः ॥ २२ ॥

तत्र पोषणं तस्यैव वर्द्धनं ननु तेन प्राणादिपोषणमिति लक्षणम् प्रहिण्वन्ति त्यजन्ति ॥ २३ ॥

अन्धं तमः महानरकं नार्थकोविदः धर्माद्यर्थानभिज्ञः न लोपाभाव आर्षः ॥ २४ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव निदर्शयति । जन्तुः शरीरी एक एव प्रसूयते न त्वात्मजायादिभिः सहेति भावः । तथा एक एव प्रलीयते न हि म्रियमाणेन सह जायादयो म्रियन्त इति भावः । सुकृतदुष्कृतशब्दौ तत्फलभूतस्वर्गादिकसुखदुःखपरौ तद्भोगेऽपि न केनचित्साहित्यमिति भावः ॥ २१ ॥

किञ्च यदा च सह सम्वसन्ति तदा क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह । अधर्मोपचितमिति । सम्भोजनीयाः पोष्याः पुत्रादय इति व्यपदेशैरल्पमेधसः मूढस्याधर्मेणोपार्जितं वित्तं हरन्ति यथा जलौकसो मत्स्यस्य जीवनभूतानि जलानि तत्पुत्रा हरन्ति तद्वत् ॥ २२ ॥

किञ्च पुष्णातीति स्वबुद्ध्या आत्मात्मीयबुद्ध्या यो यान् पुष्णाति ते प्राणा रायो धनानि सुतादयः इत्यादिशब्दग्राह्या भार्यादयः प्राणशब्दः शरीरोपलक्षकः तं पुष्णन्तमकृतार्थमप्राप्तभोगं कामानभुक्त्वैव मृतं प्रहिण्वन्ति त्यजन्ति ॥ २३ ॥

स्वयं त्वनर्थकोविदः स्वानर्थेष्वेव कुशलो न तु स्वहित इति भावः । प्राणादिभिस्त्यक्तः किल्बिषं तत्पोषणार्थं कृतं पापमादायासिद्धार्थः अपरिपूर्णमनोरथः स्वधर्मविमुखः स्ववर्णाश्रमोचितधर्मरहितः हेतुगर्भमिदं तस्मादन्धंतमोऽन्धतामिस्राख्यं नरकं प्रविशति ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इतोऽपि वैषम्यबुद्धिर्न कार्येत्याह । एक इति ॥ २१ ॥

अन्ये अल्पचेतसः कुटुम्बिनः अधर्मेण उपचितमर्जितं हरन्ति सम्भोजनीयापदेशैः सम्भोजनीयाः सह भोजनयोग्याः बान्धवः अपदेशैः कपटवचनैः मयैतेऽपेक्षणीया इति मिथ्याहेतुभिरित्यर्थः । जलानि हरन्तो जलसम्बन्धितया जलौकसः प्राणिनां यथा हरन्ति यद्वा जलौकसो यादोगणस्य विद्यमानानि जलानि यथान्ये हरन्ति ॥ २२ ॥

यः स्वबुद्ध्या ममत्वभ्रान्तबुद्ध्या अधर्मेणान्यायेन यान्पुष्णाति स्वत्वेनाभिमतास्ते प्राणादयस्तथान्ते मरणसमये तमपण्डितम् अतं हिन्वन्ति त्यजन्ति "अग्निं वागप्येति वातं प्राण" इतिश्रुतेः कीदृशाः अकृतार्था अपूर्णस्वप्रयोजनाः यथा यो योऽधर्मेण यान् स्वीयबुद्ध्या

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पुष्णाति ते प्राणादयः तमपण्डितं हिन्वन्तीति तञ्च मरणं विदुरिति ॥ २३ ॥

पुनः स्वयं किङ्करोतीति तत्राह । स्वयमिति । नार्थकोविदः स्वप्रयोजनकुशलो न भवति ॥ २४ ॥

———

### श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी ।

तत्र देहात्मनां भेदज्ञाने सत्येतद्भवतीति देहादात्मानं भिन्नतया निरूपयति । एकः प्रसूयत इति । आत्मनः पितृपुत्राभ्यामनुमेयौ भवाप्ययाविति न्यायेनानुभवपर्यन्तं निरूपयति । प्रसूयते मात्रा प्रलीयते भूमौ कालेन एवमाद्यन्तयोरैकत्वमुक्त्या उपलक्षणन्यायेन सर्वस्यैव क्रियामयस्यैककर्तृत्वं निरूप्य ज्ञानपर्यवसायीति कर्मणा भोगोऽप्येकस्यैवेत्याह । एकोऽनुभुङ्क्ते सुकृतमिति । सुकृतं पुण्यं कर्म तस्य फलं स्वर्गादि कार्यकारणयोरभेदात्तथोच्यते कारणानन्तरमेव भोग इत्यनुशब्दार्थः सुखभोगे बहूनामपि समवायोऽस्तीति हास्यक्रीडादौ तथा दर्शनात् दुष्कृते एक एवेत्याह । चकारान्मिथः सङ्गेन कृतपापे मिथ एव भोग इति पक्षमङ्गीकरोति दुष्कृतं पापं सुकृतवद्व्याख्येयम् ॥ २१ ॥

सुखार्थं सुखसाधनार्थं वा पापं न कर्त्तव्यमित्याह । अधर्मोपचितमिति । अधर्मेण उपचितं पुष्टम् अर्थस्योत्पत्तिर्धर्मेणैव उपचयस्त्वधर्मेणापि भवति तथा सति प्रवृद्धो दोषः अन्य एव अधार्मिष्ठाः अधर्मप्रेरिता वा दैत्याः हरन्ति प्रतिरोधसामर्थ्याभावमाह । सम्भोजनीयापदेशैरिति । सम्भोजनीयाः सम्बन्धिनः भ्रातृक्षुब्धोऽपि सम्बन्धरक्षार्थं तान् भोजयति । अनपेक्षितं बहुत्वान्नयन्तीत्याशङ्क्य तस्मिन् हृते जीवनमेव यातीत्यत्र दृष्टान्तमाह । जलानीव जलौकस इति । जलौकसो मत्स्यादेः प्राणभूतमपि जलं कुल्याभिर्हरन्ति ज्ञानं चेत् भवेत् तद्द्वारा अन्यत्र गच्छेदज्ञानमात्रे जीवनरूपोऽयमर्थ इति ज्ञापयितुं दृष्टान्तः ॥ २२ ॥

पश्चादुपकरिष्यन्तीत्याशङ्क्याह । पुष्णातीति । अन्यमप्युपक्रम्य पर्यवसानेन पुत्रपरं निरूपयति । स्वबुद्ध्या स्वीया इति बुद्धिमात्रं परन्तुः शत्रव एव अन्यथा उपकारमेव कुर्युः तेन बलात्कारेण तथा कुर्वन्तीति ज्ञापयितुमपण्डितमित्युक्तं ननु लौकिकं वैदिकं नित्यं कर्म कर्तव्यमिति तदर्थं ते भोजिता इति चेत्तत्राह । अकृतार्थमिति । संभोजनं नाम पिशाचभिक्षेति वाक्यात्तेषां दानं परलोकाय इह लोके भवत्युपकारः यदि ते उपकारं मन्येरन् तदपि नास्तीत्यकृतार्थमेव किं च अवसरे प्राप्ते प्रकर्षेण हिन्वन्ति संकटस्थाने सर्वाथांस्तं त्यजन्तीत्यर्थः तान् बाह्याभ्यन्तरांस्तुल्यतया निर्दिशति । प्राणा रायः सुतादय इति । आन्तराः बाह्याः मध्ये उभयोपयोगिनश्च आदिशब्देन सर्व एव बाह्या गृहीताः प्राणा इन्द्रियाणि आसन्यव्यतिरिक्ताः प्राणा आसन्यो हि सर्वान् पोषयति ननु तं कश्चन ननु अनुप्राणन्ति यं प्राणाः अवरोधेषु पंक्तिषित्यादिवाक्यैः प्राणानामिन्द्रियाणां चामुत्र वियोगो न श्रूयते मुक्तौ तु कृतार्थवचनं बाधितमिति चेत् सत्यं स्वर्गीणां जीवानां सहगमनं न त्वस्थतज्ञानाम् अन्यथा पुरञ्जनोपाख्याने प्राणादिसहिते देहे जीवप्रवेशवचनं बाधितं स्यात् यथा प्रवेशस्तथा निर्गम इति प्रथमप्रवेशोऽयमिति चेत् नैनं वीरसूरपि नेष्यतीति वाक्यादस्तु वा तथा सति प्राणभूता राय इति व्याख्येयम् अर्थाद्बहिश्चराः प्राणा इत्यनेन सिद्धान्तद्वयं निरूपितम् उत्क्रमणं सहैव गमनमत्रैव परित्याग इति च यत् श्रुतौ द्वयमप्युक्तं तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणा उत्क्रामन्त्युताहोनेति प्रश्ने नेत्याह याज्ञवल्क्यः इहैव समवलीयन्ते प्राणा इति यतो मृतो ध्मातः शेत इति ब्रह्मैव सन् ब्रह्माप्येतीति तु आक्षेपान्तरम् अतः क्रममुक्तावेव ऊर्ध्वगमने च सद्यः सर्वोऽपि गच्छति जायस्व म्रियस्वेति पक्षशब्दो मुक्तौ च न गच्छतीति सिद्धान्त इति सर्वमविरुद्धम् अयुक्तत्वात् गच्छतीति युक्त एवास्य परित्यागः यथा यो वधार्थं नीयते स कवलो नीयते यो विवाहार्थं नीयते स ससामग्रीक इति ॥ २३ ॥

तदाह । स्वयं किल्बिषमादायेति । तदुपार्जनपोषणाभ्यामुपार्जितं पापं गृहीत्वा तैः प्राणादिभिस्त्यक्तः अन्धं तमो विशति ऊर्ध्वगतौ तु न त्यजन्तीति ज्ञापयितुं नार्थकोविद इत्युक्तम् अन्यथा योगशास्त्रं व्यर्थं स्यात् "पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स" इत्यादिवाक्यात् अतस्तादृशेन्द्रियाणां हिताचरणं युक्तं यदप्युक्तं नोचेत्प्रमत्तमसदिन्द्रियवाजिसूता इति तद्विपर्ययः संसारमात्रे प्रवेशनमुक्तं नतु हीनगतिः अत इन्द्रियाणां स्वभावभेदस्य दृष्टत्वात् निकृष्टैःकर्मभिर्नित्यं जन्तुः स्थावरतां यातीत्यादिवाक्याद्पुनरावृत्त्यधोगमनमार्गे परित्याग एव मुक्तिव्यावृत्त्यर्थमसिद्धार्थ इति भगवदिच्छया सद्यो मुक्तौ निरुद्धगोपिकावत्सहगमनं नास्तीत्यर्थकोविदत्वाभावेऽपि परित्यागोऽपि वर्तते इति व्यावर्त्तकं पदद्वयमपि मृग्यम् अन्धंतमो हि अपुनरावृत्तितमः प्रविशतीति श्रुतिरपि केवलेन्द्रियपोषका एव सम्भूतिमुपासत इति श्रुतिराह अविद्यामुपास इति च ज्ञानरहितं प्रमाणं बहिर्भूतं यत्कर्म लौकिकं निषिद्धं च तेन तम एव ज्ञानसहितं तु कर्म वैदिकं य एवास्मि स सत्यार्थमित्यादि श्रुतेः तस्य मोक्षफलत्वमेतज्ज्ञापयितुमाह । स्वधर्मविमुख इति । तस्मात् स्वधर्मानुसारेण भोगः कर्तव्यः धर्मो ज्ञानसहित इति धर्मसाहितश्च भोग इति बुद्धिमांस्तादृश एव कुर्यादिति ॥ २४ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

तत्र तावदुत्पत्तिमरणयोः सुखदुःखयोश्च न केनापि साहित्यमित्याह । एक इति ॥ २१ ॥

किञ्च यदा च सह वसन्ति तदापि क्लेशोपार्जितवित्तापहारितया पुत्रा नाम शत्रव एव ज्ञेया इत्याह । अधर्मेति । सम्भोजनीयाः पोष्याः वयं पुत्रादय इति व्यपदेशैरल्पधियो मूढस्य वित्तं हरन्ति जलौकसो मत्स्यस्य जीवनभूतानि जलानि यथा तत्पुत्रा हरन्ति तद्वत् ॥ २२ ॥

किञ्च स्वबुद्ध्या स्वीया इत्यभिमानेन यान् यः पुष्णाति ते प्राणादयस्तं मूर्खमकृतार्थमेव प्राहिण्वन्ति त्यजन्ति रायः अर्थाः ॥ २३ ॥ २४ ॥

———

तस्माल्लोकमिमं राजन् ! स्वप्नमायामनोरथम् ।
वीक्ष्यायम्यात्मनात्मानं समः शान्तो भव प्रभो ! ॥ २५ ॥

धृतराष्ट्र उवाच ।

यथा वदति कल्याणीं वाचं दानपते ! भवान् ।
तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथाऽमृतम् ॥ २६ ॥
तथाऽपि सूनृता सौम्य ! हृदि न स्थीयते चले ।
पुत्रानुरागविषमे विद्युत्सौदामनी यथा ॥ २७ ॥
ईश्वरस्य विधिं कोऽनु विधुनोत्यन्यथा पुमान् ।
भूमेर्भारावताराय योऽवतीर्णो यदोः कुले ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधर्मोपचितं मृतस्य नरककारणं जीवतस्तु पोष्याः अपत्यादय इति व्यपदेशैः अन्ये हरन्ति अल्पमेधसः क्षुद्रबुद्धेः जलौकसो मीनस्य जीवनार्थानि जलानि तदपत्यादयो हरन्ति यथा तद्वत् ॥ २१ ॥ २२ ॥

अकृतार्थमलब्धफलम् प्राणशब्देन तद्धार्यो देहः रायः अर्थाः ॥२३॥ असिद्धार्थोऽनिष्पन्नप्रयोजनः ॥ २४ ॥

---

भाषा टीका ।

सब जीव एक ही पैदा होता है एकही लय होता है एक ही सुकृत भोगता है एकही पाप भोगता है ॥ २१ ॥

अधर्म से बढे हुये दुर्बुद्धि के धनको दूसरे लोग हर लेते हैं सो अपने पालने योग्य हैं इस बुद्धि से दिया जाता है जैसे बडे मत्स्य के लज को छोटे मत्स्य भोगते हैं ॥ २२ ॥

अपने हैं इस बुद्धि से अधर्म के धनको देके उनको जो पुरुष पालता है उस मूर्ख को नहीं कृतार्थ होतेही वे प्राण-धन पुत्रादिक जल्दी ही छोड देते हैं ॥ २३ ॥

इस अनर्थ को नहीं जानने वाला वह पुरुष उनके छोड देने से आप ही सब पाप को लेकर मनोरथ पूर्ति न होकर स्वार्थ से विमुख होने से अंधं तम नरक को प्राप्त होता है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्नश्च माया च मनोरथश्च तत्तेन तुल्यम् आयम्य नियम्य शान्तः सन् समो भवेति ॥ २५ ॥

हे दानपते ! अक्रूर न तृप्याम्यलमिभिति न मन्ये ॥ २६ ॥

सूनृता प्रिया वाक् चलेऽस्थिरे हृदि न स्थीयते न तिष्ठतीत्यर्थः । सुदामा पर्वतस्तत्र भवा विद्युदिव तास्मान् स्फटिकशिलामये सह सैवातिस्फुरिता विद्युद्यथा लीयते तद्वदित्यर्थः । यद्वा सुदामा माला तस्या इयं सौदामनी मालाकारेत्यर्थः ॥ २७ ॥

नन्वेवं जानतोऽपि कथमयं मोह इति चेत्तत्राह । ईश्वरस्येति । विधिं विधानं मायामिति यावत् ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वीक्ष्य दृढं ज्ञात्वा आत्मना बुद्ध्या आत्मानं मनः शान्तः लोभाद्युपरतः सन् समः स्वपुत्रेषु तुल्यभावो भव यद्वा समः सन् शान्तः सुखी भव अन्यथा दुःखमेवेति भावः । यद्वा भगवन्निष्ठबुद्धिर्भवेत्यर्थः। परेष्विव पाण्डवेषु स्नेहेनैव तादृशत्वसिद्धेः इत्ययमुपदेशसारः । तत्र च तत्र शक्तिरस्त्येवेति सम्बोधयति । प्रभो इति । इयं स्वोक्तग्रहणार्थं चातुरी तदैव राजत्वसिद्धिः अयमेव राज्ञो मुख्यधर्मइत्यभिप्रायेणाह । हे राजन्निति ॥ २५ ॥

कदापि समो न भवितास्मीत्यन्तर्मनसि द्रढयित्वा शाठ्येन तद्दोषपरिहारार्थं प्रभो इत्यस्य प्रत्युत्तरतया निजस्वातन्त्र्यं निषेद्धुं तत्र श्रीकृष्णस्यैव च दोषं वक्तुं प्राक् तत्सन्तोषार्थं तदुक्तमभिनन्दति । यथेति । यथा यदभिप्रायेण तथा तदभिप्रायेणैव न स्वाभिप्रायान्तरं कुर्वन्नित्यर्थः । दानपत इति सदुपदेशदानाभिप्रायेण ॥ २६ ॥

न स्थीयते स्थिरा न भवति इत्यर्थः। कुतः चले चञ्चले यतः पुत्रेति सुदामा मेघः सुदामा भूधरे मेघ इति विश्वः तत्रत्या सौदामनी यथा मेघ सा स्थिरा न स्यादित्यर्थः । सौम्य हे शान्तप्रकृते निजसौशील्येन त्वया मयि क्रोधो न कार्य इति भावोऽपि सकपट एव ॥ २७ ॥

विधिं विधानेच्छां सा च मायाख्येति मत्वा तैस्तथा व्याख्यानं विधुनोति अतिक्रमितुं शक्नुयादित्यर्थः । अन्यथा मिथ्यान्यप्रकारिकां वा कुर्यादित्यर्थः । स च सम्प्रति विधानविशेषच्छयाऽत्रैव भूमावतीर्ण इति सांप्रतं तन्मतमनुवदन्नाह । भूमेरिति । तदा भयाद्भिरेव तत्र प्रयतितव्यमिति भावः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपदेशमुपसंहरति । तस्मादिति । हे राजन् ! तस्मात् तत्त्वविश्रंसेरवं विधत्वादिमं देहतदनुबन्ध्यादिकं देहादिसर्वलोकम् अनित्यं स्वप्नं

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मायामनोरथं चेति प्रत्येकं चेति वीक्ष्येत्यत्रान्वयः मनोरथमाश्चर्य-मायामनोरथं तमिथ्यानित्यं वीक्ष्य ज्ञात्वा आत्मना बुद्ध्या आत्मान-मात्मस्य नियम्य हे प्रभो समः सर्वत्र समबुद्धिः सन् शान्तः रागद्वेषादिनिर्मुक्तो भव हे प्रभो इति ज्ञानसामर्थ्यं सूच्यते ॥ २५ ॥

इत्थं प्रतिबोधितः प्राह धृतराष्ट्रः । यथेति चतुर्भिः । हे दानपते दानाधिप अत्युदार मूढमप्येवं ज्ञानेन सञ्जीवयिषोस्तवौदार्यम-नितरसाधारणमिति सम्बोधनाभिप्रायः यदा भवान् कल्याणीं कल्याणावहां वाचं वदति तदानया वाचा न तृप्यामि इत्यभि-प्रायेण यदातदाशब्दयोः प्रयोगः यथा मर्त्यो मरणशीलोऽमृतं प्राप्याशित्वा न तृप्यति तद्वदतिशयहिता त्वद्वागिति भावः ॥२६॥

तथापीति । हे सौम्य यद्यपि भवतो वाक् सूनृता मधुरा हिता च तथापि तद्वचः हृदि न स्थीयते प्रतिष्ठितं न भवति तत्र हेतुं वदन् दृष्टान्तयति । पुत्रानुरागेण विषमे यथा सौदामिनी विद्युन् महन् सुदामा पर्वतः तत्रैकदिक् तत्र भवा सौदामिनी सुदाम्नि हि स्फटिकशिलामये स्फुरिता तडित्तथैव लीयते तद्वदित्यर्थः । यद्वा सुदामा माला तन्मयी सौदामिनीति ॥ २७ ॥

नन्वेवं जानतोऽपि कथमयं मोह इत्यत आह । ईश्वरस्येति । को वा पुमानीश्वरस्य विधिं चिकीर्षितमन्यथा विधुनोति अन्यथा करोति कोऽसावीश्वर इत्यत आह । भूमेरिति । यो यदोः कुले भूमेर्भारस्य अपनुत्तये तदनुगुण्यरूपस्यावतारायावतीर्णः मत्पुत्रसञ्जिहीर्षात्मकभग-वच्चिकीर्षानुगुणमेव तन्मायोन्मोहितमन्मनीषा प्रवर्तते इति भावः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किमन्येन बहुप्रयासेन प्रकृते किमागतमिति तत्राह । तस्मा-दिति । लोकं शरीरं स्वप्नमिति सुप्तोपमा स्वप्नवत् मायावत् इन्द्र-जालवत् मनोराज्यविजृम्भितवदन्यत्र सनिमित्तं स्वप्नस्य स्वाधी-नत्वप्रतीतेस्तदर्थं मायामनोरथमित्युक्तम् आत्मना मनसा आत्मानं परमात्मानं भजन् शान्तो भगवदेकनिष्ठः स्वपरबुद्धिं विहाया-त्मजेषु पाण्डुपुत्रेषु च समो भवेत्यन्वयः ॥ २५ ॥

अनया वाचा न तृप्यामि अलम्बुद्धिं न प्राप्नोमि अमृतं देवान्नम्—

अमृतं व्योम्नि देवान्ने यज्ञशेषे रसायने ।
अयाचिते जले हर्षे मोक्षगे हेम्नि गोरसे ॥
क्लीबं त्वमरस्त्री तु गुडूच्यामथ भिक्षयोरिति ।

च ॥ २६ ॥

सूनृता वाक् सुदाम्नः पर्वताद्दृश्यमाना सौदामनी विद्युत् विद्युता यद्वा विशेषेण द्योतिं प्रकाशत इति विद्युत् तादृशी सौदामनी क्षणप्रभा यथा भास्वरा तथेति ॥ २७ ॥

विधिमाद्यां विधुनोति अन्यथा करोति अनेकार्थत्वा-द्धातूनाम् ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्मादिदं लोकमिममिति । कालानुसारेण कर्त्तव्यमिति लोको निन्द्यते स्वप्नमायामनोरथत्वेन स्वप्नस्तामसः माया राजसी मनो-रथः सात्त्विकस्तथोत्कर्षापकर्षापन्नमपि जगत् न चिरकालाव-स्थायीति तदनुरोधे न तु न पुरुषार्थो नाशनीयः उत्पत्तौ संसि-द्धायां मरणेऽपि सिद्धे पूर्वं पश्चाच्च नानेन संघातेन सह स्थितः स्थास्यतीति सिद्धत्वात् स्वप्नादितुल्यत्वं युक्तमेव अनेनोत्कृष्ट-मिदं राजशरीरमित्यपि परिहृतम् एतं वीक्ष्य पूर्वोक्तप्रकारेणात्म-नैवात्मानं संघातव्यतिरिक्तं ज्ञात्वा देहसम्बन्धिष्वप्युदासीनो भवेत्याह । सम इति । नन्वेवं पर्यालोचना कथं भविष्यतीत्याश-ङ्कायामाह । शान्तो भवेति । नन्वेवमुपाये कथं न सर्वे भवन्ती-त्याशङ्क्याह । प्रभो इति । त्वं समर्थः विवेकी नत्वन्ये अविवेकिनः ॥२५॥

एवमुपदिष्टे ज्ञाने सन्तुष्टः सन् धृतराष्ट्र उत्तरमाह । यथा वदसीत्यादि-एवंव्यासेनाप्येतादृशमुक्तं भीष्मेणान्यैश्च तत्तदुपदिष्टं ज्ञानं क्षणमात्रमेव तिष्ठति पश्चादन्यथैव प्रवर्तते पुनरुपदिष्टे पश्चात्तापसहितं ज्ञानं भवति तदपि न भवतीति न तिष्ठतीति पुनरन्यथैव प्रवर्तते एवमनेकपर्यायेऽ स्मन्मनसोऽयमेव स्वभाव इति निश्चित्य पश्चात्तापो निवृत्तस्ततः प्रभृतिज्ञानमपि मन्यते वैयर्थ्यमपि करोतीमं सिद्धान्तम् अतो न जानातीति तं प्रतिबोधयति तदास्यानिष्टं भवेत् यदि पुत्रनाशं नाङ्गीकुर्यात्तदा स्वस्य दोषो भवेत् परं स्वयं कर्तुं न शक्तः नाप्यन्यः किं त्वीश्वर एवेति तस्याभिप्रेतम् अनेनास्य युद्धोद्यमोऽपि निवारितः हे दानपते दानाध्यक्ष धर्मशास्त्रेऽयमेव निपुण इति अनेन त्वं धर्ममेव जानासि नतु कालं स्वभावमीश्वरेच्छां वा परं यद्वदसि तत्कल्याणीमेव वाचं वदसि सत्यां मनोहरां च सत्यं ब्रूयात्प्रियं ब्रूयादिति स्मृतेः यतस्त्वं दानपतिरिति अद्यापि तव वचनश्रवणे श्रद्धा वर्तत इत्याह । तथानयेति । तथाभूतयानया वाण्या न तृप्यामि अलमिति न मन्ये स्वस्य तद्वाक्यमपेक्षितमिति ज्ञापयितुं दृष्टान्तमाह । मर्त्यः मरणधर्मामृतं प्राप्य न तृप्यतीति ॥ २६ ॥

यथा गङ्गायां सज्वरोऽपि श्रद्धावान् गङ्गास्नाने न तृप्यते परं तस्य शरीरं न सहते तथा मम इत्याह । तथापीति । सूनृता सत्यरूपा सतां मनसि यद्यपि तिष्ठति मनसो हि भार्या सा तथापि चञ्चले मनसि वेश्यारते भर्तरीव हृदि चञ्चले सति न स्थीयते वाक्य-त्वमात्रं तदनुगुणकार्यकर्तरि तिष्ठेदपि तदपि नास्तीत्याह । पुत्रानुरा-गाद्विषम इति । पुत्रानुरागेण विषमं जातं यथा जलप्रवाहेण भूमि-र्निम्नोन्नता भवति यथा मालाकारा विद्युत् क्षणमपि न तिष्ठति दण्डाकारा तु क्षणं दृश्यतेऽपि अत उक्तं विद्युत्सौदामनी यथेति सौदामनी विद्युदिति प्रत्येकसमुदायाभ्यां विद्युद्वाचकम् ॥ २७ ॥

तर्हि यत्नः कथं क्रियते चित्तवृत्तिनिरोधस्य विद्यमानत्वा-दिति चेत्तत्राह । ईश्वरस्येति । ईश्वरेण कश्चनप्रकारो विहितः एवं प्रकारेणैवैतत् कर्तव्यमिति तत्कोऽन्यथा कर्तुं शक्तः एत-द्विज्ञानमात्रायोद्यापाभ्यां परिश्रमेण भवति तस्मिन् कृते ज्ञापने न काप्यनुपपत्तिः एवं ज्ञात्वा को वा पुमान् विवेकी समर्थोऽपि ईश्वरविचारितं प्रकारं विशेषेण धुनोत्यपि दूरीकरोति कम्पितं वा करोति नन्वीश्वर उदासीनो नाद्यते कस्यचित्प्रियं नचैव सुहृत् विभुरिति वाक्यात् अज्ञानेनैव तथा चित्तं जायते नत्वीश्वरस्तथा करोतीति चेत्तत्राह । भूमेर्भारावतारायेति । भगवान् भूभारहरणा-र्थमवतीर्णः अन्यथावतारमेव न कुर्यादतो न ज्ञायते भगवता अन्यप्रकारो विचारित इति नन्वेतदपि नाङ्गीकर्तव्यं वाक्य-विरोधात् अतोऽवतारस्य प्रयोजनान्तरमनवरतं वा कल्पनी-

यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान् विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्रसंसारचक्रगतये परमेश्वराय ॥ २९ ॥

श्रीशुक उवाच ।

इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ।
सुहृद्भिः समनुज्ञातः पुनर्यदुपुरमिगात् ॥ ३० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यामिति चेन्न तथा सति शास्त्रवैफल्यात् सर्वमुक्तिर्वा प्रसज्यते अतोऽधिकारपरं शास्त्रमित्यपि पक्षे यथा सर्वगुणसंपीत्तर्मम तथा न कस्यापीति सर्वेषामनाश्वास एव स्यात् अतो व्यभिचारादीश्वरेच्छा स्वतन्त्रेति वक्तव्यम् एवमपि शास्त्रवैफल्यमिति चेत् सत्यं न सर्वत्र शास्त्रं प्रमाणं किन्तु क्वचिदेव यत्रेश्वरेच्छा यथोक्तसाधनेऽप्यजननात् अतः सर्वत्र शास्त्रमेव प्रमाणं यदि शास्त्रानुसारेणापि कदाचिन्न भवेत तदेश्वरविधिरिति कल्प्यते यथा मण्यादिप्रतिबन्धे दाहाभावाच्छक्तिः सा अग्नौ मणौ वेत्यत्र वयमुदासीनास्तथा तादृशस्थले ईश्वरेच्छा नियामिकेति ज्ञातव्यम् ईश्वरत्वादेव न पर्यनुयोगः लोके च महाराजाज्ञादिषु सामान्यविशेषभावः श्रूयते सर्वतो निरुपद्रुतेऽपि देशे कस्यचिदुपद्रवो महाराजेच्छया भवतीति नचैतावता सामान्याज्ञाया निष्कण्टकं राज्यं विरुध्यते अतो निमित्तभूतानस्मदादीन्न मर्यादायां स्थापयतीति युक्तमेव ज्ञातेऽपि शास्त्रे वैषम्यम् अन्यथा भगवान् न यदोः कुले अवतीर्णो भवेत् ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आस्थिरत्वात् स्वप्नादितुल्यम् आयम्य नियम्य ॥ २५ ॥

अभिज्ञम्मन्योऽयमक्रूरो मामपि तत्त्वमुपदेष्टुं प्रगल्भते किमहमिदं न जानामीत्यन्तर्मदपूर्णोऽपि महागाम्भीर्यं प्रकाशयन् बहिर्महासाधुरिवाह । यथेति । दानपते इति । मथुरायामन्नदानेन यथा बुभुक्षूंस्तर्पयसि तथैवात्र हस्तिनापुरे अनभिज्ञं मां ज्ञानदानेन तर्पयसीति भावः ॥ २६ ॥

सूनृता प्रियवाक् न स्थीयते न तिष्ठति सुदामा मेघः । "सुदामा भूधरे मेघे" इति विश्वः तत्र भवा सौदामनी चपले मेघे चपला विद्युदित्यर्थः ॥ २७ ॥

विधिं विधानम् अन्यथेति प्रकारान्तरेणापि को नु विधुनोति न कोऽपीत्यर्थः । अत्र प्रमाणं त्वमेव एतावतापि शिक्षणेन मां विवेकं ग्राहयितुं नैवाशक इति भावः । स चेश्वरः सम्प्रति युष्मद्गृहे वर्त्तते इत्याह । भूमेरिति । तेन तत्र गत्वा स एव निवेद्यतां यन्मम विधेयं स मैवं प्रेरयेदिति भावः ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न केवलं देहादय एव; प्रदियवन्त्यतो ऽनित्या इति सर्वोऽयं लोको ऽनित्य इत्याह । तस्मादिति । स्वप्नमायामनोरथं तत्तुल्यमनित्यम् स्वप्नादीनां द्वन्द्वैक्यम् स्वप्नवत् मायामनोरथवत् इमं प्राकृतलोकमनित्यं वीक्ष्य आत्मानं मनः आयम्य नियम्य शान्तः सन् समो भवेत्यर्थः ॥ २५—२६ ॥

सूनृता प्रिया वाक् हृदि न स्थीयते हृत्संलग्ना न भवति यथा सुदामा माला तस्या इयं सौदामिनी खे न संस्थीयते खलग्ना न भवति तद्वत् ॥ २७ ॥

विधिं विधानम् ॥ २८ ॥

---

### भाषा टीका ।

हे राजन् ! हे प्रभो तिस हेतु से स्वप्न के सरीके भगवन्माया मनोरथरूप इस संसार को जान कर बुद्धि मनको वश करके शांत चित्त से सम बुद्धि वाले हो जाओ ॥ २५ ॥

धृतराष्ट्रजी बोले हे दानपति अक्रूरजी जैसे आप इस कल्याण वाली वाणी को कहते हो तैसेही इस वाणी से मैं तृप्त नहीं होता हूं जैसे कि मरने वाला पुरुष अमृत को प्राप्त होकर तृप्त नहीं होता है ॥ २६ ॥

हे सौम्य ! तथापि सुंदर यह आपकी वाणी मेरे पुत्रों के अनुराग से विषम भये चलायमान इस हृदय में नहीं ठहरती है जैसे कि सुदामा पर्वतकी बिजुली अस्थिर है तैसे ॥ २७ ॥

ईश्वर के विधानको कौन पुरुष अन्यथा करने वाला है जिन भगवान् ने कि पृथिवी के भारको उतारने के वास्ते यदुकुल मे अवतार लिया है ॥ २८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अतस्तमेव नमस्यति । य इति । दुर्विमर्शपथया अचिन्त्यकर्ममार्गया गुणान् कर्माणि तत्फलानि च विभजते विविच्य ददाति दुरवबोधो यो विहारस्तस्य क्रीडा स एव तन्त्रं प्रधानं मुख्यं कारणं यस्य संसारचक्रस्यात एव तस्य गतिर्यस्माचस्मै नम इति ॥ २९ ॥

शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ।
पाण्डवान् प्रति कौरव्य ! यदर्थं प्रेषितः स्वयम् ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां पारमहंस्यां संहितायां वैयासिक्यां दशमस्कन्धे पूर्वार्धे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिप्रेत्य ज्ञात्वा ॥ ३० ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीधरस्वामिकृतभावार्थदीपिकायाम् एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अस्माभिस्तु बहिरङ्गैः परम स्वतन्त्रोऽसौ तदर्थं दूरतो नमस्कार्य एवेत्याह । य इति । तैर्व्याख्यातं नवायतारिकायां निज-वैषम्यहानेच्छाहेतोरियेति शेषः । अवितर्क्यमार्गयेति । ज्ञाना-तीतप्रवृत्तिकत्वात् परिहर्तुमशक्ययेत्यर्थः । नचोच्चनीचसुख-दुःखविसर्गे तस्य च वैषम्यमित्याह । कर्माणीति । कर्माणि पूर्व-कर्मानुसारेण विधिनिषेधलक्षणानि शास्त्रमुखेन व्यवस्थापयति सुखदुःखानि चोत्पादयतीत्यर्थः । नचैवं तस्यैश्वर्यं कर्माधीनमित्याह । दुरवबोधेति । अनादित्वादनन्तानि जीवानां नानाकर्माणि तद्वि-धारेच्छानुसारेणैवोदयन्ते इति भावः । अतः परमेश्वराय वशी-कृतसर्वत्वेन तन्नाम्ने इति ॥ २९ ॥

इतीदृशं वैषम्यापरित्यागलक्षणं नृपतेरिति समत्वेन श्रीयुधिष्ठिर-राजत्वे स्वराजत्वहानिशङ्कयेति भावः । सुहृद्भिः पाण्डवादिभिः ॥ ३० ॥

पाण्डवान् प्रति विचेष्टितमिति अन्तःक्रौर्यबहिर्मार्दवाभ्यां विविधं चेष्टितं तदर्थं यद्विचेष्टितज्ञानार्थं प्रेषितः ताभ्यामेव हे कौरव्येति त्वत्पूर्वजानां कुरूणां क्षयकारणं तदेव तच्च त्वया ज्ञायत एवेति भावः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम् एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दुर्विमर्शपथया इतरैर्ज्ञातुमशक्यप्रकारया मायया प्रकृत्या गुणान् सत्त्वादीन् विभजते ब्रह्मादिष्वित्यर्थः । अन्यैर्दुरवबोधः ईश्वरस्य विहारः क्रीडा तादृशविहारतन्त्रात्मिकसंसार चक्रगति-प्रवर्तनायेत्यर्थः ॥ २९—३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

युक्तश्चैतत् दुरवबोधमायत्वात् सर्वनियन्तृत्वाच्चेत्यभिप्रयन् केवलं तमेवेश्वरं प्रणमति । य इति । य ईश्वरः दुर्विमार्गपथया इतरैर्ज्ञातुमशक्यप्रकारया स्वप्रकृत्या इदं ब्रह्मादि तनुजालं सृष्ट्वा तनुषु चतुर्मुखादि तनुषु प्रविष्टः तत्तत्-न्वाधिष्ठातृजीवान्तरात्मतया प्राविष्टः तत्सृष्ट्वा तदेवानुप्राविशदिति वत्स्थित्यर्थोऽत्रानुप्रवेश उक्तः गुणान् शब्दादिविषयान् विभजते ब्रह्मादिभ्य इति शेषः । प्रतिनियतान् शब्दादीनेभ्यो विभज्य प्रय-च्छतीत्यर्थः । अन्यैर्दुरवबोध ईश्वरस्य विहारः क्रीडा तादृशविहार-तन्त्रात्मिका संसारचक्रगतिर्यस्मात्तस्मै सर्वोत्कृष्टायेश्वराय नमः ॥ २९ ॥

इतीति । स यादवोऽक्रूरः नृपतेर्धृतराष्ट्रस्याभिप्रायमभिप्रेतं ज्ञात्वा सुहृद्भिः पाण्डवादिभिः सम्यगनुज्ञातः पुनर्मथुरामाजगाम ॥ ३० ॥

शशंसेति । हे कौरव्य पाण्डवान्प्रति यद्धृतराष्ट्रस्य विचेष्टितं कृतं विषप्रदानादि यत्तस्य चेष्टितस्य विज्ञानार्थमेव स्वयं भगवता प्रेषितस्तत्सर्वं कृष्णरामाभ्यां शशंस कथयामास ॥ ३१ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य श्रीशैलगुरोः सुतेन तच्चरणसेवासमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवीरराघवविदुषा विलिखितायां श्रीमद्भाग-वतचन्द्रचन्द्रिकायां दशमस्कन्धपूर्वार्धव्या-ख्यायामेकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

शुभम् ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दुर्विमर्शपथया दुर्विज्ञेयमार्गया दुरवबोधः दुर्ज्ञेयः विहारः सृष्ट्यादि-व्यापारलक्षणा क्रिया तस्य तन्त्रधीना संसारचक्रगतिः संसारवृत्तिः प्रकारो यस्य स तथा तस्मै ॥ २९ ॥

इत्यभिप्रेत्येति ज्ञात्वा ॥ ३० —३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ४९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे

एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवन्माहात्म्यं स्मृत्वा भगवन्तं नमस्यति । यो दुर्विमर्शेति । पूर्णो भगवान् कथमवतीर्णः किमर्थं वा अवतीर्ण इति सन्देहं वारयन् नमस्यति दुः खेनापि विमर्शो विचारो न यस्येति एतादृशः पन्था यस्य मन्त्रादिवदन्यसामर्थ्यपक्षं व्यावर्त्तयति । निजेति । भगवद्धर्माणामपि जिज्ञासा अशक्या यथा मर्यादामार्गस्यापि तत्र भगवतो विमर्शं को वा करिष्यति—

अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत् ।

इति निषेधश्च एतादृश्या मायया लोके कपटत्वेन प्रसिद्धयापीदं प्रसिद्धं जगत् सृष्ट्वा तत्र स्वयं सत्यस्वरूपः प्रविष्टः गुणान् सत्त्वादीन् उच्चनीचभावेन भजते पृथक्करोति यस्या मार्ग एव न ज्ञायते तया किं कश्चित् कर्त्तुं समर्थः मायाखण्डं वा कश्चित्प्रवेष्टुं प्रविश्य वा तुल्ये उच्चनीचतां सम्पादयितुम् अतो महानुभावो भगवानिति तस्मै नमः किञ्च श्रुतौ काण्डद्वये पञ्चरात्रे इतिहासपुराणेषु च सहस्रधा ऋषिभिर्निरूपिता अतः केन साधनेन कथमेव करोतीति दुरवबोधो विहारतन्त्रः क्रीडापरिकरो यस्य संसारस्यः तस्य चक्रं तस्यापि गतिर्यस्मात् तत्र वा गतिर्यस्येति भगवतः संसारः अहंतानमतात्मकः न लौकिकवत् इच्छया सर्वं जायते इत्यतो लीलार्थमित्यध्यवसीयते भगवतोऽवतारः भगवच्छास्त्रं भगवदीयाः पुरुषाः पदार्थाश्च तेषां साधारणोपयोगाभावात् किमर्थं करणमिति नाशङ्कनीयं दुरवबोधत्वादेव ॥ २९ ॥

अतो भगवतः कार्यं जगत् भगवल्लीलावैष्णवप्रकारश्चेति उभयोर्दुर्ज्ञेयत्वात् परम एवेश्वरो भगवानीश्वरादेवालौकिकात् परमेश्वर उभयालौकिक इत्यनेन भगवतः संसारोऽयं भवदादयोऽस्मदादयश्च तदिच्छयैव प्रवर्त्तितुं योग्याः ननु स्वेच्छयेति उपदेशो वा ज्ञानं वा न विचारणीयमिति तूष्णीं सर्वैः स्थातव्यमित्यभिप्रायं बुद्ध्वा ततो निर्गत इत्याह । इत्यभिप्रेत्य नृपतेरभिप्रायमिति । तस्य तद्वाक्यानङ्गीकारहेतुद्वयमाह । नृपतेरिति स यादव इति । राजवाक्यमङ्गीकर्त्तव्यं यदुवंशो भगवदवतारात् यादवैश्च सुतरां तदङ्गीकर्त्तव्यं तदुत्कर्ष एवोक्त इति ततो ऽत्रापि लौकिकन्यायेन सुहृद्भिर्भीष्मादिभिः सम्यगनुज्ञातो यदुपुरीं मथुरामगात् ॥ ३० ॥

स्वयं केवलमाज्ञाकारी न स्वतन्त्र इति ज्ञापयितुं रामकृष्णयोः स्थाने शशंस धृतराष्ट्रस्य विशेषेण चेष्टितं पाण्डवान् प्रति मारणपर्यन्तमुद्योगं ननु सतामेतदयुक्तमिति चेत्तत्राह । यदर्थं स्वयं प्रेषित इति । अधिकारिणो नायं दोषः कौरव्येति विश्वासार्थं स्वयं प्रेषित इत्यन्यद्वारापि कथनं व्यावर्त्तितम् अनेन पूर्वाधान्तप्रकरणेनाग्रे भगवतैव कर्त्तव्यमिति ज्ञापितम् एतावत्पर्यन्तं न साक्षाद्भगवता किञ्चित् कृतं किंत्वन्यानुरोधेनैवेति अतो भगवतो लीलाद्वयमन्यानुरोधेन करणं स्वतः करणमिति भगवतो भक्तानुरोधो निरूपितः

> इत्थं भगवल्लीला भक्तविश्वासदायिनी ।
> निरूपितातियत्नेन कृष्णपादाम्बुजाश्रया ॥
> सर्वेषु पुरुहृद्येषु निवेदयामि मार्गो यदा—
> भगवतो भवतामभीष्टः ।
> भक्तिप्रकारसहितो हरिभावयुक्तो श्रेयस्तदा—
> विवृतिरेव सदा विचिन्त्या ॥
> दशमस्कन्धविवृतिः पूर्वार्द्धे मुनिरूपिता ।
> कृष्णपादाम्बुजे न्यस्ता श्रीपुष्पाञ्जलिरुज्ज्वलः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमद्वल्लभदीक्षितविरचितायां सुबोधिन्याम्

षट्चत्वारिंशाध्यायविवरणम् ॥ ४६ ॥ ४६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतस्तमेव नमस्यति । य इति । दुर्विमर्शपथया दुर्वितर्क्यमार्गया गुणान् विभजते शान्तघोरमूढरूपत्वेन विभक्तान् करोति दुरवबोधं दुर्गमं विहारतन्त्रं लीलासिद्धान्तो यस्य संसारचक्रादस्मात् गतिरुद्धारो यस्मात् स च स च तस्मै धृतराष्ट्रं प्रबोधयेति त्वां मत्प्रबोधार्थं प्रेरयति मा प्रबुध्यस्वेत्यबोधार्थं माञ्च प्रेरयतीत्येवं विषमा तस्य लीला अतोऽस्य सिद्धान्तं को जानीयादिति भावः । नच त्वन्तु संसारचक्रे पतित एवेत्यपि वाच्यं ममापि तस्मादेव गतिर्भाविनीति भावः ॥ २९ ॥

अभिप्रायं वैषम्यापरित्यागरूपमभिप्रेत्य ज्ञात्वा ॥ ३०।३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

ऊनपञ्चाशत्तमोऽत्र दशमेऽजनि सङ्गतः ॥ ४९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुर्विमर्शपथया दुर्बोधमार्गया निजमायया "मायान्तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वर"मिति श्रुत्युक्तया निजस्य सर्वेश्वरस्य मायया इदं विश्वं सृष्ट्वा तदनुप्रविष्टः सन् गुणनिबन्धनानि त्रिविधानि कर्माणि तत्फलानि च विभजते विभज्य ददाति पूर्वपूर्वसृष्ट्यनुरोधेन जीवेभ्य इति शेषः। दुरवबोधो भगवद्विहारः क्रीडा स तन्त्रं मुख्यं कारणं यस्य संसारचक्रस्य तस्य गतिर्यस्मात्तस्मै नमः ॥ २९ ॥

नृपतेर्धृतराष्ट्रस्य अभिप्रेत्य अवधार्य ॥ ३० ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पूर्वार्धे

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

एकोनपञ्चाशाध्यायार्थप्रकाशः ॥ ४९ ॥

---

भाषा टीका।

जो परमेश्वर आचिन्तनीय मार्ग वाली अपनी माया से इस जगत्को सृज कर फिर उस मे प्रवेश करके तीनों गुणों का विभाग करते हैं ऐसे किसी के नहीं जानने योग्य विहार ही प्रधान जिस मे ऐसे संसार चक्रकी गति करने वाले उन श्रीकृष्ण के अर्थ नमस्कार है ॥ २९ ॥

श्रीशुकदेवजी बोले वे यादव अक्रूरजी उस धृतराष्ट्र राजा के इस अभिप्रायको जान कर और सब बंधुओं से विदा मांग कर फिर मथुरापुर को जाते भये ॥ ३० ॥

हे कौरव्य! परीक्षित् जी श्रीकृष्ण तथा बलरामजी के प्रति जिस कार्य को आप भेजे थे सो पांडवों के विषै धृतराष्ट्र की जैसी चेष्टा है तिसको सब कहते भये ॥ ३१ ॥

इति श्रीभागवत दशमस्कंध पूर्वार्ध
उनञ्चास में अध्याय की
भाषा टीका समाप्त ॥ ४९ ॥

इति श्रीमद्भागवते दशमस्कन्धे पूर्वार्धे एकोनपञ्चाशोऽध्यायः समाप्तः ॥ ४९ ॥

## दशमस्कन्धे पूर्वार्धं समाप्तम्।

